# उपोद्घातः

श्रुतिस्मृतिपुराणानामालयं करुणालयम् ।
नमामि भगवत्पादं शङ्करं लोकशङ्करम् ॥

"प्राचीनैर्व्यवहारसिद्धविषयेष्वात्मैक्यसिद्धौ परं सन्नह्यद्भिरनादरात् सरणयो नानाविधा दर्शिताः" इति श्रीमदप्पय्यदीक्षितोक्तरीत्या अस्मिन् अद्वैतसिद्धान्ते प्राचीनैः ब्रह्मविद्भिराचार्यैः नानाविधाः प्रक्रियाः प्रदर्शिताः । अत्र निदर्शनं भामतीकाराः, विवरणकाराश्च । तथाहि—

१. अविद्या शुद्धब्रह्मविषयिणी तदाश्रिता चेति विवरणकाराः । जीवाश्रिता, उपहितब्रह्मविषयिणी चेति भामतीकाराः ।

२. 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन' इत्यादौ कर्मणां विविदिषार्थत्वेन विनियोग इति भामतीकाराः । विवरणमते तु ज्ञानार्थत्वेनैव यज्ञदानादिकर्मविधिः । 'अश्वेन जिगमिषति' इत्यादिस्थले अश्वस्य गमन-साधनत्वप्रतीतेः, इच्छाविषयत्वेन ज्ञानस्य प्राधान्यात् तदर्थत्वेन यज्ञादिविध्यौचित्यात् ।

३. ब्रह्मसाक्षात्कारे मन एव करणमिति भामतीकाराः । तत्त्वमस्यादिमहावाक्यमेव आत्मसाक्षात्कार-जनकमिति विवरणकाराः ।

४. 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यः' इत्यादिवाक्ये श्रवणादौ विधिर्नास्ति इति भामती । समन्वयसूत्र-भाष्ये स्पष्टं विधेर्निराकरणात् । विवरणमते तु श्रवणादौ अस्ति नियमविधिः । समन्वयसूत्रभाष्यं तु अपूर्वविधित्वनिरा-करणाभिप्रायमिति ।

५. ब्रह्मणः प्रतिबिम्बो जीव इति विवरणमतम् । 'आभास एव च' 'तत्सृष्ट्वा, तदेवानुप्राविशत्' इत्यादि-श्रुतिसूत्रानुरोधात् । छान्दोग्ये 'अनेन जीवेनात्मनाऽनुप्रविश्य' इत्यत्र भाष्यकारैः एवमेव व्याख्यानाच्च । प्रतिबिम्बितत्त्व-मेव प्रवेशः इति वदन्ति । अवच्छेदवादस्तु भामतीकाराभिमतः । नीरूपस्य ब्रह्मणः प्रतिबिम्बासम्भवात् इति युक्त्या अंशो नानाव्यपदेशात् 'पादोऽस्य सर्वा भूतानि' इति च श्रुतिसूत्रे ।

६. 'स्वाध्यायोऽध्येतव्य' इत्यध्ययनविधेरर्थज्ञानपर्यन्तत्वात् वेदान्तविचारशास्त्रमपि तत्प्रयुक्तमिति भामती । अध्ययनविधेः अक्षरग्रहणेनैव पर्यवसितत्वात् न स विचारशास्त्रप्रयोजकः, अपि तु श्रवणविधिरेवेति विवरणम् । कर्मविधिप्रयुक्तैव च पूर्वमीमांसा इति च ।

७. अध्यासभाष्यस्थं 'इतरेतराविवेकेन' इति पदं न्यायवासनया भेदाग्रहपरतया व्याख्यातं भामत्याम् । विवरणे तु—अभेदे तृतीया इतरेतराविवेकात्मकः इति व्याख्यातम् । यतः अज्ञानस्यैव भ्रमे कारणत्वं, न भेदाग्रहस्य ।

८. अधिकरणरचनायामपि प्रकारभेदो दृश्यते । तथाहि—'अथातो ब्रह्मजिज्ञासा' इति सूत्रे विवरणाभि-प्रेता इत्थमधिकरणरचना—प्रत्यगभिन्नब्रह्मविचारात्मकवेदान्तमीमांसाशास्त्रमारम्भणीयं न वेति वक्ष्यमाणरीत्या विषयप्रयोजनसंभवासंभवाभ्यां संशये—नारम्भणीयं, विषयप्रयोजनयोरभावात्, तथाहि—नास्य शास्त्रस्य प्रत्यग्ब्रह्मैक्यं विषयः । अहं करोमि भुञ्ज इत्यादिप्रत्ययसिद्धकर्तृत्वादिजीवधर्मस्य तद्विरुद्धस्य अकर्तृत्वादेः ब्रह्मधर्मस्य चैकत्र समावेशायोगात् । नापि कर्तृत्वादिरूपबन्धनिवृत्तिः प्रयोजनम् । ज्ञानस्याज्ञानमात्रनिवर्तकत्वेन सत्यस्य बन्धस्य ज्ञानात् निवृत्त्ययोगात् । न च 'अहं करोमि' इत्यादिप्रत्यक्षस्य 'स्थूलोऽहं'मित्यादिविसंवादिप्रत्यक्षसजातीयस्य असङ्गत्वबोधक-प्रबलागमानुसारेणान्तःकरणधर्मावगाहितया भ्रमत्वोपपत्तौ स्वाभाविकासङ्गत्वबाधितकर्तृत्वादेः न ब्रह्मात्मैक्यविरोधि-त्वमिति—वाच्यम् । प्रत्यक्षागमयोर्विरोधे उपजीव्यतया प्रत्यक्षानुसारेण आगमस्यान्यथानेयत्वात् । अन्यथा वेदान्तार्थाव-बोधस्यानुदयप्रसङ्गात्, कर्तृत्वादिवत् वर्णपदप्रत्ययानां बाधात् । तमः प्रकाशवद्विरुद्धस्वभावयोः आत्मदेहाद्योः मम मनः; मम देहः इति भेदग्रहे सति तत्तादात्म्यग्रहाधीनतद्धर्माध्यासायोगाच्चेति पूर्वपक्षे प्राप्ते ।

सिद्धान्तः—अथातो ब्रह्मजिज्ञासेति । अयमाशयः—तमः प्रकाशवद्विरुद्धस्वभावयोरपि आत्मानात्मनोः वक्ष्यमाणन्यायैः अद्वितीयप्रत्यगभिन्नब्रह्मात्मनि निर्णीततात्पर्यकत्वेन प्रबलवेदान्तवाक्यजन्याखण्डब्रह्मसाक्षात्कारात्मक-मनोवृत्तेः पूर्वं 'अहं कर्ता' इति प्रतीयमानतादात्म्यानुपपत्त्या तादृशमनोवृत्तिसमुच्छेद्यसकलभ्रमनिदानत्वेन कल्प्य-मानानाद्यज्ञानेन कर्तृत्वाद्यध्यासे न कापि क्षतिरिति संभवत्येव ब्रह्मात्मैक्यं विषयः । न च उपजीव्यप्रत्यक्षविरोधात्

वेदान्तार्थविबोधासंभवः। वक्ष्यमाणरीत्या प्रत्यक्षादेरागमेन तात्त्विकत्वापहारेऽपि व्यावहारिकसत्तानपहारेण तावन्मात्रेण वेदान्तार्थबोधरूपकार्यक्षमत्वोपपत्तेः। मम मनः इत्यादिप्रत्ययेनभिन्नरूपेण भेदग्रहस्य 'अहं मनुष्य' इत्याद्यभेदग्रहाविरोधित्वादात्मानात्मनोस्तादात्म्यग्रहस्तदधीनकर्तृत्वाद्यध्यासस्य च संभवाच्चेति।

वाचस्पतिसम्मता तु अधिकरणरचना प्रदर्श्यते—उक्तरीत्यैव संशये प्रत्यगात्मन एव ब्रह्मत्वात् तस्य चाहमिति बुद्धौ प्रकाशमानत्वेनासन्दिग्धत्वात् न विचारविषयत्वम्। नाप्यविद्यानिवृत्तिः प्रयोजनम्। उक्तरीत्याऽऽत्मनि ज्ञायमानेऽपि तदनिवृत्तेः। न च—अहंप्रत्ययः स्थूलोऽहं दुःखीति गृह्णाति, तद्विपरीतश्च वेदान्तप्रतिपाद्यः संदिग्ध इति विषयादिसिद्धिरिति-वाच्यम्। वेदान्तानामध्ययनविध्यापादितप्रयोजनवदर्थावबोधानामपि प्रबलप्रत्यक्षबाधितत्वेन जपमात्रोपयोगित्वेनाविवक्षितार्थत्वात् उपचरितार्थत्वाद्वेति वेदान्तविचारो नारब्धव्य इति पूर्वपक्षे प्राप्ते सिद्धान्तः—वेदान्तवाक्यैः सत्यज्ञानानन्दैकरसाद्वितीयोदासीनस्वभावः आत्मा उपक्रमादिभिः प्रतिपाद्यते। न च क्रियासमभिहारेण एतादृगात्मतत्त्वमभिदधति तत्पराणि सन्ति युक्तमुपचरितार्थानि इति वक्तुम्। प्रत्यक्षं तु संभावितदोषमपौरुषेयेण निर्दोषेणागमेन बाध्यते। तेन वेदान्तवेद्यः शुद्धः अहं प्रत्यये न भातीति विषयादिसंभवात् आरम्भणीयं वेदान्तमीमांसाशास्त्रमिति।

९ नित्यानित्यवस्तुविवेकः सत्यासत्यवस्तुविवेक इति भामती। अत्रायमाशयः—नित्यानित्यवस्तुविवेको हि इहामुत्रार्थभोगविरागहेतुत्वेनाभिमतः। तच्च नित्यत्वं सत्यत्वम्, अनित्यत्वमसत्यत्वमिति व्याख्याने एव युज्यते। अनित्यं भोगं भुञ्जानो हि तदपेक्षया स्थायिनं भोगं कश्चित् आलक्ष्यैव ततो विरज्यति, नान्यथा। अनृताभिप्राये तु अनृतत्वनिश्चये तादृशसत्यवस्तुलाभप्रतिसंधानाभावेऽपि तद्बुद्धिमात्रेण विरज्यति। अतः तादृशविवेकमात्रस्य वैराग्यहेतुत्वं, सत्यासत्याविवेक इति व्याख्यान एव युज्यत इति। भाष्यकारैरपि विवेकचूडामणौ नित्यानित्यविवेकस्वरूपमेवमेवोच्यते—

ब्रह्मसत्यं जगन्मिथ्येत्येवंरूपो विनिश्चयः।
सोऽयं नित्यानित्यवस्तुविवेकः परिकीर्तितः॥ इति

विवरणकारास्तु—नित्यानित्यवस्तुविवेकस्य यथाश्रुतार्थकतामेवाभिप्रयन्ति। तदैव 'अतः'शब्दव्याख्यानपरं भाष्यं संगच्छेत। अथ शब्दोपात्तनित्यानित्यवस्तुविवेकासिद्धिशङ्कापरिहारार्थं 'अतः'शब्दव्याख्यानावसरे कर्मफलनित्यत्वप्रतिपादकवाक्यापेक्षया तदनित्यत्वप्रतिपादकवाक्यानां 'यत् कृतकं तदनित्यं' इति न्यायोपेतत्वेन प्राबल्यस्य दर्शितत्वात्। अन्यथा जगत्सत्यत्वप्रतिपादकश्रुतिभ्यः तन्मिथ्यात्वप्रतिपादकश्रुतीनां प्राबल्यस्यैव दर्शयितुमुचितत्वादिति।

## भामत्यामप्रतिपादिताः विवरणे प्रतिपादिताः वेदान्तिनामवश्यं ज्ञातव्या विषयाः

### अविद्यायां प्रमाणानि

१. 'अहमज्ञः', मामन्यं च न जानामि' इत्यादि प्रत्यक्षं तावत् भावरूपाज्ञाने प्रमाणम्। न चेदं ज्ञानाभावविषयं संभवति। प्रत्यक्षत्वात्, अभावस्य च षष्ठप्रमाणवेद्यत्वात्। अभावप्रत्यक्षाङ्गीकारेऽपि धर्मिप्रतियोगिज्ञाने सत्येव जायमानस्य तस्यज्ञानाभावविषयत्वे व्याघातात्। भावरूपाज्ञानप्रत्यक्षवादे तु न दोषः। सर्वस्यैव ज्ञाततयाऽज्ञाततया वा साक्षिभास्यत्वाङ्गीकारेण धर्मिप्रतियोगिनोः साक्षिणा भानात्। प्रमाणज्ञानस्यैवाज्ञानविरोधित्वात्। तस्मात् न्यायोपेतं प्रत्यक्षमज्ञाने मानम्।

२. अनुमानमपि तत्र प्रमाणम्—तथाहि—विवादगोचरापन्नं प्रमाणज्ञानं स्वप्रागभावव्यतिरिक्तस्वविषयावरण-स्वनिवर्त्य-स्वदेशगतवस्त्वन्तरपूर्वकं, अप्रकाशितार्थप्रकाशकत्वात्, अन्धकारे प्रथमोत्पन्नप्रदीपप्रभावत् इति। धारावाहिकज्ञानव्यावृत्तये 'विवादे'त्यादि पक्षविशेषणम्। साध्ये च ज्ञानप्रागभावं, ज्ञानविषयं, कुड्यादिकं, विषयगतज्ञातताभावं चादाय सिद्धसाधनपरिहाराय क्रमशो विशेषणानि। धारावाहिकद्वितीयादिज्ञाने व्यभिचारवारणाय हेतौ अप्रकाशितार्थेति विशेषणम्। दृष्टान्ते साध्यसाधनवैकल्याय अन्धकारे प्रथमोत्पन्नेति।

३. तथा श्रुतिरपि तत्र प्रमाणम्—'अनृतेन हि प्रत्यूढाः' 'त इमे सत्याः कामा अनृतापिधानाः' 'नीहारेण प्रावृताः' 'अविद्यायामन्तरे वर्तमानाः' इत्याद्याः श्रुतयः 'अज्ञानेनावृत्तं ज्ञानं तेन मुह्यन्ति जन्तवः' इत्यादिस्मृतयश्च भावरूपाज्ञाने प्रमाणम्।

४. अर्थापत्तिरपि तत्र प्रमाणम्—'तरति शोकमात्मविदि'त्यादिना ब्रह्मज्ञानात् शोकनिवृत्तिः बन्धस्याविद्यात्मकत्वं विनाऽनुपपन्ना तां कल्पयति इति श्रुतार्थापत्तिः।

तथा 'इदं रजतम्' इत्यादि मिथ्यार्थावभासः कादाचित्कः उपादानं विनाऽनुपपन्नः स्वोपादानं मिथ्याभूतं मिथ्याऽज्ञानं कल्पयतीति दृष्टार्थापत्तिः। कल्प्यमानस्य च सादित्वे तदुपादानान्तरकल्पनयाऽनवस्थानात् अनाद्येव तत् कल्प्यत इति अनाद्यनिर्वचनीयभावरूपाज्ञानसिद्धिः।

अज्ञानं साक्षिवेद्यमेव। तस्य अभावव्यावृत्तिः भावरूपत्वसिद्धिश्च परं प्रमाणैः सिध्यत इति ध्येयम्।

### अज्ञानस्यैव जीव ब्रह्मभेदकत्वनिरूपणम्

तदिदमज्ञानं जीवब्रह्मणोर्विभागे निमित्तम्। तथा च श्रुतिः—'अन्यद् युष्माकमन्तरं बभूव, नीहारेण प्रावृताः' इति। पुराणं च—'विभेदजनकेऽज्ञाने नाशमात्यन्तिके गते। आत्मनो ब्रह्मणोभेदमसन्तं कः करिष्यति' इति। अविद्यायाश्चानादित्वादेव अनादिजीवब्रह्मविभागहेतुत्वमविरुद्धम्। अविद्यानादित्वं च 'प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि' इति स्मृतावुक्तम्। प्रकृतिः, न सांख्यप्रकृतिः, माया अत्राभिप्रेता 'मायां तु प्रकृतिं विद्यादिति' श्रुतेः। मायाऽविद्ययोरभेदात्। अनिर्वचनीयत्वादेव ज्ञाननिवर्त्यत्वमपि सिद्ध्यति।

### अज्ञानं चिन्मात्रविषयं, चिन्मात्राश्रितं च

तदिदमज्ञानं चिन्मात्रविषयकम्। न जडमावृणोति। जडस्य स्वत एव प्रकाशप्रसक्त्यभावेन तदावरणकल्पनात्वैयर्थ्यात्। 'घटं न जानामि' इत्यादिव्यवहारस्य घटादिविषयावच्छिन्नचैतन्यविषयकत्वेनोपपत्तेः।

तथा चिन्मात्राश्रितमज्ञानम्। तदन्यस्य तत्कल्पितत्वेन तदाश्रयत्वानुपपत्तेः। तदुक्तम्—'आश्रयत्वविषयत्वभागिनी निर्विभागचितिरेव केवला। पूर्वसिद्धतमसो हि पश्चिमो नाश्रयो भवति नापि गोचरः' इति।

अज्ञानस्य चिन्मात्रसंबन्धित्वेऽपि, मुखमात्रसंबन्धिनो दर्पणस्य प्रतिबिम्बमुख एव स्वगतमालिन्यादिधर्मासञ्जकत्वमिव, ब्रह्मस्वरूपं परिहृत्य जीव एव 'अहमज्ञ' इत्यादि व्यवहारप्रयोजकत्वमप्युपपन्नम् उपाधेः प्रतिबिम्बपक्षपातित्वात्।

यत्तु—अन्तःकरणमज्ञानाश्रयमिति—तन्न। तन्मते आत्मनो ज्ञानाश्रयत्वस्वीकारेण ज्ञानाज्ञानयोः एकविषयत्वेऽपि भिन्नाश्रयत्वेनाविरोधापातात्। 'अनृतेन हि प्रत्यूढा' इत्यादिश्रुतौ चेतनानामेवावृतत्वाभिधानाच्च सादित्वेनान्तःकरणस्याज्ञानकल्पितत्वात्तदाश्रयत्वानुपपत्तेश्च नान्तःकरणमज्ञानाश्रय इति।

### जीवस्वरूपम्

विवरणमते अज्ञानप्रतिबिम्बितं चैतन्यं जीवः। बिम्बभूतमीश्वरः। उभयानुस्यूतं शुद्धमिति विभागः। जीवस्य प्रतिबिम्बत्वे 'रूपं रूपं प्रतिरूपो बभूव', 'एकधा बहुधा चैव दृश्यते जल चन्द्रवत्', 'अत एव चोपमा सूर्यकादिवत्' इत्यादि श्रुतिस्मृतिसूत्रैः जीवस्य प्रतिबिम्बरूपत्वस्य दर्शितत्वात्। जानुमात्रजले दूरविशालाकाशप्रतिबिम्बदर्शनेन अमूर्तस्यापि ब्रह्मणः प्रतिबिम्बसंभवात्। तस्य प्रतिबिम्बत्वं, चिद्रूपत्वं च शास्त्रप्रतिपन्नं प्रत्यक्षप्रतिपन्नं च न निराकर्तुं शक्यते। न तु जीवः घटाकाशवदुपाध्यवच्छिन्नोऽङ्गीक्रियते। तथा सति अनुवृत्तरूपेण व्यष्टिरूपेण च उपाधिभिः अण्डान्तर्वर्तिब्रह्मणः सर्वात्मना जीवभावेनावच्छिन्नत्वात् अनवच्छिन्नस्य ब्रह्मणोऽण्डाद् बहिरेव सद्भावप्रसङ्गात्। तत्र च सर्वगतत्वसर्वनियन्तृत्वादि ब्रह्मणो न स्यात्। अवच्छिन्नप्रदेशेषु अनवच्छिन्नस्य द्विगुणीकृत्य वृत्त्ययोगात्। 'यो विज्ञाने तिष्ठन्' इत्यादौ जीवातिरिक्तरूपेण ब्रह्मणो विकारान्तरवस्थानश्रवणात्। प्रतिबिम्बपक्षे तु—जलगतस्वाभाविकाकाशे सत्येव प्रतिबिम्बाकाशदर्शनात् द्विगुणीकृत्य वृत्तिरुपपद्यत इति प्रतिबिम्बपक्ष एव श्रेयान्।

### प्रतिकर्मव्यवस्था

तत्र जीवः अविद्योपाधिकतया सर्वगत इति, अन्तःकरणोपाधिकतया परिच्छिन्न इति च पक्षद्वयम्।

तत्र प्रथमे पक्षे जीवचैतन्यस्य सर्वगतत्वेऽपि असङ्गित्वेन विषयैः साकं सम्बन्धाभावात् विषयसम्बन्धार्थं वृत्तिरिष्यते। जीवस्य विषयान्तरासङ्गित्वेऽपि स्वभावादन्तःकरणसंसर्गित्वं स्वीक्रियते। अन्तःकरणस्य चक्षुरादिद्वारा विषयदेशंगतस्य वृत्तिरूपेण परिणतस्य विषयसम्बन्धे जीवस्यापि विषयसंबन्धात् जीवस्य विषयप्रकाशः।

**आवरणाभिभवार्था वृत्तिरिति मतम्**

अथवा जीवः सर्वगतोऽपि अविद्यावृतत्वात् स्वयमप्यप्रकाशमानो विषयान्नावभासयति । पूर्वोक्तरीत्या विषयविशेषे वृत्त्युपरागे सति तत्रैव आवरणतिरोधानेन अभिव्यक्तः सन् तं विषयं प्रकाशयति । एवं च वृत्ति आवरणाभिभवार्थत्वेनोपयुज्यते ।

**अभेदाभिव्यक्त्यर्था वृत्तिः**

द्वितीयपक्षे विषयावभासकं ब्रह्मचैतन्यमेव । जीवस्तु परिच्छिन्नः, अन्तःकरणोपाधिकत्वात् । अतः विषयसंसर्गाभावात् जीवस्य न सर्वविषयप्रकाशः । वृत्त्या स्वसंसृष्टविषयावच्छिन्नब्रह्मचैतन्येन अभेदाभिव्यक्तौ सत्यां तस्य विषयप्रकाशः ।

जीवब्रह्मैक्यवादे श्रुतिस्मृतिपुराणप्रसिद्धे सूत्राणामपि तत्र महातात्पर्यं भगवत्पादैः स्वभाष्ये सूत्रव्याख्यानेन प्रतिपादितम् ।

महामण्डलेश्वर श्री महेशानन्दगिरिस्वामिमहाभागैः वेदान्तग्रन्थानां पठनपाठनोपयोगितया मुद्रापणेन वेदान्तसत्सम्प्रदायसंरक्षणं विधीयते । प्रवचनादिना आस्तिकानां वेदान्तार्थबोधनं शिष्याणां पाठनं च क्रियत एव स्वविद्यालयेष्वपि अध्यापकद्वारा पाठपनं कार्यत इति प्रत्यक्षमेतत् ।

सर्वे वयं प्रार्थयामः भगवन्तं श्री अन्नपूर्णाम्बासमेतं श्रीविश्वनाथं स्वामिपादानां देहदार्ढ्यं मनोवाक्कायशक्ति नवनवोन्मेषां प्रतिभां च प्रदाय तान्, तदुपजीविनश्च संरक्षतादिति । अस्मिन् कार्ये श्रद्धया प्रवृत्तानां श्रीनिश्चलानन्दसरस्वतीमहाराजानां, तारामुद्रणालयाध्यक्षाणां श्रीरमाशङ्करपण्ड्यानां, शोधनकार्ये कृतसहायानां वेदान्ताचार्याणां प्राक्तनविद्यार्थिणां प्रभाकरप्रसादभट्टानां अधीतसर्ववेदान्तग्रन्थानां मणिद्राविडमहाशयानाञ्च निखिलं श्रेयः देयात् भगवान् श्रीविश्वनाथ इति श्रीअन्नपूर्णाम्बासमेतं श्रीविश्वनाथं सम्प्रार्थये ।

अद्वैतग्रन्थसद्रत्नमञ्जूषान्तर्गता शुभा ।
टीकाविवरणोद्दीप्ता पञ्चपादी विराजतात् ॥

पण्डितराजादिबिरुदभाजः
एस्० सुब्रह्मण्यशास्त्रिणः

# पञ्चपादिकाविषयसूचिका

## प्रथमवर्णकम्

## द्वितीयवर्णकम्



## तृतीयवर्णकम्

## चतुर्थवर्णकम्



## पञ्चमवर्णकम्

इति पञ्चपादिकाविषयानुक्रमणिका

## सटीकस्य पञ्चपादिकाविवरणस्य विषयानुक्रमणिका

(मूलव्याख्यारूपविवरणभागस्य विषयानुक्रमणिका
मूलग्रन्थविषयतोऽव्यतिरिक्तेति न पृथक् लिखिता)

विषयः पृष्ठाङ्कः

### प्रथमवर्णकम्

## द्वितीयवर्णकम्



## तृतीयवर्णकम्

## चतुर्थवर्णकम्



## पञ्चमवर्णकम्

ॐ

श्रीशङ्करभगवत्पादाचार्यप्रणीतम्

# श्रीमद्ब्रह्मसूत्रभाष्यम्

## प्रथमं वर्णकम्

युष्मदस्मत्प्रत्ययगोचरयोर्विषयविषयिणोस्तमःप्रकाशवद्विरुद्धस्वभावयोरितरेतरभावानुपपत्तौ सिद्धायां तद्धर्माणामपि सुतरामितरेतरभावानुपपत्तिः, इत्यतोऽस्मत्प्रत्ययगोचरे विषयिणि चिदात्मके युष्मत्प्रत्ययगोचरस्य विषयस्य तद्धर्माणां चाध्यासः, तद्विपर्ययेण विषयिणस्तद्धर्माणां च विषयेऽध्यासो मिथ्येति भवितुं युक्तम् । तथाप्यन्योन्यस्मिन्नन्योन्यात्मकतामन्योन्यधर्मांश्चाध्यस्येतरेतराविवेकेन, अत्यन्तविविक्तयोर्धर्मधर्मिणोर्मिथ्याऽज्ञाननिमित्तः सत्यानृते मिथुनीकृत्य, अहमिदं ममेदमिति नैसर्गिकोऽयं लोकव्यवहारः ।

आह—कोऽयमध्यासो नामेति । उच्यते—स्मृतिरूपः परत्र पूर्वदृष्टावभासः । तं केचिदन्यत्रान्यधर्माध्यास इति वदन्ति । केचित्तु यत्रयदध्यासस्तद्विवेकाग्रहनिबन्धनो भ्रम इति । अन्ये तु यत्र यदध्यासस्तस्यैव विपरीतधर्मत्वकल्पनामाचक्षत इति । सर्वथापि त्वन्यस्यान्यधर्मावभासतां न व्यभिचरति । तथा च लोकेऽनुभवः—शुक्तिका हि रजतवदवभासते, एकश्चन्द्रः सद्वितीयवदिति ।

कथं पुनः प्रत्यगात्मन्यविषयेऽध्यासो विषयतद्धर्माणाम् ? सर्वो हि पुरोऽवस्थिते विषये विषयान्तरमध्यस्यति, युष्मत्प्रत्ययापेतस्य च प्रत्यगात्मनोऽविषयत्वं ब्रवीषि । उच्यते । न तावदयमेकान्तेनाविषयः, अस्मत्प्रत्ययविषयत्वात्, अपरोक्षत्वाच्च प्रत्यगात्मप्रसिद्धेः । न चायमस्ति नियमः पुरोऽवस्थित एव विषये विषयान्तरमध्यसितव्यमिति । अप्रत्यक्षेऽपि ह्याकाशे बालाः तलमलिनताद्यध्यस्यन्ति । एवमविरुद्धः प्रत्यगात्मन्यप्यनात्माध्यासः ।

तमेतमेवंलक्षणमध्यासं पण्डिता अविद्येति मन्यन्ते । तद्विवेकेन च वस्तुस्वरूपावधारणं विद्यामाहुः । तत्रैवं सति यत्र यदध्यासस्तत्कृतेन दोषेण गुणेन वाऽणुमात्रेणापि स न संबध्यते । तमेतमविद्याख्यमात्मानात्मनोरितरेतराध्यासं पुरस्कृत्य सर्वे प्रमाणप्रमेयव्यवहारा लौकिका वैदिकाश्च प्रवृत्ताः । सर्वाणि च शास्त्राणि विधिप्रतिषेधमोक्षपराणि ।

कथं पुनरविद्यावद्विषयाणि प्रत्यक्षादीनि प्रमाणानि शास्त्राणि चेति । उच्यते—देहेन्द्रियादिष्वहंममाभिमानरहितस्य प्रमातृत्वानुपपत्तौ प्रमाणप्रवृत्त्यनुपपत्तेः । नहीन्द्रियाण्यनुपादाय प्रत्यक्षादिव्यवहारः संभवति । न चाधिष्ठानमन्तरेणेन्द्रियाणां व्यवहारः संभवति । न चानध्यस्तात्मभावेन देहेन कश्चिद्व्याप्रियते । न चैतस्मिन्सर्वस्मिन्नसति असङ्गस्यात्मनः प्रमातृत्वमुपपद्यते । न च प्रमातृत्वमन्तरेण प्रमाणप्रवृत्तिरस्ति । तस्मादविद्यावद्विषयाण्येव प्रत्यक्षादीनि

प्रमाणानि शास्त्राणि च । पश्वादिभिश्चाविशेषात् । यथा हि पश्वादयः शब्दादिभिः श्रोत्रादीनां संबन्धे सति शब्दादिविज्ञाने प्रतिकूले जाते ततो निवर्तन्ते अनुकूले च प्रवर्तन्ते, यथा दण्डोद्यतकरं पुरुषमभिमुखमुपलभ्य मां हन्तुमयमिच्छतीति पलायितुमारभन्ते, हरिततृणपूर्णपाणिमुपलभ्य तं प्रत्यभिमुखीभवन्ति, एवं पुरुषा अपि व्युत्पन्नचित्ताः क्रूरदृष्टीनाक्रोशतः खड्गोद्यतकरान् बलवत उपलभ्य ततो निवर्तन्ते, तद्विपरीतान्प्रति प्रवर्तन्ते । अतः समानः पश्वादिभिः पुरुषाणां प्रमाणप्रमेयव्यवहारः । पश्वादीनां च प्रसिद्धोऽविवेकपुरस्सरः प्रत्यक्षादिव्यवहारः । तत्सामान्यदर्शनाद् व्युत्पत्तिमतामपि पुरुषाणां प्रत्यक्षादिव्यवहारस्तत्कालः समान इति निश्चीयते ।

शास्त्रीये तु व्यवहारे यद्यपि बुद्धिपूर्वकारी नाविदित्वाऽऽत्मनः परलोकसंबन्धमधिक्रियते तथापि न वेदान्तवेद्यमशनायाद्यतीतमपेतब्रह्मक्षत्रादिभेदमसंसार्यात्मतत्वमधिकारेऽपेक्ष्यते अनुपयोगादधिकारविरोधाच्च । प्राक्च तथाभूतात्मविज्ञानात्प्रवर्तमानं शास्त्रमविद्यावद्विषयत्वं नातिवर्तते । तथा हि—"ब्राह्मणो यजेत" इत्यादीनि शास्त्राण्यात्मनि वर्णाश्रमवयोऽवस्थादिविशेषाध्यासमाश्रित्य प्रवर्तन्ते । अध्यासो नाम अतस्मिन् तद्बुद्धिरित्यवोचाम । तद्यथा पुत्रभार्यादिषु विकलेषु सकलेषु वा अहमेव विकलः सकलो वेति बाह्यधर्मानात्मन्यध्यस्यति । तथा देहधर्मान्—स्थूलोऽहं, कृशोऽहं, गौरोऽहं, तिष्ठामि, गच्छामि लङ्घयामि चेति । तथेन्द्रियधर्मान्—मूकः, काणः, क्लीबः, बधिरः, अन्धोऽहमिति । तथान्तःकरणधर्मान् कामसंकल्पविचिकित्साध्यवसायादीन् । एवमहंप्रत्ययिनमशेषस्वप्रचारसाक्षिणि प्रत्यगात्मन्यध्यस्य तं च प्रत्यगात्मानं सर्वसाक्षिणं तद्विपर्ययेणान्तःकरणादिष्वध्यस्यति । एवमयमनादिरनन्तो नैसर्गिकोऽध्यासो मिथ्याप्रत्ययरूपः कर्तृत्वभोक्तृत्वप्रवर्तकः सर्वलोकप्रत्यक्षः ।

अस्यानर्थहेतोः प्रहाणाय आत्मैकत्वविद्याप्रतिपत्तये सर्वे वेदान्ता आरभ्यन्ते । यथा चायमर्थः सर्वेषां वेदान्तानां तथा वयमस्यां शारीरकमीमांसायां प्रदर्शयिष्यामः ।

॥ इति प्रथमं वर्णकम् ॥

ॐ

श्रीपद्मपादाचार्यप्रणीता

# पञ्चपादिका

अनाद्यानन्दकूटस्थज्ञानानन्तसदात्मने[1] ॥ अभूतद्वैतजालाय साक्षिणे ब्रह्मणे नमः ॥ १ ॥

श्रीप्रकाशात्मश्रीचरणप्रणीतम्

## पञ्चपादिकाविवरणम्

पालने विमलसत्त्ववृत्तये जन्मकर्मणि रजोजुषे लये ॥
तामसाय जगतः, पराकृतद्वैतजालवपुषे नमः सते ॥ १ ॥

श्रीमदखण्डानन्दमुनिविरचितम्

## तत्त्वदीपनम्

यदबोधसमुद्भूतं यद्बोधात्प्रविलीयते ॥ नामरूपात्मकं विश्वं तस्मै पूर्णात्मने नमः ॥ १ ॥
जटाजूटं बिभ्रत् क्वचिदपरभागे भृतकचः तथैकस्मिन् भागे भसितमपरत्राऽऽसघुसृणः ॥
फणीन्द्रं कस्मिंश्चिन्मणिगणधरोऽन्यत्र भगवान् गिरीशः श्रेयो नः प्रदिशतु शिवामिश्रितवपुः ॥ २ ॥
दिक्कूलङ्कषकीर्तिफेनविशदप्रोद्दामविद्याजलभ्राम्यद्वाङ्मयतुङ्गभङ्गविलसत्तीर्थप्रभेदास्पदम् ॥
वादिव्रातकथाप्रसङ्गविसरत्तर्काश्मसारोज्ज्वलं वन्दे सर्वमुनीन्द्रसेव्यमनिशं श्रीबोधपृथ्वीधरम् ॥ ३ ॥
वादिवारणसंदोहप्रभञ्जनविशारदम् । श्रीमदानन्दशैलाह्वपञ्चास्यं[2] सततं भजे ॥ ४ ॥
विमलमदजलौघद्योतमानोरुगण्ड-स्थलनिकटनिकुञ्जद्भ्राजमानालिमालः ॥
जयति पृथुलकण्ठाबद्धमालेन्द्रनीलावलिरिव सुरसिद्धाराधितो विघ्नराजः ॥ ५ ॥

श्रीविष्णुभट्टोपाध्यायकृतम्

## ऋजुविवरणम्

असितजलदरूपं सच्चिदानन्दरूपं निजभुजजितराज्यं [3]निर्जरेशेड्यपूज्यम् ॥
नतजनहितरामं संश्रये स्वात्मरामं जगदवनकृतं तं भासयन्तं नितान्तम् ॥१॥
जगन्निर्माणनिपुणमोहनिर्वाहहेतवे[4] ॥ नमोऽनन्तसुखप्रत्यग्बोधरूपाय विष्णवे ॥२॥
यत्प्रसादसमावाप्तधीविकाससमन्वितः ॥ समर्थो वदितुं सम्यक् तां नमामि सरस्वतीम् ॥३॥
अप्रबोधान्यथाबोधविघ्नसङ्घनिपीडितः ॥ मनः करोमि विघ्नेश त्वत्पदद्वन्द्ववन्दने ॥४॥
शमादिसेनां निजरूपजैत्रीं संबृह्य[5] मोहं परिपन्थि दैत्यम् ॥
यो मुक्तिसीतां समवाप जित्वा तमिन्द्रपूर्णं[6] प्रणतोऽस्मि रामम् ॥५॥

---

ईश्वरो गुरुरात्मेति मूर्त्तित्रयविभागिने ।
व्योमवद्व्याप्तदेहाय दक्षिणामूर्त्तये नमः ॥१॥

१. अभूतद्वैतजालाय इति । द्वितीयाभावोपलक्षितं ब्रह्म नमस्कारविषयः तस्य शुद्धस्यापि कल्पितभेदेन नमस्कार्यत्वमभिप्रेतम् ।

२. श्रीमान् आनन्दशैलः आनन्दगिरिः भगवत्पादीयसर्वभाष्याणां प्रकरणग्रन्थानां च व्याख्याता, स च तत्त्वदीपनकर्तुः गुरुः' इति प्रतीयते ।

३. निर्जराः = देवाः, तेषामीड्यः इन्द्रः तेन ईड्यः पूज्यः ब्रह्मा तत्पूज्यः श्रीरामः ।

४. जगन्निर्माणनिपुणो मोहः माया तस्य निर्वाहः स्थितिप्रयोजकः हेतुर्भगवान् स च सत्यज्ञानानन्तरूपः ।

५. संबृह्य = उद्यम्य, मोहं तत्प्रयुक्तं सर्वकार्यविरोधि दैत्यञ्च जित्वा मुक्तिरूपां सीतामवापेत्यर्थः ।

६ इन्द्रपूर्णं रामं, रामेन्द्रसरस्वतीं गुरुं प्रणतोऽस्मि ।

### पञ्चपादिका

**नमः श्रुतिशिरःपद्मषण्डमार्तण्डमूर्तये ॥ बादरायणसंज्ञाय मुनये शमवेश्मने ॥ २ ॥**

### पञ्चपादिकाविवरणम्

यस्याः प्रसादमवलम्ब्य जगद्‌गुरूणामप्यस्खलद्बहुगुणाः प्रसरन्ति वाचः ॥
सा वेदशास्त्रपरिनिर्मितवन्द्यदेहा भूयात्समग्रवरदैव सरस्वती नः ॥ २ ॥

### तत्त्वदीपनम्

आधारपङ्केरुहमध्य-संस्था मृणालसूत्राकृतिरप्रमेया ॥
शीर्षादिभेदस्थितसर्ववर्णा जिह्वाङ्गणे नृत्यतु वागजस्रम् ॥ ६ ॥
नानाविधनिबन्धाह्वप्रसूनरसमादरात् । निबन्धमधु संगृह्य क्रियते तत्त्वदीपनम् ॥ ७ ॥

पञ्चपादिकां व्याचिख्यासुः ग्रन्थकरणयोग्यतार्थं परदेवतां प्रार्थयत आद्यश्लोकेन । "यमेवैष वृणुते तेन लभ्य" इति ईश्वराधीनत्वं विद्याया लक्ष्यते । विदुषश्च ग्रन्थकरणाधिकारात्परदेवताप्रार्थनमुचितम् । अथैषाऽक्षरयोजना—सते नम इति सम्बन्धः । ननु—किं नमस्कार्यं सत् अचेतनम्, चेतनं वा ? आद्ये न नमस्कार्यता; घटादिवत् । द्वितीयेऽपि किं जीवात्मा, उत ब्रह्म ? प्रथमे किं नमस्कर्तुरनन्यत्, उतान्यत् ? नाद्यः; नमस्कर्तृनमस्कार्यभावस्यैकस्मिन्नयोगात् । द्वितीयेऽपि किं तात्त्विकमुतातात्त्विकम् ? आद्येऽद्वैतक्षतिः । अन्त्ये न सच्छब्दं स्यात्, सच्छब्दं ब्रह्मेति पक्षे तस्य पूर्णत्वान्न नमस्कर्तृनमस्कार्यता, इत्याशङ्क्य कारणत्वाक्रान्तं ब्रह्म नमस्कार्यमित्याह—**पालन इति** ॥ जगत इत्येतत्पदं पालनजन्मलयैः संबध्यते । पालने उद्देश्ये सतीत्यर्थः । **विमलम्** रजस्तमोभ्यामनभिभूतं यत्सत्त्वम्, तस्मिन् वृत्तिर्वर्तनं प्रतिबिम्बता यस्य, तद्विमलसत्त्ववृत्ति; तस्मै । रजस्तमसोरपि भावान्न सत्त्वोपाधिकं पालयितृत्वमिति शङ्कां निराकर्तुम्—"विमले"ति विशेषणम् । रजस्तमसोरभिभूतत्वात्सत्त्वस्योद्भूतत्वात्तदुपाधेः पालनहेतुत्वमुचितमित्यर्थः । उत्तरत्राप्यभिभूतत्वं द्रष्टव्यम् । विमलं च तत्सत्त्वं चेति विमलसत्त्वम्, तस्य वृत्तिः परिणामो यस्य, तद्विमलसत्त्ववृत्ति; तस्मै इति वा विग्रहः । इदमिदानीं पालयितव्यमित्येवमाकारः सत्त्वस्य परिणामभेदः कदाचिदुदेति, तस्मिन् प्रतिबिम्बितचैतन्यं पालकम्, तदभिप्रेत्य वृत्तिशब्दप्रयोग इति । तर्हि ब्रह्म पालकमस्तु, विधिरुद्रौ तु स्रष्टृसंहर्ताराविति पुराणप्रक्रियामाशङ्क्य, तयोः कार्यत्वेन निखिलसर्जनसंहरणसामर्थ्याभावादखण्डं रजस्तमोभ्यामुपहितं ब्रह्म स्रष्टृ संहर्तृ चेत्याह—**जन्मेत्यारभ्य जगत इत्यन्तेन** ॥ न च कर्मपदवैयर्थ्यम्; जगतः सत्तासमवायसंबन्धलक्षणजन्मघटकव्यापारस्य विवक्षितत्वात्, सकर्तृकत्वद्योतनार्थत्वाद्वेति द्रष्टव्यम् । न च—गुणोपहितब्रह्मकारणत्वेऽविद्योपहितस्य कारणत्वप्रतिपादकश्रुत्या विरोध इति—शङ्क्यम्; "देवात्मशक्तिं स्वगुणैर्निगूढा"मित्यादिवाक्यादविद्यायाः

### ऋजुविवरणम्

ज्ञानाम्बुजं धर्मपयोनिधिं यो विकासयन्नेकगवा[1]ऽनिशं तम् ॥
ब्रध्नेन्दुरूपं कृपया विधत्ते तमोनिरासं प्रणतोऽस्मि विष्णुम् ॥६॥
गुरुवरकरुणाप्तं भावबोधं[2] समीक्ष्य ग्रहणककृतिरूपं संप्रदायानुरूपम् ॥
ऋजुविवरणसंज्ञं ख्यापनार्थं[3] परेषां विवरणगतभावं बोद्धुमेतत्करोमि ॥७॥
यथा स्थिता[4] व्याकृतिरन्यथा च सोपस्करा भावविवेचनी च ॥
मेयोपसंहारभिदैकतादौ भावाभिधानाय[5] तथोपपत्तेः ॥८॥

---

१. एकगवा—एकाक्षरेण ओङ्कारेण ज्ञानमेव पद्मं विकसयन् कृपया यः सूर्यचन्द्ररूपं तमो निरसनं स्वीकरोति तं श्रीविष्णुमित्यर्थः ।

२. भावबोधाख्या टीका स्वगुरुभिः कृता । संग्रहरूपा ग्रहणकरूपा । तद्विवरणमिति भावः ।

३. परेषां ख्यापनाय तद्विवरण करोमि ।

४. यथा स्थिता यथार्था, अन्यथा च सोपस्करा उपपत्त्यादियुक्ता भवति । भावविवेचिनी स्वगुरुनिर्मिता । भेदैकताभेदस्याश्रयेणैकत्त्वम् ।

५. भावाभिधानाय = स्वगुरुग्रन्थस्य तथा उपपत्तेः अभिधानायेत्यर्थः ।

### पञ्चपादिका

नमाम्यभोगिपरिवारसम्पदं निरस्तभूतिमनुमार्धविग्रहम् ॥
अनुग्रमुन्मृदितकाललाञ्छनं विनाविनायकमपूर्वशङ्करम् ॥ ३ ॥

### पञ्चपादिकाविवरणम्

विघ्नाभितापमपहृत्य मदीयकृत्यबीजं प्रवृद्धमदनुग्रहवर्षपातैः ॥
संप्रार्थितः सिततरोऽपि गणेशमेघः सिञ्चन्नभीष्टफलमङ्कुरयत्वमोघम् ॥ ३ ॥
श्यामोऽपि श्रुतिकमलावबोधरागः शान्तः सन्नयति तमोविनाशमन्तः ॥
नीरूपं प्रथयति योऽपि गोसहस्रैः तं व्यासं नमत जगत्यपूर्वभानुम् ॥ ४ ॥

### तत्त्वदीपनम्

सत्त्वाद्यात्मत्वप्रतिपत्तेः सत्त्वाद्युपहितस्य कारणत्वोक्त्याऽविद्यावतः कारणत्वस्य विवक्षितत्वादित्यर्थः। "सर्वकर्मे"त्यादिश्रुतेः कारणरूपं तात्त्विकमित्याशङ्क्य, तात्पर्यलिङ्गानुगृहीतनिर्विशेषवस्तुप्रतिपादकवेदवचनविरोधान्नैवमित्याह—**पराकृतेति** ॥ पराकृतं द्वैतजालं वपुर्यस्मिन् तत्, पराकृतद्वैतजालवपुः, तस्मै। अथवा पराकृतद्वैतजालं वपू रूपं यत् तत्तथोक्तम्। षष्ठी च कल्पित-भेदाभिप्रायेण द्रष्टव्या ॥ १ ॥ परानुग्रहलब्धविद्यः सन् स्वविद्यां ग्रन्थरूपेण प्रसारयितुं वाग्देवतां प्रार्थयते—**यस्या इति** ॥ सा सरस्वती नः समग्रवरदैव भूयाद् इति संबन्धः। तस्याः समग्रवरदत्वं कुतः? इत्याशङ्क्य प्रसिद्धेरित्याह—**यस्या इति** ॥ जगद्गुरूणां वाचस्पतिपुरोगाणामपि वाचो यस्याः प्रसादमवलम्ब्याऽस्खलद्बहुगुणाः प्रसरन्तीति सम्बन्धः। अस्खलन्तो बहवो गुणा यासु ताः, अस्खलद्बहुगुणाः, अस्खलन्त्यश्च ता बहुगुणाश्चेति वा। के ते गुणाः?

"श्लेषः प्रसादः समता माधुर्यं सुकुमारता। अर्थव्यक्तिस्तथा कान्तिरुदारत्वमुदात्तता ॥
ओजस्तथाऽन्यदौर्जित्यं प्रेयानथ सुशब्दता। प्रौढिः समाधिः सौक्ष्म्यं च गाम्भीर्यमथ विस्तरः ॥
संक्षेपः संमितत्वं च भाविकत्वं गतिस्तथा। रीतिरुक्तिस्तथा प्रीतिरिति षड्विंशतिः स्मृता ॥" इति।

अत्र युक्तिमाह—**वेदेति** ॥ वेदाश्च शास्त्राणि चेति वेदशास्त्राणि, तैः परिनिर्मितो वन्द्यो देहो यस्याः सा तथोक्ता ॥ सरस्वत्या वागभिमानिदेवतात्वात्तासां तदधीनत्वं युक्तमित्यर्थः ॥ २ ॥ "श्रेयांसि बहुविघ्नानि भवन्ति

### ऋजुविवरणम्

सन्दंशेन[1] च रीत्या वा व्याख्यानेन विनापि यत् ॥
ज्ञायते विस्तराद्भीतो विवृणोमि विहाय तत् ॥९॥

शास्त्रारम्भेऽभिमतप्रयोजनसिद्ध्यर्थं परदेवतात्वेन प्रतिपाद्यमानं ब्रह्म आदौ नमस्करोति—**पालने विमलसत्त्ववृत्तय इति**। विमलसत्त्ववद् वृत्तिर्यस्येति विग्रहः; स्थितिहेतुत्वात्। यद्वा—सत्त्वतो वर्तनं यस्येति वृत्तिवद् वृत्तिरिति च उत्तरार्धसामर्थ्यान्निश्चीयते। इतरत्राप्येवम्। **ननु**—नमस्कारश्लोके पालनादिनिमित्तं नमस्कार्यस्य गुणावच्छेदप्रतिपादनमप्रयोजनम्? **मैवम्**। तटस्थलक्षणप्रदर्शनार्थत्वात्। अथवा—ब्रह्मनमस्कारे सति विष्ण्वादीनामपि नमस्कारप्रदर्शनार्थम्। यद्वा—सते नम इत्युक्ते तस्य जडत्वेन प्रसिद्धत्वात् एतदपि तादृशमित्याशङ्कायां चेतनतासाधकजगत्कारणताप्रतिपादनार्थम्। यद्वा—नमस्कार्यस्य परत्वं बृहत्वं च न सम्भवति; विष्ण्वादीनामपि जगत्कारणत्वेन परत्वप्रसिद्धेः इत्याशङ्क्य तेषामपि एतदात्मत्वप्रतिपादनार्थम्। किमर्थमेतद्वक्ष्यमाणप्रदर्शनं कृतम्? उच्यते; आद्यत्वात्। तर्हि ब्रह्मणः सविशेषत्वं स्यात्, इत्याशङ्क्याह—**पराकृतेति** ॥ द्वैतजालमेव वपुः द्वैतजालवपुः शरीरं तत् पराकृतं तिरस्कृतं यस्मिन्निति विग्रहः। द्वैतजालस्य वा वपुः स्वरूपं पराकृतं यस्मिन्निति। अथवा—पराकृतद्वैतजालमेव वपुः

---

१. सन्दंशेन। सन्दंशो नाम एकाङ्गानुवादेन विधीयमानोभयोर्मध्ये पतितत्वं। तद्वत् पूर्वोत्तरवाक्ययोः मध्ये पतितत्वमेव। रीत्या वा। रीतिर्नाम ग्रन्थकारशैली तेनापि यत् ज्ञातुं शक्यं तन्नोच्यते।

### पञ्चपादिका

यद्वक्त्रमानससरःप्रतिलब्धजन्म-भाष्यारविन्द-मकरन्द-रसं पिबन्ति ।।
प्रत्याशमुन्मुखविनीतविनेयभृङ्गास्तान् भाष्यवित्तकगुरून् प्रणमामि मूर्ध्ना ।। ४ ।।

### पञ्चपादिकाविवरणम्

उद्धृत्य वेदपयसः कमलामिवाब्धेरालिङ्गिताखिलजगत्प्रभवैकमूर्त्तिम् ।।
विद्यामशेषजगतां सुखदामदाद्यस्तं शङ्करं विमलभाष्यकृतं नमामि ।।५।।
वन्दे तमात्मसम्बुद्धस्फुरद्ब्रह्मावबोधतः । अर्थतोऽपि न नाम्नैव योऽनन्यानुभवो गुरुः ।। ६ ।।
प्रकाशात्मा यतिः सम्यक् प्राप्तविद्याशुशुत्सया । यथाश्रुतं यथाशक्ति व्याख्यास्ये पञ्चपादिकाम् ।। ७ ।।

### तत्त्वदीपनम्

महतामपी''ति वचनादाध्यात्मिकाद्यनेकोपद्रवप्रतिपत्तेस्तन्निरासार्थं गणेशं प्रार्थयते—**विघ्नेति** ।। गणेशमेघो मदीयकृत्यबीजममोघं यथा स्यात्तथाऽङ्कुरयतु इत्यन्वयः । मेघसारूप्यमाह—विघ्नेति । प्रवृद्धमदनुग्रहवर्षपातैः विघ्नाभितापमपहृत्य मदीयबीजं सिञ्चत्विति संबन्धः । प्रवृद्धाश्च ते मदनुग्रहाश्चेति प्रवृद्धमदनुग्रहाः, त एव वर्षाणि प्रवृद्धमदनुग्रहवर्षाणि; तेषां पातैः । प्रसिद्धो हि मेघो वर्षपातेन तापं निरस्य बीजमङ्कुरयति, अयमप्यनुग्रहाख्यवृष्ट्याऽध्यात्मिकादितापनिरासेन मदीयं कृत्यबीजमङ्कुरयत्वित्यर्थः । **सिततरोऽपीति** प्रसिद्धमेघादतिशयमाह । नीलनीरदो हि वृष्टिं कुर्वन् अङ्कुरयति, अयं तु सिततरोऽपीत्यतिशयः । **अभीष्टफलमिति** ।। अनर्थनिवृत्त्यादिफलमिति यावत् । **अमोघमिति** ।। अविघ्नपरिसमाप्त्यादिप्रयोजनमित्यर्थः ।। ३ ।। व्याख्येयटीकामूलभाष्यसूत्रार्थस्फूर्त्यर्थं तत्कर्तारः समाराध्याः, तत्र प्रथमं सूत्रकृतं प्रणमति—**श्याम इति** ।। "विज्ञानं यज्ञं तनुते" इत्यादिवचनात् करणानि कर्तॄणि च प्रतीयन्ते, तद्योगाच्च त्वंपदार्थस्य कर्तृत्वम्; "स समानः सन्नुभौ लोकावनुसंचरति ध्यायतीव लेलायतीवे"ति च श्रुतेः । तस्मादन्तःकरणनमस्कर्तृत्वनिर्देशेन स्वस्य तन्निर्दिष्टं स्यात्, ततश्च 'नमते'त्युक्तिर्युक्तेत्यर्थः । व्यासस्य नमस्कार्यत्वे हेतुमाह—**जगत्यपूर्वभानुमिति** ।। अपूर्वत्वमाह—**श्याम इति** ।। प्रसिद्धस्त्वरुणः, अयं तु कृष्ण इत्यपूर्वत्वमित्यर्थः । विधान्तरेणापूर्वत्वमाह—**श्रुतीति** ।। श्रुतय एव कमलानि श्रुतिकमलानि, तेषामवबोधे रागो यस्य स तथा । भानुस्तु रक्तः सन् कमलविकसनहेतुः, अयं तु श्यामोऽपि श्रुतिशक्तितात्पर्यावधारणहेतुरित्यर्थः । वैधर्म्यान्तरमाह—**शान्त इति** ।। रविरुग्रः सन् बाह्यतमसां संदोहं संदुनोति, अयं तु शान्तएवाज्ञानलक्षणं तमो दहतीत्यर्थः । वैधर्म्यन्तरमाह—**नीरूपमिति** । प्रसिद्धस्तु किरणसहस्रैःविशेषवन्तं प्रथयति, अयन्तु पुनर्निर्विशेषं ब्रह्म उपनिषत्पदकदम्बकैर्भासयतीत्यर्थः ।। ४ ।। संप्रति पुरुषोत्तमसाधर्म्यं दर्शयन् शङ्कराचार्यं प्रणमति—**शान्त इति** ।। तं शङ्करं नमामीति नमस्कार्यत्वमुक्तम्, तत्र हेतुमाह—**उद्धृत्येति** ।। वेदपयसोऽब्धेर्विद्यामुद्धृत्य यः सर्वस्मै प्रादात्, तं नमामीति सम्बन्धः । वेदा एव पयांसि यस्य स वेदपयाः, तस्मादित्यर्थः । अत्रोपनिषदां पयःस्थानत्वं कर्मब्रह्मविषयवेदवाक्यसमुदायस्याब्धिस्थानत्वमिति द्रष्टव्यम् । कामिवेत्यत्राह—**कमलामिति** ।। नारायणो हि क्षीराब्धेरिन्दिरामुद्धृत्य सर्वस्मै प्रादात्,

### ऋजुविवरणम्

स्वरूपं यस्येति विग्रहः । नमसा लक्षणत्रयलक्षितेन जीवेनास्यैकत्वं प्रतिपाद्यते । "णमु प्रह्वत्वे शब्दे" इत्यनुशासनात् अस्यापि तदर्थत्वात् । प्रह्वता च तदेकत्वोन्मुखीभावः; पराकृतेति भेदनिषेधप्रतीतेः ।। १ ।। अनन्तरमस्खलद्बहुगुणवाक्प्रसरलाभार्थं सरस्वतीं नमस्करोति—**यस्या इति** ।। न स्खलन्त्यः अस्खलन्त्यः, बहवो गुणा यासां ता बहुगुणाः, अस्खलन्त्यश्च ता बहुगुणाश्चेति विग्रहः । यद्वा—अस्खलन्तो बहवो गुणा यासु ताः अस्खलद्बहुगुणा इति विग्रहः । कथं सरस्वतीनमस्कारेण तल्लाभ इति ? तदाह—**सा वेदशास्त्रेति** ।। शास्त्राभिमानित्वादिति भावः ।। २ ।। न नु गणेशस्यादौ नमस्कारः शङ्कनीयः; अवाप्तग्रन्थकरणसामर्थ्यस्य विघ्ननिर्हरणाशङ्का अतः अनन्तरं विघ्ननिर्हरणार्थं गणेशं नमस्करोति—**विघ्नाभितापमपहृत्येति** ।। ३ ।। शारीरकसूत्रकर्तृत्वात्तद्विषयमतिविकासार्थं व्यासं नमस्करोति—**श्यामोऽपीति** ।। ४ ।। स्वद्वारा व्याख्येयभाष्ये मतिविकासार्थं शङ्करं नमस्करोति—**उद्धृत्येति** ।। अखिलं जगत् प्रभवत्यस्मादिति अखिलजगत्प्रभवः, सा चासावेकमूर्तिश्चेति; आलिङ्गिता अखिलजगत्प्रभवैकमूर्तिर्ययेति विग्रहः । आलिङ्गिता अखिलजगत्प्रभवा चासावेकमूर्तिश्चेति

### पञ्चपादिका

**पदादिवृन्तभारेण गरिमाणं बिभर्ति यत्। भाष्यं प्रसन्नगम्भीरं तद्व्याख्यां श्रद्धयाऽऽरभे ॥**

### पञ्चपादिकाविवरणम्

विदितसकलवेद्यैर्नं प्रशंसन्ति लोके ग्रथितमपि महद्भिः किं पुनर्मादृशेन।
इति विफलसमेऽस्मिन् वाग्व्ययेऽहं प्रवृत्तः स्वमतिविमलतायै क्षन्तुमर्हन्ति सन्तः ॥ ८ ॥

प्रारिप्सितस्य ग्रन्थस्याविघ्नेन परिसमाप्तिप्रचयगमनाभ्यां शिष्टाचारपरिपालनाय चाभिलषितदेवतापूजानमस्कारः कर्तव्यः, शास्त्रार्थश्च तत्त्वंपदार्थविवेकोपायलभ्यः प्रत्यग्ब्रह्मणोरेकत्वलक्षणः सङ्क्षेपतो दर्शनीयः कृत्स्नस्य भाष्यस्य तत्र

### तत्त्वदीपनम्

तथाऽयमपीत्यर्थः। विद्यायाः कमलासाधर्म्यमाह—**आलिङ्गितेति** ॥ अखिलस्य जगतः प्रभवो यस्मात् सोऽखिलजगत्प्रभवः, तस्यैकाऽद्वितीया मूर्त्तिरालिङ्गिता यया सा तथोक्ता ताम्। कमला खलु नारायणगात्रमेवालिङ्ग्य व्यवस्थिता, तद्वद्विद्यापि ब्रह्मैकमूर्तिं विषयीकृत्य व्यवस्थितेत्यर्थः। साधर्म्यान्तरमाह—**अशेषेति** ॥ कनकांशुकक्षेत्रादिसम्पादनेन कमला यथा सुखदा तथा विद्याप्यविद्यापनयनेनाऽऽनन्दात्मानं व्यनक्तीत्यर्थः। केन द्वारेण विद्यादातृत्वमित्याशङ्क्य, भाष्यद्वारेत्याह—**विमलेति** ॥ शब्दतोऽर्थतश्च निरवद्यभाष्यकर्तारमित्यक्षरार्थः ॥ ५ ॥ सम्प्रति स्वगुरुं नमस्करोति—**वन्दे इति** ॥ तस्यास्मत्तो विशेषाभावान्न नमस्कार्यत्वमित्याशङ्क्याह—**य इति** ॥ अनन्यश्चासावनुभवश्चेति विग्रहः। अनन्यानुभवत्व डित्थादिवन्नाममात्रम्, ब्रह्मरूपतयाऽनन्यानुभवत्वमस्माकमप्यस्तीत्याशङ्क्याह—**अर्थतोऽपीति** ॥ अर्थतोऽनन्यानुभवत्वमस्माकमप्यस्तीत्युक्तम्, तत्राह—**आत्मेति** ॥ आत्मसंबुद्धतया स्वप्रकाशतया स्फुरद्यद् ब्रह्म, तद्विषयोऽवबोधो यस्य स तथोक्तः। तस्मादित्यर्थः। घटादीनामिवान्याधीनस्फुरणमित्याशङ्कां निराकर्तुम्—**आत्मसंबुद्धेति** विशेषणम् ॥ आत्मा चासौ संबुद्धश्चेत्यात्मसंबुद्धः, तस्य स्फुरद्ब्रह्मत्वेनावबोधादिति वा। स्वयंप्रकाशत्वेन सदा ज्ञातः। प्रत्यग्ब्रह्मापि तादृशमिति अभेदयोग्यत्वमिति द्योतयितुं वा संबुद्धस्फुरदिति विशेषणम्। **अयमर्थः**—यद्यप्यस्माकमप्यनन्यानुभवत्वम्; तथाप्यविद्यापिहितस्वान्ततया यथावद्ब्रह्म न गम्यते, गुरोस्तु करतलाकलितामलकवत् साक्षात्कृतब्रह्मतत्त्वतयाऽविद्यातत्कार्यनिवृत्तिरिति विशेषः ॥ ६ ॥ सम्प्रति चिकीर्षितं प्रतिजानीते—**प्रकाशात्मेति** ॥ प्रकाशात्मा यतिरहं पञ्चपादिकां व्याख्यास्ये इति सम्बन्धः। यथा ग्रामो दग्ध इत्यादिव्यपदेश एकदेशदाहेऽपि, तद्वदेकदेशस्य व्याचिख्यासितत्वेऽपि पञ्चपादिकेति व्यपदेशो घटत इत्यर्थः। व्याख्यानयोग्यतामाह—**यथेति** ॥ श्रुतमनतिक्रम्येत्यर्थः। न श्रवणमेव केवलम्, अपि तूहाद्युपेतत्वमपीत्याह—**यथाशक्तीति** ॥ न ख्यात्याद्युद्देशेन व्याख्यानमित्याह—**प्राप्तेति** ॥ सम्यक् शास्त्राचार्याभ्यां प्राप्ताया विद्याया असम्यक्त्वभ्रमादिकं निराकर्तुं ब्रह्मविन्निकषाश्मसु शोधनेच्छयेत्यर्थः ॥ ७ ॥ कृतमपि व्याख्यानं रागद्वेषदूषितस्वान्ता नोपाददते, ततश्च न विद्याशुद्धिरित्याशङ्क्य, किं केचिन्नोपाददते, उत सर्वेऽपि? आद्ये न विरोध इत्याह—**विदितेति** ॥ तर्हि विफलमेतत् स्यादित्याशङ्क्याह—**इति विफलेति** ॥ इतिशब्दः

### ऋजुविवरणम्

वा विग्रहः। कथमेतन्नमस्कारेण तत्प्राप्तिरिति? तदाह—**विद्यामिति** ॥ ५ ॥ प्रागुक्तस्य सर्वस्य गुरुप्रसादलभ्यत्वेन तं नमस्करोति—**वन्दे तमिति** ॥ "आत्मसंबुद्धे" त्यनेन न विद्यते अन्यस्मादनुभवो यस्यासावनन्यानुभव इति विग्रहः समर्थितः। "स्फुरद्ब्रह्मावबोधत" इत्यनेन न विद्यते अन्यविषयः अनुभवो यस्यासावनन्यानुभव इति विग्रहः समर्थितः। तदुक्तम्—"शिवे रुष्टे गुरुस्त्राता गुरौ रुष्टे न कश्चन" इति। **ननु**—एकेनैव नमस्कारेण सर्वप्रयोजनसिद्धेः किं नमस्कारान्तरेण? **मैवम्**। सर्वसाधनसमर्थस्यापि प्रतिप्रयोगमेकैकप्रयोजनसाधनत्वमिति "योगसिद्धि"वत्[1]। यद्यपि ब्रह्मनमस्कारेण तदात्मकदेवताः नमस्कृताः सर्वविज्ञानवत्। तथापि तत्तत्प्रयोजनविशेषलाभार्थं तेन तेन रूपेण नमस्कारः कृतः। सदाचारस्यापि पालनीयत्वात्, "तं यथा यथोपास्ते" इति श्रुतेश्च ॥ ६ ॥ यदर्थमेतत्संपादितं तन्निर्दिशति—**प्रकाशात्मेति** ॥ ग्रन्थकरणे प्रयोजनमाह—**प्राप्तविद्येति** ॥ ७ ॥ इदानीमात्मनः सगर्वत्वनिवृत्त्यर्थं विदुषोऽभ्यर्थयितुमाह—**विदितसकलवेद्यैरिति** ॥ यद्वा—पूर्वश्लोके "विद्याशुशुत्सये"त्युक्तत्वात् गर्वप्रसक्त्यभावात् नायं विनयः, किन्तु ये विनयदर्शनात् कर्तुरशक्तिं मन्वते, आधिक्यं चात्मनः, तान्

---

१. योगसिद्धिः दर्शपूर्णमासयोः सर्वेभ्यो दर्शपूर्णमासौ इति फलवाक्येन बहुफलसाधनत्वनिश्चयात् एकेन प्रयोगेण सर्वफलप्राप्तिशङ्कायां सूत्रं "योगसिद्धिर्वा अर्थस्योत्पत्त्यसंयोगित्वात्" इति। एकस्मात् प्रयोगात् एकमेव फलं प्राप्यत इत्यर्थः (४।१।२८ पू० मी०)।

## पञ्चपादिकाविवरणम्

तात्पर्यकथनाय, इति तदुभयं श्रुत्यर्थाभ्यां सङ्क्षेपतो दर्शयति—**अनाद्यानन्दकूटस्थज्ञानानन्तसदात्मने। अभूतद्वैतजालाय साक्षिणे ब्रह्मणे नम इति** ॥ कृत्स्नस्य भाष्यस्य ब्रह्मात्मैकत्वे तात्पर्यमत्र दर्शितम्; उत्तरत्र विभज्य तात्पर्यदर्शनात्। अत्र

## तत्त्वदीपनम्

प्रशंसाभावपरामर्शी, प्रशंसाभावाद्विफलसमत्वमित्यर्थः। प्रशंसाभावेऽपि मतिवैमल्यं सेत्स्यतीत्यभिसन्धिः। **ननु**, कथं तदपि सिध्येत्? कैश्चिदनादृतत्वात्, इत्याशङ्क्येर्ष्यार्रहितैरादृतत्वात्सिध्यतीत्याह—**क्षन्तुमिति** ॥ निर्मत्सरत्वं सच्छब्दार्थः। एतेन द्वितीयो विकल्पो निरस्तः ॥ ८ ॥

"अनाद्यानन्दे"त्यत्र मङ्गलाचरणं सम्पादितम्, तदयुक्तम्। फलविधुरत्वात्, न च शिष्टाचारः प्रमाणम्। विकल्पासहत्वात्। स किं स्वतः प्रमाणम्? उत वेदमूलत्वेन? नाद्यः; प्रत्यक्षाद्यन्यतमत्वाभावात्, अतिरिक्तस्य मानस्य चाप्रसिद्धेः। न द्वितीयः; तदसिद्धेः, नच शिष्टाचार एव वेदमूलताकल्पकः; किमाचारत्वाद् वेदमूलतां कल्पयति उत धर्मत्वात्? नाद्यः; निष्ठीवनादेरपि तत्कल्पकत्वप्रसक्तेः। नान्त्यः; धर्मत्वसिद्धौ वेदमूलताकल्पकत्वम्, वेदमूलत्वे च धर्मत्वमितीतरेतराश्रयत्वात्। नापि फलं पश्यामः—किं शिष्टाचारपरिपालनं फलम्? आहो विघ्ननिरासः? नाद्यः; तस्याकिंचित्करत्वात्। न द्वितीयः; उपस्थितविघ्ननिरासेप्यागामिनो निवर्तयितुमशक्यत्वादित्याशङ्क्याह—**प्रारिप्सितस्येति** ॥ न तावत्प्रमाणाभावचोद्यम्; वेदमूलशिष्टाचारस्य प्रमाणत्वात्, न च तस्य वेदमूलत्वासिद्धिः; शिष्टैर्धर्मबुद्ध्याऽनुष्ठीयमानाचारस्य तत्कल्पकत्वात्, नापि शिष्टासिद्धिः; वैदिकार्थानुष्ठातॄणां शिष्टत्वादित्यभिसन्धाय **'च'** शब्दप्रयोगः। नापि फलासम्भवः; अविघ्नपरिसमाप्तिप्रचयगमनशिष्टाचारपरिपालनानां फलत्वात्। न च—आगामिविघ्ननिवृत्त्यसंभवान्न विघ्नाभावः फलमिति—शङ्क्यम्; आगामिनि विघ्नेऽपि तत्प्रागभावपरिपालनस्य फलत्वात्, वर्तमाने तु तद्ध्वंस एव। तस्मात्प्रमाणफलवत्त्वान्मङ्गलाचरणमनुष्ठेयमित्यर्थः। अविघ्नपरिसमाप्तिप्रचयगमनयोर्दृष्टफलत्वसाम्यात्समस्य वचनम्, इतरस्यादृष्टफलत्वात् पृथक्कथनम्। अत एव तस्याकिंचित्करत्वं निरस्तम्। प्रमाणफलवांश्चेद्देवतागुरुनमस्कारः, तर्हि या काचिद्देवता नमस्क्रियतामिति, तत्राह—**अभिलषितेति** ॥ समाराधिताया अभिलषितदेवताया एव फलहेतुत्वप्रसिद्धेस्तत्समाराधनमुचितमित्यर्थः। तथाप्य'नादी'त्यादिविशेषणवैयर्थ्यम्, तत्राह—**पूजेति** ॥ गुणगणसंकीर्तनं पूजा, स्तुतौ सत्यां नृपादिषु प्रीत्युत्कर्षदृष्टेः सोचितेत्यर्थः। तथाप्यात्मब्रह्मणोरेकत्वं

## ऋजुविवरणम्

प्रति सोत्प्रासेनाह—**विदितसकलवेद्यैरिति** ॥ एतदुक्तं भवति—ये विद्यालेशविवशान्तःकरणाः, ते महत्प्रणीतेऽपि ग्रन्थे न प्रशंसां कुर्वते मत्सरग्रस्ततया, अतः तदप्रशंसा न दोषाय। अयमेवार्थो न प्रशंसन्तीति वदता द्योतितः; इतरथा 'ग्रथितमपि सम्यग् न भवती'ति वक्तव्यम्, नतु न प्रशंसन्तीति ॥ ८ ॥ **ननु**—नमस्कारकरणं प्रमाणप्रयोजनशून्यमिवाभाति। ननु सदाचारः प्रमाणम्? मैवम्; वेदमूलत्वेन वा प्रमाणम्, स्वतो वा? नाद्यः; संबन्धानुपपत्त्योरभावेन[1] मूलानवगमात्। ननु धर्मत्वेनानुष्ठीयमानो वेदं कल्पयति? मैवम्; सिद्धे वेदमूलत्वे धर्मत्वेनानुष्ठानम्, धर्मत्वेनानुष्ठाने च तत्सिद्धिरितीतरेतराश्रयप्रसङ्गात्। नापि स्वतः; षड्विधसामग्रीबहिर्भावात्[2]। न च विघ्नोपशमः प्रयोजनम्; प्रागभावादिविकल्पासहत्वात्। तस्मान्नमस्कारो न कर्तव्य इत्याशङ्क्याह—**प्रारिप्सितस्य ग्रन्थस्येति**[3] ॥ धर्मत्वेनानुष्ठीयमानताज्ञानमुपयोगि, न वेदमूलत्वेन धर्मत्वज्ञानम्। तथोपस्थिते विघ्ने नाशः, आगामिनोऽनुत्पत्तिपरिपालनं प्रयोजनमिति भावः। तर्हि श्लोककरणं व्यर्थम्; मानसेनापि तत्सिद्धेः। अथ नमस्कारस्याङ्गत्त्वद्योतनार्थम्? मैवम्; उत्तरश्लोकैरेव सिद्धेरुक्तत्वात् अन्यतरस्य वैयर्थ्यं दुष्परिहरम्। यद्वा—नमस्कार एव कर्तुं युक्तः, न तु तत्त्वंपदार्थनिरूपणेन तयोरेकत्वप्रतिपादनमुपयोगीत्याशङ्क्याह—**शास्त्रार्थश्चेति** ॥ **ननु**—तत्प्रदर्शनमनुपयोगि;

---

१. सम्बन्धानुपपत्त्योः—वेदमूलत्वेन व्याप्त्यभावात्। अनुपपत्तिः अर्थापत्तिः वेदमूलत्वं विना अनुपपत्तिः। समाधाने सदाचारत्वं शिष्टाचारत्वं शिष्टाः वेदमूलकत्वेन ज्ञात्वाऽनुतिष्ठन्ति तेन धर्मत्वेनानुष्ठीयमानत्वलिङ्गेन वेदानुयानं स्मृत्यधिकरणे उक्तम्। अनुपपत्तिः शिष्टैः धर्मत्वेन गृहीत्वानुष्ठानं वेदमूलकत्वं विनानुपपन्नं वेदमूलकत्वं कल्पयति।

२. षड्विधसामग्री—प्रत्यक्षादि षट् प्रमाणानि।

३. धर्मत्वेनानुष्ठीयमानत्वं वेदकल्पकमिति। धर्मत्वञ्च शिष्टैरविगीतपरम्परया अद्यावध्यनुष्ठीयमानत्वं न तु चोदनालक्षणत्वमभिप्रेतम्।

## तत्त्वदीपनम्

कस्मान्निर्दिष्टमित्याशङ्क्य विषयत्वात्तस्य निर्देश इत्याह—**शास्त्रार्थ इति** ॥ तथापि ग्रन्थ एव नमस्कारः कस्मात् ? इति शङ्कां निरस्यति—**शास्त्रेति** ॥ प्रत्यग्ब्रह्मणोरेकत्वं चेत्, तर्हि किमिति न प्रथते ? इत्याशङ्क्य पदार्थशुद्ध्यभावादप्रथनमित्याह—**तत्त्वमिति** ॥ सकलशास्त्रार्थस्यैकेन पदेन प्रदर्शनमशक्यमित्याशङ्क्याह—**संक्षेपत इति** ॥ शास्त्रपर्यालोचनयैव विषयसिद्धेः किमत्र तत्कथनेन ? इत्याशङ्क्याह—**कृत्स्नस्येति** ॥ **तत्रेति** ॥ तत्त्वंपदार्थयोरैक्यलक्षण इत्यर्थः । तात्पर्यमप्युत्तरत्रैवाधिगन्तुं शक्यम्, किमत्र निर्देशेन ? इत्याशङ्क्य भाष्यस्य ब्रह्मात्मैक्यपरत्वे सिद्धे तत्प्रतिपादकशास्त्रे मुमुक्षोः प्रवृत्तिः, नेतरथेत्यभिप्रायेणोपसंहरति—**इति तदुभयमिति** ॥ इतिशब्दो हेत्वर्थः । मङ्गलाचरणं विषयप्रदर्शनं च यस्मादवश्यंभावि तस्मादित्यर्थः । **उभयमिति** ॥ शास्त्रार्थदेवतानमस्करणे । **ननु**—उभयपरत्वे वाक्यं भिद्येतेत्याशङ्क्यैकोऽर्थो मुखतोऽन्यस्त्वर्थादित्याह—**श्रुत्यर्थाभ्यामिति** ॥ **ननु**—अत्र तात्पर्यस्य दर्शितत्वादुत्तरत्र तात्पर्यकथनं व्यर्थम्, नच—अत्र ब्रह्मात्मैक्ये तात्पर्यं दर्शितम्, उत्तरत्र लक्षणादाविति न वैयर्थ्यमिति—शङ्क्यम् । पूर्वापरविरोधप्रसङ्गादित्याशङ्क्योत्तरत्र लक्षणादाववान्तरतात्पर्यं कथ्यते, अत्र ब्रह्मात्मैक्ये महातात्पर्यं कथ्यत इत्यविरोध इत्याह—**कृत्स्नस्येति** ॥ **विभज्येति** ॥ लक्षणादिपरतया अवान्तरतात्पर्यस्य दर्शनादिति यावत् । मूले—**"अनाद्यानन्देत्य"** स्यायमर्थः—ब्रह्म, कार्यम् कारणत्वात्, मृद्वदित्यनुमानात् ब्रह्मणोऽपि कार्यतया हेयत्वम्, ततश्चानमस्कार्यत्वमित्याशङ्क्य निरस्यति—**अनादीति** ॥ किं तत् स्वतो जायते ? उत कारणान्तरात् ? नाद्यः; व्याघातात् न द्वितीयः; तदनिरूपणात्, उत्पत्तिनिषेधकश्रुतिस्मृतिबाधाच्चेत्यर्थः । ज्वरभारादिनिवृत्तौ—'अहो सुखमि'ति सुखव्यपदेशात् दुःखाभाव एव सुखम्, अभावरूपत्वेऽपि तस्य ब्रह्मगुणतेति शङ्कां निराचष्टे—**आनन्देति** ॥ अभावस्य सप्रतियोगिकत्वात् सुखस्य प्रतियोगिप्रतीतिनिरपेक्षप्रतीतित्वाच्च नाभावत्वम् । "विज्ञानमानन्दं ब्रह्मे"ति ब्रह्मसामानाधिकरण्यान्न तस्य गुणत्वम्; "एकधैवानुद्रष्टव्य"मित्येकत्वप्रतिपत्तेश्चेत्यर्थः । ब्रह्म, परिणामि, उपादानत्वात्, मृद्वदित्यनुमानात् ब्रह्म परिणामीति केचिन्मेनिरे, तान् प्रत्याह—**कूटस्थेति** ॥ विमतम्, न परिणामि,

## ऋजुविवरणम्

भाष्यव्याख्यानप्रवृत्तत्वात् । नच भाष्यस्य तदर्थत्वप्रदर्शनार्थम् । अध्यासादिप्रतिपादकत्वात् अव्याख्येयत्वं च श्लोकस्य; भाष्यव्याख्यानाद्यभावात्, इत्याशङ्क्याह—**कृत्स्नस्येति** ॥ **ननु**—तर्हि नमस्कारः क्रियते, शास्त्रार्थश्च प्रदर्श्यत इति वाक्यभेद इत्याशङ्क्याह—**श्रुत्यर्थाभ्यामिति** ॥ अथवा—शास्त्रार्थप्रदर्शनम्, भाष्यस्य तत्र तात्पर्यप्रदर्शनं चेति वाक्यभेद इत्याशङ्क्याह—**श्रुत्यर्थाभ्यामिति** ॥ कथमेकेनैव कृत्स्नशास्त्रार्थः प्रदर्श्यते ? अथवा उत्तरत्र शास्त्रार्थप्रदर्शनं दृश्यते, तस्य वैयर्थ्यमित्याशङ्क्याह—**संक्षेपत इति** ॥ अत्र अवतारितश्लोके जीवब्रह्मणोरेकत्वयोग्यतां दर्शयितुं कानिचिद्विशेषणान्युपात्तानि, तेषामेवमुपयोगः । ब्रह्मणे नम इत्युक्ते जीवाद्भिन्नमिति शङ्का स्यात्; नमस्कारस्य भेदाधिष्ठानत्वात् कैश्चिदङ्गीकृतत्वाच्च, तन्निवृत्त्यर्थमाह—**आत्मन इति** ॥ शून्य एवात्मेति **शून्यवादिनः** तथा सति तादृशेनैकत्वं ब्रह्मणो न संभवतीति शङ्कां व्यावर्तयति—**सदिति** ॥ सद्रूपोऽप्यात्मा कायपरिमाण **इत्यार्हताः**, तथा सति तादृशेनैकत्वं ब्रह्मणो न संभवतीति शङ्का, तन्निवृत्त्यर्थम्—**अनन्तेति विशेषणम्** ॥ एवंभूतोऽपि जड इति **वैशेषिकादयः**, तन्निवृत्त्यर्थम्—**ज्ञानेति विशेषणम्** ॥ ज्ञानस्य जन्यताशङ्कानिवृत्त्यर्थम् आत्मनो वा परिणामिनित्यत्वशङ्कानिवृत्त्यर्थम्—**कूटस्थेति विशेषणम्** ॥ एवंभूतोऽपि अनानन्द इति **साङ्ख्याः**, तदर्थम्—**आनन्देति विशेषणम्** ॥ सोऽप्यानन्दो मोक्षावस्थायामेवेति **नैयायिकैकदेशिनः**[1], जन्य इति च सर्वे, तन्निवृत्त्यर्थम्—**अनादीति विशेषणम्** ॥ आत्मनो वा जन्यत्वशङ्कानिवृत्त्यर्थम्—**अनादीति विशेषणम्** ॥ एवंभूतस्यापि ब्रह्मणैकत्वं न संभवति । कर्तृत्वभोक्तृत्वप्रसिद्धेरिति, तद् व्यावर्तयति—**साक्षिण इति** ॥ एवंभूतेन जीवेन ब्रह्मण एकत्वं न संभवति । जगत्कारणत्वेन सप्रपञ्चत्वादिति, तन्निराकरोति—**अभूतद्वैतजालायेति** ॥ एतत्पदं पराक्रतेत्यनेनैव व्याख्यातम् । "तत्त्वंपदार्थविवेकोपायलभ्य" इत्यनेनैतद्विशेषणसाफल्यं द्योतितम् । **ननु**—शास्त्रार्थ एवात्र प्रदर्शितः, न तु टीकाकृता तत्र तात्पर्यमुक्तमित्याशङ्क्याभिप्रायमाह—**कृत्स्नस्येति** ॥ कथमत्र श्लोके कृत्स्नस्य शास्त्रस्य भाष्यस्य तात्पर्यं प्रदर्शितमिति गम्यत इति ? तदाह—**उत्तरत्रेति** ॥ अथवा—अनन्तरग्रन्थेऽपि विषये तात्पर्यं प्रदर्श्यते, अत्रापि तत्प्रदर्शने पौनरुक्त्यम्, यद्वा—अनन्तरग्रन्थे विषयप्रयोजने तात्पर्यं प्रदर्शितम्, अत्र तु विषयमात्रे; अतो विरोध इत्याशङ्क्याह—**कृत्स्नस्येति** ॥

१. नैयायिकेष्वेकदेशिनः भासर्वज्ञादयः न्यायभूषणे ।

## पञ्चपादिकाविवरणम्

देवतागुरुविषया पूजानमस्काराद्युपबृंहिता भक्तिर्वक्ष्यमाणप्रयोजनसम्पादिन्यपि श्रोतॄणामपि विद्याङ्गभावं प्रतिपद्यत इति वाङ्मनःकायप्रणिधानैर्गुरूनभिपूजयति—**नमःश्रुतिशिरःपद्मषण्डमार्तण्डमूर्तये इत्यादिभिः श्लोकैः** ॥

## तत्त्वदीपनम

निरवयवद्रव्यत्वात्, गगनवदित्यनुमानानुगृहीतया "निष्कलं निष्क्रियं शान्त"मित्यादिश्रुत्या बाधात् पूर्वानुमानस्याऽऽभासत्वमित्यर्थः। ज्ञानगुणं ब्रह्मेति यदुक्तम्, तन्निरस्यति—**ज्ञानेति** ॥ "विज्ञानमानन्दं ब्रह्मे"ति सामानाधिकरण्याद‌द्वितीयत्वाच्च ज्ञानं ब्रह्मस्वभावमित्यर्थः। 'घटज्ञानं समुत्पन्नम्' 'घटज्ञानं नष्टमि'त्युत्पत्तिविनाशप्रतिपत्तेर्न ज्ञानस्य स्वरूपत्वम्; इतरथा ब्रह्मणोऽप्यन्तवत्त्वप्रसक्तेः, तत्राह—**अनन्तेति** ॥ "न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते" इति ज्ञानस्य नित्यत्वप्रतीतेर्जन्मविनाशप्रतिभासस्यान्तःकरणवृत्तिविषयत्वात् स्वरूपत्वं युक्तमित्यर्थः। "असदेवेद"मिति श्रुतेः शून्यमेव तत्त्वमिति शङ्कां निरस्यति—**सदिति** ॥ "अस्तीत्येवोपलब्धव्यः" "सदेव सोम्येद"मित्याद्यनेकवचनविरोधादसच्छब्दोऽनभिव्यक्तनामरूपविषय इत्यर्थः। संसार्यसंसार्यादिभावेन जीवपरयोर्भेदं केचिदाचक्षते, तान् प्रत्याह—**आत्मन इति** ॥ "तत्त्वमसि" "अयमात्मा ब्रह्मे"त्यादिवचनविरोधात् विरुद्धधर्मप्रतिभासस्य च काल्पनिकभेदविषयत्वादभेद एवेत्यर्थः। "सर्वकर्मे"त्यादिवचनात् सप्रपञ्चं ब्रह्मेति पक्षं निरस्यति—**अभूतेति** ॥ निरस्तसमस्तभेदायेत्यक्षरार्थः। जडाजडयोस्तत्त्वतोऽभेदाऽनुपपत्तेर्निर्विशेषत्वप्रतिपादका स्थूला'दिवचनविरोधाच्च "सर्वकर्मे"त्यादिवचनमन्यथा व्याख्येयमित्यर्थः। ब्रह्मणः प्रत्यक्त्वे नमस्कार्यत्वानुपपत्तिः; भेदाभावात्, इत्याशङ्क्यापारमार्थिकभेदशालित्वादविरोध इत्याह—**अभूतेति** ॥ आत्मव्यतिरिक्तस्य सर्वस्य दृश्यत्वादपि न तद्धर्मत्वमित्याह—**साक्षिणे इति** ॥ आद्यश्लोकेनैवापेक्षितसिद्धेः किमुत्तरश्लोकैरित्याशङ्क्याह—**अत्रेत्यादिना** ॥ "यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ" इति वाक्यात् देवताभक्तिवत् गुरुभक्तेरपि विद्याप्राप्तिं प्रत्यन्तरङ्गत्वप्रतीतेर्गुरवोऽपि पूज्या इत्याह—**गुरूनिति** ॥ नमःशब्दार्थमाह—**वाङ्मन इति** ॥ प्रह्वीभावार्थस्य नमःशब्दस्य त्रयाणामपि नमस्काराणां साधारणत्वाद्वाङ्मनःकायप्रणिधानैरित्युक्तमिति द्रष्टव्यम्। गुरवः पूज्याश्चेत्, ग्रन्थाद् बहिरेव पूज्यन्ताम्? तत्राह—**अत्रेति** ॥ अत्रेत्यस्याभिपूजयतीत्यनेन सम्बन्धः। ग्रन्थ एव पूजायां हेतुमाह—**देवतेति** ॥ देवता चासौ गुरुश्चेति देवतागुरुः। दृष्टान्तार्थो वा देवताशब्दः। आदिशब्देन ध्यानं गृहीतम्। ग्रन्थाद्बहिः क्रियमाणा कर्तुरपेक्षितकरी यद्यपि; तथापि ग्रन्थे क्रियमाणा श्रोतॄणामन्यमनस्कानामपि फलदा स्यादिति मत्वा ग्रन्थे करणमित्यर्थः।

## ऋजुविवरणम्

अथवा—उत्तरत्र तत्तद्‌ग्रन्थव्याख्याकरणाद् अत्रापि तद्व्याख्याने अन्यतरवैयर्थ्यमित्याशङ्क्याह—**कृत्स्नस्येत्यादिना** ॥ अत्र साधारणव्याख्या। उत्तरत्र विशिष्टव्याख्यानम्। तात्पर्यशब्दस्त्वितरव्याख्योपलक्षणार्थः। वार्तिककारेणाप्येतदेवोक्तम्[1] सर्वव्याख्याप्रदर्शनावसरे—"साधारणी विशिष्टा च सूत्रव्याख्या द्विधा मता। विशिष्टा प्रतिसूत्रं या सर्वार्था त्वियमुच्यते ॥" इति ॥ अनिबद्धेनापि नमस्कारेण अभिमतप्रयोजनसिद्धेः, उत्तरत्र श्लोककरणं व्यर्थमित्याशङ्क्याह—**अत्रेति** ॥ भोगिनः सर्पाः, न भोगिनः अभोगिनः, वीतरागा वा; त एव परिवारसंपत्। निरस्तभूतिम् भस्मरहितं निरस्तैश्वर्यं वा। न उमार्धविग्रहः, अनुमार्धविग्रहः; तम्। यद्वा—अनुमा अनुमानम्, तदेवार्धविग्रहो यस्येति; भाष्ये अर्धस्य तदात्मकत्वात्, भाष्यकारस्य च तद्विग्रहत्वात्। अनुग्रम् शान्तम्। उन्मृदितं कालरूपं लाञ्छनं यस्मिन्निति; कण्ठे कालरहित इत्यर्थः। यद्वा—काललाञ्छन ईश्वरः; संहारकर्तृत्वात्, असौ तद्रहितः। अथवा—काललाञ्छनम् = जन्मादि, उन्मृदितं विनाशितं येन। विनायकेन विना वर्तत इति विनाविनायकः, तम्। यद्वा—विनाकृतो विनायकः बौद्धः येनासौ। यद्वा—विना संसारे नायकमिति। मकरन्दरसमित्येकार्थत्वेऽपि विशेषावस्थाद्योतनार्थं शब्दद्वयम्। ये पिबन्ति,

---

1. वार्तिककारः भट्टपादः (१. श्लो. २८)।

### पञ्चपादिकाविवरणम्

यत्कार्यमुद्दिश्य मङ्गलाचरणं सम्पादितम्, तन्निर्दिशति **पदादिवृन्तभारेणेति**। ननु—नेदं भाष्यं व्याख्यानपदवीमुपारोढुमर्हति; भाष्यलक्षणाभावात्, "सूत्रार्थो वर्ण्यते यत्र वाक्यैः सूत्रानुकारिभिः। स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुरि" ति

### तत्त्वदीपनम्

श्लोकानामेषोऽर्थः—बदरा यस्मिन् देशे सन्ति स बादरः, स एवायनं यस्य स बादरायणः, बादरायण इति संज्ञा यस्य, स बादरायणसंज्ञः; तस्मै तपोनिर्धूतकल्मषायेत्यर्थः। श्रवणे पौष्कल्यमाह—**श्रुतीति**॥ श्रुतीनां शिरांसि तान्येव पद्मानि श्रुतिशिरःपद्मानि, तेषां षण्डः समूहः, तद्विकसने पटुतरा मार्तण्डवत् मूर्तिर्यस्य स तथा। मुनय इति मननसंपत्तिमाह। श्रवणादावधिकारयोग्यतामाह—**शमेति**॥ शमो वेश्म यस्येति शमवेश्मा, शमस्य वेश्मेति वा। भाष्यार्थप्रतिपत्त्यर्थं तत्कर्तारं नमति—**नमामीति**॥ प्रसिद्धशङ्करविलक्षणं परमहंसपरायणं शङ्कराचार्यं नमामीत्यर्थः। वैलक्षण्यमाह—**अभोगीति**॥ भोगिनामधेयसर्पपरिवारसंपन्नः प्रसिद्धः शंकरः सः, अयं तु निरस्तसमस्तैषणमुनिवरनिकरपरिवृत इत्यर्थः। भूतिः = भसितम्, तदनुलिप्तगात्रः सः, अयं त्वैश्वर्यलक्षणभूतिविधुर इत्यर्थः। गिरिजार्धविग्रहः सः, अयं तु न तथा भवति। स क्रूर उग्रत्वात्, अयं तु शान्त इत्याह—**अनुग्रमिति**॥ कण्ठे कालः सः, अयं तु कृष्णाऽविद्यालाञ्छनरहित इत्याह—**उन्मृदितेति**॥ विनायको गणेशः तत्सहितः सः, एष विनायकं विना वर्तत इति; निरस्तसमस्तबौद्धसमय इत्यर्थः॥ ३॥

भाष्यकर्तृत्वोपाधौ शंकराचार्यं भक्त्यतिशयद्योतनाय पुनः पूजयति—**यद्वक्त्रेति**॥ भाष्यमेव वित्तं येषां ते भाष्यवित्तकाः, स्वार्थे कप्रत्ययः। ते च ते गुरवश्च ते, तथोक्ताः। भाष्यवित्तकानां गुरव इति वा विग्रहः। पूर्वस्मिन् पक्षे नमस्कार्यत्वे ब्रह्मविद्यासंप्रदायकर्तृत्वरूपहेतुं दर्शयति—**यद्वक्त्रेति**॥ षष्ठीसमासपक्षे भाष्यवित्तकत्वं कुतो लब्धमित्याशङ्क्य गुरुभ्य एवेत्याह—**यद्वक्त्रेति**॥ येषां वक्त्रं यद्वक्त्रम्, तदेव मानसाख्यं सरः, तस्मात्प्रतिलब्धं जन्मानेनेति तत्, तथोक्तम्, तच्च भाष्यारविन्दं चेति तथा, तस्य मकरन्दः, यद्वक्त्रमानससरःप्रतिलब्धजन्मभाष्यारविन्दमकरन्दः; तस्य रसमित्यर्थः। मकरन्दः पुष्परस इति मकरन्दशब्दस्य पुष्परसे प्रसिद्धत्वात् रसशब्दोऽनर्थक इति चेत्, तद्गतविशेषावस्थाद्योतकत्वात् नानर्थक इति ब्रूमः। प्रत्याशम् प्रतिदिशम्। दिशं दिशं प्रति स्थित्वेत्यर्थः। उन्मुखाश्च ते विनीताश्च उन्मुखविनीताः, ते च ते विनेयाश्चेति, तथा, अत एव भृङ्गवद् भृङ्गा इति उन्मुखविनीतविनेयभृङ्गाः। उन्मुखत्वं नामास्तिक्ययुक्तता, विनीतत्वमौद्धत्यादिराहित्यम्॥ ४॥

### ऋजुविवरणम्

तान् नमामीत्यन्वयः। यद्वा—येषां वक्त्रं यद्वक्त्रमिति यच्छब्दोपात्तानुद्दिश्य नमस्कारः। न चैकेनैव श्लोकेनालमिति युक्तं वक्तुम्; [1]अनुत्पत्तौ अङ्गत्वायोगात् कियतामङ्गत्वमित्यपरिज्ञानाच्च सर्वसाफल्यम्।

नमस्कारानन्तरं प्रतिज्ञाकरणं किमर्थमित्याशङ्क्य, फलवद्ग्रन्थकरणसन्निधानान्नमस्कारस्यैतदर्थत्वं द्योतयितुमित्याह[2]—**यत्कार्यमुद्दिश्येति**॥ **ननु**—पूर्वमेव भाष्यव्याख्यानस्य प्रक्रान्तत्वात् किं प्रतिज्ञाकरणेन ? इत्याशङ्क्याह—**तन्निर्दिशतीति**॥ किमर्थं पूर्वं भाष्यस्य तात्पर्यप्रदर्शनं कृतम् ? उच्यते; अकृत्वापि वाचनिकीं प्रतिज्ञां तत्तात्पर्यव्याख्यानदर्शनात्। यथास्मिन्नेव तावद्भाष्ये ग्रन्थव्याख्यानं तु प्रतिज्ञापूर्वकमिति तदर्थं प्रतिज्ञाकरणम्। भाष्यकारेणापि **"यथा चायमर्थः"** इत्यनेन कृता प्रतिज्ञा। अथवा—आद्यश्लोक एव प्रतिज्ञापि कृता; अप्रतिज्ञातव्याख्यानुपपत्तेः, उत्तरत्र प्रतिज्ञाकरणं तु सर्वत्र प्रतिज्ञाकरणं व्यर्थमिति बौद्धमतनिरसनद्वारेण प्रतिज्ञाया अङ्गत्वं द्योतयितुम्। उक्तं च पुनः प्रतिज्ञाकरणस्यैतदेव प्रयोजनम्—"तस्य निमित्तपरीष्टिः" इत्यत्र व्याख्यातृभिः[3]—"पूर्वमेवाध्यायार्थप्रतिज्ञे"त्येवं वदद्भिः। "पदादिवृन्तभारेणे"त्यनेन पदच्छेदादिव्याख्याविषयत्वं दर्शितम्। 'प्रसन्नगम्भीरमि'त्यनेन तात्पर्यव्याख्यानयोग्यत्वम्। अनन्तरग्रन्थस्य शङ्कामाह—**ननु नेदमिति**॥ कथं लक्षणाभाव इत्याशङ्क्यापरिज्ञाते लक्षणे तदभावावगमायोगात्स्वरूपमाह—**सूत्रार्थ इति**॥ तत्र 'वर्ण्यते यत्र किञ्चित्तद्भाष्यमि'त्युक्ते शब्दवर्णनस्यापि भाष्यत्वं भवेत्, तदर्थमर्थ इति विशेषणम्। 'अर्थो वर्ण्यते यत्र तद्भाष्यमि'त्युक्ते सूत्रस्यापि भाष्यत्व स्यात्, तदर्थम्—सूत्रेति विशेषणम्। 'सूत्रार्थो वर्ण्यते यत्र तद्भाष्यमि'त्युक्ते पदवृत्तेरपि स्यात्, तदर्थम्—वाक्यैरिति। तथापि

---

१. भाष्यस्य नित्यत्वं भाष्यकारमुखे अभिव्यक्तिश्चेति पक्षे-इत्यर्थः।

२. फलवत्सन्निधौ अफलंतदङ्गमिति न्यायात्।

३. सुचरितमिश्रैः।

## पञ्चपादिकाविवरणम्

हि भाष्यलक्षणं वदन्ति। तत्र "थातो ब्रह्मजिज्ञासे" ति सूत्रेऽनुवादपरिहाराय शास्त्रे पुरुषप्रवृत्तिसिद्धये च कर्तव्येतिपदमध्याहर्तव्यम्। तत्र जिज्ञासापदेनान्तर्णीतं विचारमुपलक्ष्यानुष्ठानयोग्यतया साधनचतुष्टयसम्पन्नस्य ब्रह्मज्ञानाय विचारः कर्तव्य इति सूत्रवाक्यस्य श्रौतोऽर्थः सम्पद्यते। अर्थादधिकारिविशेषणमोक्षसाधनं ब्रह्मज्ञानमिति सिध्यति, सन्निधानाच्च वेदान्तवाक्यविचारः,

## तत्त्वदीपनम्

नमस्कारानन्तरं टीकाकृतः प्रतिज्ञाकरणं व्यर्थमित्याशङ्क्य, फलवद्ग्रन्थकरणसन्निधानात् नमस्कारस्य तच्छेषत्वद्योतनार्थं प्रतिज्ञातम्; सन्निहितप्रयोजनसम्भवेऽसन्निहितफलकल्पनानुपपत्तेरित्याह—**यत्कार्यमिति**॥ "पदादिवृन्ते" त्यस्यैषोऽर्थः—भाष्यस्य व्याख्येयत्वमाह—**गम्भीरमिति**। तर्ह्यनवगाह्यत्वादव्याख्येयत्वम्? नेत्याह—**प्रसन्नेति**॥ आपाततः प्रसन्नत्वम्, विचारणया तु गम्भीरत्वमित्यर्थः। गाम्भीर्यमेवाह—**पदादीति**॥ पदच्छेद-पदार्थकथन-विग्रह-वाक्ययोजनाऽऽक्षेप-समाधानलक्षणप्रसवबन्धनरूपवृन्तभारेणेत्यर्थः॥ ५॥

भाष्यस्य व्याख्येयत्वं प्रतिज्ञाय, तदितरव्याख्याने प्रतिज्ञाविरोधः स्यादिति शङ्कते—**ननु नेदमिति**॥ इदं भाष्यं न भवति; अतो न व्याख्यानपदवीमुपारोढुमर्हतीति योजना। भाष्यकृत्प्रणीतत्वेन भाष्यत्वं तस्य स्पष्टमित्याशङ्क्य, न तत्प्रणीतत्वमात्रेण भाष्यत्वसिद्धिः; अतिप्रसङ्गात्, अतो भाष्यलक्षणलक्षितत्वेन भाष्यत्वं वक्तव्यम्, न च तन्निरूपयितुं शक्यमित्याह—**भाष्यलक्षणेति**॥ लक्षणावगममन्तरेण तदभावावगमानुपपत्तेर्लक्षणमाह—**सूत्रार्थ इति**॥॥ यत्रार्थो वर्ण्यते तद्भाष्यमित्युक्ते सागरादिवर्णनस्यापि भाष्यत्वं स्यात्, तद्व्यावृत्त्यर्थम्—सूत्रेति विशेषणम्। पदवृत्तिं व्यावर्तयति—**वाक्यैरिति**॥ वार्तिकव्यावृत्त्यर्थमाह—**सूत्रानुकारिभिरिति**॥ वार्तिके सूत्रप्रतिकूलवर्णनस्यापि सम्भवात् व्यावृत्तिरित्यर्थः। वृत्तिं व्यावर्तयति—**स्वपदानीति**॥ अस्त्वेवं भाष्यलक्षणम्, कथं तदभावः प्रकृते? इत्याशङ्क्य, किं सौत्रश्रौतार्थसंस्पर्शित्वेन भाष्यलक्षणाक्रान्तत्वम्, उत आर्थिकार्थसंस्पर्शित्वेन? उभयथाप्यसम्भव इति प्रतिपादयितुम्—प्रथमं साकाङ्क्षत्वेन सूत्रस्याऽऽनर्थक्यशङ्कां निरस्यति—**तत्राथात इत्यादिना**॥ तत्र भाष्यलक्षणे एवं व्यवस्थिते इत्यर्थः;। सर्वज्ञबादरायणप्रणीतत्वादानर्थक्यानुपपत्तेरध्याहारेणापि सूत्रं योजनीयमित्याह—**अध्याहर्तव्यमिति**॥ तत्रापि योग्यमेवाध्याहर्तव्यमित्याह—

## ऋजुविवरणम्

वार्तिकस्य भाष्यत्वम्, तदर्थम्—सूत्रानुकारिभिरिति पदम्। उक्तानुक्तदुरुक्तचिन्तनाराहित्यमनुकारित्वम्। अथवा—"पश्वादिभिश्चाविशेषात्" इतिवदनुकरणम्। एतावत्यपि वृत्तिग्रन्थे अतिव्याप्तिः, तद्व्यावृत्त्यर्थम्—स्वपदानीति विशेषणम्। कथमस्य लक्षणत्वमिति? तदाह—भाष्यविदो विदुरिति। तत्र सूत्रार्थावर्णनादभाष्यत्वमिति दर्शयितुं सूत्रस्वरूपं तदर्थं च प्रथमं दर्शयति—**तत्राथात इति**॥ अध्याहारे प्रयोजनमाह—**अनुवादेति**॥ अनुवादवदनुवादः; सिद्धमात्रकीर्तनात्। किं तत्परिहारेणेति? तदाह—**पुरुषप्रवृत्तीति**॥ प्रयोजनसमुच्चयो वा। अथवा—अनुवादो निष्प्रयोजनत्वम्। **ननु**—निष्प्रयोजनत्वपरिहाराय प्रयोजनमेव कल्प्यम्, न तु विध्यध्याहारेण कृत्यम्; व्यधिकरणत्वप्रसङ्गादित्याशङ्क्याह—**पुरुषप्रवृत्तीति**॥ शास्त्रे प्रवृत्तिरेव प्रथमसूत्रस्य प्रयोजनम्, विध्यभावे तदभाव इति भावः। शास्त्रस्य वा निष्प्रयोजनत्वपरिहारायेति। **ननु**—विधौ सति शास्त्रे प्रवृत्तिर्भवेत्, न तु शास्त्रस्य प्रयोजनवत्त्वमिति, तदाह—**पुरुषप्रवृत्तिसिद्धय इति**॥ अप्रवृत्तप्रेरणात्मको विधिरपुरुषार्थे प्रेरयितुमशक्नुवन् प्रवृत्तिविषयस्य पुरुषार्थसाधनत्वं कल्पयति; प्रवृत्तिसिद्धये कल्पितत्वादित्यर्थः। तदुक्तम्—'विधौ हि तमतिक्रम्य स्वर्गादिः साध्यतेष्यते' इति[१]॥ **केचित्**—अनु पश्चात् वाद इति मुख्यमेवानुवादमाश्रित्य ज्ञातज्ञापनपरिहारायेति—वर्णयन्ति; आपाततो ज्ञातत्वादिति। **तन्मन्दम्**; ज्ञाते वस्तुनि विध्यध्याहारेऽपि ज्ञातत्वापरिहारात्, आपाततः कर्तव्यताया विज्ञातत्वात्। उक्तं च "स्वेनैव कर्तव्यताज्ञानवन्तमधिकृत्य सूत्रं प्रवृत्तमि"ति—"नित्येनैवाध्ययनविधिनेत्यादिना"। अतश्च मूलग्रन्थविरुद्धं तद्व्याख्यानमिति उपेक्षितम्। ननु—एवमपि पुरुषप्रवृत्तिर्न

---

१. श्लो० वा० ५.१५. असतिविधौ समानपदश्रुत्या धात्वर्थ एव भावनाभाव्यो भवेत्। यागादेः स्वर्गसाधनत्वं न स्यात्। विधौ सति तेन पुरुषप्रवर्तनात्मकेन धात्वर्थमुल्लङ्घ्यविप्रकृष्टमपि स्वर्गादिमेव भाव्यतया गृह्णातीत्यर्थः।

## पञ्चपादिकाविवरणम्

इति श्रुत्यर्थाभ्यां साधनचतुष्टयसम्पन्नस्य मोक्षसाधनब्रह्मज्ञानाय वेदान्तवाक्यविचारः कर्तव्य इति सूत्रवाक्यस्य तात्पर्येण प्रतिपाद्योऽर्थोऽवगतः।

## तत्त्वदीपनम्

**कर्तव्येति** ॥ योग्यत्वमुत्पादयति—**शास्त्र इति** ॥ पुरुषप्रवृत्तिरेव मा भूदित्याशङ्क्याह—**अनुवादेति** ॥ निरर्थकसिद्धबोधिवाक्यमनुवादशब्दार्थः। भावप्रधानश्चायं निर्देश इति द्रष्टव्यम्। कर्तव्यपदाध्याहारेऽप्यानर्थक्यं तदवस्थम्; प्रकृतिप्रत्ययार्थयोर्ज्ञानेच्छयोः कर्तव्यत्वासंभवात्, इत्याशङ्क्य जिज्ञासापदेन विचारं लक्षयित्वा तस्य कर्तव्यतोच्यत इत्याह—**तत्र जिज्ञासापदेनेति** ॥ तत्र सूत्रे इत्यर्थः। लक्षणायां हेतुमाह—**अनुष्ठानयोग्यमिति** ॥ विचारस्यैव लक्षणायां को हेतुः? इत्याशङ्क्य, तस्य जिज्ञासापदवाच्यसंबन्धादित्याह—**अन्तर्णीतमिति** ॥ ज्ञानेच्छयोरन्तर्मध्ये नीतमिति यावत्। परोक्षतया ज्ञातेऽपरोक्षफलं ज्ञानमिष्यते, संदिग्धे च निश्चयफलम्, तच्च विचाराविनाभूतमिति विचारे लक्षणेत्यर्थः। **अथवा**—जिज्ञासा कर्तव्या, इष्यमाणज्ञानस्य साक्षादिच्छासाध्यत्वासंभवात्तन्निर्वाहको विचार आक्षिप्यते। इच्छाया अपि साक्षात्साधनत्वेनानन्वयात्तन्निर्वाहको विचार आश्रयणीयः; क्रियायाः कालान्तरभाविफलसाधनत्वानुपपत्त्या अपूर्वाभ्युपगमवदित्यर्थः। एवमप्यधिकारि-फलसाकाङ्क्षत्वेनानर्थक्यमित्याह—**साधनचतुष्टयेति** ॥ अथशब्दात् विशिष्टाधिकारिप्रतिपत्तेः इच्छाविषयत्वात् ब्रह्मज्ञानस्य फलत्वं चेत्यर्थः। ज्ञानस्य सुखदुःखप्राप्तिनिवृत्त्यन्यतरत्वाभावादफलत्वमित्याशङ्क्याऽऽर्थिकमाह—**अर्थादिति** ॥ **इदमत्राऽऽकूतम्**—ब्रह्मज्ञानाय विचारकर्तव्यता तावत्प्रतीयते, न च ब्रह्मज्ञानस्य स्वरूपेण पुमर्थता; दुःखनिवृत्तिसुखावाप्त्यन्यतरत्वाभावात्। तस्मात् फलविशेषाकाङ्क्षायामथशब्दोपात्ताधिकारिविशेषणं मोक्षः फलत्वेन संबध्यते; यथा 'स्वर्गकामो यजेते'त्यत्राधिकारिविशेषणस्य फलत्वम्, तद्वत्। ननु—अधिकारिविशेषणत्वेन मोक्षस्य फलत्वम्? उत काम्यत्वेन? न तत्र प्रथमः कल्पोऽवकल्पते; जीवनगृहदाहादेरपि फलताप्रसङ्गात्। न द्वितीयः, "परस्त्रीकामः प्रायश्चित्तं कुर्या" दित्यत्र काम्यमानयोषित्पिण्डस्यापि फलतापातात्। तस्मादधिकारिविशेषणस्य फलत्वमसङ्गतमिति चेत्, नैतत्; न विशेषणत्वमात्रेण

## ऋजुविवरणम्

संभवति; ज्ञानेच्छयोरननुष्ठेयत्वादिति, तत्राह—**तत्र जिज्ञासापदेनेति** ॥ ननु—कथं विचारलक्षणा? संबन्धाभावादिति? तत्राह—**अन्तर्णीतमिति** ॥ 'विचारसाध्यज्ञानेच्छयोर्जिज्ञासाशब्दः प्रयुक्त इति भावः। एवमपि कथं विचारस्यैव लक्षणा? अन्येषामपि संबन्धिनां भावात्; अथवा, प्रतीतयोरविधेयत्वेऽपि विधित्वमेव न भवेत्; 'अग्निना[1] सिञ्चेदि'तिवत्; तथाऽविधित्वादेव न लक्षणा संभवतीत्याशङ्क्याह—**अनुष्ठानयोग्यतयेति** ॥ साध्ये प्रवृत्तो विधिस्तत्साधन एव योग्ये प्रथमं पर्यवस्यति फलभावनाप्रवृत्तविधिरिव तत्साधने, तथा विधित्वेनावधृततात्पर्य्ये प्रतीताविधानेऽपि तत्संबन्धिविधानं युक्तम्, "सिञ्चेदि"ति वाक्यस्य तु आनर्थक्यमेव; तात्पर्यानवधारणात्, अगत्या लक्षणापि विधौ[2] दृष्टा "अधर्मन्तर्वेदी"त्यत्र। अथशब्दार्थमाह—**साधनचतुष्टयेति** ॥ जिज्ञासाशब्दस्य वाचनिकार्थमाह—**ब्रह्मज्ञानायेति** ॥ ननु—अन्यस्यापि सूत्रार्थत्वेन प्रतिपाद्यमानत्वं दृश्यते, अतः कथमेतावानेव सूत्रार्थ इति? तत्राह—**श्रौतार्थं इति** ॥ ननु—कथं ब्रह्मज्ञानस्य साध्यत्वम्? अपुरुषार्थत्वात्, नापि पुरुषार्थसाधनत्वम्; तत्साधनत्वे मानाभावात्, इत्येतामाशङ्कां निवर्तयितुमार्थिकार्थमाह—**अर्थादिति** ॥ विशेषणमिति व्यस्ते पाठे विशेषणं मोक्षो यत इति व्याख्येयम्। यद्वा—ब्रह्मज्ञानकामेन विचारः कर्तव्यः, ज्ञानं वा कर्तव्यमित्यपि सूत्रार्थोऽस्तीत्याह—**अर्थादिति** ॥ सप्रमाणं विचार्यस्वरूपमाह—**सन्निधानादिति** ॥ श्रवणादिविधायकवाक्यसन्निधौ तेषां पठितत्वात् तत्सन्निधिरेवास्यापि सन्निधिः; तदितिकर्तव्यताभूतत्वात्। अथवा—"औपनिषदमि"ति विशेषणसामर्थ्याद् ब्रह्मज्ञानजननयोग्यत्वं तेषामेवेति योग्यतैव सन्निधिरभिप्रेता। एवमवयवार्थान् प्रतिपाद्य समस्तवाक्यार्थं दर्शयति—**इति श्रुत्यर्थाभ्यामिति** ॥ कथं सकलस्य सूत्रार्थत्वमिति ?तदाह—**तात्पर्येणेति** ॥

१. अग्निनासिञ्चेत् इति अयोग्यतया न विधिः।

२. विधौ लक्षणा अर्धमन्तर्वेदि मिनोति अर्धं बहिर्वेदीत्यादौ यूपमाने कर्तव्ये वेद्यन्तः एकोभागो यूपस्य बहिरन्योभागो यथा भवेत् तथा स्थलविशेषः ग्राह्य इत्यर्थः। अर्धयोर्विधाने वाक्यभेदापत्तेः। पू० मी० ३।७।६।

## पञ्चपादिका

**"युष्मदस्मत्प्रत्ययगोचरयोरि"त्याद्य"हमिदं ममेदमिति नैसर्गिकोऽयं लोकव्यवहारः" इत्यन्तं भाष्यम्, "अस्यानर्थहेतोः प्रहाणायाऽऽत्मैकत्वविद्याप्रतिपत्तये सर्वे वेदान्ता आरभ्यन्ते" इत्यनेन भाष्येण पर्यवस्यत् शास्त्रस्य विषयः प्रयोजनं**

## पञ्चपादिकाविवरणम्

तत्रेदं भाष्यं न सूत्रार्थकलामपि प्रतिपादयति, अतो न व्याख्यानार्हम्—इति, एतं शङ्कितं दोषं परिहरन् भाष्यखण्डस्य सूत्रेणार्थादुपात्तविषयप्रयोजनप्रतिपादने तात्पर्यं दर्शयति—**"युष्मदस्मत्प्रत्ययगोचरयोरि"त्याद्य"हमिदं ममेदमिति नैसर्गिकोऽयं लोकव्यवहारः" इत्यन्तं भाष्यम्, "अस्यानर्थहेतोः प्रहाणायाऽऽत्मैकत्वविद्याप्रतिपत्तये सर्वे वेदान्ता आरभ्यन्ते" इत्यनेन भाष्येण पर्यवस्यत्, शास्त्रस्य विषयः प्रयोजनं चार्थात् प्रथमसूत्रेण सूत्रिते इति प्रतिपादयतीति** ॥ तत्र "नैसर्गिकोऽयं लोकव्यवहार"

## तत्त्वदीपनम्

काम्यत्वमात्रेण वा मुक्तेः फलत्वम्, किं तु काम्यत्वे सत्यनिन्दितत्वेन। तस्मादधिकारिविशेषणीभूतो मोक्षः फलमिति सुष्ठूक्तमिति। विचारस्य विषयसाकाङ्क्षत्वात्तस्य चानिर्दिष्टत्वात्साकाङ्क्षत्वशङ्कां निरस्यति—**सन्निधानादिति** ॥ वेदान्तवाक्यविचार इति च सिध्यतीति संबन्धः। प्रत्यक्षाद्यगोचरत्वेनोपनिषन्मात्रप्रतिपाद्यत्वात् तद्विषयो विचारः साधनमित्यर्थः। सूत्रार्थवर्णनमुपसंहरति—**इति श्रुत्यर्थाभ्यामिति** ॥

फलितं दर्शयति—**तत्रेति** ॥ "युष्मदित्या"दि सूत्रार्थकलामपि न प्रतिपादयति, अतो न भाष्यमिति योजना। अभाष्यत्वसमर्थनफलमाह—**अत इति** ॥ इतिशब्दः पूर्वपक्षसमाप्तिद्योतनार्थः। तदुत्तरत्वेन टीकामवतारयति—**एतं शङ्कितमिति** ॥ भाष्यद्वयमेव कस्मादाक्षिप्य समाधीयते ? उत्तरत्राप्याक्षेपसमाध्योरविशेषादित्याशङ्क्य, सूचितविषयप्रयोजनहेत्वध्यासविषयस्य "युष्मदस्मदि"त्यादेर्भाष्यत्वसिद्धावध्यासविषयोत्तरभाष्यस्यापि भाष्यत्वं सिध्यतीत्यभिसंधायाह—**भाष्यखण्डस्येति** ॥ भाष्यद्वयस्येत्यर्थः। उत्तरभाष्यस्य एतत्समानयोगक्षेमत्वं दर्शयितुं खण्डशब्दप्रयोग इत्यर्थः। किम्—इत्यन्तं यद्भाष्यम्, तत्प्रतिपादयतीत्यन्वयः ? किं वेत्यन्तं यत्, तद्भाष्यमिति ? नाद्यः ॥ अद्यापि भाष्यत्वासिद्धेस्तत्प्रतिपादयतीत्युक्त्यनुपपत्तेः, न द्वितीयः; प्रतिपादयतीत्यत्र कर्त्रभावप्रसङ्गात्। न च—इत्यन्तस्यैव ग्रन्थस्य कर्तृत्वेन संबन्ध इति—शङ्क्यम्; तस्य विषयादिप्रति-

## ऋजुविवरणम्

यदर्थमयमर्थो दर्शितः, तदाह—**तत्रेदमिति** ॥ एवं शङ्कामुपवर्ण्य तन्निवृत्तौ तात्पर्यमाह—**एतं शङ्कितदोषमिति** ॥ ननु—आदौ वाचनिकार्थमनुक्त्वा किमित्याभिप्रायिकार्थकथनमिति ? तत्राह—**एतं शङ्कितदोषं परिहरन्निति** ॥ ननु—आद्यभाष्यस्यावसरप्राप्तत्वात्तस्यैव सूत्रस्पर्शो वक्तव्यः, किमन्येषां तत्प्रदर्शनेन ? इत्याशङ्क्याह—**भाष्यखण्डस्येति** ॥ भाष्यखण्डस्य शङ्कितं दोषं परिहरन्नित्यन्वयः। आद्यस्यावसरप्राप्तत्वेऽपि लाघवात्सर्वविषयौ चोद्यपरिहारौ तयोरेकत्वाच्च कृतौ। यद्वा—समुदायतात्पर्यपुरस्सरत्वात् सर्वत्रावान्तरतात्पर्यस्येति भावः। उत्तरत्र चान्वयः—भाष्यखण्डस्य प्रतिपादने तात्पर्यमिति। ननु—भाष्ये विषयप्रयोजनप्रतीत्यभावात् कथं टीकाकृता तत्प्रतिपादकत्वमुच्यते ? इत्याशङ्क्याह—**तात्पर्यं दर्शयतीति** ॥ तत्र पर्यवस्यत् प्रतिपादयतीति टीकाग्रन्थस्यान्वयः प्रतिभाति; निरन्तरत्वात्—यथा [1]षष्ठाद्यपूर्वपक्षे लिङः क्रियया। उक्तं च भट्टपादैः—"अनन्तरेण[2] संबद्धः स्यात् परस्याप्यनन्तरः।" इति। तथा सति तस्य भाष्यस्य निरन्तरलक्षणादेरेव तेन पर्यवसानात् न विषयप्रयोजनप्रतिपादकत्वम्, नान्यभाष्ययोः। अथ—इत्यन्तं प्रतिपादयतीत्यन्वयः, तथा सति

---

१. षष्ठाद्ये-पूर्वमीमांसायां षष्ठाध्यायस्य प्रथमाधिकरणे 'द्रव्याणां कर्मसंयोगे गुणत्वेनाभिसम्बन्धः' इति जैमिनिसूत्रं, तदर्थश्च द्रव्याणां स्वर्गपश्वादीनां कर्मसंयोगे कर्मभिः संयोगे श्रूयमाणे कर्मजननसामर्थ्यात् गुणत्वेनाभिसम्बन्धः। स्वर्गकामो यजेत इत्यत्र न यागस्य करणत्वेनान्वयः अपितु स्वर्गशब्दितचन्दनादिद्रव्याणां इति पूर्वपक्षसूत्रार्थः। तद्रीत्या लिङर्थस्य शब्दभावनायाः अर्थभावनया सम्बन्ध इत्यर्थः।

२. अनन्तरेण—सिद्धान्ते अनन्तरेण अव्यवहितेन यागेन भावनायां करणत्वेनाभिसम्बन्धः। परस्यापि फलस्यापीत्यर्थः। तदपेक्षया अव्यवहितो धात्वर्थः पदश्रुतेः।

## पञ्चपादिकाविवरणम्

इत्यन्तं भाष्यमिति ग्रन्थः **"शास्त्रस्य विषयं प्रयोजनं च प्रतिपादयती"**त्युत्तरेण सम्बध्यते। ननु—कथं भाष्यद्वयमेव विषयप्रयोजने प्रतिपादयति ? शास्त्रारम्भनिमित्तविषयप्रयोजनसिद्धिहेतोरध्यासस्योपस्थापकत्वादिति ब्रूमः; हेतुवचनं हि प्रतिज्ञातार्थमेव साधयति ॥ तथाहि—एतत् शास्त्रम्, आरम्भणीयम्, सम्भावितविषयप्रयोजनवत्त्वात्, कृष्याद्यारम्भवत्; शास्त्रं च सम्भावितविषयप्रयोजनम्, अविद्यात्मकबन्धप्रत्यनीकत्वात्, जाग्रद्बोधवदिति। तदेवं शास्त्रस्यारम्भनिमित्तविषयप्रयोजनवत्त्वप्रत्यनी-

## तत्त्वदीपनम्

पादकताया एवानुपलब्धेः, इति शङ्कां निरस्यति—**तत्रेति** ॥ यत् इत्यन्तम्, तद्भाष्यमिति विधीयते, न च प्रतिपादयतीत्यत्र कर्त्रभावप्रसङ्ग इत्याह—**इति ग्रन्थ इति** ॥ तत्र टीकायामेष ग्रन्थः प्रतिपादयतीति योजना। न च—प्रतिपादकत्वमसिद्धमिति—शङ्कयम्; तस्य वक्ष्यमाणत्वादित्यर्थः। **अथवा**—प्रतिपादयतीत्येतद्विधीयते। न च भाष्यत्वासिद्धेरननुवादः; भाष्यशब्दस्य ग्रन्थमात्रवाचित्वादित्यर्थः। इत्यन्तं भाष्यमित्यन्तग्रहणसामर्थ्यादवधारणं प्रतीयते, तत् केनान्वेतीति विवेचनीयम्—किं भाष्यद्वयेन ? उत विषयप्रयोजनाभ्याम् ? आहोस्वित् प्रतिपादयतीत्यनेन ? त्रिधाऽपि नान्वय इत्याह—**ननु कथमिति** ॥ अत्रैषाऽक्षरयोजना—भाष्यद्वयमेव कथं विषयादिकं प्रतिपादयति ? "अस्यानर्थहेतोरित्य"स्यापि तत्प्रतिपादकत्वात्, भाष्यद्वयं विषयप्रयोजने एव कथं प्रतिपादयति ? अध्यासस्यापि प्रतिपादकत्वात्, भाष्यद्वयं प्रतिपादयत्येवेति कथम् ? अध्यासस्यैव प्रतिपादकत्वात्, न ह्यन्यप्रतिपादकमन्यप्रतिपादकं भवतीति। कल्पत्रयेऽप्युक्तो दोषोऽत्र नावतरतीत्याह—**शास्त्रेति** ॥ शास्त्राऽऽरम्भनिमित्ते ये विषयप्रयोजने तयोः सिद्धिहेतोरित्यर्थः। तत्रैषा योजना—भाष्यद्वयमेव विषयादिकं प्रतिपादयति, नोत्तरम्। अस्यैव हेतूत्थापकत्वात्, उत्तरस्यैतत्सिद्धविषयाद्यनुवादकत्वात्। तथा भाष्यद्वयं विषयप्रयोजने एव प्रतिपादयति, नाध्यासम्; लक्षणादिभाष्यसिद्धाध्यासानुवादित्वात्, तथेदं विषयप्रयोजने प्रतिपादयत्येव; हेतूत्थापकत्वादिति। हेतूत्थापकं कथं विषयप्रयोजने प्रतिपादयेत् ? न खलु कलशशब्दः कालविषयो दृष्ट इति, तत्राह—**हेतुवचनमिति** ॥ **एवकारः** साधयतीत्यनेन संबध्यते—साधयत्येवेति। **हि**शब्दो दृष्टान्तार्थः, यथा धूमवत्त्वं हेतुवचनमग्निमत्त्वं साधयति, तथेत्यर्थः। अध्यासस्य विषयप्रयोजनसिद्धिहेतुत्वं विषयादेश्च शास्त्रारम्भगमकत्वमुक्तम्, तदसम्भवि; व्याप्त्यभावात्, इत्याशङ्क्य विशेषांशे व्याप्त्यभावेऽपि

## ऋजुविवरणम्

"पर्यवस्यत्" इत्यस्यानन्वयः। अथोभयोः 'प्रतिपादयति'नान्वयः, वाक्यभेदः स्यात्। अथ पूर्वस्यैव प्रतिपादकत्वम्, "पर्यवस्यदि"त्यस्य "इत्यन्तमि" त्येतद्विशेषणत्वेनान्वयात् न वाक्यभेदः, तथापि प्रतिपादकत्वासंभवः। स्वतोऽसामर्थ्ये ह्यन्येन पर्यवसानात् प्रतिपादकत्वम्, नास्य तेन पर्यवस्यतोऽपि प्रतिपादकत्वं संभवति। न च लक्षणादीनामत्र ग्रहणं संभवति; आद्यन्तप्रतीकयोरन्यतराभावात्। न चा "स्यानर्थहेतोरि" त्यस्य सर्वग्रन्थान्तत्वादन्तप्रतीकत्वेन ग्रहणं युक्तम्; "नैसर्गिकोऽयं लोकव्यवहारः इत्यन्तमि" त्यन्तग्रहणेन तद्ग्रहणस्य निवारितत्वात्, तद्ग्रहणे हि "युष्मदस्मदित्यादि सर्वे वेदान्ता इत्यनेन पर्यवस्यादि"त्येव वक्तुं युक्तम्, नान्तग्रहणस्योपयोगः। अतोऽन्तग्रहणमादिग्रहणेनाविशेषेण सर्वग्रहणे प्राप्ते तन्निवर्तकत्वेन कृतमित्यवगम्यते। किंच—'पर्यवस्यदि'त्यस्य पर्यवसानतन्त्राकाङ्क्षस्य उपात्तेन—इत्यन्तम् इत्यनेनान्वयः; उपात्तस्यैवोपात्तेनान्वयात्, "इत्यन्त"मित्युपात्तस्य चान्याकाङ्क्षत्वात्, तथापि प्रतिपादकत्वासंभवाल्लक्षणादीनां वाऽव्याख्येयत्वम्, अन्तग्रहणस्य वा वैयर्थ्यमित्याशङ्क्य व्याचष्टे—**तत्र नैसर्गिकोऽयमिति** ॥ **ननु कथं भाष्यद्वयमिति** ॥ अयमर्थः—भाष्यद्वयमेव कथं प्रतिपादयति ? अनुपयोगात्, भाष्यद्वयं विषयप्रयोजने न प्रतिपादयत्येव, कथम् ? अध्यासप्रतिपादकत्वात्, अथवा—भाष्यद्वयं विषयप्रयोजने एव कथं प्रतिपादयति ? अन्यस्यापि प्रतिपादकत्वात्, न चान्यप्रतिपादकमस्यैव प्रतिपादकं भवति। उभयप्रतिपादकत्वं च वाक्यभेदादयुक्तमित्यर्थः। अथवा—भाष्यद्वयमेव कथं प्रतिपादयति ? प्रयोजनभाष्यस्यापि विद्यमानत्वादिति। तत्र प्रथमचोद्यं परिहरति—**शास्त्रारम्भनिमित्तेति** ॥ द्वितीयं परिहरति—**विषयप्रयोजनसिद्धिहेतोरिति** ॥ तृतीयं परिहरति—**हेतुवचनं हीति** ॥ यद्वा—लक्षणादीनामपि प्रतिपादकत्वम्; अध्यासोपस्थापकत्वात्। यद्वा—हेतुवचनाद्धेतूपस्थितिः स्यात्, कथमध्याससाधनमित्याशङ्क्य विवृणोति—**हेतुवचनं** ॥ धूमादिवचनवद् इत्यभिप्रायः। कथं विषयप्रयोजनयोः प्रतिज्ञावाक्यार्थत्वम्, विचारकर्तव्यताप्रतिपादकत्वात् ? कथं वाऽध्यासस्य तद्धेतुत्वम् ? येन हेतुवचनत्वात् प्रतिज्ञातार्थसाधकत्वमिति, तदाह—**तथाहीति** ॥ बन्धप्रत्यनीकत्वं हेतुः।

### पञ्चपादिका

**चार्थात् प्रथमसूत्रेण सूत्रिते इति प्रतिपादयति। एतच्च "तस्माद् ब्रह्म जिज्ञासितव्यमि"त्यादिभाष्ये स्पष्टतरम् ॥**

### पञ्चपादिकाविवरणम्

कस्य बन्धस्याविद्यात्मकत्वं निर्दिशत् भाष्यद्वयं विषयप्रयोजने प्रतिपादयतीति ॥ ननु बन्धस्याविद्यात्मकत्वलक्षणो हेतुरसिद्धः, कथमसिद्धमसिद्धेन साध्यत इत्यत आह—**सर्वे वेदान्ता आरभ्यन्त इत्यनेन भाष्येण पर्यवस्यदिति** ॥ विषयादिसिद्धिहेतोरध्यासस्य सिद्धिहेतुभूतानि लक्षण-सम्भावना-सद्भाव-प्रमाणानि प्रतिपादयता भाष्येण सह लक्षणादिभिः स्वार्थमध्यासं साधयित्वा विषयप्रयोजने साधयतीत्यर्थः। अत एव व्यवधानाव्यवधानाभ्यां विषयादेः साधकत्वादे**तदन्तमनेन पर्यवस्यदिति** भाष्यस्य विभागेनोपादानं कृतम् ॥ **ननु—तर्हि** "सर्वलोकप्रत्यक्ष" इत्यनेन पर्यवस्यदिति वक्तव्यम्, **सत्यम्**; "अस्यानर्थहेतोरि"ति भाष्यस्य विषयप्रयोजनयोर्वेदान्तवाक्यसम्बन्धकथनद्वारेण विचार-शास्त्रसम्बन्धप्रतिपादनपरत्वात् विचारशास्त्रीयविषयप्रयोजन-साधने सव्यवधानत्वसाम्येन पूर्वभाष्येण सहोपादानं कृतम् ॥

**ननु**—एवमप्यसूत्रसम्बन्धिनी विषयप्रयोजने किमिति प्रतिपाद्येते ? इत्यत आह—**विषयः प्रयोजनं चार्थात्प्रथमसूत्रेण सूत्रिते इतीति** ॥ इतिशब्दो हेतौ। यस्मात्प्रथमसूत्रेणार्थात्सूत्रिते, तस्मात्प्रतिपादयतीति ॥

### तत्त्वदीपनम्

सामान्योपाधौ साऽस्तीत्याह—**तथाहीति** ॥ भागे सिद्धसाधनतां निराकर्तुमेतदिति विशेषणम्। असिद्धिं निरस्यति—**शास्त्रं चेति** ॥ बन्धप्रत्यनीकत्वमुपपादयति—**अविद्यात्मकेति** ॥ अनुमाननिगमनार्थ इतिशब्दः। परमप्रकृतमुपसंहरति—**तदेवमिति** ॥ विशेषणासिद्धिं शङ्कते—**ननु बन्धस्येति** ॥ लक्षणादीनामत्र सत्त्वात् कथमसिद्धिरित्याह—**अत आहेति** ॥ "सर्वे वेदान्ता आरभ्यन्ते" इत्यादेरध्यासप्रतिपादकत्वात्कथं तदेकवाक्यतया 'युष्मदि'त्यादेर्विषयादिसाधकत्वमित्याशङ्क्याह—**विषयादीति** ॥ लक्षणादिभाष्येणैकवाक्यं सत् विषयादि साधयति चेत्, "एतदन्तमनेने"ति विभागेनोपादानमनुपपन्नमित्याशङ्क्याह—**अत एवेति** ॥ अतःशब्दार्थमाह—**व्यवधानेति** ॥ लक्षणादिभाष्यमध्यासं प्रतिपाद्य विषयादौ पर्यवस्यति, इदं तु साक्षात्, अतो विभागोपादानं युक्तमित्यर्थः। **ननु**—"अस्याऽनर्थहेतोरि"त्यादेरध्यासासाधकत्वात् "तेन पर्यवस्यदि"त्यभिधानमयुक्तमिति चोदयति—**ननु तर्हीति** ॥ शब्दतः प्रतीयमानमर्थमङ्गीकरोति—**सत्यमिति** ॥ तर्हि "अस्यानर्थहेतोरित्यनेन पर्यवस्यदि"ति टीकाऽनुपपन्नेति, तत्राह—**अस्येति** ॥ "अस्याऽनर्थहेतोरि"ति भाष्यस्य पूर्वभाष्येण लक्षणादिभाष्येण सहोपादानं कृतमित्यन्वयः। तत्र हेतुमाह—**सव्यवधानेति**। व्यवधानेन सह वर्तत इति सव्यवधानम्, तस्य भावस्तत्त्वम्। कुत्र सव्यवधानत्वमिति वीक्षायामाह—**विचारशास्त्रीयेति** ॥ "अस्यानर्थहेतोरि"ति भाष्यस्याध्यासासाधकत्वात् कथं सव्यवधानत्वम् इति वीक्षायामाह—**विषयेति** ॥ वेदान्तानां विषयप्रयोजनसंबन्धं प्रतिपाद्य तयोस्तद्विचारशास्त्रसंबन्धप्रतिपादनात् सव्यवधानत्वमित्यर्थः।

### ऋजुविवरणम्

कथं तन्निवर्तकत्वमित्यपेक्षिते, प्रमाणत्वेनाविद्यात्मकं निवर्तयतीति साध्यम्। जाग्रद्बोधो दृष्टान्तः। यद्वा—अविद्यात्मकत्वेन बन्धनिवृत्तिः साध्या स्वप्नदृष्टान्तेन। विशिष्टोऽर्थः प्रतिज्ञातः, एकदेशद्वारेण प्रतिज्ञातार्थसाधकत्वमिति भावः। भाष्यद्वयमेव कथं प्रतिपादयतीत्यस्य परिहारमाह—**तदेवमिति** ॥ प्रयोजनभाष्ये विषयप्रयोजनप्रदर्शनमात्रम्, अत्र तत्साधकहेतूपन्यास इति भावः। यद्वा—तदेवमित्युपसंहारः। भाष्यद्वयमेव कथं प्रतिपादयति ? असिद्धहेतूपन्यासादिति चोदयति—**ननु बन्धस्येति** ॥ सिद्धस्यैव साधकत्वमित्यभिप्रायः। तदुक्तम्—"असिद्धेनैकदेशेन गम्यासिद्धेर्न बोधक" इति ॥ **ननु**—कथं तेन पर्यवस्यतोऽपि प्रतिपादकत्वम् ? तस्यापि हेतुसाधकत्वाभावात्, इत्याशङ्क्य लक्षणादीनामपि एतदन्तग्रहणं कृतमित्यभिप्रायेणाह—**विषयादिसिद्धिहेतोरिति** ॥ **ननु**—लक्षणादीनामन्तग्रहणेन ग्रहणं निवारितम्; अन्यथा तद्ग्रहणस्य वैयर्थ्यादिति यच्चोदितम्, तत् परिहरति—**अत एवेति** ॥ **ननु तर्हि सर्वलोकेति** ॥ अयं भावः—तदन्तस्यैवाध्याससाधनद्वारा विषयप्रयोजनसाधकत्वात् लक्षणादीनामन्तत्वाच्च तेनैवान्तेन प्रतीकग्रहणं युक्तमिति। **सूत्रिते इति** ॥ अनेन प्रकारेण प्रतिपादयतीतिशब्दस्य प्रकारवचनत्वेनान्वयः प्रतिभाति, तथा सति असदनुवादो भवेत्, भाष्ये तादृशोक्तेरदर्शनात्, अव्याख्येयत्वशङ्का च स्यात्, तदर्थं व्याचष्टे—**इतिशब्दो**

## पञ्चपादिकाविवरणम्

कः पुनरस्य सूत्रस्य प्रसङ्गः ? **उच्यते** ॥ नित्येनैवाध्ययनविधिनाधीतस्वाध्यायो वेदान्तवाक्येष्वापातदर्शनेनेदमवगच्छति—"आत्मनस्तु कामाय सर्वं प्रियमि"त्युपक्रमात्सर्वतो विरक्तस्यात्मप्रेप्सोः—"आत्मनि विज्ञाते सर्वमिदं विज्ञातम्"

## तत्त्वदीपनम्

भाष्यद्वयस्य विषयादिप्रतिपादकत्वमङ्गीकृत्य सूत्रासंगतिमाशङ्कते—**नन्वेवमपीति** ॥ असूत्रसंबन्धित्वमसिद्धमित्याह—**अत आहेति** ॥ "विषयप्रयोजने सूत्रिते" इत्यनेन रूपेण युष्मदित्यादेः प्रतिपादकत्वाभावा"त्सूत्रिते" इति प्रतिपादयतीत्येतदनुपपन्नमित्याशङ्क्याह—**इतिशब्द इति** ॥ हेतुत्वमेवाह—**यस्मादिति** ॥

विषयादिहेत्वध्यासोपस्थापकत्वेन भाष्यस्य व्याख्येयत्वमुक्तम्, संप्रति सूत्रस्यैवासङ्गतत्वात्तन्मूलं भाष्यमव्याख्येयमित्याशयवानाह—**कः पुनरिति** ॥ **अयमर्थः**—जिज्ञासितं सूत्रणीयम्, जिज्ञासा हि ज्ञाते, ज्ञानं च शास्त्रश्रवणमन्तरेण न संभवति; पाठकादिष्वदृष्टेरित्यसंगतिः । तथा प्रसज्यतेऽनेनेति प्रसङ्गः प्रसञ्जकः, स किमस्ति ? उत न ? नाद्यः; वेदान्तवाक्यविचारकर्तव्यतायाः प्रमाणान्तरागोचरत्वात् । श्रोतव्य इत्यादिवाक्यं प्रसञ्जकमिति वक्तव्यम् । न च तत् संभवति; विकल्पासहत्वात् । तत्किं नित्यम् ? नैमित्तिकं वा ? प्रायश्चित्तरूपं वा ? अथ वा काम्यम् ? **नाद्यः**; अकरणे प्रत्यवायाश्रुतेः[1], **न द्वितीयः**; गृहदाहादिष्विव निमित्ताश्रवणात् । **न तृतीयः**; "ब्रह्मचार्यवकीर्णी नैरृतं गर्दभमालभेते" तिवत्, दोषसंयोगे सत्यचोदितत्वात् । **नापि चतुर्थः**; विध्युद्देशे फलाश्रवणात् । **न चरमः**; सूत्रस्य प्रमाणापेक्षितन्यायसूचकत्वात्, तदभावे सूत्रस्यैवासंगतेः, तस्मात्प्रसञ्जकाभावाच्चासंगतिः । **तथा शास्त्रासंगतिश्च** । समन्वयादिप्रतिपादकं हि शास्त्रम् । न च समन्वयाद्यन्यतममनेन प्रतिपाद्यते, इत्यादावस्य सूत्रस्य प्रसङ्गं न पश्यामः—इति । चतुर्विधाया अप्यसङ्गतेरसङ्गतिरित्याह—**उच्यत इति** ॥ असङ्गतेरुपपादनात् कथं तदसङ्गतिरित्याशङ्क्याद्यासंगतिं निराचष्टे—**नित्येनेति** ॥ अधीतस्वाध्यायो वेदान्तवाक्येष्विदमवगच्छतीति संबन्धः । अध्ययनप्रसञ्जकमाह—**अध्ययनेति** ॥ तस्य काम्यत्वं प्रत्याह—**नित्येनेति** ॥ अर्थाद्यवबोधे सति तत्कामना, कामनायां सत्यां च ततः साङ्गाध्याध्यने प्रवृत्तस्यार्थावबोध इतीतरेतराश्रयत्वप्रसङ्गान्नित्यत्वमित्यर्थः ॥ अध्यापनविधिप्रयुक्तमध्ययनमिति[2] मतं निरस्यति—**एवेति** ॥ एवकारस्य विधिना संवन्धः । नित्यानित्यसंयोगादिविरोधप्रसङ्गान्नाध्यापनविधिप्रयुक्तमध्ययनम् । एतच्च तृतीयवर्णके प्रतिपाद्यत इति नात्र विस्तार्यत इत्यर्थः । **अधीतस्वाध्याय इति** ॥ साङ्गाध्ययवनवानित्यर्थः । साङ्गाध्ययनादेवावगतिजनिपक्षे शास्त्रवैयर्थ्यमिति, तत्राह—**आपातेति** ॥ विचारं विनोत्पन्नं ज्ञानमापातदर्शनम्, तस्य चानिश्चयरूपत्वाच्छास्त्रप्रवृत्तिरित्यभिसंधिः । इदमा परामृष्टमर्थमाह—**आत्मनस्त्वित्यादिना** ॥ आत्मप्रेप्सोः श्रवणं नामाङ्गि विधीयते इति संबन्धः । चन्दन-वनितादिप्रेप्सुत्ववदात्मप्रेप्सा न कस्यापि, इत्यत्राह—**सर्वत इति** ॥

## ऋजुविवरणम्

**हेताविति** ॥

ननु—आद्यसूत्रे कथं विषयादिसूचनम् ? श्रोतृभिरजिज्ञासितत्वाद्विषयप्रयोजनयोः, न चाजिज्ञासितनिरूपणं युक्तम्, न चापरिज्ञाते जिज्ञासा, न च तेषां विचारात् प्राक् परिज्ञानकारणमस्ति, नापि विषयादिप्रतिपादकत्वम्; न्यायसूत्रत्वात्, नापि तदपेक्षितं न्यायसूचनम्; तत्प्रतिपादकस्य न्यायापेक्षिणोऽनुग्राह्यस्य प्रमाणस्याभावात्, नापि विचारकर्तव्यताप्रतिपादकत्वम्; समन्वयाद्यनिरूपणेनासंगतिप्रसङ्गाच्छास्त्रे, तस्मादाकस्मिकं सूत्रमित्येतन्मनसि निधायाह—**कः पुनरस्येति** ॥ अस्य सूत्रस्य विषयप्रयोजनसूचने कः प्रसङ्गः ? तथाऽस्य सूत्रस्य शास्त्रे प्रसङ्गः संबंधः क इत्यर्थः । तत्र तावद्विषयादिस्वरूपमात्रपरिज्ञाने कारणमाह—**उच्यते इत्यादिना** ॥ उपक्रमसामर्थ्यात्सर्वतो विरक्तस्यात्मप्रेप्सोर्विधीयते इत्यवगच्छतीत्यान्वयः । अमृतत्व-

---

१. प्रत्यवायाश्रुतेः—अकरणे प्रत्यवायश्रवणं कर्मणः नित्यत्वगमकं यथा 'सन्ध्याहीनोऽशुचिर्नित्यं अनर्हः सर्वकर्मसु' इत्युक्तेः सन्ध्योपासनं नित्यम् । दोषसंयोगे प्रायश्चित्तं यथा 'यस्याहिताग्नेरग्निः गृहान् दहेत् सोऽग्नये क्षामवतेऽष्टाकपालं निर्वपे'दिति ।

२. अध्यापने विधिः काम्यः आचार्यत्वकामः अध्यापयेत्, इति विधानात् । अध्ययने तु नित्यः स्वाध्यायोऽध्येतव्य इति फलश्रवणं विनाऽध्ययनविधानात् ।

## पञ्चपादिकाविवरणम्

"एतावदरे खल्वमृतत्वमि"त्युपसंहारादमृतत्वसाधनमात्मदर्शनं "द्रष्टव्य" इत्यनूद्य तादर्थ्येन मनननिदिध्यासनाभ्यां फलोपकार्यङ्गाभ्यां सह श्रवणं नामाङ्गि विधीयत इति।

स च—तत्र कियद्विशेषणपर्यन्तोऽधिकारी ? किंप्रमाणकश्च ? को वाऽसौ वेदान्तवाक्यविचारः ? अन्यतः प्राप्तोऽप्राप्तो वा ? कथं चात्मज्ञानं मोक्षसाधनम् ? किंप्रमाणकं च तत् ? किं वा तदात्मतत्त्वम् ? किं प्रमाणकं चेति जिज्ञासते। तं च जिज्ञासुं पुरुषार्थकाममुपलभमानो भगवान् बादरायणः साधनचतुष्टयसम्पन्नस्य मोक्षसाधनब्रह्मज्ञानाय वेदान्तवाक्यविचारं विदधतो विधेः अपेक्षिताधिकारिविषयफलानुबन्धत्रयमागमिकमपि न्यायेन निर्णेतुं सूत्रयामास—"अथातो ब्रह्मजिज्ञासे"ति; श्रुतिसूत्रयोरैकरूप्यावगमात्। मनननिदिध्यासनयोश्च श्रवणाङ्गत्वमुत्तरत्र वक्ष्यामः॥

## तत्त्वदीपनम्

तत्र प्रमाणमाह—**आत्मन इति**॥ पुत्रादीनां प्रियत्वं न स्वरूपेण, किं त्वात्मार्थत्वेन। इतरथा वैरिपुत्रादेरपि प्रियत्वप्रसङ्गात्, तस्मादात्मनि मुख्या प्रीतिः, इतरत्रत्वौपाधिकी; तस्मात् हेयमात्मव्यतिरिक्तमिति विशिष्टाधिकारिसिद्धिरित्यर्थः। प्रयोजनमाह—**तादर्थ्येनेति**॥ दर्शनोद्देशेनेत्यर्थः। **ननु** "द्रष्टव्य" इति दर्शने तव्यप्रत्ययश्रवणात् दर्शनमपि विधेयमिति ? तत्राह—**आत्मदर्शनमिति**॥ प्रमाणवस्तुपरतन्त्रत्वान्नाऽऽत्मसाक्षात्कारे विधिसंभव इत्यर्थः। **ननु** न ज्ञानस्योद्देश्यत्वम्; सुखादिरूपत्वाभावात्, इत्यत्राह—**अमृतत्वेति**॥ तत्र प्रमाणमाह—**आत्मनि विज्ञात इति**॥ सर्वस्यात्मोपादानत्वात्तद्व्यतिरेकेणाभावः, तत आत्मज्ञानात्सर्वज्ञानं युक्तमित्यर्थः। "एतावदि"त्यात्मज्ञानमेवामृतत्वसाधनत्वादमृतत्वमित्युपचर्यते; लाङ्गलं जीवनमितिवत्। **खल्विति**॥ ज्ञानस्यामृत्वसाधनत्वं प्रसिद्धमित्यर्थः। असंभावनादिप्रतिबन्धात्कथं श्रवणात्तत्त्वसाक्षात्कार इति ? तत्राह—**मननेति**॥ अद्वितीये ब्रह्मणि वेदान्तानां शक्तितात्पर्यावधारणं श्रवणम्, श्रुतस्यार्थस्योपपत्तितोऽनुसन्धानं मननम्, विजातीयप्रत्ययतिरस्कारेण सजातीयप्रत्ययप्रवाहीकरणं निदिध्यासनमिति विभागः। श्रवणोत्तरकालीनयोस्तयोः कथं श्रवणाङ्गत्वमित्याशङ्क्य, न स्वरूपोपकारितयाऽङ्गत्वं प्रोक्षणादिवत, अपि तु प्रयाजादिवत्,[1] इत्याह—**फलेति**॥ श्रवणस्य यत्तत्त्वसाक्षात्काराख्यं फलम्, तत्र मननादेरप्युपकारकत्वमित्यर्थः।

यथावत् स्वाध्यायादधिकार्यादिप्रतिपत्तावपि शास्त्रप्रवृत्तिरापातदर्शनस्यानिश्चयरूपत्वादित्युक्तम्, तत्र कथमनिश्चयरूपत्वम् ? तत्राह—**स च तत्रेति**॥ सः आपातदर्शमवान्। तत्र अधिकार्याद्यनुबन्धे। इति जिज्ञासत इति सम्बन्धः। चशब्दस्य च तेनैव सम्बन्धः। न केवलमधिकार्याद्यनुबन्धं जानाति, किं तु जिज्ञासते चेत्यर्थः। इतिपदपरामृष्टं प्रकारमाह—**कियद्विशेषणेति**॥ कियन्ति विशेषणानि पर्यन्तोऽवधिर्यस्य स तथा। किं वैराग्यमेव विशेषणम्, आहो अन्य-

## ऋजुविवरणम्

साधनमात्मदर्शनमित्युपसंहारादवगच्छति, इति आत्मदर्शनानुवादेन साधनं श्रवणं विधीयत इति। विध्यर्थपर्यालोचनयाऽत्र श्रवणस्याङ्गित्वेन मनननिदिध्यासनयोरङ्गत्वेन च कीर्तनं स्वदर्शनाभिप्रायेणेति केचित्। स च जिज्ञासते इत्यन्वयः। कियन्ति विशेषणानि पर्यन्तोऽवधिर्यस्यासाविति विग्रहः। बहुषु विशेषणेषु श्रूयमाणेषु कानिचिद्विशेषणानि कानिचिदङ्गानीत्यनिर्धारणात्सन्देहो भवति। कथं प्रणेतृधीस्थता विषयप्रयोजनयोरिति ? तदाह—तं च जिज्ञासुमिति॥ कथमस्य तद्दर्शनसामर्थ्यमिति ? तदाह—**भगवानिति**॥ तदपेक्षिणोऽनुग्राह्यस्य प्रमाणस्याभावादिति यत् चोदितम्, तत् परिहरति—**विदधतो विधेरिति**॥ ननु—अनुबन्धत्रयस्यागमिकत्वात् किं तदर्थं सूत्रकरणेनेति ? तत्राह—**न्यायेनेति**॥ कथं श्रवणस्य विध्यपेक्षितानुबन्धनिर्णयार्थत्वं सूत्रस्यावगम्यत इति ? तदाह—**श्रुतिसूत्रयोरिति**॥ कथं मनननिदिध्यासनयोरङ्गत्वं श्रवणोपकार्यत्वात्तयोरिति ? तत्राह—**मनननिदिध्यासनयोरिति**॥

---

१. प्रयाजः अग्निदेवतोद्देशेन आज्यद्रव्येन साध्यं यागपञ्चकमित्यर्थः। तच्च यागे आरादुपकारकम्। आदिना अनूयाजः आज्यभाग इत्यादयः।

## पञ्चपादिकाविवरणम्

ननु—"श्रोतव्य" इति विधिर्मोक्षसाधनब्रह्मात्मज्ञानाय वेदान्तवाक्यविचारं साधनचतुष्टयसम्पन्नस्य विधातुं न शक्नोति; श्रवणादीनां विषयावगमं प्रत्यन्वयव्यतिरेकसिद्धसाधनत्वात्, न चावघातादिवदुभयार्थता[1] सम्भवति; दृष्टादृष्टप्रकारद्वयसाध्यापूर्ववदिहादृष्टसाध्यस्याभावात्, आत्मावगमस्य दृष्टोपायमात्रसाध्यत्वात्—इति, **नैतत्सारम्;**

## तत्त्वदीपनम्

दपि ? इति विमर्शार्थः। यदाऽन्यदपि विशेषणम्, तदा तत्र का युक्तिः ? किं च मानम् ? इति विवेचनीयमित्याह—**किंप्रमाणक इति ॥** अधिकार्यनुबन्धजिज्ञासामभिधाय विचारविधेरव्यवहितविषयानुबन्धे तामाह—**को वाऽसाविति ॥** किं प्रयाजादिवत्सकृदनुष्ठेयः, उतावघातादिवदसकृदिति जिज्ञासत इत्यर्थः। दृष्टफलत्वेनासकृदनुष्ठेयत्वेऽपि किं प्राच्या मीमांसया गतार्थत्वमुत नेति विमर्शान्तरमाह—**अन्यत इति ॥** साधनानुबन्धे संशयमाह—**कथं चेति ॥** किं कर्मसमुच्चितं ज्ञानं साधनम्, उतासमुच्चितं वेत्यर्थः। असमुच्चितत्वपक्षेऽपि ज्ञानं निरूपणीयमित्याह—**किंप्रमाणकमिति ॥** व्यवहितविषयानुबन्धे—किं वा तदात्मतत्त्वमिति ॥ आत्मतत्त्वं किं सविशेषम्, उत निर्विशेषम् ? निर्विशेषत्वे मानं वक्तव्यमित्याह—**किंप्रमाणकं वेति ॥** परजिज्ञासायाः परं प्रत्यप्रत्यक्षत्वात् कथं तन्निरासाय शास्त्रप्रणयनम् ? तत्राह—**तं चेति ॥** तं जिज्ञासुमुपलभमानो बादरायणोऽनुबन्धत्रयं सूत्रयामासेति सम्बन्धः। उपलम्भे हेतुमाह—**भगवानिति॥** "उत्पत्तिं च विनाशं च भूतानामागतिं गतिम्। वेत्ति विद्यामविद्यां स च वाच्यो भगवानिति ॥" इति प्रसिद्धेः परजिज्ञासोपलम्भो युक्त इत्यर्थः। तत्र हेतुमाह—**बादरायण इति ॥** काकदन्तजिज्ञासोर्वैलक्षण्यमाह—**पुरुषार्थेति ॥**

प्रसङ्गकाभावादित्युक्तं निरस्यति—**वेदान्तवाक्येति ॥** स च विधिः काम्य इत्याह—**साधनचतुष्टयेति ॥** यद्यपि न विध्युद्देशे फलश्रवणम्; तथाप्यर्थवादिकफलोपादानेनामृतत्वसाधनकामो वेदान्तवाक्यानि विचारयेदिति विधिः परिणमते; यथा "प्रतितिष्ठन्ति ह वा य एता रात्रीरुपयन्ती"त्यत्र प्रतिष्ठाकामो रात्रिसत्रं कुर्यादिति विधिः परिणमते, तद्वदित्यर्थः। **ननु**—एतत्सूत्रं श्रवणविधिमूलकमिति कथं गम्यते ? तत्राह—**श्रुतिसूत्रयोरिति ॥** "तद्विजिज्ञासस्व" "श्रोतव्यः" इत्यादिश्रुतौ सूत्रे च विचारकर्तव्यतापरत्वस्य चाविशेषादित्यर्थः। श्रवणस्याङ्गित्वं मननादेरङ्गत्वं चोक्तम्, तत्र वैपरीत्यं किं न स्यात् ? इत्यत आह—**मननेति ॥** "आत्मैकत्वविद्याप्रतिपत्तये" इत्येतद्व्याख्यानसमये वक्ष्यत इत्यर्थः ॥ **ननु** श्रवणे विधेरेवासम्भवात् कथं तन्मूलं सूत्रम् ? इति चोदयति—**ननु श्रोतव्य इति ॥** किमपूर्वविधिः, उत नियमः, आहो परिसंख्येति विकल्प्याऽऽद्यं दूषयति—**श्रवणादीनामिति ॥** अपूर्वविधेरत्यन्ताप्राप्तविषयत्वात् श्रवणादीनां च ज्ञानसाधनत्वमन्यतः प्राप्तमिति नापूर्वविधित्वं तस्येत्यर्थः। दृष्टफलेऽप्यवहननादौ "व्रीहीनवहन्यादि"ति यथा नियमः, तद्वदत्रापीति द्वितीयं कल्पमाशङ्क्याह—**न चेति ॥** "व्रीहीनवहन्यादि"त्यत्र दृष्टादृष्टप्रयोजनसम्भवान्नियमविधिर्युज्यते, न तथाऽत्रेत्यर्थः। चकारेणोभयार्थत्वाभावेऽपि नियमविधित्वमिति शङ्कां निरस्यति। दृष्टतण्डुलमात्रनिष्पत्तिफलस्यान्यथापि सम्भवाद्विधिवैयर्थ्यमित्यर्थः। विधिबलाद

## ऋजुविवरणम्

श्रवणविधेरेवाभावात् कथं तदपेक्षितानुबन्धनिर्णयार्थत्वं सूत्रस्येति चोदयति—**नन्विति ॥** मा भूत् प्राप्तत्वाद्विधानम्, नियमस्तु प्राप्तेऽपि दृश्यत इति, तत्राह—**न चावघातादिवदिति ॥** तत्र नियमादृष्टसाध्यस्यापूर्वस्य तत्कल्पकस्य विद्यमानत्वान्नियमविधिराश्रितः, न चात्र नियमादृष्टकल्पकमस्ति; अविद्यानिवृत्तिरूपत्वात्फलस्येति भावः। आत्मज्ञानमेव तावन्मात्रेणानुत्पन्नमदृष्टकल्पकं भवत्विति, नेत्याह—**आत्मावगमस्येति ॥** शास्त्रैकसमधिगम्यत्वसिद्धौ ह्यपूर्वः, नियमादृष्टाभावे च तदसिद्धिरिति वक्तुं शक्यते; बाधकाभावात्, अत्र तु न तथा; प्रमाणज्ञानत्वादिति भावः। प्रसिद्धप्रमाणविलक्षणत्वाद-

---

१. प्रतितिष्ठन्ति ह वा—इति। ज्योतिर्गौरायुः इति वाक्यविहितानां त्रयाणां यागानां विधिवाक्ये फलाश्रवणात् अप्रामाण्यं अथवा विश्वजिन्न्यायेन स्वर्गः कल्पनीय इति पूर्वपक्ष, अश्रुतफलकल्पनापेक्षया अर्थवादे श्रुतायाः प्रतिष्ठाया एव फलत्वमात्रकल्पने लाघवात् तदेव कल्प्यत इति निर्धारितम्।

## पञ्चपादिकाविवरणम्

आत्मतत्त्वापरोक्षस्य सर्वादृष्टसाध्यत्वस्य वक्ष्यमाणत्वादवघातादिवदुभयार्थतया विधानोपपत्तेः। **ननु** विधिपरत्वे वेदान्तानां तन्निष्ठतया ब्रह्मस्वरूपस्यासिद्ध्यादिदोषप्रसङ्गान्नास्ति श्रवणादिविधानमिति भाष्यकारैरेव दर्शितम् ? **सत्यं,** ज्ञानविधिस्तत्र निराकृतः, न श्रवणादिविधिः; तत्रोक्तदोषप्रसङ्गाभावात्। कथम्? दर्शनविधाने हि ब्रह्म कर्मतया गुणभूतं प्रसज्यते, ब्रह्मदर्शनमुद्दिश्य विचारविधाने तु स्वप्रधानफलभूतदर्शनविशेषणतया ब्रह्मापि स्वप्रधानं भवति, न तु गुणभूतमिति, वेदान्तैः ब्रह्मणि स्वप्रधाने प्रतिपाद्यमाने तद्दर्शनाय श्रवणादिविधानं नैव विरुध्यते।

## तत्त्वदीपनम्

त्राप्युभयार्थत्वं[1] कल्प्यत इत्याशङ्क्य, किं परमापूर्वं नियमापूर्वसाध्यम्, उताऽऽत्मबोध एव साध्यः, इति विकल्प्याद्यं प्रत्याह—**दृष्टादृष्टेति**॥ तण्डुल-तत्समवेतादृष्टसाध्यपरमापूर्ववत् श्रवणादिष्वदृष्टसाध्यमदृष्टं न पश्याम इत्यर्थः। द्वितीयं निरस्यति—**आत्मावगमस्येति**॥ दृष्टसामग्र्यां सत्यामदृष्टाभावापराधेन बोधानुदयादर्शनान्न तस्यादृष्टसाध्यत्वमित्यर्थः। न च परिसङ्ख्या; पञ्चनखापञ्चनखभक्षणयोरन्यतः प्राप्तावन्यपरिवर्जनवदात्मतत्त्वसाक्षात्कारस्योपनिषदतिरिक्तात्प्राप्त्यसम्भवादित्यर्थः। अपूर्व-परिसङ्ख्याविधिनिराकरणमस्मद्दिष्टमेव, नियमविधिस्तु न निह्नोतुं शक्यत इत्याह—**नैतत्सारमिति**॥ 'अदृष्टसाध्याभावात्' इत्युक्तं निरस्यति—**आत्मतत्त्वेति**॥ **"सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्"** इत्यत्र वक्ष्यमाणत्वादित्यर्थः। यत्रान्वय-व्यतिरेकलभ्यं कारणत्वं तत्र केवलव्यतिरेकापेक्षा, इह पुन "विविदिषन्ती" त्यादिवाक्यबलाददृष्टस्य कारणताऽऽश्रीयत इति न व्यतिरेकोऽर्थ्यते। न चादृष्टस्योपयोगासम्भवः; "तपसा कल्मषं हन्ति" "अविद्यया मृत्युं तीर्त्वे" त्यादिश्रुति-स्मृतिपर्यालोचनया परिपन्थिकल्मषनिवर्हणेनोपयोगादित्यभिसन्धिः। ननु—एकस्मिन्विषये द्वयोः साधनयोः पक्षप्राप्तौ नियमविधिः, यथा तण्डुलनिष्पत्तेरवहनननान्नखनिर्भेदनाच्च सम्भवेऽवहन्त्यादिति नियम्यते, न तथाऽऽत्मज्ञाने साधनद्वयं प्राप्तमिति कथं नियम्यते? इति—चेत्, **मैवम्**—विकल्पासहत्वात्। किमात्मज्ञानमात्रे साधनान्तराप्राप्तिः, उत निर्विशेषाऽऽत्मज्ञाने? नाद्यः; सविशेषात्मज्ञाने प्रत्यक्षादिप्रसरात्। द्वितीयेऽपूर्वीयेषु व्रीहिषु दलनाद्यप्राप्तावपि व्रीहिमात्रे दलनादिप्राप्तेर्नियमवन्निर्विशेषात्मज्ञाने साधनान्तराप्राप्तावप्यन्यत्र साधनान्तरप्राप्तेर्नियम इति तुल्यम्। प्रकारान्तरेण श्रवणादिविधिमाक्षिपति—**ननु विधिपरत्वे इति**॥ उभयपरत्वे वाक्यभेदापातान्न ब्रह्मसिद्धिमिच्छता वेदान्तानां विधिपरत्वमेष्टव्यमित्यर्थः। विधेयज्ञानविशेषणतया ब्रह्मणि गुणत्वप्रसङ्ग आदिशब्दार्थः। भाष्यवचनविरोधादपि न वेदान्तेषु विधिसम्भव इत्याह—**इति भाष्यकारैरिति**॥ "लिङादयः श्रूयमाणा अप्यनियोज्यविषयत्वात् कुण्ठीभवन्ती" त्यत्रेत्यर्थः। किं विधिविशेषस्य तत्र निरासः, आहो विधिमात्रस्येति विकल्प्याऽऽद्यमङ्गीकरोति—**सत्यमिति**॥ अङ्गीकृतमंशमाह—**ज्ञानविधिरिति**॥ द्वितीयं दूषयति—**न श्रवणेति**॥ सामान्यवचनं कथं विशेषविषयं व्याख्यायत इति? तत्राह—**तत्रेति**॥ ज्ञानविधावुक्तदोषस्य श्रवणविधौ प्रसङ्गाभावादिति हेत्वर्थः। ब्रह्मस्वरूपासिद्ध्यादिदोषप्रसङ्गोऽत्रापि तुल्य इत्याह—**कथमिति**॥ श्रवणविधिपक्षे ब्रह्मणो गुणत्वाभावं दर्शयितुं दर्शनविधौ गुणत्वं तावदाह—**दर्शनेति**॥ **कर्मतयेति**॥ क्रियात्वेनेति यावत्। विधेयज्ञानस्य क्रियारूपस्य नियोगनिर्वर्तकतया विशेषणत्वात् तद्विशेषणं ब्रह्मापि विशेषणं स्यादित्यर्थः।

## ऋजुविवरणम्

दृष्टसाध्यत्वम्, तस्य च प्रमाणत्वमुपपद्यते, व्यतिरेकाभावेऽपि विधानादेवादृष्टसाध्यत्वं विधानं चेत्याह—**नैतत्सारमिति**॥ ननु—कथं श्रवणादौ नियमः? साधनान्तराप्राप्तेः, मैवम्; प्रत्यक्षादीनां प्राप्तत्वात्। ननु—निर्विशेषात्मज्ञाने न तेषां प्राप्तिः, अतः कथं नियमः? मैवम्; अपूर्वीयव्रीहिषु दलनाद्यप्राप्तावपि नियमदर्शनात्, अथ साधारणाकारेण प्राप्तिमपेक्ष्य तत्र नियमः, तदत्रापि समानम्। अथावघाते विधिरेव, फलतो नियमव्यवहारः, समानमत्रापीति भावः। ननु—विध्यङ्गीकारे भाष्यविरोधः स्यादिति चोदयति—**ननु विधिपरत्व इति**॥ आदिशब्देन वैरूप्यादीनां ग्रहणम्। ज्ञानविध्यभिप्रायं तदिति परिहरति—**सत्यमिति**॥ ननु—श्रवणविधानेऽप्यसिद्ध्यादिदोषप्रसङ्गसाम्यात् कथं ज्ञानविधेरेव निराकरणमिति चोदयति—**कथमिति**॥ ज्ञानविधाने हि ब्रह्मणो विधेयविशेषणत्वेन प्रतिपादनं न सम्भवतीति दर्शयति—**दर्शनविधाने हीति**॥ ननु—तत्रापि विशेषणत्वेन गुणत्वं समानमिति, तत्राह—**ब्रह्मदर्शनमुद्दिश्येति**॥ स्वशब्देन विचारोऽभिधीयते,

---

१. उभयार्थता—दृष्टादृष्टार्थता—अवघातः वै तुष्यं दृष्टं नियमेन नियमादृष्टं च जनयति, तत्र दृष्टप्रकारः अवहननं, अदृष्टः नियमः।

## पञ्चपादिकाविवरणम्

**ननु** एवमप्युपक्रमोपसंहाराभ्यामेकस्मिन्नात्मप्रतिपादनपरे वाक्ये कथमवान्तरवाक्यैः श्रवणादिविधानं कल्प्यत इति ? अवान्तरवाक्यभेदेन "विविदिषन्ती" ति यज्ञादीनां ज्ञानसंयोगविधानवत्, "उपरि हि देवेभ्य" इत्युपरिधारणविधानवत्, मलवद्वाससो व्रतकलापविधानवच्चेति ब्रूमः ।

## तत्त्वदीपनम्

विचारविधावपि ब्रह्मणो दर्शनं प्रति गुणत्वं तुल्यमित्यत्राह—**ब्रह्मदर्शनमिति** ॥ स्वमेव प्रधानं स्वप्रधानम्, स्वप्रधानं च तत् फलभूतं चेति स्वप्रधानफलभूतम्, तच्च दर्शनं चेति स्वप्रधानफलभूतदर्शनम्, तस्य विशेषणतयेत्यर्थः । प्राधान्यमुपपादयति—**फलभूतेति** ॥ 'धर्मज्ञानाय वेदवाक्यानि विचारयेदि" त्यत्र धर्मस्य प्राधान्यवद् ब्रह्मज्ञानाय विचारविधावपि ज्ञायमानं ब्रह्म प्रधानमिति न गुणत्वप्रसङ्ग इत्यर्थः । विधिपरत्वे स्वरूपासिद्धिप्रसङ्गमुक्तं निरस्यति—**इति वेदान्तैरिति** ॥ ब्रह्मणि महातात्पर्यम्, विधौ त्ववान्तरतात्पर्यमिति न विरोध इत्यर्थः ।

अवान्तरवाक्यभेदेन वेदान्तानां श्रवणविधिपरत्वे "न सुरां पिबेदि"त्यादावप्यवान्तरवाक्यभेदकल्पनया सुरापानविधि-निषेधप्रसङ्ग इत्याशयेन शङ्कते—**नन्विति** । **एवमपीति** ॥ ब्रह्मणः प्राधान्येऽपीत्यर्थः । "आत्मनस्तु कामाय सर्वं प्रिय''मित्युपक्रमा"दात्मनि विज्ञाते सर्वमिदं विज्ञातं भवती"त्यात्मनोपसंहाराच्चैकं वाक्यमित्यर्थः । किं पदैकवाक्येऽवान्तरभेदेनार्थभेदप्रतिपादकत्वं निराकरोषि, उत वाक्यैकवाक्ये ? तत्राऽऽद्यमङ्गीकृत्य द्वितीयं निरस्यति—**अवान्तरवाक्यभेदेनेति** ॥ एकार्थप्रतिपादकत्वेनैकवाक्यत्वाविशेषे क्वचिदवान्तरवाक्यभेदः क्वचिन्नेत्ययं विभागः कुत इति चेत् ? तत्रेदं वक्तव्यम्—किमेकदेशिन एतच्चोद्यम्, उत तान्त्रिकस्य ? नाद्यः; वाक्यैकवाक्येष्ववान्तरवाक्यभेदस्य तेनैवोररीकरणादित्याह—**विविदिषन्तीति** ॥ ज्ञानसंयोगः ज्ञानार्थत्वम् । द्वितीयेऽपि किमेतद्भाट्टस्योत गुरोः ? नाद्य इत्याह—**उपरि हि देवेभ्य इति** ॥ अधोधारणेनैकवाक्यताप्रतीतावपि "उपरि हि देवेभ्य" इत्यस्यापूर्वार्थत्वेनोपरिधारणविधिपरत्वं यथाऽवान्तरवाक्यभेदेन, तथाऽत्रापीत्यर्थः । इदमत्र विवक्षितम्—"अधस्तात्समिधं धारयन्ननुद्रवेत्" इत्यत्राधोधारणं विधाय तत्रैव श्रूयते—"उपरि हि देवेभ्यो धारयती"ति । तत्रैवं संदिह्यते—किमुपरिधारणं विधीयते, उत नेति ? तत्र न विधीयत इति तावत्प्राप्तम्; अन्यप्रकरणत्वात्, वर्तमानापदेशत्वाच्च; इत्येवं प्रापय्य राद्धान्तितम्—**"विधिस्तु धारणेऽपूर्वत्वादि"**ति । उपरिधारणस्यान्यतोऽप्राप्तत्वाद्विधेयत्वमेष्टव्यम्, अथापि स्यादन्यस्मादन्यत्र नीयमानं हविराच्छाद्य शिष्टैर्नीयत इति शिष्टाचारात्प्राप्तमुपरिधारणमिति, तत्रेदमभिधीयते—हविःप्रच्छादनस्यान्यतः प्राप्तत्वेऽपि स्रुग्दण्डोपरि समिधोऽप्राप्तत्वात् दण्डप्रदेशे धारणं विधीयते; ततश्च वर्तमानापदेशत्वेनानुवादरूपत्वमधोधारणवाक्यैकवाक्यतां च भङ्क्त्वा विधिरास्थीयत इति शेषलक्षणे स्थितम् । तथा चाऽऽत्मवाक्येऽप्यवान्तरवाक्यभेदेन श्रवणादिविधानमविरुद्धमिति । द्वितीयं दूषयति—**मलवद्वाससः इति** ॥ दर्शपूर्णमासयोः श्रूयते—"तिस्रो रात्रीर्व्रतं चरेत् । अञ्जलिना वा पिबेदि"ति । तत्र दर्शपूर्णमासैकवाक्यतायाः प्रतीयमानत्वेऽपि व्रतकलापो विधीयते, तदेकवाक्यतानुपपत्तेः, तद्वदित्यर्थः । तथा दर्शपूर्णमासयोरेव श्रूयते-"मलवद्वाससा न संवदेदि"ति । किमयं

## ऋजुविवरणम्

स्वस्य प्रधानं स्वप्रधानम्, स्वप्रधानं च तत् फलभूतं च स्वप्रधानफलभूतम्, तच्च तद् दर्शनं च तद्दर्शनम्, तस्य विशेषणम्, तस्य भावो दर्शनविशेषणतेति । **फलभूतेति** ॥ विचारं प्रति प्राधान्येनान्तर्गतो हेतुः; अतो न तस्य वैयर्थ्यमाशङ्कनीयम् । **ब्रह्मापि स्वप्रधानमिति** ॥ स्वस्य विचारस्य प्रधानं स्वप्रधानमिति । **एतदुक्तं भवति**—विधेयविचारं प्रति प्रधानभूतदर्शनविशेषणत्वेन ब्रह्मणो विचारं प्रति प्राधान्यमेव, विधेयप्राधान्यस्य च प्रतिपादने न वैरूप्यमिति । यद्वा—ज्ञानमेव स्वप्रधानम्; फलत्वात्, तद्विशेषणस्य च प्राधान्यम्, विधेयस्य तु गुणत्वात् तद्विशेषणस्य गुणत्वमेव । यद्वा—स्वशब्देन ब्रह्माभिधीयते, तद् ब्रह्म प्रधानं यस्य ज्ञानस्येति विग्रहः; तज्ज्ञानत्वेन फलत्वात्, तथासति तद्विशेषणस्यार्थाज् ज्ञानं प्रत्यपि प्राधान्यमिति भावः । एवञ्च सति ब्रह्मप्रतिपादनं श्रवणादिविधानं चोपपद्यत इत्याह—**इति वेदान्तैरिति** ॥

ननु—एवमपि विधानं न संभवति; अन्यपरत्वात्, वाक्यभेदाच्चेति चोदयति—**नन्वेवमपीति** ॥ कथमन्यपरत्वमिति ? तदाह—**उपक्रमोपसंहाराभ्यामिति** । महावाक्येनान्वेतुमयोग्येऽवान्तरवाक्यभेदाश्रयणं दृष्टमिति परिहाराभिप्रायः । तत्रैक-

## पञ्चपादिकाविवरणम्

**अथवा**–"**तस्माद् ब्राह्मणः पाण्डित्यं निर्विद्य**" इत्यादिवाक्यं श्रवणादिविधायकमस्तु; तस्य तत्परत्वात्, सूत्रकारेण च वक्ष्यमाणत्वात्। सर्वथा तावन्मनननिदिध्यासनाभ्यामङ्गभूताभ्यां सह श्रवणविधानमस्त्येव। अतस्तदपेक्षितानुबन्धत्रयनिर्णयाय सूत्रमारब्धम्। कर्तव्ये चाधिकारिणा मोक्षसाधनब्रह्मज्ञानाय वेदान्तवाक्यविचारे प्रथमसूत्रेण प्रतिपादिते, स च कर्तव्यो विचारो जन्मादिसूत्रमारभ्य प्रवर्तिष्यत इति। तत्र विध्यपेक्षितेष्वधिकारि-विषय-फलानुबन्धेषु विषयफलयोरुपपादनाय बन्धस्य मिथ्यात्वमत्र वर्ण्यत इति सूत्रसङ्गतमेवेदं भाष्यं व्याख्येयमिति ॥

## तत्त्वदीपनम्

प्रतिषेधः क्रत्वर्थः, उत पुरुषार्थ इति जिज्ञासायामपि प्रकरणात् क्रत्वर्थत्वप्राप्तौ राद्धान्तितम्—"**प्रागपरोधान्मलवद्वाससः**" इति। "तामपरुध्य यजेते"ति सर्वस्मात् क्रतुव्यापारान्निवृत्ततया रजस्वलया संवादप्रसक्त्यभावान्न क्रत्वर्थत्वेन प्रतिषेधः, किन्तु स्वातन्त्र्येण प्रवर्तमानपुरुषस्य रजस्वलया संवादप्रसक्तौ सत्यां निषिध्यते पुरुषार्थतयेति। एतदभिप्रेत्य व्रतकलापविधानवच्चेति चशब्दं प्रायुङ्क्तेत्यर्थः।

प्रकारान्तरेण श्रवणविधिमाह—**अथवेति**॥ पाण्डित्य-बाल्य-मुनि-शब्दैः श्रवण-मनन-निदिध्यासनानि क्रमेण निर्दिश्यन्ते, तस्याप्याऽऽत्मप्रकरणपठितस्य कथं श्रवणादिविधिपरत्वमित्याशङ्क्यापूर्वार्थत्वाद्विधिरङ्गीकर्तव्य इत्याह—**सूत्रकारेणेति**॥ "सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवदि"त्यत्र वक्ष्यमाणत्वादित्यर्थः विधिसमर्थनमुपसंहरति—**सर्वथेति**॥ पक्षद्वयेऽपीत्यर्थः। विधिसमर्थनफलमाह—**अत इति**॥ अस्ति श्रवणविधिः, स च संदिग्धार्थो यस्मात्तस्मादित्यर्थः। समन्वयाद्यप्रतिपादकत्वात्सूत्रं शास्त्रासंगतम्, तस्य शास्त्रादित्वं चासंगतमिति शङ्काद्वयं निराचष्टे—**कर्तव्य इति**॥

## ऋजुविवरणम्

देशीयान् प्रति दृष्टान्तमाह—**ज्ञानसंयोगविधानवदिति**॥ ज्ञानसंयोगः = ज्ञानार्थत्वमित्यर्थः तस्यापि चोद्यविषयत्वं मनसि निधाय दृष्टान्तान्तरम्—**उपरिधारणविधानवदिति**॥ "अधस्तात् समिधं धारयन्ननुद्रवेत्" इति [1]प्रेताग्निहोत्रेऽधोधारणं विधाय तत्रैव पठितम्—"उपरि हि देवेभ्यो धारयति" इति। तत्र यथोपरिधारणमन्यप्रकरणेऽश्रुतमपि विधेयमित्युक्तम्—"**विधिस्तु धारणेऽपूर्वत्वादि**"**ति**, तद्वदित्यर्थः। तस्यापि कैश्चिदनङ्गीकृतत्वात् तान् प्रति दृष्टान्तान्तरम्—**व्रतकलापविधानवदिति**॥ दर्शपूर्णमासप्रकरणे मलवद्वाससो [2]व्रतकलापविधानं दृश्यते—"या अभ्यङ्क्ते तस्यै दुश्चर्मे"त्यादिना, तस्य ततः प्रकरणादुत्कृष्य पुरुषार्थत्वेन विधानमुक्तम्, तद्वदत्रापि विधानमिति भावः। पृथगधिकरणानङ्गीकारेऽपि न्यायाङ्गीकाराच्च।

व्रतकलापस्य प्रकरणेऽन्वयासंभवादगत्या वाक्यभेदाश्रयणम्, इह तु तव्यस्यार्हार्थत्वेनाप्यन्वयसंभव इत्यपरितोषात् पक्षान्तरमाह—**अथवेति**॥ कथं तस्यापि विधायकत्वमिति ? तदाह—**तस्य तत्परत्वादिति**॥ अनारभ्याधीतत्वादिति भावः॥ ननु—तस्याप्यन्यपरत्वाद्वाक्यभेदप्रसङ्गात् श्रवणप्रतीत्यभावात् कथं विधानम्? विधायकत्वेन व्यवहारादर्शनादौत्प्रेक्षिकं तदित्याशङ्क्याह—**सूत्रकारेणेति**॥ सर्वथेत्युपसंहारः। अथवा—तव्यस्य विधावपि स्मरणात् "विजिज्ञासस्वे"त्यादिषु तव्यश्रवणात् कथमपरितोष इति ? तत्राह—**सर्वथेति**॥ विषयव्याप्त्यर्थमथवापक्षान्तरदर्शनमिति भावः॥ तदुक्तम्—"विषयव्याप्तिरेव वे"ति॥ असंगतिचोद्यं परिहरति—**कर्तव्ये चेति**॥ उपोद्घातसंगतिरिति भावः। सूत्रसंगतचोद्यस्य भाष्यव्याख्यानपर्यन्तत्वात्तत्परिहारेण परिहृतमित्याह—**तत्रेति**॥ अथवा—अनुबन्धनिर्णयार्थत्वेऽपि सूत्रस्य भाष्यकारेणापि तदेव प्रतिपादनीयम्, नान्यत्; अव्याख्येयत्वप्रसङ्गादित्याशङ्क्याह—**तत्रेति**। **सूत्रसंगतमिति**॥ सूत्रेण संगतमित्यर्थः। सूत्रव्याख्यानरूपतया सूत्रसंगत्या शास्त्रेऽपि संगतमित्यर्थः। अथवा—तत्रेत्युपसंहारः।

---

१. प्रेताग्निहोत्रं—यजमानस्य मरणानन्तरं दाहात्पूर्वं तत् पुत्रादिभिः यजमानाग्नौ क्रियमाणमग्निहोत्रम्। तत्र क्षीरादिपूर्णायामग्निहोत्रहवण्याः गार्हपत्यादाहवनीयां प्रति नयनकाले अधोभागे समिधं धारयेदित्यर्थः। जीवद्दशायां क्रियमाणे तु उपरिधारणं विधेयम्।

२. व्रतकलापः पत्न्याः अभ्यञ्जन दन्तधावनादिनिवृत्तिः।

## पञ्चपादिका

**अत्राऽऽह—यद्येवम्, एतावदेवास्तु भाष्यम्—"अस्यानर्थहेतोः प्रहाणायाऽऽत्मैकत्वविद्याप्रतिपत्तये सर्वे वेदान्ता आरभ्यन्ते" इति तत्र—"अनर्थहेतोः प्रहाणाय" इति प्रयोजननिर्देशः, "आत्मैकत्वविद्याप्रतिपत्तये" इति विषयप्रदर्शनम्। किमनेन**

## पञ्चपादिकाविवरणम्

ननु यद्यर्थाद्विषयप्रयोजने सूत्रिते, तर्हि भाष्यकारेण सूत्रस्य तत्र व्यापारं दर्शयित्वाऽऽक्षेपसमाधानपूर्वकं साक्षादेव प्रतिपादनीये विषयप्रयोजने; अन्यथा सूत्रकार-भाष्यकारयोस्तत्र तात्पर्याभावप्रसङ्गादिति ? तत्राह—**एतच्च तस्माद् ब्रह्म जिज्ञासितव्यमित्यादिभाष्ये स्पष्टतरमिति** ॥ भाष्यकारेणोक्तमिति प्रदर्शयिष्याम इत्यध्याहारः। प्रथमग्रन्थोक्तमेवार्थमाक्षेप-समाधानपूर्वकमतितरां स्पष्टीकर्तुं चोदयति—**अत्राह यद्येवमिति** ॥

**ननु** "अस्यानर्थहेतोरि"ति भाष्यवत्पूर्वभाष्यमपि विषयादिकमेव प्रतिपादयति, कुतस्तत्र पर्यनुयोग इति ? नेत्याह—**अहं मनुष्य इति देहेन्द्रियादिष्वित्यादिनेति** ॥ अत्र विचारकर्तव्यता विषय-प्रयोजनाध्यासानामुत्तरोत्तरेण पूर्वपूर्वस्य साध्यत्वस्य

## तत्त्वदीपनम्

**चशब्दः** शङ्काव्यावृत्त्यर्थः ॥ शास्त्रारम्भकर्तव्यतासिद्ध्युत्तरकालीनत्वादुत्तरविचारस्येत्याद्यत्वम्। "चिन्तां प्रकृतसिद्ध्यर्था-मुपोद्घातं प्रचक्षते" इत्युपोद्घातत्वेन शास्त्रसंगतिश्चेत्यर्थः। एकः चशब्दोऽवधारणार्थः। स च प्रतिपादित इत्यनेन सम्बध्यते। इतिशब्दः सूत्रनिरवद्यतोपसंहारार्थः। सूत्रनिरवद्यतायां तदर्थप्रतिपादकभाष्यस्यापि निरवद्यत्वमाह—**तत्रेत्यादिना** ॥ सूत्रस्य निरवद्यत्वे सतीत्यर्थः।

भाष्यकारस्य व्याख्यानाचतुरतामाशङ्कते—**ननु यदीति** ॥ विषयप्रयोजने अर्थात्सूत्रिते यदि, तर्हि भाष्यकारेण विषय-प्रयोजने प्रतिपादनीये इत्यन्वयः। हेतूपस्थापनेन विषयादेः प्रतिपादितत्वान्न चोद्यावसर इत्याशङ्क्याह—**आक्षेपेति** ॥ हेत्वा-क्षेपसमाधानाभ्यां तथा प्रतिपादिते इत्याशङ्क्याह—**सूत्रस्येति** ॥ **व्यापारमिति** ॥ तत्प्रतिपादनसामर्थ्यमित्यर्थः। भाष्यकृत्त्वाच्च विषयादिवाचकशब्दाभ्यां ते निर्देष्टव्ये इत्याह—**साक्षादिति** ॥ प्रतिपादनमात्रमुपयुक्तम्, न तु साक्षादित्याशङ्क्याह—**अन्यथेति** ॥ अप्रतिपादनमसिद्धमित्याह—**तत्राहेति** ॥ चशब्दः शङ्काव्यावृत्त्यर्थः। **जिज्ञासितव्यमिति** ॥ अस्मात्पूर्वं यद्भाष्यं तदादिभाष्यम्, तत्रेत्यर्थः। भाष्यकारेण विषयादिकं प्रतिपाद्यमिति शङ्कायां "प्रदर्शयिष्याम" इति समाधानमनुचितमित्या-शङ्क्याह—**भाष्यकारेणेति** ॥ "युष्मदस्मदि"त्यादेर्हेतूपस्थापकत्वेन भाष्यत्वसिद्धावाक्षेपानवसरमाशङ्क्याह—**प्रथमग्रन्थेति** ॥ ननु "एतदन्तमनेन पर्यवस्यदि"ति विभागेन भाष्यार्थः स्पष्टीकृत इत्याह—**अतितरामिति** ॥ एतद्विवृणोति—**आक्षेपेति** ॥

## ऋजुविवरणम्

भाष्यकारेण विषयादिप्रतिपादनं कर्तव्यमिति चोदिते "प्रदर्शयिष्याम" इत्युक्तम्, तदयुक्तम्, चोद्यस्यापरिहृतत्वा-दित्याशङ्क्य पूरयति—**भाष्यकारेणोक्तमिति** ॥ "अत्राह यद्येवमि"त्यादिग्रन्थः पुनरुक्तः; पूर्वोक्तार्थस्यैव प्रतिपादनात्। तथाहि—पूर्वमपि भाष्यद्वयं प्रयोजनप्रतिपादकं न भवति; अध्यासप्रतिपादकत्वादित्याशङ्क्य हेतुभूताध्यासप्रतिपादकत्वेन तत्प्रतिपादकत्वात्, उत्तरत्रापि विषयप्रयोजनभाष्येणैवालम्, किं पूर्वेणेत्याशङ्क्य विषयादिसिद्धिहेतुभूतस्याध्यासस्य प्रतिपाद-कत्वेन तत्प्रातिपादकत्वस्योक्तत्वात्, यदि टीकाकृतः पूर्वं तद्धेतुप्रतिपादनं नाभिप्रेतम्, तर्हि तात्पर्यप्रतिपादनमसंबद्धं स्यात्, अव्याख्येयताशङ्कापरिहारश्च न स्यात्; अतः संकटमित्याशङ्क्य ग्रन्थसमुदायस्य तात्पर्यमाह—**प्रथमग्रन्थोक्तमेवेति** ॥ पूर्व-मध्यासद्वारा प्रतिपादकत्वमाभिप्रायिकम्, तदेवेदानीं वाचनिकं करोति। **यद्वा**—हेतुभूताध्यासप्रतिपादकत्वेन तत्प्रतिपादकत्व-मुक्तम्, इदानीमध्यासस्य हेतुत्वमेव नास्ति, तेन विनापि विषयादिसिद्धेरित्याक्षिप्य तस्य विषयादिसिद्धिहेतुत्वं प्रतिपाद्यत इति भावः। लक्षणादिभाष्येऽपि पूर्वभाष्योपयोगकथनेनैवोपयोगसिद्धेरनुपन्यासः, न तु चोद्यपरिहाराविषयत्वेनेति मन्तव्यम्। **यद्वा**—"युष्मदस्मदित्यादिने"त्याग्रिहणेन सर्वेषां ग्रहणम्।

### पञ्चपादिका

**"युष्मदस्मत्" इत्यादिना—"अहं मनुष्य" इति देहेन्द्रियादिष्वहंममेदमित्यभिमानात्मकस्य लोकव्यवहारस्याविद्यानिर्मितत्व-प्रदर्शनपरेण भाष्येण ?**

### पञ्चपादिकाविवरणम्

सूत्रेणैव सूचितत्वादध्याससाधनद्वारेण विषयप्रयोजने साधयित्वा विचारकर्तव्यता साधनीयेति क्रमनियमं विवक्षन्नाह—**'उच्यत' इत्यारभ्य 'वक्ष्यति चैतदि' त्यतः प्राक्तनेन ग्रन्थेन ॥**

### तत्त्वदीपनम्

हेतूपस्थापकत्वाद्युष्मदस्मदित्यादेः कथमाक्षेप इति शङ्कते—**नन्वस्यानर्थेति** ॥ हेतूपस्थापकत्वमसिद्धमित्याह—**नेत्याहेति** ॥ अध्यासं विनापि विषयादिसिद्धेर्नाध्यासस्य तद्धेतुत्वमित्यभिसन्धिः। ननु विचारकर्तव्यतायाः श्रौतत्वात्त त्परित्यागेन प्रथममध्यासवर्णनम्, ततो विषयादिवर्णनम्, ततो विचारकर्तव्यतानिरूपणमिति व्युत्क्रमः कस्मादिति ? अत्राह—**अत्र विचारेति** ॥ अत्र विचारकर्तव्यतादिष्विति क्रमनियमं विवक्षन्निति संबन्धः। इतिपदपरामृष्टमर्थमाह—**अध्यासेति** ॥ तत्रोपपत्तिमाह—**विचारकर्तव्यतेति** ॥ उत्तरोत्तरेणेति पाठक्रमाभिप्रायेणेति द्रष्टव्यम्। विषयप्रयोजनयोरध्यासाधीनताया

### ऋजुविवरणम्

एवं ग्रन्थसमुदायस्य तात्पर्यमुक्त्वा चोद्याभिप्रायमाविष्कर्तुं पूर्वमुक्तं विषयादिसिद्धिहेतुभूताध्यासप्रतिपादकत्वेन तत्प्रतिपादकत्वं मनसि निधाय चोद्यमाक्षिपति—**नन्वस्यानर्थहेतोरिति** ॥ **भाष्यवदिति** ॥ अहेतुभूताध्यासप्रतिपादकत्वादित्य-भिप्रायेण परिहारः। **ननु**—विषयप्रयोजनप्रतिपादकत्वाभावाद्भाष्यद्वयमव्याख्येयमिति चोदिते, **"उच्यते"** इत्यारभ्याविद्या हेतुकं "कर्तृत्व-भोक्तृत्वं प्रदर्शितं भवती"त्यन्तेन ग्रन्थेनानर्थनिवृत्तेरनर्थमिथ्यात्वस्य च सूत्रितत्वप्रतिपादनमसंगतम्, तथा ततः, यत् "तत्प्रतिपादनद्वारेणे" त्यारभ्य सूत्रितत्वाद्भाष्यकारेणादावध्यासः प्रतिपाद्यः; तेन विना विषयप्रयोजनासिद्धेः, विषयप्रयोजनेन च विना शास्त्रारम्भासिद्धेरिति तात्पर्यमुक्तम्, तदपि न युक्तम्; न हि सूत्रितत्वमादावध्याससाधने हेतुः; व्यभिचारित्वात्, तथा सूत्रितक्रमेण प्रतिपादकत्वाप्रदर्शनादव्याख्येयत्वं भाष्यस्यापादितम्, सूत्रे हि प्रथमं विचारकर्तव्यता प्रतीयते, तदपेक्षया विषयादिप्रतीतिः, तत्साधकस्य ततोऽपि पश्चात्, स्वेनाप्येवमेवोक्तम्—"ब्रह्मज्ञानं हि सूत्रितमि"त्यादिना—"ब्रह्मज्ञानं ततोऽनर्थनिवृत्तिः ततस्तन्मिथ्यात्वं प्रतीयते" इति। अतस्तद्विपरीतक्रमेण प्रतिपादकत्वप्रदर्शनादसंबद्धतेत्याशङ्क्य, समुदायस्य तात्पर्यमाह—**अत्र विचारकर्तव्यताविषयेति** ॥ **उत्तरोत्तरेण** ॥ स्वपाठक्रमाभिप्रायेण। तेषु प्राधान्याभिप्रायेणैव पाठः कृतः; प्रतीतिक्रमोऽप्येतादृश एव, टीकाग्रन्थविरोधपरिहारोऽप्येवमेव। "ब्रह्मज्ञानं हि"त्यादिना प्रतीतिक्रमाभिप्रायेण पश्चात् सूचितत्वमुक्तम्, "ततः तत्प्रदर्शनद्वारेणे"त्यारभ्य वस्तुसिद्ध्यभिप्रायेणाध्यासस्य पूर्वत्वमुक्तम्, तेनैवादौ तत्साधनस्य सूत्रितत्वमुक्तम्। "ब्रह्मज्ञानं ही" त्यादिना ब्रह्मज्ञानादेः सूत्रितत्वप्रतिपादनं शङ्कान्तरनिवृत्त्यर्थम्। सा चैवम्—अध्यास-साधनद्वारा विषय-प्रयोजन-प्रतिपादकत्वप्रदर्शनमनुपयोगि; अध्यासस्यासूत्रितत्वान्नायं भाष्यकारेण प्रतिपाद्यः; तत्प्रतिपादने चाव्याख्येयत्वस्य दुष्परिहरत्वात्—इति, तां तावत्परिहरति—**ब्रह्मज्ञानं हीत्यादिना** ॥ अथवेयमपि शङ्का पूर्वचोद्यान्तर्गता। पूर्वग्रन्थे हि "किमनेन युष्मदस्मदित्यादिना" भाष्यद्वयमाक्षिप्तम्। तस्यायमभिप्रायः—सूत्रितं हि भाष्यकारेण प्रतिपादनीयम्, नाध्यासः; असूत्रितत्वादनुपयोगादिति। "प्रथमग्रन्थोक्तमि" त्यादेरयमर्थः—प्रथमग्रन्थे हि विषयप्रयोजनसिद्धिहेतुत्वादध्यास-साधनद्वारेण तत्प्रतिपादकत्वमुक्तम्, इदानीमध्यासभाष्योपयोग एव नास्ति; विषयप्रयोजनसिद्धिहेतुत्वाभावात्, असूत्रितत्वादित्या-क्षिप्याध्यासस्य सूत्रितत्वं विषयप्रयोजनसिद्धिहेतुत्वं चोक्त्वा भाष्यस्योपयोगित्वं स्पष्टीक्रियत इति। अनन्तरग्रन्थशङ्काऽप्येवम्, टीकाकारेण "ब्रह्मज्ञानं ही" त्यादिनाऽध्यासस्य सूत्रितत्वाद्भाष्यकारेणादावध्यासः प्रतिपाद्यः; तेन विना विषयप्रयोजनासिद्धेः, विषयप्रयोजनेन च विना शास्त्रारम्भासिद्धेरिति तात्पर्यमुक्तम्, तदसंबद्धम्; असूत्रितक्रमेण प्रतिपादकत्वप्रदर्शनादसंबद्धत्व-प्रसङ्गादित्याशङ्क्य ग्रन्थसन्दर्भस्य तात्पर्यमाह—**विचारकर्तव्यतेति** ॥ अत्रैवं वक्ष्यमाणार्थसंग्रहः—शास्त्रमारम्भणीयं न वेति।

## पञ्चपादिका

**उच्यते—ब्रह्मज्ञानं हि सूत्रितमनर्थहेतुनिबर्हणम्। अनर्थश्च प्रमातृताप्रमुखं कर्तृत्व-भोक्तृत्वम्। तद्यदि**

## पञ्चपादिकाविवरणम्

ननु—ब्रह्मज्ञानप्रयोजनां विचारकर्तव्यतां सूचयता सूत्रेण कथं बन्धनिवृत्तिविचार-विज्ञानयोः प्रयोजनत्वेन सूत्रितेति? तत्राह—**ब्रह्मज्ञानं हि सूत्रितमनर्थहेतुनिबर्हणमिति**॥ विचारसाध्यज्ञानस्य प्रयोजनमाकाङ्क्षन्विचारविधिरधिकारिविशेषणं मोक्षं प्रयोजनत्वेन प्रमिमीत इत्यर्थः।

ननु—अनर्थो नरकपातादिलक्षणोऽन्य एव, शरीरादिप्रतिभासस्य च मिथ्यात्वं साध्यते, इति किं केन सङ्गतमिति? नेत्याह—**अनर्थश्च प्रमातृताप्रमुखं कर्तृत्वभोक्तृत्वमिति**॥ निवर्त्यतां तर्हि ज्ञानेन वस्तुभूतमेव प्रमातृत्वकर्तृत्वभोक्तृत्वमिति?

## तत्त्वदीपनम्

वक्ष्यमाणत्वात्तदुपस्थापकस्य भाष्यत्वं युक्तमित्युक्तम्—"उच्यते" इत्यत्र, तदसङ्गतम्; इष्यमाणत्वेन ज्ञानस्य फलत्वम्, तच्च नाध्यासमपेक्षत इत्यध्यासस्यासूत्रितत्वात्तत्प्रतिपादकं भाष्यमसङ्गतमित्याशयेन शङ्कते—**ननु ब्रह्मज्ञानेति**॥ बन्धनिवृत्तेरसूत्रितत्वमसिद्धमित्याह—**तत्राहेति**॥ किमनर्थहेतुनिवृत्तिर्मुखतः सूत्रिता, उतार्थात्? नाद्यः; अनुपलम्भात, न द्वितीयः; अनुपपत्त्यभावादित्याशङ्क्याह—**विचारेति**॥ ब्रह्मज्ञानोद्देशेन विचारकर्तव्यता विधीयमाना ब्रह्मज्ञानस्यानर्थनिवृत्तिफलतामाक्षिपति; स्वरूपेण तस्यापुरुषार्थत्वादित्यर्थः।

अनर्थनिवृत्तेः सूत्रितत्वात्तन्मिथ्यात्वमेव वर्णनीयम्, किं तत्स्वरूपनिर्देशेन? इत्याशङ्क्य शङ्कान्तरनिरासार्थमिति दर्शयितुं शङ्कान्तरमाह—**नन्विति**॥ शरीराद्यभिमानपुरःसरं नरकपातादिजनितदुःखप्रमातृताया एवानर्थत्वान्नासङ्गतिरित्याह—**नेत्याहेति**॥ अनर्थनिवृत्तेः सूत्रितत्वमङ्गीकृत्याध्याससूत्रणमाक्षिपति—**निवर्त्यतां तर्हीति**॥ परमार्थस्य प्रपञ्चस्येश्वरज्ञाननिवर्त्यत्ववद् ब्रह्मज्ञानेनापि निवृत्तिः स्यादित्यर्थः। दृष्टान्तासम्प्रतिपत्त्योत्तरयति—**नेत्याहेति**॥ वस्तुना परमार्थसता निष्पन्नं वस्तुकृतम्, वस्तु यथा तथा वा कृतमित्यर्थः। ज्ञानानिवर्त्यत्वमुपपादयति—**तथाहीति**॥ ज्ञानस्य वस्तुनिवर्तकत्वं किं दृष्टबलात्, किं वा श्रुतिबलात्? आद्येऽपि तत्किं विषयसम्बन्धिनं निवर्तयति, उताऽऽश्रयसम्बन्धिनम्, किं वोभयसम्बन्धिनम्? आद्येऽपीदमालोचनीयम्—किं नियन्तृत्वादिविशिष्टविषयं निवर्तकम्, उत केवलविषयम्? तत्र नाद्यः सङ्गच्छते; व्यभिचारादित्याह—**चित्रेति**॥ चित्राख्यरूपस्यैकत्वेन तत्र नीलरूपाद्यभावात् कथं नीलज्ञानस्य नीलाद्यनिवर्तकत्वमुदाह्रियत इति चेत्? मैवम् चित्रावयव्यारम्भकनीलविशिष्टवस्तुज्ञानस्यानिवर्तकत्वोदाहृतेर्न विरोधः। न च तदा चित्रावयविनीति पदवैयर्थ्यं शङ्क्यम्; नीलज्ञानस्य स्वविषयनिवर्तकत्वे चित्रावयविन एवानुपपत्तिरिति प्रदर्शनार्थत्वात्। नानारूपसमाहारश्चित्रमिति **व्योमशिववृष्ट्या** प्रतिभासं वाऽपेक्ष्येदमुदाहरणमित्यर्थः। केवलविषयज्ञानं तद्गतनियन्तृत्वादिनिवर्तकमित्यत्र व्यभिचारमाह—**स्वविषयसमवेतमिति**॥ नीलज्ञानस्य न रसादिनिवर्तकत्वम्; अविरोधात्, शुद्धात्मविषयं पुनस्तद्विरोधिनं निवर्तयतीत्याशङ्क्य तत्रापि व्यभिचारमाह—**विरोधिनं चेति** (वेति)॥ विषयगतव्यवहारायोग्यत्वं यथा नीलज्ञानेन निवर्त्यते, तद्वत्। "अत्रापी"त्याशङ्क्याज्ञाननिवृत्तावयोग्यतानिवृत्तेर्न ज्ञाननिवर्त्यत्वमित्याह—**स्वविषयानवबोध एवेति**॥ ज्ञानप्रागभावस्य वस्तुसतोऽपि ज्ञाननिवर्त्यत्वं

## ऋजुविवरणम्

नेति तावत्प्राप्तम्; विषयप्रयोजनशुन्यत्वात्। कथम्? ब्रह्मात्मैकत्वं विषयः, न च तदुपपद्यते; विरुद्धस्वभावत्वात्, सत्यस्य बन्धस्य ज्ञानान्निवृत्तिश्चानुपपन्ना; अतो नारम्भणीयमिति॥ आरम्भणीयमिति सिद्धान्तः; विरुद्धरूपत्वस्य कल्पितत्वेन बिम्बप्रतिबिम्बयोरिवैकत्वोपपत्तेः, मिथ्यात्वेन बन्धस्य निवृत्तिश्चोपपद्यते, इति विषय-प्रयोजनसम्भवाच्छास्त्रमारम्भणीयमिति। ननु—अयं क्रमः सूत्रित इति वक्तुं न शक्यते; अध्यासस्यासूत्रितत्वात्, अथ बन्धनिवृत्तिप्रयोजनद्वारा सूत्रितत्वम्? न; प्रयोजनान्तरस्यैव सूत्रितत्वात्, कथं तस्यापि सूत्रितत्वमिति चोदयति—**ननु ब्रह्मज्ञानेति**॥ सूत्रितप्रयोजनस्य साक्षादप्रयोजनत्वादित्यभिप्रायेणाह—**प्रयोजनमाकाङ्क्षन्निति**॥

## पञ्चपादिकाविवरणम्

नेत्याह—**तद्यदि वस्तुकृतमिति**। तथाहि—चित्रावयवविनि नीलविशिष्टद्रव्यज्ञानं स्वविषयं वा स्वविषयसमवेतं वा रसादिकं विरोधिनं वा पोतिमादिगुणं न निवर्तयति, स्वविषयानवबोध एव केवलस्तेन निवर्त्यते। स्वाश्रयगतं वस्तुज्ञानेन निवर्तत इति चेत्, न; घटादिज्ञानेनात्मगतधर्माधर्मादिगुणानिवृत्तेः। न चाश्रयविषयोभयसम्बन्धि वस्तु ज्ञानेन निवर्तते; आत्मनः शरीरविषयज्ञानेन देहात्मसम्बन्धाद्यनिवृत्तेरिति। ननु न दृष्टसामर्थ्याद् ज्ञानाद्बन्धनिवृत्तिः, येनाविद्यात्मत्वं वर्ण्येत, किंत्वागम एव ज्ञानाद्बन्ध-निर्वृत्तिं श्रावयति।

ननु श्रुतोपपत्त्यर्थमेव बन्धस्याविद्यात्मत्वं वर्णनीयमेव; यथाऽऽग्नेयादीनां षण्णां यागानामधिकारापूर्वविषयतयाऽपूर्वकरणभावे श्रुतेऽपि कालान्तरभाविप्रधानापूर्वसाधनत्वोपपत्त्यर्थं क्रमभावियागकर्मजन्यानि मध्यवर्तीन्यवान्तरापूर्वाणि

## तत्त्वदीपनम्

दृष्टमित्याशङ्क्य प्रागभावनिवृत्तेर्ज्ञानमात्रत्वाभ्युपगमान्न ज्ञानेन प्रागभावस्य निवर्त्यत्वमित्याह—**केवल इति**॥ द्वितीयं पक्षमुत्थापयति—**स्वाश्रयेति**॥ जीवगतनियम्यत्वादिप्रपञ्चनिवृत्तौ तत्सापेक्षो नियन्तृत्वादिरपि ब्रह्मगतोऽर्थान्निवर्तत इत्यर्थः। व्यभिचारान्नायं पक्षः साधुरित्याह—**न घटादिज्ञानेनेति**॥ तृतीयं पक्षं दूषयति—**न चाश्रयेति**॥ कर्तृत्वादेराश्रयविषयसम्बन्धिनो ज्ञाननिवर्त्यत्वानुपपत्तिरित्यक्षरार्थः। सत्तादिरादिशब्दार्थः श्रुतिबलाद् ज्ञानस्य वस्तुनिवर्तकत्वमि पक्षमुत्थापयति—**ननु न दृष्टेति**॥ **येनेत्यस्यायमर्थः**—दृष्टबलाद् ज्ञानान्निवर्तते बन्ध इति पक्षे ज्ञानस्य बन्धनिवर्तकताया अदृष्टेरध्यस्तत्वं स्यादिति। "तथा विद्वान्नामरूपाद्विमुक्त" इत्यादिरागमः।

वस्तुसतो ज्ञाननिवर्त्यत्वासम्भवान्मायात्मकबन्धस्य ज्ञाननिवर्त्यत्वं श्रुत्यर्थः; इतरथा दृष्टविरोधात् श्रुतिप्रामाण्यं न स्यादिति परिहरति—**ननु श्रुतेति**॥ श्रुतेऽप्युपपत्त्यपेक्षां दृष्टान्तेनाह—**यथेति**॥ "आग्नेयोऽष्टाकपालः" "उपांशुयाजमन्तरा यजति" "अग्नीषोमीयमेकादशकपाल"ति पूर्णमासत्रयम्, "आग्नेयोऽष्टाकपालः" "ऐन्द्रं दधि" "ऐन्द्रं पय" इति दर्शत्रयमित्येतेषां षण्णां यागानामपूर्वसाधनत्वोपपत्त्यर्थमपूर्वाणि कल्प्यन्त इति सम्बन्धः। **ननु** अपूर्वसाधनत्वस्यैवाभावान्नात्रोपपत्त्यपेक्षेत्याह—**अधिकारेति**॥ परमापूर्वविषयतयेत्यक्षरार्थः। **अयं भावः**—"स्वर्गकामो यजेते"त्यत्र लिङा लौकिककार्यव्युत्पत्त्यनुरोधेन नियोगस्तावदुपलभ्यते। नियोगश्चाधिकारिविषयावन्तरेणानुपपद्यमानोऽधिकारिविषयावाक्षिपति। तत्र कुत्र नियोग इति विषयाकाङ्क्षायां यागो विषयत्वेन सम्बध्यते—यागे नियोग इति। तदिदमुक्तम्—**अधिकारापूर्वेति**॥ नियोगप्रतीत्युपयोगित्वं विषयशब्दार्थः। यागविषयो नियोगः साध्यतया प्रतीयमानः साक्षात् कृत्यसाध्यत्वात् स्वस्य कृतिसाध्यत्वनिर्वाहार्थं विषयतयाऽन्वितानां तेषामेव करणत्वमाक्षिपति। तदेतदुक्तम्—**अपूर्वकरणेति**॥ नियोगनिष्पत्त्यनुबन्धित्वं करणशब्दार्थः। तदिदमुक्तं **शालिकायाम्**—

## ऋजुविवरणम्

भवतु बन्धनिवृत्तिः सूत्रिता, तन्मिथ्यात्वं तु कथं सूत्रितमित्याभिप्रायेणाह—**निवर्त्यतां तर्हीति**॥ तत्र निवृत्तिद्वारेण मिथ्यात्वमपि सूत्रितमिति वक्तुं सत्यस्य ज्ञानेनानिवर्त्यत्वं साधयति—**तद्यदि वस्तुकृतमिति**। तदसम्बद्धम्; सत्यस्यापि ज्ञानेन निवृत्तिदर्शनात्, असत्यस्यापि ज्ञानेनानिवृत्तिदर्शनादविरोधित्वमेवानिवृत्तौ प्रयोजकम्, विरोधित्वमेव तु निवृत्तावित्याशङ्क्य, सत्यत्वे विरोधप्रयोजकत्वमेव वक्तुं न शक्यत इयि तात्पर्यं दर्शयति—**तथाहीत्यादिना**॥ ननु उत्पन्नेन ज्ञानेन विषये किञ्चित्कर्तव्यम्, तच्च नातिशयाधानम्; अदर्शनात्, अतश्चाभिव्यक्तिलक्षणं सत्यत्वनिवृत्तिरूपमेवेत्याशङ्क्याह—**स्वविषयानवबोध एवेति**॥ प्रागभावातिरिक्तं निवर्त्यं नास्तीति भावः। यद्वा—सत्यत्वेन ज्ञानेनानिवृत्तिः कथं साध्यते ? न हि ज्ञानेन सत्येतरस्यैव निवृत्तिर्दृष्टा, येन सत्यत्वेनानिवृत्तिरुच्येत, मिथ्यात्वं वा साध्येत। यद्वा—ज्ञानेन विषयगतस्य निवृत्तिस्त्वयाप्यङ्गीकृता कथं निराक्रियते ? इत्याशङ्क्याह—**स्वविषयानवबोध एवेति**॥ ज्ञानस्य स्वप्रागभावनिवृत्तित्वात् ज्ञानेन निवर्त्यत्वाभिधानादनवबोधोऽज्ञानम्, तदेव निवर्त्यत इति भावः। विधिमूलं सूत्रमित्यभिप्रायेणाह—**ननु न दृष्टसामर्थ्यादिति**॥

पञ्चपादिका

**वस्तुकृतम्, न ज्ञानेन निबर्हणीयम्; यतो ज्ञानमज्ञानस्यैव निवर्तकम्। तद्यदि कर्तृत्व-भोक्तृत्वमज्ञानहेतुकं स्यात्, ततो**

पञ्चपादिकाविवरणम्

कल्प्यन्ते। यथा वा श्रुतस्यैव स्वर्गसाधनत्वस्योपपत्तयेऽपूर्वं कल्प्यते तद्वत्। **ननु** तत्र क्षणिकानां कर्मणां कालान्तरवर्तिफलसाधनत्वाभावव्याप्तिनियमाल्लोके, वेदेऽपि स्वर्गापूर्वसिद्ध्यै मध्येऽपूर्वाणि कल्प्यन्ते श्रुतोपपत्तय इति, तर्हीहापि व्याप्तिनियतिरस्तीत्याह—**यतो ज्ञानमज्ञानस्यैव निवर्तकमिति**॥ अतः सूत्रस्यैव बन्धस्याविद्यात्मकत्वे व्यापारात्सूत्रार्थविचारकर्तव्यतोपपत्त्यर्थप्रयोजनसाधनायाध्यासो वर्णनीय इत्याह—**तद्यदीत्यादिना सूत्रार्थोपपत्त्युपयोगितयेत्यन्तेन ग्रन्थेन**।

तत्त्वदीपनम्

"कृतितत्साध्यमध्यस्थो यागादिर्विषयो मतः। कार्ये संघटिताकारे करणत्वेन संमतः॥" इति॥

यागानामेव परमापूर्वकरणत्वात् किमवान्तरापूर्वैः? इत्याशङ्क्य किमेकैकयागनिष्पत्त्यनन्तरमपूर्वजनिः, उत सर्वनिष्पत्त्यनन्तरमिति विकल्प्याऽऽद्यं दूषयति—**कालान्तरेति**॥ "दर्शपूर्णमासाभ्यामि" ति तृतीयया समुच्चितानां करणताप्रतीतेर्नायं पक्षः साधुरित्यर्थः। द्वितीयं दूषयति—**क्रमभावीति**॥ देवतोद्देशेन द्रव्यत्यागलक्षणानां यागानां सकृदनुष्ठानं न संभवतीत्यर्थः। क्रमेणोत्पन्नास्त एव मिलिताः कार्यहेतव इत्याशङ्क्य, क्षणिकत्वान्मेलनमेवानुपपन्नमित्यभिसन्धिनोक्तम्—**कर्मेति**॥ अपूर्वाणामपि यागवत् क्रमभावित्वात् संभूय हेतुत्वमनुपपन्नमित्याशङ्क्योक्तम्—**मध्यवर्तीनीति**॥ यागप्रधानापूर्वयोर्मध्ये स्थितानीत्यर्थः। न चैतावता यागकरणताभङ्गः; तेषामेव सूक्ष्मरूपत्वादपूर्वाणामित्याह—**अवान्तरेति**॥ परमापूर्वमपेक्ष्यावान्तरेति विशेषणम्॥

**ननु** अवान्तरापूर्वैः फलसिद्धेः किमन्तर्गडुना परमापूर्वेण? न च—प्रत्ययबलात्तत्प्रत्ययान्न तन्निराकरणमिति—शङ्क्यम्, तस्य प्रत्ययार्थत्वासिद्धेरिति मन्वानं प्रति दृष्टान्तान्तरमाह—**यथेति**॥ यागगतस्येत्यनुषङ्गः। एषा भाट्टप्रक्रिया—'यजेते'त्युक्ते शाब्दभावनाभाव्यत्वेन पुंस्प्रवृत्तिलक्षणाऽऽर्थभावना प्रतीयते। सा च भाव्य-करणेतिकर्तव्यतारूपमंशत्रयमपेक्षते। तत्र यद्यप्येकपदोपात्तत्वेन यागस्य भाव्यत्वं प्रतीयते; तथापि क्लेशात्मकत्वेन तस्य भाव्यत्वासंभवाद्भिन्नपदोपात्तः स्वर्गो भाव्यत्वेन संबध्यते, यागः करणत्वेन, प्रयाजादिरितिकर्तव्यतात्वेन, यागस्य क्षणभङ्गुरस्य समयान्तरभाविफलसाधनतानुपपत्तेः श्रुतकरणत्वनिर्वाहायापूर्वं कल्प्यते यथा, तथा श्रुतबन्धध्वंसनिर्वाहार्थं बन्धस्य मिथ्यात्वं कल्पनीयमिति। दृष्टान्तो विषम इति शङ्कते—**ननु तत्रेति**॥ **स्वर्गापूर्वेति**। भाट्टमते स्वर्गसिद्ध्यर्थमपूर्वकल्पनम्, गुरुमते परमापूर्वसिद्ध्यर्थमिति विभागः।

ऋजुविवरणम्

श्रुतत्वमेवाश्रुतकल्पनेऽपि हेतुरिति परिहरति—**ननु श्रुतोपपत्त्यर्थमेवेति**।। **ननु** श्रुतोपपत्त्यर्थमश्रुतकल्पनेऽपि कारणान्तरमेव कल्प्यता मित्याशङ्क्याह—**अविद्यात्मकत्वं वर्णनीयमेवेति**॥ तेनैव श्रुतस्योपपत्तिर्नान्यथेति, तदेव वर्णनीयमेवेति। 'श्रुतोपपत्त्यर्थमेवे' त्यनेनागमापेक्षितत्वमुक्तं। वर्णनीयमेवेत्यनेन तेन विना तदुपपन्नत्वाभावात्तेनैव च तदुपपत्तेरित्युभयनियमोऽवधारणेनोक्तः। **यथा आग्नेयादीनामिति**॥ प्राभाकरमते दृष्टान्तः। अपूर्वकरणभावे श्रुतेऽपीत्युपादानभिप्रायेण। **यथा वा श्रुतस्येति**॥ भाट्टमतेन। तत्र श्रुतत्वमात्रेण नाश्रुतकल्पनम्, किन्तु प्रमाणान्तरविरोधपरिहारायेत्याह—**ननु तत्र क्षणिकानामिति**॥ इहापि प्रमाणविरोधपरिहारायाध्यासवर्णनमिति दर्शयितुं तेन विनाऽनुपपद्यमानप्रमाणस्वरूपे तात्पर्यमाह—**तर्हीहापीति**॥ ज्ञानस्याज्ञाननिवर्तकत्वेऽपि न ज्ञानत्वप्रयुक्ता निवृत्तिरिति भावः। यद्यपि तेन विनाऽनुपपत्तिः; तथापि भाष्यकारेण तत् प्रतिपाद्यमिति कथं सिद्धम्? इत्याशङ्क्याह—**अतः सूत्रस्यैवेति**॥ आदौ आर्थिकार्थकथन उपोद्घातत्वं हेतुरुक्तः, कथं

### पञ्चपादिका

**ब्रह्मज्ञानमनर्थहेतुनिबर्हणमुच्यमानमुपपद्येत । तेन सूत्रकारेणैव ब्रह्मज्ञानमनर्थहेतुनिबर्हणं सूचयताऽविद्याहेतुकम कर्तृत्वभोक्तृत्वं प्रदर्शितं भवति । अतस्तत्प्रदर्शनद्वारेण सूत्रार्थोपपत्त्युपयोगितया सकलतन्त्रोपोद्घातः प्रयोजनमस्य भाष्यस्य ॥**

### पञ्चपादिकाविवरणम्

ननु—सूत्रेण प्रथमप्रतिपन्नं प्रतिपाद्यमर्थमुल्लङ्घ्य किमिति चरमप्रतिपन्नमार्थिकार्थमेव भाष्यकारः प्रथमं वर्णयतीति ? तत्राह—**सकलतन्त्रोपोद्घात इति** ॥ प्रतिपाद्यमर्थं बुद्धौ संगृह्य प्रागेव तदर्थमर्थान्तरवर्णनमुपोद्घातः । प्रतिपाद्यं

### तत्त्वदीपनम्

"सेतुं दृष्ट्वा समुद्रस्य ब्रह्महत्यां व्यपोहतो"त्यादिवचनात् सत्यदुरितस्य सेतुदर्शनेन ध्वंसवत् सत्यबन्धस्य ब्रह्मज्ञानान्निवृत्तिसम्भवाद् वैषम्यमित्यर्थः ॥ साम्येन समाधत्ते—**तर्हीहापीति** ॥ सेतुसाक्षात्कारमात्राद् दुरितनिवृत्तिर्नस्मृत्यर्थः, सेतुस्थानां म्लेच्छानामपि दुरितनिवृत्त्याऽक्षयफलभागित्वप्रसक्तेः, किन्तु दूरदेशगत-च्छत्रपादुकाविधुरत्व-स्वकृतोद्घोषणादि-नियमकलापयुक्तस्य सेतुदेशप्राप्त्या कल्मषनिवृत्तिः । तस्माद् दृष्टान्तासिद्धेर्बन्धवैतथ्यमास्थेयं ज्ञाननिवर्त्यत्वसिद्धय इति भावः । तार्क्ष्यस्मरणं सत्यं विषं नाशयति यथा, यथा वा विषयदोषदर्शनं सत्यरागस्य निवर्तकम्, तद्वद् ज्ञानात् सत्यबन्धध्वंस इति शङ्कां निराकर्तुम्—**अज्ञानस्यैवेत्युक्तम्** ॥ न तावत्तार्क्ष्यस्मरणमात्रस्य सत्यविषशमयितृत्वम्, किन्तु ध्यान-मन्त्रप्रयोगादिक्रियायाः; इतरथाऽतिप्रसक्तेः । न च विषयदोषदर्शनं रागनिवर्तकम्; रागविरुद्धचेतोवृत्त्युदयाद्रागनिवृत्तेरित्यर्थः ॥ "तद्यदी"त्यादिग्रन्थं फलितपरतया व्याकरोति—**अत इति** ॥ सूत्रार्थश्चासौ विचारकर्तव्यता चेति तथा, तस्या उपपत्तिर्याभ्यां ते सूत्रार्थविचारकर्तव्यतोपपत्तिनी ते चार्थप्रयोजने चेति तथोक्ते, तयोः साधनायेति विग्रहः । प्रत्यग्ब्रह्मैक्यमर्थशब्दार्थः । सूत्रार्थोपपत्त्युपयोगितयेत्यस्यायमर्थः—विचारकर्तव्यतारूपस्य सूत्रार्थस्योपपत्तिर्याभ्यां विषयप्रयोजनाभ्यां ते सूत्रार्थोपपत्तिनी, तदुपयोगितया बन्धस्याविद्यात्मकत्वप्रदर्शनद्वारेणाध्यासो वर्णनीयः—इति ।

मिथ्यात्वसूत्रणमङ्गीकृत्य प्रथमप्रतिपादने को हेतुरिति शङ्कते—**ननु सूत्रेणेति** ॥ "विषं भुङ्क्ष्वे"त्यादिवाक्यात् प्रथमप्रतिपन्नस्याप्यनुपादेयत्वम्, तद्वन्नेत्याह—**प्रतिपाद्यमिति** । एकेनोभयोरप्रतिपत्तेः कथं चरमेत्युक्तम् ? तत्राह—**आर्थिकेति** ॥ प्रयोजनविवक्षया प्रथमप्रतिपादनमित्याह—**तत्राहेति** ॥ अध्यासभाष्यस्याऽध्यासबाधः प्रयोजनम्; तच्चोपोद्घातो हेतुरिति योजना । उपोद्घातप्रतिपादनयोर्भेदाभावान्नोपोद्घात इति विशेषणम्, तत्राह—**प्रतिपाद्यमिति** ॥ शब्दवर्णनं व्यावर्तयति—**अर्थमिति** ॥ प्रतिज्ञातवर्णनं व्यावर्तयितुम्—**अर्थान्तरेति** ॥ असंबद्धार्थवर्णनव्यावृत्त्यर्थम्—**तदर्थमिति** ॥ तदुपयोगितयेत्यर्थः । 'अग्निमान् अयमि'ति प्रतिज्ञाय धूमवत्त्वादित्यर्थान्तरवर्णनंव्यावर्तयितुम्—**प्रतिपाद्यमर्थं बुद्धौ**

### ऋजुविवरणम्

तस्य हेतुत्वम् ? न ह्युपोद्घातत्व-प्रतिपादनयोर्भेदोऽस्ति; उभयत्र प्रतिपाद्यार्थसाधनाविशेषात्, अतो नाप्रसिद्धमार्गाश्रयणं युक्तमित्याशङ्क्य, तयोर्लक्षणमाह—**प्रतिपाद्यमर्थमिति** ॥ तत्र वर्णनमुपोद्घात इत्युक्ते प्रतिपाद्यार्थवर्णनमप्युपोद्घातः स्यात्, तदर्थम्—**अर्थान्तरवर्णनमिति** ॥ तथापि सर्वार्थान्तरवर्णनानामुपोद्घातत्वं स्यात्, तदर्थमाह—**तदर्थमिति** ॥ तथापि प्रतिज्ञायार्थं तत्र हेतूपन्यासेऽपि तत् स्यात्, तदर्थमाह—**प्रागेवेति** ॥ प्रागेव प्रतिपादितस्य प्रसङ्गादुत्तरत्रोपयोगेऽप्युपोद्घातत्वं स्यात्, तदर्थमाह—**प्रतिपाद्यमर्थं बुद्धौ संगृह्येति** ॥ तथापि प्रतिपाद्यमर्थं बुद्धौ संगृह्य वर्णनमुपोद्घात इत्युक्ते प्रतिज्ञातार्थे हेतूपवर्णनस्याप्युपोद्घातत्वं स्यात्, तदर्थमाह—**प्रागेवेति** ॥ तथाप्यनुपयोग्यर्थवर्णनस्योपोद्घातत्वं स्यात्, तद्व्यावृत्त्यर्थम्—**तदर्थमिति** ॥ प्रागेव तदेकदेशवर्णनस्याप्युपोद्घातत्वं स्यात् तदर्थम्—**अर्थान्तरेति** ॥ यद्वा—प्रागनुपयोग्यर्थकथनव्यवच्छेदार्थम्—**तदर्थमर्थान्तरविशेषणम्** ॥ प्रतिपाद्यमर्थं बुद्धौ संगृह्य प्रागेवार्थान्तरवर्णनमुपोद्घात इत्युक्ते स्वतन्त्रानेकार्थान्मनसि निधायैकस्य प्रतिपादनमप्युपोद्घातः स्यात्, तन्निवृत्त्यर्थम्—**तदर्थमित्येवमूह्यम्** ॥ ननु तन्त्रस्याप्रतिपाद्यत्वात्कथं तदुपोद्घातत्वं टीकाकारेणोक्तमित्याशङ्क्य

## पञ्चपादिका

**तथा चास्य शास्त्रस्यैदम्पर्यम्—सुखैकतान-सदात्मक-कूटस्थ-चैतन्यैकरसता संसारित्वाभिमतस्यात्मनः पारमार्थिकं स्वरूपमिति—वेदान्ताः पर्यवस्यन्तीति, प्रतिपादितम्। तच्चाहं कर्ता सुखी दुःखीति प्रत्यक्षाभिमतेनानाधितकल्पनेनावभासेन**

## पञ्चपादिकाविवरणम्

बहिरेव प्रतिज्ञाय पश्चात्तत्सिद्धिहेतूपवर्णनं **प्रतिपादनमिति** विभागः। **तन्त्रमिति**॥ तन्त्रार्थो ब्रह्मात्मैकत्वमुच्यते। ननु भवतु प्रयोजनसिद्धिहेतुरध्यासः, कथं तन्त्रार्थसिद्धिहेतुः? इत्याशङ्क्य तत्कथनाय तन्त्रार्थं प्रथमं कथयति—**तथा चास्य शास्त्रस्येति**॥ ऐदम्पर्यं प्रतिपादितमित्युत्तरेण सम्बन्धः। तदेवैदम्पर्यं दर्शयति—सुखैकतानेत्यादिना॥ **अयमर्थः**—

## तत्त्वदीपनम्

**संगृह्येत्युक्तम्**। तावत्युक्ते बुद्धौ संगृह्य पश्चात्प्रतिज्ञाय यद्वर्णनं तस्योपोद्घातत्वं व्यावर्तयितुम्—**प्रागेवेति**॥ शब्दप्रयोगात्प्रागेवेत्यर्थः। प्रतिपादनस्वरूपमाह—**प्रतिपाद्यमिति**॥ प्रतिपाद्यं प्रतिज्ञाय हेतुवर्णनमित्युक्ते, उपोद्घातेऽपि प्रसङ्गः, तदर्थम्—**बहिरेवेति**॥ अवयवविपर्यासेनाप्राप्तकालतां व्यावर्तयति—**पश्चादिति**॥ असंबद्धहेतुव्यावृत्त्यर्थम्—**तत्सिद्धीति**॥ अध्यासस्य विषयफलसिद्धिहेतोः कथं तन्त्रशब्दवाच्यशास्त्रोपोद्घातत्वम्? इत्यत्राह—**तन्त्रेति**॥ तन्त्यते प्रतिपाद्यते इति ब्रह्मात्मैक्यं तन्त्रमित्युच्यते, धातूनामनेकार्थत्वात्, "तन्त्रि कुटुम्बधारणे"इति धातोः प्रतिपादनार्थत्वादित्यर्थः। ब्रह्मणोऽनादित्वात्स्वप्रकाशत्वाच्च नाध्यासस्य तद्धेतुत्वमिति शङ्कते—**ननु भवत्विति**॥ शास्त्रार्थप्रतिपत्तिप्रतिबन्धनिवृत्तावध्यासवर्णनोपयोग इति समाधिग्रन्थार्थः। तथाचेति॥ यथाऽध्यासस्य तन्त्रार्थहेतुत्वं तेन प्रकारेणेत्यर्थः। ऐदम्पर्यस्य शब्दधर्मत्वात्कथं चैतन्यैकरसतेति सामानाधिकरण्यम्? इत्याशङ्क्याह—**ऐदम्पर्यमिति**॥ पौनरुक्त्यं निरस्यति—**तदेवेति**॥ तात्पर्यस्य प्रतिपाद्यमानत्वात्प्रतिपादितमिति कथमुक्तमित्यत्राह—**अयमर्थ इति**॥ तन्त्रार्थे निर्दिष्टे तस्याध्यासाधीनत्वं निर्देष्टव्यम्, न तु विरोधप्रदर्शनमुचित-

## ऋजुविवरणम्

व्याचष्टे—**तन्त्रमिति तन्त्रार्थ इति**॥ ननु तथाचेत्यनन्तरग्रन्थेन तन्त्रार्थनिरूपणमसङ्गतम्; अध्यासस्य तन्त्रोपोद्घातत्वनिरूपणस्याप्रस्तुतत्वादित्याशङ्क्यानन्तरग्रन्थस्यासङ्गतिं परिहरति—**ननु भवत्विति**॥ 'कथं तन्त्रार्थसिद्धिहेतुरि'त्यस्यायमभिप्रायः—किं तदुत्पत्तौ हेतुत्वम्, ज्ञप्तौ वा? नोत्पत्तौ; अनन्यत्वात्, नापि ज्ञप्तौ; शास्त्रैकसमधिगम्यत्वादिति॥ वेदान्ताः पर्यवस्यन्तीति प्रतिपादितमित्यन्वयेऽङ्गीकृते शास्त्रस्यैदम्पर्यमित्यस्यानन्वयः स्यात्, तथा—सुखैकतानेत्यादिना निरूपितं संसारित्वाभिमतस्यात्मनः पारमार्थिकं स्वरूपमिति शास्त्रस्यैदम्पर्यं प्रतिपादितमित्यन्वयः प्रतिभाति; ऐदम्पर्यमित्यस्येदंशब्दार्थनिरूपणसापेक्षत्वात्। इदंपरस्य भाव ऐदम्पर्यमिति विग्रहः। सुखैकतानेत्यस्य चेदंशब्दार्थनिरूपकत्वात्, इत्यन्तत्वेन सापेक्षत्वाच्च, तथा सति वेदान्ता इत्यस्यान्वयः। अथ—इत्यन्तस्योभयत्रान्वयः, स्वरूपमिति शास्त्रस्यैदम्पर्यं प्रतिपादितम्, तथा स्वरूपमिति वेदान्ताः पर्यवस्यन्तीति च, तथा सति पौनरुक्त्यम्, एतत्परिहर्तुं व्याचष्टे—**ऐदम्पर्यं प्रतिपादितमित्युत्तरेणेति**॥ उत्तरस्योपयोगमाह—**तदेवैदम्पर्यमिति**॥ सुखैकतानेत्यादिविशेषणोपयोगस्तु एवमित्याह—

"अनर्थतत्संगमसत्पराक्त्वं विकारजाड्यं च तथैषु भेदम्। उद्धर्तुमेतानि विशेषणानि तैरेव तत्सिद्धिरितीरितानि॥"

अनेकाकारजाड्यं च चैतन्ये च विकारिताम्। उन्मूल्य चासदात्मत्वं तद्दुःखमसुखं श्रितम्॥
अन्योन्यव्यभिचारेण पदानामेतदेव हि। प्रयोजनमखण्डं हि न्यायविद्भिरुदीरितम्॥
सदादेरुपसंहारः पञ्चकस्य निरूपितः। रसभेदनिरासो वाऽस्थूलादीनुपलक्षयेत्॥

एवंभूतस्वरूपप्रदर्शनं वक्ष्यमाणप्रत्यक्षविरोधस्फुटीकरणार्थम्। उक्तं च—"**तन्त्रार्थमि**"त्यनेन वेदान्ता इत्यस्यानन्वयमपौनरुक्त्यं च परिहरति—**अयमर्थ इति**॥ सुखैकतानेत्यादि वेदान्ताः पर्यवस्यन्तीत्येवमन्तमैदम्पर्यं शास्त्रविशेषकम्, पूर्वभागः ऐदम्पर्यविशेषकः। वेदान्ता इति शास्त्रविशेषक इत्यर्थः। ननु प्रतिपाद्यते इति वक्तव्ये किं प्रतिपादितमित्युक्त-

## पञ्चपादिका

**विरुध्यते। अतस्तद्विरोधपरिहारार्थं ब्रह्मस्वरूपविपरीतरूपमविद्यानिर्मितमात्मन इति यावन्न प्रतिपाद्यते, तावद् जरद्गवादिवाक्यवदनर्थकं प्रतिभाति; अतस्तन्निवृत्त्यर्थमविद्याविलसितमब्रह्मस्वरूपत्वमात्मन इति प्रतिपादयितव्यम्। वक्ष्यति चैतदविरोधलक्षणे जीवप्रक्रियायां सूत्रकारः—"तद्गुणसारत्वादि"त्यादिना ॥**

## पञ्चपादिकाविवरणम्

ब्रह्मात्मैकत्वे वेदान्ताः पर्यवस्यन्तीति यदिदं वेदान्तशास्त्रस्यैदम्पर्यम्, तत् सूत्रभाष्याभ्यां प्रतिपादितमिति। तन्त्रार्थं प्रदर्श्य तस्याध्याससिद्ध्यधीनतयाऽध्यासस्य प्रथमवर्णनीयतां दर्शयति—**तच्चाहं कर्ता सुखी दुःखीति** ॥

ननु शास्त्रमेव प्रत्यक्षाभिमतमपि बन्धमाभासीकृत्य ब्रह्मात्मैकत्वं प्रतिपादयिष्यति, किं पृथगध्यासवर्णनेनेति? तत्राह—**तावज्जरद्गवादिवाक्यवदिति** ॥ ननु शास्त्रार्थसिद्धिरध्यासपराधीना चेत्, स एव तर्ह्यध्यासः सूत्रकारेण मुखतो वर्णनीयः; तस्य प्राधान्यात्, अन्यथा तत्रातात्पर्यप्रसङ्गादिति? तत्राह—**वक्ष्यति चैतदिति** ॥ तर्ह्युपोद्घातत्वात्प्रथममेवा-

## तत्त्वदीपनम्

मित्याशङ्क्य, तदप्यध्यासोपयोगितयेत्याह—**तन्त्रार्थमिति** ॥ शास्त्रविरोधात् सुखाद्यवभासस्याप्रामाण्यमित्याशङ्क्योक्तम्—**प्रत्यक्षेति** ॥ **टीकायाम्** ज्येष्ठत्वात्तस्य प्राबल्यमित्यर्थः। नाहं दुःखीत्यादिविरुद्धप्रत्यक्षविरोधादितरस्याऽऽभासत्वमाशङ्क्य तस्यासंप्रतिपत्तेर्नैतदित्याह—**अबाधितकल्पेनेति** ॥

विषयादेरध्यासाधीनत्वेऽपि तद्वर्णनमनर्थकम्; शास्त्रोत्थबोधादध्यासस्य निवृत्त्या विषयादिसिद्धेः, समारोपितरजतादेरध्यस्तताबोधं विनाऽप्यधिष्ठानसाक्षात्कारान्निवृत्तिरिवेत्याशयवानाह—**ननु शास्त्रमिति** ॥ लोकावलोकितपदार्थशक्तियोग्यतानुसारेण पदानामर्थबोधकत्वम्। नच बन्धवैतथ्यबोधं विना प्रत्यग्ब्रह्मणोरेकत्वयोग्यताऽधिगन्तुं शक्या; तस्मान्मिथ्यात्ववर्णनमुचितमित्यभिप्रायेणाह—**तत्राहेति** ॥

"जरद्गवः कम्बलपादुकाभ्यां द्वारि स्थितो गायति मद्रकाणि।
तं ब्राह्मणी पृच्छति पुत्रकामा राजन् रुमायां लशुनस्य कोऽर्घः ॥"

इति, जरद्गवादिवाक्यशब्देन गृह्यते। "शङ्खः कदल्यां कदली च भेर्यां भेरी महत्याऽऽविरभूद्विमाने"इत्यादिरादिशब्दार्थः। विधान्तरेणाध्यासस्यासूत्रार्थतां शङ्कते—**ननु शास्त्रेति** ॥ तस्य वर्णनमेवोपयोगि, न तु मुखत इत्याशङ्क्याह—

## ऋजुविवरणम्

मित्याशङ्क्य पूरयति—**सूत्रभाष्याभ्यामिति** ॥ ननु प्रदर्शिते तन्त्रार्थेऽध्यासस्य हेतुत्वं वक्तव्यं "तच्चाहं कर्ते"त्यनेन तस्य प्रत्यक्षविरोधप्रतिपादनं क्रियते, तदसंगतम्; तथा "तच्चाहमि"त्यत्र तच्छब्देनैदम्पर्यं निर्दिश्य तस्य प्रत्यक्षविरोधप्रतिपादनं क्रियत इत्यपि प्रतिभाति, तदपि निष्प्रयोजनमनुपपन्नं च; प्रत्यक्षस्यैकत्व-शास्त्रैदम्पर्यनिषेधकत्वाभावादित्याशङ्क्य व्याचष्टे—**तन्त्रार्थमिति** ॥ अर्थे विरोधप्रतिपादनं हेतुत्वप्रदर्शनार्थम्, ऐदम्पर्यविरोधप्रतिपादनं च प्रतीतिद्वारेणेति प्रदर्शनार्थम्। प्रत्यक्षस्य विरुद्धैकदेशग्राहकत्वेन विरोध इति भावः।

ननु प्रतीतावप्यध्यासवर्णनस्य कथमुपयोगः? इति चोदयति—**ननु शास्त्रमेवेति** ॥ प्रतिबन्धनिरसनेनोपयोग इति परिहाराभिप्रायः। "जरद्गवः कम्बलपादुकाभ्यां द्वारि स्थितो गायतिमद्रकाणि" इति जरद्गवादिवाक्यानां सूत्रकारेणाप्रतिपादितत्वादध्यासस्यैवंभूतत्वं निश्चेतुं न शक्यत इति चोदयति—**ननु शास्त्रार्थसिद्धिरिति** ॥ यद्येवमित्यनेन तस्यैव सूत्रस्य प्राथम्यमस्तीति चोदितमिव प्रतिभाति, तदसम्बद्धमित्याशङ्क्याभिप्रायमाह—**तर्ह्युपोद्घातत्वादिति**। एतदेव—अध्यासविषयमेवेत्यर्थः। **"अर्थविशेषोपपत्तेरि"ति** ॥ तत्रैवाध्यासप्रतिपादने हेतुरुक्तः तत्रार्थविशेषस्यादावप्युपपत्तेरहेतुरयम्; अर्थविशेषनिरूपणात्प्रागपि तन्निराकरणोपपत्तेरित्याशङ्क्याभिप्रायमाह—**अर्थनिर्णयप्रधानत्वादिति** ॥ भाष्यत्वादेवेत्यभिप्रायेण चोदयति—**तर्हीति** ॥ ननु—कथमादावार्थिकार्थस्य प्रतिपादने सुखप्रतिपत्तिरित्युक्तम्? इत्याशङ्क्याह—**प्रवृत्त्यङ्गभावायेति** ॥

## पञ्चपादिका

**यद्येवम्, एतदेव प्रथममस्तु ? मैवम्; अर्थविशेषोपपत्तेः। अर्थविशेषे हि समन्वये प्रदर्शिते तद्विरोधाशङ्कायां तन्निराकरणमुपपद्यते, अप्रदर्शिते पुनः समन्वयविशेषे, तद्विरोधाशङ्का तन्निराकरणञ्च निर्विषयं स्यात्। भाष्यकारस्तु तत्सिद्धमेवादिसूत्रेण सामर्थ्यबलेन सूचितं सुखप्रतिपत्त्यर्थं वर्णयतीति न दोषः॥**

**ननु च—ग्रन्थकरणादिकार्यारम्भे कार्यानुरूपमिष्टदेवतापूजानमस्कारेण बुद्धिसन्निधापिताथवृद्धयादिशब्दैर्ध्यादिदर्शनेन वा कृतमङ्गलाः शिष्टाः प्रवर्तन्ते। शिष्टाचारश्च नः प्रमाणम्। प्रसिद्धं च मङ्गलाचरणस्य विघ्नोपशमनं प्रयोजनम्।**

## पञ्चपादिकाविवरणम्

ध्यासविषयं सूत्रं प्रणेतव्यमिति। चोदयति—**यद्येवमिति**॥ अर्थनिर्णयप्रधानत्वाद्वादकथालक्षणायां प्रतिपादनप्रक्रियायां प्रवृत्तः सूत्रकारो नोपोद्घातप्रक्रिययामिति परिहरति—**मैवमर्थविशेषोपपत्तेरिति**॥ तर्हि भाष्यकारेणापि यथासूत्रक्रममेव प्रवर्तितव्यम्, न तु सूत्रक्रममतिलङ्घ्येति ? तत्राह—**भाष्यकारस्त्विति**॥ सुखप्रतिपत्त्यर्थम् प्रवृत्त्यङ्गभावायेत्यर्थः।

एवमपि न व्याख्येयमिदं भाष्यम्; शास्त्रादौ मङ्गलाचरणाभावात्, विघ्नोपसंसृष्टतया शास्त्रार्थेऽप्रतिपत्त्यन्यथाप्रतिपत्ति-विप्रतिपत्तिसम्भवात्, शिष्टाचारपरिपालनहीनतया चानाप्तप्रणीतत्वप्रसङ्गादिति चोदयति—**ननु ग्रन्थकरणादिकार्यारम्भ इति**॥ ननु—शिष्टानां निष्ठीवनादिप्रवृत्तिः किमन्येनानुसरणीयेति ? नेत्याह—**शिष्टाचारश्च नः प्रमाणमिति**॥ आचारः धर्म इत्येवानुष्ठीयमानं कर्म प्रमाणम् कर्तव्यमित्यर्थः। ननु प्रयोजनाभावात् किं मङ्गलाचरणेनेति ?

## तत्वदीपनम्

**अन्यथेति**॥ "मुखतो वर्णनीय" इत्यत्र किं साक्षाद्वर्णनेन भवितव्यमिति विवक्षितम्, उताऽऽदाविति विकल्प्याऽऽद्यं प्रत्याह—**तत्राहेति**॥ द्वितीयमुत्थापयति—**तर्ह्युपोद्घातत्वादिति**॥ समन्वयाभावे विरोधशङ्कातन्निरासयोर्निर्विषयत्वमुक्तम्, तदनुपपन्नम्; सत्यत्ववादिनं प्रति मिथ्यात्वसाधनसम्भवादित्याशङ्क्य, न परपक्षप्रतिक्षेपमात्राभिप्रायेण सूत्रकृतः प्रवृत्तिः, किन्तु तत्त्वनिर्णयाभिप्रायेणेत्याह—**अर्थनिर्णयेति**॥ अर्थनिर्णयः प्रधानमुद्देश्यं यस्यासावर्थनिर्णयप्रधानः तस्य भावस्तत्त्वम्; तस्मादित्यर्थः। अर्थविशेषे समन्वये दर्शिते सति प्रत्यक्षादिविरोधशङ्कायां मिथ्यात्वप्रतिपादनेन तन्निराकरणोपपत्तिरिति टीकार्थः॥ संप्रति सूत्राननुसारित्वं भाष्यकृतः शङ्कते—**तर्हीति**॥ प्रयोजनवशादतिलङ्घनमित्याह—**तत्राहेति**॥ सुखप्रतिपत्तिर्वा कस्मादित्याशङ्क्याह—**सुखप्रतिपत्त्यर्थमिति**॥

"युष्मदि" त्यादेरुक्तविधया भाष्यत्वसिद्धौ किं मङ्गलाचरणाऽऽक्षेपसमाधानाभ्याम् ? इत्याशङ्क्य, तयोरप्यव्याख्येयत्वव्याख्येयत्वयोः पर्यवसानात्ते उक्ते इत्याह—**एवमपीति**॥ मङ्गलाचरणं वा कस्मादित्याशङ्क्याह—**विघ्नेति**॥ इतोऽपि मङ्गलाचरणं कार्यमित्याह—**शिष्टाचारेति**॥ शिष्टाचारो नानुष्ठेयः; अतिप्रसङ्गादिति शङ्कते—**ननु शिष्टानामिति**॥ किं शिष्टानामाचारमात्रस्याननुष्ठेयत्वम्, उत तदविरुद्धस्य ? तत्राऽऽद्यस्त्वङ्गीक्रियते, द्वितीयस्त्वसंगत इत्याह—**नेत्याहेति**॥

## ऋजुविवरणम्

ननु—च 'ग्रन्थकरणादी' त्यसङ्गतम्; शिष्टप्रवृत्त्यनुवादमात्रप्रतीतेर्भाष्यस्य व्याख्येयत्वम्, अनन्तरं च तद्व्याख्यानं कर्तव्यम्, तदभावादित्याशङ्क्यानन्तरग्रन्थस्य सङ्गतिमाह—**एवमपीति**॥ ननु—मङ्गलाचरणे सति ग्रन्थपरिसमाप्तिः, प्रचयगमनं च, इह तु तेन विनाऽपि तद्दर्शनात् किं मङ्गलाचरणेन ? कथं चाव्याख्येयत्वम् ? इत्याशङ्क्याह—**विघ्नोपसंसृष्टतयेति**॥ कथमप्रतिपत्तिसम्भवः ? अधिगततत्त्वा हि परप्रतिपत्त्यर्थं ग्रन्थकरणे प्रवर्तन्त इत्याशङ्क्याह—**शिष्टाचारेति**॥ यथादृष्टार्थवादित्वलक्षणं चाप्तत्वं प्रतिबध्यत इति भावः। ननु—शिष्टैरशास्त्रमूलमप्यनुष्ठीयते, कथं तैरनुष्ठितत्वेन नमस्कारस्यान्यैरनुष्ठेयत्वं निश्चीयत इति चोदयति—**ननु शिष्टानामिति**॥ शिष्टा अननुष्ठेयमप्यनुतिष्ठन्ति, कथं तदनुष्ठितत्वेनान्येषामप्यनुष्ठेयत्वं निश्चीयत इति चोदिते "शिष्टाचारः प्रमाणमि"ति परिहारः, सोऽनुपपन्नः; न ह्यनेन शिष्टैरनुष्ठितपदार्थेषु, एवंभूतस्य सर्वैरनुष्ठेयत्वम्, एवंभूतस्य नेति प्रयोजकनिरूपणं कृतम्, असङ्गतश्च; आचारप्रामाण्यविवादाभावात्, अनुपपन्नश्च

## पञ्चपादिका

**महति च निःश्रेयसप्रयोजने ग्रन्थमारभमाणस्य विघ्नबाहुल्यं सम्भाव्यते। प्रसिद्धञ्च "श्रेयांसि बहुविघ्नानी"ति। विज्ञायते च—"तस्मादेषां तन्न प्रियं यदेतन्मनुष्या विद्युरि"ति। येषां च यद् न प्रियम्, ते तद् विघ्नन्तीति प्रसिद्धं लोके। तत्कथमुल्लङ्घ्य शिष्टाचारमकृतमङ्गल एव विस्रब्धं भाष्यकारः प्रववृते ?**

## पञ्चपादिकाविवरणम्

नेत्याह—**प्रसिद्धं च मङ्गलाचरणस्येति**॥ ननु अत्र विघ्न एव नास्ति; अल्पारम्भत्वादिति ? नेत्याह—**महति चेति**॥ ननु सम्भावनामात्रान्न प्रवृत्तिर्विघ्नशान्तये, किन्तु निश्चयादित्यत्राह—**प्रसिद्धं चेति**॥ ननु लोकप्रसिद्धिर्निर्मूला न विघ्ननिश्चयहेतुः, इत्यत आह—**विज्ञायते चेति**॥ उपसंहरति—**तत्कथमिति**॥

"सर्वदा सर्वकार्येषु नास्ति तेषाममङ्गलम्। येषां हृदिस्थो भगवान्मङ्गलायतनं हरिः" इति स्मृतेः शिष्टाचारप्रतिपालनाय विघ्नोपशान्तये च विशिष्टदेवतातत्त्वानुस्मरणलक्षणं मङ्गलाचरणं कृतमित्याह—**अत्रोच्यत इति**॥ किं तत्र प्रमाणमिति ?

## तत्त्वदीपनम्

अतिप्रसङ्गस्य कः समाधिरित्याशङ्क्य, आचारं विशिनष्टि—**आचार इति**॥ धर्मबुद्ध्याऽनुष्ठीयमानस्य शिष्टाचारस्यानुसरणीयत्वम्, निष्ठीवनादेश्चानीदृक्त्वादननुष्ठेयत्वम्। न च तस्य प्रमाणत्वाभावः; मूलश्रुतिस्मृत्यनुमापकत्वात्। तथाचोक्तम्—"आचाराच्च स्मृतिं ज्ञात्वा स्मृतेश्च श्रुतिकल्पन"मिति। प्रमाण्यप्रतिपादनफलमाह—**कर्तव्यमिति**॥ मङ्गलाचरणेनापि क्वचिदपरिसमाप्तिदर्शनात् क्वचिन्मङ्गलाचरणमन्तरेणापि परिसमाप्तिदृष्टेस्तदप्रयोजकमिति शङ्कते—**ननु प्रयोजनेति**॥ यत्रापरिसमाप्तिः, तत्र प्रतिबन्धबाहुल्यम्, यत्र मङ्गलाचरणं विनापि परिसमाप्तिः, तत्र ग्रन्थाद्बहिर्मङ्गलाचरणं कृतमिति निश्चीयत इत्याशयेनाह—**नेत्याहेति**॥ मङ्गलाचरणस्यान्यत्र फलवत्त्वेऽपि नात्रानुष्ठेयत्वम्; फलासम्भवादिति शङ्कते—**नन्वत्रेति**॥ ग्रन्थकरणस्य ख्यात्यादितुच्छफलकत्वान्न विघ्नसम्भव इत्यर्थः। मननं ब्रह्मज्ञानसाधनत्वेन प्रसिद्धम्; तथा चैहिकादिसकलभोगव्यावृत्तचेतस्कस्य ग्रन्थकरणं मननम्। तत्र च विघ्नः सम्भावित इत्यभिप्रायेणाह—**नेत्याहेति**॥ प्रवृत्तेर्निश्चयपूर्वकत्वादत्र विघ्नानिश्चयान्न तन्निबर्हणार्था प्रवृत्तिरिति शङ्कते—**ननु सम्भावनेति**॥ कृष्यादाविव सम्भावनयाऽपि प्रवृत्तिः स्यादित्याशङ्क्य, दृष्टादृष्टफलत्वेन वैषम्यान्नैतदित्याह—**किन्त्विति**॥ लोकप्रसिद्धेर्देहात्मप्रसिद्धिवन्निर्मूलत्वान्न निश्चयत्वमिति शङ्कते—**ननु लोकेति**॥ निर्मूलत्वमसिद्धमित्याह—**अत आहेति**॥ ब्रह्मज्ञाने सति देवपशुत्वं निवर्तते यस्मात्, तस्मादेषां देवानां न प्रियमित्यर्थः।

"अत्रोच्यत"इत्यत्र मङ्गलाचरणस्यासमर्थनात् प्रश्नाननुसारित्वं प्रतिवचनस्येत्याशङ्क्याह—**सर्वदेति**॥ परात्मगततत्त्वानुस्मरणस्याप्रत्यक्षत्वान्मानान्तराभावाच्च कृतमङ्गलत्वमसिद्धमित्याह—**किं तत्रेति**॥ प्रमाणाभावोऽसिद्ध इत्याह—**अत आहेति**॥ टीकायां भाष्यत्वमेव समर्थ्यते, न प्रमाणमित्याशङ्क्यापेक्षितं पूरयति—**इत्यन्तमिति**॥

"युष्मदि'त्यादिभाष्यं मङ्गलाचरणे प्रमाणमित्युक्तम्, सम्प्रति वृद्धयादिशब्दोच्चारणवत्स्वयमेव मङ्गलाचरणमित्याह—**मङ्गलाचरणं वेति**॥ प्रमाणत्वमाक्षिपति—**कथमिति**॥ तत्त्वानुस्मरणं किं पदार्थः ? उत वाक्यार्थः ? नाऽऽद्यः;

## ऋजुविवरणम्

शिष्टाचारप्रामाण्यस्य व्यभिचारादित्याशङ्क्याभिप्रायमाह—**आचारो धर्म इत्येवेति**॥ आचर्यत इत्याचार इति कर्मव्युत्पत्तिः प्रदर्शिता, प्रमीयते कर्तव्यतयेति चात्राचरणमाचार इति भावव्युत्पत्त्याऽऽचारप्रामाण्यमप्युक्तमेव प्रतीयते; तथापि चोद्यस्य कर्मप्रधानत्वादेवं व्याख्या कृता, नत्वनभिप्रेतत्वेनेति मन्तव्यम्। धर्मत्वेन यदनुतिष्ठन्ति, तदन्यैरनुष्ठेयमिति प्रयोजकमुक्तम्। अत्र मङ्गलाचरणाभावादव्याख्येयत्वमिति चोदिते, 'अत्रोच्यते' इत्युपक्रम्य प्रतीकग्रहणेन भाष्यव्याख्यानं कृतम्; तदसङ्गतम्, न च तावन्मात्रेणैव परिहारः, तत्र कस्याप्यर्थस्यानुक्तत्वादित्याशङ्क्याभिप्रायमाह—**सर्वदेति**॥ भाष्यप्रतीकग्रहणस्यासङ्गतिं परिहरति—**किं तत्रेति**॥ साकाङ्क्षत्वात्प्रकृतचोद्यस्यापरिहाराच्च पूरयति—**प्रमाणमिति**॥ प्रकृतोपयोगनिरपेक्षप्रतिज्ञावाचनिकत्वासम्भवेन पक्षान्तरम्—**मङ्गलाचरणमिति वेति**॥ भाष्ये चादौ युष्मच्छब्दप्रयोगात्तत्परत्वमेवेत्यभिप्रायेण चोदयति—**कथमिदमिति**॥ **सर्वोपप्लवेति**॥ युष्मदित्यस्य व्याख्या—**विज्ञानघन इति**॥ अनेनास्मदिति व्याख्यातम्।

### पञ्चपादिका

**अत्रोच्यते—"युष्मदस्मदि"त्यादि "तद्धर्माणामपि सुतरामितरेतरभावानुपपत्तिरि"त्यन्तमेव भाष्यम् ।**

**अस्य चायमर्थः—सर्वोपप्लवरहितो विज्ञानघनः प्रत्यगर्थ इति । तत्कथञ्चन परमार्थत एवम्भूते वस्तुनि रूपान्तरवदवभासो मिथ्येति कथयितुम् । तदन्यपरादेव भाष्यवाक्यान्निरस्तसमस्तोपप्लवं चैतन्यैकतानमात्मानं प्रतिपद्यमानस्य कुतो विघ्नोपप्लवसम्भवः ? तस्मादग्रणीः शिष्टाचारपरिपालने भगवान् भाष्यकारः ॥**

### पञ्चपादिकाविवरणम्

अत आह—**युष्मदस्मदित्यादीति** ॥ इत्यन्तमेव भाष्यं प्रमाणमित्यर्थः, मङ्गलाचरणमिति वा ।

कथमिदं विशिष्टदेवतानुस्मरणं गमयतीति ? तत्राह—**अस्य चायमर्थ इति** ॥ ननु नेह विशुद्धात्मतत्त्वदेवताऽनुस्मर्यते, किन्त्वध्यासाभावो वर्ण्यत इति; सत्यम् तादर्थ्येन तत्त्वमप्यनुस्मर्यत इत्याह—**तत्कथञ्चनेति** ॥ ननु अन्यपरत्वाद्देवतानुस्मृतिरविवक्षिता न कार्यकरीति, नेत्याह—**तदन्यपरादेवेति** ॥ अन्यार्थमपि देवतानुस्मरणं स्वभावादेव विघ्नोपप्लवं धक्ष्यति, धूमार्थ इव वह्निस्तृणादिकमित्यभिप्रायः । व्याख्येयत्वं प्रतिपादितमुपसंहरति—**तस्मादिति** ॥ अन्यार्थप्रवृत्तेन "युष्मदस्मदि"-त्यादिपदद्वयमर्थाद्व्याख्यातम् ॥

### तत्त्वदीपनम्

तद्वाचकपदश्रवणाभावात् । नान्त्यः; संसृष्टपदार्थानामेव वाक्यार्थत्वादित्यभिसन्धिः । उच्चारणानुपपत्त्या भाष्यं मङ्गलाचरणगमकमित्याह—**तत्राहेति** ॥ देवतानुस्मरणमङ्गीकृत्य तस्य मङ्गलाचरणपरत्वाभावान्न विघ्ननिवर्तकत्वमिति गूढाभिसन्धिः शङ्कते—**ननु नेहेति** ॥ **अनुस्मर्यत इत्यत्र** स्वातन्त्र्येणेति शेषः । यथाश्रुतमादाय समाधत्ते—**सत्यमिति** ॥ **तत्कथञ्चनेत्यस्यैषोऽर्थः**—परमार्थत एवंभूते निरस्तसमस्तोपप्लवे तद्विपरीतरूपप्रतिभासः कथञ्चन मिथ्येति कथयितुं तद्भाष्यमिति सम्बन्धः । **कथञ्चनेति** । स्वरूपेण संसृष्टरूपेण च मिथ्येत्यर्थः । कथञ्चन मिथ्येति वा सम्बन्धः । चशब्दाद्रूपान्तरं च मिथ्येत्यर्थः । गूढाभिसन्धिं विवृणोति—**नन्वन्यपरत्वादिति** ॥ अन्यपरस्यापि विघ्ननिवर्तकत्वं स्यादित्याह—**नेत्याहेति** ॥ तस्मात् परमार्थभूताद् वस्तुनोऽन्योऽध्यासाभावः, तदन्यस्तत्परादिति **टीकार्थः** । अन्यपरस्य कथमन्यार्थत्वम् ? अन्यत्र तथाऽदृष्टेरित्याशङ्क्याह—**अन्यार्थमिति** ॥ न चात्र प्रमाणाभावः ।

"हरिर्हरति पापानि दुष्टचित्तैरपि स्मृतः । अनिच्छयाऽपि संस्पृष्टो दहत्येव हि पावकः ।"

इति स्मरणादित्यर्थः । व्याख्येयत्वस्यानुपसंहरणे को हेतुः ? इत्याशङ्क्य, हेतूपसंहरणाद्धेतुमदुपसंहरणं विवक्षितमित्याह—**व्याख्येयत्वमिति** ॥ "युष्मदि"त्यादि कस्मादुपेक्षितं टीकाकृता ? तत्राह—**अन्यार्थेति** ॥ मङ्गलाचरणसमर्थनप्रवृत्तेनेति यावत् । **पदद्वयमिति** ॥ "युष्मदस्मत्प्रत्ययगोचरयोर्विषयविषयिणोरिति" प्रत्यगभिधायकशब्दव्याख्यानेऽपि, इतरस्याव्याख्यातत्वात् कथं 'युष्मदि'त्यादि व्याख्यातमित्युक्तम् ? तत्राह—**अर्थादिति** ॥ "सर्वोपप्लवरहित" इत्युक्त्या तत्प्रतियोगिविषयत्वेनेतरदपि व्याख्यातमित्यर्थः ॥

### ऋजुविवरणम्

अतद्व्यावृत्त्यैव तन्निरूपणमिति दर्शयितुं युष्मच्छब्दप्रयोग इति परिहाराभिप्रायः । अव्याख्येयत्वेनोपक्रम्याग्रणीत्वेनोपसंहारोऽसम्बद्धः, इत्याशङ्क्यावतारयति—**व्याख्येयत्वं प्रतिपादितमिति** ॥ कथं टीकाकारेण किञ्चिद्विहाय प्रतीकग्रहणं कृतमित्याशङ्क्याभिप्रायमाह—**अन्यार्थंप्रवृत्तेनेति** ॥

युष्मदस्मदित्यात्मानात्मनिर्देश आत्मनः स्वरूपेण जिज्ञास्यत्वं निषेद्धुं जडस्याध्यस्तत्वनिषेधार्थं च । तत्राजिज्ञास्यत्वे प्रत्ययगोचरयोरिति हेतुः; असन्देहादित्यर्थः । अभेदयोग्ये वस्तुन्यध्यासः, तदत्र नास्तीत्याह—**विषयविषयिणोरिति** ॥ **यद्वा**—विशेष्यसमर्थकत्वेन व्याख्येयं 'विषय'इत्यादि प्रतीकं पर्यालोच्य, 'गोचरयोरि'त्यन्तमेव पदद्वयं कथञ्चिदर्थद्वयाभिप्रायेण । **यद्वा**—उत्तरत्र द्वितीयपदव्याख्यानाभावात् पदद्वयमित्यनेन तस्यापि ग्रहणम् । ननु 'विषयविषयिणोरि'त्यस्यापि व्याख्यातत्वे तेन प्रतीकग्रहणं यत् कृतम्, तन्न युक्तमित्याशङ्क्याभिप्रायमाह—**उत्तरपदमिति** ॥ नच—उत्तरपदस्यापि

### पञ्चपादिका

**"विषयविषयिणोस्तमःप्रकाशवद्विरुद्धस्वभावयोरितरेतरभावानुपपत्तौ सिद्धायाम्"**इति ॥ **कोऽयं विरोधः ? कीदृशो वा इतरेतरभावोऽभिप्रेतः, यस्यानुपपत्तेः—'तमःप्रकाशवदि'ति निदर्शनम् ?**

### पञ्चपादिकाविवरणम्

उत्तरपदं व्याख्यातुं भाष्यमाददाति—**विषयविषयिणोरित्यादिना ॥** तत्र द्विविधो विरोधः, द्विविधा चेतरेतरभावानुपपत्तिः; कथम् ? द्वयोः पदार्थयोरेकदेशकालावस्थानसामर्थ्याभावः पदार्थधर्मो विरोधः।

### तत्त्वदीपनम्

उत्तरपदम्—**तमःप्रकाशवद्विरुद्धस्वभावयोरिति ॥** यदीदं व्याचिख्यासितम्, तर्हि **विषयविषयिणोरिति** कस्मादुपात्तमिति चेत्; आत्मानात्मनोः सहावस्थानस्योपलभ्यमानत्वात्तादात्म्यायोग्यत्वं विरोध इति प्रतिपादयितुमिति ब्रूमः। **व्याख्यातमिति** सर्वोपप्लवरहित इत्यत्रेत्यर्थः।

**आददातीति ॥** आङ्पूर्वादनास्यविहरणे वर्तमानाद्ददातेरात्मनेपदं भवतीत्येवमर्थात्—'आङो दोऽनास्यविहरणे" इति सूत्राद् 'आदत्त' इति प्रयोगेण भाव्यमिति चेत्, नैतदस्ति; ङिद्विशिष्टस्याऽऽकारस्य ग्रहणमङिद्विशिष्टादाकारादुत्तरस्य ददातेरात्मनेपदनियमाभावज्ञापनाय। अत्र च ङिद्विशिष्टस्याऽऽकारस्याग्रहणाद् "भिक्षामाददाती"तिवदाददातीति प्रयोगः साधुरिति द्रष्टव्यम्।

साङ्गाध्ययनानन्तरं "श्रोतव्य" इत्यादिवाक्यादात्मतत्त्वसाक्षात्काराय विचारकर्तव्यताप्रतिपत्तौ सन्देहे च तद्व्युदासार्थमथात इति प्रवृत्तम्। तत्रायं विचारः कर्तव्य उत नेति विषयादिसंभवासंभवाभ्यां सन्देहे, नेति तावत् प्राप्तम्; विषयाद्यसम्भवात्। नच—प्रत्यग्ब्रह्मैक्यानर्थनिवृत्त्यादेः शास्त्रात्प्रतिपत्तेरसम्भवोऽसिद्ध इति—शङ्क्यम्; कर्तृत्वादिबन्धस्य परमार्थत्वेन तदनुपपत्तेः। नच—परमार्थत्वमसिद्धमध्यस्तत्वादिति—वाच्यम्; पूर्वानुभवसंस्कार-सादृश्यविवेकाग्रहरूपाध्यासव्यापकाभावेनाध्यासानुपपत्तेरिति प्रतिपादयितुं युष्मदस्मदित्यादिकमवतारयामास। तत्र परमार्थस्थल ऐक्यतादात्म्याभावेन तदनुभवसंस्काराभावं दर्शयितुमैक्यायोग्यत्वमाह—**युष्मदस्मदिति ॥** युष्मच्चास्मच्च युष्मदस्मदी, तावेव प्रत्ययौ गोचरौ चेति युष्मदस्मत्प्रत्ययगोचरौ, तयोरिति विग्रहः। **"प्रत्ययोत्तरपदयोश्चे"**ति सूत्रेण युष्मदस्मदोर्मपर्यन्तस्य त्व-मादेशविधानात् 'त्वन्मत्प्रत्ययगोचरयोरि'ति निर्देशेन भवितव्यम्; त्वत्पुत्रो मत्पुत्र इति यथेति चेत् ? नैतदस्ति; **"त्व-मावेकवचने"** इत्येकवचनाधिकारात्, युष्मदस्मदोश्चैकार्थवाचित्वस्याविवक्षितत्वात्, अस्मदर्थेऽप्यौपाधिकभेदस्य विद्यमानत्वात् त्व-मादेशौ न भवत इति द्रष्टव्यम्। पराग्रूपोऽहंकारो युष्मदर्थः, प्रत्यक्चैतन्यमस्मदर्थः, इति स्वभावतो विरोधो दर्शितः। प्रतीतिरूपः प्रत्यक्, प्रतीतिविषय इतर इति प्रतीतितो विरोधः। अहंकारादिप्रविलापनेन—'अहं ब्रह्मे'ति व्यवह्रियते प्रत्यक्, अद्वैतानन्दप्रच्छादनेन कर्त्रादिरूपेण व्यवह्रियत इतर इति व्यवहारतो विरोधः ॥

तादात्म्यायोग्यत्वमाह (टीकायाम्)—**विषयविषयिणोरिति ॥** तदेतदभिप्रेत्योक्तम्—**सर्वोपप्लवरहितो विज्ञानघनः प्रत्यगर्थ इतीति ॥ कोऽयं विरोधः ?** इत्यत्र किंशब्दः प्रश्नार्थ, आक्षेपार्थो वा ? नाऽऽद्यः; विरोधशब्दस्य प्रसिद्धार्थत्वात्। नान्त्यः; चिदचितोर्विरोधस्य प्रसिद्धत्वादेव। ततश्चायं ग्रन्थोऽसङ्गत इत्याशङ्क्य, विरोधशब्दस्यानेकार्थत्वाद् व्यक्तिविशेषजिज्ञासया प्रश्नो घटत इत्याह— **तत्रेति ॥** लोक इति यावत्। तादात्म्यलक्षणेतरेतरभावानुपपत्तेरुच्यमानत्वात्तदयोग्यत्वं विरोध इति

### ऋजुविवरणम्

व्याख्यातत्वात्पुनः प्रतीकग्रहणमयुक्तमिति—वाच्यम्; पदव्याख्यानार्थत्वादिति 'पद'ग्रहणेन द्योतितम्। नच—तमःशब्देनैव प्रतीकग्रहणं कर्तव्यमिति—युक्तम्; आदावनुचितशब्दत्वादिति भावः। यद्यप्यादत्ते इति प्रयोक्तव्यम्; आत्मनेपदित्वाद्धातोः, तथापि—**"आङो दोऽनास्यविहरणे"** इत्यास्यविहरणविवक्षायां परस्मैपदित्वस्याप्यङ्गीकारादत्रापि भाष्ये ग्रहणार्थमास्यविहरणं करोतीत्यर्थः। **ननु "कोऽयं विरोध"** इति प्रश्नो नोपपद्यते, अनेकप्रकाराभावाद्विरोधस्य, तथा "कोऽयं विरोध" इत्यादिप्रश्नानन्तरं तन्निरूपणं तत्कार्यनिरूपणं च युक्तम्,किं विरोधान्तरादिनिराकरणेन ? अथ तन्निराकरणेन विना नाभिलषितविरोधादिसिद्धिः, तर्हि विरोधान्तरादिनिराकरणेनापि भवितव्यमित्याशङ्क्याह— **तत्र द्विविध इति ॥ ननु** कथं विरोधद्वैविध्यम् ? न तावद् व्यक्त्यभिप्रायेण; आनन्त्यात्। नाप्यवान्तरजात्यभिप्रायेण; **तदयोगात्।** नापि निरूपकाभिप्रायेण; निरूपकान्तराणामपि सम्भवात्। **तथा तयोः** परस्परं पदार्थाच्च भेदानिरूपणाद

## पञ्चपादिका

**यदि तावत् सहानवस्थानलक्षणो विरोधः, ततः प्रकाशभावे तमसो भावानुपपत्तिः; तदसत्, दृश्यते हि मन्दप्रदीपे वेश्मन्यस्पष्टं रूपदर्शनम्, इतरत्र च स्पष्टम्। तेन ज्ञायते मन्दप्रदीपे वेश्मनि तमसोऽपीषदनुवृत्तिरिति; तथा छायायामप्यौष्ण्यं तारतम्येनोपलभ्यमानमातपस्यापि तत्रावस्थानं सूचयति। एतेन शीतोष्णयोरपि युगपदुपलब्धेः सहावस्थानमुक्तं वेदितव्यम्।**

## पञ्चपादिकाविवरणम्

तन्निमित्तोऽवस्थानलक्षणकार्याभाव इतरेतरभावानुपपत्तिरित्येकः स्कन्धः। अपरस्तु पदार्थयोरितरेतरात्मतासामर्थ्याभावः पदार्थधर्मो विरोधः; तन्निमित्त इतरेतरात्मतालक्षणकार्याभावानुपपत्तिरित्यतो द्वैविध्यात्पृच्छति—**कोऽयं विरोध इत्यादिना**॥

तत्र प्रथमं पक्षं दूषयति—**यदि तावदित्यादिना सहावस्थानमुक्तमित्यन्तेन** ग्रन्थेन॥ तत्र तमः प्रकाशशब्दाभ्यां छायाऽऽतप-शीतोष्ण-ग्रहणमङ्गीकृत्य तत्रापि सहावस्थानमुक्तं वेदितव्यम्। इदानीं द्वितीयं पक्षमवलम्बते—**उच्यते परस्परात्मता-लक्षणो विरोधइत्यादिना**।

## तत्त्वदीपनम्

निश्चोयत इत्याशङ्क्य सापि सन्दिग्धेत्याह—**द्विविधेति**॥ इतरस्मिन् सतीतरस्य भावः सहावस्थानम्, इतरस्येतरभावः तादात्म्यम्, इतरेतरभावभेदात्तदनुपपत्तेर्भेद इति द्रष्टव्यम्। प्रश्नपूर्वकं द्वैविध्यं दर्शयति—**कथमित्यादिना**॥ सामर्थ्याभावे को हेतुरिति न प्रष्टव्यम्; स्वभावत्वादित्याह—**पदार्थेति**॥

प्रश्नोत्तरं विहाय पक्षान्तरनिरसनमयुक्तमित्याशङ्क्योत्तरं पक्षं कक्षीकर्तुमाद्यं प्रतिक्षिपतीत्याह—**तत्र प्रथममिति**॥ सहानवस्थानं लक्षणं गमकं यस्यायोग्यतालक्षणविरोधस्य स तथा। तमःप्रकाशयोरेवोदाहृतत्वात्तत्रैव सहानवस्थानप्रदर्शन-मुचितम्, न तु छायादिष्वित्याशङ्क्य, तमःप्रकाशनिदर्शने दूषिते, यदि लक्षणया लक्षितलक्षणया वा छायाऽऽतपादिनिदर्शनमा-दद्यात्, तदा तत्रापि दोषतुल्यतोच्यत इत्याशयवानाह—**तत्रेत्यादिना**॥ पूर्वस्यापि सिद्धान्तत्वात्—'उच्यत' इति सिद्धान्तोप-क्रमोऽयुक्त इत्याशङ्क्य, सहानवस्थानलक्षणविरोधे दूषिते, 'कोऽसौ विरोधः?' इति शङ्कायां परस्परानात्मतालक्षणो विरोधो

## ऋजुविवरणम्

धर्मिसाम्ये हेत्वव्यतिरेकोऽपि स्यादित्याक्षिपति—**कथमिति**॥ तत्र निरूपकद्वैविध्याद् द्वैविध्यमितरेषां चात्रैवान्तर्भाव इत्यभिप्रायेणाह—**द्वयोरित्यादिना**॥ विरोधस्य हेतुत्वयोग्यतां दर्शयति—**पदार्थधर्म इति**। इतरेतरभावानुपपत्तेः विरोधहेतुना साध्यत्वं निरूपकभेदाद् भेदं च दर्शयति—**तन्निमित्त इति**॥ **ननु** विरोधविषयप्रश्नोत्तरानन्तर-मितरेतराभावविषयप्रश्नोत्तरेण भवितव्यम्, किं युगपत्? इत्याशङ्क्य, विरोधप्रश्नस्य तावत्पर्यन्तस्यैव फलवत्त्वेन तदन्तस्य एव विकल्पैककोटित्वमित्यभिप्रायेणाह—**इत्येकः स्कन्ध इति**॥ यद्वा—"कोऽयं विरोध" इति प्रश्नः आक्षेपो वा? नाऽऽद्यः; स्वरूपनिरूपणादर्शनादन्यनिराकरणस्यासङ्गतत्वप्रसङ्गात्। नाप्याक्षेपः; तत्रापि स्वरूपनिरूपणं विहायान्यनिराकरणं न संगच्छते। ननु—तद् विशेषनिराकरणमाक्षेपनिर्वाहार्थम्? **मैवम्**। 'यदी'ति पक्षपरिग्रह इतरनिराकरणाप्रतीतेः, स्वरूपनिरू-पणमप्ययुक्तम्; आक्षेपासमाप्तेः, न चानन्तरग्रन्थेऽपि तन्निराकरणमिति युक्तम्; ग्रन्थानार्जवात्, परिहारान्तरादर्शनात्, न चान्यतरपक्षदूषणार्थमेव प्रश्नः; अगृहीते विशेषे तस्याप्ययुक्तत्वात्, नापि द्वैधं विरोधे; एवमितरेतरभावेऽपि, तस्मादयुक्त इत्याशङ्क्याह—**द्विविध इति**॥ द्वैधं कथञ्चिद्विरोधे भवतु, नेतरेतरभावे; तादात्म्यरूपत्वात्तस्य। न हि विरोधभेदाद् भेदः, तेन विरोधानुयायित्वमिव कृत्वा विकल्पो न युक्तः। स्वभावत्वं च भाष्यकारेणोक्तम्, तत् कथं द्वैधम्? कथं च विरोधस्य हेतुत्वम्? इतरेतरभावस्य वा साध्यत्वम्? सम्बन्धाभावादित्याक्षिपति—**कथमिति**॥ एतदुक्तं भवति—नायं परप्रश्नः, अपितु स्वयमेव भाष्यं व्याख्यातुं प्रश्नपूर्वकमनभिप्रेतपक्षनिराकरणेन स्वपक्षप्रदर्शनं करोतीति। द्वितीयं भेदं निरूपकभेदेन भिन्नं तत्कार्यं च दर्शयति—**अपरस्त्विति**॥ 'यस्यानुपपत्तेरि'त्यनेन विरोधादिनिरूपणीयम्; इतरथाऽसिद्धिसाध्यसाधनविकलत्वप्रसङ्गादित्युक्तम्।

भाष्यानुक्तेष्वपि किमिति सहावस्थानमुक्तम्? इत्याशङ्क्याह—**तत्र तम इति**॥ इतरेतरयोर्भाव इति सहावस्थानमपि प्रतीयत इति व्याख्यातम्। अत एव द्वितीयपक्षस्वीकारः, न तु विकल्पितपक्षान्तर्गतत्वेन दूष्यत्वशङ्केति दर्शयितुं तत्रैव चर्चां कर्तुमवतारयति—**इदानीमिति**॥

## पञ्चपादिका

**उच्यते—परस्परानात्मतालक्षणो विरोधः, न जातिव्यक्त्योरिव परमार्थतः परस्परसम्भेदः सम्भवतीत्यर्थः; तेन इतरेतरभावस्य इतरेतरसम्भेदात्मकत्वस्यानुपपत्तिः ।**

## पञ्चपादिकाविवरणम्

ननु—तमो नामाऽऽलोकाभावमात्रमिति केचित्, रूपदर्शनाभावमात्रमित्यन्ये, तत्कथं दृग्दृश्ययोर्भावरूपयोरिदं दृष्टान्तत्वेनाद्रियत इति ? उच्यते—उपचयापचयाद्यवस्थाभेदविशेषविशिष्टरूपवत्तया चोपलभ्यमानं तमः कथं द्वयीमभावविधामासीदेत् ? बहुलालोकवितते़ऽपि देशे निमीलितनयनस्य गोलकान्तरवर्तितमोदर्शनमन्धकारोपलब्धिः पिहितकर्णपुटस्याऽऽन्तर-

## तत्त्वदीपनम्

विवक्षित इत्याह—**इदानीमिति** ॥ तादात्म्ययोग्यताऽभावेऽपि 'इदं रूप्यमि'त्यादौ तादात्म्यदृष्टेर्नायं हेतुः साधुरित्याशङ्क्योक्तं **टीकायाम्—न जातिव्यक्त्योरिति** ॥

आत्मानात्मानौ, न वस्तुत इतरेतरभूतौ, इतरेतरभावायोग्यत्वात्; तमः प्रकाशवदित्युक्तम् । तत्र साध्याभावेऽपि साधनं किं न स्यात् ? न च तदा तमःप्रकाशयोरपीतरेतरभावप्रसङ्गः; तयोर्भावाभावरूपतया तदनुपपत्तेरित्यप्रयोजकत्वम्, भावाभावात्मतालक्षणमुपाधिं वा शङ्कते—**ननु तमो नामेति** ॥ विवादाध्यासित आलोकाभावः, तमःशब्दवाच्यः, इतरेतराभावव्यतिरिक्तत्वे सति आलोकाभावत्वात्; व्यतिरेकेणाऽऽलोकवदित्याद्यनुमानैरालोकाभावत्वमास्थिपत कणभुगादयः । इतरेत्वन्वयव्यतिरेकाभ्यां रूपदर्शनाभावस्तम इति मेनिरे; उभयत्र साधारणं दूषणमाह—**उच्यत इति** ॥ तमः, नाभावः, धर्मिप्रतियोगिप्रतीतिनिरपेक्षत्वात्; कुम्भवत्, इत्यनुमानेन 'तमालदलश्यामलं तमः' इत्यनुभवानुगृहीतेन विरोध इतरस्यानुत्थितेर्नाभावत्वमित्यर्थः । हेत्वन्तरेण पराहतिमाह—**उपचयेति** ॥ तमः, नाभावः, अवस्थावत्त्वात्, रूपवत्त्वाच्च; केशवत् । न चासिद्धिर्हेतोः इत्याह—**उपलभ्यमानमिति** ॥ यः पुनर्मन्यते तमःप्रतीतिर्भ्रम इति—तथाहि, निमीलिताक्षस्योपलभ्यमानं तमः किं बाह्यम् ? उताऽऽन्तरम् ? नाऽऽद्यः; बहुलालोकवितते देशे तदसंभवात्; न द्वितीयः; बहिःप्रसरणशीलानां नयनरश्मीनामान्तरतमोग्राहकत्वाभावात्, अन्यथा नयनान्तस्थाञ्जनग्रहणप्रसङ्ग इति—तं प्रत्याह—**बहुलेति** ॥ निमीलितनयनस्यान्धकारोपलब्धिः तद्गोलकान्तरवर्तितमोदर्शनमित्यन्वयः । आन्तरस्य तमसो दर्शनम्, न बाह्यस्येत्यत्र हेतुमाह—**आलोकेति** ॥ मन्दप्रभप्रदीपे मन्दिरे तयोः सहावस्थानं दृष्टमिति कथमालोकवितते देशे तमसोऽसंभव इत्याशङ्क्याह—**बहुलेति** ॥ उपलम्भकाभावान्नाऽऽन्तरस्यापि तमस उपलम्भ इत्युक्तं निरस्यति—**न विरुध्यत इति** ॥ तत्र दृष्टान्तः—**पिहितकर्णेति** ॥ पिहितकर्णपुटस्यापि श्रोत्रादेवान्तरशब्दोपलब्धिवदन्तर्मुखैर्लोचनरश्मिभिरान्तरं तमो गृह्यते । न चातिप्रसङ्गः; आन्तरतमोग्राहकत्वस्याञ्जनग्राहकत्वाव्याप्तत्वात् प्रशिथिलमूलतया तर्काऽऽभासत्वात् । विमतम्, स्वगताञ्जनग्राहि, तत्संयुक्तत्वात्, यद् येन संयुक्तम्, तत् तद्ग्राहि; यथा संतमसजलादिसंयुक्तं लोचनमिति विवक्षितत्वान्नोक्तदोषावसर इति चेत् ? तत्र संयोगित्वमात्रं ग्राहकत्वप्रयोजकत्वेन विवक्षितम्, उत योग्यतावत्त्वविशेषितम् ? आद्ये गगनदिगादीनपि गृह्णीयात् । द्वितीयेऽसिद्धिः; न चोद्भूतरूपत्वेन तत्सिद्धिरिति

## ऋजुविवरणम्

सोपाधिकत्वमपि शङ्कितुं शक्यत इत्यभिप्रायेण चोदयति—**ननु तम इति** ॥ न तावद्रूपदर्शनाभाव इत्याह—**उपचयापचयेति** ॥ द्रव्याभावस्य प्रतियोगिनिमित्तमुपचितत्वादि सम्भवतीति तन्निराकरणे हेत्वन्तरमाह—**विशिष्टरूपवत्तयेति** ॥ नच—विशिष्टरूपवत्तयेत्यनेनैवालमिति—युक्तम्; अभावेऽपि रूपारोपेण रूपवत्त्वनिरूपणात्तन्निराकरणार्थमुपचयापचयेति हेतोः साफल्यात् । **यद्वा**—उपचयापचयेत्यादिना भावत्वनिरासः, विशिष्टरूपवत्तयेत्यनेन द्रव्यत्वसाधनम्, न त्वाद्येनैव द्रव्यत्वसिद्धिः; सुखादावप्युपचयादिदर्शनात् । **ननु विरोधिद्रव्याक्रान्तो बाह्यदेशः**, न तत्र द्रव्यत्वे सति तमसः स्थितिः सम्भवति; नाप्यन्तः; मूर्तद्रव्यावष्टब्धत्वात्, देहगतस्य मूर्तद्रव्यव्यवहितत्वात्, उभयत्रापि ग्राहकेन्द्रियव्यापाराभावोऽविशिष्टः; निमीलितनयनत्वात्, अथापि तमोदर्शनाद् दृश्यादर्शनमात्रमारोपितप्रतीतिमात्रं वा न द्रव्यत्वसाधकमित्याशङ्क्याह—**बहुलालोकेति** ॥ नालोकतमसोः

## पञ्चपादिकाविवरणम्

शब्दोपलब्धिवन्न विरुध्यते। आलोकविनाशितस्य च तमसः पुनर्मूलकारणादेव झटिति महाविद्युदादिजन्मवज्जन्म सिद्धयति।

**ननु**—रूपवतो द्रव्यस्य स्पर्शवत्त्वनियमात्तद्रहितं तमः कथं रूपवद् द्रव्यमवगम्येत ? **नैष दोषः**; वायोरन्यत्र स्पर्शवद्द्रव्यस्य रूपवत्त्वनियमेऽपि रूपरहितस्य स्पर्शवतो वायोरभ्युपगमात्, तद्वद्दर्शननियमादेव स्पर्शहीनस्य रूपवत्तमसः सिद्धेः।

## तत्त्वदीपनम्

शङ्कयम्; तत्त्वेऽप्यतिसामीप्येन तद्ग्राह्यत्वानुपपत्तेः। नच प्रकृतेऽप्येतत्समानम्; कार्यस्थ्यदृष्टिभ्यां विशेषात्। उद्भूतस्पर्शस्यापि धूमस्य लोचनदेशे त्वग्ग्राह्यत्वेऽप्यन्यत्रातथात्वाद् नित्यानुभवप्रसादाद्वाऽऽन्तरं तमः सिद्धयतीत्यर्थः। ननु तमः किमनादि, उत सादि ? नाऽऽद्यः; आलोकध्वंसे तदुत्पत्त्यनुभवात्। नेतरः; किं चतुर्विधाः परमाणवः कारणम् ? उतान्यत् ? नाऽऽद्यः; तेषां खण्डावयविपरम्परया महाद्रव्यारम्भकत्वात्। नच तदुपपद्यते; आलोकापगमसमसमयमेवोत्पत्तेः। न द्वितीयः; प्रमाणाभावादित्याशङ्कय, तस्योत्पत्तिस्तावदुपेया, पूर्वस्य ध्वस्तत्वादित्याह—**आलोकेति**॥ आलोकनाशितस्य प्राचीनस्य तमसो यन्मूलकारणम्, तस्मादेव तज्जातीयस्य जन्म सिद्धयतीति योजना। विद्युदादि हि विलम्बमन्तरेण यथा परमाणुभिरारभ्यते, तथा तमोऽपीत्यभिप्रेत्य "झटिति महाविद्युदादी"त्युक्तम्। वस्तुतस्तु—अस्मन्मते संतमसस्य न परमाणुकारणकत्वम्, किंत्वविद्यैव चिदधिष्ठिता तमोरूपेण विवर्तत इत्याह—**मूलकारणादिति**॥ न च प्रमाणाभावचोद्यम्; "सदेव सौम्येदमग्र आसी" दित्यादिवाक्याद् ब्रह्मणोऽद्वितीयताप्रतीतेरित्यविद्याविवर्तताया एव तस्याऽऽश्रयणीयत्वादित्यर्थः॥

एवं निष्पत्तिप्रतीतिकारणसंभवात् तमःप्रतीतिर्न भ्रम इत्यभ्यधायि, संप्रति रूपवत्त्वहेतोरसिद्धिमाशङ्कते—**ननु रूपवत इति**॥ रूपवत्त्वस्य स्पर्शवत्त्वं व्यापकम्, तद्व्यावृत्तौ रूपवत्त्वमपि व्यावर्तते। तथाच प्रयोगः—तमः, नीरूपम्, स्पर्शविधुरत्वात्; गगनवदिति। विपक्षे बाधकाभावादप्रयोजको हेतुरित्याह—**नैष दोष इति**॥ रूपवत्त्वे स्पर्शविधुरत्वभङ्गो बाधक इत्याशङ्कां प्रतिबन्द्या परिहरति—**वायोरिति**॥ अयमर्थः—यत् स्पर्शवत्, तद् रूपवत् यथाघटदीति व्याप्तेर्यथा वायौ भङ्गः तद्वद् यद्रूपवत् तत् स्पर्शवदिति व्याप्तेस्तमसि भङ्गः। न च प्रमाणाभावः; 'तमालमालाश्यामलं तमः' इत्युपलम्भादिति। यद् रूपवत्, तत् चक्षुःप्रदेशादन्यत्रोपलभ्यमानस्पर्शवदिति नियमस्य धूमे भङ्गवत् रूपवत्त्वस्य स्पर्शवत्त्वनियमस्य तमसि व्यभिचार इत्याह—**धूमस्येति**॥

## ऋजुविवरणम्

सहस्थितिरुक्ता; तत्कथमालोकवितते देशे प्रतीतिमात्रेण द्रव्यत्वं निराक्रियते ? इत्याशङ्कय शङ्काबीजमाह—**बहुलालोकेति**॥ "गोलकान्तर्वर्ती"त्यनेन देशभेदेन तमसः स्थितिरुक्ता। "निमीलितनयनस्ये"त्यनेन तत्रालोकवितत्यभाव उक्तः, बहिरिन्द्रियव्यापाराभावो वाऽङ्गीकृतः। "तमोदर्शनमि"त्यनेन दृश्यादर्शनमिति पक्षनिरासः। "अन्धकारोपलब्धिरि"त्यनेन भावरूपद्रव्यप्रमितिरुक्ता। मतद्वयनिरासद्योतनाय पदद्वयम्। **ननु** इन्द्रियस्याऽऽन्तरवस्तुग्राहकत्वं न संभवति; बाह्यवृत्तित्वादित्याशङ्कयाह—**पिहितकर्णपुटस्येति**॥ **ननु** द्रव्यत्वे सति आलोकेन निवृत्तस्याऽऽलोकापाये कथं तदैवोत्पत्तिः ? तादृक्कारणाभावात्, अन्यत्र तथोत्पत्त्यदर्शनादित्याशङ्कयाह—**आलोकविनाशितस्येति**॥

**ननु** तमसः स्पर्शवत्त्वमङ्गीक्रियते वा ? न वा ? न चेत्, रूपवत्त्वेन व्याप्तं स्पर्शवत्त्वं निवर्तमानं स्वाविनाभूतं रूपवत्त्वं निवर्तयति, तेन रूपवत्त्वमसिद्धमिति चोदयति—**ननु रूपवत इति**॥ अङ्गीकरणे प्रतीतिः स्यादिति भावः। तत्र तज्जातीये दर्शनाभावे सहकारितर्काभावे चान्यत्र साहचर्यमात्रेणानुमाने केवलप्रतीतिनियमे वा व्याप्तिरेव न निर्वहतीत्यत्र दृष्टान्तमाह—**वायोरन्यत्रेति**॥ **तद्वद्दर्शननियमादेवेति**॥ दर्शनान्नियमो दर्शननियमः। अथवा—दर्शनस्य नियमो दर्शननियमः, दर्शननियमादेवेति। अनेन तावन्मात्रस्य व्याप्तिबाधकत्वम्, न तु व्यापकनिवृत्तिन्यायेनेति दर्शितम्। एतदुक्तं भवति—वायोः स्पर्शवत्त्वेनैव प्रतीतिनियमाद्रूपवत्त्वाभावः, तद्वदत्रापि रूपवत्त्वेनैव प्रतीतेः स्पर्शवत्त्वस्य कदाचिदप्यप्रतीतेस्तदभावो निश्चीयत इति। न केवलं वायावेव दर्शनबलाद् व्याप्तिभङ्गः, अन्यत्रापीत्याह—**धूमस्य चेति**॥ एतदुक्तं भवति—योग्यस्पर्शस्य सर्वत्र स्पर्शेन ग्रहणे स्थिते दर्शनान्नियमः; यथा धूमे, एवं तमस्यपि भावधीः। अथवा—तत्र रूपवत्त्वाभावेऽपि स्पर्शवत्त्वमभ्युपगम्यते। स्पर्शवत एव द्रव्यारम्भकत्वनियमात्, रूपवत्त्वविरोधात्, अत्र तु कथं व्याप्तिबाध इत्याशङ्क्याह—**दर्शननियमादेवेति**॥ नियमान्तरं नास्ति, तावन्मात्रमेव समर्थमित्यर्थः। कथं दर्शनमात्रेण व्याप्तिभङ्गः ? अन्यत्रादर्शनादित्याशङ्क्याह—**धूमस्य चेति**॥

## पञ्चपादिकाविवरणम्

धूमस्य च रूपवतश्चक्षुःप्रदेशादन्यत्र स्पर्शानुपलब्धिः, तद्वत्सर्वस्पर्शहीनं तमः किं न स्यात् ? सवितृकिरणविततेऽपि देशे प्रदीपालोकजन्मविनाशयोः प्रागभाव-प्रध्वंसाभावेतरेतराभावेषु तमोबुद्ध्यदर्शनान्नालोकाभावमात्रं तमः। सर्वालोकाभावश्चेत्, सर्वालोकासन्निधाने तर्हि न निवर्तेत। बहुलान्धकारसंवृतापवरकान्तरवस्थितस्यापि बहीरूपदर्शनेन सहापवरकान्तस्तमोदर्शनान्न रूपदर्शनाभावमात्रं तम इत्यलमतिप्रसङ्गेन।

## तत्त्वदीपनम्

तस्यानुपलभ्यमानस्पर्शत्वाद् दृष्टान्तो विषम इत्यत्राह—**तद्वदिति**॥ सर्वसाम्यस्यानपेक्षितत्वाद् रूपवत्तमः स्पर्शमात्रहीनं स्यादित्यर्थः। यद्वा—न केवलं हेतोरप्रयोजकता, असिद्धता चेत्याह—**धूमस्य चेति**॥ नच—स्पर्शवत्त्वे तदुपलम्भापत्तिरित्यपि—शङ्क्यम्; स्पर्शवत्त्वेऽपि धूमस्य लोचनदेशादन्यत्र स्पर्शानुपलब्धिवत् क्वचिदप्यनुपलभ्यमानस्पर्शं तमः किं न स्यादित्यर्थः। **सर्वत्र स्पर्शहीनमिति**॥ सर्वत्रोपलभ्यमानस्पर्शशून्यमित्यर्थः। किंचाभावस्तम इति वदन् वादी प्रष्टव्यः—किं तमः एकैकाऽऽलोकाभावः, उत सर्वालोकाभावः ? आद्येऽपि किं प्रागभावः ? उत प्रध्वंसाभावः ? आहोस्विदितरेतराभाव इति ? विकल्पत्रयमप्यसंभवीत्याह—**सवितृकिरणेति**॥ जन्मविनाशयोरिति सतिसप्तमी। प्रदीपजन्मनः प्राक् प्रागभावः, जन्मनीतरेतराभावः, नाशोत्तरकालं प्रध्वंसाभावस्तत्रास्ति; तथापि सावित्रालोकव्याप्ते देशे तमो नोपलभ्यते; इतरथा तत्रापि तदुपलम्भः स्यात्। प्रागभावाद्यवस्थासु तमोबुद्ध्यभावो विरोध्यालोकसन्निधिनिबन्धन इति वदता विरोध्यभावसहितप्रागभावादेस्तमोबुद्ध्यालम्बनत्वमिति वक्तव्यम्, नच तदुपपद्यते; विरोध्यभावगिरा प्रागभावोक्तौ प्रध्वंसेऽनुपपत्तेः, प्रध्वंसोक्तावितरत्रानुपपत्तेः, इतरेतराभावोक्त्यां वाऽऽलोकभावेऽपि तद्भावात्तमोबुद्धिरनिवार्येत्यर्थः। द्वितीयमनूद्य दूषयति—**सर्वेति**॥ किमस्य सर्वेषामालोकानां सन्निधानं निवर्तकम्, उत एकैकस्य ? आद्ये सकलालोकोदयमन्तरेण तन्निवृत्तिर्न भवेत्। द्वितीयेऽप्येकैकस्य सकलाऽऽलोकाभावनिवर्तकत्वाभावात् तमोबुद्धिः स्यात्। नच—एकैकाऽऽलोकप्रादुर्भावे तदभावस्य व्यावृत्तेर्न तमोबुद्धिप्रसक्तिरिति—शङ्क्यम्; प्रागभावादिविकल्पदूषणयोरत्रापि तुल्यत्वादिति हृदयम्। रूपदर्शनाभावस्तम इत्यत्रापि किमेकैकस्य रूपस्य दर्शनाभावः, उत सर्वस्य ? आद्येऽपि किं रूपदर्शनमात्राभावः, उत यत्र तमोबुद्धिस्तत्रत्यरूपदर्शनाभाव इति विकल्प्याद्यं प्रत्याह—**बहुलान्धकारेति**॥ द्वितीयोऽपि प्रागभावादिविकल्पेन दूष्यः। सर्वरूपदर्शनाभावस्तम इति पक्षे सर्वरूपदर्शनमन्तरेण तमो न निवर्तेतेत्यर्थः।

तथा आलोकसंसर्गाभावस्तम इत्यत्रापि किं संसर्गप्रागभावः ? उत तत्प्रध्वंसः ? आहोस्वित् तदितरेतराभावः ? आद्ये प्रध्वंसे तमोबुद्धिर्न स्यात्, द्वितीये प्रागभावे, तृतीयेऽप्यालोकव्याप्तेऽपि देशे तमोबुद्धिः स्यात्। नच—भावरूपतमोवादिनापि तद्व्यंजकत्वेन आलोकाभावः समाश्रितः, तस्यैव तमोबुद्धिगोचरत्वमिति—शङ्क्यम्; इतरेतराभावव्यतिरिक्ताऽऽलोकाभावस्य व्यञ्जकत्वमाश्रीयते, नच स त्वयैष्टव्यः; इतरेतराभावस्येतरेतराभावानिरूपणात्। नच—तमसो रूपिद्रव्यत्व आलोकसहितचक्षुर्ग्राह्यत्वप्रसङ्ग इति—वाच्यम्, रूपवदभावस्याऽऽलोकसहितचक्षुर्ग्राह्यत्वनियमेऽप्यालोकाभावस्य केवलचक्षुर्ग्राह्यत्वनियमवदत्रापि तदुपपत्तेरिति। एतत्सर्वं मनसि निधायोपसंहरति—**अलमतिप्रसङ्गेनेति**॥

## ऋजुविवरणम्

अत्र 'तमः सर्वस्पर्शहीनमि'ति विशेषणसामर्थ्यादेकदेशेन धूमस्य स्पर्शवत्त्वप्रतीतिः सामर्थ्यात्, तथा सतीतरत्र रूपवत्त्वेऽपि स्पर्शवत्त्वाभाववदिति प्रतिभाति; तदितरांशस्यापि नयनदेशागमने स्पर्शदर्शनादुपेक्षणीयम्। अथवा—स्पर्शवत्त्वमङ्गीक्रियते। तर्हि प्रतीतिरपि स्यादिति चेत्, न; विद्यमानस्याप्रतीतिसंभवादिति सदृष्टान्तमाह—**धूमस्य चेति**॥ सामान्येनाभावत्वं निराकृत्येदानीं विपक्षे बाधकतर्कोऽप्यस्तीति दर्शयितुं विशेषतो निराकरोति—**सवितृकिरणवितत इति**॥ अथवा—व्याप्तिभङ्गाश्रयणाद् वरमभावत्वमेवाश्रितम्; प्रतीतिमात्रस्यान्यथाकरणात्, अत्र तूत्पत्त्यादिकल्पनागौरवादित्याशङ्क्यालोकाभावत्वं तावद् दूषयति—**नालोकाभावमात्रमिति**॥ तत्रालोकाभावः—एकालोकाभावः ? सर्वालोकाभावो वा ? तथा तेषां प्रागभावः ? प्रध्वंसाभावः ? इतरेतराभावो वेति विकल्प्य पक्षद्वये दूषणमाह—**सवितृकिरणेति**॥ तृतीयं दूषयति—**सर्वालोकाभाव इति**॥ रूपदर्शनाभाव इति पक्षेऽप्येक-सर्व-रूपदर्शनाभावमात्रपक्षांस्तथा तेष्वेव प्रागभावादिविकल्पान्मनसि निधायाह—**बहुलेति**॥

## पञ्चपादिका

**कथम् ? स्वतस्तावद्विषयिणश्चिदेकरसत्वान्न युष्मदंशसम्भवः, अपरिणामित्वान्निरञ्जनत्वाच्च न परतः, विषयस्यापि न स्वतश्चित्सम्भवः, समत्वाद् विषयत्वहानेः; न परतः; चितेरप्रतिसङ्क्रमत्वात् ।**

## पञ्चपादिकाविवरणम्

**ननु** दृग्दृश्ययोरितरेतराभावानुपपत्तिस्तयोर्विभ्रमनिमित्तं तादात्म्यावभासं न निरुणद्धि, शुक्तिका-रजतयोरपि हि तादात्म्यहीनयोरेव विभ्रमनिमित्तमैकाधिकरण्यमवभासते, तद्वदिहापि स्यादिति चोदयति—**कथमिति ।** सत्यम्; इदमंशमात्रस्याधिष्ठानस्य रजतस्य चाध्यस्यमानस्य क्वचित्तादात्म्यमस्त्येव, ततश्चाधिष्ठानसामान्यांशस्याध्यस्यमानविशेषांशस्य च क्वचित्सामान्यविशेषभावेन वा गुणगुणिभावेन वा समानाधिकृतस्यान्यत्रान्यतरांशवतः पदार्थस्य दर्शनादन्यतरांशाध्यासो विभ्रमो दृष्टः, तद्वदिहाधिष्ठानस्य चितोऽध्यस्यमानस्य चानात्मनो नास्तीत्याह—**स्वतस्तावद्विषयिणश्चिदेकरसत्वान्न युष्मदंशसम्भव इत्यादिना ॥**

**अयमाशयः**—द्रष्टुरचिदंशः स्वाभाविको वा स्यादागन्तुको वेति । न स्वाभाविक इत्याह—**स्वत इति ॥ चेत्यं** हि जडं चैतन्यस्य कर्मकारकतयाऽवभासते । तत्कथमेकस्यां क्रियायां कर्तुर्विपरीतस्थानगतं कर्मकारकमात्मा स्यादित्यभिप्रायः ।

## तत्त्वदीपनम्

विरुद्धस्वभावत्वेनेतरेतरभावे प्रतिक्षिप्ते, कथमिति चोद्यस्यानुपपत्तिरित्याशङ्क्य पारमार्थिकतादात्म्याभावेऽपि तद्भ्रमः स्यादिति तात्पर्यमाह—**ननु दृग्दृश्ययोरिति ॥** अनुपपत्तिरित्यत्र परमार्थत इति द्रष्टव्यम् । विभ्रमो निमित्तं यस्य स तथा, तमित्यर्थः । न च विभ्रमावभासयोरेकत्वान्निमित्तनैमित्तिकताऽनुपपन्ना; पूर्वभ्रमस्योत्तरभ्रमनिमित्ततया विवक्षितत्वेनानुपपत्त्यभावादित्यर्थः । ननु स्वाभाविकतादात्म्याभावेऽपि तादात्म्यभ्रमः स्यादिति चोदिते, आत्मनोऽनात्मांशत्वनिराकरणमसंगतमित्याशङ्क्याधिष्ठानाध्यस्यमानयोः किं विशेषरूपेणाऽन्यत्र तादात्म्याभावः, उत सामान्यरूपेणेति विकल्प्याद्यमङ्गीकरोति—**सत्यमिति ॥** न द्वितीय इत्याह—**इदमंशमात्रस्येति ॥** इदंरूप्ययोः सामान्यविशेषादिभावेन क्वचित्तादात्म्यवतोरेव तादात्म्यभ्रमो दृष्टः, नेह प्रकृते तादृशमपि तादात्म्यं समस्तीत्यर्थः ।

किं युष्मदंशस्य स्वस्मान्न संभवः, विषयिणश्चिदेकरसत्वादित्यर्थः, उत विषयिणः सकाशान्न संभव इति । आद्ये व्यधिकरणता, द्वितीये त्वसिद्धिरित्याशङ्क्याह—**अयमाशय इति ॥** अवयवश आशयोऽभिधोयत इत्यर्थः । हेत्वसिद्धिं निरस्यति—**चेत्यं हीति ॥** कर्मकारकतया तद्भासने हेतुमाह—**जडमिति ॥** फलितमाह—**तत्कथमिति ॥** कर्मत्वेऽप्यात्मत्वं किं न स्यादित्यत आह—**कर्तुरिति ॥** क्रियां प्रति गुणभूतः कर्ता, तस्य विपरीततया प्रधानतया स्थानमवस्थानं; तद् गतं प्राप्तं

## ऋजुविवरणम्

**ननु** इतरेतरभावानुपपत्तौ सहेतुकायां साधितायां कथमित्याक्षेपोऽनुपपन्न इत्याशङ्क्याभिप्रायमाह—**ननु दृग्दृश्ययोरिति ॥ ननु** तादात्म्याभावेनाध्यासो निराकर्तुं न शक्यत इति चोदिते, स्वत इत्यादिग्रन्थैः चिज्जडतादात्म्यनिराकरणं व्यर्थमित्याशङ्क्य समुदायतात्पर्यमाह—**सत्यमित्यादिना ॥** यद्यपि विशेषयोस्तादात्म्यं नास्ति; तथापि कथञ्चिदस्तीत्यङ्गीकरोति—**सत्यमिति ।** नच—"स्वतस्तावदि"त्यादिना चिदेकरसत्वादिहेतुसमुदायेन तादात्म्यनिराकरणे भाष्याननुसारः, तत्र विरोधेन तन्निराकरणादिति—वाच्यम्; विरोधस्यैव तैस्साध्यमानत्वात् । **ननु** स्वतो विषयिणश्चिदेकरसत्वाद्युष्मदंशसंभव उत्पत्तिर्नास्तीत्युक्तमिव प्रतिभाति, तथा परतोऽपि संभवो नास्ति; स्वस्यापरिणामित्वादिति; एवं च सति व्यधिकरणो हेतुः । नहि स्वस्य चिदेकरसत्वमपरिणामित्वं वा प्रपञ्चोत्पत्तिं निरुणद्धि । **यद्वा**—स्वत इत्यनेन स्वतः स्वस्माद्विषयिणः, युष्मदंशसंभवः उत्पत्तिर्नास्तीत्यन्वयः, स्वतस्तदाकारत्वं वा नास्तीति; पूर्वस्मिन् व्यधिकरणत्वम्, उत्तरस्मिन् परस्परव्याहतिः । विषयोऽस्यास्तीति विषयीति तादात्म्यप्रतीतेः । **टीकायाम्—अपरिणामित्वादिति** आगन्तुका सहेतुकोत्पत्तिर्निरस्यते ।

एवं व्यधिकरणत्वं प्रकृततादात्म्यानिराकरणादप्रयोजनं चेत्याशङ्क्याह—**अयमाशय इति ॥** द्रष्टुरचिदिति विकल्पव्याजेन विषयिण इति व्याख्यातम् । स्वाभाविकेत्यनेन स्वत इति व्याख्यातम् । ननु चैतन्यस्य जडात्मत्वनिराकरणे कथं

## पञ्चपादिका

**"तद्धर्माणामपि सुतराम्" इति ॥ एवं स्थिते स्वाश्रयमतिरिच्य धर्माणामन्यत्र भावानुपपत्तिः सुप्रसिद्धेति दर्शयति । इतिशब्दो हेत्वर्थः । यस्मादेवमुक्तेन न्यायेनेतरेतरभावासम्भवः, अतः । "अस्मत्प्रत्ययगोचरे विषयिणि चिदात्मके" इति ॥**

## पञ्चपादिकाविवरणम्

आगन्तुकश्चेत्, सहेतुरहेतुर्वा । निर्हेतुश्चेत्, तत्राह—**अपरिणामित्वादिति** ॥ न हि निरवयवं वस्तु स्वतः सावयवाकारेण परिणममानं दृष्टमित्यभिप्रायः । न सहेतुरित्याह—**निरञ्जनत्वादिति** ॥ न हि निरवयवमाकाशं हेतूपरागात्परिणममानं दृष्टमित्यर्थः । तर्ह्यनात्मैवाधिष्ठानमात्मांशात्मकं क्वचिद् दृष्टमिति, नेत्याह—**विषयस्यापीति । समत्वादिति** ॥ अयमर्थः—यथा द्रष्टुर्द्रष्ट्रन्तरं न प्रत्यक्षगोचरः, अपितु अनुमेयमेव तत्, एवं विषयोऽपि स्यादिति । परतोऽपि नानात्मनश्चिदाकारपरिणामः; जडोपादानस्यापि कार्यस्य जडत्वात्, तर्ह्यात्मचैतन्यमेवानात्मा स्वांशत्वेन स्वीकरोतीति चेत्, तत्राह—**चितेरप्रतिसंक्रमत्वादिति** । तस्मात् क्वचिदपि तादाम्यादर्शनादन्यत्रान्यतरांशदर्शनेनान्यतरांशाध्यासो नोपपद्यत इति ।

## तत्त्वदीपनम्

येन तत्तथोक्तम् । गुणत्वप्राधान्ययोः कथमेकत्र विरोधः ? गन्तुर्विदिकर्मत्वदृष्टेः, इत्याशङ्क्याह—**एकस्यामिति** ॥ द्वितीयमनुवदति—**आगन्तुक इति** ॥ सोऽपि विकल्पासह इत्याह—**सहेतुरिति** ॥ आत्मनोऽनात्माकारपरिणामे किमन्यो हेतुरस्त्युत नेति विकल्पार्थः ॥

आत्मनोऽपरिणामित्वम् "आत्मकृतेः परिणामादि"ति सूत्रेण "सच्च त्यच्चाभवदि"त्यादिश्रुत्या च विरुद्धमित्याशङ्क्य, निरवयवस्याविद्यां विना तत्त्वतः परिणामानुपपत्तिरित्याशयमाह—**न हि निरवयवमिति** ॥ आद्यं दूषयति—**न सहेतुरिति** ॥ असिद्धिं निरस्यति—**नहीति** ॥ चेतनस्यानात्मांशत्वाभावेऽप्यनात्मनश्चैतन्यांशत्वं स्यादिति शङ्कते—**तर्ह्यनात्मेति** ॥ **क्वचिद् दृष्टमिति** । "अहमुपलभ" इत्युपलब्ध्याश्रयत्वमहंकारस्य दृष्टमित्यर्थः । चैतन्यांशत्वं किं स्वभावः उताऽऽगन्तुकम् ? इति विकल्प्याद्यं प्रत्याह—**नेत्याहेति** ॥ समयोरप्यात्मनोर्विषय-विषयित्ववद् आत्मानात्मनोरपि किं न स्यादित्याशङ्कायामाह—**अयमर्थ इति** ॥ प्रत्यग्विषयत्वस्य निषिध्यमानत्वान्न व्यभिचार इत्यर्थः । द्वितीयेऽपीदं निरूपणीयम्—किमनात्मा स्वतश्चिदाकारेण परिणमते, उतान्यतः ? नाद्यः; सदा तत्परिणामप्रसङ्गादिति मत्वा द्वितीयं प्रत्याह—**परतोऽपीति** ॥ विमतः, जडः, जडोपादानत्वात्; संमतवदित्यर्थः ॥ मुखसन्निधानाद्दर्पणस्य तदाकारत्ववदनात्मनोऽपि चित्सन्निधानाच्चिच्छायता स्यादिति चोदयति—**तर्ह्यात्मेति** । अनात्मनश्चिच्छायता चिदाकारपरिणामः, उत चैतन्यस्य तत्र संक्रमणम् ? नाद्यः; पूर्वरूपे स्थिते नष्टे वाऽन्यस्यान्यभावासंभवात्, अन्त्येऽपि संक्रमणं किं तात्त्विकम्, उतातात्त्विकम् ? न प्रथमः; निष्क्रियत्वात्पूर्णत्वाच्च । न द्वितीयः । क्वचित्तात्त्विकांशांशिताभावे तत्कल्पनाया एवासंभवादित्यभिप्रेत्याह—**तत्राहेति** ॥ टीकायामपेक्षितं पूरयति—**तस्मादिति** ॥

## ऋजुविवरणम्

चिदेकरसत्वं हेतुः ? असिद्धिप्रसङ्गात्; अथवैकरसस्यैवाकारान्तरासंभवादहेतुः, न च 'द्रष्टुरि'त्येवान्तर्गर्भितो हेतुः; द्रष्टुरेव युष्मदंशसंभवाद्विरोधाभावात्, अतः स्वरूपपरत्वेन निराकरणे हेत्वभावान्न प्रतिज्ञातार्थसिद्धिरित्याशङ्क्याभिप्रायमाह—**चेत्यं हीति** ॥ अंशभेदेनाविरोधशङ्का निरंशत्वेन सुपरिहृतत्वान्न कृता । अन्यत्र टीकाकारेणाप्येवमेवोक्तम्—"तत्कथमेकस्य निरवयवस्य विरुद्धांशद्वयसन्निवेशः"—इति । आगन्तुकत्वे निराकर्तव्ये "न परतः" इति निराकरणमसङ्गतम्; विकल्पितपक्षत्वाभावात्, तथा स्वतोऽपरिणामिनोऽपि परतः परिणामदर्शनादनैकान्तिको हेतुः । अथ परतः परिणामो न संभवति निरञ्जनत्वादिति व्याख्यायेत, तथा सति निर्हेतुकपरिणामस्य शेषाभ्यनुज्ञान्यायेनाङ्गीकार इति शङ्कानिराकरणाय विकल्प्यावतारयति—**आगन्तुकश्चेदिति** ॥ **अपरिणामित्वादिति** परिणामरहितत्वे विवक्षिते हेतोरसिद्धिः स्यात्; परिणामायोगात्, इत्यभिप्रायमाह—**न हि निरवयवमिति** ॥ 'निरञ्जनत्वादि'त्युक्तमयुक्तम्; निरवयवस्यापि हेतुसंसर्गात् परिणामाङ्गीकारप्रसङ्गात्, तथाच तस्यासिद्धत्वमित्याशङ्क्य परिणामित्वापादकहेतुसंसर्गायोगादित्यभिप्रायेण व्याचष्टे—**न हि निरवयवमिति** ॥ विषयस्येत्यनेन विषयस्य चिदात्मकत्वनिराकरणं व्यर्थम्; अधिष्ठानस्यान्यात्मत्वं निराकर्तव्यम्, अधिष्ठानत्वं चात्मन एव,

## पञ्चपादिका

**अस्मत्प्रत्यये योऽनिदमंशश्चिदेकरसः, तस्मिंस्तद्बलनिर्भासिततया लक्षणतो युष्मदर्थस्य मनुष्याभिमानस्य सम्भेद इवावभासः, स एवाध्यासः। "तद्धर्माणां चे"ति॥ यद्यपि विषयाध्यासे तद्धर्माणामप्यर्थसिद्धोऽध्यासः; तथापि विनापि विषयाध्यासेन तद्धर्माध्यासो बाधिर्यादिषु श्रोत्रादिधर्मेषु विद्यत इति पृथग्धर्मग्रहणम्। तद्विपर्ययेण विषयिणस्तद्धर्माणाञ्चेति॥ चैतन्यस्य तद्धर्माणां चेत्यर्थः॥**

**ननु विषयिणश्चिदेकरसस्य कुतो धर्माः, ये विषयेऽध्यस्येरन्? उच्यते; आनन्दो विषयानुभवो नित्यत्वमिति**

## पञ्चपादिकाविवरणम्

**'तद्धर्म्माणामपि सुतरामि'**त्यारभ्य **'अभाव एवाध्यासस्य युक्त'** इत्यतः प्राक्तनो ग्रन्थः स्पष्टार्थः।

ननु—अहङ्कारादिषु शरीरान्तेष्वहमित्येव प्रत्ययः, न त्विदमिति कथमेषां युष्मत्प्रत्ययगोचरत्वमिति? तत्राह—**तद्बलनिर्भासिततयेति**॥ तस्यास्मत्प्रत्ययगोचरस्य चैतन्यस्य बलेन निर्भास्यत्वादहङ्कारादेः प्रतिभासतो युष्मदर्थत्वाभावेऽप्यपरोक्षतयाऽवभास्यत्वेन लक्षणेन युष्मदर्थभावो युज्यत इत्यर्थः।

**अपृथक्त्वेऽपि चैतन्यात्पृथगिवावभासन्त इति**॥ अन्तःकरणवृत्त्युपाधौ नानेवावभासन्त इत्यर्थः। भूयोऽवयवसामान्य-

## तत्त्वदीपनम्

आत्मा, न मुख्यप्रत्यक्त्वादिभाक्, अहमिति प्रतिभासमानत्वात्; अहङ्कारवदित्याशङ्क्य, प्रतीतिकर्मत्वं हेतुः? उत प्रतीतिरूपत्वम्? आद्येऽसिद्धिरित्याह—**अस्मत्प्रत्यय इति**॥ **(टीकायाम्)** अस्मच्चासौ प्रत्ययश्चेत्यस्मत्प्रत्ययोऽन्तःकरणम्, अहंप्रत्ययो वा; तत्रेदमंशत्वं कर्मत्वं न विद्यत इति यावत्। तत्र हेतुः—**चिदिति**॥ द्वितीये साधनवैकल्यमिति॥

अहंकारादेरहमित्येव प्रतीयमानत्वान्न युष्मदर्थत्वमिति, न तदध्यस्ततात्क्षेप इति चोदयति—**नन्वहंकारादिष्विति**॥ शरीरादौ यद्यपि न स्वरूपेणाहंप्रत्ययः; तथापि मनुष्यत्वकाणत्वादिविशिष्टे स समस्तीत्यर्थः। "तद्बलनिर्भासिततये"त्यत्र तच्छब्देनास्मत्प्रत्ययो निर्दिश्यत इति शङ्का स्यात्, तथाचास्मत्प्रत्ययभास्यचैतन्यवन्नाहंकारादेर्युष्मदर्थत्वमित्याशङ्क्याह—**तस्येति**॥ अस्मत्प्रत्ययस्य विशेषणत्वेनोपात्तत्वात् चितेश्च प्राधान्यात्तस्या एव परामर्श इत्यर्थः।

अहमिति प्रतीयमानस्य कथं युष्मदर्थत्वम्? तत्राह—**अहंकारादेरिति**॥ तद्बलनिर्भासिततयैव युष्मदर्थत्वसिद्धेः किं 'लक्षणत' इत्यनेन? इत्याशङ्क्य व्याख्यानव्याख्येयरूपत्वान्न वैयर्थ्यमित्याह—**अवभास्यत्वेन लक्षणेनेति**॥ (टीकायां) तसिप्रत्ययस्तृतीयार्थे।

आनन्दादीनां स्वरूपत्वान्न तद्धर्मत्वमिति शङ्कानिरासार्थमपृथक्त्वेऽपीत्युक्तम्, तदनुपपन्नम्, अपृथग्भूतानां पृथग्भावासंभवादित्याशङ्क्योपाधिसंबन्धादविरोधमाह—**अन्तःकरणेति**॥ निर्गुणत्वान्निरवयवत्वाच्च नात्मानात्मनोः सादृश्यम्,

## ऋजुविवरणम्

तस्य चान्यात्मत्वं निरस्तम्, अतः किमनेन? इत्याशङ्क्याऽनात्माऽधिष्ठानत्वेन शङ्कां दर्शयति—**तहंचनात्मैवेति**॥ समत्वेऽपि विषयत्वं दृश्यते, अतो नायं हेतुरित्याशङ्क्य व्याचष्टे—**समत्वादिति**॥ **अयमर्थ इति**॥

'तद्बलनिर्भासिततये'त्यनेन मनुष्याभिमानस्य युष्मदर्थत्वसाधनं किमर्थम्? न हि युष्मदर्थस्य चैतन्येऽध्यस्तत्वनिराकरणे तत्साधनं संगच्छते; नाप्येतेषां युष्मदर्थत्वशङ्काकारणमप्यस्तीत्याशङ्क्यावतारयति—**नन्वहंकारादिष्विति**॥ **अथवा**—अहंकारादेरध्यस्तत्वमनन्तरग्रन्थे वक्ष्यति, अत्र युष्मत्प्रत्ययगोचरस्याध्यस्त्वत्वं निराक्रियते। अतश्चोद्यपरिहारयोर्भिन्नविषयत्वादसंबद्धं भाष्यम्। न च तेषामेवात्र युष्मच्छब्देन ग्रहणादेकविषयत्वम्; तेषां युष्मदर्थत्वासंभवादिति शङ्कां बीजप्रदर्शनेन दर्शयित्वा, तां निवर्तयतीत्याह—**नन्वहंकारादिष्विति**॥ अहङ्कारादिवन्मनुष्याभिमानग्रहणमुपलक्षणमिति दर्शितवान्। तच्छब्देनास्मत्प्रत्ययः परामृश्यते; अवभासकत्वेन प्रकृतत्वात्, तथा सति तदवभास्यचैतन्यवद् न युष्मदर्थता, ततो विरुद्धो हेतुः, अंशेऽसिद्धश्चेति शङ्कां निराकरोति—**तस्यास्मत्प्रत्ययगोचरस्येति**॥ किं तल्लक्षणमिति? तदाह—**अपरोक्षतयेति**॥

## पञ्चपादिका

सन्ति धर्माः, अपृथक्त्वेऽपि चैतन्यात् पृथगिवावभासन्त इति न दोषः ।

अध्यासो नाम—अतद्रूपे तद्रूपावभासः, स "मिथ्येति भवितुं युक्तमि"ति । मिथ्याशब्दो द्व्यर्थः—अपह्नववचनोऽनिर्वचनीयतावचनश्च । अत्र—अयमपह्नववचनः । मिथ्येति भवितुं युक्तम्, अभाव एवाध्यासस्य युक्त इत्यर्थः ।

यद्यप्येवम्; तथापि नैसर्गिकः प्रत्यक्चैतन्यसत्तामात्रानुबन्धी । "अयम्" युष्मदस्मदोरितरेतराध्यासात्मकः, "अहमिदं

## पञ्चपादिकाविवरणम्

सादृश्याभावात्, आत्मनि कर्तृत्वादेरहङ्काराद्युपाधिनिमित्तभ्रमत्वेऽपि शरीराद्यध्यासस्य सोपाधिकभ्रमत्वाभावात् ।

द्रष्टर्यहङ्कारादिशरीरान्तपदार्थाध्यासस्य सम्भवं प्राप्तमङ्गीकरोति—यद्यप्येवमिति ॥ निरुपाधिकभ्रमकार्यदर्शनमेव गुणावयवसामान्याभावेऽपि केतकीगन्धसदृशस्सर्पगन्ध इतिवत् सादृश्यं वा, शङ्खपीतिमादाविव कारणान्तरं वा कल्पयतीत्याह—

## तत्त्वदीपनम्

नापि विवेकाग्रहः; प्रत्यक्पराग्भावादिविधया व्यावृत्त्युपलम्भात्, ततश्चाध्यासव्यापकाभावेन व्याप्याभावादसंभावितविषयफलत्वात् शास्त्राऽनारम्भ इति पूर्वपक्षः । अध्यासासंभवेन विषयाद्यसंभावनया आरम्भ आक्षिप्तेऽध्यासासंभवाङ्गीकारेण समाधानमभ्यधायि, तदयुक्तम्; अध्यासासंभवे विषयाद्यनुपपत्तेरित्याशङ्क्य, अध्यासासंभवाङ्गीकारे तात्पर्यमाह—भूयोऽवयवेति ॥ भूयसामवयवानां सामान्यं समानता, सैव सादृश्यम्, तस्याभावादध्यासासंभवं प्राप्तमङ्गीकरोतीत्यन्वयः । ननु—न सादृश्यमध्यासव्यापकम्; लोहितादिभ्रमे व्यभिचारात्, ततश्च सादृश्याभावेनाध्यासासंभवाङ्गीकरणमसङ्गतमित्याशङ्क्य, किं सादृश्ये सोपाधिकभ्रमव्यापकत्वम् निषिध्यते, उत निरुपाधिकभ्रमव्यापकत्वम् ? नाद्यः; अङ्गीकृतेरित्यभिप्रेत्य द्वितीयं दूषयति—आत्मनि कर्तृत्वादेरिति ॥ 'इदं रजतमि'त्यादिनिरुपाधिकभ्रमं प्रति सादृश्यस्य व्यापकतादृष्टेः शरीराद्यध्यासस्य च निरुपाधिकभ्रमत्वात् सादृश्यं वक्तव्यम्, तच्च न सम्भवति; अतोऽध्यासासम्भवाङ्गीकरणमुचितमित्यर्थः ।

सादृश्यस्य निरूपाधिकभ्रमव्यापकत्वे नाहंकारादेरात्मन्यध्यस्तत्वं सिद्ध्यति, सादृश्याभावादित्याशङ्क्य, भूयोऽवयवसामान्यसादृश्याभावेऽपि कार्यानुपपत्त्या सादृश्यान्तरं कल्प्यत इत्याह—निरुपाधिकेति ॥ केतकीसर्पगन्धयोर्निर्गुणत्वान्निरवयवत्वाच्च गुणावयवसामान्याभावेऽपि केतकीगन्धसदृशः सर्पगन्ध इत्यनुभवाद्यथा सादृश्यान्तरमास्थितम्, तथा अत्रापीत्यर्थः । निरूपाधिकभ्रमेऽपि न सादृश्यानुगतिरित्याह—शङ्खपीतिमादाविति ॥ 'पयस्तिक्तमि'त्यादिभ्रम आदिशब्दार्थः । कारणान्तरमित्यज्ञानलक्षणमित्यर्थः । युष्मदित्यादिना किमध्यासस्य सत्त्वमपलप्यते ? उत प्रतीतः ? इति विकल्प्याऽऽद्यं

## ऋजुविवरणम्

'चैतन्यादि'ति चैतन्यावभास्यत्वं प्रतीयते; तथा सति युष्मदर्थत्वम् । यद्वा—कथमपृथग्भूतानां पृथग्भूतत्वेनावभासः ? इत्याशङ्क्याभिप्रायमाह—अन्तःकरणेति ॥ ननु मा भूत्तादात्म्यम्, तथाप्यध्यासः संभवत्येव; तादात्म्यहीनयोरेवाध्यासदर्शनात् शङ्खपीतिमादौ, शुक्तिरजतयोरपि न तादात्म्यम्, इदन्त्वस्य पुरोदेशत्वातिरेकेणानिरूपणात्, तेन तादात्म्याभावेऽपि नाध्यासो निराकर्तुं शक्यते । सामग्र्यभावेन हि कार्यं निराक्रियेत, न तादात्म्यस्य सामग्र्यामन्तर्भावः; व्यभिचारात्, अतो, 'यद्यप्येव'मित्यङ्गीकारो न युक्त इत्याशङ्क्याभिप्रायमाह—भूयोऽवयवसामान्येति ॥ ननु भूयोऽवयवसामान्याद्यभावेऽपि मुखादौ द्वित्वाद्यध्यासो दृश्यते, तद्वदिहाप्युपाधिना स्यादित्यादिशङ्क्याह—आत्मनि कर्तृत्वादेरिति ।-

'तथापी'त्यादिनाध्याससद्भाव उपालम्भार्हो न भवतीत्युक्तम्, तदयुक्तम्; सामग्र्यभावेन ह्युपालम्भः कृतः, नच तन्निरूपणेन विनोक्तिमात्रेणानुपालम्भः सिध्यतीत्याशङ्क्याभिप्रायमाह—निरुपाधिकभ्रमेति ॥ सोपाधिके तूपधिमात्रोपपन्ने न कारणान्तरकल्पकत्वम्, तदर्थमाह—निरुपाधिकेति ॥ निरुपाधिकस्यापि कार्यमात्रस्य नाभिमतकारणकल्पकत्वम्, तदर्थम्—भ्रमरूपेति ॥ ननु 'नैसर्गिके'त्यनेनैवास्मदर्थवदनुपालम्भः सिद्ध्यतीति, किं "प्रत्यक्चैतन्यसत्तामात्रानुबन्धी"-

## पञ्चपादिका

**ममेदमिति लोकव्यवहारः"। तेन यथाऽस्मदर्थस्य सद्भावो नोपालम्भमर्हति, एवमध्यासस्यापीत्यभिप्रायः। लोक इति मनुष्योऽहमित्यभिमन्यमानः प्राणिनिकाय उच्यते। व्यवहरणं व्यवहारः, लोक इति व्यवहारो लोकव्यवहारः; मनुष्योऽहमित्यभिमान इत्यर्थः।**

## पञ्चपादिकाविवरणम्

**"तथापी"त्यादिना "एवमध्यासस्यापीत्यभिप्राय" इत्यन्तेन ग्रन्थेन ॥** नैसर्गिकशब्दार्थमाह—**प्रत्यक्चैतन्यसत्तामात्रानुबन्धीति ॥** कथम्? आत्मनि कर्तृत्व-भोक्तृत्वदोषसंयोग एवाध्यासः। तत्र भोक्तृत्वाध्यासः कर्तृत्वाध्यासमपेक्षते; अकर्तुर्भोगाभावात्, कर्तृत्वं च राग-द्वेषसंयोगाध्यासमपेक्षते, तद्रहितस्य कर्तृत्वाभावात्; दोषसंयोगश्च भोक्तृत्वमपेक्षते, अनुपभुक्तेऽतज्जातीये वा रागाद्यनुपपत्तेः, एवं बीजाङ्कुरवद्धेतुपरम्परयाऽनादित्वादध्यासस्य नैसर्गिकत्वमिति। लोकव्यवहारशब्दोऽध्यासाभिधायीति दर्शयति—**लोक इति, मनुष्योऽहमित्यादिना ॥ व्यवहारः**—अभिज्ञाऽभिवदनमुपादानमर्थक्रियेति चतुर्विधः। अतो मनुष्योऽहमिति ज्ञानाभिधाने व्यवहारशब्दमर्हत इति भावः।

## तत्त्वदीपनम्

तथापीत्यङ्गीचकार, द्वितीयेऽपि किं कारणस्याऽपलापो विवक्षितः? उत प्रतीतेः? आद्येऽपि किं निमित्तस्य? उतोपादानस्य? न तावदाद्यः; संस्कारस्य निमित्तत्वात्, प्रमाणानुभवसंस्काराभावेन विपरीतकार्याभावादर्शनादेवानुभवसंस्कार एव प्रयोजकः, स प्रकृतेऽपि सुसंपादः। न चेतरेतराश्रयत्वम्; पूर्वानुभवसंस्कारस्योत्तरोत्तरभ्रमप्रयोजकत्वादित्यभिसन्धायोक्तम्—**नैसर्गिक इति ॥** तदनुपपन्नम्; नैसर्गिकत्वे चैतन्यवत्स्वभावत्वेनोच्छेद्यतासम्भवाद् इत्याशङ्क्य, नैसर्गिकपदेनानादित्वं विवक्षितं न स्वभावत्वमित्याशयवानाह—**नैसर्गिकेति ॥** प्रतीचो जडतां व्यावर्तयति—**चैतन्येति ॥** तस्य तुच्छतां व्यावर्तयति—**सत्तेति ॥** कार्योपहितसत्तानुबन्धित्वं व्यावर्तयति—**मात्रेति ॥** साक्षिस्वरूपमनुसृत्यानवच्छिन्नाऽऽनन्दादिस्वरूपं सदा तिरस्कृत्य व्यवस्थितमित्याह—**अनुबन्धीति ॥** द्वितीये बहुवक्तव्यत्वसद्भावात् प्रथमं पक्षान्तरं निरस्यति—**अयमिति ॥ (टीकायाम्)** अध्यास आक्षिप्तः, लोकव्यवहारश्च समाधीयते, इति वैयधिकरण्यशङ्कां निरस्यति—**युष्मदस्मदोरिति ॥** अनादेः कथं कार्यत्वमिति शङ्कते—**कथमिति ॥** प्रवाहरूपेणानादित्वं न स्वरूपेणेत्यविरोधं दर्शयितुमध्यासस्वरूपमाह—**आत्मनीति ॥** अध्यस्यत इति कर्मपरोऽध्यासशब्दः। ततः किम्? इत्यत आह—**तत्रेत्यादिना ॥** अनुपभुक्ते रागो नोत्पद्यत इति वदता भुक्तविषयो राग इत्युक्तं स्यात्; नच तत्सम्भवति। भुक्ते रागाभावादित्याशङ्क्याह—**अतज्जातीय इति ॥** उपभुक्तासजातीय इत्यर्थः। भोक्तृत्वं च कर्तृत्वाद्यध्यासमपेक्षत इत्यनादित्वं सिद्धमित्याह—**एवमिति ॥** कर्तृत्वादीनामन्यतमव्याप्तकालत्वं कार्यानादित्वम्। सुषुप्तादावपि तत्संस्कारसम्भवादनादित्वं युक्तमित्यर्थः। अध्यासात्मको लोकव्यवहार इत्यत्र लोकव्यवहारस्याध्यासात्मकत्वं सिद्धमिति पुनस्तत्कथनं व्यर्थमित्याशङ्क्याध्यास-लोकव्यवहारयोर्भिन्नत्वात् कथं सामानाधिकरण्यम्? इति शङ्कानिरसनपुरःसरं तदेव स्पष्टीक्रियत इत्याह—**लोकव्यवहार इति ॥** लोक्यत इति लोकः; लोकशब्दस्य कर्मपरत्वात्। तत्साहचर्याद् व्यवहारपदस्यापि तादृक्त्वशङ्कां निरस्यति—**व्यवहरणमिति ॥** उभयोः कर्मपरत्वे पौनरुक्त्यात्, पूर्वत्र कर्मव्युत्पत्त्या ज्ञानोपसर्जनार्थाध्यासो निर्दिष्टः, उत्तरत्रार्थोपसर्जनज्ञानाध्यास इत्यर्थः।

## ऋजुविवरणम्

त्यनेन? अर्थभेदाभावात्, इत्याशङ्क्याभिप्रायमाह—**नैसर्गिकशब्दार्थमिति ॥** तात्पर्यपरत्वाद् ग्रन्थस्य। व्याख्याने च व्याख्येयस्य इत्यन्तत्वं प्रायेण दृश्यते, तदभावान्न स्पष्टं व्याख्यानमिति—**शब्दार्थमाहेत्युक्तम्**। कार्यस्य नैसर्गिकत्वं विरुद्धमिति चोदयति—**कथमिति ॥** तथापीत्यस्मिन् ग्रन्थेऽध्यासात्मको लोकव्यवहार इति व्याख्यानं कृतम्। अतः—**"लोक इति मनुष्योऽहमि"ति** ग्रन्थः पुनरुक्त इत्याशङ्क्याभिप्रायमाह—**लोकव्यवहारशब्द इति ॥** कथं व्यवहारोऽभिमान इति व्याख्यानं युज्यते? व्यवहारशब्दस्य हानोपादानयोः प्रसिद्धत्वात्, इत्याशङ्क्याभिप्रायमाह—**व्यवहारः-अभिज्ञेति ॥**

**पञ्चपादिका**

**"सत्यानृते मिथुनीकृत्य" इति ॥ सत्यम् अनिदम्, चैतन्यम् । अनृतं युष्मदर्थः; स्वरूपतोऽप्यध्यस्तस्वरूपत्वात् ।**

**पञ्चपादिकाविवरणम्**

अन्यस्यान्यात्मनाऽवभासोऽविद्येत्युक्ते 'शुक्लः पट' इत्यादिप्रत्ययानामविद्यात्वप्रसङ्गो मा भूदिति सत्यस्य वस्तुनो मिथ्यावस्तुसम्भेदावभासोऽविद्येति स्वसिद्धान्तमङ्गीकृत्य "सत्यानृते मिथुनीकृत्ये"त्युक्तम्, तद् व्याचष्टे—**सत्यमनिदं चैतन्यमित्यादिना** । **ननु** क्त्वाप्रत्ययोपादानादर्थतः क्रियाभेदः पूर्वापरोभावश्चाङ्गीकर्तव्यः, तत्कथमध्यास-मिथुनीकरण-लोकव्यवहाराणामेकार्थत्वमिति ? नेत्याह—**अध्यस्य मिथुनीकृत्येत्यादिना** ॥ **ननु** किमिति स्वरूपमात्रपर्यवसानम् ? क्रियाभेद

**तत्त्वदीपनम्**

अनेकधा समाससम्भवाद् विवक्षितं समासं दर्शयति—**लोक इतीति** ॥ अर्थक्रियापरत्वं व्यावर्तयति—**मनुष्य इति** ॥ व्यवहारशब्दस्य हानोपादानयोः प्रसिद्धत्वात्कथमभिमानवाचकत्वेन व्याख्यानम् ? इत्याशङ्क्याह—**व्यवहारोऽभिज्ञेति** ॥ अभिमानपदं चोपलक्षणमित्याह—**ज्ञानेति** ।।

अध्यासस्वरूपाद्यप्रदर्शकत्वात् "सत्यानृते" इति भाष्यं तद्व्याख्यानं चासंगतमित्याशङ्क्य, तद्व्यावर्त्यां शङ्कामाह—**अन्यस्येति** ॥ सत्यानृतविभागस्यासिद्धत्वात् "सत्यनृते मिथुनीकृत्ये"ति कथमुक्तम् ? इत्याशङ्क्याह—**स्वसिद्धान्तमिति** ॥ सत्यानृतपदयोर्वचनपरत्वं व्यावर्तयति—**सत्यमित्यादिना** ॥ कालत्रयबाधाभावोपलक्षितं वस्तु सत्यम्, तस्य ज्ञानकर्मत्वनिराचिकीर्षया—"अनिदमि"त्युक्तम्, तत्र हेतुमाह—**चैतन्यमिति** ॥ उभयोरध्यस्तत्वे कथं "सत्यानृतविभाग" इत्याशङ्क्य, एकस्य संसृष्टरूपेणाध्यस्तत्वम्, इतरस्य स्वरूपेणापीति युक्तो विभाग इत्याह—**स्वरूपत इति** ॥ अध्यासो मिथुनीकरणात्मको लोकव्यवहार इत्युक्तम्, तदाक्षिपति—**ननु क्त्वाप्रत्ययेति** ॥ प्रातीतिकक्रियाभेदादिव्यावृत्त्यर्थमर्थत इति विशेषणम् । **"समानकर्तृकयोः पूर्वकाले"** इत्यनेन सूत्रेण, एककर्तृकयोः पूर्वापरीभावेन स्थितयोः क्रिययोः पूर्वकाले धात्वर्थे क्त्वाप्रत्ययस्य विहितत्वात् क्रियाभेदादिरेष्टव्य इत्यर्थः। व्यवहारः क्रियत इति क्रियान्तरमध्याह्रियत इत्याशङ्क्य—किं 'लोकव्यवहारः' इत्येतद्बलादध्याहारः, उत—'अध्यस्ये'त्येतद्बलादिति विकल्प्याद्यस्योत्तरमुक्तम्—**अध्यस्य नैसर्गिक इति (टीकायाम्)** ॥ द्वितीयमुत्थापयति—**ननु किमितीति** ॥ उपसंहारविरोधाच्चैवमित्याह—**नेत्याहेति** ॥ उपक्रमानुरोधेनोपसंहारनयनं किं न स्यादिति ? तत्राह—**न हि पदमात्रेति** ॥ क्त्वाप्रत्ययवैयर्थ्यभयाद्विशेष्यप्रधानपदार्थो-

**ऋजुविवरणम्**

"सत्यानृते मिथुनीकृत्ये"ति भाष्यमसम्बद्धम्; न ह्यनेन रूपेणाध्यासो नैसर्गिकः प्रतीयते; तादात्म्यप्रतीतेः, अनुपयुक्तं च; अध्यासस्य नैसर्गिकत्वप्रदर्शनमुपयुज्यते, नतु सत्यत्वमिथ्यात्वप्रदर्शनम्, व्यर्थविशेषणञ्च; व्यावर्त्याभावात्, असिद्धं च सत्यत्वमिथ्यात्वं न सिद्धवत्कीर्तितुं युक्तम्, "अतः सत्यमनिदं चैतन्यमि"ति व्याख्यानमप्यसंबद्धम्; सत्यत्व-मिथ्यात्वासिद्धेः, इत्याशङ्क्याभिप्रायमाह—**अन्यस्यान्यात्मनेति** ॥ **अर्थत इति** ॥ वाच्यस्वरूपपर्यालोचनया, न तु प्रातीतिकः, परोपाधिको वेत्यर्थः। भवतु तावन्मात्रोपसंहारः; तथाऽप्युपक्रमे पदसामर्थ्यादर्थभेदे निश्चिते तदेकदेशोपसंहार इति निश्चीयते; उपक्रमानुरोधित्वादुपसंहारस्य, इत्याशङ्क्याह—**नहि पदेति** । ननु पदानुरोधादनेकपदसमभिव्याहारस्यान्यथाकरणं दृश्यत इत्याशङ्क्याह—**मात्रवैयर्थ्यभयादिति** ॥ उपसर्जनरूपार्थप्रतिपादकत्वादित्यर्थः। अथवा—मात्रग्रहणेन प्रत्ययविवक्षा; ल्यप्प्रत्ययस्यैव भेदप्रापकत्वात् । ननु प्रत्ययनिमित्तत्वेऽपि भेदस्य पदार्थत्वमेव; प्रत्यययुक्तस्यैव तत्सन्निधौ प्रकृतिभागस्यैव वाचकत्वात्, अतश्च पदार्थत्वाविशेषादध्यासमिथुनीकरण-लोकव्यवहाराणां भेदेन भवितव्यमित्याशङ्क्याह—**वाक्यार्थ इति** । अथवा—प्रत्ययार्थस्यैव कृदादिषु प्राधान्यात् प्रत्ययानुरोधेन प्रातिपदिकस्यान्यथाकरणं युक्तम्; सप्रयोजनत्वात्, प्राधान्यञ्च तस्यैवेत्याशङ्क्याह—**वाक्यार्थ इति** ॥ वाक्यार्थप्रतीतिनिमित्तत्वात्पदस्य, न तस्य तद्बाधकत्वमिति भावः।

## पञ्चपादिका

**'अध्यस्य' 'मिथुनीकृत्ये'ति च क्त्वाप्रत्ययो न पूर्वकालत्वमन्यत्वं च लोकव्यवहारादङ्गीकृत्य प्रयुक्तः; भुक्त्वा व्रजतीतिवत् क्रियान्तरानुपादानात्, अध्यस्य नैसर्गिकोऽयं लोकव्यवहार इति स्वरूपमात्रपर्यवसानात्, उपसंहारे च—"एवमयमनादिर-**

## पञ्चपादिकाविवरणम्

एव क्त्वाप्रत्ययसामर्थ्यादुपादीयतामिति ? नेत्याह—**उपसंहारे चेति** ॥ नहि पदमात्रवैयर्थ्यभयाद्वाक्यार्थो नैसर्गिकत्वगुणविशिष्टो विशेष्यपदार्थोऽध्यास उपक्रमोपसंहारयोर्भेत्तुं युक्त इत्यभिप्रायः। किं तर्हि क्त्वाप्रत्ययावलम्बनमिति ? प्रतिपत्तितः क्रियाभेद-पूर्वापरीभावावित्याह—**अतश्चैतन्यं पुरुषस्य स्वरूपमितिवद् व्यपदेशमात्रम्** ॥ उपचारमात्रमित्यर्थः। कथम् ? एकोऽप्य-ध्यासोऽन्योन्यात्मता-सत्यानृते-अहमिदं ममेदमिति च विशेषणभेदाद्विशिष्टः परोपाधौ भिद्यते; विशिष्टार्थप्रत्ययाश्च क्रमेण

## तत्त्वदीपनम्

ऽध्यासो भेत्तुं नहि युज्यत इत्यन्वयः। प्राधान्यमुपपादयति—**वाक्यार्थ इति** ॥ वाक्यार्थमेवाह—**उपक्रमेऽपीति** ॥ प्रतीयमान इति शेषः। "अध्यासो मिथ्ये"त्युपक्रमे, "एवमयमनादिरि"त्युपसंहारे च प्रतीयमानतया वाक्यार्थत्वम्; येनोपक्रम्यते, येन चोपसंह्रियते, स वाक्यार्थ इति न्यायात्। ततश्च प्राधान्यमित्यर्थः। नैसर्गिकगुणविशिष्टत्वेनोत्तरत्रोक्तस्याऽप्यध्यासस्य प्रत्यभिज्ञानाच्च लोकव्यवहारोऽध्यास इत्याह—**नैसर्गिकेति** ॥ अध्यास-लोकव्यवहारशब्दयोरेकार्थत्वे क्त्वाप्रत्ययस्यानालम्बनता स्यादिति चोद-यति—**किन्तर्हीति** ॥ मुख्यालम्बनाभावेऽप्युपचरितमालम्बनमस्तीत्याह—**प्रतिपत्तित इति** ॥ "व्यपदेशमात्रमि"त्युक्ते निरालम्बनत्व-मेवोक्तं स्यादिति, तत्राह—**उपचारेति** ॥ अन्यगतस्यान्यत्राऽऽरोपणमुपचार इति। एकस्मिन्नध्यासे प्रातीतिकक्रियाभेदपूर्वापरी-भावौ न घटेते इति चोदयति—**कथमिति** ॥ स्वरूपेणैक्येऽपि विशेषणभेदात्तदुपपत्तिरित्याह—**एकोऽपीति** ॥ ननु विशेषणभेदा-दध्यासो भिद्यत इति कथम् ? न खलु दण्ड-कमण्डलुभेदाच्चैत्रो भिद्यत इत्याशङ्क्य, स्वरूपभेदाभावेऽपि विशिष्टभेद इत्याह—**विशिष्ट इति** ॥ तथापि वैशिष्ट्यभेदः, न तु विशिष्टस्वरूपस्येत्याशङ्क्याह—**परोपाधाविति** ॥ परोपाधावध्यासो भिद्यते गगनव-दित्यर्थः। तथाऽपि कथं पूर्वापरीभावः ? इत्याशङ्क्याह—**विशिष्टेति** ॥ तत्तद्विशेषणविशिष्टार्थं ज्ञात्वा तत्तद्वाचकशब्दरचनं क्रमेण भवतीति प्रतिपत्तितः पौर्वापर्यम्।

## ऋजुविवरणम्

ननु अध्यासस्य क्रियाभेदपूर्वापरीभावस्य च पदार्थत्वाविशेषे कथमेकस्यैवाध्यासस्य वाक्यार्थत्वमिति ? तदाह—**नैसर्गिकत्वगुणेति** ॥ ननु गुणविशिष्टत्वमितरपदार्थेष्वपि समानमिति, तत्राह—**विशेष्यपदार्थ इति** ॥ **यद्वा**—कथमेकोऽध्यासो वाक्यार्थं इति निश्चेतुं शक्यते ? पदार्थनिश्चयाधीनत्वाद्वाक्यार्थस्य तद्विमर्शसमय एव भेदोऽपि प्रतीयते; अतश्चोभयोः पदार्थत्वसाम्यात् कथमन्यतरबाधः ? इत्याशङ्क्य प्रकारान्तरेण प्राबल्यमाह—**नैसर्गिकत्वगुणविशिष्ट इति** ॥ अनेकपदार्थान्वयानुरोधादिति भावः। ननु तत्राप्यनेकपदार्थान्वयोऽस्त्येवेत्याशङ्क्याह—**विशेष्यपदार्थ इति** ॥ अध्यासस्यैवेतर-विशेषणेनान्वयः, स्वयं चानन्याकाङ्क्षः; ल्यबर्थेऽन्यविशेषणान्वयेऽपि तस्यान्याकाङ्क्षत्वादिति भावः। **प्रतिपत्तित इति** ॥ न वस्तुत इत्यर्थः। **ननु** प्रातीतिके क्रियाभेदे पूर्वापरभावे च कथं व्यपदेशमात्रमित्युक्तमित्याशङ्क्याह—**उपचारमात्र-मिति** ॥ अन्यगतस्यान्यत्रारोपणम्, अन्यगतप्रयोजकेन चान्यत्र वस्तुन्यविद्यमानेन व्यवहार उपचारः, न तु निरालम्बनत्वमिति भावः। ननु एकत्वे प्रतीतेरपि भेदो न सम्भवति; विषयनिमित्तत्वाद् भेदस्य, इत्याक्षिपति—**कथमिति** ॥ तत्रार्थस्य स्वत एकत्वेऽपि व्यपदेशमात्रोपयोगि भेदकं दर्शयति—**एकोऽपीति** ॥ एकोऽप्यध्यासो विशेषणभेदाद्भिद्यत इत्यन्वयः। ननु अन्योन्यात्मतारूपविशेषणस्य सत्यानृतत्वादिविशेषणस्य च भेदेऽप्येकस्याध्यासस्य कथं भेदः ? नहि दण्ड-कुण्डलभेदे देवदत्तभेद इत्याशङ्क्याह—**विशिष्टेति** ॥ एवमपि वैशिष्ट्यमेव भिन्नं भवेत्, न तु विशिष्टस्य स्वरूपस्य भेद इत्याशङ्क्याह—**परोपाधा-विति** ॥ स्वरूपेऽपि तदुपाधिको भेदो भवेदित्यर्थः। **यद्वा**—एवं तर्हि अर्थस्यैव विशिष्टरूपस्य सर्वत्र भेदान्न स्वरूपमात्रपर्य-वसानम्, प्रत्ययस्य भिन्नलक्षणलक्ष्यस्येवेत्याशङ्क्याह—**परोपाधाविति** ॥ स्वरूपभूतानामेवान्योन्यात्मताप्रमुखानां विशेषणत्वेन प्रतीतिमात्रम्, घटादिस्वरूपस्यैव स्वरूपत्वेन भेदत्वेन पटाद्यैक्यविरोधित्वेन वा व्यपदेशवदध्यासस्यापि तत्तत्प्रतीतिस्तत्तदाकारत्वं व्यपदिश्यते, लक्षणे तु स्वतो भिन्नस्यैव पदार्थस्य तथा व्यवहाराय समानासमानजातीयेभ्यो व्यावृत्तिप्रतीतिसिद्धये वा

**पञ्चपादिका**

**नन्तो नैसर्गिकोऽध्यासः'' इति तावन्मात्रोपसंहारात्। अतश्चैतन्यं पुरुषस्य स्वरूपमितिवद् व्यपदेशमात्रं द्रष्टव्यम्।**

**"मिथ्याज्ञाननिमित्त" इति ।। मिथ्या च तदज्ञानं च मिथ्याऽज्ञानम्। मिथ्येत्यनिर्वचनीयतोच्यते। अज्ञानमिति च जडात्मिकाऽविद्याशक्तिर्ज्ञानपर्युदासेनोच्यते। तन्निमित्तः तदुपादान इत्यर्थः।**

**पञ्चपादिकाविवरणम्**

वक्तुर्भवन्तीति, प्रतिपत्तितः पूर्वापरीभावं विशेषणभेदाच्च विशिष्टक्रियाभेदं चाङ्गीकृत्य क्त्वाप्रत्यय इति।

तत्राज्ञानमित्युक्ते ज्ञानाभावमात्रमुक्तं स्यात्, मिथ्येत्युक्ते भ्रान्तिज्ञानमिति स्यात्, तदुभयव्यावृत्त्यर्थं निरुच्य पदार्थौ दर्शयति—**मिथ्या च तदज्ञानं चेत्यादिना**॥

**ननु** कथं मिथ्याऽज्ञानमध्यासस्योपादानम्? तस्मिन्सत्यध्यासस्योदयादसति चानुदयादिति ब्रूमः॥ ननु अध्यासस्य प्रतिबन्धकं तत्त्वज्ञानं तदभावश्चाज्ञानमिति प्रतिबन्धकाभावविषयतयाऽज्ञानस्याध्यासेनान्वयव्यतिरेकावन्यथासिद्धौ, **नैतत्सारम्**;

**तत्त्वदीपनम्**

अध्यासस्याज्ञानोपादानत्वप्रदिदर्शयिषया "मिथ्याऽज्ञाननिमित्तः" इत्युक्तम्, तत्र भ्रान्तिज्ञाननिरासार्थं मिथ्या च तदज्ञानं चेति विग्रहमकरोत्, तत्र विशेषणवैयर्थ्यशङ्कां परिहरति—**तत्रेति**॥ नच—अभाव-भ्रान्तिज्ञानयोरन्यतरस्य कारणत्वं किं न स्यादिति—शङ्क्यम्; अभाव-भ्रान्तिज्ञानयोः समवायिकारणतायाः क्वचिदप्यदर्शनादित्यर्थः। मिथ्याऽज्ञानशबलेश्वरस्याधिष्ठातृत्वं संस्कारद्वारेणैवाज्ञानस्य निमित्तत्वं चेति दर्शयितुं **भाष्ये** निमित्तपदोपादानमिति द्रष्टव्यम्। अज्ञानमिति नञाऽभावत्वं प्रतीयते, तत् कथमनिर्वचनीयत्वम्? इति शङ्कायामुक्तम्—**ज्ञानमिति**॥ **अज्ञानपर्युदासेनोच्यत इति**॥ **(टीकायाम्)** ज्ञानान्यत्वे हेतुमाह—**जडात्मिकेति**॥ ज्ञानविरुद्धत्वादज्ञानमित्याह—**अविद्येति**॥ आत्मकारणत्वोपपिपादयिषया शक्तिरित्याह—**शक्तिरिति**॥

मानाभावान्न मिथ्याऽज्ञानस्याप्युपादानत्वमिति शङ्कते—**ननु कथमिति**॥ मिथ्याऽज्ञाननिमित्तत्वे न तावत्प्रत्यक्षं मानम्; अननुभवात्, नाप्यनुमानम्; व्याप्त्यसंप्रतिपत्तेः, नाप्यागमः; व्युत्थितं प्रति तदुपन्यासस्यानुचितत्वात्। नाप्यर्थापत्तिः; मिथ्याऽज्ञाननिमित्तत्वमन्तरेणानुपपद्यमानत्वस्याभावादित्यर्थः। 'शुक्त्यज्ञाने रजतभ्रमोदयः, इतरथा ने'त्यन्वय-व्यतिरेकाभ्यां तस्य रजतभ्रमोपादानत्वं सिद्धम्; तद्दृष्टान्तेनाऽहंकाराद्यध्यासस्याऽप्यज्ञाननिमित्तत्वं निश्चीयते—विमतः, अज्ञानोपादानः, अध्यासत्वात्, संमतवदित्यभिसन्धायाह—**तस्मिन् सतीति**॥

अज्ञानान्वयव्यतिरेकावन्यथासिद्धौ, ततश्च दृष्टान्तस्य साध्यवैकल्यमिति चोदयति—**नन्विति**॥ अन्वयव्यतिरेकौ प्रतिबन्धकाभावविषयतयाऽन्यथासिद्धावित्यन्वयः। किं तत्प्रतिबन्धकम्? कश्च तदभाव इत्याकाङ्क्षायामाह—**अध्यासस्येति**॥ **प्रतिबन्धकमिति**॥ उत्पत्तिविरोधीत्यर्थः। प्रतिबन्धकलक्षणविधुरत्वान्न ज्ञानस्य प्रतिबन्धकत्वमित्याह—**नैतत्सारमिति**॥

**ऋजुविवरणम्**

लक्षणकथनमिति न परोपाधिकत्वमिति भावः। अथवा कथमेकस्य भेदः? विरोधात्, इत्याशङ्क्याह—**परोपाधाविति**॥ प्रत्ययोपाधावित्यर्थः। ननु प्रत्ययोपाधिकोऽपि भेदो न सम्भवति; विषयसापेक्षत्वात्, इत्याशङ्क्याह—**विशिष्टेति**॥ ननु एकस्य कथं विशिष्टरूपेणापि भेदः? इत्याशङ्क्याह—**विशेषणभेदादिति**॥ तमेव विशिनष्टि—**अन्योन्यात्मतेत्यादिना**॥ यद्वा—परोपाधाविति विशिष्टत्वोपाधावित्यर्थः। वैशिष्ट्यभेदश्च विशेषणभेदादिति। यद्वा—अन्योन्यात्मत्वादिरूपेण विशिष्टस्यैव रूपभेदप्रतीतेः कथं प्रातीतिकालम्बनत्वमुच्येत? इत्याक्षिपति—**कथमिति**॥ एकस्यैवाध्यासस्य विशेषणभेदनिबन्धनवैशिष्ट्योपाधिको भेदः, न तु स्वरूपभेदोऽस्ति। विशेषणभेदो हि वैशिष्ट्यभेदापादकः, नतु स्वरूपभेदहेतुः; दण्ड-कुण्डलभेद इव देवदत्तस्वरूपस्य। स्वरूपभेदश्च ल्यप्प्रत्ययेनापेक्षितः, तदभावाच्चौपचारिकत्वमिति परिहाराभिप्रायः। **ननु** भवत्वेवं भेदः, तथापि कथं पूर्वापरीभाव इति? तदाह—**विशिष्टार्थप्रत्ययाश्चेति**॥

किमिति मिथ्याज्ञानपदं व्याख्यायते? प्रसिद्धार्थत्वात्, इत्याशङ्क्य तत्र समुदायप्रसिद्ध्या भ्रान्तिज्ञानमेव प्रतीयते, अवयवप्रसिद्ध्या द्वन्द्वसमासेनार्थान्तरम्, तत्र चान्यतरवैयर्थ्यशङ्का स्यात्, तद्व्युदासायेत्याह—**तत्राज्ञानमित्युक्त इति**॥

**ननु** कथमस्योपादानत्वमुच्यते? प्रमाणाभावात्, निमित्तशब्दविरोधाच्च। तथा च सति—"अज्ञानमि"ति 'जडात्मि-

## पञ्चपादिकाविवरणम्

पुष्कलकारणे हि सति कार्योत्पादविरोधि प्रतिबन्धकम्। न चाध्यासपुष्कलकारणे सति तत्त्वज्ञानं कार्यप्रतिबन्धकतया ज्ञायते। किन्तु असत्येव अध्यासकारणे तत्त्वज्ञानोदयः। तस्मान्नाज्ञानान्वयव्यतिरेकौ प्रतिवन्धकाभावविषयौ। तथापि विरोधिसंसर्गाभाव इति चेत्? न; कार्यस्य कारणापेक्षा हि प्रथममुत्पद्यते, न विरोधिसंसर्गाभावापेक्षा। तस्मात् प्रथमापेक्षितकारणक्लृप्तिमेवान्वयव्यतिरेकौ न्यायसहितौ कुर्वते।

ननु क्लृप्तं विषयेन्द्रियादिदोषः कारणमिति? **सत्यम्** निमित्तं तु तत्, उपादानापेक्षायामज्ञानमनुप्रविशति; सर्वं च कार्यम्, सोपादानम्, भावकार्यत्वात्, घटादिवदित्यनुमानात्, क्रिया-गुणादेरपि साश्रयस्यैवोत्पत्तेरुत्पद्यमानाश्रयस्यैवोपादानत्वात्।

## तत्त्वदीपनम्

प्रतिबन्धकलक्षणाभावं दर्शयितुं तल्लक्षणमाह—**पुष्कलेति**॥ विरोधि प्रतिबन्धकमित्युक्ते पूर्वज्ञानविरोध्युत्तरज्ञानेऽतिव्याप्तिः, तदर्थम्—**कार्योत्पादेति**॥ सामग्र्यभावं व्यावर्तयितुम्—**पुष्कलेति**॥ पुष्कलकारणे सति विरोधि प्रतिबन्धकमित्युक्ते पूर्वज्ञानविरोध्युत्तरज्ञानेऽतिव्याप्तिः, तदर्थम्—**कार्येति**॥ फलितमाह—**न चेति**॥ दोषस्याध्यासपुष्कलकारणान्तर्भावात्तस्मिन् सति तत्त्वज्ञानं नोत्पद्यते; निर्दुष्टेन्द्रियार्थसंप्रयोगलक्षणकारणाभावादित्यर्थः।

तत्त्वावबोधस्याध्यासाप्रतिबन्धकत्वेऽपि तन्निवर्तकतया विरोधित्वात्तदभावविषयतयाऽन्यथासिद्धावन्वयव्यतिरेकाविति चोदयति—**तथापीति**॥ संसर्गाभाव इत्यत्राज्ञानमिति शेषः। अपेक्षितानपेक्षितविषयत्वसंदेहेऽनपेक्षितविधेरपेक्षितप्रतिपादनमेवोचितमित्याह—**न कार्यस्येति**॥ न विरोधीत्यस्यायमर्थः—उत्पत्तेरूर्ध्वं निवर्तकाभावापेक्षोपलभ्यते, न प्रागिति। **न्यायसहिताविति**॥ अपेक्षितानपेक्षितविधानयोरपेक्षितविधानं बलवदिति न्यायः।

हेत्वपेक्षाया अन्यत एवोपशान्तत्वादन्वय-व्यतिरेकौ विरोध्यभावविषयाविति शङ्कते—**ननु क्लृप्तमिति**॥ विषयदोषः सादृश्यम्। इन्द्रियदोषः काचादिः। प्रमातृदोषः रागादिः। दोषस्य किं निमित्ततया क्लृप्तिः, उत उपादानतया? आद्यस्त्वङ्गीक्रियत इत्याह—**सत्यमिति**॥ द्वितीये दूषणमाह—**उपादानेति**॥ उपादानान्तरस्यानिरूपणादज्ञानमुपादानत्वेनोररीकरणीयमित्यभिसन्धिः।

ननु कार्यस्योपादानापेक्षाऽसिद्धा, प्रध्वंसे व्यभिचारादिति शङ्कामपवदति—**सर्वं चेति**॥ विमतम्, सोपादानम्, भावत्वे सति कार्यत्वात्, घटवत्। इत्यनुमानात् कार्यस्य उपादानापेक्षायामिति संबन्धः। उपादानं विनोत्पद्यमानक्रियादौ व्यभिचारित्वं हेतोः। न चाश्रयस्यैवोपादानत्वम्; तयोः सहोत्पद्यमानतयोपादानोपादेयत्वाऽनुपपत्तेरित्याशङ्क्याह—**क्रियागुणेति**॥ क्रियादिविशेषितत्वमादिशब्दार्थः। उत्पद्यमानस्य क्रियादेर्य आश्रयस्तस्येत्यर्थः। नच—सहोत्पन्नत्वात्तस्योपादानत्वमनुपपन्नमिति—शङ्क्यम्; क्षणमात्रमगुणं तिष्ठत्युत्पन्नमित्यङ्गीकारात् सहोत्पन्नत्वासिद्धेरित्यर्थः। अथवोत्पद्यमानस्य घटादेर्य आश्रयस्तस्य

## ऋजुविवरणम्

काऽविद्याशक्ति"रिति, तथा "तन्निमित्तः तदुपादानः" इति च व्याख्यानमसंबद्धमित्येकदेशिमतं मनसि निधाय चोदयति—**ननु कथं मिथ्येति**॥ सति शुक्त्यज्ञाने रजतज्ञानमुत्पद्यते, तदभावे नोत्पद्यते; एवमात्माज्ञाने सत्यहङ्कारादिरुत्पद्यते, तदभावे नोत्पद्यत इत्यन्वयव्यतिरेकौ प्रमाणमित्याह—**तस्मिन् सतीति**॥ भावरूपत्वमपि तत एव सिद्ध्यतीत्यभिप्रायः। **नन्वध्यासस्येति**॥ अनन्यथासिद्धावन्वयव्यतिरेकावुपादानत्वं गमयतः; अत्रान्यथासिद्धत्वान्नोपादानत्वमज्ञानस्य, तदभावे च न भावत्वमिति भावः। **तथापि विरोधीति**॥ मा भूत्प्रतिबन्धकाभावत्वमज्ञानस्य, विरोधिसंसर्गाभावो भविष्यति, ज्ञानस्याध्यासविरोधित्वात्तदभावस्यान्वयव्यतिरेकौ स्तः, जलाभावस्येवाग्निकार्ये इति भावः। **न कार्यस्येति**॥ अयमभिसन्धिः—अज्ञानं नाम प्रतीयते। अन्वयव्यतिरेकौ च तस्य स्तः। तौ किं विरोधिसंसर्गाभावविषयौ, उत कारणविषयाविति विशये, कार्यापेक्षया निर्णयः निर्णायकान्तराभावात्। कार्यं च कारणमेवापेक्षत इति कारणत्वमेव तस्येति भावः। न्यायोऽपि कार्यापेक्ष एव। **ननु क्लृप्तं विषयेन्द्रियेति**॥ कार्यापेक्षायाः क्लृप्तकारणान्तरेणापसारितत्वान्न तदपेक्षयाऽन्वयव्यतिरेकयोः कारणविषयत्वमिति भावः। ननु उपादानापेक्षैव नास्ति; निमित्तमात्रादपि कार्यसम्भवात्, अतस्तदपेक्षया नाज्ञानस्य निवेश इत्याशङ्क्याह—**सर्वं च कार्यमिति**। **ननु** क्षणिकद्रव्यगता क्रिया गुणादि चोपादानशून्यमेवोत्पद्यते; अनुत्पन्नस्योपादानत्वायोगात्, उत्पन्नस्योपादानत्वे क्षणं निर्गुणत्वप्रसङ्गात्, निराश्रयोत्पत्तिप्रसङ्गाच्च, **यद्वा**—स्थायिद्रव्यस्य नोत्पन्नस्योपादानत्वम्; धर्मशून्यावस्थासद्भावे प्रमाणा-

## पञ्चपादिकाविवरणम्

**ननु** आत्माऽन्तःकरणं वा भ्रान्तिज्ञानोपादानं भविष्यति ? **न**; आत्मनोऽपरिणामित्वात्; अन्तःकरणस्य चेन्द्रियसंयोगादिसापेक्षत्वात्। मिथ्यार्थे च प्रत्ययमात्रविपरिवर्तिनि तदयोगात्, अधिष्ठानज्ञानेनान्यथासिद्धत्वाच्च तदन्वयव्यतिरेकयोः; अन्तःकरणस्य जडत्वादज्ञातृत्वात्, आत्मनोऽभ्रान्तत्वप्रसङ्गाच्च।

तस्मान्मिथ्यार्थ-तज्ज्ञानात्मकं मिथ्याभूतमध्यासमुपादानकारणसापेक्षं प्रत्यनाश्रयस्थानतया काचादिनिमित्तकारणेषु-

## तत्त्वदीपनम्

मृदादेरुपादानत्वम्। नच—मृदादेरुपादानत्व उत्पद्यमानाश्रयतयोपलम्भो न स्यादिति—शङ्क्यम्; उपादानोपादेययोरव्यतिरेकादित्यर्थः॥

कार्यस्य सोपादानत्वनियममङ्गीकृत्याज्ञानस्योपादानत्वमाक्षिपति—**नन्विति**॥ भावरूपस्याज्ञानस्याऽप्रसिद्धस्योपादानत्वकल्पनाद् वरं प्रसिद्धस्यात्मादेरेवोपादानत्वकल्पनमित्यर्थः। आत्मादेरुपादानत्वानुपपत्तेरुपादानान्तरं कल्प्यमित्याह—**नेति**॥ यथाऽऽत्मा सुखादेरुपादानम्, तथा भ्रान्तेरपि स्यादित्याशङ्क्याह—**आत्मन इति**॥ किं केवलस्योपादानत्वम्, उताविद्योपहितस्य ? नाद्यः; निरवयवद्रव्यत्वेन परिणामायोग्यत्वात्। द्वितीये मदिष्टसिद्धिः। निदर्शनमप्यसम्मतमित्यर्थः; उक्तदोषाभावात्। अन्तःकरणमुपादानं स्यादित्याशङ्क्य, किमिन्द्रियसंयोगमनपेक्ष्य ? उताऽपेक्ष्य ? नाद्य इत्याह—**अन्तःकरणस्येति**॥ 'परतन्त्रं बहिर्मनः' इत्यभ्युपगमादिन्द्रियसंयोगानपेक्षितत्वमनुचितमित्यर्थः। द्वितीयं दूषयति—**मिथ्येति**॥ प्रत्यये सत्येव विपरिवर्तते तिष्ठति तथोक्तम्, तस्मिन्नित्यर्थः। प्रतिभासमात्रशरीरस्य समारोपितस्य प्रतिभासात्प्रागसत्त्वादिन्द्रियसंयोगायोग इत्यर्थः॥

मिथ्याज्ञानस्यानिन्द्रियजन्यत्वे इन्द्रियान्वयव्यतिरेकानुविधानविरोधमाशङ्क्याह—**अधिष्ठानेति**॥ अधिष्ठानसामान्यबोधमन्तरेण भ्रमानुपपत्तेस्तद्विषयत्वेनान्यथासिद्धिरित्यर्थः। इतश्चान्तःकरणं नोपादानमित्याह—**अन्तःकरणस्येति**॥ ज्ञानस्यान्तःकरणपरिणामत्वेन तदाधारत्वं वक्तव्यम्। नच तत्सम्भवति। तथाहि—किं केवलस्यान्तःकरणस्याधारत्वम् ? उत चिदध्यस्तस्य ? नाद्यः; जडत्वात्, द्वितीये चिदध्यासस्तादात्म्यस्फुरणम्, तदात्म्यं च गगनप्रसूनायमानमिति कथमपरोक्षप्रथामियादित्यर्थः। इतोऽपि न केवलस्योपादानत्वमित्याह—**आत्मन इति**॥ अज्ञान-भ्रम-सम्यग्ज्ञानानामेकाश्रयत्वं नियतम्। तत्र भ्रान्तेरन्तःकरणाश्रयत्व आत्मनि तदभावात्सम्यग्बोधत्वबन्धनिवृत्त्योरपि तदाश्रयत्वं न स्यादिति नित्यमुक्तत्वमापतेदित्यर्थः॥

आत्माऽन्तःकरणयोरनुपादानत्वसाधनफलमाह—**तस्मादिति**॥ तस्मान्मिथ्याऽज्ञानमेवाध्यासोपादानमिति सम्बन्धः। दोषान्वयव्यतिरेकाभ्यां दोषस्यैवोपादानत्वं किं न स्यात् ? इत्याशङ्क्याऽन्यथासिद्धिमाह—**काचादीति**॥ बहिरङ्गनिमित्तविषयत्वकल्पनाद् वरं तस्यान्तरङ्गोपादानविषयत्वकल्पनमित्याशङ्क्याह—**अध्यासं प्रत्यनाश्रयस्थानतयेति**॥ आश्रयतया स्थानं स्थितिर्न येषां तान्यनाश्रयस्थानानि, तेषां भावस्तत्ता, तयेति यावत्। दोषाश्रयत्वेनाध्यासस्यानुपलम्भान्न दोषोपादानत्वमित्यर्थः॥ अज्ञानस्य मिथ्याज्ञानाश्रयत्वेनानुपलम्भेऽप्युपादानत्ववत् काचादेरपि तथात्वमित्याशङ्क्यायोग्यत्वान्नेत्याह—

## ऋजुविवरणम्

भावात्, सहोत्पत्तौ चासत्त्वेनोपादानत्वायोगान्निरुपादानमेवोत्पद्यत इति, कार्यत्वमनैकान्तिकमित्याशङ्क्याह—**क्रियागुणादेरपीति**।

**अन्तःकरणस्य चेति**॥ बाह्यविषय एवं तर्हीन्द्रियसंयोगसहकृतमेवान्तःकरणं भवत्विति, नेत्याह—**मिथ्यार्थे चेति**॥ ननु इन्द्रियान्वय-व्यतिरेकानुविधायित्वं मिथ्याज्ञानस्य दृश्यते, तत् कथमिन्द्रियव्यापारासम्भव इति ? तत्राह—**अधिष्ठानज्ञानेनेति**॥ तत्र मिथ्यार्थेऽन्तःकरणस्येन्द्रियसापेक्षत्वमपि नास्ति, तेन विना स्वप्नज्ञानदर्शनात्, इत्याशङ्क्याभ्युपगम्य दूषणमाह—**अन्तःकरणस्येति**॥ अन्तःकरणस्य ज्ञानाकारपरिणामेऽपि न तेन विषयव्यवहारः; ज्ञातृत्वशून्यत्वादिति भावः। मा भूदन्तःकरणस्य ज्ञातृत्वम्, आत्मनस्तु स्यादिति, **अथवा**—ज्ञातृत्वं ज्ञानकर्तृत्वम्, तच्चान्तःकरणस्यास्त्येवेत्याशङ्क्याह—**आत्मन इति**॥ आश्रयत्वाभावादिति भावः।

**तस्मादिति**॥ पारिशेष्यान्मिथ्याऽज्ञानमेवाध्यासोपादानमित्युपसंहरति। ननु अर्थ-ज्ञानयोः परस्परोपादानत्वं

## पञ्चपादिकाविवरणम्

भिद्यमानेषु मिथ्याभूतस्यैव सर्वकार्यस्वभावानुकूलस्य सर्वत्रानुगमादज्ञानस्यात्माश्रयतया भ्रान्तिज्ञानाश्रयकोटिनिक्षिप्तत्वाच्च मिथ्याज्ञानमेवाध्यासोपादानम्, नात्मान्तःकरण-काचादि-दोषा इति सूक्तम् ॥ आत्माश्रयाध्यासस्य शुक्तिकासंसर्गो विभ्रम इति वक्ष्यते ।

एकस्यैवाध्यासस्य नैसर्गिकत्वं नैमित्तिकत्वं च विरुद्धमिति चोदयति—**कथं पुनरिति** ॥ तत्र प्रथमं तावदध्यास-

## तत्त्वदीपनम्

**मिथ्याभूतमिति** ॥ दोषस्य सत्यत्वादध्यासस्य च तद्वैपरीत्यान्न तयोरुपादानोपादेयतेत्यर्थः । मिथ्यात्वे हेतुमाह—**मिथ्यार्थेति** ॥ अर्थस्य मिथ्यात्वात्तज्ज्ञानमपि मिथ्येत्यर्थः । उपादानस्यावश्यम्भावित्वमुक्तं स्मारयति—**उपादानेति** ॥ **अथवा**—मिथ्यात्वेऽपि सत्योपादानत्वं किं न स्यात्? इत्याशङ्क्याह—**उपादानेति** ॥ उपादानस्य सत्यत्वे तत्कार्यस्यापि सत्यत्वं स्यात्; तयोरभेदादित्यर्थः । इतोऽपि तेषामनुपादानत्वमित्याह—**भिद्यमानेष्विति** ॥ व्यावृत्तेषु अननुगतेष्विति यावत् । काच-कामलादि-दोषाणां परस्परव्यभिचारित्वात् कार्येऽननुगतत्वाच्च नोपादानत्वमित्यर्थः । अज्ञानकारणवादे नोक्तदोषानुषक्तिरित्याह—**मिथ्याभूतस्येति** ॥ सत्यत्वे ज्ञाननिवर्त्यत्वं न स्यादित्येवकारार्थः । ततश्च तस्योपादानत्वमुचितमित्याह—**सर्वकार्येति** ॥ सर्वभ्रमानुसारित्वादपि तदेवोपादानमित्याह—**सर्वत्रेति** ॥ अज्ञानम्, न भ्रान्त्युपादानम्, तदनाश्रयत्वात्; काचादिवद् इत्याशङ्क्याह—**अज्ञानस्येति** ॥

कथं तर्ह्यात्माश्रयतया स्फुरणमित्याशङ्क्याज्ञानस्यात्मन्यध्यस्तत्वात्तज्जन्यस्यापि तन्निष्ठतया स्फुरणं संगतमित्याह—**आत्माश्रयतयेति** ॥ एवकारव्यावृत्यर्थमाह—**नात्मेति** ॥ ज्ञानाध्यासस्यात्माश्रयत्वेऽपि कथमर्थाध्यासस्य तदाश्रयत्वम्? इदं रूप्यमिति बहिरुपलम्भादित्याशङ्क्य, शुक्तीदमंशावच्छिन्नचैतन्यमोहकार्यत्वात्समारोपितस्य शुक्त्याद्याश्रयतया विभ्रमत्वादित्याह—**आत्माश्रयेति** ॥ (टीकायां) "को वा ब्रूते नान्तरि"त्यत्र वक्ष्यत इत्यर्थः ॥

कथं पुनरित्यत्र कथंशब्दस्याक्षेपार्थतामाह—**एकस्यैवेति** ॥ नच—प्रवाहरूपेणानादित्वस्याभिहितत्वान्न विरोधोक्तिरिति—शङ्क्यम्; टीकायां वक्ष्यमाणार्थमाकृष्य नैसर्गिकपदव्याख्यानोपयोगितया विवरणकार आह स्मेत्यपौनरुक्त्यादित्यर्थः ॥ विरोधे चोदिते तमनिरस्याविद्यासाधनमसंगतमित्याशङ्क्य, किं—निमित्ताधीनाभिव्यक्तिकत्वं नैमित्तिकत्वमित्यङ्गीकृत्य विरोधं

## ऋजुविवरणम्

भवतु, किमज्ञानेनेत्याशङ्क्याह—**मिथ्यार्थतज्ज्ञानात्मकमिति** ॥ अर्थ-ज्ञानयोः सहभावित्वान्न परस्परोपादानत्वम्; अर्थ-ज्ञानात्मकत्वादेव, संस्काराद्युपादानत्वायोगाच्च । यद्वा—'**मिथ्यार्थे**'त्यनेन शुक्तिकादिख्यात्यन्तरोक्तकारणव्यवच्छेदः, **मिथ्याभूतमित्यनेन** स्वाभिप्रेतस्वरूपमिथ्यात्वप्रदर्शनम्, तेनोपादानान्तरेण भवितव्यमिति भावः । यद्वा—"मिथ्यार्थतज्ज्ञानात्मकमि"-त्यनेनोभयात्मके तत एव स्वरूपतो मिथ्याभूते तद्रूपपरिणामे शक्तकारणेन भवितव्यमित्युक्तम् । "ननु क्लृप्तमि"त्यादिना शङ्किताधिष्ठानज्ञानाभावादीनामसम्भवप्रदर्शनाय तर्ह्युपादाननिरपेक्षं तदस्त्वित्याशङ्क्याह—**उपादानकारणसापेक्षमिति** ॥ कादाचित्कत्वादिति भावः । काचादीनां निमित्तत्वम्, नोपादानत्वमित्युक्तम्, न हेतुर्निदर्शितः अत उपसंहारे दर्शयति इति न दोषः । तर्हि काचादीनामुपादानत्वमस्तु, कथं निमित्तत्वमेवेति? नेत्याह—**अनाश्रयस्थानेति** ॥ न विद्यत आश्रयतया स्थानं स्थितिर्येषाम्, तान्यनाश्रयस्थानानि; तेषां भावस्तत्ता, अनाश्रयस्थानता, तयाऽनाश्रयस्थानतयेति । **यद्वा**—न विद्यत आश्रये स्थानं येषाम्, तानि अनाश्रयस्थानानीति विग्रहः । आश्रयतयाऽध्यासाश्रयगतत्वेन वाऽप्रतिभासादित्यर्थः । ननु अन्वयव्यतिरेकाभ्यामुपादानत्वं निश्चीयत इति, नेत्याह—**निमित्तकारणेष्विति** ॥ अन्यथासिद्धावन्वयव्यतिरेकाविति भावः । **ननु** अभ्यर्हितत्वादुपादानविषयाविति, नेत्याह—**भिद्यमानेष्विति** ॥ अनेकत्वेनानियतत्वादतदात्मकत्वेन वा नोपादानत्वमिति भावः । ननु भिन्नानामेव काचादीनां कस्यचित्कस्मिंश्चित्कार्य उपादानत्वं भवतु, क्लृप्तत्वात्, अन्यस्य चाक्लृप्तत्वादित्याशङ्क्याह—**मिथ्याभूतस्यैवेति** ॥ काचादीनामनुगमाभावादिति भावः । **अथवा**—अज्ञानस्याप्युपादानत्वं कथं कल्प्यते, कल्पकाभावादिति? तत्राह—**मिथ्याभूतस्यैवेति** ॥ मिथ्याभूतस्यैवेति वक्तुं न शक्यते; अन्येषामप्यनुगमदर्शनादित्याशङ्क्याह—**स्वभावानुकूलस्येति** ॥ तर्हि आत्मनोऽभ्रान्तत्वम्, भ्रान्त्याश्रयत्वाभावादिति? तत्राह—**अज्ञानस्यात्माश्रयतयेति** ॥ ननु इदमिति पुरोवर्तित्वेन

## पञ्चपादिका

**कथं पुनर्नैमित्तिकव्यवहारस्य नैसर्गिकत्वम्? अत्रोच्यते; अवश्यमेषाऽविद्याशक्तिर्बाह्याऽध्यात्मिकेषु वस्तुषु**

## पञ्चपादिकाविवरणम्

प्रवाहजन्मनोपादानकारणरूपेण नैसर्गिकत्वं, कार्यव्यक्तिरूपेण नैमित्तिकत्वमित्यविरोधं दर्शयितुमात्मनि भावरूपमज्ञानं साधयति—**अवश्यमेषाऽविद्याशक्तिरिति** ॥ 'अवश्यमि'ति, 'एषेति' च प्रमाणद्वयवत्तामाह। प्रत्यक्षं तावत्, 'अहमज्ञः' 'मामन्यं च न जानामी'त्यपरोक्षावभासदर्शनात्।

## तत्त्वदीपनम्

चोदयसि? उत प्रागसतो निमित्ताधीनसत्तावत्त्वम्? इति विकल्प्य, आद्ये न विरोध इत्याशयं स्पष्टयति—**तत्रेति** ॥ विरोधे चोद्य इति यावत्। **कारणरूपेण** ॥ कारणस्य यद् रूपं स्वभावस्तदात्मनेत्यर्थः। कारणरूपेण कथं नैसर्गिकत्वम्? तदात्मताया एवासिद्धेरित्याशङ्क्याह—**अध्यासेति** ॥ अध्यासस्य प्रवाहेण जन्म यस्मात्, तत् तथानिर्दिष्टमध्यासस्य प्रवाहरूपेण जन्म, अध्यासप्रवाहजन्म; तेन हेतुनेति विग्रहो वा। अध्यासस्योपादानात्मतासिद्धेः, तस्माज्जन्माऽनुपपत्तेस्तदात्मत्वमित्यर्थः। प्रवाहरूपेणापि अनादित्वं घटयितुं शक्यत इत्याशयेनोक्तम्—**प्रवाहेति** ॥ "अन्यथा मिथ्यार्थावभासानुपपत्तेरि"त्यत्र हेतोर्वक्ष्यमाणत्वाद् "अवश्यमेषे"ति पदद्वयवैयर्थ्यमाशङ्क्याह—**अवश्यमिति** ॥ प्रमाणान्तरस्याभिधीयमानत्वान्न वैयर्थ्यम्। तत्रावश्यमिति पदादनुमानं सूचितम्, एषेति प्रत्यक्षमिति प्रमाणद्वयवत्त्वमाहेत्यर्थः। प्रत्यक्षस्य ज्यैष्ठ्यात्प्रथमं तदाह—**प्रत्यक्षमिति** ॥ 'अहमज्ञ' इत्यज्ञानाश्रयत्वेन 'मामन्यं च न जानामी' त्यात्मानात्मकर्मकाऽबोधाश्रयत्वेनात्मन्यपरोक्षप्रतीतिदर्शनादज्ञानस्य सत्त्वमनात्मनस्त्वज्ञानकर्मत्वमनुभवमवलम्ब्योक्तम्, न वस्तुत इत्यर्थः।

## ऋजुविवरणम्

रजतं प्रतीयते, तत्कथमात्माश्रयाज्ञानोपादानत्वमिति? तत्राह—**आत्माश्रयस्यैवेति** ॥

"कथं पुनरि"त्यनेन नैसर्गिकत्वं नैमित्तिकत्वं च विरुद्धमिति कथमाक्षिप्यते? प्रवाहरूपेण नैसर्गिकस्योक्तत्वादित्याशङ्क्याह—**एकस्यैवेति** ॥ प्रवाहरूपेण नैसर्गिकत्वं बहूनामेव भवेत्, नैकैकस्येति भावः। अध्यासस्य नैसर्गिकत्वं नैमित्तिकत्वं चोक्तम्, लोकव्यवहारशब्दश्च तत्परत्वेन व्याख्यातः, अतोऽध्यास एव न विवक्षित इत्याशङ्क्याह—**अध्यासस्येति** ॥ कथमित्यस्याक्षेपार्थत्वं दर्शयति—**विरुद्धमितीति** ॥ एतदुक्तं भवति—पूर्वं कार्यस्य कादाचित्कस्वभावस्य कथं नैसर्गिकत्वमिति पृष्टे, प्रवाहरूपेणेति परिहार उक्तः; इदानीमेकव्यक्तौ विरुद्धधर्मसमावेशासम्भवेन चोद्यमिति भेदः। अतः प्रकारान्तरमपि परिहारे वक्ष्यामः। **अवश्यमेषेत्यनेन** अविद्यासाधनं कृतम्, तदसंगतम्; प्रकृतचोद्यपरिहारस्य प्रस्तुतत्वादित्याशङ्क्याभिप्रायमाह—**तत्र प्रथममिति** ॥ अनेकाश्रयप्रवाहस्यैकाश्रयत्वमप्यस्तीति तेन रूपेण चोद्यस्य परिहृतप्रायत्वं मनसि निधायाह—**अध्यासप्रवाहजन्मनेति** ॥ पूर्वमविच्छेदेन वर्तमानकार्यपरम्पराऽपलापो न शक्यः कर्तुमित्युक्तम्, न तु व्यतिरिक्तप्रवाहो निरूपितः, तेन न विरोधः। प्रवाहः—परम्परा, तस्या जन्म यस्य संस्कारस्य, प्रवाहस्य वा जन्म यस्मादिति संस्कारो विवक्षितः, तेन विनोपादानरूपेण स्थित्ययोगात्। **यद्वा**—न कारणरूपेण नैसर्गिकत्वमुक्तं सम्भवतीत्याशङ्क्याह—**अध्यासप्रवाहजन्मनेति** ॥ अध्यास एव प्रवाहः, अध्यासप्रवाहः; तस्य जन्म येन, तदध्यासप्रवाहजन्मेति। अनादिपरम्पराकारणस्य न्यायतोऽनादित्वात्तद्रूपेण नैसर्गिकत्वसम्भवप्रदर्शनार्थं प्रवाहजन्मनेत्युक्तम्। **यद्वा**—प्रवाहस्य प्रवाहिव्यतिरेकेणानिर्वाहाद् न तेन रूपेण नैसर्गिकत्वम्। **यद्वा**—अध्यासस्य प्रवाहोऽध्यासप्रवाहः, तस्य जन्म येन, तदध्यासप्रवाहजन्मेति प्रवाहस्य व्यतिरेकेऽपि प्रवाहिजन्मनैव जन्यत्वान्न तेन जन्यरूपेण नैसर्गिकत्वमिति। **यद्वा**—प्रवाहरूपेणापि नित्यत्वमनुगतोपादानमन्तरेण न निर्वहति; तेन विना निमित्तनैमित्तिकभावमात्रेण प्रवाहानुपपत्तेर्वैजात्यात्। **यद्वा**—पूर्वं प्रवाहरूपेण नैसर्गिकत्वमुक्तम्, इदानीमुपादानरूपेणेति परिहारभेदादपौनरुक्त्यम्। टीकाकारेण वा पूर्वं न चोद्य-परिहारौ कृताविति। ननु अवश्यमभ्युपगन्तव्येत्युक्ते कथमज्ञानसिद्धिः? प्रमाणानुपन्यासात्। नच—"अन्यथा मिथ्यार्थावभासानुपपत्तेरि"त्यनेन प्रमाणमुक्तम्, अतस्तच्छेषोऽयं ग्रन्थः प्रतिज्ञामात्रसमर्पणेनेति—युक्तं वक्तुम्; अवश्यपदवैयर्थ्यात्। अवश्यपदं ह्युक्तप्रमाणादधिकं द्योतयति। अन्यथा ह्यावश्यकत्वाभावादित्याशङ्क्याह—**अवश्यमिति। प्रमाणद्वयवत्तामिति** ॥ शब्दार्थापत्त्योः स्वयमेव वक्ष्यमाणत्वादुप-

## पञ्चपादिकाविवरणम्

**ननु** ज्ञानाभावविषयोऽयमवभासः ? **न** अपरोक्षावभासत्वादहं सुखीतिवत्, अभावस्य च षष्ठप्रमाणगोचरत्वात् प्रत्यक्षाभाववादिनोऽपि नात्मनि विज्ञानाभावावगमः सम्भवति; 'मयि ज्ञानं नास्ती'तिप्रतिपत्तावात्मनि धर्मिणि प्रतियोगिनि चार्थेऽवगते तत्र ज्ञानसद्भावाद् ज्ञानाभावप्रतिपत्त्ययोगात्, अनवगतेऽपि धर्म्यादौ सुतरामभावानवगमात्, षष्ठप्रमाणगोचरे फललिङ्गाभावानुमेयेऽपि ज्ञानाभावे, आत्मादाववगतेऽनवगतेऽप्यात्मनि ज्ञानाभावप्रतिपत्त्ययोगात्। इह च "त्वदुक्तमर्थं सङ्ख्यां वा शास्त्रार्थं वा न जानामी"ति विषयव्यावृत्तमज्ञानमनुभूय तच्छ्रवणादौ प्रवर्तते। भावरूपाज्ञानप्रत्यक्षवादे तु सत्यप्याश्रयप्रतियोगिज्ञाने ज्ञानाभावस्येव भावान्तरस्यापि नानुपपत्तिर्नियन्तुं शक्यते। नचाश्रयप्रतियोगिज्ञानभूतमपि साक्षिचैतन्यं भावान्तरस्या-

## तत्त्वदीपनम्

प्रत्यक्षस्याभावविषयत्वेनाप्युपपत्तेर्न भावरूपाविद्यासिद्धिरित्याह—**ननु ज्ञानेति**॥ विमतः, नाभावविषयः, अपरोक्षत्वात्, अहं दुःखीति प्रत्ययवदित्यनुमानविरोधान्नाभावविषयत्वं तस्येत्याह—**नापरोक्षेति**॥ विपक्षे बाधकाभावादप्रयोजकत्वमित्याशङ्क्य, किमेतत् षष्ठप्रमाणवादिनाम् ? उत प्रत्यक्षाभाववादिनाम् ? तत्राद्यं दूषयति—**अभावस्येति**॥ योग्यत्वे सत्यनुपलब्ध्याख्यषष्ठप्रमाणविषयत्वेनाभावस्य पारोक्ष्यम् ततश्चाभावप्रत्ययस्यापरोक्षत्वभङ्गो बाध इत्यर्थः। द्वितीयं प्रत्याह—**प्रत्यक्षेति**॥ कथमसंभव इति शङ्कायाम्—किं धर्मिप्रतियोगिनावनुभूय ज्ञानाभावमनुभवसि ? उताननुभूयेति विकल्प्याऽऽद्यं प्रत्याह—**मयीति**॥ द्वितीयं दूषयति—**अनवगत इति**॥ धर्म्यादिप्रतिपत्तौ ज्ञानाभावोऽनुभूयते, न धर्म्याद्यप्रतिपत्तावित्यर्थः। धर्म्यादिप्रतिपत्तेरभावप्रतिपत्तिकारणत्वात्तदभावे कार्याभाव इति किमु वक्तव्यमित्यभिप्रेत्य—**सुतरामिति**॥ धर्मिप्रतियोगिप्रतिपत्त्यप्रतिपत्त्योरित्युक्तं दोषं षष्ठप्रमाणवादिमतेऽतिदिशति—**षष्ठप्रमाणेति**॥ मतान्तरेऽप्येतत्तुल्यमित्याह—**फलेति**॥ अर्थेन सहानुभूयमानत्वादप्यज्ञानं न ज्ञानाभाव इत्याह—**इहेति**॥ लोके 'त्वदुक्तमर्थं न जानामी' त्यज्ञानमनुभूय प्रवर्तत इति सम्बन्धः। अर्थे विज्ञातेऽपि तद्गतसंख्याज्ञानाऽभावाभिप्रायेण व्यपदेशसंभव इत्याशङ्क्य निदर्शनान्तरमाह—**संख्यामिति**॥ संख्यायां संख्यान्तराभावात्संख्यां न जानामीत्युक्तेः संख्याज्ञानाभावविषयत्वं विरुद्धमित्यर्थः। तत्रापि परोक्षतया ज्ञातेऽपरोक्षज्ञानाभावाभिप्रायेण व्यपदेशोपपत्तिमाशङ्क्य, नित्यपरोक्षापूर्वादौ व्यपदेशस्यापरोक्षज्ञानाभावाभिप्रायत्वानुपपत्तेर्मैवमित्याह—**शास्त्रेति**॥ जानन्नेव न जानामीति ब्रूते परपरीक्षार्थम्, न त्वज्ञानसंभवात्, इत्याशङ्क्य, श्रवणगुरुशुश्रूषाद्यनुपपत्त्या तत्राज्ञानं कल्प्यत इत्याह—**तच्छ्रवणादाविति**॥ अर्थज्ञान-तदभावयोर्यथा न समकालत्वम्, तद्वत्तदज्ञानतज्ज्ञानयोरपि। एतदज्ञानम्, नैतज्ज्ञानसमकालीनम्, एतदज्ञानत्वात्, एतज्ज्ञानाभाववदित्याशङ्क्याप्रयोजकत्वेन परिहरति—**भावरूपाज्ञानेति**॥ भावाभावयोः खल्वेककालत्वं विरुद्धम्, न तु भावयोः; न हि घटभावे पटभावानुपपत्ति-

## ऋजुविवरणम्

मानाभावयोरयोग्यत्वाच्चेति भावः। तत्र ज्येष्ठत्वात् प्रत्यक्षं तावदाह—**प्रत्यक्षं तावदिति**॥ "अहमज्ञ" इत्यात्माश्रयत्वे प्रमाणम्। तावन्मात्रेणात्मविषयत्वासिद्धेरात्मविषयत्वे प्रमाणमाह—**मामिति**॥ कर्मत्वनिर्देशाद्विषयत्वं प्रतीयत इत्यर्थः। विषयस्यापि केवलविषयत्वे भङ्ग्यन्तरेण विषयत्वे च प्रमाणमाह—**अन्यं चेति**॥

**ननु ज्ञानाभावेति**॥ धर्मिप्रतियोगिसापेक्षत्वादिति भावः। 'अहं सुखी'त्यस्याप्यपरोक्षत्वम्। अहंसामानाधिकरण्यादिति भावः। भवत्वपरोक्षोऽप्यभावावभास इति, नेत्याह—**अभावस्येति**॥ भवतु षष्ठप्रमाणत्वपक्षेऽनवभासः, इन्द्रियान्वयव्यतिरेकाभ्यां प्रत्यक्षत्वमपि वदन्ति, तत्र कथम् ? इत्याशङ्क्याह—**प्रत्यक्षाभाववादिनोऽपीति**॥ तत्रापि धर्मिप्रतियोगिज्ञानमस्ति वा ? न वा ? प्रथमपक्षे दूषणमाह—**मयि ज्ञानमिति**॥ द्वितीयपक्षे दूषणमाह—**अनवगतेऽपीति**॥ ननु ज्ञानमपि ज्ञाते विषयेऽनुभूयते ? अज्ञाते वा ? न ज्ञाते; विरोधात्; नाज्ञाते, ममात्राज्ञानमिति व्यावृत्तावगमायोगात्। अतश्चाहमज्ञ इति प्रतीतिरेव नास्ति, कथं तत्सिद्धिरित्याशङ्क्याह—**इह च त्वदुक्तमर्थमिति**॥ अत्र लौकिक-तार्किक-मीमांसकान् प्रति यथासंख्येनासाधारणमुदाहरणत्रयम्। **यद्वा**—वस्तुमात्र-धर्म-वस्तुविशेषव्यावृत्तावुदाहरणत्रयम्। **यद्वा**—साधारणासाधारणरूपेण गृहीते वस्तुनि प्रामाणिकबोधोत्पत्तेः प्राग् नाज्ञाननिवृत्तिरिति दर्शनार्थं शास्त्रार्थं वेत्युक्तम्। प्रतीतिस्तावदस्ति, तदन्यथानुपपत्त्या च कारणं कल्पनीयम्, न तु कारणाभावेन तदपलापो युज्यत इति भावः। तत्रेयं प्रतीतिराश्रयविषयप्रतीतिसापेक्षा यथा नाभावं गमयति, एवमज्ञानमपि; आश्रयप्रतियोगिज्ञाने तस्य स्थित्ययोगादिति, तत्राह—**भावरूपाज्ञानेति**॥ भावान्तर-

## पञ्चपादिकाविवरणम्

ज्ञानस्य निवर्तकम्; तस्याज्ञानविषयप्रतिभासत्वात्। नहि स्वज्ञानेनैव स्वयं निवर्तते। ननु अज्ञानस्य व्यावर्तको विषयः कथं साक्षिचैतन्येनाभास्यते, प्रमाणायत्तत्वाद्विषयसिद्धेरिति? **उच्यते**। सर्वं वस्तु ज्ञाततया वाऽज्ञाततया वा साक्षिचैतन्यस्य विषय एव। तत्र ज्ञाततया विषयः प्रमाणव्यवधानमपेक्षते, अन्यस्तु सामान्याकारेण विशेषाकारेण वाऽज्ञानव्यावर्तकतया सदा भासत इत्युपपत्तिसहितमज्ञानप्रत्यक्षं भावरूपमेवात्मन्यज्ञानं गमयतीति सिद्धम्॥

अनुमानमपि—विवादगोचरापन्नं प्रमाणज्ञानं, स्वप्रागभावव्यतिरिक्त-स्वविषयावरण-स्वनिवर्त्य-स्वदेशगत-

## तत्त्वदीपनम्

रित्यर्थः। एतदज्ञानम्, नैतज्ज्ञानसमकालीनम्, एतज्ज्ञाननिवर्त्यत्वाद्, एतज्ज्ञानप्रागभाववदित्याशङ्क्य, किं ज्ञानशब्देन वृत्तिर्विवक्ष्यते, उत साक्षी? नाद्यः; सिद्धसाध्यत्वादित्यभिप्रेत्य द्वितीयेऽसिद्धिमाह—**नचेति**॥ विमतम्, नाज्ञाननिवर्तकम्, तत्स्फोरकत्वात्, यद् यत्स्फोरकं न तत् तन्निवर्तकम्, यथा घटज्ञानमित्यर्थः। विपक्षे बाधकमाह—**न हीति**॥ घटज्ञानेन घटस्यापि निवृत्तिप्रसङ्गादित्यर्थः। असिद्धो हेतुरिति शङ्कते—**नन्विति**॥ किं साक्षिचैतन्यं घटविशेषिताज्ञानं भासयति? उत केवलम्? नाद्यः; विषयस्य प्रमाणगम्यत्वनियमात्, अन्यथा प्रमाणवैयर्थ्यात्। नेतरः; अज्ञानमित्यप्रतीतेरित्यर्थः। केवलस्य साक्षिवेद्यत्वाभावेऽपि विशिष्टस्य साक्षिवेद्यत्वादज्ञानस्फोरकत्वं सिद्धमित्याह—**उच्यत इति**॥ न च प्रमाणवैयर्थ्यमपीत्याह—**तत्र ज्ञाततयेति**॥ प्रमाणानां ज्ञातताजनकत्वाद् न वैयर्थ्यमित्यर्थः। न च—केवलस्य साक्षिवेद्यत्वाभावे विशिष्टस्यापि न साक्षिवेद्यत्वमिति—वाच्यम्; केवलपरमाणोर्मानसप्रत्यक्षत्वाभावेऽपि 'परमाणुमहं न जानामि' इति ज्ञानविशेषणतया प्रत्यक्षविषयत्वोपगमादित्यर्थः। ज्ञातताविशिष्टस्य प्रमाणव्यवधानेन चिद्भास्यत्वे विषयत्वाविशेषादज्ञातताविशिष्टस्यापि सव्यवधानत्वमित्याशङ्क्याह—**अन्यस्त्विति**॥ अज्ञातताया अनादित्वान्न तज्जनने प्रमाणापेक्षा; नापि तद्बोधने, विरोधात्; तस्मात्साक्षात्साक्षिवेद्यत्वमित्यर्थः। अज्ञानस्य प्रत्यक्षतां निगमयति—**इतीति**॥ धर्मिप्रतियोगिप्रतिपत्त्यप्रतिपत्त्योर्न ज्ञानाभावप्रतिपत्तिरित्युपपत्तिशब्दार्थः॥

अवश्यपदसूचितमनुमानमाह—**अनुमानमपीति**॥ साध्यविशेषोपादानेन सिद्धस्य धर्मिविशेषस्य स्पष्टीकरणार्थं प्रमाणज्ञानमित्युक्तं द्रष्टव्यम्। वस्तुपूर्वकमित्युक्ते, आत्मवस्तुपूर्वकतयाऽर्थान्तरत्वम्, तदर्थम्—**वस्त्वन्तरेति**॥ चक्षुरादिव्यावृत्त्यर्थम्—**स्वदेशगतेति**॥ अदृष्टादिकं व्यावर्तयति—**स्वनिवर्त्येति**॥ उत्तरज्ञाननिवर्त्यपूर्वज्ञानव्यावृत्त्यर्थम्—**स्वविषयावरणेति**॥ प्रागभावव्यावृत्त्यर्थम्—**स्वप्रागभावेति**॥ स्वप्रागभावव्यतिरिक्तपूर्वकमित्युक्तौ, विषयेणार्थान्तरता, तदर्थम्—**स्वविषयावरणेति**॥ स्वविषयावरकान्धकारव्यावृत्त्यर्थम्—**स्वनिवर्त्येति**॥ विषयगताज्ञातताव्यावृत्त्यर्थम्—**स्वदेशगतेति**॥ मिथ्याज्ञानं व्यावर्तयति—**वस्त्वन्तरेति**॥ धारावाहिकद्वितीयादिज्ञाने व्यभिचारव्यावृत्त्यर्थम्—**अप्रकाशितेति**॥ **अर्थपदं** तु स्पष्टी-

## ऋजुविवरणम्

त्वमन्तर्गर्भितहेतुः। ननु भावान्तरत्वेऽपि समानाश्रय-विषयज्ञानाज्ञानयोर्विरोधोऽङ्गीक्रियते; तत् कथमज्ञानस्यानिवृत्तिः? इत्याशङ्क्याह—**नचाश्रयप्रतियोगीति**॥ साक्षित्वेनाज्ञानविषयत्वादिति भावः। ननु अज्ञानावभासकत्वेऽपि विरोधप्रयोजकस्य विद्यमानत्वान्निवृत्त्याऽपि भवितव्यमित्याशङ्क्याह—**नहि स्वज्ञानेनेति**॥ विषयविषयस्यैव प्रमाणस्य निवर्तकत्वमिति भावः; विषयसंसृष्टस्यैव ग्राहकत्वात्साक्षिचैतन्यस्य च तदभावादिति चोदयति—**नन्वज्ञानस्येति**॥ अज्ञानद्वारा सम्बन्धसद्भावादिति परिहरति—**उच्यते सर्वमिति**॥ तर्हि प्रमाणव्यापारवैयर्थ्यं, ज्ञानाज्ञानविषयभेदाभावः, अन्वय-व्यतिरेकविरोधश्चेत्याशङ्क्याह—**तत्र ज्ञाततयेति**॥ ननु ज्ञानावभासस्य प्रमाणसामग्रीजन्यत्वाभावात्कथं साधकत्वमित्याशङ्क्याह—**इत्युपपत्तिसहितमिति**॥ यद्वा—भवेदियं प्रतीतिरज्ञानविषया तत्साधिका, न तु तया भावरूपत्वसिद्धिः; तद्रूपाप्रतीतेः, अप्रतीतस्य चाकारस्य सिद्ध्यभावात्, इत्यत्राह—**इत्युपपत्तिसहितमिति**॥

अनुमानविशेषणोपयोगस्त्वेवम्—विवादगोचरापन्नं प्रमाणज्ञानं धर्मि, यत्किंचित्पूर्वकमित्युक्ते, ज्ञानमेव स्वाकारेण जनकं स्वसंवित्तिरूपेण जन्यफलमिति बौद्धाः सर्वे, तत्र सिद्धसाध्यतापरिहारार्थम्—**स्वव्यतिरिक्तेति** विशेषणम्। तथापि प्रागभावे सिद्धसाध्यता, तद्व्यावृत्त्यर्थम्—**प्रागभावव्यतिरिक्तेति विशेषणम्**। **यद्वा**—प्रागभावव्युदासार्थम्—**स्वप्रागभावव्यतिरिक्तेति** विशेषणम्। एवमपि विषये करणे च सिद्धसाध्यता स्यात्, तदर्थम्—**स्वविषयावरणेति** विशेषणम्। तथापि

### पञ्चपादिका

**तत्स्वरूपसत्तामात्रानुबन्धिन्यभ्युपगन्तव्या; अन्यथा मिथ्यार्थावभासानुपपत्तेः ।**

### पञ्चपादिकाविवरणम्

वस्त्वन्तरपूर्वकं भवितुमर्हति, अप्रकाशितार्थप्रकाशकत्वात्, अन्धकारे प्रथमोत्पन्नप्रदीपप्रभावदिति । ततश्च ज्ञानेन समानाश्रयविषयं भावरूपमज्ञानं सिद्धम् । शक्तिरित्यात्मपरतन्त्रतयाऽऽत्मनः सर्वकार्योपादानत्वस्य निर्वोढृत्वमाह तत्स्वरूपमात्मतत्त्वम्, तत्सत्तामात्रानुबन्धिनीत्यर्थः ।

**किंच**—अर्थापत्तिरपि भावरूपाज्ञानसद्भावे प्रमाणमित्याह—**अन्यथा मिथ्यार्थावभासानुपपत्तेरिति** ॥ विशुद्ध-

### तत्त्वदीपनम्

करणार्थम् । मध्यवर्तिप्रदीपप्रभायां साध्यसाधनवैधुर्यपरिहाराय—**प्रथमेति** विशेषणम् ॥ सवितृकिरणव्याप्तप्रदेशस्थप्रदीपप्रभाव्यावृत्त्यर्थम्—**अन्धकार इति** । किमनात्मज्ञानं धर्मि ? उत आत्मज्ञानं धर्मि ? नाद्यः; अनात्मावरकस्याज्ञानस्यानङ्गीकारात्, तत्साधने बाधापातात् । न द्वितीयः; अनात्मज्ञाने व्यभिचारात् ।

अप्रकाशितार्थप्रकाशकत्वं च—किमप्रकाशितार्थप्रकाशकर्तृत्वम् ? उत करणत्वम् ? नाद्यः; असिद्धेः, साधनवैकल्यप्रसङ्गात् । न द्वितीयः; अत एव । ततो यत्किंचिदेतदिति केचित् । प्रतिपन्नस्यात्मज्ञानस्यानात्मज्ञानस्य च धर्मित्वमिति ब्रूमः । नच बाधापत्तिः; घटाद्यवच्छिन्नचैतन्यं प्रत्यक्षादिविषयत्वेनोपेयते, तच्चाज्ञानावृतमिति कथं बाधः ? नच हेतोर्दुर्निरूपत्वम्; प्रकाशशब्देन तज्जन्यो व्यवहारो लक्ष्यते; ततश्चाप्रकाशितव्यवहारहेतुत्वं हेत्वर्थः । तस्य चोभयत्रानुगतत्वान्नासिद्ध्यादिरिति । अनुमाननिगमनार्थ इतिशब्दः ॥ प्रमेयमुपसंहरति—**ततश्चेति** ॥ अविद्यायाः शक्तिमत्त्वात्कथं शक्तिरित्यभिहितमिति ? तत्राह—**शक्तिरिति** । आत्मकारणत्वनिर्वोढृत्वादात्मपरतन्त्रत्वाच्च शक्तिमत्यामपि शक्तिशब्द उपचरित इत्यर्थः । बाह्यघटादेर्विषयत्वमाध्यात्मिकाहंकारस्य चाश्रयत्वमनुभवमाश्रित्योक्तम्—**बाह्याध्यात्मिकेष्विति** ॥ **वस्तुतस्तु** (टीकायाम्) "अविद्या तत्स्वरूपानुबन्धिनी"त्युक्तम्, तदनुपपन्नम्; अनात्मतन्त्रत्वे तदुपादानत्वविरोधात् इत्याशङ्क्य टीकार्थं स्पष्टयति—**तत्स्वरूपमिति** ॥ **तेषाम्**—अनात्मवस्तूनां स्वरूपमात्मतत्त्वम्; अधिष्ठानत्वादारोपितसर्पादि रज्जुरिवेत्यर्थः । अनात्मविशिष्टात्मपारतन्त्र्यं व्यावर्तयितुं—**सत्तामात्रेत्युक्तम्** ।।

प्रत्यक्षानुमानाभ्यामविद्यासिद्धेस्तत्र हेत्वाकाङ्क्षाऽभावाद् 'अन्यथे'ति ग्रन्थानुपपत्तिरित्याशङ्क्य, प्रमाणान्तरपरतया व्याचष्टे—**किं चेति** ॥ मिथ्यार्थतदवभासयोरनुपपत्तेरिति टीकार्थः । अहंकारादि-तदवभासयोर्मिथ्यात्वासिद्धेः कथं तदनुपपत्त्याऽज्ञानसिद्धिरित्याशङ्क्य तात्पर्यमाह—**विशुद्धेति** ॥ ज्ञानस्यैवाध्यासः, नार्थस्येति मतं निरस्यति—**अर्थज्ञानेति** ॥ निरालम्बन

### ऋजुविवरणम्

भ्रान्तिसंस्कारे तमसि वा सिद्धसाध्यता स्यात्, तन्निवृत्त्यर्थम्—**स्वनिवर्त्येति विशेषणाम्** । तथापि रजतमर्थगतमिति केचित्, तत्र सिद्धसाध्यता, अज्ञाते वान्तःकरणगते, तत्परिहाराय—**स्वदेशगतेति** ॥ तथापि बौद्धकल्पितवासनायां सिद्धसाध्यता, तदर्थम्—**वस्त्विति** ॥ तथापि मिथ्याज्ञाने तदेव, तदर्थम्—**अन्तरेति** ॥ **यद्वा**—मिथ्याज्ञानव्यवच्छेदार्थम्—**वस्त्वन्तरेति** विशेषणम् । तथा प्रतिलोमतो विशेषणोपयोगः कथ्यते—प्रमाणज्ञानं यत्किञ्चित्पूर्वकमित्युक्ते शून्ये सिद्धसाध्यता, तद्व्यावृत्त्यर्थम्—**वस्तुपूर्वकमिति** विशेषणम् । तथापि जनि-धारावाहिकयोस्तत्परिहाराथम्—**अन्तरेति** ॥ जनेर्जायमानादन्यत्वायोगाद् ज्ञानस्यान्यत्वेऽपि विजातीयविवक्षा । **यद्वा**—मिथ्याज्ञानव्यवच्छेदः—**वस्त्वन्तरेति** ॥ वस्त्वन्तरपूर्वकमित्युक्ते, इन्द्रियार्थसंयोगे, तदर्थम्—**स्वदेशगतेति** विशेषणम् । स्वदेशगतवस्त्वन्तरपूर्वकमित्युक्ते, आत्ममनःसयोगे, तदर्थम्—**स्वनिवर्त्येति** ॥ एतावत्यपि धर्माधर्मयोः, तदर्थम्—**स्वविषयावरणेति** विशेषणम् । एवमपि प्रागभावे सिद्धसाध्यता, तदर्थम्—**स्वप्रागभावव्यतिरिक्तेति** । विशेषणम् । अत्र संग्रहश्लोकाः—

स्वप्रागभावो विषयस्तमश्च मनस्तमो वासनमन्यथाधीः ।
जनिस्तु शून्यं करणं मनोऽन्यद्धर्मः पुराभाव इमे विवर्त्याः ॥
स्वाकारः प्रागभावश्च करणं संस्कृतिस्तथा । रजतं भ्रान्तिरूपा धीर्निरस्यास्त्वनुलोमतः ॥
पूर्वज्ञानं तथा शून्यं करणं बाह्यमान्तरम् । अधर्मः प्रागभावश्च निरस्याः प्रतिलोमतः ॥ इति

अप्रकाशितार्थप्रकाशकत्वादिति हेतुः । तत्र प्रकाशकत्वादित्युक्ते, विपक्षे स्मृत्यादौ हेतोर्वृत्तेरनैकान्तिका, तदर्थम्—

## पञ्चपादिकाविवरणम्

ब्रह्मात्मनि शुक्तिकायां चाहङ्कार-रजताध्यासस्यार्थज्ञानात्मकस्य मिथ्याभूतस्य मिथ्याभूतमेव किंचिदुपादानमन्वेषणीयम्; सत्योपादानत्वे कार्यस्य कारणस्वभावतयाऽध्यासस्यापि सत्यत्वप्रसङ्गात्; तस्यापि मिथ्योपादानस्य सादित्वे तथाविधोपादानान्तरकल्पनाप्रसङ्गादनाद्येव तन्मिथ्योपादानमिति कल्पनीयम्। यच्चानादि स्वयं मिथ्या मिथ्योपादानमात्मसम्बन्धि च तदज्ञानमिति, मिथ्याध्यास एव तथाविधाज्ञानोपादानं कारणमन्तरेणानुपपद्यमानस्तत् कल्पयतीत्युक्तम्।

**ननु**, येन यस्यातिशय उत्पद्यते स तस्य विषयः। नचाज्ञानेनानात्मन्यावरणातिशयजन्म, प्रमाणाभावात्; अर्थानुपपत्तेश्च। न तावदवगते नीलार्थे तत्रावरणकृत्यमवगन्तुं शक्यते, अनवगते तु नतराम्। ननु अवगते सति पूर्वमा-

## तत्त्वदीपनम्

ज्ञानायोगादर्थोऽप्यध्यस्त इत्यर्थः। समीचीनज्ञानवद्यथार्थत्वान्नाध्यासत्वमित्याशङ्क्याह—**मिथ्याभूतस्येति**॥ आत्मनि शुक्तौ च प्रतीयमानस्यार्थस्य सत्यत्वाऽनुपपत्तेः कल्पितत्वेन तज्ज्ञानमपि मिथ्येत्यर्थः। मिथ्यार्थावभासानुपपत्त्या मिथ्भूतमुपादानमेष्टव्यमित्युक्तम्, तत्रान्यथोपपत्तिं निरस्यति—**सत्योपादानत्व इति**॥ मृज्जन्यस्य घटस्य मृदात्मतावत् सत्योपादानस्य सत्यत्वं स्यादित्यर्थः। किं तदुपादानं सादि? उतानादि? नाद्यः; अनवस्थानात्, न द्वितीयः; तत्र प्रमाणाभावादित्याशङ्क्य, कल्पनालाघवादनाद्येव तदित्याह—**तस्यापीति**॥ तथापि कथमज्ञानसिद्धिः? इत्याशङ्क्याह—**यच्चेति**॥ आत्मव्यावृत्त्यर्थम्—**मिथ्येति**॥ संसृष्टरूपेण तस्यापि मिथ्यात्वम्, तदर्थम्—**स्वयमिति**॥ प्रागभावं व्यावर्तयितुं—**मिथ्योपादानमिति** विशेषणम्। अनादिभावरूपं ज्ञानापनोद्यमज्ञानमित्युक्तं भवति। स्वातन्त्र्यं व्यावर्तयति—**आत्मेति**॥ अर्थापत्तिं निगमयति—**इतीति**॥ इतिशब्दोऽन्यथोपपत्त्यभावपरामर्शार्थः। "इत्युक्तमि"त्यत्र मिथ्यार्थावभासानुपपत्तेरित्यत्रेति शेषः।

"बाह्याऽऽध्यात्मिकेष्वि"त्यत्रानात्मनोऽविद्याविषयत्वमुक्तम्, तदाक्षिपति—**नन्वित्यादिना**॥ विषयत्वाभावं दर्शयितुं विषयलक्षणमाह—**येनेति**॥ अज्ञानजनिताऽऽवरणातिशयशालित्वादनात्मनो विषयत्वम्? इत्याशङ्क्याह—**नचेति**॥ अर्था-

## ऋजुविवरणम्

**अप्रकाशितार्थप्रकाशकत्वादिति** विशेषणम्। **यद्वा**—अप्रकाशितार्थप्रकाशकत्वादिति हेतुः। तत्र प्रकाशकत्वादित्युक्ते विपक्षे चैतन्ये वृत्तिः; तदर्थमर्थेति विशेषणम्। अर्थप्रकाशकत्वादित्युक्ते स्मृत्यादौ, तदर्थम्—**अप्रकाशितेति**। नचात्र हेतुदृष्टान्तयोरेकप्रकाशरूपानन्वयः शङ्कनीयः; तमोविरोध्याकारः प्रकाशशब्दवाच्यः, तेनाकारेणैक्यमुभयत्रास्तीति। प्रदीपप्रभवादिति दृष्टान्तः। उभयविकलो दृष्टान्तः, तद्व्यावृत्त्यर्थम्—**प्रथमोत्पन्नेति**। तथापि सौरालोकविततेऽपि देशे प्रथमोत्पन्नप्रदीपप्रभायामुभयविकलत्वम्, तदर्थम्—**अन्धकार इति**॥ ननु—अज्ञानसाधनमुपक्रम्य निवर्त्यविशेषसाधनेन किं प्रकृतानुपयोगेन? **यद्वा**—साक्षादज्ञानसाधने संभवति किं प्रणाड्या तत्साधनेन? वैयर्थ्यं चानुमानस्य; प्रत्यक्षेणैव तत्सिद्धेरित्याशङ्क्याह—**ततश्चेति**॥ ननु—आत्मन एवोत्तरत्रोपादानत्वं वक्ष्यते, अतस्तद्विरोधः; अथवा—अविद्याशक्तिरित्यसंबद्धम्, अज्ञानसाधनस्य प्रस्तुतत्वात्, शक्तित्वनिरूपणस्याप्रस्तुतत्वाच्चेत्याशङ्क्याह—**शक्तिरित्यात्मेति**॥ तत्स्वरूशब्देन सन्निहितत्वाद् बाह्याध्यात्मिकवस्तुपरामर्शेन भवितव्यम्; तथासति कथं तत्स्वरूपसत्तामात्रानुबन्धिनोऽज्ञानस्य तदुपादानत्वम्, विरोधात्? अत उपादानं निरूपयितुं प्रक्रम्य कार्यस्वरूपसत्तामात्रानुबन्धित्वप्रतिपादनात्परस्परव्याहतो ग्रन्थः, इत्याशङ्क्य व्याचष्टे—**तत्स्वरूपमात्मतत्त्वमिति**॥

यदि—"अवश्यमि"त्यनेन प्रमाणद्वयवत्त्वमुक्तम्, कथमनन्तरग्रन्थेन हेतुरुच्यते? वैयर्थ्यात्, अतः पूर्वग्रन्थे प्रतिज्ञा, उत्तरग्रन्थे हेतुरित्येकग्रन्थत्वप्रतीतेर्नैवं व्याख्यानं युज्यते; इत्याशङ्क्यावतारयति—**किञ्चार्थापत्तिरपीति**॥ **ननु अर्थस्य** मिथ्यात्वे सिद्धे तेन मिथ्योपादानकल्पना स्यात्, तदेवासिद्धं कथं मिथ्योपादानकल्पकम्? इत्याशङ्क्याभिप्रायमाह—**विशुद्धब्रह्मात्मनीति**॥ विशुद्धत्वादेव न तत्र बन्धसत्यतेत्यर्थः। **ब्रह्मात्मनीत्य**नेनात्मगतत्वेन तत्कल्पने प्रमाणमुक्तम्; कार्यस्यातदाश्रयाज्ञानकल्पकायोगात्, तथापि कथमुपादानान्तरकल्पना? अर्थज्ञानयोः परस्परोपादानत्वेनार्थापत्तेरुपक्षीणत्वात्। **अथवा**—संस्कारादप्युत्पत्तिसंभवादधिष्ठानज्ञानाभावेन वोत्पत्तिसंभवादिति परपक्षान्मनसि निधायाह—**अर्थज्ञानात्मकस्येति**॥ परस्परसहभावेन नोपादानत्वं संभवति; अर्थज्ञानात्मकत्वादेव न संस्काराभावयोस्तत्रोपादानत्वं संभवतीति भावः। **अथवा**—"मिथ्यार्थावभासानुपपत्तेरि"त्युक्तम्; नह्यज्ञानेन विनाऽवभासानुपपत्तिः; अवभासकारणमात्रापेक्षत्वादवभासस्य, नित्यचैतन्येनावभाससंभवान्न तदपेक्षाऽपि, अतोऽयुक्तोऽयं ग्रन्थः, इत्याशङ्क्य व्याचष्टे—**अर्थज्ञानात्मकस्येति**॥ मिथ्यार्थस्य तदवभासस्य चानुपपत्तेरिति व्याख्यातम्। अर्थज्ञानात्मकत्वेऽपि नाभिमतोपादानकल्पकत्वम्, तदर्थम्—**मिथ्याभूतस्येति**॥ तथाऽपि कथं भवदभिमताज्ञानसिद्धिः?

### पञ्चपादिकाविवरणम्

वृतमित्यवगम्यताम् ? न; धारावाहिकविज्ञानगम्येऽर्थे पूर्वमवगतस्यापि पश्चादवगमदर्शनात् । ननु इदानीमेवावगतत्वं पूर्वमनवगतिं साधयति ? **न** पूर्वानवगतिमविज्ञायेदानीमेवावगतमित्यवधारणायोगात् । **ननु** पूर्वापरप्रत्यभिज्ञायां मध्येऽनवगतिरवगम्यत इति ? न प्रत्यभिज्ञानुपपत्तिः मध्येऽनवगतिं साधयति; धारावाहिकेऽप्यात्मनि सदाऽवगते तद्दर्शनात् । मध्ये ज्ञानस्मृत्यभावादवनगतिरवगम्यत इति चेत् ? न; अवगतेऽपि स्मृतिनियमाभावात् । तथाऽपि विषयानवगतिः प्रतीयत इति चेत् ? सत्यं, विषयैः सह साक्षिचैतन्येऽज्ञानाध्यासात्प्रतिभासः, नचाध्यस्तस्यावरणमस्ति; द्विचन्द्रादिवत्प्रमाणगम्यत्वाभावात् ।

### तत्त्वदीपनम्

नुपपत्तेः प्रयोजनानुपपत्तेरित्यर्थः । आद्यं संग्रहवाक्यं विवृणोति—'**न तावदि**'त्यारभ्य '**नच स्वयम्**' इत्यतः प्राक्तनग्रन्थेन । आवरणे किं प्रत्यक्षं मानम् ? उतानुमानम् ? आहो अनुपपत्तिः ? आद्येऽपि किमनात्मन्यधिगत आवरणमधिगम्यते, अथवाऽनुपलब्धे ? इति विकल्प्याऽऽद्यं प्रत्याह—**न तावदिति** । नीलावगमविरोधात्तत्राऽऽवरणं दुरधिगममित्यर्थः । द्वितीयं प्रत्याह—**अनवगत इति** ॥ नीलप्रतिपत्तिं विना तत्राऽऽवरणं नानुभूयत इत्यर्थः । अशक्यश्चानुभव इत्याह—**नतरामिति** ॥ द्वितीयमुत्थापयति—**नन्ववगत इति** ॥ विमतम्, पूर्वमावृतम्, इदानीमवगतत्वात्, सम्मतवदित्यनुमानादावरणसिद्धिरित्यर्थः । किमिदानीमवगतत्वमात्रं हेतुः ? उत इदानीमेवावगतत्वम् ? नाद्य इत्याह—**न धारावाहिकेति** ॥ धारावाहिकज्ञानगम्ये इदानीमवगतत्वमस्ति, न पूर्वमावृतत्वमिति तत्र व्यभिचारः । नच—तत्राप्युत्तरकालवैशिष्ट्यस्य प्रागज्ञातत्वान्न व्यभिचार इति—शङ्क्यम्; विशेषणभूतार्थे व्यभिचारादित्यर्थः । द्वितीयमुत्थापयति—**नन्विदानीमेवेति** ॥ असिद्धो हेतुरित्याह—**न पूर्वेति** ॥ इदानीमेवावगतत्वे सिद्धे प्रागनधिगतत्वं सिद्ध्यति, तत्सिद्धाविदानीमेवावगतत्वसिद्धिरितीतरेतराश्रयाद्धेत्वसिद्धिरित्यर्थः । तृतीयमनुवदति—**ननु पूर्वापरेति** ॥ पूर्वापरकालसम्बन्धविषयिणी तावत्प्रत्यभिज्ञा दृष्टा, सा च मध्येऽनवगतिमन्तरेण नोपपद्यते; अन्यथा तत्रापि प्रत्यभिज्ञा स्यादित्यर्थः । अन्यथोपपत्त्या परिहरति—**न प्रत्यभिज्ञेति** ॥ धारावाहिकज्ञानगम्य आत्मनि पूर्वापरसम्बन्धिविषये प्रत्यभिज्ञादर्शनात् सदावगत आत्मन्यपीति योजना । अर्थापत्त्यन्तरमुद्भावयति—**मध्य इति** ॥ ज्ञानजन्या स्मृतिर्ज्ञानस्मृतिस्तस्या अभावादिति विग्रहः । पूर्वोत्तरकालयोरनुभूतस्य स्मरणान्मध्यवर्तिनश्चास्मरणान्मध्येऽनवगतिः; अन्यथा तत्रापि स्मरणं स्यादित्यर्थः । अनवगत्यभावेऽपि स्मृत्यभावसम्भवशङ्कां व्यवर्तयितुं **ज्ञानेति** विशेषणम् ॥ अवगत्यङ्गीकृतौ तद्विनाशे संस्कारस्यावश्यंभावात्तन्मूलास्मृतिः स्यात्, नच सेत्यनवगतिरित्यर्थः । अस्मरणमन्यथोपपन्नमित्याह—**नावगत इति** ॥ पथि पतितोपलब्धतृणादिवदस्मरणसंभव इत्यर्थः । अनुभूयमानमावरणं कथं युक्तितो निरस्यत इति शङ्कते—**तथापीति** ॥ प्रतीतिमङ्गीकरोति—**सत्यमिति** ॥ तर्हि प्रतीत्यनुसारेण प्रत्येतव्यमप्याश्रीयताम् ? इत्याशङ्क्याह—**विषयैरिति** ॥ अर्थप्रतिपत्त्यप्रतिपत्त्योः प्रमाणेनानवगतेः प्रतिपत्तुमयोग्यत्वात्साक्षिणा स्वाध्यस्तानवगतिरनुभूयत इति न त्वदिष्टसिद्धिः । नच

### ऋजुविवरणम्

विशुद्धत्वेनात्मन उपादानत्वाभावेऽप्यन्यस्य सत्यस्योपादानत्वसंभवेनार्थापत्तेरुपक्षीणत्वादिति, तत्राह—**सत्योपादानेति** ॥ अनेन कार्यस्य मिथ्यात्वं व्यापकविशेषाभावश्च दर्शितः । तथाऽपि मिथ्याभूतमेव किञ्चिद्भवेत्, नाज्ञानम्, तेन विनाऽनुपपत्त्यभावादित्याशङ्क्याह—**यच्चानादीति** ॥ यच्चानादि तदज्ञानमित्युक्ते, आत्मादीनामज्ञानत्वं स्यात्, तदर्थमाह—**स्वयं मिथ्येति** ॥ एवमप्यज्ञानात्मसंबन्धे निमित्तमात्रत्वेन पराभ्युपगतेऽमिथ्याभूतेऽपि स्यात्, तदर्थमाह—**मिथ्योपादानमिति** ॥ एवमपि स्वातन्त्र्यशङ्का स्यात्, तथा सति आत्मोपादानत्वविरोधः, निरधिष्ठानस्योपादानत्वासंभवः, कार्यस्यात्मगतत्वानुपपत्तिश्च, तदर्थमाह—**आत्मसंबन्धीति** ॥ संज्ञामात्रभेद इति भावः ।

टीकाकृता बाह्यस्याज्ञानविषयत्वं दर्शितम्, तदाक्षेप्तुं विषयलक्षणमाह—**ननु येन यस्येति** ॥ ननु केनचिदतिशयेन तद्विषयत्वव्यपदेशो घटते, अथवा—सावरणत्वेनैवाज्ञानस्य साधितत्वादावरणमेवातिशयः ? इत्याशङ्क्याह—**नचाज्ञानेनेति** ॥ अर्थानुपपत्तेश्चेत्यनेनावरणस्य प्रयोजनमपि नास्तीत्युक्तम्, तत्र हेतोरसिद्धतामाशङ्क्य साधयति—**न तावदिति** ॥ विरोधादिति भावः । **नतरामिति** ॥ अस्यावरणमित्यवगमायोगादिति भावः । **नन्ववगते सतीति** ॥ इदानीमवगतिव्यवहारोऽनुपपत्त्या पूर्वानवगतिमवगमयतीति भावः । ननु अवगतेः प्रत्यभिज्ञोत्पद्यमानाऽनवगतिं साधयतीति चोदयति—**ननु पूर्वापरेति** । **मध्ये ज्ञानस्मृतीति** विषयाभिज्ञाप्रत्यभिज्ञयोर्मध्ये ज्ञानस्मृत्यभावात्तदभावः, तदभावे च तद्व्याप्यावरणनिश्चय इति । ननु विषयसम्बन्धिज्ञानं प्रतीयते—'त्वदुक्तमर्थं न जानामी'ति, सम्बन्धश्चकारकत्वेन, अतः प्रतीतिःकथम-

### पञ्चपादिका

**सा च न जडेषु वस्तुषु तत्स्वरूपावभासं प्रतिबध्नाति; प्रमाणवैकल्यादेव तदग्रहणसिद्धेः, रजतप्रति-**

### पञ्चपादिकाविवरणम्

तस्मान्नास्त्यनात्मन्यावरणे प्रमाणम्। नच स्वयमेव प्रकाशहीनस्य जडस्यावरणार्थोऽपि सम्भवति। तस्मादतिशयाभावान्नाज्ञानविषयोऽनात्मेति ?

तत्राह—**सा च न जडेषु वस्तुषु तत्स्वरूपावभासं प्रतिबध्नातीति**॥ किंत्वन्यदेवानात्मन्यतिशयकार्यं कृत्वा तद्विषयमज्ञानमिति वक्ष्यत इत्यभिप्रायः। तत्र हेतुः—**प्रमाणवैकल्यादेवेति**॥

अथवा, चैतन्यप्रकाशेन जडानां नित्यवदन्वयान्नित्यवत्प्रकाशे प्राप्ते, सम्भवत्येवानात्मस्वावरणकृत्यमित्याशङ्क्याह—**प्रमाणवैकल्यादेवेति**॥ अनात्मप्रमाणस्य चैतन्यस्य वैकल्यादावरणादेव विषयानवगतिसिद्धेर्न विषये पृथगावरणं कल्पनीयमित्यर्थः।

### तत्त्वदीपनम्

घटोऽज्ञात इत्यनुभवाऽनुपपत्तिः, लौहित्यमुखयोः स्फटिकाचलप्रतिबिम्बितयोः परस्परसंबन्धो यथा भासते 'लोहितं मुखमि'ति, तथाऽज्ञानानात्मनोरात्मन्यध्यासात् परस्परसंबन्धप्रतिभासोपपत्तिरित्यर्थः। मानत आवरणाप्रतिपत्तावपि साक्षितस्तत्प्रतिपत्तिसंभवादर्थोऽनवगत इति प्रतिपत्तेर्मुख्यत्वमित्याशङ्क्याह—**नचाध्यस्तस्येति**॥ आवरणभङ्गमन्तरेणार्थप्रतिपत्त्ययोगात्तद्भङ्गो वक्तव्यः; स च किं प्रमाणात् ? उत साक्षिणः ? नाद्य इत्याह—**द्विचन्द्रादिवदिति**॥ न द्वितीयः; साक्ष्यधीनसिद्धितया तन्निवर्त्यत्वायोगादित्यर्थः। मानासंभवसमर्थनमुपसंहरति—**तस्मादिति**॥ अर्थानुपपत्तेरित्येतत्प्रपञ्चयति—**नचेति**॥ निष्पादितक्रिये कर्मण्यविशेषाधायिनः साधनस्य [1]साधनन्यायातिपातन्यायादावृतरूपेऽनात्मन्यज्ञानमावरणलक्षणमतिशयं कथमादध्यादित्यभिप्रायः॥ विषयलक्षणविधुरतामुपपाद्याविषयत्वमुपसंहरति—**तस्मादिति**॥

विमतम्, नाज्ञानविषयः, तज्जनितातिशयानाधारत्वात् व्यतिरेकेणाऽऽत्मवदित्युक्ते सिद्धसाधनमेतदित्याह—**तत्राहेति**॥ तच्च तत् स्वरूपं चेति तत्स्वरूपम्, तस्यावभासस्तथोक्तस्तमिति विग्रहः। अज्ञानात्मकं यत्स्वरूपमनात्मवस्तु

### ऋजुविवरणम्

पद्ूयते युक्त्या ? इति चोदयति—**तथापि विषयेति**॥ अज्ञानविषययोस्सम्बन्धः प्रतीयते, स तु कार्यकारणलक्षण इत्याह—**सत्यं विषयैरिति**॥ अयं भावः—परमार्थघटादीनां केवलसाक्षिवेद्यत्वं नास्ति; सम्बन्धाभावात्, अतोऽज्ञानव्यावर्तकतया गृह्यमाणोऽज्ञानेन साक्षिचैतन्ये कल्पितः प्रतीयत इति। ननु अज्ञात एवेदानीं ज्ञात इति प्रमीयमाणेनैकतया प्रत्यभिज्ञायते, तत्कथं कल्पितत्वमिति ? रजतप्रत्यभिज्ञावदिति वदामः। **यद्वा**—परमार्थवस्तुन्यज्ञानव्यावर्तकाकारः कल्पितः प्रतीयते; स्वरूपस्य साक्षिसम्बन्धाभावात्, कल्पिताकारस्य तदात्मत्वात् प्रत्यभिज्ञाऽपि कथञ्चिद् घटते। **अथवा**—परमार्थमेव कल्पितसम्बन्धात् प्रतीयते; मुख्यसम्बन्धाभावात्। भवतु कल्पितेऽप्यावरणमिति ? नेत्याह—**नचाध्यस्तस्येति**॥ अयं भावः—प्रमाणगम्यं हि वस्तु परमार्थत्वादप्रतीयमानमपि तिष्ठति, तदा कथञ्चिदावरणं कल्प्येताऽपि, साक्षिवेद्यस्य तु प्रतिभासमात्रविपरिवर्तित्वात् तस्य पूर्वोत्तरकालमनवस्थितस्यावरणायोगात् तदानीं प्रतीयमानत्वादेव नावरणम्। यदा परमार्थमेव कल्पितसम्बन्धात्प्रतीयते, तदाऽपीयं प्रतीतिरप्रमाणभूता कथमावरणं गमयेत् ? कथमप्रमाणत्वम् ? प्रमाणसामग्रीबहिर्भावात्। **नच स्वयमेवेति**॥ प्रकाशप्रसक्तौ सत्यां तत्प्रतिबन्धकावरणम्, तदत्र न सम्भवतीति भावः। यदि प्रतिबन्धो नास्ति, कथं तद्विषयत्वव्यपदेशः ? इत्याशङ्क्याभिप्रायमाह—**किन्त्वन्यदेवेति**॥ "तत्र हेतुरि"ति स्पष्टोऽप्यवतारितस्तस्यार्थान्तरं दर्शयितुम्।

**प्रमाणवैकल्यादिति**। चैतन्यस्यानुदयादित्यर्थः। कथमस्मिन् पक्षे प्रमाणवैकल्यमुच्यते ? जन्यप्रमाणस्याभासकत्वेन चोदितत्वात् तस्य च वैकल्यायोगादित्याशङ्क्य व्याचष्टे—**अनात्मप्रमाणस्येति**॥ **ननु** एवं परस्परव्याहतिः स्यात्; पूर्वग्रन्थे ह्यावरणं नास्तीत्युक्तम्, अत्र तदङ्गीकृतम्; प्रमाणप्रतिबन्धाङ्गीकारात्तस्यैव चावरणत्वादित्याशङ्क्याह—**न विषये पृथगावरणमिति**॥ स्वरूपप्रतिबन्धः पूर्वं निराकृतः, न प्रमाणप्रतिबन्धः, इदानीं प्रमाणप्रतिबन्धोऽङ्गीकृत इति न विरोधः।

---

१. कर्मणि घटे जडत्वादेवाप्रकाशसिद्धौ आवरणेनातिशयाजननात् अज्ञानं व्यर्थमित्यर्थः। सिद्धान्तस्तु अज्ञानं तदवधिकविपरीतभ्रमं जनयतीत्यनेनातिशयाधानसिद्धिः। साधनमधिकृत्य प्रवृत्तेन न्यायेन-साधनेन कर्मणि घटादौ उपकारः जननीय इति।

**पञ्चपादिका**

**भासात् प्रागूर्ध्वं च सत्यामपि तस्यां स्वरूपग्रहणदर्शनात्, अतस्तत्र रूपान्तरावभासहेतुरेव केवलम् ।**

**पञ्चपादिकाविवरणम्**

इतश्च नानात्मन्यावरणमित्याह—**रजतप्रतिभासादिति** ॥ यद्यात्माश्रयमज्ञानमनात्मावरणं स्यात्, तदा, आवरणविनाशमन्तरेण विषयावभासायोगाद्विषयज्ञानेनात्माज्ञानं निवर्तेत । अतः सत्यामेवात्मन्यविद्यायां त्रिष्वपि कालेषु विषयस्वरूपप्रतिभासदर्शनान्नानात्मावरणमज्ञानमिति भावः ।

**तत्त्वदीपनम्**

तस्यावभासमविद्या न प्रतिबध्नाति । तत्र हेतुमाह—**जडेष्विति** ॥ अचिद्रूपत्वेन तत्र प्रकाशाप्रसक्तेर्न तत्प्रतिबन्ध इत्यर्थः । चशब्दोऽवधारणार्थः, नैव प्रतिबध्नातीति । कथं तर्ह्यनात्मविषयत्वं निर्दिष्टमिति शङ्कते—**किंत्विति** ॥ आवरणानाधानेऽप्यज्ञानस्य विक्षेपहेतुत्वादनात्मविषयत्वं युक्तमित्याह—**अन्यदेवेति** ॥ 'रूपान्तरावभासहेतु'रित्यत्र वक्ष्यत इत्यर्थः । अनात्मनः स्वत आवृतस्वरूपत्वे संप्रत्यज्ञात इति व्यवहारानुपपत्तेरज्ञातत्वमन्यनिमित्तं वक्तव्यमित्याशङ्क्यान्यथोपपत्तेर्मैवमित्याह—**तत्रेति** ॥ अनात्मविषयान्तःकरणपरिणामानुदयलक्षणवैकल्यादित्यर्थः ।

शङ्कान्तरनिरासपरो वाऽयं ग्रन्थ इत्याह—**अथवेति** ॥ किं तच्छङ्कान्तरम् ? तत्राह—**चैतन्येति** ॥ स्वतः प्रकाशाप्रसक्तावपि नित्यचैतन्यसान्निध्यात् प्रकाशप्रतिबन्धलक्षणकृत्यसंभवात्कथं नाज्ञानविषयत्वमित्यर्थः ॥ "प्रमाणवैकल्यादि"त्यत्र प्रमाणशब्देन किं वृत्तिज्ञानं विवक्षितम् ? उतात्मस्वरूपम् ? आद्ये प्रश्नप्रतिवचनयोर्व्यधिकरणता; द्वितीये तस्यानित्यत्वेन वैकल्याद्, इत्यसंगतमित्याशङ्क्याह—**अनात्मेति** ॥ प्रमाणस्य साधकस्येति यावत् । चैतन्यस्य नित्यत्वेन वैकल्यानुपपत्तिमुक्तां धुनोते—**आवरणादिति** ॥ अनावृतचैतन्यस्य विषयसाधकत्वात्तदावरणाद्विषयानवगत्युपपत्तेर्न पृथगावरणकल्पनमित्यर्थः ॥

टीकागतचशब्दार्थमाह—**इतश्चेति** ॥ आत्मावरकाज्ञाने सत्यपि तत्प्रतिपत्तिवदनात्मावरकाज्ञानमिति मतेऽपि तत्प्रतीतिः किं न स्यात् ? इत्याशङ्क्याऽस्मन्मते यदावृतं तन्न प्रतिभाति, यद्भाति तन्नावृतमिति युज्यते; त्वन्मते तु न तथा, अनात्मप्रथायामप्यज्ञानस्य तदावरकत्वादित्याह—**यद्यात्मेति** ॥ अस्त्वज्ञाननिवृत्तिः, को दोष इति चेत् ? तत्र वक्तव्यम्—किमनात्मावरकमज्ञानमेकम् ? उत नानेति ? तत्राद्यं दूषयति—**अतः सत्यामेवेति** ॥ त्रिष्विपि कालेष्वात्मन्यविद्यायां सत्यामेव विषयप्रतिभासदर्शनान्नाज्ञाननिवृत्तिर्युक्तेति योजना । रजतप्रतिभासात् प्राक्कारणत्वेन तत्समये तत्स्थितिहेतुत्वेनोत्तरत्र विपर्ययान्तरजनकत्वेनेति त्रिकालवर्तित्वमविद्याया इति न विषयज्ञानान्निवृत्तिर्युक्तेत्यर्थः । 'अत' इत्येतन्नानात्मावरणमित्यनेन संबध्यते ।

**ऋजुविवरणम्**

एतेन चानुमानेऽपि यदुक्तं दूषणं परैः । प्रमाणमात्रपक्षत्वं ब्रह्मज्ञानस्य वेष्यते ॥
पूर्वस्मिन् बाधितार्थत्वं साधारण्यं तथोत्तरे । प्रमाणाऽऽवरणेनैव प्रमेयोऽप्यावृतो यतः ॥
तेनात्रोभयपक्षत्वे न कार्या दूषणे मतिः । संभावनैव हेतोर्नो दृष्टिसृष्टिसमाश्रया ॥ इति ।

"रजतप्रतिभासादि"त्यनेन किं साध्यते ? न तावद्विषय आवरणनिराकरणम्; साधकहेतूपन्यासाभावात् । नहि रजतप्रतिभासात्प्रागूर्ध्वमप्यविद्यायां स्थितायां मध्येऽवभासोऽनावरणं साधयति; भिन्नकालत्वेनाविरोधात् । नाप्यर्थान्तरम्, तस्याः प्रतीतेरसङ्गतत्वप्रसङ्गाच्च, अतो व्यर्थेत्याशङ्क्याह—**इतश्च नानात्मनीति** ॥ ननु नानेनावरणं निराक्रियते; नहि रजतप्रतिभासात्प्रागूर्ध्वमज्ञानस्थितिमात्रं विषयावभासविरोधि, येन तद्दर्शनादनावरणं निश्चीयते । तथा प्रागूर्ध्वग्रहणमप्यप्रयोजकम्; प्रागूर्ध्वं विरोधितमसा छन्ने घटे मध्येऽवभासदर्शनात्, किमुताविरोधिनोऽज्ञानस्य ? यत्र क्वापि स्थितौ प्रतीतिः संभवेदिति कथंचिदेवं वक्तुं युक्तम्; "सत्यामपि तस्यामि"ति स्थितिमात्रेणैव कथंचिद्विरोधस्य शङ्कितुं शक्यत्वात् । तथा "सत्यामपि तस्यामि"ति किमुच्यत इति न ज्ञायते, न तावदात्मनि सत्यामिति विवक्षितम्, व्यधिकरणत्वापत्तेः; न ह्यन्यत्र स्थितौ रजतावभासोऽनावरणसाधकः । नापि रजते सत्यामपीति विवक्षितम्; प्रागूर्ध्वं तत्र स्थितायामप्यविद्यायां मध्येऽवभाससंभवादनावरणासाधकत्वात् । "स्वरूपग्रहणदर्शनादि"ति च न ज्ञायते—किमत्र स्वरूपं विवक्षितमिति ? अतो नानावरणगमकः, इत्याशङ्क्याभिप्रायमाह—**यद्यात्माश्रयमित्यतः सत्यामित्यन्तेन** ॥ पदव्याख्या **सत्यामपीति** ( टीकायाम् ) ॥ **सत्यामेवात्मनीति । तस्यामिति** व्याचष्टे—**अविद्यायामिति** ॥ प्रागूर्ध्वग्रहणमुपलक्षणमिति दर्शयति—**त्रिष्वपि कालेष्विति** ॥ "स्वरूपग्रहणे"ति व्याचष्टे—**विषयस्वरूपेति** ॥

## पञ्चपादिकाविवरणम्

**ननु**—शुक्तिकाविषयमज्ञानमन्यदेव, तज्ज्ञानात्तन्निवर्तते, अन्यच्चात्मविषयमज्ञानमात्मनि दृश्यमानमिति ? **तन्न;** आत्माश्रयमात्मविषयं चाज्ञानमन्तरेणानात्मसु प्रतिविषयं भावरूपाज्ञानसद्भावे प्रमाणाभावात्, विषयाग्रहणस्य प्रमाणवैकल्यादप्युपपत्तेः । किं च तर्ह्यतिशयमज्ञानजन्यमाश्रित्य 'बाह्याध्यात्मिकेषु वस्तुषु' इत्यनात्मविषयमज्ञानं दर्शितमिति ? तदाह—**अतस्तत्र रूपान्तरावभासहेतुरेव केवलमिति** ॥

**ननु**—अत्राप्यनुपपत्तिः समाना । कथम् ? शुक्तिकाज्ञानं हि रूपान्तरावभासं निवर्तयत् तदुपादानमज्ञानमपि निवर्तयतीति ते मतम्, तत्र कथं शुक्तिकाज्ञानात्सहाज्ञानेनाध्यासे निवर्त्यमाने पुनरात्मन्यज्ञानं दृश्येत ? अतः प्रतिविषयमज्ञानभेदः, अध्यासस्याज्ञानानुपादानत्वं वा, उपादाननिवृत्तिमन्तरेणाध्यासनिवृत्तिर्वा समाश्रयणीयेति ? **उच्यते;** अस्मिन्पक्षे शुक्तिकादिज्ञानेन रजताद्यध्यासानां स्वकारणे प्रविलयमात्रं क्रियते मुसलप्रहारेणेव घटस्य ।

अथवा—मूलाज्ञानस्यैवावस्थाभेदा रजताद्युपादानानि शुक्तिकादिज्ञानैस्सहाध्यासेन निवर्तन्त इति कल्प्यताम् ।

## तत्त्वदीपनम्

द्वितीयमनुवदति—**ननु शुक्तिकेति** ॥ अन्यदेवेत्यत्रान्यदेवेति वीप्सा द्रष्टव्या । अतश्च ज्ञानेनाऽऽवरणभङ्गे विषयप्रतिभासः, अविद्यान्तरात्तु विपर्ययान्तरोदयश्चाऽविरुद्ध इत्यर्थः । नचाऽऽवरणनिवृत्तौ शुक्तिप्रतिपत्तिवदात्मतत्त्वप्रतिपत्तिरपि स्यादित्यपि शङ्क्यमित्याह—**अन्यच्चेति** ॥ कल्पनागौरवप्रसङ्गान्नेयं कल्पना शोभां बिभर्तीत्याह—**तन्नेति** ॥ विषयाग्रहणव्यनहारानुपपत्त्या तत्राप्यावरणकल्पनमित्याशङ्क्याह—**विषयेति** ॥ वृत्त्यनुदयाच्चैतन्याऽऽवरणाच्च विषयाग्रहणोपपत्तिरित्यर्थः ॥ अनात्मनोऽज्ञानविषयत्वं निराकुर्वतः पूर्वापरपराहतिः स्यादिति शङ्कते—**किं च तर्हीति** ॥ अज्ञानस्य तत्रातिशयान्तरजनकत्वात्तद्विषयत्वाभिधानं युक्तमित्याह—**तदाहेति** ॥ शुक्त्यज्ञानस्य तदनाच्छादकत्वेऽपि कथं रूपान्तरावभासजनकत्वमिति चेत् ? तत्र वक्तव्यम्—किमनाच्छादकत्वाद्विपर्ययजनकत्वाभावः साध्यते ? आहो विपर्ययहेतुत्वं तदाच्छादकत्वमिति ? तत्राऽऽद्यं निराकरोति—**हेतुरेवेति** ॥ शुक्त्यज्ञानस्य तदनाच्छादकत्वेऽपि विपर्ययहेतुत्वं घटते, शुक्त्यवच्छिन्नचैतन्यस्याऽऽवरकत्वाच्छुक्त्यवच्छिन्नचैतन्यविषयप्रमाणोदयेनाऽऽवरणे निवृत्ते विपर्ययनिवृत्तिप्रसिद्धेः । अतस्तदावरणेन विपर्ययजनकत्वं युक्तमित्यर्थः । विमतम्, शुक्त्याच्छादकम्, तत्र विक्षेपहेतुत्वात्, यो यत्र विक्षेपहेतुः, स तदाच्छादकः, यथा चैतन्यस्य, इत्याशङ्क्य परिहरति—**केवलमिति** ॥ आच्छादकत्वाभावेऽप्युक्तविधया विपर्ययजनकत्वोपपत्तेरप्रयोजको हेतुरित्यर्थः ॥

आत्माऽऽवरकमज्ञानमनात्मनि विक्षेपं जनयतीत्युक्तम्, तदाक्षिपति—**नन्वत्रापीति** ॥ अनात्मावरकत्वानङ्गीकारात् कथमनुपपत्तिसाम्यमिति शङ्कते—**कथमिति** ॥ पूर्वोक्तानुपपत्त्यभावेऽप्यनुपपत्त्यन्तरं दर्शयितुमद्वैतमतं दर्शयति—**शुक्तिकाज्ञानमिति** ॥ अस्तु को दोष इति ? तत्राह—**तत्रेति** ॥ अज्ञानस्यानुभूयमानत्वात् कथं तत्प्रतिक्षेप इत्याशङ्क्याह—**अथेति** ॥ एकाज्ञानवादे तन्निवृत्तावज्ञानान्तराननुभवप्रसङ्गोऽतःशब्दार्थः । कल्पनागौरवप्रसङ्गान्न भेदकल्पनेत्याशङ्क्याह—**अध्यासस्येति** ॥ मिथ्याभूतस्य तस्योपादानतानुपपत्तेर्नायं पक्षः साधुरित्याशङ्क्याह—**उपादानेति** ॥ ज्ञानेनाज्ञाननिवृत्त्यनिवृत्त्योरपि नानुपपत्तिरित्याह—**उच्यत इति** । अनिवृत्तौ तावद्दोषाभावमाह—**अस्मिन्पक्ष इति** ॥

तर्हि सविलासाज्ञाननिवृत्तेर्बाधकत्वं कथं घटते ? इत्याशङ्क्य पक्षान्तरमाह—**अथवेति** ॥ "मायां तु प्रकृतिं विद्यादि" त्यादिवाक्यात् कल्पनालाघवानुगृहीतान्मूलाज्ञानमेकमेष्टव्यम्, तस्य चानन्ता अवस्थाः कल्प्यन्ते व्यवहारनिर्वाहाय । तत्र च कारणत्रितयानुरोधेन काचिदवस्था रजताद्याकारेण विवर्तते, तस्यां चाधिष्ठानतत्त्वसाक्षात्कारान्निवृत्तायां विपर्यासनिवृत्तिरिति

## ऋजुविवरणम्

**नन्वत्रापीति** ॥ आत्माश्रयाज्ञानमेकमेव, तच्च जडे विक्षेपमात्रं करोति, नावरणमित्यस्मिन्नपि पक्ष आत्मन्यज्ञानदर्शनानुपपत्तिस्तुल्यैव; विक्षेपनिवर्तनेन तदुपादानस्याज्ञानस्य निवृत्तेरिति भावः । ननु विक्षेपपक्षे विषयज्ञानेन तद्गतरूपान्तरं निवर्त्यते, नत्वज्ञानम्; तस्यावारकत्वाभावेनाविरोधात्, अतः कथमात्मन्यज्ञानदर्शनानुपपत्तिः ? इत्याक्षिपति—**कथमिति** ॥ यद्यप्यावरकत्वं नास्ति; तथाऽपि भ्रान्तिनिवर्तकस्य तदुपादाननिवृत्त्या निवर्तकत्वमिति परिहरति—**शुक्तिकाज्ञानं हीति** ॥ कथं प्रतिविषयमज्ञानकल्पना ? आत्माज्ञानव्यतिरेकेण प्रतिविषयं भेदे प्रमाणाभावादिति ? तत्राह—**अध्यासस्येति** । ननु—अज्ञानानुपादानत्वमपि न संभवति; स्वतः शुद्धचैतन्ये बन्धसंबन्धायोगात्, ज्ञाननिवर्त्यत्वायोगाच्च ? इत्याशङ्क्याह—**उपादाननिवृत्तिमन्तरेणेति** ॥ **अस्मिन् पक्ष इति** ॥ एकमेवाज्ञानमित्यभ्युपगम इत्यर्थः ।

## पञ्चपादिकाविवरणम्

कथं पुनर्लोके सहाज्ञानेनाध्यासस्य तत्त्वज्ञानान्निवृत्तेरप्रतिपत्तौ ब्रह्मज्ञानात्सहाज्ञानेनाध्यासस्य निवृत्तिर्दृष्टद्वारेण कल्प्यत इति ? नैष दोषः; तत्त्वावभासविरोधिनोऽग्रहण-मिथ्याज्ञानादेस्तत्त्वज्ञानेन निवृत्तिदर्शनादिहापि तत्त्वावभासविरोधितयैव भावरूपाज्ञानादेः कल्प्यमानत्वात् तस्य ब्रह्मज्ञानान्निवृत्तेरुपपत्तेः। नचावरणपक्षोक्तदोषप्रसङ्गः; विषयव्यावृत्तरूपान्तरस्य भ्रान्तिज्ञानेनावगमात्।

ननु एवमात्मन्यप्यज्ञाननिमित्तमावरणकृत्यं नास्ति ? कथम् ? न तावदावरणं प्रकाशविलोपः; स्वरूपस्यान-

## तत्त्वदीपनम्

न किंचनावद्यमिति द्रष्टव्यम्॥

उपादाननिवृत्तिमन्तरेणोपादेयनिवृत्तिपक्षेऽनिर्मोक्षप्रसङ्ग इति चोदयति—**कथं पुनरिति**॥ नच—ज्ञानादज्ञाननिवृत्त्यदृष्टावपि "तरत्यविद्यां वितताम्" इत्यादिवाक्याद् ज्ञानादज्ञाननिवृत्तिरिति—वाच्यम्; शास्त्रस्यापि दृष्टानुसारेणाज्ञाननिवृत्तिबोधकतानभ्युपगमादित्यभिप्रायेणाह—**दृष्टद्वारेणेति**॥ ज्ञानस्य विरोधिनिवर्तकतया लोके दृष्टत्वादज्ञानस्यापि ज्ञानविरुद्धत्वात्तन्निवर्त्यता घटत इत्याह—**नैष इति**॥ नीलार्थप्रतिपत्त्यप्रतिपत्त्योस्तत्रावरणस्य दुरधिगमत्ववत् विक्षेपस्यापि दुरधिगमत्वम्; अधिष्ठाने प्रतिपन्ने विपर्ययस्यैवाभावात्, अधिगते न तत्र विक्षेपाधिगतिः ? इत्याशङ्क्याह—**नचाऽऽवरणेति**॥ अधिष्ठानसामान्याकारसंघटिततया रूपान्तरं भ्रान्त्याऽधिगम्यते, तद्विशेषबोधस्य भ्रमविरोधित्वादिति कुत आवरणपक्षोक्तदोषप्रसङ्ग इत्यर्थः॥

अनात्मवदात्मनोऽज्ञानविषयत्वानुपपत्तिस्तज्जनितातिशयानिरूपणाद्? इति शङ्कते—**नन्वेवमिति**॥ अज्ञानैक्येऽपीत्यर्थः, अनात्माऽऽवरणं विना तत्र विक्षेपसम्भवेऽपीति वा॥ अज्ञानं निमित्तं यस्य तदज्ञाननिमित्तम्। आवरणं च तत्कृत्यं चेत्यावरणकृत्यम्। **ननु** अनात्मनि प्रकाशाप्रसक्त्या आवरणानुपपत्तावप्यात्मनि स्फुरद्रूप आवरणं सम्भवतीति चोदयति—**कथमिति**॥ तत्र वक्तव्यम्—किमावरणं प्रकाशनाशः? उत तत्कार्यप्रतिबन्धः? इति। तत्राऽऽद्यं दूषयति—**न तावदिति**॥ "न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते" इति स्वरूपानपायप्रतिपत्तेः स्वरूपविनाश आत्मनोऽपि विनाशप्रसङ्गाच्च नाऽऽद्यः पक्षो

## ऋजुविवरणम्

**ननु**—ज्ञानस्याज्ञानेन सह विरोधो दृष्टः, न तत्कार्येण, अतः कथं तन्मात्रनिवृत्तिः? इत्यपरितोषात् पक्षान्तरमाह—**अथवा मूलाज्ञानस्यैवेति**। ननु आत्माज्ञानव्यतिरेकेणाज्ञानान्तरसद्भावे प्रमाणं नास्तीत्युक्तमित्याशङ्क्याह—**अवस्थाभेदा इति**॥ ननु अवस्थाभेदाभ्युपगमे तस्य शुक्तिज्ञानेन निवृत्तावनन्तरं भ्रान्तिर्न स्यात्? मैवम्; अवस्थाऽऽनन्त्यात्। ननु समानाश्रयसमानविषयत्वेन विरोधसाम्यादेकेन ज्ञानेन सर्वावस्थानिवृत्तिः स्यात्? मैवम्; अवस्थायौगपद्याभावात्। ननु तर्हि कथमवस्थान्तरमुच्यते? पूर्वावस्था हि यावद्बाधमनुवर्तमाना विरोधबाधकज्ञानेन निवर्तमाना संस्कारमुत्पाद्य निवर्तते, तत्संस्कारसहकृतमज्ञानमवस्थान्तरमुत्पादयति, तच्च यावद्बाधमनुवर्तते इत्यानन्त्यात्, अथवा मूलाज्ञानस्य तत्तद्व्यावृत्तता तत्तदज्ञानमित्युच्यते, तद्रूपस्यैव विक्षेपजनकत्वात्; सा च तज्ज्ञानेन निवर्त्तमाना संस्कारमुत्पाद्य निवर्तते, संस्कारश्चाज्ञानस्य पुनस्तद्व्यावृत्ततां करोति, एवमुत्तरोत्तरभ्रमसिद्धिः। **केचित्**—अज्ञानवदवस्थानामनादित्वम्—आहुः, **तदसत्**; तथासत्येकेन तत्त्वज्ञानेन सर्वावस्थानिवृत्तिः स्यात्; एकविषयत्वात्। ननु—अनादित्वे विषयस्य युगपत्सर्वावस्थाविषयत्वं नास्तीति। किंचैकैकक्षणवच्छिन्नस्यैकैकावस्थाविषयत्वं कल्प्यते; तावतैव कार्यसिद्धेः। तथासति यद्यत्क्षणवच्छिन्नविषयमज्ञानम्, तत्तत्क्षणवच्छिन्नविषयज्ञानेन निवर्तते; अतो न सर्वनिवृत्तिः। मैवम्; यत्क्षणे ज्ञानं नास्ति, तत्क्षणवच्छिन्नविषयाज्ञानकल्पना सर्वथा निष्प्रयोजनैव; तथा बाधकज्ञानेन रजतोपादानाज्ञानानिवृत्तिप्रसङ्गः; भिन्नविषयत्वात्तयोः। विस्तरभयादपरं नोक्तम्।

रजताध्यासमात्रनिवृत्तिपक्षे चोदयति—**कथं पुनर्लोके इति। दृष्टद्वारेणेति॥ अयमर्थः**—शास्त्रतोऽज्ञानस्य बन्धनिवर्तकत्वेऽवगते विज्ञानमज्ञानस्यैव निवर्तकमिति व्याप्तिबलादज्ञानहेतुकत्वं कर्तृत्वादेर्निवृत्तिसिद्ध्यर्थमङ्गीकृतम्, यदा तु कार्यमात्रस्यैव लोके निवृत्तिः, तदा ब्रह्मज्ञानादपि कार्यमात्रनिवृत्तिर्भवेत्, न कारणनिवृत्तिः; तस्या लोकेऽदर्शनात्, लोकव्याप्तिमूलत्वात्, तस्येति॥ ननु जडे विक्षेपोऽपि कथमङ्गीक्रियते? आवरणपक्षदूषणसाम्यात्। तथाहि—ज्ञाते विषये विक्षेपो निश्चीयते? अज्ञाते वा? न ज्ञाते विक्षेपः; निवृत्तेः। नाज्ञाते; 'अत्र विक्षेपः' इत्यवगमायोगादित्याशङ्क्याह—**नचावरणपक्षोक्तेति**॥ रजतस्वरूपभ्रान्तिज्ञानमिदमाकारातिरिक्तं प्रतीयते, विक्षेपरूपं तु बाधकज्ञाने प्रतीयत इति भावः।

### पञ्चपादिका

**प्रत्यगात्मनि तु चितिस्वभावत्वात्स्वयम्प्रकाशमाने ब्रह्मस्वरूपानवभासस्यानन्यनिमित्तत्वात् तद्गतनिसर्गसिद्धाविद्याशक्ति-**

### पञ्चपादिकाविवरणम्

पायात्। नापि सत एव प्रकाशस्य कार्यप्रतिबन्धः; ज्ञानस्य विषयावभासात्मनोदितस्य स्वकार्ये प्रतिबन्धप्रतीक्षयोरभावात्। तस्माद् नैवात्मन्यपि भावरूपमज्ञानम्, अनुपयोगादिति ?

तत्राह—**"प्रत्यगात्मनि तु चितिस्वभावत्वात्स्वयंप्रकाशमाने"** इत्यादिना **"तस्यानवभासः"** इत्यन्तेन ग्रन्थेन॥ **अयमर्थः**— 'अस्ति, प्रकाशते इत्याद्यभिज्ञादिव्यवहारं प्रति पुष्कलकारणे सति—'नास्ति न प्रकाशते चे'ति योऽयमात्मतत्त्वालम्बनो

### तत्त्वदीपनम्

युक्त इत्यर्थः। द्वितीयं निरस्यति—**नापीति**॥ विषयस्य स्फुरणं कार्यम्, विषयावभासात्मनोत्पन्नत्वान्न तत्प्रतिबन्धुं शक्यते इत्यर्थः। नयनादिकारकाणां सहकारिप्रतीक्षया कार्यकरत्ववद् ज्ञानस्यापि कार्यजनने कारकत्वात्सहकार्यपेक्षा, ततश्च प्रतिबन्धसम्भव इति शङ्कां व्यावर्तयति—**प्रतीक्षेति**॥ ज्ञानस्य कारकत्वे सहकार्यपेक्षा, तदेवासिद्धम्, कार्यं कुर्वाणं कारकमित्युच्यते, न चेदमर्थाश्रयमतिशयमादधाति; प्रध्वस्तादिषु तदसम्भवादित्यर्थः। आवरणासम्भवफलमाह—**तस्मादिति**॥ ननु प्रत्यक्षादिनाऽज्ञानमसाधि, अतः कथमाक्षेप इति ? तत्राह—**अनुपयोगादिति**॥ नाज्ञानमदृष्टार्थम्, किन्त्वावरणार्थम्, तच्चोक्तविधया दुर्निरूपमिति, कथमज्ञानसिद्धिरित्यर्थः।

आवरणाभावे नित्यमुक्तत्वप्रसङ्गात् तदेष्टव्यमिति समाधत्ते—**तत्राहेति**॥ अवारणदुर्निरुपत्वे चोदिते तत्प्रतिसमाधेयम्, नच प्रतिसमाधीयते; नचानवभासस्याऽऽवरणकल्पकत्वम्, पुरुषान्तरसंवेदने व्यभिचारात्, 'प्रत्यगात्मनी'ति विशेषणकृत्यं च न पश्याम इत्याशङ्क्य तात्पर्यमाह—**अयमर्थ इति**॥ 'नास्ति न प्रकाशते चे'ति योऽयमात्मालम्बनो व्यवहारः, स आत्मन्यावरणमन्तरेण नोपपद्यत इति सम्बन्धः। नचैवंविधो व्यवहारोऽस्ति; अहमिति सत्तास्फूर्तिदर्शनादित्याशङ्क्य कर्त्राद्यात्मकव्यवहारेऽप्यशनायाद्यतीतात्मनि नैवंविधो व्यवहार इत्याह—**आत्मतत्त्वेति**॥ आवरणमन्तरेणापि पुरुषान्तरसंवेदनवत् तथा व्यवहारोपपत्तिरित्याशङ्क्याह—**अस्ति प्रकाशत इति**। अभावस्याऽऽवारकत्वं व्यावर्तयितुम्—**भावरूपेणेत्युक्तम्**॥ आवरणाभावेऽप्येवंविधो व्यवहारः किं न स्यात् ? इत्याशङ्क्याह—**सति पुष्कलकारण इत्यादिना**॥

### ऋजुविवरणम्

यद्यपि जडे विक्षेप एव नावरणम्, तत्र च दूषणाभावः, विषयत्वव्यपदेशोऽपि घटते; तथाच सति आत्मन्यपि नावरणमिति चोदयति—**नन्वेवमपीति**॥ अज्ञानं निमित्तं यस्याऽऽवरणस्य तदज्ञाननिमित्तम्। **यद्वा**—अज्ञाने निमित्तम्, अज्ञाननिमित्तम्; आवरणमेव कृत्यम्, आवरणकृत्यम्। **अयमर्थः**—आत्मन्यावरणाभावे विक्षेपाभावः, विक्षेपाभावे चाज्ञानाभावः, अज्ञानाभावे च विषये विक्षेपोऽपि न स्यादिति॥ **ननु** जडे प्रकाशप्रसक्त्यभावाच्चैतन्यप्रतिबन्धाच्चाप्रतिभाससम्भवान्नावरणम्, आत्मनि तु चिद्रूपत्वेन सर्वदा प्रकाशप्रसक्तावनवभासनिमित्तमावरणं सम्भवत्येवेत्याक्षिपति—**कथमिति**। **प्रतीक्षेति**॥ **अयमर्थः**—उत्पन्नस्य कार्योत्पादनसमर्थस्याऽप्यन्यापेक्षया कार्यकरत्वं प्रतीक्षा। सा न ज्ञाने सम्भवतीति। **तस्माद् नैवात्मन्यपीति**॥ आवरणेनाज्ञाननिश्चयः, तदभावे नेति। ननु आवरणमज्ञानं साधितम्, कथमाक्षेपः ? उच्यते, नार्थापत्त्या तत्सिद्धिः; उपादानोपक्षयात्। नानुमानेन; आवरणानिरूपणेनाप्रसिद्धविशेषणत्वात्, प्रत्यक्षेणावरणासिद्धेरुक्तत्वात्। एवं चाज्ञानोपादानत्वमनुपपन्नं व्यर्थं च, तदेतदाह—**अनुपयोगादिति**॥

ननु "प्रत्यगात्मनी"त्ययं ग्रन्थो नावरणं गमयति। तथाहि—चिद्रूपत्वेन स्वयंप्रकाशत्वसाधनं नावरण उपयुज्यते। न हि स्वयंप्रकाशे प्रतिबन्धादेवानवभास इति नियमः; व्यभिचारात्। नाप्यनन्यनिमित्तत्वम्; असिद्धत्वात्, इतरेतराश्रयप्रसङ्गाच्च—अनन्यनिमित्तत्वे सिद्धे प्रतिबन्धसिद्धिः, प्रतिबन्धे सिद्धेऽनन्यनिमित्तत्वसिद्धिरिति। नापि स्वयंप्रकाशत्वेनानन्यनिमित्तत्वसिद्धिः; तत्रापि व्यभिचारात्, पुरुषान्तरसंवेदनादावनवभासस्य च सामान्येन कारणकल्पकस्य व्यापकविशेषाभावसहकृतस्यैवार्थविशेषसाधकत्वात्। तस्मात् प्रमाणानुपन्यासात् स्वरूपानिरूपणाच्च नावरणसिद्धिरनेन ? इत्याशङ्क्याह—**अयमर्थ इति**॥ 'नास्ति न प्रकाशते चेति योऽयमात्मतत्त्वावलम्बनो व्यवहार' इति अर्थापत्तौ सामान्यव्याप्तिप्रदर्शनम्,

## पञ्चपादिकाविवरणम्

व्यवहार:, स भावरूपेण केनचिदात्मन्यावरणमन्तरेण नोपपद्यते; सति पुष्कलकारणेऽसति चावरणे, सन्निहिते घटे 'प्रकाशते' इत्यादिव्यवहारदर्शनात्। अतो "नास्ति ब्रह्म, न प्रकाशते चे"ति व्यवहारोऽन्यथानुपपत्त्या भावरूपमज्ञानं गमयति इत्यर्थापत्तिः अनुमानं वा समुदायार्थः। तत्सिद्धयर्थमात्मनि 'प्रकाशते' इत्यादिव्यवहारं प्रति पुष्कलकारणतां दर्शयति—**चितिस्वभावत्वादिति** ॥ किं तर्ह्यावरणमिति ? तत्राह—**ब्रह्मस्वरूपानवभासस्येति** ॥ 'नास्ति न प्रकाशते' इति व्यवहारालम्बनयोग्यत्वस्य व्यवहारकार्यदर्शनादेव कल्प्यमानस्येत्यर्थः। नचाधिष्ठानप्रतिबन्धमन्तरेण तत्र विपर्ययकार्यमुपपद्यते।

## तत्त्वदीपनम्

सन्निहितेऽप्यर्थे कुड्यादिनावृते 'प्रकाशते' इति व्यवहाराभावः, तदर्थम्—**असति चेति** ॥ एवमपीन्द्रियसंयोगाद्यभावे नैतादृशो व्यवहारः, तदर्थमाह—**सति पुष्कलेति** ॥ इन्द्रियसंयोगमात्रं पुष्कलकारणशब्दार्थः। मा भूत् तर्हि व्यवहारः ? इत्याशङ्क्य तस्योपलभ्यमानत्वादावरणं कल्प्यमित्याह—**अत इति** ॥ **अनुमानं** वेत्यस्यायमर्थः—विमतो व्यवहारः, भावरूपाज्ञानप्रयुक्तावरणनिमित्तः, 'अस्ति प्रकाशते' इति व्यवहारपुष्कलकारणे सति तद्विपरीतव्यवहारत्वात्; यन्नैवं न तदेवम्, यथा 'अस्ति प्रकाशते घटः' इति व्यवहार इति ॥ एवं तात्पर्यमभिधायाक्षरार्थं दर्शयति—'**तत्सिद्धयर्थमि**'त्यादिना '**प्रत्यक्चिती**'त्यन्तेन ग्रन्थेन ॥ विशेषणवैयर्थ्यमित्युक्तम् ,तन्निरस्यति—**तत्सिद्धयर्थमिति** ॥ अर्थापत्त्यनुमाने तच्छब्दार्थः। जडे वस्तुन्यनवभासोऽग्रहणनिमित्तः, न तथाऽऽत्मनि; स्वप्रकाशत्वादित्यर्थः। आवरणं दुर्निरूपमित्युक्तमनुवदति—**किं तर्हीति** ॥ अनवभास एव दुर्निरूप इति ? तत्राह—**नास्तीति** ॥ योग्यतायाः कल्पकमाह—**व्यवहारेति** ॥ अनात्मनि प्रतिबन्धमन्तरेण विक्षेपवदात्मनि विक्षेपोऽस्तु, किं प्रतिबन्धेनेत्याशङ्क्यानवच्छिन्नसंविद्रूपाऽऽनन्दात्मनि प्रतिबन्धं विना विक्षेप एव नोल्लसति। अन्यत्र स्वत एव प्रतिबद्धत्वान्न प्रतिबन्धापेक्षेत्याह—**नचेति** ॥ आत्मा स्फुरद्रूप आवृत इत्येतद्विरुद्धमित्याशङ्क्य, किमावरणप्रतीतिर्निरस्यते ? उत यौक्तिकत्वम् ? नान्त्यः; अङ्गीकृतेः,

## ऋजुविवरणम्

अनुमाने च धर्मिनिर्देशः, भावरूपेणत्यनेनार्थापत्तौ तेन विनानुपपत्तिप्रदर्शनम्, अनुमाने च साध्यनिर्देशः। "आवरणातिशयमन्तरेणे"त्युक्तेरभावादेरप्यावरणत्वादन्यथोपपत्तिस्सिद्धसाध्यता च स्यात्, तत्परिहारार्थम्—"**भावरूपेणे**"ति। "अस्ति प्रकाशते—इत्याद्यभिज्ञादिव्यवहारं प्रति पुष्कलकरणे सति 'नास्ति' 'न प्रकाशते चे'ति योऽयमात्मतत्त्वावलम्बनो व्यवहारः" इत्यनेनैवार्थापत्तौ व्यापकविशेषाभावप्रदर्शनम्, अनुमाने च हेतुनिर्देशः। "**सतिपुष्कलकारणे**" इत्यादिनाऽन्यथोपपत्तिः परिहृता, अनुमाने च व्यतिरेकव्याप्तिरुक्ता। सत्यपि पुष्कलकारणे यद्यावरणेन विना "न प्रकाशते" इति व्यवहारो भवेत्, तथाच सति नायं व्यवहार आवरणसाधकः स्यात्; तेन विनाप्युपपत्तेः, व्यतिरेकव्याप्तिश्च न सिद्धयेत्। एतदुक्तं भवति—यो भावरूपावरणातिशयनिमित्तो न भवति, नासौ सति पुष्कलकारणे "नास्ति न प्रकाशत" इति व्यवहारः; यथा सन्निहिते घटे प्रकाशत इति व्यवहार इति। **अनुमानं वेति** विषयव्याप्त्यर्थं पक्षान्तरप्रदर्शनम्, नापरितोषात्। तदुक्तम्—

> "सर्वव्याख्याविकल्पानान्त्विदमिष्टं प्रयोजनम्।
> पूर्वत्रापरितोषो वा विषयव्याप्तिरेव वा" ॥ इति।

इदानीमवान्तरपदानुपयोगं परिहरति। तत्र व्यापकविशेषाभावहेत्वोः सिद्धयर्थं स्वयंप्रकाशत्वसाधनमित्याह—**तत्सिद्धयर्थमिति** ॥ "**अनवभासस्ये**"त्यनेन कारणान्तरसापेक्षत्वाद् यदस्य कारणं तदावरणमित्युक्तम्। तत्र सत्यनवभासे तन्निमित्तमावरणमित्युच्येत, स एव स्वरूपतो निरूपयितुं न शक्यते, प्रमाणं च नास्ति, पौष्कल्यमात्रं च नावरणसाधकमित्याशङ्क्याभिप्रायमाह—**नास्ति न प्रकाशत इतीति** ॥ **यद्वा**—"स्वरूपानवभासस्ये"त्यनेनानवभासस्यावरणत्वमुक्तम्। सिद्धे ह्यस्तित्वे तस्यावरणत्वं निरूप्येत, तदस्तित्वमेव कथम् ? इत्याशङ्क्याभिप्राय उक्तः—**नास्ति न प्रकाशत इतीति** ॥ ननु व्यवहारदर्शनाद्धेतुः कल्पितः, कथं तस्यावरणत्वमिति ? तदाह—**नचाधिष्ठानेति** ॥ **यद्वा**—तत्रापि विक्षेपमात्रमेवाङ्गीक्रियताम्, तावतैव विपरीतव्यवहारस्याप्युपपत्तेः, इत्याशङ्क्याह—**नचाधिष्ठानेति** ॥ ननु—व्यवहारदर्शनात् कल्पितयोग्यत्वस्य कथमावरणत्वम् आवरणस्य निरूपणासहत्वेन, तत्स्वरूपे पृष्टे योग्यतारूपत्वे तद्धेतुत्वे वा निरूपणासहत्वस्य तदवस्थत्वात्, प्रमाणविषयस्य चानिरूपितत्वायोगाद् ? इत्याशङ्क्याभिप्रायमाह—**अविद्यासंबन्धत्वादेवेति** ॥ **ननु प्रमाणवैकल्यादेवेति** ॥ पुरुषान्तरसंवेदनवदिति चोद्याभिप्रायः। अन्यत्वाभावादिति परिहाराभिप्रायः। ननु एवमप्यज्ञानमेव कस्मात् प्रतिबन्धकं भवेत्।

### पञ्चपादिका

**प्रतिबन्धादेव तस्यानवभासः । अतः सा प्रत्यक्चिति ब्रह्मस्वरूपावभासं प्रतिबध्नाति, अहङ्काराद्यतद्रूपप्रतिभासनिमित्तं च भवति, सुषुप्तादौ चाहङ्कारादिविक्षेपसंस्कारमात्रशेषं स्थित्वा पुनरुद्भवति, इत्यतो नैसर्गिकोऽप्यहङ्कारममकारात्मको मनुष्याद्यभिमानो**

### पञ्चपादिकाविवरणम्

अविद्यासम्बन्धादेवावरणस्यानिरूपिताकारता च युक्तेति भावः । ननु प्रमाणवैकल्यादेवात्राप्यग्रहणमिति ? नेत्याह—**अनन्यनिमित्तत्वादिति** ॥ अतोऽनवभासात्पुष्कलकारणे सति परिशेषादिदमायातमित्याह—**तद्गतनिसर्गसिद्धाविद्याशक्तिप्रतिबन्धादेव तस्यानवभास इति** ॥ मूर्तद्रव्यान्तरस्यासम्भवादिति भावः । अतः कार्यदर्शनोन्नेयमावरणकृत्यं विपर्ययं चात्मनि कुर्वाणमज्ञानं भावरूपमेवोभयकारणत्वान्यथानुपपत्त्या कल्प्यत इत्याह—**अतः सा प्रत्यक्चितीति** ॥

ननु अग्रहण-मिथ्याज्ञान-तत्संस्कारेभ्योऽन्यदज्ञानं नाम न पश्यामः, त एव च जीवस्य स्वयंप्रकाशमानमपि ब्रह्मस्वरूपावभासं प्रतिबध्नन्तीति ? नेत्याह—**सुषुप्तादौ चेति** ॥ तत्राप्यविद्याशक्तिः संस्कारशेषं तिष्ठति न संस्कारादय एवाज्ञानमित्यर्थः । कथम् ? न तावत्सुषुप्तादौ स्वयंप्रकाशब्रह्मस्वरूपानवभासः पुरुषान्तरसंवेदनवद् द्रष्टुर्भिन्नत्वादिति

### तत्त्वदीपनम्

इत्याह—**अविद्येति** ॥ चशब्देनाप्रतीतिपक्षं निरस्यति । अहमज्ञो, मामन्यं च न जानामीत्यावरणानुभवान्न तन्निरास इत्यर्थः । स्वयंप्रकाशेऽपि पुरुषान्तरसंवेदने यथाऽग्रहणम्, तद्वदत्रापीत्याह—**ननु प्रमाणेति** ॥ तत्र भिन्नत्वात् प्रमाणवैकल्यादग्रहणं युक्तम्, अत्र तु ब्रह्मणः प्रत्यक्त्वान्नैवमित्याह—**नेत्याहेति** ॥ अज्ञानादन्यद् निमित्तं यस्य न विद्यते तदनन्यनिमित्तम्, तस्य भावस्तत्त्वम्; तस्मादित्यर्थः । हेत्वसिद्धिमुक्तां निरस्यति—**अत इति** ॥ निमित्तान्तरदुर्निरूपत्वम् अतःशब्दार्थः । कुड्यादेरपि व्यवधायकत्वदर्शनात् कथमज्ञानमेव व्यवधायकम् ? तत्राह—**मूर्तेति** ॥ ब्रह्मणः प्रत्यक्स्वरूपत्वान्न मूर्तद्रव्यं तद्व्यवधायकमित्यर्थः ॥ तथाऽपि कथं भावरूपाज्ञानसिद्धिरित्याशङ्क्याह—**अत इति** ॥ भावरूपेणेत्यत्र तात्पर्यार्थः कथितः, अत्र त्वक्षरार्थ इत्यपौनरुक्त्यम् ।

अज्ञानशब्दार्थपर्यालोचनयाऽग्रहणाद्येवाज्ञानमिति शङ्कते—**नन्वग्रहणेति** ॥ अज्ञानमित्यत्र नञः किमभावोऽर्थः ? उत तद्विरोधी ? आहो तदन्यः ? आद्ये ग्रहणाभावः स्यादित्याह—**अग्रहणेति** ॥ द्वितीये ग्रहणनिवर्त्यभ्रान्तिज्ञानमेव स्यादित्याह—**मिथ्याज्ञानेति** ॥ तृतीये संस्कारः स्यादित्याह—**तत्संस्कारेति** ॥ आवरणानुपपत्त्या ग्रहणादिविलक्षणं ग्रहणनिवर्त्यमज्ञानमित्याशङ्क्यान्यथोपपत्तिमाह—**त एवेति** ॥ विक्षेपहेतुत्वमपि तेषामेवेति च-शब्दार्थः । अज्ञानशब्दस्यान्यथा व्युत्पत्तेर्नैवमित्याह—**नेत्याहेति** ॥ संस्कारमात्रमेव शेषो यस्याज्ञानस्य तत्संस्कारमात्रशेषमिति अज्ञानाभावः प्रतीयत इत्याह—**तत्रापीति** ॥ अहंकारादिविक्षेपस्य विपरीतरूपस्य संस्कारमात्रस्य शेषो यस्मिन् तत्तथोक्तम्; शेष शब्दो भावप्रधानः । तच्छेषत्वं यथा स्यात्तथा सुषुप्त्यादौ स्थित्वा जागरादौ कर्मवशाद्विक्षेपरूपेण प्रादुर्भवति, ततश्चानवभासविक्षेपहेत्वज्ञानमेष्टव्यम्; इतरथा संस्कारमात्राद्विक्षेपप्रादुर्भावासम्भवात् सुषुप्त्यादौ मुक्त्यापत्तेश्चेति **टीकार्थः** ॥ सुषुप्त्यादावज्ञानस्य कल्पकाभावात्कथं तत्रावस्थानमिति टीकार्थानभिज्ञः शङ्कते—**कथमिति** ॥ ब्रह्मानवभासानुपपत्त्या तत्राज्ञानसिद्धिः । नचान्यथासिद्धः । तथाहि—किं भिन्नत्वादनवभासः ? उत मिथ्याज्ञानात् ? आहो तत्संस्कारात् ? अथवाऽग्रहणात् ? किं वा कर्मणः ? उतान्यस्मात् ? इति विकल्प्याद्यं निरस्यति—**न तावदिति** ॥ नच—अनन्यनिमित्तत्वादित्यत्रास्य कल्पस्य निरस्तत्वात् पुनस्तन्निरसनमनुपपन्नमिति—शङ्क्यम्; मतभेदेन पुनर्निराससम्भवादित्यर्थः । द्वितीयं दूषयति—**नापीति** ॥ सुषुप्तेः सर्वकार्यप्रविलयरूपत्वात्तत्र मिथ्याज्ञानाभाव

### ऋजुविवरणम्

इत्याशङ्क्यावतारयति—**अतोऽनवभासादिति** ॥ तथाऽपि पारिशेष्यमसिद्धम्, लोकप्रसिद्धद्रव्यान्तरमेव कस्मान्न भवतीत्याशङ्क्याभिप्रायमाह—**मूर्तद्रव्यान्तरस्येति** । एवमपि कथं परिशेषः ? अभावादेरपि संभवादित्याशङ्कानिवृत्तौ तात्पर्यमाह—**अतः कार्यदर्शनोन्नेयमिति** ॥

**नन्वग्रहणेति** ॥ अयं भावः—विक्षेपकार्यस्यादर्शनादिति मा भूद् विक्षेपः, आवरणादज्ञानं निश्चीयत इति चेत् ? न; अन्यथासिद्धत्वादित्याह—**त एव जीवस्येति** ॥ संस्कारमात्रमेव शेषो यस्याज्ञानस्य, तदज्ञानं संस्कारमात्रशेषमिति व्युत्पत्त्या ज्ञानाभावः प्रतीयते, तन्निवृत्त्यर्थमाह—**तत्राप्यविद्याशक्तिरिति** ॥ विक्षेपस्य संकारो विक्षेपसंस्कारः, विक्षेपसंस्कार-

## पञ्चपादिकाविवरणम्

शक्यं वक्तुम्; एकत्वश्रुतेः। नापि मिथ्याज्ञानप्रतिबन्धात्; तत्र तस्याभावात्। नापि तत्संस्कारप्रतिबन्धात्, भ्रान्तिसंस्काराणां तत्त्वावभासप्रतिबन्धकत्वाभावात्; सत्स्वपि रजतभ्रमसंस्कारेषु शुक्तिकावबोधदर्शनात्; नाप्यग्रहणप्रतिबन्धात्, स्वरूपग्रहणस्य नित्यत्वात्, स्वयंप्रकाशमाने संवेदने तद्विषयकादाचित्काग्रहणस्याप्रतिबन्धकत्वात्। नापि कर्मणां स्वरूपावभासविरोधिता, सर्वदाऽणुमात्रस्यापि चैतन्यस्यानवभासप्रसङ्गात्। अज्ञानेऽपि तुल्यमिति चेत्? न; तस्य स्वविषयचैतन्यावभासं प्रत्यप्रतिबन्धकत्वात्, नचाज्ञानस्येव कर्मणां नित्यवत्साक्षिचैतन्येनावभास्यता, येन तदवभासकतया साक्षिचैतन्यमप्रतिबद्धं प्रकाशेत। नच कर्माणि स्वाश्रयावभासविरोधीनीति प्रमाणमस्ति। संस्कारत्वाच्च कर्मणां भ्रान्तिसंस्कारवदप्रतिबन्धकता। तस्मात् सुषुप्तादौ स्वरूपानवभासव्यवहारोऽग्रहण-मिथ्याज्ञान-तत्संस्कार-कर्मभ्योऽन्यदेव किंचित्प्रतिबन्धकमज्ञानं कल्पयतीत्यर्थः। ननु द्रव्यान्तरमेव प्रतिबन्धकं कल्प्यताम्, किमज्ञानकल्पनयेति? नैतत्; ब्रह्माज्ञानात्प्रतिबन्धनिवृत्तिमन्तरेण स्वविषयावभासायोगात्; ज्ञाननिवर्त्यस्य चाज्ञानत्वात्॥

## तत्त्वदीपनम्

इत्यर्थः। तृतीयं दूषयति—**नापि तत्संस्कारेति**॥ प्रतिबन्धकत्वाभावे हेतुमाह—**सत्स्वपीति**॥ विमतः, न तत्त्वावभासप्रतिबन्धकः, संस्कारत्वात्; रजतभ्रमसंस्कारवदित्यर्थः। चतुर्थं दूषयति—**नाप्यग्रहणेति**॥ किमग्रहणं स्वरूपग्रहणस्याभावः? उत आगन्तुकस्य? नाद्य इत्याह—**स्वरूपेति**॥ **स्वरूप** इति हेतुगर्भविशेषणम्। द्वितीयं प्रत्याह—**स्वयंप्रकाशमान इति**॥ कादाचित्कग्रहणाभावेऽप्यात्मनः स्फुरणान्न तस्य प्रतिबन्धकत्वमित्यर्थः। पञ्चमं निरस्यति—**नापीति**॥ अनवच्छिन्नाऽऽनन्दात्मचैतन्यस्यानवभासप्रसञ्जनमिष्टमिति शङ्कां निरस्यति—**अणुमात्रस्येति**॥ अज्ञानप्रतिबन्धे सत्यपि यथा चिन्मात्रावभासस्तव, तथा कर्मप्रतिबन्धपक्षेऽपीत्याशयेन शङ्कते—**अज्ञानेऽपीति**॥ वैषम्यान्नैतदित्याह—**न तस्येति**॥ अज्ञानस्य चित्प्रतिभास्यत्वान्न चित्प्रतिबन्धकत्वमित्यर्थः। स्वं विषयो यस्य चैतन्यावभासस्य स तथोक्तः। कर्मणामपि चिद्भास्यत्वान्न चित्प्रतिबन्धकत्वमित्याशङ्क्य, किमेतत्त्वन्मतमाश्रित्योच्यते? उत मन्मतमिति विकल्प्याऽऽद्यं प्रत्याह—**न चाज्ञानस्येति**॥ फलोदयानुपपत्तिगम्यत्वात्कर्मणामित्यर्थः। द्वितीयं प्रत्याह—**नचेति**॥ न केवलं प्रतिबन्धकत्वे मानाभावः, अस्ति वैपरीत्ये मानमित्याह—**संस्कारत्वादिति**॥ विमतानि, न प्रतिबन्धकानि, संस्कारत्वात्; भ्रान्तिसंस्कारवत्। नचासिद्धिः; कर्मशब्देन यागादिसूक्ष्मरूपाभिधानादित्यर्थः। प्रतिबन्धकान्तरस्य चानिरूपणादनादिभावरूपाज्ञानमेष्टव्यमित्याह—**तस्मादिति**॥ अखण्डतमोगुणस्य तत्प्रतिबन्धकत्वान्न परिशेषादज्ञानसिद्धिरिति शङ्कते—**ननु द्रव्यान्तरमिति**॥ प्रमाणाभावान्नैवमित्याशङ्क्य, "ज्ञानमावृत्य तु तमः प्रमादे सञ्जयत्युते" त्युभयसिद्धस्य तमसः

## ऋजुविवरणम्

मात्रं शेषो यस्मिन् अज्ञान इति व्युत्पत्तिः प्रदर्शिता। मात्रग्रहणेन विक्षेपस्यैव संस्काररूपेणावस्थानम्, आवरणे तु स्वेन रूपेणावस्थानमिति विभागः प्रदर्शितः। **संस्कारमात्रशेषम्,** विक्षेपसंस्कारयुक्तमित्यर्थः। कथं वा संस्कारादीनामज्ञानस्वाभावः? कथं वा स्वरूपानवभासेनाज्ञानकल्पनम्? अन्यथासिद्धेरित्याक्षिपति—**कथमिति**॥ अनन्यथासिद्धानवभाससामर्थ्यादज्ञानं कल्प्यत इति निदर्शयितुमन्यथासिद्धिं निराकुर्वन् वाचः क्रमवर्तित्वात् स्थूलत्वाच्च भेदस्य तमेवादौ निराकरोति—**न तावदिति॥ तत्र तस्याभावादिति,** बोधप्रत्यस्तमयरूपत्वात्सुषुप्तेरित्यर्थः॥ "नापि तत्संस्कारप्रतिबन्धादि" त्यनेन संस्कारस्य कथं प्रतिबन्धकत्वं निराक्रियते, संस्कारादप्यग्रहणानुवृत्तेर्वक्ष्यमाणत्वात्? नैष दोषः; अज्ञानसंस्कारस्य तदुपपत्तेर्ज्ञानसंस्कारस्य न तथेति वैषम्यम्। **अथवा**—तत्र संस्कारशब्दोऽविद्यालेशपर इत्यनवद्यः। ननु—संस्कारस्याप्रतिबन्धकत्वे निश्चिते संस्कारत्वादिहाप्रतिबन्धकत्वम्, तदेव सन्दिग्धम्; प्रतिबन्धसमये संस्कारस्यापि संभवादित्याशङ्क्याह—**सत्स्वपि रजतेति**॥ "अग्रहणमि" ति स्वरूपग्रहणाभावः? कदाचिद् ग्रहणाभावो वा? इति विकल्प्य प्रथमपक्षं दूषयति—**स्वरूपग्रहणस्येति**॥ न द्वितीय इत्याह—**स्वयंप्रकाशमान इति**॥ तद्विषयाग्रहणे विद्यमानेऽपि स्वरूपग्रहणप्रयुक्तव्यवहारदर्शनादिति भावः। तर्हि कर्मणां प्रतिबन्धकत्वमस्त्वित्याशङ्क्याह—**नापि कर्मणामिति**॥ ननु अज्ञानस्येव कर्मणामपि स्वाभासप्रतिबन्धकत्वं नास्ति, अतः कथं सर्वानवभास इति? तत्राह—**नचाज्ञानस्येति**॥ ननु सर्वस्य साक्षिवेद्यत्वात् कर्मणामपि साक्षिवेद्यत्वम्, तथाच सति किञ्चित्प्रकाशते, किंचित्प्रतिबध्यते, इत्याशङ्क्याह—**नच कर्माणीति**॥ कर्मणां निश्चिते प्रतिबन्धकत्वे कथंचिदेवं कल्प्येत, तदेवासिद्धमिति भावः। ननु अनवभासे किञ्चित्कारणं कल्पनीयम्, तत्र कर्मणां सर्वकारण-

## पञ्चपादिकाविवरणम्

**अत्र कश्चित्**—भेदाभेदाभ्यां सर्वसंकरवादी वेदान्तार्थगहनसम्प्रदायहीनो दुर्ज्जनरमणीयां वाचं जल्पति—न किलाग्रहण-मिथ्याज्ञान-तत्संस्कारेभ्योऽन्यत् सकलसंसारबीजभूतमवस्थात्रयेऽप्यनपाय्याऽऽसंसारविमोक्षादृण्डायमानमज्ञानं नामास्ति, किन्तु भ्रान्तिज्ञानमग्रहणं वाऽज्ञानम्—इति।

**अयं प्रष्टव्यः**—केयं भ्रान्तिरिति ? अहंकारादिशरीरपर्यन्तेऽनात्मन्यात्मबुद्धिरिति चेत् ? अहो विस्मरणशीलता सर्वत्र सङ्कीर्णचेतसः। खण्डो गौरित्यादिभेदाभेदप्रत्ययं प्रमाणमुपपादयन् 'अहं मनुष्यः' इति प्रत्ययं भेदाभेदविषयं किमित्युपेक्षसे ? 'नाहं मनुष्यो ब्रह्मास्मी'ति प्रत्ययसामर्थ्यादिति चेत् ? तन्न; 'नायं खण्डो गौः; किंतु मुण्डो गौरि'ति प्रत्ययेऽपि खण्ड-मुण्डाभ्यां

## तत्त्वदीपनम्

प्रतिबन्धकत्वसम्भवान्नाज्ञानकल्पनमित्याह—**किमज्ञानेति**॥ विकल्पासहत्वान्नैवमित्याह—**नैतदिति**॥ द्रव्यान्तरं नित्यम् ? अनित्यं वा ? नाद्य इत्याह—**ब्रह्मेति**॥ कुम्भप्रतिपत्तिप्रतिबन्धकसंतमसध्वंसे कुम्भोपलम्भवत् प्रतिबन्धकभङ्गे ब्रह्मप्रतिपत्तिर्वक्तव्या, नच नित्यत्वे तद्भङ्गः सुकर इत्यर्थः। द्वितीयेऽपि तत्किं कर्मणा निवर्त्यते ? उत ज्ञानेनेति ? नाद्यः; मानाभावात्, अयुक्तेश्चेत्यभिप्रेत्य द्वितीयं दूषयति—**ज्ञानेति**॥

तत्र स्वपक्षं प्रसाध्य परपक्षं प्रतिक्षेप्तुं तमुत्थापयति—**अत्रेति**॥ भाट्टमताद्विशेषमाह—**सर्वेति**॥ पञ्चस्थलेष्वेव भेदाभेदौ भाट्टमते, अस्य तु सर्वत्रेति विशेषः। जल्पने हेतुमाह—**वेदान्तार्थेति**॥ वेदान्तव्याख्यातृत्वात्तस्यापि संप्रदायवित्त्वम्, तत्राह—**गहनेति**॥ वेदान्तार्थश्चासौ गहनश्चेति वेदान्तार्थगहनः, तत्र संप्रदायहीन इत्यर्थः। वेदान्तार्थे गहनो यः संप्रदायस्तद्धीन इति वा विग्रहः। तर्हि तज्जल्पननिरासप्रयासो मुधा, तत्राह—**दुर्जनेति**॥ **दुर्जनाः** श्रौत-स्मार्तमार्गाननुसारिणः। जल्पनमाह—**न किलेति**॥ संसारकार्यानुपपत्त्याऽज्ञानं कल्प्यते ? इत्याशङ्क्य परमार्थत्वान्न तस्याज्ञानकार्यत्वमित्याह—**सकलेति**॥ "सता सोम्य तदा सम्पन्नो भवति" इत्यादिवाक्यात् सुषुप्तौ ब्रह्माभावप्रतिपत्तेर्नाज्ञानलक्षणं प्रतिबन्धकमस्ति, ततश्च न तस्य संसारहेतुत्वमित्याह—**अवस्थात्रयेऽपीति**॥ "एतं ब्रह्मलोकं न विन्दन्ति" "सति संपद्य न विदु"रिति चाज्ञानस्थितिप्रतिपत्तेर्वचनान्तरस्य च विक्षेपाभावाभिप्रायत्वादज्ञानस्य कथं संसारहेतुत्वाभावः ? इत्याशङ्क्याह—**आसंसारेति**॥ संसारविमोक्षात् प्रागविच्छिन्नम्, उत्तरकाले च विच्छिन्नमज्ञानं नेत्यर्थः। चित्प्रकाशस्याविरोधित्वाद् जडप्रकाशस्य च सुतरामविरोधित्वान्नाज्ञाननिवृत्तिसम्भव इत्यर्थः॥ किं तर्ह्यनवभासनिमित्तमिति शङ्कते—**किंत्विति**॥ अग्रहणाद्येवानवभासनिमित्तमित्याह—**भ्रान्तीति**॥ च-शब्दात्संकारस्याज्ञानत्वमुक्तम्।

भ्रान्तेरज्ञानत्वे निरस्तेऽर्थात्तत्संस्कारस्याज्ञानत्वं निरस्तं स्यात्, अग्रहणं त्वयोग्यतया प्रतिषिद्धमित्यभिप्रेत्य भ्रान्तिं निरस्यति—**अयं प्रष्टव्य इति**॥ भिन्नाभिन्नविषयत्वेन सर्वप्रत्यययाथार्थ्यान्न भ्रान्तिसिद्धिरिति किंशब्दार्थः॥ प्रश्नं मत्वोत्तरमाह—**अहंकारेति**॥ सिद्धान्ती सोपहासमाशयमाविष्करोति—**अहो इति**॥ विस्मरणशीलत्वमाह—**खण्ड इति**॥ विमतम्, प्रमाणम्, भिन्नाभिन्नविषयत्वात्; खण्डो गौरिति प्रत्ययवदित्यर्थः। विमतम्, अप्रमाणम्, निषिध्यमानविषयत्वात्; इदं रजतमिति प्रत्ययवदित्यनुमानविरोधं शङ्कते—**नाहमिति**॥ निषिध्यमानविषयत्वमात्रं हेतुः ? उत प्रतिपन्नोपाधौ निषिध्यमानविषयत्वम् ? नाद्यः; व्यभिचारादित्याह—**तन्न, नायमिति**॥ द्वितीयमनुवदति—**इदंरजतवदिति**॥ इदमि प्रतिपन्नं रजतं तत्रैव निषिध्यते—नेदं रजतमिति यथा, तथाऽऽत्मनि प्रतिपन्नं मनुष्यत्वं तस्मिन्निषिध्यत इति तस्य भ्रान्तित्वम्। 'खण्डो गौरि'त्यस्य तु तद्वैपरीत्यान्न भ्रान्तित्वमित्यर्थः। एषोऽपि हेतुस्तत्र व्यभिचरतीत्याह—**न; खण्डो गौरिति**॥ गोत्वोपाधौ प्रतिपन्नस्य खण्डस्य न तत्र निषेधः, किंतु मुण्ड इति न तत्र व्यभिचार इत्याशङ्क्याह—**नायं खण्ड इति**॥ किं खण्डस्य केवलमुण्डे निषेधः उत गोत्वोपहिते ? नाद्यः; अप्रसक्तेः; 'इह भूतले घटो ने'त्यन्यत्र भूतलसंसृष्टतया प्रतिपन्नस्य स्मर्यमाणस्यान्यत्र निषेधो दृष्टः,

## ऋजुविवरणम्

त्वात्तेषामेव कारणत्वम्; क्लृप्तत्वादित्याशङ्क्याह—**संस्कारत्वादिति**॥

स्वपक्षसाधनं कृत्वा परपक्षं दूषयितुमाह—**अत्र कश्चिदिति**॥ वेदान्तार्थश्चासौ गहनश्चेति वेदान्तार्थगहनः, तत्र संप्रदायहीनः। **अथवा**—वेदान्तार्थे गहनः संप्रदायहीनः, गहनश्चासौ संप्रदायहीनश्चेति विग्रहः। सम्यक् संप्रदायशून्य इत्यर्थः॥

## पञ्चपादिकाविवरणम्

गोत्वस्याभेदवत् शरीर-ब्रह्मभ्यां जीवस्याभेदप्रत्ययस्यापि प्रामाण्योपपत्तेः। इदंरजतवद् भ्रान्तिरिति चेत् ? न; खण्डो गौरित्यत्रापि तथात्वप्रसङ्गात्। 'नायं खण्डो गौः, किंतु मुण्डः' इति व्यक्त्यन्तरे खण्डस्य गोत्वोपाधौ निषेधप्रत्ययसामर्थ्यात् तत्र व्यवहारानुच्छेदात् प्रामाण्यमिति चेत् ? तत्—'अहं मनुष्यः' इत्यत्रापि तुल्यम्; मोक्षावस्थायामपि सर्वात्मत्वात् तव सर्वशरीरेन्द्रियाद्यभिमानव्यवहारानुच्छेदात्। जातिव्यक्ति-गुणगुणि-कार्यकारणविशिष्टस्वरूपांशांशि-सम्बन्धा यत्र विद्यन्ते, तत्र भेदाभेदौ, न शरीरात्मनोः, तेषामभावादिति चेत् ? तर्हि शरीर-शरीरिसम्बन्धोऽपि गुणगुण्यादिवद् भेदाभेदनिमित्तं किं न स्यात् ? अन्यथा सर्वसङ्करवादितया क्षपणकशिष्यता चिरकालसमुपार्जिता बाध्येत। अस्ति च चेतनस्वरूप-शरीरयोः कार्यकारणभावः; चेतनस्वरूपांशस्य ब्रह्मत्वात्, अतो न ते भ्रान्तिरस्ति॥ किंच भ्रान्तिज्ञानमन्तःकरणपरिणामश्चेत्, तदाऽऽत्माश्रयाऽविद्या न स्यात्।

## तत्त्वदीपनम्

न च खण्डः कदाचिदपि मुण्डे प्रसक्त इति कथं निषिद्धयते ? द्वितीये, गोत्वोपहिते मुण्डे खण्डस्य निषेधसमये विशेषणीभूतगोत्वे निषेधः समाश्रितः स्यात्, यथेदमि प्रतिपन्नमिदंत्वोपहितशुक्तिव्यक्तौ निषिध्यते, तद्वत्। तथाच प्रतिपन्नोपाधौ निषिध्यमानविषयखण्डज्ञाने व्यभिचार इत्यर्थः। गोत्वमुपाधिर्यस्य व्यक्त्यन्तरस्य तद्गोत्वोपाधि, तस्मिन्निति विग्रहः। गोत्वमेवोपाधिर्गोत्वोपाधिस्तस्मिन्निति वा। अनुच्छिन्नव्यवहारत्वमुपाधिरिति चोदयति—**तत्रेति**॥ नायं खण्डो गौरिति निषेधप्रत्ययोत्तरकालमपि खण्डे गोव्यवहारो लक्ष्यते। नच तथा ब्रह्मसाक्षात्कारादूर्ध्वं मनुष्यत्वव्यवहार इत्यर्थः। साधनव्यापकत्वान्नायमुपाधिः साधुरित्याह—**तदहमिति**॥ साक्षात्कारोत्तरकालमपि प्रारब्धकर्मानुरोधादहं मनुष्य इति व्यवहारदृष्टेः साधनव्यापकत्वेन प्रमाण्यं स्यादित्यर्थः॥ प्रारब्धकर्मसमाप्तेरूर्ध्वं व्यवहारस्योच्छेदान्न साधनव्यापकत्वमित्याशङ्क्याह—**मोक्षेति**॥ "तत् केन कं पश्येत्" इति मुक्तौ सकलव्यवहारोच्छेदप्रतिपत्तेः कथमनुच्छेदः ? इत्याशङ्क्यास्मन्मते सर्वस्याबोधविलासत्वात् तद्ध्वंसे ध्वंसः, तव तु समस्तस्य परमार्थत्वादनुच्छेद इत्यशयेनाह—**तवेति**॥ भिन्नाभिन्नविषयत्वमसिद्धमिति शङ्कते—**जातिव्यक्तीति**॥ अत्यन्तभेदेऽत्यन्ताभेदे च जाति-व्यक्त्यादिभावस्यासंभवाद् भेदाभेदावित्यर्थः। **"तेषामभावादि"**त्यस्यैषोऽर्थः—न तावच्छरीरात्मनोर्जाति-व्यक्तिता, उभयोर्द्रव्यत्वात्, अत एव न गुण-गुणिभावः; नापि कार्य-कारणता, शरीरस्य भौतिकत्वात्; नापि विशिष्टस्वरूपता; दण्डवैशिष्ट्यस्य चैत्रतन्त्रतावत् शरीरस्यात्मातन्त्रत्वात्; नचांशांशिता, आत्मनो निरवयवद्रव्यत्वादिति। किं तेषां मिलितानां प्रयोजकत्वम्। उत प्रत्येकम् ? नाद्यः; मेलनस्य क्वचिदप्यभावाद्, इति चेतसि निधाय चरमं निरस्यति—**तर्हि शरीरेति**॥ नच प्रयोजकगौरवप्रसङ्गः; त्वयापि तस्यैष्टव्यत्वादित्यर्थः। शरीरात्मनोर्भेदाभेदानङ्गीकारे राद्धान्तविरोधोऽपीत्याह—**अन्यथेति**॥ जातिव्यक्त्यादीनामन्यतमस्य प्रयोजकत्वमित्यभिनिवेशश्चेत्सोऽपि सुसंपाद इत्याह—**अस्ति चेति**॥ सकलस्य ब्रह्मकार्यत्वान्न जीवकार्यतेत्याशङ्क्य, जीवस्य तदभेदाद् जीवकार्यत्वमप्यस्तीत्याह—**चेतनेति**॥ असिद्धयादिदोषवैधुर्यादनुमानं निरवद्यमित्युपसंहरति—**अत इति**॥ **अथवा**—असिद्धयादिदोषवैधुर्यालोचनयाऽपि भ्रान्तित्वं प्रतिक्षिपति—**अत इति**॥ 'अहं मनुष्यः' इत्यादिप्रत्ययानां याथार्थ्यान्न भ्रान्तित्वमित्यवोचत्, संप्रति समवायिकारणपर्यालोचनयाऽपि भ्रान्तित्वं प्रतिक्षिप्यत इत्याह—**किंचेति**॥ किं भ्रान्तिरन्तःकरणपरिणामः ? आहो आत्मपरिणामः ? इति विकल्प्याद्यमनूद्य दूषयति—**भ्रान्तिज्ञानमित्यादिना**॥ मृज्जस्य घटस्य तन्त्वनाश्रयत्ववदात्माश्रयत्वमज्ञानस्यान्तःकरणपरिणामत्वे न स्यादित्यर्थः।

## ऋजुविवरणम्

**इदं रजवद्भ्रान्तिरिति**॥ **अयं भावः**—प्रतिपन्नोपाधौ निषेधाद्रजतमिथ्यात्ववज्जीवोपाधावेव निषेधान्मिथ्यात्वम्, खण्डे तु व्यक्त्युपाधौ निषेधादभ्रान्तित्वमिति। ननु खण्डे व्यक्त्यन्तरे निषेधादर्शनादभ्रान्तत्वमुक्तमित्याशङ्क्याह—**गोत्वोपाधाविति**॥ व्यक्त्यन्तरावच्छिन्नगोत्वोपाधौ निषेधो न व्यक्तौ; मुण्डव्यक्तौ खण्डत्वप्रतीत्यभावात्, तदुपाधिनिषेधायोगादित्यर्थः। **तर्हि शरीरशरीरीति**॥ अयं भावः—सामानाधिकरण्याद् गुणगुण्यादिषु पञ्चसु तादात्म्यं निश्चीयते, तदत्राप्यस्तीति शरीरशरीरित्वनिमित्तं तादात्म्यमभ्युपगन्तव्यमिति। ननु अन्यथासिद्धयप्रतिपत्त्या गुण-गुण्यादिषु तादात्म्यमङ्गीकृतम्, अत्र तु तेन विनापि कथंचित्प्रतीतिघटनान्न तदभ्युपगम्यत इत्याशङ्क्याह—**सर्वसंकरेति**॥ **क्षपणकाः** सर्वत्र तादात्म्यं वदन्ति। तदनुसारिणापि तथैवाभ्युपगन्तव्यमिति भावः। ननु न्यायसहकृतप्रतीतिबलात्तादात्म्यं निश्चीयते, सा च पञ्चस्वेव, नेतरत्र;

### पञ्चपादिका

**लोकव्यवहारो मिथ्याऽज्ञाननिमित्त उच्यते, न पुनरागन्तुकत्वेन। तेन नैसर्गिकत्वं नैमित्तिकत्वेन न विरुध्यते ॥**

**"अन्योन्यधर्मांश्चे"ति पृथग्धर्मग्रहणं धर्ममात्रस्यापि कस्यचिदध्यास इति दर्शयितुम्। 'इतरेतराविवेकेने'ति ॥ एकतापत्त्यैवेत्यर्थः। कस्य धर्मिणः कथं कुत्र चाध्यासः ? धर्ममात्रस्य वा क्वाध्यासः ? इति भाष्यकारः स्वयमेव वक्ष्यति। "अहमिदं ममेदमि"त्यध्यासस्य स्वरूपं दर्शयति।**

### पञ्चपादिकाविवरणम्

अन्तःकरणपरिणाम एवात्मन्यध्यस्त इति चेत् ? तथाऽप्यन्यथाख्यातिवादिनः संसर्गस्य शून्यत्वादात्माविद्यासम्बन्धो न स्यात्। न चात्मपरिणामो भ्रान्तिः; अपरिणामित्वात्। नच ज्ञानगुणस्य द्रव्यस्य पुनर्ज्ञानगुणान्तराकारेण परिणामः सम्भवति; अवान्तरजातीयस्यैकस्मिन् द्रव्ये गुणद्वयस्य युगपत्समवायायोगात्, नहि पटे शौक्ल्यद्वयं युगपत्समवैति। तस्मादनादिसिद्धमिथ्याज्ञानानभ्युपगमे न काचित्सर्वसङ्करवादिनोऽविद्या सम्भवति। अनादिमिथ्याज्ञानसम्बन्धोऽप्यात्मनि अज्ञानवत् काल्पनिकत्वात् आकाशकार्ष्ण्यवदात्मनः कूटस्थतां न विहन्तीत्यलमतिप्रसङ्गेन।

अत्र च प्रत्यक्षानुमानार्थापत्तयोऽनादिभावरूपाज्ञाने प्रमाणत्वेनोपन्यस्ताः। तत्रैवंभूतेन कारणरूपेण कार्यरूपेण च

### तत्त्वदीपनम्

जपाकुसुमलौहित्यस्य स्फटिकेषु स्फुरणवदात्मन्यज्ञानप्रतिभाससंभव इति शङ्कते—**अन्तःकरणेति** ॥ भेदाभेदमतेऽध्यास एव न संभवतीत्यभ्यधायि, संप्रति तमङ्गीकृत्योत्तरमाह—**तथापीति** ॥ भ्रान्तेरात्मसंबन्धः सन् ? असन् वा ? न तावत्सत्त्वमित्याह—**अन्यथाख्यातीति** ॥ नाप्यसत्त्वम्; परोक्षप्रत्ययानुपपत्तेरित्यर्थः। द्वितीयं प्रत्याह—**न चेति** ॥ निरवयवद्रव्यत्वेन परिणामायोग्यत्वादिति हेत्वर्थः। परिणामत्वमङ्गीकृत्य ज्ञानान्तराकारेण परिणामोऽयुक्त इत्याह—**न चेति** ॥ सुप्तोत्थितस्य 'न किंचिदवेदिषमि'ति परामर्शाद् ज्ञानमुन्नेयम्, तच्च नित्यम्; करणविरमेऽपि भावात्, तथा चैकज्ञानाश्रयस्य ज्ञानान्तराऽऽकारेण न परिणतिरित्यर्थः। त्वन्मते ज्ञानस्य गुणत्वम् ? उत द्रव्यत्वम् ? नाद्य इत्याह—**ज्ञानगुणस्येति** ॥ नित्यज्ञानगुणस्येत्यर्थः। प्रतिज्ञातेऽर्थे हेतुमाह—**एकस्मिन्निति** ॥ एकद्रव्याश्रितरूपरसाख्यगुणद्वयव्यावृत्त्यर्थ**मवान्तरेति** विशेषणम्। कटकाधारहेम्नस्तदैव रुचकाकारानाधारत्ववन्नित्यज्ञानाश्रयस्य ज्ञानान्तराश्रयत्वानुपपत्तेर्द्रव्यत्वपक्षोऽपि दुर्युक्तिक इत्यर्थः। भ्रान्तिज्ञानासंभवेऽपि संस्कारोऽग्रहणं वा किं न स्यादिति शङ्कामुपसंहारव्याजेन निरस्यति—**तस्मादिति** ॥ मिथ्याज्ञानाभावान्न तत्संस्कारसंभवः, नाप्यग्रहणम्; ग्रहणस्य स्वभावतया तदभावासंभवादित्यर्थः॥ कूटस्थेऽज्ञानसंबन्धासंभवमाशङ्क्याह—**अनादीति** ॥ **अथवा**—आत्मन्यज्ञानाभ्युपगमे ज्ञानेन निरासो वक्तव्यः, न च स सम्भवति; धर्मान्यथात्वे आम्रफलवद्धर्मिण्यन्यथात्वप्रसक्तेः, इत्याशङ्क्य धर्मस्य समारोपितत्वान्नैवमिति परिहरति—**अनादीति** ॥ इष्टानिष्टसाधनज्ञानपूर्विके प्रवृत्तिनिवृत्ती, ते च न सर्वसंकरमते संभवतः; संकीर्णत्वात्सर्वस्येत्यादिदोषग्रहग्रस्तत्वाज्जीवनमपि दुर्लभमित्यभिप्रेत्योपसंहरति—**अलमतिप्रसङ्गेनेति** ॥

अज्ञानस्योत्तरत्रापि साध्यमानत्वात्पौनरुक्त्यम् ? इत्याशङ्क्य परिहरति—**अत्रेति** ॥ उत्तरत्र प्रमाणान्तरस्योच्य-

### ऋजुविवरणम्

नियामकाभावेनातिप्रसङ्गादित्याशङ्क्याह—**अस्ति चेति** ॥ ननु मुख्यकार्यकारणभावे सत्येव तादात्म्यम्, नान्यत्र; अतिप्रसङ्गात्, अतश्च भ्रान्तिरेवेत्याशङ्क्याभ्युपगम्य दूषणमाह—**किञ्च भ्रान्तिज्ञानमिति** ॥

कथमपरिणामित्वमित्याशङ्क्याह—**नच ज्ञानगुणस्येति** ॥ कथमयोग इत्याशङ्क्यादर्शनादित्यभिप्रायेणाह—**नहि पट इति** ॥ ननु आत्मनो मिथ्याज्ञानसबन्धोऽङ्गीकर्तुं न शक्यते; कूटस्थत्वात्, तत्संबन्धे च विकारित्वप्रसङ्गादित्याशङ्क्याह—**अनादिमिथ्याज्ञानेति** ॥

ननु उपरिष्टादप्यज्ञानसाधनं क्रियते, अतः पौनरुक्त्यमित्याशङ्क्याह—**अत्र चेति** ॥ अज्ञानस्वरूपसाधनमत्र क्रियते, तत्र त्वधिष्ठानद्रष्टृप्रमाणविभागाभावात् दोषत्रयाभावान्नाध्यास इत्याक्षिप्ते, अज्ञानस्यैव प्रमाणादिदोषत्वं तद्विभागहेतुत्वं चोपपद्यत इत्युक्तम्—"उच्यते, विद्यत एवे"त्यादिना। अत्राज्ञानरूपेण नैसर्गिकत्वमित्युपसंहर्तुमज्ञानसद्भाव उक्तः प्रमाणं व्यवहितत्वात्परामृशति—**अत्र चेति** ॥ यद्वाऽर्थापत्त्यनुमानप्रत्यक्षाणामसाधारणविषयभेदमाह—**अत्र च प्रत्यक्षेति** ॥ अत्र टीकाकारेणाविरोधेनोपसंहारः कृतः; सोऽनुपपन्नः; अज्ञानसाधनमात्रेण विरोधस्यापरिहृतत्वादित्याशङ्क्य, तन्निवृत्तौ तात्पर्यमाह—**तत्रैवंभूतेनेति** ॥ कथम्—'अहमि'त्यध्यासस्वरूपप्रदर्शनम् ? अहंकारादीनामप्यनध्यस्तत्वस्योक्तत्वादित्या-

## पञ्चपादिका

**अहमिति तावत्प्रथमोऽध्यासः। ननु अहमिति निरंशचैतन्यमात्रं प्रतिभासते, नांशान्तरमध्यस्तमनध्यस्तं वा? यथाऽध्यस्तांशान्तर्भावः, तथा दर्शयिष्यामः।**

## पञ्चपादिकाविवरणम्

नैमित्तिकत्व-नैसर्गिकत्वे न विरुद्धे इत्युपसंहरति—**अतो नैसर्गिकोऽप्यहङ्कार इति॥ "अन्योन्यधर्मांश्चे"**त्यादि '**अध्यासस्वरूपं दर्शयती**'त्यन्तो ग्रन्थः स्पष्टार्थः॥

निष्कलङ्कचैतन्यैकताने निरंशानन्दैकरसेऽज्ञानादिसाक्षिण्यनादिसिद्धेऽप्यज्ञानाध्यासे कादाचित्कमध्यासमाश्रित्याह—**अहमिति तावत्प्रथमोऽध्यास इति॥** ननु 'इदं रजतमि'तिवदध्यासे द्वैरूप्यम् 'अहम्' इत्यत्रापि वक्तव्यम्, 'अहमि'ति चैकरूपेणावभासते, अतो नाध्यास इति चोदयति—**नन्वहमिति निरंशचैतन्यमात्रमिति॥** यथा द्वैरूप्येणाध्याससम्भवः तथा वक्ष्यत इत्याह—**यथाध्यस्तांशान्तर्भाव इति॥**

## तत्त्वदीपनम्

मानत्वान्न पौनरुक्त्यमित्यर्थः। प्रागसतो निमित्ताधीनसत्ताकत्वं नैमित्तिकत्वमिति द्वितीयं कल्पं निराकुर्वन्नज्ञानसाधनफलमाह—**तत्रैवंभूतेनेति॥ टीकायाम्** अतः शब्दो मिथ्याज्ञाननिमित्त इत्यनेन संबध्यते; कार्यस्य सुषुप्त्यादौ कारणात्मनाऽवस्थितस्य पुनः समयान्तरेऽभिव्यक्तिरतः शब्दार्थः॥

अनवभासहेत्वज्ञानाध्यासस्य प्राथम्यादहंकाराध्यासस्य कथं प्राथम्यमुक्तमित्याशङ्क्याह—**निष्कलङ्केत्यादिना॥** अज्ञानाध्यासेऽनादिसिद्धेऽपि कादाचित्कमध्यासमाश्रित्य प्राथम्यमाहेति संबन्धः। अनवभासस्याऽऽगन्तुककलङ्कनिमित्तत्वं निराकर्तुमाद्यं विशेषणम्। अवभासहेत्वभावादनवभासं व्यावर्तयितुम्—**चैतन्येति॥** निरंशेंऽशस्य दुःखरागादेः स्वतोऽसंभवात् तद्धेतुत्वेनाप्यज्ञानाध्यास आश्रयणीय इत्याह—**निरंशेति॥** बोधैकस्वरूपेऽज्ञानादेः स्वतोऽसंभवादध्यस्तत्वं वक्तव्यमित्याह—**अज्ञानादीति॥** संशयादिरादिशब्दार्थः॥

अहमित्यत्र ग्रन्थे अंशान्तराभावमाशङ्क्यांशान्तरं समर्थितम्, तदसंगतम्; पूर्वपक्षसिद्धान्तानुपयोगादित्याशङ्क्यांशान्तरनिरसनमध्यासाभावोपयोगीत्याह—**नन्विदं रजतमिति॥** अंशान्तरसिद्धावध्याससिद्धिरिति सिद्धान्तप्रयोजनमाह—

## ऋजुविवरणम्

शङ्क्याऽऽत्मसामानाधिकरण्यप्रतीत्या तदात्मत्वं प्रतीयते; तच्चाध्यस्तमिति वक्तुं सत्यतः तदात्मतां निराकरोति—**निष्कलङ्केत्यादिना॥** आत्मनस्तद्रूपता स्वाभाविकी स्यात्? आगन्तुकी वा? आगन्तुकत्वेऽपि सहेतुका वा निर्हेतुका वा? इति विकल्पे, स्वाभाविकत्वं न संभवतीत्याह—**चैतन्यैकतानेति॥** द्वितीयं दूषयति—**निष्कलङ्केति॥** तृतीयं निराकरोति—**निरंशेति॥** न हि निरवयवं स्वतः परिणमत इत्यर्थः। ननु चैतन्यैकतानेऽप्यानन्दरूपत्ववत्प्रपञ्चस्वरूपताऽपीत्याशङ्क्याह—**आनन्दैकरस इति॥** आत्मनि प्रपञ्च एव मा भूदित्याशङ्क्याह—**अज्ञानादीति॥** प्रतीयते प्रपञ्चः, परमार्थत्वं च न संभवतीति; मिथ्येत्यर्थः। **अथवा**—चैतन्यैकतानेऽप्यानन्दैकरसत्ववत्प्रपञ्चैकरसत्वमपि स्यादिति, नेत्याह—**अज्ञानादीति॥** तर्ह्यहमध्यासस्य प्राथम्योक्तेरज्ञानस्यानध्यस्तत्वमित्याशङ्क्याह—**अनादिसिद्धेऽपीति॥** कथमनादिसिद्धेऽप्यध्यासान्तरेऽहमध्यासस्य प्राथम्यमित्याशङ्क्याह—**कादाचित्कमिति॥ अत्र संग्रहः—**

सिद्धे हि सर्वस्य मृषात्वरूपे युज्येत वक्तुं प्रथमत्वमत्र। तदात्मकत्वप्रतिभासनेन सत्यं तदेवेति निवारणाय॥
स्वाभाविकं तस्य तदात्मकत्वमागन्तुकत्वेऽपि सहेतुकं वा। निर्हेतुकं वेति विकल्पमध्यमन्निष्कलङ्केति निराकरोति॥
आद्यस्य पक्षस्य निवारणाय चिदेकतानत्वमनंशता तु। तृतीयपक्षस्य निवारणार्थमानन्दसाम्येन तदात्मकत्वम्॥
आनन्दैकरसत्वेन निवार्य पुनरेव हि। प्रपञ्चैकरसत्वं तत्साक्षित्वेन निरस्यते॥
अज्ञानमेवं न भवेदनादि नाध्यस्तरूपं यदि वा भवेत्तत्। प्राथम्यहानिर्यदि वाहमः स्यात्त्रेधेति शङ्कोत्तरभागवार्या॥

**अथवा**—अहमध्यासस्य प्राथम्यप्रतीतेरज्ञानमनध्यस्तमेव भवत्वित्याशङ्क्याज्ञानेन विनाऽध्यासान्तरासंभवात् तदध्यासोऽङ्गीकर्तव्य इति प्रतिपाद्यते। कथमसंभवः? उच्यते; अध्यासे सर्वत्र दोषः, अधिष्ठानविशेषाप्रतिभासः, अधिष्ठानस्य द्व्याकारत्वमित्याद्यपेक्षितम्, तदत्र न संभवतीत्याह—**निष्कलङ्केत्यादिना॥** निष्कलङ्केति दोषाभाव उक्तः। **"चैतन्यैकताने"**त्यनेनाप्रतिपत्त्यभावः। **"निरंशे"**त्यनेनाधिष्ठानसामान्यविशेषद्रष्ट्रादिविभागाभावः। ननु आनन्दाकारोऽप्रतीयमानोऽस्त्येव,

**पञ्चपादिका**

**ननु 'इदमि'त्यहङ्कर्तुर्भोगसाधनं कार्यकरणसङ्घातोऽवभासते, ममेदमिति चाहङ्कर्त्रा स्वत्वेन तस्य सम्बन्धः, तत्र न किञ्चिदध्यस्तमिव दृश्यते ? उच्यते; यदैवाहङ्कर्ताऽध्यासात्मकः, तदैव तदुपकरणस्यापि तदात्मकत्वसिद्धिः । न हि स्वप्ना-**

**पञ्चपादिकाविवरणम्**

**ननु** अन्तःकरणेन्द्रियाणामात्मनः पृथक्सत्त्वोपलब्ध्यभावादध्यस्ततयैव सिद्धेरात्मतत्त्वावबोधेन च स्वरूपतो विलयश्रवणात्स्वरूपेण संसृष्टरूपेण चात्मन्यध्यस्ततया सिद्धिरस्तु, शरीरं पुनरिन्द्रियैरिदंबुद्धिगृहीतत्वात् केवलसाक्षिवेद्यत्वाभावाद्, उत्क्रान्तेऽप्यात्मनि पृथगुपलब्धेः, भूतेषु लयश्रवणाच्च नाध्यस्ततया सिद्धमिति चोदयति—**नन्विदमित्यहंकर्तुरिति** ॥ शरीर-

**तत्त्वदीपनम्**

**यथेति** ॥ **वक्ष्यत इति** ॥ अहङ्कारटीकायमित्यर्थः ।

अहंकाराध्यासमाश्रित्य शरीराध्यास आक्षिप्तः—"नन्विदमि"त्यत्र; स नोपपद्यते; तस्य जडत्वेनाहंकारसमानयोगक्षेमत्वादित्याशङ्क्य तात्पर्यमाह—**नन्वन्तःकरणेति** ॥ न केवलं पृथगुपलब्ध्यभावः, अपि त्वभेदेनेत्याह—**अध्यस्ततयेति** ॥ अधिष्ठानतत्त्वबोधापोद्यत्वादप्यध्यस्तत्वं युक्तमित्याह—**आत्मतत्त्वेति** ॥ "न तस्य प्राणा उत्क्रामन्ती" त्यादिषु लयश्रवणादित्यर्थः । ततो वैलक्षण्यमाह—**शरीरं पुनरिति** ॥ अध्यस्यमानमधिष्ठानसमानरूपाधिकृततयोपलभ्यते, इदं त्वन्यथेत्याह—**इदमिति** ॥ आरोपितस्य केवलसाक्षिवेद्यत्वं दृष्टम्, तच्च हेतुमाह—**केवलेति** ॥ तत्र नेत्याह—**इन्द्रियैरिति** ॥ इदम्यारोपितं रूप्यं न ततोऽन्यत्रोपलभ्यते, इदं त्वन्यथेत्याह—**उत्क्रान्त इति** ॥ किंच शरीरस्याऽऽत्मन्यध्यस्तत्वे तत्रैव लयः स्याद् रशनापरिकल्पितसर्पादिवत्, नान्यत्र, अन्यत्र च लयः श्रूयते—"पृथिवीं शरीरम्" इत्यत्र; अतोऽपि नाध्यास इत्याह—**भूतेष्विति** ॥

**ऋजुविवरणम्**

ततो द्व्याकारत्वमपि संभाव्यते, किमज्ञानेन ? इत्याशङ्क्याह—**आनन्दैकरसेति** ॥ अज्ञानाभावे तदप्रतीतिरपि न संभवेदिति भावः । ननु एवमपि कारणान्तरमेव सिद्ध्येत्, नाज्ञानमेवेत्याशङ्क्याह—**अज्ञानादिसाक्षिणीति** ॥ अज्ञानं च तदादि च कारणं चेत्यज्ञानादि, तस्य साक्षिणीति; अज्ञानावभासक इत्यर्थः । तर्ह्यज्ञानमनध्यस्तमेष्टव्यम्, प्राथम्यं वाऽहमध्यासस्य हेयम्; परस्परविरोधात्, इत्याशङ्क्याह—**अनादिसिद्धेऽपीत्यादिना** ॥ **"यथाऽध्यस्तांशान्तर्भावः"** इत्यनेनाध्यस्तांशान्तर्भावो वक्ष्यत इत्येतावन्मात्रमुक्तम् । तत्र चोद्यबीजनिराकरणस्यास्पष्टत्वात् स्पष्टीकरोति—**यथा द्वैरूप्येणेति** ॥

ननु इदमित्यनेन शरीरेन्द्रिययोरप्यध्यस्तत्वं न संभवतीति चोदितम्, तदयुक्तम्; अन्तःकरणन्यायेन तयोरप्यध्यस्तत्वसिद्धेः, पृथक् चोद्यानुपपत्तेरित्याशङ्क्यान्तःकरणेन्द्रिययोरेव समानन्यायेन मिथ्यात्वम्, न शरीरस्य; चोद्यमपि तद्विषयमेवेत्यभिप्रायं दर्शयति—**अन्तःकरणेन्द्रियाणामिति** ॥ **पृथक्सत्त्वोपलब्ध्यभावादिति** ॥ इदन्तयाऽऽत्मनोऽन्यतया पृथक्सत्त्वप्रतीतिर्नास्ति, तेनात्मन्यध्यस्ततेति । ननु पृथक् सत्त्वाभावे तदसत्त्वमेव भवेत्, न त्वात्मन्यध्यस्ततेति, तत्राह—**अध्यस्ततयैवेति** ॥ **अथवा**—पृथक्सत्त्वोपलब्ध्यभावादित्यसिद्धो हेतुः; 'मे मनः' 'ममेन्द्रियाणी'ति प्रतीतिदर्शनादित्याशङ्क्याह—**अध्यस्ततयैव सिद्धेरिति** ॥ साऽपि प्रतीतिराध्यासिकी, न प्रमाणभूतेति भावः । ननु सिद्धे मिथ्यात्वे साक्षिमात्रवेद्यतया तदध्यस्तत्वम्, तदभावे चानुमानागमस्यत्वेन नाध्यस्तप्रतीतिविषयत्वं वक्तुं शक्यत इत्याशङ्क्याह—**आत्मतत्त्वावबोधेनेति** ॥ **अथवा**—पृथक्प्रतीत्यभावात्तदात्मकत्वेन प्रतीतेः संबन्धाध्यासो भवतु, स्वरूपं त्वनध्यस्तमेव, यथाऽऽत्मनः केवलस्योपलब्ध्यभावादुपाधिसंसृष्टतयैव प्रतीतेरसंबन्धाध्यासोऽङ्गीकृतः, तद्वदित्याशङ्क्याह—**आत्मतत्त्वावबोधेनेति** ॥ **"कार्यकरणसंघात"** इत्यनेन शरीरमेव विवक्षितं द्योतयति—**शरीरं पुनरिति** ॥ ननु इदंबुद्धिगृहीतत्वं रजतेन्द्रियादिष्वप्यस्ति, नाप्यनध्यस्तत्वम्; अतः शरीरस्यापि कथमनेनाध्यस्तत्वनिराकरणमित्याशङ्क्याह—**केवलसाक्षिवेद्येति** ॥ ननु नायं सिद्धान्तिनः सिद्धो हेतुः; केवलसाक्षिवेद्यत्वस्याप्यङ्गीकारात्, तथा सिद्धे सत्यत्वे केवलसाक्षिवेद्यत्वाभावः, तदभावे तु सत्यत्वसिद्धिः ? इत्याशङ्क्याह—**उत्क्रान्तेऽपीति** ॥ यदि शरीरं साक्षिण्यध्यस्तं भवेत्, तर्हि तदात्मोत्क्रान्तौ तेन सह गच्छेत्, प्रलीनं वा भवेत्, ननु तदुपलभ्येतेति भावः । ननु साक्षिणः सर्वगतस्योत्क्रान्तिर्न संभवति, स्वप्नवद्गमनभ्रममात्रत्वात्, अतश्चाव्यतिरेकादात्मन्यध्यस्तमिति । **अथवा**—तदज्ञानपरिकल्पितमन्यदेवेति वक्तुं शक्यते । तथा सति पृथगुपलब्धिस्सिद्ध्येदित्याशङ्क्य साधयति—**भूतेषु लयेति** ॥ अध्यस्तस्याज्ञानोपादानत्वेन तत्रैव लयो भवेत्, न भूतेष्विति भावः । ननु कथमहं कर्तुरुपकरणत्वेन कल्पितत्वसिद्धिः ? व्यभिचारात्, न ह्यन्तःकरणोपकरणत्वमेषां प्रसिद्धम्, तदेवात्र संनिहितत्वात् तच्छब्देन प्रतीयते; **अथवाऽहंकर्तुरे**वाध्यस्तत्वमसिद्धम्; तस्यात्मरूपत्वात्, नापि तदुपकरणत्वमेषाम्; अनपेक्षितत्वात्, अनिरूपितत्वाच्च । "तदात्मकत्व-

### पञ्चपादिका

वाप्तराज्याभिषेकस्य माहेन्द्रजालनिर्मितस्य वा राज्ञो राज्योपकरणं परमार्थसद्भवति, एवम् अहङ्कर्तृत्वप्रमुखः क्रिया-कारक-फलात्मको लोकव्यवहारोऽध्यस्तो नित्य-शुद्ध-बुद्ध-मुक्तस्वभाव आत्मनि। अतस्तादृग्ब्रह्मात्मानुभवपर्यन्ताद् ज्ञानादनर्थ-हेतोरध्यासस्य निवृत्तिरुपपद्यते, इति तदर्थविषयवेदान्तमीमांसारम्भ उपपद्यते।

**"आह कोऽयमध्यासो नामे"**त्याद्यारभ्य **"अध्याससिद्धिपरं भाष्यम्। तत्रापि "कथं पुनरविद्यावद्विषयाणी"**त्यतः प्रागध्यासस्वरूप-तत्सम्भावनाय, तदादि तत्सद्भावनिर्णयार्थमिति विभागः।

### पञ्चपादिकाविवरणम्

व्यतिरिक्तं ममबुद्धिगृहीतं सुतरामनध्यस्तमित्याह—**ममेदमिति चेति**॥ शरीरादिपदार्थस्वरूपस्य मिथ्याकल्पितकर्तृ-भोक्तृ-प्रमातृ-दोषसंयुक्तात्मार्थतयैव कार्यतया भोग्यतया प्रमेयतया द्वेष्यतया च तादर्थ्येनैव सृष्टत्वात्स्वरूपेणापि मिथ्यात्वं स्वप्नदृष्टान्तेनानुमातुं शक्यत इत्याह—**उच्यते यदैवाहं कर्तेत्यादिना**॥ दार्ष्टान्तिकं दर्शयति—**एवमहंकर्तृत्वप्रमुख इति**॥ द्रष्टरि दृश्यावभासस्याविद्याध्यासत्वे शास्त्रीयविषय-प्रयोजनसिद्धिः फलिष्यतीत्याह—**अतस्तादृग्ब्रह्मात्मानुभवपर्यन्तादिति**॥ तादृग्ब्रह्मात्मानुभवो बन्धनिवृत्तिश्चोपपद्यत इत्यर्थः। विषय-प्रयोजनसिद्धौ किमायातमिति? शास्त्रारम्भकर्तव्यता सिद्धेत्याह—**तदर्थविषयवेदान्तमीमांसारम्भ** इति॥ ते एव ब्रह्मात्मानुभवबन्धनिवृत्ती, अर्थः प्रयोजनं, विषयश्च यस्य वेदान्तमीमांसारम्भस्येति विग्रहः।

**"सर्वलोकप्रत्यक्षः"** इत्यन्तस्योत्तरभाष्यस्य तात्पर्यमाह—**आह कोऽयमिति**॥ इदानीं विभज्यावान्तरतात्पर्यं कथयति—**तत्रापीति**॥

### तत्त्वदीपनम्

अध्यस्तताप्रतीत्यभावेऽपि कल्पितोपकरणत्वाच्छरीरादेः कल्पितत्वमुक्तम्, तदचारु; कल्पितोपकरणत्वस्यासिद्धेरित्याशङ्क्याह—**शरीरादीति**॥ शरीरादिपदार्थस्वरूपस्य तादर्थ्येन सृष्टत्वात् स्वरूपेणापि मिथ्यात्वमनुमातुं शक्यत इति संबन्धः। **तादर्थ्येन**—आत्मार्थत्वेनेत्यर्थः। आत्मन आप्तकामत्वात्कथं शरीरादेस्तदुपकरणत्वम्, तथा कल्पितोपकरणत्वं चोपेक्षितं स्यादित्याशङ्क्य तादर्थ्येनेत्येतद्विवृणोति—**मिथ्येति**॥ मिथ्या चासौ कल्पितश्चेति मिथ्याकल्पितः, स च कर्ता च भोक्ता च प्रमाता च दोष-संयुक्तश्चात्मा चेति तथोक्तः। ज्ञानबाध्यत्वं मिथ्याशब्दार्थः। समारोपितत्वं कल्पितपदार्थः॥ शरीरादेरात्मार्थत्वं प्रपञ्चयति—**कार्यतयेति**॥ कार्यतादीनां कर्त्रादिभिर्यथाक्रममनुषङ्गः। विमतम्, कल्पितम्, कल्पितोपकरणत्वात्; स्वप्नाप्तच्छत्रादिवदित्यर्थः। छत्रादेरेव कल्पितत्वं नोपक्रियमाणस्येति दृष्टान्तवैषम्यमाशङ्क्य दृष्टान्तान्तरमुक्तं **टीकायामिति** द्रष्टव्यम्। ऐन्द्रियकत्वादेः स्वाप्नवदुपपत्तिः। "पृथिवीं शरीरम्" इत्यत्र शरीरस्य भूतेषु नाऽऽत्यन्तिको लयो निर्दिष्टः; तथाऽऽत्मोत्क्रान्तावपि शरीरोपलम्भो युक्तः; चिदधिष्ठानस्य तत्रापि भावादित्यर्थः। प्रयोजनस्यैवोपसंहरणादविवक्षितत्वं विषयस्येत्याशङ्क्योपलक्षणपरतया व्याचष्टे—**तादृगिति**॥ नित्यशुद्धादिलक्षणं वस्तु तादृक् पदार्थः। स चासावर्थश्चेति तदर्थः। स विषयो यस्यासौ तदर्थविषय इति विग्रहः। शङ्कां व्यावर्तयति—**ते एवेति**॥ ब्रह्मात्मा चासावनुभवश्चेति तथोक्तः। अर्थशब्दस्य विषयवाचित्वं व्यावर्तयति—**अर्थ इति**॥

शास्त्रारम्भस्य सिद्धत्वादक्षरव्याख्यानमेव क्रियताम्—अथशब्द आनन्तर्यार्थ इत्यादि, किम्—आहेत्यादिना, इति शङ्कानिवृत्त्यर्थमाह—**कोऽयमित्यादीत्युक्तम्**॥ तत्राऽऽदिशब्देन—"अस्यानर्थहेतोरि"त्येतदप्युपात्तमिति शङ्कां निवारयितुमाह—

### ऋजुविवरणम्

'सिद्धेरि'ति साध्यनिर्देशश्चायुक्तः; सिद्धसाध्यत्वादिदूषणप्रसङ्गात्। साध्यविकलश्च दृष्टान्तः; तादात्म्याभावात्, "तदात्म-कत्वमि"त्यनेन सन्निहिताध्यासात्मकत्वनिर्देशेऽपि तदुपकरणत्वादिसंबन्धो मिथ्या भवेत्, न स्वरूपमिति। "नहि स्वप्ना-वाप्ते"त्यादिकीर्तनमपि न युज्यते; तत्कथं तदुपकरणत्वेनाभिमतमिथ्यात्वसिद्धिरित्याशङ्क्यावतारयति—**शरीरादिपदार्थेति**॥ **'नित्यशुद्धे'**त्यादिविशेषणोपादानं स्वतः परतो वा संबन्धासंभवप्रदर्शनार्थम्, तादृशाधिष्ठानज्ञानस्य विरोधिविषयत्वेन बाधकत्व-प्रदर्शनार्थं च। ननु "ब्रह्मात्मानुभवपर्यन्तादि"त्यनेन प्रयोजनमात्रमेव निर्दिष्टम्, न तु विषयः? इत्याशङ्क्य, व्यावर्तकत्वेनापि तन्निर्देशादिति व्याचष्टे—**तादृग्ब्रह्मात्मानुभवेति**॥ स एवार्थो विषयो यस्येति विग्रहशङ्का स्यात्, तथा सति प्रयोजनाभावाद् न वेदान्तारम्भोपपत्तिरिति, तदर्थं व्याचष्टे—**ते एव ब्रह्मात्मानुभवेति**॥

उत्तरावध्यनिर्देशात् कियत्तत्प्रतिपादकमिति न ज्ञायते, तदर्थमाह—**सर्वलोकेति**॥ "अध्याससिद्धिपरमि"त्यनेन तात्पर्यमुक्तम्, अवान्तरव्याख्यानं तु तत्र तत्र भविष्यति। अतः—"तत्रापि" इति पुनरुक्तमित्याशङ्क्याह—**इदानीं विभज्येति**॥

## पञ्चपादिका

**यद्येवं तत्स्वरूप-तत्सम्भावनोपन्यासः पृथक् कर्तव्यः; न ह्यनिर्ज्ञातरूपमसम्भाव्यमानं च निर्णीयते चेति, दुःसम्पादं विशेषतोऽध्यक्षानुभवनिर्णये ?**

## पञ्चपादिकाविवरणम्

लक्षण-सम्भावनापरभाष्यमाक्षिपति—**यद्येवमिति** ॥ किमिति लक्षणसम्भावने नापेक्ष्येते इति ? तत्राह—**न ह्यनिर्ज्ञातरूपमिति** ॥ प्रमाणमेव हि प्रमेयमन्यस्यान्यात्मनावभासमध्यासं व्यवस्थापयत् स्वदेशकालोपाधौ सम्भावितरूपं सर्वतो व्यावृत्तासाधारणरूपञ्च व्यवस्थापयति, किं पृथग्लक्षण-सम्भावनोपन्यासेनेत्यर्थः। ननु अनुमानादिप्रमाणनिर्ज्ञातेषु वस्तुमात्रेषु विशेषलक्षण-सम्भावने पृथगपेक्ष्येते ? इत्यत आह—**दुःसंपादमिति** ॥ **विशेषत इति,** असाधारणाकारेण; व्यावृत्ततयेत्यर्थः ॥

तत्र द्रष्टुरन्यस्य दृश्येनान्यात्मनावभासो विद्यत इत्येतावति प्रमाणं वक्ष्यते, न तस्याविद्याभ्रान्त्यध्यासमिथ्यात्वे,

## तत्त्वदीपनम्

**सर्वलोकेति** ॥ "आह कोऽयमि"त्यादेरध्यासपरत्व एकेन भाष्येणाध्याससिद्धेः किं बहुभिरित्याशङ्क्याध्यासलक्षणादिपरत्वान्न वैयर्थ्यमित्युक्तं "तत्रापी"त्यत्र, तदनुपपन्नम्; अध्यासपरत्वं लक्षणादिपरत्वं चैकम् ? उत नाना ? प्रथम उत्तरवैयर्थ्यम्, द्वितीये पक्षे परस्परपराहतिः; एकस्योभयपरत्वानुपपत्तेरित्याशङ्क्याह—**इदानीमिति** ॥

लक्षणादिनाऽध्यासस्य प्रतिपिपादयिषितत्वाल्लक्षणादाववान्तरतात्पर्यम्, अध्यासे महातात्पर्यमिति न व्याहतिरित्यर्थः। "कथं पुनः प्रत्यगात्मनी"त्यतः प्राक्तनं स्वरूपम्, तदारभ्य संभावनापरमिति **टीकार्थः**। अन्यतःसिद्धाध्यासोपस्थापकत्वेऽपि यथा "तथाऽपी"त्यादिभाष्यस्यार्थवत्त्वम्, तद्वल्लक्षणादिभाष्यस्यापीत्याशङ्क्याह—**लक्षणेति** ॥ तथाऽपीत्यादेरध्यासानुवादेन विषयादिपरत्वादर्थवत्त्वम्, न तथाऽस्य। लक्षणादिपरत्वात्। न च तद्युज्यते। अन्यत एव लक्षणादिसिद्धेरित्यर्थः। प्रमाणभाष्यस्यासंभावितासंकीर्णबुद्धिजनकत्वाभावान्न लक्षणादि व्यर्थमिति चोदयति—**किमिति** ॥ अर्थासंभावनादिबुद्धिजननाद्वैयर्थ्यमित्याह—**तत्राहेति** ॥ अनिर्ज्ञातस्यासंभावितस्य च निर्णयोऽनुपपन्न इति वदता लक्षणसंभावने अपेक्षिते इत्युक्तं स्यात्, तथाच विरोधः, इत्याशङ्क्य लक्षणादेरनपेक्षितत्वं न ब्रूमः, किंतु प्रमाणबलादेव तत्सिद्धिरित्याह—**प्रमाणमिति** ॥ "यत्र त्वस्य सर्वमात्मैवाऽभूत्तत्केन कं पश्येत्"इति व्यावृत्तिसंभावनयोर्निराकरणात्कथं संभावनादीत्याशङ्क्याह—**स्वदेशेति** ॥ यद्यप्यात्मसाक्षात्कारादूर्ध्वं सर्वस्यासंभावितत्वादि; तथापि व्यवहारावस्थायां संभावितत्वादि घटत इत्यर्थः। प्रमाणसिद्धेऽपि संभावनादेः पृथगपेक्षादर्शनाल्लक्षणादिकमर्थवद् ? इति शङ्कते—**ननु अनुमानादीति** ॥ प्रत्यक्षकार्यलिङ्गेन कारणमात्रप्रतिपत्तौ तद्विशेषब्रह्मपरमाण्वादिषु यथा लक्षणादिकमर्थ्यमानं दृष्टमित्यर्थः। ननु प्रत्यक्षदृष्टेऽपि धरित्र्यादौ लक्षणाद्यपेक्षादर्शनादध्यक्षानुभवनिर्णये विशेषतो दुःसंपादमिति कथमुक्तम् ? तत्राह—**विशेषत इति** ॥ सामान्यतोदृष्टे लक्षणाद्यपेक्षायामप्यसाधारणाऽऽकारेण व्यावृत्ततया दृष्टौ नान्यापेक्षेत्यर्थः।

प्रमाणभाष्येणाहंममाभिमान एव सिद्ध्यति, नाध्यास इति कथम् ? तयोरैक्यादित्याशङ्क्य समुदायतात्पर्यमाह—**तत्रेति** ॥ तत्र प्रमाणभाष्ये। ज्ञानापनोद्यत्वमविद्यात्वम्, प्रतिभासमात्रशरीरत्वं भ्रान्तिता, सत्यानृतमिथुनीकरणात्मकत्वमध्यासत्वम्, सदसद्विलक्षणत्वं मिथ्यात्वम् ॥

## ऋजुविवरणम्

"न ह्यनिर्ज्ञातरूपमि"त्यनेन लक्षण-संभावनयोरभावे न मानं निर्णायकमित्युक्तमिव प्रतिभाति, अनिर्ज्ञातरूपस्यासंभावितस्य च निर्णयो नास्तीत्युक्तत्वात्, तथा सति हेतुसाध्ययोः परस्परविरोधः, तदर्थं व्याचष्टे—**प्रमाणमेवेति** ॥ अध्यक्षानुभवनिर्णये विशेषतो दुःसंपादमित्यन्वयः प्रतिभाति, तथा सति दूरतोऽध्यक्षदृष्टे तदपेक्षा न स्यात्, तदर्थं व्याचष्टे—**असाधारणाकारेणेति** ॥

"उच्यते"इत्यनेन प्रमाणाभावे मिथ्यात्वसिद्धिर्नास्तीत्युक्तम्, तदयुक्तम्; प्रमाणोक्तौ तदसिद्ध्ययोगात्, इत्याशङ्क्य व्याचष्टे—**तत्र द्रष्टुरिति**। **न तस्याविद्येति** ॥ तत्राविद्योपादानत्वे कारणत्रयजन्यत्वे सत्य-मिथ्यासंभेदत्वे ज्ञाननिवर्त्यत्वे च प्रमाणं नोच्यत इत्यर्थः। ननु प्रमाणे सत्यनुभवेन भवितव्यमिति चोदिते, "बाधे ही"ति परिहारो व्यधिकरणः; प्रकृत

## पञ्चपादिका

**उच्यते; न देहेन्द्रियादिष्वहं-ममाभिमानवत एव प्रमातृत्वप्रदर्शनमात्रेण तस्याध्यासात्मकता सिद्धयति; तत्कस्य हेतोः ? लोके शुक्तिरजत-द्विचन्द्रादिवदध्यासानुभवाभावात्। बाधे हि सति स भवति, नेह स विद्यते। तस्मादध्यासस्य लक्षणमभिधाय तल्लक्षणव्याप्तस्य सद्भावः कथनीयः ॥**

## पञ्चपादिकाविवरणम्

अतस्तत्प्रमाणेन न सिद्धयतीति परिहरति—**उच्यते, न देहेन्द्रियादिष्वित्यादिना** ॥ ननु अन्यस्यान्यात्मनावभासप्रमाणेनैव तन्मिथ्यात्वमपि सिद्धयति, प्रमेयैक्याद् इति चोदयति—**तत्कस्य हेतोरिति** ॥ नानुभवादेवेति परिहरति—**लोक इति** ॥ ननु प्रमाणे सति किमित्यनुभवाभावः ? प्रमाणभेदादित्याह—**बाधे सतीति** ॥ बाधानुपपत्तिर्मिथ्यात्वे प्रमाणम्; प्रत्यक्षानुमान-व्यवहारानुपपत्त्यागमा आत्मन्यनात्मावभासे प्रमाणमिति भावः। ननु इहापि बाधनिमित्तमितरेतरविवेकमन्तरेणान्यस्यान्या-त्मनाऽवभासोऽयमित्यवगन्तुं न शक्यते; अन्यथा स्वस्यैव स्वेनात्मनावभासः किं न स्यादिति ? नेत्याह—**नेह स विद्यत इति** ॥ यौक्तिकज्ञानादिना परोक्षविवेकमाश्रित्य परस्परात्मनाऽवभासनिश्चयः। अपरोक्षबाधस्य भ्रान्तिप्रतिभासोच्छेदिनोऽभावान्न स्पष्टो मिथ्यात्वाध्यवसाय इति भावः। अतोऽविद्यात्वस्पष्टीकरणाय लक्षणमेव वक्तव्यमित्याह—**तस्मादध्यासस्येति** ॥

तर्हि लक्षण-प्रमाणाभ्यामेव वस्तुनिर्णयसिद्धेः प्रमाणेनैवासम्भावनानिराकरणात् सम्भावना पृथग् न वक्तव्येति

## तत्त्वदीपनम्

सिद्धान्त्याशयमजानानश्चोदयति—**नन्वन्यस्येति** ॥ "निमित्तकारणहेतुषु सर्वासां प्रायदर्शनमि"ति कात्यायनस्मरणात् **कस्य हेतोरिति** ॥ कस्माद्धेतोरित्यर्थः। गूढाभिसन्धिरेव परिहरति—**नानुभवादेवेति** ॥ प्रमाणे सत्यपि अनुभवो नेति व्याहत-मिति चोदयति—**ननु प्रमाण इति** ॥ मिथ्यात्वविषयं प्रमाणमेव नेति स्वाशयमाविष्करोति—**प्रमाणेति** ॥ बाधे सत्यध्यासानुभवो भवतीति कथम् ? तस्याध्यासनिवर्तकत्वादित्याशङ्क्याह—**बाधानुपपत्तिरिति** ॥ सत्यत्व आत्मवद् बाधानुपपत्तेर्न मिथ्यात्व-मित्यर्थः। 'अहं मनुष्यः' इत्यादिप्रत्यक्षं प्रत्यक्षशब्दार्थः। विवादाध्यासितो व्यवहारः, अध्यासनिबन्धनः, व्यवहारत्वात्; पश्वादिव्यवहारवदित्यनुमानम् अनुमानशब्दार्थः। प्रमातृत्वादिव्यवहारो व्यवहारशब्दार्थः। "अष्टवर्षं ब्राह्मणमुपनयीत" इत्यादिरागमः ॥ आत्मन्यनात्मावभासिप्रमाणस्य बाधपुरस्कारेण प्रवृत्तत्वान्न प्रमाणान्तरापेक्षा मिथ्यात्व इति चोदयति—**नन्विहापीति** ॥ अन्यस्यान्यात्मताप्रतिपत्तौ विवेकप्रतिपत्तिर्नपेक्ष्यते; अनुपयोगाद् इत्याशङ्क्योपयोगमाह—**अन्यथेति** ॥ 'बाधाभाव इतरेतरविवेकाप्रतिपत्तेरितरेतराऽवभास एव न सिद्धयेत्' इत्युक्तम्, तस्य कः समाधिः ? इत्याशङ्क्याह—**यौक्तिकेति** ॥ नच—एतावतैव मिथ्यात्वसिद्धेः प्रमाणान्तरं व्यर्थम्—इत्यपि शङ्क्यम्; अपरोक्षभ्रमस्यापरोक्षप्रत्ययं विनाऽ-निवृत्तिरित्याशयेनाह—**अपरोक्षबाधस्येति** ॥ बाधकप्रत्ययं विना मिथ्यात्वासिद्धिश्चेत्, स एव सम्पाद्यताम्; किं लक्षणेन ? इत्याशङ्क्याह—**अत इति** ॥ लक्षणमेव वक्तव्यमित्यस्यायमर्थः—न प्रमाणमात्रेणालम्, किं तु लक्षणेनापि भवितव्यमिति। प्रसिद्धाध्यासलक्षणेऽभिहिते तल्लक्षणव्याप्तत्वादहंममाभिमानोऽप्यध्यास इति सेत्स्यति, ततश्च बाधकप्रत्यय इति तदुपयोगितया लक्षणं कथ्यत इत्यर्थः ॥

लक्षणमङ्गीकृत्य संभावनामाक्षिपति—**तर्हि लक्षणेति** ॥ संभावनां विना निर्णयासिद्धेः साऽपि वक्तव्येति शङ्कायामाह—**प्रमाणेनेति** ॥ प्रामाणिकस्याप्यसंभावनयाऽपोद्यत्वमुक्तं टीकायाम्, तत् कथम् ? असंभावितत्वे प्रामाणिकत्वानुपपत्तेः,

## ऋजुविवरणम्

विहायान्यस्योक्तत्वात्, केन मिथ्यात्वानुभवो भवतीत्यपृष्टत्वाच्चेत्याशङ्क्यावतारयति—**प्रमाणभेदादिति** ॥ **प्रमाणभेदादित्य-**स्यायमभिप्रायः—एकस्मिन्नपि वस्तुन्युभयथाऽनुभवे प्रमाणभेदापेक्षा दृष्टा, स्वरूप-घटयोरिति। ननु "बाधे ही"ति कथमुक्तम्, नहि बाधो मिथ्यात्वानुभवहेतुः, किन्तु निवर्तक एव, निवृत्तिर्वा। **अथवा**—बाधान्मिथ्यात्वानुभव उक्तः, नत्वन्यस्यान्यात्मत्वे तन्मिथ्यात्वे च प्रमाणभेद उक्त; अतस्तत्र दर्शनमनेन न क्रियते, इत्यसंबद्धमुक्तमित्याशङ्क्याभिप्रायमाह—**बाधानुपपत्तिरिति** ॥ ननु बाधपुरस्सरेणैव प्रमाणप्रवृत्त्या भवितव्यम्, तथाच सति लक्षणादिवैयर्थ्यं तदवस्थमेवेत्यभिप्रायेण चोदयति—**नन्विहापीति** ॥ "नेह स विद्यते" इत्यनेन न बाधो निषेध्यः; बाधाभावेऽन्यस्यान्यात्मनाऽवभासोऽपि न सिद्धयतीत्युक्तत्वात्; नापि मिथ्यात्वा-नुभवः, बाधे सति मिथ्यात्वस्य सिद्धत्वात्; अतः सङ्कटमित्याशङ्क्याभिप्रायमाह—**यौक्तिकज्ञानादिनेति** ॥ तर्हि मिथ्यात्वस्यापि सिद्धत्वाल्लक्षणादिवैयर्थ्यं तदवस्थमित्याशङ्क्याह—**अपरोक्षबाधस्येति** ॥ "लक्षणमेवे"त्यनेन प्रमाणमात्रेण नालमित्युक्तम्।

## पञ्चपादिका

ननु एवमपि तल्लक्षणस्य वस्तुनः सद्भावमात्रमिह कथनीयम्; न हि यत्र यस्य सद्भावः प्रमाणतः प्रतिपन्नः, तत्रैव तस्यासम्भावनाशङ्का, येन तद्विनिवृत्तये तत्सम्भावनाऽपरा कथ्येत ? सत्यमेवम्; विषयविशेषस्तु प्रयत्नेनान्विच्छद्भिरप्यनुपलभ्यमानकारणदोषे विज्ञानेऽवभासमानोऽपि पूर्वप्रवृत्तेन सकललोकव्यापिना निश्चितेन प्रमाणेनासम्भाव्यमानतयाऽपोद्यमानो दृश्यते। तद्यथौत्पातिकः सवितरि सुषिः, यथा वा माहेन्द्रजालकुशलेन प्रासादादौ निगरणम्, एवमविषयेऽसङ्गे केनचिदपि गुणादिनाऽध्यासहेतुना रहिते निष्कलङ्कचैतन्यतयाऽन्यगतस्याप्यध्यासस्यापनोदनसमर्थे अध्यासावगमोऽविभाव्य-

## पञ्चपादिकाविवरणम्

चोदयति—**नन्वेवमपीति**॥ सत्यपि प्रमाणसामर्थ्ये प्रत्यक्षावभासनमप्यसम्भाव्यमानतया निराकृतमनुभूयत इत्यनुभवमेवावलम्ब्य परिहरति—**सत्यमेवमिति**॥ **औत्पातिक इति**, अदृष्टव्यतिरिक्तकारणशून्य इत्यर्थः॥

ननु प्रमाणेनैव क्वचिदसम्भावना तिरस्क्रियते, यथाऽऽकाशगमने पक्षिणाम्; क्वचिदसम्भावनया प्रतिभासोऽपरोक्षोऽपि निरस्यते, यथा सवितृसुष्यादौ; तत्रात्मन्यनात्मावभासः कं पक्षमवलम्बतामिति ? असम्भावनापक्षमेवेति विशेषं दर्शयति—**एवमविषयेऽसङ्ग इति**॥ अधिष्ठानस्याध्यस्यमानेन सहैकज्ञानविषयत्वं वक्तव्यम्, तदभावान्नाध्याससम्भव इत्याह—**अविषय इति**॥ द्रष्टुर्व्यतिरिक्तस्य कृत्स्नस्य कार्यकारणसंघातस्याध्यासात्मकत्वेन द्रष्टर्येव काचादिवद्दोषानुषङ्गो वक्तव्यः, तदभावान्नाध्याससम्भव इत्याह—**असङ्ग इति**॥ अधिष्ठानस्याध्यस्यमानेन गुणावयवसादृश्यं वक्तव्यम्, तदभावान्नाध्याससम्भव इत्याह—**केनचिदपि गुणादिनेति**॥ अधिष्ठानयाथात्म्यावभासोऽध्यासविरोधी, तद्भावाच्च नाध्याससम्भव इत्याह—**निष्कलङ्कचैतन्यतयेति**॥

ननु आत्मन्यविषयादिरूपेऽनवगते नासम्भावनाबुद्धिः, अवगते तु नाध्यास एव तिष्ठति, कुतोऽसम्भावनाबुद्धिरिति ? नैतत्सारम्; आत्मन्यविषयादिरूपे परोक्षावभासोऽसम्भावनाबुद्धिहेतुः, अपरोक्षावभासोऽध्यासस्य निवर्त्तक इत्युक्तत्वात्।

## तत्त्वदीपनम्

प्रामाणिकत्वे वाऽसंभावितत्वाभावादित्याशङ्क्य, द्वयमप्यनुभूयत इति परिहरति—**सत्यपीति**॥ नीरन्ध्रसवितरि निर्दुष्टकरणस्य कथं सुषिरप्रतिभासः ? इत्याशङ्क्यादृष्टवशादित्याह—**औत्पातिक इति**॥ भविष्यदनिष्टमुत्पातस्तत्सूचक औत्पातिक इत्यर्थः।

असंभावनया प्रामाणिकस्याप्यपवादवत् प्रमाणेनासंभावनाऽप्यपोद्यमाना दृष्टा, तद्वत्किं न स्यात् ? इति चोदयति—**ननु प्रमाणेनेति**॥ असंभावनाबाहुल्यादसंभावनया प्रामाणिकस्याप्यपवादो युक्त इत्याह—**असंभावनेति**॥ अविषय इत्यत्र विषयशून्यत्वमुच्यते ? विषयत्वराहित्यं वा ? नाद्यः; शब्दादेर्भावात्। नेतरः; अस्मत्प्रत्ययविषयत्वादित्यत्राह—**अधिष्ठानस्येति**॥ अविद्यादिसङ्गित्वादसङ्गित्वमसिद्धमित्याशङ्क्याह—**द्रष्टृव्यतिरिक्तस्येति**॥ अध्यासनिमित्तस्यानन्दादेः स्वरूपस्य गुणस्य चाङ्गीकृतेः "केन चिदि"त्याद्यनुपपन्नमित्याशङ्क्याह—**अधिष्ठानेति**॥ चैतन्यस्याधिष्ठानत्वान्न तन्मात्रज्ञानमारोपविरोधि, इदमाकारज्ञानवदित्यत आह—**अधिष्ठानेति**॥ सामान्यविशेषभावेन भेदात्सामान्यज्ञानमविरोधि, विशेषज्ञानं तु विरोधि; न तथाऽत्र, सामान्यादिभेदाभावादित्यर्थः।

अविषयादिरूपात्मन्यनधिगतेऽसम्भावनाबुद्धिः ? उताधिगते ? इति विकल्प्योभयथाऽप्यसम्भव इत्याह—**नन्वात्मनीति**॥ द्वितीयं पक्षमादायोत्तरयति—**नैतत्सारमिति**॥ अधिगतेऽध्यास एव न तिष्ठतीति यदुक्तम्, तदेव विवेचनीयम्—अविषयादिरूपात्मनि किं परोक्षतया प्रतिपन्नेऽध्यासनिवृत्तिः ? उतापरोक्षतया ? इति विकल्प्य, आद्ये नानुपपत्तिरित्याह—**आत्मनीति**॥ परोक्षतयाऽवभासस्याध्यासा विरोधित्वान्नाध्यासनिवर्तकत्वम्, ततश्चासम्भावनाबुद्धिः स्यादित्यर्थः। द्वितीयस्त्वङ्गीक्रियत इत्याह—

## ऋजुविवरणम्

**यद्वा**—लक्षणं वक्तव्यमेवेत्यर्थः। ननु—नौत्पातिकत्वं सुषेः; अनिष्टद्योतकाभिधायित्वात्, उत्पातशब्दस्यानिष्टाभिधानेऽपि न तद्धितसंभवः। नच निर्निमित्तत्वम्; दोषजन्यत्वेनैव मिथ्यात्वप्रसङ्गात्, कारणानुपलम्भेऽप्यौत्पातिकत्वाङ्गीकारात्, अतो दोषजन्यतया विषयापह्नवः, न त्वसंभावनामात्रेणेत्याशङ्क्य व्याचष्टे—**औत्पातिक इति**॥ **अदृष्टेति**; सिद्धे मिथ्यात्वेऽदृष्टसिद्धिः, न तु पूर्वमिति भावः।

**पञ्चपादिका**

**मानकारणदोषो विभ्रम इत्याशङ्क्येत, तन्मा शङ्कीति सद्भावातिरेकेण सम्भवोऽपि पृथक् कथनीयः। तदुच्यते—"आह कोऽयमध्यासो नामे"ति।**

**किंवृत्तस्य प्रश्न आक्षेपे च प्रयोगदर्शनादुभयस्य चेह सम्भवात् तन्त्रेण वाक्यमुच्चरितम्। तत्रापि प्रथमं प्रश्नस्य प्रतिवचनं स्वरूपमाख्याय, पुनस्तस्यैव सम्भवमाक्षिप्य प्रतिविधत्ते। तत्रैवम्भूते विषये श्रोतॄणां सुखप्रबोधार्थं व्याचक्षाणाः**

**पञ्चपादिकाविवरणम्**

उपसंहरति—**तन्मा शङ्कीति**॥ **तदुच्यते—तत्** त्रितयं लक्षणं सम्भावना प्रमाणं क्रमेणोच्यत इत्यर्थः। अनन्तरभाष्यस्य तात्पर्यमाह—**आह कोऽयमिति**॥

**तन्त्रेणेति**। युगपदर्थद्वयविवक्षयेत्यर्थः। **उभयस्य चेह सम्भवादिति**। लक्षणप्रश्नस्य सम्भावनाक्षेपस्य च सम्भवादित्यर्थः। उभयमत्रैव विवक्षितं चेत्सम्भावनैव प्रथमं किन्न प्रदर्श्यते? इत्यत्राह—**तत्रापीति**॥ स्वरूपमाख्यायेति प्राथम्ये हेतुः। ननु आहेति परोक्तिकथनं किमर्थमिति? अर्थनिर्णयप्रधानत्वाद्वादकथा शास्त्रम्। तत्र "प्रमाणतर्कसाधनोपालम्भः

**तत्त्वदीपनम्**

**अपरोक्षेति**॥ **उक्तत्वादिति**॥ "यतो ज्ञानमज्ञानस्यैव निवर्तकमि"त्यत्रेत्यर्थः। सम्भवस्य प्रकृतत्वात्तच्छब्देन सम्भवपरामर्शः शङ्क्येत, न च सम्भवति; तच्छब्दस्य नपुंसकत्वात्, इत्याशङ्क्य परिहरति—**तत् त्रितयमिति**॥ लक्षणादीनामन्यतमस्यापि वैयर्थ्याभावात्तल्लक्षणादित्रितयमप्युच्यत इत्यर्थः। **"स्मृति रूपः"** इत्यत्र लक्षणमेवोच्यते, नेतरे इत्याशङ्क्याह—**क्रमेणेति**॥

किंशब्दस्याक्षेपे प्रश्ने च प्रयुज्यमानत्वात्स किमर्थ इति न ज्ञायते, तत्राह (टीकायाम्)—**किंवृत्तस्येति**॥ किंशब्दाद् उपरि वृत्तः किंवृत्तः, तस्येति यावत्। उभयत्र प्रयोगेऽप्येकस्मिन् वाक्ये नैकस्य शब्दस्योभयार्थत्वम्, यथा गोशब्दस्याऽनेकत्र प्रयोगेऽप्येकस्मिन् प्रयोग ऐकार्थ्यनियमः, तद्वदित्याशङ्क्याह—**उभयस्येति**॥ "अध्यासः" इत्युक्ते सामान्यज्ञानात्प्रश्नः, 'आत्मनी'त्युक्ते विशेषज्ञानादाक्षेप इत्यर्थः। तन्त्र्यते व्युत्पाद्यतेऽनेनेति तन्त्रशब्दः शास्त्रवाची? किं वा तन्त्र्यत इत्यर्थवाची? आद्ये तन्त्रशब्दस्य व्यर्थता; द्वितीयेऽसम्भवः, अर्थेन वाक्योच्चारणायोगात्; इत्याशङ्क्याह—**तन्त्रेणेति**॥ आग्नेयाद्यनेकोपकारकत्वेन सकृत्प्रयाजाद्यनुष्ठानवत् प्रश्नाक्षेपार्थद्वयविवक्षया सकृदुच्चारणमित्यर्थः। प्रश्नाक्षेपयोर्विषयं दर्शयति—**लक्षणेति**॥ प्रश्नोत्तरस्योच्यमानत्वात् प्रश्नार्थः किंशब्द इति शङ्कते—**उभयमत्रेति**॥ अत्रोभयं विवक्षितं चेत्, प्रतिवचनसमये सम्भावना किं न प्रदर्श्यत इति सम्बन्धः॥ "न तावदयमेकान्तेनाविषय" इत्यत्र सम्भावना प्रादर्शीत्याशङ्क्याह—**प्रथममिति**॥ प्रथमदर्शने हेतुर्नोक्त इत्याशङ्क्याह—**स्वरूपमिति**॥ परोक्तेः प्रयोजन पृच्छति—**नन्वाहेति**॥ वादकथात्वद्योतनार्थं परोक्तिरिति वक्तुं शास्त्रस्य वादरूपतामाह—**वादेति**॥ तत्र हेतुमाह—**अर्थनिर्णयेति**॥ अर्थनिर्णयः प्रधानमुद्देश्यं यस्य तदर्थनिर्णयप्रधानम्, तस्य भावस्तत्त्वम्, तस्मादित्यर्थः। अर्थनिर्णयपरत्वमात्रेण कथं वादत्वमिति शङ्कायां तत्स्वरूपमाह—**तत्रेति**॥ कथा त्रिविधा—वादो जल्पो वितण्डा चेति; तासां कथानां मध्ये वादः प्रदर्श्यते। पक्षश्च प्रतिपक्षश्चेति पक्ष-प्रतिपक्षौ, तयोः परिग्रहो यस्मिन्नसौ तथोक्तः। तावत्युक्ते जल्प-वितण्डयोः प्रसङ्गः, तदर्थं—**प्रमाणतर्केति**॥ प्रमाणं च तर्कश्चेति प्रमाण-तर्कौ, ताभ्यामेव स्वपक्षस्थापनं परपक्षोपालम्भश्च यस्मिन् स तथा निर्दिष्टः। जल्प-वितण्डयोस्तु छल-जाति-निग्रहैरपि

**ऋजुविवरणम्**

**"तदुच्यते"** इत्यत्र तच्छब्देन प्रकृतसंभावनानिर्देशशङ्का स्यात्; सन्निहितत्वात्, तथा सत्यनन्तरं लक्षणप्रदर्शनमसम्बद्धम्, तदिति तृतीयलिङ्गनिर्देशोऽप्ययुक्तः स्यात्, तां व्यावर्तयति—**तत्त्रितयमिति**॥ त्रितयमुच्यत इति प्रतिज्ञायानन्तरमेकमेव वक्तुमनुचितम्, लक्षणनिरूपणे तु को विशेषः? अविशेषेण प्रतिज्ञातत्वादित्याशङ्क्याह—**क्रमेणेति**॥ ननु एकशेषादौ पदे तन्त्रोच्चारणं दृश्यते, न वाक्ये? इत्याशङ्क्य व्याचष्टे—**युगपदर्थद्वयेति**॥ **अथवा** तन्त्रेणेत्ययुक्तम्; वाक्यस्य तन्त्रता नामार्थद्वयसाधारण्यम्, "साधारणं भवेत् तन्त्रमि"त्युक्तत्वात्। नच सकृदुच्चरितस्य वाक्यस्यार्थद्वयं संभवति विना वाक्यभेदेन, आवृत्त्यङ्गीकारे च न तन्त्रता। "पृष्टमिति मत्वा प्रत्युक्त"मित्याद्यभिप्रायवर्णनं चायुक्तं स्यात्, अतो न वाक्ये तन्त्रता, नोच्चारणे, वाक्यभेदापत्तेः, तेन न तन्त्रतेत्याङ्क्य व्याचष्टे—**तन्त्रेणेति युगपदिति**॥ "उभयस्य चेहे"त्यत्र संनिहितत्वात् लक्षणस्य 'इह'—शब्देन निर्देशशङ्का स्यात्, तथा सति लक्षणविषये सम्भवोपि स्यात्, नाध्यासविषयः; तन्निवृत्त्यर्थम्। अथवा, किंविषयः प्रश्नः? किंविषयश्चाक्षेप इति न ज्ञायते; तदर्थमाह—**लक्षणप्रश्नस्येति**॥

## पञ्चपादिका

**प्रतिवादिनं तत्रस्थमिव समुत्थाप्य, तेनाक्षिप्तमनेन पृष्टमिति मत्वा प्रयुक्तम्, पुनरसौ स्वाभिप्रायं विवृणोतीति आक्षेपमवतार्य प्रतिविधानं प्रतिपद्यन्ते। सर्वत्रैवंविधे ग्रन्थसन्निवेशे एष एव व्याख्याप्रकारः ॥**

**"स्मृतिरूपः परत्र पूर्वदृष्टावभासः" इति प्रश्नवाक्यस्थितमध्यासमुद्दिश्य लक्षणमभिधीयते। तत्र परत्रेत्युक्तेऽर्थात् परस्यावभासमानता सिद्धा। तस्य विशेषणं स्मृतिरूपत्वम्। स्मर्यत इति स्मृतिः; असंज्ञायामप्यकर्तरि कारके घञादीनां**

## पञ्चपादिकाविवरणम्

सिद्धान्ताविरुद्धः पञ्चावयवोपपन्नः पक्षप्रतिपक्षपरिग्रहो वादः" इति वादिप्रतिवादिभ्यां गुरुशिष्याभ्यां वा पक्षप्रतिपक्षपरिग्रहेण क्रियमाणा अर्थनिर्णयावसाना वादकथाऽत्र प्रवृत्तेति दर्शयितुं परोक्तिकथनमित्याह—**तत्रैवम्भूते विषय इत्यादिना** ॥ तेनाक्षिप्तमाक्षेपरूपमप्यभिप्रायमनेन पृष्टमेवेति मत्वा प्रत्युक्तं पुनरसावाक्षेपरूपेण विवृणोतीत्याक्षेपमवतार्येति व्याख्येयम्। ननु शास्त्रेषु जल्प-वितण्डाभिप्रायेणाऽपि परोक्तिरस्तीति ? नेत्याह—**सर्वत्रैवंविध इति** ॥

ननु लक्षणवाक्ये लक्ष्याभिधायिनः पदस्याभावात्साकाङ्क्षं वचनमनर्थकमित्याशङ्क्य वाक्यं पूरयति—**प्रश्नवाक्यस्थितमिति** ॥ ननु परस्य परात्मनाऽवभासोऽध्यास इति वक्ष्यति; तत्र कथमेकेनैव परशब्देन लक्षणं पूर्यते ? इत्यत्राह—**तत्र परत्रेत्युक्त इति** ॥ उत्तरो ग्रन्थः स्पष्टार्थः। ननु घञादीनां भावे विधानात् कथं कर्मपरतया स्मृतिशब्दो व्युत्पाद्यते ? इति

## तत्त्वदीपनम्

साधनोपालम्भः, अत्र तु न तथेत्यर्थः। **सिद्धान्ताविरुद्धः** इत्युक्त्याऽपसिद्धान्तनिग्रहप्रवेशमाह। **पञ्चावयवेति** विशेषणेन न्यूनाधिकोक्त्याऽसिद्धादिहेत्वाभासानां प्रवेशः सूचितः। यद्वा—स्वमतसाधन-परकीयसाधनदूषण-स्वपरसाधनदूषणसमर्थनापशब्दादिशब्ददोषलक्षणैः पञ्चभिरवयवैर्युक्त इत्यर्थः। भवत्वेवं वादस्वरूपम्, प्रकृते तु किमायातम् ? इति वीक्षायमाह—**वादीति** ॥ **एवंभूत इति,** दुरधिगमवस्तुविषय इत्यर्थः। स्वरूपविषयत्वेन प्रश्नोत्तरस्य प्राथम्यं चेत्, तर्ह्यनवसरदुःस्थोऽयमाक्षेप इति कस्मान्नोक्तम् ? इत्याशङ्क्य, एवं कथने श्रोतुः कुण्ठितमतितया प्रतिवचनार्थप्रतिपत्तिर्न स्यादित्यभिप्रायेणैवं प्रतिवचनमित्युक्तम्। **तेनाक्षिप्तमि**त्यनेन, तत्राक्षेपप्रश्नयोरुभययोरपि कृतत्वात्—"आक्षिप्तं पृष्टमिति मत्वा" इत्येतदयुक्तम् ? इत्याशङ्क्याध्याहारेण टीकां व्याकरोति—**तेनेति** ॥ आक्षिप्तमपि पृष्टमेवेति मत्वा प्रत्युक्तमित्यन्वयः। आक्षेपस्यापि विद्यमानत्वात्कथं पृष्टमेवेति मननमित्याशङ्क्याह—**आक्षेपरूपमिति। अभिप्रायम् 'अजानतेव'** इत्यध्यहारः। श्रोतर्यनवबोधारोपणे तस्यानुचितकारित्वबुद्ध्या प्रतिवचनाप्रतिपत्तेरात्मन्यनवबोधारोपणमित्यर्थः। प्रश्नस्यापि स्वाभिप्रायत्वात्कथं स्वाभिप्रायं विवृणोतीत्युक्तम् ? इत्याशङ्क्याह—**पुनरसाविति** ॥ यद्यप्याक्षेपः प्रश्नश्चाभिप्रेतः पुरा, तथाऽपि प्रश्नप्रतिवचनानन्तरमाक्षेपोत्थानमित्यर्थः। परोक्तेर्वादकथात्वद्योतनार्थत्वमिति कथं नियमः, अन्यत्रापि परोक्तेः सम्भवादिति चोदयति—**ननु शास्त्रेष्विति** ॥ अर्थनिर्णयपरे ग्रन्थे परोक्तेरेतदेव फलमित्याह—**नेत्याहेति** ॥

अध्यासस्वरूपे पृष्टे **"स्मृतिरूपः परत्र पूर्वदृष्टावभासः"** इति तत्स्वरूपकथनमित्यधिगन्तुं शक्यते, ततश्च प्रश्नवाक्येति टीकावैयर्थ्यमाशङ्क्याह—**ननु लक्षणेति** ॥ आकाङ्क्षाद्यनुसारेण पदानामन्विताभिधायित्वाद्, अध्यासपदाभावे साकाङ्क्षत्वेन आनर्थक्यात् पूर्ववाक्यपदाध्याहारेणान्विताभिधानं ग्राह्यमित्यर्थः। अव्याप्त्यादिदोषाभावादार्थिकमपि विशेषणं कस्मादुपादीयते ? ततः "तत्रे"ति टीकानुपपत्तिमाशङ्क्याह—**ननु परस्येति** ॥ व्याकरणविरोधान्न स्मृतिशब्दस्य कर्मपरता ? इति शङ्कते—**ननु घञादीनामिति** ॥ "भावे" इति सूत्रेण भावे घञादिविधानात्—"अकर्तरि च कारके" इत्यनेन कर्मादौ घञादिविधानेऽप्यकर्तरि च कारके संज्ञायामित्यत्र कर्तृव्यतिरिक्तकारके संज्ञायां घञादिप्रत्ययस्य विहितत्वात्, स्मृतिशब्दस्य न योगवृत्त्या कर्मपरत्वमित्यर्थः। कर्मणि भावे वा विशेषेण घञादयो वृद्धैः प्रयुज्यन्ते, 'को भवता दायो दत्तः' 'को भवता लाभो लब्धः'

## ऋजुविवरणम्

प्रमाणैस्तर्केण च साधनं स्वपक्षस्योपालम्भः परपक्षस्येति **सिद्धान्ताविरुद्ध** इति विशेषणम्। "तेनाक्षिप्तमनेन पृष्टमिति मत्वे"त्यत्रोभयस्य विवक्षितत्वादाक्षिप्तमिति न युक्तं वक्तुमित्याशङ्क्य पूरयति—**आक्षिप्तमपीति**। ननु पृष्टमिति मत्वेत्यत्रापि तावन्मात्रं स्वरूपनिरूपणे कारणं न भवति; आक्षेपस्यापि विद्यमानत्वादित्याङ्क्य पूरयति—**पृष्टमेवेति** ॥ आक्षिप्तमसौ पृष्टमिति कथं मनुते ? इत्याङ्क्याह—**आक्षेपरूपमप्यभिप्रायमिति** ॥

## पञ्चपादिका

**प्रयोगदर्शनात् । स्मर्यमाणरूपमिव रूपमस्य, न पुनः स्मर्यत एव; स्पष्टं पुरोऽवस्थितत्वावभासनात् । पूर्वदृष्टावभास इत्युपपत्तिः**

## पञ्चपादिकाविवरणम्

तत्राह—**असंज्ञायामपीति** ॥ कर्तृव्यतिरिक्तकारकेषु संज्ञायामिवाऽसंज्ञायामपि प्रयोगो भवति—"अकर्त्तरि च कारके संज्ञायामि"ति सूत्रादित्यर्थः । ननु स्मर्यते चेद्, रूपशब्दः किमर्थ इति ? अस्मर्यमाणे वस्तुन्युपमासमासार्थ इत्याह—**स्मर्यमाणरूपमिवेति** ॥ ननु किमुपमासमासेन ? स्मर्यते एव 'इदं रजतमि'ति; नेत्याह—**न पुनः स्मर्यत एवेति** ॥ ननु चक्षुरादिप्रमाणाभावात्परिशेषात्स्मृतिरिति ? नेत्याह—**स्पष्टं पुरोऽवस्थितत्वावभासनादिति** ॥ यथाऽन्यत्र 'इदं रजतमयं घट' इत्यादावितरेतरसंसृष्टौ सामान्यविशेषावपरोक्षाववभासेते, तथेहापि प्रतिभासः । नहि परमार्थेदंरजतसंवेदनाकारावभासन्यूनतामन्तरेण संसर्गसंविदंशाभावः शक्यते वक्तुम् । अर्थाभावे कथमपरोक्षा संविदिति चेत् ? न; यथासंविदवभासाधीनत्वादर्थसत्तानिश्चयस्य । नह्यर्थसत्तानिश्चयाधीनः संवित्सत्तानिश्चयः; अर्थसत्तानिश्चयस्यापि निश्चयान्तराधीनत्वप्रसङ्गात् ।

## तत्त्वदीपनम्

तथा 'पाकस्त्यागो राग' इति । व्याकरणस्य वृद्धप्रयोगमूलत्वात्स्मृतिशब्दस्य कर्मपरत्वं युक्तमिति समाधत्ते—**तत्राहेति** ॥ सूत्रस्य तर्हि का गतिः ? इत्याशङ्क्याह—**कर्तृव्यतिरिक्तेति** ॥ भावेऽकर्तरि च कारके संज्ञायामिति सूत्रद्वयमधिकृत्य "स्त्रियां क्तिन्"ति सूत्रेण भावे कर्तृव्यतिरिक्ते च कारके संज्ञायामिवाकर्तरि चेति चशब्दात् संज्ञायामिवासंज्ञायामपि घञादिर्विधीयत इति न सूत्रविरोध इत्यर्थः ॥ स्मृतिरूप इत्यत्र रूपशब्दस्य वैयर्थ्यं शङ्कते—**ननु स्मर्यत इति** ॥ किंशब्दः प्रश्नार्थः ? आक्षेपार्थो वा ? आद्यं प्रत्याह—**अस्मर्यमाण इति** ॥ अस्मर्यमाणरजतादौ स्मर्यमाणेन योपमा, तत्समासार्थ इत्यर्थः । द्वितीयमनुवदति—**ननु किमुपमेति** ॥ संस्कारोत्थबोधविषयत्वादिति शेषः । किं संस्कारोत्थबोधविषयत्वमात्रं हेतुः ? उत संस्कारमात्रजबोधविषयत्वम् ? आद्यं प्रत्यभिज्ञाविषयेण व्यभिचार इत्यभिप्रायेण दूषयति—**नेत्याहेति** ॥ द्वितीयमुत्थापयति—**ननु चक्षुरादीति** ॥ अनुभवविरोधेनोत्तरयति—**नेत्याहेति** ॥ "पुरोऽवस्थितत्वावभासनादि"त्यसम्बद्धम्; इदमो गृह्यमाणत्वात्, रजतस्य च स्मर्यमाणत्वादित्याशङ्क्याह—**यथेति** ॥ सम्यक्स्थले 'इदं रजतमि'ति सामान्य-विशेषयोः संसृष्टयोरपरोक्षतया स्फुरणवत् भ्रान्तावप्युभयोरपरोक्षतया स्फुरणात्तद्विरुद्धं समारोपितस्य स्मर्यमाणत्ववचनमित्यर्थः । अपरोक्षसामान्याविवेकाद्राजतेऽपरोक्षव्यवहारः, न संसर्गसंविदस्तीत्याशङ्क्य, प्रतिभासकृतवैलक्षण्यमाश्रित्य संसर्गसंविद् निह्नूयते ? अथवाऽर्थाभावात् ? इति विकल्प्य, प्रतिभासवैलक्षण्यमसिद्धमित्याह—**नहीति** ॥ द्वितीयमनुवदति—**अर्थाभाव इति** ॥ भविष्यदादिज्ञानमर्थाभावेऽप्यस्ति, तदर्थमाह—**अपरोक्षेति** ॥ किमेतद् व्युत्थितस्य चोद्यम् ? आहो विनेयस्य ? इति विकल्प्याऽऽद्यं दूषयति—**न यथेति** ॥ संविदमनतिक्रम्य वर्तमानोऽवभासो यथासंविदवभासः; तदधीनत्वादिति विग्रहः । अर्थसत्ता कुत इति पृष्टे, तदनुभवादिति वक्तव्यम्, ततश्चार्थसंविदि सत्यामर्थो नेत्यतिसाहसमित्यर्थः । निरालम्बनज्ञानायोगादर्थाधीनः संविन्निश्चय इत्याशङ्क्य, किं संविन्निश्चयात्पूर्वमर्थसत्तानिश्चयेन भवितव्यमिति ब्रूषे ? किं वाऽर्थसत्तया भवितव्यम् ? इति विकल्प्याऽऽद्यं दूषयति—**नहीति** ॥ अर्थसत्तायां निश्चितायां संवित्सत्तानिश्चय इति पक्षेऽर्थसत्तानिश्चय एव न सिद्ध्येदिति हिशब्दार्थः । कुत इति चेत् ? तत्र वक्तव्यम्—किमर्थसत्तानिश्चयः स्वतः ? आहो स्वविषयसंविद्बलात् ? नाद्यः, जडत्वादित्यभिप्रेत्य द्वितीयं प्रत्याह—**अर्थसत्तेति** ॥ स्वविषयसंविन्निश्चयोऽपि स्वतः ? किं वाऽर्थनिश्चयाधीनः ? आद्येऽस्मदभिहितसिद्धिः । द्वितीयेऽर्थनिश्चयस्यापि स्वतोऽनुपपत्तेस्तद्विषयसंविदन्तरादिति वक्तव्यम्, ततश्च पूर्वार्थनिश्चयाधीन उत्तरोत्तरसंविन्निश्चयो न सिद्ध्येदित्यर्थः ॥

## ऋजुविवरणम्

ननु असंज्ञायां कर्मकारके घञादीनां कथं प्रयोगः ? "अकर्तरि चे"ति चशब्दात् कथंचित् कर्तरि प्रयोगो भवेत्, भावे च प्रयोग उक्तः, तत्समुच्चयप्रतीतिर्वेत्याशङ्क्य व्याचष्टे—**कर्तृव्यतिरिक्तेति** ॥ कथं पुरोऽवस्थितत्वेनावभासो निश्चीयते ? इत्याशङ्क्याह—**यथान्यत्रेदं रजतमिति** ॥ ननु परमार्थेदंरजतादौ संसर्गसंवित्त्याऽपरोक्षत्वं निश्चीयते, अत्र संसर्गसंवेदनाभावात् कथमपरोक्षत्वम् ? इत्याशङ्क्याह—**नहि परमार्थेदंरजतमिति** ॥ ननु सत्यर्थे संवेदनमुत्पद्यते, ततस्तदधीनत्वमपि संविद इत्याशङ्क्याह—**नह्यर्थसत्तानिश्चयाधीन** इति ॥ प्रतीतौ विपरीत एव क्रम इत्यर्थः ।

## पञ्चपादिकाविवरणम्

ननु 'नेदं रजतमि'त्युत्तरसंवेदनादर्थाभावोऽपि निश्चितः ? न; तत्रापि पूर्वसंवेदनेन सद्भावविषयेण विरोधात्। इदंरजताभावसंवेदनानामविवेककल्पनयोत्तरज्ञानेऽपि संसर्गसंविदभावः किं न स्यात् ? व्यवहारसंवादज्ञानादुत्तरज्ञाने संसर्गसंवित्सद्भावश्चेत् ? न; अर्थक्रियासंवादज्ञानादर्थसंवित्सद्भावनिश्चय इति वदतः संवित्प्रत्यक्षत्ववादहानात्; अर्थक्रियासंविदोऽपि संविदन्तराधीनसद्भावनिश्चयप्रसङ्गात्।

ननु सम्प्रतिपन्नोऽर्थाभावः ? न; यथाप्रतिभासमेव मिथ्यारजतस्योत्तरज्ञानेन निरसनयोग्यस्योपगमात्, लौकिकपरमार्थदृष्टरजतप्रतियोगिकाभावविषयत्वात् रजते त्रैकाल्याभावज्ञानस्य इति संविद्द्वयानुरोधेन व्यवस्थासिद्धेः अन्यतर-

## तत्त्वदीपनम्

अर्थनिश्चयाधीनः संविन्निश्चय इति पक्षं निराकृत्यार्थसत्ताधीनः संविन्निश्चय इति पक्षमुत्थापयति—**ननु नेदमिति** ॥ पुरोवर्तिनि रजतस्य निषिध्यमानत्वात्तदसत्त्वम्, तदसत्त्वे च संविदसिद्धिरित्यर्थः। विपरीतं किं न स्यात् ? इत्याह—**न तत्रेति;** उत्तरसंवेदन इत्यर्थः। प्रथमोत्पन्नतयाऽसंजातविरोधित्वेन प्राबल्यमाह—**पूर्वेति** ॥ निरपेक्षतया प्राबल्यमाह—**सद्भावेति** ॥ 'नेदं रजतमि'ति संसर्गः संवेद्यत इत्याशङ्क्य, यथेदंरूप्ययोः संसर्गसंविदमन्तरेणाविवेकात्संसर्गव्यवहारः, तद्वदत्रापीत्याह—**इदंरजतेति** ॥ इदं च रजतं चाभावश्चेतीदंरजताभावाः, तेषां संवेदनानि तथोक्तानि, तेषामिति विग्रहः। व्यवहारविसंवादादिदंरजतयोः संसर्गसंविदभावनिश्चयः, उत्तरज्ञाने तु तद्वैपरीत्यान्मैवमिति चोदयति—**व्यवहारेति** ॥ रजताभावज्ञानप्रयुक्तो व्यवहारो व्यवहारशब्दार्थः। संसर्गज्ञानं संवादज्ञानाधीनमिति वदतः सिद्धान्तक्षतिरित्याह—**नार्थक्रियेति** ॥ स्वसमवेतं ज्ञानं स्वस्य स्वयं प्रकाशकमिति पक्षस्यार्थक्रियासंवादलिङ्गेन संसर्गसंवित्सत्त्वानुमितौ विरोधः स्यादित्यर्थः ॥ संविदोऽनुमेयत्वमङ्गीकुर्वाणं प्रत्याह—**अर्थक्रियेति** ॥ संवित्सत्त्वमर्थक्रियासंविदधीनम्, तत्सत्ता कुतः ? इति पृष्टे संविदन्तरादिति वक्तव्यम्, संवित्सत्ता च संविदन्तरादिति पूर्वासिद्धावुत्तरोत्तरासिद्धेर्न व्यवहारादिसिद्धिरिति स्वत एव संविन्निश्चय इति वक्तव्यम्, तथाच तद्बलादर्थसत्त्वं वक्तव्यमिति नार्थाभावसिद्धिरित्यर्थः।

व्युत्थितचोद्यं निराकृत्य द्वितीयमुत्थापयति—**ननु संप्रतिपन्न इति**। तवेति शेषः। किं प्रतिभाससमयेऽर्थाभावसंप्रतिपत्तिः ? उत कालान्तरे ? नाद्य इत्याह—**न यथेति** ॥ यथाप्रतिभासं रजतस्योपगमादित्यन्वयः। रजतस्य सत्त्वे कथं ज्ञानं निरस्यते ? इत्याशङ्क्याह—**उत्तरेति** ॥ निरसनयोग्यत्वमाह—**मिथ्येति** ॥ परमार्थसद्वैलक्षण्यं मिथ्याशब्दार्थः। द्वितीयस्त्वङ्गीक्रियत इत्याह—**एवेति** ॥ प्रतिभाससमकालीनोऽर्थ उपगतश्चेत्, कथं तर्हि कालत्रयसंबन्धिसत्तानिषेधः ? इत्याशङ्क्याह—**लौकिकेति** ॥ परमार्थरजतस्यात्राप्रसक्तेः कथं तन्निषेधः ? इत्याशङ्क्याह—**दृष्टेति** ॥ रजताभासप्रसक्त्या परमार्थरजतस्यापि बुद्धिस्थत्वादत्र प्रतिषेधः, सामान्योपाधौ प्रसक्तस्य घटस्य निषेधवदित्यर्थः। उक्तव्यवस्थायाः किं कल्पकम् ? इत्याशङ्क्य, संविद्द्वयमेव कल्पकमित्याह—**संविद्द्वयेति** ॥ **इतीत्यस्य व्यवस्थासिद्धेरित्यनेन सम्बन्धः। संविद-**

## ऋजुविवरणम्

ननु इदमित्यत्राविवेकादेव संसर्गव्यवहारो भवति, अतः कथं तेनोत्तरस्य विरोधः ? इत्याशङ्क्याह—**इदंरजताभावेति** ॥ मा भूत्संविदः प्रत्यक्षत्वम्, अर्थक्रियाधीन एव निश्चयो भवतु, इति चेत् ? **अथवा** कथं प्रत्यक्षत्वहानिः ? विप्रतिपन्नं प्रति साधनादिति ? तत्राह—**अर्थक्रियासंविद** इति ॥ ज्ञानस्यैव निश्चायकत्वम्। तथाच सति ज्ञापकपरम्परायामेवोपक्षीणत्वमिति भावः।

**ननु संप्रतिपन्न** इति ॥ अयं भावः—रजतकारणाभावाद् बाधाद्वा तदभाव इति। ननु प्रतिभासाद् रजताङ्गीकारे कथं तत्प्रयुक्तकार्याभाव इति ? तत्राह—**मिथ्यारजतस्येति** ॥ कथं तन्मिथ्यात्वमिति ? तदाह—**उत्तरज्ञानेनेति** ॥ **अथवा**—रजताङ्गीकारे कथं बाधकज्ञानोत्पत्तिः ? उत्तरत्र रजताप्रतिपत्तिश्चेति ? तत्राह—**उत्तरज्ञानेनेति** ॥ कथं निरसनयोग्यतेति ? तत्राह—**मिथ्यारजतस्येति** ॥ भवतु निवृत्तिलक्षणो बाधः; त्रैकालिकनिषेधस्तु कथमिति ? तत्राह—**लौकिकपरमार्थेति** ॥ बाधकज्ञानस्य रूपद्वयम्—बाधकत्वं निषेधकत्वं **च**। तत्र बाधः कार्यतया भवति, निषेधस्तु विषयः। तत्र बाधसाध्यस्य निवृत्तिरूपस्य न तज्ज्ञानविषयत्वमिति। ननु, अविशेषेण ज्ञानोत्पत्तौ कथं प्रतीतस्य बाध्यत्वम्, अन्यस्य निषेध्यत्वमिति

## पञ्चपादिकाविवरणम्

संविदपह्नवायोगात् । तथाचोभयसंविद्विषयानुभवो—'नास्त्यत्र रजतम्' 'मिथ्यैव रजतमभादि'ति । ननु अपरोक्षशुक्तिकाज्ञानाविवेकाद्रजतमपरोक्षतया प्रतिभासत इति ? नेत्याह—**स्पष्टमिति** ॥ केयं स्पष्टता नाम ? विवेकज्ञानसमयेऽपि 'एतावन्तं कालमिदं रजतमित्यभादि'ति संसृष्टावभासत्वेन प्रत्यभिज्ञायोग्यता; अन्यथा 'तद्रजतमेतावन्तं कालमितो विवक्तमि'ति प्रतीयात्; **अथवा,** तज्ज्ञानात्तत्र प्रवृत्तिरिति पदार्थांशज्ञान-तत्प्रवृत्त्योर्नियमात्, इहापि संसर्गप्रवृत्तिनिमित्तता संसर्गज्ञानस्य स्पष्टतेति । **"पूर्वदृष्टावभासः"** इति स्पष्टार्थः ॥ यदा ज्ञानविशिष्टोऽर्थ एवाध्यासः, तदा स्मर्यमाणसदृशोऽन्यात्मनाऽवभास-

## तत्त्वदीपनम्

द्वयानुपपत्तिर्व्यवस्थाकल्पिकेत्यर्थः । अनयोः प्रत्यययोरेका संवित् त्यज्यताम्, तथाच नालौकिककल्पनेत्याशङ्क्याह—**अन्यतरेति** ॥ अपह्नवायोगे हेतुमाह—**तथाचेति** । यथाऽन्यतरसंविदपह्नवायोगः; तथोभयसंविदनुभवस्ततो नान्यतरापलाप इत्यर्थः । 'नात्र रजतमि'ति कालत्रयासत्त्वं प्रतीयते, 'मिथ्यैव रजतमभादि'ति भ्रान्तौ सत्त्वम्, ततश्चोभयसंविदनुरोधेन कालत्रयनिषेधस्य लौकिकविषयत्वम्—'सदिदं रजतमि'त्यनुभवस्य मायाविवर्तरूप्यविषयत्वमित्यर्थः ॥ पुरोवर्तित्वावभासनमन्यथोपपन्नमिति चोदयति—**नन्वपरोक्षेति** ॥ "अविवेकादि"त्यत्र रजतस्मरणस्येति द्रष्टव्यम् । निरस्तमपि चोद्यं टीकारूढं कर्तुं पुनरुपस्थापितमिति द्रष्टव्तम् । अनुभवविरोधान्मैवमित्याह—**नेत्याहेति** ॥ पुरोऽवस्थिततत्वावभासनातिरिक्तं स्पष्टशब्दार्थं न विद्मः, तथाच पौनरुक्त्यमित्यभिप्रायेणाह—**केयमिति** ॥ भ्रान्तिसमये पुरोदेशसंसृष्टतया रजतस्य स्फुरणं पुरोऽवस्थितत्वावभासनं, बाधकज्ञानोत्तरकालमिदमा संसृष्टतयाऽनुसन्धीयमानत्वं स्पष्टशब्दार्थ इति विभागमभिप्रेत्याह—**विवेकेति** ॥ बाधकज्ञानोत्तरकालं संसृष्टतया प्रत्यभिज्ञायमानत्वमात्रात् कथं प्राक्संसृष्टतया प्रतिभासः ? इत्याशङ्क्याह—**अन्यथेति** ॥ अनुभूतविषयत्वात्परामर्शस्य संसर्गस्य चाननुभूतत्वात् न तद्विषयपरामर्शसम्भव इत्यर्थः । स्पष्टशब्दस्यार्थान्तरमाह—**अथवेति** ॥ संसर्गज्ञानस्य संसर्गप्रवृत्तिनिमित्तता स्पष्टतेति कुतः ? अग्रहादपि संसर्गप्रवृत्तिसम्भवात्, इत्याशङ्क्याह—**पदार्थेति** ॥ नियममेवाह—**तज्ज्ञानादिति** ॥ यो यत्र प्रवर्तते, असौ तज्ज्ञानादिति प्रसिद्धम्, रजतार्थी चेदमि प्रवर्तते, तस्मात्पुरोवर्ति द्रव्यं रजततया ज्ञात्वा प्रवर्तत इत्यवश्याऽऽश्रयणीयमित्यर्थः ॥ पूर्वदृष्टावभास इत्यादेरयमर्थः; रजतस्य पुरोवर्तितया भासमानत्वे कथं स्मर्यमाणसरूपत्वम् ? इत्याशङ्क्याह (टीकायाम्)—**पूर्वदृष्टेति** ॥ शुक्त्यविद्यया तत्र झटिति प्रादुर्भवतः कथं पूर्वदृष्टत्वं घटते ? इत्याशङ्क्य, पूर्वदृष्टसदृश इत्येवम्परतया व्याकरोति (टीकायाम्)—**नहीति** ॥ स्मर्यमाणसदृशोऽन्य-

## ऋजुविवरणम्

भेदसिद्धिरिति ? तत्राह—**संविद्द्वयानुरोधेनेति** ॥ ननु अप्रतीतस्य निषेधासंभवात्प्रतीतस्य च पुरोदेशे विद्यमानत्वाद् न निषेधः; अतो निषेधसंविदभावः, संसर्गसंविदभावो वा वक्तव्यः ? इत्याशङ्क्याह—**अन्यतरसंविदिति** ॥ प्रसक्तस्यैव निषेध्यत्वम्, न प्रतीतस्य; भूतलसंसर्गनिषेधाङ्गीकारात् भ्रान्तप्रतीतिरेव सत्यप्रसक्तिरपीति भावः । ननु भूतलसंसर्गप्रतीत्यभावेऽपि स्वरूपेण प्रतीतघटनिषेधदर्शनात् कथं प्रसक्तेरेव निषेधप्रयोजकत्वम् ? अतोऽन्यतराभावः ? इत्याशङ्क्याह—**तथाचोभयसंविदिति** ॥ अन्यथासिद्धसंविद्बलात् प्रसक्तनिषेधोऽपि निश्चीयत इति भावः । **अथवा**—'इदं रजतम्' 'नेदं रजतम्' इत्यविशेषेणैव प्रतीतिद्वयोत्पत्तौ भिन्नविषयत्वं कथं निश्चीयते, निश्चायकप्रमाणाभावादिति ? तत्राह—**तथाचोभयसंविदिति** ॥ ननु पुरोऽवस्थितत्वेनावभासव्यतिरेकेण न स्पष्टता प्रसिद्धा, यद्बलादपरोक्षत्वनिश्चय इति चोदयति—**केयमिति** ॥ ननु विवेकाग्रहादपि सा संभवतीत्याशङ्क्याह—**अन्यथेति** ॥ पूर्वं परामर्शसामर्थ्यादर्थस्य स्पष्टतोक्ता, इदानीं ज्ञानस्यैव तस्मिन्नेव ज्ञाने स्पष्टतामाह—**अन्यथेति** ॥ ननु न परामर्शोऽनुभवसाधकः; अनुभवे सन्दिग्धे तस्यासंसर्गाग्रहनिबन्धनत्वोपपत्तेः; तेन न स्पष्टतेत्याशङ्क्याह—**अथवेति** ॥ गृहीतपदार्थासंसर्गाग्रहात् प्रवृत्तिरित्येतन्निराकरोति—**पदार्थांशज्ञानतत्प्रवृत्त्योरिति** ॥ यदंशे ज्ञानम्, तदंश एव प्रवर्तते, न त्वन्याकारज्ञानादंशान्तरे प्रवर्तत इति नियमो दृश्यत इति भावः । यदि लक्षणवाक्यं कर्मव्युत्पत्त्या योज्यते, तर्हि ज्ञानाध्यासे लक्षणान्तरं वक्तव्यम्, अनध्यस्तत्वं वाऽङ्गीकर्तव्यमित्याशङ्क्य परिहृतम्—"यतोऽर्थादि"ति, तदयुक्तम्; अव्यापकत्वप्रसङ्गात्, अर्थज्ञानयोः परस्परनिरपेक्षयोरध्यासलक्षणस्यैव वक्तुमशक्यत्वेनानध्यस्तत्वप्रसङ्गात्, अर्थज्ञानात्मकत्वाच्चाध्यासस्य सहितस्यैव लक्षणोक्तौ पुनर्लक्षणप्रदर्शने पौनरुक्त्यमित्याशङ्क्याभिप्रायमाह—**यदा ज्ञानविशिष्टोऽर्थं**

## पञ्चपादिका

**स्मृतिरूपत्वे। न हि पूर्वमदृष्टरजतस्य शुक्तिसम्प्रयोगे रजतमवभासते। यतोऽर्थात्तद्विषयस्यावभासस्यापीदमेव लक्षणमुक्तं भवति। कथम्? तदुच्यते—स्मृते रूपमिव रूपमस्य, न पुनः स्मृतिरेव; पूर्वप्रमाणविषयविशेषस्य तथानवभासकत्वात्। कथं पुनः स्मृतिरूपत्वम्? पूर्वप्रमाणद्वारसमुत्थत्वात्। नह्यसम्प्रयुक्तावभासिनः पूर्वप्रवृत्ततद्विषयप्रमाणद्वारसमुत्थत्वमन्तरेण समुद्भवः सम्भवति॥**

## पञ्चपादिकाविवरणम्

मानोऽन्योऽर्थोऽध्यास इत्येवंलक्षणपरतया वाक्यं योजितम्। यदा पुनरर्थविशिष्टं ज्ञानमेवाध्यासः, तदा स्मृतिसमानोऽन्यस्यान्यात्मनाऽवभासोऽध्यास इत्येवंलक्षणपरतयाऽपि तदेव वाक्यं योजयितुं शक्यत इत्याह—**यतोऽर्थादिति। अर्थात्** वाक्यसामर्थ्यादित्यर्थः। **कथमित्यादिः** स्पष्टार्थः। ननु न स्मृतिश्चेद् भ्रान्तिः, प्रत्यक्षज्ञानवद् न पूर्वानुभवजन्यत्वमित्याशङ्क्य, सम्प्रयोगमात्रजन्यज्ञानादन्येषां सर्वेषामविशिष्टं पूर्वप्रमाणजन्यत्वम्; अन्वयव्यतिरेकसामर्थ्यात् इत्याह—**नह्यसम्प्रयुक्तावभासिन** इति॥

## तत्त्वदीपनम्

स्यान्यात्मनाऽवभासमानोऽध्यास इत्येवंलक्षणस्वीकारे ज्ञानस्याऽध्यासत्वमुपेक्षितं स्यादित्याशङ्क्य, ज्ञानाध्यासपरत्वेन लक्षणं व्याचख्यौ, तदनुपपन्नम्; ज्ञानार्थयोरन्यतरस्याध्यासत्व इतरस्याप्यध्यासत्वं सेत्स्यति, किं पृथग्लक्षणोपन्यासेन? इत्याशङ्क्याह—**यदेति**॥ यद्यप्यर्थज्ञानाध्यासयोरन्यतरनिर्देशेऽन्यतरसिद्धिः; तथाऽप्यर्थाध्यासलक्षणस्य ज्ञानाध्यासेऽसम्भवेनाव्याप्तिः स्यात्, तदर्थं पृथग् निर्देष्टव्यमित्यर्थः। तर्हि लक्षणान्तरमेव कथ्यताम्, कस्मादेतदेव तत्र योज्यते? इत्याशङ्क्य लाघवादित्याह—**तदेवेति**॥ अवभासस्याऽपीदमेव लक्षणमित्यर्थादुक्तं भवति यतः, अतो न ज्ञानाध्यासस्योपेक्षितत्वमिति योजना। "अर्थादि"त्यत्र कस्यानुपपत्तिरिति न ज्ञायते? तत्राह—**वाक्येति**॥

(टीकायाम्) कथमित्यादेरयमर्थः—अर्थाध्यासलक्षणं कथं ज्ञानाध्यासलक्षणं स्यात्? न ह्यन्यलक्षणं अन्यलक्षणं भवति? इति चोदयति—**कथमिति**॥ अन्यलक्षणमन्यलक्षणमिति न ब्रूमः, अपितु अन्यलक्षणवाक्यमन्यलक्षणपरतयाऽपि योजयितुं शक्यत इत्याह—**तदुच्यत इति**॥ योजनामेवाह—**स्मृतेरिति**॥ स्मरणं स्मृतिः, तस्या रूपमिव रूपमस्येति। स्मृतिरूपत्वं कस्मात्? संस्कारजन्यत्वेन स्मृतित्वमेव किं न स्यात्? इत्याशङ्क्य व्यभिचारान्नेत्याह—**न पुनरिति**॥ संस्कारमात्रजन्यत्वेन स्मृतित्वशङ्कां निरस्यति—**पूर्वेति**॥ स्मृतिजनकसंस्कारस्य यन्मूलम्, तत्पूर्वशब्देनोच्यते। पूर्वं च तत् प्रमाणं चेति पूर्वप्रमाणम्, तस्य योऽयं विषयविशेषः, तस्य पूर्वानुभवसंभिन्नतयाऽनवभासकत्वादित्यर्थः। पूर्वानुभवसंभिन्नतयाऽनवभासकस्य स्मृतिरूपत्वमप्यनुपपन्नं प्रत्यक्षवदिति चोदयति—**कथमिति**॥ वैधर्म्येणोत्तरयति—**पूर्वेति**॥ प्राक् प्रवृत्तं प्रमाणं द्वारं मूलं यस्य संस्कारस्य, स तथोक्तः; तस्मात् समुत्पन्नत्वादित्यर्थः।

अस्मृतित्वे संस्कारजन्यत्वमप्यनुपपन्नमिति चोदयति—**नन्विति**॥ विमतम्, न संस्कारजन्यम्, अस्मृतित्वात्; प्रत्यक्षवदित्यर्थः। अनुमानादौ व्यभिचारान्नायं हेतुः साधुरित्याह—**संप्रयोगेति**॥ प्रत्यभिज्ञायां संस्काराजन्यत्वप्रसंगं परास्यति—**मात्रेति**॥ व्याप्त्यादिसंस्कारे सत्यनुमानादिज्ञानम्, अन्यथा नेत्येवंलक्षणावन्वय-व्यतिरेकौ।

## ऋजुविवरणम्

**एवेति**॥ ननु वाक्यभेदस्यावश्यंभावित्वाद् लक्षणान्तरमेव किं नोक्तम्? इत्याशङ्क्याह—**योजयितुमिति**। तथाऽपि लाघवादिति भावः। **अर्थादित्यनेन** धर्म-शेषलक्षणोक्तावधर्म-शेषिलक्षणप्रसिद्धिवदभिप्रेतत्वशङ्का स्यात्, न त्विह तथा भवति; तत्र प्रतियोगित्वरूपेणार्थात् सिद्धिः, नेह तथा प्रतियोगित्वरूपत्वम्, इत्याशङ्क्य व्याचष्टे—**वाक्यसामर्थ्यादिति**॥ **अथवा**—अर्थादिति कथमुक्तम्? न ह्यत्रानुपपद्यमानं किञ्चिदस्तीत्याशङ्क्य व्याचष्टे—**अर्थादिति**॥ **वाक्येति**॥ वाक्यस्य समर्थत्वादिति। "न ह्यसंप्रयुक्ते"त्यनेन संस्कारजन्यत्वसाधनं कृतम्, तद् व्यर्थम्; संस्काराजन्यत्वशङ्काकरणाभावात्; नाप्यसंयुक्तावभासत्वेन संस्कारजन्यत्वम्, प्रमाणाभावात्; संयोगासंयोगजन्यत्वस्य व्यभिचारेण तदसाधकत्वात्; इत्याशङ्क्यावतारयति—**ननु न स्मृतिश्चेदिति**॥ "संप्रयोगमात्रे"त्यनेन स्मृतिव्यतिरिक्तत्वस्य सोपाधिकत्वमुक्तम्। ननु संप्रयोगमात्रजन्यत्वमुपाधिर्न संभवति; सपक्षव्यापकत्वाभावादित्याशङ्क्याह—**अन्येषामिति**॥

रूपशब्दमुपश्रुत्य गुरुमार्गविरोधिनम्। समर्थयन् तदेवादौ तन्मतं प्राह संगतम्॥
भ्रान्तिरूपेऽथवा पूर्वं विवादे धीपथे गतम्। तद्रूपं रूप्यते पश्चात्तद्विशेषनिरूपणात्॥

## पञ्चपादिका

**अपर आह—ननु अन्यसम्प्रयुक्ते चक्षुष्यन्यविषयज्ञानं स्मृतिरेव, प्रमोषस्तु स्मरणाभिमानस्य। इन्द्रियादीनां ज्ञानकारणानां केनचिदेव दोषविशेषेण कस्यचिदेवार्थविशेषस्य स्मृतिसमुद्बोधः क्रियते। सम्प्रयुक्तस्य च दोषेण विशेषप्रति-**

## पञ्चपादिकाविवरणम्

ननु संस्कारजन्यत्वमुपगतं चेत्, अन्यसम्प्रयुक्ते चक्षुषि यदनन्तरमन्यविषयं ज्ञानमुत्पद्यते, सा स्मृतिरेव, तद्व्यवधानेन तु यज्ज्ञानमुत्पद्यते, तदनुमानादि प्रमाणम्, इति प्रमाण-स्मृतिद्वैराश्यमेव विज्ञानस्य; न तृतीयं मिथ्याज्ञानं नामास्तीत्यख्यातिवादी प्रत्यवतिष्ठत इत्याह—**अपर आहेत्यादिना** ॥ ननु स्मृतिश्चेद् गवादिस्मृतिवत्स्वार्थं गृह्यमाणाद्विविच्य स्मरामीति दर्शयेद्? इत्यत आह—**प्रमोषस्त्विति** ॥ ननु शुक्तिकासम्प्रयोगे रजतं किमिति स्मर्यते? सादृश्यादिति चेत्, अतिसादृश्याच्छुक्तिकान्तरमेव स्मर्यतामिति? नेत्याह—**इन्द्रियादीनामिति** ॥ ननु मा भूत् स्मृतेः प्रमोषात्स्वार्थविवेचकता,

## तत्त्वदीपनम्

चक्षुष्यन्यसंप्रयुक्ते यदन्यविषयं ज्ञानमुत्पद्यते, सा स्मृतिरिति, कथमनुमानादौ व्यभिचारः? इत्याशङ्क्याभिप्रायं विवृणोति—**ननु संस्कारेति** ॥ अधिष्ठानज्ञानं व्यावर्तयितुमन्यविषयत्वमित्युक्तम्। अनुमानं व्यावर्तयति—**अनन्तरमिति** ॥ संस्कारजन्यत्वस्य त्वयाऽप्याश्रितत्वात्तेनैव भ्रान्त्युत्पत्तेर्न कारणान्तरं मृग्यमित्यभिप्रेत्याह—**संस्कारेति** ॥ अनन्तरपदव्यावर्त्यमाह—**तद्व्यवधानेनेति** ॥ व्याप्तिस्मृतिव्यवधानेनेति यावत्। फलितमाह—**इतीति** ॥ संस्कारोत्थज्ञानस्य प्रमाणस्मृतिरूपत्वेन द्वैराश्यमित्यर्थः। संस्कारोत्थज्ञानं द्विविधमेवेति कथं नियमः? अयथार्थप्रत्यक्षस्यापि संभवादित्याशङ्क्याह—**न तृतीयमिति** ॥ ज्ञानत्वम्, यथार्थमात्रवृत्ति, ज्ञानमात्रवृत्तित्वात्, प्रमात्ववदित्यर्थः। **अथवा** अयथार्थप्रत्ययप्रसिद्धेः कथं तदपलापः? इत्याशङ्क्याह—**प्रमाणेति** ॥ तत्सद्भावे प्रमाणाभावात् प्रसिद्धेरन्यथाऽप्युपपत्तेर्नैतदित्यर्थः। एवकारव्यावर्त्यमाह—**न तृतीमिति** ॥ विमतम्, स्मृतिः, संस्कारमात्रजत्वात्; संमतवदित्यनुमानं विवक्षितम्। तत्र विपक्षे बाधकतर्कपराहतिं शङ्कते—**ननु स्मृतिरिति** ॥ अपुनरुक्तशब्दद्वयस्मृतिहेतुत्वेन रजतं विविक्तं प्रतीयत एवेत्याशङ्क्याह—**स्मरामीति** ॥ अप्रमुषितस्मरणाभिमानस्यास्मरणस्य विवेचकत्वम्, अस्य च तद्वैपरीत्यान्मैवमित्याह—**अत आहेति** ॥ संस्कारस्य सदा भावात् सदा स्मरणं स्यादिति शङ्कते—**ननु शुक्तिकेति** ॥ शुक्तिकासंप्रयोगे रजतं किमिति स्मर्यते? संप्रयोगात्पूर्वोत्तरकालयोरस्मरणं कस्मादिति योजना ॥ सादृश्यसंदर्शनसमुद्बुद्धसंस्कारस्य पूर्वोत्तरक्षणयोरभावादस्मरणमिति शङ्कते—**सादृश्यादिति** ॥ तथाऽपि रजतं कस्मात्स्मर्यते? अन्यदेव कस्मान्न स्मर्यते? इत्याह—**अतिसादृश्यादिति** ॥ रागादीनामपि संस्कारोद्बोधककोट्यन्तर्भावान्नातिप्रसङ्ग इत्याह—**नेत्याहेति** ॥ स्मर्यतेऽनेनेति स्मृतिः संस्कारः, तस्य समुद्बोध इति यावत्। समुद्बोधस्याऽऽगन्तुकत्वे हेतुमाह—**इन्द्रियादीनामिति** ॥ **आदि**शब्देन विषय-प्रमातारौ गृह्येते। राग-सादृश्य-काचादिर्**दोष**शब्दार्थः। स्मरणस्याविवेचकत्वेऽपि पुरोवर्तिद्रव्यसंयुक्तेन्द्रियेण विशेषांशस्फुरणसंभवान्नाविवेक इति चोदयति—**ननु मा भूदिति** ॥ विशेषांशे प्रतिबन्धसंभवान्नयनस्य न तद्भासकत्वमित्याह—**नेत्याहेति** ॥ विवादाध्यासिता प्रवृत्तिः, पुरोवर्तिरजतज्ञानपूर्विका, रजतेच्छाऽधीनपुरोवर्तिप्रवृत्तित्वात्; सम्यग्रजतप्रवृत्तिवत्, इत्यनुमानादयथार्थप्रत्ययसिद्धिरिति शङ्कते—**नन्विति** ॥ विपक्षे बाधकाभावादप्रयोजकत्वमाशङ्क्य किं ज्ञानद्वयं प्रवर्तकम्? उत प्रत्येकम्? आद्येऽपि किं संभूयोत्पन्नं प्रवर्तकम्; उत क्रमेण? इति विकल्प्याऽऽद्यं निरस्यति—**स्मृति-ग्रहणयोरिति** ॥ मनसः क्रमकारित्वनियमादुत्पन्नयोश्च स्मृति-ग्रहणयोः क्षणिकत्वान्न यौगपद्य-

## ऋजुविवरणम्

"नन्वन्यसंप्रयुक्ते चक्षुष्यन्यविषयं ज्ञानं स्मृतिरि"त्युक्तम्, तदयुक्तम्; अनुमानादीनामपि स्मृतित्वप्रसङ्गात्, स्मृतित्वस्य च निरस्तत्वात्, इत्याशङ्क्य पूर्वसंस्कारजन्यत्वेन स्मृतिरूपत्वमुक्तम्, तत्र साक्षात्तज्जन्यत्वं व्यवधानेन वेति विकल्प्याऽऽद्ये न तत्प्राप्तिरित्याह—**यदनन्तरमिति** ॥ द्वितीयेऽपि न स्मृतिरूपत्वमित्याह—**तद्व्यवधानेनेति** ॥ ननु भवतु नामान्यत्रैवम्, प्रकृते तु न स्मृतिः; अपरोक्षावभासित्वात्, मन्दप्रयोजनं च चोद्यम्, 'अहं मनुष्यः' इत्यादौ वक्तव्यं हि विधान्तरम्, तेन न्यायेनान्यत्रापि भ्रान्तिसम्भवादित्याशङ्क्याह—**प्रमाणस्मृतीति** ॥ संस्कारजन्यं ज्ञानं द्विविधमेव। **अथवा**—ज्ञाने द्वैराश्यमेवेत्यर्थः ॥ चोद्ये सिद्धान्तविरोधं दर्शयितुमवधारणार्थमाह—**न तृतीयमिति** ॥ कथं प्रवृत्तिरिति चोदिते

## पञ्चपादिका

**भासहेतुत्वं करणस्य विहन्यते। तेन दर्शनस्मरणयोर्निरन्तरोत्पन्नयोः करणदोषादेव विवेकानवधारणाद् दूरस्थयोरिव वनस्पत्योरनुत्पन्न एवैकत्वावभास उत्पन्नभ्रमः।**

**ननु अनास्वादिततिक्तरसस्यापि बालकस्य पित्तदोषान्मधुरे तिक्तावभासः कथं स्मरणं स्यात्? उच्यते; जन्मान्तरानुभूतत्वात्; अन्यथाऽननुभूतत्वाविशेषेऽत्यन्तमसन्नेव कश्चित्सप्तमो रसः किमिति नावभासेत? तस्मात्पित्तमेव मधुराग्रहणे**

## पञ्चपादिकाविवरणम्

ग्रहणं तु स्वार्थं स्मर्यमाणाद्विवेचयेदिति? नेत्याह—**सम्प्रयुक्तस्य चेति**॥ ननु स्मृति-ग्रहणयोर्यौगपद्याभावात्क्रमवर्तित्वे पूर्वज्ञानं व्यवधानान्न प्रवृत्तिहेतुः; नच सामान्यमात्रज्ञानाद्विशेषमात्रज्ञानाद्वा प्रवृत्तिरित्यत आह—**तेन दर्शनस्मरणयोर्निरन्तरोत्पन्नयोरिति**॥ निरन्तरोत्पत्तिरेव प्रवृत्तिहेतुरित्यर्थः। ननु 'इदं रजतमित्यभादि'ति संसर्गप्रत्ययः प्रत्यभिज्ञायत इति? नेत्याह—**अनुत्पन्न एवैकत्वावभास इति**॥

"जन्मान्तरानुभूतं न स्मर्यते" इति भाष्यवचनादस्मर्यमाणत्वाच्च बालस्य तिक्तस्मृतिः कथम्? इति चोदयति—**नन्वनास्वादिततिक्तरसस्येति**॥ जन्मान्तरानुभूततिक्तस्मृतिः कल्प्यत इत्याह—**उच्यत इति**॥ जन्मान्तरानुभवस्योपकारितामाह—**अन्यथाऽननुभूतत्वेति**॥ किमिति तर्हि जन्मान्तरानुभूतं किञ्चिदेव स्मर्यते? न सर्वमिति? दोषबलादित्याह—**तस्मात् पित्तमेवेति**॥ किमिति तर्हि दोष एव जन्मान्तरानुभूतं सर्वं न स्मारयति? इत्यत आह—**कार्यगम्यत्वादिति**॥

## तत्त्वदीपनम्

मित्यर्थः॥ क्रमपक्षं निरस्यति—**क्रमवर्तित्व इति**॥ इदमाकारज्ञानस्य रजतज्ञानव्यवहितत्वान्न प्रवृत्तिहेतुत्वम्; अव्यवहित-पूर्वक्षणवर्तिनो हेतुत्वनियमादित्यर्थः। द्वितीयेऽपि किम् इदंज्ञानं प्रवर्तकम्? उत रजतज्ञानम्? नोभयथाऽपीत्याह—**न चेति**॥ इदमाकारज्ञानाद् रजतार्थिनो न शुक्तौ प्रवृत्तिः; लोष्टादावपि तत्प्रसक्तेः, नापि रजतमात्रज्ञानात्; देशान्तरेऽपि प्रवृत्तिप्रसङ्गात्। तस्मात् संसर्गज्ञानाऽभावे प्रवृत्त्यसंभवस्य बाधकत्वात्तदाश्रयणीयमिति चोद्यार्थः। संसर्गज्ञानाभावेन प्रवृत्त्यसंभवे चोदिते प्रवर्तकं किंचिद् वक्तव्यम्, न च तदुच्यत इत्यसंगतिमाशङ्क्य "निरन्तरोत्पन्नयोरि"त्यनेन प्रवर्तकमुक्तमित्याह—**निरन्तरेति**॥ **अन्तरम्** व्यवधानम्, तद्रहिततयोत्पत्तिर्यस्य बोधस्यासौ निरन्तरोत्पन्नः, तयोरित्यर्थः। इदंज्ञानादव्यवधानोत्पन्नं रूप्यज्ञानं प्रवर्तकमिति यावत्॥ संसर्गप्रत्यये प्रत्यभिज्ञा प्रमाणम्, तद्विरुद्धो हेतुरिति चोदयति—**नन्विति**॥ प्रत्यभिज्ञानमन्यथाऽपि घटत इति परिहरति—**नेत्याहेति**॥ एकत्वज्ञानाभावेऽप्येकत्वज्ञानं जातमित्यविवेकाद् व्यवहार इत्यर्थः।

संस्कारमात्रजन्यत्वहेतोरर्भकतिक्तस्मृतावसिद्धिः शङ्किता, साऽनुपपन्ना; इह जन्मन्यनुभवाभावेऽपि जन्मान्तरे तिक्तरसस्यानुभूतत्वेन हेतोः संभवात्; इत्याशङ्क्याह—**जन्मान्तरेति**॥ जन्मान्तरेऽनुभवसंभवेऽपि जन्म-मरण-व्यवहितत्वान्न तस्य स्मृतिजनकत्वमिति **शबरस्वामि**वचनादित्यर्थः। न केवलमाप्तवचनादेव जन्मान्तरानुभूतस्मृत्यभावः, किं त्वनुभवादपीत्याह—**अस्मर्यमाणत्वादिति**॥ इह जन्मन्यनुभवाभावेऽपि जन्मान्तरानुभूतत्वात्तिक्तस्मरणमित्युक्तम्, तन्न संगच्छते; आप्तवचनविरोधात्, कल्पकवैधुर्याच्चेत्याशङ्क्य, न तावदाप्तवचनविरोधः; तस्य प्रायिकाभिप्रायत्वादिति सिद्धान्तयति—**जन्मान्तरेति**॥ आस्वाद्य थूत्कृत्य गुडादेस्त्यागदर्शनं तिक्तस्मृतेः कल्पकमित्यर्थः। अननुभवशङ्काऽनुत्थितेरन्यथेत्याद्ययुक्तमित्याशङ्क्य, जन्मादिव्यवहितत्वाद् जन्मान्तरानुभवस्यानुपकारकत्वमुक्तं निरस्यत इत्याशयमाह—**जन्मेति। अन्यथेति**; जन्मान्तरीयस्यानुभवस्यानुपकारकत्व इत्यर्थः। **अननुभूतत्वाविशेष इति**। अनुभूतत्वं नास्ति यस्य, तदननुभूतत्वम्; तस्मादननुभूतत्वाद् अनुपकारकत्वेन विशेषाभावसाम्य इत्यर्थः। तत्र षड्रसातिरिक्ते रसत्वानुभवः स्यादित्यतिप्रसङ्गः। अननुभूतस्मरणपक्षेऽतिप्रसङ्गवदनुभूतस्मरणेऽप्यतिप्रसङ्गः सम इत्याह—**किमितीति**॥ नियामकाभावोऽसिद्ध इत्याह—**दोषेति**॥ दोषात्स्मरणमित्यत्राप्यतिप्रसङ्गः सम इत्याह—**किमितीति**॥ तिक्तस्मरणकार्यलिङ्गेन दोषस्य तिक्तस्मारकत्वमेव कल्प्यत इत्याह—**अत आहेति**॥

## ऋजुविवरणम्

"तेने"त्यनेन निरन्तरोत्पन्नत्वेन दोषाद्विवेकानवधारणेनैकत्वाभिमानस्य भ्रमत्वनिरूपणं कृतम्, तदसङ्गम्; चोद्यस्यापरिहृतत्वात्, तथा—"उत्पन्नभ्रमः" इति वदता ज्ञानविषयभ्रमस्यैव प्रवृत्तिहेतुत्वमुक्तमिव प्रतिभाति, तदप्यसङ्गतम्; क्लृप्तसंसर्गज्ञानहानायोगात्, इष्टविघाताच्च, इत्याशङ्क्य व्याचष्टे—**निरन्तरोत्पत्तिरेवेति**॥ **नन्विदंरजतमितीति**॥ अयं भावः—निरन्तरोत्पत्तिमात्रं न प्रवृत्तिहेतुः संसर्गज्ञानादिति॥

## पञ्चपादिका

**तिक्तस्मृतौ तत्प्रमोषे च हेतुः, कार्यगम्यत्वाद्धेतुभावस्य । एतेन अन्यसम्प्रयोगेऽन्यविषयस्य ज्ञानस्य स्मृतित्व-तत्प्रमोषौ सर्वत्र व्याख्यातौ द्रष्टव्यौ ॥**

## पञ्चपादिकाविवरणम्

ननु अतत्त्वे तत्त्वज्ञानमिति शास्त्रकारेणैव दर्शितः संसर्गभ्रम इति, नेत्याह—**एतेनान्यसम्प्रयोग** इति ॥ वक्तव्ये च पूर्ववादिनाऽप्यविवेके संसर्गज्ञानकल्पनागौरवादख्यातिरेव युक्तेति भावः ॥

उच्यते; केयमख्यातिरिति ? न तावत् ख्यात्यभावमात्रम्; अनभ्युपगमात्, अतिप्रसङ्गाच्च । अन्यार्थिनोऽन्यत्र प्रवृत्तिहेतुर्ज्ञानमिति चेत् ? यत्र तर्हि न प्रवृत्तिः, झटिति बाधश्च, तत्र कथं भ्रान्तिः ? अथाविविक्तानेकपदार्थज्ञानम् ? तर्हि 'इदमि'ति 'रजतमि'ति चापुनरुक्तशब्दद्वयस्मृतिहेतुतया विविक्तावभासनान्न तस्य सामान्य-विशेषयोरविवेकभ्रमः सम्भवति । नच भेदावमर्शेनैकत्वज्ञानमनभ्युपगच्छतः सामान्यविशेषयोरविवेकः सम्भवति; विविक्ताकारद्वयावभासनात् । इतरेतराभाव-भेद-द्वित्वादिसङ्ख्याविशिष्टज्ञानं विवेक इति चेत् ? 'गामानय दण्डेने'ति गो-दण्डयोस्तत्कारकत्वयोश्चाविवेको भ्रमः स्यात् । तत्राप्यानुषङ्गिकभेदादिज्ञानमस्तीति चेत् ? 'इदमि'ति 'रजतमि'ति चेहाप्यपुनरुक्तशब्दानुषक्ताकारद्वयावभासे द्वित्वाद्यवभासो

## तत्त्वदीपनम्

अयथार्थज्ञानाश्रयणे सिद्धान्तक्षतिरिति शङ्कते—**नन्वतत्त्व इति ॥ शास्त्रकारेणेति ॥** सांख्येनेत्यर्थः । अयथार्थज्ञानाभावेऽपि तद्व्यवहाराभिप्रायं तद् वचनमित्याह—**नेत्याहेति** ॥ कल्पनागौरवादप्ययथार्थज्ञानं नोपेयमित्याह—**वक्तव्य इति** ॥

प्रत्यययाथार्थ्ये भ्रान्त्यनुपपत्तिर्बाधिकेत्याह—**उच्यत इति** ॥ अख्यातिर्भ्रम इत्युक्तम्, तत्राह—**केयमिति** ॥ किं ख्यात्यभावोऽख्यातिः ? किं वा तदन्यः ? उत तद्विरुद्धः ? इति किंशब्दार्थः । आद्यं प्रत्याह—**न तावदिति** ॥ कतिपयख्यात्यभावस्य भ्रमत्वेऽतिप्रसक्तिः, सकलख्यात्यभावपक्षे सुषुप्त्यादावपि भ्रमत्वप्रसङ्ग इत्यर्थः । द्वितीयेऽपि किमयथार्थव्यवहारहेतुर्ज्ञानमख्यातिः ? उताविविक्तानेकपदार्थज्ञानमख्यातिः इति विकल्प्याऽऽद्यमुत्थापयति—**अन्यार्थिन इति** ॥ अव्याप्त्या दूषयति—**यत्रेति** ॥ वीतरागादीनां व्यवहाराभावान्न तद्धेतुर्ज्ञानमस्तीत्यर्थः । रागिणामपि प्रवृत्तिमन्तरेण बाधकसंदर्शनान्न तद्धेतुर्ज्ञानमस्तीत्याह—**झटितीति** ॥ द्वितीयमुत्थापयति—**अथाविविक्तेति** ॥ ज्ञानमात्रस्य भ्रमत्वं निराकर्तुम्—**अविविक्तेति** विशेषणम् । तावत्युक्ते वस्तुमात्रज्ञानेऽतिप्रसक्तिः, तदर्थम्—**"अनेके"**ति ॥ अविविक्तत्वं किं भेदेनास्फुरितत्वम् ? उतैक्यम् ? इति विकल्प्य, आद्येऽव्याप्तिमाह—**तर्हीति** ॥ द्वितीयं दूषयति—**नचेति** ॥ अनभ्युपगमे हेतुमभिधत्ते—**भेदेति** ॥ **अवमर्शेन** ज्ञानेनेत्यर्थः । किंच किं भेदः पदार्थस्वभावः ? उत धर्मः ? नाद्य इत्याह—**विविक्तेति** ॥ पदार्थप्रतिपत्त्या भेदोऽपि प्रतिपन्न इति, नाविवेक इत्यर्थः । द्वितीयमुत्थापयति—**इतरेतरेति** ॥ वैधर्म्यादिर्भेदशब्दार्थः तद्रहितता अविविक्ततेति शेषः । अतिव्याप्तेर्नैतत्साध्वित्याह—**गामानयेति** ॥ कर्म-करणभावेन विवेकप्रतिपत्तेः कथमविवेकः ? इत्याशङ्क्याह—**तत्कारकत्वयोरिति** ॥ गो-दण्डगतकर्म-करण-

## ऋजुविवरणम्

ननु सर्वत्र संसर्गज्ञानस्य प्रवर्तकत्वं व्याप्तम्, कथं तेन विनाऽविवेकमात्रात्प्रवृत्तिरङ्गीक्रियते, व्याप्तिविरोधादित्याशङ्क्याभिप्रायमाह—**वक्तव्ये चेति** ॥

**न तावदिति** ॥ ख्यातेर्विद्यमानत्वादतिप्रसङ्गादिति भावः । **अथाविविक्तानेकेति** ॥ अत्र विवेकशब्दस्य स्वरूपभूतभेदग्रहवाचित्वमङ्गीकृत्य तद्राहित्यमविवेक इत्युच्यते ? तद्विपरीताभेदाग्रहो वा ? किं वा विवेकशब्दस्य भ्रमविरोधिरूपान्तरवैशिष्ट्याग्रहवाचित्वमङ्गीकृत्य तद्राहित्यमविवेक इति ? न तावत्प्रथम इत्याह—**तर्हीदमितीति** ॥ **सामान्यविशेषग्रहणम्**—अन्यत्र कथञ्चिदपुनरुक्तशब्दस्मरणाभावेनाविवेकः शङ्क्येतेति दर्शयितुम् । न द्वितीय इत्याह—**नच भेदावमर्शेनेति** ॥ यद्वाऽविवेकस्त्वयाऽप्यङ्गीक्रियते, स कथमपुनरुक्तशब्दस्मृत्या निराक्रियत इत्याशङ्क्याह—**नच भेदावमर्शेनेति** ॥ तिरस्कारेण, पर्यालोचनेन वेत्यर्थः । मम संसर्गाध्यासो भेदानवगमनिमित्त इति भावः । इदानीं तृतीयं पक्षमवलम्बते—**इतरेतराभावेति** ॥ ननु संसर्गवादिनाऽप्यविवेकोऽङ्गीक्रियते, तद्धेतुकश्च संसर्गाध्यास इति वक्तव्यम्, तथा सति लाघवात्तेनैवालमित्याशङ्क्याह—**किंच प्रतीयमानयोरिति** ॥

## पञ्चपादिकाविवरणम्

विद्यत एव; अन्यथा सामान्याकाराद् विशेषाकारस्य विवेकानवभासाद् 'इदमि'त्येव स्यात्, 'रजतमि'त्येव वा स्यात्; न— 'इदं रजतमि'ति। किञ्च प्रतीयमानाकारयोर्नाविवेकः, अपुनरुक्तप्रतिभासात्। अप्रतीयमानाकाराविवेको न भ्रमः, अतिप्रसङ्गात्। तस्मान्नाविवेको भ्रमः ॥

**किञ्च** 'खण्डो गौ'रित्यादिप्रत्ययाश्चाविविक्तानेकपदार्थविषया विभ्रमाः प्रसज्येरन्। नच ग्रहण-स्मरणाविवेक एव भ्रमः; 'अहं मनुष्यः' इति गृह्यमाणानिवेकस्य भ्रमत्वात्। सामान्य-विशेषादौ संसर्गज्ञानमेवास्तीति चेत्? तथाऽप्यविविक्तानेकपदार्थज्ञानाद् भ्रमत्वमपि स्यात्। नच तत्र संसर्गप्रत्ययोऽपि; ऐक्यस्य तदालम्बनस्याभावात्। गुण-गुण्यादिसम्बन्ध एवालम्बनमिति चेत्? न; प्रत्यभिज्ञाया ऐक्यालम्बनत्वात्। इहापि सादृश्यसम्बन्ध एवेदं रजतमिति संसर्गप्रत्ययालम्बनं स्यात्।

## तत्त्वदीपनम्

कारकत्वयोरित्यर्थः। तत्र लक्षणाप्रवृत्तेः कथमतिव्याप्तिः? इति शङ्कते—**तत्राऽपीति** ॥ कर्म-करणप्रतिपादकविभक्तिद्वयबलाद् भेदः प्रतीयत इत्यर्थः। साम्येन समाधत्ते—**इदमितीति** ॥ एतदेव व्यतिरेकमुखेनाह—**अन्यथेति** ॥ विवेकाप्रतिपत्तावपि तस्य विद्यमानत्वादिदं रजतमिति प्रतिभाससंभव इत्याशङ्क्याह—**नेदमिति** ॥ इदमाकाराद् रजतस्य व्यावृत्तताप्रतिपत्तौ विलक्षणशब्दानुविद्धतया तयोः स्फुरणं न स्यादित्यर्थः। किं भासमानयोरविवेकः? उताभासमानयोः? नाद्य इत्याह—**किंच प्रतीयमानेति ॥ अपुनरुक्तप्रतिभासादिति** ॥ अपुनरुक्तशब्दद्वयाद्विवेकस्य प्रतिभासादित्यर्थः। द्वितीयं प्रत्याह—**अप्रतीयमानेति** ॥ सुषुप्तादावपि प्रसङ्गादित्यर्थः। सामान्यतः प्रतिपन्नयोर्विशेषतश्चाप्रतिपन्नयोर्विवेकाग्रहणं भ्रम इत्याशङ्क्याभावानङ्गीकारादग्रहणमेव न संभवतीत्याह—**तस्मादिति** ॥ ख्यातिविरुद्धाऽख्यातिरिति पक्ष उत्तरज्ञानस्य पूर्वज्ञानविरोधित्वाद् भ्रमत्वप्रसक्तिः, तथा ज्ञानप्रागभावस्यापीत्यर्थः ॥

किंचाविविक्तानेकपदार्थज्ञानमात्रं भ्रमः? आहो ग्रहणस्मरणात्मकम्? किं वा संसर्गज्ञानासहकृतत्वविशेषितम्? अथवा बाधकज्ञानविषयीकृतत्वात्यन्ताभावानधिकरणत्वविशेषितम्? इति विकल्प्याऽऽद्यमतिव्याप्त्या निरस्यति—**किं च खण्ड इति** ॥ द्वितीयमव्याप्त्या दूषयति—**नच ग्रहणेति** ॥ गृह्यमाणयोरविवेको गृह्यमाणाविवेकः, तस्येत्यर्थः। तृतीयमुत्थापयति—**सामान्येति** ॥ सम्यक्स्थले संसर्गज्ञानसंभवात्तद्रहितताविशेषितं लक्षणं न वर्तते, ततः कथमतिव्याप्तिरित्यर्थः ॥ सामान्य-विशेषादौ वैधर्म्यमात्रं तेनोक्तमिति मत्वा लक्षणस्यातिव्याप्तिस्तदवस्थेत्याह—**तथापीऽति** ॥ न वैधर्म्यमात्रम्, किंतु संसर्ग-

## ऋजुविवरणम्

ननु असंसर्गाग्रहोऽविवेकः; असंसर्गग्रहणस्य विवेकरूपत्वात्, स चाविवेकः प्रतीयमानेदंरजतयोरेवास्तीति भ्रमत्वमित्याशङ्क्यातिप्रसङ्गमाह—**किंच खण्डो गौरित्यादीति** ॥ न विविक्ता अविविक्ताः, विवेकः असंसर्गग्रहो येषां ते विविक्ताः, ते च तेऽनेकपदार्थाश्चेति विग्रहः। ग्रहण-स्मरणत्वे सत्यसंसर्गग्रहराहित्यमविवेकप्रयोजकमित्याशङ्क्याह—**नच ग्रहण-स्मरणाविवेकेति**। ननु असंसर्गग्रह एव विवेको न भवति, किन्तु संसर्गाग्रहो विवेकः, स इहास्तीति कथं भ्रमत्वम्? इत्यभिप्रायेण चोदयति—**सामान्यविशेषादाविति** ॥ तर्हि संसर्गग्रहलक्षणविवेकस्यासंसर्गाग्रहलक्षणाविवेकस्य च विद्यमानत्वाद् वैरूप्यमिति परिहरति—**तथाऽप्यविविक्तेति** ॥ ननु संसर्गग्रहरहितत्वे सत्यसंसर्गाग्रहो विवेकः, स इदं-रजतयोरेव, न सामान्य-विशेषयोरित्याशङ्क्य, तथा सति व्यर्थविशेषणत्वम्; व्यावर्त्याभावादित्याह—**नच तत्रेति** ॥ **यद्वा**—पूर्वमभ्युपगम्य संसर्गग्रहमसंसर्गाग्रहलक्षणो विवेकः उक्तः, इदानीं संसर्गग्रहलक्षणोऽपि विवेको नास्ति; अतः संसर्गाग्रहलक्षणोऽप्यविवेको नास्तीत्याह—**नच तत्र संसर्गेति** ॥ ननु प्रत्यभिज्ञायामैक्यालम्बनत्वं प्रतीतिबलादङ्गीकृतम्, तथा प्रतीतिबलाद् गुणगुण्यादिसम्बन्धोऽप्यालम्बनम्, इदं-रजतयोस्तु तदभावान्न संसर्गग्रह इत्याशङ्क्यात्रापि कथञ्चित्सालम्बनत्वं दर्शयति—**इहापि च सादृश्येति** ॥ ननु—अबाधितप्रत्ययात्संसर्गे निश्चिते संसर्गविशेषनिरूपणा युक्ता, इयन्तु बाधिता प्रतीतिः संसर्गमेव कथं गमयेदित्याशङ्क्य, भवन्मते विवेकप्रत्ययो बाधः; स सामान्य-विशेषयोरविशिष्ट इति तत्रापि संसर्गो न स्यादित्याह—**अस्ति च सामान्य-विशेषेति** ॥ ननु सामान्यविशेषादौ विवेकप्रत्ययसाम्येऽपि संसर्गप्रतीतिदर्शनात् संसर्गप्रत्ययस्य सालम्बनत्वम्, इह तु संसर्गविवेकप्रतीत्योरसहभावाद्विरोधान्न संसर्गप्रत्ययः सालम्बनः, किन्तु

## पञ्चपादिका

**उच्यते;—कोऽयं स्मरणाभिमानो नाम ? न तावद् ज्ञानानुविद्धतया ग्रहणम्। न ह्यतिवृत्तस्य ज्ञानस्य ग्राह्य-**

## पञ्चपादिकाविवरणम्

अस्ति च सामान्य-विशेषादीनामिदं-रजतयोरिय विवेकप्रत्ययः; 'घटस्य शौक्ल्यमि'ति विवेकाभ्युपगमात्। किञ्च ग्रहणमेव स्मर्यमाणात्स्वार्थं किं न विविञ्च्यात् ? विशेषदर्शनाभावादिति चेत् ? यदि गृहीतमात्रस्य रजताद् भेदोऽस्ति, तदा भेदापेक्षितो विशेषो धर्म्याकारः प्रतियोग्याकारो वा नान्य इति, गृहीत एव भेदाकारो विविक्तः प्रतीयेत। अथ धर्मि-प्रतियोग्याकारे गृहितेऽपीतरेतरापेक्षया तृतीयमेव ज्ञानं भेदं ग्राहयतीति ? तर्हि सर्वपदार्थज्ञानानां भेदग्रहणात्प्रागविवक्तत्वाद् भ्रमत्वप्रसङ्गः। अथ न गृहीतमात्रस्य रजताद् भेदः ? तर्ह्यैक्यमेवेति संसर्गज्ञानस्य सालम्बनतासिद्धिः॥

किञ्च स्मृतिर्वा गवयादिस्मृतिवद्गृह्यमाणात्स्वार्थं किमिति न विविञ्च्यात् ? स्मरणाभिमानप्रमोषादिति चेत् ? तत्राह—**कोऽयं स्मरणाभिमान इति**॥ न तावत् स्मृतिरेव; तस्याः प्रमोषे ज्ञानस्यैवाभावमसङ्गात्, स्मृतेरन्यश्चेत्, कथमन्यस्य प्रमोषे परिपूर्णमुत्पन्नं ज्ञानं स्वकार्यमर्थविवेकं न कुर्यात् ? नचान्यः स्मरणाभिमानो दृश्यत इति भावः। ननु पूर्वानुभव-तद्देश-कालानामन्यतमेन 'सः' इत्याकारेण वा स्मर्यमाणस्य सम्भेदः स्मरणाभिमान इति, नेत्याह—**न तावज्ज्ञानानुविद्धतया ग्रहणमिति**॥ "सोऽयमि'ति प्रत्यभिज्ञाभ्रमे हि सर्वेषामेवैषां 'सः' इत्याकारस्य पूर्वानुभव-देश-कालानां च स्मरामीतिपर्यन्तानां

## तत्त्वदीपनम्

ज्ञानरहितत्वविशेषिताविविक्तज्ञानं भ्रम इति नातिव्याप्तिरित्याशङ्क्य, विशिष्टलक्षणस्यापि तत्र वृत्तेरतिव्याप्तिरित्याह—**नच तत्रेति**॥ संसर्गप्रत्ययस्य किमैक्यमालम्बनम् ? उत गुण-गुण्यादिसम्बन्धः ? किं वोभयम् ? नाद्यः; अत्यन्तभेदवादित्याह—**ऐक्यस्येति**॥ द्वितीयमुत्थापयति—**गुणगुणीति**॥ जातिव्यक्त्यादिरादिशब्दार्थः। गुण-गुण्यादिसम्बन्धस्य नाऽऽलम्बनत्वनियमः; व्यभिचारादित्याह—**नच प्रत्यभिज्ञाया इति**॥ तृतीये गुण-गुण्यादिसंबन्धाः किं मिलिता आलम्बनम् ? उत प्रत्येकम् ? नाद्यः, मेलनस्य क्वचिदप्यभावात्। द्वितोये गुण-गुण्यादिवत् सादृश्यसम्बन्धोऽप्यालम्बनं स्यादित्याह—**इहेति**॥ ततश्च लक्षणासंभव इत्यभिप्रायः। चतुर्थं प्रत्याह—**अस्ति चेति**॥ अख्यातिमते विवेकज्ञानं बाधकम्, ततश्च बाधकज्ञानविषयीकृतत्वात्यन्ताभावाऽनधिकरणत्वमपि तत्रास्तीत्यतिव्याप्तिरित्यर्थः॥ ग्रहण-स्मरणाविवेको भ्रम इत्यत्र दोषान्तरं समुच्चिनोति—**किंचेति**॥ विमतम्, स्मर्यमाणात् स्वार्थं विविञ्च्यात्, ग्रहणत्वात्; संमतवत्, इत्युक्ते विशेषविषयत्वात्तत्र विवेचकत्वम्, नचैतद्विशेषविषयमित्याह—**विशेषेति**॥ विशेषो नाम भेदः ? उत शुक्तित्वादिः ? आद्येऽपि स किमिदं-रजतयोरस्ति ? उत न ? इति विकल्प्याऽऽद्यमनुवदति—**यदीति**॥ तत्रापि किं धर्मि-प्रतियोगिज्ञानमेव भेदज्ञानम् ? आहोस्विदन्यत ? इति विकल्प्याऽऽद्यं दूषयति—**तदेति**॥ धर्मि-प्रतियोगिज्ञानस्य भेदज्ञानत्वाद्धर्मि-प्रतियोगिनोश्च ज्ञातत्वाद् भेदोऽपि प्रथेतेत्यर्थः। द्वितीयमनुवदति—**अथेति**॥ तृतीयज्ञानस्य भेदज्ञानत्वे तदुदयात्प्राक् सर्वं ज्ञानं भ्रमः स्यादित्याह—**तर्हीति**॥ भेदाभावमुत्थापयति—**अथ न गृहीतेति**॥ अस्मिन् पक्षे न भ्रमः सिद्ध्यतीत्याह—**तर्ह्यैक्यमेवेति**॥ परस्परप्रतिस्पर्द्धिनोरितरनिमेंधेऽन्यतरविधिनान्तरीयकत्वाङ्गीकारादैक्यसिद्धिरित्यर्थः। द्वितीये धर्मविशिष्टज्ञानं विवेचकम्। तथाच धर्मज्ञानस्य विवेचकत्वं न स्यात्। स्वरूपभेदमात्रेण विवेचकत्वे सर्वत्रापि तथात्वं स्यादिति द्रष्टव्यम्।

## ऋजुविवरणम्

अविवेकमात्रमित्याशङ्क्याविवेकोऽपि न सम्भवतीत्याह—**किंच ग्रहणमेवेति**॥ **यद्वा,** सादृश्यालम्बनत्वेन संसर्गज्ञानस्य सालम्बनत्वं वक्तुं न शक्यते, सादृश्ये विद्यमानेऽपि क्वचित्सामानाधिकरण्यादर्शनात्, अतो मुख्यालम्बनाभावान्न संसर्गग्रहः, तथा विवेकग्रहोऽपि नास्ति; कारणभावात्। ननु अपुनरुक्तशब्दस्मृत्या विवेकग्रहोऽस्तीत्युक्तम्, मैवम्; इदंरजतेतरसर्वंपदार्थाग्रहात्तद्व्यावृत्तिप्रतीत्यभावेऽपीतरसर्वशब्दविलक्षणेदं-रजतशब्दस्मरणवदिदं-रजतयोः परस्परभेदाग्रहणेऽपि तद्वाचकशब्दस्मरणोपपत्तेः। ननु भेदस्य स्वरूपत्वात्स्वरूपग्रहे भेदो गृहीत एव ? मैवम्; स्वरूपस्य भेदत्वेऽपि स्वरूप-भेदग्रहशब्दयोरपुनरुक्तत्वेन स्वरूपस्य भेदाकारेण प्रतीतौ सामग्रयन्तराङ्गीकारात्, तदभावे भेदरूपेण प्रतीत्यभावेन भेदकार्यकरत्वाभावात्स्वरूपाकारेण वाचकशब्दस्मारकत्वात्। अतो भेदग्रहहेत्वभावान्मुख्यसंसर्गाभावादविवेकमात्रमेवेत्याशङ्क्याह—**किंच ग्रहणमेवेति**॥ स्मृतेः परोक्षार्थग्राहकत्वेन केवलया अपि विवेचकत्वसम्भव इत्यभिप्रायेणाह—**किंच स्मृतिर्वेति**॥ ननु स्मृतिस्वरूप-

### पञ्चपादिका

**विशेषणतया विषयभावः। तस्माच्छुद्धमेवार्थं स्मृतिरवभासयति, न ज्ञानानुविद्धम्।**

### पञ्चपादिकाविवरणम्

सम्भेदावगमेऽपि गृह्यमाणेनाविवेकदर्शनादिति भावः। नच पूर्वानुभवसम्भेदः स्मर्यमाणे सम्भवतीत्याह—**न ह्यतिवृत्तस्येति**॥ अर्थस्मृतिसंस्कारस्य जनकं यत् पूर्वविज्ञानम्, तत् स्वयंग्राह्यविशेषणतया स्वेनैव न विषयीक्रियते; अर्थमात्रविषयत्वात्पूर्वज्ञानस्य। नच पूर्वज्ञानेनाविषयीकृतेविषये तत्संस्कारजन्या स्मृतिः समुत्पद्यते। तस्मादर्थमात्रविषयज्ञानजन्या स्मृतिरर्थमात्रमेव विषयीकरोति, न पूर्वज्ञानेनाविषयीकृतं ज्ञानमपि; अन्यथा नीलज्ञानात् पीतेऽपि स्मृतिः स्यात्॥

ननु स्मर्यमाणे पूर्वानुभवसम्भेदः स्वानुभवसिद्धः? सत्यम्; यत् पूर्वानुभवसमयेऽर्थावभासलिङ्गजन्यमर्थज्ञानसद्भावविषयमनुमानज्ञानमुत्पन्नम्, तदनुमानज्ञानसंस्कारजनिता स्मृतिरनुभवसम्भिन्नमर्थं गमयति, मूलज्ञानेनाप्यार्थज्ञनविषयेण

### तत्त्वदीपनम्

ग्रहणपर्यालोचनयाऽविवेकं निरस्य, स्मृतिपर्यालोचनयाऽपि निरस्यति—**किंच स्मृतिर्वेति**॥ अप्रमुषितस्मरणाभिमानस्य, विवेकत्वादत्र च तद्वैपरोत्यान्मैवमिति शङ्कते—**स्मरणाभिमानेति**॥ स्मरणाभिमानः किं स्मृतेरनन्यः? उतान्यः? आहो अन्यानन्यः? आद्येऽपि किं स्मरणाभिमानस्य स्मृतावन्तर्भावः? आहो स्मृतेः स्मरणाभिमाने? तत्राद्ये स्मृतौ स्थितायां स्मरणाभिमानस्य कथं प्रमोष इत्यत्राह—**न तावत्स्मृतिरेवेति**॥ स्मरणाभिमानान्तर्भावे तत्प्रमोषे स्मृतेरपि प्रमोषाद्रजतप्रतिभास एव न स्यादित्याह—**तस्या इति**॥ द्वितीयमनूद्य दूषयति—**स्मृतेरिति**॥ स्मरणाभिमानलक्षणसहकारिणः प्रमुष्टत्वात्कथं विवेचकत्वम्? इत्याशङ्क्य, उत्पत्त्या ज्ञानस्य कार्यजनने नान्यापेक्षेत्याह—**परिपूर्णमिति**॥ तृतीयस्त्वप्रसिद्धत्वाद् दूरापास्त इत्याह—**नचेति**॥ **अन्य इति**॥ उक्तपक्षविलक्षण इत्यर्थः॥ किंच स्मरणाभिमानशब्देन किं स्मार्यगतो धर्मविशेषः कथ्यते स्मरणेनाभिमन्यत इति व्युत्पत्त्या? उत स्मरणनिष्ठो धर्मः? किं वा 'स्मरामी'ति ज्ञानं स्मरणाभिमानः? इति विकल्पाऽऽद्यमुत्थापयति—**ननु पूर्वेति**॥ ननु अनुभवानुविद्धत्वं निराक्रियते, न देशादिसंभेदः; नच—'ज्ञानानुविद्धतया' इत्यत्र ज्ञप्तिर्ज्ञानमिति व्युत्पत्त्याऽनुभवो गृह्यते, ज्ञायतेऽस्मिन्निति व्युत्पत्त्या देशकालयोर्ग्रहणम्, तथाच सर्वस्य निराससंभव इद्धि—वाच्यम्; तत्र हेत्वनुपन्यासादित्याशङ्क्य तात्पर्यमाह—**सोऽयमिति**॥ सर्वेषामेवैषामाकारस्य 'सः' इत्यस्य संभेदावगमे पूर्वानुभवदेशकालानामन्यतमेन संभेदावगमेऽपीति योजना॥ "न ह्यतिवृत्तस्य"इत्यत्रानुभवासंभेदमात्रस्योच्यमानत्वात् प्रागपि तस्यैव विवक्षेत्यादौ पूर्वानुभवसंभेदस्य स्मरणाभिमानत्वेऽधिकदोषमाह—**नचेति**॥ हिशब्दसूचितां युक्तिमाह—**अर्थस्मृतीति**॥ अर्थस्मृतिकारणसंस्कारस्येत्यर्थः। किमर्थज्ञानं स्वेन विषयीक्रियते? उत ज्ञानान्तरेण? नाद्य इत्याह—**स्वेनेति**॥ कर्म-कर्तृविरोधान्न स्वविषयत्वमित्यर्थः। **न द्वितीयः**; स्वसत्तायां स्वप्रकाशं ज्ञानमित्यभ्युपगमविरोधादिति द्रष्टव्यम्। मा भूत्तर्हि विषयत्वं पूर्वज्ञानस्येत्यत्राह—**नहिपूर्वेति**॥ अनुभव-स्मरणयोरेकविषयत्वनियमादित्यर्थः। यस्मादर्थानुभवमात्रजनित-

### ऋजुविवरणम्

तदन्यव्यतिरेकेण धर्मादिकः स्मरणाभिमान इति, नेत्याह—**नचान्य इति**॥ ज्ञानानुविद्धत्वमात्रमेवाशङ्क्य परिहृतं टीकाकारेण, तदभिप्रायत्वेन देशादीनामपि शङ्कान्तर्भावः कृतः, तस्याऽभिप्रायिकमेव परिहारमाह—**सोऽयमिति**॥ **प्रत्यभिज्ञाभ्रम इति**॥ कथमतिवृत्तस्य विषयोकृतत्वाभाव इत्याशङ्क्य साधयति—**अर्थस्मृतिसंस्कारस्येति**॥ मा भूत् पूर्वविज्ञानेन विषयीकृतत्वम्; स्वप्रकाशत्वेनावभासनात्, स्मृतिविषयत्वं तु कस्मान्न भवतीत्याशङ्क्यानुभवविषय एव स्मृतिज्ञानमुत्पद्यते, नान्यत्र; सामाग्र्यभावात्, इत्याह **नच पूर्वज्ञानेनेति**॥ यस्मान्न संस्कारस्य केवलानुभवजन्यस्य विशिष्टविषयस्मृत्युत्पादनसामर्थ्यम्, तेन तज्जन्यज्ञानमपि न विशिष्टविषयमित्याह—**तस्मादर्थमात्रेति**॥ **ननु** ज्ञातो घटः' इत्यनुभवविशिष्टार्थस्मरणं दृश्यते, कथं संस्कारस्य विशिष्टविषयस्मृत्युत्पादनसामर्थ्याभावः? तज्जन्यज्ञानस्य वा विशिष्टविषयत्वाभावः इति चोदयति—**ननु स्मर्यमाण इति**॥ ननु विशिष्टविषयस्मरणाङ्गीकारे यत्—"शुद्धमेवार्थमि"त्युपसंहृतम्, तदसमञ्जसं स्यादित्याशङ्क्याह—**यस्मादर्थमात्रस्मृतीति**॥ एवमप्यर्थस्मृतेश्शुद्धविषयत्वमिति वक्तव्यम्; नत्वविशेषेण शुद्धमेवार्थं स्मृतिरवभासयतीति वक्तुं युज्यत इत्याशङ्क्य व्याचष्टे—**शुद्धमिति**॥ **पूर्वज्ञानेनेति**॥

## पञ्चपादिका

**तथाच पदात्पदार्थस्मृतौ न दृष्टो ज्ञानसम्भेदः; ज्ञानस्यापि शब्दार्थत्वप्रसङ्गात्। तथेदम्भूतागविषया स्मृतिः—'स सेध्यः' इति ग्राह्यमात्रस्था, न ज्ञानपरामर्शिनी। अपिच भूयस्यो ज्ञानपरामर्शशून्या एव स्मृतयः।**

## पञ्चपादिकाविवरणम्

विशिष्टार्थविषयीकरणात् यस्मादर्थस्मृतिसमनन्तरमनुभवविशिष्टार्थस्मृत्यन्तरजननादर्थस्मृतिरेवानुभवसम्भिन्नेति विभ्रमः, तस्माच्छुद्धमेवार्थमित्युपसंहरति—**शुद्धमिति**॥ पूर्वज्ञानेन यावन्मात्रं वस्तुमात्रं वा ज्ञानसम्भिन्नं वा वस्तु विषयीकृतं तावन्मात्रमेवावभासयति, न स्वमूलज्ञानसम्भिन्नमित्यर्थः॥

ननु अर्थस्मृतिर्वा ज्ञानसम्भिन्नविषयं स्मृत्यनारं वेत्यत्र को विवेक इति ? तत्रोदाहरणमाह—**तथाच पदात्पदार्थस्मृताविति**॥ वाक्यार्थप्रत्ययविवक्षया यावदन्त्यपदोच्चारणपरिसमाप्तिस्तावत् क्रमेणोच्चार्यमाणेषुपदेष्वेकैकस्मात्पदादेकैकार्थविषयणि

## तत्त्वदीपनम्

संस्कारस्य न विशिष्टस्मृत्युत्पादनसामर्थ्यम्, तस्मात्तज्जनितस्मरणमप्यर्थमात्रविषयमित्युपसंहरति—**तस्मादिति**॥ अर्थज्ञानस्य विषयत्वाभावेऽपि स्वप्रकाशतया स्फुरितत्वात् स्मरणविषयत्वं किं न स्यादित्यत आह—**न पूर्वेति**॥ तदेव व्यतिरेकमुखेनाह—**अन्यथेति**॥ पूर्वानुभवाविषयोऽप्यनुभवसंस्कारजस्मरणेन विषयीक्रियते चेत्, तदा नीलज्ञानात् पीतस्मरणमपि जायेतेत्यर्थः।

'ज्ञातो घटः' इत्यनुभवविशिष्टार्थस्मरणस्यानुभूयमानत्वात्कथं तदपन्हवः ? इति शङ्कते—**ननु स्मर्यमाण इति**॥ उक्तमङ्गीकरोति—**सत्यमिति**॥ कथं तर्ह्यनुभवसंभिन्नविषयत्वं स्मरणस्य प्रतिषिध्यते ? इत्यत्राह—**यत्पूर्वेति**॥ **अर्थावभास**शब्देनार्थनिष्ठं प्राकट्यमुच्यते। तस्य कार्यत्वे कारणापेक्षायामात्माश्रयं ज्ञानं कारणत्वेनानुमीयत इत्यर्थः। अर्थस्मृतेः केवलार्थानुभवमूलत्वान्नानुभवसंभिन्नविषयत्वमिति द्रष्टव्यम्। कथं तर्ह्यर्थस्मृतिरनुभवसंभिन्नविषयेत्यभिधानम् ? इत्याशङ्क्याह—**यस्मादिति**॥ कस्याश्चित् स्मृतेरनुभवसंभिन्नविषयत्वे शुद्धमेवेत्यभिधानं कथम् ? इत्याशङ्क्याह—**पूर्वेति**॥ यावन्मात्रमित्येतद्विवृणोति—**वस्तुमात्रं वेति**॥ स्मृतेरनुभवसंभिन्नविषयत्वे विवादो न स्यादित्यत आह—**न स्वमूलेति**॥

अर्थमात्रज्ञानसंस्कारोत्थस्मरणस्य केवलविषयत्वम्, इतरस्य विशिष्टविषयत्वम्। तत्रार्थस्मृतेरर्थमात्रविषयत्वे युक्त्यन्तरं दर्शयितुमाकाङ्क्षामुद्भावयति—**नन्वर्थेति**॥ अर्थमात्रज्ञानसंस्कारजः प्रत्ययोऽर्थस्मृतिशब्दार्थः, अनुमानसंस्कारजः प्रत्ययः स्मृत्यन्तरमिति विवेकः॥ स्मृतिमात्रस्य ज्ञानसंभिन्नमात्रविषयत्वे पदात्पदार्थस्मृतौ व्यभिचारः तस्मान्न स्मरणमात्रस्यायं स्वभाव इत्याह—**तत्रोदाहरणमिति**॥ वाक्यार्थप्रत्यायनायप्रयुक्तपदवृन्दात्पदार्थबोधः कस्मादाधीयते ? आहितो वा कस्मात्स्मृतिः ? इत्याशङ्क्याह—**वाक्यार्थेति**॥ वाक्यार्थप्रत्ययोद्देशेन पदानि तावत्प्रयुज्यन्ते, तेषां च पदानां सकृदुच्चारणासंभवात् क्रमेणोच्चारणम् तेभ्यश्च क्रमेणोच्चार्यमाणेभ्यो गृहीतसंगतिकेभ्यः पदार्थबोधा आधीयन्ते, वाक्यार्थप्रत्ययौपयिकत्वेन यथा काष्ठैः पाके साध्ये तदर्थं ज्वाला निर्वर्त्यन्ते तथेत्यर्थः। पदार्थानां च संगतिग्रहणसमये मानान्तरसिद्धत्वात् तज्ज्ञानस्य

## ऋजुविवरणम्

ननु "पदात्पदार्थस्मृताविति" कथमुक्तम् ? नहि पदस्य पदार्थबोधकत्वं सिद्धम्; नापि तस्य स्मृतिरूपत्वम्, तत् कथं सिद्धवद्दृष्टान्तत्वेनोपादीयते ? सर्वपदानां हि संभूय वाक्यार्थे प्रमितिहेतुत्वम्, न तु पदार्थ इत्याशङ्क्याह—**वाक्यार्थेति**॥ **ननु कोऽसौ शब्दस्येति**॥ **सम्बन्धः** स्मृतिजनकत्वम्। स चात्र स्वभावकार्यादिर्निरूपयितुं न शक्यते, अतो न स्मृतिरिति भावः। **नच स्मृतिजननसामर्थ्यसम्बन्धादेवेति**॥ अयमर्थः—स्मृतिजननसामर्थ्यात्स्मृतिजन्म न भवति; आत्माश्रयादिदोषप्रसङ्गात्। कथम् ? तस्य स्मृतिजनकत्व-सामर्थ्ययोर्भेदोऽङ्गीक्रियते वा ? न वा ? न चेत्कथं जनकत्वमिति पृष्टे 'सामर्थ्यादि'ति वक्तव्यम् 'सामर्थ्यं च जनकत्वमेवेति जनकत्वाज्जनकत्वमित्यात्माश्रयत्वं स्यात्, भेदे तु जनकत्वेन सामर्थ्यम्, सामर्थ्याज्जनकत्वमितीतरेतराश्रयत्वम्। अथ स्मृतिरूपकार्यदर्शनाज्जनकत्वम्, अतो नेतरेतराश्रयत्वम्, तर्हि स्मृतिरूपकार्यदर्शनाज्जनकत्वज्ञानम्, जनकत्वज्ञानेन सामर्थ्यज्ञानम्, सामर्थ्यज्ञानाच्च स्मृतिरूपकार्यमिति चक्रकम्; ज्ञातसामर्थ्यस्यैव कार्यकरत्वात्। अथ मध्यमवृद्धप्रवृत्त्या प्रवृत्तिहेतुज्ञानमनुमाय शब्दानन्तर्यात्तज्जनकत्वं शब्दस्य निश्चित्य पश्चात्सामर्थ्यनिश्चयः, तथा सति तादृशशब्द-

## पञ्चपादिकाविवरणम्

ज्ञानान्युत्पद्यन्ते; ताश्च सम्बन्धिशब्ददर्शनात् सम्बन्ध्यन्तरार्थविषयाः स्मृतय इत्यभिहितान्वयवादिनामन्विताभिधानवादिनां च संमतम्। ननु कोऽसौ शब्दस्यार्थेन सम्बन्धः, यतः शब्दस्य दर्शनादर्थे स्मृतिरुत्पद्येत ? अर्थबुद्धिजननसामर्थ्यलक्षण इति चेत् ? किं स्मृतिजननसामर्थ्यलक्षणः ? अन्यो वा ? नचान्यः; पदानां पदार्थांशेषु स्मृतिव्यतिरिक्तकार्यान्तराभावात्; नच स्मृतिजननसामर्थ्यसम्बन्धादेव स्मृतिजन्म; अन्यत्र सादृश्यादिसम्बन्धान्तरे सत्यन्यतरदर्शनेऽन्यतरस्मिन् स्मृतिदर्शनात्। तस्मान्न शब्दादर्थे स्मृतिरिति।

## तत्त्वदीपनम्

स्मरणत्वमित्याह—**ताश्चेति**॥ संस्काराणां सदा भावात्सततं स्मृत्युदयः स्यादित्याशङ्क्याह—**संबन्धीति**॥ उद्बुद्धसंस्कारस्य स्मृतिहेतुत्वात् तस्य च संबन्धिशब्ददर्शनतन्त्रत्वान्नातिप्रसङ्ग इत्यर्थः॥ पदाभिहितानां पदार्थानामेवान्वयबोधकत्वमिति ये ब्रुवते, ते **ह्यभिहितान्वयवादिनः,** योग्येतरसंसृष्टस्वार्थमभिदधति पदान्येवेति य आचक्षते, ते **त्वन्विताभिधानवादिनः**। विमता स्मृतिः, न स्वबीजज्ञानसंभिन्नार्थविषया, अर्थस्मृतित्वात्; पदार्थस्मृतिबदित्युक्तं भवतीत्यर्थः॥ संबन्धिशब्ददर्शनात्संबन्ध्यन्तरस्मरणं जायत इत्युक्तम्, तदनुपपन्नम्; शब्दार्थयोः संबन्धानिरूपणादिति बौद्धः शङ्कते—**ननु कोऽसाविति**॥ शब्दार्थयो किं स्वभावः संबन्धः ? उत कार्यकारणतालक्षणः ? किं वाऽनुपलब्धिः ? आहो देशनियमः ? किं वा कालनियमः ? उत संयोगादिः ? न तावद् वृक्षत्व-शिंशपात्वयोरिव स्वभावसंबन्धः; एकव्यक्तिसमवायाभावात् न द्वितीयः शब्दस्यार्थकार्यत्वे मानाभावात् नापि तृतीयः अभावो ह्यनुपलब्ध्या मीयते, अर्थस्य च भावरूपत्वात् शब्दार्थयोरनुपलब्धिसंबन्धानुपपत्तेः, नापि चतुर्थः यस्मिन् स्निग्धच्छाया तस्मिन् शैत्यमितिवदेकदेशत्वाभावात् नापि कृत्तिकोदये रोहिण्यासत्तिवत् कालनियमः, भिन्नकालत्वात् नापि संयोगः शब्दस्य गुणत्वात्; द्रव्यत्वेऽपि नार्थेन संयोगः; गुणादीनां शब्दस्य च तदनुपपत्तेः। एवं संबन्धान्तराभावोऽप्यूह्यः। तस्माच्छब्दार्थयोः संबन्धाभावान्न संबन्ध्यन्तरज्ञानस्य स्मरणत्वमुचितमित्यर्थः॥ संबन्धान्तराभावेऽपि शक्तिः संबन्ध इति चोदयति **अर्थबुद्धीति**॥ शब्दबुद्ध्योर्जन्यजनकत्वं संबन्धः, अर्थबुद्ध्योस्तु विषय-विषयितेति शक्तिः संबन्ध इत्यर्थः। बुद्धिशब्दस्य स्मृत्यनुभवसाधारणतया विकल्पाऽसहत्वान्नैतदित्याह—**किं स्मृतीति**॥ **अन्य** इति॥ अनुभवजननसामर्थ्यलक्षण इत्यर्थः। बुद्धिस्थत्वात् सिद्धान्त्यनङ्गीकृतत्वाच्च प्रथमं द्वितीयं दूषयति—**नचेति**॥ पदार्थानां प्रमाणान्तरसिद्धत्वात् पदानां स्मारकत्वमेवेत्यर्थः। पदमात्रस्य स्मारकत्वं भवतां संमतं चेति चशब्दार्थः। संसृष्टपदार्थविशेषस्य मानान्तरागोचरत्वात्कथं पदानां तत्स्मारकत्वमित्याशङ्क्याह—**पदार्थांशेष्विति**॥ संसृष्टपदार्थेष्वनुभवजनकत्वेऽपि केवलेषु स्मारकत्वमित्यर्थः। आद्यं निरस्यति—**नच स्मृतीति**॥ ज्ञातस्य संबन्धस्य स्मृतिजनकत्वम् ? उताज्ञातस्य ? नाद्यः; कार्यलिङ्गगम्यं हि सामर्थ्यम्, ततः स्मृतौ जातायां तया सामर्थ्यं ज्ञायते, ततस्तस्मिन् ज्ञाते स्मृतिजन्मेतीतरेतराश्रयात्। स्मृत्यन्तरप्रतिपन्नात् सामर्थ्यात् स्मृतिजन्माङ्गीकारेऽनवस्थापत्तेः। न द्वितीयः। अव्युत्पन्नानामपि शब्दश्रवणेऽर्थप्रतिपत्तिप्रसक्तेः। तस्मात्—स्मृतिजननसामर्थ्यलक्षणः संबन्धः साधीयानित्यर्थः॥ तत्रैव दूषणान्तरमाह—**अन्यत्रेति**॥ चैत्र-मैत्रयोरन्यतरदर्शनेनान्यतरस्मरणं सादृश्यादिसंबन्धे सति दृष्टम्, इह च सादृश्यादेरभावान्न स्मरणमुपपद्यत इत्यर्थः। विरोधकार्यकारणभावादिरादिशब्दार्थः। पूर्वपक्षमुपसंहरति—**तस्मादिति**॥

## ऋजुविवरणम्

दर्शनात्तस्यार्थस्मृत्युत्पत्तेर्न चक्रकम्; तथाऽपि स्मृतिजननसामर्थ्यात्स्मृत्युत्पत्तिरिति न शक्यते वक्तुम्। बालेन सामर्थ्यमेव निश्चीयते, न स्मृतिजननरूपं यतः। अर्थज्ञानसामर्थ्यनिश्चयेऽपि फलतः स्मृतिजननसामर्थ्यं तदित्युच्यते, तथापि उत्तरत्र काले न शब्दमात्रदर्शनात् स्मृतिः; विस्मृतसंबन्धस्यादर्शनात्, किन्तु संबन्धितया ज्ञायमानशब्ददर्शनात्; अस्त्विति चेत् ? न, अर्थस्य संबन्धविशेषणत्वेन ज्ञायमानत्वात्। अथ संबन्धज्ञानसंस्काररहितशब्ददर्शनात्स्मृतिः, तथापि स्मृतिजननसामर्थ्यमात्रादेव स्मृतिजन्म न संभवतीत्याह—**सादृश्यादिसंबन्धान्तरे सतीति**॥ सादृश्यमादिर्यस्य संबन्धस्य, स सादृश्यादिः। **एतदुक्तं भवति**—सादृश्यादिहेतुकाः संबन्धाः सादृश्यादय एव वा स्मृत्युत्पादननियामकाः न, तु सामर्थ्यमात्रात्स्मृत्युत्पत्तिरिति।

एतत्परिहरति—**उच्यत इत्यादिना**॥ यत्तूक्तं सादृश्यादिसंबन्धे सत्येव स्मृदिरिति, तत्र किं सादृश्यादीनां बुद्धिसामर्थ्यरूपत्वमुच्यते ? उत सामर्थ्यस्य व्यवस्थापकत्वम् ? किंवा ज्ञापकत्वमिति ? न तावत्प्रथमः कल्प इत्याह—**सादृश्यादिमूलेति**॥ सादृश्यादयश्च ते मूलसंबन्धाश्च सादृश्यादिमूलसंबन्धाः, बुद्धिसामर्थ्यलक्षणत्वाभावात्स्वरूपत्वाभाव इति; सादृश्य-

## पञ्चपादिकाविवरणम्

उच्यते; सम्बन्धज्ञानसंस्कारः शब्ददर्शनं चात्र स्मृतिहेतुः, नार्थेन सम्बन्धविशिष्टशब्दज्ञानम्; येन विशिष्टे स्मृतिसामर्थ्यव्यवस्थापनाद्विशेषणीभूतं सम्बन्धान्तरमिष्येत सम्बन्धविशिष्टान्यतरदर्शनाच्चान्यतरस्मृतौ सम्बन्धविशेषणत्वेनान्यतरस्यापि स्मृतिविषयस्य प्रागेव बुद्धता स्यात् सादृश्यादिमूलसम्बन्धानां बुद्धिसामर्थ्यलक्षणत्वाभावात् सामर्थ्यसम्बन्धादर्थान्तरत्वं न विरुद्ध्यते। बुद्धिसामर्थ्यसम्बन्धाद् बुद्धिर्नोत्पद्यत इति च स्ववचनविरोधः। तस्मात्पदेभ्यः पदार्थमात्रेषु बुद्धिसामर्थ्यसम्बन्धात् स्मृतय इति सिद्धम्। कुतः पुनस्तत्र ज्ञानसम्भेदाभाव इति? तत्राह—**ज्ञानस्यापीति**॥ शब्दसामर्थ्यविषयतया सम्बन्धित्वेन स्मृतिविषयत्वे ज्ञानस्यापि शब्दार्थत्वप्रसङ्गादिति। **तथेष्टभूभागविषयेत्यादिः स्पष्टार्थः**॥

## तत्त्वदीपनम्

संबन्धाभावाच्छब्दानामर्थबोधकतानुपपत्तेर्विवक्षाबोधकत्वं विवक्षितम्? उतार्थबोधकत्वाऽभावमात्रम्? आद्यस्तावन्नोपपद्यत इत्याह—**उच्यत इति**॥ किं विवक्षामात्रं शब्दार्थः? आहो अर्थव्यावृत्तिविवक्षा? नाद्यः; शब्दश्रवणानन्तरमर्थे व्यवहारानुपपत्तेः द्वितीये प्रमाणान्तरादर्थासिद्धेः शब्दस्य तत्र प्रामाण्यमास्थेयमित्यभिसन्धिः। द्वितीयं प्रत्याह—**संबन्धेति**॥ शब्दार्थयोः स्मृतिजननसामर्थ्यं संबन्धः, स च ज्ञात एवार्थबोधकः। न चेतरेतराश्रयत्वादिदोषः; संबन्धज्ञानोत्थस्य संस्कारस्यानवगतस्यैवार्थबोधकताऽभ्युपगमादित्यर्थः। नच सस्कारस्य सदा भावात्सदा स्मरणप्रसङ्गः; शब्ददर्शनोद्बुद्धसंस्कारस्य स्मृतिहेतुत्वाभ्युपगमादित्याह—**शब्देति**॥ अर्थेन संबन्धविशिष्टशब्दज्ञानस्यैव स्मृतिहेतुत्वं किं न स्यादित्यत आह—**नार्थेनेति**॥ विपक्षे दूषणमाह—**येनेति**॥ अर्थसंबन्धविशिष्टशब्दज्ञानस्य स्मृतिजननसामर्थ्ये तदतिरिक्तः स्मृतिजननसामर्थ्ये तदतिरिक्तः संबन्ध आस्थेयः, स च न निरूपयितुं शक्यत इत्यर्थः। न केवलं संबन्धान्तरप्रसक्तिः, अपि तु शब्दवैयर्थ्यं चेत्याह—**संबन्धविशिष्टेति**॥ अन्यतरस्यापीत्यर्थस्येत्यर्थः। **प्रागेवेति**। शब्दजन्यस्मरणात्प्रागित्यर्थः अर्थसम्बन्धविशिष्टशब्दज्ञानस्य स्मारकत्वे विशेषणीभूतार्थस्याप्यधिगतत्वाच्छब्दवैयर्थ्यमित्यर्थः। यतूक्तं संबन्धिदर्शनस्य संबन्ध्यन्तरस्मारकत्वे सादृश्यादिसंबन्धान्तरं दृष्टमिति, तत्र वक्तव्यम्—एकत्र सामर्थ्यसंबन्धस्य संबन्धान्तरनिरपेक्षस्य स्मारकत्व इतरत्रापि तथात्वं स्यादिति विवक्षितम्? उतान्यत्र सामर्थ्यस्य सादृश्यादिसंबन्धसापेक्षत्ववद् सादृश्यापेक्षत्वं साध्यते? आहोस्विन्मूलसंबन्धाभावात्सामर्थ्यात् बुद्ध्यनुत्पत्तिः? इति। तत्र प्रथम-द्वितीयौ दूषयति—**सादृश्येत्यादिना**॥ बुद्धिसामर्थ्यसंबन्धादित्यतः प्राक्तनेन। अत्रैषाऽक्षरयोजना—सादृश्यादिलक्षणमूलसंबन्धानां स्मृतिजननसामर्थ्यसंबन्धादर्थान्तरत्वं यद् दृष्टं तन्न विरुद्ध्यत इति संबन्धः। सादृश्यादिमूल संबन्धानां स्मारकत्वं तावदन्वय-व्यतिरेकसिद्धम् नच सामर्थ्यरूपत्वं तेषाम्; व्यतिरेकस्याप्यनुभूयमानत्वात्, तस्मादाद्यपक्षानुपपत्तिरित्यर्थः। द्वितीयकल्पासंभवमुपपादयति—**बुद्धिसामर्थ्येति**॥ बुद्धिसामर्थ्यलक्षणत्वाभावात् सादृश्यादिमूलसंबन्धानां सामर्थ्यसंबन्धादर्थान्तरत्वमिति संबन्धः अर्थान्तरत्वमसंकीर्णत्वं शब्दसामर्थ्येन सहानवस्थितत्वं बुद्धिसामर्थ्यं लक्षणं गमकं येषां ते बुद्धिसामर्थ्यलक्षणाः, तेषां भावस्तत्त्वम्; तदभावादित्यक्षरार्थः। यद्यपि सादृश्यादिसम्बन्धेऽन्यतरस्मरणं दृष्टम्; तथापि प्रकृते संबन्धान्तरं नोपपद्यते; तदसंभवात्, कल्पनागौरवाच्चेत्यर्थः। तृतीयं प्रत्याह—**बुद्धिसामर्थ्यसंबन्धादिति**॥ शब्दानां बुद्धिसामर्थ्यमङ्गीकृत्य सामर्थ्याद् बुद्ध्यनुत्पत्तिं ब्रवीषि? उत सामर्थ्यमेव नेतीति? तत्राऽऽद्ये, जननी वन्ध्येतिवत् स्ववचनव्याघातः। न द्वितीयः; शब्दान्वय-व्यतिरेकाभ्यां शब्दस्य बुद्धिजननसामर्थ्योपलम्भविरोधादित्यर्थः। शब्दार्थयोः संबन्धसिद्धौ संबन्धिदर्शनात्संबन्ध्यन्तरस्मरणं यदुक्तं तद् युक्तमित्युपसंहरति—**तस्मादिति**॥ पदार्थस्मृतिवदितरस्मृतेरपि न ज्ञानसंभिन्नविषयत्वमित्युक्तम्, तत्र दृष्टान्तासंप्रतिपत्तिं शङ्कते—**कुतः पुनरिति**॥ शब्दस्य शक्तिभेदकल्पनाप्रसङ्गादर्थमात्रविषयत्वं युक्त-

## ऋजुविवरणम्

विरोधादीनां व्यभिचरितत्वादित्यर्थः। द्वितीयस्यापीदमेवोत्तरम्, तत्र सामर्थ्यं लक्ष्यते व्यवस्थाप्यते यैरिति व्युत्पत्त्या लक्षणत्वं निराक्रियते; व्यवस्थापकेऽपि हि लक्षणशब्दो दर्शितः—"धूमो लक्षणमग्नेरिति वदन्ती"ति। नियतत्वमेव हेतुः। अत एव न तृतीयोऽपि; लक्षणत्वाभावात्, ज्ञापकत्वाभावादित्यर्थः; व्यभिचरितत्वान्न तेषां ज्ञापकत्वं युक्तम्; कार्यस्यैवाव्यभिचरितस्य तदाश्रयणं युक्तमिति भावः। एवं च सति स्मृतिजननसामर्थ्यात्स्मृतिर्न भवतीति यदुक्तम्, तत् परहृतमित्याह—**बुद्धिसामर्थ्येति**॥ कथं ज्ञानस्य शब्दार्थत्वम्? आनुषङ्गिकार्थे व्यभिचारादित्याशङ्क्य व्याचष्टे—**शब्दसामर्थ्यविषयतयेति**॥

## पञ्चपादिका

**नापि स्वगतो ज्ञानस्य स्मरणाभिमानो नाम रूपभेदोऽवभासते। नहि नित्यानुमेयं ज्ञानमन्यद्वा वस्तु स्वत एव रूपसम्भिन्नं गृह्यते। अत एवोक्तम्—"अनाकारामेव बुद्धिमनुमिमीमहे" इति। 'अनाकाराम्' अनिरूपिताकारविशेषाम्, अनिर्दिष्टस्वलक्षणामित्यर्थः। अतो न स्वतः स्मरणाभिमानात्मकता। नापि ग्राह्यविशेषनिमित्तः स्मरणाभिमानः; प्रमाण-**

## पञ्चपादिकाविवरणम्

ननु स्मृतिज्ञानस्य त्रिकोणत्वादिवत्स्वगतः कश्चिद्विशेषो दृश्यते, स स्मरणाभिमान इति? नेत्याह—**नापि स्वगतो ज्ञानस्येति**॥ ननु नित्यानुमेयेऽपि लिङ्गविशेषाद्धेतुविशेषानुमानं युक्तमिति, कोऽसौ लिङ्गविशेषः? न तावद् ग्राह्यविशेष इत्याह—**नापि ग्राह्यविशेषनिमित्त** इति॥ अस्तु तर्हि फलविशेषो लिङ्गविशेष इति, नेत्याह—**नापि फलविशेषनिमित्त** इति॥ ननु स्मरामीत्यनुभवः स्मरणाभिमान इत्यत आह—**यः पुनः क्वचित्कदाचिदिति**॥ यदि स्मृति-स्मार्य-स्मर्तृ-विषय-

## तत्त्वदीपनम्

मित्याह—**तत्राहेति**॥ शब्दप्रतिपन्नत्वमात्रेण कथं ज्ञानस्य शब्दार्थत्वम्? आनुषङ्गिकार्थे व्यभिचारादित्याशङ्क्याह—**शब्दसामर्थ्येति**॥

स्मार्यगतो धर्मः स्मरणाभिमान इति पक्षं निराकृत्य स्मरणगतो धर्मः स्मरणाभिमान इति पक्षमुपक्षिपति—**ननु स्मृतीति**॥ किं प्रत्यक्षः स विशेषः? उतानुमेयः? इति विकल्प्याऽऽद्यं निरस्यति—**नेत्याहेति**॥ (टीकायाम्) **अन्यद्वेति**॥ वाशब्द इवार्थः। नित्यानुमेयं स्वगतरूपविधुरं चेत्यत्र **शबरस्वामिवचनमुदाहरति—अत एवेति (टीकायाम्)**॥ अनाकारामित्युक्ते बुद्धेर्निःस्वरूपता स्यात्, तदर्थमाह—**अनिरूपितेति (टीकायाम्)**॥ **ननु** घटज्ञानं पटज्ञानमित्याकारविशेषो निरूपित इत्यत्राह—**अनिर्दिष्टेति (टीकायाम्)**॥ न निर्दिष्टं स्वाभाविकं लक्षणं यस्या तथोक्ता, तामित्यर्थः। द्वितीयमुत्थापयति—**ननु नित्येति**॥ सुरभिधूमविशेषस्यागरुजदहनानुमापकत्ववद् व्याप्यविशेषस्य व्यापकविशेषानुमापकत्वमित्यर्थः॥ लिङ्गविशेषमेव तर्हि निरूपयेत्याह—**कोऽसाविति**॥ किं ग्राह्यविशेषो लिङ्गम्? उत फलविशेषः? इति किं शब्दार्थः। आद्यं दूषयति—**न तावदिति**॥ प्रमाणग्राह्यमेव स्मृत्या गृह्यत इति कथं नियमः? अभिज्ञायामयमिति प्रतिभानात्, स्मृतौ च स इतीति शङ्कायामुक्तं **टीकाकृता—अविकलेति**॥ देश-कालयोः क्वचित्परोक्षतया क्वचिदपरोक्षतया परं प्रतिभासः, न प्रमेयभेद इत्यर्थः। द्वितीयमुत्थापयति—**अस्त्विति**॥ फलविशेष एवासिद्ध इत्याह—**नेत्याहेति**॥ विषयभेदनिमित्तः फलविशेषः। नच प्रमाण-स्मृतिफलयोर्विषयभेदोऽस्तीत्यर्थः॥ स्मरामीति ज्ञानं स्मरणाभिमान इति कल्पमुत्थापयति—**नन्विति**॥ व्यभिचारान्नास्यापि विवेचकत्वमित्याह—**आहेति**॥ **मूलग्रन्थस्यैषाऽक्षरयोजना**—यः स्मरामीत्यनुवेधः, स क्वचिद् विषयादिशेषे कालविशेये च भवति, न सर्वज्ञेत्यर्थः। तत्रैव हेत्वन्तरमाह—**वाचकेति (टीकायाम्)**॥ स्मारामीत्यनुभवस्य वाचकशब्दसंभिन्नत्वनिमित्तत्वमात्रमत्र प्रतिभाति, न तु तस्याविवेचकत्वे हेतुरुक्तः, तत्राह—**यदि स्मृतीति**॥ प्रागेवेत्यत्र स्मरामीत्यनुभवादिति शेषः। असभवे हेतुमाह—**विशिष्टेति**॥ ग्रहणादेर्भेदमनधिगम्य ग्रहणादिवाचकशब्दं विहाय स्मरणादिवाचकशब्दप्रयोगासंभवात्प्रागेव भेदः प्रतिपत्तव्यः, तथाच न स्मरणाभिमानस्य विवेचकत्वमित्यर्थः॥ स्मृत्यनुभवयोर्भेदप्रसिद्ध्या ग्राह्यविशेष आस्थेय इति शङ्कते—**ननु स्मृतीति**॥ प्रसिद्धिरन्यथोपपन्नेत्याह—**अत आहेति**॥ संस्कारसमुत्थत्वं कथं भेदकम्? तस्य स्मृतिप्रमाणसाधारणत्वादित्याशङ्क्याह—**कारणेति**॥ स्मृतेः संस्कारमात्रं कारणम्, ग्रहणस्य तु संप्रयोगादीत्यर्थः।

## ऋजुविवरणम्

स्वगतो विशेष इत्यत्र योऽयं स्वगतो विशेषो जात्यादिः स किं स्वाभाविकः, स्वेन च गृह्यते? उतान्यनिमित्तोऽन्येन च गृह्यते? इति। तत्र प्रथमपक्षनिराकरणपरत्वेन नापि स्वगत इति ग्रन्थमवतारयति—**नेत्याहेति**॥ द्वितीयपक्षमनुवदति—**ननु नित्यानुमेयेऽपीति**॥ **वाचकसंयोजनानिमित्त इति (टीकायाम्)**॥ वाचकस्य संयोजना वाचकशब्दसङ्कल्पः; तन्निमित्तत्वं स्मरामीत्यनुभवस्य स्मरणाभिमानत्वनिराकरणहेतुत्वेनोक्तम्, कथमिदं स्मरणाभिमानत्वं निराकरोतीत्याशङ्क्य,

## पञ्चपादिका

ग्राह्यस्यैवाविकलानधिकस्य गृह्यमाणत्वात्, नापि फलविशेषनिमित्तः; प्रमाणफलविषयमात्रावच्छिन्नफलत्वात्। यः पुनः क्वचित्कदाचिद्नुभूतचरे 'स्मरामि' इत्यनुवेधः, स वाचकशब्दसंयोजनानिमित्तः—यथा सास्नादिमदाकृतौ गौरित्यभिमानः। तस्मात्पूर्वप्रमाणसंस्कारमात्रसमुत्थतया तद्विषयावभासित्वमात्रं स्मृतेः, न पुनः प्रतीतितोऽर्थतो वाऽधिकोंऽशोऽस्ति, यस्य दोषनिमित्तः प्रमोषः परिकल्प्येत। नचेह पूर्वप्रमाणविषयावभासित्वमस्ति; पुरोऽवस्थितार्थप्रतिभासनादित्युक्तम्। अतो नान्यसम्प्रयोगेऽन्यविषयज्ञानं स्मृतिः; किन्त्वध्यासः॥

## पञ्चपादिकाविवरणम्

शब्दत्रयानुषक्तोऽनुभवविशेषः, तत् स्मरामीति, यदि वा त्रितयविषयमनुमानज्ञानान्तरमेतत्, उभयथाऽपि ग्रहणादित्रितयात् स्मरणादित्रितयस्य प्रागेव भेदावगममन्तरेण ग्रहणादित्रितयशब्दव्यतिरिक्तस्मरणादिशब्दानुस्मरणं, ग्रहणानुमानव्यतिरेकेण स्मरणानुमानं च न सम्भवति; विशिष्टाभिधेयावगमनिमित्तत्वाद् विशिष्टशब्दानुस्मरणस्य, विशिष्टावगमानुमानस्य चेति प्रागेव स्मरामीत्यनुभवाद् ग्रहण-स्मरणयोर्भेदो वक्तव्य इति भावः। ननु स्मृत्यनुभवयोरर्थमात्रविषयत्वे को भेद इत्यत आह—**तस्मादिति**॥ कारणविशेषादेवेत्यर्थः॥

कथं वा तव स्मृतेर्ज्ञानानुमानस्य चार्थविशिष्टज्ञानविषयत्वे समाने विभागावगमः? कारणभेदादिति चेत्, इहापि तत् समानम्। 'सः' इत्याकारेण स्मृतिर्ज्ञानानुमानाद् भिद्यत इति चेत्' कोऽयं 'सः' इत्याकारः? परोक्षदेशकालविशिष्टतेति चेत्? अनुमानादिष्वपि प्रसङ्गः। पूर्वानुभवसंभिन्नतेति चेत्? ज्ञानानुमाने पौरुषेयवाक्यजन्यज्ञाने च प्रसङ्गः। तस्मात्संस्कारजन्यत्वं 'सः' इत्याकार इति। अस्तु तर्हीहापि तथाविधैव स्मृतिरिति? नेत्याह—**नचेहेति**॥ न च स्वप्नेऽहं नीलमिति गृह्यमाणाविवेकः, स्मर्यमाणानामन्योन्याविवेके परोक्षमेव सर्वमवभासेन; अतो न प्रमाणस्मृतिद्वैराश्यमेव ज्ञानस्य, किन्तु तृतीयं भ्रान्तिज्ञानमपीत्युपसंहरति—**अतो नान्यसंप्रयोग** इति॥ न चेत् स्मृतिः, किं तर्हि 'इदं रजतमि'ति? ननु अन्यथाख्यातिरेषा।

## तत्त्वदीपनम्

स्मृत्यनुभवयोरर्थैक्येऽपि हेतुभेदाद् भेद इत्युक्तं प्रतिबन्धात् द्रढयति—**कथं वेति**॥ स्मृति-ज्ञानानुमानयोः किं विषयभेदाद्भेदः? आहो कारणभेदाद् भेदः? किं वा 'सः' इत्याकारभावाभावाभ्याम्? इति विकल्प्याद्यं दूषयति—**अर्थविशिष्टेति**॥ द्वितीयमुत्थापयति—**कारणेति**॥ साम्येन समाधत्ते—**इहापीति**॥ तृतीयमुत्थापयति—**'सः' इति**॥ 'सः' इत्याकार एव दुर्निरूप इत्याह—**कोऽयमिति**॥ किं परोक्षदेशकालविशिष्टविषयत्वं 'सः' इत्याकारः? आहो पूर्वानुभवसंलितत्वम्। उत संस्कारजत्वम्? इति किंशब्दार्थः। आद्यमुत्थापति—**परोक्षेति**॥ परोक्षदेशकालविशिष्टविषयत्वस्यानुमानादावपि संभवात्तत्रापि प्रसङ्ग इत्याह—**अनुमानादिष्विति**॥ द्वितीयमनुवदति—**पूर्वानुभवेति**॥ किमनुभवमात्रसंभिन्नविषयत्वं स्मरणभेदकम्? उत स्वजनकज्ञानसंभिन्नविषयत्वम्? इति विकल्प्याऽऽद्यं प्रत्याह—**ज्ञानानुमान इति**॥ द्वितीयं प्रत्याह—**पौरुषेयेति**॥ नद्यास्तीरे प्रसूनानि सन्तीत्यादिवाक्यान्नदीतीरप्रसूनविषयज्ञानसत्ता बोध्यते, ततश्च स्वजनकज्ञानसंभिन्नविषयत्वस्य तत्रापि भावान्न भेद इत्यर्थः। तस्मात् तृतीयपक्षः परिशिष्यत इत्याह—**तस्मादिति**॥ संस्कारमात्रजन्यत्वमेव तर्हि स्मृतेर्भेदकमिति शङ्कते—**अस्तु तर्हीति**॥ संस्कारमात्रजन्यत्वमसिद्धमित्याह—**नेत्याहेति**॥ किं च स्वप्ने किं गृह्यमाणयोरविवेको भ्रमः? उत गृह्यमाणस्मर्यमाणयोः? आहो स्मर्यमाणयोः? इति विकल्प्य प्रथम-द्वितीयौ निरस्यति—**नचेति**॥ आत्मव्यतिरिक्तस्य नीलादेरगृह्य-

## ऋजुविवरणम्

स्मरणमभिमन्यते येन, यद्वा—स्मरणमेवाभिमननमभिमान इत्युभयथाऽपि स्मरामीत्यनुभवस्य स्मरणाभिमानत्वं नास्तीत्याह—**यदि स्मृतिस्मार्येति**॥ "किन्त्वध्यासः"इत्युपसंहारो न युक्तः; अध्यासस्याद्याप्यसिद्धत्वात्, प्रमाणस्मृतिद्वैराश्यस्योक्तत्वादित्याशङ्क्य, तत्र जाग्रति ग्रहणयोर्ग्रहणस्मरणयोः स्मरणयोर्वाऽविवेकः, एवं तत्तदर्थाविवेकोऽपीति वक्तुं शक्यत्वात्तद्वानेन स्वप्नमाश्रित्य द्वैराश्यभङ्गं दर्शयति—**न च स्वप्न** इति॥ गृह्यमाणेनात्मना नाविवेकः; अहं नीलमिति प्रतीतिप्रसङ्गात्, तददर्शनादित्यर्थः असम्भवादेव ग्रहणयोरविवेको नाशङ्कितः॥

## पञ्चपादिकाविवरणम्

तथाहि—शुक्तिकासंप्रयोगे दोषोपहतमिन्द्रियं देशान्तरादिगतं रजतमभिगृह्णाति। तच्च स्वदेशाद्यवस्थितं दोषोपहतेन्द्रियेण गृह्यमाणं शुक्तिकात्मना गृह्यते। ननु अननुभूतमपि यत्किञ्चिदपि दोषोपहतमिन्द्रियं किमिति न गृह्णाति ? सादृश्यादिदोषसामर्थ्यादिति वदामः। तस्माद्ग्रहणात्मकमन्यथाज्ञानम्—इति ॥

उच्यते—केयमन्यथाख्यातिः ? अन्याकारं ज्ञानमन्यालम्बनं वा ? वस्तुनो वस्त्वन्तरात्मनावभासो वा ? अन्यथा परिणते वस्तुनि ज्ञानं वा ? न तावत्प्रथमः कल्प इत्याह—**नन्वेवं सति वैपरीत्यमिति** ॥ कुतो वैपरीत्यम् ? इत्यत आह—

## तत्त्वदीपनम्

माणत्वान्न गृह्यमाणयोरविवेकः। नापि द्वितीयः, 'अहं नीलम्' इति प्रतिभासप्रसङ्गात्, गृह्यमाणाविवेकादापरोक्ष्ये स्मर्यमाणाविवेकाद् गृह्यमाणस्य पारोक्ष्यं किं न स्यादित्यर्थः। तृतीयं दूषयति—**स्मर्यमाणानामिति** ॥ गुरुमतनिराकरणमुपसंहरति—**अतो न प्रमाणेति** ॥ संस्कारमात्रजन्यत्वेन स्मृतित्वाभावे रजतप्रतिभासस्य गतिर्वक्तव्येत्याह—**न चेदिति** ॥ देशान्तरस्थरूप्यस्य पुरोवर्त्यात्मना प्रतीतिर्भ्रान्तिः ? उत धीरूपस्य ? आहो अनिर्वाच्यस्य ? इति किंशब्दार्थः। आद्यमवलम्बते—**नन्वन्यथेति** ॥ किं देशान्तरवृत्ति रूप्यं लोचनेनालोक्यते ? उत मनसा ? नाद्यः; इन्द्रियस्य व्यवहितसन्निकर्षाभावात्। नान्त्यः; मनसोऽसहायस्य बहिरप्रवृत्तेः, तस्मात् कथमन्यथाख्यातिरित्याशङ्क्याह—**तथाहीति** ॥ किं केवलस्य लोचनस्य व्यवहितग्राहित्वं निरस्यते। उतदोषसध्रीचोनस्य ? आद्यस्त्वङ्गीक्रियते द्वितीयस्तु नोपपद्यते केवलस्य जाठरानलस्य बहुतराहारदग्धृत्वाभावेऽपि भस्मकदोषदूषितस्यानेकाहारदग्धृत्ववत् केवललोचनस्य व्यवहिताग्राहित्वेऽपि दुष्टस्य ग्राहकत्वमविरुद्धमित्यर्थः। तर्हि देशान्तरे रूप्यमिति प्रतीयादित्याशङ्क्याह—**तच्चेति** ॥ दुष्टेन्द्रियेण व्यवहितग्रहणेऽननुभूतस्यापि ग्रहणं स्यादिति शङ्कते—**नन्वननुभूतमिति** ॥ संस्कारस्यापि सहकारित्वान्नादृष्टग्रहणमित्याशङ्क्य, दृष्टदृष्टावपि यस्य कस्य चिद् ग्रहण स्यादित्याह—**यत्किंचिदिति** ॥ सादृश्यस्यापि सहकारित्वान्नातिप्रसङ्ग इत्याह—**सादृश्येति** ॥ **आदिपदेन** वैसादृश्यस्याप्यन्यस्त ग्रहणं वारयति। राग आदिशब्दार्थः। पूर्वपक्षमुपसंहरति—**तस्मादिति** ॥ ग्रहणात्मकं यज्ज्ञानं तदन्यथा ज्ञानम्, नानिर्वचनीयादिख्यातिः, तत्र प्रमाणाभावादिति योजना। विवादपदम्, रजतधीपदम्, रजतव्यवहारपदत्वात्संमतवदित्यर्थः।

समारोपितस्यान्यत्र सत्त्वे मानाभावान्न तदपि साध्वित्याह—**उच्यत इति** ॥ सितभास्वरद्रव्यस्य रजतधीपदत्वं मायावादिभिरप्यङ्गीकृतमिति नान्यत्र सत्त्वसिद्धिरित्यर्थः ॥ अन्यथाख्यातिशब्दार्थोऽपि दुर्निरूप इत्याह—**केयमिति** ॥ किंशब्दसूचितान् विकल्पानाह—**अन्याकारमिति** ॥ ज्ञानान्यथात्वाभिप्रायेण प्रथमः कल्पः; द्वितीयस्तु स्फुरणान्यथात्वाभिप्रायेण; तृतीयस्तु विषयान्यथात्वाभिप्रायेण। रजतस्य ज्ञानव्यावर्तकत्वमिदमो विषयत्वं चानुभूयते, अतः कुतो वैपरीत्यमित्याह—**कुत इति** ॥ अन्याकारज्ञानस्यान्यालम्बनताया अनुभवपराहतत्वाद्वैपरीत्यमित्याह—**अत आहेति** ॥ अननुरूपत्वमेवाह—**सर्वत्रेति** ॥ किम्—आकारार्पकत्वमालम्बनत्वम् ? उत संवित्प्रयुक्तव्यवहारविषयत्वम् ? आहो संविज्जनितातिशयाश्रयत्वम् ? अथवा भासमानत्वम् ? नाद्यः; शुक्ते रजताकारार्पकत्वाभावात्। शुक्तिः, न रजताज्ञानालम्बनम्, तदाकारानर्पकत्वात्; घटादिवदित्यर्थः। द्वितीयमुत्थापयति—**ननु न संविदिति** ॥ संवित्प्रयुक्तव्यवहारविषयत्वेनालम्बनत्वे चोद्ये तदनिराकृत्य पक्षान्तर-

## ऋजुविवरणम्

भट्टपादमुखैरन्यैराश्रितत्वेन दूष्यते। प्रसिद्धो विदुषा न्यायो बलाबलविभेदतः ॥

इत्यभिप्रायेणाह—**नन्वन्यथाख्यातिरेवेति** ॥ ननु इन्द्रियस्य संसृष्टग्राहकत्वात्कथं रजतस्य ग्रहणमित्याशङ्क्याह—**तथाहि शुक्तिकेति** ॥ तर्हि देशान्तरसम्बन्धित्वेनैव ग्रहणं भवेत्, तथा सति कथं पुरोवर्तिनि प्रवृत्तिविशिष्टज्ञानं चेत्याशङ्क्याह—**तच्च [स्वदेशाद्यवस्थितं] दोषोपहतेन्द्रियेणेति** ॥

### पञ्चपादिका

**ननु एवं सति वैपरीत्यमापद्यते, रजतमवभासते शुक्तिरालम्बनमिति, नैतत् संविदनुसारिणामनुरूपम्। ननु शुक्तेः स्वरूपेणाप्यवभासने संवित्प्रयुक्तव्यवहारयोग्यत्वमेवालम्बनार्थः, सैवेदानीं रजतव्यवहारयोग्या प्रतिभासते, तत्र किमिति**

### पञ्चपादिकाविवरणम्

**नैतत्संविदनुसारिणामिति** ॥ सर्वत्र यदाकारं संवेदनम्, तदेवालम्बनमिति नियमे रजताकारसंवेदनविरुद्धं शुक्तिकालम्बनत्वमित्यर्थः। ननु न संविदाकारताऽऽलम्बनता सर्वत्र, किन्तु संवित्प्रयुक्तव्यवहारविषयतेति चोदयति—**ननु शुक्तेः स्वरूपेणापीति** ॥ इदं तावदयुक्तम्; नहि व्याघ्र-सर्पादिज्ञानाद्दण्डादिष्वादीयमानेषु व्याघ्रादिज्ञानस्य दण्डाद्यालम्बनम्, नच द्रव्य-गुणादिज्ञानप्रयुक्त्या द्रव्य-गुणादिष्वादीयमानेषु द्रव्यादीनामन्योन्यज्ञानालम्बनत्वं प्रसिद्धम्; तस्मात् तदाकार एवालम्बनमिति, नान्याकारं ज्ञानमन्यालम्बनमन्यथाख्यातिरिति बहिरेवोपसंहर्त्तव्यम्। अस्तु तर्हि वस्तुनो वस्त्वन्तरात्मनाऽवभास इति, तत्राह—अथ तथारूपावभासनमिति ॥ न तावदत्यन्तभेदवादिनां संसर्गः परमार्थः। ततश्चानिर्वचनीयानभ्युपगमात् शून्य एव संसर्गः प्रकाशेत एवं खण्डोगौः इत्यादिसंसर्गप्रत्ययाः सर्वे एव विभ्रमाः प्रसज्येरन्निति बहिरेवैकः पक्षः प्रतिवक्तव्यः। अथ भेदाभेदवादो

### तत्त्वदीपनम्

निरसनमसङ्गतमेव इत्याशङ्क्यातिफल्गुत्वात्तदुपेक्षितमित्याह—**इदं तावदिति** ॥ कथं फल्गुत्वमिति चेत्? तत्र वक्तव्यम्—किं व्यवधानेन संवित्प्रयुक्तव्यवहारविषयत्वम्? उताव्यवधानेन? नाद्यः; व्यभिचारादित्याह—**न हीति** ॥ द्वितीयं प्रत्याह—**नचेति** ॥ द्रव्यार्थिना यदा तदादीयते, तदा द्रव्यज्ञानप्रयुक्तव्यवहारविषयत्वं गुणादेर्दृष्टम्, द्रव्यस्य च गुणज्ञानप्रयुक्तव्यवहारविषयत्वम्, नचेतरेतरज्ञानालम्बनत्वं द्रव्यादीनाम्; अप्रसिद्धेरित्यर्थः। न तृतीयः; प्रध्वस्तादेरविषयत्वप्रसङ्गात्। नापि चतुर्थः; भासमानत्वं भानकर्मत्वम्? उत तत्प्रयुक्तव्यवहारविषयत्वम्? नाद्यः; भविष्यदादेरविषयतापत्तेः। न द्वितीयः; नान्तरीयकतया व्यवहारविषयस्य कलधौतमलादेरपि कलधौतज्ञातविषयत्वापत्तेः। तस्मात् तदाकारार्पकस्य विषयत्वं वक्तव्यम्, तच्च नात्रेति शुक्तेरनालम्बनत्वमित्यभिप्रायेणोपसंहरति—**तस्मात्तदाकार इति** ॥ पक्षान्तरमनुवदति—**अस्तु तर्हीति** ॥ विकल्पासहत्वान्नायमपि पक्षः शोभन इत्याह—**तत्राहेति** ॥ पारमार्थिकत्वेऽपीदमालोचनीयम्—किं सामान्यविशेषादेरत्यन्तभेदः? उत भेदाभेदौ? नाद्य इत्याह—**न तावदिति** ॥ अत्यन्तभेदवादिनामिति हेतुगर्भविशेषणम्। अस्तु तर्हि अपरमार्थत्वमित्याशङ्क्याह—**ततश्चेति** ॥ संसर्गः शून्य एव प्रकाशेतेति सम्बन्धः ॥ शून्य एव चेति कथम्? अनिर्वचनीयस्यापि सम्भवादित्याशङ्क्याह—**अनिर्वचनीयेति** ॥ न च शून्यस्यापरोक्षप्रथोपपद्यत इत्यभिसन्धिः। न केवलम्—'इदं रजतमि'त्यादिप्रत्ययानामेवासत्संसर्गविषयत्वम्, किंतु 'खण्डो गौरि'त्यादीनां प्रत्ययानामपीत्याह—**एवमिति** ॥ नच—'खण्डो गौरि'त्यादिप्रत्ययानां न तादात्म्यमालम्बनम्, किं तु समवायः, स च सन्निति न विभ्रमत्वप्रसङ्ग इति—शङ्क्यम्; समवायस्येहप्रत्ययहेतुत्वात् तादात्म्यप्रत्ययासम्भवादित्यर्थः।

द्वितीयमनुवदति—**अथेति** ॥ बाधकप्रत्ययविरोधान्न तस्य सत्यत्वमित्याह—**तत्राहेति** ॥ न केवलं तादात्म्यस्याबाध्यत्वप्रसङ्गः, किं तु भ्रान्त्यादिव्यवस्था च न स्यादित्याह—**खण्डो गौरिति** ॥ भिन्नाभिन्नविषयत्वेन सर्वप्रत्यययाथार्थ्यादित्यर्थः। भ्रान्ति-बाधयोः प्रसिद्धत्वात्तन्निरसनमशक्यमित्याशङ्क्याह—**सर्वत्र वेति** ॥ नियामकाभावादित्यर्थः संसर्गस्याऽसत्त्वेऽप्यपरोक्षप्रथा सम्भवतीति द्वितीयपक्षमुपेक्ष्य पक्षान्तरमुत्थापयति—**अस्तु तर्हीति** ॥

### ऋजुविवरणम्

**कुतो वैपरीत्यमिति** ॥ रजतस्याकारव्यावर्तकत्वदर्शनात्पुरोवर्तिनि च प्रवृत्तिदर्शनादिति भावः। आकारव्यावर्तकत्वप्रवृत्तिविषयत्वयोर्दर्शनात्कथमननुरूपत्वम्? इत्याशङ्क्याभिप्रायमाह—**सर्वत्र यदाकारमिति** ॥ ननु व्याघ्रज्ञानाद्विरोधिदण्डबुद्धिर्भवति, तदनन्तरं दण्डे प्रवृत्तिः; अतः कथं संवित्प्रयुक्तव्यवहारभाक्त्वस्य विषयत्वेन व्यभिचारः? इत्याशङ्क्यान्यदुदाहरति—**नच द्रव्यगुणादीति** ॥ ज्ञाने स्वतः पारमार्थिकत्वादिविकल्पानुपपत्तेर्विषयाभिप्रायं कृत्वाऽऽह—**न तावदत्यन्तेति** ॥

### पञ्चपादिका

**आलम्बनं न स्यात्। अथ तथारूपावभासनं शुक्तेः पारमार्थिकं? उताहो न? यदि पारमार्थिकं "नेदं रजतं" इति बाधो न स्यात् "नेयं शुक्तिः" इति यथा। भवति च बाधः। तस्मात् नैष पक्षः प्रमाणवान्। अथ शुक्तेरेव दोषनिमित्तो रजतरूपः परिणामः उच्यते,**

**एतदप्यसारम्; न हि क्षीरपरिणामे दधनि 'नेदं दधि' इति बाधो दृष्टः; नापि क्षीरमिदमिति प्रतीतिः,**

### पञ्चपादिकाविवरणम्

संसर्गसत्यतां ब्रूयात् तत्राह—यदि पारमार्थिक इति॥ खण्डागौरित्यादिवत् सर्वस्य भेदाभेदात् न क्वचिदपिभ्रान्तिबाधौ। सर्वत्रवा तौ स्यातामित्यर्थः। अस्तु तर्हि अन्यथा परिणते वस्तुनिख्यातिः अन्यथाख्यातिरिति तत्राह—अथ शुक्तेरेवेति शुक्तेः परिणामनिराकरणग्रन्थः स्पष्टार्थः॥

"अथ पुनर्दुष्टकारणजन्यायाः प्रतीतेरि"त्यादिनाऽन्यथाख्यातावेव परिणामप्रकारभेदो निराक्रियते, ख्यात्यन्तरनिराकरणं वा; कथम्? **अत्राहात्मख्यातिवादी॥** बुद्धेरेव रजताकारो न बहिरिति, कुतः? संप्रयोगव्यतिरेकेणापरोक्षत्वाद् वुद्धिवत्, कथं विज्ञानस्य रजताकारः प्राप्तः? संस्कारसामर्थ्यादिति वदामः। **तथाहि**—यस्यां ज्ञानसन्ततौ यदा कदाचित्पूर्वं रजतज्ञानमुत्पन्नं तदेव संस्कार उच्यते। नच विज्ञानजन्योऽन्येषामिव स्थायी क्षणिको वाऽन्यः कश्चिदस्य संस्कारो विद्यते; विज्ञानमात्रवादात्। स चानेकज्ञानव्यवहितोऽपि कदाचित्सजातीयं रजतज्ञानान्तरमुत्पादयति, शालिबीजमिवानेकाङ्कुरादिकार्यव्यवधानेन पुनः सजातीयबीजान्तरनिमित्तमिति। **अथवा**—तज्जन्यज्ञानसन्तान एव संस्कारः, स च तथाविधज्ञानान्तरादित्यनादिवासनाप्रापितं रजतं बुद्ध्याकारो बहिर्वदवभासत इति॥

### तत्त्वदीपनम्

**न तावदित्यादेरित्थं** वा योजना—विषयबाधाबाधौ विना न स्वतस्तौ स्तो ज्ञान इति विकल्पानुपपत्तिरित्याशङ्क्य, तादात्म्यस्यापरमार्थत्वात्तद्व्यावृत्तबोधस्यापि तथात्वं, तद्वैपरीत्याद्वैपरीत्यमिति विकल्पोपपत्तिरित्यभिसंधाय टीकाकृतोपेक्षितम्। द्वितीयं पक्षं प्रतिक्षेप्तुमनुवदति—**न तावदिति॥** विषयसत्यत्वेन ज्ञानसत्यत्वमित्याद्यमनुवदति—**अथेति॥**

**(टीकायाम्) अथेत्यादेरयमर्थः**—सदा परिणामप्रसङ्गं व्यावर्तयति—दोषेति॥ परिणामित्वे बाध्यत्वं न स्यादित्याह—**एतदिति॥** दध्याकारपरिणामोदयानन्तरं तद्विरुद्धक्षीराकारानुपलम्भान्न दध्नो बाधः, इह तु रूप्यविरुद्धशुक्त्याकारोपलम्भाद् बाध इत्याशङ्क्य, परिणामपक्षे विरुद्धाकारोपलम्भोऽपि न स्यादित्याह—नापीति॥ अपरिणामित्वे हेत्वन्तरं समुच्चिनोति—**किंचेति॥** कुविन्दापायेऽपि पटस्थितिवत्, दोषनिमित्तत्वे तदभावेऽपि रूप्योपलम्भः स्यादित्यर्थः। निमित्तापाये नैमित्तिकापायस्यापि दृष्टत्वान्मैवमिति शङ्कते—**नन्विति॥** तत्राप्यवस्थान्तरोत्पत्त्या पूर्वावस्थाविनाशः, न निमित्तापायमात्रेणेति वक्ष्यति। अङ्गीकृत्य दूषणान्तरमाह—**न तथा सतीति॥** "अथ पुनरि"त्यादिना ज्ञानाद्रजतोत्पत्तिमाशङ्क्य निराचकार, तदनुपपन्नम्; अन्यथाख्यातिवादिना ज्ञानाद्रजतोत्पत्त्यनुपगमादित्याशङ्क्याह—**अथेति॥** रूप्याकारेण शुक्तेः परिणत्यसंभवेऽपि दुष्टकारणजरजतसंविदेव रजताऽऽकारेण परिणमत इत्यन्यथाख्यात्येकदेशिनो मन्वते, तन्मतनिरसनार्थोऽयमुपक्रम इत्यविरोधः॥

"अथ पुनरित्या"देस्तात्पर्यान्तरमाह—**ख्यात्यन्तरेति॥** अन्यथाख्यात्यतिरिक्तकेवलख्यातेर्याथार्थ्यान्न भ्रमत्वमिति चोदयति—कथमिति॥ बुद्धिस्थस्य रूप्यस्य वहिर्वत्प्रतिभासाद् भ्रान्तित्वं युक्तमित्याह—**अत्राहेति॥ आत्मख्यातिवादीति॥**

### ऋजुविवरणम्

भवतु शून्यस्य संसर्गस्य ख्यानम्, ततः किमित्याशङ्क्याह—**एवं** "खण्डो गौरित्यादीति"। सामानाधिकरण्यस्य तादात्म्यालम्बनान्तस्य चात्राभावादिति भावः। ननु तादात्म्यस्य प्रतिभासमानतया सत्त्वम्, न स्वरूपेण, अतः कथमबाधः? इत्याशङ्क्याभिप्रायमाह—"खण्डो गौरित्यादिवदिति। ननु "अन्यथाख्यातौ बहिष्ठस्यैवावभासः, नान्तरस्य, ज्ञानजन्यत्वे चान्तरता, अतो—नान्यथाख्यातिनिराकरणमित्याशङ्क्याह—**ख्यात्यन्तरनिराकरणं वेति॥ यद्वा**—अन्यथाख्यातौ स्वप्न आन्तरस्य ख्यानादात्मख्यातिपक्षस्य पृथङ्निराकरणाभावाद्विषयव्याप्तिन्यायेन तत्परत्वं दर्शयति—**ख्यात्यन्तरनिराकरणं वेति॥** कथं ख्यात्यन्तरनिराकरणम्। न हि ज्ञानादुत्पत्तिः ख्यात्यन्तर इत्याक्षिपति—**कथमिति॥** विज्ञानमात्रवादिनः कथं रजताकारत्वमिति पृच्छति—**कथमिति॥** कथं विज्ञानवादिनः संस्कार इत्याशङ्क्याह—**तथाहि**

## पञ्चपादिका

इह तु तदुभयं दृश्यते। किञ्च रजतरूपेण चेत्परिणता शुक्तिः, क्षीरमिव दधिरूपेण, तदा दोषापगमेऽपि तथैवावतिष्ठेत। ननु कमलमुकुलविकासपरिणामहेतोः सावित्रस्य तेजसः स्थितिहेतुत्वमपि दृष्टम्, तदपगमे पुनर्मुकुलीभावदर्शनात्, तथेहापि स्यात्, न; तथा सति तद्वदेव पूर्वावस्थापरिणामबुद्धिः स्यात्, न बाधप्रतीतिः स्यात्। अथ पुनः दुष्टकारणजन्यायाः प्रतीतेरेव रजतोत्पाद इति मन्येत, एतदपि न सम्यगिव; कथम्? यस्याः प्रतीतेस्तदुत्पादस्तस्यास्तावन्न तदालम्बनम्; पूर्वोत्तरभावेन भिन्नकालत्वात्, न प्रतीत्यन्तरस्य; पुरुषान्तरप्रतीतेरपि तत्प्रसङ्गात्। ननु किमिति पुरुषान्तरप्रतीतेरपि तत्प्रसङ्गः?

## पञ्चपादिकाविवरणम्

स वक्तव्यः—किं तद्रजतं जायते? न बेति? न चेत्, जायमानस्वरूपं न स्यादाकाशवत्। जायते चेत् न; अर्थादर्थान्तराभावात्, अथ ज्ञानादेव दुष्टकारणजन्याद्रजतोत्पाद इति, तदाह—**अथ पुनर्दुष्टकारणजन्यायाः प्रतीतेरेव रजतोत्पाद इतीति**॥ जनकप्रतीतेः रजतात्पूर्वकालत्वादतद्विषयत्वात्प्रतीत्यन्तरस्यादुष्टकारणस्य तद्विषयत्वे सर्वप्रतीतिविषयत्वप्रसङ्गात्, दुष्टकारणप्रतीतेश्च रजतजन्यतया तदालम्बनत्वे रजतस्यार्थक्रियावत्तया सत्त्वप्रसङ्गात्, अतज्जन्यत्वे तद्विषयत्वाभावादप्रतीत-

## तत्त्वदीपनम्

आत्मशब्देन बुद्धिरभिधीयते, तद्रूपस्य रूप्यस्येदन्तया ख्यातिरिति यो ब्रूते, स तथोक्तः। एवकारस्यायोगव्यवच्छेदकत्वशङ्कां निरस्यति—**न बहिरिति**॥ बाधविरोधादित्यर्थः। प्रमाणाभावान्न रूप्यस्य बुद्ध्याकारतेति शङ्कते—**कुत इति**॥ मानाभावोऽसिद्ध इत्याह—**संप्रयोगेति**॥ विमतम्, धीरूपम्, संप्रयोगजज्ञानाविषयत्वे सत्यपरोक्षव्यवहारविषयत्वात्; संविद्वदित्यनुमानम्। नित्यानुमेयव्यावृत्त्यर्थम्—**अपरोक्षत्वादिति**॥ घटादिव्युदासार्थम्—**संप्रयोगेति**॥ विपक्षे बाधकतर्केणपराहतिं शङ्कते—**कथमिति**॥

ज्ञानस्य रजताकारत्वं स्वाभाविकम्? उतान्यनिमित्तम्? नाद्यः; विज्ञानमात्रवादित्वात्, अत एव न द्वितीयोऽपीति किंशब्दार्थः। अन्यनिमित्तो रूप्याकार इति समाधत्ते—**संस्कारेति**॥ विज्ञानातिरिक्तसंस्कारस्यानङ्गीकारात् कथं तत्परिप्रापितत्वं रजताकारस्येत्याशङ्क्याह—**तथेति**॥ ज्ञानजन्यसंस्कारस्य कथं ज्ञानत्वमित्याशङ्क्याह—**नच विज्ञानेति**॥ ज्ञानातिरिक्तः संस्कारः किं वेद्यः? उत न? **नाद्यः**; तयोः सम्बन्धानिरूपणात्, **न द्वितीयः**; व्यवहारगोचरत्वानुपपत्तेः, ततश्च ज्ञानमात्रत्वं संस्कारस्येत्यर्थः। तस्य विजातीयानेकक्षणव्यवहितस्य कथं कारणत्वमित्याशङ्क्याह—**स चेति**॥ शालिबीजस्याङ्कुरपत्रकाण्डादिव्यवधानेऽपि सजातीयबीजजनकत्ववद् व्यवहितस्यापि ज्ञानस्य जनकत्वं युक्तमित्यर्थः। तत्रापि न बीजस्य बीजान्तरजनकत्वम्, किं तु बीजारम्भका येऽवयवा अङ्कुरादिष्वनुगताः, त एव बीजान्तरमारभन्त इति न व्यवहितस्य कारणत्वमित्याशङ्क्याह—**अथवेति**॥ रजतबोधस्तच्छब्दार्थः। प्राक्तनज्ञानस्यापि कथं रजताकारत्वम्? तत्प्रापकाभावादित्याशङ्क्याह—**स चेति**॥ तच्छब्देन पूर्वज्ञानगतरजताकारः परामृश्यते। धीरूपत्वेन परमार्थत्वाद् भ्रान्तिबाधासम्भव इत्याशङ्क्यान्यथा प्रतीतेस्तत्सम्भव इत्याह—**बहिर्वदिति**॥

एवमात्मख्यातिं प्रदर्श्य तद्दूषणार्थमुपक्रमते—**स वक्तव्य इति**॥ यद्रूप्यं बहिर्भाति, तत् संप्रतिपन्नरूप्यवद् उत्पद्यते? उत विलक्षणत्वाद् नेति विकल्पार्थः। अनुत्पत्तिपक्षं निरस्यति—**न चेदिति**॥ नित्यत्वानित्यत्वलक्षणविरुद्धधर्माधिकरणत्वान्न

## ऋजुविवरणम्

**यस्यामिति**॥ कथं व्यवहितस्य तादृक्कार्यकरत्वमिति? तदाह—**स चानेकज्ञानेति**। तत्राव्यवहितस्याङ्कुरादेरेव कारणत्वम्, न व्यवहितस्य बीजादेरित्याशङ्क्य पक्षान्तरमाह—**अथवा तज्जन्यज्ञानेति**॥ दुष्टकारणजन्यज्ञानस्य रजतोत्पादनेनोपक्षीणत्वाद्रजताप्रतीतिरित्युक्तम्, तदनुपपन्नम्; पूर्वोत्पन्नविषयत्वस्य वक्तुं शक्यत्वाद् नाप्रतीतिः **यद्वा**—यदाकारत्वेनोत्पत्तिः; तदवभास्यत्वसम्भवः। "यस्याः प्रतीतेरि"त्यनेन भिन्नकालत्वेन तद्विषयत्वं निरस्तम्, तदयुक्तम्; भिन्नकालस्यालम्बनत्वविरोधित्वाभावात्॥ "पूर्वोत्तरभावेने"ति साध्याविशिष्टश्च हेतुः। "तदुत्पाद"इत्यनेन तस्माद्रजतादुत्पाद इति प्रतिभाति,

## पञ्चपादिका

दुष्टसामग्रीजन्मनो हि प्रतीतेस्तदालम्बनम्, मैवम्; प्रतीत्यन्तरस्यापि तद्विधस्य रजतान्तरोत्पादनेनैवोपयुक्तत्वात् प्रथम-प्रत्ययवत्। अतोऽनुत्पन्नसममेव स्यात्। तदेवं पारिशेष्यात्स्मृतिप्रमोष एवावतिष्ठेत॥

ननु स्मृतेः प्रमोषो न सम्भवतीत्युक्तम् तथाच तन्त्रान्तरीया आहुः—"अनुभूतविषयासम्प्रमोषः स्मृतिरि"ति। का तर्हि गतिः शुक्तिसम्प्रयोगे रजतावभासस्य? उच्यते—नेन्द्रियजज्ञानात्संस्कारजं स्मरणं पृथगेव स्मरणाभिमानशून्यं समुत्पन्नम्, किन्तु एकमेव संस्कारसहितादिन्द्रियात्। कथमेतत्? उच्यते; कारणदोषः कार्यविशेषे तस्य शक्तिं निरुन्धन्नेव

## पञ्चपादिकाविवरणम्

मेव रजतं स्यादिति भावः। अन्यथाख्यातिं निराकृत्याख्यातिवादी स्वपक्षमुपसंहरति—**तदेवं पारिशेष्यादिति**॥ अख्याति-दूषणमप्युक्तमनुस्मारयति—**ननु स्मृतेरिति**॥

ननु—न स्मृतिर्नापि ग्रहणं चेत्, अलौकिकमिदं ज्ञानं कथमिति चोदयति—का तर्हि गतिरिति। किं सामग्र्यम् पृच्छसि? किं वा ज्ञानं अथ विषयम्; यदिसामग्री तत्राह-**नेन्द्रियजज्ञानादित्यादिना**॥ ननु इन्द्रियसंस्कारौ चेत्सामग्री, सम्यग्ज्ञानमेवेदं स्यात्,

## तत्त्वदीपनम्

तयोरभेद इत्यर्थः। आद्यमनुवदति—**जायते चेदिति**॥ तत्र वक्तव्यम्—किं तत् स्वतो जायते? उतान्यस्मात्? नाद्यः; एकस्मिन् जन्य-जनकतानुपपत्तेः। द्वितीयेऽपि किमर्थात्? उत ज्ञानात्? नाद्य इत्याह—**न अर्थादिति**॥ ज्ञानव्यतिरिक्तस्यार्थ-स्याभावादित्यर्थः। द्वितीयमनुवदति—**अथेति**॥ ज्ञानमात्रस्य रजतजनकत्वं निरस्यति—**दुष्टेति**॥ **एतदपीत्यादिटीकाया अयमर्थः**—ज्ञानादर्थोत्पत्तेः क्वचिदप्यदर्शनान्नैतद्युक्तमिति दूषयति—**एतदपीति**॥ ज्ञानमात्रस्य जनकत्वाभावेऽपि दुष्टकारण-जन्यज्ञानस्यार्थोत्पादकत्वं युक्तमित्याह—**कथमिति**॥ ज्ञानादर्थसंभवेऽपि तत्प्रतीतिः कथमिति विवेचनीयम्, यथा—प्रतीत्या स्वयमजनितया किं विषयीक्रियते? उताऽन्यथा? इति विकल्प्य प्रथमं प्रत्याह—**यस्या इति**॥ भिन्नकालत्वेन विषय-विषयि-भावनिरसनमनुपपन्नम्; भविष्यदादेरपि ज्ञानेन विषयीकरणादित्याशङ्क्याह—**जनकेति**॥ जनकज्ञानसमये रजताभावात् तत्समये च ज्ञानाभावात्तत्रापरोक्षप्रथा न स्यात्, इतरस्यार्थस्य ज्ञानसमसमयत्वाभावेऽपि तद्भास्यत्वं घटते; अनुमानज्ञानस्या-वर्तमानबोधनसमर्थत्वादित्यर्थः। द्वितीयेऽपि किमदुष्टकरणजन्यया प्रतीत्या विषयीक्रियते? उत दुष्टकरणजन्यया? इति विकल्प्य प्रथमं प्रत्याह—**यस्या इति**॥ भिन्नकालत्वेन विषय-विषयिभावनिरसनमनुपपन्नम्; भविष्यदादेरपि ज्ञानेन विषयी-करणादित्याशङ्क्याह—**जनकेति**॥ जनकज्ञानसमये रजताभावात् तत्समये च ज्ञानाभावात्तत्रापरोक्षप्रथा न स्यात्, इतरस्यार्थस्य ज्ञानसमसमयत्वाभावेऽपि तद्भास्यत्वं घटते; अनुमानज्ञानस्यावर्तमानबोधनसमर्थत्वादित्यर्थः। द्वितीयेऽपि किमदुष्टकरणजन्यया प्रतीत्या विषयीक्रियते? उत दुष्टकरणजन्यया? इति विकल्प्याऽऽद्यं दूषयति—**प्रतीत्यन्तरस्येति**॥ द्वितीयेऽपीद विवेचनीयम्—किं तां प्रति रजतस्य जनकत्वम्? उत नेति? तत्राऽऽद्यं प्रत्याह—**दुष्टेति**॥ यदर्थक्रियाकारि तत्सदित्यभ्युपगमाद् रजतस्यापि

## ऋजुविवरणम्

तत्र तज्जन्यस्य तद्विषयत्वनिषेधे बाधितविषयमनुमानम्; भिन्नकालत्वेऽपि ग्राह्यग्राहकभावसम्भवात्। तदुक्तम्—"**भिन्नकालं कथं ग्राह्यमिति चेद् ग्राह्यतां विदुः। हेतुत्वमेव च व्यक्तेः ज्ञानाकारार्पणक्षमम्**॥" इति। अतो रजतजन्यज्ञानस्य भिन्नकालस्यापि तद्विषयत्वान्नाप्रतीतिः। "न प्रतीत्यन्तरस्ये"त्यनेन सर्वप्रतीतिविषयत्वापादनं कृतम्, तन्न युक्तम्; व्यभिचारात्, तथा—"अनुत्पन्नसममेवे"त्युक्तम्, तदप्यनुपपन्नम्; अप्रतीतिमुपपाद्यानुक्तानुत्पत्त्युपसंहारायोगात्, इत्याशङ्क्या-भिप्रायमाह—**जनकप्रतीतेरिति**॥ स्मृतिप्रमोषस्यापि निराकृतत्वात् स्मृतिप्रमोष एवावशिष्यत इत्युपसंहारो न युक्तः; सिद्धान्तवादिनाऽनङ्गीकृतत्वाच्चेत्याशङ्क्याभिप्रायमाह—अन्यथाख्यातिमिति॥ **अख्यातिदूषणमपीति**॥ ख्यात्यन्तरस्यापि

## पञ्चपादिका

**संस्कारविशेषमप्युद्बोधयति; कार्यगम्यत्वात्कारणदोषशक्तेः, अतः संस्कारदुष्टकारणसंवलितैका सामग्री। सा चैकमेव ज्ञानमेकफलं जनयति। तस्य च दोषोत्थापितसंस्कारविशेषसहितसामग्रीसमुत्पन्नज्ञानस्योचितमेव शुक्तिगतमिथ्यारजतमालम्बनमवभासते। तेन मिथ्यालम्बनं ज्ञानं मिथ्याज्ञानम्, न स्वतो ज्ञानस्य मिथ्यात्वमस्ति, बाधाभावात्। भिन्न-**

## पञ्चपादिकाविवरणम्

स्मृति-ग्रहणवदिति चोदयति—**कथमेतदिति** ॥ दोषसहकृतत्वात् तृतीयमिदं सामग्र्यमित्याह—**उच्यते कारणदोष इति** ॥ ननु—दोषः प्राप्तकार्यस्य प्रतिबन्धकः, नाधिक्ये हेतुरिति, तत्राह—**कार्यगम्यत्वादिति** ॥ नचानादेः कार्यानुदयस्य हेतुर्दोषः; कृत्याभावात्, किन्तु व्याध्यादिवद्विपर्ययकार्यहेतुर्दोष इति। ननु—दोषः संस्कारोद्बोधकृच्चेत्, न सामग्र्यामन्तर्भवतीति न तृतीयमिदं सामग्र्यमिति, तत्राह—**अतः संस्कारदुष्टकारणसंवलितेति** ॥ अथ ज्ञानस्यैक्यं चोद्यते, तत्राह—**सा चैकमेव ज्ञानमिति** ॥

## तत्त्वदीपनम्

जनकत्वे सत्त्वं स्यादित्यर्थः। द्वितीयं दूषयति—**अतज्जन्यत्व इति** ॥ जन्य-जनकत्वाभावेऽपि संबन्धान्तरात्तत्प्रतीतिमाशङ्क्याह **एवेति** ॥ संबन्धान्तरानिरूपणान्मैवमित्यर्थः ॥

"स्मृतिप्रमोष एवे"त्युपसंहारोऽनुपपन्नः; स्मृति-तत्प्रमोषयोर्मायावादिनाऽनभ्युपगमादित्याशङ्क्याह—**अन्यथेति** ॥ पुनरुक्तिं परिहरति—**अख्यातीति** ॥ प्रत्ययान्तरसमानयोगक्षेमत्वात् प्रश्नानवसर इत्याशङ्क्य तद्वैलक्षण्यमाह—**नन्विति** ॥ किं करणव्युत्पत्त्या सामग्री पृच्छ्यते? उत भावव्युत्पत्त्या ज्ञानम्? आहो कर्मव्युत्पत्त्या विषय? इति विकल्पार्थः। **उच्यत इत्यादेरयमर्थः**—गत्यन्तरानिरूपणात्स्मृतित्वं सिषाधयिषितम्? उत प्रश्नमात्रम्? नाद्य इत्याह—**नेन्द्रियेति** ॥ द्वितीयमुत्थापयति—**किं त्विति** ॥ प्रश्नस्य किं सामग्री विषयः? उत ज्ञानम्? अथवा विषयः? नाद्य इत्याह—**एकमिति** ॥ सामग्रीं दर्शयितुमेकमिति विशेषणम्। यथार्थज्ञानसामग्रीप्रसूतत्वे भ्रान्तित्वं हीयेतेति शङ्कते—**नन्विन्द्रियेति** ॥ विमतम्, यथार्थम्, सम्यग्ज्ञानसामग्रीप्रसूतत्वात्; ग्रहणवदित्युक्तेऽसिद्धो हेतुरित्याह—**दोषेति** ॥ लोचनस्य पुरोवर्तिसंप्रयोगे शुक्त्यग्राहित्वं कथमिति शङ्कां निराकर्तुं कार्यविशेष इत्युक्तम्। बहुविषयसंस्कारसंभवेऽपि रूप्यसंस्कारस्यैव कथं कार्यकरत्वमिति शङ्कायां तदुद्बोधकसंभवादित्याह—**संस्कारविशेषमिति** ॥ दोषस्य ज्ञानसामग्र्यन्तर्भावमाक्षिपति—**नन्विति** ॥ प्रतिबन्धकत्वं विपरीतकार्यजनकत्वं च किं न स्यादित्याशङ्क्याह—**नाधिक्य इति** ॥ तैलकलुपितशालिबीजस्य शाल्यङ्कुराजनकत्वमेव दृष्टम्, न यवाङ्कुरजनकत्वमित्यर्थः। विपरीतकार्यस्य दर्शनाद्दोषस्य तद्धेतुत्वमपि कल्प्यत इत्यत आह—**तत्राहेति** ॥

दोषस्य विपरीतकार्यकारिताया क्वचिदप्यनुपलम्भादग्रहण उपयोगः, कार्यदर्शनं त्वन्यथाऽपि घटत इत्याशङ्क्याह—**नचानादेरिति** ॥ अग्रहणं ग्रहणप्रागभावः, तस्य चानादित्वान्न दोषसाध्यतेत्यर्थः। किं तर्हि दोषकृत्यमिति पृच्छति—**किंत्विति** ॥ अन्यथाबोध इत्याह—**विपर्ययेति** ॥ यत्तूक्तं दोषस्य न विपरीतकार्यकरत्वमिति, तत्र किं दोषस्य विपरीतकार्यकरत्वाभावः काचित्कः? उत सार्वत्रिकः? इति विकल्प्याऽऽद्यमङ्गीकृत्य द्वितीयं दूषयति—**व्याध्यादिवदिति** ॥ भस्मकलक्षणव्याधेर्बह्वन्नदाहकत्वं दावाग्न्युपहतवेत्रबीजस्य कदल्यङ्कुरजनकत्वं चोपलब्धम्, ततश्च काचादेरपि विपर्ययहेतुत्वं युज्यत इत्यर्थः ॥

प्रकारान्तरेण दोषस्य सामग्र्यन्तर्भावमाक्षिपति—ननु दोष इति ॥ दोषान्वय-व्यतिरेकयोः संस्कारोद्बोधविषयतयाऽन्यथासिद्धेर्न दोषस्य विपर्ययहेतुत्वमित्यर्थः। उद्बोधकत्वं बोधजनकत्वं च किं न स्यात्? इत्याशङ्क्याह—न तृतीय-

## ऋजुविवरणम्

विद्यमानत्वान्न पारिशेष्यसम्भव इति भावः। "का तर्हि"ति न युक्तम्; प्रसिद्धज्ञानप्रकारोपपत्तेः, इत्याशङ्क्यावतारयति—**ननु न स्मृतिरिति** ॥ "नेन्द्रियजज्ञानादि"त्यनेन संस्कारसहितेन्द्रियेणैकमेव ज्ञानमुत्पद्यत इत्युक्तम्। "कथमेतदि"त्यनेन तदेवैकत्वमाक्षिप्तमिति प्रतिभाति; सन्निहितत्वात्, तथा सत्युत्तरग्रन्थासामञ्जस्यम्; उत्तरग्रन्थे हि दोषजन्यत्वमुक्तम्, नतु तदेकत्वम्। प्रकृतासंगतं च; सामाग्र्यनिरूपणात्, पुनरुक्तं च "सा चैकमि"त्यनेन; तेनार्थान्तरमाह—**नन्विन्द्रियसंस्काराविति** ॥ उच्यते कारणदोष इति ॥ अनेन शक्तिनिरोधद्वारा संस्कारोद्बोधकत्वं दोषस्योक्तम्, तदसंगतम्; पूर्वचोद्यस्यापरिहृतत्वात्, इत्याशङ्क्याभिप्रायमाह—**दोषसहकृतत्वादिति** ॥ भवतु कार्यगम्यत्वं दोषशक्तेः; तथाऽपि कथमुत्पादकत्वम्?

## पञ्चपादिका

**जातीयज्ञानहेतुसामग्र्योः कथमेकज्ञानोत्पादनमिति चेत्, नैष दोषः; दृश्यते हि लिङ्गज्ञान-संस्कारयोः-सम्भूय लिङ्गिज्ञानोत्पादनम्, प्रत्यभिज्ञानोत्पादनञ्चाक्ष-संस्कारयोः ॥ उभयत्रापि स्मृतिगर्भमेकमेव प्रमाणज्ञानम्; संस्कारानुद्बोधे तदभावात्। तस्माल्लिङ्गदर्शनमेव सम्बन्धज्ञानसंस्कारमुद्बोध्य तत्सहितं लिङ्गिज्ञानं जनयतीति वक्तव्यम्। अयमेव**

## पञ्चपादिकाविवरणम्

ननु—इदमा संप्रयोगादन्तःकरणपरिणामज्ञानमेकमुत्पद्यते, न तद् रजतं तत्संसर्गं वा विषयीकर्तुमीष्टे; मिथ्यावस्तुनि देशान्तरादिगते वा संप्रयोगानुपपत्तेः, चक्षुरुन्मीलनान्वय-व्यतिरेकयोरधिष्ठानज्ञानोपक्षयादन्यथासिद्धेः, नापि संस्काराद्रजतांशावगमः; स्मृत्यनभ्युपगमात्, नापि दोषः स्वयमेव कस्यचिद् ज्ञानस्य हेतुर्दृष्टः; ज्ञानकारणानामेव कार्यविशेषनिमित्तत्वात्। अतो न रजत-तत्सम्भिन्नशुक्तिविषयमेकं ज्ञानं समस्ति, किन्त्वविद्यैव बाह्यदोषनिमित्तकारणापेक्षया रजताकारेण साक्षिचैतन्यस्य

## तत्त्वदीपनम्

मिति ॥ उभयहेतुत्वे प्रमाणाभावादित्यर्थः। विपर्ययानुपपत्त्या दोषस्य तद्धेतुत्वम्। नच संस्कारोद्बोधकत्वेनान्यथासिद्धिः; संस्कारोद्बोधस्य दोषावान्तरव्यापारतया तत्करणत्वाविघातित्वात्, इत्याशयेनाह—**तत्राहेति** ॥ संवलितासंवलनलक्षण-सामग्रीप्रश्नोत्तरमभिधाय ज्ञानप्रश्नोत्तरं दर्शयितुं प्रश्नमाह—**अथेति** ॥ किमेतज्ज्ञानमेकम्? उत नानेति प्रश्नार्थः। ज्ञानैक्याभिधानं सिद्धान्तविरुद्धमिति चोदयति—**नन्विति** ॥ विरोधं दर्शयितुं सिद्धान्तमाह—**इदमेति** ॥

संप्रयोगसमुत्थज्ञानस्य रजत-तत्संसर्गविषयत्वाद् ज्ञानैक्यमाशङ्क्य, किं तद् इदंमात्रसंप्रयोगजम्? उत रजतादिसंप्रयोगजमपीति विकल्प्याऽऽद्यं प्रत्याह—**न तद्रजतमिति** ॥ सकलविषयत्वप्रसङ्गादित्यर्थः। द्वितीयं प्रत्याह—**मिथ्येति** ॥ मिथ्यावस्तुनः प्रतिभासमात्रशरीरत्वात् प्रतिभासात् प्रागिन्द्रियसंयोगायोगात्, देशान्तरस्थस्य तु व्यवहितत्वादित्यर्थः। इन्द्रियान्वय-व्यतिरेकाभ्यामैन्द्रियकत्वं रजतादेरनुभूयत इत्याशङ्क्याह—**चक्षुरुन्मीलनेति** ॥ रूप्यज्ञानहेत्वधिष्ठानज्ञानविषयत्वेनान्यथासिद्धिरित्यर्थः। रजतज्ञानमनैन्द्रियकं चेत्, कीदृशं तर्हीदमित्याशङ्क्याविद्यापरिणामत्वं दर्शयितुं कारणान्तरं प्रतिषेधति—**नापीति** ॥ स्मृत्यनभ्युपगमादिति ॥ स्मृतित्वानभ्युपगमादित्यर्थः। दोषस्य हेतुत्वमाशङ्क्य निरस्यति—**नापीति** ॥ ज्ञानमात्रजनकत्वेन संमतेन्द्रियादेर्विशेषज्ञानजनकत्वदर्शनाद् दोषस्य चातथात्वान्न तज्जनकत्वमित्यर्थः ॥

चक्षुर्दोषयोः प्रत्येकं भ्रान्त्यजनकत्वेऽपि मिलितयोर्जनकत्वं किं न स्यात्? इत्यत आह—**अत इति** ॥ दुष्टं चक्षुर्देशान्तरवर्त्यपि रूप्यं गृह्णीयाच्चेत्, तर्ह्यन्तरालवर्तिनां सर्वेषां ग्रहणप्रसङ्ग इत्यर्थः। भ्रान्त्यभावाद् 'इदं रजतमि'ति व्यवहार एव विलयमियादिति शङ्कते—**किन्त्विति** ॥ रूप्य-तज्ज्ञानयोरविद्याधीनोद्भवत्वाद् व्यवहारसंभव इत्याह—**अविद्येति** ॥ सदा परिणामप्रसङ्गं व्यावर्तयति—**बाह्येति** ॥ दुष्टलोचनपुरोवर्तिद्रव्यसंयोगादिदंमात्रविषयं ज्ञानमुत्पद्यते, तदा चेदमाकारावच्छिन्नचैतन्याविद्याक्षोभः संजायते, सा च क्षुब्धा सदृशसंदर्शनरागसमुद्बुद्धसंस्कारसधीचीना रूप्याकारेण परिणमत इत्यर्थः। रूप्यज्ञानाभासमन्तरेण रूप्यव्यवहारासंभवाद् दोषोद्बुद्धरजतज्ञानसंस्कारसहायेदमाकारवृत्तिप्रतिबिम्बितचैतन्यस्थाऽविद्या ज्ञानाभासाकारेण परिणमत इत्याह—साक्षीति ॥ चैतन्यस्य रजतावच्छेदो रजतसंबन्धस्तद्धेतुर्वा ज्ञानाभासः, तदाकारेणेत्यर्थः। तस्य चाचेतनत्वेन स्वविषयव्यवहारजनकत्वानुपपत्तेः सविलासाविद्यासाक्षिविषयतां भजत इत्याह—स्वकार्येणेति ॥ ज्ञानभेदात् तदवच्छिन्नं फलमपि भिद्यत इति कथमेकफलत्वम्? तत्राह—विषयेति ॥ घटस्फुरणं पटस्फुरणमिति विषयव्या-

## ऋजुविवरणम्

इतरेतराश्रयप्रसङ्गात्—सिद्धे हि भ्रान्तिज्ञाने दोषस्य जनकत्वनिश्चयः; जनकत्वे च निश्चिते भ्रान्तिज्ञानसिद्धिः—इत्याशङ्क्याभिप्रायमाह—**नचानादेः कार्यानुदयस्येति** ॥ कार्यमप्यनेन व्याख्यातम्। संस्कारोद्बोधेन चरितार्थस्य ज्ञानसाधकत्वकल्पकाभावादिति चोदयति—ननु दोष इति ॥ भ्रान्तिरूपकार्यान्यथानुपपत्त्या ज्ञानहेतुक्त्वमपीति परिहाराभिप्रायः। अन्वय-व्यतिरेकाभ्यामैन्द्रियकत्वं निश्चीयत इत्याशङ्क्याह—चक्षुरुन्मीलनेति ॥ तर्हि संस्कार एव कारणमित्याशङ्क्याह—**नापि संस्कारादिति** ॥ तर्हि दोषादेव प्रतीतिरित्याशङ्क्याह—**नापि दोष इति** ॥ **"किन्त्वविद्यैवे"ति** ॥

## पञ्चपादिकाविवरणम्

रजतावच्छेदज्ञानाभासाकारेण च परिणममाना स्वकार्येण सह साक्षिचैतन्यस्य विषयभावं प्रतिपद्यत इति ते मतम्, तत्र कथमेकज्ञानत्वमिति ? तत्राह—**एकफलमिति** ॥ विषयावच्छिन्नं हि फलमवभासते, न ज्ञानावच्छिन्नम्। विषयश्च सत्यमिथ्यावस्तुनोरन्योन्यात्मतयैकतामापन्नः, तेनैकविषयावच्छिन्नफलैकत्वोपाधौ सत्यमिथ्याज्ञानद्वयमप्येकमित्युपचर्यत इति भावः। अथ विषयः कथमिति ? तदाह—**तस्य चेति** ॥ कुतो रजतस्य मिथ्यात्वम् ? इत्यत आह—**तेन मिथ्यालम्बनमिति** ॥ भावाभावभावाभावज्ञानयोर्मिथ्यात्वप्रसिद्ध्यभावादिदं ज्ञानसमवायिमिथ्यात्वमनिर्वचनीयार्थतामेव गमयतीत्यर्थः ॥

## तत्त्वदीपनम्

वृत्ततया स्फुरणमुपलभ्यते, न ज्ञानविशिष्टतयेत्यर्थः। विषयस्यापि सत्यानृतरूपेण भिन्नत्वात् कथं तदवच्छिन्नफलैक्यमित्याशङ्क्याह—विषयश्चेति ॥ ततश्चौपचारिकमेकत्वादीत्याह—तेनेति ॥ किं विषयः पृच्छ्यत इति तृतीयं कल्पमनुवदति—विषय इति ॥

मिथ्यारजतमालम्बनमित्याह—**तदाहेति** ॥ मिथ्यारजतं कथमालम्बनम् ? तन्मिथ्यात्वासिद्धेरिति शङ्कते—**कुत इति** ॥ मिथ्यालम्बनमित्यत्र मिथ्यावस्तुविषयंज्ञानं मिथ्याज्ञानमित्युक्तमयुक्तम्, मिथ्यात्वासिद्धेरपरिहृतत्वादित्याशङ्क्याह—**भावेति** ॥ न सज्ज्ञानं भ्रमः, आत्मज्ञाने व्यभिचारात्; नाप्यसज्ज्ञानम्, तुच्छज्ञाने व्यभिचारात्; तेन रजतज्ञानमिथ्यात्वप्रसिद्ध्यनुपपत्त्या रजतस्य मिथ्यात्वमुपेयमित्यर्थः। **रजतज्ञानस्येति पाठस्यायमर्थः**—नेदं ज्ञानमिति बाधानुपपत्तेः कथं दुष्टकारणजन्यत्वं तस्येत्याशयवान् शङ्कते—कुत इति ॥ अर्थमिथ्यात्वे तदालम्बनबोधस्य बाध्यत्वसिद्धिः, तदेव कुतः ? इत्यत आह—भावेति ॥ टीकायां ज्ञानैक्यं तात्पर्यग्रहसंप्रयुक्तमिति नोपपद्यत इत्युक्तम्, तदिष्टमेव; अन्तःकरणाऽविद्यापरिणामलक्षणज्ञानद्वयाङ्गीकारादित्याशङ्क्य तात्पर्यमाह—**संप्रयुक्त इति** ॥ धूमसंयोगस्य वह्निबोधनेन निरपेक्षत्वम्, तदर्थमाह—संप्रयुक्त इति ॥ संस्कारस्याप्यनुमित्यादिजनने सापेक्षत्वम्, तदर्थमाह—पूर्वेति ॥ फलितमाह—**ततश्चेति** ॥ ग्रहण-स्मरणरूपेण भिद्यत इत्यर्थः ॥

## ऋजुविवरणम्

अत्रेयं सम्प्रदायवित्प्रदर्शितदर्शनस्थितिः—प्रथमं दोषसहितेन्द्रियेणेदंमात्रविषयं ज्ञानमुत्पद्यते। तच्चान्तःकरण-वृत्तिविषयेष्वेकतया चैतन्यमभिव्यनक्ति। तत्र दुष्टकारणजन्यवृत्त्या चैतन्यस्थाऽविद्या संक्षुभिता रूप्यसंस्कारवशादिदमंशावच्छिन्नचैतन्यस्था रूप्याकारेण विवर्तते। रूप्यज्ञानसंस्कारवशाद् वृत्त्यवच्छिन्नचैतन्यस्था रूप्यज्ञानाभासाकारेण परिणमते। दुष्टकारणजनितवृत्त्युपरमे तदभिव्यक्तचैतन्योपरमाच्चैतन्याधिष्ठानं रजतं स्वोपादाने लीयते, तादृशज्ञानान्तरे पुनरुत्पद्यत इति। ननु आभासरजते मुख्यजात्यनङ्गीकाराद्रूप्यशब्दस्य पुनर्व्युत्पत्त्या भवितव्यम्, मैवम्। रूप्यविषयशब्दसंजल्पितज्ञानजन्यसंस्कारस्य कार्यद्वयम्—ज्ञानोत्पादकत्वं शब्दस्मारकत्वं च। तत्र ज्ञानोत्पादकांशस्य दोषस्पृष्टत्वात् सत्यरजतं विहाय रजताभास-तज्ज्ञानोत्पत्तौ हेतुर्भवति; शब्दस्मारकांशे तु दोषास्पृष्टत्वात्सत्यरूप्यवाचकशब्दं ज्ञानाभासविषये प्रयोजयतीति न व्युत्पत्त्यपेक्षा—**रजतावच्छेदेति** ॥ अयमर्थः—अवच्छेद एव ज्ञानाभासः, तदाकारेणेति, यद्वाऽच्छेदनिमित्तज्ञानाभासाकारेणेति। कथमेकफलत्वेन ज्ञानैकत्वम् ? ज्ञानभेदे तत्फलभेदादित्याशङ्क्याभिप्रायमाह—**विषयावच्छिन्नं हीति** ॥ ननु इदमो रजतस्य च विषयस्य भेदात्कथं विषयतोऽप्येकत्वमित्याशङ्क्याह—**विषयश्चेति** ॥ यद्यपि वृत्तिभेदः, विषयाकारोऽपि कथञ्चिद्भिद्यते; तथाऽपि पूर्वाभिव्यक्तस्यैवाभिव्यञ्जकान्तरनैरपेक्ष्येण विशिष्टविषयावच्छेदान्न फलभेदः; अभिव्यञ्जकभेदे हि फलभेदो भवेत्, मिथ्यारजत-तज्ज्ञानयोश्च नाभिव्यञ्जकत्वमिति भावः। मिथ्याऽऽलम्बनं विषयो यस्य तत्। मिथ्येति ज्ञानमिथ्यात्वमुक्तमिव प्रतिभाति; तथा सति व्यधिकरणत्वम्, अर्थमिथ्यात्वस्य पृष्टत्वात्। इतरेतराश्रयश्च—ज्ञानमिथ्यात्वेनार्थमिथ्यात्वम्, अर्थमिथ्यात्वेन ज्ञानमिथ्यात्वम्—इत्याशङ्क्य व्याचष्टे—**भावाभावेति** ॥ मिथ्यात्वस्यालम्बनमाश्रयो यत्तन्मिथ्येति विग्रहं दर्शितवान् "अनिर्वचनीयार्थतामि"त्यनेन। **अथवा**—ज्ञानमिथ्यात्वेऽपि कथमर्थमिथ्यात्वम् ? प्रमाणानु-

## पञ्चपादिकाविवरणम्

संप्रयुक्तेऽर्थे संप्रयोगो निरपेक्षो ज्ञानकारणम्, संस्कारश्च पूर्वानुभूतस्मृतौ निरपेक्षः; ततश्च निरपेक्षकारणद्वयजन्यत्वाद् ज्ञानद्वयमेव निरन्तरोत्पन्नमित्यख्यातिवादी चोदयति—**भिन्नजातीयज्ञानेति** ॥ ज्ञानभेदे हि निरन्तरोत्पत्तावपि न प्रवृत्तिकार्योदयः सम्भवति; तत्र यथा वर्णज्ञानेषु क्रमवर्तिषु ज्ञानकार्योदयान्यथानुपपत्त्या पूर्व-पूर्ववर्णसंस्कारसहितमन्त्यवर्णज्ञानमेव हेतुत्वेन कल्प्यते कारणयौगपद्याय, तथा प्रवृत्तिकार्यानुपपत्तिरेव ज्ञानैक्यं कल्पयति, किं कारणभेदेनेति परिहरति—**नैष दोष इति** ॥ ननु—कारणभेदात्कार्यभेदोऽनुमीयत इति, नेत्युदाहरणमाह—**दृश्यते हीति** ॥ ननु—तत्रापि कारणभेदाद्

## तत्त्वदीपनम

ज्ञानभेदे प्रवृत्त्यनुपपत्तिशङ्कां निरस्यति—**निरन्तरेति** ॥ निरन्तरोत्पन्नज्ञानाभ्यां विशिष्टप्रवृत्तिसिद्धेः किं ज्ञानैक्यकल्पनया ? इत्याशङ्क्य विशिष्टप्रवृत्त्यनुपपत्त्या एकं ज्ञानमाश्रयणीयमित्याह—**ज्ञानभेद इति** ॥ संसृष्टव्यवहारस्य संसर्गज्ञानपुरःसरत्वदर्शनात् पूर्वज्ञानस्य चोत्तरज्ञानव्यवहितत्वात् प्रवृत्तिजनकत्वासंभवादेकं ज्ञानमास्थेयम् । यद्यपि रजतज्ञानस्य प्रवृत्ति प्रत्यव्यवहितत्वम्; सथापि न तस्य प्रवर्तकत्वम्; संसर्गज्ञानस्य प्रवर्तकत्वेनान्यत्र क्लृप्ततया प्रयोजकद्वैविध्यापातादित्यर्थः । निरन्तरोत्पत्तावपि कारणयौगपद्याभावे कार्याभाव इत्यत्र दृष्टान्तमाह—**तत्र यथेति** ॥ एकैकस्माद्वर्णाद् नार्थबोधो दृष्टः; नापि मिलितात्; तदसंभवात्, मिलितस्याप्यनुपलब्धस्य बोधकत्वे सदोपलम्भापातादुपलब्धानां बोधकत्वं वक्तव्यम्, तच तदुपपद्यते; क्रमेणोच्चार्यमाणानां क्रमेण प्रतीतेः, तस्मादेकैकवर्णानुभवसंस्कारसहितान्त्यवर्णोपलम्भस्य हेतुत्वम्; अन्यथा पदार्थबोधानुपपत्तेरित्यर्थः ॥

कारणभेदस्य कार्यभेदव्यापकत्वात्कथं ज्ञानैक्यम् ? इति चोदयति—**ननु कारणेति** ॥ भिन्नकार्यजनकयोरपि संस्कारसंप्रयोगयोर्दोषसंनिधानात् कार्यान्तरजनकत्वम्, स्वरूपेण वेत्राङ्कुरजनकस्यापि वेत्रबीजस्य सहकार्यनुरोधेन कदल्यङ्कुरजनकत्वदर्शनात् । नच—सापेक्षस्य दोषस्य निरपेक्षसंस्कार-संप्रयोगाभ्यां सहैककार्यकरत्वमयुक्तमित्यपि—वाच्यम्; व्याप्तिसंस्कारसापेक्षलिङ्गदर्शनस्य स्मृतौ निरपेक्षस्य संस्कारस्य चैकलिङ्गिबोधजनकत्वादर्शनादित्याशयवानाह—नेत्युदाहरणमिति ॥ संस्कारानपेक्षस्य लिङ्गज्ञानस्य लिङ्ग्यबोधकत्वेऽपि व्यवहृत्यादिजनकत्वं तावदस्ति, तथाच निरपेक्षतया विलक्षणक्रियाजनकयोरप्येकत्र समावेशो दृष्ट इति वार्थः । किंच संस्कार-संप्रयोगयोरन्योन्यनिरपेक्षतया कार्यजननसमर्थयोरपि प्रत्यभिज्ञानजनकत्वं दृष्टम्, तद्वत्तयोः संभूय भ्रमजनकत्वं किं न स्यात् ? इत्यभिसंधायोक्तम्—**प्रत्यभिज्ञानोत्पादनञ्चेति** ॥ तत्र दृष्टान्तासंप्रतिपत्तिं शङ्कते—ननु तत्रापीति ॥ अनुमिति-प्रत्यभिज्ञानयोरित्यर्थः ॥

किमनुमिति-प्रत्यभिज्ञाप्रमाणवादिन एतच्चोद्यम् ? उतेतरस्य ? नाद्य इत्याह—**नेत्याहेति** ॥ स्मृतिवदनयोरपि परोक्षविषयत्वात्स्मृतिगर्भत्वमुक्तम्, तच्च संस्कारहेतुत्वोपपादनार्थमिति द्रष्टव्यम् । लिङ्गदर्शनमात्रस्यानुमितिहेतुत्वेऽगृहीतव्याप्ते-

## ऋजुविवरणम

पत्यामात्, **यद्वा**—एवमपि कथं तदभिमतमिथ्यात्वम् ? इत्याशङ्क्यार्थापत्तिमुक्तां दर्शयति—**भावाभावेति** ॥ **यद्वा**—मिथ्याऽऽलम्बनं मिथ्याविषयमित्येतन्मिथ्याज्ञानमिति प्रसिद्ध्या सिद्ध्यतीत्युक्तम् । ननु ग्रहणाद्भिन्ना स्मृतिर्न सम्भवतीत्युक्तम्, कथं पुनः प्रत्यवस्थानम् ? इत्याशङ्क्याह—निरपेक्षकारणेति ॥ कथं प्रवृत्तिरित्याशङ्क्याह—**निरन्तरोत्पन्नमिति** ॥ ननु सर्वैरपि सम्भूय भ्रान्तिजनकत्वमङ्गीक्रियते, कथमाक्षेप इत्याशङ्क्याह—**अख्यातिवादीति** ॥ अत्र कार्यमेव निरपेक्षकारणप्राप्तं ज्ञानभेदं निराकर्तुं समर्थमिति वदितुं तस्यान्यथाद्धि दर्शयति—**ज्ञानभेदे हीति** ॥ ननु—कारणनैरन्तर्येऽपि कार्यान्यथानुपवत्त्या कारणयौगपद्याश्रयणं क्व दृष्टमित्याशङ्क्य, दृष्टान्तमाह—**तद्यथेति** ॥ अथवा—कारणभेदाद् ज्ञानभेदे कार्यान्यथानुपपत्त्या च ज्ञानैक्ये प्राप्ते कार्यं विहाय यत्र कारणशक्तिर्विज्ञायते, तत्र कारणानुरोधित्वात्कार्यस्य दौर्बल्यम्, अथवा—विरुद्धाव्यभिचारित्वेन सन्देह एव स्यादित्याशङ्क्य कार्यस्यैव प्राबल्यं दृष्टान्तेन साधयति—तद्यथा वर्णज्ञानेष्विति ॥ ननु लिङ्गदर्शनव्याप्तिस्मरणयोः कथमग्निज्ञानोत्पादकत्वमिति चोदिते, संस्कारानुद्बोधे स्मरणाभावादनुभवाभावाद्वेति

## पञ्चपादिका

च न्यायः प्रत्यभिज्ञानेऽपि। न पुनर्ज्ञानद्वये प्रमाणमस्ति। तथा भिन्नजातीयज्ञानहेतुभ्यो नीलादिभ्य एकं चित्रज्ञानं

## पञ्चपादिकाविवरणम्

ज्ञानभेद इति, नेत्याह—**उभयत्रापीति** ॥ ननु—लिङ्गदर्शनं व्याप्तिस्मृतिश्च लिङ्गिज्ञानकारणम्, न संस्कार इति, नेत्याह—**संस्कारानुद्बोध इति** ॥ ज्ञानद्वययौगपद्याभावादित्यर्थः। **तस्मादिति** उपसंहरति ॥ **ननु**—प्रत्यभिज्ञायां संप्रयोगः पूर्वानुभूतस्मृतिश्च कारणम्, ज्ञानद्वययौगपद्यप्रसङ्गाभावान्न संस्कार इति, तत्राह—**अयमेव न्याय इति** ॥ ज्ञानाद् ज्ञानान्तरोत्पत्तौ व्याप्त्याद्यभावात्संस्कार एव कारणमित्यर्थः। ननु—प्रमाणान्तरेष्वयं निरपेक्षकारणसमाहारः, नाभिज्ञाप्रत्यक्षे; अभिज्ञाप्रत्यक्षं च रजतज्ञानमिति, तत्राह—**तथा भिन्नजातीयज्ञानहेतुभ्य इति** ॥ ननु—यत्र संस्कारः प्रमाणकारणेन संबध्यते, तत्र स्मृतिगर्भप्रमाणज्ञानमेव दृष्टम्, न तथेदं रजतज्ञानमिति, तत्राह—**अत्र लैङ्गिकज्ञानेत्यादिना** ॥

## तत्त्वदीपनम्

रप्यनुमितिः स्यात्, नच तथा लक्ष्यते; तस्माद्व्याप्तिसंस्कारसहितलिङ्गदर्शने लिङ्गिज्ञानजनकत्वं वक्तव्यम्। तथा प्रत्यभिज्ञानमप्युभाभ्यां जायते; संस्कारमात्रस्य स्मृतिजनकत्वात्, सम्प्रयोगमात्रस्य चाभिज्ञानजनकत्वात्। नच—तत्र ज्ञानभेद इष्ट एवेत्यपि—शङ्क्यम्; किं तद्देश-कालसम्बन्धस्यैतद्देशादिसंपृक्तत्वं स्मृत्या गृह्यते? उत ग्रहणेन? नाद्यः; एतद्देशकालसंसर्गस्याननुभूतत्वेन स्मर्यमाणत्वासम्भवात्। न द्वितीयः; प्रत्यक्षस्य वर्तमानमात्रग्राहित्वेन पूर्वदेशादिसंसर्गविषयत्वासम्भवात्। तस्मात् पूर्वानुभवसंस्कार-सम्प्रयोगाभ्यामेकं ज्ञानं जायत इत्युररीकरणीयम्; नापि द्वितीयः कल्पः; अनुमानप्रामाण्यानङ्गीकृताविष्टसाधनतानुमानपुनःसरं भौजनादौ प्रवृत्त्यनुपपत्तेः। प्रत्यभिज्ञाया अप्रामाण्ये स्थायित्वासिद्धेः। नच—भावानां क्षणिकत्वात् स्थायित्वासिद्धिरिष्टेत्यपि—शङ्क्यम्; क्षणिकत्वस्योत्तरत्र निरसिष्यमाणत्वादिति। लिङ्गदर्शनसंस्कारयोर्लिङ्गिबोधजनकत्वमुक्तमाक्षिपति—**ननु लिङ्गेति** ॥ संस्कारस्याप्यन्वय-व्यतिरेकवत्त्ववृलिङ्गिबोधकत्वमेष्टव्यमित्याशङ्क्य, व्याप्तिस्मारकत्वेनान्यथासिद्धिमभिप्रेत्याह—**न संस्कार इति** ॥

उद्बुद्धसंस्काराभावे स्मृत्यनुदयात् उद्बुद्धसंस्कारस्तावदुपेयः, तावता च लिङ्गिबोधसम्भवात् किमन्तर्गडुना स्मरणेनेत्याह—**नेत्याहेति** ॥ उद्बुद्धसंस्काराभावे स्मृतेरभावादित्येतत्स्पष्टमिति मत्वाऽर्थान्तरमाह—**ज्ञानद्वयेति** ॥ लिङ्गदर्शनस्य संस्कारोद्बोधकतयाऽन्यथासिद्धत्वात्संस्कार एव लिङ्गिबोधकः, तत उपसंहरणमनुपपन्नमित्याशङ्क्य संस्कारस्यानुभूतमात्रविषयत्वेनानधिगतविषयत्वासम्भवात्संस्कारसहितलिङ्गदर्शनं बोधकमित्यभिप्रायेणाह—**तस्मादिति** ॥

अक्ष संस्कारयोः प्रत्यभिज्ञाजनकत्वमुक्तमाक्षिपति—**ननु प्रत्यभिज्ञायामिति** ॥ स्मृतेरनुमित्यहेतुत्ववत् प्रत्यभिज्ञाऽहेतुत्वमपीत्याशङ्क्य वैषम्यमाह—**ज्ञानद्वयेति** ॥ ज्ञानद्वययौगपद्यप्रसङ्गाभावात्स्मृतेः कारणत्वमुक्तम्, तत्र कथं न्याय-

## ऋजुविवरणम्

परिहारोऽनुपपन्नः; स्मरणहेतुत्वस्यानिराकृतत्वात्, संस्कारहेतुत्वस्य चानुक्तवादित्याशङ्क्य व्याचष्टे—**ज्ञानद्वयेति** ॥ "अयमेव च न्यायः" इति कथमतिदेशः कृतः? अर्थस्मरणयोर्जनकत्वे पूर्वोक्तज्ञानद्वययौगपद्यदूषणाभावात्, "ज्ञानद्वये प्रमाणं नास्ती"त्यप्ययुक्तम्; निरपेक्षकारणसमाहारानुपपत्तेरेव स्मरणरूपत्वात्कार्यकल्पकत्वादित्याशङ्क्य व्याचष्टे—**ज्ञानादज्ञानान्तरोत्पत्ताविति** ॥ पूर्ववदेवात्रापि स्मरणस्याहेतुत्वमेवातिदिष्टं ज्ञानद्वयाभावेऽपीति भावः। ननु—संस्कार-प्रमाकरणयोः सम्भूय जनकत्वं प्रमाणज्ञान एव दृष्टम्, इदं तु दोषजन्यत्वेनाप्रमाणमित्युक्तम्, अतः कथं सम्भूय कारणत्वमित्याह—**ननु यत्र संस्कार इति** ॥ न प्रमाणत्वमुभयजन्यत्वप्रयोजकम्; व्यभिचारात्, नापि प्रमाण एवोभयजन्यत्वनियमः; एकस्यासामर्थ्यप्रयुक्तत्वादुभयजन्यत्वस्य। **यद्वा**—दोषाजन्यत्वप्रयुक्तं प्रमाणत्वम्, न तू भयजन्यत्वप्रयुक्तम्; दोषाजन्यत्वस्यैव प्रामाण्येनान्वयव्यतिरेकादिति परिहाराभिप्रायः। ननु—परैरपि प्रमाणज्ञानविषयविलक्षणविषयत्वं भ्रान्तेरङ्गीक्रियते, तावता च मिथ्यात्वप्रसिद्धि-

### पञ्चपादिका

**निदर्शनीयम्। तत्र लैङ्गिकज्ञान-प्रत्यभिज्ञा-चित्रज्ञानानामदुष्टकारणारब्धत्वाद् यथार्थमेवावभासः, इह तु कारणदोषादतथा-**

### पञ्चपादिकाविवरणम्

किञ्च ज्ञानद्वयपक्षेऽख्यतावपरोक्षावभासिनः स्मर्यमाणत्वे, सर्वत्र प्रतिपन्नोपाधौ विषयसत्त्वाभावेऽन्यथाख्यातौ प्रतिपन्नस्य संसर्गस्य शून्यत्वे पुरोदेशप्रतिपन्नस्य रजतस्य देशान्तरसत्त्वे च, आत्मख्यातौ बहिरवभासस्यान्तरत्वे चानुभवविरोधः स्यात्, न तथाऽस्मत्पक्ष इत्याह—**एवं च सति नानुभवविरोध** इति ॥ ननु तवाप्यस्ति प्रतिपन्नस्यानिर्वचनीयत्वेऽनुभवविरोधः समानः, तन्न; इदन्तासंसर्गवद्रजतस्य शुक्तिकासत्तासंसर्गोऽप्यमवभासते, न रजतस्यापरसत्त्वम्। **अथवा**—त्रिविधं सत्त्वम्—परमार्थसत्त्वं ब्रह्मणः, अर्थक्रियासामर्थ्यसत्त्वं मायोपाधिकमाकाशादेः, अविद्योपाधिकसत्त्वं रजतादेरिति परमार्थसत्त्वापेक्षयाऽनिर्वचनीयमिति नानुभवविरोधः; यथानुभवमर्थसत्त्वाभ्युपगमात् ॥

### तत्त्वदीपनम्

साम्यम्? इत्याशङ्क्याह—**ज्ञानादिति** ॥ लिङ्गज्ञानं लिङ्गाविनाभूतलिङ्गिज्ञानजनकं दृष्टम्, शब्दज्ञानस्य चार्थज्ञानजननशक्तिसम्बन्धमाश्रित्य बोधकत्वम्, प्रकृते तु स्मृतेः प्रत्यभिज्ञानस्य च न कश्चन सम्बन्धोऽस्तीति संस्कारस्य कारणत्वमित्यर्थः। **टीकायाः एषोऽर्थः**—उद्बुद्धसंस्कारस्यावश्योपेयत्वान्न मध्ये स्मृतिकल्पनमित्युक्तं न्यायं परामृशति—**अयमिति** ॥ एवकारव्यावर्त्यमाह—**न पुनरिति** ॥ संस्कारोद्बोधानन्तरं प्रत्यभिज्ञोत्पत्तौ द्वितीयस्मृतिकल्पकं न पश्याम इत्यर्थः। दृष्टान्तो विषम इति चोदयति—**ननु प्रमाणान्तरेष्विति** ॥ अभिज्ञाप्रत्यक्षातिरिक्तेष्वित्यर्थः। अभिज्ञाशब्देन एकदेश-कालावच्छिन्नार्थविषयं ज्ञानमुच्यते। अभिज्ञायामपि निरपेक्षहेत्वोः समाहारो दृष्ट इत्याह—**तत्राहेति** ॥ विमतम्, न संस्कारसहितप्रमाकरणजन्यं प्रमाणत्वानधिकरणत्वात्; घटादिवदिति शङ्कते—**ननु यत्रेति** ॥ दोषासहकृतप्रमाकरणजन्यत्वादनुमानादेः प्रामाण्यं घटते, भ्रान्तेश्च तद्वैपरीत्यान्नैवमित्याह—**तत्राहेति** ॥

"एवं च सती"त्यत्र स्वमतेऽनुभवाविरोधमभिदधता मतान्तरेष्वनुभवविरोधो ध्वनितः, तमाह—**किं चेति** ॥ इदं-रजततादात्म्यविषयमेकं ज्ञानमनुभूयते, तद् ज्ञानभेदवादिनो विरुध्यत इत्याह—**ज्ञानद्वयेति** ॥ रूप्यज्ञानस्य स्मृतित्वेऽपरोक्षप्रत्यययोऽपि विरुध्यत इत्याह—**अपरोक्षेति** ॥ अन्यथाख्यातावनुभवविरोधमाह—**सर्वत्रेति** ॥ प्रतिपन्नस्योपाधिरवच्छेदकोऽधिष्ठानम्; तस्मिन्निति यावत्। आरोपितं विषयशब्दार्थः। इदमि समारोपितस्य रूप्यस्य कालत्रयेऽपि सत्त्वाभावे सदिदं रूप्यमित्यनुभवः पीड्येतेत्यर्थः। तादात्म्यासत्त्वे तदनुभवोऽपि कुप्येतेत्याह—**प्रतिपन्नस्येति** ॥ देशान्तरसत्त्वकल्पनायामिदन्तानुभवविरोधमाह—**पुरोदेशेति** ॥ विज्ञानवादिमतेऽनुभवविरोधमाह—**आत्मख्याताविति** ॥ बहिरवभासो यस्य स बहिरवभासस्तस्येत्यर्थः। अनुभवविरोधशङ्कायां तन्निरसनमुचितम्, सैव नेत्याशङ्क्यानुभवविरोधशङ्कामाह—**ननु तवापीति** ॥ रजतसत्त्वेनानुभवोऽसिद्ध इत्याह—**तन्नेति** ॥ अनिदमो रजतस्येदन्तासंसर्गवत् सद्विलक्षणस्याप्यन्यसत्तासंबन्धात्सदनुभवो न विरुध्यत इत्यर्थः। ननु रूप्यस्य स्वाभाविकं सत्त्वं किं न स्यात्, इत्याशङ्क्य बाधविरोधान्नैवमित्याह—**न रजतस्येति** ॥

ननु तव सत्तासंसर्गः किं सन्? उतासन्? किं वोभयविलक्षणः? आद्ये बाधविरोधः, द्वितीयेऽनुभवविरोधः, तृतीये 'सदिदं रजतमि'त्यनुभवो विरुध्येतेत्याशङ्क्य पक्षान्तरं कक्षीकरोति—**अथवेति** ॥ त्रैविध्यमेवाह—**परमार्थेति** ॥ परमार्थसत्त्वं

### ऋजुविवरणम्

घटते; अतो न मिथ्यात्वप्रसिद्ध्याऽनिर्वचनीयार्थत्वमित्याशङ्क्याभ्युच्चयमाह—**किञ्च ज्ञानद्वयपक्ष इति** ॥ ननु अपरोक्षशुक्त्यविवेकाद् रजतेऽपरोक्षव्यवहारः, एवञ्च पक्षान्तरेष्वपि कथञ्चिदनुभवविरोधपरिहारसम्भवाद् न सत्तात्रैविध्यादिकल्पनागौरवाश्रयणं युक्तमित्याशङ्क्याह—**यस्माद्भ्रान्तित्वव्यवहार इति** ॥ बाधकज्ञानविषयत्वेनैव मिथ्यात्वं प्रतीयत इत्यभिप्राय-

## पञ्चपादिका

**भूतार्थावभास इति विशेषः। एवञ्च सति नानुभवविरोधः; प्रतिभासमानस्य रजतस्यैवावलम्बनत्वात्, अतो मायामयं रजतम्। अथ पुनः पारमार्थिकं स्यात्, सर्वैरेव गृह्येत; यतो न हि पारमार्थिकं रजतं कारणदोषं स्वज्ञानोत्पत्तावपेक्षते।**

## पञ्चपादिकाविवरणम्

यस्माद् भ्रान्तित्वव्यवहारः सदसद्ज्ञानयोरनुपपन्नः, यतश्च पक्षान्तरेष्वनुभवविरोधः, यतश्च ज्ञानद्वयपारोक्ष्य-स्मृतित्व-स्मरणाभिमानप्रमोष-तद्धेत्वविवेक-तन्निमित्तप्रवृत्तयो जन्मान्तरानुभूतस्मृतिश्चेत्यप्रतिपन्नमपूर्वं बहु कल्पनीयमख्यातौ, अन्यथाख्यातौ चान्यत्र प्रतिपन्नस्यान्यत्र सत्त्वम्, इन्द्रियस्य च जन्मान्तरानुभूतदेशकालव्यवहितार्थग्राहित्वम्, दोषस्य च तथाविधादृष्टसामर्थ्यम्, संसर्गस्य च शून्यस्य प्रत्यक्षतेति प्रमाणविरुद्धं बहु कल्पनीयम्, अतः सर्वदोषपरिहाराय यथा प्रतिपन्नस्य मिथ्यात्वं नामैकः स्वभावो "नास्त्यत्र रजतम्, मिथ्यैव रजतमभादि"त्यनुभवसिद्धः समाश्रयणीयः, अविद्योपादानकल्पनायाश्चान्वय-व्यतिरेकसिद्धत्वादित्याह—**अतो मायामयमिति**॥ सत्यस्य वस्तुनो मिथ्यावस्तुसंभेदोऽवभासमानो माया मिथ्याऽनिर्वचनीयख्यातिः; अध्यास एवायमित्यर्थः॥

## तत्त्वदीपनम्

नाम कालत्रयबाधाभावोपलक्षितस्वरूपम्। मायाशब्देन व्यावहारिकत्वसंपादनपटीयस्यविद्योच्यते। अविद्याशब्देन प्रातिभासिकत्वनिर्वाहकमज्ञानं कथ्यते। इतेत्रिविधं सत्त्वमित्यनेन सम्बन्धः। भवत्वेवं त्रैविध्यम्, तथाऽपि कथमनुभवविरोधनिराकृतिः? इत्याशङ्क्याह—**परमार्थेति**॥ सद्वैलक्षण्ये कथमनुभवः? इत्याशङ्क्याह—**यथेति**॥ अतःशब्दापेक्षितं हेतुं दर्शयति—**यस्मादिति**॥ ज्ञानद्वयं च पारोक्ष्यं च स्मृतित्वं च स्मरणाभिमानप्रमोषश्च तद्धेत्वविवेकश्च तन्निमित्तप्रवृत्तिश्चेति तथोक्ताः। अर्भकभ्रमसिद्ध्यर्थं जन्मान्तरानुभूतस्मरण च कल्प्यमित्याह—**जन्मान्तरेति**॥ **अप्रतिपन्नमिति**॥ लोकाप्रसिद्धमित्यर्थः। **अपूर्वमिति**॥ प्रमाणानधिगतमित्यर्थः। अन्यथाख्यातौ च बहु कल्प्यमित्यन्वयः। बहुकल्पनामेवाह—**अन्यत्रेति**॥ केवलेन्द्रियस्य व्यवहिताग्राहित्वेऽपि दोषसहकृतस्य तत्स्यादित्याशङ्क्याह—**दोषस्य चेति**॥ देशादिव्यवहितविषयत्वं तथाविधशब्दार्थः। एकः स्वभाव आश्रयणीय इति बहुकल्पनां निवारयति। अप्रतिपन्नकल्पनां निषेधति—**नास्तीत्यादिना**॥ **अत्रायं विभागः**—नास्तीति रजतस्य सद्वैलक्षण्याभिधानम्, मिथ्येति ज्ञाननिवर्त्यत्वं कथ्यते। मिथ्यैवेति ज्ञानमिथ्यात्वमाह। रजतमभादिति यत्तत् मिथ्यैवेति ज्ञानमिथ्यात्वमनुभूयत इत्यर्थः। अविद्योपादानत्वमप्रतिपन्नं त्वया कल्प्यमित्याशङ्क्याह—**अविद्येति**॥ समारोपितानिर्वचनीयतायाः प्रक्रान्तत्वान्मायात्मत्वोपसंहरणमनुपपन्नमित्याशङ्क्याह—**सत्यस्येति**॥ मायामिथ्यादिशब्दानां पर्यायत्वान्न विरोध इत्यर्थः॥

## ऋजुविवरणम्

माह—**नास्त्यत्रेति**॥ ज्ञाननिवर्त्यत्वं मिथ्यात्वमिति भावः। **ननु**—बाधाधीननिवृत्तेः कथं बाधविषयत्वम्? इत्याशङ्क्य पक्षान्तरमाह—**मिथ्यारजतमिति**॥ बाधाभिव्यक्तविषयस्थचैतन्येन तत्संसृष्टनिवृत्तिः प्रतीयत इति भावः। **ननु** बाधकज्ञाने तत्फले वा मिथ्यात्वं प्रतीयत इति कथं गम्यते? इत्याशङ्क्याह—**मिथ्यैव रजतमभादिति**॥ उत्तरपरामर्शसामर्थ्यात् पूर्वं प्रतीतिः कल्प्यत इति भावः। **यद्वा**—नास्तीति सत्यत्वनिषेधः, निषेधाद् निवृत्तिप्रदर्शनम्, द्वितीये मिथ्यात्वानुभवप्रदर्शनम्, तृतीये तूभयास्तित्वद्योतकः परामर्श इति विवेकः। **ननु** मिथ्यात्वेनोपसंहर्तव्यम्, न मायामयत्वेनेत्याशङ्क्याभिप्रायमाह—**अविद्योपादानेति**॥ अविद्यैव रजतरूपेण परिणमत इति स्वदर्शनं प्रदर्श्य रजतमित्यात्वं च प्रसाध्येदानीमविद्योपादानत्वे प्रमाणमुक्तमित्यर्थः। **अथवा**—मिथ्यात्व एव युक्त्यन्तरमनेनोच्यत इत्याह—**अविद्योपादानेति**॥ **अथवा**—सिद्धे मायाकार्यत्वे मायामयत्वेनोपसंहारो युक्तः, न तु तत्सिद्धम्; प्रमाणाभावात्, रजतादीनामविद्यामयत्वमुक्तं पूर्वम्, तद्विरोधश्चेत्याशङ्क्याभिप्रायमाह—**अविद्योपादानेनि**॥ **ननु**—कोऽयमध्यास इत्युपक्रम्य "स्मृतिरूपः" इति लक्षणमुक्त्वा ख्यात्यन्तरनिराकरणेनाध्यासः साधनीयः, न त्वनिर्वचनीयत्वमिथ्यात्वसाधनं युक्तम्, मायामयत्वोपसंहारश्च; परस्परमसम्बद्धत्वप्रसङ्गादित्याशङ्क्याभिप्रायमाह—**सत्यस्य वस्तुन इति**॥ परस्पराभेदाद् विशिष्टाध्यासस्य विवक्षितत्वादेवमुक्तमित्यर्थः। **अथवा**—

## पञ्चपादिकाविवरणम्

**अत्र केचिदाहुः**—अतोऽविद्यामयमिति वक्तव्यम्, न मायामयमिति; विभ्रमाणां तत्त्वज्ञाननिराकार्यतयाऽविद्यात्मकत्वात्, मायाऽविद्ययोर्भेदात्। **तथाहि**—माया स्वाश्रयमव्यामोहयन्ती कर्तुरिच्छामनुवर्तते, न तथाऽविद्या। प्रसिद्धश्च मायाऽविद्ययोर्भेदो लौकिकानाम्। नहि मायाविनिर्मितहस्त्यश्व-रथादावविद्याशब्दं प्रयुञ्जत इति॥

## तत्त्वदीपनम्

रजतस्य मायामयत्वमुपश्रुत्य तदसहमाना एकदेशिनः प्रत्यवतिष्ठन्ते—**अत्र केचिदिति**॥ अविद्यामयत्वोक्तौ हेतुमाह—**विभ्रमाणामिति**॥ मायाऽविद्ययोरभेदादविद्यामयत्वमेवोक्तमित्याशङ्क्याह—**मायेति**॥ भेदासिद्धिं मन्वानं प्रत्याह—**तथाहीति**॥ मायायाः स्वाश्रयाव्यामोहकत्वं कर्तुरिच्छानुविधायित्वं च, अविद्यायास्तद्वैपरीत्यमित्यर्थः। न केवलं लक्षणभेदाद् भेदः, किंतु प्रसिद्धितोऽपीत्याह—**प्रसिद्धश्चेति**॥ प्रसिद्ध्यसिद्धिं मन्वानं प्रत्याह—**नहीति**॥ मायाऽविद्ययोरभेदान्मायामयत्वाभिधानं युक्तमित्याह—**उच्यत इति**॥

अभेदं साधयितुं तदुक्तमनुवदति—**लक्षणेति**॥ स्वरूपलक्षणं तावदविशिष्टमित्याह—**अनिर्वचनीयेति**॥ अनिर्वचनीयतया लक्षणस्याविशेषादिति सम्बन्धः। स्वरूपतया गमकं स्वरूपलक्षणम्। तच्चैकं मायाऽविद्ययोरित्यर्थः। धर्मिसमकालं स्थित्वा धर्मतया गमकं विशेषणलक्षणम्, तदपि तुल्यमित्याह—**तत्त्वावभासेति**॥ कदाचिद्भावमात्रेण लक्षकमुपलक्षणम्, तत्तुल्यमित्याह—**विपर्ययेति**॥ मायायाः स्वरूपलक्षणस्याव्याप्तिं शङ्कते—**ननु मन्त्रेति**॥ सत्यमेव मायापदवाच्यं कस्मान्नेतरदित्याशङ्क्याह—**नानिर्वचनीयेति**॥ मण्यादिसत्यवस्तुयुक्ते मायाविशब्दप्रयोगादित्यर्थः। 'माया मया दृश्यत' इति दृश्यमानकरि-नर-तुरगादिषु मायाशब्दः, प्रयुज्यते, तानि च सद्विलक्षणानीत्यनिर्वचनीयत्वं मायायामविशिष्टमित्याह—**न परिदृश्यमानेति**॥ परिदृश्यमानत्वं मण्यादावपि तुल्यमित्याशङ्क्याह—**पार्श्वस्थस्येति**॥

## ऋजुविवरणम

हेतुपरम्पराऽभिप्रायेणैवमुक्तम्—मायामयत्वं मिथ्यात्वहेतुः, मिथ्यात्वं चानिर्वचनीयख्यातित्वे, तेन चाध्याससिद्धिरिति। **अथवा**—अध्यासत्वेनानिर्वचनीयत्वं निरूपितं ख्यात्यन्तरनिराकरणेन, अनिर्वचनीयत्वं च मिथ्यात्वेन, मिथ्यात्वं चाविद्यामयत्वेनेति मनसि निधायैवं निरूपणं कृतमिति भावः। कुतो रजतादेरविद्यामयत्वव्यपदेशः? इत्याशङ्क्याह—**विभ्रमाणामिति**॥ **ननु** अविद्याया एव मायात्वव्यपदेशात् तन्मयत्वमित्याशङ्क्याह—**मायाविद्ययोरिति**॥ मिथ्यात्वसाम्यादौपचारिको व्यपदेश इति भावः कथमौपचारिकत्वं व्यपदेशभेदस्य? इत्याशङ्क्य मुख्यभेदं साधयति—**तथाहीति**॥ **ननु** कारणभेदादेकस्यापि व्यामोहाव्यामोहहेतुत्वमुपपद्यते, कथमनेन भेद इत्याशङ्क्य प्रमाणमाह—**प्रसिद्धश्चेति**॥ **ननु**—इयमविद्या, नेयमविद्येति, लोको न व्यपदिशति, कथं लोकप्रसिद्धो भेदः? इत्याशङ्क्य विशिनष्टि—**नहि मायाविनिर्मितेति**॥ **अथवा**—तत्त्वज्ञाननिराकरणयोग्यत्वं मायामयेऽपि दृश्यते, कथं तेनाविद्यामयत्वव्यपदेशः साध्यते? इत्याशङ्क्य, प्रकारान्तरेण तथैव व्यपदेशं साधयति—**मायाविद्ययोरिति**॥ **अयमर्थः**—मन्त्रौषधादिसत्यवस्त्वेव माया, अनिर्वचनीया त्वविद्येति। कथं मन्त्राद्येव माया, नानिर्वचनीया? इत्याशङ्क्याविद्यातो विलक्षणत्वादित्याह—**तथाहि मायेति**॥ ननु—विलक्षणत्वमेकस्मिन्नप्युपपद्यते; सामग्रीभेदात्, अतः कथमनेन भेदः? इत्याशङ्क्याह—**प्रसिद्धश्चेति**॥ प्रसिद्धिमेव विशिनष्टि—**नहि मायेति**॥ कार्येऽव्यस्थितप्रयोगदर्शनात् कारणभेदो निश्चीयते; तथा—मन्त्रौषधादिपयोक्तारमेव मायाविनं वदन्तीति भावः। **अथवा**—मायाविद्ययोर्भेदादि"त्यविद्यामयत्वव्यपदेशे हेतावुक्ते, कथं तयोर्भेदः? इत्याशङ्क्य, विलक्षणकार्यत्वं भेदकं दर्शयति—**विभ्रमाणामिति**॥ कथं तत्त्वज्ञाननिराकार्यत्वेन कार्यस्य वैलक्षण्यम्? उभयत्र साम्यात्, इत्याशङ्क्य प्रकारान्तरेण तद्भेदं दर्शयति—**तथाहीति**॥ लक्षणतो भेदमुक्त्वा प्रमाणतो भेदं दर्शयति—**प्रसिद्धश्चेति**॥ प्रसिद्धिमेव विशिनष्टि—**नहि मायाविनिर्मितेति**॥ कथं लक्षणतो विशेषः? इत्यभिप्रायेण चोदयति—**ननु मन्त्रौषधादीति**॥ मिथ्यावस्तुन्येव मायाशब्दप्रयोगो न मन्त्रादाविति कथं गम्यत इति? तदाह—**पार्श्वस्थस्येति**॥ **ननु** मन्त्रादेरप्यनुमानादिना ज्ञातत्वात् तत्रापि प्रयोग इत्याशङ्क्याह—**तत्र मायाशब्देति**॥ एवमपि कार्यमात्रस्यैव मायात्वाद्रजतादेश्च तदात्मकत्वाभावाद् व्यपदेशानुपपत्तिस्तद-

### पञ्चपादिकाविवरणम्

**उच्यते**—लक्षणभेदात्, लोकव्यवहारसामर्थ्याद्वा तयोर्भेदः कथ्यते। न तावल्लक्षणभेदात्; अनिर्वचनीयतया तत्त्वावभासप्रतिबन्धविपर्ययावभासलक्षणस्याविशेषात्। **ननु** मन्त्रौषधादिसत्यवस्त्वेव माया, नानिर्वचनीया, न; परिदृश्यमानमिथ्यावस्तुन्येव मायाशब्दप्रयोगात्, पार्श्वस्थस्य मन्त्रौषधाद्यपरिज्ञानात्, तत्र मायाशब्दप्रयोगाभावाच्च, मन्वादेश्च काचादिवन्निमित्तकारणत्वाद् अध्यासोपादानाविद्याक्लृप्तिवत्कादाचित्कमायोपादानानिर्वचनीयानादिवस्तुकल्पना। तत्र च "मायां तु प्रकृतिम्" इति श्रुतौ प्रकृतौ मायाशब्दप्रयोगात् प्रकृतिभूतयोर्मायाविद्ययोस्तद्विकारयोश्चाध्यासमाययोर्लक्षणाभेदादेकत्वमवगम्यते॥

### तत्त्वदीपनम्

मन्त्रादेः प्रत्यक्षदृश्यत्वाभावेऽपि कार्येण तदनुमाय तत्र मायाशब्दं प्रयुङ्क्त इत्याशङ्क्याह—**तत्र मायेति**॥ केवलमण्यादौ मायाशब्दप्रयोगो नोपलभ्यते, किंतु कार्याकारेण परिणते, ततश्च कार्यस्यैव मायाशब्दवाच्यत्वात्तद्योगान्मण्यादियुक्ते तत्प्रयोग इत्यर्थः। मन्त्रादेर्मायाकारणत्वे कथमविद्यायास्तत्कारणत्वम्, इत्याशङ्क्य, मन्त्रादेः किं निमित्तत्वम्? उतोपादानत्वम्? आद्ये न विरोध इत्याह—**मन्त्रादेरिति**॥ द्वितीयं प्रत्याह—**अध्यासेति**॥ मायात्मकहस्त्यश्वादेरनिर्वचनीयत्वादनिर्वचनीयमज्ञानमुपादानम्, अन्यस्य परमार्थत्वात्तदनुपपत्तिरित्यभिप्रायेणोक्तम्—**अनिर्वचनीयेति**॥ कार्यत्वाच्च मन्त्रादेर्नोपादानत्वम्, अपि त्वनाद्यज्ञानस्येत्याह—**अनादीति**॥

अनादेर्मायोपादानत्वेऽपि कथं मायाशब्दवाच्यत्वम्? कार्यस्यैव मायाशब्दवाच्यत्वादित्याशङ्क्याह—**तत्र चेति**॥ जगत्प्रकृतौ श्रुत्या मायाशब्दस्य प्रयुक्तत्वात्तस्या एव रजतादिभ्रमोपादानत्वसम्भव उपादानान्तरपरिकल्पनमयुक्तम्; ततश्चाविद्याया मायाशब्दत्वमित्यर्थः। पृथिव्यादीनां द्रव्यत्वसाधर्म्येऽपि यथान्तरालिको भेदस्तद्वन्मायाऽविद्ययोरपीति शङ्कते—**ननु स्वाऽऽश्रयेति**॥ आश्रयशब्देन किं द्रष्टोच्यते? उत कर्ता? इति विकल्प्याऽऽद्यं प्रत्याह—**यदीति**॥ द्वितीयमनुवदति—**अथेति**॥ कर्तुर्मण्यादिना व्यामोहाभावे न मायावित्वं प्रयोजकम्, मायिनोऽपि दाशरथेर्मोहश्रवणादित्याह—**न तस्येति**॥ किं तर्हि? अव्यामोहप्रयोजकमित्याह—**किंत्विति**॥ प्रतीयमानस्याऽऽभासत्वनिश्चयः प्रयोजक इत्याह—**बाधनिश्चयेति**॥ "मनुष्योऽयं न व्याघ्रः" इति निश्चयेऽपि मोहसंदर्शनादाभासत्वज्ञानं न प्रयोजकमित्याशङ्क्याह—**प्रतीकारेति**॥ स्वात्मानं प्रति मण्यादेर्व्यामोहहेतुमायाक्षोभणशक्तिप्रतिबन्धज्ञानान्न मायाविनो व्यामोहः, इतरेषां च तद्वैपरीत्याद् व्यामोह इत्यर्थः। उक्तमर्थं व्यतिरेकमुखेनाह—**अन्यथेति**॥

मायाऽविद्ययोर्भेदकान्तरं शङ्कते—**अथेच्छयेति**॥ विकल्पासहत्वान्नैतदपि निरूपणपथमवतरतीत्याह—**न तदपीति**॥ किं मन्त्राणामिच्छाऽधीनत्वमुच्यते? आहो तत्कार्यस्य? इति विकल्प्याऽऽद्यमङ्गीकरोति—**मन्त्रेति**॥ द्वितीयं प्रत्याह—**न मायामिति**॥ मन्त्रादिक्षोभणे संजाते न मायाप्रसरनिरोधः शक्य इत्यर्थः। मायायां निमित्तकारणे स्वातन्त्र्यम्, इतरत्र न निमित्तेऽपीति वैषम्यमित्याशङ्क्य किं सोपाधिकभ्रमनिमित्ते न स्वातन्त्र्यम्? उत निरुपाधिकभ्रमनिमित्ते? इति विकल्प्याऽऽद्यं प्रत्याह—**अविद्यायामपीति**॥ हस्तेन नयनसंमार्जनं केशोण्ड्रकादिभ्रमनिमित्तमादिशब्दार्थः। द्वितीयं प्रत्याह—**मन्त्रेति**॥ मण्यादिकार्यं तत्त्वज्ञानोत्तरकालमप्यनुवर्तते, इतरत्र न तथेत्याशङ्क्याह—**तत्त्वेति**॥ प्रतिबिम्बादिभ्रमा इति शेषः।

प्रसिद्धश्च मायाऽविद्ययोर्भेद इति यदुक्तम्, तत्रेदं विवेचनीयम्—किं प्रसिद्धिशब्देन वैदिकी प्रसिद्धिर्गृह्यते? उत स्मार्तप्रसिद्धिः? आहोऽभियुक्तप्रसिद्धिरिति? तत्राऽऽद्यस्तावदयुक्त इत्याह—**नचेति**॥ "तस्याभिध्यानादित्या"देरयमर्थः।

### ऋजुविवरणम्

वस्थैवेत्याशङ्क्याह—**मन्त्रादेश्चेति**॥ **अथवा**—एवं सति कारणभूतमायाऽविद्ययोर्नैक्यमुपपद्यते, मन्त्रौषधादिरूपत्वाद्, इत्याशङ्क्याह—**मन्त्रादेरिति**॥ **ननु** मन्त्रादेरन्वय-व्यतिरेकाभ्यां हेतुत्वाद् न कारणान्तरं कल्पयितुं शक्यत इत्याशङ्क्याह—**काचादिवदिति**॥ मन्त्रादिगतत्वेनाप्रतीतेरित्यर्थः। तथापि कल्प्यमानं सादि वस्त्वेव भवेदित्याशङ्क्याह—**अविद्याक्लृप्तिवदिति**॥ तथापि तस्य मायात्वे प्रमाणाभावान्न मायाविद्ययोरैक्यमित्याशङ्क्याह—**तत्र च मायान्त्विति**॥ अनेन पूर्वोक्तस्तत्त्वतो भेदादिति हेतुर्निरस्तः। यत्तूक्तम्—"प्रसिद्धश्चे"ति, तत्र किं शास्त्रप्रसिद्धिर्विवक्षिता? उताभिज्ञप्रसिद्धिरिति? न

### पञ्चपादिका

यद्यपेक्षेत, तदा तदभावे न तत्र ज्ञानोत्पत्तिः; आलोकाभाव इव रूपे। मायामात्रत्वे तु मन्त्राद्युपहतचक्षुष इव दोषोपहतज्ञानकारणा एव पश्यन्तीति युक्तम्। किञ्च नेदं रजतमिति बाधोऽपि मायामयत्वमेव सूचयति। कथम्? तेन हि तस्य

### पञ्चपादिकाविवरणम्

**ननु** स्वाश्रयव्यामोहाव्यामोहहेतुत्वाभ्यां लक्षणभेदो दर्शितः, यद्याश्रयो द्रष्टा, व्यामुह्यत्येव पार्श्वस्थो मायां पश्यन्; अथ कर्ता, न तस्य मायावित्वाद्व्यामोहाभावः, किन्तु बाधनिश्चयप्रतीकारज्ञानाभ्याम्; अन्यथा पार्श्वस्थवत्कर्ताऽपि व्यामुह्येदेव। अथेच्छया कर्तुं शक्यते माया, न तथाऽविद्येति, न तदपि; मन्त्रौषधादौ निमित्तकारणे कर्तुः स्वातन्त्र्यान्न मायायाम्, अविद्यायामपि अङ्गुल्यवष्टम्भादिना द्विचन्द्रकेशोण्ड्रकादिभ्रमा मन्त्रौषधादिनिषेवणात्स्वप्नभ्रमास्तन्वज्ञानेऽप्यनुवृत्तप्रतिभासाश्च कर्तुरिच्छया निष्पाद्यन्ते॥

नच शास्त्रव्यवहारान्मायाऽविद्याभेदः; "तस्याभिध्यानाद्योजनात्तत्त्वभावाद् भूयश्चान्ते विश्वमायानिवृत्तिरि"त्यादिश्रुतौ सम्यग्ज्ञाननिवर्त्यविद्यायां मायाशब्दप्रयोगात्, "तरत्यविद्यां विततां हृदि यस्मिन् निवेशिते। योगी मायाममेयाय

### तत्त्वदीपनम्

तस्य ब्रह्मणः=अभिमुखेन प्रत्यक्तया ध्यानम्, अनात्मप्रत्ययनिरासेनाऽहं ब्रह्मेति प्रत्ययः = युज्यतेऽनेनेति प्रत्यग्ब्रह्मैक्यसाक्षात्कारे योजनात्प्रतीचो ब्रह्मत्वेनैवावस्थानं तत्त्वभावः, अभिध्यानेन परमार्थसत्त्वसंपादिका माया निवर्त्यते। भूयो योजनेनाऽर्थक्रियासामर्थ्यसत्त्वकल्पिकाया मायाया निवृत्तिः। अन्ते = प्रारब्धकर्मणामुपभोगेन प्रक्षये विदेहकैवल्यम्। ततश्च सुखाद्यात्मकप्रपञ्चप्रतिभाससंपादिका निवर्तत इति विश्वमायानिवृत्तिरिति। ज्ञाननिवर्त्यमज्ञानं प्रसिद्धम्, मायाऽपि ज्ञाननिवर्त्येति तयोरैक्यमित्याह—**सम्यग्ज्ञानेति**॥ द्वितीयं प्रत्याह—**तरतीति**॥ **यस्मिन्** = परमात्मनि नित्य-नैमित्तिककर्मप्रक्षालितपापमले चित्तेऽभिव्यक्ते सति **योगी** = मायां तरति तस्मै इति संबन्धः। मायायास्तर्तव्यत्वे हेतुमाह—**अविद्यामिति**॥ विद्याऽविद्ययोर्निवर्त्यनिवर्तकभावः प्रसिद्ध इत्यर्थः। सुषुप्तावविद्याया अपुरुषार्थत्वादर्शनान्न तन्निवृत्तिरीप्सितेत्याशङ्क्याह—**विततामिति**॥ कार्याकारेण परिणतामिति यावत्। उपादानानिवृत्तौ कार्यस्यात्यन्तानिवृत्तेरविद्यानिवृत्तिरपि काङ्क्षितेत्यर्थः। वेद्यत्वं व्यावर्तयति—**अमेयायेति**॥ तत्र हेतुः—**विद्यात्मन इति**॥ तृतीयं प्रत्याह—**मायामात्रमिति**॥ "अथ रथान् रथयोगान्" इत्यादिवाक्यात् स्वप्नसृष्टेः परमार्थत्वशङ्कां तुशब्देन निराकरोति। अत्र हेतुः—**कार्त्स्न्येनेति**॥ कार्त्स्न्यं नाम = परमार्थवस्तूचितदेशादिसंपत्तिः। तेनानभिव्यक्तं स्वरूपं यस्य तत्तथोक्तम्। परमार्थवस्तूचितदेशादार्वाद्यभावेऽप्यभिव्यक्तत्वाद् न परमार्थसत्त्वं स्वप्नप्रपञ्चस्येत्यर्थः। का तर्हि अत्र गतिरित्याशङ्क्याह—**मायेति**॥

सूत्रभावाभिज्ञो भाष्यकारोऽपि मायाऽविद्ययोरभेदमभाषतेत्याह—**भाष्यकारेणेति**॥ भाष्यव्याख्याता टीकाकारोऽप्येवमेवेत्याह—**टीकाकारेणेति**॥ सकलतन्त्राभिज्ञो मण्डनमिश्रोऽपि तथाऽऽहेत्याह—**ब्रह्मसिद्धौति**॥ मायाऽविद्ययोर्भेदाभावसमर्थनमुपसंहरति—**तस्मादिति**॥ तत्पदपरामृष्टं हेतुं व्यनक्ति—**लक्षणेति**॥ मायाऽविद्ययोरैक्ये सहप्रयोगानुपपत्तेस्तयोर्भेदः, तयोरैक्य इन्द्रजालादौ मायात्वव्यवहारः, इतरत्र तदभावश्च कथम्? इत्याशङ्क्याह—**एकस्मिन्नपीति**॥ भेदकान्तरमाह—**इच्छाधीनेति**॥ अविद्याया इच्छाऽनधीनत्वेन मायात्वाभावादिति द्रष्टव्यम्॥

### ऋजुविवरणम्

तावच्छास्त्रप्रसिद्धिरित्याह—**नच शास्त्रेति**॥ अथवा—पूर्वं मिथ्यात्वसङ्गीकृत्यैव व्यपदेशभेदाद्भेद उक्तः, तं विकल्प्य परिहरति—**नच शास्त्रेति**॥ ननु श्रुतावविद्यैव निवर्त्यत्वेनोक्तेति कथं गम्यते? एकत्वासिद्धेरित्याशङ्क्यैकत्वेन तस्यैव निवर्त्यत्वे प्रमाणान्तरमाह—**तरत्यविद्यामिति**॥ नाप्यभियुक्तप्रयोगादित्याह—**मायामात्रमित्यादिना**॥ कार्ये कारणे च सह व्यतिषिक्तप्रयोगं दर्शयितुमनेकप्रयोगप्रदर्शनम्, दार्ढ्यार्थं च; एकप्रयोगे तूपचारादिकल्पनायाः सम्भवादिति। ननु—

## पञ्चपादिकाविवरणम्

तस्मै विद्यात्मने नमः'' । इत्यादिस्मृतौ मायाऽविद्ययोः सामानाधिकरण्येन तत्त्वज्ञानेन तर्तव्यत्वाभिधानात्, ''मायामात्रं तु'कार्त्स्न्येनानभिव्यक्तस्वरूपत्वादि''ति सूत्रे सूत्रकारेण स्वप्ने मायाशब्दप्रयोगात्, भाष्यकारेण चाविद्या मायाऽविद्यात्मिका मायाशक्तिरिति तत्र तत्र निर्देशात्, टीकाकारेण ''चाविद्या मायाऽक्षरम्'' इत्युक्तत्वात्; ब्रह्मसिद्धिकारेण च—''एवमेवेयमविद्या माया मिथ्याप्रत्ययः'' इत्युक्तत्वात् । तस्माल्लक्षणैक्याद् वृद्धव्यवहारे चैकत्वावगमादेकस्मिन्नपि वस्तुनि विक्षेपप्राधान्येन माया, आच्छादनप्राधान्येनाविद्येति व्यवहारभेदः । इच्छाधीनत्व-तद्वैपरीत्येन वा व्यवहारभेद इति युक्तम्—**मायामयमिति** ॥

## तत्वदीपनम्

प्रतीत्यनुरोधेन भ्रान्तिविषयस्य परमार्थसत्त्वमेष्टव्यमिति दिगम्वरः शङ्कते—**अस्तु तर्हीति** ॥ उपपत्तितोप्येवमित्याह—**कल्पनेति** ॥ सत्तात्रैविध्यकल्पनं कल्पनाशब्दार्थः । निषेधस्य परमार्थरजतविषयत्वकल्पनमादिशब्दार्थः । विमतम्, न परमार्थम्, परमार्थत्वेऽनेकग्राह्यत्वप्रसङ्गात्; संप्रतिपन्नवदित्याह—**नेत्याहेति** ॥ परमार्थत्वेपि न सर्वग्राह्यत्वम्; दोषलक्षणसहकारिणः सर्वत्राभावात्, इति चोदयति—**ननु कारणेति** ॥ परमार्थत्वे दुष्टकारणग्राह्यत्वनियम एवानुपपन्न इत्याह—**नेत्याहेति** ॥ ''न तत्रे''त्यत्र तच्छब्देन दोषाभावेऽपरमार्थरूप्यज्ञानाभावोऽभिधीयत इति शङ्का स्यात्; ततश्च सिद्धसाध्यत्वमित्याशङ्क्य तच्छब्दार्थमाह—**सर्वेति** ॥ मायात्मकत्वेपि सर्वग्राह्यत्वप्रसङ्गः सम इति चोदयति—**आत्मेति** ॥ इदमंशावच्छिन्नचैतन्यतन्त्राविद्यया पुरोवर्तिनि रूप्यस्योत्पन्नत्वात्सर्वग्राह्यत्वप्रसङ्ग इत्यर्थः । वैषम्येणोत्तरमाह—**नेति** ॥ दोषोपहतज्ञानकारणत्वे दृष्टान्तमाह—**मन्त्राद्युपहतचक्षुष इति** (मूले) ॥ उपहतकरणानामेव दर्शनमित्यत्र दृष्टान्तमाह—**प्रसिद्धेति** ॥ उक्तार्थे युक्तिमाह—**इदमाकारेति** ॥ स्वाश्रितसुखादेरनन्ययेद्यत्ववदिदमाकारावच्छिन्नसाक्ष्यविद्याश्रितत्वान्नान्यस्य ग्रहणप्रसङ्ग इति भावः ॥

बाधकप्रत्ययभिन्नस्य मायामयत्वसाधकतयाऽनुक्तत्वात् ''किंचे''त्युक्तिरयुक्तेत्याशङ्क्य तात्पर्यमाह—**ज्ञानस्येति** ॥ **कल्पनालाघवानुभवाभ्यामिति** ॥ मायावादे मिथ्यात्वमात्रसमाश्रयणलाघवम्, अनुभवाविरोधश्च, इतरत्र गौरवानुभवविरोधौ स्यातामिति यावत् । बाधकप्रत्ययोऽन्यविषय इति चोदयति—**ननु प्रतिपन्नेनि** ॥ प्रतिपन्नोपाधावभावप्रतियोगित्वस्य मिथ्या-

## ऋजुविवरणम्

व्यवस्थितप्रयोगोऽपि दर्शित इत्याशङ्क्याह—**एकस्मिन्नपीति** ॥ ''तदभावे न तदि''ति प्रकृतरजतं प्रतीयते; तथा सति दोषाभावे तदप्रतीत्यङ्गीकारादिदूषणं स्यादित्याशङ्क्य व्याचष्टे—**सर्वत्र परमार्थेति** ॥ तत्रेत्यर्थतोऽनुवादः । तथैव पाठ इति केचित् । **आत्माश्रयेति** ॥ उत्पन्नत्वेन साधारणत्वादिति भावः । ''उपहतचक्षुष इवे''त्ययुक्तम्; सम्प्रतिपन्नदृष्टान्तानभिधानात्, अतो न व्यवस्थितग्रहणम्; सर्वत्र विवादादित्याशङ्क्याभिप्रायमाह—**प्रसिद्धमायेति** ॥ ननु कथं तद्दृष्टान्तवलेनाप्रतीतिसाधनम् ? तस्या अप्यन्यथासिद्धेः, कारणाभावादप्रतीतेः बाह्याधिष्ठानगतत्वाभावाच्च । इह शुक्तिगतत्वात्तद्गतशौक्ल्यादिवत्प्रतीतिः स्यादित्याशङ्क्य पुनरभिप्रायान्तरमाह—**इदमाकारावच्छिन्नेति** ॥ **ननु** पूर्वमपि मिथ्यात्वमनुभवेन साधितम्, किं पुनर्मिथ्यात्वसाधनेनेत्याशङ्क्याह—**ज्ञानस्यैवेति** ॥ इदानीं साक्षादर्थे प्रमाणं वक्ष्यत इत्यर्थः । **ननु**—ज्ञानगतप्रसिद्ध्याऽपि मिथ्यात्वसिद्धौ किमर्थं प्रमाणान्तरेणेत्याशङ्क्याह—**अनुपपत्तिरिति** ॥ **ननु** अनुपपत्तेरपि प्रमाणत्वाविशेषाद् न प्रमाणान्तरकथनेऽनुपपत्तिरूपत्वं हेतुरित्याशङ्क्याह—**कल्पनालाघवेति** ॥ अनुगृहीतैव साधिका; अन्यथाऽप्युपपत्त्यादिसम्भवादिति भावः । **ननु** अत्रापि—''सूचयती''ति वदता तथाविधमेव प्रमाणं प्रदर्शितम्, अतः पौनरुक्त्यं वैयर्थ्यं वा; अस्यापि तथाविधत्वात्, बाधानुपपत्तेर्मिथ्यात्वे प्रमाणत्वात्, अतः पूर्वप्रमाणादविशेष इत्याशङ्क्याह—**बाधकप्रत्यक्षमिति** ॥ तस्यापि पूर्वप्रमाणादविशेष इति यदुक्तम्, तत् परिहरति—**स्वयमेवेति** ॥ बाधकज्ञानं त्रैकालिकाभावग्राहकमभावविषयत्वाद्बाधः स्यात् । तनु मिथ्यात्वम्; अविषयत्वात्, नचैतदेव मिथ्यात्वम्; संयोगादेः प्रतिपन्नोपाधावभावप्रतियोगित्वेऽपि मिथ्यात्वाभावादित्यभिप्रायेण चोदयति—**प्रतिपन्नोपाधाविति** ॥ ''तेन हि तस्ये''त्यत्र ''निरुपाख्यत्वापादनपूर्वकमि''त्ययमंशो व्यर्थ इवाऽऽभाति; मिथ्यात्वस्याभाव-

## पञ्चपादिका

**निरुपाख्यतापादनपूर्वकं मिथ्यात्वं ज्ञाप्यते "नेदं रजतं मिथ्यैवाभासिष्टे"ति। नच तत् केनचिद्रूपेण रूपवत्त्वेऽवकल्पते; सम्प्रयुक्तशुक्तिवन्निरस्यमानविषयज्ञानवच्च ॥**

## पञ्चपादिकाविवरणम्

अस्तु तर्हि प्रतिपन्नोपाधावेव यथाप्रतिपत्ति परमार्थसत्त्वम्; कल्पनागौरवादिदोषपरिहारादिति, नेत्याह—**अथ पुनररिति** ॥ ननु कारणदोषवतामेव तद् दृश्यमिति, नेत्याह—**यतो नहोति** ॥ **तदभावे न तत्रेति** ॥ सर्वत्र परमार्थरजत इत्यर्थः। आत्माश्रयाविद्यात्मकत्वेऽपि सर्वैरेव गृह्येतेति, नेत्याह—**मायामात्रत्व इति** ॥ प्रसिद्धमायावदिति भावः। इदमाकारावच्छिन्न-साक्षिचैतन्यसमाश्रितस्य रजतस्य शुक्तिकासंभेदोऽप्यविद्यात्मक इति, सुखादिवदनन्यवेद्यत्वमिति भावः। ज्ञानस्यैव भ्रान्तित्व-प्रसिद्धयनुपपत्तिः कल्पनालाघवानुभवाभ्यामनुगृहीता मिथ्यार्थज्ञानतां गमयतीत्युक्तम्, इदानी बाधकप्रत्यक्षं स्वयमेव रजतस्य मिथ्यात्वं प्रतिपादयतीत्याह—**किञ्च नेदं रजतमिति** ॥

**ननु** प्रतिपन्नोपाधौ रजतादेरभावं बाधो बोधयति, न तस्य मिथ्यात्वमिति चोदयति—**कथमिति** ॥ प्रतिपन्नो-पाधावभावप्रतियोगित्वमेव मिथ्यात्वं नाम। तच्च बाधकज्ञाने रजतं प्रतिपन्नोपाधावभावप्रतियोगितयाऽवभासत इति प्रत्यक्ष-मित्याह—**तेन हि तस्येति** ॥ बाधकज्ञानसिद्धस्य प्रतिपन्नोपाधावभावप्रतियोगित्वलक्षणस्य मिथ्यात्वस्य पुनः स्वशब्देन परामर्शाच्च

## तत्त्वदीपनम्

शब्दार्थत्वात् कथं मिथ्यात्वासिद्धिः? इत्याशङ्क्याह—**न तस्येति** ॥ संयोगादेः स्वात्यन्ताभावसादेश्यधर्माधिकरणत्वाभ्युपग-मात्प्रतिपन्नोपाधावभावप्रतियोगित्वं तत्रापि विद्यत इत्यतिव्याप्तिरित्यर्थः। संयोगादेर्न स्वसत्ताऽभावसादेश्यम्; भावाभावयोरेक-दैकत्र सत्त्वविरोधात्; ततश्च मिथ्यात्वलक्षणं नावद्यमित्याशयवानाह—**प्रतिपन्नेति** ॥

तत्र किं प्रमाणमिति विवक्षायामाह—**तच्चेति** ॥ तच्च प्रत्यक्षमित्यन्वयः। प्रत्यक्षत्वमेवाह—**बाधकेति** ॥ नेदं रजतमित्यनेनैव मिथ्णात्वसिद्धेः—"मिथ्येवे"त्येतदनर्थकमित्याशङ्क्य तात्पर्यमाह—**बाधकज्ञान इति** ॥ बाधकप्रत्ययोऽन्यथासिद्ध इति चोदयति—**ननु देशेति** ॥ सत्त्वे बाध्यत्वमेव न स्यादित्याह—**नेत्याहेति** ॥ नैयायिकं प्रति शुक्तिकावदिति, ज्ञानवदिति बौद्धं प्रति दृष्टान्त इति द्रष्टव्यम्। अन्यत्र सतोऽपि घटस्य निषिद्धयमानत्ववन्निषेध इति शङ्कां निरस्यति—**नेदमिति** ॥ इदं-रजत-योरविविक्ततया प्रतिपन्नत्वादविवेकस्य च मिथ्यात्वपरामर्शो युक्त इत्याशङ्क्याह—**न मिथ्यैवेति** ॥ स्मृति-ग्रहणयोस्तत्तद्विवेका-भावस्य च सत्त्वान्न मिथ्याभूतं पश्याम इत्यर्थः। अविवेकोऽप्यनुपपन्न इत्याह—**गवयेति** ॥ गृह्यमाण-स्मर्यमाणगो-गवययोरिव विवेकः स्यादित्यर्थः ॥

## ऋजुविवरणम्

प्रतियोगित्वासाधकत्वात्, प्रत्युत भेद एव प्रतीयते, तथा सति मिथ्यात्वज्ञापनासम्भवस्तदवस्थ एव; तत्स्वरूपानिरूपणात्, "ज्ञाप्यते"इति चायुक्तम्; प्रत्यक्षत्वाभावप्रसङ्गादित्याशङ्क्याह—**प्रतिपन्नोपाधाविति** ॥ **अयं भावः**—संयोगादेः प्रतिपन्नो-पाधावभावप्रतियोगित्वमेव नास्ति; कालाद्युपाधिभेदादिति। परमार्थतस्तु तयोरपि मिथ्यात्वमेव, प्रतीतस्य तु सत्यत्वे तस्य कालत्रयेऽपि सत्यत्वनिषेधो न घटत इति। **ननु** प्रतिपन्नोपाधावभावप्रतियोगि वस्तु प्रतीयते, न तु प्रतियोगित्वम्, तत्कथं बाधान्मिथ्यात्वप्रतीतिः? इत्याशङ्क्याह—**तच्च बाधकेति** ॥ **यद्वा**—ज्ञानाधीननिवृत्तिप्रतियोगित्वं कथं तस्मिन्नेव प्रतीयते? इत्याशङ्क्य, तत्र प्रमाणं प्रदर्श्यत इति तात्पर्यमाह—**तच्च बाधकज्ञान इति** ॥ **ननु** एवमपि प्रतियोगित्वमेव बाधकज्ञानस्य विषयो भवेत्, नतु मिथ्यात्वं साक्षादित्याशङ्क्याह—**प्रतिपन्नोपाधाविति** ॥ **ननु** प्रतिपन्नस्यैवाभावप्रति-योगित्वं प्रतीयत इति कथं गम्यते? इत्याशङ्क्य, परामर्शसामर्थ्यादपि प्रत्यक्षत्वं निश्चीयत इति तात्पर्यमाह—**प्रतिपन्नोपाधाविति** ॥ **अथवा**—प्रतिपन्नोपाधावभावप्रतियोगित्वमेव मिथ्यात्वमिति कथं गम्यते? येन तस्यैव मिथ्यात्व-ग्राहकत्वमुच्यते, इत्याशङ्क्याह—**प्रतिपन्नोपाधाविति** ॥ **यद्वा**—अभावप्रतियोगित्वलक्षणमेव मिथ्यात्वम्। **ननु** यदि तेनैव मिथ्यात्वं प्रतीयते, किमर्थं तर्हि 'मिथ्यैवाभासिष्टे'ति प्रमाणान्तरमुदाहृतम्। तस्य बाधकत्वाभावात्, तद्विषयत्व-निरूपणस्य प्रक्रान्तत्वादित्याशङ्क्याह—**प्रतिपन्नोपाधाविति** ॥ प्रतियोगित्वलक्षणमेव मिथ्यात्वम्, तस्य च पूर्वं प्रतीतिरित्य-

## पञ्चपादिकाविवरणम्

बाधविषयो मिथ्यात्वमित्याह—**नेदं रजतं मिथ्यैवेति** ॥ ननु देशकालान्तरबुद्धिषु सत्त्वादपि रजतस्यैवं बाधः संपत्स्यत इति, नेत्याह—**नच तत्केनचिद्रूपेणेति** ॥ नेदं रजतम्, किन्तु तद्रजतं बुद्धिर्वेति स्यात्परामर्शः, न मिथ्यैवेति; स्मृतिग्रहणाविवेकत्वाद्गोगवयादाविवेत्यभिप्रायः ॥

**ननु**—कोऽयं बाधो नाम ? अन्यार्थिनोऽन्यत्र प्रवृत्तिनिरोधः ! तर्हि यत्र रजतादौ परिव्राजकादेः प्रवृत्तेरेवानुदयः, तत्र बाधप्रसिद्धिर्न स्यात्; प्रसिद्धश्च तत्रापि बाधः। न प्रवृत्तिविच्छेदो बाधः; किन्तु प्रवृत्तियोग्यताविच्छेदश्चेत्, न; पुनरपि तत्रैव रजताविवेकादन्यदा प्रवृत्तिदर्शनाद् योग्यताऽविच्छेदात्, उदकज्ञानाच्च प्रवर्तमानस्य सर्पचोरादिदर्शनेन प्रवृत्तिनिरोधे सर्पादिज्ञानादुदकज्ञानस्य बाधप्रसिद्धिः स्यात्। अविविक्ततया प्रतिपन्नस्य विवेको बाध इति चेत्, न; सर्वपदार्थेषु प्रथममविविक्ततया प्रतिपन्नेषु पश्चादितरेतरापेक्षया भेदज्ञानं सर्वत्र बाधः स्यात्। नच पदार्थज्ञानमेव भेदज्ञानम्; गृहीतमात्रस्य सति

## तत्त्वदीपनम्

बाध्यत्वं मिथ्यात्वमित्याकर्ण्य वैतण्डिकः प्रत्यवतिष्ठते—**ननु कोऽयमिति** ॥ किमन्यार्थिनोऽन्यत्र प्रवृत्तिनिरोधो बाधः ? उत तद्योग्यताविच्छेदः ? आहो विवेकज्ञानम् ? किं वेतरेतराभावबोधः ? उत प्रतिपन्नोपाधावभावप्रतियोगित्वबोधनम् ? अथवाऽज्ञाननिवृत्तिः ? इति किंशब्दार्थः। आद्यमनूद्याऽव्याप्त्या दूषयति—**अन्यार्थिन इत्यादिना** ॥ द्वितीयमनुवदति—**न प्रवृत्तीति** ॥ बाधकज्ञानेन योग्यताया उन्मृदितत्वात्समयान्तरे पुरोवर्तिनि प्रवृत्तिर्न स्यादिति दूषयति—**न पुनरिति** ॥ योग्यतान्तरस्य पुनस्तत्रोत्पन्नत्वात् प्रवृत्तिर्घटत इत्याशङ्क्य, तस्या अयावद्द्रव्यभावित्वाद् विच्छेद एवानुपपन्न इत्याह—**योग्यतेति** ॥ नच योग्यताप्रतिबन्धो बाधः; विवेकज्ञानसमयेऽविवेकहेत्वभावेन फलाभावोपपत्तौ प्रतिबन्धककल्पनानवकल्पनादित्यर्थः ॥

प्रवृत्तिनिरोधो बाध इत्यत्र सिंहावलोकनन्यायेन दूषणान्तरं समुच्चिनोति—**उदकज्ञानादिति** ॥ अन्यत्रेति शेषः। तृतीयमुत्थापयति—**अविविक्ततयेति** ॥ विवेकमात्रस्य बाधकत्वं निराकर्तुम्—**अविविक्तेति** विशेषणम् ॥ विवेकेनागृहीतत्वमविविक्तत्वम् ? उताभेदेन बुद्धत्वम् ? आद्येऽपि किं पदार्थज्ञानातिरिक्तं विवेकग्रहणम् ? उत पदार्थज्ञानमेव ? इति विकल्प्य प्रथमं प्रत्याह—**सर्वेति** ॥ पदार्थज्ञानसमये तयोर्भेदस्यागृहीतत्वाद् यदितरेतरापेक्षया भेदज्ञानम्, असौ बाध आपद्येत, न च तथा प्रसिद्धिरस्तीत्यर्थः। पदार्थप्रतिपत्तिरेव भेदप्रतिपत्तिरिति कल्पं निरस्यति—**नचेति** ॥ भेद इत्यत्र प्रतिपन्न इति पदमध्याहर्तव्यम्। अविविक्तत्वमभेदेन प्रतिपन्नत्वमिति यो द्वितीयः कल्पः, यश्चेतरेतराभावप्रत्ययो बाध इति, तदुभयमुत्थापयति—**अन्यात्मनेति** ॥ अतिव्याप्त्या दूषयति—**शुक्ल इति** ॥

## ऋजुविवरणम्

स्मिन्नर्थे परामर्शोऽयमुदाहृतः, ननु प्रमाणान्तरमिति भावः। **ननु** देशान्तरसम्बन्धिनि घटादावेतद्देशमात्रनिराकरणं दृश्यत इत्याशङ्क्याभिप्रायमाह—**स्मृतिग्रहणेति** ॥ ननु—बाधस्याभावेन बाधकानिरूपणात् कथं तेन मिथ्यात्वम् ? इति चोदयति—**ननु कोऽयमिति** ॥ स्वयमेवाख्यातिवादिसिद्धं फलापहारं तावदाशङ्कते—**अन्यार्थिन इति** मा भूत् तत्र बाध इति, तत्राह—**प्रसिद्धश्चेति** ॥ **ननु** प्रवृत्तिविच्छेदाद् योग्यताविच्छेदो निश्चीयते, उत्तरोत्तरप्रवृत्तिस्तु योग्यतान्तरनिबन्धनेत्याशङ्क्य, विच्छेदस्यान्यथासिद्धिमाह—**उदकज्ञानाच्चेति** ॥ अन्यथाख्यातिपक्षमाशङ्कते—**अन्यात्मकतयेति** ॥ अत्यन्तभेदवादे दूषणमाह—**शुक्लो घट इतीति** ॥ अत्रापि सामानाधिकरण्यादभेदप्रतीतिरिति भावः। भेदाभेदपक्षे दूषणमाह—**समानौ चेति** ॥ तत्र निवृत्तिर्बाध इत्युक्ते घटादिनिवृत्तेरपि बाधत्वं स्यात्; तन्निवृत्त्यर्थमाह—**ज्ञानेनेति** ॥ प्रागभाव-पूर्वज्ञानयोर्ज्ञानेन निवृत्तावपि न बाधप्रसिद्धिः, तदर्थमाह—**अज्ञानस्येति** ॥ सर्वप्रमाणेष्वज्ञाननिवृत्तावपि बाधप्रसिद्ध्यभावात्तन्निवृत्त्यर्थमाह—**स्वकार्येणेति** ॥ अज्ञानस्य कार्यद्वयम्। तत्र वर्तमानेन सह निवृत्तौ लक्षणे प्रातिभासिकस्य कालान्तरे स्थित्यभावादुत्तरत्र नेदमिति ज्ञानस्य बाधकत्वं न स्यात्; प्रसिद्धश्च बाधः, प्रलीनसाहित्ये च विवक्षिते

## पञ्चपादिकाविवरणम्

भेदेऽविवेकाभावप्रसङ्गादित्युक्तम्। अन्यात्मना प्रतिपन्नस्येतरेतराभावप्रतिपत्तिर्बाध इति चेत्, शुक्लो घट इति प्रतिपद्य घटस्य शौक्ल्यं न द्रव्यम्, गुण इति ज्ञानं सर्वत्र बाधः स्यात्, न तथा प्रसिद्धिरस्ति; समानौ च सर्वत्र भेदाभेदावित्यैक्यं प्रतिपद्य भेदप्रतिपत्तिः सर्वच बाधः स्यात्। न ज्ञानस्य प्रध्वंसो बाधः; स्वयमेव क्षणिकत्वात्, अर्थस्य च संविद्विषयस्यान्यस्य वा ज्ञानेन प्रध्वंसायोगात्, बाधस्य च लोकप्रसिद्धत्वात्। तस्मान्न बाधं पश्यामः॥ **उच्यते**—अज्ञानस्य स्वकार्येण वर्तमानेन प्रविलीनेन वा सह ज्ञानेन निवृत्तिर्बाधः, तथाविधानवबोधनिवृत्तौ बाधप्रसिद्धेरिति॥

## तत्त्वदीपनम्

दिगम्बरमते सर्वस्य भिन्नाभिन्नत्वादभेदप्रतिपत्त्युत्तरकालं यदिदं भेदज्ञानम्, तदपि बाधकं स्यादिति न भ्रान्त्यादिव्यवस्थेत्याह—**समानाविति**॥ पञ्चमेऽपीदं विवेचनीयम्—किं ज्ञानमात्रस्याभावप्रतियोगित्वं बाधः? उत ज्ञेयभेदस्येति? तत्राऽऽद्यं दूषयति—**नचेति**॥ द्वितीयं दूषयति—**अर्थेति**॥ किमर्थस्य प्रतिपन्नस्य बाधः? उताप्रतिपन्नस्य? प्रतिपन्नत्वेऽपि किं तद्विषयेण ज्ञानेन बाधः? उतान्यविषयेण? आद्ये संवादेन पूर्वज्ञानप्रामाण्यमेव दृढीकृतं स्यात्, द्वितीये भिन्नगोचरत्वान्नानयोर्बाध्य-बाधकतेत्यभिप्रेत्याह—**संविद्विषयस्येति**॥ अप्रतिपन्नत्वेन तस्याप्रसक्तेर्न निषेध इत्याह—**अन्यस्येति**॥ वाशब्दश्चार्थः। मा भूत तर्हि बाध इत्याह—**बाधस्येति**॥ अज्ञाननिवृत्तेर्बाधत्वेऽज्ञाननिवर्तकसकलज्ञानानां बाधकत्वप्रसक्तिरित्यभिप्रायेणोपसंहरति—**तस्मादिति**॥

अज्ञाननिवृत्तिर्बाध इति मतान्तरमादाय सिद्धान्तयति—उच्यत इति॥ घटादिज्ञानमपि बाधः स्यादिति यत्तूक्तम्, तत्राह—**स्वकार्येणेति**॥ किं वार्तमानिककार्यसहिताज्ञानस्य निवृत्तिर्बाधः? उत प्रविलीनकार्यसहिताज्ञानस्य? नाऽऽद्यः; विपर्ययोत्पत्त्यनन्तरकालं मनसो विषयान्तरसंचारे समयान्तरे च शुक्तिलोचनसंप्रयोगजाधिष्ठानज्ञानेनाज्ञाननिवृत्तौ वार्तमानिककार्यध्वंसाभावेनाव्याप्तेः, न द्वितीयः; कार्यसहिताज्ञाननिवृत्तौ तदभावात्, इत्याशङ्क्य कार्याऽऽकारेण परिणताज्ञाननिवृत्तिर्बाध इत्यनुगतं लक्षणमुभयत्राप्यस्तीत्याह—**वर्तमानेनेति**॥ तत्र प्रमाणमाह—**तथाविधेति**॥ अतो बाध्यत्वं मिथ्यात्वमित्युक्तं साधूक्तमित्युपसंहरति—**इतीति**॥

संप्रयोगाभावेन कथं लक्षणाव्याप्तिः शङ्क्यते? संप्रयोगस्य लक्षणान्तर्भावादित्याशङ्क्याह—**स्मृतिरूपेति**॥ स्मृते रूपमिव रूपमस्येति स्मृत्या साम्यं वैषम्यं च लक्ष्यते। तत्र स्मृत्या साम्यार्थं संस्कारजन्यत्वं सिद्ध्यति, वैषम्यार्थं संप्रयोगजन्यत्वम्। उभयजनितज्ञानस्यासम्यग्ज्ञानत्वार्थं दोषोऽपि कारणकोटौ निवेशितः, इति कारणत्रियजन्यत्वं सिद्धमित्यर्थः। कारणत्रितयजन्यत्व तटस्थलक्षणं तच्छब्दार्थः। इतरत् स्वरूपलक्षणमिदंशब्दार्थः। नच "शुक्लः पटः" इत्यादिप्रत्ययेषु स्वरूपलक्षणातिव्याप्तिः। वस्तुत आरोप्यप्रतियोगिकात्यन्ताभाववताऽन्यात्मताप्रतिपत्तेः स्वरूपलक्षणत्वेन विवक्षितत्वात्। सर्वमेतत् स्वरूपलक्षणमिति केचित्। "स्वप्नशोकादावि"त्यत्र शोकशब्देन शोकोद्भूतभ्रमस्य निर्देशः। आदिशब्देन संतोषप्रकर्षभ्रमस्य। लक्ष्य-लक्षणयोरविनाभावात्। लक्ष्ये सति लक्षणं नेति व्याहतमिति चोदयति—**कथमिति**॥ लक्षणत्वे सिद्ध एतत्

## ऋजुविवरणम्

वर्तमानसहिते बाधबुद्धिर्न स्यात्, उभयसाहित्यस्य चाभावात्, अतः प्रयोजकं विविच्य दर्शयति—**वर्तमानेनेत्यादिना**॥ कथमस्यैव बाधत्वमिति? तत्राह—**तथाविधेति**॥ **ननु**—निरूपिते सकललक्षणे कृत्स्नैकदेशाभावेनाव्याप्तिः शङ्कितुं शक्यते; नात्र तत्सकलज्ञानम्, कथमव्याप्तिः? यद्वा—स्मृतिरूपत्वस्य परत्र परावभासत्वस्य च संभवात्कथमव्याप्तिरुच्यते? इत्याशङ्क्य तत्प्रदर्शनपूर्वकमवतारयति—**स्मृतिरूपशब्देनेति**॥ **ननु**—न संप्रयोगः परत्र परावभासे कारणम्, अतः कथं तदभावेन परत्र परावभासो निराक्रियते "नहि स्वप्नशोकादावि"त्यनेन? इत्याशङ्क्य व्याचष्टे—**संप्रयोगस्येति**॥ लक्षणमुपपादयितुमुपक्रम्य स्मृतिस्वरूपं कीर्तितम्—"उक्तमेतदि"त्यनेन, तदसंगतमित्याशङ्क्य व्याचष्टे—**संप्रयोगाभावादिति**॥ "तदिह निद्रादिदोषोपप्लुतं मनः"इत्यनेन मनसः कारणत्वमुक्तम्, तत्र मनसः संकल्पविकल्पात्मकत्वेन ज्ञानसाधनत्वाभावात्कथं कारणत्रयान्तः

## पञ्चपादिका

**ननु न व्यापकमिदं लक्षणम्; स्वप्नशोकादावसम्भवात्, न हि स्वप्नशोकादौ केनचित्सम्प्रयोगोऽस्ति, येन परत्र परावभासः स्यात्। अत एव वासनातिरिक्तकारणाभावात् स्मृतिरेव, न स्मृतिरूपता, अत्रोच्यते। न तावत् स्मृतित्वमस्ति; अपरोक्षार्थावभासनात्। ननु स्मृतिरूपत्वमपि नास्ति; पूर्वप्रमाणसंस्कारमात्रजन्यत्वात्, अत्रोच्यते। उक्तमेतत्पूर्वप्रमाणविषया-**

## पञ्चपादिकाविवरणम्

स्मृतिरूपशब्देन कारणत्रितयजन्यत्वमुक्तम्। तत्र कारणत्रितयजन्योऽन्यस्यान्यात्मताऽवभासो लक्षणम्, तदिदं लक्ष्यं न व्याप्नोतीति चोदयति—**ननु न व्यापकमिति**॥ कथं लक्षणांशस्याभाव इति? तत्राह—**नहि स्वप्नशोकादाविति**॥ संप्रयोगस्य कारणांशस्याधिष्ठानांशस्य चाभावादित्यर्थः। कस्तर्हि स्वप्न इति? तदाह—**अत एवेति**॥ तत्र वासनाजन्य-स्मृतिमात्रत्वे भ्रान्तिप्रसिद्धिर्गवयादिस्मृतिवन्न स्यादिति परिहरति—**न तावत्स्मृतित्वमिति**॥ **ननु** कारणत्रितयाभावान्न ज्ञानान्तरमपीत्याह—**ननु स्मृतिरूपत्वमपि नेति**॥

कारणत्रितयजन्यत्वमन्यस्यान्यात्मनाऽवभासं च सम्पादयामीत्याह—**अत्रोच्यत इति**॥ सम्प्रयोगाभावादपरोक्षाव-

## तत्त्वदीपनम्

स्यात्, तदेवासिद्धमित्यभिप्रेत्याह—**तत्राहेति**॥ संस्कारवत्संयोगस्य कारणान्तर्भावः, इतरथाऽपरोक्ष्यानुपपत्तेरिति वा शङ्कते—**कथमिति**॥ बाह्येन्द्रियस्य तदोपरमादान्तरस्य च केवलस्य बहिरप्रवृत्तेर्न संप्रयोगजत्वसिद्धिरित्याह—**तत्राहेति**॥

टीकायां तटस्थलक्षणनिरसनेन कथं स्वरूपलक्षणनिरासः? इत्याशङ्क्याह—**संप्रयोगस्येति**॥ संप्रयोगस्याध्यासं प्रति कारणत्वात्तदभावे तदभाव इत्यर्थः। किंच किं स्वप्नभ्रमस्याऽऽत्माधिष्ठानम्? उतानात्मा? नाऽऽद्यः; विच्छिन्नतयाऽनात्मनः स्फुरणात्, न द्वितीयः; अनात्मन आरोपकोटौ प्रक्षेपादधिष्ठानत्वानुपपत्तेरित्याह—**अधिष्ठानेति**॥ कार्यापलापानुपपत्त्या कारणादिकं किंचित्तु कल्प्यमिति चोदयति—**कस्तर्हीति**॥ कार्यमन्यथासिद्धमित्याह—**तदाहेति**॥ अपरोक्षप्रत्ययविरोधाद्रजतज्ञानं न स्मृतिरिति शङ्कायामुक्तम्—**न स्मृतिरूपत्वमिति**॥ अपरोक्षात्माऽविवेकात्तथात्वव्यवहार इत्यर्थः॥

अपरोक्षप्रतिभासनमाश्रित्य रजतज्ञानस्य स्मृतित्वनिराकरणमनुपपन्नम्; प्रतिभासस्य भ्रान्त्याऽपि संभवात्, इत्याशङ्क्य, त्वन्मते सैवानुपपन्नेत्याह—**तत्र वासनेति**॥ दोषसहकृतवासनाजन्यत्वाद् भ्रान्तित्वं घटत इत्याशङ्क्याह—**गवयादीति**॥ स्मृतित्वे दोषजन्यत्वमेवानुपपन्नमित्यभिप्रायः॥

रजतज्ञानस्य स्मृतित्ववत्तद्विलक्षणत्वमप्यनुपपन्नम्; संस्कारमात्रजन्यत्वादित्युक्तम्, तन्नोपपद्यते; दोषस्य सामग्र्यन्तर्भावाद्धेत्वसिद्धेरित्याशङ्क्याह—**ननु कारणत्रितयेति**॥ न तावत्तदा संप्रयोगः, चक्षुष उपसंहृतत्वात्, देशाद्यन्तरितस्य संप्रयोगायोग्यत्वाच्च; नापि दोषसंभवः। चक्षुष उपसंहृतत्वात्, तद्गतदोषानुपपत्तेः। नापि विषयदोषः; स किं ज्ञायमानतया हेतुः? उताज्ञायमानतया? तत्र चक्षुषा तावन्न ज्ञायमानत्वम्; तस्योपसंहृतत्वात्। नापि मनसा; केवलस्य मनसो बहिरप्रसरात्। न द्वितीयः; जाग्रदवस्थायामवगतस्य विषयदोषस्य हेतुत्वदर्शनात्। नापि प्रमातृदोषः; निद्रादोषोपहततया रागाद्यसंभवादित्यर्थः। ज्ञानान्तरासिद्धौ न तत्र लक्षणसाधनमुचितमित्याशङ्क्य, प्रमाणस्मृतिविलक्षणत्वात्स्वप्नादिज्ञानस्याध्यासत्वम्,

## ऋजुविवरणम्

पादित्वमिति? तदाह—**प्रमात्रादीति**॥ "तस्ये"ति ज्ञानपरामर्शात् तच्छब्देनापि ज्ञानपरामर्शो भवेत्, तत्र तद्युक्तम्; अध्यसकारणावच्छिन्नचैतन्यस्थाविद्याशक्तेः परिणामस्योक्तत्वात्, न तु ज्ञानस्य कारणत्वम्। नचाविद्याशक्तिर्विवर्तते; निमित्तकारणसंसर्गाभावात्, तथा "सैवालम्बनतया विवर्तते" इत्यप्यनुपपन्नम्, लक्षणव्याप्तिश्च न स्यादित्याशङ्क्याभिप्रायमाह—**निद्रादिदोषेति**॥ "आलम्बनतये"ति व्याचष्टे—**मिथ्यार्थालम्बनाकारेणेति**॥ तथाऽविद्याविवर्तत्वपक्षे लक्षणाव्याप्तिरिति

### पञ्चपादिका

**वभासित्वमात्रं स्मृतेः स्वरूपमिति। तदिह निद्रादिदोषोपप्लुतं मनोऽदृष्टादिसमुद्बोधितसंस्कारविशेषं सहकार्यनुरूपं मिथ्यार्थविषयं ज्ञानमुत्पादयति। तस्य च तदवच्छिन्नापरोक्षचैतन्यस्थाविद्याशक्तिरालम्बनतया विवर्तते। ननु एवं सत्यन्तरेव**

### पञ्चपादिकाविवरणम्

भासित्वाद् ग्रहण-स्मृतिमात्रत्वे प्रत्युक्ते, तृतीयमिदं विज्ञानं स्वयमेवोक्ताध्यासलक्षणं गमयितुं समर्थमिति वदितुं प्रकारान्तरं पर्युदस्यति—**उक्तमेतदिति** ॥ स्वप्नप्रपञ्चविपरीतप्रमात्रांदविज्ञानसाधनस्यान्तः करणस्य निद्रादिदोषपूर्वानुभवसंस्कारसहितस्य संप्रतिपन्नकारणत्रितयत्वाद् युक्तं स्मृतिरूपं भ्रान्तिज्ञानमित्याह—**तदिह निद्रादिदोषोपप्लुतमिति** ॥

### तत्त्वदीपनम्

ततश्चोभयमपि लक्षणं संपादयितुं शक्यमित्याह—**कारणत्रितयेति** ॥ लक्षणासिद्धिशङ्कायां तदुपपादनमुचितम्, न स्मृतिरूपकीर्तनमित्याशङ्क्य तात्पर्यमाह—**संप्रयोगेति** ॥

ग्रहणत्व-स्मृतित्वप्रयुक्तौ क्रमेण हेतुद्वयं द्रष्टव्यम्। जागरे बाह्येन्द्रियसंप्रयोगस्यापरोक्षाऽऽरोपजनकत्वम्, स्वप्ने त्वन्यथेति वैषम्यमाशङ्क्यारोप्यविपरीताकारबोधजनकं नयनं दुष्टं सदारोजनमकं जागरणे दृष्टम्, तच्च स्वप्नेऽपि संपादयितुं शक्यमित्याह—**स्वप्नप्रपञ्चेति** ॥ प्रसिद्धदोषाभावेऽप्यन्यो दोषोऽस्तीत्याह—**निद्रेति** ॥ वातादिरादिशब्दार्थः **तदिहेत्यस्यायमर्थः—तत्** तत्र; अयथाव्यवहारहेतुज्ञानस्य ग्रहण-स्मृतिविलक्षणत्वे इत्यर्थः। **इहेति** ॥ जाग्रद्भोगप्रदकर्मोपरमे स्वप्नोपस्थापककर्माभिव्यक्तौ चेत्यर्थः। सकलसंस्कारसद्भावे कथं कदाचित् कस्यचिद्भानम्? इत्यत आह—**अदृष्टेति** ॥ तटस्थलक्षणसिद्धावपि न स्वरूपलक्षणं सिद्ध्यति; आत्मन्यनात्मनि वाऽऽरोपासंभवात्, इत्युक्तं स्मारयति—**कथमिति** ॥ अनात्मनोऽनधिष्ठानत्वेप्यात्मनोऽधिष्ठानत्वं घटयितुं शक्यत इत्याह—**तदाहेति** ॥ "तदवच्छिन्नेत्य"त्र तत्पदेन ज्ञानं गृह्यते; तस्य प्रकृतत्वात्, इति शङ्कां निराकर्तुमाह—**अन्तःकरणेनेति** ॥ अन्तःकरणसंप्रयोगस्य स्वप्नहेतुत्वे जाग्रत्यपि तत्प्रसङ्गः, तदर्थमाह—**निद्रादीति** ॥

अन्तः करणस्योपादानत्वं व्यावर्तयति—**मिथ्येति** ॥ नयनसंप्रयुक्तेदमंशवन्मनसा संयुक्तमधिष्ठानमित्याह—**अवच्छिन्नेति** ॥ चैतन्यस्यासङ्गाद्वितौयस्याधिष्ठानत्वमप्यनुपपन्नमित्याशङ्क्य, न साक्षादधिष्ठानत्वम्, अपि त्वविद्याद्वारेणेत्याह—**अविद्येति** ॥ अविद्याशक्तेः सदातनत्वेन सदा कार्यजनकत्वं स्यादित्याशङ्क्य विशिष्टान्तःकरणसंयोगस्याविद्याक्षोभकत्वात् तस्य चाऽऽगन्तुकत्वान्नैवमित्याह—**पुष्कलनिमित्तेति** ॥ इतिशब्दोऽक्षरार्थकथनपरिसमाप्तिद्योतनार्थः। अविद्याशक्तिर्मिथ्यार्थाऽऽकारेण विवर्तते चेत्, सत्यानृतमिथुनीकरणरूपत्वमध्यासस्योक्तं कुप्येतेत्यत्राह—**चैतन्यमिति** ॥ अन्यथाऽन्यथा विवर्तमानाऽज्ञानसत्तास्फूर्त्तिप्रदत्वाच्चैतन्यमेव तथा तथा विवर्तत इत्युक्तं स्यात्। अतश्चोक्ताध्यासिद्धिरित्यर्थः ॥

जागरणे बाह्याधिष्ठानमुपलब्धम्, तद्वत्स्वप्नेऽपि बाह्याधिष्ठानं वक्तव्यम्, नच तन्निरूपयितुं शक्यत इति कथं परत्र परावभासः? तत्राह—**तथेति** ॥ यथा स्वप्ने चैतन्यमधिष्ठानम्, तथा जागरणेऽपि शुक्तिकाद्यवच्छिन्नचैतन्यं रजताद्यालम्बनमिति बाह्याऽऽलम्बनं रजतादि कथ्यत इत्यन्वयः। कथं चैतन्यस्य स्वच्छस्यास्वच्छशुक्तिकाद्यवच्छेदः? इत्याशङ्क्याह—**बाह्याधिष्ठानांशेति** ॥ इन्द्रियस्य बाह्यसंप्रयोगे तद्द्वाराऽन्तःकरणं बाह्याऽऽकारेण विपरिणमते, तस्मिंश्चान्तःकरणे स्वच्छे चैतन्यस्य प्रतिविम्बोदयो भवति; ततश्चान्तःकरणद्वारा विषयसंसर्गोऽपीत्यर्थः। "अवच्छिन्नतये"त्येतच्छुक्तिकाद्यवच्छिन्नमित्यनेन संबध्यते ॥

### ऋजुविवरणम्

यच्चोदितम्, तत्परिहरति—**चैतन्यमेवेति** ॥ **ननु**—जागरणे बाह्यस्यैवाधिष्ठानत्वं दृष्टम्, तथा स्वप्नेऽपि वक्तव्यम्, तत्र च तदभावात्कथं परत्र परावभासः? इत्याशङ्क्याभिप्रायान्तरमाह—**तथा जागरणेऽपीति** ॥ तथेति पूर्वप्रकारातिदेशः। जागरणेऽपि चैतन्यमेवालम्बनमित्यर्थः, कथं न साक्षात्त्वमिति? तदाह—**चैतन्यं रजताद्यालम्बनमिति** ॥ कथं तर्हीदं रजतमिति प्रतीतिरिति? तदाह—**शुक्तिकाद्यवच्छिन्नमिति** ॥ कथं चैतन्यस्य तदवच्छेद इति? तदाह—**बाह्याधिष्ठानेति** ॥ तर्हि शुक्त्यादिविशेषात्मताप्रतीतिरपि कस्मान्न भवति? इत्याशङ्क्याह—**अंशसंसृष्टेति** ॥ **ननु** तदेव न कारणम्, किंत्वविद्याऽपि; सा

### पञ्चपादिकाविवरणम्

कथं परत्र परावभास इति ? तदाह—**तस्य चेति** ॥ निद्रादिदोषसंस्कारोपप्लुतेनान्तःकरणेन मिथ्याध्यासनिमित्तकारणेनावच्छिन्नचैतन्यस्थाऽविद्याशक्तिः पुष्कलनिमित्तकारणसंसर्गादध्यासं प्रति पुष्कलकारणतामापद्यमाना मित्यार्थालम्वनाकारेण विवर्तत इति, चैतन्यमेव स्वाविद्यया विवर्तते । अतः सत्यस्य वस्तुनो मिथ्यावस्तुसंभेदावभासलक्षणः परत्र परावभासो विद्यत इति भावः । तथा जागरणेऽपि बाह्याधिष्ठानांशसंसृष्टान्तःकरणावच्छिन्नतया बाह्याधिष्ठानांशसंसृष्टचैतन्यस्थाविद्याशक्तिर्बाह्याधिष्ठानसंसृष्टरजताद्याकारेण विवर्तत इति, शुक्तिकाद्यवच्छिन्नं चैतन्यं रजताद्यालम्बनमिति बाह्यालम्बनं रजतादि कथ्यते । सर्वत्र तु चैतन्यमेव साक्षाद्वाऽन्यावच्छिन्नतया वा विभ्रमालम्बनमिति, युक्तः—'परत्र परावभासः' इत्यर्थः ॥

### तत्त्वदीपनम्

चैतन्यस्याधिष्ठानसंसृष्टत्वं चोपपादयति—**बाह्येति** ॥ रजतादेरविद्याविवर्तत्वाभ्युपगमाच्चैतन्यालम्वनत्वं कथम् ? इत्याशङ्क्य विवर्तमानाधिष्ठानत्वाच्चैतन्यस्याधिष्ठानत्वं युक्तमित्याह—**चैतन्यस्थाऽविद्याशक्तिरिति** ॥ रजतस्य चिदविद्यापरिणामत्वे परिणामस्य परिणामितन्त्रतया न—'इदमि'ति प्रतिभासो युक्त इत्याशङ्क्याह—**बाह्याधिष्ठानसंसृष्टरजतेति** ॥ तत्र हेतुमाह—**बाह्याधिष्ठानसंसृष्टेति** ॥ क्वचिदवच्छिन्नं चैतन्यमधिष्ठानम्, क्वचिदनवच्छिन्नं चैतन्यमित्यनुगतप्रयोजकाभावमाशङ्क्य, सर्वत्र चित्त्वमधिष्ठानत्वप्रयोजकमित्याह—**सर्वत्र त्विति** ॥

चैतन्यस्य सकलविभ्रमाधिष्ठानत्वेऽन्तरेवाऽऽरोपितप्रतिभासः स्यादित्युक्तम्, तदनुपपन्नम्; चैतन्यस्य सकलविषयव्यापित्वात् इत्याशङ्क्य, सिद्धान्त्यभिप्रायमजानानस्येदं चोद्यमित्याह—**आकाशवदिति** ॥ किं शरीरगततया प्रतिभास आपाद्यते ? उताऽऽत्मगततया ? नाद्यः; अप्रसक्तेः, द्वितीये त्विष्टापत्तिरित्याशङ्क्याह—**आत्मैवेति** ॥ परिच्छिन्नस्याऽऽत्मनोऽधिष्ठानत्वादहं नीलमिति प्रतिभासः स्यादित्यर्थः । परिच्छिन्नाऽऽत्मगततया प्रतिभास आपादित इष्टापत्त्योत्तरमयुक्तमित्याशङ्क्याह—**निष्कृष्टाहंकारमिति** ॥ निष्कृष्टः पृथक्कृतोऽहंकारो यस्मात्तत्तथोक्तम् । अनवच्छिन्नात्मगततयाऽपि प्रतिभासाभावमाशङ्क्य, 'घटः स्फुरति' 'पटः स्फुरती'ति चित्समानाधिकरणतया प्रतीतिरस्तीत्याह—**चैतन्यस्येति** ॥ चित्समानाधिकरणतया सर्वप्रतिभास उक्ते विच्छिन्नदेशस्य तया स्फुरणाभिधानमयुक्तमित्याशङ्क्याह—**पुनरपीति** ॥ विच्छिन्नश्चासौ देशश्चेति कर्मधारयसमासशङ्का स्यात्, ततश्चाऽर्थस्यान्तरनुभवाश्रयत्व नोपपद्यत इति व्यधिकरणमित्याशङ्क्य, विच्छिन्नो देशो यस्येति बहुव्रीहिर्विवक्षित इत्याशयवानाह—**इदमिति** ॥

### ऋजुविवरणम्

चात्माऽऽश्रया तदाश्रयरजताकारेण कस्मान्न विवर्तत इति ? तत्राह—**बाह्याधिष्ठानांशेति** ॥ पूर्ववदेव वांशविवक्षा । भवत्वन्तःकारणद्वारेणाविद्याशक्तेर्विषयसबन्धः; तथापि कथं रजतस्य पुरोवर्त्यात्मना प्रतीतिरिति ? तत्राह—**बाह्याधिष्ठानसंसृष्टेति** ॥ इतिशब्दः प्रकारवचनः, हेत्वर्थो वा । **अथवा**—शुक्त्यवच्छेदे चैतन्यस्योक्तेऽनन्तरमेव शङ्का—चैतन्यस्य तदवच्छेदेऽपि कथं रजतस्य' पुरावर्त्यात्मना प्रतातिरिति ? तदाह—**बाह्याधिष्ठानसंसृष्टेति** ॥ आत्माश्रयाऽविद्या कथ तत्संसृष्टरजताकारेण विवर्तत इति ? तत्राह—**बाह्याधिष्ठानांशेति** ॥ चैतन्यस्यापि कथं तदवच्छेद इति ? तदाह—**बाह्याधिष्ठानांशेति** ॥ **अथवा**—"तस्य चे" तीमं ग्रन्थं प्राचीनशङ्कापरिहारत्वेन योजयति तथा जागरणेऽपीति । तस्य चेत्यस्य व्याख्या—**तथा जागरणेऽपीति** ॥ जागरणेऽपि यद् ज्ञानम्, तस्यापीत्यर्थः ॥ "तदवच्छिन्ने"ति व्याचष्टे—**बाह्याधिष्ठानांशेति** ॥ "अपरोक्षे"त्यादि व्याचष्टे—**बाह्याधिष्ठानांशेति** ॥ "आलम्बनतये"त्यस्य व्याख्या—**संसृष्टरजतेति** ॥ "शुक्तिकाद्यवच्छिन्नमि"त्यादिना समस्तवाक्यार्थमाह । **ननु** स्वप्ने चैतन्यमधिष्ठानमुक्तम्, तत्र कथं "नन्वेवं सत्यन्तरेव"इति चोद्यम् ? इत्याशङ्क्य तद्बीजं दर्शयति—**आकाशवदिति** ॥ अन्तरेवेति शरीरगतत्वम् ? आत्मगतत्वं वा ? उभयथाऽपि न विरोधः; अङ्गीकारात्, सिद्धान्ताविरोधि च चोद्यमित्याशङ्क्याभिप्रायमाह—**आत्मैवाधिष्ठानं चेदिति** ॥ अहमवच्छिन्नत्वं प्रक्रमाद् लब्धम् । **ननु** उक्ताभिप्रायेण चोद्ये "को वा ब्रूते" 'इति तदङ्गीकरणमनुपपन्नमित्याशङ्क्याभिप्रायमाह—**निष्कृष्टाहंकार-**

## पञ्चपादिका

**स्वप्नार्थप्रतिभासः स्यात् ? को वा ब्रूते नान्तरिति ? ननु विच्छिन्नदेशोऽनुभूयते स्वप्नेऽपि जागरण इव, न तदन्तरनुभवाश्रयत्वे स्वप्नार्थस्योपपद्यते । ननु देशोऽपि तादृश एव, कुतस्तत्सम्बन्धाद्विच्छेदोऽवभासते ? अयमपि तदर्थपरो दोषः, नैष दोषः; जागरणेऽपि प्रमाणज्ञानादन्यदन्तरपरोक्षानुभवान्न विषयस्थाऽपरोक्षता भिद्यते; एकरूपप्रकाशनात् । अतोऽन्तर-**

## पञ्चपादिकाविवरणम्

आकाशवत्सर्वविषयोपरक्ततया सर्वत्रावभासमानमात्मानमनादृत्याहमित्येवावच्छिन्नमात्मानमुपादाय चोदयति—**नन्वेवं सत्यन्तरेवेति** ॥ आत्मैवाधिष्ठानं चेत्, इदं रजतमितिवदहं नीलमित्येव स्वप्नप्रपञ्चो भायादित्यर्थः । निष्कृष्टाहङ्कारं चैतन्यमात्रमात्मानमादाय चेत्यस्य च चित्सामानाधिकरण्यावभासं सर्वत्राङ्गीकृत्य परिहरति—**को वा ब्रूत इति** ॥ पुनरप्यहङ्कारावच्छिन्नमात्मानमादाय चोदयति—**ननु विच्छिन्नदेश इति** ॥ इदमिति पृथक्तयेत्यर्थः । पृथक्त्वावभासोऽप्यन्तरेवेत्याह—**ननु देशोऽपीति** ॥ अनवच्छिन्नचैतन्यसंसृष्टतयैव भेदावभासोऽपीति भावः । पुनरप्यहङ्कारावच्छिन्नमादायाहं भेद इत्यपि

## तत्त्वदीपनम्

देशोऽपि तादृश इत्यत्रार्थस्यान्तःस्थतयाऽप्रतिभासवद् देशस्यापि तथात्वमुच्यत इत्याशङ्का स्यात्, तथा च बाह्यदेशसंबन्धितयाऽर्थस्यापि बहिष्ठत्वात् सिद्धान्तविरोधः । तथाच कुतस्तत्संबन्धादित्येतच्च विरुद्धयेतेत्याशङ्क्याह—**पृथक्त्वेति** ॥ तादृक्शब्देन नार्थसादृश्यं विवक्षितम्, किं त्वन्तःस्थत्वमित्यर्थः । मेर्वादिदेशस्य व्यवहितस्य कथमन्तःस्थत्वम् ? इत्याशङ्क्याह—**अनवच्छिन्नेति** ॥ भेदशब्देन देशो विवक्षितो भिद्यत इति । अनवच्छिन्नचैतन्यसंसृष्टतया देशावभासस्योक्तत्वात्कथं दोषाऽऽपत्तिः ? इत्यःशङ्क्याह—**पुनरपीति** ॥ "को वे"त्यादिनाऽनवच्छिन्नचैतन्यात्मताया उक्तत्वात्पौनरुक्त्यमित्याशङ्क्याह—**निगूढेति** ॥ अनवच्छिन्नं चैतन्यमधिष्ठानमित्यभिसन्धिः । पराक्चित्तस्य वादिनः स्वाशयानवबोधप्रतिपत्ताविव्याह—**इदानीमिति** ॥ व्याप्तावपि न निखिलाधिष्ठानत्वम्; तदनुविद्धतया प्रतीतेरित्याशङ्क्याह—**सर्वेति** ॥

विषयस्थापरोक्षतायाः प्रत्यगनुभवाद्भेदाभावेऽनुभवविरोधः स्यात् । न च—"प्रमाणज्ञानादि"त्यत्र वस्तुतो भेदस्य निरास इति—शङ्क्यम्; किं तयोः पञ्चम्योः सामानाधिकरण्यम् ? उत वैयधिकरण्यम् ? आद्ये न त्वदिष्टसिद्धिः; द्वितीये ज्ञानप्रतियोगिको भेदो निषिद्धः स्यादित्याशङ्क्य प्रामाणिको भेदो निषिद्धिः स्यादित्याशङ्क्य प्रमाणिको भेदोनिराक्रियते, न काल्पनिक इत्याह—**प्रातिभासिकेति** ॥ 'जाग्रद्वुद्धः' इतिवत् पञ्चम्या निमित्तार्थत्वात्प्रमाणज्ञाननिमित्तो न भेदः इत्युक्तं भवतीत्यर्थः । अनुभवस्य बाधाभावात् प्रतीयमानो भेदः परमार्थ एवेति शङ्कते—**नन्वहमिति** ॥ विषयस्थचैतन्येन तत्प्रकाशसंभवात् "प्रकाशानुपपत्तेरि"त्युक्तमित्याशङ्क्याह—**स्वयमिति** ॥ पटादयो **विषयाः**, **स्वयम्** = स्वरूपेण, **चैतन्यहीनाः** = चैतन्यासंबन्धिनः । तस्य तद्रूपत्वेन तदधीनव्यवहारभाक्त्वम्; घटादीनामन्योन्यनिमित्तव्यवहारादृष्टेः, इतरथा न चितस्तत्स्थत्वम्; स्वप्रकाशचिदधिगमं विना तत्स्थत्वानधिगतेरित्यर्थः ॥

## ऋजुविवरणम्

**मिति** ॥ अन्तःशब्दस्यान्यथा व्याकृतत्वादत्रापि तदर्थत्वशङ्कानिवृत्त्यर्थमन्यथा व्याचष्टे—**चेत्यस्येति** ॥ उक्तादूर्ध्वं चोद्यमनुपपन्नमिति मत्वा तदभिप्रायमाह—**पुनरपीति** ॥ विच्छिन्नश्चासौ देशश्चेति विग्रहः प्रतिभाति; तथा सति विच्छिन्नदेशानुभवादर्थस्यान्तरनुभवाश्रयत्वं नोपपद्यत इति व्यधिकरणो हेतुरित्याशङ्क्य व्याचष्टे—**इदमिति** ॥ पृथक्तयेत्यनेन विच्छिन्नो देशो यस्यार्थस्येति विग्रहो दर्शितः । "देशोऽपि तादृशः" इत्यनेनार्थसादृश्यं दर्शितम् । तत्र पूर्वग्रन्थे इदमिति प्रतीत्याऽर्थस्यान्तरनुभवाश्रयत्वं नोपपद्यत इति चोदिते "तादृशः" इत्यनेन सन्निधानाद् बाह्यत्वमुक्तमिव प्रतिभाति; तथा सति तादृशत्वमिष्टविघातकं स्यात्; बाह्यदेशसम्बन्धेनार्थस्यापि बहिष्ठोपपत्तेः इत्याशङ्क्य तद्व्याख्यानेनावतारयति—**पृथक्त्वावभास इति** ॥ अवभासमानं पृथक्त्वमान्तरमेवेत्यर्थः । अर्थगतत्वेन प्रतीयमानमिदन्त्वं कथमान्तरमुच्यते—इत्याशङ्क्य व्याचष्टे—**अनवच्छिन्नेति** ॥ "अहं भेद इत्यपि प्रतीयादि"ति चोदितेऽनन्तरं चेतन्यैकत्वप्रतिपादनं कृतम्, ',नैष दोषो जागरणेऽपी"-

## पञ्चपादिका

**परोक्षानुभवावगुण्ठित एव जागरणेऽप्यर्थोऽनुभूयते; अन्यथा जडस्य प्रकाशानुपपत्तेः। यथा तमसाऽवगुण्ठितो घटः प्रदीपप्रभावगुण्ठनमन्तरेण न प्रकाशीभवत्येवम्। यः पुनर्विच्छेदावभासः, स जागरेऽपि मायाविजृम्भितः; सर्वस्य प्रपञ्चजातस्य**

## पञ्चपादिकाविवरणम्

प्रतीयादित्याह—**अयमपीति** ॥ निगूढाभिसन्धिरेव पूर्वमुत्तरमुक्त्वा, इदानीं सर्वतो विप्रसृतंचैतन्यं सर्वात्मना प्रकाशमानमात्मानं स्पष्टीकुर्वन्नाह—**नैष दोषो जागरणेऽपीति** ॥ प्रातिभासिकभेदमन्तरेण प्रमाणतो न भिद्यत इत्यर्थः। **ननु** अहमवच्छिन्नचैतन्यादन्यान्येव विषयगतचैतन्यानि किं न स्युः? इत्यत आह—**अन्यथा जडस्येति** ॥ स्वयं चैतन्यहीना विषया आत्मावगतिप्रकाशेनापि न संसृज्यन्ते चेत्, मयाऽवगता इति सम्बन्धावभासो न स्यादित्यर्थः ॥

सर्वत्र चैतन्यावगुण्ठनेऽपि—'अहमिदमि'ति चात्मानात्मानौ विभक्ताविति प्रतिभासः कथमिति? तत्राह—**यः पुनरिति** ॥ **ननु** चैतन्यमेव सर्वत्रान्तर्बहिर्भेदादिरूपेणावभासते चेत्, कथं तस्याखण्डाद्वितीयतेति? चेत्यभेदोपरागनिमित्तभेद-

## तत्त्वदीपनम्

विषये चैतन्यमङ्गीकृत्य तस्याऽऽत्मव्यतिरेके दोषमाह—**आत्मेति** ॥ अभेदवत्संबन्धानुपपत्तिरपेरर्थः। आत्मावगतिरेव प्रकाश आत्मावगतिप्रकाशः, तेन नाभेदलक्षणः संबन्धः; भिन्नत्वात्, नच संबन्धान्तरं निरूपयितुं शक्यम्, येन विषयेऽन्तःकरणपरिणामसंसृष्टेः प्रमातृचैतन्यस्य तच्चैतन्याभेदेनाभिव्यक्ततया तत्प्रथनं स्यादित्यर्थः। सर्वस्य चिदध्यासे पटादीनां पराक्त्वेनाहंकारादीनां प्रत्यक्त्वेन प्रतिभासः कथं घटते? इत्याशङ्क्याह—**सर्वत्रेति** ॥ सर्वत्र चैतन्यावगुण्ठनेऽपि विभक्ताविति प्रतिभासः कथमिति संबन्धः। विभक्तशब्दार्थमाह—**आत्मेति** ॥ प्रत्यक्पराञ्चावित्यर्थः ॥

प्रतिभासमभिनयति—**अहमिति** ॥ सर्वस्य पूर्णात्मनि कल्पितत्वेऽप्यहमिति स्फुरणयोग्यप्राक्तनदेहादिसंस्कारसहितमायाकार्यत्वादुत्तरोत्तरदेहादिष्वहंप्रत्ययो घटादीनां चेदन्तया प्रथोपपन्ना; इदमिति प्रतीतियोग्यपूर्वघटादिसंस्कारसहितमायाकार्यत्वादुत्तरोत्तरघटादेरिति समाधानग्रन्थार्थः। प्रपञ्चस्याद्वितीयचैतन्याश्रयत्वमुक्तम्, तदाक्षिपति—**ननु चैतन्यमिति** ॥ अन्तर्भेदो नामात्मधर्मिक आत्मप्रतियोगिक इत्यर्थः। अनात्मधर्मिकोऽनात्मप्रतियोगिको भेदो—**बहिर्भेदः** ॥ अखण्डशब्दः सजातीयभेदाभावपरः, अद्वितीयशब्दस्तु विजातीयभेदाभावपरः। सजातीयभेदस्तावदयुक्त इत्याह—**चेत्येति** ॥ संवित्, स्वान्तर्गणिकभेदशून्या, उपाधिमन्तरेणाविभाव्यमानभेदत्वात्, यदित्यम्, तत्तथा। यथा गगनमित्यर्थः। **तस्य च निरंशस्येत्यस्यायमर्थः—तस्य** = चैतन्यस्य चित्प्रदेशाद्भेदाभावात्। तत्र हेतुः—**निरंशस्येति** ॥ स्वव्यतिरिक्तचैतन्यांशस्याभावान्न तत्प्रतियोगिको भेद इत्यर्थः।

## ऋजुविवरणम्

त्यादिना, तदसङ्गतम्; नचाधिष्ठानचैतन्यनिरूपणं क्रियते; पूर्वनिरूपितत्वेन पौनरुक्त्यात्, इत्याशङ्क्य साभिप्रायमवतारयति—**निगूढाभिसन्धिरिति** ॥ "प्रमाणज्ञानादि"त्यस्यानन्तरेण पदेन सामानाधिकरण्यशङ्का स्यात्; तत्समानविभक्तित्वात्, तथा सति व्यर्थविशेषणत्वम्, अनुपपन्नं त्वनभिहितस्य प्रमाणत्वमित्याशङ्क्य "अनन्तरपरोक्षानुभवादि"त्यवधौ पञ्चमी, इयं तु हेतौ, ल्यब्लोपे वेत्यभिप्रायेण प्रतीतिनिर्वाहपूर्वकं व्याचष्टे—**प्रातिभासिकमिति** ॥ **अथवा**—कथमेकरूपप्रकाशनेन भेदो निराक्रियते? प्रमाणान्तरनुभव-विषयस्थचैतन्यानां भेदस्यापि प्रतीयमानत्वात्, इत्याशङ्क्य व्याचष्टे—**प्रातिभासिकमिति** ॥ अस्मिन् पक्षे समानाधिकरण्येऽपि न विरोधः; ऐक्यस्य विवक्षितत्वात्' "अन्यथा जडस्ये"त्ययुक्तम्; नहि जडत्वमन्तरपरोक्षानुभवसापेक्षत्वे हेतुः, प्रकाशसंसर्गपेक्षत्वाज्जडावभासस्य। "प्रकाशानुपपत्तेरि"त्यप्ययुक्तम्; स्वगतचैतन्येन चिद्रूपत्वेन वा प्रकाशोपपत्तेरित्याशङ्क्य व्याचष्टे—**स्वयं चैतन्यहीना इति** ॥ चिद्रूपत्वाभावादित्यर्थः। "विषयाः" इति जडत्वोपपादनम्, चेतनत्वे हि साम्याद्विषय-विषयिभावादि न स्यादित्यर्थः। तथापि कथमन्यत्वेन जडस्य प्रकाशो निराक्रियते? स्वगतप्रकाशेनापि तस्य प्रकाशोपपत्तेरित्याशङ्क्य व्याचष्टे—**आत्मावगतिप्रकाशेनापीति** ॥ **यद्वा**—"आत्मावगतिप्रकाशेनापी"त्यनेन स्वगतचैतन्याभाववदात्मज्ञानसंसर्गाभाव इत्युक्तम्। अहमिदमित्यन्तःकरणघटादीनां विवेको बाह्यान्तरत्वे-

## पञ्चपादिका

**चैतन्यैकाश्रयत्वात्, तस्य च निरंशस्य प्रदेशभेदाभावात्। प्रपञ्चभेदेनैव हि तत्कल्पितावच्छेदं सद् तदवच्छिन्नमिव बहिरिवान्तरिव प्रकाशते। अथवा—दिगाकाशौ मनोमात्रगोचरौ सर्वत्राध्यासाधारौ विद्येते इति न परत्रेति विरुद्धयते। कथं तर्हि**

## पञ्चपादिकाविवरणम्

मन्तरेण स्वरूपभेदानवगमादित्याह—**तस्य च निरंशस्येति** ॥ निरंशद्रव्यस्याणुत्वमनन्तत्वं वा स्यात्, मध्यमपरिमाणं चेदं चैतन्यं सर्वत्रावभासते; न च निरंशं मध्यमपरिमाणमिति परोपाधिपरिमाणं चैतन्यमित्यर्थः। जागरणेऽप्येवम्। किमु वक्तव्यं स्वप्नस्य चैतन्याधिष्ठानत्वं इत्यर्थः।

## तत्त्वदीपनम्

कथं तर्हि चिद्भेदप्रथा ? इत्याशङ्क्य, औपाधिकभेदादित्याह—**प्रपञ्चेति** ॥ **अन्तरिव** = स्वचैतन्यमिव बिरिव परचैतन्यमिवेत्यर्थः। विजातीयभेदोऽप्येवमेव निराकर्तव्यः ॥

आत्मा, स्वाभाविकभेदवान्, मध्यमपरिमाणत्वात्ः घटादिवत्, इत्याशङ्क्य, किं तस्य सांशत्वम् ? उतानंशत्वम् ? नाद्य इत्याह—**निरंशेति** ॥ अवयवावयविनोः प्रत्येकं चैतन्ये कदाचिद्द्वैमत्येन तदधिष्ठितगात्रविदारणं दुर्वारं स्यात्। तस्मादेकस्य चैतन्यम्, तदितरस्याचित्त्वमिति न तत्रावयवावयवितेत्यर्थः। द्वितीयं दूषयति—**अणुत्वमिति** ॥ आत्मा, अणुमहत्परिमाणान्यतरपरिमाणवान्, निरंशद्रव्यत्वात्; मनो-गगनवदित्यर्थः। तर्ह्युभयोरन्यतरपरिमाणं स्यादित्यत्राह—**मध्यमेति** ॥ महदणुपरिमाणान्यपरिमाणमित्यर्थः। नच तत् परमार्थतो युक्तमित्याह—**न च निरंशमिति** ॥ तस्मादन्यप्रयुक्तं मध्यमपरिमाणत्वमित्याह—**इतीति** ॥

स्वप्नप्रपञ्चस्य चिदधिष्ठानत्वासंभवे चोदिते, तत्रैव तदुपपादनीयम्, किमिति जागरणे तदुपपादितम् ? इत्याशङ्क्य, कैमुतिकन्यायेन स्वप्ने तदुपपाद्यत इत्याह—**जागरणेऽपीति** ॥ सर्वस्य प्रपञ्चस्य चिदधिष्ठानमभिधायाऽधिष्ठानान्तरमूचिवान्—"अथवे"त्यत्र, तन्नोपपद्यते; तस्य बाह्येन्द्रियासंपृक्तत्वात्, मनसाऽपि न संप्रयुक्तत्वम्; तस्य केवलस्य बहिः प्रसक्त्यभावात्, इत्याशङ्क्याह—**केवलस्येति** ॥ केवलस्याऽपि बाह्यस्मृतिजनकत्वमस्ति, तदर्थं प्रत्यक्षेति विशेषणम्। सुखादिप्रत्यक्षसाधनत्वं व्यावर्तयति—**बहिरिति** ॥

"कथं तर्ही"त्यनेनाव्याप्तिराशङ्क्यते ? आहो अतिव्याप्तिः ? नाद्यः; अव्याप्तिशङ्कायां साधनसमये लक्षणव्याप्तिर्वक्तव्या, नच सोच्यते। नापि द्वितीयः; अलक्ष्ये लक्षणगमनमतिव्याप्तिः, अत्र तु लक्षणाभाव एवोच्यत इति कथमतिव्याप्तिशङ्का ? तस्मात् कथमित्यादिग्रन्थोऽसंगत इत्याशङ्क्याह—**अव्याप्तिरिति** ॥ नामनि ब्रह्मदृष्टेरध्यासत्वात्कथमतिव्याप्तिः ? इत्याशङ्क्याह—**मिथ्येति** ॥ अध्यासत्वात्सदसद्विलक्षणत्वरूपं मिथ्यात्वं तस्याऽऽश्रयणीयमित्याशङ्क्य, तदेवासिद्धमित्याह—**अध्यासेति** ॥ ब्रह्मदृष्टेर्नामनि प्रक्षेपात्तस्याध्यासत्वमित्याशङ्क्याह—**भ्रान्तीति** ॥ अध्यासस्य भ्रान्तित्वादस्याश्च तद्वैषम्यान्मैवमित्यर्थः। ज्ञानानिरस्यत्वान्न भ्रान्तित्वमित्याह—**अविद्येति** ॥ "किमत्र कथमि"त्यादेरेषोऽर्थः—

## ऋजुविवरणम्

नात्मानात्मविवेकश्च चैतन्याश्रयत्वे न स्यात्। **यद्वा**—अहमिदमित्यनेन प्रकारेणात्मानात्मविच्छेदो न स्यादित्यर्थः। "तस्य चे"त्ययं ग्रन्थः पुनरुक्त इवाभाति; स्वाभाविकभेदनिषेधेनौपाधिकभेदनिरूपणात्, पूर्वमपि चैतन्यभेदस्य निरस्तत्वादित्याशङ्क्यावतारयति—**ननु चैतन्यमेवेति** ॥ भवतु निरंशत्वेन प्रदेशभेदाभावः; तथापि कथं परोपाधिभिन्नत्वम् ? स्वतो भेदावभासस्य सप्रतियोगिकत्वेन विशेषणापेक्षत्वेन चाऽन्यथासिद्धेरित्याशङ्क्य व्याचष्टे—**निरंशद्रव्यस्येति** ॥ **ननु** स्वप्नेऽहमिदमित्यवभासविषयत्वे चोद्ये कृते, तत्रैव परिहर्तव्यम्, किमिति जागरणे परिहृतम् ? इत्याशङ्क्यापिशब्दार्थमाह—**जागरणेऽप्येवमिति** ॥ "कथं तर्हीत्यनेन पूर्वोक्तमुपजीव्यान्यत्रानिष्टापादानमिव प्रतिभाति; तथा सति तत्परिहारेण प्रकृतप्रतिपादनं कर्त्तव्यम्, न परिहारटीकायां तथा प्रतिपादनं दृश्यते; तथा "किमत्र कथमि"ति

## पञ्चपादिका

**नामादिषु ब्रह्माध्यासः ? किमत्र कथम् ? न तत्र कारणदोषः; नापि मिथ्यार्थावभासः, सत्यम्; अत एव चोदनावशादिच्छातोऽनुष्ठेयत्वान्मानसी क्रियैषा, न ज्ञानम्; ज्ञानस्य हि दुष्टकारणजन्यस्य विषयो मिथ्यार्थः, न हि ज्ञानमिच्छातो जनयितुं निवर्तयितुं वा शक्यम्; कारणैकायत्तत्वादिच्छनुप्रवेशानुपपत्तेः । ननु स्मृतिज्ञानमाभोगेन जन्यमानं मनोनिरोधेन च निरुध्यमानं**

## पञ्चपादिकाविवरणम्

केवलस्य मनसो बहिः प्रत्यक्षसाधनत्वाभावादथवेत्यङ्गीकरणवादः। अव्याप्तिः परिहृता, इदानीं मिथ्याध्यासभ्रान्त्यविद्याप्रसिद्ध्यभावेऽप्यन्यस्यान्यावभासो विद्यत इति लक्षणस्यातिव्याप्तिमाह—**कथं तर्हि नामादिष्विति** ॥ अन्यस्यान्यात्मताज्ञानमध्यासलक्षणम्, इयं त्वन्यस्यान्यत्र मानसी क्रियेत्यतिव्याप्तिं परिहरति—**सत्यमत एव चोदनावशादिति** ॥ **ननु**

## तत्त्वदीपनम्

लक्षणमस्ति चेल्लक्ष्यमप्यस्तीति चोदयति—**किमत्रेति** ॥ दुष्टकारणजन्यज्ञानविषयत्वाभावान्नाध्यासत्वमित्याह—**न तत्रेति** ॥ अध्यासत्वाभावे हेत्वन्तरमाह—**नापीति** ॥ मिथ्यार्थज्ञानस्याध्यासत्वं प्रसिद्धम्, नच नामनि ब्रह्मदृष्टेर्मिथ्यार्थगोचरत्वम्, नाम-ब्रह्मणोः सत्यत्वादित्यर्थः। लक्षणस्य तत्राभावान्नातिव्याप्तिरिति दर्शयितुं लक्षणमाह—**अन्यस्येति** ॥ **अथवा**—अतिव्याप्तेर्नेदं लक्षणमिति शङ्कायां सत्यमिति तदङ्गीकरणमनुपपन्नमित्याशङ्क्य तात्पर्यमाह—**अन्यस्येत्यादिना** ॥ **अक्षराण्येवं व्याख्येयानि**—अध्यासत्वाभावमङ्गीकरोति—**सत्यमिति** ॥ तर्ह्यतिव्याप्तिः, नेत्याह—**अत एवेति** ॥ अतःशब्दार्थमाह—**चोदनावशादिति** ॥ ज्ञानत्वं मास्तु, ततः किम् ? इत्यत्राह—**ज्ञानस्येति** ॥ मिथ्यार्थविषयज्ञानस्याध्यासत्वम्, नाम्नि ब्रह्मदृष्टेश्चाज्ञानत्वान्न तत्र लक्षणमस्तीत्यर्थः। विहितत्वेऽपि ज्ञानत्वं किं न स्यात् ? इति शङ्कते—**ननु ज्ञानमिति** ॥ प्रसिद्धज्ञानवैलक्षण्यान्नेदं ज्ञानमित्याह—**नेत्याहेति** ॥ स्वकारणायत्तत्वेन कथमिच्छाऽनुप्रवेशो निरस्यते ? इच्छाया अपि ज्ञानकारणान्तर्भावादित्याशङ्क्याह—**विधीति** ॥ **नन्वित्यादेरयमर्थः** ॥

ज्ञानस्येच्छयाऽसाध्यत्वमुक्तमाक्षिपति—**ननु स्मृतीति** ॥ **आभोगः** = इच्छा । सुरसरित्तीरादिस्मरणमिच्छया जायमानं दृश्यते, दुष्टगन्धस्मरणं निरुध्यमानं चेत्यर्थः। स्मृत्युत्पत्तिनिरोधसमय आभोग-मनोरोधयोः सद्भावमात्रमङ्गीकरोति—**सत्यमिति** ॥ तर्हि पुमुतन्त्रत्वम्, नेत्याह—**न स्मृतीति** ॥ **तयोः** = आभोग-मनोनिरोधयोरित्यर्थः। विनिगमनयोर्हेत्वभावमाशङ्क्याह—**न पुनरिति** ॥ अनिच्छतोऽपि दुर्गन्धादिबोधदर्शनादित्यर्थः। अब्रह्मणि ब्रह्मदृष्टिकरणमनर्थकमित्याशङ्क्याह—**चोदनावशादिति** ॥

लक्षणकथनानन्तरं संभावनोपन्यास उचितः, न तु मतान्तरोपन्यास इत्याशङ्क्य, लक्षणपरिशोधनार्थमित्युक्तं टीकाकृता, तदनुपपन्नम्; अव्याप्त्याद्यभावेन लक्षणस्य शुद्धत्वादित्याशङ्क्य, लक्षण एवासंभावनानिराकरणाभिप्रायेण मतान्तरोपन्यास इति तात्पर्यमाह—**नन्वध्यास इति** ॥

## ऋजुविवरणम्

चोदयित्वा कारणदोषमिथ्यार्थावभासाभावमात्रमुक्तम्, न साध्यं किंचिद् निर्दिष्टम्; अतः प्रकृतसाधकबाधकत्वाभावादसङ्गतः; साध्यानिर्देशान्निरभिप्रायश्चेत्याशङ्क्याह—**अव्याप्तिः परिहृतेति** ॥ कथमत्रातिव्याप्तिराशङ्क्यते सत्यमिथ्यावस्तुसंभेदसंभवात् ? कथम् ब्रह्माध्यासे सत्यमधिष्ठानं न संभवति; ततो न ब्रह्माध्यस्तम्, तथा सत्यमिथ्याभूतेऽप्यध्यासलक्षणव्याप्तेरतिव्याप्तिः, मैवम्; आत्मनो देहादावध्यास इव मिथ्याभूतस्याधिष्ठानत्वोपपत्तेः। अतो नातिव्याप्तिरित्याशङ्क्याह—**इदानीमित्यादिना** ॥ ज्ञाननिवर्त्यत्वप्रसिद्ध्यभावान्मिथ्यात्वाभावः, मिथ्यात्वाभावे चाध्यासत्वाभावः; तस्य सत्यमिथ्यावस्तुसंभेदरूपत्वात्, तदभावे भ्रान्तित्वाभावः; कारणत्रयजन्यत्वाभावात् कारणत्रयजन्यत्वाभावे चाविद्योपादानत्वाभावः, विद्याविरोधित्वाभावश्चेति । "न तत्र कारणदोषः" इति वदता लक्षणाभाव उक्तः, तत्कथमतिव्याप्तिः ? इत्याशङ्क्याह—**अन्यस्यान्यात्मनेति** ॥ **अयं भावः**—इतरत्र सत्यत्वमङ्गीकृत्यैव प्रसिद्धभ्रान्तिषु लक्षणमुक्तम्, तथा सत्यतिव्याप्तिः, अत एवोक्तम्—

## पञ्चपादिका

**दृश्यते, सत्यम्; न स्मृत्युत्पत्ति-निरोधयोस्तयोर्व्यापारः, किन्तु कारणव्यापारे तत्प्रतिबन्धे च चक्षुष इवोन्मीलननिमीलने, न पुनर्ज्ञानोत्पत्तौ व्यापार इच्छायाः। तस्माद् ब्रह्मदृष्टिः केवलाऽध्यस्यते चोदनावशात्फलायैव, मातृबुद्धिरिव रागनिवृत्तये परयोषिति। तदेवमनवद्यमध्यासस्य लक्षणम्—स्मृतिरूपः परत्र पूर्वदृष्टावभास इति॥**

**"तं केचित्"** इत्यादिनाऽध्यासस्वरूपे मतान्तरमुपन्यस्यति स्वमतपरिशुद्धये। कथम्? अन्यत्र = शुक्तिकादौ,

## पञ्चपादिकाविवरणम्

ज्ञानमेव तत्र विधीयत इति, नेत्याह—**नहि ज्ञानमिति**॥ विधिजन्यपुरुषेच्छाप्रयत्ननिरपेक्षमेव सर्वत्र ज्ञानस्य पुष्कलकारणम्; अनिच्छतोऽप्यनिष्टज्ञानदर्शनात्, अतो विधानान्मानसी क्रियेति भावः। **ननु** "स्मृतिज्ञानमि"त्यारभ्य "तं केचिदि"त्यतः प्राक्तनो ग्रन्थः स्पष्टार्थः॥ **ननु** अध्यासे वादिविप्रतिपत्तिदर्शनान्नैकरूपेण लक्षणं व्यवस्थापयितुं शक्यत इत्याशङ्क्याधिष्ठानाध्यस्यमानयोः स्वरूप-तत्त्व-देश-कालविशेषेष्वेव वादिनां विप्रतिपत्तिः, अन्यस्यान्यात्मताऽवभासमात्रे लक्षणे न विप्रतिपत्तिः। तच्च लक्षणं लौकिकसामान्यविशेषादिसंसर्गप्रत्ययानां भ्रमत्वप्राप्तिपरिहाराय सत्यस्य मिथ्यावस्तुसम्भेदावभास इति बलादापततीत्यङ्गीकृत्य मतान्तराण्युपन्यस्यति—**तं केचिदित्यादिना**॥ प्रथमस्त्वात्मख्यात्यन्यथाख्यातिविशेषयोः, द्वितीयस्त्वख्यातेः, तृतीयस्तु शुक्तेः स्वाभावरजतात्मना ख्यातिरिति शून्यख्यात्यन्यथाख्यातिविशेषयोरुपन्यासः। कल्पनामित्यस्य व्याख्या अविद्यमानस्यैवाव-

## तत्त्वदीपनम्

किमध्यासमात्रे विप्रतिपत्तिः? उत तदधिष्ठानादौ? इति विकल्प्याऽन्त्यमङ्गीकरोति—**अधिष्ठानेति॥ अयमर्थः**—अधिष्ठानाध्यस्यमानयोः सत्त्वमिति सद्वादिनः, असत्त्वमित्यसद्वादिन इति स्वरूपविप्रतिपत्तिः। अधिष्ठानस्य सत्त्वेऽपि जडत्वमजडत्वं चेति तत्त्वविप्रतिपत्तिः। अध्यस्यमानस्यापि किं शून्यं तत्त्वम्? उत माया? आहो धीः? अथवाऽन्यत्? इति तत्र विप्रतिपत्तिः। आद्यं दूषयति—**अन्यस्येति**॥ अन्यस्यान्यात्मनाऽवभासमात्रे विप्रतिपत्त्यभावेऽपि सत्यानृतमिथुनीकरणरूपत्वं त्वदिष्टं कथं सिद्ध्यति? इत्याशङ्क्यार्थात् सिद्ध्यतीत्याह—**तच्चेति**॥ ज्ञानाऽऽकारस्य बहिष्ठस्य वा रूप्यादेः शुक्त्यादावध्यास इत्युक्तं टीकायाम्, तदसंभवि; ज्ञानाकारत्व-बहिष्ठत्वयोरेकेनाऽनभ्युपगतत्वादित्याशङ्क्य मतभेदेनाविरोधमाह—**प्रथमस्त्विति**॥

विवेकाग्रहणनिबन्धनं तादात्म्यख्यातिवादिना नाङ्गीक्रियते, अन्यथाख्यातिवादिपक्षश्च पुरेरित एवेत्याशङ्क्याह—**द्वितीयस्त्विति**॥ एकत्वभ्रमशब्देन एकत्वभ्रमव्यवहारस्य विवक्षितत्वादख्यातिमतोपन्यासो युक्त इत्यर्थः। विपरीतधर्मत्वकल्पनामित्यत्र शुक्त्यादे रूप्यादिरूतेण ख्यातिरुच्यते, सा च पुरोक्तेत्याशङ्क्याह—**तृतीयस्त्विति**॥ शुक्त्यभावो रूप्यं तद्रूपेण शुक्तिः ख्यातीत्यन्यथाख्यात्येकदेशिनः। **विपरीतधर्मत्वकल्पना** रूप्यादिरूपेण निष्पत्तिः, ततः 'कल्पनामवभासमानतामि'ति कथं समानाधिकरण्यम्? इत्याशङ्क्यान्यस्यान्यात्मना निष्पत्त्यसंभवात्तथा प्रतिभासकल्पनेत्यभिप्रायेणाह—**कल्पनामिति**॥

## ऋजुविवरणम्

"प्रतिद्वयभावेऽनी"ति। **अथवा**—ब्रह्मदृष्ट्या नाम्न उपासनाविधानाद् नाम्नि ब्रह्माध्यासितव्यमिति, तादृशब्रह्माभिप्रायेणातिव्याप्तिः। **अथवा**—चोद्यवादिना तत्सत्यत्वमङ्गीकृत्यातिव्याप्तिरुक्ता; सिद्धान्तवादिसिद्धमिथ्यात्वाङ्गीकारेऽतिव्याप्त्यापादनायोगात्, तदङ्गीकारेणैव च परिहारोऽपीति। "सत्यम्; अत एवे"ति क्रियात्वसाधनमसंगतम्; प्रकृतातिव्याप्तेरपरिहृतत्वादित्याशङ्क्याभिप्रायमाह—**अन्यस्यान्यात्मनेति**॥ कथं स्वकारणायत्तत्वेनेच्छानुप्रवेशो निराक्रियते? इच्छाया अपि कारणत्वेनैवानुप्रवेशसंभवादित्याशङ्क्याभिप्रायमाह—**विधिजन्येति**॥ **ननु** अव्याप्त्यादिपरिहारेण लक्षणं वक्तव्यम्, ननु मातान्तरप्रदर्शन उपयोगोऽस्तीत्याशङ्क्योपयोग उक्तः—"स्वमतपरिशुद्धये"इति, तदसंबद्धम्; लक्षणेनैव स्वमतस्य शुद्धत्वादित्याशङ्क्य साभिप्रायमवतारयति—**नन्वध्यास इत्यादिना**॥ असंभावितत्वपरिहारायेति भावः। **अधिष्ठानाध्यस्यमानयोरिति**॥ अधिष्ठानस्वरूपं शुक्तिर्वा? ज्ञानं वा? शून्यं वेत्यादिविप्रतिपत्तिरित्यर्थः। अध्यस्यमानत्वे सदेव? असदेव? कल्पितं वा? इति विप्रतिपत्तिरिति॥ **ननु** अन्यस्यान्यात्मतामात्रं न लक्षणम्, कथं तत्राविप्रतिपत्त्या लक्षणसिद्धिः? नच विशिष्टलक्षणे विप्रतिपत्त्यभावः; अतो न तस्य सिद्धिरित्याशङ्क्याह—**तच्च लक्षणमिति**॥ शुक्तेः स्वभावरजतात्म-

## पञ्चपादिका

यद्धर्मस्य = अर्थान्तरस्य, रजतादेर्ज्ञानाकारस्य बहिष्ठस्यैव वा; अध्यास इति वदन्ति। केचित्तु यत्र यदध्यासस्तद्विवेकाग्रहण-निबन्धनो भ्रम इति ॥ यत्र यस्याध्यासः, तयोर्विवेकस्याग्रहणात्तन्निबन्धनोऽयमेकत्वभ्रम इति वदन्तीत्यनुषङ्गः।

अन्ये तु यत्र यदध्यासस्तस्यैव विपरीतधर्मत्वकल्पनामाचक्षत इति ॥ यत्र = शुक्तिकादौ, यस्य = रजतादेः, अध्यासः, तस्यैव = शुक्तिशकलादेः, विपरीतधर्मत्वस्य = रजतादिरूपत्वस्य, कल्पनाम् = अविद्यमानस्यैवावभासमानताम्, आचक्षते।

सर्वथापि त्विति स्वमतानुसारित्वं सर्वेषां कल्पनाप्रकाराणां दर्शयति। अन्यस्यान्यधर्मावभासित्वं नाम लक्षणम्, परत्रेत्युक्तेऽर्थात्परावभासः सिद्ध इति यदवादिष्म, तन्न व्यभिचरति। कथम्? पूर्वस्मिन् कल्पे ज्ञानाकारस्य बहिष्ठस्य वा शुक्तिधर्मत्वावभासनान्न व्यभिचारः, द्वितीयेऽपि शुक्ति-रजतयोः पृथक्सतोरपृथगवभासोऽभिमानात्, तृतीयेऽपि शुक्तिशकलस्य रजतरूपप्रतिभासनात् ॥ पूर्वदृष्टत्वस्मृतिरूपत्वयोः सर्वत्राव्यभिचारान्न विवाद इत्यभिप्रायः। तत्र "स्मृतिरूपः पूर्वदृष्टाव-

## पञ्चपादिकाविवरणम्

भासमानतामिति। "यल्लक्षणमवादिष्मे"ति पूर्वलक्षणशब्देन यच्छब्दस्य सम्बन्धः। अख्यातिवादिनाऽपि मानसं संसर्गज्ञानं संसर्गाभिमानो वा वक्तव्य इत्यभिप्रायः। ननु स्मृतिरूपतया कारणत्रितयजन्यत्वमुपेक्षितमिति, नेत्याह—**पूर्वदृष्टत्वेति** ॥ ननु अविद्यादिदोष-पूर्वभ्रमसंस्काराभ्यामेव पदार्थमात्रज्ञानानि जायमानानि विभ्रमाः, न सत्यं वस्तु तत्संप्रयोगादि प्रमाणकारणं चापेक्षते विभ्रम इति, परत्रेतिपदमविवक्षितमिति शून्यवादी मन्यते, तत्राह—**स्मृतिरूपः पूर्वदृष्टावभास इति** ॥ न पदार्थ-मात्रज्ञानं विभ्रमः; शून्यज्ञानस्यापि तथात्वप्रसङ्गात्, किन्त्वन्यत्रान्यज्ञानम्; ततश्चाविभ्रमेऽपि पदार्थज्ञाने लक्षणव्याप्तेर्निरूप-

## तत्त्वदीपनम्

यच्छब्दस्य सन्निहितोत्तरपदान्वये लक्षणशब्दस्यानन्वयः स्यादित्याशङ्क्याह—**यदिति** ॥ स्वरूपलक्षणस्य कथमख्यातिमतेऽनु-गतिः? संसर्गज्ञानस्य तेनाऽनभ्युपगतत्वादित्याशङ्क्याह—**अख्यातीति** ॥ चाक्षुषायथार्थज्ञानाभावेऽपि मानसमयथार्थज्ञानमख्याति-वादिनाऽङ्गीक्रियते; "देहादावनात्मन्यात्मबुद्धिरविद्ये"ति सांख्योक्तेरित्यर्थः ॥

प्राभाकरेणापि संसृष्टव्यवहारानुपपत्त्या संसर्गज्ञानमङ्गीकरणीयमित्याह—**संसर्गाभिमान इति** ॥ तटस्थलक्षणेऽनु-गत्यप्रदर्शनात्तदसंभव इति शङ्कते—**ननु स्मृतीति** ॥ भ्रान्तेः संस्कार-संप्रयोगादिदोषजन्यत्वस्य सर्वैरभ्युपगतत्वाल्लक्षणानुगत्य-प्रदर्शनं न दोषायेत्याह—**नेत्याहेति** ॥ निरधिष्ठानवादिपक्षे लक्षणेऽव्याप्तिनिरासार्थं परत्रेति पदमपेक्षितमित्युक्तम्, तत्र निरधिष्ठानपक्ष एव नोपपद्यते; अधिष्ठानज्ञानलक्षणकारणाभावेन भ्रमासंभवादित्याशङ्क्याह—**नन्वविद्येति** ॥ "परावभासः" इत्येतावत्युक्ते घटादिज्ञानानामपि भ्रमत्वं स्यादित्याशङ्क्य, तदिष्टमित्याह—**पदार्थेति** ॥

## ऋजुविवरणम्

नेति, शून्यस्य शुक्त्यात्मना, विवर्तमानस्य रजतरूपेण विवर्ततेति भावः। "कल्पनामि"ति भाष्ये कथं टीकाकृता "अविद्यमानस्यैवावभासमानतामि"त्युक्तम्? विरोधात्, कल्पनाशब्दस्य वस्तुनोऽन्यथाभावमात्रत्ववाचित्वात्, तज्-ज्ञानवाचित्वाभावादित्याशङ्क्य व्याचष्टे—**कल्पनामित्यस्येति** ॥ अथवा पौनरुक्त्यशङ्का स्यात्, इत्यन्तत्वादे-र्व्याख्येयत्व-व्याख्यानत्वसूचकस्याभावात्, तदर्थमाह—**कल्पनामित्यस्येति** ॥ परावभासः सिद्ध इति यदवादिष्म, तन्न व्यभि-चरतीत्यन्वयः प्रतिभाति; तथा सति लक्षणमित्यस्यानन्वयः, अनुपयुक्तश्च; तत्र व्यभिचारशङ्काया एवाभावात्, अप्रकृतोप-संहारश्च; लक्षणाव्यभिचारस्य प्रस्तुतत्वादित्याशङ्क्य व्याचष्टे—**यल्लक्षणमवादिष्मेति** ॥ अख्यातिपक्षे कथमपृथगवभासाभि-मान उक्तः? तस्यानङ्गीकृतत्वात्, इत्याशङ्क्याभिप्रायमाह—**अख्यातिवादिनोऽपीति** ॥ तत्र "स्मृतिरूपः"इत्यादिना परत्रेति पदाभावे निरधिष्ठानभ्रमपक्षे लक्षणप्राप्तिः कथमाशङ्क्यते? स्मृतिरूपपदेनैव तन्मते लक्षणप्राप्तेर्निरस्तत्वात्, तस्य कारणत्रय-

## पञ्चपादिका

**भासः"; इत्येतावति लक्षणे निरधिष्ठानाध्यासवादिपक्षेऽपि निरुपपत्तिके लक्षणव्याप्तिः स्यादिति—तन्निवृत्तये "परत्रे"-त्युच्यते ॥**

**कथम् निरुपपत्तिकोऽयं पक्षः ? न हि निरधिष्ठानोऽध्यासो दृष्टपूर्वः, संभवी वा। ननु केशोण्ड्रकाद्यवभासो निरधिष्ठानो दृष्टः, न; तस्यापि तेजोऽवयवाधिष्ठानत्वात्। ननु रजते संवित्, संविदि रजतमिति परस्पराधिष्ठानो भविष्यति, बीजा-**

## पञ्चपादिकाविवरणम्

पत्तिकत्वमिति। **कथं निरुपपत्तिकोऽयमित्यादिग्रन्थः स्पष्टार्थः** ॥ ननु संविद्रजतयोरितरेतराधिष्ठानत्वेन साधिष्ठाने भ्रमे सम्भवति न तृतीयस्य सत्यवस्तुनोऽधिष्ठानत्वकल्पना युक्तेति चोदयति—**ननु रजते संविदिति** ॥ ननु अध्यस्यमानव्यतिरेकेणाधिष्ठानस्य सिद्धिर्वक्तव्या, तत्रेतरेतराधिष्ठानत्वे सतीतरेतरापेक्षसिद्धित्वादसमञ्जसं स्यादिति, तत्राह—**बीजाङ्कुरादिवदिति** ॥ न बीजाङ्कुरादिष्वितरेतराश्रयता, किन्तु कारणपरम्परयाऽनवस्थेति परिहरति—**नैतत्सारमिति** ॥ **ननु** इहापि कारणपरम्परेति, नेत्याह—**इह पुनर्यस्यामिति** ॥ ननु इहापि तर्हि रजते संवित्, रजतं पूर्वस्यां संविदि, सा च स्वविषये, तच्च

## तत्त्वदीपनम्

अधिष्ठानज्ञाने भ्रमोत्पत्तेस्तदपि कारणमित्याशङ्क्य, इदमाकारस्यापि समारोपितत्वान्नाधिष्ठानासिद्धिरित्याह—**न सत्यमिति** ॥ अधिष्ठानबोधं विनाऽप्यविद्यादेर्भ्रमोत्पत्तिसंभवात्कथं निरुपपत्तिकत्वम् ? इत्याशङ्क्य, किं पदार्थज्ञानमात्रं भ्रमः ? उताविद्यादिजनितम् ? इतिविकल्प्याद्यं प्रत्याह—**न पदार्थेति** ॥ द्वितीयमुत्थापयति—**कथमिति** ॥ किमधिष्ठानमात्रं निन्हूयते ? उत सत्यम् ? नाद्यः; अविद्यादिवदधिष्ठानग्रहणस्याप्यन्वय-व्यतिरेकसिद्धत्वादित्याह—**न हीति** ॥ व्यतिरेकोऽसिद्ध इति चोदयति—**नन्विति** ॥ करसमृदितलोचनरश्मिषु येयं केशपिण्डावस्था स **केशोण्ड्रकः** ॥ मायाहस्त्यादिभ्रम आदिशब्दार्थः। केशोण्ड्रकादावपि निरधिष्ठानत्वमसिद्धमित्याह—**न तस्यापीति** ॥

"ननु रजतम्" इत्यत्र भ्रमस्य साधिष्ठानत्वं निर्दिष्टम्, तथा च मदिष्टसिद्धिरिति तस्याऽसंगतिशङ्कायां द्वितीयमुत्थापयतीत्याह—**ननु संविदिति** ॥ असत्यस्याऽधिष्ठानत्वाऽनुपपत्तेः सत्यमेवाऽधिष्ठानमिति शङ्कते—**नन्वध्यस्यमानेति** ॥ अधिष्ठानज्ञानस्य कारणत्वादध्यस्यमानसिद्धेः पूर्वं सिद्धिर्वक्तव्या, ततश्चाधिष्ठानबोधेऽध्यस्यमानसिद्धौ तत्तन्त्राधिष्ठानसिद्धिरिति न किमपि सिद्ध्येदित्यर्थः। बीजाङ्कुरयोरितरेतराधीनत्वेऽपि हेतु-हेतुमद्भाववत् संविद्रजतयोरपि तथात्वं स्यादित्याह—**तत्राहेति** ॥ अङ्कुरान्तरस्य बीजजत्वात्कथं नेतरेतराश्रयत्वम् ? इत्याशङ्क्य यस्या बीजव्यक्तेरङ्कुरव्यक्तेर्जन्म, तस्या बीजव्यक्तेर्जन्मनीतरेतराश्रयत्वम् ? उत तज्जातीयायाः ? नाद्यः; अनभ्युपगमादित्याह—**न बीजेति** ॥ द्वितीयेऽनेकबीजाङ्कुरव्यक्त्यभ्युपगमाद् नेतरेतराश्रयत्वमित्याह—**किन्त्विति** ॥ अस्माभिरपि संविद्रजतपरम्पराश्रयणाद् नेतरेतराश्रयत्वमित्याह—**नन्विहापीति** ॥ किमत्र कारणपरम्पराऽनुभवसिद्धा ? आहो अन्यतःसिद्धा ? इति विकल्प्याऽऽद्यं दूषयति—**नेत्याहेति** ॥ इह संविद्रजतयोरित-

## ऋजुविवरणम्

जन्यत्ववाचित्वात्, तन्मते कारणत्रयाभावात्, संप्रयोगाङ्गीकारे वा बलादधिष्ठानलाभात्। "उक्तमेतत्पूर्वप्रमाणे"त्यनेन ग्रहणस्मरणविलक्षणं ज्ञानं स्वयमेव संप्रयोगमधिष्ठानं च साधयतीत्युक्तम्। अतस्तेनाऽपि भ्रान्तिमङ्गीकुर्वताऽधिष्ठानाद्यङ्गीकर्तव्यम्, तत्कथं तन्मते लक्षणाव्याप्तिपरिहार्थता पदस्य ? इत्याशङ्क्य, पदोपयोगसिद्ध्यर्थं तन्मतं दर्शयति—**नन्वविद्यादोषेति** ॥ कथं निरधिष्ठानपक्षे व्याप्तिमात्रेण निरुपपत्तिकत्वं लक्षणस्य ? अथवा—लक्षणस्य निरुपपत्तिकत्वे वक्तव्ये कथं तत्प्राप्तिरुच्यते ? इत्याशङ्क्योपपादयति—**न पदार्थमात्रेति** ॥ ननु संविद्रजतयोः परस्पराधिष्ठानत्वेन चोद्यमनुपपन्नम्; तावतैव लक्षणाङ्गीकारप्रसङ्गात् इत्याशङ्क्य, साभिप्रायमवतारयति—**ननु संविद्रजतयोरिति**। "बीजाङ्कुरादिष्वपी"ति ग्रन्थेऽभिमतवस्तुसिद्ध्यभाव उक्तः, तत्राभिमतवस्तुशब्देन बीजाङ्कुरयोरेव निर्देशशङ्का स्यात्, तत्र चान्वय-व्यतिरेकविरोधः, अभ्युपगमविरोधश्च इत्याशङ्क्यान्यविषयत्वं दर्शयितुं चोदयति—**नन्विति** ॥ अभिमतवस्तुशब्देन हेतुहेतुमद्भावनिर्देशशङ्कानिवृत्त्यर्थमाह—**अन्वयि-**

## पञ्चपादिका

**ङ्कुरादिवत्, नैतत्सारम्; न तत्र यतो बीजादङ्कुरस्तत एव तद्बीजम्, अपि त्वङ्करान्तरात्, इह पुनर्यस्यां संविदि यद्रजतमवभासते, तयोरेवेतरेतराध्यासः, ततो दुर्घटमेतत्। बीजाङ्कुरादिष्वपि न बीजाङ्कुरान्तरपरम्परामात्रेणाभिमतवस्तुसिद्धिः; प्रतीतितो वस्तुतश्चानिवृत्ताकाङ्क्षत्वात्, तथाच 'कुत इदमेवमि'ति पर्यनुयोगे 'दृष्टत्वादेवमि'ति तत्रैव दूरं वा**

## पञ्चपादिकाविवरणम्

पूर्वसंविदीति परम्परामेव कल्पयामीति—चेत्, यदि तावत्पूर्वपूर्वमुत्तरोत्तरस्यान्वितत्वेनाधिष्ठानं स्यात्, ततः पूर्वस्य पूर्वस्योत्तरस्मिन्नुत्तरस्मिन्नध्यासे युगपदवस्थानात् क्षणिकत्वहानिः। ननु बीजाङ्कुरादावन्योन्योपादानत्वेऽपि न युगपदवस्थानं दृश्यत इति, तत्राह—**बीजाङ्कुराद्ष्विपीति**॥ **अभिमतवस्तुसिद्धिः**=अन्वयिकारणत्वसिद्धिरित्यर्थः; अनन्वितेषु बीजादिष्वन्वयिकरणाकाङ्क्षाया अनिवृत्तत्वादित्यर्थः। अतोऽन्वयिद्रव्यमेव तत्राप्युपादानम्; बीजादेरन्योन्यनिमित्त-नैमित्तिकतेति भावः। इहापि तर्हि पूर्वस्योत्तरं प्रत्यनन्तित्वेनैवाध्यासनिमित्तता बीजादिवदिति, नेत्याह—**कुत इदमेवमिति पर्यनुयोगे दृष्टत्वादेवमिति**॥ अयं भावः—बीजाङ्कुरयोः कार्य-कारणभावस्य दृष्टत्वाददृष्टेऽपि तयोरेव कार्य-कारणपरम्परा दृष्टपरम्परात्वान्नानस्था-

## तत्त्वदीपनम्

रेतराध्यासो यदि भवेत्, तर्हि **तयोरेव** संविदन्तर-रजतान्तरयोरित्यन्वयः। तच्छब्दार्थमाह—**यस्मामिति**॥ अनयो सहोपलम्भादितरेतरयोस्ताथाऽनुपलम्भादित्यर्थः। द्वितीयमनुवदति—**नन्विहापीति**॥ किं पूर्वस्य पूर्वस्योत्तरत्राऽन्वयित्वेनाधिष्ठानत्वम्? उताऽनन्वयित्वेन? इति विकल्प्याद्यमनुद्य दूषयति—**यदि तावदिति**॥ संविदो रजताध्याससमये संविदधिष्ठानरजतस्य संविद्यन्वितत्वाद् रजताधिष्ठानस्यापि तत्रान्वयित्विनोपलम्भः। एवं पूर्वपूर्वस्यापि तदानीं भावात् क्षणिकत्वाक्षतिरित्यर्थः। तदेतदभिसन्धायोक्तम्—**तत इति**॥

विषय-विषयिणोरितरेतराध्यासस्यौचित्यं यस्मात् तस्मात् संविद्रजतपरम्पराकल्पनं दुर्घटम्। बीजादेर्वैषम्यं वाऽत्रोपसंह्रियते। संविद्रजतयोरन्वयित्वेनाधिष्ठानत्वेऽपि न युगपदवस्थानं बीजाङ्कुरवदिति चोदयति—**नन्विति**॥ दृष्टान्तासंमत्या दूषयति—**तत्राहेति**॥ "अभिमतवस्तुसिद्धिरि"त्यत्र कार्य-कारणभावस्य प्रत्याख्यानमिति शङ्का स्यात्, ततश्चान्वय-व्यतिरेकविरोध इत्याशङ्क्याह—**अभिमतेति**॥

मा भूत्तर्ह्यन्वयि कारणमिति शङ्कानिवृत्त्यर्थं प्रतीतित इत्याद्युक्तम्, तदनुपपन्नम्; बीजादिभिराकाङ्क्षोपशमादित्याशङ्क्याह—**अनन्वितेष्विति**॥ घटशरावादीनां स्वस्तिक-रुचकादीनां च मृत्कनकान्विततयोपलम्भानुसारेण बीजादिष्वप्यनुगतं किंचिदाश्रयणीम्, तदिदमुक्तम्—**प्रतीतित इति**॥ पूर्वक्षणवर्त्युत्तरक्षणस्य कारणं नानुगतमित्यस्मिन्पक्षे पूर्वस्यापि कार्यत्वेन कारणान्तराकाङ्क्षाऽनुपरमादनाद्यनुगतं किंचित्कारणमास्थेयम्, तदिदमुक्तम्—**वस्तुत इति**॥ बीजादीनामनन्वितत्या उपादानत्वं चेत्, तर्ह्युपादानान्तरानिरूपणादङ्कुरादि निरुपादानं प्रापदित्याशङ्क्याह—**अत इति**॥ अन्वयिनोऽवश्य-

## ऋजुविवरणम्

**कारणत्वेति**॥ कथमन्वय-व्यतिरेकयोः सतोराकाङ्क्षानिवृत्त्यभावः? इत्याशङ्क्य व्याचष्टे—**अनन्वितेष्विति**॥ अनेन 'प्रतीतितः' इत्येतद्व्याख्यातम्। वस्तुतश्चेत्यस्य व्याख्या=अन्वयिकारणाकाङ्क्षाया इति कथं परस्परोपादानभावेन स्वरूपसिद्धिरन्वय-व्यतिरेकनिर्वाहश्च? अतस्तयोरेव परस्परोपादानत्वं वक्तव्यमित्याशङ्क्याभिप्रायमाह—**अतोऽन्वयीति**॥ **ननु—** बीजादिष्वपि न सर्वत्र कार्य-कारणभावो दृष्टः; अदृष्टे च तयोरेव कार्य-कारणपरम्पराऽन्धपरम्परैव भवेत्; अतः कथं वैषम्यम्? इत्याशङ्क्याभिप्रायमाह—**अयं भाव इति**॥ "अन्यथे"त्यनेन दृष्टत्वाभावेनानस्थादोष उक्तः, सोऽनुपपन्नः; दृष्टत्वाभावस्यानवस्थाहेतुत्वाभावान्मूलक्षयाभावादित्याशङ्क्य व्याचष्टे—**अन्धपरम्परामेवेति**॥ पूर्वं निरधिष्ठानभ्रमो न संभवतीत्युक्तम्, न तु साधिष्ठानत्वे किंचित्प्रमाणमुक्तम्; अतः—"अपिचे"ति वक्तुमयुक्तम्, नापि निरवधिकत्वनिराकरणं बाधस्यात्र युक्तम्; अप्रस्तुतत्वात्, प्रमाणानुक्तिस्तु तदवस्थैवेत्याशङ्क्य वृत्तसङ्कीर्तनपूर्वकमवतारयति—**द्व्याकारावभासित्वादिति**॥ "न क्वचिन्निरवधिकः" इति बाधस्य सावधिकत्वमुक्तम्, तत्र च शून्यावधित्वेनापि सावधिकत्वसंभवात् कथं भवदभिमतसाधिष्ठानत्वलाभः? इत्याशङ्क्याभिप्रायमाह—**भ्रान्तिज्ञानप्रतिपन्नेति**॥ ज्ञानमात्रस्याबाधकत्वादंशान्तरज्ञानस्य शुक्तिस्वरूप-

## पञ्चपादिका

परिधाव्य स्थातव्यम्; अन्यथा हेतुपरम्परामेवावलम्ब्य क्व चिदप्यनवतिष्ठमानो नानवस्थादोषमतिवर्तेत। अपिच न क्वचिन्निरवधिको 'नेत्ये'व बाधावगमो दृष्टः, यत्राप्यनुमानादाप्तवचनाद्वा न सर्प इत्येवावगमः, तत्रापि 'किं पुनरिदम्?' इत्यपेक्षादर्शनात्पुरोऽवस्थितं वस्तुमात्रमवधिर्विद्यते। प्रधानादिष्वपि जगत्कारणे त्रिगुणत्वादिबाधोऽधिगतावधिरेव। अथवा सर्वलोकसाक्षिकमेतत्—केशोण्डुकादावपि तद्बाधे तदनुषङ्ग एव बोधे बाध्यते, न बोधः। अतस्तदवधिः सर्वस्य बाधः; तेन तन्मात्रस्य

## पञ्चपादिकाविवरणम्

दोषमावहति, संविद्रजतयोरधिष्ठानाधिष्ठेयतया निमित्तनैमित्तकभावस्य प्रथममेव कल्प्यत्वात्तयोरेव पूर्व-पूर्वनिमित्त-नैमित्तिकभावकल्पना त्वन्धपरम्परैव स्यादिति। दृष्टपरम्परामेव दर्शयति—**दृष्टत्वादेवमिति**॥ **तत्रैव दूरं वेति**॥ **नानवस्थादोषमतिवर्तेतेति**॥ अन्धपरम्परामेवेत्यर्थः॥

द्व्याकारावभासित्वात्सर्वभ्रमाणां परत्र परावभास एव भ्रम इत्युक्तम्। भ्रान्तिज्ञानप्रतिपन्नविषयेऽर्थे भ्रान्त्यन्तराभावविशिष्टांशान्तरज्ञानस्य बाधकत्वाच्च साधिष्ठानो भ्रम इत्याह—**अपि च न क्वचिदिति**॥ ननु अनुमानाऽऽप्तवचनाभ्यां सर्पाभावमात्रमपि कदाचिद्गम्यते, न तदभावविशिष्टमंशान्तरमिति, तत्राह—**यत्राप्यनुमानादिति**॥ तत्राप्यभावविशिष्टं वस्तुमात्रं गृह्यते; विशेषाकाङ्क्षादर्शनादिति भावः। ननु प्रधानं नास्तीत्यादौ न तदभावविशिष्टं वस्त्वन्तरं

## तत्त्वदीपनम्

भावित्वमतःशब्दार्थः। नच बीजादिवैयर्थ्यम्, निमित्तत्वेनार्थवत्त्वादित्याह—**बीजादेरिति**॥ अनन्वयित्वेनाधिष्ठानपक्षमुत्थापयति—**इहापीति**॥ प्रमाणाभावान्नैवमित्याह—**नेत्याहेति**॥ अत्र तथाचेति नोक्तम्; तस्य शङ्कानुवादरूपत्वादित्यर्थः॥

बीजाङ्कुरयोर्जन्य-जनकत्वं दृष्टत्वादाश्रीयते, न तथा संविद्रजतयोः, अदृष्टत्वादित्युक्तम्। तत्रैवं विवेचनीयम्—किं सकलबीजाङ्कुरव्यक्तिषु जन्यजनकता दृष्टेत्युच्यते? उत कतिपयव्यक्तिषु? आद्ये दृष्टत्वादित्यस्य भागासिद्धिः, द्वितीयेऽदृष्टस्थलेऽपि बीजाङ्कुरयोर्जन्य-जनकतावत् प्रकृतेऽपि तत्संभव इत्याशङ्क्याह—**अयं भाव इति**॥ बीजाङ्कुरयोर्जन्य-जनकभावस्य क्वचित् प्रत्यक्षप्रमितत्वादन्यत्रापि तत्कल्पना—विमतम्, जन्यजनकतावत्, बीजाङ्कुरजातीयत्वात्संमतवदिति नानवस्था दोषाय, प्रस्तुते तु संविद्रजतयोरधिष्ठानाधिष्ठेयभावस्य क्वचिदप्यप्रमितत्वान्निमित्तनैमित्तिककल्पनान्धपरम्परेत्यर्थः॥

दृष्टान्ते कार्यकारणपरम्परा दृष्टिपरम्परेति कथमुच्यते? दृष्टत्वादेवेत्यभिधानादित्याङ्क्य तत्राप्येषोऽर्थो विवक्षित इत्याह—**दृष्टेति**॥ अन्यथेति टीकायामनेकहेत्वभ्युपगमो दोषत्वेनोक्तः, स नोपपद्यते; अनेकहेत्वभ्युपगमस्यान्यत्र दृष्टत्वादित्याशङ्क्याह—**नानवस्थेति**॥अपिचेत्यनेन निरवधित्वाभावे हेत्वन्तरमुपन्यस्यत इति प्रतिभाति, तन्न संगच्छते, सर्वत्र कस्यचिदपि हेतोरनुपन्यासादित्याशङ्क्य वृत्तानुवर्णनपुरःसरं तात्पर्यमाह—**द्व्याकारेति**॥

'इदं रजतम्' 'अयं सर्पः' इति द्व्याकारतया भ्रमस्फुरणादधिष्ठानमुपेयमित्युक्तम्, संप्रति बाधकज्ञानपर्यालोचयाऽपि साधिष्ठानत्वं साध्यत इत्यविरोध इत्यर्थः। अंशान्तराभावविशिष्टांशान्तरे ज्ञानस्य बाधकत्वं च नियतमिति चोदयति—**नन्वनुमानेति**॥ अनुमीयतेऽनेनेत्यनुमानम् पाषाणप्रक्षेपेऽप्यचलितत्वादिलक्षणं लिङ्गम्। मात्रचो व्यावर्त्यमाह—**न तदभावेति**॥

## ऋजुविवरणम्

विषयस्य बाधकत्वेऽपि न साधिष्ठानता, तदर्थम्—"अंशान्तराभावविशिष्टे"ति। एवमपि भ्रान्तिगृहीतसर्पाभावविशिष्टवस्त्वन्तरज्ञानस्य बाधकत्वेऽपि न साधिष्ठानता, तदर्थम्—"**भ्रान्त**"ति॥ अधिष्ठानत्वेऽप्येवं भवतु? तदर्थम्—"**अर्थे**" इति॥ भ्रान्तिज्ञानाप्रतिपन्नविषयस्यैवंभूतज्ञानस्य बाधकत्वेऽपि न साधिष्ठानता, तदर्थम्—"**भ्रान्तिज्ञानप्रतिपन्नविषये**" इति॥ अपेक्षादर्शनेनावधिरस्तीत्युक्तम्, तदनुपपन्नम्; अभावविशिष्टवस्तुज्ञानं बाधकं न भवति; वस्त्वन्तरस्याप्रतीतेः, इति चोद्यस्यापरिहृतत्वादित्याशङ्क्याभिप्रायमाह—**तत्राप्यभावविशिष्टमिति**॥ **ननु**—मायाबिनिर्मितहस्त्यश्वादिप्रतीतिबाधयोर्नावधिप्रतीतिरस्ति, अतः कथमंशान्तराभावविशिष्टांशान्तरज्ञानस्य बाधकम्? इत्याशङ्क्या परितोषात् पक्षान्तरमिति तात्पर्यमाह—**अथवा सर्वभ्रमावभासेष्विति**॥ तथापि निरवधिकत्वमित्यभिप्रायेण

## पञ्चपादिका

**बाधाभावात्, स्वतश्च विशेषानुपलब्धेः कूटस्थापरोक्षैकरसचैतन्यावधिः सर्वस्य बाधः। नाप्यध्यस्तमप्यसदेव; तथात्वे प्रतिभासायोगात् ॥**

## पञ्चपादिकाविवरणम्

गृह्यते, तेषामन्यत्रानध्यस्तत्वादिति, तत्राह—**प्रधानादिष्वपीति** ॥ अथवा—सर्वभ्रमावभासेषु च साक्षिचैतन्यस्याऽऽलम्बनस्य विद्यमानत्वाच्छङ्क्यमाननिरधिष्ठान-निरवधिकभ्रमबाधेऽपि साक्ष्येवाधिष्ठानमवधिश्च विद्यत इत्याह—**अथवा सर्वलोकसाक्षिकमिति** ॥

ननु अर्थबाधया ज्ञानस्यापि बाधाद् भ्रमबाधे तदवभासिसाक्षिचैतन्यमपि बाध्येत ? तत्राह—**तद्बाधे तदनुषङ्ग**

## तत्त्वदीपनम्

वस्तुमात्रलक्षणाऽवधेः संभवेऽपि न तद्ग्रहणस्य बाधकत्वमित्याशङ्क्याह—**तत्रापीति** ॥ अंशान्तरज्ञानं बाधकमित्येतन्न नियतमिति शङ्कते—**ननु प्रधानमिति** ॥ परमाणवो न सन्ति इत्यादिनिषेध आदिशब्दार्थः। जगत्कारणे त्रिगुणत्वादिविप्रतिपत्तौ तत्तन्निषेधान्न व्यभिचार इत्याह—**तत्राहेति** ॥ अथवेत्यत्रार्थानुषङ्गो बाधते न बोध इति प्रकारान्तरेण प्रतिपाद्यत इति प्रतिभाति; तदयुक्तम्; पूर्वं तदप्रतिपादनादित्याशङ्क्य तात्पर्यमाह—**अथवेति** ॥ सर्वलोकस्य साक्षि सर्वलोकसाक्षि, चैतन्यम्; तदधिष्ठानमवधिश्च यस्य भ्रान्त्यादेः, तत्, तत् तथोक्तम्। चैतन्यस्याधिष्ठानत्वाभ्युपगमफलमाह—**केशेति** ॥ केशोण्ड्रकादावपि साधिष्ठानत्वादि सिद्धयतीति शेषः।

साक्षिणो बाध्यत्वादधिष्ठानत्वाद्ययुक्तमिति चोदयति—**नन्वर्थेति** ॥ अर्थज्ञानलक्षणसाक्ष्यबाधे तदपेक्षसाक्षिणोऽपि बाध इत्यर्थः। किं विशिष्टाकारस्य बाधः ? उत केवलस्य ? इति विकल्प्याद्योऽङ्गीक्रियत इत्याह—**तत्राहेति** ॥ एवकारो बाध्यत इत्यनेनानुषज्यते। द्वितीयं प्रत्याह—**न बोध इति (टीकायाम्)** ॥ बाधाबाधे हेतुमाह—**अधिष्ठानत्वेनेति** ॥ बाधसाक्षित्वात्पुनर्भ्रमान्तरहेतुत्वाच्च न चैतन्यबाध इत्यर्थः ॥ "तेने"त्यादिना ग्रन्थेन चिदधिष्ठानताया एवोच्यमानत्वात्पुनरुक्तिरित्याशङ्क्याह—**तदेवेति** ॥ नच—तत्प्रपञ्चनं व्यर्थमिति—शङ्क्यम्; शङ्कान्तरनिरसनद्वारा तत्प्रपञ्चनसम्भवात्। तथाहि—विमतम्, बाध्यम्, बाध्यसम्बन्धसम्बन्धित्वात्; संप्रतिपन्नवत्, इत्यनुमानाद् बोधबाधसिद्धेर्न तस्यावधित्वमित्याशङ्कायां सम्बन्धविशिष्टाऽऽकारस्य बाध्यत्वेऽपि न केवलस्य बाध्यतेत्यर्थः ॥ "तेन" इत्यत्र (टीकायाम्) तच्छब्देन बोधो गृह्यते। बोधो यतः, ततो न बाध्यते। तथा च प्रयोगः—विमतम्, न बाध्यम्, बोधत्वात्, यन्नैवं न तदेवम्, यथा रूप्यादीति। विमतम्, बाध्यम्, परिच्छिन्नत्वात्, रूप्यवत्; इत्याशङ्क्य, किं स्वाभाविकं परिच्छिन्नत्वं हेतुः ? उतौपाधिकम् ? नाऽऽद्यः; असिद्धेरित्याह—**स्वत इति (टीकायाम्)** ॥ द्वितीयपक्षव्यावृत्त्यर्थश्चशब्दः। गगनस्यौपाधिकपरिच्छेदवतोऽप्यबाध्यत्वात्तत्र व्यभिचार इत्यर्थः ॥ विज्ञानवाद्यभिमताधिष्ठानाद्विशेषमाह—**कूटस्थेति (टीकायाम्)** ॥ उत्पत्त्यादिधर्मरहितमित्यर्थः। तत्र हेतुमाह—

## ऋजुविवरणम्

चोदयति—**नन्वर्थेति** ॥ ननु बोधो न बाध्यत इति कथमुच्यते ? बोध्यप्रतियोगित्वात्तस्येत्याशङ्क्याभिप्रायमाह—**अधिष्ठानत्वेनेति** ॥ "तेन तन्मात्रस्ये"ति ग्रन्थः पुनरुक्तः; चैतन्यावधित्वस्य पूर्वमेवोक्तत्वादित्याशङ्क्य व्याचष्टे—**तदेव प्रपञ्चयतीति** ॥ शङ्कान्तरनिराकरणेन तदेव स्पष्टीक्रियत इत्यर्थः। **शङ्कान्तरं चैवम्**—मा भूद्बोधस्वरूपमात्रस्य बाधः, नैतावताऽधिष्ठानावशेषः, अध्यस्यमानबाधेऽध्यासाधिष्ठानस्य बाधादित्याशङ्क्याह—**तेन तन्मात्रस्येति**। चैतन्यमात्रस्येत्यर्थः। ननु—तदबाधेऽपि न साधिष्ठानत्वम्, अधिष्ठानावशेषो हि साधिष्ठानत्वम्, स्वरूपमात्रस्याबाधः। रजतप्रतियोगिरूपावगमे तदधिष्ठानमप्यवगतमिति निरधिष्ठानत्वम्। अथवा—रजतावभासस्वरूपावगमे चैतन्यमप्यवगतमेव; अतो निरधिष्ठानत्वमित्याशङ्क्याह—**स्वतश्चेति** ॥ स्वरूपेणाधिष्ठानत्वम्, न तु विशिष्टस्य; इतरेतराश्रयादिति भावः। स्वतो विशेषाभावमेवापादयति—**कूटस्थेति** ॥ अथवा स्वतो विशेषाभावेऽपि बाध्यात्मकत्वेन बाधोऽपि स्यात्, इत्याशङ्क्याह—**कूटस्थेति** ॥ यद्वा, बौद्धमतेऽप्येवंभूतस्याधिष्ठानत्वमस्ति, तदर्थमाह—**कूटस्थेति** ॥ कथमेवंभूतस्याधिष्ठानत्वम्, प्रतीत्यभावादिति ? तत्राह—**अपरोक्षेति** ॥ तर्हि कूटस्थाकारोऽपरोक्षाकारचैतन्याकारो चेति स्वतो विशेषः स्यादित्याशङ्क्याह—**एकरसेति** ॥ यद्वा, आत्मख्यातिपक्षे ज्ञानमवधिः, तदर्थमाह—**एकरसेति** ॥ कथमेकरसता, विषयाकारप्रतीतेः ? इति तदर्थम्—

### पञ्चपादिका

**ननु—सर्वमेवेदमसदिति भवतो मतम् । क एवमाह ? अनिर्वचनीयाऽनाद्यविद्यात्मकमित्युद्घोषितमस्माभिः । अथ पुनर्विद्योदयेऽविद्याया निरुपाख्यतामङ्गीकृत्यासत्त्वमुच्येत, काममभिधीयताम् । तथाच बाधकज्ञानम्—'नेदं रजतमि'ति**

### पञ्चपादिकाविवरणम्

**एवेति** ॥ अधिष्ठानत्वेनाऽपि परिशेषादिति भावः । अत इत्युपसंहारः । तदेव प्रपञ्चयति—**तेन तन्मात्रस्येति** ॥ साधिष्ठानभ्रमसाधनप्रसङ्गेनाध्यस्तस्यापि शून्यतां निराचष्टे—**नाप्यध्यस्तमप्यसदिति** ॥ प्रत्यक्षतो 'रजतमि'ति विशेषप्रतिभासायोगप्रसङ्गादिति भावः । प्रतिभासमात्रनिराकरणे शून्यं न भासत इति वाक्यस्याबोधकत्वप्रसङ्गात् ।

ननु अध्यस्तं सर्वं शून्यमेवेति तेऽपि मतमिति चोदयति—**नन्विति** ॥ शून्याद् व्यावृत्तिरपि भ्रमस्य कथितैवेत्याह—**क एवमाहेति** ॥ सद्व्यावृत्तिमात्रं भ्रमस्यासत्त्वं नाम, न शून्यत्वम्; निषेधप्रतियोगित्वादिति भावः । **ननु** भ्रमस्य स्वकालेऽनिर्वचनीयत्वेऽपि बाधादूर्ध्वं शून्यत्वमविशिष्टमिति शङ्कते—**अथ पुनरिति** ॥ सर्ववादिनां सर्वं वस्तु स्वकाले वर्तमानमपि विनाशादूर्ध्वं शून्यमेवेति सम्मतम्, अतो न दोष इत्याह—**काममिति** ॥ ननु भवतु नाम सर्वस्य वस्तुनो विनाशादूर्ध्वं शून्यता, न विभ्रमगृहीतं वस्तु बाधादूर्ध्वं शून्यं भवति, किन्तु देशान्तरादिगतमिति चेत् ? तत्र किं बाधकज्ञानमेव रजतादे-

### तत्त्वदीपनम्

**अपरोक्षैकरसेति** (टीकायाम्) ॥ बोधैकरसमित्यर्थः । "एकधैवाऽनुद्रष्टव्यम्" "प्रज्ञानघनः" इत्यादिवाक्याद् बोधैकरसमित्यर्थः । अथवा—स्वाभाविकोविशेषो नोपलभ्यत इति कथम् ? उत्पत्त्यादिविशेषोपलब्धेरित्याशङ्क्याह—**कूटस्थेति** (टीकायाम्) ॥ आरोप्यासत्त्वनिराकरणस्याधिष्ठानासत्त्वनिरसनोपक्रमविरोधमाशङ्क्याह—**साधिष्ठानेति** ॥ "असत्त्वं प्रतिभासायोगादि"त्य संगतम्; किमसदधिगम्य तन्निषिद्धयते ? उतानधिगम्य ? आद्ये स्ववचनविरोधः, द्वितीये त्वसदनधिगतौ तन्निषेधस्यैवासंभव इत्याशङ्क्याह—**प्रत्यक्षत इति** ॥ अध्याहारेण व्याख्याने हेतुमाह—**प्रतिभासेति** ॥ असदनवभासे तदनुवादेन—'असन्न भासते' इति शब्दप्रयोगानुपपत्तेरित्यर्थः ॥

अधिष्ठानसत्त्वोपगमादिदं सर्वमसदिति कथमुक्तमित्याशङ्क्याह—**नन्वध्यस्तमिति** ॥ किमविद्यावस्थायां वेद्यासत्त्वमनभिमतमित्युच्यते ? उत विद्यावस्थायाम् ? इति विकल्प्याऽऽद्यं प्रत्याह—**शून्यादिति** ॥ प्रपञ्चस्यासद्वैलक्षण्ये शास्त्रीयोऽसत्त्वव्यपदेशः कथम् ? इत्याशङ्क्य सद्वैलक्षण्याभिप्रायेणेत्याह—**सद्व्यावृत्तीति** ॥ किमत्र विनिगमने कारणम् ? इत्याशङ्क्याह—**निषेधप्रतियोगित्वादिति** ॥ **शून्यमिति**—शून्यस्याप्रसक्तस्य निषेधासंभवादित्यर्थः । द्वितीयं पक्षमुत्थापयति—**नन्विति** ॥ विद्योदयानन्तरमारोपितासत्त्वमङ्ग्यकारि, तदसंगतम्; उत्तरत्रासत्त्वे पूर्वमप्यसत्त्वाऽऽपातात्, प्राक्सत्त्वे कदाचिदप्यसत्त्वासंभवादित्याशङ्क्याह—**सर्ववादिनामिति** ॥ नष्ट-बाध्ययोर्विशेषं शङ्कते—**ननु भवत्विति** ॥ निरुपाख्यत्वे प्रतिभासासंभवादिति द्रष्टव्यम् । मुद्गरप्रहरणादिना घटादेश्चूर्णीकृतत्वान्नोत्तरकालं क्वचिदपि सत्त्वमित्यर्थः । ततो वैषम्यमाह—**न विभ्रमेति** ॥

### ऋजुविवरणम्

**कूटस्थापरोक्षेति** ॥ अथवा, स्वतो विशेषानुपलब्धिरसिद्धा, रजतावभासत्वादिति, तदर्थम्—**एकरसेति** ॥ तर्हि कथं तथा प्रतीतिः ? तदाह—**कूटस्थापरोक्षेति** ॥ अध्यस्तस्य शून्यतानिराकरणमसंगतमित्याशङ्क्याह—**साधिष्ठानेति** ॥ कथमसत्त्वे प्रतिभासायोगादित्युक्तम् ? अप्रतीतौ तद्वैलक्षण्यस्यापि प्रत्येतुमशक्यत्वात्, प्रतीतौ स्ववचनविरोधापत्तेरित्याशङ्क्य सोपस्कारमभिप्रायमाह—**प्रत्यक्षत इति** ॥ किमित्येवं व्याख्यायते ? स्फुरणस्वभावस्य शून्यस्य प्रतिवाद्यनङ्गीकृतत्वात्, इत्याशङ्क्य तन्मतेऽप्यापादयति—**प्रतिभासमात्रेति** ॥

ननु अध्यस्तशून्यत्वस्योभयवादिसिद्धत्वान्नैकः पर्यनुयोज्य इत्यभिप्रायं दर्शयति—**नन्वध्यस्तमिति** ॥ अथवा "भवतो मतमि"ति कथमुक्तम् ? तन्मतत्वव्यावृत्तिशङ्का स्याद् यतः, इत्याशङ्क्याभिप्रायमाह—**तेऽपीति** ॥ असत्त्वेन च वेदे शास्त्रे चाध्यस्तस्य व्यवहारो दृश्यते, स कथम् ? इत्याशङ्क्याभिप्रायमाह—**सद्व्यावृत्तिमात्रमिति** ॥ कथं "काममि"ति शून्यत्वमङ्गीक्रियेत ? पूर्वमपि शून्यत्वप्रसङ्गाच्छून्यवादिताप्रसक्तेरित्याशङ्क्याभिप्रायमाह—**सर्ववादिनामिति** ॥ विनाशादूर्ध्वं सर्वस्य शून्यत्वमविशिष्टमित्युक्त्वाऽनन्तरं बाधकज्ञानस्यार्थापत्तेर्देशान्तरसम्बन्धसाधकत्वनिराकरणमसङ्गतम्, इत्याशङ्क्य चोद्यनिवर्त-

## पञ्चपादिका

**विशिष्टदेश-कालसम्बद्धं रजतं विलोपयदेवोदेति, न देशान्तरसम्बन्धमापादयति, तथाऽनवगमात्। तथाच दूरवर्तिनीं रज्जुं सर्पं मन्यमानस्तन्निकटवर्तिनाऽऽप्तेन 'नायं सर्पः' इत्युक्ते सर्पाभावमात्रं प्रतिपद्यते, न तस्य देशान्तरवर्तित्वम्; तत्प्रतिपत्ताव-सामर्थ्याद्वाक्यस्य। नार्थापत्त्या; इह भग्नघटाभाववत्तावन्मात्रेणापि तत्सिद्धेः। यत्रापि सर्पबाधपूर्वको रज्जुविधिरक्षजन्यः**

## पञ्चपादिकाविवरणम्

देशान्तरे सत्त्वं गमयति ? किं वेह बाधानुपपत्तिरिति ? न तावद् बाधकज्ञानमित्याह—**तथाच बाधकज्ञानमिति** ॥ नेदं रजतम्, किंतु देश-कालान्तरे वुद्धौ वेत्यनवगमादिति भावः। यावदभिधानसामर्थ्यं हि वाक्यमर्थं प्रतिपादयति, देशान्तरवर्तित्वं त्वन-भिहितं न वाक्यार्थ इत्यर्थः ॥

एवं सति प्रतिपन्नस्य वस्तुनोऽत्राभावोऽन्यत्र सत्त्वमन्तरेणानुपपन्नः, इत्यर्थापत्त्या वाक्यं गमयिष्यतीति ? नेत्याह—**नार्थापत्त्येति** ॥ अन्यथाख्यातौ निषिद्धस्य संसर्गस्याऽऽत्मख्यातौ बहिष्ट्वस्य वान्यत्र सत्त्वमन्तरेण निषेधदर्शनात्; अख्यातावपि

## तत्त्वदीपनम्

इतरेतराभावज्ञानस्य बाधकत्वात्तेनेतरेतरभावो बाध्यते न रूप्यम्, उभयनिषेधे कल्पनागौरवं स्यादित्यर्थः। पुरोवर्तिनि सत्त्वा-संभवात्तुच्छत्वमिति शङ्कते—**किंविति** ॥ अन्यत्र सत्त्वान्न शून्यत्वमित्याह—**देशान्तरेति** ॥ प्रमाणाभावान्नान्यत्रापि सत्त्व-मित्याह—**तत्रेत्यादिना** ॥ विद्योदयानन्तरं यथा निरुपाख्यता, तथा बाधकज्ञानं प्रवृत्तमिति **तथाशब्दार्थः**। बाधकबोधेन देशान्तरे सत्ताऽधिगम्यत इति ब्रुवाणं प्रति "तथाऽनवगमादि"ति हेत्वभिधानमयुक्तमित्याशङ्क्य, किमपरोक्षबाधकबोधाद् देशान्तरसत्त्वमधिगम्यत इति ब्रवीषि ? उत शाब्दात् ? इति विकल्प्याऽऽद्यं दूषयति—**नेदमिति** ॥ रजतं न पुरोवर्तिनि सत्, किन्तु देशान्तरादावित्याकारबुद्धिवृत्त्यदर्शनादित्यर्थः।

द्वितीयं निराकर्तुम्—"**तथाचे**"त्युक्तं टीकायाम्। तस्यायमर्थः—रज्ज्वाः सर्पात्मना ग्रहणे विशेषाग्रहणं हेतुरित्याह—**दूरेति** ॥ रज्जुं सर्पात्मतया गृहीत्वा ह !! हा !!! इति क्रन्दमानं नरमालोक्य कृपया कश्चिद् ब्रवीति—'मा भैषीः', 'नायं सर्पः' इति, तदा तद्वचनात् सर्पनास्तितां प्रतिपद्य स्वस्थो भवतीति सर्पाभावाधिकरणत्वेन पुरोवर्तिप्रतिपत्तिरपि जायते। अतः कथम-भावमात्रं प्रतिपद्यते ? इत्याशङ्क्य मात्रचोऽर्थमाह—**न तस्येति** ॥ देशान्तरवर्तित्वं किं पदार्थः ? उत वाक्यार्थः ? नाद्यः; तद्वाचकपदाभावादिति चेतसि निधाय द्वितीयं कल्पं निराचष्टे—**तत्प्रतिपत्ताविति** ॥

तत्रासामर्थ्यादिति कथम् ? 'विषं भुङ्क्ष्वे'त्यादिवाक्याद्विषभक्षणबोधकादपि भोजननिवृत्तिप्रतिपत्तिवद् देशान्तर-सत्त्वप्रतिपत्त्युपपत्तेरित्याशङ्क्याह—**यावदिति** ॥ यत्र वाक्यं मुख्यवृत्त्याऽर्थप्रतिपादकम्, तत्र पदसामर्थ्यमनतिक्रम्याऽर्थं बोधयद् लक्ष्यते—'समिधमाहर' इत्यादौ, यत्र त्वमुख्यवृत्त्या बोधकम्, तत्र पदसामर्थ्यातिक्रमेणापीति व्यवस्था। ततश्चात्र पदसामर्थ्याति-क्रमनिमित्ताभावात्तत्र सामर्थ्यानुरोधेन वक्तव्यम्। नच तस्य देशान्तरवर्तित्वबोधजननसमर्थता; तस्यानभिहितत्वात्, अभिहितपदार्थसंसर्गबोधनसमर्थत्वाद्वाक्यस्येत्यर्थः।

बाधानुपपत्तिरन्यत्र सत्त्वकल्पिकेति मतमुत्थापयति—**एवं सतीति** ॥ प्रत्यक्ष-परोक्षबाधकधियोः साक्षाद् देशान्तर-वर्तित्वबोधकत्वासम्भवे सतीत्यर्थः। वाक्यमिति प्रत्यक्षस्याप्युपलक्षणम्। किमेतद्वादिदृष्ट्योच्यते ? उत लौकिकदृष्ट्या ? इति विकल्प्य क्रमेण दूषयति—**अन्यथाख्यातावित्यादिना** ॥ **अख्यातावपीत्यस्यायमर्थः**—"अध्वर्युं निष्क्रामन्तं प्रस्तोता

## ऋजुविवरणम्

कत्वं दर्शयति—**ननु भवत्विति** ॥ "तथाऽनवगमादि"त्ययुक्तम्, विशेषनिषेधसामर्थ्यात्तथाऽवगतेरित्याशङ्क्य, बाधकं प्रत्यक्षरूपं शब्दरूपं च तत्र प्रत्यक्षनिराकरणार्थमुक्तम्, "तथानवगमादि"त्यभिप्रायमाह—**नेदं रजतं किन्त्विति** ॥ मा भूत् प्रत्यक्षेण देशान्तरसम्बन्धप्रतीतिः, यावतैव शब्दसंजल्पस्तावत एव प्रतीतिरिति कृत्वा, वाक्ये तु कथं तत्प्रतीतावसामर्थ्यम्, विशेष-निषेधस्येतरप्रतिपादकत्वादित्याशङ्क्य व्याचष्टे—**यावदभिधानेति** ॥ अभिधानसामर्थ्यानतिक्रमेण वाक्यार्थप्रतिपादकत्वम्। गोरानयने चोदिते हि नान्यानयननिवृत्तिर्वाक्यादवगम्यत इति। अनेन "तथाच दूरवर्तिनी" मित्यस्याभिप्राय उक्तः।

अर्थापत्तिः सामग्र्यभावेन निराकरणानर्हेत्याशङ्क्यानुपपत्तिप्रदर्शनेन शङ्कामाह—**एवं सतीति** ॥ किं तत्तद्दर्शनाभि-प्रायेणार्थापत्तिरुच्यते ? उत लोकदृष्ट्यभिप्रायेण ? इति विकल्प्य प्रथमपक्षे बहिरेव दूषणमाह—**अन्यथाख्यातावित्ति** ॥

## पञ्चपादिकाविवरणम्

ऋत्विग्विच्छेदे सर्वस्वदानकर्तव्यताबुद्धावृत्विग्विच्छेदान्तरनिमित्तादक्षिणयागसमाप्तिविज्ञानबाधितायां न सर्वस्वदानकर्तव्यता तत्र प्रतिपन्नाऽन्यत्र सतीति कल्प्यते। प्रवृत्तिरेव तत्र निरुध्यत इति चेत् ? न; प्रवृत्तिनिरोधो न बाध इत्युक्तत्वात्। यागादिषु च प्रवर्तमानस्य राजचोरादिप्रतिबन्धनिश्चयात् प्रवृत्तिनिरोधेऽपि यागादिबुद्धौ बाधप्रसिद्ध्यभावात्, सत्यां चाबाधितकर्तव्यताबुद्धौ यदाकदाचित् प्रवृत्तिसिद्धेः॥

किञ्च—लोकेऽपि प्रतिपन्नोपाधावेव यस्य निषेधः, तस्य निषेधोपाधिसजातीयोपाध्यन्तरे सत्त्वं न कल्प्यत इत्याह—

## तत्त्वदीपनम्

संतनुयात्तमुद्गाता तं प्रतिहर्ता तं ब्रह्मा तं यजमानः" इति ज्योतिष्टोमे ऋत्विजामन्योन्यकच्छोपादानेन यज्ञशालातो निष्क्रमणं श्रूयते। तत्र प्रतिहर्तुर्विच्छेदे सर्वस्वदक्षिणयाऽध्वरपरिसमाप्तिः श्रूयते—"सर्ववेदसं दद्यादि"ति। उद्गातृविच्छेदे दक्षिणां विनैव यागः समापनीय इति। तत्रोभयोर्युगपद् विच्छेदे विकल्पः; तुल्यत्वादिति निर्णयः। क्रमेण निमित्ते जाते परीक्ष्यते—किमाद्यं निमित्तं स्वकार्यं प्रयोजयति ? उत चरमं निमित्तम् ? इति। तत्रासंजातविरोधितया पूर्वस्य बलीयस्त्वात् तदेव प्रयोजकम्, उत्तरस्य तद्विरोधे प्रयोजकत्वासम्भवादिति प्रापय्य, राद्धान्तितम्—"पौर्वापर्ये पूर्वदौर्बल्यं प्रकृतिवदि"ति। अस्यायमर्थः—निमित्तयोः पूर्वापरीभावे जाते पूर्वस्य दौर्बल्यम्; पूर्वोपमर्दमन्तरेणोत्तरोत्पत्तेरनुपपत्तेः। तदुक्तम्—"पूर्वात्परबलीयस्त्वं तत्र नाम प्रतीयताम्। अन्योन्यनिरपेक्षाणां यत्र जन्म धियां भवेत्॥" इति। तत्र दृष्टान्तः—"प्रकृतिवदि"ति। यथा प्रकृतौ श्रुतानां कुशमयबर्हिषां विकृतावतिदेशप्राप्तानां शरमयबर्हिर्भिर्बाध्यत्वम्; तेषां प्रकृतौ सावकाशत्वात्, इतरेषां निरवकाशत्वात्, सावकाश-निरवकाशयोर्निरवकाशं बलवदिति न्यायात्। तथाच प्रथमप्राप्तप्रतिहर्तृविच्छेदपरिप्रापितसर्वस्वदानकर्तव्यता चरमप्राप्तोद्गातृविच्छेदनिमित्तादक्षिणयागसमाप्तिविज्ञानबाधिताऽन्यत्र सत्त्वेन नाऽऽश्रीयते, तद्वदत्रापीति॥ दृष्टान्तोऽसंप्रतिपन्न इति शङ्कते—**प्रवृत्तिरिति**॥ अव्याप्त्या परिहरति—**न प्रवृत्तीति**॥ किंच प्रवृत्तिमात्रस्य निरोधे बाधः ? उतायथार्थप्रवृत्तेः ? तत्राऽऽद्येऽतिव्याप्तिमाह—**यागादिष्विति**॥ न चरमः; अख्यातिमतेऽन्यथा प्रवृत्तेरयोगादित्यर्थः॥ किं कतिपयप्रसिद्ध्यभावो हेतुः ? उत सकलप्रसिद्ध्यभावो हेतुः ? तत्राऽऽद्ये कतिपयप्रसिद्ध्यभावस्य सर्वत्र सुलभत्वान्न किमपि सिद्ध्यति। द्वितीयेऽसिद्धिः; निखिलप्रसिद्ध्यभावस्य दुर्ज्ञानत्वादित्याशङ्क्याह—**सत्यामिति**॥ राजादिप्रतिबन्धप्रध्वंसे यागादिषु प्रवृत्त्यनुपपत्त्या तद्वेत्वबाधिततत्कर्तृताबुद्धिरवसीयते; अन्यथा कर्तव्यताबुद्धेर्बाधात्प्रवृत्तिर्न स्यादित्यर्थः।

लौकिकदृष्टचेति विकल्पं निरस्यति—**किंचेति**॥ **निषेधोपाधीति**; निषेधस्योपाधिर्यो देशादिः, तस्य सजातीय-

## ऋजुविवरणम्

**अख्यातावपीति**॥ इयं विषयशुद्धिः—ज्योतिष्टोमे "यदि प्रतिहर्ता विच्छिद्येत सर्ववेदसं दद्यादि"ति सर्वस्वदानं नैमित्तिकम्; उद्गातृविच्छेदे त्वदाक्षिण्यं श्रुतम्—"यद्युद्गाता विच्छिद्येतादाक्षिण्यो यज्ञः संस्थाप्यः"इति। तत्र पूर्वतराधिकरणे द्वयोर्युगपद्विच्छेदे द्वयमपि नैमित्तिकमित्युक्तम्, पूर्वाधिकरणे तु युगपद् निमित्तद्वयेऽपि नैमित्तिकस्य विकल्प उक्तः; सम्प्रति क्रमेण निमित्ते किं प्रथमं निमित्तं बलवत् ? उत द्वितीयम् ? इति चिन्त्यते। अनुपसंजातविरोधित्वात् पूर्वस्योत्तरबाधकत्वम्; स्वावरुद्धे कर्मण्युत्तरप्रवृत्तिप्रतिबन्धकत्वादिति पूर्वपक्षं कृत्वा राद्धान्तितम्—"पौर्वापर्ये पूर्वदौर्बल्यं प्रकृतिवत्" इति। 'पौर्वापर्ये' पूर्वापरविरोधे, पूर्वस्य दौर्बल्यम्। 'प्रकृतिवदि'ति निदर्शनम्। यथा प्राकृतस्य पदार्थस्य विकृतावतिदेशतः प्राप्तस्य वैकृतेनोपदिष्टेन दौर्बल्यम्, अन्यत्र सावकाशत्वात्, एवमत्रापीत्यनुपसंजातविरोधित्वेनोत्पन्नत्वं बाध्यत्वे हेतुः। अनुपसंजातविरोधित्वं च सापेक्षविषयम्, पौर्वापर्यं तु निरपेक्षविषयम्। तदुक्तं भट्टपादैः—"पूर्वात्परबलीयस्त्वं तत्र नाम प्रतीयताम्। अन्योन्यनिरपेक्षाणां जन्म यत्र धियां भवेत्॥" इति॥ एवं पूर्वदौर्बल्ये प्रकृतोपयोगस्तु—यदा पूर्वं प्रतिहर्तुर्विच्छेदः तदा पूर्वं नैमित्तिकसर्वस्वदानकर्तव्यताप्राप्तिरनन्तरमुद्गातृविच्छेदान्नैमित्तिकमदाक्षिण्यं भवति, तेन च पूर्वस्य बाधः। तदिहोदाहरणम्। ननु—प्रवृत्तस्य प्रवृत्तिनिरोधो बाधः; परिव्राजकादौ चौदासीन्यप्रच्युतिरस्त्येव, अतः कथं पूर्वोक्तत्वेन तस्य बाध्यत्वं निराक्रियते ? इत्याशङ्क्याह—**यागादिष्विति**॥ कथं प्रसिद्ध्यभावेन बाधाभावो निश्चीयते ? विद्यमानेऽप्यप्रसिद्धिदर्शनादित्याशङ्क्याह—**सत्यां चेति**॥ उत्तरत्र प्रवृत्त्या बाधाभावो निश्चीयत इत्यर्थः।

द्वितीयपक्षनिराकरणपरत्वेनोत्तरटीकामवतारयति—**किंचेति**॥ अथवा "नार्थापत्त्ये"त्यत्रैव यद्यर्थापत्तेरुपक्षीणत्वं

### पञ्चपादिका

**तादृशवाक्यजन्यो वा, तत्रापि स एव न्यायः, तथाऽनवगमात्। तदेवं न क्वचिन्निरधिष्ठानोऽध्यासः। तस्मात्साधूक्तम्—परत्रेति ॥**

### पञ्चपादिकाविवरणम्

**इह भग्नघटाभाववदिति** ॥ यथा प्रतिपन्नदेशे निषिद्धस्य घटस्य न देशान्तरे सत्त्वम्, एवं प्रतिपन्नदेश-कालवस्तुसर्वोपाधौ निषिद्धस्य न प्रतियोगित्वेनाप्रतिपन्नसर्वोपाधौ सत्त्वसिद्धिरित्यर्थः। ननु कथं सर्वत्र शून्यस्य प्रतिपत्तिरिति ? तत्राह—**तन्मात्रेणाऽपि तत्सिद्धेरिति** ॥ अत्रैवानिर्वचनीयमिथ्यावस्तुसद्भावमात्रेणापि तस्याः प्रतीतेः सिद्धेरित्यर्थः ॥

ननु तर्हि 'पूर्वं रजतमभूदिदानीं ने'ति घटवत्कालभेदेन निषेधः स्यात् ? न; लौकिकपरमार्थरजतस्यात्र कालत्रयेऽपि शून्यत्वात्तदपेक्षया निरुपाधिकनिषेधसिद्धेः। निरुपाधिकनिषेधसामर्थ्याच्च प्रतिपन्नं मिथ्यारजतमिति बाधानन्तरं परा-

### तत्त्वदीपनम्

देशादाविति। यदिह निषिद्धयते, तदन्यत्र सदिति न व्याप्तिः; इह नष्टकलशे व्यभिचारादिति वक्तव्ये तदभावादिति किमुक्तम् ? इत्याशङ्क्याह—**यथेति** ॥ इह भग्नघटस्याऽन्यत्र सत्त्वाभाववद् बाधितस्य नान्यत्र सत्त्वमिति टीकार्थः। **प्रतियोगित्वेनेति**—प्रतियोगिव्यावर्तकत्वेनेत्यर्थः। विधिप्रत्ययानुपपत्त्या समारोपितस्यान्यत्र सत्त्वमिति शङ्कते—**नन्विति** ॥ बाधविरोधान्नात्र सत्त्वम्, अन्यत्रापि तन्नेष्यते चेत्, कथं प्रतिभासः ? इत्यर्थः ॥ "तन्मात्रेणे"त्यत्र किं देशान्तरसत्त्वं तच्छब्दार्थः ? उताऽत्रसत्त्वम् ? नाद्यः; अनङ्गीकृतेः। नापि चरमः; बाधविरोधादिति शङ्कायामाह—**अत्रैवेति** ॥ सद्विलक्षण-त्वमनिर्वचनीयत्वम्; बाधयोग्यत्वं मिथ्यात्वमिति विभागः।

निरुपाधिकनिषेधानुपपत्त्या न पुरोवर्तिनि सत्त्वमिति चोदयति—**ननु तर्हीति** ॥ पुरोवर्तिनि रजतसत्त्वे "प्राग् रजतमिदानीं ने"त्येवं प्रतिषेधः स्यात्, न तु नेदं रजतमिति; न च तथा लक्ष्यत इत्यर्थः। निषेधस्य पुरोवर्तिरूप्यविषयत्वम-सिद्धमित्याह—**न लौकिकेति** ॥ परमार्थरजतस्यात्राप्रसक्तत्वान्न निषेध इति न शङ्कापदम्; रूप्याऽऽभासप्रसक्त्या तत्प्रसक्तेरा-वेदितत्वादित्याशयः ॥ विधिप्रत्ययस्य रूप्याऽऽभासविषयत्वम्, निषेधप्रत्ययस्य परमार्थविषयत्वमिति कल्पनाद् वरं कालभेदेन सत्त्वासत्त्वकल्पनम्, ततश्च विधि-निषेधप्रत्यययोपपत्तिरित्याशङ्क्याह—**निरुपाधिकेति** ॥ **चशब्दः** शङ्काव्यावृत्त्यर्थः। रजतस्य प्राक्सत्त्वे 'नेदं रजतमि'ति निरुपाधिकनिषेधो न घटते, स चानुभूयते; तस्मान्निरुपाधिकनिषेधबलात् प्रतिपन्नं मिथ्येति निश्चिनुम इत्यर्थः। **इतीत्यत्र** निश्चिनुम इति शेषः। तत्रैव हेत्वन्तरमाह—**बाधानन्तरमिति** ॥ उपलभ्यमानस्य सत्त्वे मिथ्यात्वपरामर्शो न स्यादित्यर्थः। प्रतीयमानस्य रूप्यस्य पुरोवर्तिनि सत्त्वे तस्य भ्रान्तित्वप्रसिद्धिरपि न स्यादित्याह—**अन्यथेति** ॥ प्रत्यक्ष-परोक्षबाधकप्रत्यययोर्देशान्तरसत्त्वगमकत्वस्य निरस्तत्वात् 'यत्रापी'त्यादेर्वैयर्थ्यमित्याशङ्क्य तात्पर्यमाह—

### ऋजुविवरणम्

परदर्शनाभिप्रायेणाभिप्रेतम्, तर्हि 'इह भग्नघटाभाववदि'ति ग्रन्थो व्यर्थः स्यात्। अथवा पूर्वाभिप्रायवर्णनं टीकाविरुद्धम्; तत्रान्यत्रैवोपक्षीणत्वप्रदर्शनात्, इत्याशङ्क्यावतारयति—**किञ्च लोकेऽपीति** ॥ "घटाभाववदि"ति निदर्शनं कृतम्, तन्न युक्तम्; 'तत्रत्यः सन् घट इह भग्नः' इत्यादावन्यत्र सत्त्वप्रतीतेरित्याशङ्क्य तदभिप्रेतं दर्शयति—**यथाप्रतिपन्नेति** ॥ शून्यत्वस्य चोद्ये सन्निहितत्वात् "तन्मात्रेणे"त्यनेन तस्यैव निर्देशशङ्का स्यात्, तदर्थं व्याचष्टे—**अत्रैवेति** ॥

यदि निषेधस्य सत्यरजतविषयत्वमङ्गीक्रियते, कथमुत्तरत्र मिथ्यात्वेन रजतपरामर्शः ? अनुभूतविषयत्वात्परा-मर्शस्येत्याशङ्क्याह—**निरुपाधिकनिषेधेति** ॥ **सामर्थ्य**शब्देनार्थापत्तिरुच्यते। अथवा सामर्थ्यशब्देनाधिष्ठानाभिव्यक्तं चैतन्यमभिधीयते, तच्च संसृष्टग्राहकम्, रजतनिवृत्तिश्चाधिष्ठानचैतन्यगतेति तेनावभास्यत इति भावः। कल्पनागौरव-परिहाराय कालभेदेन निषेधः कस्मान्नाङ्गीक्रियत इति ? तत्राह—**अन्यथेति** ॥ सत्यत्वे च पूर्वमेव दूषणमभिहितमिति भावः। "यत्रापी"त्यनेन न्यायातिदेशः कृतः, स कथम्, सादृश्याभावात् ? इत्याशङ्क्य नायमतिदेश इत्याह—**नायं सर्प इत्यादिना** ॥ ननु—कैमुत्येऽपि यदुदाहृत्य किञ्चित् साध्यते, तस्मिन्नुदाहरणे किंचित् पूर्वपक्षसाधकमुद्रिक्तकारणमङ्गी-कृत्योदाहरणान्तरे तादृशकारणाभावे पूर्वन्यायेन तादृशत्वसाधनं कैमुत्यम्; तदभावादत्र कथम् ? इत्याशङ्क्य, अत्रापि

### पञ्चपादिका

यद्येवम्, 'परत्र पूर्वदृष्टावभासः' इत्येतावदस्तु लक्षणम्, तथाविधस्य स्मृतिरूपत्वाव्यभिचारात्? सत्यम्; अर्थलभ्यस्य स्मृतित्वमेव स्यात्, न स्मृतिरूपत्वम्। नच स्मृतिविषयस्याध्यासत्वमित्युक्तम्। यद्येवम्, एतावदस्तु लक्षणम्—परत्र स्मृतिरूपावभास इति, तत्र परत्रेत्युक्तेऽर्थलभ्यस्य परावभासस्य स्मृतिरूपत्वं विशेषणम्, न हि परस्यासंप्रयुक्तस्य पूर्वदृष्टत्वाभावे स्मृतिरूपत्वसम्भवः? सत्यम्; विस्पष्टार्थं पूर्वदृष्टग्रहणमिति। यथान्यासमेव लक्षणमस्तु। "तथाच

### पञ्चपादिकाविवरणम्

मृश्यते—"मिथ्यैव रजतमभादि"ति; अन्यथा कालभेदे सत्यरजतमेव स्यात्। 'नायं सर्प' इत्यभावमात्रविषया हि प्रत्यक्षप्रतिपत्तिर्न देशान्तरे सर्पसत्त्वं गमयति, किमु वक्तव्यम्—'रज्जुरियमि'त्यधिष्ठाने पर्यवसिता प्रतीतिर्न कल्पयति इति दर्शयति—**यत्रापि सर्पबाधपूर्वकं इति** ॥ **तदेवमित्याद्युपसंहारः**।

**यद्येवं परत्रेत्यादिः स्पष्टार्थः** ॥ **सत्यं; विस्पष्टार्थमिति** ॥ अस्यायमर्थः—स्मृतिरूपशब्देन किं संस्कारजन्यत्वम्, पूर्वानुभवसम्भेदो वा, स्मृत्या सादृश्यं भ्रान्तेरभिधीयत इति विशये संस्कारजन्यत्वमेवेति स्पष्टीकरणार्थं पूर्वदृष्टस्यावभासो

### तत्त्वदीपनम्

**नायं सर्प इति** ॥ आरोप्यासत्त्वस्य निरस्तत्वात्तदेवोपसंहरणीयमित्याशङ्क्य, तस्य साधिष्ठानभ्रमसाधनप्रसङ्गाऽऽगतत्वादितरस्योपसंहरणं युक्तमित्याह—**तदेवमिति** ॥ **आद्युपसंहार इति**—आदेः प्रधानस्योपसंहार इति यावत्।

(टीकायाम्) **"यद्येवमि"**त्यादेरयमर्थः—भ्रमस्य साधिष्ठानत्वनियमादधिष्ठानवाचकं पदमाद्रियताम्, किं 'स्मृतिरूपः' इत्यनेन? इति शङ्कते—**यदीति** ॥ संस्कारजन्यत्वसिद्ध्यर्थं तदर्थवदित्याशङ्क्यार्थसिद्धं तदित्याह—**तथाविधस्येति** ॥ पूर्वदृष्टपदेन संस्कारजन्यत्वं सिद्धमित्येतदङ्गीकरोति—**सत्यमिति** ॥ तर्हीतरस्य वैयर्थ्यम्, नेत्याह—**अर्थेति** ॥ संप्रयोगदोषजन्यत्वसिद्ध्यर्थं स्मृतिरूपविशेषणमित्यर्थः। स्मृतिः किं न स्यात्? इत्याशङ्क्याह—**न चेति** ॥ पूर्वदृष्टपदवैयर्थ्यं शङ्कते—**यद्येवमिति** ॥ एतावत्युक्ते साकाङ्क्षत्वेनाऽऽनर्थक्यम्, तत्राह—**तच्च (तत्र) परत्रेति** ॥ पूर्वदृष्टत्वमन्तरेण स्मृतिरूपत्वमनुपपन्नमित्याशङ्क्यार्थसिद्धत्वान्न तदुपादेयमित्याह—**न हीति** ॥ पूर्वदृष्टस्यार्थसिद्धत्वेऽपि स्पष्टीकरणार्थं पूर्वदृष्टपदमित्युक्तम्, तत्र स्पष्टीकरणस्यान्यतः सिद्धत्वाद् वैयर्थ्यं तदवस्थमित्याशङ्क्याह—**सत्यमिति** ॥ प्रसिद्धस्मृतौ संस्कारजन्यत्वस्य पूर्वानुभवसंभिन्नविषयत्वस्य च सद्भावात् तयोश्चान्ते कीदृशं सादृश्यं स्मृतिरूपशब्देन विवक्षितम्? इति न ज्ञायत इति पूर्वदृष्टग्रहणमित्यर्थः।

तेन वा कथं संशयव्यावृत्तिः? इत्याशङ्क्याह—**पूर्वदृष्टस्येति** ॥ अपूर्वस्योत्पत्तेः कथं पूर्वदृष्टस्यावभासनम्? इत्याशङ्क्याह—**पूर्वेति** ॥ तत्र हेतुमाह—**अनिर्वचनीयेति** ॥ लक्षणवर्णनानन्तरं संभवाद्युच्यताम्, किमनुभवोपन्यासेन?

### ऋजुविवरणम

तदस्तीत्याह—**नायं सर्प इत्यभावेति** ॥ "तदेवं न क्वचिद्वि"त्ययुक्तम्; अध्यस्तस्यान्यत्र सत्त्वे प्रमाणं निराकृत्य तदेवोपसंहर्तव्यम्, किं व्यवहितोपसंहारेण? इत्याशङ्क्यावतारयति—**तदेवमित्यादीति** ॥ ग्रन्थसन्दर्भाद्यत्वेन प्रधानत्वेन च तस्यैवोपसंहारः कृतः। नचाद्यन्ताद्यत्वात्परत्रेति पदसाफल्यमेवोपसंहर्तव्यम्, आद्युपसंहारो यतः; कारणोपसंहारः पूर्वम्, पश्चात् फलोपसंहार इत्यर्थः।

स्मृतरूपशब्देनैव विस्पष्टं संस्कारजन्यत्वे लब्धे किं "पूर्वदृष्टः" इत्यनेन? इत्याशङ्क्य व्याचष्टे—**अयमर्थ इति** ॥ तत्र लक्षणदूषणं परिहृत्य लक्ष्यस्वरूपं युक्तितः समर्थनीयम्; न त्वनुभवोपन्यासेन कृत्यमित्याशङ्क्य परिहृतम्—"तथाच लोकेऽनुभवः"इत्यादिनेति। ननु नास्मिन्ननुभवे स्वाभिमतमिथ्यात्वं स्पष्टम्, तत्कथमनुभवसिद्धत्वेन युक्तेरनादरः क्रियते? इत्याशङ्क्यावतारयति—**भ्रान्तिश्चेदिति** ॥ यद्वा—

व्याप्तं प्रमाणयुक्तिभ्यां लक्षणं लक्ष्यरूपकम्। अविनाभावसंबन्धो लक्ष्य-लक्षणयोरिह ॥
कथं सिद्ध्येत्प्रमाणेन विना युक्त्याऽनुकूलया ॥
इत्याह शङ्कां विनिराकरिष्णुर्मानं निरूप्यं स्थितयुक्तियुक्तम्।
व्याप्तौ हि लक्ष्ये कृतलक्षणस्य "तथाच लोके मति" रित्यनेन ॥

## पञ्चपादिका

**लोकेऽनुभवः" इत्युदाहरणद्वयेन लौकिकसिद्धमेवेदमध्यासस्य स्वरूपं लक्षितम्, किमत्र युक्त्या ? इति कथयति—शुक्तिका हि रजतवदवभासत इति ॥**

**ननु न शुक्तिका प्रतिभासते, रजतमेव प्रतिभासते; तेन शुक्तिकेति, रजतवदिति चोभयं नोपपद्यते ? उच्यते; शुक्तिकाग्रहणमुपरितनसम्यग्ज्ञानसिद्धं परमार्थतः शुक्तिकात्वमपेक्ष्य, वतिग्रहणं तु संप्रयुक्तस्यारजतस्वरूपस्य मिथ्यारजतसम्भेद इवावभासनमङ्गीकृत्य। मिथ्यात्वमपि रजतस्याऽऽगन्तुकदोषनिमित्तत्वादनन्तरबाधदर्शनाच्च कथ्यते, न**

## पञ्चपादिकाविवरणम्

न दर्शनस्येत्युक्तमिति। पूर्वदृष्टसजातीयस्येत्यर्थः; अनिर्वचनीयरजताभ्युपगमात्। भ्रान्तिश्चेत् सत्यस्य वस्तुनो मिथ्यावस्तुसम्भेदावभासः, अन्यथाऽतिप्रसङ्गादित्याद्या या युक्तिरभिहिता, लोकानुभवसिद्धत्वादध्यासस्य तथापि युक्त्या न प्रयोजनमित्याह—**तथाच लोकेऽनुभव इत्यादिना** ॥

ननु 'शुक्तिका' 'रजतवदिति' च वचनं न भ्रान्त्यपेक्षयोपपद्यते; इदं रजतमित्येवावभासनात्; नच बाधापेक्षया, तत्र वत्करणाभावाद्; इति चोदयति—**ननु न शुक्तिकेति** ॥ बाधकज्ञानापेक्षया शुक्तिका रजतमवभासत इति लक्षणप्रदर्शनम्, बाधकज्ञानविषयतया वा तत्सामर्थ्येन वा सिद्धस्याध्यासस्य मिथ्यात्वस्थ लक्ष्यस्य वच्छब्देनाभिधानमिति लक्ष्य-लक्षणसङ्गतिरनेन वाक्येन तत्र प्रदर्श्यत इत्याह—**उच्यते शुक्तिकाग्रहणमिति** ॥ ननु मिथ्या रजतमिति विशेषणादन्यत्र सत्यरजतं वक्तव्यमिति ? नेत्याह—**मिथ्यात्वमपि रजतस्येति** ॥ स्वरूपपरं विशेषणं नान्यव्यावृत्तिपरमित्यर्थः। ननु रजतस्य मिथ्यात्वे

## तत्त्वदीपनम्

इत्याशङ्क्योक्तम्—**तथाचेत्यादि** ॥ तत्र कासौ युक्तिः ? तत्राह—**भ्रान्तिश्चेदिति** ॥ "शुक्लो गौरि"त्यादिप्रत्ययानां भ्रान्तित्वप्रसङ्गोऽतिप्रसङ्गशब्दार्थः ॥

शुक्तिका रजतवदिति च प्रतिभासमानत्वान्न प्रतिभासत इति कथम् ? इत्याशङ्क्य, शुक्तिका रजतवदिति भ्रान्तिमधिकृत्योच्यते ? उताभ्रान्तिमिति विकल्प्य, क्रमेण दूषयति—**ननु शुक्तिकेत्यादिना** ॥ उत्तरपक्षाङ्गीकारेण समाधत्ते—**बाधकेति** ॥ वतिग्रहणवैयर्थ्यं परिहरति—**बाधकज्ञानविषयेति** ॥ नेदं रजतमिति ज्ञानं बाधकज्ञानशब्दार्थः। **तत्सामर्थ्येन** अधिष्ठानज्ञानानुपपत्त्येत्यर्थः। अध्यस्यत इत्यध्यास आरोप्यः। "मिथ्यारजतसंभेदः" इत्यत्र मिथ्येति विशेषणं नोपपद्यते; व्यावर्त्यसत्यरूप्याभावात् त्वन्मते ? इत्याशङ्कते—**ननु मिथ्येति** ॥ विशेषणमन्यथाऽपि घटत इत्याह—**नेत्याहेति** ॥ "नीलमुत्पलमि"त्यादौ व्यावर्त्यरक्तोत्पलसद्भावे 'नीलमि'ति विशेषणमर्थवद् दृष्टमित्याशङ्क्य 'गन्धवती पृथिवी'त्यादौ स्वरूपपरत्वेनाऽपि विशेषणोपादानान्नैतदित्याह—**स्वरूपेति** ॥ इदन्तायाः परमार्थत्वात्तद्धर्मि रजतमपि सदित्याऽऽशयेनाह—**ननु रजतस्येति** ॥

## ऋजुविवरणम्

तत्र किमिति प्रमाणमेवोक्तम् ? न तु युक्तिरपीत्याशङ्क्य टीकाकृता व्याख्यातम्—"तथाच लोक" इत्यादिना, तदनुपपन्नम्; युक्त्या विना प्रमाणस्यान्यथयितुमप्यशक्यत्वादित्याशङ्क्याह—**भ्रान्तिश्चेदिति** ॥ तत्र "लोकसिद्धमि"त्यनुपपन्नम्; नहि लोको नाम किञ्चन प्रमाणमित्याशङ्क्य व्याचष्टे—**लोकानुभवसिद्धत्वादिति** ॥ ननु युक्तावुक्तायां कस्मादेवं टीकाकृता व्याख्यातम् ? इत्याशङ्क्याभिप्रायमाह—**तथापि युक्त्येति** ॥ अतिशयेनोक्तमित्यर्थः ॥

"ननु न शुक्तिके"त्यादिना शुक्तिकाग्रहणाभावाद् रजतस्यैव ग्रहणादिति भाष्यमाक्षिप्तम्, तन्मन्दम्; शुक्तिकाया रजतात्मतायाश्च ग्रहणदर्शनात्, किमाक्षिप्यते ? इत्याशङ्क्याभिप्रायमाह—**ननु शुक्तिका रजतवदिति** ॥ अतो लक्ष्य-लक्षणयोरविनाभावे न किंचन प्रमाणमिति भाष्यमनुपपन्नमिति भावः। एवं लक्ष्य-लक्षणसंबन्धकथनपरं भाष्यं निर्मूलत्वेनाऽऽक्षिप्य, "शुक्तिकाग्रहणमि"त्यादिना शुक्तिकाग्रहणमुपपादितम्, तथा "संभेद इवावभासमङ्गीकृत्ये"त्युक्तम्, न त्ववभासानुपपत्तिः परिहृता। यच्च भाष्ये लक्ष्य-लक्षणसम्बन्धप्रदर्शनमपि न संभवति, निर्मूलत्वादित्युक्तम्, तदपि न परिहृतम्; अतोऽनुपपन्नः परिहार इत्याशङ्क्याभिप्रायमाह—**बाधकज्ञानापेक्षयेति** ॥ ननु कथं बाधकज्ञानविषयत्वं मिथ्यात्वस्योच्यते ? ज्ञानबाध्यत्वरूपत्वान्मिथ्यात्वस्य; न तु ज्ञानसाध्यो बाधस्तस्यैव ज्ञानस्य विषयो भवति; पूर्वसिद्धविषयापेक्षत्वाद् ज्ञानस्य ? इत्याशङ्क्याह—**तत्सामर्थ्येन वेति** ॥ तर्हि विशेषणवैयर्थ्यमित्याशङ्क्याभिप्रायमाह—**स्वरूपपरमिति**। अयोगव्यावृत्त्यर्थमित्यर्थः। "तत्रासंप्रयुक्तत्वादि"त्यनेनेदन्ताया रजतगतत्वं निराक्रियते, तदप्रयोजनमित्याशङ्क्य, शङ्काधिक्यं दर्शयति—**ननु रजतस्येति** ॥

## पञ्चपादिका

पुनः परमार्थाभिमताद्रजतादन्यत्वमाश्रित्य। तत्रासंप्रयुक्तत्वाद्रजतस्य नेदन्तावभासस्तद्गतः, किन्तु संप्रयुक्तगत एव। अपरोक्षावभासस्तु संस्कारजन्मनोऽपि रजतोल्लेखस्य दोषबलादिन्द्रियजज्ञानान्तर्भावाच्चेति द्रष्टव्यम्। तत्र शुक्तिकोदाहरणेन संप्रयुक्तस्यानात्मा रजतमिति दर्शितम्। निरञ्जनस्य चैतन्यस्यास्मदर्थेऽनिदमंशस्यानात्मा तदवभास्यत्वेन

## पञ्चपादिकाविवरणम्

तद्धर्मत्वादिदन्ताया अपि मिथ्यात्वात् सर्वमिथ्यात्वेन निरधिष्ठानताप्रसङ्ग इति? नेत्याह—**तत्रासंप्रयुक्तत्वादिति**॥ कथं तस्यासम्प्रयुक्तस्य रजतस्य परोक्षतेति? तत्राह—**अपरोक्षावभासस्त्विति**॥

उदाहरणद्वयस्य तात्पर्यमाह—**तत्र शुक्तिकोदाहरणेनेत्यादिना**॥ **अस्मदर्थे** अहमिति प्रतिभास इत्यर्थः। प्रतिभासतो युष्मदर्थत्वाभावेऽपि चिदवभास्यत्वं नाम युष्मदर्थलक्षणमस्तीत्याह—**तदवभास्यत्वेनेति**॥

## तत्त्वदीपनम्

इदमस्तद्धर्मत्वमसिद्धमित्याह—**नेत्याहेति**॥ अपरोक्षत्वानुपपत्त्या रजतस्य संप्रयुक्तत्वमेष्टव्यमिति शङ्कते—**कथमिति**॥ तदन्यथाऽपि घटत इत्याह—**अत (तत्र) आहेति**॥ (टीकायाम्) **दोषबलादित्यादे**रयमर्थः—संस्कारपरिप्रापितपारोक्ष्यप्रतिबन्धकमाह—**दोषबलादिति**॥ आपरोक्ष्यसंपादकमाह—**इन्द्रियेति**॥ इन्द्रियसंप्रयोगे जनितं यदधिष्ठानज्ञानं तस्मिन्नन्तर्यत्प्रतिबिम्बितचैतन्यं तस्मिन्नध्यासादपरोक्षतेति।

तत्र 'शुक्तिकोदाहरणेने'त्यनेन "तथाचे"त्यादिभाष्याक्षरार्थो व्याख्यायते? उत तात्पर्यार्थः? नाद्यः; अनुपलम्भात्, न द्वितीयः; तात्पर्यस्येरितत्वादित्याशङ्क्यैकेनैवोदाहरणेन लक्ष्य-लक्षणसंगतिसिद्धेः किमुदाहरणान्तरेण? इति शङ्कायां तस्यार्थवत्त्वं दर्शयितुमुत्तरो ग्रन्थ इत्याह—**उदाहरणेति**॥ निरुपाधिकाध्यासस्योदाहरणमाद्यम्, द्वितीयं सोपाधिकस्येति विभागः॥ 'अस्मदर्थे' इत्यत्रास्मच्छब्देन किं चैतन्यं विवक्षितम्? उतान्तःकरणम्? आद्ये तद्विषये घटादावनिदमंशाभावाद'निदमंशस्ये'त्यनुपपन्नम्, द्वितीयेऽपि तद्विषयेऽनात्मन्यनिदमंशाभावादनुपपत्तिरित्याशङ्क्याह—**अस्मदर्थं इति**॥ प्रतिभासत इति प्रतिभासस्तस्मिन्। एतदुक्तं भवति—अस्मच्छब्दस्य योऽर्थोऽहंकार इदमनिदमात्मकस्तस्मिन्। गुर्वभिमताऽऽत्मानं व्यावर्तयति—**चैतन्यस्येति**॥ हेतुसम्बन्धेन परिणामित्वशङ्कां व्यावर्तयति—**निरञ्जनस्येति**॥ अहंकारस्यानिदमात्मना प्रतीयमानत्वाद् 'अनिदमंशस्यानात्मे'त्ययुक्तमित्याशङ्क्य, युष्मदर्थलक्षणाक्रान्तत्वान्नानिदमंशोऽहंकार इत्युक्तम्; तदनुपपन्नम्, इदन्तया प्रतिभासाभावे तल्लक्षणापत्तेरयुक्तत्वादित्याशङ्क्याह—**प्रतिभासत इति**॥ यथा चन्द्रादेरुष्णस्पर्शप्रतिभासाभावेऽपि तेजस्त्वाधिकरणतया तद्वत्त्वमाश्रितम्, तथाऽत्रापीत्यर्थः॥

अध्यासलक्षणेऽतिव्याप्त्यादिविधुरतया निरवद्ये सिद्धे "कथं पुनरित्या"दि व्याख्यायताम्, किं "नन्वि"त्यादिना ग्रन्थेन? नच—अत्र लक्षणेऽव्याप्तिराशङ्क्य निरस्यत इत्यपि—वाच्यम्; "तदिह निद्रादी"त्यत्र कारणत्रितयजन्यतालक्षणस्योपलक्षणस्य परत्र परावभासलक्षणस्वरूपलक्षणस्य च तत्र भावाभिधानादित्यसंगतोऽयं ग्रन्थ इत्याशङ्क्योभयविधलक्षणाव्याप्तेराशङ्क्यमानत्वान्नात्रासङ्गतिरिति टीकाऽऽशयमाविष्करोति—**अद्वितीयेति**॥ आत्मन्यनात्माध्यासे कारणत्रितयजन्यस्य ज्ञानस्य

## ऋजुविवरणम्

ननु अस्य भाष्यस्य तात्पर्यमक्षरार्थश्च दर्शितः, अतः पूर्वव्याख्यानेन पौनरुक्त्यमित्याशङ्क्य परिहरति—**उदाहरणद्वयस्येति**॥ उदाहरणद्वयोपादाने प्रयोजनमुच्यत इति भावः। अस्मच्छब्देन चैतन्ये विवक्षितेऽस्मदर्थेऽनिदमंशस्येत्यनुपपन्नम्; तस्येदंमात्रविषयत्वात्, अनिदमंशाभावात्, अन्तःकरणे चाऽस्मदर्थे तस्य योऽर्थः, तस्मि'न्ननिदमंशस्ये'त्यनुपपन्नम्; तस्य चैतन्यैकविषयत्वादनिदंशब्दवैयर्थ्यादित्याशङ्क्य व्याचष्टे—**अहमिति प्रतिभास इति**॥ 'तदवभास्यत्वेन युष्मदर्थलक्षणापन्ने'ति व्यर्थम्; स्वतो युष्मदर्थत्वात्, प्रतिभासाभावे तल्लक्षणापत्तेश्चायुक्तत्वात्, अयुष्मदर्थत्वप्रसङ्गात्। न च 'लक्षणापन्ने'ति प्रतिभासव्यवच्छेदः; "तदवभास्यत्वेने"ति प्रतिभास्यत्वकीर्तनविरोधादित्याशङ्क्याह—**प्रतिभासत इति**॥ "ननु बहिरर्थ" इत्यादिनाऽजन्यप्रकाश्यत्वेनात्मन्यनवभासो न संभवतीत्युक्तम्, तदप्रस्तुतम्; न ह्यनेन सिद्धान्तवादिनः किंचिद्विरुद्धमभिहितम्। अथ शुक्तिकोदाहरणस्यात्मन्यध्यस्तस्याहंकारादेरनात्मत्वसिद्धिप्रयोजनत्व उक्ते तदध्यस्तत्वमाक्षिप्यत इत्युच्यते? तदसम्बद्धम्; उत्तरत्र भाष्य एव साध्यमानत्वात्; असंगतत्वप्रसङ्गाच्च। अथ प्रकृतलक्षणस्यात्रासंभव उच्यते? मैवम्; आत्मन्यनवभासाभावमात्रेण लक्षणाभावस्यासिद्धेरित्याशङ्क्य ग्रन्थसन्दर्भस्य तात्पर्यमाह—**अद्वितीयचैतन्येति**॥ ननु रजताध्यासवदेवात्राप्य-

### पञ्चपादिका

युष्मदर्थलक्षणापन्नोऽहंकारोऽध्यस्त इति प्रदर्शनार्थं द्विचन्द्रोदाहरणेन जीवेश्वरयोर्जीवानां चानात्मरूपो भेदावभास इति दर्शितम् ।

नु बहिरर्थे कारणदोषोऽर्थगतः सादृश्यादिरिन्द्रियगतश्च तिमिरादिरुपलभ्यते, तन्निमित्तश्चार्थस्य सांशत्वाद्

### पञ्चपादिकाविवरणम्

अद्वितीयचैतन्यप्रकाशात्मनि द्रष्टर्यहङ्कारादिसङ्घातस्याध्यस्तत्वाद् अध्यस्यमानव्यतिरिक्तम् अधिष्ठानम्, अध्यासाधिष्ठानयाथात्म्यविषयप्रमाणज्ञानम्, द्रष्टा चेति त्रितयमात्मेति वक्तव्यम् । ततश्चाधिष्ठानगतो दोषः, द्रष्टुर्दोषः, प्रमाकरणदोषो वा सर्वं दोषजातमात्मन्येवेति वक्तव्यम्; तदभावाच्चैतन्यस्याध्यासविषयज्ञानस्याजन्यत्वात्, कारणत्रितयजन्यविज्ञानस्यात्मन्यनात्माध्यासेऽसम्भवाद्, अगृहीतविशेषस्य सामान्यग्रहणस्याधिष्ठानत्वनिमित्तस्यात्मन्यसम्भवात् 'परत्रे'त्ययोगाच्च नाध्यासलक्षणं बहिरुक्तमप्यात्मनि सम्भवतीति चोदयति—**'ननु बहिरर्थे'** इत्यादिना **'उच्यत'** इत्यतः प्राक्तनेन ग्रन्थेन ॥ ननु इहापि

### तत्त्वदीपनम्

परत्रेत्यस्य चाऽसंभवान्नाध्यासलक्षणमात्मनि संभवतीति सम्बन्धः । उपलक्षणाऽभावे हेतुमाह—**तदभावादिति** ॥ कारणत्रितयान्तःपातिनो दोषस्याभावादित्यर्थः । दोषाभावं दर्शयितुं तदाश्रयाधिष्ठानादेरात्मव्यतिरेकेणासत्त्वमाह—**अध्यस्यमानेति** ॥ अध्यस्यमानव्यतिरिक्ताधिष्ठानादेरात्मनः पृथक्त्वाभावे हेतुमाह—**द्रष्टरीति** ॥ अध्यस्तत्वमुपपादयति—**अद्वितीयेति** ॥ आत्मनोऽद्वितीयत्वादिरूपत्वात्तद्विपरीतमध्यस्तमित्यर्थः । अथवा—स्वरूपलक्षणाभावं दर्शयितुं द्रष्टारं विशिनष्टि—**अद्वितीयेति** ॥ अधिष्ठानं द्वयाकारं दृष्टम्, तादृक्त्वमात्मनो नेत्यादिविशेषणार्थः । विशेषाग्रहणं सामान्यग्रहणं चाधिष्ठानत्वप्रयोजकम्, तच्चात्र नेत्याह—**चैतन्येति** ॥ चिद्रूपोऽप्यात्माऽन्याधीनप्रकाश इदि चेत् ? तत्राह—**प्रकाशात्मनीति** ॥ अस्त्वधिष्ठानादेरात्ममात्रत्वम्, ततः किम् ? इत्यत आह—**ततश्चेति** ॥ अधिष्ठानदोषः सादृश्यादिः, प्रमातृदोषो रागादिः, करणदोषः काचादिः । नच तद्दोषजातमात्मनि संपादयितुं शक्यम्, तदैकरस्यश्रुतिविरोधादित्यर्थः । जन्यत्वमप्यसंभवीत्याह—**चैतन्येति** ॥ अध्यासश्च विषयश्चेत्यध्यास-विषयौ, तयोः साधकं यद् ज्ञानं चैतन्यम् तस्य नित्यत्वेनाजन्यत्वादित्यर्थः । "अद्वितीये"त्यादिविशेषणफलं स्वरूपलक्षणाभावमाह—**अगृहीतेति** ॥ न गृहीतो विशेषो येन सामान्यग्रहणेन, तत्तथोक्तम् । **च** शब्दोऽयोग।दित्यनेन संबध्यते ॥ विशेषाग्रहण प्रसाध्य तद्धेतुत्वेनाविद्यादोषकल्पनयोभयविधलक्षणं संपादयामीत्याशयवान् शङ्कते—**नन्विहापीति** ॥ आत्मा, नागृहीतविशेषः, अनन्यनिमित्तप्रकाशत्वात्, व्यतिरेकेण शुक्त्यादिवदित्याह—**नेत्याहेति** ॥ अनन्यनिमित्तप्रकाशत्वेऽपि संवेदन-

### ऋजुविवरणम्

वच्छिन्नचैतन्यस्याधिष्ठानत्वम्, अन्तःकरणादेरेव कारणत्वम्, तद्गतदोषोऽपि, अतः कथमसंभव ? इत्याशङ्क्याह—**द्रष्टर्यहंकारादीति** ॥ अहंकाराद्यतिरिक्तमेव कारणं वक्तव्यम्; तस्याध्यस्यमानकोटित्वादित्यर्थः । ननु अहंकारादेरध्यस्तत्वेऽपि कथमसंभवः ? लक्षणस्यात्मन्येव सम्पादयितुं शक्यत्वात्, तथोत्तरत्राऽऽत्मन्येव सर्वं वक्तव्यमित्युच्यते, तदपि कथम् ? इत्याशङ्क्यात्मन्यसंभवसिद्ध्यर्थं तत्रैव वक्तव्यत्वसिद्ध्यर्थं चाधिष्ठानस्वरूपं निरूपयति—**अद्वितीयेत्यादिना** ॥ तत्र 'द्रष्टरी'त्यहंकारादिसाक्षिनिर्देशस्तत्रैवाध्यस्तत्वसिद्ध्यर्थम् । सर्वस्य तत्राध्यस्तत्वे तत्रैव सर्वं कारणं वक्तव्यमिति सिद्ध्यति । तत्र द्रष्टुरपि कारणापेक्षसिद्धत्वं वदन्ति; तथा सति कारणदोषादिसंभवः स्यात्, तदर्थमाह—**प्रकाशात्मनीति** ॥ प्रदीपादौ प्रकाशरूपेऽप्यन्यापेक्षसिद्धत्वं दृष्टम्, तदर्थमाह—**चैतन्यप्रकाशेति** ॥ 'चैतन्यात्मनी'त्येवोक्ते चैतन्यरूपोऽप्यनुमेयात्मेत्याहुः सांख्याः; तद्वच्चैतन्यरूपत्वेऽप्यनवभासादिसंभवः स्यात्, अतश्चोभयं विवक्षितम्—चैतन्यप्रकाशात्मनीति ॥ चैतन्यप्रकाशरूपेऽप्याकारान्तरे सति तदनवभासः शङ्क्येत, तदर्थमाह—**अद्वितीयेति** ॥ 'अद्वितीये'त्यनेनाधिष्ठाने द्वयाकारत्वाभावः उक्तः । "चैतन्यप्रकाशात्मनी"-त्यनेन कारणापेक्षसिद्धित्वं निरस्तम् । **तदभावः** कारणदोषाभावः । "अद्वितीयप्रकाशात्मनी"ति विशेषानवभास उक्तः । अधिष्ठानद्रष्टृदोषाभावश्चानेनैव । तथानुलोम्येनापि । तत्र "द्रष्टरी"त्युक्ते तस्य रूपान्तरानवभासः शङ्क्येत, तदर्थमाह—**अद्वितीयेति** ॥ एवमप्यजडत्वेनावभासादि भवेत्, तदर्थम्—**"चैतन्ये"**ति ॥ तस्याप्यविद्याविरोधित्वं दर्शयितुमाह—**प्रकाशात्मनीति** ॥ अथवा चैतन्यरूपस्यापि सांख्यवदनवभासः स्यात्, तदर्थमाह—**प्रकाशात्मनीति** ॥ "अहंकारादिसंघातस्ये"त्यनेनात्मन्येव रूपत्रयं च वक्तव्यमित्युक्तम्, इतरत्रापि यथासंभवं हेतुत्वमूह्यम्, विस्तरभयान्नोक्तम् । अत्र विशेषणोपयोगसंग्रहः—

## पञ्चपादिका

**अंशान्तरावग्रहेऽप्यंशान्तरप्रतिबन्धो युज्येत, न त्विह कारणान्तरायत्ता सिद्धिः, येन तद्दोषादनवभासोऽपि स्यात्; निरंशस्य चैतन्यस्य स्वयंज्योतिषस्तदयोगात्।**

## पञ्चपादिकाविवरणम्

बहिरर्थवदगृहीतविशेषत्वमर्थत्वसामान्यादनुमीयतामिति ? नेत्याह—**नन्विह कारणान्तरायत्तेति** ॥ ननु स्वभावावभासेऽपि संवेदनवदगृहीतविशेषांशोऽपि स्यादिति ? नेत्याह—**निरंशस्येति** ॥ मध्यमपरिमाणनिराकरणादणुरनन्तो वाऽऽत्मा निरंश इति ॥ ननु निरंशोऽप्याकाशादिवन्न कात्स्न्र्येनावभासत इति ? तत्राह—**स्वयंज्योतिष इति** ॥ यावत्सत्त्वमवभासभावादित्यर्थः। कुतः ? "अत्रायं पुरुषः स्वयंज्योतिः" "आत्मैवास्य ज्योतिरि"त्यादिश्रुतेः। ननु ज्योतिरिति प्रकाशगुणमात्रं नाभिधीयते; आत्मनो गुणत्वप्रसङ्गात्, अतः प्रकाशगुणवद् द्रव्यं ज्योतिरिति, जन्यज्ञानेनापि प्रकाशेनात्मा प्रकाशगुण इति 'ज्योतिरात्मे'ति

## तत्त्वदीपनम्

वदगृहीतविशेषत्वमित्यप्रयोजकत्वं, साध्याव्यावृत्तिं वा शङ्कते—**ननु स्वभावेति** ॥ स्वयंप्रकाशत्व-नित्यत्वादीनां यथासंविद्‌ग्रहणम्, तद्वदत्रापीत्यर्थः ॥ संवेदनशब्देन चैतन्यं विवक्षितम् ? उत वृत्तिः ? आद्ये न दृष्टान्तसिद्धिः; तस्य पक्षत्वात्। द्वितीयेऽनवभासनिमित्तसद्भावादगृहीतविशेषत्वं तत्र संभवति नात्रेति चेतसि निधाय विशेषाग्रहणासंभवे हेत्वन्तरमाह—**नेत्याहेति** ॥ आत्मा, नागृहीतविशेषः, निरंशत्वाद् व्यतिरेकेण शुक्तिकावदित्यर्थः। असिद्धिं निरस्यति—**मध्यमेति** ॥ अनित्यत्वादिदोषप्रसङ्गान्न मध्यमपरिमाणत्वमित्यर्थः। आत्मा, गृहीतविशेषः, निरंशत्वात्; गगनवदिति प्रत्यनुमानपराहतिमप्रयोजकत्वं वा शङ्कते—**ननु निरंश इति** ॥ अन्याधीनप्रकाशत्वमुपाधिरिति दूषयति—**तत्राहेति** ॥ न चाप्रयोजकत्वम्; स्वयंज्योतिष्ट्वस्य बाधकत्वात्। ननु स्वयंज्योतिष्ट्वं नाम प्रकाशान्तरनिरपेक्षस्फुरणत्वम्, तच्च कदाचिदनवभासपक्षेऽपि घटते; प्रकाशसमये स्वत एव स्फुरणादित्याशङ्क्याह—**यावदिति** ॥ प्रकाशान्तरनिरपेक्षस्फुरणस्वभावत्वात् कदाचिदनवभासो न घटत इत्यर्थः। स्वयंज्योतिष्ट्वमाक्षिपति—**कुत इति** ॥ आत्मा, न स्वयंज्योतिः, व्यवहारपदत्वात्, घटादिवद्, इत्यर्थः। अबाधितविषयत्वस्यानुमितिसामग्रयन्तर्भावात् श्रुतिविरोधे नानुमोत्तिष्ठतीत्याह—**अत्रायमिति** ॥ श्रुत्यनुमानयोर्विरोधोऽसिद्ध इति चोदयति—**नन्विति** ॥ किं ज्योतिःशब्दस्य प्रकाशगुणवाचकत्वमङ्गीकृत्यात्म-ज्योतिःपदयोः सामानाधिकरण्यश्रुतिविरोध उद्भाव्यते ? आहो प्रकाशगुणवद्द्रव्यवाचकत्वम् ? इति विकल्प्याऽऽद्यं दूषयति—**ज्योतिरिति** ॥ नच—ज्ञानस्य गुणत्वमसिद्धमित्यपि—शङ्क्यम्, घट-तज्ज्ञानयोः संबन्धः, गुणनिष्ठः; ज्ञाननिष्ठत्वात्; सत्तावत्। तत्र संबन्धस्य गुणनिष्ठत्वं संबन्धिनोरन्यतरस्य गुणतामन्तरेणापर्यवस्यदन्यतरस्य गुणतां साधयति। तत्र न घटस्य गुणत्वम्; द्रव्यत्वात्। परिशेषाद् ज्ञानं गुणत्वेन सिद्ध्यतीत्यर्थः। द्वितीयं परिशिनष्टि—**अत इति** ॥ तथापि कथं श्रुत्यविरोधः ? इति शङ्कायामाह—**इतीति** ॥ आत्म-ज्योतिःपदयोः सामानाधिकरण्यादात्मनो बोधरूपत्वप्रतिपत्तेस्तत्पराहत-

## ऋजुविवरणम्

दोषाद्यभावादवभासभावाद्विशेषरूपस्य तदात्मकत्वात्।
नाध्यासचिह्नं बहिरुक्तमत्र संजाघटीतीति निरूपणीयम् ॥

तत्र "बहिरर्थ" इत्येव प्रतीकग्रहणे तस्यैवैतावानभिप्राय इत्याशङ्क्येत, तथा सत्यनुपपन्नत्वमुत्तरग्रन्थवैयर्थ्यं च स्यात्, तदर्थमाह—**उच्यत इत्यत इति** ॥ "नन्विहे"त्यनेनान्याधीनसिद्धिर्निरस्ता, नैतावतैवावभाससिद्धिरित्याशङ्क्य, पूर्वं तदभिप्रायस्यानुक्तत्वात्, अनुक्तौ चोत्तरग्रन्थानुदयः; कारणाभावेनैवानवभाससिद्धेरिति मनसि निधाय चोद्यव्याजेनाभिप्रायमनुवदति—**स्वभावावभास इति** ॥ निरंशत्वमसिद्धम्; सांशत्वस्यापि कैश्चिदङ्गीकृतत्वादित्याशङ्क्य साधयति—**मध्यमपरिमाणेति** ॥ आकाशात्मनाऽभिव्यक्तचैतन्येनैवावभास इत्यभिप्रायेण शङ्कां दर्शयति—**ननु निरंशोऽपीति** ॥ आकाशोऽपि कथंचित् स्वयंज्योतिष्ट्वमुक्तमेवेत्यभिप्रायेण व्याचष्टे—**यावत्सत्त्वमिति** ॥ "यावत्सत्त्वमि"त्यनेन देशतः कालतश्च व्यतिरेकाभाव उक्तः। आकाशे त्वेकदेश एवेति भावः। अथवा "स्वभावावभासेऽपी"त्यनेनावभासव्यतिरेकाभावादन्याधीनत्वं निरस्तम्, अत्र निरंशेऽप्यवभासमानेऽनवभासमानत्वं दृश्यत इति चोदिते "स्वयं ज्योतिष" इति परिहारोऽनुपपन्नः; निरंशत्वेनावभासमानत्वस्यैव विवक्षितत्वात्, तदभ्युपगमेनैव चोदितत्वादित्याशङ्क्य व्याचष्टे—**यावत्सत्त्वमिति** ॥ "स्वयमि"त्यस्य व्याख्या 'यावत्सत्त्व'मिति। इतरद् व्यक्तम्। प्रमाणाभावादित्यभिप्रायेण पृच्छति—**कुत इति** ॥ 'सर्वभावानामि'ति व्यवच्छेदकं

## पञ्चपादिकाविवरणम्

न विरुद्धयते ? नैतत्सारम्; सर्वभावानामन्यनिमित्तप्रकाशसंसर्गित्वादात्मन्यपि तत्प्रसङ्गनिराकरणाय 'स्वयंज्योति'रिति विशेषणोपपत्तेः, "आत्मैवास्य ज्योति"रिति चैवकारात्। ननु कारकान्तरानपेक्षतया स्वयमेव स्वात्मनि ज्ञानं जनयतीति स्वयमिति विशेषणं किं न स्यात् ? न; ज्योतिष्ट्वस्यैव विशेष्यत्वात्, तत्र कारकत्वस्य विशेष्यतयाऽप्रतिभासात्॥

किञ्च ज्ञानजन्मप्रयुक्तत्वात् कारकापेक्षायास्तदभावेऽपेक्षैव नास्तीति। ननु—ज्ञानत्वप्रयुक्तं जन्मापि विद्यते, न प्रकाशगुणत्वप्रयुक्तमेव; द्रव्यजन्मव्यतिरेके स्वद्रव्योपाधौ जन्माभावस्य प्रदीपादौ दृष्टत्वात्; अत्रापि ज्योतिःशब्दादात्मनि प्रकाशगुणस्य

## तत्त्वदीपनम्

मनुमानमित्याह—**नैतदिति**॥ नच—ज्योतिःशब्दस्य प्रकाशगुणवद्द्रव्यवाचकत्वान्न तत्सामानाधिकरण्यादात्मनो बोधरूपत्वमिति—शङ्कयम्; तमोविरोधिप्रकाशमात्रवृत्तिसम्भवे द्रव्यवाचकत्वकल्पनाऽयुक्तेः। गुणवाचकशब्दस्याऽऽत्मसामानाधिकरण्यानुपपत्तेर्द्रव्यवाचकत्वं कल्प्यत इति चेत् ? मैवम्; ज्ञानस्य गुणत्वासिद्धेः। नचानुमानात्तत्सिद्धिः; प्रतिप्रयोगपराहतत्वात्, रूपतज्ज्ञानयोः संबन्धः, द्रव्यनिष्ठः, ज्ञाननिष्ठत्वात्। उपक्रमादिपर्यालोचनयाऽनवच्छिन्नात्मप्रतिपादकश्रुतिविरोधादात्मनि गुणगुणिभावकल्पनाऽनुपपत्तेश्च। तस्मात्—"अत्रायं पुरुषः" इत्यादिवाक्यं बोधाभेदप्रतिपादनपरमित्यर्थः॥ इतोऽपि नाऽऽत्माऽन्याधीनप्रकाश इत्याह—**सर्वेति**॥ भासमानस्यान्याधीनप्रकाशत्वं घटादौ दृष्टम्, तद् व्यावर्तयितुं स्वयमिति विशेषणम्। तच्चाऽऽत्मनोऽन्याधीनप्रकाशत्वेऽनुपपन्नमित्यर्थः। बोधरूपत्वाभावे विशेषणान्तरवैयर्थ्यं चेत्याह—**आत्मैवेति**॥ विशेषणमन्यथा घटत इति चोदयति—**नन्विति**॥ घटादिज्ञानं स्वातिरिक्तकर्त्रादिकारकापेक्षया जायमानमुपलब्धम्, तद्वदात्मज्ञानस्यापि कारकान्तराधीनत्वं प्राप्तं व्यावर्तयितुं विशेषणं युक्तमित्यर्थः। कारकान्तरनिवृत्तिर्न विशेषणफलम्; ज्योतिषो विशेष्यत्वादित्याह—**न ज्योतिष्ट्वस्येति**॥ एवकारव्यावर्त्यमाह—**तत्र कारकत्वस्येति**॥ ज्योतिष्ट्वस्य कस्माद्विशेष्यत्वम् ? इति वा शङ्कायामाह—**तत्रेति**॥

इतोऽपि न कारकान्तरव्यावृत्तिर्विशेषणफलमित्याह—**किंचेति**॥ जन्माऽभावोऽसिद्ध इति चोदयति—**नन्विति**॥ विमतम्, जन्मवत्, ज्ञानत्वात्, विषयज्ञानवदित्यर्थः। प्रत्यनुमानविरोधमाह—**न प्रकाशेति**॥ आत्मनि प्रकाशगुणस्य प्रकाशगुणत्वप्रयुक्तमेव जन्माभावनिश्चयादिति संबन्धः। तत्र हेतुमाह—**स्वद्रव्येति**॥ स्वस्याऽऽश्रयभूतं द्रव्यं स्वद्रव्यम्, तदेवोपाधिः, तस्मिन् स्वधर्मिणीत्यर्थः। साध्यवैकल्यं निरस्यति—**द्रव्यजन्मेति**॥ असिद्धिं निरस्यति—**अत्रापीति**॥ अत्रेत्यस्यात्मनीत्यनेन संबन्धः। ज्योतिःशब्दादित्यत्र प्रतीयमानस्येति शेषः। तथाच प्रयोगः—विमतम्, स्वाश्रयोपाधौ न जायते, प्रकाशत्वात्, प्रदीपप्रकाशवत्। विषयप्रकाशे व्यभिचारमाशङ्कयाह—**नचेति**॥ ज्ञानपरिणामोऽन्तःकरणे सति प्रकाशगुणोदयो न भवति,

## ऋजुविवरणम्

विशेषणम्—प्रसक्तस्य च व्यवच्छेद इति। ननु अयोगव्यवच्छेदेऽपि विशेषणफले संभवति कथमन्ययोगव्यवच्छेद एव विशेषणफलत्वेन निश्चीयत इति ? तत्राह—**आत्मैवास्येति**॥ व्यवच्छेद एव मुख्यं विशेषणफलं भवतु, तथापि व्यवच्छेद्यान्तरमेवेति चोदयति—**ननु कारकान्तरेति**॥ कथं ज्योतिष्ट्वस्यैव विशेष्यत्वम् न कारकत्वस्येत्याशङ्कयाह—**कारकत्वस्येति**॥ शाब्देऽन्वये प्रतीयमानमेव विशेष्यमिति भावः।

ननु अर्थलभ्येऽपि विशेषणान्वयः संभवत्येव, ज्ञानसामर्थ्यलब्धं च कारकम्; अतस्तदेव विशेष्यमित्याशङ्कयाह—**किंच ज्ञानजन्मेति**॥ **ननु ज्ञानप्रयुक्तमिति**॥ अयं भावः—ज्ञानं धर्मि, जनिमदिति साध्यो धर्मः, ज्ञानत्वात्, विषयज्ञानवदिति। तस्यापीन्द्रियान्वय-व्यतिरेकाभ्यां जन्मसिद्धिः, अन्तःकरणवृत्तिर्वा निदर्शनम्। तथा सति तत्सामर्थ्यलभ्यकारकस्य विशेष्यत्वमिति॥ "प्रकाशगुणप्रयुक्तमि"ति क्रियाविशेषणम्। प्रकाशगुणप्रयुक्तं जन्मैव न भविष्यतीत्यध्याहारः। द्रव्यजन्मेति व्याप्तिप्रदर्शनम्। अयं प्रयोगः—ज्ञानं धर्मि, स्वाश्रये न जायत इति साध्यो धर्मः, प्रकाशगुणत्वादिति हेतुः; प्रदीपप्रकाशवदिति दृष्टान्तः। विरुद्धाव्यभिचारित्वमनुमानेन बाधो वा पूर्वानुमानस्याभिहितः। ननु सिद्धे प्रकाशरूपत्वे ज्ञानस्याजन्यत्वं सिद्धं भवेत्, तदेवासिद्धमित्याशङ्कयाह—**अत्रापीति**॥ ननु अन्तःकरणे प्रकाशगुणस्योत्पत्तिर्दृश्यते, अतोऽनैकान्तिको हेतुरित्याशङ्कयाह—**नचान्तःकरणेऽपीति**॥ 'परिणामस्य ज्ञानत्वाभ्युपगमादि'त्युक्ते सर्वपरिणामस्य ज्ञानत्वं भवेत्, तदर्थमाह—**विशेषपरिणामस्येति**॥ भवतु विशेषपरिणामस्यैव ज्ञानरूपगुणत्वम्, तथापि स्वाश्रये जन्यत्वं तदवस्थमित्याशङ्कयाह—

## पञ्चपादिकाविवरणम्

जन्माभावनिश्चयात्। नचान्तःकरणेऽपि प्रकाशगुणोदयो ज्ञानपरिणामः; स्वभावत एव प्रकाशगुणवद्द्रव्यस्यान्तःकरणस्यैव विशेषपरिणामस्य ज्ञानत्वाभ्युगमात्। न च ज्ञानमपि क्वचिज्जन्मवद् दृष्टम्। दृष्टमन्तःकरण इति चेत्? न; ज्ञातुरर्थप्रकाशस्य ज्ञानत्वात्, तस्य चात्माश्रयत्वात्, अन्तःकरणपरिणामे ज्ञानत्वोपचारात्। नच—ज्ञानमात्माश्रयं द्रव्यमिति—युक्तम्; तस्यैव प्रकाशगुणत्वेनाऽऽत्मनो ज्योतिष्ट्वहानात्। जडप्रकाशगुणो न जन्यः, चित्प्रकाशगुणो जन्य इति चेत्? न; प्रकाशत्वप्रयुक्तत्वात्स्वद्रव्योपाधौ जन्माभावस्य। दर्पणादौ विद्यमानप्रकाशस्यैव तिरोधाननिराकरणं क्रियते, प्रदीपादिषु तु द्रव्यमेव जायते,

## तत्त्वदीपनम्

अन्तःकरणेऽपि ज्ञानपरिणामः प्रकाशगुणोदयो न भवतीति वा संबन्धः। तत्र हेतुमाह—**स्वभावत इति**॥ अन्तःकरणस्य विशेषपरिणामस्य ज्ञानत्वाभ्युपगमादिति सम्बन्धः। सुखादिव्यावृत्त्यर्थं विशेषेति विशेषणम्। परिणामित्वमुपपादयितुमन्तःकरणं विशिनष्टि—**द्रव्यस्येति**॥ तदुपपादयति—**प्रकाशगुणवदिति**॥ अन्तःकरणस्य घटादेश्च जडत्व एकस्य प्रकाशगुणत्वमन्यस्य नेत्येतत् कथम्? इत्याशङ्क्याह—**स्वभावत इति**॥ जडेऽपि प्रदीपे प्रकाशगुणदर्शनादित्यर्थः। नच ज्ञानस्यान्तःकरणपरिणामत्वे प्रमाणाभावः; "कामः संकल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव" इत्यादिना कामादीनां तत्परिणामत्वप्रतिपत्तेः। तथाच मृदो घटादिरूपेणावस्थावदन्तःकरणस्य ज्ञानाऽऽकारेण व्यवस्थितत्वादस्य न स्वाश्रयोपाधौ जन्मेत्यर्थः॥ किंच "विषयज्ञानवदि"त्यत्र ज्ञानशब्देन स्वरूपज्ञानं विवक्ष्यते? उत वृत्तिः? आद्ये साध्यवैकल्यमित्याह—**नचेति**॥ **अपि**शब्दः क्वचिदित्यनेन संबध्यते। चशब्दोऽवधारणार्थः। लोके वेदे च स्वरूपज्ञानं जायमानं नैवोपलभ्यत इत्यर्थः। द्वितीयमुत्थापयति—**दृष्टमिति**॥ अन्तःकरणे धर्मिणि वृत्तिजन्म दृष्टमिति शेषः। अस्मिन् पक्षे दृष्टान्तः साधनविकल इत्याह—**न ज्ञातुरिति**॥ ततः किम्? इत्यत आह—**तस्य चेति**॥ यद्यप्यात्मा ज्ञप्तिः; तथापि कल्पितभेदमङ्गीकृत्यात्माश्रयत्वादित्युक्तम्। वृत्तावपि ज्ञानशब्दप्रयोगो दृष्ट इत्यत्राह—**अन्तःकरणेति**॥ चैतन्यस्यैक्याध्यासाद् वृत्तौ ज्ञानत्वमुपचर्यते, दग्धृत्वमिवायःपिण्डे। नच—मुख्यत्वं किं न स्यादिति—शङ्क्यम्; अर्थप्रकाशोऽर्थस्फुरणम्, तच्च स्वयंप्रकाशम्; इतरथा विषयस्य तदधीनव्यवहारानुपपत्तेः नच—स्वप्रकाशस्य स्फुरणस्य जडान्तःकरणधर्मत्वं वस्तुतो युज्यत इत्यर्थः॥ ज्ञानस्य प्रकाशगुणत्वेन प्रकाशात्मकत्वादित्यसिद्धमित्याशङ्क्याह—**नचेति**॥ ज्ञानस्य प्रकाशगुणवत्त्व आत्मनः प्रकाशगुणवत्त्वेन स्वयंज्योतिष्ट्वमुक्तं हीयेतेत्यर्थः। प्रकाशस्य स्वाश्रयोपाधावजायमानत्वेन सम्बन्धे जडप्रकाशत्वमुपाधिरिति चोदयति—**जडप्रकाशेति**॥ प्रकाशमात्रस्य प्रयोजकत्वसंभवे जडेति व्यर्थं विशेषणमित्याह—**न प्रकाशेति**॥ दर्पणादिप्रकाशे व्यभिचारमाशङ्क्याह—**दर्पणादाविति**॥ मलावृतप्रकाशनस्य निघर्षणक्रियया तिरोधानमात्रनिरसनं क्रियत इत्यर्थः। प्रदीपे

## ऋजुविवरणम्

**प्रकाशगुणवदिति**॥ एतदुक्तं भवति—न प्रकाशगुणवत्यन्तःकरणे प्रकाशगुणान्तरोदयः संभवति। विशिष्टस्य परिणामाश्रयत्वमिति मा भूद् गुणद्वयसाहित्यम्, प्रकाशान्तरोदये पूर्वप्रकाशापगम इति? नेत्याह—**ज्ञानपरिणाम इति**॥ स्वभावापगमायोगादित्यर्थः। अथवा, विशेषपरिणामस्यान्तःकरणगतस्य प्रकाशगुणवद् ज्ञानत्वाभ्युपगमादित्यन्वयः; 'अन्तःकरणस्ये'त्यस्य परिणामविशेषणत्वात्, उपसर्जनेन चान्वयायोगादिति। कथमन्तःकरणस्यैतादृशपरिणाम इति? तदाह—**ज्ञानपरिणामस्वभावत इति**॥ अथवा, "नचान्तःकरणे" इत्यनेनान्तःकरणे प्रकाशगुणोदयो नास्तीति प्रतिज्ञा, ज्ञानपरिणामस्वभावत इति हेतुः। तर्हि ज्ञानस्वभावान्तःकरणे ज्ञानान्तरायोगाद् घटादिज्ञानाभाव इत्याशङ्क्याह—**प्रकाशगुणवदिति**॥ प्रकाशगुणवद् ज्ञानम्; विशेषपरिणामस्य द्रव्यरूपस्यैव ज्ञानत्वादित्यर्थः। प्रकाशगुणत्वादिति हेतोस्त्रिरूपत्वमुक्त्वा, ज्ञानत्वादित्यस्य हेतोः—नित्या, भूः, गन्धवत्त्वादितिवदसाधारणत्वमाह—**नच ज्ञानमपीति**॥ कथमसाधारणत्वम्? सपक्षेऽपि तद्दर्शनादिति चोदयति—**अन्तःकरण इतीति**॥ ननु अन्तःकरणवृत्तौ ज्ञानशब्दप्रयोगो दृश्यत इत्याशङ्क्याह—**अन्तःकरणपरिणाम इति**॥ तर्हि ज्ञानमप्यात्माश्रयं द्रव्यत्वेन जन्यं भवत्वित्याशङ्क्याह—**नच ज्ञानमिति**॥ अनेन हेतोरसिद्धिः परिहृता। जडप्रकाशत्वस्यैव व्याप्तिदर्शनादित्यभिप्रायेण चोदयति—**जडप्रकाशेति**॥ जडप्रकाशत्वेनाजन्यत्वम्, नच तदपि साध्यम्; बाधितविषयत्वप्रसङ्गादिति भावः। परव्याप्त्युपजीवित्वेन धूमगतकटुकत्ववदप्रयोजकं जडत्वमिति परिहरति—**न प्रकाशत्वप्रयुक्तत्वादिति**॥ कथं प्रकाशत्वप्रयुक्त्या स्वोपाधौ जन्माभावः? दर्पणादौ व्यभिचारादित्याशङ्क्याह—**दर्पणादाविति**॥ ननु

### पञ्चपादिका

**ननु ब्रह्मस्वरूपमनवभासमानमस्त्येव, न तदनवभासनाज्जीवेऽनवभास-विपर्यासौ भवतः। न हि शुक्तेः**

### पञ्चपादिकाविवरणम्

न प्रकाशगुणः। प्रज्ञानघनशब्दाच्च चैतन्यज्योतिरात्मा न जडज्योतिरिति गम्यते; "विज्ञानमानन्दम्" "प्रज्ञानमानन्दं ब्रह्मे"त्यादिवचनाच्च। ज्ञानमिति ज्ञातृत्वमुच्यते, न भावार्थ इति चेत्? न; भावार्थे प्रसिद्धिविरोधात् शब्दस्य। किञ्च प्रतिक्षणं प्रकाशगुणकल्पनाद् वरमेकस्यैव गुणस्य स्थायित्वकल्पनम्। आत्मनि प्रकाशगुणव्यतिरेकाभावाच्च नाऽऽगन्तुकत्वे प्रमाणमिति ॥

ननु आत्मन्यगृह्यमाणविशेषत्वमनुभवसिद्धमिति चोदयति—**ननु ब्रह्मस्वरूपमिति** ॥ तर्हि शुक्तिकायामिव ब्रह्मण्ये-

### तत्त्वदीपनम्

सति प्रभागुणस्योत्पत्तेर्दर्शनात्साध्यवैकल्यमित्याशङ्क्याह—**प्रदीपादिष्विति** ॥ विरलावयवद्रव्यस्य प्रभाशब्दवाच्यस्योत्पत्तिर्न प्रकाशगुणस्येत्यर्थः ॥ "उत्पन्नं द्रव्यं क्षणमात्रमगुणं तिष्ठती"त्यभ्युपगमात् साध्यवैकल्यमित्याशङ्क्याह—**न प्रकाशगुण इति** ॥ क्षणमात्रं गुणसम्बन्धाभावः कस्मात्? इति विवेचनीयम्—द्रव्येण सहोत्पन्नत्वे जन्य-जनकतानुपपत्तिः; नियतपूर्वक्षणवर्तित्वात् करणत्वस्य, ततः क्षणमात्रमगुणं स्थित्वोत्तरकाले गुणं जनयतीति चेत्? मैवम्; द्रव्योत्पादकेनैव द्रव्यसमवेतगुणोत्पत्त्युपपत्तेः "क्षणमात्रमगुणं तिष्ठती"ति प्रक्रियाऽनवकल्पनादित्यर्थः। स्वयंज्योतिष्ट्वप्रतिपादकश्रुतिपर्यालोचनया स्वप्रकाशत्वमुक्तम्, संप्रति—आत्मा, न स्वातिरिक्तसंविदधीनव्यवहारविषयः, संविदभिन्नत्वात्, संविद्वत्; न चासिद्धिः; प्रज्ञानघनादिवाक्यात्तत्प्रतिपत्तेरिति गुरुमतानुसारिणं प्रत्याह—**प्रज्ञानघनेति** ॥ 'अहं जानामी'ति ज्ञानाश्रयतया व्यवह्रियमाणत्वात्प्रत्यक्षविरोध इत्याशङ्क्याह—**न जडेति** ॥ 'जानामी'त्यत्र ज्ञानाश्रयत्वेनाहंकारोऽनुभूयत इत्यर्थः। अहंकारविषयत्वं कस्मात्? आत्मविषयत्वमेवास्त्वित्याशङ्क्य ज्ञानरूपब्रह्माभिन्नत्वान्न ज्ञानाश्रयत्वं युक्तमित्याह—**विज्ञानमिति** ॥ "विज्ञानं ब्रह्मे"त्यत्र ब्रह्मणो ज्ञात्रभेदः प्रतीयते, न बोधाभेद इति शङ्कते—**ज्ञानमिति ज्ञातृत्वमुच्यत इति** ॥ ज्ञानशब्दस्यबोधार्थत्वात् कथं ज्ञातृपरत्वम्? इति न शङ्कास्पदम्; "करणाधिकरणयोश्चे"ति सूत्रे ल्युट्प्रत्ययस्याधिकरणेऽपि विधानात् कथं नियमः? इत्याशङ्क्याह—**न भावार्थ इति** ॥ भावार्थस्य क्रियात्मकत्वान्न तद्रूपत्वं युक्तमित्यर्थः। करणाधिकरणयोर्धात्वर्थप्रतिपत्तिसापेक्षतया विलम्बितप्रतिपत्तिकत्वाद् धात्वर्थस्य च पुरःस्फूर्तिकत्वात्तदाश्रयणं युक्तिमित्याह—**न, भावेति** ॥ धात्वर्थाभेदानुपपत्तेर्विलम्बितप्रतिपत्तिकस्याप्यधिकरणस्योपादानमिति चेत्? मैवम्; अद्वैतश्रुतिविरोधात्, आधाराधेयकल्पनाऽयुक्तेः ज्ञानस्य क्रियात्मकत्वं चासिद्धम्। नच धात्वर्थत्वात् क्रियात्मकत्वम्; अक्रियात्मकस्यापि धात्वर्थस्य 'गडि वदनैकदेशे' इत्यादौ प्रसिद्धत्वादित्यर्थः ॥ अनन्यनिमित्तप्रकाशत्वे लाघवमितरत्र गौरवं चेत्याह—**किंच प्रतिक्षणमिति** ॥ ज्ञानस्याजन्यत्वे हेत्वन्तरमाह—**आत्मनीति** ॥ प्रकाशगुणव्यतिरेकः व्यावृत्तिः; तस्या अभावः, तदभावादित्यक्षरार्थः। विमतम्, नाऽऽगन्तुकम्, प्रागभावशून्यत्वात्; गगनवत्। नच हेत्वसिद्धिः, आत्मनि प्रकाशप्रागभावोपगमे जिज्ञासा-संशयविपर्यया न स्युः, ते चोपलभ्यन्ते, तस्मान्नासिद्धिरित्यर्थः।

श्रुति-युक्तिभ्यामात्मस्वप्रकाशसिद्धेरग्रहणाभावादात्मनोऽधिष्ठानत्वे प्रयुक्ते ब्रह्मस्वरूपानवभासनादित्युक्तं न युक्तम्; वैयधिकरण्यात्, इत्याशङ्क्याऽऽत्म-ब्रह्मणोरभेदान्न वैयधिकरण्यमित्याह—**नन्वात्मनीति** ॥ अविद्याया आच्छादनादिशक्ति-

### ऋजुविवरणम्

सति प्रदीपे प्रभागुणस्योत्पत्तिर्दृश्यते, इत्याशङ्क्याह—**प्रदीपादिष्विति** ॥ ननु अजन्यप्रकाशगुणत्वेऽपि तेनैव हेतुनाऽन्याधीनसिद्धित्वमनुमीयते प्रदीपवत्, तथा सति हेतोरिष्टविघातकारित्वमित्याशङ्क्याह—**प्रज्ञानघनशब्दाच्चेति** ॥ अथवा, "निरंशस्य स्वयंज्योतिषः" इत्यनेनाजन्यप्रकाशत्वे हेतुरुक्तः; तत्र हेतुस्वरूपं साधयित्वेदानीमयं हेतुरनन्याधीनसिद्धिं न साधयति, व्यभिचारादित्याशङ्क्य, "स्वयंज्योतिषः" इति चैतन्यज्योतिष्ट्वं विवक्षितम्, तच्च प्रमाणसिद्धमित्याह—**प्रज्ञानघनशब्दादिति** ॥ **प्रज्ञानघनशब्दः** प्रकृष्टं ज्ञानं वक्ति। प्रकर्षश्च चिद्रूपत्वमित्यर्थः ॥ श्रुत्यन्तरमुदाहृतं दार्ढ्यार्थम्। ज्ञानेऽहंप्रतीत्यभावात् तस्याऽऽत्मसामानाधिकरण्याभावात् कथं चिद्रूपत्वमिति चोदयति—**ज्ञानमिति। ज्ञातृत्वमिति** ॥ इदानीमनुकूलं तर्कमाह—**किंचेति** ॥ **आत्मनीति** बाधकाभावमाह। अथवा—'आत्मनी'त्यनेनानन्तरानुमानस्य बाधकभावमाह।

**पञ्चपादिका**

अग्रहणात्स्थाणावग्रहणं विपर्यासो वा। ननु न ब्रह्मणोऽन्यो जीवः, "अनेन जीवेनाऽऽत्मने"तिश्रुतेः, अतस्तदग्रहणमात्मन एव तत्; एवं तर्हि सुतरामविद्यायास्तत्रासम्भवः, तस्य विद्यात्मकत्वात्; "तस्य भासा सर्वमिदं विभातो"ति तच्चैतन्येनैव

**पञ्चपादिकाविवरणम्**

वानवभास-विपर्ययौ स्याताम्, न जीव इत्याह—**न तदनवभासनादिति**॥ ननु कार्य-कारणभावहीनयोर्द्रव्ययोः सामानाधिकरण्यमेकद्रव्यनिष्ठम्; 'सोऽयं देवदत्तः' इतिवत्, अतो द्रव्यैकत्वाद् जीवगतावेवानवभास-विपर्ययाविति चोदयति—**ननु न ब्रह्मणोऽन्य इति**॥ तर्हि ज्ञानप्रकाशविरोधादाश्रय-विषयभेदाभावाच्च नाज्ञातता ब्रह्मण इत्याह—**एवं तर्हीति**॥ तत्राद्वितीयाधिष्ठानब्रह्मात्मनि प्रमाणस्य चैतन्यस्याविद्याकारणदोषसंसर्गं प्रथमं दर्शयति—**उच्यते, विद्यत एवेति**॥ प्रत्यक्षानु-

**तत्त्वदीपनम्**

मत्वात् कथमनवभासाद्यभावः ? इत्याशङ्क्यानवभासाद्यभावं न ब्रूमः, किंत्वन्यत्रानवभासः स्यादित्याह—**तर्हीति**॥ ब्रह्मात्मनोरभेदादात्मन्यपि न स्यादित्याशङ्क्याभेदे मानाभावान्नैतदित्याह—**न जीव इति**॥ "मानाभावादि"त्येतदसिद्धम्; 'अनेन जीवेने'त्यभेदसिद्धेरित्युक्तमयुक्तम्, 'चारेण परसैन्यं समनुप्रविश्य संकलयामी'त्यादौ चारगतसंकलनस्य राज्ञि व्यपदेशवद् जीवगतनामादिव्याकरणं ब्रह्मण्युच्यते, तस्मात्कथमभेदः ? इत्याशङ्क्य, इतरत्र मुख्यार्थासंभवादुपचारः, नच तथाऽत्रेत्याह—**ननु कार्येति**॥ तत्त्वमस्यादिवाक्यम्, अखण्डार्थनिष्ठम्, अकार्य-कारणद्रव्यमात्रवृत्तित्वे सति समानाधिकृतत्वात्; 'सोऽयं देवदत्तः' इतिवत्। तत्र समानाधिकृतत्वादित्युक्ते 'खण्डो गौ'रित्यादौ व्यभिचारः, तदर्थम्—**द्रव्यमात्रेति**॥ तावत्युक्ते 'मृद् घटः' इत्यादौ व्यभिचारः, तदर्थम्—**कार्यकारणेति**॥ नच साध्यवैकल्यम्; तदेतद्देशाद्युपलक्षितदेवदत्तस्वरूपपर्यवसायित्वादित्यर्थः॥ अभेदे विद्यात्मकत्वान्न सुतरामविद्येत्युक्तम्, तन्न संभवति; भेदेऽपि विद्यात्मकत्वेनाविद्यासंभवसाम्यात्, अतः कथं सुतरामिति ? तत्राह—**तर्हि ज्ञानेति**॥ अभेदे भिन्नाश्रय-विषयाभावादविद्याभावस्तरपोऽर्थः। करणविषय-प्रमातृदोषाद्यसंभवात् लक्षणे प्रत्युक्ते करणादिदोष एव प्रदर्शनीयः, नाविद्यादोषः, तस्य प्रथमदर्शने वा को हेतुरिति ? तत्राह—**तत्रेति**॥ अधिष्ठानप्रमाणदोषस्य भ्रमजनकत्वादविद्यायाश्चाधिष्ठानयाथात्म्यप्रमाणदोषत्वाद् भ्रमजनकत्वं युक्तमित्याशयेनोक्तम्—**अधिष्ठानेति**॥ प्रथमदर्शने हेतुमाह—**अद्वितीयेति**॥ द्वयाकारत्वादेरविद्याऽधीनत्वात् प्रथमं तत्प्रदर्शनमित्यर्थः। **टीकाया एषोऽर्थः**—'अविद्यात्मके'ति

**ऋजुविवरणम्**

यत्रागृहीतविशेषसामान्यग्रहणं नास्तीति चोदितम्, तत्रैव विशेषाग्रहणं वक्तव्यम्, ननु ब्रह्मणीत्याशङ्क्य व्याचष्टे—**नन्वात्मनीति**॥ "तदनवभासनादि"त्ययुक्तम्; स्वाश्रये स्वकार्यकरत्वादित्याशङ्क्योपपादयति—**तर्हि शुक्तिकायामिति**॥ कथं जीव-ब्रह्मणोरेकत्वम् ? भेदप्रतीतेः सामानाधिकरण्यस्य च भेदाभेदविषयत्वात्, तथाच सति ब्रह्मगतमग्रहणं कथमात्मनः ? इत्याशङ्क्य व्याचष्टे—**ननु कार्यकारणेति**॥ ननु दोषत्रयाभावादगृहीतविशेषसामान्यग्रहणाभावात् कारणत्रयजन्यज्ञानाभावाच्च नाध्यासलक्षणमत्रेति चोदिते, प्रकाशाच्छादकदोषकथनमसंगतम्; अचोदितवस्तुकीर्तनादित्याशङ्क्याभिप्रायमाह—**तत्राद्वितीयेति**॥ अथवा—अधिष्ठानज्ञानादिष्वाक्षिप्तेषु किमर्थं विशेषणादौ प्रकाशाच्छादकसमर्थनमित्याशङ्क्याह—**तत्राद्वितीयेति**॥ "अत्रेति" व्याचष्टे—**अद्वितीयाधिष्ठानेति**॥ अनेन च बहुविषयेऽप्याक्षेपे प्रमाणाच्छादकदोषनिरूपणमेवादौ कर्तव्यम्, तेन विनाऽधिष्ठानादीनां स्वतो निरूपयितुमशक्यत्वादिति दर्शितम्। 'अद्वितीयाधिष्ठाने'ति स्वतोऽधिष्ठाने द्विरूपत्वाभाव उक्तः। 'ब्रह्मात्मनी'त्यनेन द्रष्टृभेदाभाव उक्तः। 'प्रकाशस्ये' त्यस्य व्याख्या चैतन्यस्येति। 'प्रमाणस्ये'त्यनेन चैतन्यस्याध्यासकारणत्वम्, तद्दोषत्वे च दोषत्रयान्तर्भावः। "प्रमाणस्ये"त्येवोक्ते सर्वस्याध्यस्यमानत्वात् कथमात्मव्यतिरिक्तं प्रमाणम् ? इति शङ्का स्यात्, तन्निवृत्त्यर्थम्—"चैतन्यस्येत्ये"वोक्तम्। "चैतन्यस्ये"त्येवोक्ते तद्दोषकीर्तनमप्रस्तुतं स्याद्, तदर्थम्—"प्रमाणस्ये"त्युक्तम्। "ब्रह्मात्मनि प्रमाणस्ये"त्यनेनादौ प्रमाणदोषकीर्तनं कर्तव्यम्; तस्य चैतन्यरूपत्वेन स्वतःसिद्धत्वात्, तत्प्रतिबन्धे चाधिष्ठानादिविभागोऽपि सिद्ध्यति; प्रमाणप्रतिबन्धे प्रमेयेऽपि रूपान्तरसंभवादित्युक्तम्। **अत्र संग्रहः**—

'अत्रे'त्यस्य पदस्यार्थः सप्तम्यन्तेन वर्णितः। द्रष्ट्रधिष्ठानयोर्भेदः स्वतो नेत्येतदीरितम्॥
प्रमाणप्रतिबन्धे हि सिद्धिस्तस्येति सूचितम्। अधिष्ठानद्विरूपत्व'मद्वितीये'ति वारितम्॥

### पञ्चपादिका

**सर्वस्य भासमानत्वात् ? उच्यते—विद्यत एवात्राप्यग्रहणाविद्यात्मको दोषः प्रकाशस्याच्छादकः। कथं गम्यते ? श्रुतेस्तदर्थापत्तेश्च। श्रुतिस्तावत्—"अनृतेन हि प्रत्यूढाः" "अनीशया शोचति मुह्यमानः" इत्येवमाद्या। तदर्थापत्तिरपि—**

### पञ्चपादिकाविवरणम्

मानार्थापत्तिप्रदर्शिताज्ञानस्य श्रुति-तदर्थापत्तिभ्यां प्रदर्शनं क्रियते—**श्रुतिस्तावदिति**॥ सुषुप्ते मिथ्याज्ञानाभावात्तत्संस्कारस्य चाप्रतिबन्धकत्वात् कादाचित्कग्रहणाभावस्य च स्वतःसिद्धग्रहणविरोधित्वाभावात्स्वरूपचैतन्येनैव ब्रह्मस्वरूपावभासे प्राप्ते, तदवभासप्रतिबन्धनिमित्तमनृतं दर्शयति—"**अनृतेन हि प्रत्यूढाः**" "त इमे सत्याः कामा अनृतापिधानाः" इति। ततश्च मिथ्याज्ञान-तत्संस्काराग्रहण-कर्मभ्यो व्यतिरिक्तमनवभासनिमित्तमनृतं मिथ्यावस्तु सिद्धम्। "अनीशया शोचति मुह्यमानः"

### तत्त्वदीपनम्

विशेषणं काचादिव्यावृत्त्यर्थम्। 'आच्छादकमि'त्यधिष्ठानतत्रमुपपादयति। प्रकाशाच्छादकत्वे तन्निवर्त्यत्वासंभवादनिवृत्तिरित्याशङ्क्याऽऽगन्तुकग्रहणनिवर्त्यत्वमित्याह—**अग्रहणेति**॥ प्रमाणाभावात् कथमविद्येत्युक्तानुसंधानाचतुरः कश्चित् शङ्कते—**कथमिति** (टीकायाम्)॥ अनुसंधानाकौशलमुक्तमेव स्मार्यताम्, किमिति प्रमाणान्तरमुपन्यस्तं टीकाकृता ? इत्याशङ्क्योक्तस्मारणे ममानुसंधानपाटवाभावादुक्तं स्मारयतीति वादिनः खिन्नमतित्वं स्यात्, तदर्थं तन्मतिमनुसरन् प्रमाणान्तरं कथयतीत्याह—**प्रत्यक्षेति**॥ "अनृतेन हि प्रत्यूढाः" इत्यत्र ब्रह्मप्रतिपत्तेः प्रतिबन्धकमज्ञानमनृतमित्युक्तम्; तन्न संभवति, ब्रह्मप्रतिपत्त्यभावेन तत्प्रतिबन्धकल्पनाऽयोगात्; कल्पनायामपि प्रतिबन्धकान्तरमेव कल्प्यतामित्याशङ्क्य, प्रतिबन्धकान्तरानिरूपणान्न तत्कल्पनमिति तावदाह—**सुषुप्त इति**॥ सुषुप्तेः सकलविशेषज्ञानोपरमत्वान्न तत्र मिथ्याज्ञानं प्रतिबन्धकमस्तीत्यर्थः। रूप्यभ्रमसंस्कारे सत्यपि शुक्तिबोधदर्शनान्न संस्कारस्यापि प्रतिबन्धकत्वमित्याह—**तत्संस्कारस्येति**॥ अग्रहणपक्षेऽपि किमागन्तुकग्रहणाभावः प्रतिबन्धकः ? उत स्वरूपग्रहणाभावः ? नाद्यः; इत्याह—**कादाचित्केति**॥ न द्वितीयः; ग्रहणस्य स्वरूपत्वे तदभावानुपपत्तेस्तस्य प्रतिबन्धकाकाङ्क्षाभावान्न तत्कल्पनमित्युक्तं निरस्यति—**स्वरूपचैतन्येनैवेति**॥ आच्छादकसद्भावे वाक्यान्तरमुदाहरति—**तम इति**॥ अनृतमपिधानमेषां ते तथोक्ताः। अग्रहणादीनामप्रतिबन्धकत्वेऽप्यन्यत्कर्म प्रतिबन्धकमिति शङ्कां निराकुर्वन्नुपसंहरति—**ततश्चेति**॥ कर्मणः प्रतिबन्धकत्वे तन्निवृत्त्युपायाभावाद् न कदाचिदपि तत्प्रतिभास इत्यर्थः। असत्यवदनमनृतमिति शङ्कां व्यावर्तयति—**मिथ्येति**॥ "अनीशयाशोचती"त्यत्रेश्वरत्वाभावस्य

### ऋजुविवरणम्

'ब्रह्मात्मनी'त्यनेनापि द्रष्टृभेदो निवारितः। 'प्रमाणस्ये'त्यनेनापि दोषाद्यत्वमसूसुचत्॥
तद्रूपस्यावभासे हि नचाध्यासोऽपि सिद्ध्यति। अन्तर्भावोऽपि दोषेषु प्रमाणस्येति दर्शितम्॥
अप्रस्तुताभिधाशङ्का प्रमाणस्येति वारिता। तत्प्रमाणगतत्वं च हेतुरादौ प्रसाधने॥
अवभासनिरोधेन लभ्यते पूर्वदूषितम्। अविशेषितसामान्यविशेषस्यैव रोधनम्॥
स्वावभासे विरुद्धत्वाच्छादनप्रवणत्वतः। तद्विभागेन तस्यैव तद्दोषत्वप्रसाधनात्॥
सम्बन्धेनाश्रितत्वेन विषयत्वेन चेह तत्। संबन्धेनान्यदोषत्वं निर्वाह्यं तेन पूर्वता॥ इति॥

ननु पूर्वमात्मन्यज्ञानं साधितम्, इदानीं प्रमाणदोषत्वेनाज्ञानसाधनेऽज्ञानभेदः स्यात्, अनादरो वा पूर्वप्रमाण इत्याशङ्क्याह—**प्रत्यक्षानुमानेति**॥ तत्र सर्वोपादानत्वेन साधनं कृतम्, अत्र तु प्रतिबन्धकत्वेन दोषत्वेन च तत्साधनमिति, विषयभेदादपौनरुक्त्यमिति भावः। ननु प्राप्तेऽवभासेऽवभासप्रतिबन्धप्रतिपादनं युक्तम्; कथं तत्प्राप्तिः ? अथवा—सत्यामप्यवभासप्रसक्तावन्येनापि प्रतिबन्धसंभवात् कथमज्ञानस्यैव प्रतिबन्धकत्वसिद्धिः ? इत्याशङ्क्यावस्थान्तरे प्रतिबन्धान्तरसंभवात् प्रमाणस्य तत्परत्वशङ्काव्युदासायावस्थान्तरमाश्रित्याह—**सुषुप्ते मिथ्याज्ञानेति**॥ "अनृतेन ही"त्यनेनार्थाऽऽत्मनां प्रत्यूढत्वं प्रतिपाद्यते, प्रमाणदोषश्च प्रतिपाद्यतेऽप्रतिज्ञातः; अतो विरोध इत्याशङ्क्य व्याचष्टे—**तदवभासप्रतिबन्धेति**॥ ननु प्रत्यूढशब्दो हि

## पञ्चपादिका

**विद्यैव सर्वत्र श्रुतिषु ब्रह्मविषया मोक्षाय निवेद्यते, तेनार्थादिदमवगम्यते—जीवस्य ब्रह्मस्वरूपतानवगमोऽविद्यात्मको बन्धो निसर्गत एवास्तीति ॥**

## पञ्चपादिकाविवरणम्

इति स्वभावसिद्धेश्वरस्यानीश्वरत्वं तद्भावाप्रतिपत्तिरेव; वस्तुनोऽनपायात्, ततश्चेश्वरभावाप्रतिपत्तेः शोकस्य च निमित्तं मोहं दर्शयति। आदिशब्दात् "न तं विदाथ य इमा जजानान्यद्युष्माकमन्तरंबभूव। नीहारेण प्रावृता जल्प्याचासुतृप उक्थशासश्चरन्ती"ति। नीहारं तमोऽज्ञानमित्यनर्थान्तरम्; तेन प्रावृतत्वमेव जीवानां ब्रह्मापरिज्ञाने जल्प्यत्वाद्यध्यासे च निमित्तं दर्शयति। तथा "अविद्यायामन्तरे वर्तमाना नान्यच्छ्रेयो वेदयन्ते" इति श्रेयोरूपब्रह्मापरिज्ञाने क्रियाकारकाद्यध्यासे च निमित्तभूतामविद्यां दर्शयन्तीत्याद्याः, "अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ती"त्याद्याः स्मृतयोऽपि द्रष्टव्याः ॥

अर्थापत्तिरपि; ब्रह्मज्ञानाद्बन्धनिवृत्तिः श्रूयमाणा ब्रह्मणि प्रागनवबोधोऽध्याससम्बन्धहेतुरस्तीति कल्पयतीति फल-

## तत्त्वदीपनम्

तृतीयया शोकमोहहेतुत्वप्रतीतेः कथमज्ञानसिद्धिः ? इत्याशङ्क्याह—**अनीशयेति** ॥ मुह्यमानः सन्नीश्वरभावं न प्रतिपद्यते, ततः शोकोपलक्षितं संसारमनुभवतीत्यर्थः। यूयं तमीश्वरं न विदाथ, तस्मात्प्रतिपत्त्युपायं कुरुत। ईश्वरस्यासत्त्वादेवाप्रतिपत्तिः, नास्मदपराधादित्याशङ्क्याह—**य इति** ॥ इमाः प्रजाः 'जजान' जनितवान्। कार्यलिङ्गेनेश्वरसिद्धेर्न तदपलाप इति। परमाणुवदयोग्यत्वादग्रहणमित्याशङ्कां निरस्यति—**अन्तरमिति** ॥ युष्माकं ब्रह्मणश्चान्तरं व्यवधानं बभूव। देशादिविलक्षणं तदित्याह—**अन्यदिति** ॥ किं तदन्तरम् ? किं च तत्कृत्यम् ? इत्यत्राह—**नीहारेणेति** ॥ आच्छादकत्वसाम्यान्नीहारशब्दोऽज्ञाने प्रयुक्तः। प्रावृतत्वमाच्छन्नपरिपूर्णस्वरूपता, अतो विक्षेपविषया इत्याह—**जल्प्या इति** ॥ 'मनुष्यः' 'ब्राह्मणः' इत्याद्यध्यासविषया इत्यर्थः। 'असून्' प्राणानिन्द्रियाणि तर्पयन्तीत्यसुतृपः। उक्थशब्देन कर्माङ्गाभिधानद्वारा कर्मोपलक्षितम्। तस्मिन् शास्यन्ते विधिवाक्ये ये पुमांसः, ते तथोक्ताः। 'चरन्ति' संसारचक्रे भ्रमन्तीत्यर्थः। ननु अत्र नीहारस्याऽऽवारकत्वं प्रतिभाति, नाज्ञानस्येत्यत्राह—**नीहारमिति** ॥ ब्रह्मण आत्मत्वात्प्रसिद्धनीहारस्याच्छादकत्वानुपपत्तेरज्ञानं नीहारमित्यर्थः। वाक्यान्तरमुदाहरति—**तथाऽविद्यायामिति** ॥ ऐहिकाऽऽमुष्मिकपुरुषार्थव्यतिरिक्तं ब्रह्माख्यं श्रेयो न जानन्तीत्यर्थः। "आवृतं ज्ञानमि"त्यत्र ज्ञानशब्देन स्वरूपज्ञानं गृह्यते ॥

ज्ञानस्य मोक्षसाधनत्वानुपपत्त्याऽविद्यात्मको बन्धोऽस्तीत्युक्तम्, तदनुपपन्नम्; अविद्यायाः प्रस्तुतत्वाद् अविद्याऽस्तीति वक्तव्यम्, नच बन्धोऽस्तीति; तथा मोक्षस्य ब्रह्मात्मभावलक्षणस्य नित्यत्वाद् ज्ञानसाध्यत्वं चानुपपन्नमित्याह—**अर्थापत्तिरपीति** ॥

## ऋजुविवरणम्

विघ्नस्पृष्टत्वमेवाह, आवरणन्त्वत्र विवक्षितं कथं लभ्यते ? इत्याशङ्क्य श्रुत्यन्तरमुदाहरति—**त इमे सत्या इति** ॥ एवमपि अनृतशब्दःदसदेव किञ्चित् स्यादित्याशङ्क्याह—**ततश्चेति** ॥ आवरणेन प्रतिपाद्यमानत्वादिति भावः। कथं ब्रह्मस्वरूपप्रकाशप्राप्तिर्जीवस्य ? "अनीशये"ति श्रुत्यामीश्वरत्वाभावप्रतीतेः, तथा—"अनीशये"ति तृतीयया तस्यैव मोहे शोके च हेतुत्वं प्रतीयते; अतोऽनृतशब्देन मिथ्यावस्तुप्रतिपादनं निश्चेतुं न शक्यते, अतो नेयमुदाहर्तुमुचितेत्याशङ्क्य व्याचष्टे—**अनीशया शोचतीति** ॥ मुह्यमानोऽनीशया शोचतीत्यन्वयः। ननु नीहारेण प्रावृतत्वे कथं भवदभिमतदोषसिद्धिः ? तेन प्रावृतत्वं स्वरूपेण प्रतीयते यतः; ननु तस्य ब्रह्माप्रतिपत्तौ निमित्तत्वमित्याशङ्क्याह—**नीहारं तम इति** ॥ इदानीमविद्यारूपत्वमस्येति सप्रमाणमाह—**तथाऽविद्यायामिति** ॥ उदाहृतश्रुतीनामयमेवार्थ इति दर्शयितुं स्मृतिमुदाहरति—**अज्ञानेनावृतमिति** ॥

"विद्यैवे"त्यनेन कथमर्थापत्तिरुच्यते ? नहि विद्याया मोक्षसाधनत्वमज्ञानेन विना नोपपद्यते, यतो गरुडध्यानाद्विषनिवृत्तिवदुपपद्यते। "अनवगमोऽविद्यात्मकः"इत्ययुक्तम्; अनवगमशब्देनाभावे विवक्षिते विरोधः; अविद्याया बन्धस्य वा तदात्मकत्वायोगात्, अज्ञाने तु विवक्षिते वैयर्थ्यमविद्याशब्दस्य। अज्ञाने प्रमाणं वक्तुं प्रक्रम्य बन्धास्तित्वसाधनमप्ययुक्तम्,

## पञ्चपादिका

**ननु न जीवो ब्रह्मणोऽन्य इत्युक्तम् ?**

## पञ्चपादिकाविवरणम्

श्रुत्यनुपपत्तिः, अथवा "द्रष्टव्यः" इत्यादिदर्शनविधानानुपपत्तिर्वा प्रागनवगममन्तरेणेति, जीवस्य ब्रह्मस्वरूपानवभासनिमित्तं जीवाश्रिताध्याससम्बन्धहेतुरज्ञानदोषो विद्यत इत्युक्तम्। अत्र च साक्षिवेद्यस्याऽज्ञानस्य प्रमाणैरभावव्यावृत्तिः प्रदर्श्यत इति न तस्य प्रमाणवेद्यत्वप्रसङ्ग इति। तत्र चोदयति—**ननु न जीवो ब्रह्मणोऽन्य इति**॥ किमत्र जीवब्रह्मणोरेकत्वात्पर्यनुयुज्यते ? किमेकत्वादाश्रय-विषयभेदानुपपत्तिः ? किं वा चित्स्वभावस्याविद्याश्रयत्वविरोधः ? ब्रह्मणो वा सर्वज्ञत्वादिहानिरिति ? न तावदज्ञानमाश्रय-विषयभेदापेक्षम्, किन्त्वेकस्मिन्नेव वस्तुन्याश्रयत्वमावरणञ्चेति कृत्यद्वयं सम्पादयति; स्वाश्रयापवरकप्रदेशे

## तत्त्वदीपनम्

अर्थापत्तिरपि द्रष्टव्येति पूर्वेणानुषङ्गः। काऽसावर्थापत्तिः ? इति वीक्षायामाह—**ब्रह्मज्ञानादिति**॥ बन्धस्य परमार्थत्वे ज्ञाननिवर्त्यत्वानुपपत्तेस्तस्याविद्यात्मकत्वमाश्रयणीयम्, ततोऽविद्याऽऽश्रयणीयेत्येतदुच्यते टीकयेत्यर्थः॥ दर्शनविध्यनुपपत्त्याऽविद्याऽऽश्रयणीयेति पक्षान्तरमाह—**अथवेति**॥ दर्शनोद्देशेन श्रवणादि विधीयमानं निवर्त्याऽविद्यामन्तरेणाऽनुपपद्यमानमविद्यां गमयति। न च ब्रह्मस्वरूपबोधनार्थं श्रवणादि विधीयते; ब्रह्मणः स्वप्रकाशत्वेनान्यनिरपेक्षत्वादित्यर्थः। अज्ञानस्य प्रमाणगम्यत्वेऽपसिद्धान्ताऽऽपातः, सत्यत्वं चेत्याशङ्क्याह—**अत्रेति**; अस्मिन् ग्रन्थ इत्यर्थः। साक्षिवेद्यत्वान्नापसिद्धान्तः। न च प्रमाणोपन्यासवैयर्थ्यम्; अभावत्वभ्रमव्यावृत्त्यर्थत्वात्; अभावव्यावृत्तिप्रतिपादकप्रमाणादज्ञानसिद्धेः प्रामाणिकत्वमित्यपि न; आरोपितसंसर्गमिथ्यात्वस्याप्रामाणिकत्वेऽपि सांसर्गिकत्वं न यथा, तद्वदत्रापीत्यर्थः। ब्रह्माभिन्नत्वाज्जीवस्य नाज्ञत्वमित्युक्तं चोद्यमनुवदतीत्याह—**तत्रेति**॥ एकत्वेन प्रतीचोऽज्ञानसंबन्धे प्रतिक्षिप्ते कथं तेनैव हेतुनाऽज्ञानं साध्यते टीकायाम् ? इत्याशङ्क्य, विकल्पपूर्वकं टीकां व्याकरोति—**किमत्रेति**॥ अज्ञानस्याऽऽश्रय-विषयभेदसापेक्षत्वात्प्रत्यग्ब्रह्मैक्ये च तदभावादविद्यासंभव इत्याऽऽद्यविकल्पार्थः। स्वप्रकाशस्वभावस्योष्णांशोः सन्तमसानाश्रयत्ववदात्मनः प्रकाशात्मकस्याविद्याश्रयत्वानुपपत्तिरिति द्वितीयविकल्पार्थः। प्रत्यगैक्याद् ब्रह्मणोऽज्ञत्वम्, ततः सर्वज्ञत्व-नित्यमुक्तत्वादेर्विरोध इति तृतीयविकल्पार्थः। आद्यं दूषयति—**न तावदिति**॥ अज्ञानम्, नाश्रय-विषयभेदापेक्षम्, तमस्त्वात्; बाह्यतमोवदित्यर्थः। तर्हि किं क्रियाद्यपि तद्भेदानपेक्षमिति पृच्छति—**किन्त्विति**। विमतम्, आश्रयातिरिक्तविषयसापेक्षम्, सविषयत्वात्; क्रियाशक्त्यादिवदित्यर्थः। अप्रयोजको हेतुरित्याह—**एकस्मिन्निति**॥ तर्हि क्रियादेरप्या-

## ऋजुविवरणम्

काऽसौ श्रुतिरनुपपन्नेति न ज्ञायते ? तदर्थं व्याचष्टे—**ब्रह्मज्ञानादिति**॥ "अनवगमोऽविद्यात्मक"इत्यस्य व्याख्या—**अनवबोधोऽध्यासेति**॥ ननु दोषसाधनमत्र प्रस्तुतम्, नच फलश्रुत्यन्यथानुपपत्त्या दोषत्वसिद्धिः; अज्ञानात्मकत्वेनैव निवृत्तिसिद्धेरित्याशङ्क्याह—**अथवेति**॥ स्वरूपाऽनवभासे विपर्ययावभासे च प्रमाणविधानं युज्येत; तथाच सति दोषवत्त्वमेव भवेदित्यर्थः। ननु फलश्रुतिसामर्थ्यादपि दोषत्वं सिद्ध्येत्, अज्ञानकार्यत्वसिद्धौ तस्याप्रतिबन्धेऽधिष्ठाने विक्षेपपूर्वत्वाभावात्प्रतिबन्धकत्वादिना दोषत्वासिद्धौ बन्धनिवर्तकप्रमाणमपि तथाविधमेव भवति; अतो न पक्षान्तरोपन्यासो युक्तः ? मैवम्; अर्थापत्त्युपस्थितार्थसामर्थ्यसिद्धस्य फलश्रुत्यन्यथानुपपत्तिगम्यत्वायोगात्। अत्र तु साक्षात्तत्सिद्धिरिति विषयव्याप्त्यर्थं वा पक्षान्तरप्रदर्शनमित्यनवद्यम्। ननु एवमप्यज्ञानस्य प्रमाणगम्यत्वेन तात्त्विकत्वं स्यादित्याशङ्क्याह—**अत्र च साक्षीति**॥ ननु जीव-ब्रह्मणोरभेदादज्ञानसंबन्धो न घटत इति चोदिते, कथमनन्यत्वमेव "बाढमि"त्यनेनाज्ञानसाधनेऽपि हेतुत्वेनोच्यते ? नहि विरोध्येव तत्साधने हेतुर्भवतीत्याशङ्क्याविरोधेन हेतुत्वं दर्शयितुं विकल्पयति—**किमत्रेति**॥ तत्र प्रथमपक्षेऽप्येवं विकल्पः—किमज्ञानमाश्रय-विषयभेदमपेक्ष्य तत्सम्बन्धि भवति ? किं वा सम्बन्धोत्तरकालं तदेकत्वं निरुन्ध्यादिति ? न तावत्प्रथमः कल्प इत्याह—**न तावदिति**॥ अयं प्रयोगः—अज्ञानं धर्मि, आश्रय-विषयभेदापेक्षया कृत्यद्वयसम्पादकं न भवतीति साध्यो धर्मः, अक्रियात्मकत्वात्। ज्ञाने व्यभिचारशङ्कानिवृत्त्यर्थं हेत्वन्तरम्—**आवरणत्वादिति**। यद्वा—ज्ञानस्यापि क्रियारूपत्वेन हेतुद्वयम्। दृष्टान्ते कृत्यद्वयसम्पादकत्वविशेषणोपादानं तस्य पराभ्युपगतहेतुत्वेनैकान्तिकत्वप्रदर्शनार्थम्। ननु तमः स्वोपा-

## पञ्चपादिकाविवरणम्

कृत्यद्वयसम्पादितमोवत्; अक्रियात्मकत्वात्, आवरणत्वाच्च। न हि तमो वस्तुद्वयापेक्षमवभासते। अज्ञानमिति च द्वयापेक्षज्ञानपर्युदासेनाभिधानाद् द्वयसापेक्षवदवभासते। यथा स्थितिरगमनशब्देनाभिधीयमाना कस्य? किंविषयमगमनम्? इति कर्मसापेक्षवद्भाति; तद्वत्। तमोवच्च स्वाश्रयावरणमज्ञानं स्वाश्रयैकत्वेन न विरुध्यते। नापि स्वाश्रयचित्प्रकाशेन विरुध्यतेऽज्ञानम्; स्वावभासकेन संवेदनेन चित्प्रकाशेनाज्ञानस्याविरुद्धत्वात्, साक्षिचैतन्यस्य चाज्ञानावभासकत्वात्। अतो न चिदाश्रयत्वविरोधः॥

किञ्च जन्यज्ञानेनात्मन्यवस्थात्रयेऽवभासमान एव स्व-परविषयाज्ञानाश्रयत्वं सर्वैरेवोपगन्तव्यमिति, नावभास-

## तत्त्वदीपनम्

श्रयातिरिक्तविषयापेक्षत्वं न स्यादित्याशङ्क्य, ततो वैलक्षण्यमाह—**अक्रियेत्यादिना**॥ बाह्यतमसः स्वोपादानाश्रितस्यान्यत्राऽऽवारकत्वात्साध्यवैकल्यमित्याशङ्क्याह—**नहीति**॥ मृन्निष्ठस्य घटस्य भूतलनिष्ठत्ववत्तमसः स्वोपादानाश्रितस्याप्यन्याश्रयविषयत्वे न विरुद्धे इत्यर्थः। 'अस्यास्मिन्नज्ञानमि'त्याश्रयादिभेदप्रतीत्या विरोधमाशङ्क्य, प्रतीतिमन्यथयति—**अज्ञानमिति**॥ ज्ञानस्य द्वयसापेक्षत्वान्न तत्प्रतियोगिकाज्ञानस्यापि तत्सापेक्षत्वप्रथा घटत इत्यर्थः। तत्र दृष्टान्तमाह—**यथेति**॥ उपसंहरति—**तमोवदिति**॥ अज्ञानम् न स्वाश्रयाऽऽवारकम्, आवारकत्वात्, शुक्त्यज्ञानवद्; इत्याशङ्क्य, तमसि व्यभिचारमाह—**तमोवदिति**॥ शुक्त्यज्ञानस्यापि चिन्मात्रतन्त्रस्य तदावारकत्वाभ्युपगमात्साध्यवैकल्यं चेति चशब्दार्थः। आत्मा, न तमआश्रयः, प्रकाशत्वात्; संप्रतिपन्नवदित्युक्ते तद्विरुद्धत्वमुपाधिः। नच साधनव्यापकतेत्याह—**नापीति**॥ यत्र प्रकाशत्वं तत्र तद्विरुद्धत्वमिति न व्याप्तिः; संवेदने व्यभिचारादित्याह—**स्वावभासकेनेति**॥ आत्मा, अज्ञानविरोधी, तद्भासकान्यत्वे सति चित्त्वात्; तन्निवर्तकसंविद्वदित्याशङ्क्यासिद्धिमाह—**साक्षीति**॥ साधनव्यापकत्वनिरसनमुपसंहरति—**अत इति**॥

विरोधप्रयोजकमपि दुर्निरूपमित्याह—**किंचेति**॥ किं भासमानत्वं प्रयोजकम्? उत ज्ञानमात्रम्? आहो स्वयंभासमानत्वम्? इति विकल्प्याऽऽद्यं प्रत्याह—**जन्येति**॥ 'सुखमहमस्वाप्सम'िति परामर्शानुपपत्त्या सुषुप्तावप्यात्मनोऽवभासमानत्वमाश्रयणीयम्; अन्यथा परामर्शानुपपत्तेः। तत्र च स्वयंभासमानत्वानाश्रयणादन्यतो भासमानत्वमाश्रयणीयम्। ततश्च न भासमानस्याज्ञानसंबन्धविरोध इत्यर्थः। अथवा जन्यज्ञानेन भासमानस्याप्यज्ञानाश्रयत्वम्, किं पुनर्नित्यचैतन्यस्येत्याशयेनोक्तम्—**जन्यज्ञानेनेति**॥ कुतस्तदिति शङ्कायामाह—**अवस्थेति**॥ अहं-ममाभिमान-रजतादिभ्रमाणामुत्पत्तेः प्राक्

## ऋजुविवरणम्

दानाश्रितं तद्देशविषयं च, अतः कथमुदाहरणम्? इत्याशङ्क्याह—**नहि तमो वस्त्विति**॥ प्रतीतिकृतो विरोधः, सोऽत्र नास्ति; एकवस्तुगतत्वप्रतीतेः। यद्वा—स्वोपादानगतस्यापि देशाश्रयत्वं घटस्येव भूतलाश्रयत्वमिति। यद्वा—भेदस्य धर्मिप्रतियोग्यपेक्षया प्रतीतिवदनाश्रय-विषयभेदसापेक्षा तमःप्रतीतिः; अतो विद्यमानोऽपि भेदो न प्रयोजक इति भावः। ननु अज्ञानमाश्रय-विषयभेदापेक्षयैव प्रतीयते—अस्यात्राज्ञानमिति, अतो बाधितविषयमनुमानमित्याशङ्क्याह—**अज्ञानमिति चेति**॥ तमोनीहारशब्देन प्रतीतौ तदभावादिति भावः। ननु स्वत आश्रय-विषयभेदानपेक्षस्य निषेध्यापेक्षया तद्वत्प्रतिभानं न दृष्टमित्याशङ्क्याह—**यथा स्थितिरिति**॥ ननु मा भूदाश्रय-विषयभेदापेक्षित्वम्, सम्बन्धोत्तरकालं तदेकत्वं विरुद्धणीति द्वितीयकल्पं मनसि निधायाह—**तमोवच्चेति**॥ द्वितीयेऽपि कल्पे परिहारमाह—**नापि स्वाश्रयेति**॥ "स्वाभासकेन संवेदनेने"ति निदर्शनम्। स्वास्याभासं प्रकाशं करोतीति स्वाभासकम्, तेन संवेदनेनेत्यर्थः। अथवा "स्वाभासकेने"ति वैधर्म्यनिदर्शनम्। स्वस्याऽऽभासनं निवृत्तिं करोतीति स्वाभासकं बाधकज्ञानम्, तद्वदित्यर्थः। अथवा चित्प्रकाशस्याविरुद्धत्वे स्वाभासकेनेति हेतुः। ननु भवतु स्वविषयज्ञानस्याविरुद्धत्वम्, चित्प्रकाशस्य तु कथमविरोधितेति? तदाह—**साक्षिचैतन्यस्य चेति**॥ अथवा, कथमवभासकत्वेनाविरुद्धत्वम्, तस्यैवासिद्धत्वाद्? इत्याशङ्क्याह—**साक्षिचैतन्यस्य चेति**॥

ननु कथमवभास्यत्वेनाविरुद्धता? स्थितस्य ह्यवभास्यता। नच प्रकाशमानेऽज्ञानाश्रयत्वसंभवः, इत्याशङ्क्याह—

## पञ्चपादिका

**बाढम्; अत एवार्थाज्जीवे ब्रह्मस्वरूपप्रकाशाच्छादिकाऽविद्या कल्पते; अन्यथा परमार्थतस्तत्स्वरूपत्वे तदव-**

## पञ्चपादिकाविवरणम्

मानेऽज्ञानाश्रयत्वविरोधः। नच प्रकाशमात्रमज्ञानविरोधि; स्वज्ञानेऽभावात्। नच स्वयंप्रकाशमानेऽज्ञानसंसर्गविरोधः क्वचिद् दृष्टः; विषयाणां परप्रकाश्यानामेव तत्संसर्गविरोधात्। संवेदनस्यात्मस्वरूपत्वादेव तदाश्रयाज्ञानोपगमान्न तदुदाहरणम्।

अथ ब्रह्मणः सर्वज्ञत्वविरोधादैक्ये सति नाज्ञानमुपपद्यत इति? न; जीवाश्रयत्वोपगमात्। ननु ऐक्यमुक्तम्? सत्यम्; सत्यप्यैक्ये प्रतिबिम्बात्मन्यध्यस्तश्यामत्वादेर्बिम्बेऽदर्शनाद् अवदाततायाश्चाविरोधदर्शनात्, एवं सर्वज्ञत्वाविद्याश्रयत्वयोः सत्यप्यैक्येऽविरोधात्। तस्मान्नैक्यमविद्याऽऽश्रयत्वेन विरुध्यते, किंत्वविद्यामेवोपपादयतीत्याह—**बाढमत एवार्थादिति**॥

## तत्त्वदीपनम्

तद्धेतुत्वेन, तत्समये स्थितिहेतुत्वेनानन्तरं भ्रमान्तरहेतुत्वेनेति कालत्रयेऽपि स्व-परविषयाज्ञानाश्रयत्वमेष्टव्यमित्यर्थः। द्वितीयं दूषयति—**नचेति**॥ **स्वज्ञान इति**—अज्ञानविषयज्ञान इत्यर्थः। तृतीयं प्रत्याह—**नचेति**। स्वप्रकाशस्याज्ञानसंसर्गविरोधव्याप्तेरदृष्टत्वादित्यर्थः। कथमदर्शनमिति चेत्, तत्र किमनात्मनि व्याप्तिदर्शनम्? उत संवेदने? इति विकल्प्याऽऽद्ये व्याप्त्यभावमाह—**विषयाणामिति**॥ द्वितीयेऽपि संवेदनं किं वृत्तिरूपम्? उत स्वरूपज्ञानम्? आद्ये व्याप्त्यभावः; वृत्तेरन्यप्रकाश्यत्वात्। न द्वितीयः; संदिग्धसाध्यतया तस्य पक्षत्वान्न व्याप्तिस्थलतेत्याह—**संवेदनस्येति**॥

तृतीयमुत्थापयति—**अथेति**॥ गूढाभिसन्धिरुत्तरमाह—**न जीवेति**॥ अभिसन्धिमजानान उक्तं चोद्यं स्मारयति—**नन्विति**॥ ऐक्यमात्रमङ्गीकरोति—**सत्यमिति**॥ ऐक्यस्य प्रामाणिकत्वे ब्रह्मणोऽप्यज्ञत्वम्, तत्राह—**सत्यपीति**॥ बिम्ब-प्रतिबिम्बयोरैक्येऽप्युपाधिभेदात् श्यामत्वादिव्यवस्थावद् व्यवस्थेत्यर्थः। कल्पत्रयनिराकरणमुपसंहरति—**तस्मादिति**॥ न केवलमैक्यस्य विरोधित्वाभावः, किंतु तदुपपादकत्वमपीत्याह—**किंत्विति**॥ ऐक्यस्याज्ञानं विनाऽनुपपत्त्यभावात् कथं तदुपपादकत्वमुक्तम्? इत्याशङ्क्याह—**ऐक्य इत्यादिना**॥ ऐक्ये सत्येवानवभासदर्शनादविद्या कल्प्यत इत्यन्वयः। ऐक्येऽपि तस्य जाड्येना-

## ऋजुविवरणम्

**किञ्च जन्यज्ञानेनेति**॥ ननु ज्ञानमज्ञाननिवर्तकमिष्यते, तत्कथमवभासमानात्मन्यज्ञानम्? अतः कथमविरोधित्वेनाश्रयत्वम्? इत्याशङ्क्याह—**नच प्रकाशमात्रमिति**॥ कथमनिदर्शनेनाविरोधनिश्चयः? सिद्धे ह्यविरोधे तद्विषयज्ञानसिद्धिः; नान्यथा। तत्र च विषयत्वमेव, तच्च विरोधेऽपि भवति, अत्र तु संसर्गो वक्तव्यः, न तु स्वयं प्रकाशमानेऽज्ञानसंबन्धो घटते; सवितुरिव तमःसंबन्धः। तदुक्तम्—"नन्वविद्या स्वयंज्योतिरात्मनं ढौकते कथम्। कूटस्थमद्वितीयं च सहस्रांशुं यथा तमः॥" इति। इत्याशङ्क्याह—**नच स्वयंप्रकाशेति**॥ अयं भावः—प्रसिद्धं तावदज्ञानं, नेति वक्तुं न शक्यम्। नच जडगतत्वेन निश्चेतुमपि शक्यम्, जडस्य तत्स्वरूपसापेक्षत्वात्; अज्ञाते च ज्ञाते च तस्मिन् अज्ञानावगमायोगादिति। तदुक्तम्—"प्रसिद्धत्वादविद्यायाः साऽपह्नोतुं न शक्यते। अनात्मनो न सा युक्ता विनाऽऽत्मा तया नहि॥" इति॥ ननु—स्वयंप्रकाशे संवेदनेऽज्ञानसम्बन्धविरोधदर्शनादात्मन्यपि तदनुमीयते, इत्याशङ्क्याह—**संवेदनस्येति**॥

**इदानीं किंचेत्यादेरर्थान्तरम्**॥ ननु कथं साक्षिचैतन्यस्याज्ञानावभासकत्वेनाविरुद्धत्वम्? पूर्वज्ञानावभासकस्याप्युत्तरज्ञानस्य तेन विरोधदर्शनादनैकान्तिकत्वादित्याशङ्क्य, विरोधवादिनाऽपि किं प्रत्यक्षेण विरोधो ज्ञायते? किंवाऽनुमानेन? इति विकल्प्य, न तावत्प्रत्यक्षेणेत्याह—**किंच जन्यज्ञानेनेति**॥ अनुमानपक्षेऽप्यवभासमानत्वं हेतुः? किं वा प्रकाशत्वम्? उत स्वप्रकाशत्वम्? साध्येऽप्येवं विकल्पः—आश्रयत्वविरोधः? स्वरूपविरोधो वा? संसर्गविरोधो वा? तत्र प्रथमपक्षे बाधितविषयत्वं दर्शयति—**किंचेति**॥ द्वितीयेऽनैकान्तिकत्वमाह—**नच प्रकाशेति**॥ तृतीये दृष्टान्ताभावमाह—**नच स्वयमिति**॥ अथवा, किंचेत्यनेन प्रत्यक्षनिराकरणम्, उत्तरेणानुमाननिराकरणम्। तत्र प्रकाशत्वादिति हेतोः स्वज्ञाने व्यभिचार इत्याह—**नच प्रकाशेति**॥ "न च स्वयं प्रकाशमान"इत्यनेन तत्रैव दृष्टान्ताभावमाह। अथवा "नच प्रकाशे"त्यनेन स्वज्ञाने व्यभिचार उक्तः, कथं स्वज्ञाने व्यभिचारः? न ह्यज्ञानविषयं ज्ञानं संप्रतिपन्नमस्तीत्याशङ्क्य दूषणान्तरमाह—**नच स्वयमिति**॥ दृष्टान्ताभावेनासाधारण्येऽनैकान्तिकत्वामित्यर्थः। "विषयाणामि"त्यनेन सोपाधिकत्वमुक्तम्; परप्रकाश्यत्वमुपाधिरित्यर्थः। ननु स्वयंप्रकाशमाने घटादिसंवेदने ज्ञानदर्शनात् तदेव निदर्शनम्, अतः कथमसाधारणत्वम् इत्याशङ्क्याह—**संवेदनस्येति**॥

### पञ्चपादिका

**बोधोऽपि यदि नित्यसिद्धः स्यात्, तदा तादात्म्योपदेशो व्यर्थः स्यात् ।**

**अतोऽनादिसिद्धाविद्यावच्छिन्नानन्तजीवनिर्भासास्पदमेकरसं ब्रह्मेति श्रुति-स्मृति-न्यायकोविदैरभ्युपगन्तव्यम् ।**

### पञ्चपादिकाविवरणम्

ऐक्ये स्वयंप्रकाशत्वे सर्वज्ञत्वे च सत्येवानवभासदर्शनादाच्छादिकाऽविद्या कल्प्यते; अन्यथा भेद-जाड्य-किंचिज्ज्ञत्वे ग्रहणाभावमात्रमेव स्यात्; ततश्च तमोऽनृत-नीहाराज्ञानावृतत्वादिशब्दा अनवभासाध्यासनिमित्तभावरूपाज्ञानप्रतिपादका बाध्येरन्निति ॥

ननु एकद्रव्यत्वे सति जीव-ब्रह्मविभागः किंनिबन्धनः यतः सर्वज्ञत्वाविद्याऽऽश्रयत्वे व्यवस्थाप्येते इति ? अन्तःकरणावच्छेदात्कश्चिद्भेदं वक्ति, अन्यस्त्वतिरेकात्, अपरस्तु स्वभावादेवांशांशिभावात्, तत् सर्वं व्यावर्तयति—**अतोऽनादिसिद्धाविद्यावच्छिन्नेति** ॥ आत्माऽऽवरणमात्माज्ञानमेव जीव-ब्रह्मविभागाद्यध्यासोपादानं यतः, अतो जीवावच्छेदनिमित्तमज्ञानमिति; अवच्छेदस्यापि प्रातिभासिकाध्यासस्य तदुपादानत्वात्, सत्यतो निरवयवस्य द्वैधीभावायोगात्, कर्तृत्व-भोक्तृत्व-दोष-संयोगानां बीजाङ्कुरवदनादिप्रवाहस्य दर्शितत्वात् । तदुपादानमप्यज्ञानमनादीत्याह—**अनादिसिद्धेति** ॥ अनादिजीवविभागाध्यासप्रवाहस्यानाद्यविद्यैव कारणम्, नान्तःकरणादीत्याह—**अविद्यावच्छिन्नेति** ॥

### तत्त्वदीपनम्

नवभासः संभवत्यविद्यां विनाऽपीत्यत्राह—**स्वयंप्रकाशत्व इति** ॥ अहमित्युपलब्धाकाराद् ब्रह्मणो व्यतिरेकाभावात्तदनवभासोऽसिद्ध इत्याशङ्क्य, सर्वज्ञत्व-सर्वशक्त्यनवच्छिन्नानन्दात्मक-ब्रह्मानवभासार्थमविद्याऽऽश्रयणीयेत्याह—**सर्वज्ञत्व इति** ॥ अन्यथोपपत्तिं परिहरति—**अन्यथेति** ॥ आच्छादकाभावेऽनवभाससिद्धयर्थं तयोर्भेद इत्याह—**भेदेति** ॥ श्रुतिविरोधाद् भेदानुपपत्तिश्चेत्, तर्ह्यात्मनो जाड्यमाश्रयणीयमित्याह—**जाड्य इति** ॥ स्वयंज्योतिष्ट्ववचनविरोधाद् जाड्यांशसंभवश्चेत्, तर्हि न सर्वज्ञत्वादिलक्षणं ब्रह्मेत्याह—**किंचिज्ज्ञत्वेति** ॥ एवं सत्यग्रहणमेवाविद्या स्यादित्याह—**ग्रहणेति** ॥ ततः किम् ? इत्यत आह—**ततश्चेति** ॥

अविद्यावच्छिन्नजीवनिर्भासाऽऽस्पदं ब्रह्मेति कथमुपसंह्रियते तस्याप्रस्तुतत्वादित्याशङ्क्य, तद्व्यावर्त्यामाशङ्कामाह—**नन्विति** ॥ जीव-ब्रह्मविभागनिरूपणमकाण्डताण्डवितमित्यत्राह—**यत इति** ॥ तत्र मतान्तराण्युपन्यस्यति—**अन्तःकरणेति** ॥ भेदाभेदव्यवहारसंपादनपटीयान् धर्मविशेषोऽतिरेकः । काल्पनिकांशांशिभावव्यावर्तनार्थम्—**स्वभावादिति** विशेषणम् । अविद्यावच्छिन्नताया अनुपपादनात्कथमुपसंहरणम् ? इत्यत्राह—**आत्माऽऽवरणेति** ॥ पूर्णात्माऽवारकत्वात्तदज्ञानमेवाध्यासोपादानत्वयोग्यं यस्मात्, अतस्तदेवावच्छेदोपादानमिति युक्तमुपसंहरणमित्यर्थः । जनकत्वमात्रं **निमित्तशब्दार्थः** ॥ अवच्छेदस्य सत्त्वे तदुपादानम्, तदेव कुतस्त्यम् ? इत्याशङ्क्याह—**अवच्छेदस्येति** ॥ **प्रातिभासिकेति** हेतुगर्भविशेषणम् । अध्यस्यत इत्यध्यासः । विमतम्, आरोपितम्, दृश्यत्वात्, शुक्तिरूप्यवत्; ततोऽज्ञाननिमित्तत्वमित्यर्थः । अप्रयोजकत्वं निरस्यति—**सत्यत इति** ॥

### ऋजुविवरणम्

"अत एवार्थादि"ति कथमुक्तम् । न ह्येकत्वमज्ञानेन विनाऽनुपपन्नम् कथं तदुपजीव्यम् ? इत्याशङ्क्य व्याचष्टे—**ऐक्ये स्वयंप्रकाशत्व इति** ॥ तत्रानवभासमात्रेणैवाज्ञानं सिद्ध्यतीति, किमिति विशिष्टानुपपत्तिः प्रमाणत्वेनोच्यते ? इत्याशङ्क्याह—**अन्यथा भेदेति** ॥

कथम् "अतोऽविद्यावच्छिन्ने"त्युपसंह्रियते ? अनुक्तत्वादविद्यावच्छिन्नत्वस्य, नापि तदेव प्रतिपाद्यते, असंगत्वादित्याशङ्क्योत्तरचोद्यनिवर्तकत्वेन संगतिं दर्शयितुं चोदयति—**नन्वेकद्रव्यत्व इति** ॥ "अतः" इति कथमुक्तम् ? न ह्यविद्यावच्छिन्नत्वे किञ्चित्प्रमाणमुक्तमस्ति, यदुपजीव्यत इत्युच्यते, अविद्या-काम-कर्मलिङ्गमवच्छेदकम्, अतोऽविद्यावच्छिन्नेत्ययुक्तमित्याशङ्क्योपस्कारं दर्शयति—**आत्मावरणमिति** ॥ पूर्वोक्तमज्ञानमुपजीव्यत इत्युक्तम् । ननु यदाश्रयोऽवच्छेदः, तदुपादानं स्यात्, कथमज्ञानोपादानत्वम् ? यद्वा "अज्ञानानुपादानाविभाग"इति वक्ष्यते, तत्कथमित्याशङ्क्याह—**अवच्छेदस्यापीति** ॥ प्रातिभासिकाध्यासस्येति हेतुः । प्रातिभासिकाध्यासत्वमपि कथमित्याशङ्क्याह—**सत्यत इति** ॥ भवत्ववच्छेदकत्वमज्ञानस्य, कथमनादित्वम् ? इत्याशङ्क्याह—**कर्तृत्व-भोक्तृत्वेति** ॥ ननु प्रातिभासिकोऽवच्छेदो न सुषुप्तौ; तत् कथं तदुपादानता नोदितेति ? तत्राह—**अनादिजीवविभागेति** ॥

## पञ्चपादिकाविवरणम्

नचान्तःकरणमवच्छेदकम्; अर्थतो विदारणाभावात्, अवच्छेदस्य विभ्रममात्रत्वात्, अज्ञानस्यैव तदुपादानत्वात्, अन्तःकतणस्य च सम्यग्ज्ञाननिरस्यतयाऽविद्याध्यासत्वात्, स्वकारणावच्छिन्नस्यैवावच्छेदकत्वसंभवात्, सत्यत्वेऽपि सादेरनाद्यविद्योपाधित्वाभावात्, सुषुप्तादौ चान्तःकरणाभावादनवच्छेदप्रसङ्गाद्। तदापि सूक्ष्मावस्थमन्तःकरणमवच्छेदकमिति चेत्? न तावन्निरवयवत्वापत्तिः सूक्ष्मता, सावयवस्यावयवाभावे स्वरूपनाशात्। अथावयवापचयमात्रं सूक्ष्मता? न; अवस्थितावयविनोऽकार्यत्वप्रसङ्गात्। कारणात्मना स्थितिरिति चेत्? किं कारणमेव स्थितमित्यर्थः? कार्यमपीति वा? पूर्वस्मिन्नन्तःकरणाभावात्, इतरस्मिन् स्थित्यवस्थातो न विशेषः। तस्मात् कार्यसंस्कारविशिष्टशक्तिमत्कारणावस्थानमेव सूक्ष्मतापत्तिः।

## तत्त्वदीपनम्

किंचान्तःकरणमवच्छेदकमिति वदन् प्रष्टव्यः—किं तद् वास्तवावच्छेदस्य हेतुः? उत काल्पनिकस्य? इति। तत्राऽऽद्यं प्रत्याह—**न चेति**॥ अद्वैतश्रुतिविरोधान्न परमार्थतो विदारणमित्यर्थः। कथं तर्हि तत्प्रतिभासः? इत्याशङ्क्याह—**अवच्छेदस्येति**॥ द्वितीयं दूषयति—**अज्ञानस्येति**॥ किं च किमन्तःकरणमपि तात्त्विकम्? उतातात्त्विकम्? इति विकल्प्याऽऽद्यं दूषयति—**अन्तःकरणस्येति**॥ "षोडशकलाः पुरुषायणाः पुरुषं प्राप्यास्तं यन्ति" "भिद्यते हृदयग्रन्थिरि"त्यादिवाक्यादन्तःकरणस्य ज्ञाननिरस्यताऽवसीयते। ज्ञाननिरस्यत्वं चाध्यस्तत्वं विना नेति न तात्त्विकत्वमित्यर्थः। चरमं निरस्यति—**स्वकारणेति**॥ अन्तःकरणस्यावच्छेदकत्वमिच्छताऽज्ञानस्याप्यवच्छेदकत्वमिष्यत एव; अन्तःकरणस्यारोपितत्वेनाज्ञानात्मकत्वात्, तत उभयोरवच्छेदकत्वकल्पनायां गौरवान्न तावदन्तःकरणमेवावच्छेदकमित्यर्थः। "तन्मनोऽकुरुते"त्यादिश्रुत्याऽन्तःकरणस्य ब्रह्मजत्वात्सत्यत्वं लभ्यते, अतः सत्यमेवावच्छेदकमित्याशङ्क्य, कूटस्थत्वेन साक्षात् कारणताऽसम्भवात्तद्रूपेण विवर्तमानाविद्याधिष्ठानत्वं कारणत्वमिति, न सत्यत्वमन्तःकरणस्य। तदङ्गीकृत्य परिहरति—**सत्यत्वेऽपीति**॥ अवच्छेदवदन्तःकरणस्याप्यनादित्वाद् अवच्छेदकत्वं युक्तमित्याशङ्क्य, किं तत् सुषुप्तिप्रलयादावस्ति? उत न? इति विकल्प्य चरमं निरस्यति—**सुषुप्तादाविति**॥ घटभङ्गे तदुपहितगगनस्य महागगनात्मकत्ववदवच्छेदकविलये जीवस्य ब्रह्मता स्यादित्यर्थः। आद्यमुत्थापयति—**तदापीति**॥ किं निरवयवतापत्तिः सूक्ष्मता? आहो अवयवापचयमात्रम्? उत कारणात्मनाऽवस्थानम्? किं वा कार्यसंस्कारसहितशक्तिमत्कारणावस्थानम्? इति विकल्प्याद्यं प्रत्याह—**न तावदिति**॥ तन्त्वपगमे पटापगमवदवयवाभावे च सत्यन्तःकरणमपि न स्यादित्यर्थः। द्वितीयमनूद्य दूषयति—**अथावयवेत्यादिना**॥ आरम्भकावयवध्वंसेऽप्यवयविनोऽवस्थाने तस्य तत्कार्यत्वं हीयेतेत्यर्थः। तृतीयमुत्थापयति—**कारणात्मनेति**॥ अत्यन्ताभेदमाश्रित्याऽऽद्यः कल्पः, द्वितीयस्तु भेदाभेदावनुसृत्येति द्रष्टव्यम्। चतुर्थः पक्षः परिशिष्यत इत्याह—**तस्मादिति**॥ अस्त्वेवम्, ततः किम्? इति चेत्, तत्र वक्तव्यम्—किं कारणशब्देन परमार्थ-

## ऋजुविवरणम्

कथम् अन्तःकरणस्य कारणत्वाभावः, अविद्यया विशेषाभावाद्? इत्याशङ्क्याह—**नचान्तःकरणमिति**॥ अन्तःकरणनिमित्तत्वे द्वैधीभावेन भवितव्यम्, नचासावास्ते; एकत्वाभावप्रसङ्गात्। यद्वा अर्थत इत्यज्ञानेन वैलक्षण्यं दर्शितम्। कथं विलक्षणत्वे तत्प्रतीतिः? इत्याशङ्क्याह—**अवच्छेदस्येति**॥ विभ्रममात्रस्याप्यन्तःकरणोपादानत्वं भवत्विति? नेत्याह—**अज्ञानस्यैवेति**॥ ननु अन्तःकरणस्यावच्छेदकत्वं त्वयाप्यङ्गीक्रियते; कथं तत् निराक्रियते? इत्याशङ्क्याह—**अन्तःकरणस्य चेति**॥ यद्यज्ञानमेवोपाधिरिति सिद्धं भवेत्, ततो ज्ञाननिवर्त्यत्वेन तत्कार्यत्वं भवेत्, नच तदस्ति, अन्तःकरणमेव सत्यमवच्छेदकम्, आकाशस्येव घट इत्याशङ्क्याह—**सत्यत्वेऽपीति**॥ **अविद्योपाधित्वम्** अविद्यावदुपाधित्वमित्यर्थः। अथवा तेनापि मिथ्याज्ञानमग्रहणं परं विद्यत इत्यङ्गीक्रियते, सा च जीवाश्रया, अन्तःकरणं च तन्नियामकमित्युच्यते, तन्न; सादेरन्तःकरणस्यानाद्यविद्योपाधित्वाभावान्नियामकत्वाभावादित्यर्थः। व्यवस्थापकत्वं निराकृत्यावच्छेदकत्वनिराकरणार्थम्—**सुषुप्तादाविति**॥ अथवा, अनाद्येवान्तःकरणम्, तथा सति सर्वमुपपन्नमित्याशङ्क्याह—**सुषुप्तादाविति**॥ **तस्मात् कार्यसंस्कारेति**॥ नच संस्कारस्य तन्मतेऽवच्छेदकत्वम्, नापि तद्विशिष्टायाः शक्तेः; तस्या उच्छेत्तुमशक्यत्वे न निर्मोक्षः, उच्छेदे वा जगदनुत्पत्तिप्रसङ्गः, एकत्वादिति भावः।

## पञ्चपादिकाविवरणम्

अतो नान्तःकरणमवच्छेदकमस्ति। तस्मात् क्लृप्ताविद्यासामर्थ्यादेव जीव-ब्रह्मविभागसिद्धौ नातिरेककल्पनावकाशः ॥

जीवस्य ब्रह्मण्यविद्येत्यविद्या पूर्वमेव विभागमपेक्षत इति चेत्? न; कस्य कस्मादतिरेक इत्यतिरेकस्यापि विभागपुरःसरत्वप्रतीतेः; यथा, भेदाधीनोऽपि धर्मि-प्रतियोगिभावो भेदेनोपरज्यते, कस्य कस्माद्भेद इति, एवमतिरेकाधीनोऽपि जीव-ब्रह्मभावस्तस्मिन्नुपरज्यते। जीवाद् ब्रह्मणोऽतिरेक इति चेत्? अविद्यायामपि तुल्यमेतत्। निरंशत्वान्नांशांशिभावेन भेदः संभवति। तस्मादविद्यैव भेदाध्यासनिमित्तमिति ॥

ननु अविद्या किंसंबन्धिनी भेदनिमित्तम्? ननु दर्पणादिद्रव्यं वा किंसंवन्धि बिम्बभेदनिमित्तम्? मुखमात्रसंबन्धीति चेत्? इहापि चित्स्वरूपमात्रसंबन्ध्यज्ञानं तत्र जीव-ब्रह्मव्यवहारभेदं प्रवर्तयति। कथं पुनः स्वरूपमात्रसंबन्धिनोऽज्ञानस्य ब्रह्मस्वरूपं परिहृत्य जीवविभागैकपक्षपातिता? दर्पण-घटादेर्मुखाकाशभेदे हेतुतया मुखादिसंसर्गिणोऽपि बिम्वाकाशौ परिहृत्य प्रतिबिम्ब-घटाकाशादिपक्षपातित्ववदिति वदामः ॥

ननु किमाश्रयेयमविद्या? न तावदन्तःकरणविशिष्टस्वरूपाश्रया; प्रमाणाभावात्। ननु 'अहमज्ञः' इति प्रतिभास

## तत्त्वदीपनम्

वस्तु विवक्षितम्? उताज्ञानम्? आद्ये न कदाचिन्मोक्षः; परमार्थस्य निवृत्त्यसंभवात्। द्वितीये प्राप्ताप्राप्तविवेकेनाज्ञानमवच्छेदकं स्यादित्यभिसन्धायोपसंहरति—**अत इति** ॥ अतिरेकपक्षेऽपि वक्तव्यम्—किमतिरेकः पारमार्थिकं भेद संपादयति? उतापारमार्थिकम्? इति। नाद्यः; श्रुति-स्मृति-न्यायविरोधादित्यभिप्रेत्याद्वितीये ब्रह्मणि रशनासमारोपितसर्पादाविव हेतुत्वेनानाद्यविद्याया एव विभागहेतुत्वसम्भवेऽप्रसिद्धमतिरेकं किं कल्पयसीत्याह—**क्लृप्तेति** ॥

अविद्याया अवच्छेदकत्वानुपपत्तेरतिरेकः कल्प्यत इति शङ्कते—**जीवस्येति** ॥ 'पूर्वमि'त्यत्र स्वसम्बन्धादित्यध्याहारः। अविद्याया विभागोपजीवित्वेनोपजीव्यत्वानुपपत्तेर्विभागस्याविद्याधीनत्वमनुपपन्नमित्मर्थः। उपजीव्यस्य उपजीवकत्वानुपपत्तिरतिरेकेऽपि तुल्येत्याह—**न कस्येति** ॥ उपजीव्यस्याप्युपजीवकत्वं दृष्टमिति चोदयति—**यथेति** ॥ **भेदेनोपरज्यत इति**—भेदनिर्वाहकत्वेन संबध्यत इत्यर्थः। धर्मि-प्रतियोगिभावो न भिन्नवस्तुनिष्ठः, किंतु वस्तुमात्रनिष्ठ इत्याशङ्क्याह—**कस्येति**। कस्य कस्माद्भेद इति वीक्षायां घटस्य पटादित्यपुनरुक्तशब्दद्वयस्मृतिहेतुतया तयोर्भेदप्रतिपत्तेस्तदधीनत्वं धर्मादिभावस्य; अन्यथा स्वस्मादपि स्वस्य भेदः स्यादित्यर्थः। दार्ष्टान्तिकमाह—**एवमिति** ॥ तुल्यमुत्तरमित्याह—**अविद्यायामिति** ॥ वस्तुतश्चिन्मात्रमाश्रयते, तदेव विषयीकरोतीति न विभागापेक्षत्वमविद्याया इत्यर्थः। अंशांशिभावेन भेद इति पक्षं निरस्यति—**निरंशत्वादिति** ॥ नच हेत्वसिद्धिः; "निष्कलं निष्क्रियं शान्तम्" इत्यादिवाक्यात्, सांशत्वेऽनित्यत्वापात इत्यादियुक्तेश्च प्रसिद्धत्वादित्यर्थः। भेदकान्तरनिरसनफलमाह—**तस्मादिति** ॥

भेदकान्तरवदविद्याया अपि भेदकत्वमयुक्तमित्याह—**नन्विति** ॥ किं संबन्धिन्यविद्या भेदिका? उतासंबन्धिनी? आद्येपि किं जीवसंवन्धिनी? उत ब्रह्मसंवन्धिनी? नाद्यः; अविद्यासिद्ध्युत्तरकालत्वात् जीव भावस्य, नापि द्वितीयः; सर्वज्ञत्वादिगुणकब्रह्मणोऽप्यविद्याधीनत्वात्, स्वातन्त्र्यं तु नोपेयते। तस्मादविद्या भेदिकेत्यप्ययुक्तमित्याशयः ॥ चिन्मात्रतन्त्राऽविद्येति वक्तुं प्रतिवच्मीत्याह—**नन्विति** ॥ दर्पणादेर्बिम्वसंबन्धित्वेन प्रतिबिम्बसम्बन्धित्वेन च भेदकत्वं न सम्भवति; विभागोत्तरकालीनत्वाद्बिम्बादेरित्यर्थः। मुखमात्रमाश्रित्य दर्पणादि बिम्वादिविभागं जनयतोति चोदयति—**मुखेति** ॥ तुल्यमेतदित्याह—**इहापीति** ॥ जीवपक्षपातित्वाच्चिन्मात्रतन्त्रत्वमयुक्तमित्याह—**कथं पुनरिति** ॥ पक्षपातित्वमन्यथाऽपि घटत इत्याह—**दर्पणेति** ॥ दर्पणादेः प्रतिबिम्बादौ स्वगतधर्मसंसर्गजनकत्वं पक्षपातित्वमित्यर्थः।

प्रकारान्तरेण चिन्मात्रसम्बन्धित्वमाक्षिपति—**नन्विति** ॥ कूटस्थासङ्गाद्वयबोधरूपत्वाच्चितोऽविद्याश्रयत्वमयुक्तमित्यभिसन्धिः ॥ चिन्मात्राश्रयत्वानुपपत्त्या विशिष्टाश्रयत्वं मनुषे? आहोस्विदनुपपत्तिमात्रम्? किं वा स्वातन्त्र्यम्? उत तस्या असत्त्वम्? इति विकल्प्याऽऽद्यं प्रत्याह—**न तावदिति** ॥ प्रमाणाभावः कथमिति चेत्? तत्र वक्तव्यम्—किं प्रत्यक्षं

## ऋजुविवरणम्

**ननु अविद्या किं सम्बन्धिनीति** ॥ अयं भावः—सम्वन्धिनो भेदकत्वम्; नच जीव-ब्रह्मसम्बन्धः; इतरेतराश्रयादिति।

**ननु किमाश्रयेयमिति** ॥ स्वरूपमात्रस्याश्रयत्वासंभवेनान्तःकरणस्यैवावच्छेदकत्वमविद्यानियामकत्वं च वक्तव्यमिति

## पञ्चपादिकाविवरणम्

एव विशिष्टाश्रयत्वे प्रमाणम् ? न; 'अहमनुभवामो'त्यनुभवस्यापि चैतन्यप्रकाशस्य विशिष्टाश्रयत्वप्रसङ्गात्। ननु यथा 'अयो दहती'ति दग्धृत्वायसोरेकाग्निसंबन्धात् परस्परसम्बन्धावभासः, तथाऽनुभवान्तःकरणयोरेकात्मसंबन्धात्तथाऽवभासः, नान्तःकरणस्यानुभवाश्रयत्वादिति चेत् ? एवमज्ञानान्तःकरणयोरेकात्मसंबन्धात् 'अहमज्ञः' इत्यवभासः, नान्तःकरणस्याज्ञानसंबन्धादिति तुल्यम्; प्रतीतेरन्यथासिद्धौ परस्परसंबन्धकल्पनायोगात्, आत्मन्यविद्यासंबन्धस्य सुषुप्तेऽपि संप्रतिपन्नत्वाच्च। अथ स्वरूपमात्रस्याश्रयत्वानुपपत्तेर्विशिष्टाश्रयत्वं कल्प्यत इति चेत् ? न; विशिष्टेऽपि स्वरूपसंबन्धस्य विद्यमानत्वात्, जडस्य चाज्ञानाश्रयत्वे भ्रान्ति-सम्यग्ज्ञानयोरपि तदाश्रयत्वप्रसङ्गात्। ननु स्वरूपेऽपि ब्रह्मण्यनुपपत्तिस्तुल्या ? सत्यम्; अनुपपन्नद्वयाश्रयत्वकल्पनाद् वरं संप्रतिपन्नस्वरूपाश्रयत्वोपादानम्; मोक्षावस्थासंबन्धिन एव संबन्धाश्रयत्वात्॥

अत्र कश्चित्—अन्तःकरणस्यैवाज्ञानमिति—जल्पति। स वक्तव्यः—किमात्मा सर्वज्ञः ? किंचिज्ज्ञो वा ? इति।

## तत्त्वदीपनम्

प्रमाणम् ? उतानुपपत्तिरिति विकल्प्याऽऽद्यमनुवदति—**नन्विति**॥ किं प्रतिभासमात्रं प्रमाणम् ? उत युक्तिसहकृतानुभवः ? इति विकल्प्याऽऽद्यं दूषयति—**नाहमिति**॥ 'अहमनुभवामी'त्यत्र प्रतिपत्तेरित्यध्याहारः। इष्टापत्तिशङ्कां निरस्यति—**चैतन्येति**॥ अनुभवस्य चित्प्रकाशत्वाद्विशिष्टस्य च तद्विपरीतत्वादाधारादिभावो न युज्यत इत्यर्थः। 'अनुभवामी'ति प्रत्ययस्यान्यथासिद्धिं शङ्कते—**ननु यथेति**॥ दग्धृत्वस्य दहनधर्मतयाऽन्यत्र दृष्टत्वात्तप्ताऽयःपिण्डे दग्धृत्वव्यपदेशः, तद्वदनुभवधर्म्यात्मसम्बन्धादन्तःकरणेऽनुभवितृत्वप्रथेत्यर्थः। मुख्यार्थे बाधकाभावान्नैवमित्याशङ्क्याह—**नान्तःकरणस्येति**॥ करणस्यानुभववेद्यत्वान्न तदाधारत्वमित्यर्थः। तुल्यमुत्तरमित्याह—**एवमिति**॥ बाधकसद्भावाद'नुभवामी'ति प्रत्ययस्यान्यथासिद्धिः, न तथाऽत्रेत्याशङ्क्याह—**नान्तःकरणस्येति**॥ तत्र हेतुमाह—**प्रतीतेरिति**॥ अन्तःकरणस्याज्ञानकार्यत्वान्न तदाश्रयत्वकल्पना। नच प्रतीत्यनुपपत्तिः; तस्या अन्यथासिद्धत्वादित्यर्थः। युक्तिसहितानुभवस्य साधकत्वमिति कल्पं निरस्यति—**आत्मनीति**॥ "न किं चिदवेदिषमि"ति परामर्शानुपपत्त्या पुनरुत्थानानुपपत्त्या च सुषुप्त्यादावविद्यासंबन्धोऽधिगम्यते, स न स्यादन्तःकरणाश्रयत्वे, तस्य विलीनत्वादिति युक्तिशून्योऽयं पक्ष इत्यर्थः॥ अर्थापत्तिः प्रमाणमिति पक्षमुत्थापयति—**अथेति**॥ विशिष्टं किं विशेषण-विशेष्याभ्यामन्यत् ? उतानन्यत् ? तत्राऽऽद्यस्याप्रामाणिकत्वमभिप्रेत्य द्वितीयं प्रत्याह—**न विशिष्ट इति**॥ दण्ड-देवदत्त-संबन्धेषु विशिष्टशब्दप्रयोगाभावात्तदर्थान्तरमित्याशङ्क्याह—**जडस्य चेति**॥ "यस्याज्ञानं भ्रमस्तस्य भ्रान्तिः सम्यक् च वेत्ति सः" इति न्यायादज्ञान-भ्रम-सम्यग्ज्ञानानामेकाश्रयत्वे सम्यग्ज्ञानाश्रयतया मोक्षान्वयित्वं वक्तव्यम्, नच जडस्य कार्यस्य तत् संभवतीत्यर्थः। जडाश्रयत्ववच्चिदाश्रयत्वमप्यनुपपन्नमिति चोदयति—**ननु स्वरूप इति**॥ किं चिन्मात्रेऽनुपपत्तिमात्रमुद्भाव्यते ? उत विशिष्टाश्रयत्वं साध्यते ? तत्राऽऽद्यमङ्गीकरोति—**सत्यमिति**॥ द्वितीयं दूषयति—**अनुपपन्नेति**॥ विशिष्टाश्रयत्वेऽनुपपन्नोभयत्वं कल्प्यम्, अस्मन्मते त्वेकाश्रयत्वमिति लाघवादनुपपन्नमपि चिदाश्रयत्वमाश्रयणीयमित्यर्थः। एतेन—चित्यनुपपत्तिमात्रमिति विकल्पोऽपि निरस्त इति द्रष्टव्यम्। विशिष्टाश्रयत्वे दूषणान्तरमाह—**मोक्षेति**॥ अज्ञान-भ्रान्ति-मुक्तीनामेकाश्रयत्वम्; अन्यथाऽन्यो बद्धोऽन्यो मुच्यत इति वैरूप्यप्रसङ्गः। ततश्च विशिष्टस्य मुक्तावनन्वयाच्चिन्मात्रस्य च सर्वत्रानुगमात्तस्यैवाज्ञत्वमित्यर्थः।

विधान्तरेण जडाश्रयत्वं निराकर्तुं परमतमनुवदति—**अत्र कश्चिदिति**॥ किमग्रहणादेरप्यन्तःकरणाश्रयत्वम् ? उतानादिभावरूपाज्ञानस्यैव ? तत्राद्येऽपीदं विचार्यमित्याह—**स वक्तव्य इति**॥ सर्वज्ञत्वस्यानुभवविरुद्धत्वात्किंचिज्ज्ञत्वमाश्र-

## ऋजुविवरणम्

भावः। ननु अन्तःकरणव्यतिरेकेणात्मनोऽनुभवसम्बन्धे प्रमाणसद्भावात्प्रतीतेरन्यथासिद्धत्वं भवतु, अज्ञानस्यान्तःकरणव्यतिरेकेण केवलात्मसंबन्धादर्शनात् कथम्—"अहमज्ञः" इति प्रतीतेरन्यथासिद्धत्वम् ? इत्याशङ्क्याह—**आत्मन्यविद्यासंबन्धस्येति**॥ **अथ स्वरूपेति**। सर्वज्ञत्वाविद्याश्रयत्वयोर्विरोधादिति भावः। **विशिष्टेऽपीति**। स्वरूपसंबन्धेऽपि स दोषस्तदवस्थ एवेति भावः। ननु विशिष्टस्वरूपस्थ स्वरूपातिरिक्तत्वात् तत्संबन्धे स्वरूपसम्बन्धप्रयुक्तो दोषो नास्तीति, तत्राह—**जडस्य चाज्ञानेति**॥ नच 'जडस्ये'त्यनेन केवलजडस्याश्रयत्वमाशङ्क्य निरस्यत इति युक्तं वक्तुम्। उत्तरत्र निराकरिष्यमाणत्वात्। 'मोक्षावस्थासम्बन्धिन' इति प्रमाणमुक्तं स्वरूपमात्राश्रयत्वे, यस्य मोक्षसम्बन्धः, तस्य बद्धत्वम्; अन्यथा मुक्तत्वानुपपत्तेरित्यर्थापत्तिः। अविद्यानिर्मितप्रतिबिम्बिताविद्याश्रयत्वमित्यपि वक्तुं शक्यते, भेदनिबन्धनधर्मित्वस्यैव भेदाश्रयत्वमिति।

## पञ्चपादिकाविवरणम्

किंचिज्ज्ञत्वे कदाचित्किंचिन्न जानातीति विषयानवबोधस्त्वयं वाऽऽत्मनो दर्शितः। अथाग्रहण-मिथ्याज्ञानयोरात्माश्रयत्वेऽपि, भावरूपाज्ञानमन्तःकरणाश्रयमिति ? किं तत् ? ज्ञानादन्यच्चेदज्ञानम्, काच-कामलादीनामप्यज्ञानत्वान्न विवादः। अथ ज्ञानविरोधीति ? न; भिन्नाश्रययोर्ज्ञानाज्ञानयोरेकविषययोरपि विरोधित्वादर्शनात्। करणाश्रयमज्ञानं कर्त्राश्रयज्ञानेन विरुध्यत इति चेत् ? न; प्रमाणाभावात्। पुरुषान्तरसुषुप्तौ च तदीयेनान्तःकरणेन लीयमानेन करणभूतेन तन्निमित्तकर्मानुमानेऽपि तदीयान्तःकरणाज्ञाननिवृत्त्यदर्शनात्। भ्रान्तिनिमित्तदोषत्वात् काचादिवत्करणाश्रयमज्ञानमिति चेत् ? न; चक्षुरादावपि प्रसङ्गात्। सादित्वात्तेषामनाद्यज्ञानाश्रयत्वानुपपत्तिरिति चेत् ? अन्तःकरणेऽपि तुल्यम्। सत्कार्यवादाश्रयणान्न साद्यन्तः-करणमिति चेत् ? चक्षुरादावपि तुल्यम्। अतो न तदनाद्यज्ञानाश्रयमिति। अनृत-नीहारादिशब्दैश्च प्राप्तज्ञानानामग्रहणवतां चेतनानामेवावृतत्वाभिधानान्नान्तःकरणाश्रयमज्ञानम्, किंतु चैतन्याश्रयमित्यलमतिविस्तरेण। तदेतदाह—**अविद्याऽवच्छिन्ना-नन्तजीवेति**॥ न्यायः प्रदर्शितः। श्रुतिस्तु—"अन्यद् युष्माकमन्तरं बभूव। नीहारेण प्रावृताः" इति व्यवधायकमज्ञानं दर्शयति। "विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते। आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति"॥ इति स्मृतिः। ननु

## तत्त्वदीपनम्

णीयस्, तदा च त्वन्मतविहतिरित्याह—**किंचिज्ज्ञत्व इति**॥ द्वितीयमुत्थापयति—**अथेति**॥ किं भावरूपाज्ञानस्य ज्ञानादन्य-त्वेनाज्ञानत्वम् ? उत तद्विरोधित्वेन ? इति विकल्पयति—**किं तदिति**॥ आद्यमनूद्य दूषयति—**ज्ञानादिति**॥ **न विवाद इति**; अनात्माश्रय इति यावत्। द्वितीयमुत्थापयति—**अथेति**॥ किमन्तःकरणगतं ज्ञानं तद्विरोधि ? उताऽऽत्मगतम् ? नाद्यः; तस्य जडत्वेन ज्ञातृत्वानुपपत्तेः। न द्वितीयोऽपि। किं तदेकविषयम् ? उत भिन्नविषयम् ? नोभयमपीत्याह—**न भिन्नेति**॥ चैत्र-मैत्राश्रितयोर्घटविषयज्ञानाज्ञानयोर्निवर्त्य-निवर्तकतानुपलब्धेः, तथा भिन्नविषययोरपि; तदेतदभिप्रेत्योक्तम्—**अपीति**॥ करणगता-ज्ञानस्य कर्तृज्ञाननिवर्त्यत्वान्नातिप्रसङ्ग इति चोदयति—**करणाश्रयमिति**॥ यस्य यत्करणं तदाश्रितज्ञानेन तत्करणगतस्या-ज्ञानस्य निवृत्तिः ? किं वा करणान्तरगतस्य ? नोभयथापीत्याह—**न प्रमाणेति**॥ करणान्तरगताज्ञाननिवृत्तौ दूषणान्तरमाह—**पुरुषान्तरेति**॥ अन्तःकरणलयः, कर्मनिमित्तः, लयत्वात्; संमतलयवदित्युत्पद्यमानबोधेन पुरुषान्तरगतेन सुषुप्तकरणगताज्ञान-निरासो नोपलभ्यते; अन्यथोत्थितस्य तत्परामर्शानुपपत्तिप्रसङ्ग इत्यर्थः॥ अज्ञानस्य ज्ञाननिवर्त्यत्वं तावदसिद्धम्; तस्य करणा-यत्तत्वे प्रामाणिके तदज्ञाननिवृत्तिः सेत्स्यतीत्यभिसन्धायाह—**भ्रान्तीति**॥ दोषत्वमुपपादयितुम्—**भ्रान्तीति** विशेषणम्॥ अज्ञानम्, करणाश्रयम्, विषय-प्रमातृदोषातिरिक्तत्वे सति दोषत्वात्; काचादिवदित्यर्थः। अतिप्रसङ्गलक्षणबाधकतर्कपराहत-त्वान्नायं हेतुरित्याह—**न चक्षुरादाविति**॥ विमतम्, नयनाश्रयम्, दोषत्वात्; काचादिवदित्यतिप्रसङ्गः। प्रलयसमयेऽप्यज्ञानस्य सद्भावात्तेषां चाभावान्न तदाश्रयत्वमिति चोदयति—**सादित्वादिति**॥ अन्तःकरणस्याऽपि प्रलयादावुपरमान्नाज्ञानाश्रयत्व-मित्याह—**अन्तःकरण इति**॥ तत्रान्तःकरणस्याव्यक्तात्मना सत्त्वादाश्रयत्वं युक्तमिति शङ्कते—**सत्कार्येति**॥ तुल्यमेतदत्रा-पीत्याह—**चक्षुरादाविति**॥ युक्तिपर्यालोचनया जडस्याज्ञानाश्रयत्वं निरस्य श्रुतिपर्यालोचनयापि तन्निरस्यति—**अनृतेति**॥ 'शब्दैश्चे'त्यस्य नान्तःकरणेत्यनेनानुषङ्गः। स्वान्ताश्रयत्व एव शब्दस्य प्रामाण्यं किं न स्यात् ? इत्याशङ्क्याह—**प्राप्तज्ञानाना-मिति**॥ न सुषुप्तादौ ब्रह्म प्राप्तानां तद्बोधाभावः। कस्मात् ? इति शङ्कायाम्—"आवरणसद्भावादि"ति श्रुत्योच्यते, नच तत्तवो-पपद्यते; जडे ज्ञानप्रसक्त्यभावादित्यर्थः। अज्ञानं स्वतन्त्रमिति कल्पमुत्थापयति—**किंत्विति**॥ स्वातन्त्र्ये सत्तास्फूर्त्योः सत्त्वा-च्चित्यध्यस्तत्वमेष्टव्यमित्याह—**चैतन्येति**॥ अज्ञानासत्त्वपक्षं प्रतिक्षिपति—**अलमतिविस्तरेणेति**॥ भेदादिना जगतोऽनिरूपणाद अन्यथाऽनुपपत्तेः 'अहमज्ञः' इति व्यवहारानुपपत्तेश्चाज्ञानमास्थेयमित्यर्थः। अन्तःकरणादीनां भेदकत्वानुपपत्तिर्न्यायः। न्यायस्य स्वातन्त्र्येण बोधकत्वासंभवादनुग्राह्यमानमाह—**श्रुतिरिति**॥

## ऋजुविवरणम्

ननु ज्ञानेनाज्ञानं निवर्तत इति लोकसिद्धम्, तत्राज्ञानस्यान्तःकरणाश्रयत्वसिद्धौ सत्यां करणगतत्वमेव विरोध-प्रयोजकमिति निश्चय इत्याशङ्क्याह—**पुरुषान्तरसुषुप्तौ चेति**॥ ननु कर्तृज्ञाने तद्भ्रान्तिहेतुरन्तःकरणगताज्ञानं निवर्तते, तत् कथं करणगतनिवृत्त्यसंभवेनात्मगतत्वसाधनम् ? करणगतत्वे तु प्रमाणमस्तीत्याह—**भ्रान्तिनिमित्तेति**॥ उक्तन्यायस्यानुग्राहकं प्रमाणमाह—**अनृतनीहारादीति**॥ उदाहृतश्रुतौ व्यवधायकमज्ञानं प्रतीयते, नतु तस्यैवावच्छेदकत्वम्, नापि स्वाभाविक-भेदाभावः; अतस्तत्र प्रमाणमाह—**विभेदजनक इति**॥

## पञ्चपादिका

**तथाच स्मृतिः—"प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपी"ति । क्षेत्र-क्षेत्रज्ञत्वनिमित्तामनादिसिद्धामविद्यां प्रकृतिशब्देनाह; "मायां तु प्रकृतिं विद्यादि"ति श्रुतेः । अतो मायावच्छिन्नरूपत्वादनन्यदपि ब्रह्मरूपमात्मनो न वेत्ति । तथाचोक्तम्—"अनादिमायया सुप्तो यदा जीवः प्रबुध्यते । अजमनिद्रमस्वप्नमद्वैतं बुध्यते तदे"ति ॥**

**ननु प्रमाणान्तरविरोधे सति श्रुतिस्तदर्थापत्तिर्वा नाविद्यां निवेदयितुमलम् ? किं तत् प्रमाणम् येन सह विरोधः ? निरंशस्य स्वयंज्योतिषः स्वरूपानवभासानुपपत्तिः । ननु भोक्तुः कार्य-करणसंघाताद्व्यावृत्तता स्वयंज्योतिषोऽपि न प्रकाशते ?**

## पञ्चपादिकाविवरणम्

ब्रह्मव्यतिरिक्तमनादिवस्तु नास्तीति, तत्राह—**तथाच स्मृतिरिति** ॥ **अत** इत्युपसंहारः स्पष्टार्थः ॥

स्वयंप्रकाशस्याविद्याश्रयत्वमुपपन्नमित्युक्तम्, इदानीं प्रकाशमानस्याविद्याविषयभावो नोपपद्यत इत्याक्षिपति—**ननु प्रमाणान्तरविरोध इति** ॥ ननु 'त्वदुक्तमर्थं न जानामी'ति प्रतिभासमानमेवाज्ञानस्य व्यावर्तकमवभासते ? ननु तत्र विशेषाकारस्यानवगतस्य व्यावर्तकता ? न; अनवभासमानस्य व्यावर्तकतया प्रतिभासानुपपत्तेः । ननु अवभासमानस्यापि तद्व्यावर्तकत्वमनुपपन्नमेव ? न; अज्ञानसंबन्धस्य प्रतिभासमात्रशरीरत्वादनुपपत्तेरलङ्कारत्वात्; प्रतिभासस्तु विद्यत एव; तत्र कथं प्रतीयमानस्याविद्याविषयत्वानुपपत्तिः ? इत्याक्षिपन्ति—**किं तत्प्रमाणमिति** ॥ **निरंशस्येति** परिहारः । संविदभेदोऽपरोक्ष-

## तत्त्वदीपनम्

स्वयंज्योतिष्ट्वविद्याया व्युत्पादितत्वादाक्षेपानुपपत्तिरित्याशङ्क्याह—**स्वयंप्रकाशस्येति** ॥ ब्रह्म, नाज्ञानविषयः, भासमानत्वात्, भासमानघटादिवत्, इत्युक्ते दृष्टान्तस्य साध्यवैकल्यं शङ्कते—**नन्विति** ॥ व्यावर्तकं विशेषणमिति यावत् । ज्ञातस्याज्ञानव्यावर्तकत्वासंभवादनधिगतस्य व्यावर्तकत्वं वाच्यम्, ततश्च न साध्यवैकल्यमित्याह पूर्ववादी—**ननु तत्रेति** ॥ विशेषस्याप्यनधिगतौ 'तन्न जानामो'ति व्यपदेशानुपपत्तेरधिगतस्य व्यावर्तकत्वम्, ततश्च साध्यवैकल्यमित्याह सिद्धान्ती—**नानवभासमानस्येति** ॥ अवभासमानस्याज्ञानव्यावर्तकत्वं व्याहतमित्याह—**नन्ववभासमानस्येति** ॥ अवभासमानस्याज्ञानविषयत्वं किं युक्त्यसहमित्युच्यते ? किं वा तत्प्रतीत्यभावः ? इति विकल्प्याऽऽद्यमङ्गीकरोति—**नाज्ञानेति** ॥ अलङ्कारत्वे हेतुः—**प्रतिभासमात्रेति** ॥ द्वितीयं दूषयति—**प्रतिभासस्त्विति** ॥ ग्रन्थान्तरत्वसूचकभावादेकग्रन्थशङ्कां निरस्यति—**निरंशस्येति** ॥ अन्यात्मना सामान्य-विशेषवत्त्वात्तत्र भानाभाने, न तथाऽत्र स्वयंज्योतिषीति समाध्यर्थः ॥ भासमानस्यानवभासमानत्वं नेति वक्तुमशक्यम्; भासमानेऽप्यात्मनि देहादिव्यावृत्तेरनुपलम्भेन तत्र व्यभिचारादित्युक्तम्, तदसंगतम्, यन्न भासते, न तत्रावभासमानत्वम्, यद्भासते न तत्राऽनधिगतत्वमिति कथं व्यभिचारः इत्याशङ्क्य व्यभिचारं दर्शयितुमपरोक्षलक्षणमाह—**संविदिति** ॥

## ऋजुविवरणम्

ननु पूर्वमपि "निरंशस्ये"त्यनेन स्वप्रकाशस्यानवभासो न संभवतीत्याक्षिप्यसमर्थितम्, "ननु प्रमाणविरोधः" इत्यनेनापि तदेवाक्षिप्य समर्थ्यते; अतः पौनरुक्त्यमित्याशङ्क्याह—**स्वयंप्रकाशस्येति** ॥ **ननु अवभासमानस्यापीति** । अवभासमानस्यार्थस्याज्ञानेनावृतत्वं न संभवति; विषयस्य व्यावर्तकत्वं नामाज्ञानावृतत्वम्, तच्चावभासमानत्वादेवानुपपन्नम्; अतश्च विशेषस्य व्यावर्तकस्यावभास एव नास्तीति वक्तव्यमित्यर्थः । अत्र संग्रहः—

प्रतीयमानं व्यवधीयते नो विशेषरूपं प्रतिभासरोधात् । अबुद्धिचिह्नं कथमत्र भायान्निरूप्यमाण नहि लभ्यते यत् ॥

**अज्ञानसंबन्धस्येति** ॥ **अयमर्थः**—प्रतिभासमात्रेण शरीरं स्वरूपं यस्य संबन्धस्य, स प्रतिभासमात्रशरीरः; तस्य भावः, प्रतिभासमात्रशरीरत्वमिति । कथं प्रतिभासेनानुपपन्नोऽर्थोऽङ्गीक्रियते ? इत्याशङ्क्याह—**अनुपपत्तेरिति** ॥ अस्मिन्नर्थेऽनुपपत्तिर्नार्थनिषेधायालमित्यर्थः । "अज्ञानसम्बन्धस्ये"त्यन्तर्गर्भितो हेतुः; दुरुपपादस्वभावत्वादिति भावः । अत्र संग्रहः—

निरूपणं यन्न सहेत वस्तु तन्नेति वक्तुं नहि युक्तमत्र । सोढुं न शक्नोति विचारणं यत् प्रतीयते चैव तमोमयं तत् ॥

ननु किमित्येवमनुपपन्नोऽर्थः प्रतिभासमात्रशरीरोऽङ्गीक्रियते ? विशेषस्याप्रतीयमानस्यैव व्यावर्तकत्वं कस्मान्नाङ्गीक्रियते ? इत्याशङ्क्याह—**प्रतिभासस्त्विति** ॥ ननु "भोक्तुरि"त्यादिना स्वयंज्योतिषोऽप्यात्मनो देहाद् व्यावृत्तिर्न प्रतीयत इति व्यभिचारो दर्शितः; सोऽनुपपन्नः, स्वयंज्योतिःस्वरूपस्यानवभासो न संभवतीति चोदिते व्यावृत्तेरनवभासप्रदर्शनस्य व्यधिकरणत्वम्; दृष्टान्तवैषम्यात्, तत्र भेदस्य प्रतीतिकारणाभावेन तदुपपत्तेरित्याशङ्क्याभिप्रायमाह—**संविदभेद इति** ॥ "नन्वि"-

**पञ्चपादिका**

**ननु न भोक्ता स्वयंज्योतिः, किंत्वहंप्रत्ययेनावभास्यते ? यथा स्वयंप्रकाशमानता, अहङ्कारो न प्रत्ययस्तथा वक्ष्यते ॥**

**कथं पुनर्भोक्ता स्वयंज्योतिः कार्यकरणसंघाताद् व्यावृत्तो न प्रकाशते ? 'मनुष्योऽहमि'ति मिथ्यैवैकताभिमानात् । ननु गौणोऽयम्, न मिथ्या ? यथा न गौणः, तथा भाष्यकार एव वक्ष्यति ॥**

**ननु 'अहमि'ति यदि देहसमानाधिकरणः प्रत्ययः, न तर्हि तद्व्यतिरिक्त आत्मा सिद्ध्यति; अन्यस्य तथाग्राहिणः प्रत्ययस्याभावात्, आगमानुमानयोरपि तद्विरोधे प्रमाणत्वायोगात् । मिथ्यात्वात्तस्य न विरोध इति चेत् ? कुतस्तर्हि**

**पञ्चपादिकाविवरणम्**

प्रकाशमानता नाम । शरीराद् भेदश्च स्वयंज्योतिषाऽऽत्मप्रकाशेनाभिन्नस्तत्तन्त्रो वाऽपरोक्ष एव; तथापि न प्रकाशत इति सिद्धान्ती परिहरति—**ननु भोक्तुरिति** ॥ **ननु न भोक्तेत्यादिः** स्पष्टार्थः ।

पदार्थज्ञानमेव भेदज्ञानम्, अतो'ऽहमि'त्यात्मपदार्थज्ञानमेवभेदेऽपि प्रत्यक्षमिति मीमांसकंमन्यश्चोदयति—**कथं पुनर्भोक्तेति** ॥ संसर्गाध्यासो हि भेदानवगमनिमित्तमिति सर्वत्र व्याप्तमिति परिहरति—**मनुष्योऽहमितीति** ॥ पदार्थप्रत्यक्षेणैव भेदेऽपि प्रत्यक्षे सामानाधिकरण्यं गौणावभास इति चोदयित्वा परिहरति—**ननु गौण इत्यादिना** ॥

आह गौणवादी—**नन्वहमिति यदीति** ॥ ननु प्रत्यक्षावभासं बाधित्वाऽऽगमानुमानाभ्यामेव व्यतिरेको गृह्यतामिति ? नेत्याह—**आगमानुमानयोरपीति** ॥ ननु मिथ्यात्वात्प्रत्यक्षावभासस्य द्विचन्द्रावभासस्येव ताभ्यामेव बाध इति चोदयति—**मिथ्यात्वात्तस्येति** ॥ यत्राविचारपुरःसरमेव प्रत्यक्षावभासमप्यनुमानादिना झटिति बाधितमुच्छिन्नव्यवहारं भवति,

**तत्त्वदीपनम्**

**अभिन्न** इति स्वरूपभेदमाश्रित्योक्तम् । धर्मभेदमाश्रित्याह—**तत्तन्त्र इति** ॥ भेदस्य धर्मत्वे धर्मिज्ञानमात्रेण कथमपरोक्षत्वम् ? इत्याशङ्क्याह—**एवेति** ॥ धर्माद्यपरोक्ष्ये भेदाप्रतीत्यदर्शनात्तस्याप्यपरोक्षत्वमित्यर्थः ॥

आत्मनि प्रतीयमाने व्यावृत्तेरप्युपलम्भान्न व्यभिचार इत्युक्तम्, तन्नोपपद्यते; भेदज्ञानसामग्र्यभावात्, तृतीयज्ञानस्य च भेदग्राहित्वादित्यत्राह—**पदार्थेति** ॥ तृतीयज्ञानात् प्राक् भेदग्रहणाभावेऽसंकीर्णतया धर्म्यादिबोधाभावाद् भेदबोधो न स्यादित्यर्थः । फलितमाह—**अत इति** ॥ एकताज्ञानाद्भेदानवभास इत्युक्तम्, तदनुपपन्नम्; भेदग्राहकग्रहणस्याप्युपपत्तेरित्याशङ्क्य, देहव्यतिरिक्तात्मवादिना देहात्मबुद्धेरध्यासात्मत्वं वा गौणत्वं वाऽऽश्रीयते ? आद्येऽध्यासस्य भेदाग्रहव्याप्तत्वात्तद्ग्राहकाभावस्त्वयाऽप्याश्रयणीय इत्याह—**संसर्गेति** ॥ 'निमित्तं' ज्ञापकमिति यावत् । तत्र हेतुमाह—**इति सर्वत्रेति** ॥

ननु "गौणोऽयमि"त्यत्र देहात्मबुद्धेर्गौणत्वपक्षोऽनूदितः, स नोपपद्यते; गौणत्वव्यापकभेदग्रहाभावादित्याशङ्क्याह—**पदार्थेति** ॥ व्यतिरेकप्रमाणाभावान्नैतत्सिद्धिरित्युक्तं "नन्वहमि"त्यादिना, तन्नोपपद्यते; प्रस्तुतानुपयोगित्वादित्याशङ्क्य गौणत्वमुपपादयितुं तदित्याह—**आहेति** ॥ 'अयो दहती'ति दग्धृत्वस्य तन्निष्ठतया प्रतिभासेऽपि दग्धृत्वस्यान्यधर्मत्वं यथा, तद्वदित्याशङ्क्य, किं प्रत्यक्षाद् व्यतिरेकसिद्धिः ? उतागमात् ? अथवाऽनुमानात् ? नाद्यः; अनुपलम्भादित्याशयेनोक्तम्—**अन्यस्येति** (टीकायाम्) ॥ संप्रति द्वितीयतृतीयावुत्थापयति—**ननु प्रत्यक्षेति** ॥ तयोरप्रमाणत्वान्न तत्साधकत्वमित्याह—**नेत्याहेति** ॥ 'प्रत्यक्षस्य मिथ्यात्वान्न बाधकत्वमि'त्युक्तमयुक्तम्, मिथ्यात्वस्यैवासिद्धेः । नच—आगमानुमानविरोधान्मिथ्यात्वमिति—शङ्क्यम्; प्रत्यक्षस्य ज्यैष्ठ्येन तद्बाध्यत्वासंभवादित्याशङ्क्याह—**ननु मिथ्यात्वादिति** ॥ ज्येष्ठस्य बाध्यत्वे दृष्टान्तमाह—**द्विचन्द्रेति** ॥ "कुतस्तर्ही"त्यादावनुमानादेर्बाधकत्वं निरस्तम्, नैतत् संभवति; 'एकश्चन्द्रो, नायं सर्पः' इत्यादावनुमानादेर्बाधकत्वदर्शनादित्याशङ्क्य वैधर्म्यमाह—**यत्रेति** ॥ **प्रत्यक्षावभासमिति**—प्रत्यक्षवदवभासत इति प्रत्यक्षावभासम्, द्विचन्द्रादीत्यर्थः । सर्पादिभ्रमनिवर्तनेन बाधकप्रत्ययोत्पादात्तत्र तथात्वम्, अत्र युक्तितो बाध्यबाधकता निश्चेतव्या, नच निश्चेतुं शक्यते; परस्पराश्रयतापातादित्यर्थः ।

**ऋजुविवरणम्**

त्युपक्रमाच्चोद्यत्वशङ्कानिवृत्त्यर्थमाह—**सिद्धान्तीति** ॥

"कथं पुनरि"ति चोद्यमनुपपन्नम्; तत्र भेदप्रतीतौ सामग्र्यभावेन तदुपपत्तेरित्याशङ्क्याभिप्रायमाह—**पदार्थज्ञानमेवेति** ॥ "मनुष्योऽहमिति मिथ्यैवे"ति पूर्वशेष इवाभाति तथा सति विरोधः; नापि परिहारः; भेदग्राहकसद्भावादेकतावभासेऽपि तन्निवारणायोगादित्याशङ्क्याह—**संसर्गाध्यास इति** ॥

"ननु गौणः"इति चोद्यमयुक्तम्; अगृहीतभेदे गौणत्वायोगादित्याशङ्क्याह—**पदार्थप्रत्यक्षेणैवेति** ॥ "कुतस्तर्ही"ति

## पञ्चपादिका

**मिथ्यात्वम्? आगमादनुमानाद्वाऽन्यथावगमादिति चेत्? नैतत्; अन्योन्याश्रयता तथा स्यात्—आगमानुमानयोः प्रवृत्तौ तन्मिथ्यात्वम्, तन्मिथ्यात्वे तयोः प्रवृत्तिरिति। तस्माद् देहादिव्यतिरिक्तविषय एवायमहङ्कार इत्यात्मवादिभिरभ्युपेयम्; अन्यथाऽऽत्मसिद्धिरप्रामाणिकी स्यात्। अतो गौणो मनुष्यत्वाभिमानः?**

**उच्यते—यद्यपि देहादिव्यतिरिक्तभोक्तृविषय एवायमहङ्कारः; तथापि तथाऽनध्यवसायात्तद्धर्मानात्मन्यध्यस्यति।**

## पञ्चपादिकाविवरणम्

तत्र तथा भवतु; यत्र पुनर्विचारपदवीमुपारूढयोर्ज्ञानयोर्बलाबलचिन्तया न बाधनिश्चयः, तत्र नानुमानादिना प्रत्यक्षस्य मिथ्यात्वसिद्धिरिति मत्वाऽऽह—**कुतस्तर्हीत्यादिना उच्यत** इत्यतः प्राक्तनेन ग्रन्थेन॥ स्पष्टार्थो ग्रन्थः॥

किमर्थतो व्यतिरिक्तात्मविषयोऽहङ्कार उच्यते? किं वा प्रतिभासतः? अर्थतश्चेत्, तत्राह—**यद्यपि देहादिव्यतिरिक्तेति**॥ व्यतिरेकप्रतिभास एवाध्यासविरोधितया सामानाधिकरण्यस्य गौणत्वमावहति, न त्वर्थमात्रमिति भावः। ननु सामान्येन गृहीतस्य विशेषाग्रहणादन्यसंसर्गाविभासो भवति, आत्मा तु विशेषरूपेण गृहीतः, कथं तत्राध्यासः? तत्राह—

## तत्त्वदीपनम्

कुतः (टीकायाम्) इत्यादेरेषोऽर्थः—प्रत्यक्षस्य मिथ्यात्वं न संभवति; बाधकाभावात्। नचागमादेर्बाधकत्वम्; इतरेतराश्रयत्वप्रसक्तेरित्याशयेनोक्तम्—**कुत इति**॥ यथाश्रुतमादायाह सिद्धान्ती—**आगमादिति**॥ **अन्यथाऽवगमादिति**—भिन्नतयाऽवगमादित्यर्थः। देहः, स्वातिरिक्तद्रष्टृकः, दृश्यत्वात्; घटवदित्याद्यनुमानम्। "अशब्दमस्पर्शमरूपमव्ययम्", "न जायते म्रियते" इत्यादिरागमः॥ स्वाशयमाविष्करोति—**नैतदिति**॥ तथा सति स्यादित्यर्थः। देहव्यतिरेके न चेन्मानम्, तस्याव्यतिरेक एवास्त्विति? तत्राह—**तस्मादिति**॥ तत्र हेतुमाह—**आत्मवादिभिरिति**॥ देहात्मवादे नास्तिकतापातात् पुरुषार्थिभिरतिरिक्त आत्माऽत्राश्रयणीय इत्यर्थः। अहंप्रत्ययस्य व्यतिरिक्तविषयत्वे—'अहं मनुष्यः' इति प्रत्ययः कथमिति चेत्? तत्र वक्तव्यम्—किमस्य प्रत्ययस्य गतिः पृच्छ्यते? अथवाऽतिरिक्तविषयत्वाभावः? इति। तत्र द्वितीयोऽसंगत इत्याह—**अन्यथेति**॥ अहंप्रत्ययस्य देहतादात्म्यविषयत्व आत्मसाधकाभावात्तदसिद्धिरित्यर्थः। आद्यं दूषयति—**अत इति**॥

अहंप्रत्ययस्य व्यतिरिक्तग्राहित्वे कथं "भेदानध्यवसायादि"त्यूचिवान् टीकाकृत्? इत्याशङ्क्य, विकल्पोत्तरत्वेन व्याचष्टे—**किमर्थत** इत्यादिना॥ भेदविशेषितप्रत्ययस्याध्यासविरोधित्वे विशेषणीभूतभेदस्यापि विरोधित्वात्कथमध्यासः? इत्यत्राह—**व्यतिरेकेति**॥ विशिष्टविरोधित्वे विशेषणस्याऽपि विरोधित्वमुक्तम्, तत्राह—**न त्विति**॥ स्रक्-सर्पयोर्व्यावृत्तावप्ययं सर्पः इत्यध्यासदर्शनान्न भेदमात्रस्य विरोधित्वमित्यर्थः। अध्यासव्यापकाभावान्नाहंकारतद्धर्माणामत्मान्यारोप इति चोदयति—**नन्विति**। **विशेषरूपेणेति** चित्त्वेनेत्यर्थः। चित्त्वं प्रतिभाति, परं न त्वहंकारव्यावृत्ताऽऽत्मधर्मतया; ततः प्रतीयमानेऽपि सम्भवत्यध्यास इत्याह—**तत्राहेति**॥ द्वितीयमनुवदति—**अथेति**॥ ऐक्यग्रन्थशङ्कां निरस्यति—**परिहरतीति**॥

## ऋजुविवरणम्

ग्रन्थोऽनुपपन्नः; सर्पादावागमानुमानाभ्यां प्रत्यक्षस्य बाध्यत्वस्य दर्शनात्, इत्याशङ्क्याभिप्रायमाह—**यत्राविचारेति**॥

"यद्यपी"त्यनेन देहाद् व्यतिरिक्तविषयत्वमभ्युपगम्य तथाऽनध्यवसायेनाध्यास उक्तः, सोऽनुपपन्नः; विरोधात्, नहि व्यतिरिक्तविषयत्वं व्यतिरेकाध्यवसायाभावश्चोपपद्यते; "अथ पुनरि"त्यनेन विरोधश्च, तत्र व्यतिरेकप्रतिभासो निराक्रियते, अत्र चाभ्युपगम्यते—इत्याशङ्क्य; भिन्नविषयत्वेनाविरोधं दर्शयितुं विकल्प्यावतारयति—**किमर्थत इति**॥ ननु अर्थव्यतिरेके गौणत्वेन कथमध्यासः? इत्याशङ्क्याभिप्रायमाह—**व्यतिरेकप्रतिभास इति**॥ "दृश्यते ही"त्यनेन स्वरूपावभासेऽध्यासासंभवमाशङ्क्य, दृष्टान्तप्रदर्शनमिवाभाति, तदनुपपन्नम्; स्वरूपावभासेऽपि रजतभ्रमदर्शनाच्छङ्कानुदयादित्याशङ्क्य चोद्यान्तरनिवृत्तौ तात्पर्यमाह—**ननु सामान्येनेति**॥ "अथ पुनरि"त्यनेन व्यतिरेकप्रतिभासे दूषणमुक्तम्, तदप्रस्तुतम्; अहंप्रत्यये तदप्रतिभासस्य दर्शनीयत्वात्, विचारादिना भेदप्रतीतौ जिज्ञासावैयर्थ्याङ्गीकारात्, गृहीतेऽपि जिज्ञासा दृश्यते; अतो हेयोऽयं ग्रन्थ इत्याशङ्क्या-

## पञ्चपादिका

**दृश्यते हि स्वरूपेणावभासमानेऽपि वस्त्वन्तरभेदानध्यवसायात्तत्सम्भेदेनावभासः – यथैकस्मिन्नप्यकारे ह्रस्वादिसम्भेदः ॥ अथ पुनरेकान्ततो भिन्न एव देहादेरहङ्कर्ताऽवभासेत, रसादिव गन्धः, ततः तत्सद्भावे न विप्रतिपत्तिः, इति तत्सिद्धये जिज्ञासा नावकल्पते ? जिज्ञासोत्तरकालं तर्हि गौण एव युक्तः ? कथम् ? जिज्ञासा नाम युक्त्यनुसन्धानम्, न हि युक्तिः पृथग् ज्ञानान्तरजननी, किन्तु सिद्धस्यैवाहंप्रत्ययस्य विषयविवेचिनी; तस्माद् विविक्तविषयत्वाद् व्यतिरिक्तात्मानुभवपर्यन्त एवाहंकारो जिज्ञासोत्तरकालं युक्तः ? न युक्तः; अकार इव ह्रस्वत्वाभिमानः । ननु तत्रापि कथम् ? अनुभव एव । एवमहङ्कारेऽपि समानश्चर्चः । ननु अनुभवस्तर्कबलाद् यथाऽवभासिन्यकारे सम्भवति, ह्रस्वादेः पृथक्सतस्तथाऽनवगमात् ?**

## पञ्चपादिकाविवरणम्

**दृश्यते हीति** ॥ अथ प्रतिभासत एवाहंप्रत्ययो विविक्तात्मविषय इति शङ्कते—**अथ पुनरेकान्तत इति** ॥ परिहरति—**ततस्तत्सद्भाव इति** ॥ यौक्तिकज्ञानसहकृतेनाहंप्रत्ययेनात्मनि विविक्ते प्रतिपन्ने पुनः सामानाधिकरण्यं गौणमेव, तत्सामान्यात्पूर्वमपि गौणमेवेत्यभिप्रेत्याह—**जिज्ञासोत्तरकालं तर्हीति** ॥ विचारेणापि नाहंप्रत्ययस्य व्यतिरिक्तात्मविषयत्वमापादितम्, किन्तु सर्वदा स्वरूपमात्रविषयोऽहंप्रत्ययः, यौक्तिकज्ञानलब्धस्तु व्यतिरेकः, अतस्तस्याननुसन्धाने पूर्ववदध्यास एवेति परिहरति—**न युक्त इति** ॥ **तत्रापि** (कथम्) नाध्यास इति चोद्यम् । **अनुभवविरोध** इति परिहारः । अकारस्य व्यतिरेकेऽपि ह्रस्वादेरव्यतिरेकादध्यास इति चोदयति—**नन्वनुभव इति** ॥ अन्यतरव्यतिरेके द्वयोरेकत्वाद् भेदस्येतरेतरव्यतिरेकः सिद्धय-

## तत्त्वदीपनम्

किं सर्वदाऽहंप्रत्ययस्य विविक्तग्राहित्वम् ? उत जिज्ञासोत्तरकालम् ? आद्ये बहुलालोकमध्यस्थहस्त्यादौ विमत्यभाववदात्मनोऽपि व्यावृत्ततया प्रतिभासान्न विप्रतिपत्तिः स्यात्, ततश्च जिज्ञासाऽसम्भव इति टीकार्थः । जिज्ञासोत्तरकालं गौणत्वे प्रागगौणत्वप्रसङ्ग इत्याशङ्क्याह—**यौक्तिकेति** ॥ **तत्सामान्यादिति**—'अहं मनुष्यः' इति प्रत्ययत्वसामान्यादित्यर्थः । उत्तरकालं गौणत्वव्यवहारो न प्रागिति विशेषः ।

(टीकायाम्) कथमित्यादेरयमर्थः—जिज्ञासायामपि न गौणत्वम्, युक्त्युत्थज्ञानस्याप्रामादिकत्वात्, अहंप्रत्ययस्य चात्ममात्रविषयत्वादिति शङ्कते—**कथमिति** ॥ जिज्ञासाया अहंप्रत्ययविषयविवेचकत्वात्तद्विरोधाद् देहात्मबुद्धेर्गौणत्वमिति वक्तुं जिज्ञासास्वरूपमाह—**जिज्ञासेति** ॥ युक्तेरप्रमाणत्वमुक्तमङ्गीकरोति—**नहीति** ॥ तर्हि वैयर्थ्यमित्याह—**किन्त्विति** ॥

"न युक्तः" इत्यत्र भेदबोधेऽपि न गौणत्वमित्युक्तम्, ज्ञातभेदयोरभेदाभिमानस्य गौणत्वदर्शनादित्याशङ्क्याह—**विचारेणेति** ॥ अहंप्रत्ययस्य व्यतिरिक्तविषयत्वे—"अहं व्यतिरिक्तः" इत्युक्तेः पौनरुक्त्यप्रसङ्गाद् नैतदित्यर्थः । तर्ह्यभेदविषयत्वमिति शङ्कते—**किन्त्विति** ॥ अभेदविषयत्वे विप्रतिपत्त्यभावापातात् स्वरूपमात्रविषयत्वमित्याह—**सर्वदेति** ॥ तर्हि व्यतिरेकाभावः प्राप्तः, तत्राह—**यौक्तिकेति** ॥ तर्हि—'अहं मनुष्यः' इत्यस्य गौणत्वम् ? तत्राह—**अत इति** ॥ युक्तयो यदाऽनुसन्धीयन्ते, तदाऽपि तर्कज्ञानस्य परोक्षत्वान्नापरोक्षभ्रमविरोधित्वमित्यर्थः ॥ "कथमनुभवः" इत्येकग्रन्थत्वशङ्कां निरस्यति—**तत्रापीत्यादिना** ॥ **टीकाक्षराणामेषोऽर्थः**—ह्रस्वोऽकार इत्यस्य यथा न गौणत्वम्, तद्वद् 'अहं मनुष्यः' इत्यस्यापीत्युक्ते दृष्टान्तासंमतिमाशङ्कते—**नन्विति** ॥ इदं रजतवदकारस्य ह्रस्वतयाऽनुभूयमानत्वादध्यासत्वमित्याह—**अनुभव इति** (टीकायाम्) ॥ अध्यासतां गमयतीति शेषः । यौक्तिकज्ञानेनाकारस्य ह्रस्वाद् व्यावृत्त्यभ्युपगमेऽध्यासानुभव इति कथमुक्तम् ? नच—अकाराद् ह्रस्वस्य व्यावृत्तिप्रतीत्याभावाद् अध्यासानुभव इत्यपि—शङ्क्यम्; अकारस्य ह्रस्वाद् व्यावृत्तिप्रतीतौ तस्मादितरस्यापि व्यावृत्तिप्रतीतिसंभवादित्यत्राह—**अकारस्येति** ॥ इदमः समारोपितरूप्याद् व्यावृत्तावपि न तस्मात्तस्य व्यावृत्तिर्यथा, तद्वदत्रापीत्यर्थः ॥ एकस्य पृथक्त्वमात्रेण कथमितरस्य पृथक्त्वमुक्तं टीकायाम् ? न खलु चैत्रपृथक्त्वेन मैत्रस्यापि पृथक्त्वमित्याशङ्क्य पृथक्त्वं किं संयोगवदुभयगतम् ? उत ह्रस्वत्ववदेकगतम् ? इति विकल्प्याऽऽद्यं दूषयति—**अन्यतरेति** ॥ पृथक्त्वस्य भेदव्यवहारकारणत्वादेकत्र पृथक्त्वज्ञानेऽन्यत्रापि तज्ज्ञानं स्यात् । एकगतत्वेऽप्यकारस्य

## ऋजुविवरणम्

वतारयति—**अथ प्रतिभासत** इति ॥ "जिज्ञासोत्तरकालमि"ति चोद्यमप्रयोजकम्; उत्तरत्र गौणत्वेऽपि पूर्वं भ्रमत्वसंभवात्, तावतैव सिद्धान्तिप्रयोजनसिद्धेरित्याशङ्क्याभिप्रायमाह-**यौक्तिकज्ञानसहकृतेनेति** ॥ "न युक्तः" इति गौणत्वं कथं निराक्रियते ? अहंप्रत्ययेन भेदे प्रतीयमानेऽध्यासासंभावादित्याशङ्क्याह—**विचारेणापीति** ॥ ननु यौक्तिकेनापि भेदे गृहीते नाध्याससंभवः, तत्राह—**तस्याननुसन्धान इति** ॥ ननु भिन्नत्वेन गृहीते तदनुसन्धानाभावमात्रेन कथमध्यासः ? तत्राह—**अकारस्येति** ॥

### पञ्चपादिका

**तन्न; एकस्य पृथक्त्वेऽप्यर्थादितरस्यापि पृथक्त्वात् ॥**

**ननु महदेतदिन्द्रजालम्—यत् तर्कानुगृहीतात् प्रमाणाद् यथायथमसाधारणरूपयोरेवावभासमानयोरेकत्वावगमो न गौण इति ? बाढम्; इन्द्रजालमेवैतत्, अविद्याकृतत्वात् । तथाहि—अहंप्रत्ययस्य स्वविषयप्रतिष्ठितस्यैव सतस्तदेकप्रतिष्ठितताप्रतिबन्धकृदनाद्यविद्याकृतं देहादिप्रतिष्ठितत्वमपि दृष्टम्; अतो देहादिविषयत्वाविरोधि स्वविषयप्रतिष्ठत्वमहंप्रत्ययस्य । अतो युक्त्या विषयविवेचनेऽपि स्वविषयोपदर्शनेन तत्प्रतिष्ठत्वमात्रं कृतम्, नाधिकमादर्शितम् । स्वविषयप्रतिष्ठत्वं च**

### पञ्चपादिकाविवरणम्

तीत्याह—**तन्नेति** ॥

ननु महदेतदित्यादिचोद्यपरिहारौ स्पष्टौ ॥ किंच विवेकानन्तरमध्यासोऽहंप्रत्ययमात्रेण विरुद्ध्यत इत्युच्यते ? किं वा यौक्तिकज्ञानेन ? न तावदहंप्रत्ययमात्रेणेत्याह—**तथा ह्यहंप्रत्ययस्येत्यादिना** ॥ ननु पूर्वमात्मविषयोऽपि युक्तिज्ञानसन्निधानाद् व्यतिरिक्तविषयोऽहंप्रत्यय इति ? नेत्याह—**अतो युक्त्या विषयविवेचनेऽपीति** । नहि प्रत्यक्षज्ञानं ज्ञानान्तरसन्निधानात् स्वविषयादधिकविषयं भवतीति भावः । विचारजन्यज्ञानस्याननुसन्धानात्, अनुसन्धानेऽपि परोक्षत्वान्नापरोक्षा-

### तत्त्वदीपनम्

ह्रस्वप्रतियोगिकभेदज्ञाने ह्रस्वस्यापि तत्प्रतियोगिको भेदोऽधिगतः स्यात्, इतरथा न तस्यापि स्यात् । नच रूप्यदृष्टान्तः; तस्यापि त्वया व्यावृत्त्यङ्गीकारादित्यर्थः ।

(टीकायाम्) **नन्वित्यादेरयमर्थः**-भेदज्ञानेऽप्यभेदज्ञानं न गौणमित्येतदयुक्तमिति चोदयति—**ननु महदेतदिति** ॥ एकतावगमो न गौणो यस्मात्, तस्माद् 'अहं मनुष्यः' इति ज्ञानमिन्द्रजालमित्युच्यते ? किं वा न गौण इति यत्, तदिन्द्रजालमिति ? तत्राद्यं दूषयति—**बाढमिति** ॥ अङ्गीकृतमंशमाह—**इन्द्रजालमिति** ॥ तत्र हेतुमाह—**अविद्याकृतत्वादिति** ॥ भेदबोधाद् अध्यासस्य निवृत्तत्वात् कथमध्यासत्वम् ? ततो गौणत्वमिति द्वितीयकल्पं प्रत्याह—**किंचेति** ॥

(टीकायाम्) **तथाहीत्यस्यैषोऽर्थः**—अहंप्रत्ययस्य देहादिप्रतिष्ठत्वमपि दृष्टमिति संबन्धः । तर्हि देह एवाऽऽत्मा स्यादिति, तत्राह—**स्वविषयेति** ॥ व्यतिरिक्तात्मप्रतिष्ठस्येत्यर्थः । तर्ह्युभयं स्यादिति, तत्राह—**तदेकेति** ॥ अपिशब्दोऽवधारणार्थो दृष्टपदेनानुषज्यते । देहादिप्रतिष्ठत्वे हेतुमाह—**अनादीति** ॥

अहंप्रत्ययमात्रस्याध्यासाविरोधित्वेऽपि सहकार्यनुरोधाद्विरोधितेति शङ्कते—**ननु पूर्वमिति** ॥ सहकारिसन्निधावपि 'अहं मनुष्यः' इत्येवोपलम्भान्नातिरेकग्राहित्वमित्याह—**नेत्याहेति** ॥ धूममात्रस्य वह्निमात्रबोधकत्वेऽपि सौरभदर्शनसहकृतस्य श्रीखण्डेन्धनोत्थदहनबोधकत्वं दृष्टम्, तद्वत् सहकारियुक्तस्याधिकग्राहिता । 'अहं मनुष्यः' इति दर्शनं न गौणमित्यत्राह—**न हीति** ॥ दृष्टान्ते विशिष्टधूमस्य विशिष्टवह्निबोधकत्वम्, न तु धूममात्रजज्ञानस्य सहकारिसन्निधानादन्यविषयत्वम्, अत्र तु प्रत्यक्षस्य यौक्तिकज्ञानसन्निधेरन्यविषयत्वमुच्यत इति वैषम्यमित्यर्थः । द्वितीयं दूषयति—**विचारेति** ॥ सदेति शेषः । अविवेकिनामिति वा । अनुसन्धानेऽपि न विरुध्यतेऽध्यास इत्याह—**अनुसन्धानेऽपीति** ॥ अपरोक्षभ्रमस्यापरोक्षज्ञाननिवर्त्यत्वनियमान्न परोक्षज्ञानेन बाध इत्यर्थः । 'अहं मनुष्यः' इति प्रत्ययस्य देहतादात्म्यविषयत्वे न व्यतिरेकसिद्धिरित्युक्तमनुवदति—

### ऋजुविवरणम्

ननु "महदेतदिन्द्रजालमि"त्यनेन भेदेन गृहीतेऽध्यासकारणाभावाद् गौणत्वनिराकरणं मृषेति चोदयित्वा, "बाढमिन्द्रजालमि"त्यनेनाविद्याकृतत्वेनाध्यासत्वमुक्त्वा, "तथाही"त्यनेनाहंप्रत्ययस्य देहादिप्रतिष्ठितत्वप्रदर्शनं कृतम्, तद् व्यर्थम्; गौणत्वेनाप्यङ्गीकारात्, मिथ्यात्वेन तद्विषयत्वमप्ययुक्तमेव; अविरोधोऽप्ययुक्तः; "तथाही"त्यप्ययुक्तम्; विवरणाभावादित्याशङ्क्य, तन्निवृत्त्यर्थं कथमविद्याकृतत्वेनाहंकारादीनामध्यस्तत्वमुच्यते; भेदज्ञाने सत्यध्यासानुपपत्तेरिति शङ्कानिवर्तकत्वं दर्शयितुं युक्त्यन्तरत्वेन वा विकल्प्यावतारयति—**किंचेति** ॥ "विवेकानन्तरमि"त्यतो "युक्त्ये"त्यन्तेनाधिकज्ञापकत्वं युक्तेर्नास्तीत्युक्तम्, तदयुक्तम्; "विषयविवेचनेऽपी"त्यधिकविषयत्वस्य दर्शितत्वात्, "तत्प्रतिष्ठत्वमात्रमि"त्यनेनापि युक्तेः स्वविषयाहंप्रत्ययव्यवस्थापकत्वमुक्तम्, तस्य च व्यतिरिक्तविषयत्वादहंप्रत्ययोऽपि तथेत्याशङ्क्याभिप्रायमाह—**नहि प्रत्यक्षज्ञानमिति** ॥ कथमननुसन्धानहेतुकोऽध्यासः ? अनुसन्धानेऽपि तस्य दर्शनादित्याशङ्क्याह—**अनुसन्धानेऽपीति** ॥ "अनादित्वाच्चे"त्यनेन पूर्वदृष्टत्व-स्मृतिरूपत्वमात्रसाधनं कृतम्; तदयुक्तम्, सकललक्षणाक्षेपे तदंशप्रदर्शनस्यायुक्तत्वात्, तत्राधिष्ठानचैतन्यदोषो लब्धः, पुनस्तत्साधने पौनरुक्त्यम्; नचानादित्वं स्मृतिरूपत्वसाधकम्; तस्य कारणत्रयजन्यत्वसापेक्षत्वादित्याशङ्क्यावतार-

## पञ्चपादिका

**देहादिष्वहं-ममाभिमानेन न विरुध्यत इत्युक्तम्। अतो न्यायतो विषयविवेचनादूर्ध्वमपि न प्रागवस्थातो विशिष्यतेऽहंप्रत्ययः। तेन न कदाचिदपि 'मनुष्योऽहमि'ति प्रत्ययो गौणः। तदेवं स्वयंज्योतिष एव सतो जीवस्य कार्य-करणसङ्घातव्यतिरिक्ततायास्तथाऽनवभासदर्शनात् 'मनुष्योऽहमि'ति चाध्यासोपलब्धेर्ब्रह्मात्मैकत्वस्यापि तत्स्वरूपस्यानवभासनं पूर्वकालकोटिरहितप्रकाशाच्छादितमोनिमित्तं श्रुतितदर्थापत्तिसमर्पितम्, तन्निमित्ताहंकाराध्यासश्च सम्भाव्यते। अनादित्वाच्च पूर्वदृष्टत्वं स्मृतिरूपत्वं च। पृथग्भोक्तृ-विषयानुभवफलाभावाद्भोक्तृचैतन्यसंवलितैकानुभवफलत्वाच्च परत्र परावभासस्यान्योन्यसम्भेदस्य विद्यमानत्वादध्यासलक्षणव्याप्तिरिहाप्युपपद्यते॥**

## पञ्चपादिकाविवरणम्

ध्यासः प्रागवस्थातो भिद्यत इत्युपसंहरति—**अतो न्यायत इति**॥ ननु प्रत्यक्षे देहात्मैक्याध्यासे किमैक्यप्रत्ययमपबाध्य व्यतिरेके प्रमाणमुक्तमिति? उच्यते; युक्तिसहितागमानुमानाहंप्रत्ययैर्द्विचन्द्रबाधयैकत्ववद् व्यतिरेकः सिद्धयतीत्युक्तं भवति॥ **तदेवं स्वयंज्योतिष इति** दृष्टान्तानुवादेन दार्ष्टान्तिककथनपरो ग्रन्थः स्पष्टार्थः॥ स्वयंप्रकाशत्वेऽप्यविद्ययाऽगृह्यमाणविशेषत्वादात्मनोऽधिष्ठानयोग्यत्वकथनेन "परत्र परावभासः" इति लक्षणांशो दर्शितः। कारणत्रितयेऽप्यद्वितीयात्मावभासिचैतन्यप्रमाणतद्गताविद्याकारणदोषौ लब्धौ, संस्कारमिदानीं लम्भयति—**अनादित्वाच्चेति**॥ ननु अध्यस्यमानाधिष्ठानविषयं कारणत्रितयजन्यमेकमेव ज्ञानं वक्तव्यम्, तदभावान्नाध्यास इत्याशङ्क्याह—**पृथग्भोक्तृविषयानुभवफलाभावादिति**॥ आत्मचैतन्यमेवात्मानात्मसंभेदावभासिस्वरूपेणाजन्यत्वेऽपि विशिष्टविषयोपरक्ताकारेण जन्यते; भ्रान्तित्वाच्च विषय-विषयिणोरेकस्मिन् प्रत्यये संभेदावभासः संभवति, इति कारणत्रितयजन्यमात्मन्यनात्मावभासिज्ञानमध्यासः सिद्ध इति॥

## तत्त्वदीपनम्

**ननु प्रत्यक्ष इति**॥ केवलयोरनुमानाऽऽगमयोर्व्यतिरेकासाधकत्वेऽपि युक्तिसहकृताहंप्रत्ययोपोद्बलिताऽऽगमानुमानयोर्व्यतिरेकसाधकत्वं युक्तमित्याह—**उच्यत इति**॥ बाल्याद्यवस्थासु शरीरव्यावृत्तावप्यहंप्रत्ययोऽनुवर्तते। अनुवर्तमानस्य च व्यावृत्तमात्राऽऽलम्बनत्वायोगात्सकलावस्थानुस्यूतमात्मतत्त्वमालम्बनमेष्टव्यमित्याद्या युक्तिः। इतरद् व्यक्तम्। "अनादित्वाच्चे"त्यत्र पूर्वदृष्टत्वे हेत्वन्तरमुपन्यस्यत इति प्रतिभाति, तदनुपपन्नम्; प्राक् पूर्वदृष्टत्वानुपपादनादित्याशङ्क्य, वृत्तसंकीर्तनपुरस्सरमुत्तरग्रन्थमवतारयति—**स्वयंप्रकाशत्व इति**॥ **'लक्षणांश'**शब्देन परत्रेत्यंशो विवक्ष्यते। अधिष्ठानप्रमाण-तद्दोष-संस्काराणां रूप्यभ्रमजनकत्वादत्राप्यधिष्ठानप्रमाणं तावत् सुसंपादमित्याह—**चैतन्येति**॥ तस्य प्रमाणत्वमुपपादयति—**आत्मेति**॥ आत्मावभासित्वमात्मव्यवहारहेतुत्वमित्यर्थः। घटव्यवहारस्य स्वान्यत्वं दृष्टम्, तद्वदत्रापीति शङ्कां निरस्यति—**अद्वितीयेति**॥ दोषस्त्वविद्येत्याह—**तद्गतेति**॥ कारणत्रितयसंभवेऽप्यध्यासासंभव इति शङ्कते-**नन्विति**॥ संसृष्टव्यवहारानुपपत्त्याऽधिष्ठानादिविषयमेकं ज्ञानं जन्यं च दृष्टमन्यत्र, अत्र त्वन्यथा; आत्मनोऽविषयत्वादधिष्ठानारोप्यज्ञानस्य चैतन्यस्य नित्यत्वाच्चेत्यर्थः। आत्मनोऽविषयत्वेऽप्यारोप्यस्फुरणादन्यज्ञानाभावादधिष्ठानत्वमिति **टीकार्थः**॥ आरोप्यस्फुरणव्यतिरिक्तस्फुरणसम्बन्धित्वेनाधिष्ठानत्वं कथमुक्तम्? तुच्छस्याप्यधिष्ठानत्वापातादिति, तत्राह—**आत्मेति**॥ आरोप्याधिष्ठानयोरेकस्फुरणत्वस्याधिष्ठानत्वप्रयोजकत्वात्तुच्छस्य चातादृक्त्वान्नाधिष्ठानत्वमित्यर्थः। जन्यत्वं घटयति—**स्वरूपेणेति**॥ एतदभिसन्धायोक्तम् (टीकायाम्) "भोक्तृचैतन्येति"॥ आरोप्यस्याधिष्ठानाभिन्नानुभवफलत्वाद्विषयसंवलितत्वेन जन्यत्वाच्च लक्षणोपपत्तिरिति **टीकार्थः**। आत्माऽनात्मनोर्विरुद्धयोः कथमैक्यम्? तत्राह—**भ्रान्तित्वादिति**॥ प्रमाणतयैक्यानवभासेऽपि भ्रान्त्या तत्प्रतिभास इत्यर्थः। लक्षणसमर्थनमुपसंहरति—**इति कारणेति**॥

## ऋजुविवरणम्

यति—**स्वयंप्रकाशत्व इति**॥ "पृथग्भोक्तृविषये"ति हेतुर्व्यर्थः; शङ्कानिराकरणासमर्थत्वादित्याशङ्क्य शङ्काबीजप्रदर्शनमनेन क्रियत इति व्याचष्टे—**स्वरूपेणाजन्यत्वेऽपीति**॥ जन्यज्ञानान्तरं नास्तीत्याह—**आत्म चैतन्यमेवेति**॥ कथं "भोक्तृचैतन्ये"त्यनेन जन्यत्वमुक्तम्? अनुक्तौ च शङ्कापरिहारो न स्यादित्याशङ्क्य व्याचष्टे—**विशिष्टविषयोपरक्तेति**॥ अथवा, "आत्मचैतन्यमि"त्यनेन "पृथग्भोक्तृविषये"ति व्याख्यातम्, कथं तस्याजन्यस्य टीकाकृता भोक्तृचैतन्येत्यनेन फलत्वमुक्तमित्याशङ्क्य व्याचष्टे—**स्वरूपेणाजन्यत्वेऽपीति**॥ "परत्र परावभासस्ये"त्यनुपपन्नम्; चैतन्यस्याविषयत्वेन तत्संभेदावभासाभावादित्याशङ्क्योपपादयति—**भ्रान्तित्वाच्चेति**॥

## पञ्चपादिका

"कोऽयमध्यासो नामे"ति किंवृत्तस्य प्रश्न आक्षेपे च समानवर्तिनो विशेषानुपलब्धेः **'पृष्टमनेन' इति मत्वाऽध्यासस्वरूपेऽभिहिते, पुनः 'आक्षिप्तं मये'त्यभिप्रायं विवृणोति**—कथं पुनः प्रत्यगात्मन्यविषयेऽध्यासो विषयतद्धर्माणामिति ॥

**बाढमेवंलक्षणोऽध्यासः, स चेह न सम्भवति । कथम् ? यतः**—सर्वो हि पुरोऽवस्थिते विषये विषयान्तरमध्यस्यति; युष्मत्प्रत्ययापेतस्य च प्रत्यगात्मनोऽविषयत्वं ब्रवीषि ॥ **नह्यविषयेऽध्यासो दृष्टपूर्वः सम्भवी वा ? उच्यते**—न तावदयमेकान्तेनाविषयः; अस्मत्प्रत्ययविषयत्वात् ॥ **ननु विषयिणश्चिदात्मनः कथं विषयभावः ? परागभावेनेदन्तासमुल्लेख्यो हि**

## पञ्चपादिकाविवरणम्

"कथं पुनरि"त्यादिभाष्यस्य तात्पर्यमाह—**कोऽयमध्यासो नामेति किंवृत्तस्येति** ॥ पृष्टमेवानेन, आक्षिप्तमपि मयेत्युभयत्रैवकारापिशब्दौ प्रयोक्तव्यौ ।

अध्यस्यमानेन समानेन्द्रियविज्ञानविषयत्वमेवाधिष्ठानस्य दृष्टम्, इह तदभावान्नाध्याससंभव इत्याक्षेपग्रन्थार्थः । तत्रैकस्मिन्विज्ञाने द्वयोः संभिन्नतयाऽवभास एवापेक्ष्यते; विषयतयाऽवभास इति विशेषणायोगात्, इति मन्वानः परिहरति—**न तावदयमेकान्तेनाविषय इति** ॥ अस्मत्प्रत्ययशब्देनात्मविषयं ज्ञानमुक्तमिति मन्वानश्चोदयति—**ननु विषयिण इति** ॥ एकस्यां प्रत्यक्षदर्शनक्रियायामेकस्यैव कर्तृस्थाने तदैव तद्विपरीतकर्मकारकस्थाने चावस्थानमनुपपन्नमिति भावः । अस्तु तर्हि-

## तत्त्वदीपनम्

किंशब्दस्य व्याख्यातत्वात् पुनस्तत्कस्मादित्याशङ्क्योत्तरशेषत्वादनुवाद इत्याह—**कथमिति** ॥ प्रश्नाक्षेपयोरुभयोरपि कृतत्वात् 'पृष्टमनेने'ति मत्वा, 'आक्षिप्तं मये'ति च कथमुक्तम् ? इत्याशङ्क्याध्याहारेण योजयति—**पृष्टमिति** ॥ सर्वगतत्वेन पुरःस्थितत्वादज्ञानविषयत्वाच्चाविषयत्वाभिधानं भाष्यटीकयोरसंगतम्, तत्राह—**अध्यस्यमानेनेति** ॥

(टीकायाम्) बाढमित्यादेरेषोऽर्थः । अध्यास आक्षिप्यते चेत्, कथं पुनरध्यास इत्येवोच्यताम्, किं "प्रत्यगात्मनी"त्याशङ्क्यान्यत्राध्यासमङ्गीकृत्य, विशेषविषय आक्षेपं द्योतयितुमित्याह—**बाढमिति** ॥ अरूप्ये रूप्याध्यासवदविषयेऽपि विषयारोप इति शङ्कते—**कथमिति** ॥ विषयत्वस्याधिष्ठानत्वव्यापकत्वात्तदभावेऽभावं दर्शयितुं तस्य व्यापकत्वमाह—**यत इति** ॥ ऐन्द्रियकाऽऽरोपे ऐन्द्रियकस्यैवाधिष्ठानत्वमित्याह—**पुरोवस्थित इति** ॥ गगने रूपाद्यारोपदर्शनादैन्द्रियकत्वमप्रयोजकम्, विषयत्वं त्वारोपानुपपत्त्याऽपि कल्प्यत इत्याशङ्क्य, विषयत्वमिदन्तया प्रथमं स्यात्, तच्च नेहेत्याह—**युष्मत्प्रत्ययेति** ॥ आत्मनो विषयत्वाभिधानं सिद्धान्तविरुद्धं चेत्याह—**ब्रवीषीति** ॥ अविषयेऽपि संवेदने क्षणिकत्वाद्यारोपो दृष्ट इत्याशङ्क्य दृष्टान्तोऽसंप्रतिपन्न इत्याशयेनाह—**नहीति** ॥ न केवलमदर्शनमेव, अपि त्वसंभवश्चेत्याह—**संभवी चेति** (वेति) ॥

एकान्तेनाविषयो नेति वदता सुषुप्तिव्यावृत्तिमात्रमात्मनोऽभ्युपगतम्. तत्र कर्मत्वाभावे कथमधिष्ठानत्वम् ? इत्याशङ्क्याह—**तत्रेति** ॥ अधिष्ठानारोप्ययोरेकबुद्धिस्फुरणे सति कर्मत्वाभावापराधेनाध्यासाभावानुपलब्धेः कर्मत्वमप्रयोजकमित्यर्थः । अस्मदिति प्रत्ययो यस्य, सोऽस्मत्प्रत्ययोऽहंकारः । अस्मच्चासौ प्रत्ययश्चेति वा । तत्र बिम्बितत्वमस्मत्प्रत्ययविषयत्वम् ॥ कर्तृ-कर्मविरोधेन विषयत्वनिराकरणमनुपपन्नम्; अन्तःकरणविषयत्वस्यास्मत्प्रत्ययविषयशब्दार्थत्वादित्याशङ्क्याह—**अस्मत्प्रत्ययेति** ॥ गमनक्रियाकर्तृत्वं दर्शनक्रियाकर्मत्वं चैकत्रोपलब्धमिति न विशेष इत्याशङ्क्याह—**एकस्यामिति** ॥ देहः स्वातिरिक्त-

## ऋजुविवरणम्

ननु पुरोऽवस्थितं कथं प्रयोजकत्वेनोपादायाक्षेपः क्रियते ? स्वप्नादौ पुरोऽवस्थितविषयाभावेऽप्यध्यासस्य सर्वैरङ्गीकृतत्वात् । अथ विषयत्वाभावेनाक्षेपः, तन्न; अज्ञानविषयत्वस्य साधितत्वात्, अतो नाक्षेपबीजमुपलभ्यत इत्याशङ्क्य व्याचष्टे—**अध्यस्यमानेनेति** ॥ कारणान्तरमप्युपाध्यभावासङ्गत्वादि स्वावसरे वक्ष्यमाणत्वान्नेहोक्तम् । "न तावदयमि"त्यनेन नियमेनाविषयत्वनिषेधादविषयत्वमपि प्रतीयते । तथा सत्यध्यासाभाव एव, वैयर्थ्यं वा तत्कीर्तनस्येत्याशङ्क्यावतारयति—**तत्रैकस्मिन्विज्ञान इति** ॥ ननु "विषयिणः" इत्यादिना विरुद्धरूपद्वयापत्तिरिति न युक्तं चोद्यम्; न ह्यस्मत्प्रत्ययविषयत्वेनेदन्तया प्रतीयमानत्वलक्षणं विषयत्व भवति; 'मामि'ति तु भवेत् । अथ स्वरूपेण तयोर्विरोधः; तथापि नात्र प्रसक्तिरित्याशङ्क्याभिप्रायमाह—**एकस्यामिति** ॥ तत्र कर्तृत्वं कर्मत्वं च भिन्नव्यक्तिगतं न विरोधि, तदर्थम् **"एकस्ये"**त्युक्तम् । एकस्यापि

## पञ्चपादिका

**विषयो नाम, भवति तद्वैपरीत्येन प्रत्यग्रूपेणानिदंप्रकाशो विषयी; तत् कथमेकस्य निरंशस्य विरुद्धांशद्वयसंनिवेशः? अत्रोच्यते—अस्मत्प्रत्ययत्वाभिमतोऽहंकारः। स चेदमनिदंरूपवस्तुगर्भः सर्वलोकसाक्षिकः। तमवहितचेतस्तया निपुणतरम-**

## पञ्चपादिकाविवरणम्

शाभ्यां तद्भाव ? इति नेत्याह—**तत्कथमेकस्येति** ॥ तत्र सर्वतो विप्रसृतस्य सवितृप्रकाशस्याऽऽकाशे विशेषाभिव्यक्तिनिमित्त-दर्पणादिवदात्मचैतन्यस्य सविकल्पकतया स्फुटीकरणव्यवहारनिमित्तं भास्वरद्रव्यमात्मन्यध्यस्तमन्तःकरणमस्मत्प्रत्यय इत्याह—**अस्मत्प्रत्ययत्वाभिमतोऽहङ्कार इति** ॥ ननु इदं रजतमितिवदध्यस्तत्वे—'अहमि'ति द्वैरूप्यावभासो वक्तव्य इत्यत आह—**स चेदमनिदमिति** ॥ 'अयो दहती'ति दग्धृत्वविशिष्टस्याग्नेरयसश्च द्वैरूप्यावभासवत्—'अहमुपलभे' इत्युपलब्धृत्वविशिष्टस्य

## तत्त्वदीपनम्

द्रष्टृक इत्यत्र एकस्यैव कर्तृत्वं कर्मत्वं च, तदर्थम्—**प्रत्यक्षेति** विशेषणम्। कर्तृभेदे विरोधाभावं निराकर्तुम्—**एकस्ये**त्युक्तम्। कालभेदेनाविरोधं निराकर्तुमाह—**तदेति** ॥ कर्तृस्थाने क्रियां प्रति गुणभावः, कर्म-करणस्थाने क्रियां प्रति प्राधान्यम्, तत्रैकेनांशेन कर्तृत्वम्, अपरेण कर्मत्वमित्यङ्गीकरणान्न विरोध इति शङ्कते—**अस्तु तर्हीति** ॥ निष्कलादिवचनविरोधान्नैव-मित्याह—**नेत्याहेति** ॥ कर्तृ-कर्मविरोधनिराकरणार्थम्—'अहंकारोऽस्मप्रत्ययः' इत्युक्तम्, तथापि न विरोधो निराकर्त्तुं शक्यः; अहंकारशब्दस्याहंप्रत्ययार्थत्वादित्याशङ्क्याह—**तत्रेति** ॥ अन्तःकरणमस्मत्प्रत्यय इति प्रथमं सम्बन्धः, प्रतीयमानत्वेन प्रत्ययत्वम्। आत्मनो दृग्रूपत्वादन्तःकरणविषयत्वमनुपपन्नमित्याशङ्क्याह—**आत्मचैतन्यस्येति** ॥ अन्तःकरणे प्रतिबिम्बित-तया स्फुटत्वं **विषयशब्दार्थः** ॥ परिच्छिन्नस्यैवाधिष्ठानत्वमित्यभिनिविशमानं प्रत्याह—**सविकल्पकतयेति** ॥ जडत्वाविशेषेऽपि कस्यचिद् व्यञ्जकत्वं कस्यचिन्नेति कथम् ? तत्राह—**भास्वरेति** ॥ पार्थिवत्वेऽपि वैडूर्यपाषाणादीनामान्तरालिकभेदवद् भेद इत्यर्थः। अन्तःकरणेन संयोगासम्भवात्कथं तत्र वक्तव्यम् ? तत्राह—**आत्मनीति** ॥ आत्माव्यङ्ग्यस्यान्तःकरणस्य कथं तद्व्यञ्जकत्वम् ? तत्राह—**तत्र सर्वत्र (सर्वतः) इति** ॥ द्वयाकारावभासत्वाभावान्नान्तःकरणमध्यस्तमिति चोदयति—**नन्विति** ॥ द्वयाकारत्वाभावोऽसिद्ध इत्याह—**अत इति** ॥ इदमनिदंरूपे वस्तुनी गर्भे यस्य, स तथोक्तः। चिद्रूपेणाहंकारगतजाड्याभि-भवात्तस्मिन्नहंकारो गर्भित इवाऽऽस्ते, इदंरूपेण च चैतन्यगतस्वप्रकाशत्वतिरोधानादनिदंरूपमिदंरूपे गर्भितमिवेत्यर्थः।

## ऋजुविवरणम्

कालभेदेनाविरोधः; तदर्थम् '**तदैवे**'त्युक्तम्। शब्दकर्मत्वम् ज्ञानकर्तृत्वम्; यद्वाऽऽलोककर्मत्वम्, स्वव्यापारे कर्तृत्वं घटादेः; यद्वाऽविद्याविषयत्वमन्यत्र कर्तृत्वम्; एवमक्रियाविषयवैषम्यप्रदर्शनार्थम्—'**क्रियायामि**'ति। अनुमाने द्वयमप्यात्मनो दृश्यते, तदर्थम्—**प्रत्यक्षदर्शनेति**। चोदितम्; तन्न युक्तम्; अन्तःकरणे विषयत्वमेव यत इत्याशङ्क्यावतारयति—**अस्मत्प्रत्यय-शब्देनेति**। एवमप्येतदपि ज्ञानभेदे भवेत्, तदर्थम्—"**एकस्यामि**"त्युक्तम्। एवमानुलोम्येनापि; तत्रैकप्रत्यक्षदर्शनेत्युक्तेऽ-प्यात्मविषयज्ञानस्याजन्यत्वेन कर्मतैवात्मनः, न कर्तृतेति शङ्का स्यात्, तन्निराकरणार्थम्—'**क्रियायामि**'ति विशेषणम्। अथवा—कर्तृ-कर्मापेक्षत्वप्रदर्शनार्थम्—'**क्रियायामि**'त्युक्तम्। क्रियाभेदे कर्तृत्वादिदर्शनाद् '**एकस्यामि**'त्युक्तम्। अनुमान-व्यवच्छेदार्थम्—'**प्रत्यक्षे**'ति। इतरद् व्यक्तम्। ननु अस्मत्प्रत्ययत्वाभिमतोऽहंकार इत्युक्तेऽपि समानो दोषः; चैतन्यस्या-विषयत्वात्, नच ज्ञानातिरिक्तं तदस्ति, तेन शब्दमात्रभेदान्नायं परिहार इत्याशङ्क्यावतारयति—**तत्र सर्वत इति** ॥ कथमस्य स्फुटीकरणव्यवहारनिमित्ततेत्याशङ्क्याह—**भास्वरद्रव्यमिति** ॥ एवमप्यसंबन्धात्कथमात्मनि स्फुटीकरण-निमित्ततेति ? तत्राह—**आत्मन्यध्यस्तमिति** ॥ अथवा ज्ञानव्युदासार्थमाह—**अन्तःकरणमस्मत्प्रत्यय इति** ॥ कथमद्वितीयात्मन्येतादृशं वस्तु संभवतीति ? तत्राह—**अध्यस्तमिति** ॥ तथापि संवन्धाभावाद्विषयत्वमात्मनो न स्यात्, तदर्थमाह—**आत्मनीति** ॥ ननु अध्यस्तवस्त्वन्तरे न दृष्टमस्य कथमेतादृशं सामर्थ्यमिति ? तदाह—**भास्वरद्रव्यमिति** ॥ ननु साक्षिचैतन्य आवरणाभावेन तन्निवृत्त्यभावात् कथमन्तःकरणस्य तद्विषयतेति ? तत्राह—**आत्मचैतन्यस्येति** ॥ ननु प्रकाश-मानेऽपि वस्तुनि नैतादृशातिशयजननेन तद्विषयत्वं दृश्यते, इत्याशङ्क्य दृष्टान्तमाह—**तत्र सर्वत इति** ॥ कथम् 'अहमि'त्यत्र द्वैरूप्यव्यपदेशाभावे द्वैरूप्यमुक्तम् ? इत्याशङ्क्यात्मधर्मप्रतीत्या तत्र प्रतीतिरित्युदाहरणेन साधयति—**अयो दहतीति दग्धत्वेति** ॥

**पञ्चपादिका**

**भिवीक्ष्य रूपकपरीक्षकवत् स्वानुभवमप्रच्छादयन्तो वदन्तु भवन्तः परीक्षकाः—किमुक्तलक्षणः ? न वा ? इति ॥**

**ननु—किमत्र वदितव्यम्, असम्भिन्नेदंरूप एवाहमित्यनुभवः । कथम् ?**

**पञ्चपादिकाविवरणम्**

आत्मनोऽन्तःकरणस्य चास्त्येव द्वैरूप्याऽवभासः, असाधारणक्रियोपरक्तमात्मादिद्रव्यमेव वस्त्वन्तरविशिष्टमवभासत इति भावः । दुःखि-प्रेमास्पदरूपेण परिणामितदागमापायद्रष्टृरूपेणाहङ्कारविषयादिष्वनुस्यूतचैतन्यरूपेणा'हमि'ति च व्यावृत्तरूपेण च सर्वलोकसाक्षिकं द्वैरूप्यमित्याह—**सर्वलोकसाक्षिक इति** ॥

ननु विषयसंविद आश्रय आत्मा, तत्र 'आहं जानामी'ति संविदाश्रयत्वेनावभासमानोऽहङ्कारः कथमिदमंशः स्यात् ? इति चोदयति—**ननु किमत्र वदितव्यमिति** ॥ ननु 'अयो दहती'त्यादावयःपिण्डादिवदकर्तृत्वेऽपि दर्शनक्रियाश्रयकोटिनिक्षिप्ततयाऽहङ्कारस्यावभासः सम्भवतीति, पूर्ववादिनं सिद्धान्ती चोदयति—**कथमिति** ॥ अयःपिण्डव्यतिरेकेण वह्नेर्दहनक्रियाश्रयत्वदर्शनवदहङ्कारव्यतिरेकेणात्मनो ज्ञानक्रियाऽदर्शनादहम एवात्मत्वमित्युत्तरेण ग्रन्थेन प्रतिपादयति ।

**तत्त्वदीपनम्**

गर्भशब्दप्रयोगः कस्माद् इत्याशङ्क्य, पृथक्त्वेन धर्मिद्वयप्रतीत्यभावादित्याह—**अयो दहतीति** ॥ **द्वैरूप्यावभासेति** ॥ अग्नेश्चतुष्कोणत्वाद्याकारता, अयसश्च दग्धृतेत्यर्थः । 'अहमुपलभे' इत्यत्रोपलब्धिविशिष्टोऽहंकारः प्रतीयते, न रूपान्तरम्, दृष्टान्ते तु दग्धृत्वस्य दहनधर्मतया प्रसिद्धत्वाद् रूपान्तरसंश्लेषनिश्चय इत्याशङ्क्याह—**असाधारणेति** । उपलब्धेः स्फुरणात्मिकाया जडधर्मत्वाभावादुपलम्भधर्माऽऽत्मा बुद्धिसंबद्धतया प्रथते, बुद्धिश्च परिणममाना चित्संवलिततयेत्यर्थः ॥ "सर्वलोकसाक्षिकः" इत्यत्रेदमनिदंरूपमनुभूयत इत्युक्तम्, तन्न संभवति; अनुनभवादेवेत्याशङ्क्यानुभवमभिनयति—**दुःखीति** ॥ निरतिशयप्रेमास्पदत्वेन सुखरूपत्वं प्रतीयते । तस्मिंश्च दुःखसम्बन्धानुपपत्तेर्दुख्यन्यदिति द्वैरूप्यम् । एतदभिप्रेत्योक्तम्—**अवहितचेतस्तयेति** ॥ विधान्तरेण द्वैरूप्यमाह—**परिणामीति** ॥ सुखाद्याकारेण परिणामिनी बुद्धिः, तदुत्पत्तिनाशसाक्षि चैतन्यम् । एकस्मिंश्च साक्षिसाक्ष्यभावानुपपत्तेरिति द्वैरूप्यम् । तदुक्तम्—**निपुणमभिवीक्ष्येति** (टीकायाम्) ॥ द्वैरूप्यान्तरमाह—**अहंकारेति** ॥ बुद्धि-तद्वृत्तिविषयसाक्षितयानुस्यूतं स्फुरणम् । अहंकारस्तु व्यावृत्तः । नच एकस्मिन्ननुवृत्तत्वं व्यावृत्तत्वं च सम्भवति । तदुक्तम्—**निपुणतरमिति** (टीकायाम्) ॥

असंभिन्नेदंरूप इति कथमुक्तम् ? अहंकारस्येदमंशताया उक्तत्वादित्याशङ्क्याऽऽत्मलक्षणलक्षितत्वादहंकारोऽनिदमंश इत्याह—**नन्विति** ॥ अनात्मत्वेऽपि संविदाश्रयतया स्फुरणं घटत इति चोदयति—**नन्विति** ॥ अयःपिण्डस्यादग्धृत्वेऽपि दहनसंसृष्टतया दग्धृत्वस्फुरणवदात्मसंसृष्टतया तथा स्फुरणं भवतीत्यर्थः । उत्तरग्रन्थस्य प्रश्नानुरूपत्वमाशङ्क्य तात्पर्यमाह—**अयःपिण्डेति** ॥

**ऋजुविवरणम्**

ननु 'अहमुपलभे' इति व्यधिकरणम्; 'अहमि'त्यत्र द्वैरूप्यावभासस्य वक्तव्यत्वात् । नच—'अयो दहती'तिवदुभयप्रतीतिर्निश्चीयते; तत्रोभयोः प्रत्यक्षत्वात्, अग्नेर्व्यपदेशाभावेऽपि प्रतीतिर्निश्चेतुं शक्यते, नचानेनैव तत्सिद्धिः; इह त्वहंव्यतिरेकेणात्मप्रतिपत्त्यभावादहम एवोपलब्धिसम्बन्धित्वेनावभासो भवेत्, ननु धर्मिद्वयप्रतीतिः । 'अयो दहती'त्यत्राप्येतावन्मात्रेण नोभयप्रतीतिः, किन्तु दग्धृत्वस्याग्निगतत्वेन प्रमाणसिद्धत्वाद् दहतीत्यत्राग्निस्वरूपप्रतीत्यभावेऽपि तद्धर्मिप्रतीत्याऽग्निस्वरूपमस्तीति कल्प्यते, ननु तत्प्रतीतिः; तद्वदिहाप्यात्मधर्मप्रतीत्या तत्स्वरूपास्तित्वनिश्चयो भवेत्, ननु पूर्वमेव तत्प्रतीतिरित्याशङ्क्याह—**असाधारणेति** ॥ कथं सर्वलोकसाक्षिकत्वम् ? नह्य'हमि'त्यत्र द्वैरूप्यग्राहकं लोके किंचित् प्रमाणमस्ति, तदभावे नोभयसिद्धिः, नास्त्यात्मनोऽन्या प्रतीतिरित्याशङ्क्यावतारयति—**दुःखिप्रेमास्पदेति** ॥ **तदागमापायेति** । तस्य परिणामस्य, आगमश्चापायश्चागमापायौ, तयोर्द्रष्टृरूपेणेति ॥

"ननु किमत्रे"ति चोद्यं नोदेति; उपलब्धुरिदमंशस्याहमश्च तत्प्रतीतेरुक्तत्वादित्याशङ्क्यावतारयति—**ननु विषयसंविद इति** ॥ "प्रमातृ-प्रमेये"ति परिहारग्रन्थोऽसंगतः; अहमो दर्शनाश्रयकोटिनिक्षिप्ततयाऽन्यथासिद्धेरपरिहृतत्वादित्याशङ्क्य ग्रन्थसमुदायस्याभिप्रायमाह—**अयःपिण्डव्यतिरेकेणेति** ॥

**पञ्चपादिका**

**प्रमातृ-प्रमेयप्रमितयस्तावदपरोक्षाः—**

**पञ्चपादिकाविवरणम्**

तत्र साङ्ख्यास्तु—अचिदात्मन्यन्तःकरणे चिदाकारप्रतिबिम्बावभासः, तथाविधबिम्बान्तरपुरस्सरः, प्रतिबिम्बत्वात्, मुखप्रतिबिम्बवदिति बिम्बभूतमात्मानम्—अनुमिमते। नैयायिकाश्च वैशेषिकाश्च—इच्छादयो गुणाः, पृथिव्यादिमहाभूतद्रव्यव्यतिरिक्तस्यैव विशेषगुणाः, तेष्वदृष्टत्वे सत्येकेन्द्रियग्राह्यतया विशेषगुणत्वात्, भूतचतुष्टयेऽदृष्टगन्धवत्; दिक्काल-मनसां विशेषगुणहीनत्वात्परिशेषादिच्छादिगुणवद् द्रव्यमन्यदेदात्मेति—अनुमिमते। तथा संवेदनेषु विषयाकारप्रतिबिम्बावभासः, तथाविधबिम्बसन्निधानपुरःसरः, अतस्मिंस्तदवभासत्वात्, दर्पण-स्फटिकादिगतमुखरक्तत्वादिवदिति नित्यानुमेया विषया—इति सौत्रान्तिकाः कल्पयन्ति।

तान्प्रत्याह—**प्रमातृ-प्रमेय-प्रमितयस्तावदपरोक्षा इति**॥ यदि साङ्ख्यादयः प्रत्यक्षसिद्धस्यैवात्मनोऽनुमानानि स्पष्टीकरणार्थानीति मन्येरन्, तदा न कश्चिद्विरोधः। यदि नित्यानुमेयमात्मानमिच्छेयुः, तदा विषयवदहमित्यपरोक्षावभास-

**तत्त्वदीपनम्**

तर्हि येन ग्रन्थेनाहमात्मत्वं प्रतिपाद्यते, तावताऽलम्, किं 'प्रमातृ-प्रमेये'त्यादिनेत्याशङ्क्य, आत्मनः संविदाश्रयत्वेनाऽपरोक्ष्यम्, विषयस्य कर्मतया, संविदः स्वप्रकाशतयेति विभागं वक्तुमापरोक्ष्ये विप्रतिपत्तिं तावदाह—**तत्र सांख्या इति**॥ तत्र वादिनां मध्ये सांख्यास्त्वात्मानमनुमिमत इत्यन्वयः। अनुमानमाह—**अचिदात्मनीति**॥ अन्तःकरणस्य चित्त्वान्न तत्र चित्प्रतिबिम्बभाव इति शङ्कां व्यावर्तयितुम्—**अचिदात्मेति** विशेषणम्; करणत्वाद् दीपवन्न चित्त्वमित्यर्थः। "बिम्बान्तरपुरस्सरः" इत्युक्ते यत्किंचिद्बिम्बपुरःसरत्वसाधनेनार्थान्तरत्वम्, तदर्थमाह—**तथाविधेति**। **तथाविधशब्दः** प्रतिबिम्बसदृशवाची। 'इच्छादयो गुणाः' इत्युक्ते यस्य कस्यचिद् गुणा इत्यर्थान्तरत्वम्, तदर्थमाह—**महाभूतेति**॥ **पृथिव्यादीति** स्वरूपनिर्देशः। **द्रव्यपदमनुवादमात्रम्**। गुणत्वादित्युक्ते गन्धादिषु व्यभिचारः, तदर्थम्—**तेष्वदृष्टत्वे सतीति विशेषणम्**॥ एतावत्युक्ते मनस्त्वादौ व्यभिचारः, तदर्थम्—**गुणत्वादिति**॥ **विशेषपदं** तु दिगादिगुणत्वव्यावृत्त्यर्थम्॥ विशेषणगुणत्वं साधयति—**एकेन्द्रियग्राह्यतयेति**। गुणत्वे सत्येकेन्द्रियग्राह्यो विशेषगुण इति द्रष्टव्यम्। इदमत्र विवक्षितम्—इच्छादि, पृथिव्याद्यष्टद्रव्यातिरिक्तद्रव्याश्रितम्, तदसमवेतत्वे सति विशेषगुणत्वात्, यन्नैवं न तदेवम्, यथा गन्धादि। नच हेत्वसिद्धिः; न तावत्स्पर्शवद्विशेषगुणत्वम्; अयावद्द्रव्यभावित्वात्, स्पर्शवद्विशेषगुणानां च यावद्द्रव्यभावित्वात्। नापि नभोगुणता; इच्छादेर्बाह्येन्द्रियाग्राह्यत्वात्। नच दिक्काल-मनोगुणत्वम्; तेषां विशेषगुणविधुरत्वात्। तस्मादाश्रयान्तरानिरूपणादाश्रयस्यान्यस्यावश्याश्रयणीयत्वात्तदाश्रयत्वेनात्मसिद्धिरिति॥ एवं प्रमातृपारोक्ष्यमभिधाय सौत्रान्तिकमतमनुसृत्य प्रमेयपारोक्ष्यमाह—**तथेति**॥ यथा प्रमातुः पारोक्ष्यम्, तथा विषया अनुमेया इति कल्पयन्तीत्यन्वयः। अनुमानमाह—**संवेदनेष्विति**॥ घटः स्फुरतीति घटनिष्ठतयोपलभ्यमानं स्फुरणम्, करणजन्यम्, कार्यत्वात्, संप्रतिपन्नवत्। तत्र च कारणान्तरानिरूपणादात्मसमवेतं ज्ञानं कारणतया सेत्स्यतीति नित्यानुमेयत्वं वार्तिककारीया मेनिर इति द्रष्टव्यम्॥

एवं मतभदमभिधाय तदुत्तरत्वेन टीकामवतारयति—**तान् प्रतीति**॥ किमात्मन आनुमानिकत्वमात्रमुच्यते? उत नित्यानुमेयत्वम्? इति विकल्प्याऽऽद्य प्रत्याह—**यदीति**॥ **स्पष्टीकरणार्थानि**—विप्रतिपत्तिनिराकरणेन संभावनाबुद्धिजनकानि। द्वितीयमनूद्य दूषयति—**यदि नित्येति**॥ "बिम्बसन्निधानपुरःसरः" इत्यत्र घटसंवेदनेन तत्स्फुरणमङ्गीकृत्य, किम्—आकारार्पको विषयोऽस्तीत्येतावत्साध्यते? आहो घटाकारसंवेदनेन विषयस्यानवभास इत्याश्रित्य? तत्राऽऽद्ये सिद्धसाध्यत्वम्। द्वितीये किमनुमानज्ञाने व्याप्तिव्यवधानं विना प्रतिज्ञातार्थः प्रथते? उत नेति विकल्प्याऽऽद्यं दूषयति—

**ऋजुविवरणम्**

ननु किमर्थं प्रमात्रादीनामपरोक्षत्वसाधनं कृतम्? विप्रतिपत्त्यभावादित्याशङ्क्याह—**तत्र सांख्या इति**॥ "विशेषणत्वादि"तिहेतौ गन्धमादायानैकान्तिकत्वम्, तदर्थम्—"**तेष्वदृष्टत्वे सती**"ति विशेषणम्। विशेषत्वं च साधयितुम् "**एकेन्द्रियग्राह्यतये**"ति। "गुणत्वादि"त्येवोक्ते हेतोरनैकान्तिकत्वम्, "गन्धादौ तेष्वदृष्टत्वादि"त्येवोक्ते मनस्त्वेनानैकान्तिकम्। "तेष्वदृष्टत्वे सति गुणत्वादि"ति वा हेतौ दिक्कालादिगुणत्वं स्यात्, अभिमतसाध्यासिद्धिश्च, तदर्थम्—"**विशेषगुणत्वादि**"ति। "तदवभासत्वादि"ति हेतौ संवेदने बिम्बे चानैकान्तिकत्वम्, तद्व्यावृत्त्यर्थम्—"**अतस्मिन्निति**"।

## पञ्चपादिका

**प्रमेयं कर्मत्वेनापरोक्षम्, प्रमातृ-प्रमिती पुनरपरोक्षे एव केवलम्, न कर्मतया;**

## पञ्चपादिकाविवरणम्

विरोधः। सौत्रान्तिकस्यापि यदि विषयानुमानज्ञाने साक्षाद्विषया एवावभासेरन्, प्रत्यक्षेऽप्यवभासन्ताम्, कस्तत्रापराधः, इत्यनुमानज्ञाने विषयस्यैवावभासनादनैकान्तो हेतुः। न चेदनुमानज्ञानेऽपि बिम्बभूतविषयावभासः प्रतिज्ञातार्थस्य बिम्बपुरस्सरत्वस्याप्रतिभासनाद् अनुमानानुदय एव स्यात्। अपरोक्षव्यवहारयोग्यविषयावभासविरुद्धं चानुमानमिति ॥

अत्र विज्ञानवादिनस्तु—विज्ञानाभेदनिमित्त एव विषयस्यापरोक्षावभासः—इत्याहुः। तान्निराकरोति—**प्रमेयं कर्मत्वेनापरोक्षमिति,** इदं पश्यामीत्यनुभवात्। नच विज्ञानाभेदादेवापरोक्ष्यमवभासते; बहिष्ठस्यापि रजतादेरापरोक्ष्यात्। तदपि विज्ञानमिति चेत्? न; रजतवद् बाधाभावप्रसङ्गात्। तस्मादव्यवधानेन संविदुपाधिताऽपरोक्षता विषयस्येति ॥

तत्र—"आत्मा आत्ममनःसंयोगजन्यप्रत्यक्षेणापरोक्षः" इति वार्तिककार-न्याय-वैशेषिकानुसारिणः कल्पयन्ति। प्रमितिस्त्वात्मनि संयुक्तसमवायनिमित्तज्ञानान्तरादपरोक्षेति न्याय-वैशेषिकौ। प्रमेयगता प्रमितिः संयुक्ततादात्म्याज्ज्ञानान्तरेणापरोक्षेति वार्तिककारीयाः, तान्प्रत्याह—**प्रमातृप्रमिती पुनरपरोक्षे एव केवलमिति** ॥ न तावदात्मविषयं प्रत्यक्षं ज्ञानान्तरं

## तत्त्वदीपनम्

**सौत्रान्तिकस्यापीति** ॥ फलितमाह—**इतीति** ॥ **अनेकान्त इति**—अनियत इत्यर्थः। यद् यदाकारं ज्ञानम्, तत् तद्विषयं न भवतीति न नियमः; अनुमाने व्यभिचारादित्यर्थः। द्वितीयं दूषयति—**न चेदिति** ॥ **अनुमानानुदय इति**—प्रयोजनहीनमनुमानमिति यावत्। घटाकारज्ञानस्य घटविषयत्वाभावे प्रत्यक्षविरोधोऽपीत्याह—**अपरोक्षेति**। अपरोक्षमिति व्यवहारयोग्यो यो विषयावभासः, तेन विरुद्धत्वमिति यावत्। ज्ञानपारोक्ष्याऽनुमानेऽप्यनुभवविरोध इति द्रष्टव्यम् ॥

एवं प्रमेयादीनां पारोक्ष्यं निराकृत्य, प्रमेयस्य कर्मतया प्रत्यक्षत्वम्, संविदः स्वप्रकाशत्वेन, आत्मनस्तदाश्रयत्वेनेति वक्तुं प्रथमं प्रमेयस्य संविदभिन्नतयाऽपरोक्षत्वमनूद्य दूषयति—**अत्रेति** ॥ यदपरोक्षम्, तद्विज्ञानाभिन्नम्, यथा संवित्; अपरोक्षश्च घटादिरिति चोद्यार्थः। कर्मतयाऽऽपरोक्ष्ये हेतुमाह—**इदमिति** ॥ द्वितीयया दर्शनक्रियाकर्मत्वेन विषयस्फुरणात्तद्विरुद्धमभेदानुमानमित्यर्थः। किंच रजतादेर्बहिष्ट्वं ज्ञानाद्भिन्नम्? उताभिन्नम्? आद्ये तत्र व्यभिचार इत्याह—**नचेति** ॥ द्वितीयमनुवदति—**तदपीति** ॥ तस्य बाध्यत्वान्न ज्ञानाभेदो युक्त इत्याह—**न रजतवदिति** ॥ कथं तर्हि विषयापरोक्ष्यमिति? अत्राह—**तस्मादिति** ॥ **संविदुपाधित्वम्** संविद्विशेषणत्वम्। एतावत्युक्ते चाक्षुषज्ञानमिति ज्ञानविशेषणचक्षुषोऽप्यापरोक्ष्यं स्यात्, तदर्थमाह—**अव्यवधानेनेति**। चक्षुषोत्पन्नं चाक्षुषमित्युत्पत्तिव्यवधानेन चक्षुषो ज्ञानविशेषणत्वाद् व्यावृत्तिरित्यर्थः। न चानुमेयस्यापि संविद्विशेषणत्वेनाऽऽपरोक्ष्यप्रसङ्गः; संविच्छब्देन इन्द्रियार्थसंप्रयोगजज्ञानस्य विवक्षितत्वादित्यर्थः ॥

विप्रतिपत्त्यन्तरमुत्थापयति—**तत्रेति** ॥ मनसा संयुक्त आत्मा, तस्मिन् समवायः, संयुक्तसमवायः, स निमित्तं यस्य तत्संयुक्तसमवायनिमित्तम्, तच्च ज्ञानं चेति तथोक्तम्; तस्मादित्यर्थः। पक्षान्तरमाह—**प्रमेयेति**। चक्षुषा संयुक्तार्थेन तादात्म्यसंबन्धात् प्रमितिविषयं ज्ञानान्तरमुपजायते, तेनाऽऽपरोक्ष्यं प्रमितेरित्यर्थः। तदुत्तरत्वेन टीकामवतारयति—**तान् प्रतीति** ॥ प्रमातृ-प्रमिती न कर्मतयाऽपरोक्षे, प्रमाणाभावादिति संबन्धः। कर्मत्वाभावे तयोः कथमापरोक्ष्यम्? इति चेत्, तत्र वक्तव्यम्—किं कर्मत्वाभावेन परोक्षत्वं सिषाधयिषितम्? उताऽऽपरोक्ष्येण कर्मत्वम्? इति। तत्राद्यमनुभवविरोधेन दूषयति—**एवेति** ॥ नापि द्वितीयः; अननुभवत्वानात्मत्वप्रसङ्गादित्याह—**केवलमिति** ॥ कर्मतया आत्मन आपरोक्ष्याभावे हेतुमाह—**न तावदिति** ॥ प्रमाणाभावोऽसिद्ध इति शङ्कते—**सति मनसीति** ॥ व्यापृते मनस्यात्मदृष्टेरितरत्रादृष्टेर्मानसत्वमात्मन

## ऋजुविवरणम्

**"अनुमानानुदयः"** इत्यनेन साध्याप्रतीतौ पक्षधर्मत्वादप्रतीतिरित्युक्तम्। ननु अनुमानज्ञाने बिम्बभूतविषयावभासोऽस्त्येव, नचानैकान्तिकता; तस्याप्यन्यापेक्षया प्रतिबिम्बत्वेन बिम्बपुरस्सरत्वादित्याशङ्क्य दूषणान्तरमाह—**अपरोक्षव्यवहारेति** ॥

**रजतवदिति**। रजतमिदं न भवति, किन्त्वहमेवेति बहिष्ट्वबाधं वदन्ति; स न स्यादिति भावः।

कथं विषयानुभवेनान्यथासिद्धत्वम्? न ह्यन्यविषयज्ञानेनान्यस्य सिद्धिर्भवति; अत आत्मविषयज्ञानेनैवात्मसिद्धिः,

## पञ्चपादिकाविवरणम्

मनोजन्यमिति प्रमाणमस्ति । सति मनस्यात्मदर्शनादसति सुषुप्ते चादर्शनादन्वय-व्यतिरेकौ प्रमाणमिति चेत् ? न; विषयानुभवेनैवान्यथासिद्धत्वात् । विषयानुभवसम्बन्धादेवविषयवदात्मसिद्धावात्मनि ज्ञानान्तरं परिकल्प्य मनसोऽन्वय-व्यतिरेककल्पनाऽयोगात् । तस्माद् विषयत्वमन्तरेणात्माऽपरोक्ष एव ॥

न च संयुक्तसमवायादात्मनि विषये वाऽनुभवस्य ज्ञानान्तरविषयतयाऽपरोक्षता; प्रत्यक्षस्य वर्तमानविषयापेक्षत्वेन युगपत् फलद्वयावस्थानप्रसङ्गात्, संयुक्तसम्बन्धादनुभवावभासे तद्गतपरिमाण-रसादीनां तेनैव ज्ञानेनापरोक्षताप्रसङ्गात् । अनुभवस्य च स्वसत्तायां प्रकाशव्यतिरेकादर्शनाच्च ज्ञानान्तरागम्यतासिद्धिः । नचात्मव्यापाराद् विषयानुभवजन्म सम्भवति; सर्वगतस्य कुठारादिवत् परिस्पन्दाभावात्, परिणामफलस्य च घटादिवत् क्रियैकाश्रयत्वात्, संविदाश्रयत्वे च विषयस्यैव चेतनत्व-

## तत्त्वदीपनम्

इत्यर्थः । आत्मव्यवहारहेतुविषयानुभवविषयतयाऽन्यथासिद्धिमाह—**न; विषयेति** ॥ आत्माऽनुभवविषयत्वमेव तयोः किं न स्यात् ? इत्याह—**विषयेति** ॥ विषयज्ञानाश्रयत्वेनाऽऽत्मनि व्यवहारसंभवे ज्ञानान्तरात्तत्सिद्धिकल्पनायां गौरवं स्यादित्यर्थः ॥

कर्मतया प्रमितिरपरोक्षेति यत्तूक्तम्, तन्निरस्यति—**नचेति** । आत्मसमवेतानुभवस्य संयुक्तसमवायादपरोक्षता, विषयसमवेत नुभवस्य संयुक्ततादात्म्यादिति नच वक्तव्यमित्यन्वयः । ग्राह्यं ज्ञानं येन मनःसंयोगेनाजनि, तेनैव तद्विज्ञानान्तरं जायते ? उत संयोगान्तरेण ? नाद्यः; असमवायिकारणभेदस्य ज्ञानभेद-तत्क्रमप्रयोजकत्वात् । द्वितीयेऽपि किं ग्राहकज्ञानसमये ग्राह्यज्ञानमस्ति ? उत न ? न चेत्, तत्राह—**प्रत्यक्षस्येति** । प्रत्यक्षस्य वर्तमानग्राहित्वनियमात् पूर्वज्ञानस्य च तदा नष्टत्वान्न प्रत्यक्षत्वमित्यर्थः ॥ आद्ये दूषणमाह—**युगपदिति** ॥ उत्तरज्ञानसमये पूर्वज्ञानास्तित्वाङ्गीकारे फलद्वयस्य युगपदवस्थानमापतितम्, नच तत् संभवति । तथाहि—पटज्ञानसमये मनसि क्रिया, ततो विभागः, ततः पूर्वसंयोगविनाशः, तत उत्तरसंयोगाद् ज्ञानजनिरित्यनेकक्षणविलम्बेनोत्पद्यमानज्ञानान्तरसमसमयमाशुतरविनाशिनः पूर्वज्ञानस्यावस्थानमसमञ्जसम् । नच—विनश्यदविनश्यतोस्सहावस्थानमिष्यत इति—शङ्क्यम्; पूर्वोत्तरवेदनयोर्निवर्त्य-निवर्तकभावेन विरोधाद् भास्यभासकताऽनुपपत्तेरित्यर्थः ॥ तादात्म्यसंबन्धाद् विषयगतप्राकट्यं प्रत्यक्षमित्यत्र दूषणान्तरमाह—**संयुक्तेति ॥ संयुक्तसंबन्धात्** संयुक्ततादात्म्यसंबन्धादित्यर्थः । अथवा संयुक्तसमवायसंबन्धात् संयुक्ततादात्म्यसंबन्धाद्वाऽनुभवावभास आत्मगतस्य परिमाणस्य विषयगतरसादेश्च तेन ज्ञानेनापरोक्षत्वं स्यादित्यर्थः । परिमाणादीनामयोग्यत्वादनुभवग्राहकेणाग्रहणमित्याशङ्क्याऽयोग्यत्वमत्रापि तुल्यमित्याह—**अनुभवस्येति** ॥ अनुभवः, न ज्ञानान्तरगम्यः, स्वसत्तायां प्रकाशव्यतिरेकविधुरत्वात्, न यदेवम्, न तदेवम्, यथा घट इत्यर्थः । आद्येन चकारेण हेत्वसिद्धिमुद्धरति । स्वसत्तायां प्रकाशव्यतिरेकित्वे जिज्ञासायां सन्देहादि स्यादित्यर्थः । द्वितीयेन चकारेण सुखादिषु साधनाव्यावृत्तिशङ्कां निरस्यति । सुखादीनामपि ज्ञानात्मकत्वेन पक्षान्तर्भावादित्यर्थः ॥ विषयनिष्ठं प्राकट्यं स्वप्रकाशमिति मते तस्य जन्मैव दुर्निरूपमित्याह—**न चात्मेति** ॥ किं परिस्पन्दलक्षणो व्यापारः ? उत परिणामलक्षणः ? इति विकल्प्याऽऽद्यं प्रत्याह—**सर्वगतस्येति** ॥ द्वितीयं दूषयति—**परिणामेति** ॥ मृत्परिणतिफलस्य घटस्य मृन्निष्ठत्ववदनुभवस्यापि परिणामिसमानाधिकरणत्वमाश्रयणीयमित्यर्थः । अकर्मकपरिणामफलस्य परिणामिसमानाधिकरणत्वेऽपि सकर्मकक्रियाफलस्य विषयनिष्ठत्वम्; क्रियायाः कर्मण्यतिशयजननस्वाभाव्यादित्याशङ्क्य, किं संविदाश्रयत्वे चेतनत्वप्रयोजकम् ? उत तत्तज्जननव्यापारवत्त्वम् ? आद्ये विषयस्यैव चेतनतोत्पत्तिरित्याह—

## ऋजुविवरणम्

तद्विषयौ चान्वय-व्यतिरेकावित्याशङ्क्याह—**विषयानुभवसम्बन्धादिति** ॥

"नच संयुक्तसमवायादि"त्यत्र विषयगतेऽनुभवे संयुक्ततादात्म्यमिति ज्ञेयम्; अनुवादे तथोक्तत्वात् । ननु स्थित्यवस्थस्य फलद्वयस्य विरोधः; अत्र तु विषयानुभवस्य विनश्यदवस्थत्वात् तद्ग्राहकस्य स्थित्यवस्थत्वेनावभासकत्वं संभवतीत्याशङ्क्य दूषणान्तरमाह—**संयुक्तसम्बन्धादिति** । आदिशब्देनात्मगतगुणादीनां ग्रहणम् । ननु कार्यात्कारणकल्पना, ज्ञाने च प्रतीतिलक्षणकार्यदर्शनात्संयुक्तसम्बन्धादवभासः कल्प्यते, रसादौ तु कार्यादर्शनादस्य सम्बन्धस्यासामर्थ्यं निश्चीयत इत्याशङ्क्य प्रतीतेरन्यथासिद्धत्वमाह—**अनुभवस्य चेति** ॥ प्राकट्यं विषयगतं स्वप्रकाशमित्यपि वदन्ति, तन्मते विषयानुभवजन्मैव न संभवतीति दर्शयति—**नचात्मव्यापारादिति** ॥ ननु फलस्य क्रियैकाश्रयत्वमकर्मकव्यापारजन्यत्वे, सकर्मके तु कर्मण्येव फलम्;

## पञ्चपादिका

**प्रमितिरनुभवः स्वयंप्रकाशः प्रमाणफलम्, तद्बलेनेतरत् प्रकाशते,**

## पञ्चपादिकाविवरणम्

प्रसङ्गात्। नच तज्जननव्यापारवत्त्वादात्मनश्चेतनता; मनआदीनामपि प्रसङ्गात्। विषयाश्रयत्वे चानुभवस्य 'मयेदं विदितमि'ति सम्बन्धावभासः स्वात्मनि ज्ञानक्रियाऽनुमानं च न स्यात्; अनुभवस्याऽसम्बन्धाभावात्। तस्माद् द्वयोर्न कर्मतयाऽपरोक्षता ॥

ननु, उभयोः स्वयम्प्रकाशत्वकल्पना न युक्ता; अन्यतरस्य स्वयम्प्रकाशत्व आत्मैव स्वयंप्रकाश इति चेत् ? नेत्याह—**प्रमितिरनुभव इति** ॥ अथवा, हानोपादानोपेक्षाः प्रमाणफलमिति केचित्; तत्राह—**प्रमितिरनुभव इति**। नहि हानादीनामितरेतरव्यभिचारिणां मानफलता युक्ताऽव्यभिचारिण्यनुभवे सतीत्यर्थः ॥

ननु संवेदनमेवार्थसारूप्येण प्रमाणम्, प्रमीयतेऽनेनेति व्युत्पत्तेः, अर्थोपलब्ध्यात्मना तदेव प्रमाणफलमिति सुगतमतानु-

## तत्त्वदीपनम्

**संविदाश्रयत्व इति** ॥ द्वितीयेऽपि किं संविज्जननव्यापारवत्त्वमात्रं विवक्षितम् ? उत संविज्जनकज्ञानव्यापारवत्त्वम् ? इति विकल्प्याऽऽद्यं दूषयति—**नचेति** ॥ द्वितीयं प्रत्याह—**विषयेति** ॥ 'मया गतो ग्रामः' इत्यत्र स्वगतगमिक्रियाकर्मत्वं ग्रामस्योपलब्धम्, तद्वद् 'मयेदं विदितमि'त्यत्रापि स्वगतविदिक्रियाकर्मत्वं विषयस्यानुभूयते, तन्न स्याद्विषयनिष्ठत्व इत्यर्थः। आत्मसमवेतज्ञानक्रियाजन्यानुभवव्याप्तत्वाद् 'घटो मया विदितः' इत्यनुभवो विरुद्ध इत्याशङ्क्य, परिणामक्रिया-तत्फलयोरैकाधिकरण्यनियमान्न ज्ञानानुमितिरित्याह—**स्वात्मनीति** ॥ उपसंहरति—**तस्मादिति** ॥

संविदात्मनोः कर्मत्वाभावे किमुभयोरपि स्वप्रकाशत्वेनापरोक्षत्वम् ? उतान्यतरस्य ? इति विकल्प्याऽऽद्यं दूषयति—**नन्विति**। गौरवप्रसङ्गादित्यर्थः। द्वितीयेऽपि किमात्मनः स्वप्रकाशत्वम् ? उत संविद इति ? आद्यमङ्गीकरोति—**अन्यतरस्येति** ॥ द्वितीयस्त्वनुपपन्न इत्याह—**एवेति** ॥ आत्मस्वप्रकाशमात्रेणेतरत्र व्यवहारसंभवे तत्समवेतानन्तसंवित्स्वप्रकाशत्वकल्पने गौरवमापतेदिति भावः। अनुभवस्य जडत्वेऽननुभवत्वप्रसङ्गान्मैवमित्याह—**नेत्याहेति**। प्रमितिः, स्वप्रकाशा, अनुभवत्वात्, व्यतिरेकेण घटवदित्यर्थः। अस्वप्रकाशत्वेऽप्यनुभवत्वं किं न स्यात् ? इत्याशङ्क्य, फलत्वभङ्गो बाधक इत्याशयेनाह—**प्रमाणफलमिति** ॥ नच कल्पनागौरवम्; प्रामाणिकगौरवस्यादोषत्वादित्यर्थः। आत्मा, स्वप्रकाशः, आत्मत्वात्, व्यतिरेकेण घटवत्, इत्यनुमानात् सिद्धं तत्स्वप्रकाशत्वमपीत्याशङ्क्याह—**तद्बलेनेति**। आत्मनोऽस्वप्रकाशत्वेऽपि नानात्मत्वम्; संविदाश्रयत्वेनाऽऽत्मत्वोपपत्तेः, इतरस्य तु वेद्यत्वे घटादिवदननुभवत्वं दुर्वारमित्यर्थः ॥ संविदः फलत्वमसिद्धमित्याशङ्क्य, तत्परिहारत्वेनाऽऽवृत्त्या प्रमितिरनुभव इत्येतद् व्याकरोति—**अथवेति** ॥ इत्थं वा योजनेति शेषः। कथमसिद्धिरिति शङ्कायामाह—**हानेति**। चतुष्टयसंनिकर्षानन्तरं हानाद्युपलम्भात्तस्य फलत्वमित्यर्थः। प्रमितिः प्रमाणफलम्, न हानादिः। तत्र हेतुमाह—**अनुभवेति**। चतुष्टयसंनिकर्षेऽप्यर्थानुभवाभावे तद्विषयहानाद्ययोगादनुभवः फलमित्यर्थः। हानाद्यतिरिक्तफलकल्पनायामनवस्थेत्याशङ्क्याह—**स्वयंप्रकाश इति** ॥ संनिकर्षे सत्यर्थानुभवाभावेन हानाद्यभावादर्शनादनुभवस्याप्रयोजकत्वमित्याशङ्क्याह—**न हीति** ॥

संवेदनस्यैव प्रमाणत्वात्प्रमाणफलं तदित्युक्तमयुक्तमिति चोदयति—**नन्विति** ॥ कथं तर्हि प्रमाण-फलविभागः ? इत्याशङ्क्याह—**संवेदनमिति**। अर्थाकारविशिष्टतया संवेदनस्य प्रमाणत्वम्, तत्स्फुरणरूपेण फलत्वमित्यर्थः। लोके करण-

## ऋजुविवरणम्

कर्मविकारहेतुत्वात् क्रियाया इत्याशङ्क्याह—**संविदाश्रयत्वे चेति** ॥ कथं मनआदीनां चेतनत्वम् ? अनुभवजननव्यापारे कर्तृत्वप्रयुक्तत्वाच्चेतनत्वस्येत्याशङ्क्य दूषणान्तरमाह—**विषयाश्रयत्वे चेति** ॥ "स्वात्मनि ज्ञानक्रियानुमानमि"त्यनेनात्मनोऽपि चेतनत्वं न संभवतीत्युक्तम्। ननु 'मयेदं विदितमि'ति प्रतीत्या सम्बन्धो निश्चीयते, स च क्रियापूर्वक इति तदनुमानमित्याशङ्क्याह—**मयेदं विदितमिति**। सम्बन्धितया ज्ञातं फलं सम्बन्धिकर्तृव्यापारानुमापकम्, अत्र तु सम्बन्धाभावात्तदवभासाभावाद् न कर्तृविशेषगतक्रियानुमानमिति भावः।

## पञ्चपादिका

**प्रमाणं तु प्रमातृव्यापारः फललिङ्गो नित्यानुमेयः। तत्र 'अहमिदं जानामी'ति प्रमातुर्ज्ञानव्यापारः कर्मविषयः, नात्मविषयः, आत्मा तु विषयानुभवादेव निमित्तात् 'अहमि'ति फले विषये चानुसन्धीयते ॥**

**ननु नायं विषयानुभवनिमित्तोऽहमुल्लेखः, किं त्वन्य एवात्ममात्रविषयः 'अहमि'ति प्रत्ययः। तस्मिंश्च द्रव्यरूपत्वेनात्मनः प्रमेयत्वम्, ज्ञातृत्वेन प्रमातृत्वमिति, प्रमातृ-प्रमेयनिर्भासरूपत्वादहंप्रत्ययस्य ग्राह्य-ग्राहकरूप आत्मा। तस्मादि-**

## पञ्चपादिकाविवरणम्

सारिणः, तद् व्यावर्तयति—**प्रमाणं त्विति** ॥ प्रमाणं तु प्रमातृव्यापारश्चतुष्टयसन्निकर्ष एवेति प्राभाकराः। ननु 'अहमिदं जानामी'त्यात्मानात्मविषयावनुभवौ भेदेन प्रत्यक्षसिद्धाविति ? नेत्याह—**तत्राहमिदं जानामीति** ॥

ननु यदवभासते, तज्ज्ञानकर्मतयैवावभासत इति विषयेषु नियमात्, आत्माऽप्यवभासते चेत्कर्मतयैव, नाश्रयमात्रतयेति चोदयति—**ननु नायं विषयानुभवनिमित्त इति** ॥ ननु प्रत्यक्षज्ञानस्य विषयजन्यत्वात्कारकताऽपि विषयस्य वक्तव्या, तत्र कथमेकस्यां क्रियायामेकस्यैव कर्तृत्वेन कर्मत्वेन च विरुद्धरूपद्वयान्वयः ? कर्तुश्च गुणभावात्, कर्मणश्च प्राधान्यात्, एकस्य रूपद्वये वैरूप्यप्रसङ्गाच्चेति ? तत्राह—**तस्मिंश्च द्रव्यरूपत्वेनेति** ॥ तत्र सामान्यांशस्यात्मानात्मसाधारण्यादात्मत्वायोगाद् विशेषांशस्य

## तत्त्वदीपनम्

फलभावस्यात्यन्तभेदव्याप्तत्वादत्रापि स आश्रयणीयः; इतरथा करण-फलभावो न स्यात्. ततश्च संविदतिरिक्तं करणमास्थेयमित्यभिप्रेत्याह—**तद् व्यावर्तयतीति** ॥ प्रमातृव्यापारः किं परिस्पन्दः ? उत परिणामः ? उभयथाऽप्यनुपपत्तिः, सर्वगतत्वान्निरवयवत्वाच्चेत्याशङ्क्याह—**प्रमातृव्यापार इति** ॥ अर्थेन्द्रियात्ममनःसंयोगश्चतुष्टयसन्निकर्ष इत्यर्थः। चतुष्टयसन्निकर्षः किं प्रत्यक्षः ? उतानुमेयः ? नाद्यः; अननुभवादेव। नेतरः; धूमाग्न्योः क्वचित्प्रत्यक्षतायां व्याप्यदर्शनेन व्यापकज्ञानमुदेति, नच तथाऽत्र सन्निकर्षस्य प्रत्यक्षतेति वैषम्यादित्याशङ्कायामुक्तम्—**फललिङ्गो नित्यानुमेय इति**। रूपाद्युपलब्धिकरणत्वेन नानेन्द्रियकल्पनावदनुभवकरणत्वेन नित्यपरोक्षसंनिकर्षकल्पनं घटत इत्यर्थः ॥ प्रमातृ-प्रमित्योः कर्मतयाऽपरोक्षत्वाभावेऽनुभवविरोधः स्यादिति चोदयति—**नन्विति**। 'अहमि'त्यात्मविषयोऽनुभवः, 'इदमि'त्यनात्मविषयः, 'जानामी'ति ज्ञानानुभव इति विभागः। अनात्मकर्मकानुभवाश्रयत्वेनात्मव्यवहारसंभवे पृथग् ज्ञानकल्पना न युक्तेत्याह—**नेत्याहेति** ॥

प्रतीचः कर्मत्वे मानाभावेन दूषिते कथं चोद्यसमुत्थितिः ? इत्याशङ्क्य मानविरहोऽसिद्ध इत्याह—**नन्विति**। आत्मा, संवित्कर्मतया भासते, संविदात्मत्वे सत्यपरोक्षत्वात्, घटवदित्यर्थः। संवेदनाश्रयत्वमुपाधिरित्याशङ्क्याह—**नाश्रयमात्रतयेति**। विषयव्याप्तिमते संविदाश्रयत्वस्याकर्मत्वाव्याप्तेर्न व्यतिरेकव्याप्तिः। समव्याप्तौ तु तव संविदि व्याप्त्यभाव इत्यर्थः ॥ कर्तृ-कर्मविरोधनिरासार्थमभेदमभ्यधात्, तन्न संभवति; कर्मकारकत्वाभावेऽप्यनुमेयस्य विषयतादृष्टेर्न कर्तृ-कर्मविरोध इत्याशङ्क्याह—**नन्विति** ॥ अनुमितेः कर्मकारकजन्यत्वाभावाद्विषयस्य कर्मत्वं माऽस्तु, प्रत्यक्षस्य तु कर्मजन्यत्वात्तद्विषयस्य कर्मकारकत्वं वक्तव्यमित्यर्थः। ततः किमिति ? तत्राह—**तत्र कथमिति**। कर्तृ-कर्मत्वयोश्चैत्र-ग्रामनिष्ठत्वेन दृष्टेर्नैकत्र तयोः संभव इत्यर्थः। विधान्तरेण वैरूप्यमाह—**कर्तुश्चेति** ॥ अहंप्रत्ययस्यापि भिन्नकर्म-कर्तृत्वे घटादिप्रत्ययतुल्यत्वमित्याशङ्क्य, द्रव्यबोधस्वरूपस्याऽऽत्मनो द्रव्यात्मकबोधाकारप्राधान्येन कर्तृत्वम्, बोधात्मकद्रव्याकारप्राधान्येन कर्मत्वम्, अतो नोक्तदोष इत्यभिप्रायेणोक्तम्—**प्रमातृ-प्रमेयनिर्भासरूपत्वादिति** ॥ अंशद्वयस्योक्तत्वादनंशत्वासिद्धिमाशङ्क्याह—**तत्र सामान्येति** ॥ **सामान्यां-**

## ऋजुविवरणम्

ननु प्रमातृव्यापारः परिस्पन्दपरिणामात्मको निरस्तः, कथं टीकाकृता—"प्रमाणं तु प्रमातृव्यापारः" इत्युक्तम् ? इत्याशङ्क्य व्याचष्टे—**प्रमातृव्यापार इति** ॥ आत्मनो ज्ञानविषयत्वं नास्तीति पूर्वमुक्तम्, तत्र 'अहमिदमि'त्यनेनापि तदेवोच्यत इति पौनरुक्त्यमित्याशङ्क्य, विषयाधिक्यं दर्शयति—**ननु अहमिदमिति** ॥

ननु पूर्वमात्मविषयज्ञानान्तरसद्भावे प्रमाणं नास्तीत्युक्तम्, विषयानुभवेऽपि न कर्मतयाऽवभास इत्युक्तम्, तत् कथं चोद्यमुदियात् ? इत्याशङ्क्यावतारयति—**ननु यदवभासत इति** ॥ "अनंशत्वादि"ति कथमुक्तम् ? सामान्यविशेषरूपांशद्वयभावादित्याशङ्क्य तात्पर्यमाह—**सामान्यांशस्येति** ॥ 'अपरिणामित्वादि'ति हेतुरसंगतः; न ह्यनेन पूर्वचोद्यनिराकरणं क्रियते; असिद्धश्चेत्याशङ्क्य हेतुसाधनपूर्वकं तात्पर्यमाह—**निरवयवस्येति** ॥ "प्रमेयस्ये"त्यनेन प्रमेयस्यानात्मत्वप्रतिपादनम-

## पञ्चपादिका

**दमनिदंरूपः, प्रमेयांशस्येदंरूपत्वात्, अनिदंरूपत्वात् प्रमात्रंशस्य। नचैतद्युक्तम्; अनंशत्वात्, अपरिणामित्वाच्चात्मनः, प्रमेयस्य चेदंरूपतया पराग्रूपत्वादनात्मत्वात्। तस्मान्नीलादिज्ञानफलमनुभवः स्वयंप्रकाशमानो ग्राह्यमिदंतया, ग्राहकं चानिन्दतयाऽवभासयति, ग्रहणं चानुमापयतीति युक्तम्। अतो नेदमंशोऽहंकारो युज्यते।**

**उच्यते; तत्रेदं भवान् प्रष्टव्यः—किमात्मा चैतन्यप्रकाशोऽनुभवो जडप्रकाशः? उत सोऽपि चैतन्यप्रकाशः? अथवा स एव चैतन्यप्रकाशः; आत्मा जडस्वरूपः? इति। तत्र न तावत्प्रथमः कल्पः; जडस्वरूपे प्रमाणफले विश्वस्यानवभासप्रसङ्गात्।**

## पञ्चपादिकाविवरणम्

निरंशत्वान्न कर्तृ-कर्मव्यवस्थेति परिहरति—**नचैतद्युक्तमिति**॥ निरवयवस्य युगपत्कार्यद्वयपरिणामायोगाच्चेत्याह—**अपरिणामित्वादिति**॥ किञ्च ग्राहकरूपस्यापि विषयतया सिद्धिरस्ति वा? नवा? न चेत्, स्वयंप्रकाशत्व-संविदाश्रयत्वसिद्धयोरनभ्युपगमादसिद्धिप्रसङ्गः। कर्मतया सिद्धिश्चेत्, तत्राह—**प्रमेयस्य चेति**॥ तस्मात्संविद्बलादेव त्रितयसिद्धौ संविदाश्रयपक्षपातितयाऽहमः सिद्धेर्नेदमंशोऽहङ्कार इत्युपसंहरति—**तस्मान्नीलादिज्ञानफलमिति**॥

अहङ्कारस्यात्मव्यतिरिक्तत्वं साधयितुमात्मनः स्वयंप्रकाशत्वसाधनाय विकल्पयति—**तत्रेदं भवानिति**॥ **उत सोऽपि** अनुभवोऽपीत्यर्थः। तत्रात्मा चित्स्वभावः, अनुभवो जडप्रकाश इति पक्षो नोपपद्यत इत्याह—**तत्र न तावदिति**॥

## तत्त्वदीपनम्

**शस्य** द्रव्यांशस्येत्यर्थः। **विशेषांशस्य** बोधांशस्येत्यर्थः॥ अंशभेदेन कर्तृ-कर्मव्यवस्थाऽभावे 'अपरिणामित्वादि'त्यनेन हेत्वन्तरमुपन्यस्यत इति प्रतिभाति, तदनुपपन्नम्; अपरिणामित्वस्य तदसाधकत्वात्, तदसिद्धेश्चेत्याशङ्क्याह—**निरवयवयेति**॥ आत्माऽनात्मविषयज्ञानद्वयपरिणामस्य निरवयवे युगपदसंभवादित्यर्थः। "प्रमेयस्य चे"त्यत्र घटादेरनात्मत्वमुच्यते? उत द्रव्यांशस्य? आद्ये प्रकृतानुपयोगिता, द्वितीये तु पौनरुक्त्यमित्याशङ्क्याह—**किंचेति**॥ न केवलं द्रव्यांशस्यात्मत्वम्, किं तु बोधांशस्यापीत्येतत् "किंचे"त्यनेनोच्यते। किं ग्राहकांशः सुषुप्तकल्पः? उत तद्व्यावृत्तः? आद्ये तद्व्यवहारानुपपत्तिरित्यभिसन्धाय, द्वितीयमपि विकल्पं दूषयति—**ग्राहकेति**॥ अनुभवांशे स्वयंप्रकाशत्वाद्यभ्युपगमेऽप्यहंकारस्य ग्राह्यत्वादिदमंशत्वम्, ततो "नेदमंशः" इति ग्रन्थानुपपत्तिमाशङ्क्य, ग्राह्यत्वासिद्धिमाह—**तस्मादिति**। 'अहं जानामी'ति संविदाश्रयत्वेनाहंकारप्रतिपत्तेस्ततस्तस्याऽऽत्मत्वम्, तत इदमंशाभिधानमयुक्तमित्यर्थः। "नीलादिज्ञानमि"त्यत्र ज्ञायतेऽनेनेति चतुष्टयसंनिकर्षो विवक्ष्यते, "ग्रहणं चे"त्यत्रापि करणव्युत्पत्त्या सन्निकर्षो विवक्षित इत्यर्थः।

अहंकारस्याऽऽत्मत्वेऽभिहितेऽनात्मत्वं सिद्धान्तिना साधनीयम्, किं स्वप्रकाशत्वसाधनेन? इत्याशङ्क्याह—**अहंकारस्येति**। अहंकारः, आत्मत्वानाधारः, अस्वप्रकाशत्वात्, घटवत्। नच—अहंकारस्यास्वप्रकाशत्वेऽप्यात्मत्वं किं न न स्यादिति—शङ्क्यम्; आत्मनः स्वप्रकाशत्वस्वाभाव्यादहंकारस्यात्मत्वे स्वप्रकाशत्वानुपपत्तेः। तस्मात् स्वप्रकाशत्वसाधनमुचितमित्यर्थः॥ "उत सोऽपी"त्यत्र तच्छब्देन जडप्रकाशस्यानन्तरं निर्दिष्टत्वात्तद्ग्रहणशङ्कायामयोग्यत्वात्तद्ग्रहणमित्याह—**उत सोऽपीति**॥ अनुभवस्य स्वप्रकाशताया अभिहितत्वादात्मनश्च ग्राहकतया सिद्धसाधनात् कथं विकल्पावसर इति चेत्? अत्र ब्रूमः—यद्यप्येवं विभागोऽभ्यधायि, तथाऽपि युक्तायुक्तत्वनिरूपणार्थं विमर्शसंभव इत्यर्थः। "न तावत्प्रथमः कल्पः" इत्यत्राऽऽत्मनश्चित्प्रकाशत्वानुपपत्तिं प्रतिज्ञायानुभवस्य जडत्वं निराक्रियते, तत्र च वैयधिकरण्यं स्यादित्याशङ्क्यानुभवो जडप्रकाश इति न मतान्तरम्, किंतु पूर्वकल्पान्तर्भूतमिति दर्शयति—**तत्रात्मेति**॥

## ऋजुविवरणम्

सङ्गतम्; प्रकृतानुपयोगात्, नचात्मगतद्रव्यरूपविषयत्वं ग्रन्थस्य; तस्यात्मत्वस्य पूर्वं निरस्तत्वेन पौनरुक्त्यप्रसङ्गादित्याशङ्क्य प्रकृतनिराकरणे हेत्वन्तरमनेन प्रदर्श्यते तन्मताङ्गीकारेणैवेत्याह—**किञ्च ग्राहकरूपस्येति**॥ "तस्मादि"त्युपसंहारो व्यधिकरण इव लक्ष्यते; नहि नीलानुभवस्येदन्तया विषयग्राहकत्वमनिदन्तयाऽऽत्मग्राहकत्वं ग्रहणानुमापकत्वं चाहंकारस्यानिदमंशत्वसाधकमित्याशङ्क्याभिप्रायमाह—**तस्मात्संविद्बलादिति**॥ आश्रयपक्षपातितयेति व्यधिकरणत्वपरिहारः।

"अहङ्कारस्याऽऽत्माव्यतिरेकः"इत्याक्षेपे तु कृते कस्य स्वयंप्रकाशत्वमिति विकल्पोऽसंगतः, निष्प्रयोजनश्चेत्याशङ्क्याभिप्रायमाह—**अहंकारस्येति**॥ "न तावत्प्रथमः कल्पः" इत्युपक्रम्यानुभवस्य जडत्वनिराकरणमसमञ्जसम्; तस्य प्रथमपक्षत्वाभावादित्याशङ्क्य विकल्पस्कन्धप्रदर्शनेनावतारयति—**तत्रात्मा चित्स्वभाव इति**॥

## पञ्चपादिकाविवरणम्

ननु अप्रकाशमानमेव प्रमाणफलं चक्षुरादिवद् विषयमवभासयेदिति कुतो विश्वस्यानवभासः ? न; विषयप्रकाशजननेन चक्षुषः प्रकाशकत्वात्संविद्वैलक्षण्यात् । संवेदनं तु स्वयं प्रकाश एव, न प्रकाशान्तरहेतुः; अतश्चक्षुरादिवैलक्षण्यात्प्रदीपवदवभासमान एवानुभवोऽर्थं प्रकाशयति । नच प्रदीपालोकस्यार्थानुभवजननेनैव चक्षुरादिवदर्थस्य प्रकाशकता, किन्तु पृथगेव । तथाहि—ज्ञानप्रकाश्यत्वादज्ञानविरोधिनोऽन्यदेवालोकप्रकाश्यत्वं तमोविरोधितया प्रसिद्धं, तद् अव्यवधानेनालोकेन क्रियते । न तदुभयं करोति चक्षुः, अज्ञानत्वादनालोकत्वाच्च । तस्मादनुभवः सजातीयप्रकाशान्तरनिरपेक्षः प्रकाशमान एव विषये

## तत्त्वदीपनम्

ज्ञानं किमज्ञायमानमर्थप्रकाशकम् ? उत ज्ञायमानम् ? इति विकल्प्याऽऽद्ये दूषणमुक्तं "जडस्वरूपे" इत्यनेन, तन्नोपपद्यते; चक्षुरादिवदप्रकाशमानस्यापि प्रकाशकत्वसंभवादिति शङ्कते—**नन्विति** ॥ संवेदनं व्यवधानेन प्रकाशकम् ? उत न ? नाद्य इत्याह—**न विषयेति** ॥ नच—प्रकाशकत्वात् संवेदनस्यापि व्यवधानेन प्रकाशकत्वमिति—शङ्क्यम्; ज्ञानान्तरासिद्धेरित्याह—**संवेदनं त्विति** ॥ प्रकाशान्तरहेतुत्वेऽनवस्थाप्रसङ्ग इत्याह—**न प्रकाशान्तरेति** ॥ तस्माद् द्वितीयः परिशिष्यत—इत्याह—**अत इति** ॥ प्रदीपे चक्षुरादिवैलक्षण्यासिद्धिमाशङ्क्याह—**नचेति** । प्रदीपस्य ज्ञानकरणत्वे प्रमाणाभावादित्यर्थः । अनुभवाजनकत्वे प्रदीपस्य कथं प्रकाशकत्वम् ? इति शङ्कते—**किं त्विति** ॥ प्रकाशकत्वमन्यथापि घटत इत्याह—**पृथगिति** ॥ 'ज्ञानप्रकाशितम्' 'प्रदीपप्रकाशितम्' इत्यनुभवाविशेषे कथं प्रकाशकत्वपृथक्त्वम् ? तत्राह—**तथाहीति** ॥ यत् प्रकाशकम्, तदनुभवनिमित्तमिति यथा संविदि व्यभिचरति, तद्वदनुभवातिरिक्तस्यालोकस्यापि ज्ञानजननं विना तमोनिवर्तनेन प्रकाशकत्वं स्यादित्यर्थः । तर्हि प्रकाशकत्वाच्चक्षुषोऽपि तथात्वमित्याशङ्क्याह—**न तदिति** ॥ **उभयम्** अज्ञाननिवृत्ति-तमोनिवृत्त्याख्यम् । तर्हि भासमानमेव भानं भासकमस्त्वित्याशङ्क्य, किं परतः ? उत स्वतः ? नाद्य इत्याह—**तस्मादिति** ॥ 'प्रकाशनिमित्तमि'-त्युक्तेऽप्रकाशमानस्य निमित्तत्वाङ्गीकारासिद्धसाध्यता, तदर्थम्—**प्रकाशमान इति** ॥ एतावत्युक्ते ज्ञानान्तरप्रकाश्यत्वान्न स्वप्रकाशत्वमित्यर्थान्तरता, तदर्थम्—**सजातीयेति** ॥ 'सजातीयप्रकाशनिरपेक्षः' इत्युक्ते चक्षुरादिवदप्रकाशमानस्य व्यवहारनिमित्ततयाऽस्वप्रकाशत्वेनार्थान्तरता, तदर्थम्—**प्रकाशमान इति** ॥ विषयिणि व्यवहारनिमित्तवृत्तौ व्यभिचारपरिहारार्थमाह—

## ऋजुविवरणम्

"जडरूपे प्रमाणफले"इत्यनेन किं जडस्यावभासकत्वं निषिध्यते ? अवभासकत्वे वा चिद्रूपत्वं साध्यते ? उभयत्राप्यनैकान्तिकत्वं दृष्टान्ताभावश्च । नचात्र साध्यान्तरं वा प्रतीयते, नापि बाधकमात्रप्रदर्शनपरमिति चोदयति—**ननु अप्रकाशमानमेवेति** ॥ प्रागुक्तदोषपरिहारायोभयमपि विवक्षितमिति दर्शयितुं प्रयोजकविवेकं करोति—**न; विषयप्रकाशेति** ॥ अनुमानं वा; अयं प्रयोगः—प्रमाणफलं धर्मि, अप्रकाशमानमेव विषयमवभासयेदिति साध्यो धर्मः, प्रकाशत्वात्; चक्षुरादिवत् । **"न विषयप्रकाशजननेने"**ति सोपाधिकत्वं हेतोरुक्तम् । ननु उपाधिः साध्यसमव्याप्तिः साधनाव्यापकः; अत्र तु साधनाव्यापकत्वं नास्ति; अनेनैव हेतुना प्रकाशान्तरस्यानुमातुं शक्यत्वादित्याशङ्क्याभिप्रायमाह—**संवेदनन्त्विति** ॥ अथवा, 'संवेदनं त्वि'त्यनेन प्रत्यनुमानमुच्यते । अयं प्रयोगः—संवेदनं धर्मि, प्रकाशमानमेव विषयमवभासयेदिति साध्यो धर्मः; अर्थप्रकाशकत्वात्, प्रदीपवत् । असिद्धमर्थप्रकाशकत्वमित्याशङ्क्यसाधयति—**न प्रकाशान्तरहेतुरिति** ॥ नुन प्रदीपस्य प्रकाशकस्यार्थानुभवजननेनैव प्रकाशकत्वम्, अतः साधनविकलो दृष्टान्त इत्याशङ्क्याह—**नच प्रदीपेति** ॥ कथमनुभवजननं विना प्रकाशकता ? न ह्यनुभवं विना विषये प्रदीपप्रकाश्यत्वमपरं दृश्यत इत्याशङ्क्याह—**तथाहीति** ॥

स्वयंप्रकाशत्वमपीह नैवं सिद्ध्येदितीत्थं ह्यनुमोच्यतेऽन्या ।
जडत्वचिह्नं हि तदेव सिद्धं ज्ञेयत्वहानौ चितिरूपताऽपि ॥

इत्यभिप्रायेणाह—**तस्मादिति** ॥ अथवा—"संवेदनन्त्वि"त्यनेन हेतोः पक्षधर्मत्वमुक्त्वा, "नच प्रदीपालोकस्ये"त्यनेन सपक्षे सत्त्वमुक्त्वाऽनुमानं दर्शयति—**तस्मादनुभव इति** ॥ 'विषये प्रकाशादिव्यवहारनिमित्तमि'त्येतावति साध्ये सिद्धसाध्यता स्यात्, तदर्थम्—**"प्रकाशमान एवे"**ति विशेषणम् । प्रकाशमानस्यैव लिङ्गादेर्व्यवहारहेतुत्वेऽपि न स्वयंप्रकाशमानत्वम्, तदर्थमाह—**"प्रकाशान्तरनिरपेक्षः" इति** ॥ एवमपि बाधितविषयत्वं साध्यविकलत्वं वा भवेत्, तदर्थमाह—**सजातीयेति** ॥ अथवा, "प्रकाशमान एवे"त्युक्ते ज्ञानान्तरेण प्रकाशमानस्यापि विषयव्यवहारहेतुत्वदर्शनात् सिद्धसाध्यता स्यात्, तदर्थम्—**"सजातीयनिरपेक्षः"** इति । सजातीयनैरपेक्ष्यं लिङ्गादावस्ति; नच स्वयंप्रकाशत्वम्, तदर्थमाह—**"प्रकाशान्तरनिरपेक्षः"**

### पञ्चपादिका

**मैवम्; प्रमाता चेतनस्तद्बलेन प्रदीपेनेव विषयमिदन्तया, आत्मानं चानिदन्तया चेतयते, इति न विश्वस्यानवभासप्रसङ्गः। तत्र; स्वयंप्रकाशचैतन्यस्वभावोऽपि सन् विषयप्रमाणेनाचेतनेनानुगृहीतः प्रकाशत इति नैतत् साधु लक्ष्यते। किंच प्रमाणफलेन चेद् प्रदीपेनेव विषयमात्मानं च चेतयते, तदा चेतयतिक्रियानवस्थाप्रसङ्गः॥**

### पञ्चपादिकाविवरणम्

प्रकाशादिव्यवहारनिमित्तं भवितुमर्हति; अव्यवधानेन विषये प्रकाशादिव्यवहारनिमित्तत्वात्, प्रदीपालोकवत्। नच चक्षुषा सजातीयप्रकाशेन प्रदीपस्यालोकेनेव घटस्य प्रकाश्यता, स्वयमेव प्रकाशगुणत्वात्। तद्विषयज्ञानप्रकाशं जनयति चक्षुरिति चेत्? तथापि विजातीयज्ञानेनैव प्रदीपस्य प्रकाश्यतेति न सजातीयालोकापेक्षा। तस्माद् व्यवहितप्रदीपस्येवानुभवस्याप्यप्रकाशमानत्वे प्रदीपप्रकाश्यस्येव विश्वस्यानवभासप्रसङ्ग इति॥

ननु प्रमातृचैतन्यमेव जडानुभवबलादात्मानं विषयं चावभासयतीति चोदयति—**मैवम्, प्रमाता चेतन इति॥** तत्र यदि चैतन्यस्य विषयोपरागहेतुरनुभवः पराभ्युपगतबुद्धिपरिणामवदिष्यते, तद् युज्यते; चिदात्मप्रकाशस्य तु जडानुभवाधीनताऽनुपपन्नेत्याह—**तत्र, स्वयंप्रकाशचैतन्यस्वभावोऽपि सन्निति॥** चेतयतिक्रियाऽपि पूर्वानुभवफलवज्जडरूपानुभवफलम् चेत्तस्यापि प्रदीपस्थानीयत्वाच्चेतयतिक्रियानवस्थेति दूषयति—**किञ्च प्रमाणफलेनेति॥**

### तत्त्वदीपनम्

**विषय इति॥** चक्षुषि व्यभिचारनिवारणार्थम्—**अव्यवधानेनेति॥** प्रदीपस्य चाक्षुषप्रकाशसापेक्षत्वेन साध्यवैकल्यमाशङ्क्याह—**नचेति॥** आलोकः किं तमोविरोधित्वलक्षणप्रकाशत्वसिद्धये चाक्षुषप्रकाशमपेक्षते? उताज्ञानविरोधित्वलक्षणज्ञानप्रकाश्यत्वार्थम्? इति विकल्प्य, प्रथमं प्रत्याह—**स्वयमिति।** प्रकाशगुणत्वेन तमःप्रत्ययवत्यभावान्न तन्निवृत्तावन्यापेक्षा, स्वरूपेण तन्निवर्तनसमर्थत्वाच्चेत्यर्थः। द्वितीयमनुवदति—**तद्विषयेति॥** अस्मिन् पक्षे न साध्यवैकल्यमित्याह—**तथापीति॥** ज्ञानोत्पत्तौ प्रदीपश्चक्षुरपेक्षत इत्याशङ्क्य, प्रदीपस्य विजातीयज्ञानापेक्षायामपि सजातीयनैरपेक्ष्यमित्याह—**इति न सजातीयेति॥** न द्वितीयः; जडत्वोपक्रमविरोधात्। तस्माज्जगदान्ध्यप्रसञ्जनं युक्तमित्याह—**तस्मादिति॥**

"चेतनस्तद्बलेने"त्यत्र तच्छब्देन चेतनपरामर्शाशङ्का स्यात्, ततश्चानुभववैयर्थ्यं दुष्परिहरमित्याशङ्क्याह—**नन्विति।** नच—प्रमातुः स्वप्रकाशत्वेनानुभवनैरपेक्ष्यमिति—वाच्यम्। वेदान्ति-सांख्यमते स्वप्रकाशस्याप्यनुभवापेक्षादर्शनादिति भावः। आत्म-विषययोरुभयोरप्यनुभवाधीनत्वशङ्कायामात्मन एव तदधीनत्वं कस्मान्निरस्यते? इत्याशङ्क्याऽऽत्मनो विषयोपरागहेतुत्वादनुभवस्य तत्प्रकाशकत्वम्? उत साक्षात्? नान्त्यः; अनुपपत्तेरित्यभिप्रेत्याऽऽद्यमङ्गीकरोति—**तत्र यदीति॥** चेतयतेः फलत्वात् कथमनवस्था? इत्याशङ्क्य, किं चेतयतेरपि जडत्वम्? उताजडत्वम्? अन्त्ये पूर्वस्यैव जडत्वमस्तु, किं संविदन्तरेण? इत्यभिप्रेत्याऽऽद्यं दूषयति—**चेतयतिक्रियेति।** चेतयतेर्जडत्वे वैयर्थ्यपरिहारार्थं चक्षुषैव चेतयत्यन्तरमाधीयत इति वक्तव्यम्; ततश्च तस्यापि चेतयत्यन्तरमित्यनवस्थेत्यर्थः॥

### ऋजुविवरणम्

**इति॥** ननु साध्यविकलो दृष्टान्तः; प्रदीपस्यापि चाक्षुषप्रकाशसापेक्षत्वादित्याशङ्क्याह—**नच चक्षुषेति॥ स्वयमेवेति;** अयमर्थः—प्रकाशरूपो गुणो यस्यासौ प्रकाशगुणः। आलोकस्य प्रकाशकत्वं नाम तमोनिवर्तकत्वम्, तच्चात्र न संभवति; तमसोऽभावादिति॥ **तद्विषयेति**—यत्र प्रकाशसंसर्गः प्रकाशमानता वा, तत्र तु सजातीयापेक्षा दृष्टेति भावः। **तथापीति**—विषये यादृशातिशयं जनयति, तादृशातिशये सजातीयानपेक्षत्वं विवक्षितम्। तत्र तु प्रकाशसंसर्गो न; वृत्त्यधीनत्वादिति भावः।

"मैवं प्रमाता चेतनः"इत्यनेन प्रमातुश्चेतनत्वाद् विश्वस्यानवभासो नास्तीत्युक्तम्, तदनुपपन्नम्; चैतन्यमवभासकम्, न चेतनः; तथा तच्छब्देन प्रकृतचैतन्यनिर्देशशङ्का स्यात्; तथा सत्यनुभवहानेनैव चोद्यकरणाद् वैयधिकरण्यमित्याशङ्क्याह—**ननु प्रमातृचैतन्यमिति॥** "तत्र; स्वयमि"त्यनेन जडानुभवाधीनत्वं कथं निराक्रियते? स्वेनाप्यङ्गीकृतत्वादित्याशङ्क्याह—**तत्र यदीति॥** "किंचे"त्यनेनानवस्थोक्ता; सा कथम्? न ह्यनुभवजननमात्रेणानवस्था स्यादित्याशङ्क्याभिप्रायमाह—**चेतयतिक्रियाऽपीति॥**

## पञ्चपादिका

**द्वितीये कल्पेऽपि आत्माऽपि स्वयमेव प्रकाशेत, किमिति विषयानुभवमपेक्षेत ? अथ चैतन्यस्वभावत्वेऽपि नात्मा स्वयंप्रकाशः ? विशेषे हेतुर्वाच्यः। न हि चैतन्यस्वभावः सन् स्वयं परोक्षोऽन्यतोऽपरोक्ष इति युज्यते। किंच समत्वान्नेतरेतरापेक्षत्वं प्रकाशने प्रदीपयोरिव। तृतीयेऽपि कल्पेऽनिच्छतोऽप्यात्मैव चितिप्रकाश आपद्यते,**

## पञ्चपादिकाविवरणम्

उभयचैतन्यस्वभावपक्षे पुरुषद्वयवन्नान्योन्याधीनसिद्धिता, नापि संविदात्मसम्बन्धावगम इत्याह—**द्वितीयेऽपि कल्प इति**॥ ननु चिद्गुणमपि पुरुषान्तरसंवेदनं न पुरुषान्तरस्य स्वयंप्रकाशम्, तथाऽऽत्मा चैतन्यगुणोऽपि न स्वयं प्रकाशत इति शङ्कते—**अथ चैतन्यस्वभावत्वेऽपीति**॥ परिहरति—**विशेषे हेतुर्वाच्य इति**॥ अनुभवोऽपि तर्हि न स्वयंप्रकाशः स्यात् पुरुषान्तरसंवेदनवत्। अव्यवधानान्नेति चेत् ? आत्मन्यपि तत् समानमिति भावः॥ **किञ्चेति** स्पष्टार्थः॥ अस्तु तर्हि जडात्मनः स्वयंप्रकाशानुभवाश्रयतया सिद्धिरिति ? नेत्याह—**तृतीयेऽपीति**॥ अयमर्थः—संवेदनं नाम गुणो, द्रव्यं, कर्म वा भवति ? कर्मत्वे प्रकाशत्वफलत्वयोरनुपपत्तिः, द्रव्यत्वेऽप्यणु-मध्यमानन्तपरिमाणानामणुपरिमाणत्वे विषयेऽपि तावन्मात्रावभासः स्यात्; नहि खद्योतप्रकाशमात्रसंसृष्टस्य घटस्य सर्वात्मनाऽवभासः। महापरिमाणत्वे तदाश्रयतयाऽऽत्मनोऽपि सर्वत्रावभासप्रसङ्गः। मध्यमपरिमाणत्वे सावयवत्वेनावयवपरतन्त्रता स्यात्। गुणत्वे सति, आत्मैव प्रकाशगुण इति प्रदीपवदात्मा स्वयंप्रकाशः स्यात्। स च गुणः स्वाश्रयोपाधौ न जायते; प्रकाशगुणत्वात्, आत्मन्यव्यभिचारात्, आदित्यादिप्रकाशगुणवदित्यात्मैव स्वयंप्रकाश

## तत्त्वदीपनम्

उभयोरजडत्वेऽनुभवनैरपेक्ष्यमुक्तम्, तत्र हेतुमाह—**उभयेति**॥ आत्माऽनुभवौ, नान्योन्याधीनसिद्धिकौ, चित्स्वभावत्वात्; पुरुषद्वयवदित्यर्थः। तत्रैव दूषणान्तरमाह—**नापीति**॥ किं संविदात्मसम्बन्धः स्वेन गृह्यते ? उतान्येन ? नाद्यः; स्वग्रहणमन्तरेण स्वप्रतियोगिकसम्बन्धग्रहणासम्भवात्, स्वग्रहणे च विषयत्वप्रसङ्गः। नापि द्वितीयः; आत्मग्रहणमन्तरेण तद्विशेषितसम्बन्धग्रहणायोगात् तद्ग्रहणं वाच्यम्। नच तद् युज्यते; स्वप्रकाशत्वविरोधादित्यर्थः॥ आत्मा चिद्रूपः, तथाऽपि न स्वप्रकाश इत्युक्तिर्विरुद्धेत्याशङ्क्य तात्पर्यमाह—**नन्विति**॥ **चिद्गुणमिति**। चिद्रूपमित्यर्थः। चित्प्रकाशत्वेऽप्यात्मनोऽस्वप्रकाशत्वं पुरुषान्तरसंवेदनवदित्युक्तम्, ततश्च "विशेषे हेतुर्वाच्यः" इत्ययुक्तमित्याशङ्क्यात्मनोऽन्याधीनप्रकाशत्वेऽनुभवस्यापि तथात्वमित्याह—**अनुभवोऽपीति**॥ पुरुषान्तरसंवेदनस्य व्यवहितत्वान्न मनुष्यान्तरं प्रति स्वप्रकाशत्वम्, अनुभवस्य तद्वैपरीत्यात्स्वप्रकाशत्वमित्याह—**अव्यवधानादिति**॥ तुल्यमुत्तरमित्याह—**आत्मनीति**। परात्मनस्तु व्यवहितत्वान्न स्वप्रकाशत्वम्, स्वात्मनस्त्वव्यवहितत्वात्स्वप्रकाशमित्यर्थः। तृतीयमुत्थापयति—**अस्त्विति**॥ संविदः स्वप्रकाशत्वेन कथमात्मनस्तदापादनम् वैयधिकरण्यादित्याशङ्क्याह—**अयमर्थ इति**॥ **गुण** इति तार्किक प्राभाकरदृष्ट्योक्तम्, **द्रव्यमिति** सांख्यमतमनुसृत्य, **कर्मेति** भाट्टमतानुसारेण। गुणत्वपरिशेषार्थमन्तिमं निरस्यति—**कर्मत्व इति**। क्रियात्वे गम्यादिवत्संवेदनस्य प्रकाशत्वं न सभवति। नच—प्रमाणफलत्वात्प्रकाशत्वमित्यपि—वाच्यम्; कर्मत्वे फलत्वस्याप्यनुपपत्तेरित्यर्थः। मध्यमं निरस्यति—**द्रव्यत्व इति**॥ "**परिमाणानामि**"त्यत्र मध्य इति द्रष्टव्यम्॥ हरिचन्दनबिन्दोर्गात्रैकदेशस्थस्यापि सर्वाङ्गीणाऽऽह्लादहेतुत्ववदेकदेशसंसृष्टस्यापि ज्ञानस्य सकलभासकत्वं किं न स्यात् ? इत्यत्राह—**न हीति**। प्रकाशसंसर्गो हि प्रकाशमानत्वम्। नचाण्वात्मसंवेदनस्य सकलसंसर्गः; इतरथा खद्योतप्रकाशसंसर्गाद् घटस्य सर्वात्मना भानं स्यात्, हरिचन्दनबिन्दोस्तु सावयवत्वेनावयवप्रसर्पणाद्वारा व्यापिकार्यहेतुत्वं युक्तमित्यर्थः॥ अनन्तपरिमाणं ज्ञानमिति पक्षं निरस्यति—**महापरिमाणत्व-**

## ऋजुविवरणम्

"आत्माऽपि स्वयमेवे"त्यदूषणम्; स्वयंप्रकाशत्वाङ्गीकारात्, विषयप्रतीतौ तदनुभवसापेक्षत्वस्य वक्तुं शक्यत्वात्। यद्वा, स्वयंप्रकाशत्वं सापेक्षत्वं च भवतु, को दोषः ? एकस्यैव सापेक्षत्वनिराकरणमप्युक्तम्। कोऽसौ द्वितीयपक्ष इति च न व्यक्तम्, तदर्थमवतारयति—**उभयचैतन्येति**॥ "विशेषहेतुरि"त्यनेनाप्रकाशे विशेषहेतुर्वक्तव्य इत्युक्तमिव प्रतिभाति, तदयुक्तम्; उक्तत्वात्, इत्याशङ्क्य व्याचष्टे—**अनुभवोऽपीति**। अनुभवे विशेषहेतुर्वक्तव्य इति व्याख्यातम्। "किंच समत्वादि"त्यनेन विषयावभासे सापेक्षत्वनिराकरणादपुनरुक्तिः, "तृतीयेऽपी"त्यनेनात्मन एव चित्प्रकाशत्वमापादितम्, तत् कथम् ? न ह्यन्यस्य चित्प्रकाशत्वेऽन्यस्य चित्प्रकाशत्वं संभवति, एकत्वं वा तयोरित्याशङ्क्य व्याचष्टे—**अयमर्थ इति**॥

### पञ्चपादिका

**न तदतिरिक्ततथाविधफलसद्भावे प्रमाणमस्ति। कथम्? प्रमाणजन्यश्चेदनुभवः, तथा सति स्वगतेन विशेषेण प्रतिविषयं**

### पञ्चपादिकाविवरणम्

इति, तदेतदाह—**अनिच्छतोऽप्यात्मैव चितिप्रकाश इति** ॥

ननु मध्यमपरिमाणमेव स्वावयवाश्रयं फलमस्तु, आत्मपरतन्त्रता तु घटस्येव भूतलतन्त्रतेति, नेत्याह—**न तदतिरिक्ततथाविधफलसद्भाव इति** ॥ 'प्रदीपेन प्रकाशितमि'तिवद् 'मयाऽवगतमि'त्यनुभवादात्मैव चित्प्रकाशः, अन्यथा काष्ठेन प्रकाशितमितिवदुपचारप्रसङ्गादिति भावः। प्रमाणान्तरापेक्षया पृच्छति—**कथमिति**? संवेदनस्य भेदावभासशून्यत्वाद् अनुभवाधीनसिद्धिकस्य च विषयवदनात्मत्वाद् एकः स्थाय्यात्मैवानुभव इत्याह—**प्रमाणजन्यश्चेदनुभव इति** ॥ सामान्य-

### तत्त्वदीपनम्

**इति** ॥ मध्यमं दूषयति—**मध्यमेति** ॥ कर्मत्वद्रव्यत्वयोरनुपपत्तावाद्यः शिष्यत इत्याह—**गुणत्व इति**। प्रकाशगुणस्य प्रदीपादेर्यथा सजातीयप्रकाशनिरपेक्षत्वम्, तद्वत् स्वप्रकाशसंविद्गुणत्वादात्मनोऽप्यन्यनिरपेक्षत्वमित्यर्थः। संवेदनस्य जन्यत्वात्तदभावेऽप्रकाशः स्यादित्याशङ्क्याह—**स चेति** ॥ प्रागभावशून्यत्वादपि न तस्य जन्मेत्याह—**आत्मनीति** ॥

मध्यमपरिमाणत्वपक्षमाश्रित्य शङ्कते—**नन्विति** ॥ तर्ह्यवयवपारतन्त्र्यं स्यादिति यत्तूक्तम्, तदिष्टमित्याह—**स्वावयवेति** ॥ तर्ह्यात्मपारतन्त्र्यं न स्यादिति, तत्राह—**आत्मेति** ॥ घटस्य भूतलान्यत्वात् तत्तन्त्रत्वम्, न तथाऽत्रेत्याह—**प्रदीपेनेति**। 'प्रदीपेन प्रकाशितो घटः' इत्युक्ते तस्य यथा प्रकाशात्मकप्रदीपप्रकाशत्वम्, तद्वद् 'मयाऽवगतमि'त्यत्राप्यवगत्यात्मकस्य प्रकाश्यत्वप्रतिपत्तेरात्मनश्चित्प्रकाशत्वमित्यर्थः। उक्तमर्थं विपक्षबाधकमुखेनोपपादयति—**अन्यथेति**। काष्ठस्य ज्वालया प्रकाश्यमाने घटे 'काष्ठेन प्रकाशितः' इति यथोपचारः तद्वदित्यर्थः। आत्मनः प्रकाशरूपत्वे प्रमाणस्योक्तत्वात् प्रश्नानुपपत्तिरित्याशङ्क्याह—**प्रमाणान्तरेति**। 'मया गतो ग्रामः' इत्युक्ते स्वान्यगमिक्रियाविषयत्वं यथा ग्रामस्य, तद्वदवगतेः स्वातिरिक्तत्वेऽपि 'मयाऽवगतः' इति व्यपदेशो युज्यत इति प्रमाणान्तरं वक्तव्यमिति चोद्यार्थः। प्रमाणान्तरजिज्ञासायां तदेव वक्तव्यम्, किं जन्यत्वादिनिराकरणेन? इत्याशङ्क्य तात्पर्यमाह—**संवेदनस्येति** ॥ अत्रैषा योजना—आत्मा, अनुभवान्नातिरिच्यते, संवित्कर्मत्वानधिकरणत्वे सत्यपरोक्षत्वात्; संविद्वत्, इत्याह—**आत्मैवाऽनुभव इति**। अनुभवत्वम्, आत्मवृत्ति, अनुभववृत्तित्वात्, सत्तावदिति; वा प्रयोगः। भिन्नत्वाज्जनिविनाशवत्वाच्च नानुभवस्याऽऽत्मरूपत्वमिति बाधकतर्कपराहतिमाशङ्क्याह—**एक इति** ॥ एकत्वं स्थायित्वं वाऽसिद्धमित्याशङ्क्याह—**संवेदनस्येति**। संवित् स्वान्तर्गणिकभेदशून्या, उपाधिमन्तरेणाविभाव्यमानभेदत्वादाकाशवदित्यर्थः। जन्यत्वाभावेऽपि तथैव प्रयोक्तव्यम्। विपक्षे बाधकमाह—**अनुभवाऽधीनेति** ॥ अनुभवत्वमीक्ष्येतेत्युक्तम्, तदिष्टमेवेत्याशङ्क्याह—**सामान्येति**। अनुभव एक एव, ततश्चात्मेति योजना। अनुभवव्यक्तिभेदाभ्युपगमेऽनुगतव्यवहारहेतुत्वेनानुभवत्वमाश्रयणीयमिति गौरवम्, व्यक्त्यैक्ये तु लाघवम्। व्यक्तेरैक्यं भेदप्रतिभासस्यौपाधिकत्वमिति कल्पनं तवापि समानमिति चेत्? न; सामान्य-विशेषभेदं परिकल्प्य सामान्यभेदप्रतिभासस्यौपाधिकतायाः कल्प्यत्वात्तव कल्पनाऽधिका, तस्मादेक एवानुभव इत्यर्थः। संवित्, स्वगतभेदवती, प्रकाशात्मकत्वात्; प्रदीपवदित्याशङ्क्याह—

### ऋजुविवरणम्

गुणस्याप्यागमापायधर्मित्वे तदेकत्वमात्मनो न स्यात्, स्वयंप्रकाशत्वं च, तदर्थमाह—**सच गुण इति** ॥ "आत्मन्यव्यभिचारादि"त्यनन्यत्वेऽपि हेतुः।

"न तदतिरिक्ते"त्यनेन व्यतिरिक्तफलसद्भावे प्रमाणं नास्तीत्युक्तम्, तदनुपपन्नम्; विषयानुभवदर्शनेनैव व्यतिरिक्तानुभवस्य तथाविधफलभूतस्य सिद्धेः, तथा व्यतिरेकेऽपि प्रमाणं नास्तीत्याशङ्क्याभिप्रायमाह—**प्रदीपेनेति** ॥ "कथमि"त्याक्षेपः, प्रश्नो वा नोपपद्यते। पूर्वग्रन्थे व्यतिरिक्तफलसद्भावो निरस्तः, आत्माव्यतिरेके च प्रमाणमुक्तम्; तत्र न तावद् व्यतिरेकप्रमाणाभावविषयौ तौ, एकत्वप्रमाणेनैव तत्सिद्धेः; नाप्येकत्वविषयौ तौ, तत्र प्रमाणस्योक्तत्वात्; इत्याशङ्क्याह—**प्रमाणान्तरापेक्षयेति** ॥ तत्र "प्रमाणजन्यश्चेदि"त्यनेन प्रमाणजन्यत्वनिराकरणमसंगतम्, पृष्टप्रमाणस्यानुक्तत्वात्; इत्याशङ्क्याभिप्रायमाह—**संवेदनस्येति** ॥ "सर्वानुभवानुगतं चे"त्यनेनानुभवत्वप्रतीतिरापादिता, सा न दूषणम्, तत्प्रतीतेर्विद्यमानत्वात्, इत्याशङ्क्याभिप्रायमाह—**सामान्य-विशेषेति** ॥ "प्रमाणजन्यश्चेदि"त्यनेनायं पुनरुक्तः; तत्रापि भेदावभासस्याऽऽपादितत्वात्,

## पञ्चपादिका

पृथक् पृथगवभासेत, सर्वानुभवानुगतं च गोत्ववदनुभवत्वमपरमोक्ष्येत। नच 'नीलानुभवः, पीतानुभवः' इति विषयविशेषपरामर्शशून्यः स्वगतो विशेषो लक्ष्यते॥ ननु विनष्टाविनष्टत्वेन विशेषः सिध्यति ? सिध्येत्, यदि विनष्टाविनष्टता सिध्येत्; सा च जन्यत्वे सति, तस्यां च सिद्धायां जन्यत्वमिति परस्परायत्तस्थितित्वेनैकमपि न सिध्येत्। एतेन—अतिसादृश्यादनुभवभेदो न विभाव्यत इति—प्रत्युक्तम्; भेदासिद्धेः। नहि चित्प्रकाशस्य स्वगतो भेदो न प्रकाशत इति युक्तिमत्, येन तदप्रकाशनात् सादृश्यनिबन्धनो विभ्रमः स्यात्। नच—यथा जीवस्य स्वयंज्योतिषोऽपि स्वरूपमेव सद् ब्रह्मरूपत्वं न प्रकाशते, तद्वत् स्यादिति—युक्तम्; अभिहितं तत्राप्रकाशने प्रमाणम्, इह तन्नास्ति। नहि सामान्यतोदृष्टमनुभवविरोधे युक्तिविरोधे च समुत्तिष्ठति;

## पञ्चपादिकाविवरणम्

विशेषभेदकल्पनागौरवादात्मैक एवानुभव इत्याह—**सर्वानुभवानुगतं चेति**॥ स्वगतभेदप्रतिभासशून्यतामेव प्रपञ्चयति—**नच नीलानुभव इति**॥ ननु नीलसंवित्स्थितिकाले पीतसंविदोऽभावात् स्थिति-विनाशौ दृष्टौ धर्मिभेदं कल्पयत इति चोद्यमुद्भाव्य परिहरति—**ननु विनष्टाविनष्टेत्यादिना**॥ ननु साधनसन्निधानादुत्तरसंवेदनस्य जातत्वात् संविद्द्वययौगपद्यायोगाद् विनष्टा पूर्वसंविदिति चेत् ? न; इतरेतराश्रयादित्याह—**सा च जन्यत्व इति**। सिद्धस्यैव संवेदनस्य विषयोपरागनिमित्तं साधनमिति कल्पनं लघीयो विषयोपरक्तसंविज्जन्मसाधनत्वकल्पनादिति भावः॥ सत्यपि संविदां स्वगतभेदेऽतिसादृश्याद् ज्वालायामिव परोपाधिमन्तरेण भेदो न विभाव्यत इति सुगताः कल्पयन्ति, तान्निराकरोति—**एतेनातिसादृश्यादिति**॥ किञ्च ज्ञानान्तरगम्यत्वे भेदस्यातिसादृश्याद् भिन्नेष्वभेदभ्रमजन्म स्यात्, स्वयंप्रकाशस्य तु भेदः प्रकाशाभिन्न इति प्रकाशमानतैव युक्तेत्याह—**नहि चित्प्रकाशस्येति**॥ **नच यथा जीवस्येति** स्पष्टार्थः॥ एकत्वेन पुष्कलप्रकाशस्याप्यविद्याप्रतिबन्धे प्रमाणमुक्तम्, इह त्वप्रतिबद्धपुष्कलकारणत्वाद् भेदप्रकाशेन भवितव्यमित्याह—**अभिहितं तत्रेति**॥ ननु संविदः, सादृश्यप्रतिबद्धभेदावभासाः, स्थायि-

## तत्त्वदीपनम्

**स्वगतेति**। अनुभवविरुद्धो हेतुरित्यर्थः। नष्टानष्टयोरभेदानुपपत्तेर्भेद इत्युक्तमयुक्तम्, नष्टानष्टविभागस्यैवासिद्धेरित्याशङ्क्याह—**ननु नीलेति**। पीतसंविदोऽभावादिति कोऽर्थः ? किं विशेषणव्यावृत्त्या विशिष्टव्यावृत्तिः ? उत विशेष्यव्यावृत्त्येति। आद्ये न संविदभावः सिद्ध्यति, द्वितीये त्वसिद्धिः, संविदोऽन्यदापि दर्शनादिति समाधानग्रन्थार्थः। विधान्तरेण हेतुं समर्थयते—**नन्विति**॥ साधनोपादानानुपपत्त्या संविज्जन्यत्वम्, अन्यथा साधनवैयर्थ्यापातादित्यर्थः॥ अस्तु संविज्जन्म; तथापि पूर्वविनाशः कथमिति ? तत्राह—**संविद्द्वयेति**॥ संविदः साधनाधीनत्वं त्वन्यथाऽपि घटत इत्याशयेनाह—**नेतरेति**॥ अन्यथासिद्धिं व्यनक्ति—**सिद्धस्येति**। संविद उत्पत्तिकल्पनायां तस्याः जन्म विषयोपरक्ताकारस्य चेति गौरवम्; अस्मन्मते तूपरागमात्रस्य जन्यत्वमिति लाघवमित्यर्थः। संविदां विद्यमानोऽपि भेदो दोषान्न प्रतिभातीति सौगताः कल्पयन्ति; ततश्च विशेषाप्रतिभानं न दोषायेति शङ्कते—**सत्यपीति**॥ **उपाधिमन्तरेण भेद इति**—स्वगतभेद इति यावत्। भेदे सिद्धे सादृश्यकल्पना, तस्यां च सिद्धायां ततो भेदाधिगतौ भेदसिद्धिः, इतीतरेतराश्रयप्रसङ्गान्मैवमित्याह—**तान्निराकरोतीति**॥ संविदि प्रकाशमानायां तद्गतस्य भेदस्यापि प्रकाशमानत्वात्तद्ग्रहणानुपपत्तिरित्युक्तम्; तदनुपपन्नम्, दूरात् तरौ प्रतीयमानेऽपि तद्भेदाप्रतिभासवद् भेदाप्रथनेऽप्यनुपपत्त्यभावादित्याशङ्क्य तात्पर्यमाह—**किंचेति**॥ अप्रकाशनस्यानुभवसिद्धत्वान्न तत्र प्रमाणापेक्षा, तत्'श्चाभिहितमि'त्युक्तमित्याशङ्क्याग्रहणे न प्रमाणोपन्यासः, किंतु तद्ग्रहणप्रतिबन्ध इत्याह—**एकत्वेनेति**॥ संविद्भेदप्रकाशप्रतिबन्धे प्रमाणाभावोऽसिद्ध इति चोदयति—**नन्विति**॥ बुद्धिवेद्यत्वादित्युक्ते घटादौ व्यभिचारः, तदर्थम्—**प्रकाशेति** विशेषणम्॥

## ऋजुविवरणम्

इत्याशङ्क्यावतारयति—**स्वगतभेदेति**॥ नच—व्यतिरेकप्रदर्शनमेवानेन क्रियत इति—युक्तम्; अर्थसिद्धत्वात्। नच तत्परत्वमेव ग्रन्थस्य, "विषयविशेषपरामर्शशून्यः" इत्यस्यांशस्य वैयर्थ्यापातात्; न च व्यतिरेकप्रतिभासाभावोपपादनार्थता, उक्तप्रपञ्चत्वापातादिति भावः। कथमितरेतराश्रयत्वम् ? साधनान्वय-व्यतिरेकाभ्यां जन्यत्वसिद्धेरित्याशङ्क्याभिप्रायमाह—**सिद्धस्यैवेति**। "न हि चित्प्रकाशस्ये"त्यनेन विद्यमानो भेदः सादृश्यान्न प्रतीयत इत्याशङ्क्य निरस्तमिव प्रतिभाति, तदयुक्तम्; पूर्वग्रन्थे भेदाभाव उक्ते तत्सद्भावे तदप्रतीतौ कारणाभावेन शङ्कानुदयात्, उत्तरत्तरोग्रन्थेन पौनरुक्त्यप्रसङ्गात्, नापि भेदमात्रनिराकरणम्; निरस्तत्वादित्याशङ्क्याह—**किंच ज्ञानान्तरेति**॥ तत्र "बुद्धिवेद्यत्वादि"ति हेतौ स भेदेन प्रतीयमानघटादावनैकान्तिकः

## पञ्चपादिका

दर्शिते चानुभव-युक्ती। तस्मात् चित्स्वभाव एवाऽऽत्मा तेन तेन प्रमेयभेदेनोपधीयमानोऽनुभवाभिधानीयकं लभते। अविवक्षितोपाधिरात्मादिशब्दैरभिधीयते, अवधीरितवनाभिधाननिमित्तैकदेशावस्थाना इव वृक्षा वृक्षादिशब्दैरित्यभ्युपगन्तव्यम्। बाढम्; अत एव विषयानुभवनिमित्तोऽनिदमात्मकोऽहङ्कारो वर्ण्यते। सत्यमेवम्; किन्तु तथा सति सुषुप्तेऽपि 'अहमि'त्युल्लेखः

## पञ्चपादिकाविवरणम्

प्रकाशबुद्धिवेद्यत्वात्, ज्वालावदित्यनुमातुं शक्यते ? तत्राह—**नहि सामान्यतोदृष्टमिति**॥ पूर्वापरैकरूपानुभवः, भेदस्य च प्रकाशेन भवितव्यम्, इत्यनुभव-युक्ती। कथं पुनरात्मचैतन्यस्य नित्यस्य विषयानुभवत्वमिति ? तदाह—**तस्माच्चित्स्वभाव एवेति**॥

ननु स्वयंप्रकाशमानात्मचैतन्यस्य विषयानुभवत्वेऽपि विषयानुभवमेव निमित्तीकृत्य, 'अहमि'ति द्रष्टृपरामर्शादात्मैवाहङ्कारः संवृत्त इति चोदयति—**बाढमत एवेति**। द्रष्टृरूपेण परामर्शस्य विषयानुभवो निमित्तम्; अन्यथा द्रष्ट्रादिविभागशून्यश्चिन्मात्रावभासः स्यादिति भावः॥ मैवम्; सुषुप्तावात्मन्यवभासमानेऽप्यहङ्कारस्यानवभासमानत्वादिति व्यतिरेकप्रदर्शनेन परिहरति—**सत्यमेवमिति**॥ ननु विषयानुभवनिमित्तो द्रष्टृरूपावभासोऽहमुल्लेखः, तद्रहिते सुषुप्ते कथमस्य प्रसङ्गः ?

## तत्त्वदीपनम्

प्रकाश इति बुद्धिः प्रकाशबुद्धिः, तद्वेद्यत्वादित्यर्थः। उत्पन्नमात्रविनष्टप्रदीपादिव्यावृत्त्यर्थम्—**स्थायीति** विशेषणम्॥ स्थायिबुद्धिवेद्यत्वादित्युक्ते घटादौ व्यभिचारः तदर्थम्—**प्रकाशेति**॥ स्वरूपासिद्धि-साधनवैकल्ययोः परिहाराय—**बुद्धिग्रहणम्**॥ के ते अनुभव-युक्ती ? यद्विरोध उद्भाव्यते, तत्राह—**पूर्वापरेति**। पूर्वापरकालयोरेकरूपतयाऽनुभव इति यावत्। भेदस्य स्वरूपत्वाद्वस्तुनि प्रतीयमाने भेदोऽपि भासेत, इत्याद्या युक्तिः। अनुभवाभिन्नत्वेनाऽऽत्मनः स्वप्रकाशत्वमुक्तम्; तदेवोपसंहरणीयम्; कस्मात्प्रमेयभेदोपाधिनाऽनुभवपदवाच्यत्वमुपसंह्रियते ? इत्याशङ्क्य, तद्व्यावर्त्यां शङ्कामाह—**कथमिति**॥ विषयानुभव आगन्तुकः, आत्मा तु नित्य इति कथं तयोरेकत्वमित्यर्थः। स्वरूपेण नित्यत्वेऽप्युपाध्युपरक्ततया जन्यत्वं ततो विषयानुभवत्वं च घटत इत्याह—**तदाहेति**॥ स्वप्रकाशत्वं विषयानुभवत्वं चाङ्गीकृत्य तेन हेतुनाऽहंकारस्यानिदंरूपत्वमुच्यत इति प्रतिभाति, तन्नोपपद्यते, स्वप्रकाशत्वादेरहंकारात्मतया व्याप्त्यभावादित्याशङ्क्य तात्पर्यमाह—**नन्विति**॥

टीकायाम् अतःशब्दव्याख्यानम्—**विषयानुभवनिमित्त इति**॥ अहंकार आत्मैव इत्यन्वयः। तत्र हेतुमाह—**विषयानुभवमिति**॥ आत्मनः स्वप्रकाशत्वं विषयानुभवत्वं चाङ्गीकृत्याहंकारस्याऽऽत्मत्वमात्रं पूर्वपक्षिणा समर्थ्यते; द्रष्टुरात्मत्वात्, द्रष्टा च 'अहमिदं जानामी'ति विषयानुभवमपेक्ष्य प्रथत इत्यहंकारस्याऽऽत्मत्वमित्यर्थः। आत्मनः स्वप्रकाशत्वे विषयानुभवनिमित्तत्वं व्याहतमित्याशङ्क्याह—**द्रष्टृरूपेणेति**। द्रष्टेत्युक्ते कस्य द्रष्टा ? इति विषयानुभवसापेक्षत्वमनुभवसिद्धमित्यर्थः। उक्तमर्थं व्यतिरेकमुखेनोपपादयति—**अन्यथेति**॥ यद्यपि चिन्मात्रं स्वप्रकाशम्; तथाऽपि विषयसंवित्कर्तृरूपप्रतिपत्तेरन्याधीनत्वमित्यभिप्रायः। अहंकारस्याऽऽत्मत्वे सुषुप्तावप्यहमुल्लेखः स्यादित्युक्तम्, तत् कस्मात् ? इति वीक्षायामाह—**मैवमिति**॥ "अत्रायं पुरुषः स्वयंज्योति"रित्यादिवाक्यात् सुषुप्तावात्मस्फुरणमवसितम्, तन्मात्रत्वादहंकारस्यापि स्फुरणं स्यात्, न तदस्ति। तथाच प्रयोगः—अहंकारः, नाऽऽत्मा, असति प्रतिबन्धे तस्मिन् भासमाने सत्यनवभासमानत्वात्, घटवदित्यर्थः। सत्यमित्या-

## ऋजुविवरणम्

स्यात्, तदर्थम्—**प्रकाशबुद्धिवेद्यत्वादिति**॥ तथाप्युत्पन्नमात्रविनष्टप्रदीपविद्युदादावनैकान्तिकः स्यात्, तदर्थम्—**स्थायीति**॥

"बाढम्; अतः"इत्ययुक्तम्; नहि स्वयमप्रकाशत्वमात्मनो विषयानुभवत्वं वाऽहंकारस्यानिदंरूपत्वे हेतुः, तदेव हि सन्निहितत्वान्निर्देश्यमित्याशङ्क्यावतारति—**ननु स्वयंप्रकाशेति**॥ कथमात्मस्वरूपस्याहंकारस्य विषयानुभवनिमित्तत्वम् ? तस्यैव स्वयंप्रकाशत्वात्, इत्याशङ्क्याभिप्रायमाह—**द्रष्टृरूपेणेति**॥ **अन्यथेति**—तदभाव इत्यर्थः। यद्वा, विपक्षे बाधकमाह—**अन्यथेति**। अहंकारस्यात्मत्वाभावे विषयानुभवस्य तत्र हेतुत्वाभावे वा कदाचिदपि तथा प्रतीतिर्न स्यादित्यर्थः। विषयानुभवनिमित्तो द्रष्टृरूपावभासोऽहमवभास इति चोदिते, "नीलानुषङ्गः" इति ग्रन्थोऽसमञ्जसः; नहि नीलानुषङ्गस्यानुभवत्वकथनं पूर्वचोद्यपरिहार उपयुज्यते, नाप्यनुषङ्गस्यानुभवत्वं संभवति; "नासावहमुल्लेखार्हः"इत्यप्यनुपपन्नम्; नहि तस्याहमुल्लेखार्हत्वमहमित्युल्लेखावभासः, तदर्हत्वं नामाहमिति प्रतीयमानत्वम्; नच तत् पूर्ववादिनाऽप्युच्यते। यद्वा, "नासावहमुल्लेखार्हः" इत्यनेनैवमुक्तम्—अहमित्युल्लेखः संजल्पः, तदर्हत्वं नेति। तत्रापि दूषणं पूर्ववदेव। "अहमित्यात्मे"त्यनुपयोगि; नहि तत्र

## पञ्चपादिका

**स्यात् । कथम् ? नीलानुषङ्गो यश्चैतन्यस्य, स नीलभोगः, नासावहमुल्लेखार्हः । 'अहमि'त्यात्माऽवभासते । तत्र यदि नाम सुषुप्ते विषयानुषङ्गाभावात् 'इदं जानामी'ति विषय-तदनुभवपरामर्शो नास्ति, मा भूत्; अहमित्यात्ममात्रपरामर्शः किमिति न भवेत् ?**

**ननु अहमिति भोक्तृत्वं प्रतिभासते, तदभावे कथं तथा प्रतिभासः ? नैतत्सारम्; समुत्कालितोपाधिविशेषं**

## पञ्चपादिकाविवरणम्

इति चोदयति—**कथमिति** ॥ विषयानुभवनिमित्तो विषयावभासः स्यात्; जडत्वात्, न तन्निमित्तश्चिदात्मपरामर्श इति परिहरति—**नीलानुषङ्गो यश्चैतन्यस्येति** ॥ ननु सुषुप्ते द्रष्टृरूपाभावे कथमहमिति तत्परामर्शः ? नेत्याह—**तत्र यदि नामेति**। द्रष्टृत्वं सप्रतियोगिरूपम्, स चेदहमर्थः, अनात्मैवाहङ्कारः स्यादिति भावः ॥

ननु पराग्व्यावृत्तं द्रष्टृरूपं भोक्तृत्वमेव, कथं तत् सुषुप्तावनुभूयत इति चोदयति—**नन्वहमिति** ॥ न; अहङ्कारस्य त्वया

## तत्त्वदीपनम्

देरयमर्थः—विषयानुभवनिमित्तोऽहंकार इत्युक्तमङ्गीकरोति—**सत्यमेवमिति** ॥ तर्हि तस्यैवाऽऽत्मत्वं प्राप्तमित्याह—**किन्त्विति** ॥ अहम आत्मत्व आत्मप्रतिपत्तावितरस्यापि प्रतिपत्तिः स्यात्, न च तथा समस्तीत्याह—**तथा सतीति** ॥ अन्यथासिद्धो हेतुरिति चोदयति—**नन्विति** ॥ अनुभवनिमित्तत्वे हेतुमाह—**द्रष्टृरूपेति** । अहमुल्लेखस्य विषयानुभवव्याप्यत्वात्तदभाव इत्यर्थः । स्वप्रकाशत्वेन साधितं यच्चैतन्यं तदेवाहंशब्दार्थः ? आहो अन्यत् ? इति विकल्प्याऽऽद्ये विषयानुभवनिमित्ता सिद्धिरित्याह—**विषयेति** । विषयावभासोऽनुभवनिमित्तः स्यात्; जडत्वात् । तथाऽनुभवस्य विषयाकारत्वाच्च तदनुभवनिमित्तत्वं विषयावभासस्योचितमित्यर्थः । ततो वैलक्षण्यमाह—**न तदिति** । विषयानुभवस्याऽऽत्मानाकारत्वान्न तत्साधकत्वम्, आत्मनः संविद्रूपत्वाच्च न तदधीनसिद्धित्वमित्यर्थः । टीकायाम्—**नीलभोगः** इति—नीलसिद्धिरित्यर्थः । **अहमुल्लेखार्हं** इति—अहमुल्लेखनिमित्त इति यावत् । तत्र हेतुमाह—**अहमिति** । नीलज्ञानस्येदन्तया नीलभासकत्वात् कथमनिदमस्तदधीनसिद्धित्वमित्यर्थः । द्वितीयमुत्थापयति—**ननु सुषुप्ते इति** । दर्शनक्रियाकर्तृरूपस्याहंप्रतीतिविषयत्वम्, दर्शनक्रियायाश्च सुषुप्तावभावात्तत्कर्तुरभावः, तस्मात्तत्र कथमहमुल्लेखप्रसङ्ग इत्यर्थः । विशिष्टाप्रतिपत्तावप्यात्ममात्रप्रतिपत्तिः स्यादित्याह—**नेत्याहेति** ॥ विशेषितस्यैवाहंशब्दार्थत्वात्तदभावे कथमहमुल्लेखः ? इत्याशङ्क्याह—**द्रष्टृत्वमिति** । अहंकारः, नाऽऽत्मा, सप्रतियोगिकत्वात्,

## ऋजुविवरणम्

विप्रतिपत्तिरस्तीत्याशङ्क्य व्याचष्टे—**विषयानुभवनिमित्त इति** ॥ अनुषज्यत इत्यनुषङ्ग इति व्युत्पत्तिः प्रदर्शिता । "**विषयावभासः**" इत्यनेन "नीलभोगः" इति व्याख्यातम् । "तन्निमित्तः"इत्यनेनाहमित्युल्लिख्यते प्रतीयते येन, सोऽहमुल्लेखः ज्ञानम् । यद्वा, उल्लिख्यत इत्युल्लेखः आत्मेति । "अर्हत्वं" निमित्तेत्यनेन व्याख्यातम् । एतदुक्तं भवति—यदवच्छिन्नं ज्ञानम्, तस्यावभासकविषयावच्छिन्नत्वकथनं तस्यैवावभासकत्वमिति दर्शयितुम्, अहमित्यात्मेत्येवं तदाकारेणैव तदवभास इति दर्शयितुम्, यद्वा, पूर्वचोद्यपरिहारत्वेनायं ग्रन्थ एवं व्याख्यातः । चैतन्यानुषङ्गकथनं तस्य जडत्वेन तदवभासत्वमिति दर्शयितुं । "अहमित्यात्मे"त्यनेन प्रत्यग्रूपत्वादस्य तदनवभास्यत्वमिति दर्शितं नीलानुषङ्ग इत्यनेनैव ग्रन्थेन, पूर्वेण च विषयानुभवनिमित्तत्वासंभवात्सुषुप्तावहमवभासः आपादितः । "तत्र यदि नामे"त्यनेनापि तदेवाऽऽपाद्यते, अतः पौनरुक्त्यमित्याशङ्क्य, पूर्वं स्वरूपमात्रस्याहंकारत्वेऽपि विषयानुभवनिमित्तत्वं न संभवतीति दूषणमुक्तम्, इदानीं रूपान्तरविषयत्वेन पूर्वग्रन्थादाधिक्यं दर्शयितुम्—मा भूदन्याधीनत्वम्, स्वतोऽपि कथं तत्प्रतीतिरापाद्यत इति शङ्कां दर्शयति—**ननु सुषुप्त इति** ॥ अत्रैवं ग्रन्थद्वयं व्याख्यातं विज्ञेयम्—विषयानुभवनिमित्त इति चोद्ये कृते विकल्पः—किं स्वरूपमात्रस्याहंकारत्वं विषयानुभवनिमित्तत्वं च ? उतातिरिक्तस्येति ? तत्र प्रथमपक्षे नीलानुषङ्ग इत्यनेन दूषणम्, द्वितीयस्य त्वनेनानुवाद इति । तर्हि "तत्र यदि नामे"त्यनेनाहमित्यत्रात्ममात्रप्रतीतिः कथमापाद्यते ? नहि तेनात्ममात्रस्याहंकारत्वमुक्तम्, अतो नात्र किञ्चिद् दूषणमुक्तम्, इत्याशङ्क्याभिप्रायमाह—**द्रष्टृत्वमिति** ॥

"नन्वहमिति भोक्तृत्वमि"ति चोद्यमनुपपन्नम्; पूर्वोक्तदूषणसाम्यात्, भोग्यप्रतियोगिकस्य प्रतीतिश्चानुपपन्ना; तथा "तदभावे"इत्यप्यनुपपन्नम् । किमनेन तस्याहंकारस्याभावात् कथं तत्प्रतीतिरापाद्यत इत्युच्यते ? किं वा तदभावे तथा

## पञ्चपादिका

चैतन्यमात्रमस्मदर्थः, ततः सर्वदाऽहमिति स्यात्। नैतच्छक्यम् 'उपाधिपरामर्शेन चैतन्यमहमित्युल्लिख्यत' इति वक्तुम्। तत्परामर्शो हि तत्सिद्धिनिमित्तः, न स्वरूपसिद्धिहेतुः। स्वमाहात्म्येनैव तु स्वरूपसिद्धिः। ततश्च विषयोपरागानुभवात्मत्व-

## पञ्चपादिकाविवरणम्

निष्प्रतियोगिकात्ममात्रत्वाभ्युपगमादिति परिहरति—**नैतत्सारमिति**॥ ननु स्वरूपमपि विषयानुभवादेवाहमिति व्यज्यताम्? नेत्याह—**नैतच्छक्यमिति**॥ ततश्च विषयोपरक्तसप्रतियोगिकस्वभावस्याहङ्कारस्यात्मत्वं सुषुप्तावनुभवविरुद्धमिदमापत्स्यत इत्याह—**ततश्च विषयोपरागेति**॥ आत्मनस्तु सर्वात्मकत्वान्न पराग्व्यावृतता, अहमुपरागादेव व्यावृत्त्यवभास इत्यर्थः॥

## तत्त्वदीपनम्

विनश्वरत्वाच्च, घटवत्। यतो निष्प्रतियोगिकस्याहंशब्दार्थत्वम्, ततश्च तस्याऽऽत्मत्वे सुषुप्तावप्यहमुल्लेखप्रसङ्गः, नच दृश्यते; तस्मादहंकारस्यानात्मत्वमित्यर्थः।

अन्यथासिद्धिं निराकृत्यासिद्धिं शङ्कते—**नन्विति**॥ पराग्व्यावृत्तं यद्भोक्तृत्वम्, तदेव द्रष्टृरूपमित्यन्वयः। **पराग्व्यावृत्तमिति**—विषयसंबन्धवर्जितमित्यर्थः। निर्विकल्पकं यच्चैतन्यम्, तदहङ्कारशब्दार्थः। स च सुषुप्तौ भासत एवेति हेत्वसिद्धिरित्यर्थः। **कथं तत्सुषुप्ताविति** पाठे त्वयमर्थः—सप्रतियोगित्वेनानात्मत्वं प्रत्यक्षविरुद्धमिति शङ्कते—**ननु पराग्व्यावृत्तमिति**। अनात्मभ्यो व्यावृत्ततयाऽहमित्यनुभूयमानस्य कथमनात्मत्वमित्यर्थः। तर्हि सुषुप्तावप्यहमुल्लेखः स्यादित्युक्तम्, तत्राह—**कथमिति**। विषयानुभवाभावान्न तत्राहङ्कारानुभवप्रसङ्ग इत्यर्थः। पूर्वव्याख्यायां **'तदभाव'** इति टीकाया एषोऽर्थः—चिन्मात्रं सुषुप्तौ भाति चेत्, अहमुल्लेखोऽपि स्यादित्याशङ्क्याह—**तदभावे इति**। विषयानुभवाभावे सुषुप्तौ नाहमुल्लेखप्रसक्तिः, तन्निमित्तत्वादहंशब्दोल्लेखस्य; यथा प्रादेशमात्रपरिमितं प्रतियोगिनिरपेक्षतया प्रतीयमानं ह्रस्वशब्दोल्लेखितया प्रतिपत्तौ प्रतियोगिनमपेक्षते, तद्वदित्यर्थः। गूढाभिसन्धिरुत्तरमाह—**नाहंकारस्येति**॥ गूढाभिसन्धिमजानानः शङ्कते—**नन्विति**। **स्वरूप-**

## ऋजुविवरणम्

प्रतीतिरेव कथं घटते; अतः प्रतीतिसामर्थ्यादिव तदस्तित्वं निश्चीयत इति? उभयथाऽप्यहंकारस्यात्मव्यतिरेकसिद्धिः। "प्रतीतिसामर्थ्यादि"ति चानुपपन्नम्; सुषुप्तौ भोक्तृत्वप्रतिपत्तेरेवासिद्धत्वात्, प्रतिज्ञाहानिर्नाम निग्रहस्थानं चेत्याशङ्क्य व्याचष्टे—**ननु पराग्व्यावृत्तमिति**॥ यद् द्रष्टृरूपं पराग्व्यावृत्तं तद्भोक्तृत्वं भोगः, चिदवसानता यतः। पूर्वं सप्रतियोगिकस्याहंकारत्वे नात्मनोऽहंकारत्वमित्युक्तम्, अनेन सप्रतियोगिस्वरूपस्यैवाहंकारत्वमित्यङ्गीकृत्य चोद्यम्। भोक्तृत्वं सप्रतियोगिकमप्यात्मस्वरूपमङ्गीकृतमिति तन्मुखेन चोद्यं कृतम्। एतदुक्तं भवति—पराक्सम्बन्धं यद् द्रष्टृरूपं तदहमुल्लेखार्हम्, अत्र तु तद्वियुक्तम्। अतो नाहमुल्लेखार्हम्। **"भोक्तृत्वमेवे"**त्यवधारणेन विषयसम्बन्धो व्यावर्तितः। स्वरूपस्यैवाहंकारत्वमित्यङ्गीकृत्य चोद्यम्। **"अहमिति भोक्तृत्वमिति"**त्यनेनाहंकारस्वरूपानुवादः। **"तदभाव"**इत्यनेन सुषुप्तौ विषयसम्बन्धरूपाभावाद् नाहमुल्लेख इत्युक्तमिति दर्शितम्, अवभासकत्वं चात्मन एव। ततश्चात्मैवाहंकार इति न पूर्वोक्तदूषणमिति भावः। द्रष्टृरूपग्रहणं प्रकृतविषयमेव चोद्यमिति दर्शयितुम्॥ अत्र संग्रहः—

दृश्यावभासरूपेण भोक्तेत्युच्येत चेतनः। अहंरूपत्वमस्यापि तस्मात् तद्भावभावतः॥
इत्यहंकल्पना नैव सुषुप्तौ भागिनी भवेत्। भासकस्यात्मरूपत्वादनात्मत्वनिराकृतिः॥ इति॥

अथवा, "नन्वहमि"ति ग्रन्थोऽनुपपन्नः; नहि सुषुप्तौ भोक्तृत्वं नास्ति; चिदवभासत्वाद्भोगस्य, इत्याशङ्क्य व्याचष्टे—**पराग्व्यावृत्तमिति**॥ **'कथं सुषुप्तावनुभूयत'** इति वा पाठः (विवरणवाक्यस्य)। तत्रापि "नन्वहमि"ति टीकाग्रन्थे भोक्तृत्वप्रतिभासः सुषुप्तावस्तीति चोदितमिव प्रतिभाति; तन्निवृत्त्यर्थमवतारयति—**ननु पराग्व्यावृत्तं द्रष्टृरूपं भोक्तृत्वमेव कथमिति**। यद्वा, निष्प्रतियोगिकत्वमेवाङ्गीकृत्य चोद्यमित्यवतारयति—**ननु पराग्व्यावृत्तमिति**॥ द्रष्टृरूपं पराग्व्यावृत्तम्, सुषुप्तौ तु तद्रूपं भोक्तृत्वमेवानुभूयते, नतु व्यावृत्तम्, व्यावृत्तरूपमेव चाहमित्युच्यत इति नाहमुल्लेखप्राप्तिः सुषुप्ताविति॥ "समुत्कालिते"त्यदूषणम्, अङ्गीकृतत्वात्; नापि प्रतीत्यापादनं युक्तम्, पौनरुक्त्यात्; परसापेक्षत्वस्याप्युक्तत्वात्; इत्याशङ्क्य तत्र व्यावृत्तस्वरूपस्याहंकारत्वे सप्रतियोगिकत्वं भवेत्, ततश्चाभ्युपगमविरोध इति परिहाराभिप्रायमाह—**नाहंकारस्येति**॥ सप्रतियोगिकत्वेऽभ्युपगमविरोधो व्यक्त एव। ननु स्वत एव व्यावृत्तं वस्तु, नान्यतः; प्रतीतिमात्रं तु पराधीनं

## पञ्चपादिका

**शून्यः स्वरूपतोऽहमिति सुषुप्तेऽप्यवभासेत; दृशिरूपत्वाविशेषात्। भवत्येवेति चेत्? न; तथा सति स्मर्येत ह्यस्तन इवाहङ्कारः। अविनाशिनः संस्काराभावान्न स्मर्यत इति चेत्? ह्यस्तनोऽपि न स्मर्येत॥**

## पञ्चपादिकाविवरणम्

**भवत्येवेत्यादिः** स्पष्टार्थः॥ यथा पूर्वस्मिन् दिनेऽहमित्यभिमन्यमान एवासम्, एवमनुभूते स्मृतिनियमाभावेऽपि स्मर्यमाणात्ममात्रत्वादहङ्कारस्य सुषुप्तेऽपि स्मृतिः स्यादित्यर्थः। अहङ्कारादिप्रतिभासस्य नित्यचैतन्यरूपस्याविनाशात्तज्जन्यसंस्कारप्रसूता स्मृतिरनुपपन्नेति चोदयति—**अविनाशिनः संस्काराभावादिति**॥ परिहारः—**ह्यस्तनोऽपीति**॥

ननु सिद्धान्ते कथमहङ्कारस्मृतिः, तदवभासिसाक्षिचैतन्यस्य नित्यत्वात्? उच्यते, अहंवृत्त्यवच्छिन्नमेवान्तःकरणं चैतन्यस्य विषयभावमापद्यते, तद्वृत्तिसंस्कारजन्यस्मरणावच्छिन्नमन्तःकरणं पुनः स्मृत्यनुभवावच्छेदकमिति स्मरणोपपत्तिः।

## तत्त्वदीपनम्

**मिति**—निष्प्रतियोगिकमिति यावत्। प्रादेशमात्रपरिमितवस्तुनः स्वरूपेणानपेक्षितत्वेऽपि ह्रस्वशब्दोल्लिखितप्रतिपत्तावन्यापेक्षावदित्यर्थः। निष्प्रतियोगिकात्ममात्रस्याहंशब्दार्थत्वे प्रतियोगिनैरपेक्ष्यं दृष्टम्, दृष्टान्ते तु प्रमेयभेदस्य विद्यमानत्वात् सापेक्षत्वमिति वैषम्यमित्याशयेनाह—**नेत्याहेति**॥ अहंकारस्य सापेक्षत्वादात्मनश्चानपेक्षत्वात् कथमभेद इत्याह—**ततश्चेति**॥ सप्रतियोगिकस्यानात्मत्वं चेत्, तर्हि त्वन्मतेऽप्यात्मनः पराग्व्यावृत्तत्वादनात्मत्वापात इत्याशङ्क्याऽऽत्मनः पूर्णत्वाद् व्यावृत्तत्वासिद्धिरित्याह—**आत्मन इति**॥ 'अहमि'त्युक्ते व्यावृत्तता प्रथत इत्याशङ्क्य प्रथनमन्यथयति—**अहमिति**॥ उत्थितस्याहमिति यद् ज्ञानम् तत् स्मरणम्; ततश्च स्मर्येतेति नानिष्टमित्यत आह—**यथेति**। यथा पूर्वस्मिन् दिने 'अहमि'त्यभिमन्यमान आसम्, तथा सुषुप्तावप्य'हमि'त्यभिमन्यमान आसमित्युत्थितस्य स्मृतिः स्यादित्यर्थः। अनुभूते स्मृतिनियमाभावात् कथं स्मरणापादनम्? इत्याशङ्क्याह—**अनुभूत इति**। आत्मनः स्मर्यमाणत्वात्तद्रूपाभिन्नोऽहंकारोऽपि स्मर्येतेत्यर्थः। एतदभिप्रेत्योक्तम्—**ह्यस्तन इवेति**। अहंकारस्याविनाशित्वेन स्मरणाभावाभिधानमयुक्तम्; स्थितेऽपि स्मरणदर्शनादित्याशङ्क्याह—**अहंकारेति**। "अविनाशिनः" इत्यत्राहंकारस्याविनाशित्वेन स्मरणाभावं न ब्रूमः, किंतु तद्बोधिचैतन्यस्य नित्यतयेत्यर्थः। ह्यस्तनाहंकारस्यानुभवाश्रयत्वेनोपलम्भात्तस्य चानुभवस्य विनाशित्वेन स्मरणोपपत्तेः—"न स्मर्येत" इत्ययं परिहाराभास इत्याशङ्क्याह—**परिहार इति**। अनुभवाश्रयत्वस्य प्राग् निरस्तत्वात् परिहारो भवत्येवेत्यर्थः।

अहंकारबोधिचैतन्यस्यानित्यत्वेऽपि यथा त्वन्मते तत्स्मरणम्, तद्वत् ममापीति शङ्कते—**नन्विति**॥ चिन्मात्रस्य नित्यत्वेऽपि विशिष्टाऽऽकारस्यानित्यत्वात् स्मरणं युक्तमित्याह—**उच्यत इति**॥ अहंकाराऽऽकारा काचिदन्तःकरणवृत्तिरुत्पद्यते, तस्यां वृत्तावभिव्यक्तं चैतन्यं वृत्तिविशिष्टान्तःकरणसाधकम्, तस्याश्च वृत्तेर्नाशे तत्संस्कारादन्तःकरणाऽऽकारं स्मरणमुपजायते। ततः कथं स्मृत्यसंभवः? नच तथा त्वयाऽऽश्रीयत इति वैषम्यमित्यर्थः। **स्मृत्यनुभवेति**। अन्तःकरणाऽऽकारस्मृतावभिव्यक्तानुभवस्यावच्छेदकं विशेषकमिति यावत्॥

## ऋजुविवरणम्

भेदस्येव, अतो नाभ्युपगमविरोध इति शङ्कते—**ननुस्वरूपमपीति**॥ तत्र भेदादेर्गृहीते स्वरूपे पराधीनाभिव्यक्तेर्न स्वरूपतावन्मात्रता; अतश्चात्र निष्प्रतियोगिकत्वसिद्ध्यर्थं स्वरूपतावन्मात्रत्वमेवाङ्गीकर्तव्यम्? अन्याधीनत्वसिद्ध्यर्थं वा सप्रतियोगिकत्वम्? प्रथमपक्षे दूषणमाह—**नैतच्छक्यमिति**॥ यद्वा, परिमाणे भवतु, अत्र तु निरंशे स्वप्रकाशे न तथेति भावः। द्वितीयपक्षे दूषणत्वेनोत्तरग्रन्थमवतारयति—**ततश्चेति**। अतश्च टीकायां पौनरुक्त्यं परिहृतम्। ननु कथं सप्रतियोगिकत्वेनाहंकारस्यात्मत्वं निराक्रियते? सप्रतियोगिकजडव्यावृत्तेरात्मरूपत्वात्। यद्वा, व्यावृत्तेर्न सप्रतियोगिकत्वम्, त्वयाऽपि स्वरूपस्याङ्गीकृतत्वात्; इत्याशङ्क्य व्याचष्टे—**आत्मनस्त्विति**॥ कथमहंकारस्मृतिरापाद्यते? अनुभूते स्मृतिनियमाभावादित्याशङ्क्य व्याचष्टे—**यथा पूर्वस्मिन्निति**॥ "अविनाशिनः" इत्यनेनाहंकारनिर्देशशङ्का स्यात्; सन्निधानात्, ततश्चाविनाशिन इत्यसाधको हेतुः, न ह्यहंकाराविनाशः संस्काराभावे हेतुरित्याशङ्क्यसाभिप्रायमवतारयति—**अहंकारप्रतिभासस्येति**॥

## पञ्चपादिका

**ननु अस्त्येव सुषुप्तेऽहमनुभवः—'सुखमहमस्वाप्स'मिति सुषुप्तोत्थितस्य स्वापसुखानुभवपरामर्शदर्शनात्; नात्मनोऽन्यस्य तत्रानुभवः सम्भवति ? सत्यमस्ति; न तत् स्वापे सुखानुभवसंस्कारजं स्मरणम्। किं तर्हि ? सुखावमर्शो दुःखाभावनिमित्तः। कथम् ? स्वप्ने तावदस्त्येव दुःखानुभवः, सुषुप्ते तु तदभावात् सुखव्यपदेशः। तदभावश्च करणव्यापारोपरमात्। यदि पुनः 'सुप्तः सुखमि'ति च तद्विषयं स्मरणं स्यात्, तदा विशेषतः स्मर्येत, नच तदस्ति। व्यपदेशोऽपि 'सुखं सुप्तः' 'न किंचिन्मया चेतितमि'ति हि दृश्यते। यत्पुनः सुप्तोत्थितस्याङ्गलाघवेन्द्रियप्रसादाविना सुखानुभवोन्नयनमिति; तदसत्;**

## पञ्चपादिकाविवरणम्

ननु सुषुप्तावनुभूतसुखस्याप्याश्रयपक्षपातितयाऽहमुल्लेखादस्त्येव सुषुप्तेऽहमनुभव इत्याह—**नन्वस्त्येव सुषुप्तेऽहमनुभव इति** ॥ ननु सुखमनुभूतं चेत्, तस्य विषयजन्यत्वाद् विषयानुभवनिमित्त एव तत्राऽप्यहमुल्लेखः स्यादिति ? नेत्याह—**नात्मनोऽन्यस्येति** ॥ **सत्यमस्तीत्यादिः** स्पष्टार्थः ॥ ननु सुखावमर्शस्य मुख्यसुखालम्बनत्वं परित्यज्य कथं विरोधिदुःखाभावविषयतयोपचारः कल्प्यते ? शाब्दे हि ज्ञाने लक्षणा स्यात्, प्रत्यक्षस्तु सुखावमर्शो न लक्षणामर्हतीति चोदयति—**कथमिति** ॥ मुख्यसुखाभावाद् दुःखाभावस्य लक्ष्यस्य संप्रतिपन्नत्वादिति परिहरति—**स्वप्ने तावदित्यादिना** ॥ ननु परामर्शसामर्थ्यादिव मुख्यमेव सुखं कल्प्यतामिति ? नेत्याह—**यदि पुनः सुप्तः सुखमिति** ॥ **विशेषत इति**—विषयविशेषोपरक्ततयैवेत्यर्थः। दुःखाभाव एव परामर्शविषय इत्यत्र लिङ्गमाह—**व्यपदेशोऽपीति** ॥ ननु सुखानुभवस्यापि लिङ्गमस्ति प्रसन्नेन्द्रियत्वादीति, तत्राह—**यत्पुनः सुप्तोत्थितस्येति** ॥ **तदसदिति** स्पष्टार्थः ॥ उत्तरौ च चोद्यपरिहारग्रन्थौ स्पष्टार्थौ। तस्मान्न सुषुप्तौ भोक्तृतयाऽप्यहमुल्लेखोऽनु-

## तत्त्वदीपनम्

उत्थितस्य स्वापकालीनसुखानुभवपरामर्शमात्रेण कथं सुषुप्तावहमुल्लेखकल्पना, वैयधिकरण्याद् ? इत्याशङ्क्याह—**नन्विति** ॥ सुषुप्तेऽप्यहमनुभवोऽस्तीति सम्बन्धः। तत्र कल्पकमाह—**सुषुप्तावनुभूतसुखस्येति**। अनुभूतं सुखं येन पुंसा, असावनुभूतसुखः तस्येति विग्रहः। तस्यानुभवपदेन सम्बन्धः। अनुभूतसुखस्य पुरुषस्येत्यर्थः। तत्र सुखानुभवाभावेऽप्यनुभवितुः कथमनुभवः ? तत्राह—**आश्रयेति**। आश्रय-विषयकोट्योराश्रयकोटिपक्षपातित्वेनाऽऽत्मनः स्फुरणादित्यर्थः। अहमनुभवः सुषुप्तेऽस्त्येवेत्यन्वयः। सुषुप्तौ सुखानुभवमाक्षिपति—**नन्विति** ॥ सुषुप्तौ विषयानुभवाभावान्न तन्निमित्तः सुखानुभव इत्यर्थः। विषयानुभवाभावेऽपि परामर्शानुपपत्त्या सुखानुभवः कल्प्यते, इतरथा न तदाश्रयतयाऽहमुल्लेख इत्याह—**नेत्याहेति** ॥ सुखावमर्शस्य दुःखाभावविषयत्वमाक्षिपति—**ननु सुखेति** ॥ इतोऽपि नोपचार इत्याह—**शाब्द इति**। लक्षणायाः शब्दधर्मत्वादितरत्र न तत्कल्पनमित्यर्थः। अशाब्दत्वाभिप्रायेणावमर्शे प्रत्यक्षत्वव्यपदेश इत्यर्थः ॥ "स्वप्ने तावदि"त्यत्र मुख्यार्थपरित्यागहेत्वनभिधानादसंगतिरित्याशङ्क्याह—**मुख्येति**। न तावत् सुषुप्तावागन्तुकसुखसंभवः, तत्कारणाभावात्, नापि नित्यं सुखम्, तत्र प्रमाणाभावादित्यर्थः। दुःखाभावस्यापि नालम्बनत्वम्, अश्मादौ प्रसक्तेः; इत्याशङ्क्य सुखात्तावद्वैधर्म्यमाह—**दुःखाभावस्येति** ॥ प्रतियोगिसमानाधिकरणदुःखाभावस्य सुखशब्दप्रवृत्तिनिमित्तत्वाङ्गीकारान्नातिप्रसक्तिरित्यभिसन्धायोक्तम्—**स्वप्ने तावदिति** ॥ विमतः, दुःखसंबन्धी, मुक्तिविलक्षणावस्थासंबन्धित्वात्, संमतवदित्याशङ्क्याह—**तदभाव इति**। सविकल्पकस्य शब्दोल्लिखितत्वात्तत्र लक्षणा युक्तेत्यर्थः। मुख्याभावोऽसिद्ध इति चोदयति—**नन्विति** ॥ दुःखव्यावृत्ततया सुखस्यानुभूयमानत्वाद् विशेषतः स्मर्येतेत्येतदिष्टमित्याह—**विशेषत इति** ॥ चन्दन-गानादिर्**विषयविशेषशब्दार्थः** ॥ अस्मर्यमाणत्वात् सुप्तौ न सुखानुभव इत्यभिज्ञावद्—व्यपदेशोऽपि 'सुखं सुप्तः' इति कस्मादुदाहृतम्, इष्टविघातापत्तेरित्याशङ्क्याह—**दुःखाभाव एवेति** ॥

## ऋजुविवरणम्

**अहंवृत्त्यवच्छिन्नमिति**। अहंकारवृत्त्यवच्छिन्नचैतन्यस्य तन्नाशे नाशात् संस्कारः, स्मरणं चोपपद्यत इत्यर्थः।

"नन्वस्त्येवे"त्ययुक्तम्; नहि 'सुखमहमस्वाप्स'मित्युत्थितस्य परामर्शस्तदानीमहमवभासकसाधकः, व्यधिकरणत्वाद्; इत्याशङ्क्यावतारयति—**ननु सुषुप्ताविति** ॥ "नात्मनोऽन्यस्ये"ति व्याहतम्, सुखानुभवाङ्गीकारात्; नापि परिहारोऽयम्, उत्तरेण पौनरुक्त्यादित्याशङ्क्याह—**ननु सुखमिति** ॥ "स्वप्ने तावदि"त्यनेन स्वस्वप्ने दुःखानुभवप्रदर्शनं सुषुप्तौ तदभावप्रदर्शनं च व्यधिकरणम्; प्रकृतचोद्यस्यापरिहारात्, इत्याशङ्क्याह—**मुख्यसुखाभावादिति** ॥ ननु दुःखादिव्यावृत्तमात्मगतत्वेन च सुखमनुभूयते; तत् कथं विशेषत इत्यनिष्टत्वेनोक्तम् ? इत्याशङ्क्य व्याचष्टे—**विषयविशेषेति** ॥ "व्यपदेशोऽपी"ति व्यर्थम्, इष्टविघाताव्यधिकरणत्वात्; इत्याशङ्क्याह—**दुःखाभाव एवेति** ॥

## पञ्चपादिकाविवरणम्

स्मर्यत इति। ननु अनुभूतेऽपि न स्मृतिनियमः ? सत्यम्; आत्मन्यनुस्मर्यमाणे तावन्मात्रस्याहङ्कारस्य 'अहमि'त्येव स्मृतिनियमः स्यादित्युक्तम् ॥

ननु दुःखाभावो विद्यमानोऽपि नानुभवितुं शक्यते; प्रतियोगिस्मरणाभावात्, सम्भवति च मुख्य एव स्वरूपानन्दानुभवः। ननु तदपि सुखमविद्याऽऽवृतं न प्रकाशमर्हति ? न; अनावृतसाक्षिचैतन्यसुखांशस्य प्रकाशोपपत्तेः। जागरणे तर्हि किमिति नावभासते ? भासत एव परमप्रेमास्पदत्वलक्षणं सुखम्, तीव्रवायुविक्षिप्तप्रदीपप्रभावन्मिथ्याज्ञानविक्षिप्ततया न स्पष्टमवभासते, सुषुप्तौ तु तदभावादधिकं व्यज्यत इति ॥ ननु उत्थितस्य दुःखाभावपरामर्शो विद्यते, स कथं प्रतियोगिज्ञानाभावादननुभूतः परामृश्यते ? उच्यते, अनुभूतमेव सुखमुत्थितस्यानुस्मर्यमाणं तत्र विरोधिदुःखाभावमर्थापत्त्या गमयति—अनुभूतं चेत् सुखम्, नास्ति दुःखमिति; अतो दुःखाभावो नानुस्मस्मर्यते, किंतु प्रमीयत इति। एवमुत्थितस्य ज्ञानाभावपरामर्शोऽपि ज्ञानविरोधिनोऽज्ञानस्यानुभूततया स्मर्यमाणस्यानुपपत्त्यैव प्रमीयते, नानुस्मर्यते ॥

ननु जागरणेऽप्यनुभूयमानमज्ञानं कथं ज्ञानविरोधि स्यात् ? न; अवस्थाविशेषविशिष्टस्याज्ञानस्य सुषुप्तेऽनुभवात्,

## तत्त्वदीपनम्

सुखं सुप्त इत्येतद्विवृणोति—**न किंचिदिति** ॥ सुप्तौ सुखानुभवस्य कल्पकसद्भावात् स आश्रयणीय इति शङ्कते—**ननु सुखेति** ॥ प्रतितर्कात् पराहतिमाह—**तदसदिति** ॥ टीकायामपेक्षितं पूरयति—**तस्मादिति** । **भोक्तृतयेति**—सुखानुभवाश्रयतयेति यावत्। सुषुप्तावहमुल्लेखसाधकं च नेत्याह—**अनुस्मर्यत इति** ॥ नञ्पदमत्राप्यनुषज्यते। अस्मर्यमाणत्वान्न सुषुप्तौ तदनुभव इत्यर्थः। उक्तौ चोद्यपरिहारौ स्मारयति—**नन्वित्यादिना** ॥

"सौषुप्तसुखावमर्शो दुःखाभावनिमित्तः" इत्युक्तं टीकाकृता, तदाक्षिपति—**नन्विति** ॥ किं तत्प्रत्ययः स्मृतिः ? उत प्रमाणम् ? नाद्य इत्याह—**दुःखेति** । प्रतियोगिस्मरणं धर्मिग्रहणं चाभावप्रतिपत्तौ कारणम्, सुषुप्तौ च तदभावान्नाभावानुभवो युक्त इत्यर्थः; सुखशब्दस्य भावरूपे सुखे प्रसिद्धत्वात्तत्परित्यागेनाभावविषयत्वकल्पनाऽयुक्तेः। न द्वितीयोऽपीत्याह—**संभवति चेति** ॥ विषयविशेषाभावात् कथं तत्र सुखानुभवसंभवः ? तत्राह—**स्वरूपेति** ॥ स्वरूपसुखानुभवमाक्षिपति—**ननु तदपीति** ॥ स्वप्रकाशात्मस्वरूपत्वात् कथं तदप्रथनम् ? इत्याशङ्क्याह—**अविद्याऽऽवृतमिति** ॥ किं पूर्णसुखस्याप्रकाशं ब्रवीषि ? उत सुखमात्रस्य ? तत्राद्यमङ्गीकृत्य द्वितीयं दूषयति—**न; नावृतेति** । अज्ञानसाधकतया साक्षिणः प्रकाशमानत्वात् तत्स्वरूपसुखानुभवो युक्त इत्यर्थः। साक्षिस्फुरणेऽपि जागरिते यथा न स्वरूपाऽऽनन्दानुभवः, तथा सुषुप्तावपीति चोदयति—**जागरण इति** ॥ जागरिते स्वरूपसुखस्यानुभव एव नेत्युच्यते ? उत स्पष्टम् ? इति विकल्प्याऽऽद्यं निरस्यति—**भासत इति** ॥ प्रेमास्पदत्वं लक्षणं गमकं यस्य, तत्तथोक्तम्। द्वितीयं प्रत्याह—**तीव्रेति** ॥ स्वरूपसुखत्वाविशेषादाच्छादकाविशेषाच्च सुप्तौ न स्पष्टानुभव इत्याशङ्क्याह—**सुषुप्ताविति** ॥ परामर्शमङ्गीकृत्य दुःखाभावे परामर्शमाक्षिपति—**ननूत्थितस्येति** । 'निर्दुःखमस्वाप्सम्'इत्यभावपरामर्शो दृश्यते, स नोपपद्यते; प्रतियोगिस्मृत्यभावे सुप्तौ दुःखाभावासंभवादित्यर्थः ॥ अस्मन्मते दुःखाभावज्ञानस्य स्मरणत्वमेव नेत्याह—**उच्यत इति** ॥ कथं तर्हि परामर्शः ? इत्याशङ्क्याह—**अनुभूतमिति** ॥ अर्थापत्तिमभिनयति—**अनुभूतमिति** ॥ उत्थितस्य ज्ञानाभावस्मृतिवद् दुःखाभावस्मरणमपि किं न स्यात् ? इत्याशङ्क्य दृष्टान्तासंप्रतिपत्तिमाह—**एवमिति** ॥ संग्रहवाक्यं विवृणोति—**ज्ञानविरोधिन इति** ॥ "प्रमीयते"इत्यत्र ज्ञानाभाव इत्यध्याहारः। ज्ञानाभावस्य स्मर्यमाणत्वमेव किं न स्यात् ? तत्राह—**नानुस्मर्यत इति** । धर्म्यादिज्ञानाभावान्न ज्ञानाभावानुभवः सुषुप्ताविति, न तत्स्मरणमित्यर्थः ॥

अज्ञानस्य ज्ञानविरोधित्वमाक्षिपति—**ननु जागरण इति** ॥ किमज्ञानमात्रस्य ज्ञानस्य च विरोधाभावः ? उत विशिष्टस्य ? तत्राऽऽद्यमङ्गीकृत्य द्वितीयं दूषयति—**नावस्थेति** । सुषुप्त्यवस्थाविशेषः। ततः किमित्यत्राह—**तस्य चेति** ॥

## ऋजुविवरणम्

"सत्यमस्ती"त्यादिटीकाग्रन्थमाक्षिपति—**ननु दुःखाभाव इति** ॥ ननु सुखानुभवोऽपि न संभवति, विषयजन्यत्वात्; इत्याशङ्क्याह—**संभवति च मुख्य एवेति** ॥ मा भूद् दुःखाभावस्मरणम्, ज्ञानाभावस्मरणं तु दृश्यते तत् कथं प्रतियोगिस्मरणाभावे संभवेत् ? इत्याशङ्क्याह—**एवमुत्थितस्येति** ॥

**ननु जागरणेऽपीति** । विरोधे सति अन्यतरदर्शनादन्याभावनिश्चयः; अत्र तु सहैवैकात्मगतत्वेनानुभूयमानयोः कथं विरोधः ? इति भावः। **अवस्थाविशेषविशिष्टस्येति**—सर्वाज्ञानत्वं नामावस्थाविशेषः; तेन विशिष्टस्येत्यर्थः। एकाश्रयत्वे सति

## पञ्चपादिकाविवरणम्

तस्य च जागरणेऽपि घटादिज्ञानविरोधितादर्शनात्पटावगमसमये। ननु अस्मर्यमाणत्वादेव ज्ञानानां सुषुप्तौ ज्ञानाभावोऽनुमीयते ? न; अतिवृत्तज्ञानानामपि सतामस्मर्यमाणत्वात्। प्रातर्गजाभावोऽपीदानीमनुस्मर्यमाणाद् गजविरोधिपदार्थादर्थापत्त्या प्रमीयते, न गजविषयस्मृत्यनुदयमात्रात्, व्यभिचारित्वात्। तस्माद् विशिष्टाज्ञान-सुखानुभवानुपपत्तिगम्यौ ज्ञानाभाव-दुःखाभावाविति मन्तव्यम्। ननु अज्ञान-सुखानुभवयोः साक्षिचैतन्यस्य चाविनाशिनः संस्काराभावे कथमुत्थितस्य त्रयाणामनुस्मरणं स्यात् ? उच्यते; अज्ञानगतचैतन्याभासजन्मोपाधित्वादज्ञान-सुख-साक्षिविकल्पानुभवस्य, अज्ञानावस्थाभेदेन चैतन्याभासानां भिन्नत्वात् तद्विनाशसंस्कारजस्मरणमज्ञान-सुख-साक्षिचैतन्याकारमज्ञानविशिष्टात्माश्रयमेव सम्भाव्यते, नान्तःकरणाश्रयमिति। सर्वथापि

## तत्त्वदीपनम्

अज्ञानस्य पटज्ञानाऽऽकारपरिणत्यवस्थायां तदन्याशेषविशेषविज्ञानाभावदर्शनाद्विशिष्टज्ञानाज्ञानयोर्विरोधः सिद्धः। नच—पटज्ञानसमये ज्ञानान्तराभावो विरोध्यज्ञानप्रयुक्तो न भवति, किंत्वन्तःकरणस्य ज्ञानद्वयपरिणामसामर्थ्याभावादिति—वाच्यम्; तस्यासंप्रतिपत्तेरित्यर्थः॥ सुप्तौ विरोध्यज्ञानानुभवं परिकल्प्य तदनुपपत्त्या ज्ञानाभावकल्पनातो वरमस्मर्यमाणत्वलिङ्गेन ज्ञानाभावानुमानमिति चोदयति—**नन्विति**॥ "करणाधिकरणयोरि"त्यनेनाधिकरणेऽपि ल्युट्प्रत्ययाभिधानाद् ज्ञानशब्दस्यात्मवृत्तिता। तथा चात्मना सुषुप्तौ विषयानुभवे तत्स्मरणं स्यात्, नच तदुपलभ्यते; तस्मात् तत्र ज्ञानाभावानुमानम्। विमतम्, सुषुप्तौ नानुभूतम्, अस्मर्यमाणत्वात्; लोकान्तरवर्तिपदार्थवदित्यर्थः। व्यभिचारित्वान्न हेतुः साधुरित्याह—**न अतिवृत्तेति**। अतिवृत्तं ज्ञानं येषाम्, ते अतिवृत्तज्ञाना इति विग्रहः॥ **अपि सतामिति**—सताम् विद्यमानानाम्; अनुभूतानामप्यस्मर्यमाणत्वदर्शनादित्यर्थः। प्रातः किमत्र त्वया चत्वरदेशे गजोऽन्वभावीति केनचित्पृष्टः सन् ब्रवीति—'करिवरमत्र नान्वभूवम्, संप्रति तत्स्मृत्यनुदयादि'तीत्यस्मरणेन ज्ञानाभावानुमानमपि क्वचिद् दृष्टमित्याह—**प्रातरिति**। गजविरोधिपदार्थस्य केवलभूतलस्य स्मर्यमाणस्यानुपपत्त्या गजाभावः प्रमीयत इत्यर्थः। गजाभावस्यानुमेयत्वं किं न स्यादिति ? अत आह—**न गजेति**॥ प्रकृतमुपसंहरति—**तस्मादिति**॥ सुषुप्तावज्ञानाद्यनुभवकल्पकाभावान्न तद्बलादभावसिद्धिरिति चोदयति—**नन्विति**॥ स्मरणमेवानुभवकल्पकमित्यत्राह—**अज्ञानेति**॥ अज्ञान-सुखानुभवयोः साक्षिबोधकचैतन्यस्य च संस्काराभाव इति संबन्धः। तत्र हेतुः—**अविनाशिन इति**॥ च-शब्दात् साक्ष्यनुभववदज्ञान-सुखानुभवयोरप्यविनाशित्वं सूचयति। अनुभवनाशजसंस्कारस्य स्मृतिमूलत्वादज्ञानादिसाधकसाक्षिणश्चाविनाशात् कथं स्मरणमित्यर्थः। **अविनाशिना**मिति पाठे तस्य 'त्रयाणामि'त्यनेन संबन्धः। अज्ञानादेर्बोधकस्यानाशेऽप्यज्ञानादेर्नाशे तत्सहितानुभवस्यापि नाशात् तत्संस्कारो युज्येतापि, नच तथेत्यभिसन्धायोक्तम्—**अविनाशिनामिति**॥ चैतन्यस्य स्वरूपेण नित्यत्वेऽपि वैशिष्ट्यस्यानित्यत्वात् स्मरणं युक्तमित्याह—**उच्यत इति**॥ अज्ञानादेर्नित्यत्वाद्वैशिष्ट्यमपि तथेत्याशङ्क्याह—**अज्ञानेति**। अज्ञानं स्वसुखसाक्ष्याकारेण परिणमते, तत्र न परिणताज्ञाने चैतन्याभास उपजायते, तस्माच्चाज्ञानादिविक्षेपानुभव इत्यर्थः। चैतन्याभासस्यैक्यात् कथमाकारविकल्पजनिः ? तत्राह—**अज्ञानेति**॥ परिणामोऽवस्थाशब्दार्थः। आत्मा ज्ञानाद्यनुभविता, स्मर्ता चान्तःकरणविशिष्ट इति स्मरणानुभवयोर्वैयधिकरण्यमित्यत आह—**अज्ञानविशिष्टेति**। संस्कारजनकं यदाश्रयं तदाश्रयः संस्कार इति नियमः। ततश्च संस्कारजनकस्याज्ञानविशिष्टाश्रयत्वात् संस्कारस्यापि तदाश्रयत्वमिति, तस्यैव स्मर्तृत्वमपीत्यर्थः॥ अहमित्यन्तःकरणाश्रयत्वमुपलभ्यत इत्यत्राह—**नान्तःकरणेति**। स्मरण-संस्कारयोरेकाश्रयत्वनियमादन्तःकरणस्य सद्भावेऽपि न स्मृत्याश्रयतया स्थितिः; तस्मादज्ञानविशिष्टाश्रयत्वमुचितमित्यर्थः। असंगतिसमर्थनमुपसंहरति—**सर्वथेति**॥ अज्ञानविशिष्टाश्रयत्वमन्तःकरणविशिष्टाश्रयत्वं वा **सर्वथा**शब्दार्थः।

## ऋजुविवरणम्

यद्विषयमज्ञानम्, तद्विषयज्ञानेन विरुद्ध्यते; तच्च जागरणे पटावगमसमये पटाज्ञानादर्शनाद् घटाज्ञानदर्शनसमये तज्ज्ञानदर्शनाच्च निश्चीयत इत्यर्थः। ननु स्मर्तव्यास्मृत्याऽनुभवाभावनिश्चयोऽपि दृश्यते, राजकुलादागतस्य कस्यचिदुत्तरकाले गजजिज्ञासायामेवं स निश्चिनोति—यदि हि गजोऽनुभूतो भवेत्, स्मर्येतैव, अतः स्मरणानुदयान्नास्तीति; तद्वदत्रापि स्मर्तव्यास्मृत्याऽप्यभावनिश्चय इत्याशङ्क्याह—**प्रातर्गजाभावोऽपीति**॥ **अज्ञानगतेति**—अज्ञानवृत्तिरज्ञानसुखसाक्ष्याकारोत्पाद्यते, तदवच्छिन्नत्वादिति। ननु चैतन्याभासस्यैकत्वादुत्तरत्रैकाकारमेव भवेदित्याशङ्क्याह—**अज्ञानावस्थाभेदेनेति**। ननु यदाश्रयं स्मरणम्, तदाश्रयोऽनुभवो भवेत्, अन्तःकरणाश्रयं च स्मरणं दृश्यते; तेनानुभवोऽपि तदाश्रयः स्यात्, ततश्च स्मृत्याश्रयपक्षपातितयाऽहङ्कारानुभवोऽपीत्याशङ्क्याह—**अज्ञानविशिष्टात्माश्रयमिति**॥

## पञ्चपादिका

अनुभूतं चेत्सुखं स्मर्येत, न तत्र लिङ्गेन प्रयोजनम्। यद्येवम्, सुप्तोत्थितस्य कथं कस्यचिदङ्गलाघवं कस्य चिन्नेति? उच्यते; जागरणे कार्यकरणानि श्राम्यन्ति; तदपनुत्तये व्यापारोपरमः स्वापः। तत्र यदि सम्यग् व्यापारोपरमः, तदाऽङ्गानि लघूनि, इतरथा गुरूणीति। तदेवं नायं नीलादिप्रत्ययादन्य एवात्मविषयोऽहंप्रत्ययः, नापि विषयानुभवादेवाहमुल्लेखः। तस्माद् ब्रह्मविदामेकपुण्डरीकस्य लोकानुग्रहैकरसतया सम्यग्ज्ञानप्रवर्तनप्रयोजनकृतशरीरपरिग्रहस्य भगवतो भाष्यकारस्य मतमागमयितव्यम्॥

## पञ्चपादिकाविवरणम्

सुषुप्तेऽज्ञान-सुखानुभवसम्भवाद् असम्बद्धमिदं टीकाकारेणोक्तमिति? सत्यम्; परमतमाश्रित्येदमुक्तम्, न स्वमतमिति न दोषः॥

स्वयंप्रकाशत्वाहङ्कारभेदावुपसंहरति—**तदेवं नायं नीलादिप्रत्ययादिति**॥ अहङ्कारभेदस्याप्युपलक्षणार्थम्। यस्मादात्मनोऽहङ्कारो भिद्यते, तस्मादागममूलभाष्यवचनमुपपन्नमित्याह—**तस्माद् ब्रह्मविदामिति**॥ कश्चासावागमः? "स एवाधस्तात्स एवोपरिष्टादि"ति भूमाख्यब्रह्मणः सर्वात्मकत्वमभिधाय—"अथातोऽहङ्कारादेशः" इति तस्यापि सर्वात्मकत्वमुक्त्वा "अथात आत्मादेशः" इत्यात्मानमहङ्काराद् भेदेन निर्दिशति। ननु जीव-ब्रह्मणोः सार्वात्म्यव्यपदेशो यथैकत्वसिद्ध्यर्थः, एवमहङ्कारस्यात्मैकत्वसिद्ध्यर्थो व्यपदेशः स्यात्? तन्न; द्वयोः सार्वात्म्यायोगात्। तत्र युक्तं भेदेन प्रतिपन्नयोर्जीवब्रह्मणोरेकत्व-

## तत्त्वदीपनम्

अभ्युपगमवादत्वाद् नासंगतिरिति समाधत्ते—**सत्यमिति**॥ किमत्र विनिगमनकारणम्? इत्याशङ्क्य श्रुति-युक्त्योरेव नियामकत्वमित्याह—**न स्वमतमिति**॥

टीकायामात्मप्रत्ययस्य नीलादिप्रत्ययादन्यत्वं निराकुर्वता नीलादिप्रत्यय एवात्मप्रत्यय इत्युक्तं स्यात्, नच तद् युज्यते; अन्याकारप्रत्ययस्यान्यसाधकत्वासंभवादित्याशङ्क्य तात्पर्यमाह—**स्वयमिति**॥ नीलादिप्रत्ययादन्य एव मनोजनित आत्मविषयः प्रत्ययः, तत्साधकं यन्नैयायिकादिमतम्, तन्न संभवति; कर्म-कर्तृविरोधात्। संविदाश्रयतयाऽऽत्मसिद्धिरिति यद् गुरुणोच्यते, तदप्यसंगतम्; अन्याकारज्ञानस्यान्यसाधकत्वासंभवात्। परिशेषात् स्वप्रकाशत्वमिति **टीकार्थः**॥ स्वप्रकाशत्वमेव तत्रोपसंहृतम्, ततःकथमुक्तमहंकारभेदस्याप्युपसंहृतिरिति? तत्राह—**अहंकारेति**। अहंकारस्य विषयानुभवाधीनसिद्धित्वादात्मनश्च तद्वैपरीत्याद् भेद इत्यर्थः। भाष्यकृन्मतस्यागममूलत्वं कस्मादुपसंह्रियते तस्याप्रक्रान्तत्वादित्याशङ्क्य व्यतिरेकस्य न्यायत उपादानाद् न्यायस्य च स्वातन्त्र्येण साधकत्वासंभवात्तदनुग्राह्याऽऽगमप्रदर्शनं युक्तमित्याह—**यस्मादिति**॥ व्यतिरेकसाधकाऽऽगमजिज्ञासया पृच्छति—**कश्चेति**॥ "अथातोऽहंकारादेशः" इत्यत्र परापरात्मनोरन्यतरस्य सार्वात्म्यं निर्दिष्टम्, न त्वन्यस्येति शङ्कानिवृत्त्यर्थं वाक्योपक्रमं पठति—**स एवेति**। स एव—परमात्मैव भूमा, अधस्ताद् उपरि मध्ये च; स सर्वान्तरत्वेन स्थित इत्यर्थः॥ तत् किं पराक्त्वेन प्रतिपत्तव्यम्? उत प्रत्यक्त्वेन? इति वीक्षायां प्राकृतमतिमनुसरन्ती श्रुतिरहंकारात्मतामाह—**अथेति**॥ ब्रह्मप्रतिपादनानन्तर्यमथशब्दार्थः। ब्रह्मणः सार्वात्म्यमतःशब्दार्थः। अहंकारस्य सप्रतियोगिकत्वादात्मत्वमनुपपन्नमित्याशङ्कायां मुख्यात्मानं दर्शयितुमाह—**अथेति**। अमुख्यकथनानन्तरं मुख्यात्मजिज्ञासायां 'कथ्यते' इत्यभिधानादात्मनोऽहंकारादन्यत्वम्; अन्यथा पृथङ्निर्देशवैयर्थ्यादित्यर्थः। पृथङ्निर्देशोऽन्यथापि घटत इति शङ्कते—**नन्विति**। यथा सार्वात्म्यलक्षणैकलक्षणाक्रान्तत्वेन जीव-परयोरभेदं प्रतिपादयितुं सार्वात्म्यं व्यपदिश्यते, तथाऽहंकारात्मनो-

## ऋजुविवरणम्

आत्मविषयोऽहंप्रत्ययो नीलादिप्रत्ययादन्यो न भवतीत्युपसंहृतम्—"तदेवमि"त्यनेन ग्रन्थेन, तदयुक्तम्; अनुक्तोपसंहारात्; व्याहतश्च; अन्यत्वनिषेधसामर्थ्यान्नीलादिप्रत्ययस्यैवात्मविषयत्वप्रसङ्गात्; उत्तरग्रन्थविरोधश्च, तत्र नीलादिप्रत्ययादहमवभासनिषेधादित्याशङ्क्याह—**स्वयंप्रकाशत्वाहंकारेति**॥ ननु स्वयंप्रकाशत्वमेवोपसंहृतम्; विषयानुभवात्, अहमवभासनिषेधश्च; नाहंकारभेद इत्याशङ्क्याह—**अहंकारभेदस्येति**। विषयानुभवादहमुल्लेखो न भवतीति वदता भेदो दर्शित इत्यर्थः। ननु अहंकारभेदं प्रसाध्य "तस्मादि"त्यनेनाऽऽगमयितव्यमित्युक्तम्, तदप्रस्तुतमित्याशङ्क्य, एवं न्यायत उपपाद्यानुग्राह्यं प्रमाणमुत्तरग्रन्थेन प्रतिपाद्यत इति तात्पर्यमाह—**यस्मादात्मन इति**॥ **एकपुण्डरीकस्येति**—एक एव पुण्डरीको व्याघ्रः श्रेष्ठः। यद्वा—एक एव सितच्छत्रः, एतच्छायामाश्रित्य सर्वे ब्रह्मविदो वर्तन्त इत्यर्थः। "आगमयितव्यमि"त्यस्य व्याख्या—**आगममूलमिति**। आगमवदाचरितव्यम्; तन्मूलत्वादित्यर्थः। ननु एकत्वमुपदिश्य भेदोपदेशे प्रसज्यप्रतिषेधः स्यादित्याशङ्क्य

### पञ्चपादिका

**तदुच्यते, येयं श्रुति-स्मृतीतिहास-पुराणेषु नामरूपम्, अव्याकृतम्, अविद्या, माया, प्रकृतिः, अग्रहणम्, अव्यक्तम्, तमः,**

### पञ्चपादिकाविवरणम्

सिद्ध्यर्थस्तदुपदेशः, अहङ्कारस्य तु पूर्वमेवात्मैकत्वप्रतिपत्तेः पृथगुपदेशो भेदसिद्ध्यर्थं इति गम्यते । ब्रह्मणः परोक्षस्य प्रत्यक्षत्वसिद्धयेऽहमात्मत्वमुपदिश्य पुनस्तद्व्युदासेन मुख्यात्मत्वमुपदिशतीत्यर्थः । "महाभूतान्यहङ्कारः" इति च स्मृतिः ॥

तर्ह्ययमहङ्कारः किमुपादानः ? किंनिमित्तः ? किंस्वरूपः ? किंप्रमाणकः ? किङ्कार्यः ? किमिति सुषुप्ते न भाति ? इति चोदिते सति—**उच्यत** इत्यादिपरिहारः ॥ **येयमि**त्युपादानसङ्कीर्तनम् । **अविद्या-कर्म-पूर्वप्रज्ञेति**—भ्रान्ति-कर्म-पूर्वानुभव-

### तत्त्वदीपनम्

रित्यर्थः । वैषम्येणोत्तरमीरयति—**तन्नेति** । विरुद्धधर्माक्रान्ततया जीव-पयोर्भेदप्रतिपत्तेः सार्वात्म्यव्यपदेशोऽभेदं द्रढयितुमिति युज्यते, भिन्नयोः सार्वात्म्यायोगादित्यर्थः । ततो वैलक्षण्यमाह—**अहंकारस्येति** । "पूर्वमेवे"त्यत्र पृथगुपदेशादित्यनुषङ्गः । अहंकारात्मनोरभेदस्य शास्त्रे संस्काररहितानामपि सिद्धत्वान्नाभेदप्रतिपत्त्यर्थत्वं पृथगुपदेशस्य, किंतु भेदप्रतिपत्त्यर्थत्वमित्यर्थः ॥ अहंकारस्याऽऽत्मव्यतिरिक्तत्वे द्वयोः सार्वात्म्यस्य कथनमनुपपन्नमित्याशङ्क्य, किं मुख्यस्यानुपपत्तिः ? उतामुख्यस्य ? तत्राऽऽद्यमङ्गीकृतम्, द्वितीये तु नानुपपत्तिरित्याह—**ब्रह्मण इति** । यथा मुख्यारुन्धतीदर्शनशेषत्वेन स्थूलतारामरुन्धतीत्वेनोपदिश्य तस्या अरुन्धतीत्वं व्यावर्त्य मुख्यप्रदर्शनम्, तथाऽमुख्यमात्मानं प्रथममभिधाय, पुनस्तन्निरसनेन मुख्यप्रदर्शनायाहंकारसार्वात्म्यकथनं युक्तमित्यर्थः । श्रुतिपर्यालोचनयाऽहंकारस्यानात्मत्वमभिधाय तन्मूलस्मृतिपर्यालोचनयाऽप्याह—**महाभूतानीति** ॥ "महाभूतान्यहंकारः" इत्युपक्रम्य "एतत्क्षेत्रं समासेने"त्यन्तेऽहंकारस्य क्षेत्रकोटावन्तर्भावमभिधाय, "एतद्यो वेत्ति तं प्राहु"रित्यत्राहंकारसाक्षिण आत्मत्वकथनाद् व्यतिरेकसिद्धिरित्यर्थः ॥

श्रुति-स्मृति-युक्त्यनुभवपर्यालोचनयाऽहंकारस्यानात्मत्वं व्यपदिश्य, "तदुच्यते" इत्यादिना ग्रन्थेनाविद्यादिकं प्रदर्श्यते तस्यात्रानुपगममाशङ्क्य तद्व्यावर्त्यां शङ्कामाह—**तर्हीत्यादिना** ॥ अहंकार आत्मान्यश्चेत्, स कीदृशः ? इति विवेचनीयम्—किं सादिः ? उतानादिरिति ? अनादित्वेऽविद्या-तत्संबन्धातिरिक्तत्वे सत्यनादित्वादनुच्छेद्यत्वम् । सादित्वेऽपि किं निरुपादानः ? उत सोपादानः ? आद्ये भावकार्याजनिरित्यभिप्रेत्य द्वितीयं विमृशति—**किमुपादान इति** । किमुपादानमस्येति । किं सदुपादानः ? उत असदुपादानः ? आहो अनिर्वचनीयोपादानः ? इति विमर्शार्थः । सदुपादानत्वे कार्यस्यापि सत्यतापात् । द्वितीये निरस्तसमस्तसामर्थ्यस्य कार्यकरत्वायोगात् । तृतीयेऽपि किं निमित्तमस्ति ? उत न ? अन्त्ये कार्यं न स्यादित्यभिसन्धायाद्यं विमृशति—**किंनिमित्त इति** ॥ किं जीवोऽधिष्ठाता ? उत ईश्वरः ? नाद्यः, परिच्छिन्नज्ञानत्वेनाहंकारप्रेरकत्वासंभवात् । न द्वितीयः, निर्धर्मकत्वेन प्रेरकत्वानुपपत्तेः । तदुपपत्तावप्यहंकारस्वरूपं विवेचनीयमित्याह—**किंस्वरूप इति** ॥ किं विषयित्वमेव स्वरूपम् ? उतान्यत् ? आद्येऽपसिद्धान्त इत्यभिसन्धाय, द्वितीये—तत्र मानं वाच्यमित्याह—**किंप्रमाणक इति** ॥ किं तत्र प्रत्यक्षादि प्रमाणम् ? उत साक्षी ? नाद्यः; अनुपलम्भात् । न द्वितीयः; कौटस्थ्यविरोधादित्यर्थः । तस्य कार्यविशेषोऽपि वक्तव्य इत्याह—**किंकार्य इति** ॥ किं कर्तृत्व-भोक्तृत्वे कार्यम् ? उतान्यत् ? नाद्यः; कर्तृत्वादेरात्मधर्मत्वात् । न द्वितीयः; तददर्शनात्, कूटस्थे कर्तृत्वादेरसंभवात्, सोऽहंकारधर्मश्चेत्, तथापि सुषुप्तावेवंविधाहंकाराभावः कस्मात् ? इत्याह—**किमितीति** ॥ कार्यस्योपादानमस्ति, तच्चानिर्वाच्याज्ञानमित्यभिप्रायेणाह—**येयमिति** ॥ ( टीकायाम् ) येयमित्यादेरयमर्थः—नामादेः सत्त्वेनासत्त्वेन चानिरूपणादविद्यात्मकत्वमित्याह—**नामेति** ॥ प्रलयादावविद्या विद्यते, नच नामादीति भेदमाशङ्क्याह—**अव्याकृतमिति** । प्रलयादावनभिव्यक्ततया स्थितमित्यर्थः । मुक्तावपि तथा स्थितिं निरस्यति—**अविद्येति** । विद्यानिवर्त्येत्यर्थः । अद्वितीयवस्तुनि नामरूपप्रदर्शकत्वमाह—**मायेति** ॥ परमाण्वादय उपादानमिति केचित्, तत्राह—**प्रकृतिरिति** । पूर्णानन्दाच्छा-

### ऋजुविवरणम्

प्रयोजनमाह—**ब्रह्मणः परोक्षस्येति** ॥ कथं प्रत्यक्त्वसिद्ध्यर्थं एवायमुपदेशः, नैकत्वसिद्ध्यर्थं इति निश्चीयते ? इत्याशङ्क्य, अहंकारभेदस्य प्रमाणसिद्धत्वादेकत्वानुपपत्तेरित्याह—**महाभूतान्यहंकार इति** ॥

"तदुच्यत" इत्यादिग्रन्थोऽसंगतः; अविद्या-तदुपादनत्वादिनिरूपणस्याप्रस्तुतत्वात्, पुनरुक्तं च; अविद्याया निरूपितत्वात् "तदि"ति चायुक्तम्; निर्देश्याभावात्, भाष्योपपन्नत्वं पूर्वमुक्तम्, नच तदेव प्रतिपाद्यं प्रतिपादितं च इत्याशङ्क्य, "तदि"त्यस्याभिप्रेतं दर्शयति—**तर्ह्ययमहङ्कार इति** ॥ कथं सुषुप्तौ निखिलपरिणामनाशः ? इत्याशङ्क्याह—**अज्ञानकार्येति** ॥

### पञ्चपादिका

**कारणम्, लयः, शक्तिः, महासुप्तिः, निद्रा, अक्षरम्, आकाशमिति च तत्र तत्र बहुधा गीयते, चैतन्यस्य स्वत एवावस्थितलक्षणब्रह्मस्वरूपतावभासं प्रतिबध्य जीवत्वापादिकाऽविद्या-कर्म-पूर्वप्रज्ञा-संस्कारभित्तिः सुषुप्ते प्रकाशाच्छादन-विक्षेप-संस्कारमात्ररूपस्थितिरनादिरविद्या, तस्याः परमेश्वराधिष्ठितत्वलब्धपरिणामविशेषो विज्ञान-क्रियाशक्तिद्वयाश्रयः कर्तृत्व-भोक्तृत्वैकाधारः कूटस्थचैतन्यसंजातज्योतिः स्वयंप्रकाशमानोऽपरोक्षोऽहङ्कारः, यत्सम्भेदात् कूटस्थचैतन्यो: अनिदमंश आत्मधातुरपि मिथ्यैव 'भोक्ते'ति प्रसिद्धिमुपगतः। स च सुषुप्ते समुत्खातनिखिलपरिणामायामविद्यायां कुतस्त्यः?**

### पञ्चपादिकाविवरणम्

संस्कारा इत्यर्थः। तस्या इति—निमित्तकारणनिर्देशः। **विज्ञानक्रियाशक्तिद्वयाश्रयः** इति स्वरूपं दर्शयति। **कर्तृत्व-भोक्तृत्वेति** कार्यप्रदर्शनम्। **कूटस्थचैतन्य** इति प्रमाणोपन्यासः। **यत्सम्भेदादित्या**त्मनि सर्वातदारोपनिमित्तत्वं कार्यान्तरमाह। किमिति तर्हि सुषुप्ते न स्यात्? इत्यत आह—**स च सुषुप्त** इति॥ अज्ञानकार्यलिङ्गशरीरप्रविलयो हि सुषुप्तिरित्यर्थः। ननु सति प्राणे क्रियात्मनि कथमहङ्कारस्य क्रियाशक्तेः प्रविलयः? उच्यते—नाहंकारमात्रत्वं प्राणस्योच्यते, किन्तु प्राणस्य पृथक्सतः पञ्चधा व्यापारहेतोरहंकारस्य क्रियाशक्तिरस्तीत्येतावदुच्यते; मनोऽधीनतादर्शनात् प्राणवृत्तेरिति। 'प्राणलक्षणक्रियाशक्त्यंशं वा विहाय विज्ञानशक्त्यंशस्य लयः कल्प्यताम्; सांशत्वादन्तःकरणस्य। स्वप्नादिवद् दृष्टिसृष्टिमाश्रित्य वा सुषुप्तपुरुषदृष्ट्य-

### तत्त्वदीपनम्

दकत्वेन व्यस्थितेत्याह—**अग्रहणमिति**॥ इन्द्रियाद्यगोचरत्वमाह—**अव्यक्तमिति**॥ एकाश्रयविषयत्वमाह—**तम इति**॥ स्वातिरिक्तनिमित्तानपेक्षत्वमाह—**कारणमिति**॥ सुप्ते प्रलयादौ कार्यप्रपञ्चलयाऽऽधारत्वेनावस्थितेत्याह—**लय इति**॥ महाप्रलयेऽपि सुप्ताविव विक्षेपहेतुत्वेन स्थितेत्याह—**महासुप्तिरिति**॥ स्वातन्त्र्यं निरस्यति—**शक्तिरिति**॥ निद्राया जीवभेदलक्षणविक्षेपहेतुत्वेन तत्साम्यमाह—**निद्रेति**॥ ज्ञानातिरिक्तानिवर्त्यत्वमाह—**अक्षरमिति**॥ आकाशस्य नित्यत्वं व्यावर्तयति—**आकाशमिति**॥ जीवेभ्यो ब्रह्मान्यदित्यपरे, तान् प्रत्याह—**चैतन्यस्येति**॥ अविद्याया एकरूपत्वान्न विचित्रकार्योत्पादकत्वमिति शङ्कां निराकर्तुमविद्याकर्मेत्युक्तम्, तन्नोपपद्यते, अविद्याया अविद्याभिन्नत्वासंभवादित्यत्राह—**अविद्याकर्मेति**। भ्रान्तिश्च कर्म च पूर्वानुभवश्चेति तथोक्ताः, तेषां संस्कारा एव चित्रम्, तस्य भित्तिरिति विग्रहः। तत्र च भ्रान्ति-सम्यगनुभवभेदमनुसृत्य पृथङ् निर्देश इत्यपि द्रष्टव्यम्। अविद्याया जीवत्वापादकत्वे तस्याः सुषुप्तावपि भावात् जीवत्वं स्यात्, ततश्च "स्वमपीतो भवती" त्यादिना ब्रह्मसंपत्तिनिर्देशोऽनुचित इत्याशङ्क्य, स तु विक्षेपाभावाभिप्रायः, जीवत्वं तु तदाऽप्यस्तीत्यभिप्रायेणोक्तम्—**सुषुप्त इति**॥ ईश्वरस्य वस्तुतो निर्धर्मकत्वेऽपि काल्पनिकधर्मसंभवान्निमित्तत्वं युक्तमित्यभिप्रायेणाह—**तस्या इति**॥ किंस्वरूप इत्यस्योत्तरमाह—**विज्ञानेति**॥ किंकार्य इत्यस्योत्तरमाह—**कर्तृत्वेति**॥ प्रमाणप्रश्नोत्तरमाह—**कूटस्थेति**। यद्यपि चैतन्यमविकारम्; तथापि तस्मिन्नैक्याध्यासलक्षणसंवलनेन परिनिष्पन्नप्रकाश इत्यर्थः। आगन्तुकज्ञानसंवेद्यत्वनिराचिकीर्षयोक्तम्—**स्वयंप्रकाशमान इति**। स्वसत्तायामव्यभिचरितप्रकाश इत्यर्थः। नित्यानुमेयत्वं व्यावर्तयति—**अपरोक्ष इति**॥ कर्तृत्वादेरात्मधर्मत्वं निराकुर्वन्नहंकारस्य कार्यान्तरं दर्शयति—**यत्संभेदादिति**॥ भोक्तृत्वस्य वास्तवत्वं निरस्यति—**कूटस्थेति**॥ इदमङ्गीकृत्याऽऽत्मनो भोक्तृत्वं सांख्या मन्यन्ते, तद् व्यावर्तयति—**अनिदमिति**॥ सुप्तौ सकलपरिणामाभावे हेतुमाह—**अज्ञानेति**॥ सुषुप्तावहंकारलयाभिधानमयुक्तमिति शङ्कते—**नन्विति**॥ तत्र हेतुमाह—**क्रियात्मनीति**। शक्तिमदहंकारलये श्वासादिदर्शनं न स्यात्, अस्ति च तत्; तस्मान्नाहंकारलय इत्यर्थः। प्राणाहंकारयोर्भेदादन्यतरस्य लयेऽप्यन्यतरदर्शनं घटत इत्याह—**उच्यत इति**। अभिमन्तृत्वेन प्राणनादिधर्मित्वेन च तयोर्भेद इत्यर्थः॥ अहंकारस्य क्रियाशक्तिमत्त्वात् कथं क्रियात्मकप्राणस्य तद्व्यावृत्तौ स्थितिः? इति शङ्कते—**किन्त्विति**॥ क्रियाशक्तिमान् प्राणोऽन्यः, तत्प्रवर्तनशक्तिमानहङ्कारोऽप्यपर इति न विरोध इत्याह—**प्राणस्येति**॥ **हेतोरिति**। अस्याहङ्कारस्येत्यनेनानुषङ्गः। प्राणव्यापारस्याहङ्काराधारत्वं चेत्, तर्हि तदभावेऽभावः स्यादित्याशङ्क्याह—**प्राणलक्षणेति**। प्राणलक्षणक्रियांशस्य हेतुर्या शक्तिः, तदंशमित्यर्थः। सुषुप्तौ प्राणावस्थितिमाश्रित्याविरोधमभिदधौ, संप्रति तदेव नेत्याह—**स्वप्नादिवदिति**॥ "अथ रथान् रथयोगान् पथः सृजते" इत्यत्रोच्यमाना स्वाप्नी

### ऋजुविवरणम्

ननु सुषुप्तावन्तःकरणनाशे तच्छक्तेः कारणगतत्वेन न प्राणव्यापारहेतुत्वम्। तदुक्तम्—"दधिशक्तिर्नहि क्षीरे दाधिकारम्भमहती"त्याशङ्क्य, पक्षान्तरमाह—**प्राणलक्षणेति**॥ ननु सावयवान्तःकरणांशेनान्तःकरणावशेष इत्याशङ्क्याह—**स्वप्नादिव-**

## पञ्चपादिका

**नचैवं मन्तव्यम्—आश्रितपरिणतिभेदतयैवाहंकारस्य निर्भासेऽनन्तर्भूतैव तन्निमित्तम्—इति; तथा सत्यप्राकृताहंकृतिसंसर्गो**

## पञ्चपादिकाविवरणम्

भिप्रायेण सर्वस्य तत्र लयो दर्शितः; सुषुप्तप्राणशरीरादिदर्शनस्य पुरुषान्तरस्य विभ्रमत्वादिति ॥

अत्र सांख्या मन्यन्ते—यद्यचेतनं मायाशब्दादिवाच्यमन्तःकरणाद्युपादानमिष्टं स्यात्, तर्हि तदहङ्कारनिर्भाससाक्षिणि तच्छक्तित्वेन वा तदाश्रयत्वेन वा तदधिष्ठानकत्वेन वाऽनन्तर्भूतमेव प्रधानं स्वतन्त्रमेव धर्मलक्षणावस्थाभेदैस्त्रिधा परिणमत इति। तत्र धर्मपरिणामो नाम महदादिकृत्स्नकार्यरूपेणावस्थानम्। तस्यैव च धर्मस्यातीतानागतवर्तमानलक्षणरूपापत्तिर्लक्षणपरिणामः। तथाहि—कार्यमनागतलक्षणापन्नं तत् परित्यज्य वर्तमानलक्षणमापद्यते, पुनस्तत् परित्यज्यातीतलक्षणापन्नं भवति, पुनस्तदेव त्वागामिलक्षणापन्नं भवति। अवस्थापरिणामस्त्वतीतमतीततरमतीततममनागतमनागततरमनागततममिति तत्रैव नूतन-चिरन्तनाद्यवस्थापत्तिः; अतो न चेतनोपादानेन कृत्यम्—इति; नेत्याह—**नचैवं मन्तव्यमिति** ॥ कुत इति ? तदाह—**तथा सत्यप्राकृताहङ्कृतिसंसर्ग इति** ॥ अहमिति कृतिः करणं यस्मिन्, स साक्षी अहंकृतिः। अयमाशयः—

## तत्त्वदीपनम्

सृष्टिर्दृष्टिरेव यथा, तथा जागरणेऽपि दृष्टेरेव सृष्टित्वात्, सुषुप्तस्य च तद्दर्शनाभावात् सर्वलय इत्यर्थः। नच तत्र प्रमाणाभाव-इत्याह—**दर्शित इति**। श्रुताविति शेषः। "यदा सुप्तः स्वप्नं न कंचन पश्यत्यथास्मिन् प्राण एवैकधा भवति" "तदेनं वाक् सर्वैर्नामभिः सहाप्येती"ति सुषुप्तौ सर्वस्य लयं दर्शयति। एवमेव "एतस्मादात्मनः सर्वे प्राणाः" इत्यत्र प्रबोधावस्थायां सृष्टिं च दर्शयति। नचैवं प्रत्यभिज्ञाविरोधः; कारणात्मना स्थितस्याभिव्यक्तिमात्राश्रयणादित्यर्थः। प्राणस्थित्यभावे कथं श्वासादिदर्शनम् ? इत्याशङ्क्याह—**सुषुप्तेति** ॥

आत्माधिष्ठिताविद्यापरिणामोऽहङ्कार इत्युक्तम्, तदाक्षिपति—**अत्र सांख्या इति** ॥ "अहङ्कारस्य निर्भासे" इति टीकायां निर्भासपदेनाहंप्रत्ययस्याभिधानम् ? उत साक्षिणः ? आद्ये इष्टापत्तिः, अविद्याया अहंप्रत्ययेऽनन्तर्भूताया निमित्तत्वोपगमात्, नापि द्वितीयः; साक्षिणः प्रज्ञानघनत्वेनाविद्यायास्तदनन्तर्भावसिद्धेरिति, तत्राह—**अहङ्कारनिर्भाससाक्षिणीति** ॥ अहंकारस्य निर्भासो येन स तथोक्ते साक्षिणि। उक्तदोषमुद्धरति—**तच्छक्तित्वेनेत्यादिना**। अविद्यायाः साक्ष्यन्तर्भावस्त्रेधा—तच्छक्तितया, शक्तित्वमन्तरेण गुणादिवत् तदाश्रयतया, रज्ज्वां सर्पादिवत् तदध्यस्ततया वेति; स त्रिविधोऽप्यन्तर्भावो नेष्यत इत्यर्थः। साक्ष्यन्तर्भावाभावेऽन्यत्रान्तर्भूतमिति शङ्कां निरस्यति—**स्वतन्त्रमिति** ॥ परिणामभेदमेव दर्शयति—**तत्रेति** ॥ लक्षणपरिणाममाह—**तस्येति** ॥ एकस्य युगपदतीतादिरूपत्वं विरुद्धमित्याशङ्क्य क्रमेणाविरोधमाह—**तथाहीति** ॥ अवस्थापरिणामं विवृणोति—**अवस्थेति** ॥ लक्षणपरिणामादस्य भेदमाह—**तत्रैवेति** ॥ फलितमाह—**अत इति**। अचेतनस्यैव प्रधानस्योपादानत्वसंभवे चेतनस्याप्युपादानत्वकल्पनायां न निबन्धनमस्तीत्यर्थः। "तन्मनोऽकुरुत" "सच्च त्यच्चाभवदि"त्यादिना युक्त्यनुगृहीतेन चेतनस्याप्युपादानत्वं सिद्ध्यतीत्याह—**नेत्याहेति** ॥ आश्रितः परिणतिभेदो ययाऽसावाश्रितपरिणतिभेदा, तस्या भावः, तत्ता, तयेत्यर्थः। एवंच निमित्तत्वं हेतुत्वेन संबध्यते। **निमित्तमिति**—उपादानमित्यर्थः ॥ भोक्तृत्वादेरहङ्कारधर्मत्वादप्राकृताहंकृतिसंसर्ग इति कथमुक्तमिति ? तत्राह—**अहमिति** ॥ अहमिति प्रत्ययस्य साक्ष्यधीनत्वात् सोऽहंकृति-

## ऋजुविवरणम्

**रिति** ॥ यो यो यद्यद्वस्तु पश्यति, तत्तत् तदविद्याविजृम्भितम्, तस्य तु दृष्टिसमयसृष्टिः, न पूर्वोत्तरकाल्योस्तदस्तित्वम्; मानाभावात्, प्रत्यभिज्ञाया व्यभिचारादित्यर्थः। ननु सर्वस्य यदि विलयः स्यात्, कथं तर्हि सुप्तपुरुषशरीरादिकमन्यैर्दृश्यते ? इत्याशङ्क्याह—**सुषुप्तप्राणेति**। पुरुषान्तरदृष्टिसृष्टिरित्यर्थः।

कथं भोक्तृतादेरहंकृतिसंसर्गापाकरणम् ? अहंकारधर्मत्वात्तस्येत्याशङ्क्य, भावव्युत्पत्तिशङ्कानिराकरणाय व्याचष्टे—**अहमिति कृतिरिति** ॥ एवमपि कथमिदन्त्वेनावभास आपाद्यते, अहंकारधर्मत्वात्तस्य, तथाऽऽत्मोपादानत्वाभावेऽप्यन्यैरपि भ्रान्तिसम्बन्धाङ्गीकारादित्याशङ्क्याभिप्रायमाह—**अयमाशय इति** ॥

कथं बुद्ध्यादीनामनर्थान्तरत्वमक्षपादसूत्रवचनान्निश्चेतुं शक्यते ? बुद्धिर्नामान्तःकरणमित्युच्यते, तस्य च विषयाकारेण परिणामो ज्ञानमित्युच्यते; उपलब्धिस्तु बुद्धिप्रतिबिम्बितं चैतन्यम्, तच्चात्मन एव। तदुक्तं पतञ्जलिना—"अपरिणामिनी हि भोक्तृत्वशक्तिरप्रतिसङ्क्रमा चापरिणामिन्यर्थे प्रतिसङ्क्रान्तेव तद्वृत्तिमनुपतती"ति, अतो ज्ञातृत्वं बुद्धेः, उपलब्धृत्व-

### पञ्चपादिका

**भोक्तृत्वादिस्तद्विशेषः केवलमिदन्तयैवावभासेत, नच तथा समस्ति। स च परिणामविशेषोऽनिदञ्चिदात्मनो बुद्ध्या**

### पञ्चपादिकाविवरणम्

चेतनस्यानात्मसम्भेदावभासो नाऽख्यातिः, नाप्यन्यथाख्यातिः, नापि चाऽऽत्मख्यातिरित्युक्तम्, इदानीं चेतनस्यैव स्वाविद्याविवर्तमानमिथ्यावस्तुसम्भेदावभासलक्षणानिर्वचनीयख्यात्यनभ्युपगमे चेतनाचेतनयोरत्यन्तविविक्तावभास एव स्यात्, न सम्भेदावभास इति ॥

अत्र नैयायिका मन्यन्ते—आत्मेन्द्रिय-विषयेषु समवहितेषु कदाचिद्विज्ञानोदयसामर्थ्यादात्माश्रयज्ञानादिवृत्तीनां क्रमजनने करणभूतं किञ्चिन्मनः कल्पितम्। तत्र तदतिरेकेणान्तःकरणं नाम ज्ञान-सुख-दुःखेच्छा-द्वेष-प्रयत्नादिविज्ञानक्रियावृत्त्याश्रयमयःपिण्डवदग्नेरादर्शवन्मुखस्याप्पात्रवच्चन्द्रस्यात्मावच्छेदकतया तस्मिन्नतदारोपोपाधिभूतं किञ्चिन्न पश्यामः। बुद्धिरिति चेत्? न; "बुद्धिरुपलब्धिर्ज्ञानमित्यनर्थान्तरमि"त्यक्षपादसूत्रवचनात्। जानाति बुद्धिरात्मोपलभत इति चेत्? न; प्रतिधात्वर्थं धर्मिभेदप्रसङ्गात्, तस्माद्वर्णितमन्तःकरणं नास्तीति। तत्राह—**स च परिणामविशेष इति** ॥

### तत्त्वदीपनम्

शब्देनोक्त इति द्रष्टव्यम्। भ्रान्त्या कर्तृत्वादेरात्मसंबन्धितया प्रतिभाससंभवमाशङ्क्य, भ्रान्तेरप्यस्मन्मत एव संभवो नान्यत्रेत्याह—**अयमाशय इति** ॥

अहङ्कारे सिद्धे तद्धर्माणामात्मन्यरोपो युक्तः, स एवासिद्ध इति चोदयति—**अत्र नैयायिका इति** ॥ किमहङ्कारस्य मनसोऽनन्यत्वम्? उतान्यत्वम्? नाद्य इत्याह—**आत्मेन्द्रिय-विषयेष्वित्यादिना**। कदाचिद् ज्ञानोदयसामर्थ्यात् क्रमजनने करणभूतं मनः कल्पितमित्यन्वयः। अन्यथोपपत्तिं निरस्यति—**आत्मेन्द्रियविषयेष्विति**। तथाच प्रयोगः—विवादपदानि, क्रमकारिकरणपूर्वकाणि, क्रमवत्कार्यत्वात्; क्रमकारिकुठारसाध्येन्धनद्वैधीभाववत्। ततश्च मनसः करणत्वेन क्लृप्तत्वात् सुखाश्रयत्वेनोच्यमानोऽहङ्कारोऽन्य एवेत्याद्यकल्पनाऽनुपपत्तिरित्यर्थः। द्वितीयं दूषयति—**तत्रेति** ॥ तदतिरेकेणकान्तःकरणं नाम न पश्याम इति सम्बन्धः। प्रमाणाभावादिति हेतुः। ज्ञानादयः, साश्रयाः, गुणत्वात्; संमतवत्। आश्रयान्तरस्य चानिरूपणादन्तःकरणं तद्धर्मेष्टव्यम्। तथाऽऽत्मनि प्रतीयमानकर्तृत्वादिनिर्वाहकत्वेन निर्भेदेऽपि भेदहेतुत्वेनोत्क्रान्त्यादिहेतुत्वेन च तदेष्टव्यमिति। शङ्काचतुष्टयं क्रमेण निरस्यति—**ज्ञानसुखेत्यादिना** ॥ अन्तःकरणाश्रयत्वशङ्काबीजमाह—**विज्ञानेति** ॥ विज्ञानस्य क्रिया विज्ञानक्रिया, ज्ञान-सुख-दुःखेच्छा-द्वेष-प्रयत्नादिश्च सा विज्ञानक्रिया चेति तथोक्ता। सुखादीनां विज्ञानशब्दवाच्यान्तःकरणपरिणामत्वात्तदाश्रयत्वशङ्केत्यर्थः। ज्ञानादीनामात्माश्रयत्वेनाप्युपपत्तेर्न परिशेषादन्तःकरणप्रसिद्धिरित्यभिसन्धिः। कर्तृत्वादेरात्मधर्मत्वाद् न तन्निर्वाहकत्वेनापि तत् कल्प्यमित्याह—**अयःपिण्डवदिति**। अयःपिण्डानुरागाद् वह्नौ दीर्घत्वाद्यारोप इति दृष्टान्तार्थः ॥ जीव-परभेदस्य स्वाभाविकत्वान्न तद्धेतुत्वेनापि तत्कल्पनमित्याह—**आदर्शवदिति**। यथैकस्मिन् मुखे बिम्ब-प्रतिबिम्बभावेन भेद आदर्शनिमित्तः, न तथाऽत्रेत्यर्थः। आत्मन उत्क्रान्त्याद्यसिद्धेर्न तद्धेतुतया तत्कल्पनमित्याह—**अप्पात्रवदिति**। अप्पात्रानुरोधाद् यथा शीतांशौ गत्यादिः, न तथाऽत्र; सर्वगतत्वेनोत्क्रान्त्यादेरसिद्धेः। नच—एकस्मिन् शरीरे नष्टे फलोपभोगाय शरीरान्तरं प्रविशतीत्यपि—शङ्क्यम्; स्वकृतसुकृत-दुष्कृतानुरोधेन शरीरे निष्पन्ने तत्र वृत्तिलाभसंभवादित्यर्थः। बुद्धेः प्रसिद्धत्वात्तदभेदादन्तःकरणमपि प्रसिद्धमेवेति शङ्कते—**बुद्धिरिति** ॥ बुद्धेर्ज्ञानपर्यायत्वेनाक्षपादोक्तेर्नान्तःकरणसिद्धिरित्याह—**न बुद्धिरिति** ॥ यद्यक्षपादवचनमनुसृत्य बुद्धिज्ञानयोरेकत्वं मन्यसे, तर्हि पातञ्जलमतानुसारेण तयोर्भेद एव किं न स्यात्? इति शङ्कते—**जानातीति**। ज्ञानपरिणामित्वेन बुद्धेः प्रसिद्धत्वाद् न बुद्धि-ज्ञानयोरनर्थान्तरत्वमित्यर्थः। उपलब्धेरात्मधर्मत्वप्रसिद्धेश्च न ज्ञानपर्यायत्वं तस्येत्याह—**आत्मेति**। उपलब्धिस्तु बुद्धिप्रतिबिम्बितं चैतन्यम्, तच्चात्मात्मकमित्यर्थः। किमेतदनुभवमनुरुध्योच्यते? आहो युक्तिम्? नाद्यः; अनुपलम्भात्। नापि द्वितीयः; तथाविधयुक्तेरभावादित्याशयेनाह—**नेति** ॥ न केवलं ज्ञानोपलम्भबुद्धीनां भेदाभावः, किं तु ज्ञानोपलम्भयोराश्रयभेदश्च नेत्याह—**प्रतिधात्वर्थमिति**। किं तयोर्भिन्नत्वमात्रमाश्रयभेदसाधकम्? उत विरुद्धविशेषितम्? आद्ये दाह-पाकभेदेन वह्नावपि

### ऋजुविवरणम्

मात्मनः; अतो नानार्थान्तरत्वमिति चोदयति—**जानाति बुद्धिरिति** ॥ **प्रतिधात्वर्थमिति**। एवं प्रक्रियामात्रेण बुद्ध्यादिभेदकल्पनायां प्रतिधात्वर्थं धर्मिस्वरूपस्यैव भेदो भवेत्, ननु धर्मद्वयमेवेति भावः ॥

## पञ्चपादिकाविवरणम्

अयमाशयः—"बुद्धेर्गुणेनाऽऽत्मगुणेन चैव ह्याराग्रमात्रो ह्यवरोऽपि दृष्टः" इति श्रुतौ परिणामगुणवत्तया द्रव्यमित्यवगता बुद्धिः; तथा "यदा पञ्चैव लीयन्ते ज्ञानानि मनसा सह। बुद्धिश्च नेङ्गते तत्र परमात्मानमश्नुते" इति श्रुतौ चेष्टाश्रयत्वेन द्रव्यमित्यवगता बुद्धिः; तथा "विज्ञानं यज्ञं तनुते" इत्यानन्दमयस्यात्मनः पृथगभिधानाद् विज्ञानं बुद्धिरित्यनर्थान्तरत्वाद् बुद्धिः क्रियाश्रयत्वेन द्रव्यमित्यवगता; तथा "विज्ञानेन वा ऋग्वेदं विजानाति, मनसा ह्येव पश्यती"ति च करणान्तःपातिनोर्विज्ञान-मनसोरेकत्वान्मनसश्च काम-सङ्कल्पादिवृत्तिमत्त्वश्रवणादेकमन्तःकरणं विज्ञानक्रियाशक्तिमद् मनआदिशब्दवाच्यं श्रुतिलिङ्गेभ्यः प्रसिद्धम्; तथा "बुद्धेर्गुणेनात्मगुणेन चैव" "सधीः स्वप्नो भूत्वेमं लोकं सञ्चरति" "विज्ञानमयः" "मनोमयः" इत्यादिश्रुतावात्मावच्छेदकतया स्वगुणारोप-गमनागमनादिनिमित्तत्वं चावगतम्; तथा "कस्मिन्नहमुत्क्रान्त उत्क्रान्तो भविष्यामी"ति श्रुतावुत्क्रान्त्याद्युपाधेः प्राणस्याप्यन्तःकरणांशत्वमवगतम्; युगपदुपाधि-

## तत्त्वदीपनम्

व्यावृत्तिप्रसङ्गः, द्वितीये विरोधस्यासिद्धिरित्यर्थः। अथवा—'अहमुपलभे' 'जानामी'त्येकाश्रयत्वप्रतिपत्तावपि धर्मिभेदश्चेत्, तदाऽतिप्रसङ्गः स्यादित्याह—**प्रतिघात्वर्थमिति** ॥

"वेदान्तवादिभिरि"त्यत्र सूचितमन्तःकरणसाधकवाक्यमुदाहरति—**अयमाशय इति** ॥ बुद्धि-ज्ञानयोः पर्यायत्वमिति यत्तूक्तम्, तत्तावदसंगतमित्याह—**बुद्धेर्गुणेनेति**। बुद्धिर्द्रव्यमित्यवगतेति प्रथमं संबन्धः। तत्र हेतुमाह—**परिमाणेति** ॥ बुद्धिः, द्रव्यम्, परिमाणवत्त्वात्; संमतवत्। नच हेत्वसिद्धिरित्याह—**बुद्धेरिति**। **आर**शब्देन अरे प्रोताऽयःशलाकोच्यते। तस्याग्रवन्मात्रा परिमाणं यस्य स तथोक्तः। **अवरः** जीवः बुद्धिगतपरिमाणगुणेनाराग्रमात्रः, आत्ममहत्परिमाणगुणेन महानपि दृष्ट इति श्रुतेरर्थः। क्रियावत्त्वादपि बुद्धेर्द्रव्यत्वं मनसोऽतिरिक्तत्वं चाह—**तथेति** ॥ ज्ञायन्त एभिरिति ज्ञानानीन्द्रियाण्युच्यन्ते। इन्द्रियाणां मनो-बुद्ध्योश्चाचलावस्थायां परमात्मप्राप्त्यभिधानाच्चलनवत्त्वमवसीयते—**यदेति**। विशेषप्रतिषेधस्य शेषाभ्यनुज्ञापर्यवसायित्वादित्यर्थः। क्रियावत्त्वे श्रुत्यन्तरमुदाहरति—**तथेति** ॥ "विज्ञानं यज्ञं तनुते" इत्यनेन क्रियाश्रयत्वेन बुद्धिर्द्रव्यमित्यवगतेति संम्बन्धः। अस्मिन् वाक्ये जीवस्य क्रियावत्त्वमुक्तम, न च बुद्धेरित्याशङ्क्याह—**आनन्दमयस्येति**। "अन्योऽन्तर आत्माऽऽनन्दमयः" इत्यत्रेति शेषः। अत्र विज्ञानस्य द्रव्यत्वमुक्तम्, न तु बुद्धेरित्याशङ्क्याह—**विज्ञानमिति**। विज्ञायतेऽनेनेति विज्ञानं बुद्धिरित्यर्थः। बुद्धि-मनसोर्वृत्तिभेदाद्भेदेऽपि न स्वरूपेण भेदः; तथाच कथं तदपलापः? इत्याशयवानाह—**तथेति**। ज्ञानोत्पत्तौ मनसः साधारणकारणत्वाद् बुद्धेश्च तादृक्त्वाभिधानान्न स्वरूपभेद इत्यर्थः ॥ यत्तूक्तम्—मनः करणम्, बुद्धिस्तु कर्ता; ततश्च भेद इति, तत्र करणत्वम् कर्तृत्वं चाविशिष्टमित्याह—**मनसश्चेति**। "कामः संकल्पः" इत्युपक्रम्य "एतत्सर्वं मनः" इत्यन्तेन श्रवणादित्यर्थः। **श्रुतिलिङ्गेभ्यः** इति—श्रुतिगतलिङ्गेभ्य इत्यर्थः। बुद्धेरात्माऽवच्छेदकतया स्वधर्मारोपनिमित्तत्वं नेति यदुक्तम्, तत्राह—**तथा बुद्धेर्गुणेनेति**। यथाऽन्तःकरणं सिद्धम्, तथा स्वगुणारोपादिनिमित्तत्वं चावगतमिति सम्बन्धः। धिया सह वर्तत इति सधीः; बुद्ध्यैक्याध्यासमुपगत इति यावत्। **स्वप्नो भूत्वेति** स्वप्नद्रष्टृभावं प्राप्येत्यर्थः। इमम् जागरितलक्षणम्। **विज्ञानमयः** विज्ञानोपाधिकः। बुद्धेः कथमुपाधित्वम् "कस्मिन्नहमि"त्यादिना प्राणस्योपाधित्वप्रतिपत्तेरित्याशङ्क्याह—**तथा कस्मिन्निति**। प्राणव्यापारस्यान्तःकरणाधीनत्वात्तदंशत्वमित्यर्थः। स्वातन्त्र्येण प्राणस्यैवोपाधित्वं किं न स्यादिति? अत्राह—**युगपदिति**। "सधीरि"त्यत्रान्तःकरणस्य गमनाद्युपाधित्वम्, अत्र च प्राणस्येति निरपेक्षोपाधि-

## ऋजुविवरणम्

स च ज्ञानाद्भेदेन वेदान्तवादिभिर्व्यपदिश्यत इत्युक्तम्, तत्र न व्यपदेशमात्रेण तत्सिद्धिरित्याशङ्क्य, "वेदान्तवादिभिरि"ति वदतो वेदान्तप्रामाण्यमुक्तमित्यभिप्रायमाह—**अयमाशय** इति ॥ "गुणेने"ति धर्माभिप्रायेणापि घटते, तत् कथं द्रव्यत्वनिश्चयः? इति श्रुत्यन्तरमुदाहरति—**यदा पञ्चैवेति** ॥ ननु "बुद्धिर्नेङ्गते" इति स्वकार्याकरत्वेनापि घटते, इत्याशङ्क्यानन्यथासिद्धं श्रुत्यन्तरमुदाहरति—**तथा विज्ञानमिति** ॥ अत्र विज्ञानशब्देन जीवः कस्माद् न व्यपदिश्यत इति? तदाह—**आनन्दमयस्येति**। आनन्दमयशब्देन जीवोऽभिधीयत इति भावः। तथापि विज्ञानस्यैव द्रष्टव्यत्वम्, न बुद्धेरित्याशङ्क्याह—**विज्ञानं बुद्धिरिति** ॥ एवमपि क्रियाशक्तिरेव, न ज्ञानशक्तिरित्याशङ्क्य, ज्ञानरूपत्वे प्रमाणमाह—**तथा विज्ञानेनेति** ॥ एवमपि नैकमन्तःकरणम्; मनो-बुद्धिरूपतत्त्वद्वयावगमादित्याशङ्क्याह—**करणान्तःपातिनोरिति** ॥ कथं प्रत्ययित्वमिति? तदाह—**मनसश्चेति** ॥ अत्र सर्वश्रुतीनामंशभेदेन साफल्यम्; अनेकाकारस्य विवक्षितत्वादिति द्रष्टव्यम् ॥

## पञ्चपादिका

**निष्कृष्य वेदान्तवादिभिः—अन्तःकरणम्, मनः, बुद्धिः, अहंप्रत्ययीति च विज्ञानशक्तिविशेषमाश्रित्य व्यपदिश्यते, परिस्पन्दशक्त्या च प्राण इति। तेनान्तःकरणोपरागनिमित्तं मिथ्यैवाहंकर्तृत्वमात्मनः स्फटिकमणेरिवोपधाननिमित्तो लोहितिमा ॥**

**कथं पुनः स्फटिके लोहितिम्नो मिथ्यात्वम्? उच्यते—यदि स्फटिकप्रतिस्फालिता नायना रश्मयो जपाकुसुममुप-**

## पञ्चपादिकाविवरणम्

द्वयायोगात्। ततश्च वर्णितमन्तःकरणं श्रुतिलिङ्गसिद्धमिति। ननु अर्थवादलिङ्गानां न्यायापेक्षा विद्यते? सत्यम्; निरंशसर्वगतासङ्गस्याकाशस्येव निरुपाधेर्गमनपरिच्छेदाद्यनुपपत्तिरेव न्याय इत्यलमतिप्रसङ्गेन ॥

ननु आत्मन एव विज्ञान-क्रियापरिणामशक्ती किं न स्यातामिति? निरवयवसर्वगतासङ्गस्य परिणामानुपपत्तेः, परिणाम्यन्तःकरणसन्निधानाच्च प्रतिभासस्यान्यथासिद्धेरिति सदृष्टान्तमाह—**तेनान्तःकरणोपरागनिमित्तमिति**। मिथ्यात्वं स्फटिकलौहित्यस्य, क्लृप्तप्रतीति-सत्तयोः कारणाभावादिति भावः। तदुभयाभावमुत्तरग्रन्थेन साधयति ॥

तत्राख्यातिवादी—न स्फटिकगतं मिथ्यालौहित्यमवभासते, किन्तु जपाकुसुमगतमेव गृह्यमाणं स्फटिकजपाऽविविक्तमेवावभासते—इति चोदयति—**कथं पुनः स्फटिक इति** ॥ नैतदित्याह—**यदि स्फटिकप्रतिस्फालिता इति** ॥ ननु दोषबलादि-

## तत्त्वदीपनम्

भेदाङ्गीकारे जीवभेदप्रसक्तिरित्यर्थः। अन्यपरवाक्यस्थलिङ्गानां न स्वातन्त्र्येणार्थसाधकत्वमिति शङ्कते—**नन्विति**। नचोत्क्रान्त्यादेरौपाधिकत्वसाधकं न्यायं पश्याम इत्यर्थः। न्यायापेक्षेत्येतदङ्गीकरोति—**सत्यमिति** ॥ कस्तर्हि न्याय इति? तत्राह—**निरंशेति** ॥ निरंशत्वं सुखाद्याकारेणापरिणामे हेतुः, सर्वगतत्वं स्वतो गमनाद्यभावे, असङ्गत्वं धर्ममात्रासम्बन्ध इति विभागः। नच निरंशत्वादौ विमतिः; श्रुत्यादिसिद्धत्वादित्याह—**इत्यलमिति** ॥

'करोमि' 'जानामि' 'भुञ्जे चे'त्यनुभवविरोधाद् न्यायस्यानुत्थानमित्याशयेनाह—**नन्वात्मन एवेति** ॥ किमनुभवमात्रस्य विवक्षितसाधकत्वम्? उत युक्तिसध्रीचीनस्य? नाद्यः; 'अहं मनुष्यः' इत्यादिप्रत्ययस्य देहाद्यात्मतासाधकतापातात्। न द्वितीयः; वास्तवकर्तृत्वादिसाधकन्यायाभावात्, भावेऽपि प्रतितर्कपराहतिर्दुर्वारेत्यभिसन्धायाह—**निरवयवेति** ॥ 'करोमी'त्यादिप्रत्ययस्य का गतिः? इत्याशङ्क्याह—**परिणामीति** ॥ अन्यथासिद्धस्यासाधकत्वं चशब्दार्थः। विगीतं कर्तृत्वादि, मिथ्या, क्लृप्तप्रतीति-सत्ताकारणशून्यत्वात्; स्फटिकलौहित्यवदित्युक्ते दृष्टान्तस्य साध्यवैकल्यमाशङ्क्याह—**मिथ्यात्वमिति** ॥ **क्लृप्तेत्य**स्यायमर्थः—परमार्थत्वेन क्लृप्तस्य लौहित्यस्य प्रतीति-सत्तयोर्यत्कारणं तदभावादिति। **क्लृप्तप्रतीतिसत्ताकारणाभावादिति** पाठे क्लृप्तं च तत् प्रतीतिसत्ताकारणं चेति तथोक्तम्; परमार्थस्य सत्तादौ क्लृप्तं यत् कारणम् अन्वय-व्यतिरेकाभ्याम्, तस्याभावादित्यर्थः। कारणाभावासिद्धिमाशङ्क्याह—**तदुभयेति** ॥

शुक्ले स्फटिके प्रतीयमानस्य लोहितिम्नः कथममिथ्यात्वमुक्तम् "कथं पुनः" इत्यत्र? इत्याशङ्क्य स्फटिके लौहित्यप्रतिभास एवासिद्ध इत्याह—**तत्रेति**। सर्वप्रत्ययस्य याथार्थ्यान्न मिथ्यालौहित्यप्रतिभास इत्यर्थः। प्रतिभासस्य गतिं पृच्छति—**किन्त्विति** ॥ **जपाकुसुमगतमिति**—कुसुमगतं लौहित्यं स्वरूपेण गृह्यमाणमिति यावत्। **स्फटिकाविविक्तमिति**—स्फटिकविलक्षणधर्मिनिष्ठतया स्फुरितमित्यर्थः। स्फटिकग्रहणार्थं प्रवृत्ता नायना रश्मयः स्फटिकेन प्रतिहन्यन्ते, प्रतिहताश्च सन्तो द्रव्यं गृहीत्वा शौक्ल्यं बोधयितुमनीशानाः परावृत्य कुसुमसमवेतं लौहित्यं गृह्णन्ति, तस्य कुसुमनिष्ठतयाऽप्रतिपत्तौ 'रक्तः स्फटिकः' इति व्यवहारो जायत इत्यर्थः। लोचनस्य कुसुमसंयोगेऽपि न तत्समवेततया लौहित्यावभास इत्यत्र हेतुं न पश्याम इत्याह—**नैतदिति** ॥ प्रतिबन्धवशादग्रहणमिति शङ्कते—**नन्विति** ॥ **सन्निवेशग्रहणमिति**—कुसुमनिष्ठतया ग्रहणमिति यावत्।

## ऋजुविवरणम्

सर्वाध्यासस्य हेतुत्वाद् अध्यस्तत्वमहंकृतेः संभाव्य, धर्मजातस्य तत् संभावयति साम्प्रतमित्यनेनाभिप्रायेणावतारयति—**परिणाम्यन्तःकरणेति**। अयं प्रयोगः—आत्मनोऽहंकर्तृत्वम्, मिथ्या, क्लृप्तकारणाभावेऽप्युपरागनिमित्तत्वात्; स्फटिकलौहित्यवदिति। कथं स्फटिकलौहित्यस्य मिथ्यात्वम्? तदभावे साध्यविकलो दृष्टान्तः, इत्याशङ्क्याह—**मिथ्यात्वमिति** ॥ कारणाभावादित्यसिद्धो हेतुरित्याशङ्क्याह—**तदुभयाभावमिति** ॥

"कथं पुनरि"त्यनेन मिथ्यात्वं न संभवतीति चोदितम्, तदयुक्तम्; स्फटिके प्रतीयमानस्य लौहित्यस्य सत्त्वायोगात्,

## पञ्चपादिका

**सर्पेयुः, तदा विशिष्टसंनिवेशं तदेव लोहितं ग्राहयेयुः। नहि रूपमात्रनिष्ठश्चाक्षुषः प्रत्ययो दृष्टपूर्वः; नापि स्वाश्रयमनाकर्षद् रूपमात्रं प्रतिबिम्बितं क्वचिदुपलब्धपूर्वम्। ननु अभिजातस्येव पद्मरागादिमणेर्जपाकुसुमादेरपि प्रभा विद्यते, तया व्याप्तत्वात् स्फटिकोऽपि लोहित इवावभासते ? तथापि स्वयमलोहितो मिथ्यैव लोहित इत्यापद्येत ॥**

**अथ प्रभैव लोहिताऽवभासते, न स्फटिक इति ? शौक्ल्यमपि तर्हि स्फटिके प्रकाशेत। अथ प्रभयाऽपसारितं तदिति चेत् ? स तर्हि नीरूपः कथं चाक्षुषः स्यात् ? नच रूपिद्रव्यसंयोगात्, वायोरपि तथात्वप्रसङ्गात्। न प्रभानिमित्तं**

## पञ्चपादिकाविवरणम्

न्द्रियस्य कुसुमसंयोगाभावान्न सन्निवेशग्रहणमिति ? नेत्याह—**नहि रूपमात्रनिष्ठ इति** ॥ संयुक्तसमवायात् संयोगाद्वा गुणग्रहणे द्रव्यमपि संयुक्तमिति भावः। अन्यथाख्यातिवादी—रूपमात्रं प्रतिबिम्बितं स्फटिकात्मना प्रतिभातीति वक्ति, तन्नेत्याह—**नापि स्वाश्रयमिति** ॥ तर्हि स्फटिकदेशे लौहित्यं सद्रव्यमेवाविविक्तं स्फटिकात्मना वा गृह्यत इति चोदयति—**नन्वभिजातस्येति** ॥ तथाप्यन्यथाख्यातौ संसर्गमिथ्यात्वमित्याह—**तथापि स्वयमलोहित इति** ॥

अख्यातिवादिनो मतमाददाति—**अथ प्रभैव लोहितेति** ॥ तर्हि स्फटिकग्रहणे संयुक्तसमवायकारणपौष्कल्यादप्रतिबद्धसंयोगाद् वा रूपग्रहणमपि स्यादित्याह—**शौक्ल्यमपि तर्हीति** ॥ विरोधिगुणया प्रभया विरोधिगुणस्यापसारणं प्रतिबन्धो वा कृत इति शङ्कते—**प्रभयाऽपसारितं तदिति** ॥ अपसारणे दोषमाह—**स तर्हि नीरूप इति**। प्रतिबन्धश्च द्रव्यस्यापि समानः; गुणद्वारा विरोधिसाम्यादित्यर्थः। रूपहीनमपि द्रव्यं रूपिप्रभासंयोगाच्चाक्षुषं स्यात्, इत्याशङ्क्याह-**नच रूपि[-द्रव्य-]संयोगादिति** ॥ तर्हि शौक्ल्यमपसार्य लौहित्यस्योत्पन्नत्वाद् रूपवत्तया चाक्षुषः स्फटिक इति, नेत्याह—**न प्रभानिमित्तमिति** ॥ **अभ्युपगम्य प्रभामि-**

## तत्त्वदीपनम्

संयुक्तसमवायादिसम्बन्धाद्रूपमात्रग्रहणं युक्तमित्याशङ्क्याह—**संयुक्तेति** ॥ नैयायिकादिमतमनुसृत्य 'समवायादि'त्युक्तम्, तादात्म्यवादिमतमनुसृत्य 'संयोगादि'ति विभागः। इन्द्रियसंबन्धस्य रूपेणेव द्रव्येणाप्यविशिष्टत्वात्तद्ग्रहणं स्यादित्यर्थः। "नापि स्वाश्रयमि"त्यत्र लौहित्यस्य स्फटिके प्रतिबिम्बितत्वं निराचकार, तदनुपपन्नम्; अख्यातिवादिना प्रतिबिम्बानभ्युपगमादित्याशङ्क्य तद्व्यावर्त्यां शङ्कामाह—**अन्यथाख्यातीति** ॥ गुणिनं विहाय गुणस्यान्यत्र गमनानुपलब्धेर्मैवमिति परिहरति—**तन्नेति** ॥ साश्रयस्य लौहित्यस्य प्रतिबिम्बोऽविवेको वेति शङ्कते—**तर्हीति** ॥ अथवा, प्रभाव्याप्त्या कथं लोहिततया प्रतिभासः ? न खलु गगनव्याप्ततया गगनवद्भासन्ते घटादय इत्याशङ्क्य तात्पर्यमाह—**तर्हीति** ॥ अख्यातिमते मिथ्यैव लोहित इत्युक्तम्, अविवेकाभ्युपगमादित्याशङ्क्यान्यथाख्यातौ दूषणमुच्यत इत्याह—**तथापीति** ॥

स्फटिके लौहित्यप्रतिभानं नेति कथमुच्यते, अन्यथाख्यात्यभ्युपगमादित्याशङ्क्याह—**अख्यातीति** ॥ प्रभाभानमात्रेण कथं शौक्ल्यभानप्रसक्तिरिति ? तत्राह—**तर्हीति** ॥ प्रभया शौक्ल्यस्यापसारणमनुपपन्नम्; विरोधाभावात्, इत्याशङ्क्य गुणद्वारा विरोधमाह—**विरोधीति** ॥ तर्हि प्रभयाऽपसारणे स्फटिके शौक्ल्यप्रतिभानं कथम् ? इत्याशङ्क्याह—**प्रतिबन्ध इति** ॥ अपसारणप्रतिबन्धशङ्कायां साधारणं दूषणमुक्तमिति शङ्केत, न च तदुपपद्यते; प्रतिबन्धशङ्कायां नीरूपत्वासम्भवात्, इत्याशङ्क्याह—**अपसारण इति** ॥ प्रतिबन्धपक्षे दूषणमाह—**प्रतिबन्ध इति**। गुण-गुणिनोरभेदाद् गुणप्रतिबन्धे तद्द्वारा द्रव्यस्यापि प्रतिबन्धः समान इत्यर्थः। रूपसम्बन्धस्य चाक्षुषत्वप्रयोजकत्वात् स्फटिकस्यापि प्रभाद्वारा रूपसम्बन्धात् चाक्षुषत्वमिति शङ्कते—**रूपेति** ॥ किं रूपिसंयोगमात्रेण चाक्षुषत्वम् ? उत गुणान्तरमुत्पन्नम् ? इति विकल्प्याऽऽद्ये

## ऋजुविवरणम्

तस्य शुक्लत्वादित्याशङ्क्यावतारयति—**तत्राख्यातिवादीति** ॥ **विशिष्टसंनिवेशमिति** जपाकुसुमगतत्वेनेत्यर्थः। "नहिरूपमात्रनिष्ठः" इत्यसम्बद्धम्; रूपमात्रप्रतीतेरदर्शनात्, द्रव्यप्रतीत्यभावात् संबन्धाभावेन प्रतीत्यापादनायोगाच्चेत्याशङ्क्याह—**संयुक्तसमवायादिति** ॥ "नापि स्वाश्रयमि"त्यनेन प्रतिबिम्बनिराकरणं कृतम्, तदख्यातिवादिनाऽनङ्गीकृतत्वादनादरणीयम्, तन्मतं च प्रकृतमित्याशङ्क्यावतारयति—**अन्यथाख्यातीति** ॥ "नन्वभिजातस्ये"ति न युक्तम्; नहि प्रभया व्याप्तत्वं लोहितत्वप्रतीतिकारणम्, प्रभाशब्देन लौहित्यगुणविवक्षायां गुणस्य स्वाश्रयं विना स्थित्यसंभवेन तत् निरस्तम्। "लोहित इवे"त्यप्ययुक्तम्; सम्बन्धस्य विद्यमानत्वे भ्रान्तत्वानिरूपणादित्याशङ्क्यावतारयति—**तर्हि स्फटिकदेश इति** ॥

ननु अपसरणे चाक्षुषत्वं मा भवतु, प्रतिबन्धे तु कथमचाक्षुषत्वमापाद्यते, उद्भूतरूपत्वानपायात्; नच द्रव्य-

## पञ्चपादिका

**लौहित्यं तत्रोत्पन्नम्; उत्तरकालमपि तथा रूपप्रसङ्गात्। अभ्युपगम्य प्रभामिदमुक्तम्। यथा पद्मरागादिप्रभा निराश्रयाऽप्युपलभ्यते, न तथा जपाकुसुमादेः। तदेवं स्फटिकमणावुपधानोपराग इव चिदात्मन्यप्यहङ्कारोपरागः। ततः सम्भिन्नोभयरूपत्वाद् ग्रन्थिरिव भवतीत्यहङ्कारो ग्रन्थिरिति गीयते॥**

**तत्र जडरूपत्वादुपरक्तस्य न तद्बलादुपरागस्य साक्षाद्भावः, चिद्रूपस्य पुनरुपरागस्तद्विषयव्यापारविरहिणोऽपि**

## पञ्चपादिकाविवरणम्

त्यादिः स्पष्टार्थः॥ ततश्चोपरक्ताहङ्कारनिमित्तमात्मनि कर्तृत्वाद्यारोपणमित्याह—**तदेवमिति**॥ ननु अहङ्कारधर्मस्यात्मन्यारोपमात्रं क्रियते? किं वा मिथ्यैव धर्मान्तरमुत्पद्यत इति? पूर्वस्मिन् नायं दृष्टान्तः, अन्यथाख्यातिश्च स्यात्। उत्तरस्मिन् सत्य-मिथ्याकर्तृत्वद्वयावभासः स्यात्? उच्यते—अहङ्कारस्य स्वधर्मसहितस्यैवात्मन्यध्यस्ततया मिथ्यात्वान्नान्यथाख्यातिप्रसङ्गः, अन्यसन्निधानादन्यस्मिन्मिथ्याधर्मावभास इत्येतावति दृष्टान्तः। अथवा—कर्तृत्वद्वयेऽपि धर्मिणोरेकत्वापत्त्या धर्माभेदावभास इत्यविरोधः। ननु "भिद्यते हृदयग्रन्थिरि"त्यादौ हृदयग्रन्थिरात्मन्यनर्थहेतुरिति गम्यते, तत्कथमहङ्कारस्योच्यत इति? तत्राह—**ततः संभिन्नोभयरूपत्वादिति**॥

ननु आत्मा स्वात्मन्युपरक्ताहङ्कार-तद्धर्मादीन् नावभासयेत्, उपरक्तत्वसाम्यात् स्फटिकादिवदिति, तत्राह—**तत्र जडरूपत्वादिति**। जाड्य-चैतन्ये अवभासकत्वानवभासकत्वयोर्निमित्ते, नोपरक्तत्वानुपरक्तत्वे इत्यर्थः। ननु चेतनस्याप्युपरक्तविषयज्ञानव्यापारशून्यत्वाद् जाड्यादविशेष इति, तत्राह—**चिद्रूपस्य पुनरिति**। अव्यधानेन चित्संसर्ग एव प्रतिभासहेतुः

## तत्त्वदीपनम्

दूषणमाह—**वायोरिति**॥ (टीकायाम्) द्वितीयमुत्थापयति—**तर्हीति**॥ निमित्तापायेऽपि नैमित्तिकस्थितिदर्शनात् कुसुमापायेऽपि तत्र लौहित्योपलम्भः स्यादित्याह—**नेत्याहेति**॥ कर्तृत्वादिमिथ्यात्वसाधनोपक्रमात् कथमुपरागमिथ्यात्वमुपसंहृतम्? इत्याशङ्क्योपरागोपसंहारेण कर्तृत्वाद्यारोप उपसंह्रियत इत्याह—**ततश्चेति**॥ उक्तमर्थमाक्षिपति—**नन्विति**॥ दृष्टान्ते मिथ्यालौहित्यस्योत्पन्नत्वाद् दृष्टान्त-दार्ष्टान्तिकयोर्वैषम्यमाह—**पूर्वस्मिन्निति**॥ यद्यपि मन्मते धर्मान्तरोत्पत्तिः; तथाऽपि त्वन्मते सर्वत्राऽऽरोपमात्रोपगमाद् दृष्टान्तासिद्धिमाशङ्क्य दूषणान्तरमाह—**अन्यथेति**। द्वितीयं दूषयति—**उत्तरस्मिन्निति**॥ अहंकारगतसत्यकर्तृत्वमात्मगतमिथ्याकर्तृत्वं चेति कर्तृत्वद्वयप्रतिभासप्रसङ्ग इत्यर्थः। पक्षद्वयोक्तदोषस्यापि नानुषङ्ग इत्याह—**उच्यत इति**॥ अन्यथाख्यातिप्रसङ्गमुक्तं निरस्यति—**अहंकारस्येति**। अन्यथाख्यातिमतेऽन्यत्र सत्यरूप्यादेः संसर्गमात्रस्यारोप्यत्वम्, अत्र तु धर्मविशिष्टस्याहंकारस्यारोपोपगमान्नान्यथाख्यातिरित्यर्थः। तर्हि दृष्टान्तासिद्धिः; तत्र धर्म-धर्मिणोरध्यस्तताऽनङ्गीकरणादित्याशङ्क्याह—**अन्यसन्निधानादिति**॥ पक्षान्तराङ्गीकारेऽपि न दोषानुषङ्ग इत्याह—**अथवेति**॥ **धर्मिणोरहंकारात्मनोरिति** यावत्। हृदयग्रन्थेर्ज्ञाननिवर्त्यत्वानुपपत्त्याऽनर्थहेतुत्वप्रतिपत्तेरहंकारोपरागनिमित्तं कर्तृत्वमित्यभिसन्धायाऽहंकारस्य ग्रन्थित्वमूचिवान्, तत् कस्मात्? इत्याशङ्क्य तद्व्यावर्त्यं शङ्कते—**नन्विति**॥

आत्मनोऽन्तःकरणोपरागमाक्षिपति—**नन्विति**। भासकत्व उपरक्तत्वानुपपत्तिरित्याशयः। उपरक्तत्वमप्रयोजकमित्याह—**तत्रेति**॥ जडत्वस्य प्रयोजकत्वम्, नेतरस्येत्यत्र किं विनिगमकमिति? अत्राह—**जाड्येति**॥ उपरक्तत्वस्याभासकत्वप्रयोजकत्वेऽनुपरक्तत्वस्य भासकत्वप्रयोजकत्वं वक्तव्यम्, न च तद् युज्यते; संबन्धाभावेऽसिद्ध्यापातादित्यर्थः॥ चैतन्यस्य भासकत्वप्रयोजकत्वमाक्षिपति—**नन्विति**॥ किं ज्ञानव्यापारद्वारा तस्य भासकत्वम्? उताव्यवधानेन? नाद्यः; कौटस्थ्यभङ्गात्, द्वितीये भासकत्वासंभव इत्यर्थः। नच—स्वप्रकाशत्वाद् भासकत्वं स्याद्—इत्यपि शङ्क्यम्; स्वसत्तायां प्रकाशान्तरनिरपेक्षतया प्रकाशमानत्वात्स्वप्रकाशत्वम्, तथाच तावता कथमन्यप्रथेत्यर्थः। टीकापेक्षिते हेतुमाह—**अव्यय-**

## ऋजुविवरणम्

प्रतिबन्ध; लौहित्येनाविरोधात्, प्रभया च स्वरूपेणाविरोधादित्याशङ्क्याह—**प्रतिबन्धश्चेति**॥ "तदेवं स्फटिके"त्यनेनाहंकारोपराग उपसंहृत इवाभाति, स न युक्तः; न ह्यहंकारसम्बन्धः प्रकृतः; दृष्टान्तवैषम्यं च स्यात्, तदर्थमवतारयति—**ततश्चेति**॥

"तत्र जडरूपत्वादि"त्यनेन जडत्वमवभासकत्वाभावे प्रयोजकमुक्तम्, उत्तरग्रन्थे हि चिद्रूपत्वमवभासकत्वे प्रयोजकमुक्तमिव प्रतिभाति; तस्यापि वक्तव्यत्वात्, तथा सति "तद्विषयव्यापारविरहिणोऽपी"ति व्यर्थम्; "तद्बलादि"ति वदताऽन्य-

## पञ्चपादिका

**तद्बलात् प्रकाशते। तेन लक्षणत इदमंशः कथ्यते, न व्यवहारतः। व्यवहारतः पुनर्यदुपरागादनिदमात्मनोऽहंकर्तृत्वं मिथ्या, तदात्मनस्तद्व्यापारेण व्याप्रियमाणस्यैव व्यापारपूर्वको यस्य परिच्छेदः, स एवेदमात्मको विषयः। अत एव**

## पञ्चपादिकाविवरणम्

न ज्ञानव्यापार इति भावः। ननु साक्षिस्वरूपवद् विज्ञानक्रियाव्यवधानमन्तरेणाहङ्कारस्य सिद्धौ कथमिदमंशतेति ? तत्राह—**तेन लक्षणत इति**। अर्थस्वभावत इत्यर्थः। अर्थतश्चित्स्वरूपताऽनिदमंशता, चैतन्यकर्मता चेदमंशता, न ज्ञानक्रियाव्यवधानेनेत्यर्थः। व्यवहारतः पुनः कथंभूतस्येदमंशतेति ? तदाह—**व्यवहारतः पुनरिति**। **यदुपरागात्** यस्याहङ्कारस्योपरागादित्यर्थः। **तदात्मन इति**। तदात्मतामहङ्कारात्मतामापन्नस्येत्यर्थः। **तद्व्यापारेण**। अहङ्कारव्यापारेणेति। वृत्तिव्यवधानेन सिद्धिरेव शरीरेन्द्रियविषयाणामिदमितिप्रतिभासिता, तदव्यवधानसिद्धिरेवानिदंप्रतिभासितेति भावः। ननु अज्ञानव्यवहितोऽहङ्कारः,

## तत्त्वदीपनम्

**धानेनेति**॥ **चित्संसर्ग इति**—व्यापाराभावापराधेन प्रतिभासाभावानुपलब्धेर्व्यापारस्याप्रयोजकत्वमित्यर्थः। चित्संसर्गे हेतुमाह—**अव्यवधानेनेति**। चित्यध्यस्तत्वान्न व्यवधानमित्यर्थः। अहंकारस्येदमंशत्वाद् व्यवधानेन सिद्धिरिति शङ्कते—**नन्विति**॥ किं दैवगत्येदमंशत्वं हेतुः ? आहो व्यवहारतः ? इति विकल्प्याद्येऽन्यथासिद्धिमाह—**तत्राहेति**॥ "लक्षणतः" इत्युक्ते ज्ञानक्रियाव्याप्यत्वलक्षणेनेदमंशत्वमुक्तमिति शङ्क्येत, तत्राह—**अर्थेति**॥ कोऽसावर्थस्वभावः ? येनेदमंशत्वं यद्वैपरीत्यं चानिदमंशत्वम् ? तत्राह—**अर्थत इति**॥ **चैतन्यकर्मता**—चिद्भास्यता। इदमंशतेत्यत्रार्थत इत्यनुषङ्गः। विनिगमनहेत्वभावमाशङ्क्याह—**न ज्ञानेति**। केवलव्यतिरेकाभावान्न ज्ञानक्रियाव्यवधानतायाः प्रयोजकत्वमित्यर्थः। द्वितीयेऽसिद्धिरित्युक्तम्—"न व्यवहारतः" इति टीकायामित्यर्थः। चिद्भास्यत्वमेव व्यवहारत इदमंशत्वप्रयोजकमिति शङ्कते—**व्यवहारत इति**॥ अनुभवविरोधानैतदित्याह—**तदाहेति**॥ "यदुपरागादि"त्यत्र यच्छब्देन व्यवहार एव निर्दिष्ट इति शङ्का स्यात्, तदर्थमाह—**यदुपरागादिति**॥ "तदात्मनः" इत्यत्र तच्छब्देनाहंकर्तृत्वं निर्दिश्य "तद्व्यापारेणे"त्यत्र तच्छब्देन तस्यैव निर्देशशङ्का स्यात्, तदर्थमाह—**तदात्मन इति**॥ उक्तेऽर्थे विनिगमनाऽभावमाशङ्क्याह—**वृत्तीति**। अनुभव एव नियामक इति यावत्। इन्द्रियसंनिकर्षजं ज्ञानं वृत्तिशब्दार्थः। वृत्तिशब्दस्य यथाश्रुतमर्थमादायाहङ्कारस्याव्यवधानसिद्धिमाक्षिपति—**नन्वज्ञानेति**॥ व्यापारद्वारा भासमानत्व-

## ऋजुविवरणम्

निषेधपरत्वमेव प्रतीयते, तेन ग्रन्थानार्जवमिति शङ्कानिवृत्त्यर्थमाह—**जाड्य-चैतन्ये त्विति**॥ "चिद्रूपस्य पुनरि"त्यनेन व्यापाराभावे चैतन्यबलात् प्रतीतिरुक्ता, सा न युक्ता; व्यापारव्यवधानेनैवान्यत्र प्रतीतिदर्शनात्, अतिप्रसङ्गाच्चेत्याशङ्क्याह—**अव्यवधानेति**॥ "लक्षणतः" इति समानासमानजातीयव्यवच्छेदकेनेत्युक्तमिव प्रतिभाति; तथा सति "न व्यवहारतः" इति व्याहतम्; तथाऽन्यनिबन्धनमिदमंशत्वमित्यपि शङ्का स्यात्; तन्निवृत्तये व्याचष्टे—**अर्थस्वभावत इति**॥ ननु वस्तुस्वभावतोऽपि नेदन्त्वं पृथगस्ति; ज्ञानव्यवधानेन प्रतीतिव्यतिरेकेण तद्भावे चानिदन्त्वमेवेत्याशङ्क्याह—**अर्थत इति**॥ नच—"चैतन्यकर्मते"त्यनेन कर्मत्वं लक्षणमुक्तम्, अतो विरोध इति—वाच्यम्; तत्रापि कर्मत्वतद्वत्त्व-तत्संबन्धानां व्यभिचारात् तदेकत्वमेव विवक्षितम्, यतः "व्यवहारतः पुनरि"त्यनेनेदन्त्वनिरूपणप्रक्रमाद् व्यवहितोऽहंकारो न यच्छब्दवाच्यः, किन्तु यस्मात् कारणादिति प्रतीयेत, इदमात्मको विषयो वा निर्दिश्येत, "तदात्मनः" इत्यहंकर्तृत्वं निर्दिश्येत, सन्निहितत्वात्; "तद्व्यापारेणे"त्यनेनापि तदेव निर्दिश्येत; तदयुक्तम्, तस्य व्यापारानुपपत्तेः नाप्यात्मनः, "तदात्मनः" इत्यनुपपत्तेः "तद्व्यापारेण" इति ,तथासत्यसमञ्जसं स्यात्; अहंकारनिर्देशे च "तदात्मनः"इत्ययुक्तं स्यात्, तदर्थं व्याचष्टे—**यस्याहंकारस्येत्यादिना**॥ "व्यवहारतः पुनरि"त्यनेन नेदन्त्वं पूर्वोक्तादधिकं निरूपितम्; न हि मिथ्याभूताहंकर्तृत्वनिरूपणं तत्साधकम् येन न व्यर्थम्। तद्व्यापारेण व्याप्रियमाणस्यात्मनो व्यापारपूर्वकं परिच्छेदो यस्य तस्येदंत्वमिति निरूपणात् चित्संसर्ग एव व्यापारो निरूपितः, यतश्चित्संसर्गावभास्यं चार्थत इदमिति पूर्वं निरूपितम्, तदेव व्यावहारिकं वदन् उन्मत्त इवाभाति, तथा व्यावहारिकमिदन्त्वमिदमित्यनिरूपणे तत्प्रतियोगिकमहंकारादीनामनिदन्त्वमपि न स्यादित्याशङ्क्याभिप्रायमाह—**वृत्तिव्यवधानेनेति**॥ अज्ञानेन व्यवहितत्वादहंकारस्येदमित्यवभासाभावो न युज्यत इति चोदिते—"अत एवाहमि"त्यनेनाहमित्यत्रेदमंशसंभेदो नास्तीति भ्रान्तिरित्युक्तम्, तन्न युक्तम्; नहि तेनेदन्तयाऽवभासाभावः समर्थितः, नाप्यनिदन्त्वेनावभासः, इत्याशङ्क्य

### पञ्चपादिका

**'अहमि'त्यसम्भिन्नेदमात्मकोऽवभास इति विभ्रमः केषांचित्। दृष्टश्च लक्षणतस्तद्व्यवहारार्होऽपि तमननुपतन्। तद्यथा—अङ्कुरादिफलपर्यन्तो वृक्षविकारो मृत्परिणामपरम्परापरिनिष्पन्नोऽपि घटवल्मीकवन्न मृन्मयव्यवहारमनुपतति; व्युत्पन्नमतयस्तु तद्व्यवहारमपि नातीवोल्बणं मन्यन्ते। अत एव निपुणतरमभिवीक्ष्य रूपकपरीक्षकवदहङ्कारं निरूपयतां सम्भिन्नेदंरूपः स इत्यभिहितम्॥**

**यत् पुनर्दर्पण-जलादिषु मुख-चन्द्रादिप्रतिबिम्बोदाहरणम्, तदहङ्कर्तुरनिदमंशो बिम्बादिव प्रतिबिम्बं न ब्रह्मणो वस्त्वन्तरम्, किंतु तदेव तत्; पृथगवभासविपर्ययस्वरूपतामात्रं मिथ्येति दर्शयितुम्। कथं पुनस्तदेव तत्? एकत्वलक्षणत्वावगमात्। तथाच यथा बहिःस्थितो देवदत्तो यत्स्वलक्षणः प्रतिपन्नः, तत्स्वलक्षण एव वेश्मान्तःप्रविष्टोऽपि प्रतीयते, तथा दर्पणतलस्थितोऽपि; न तद् वस्त्वन्तरत्वे युज्यते। अपिच अर्थाद्वास्त्वन्तरत्वे सत्यादर्श एव बिम्बसन्निधावेव तदाकार-**

### पञ्चपादिकाविवरणम्

कथमव्यवधानादिदन्तावभासाभावः स्यादिति? अत्राह—**अत एवाहमिति**। अनिदन्ताप्रतिभासादेव अज्ञानमात्रव्यवधानादेवेत्यर्थः। ननु अर्थतो युष्मदर्थत्वे तथा प्रतिभासाभावो न युक्त इत्यत्राह—**दृष्टश्च लक्षणत इति**॥ ननु तत्र विमर्शेऽपि मृन्मयव्यवहारो न जायते, इह तु विमर्शे युष्मदर्थता व्यवह्रियते, अतो नायं दृष्टान्त इत्यत आह—**व्युत्पन्नमतयस्त्विति**॥ **अत एव निपुणतरमभिवीक्ष्येत्यादिः** स्पस्टार्थः॥

यदि स्फटिकोदाहरणेनैवात्मन्यनात्माध्यासः सिद्धः, न तर्हि दर्पण-जलाद्युदाहरणेन वेदान्तविहितेन कृत्यमिति? तत्राह—**यत्पुनर्दर्पण-जलादिष्विति**॥ ननु प्रत्यङ्मुखता-भेदावभासाभ्यां वस्त्यन्तरे बिम्बात् प्रतिबिम्बे प्रत्यक्षे, कथमेकत्वप्रमाणमन्तरेण तदेव तत्? इति चोदयति—**कथं पुनस्तदेव तदिति**॥ व्यक्तिप्रत्यभिज्ञानादिति परिहरति—**एकत्वलक्षणत्वावगमादिति**॥ ननु अभिज्ञायां भेदप्रतिभासः कथं प्रत्यभिज्ञया बाध्यत इति? तत्राह—**न तद्वस्त्वन्तरत्व इति**॥ ननु व्यक्तिगतयोरैक्य-भेदावभासयोः केन किं बाध्यत? इति विशये व्यक्तिभेदस्तत्रोपपत्तिशून्यत्वाद् बाध्यत इत्याह—**अपि चार्थाद्वस्त्वन्तर इति**। दर्पणावयवा एव व्यक्त्यन्तराकारेण परिणता इति वाच्यम्; अन्यथा व्यक्त्युत्पत्त्युपायाभावादिति

### तत्त्वदीपनम्

स्योक्तस्यातःशब्देन परामर्शशङ्कां निरस्यति—**अनिदन्तेति**॥ स एव कुतः? तत्राह—**अज्ञानेति**॥ अज्ञानमात्रस्य व्यवधानाद्धेतोरनिदन्ताप्रतिभासः, तत इदं चोद्यमयुक्तमित्यन्वयः। अज्ञानमात्रव्यवहितत्वमिदन्तावभासप्रयोजकं चेत्, अहंकारस्यापि तथा स्यात्, नच तथोपलभ्यते; तस्मादन्यत् प्रयोजकमित्यर्थः। **नन्वर्थतः** इत्यारभ्य **ननु प्रत्यक्** इत्यतः प्राक्तनः स्पष्टार्थः॥

कथंशब्दसूचितामनुपपत्तिमाह—**ननु प्रत्यगिति**॥ प्रत्यङ्मुखत्वं प्रतिबिम्बस्य तद्वैपरीत्यं च विम्बस्येति युक्तितो भेदः, तथाऽनुभवतोऽपीत्यर्थः। एकत्वलक्षणत्वावगमात् कथमभेदाभिधानम्? 'गौरि'त्येकत्वलक्षणतावगमेऽपि खण्डादौ भेददर्शनादित्याशङ्क्य, जातिविषयत्वान्न तत्र तथात्वम्, अत्र तु वैपरीत्यमित्याह—**व्यक्तीति**॥ ननु प्रतीतिद्वयानुसारेण भेदाभेदरुभयोरपि परमार्थत्वमिति शङ्कते—**नन्विति**॥ विरुद्धार्थत्वादुभयोः प्रामाण्यानुपपत्तेरन्यतरस्याप्रामाण्यं वक्तव्यमित्याह—**तत्राहेति**॥ अन्यतराप्रामाण्येऽपि भेदप्रतिभासस्याप्रामाण्यमितरस्य प्रामाण्यमित्यत्र न किंचिन्निबन्धनं पश्याम इति शङ्कते—**नन्विति**॥ असंभावितविषयत्वाद् भेदप्रतिभासस्याप्रामाण्यम्, इतरस्य प्रामाण्यं च घटत इत्याह—**इति विशय इति**॥ आदर्शस्य मुखाकारपरिणामे तद्व्यापितया मुखोपलम्भः स्यात्, तथा "अर्थादि"त्यत्र कस्यानुपपत्त्येति च न ज्ञायत इति, तत्राह—**दर्पणेति**। अवयवपरिणामाभ्युपगमान्न व्यापिकार्योपलम्भ इत्यर्थः। तत्र हेतुमाह—**अन्यथेति**। दर्पणगतमुखव्यक्त्युत्पत्तौ

### ऋजुविवरणम्

व्यचष्टे—**अनिदन्ताप्रतिभासादिति**॥ **ननु तत्रेति**। मृत्त्वे विद्यमाने तद्व्यवहाराभावः पूर्वमिति निश्चेतुं न शक्यत इति भावः। **उल्बणम्** स्फुटमित्यर्थः॥

धर्मजातमहंकारगतमारोप्यते यतः। तद्वैधर्म्याद्विभागस्य तदनन्तरमुच्यते॥

"न तद्वस्त्वन्तरत्वे" इत्यनेन भेदे प्रत्यभिज्ञाया अनुपपत्तिरुक्ता, अभेदेऽपि सा समाना; अभिज्ञाया अनुपपन्नत्वात्, अतो न बिम्ब-प्रतिबिम्बयोरभेदनिश्चयः। तथा—"अपिचे"त्यनुपपन्नम्; नहि पूर्वंयुक्त्यां परिनिष्ठितायां युक्त्यन्तरं वक्तुमुचितम्, नाप्यनेन पूर्वोक्त एवार्थः साध्यते; परिणामनिराकरणपरत्वप्रतीतेः, अतोऽसंगतश्चेत्याशङ्क्याह—**ननु व्यक्तिगतयोरिति**॥ "अपिचे"त्यनेनादर्शस्यैव परिणाम आपादितः, स न युक्तः; दर्पणव्यापित्वाभावाद् मुखस्य, दर्पणस्यान्यथाभावादर्शनाच्च,

### पञ्चपादिका

गर्भितः परिणत इति वाच्यम्; विरुद्धपरिमाणत्वात् संश्लेषाभावाच्च प्रतिमुद्रेव बिम्बलाञ्छितत्वानुपपत्तेः, तथा सति बिम्बसन्निधिलब्धपरिणतिरादर्शस्तदपायेऽपि तथैवावतिष्ठेत ॥

**न खलु**—संवेष्टितः कटो निमित्तलब्धप्रसारणपरिणतिर्निमित्तापगमे तत्क्षणमेव संवेष्टते यथा, तथा स्यादिति—मन्तव्यम्; यतश्चिरकालसंवेष्टनाहितसंस्कारस्तत्र पुनः संवेष्टननिमित्तम् । तथाच यावत्संस्कारक्षयं प्रसारणनिमित्तानुवृत्तौ

### पञ्चपादिकाविवरणम्

भावः । ननु मुखलाञ्छितप्रतिमुद्रेयम्, न परिणाम इति ? नेत्याह—**विरुद्धपरिमाणत्वादिति** ॥ अस्तु तर्हि परिणाम इति ? नेत्याह—**तथा सतीति** ॥ ननु दृश्यत एव सर्वदा ? नैवम्; दर्पणस्य तिर्यङ्निरीक्षणे पूर्वोत्पन्नमुखदर्शनाभावात् ॥

ननु निमित्तकारणापायेऽपि कार्यमपैति, यथा वैशेषिकाणामपेक्षाबुद्धिविनाशे द्वित्वादिविनाशः, हस्तसंयोगापाये च कटविवरणापाय इति ? नेत्याह—**न खलु संवेष्टित इति** ॥ सर्वत्राग्निसंयुक्तद्रुतताम्रादाविव पुष्कलकारणेन विरुद्धकार्योदयादेव पूर्वकार्यविनाशः, वैशेषिकाणां च प्रक्रियामात्रम्; तद्द्वित्वादेर्वस्तुसहभावित्वादिति भावः । ननु संस्कारजन्यकार्यान्तरोदयात् पूर्वकार्यविनाशः, न निमित्तं कारणापाय इति ? तत्राह—**तथाच यावदिति** । निमित्तापायमात्राच्चेद्विवरणापायः, सस्काराभावे संवेष्टेतेति भावः । इहापि तर्हि पूर्वसंस्थानस्य चिरकालं संस्थानसंस्कारबलाद् विरुद्धकार्योदये प्रतिबिम्बापाय

### तत्त्वदीपनम्

कारणाभावादवयवपरिणामत्वं वक्तव्यमित्यर्थः । उपायान्तराभावोऽसिद्ध इति चोदयति—**नन्विति** ॥ लौकिकप्रतिमुद्रावैलक्षण्याद् नास्य प्रतिमुद्रात्वमित्याह—**नेत्याहेति** । यादृक्परिमाणा मुद्रा, तादृशी प्रतिमुद्रा लक्ष्यते, अत्र तु वैपरीत्यमित्यर्थः । सर्वदा प्रतिबिम्बोपलम्भः स्यादित्येतदिष्टमिति शङ्कते—**नन्विति** । यदा दर्पणं निरीक्ष्यते, तदा प्रतिबिम्बोपलम्भोऽप्यस्तीत्यर्थः । सर्वदा दर्शनमसिद्धमित्याह—**नैवमिति** ॥

निमित्तापाये नैमित्तिकापायस्यान्यत्र दर्शनाद् बिम्बापाये प्रतिबिम्बापगमः संभवति, ततः कथं तदुपलम्भसम्भवः ? इति शङ्कते—**ननु निमित्तेति** ॥ अपेक्षाबुद्धिं निमित्तीकृत्योत्पन्नस्य द्वित्वादेरपेक्षाबुद्धिविनाशे नाशो वैशेषिकैराश्रीयते; तथाच दर्पणोपलब्धस्य प्रतिबिम्बस्य बिम्बापगमेऽपगमो युक्त इत्यर्थः । **"संवेष्टितः"** इत्यत्र संवेष्टनगिरा प्रसारणनिरासो विवक्षितः, इतरत्र तु कार्यान्तरमिति विभागः । निमित्तापाये नैमित्तिकापायचोद्ये संवेष्टनोत्पत्तौ निमित्तमुक्तम्, तदनुपपन्नम्; चोद्यस्यापरिहृतेरित्याशङ्क्य, प्रसारणविरुद्धसंवेष्टनेन तन्निवृत्तेरभिधानान्नानतुरूपत्वमिति परिहरति—**सर्वत्रेति** ॥ पुष्कलकारणेन विरुद्धकार्योदयात् पूर्वकार्यविनाश इति संबन्धः । अग्निसंयोगजद्रवभावस्य तदभावेऽभावो दृष्ट इत्याशङ्क्य, तत्रापि तद्विरुद्धकाठिन्योदयात्तन्निरास इत्याह—**अग्नीति** ॥ अपेक्षाबुद्धिनाशे द्वित्वादिनाश इति यदुक्तम्, तत्राह—**वैशेषिकाणामिति** ॥ नच—द्वित्वादेर्वस्तुसहभावित्वेऽपेक्षाबुद्ध्यनुविधायित्वं स्यादित्यपि—शङ्क्यम्; भेदस्य वस्तुसहभावित्वेऽप्यपेक्षाबुद्ध्यनुविधानवदुपपत्तेः । नच—द्वित्वाक्रान्ते त्रित्वानुपपत्तिर्विरोधादित्यपि—शङ्क्यम्; ह्रस्वत्वादिवत् संभवादिति भावः । तत्र विनिगमनहेत्वभावमाशङ्कते—**नन्विति** ॥ संस्काराभावे संवेष्टनोपजननो माऽस्तु, तथाऽपि विरुद्धकार्योत्पत्तौ पूर्वविनाशः कथम् ? इत्याशङ्क्याह—**निमित्तेति** ॥ प्रकृतेऽपि प्रतिबिम्बविपरीतकार्येण तद्विनाश इति शङ्कते—**इहापीति** ॥ समतलसंस्थानं **पूर्वसंस्थान**शब्दार्थः ॥

### ऋजुविवरणम्

नापि परिणामसाधकयुक्तिरप्यस्ति, इत्याशङ्क्याभिप्रायमाह—**दर्पणावयवा एवेति** ॥

**अपेक्षाबुद्धिनाश इति** । एवं द्रष्टव्यम्—एकत्वं विषयीकृत्योत्पद्यमाना बुद्धिरपेक्षाबुद्धिः, तया द्वित्वमुत्पद्यते, एवं त्रित्वादिकम्, तन्नाशे च नाश इति । निमित्तापगमे नैमित्तिकापगमो दृश्यत इति चोदिते "यतश्चिरकाले"त्यनेन संवेष्टनसंस्कारः संवेष्टननिमित्तमित्युक्तम्; तदसंबद्धम्, निमित्तापगमस्य कार्यापगमहेतुत्वस्यापरिहृतत्वात्; इत्याशङ्क्य, तत्रापि संवेष्टनरूपविरुद्धकार्योदयात् पूर्वकार्यविनाश उक्तः; इत्यभिप्रायं अन्यत्रापि विरुद्धकार्यस्यैव पूर्वविनाशहेतुत्वमिति प्रदर्शनेनाह—**सर्वत्राग्निसंयुक्तद्रुतताम्रादाविति** ॥ यद्वा, द्रुतताम्रादौ निमित्तापगमादेव पूर्वकार्यविनाशो दृश्यते, तत् कथं सर्वत्रेत्युक्तम् ? इत्याशङ्क्याह—**अग्निसंयुक्तद्रुतताम्रादाविति** ॥ अथवा "यतश्चिरकाले"त्यनेन कथं संस्कारजन्यसंवेष्टनस्य प्रसरणापगमे हेतुत्वमुच्यते ? उत्तरकार्यस्य पूर्वकार्यविनाशहेतुत्वं व्यभिचारान्निश्चेतुं न शक्यते यतः, इत्याशङ्क्याभिप्रायमाह—**सर्वत्राग्निसंयुक्तेति** ॥ **ननु संस्कारजन्येति** । अन्वय-व्यतिरेकतो हेतुत्वम्, न त्वन्यत्र दर्शनमात्रेण, अत्रापि तौ दृश्येते, अतः कथं

### पञ्चपादिका

**न पुनः संवेष्टनोपजनः, एवं चिरकालसन्निहितबिम्बनिमित्ततदाकारपरिणतिरादर्शस्तथैव तदपायेऽपि यावदायुरवतिष्ठेत, नच तथोपलभ्यते। यः पुनः कमलमुकुलस्य विकासपरिणतिहेतोः सावित्रस्य तेजसो दीर्घकालानुवृत्तस्यापि विगमे तत्समकालं पुनर्मुकुलीभावः, स प्रथमतरमुकुलहेतुपार्थिवाऽऽप्यावयवव्यापारनिमित्तः; तदुपरमे जीर्णस्य पुनर्मुकुलतानुपलब्धेः नादर्शे पुनस्तथा पूर्वरूपपरिणामहेतुरस्ति।**

### पञ्चपादिकाविवरणम्

इति चेत्? न; उत्पन्नदर्पणमात्रे चिरकालावस्थितमुखपरिणामसंस्कारेऽपि बिम्बापायमात्रात् प्रतिबिम्बापगमदर्शनादित्याह—**एवं चिरकालेति**॥

ननु चिरकालावस्थितविकासपरिणामसंस्कारप्रचयेऽपि सवितृकिरणापाये विकासापायदर्शनवत् चिरकालावस्थितप्रतिबिम्बापायोऽपि बिम्बापाये स्यादिति? नेत्याह—**यः पुनः कमलमुकुलस्येति**॥ ननु निमित्तकारणापाय एव तत्रापि निमित्तम्, न पार्थिवाद्यवयवजन्या मुकुलतेति? तत्राह—**तदुपरम इति**॥ आदर्शेऽपि तर्हि मुखविपरीतकार्यपरिणामहेतुः कल्प्यतामिति? नेत्याह—**नादर्शे पुनरिति**। कारुकर्मापेक्षं चादर्शतलजन्मेति भावः। किंच, सत्यपि बिम्बसन्निधाने दर्पणद्रव्यं मुखाकारं कर्तुं दाह-च्छेदादिबहुप्रयत्नदर्शनात्, स्पर्शगोचरत्वाभावाच्च। अवयवव्यवधाने चाक्षुषत्वमपि न स्यादित्यभ्युच्चयः। तत्रायं प्रयोगः—न दर्पणादौ मुखव्यक्त्यन्तरमस्ति, तज्जन्मकारणशून्यत्वात्, शशमस्तके विषाणवदिति॥

### तत्त्वदीपनम्

किं सर्वत्र विरुद्धकार्यात् प्रतिबिम्बनिवृत्तिः? उत क्वचित्? इति विकल्प्याऽऽद्यं दूषयति—**नोत्पन्नेति**॥ नोत्पन्नमात्रविशेषणेन समतलसंस्काराभावो निर्दिष्टः। द्वितीयेऽपि प्रतिबिम्बापगमननिमित्ताभावात्तदुपलम्भः स्यादित्यर्थः॥

निमित्तापायान्नैमित्तिकापाये दृष्टान्तान्तरमाशङ्कते—**नन्विति**॥ तत्रापि मुकुलसंस्कारान्मुकुलोदये विकासापायः, न किरणापायमात्रात्, ततश्च दृष्टान्तासंगतिरित्याशङ्क्याह—**चिरकालावस्थितेति**। वसन्तकालीनस्याह्नो रात्र्यपेक्षया दीर्घकालत्वाद् विकाससंस्कारस्य चिरकालसंस्थानं द्रष्टव्यम्। दृष्टान्तासंमत्योत्तरमाह—**नेतीति**॥ विनिगमनकारणाभावमभिप्रेत्य शङ्कते—**नन्विति**॥ नियामकं विनाऽपि तदभ्युपगमे वैपरीत्यमेव किं न स्यादित्याह—**निमित्तेति**॥ निमित्तापायान्नैमित्तिकापाये समयान्तरेऽपि मुकुलतोपलम्भः स्यात्, नच तथेत्याह—**तत्राहेति**॥ मुखविपरीतकार्यान्तरदर्शनात्तदुत्पत्तौ कारणान्तरं कल्प्यमिति शङ्कते—**आदर्श इति**॥ तदन्यथोपपन्नमित्याह—**नेत्याहेति**। दर्पणं सदा समतलमेव, मुखाकारप्रतिभानं त्वन्यथेति समाध्यभिसन्धिः। पूर्वरूपपरिणामहेतोरादर्शस्य सद्भावात् कथं हेत्वभावः? इत्याशङ्क्याह—**कारुकर्मेति**॥ प्रतिबिम्बस्य दर्पणपरिणामत्वाभावे हेत्वन्तरमाह—**किंचेति**॥ उद्भूतस्पर्शदर्पणपरिणामाङ्गीकारे प्रतिबिम्बस्यापि स्पर्शप्रत्यक्षत्वं स्यात्, नच तदस्तीत्याह—**स्पर्शेति**॥ बाह्यावयवव्यवहितत्वाद् न स्पर्शप्रत्यक्षत्वमित्याशङ्क्याह—**अवयवेति**॥ दर्पणावयवानां स्वच्छत्वान्न नायनरश्मिप्रतिबन्धकत्वम्; स्फटिकान्तरितस्याप्युपलम्भादित्याशङ्क्य, दर्पणादौ न मुखसत्ता येन चाक्षुषत्वं स्यादित्याशयेनाह—**तत्रायमिति**। विमतम्, दर्पणादिसंसर्गितयोत्पत्त्यनर्हम्, तदुत्पत्तिकारणविधुरत्वात्, यद् यदुत्पत्तिकारणविधुरम्, तत्तथोत्पत्त्यनर्हम्, यथा शशमस्तके विषाणमिति द्रष्टव्यम्। तस्मात् भेदावभासस्यासंभावितविषयत्वेनाप्रामाण्यादभेदानुभवात्तत्सिद्धिरित्यर्थः॥

### ऋजुविवरणम्

निमित्तापगमस्य हेतुत्त्वम्? इति चोद्याभिप्रायः। तथाच "यावदि"त्यनेन संस्काराभावे संवेष्टनादर्शनादिति हेतुरुक्तः, असंगतः सः; नहि कारणान्तराभावेन कार्यानुत्पत्तावन्वय-व्यतिरेकसिद्धस्यान्यस्याकारणत्वं भवति, नापि तावन्मात्रेण न कार्यस्योत्पत्तिः; कुलालादावदर्शनादित्याशङ्क्याभिप्रायमाह—**निमित्तापायमात्रादिति**। निमित्तापगममात्रस्य क्वापि हेतुत्वादर्शनादादर्शे मुखं प्रतीयेतेति भावः॥

आदर्शोत्पादकावयवव्यापार एव कारणमित्याशङ्क्याभिप्रायमाह—**कारुकर्मापेक्षमिति**॥

"शुक्तिकारजतस्ये"त्यनेन सत्यरजतैकरूपावभासित्वं दर्शयता समानरूपावभासित्वमुक्तमिति प्रतिभाति, तथा सत्यनुत्तरमेव स्यात्; प्रत्यभिज्ञासमर्थनाभावात् तदर्थं व्याचष्टे—**मिथ्यारजतेऽपीति**॥ "तत्र ही"त्यनेन रजते बाधो न मुख इत्युक्तम्, तत् कथम्? उभयत्र बाधदर्शनात्, बाधितस्य सत्येनैकत्वप्रतीतिसंभवादित्याशङ्क्य व्याचष्टे—**तत्र नेदमिति**॥ अभिज्ञाबाधादित्यनेन बाधदर्शनादित्येतद् व्याख्यातम्। **प्रत्यभिज्ञाऽपीत्यनेन** मिथ्याभाव इति व्याख्यातम्॥

### पञ्चपादिका

अत्राह—भवतु न वस्त्वन्तरम्, तदेव तदिति तु न क्षम्यते; शुक्तिकारजतस्य मिथ्यारूपस्यापि सत्यरजतैकरूपावभासित्वदर्शनात्, मैवम्; तत्र हि बाधदर्शनाद् मिथ्याभावः, नेह स बाधो दृश्यते। यत् पुनर्दर्पणापगमे तदपगमः, न स बाधः; दर्पणेऽपि तत्प्रसङ्गात्॥

ननु तत्त्वमसिवाक्याद् बाधो दृश्यते? मैवम्; तत्र 'तत्त्वमि'ति बिम्बस्थानीयब्रह्मस्वरूपता प्रतिबिम्बस्थानीयस्य जीवस्योपदिश्यते; अन्यथा न "तत्त्वमसी"ति स्यात्, किन्तु 'न त्वमसी'ति भवेत्, 'न रजतमस्ती'तिवत्। किंच, शास्त्री-

### पञ्चपादिकाविवरणम्

तर्हि शुक्तिकारजतवन्मिथ्यात्वोपपत्तेर्न मुखैकत्वमिति चोदयति—**अत्राहेति**॥ ननु प्रत्यभिज्ञयैकत्वमवगतमिति? नेत्याह—**शुक्तिकारजतस्येति**। मिथ्यारजतेऽपि प्रत्यभिज्ञा दृश्यते—'मदीयमिदं रजतमिती'त्यर्थः। उत्तरमाह—**मैवम्; तत्र हीति**। तत्र 'नेदं रजतमि'ति रजतस्वरूपमेव बाध्यते, 'नात्र रजतं किन्तु तदिदं रजतमि'ति देशमात्रबाधया सत्यरजतैकतया न प्रत्यभिज्ञायते; अतो रजतेऽभिज्ञाबाधात् प्रत्यभिज्ञाऽपि भ्रम इत्यर्थः। इह तु 'नेदं मुखमि'ति न स्वरूपेण बाध्यते, किन्तु 'नात्र मुखम्, मदीयमेवे'ति प्रत्यभिज्ञायते; नच सा बाध्यते, व्यक्त्यन्तरत्वे च 'नात्र मुखमस्ती'ति न बाधः स्यादित्यर्थः। **यत्पुनरिति** स्पष्टार्थः॥ ननु स्वमुखावयवानामचाक्षुषत्वात् कथं प्रत्यक्षप्रत्यभिज्ञा? न; कतिपयावयवदर्शनादपि लोकवदवयविनश्चाक्षुषत्वोपपत्तेः।

तत्त्वमसिवाक्यं त्वंपदार्थबाधनिमित्तम्; संसारिणो विनाशमन्तरेण मोक्षानुपपत्तेः, अतो नाय दृष्टान्त इति चोदयति—**ननु तत्त्वमसिवाक्यादिति**॥ 'सोऽयं देवदत्तः' इतिवत् तादात्म्यपरम्, न परार्थबाधपरमिति परिहरति—**मैवमिति**॥ **किंच**

### तत्त्वदीपनम्

परस्परप्रतिस्पर्द्धिनोरन्यतरनिषेधेऽन्यतरव्यवस्थेति न्यायाद् भेदनिषेधेऽभेदस्यार्थसिद्धत्वात् 'तदेव तदिति न क्षम्यते' इत्ययुक्तमित्याशङ्क्य, मिथ्यात्वस्यापि संभवान्नाभेदः सिध्यतीत्याह—**तर्हीति**॥ एकत्वप्रमाणसद्भावेऽपि नैकत्वमित्येतद् व्याहतमिति शङ्कते—**नन्विति**॥ प्रत्यभिज्ञाया अन्यथोपपत्तेर्मैवमित्याह—**नेत्याहेति**॥ "एकरूपावभासित्वदर्शनादि"त्यत्र समानरूपावभासित्वमात्रमुक्तमिति शङ्क्येत, तत्राह—**मिथ्येति**॥ रजतसंसर्गस्य बाधः, न रजतस्येत्युत्तराभासत्वम्, तत्राह—**उत्तरमिति**॥ उत्तरप्रकारमाह—**तत्रेति**। यदेतावन्त कालं रजतमिति प्रतिपन्नम्, तन्नेति रजतस्वरूपमेव निषिध्यमानं दृश्यत इत्यर्थः। 'यद् रजतम्, तदिदं न भवती'ति संसर्गबाधमाशङ्क्याह—**नात्रेति**। संसर्गमात्रस्य बाधे देशान्तरे 'तद् रजतमि'ति प्रत्यभिज्ञा स्यात्, नच तथोपलभ्यते; तस्मात् संसर्गिणोऽपि बाध इत्यर्थः। "नेह बाधो दृश्यते" इत्यत्र बाधाभाव उक्तः, स कथम्? "नात्र मुखमि"ति बाधदर्शनादित्याशङ्क्य, स्वरूपबाधाभावस्तत्रोक्त इत्याह—**इह त्विति**॥ रजतप्रत्यभिज्ञातो वैलक्षण्यमाह—**नचेति**॥ उक्तमर्थं व्यतिरेकमुखेनोपपादयति—**व्यक्त्यन्तरत्व इति**॥ ग्रीवास्थमुखाद् दर्पणस्थस्यान्यत्वे 'दर्पणे मुखं नास्ती'ति संसर्गनिषेधो न भवेदित्यर्थः। मुखप्रत्यभिज्ञामाक्षिपति—**ननु स्वमुखेति**॥ पूर्वानुभवसंस्कारसहिताक्षार्थसंप्रयोगस्य प्रत्यभिज्ञाकारणत्वादत्र चाक्षस्य मुखावयवसन्निकर्षाभावात् कथं प्रत्यक्षप्रत्यभिज्ञेत्यर्थः। किं सकलावयवानामचाक्षुषत्वम्? उत कतिपयानाम्? नाद्य इत्याह—**कतिपयेति**॥ द्वितीयं दूषयति—**अपि लोकवदिति**॥ नासादिलक्षणकतिपयावयवदर्शनादवयविनि मुखस्य चाक्षुषत्वम्; घटस्याऽऽन्तरावयवादृष्टावपि चाक्षुषत्ववदित्यर्थः॥

प्रतिबिम्बस्य बाधो नेत्युक्ते, उत्तरत्र तस्यैव बाधः समर्थ्यत इति शङ्का स्यात्, नच सोपपद्यते; तत्त्वमसिवाक्यस्य तदबाधकत्वात्। नच—जीवस्य बाधोऽभिधीयत इति—शङ्क्यम्; वाक्यस्याभेदबोधित्वादित्याशङ्क्य तात्पर्यमाह—**तत्त्वमसीति**॥ तत्र हेतुमाह—**संसारिण इति**॥ ब्रह्मभावो **मोक्ष**शब्दार्थः। विरुद्धयोरभेदासंभवात् तद्बोधकत्वे वाक्यस्य निरस्ते, कथं ब्रह्मरूपता बोध्यत इत्यूचिवान्? इत्याशङ्क्याह—**सोऽयमिति**। तदेतद्देशादिवैशिष्ट्यपरित्यागेन यथा 'सोऽयमि'त्यादेर्देवदत्तस्वरूपपरत्वम्, तद्वद् वाच्यांशपरित्यागेन चित्तादात्म्यपरत्वान्न बाधकत्वमस्यापीत्यर्थः। तादात्म्यपरत्वं कस्मादिति? अत आह—**न पदार्थेति**॥ सामानाधिकरण्यविरोधान्न बाधपरत्वम्। नच—यस्त्वं संसारी, तद् ब्रह्मेति बाधायां सामानाधि-

### ऋजुविवरणम्

ननु "तत्त्वमसिवाक्यादि"त्ययुक्तम्; तयोरेकत्वपरत्वात् शास्त्रस्य, अप्रस्तुतं च चोद्यमित्याशङ्क्यावतारयति—**तत्त्वमसिवाक्यमिति**॥ "कथमाप्तः"इत्यनेन यथादृष्टार्थवादित्वलक्षणमाप्तत्वं नास्तीत्युक्तम्॥

### पञ्चपादिका

**योऽपि व्यवहारः प्रतिबिम्बस्य पारमार्थिकमिव बिम्बैकरूपत्वं दर्शयति—"नेक्षेतोद्यन्तमादित्यं नास्तं यन्तं कदाचन। नोपरक्तं न वारिस्थं न मध्यं नभसो गतमि"ति। यस्तु मन्यते—न पराक्प्रवणप्रवृत्तनायनरश्मिभिर्बिम्बमेव भिन्नदेशस्थं गृह्यते, किन्तु दर्पणप्रतिस्फालितैः परावृत्य प्रत्यङ्मुखैः स्वदेशस्थमेव बिम्बं गृह्यते—इति, तमनुभव एव निराकरोति, इति न पराक्रम्यते॥**

**कथं पुनः परिच्छिन्नमेकमेकस्वभावं विच्छिन्नदेशद्वये सर्वात्मनाऽवभासमानमुभयत्र पारमार्थिकं भवति ? न वयं विच्छेदावभासं पारमार्थिकं ब्रूमः, किंत्वेकत्वम् ? विच्छेदस्तु मायाविजृम्भितः।**

### पञ्चपादिकाविवरणम्

**शास्त्रीयोऽपीति** स्पष्टार्थः॥ "न वारिस्थमि"त्यादित्यस्य वारिस्थतोपजीव्यते। अख्यातिवादी—न बिम्बादन्यत्वे प्रतिबिम्बं नाम दर्पणगतमवभासते, किन्तु बिम्बमेव दर्पणादविविक्तं प्रकाशत इति—वदति, तदनुवदति—**यस्तु मन्यत** इति॥ स्पष्टप्रत्यङ्मुखावभासं दर्पणान्तरानुप्रविष्टमिव स्वमात्मानं पुरुषान्तरवन्निरीक्ष्यमाणमिवेदं यादृग् दृश्यमानं मुखम्, तथा नावभासत इति वदन् कथमाप्तः स्यात् ? इत्याह—**तमनुभव एवेति**॥

ननु मूर्तद्रव्यस्य युगपत् कार्त्स्न्येन देशद्वयवर्तित्वं लोके न क्वचिदपि दृष्टमिति चोदयति—**कथं पुनः परिच्छिन्नमिति**॥ एकमेकदेशस्थमेव मुखं संभ्रमाद्भिन्नं भिन्नदेशस्थं वाऽवभासत इत्याह—**न वयमिति**॥ किं पुनरिदमेकस्मिन्नेकदेशवस्तुनि भेदभिन्नदेशत्वलक्षणं वस्त्विति ? तदाह—**विच्छेदस्त्विति**॥ ननु माययाऽपि प्रमाणविरुद्धं कथमवभासत इति ?

### तत्त्वदीपनम्

करण्यमिति—वाच्यम्; 'योऽयं स्थाणुः स पुमानि'त्यत्र स्थाणुपुंसोरन्योन्यात्मताऽयोग्यत्वात् सामानाधिकरण्यस्यातद्विषयत्वम्, अत्र तु काल्पनिकविरुद्धपरित्यागेन चिदेकपर्यवसायित्वसंभवाद् न तथात्वमित्यर्थः॥ ननु "नेक्षेतोद्यन्तमादित्यमि"त्यत्र बिम्ब-प्रतिबिम्बयोरैक्यं न निर्दिश्यते, उद्यदादित्यरूपस्येक्षणादिप्रतिषेधादित्याशङ्क्याह—**न वारिस्थमिति**॥ "आदित्यं वारिस्थं नेक्षेते"त्यत्र गगनवर्तिन आदित्यस्य वारिप्रतिबिम्बितताभिधानात्तयोरैक्यम्। नच—'वारिस्थमि'त्येतावदुदाहरणीयम्, न 'नेक्षेते'त्यादीति—शङ्क्यम्; ऐकग्रन्थ्येनोदाहरणसंभवादित्यर्थः। "यस्तु मन्यते" इत्यत्र दर्पणगततया प्रतिबिम्बग्रह एव नेत्युक्तम्, तदनुभवविरुद्धमित्याशङ्क्याह—**अख्यातीति**। अविविक्तज्ञानवादित्वात् संसर्गप्रत्ययाभावसिद्धिरित्यर्थः। प्रतिभासस्य गतिं पृच्छति—**किंत्विति**॥ ग्रीवास्थत्वेनाग्रहणात् तथा प्रतिभास इत्याह—**बिम्बमिति**॥ अनुभवविरुद्धं इत्युक्तं टीकायाम्, तत्रानुभवमभिनयति—**स्पष्टेति**॥

असंभावितविषयत्वेनाभेदप्रत्ययस्य प्रामाण्यानुपपत्तिरित्युक्तम्—"कथं पुनरि"त्यत्र, तदनुपपन्नम्; क्रमेणैकस्य देशद्वयवर्तितासंभवादित्याशङ्क्याह—**ननु मूर्तेति**॥ एकस्य युगपत् कार्त्स्न्येन देशद्वयवर्तित्वं जातौ दृष्टम्, तद्व्यावर्तयति—**द्रव्यस्येति**॥ गगनव्यावृत्त्यर्थम्—**मूर्तेति**॥ वंशद्रव्यस्यावयवशो देशद्वयवर्तित्वं दृष्टम्, तदर्थमाह—**कार्त्स्न्येनेति**॥ क्रमवर्तित्वं व्यावर्तयति—**युगपदिति**॥ "परिच्छिन्नमि"ति **टीकाया** एषोऽर्थः—देशद्वये भासमानमुभयत्र कथं पारमार्थिकमिति संबन्धः। गगनादेर्व्यावृत्तिमाह—**परिच्छिन्नमिति**। महारिमाणानाधारमित्यर्थः। घट-पटौ भिन्नदेशसम्बन्धिनौ व्यावर्तयति—**एकमिति**॥ एवंविधस्यापि सयोगादेर्भिन्नदेशव्यापिनः परमार्थत्वं व्यावर्तयति—**एकेति**। तच्चोभयनिरूप्यम्, इदं त्वन्यथेत्यर्थः। अवयविनं व्यावर्तयति—**विच्छिन्नेति**॥ अवयविनः संश्लिष्टावयवनिष्ठत्वम्, अयं तु तद्विपरीत इत्यर्थः। वेण्वादेर्व्यावृत्त्यर्थमाह—**सर्वात्मनेति**॥ किमत्र बिम्ब-प्रतिबिम्बयोर्भिन्नत्वं भिन्नदेशत्वं च सिषाधयिषितम् ? उत प्रतिभासस्य गतिः पृच्छ्यते ? इति विकल्प्याद्यं निरस्यति—**एकमिति**। व्यक्तिप्रत्यभिज्ञानादित्यर्थः। द्वितीयं दूषयति—**संभ्रमादिति**॥ "विच्छेदः" इत्यनेन व्यावर्त्यां शङ्कामाह—**किं पुनरिति**॥ भेदशब्दस्य कर्मपरत्वं द्रष्टव्यम्। नच—"संभ्रमाभिन्नमि"त्यत्र गतेरुक्तत्वान्न चोद्यावसर इति शङ्क्यम्; तस्यार्थस्य टीकारूढत्वं कर्तुं चोद्यानुवादादित्यर्थः। माया विरुद्धमर्थं घटयितुं न क्षमते; अन्यथा मुक्तानपि बध्नीयादिति शङ्कते—**नन्विति**॥ 'मुक्तावविद्याभावान्नाविद्यानिमित्तबन्धनसंभवः, सत्यां त्वविद्यायामसंभावितमपि संभाव्यते,

### ऋजुविवरणम्

"कथं पुनः परिच्छिन्नमि"त्यनेन कार्त्स्न्येन देशद्वयवर्तित्वं न संभवतीति चोदितम्, तदयुक्तम्, एकस्य देवदत्तस्य देशद्वयसम्बन्धदर्शनादित्याशङ्क्यावतारयति—**ननु मूर्तद्रव्यस्येति**॥ "न वयमि"त्यनेन विच्छेदावभासस्यापारमार्थिकत्वम्,

### पञ्चपादिका

**नहि मायायामसम्भावनीयं नाम; असम्भावनीयावभासचतुरा हि सा ॥**

**ननु सत्येव बिम्बैकतावगमे प्रतिबिम्बस्य तद्गतो विच्छेदादिमिथ्यावभासः, तथा ब्रह्मैकतावगमेऽपि जीवस्य**

### पञ्चपादिकाविवरणम्

अत आह— **नहि मायायामिति**। ननु विच्छेदावभासः कथमविद्याविजृम्भितः? यावतोर्ध्वाग्रोऽपि स्पष्टमवभासमानो वृक्षोऽधोग्रो जले प्रतीयते, नच तत्राज्ञानमस्तीति? उच्यते; नच विषयावरणमज्ञानमध्यासहेतुरित्युक्तम्। तत्रौपाधिकभ्रमे-उपाधिरेव आत्माविद्या परिणामे पुष्कलकारणम्। नचाधिष्ठानयाथार्थ्यस्य ज्ञानं सोपाधिकभ्रमेष्वध्यासविरोधि, किन्तु निरुपाधिकभ्रमेष्विति द्रष्टव्यम् ॥

ननु सोपाधिकभ्रमत्वे भेदकर्तृत्वाद्यध्यासस्य, न तत्त्वज्ञानादध्यासनिवृत्तिः, किन्तु उपाधिमात्रनिवृत्त्येति चोदयति— **ननु सत्येव बिम्बैकतावगम इति** ॥ चोदितदोषं परिहर्तुमाशङ्कान्तरं प्रथमं निवर्तयति—कथम् जीवः प्रतिबिम्बश्चेत्, न

### तत्त्वदीपनम्

यथा तरणिमरीचिषु फेनवीच्यादिकम्, तद्वदित्यभिप्रेत्याह—**अत आहेति** ॥ विच्छेदावभावस्य नाविद्यानिमित्तत्वम्, तदभावेऽपि भावादिति शङ्कते—**ननु विच्छेदेति** ॥ विकल्पासहत्वान्नैतदित्याह—**उच्यत इति** ॥ किं विषयावरकाज्ञानस्याभावो विवक्षितः? उताज्ञानस्यैव? इति विकल्प्याद्यं दूषयति—**नचेति**। स्वत एवावृतरूपत्वाद् नाऽनात्मावारकमज्ञानमित्युक्तं "प्रमाणवैकल्यादि" त्यत्रेत्यर्थः। द्वितीयं दूषयति—**तत्रेत्यादिना** ॥ अज्ञानस्यैवाभावो न संभवति; आत्माऽविद्यायाः सद्भावादित्याह—**आत्माऽविद्येति** ॥ तस्याः सदा परिणामप्रसङ्गं निवारयति—**औपाधिकेति**। अन्वय-व्यतिरेकाभ्यामुपाधेरविद्याक्षोभकत्वं दोषरूषित-लोचनसंपृक्तेदमंशवदित्यर्थः। अधिष्ठानयाथात्म्यज्ञानस्याध्यासविरोधित्वात् तस्मिन् सत्यप्यध्यास इति कथम्। इति चेत्? तत्र वक्तव्यम्—सर्वत्र तत्त्वज्ञानस्याध्यासविरोधित्वम्? उत क्वचित्? नाद्यः; तत्त्वज्ञाने सत्यपि सोपाधिकभ्रमदर्शनादित्याह— **नचेति** ॥ कुत्र तर्हि ज्ञानस्याध्यासविरोधित्वम्? इति पृच्छायां द्वितीयाङ्गीकारेणोत्तरमाह—**किन्त्विति**। इदमत्राभिप्रेतम्—ऊर्ध्वाग्रवृक्षाज्ञानस्य भ्रमहेतुत्वं नाश्रीयते, किंतूर्ध्वाग्रवृक्षस्य जलप्रतिबिम्बितवृक्षस्य चैक्यावच्छिन्नात्ममोहस्य भ्रमहेतुत्वम्; ततश्च तदैक्यावच्छिन्नात्माऽऽपरोक्ष्यज्ञानाभावादज्ञानानिवृत्तिस्तदभावश्च जललक्षणोपाधिप्रतिबन्धात्, तत्र प्रतिबन्धकनिवृत्त्याऽपरोक्षज्ञानेनाज्ञानादिनिवृत्तिरिति ॥

तत्त्वज्ञाने सत्यध्यासो न निवर्तत इत्येतच्चोद्यं च नावतरति; "सलिल एको द्रष्टा" "तस्मात्तत्सर्वमभवदि"त्यादौ तत्त्वज्ञाने पूर्णताश्रवणादित्याशङ्क्याह—**ननु सोपाधिकेति** ॥ तत्त्वज्ञाने सत्यप्यध्यासानुवृत्तिदर्शनादिति द्रष्टव्यम्। कथं तर्हि तन्निवृत्तिः? इति पृच्छति—**किन्त्विति** ॥ उपाधिनिवृत्त्यौपाधिकनिवृत्तिः, उपाधिनिवृत्तेश्च कर्मायत्तत्वात् तत्त्वज्ञान-वैयर्थ्यमित्याशयेनाह—**उपाधीति** ॥ तत्त्वज्ञानवैयर्थ्ये शङ्किते लौकिकप्रतिबिम्बस्याज्ञातृत्वं जीवस्य ज्ञातृत्वं चानुपयुक्त-मेवोच्यत इत्याशङ्क्याह—**चोदितेति** ॥ आशङ्कान्तराधिगतौ तन्निवृत्त्यधिगमः, तदेव कथम्? इत्याह—**कथमिति** ॥ आशङ्कान्तरमाह—**जीव इति**। जीवस्य तत्त्वज्ञानानुपपत्तेः कथं तेनाविद्यानिवृत्तिशङ्केत्यर्थः। न प्रतिबिम्बत्वमज्ञत्वप्रयोजक-

### ऋजुविवरणम्

एकत्वस्य च पारमार्थिकत्वं कीर्तितम्, तदप्रस्तुतम्; एकस्य देशद्वयवर्तित्वस्य दृष्टत्वात्। नच मिथ्यात्वसंभवः; सर्वकारणभावात्, विरोधिसद्भावाच्च। अतो भिन्नदेशत्वान्यथानुपपत्त्या मुखकारणमपि प्रतीयत इत्याशङ्क्यावतारयति—**एकमेकदेशस्थमिति** ॥ आत्माश्रयाज्ञानस्यैव विक्षेपहेतुत्वम्, नतु जडावरणस्य; अतो न दोष इति परिहरति—**उच्यति इति** ॥ ननु विच्छेदाकारेण परिणामे कारणाभावात् कथमविद्या परिणमते? इत्याशङ्क्याह—**तत्रौपाधिकभ्रमेष्विति** ॥ ननु अधिष्ठानवृक्षादेर्विशेषावभासे कथमध्यासः संभवति विरोधात्? इत्याशङ्क्याह—**नचाधिष्ठानयाथार्थ्यस्येति** ॥

"ननु सत्येवे"त्यनेनैकत्वज्ञानेऽपि भेदो न निवर्तेतेति चोदितम्; तदयुक्तम्; द्विचन्द्रादौ निवृत्तेरपि दर्शनात्, अत्रापि मिथ्यात्वेन तत्त्वज्ञानान्निवृत्त्युपपत्तेः। नापि बिम्ब-प्रतिबिम्बभेदत्वादनिवृत्तिः, अप्रयोजकत्वात्। अतो निवृत्तौ हेत्वभावादचोद्य-मित्याशङ्क्यावतारयति—**ननु सोपाधिकभ्रमत्व इति**। पूर्वोदाहरणे कर्तृत्वादिनिवृत्तेरनुक्तत्वाच्चोद्यविषयत्वं दर्शितम्। "देवदत्तस्याचेतनांशस्ये"त्यनेन प्रतिबिम्बस्य बिम्बरूपानवभाससमर्थनमप्रस्तुतम्; अचोद्यापरिहारात्, इत्याशङ्क्यावतारयति— **चोदितदोषमिति** ॥ "देवदत्तस्ये"त्यनेन चेतनत्वं बिम्बभावापरिज्ञाने कारणमिति वदता "प्रतिबिम्बत्वादि"ति हेतोरप्रयोज-

## पञ्चपादिका

विच्छेदादिर्मिथ्यावभासो न निवर्तितुमर्हति ? उच्यते; देवदत्तस्याचेतनांशस्यैव प्रतिबिम्बत्वात्, सचेतनांशस्यैव वा प्रतिबिम्बत्वे प्रतिबिम्बहेतोः श्यामादिधर्मेणेव जाड्येनाप्यास्कन्दितत्वान्न तत्प्रतिबिम्बं बिम्बैकरूपतामात्मनो जानाति, अचेतनत्वात्; तथाचानुभवः—न बिम्बचेष्टया विना प्रतिबिम्बं चेष्टते—इति। यस्य हि भ्रान्तिरात्मनि परत्र वा समुत्पन्ना, तद्गते-

## पञ्चपादिकाविवरणम्

बिम्बात्मतामवगन्तुमलम्; प्रतिबिम्बत्वात्, अक्षिपात्रगतदेवदत्तप्रतिबिम्बवदित्येतन्निराचष्टे—**देवदत्तस्याचेतनांशस्येति**। अचेतनत्वप्रयुक्ता तत्रानवगतिः, न प्रतिबिम्बत्वप्रयुक्ता घटादिषु तथा दर्शनादिति भावः। ननु शरीरमेव चेतनमिति लोकायतः ? तत्राह—**सचेतनांशस्यैवेति**। दर्पणजाड्येन प्रतिबन्धात् स्वभावजाड्याद्वेत्यर्थः। देवदत्तप्रतिबिम्बस्याचेतनत्वे हेत्वन्तरमाह—**तथाचानुभव इति**। कदाचित्तस्यापि चेतनत्वे स्वातन्त्र्यात् तच्चेष्टया विनाऽपीदं चेष्टतामिति भावः। ननु देवदत्तस्यैव बिम्बस्य भ्रमनिवर्तकतत्त्वज्ञानाश्रयत्वं दृष्टम्, एवं बिम्बत्वाद् ब्रह्मण एव भ्रमनिरासितत्त्वज्ञानाश्रयत्वं स्यादिति ? नेत्याह—**यस्य हि भ्रान्तिरिति**। न बिम्बत्वकृतं तत्त्वज्ञानाश्रयत्वम्, किन्तु भ्रान्तत्वकृतम्, तदप्यज्ञत्वकृतम्, तदपि जीवत्वनिमित्तमिति भावः॥

## तत्त्वदीपनम्

मित्याह—**एतदिति**॥ तत्र चेतनत्व-प्रतिबिम्बत्वयोः सद्भावेऽचेतनत्वस्य प्रयोजकत्वं कथं निरधारि ? तत्राह—**अचेतनत्वेति**॥ शरीरस्य चेतनत्वेन तत्प्रतिबिम्बस्यापि चेतनत्वात् कथमचेतनत्वस्य प्रयोजकत्वम् ? इत्याह—**ननु शरीरमिति**॥ शरीरस्य चेतनत्वमङ्गीकृत्य दूषणमाह—**तत्राहेति**॥ चेतनप्रतिबिम्बाभ्युपगमे "कथं जाड्येनास्कन्दितत्वादि"त्यभिदधौ टीकाकारः ? तत्राह—**दर्पणेति**॥ यथाऽवदातस्यापि प्रतिबिम्बस्योपाधिदोषादन्यथात्वम्, एवं चेतनत्वेऽपि प्रतिबिम्बस्योपाधिजाड्याज्जडत्वमित्यर्थः। प्रतिबिम्बस्य चेतनत्वं चासिद्धमित्याह—**स्वभावेति**॥ रूपादिमत्त्वेन शरीरस्याचेतनत्वात् प्रतिबिम्बस्याप्यचेतनत्वमित्यर्थः। प्रतिबिम्बस्य बिम्बात्मताज्ञानाभावेऽनुभवोपन्यास इति प्रतिभाति, न च तदुपपद्यते; अनुभवस्य तदसाधकत्वादित्याशङ्क्य तात्पर्यमाह—**देवदत्तेति**॥ प्रतिबिम्बस्य बिम्बाधीनचेष्टावत्त्वमात्रेण कथमचेतनत्वम् ? चेतनस्याप्यन्याधीनव्यापारदर्शनादित्यत्राह—**कदाचिदिति**। नियमेनान्याधीनचेष्टावत्त्वमचेतनत्वप्रयोजकम्, चेतनत्वे तु कदाचित्स्वयमेव चेष्टेतेत्यर्थः। लौकिकप्रतिबिम्बस्याज्ञत्वसमर्थनस्य प्रस्तुतत्वात्—"यस्य हि भ्रान्तिरि"त्यनेन परगतज्ञानेन परगतभ्रान्तेरनिरासाभिधानमसंगतमित्याशङ्क्य टीकाव्यावर्त्यां शङ्कामाह—**ननु देवदत्तस्येति**॥ टीकायां बिम्बस्य तत्त्वज्ञानाश्रयत्वाभावे न हेतूपन्यास इत्यत्राह—**न बिम्बत्वेति**॥ भ्रान्तत्वं तत्त्वज्ञानाश्रयत्वप्रयोजकं चेत्, तदपि तत्रैव साधयिष्याम इत्याह—**तदपीति**॥ यस्याज्ञत्वं तस्यैव भ्रान्तत्वं चेत्, तर्हि तद्वत्त्वज्ञानाश्रयत्वमपि तत्र कल्प्यत इति, तत्राह—**तदपीति**। सर्वज्ञादिरूपेऽज्ञानाश्रयत्वस्य विरुद्धत्वात् तद्विपरीतजीवस्याज्ञत्वमित्यर्थः। एतच्चाङ्गीकृत्योक्तम्, वस्तुतस्तु चिन्मात्रतन्त्रमज्ञानमित्याशयः॥

## ऋजुविवरणम्

कत्वमुक्तम्, तत्र हेतुद्वये विद्यमाने कथमस्यैवाप्रयोजकत्वम् ? इत्याशङ्क्याभिप्रायमाह—**अचेतनत्वेति**॥ "चेतनांशस्यैवाप्रयोजकत्वम् ? इत्याशङ्क्याभिप्रायमाह—**अचेतनत्वेति**॥ "सचेतनांशस्यैवे"त्युक्तम्; पक्षपरिग्रहे चेतनस्य प्रतिबिम्बत्वशङ्काकारणाभावात्, प्रतिबिम्बस्य चाक्षुषत्वादित्याशङ्क्याह—**शरीरमेवेति**॥ "जाड्येनाप्यास्कन्दनसंभवादि"त्युक्तम्, तत्र कस्य जाड्येन ? इति न ज्ञायते, "तत्र प्रतिबिम्बहेतोरि"त्यनेनोपसर्जनत्वेन दर्पणनिर्देशोऽपि योग्यत्वात् तज्जाड्यमेव विवक्षितमिति दर्शयति—**दर्पणजाड्येनेति**॥ अगत्याऽन्योपसर्जनस्यान्यान्वय आश्रीयते, न तु सत्यां गतावित्यभिप्रायेण पक्षान्तरमाह—**स्वभावजाड्यादिति**। शरीरस्वभावजाड्यादित्यर्थः। "तथाचानुभवः" इत्यनेन पूर्वग्रन्थोक्तेऽर्थेऽनुभवः प्रदर्श्यत इति प्रतिभाति। पूर्वग्रन्थे हि प्रतिबिम्बात्मतां न जानातीति साधितम्, नचायमनुभवस्तत् साधयितुं शक्नोति; तत् किमर्थमनुभवप्रदर्शनम् ? इत्याशङ्क्यावतारयति—**देवदत्तप्रतिबिम्बस्येति**॥ ननु बिम्बचेष्टासापेक्षचेष्टादर्शनं प्रतिबिम्बस्य कथमचेतनत्वं साधयति ? चेतनस्याप्यन्यसापेक्षचेष्टत्वसंभवादित्याशङ्क्याभिप्रायमाह—**कदाचित्तस्यापीति**॥ साधनान्तरमापाद्यापीत्यर्थः। बिम्बस्य तत्त्वज्ञानाश्रयत्वेन भवितव्यमिति चोदिते "यस्य हि भ्रान्तिरि"ति परिहारोऽनुपपन्नः; न ह्यनेन किञ्चिद्बिम्बस्य तत्त्वज्ञानाश्रयत्वकारणमुक्तम्। न हि यत्र भ्रान्तिः, तद्गततत्त्वज्ञानेन तन्निवृत्तिश्चोद्यवादिनो विरुद्धा, चोद्यवादिविरुद्धेन च परिहारेण भवितव्यमित्याशङ्क्याभिप्रायमाह—**न बिम्बत्वकृतमिति**॥ तर्हि तत्त्वज्ञानाश्रयत्वनिमित्तं भ्रान्तत्वमप्यस्तु, इत्याशङ्क्याभिप्रायमाह—**तदप्यज्ञत्वकृतमिति**॥ अज्ञत्वमप्यस्त्वित्याशङ्क्याह—**तदपि जीवत्वेति**॥

### पञ्चपादिका

**नैव सम्यग्ज्ञानेन सा निवर्तते। यस्तु जानीते देवदत्तः प्रतिबिम्बस्यात्मनोऽभिन्नत्वम्, न स तद्गतेन दोषेण संस्पृश्यते, नापि ज्ञानमात्रात् प्रतिबिम्बस्य निवृत्तिः; तद्धेतोर्दर्पणादेः पारमार्थिकत्वात्। जीवः पुनः प्रतिबिम्बकल्पः सर्वेषां नः प्रत्यक्ष-**

### पञ्चपादिकाविवरणम्

ननु जीवलक्षणप्रतिबिम्बात्मतामात्मनो ब्रह्म जानीयाद्वा ? न वा ? न चेत्, सर्वज्ञताहानिः, जानाति चेत्, ब्रह्म स्वात्मन्येव संसारं पश्येदिति ? नेत्याह—**यस्तु जानीते देवदत्त इति**॥ देवदत्तो हि स्वात्मानमक्षिपात्रेऽल्पत्वादिगुणमवगच्छन्नपि तत्त्वज्ञानप्रतिहतत्वाद् नानुशोचति, एवं ब्रह्मापि स्वात्मनि जीवे प्रतिबिम्बे संसारं पश्यदपि तत्त्वज्ञानित्वाद्, नानुशोचति। तत्त्वज्ञान-संसरणे चावदातश्यामत्वादिवन्नेतरेतरत्र व्यवतिष्ठेते इति भावः। ननु एकताऽवगमेऽपि न तत्र विच्छेदविभ्रमो निवर्तते ? सत्यम्। न प्रतिबिम्बभावकृतं तत्, किंतूपाधेरज्ञानाजन्यत्वाद् ज्ञानानिवर्त्यत्वकृतमित्याह—**नापि ज्ञानमात्रादिति**॥ ननु जीवस्यापि तर्ह्युपाधिजाड्येनास्कन्दनसम्भवाद् न भ्रान्ति-सम्यग्ज्ञानाश्रयत्वम्, अप्रतिबिम्बता च तदाश्रयत्वे स्यादिति ? नेत्याह—**जीवः पुनरिति**। "रूपं रूपं प्रतिरूपो बभूव" "एकधा बहुधा चैव दृश्यते जलचन्द्रवत्" "अत एव चोपमा सूर्यकादिवत्" इति च श्रुति-स्मृति-सूत्रैर्जीवस्य प्रतिबिम्बभावस्य दर्शितत्वात्, अमूर्तस्य चाकाशस्य

### तत्त्वदीपनम्

ब्रह्म सर्वज्ञम्, जीवस्तु तद्विपरीत इत्यङ्गीकारेणाज्ञत्वं निह्नोतुं न शक्यते, ब्रह्मणोऽपि सार्वज्ञ्याभावादिति शङ्कते—**नन्विति**। चरमे कल्पे ब्रह्मणः सर्वज्ञत्वासंभवादज्ञत्वं तत्रापि घटयितुं शक्यते, आद्ये स्वस्य संसारदर्शित्वेन भ्रान्ततया ब्रह्मणस्तत्त्वाज्ञानित्वं स्यादित्याशयः। आद्यं पक्षमाश्रित्य तत्प्रयुक्तदोषाभावमाह—**नेत्याहेति**॥ बिम्बस्य प्रतिबिम्बात्मना ज्ञानेऽपि न दोषसंस्पर्श इत्युक्तम्—"यस्तु जानीते" इत्यत्र, तदनुपपन्नम्; 'प्रतिबिम्बात्मतां जानाति' 'तद्गतदोषेण न लिप्यते चे'ति व्याघातात्, तत्राह—**देवदत्तो हीति**॥ ब्रह्मणस्तत्त्वज्ञानितया न संसारित्वं चेत्, तदभेदाज्जीवस्यापि तत्त्वानितया संसरणाभावप्रसङ्गः; विपक्षे ब्रह्मणोऽपि संसरणं स्यादित्याशङ्क्याह—**तत्त्वज्ञानेति**॥ बिम्ब-प्रतिबिम्बयोरभेदेऽप्यवदातत्वादेर्यथोपाधिभेदाद् न संकरः, एवं संसरणादेरपीत्यर्थः॥ जीवस्य प्रतिबिम्बत्वेऽपि तत्त्वज्ञानाश्रयत्वसंभवाद् बिम्बस्य च तदसम्भवात् जीवस्य ब्रह्मज्ञानेन संसारनिवृत्तिः श्रूयमाणा युज्यत इत्युक्तम्, तत्र श्रुतेर्न्यायविरोधमाशङ्कते—**नन्विति**। विमतम्, न भेदभ्रमनिवर्तकम्, ऐक्यज्ञानत्वात्, बिम्ब-प्रतिबिम्बैक्यज्ञानवदित्यर्थः। लोके तत्त्वज्ञानेन विच्छेदभ्रमानिवृत्तिमङ्गीकरोति—**सत्यमिति**॥ नच—तेन दृष्टान्तेन ब्रह्मण्यपि भेदानिवृत्तिरिति—वाच्यमित्याह—**न (प्रति-) बिम्बेति**॥ एकत्वेन ज्ञायमानं बिम्बं प्रतिबिम्बनिमित्तं न भवति भेदभ्रमानिवर्तनमित्यक्षरार्थः। तत्र हेतुं पृच्छति—**किंत्विति**। किं कारणं तत्रेत्यर्थः। बिम्बभेदभ्रमस्य दर्पणाद्युपाधिजनितत्वात् क्षोभकोपाधेश्चाज्ञानामूलत्वाद् न ज्ञाननिरस्यत्वम्; ततश्च भेदभ्रमनिवर्तकत्वायोग्यत्वमुपाधिरित्यभिप्रायवानाह—**उपाधेरिति**। नच साधनव्यापकत्वम्; ब्रह्मव्यतिरिक्तस्याहंकारादेरज्ञानमूलत्वाद् ज्ञानेनाज्ञाननिवृत्त्यौपाधिकभ्रमनिवृत्तिसम्भवादित्यभिप्रायः॥ जीवे भ्रान्त्यादेरसम्भवात्तन्निवृत्तिर्वा दूरापास्तेति चोदयति—**जीवस्येति**॥ विपक्षे बाधकमाह—**अप्रतिबिम्बतेति**॥ उभयमपि प्रमाणविरुद्धमित्याह—**नेतीति**॥ जीवस्य प्रतिबिम्बत्वे प्रमाणमाह—**रूपमिति**। रूप्यत इति रूपम् शरीरादि, तत्प्रतिरूपो बभूव तत्प्रतिबिम्बो बभूवेत्यर्थः। तत्र श्रुतिमूला स्मृतिरप्यस्तीत्याह—**एकधेति**॥ स्वत एकरूपत्वेन व्यवस्थितोऽप्युपाधिभेदान्नानेव दृश्यते, जलभाजनभेदेन शीतांशुरिवेत्यर्थः। श्रुति-स्मृतितात्पर्याभिज्ञः सूत्रकृदपीत्यमेव सूत्रयांचक्रिवानित्याह—**अत एवेति**। आत्मा निर्विशेषो यस्मात्, अतः सूर्यकादीत्युपमोपादीयते शास्त्रे "यथा ह्ययंज्योतिरात्मा

### ऋजुविवरणम्

"ननु जीवलक्षणे"ति विकल्पे प्रथमपक्षेऽज्ञत्वस्योपाधित्वं निरस्तम्, द्वितीये भ्रान्तत्वस्योपाधित्वनिरासः, पक्षे वर्तमानत्वात्, "यस्तु जानीते" इत्यनेन प्रतिबिम्बात्मताज्ञानेऽपि न दोषसंस्पर्श इत्युक्तम्, तदनुपपन्नम्; न हि तदात्मत्वज्ञाने तन्निमित्तदोषासंस्पर्शो युज्यते, तथा तत्त्वज्ञान-दोषयोः साङ्कर्यं चेत्याशङ्क्याभिप्रायमाह—**देवदत्तो हीति**॥ **नन्वेकतावगम इति**॥ जीव-ब्रह्मणोरेकत्वज्ञानम्, भेदादि न निवर्तयेत्, बिम्ब-प्रतिबिम्बयोरैक्यज्ञानत्वात्; यद्वा, बिम्ब-प्रतिबिम्बभावो धर्मी, न तेन निवर्त्यः, बिम्ब-प्रतिबिम्बभावत्वात्; संप्रतिपन्नवदिति भावः। "जीवः पुनरि"त्यत्र "सर्वेषां नः प्रत्यक्षः" इति प्रतिबिम्बत्वे चिद्रूपत्वे च प्रत्यक्षत्वमुक्तमिति प्रतिभाति; प्रमाणान्तरानुपन्यासात्, तथा सत्यनुपपन्नं स्यादित्याशङ्क्याभिप्रायमाह—**रूपं रूपमिति**॥ ननु श्रुत्यादौ प्रतिबिम्बभावावगमेऽप्यमूर्तस्य लोके प्रतिबिम्बादर्शनादसंभवदर्थत्वेनातत्परत्वमित्या-

## पञ्चपादिका

श्चिद्रूपो नान्तःकरणजाड्येनास्कन्दितः। स चाहंकर्तृत्वमात्मनो रूपं मन्यते, न बिम्बकल्पब्रह्मैकरूपताम्। अतो युक्तस्त-

## पञ्चपादिकाविवरणम्

साभ्रनक्षत्रस्य जले प्रतिबिम्बवदमूर्तस्य ब्रह्मणोऽपि प्रतिबिम्बसम्भवात्, जानुमात्रप्रमाणेऽपि जले दूरविशालाकाशदर्शनाद्, जलान्तराकाश एवाभ्रादिबिम्बयुक्तो दृश्यत इति वक्तुमशक्यत्वात्। तत्प्रतिबिम्बत्वं चिद्रूपत्वं च शास्त्रप्रतिपन्नं प्रत्यक्षप्रतिपन्नं च न निराकर्तुं शक्यत इति भावः॥

ननु घटाकाशवदुपाध्यवच्छिन्नो जीवः किं न स्यात्? न; सामान्य-विशेषाभ्यामुपाधिभिरण्डान्तर्वर्तिब्रह्मणः सर्वात्मना जीवभावेनावच्छिन्नत्वादनवच्छिन्नस्य ब्रह्मणोऽण्डाद्बहिरेव सद्भावप्रसङ्गात्, तत्र सर्वगतत्वसर्वनियन्तृत्वादि ब्रह्मणो न स्यात्; अवच्छिन्नप्रदेशेष्वनवच्छिन्नस्य द्विगुणीकृत्य वृत्त्ययोगात्। स्वरूपापेक्षया तत् सर्वम्, न बहिःस्थितब्रह्मापेक्षयेति चेत्? न; "यो विज्ञाने तिष्ठन्नि"त्यादौ जीवव्यतिरिक्तस्यैव ब्रह्मणो जीवसंनिधानेन विकारान्तरवस्थानश्रवणात्। प्रतिबिम्बपक्षे तु जलगतस्वाभाविकाकाशे सत्येव प्रतिबिम्बाकाशदर्शनादेकत्रैव द्विगुणीकृत्य वृत्त्युपपत्तेर्जीवावच्छेदेषु ब्रह्मणोऽपि नियन्तृत्वादिरूपेणावस्थानमुपपद्यत इति प्रतिबिम्बपक्ष एव श्रेयानिति। मिथ्यातत्त्वज्ञानाश्रयत्वं च तत्र प्रत्यक्षमित्याह—**स चाहंकर्तृत्वमिति**॥ उपाधिस्वरूपमपि भ्रान्त्यैवावभासत इत्यर्थः। अतस्तत्त्वज्ञानेनोपाधिनिवृत्तेर्विच्छेदोपाय इत्याह—**अतो युक्त इति**॥

## तत्त्वदीपनम्

विवस्वानि"त्यादीत्येष सूत्रार्थः। मूर्तस्य वदनादेः प्रतिबिम्बदर्शनाद् ब्रह्मणश्चामूर्तत्वान्न प्रतिबिम्बभावः, ततश्च श्रुत्यादीनामन्यार्थत्वमित्याशङ्क्याह—**अमूर्तस्येति**॥ जलस्थ एवाकाशस्तत्र भातीत्याशङ्क्याह—**साभ्रेति**। साभ्रनक्षत्रगगनस्य जले भावात् प्रतिबिम्ब एवेत्यर्थः। ननु अभ्रादेः प्रतिबिम्बः, न गगनस्येत्यत्राह—**जानुमात्रेति**॥ एवं प्रतिबिम्बत्वं प्रसाध्य चिद्रूपत्वेन भ्रान्त्याद्याश्रयत्वं समर्थयते—**चिद्रूपत्वमिति**॥ "अत्रायं पुरुषः स्वयंज्योतिरि"त्यादिरागमः शास्त्रशब्दार्थः। "गन्धं जिघ्राणी"ति गन्धं प्रति घ्रातृविषयोऽनुभवः **प्रत्यक्षशब्दार्थः**॥

"प्रतिबिम्बकल्पः" इति विशेषणनिर्देशाज्जीवस्यावच्छिन्नत्वमदूदुषत्, तत् कस्मात्? इति शङ्कते—**नन्विति**। सर्वगतस्य गगनस्य घटावच्छेदे यथा घटाकाशत्वव्यपदेशः, तद्वदुपाध्यवच्छिन्ने ब्रह्मणि जीवत्वव्यपदेश इत्यर्थः। दृष्टान्तदार्ष्टान्तिकयोर्वैषम्येणोत्तरमाह—**न सामान्येति**। सामान्य-विशेषाभ्यामिति तृतीयेत्थंभावे। अनुवृत्त-व्यावृत्तरूपेण व्यवस्थितैर्भूतेन्द्रियलक्षणैरुपाधिभिर्जीवभावेन ब्रह्मणः सर्वात्मनाऽवच्छिन्नत्वादिति योजना। बहिःसद्भावाङ्गीकृतौ दोषमाह—**तत्रेति**॥ नच—सर्वगतत्वाद्यनुपपत्त्याऽन्तरप्यवस्थानमाश्रीयत इत्यपि वाच्यमित्याह—**अनवच्छिन्नेति**। सर्वगतस्य ब्रह्मण उपाध्यवच्छेदे प्रथममेका वृत्तिः, पुनरवच्छिन्नेऽपि नियन्तृत्वादिसिद्ध्यर्थमनवच्छिन्नस्य वृत्त्यन्तरमाश्रयणीयम्, नचैतदुपलब्धचरमिति द्विगुणीकृत्य वृत्त्यनुपपत्तिः। गगनस्य त्ववच्छिन्ने वृत्त्यनङ्गीकाराद् वैषम्यमिति भावः। गगनवदेवावच्छिन्नेऽनवच्छिन्नस्य वृत्तिर्नेष्यते, नच सर्वगतत्वाद्यनुपपत्तिः; चिन्मात्रविषयत्वात्तस्य, इति शङ्क्यते—**स्वरूपेति**॥ जगज्जन्मादिकारणं ब्रह्म, तस्य च नियन्तृत्वादिश्रवणान्नैवमित्याह—**न; य इति**॥ अन्तःकरणप्रतिबिम्बितजीवनियन्तृत्वेन ब्रह्मणस्तत्रावस्थानाद् द्विगुणीकृत्य वृत्त्यनुपपत्तिस्तवापि समेत्याशङ्क्याह—**प्रतिबिम्बेति**। जीवस्य चिद्रूपत्वे श्रवणादिविधिवैयर्थ्यम्; ब्रह्मणश्चिन्मात्रतया सदा स्फुरणात्, इत्याशङ्क्य, विपर्ययतद्धेतुनिवर्तकवृत्त्युत्पादार्थं श्रवणादिविधानमित्याह—**मिथ्येति**॥ "रूपं मन्यत इति" रूपशब्दप्रयोगात्

## ऋजुविवरणम्

शङ्क्याह—**अमूर्तस्य चेति**॥ तत्रापि कथमाकाशस्य प्रतिबिम्बनिश्चयः? इत्याशङ्क्याह—**साभ्रनक्षत्रस्येति**॥ ननु जलगताकाशसम्बन्धित्वेनाभ्रादेः प्रतिभासः, न प्रतिबिम्बाकाशसम्बन्धितयेत्याशङ्क्याह—**जानुमात्रेति**॥

ननु प्रतिबिम्बपक्षेऽप्येकत्र कथमवस्थानम्? इत्याशङ्क्याह—**प्रतिबिम्बपक्षे त्विति**॥ "स चाहंकर्तृत्वमि"त्यनेनाहंकर्तृत्वस्यात्मतया ख्यानप्रदर्शनं ब्रह्मात्मताख्यानाभावप्रदर्शनं चाप्रस्तुतम्; मिथ्याज्ञानाश्रयत्वाप्रतीतेः, इत्याशङ्क्यावतारयति—**मिथ्यातत्त्वज्ञानेति**॥ अत्र तादात्म्यमात्रस्य भ्रान्तत्वमुक्तमिति प्रतीयेत, तथा सति ज्ञानेनानिवृत्तिः। "तद्रूपे"ति चायुक्तं स्यात्, तदर्थमाह—**उपाधिस्वरूपमिति**॥ "अतो युक्तः" इत्यनेनावगमे सति मिथ्याभूतस्य निवृत्तिरुक्ता, सा न युक्ता; सोपाधिकेषूपाधिनिवृत्तेरेव निवृत्तिप्रयोजकत्वादित्याशङ्क्यावतारयति—**अतस्तत्त्वज्ञानेनेति**॥

## पञ्चपादिकाविवरणम्

ननु अज्ञानं जीवावच्छेदोपाधिरिति पुरस्तादुक्तम्; तत् कथमहङ्कारोपाधिता जीवस्याभिधीयत इति ? नैष दोष; चैतन्यस्यावच्छेदकविकल्पतारतम्येन व्यवहारविकल्पतारतम्यात्। तथाहि निर्विकल्पकं चैतन्यमात्रैकरसमविद्यासम्बन्धदोषाद्विकल्पव्यवहारालम्बनं भवति सुषुप्ते; ततस्तदुपादानान्तःकरणावच्छेदात् तदेव स्थूलतरव्यवहारालम्बनं भवति स्वप्ने; पुनरन्तःकरणसंसृष्टस्थूलशरीरोपरागात् स्थूलतमं भवति जागरणे। न चोपाधिभेदाद् जीवभेदप्रसङ्गः, पूर्वंपूर्वोपाध्यवच्छिन्नस्यैवोत्तरेणावच्छेदात्। निरपेक्षोपाधिभेदे हि जीवभेदः॥

ननु स्थूलशरीरोपादानभूतसूक्ष्मरूपसहितेन लिङ्गशरीरसंस्कारेणोपरक्तमज्ञानं सुषुप्ते न जीवमवच्छेत्तुमर्हति; तत्र भ्रान्त्यभावात्, तल्लक्षणत्वाच्च विभागस्य। अथ भ्रान्तिज्ञानमनपेक्ष्यैवार्थगत एव विभागः कल्प्यते, तत्र विभागस्य कार्यत्वे सुषुप्तिप्रलयादावभावाद् ब्रह्मण्येवाविद्यादिसाङ्कर्यं स्यात्। अकार्यत्वे, विभागस्यानादित्वादविद्यानिमित्तत्वं न स्यात् ? उच्यते—ब्रह्मण्यविद्यादिसाङ्कर्यपरिहाराय सुषुप्त्यादावप्यस्त्येव जीवब्रह्मविभाग इति कल्प्यते। ननु अर्थगत एव तर्हि विभागः, न

## तत्त्वदीपनम्

कर्तृत्वादिज्ञानं सम्यग्ज्ञानमिति शङ्क्येत, तत्राह—**उपाधीति**। असङ्गोदासीनस्वभावेन स्वतः कर्तृत्वाद्यसंभवाद् भ्रान्त्या तन्मननमित्यर्थः॥ उपाधिनिवृत्त्या मिथ्याभूतस्यापगम इति वक्तव्यम्, किमिदमुक्तम्—"तद्रूपापगमे" इति ? इत्याशङ्क्य, तत्त्वज्ञानेनोपाधिनिवृत्तिं सिद्धवत्कृत्वोक्तवानित्याह—**अत इति**॥

अहंकारस्योपाधित्वे पूर्वापरविरोधः स्यादिति चोदयति—**नन्विति**॥ अज्ञानोपहितस्यैवोपाध्यन्तरवर्णनान्न विरोधचोद्यमित्याह—**नैष इति**॥ एकेनोपाधिनाऽपेक्षितसिद्धेः किमुपाध्यन्तरेण ? इत्याशङ्क्याह—**चैतन्यस्येति**॥ तारतम्यं व्यनक्ति—**तथाहीति**॥ आत्मनः कथं निर्विशेषत्वम् ? चैतन्यलक्षणसम्बन्धविशेषसद्भावादित्याशङ्क्य, संबन्धोऽसिद्ध इत्याह—**चैतन्यमात्रेति**॥ चैतन्यस्वभावेऽपि धर्मान्तरसंबन्धशङ्कां निरस्यति—**एकरसमिति**। "अनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन" इति श्रुतेरुक्तार्थसिद्धिरित्यर्थः। चैतन्यमात्रं च तदेकरसं चेति तथोक्तम्। **तत इति**—स्वप्नोपस्थापककर्माभिव्यक्तावित्यर्थः। वासनानिबन्धनो व्यवहारः **स्थूलतर**शब्दार्थः। जाग्रद्भोगोपस्थापककर्माभिव्यक्तावुपाध्यन्तरोपरागाद् व्यवहारान्तरं भवतीत्याह—**पुनरन्तःकरणेति**॥ उपाधिभेदेनोपहितजीवभेदात् स्वप्नाद्यनुभूतस्य जागरणेऽनुसन्धानं न स्यादित्याशङ्क्याह—**नचेति**॥ किमुपाध्यन्तरेणाप्राप्तभेदस्योपाध्यन्तरकल्पनया जीवभेदं मन्यते ? उत प्राप्तभेदस्य ? इति विकल्प्याद्यं दूषयति—**पूर्वेति**॥ अज्ञानावच्छिन्नस्यैवान्तःकरणाद्युपाध्यन्तरवर्णनान्न जीवभेदप्रसक्तिरित्यर्थः। द्वितीयं प्रत्याह—**निरपेक्षेति**। उपाध्यन्तरेण प्राप्तभेदानपेक्षयोपाधितो भेदे जीवभेदापत्तिः, नच तथोपेयत इत्यर्थः॥

अज्ञानस्यावच्छेदकत्वमाक्षिपति—**नन्विति**। स्थूलशरीरस्योपादानं च तद् भूतं चेति स्थूलशरीरोपादानभूतम्, तस्य यत् सूक्ष्ममपञ्चीकृतभूतलक्षणम्, तेन सहितेनेत्यर्थः। मा भूद् भ्रान्तिरित्यत आह—**तल्लक्षणत्वादिति**। विभागस्य भ्रान्त्यधीनत्वाद्, भ्रान्तेश्च सुषुप्तावभावान्न जीवः स्यादित्यर्थः। भ्रान्तिलक्षणत्वमसिद्धमित्याह—**अथेति**॥ "अर्थगत एवे"-त्येवकारव्यावर्त्यमाह—**भ्रान्तीति**॥ भेदस्य नाविद्याकार्यत्वम्, किन्तु तत्तन्त्रत्वम्; अतश्च भ्रान्त्यभावेऽपि भेदोपपत्तिरिति गूढाभिसन्धिः। अभिसन्धिमजानान आह पूर्ववादी—**तत्रेति**। विभागस्य किं कार्यत्वम् ? उताकार्यत्वम् ? आद्ये सुषुप्तादौ तदभावाद् जीवाभाव इति ब्रह्मण्यविद्यादिः स्यात्; अन्यथा तदभावात् पुनरुत्थानादि न स्यादित्यर्थः। द्वितीयं प्रत्याह—**अकार्यत्व इति**॥ **अनादित्वम्** प्रागभावशून्यत्वम्; ततो विभागस्य यदिदमविद्यानिमित्तत्वमभिहितम्—"अविद्यावच्छिन्ने"त्यत्र तन्न भवेदित्यर्थः। विकल्पासहत्वान्नैतदित्याह—**उच्यत इति**॥ अज्ञानमवच्छेदकं नेति वदतः कोऽभिप्रायः ? किं सुषुप्तावच्छेद एव नास्ति ? उतार्थगतः ? तत्राद्यं प्रत्याह—**ब्रह्मणीति**॥ द्वितीयमनुवदति—**नन्वर्थेति**॥ "अर्थगतः" इति प्रत्यग्-

## ऋजुविवरणम्

**तत्र भ्रान्त्यभावादिति**। अयमर्थः—सुषुप्ते विभागभ्रमाभावात् तदभावे जीवस्वरूपाभावादिति मा भूत् सुषुप्ते विभागप्रतीतिः, अप्रतीत एव कस्मान्न तिष्ठेत्, इत्याशङ्क्याह—**तल्लक्षणत्वादिति**॥ भ्रान्तिज्ञानं लक्षणं ज्ञापकं यस्य, तल्लक्षण इति विग्रहः; प्रतिभासमात्रशरीरं तदभावे न तिष्ठेदित्यर्थः। "अविद्यानिमित्तत्वमि"त्यविद्यानिमित्तत्वं विभागस्योक्तं पूर्वम् तद्विरोधः; तथा तन्निवृत्तावपि मुक्तौ विभागस्थितिरपीति भावः। **नन्वर्थगत इति**। अयं भावः—अविद्याऽनिवृत्तौ

## पञ्चपादिकाविवरणम्

विभ्रमगतः ? सत्यम्; सुषुप्त्यादिगतविभागादन्यत्र जीव-ब्रह्मविभागो विभ्रममात्रतयाऽविद्योपादान उच्यते। ननु यद्यर्थंगतो विभागः, तर्हि नाविद्योपादानः; अनादित्वात्, अविभ्रमत्वाच्च ? सत्यम्; तथाऽप्यविद्यातन्त्रो विभागोऽनादित्वेऽपीति ब्रूमः। यथा ह्यात्माविद्यासम्बन्धोऽविद्यातन्त्रः, नाविद्योपादानः; सम्बन्धजननात् प्राक् स्वातन्त्र्येणावस्थानानुपपत्तेः; अज्ञानस्यानादित्वाच्चात्माविद्यासम्बन्धस्य नाविद्योपादानता॥

ननु जीव-ब्रह्माश्रयो विभागः कथमविद्यातन्त्रः स्यात् ? उच्यते; अनाद्यविद्याविशिष्टं चैतन्यमनादिजीवभावेन काल्पनिकानादिभेदस्याश्रयः, न स्वरूपेण; तस्यैकत्वात्। अतो विशिष्टाश्रयो विभागः स्वरूपेणाप्युपरज्यमानो विशेषणाविद्यातन्त्रो विशिष्ट इत्यविद्याकृतो विभाग उच्यते। अविद्यातन्त्राणां चानिर्वचनीयत्वमनादित्वं चाविद्यासम्बन्धवन्न विरुध्यते।

## तत्त्वदीपनम्

ब्रह्मगत इति शङ्का स्यात्, तदर्थमाह—**न विभ्रमगत इति**। भ्रान्त्यात्मको न भवतीत्यर्थः। विभ्रमगतत्वाभावमङ्गीकरोति—**सत्यमिति**॥ तर्ह्यविद्याकार्यत्वं कथमुक्तम् ? इत्याशङ्क्याह—**सुषुप्त्यादीति**॥ जीव-ब्रह्मविभागशब्देन—'अहमीश्वराद्भिन्नः' इत्यादिरूपेण स्फुटं व्यवह्रियमाणो भेदः कथ्यते। तर्हि सुषुप्त्यादिगतभेदस्याविद्योपादानत्वाभावात् तन्निवृत्तावप्यवस्थानं स्यादिति शङ्कते—**ननु यद्यर्थंगत इति**॥ अविद्यानुपादानत्वमङ्गीकरोति—**सत्यमिति**॥ तर्ह्यविद्याभावेऽप्यवस्थानं स्यादित्याशङ्क्याविद्यातन्त्रत्वात्तन्निवृत्तौ निवृत्तिर्युक्तेत्याह—**तथापीति**॥ तदकार्यत्वे कथं तत्तन्त्रत्वम् ? इत्याशङ्क्याह—**यथाहीति**॥ दृष्टान्तासङ्गतिमाशङ्क्याह—**सम्बन्धेति**। सम्बन्धस्याज्ञानकार्यत्वे ततः प्रागज्ञानस्य स्वातन्त्र्यं स्यात्, नच तदुपपद्यते; जडत्वादित्यर्थः॥ इतोऽपि न सम्बन्धस्याविद्याकार्यत्वमित्याह—**अनादित्वादिति**। प्रागभाववतः कार्यत्वं दृष्टम्। नचायं प्रागभाववान्; अज्ञानस्यानादित्वेन सम्बन्धस्यानादित्वादित्यर्थः॥

प्रकारान्तरेणाविद्यातन्त्रत्वमाक्षिपति—**ननु जीवेति**॥ भेदस्य धर्मि-प्रतियोगितन्त्रत्वमित्यर्थः। विकल्पासहत्वान्नैतदित्याह—**उच्यत इति**॥ जीव-ब्रह्मशब्दाभ्यां विशिष्टं चैतन्यं विवक्षितम् ? उत चिन्मात्रम् ? इति विकल्प्याद्यमनुवदति—**अनादीति**। चैतन्यं जीवभावेन भेदस्याश्रय इति सम्बन्धः। जीवभावस्यागन्तुकत्वात् कथमनाद्याश्रयत्वम् ? अत आह—**अनादीति**॥ अकृताभ्यागमादिप्रसङ्गान्नागन्तुकत्वमित्यर्थः। चैतन्यस्यासङ्गादिरूपस्य कथं जीवभावः ? तत्राह—**अविद्याविशिष्टमिति**॥ मिथ्याज्ञानं व्यावर्तयति—**अनादीति**॥ भेदस्य परमार्थत्वान्न तदाश्रयत्वमित्याशङ्क्य हेत्वसिद्धिमाह—**काल्पनिकेति**॥ अन्तःकरणविशिष्टाश्रयत्वशङ्कां निरस्यति—**अनादीति**। भेदस्य सादित्वेऽकृताभ्यागमादिप्रसङ्गः इत्यर्थः। द्वितीयं निरस्यति—**न स्वरूपेणेति**॥ तस्मादाद्यः परिशिष्यत इत्याह—**अत इति**॥ चिन्मात्रतन्त्रत्वाभावाद्विभागो विशिष्टाश्रय इति सम्बन्धः॥ विशिष्टनिष्ठभेदस्य चित्स्वरूपानुषङ्गात् कथमविद्यानिवृत्तौ निवृत्तिः ? तत्राह—**स्वरूपेणेति**॥ स्वरूप उपरज्यमानोऽपि विभागोऽविद्याकृत उच्यत इति सम्बन्धः। अविद्याकृतशब्देन तत्तन्त्रत्वं विवक्षितम्, तत्र हेतुमाह—**विशेषणाविद्यातन्त्र इति**॥ इतिशब्दो हेत्वर्थः। विभागस्याविद्यातन्त्रत्वात् घटादिवत् कार्यत्वम्, अकार्यत्वे ज्ञाननिवर्त्यत्वं न स्यात्, अविद्यातिरिक्तत्वे सत्यनादित्वादात्मवदित्याशङ्क्योभयत्रापि व्यभिचारमाह—**अविद्येति**। अविद्यातन्त्राणामप्यनादित्वम्, अविद्यासम्बन्धवत्,

## ऋजुविवरणम्

विभागानिवृत्तिः सत्यत्वं च स्यादिति। ननु अविद्योपादानत्वाभावे कथमविद्यातन्त्रतेत्याशङ्क्याह—**यथा ह्यात्माविद्येति**॥ कथमविद्यासम्बन्धस्याविद्यातन्त्रतैव, न तदुपादानता ? स्वातन्त्र्येणानवस्थानस्यान्यथासिद्धेरित्याशङ्क्याह—**अज्ञानस्येति**॥

**उच्यते अनादीति**। जीवभावेनाश्रयो न स्वरूपेणेति सम्बन्धः। कथमनादिविभागस्य स्वरूपातिरिक्तत्वेन कादाचित्कजीवभावेनाश्रयत्वमिति ? तत्राह—**अनादीति**॥ कथं तस्यानादिता ? कथं च तत्स्वरूपस्य जीवतेति ? तदाह—**अनाद्यविद्येति**॥ अथवा, जीवाश्रयत्वेऽपि कथमविद्यातन्त्रता ? इत्याशङ्क्याह—**अनाद्यविद्येति**॥ ननु अन्तःकरणविशिष्टाश्रयत्वं कस्मान्नाङ्गीक्रियते ? इत्याशङ्क्याह—**अनादीति**॥ ननु अनादिवस्त्वन्तरवैशिष्ट्यमेव कल्प्यतामिति ? नेत्याह—**काल्पनिकेति**॥ ननु एवमप्यविद्याविशिष्टचैतन्यतन्त्रता स्यात्, नाविद्यातन्त्रतेत्याशङ्क्याह—**अतो विशिष्टाश्रय इति**॥ ननु जीवब्रह्मविभागोऽविद्याकृत इत्युक्तं पुरस्तात्, तद्विरोधः, तथा व्यपदेशोऽपि विशिष्टकृत इत्येव स्यात्, इत्याशङ्क्याह—**इत्यविद्याकृत इति**॥ ननु अविद्यातन्त्रस्यानादित्वं न संभवति, तत्कार्यवत्; तथाऽविद्या-तत्कार्यव्यतिरिक्तस्य ज्ञाननिवर्त्यत्वं च कथम् ? इत्याशङ्क्याह—**अविद्यातन्त्राणामिति**। ननु उपाधिजन्यस्यैव मुखभेदस्योपाधितन्त्रता दृष्टा, तद्वदत्राप्यविद्याजन्यत्वेनैव

## पञ्चपादिकाविवरणम्

लोके च दर्पण-घटादिविशिष्टयोरेव मुखाकाशयोर्मिथ्याभेदावभासः, न स्वरूपेणेत्युपाधितन्त्रता भेदस्योच्यते। तस्मादनाद्यविद्या-प्रतिबिम्बकृतविभागस्यैव जीवस्य तदुत्पन्नाहङ्कारादिविशेषेषु स्थूलप्रतिबिम्बापेक्षया सर्वेषामुपाधित्वं न विरुध्यते ॥

अत्र सर्वसङ्करवादी—प्रतिबिम्बस्यावस्तुत्वाभ्युपगमान्न जीवः प्रतिबिम्बमिति जल्पति। तत्र मुख-चित्स्वरूपयोः प्रतिबिम्बेषु नावस्तुत्वमिष्यते। भेदविपर्यासादीनामवस्तुत्वाभ्युपगमेऽपि न मुख-चैतन्ययोः काचित् क्षतिः। मुखचित्स्वरूपयोश्च बिम्बात्मतां प्रमिमीमहे मिथ्यांशपर्युदासेन। नच मिथ्यांशस्य बन्धमोक्षौ, किन्तु स्वरूपस्यैव; स्वरूपगतस्यापि साङ्कर्यं-परिहारायोपाधिभेदो दर्शितः। तस्मात् परसिद्धान्तापरिज्ञानविलसितोऽयं सर्वसङ्करवादिनो विभ्रमः; अवस्तुत्वाभ्युपगमादिति ॥

अहङ्कारोपाधिनिमित्तो जीवब्रह्मविभागोऽनात्माध्यासश्च दृष्टान्तद्वयेन सिद्धः, तत्र किं रज्जुसर्पोदाहरणेन वेदान्त-

## तत्त्वदीपनम्

तद्वदनिर्वचनीयत्वं च न विरुध्यत इति योजना। ज्ञाननिवर्त्यत्वम**निर्वचनीय**शब्दार्थः। उपहितसंबन्धिनः स्वरूपमात्रेणासम्बन्धे दृष्टान्तमाह—**लोक इति** ॥ एकोपाध्यवच्छिन्नस्योपाध्यन्तरसम्बन्धसमर्थनमुपसंहरति—**तस्मादिति** ॥

भास्करमतमनुवदति—**अत्रेति**। जीवस्याप्यवस्तुत्वे बन्धमोक्षयोरननुगम आपद्येत; तस्माद्वस्तुत्वमेष्टव्यम्, इति न जीवस्य प्रतिबिम्बत्वमित्यर्थः। किं स्वरूपमात्रस्यावस्तुत्वम्? उतोपाधिविशिष्टस्य? आद्येऽवस्तुत्वासिद्धिरित्याह—**तत्रेति** ॥ द्वितीयमङ्गीकरोति—**भेदेति** ॥ स्वरूपमात्रस्य सत्त्वे हेतुमाह—**मुखेति**। 'मदीयमिदं मुखमि'ति प्रत्यभिज्ञया मुखस्य बिम्बात्मत्वम्, "अयमात्मा ब्रह्मे"ति वाक्यादात्मनो ब्रह्मात्मत्वमित्यर्थः। विरोधादेकत्वावगमो न युक्त इत्याशङ्क्याह—**मिथ्यांशेति** ॥ चित्स्वरूपे बन्धासंभवाद्विशिष्टे बन्धान्वयो वक्तव्यः; तथाच मोक्षान्वयित्वमपि स्यात्, नच तदुपपद्यते; मिथ्यांशस्य तत्र निवृत्तेः, तस्माद्बन्ध-मोक्षयोर्वैयधिकरण्यमित्याशङ्क्याह—**नचेति**। जडत्वात् मुक्तावनन्वयित्वाच्चेत्यर्थः। मिथ्यांशवच्चित्यपि बन्ध-मोक्षावनुपपन्नाविति शङ्कते—**किन्त्विति** ॥ केवलस्य बन्धासिद्धावप्युपाधिद्वारा बन्धान्वयान्मुक्त्युपपत्तिरित्याह—**स्वरूपस्येति** ॥ स्वरूपगतत्वेन सांकर्यप्रलापोऽप्ययुक्त इत्याह—**स्वरूपगतस्येति** ॥ परमतनिराकरणमुपसंहरति—**तस्मादिति** ॥

स्फटिकादिदृष्टान्तेनापेक्षितसिद्धौ रज्जुसर्पोदाहरणं वृथा, इत्याशङ्क्य, शङ्कान्तरनिराकरणपरतयाऽर्थवत्त्वमवोचि, तत्र रज्जुसर्पोदाहरणस्य वैयर्थ्यमेवास्त्वित्याशङ्क्य, वृत्तसंकीर्तनपुरःसरं तात्पर्यमाह—**अहंकारेति** ॥ दर्पणदृष्टान्तेन जीव-ब्रह्म-विभागस्यौपाधिकत्वं सिद्धम्, स्फटिकदृष्टान्तेन कर्तृत्वादेर्मिथ्यात्वमिति विभागः। **वेदान्तविहितेनेति** विशेषणवैयर्थ्यशङ्कां निरस्यति। नच—वेदान्तविहितोदाहरणसमर्थनमप्रस्तुतमित्यपि—शङ्क्यम्; स्फटिकलौहित्यादिप्रतिभास उपाधिवदत्रोपाधेर-भावान्न भ्रमसम्भव इति शङ्कायां निरुपाधिकरज्जुसर्पोदाहरणसमर्थनं युक्तमित्यर्थः। अलक्तकोपाधिनिमित्तलौहित्यवत् कर्तृत्वादिकमप्युपधाननिमित्तमित्युक्तम्, अत्र रज्जुसर्पदृष्टान्तेन निरुपाधिकत्वमुच्यत इति विरोधमाशङ्क्य तात्पर्यमाह—

## ऋजुविवरणम्

तत्तन्त्रत्वं वक्तव्यम्, न तु विशिष्टे प्रतीतिमात्रेणेत्याशङ्क्याह—**लोके च दर्पणेति** ॥

**अत्र सर्वसङ्करवादीति**। अवस्तुत्वे बन्ध-मोक्षयोर्भिन्नाधिकरणत्वमिति भावः। ननु मुखस्वरूपस्य सत्यत्वेऽपि भेदविपर्यस्तरूपेण प्रतिबिम्बत्वम्, तच्च मिथ्याभूतमेव, नच मिथ्याभूतस्य बिम्बात्मतेत्याशङ्क्याह—**मुखचित्स्वरूपयोरिति** ॥ प्रतिबिम्बत्वेनोपलक्षितस्यैवैकत्वम्, नतु विशिष्टस्येति भावः। ननु उपलक्षितस्यैकत्वेऽपि तत्प्रतिबिम्बे बन्धव्यवहारः; यस्य बन्धः, तद्गतो मोक्षः; तथा सत्यनाद्यविद्यानिमित्तप्रपञ्चनिवृत्तिरूपत्वान्मोक्षस्य भिन्नाधिकरणत्वमेव बन्ध-मोक्षयोरित्याशङ्क्याह—**नच मिथ्यांशस्येति** ॥ अज्ञानं सन्निधिलब्धप्रतिबिम्बत्वपुरःसरसम्बन्धान्तर्गतमेव, तदपि स्वरूपमात्र एव। नचाज्ञाननिरपेक्षस्वरूपान्तराभिप्रायेण जीवाधारत्वमुक्तम्, किन्त्वज्ञाननिमित्तप्रतिबिम्बभावस्याज्ञानव्यवस्थापकत्वम्, भेदाधीन-धर्मि-प्रतियोगिभावस्यैव च भेदव्यवस्थापकत्वमुक्तम्। स्वरूपगतत्वेऽविद्यासाङ्कर्यमिति यच्चोद्यम्, तदपि परिहृतमित्याह—**स्वरूपगतस्येति** ॥

तत्—सिद्धे सामान्यतोऽध्यासे युज्यते तद्विशेषतः। क्षेपः, तेनोत्तरं ताभ्यां क्रियतेऽयमुपाधितः ॥

"ननु तत्रे"त्यनेन रज्जुसर्पोदाहरणस्य प्रयोजनमुक्तम्, किं तत्परिहारेण? न ह्येतदुदाहरणमध्याससाधकत्वेन क्वापि सिद्धमित्याशङ्क्याह—**वेदान्तविहितेनेति** ॥ ननु सोपाधिकत्वमध्यासस्योक्तम्, अतस्तद्विरोधो निरुपाधिकाध्यासकथन इत्याशङ्क्य व्याचष्टे, अथवा चिद्विलक्षणस्याप्यध्यासोपाधिर्नास्तीति शङ्कानिवृत्त्यर्थमुदाहरणमित्युक्तम्, तत्र न ज्ञायते—कथं

## पञ्चपादिका

**द्रूपावगमे मिथ्यात्वोपगमः। ननु तत्र विभ्राम्यतो विभ्रमहेतुर्दर्पणालक्तकादिपरमार्थवस्तु संनिहितमस्ति, न तथेह किञ्चित् सर्वत्रैव चिद्विलक्षणे विभ्रमविलासाभिमानिनि इति मा भूदाशङ्केति रज्जुसर्पमुदाहरन्ति ॥**

**ननु तत्रापि यदि नामेदानीमसन्निहितः सर्पः, तथापि पूर्वनिर्वृत्ततदनुभवसंस्कारः समस्त्येव ? बाढम्; इहाप्यहङ्कर्तृता-तत्संस्कारयोर्बीजाङ्कुरयोरिवानादेः कार्य-कारणभावस्य वक्ष्यमाणत्वात् तत्संस्कारो विभ्रमहेतुर्विद्यते। तत्र**

## पञ्चपादिकाविवरणम्

विहितेन ? इति चोदिते तस्य प्रयोजनमाशङ्कान्तरनिवृत्तिरित्याह—**ननु तत्र विभ्राम्यत इति**। निरुपाधिकाध्यासपरिनिष्पन्नाहङ्कारोपाधिकः कर्तृत्वाद्यध्यास इति कथयितुमित्यर्थः ॥

ननु सर्वत्राधिष्ठानाध्यस्यमानव्यतिरिक्तोपाधिनिमित्त एवाध्यासः, न निरुपाधिक इति चोदयति—**ननु तत्रापि यदि नामेति** ॥ पूर्वानुभवसंस्कारमात्रोपाधिमात्रमिहापि विद्यते, स्वतन्त्रोपाधिरेव निराक्रियत इति परिहरति—**बाढमिहापीति**। न—पूर्वानुभवसंस्कार एव भ्रमहेतुः, न पूर्वभ्रान्तिसंस्कार—इति नियमोऽस्तीति भावः ॥

ननु आत्मनि सोपाधिकस्य निरुपाधिकस्य चाध्यासस्योदाहरणत्रयेणैव सिद्धत्वाद् न घटाकाशोदाहरणेन वेदान्तविहितेन कृत्यमस्तीत्याशङ्क्य, चोद्यान्तरनिराकरणेनासङ्गत्वसिद्धिः प्रयोजनमित्याह—**तत्र यद्यप्यनिर्वचनीयतयैवेति** ॥

## तत्त्वदीपनम्

**निरुपधिकेति**। अहंकारस्य निरुपाधिकाध्यासपरिनिष्पन्नत्वमत्रोक्तम्, पूर्वत्र कर्तृत्वादेरौपाधिकत्वमित्यविरोध इत्यर्थः ॥

सर्पभ्रमे संस्कारोपाधिरस्ति, अत्र तु नैवमिति वैषम्यमुक्तम्—"ननु तत्रापी"त्यत्र, तदनुपपन्नम्; प्रकृतेऽपि संस्कारोपाधेः सम्भवादित्याशङ्क्य तात्पर्यमाह—**ननु सर्वत्रेति**। आत्मव्यतिरिक्तस्य सर्वस्याध्यस्यमानकोट्यन्तर्भावादधिष्ठानाध्यस्यमानव्यावृत्तोपाधेर्निमित्तत्वमहंकारस्याप्यनुपपन्नमित्यर्थः। अधिष्ठानस्यापि निमित्तत्वादवधारणानुपपत्तिरित्याशङ्क्याह—**न निरुपाधिक इति** ॥ निरुपाधिकाध्यासे रज्जुसर्पनिदर्शनमित्यभिधाय, तस्य सोपाधिकतां ब्रुवन् कथमव्याहतव्यापारः स्यात् ? इत्याशङ्क्य तात्पर्यमाह—**पूर्वानुभवेति** ॥ "उपाधिमात्रमि"त्यत्र मात्रचोऽर्थमाह—**स्वतन्त्रेति** ॥ अध्यस्यमानधर्मसमानलौहित्याश्रयस्य संस्कारव्यतिरिक्तस्योपाधेरभावादत्र नोपाधिः, ततो न व्याघात इत्यर्थः। तथापि तत्र प्रमाणानुभवसंस्कारस्योपाधित्वम्, अत्र तु न तादृश उपाधिरिति वैषम्यशङ्कां निराकर्तुं "पूर्वाऽनुभवसंस्कारमात्रे"ति विशेषणम्। दृष्टान्त-दार्ष्टान्तिकयोः सर्वसाम्यस्यानपेक्षितत्वात् संस्कारमात्रं विवक्षितमित्यर्थः। नच—संस्कारस्याप्यध्यस्तत्वाद् नाध्यासनिमित्तत्वम्, इतरेतराश्रयत्वप्रसङ्गादित्यपि—वाच्यम्; प्राक्तनाहंकारानुभवसंस्कारादद्यतनभ्रमोद्भवसम्भवात्, स च संस्कारान्तरादिति न विरोध इत्याशयेनोक्तम् 'पूर्वेति'॥ प्रमाणानुभवसंस्कारस्य भ्रमहेतुत्वप्रसिद्धेस्तादृशः संस्कार एष्टव्यः; इतरथा भ्रमानुद्भवापातादित्याशङ्क्याह—**न पूर्वेति** ॥ प्रतीतिरनुभवशब्दार्थः। प्रमाणसंस्कारस्य केवलव्यतिरेकविधुरत्वादप्रयोजकत्वमित्यर्थः ॥

द्विविधस्याध्यासस्योक्तन्यायेन सिद्धत्वादुत्तरं भाष्यं व्याक्रियताम्, किमत्रासङ्गत्वप्रतिपादकेन "तत्रे"त्यादिना ग्रन्थेन ? इत्याशङ्क्य तात्पर्यमाह—**नन्वात्मनीति** ॥ सोपाधिकाध्यासस्य दर्पण-स्फटिकोदाहरणद्वयेन सिद्धेर्निरुपाधिकस्य रज्जुसर्पोदाहरणेनेति विभागः। घटाकाशोदाहरणस्य वेदान्तविहितत्वेऽपि नात्रार्थवत्त्वसाधनमुचितम्; तस्यात्रानुपक्रमादित्या-

## ऋजुविवरणम्

शङ्कानिवृत्तिरस्य प्रयोजनम् ? किं तत्रोपाध्यभावेऽपि यथाऽध्यासः, तद्वदत्रापि ? उत तद्वदेवात्रापि सोपाधिकत्वम् ? इत्याशङ्क्याह—**निरुपाधिकाध्यासेति** ॥

"ननु तत्रे"ति ग्रन्थे सर्पाभावेऽपि संस्कारोऽस्तीति चोदितम्; अचोद्यं तत्; सिद्धान्तेऽप्यङ्गीकारात् सिद्धान्तविरोधि च चोद्यमित्याशङ्क्यावतारयति—**ननु सर्वत्रेति** ॥ "बाढम्; इहापी"त्यनेन सोपाधिकत्वाङ्गीकारे निरुपाधिकाध्याससिद्ध्यर्थत्वमस्योक्तम्, तद्विरुध्यत इत्याशङ्क्यावतारयति—**पूर्वानुभवसंस्कारेति** ॥ ननु अनुभवसंस्कारस्तत्रास्तीति चोदिते, "बाढमि"त्यङ्गीकारो न युक्तः; अत्रानुभवसंस्काराभावात्, तथाऽनुभवसंस्कारस्यैव हेतुत्वदर्शनात्, तदभावेऽध्यासोऽपि न संभवेदित्याशङ्क्य व्याचष्टे—**न पूर्वानुभवसंस्कार** इति ॥

अहंकारादिसम्बन्धे तत्राध्यासे निरूपिते। शङ्कितुं शक्यते संगः सोऽनेनैव निरस्यते ॥

**चोद्यान्तरनिराकरणेनेति** ॥ एवं चोद्यम्—ननु असङ्गत्वं न घटाकाशोदाहरणत्वप्रदर्शनाधीनम्; स्फटिकाद्युदाहरण-

## पञ्चपादिका

**यद्यप्यनिर्वचनीयतयैवारुणादिना स्फटिकादेः सावयवत्वेन सम्भेदयोग्यस्याप्यसम्भेदावभासः सिद्धः; तथापि तदासङ्गीव स्फटिकप्रतिबिम्बमुत्प्रेक्षते, रज्ज्वां पुनः सर्पबुद्धिरेव, न तत्सम्भिन्नत्वमसम्भिन्नत्वं वा तस्याम्। तेन—"असङ्गो नहि सज्जते" "असङ्गो ह्ययं पुरुषः" इत्यादिश्रुतिसमर्पिताऽसङ्गताऽऽत्मनो न स्पष्टं दर्शिता, इति तदर्थं घटाकाशोदाहरणम्। तत्र हि तत्परामर्शादृते न भेद-रूप-कार्य-समाख्याः स्वगता दृश्यन्ते। एतच्च सर्वमुदाहरणजातं श्रुति-तन्न्यायानुभवसिद्धस्य तदसम्भावनापरिहाराय बुद्धिसाम्यार्थं च, न वस्तुन एव साक्षात्सिद्धये।**

**तदेवं यद्यपि चैतन्यैकरसोऽनिदमात्मकत्वादविषयः, तथाप्यहङ्कारे व्यवहारयोग्यो भवति, इति गौण्या वृत्त्याऽस्मत्प्रत्ययविषयतोच्यते; प्रमेयस्य च व्यवहारयोग्यत्वाव्यभिचारात्॥**

## पञ्चपादिकाविवरणम्

अरुणादिना स्फटिकादेर्गुण-गुणित्वेन संभेदे योग्यस्याप्यनिर्वचनीयतयाऽरुणादेरसम्भेदावभासः सिद्ध इत्यन्वयः। कथं पुनर्घटाकाशोदाहरणेनासङ्गत्वसिद्धिरिति? तत्राह—**तत्र हीति**॥ ननु उदाहरणैरेवात्मनोऽविकारित्वैकत्वासङ्गत्वानां सिद्धत्वान्नागमेन कृत्यमिति? नेत्याह—**एतच्च सर्वमुदाहरणजातमिति**। प्रमाणमन्तरेणोदाहरणमात्रादर्थसिध्ययोगात्, प्रत्युदाहरणसम्भवादिति भावः॥

"अस्मत्प्रत्ययविषयत्वादि"ति भाष्यमात्मन्यध्यासोपपत्त्यर्थम्। तत्रास्मत्प्रत्ययस्तन्निमित्ताध्यासश्च दर्शितः, विषयशब्दार्थमिदानीमाह—**तदेवं यद्यपीति**॥ गौण्या वृत्त्या विषयशब्दप्रयोगे किं गुणसाम्यमिति? तदाह—**प्रमेयस्य चेति**॥

## तत्त्वदीपनम्

शङ्कयाह—**चोद्यान्तरेति**॥ असङ्गित्वे आत्मनः सिद्धे कर्तृत्वादेरध्यस्तत्वम्, नच तत्सिद्धिः; प्रमाणाभावात्। नच "असङ्गः" इत्यादिवाक्यं प्रमाणम्; असङ्गत्वसम्भावनाहेतुदृष्टान्ताभावात्। नच स्फटिकादेर्दृष्टान्तत्वम्, तस्यापि सङ्गित्वादित्येवंविधचोद्यनिरासद्वारा घटाकाशोदाहरणेन श्रुतिसमर्पितासङ्गितायां सम्भावितायां कर्तृत्वादेरध्यस्ततासिद्धिरित्यभिसन्धिः। अनिर्वचनीयतया संभेदयोग्यस्यापीत्यन्वयशङ्का स्यात्, तदर्थमाह—**अरुणादिनेति**॥ "रक्तः स्फटिकः" इति प्रतिभासात् स्फटिकस्यारुणिम्ना संभेदो भासत इत्येतत्—**तदासङ्गी वेति** टीकयोच्यते। सावयवत्वं च धर्मवत्त्वमात्रम्। ननु घटाकाशदृष्टान्तेनापि नासङ्गित्वसिद्धिः; तस्य भेद-रूपाद्यनुषङ्गादिति शङ्कते—**कथमिति**॥ उपाधिपरामर्शं विना तत्र स्वतो न भेदादिः प्रथत इत्याह—**तदाहेति**॥ **भेद-रूप-कार्य-समाख्या** इत्यस्यायमर्थः—घटाकाशस्य कूपाकाशात् भेदः, अल्पत्वादिपरिमाणविशेषो रूपम्, अन्न-घृतादिपदार्थानां शब्द-स्थित्यवकाशादिः कार्यम्, घटाकाश इत्यादिसंज्ञा समाख्या चेति। किमेतान्युदाहरणान्यसङ्गत्वादि साधयितुमीशते? उत न? इति विकल्पाद्यं दूषयति—**नन्विति**॥ स्फटिक-रज्जुसर्पदृष्टान्तेनाविकारित्वस्य सिद्धिः, दर्पणदृष्टान्तेनैकत्वस्य, घटाकाशदृष्टान्तेनासङ्गित्वस्येति विभागः। द्वितीये तद्वैयर्थ्यप्रसक्तिरित्यर्थः। असंभावनाबुद्धिनिवर्तनेनोपयोगाद् न वैयर्थ्यमित्याह—**नेत्याहेति**॥ असंभावनानिवर्तकत्वं कस्मात्? तत्साधकत्वमेव किं न स्यात्? इत्याशङ्कयाह—**प्रमाणमिति**। निरपेक्षागमः **प्रमाणशब्दार्थः**॥

"तदेवमि"त्यनेन विषयत्वमुपपाद्यते, तत् कस्मात्? तस्य प्रकृतासङ्गतेरित्याशङ्कयाह—**अस्मदिति**॥

ननु 'व्यवहारयोग्यत्वम्' इत्यत्र व्यवहारयोग्यतया विषयत्वसिद्धावध्याससिद्धिस्तत्सिद्धावध्यस्ताहंप्रत्ययाद् व्यवहार-

## ऋजुविवरणम्

सामर्थ्यादेव तत्सिद्धेः—इति। "तत्र यद्यपी"त्यत्रानिर्वचनीयतयेति हेतुः प्रयुक्तः; नासौ "अरुणादिने"त्यनेनान्वेति; अनिर्वचनीयत्वस्य हेतोः सम्बन्धिनिरूपकविशेषाकाङ्क्षत्वात्; "अरुणादिने"ति तु सहार्थे तृतीया, न तेनान्वययोग्यमर्थं वक्ति; "स्फटिकादेरसंभेदः" इत्युक्ते केनेत्यपेक्षायाम्—"अरुणादिने"त्यन्वितत्वाच्च। नापि "स्फटिकादेरि"त्यनेनान्वयः, हेतोरसिद्धिप्रसङ्गात्। "सावयवत्वेन संभेदयोग्यस्ये"त्युक्तम्, तदपि न ज्ञायते; निरवयवस्याप्यारुण्येनान्वयसम्भवात्। इत्येतन्मनसि कृत्वाऽध्याहृत्य योजनां योग्यतां च दर्शयति—**अरुणादिनेति**॥ कथमसंभावनामात्रनिराकरणहेतुत्वमेव, नार्थसाधकत्वम्, अनुमानार्थापत्तिरूपत्वादुदाहरणस्येत्याशङ्काभिप्रायमाह—**प्रमाणमन्तरेणेति**॥

"तदेवमि"त्यनेन गौणविषयत्वं दर्शितम्, कस्तस्येदानीं प्रसङ्गः? इत्याशङ्कयाह—**तत्रास्मत्प्रत्यय इति**॥

ननु "व्यवहारयोग्यत्वे" इत्यनेनेतरेतराश्रयमापादितम्, तदनुपपन्नम्; निर्विकल्पकेऽप्यज्ञानस्याध्यस्तत्वात्,

**पञ्चपादिका**

**ननु व्यवहारयोग्यत्वेऽध्यासः, अध्यासपरिनिष्पन्नाहंप्रत्ययबलाद् व्यवहारयोग्यत्वमिति प्राप्तमितरेतराश्रयत्वम्? न; अनादित्वेन प्रत्युक्तत्वात्।**

**पञ्चपादिकाविवरणम्**

ननु सविकल्पकाध्यासस्य सविकल्पकमेवाधिष्ठानं वक्तव्यम्; तथा दर्शनात्, न निर्विकल्पकचिन्मात्रम्; तत्र कथमहङ्काराद्यध्यासेन सविकल्पकेऽहङ्काराध्यासः? इति चोदयति—**ननु व्यवहारयोग्यत्व इति**॥ निर्विकल्पेऽपि सविकल्पाध्यासदर्शनाद्। अज्ञानाध्यासेन सविकल्पे पूर्वाहङ्काराध्यासेन वा सविकल्पके चिदवभासे सम्भवत्येवोत्तराहङ्काराध्यास इत्याह—**न; अनादित्वेनेति**॥

ननु अविकारिचैतन्यैकतानस्य निष्कलङ्कस्वभावानन्दस्यासङ्गस्यात्मनो न प्रमातृत्वमुपपद्यते; प्रमाणक्रियापरिणामा-

**तत्त्वदीपनम्**

योग्यत्वमितीतरेतराश्रयत्वमुक्तम्, तदसंभवि; निर्विकल्पकचैतन्येऽज्ञानाध्यासदर्शनादित्याशङ्क्याह—**ननु सविकल्पेति**॥ परिच्छिन्नस्य योऽध्यासः, तस्येत्यर्थः। तर्ह्यहंकाराध्यासेन सविकल्पके चैतन्येऽहंकारोऽध्यस्यतामित्याशङ्क्येतरेतराश्रयान्मैवमित्याह—**तत्रेति**॥ व्यवहारयोग्यताऽध्यासयोरागन्तुकत्वात्—"अनादित्वेने"त्युक्तमसङ्गतमित्याशङ्क्य, प्रथमं टीकातो बहिः समाधानमाह—**निर्विकल्प इति**। अपरिच्छिन्नेऽपि गगनादौ सविकल्पकाध्यासदर्शनादित्यर्थः। सविकल्पकस्यैवाधिष्ठानत्वमित्यभिनिवेशश्चेत्, तर्हि तदपि सुसंपादमित्याह—**अज्ञानेति**॥ अज्ञानाध्यासेन सविकल्पकेऽहंकाराध्यासः, अज्ञानाध्यासस्य चानादित्वान्नेतरेतराश्रयत्वम्। प्रकारान्तरेणेतरेतराश्रयनिरासमाह—**पूर्वेति**॥

आत्मनोऽधिष्ठानतोपपादनानन्तरं भाष्यव्याख्यां विहाय प्रतिकर्मव्यवस्थोपपादनप्रसङ्गं न पश्याम इत्याशङ्क्य, सिद्धान्तिमते प्रमातृत्वादिव्यवस्थाऽसंभवाद् विकारित्वादिकमाश्रयणीयम्, ततश्चाध्यासानुपपत्तिरित्युत्तरग्रन्थव्यावर्त्यां शङ्कामाह—**नन्वित्यादिना**॥ त्वन्मते किमात्मनः प्रमातृत्वम्? उताहंकारस्य? आद्ये किं प्रमां प्रति कर्तृत्वं प्रमातृत्वम्? उतानित्यप्रमाश्रयत्वम्? नाद्य इत्याह—**अविकारीति**॥ बोधस्य स्वरूपत्वादपि न साध्यत्वमित्याह—**चैतन्येति**॥ प्रयोजनाभावादपि न परिणामः। तथाहि—किं दुःखपरिहारः फलम्? उत सुखम्? नाद्यः; निर्दुःखस्वभावत्वादित्याह—**निष्कलङ्कस्वभावेति**॥ द्वितीयं प्रत्याह—**आनन्दस्येति**॥ हेतुसम्बन्धाभावादपि न परिणाम इत्याह—**असङ्गस्येति**॥ अविकारिपदसूचितं हेतुं व्यनक्ति—**प्रमाणेति**॥ प्रमितिः **प्रमाण**शब्दार्थः। प्रमातृत्वाभावे कर्तृत्वाद्यसंभवात् प्रमातृत्वमेष्टव्यमित्याशङ्क्य, कर्तृत्वाद्य-

**ऋजुविवरणम्**

इत्याशङ्क्य साभिप्रायमवतारयति—**ननु सविकल्पकाध्यासस्येति**॥ "न; अनादित्वेने"ति व्यधिकरणपरिहारः; निर्विकल्पेऽध्यासासंभवस्येतरेतराश्रयस्य चापरिहृतत्वात्, अनादित्वमात्रस्यान्यथासिद्धत्वात्, मिथ्यात्वेनानादित्वस्यासिद्धत्वादित्याशङ्क्यावतारयति—**निर्विकल्पेऽपीति**। मायानिर्मितहस्त्यादावज्ञाने चेति भावः॥

ननु आत्मन्यविषयेऽध्यासो न सम्भवतीति चोदिते, "न; अस्मत्प्रत्ययविषयत्वादि"त्यनेनात्मनोऽधिष्ठानयोग्यत्वकथनेन संभव उक्तः, अध्यासे कारणान्तरं चोदाहरणैर्निरूपितम्, एवं सर्वप्रकारैस्संभव उक्तः; एवञ्च—"अस्मत्प्रत्ययविषयत्वादि"ति भाष्यस्यार्थोपवर्णनं कृतम्। इदानीमस्यैवाक्षरार्थमनन्तरभाष्यार्थं वा विहाय "तत्रैवंभूतस्ये"त्यादिनाऽऽत्मनः प्रमातृत्वप्रदर्शने कः प्रसङ्गः? अथ—आध्यासिकनिरूपणप्रसङ्गात् प्रमातृत्वनिरूपणम्, नाध्यासनिरूपणेन तन्निरूपणं युक्तम्, अतिप्रसङ्गात्; किंतु सत्यामनुपपत्तिशङ्कायाम्। नचाकस्मादनुपपत्तिकारणमस्ति। सत्यां वाऽनुपपत्तिशङ्कायां प्रमातृमूलत्वात् सर्वव्यवहारस्य, आदावेव तन्निरूपणं विहायोदाहरणानन्तरमेव तन्निरूपणे कः प्रसङ्गः?—इत्याशङ्क्य, सङ्गतिं द्योतयितुमुदाहरणोक्तार्थमुपजीव्याक्षेपं दर्शयति—**नन्वविकारीति**॥ "अविकारिचैतन्यैकतानस्ये"ति स्फटिकोदाहरणार्थः। 'निष्कलङ्के'ति रज्जुसर्पोदाहरणार्थः। "स्वभावानन्दस्ये"ति दर्पणोदाहरणार्थः। "असङ्गस्ये"ति घटाकाशस्य। अथवा—परिणामरहितत्वेनात्मनः प्रमातृत्वाद्यसंभवेन चोद्यं कर्तुं प्रकारान्तरेण तावत् कर्तृत्वाद्यभावं दर्शयति। तत्र जन्यगुणाश्रयत्वेन तावत् प्रमातृत्वं निराकरोति—**नन्वविकारिचैतन्यैकतानस्येति**। "अविकारी"ति जन्यत्वं ज्ञानस्य निराकरोति। "एकताने"ति गुण-गुणिभावम्। "निष्कलङ्कस्वभावानन्दस्ये"ति भोक्तृत्वनिराकरणम्। "निष्कलङ्क"-शब्देन सातिशयत्वम्, विषयसम्पर्कजन्यत्वम्, दुःखव्यामिश्रत्वम्, अनित्यत्वं च निराकरोति। "स्वभावानन्दस्ये"ति भेदम्।

## पञ्चपादिकाविवरणम्

-भावात् नच प्रमातृत्वहीनस्य कर्तृत्व-भोक्तृत्वे सम्भवतः, इति प्रमातृ-प्रमाण-प्रमेय-कर्तृ-कर्मकार्य-भोक्तृ-भोग-मोक्तव्यसंसर्ग-लक्षणस्य व्यवहारस्यात्मन्यसम्भवाद्, अहङ्कारस्य चाचेतनतया तदाश्रयत्वायोगादुच्छिन्नव्यवहारमिदं जगदापद्येतेति प्राप्तम्। अथ स्वभावसिद्धचैतन्यप्रकाशेनैव विषयं प्रकाशयेत्, तर्ह्यविशेषात् सर्वगतत्वाच्च सर्वं प्रकाशयेदित्यव्यवस्थैव। तस्माद्विकारसमर्थ एवात्मेति ॥

अत्रापर आह—न तावत् सर्वगतात्मवादिनामिदं चोद्यं सम्भवति। कथम्? यदि तावदात्म-विषयेन्द्रिय-मनश्चतुष्टय-संनिकर्षादिनोत्पद्यमानं विज्ञानं क्रिया वा यावदात्मसमवाय्येवोत्पद्येत, निरवयवे प्रदेशाश्रयत्वानुपपत्तेः, तदा युगपत् सर्वमूर्त-द्रव्यसंयोगलक्षणत्वात्सर्वगतत्वस्य, स्वाश्रयात्मसंयुक्तवस्तुनः सर्वस्यावभासि विज्ञानं स्यात्; प्रदीपादिषु क्रिया-प्रकाशगुणयोः स्वाश्रयसंयुक्ते वस्तुन्यनुरूपप्रकाशाद्यतिशयहेतुत्वात्। अदृष्टेन क्वचिदेव विषये ज्ञानं नियम्यत इति चेत्? न; प्रदीपादिषु यावत्संयुक्तवस्त्ववभासिष्वदृष्टेन वस्तुसामर्थ्यमतिक्रम्य नियमादर्शनात्। सुख-दुःखाद्यनिमित्ततृणाद्युपेक्षणीयसर्वविषयावभासेन

## तत्त्वदीपनम्

संभवोऽपीष्ट इत्याशङ्क्याह—**नचेति** ॥ मा भूत् कर्तृत्वादिकमित्याशङ्क्याह—**इतीति** ॥ अहंकारस्य प्रमातृत्वमिति कल्पनान्तरं निरस्यति—**अहंकारस्येति** ॥ अपरिणामित्वेऽप्यात्मनः स्वरूपचैतन्यबलात् प्रमातृत्वमिति शङ्कते—**अथेति** ॥ अतिप्रसङ्गेन दूषयति—**तर्हीति** ॥ चित्त्वाविशेषेऽपि संबन्धाभावान्न सर्वप्रकाशत्वमित्यपि न वाच्यमित्याह—**सर्वगतत्वादिति** ॥ पूर्वपक्षमुप-संहरति—**तस्मादिति** ॥

न कस्यापि मते व्यवहारोपपत्तिरिति वैतण्डिकः प्रत्यवतिष्ठते—**अत्रापर इति** ॥ प्रमातृत्वादिव्यवस्था न संभवतीति किं सर्वगतात्मवादिनां चोद्यम्? उताणुपरिमाणात्मवादिनाम्? आहो देहपरिमाणात्मवादिनाम्? इति विकल्प्याऽऽद्यं दूषयति—**न तावदिति**। तथाऽपि व्यवस्थाऽनुपपत्तिसाम्यादित्यर्थः। द्वैतिमत आत्मनः सर्वगतत्वेऽपि विकारित्वात् स्वसमवेतेन ज्ञानेन प्रमातृत्वं संभवतीति शङ्कते—**कथमिति** ॥ ज्ञानस्य किं क्रियात्वम्? उत गुणत्वम्? उभयथाऽपि किं यावदात्म-समवायि? उत प्रदेशसमवायि? इति विकल्प्याद्यमनुवदति—**यदि तावदिति** ॥ पक्षान्तरनिरसनेनाद्येऽर्थे हेतुमाह—**निरवयव इति** ॥ ततः किमिति? अत्राह—**तदेति** ॥ सर्वस्यात्मसंयुक्तत्वे हेतुमाह—**युगपदिति** ॥ क्रमेण सकलसंसर्गस्यास्मास्वपि संभवः, तदर्थमाह – **युगपदिति** ॥ सर्वस्य स्वाश्रयसंयुक्तत्वे ज्ञानं कतिपयावभासि किं न स्यादिति? तत्राह—**प्रदीपादिष्विति** ॥ इषुरादिशब्दार्थः। प्रदीपगतप्रकाशगुणस्येषुगतक्रियायाश्च स्वाश्रयसंयुक्तवस्तुप्रकाशनभेदनलक्षणातिशयहेतुत्वादिति हेत्वर्थः। संबन्धाविशेषेऽप्यदृष्टाद् नियम इति शङ्कते—**अदृष्टेनेति** ॥ अदृष्टव्यतिरिक्तपुष्कलकारणे सत्यदृष्टाभावेन कार्याभावादर्शनाद् नैतदित्याह—**न प्रदीपादिष्विति** ॥ संयुक्तबोधकत्वं **वस्तुसामर्थ्य**शब्दार्थः। इतोऽपि नादृष्टस्य नियामकत्वमित्याह—**सुखेति** ॥ हर्षादिरादिशब्दार्थः। पुण्यापुण्यलक्षणादृष्टस्य सुख-दुःखसाधनस्रक्चन्दन-कण्टकादिनियामकत्वेऽप्युपेक्षणीयज्ञानहेतुत्वं तस्यानु-

## ऋजुविवरणम्

"असङ्गस्ये"त्यात्म-मनःसंयोगात् प्रयत्नगुणोत्पत्तौ तन्निबन्धनं यत्कर्तृत्वम्, तन्निराकरोति। अथवा, अपरिणामित्वमेभि-र्विशेषणैः साध्यते। तत्रैवं योजना—

आत्मनो न प्रमातृत्वं परिणामवियोगतः। तद्धेतुरविकारित्वं तदन्यत्तन्निरूपकम् ॥
नन्वानन्दप्रतीत्या तद्विकारित्वमपीष्यताम्। अर्थजत्वेन तस्येति पदं दुष्टं पदान्तरात् ॥
निष्कलङ्कत्वमस्यापि जन्यत्वस्य निवारणम्। स्वरूपत्वोपपत्त्यर्थमसङ्गान्निष्कलङ्कता ॥

अथवा आनन्दरूपाङ्गीकारात्तदवभासकत्वेन प्रमातृत्वमेकतानत्वाभावश्च निश्चोयत इत्याशङ्क्याह—**निष्कलङ्कस्वभावानन्द-स्येति**। निष्कलङ्कत्वं स्वभावत्वोपपादकम्। कलङ्को भेदः, तद्राहित्यम्; सामानाधिकरण्यादिति। अथवा कलङ्कः तारतम्यम्। ननु स्वतोऽविकारस्याप्यन्यतो विकारित्वं दृश्यते इत्याशङ्क्याह—**असङ्गस्येति** ॥ अहङ्कारस्यैव प्रमातृत्वादिकं भवत्विति? नेत्याह—**अहङ्कारस्येति** ॥

ननु नान्यत्र दृष्टत्वेनान्यत्रादृष्टेन नियमः कल्प्यते, किंतु ज्ञानानां सुख-दुःखहेतुत्वमदृष्टजन्यत्वात्, अदृष्टस्य च यद्विषयज्ञानेन सुखं दुःखं वा, तद्विषयज्ञाननियामकत्वमित्याशङ्क्याह—**सुख-दुःखाद्यनिमित्तेति** ॥ कथं "विषयतये"ति विशेषणा-योगः? यदाकारं ज्ञानं तदाकार एव विषयः; अथवा कर्तृ-करणसाधारणकारणव्यतिरिक्तत्वे सति जनकत्वमित्याशङ्क्याह—

## पञ्चपादिकाविवरणम्

चादृष्टनियमानुपपत्तेः। जनकमेव ज्ञानं प्रकाशयति, न सर्वमिति चेत्? न; चक्षुरादिषु प्रकाशप्रसङ्गात्। विषयस्य निरूप्यमाणत्वाद्विषयतया जनकमिति विशेषणायोगात्। प्रदीपादिषु च प्रकाशगुणस्य स्वाश्रयसंयुक्ताजनकविषयस्यापि प्रकाशकत्वदर्शनात्। क्रियारूपे विज्ञानेऽपि समानमेतद्। इष्वादिव्यापाराणामनुद्दिष्टेऽपि विषये स्वाश्रयसंयोगे सत्यतिशयहेतुत्वदर्शनात्। निरवयवत्वादात्मनो न सर्वसंयोग इति चेत्? न किञ्चिदपि प्रकाशेत; क्रिया-गुणयोः स्वाश्रयमतिलङ्घ्यान्यत्र संसर्गायोगादसंसर्गात्, असंसृष्टे चातिशयायोगात्॥

अथ शरीरावच्छिन्नात्मप्रदेशसमवाय्येव ज्ञानम्, न यावदात्मसमवायीति मतम्; तर्हि सावयवत्वमात्मनः, न व्यवहितविषयावभासश्च स्यात्, आत्माश्रयप्रकाशस्य विषयेणासंसर्गात्; नचाश्रयातिलङ्घनं क्रियादेरित्युक्तम्। नचानाश्रयात्मप्रदेशसंबन्धादवभासः, सर्वस्यावभासप्रसङ्गात्। ननु अभिचारकर्म स्वाश्रयात्मप्रदेशासंयुक्ते पुरुषान्तरेऽनर्थं जनयति, तद्वदिहापि स्यात्? नैतत् सारम्; दृष्टक्रियासामर्थ्यादिवादृष्टेऽप्युभयात्मप्रदेशसंयुक्तस्य देवतात्मनो वेश्वरस्य वा हेत्वन्तरस्य वाऽनुमीयानत्वात्। नचात्मसंयुक्तमनःसंसृष्टेन्द्रियसयुक्तविषयेऽतिशयः पुरुषाश्रयज्ञानादुपपद्यते; विषयसंयुक्तेऽपि वस्त्वन्तरे 'प्रकाशते' इति व्यवहाराति-

## तत्त्वदीपनम्

पपन्नमित्यनियम इत्यर्थः। यद् यज्जनकम्, तत् तेन भास्यत इति नियमाद् नातिप्रसङ्ग इति शङ्कते—**जनकमिति**॥ तथाऽपि कथमतिप्रसङ्गनिरासः? इत्याशङ्क्य सर्वस्याजनकत्वादित्याह—**न सर्वमिति**॥ किं ज्ञानस्य जनकमात्रभासकत्वं स्वभावः? उत विषयतया जनकभासकत्वम्? इति विकल्प्याद्यमतिप्रसक्त्या दूषयति—**न चक्षुरादिष्विति**॥ द्वितीयं दूषयति—**विषयस्येति**॥ अजनकस्यापि विषयत्वदर्शनाद् जनकमेव भासयतीति नियमानुपपत्तिरित्याह—**प्रदीपादिष्वति**॥ ज्ञानस्य गुणत्वपक्षे जनकभासकत्वनिराकरणं क्रियात्वपक्षेऽतिदिशति—**क्रियारूप इति**॥ ज्ञानस्योद्दिष्टविषयातिशयाऽऽधायकत्वात् सर्वस्य चानुद्दिष्टत्वाद् न सर्वग्रहणमित्याशङ्क्य व्यभिचारेण दूषयति—**इष्वादीति**॥ आत्मनः सर्वसंयोगानुपपत्तेर्न तद्द्वारा समवेतज्ञानस्य सर्वभासकत्वमिति शङ्कते—**निरवयवत्वादिति**॥ अव्याप्यवृत्तिसंबन्धस्य संयोगत्वादात्मनश्च निरवयवत्वान्नैतत्संभव इत्यर्थः। तर्हि नाणुमात्रं भायात्, संयोगासंभवाविशेषादित्याह—**न किंचिदिति**॥ आत्मनः संयोगासंभवेऽपि ज्ञानस्य स्वसंसृष्टविषयबोधित्वमित्याशङ्क्याह—**क्रिया-गुणयोरिति**॥ संसर्गाभावेऽपि बोधकत्वशङ्कां निरस्यति—**असंसृष्ट इति**॥ अतिप्रसङ्गादित्यर्थः॥

ज्ञानस्यात्मैकदेशसमवायित्वाद् न सकलावभासकत्वमिति शङ्कते—**अथेति**॥ निरवयवात्मनि प्रदेशासंभव उक्त इत्याशङ्क्यौपाधिकप्रदेशमाह—**शरीरेति**॥ स किमेकदेशः सत्यः? असत्यो वा? तत्राद्यं दूषयति—**तर्हीति**॥ द्वितीये प्रदेशस्य कल्पितत्वे तत्समवेतज्ञानस्यापि कल्पितत्वाद् दृश्यदृष्टेरतात्त्विकत्वं स्यादित्यर्थः। एकदेशे समवायित्वे दूषणान्तरमाह—**न व्यवहितेति**। प्रकाशस्याश्रयद्वारा विषयसंबन्धो वक्तव्यः, नचाश्रयस्य व्यवहितविषयसंसर्ग इत्यर्थः। प्रदीपस्य विषयासंसर्गेऽपि तत्प्रभाया यथा भासकत्वम्, तथाऽत्रापीत्याशङ्क्य; प्रभाया द्रव्यत्वाभ्युपगमात् तथा घटते, न तथाऽत्र, ज्ञानस्याद्रव्यत्वात् इत्याशयेनाह—**नचेति**॥ आश्रयात्मैकदेशस्य विषयासंसर्गेऽपीतरप्रदेशस्य विषयेण संबन्धात् तत्प्रथनं युक्तमित्याशङ्क्याह—**न चानाश्रयेति**॥ आश्रयात्मनो विषयासंबन्धित्वेऽपि तत्स्थज्ञानस्य विषयेऽतिशयाधायकत्वं स्यादिति शङ्कते—**नन्वभिचारेति**॥ दृष्टान्तासंप्रतिपत्त्योत्तरमाह— **नैतत्सारमिति**॥ क्रियायाः सामर्थ्यं क्रियासामर्थ्यम्, दृष्टं च तत् क्रियासामर्थ्यं चेति तत्, तथोक्तम्। इष्वादिक्रियाया आश्रयसंयुक्तातिशयाधायकत्वं दृष्टम्, तथा चाभिचारकर्त्रात्मनोरुद्दिष्टपुरुषात्मना च संयुक्तस्य देवतात्मनोऽनर्थाधायकत्वं कल्प्यत इत्यर्थः। अभिचारक्रियया समाराधितः परमेश्वरो वाऽन्यत्रानर्थहेतुरित्याह—**ईश्वरस्येति**॥ अभिचारक्रियया वा काचित् कृत्योत्पाद्यते, सा चान्यत्रानर्थं जनयतीत्याह—**हेत्वन्तरस्येति**॥ चतुष्टयसंनिकर्षजज्ञानस्येन्द्रियसंयुक्तेऽतिशयाधायकत्वान्नातिप्रसङ्ग इत्याशङ्क्याह—**न चात्मेति**॥ आत्मना साक्षात्संबन्धाभावेऽपि परम्परासंबन्धमाश्रित्य विषयभानोपपादनेऽतिप्रसक्तिरित्याह—**विषयसंयुक्त इति**॥ चतुष्टयसंनिकर्षस्य ज्ञानोत्पत्तेरूर्ध्वं सत्त्वकल्पकाभावादुत्पन्नस्य च

## ऋजुविवरणम्

**प्रदीपादिषु चेति**॥ कथं क्रियारूपे समानत्वम्? क्रियाया उद्दिष्टविषय एवातिशयहेतुत्वात्, तावतैव प्रतिकर्मव्यवस्थोपपत्तेरित्याशङ्क्याह—**इष्वादिव्यापाराणामिति**॥

**पञ्चपादिका**

**तत्रैवंभूतस्याहङ्कर्तुरिदमंशस्य ज्ञानसंशब्दितो व्यापारविशेषः सकर्मत्वात् कर्मकारकाभिमुखं स्वाश्रये कञ्चिदवस्थाविशेषमादधाति, स्वाश्रयविकारहेतुत्वात् क्रियायाः। स च प्राप्नोति-क्रियाऽऽहितकर्तृस्थविशेषवत् कर्मसम्बन्धो ज्ञातुर्ज्ञेयसम्बन्ध इति गीयते।**

**पञ्चपादिकाविवरणम्**

शयप्रसङ्गात्, पूर्वभावित्वाच्च संयोगप्रवाहस्य ज्ञानवता विषयस्य वर्तमानसंयोगप्रवाहाभावात्। एवमणु-देहपरिमाणात्मवादेऽपि तुल्यो दोषः। तस्मान्न सर्ववादिनां प्रमाणादिव्यवहारसम्भव इति।

सत्यम्; अस्मत्पक्षे तु कथंचित्सम्भव प्रदर्शयिष्यामीत्याह—**तत्रैवंभूतस्याहंकर्तुरिति**॥ **इदमंशस्य** अन्तःकरणस्येत्यर्थः। **व्यापारविशेष** इति परिणामोऽभिधीयते। प्रकाशस्वभावं सावयवमन्तःकरणमदृष्टेन्द्रियादिसहकृतं ध्रुवादिविषयपर्यन्तं दीर्घप्रभाकारेण परिणमते; तेजसः शीघ्रमतिदूरगमनदर्शनात्, परिणामद्वारेण च कर्तृ-कर्मसम्बन्धोऽवस्थाविशेष इत्याह—**स च प्राप्नोतिक्रियाऽऽहित इति**॥

**तत्त्वदीपनम्**

ज्ञानस्य विषयसंबन्धाभावान्न तत्साधकत्वमित्याह—**पूर्वेति**॥ सर्वगतात्मवादे विषयप्रकाशाव्यवस्थामभिधाय मतान्तरेऽप्यव्यवस्थामाह—**एवमिति**। आत्मनोऽणुत्वे तत्समवेतज्ञानादणुमात्रं भायात्, देहपरिमाणत्वे चात्मनो दूरवर्तिवस्तुसन्निकर्षाभावान्न व्यवहितविषयभानसंभव इत्यर्थः। वैतण्डिकं मतमुपसंहरति—**तस्मादिति**॥

द्वैतिमते व्यवहारासंभवमङ्गीकरोति—**सत्यमिति**॥ अद्वैतिमतेऽपि व्यवहारासंभव उक्त एवेत्याशङ्क्य, किं परमार्थतोऽसंभवः? उत कल्पनयाऽपि? इति विकल्प्याद्यमङ्गीकृत्य द्वितीयं दूषयति—**अस्मत्पक्ष इति**॥ 'इदमंश'शब्देन भाट्टाभिमतद्रव्यांशो गृह्यत इति शङ्कां निरस्यति—**इदमंशस्येति**॥ व्यापारशब्दस्य परिस्पन्दपरिणामयोः साधारणत्वाद्विवक्षितमर्थमाह—**व्यापार इति**॥ अन्तःकरणस्य क्षणमात्रेण व्यवहितध्रुवाद्याकारेण परिणामः कथम्? इति शङ्कायामाह—**प्रकाशस्वभावमित्यादिना**॥ अन्तःकरणं ध्रुवादिपर्यन्तमविच्छिन्नप्रभाकारेण परिणमत इति संबन्धः। तत्र हेतुमाह—**तेजस इति**॥ आखण्डलाधिष्ठितकाष्ठायां सहस्रांशूदयमात्रेण तत्किरणानां मन्दिरव्याप्तिदर्शनादित्यर्थः। तेजसोऽतिदूरगमनेऽप्यन्तःकरणस्य किमायातम्? इत्यत आह—**प्रकाशस्वभावमिति**॥ प्रकाशस्वभावत्वेऽप्यात्मनः परिणामो न दृष्ट इति, तत्राह—**सावयवमिति**॥ कदाचित् कस्मिंश्चिद्विषयेऽन्तःकरणस्य परिणामे को हेतुरिति? तत्राह—**अदृष्टेति**॥ आलोक आदिशब्दार्थः। प्रतिपादनफलमाह—**परिणामेति**। परिणामद्वारेण योऽयमवस्थाविशेषः, स कर्तृ-कर्मसंबन्ध इति संबन्धः। अवस्थाविशेषमादधातीत्युक्तम्, तत्र कोऽसाववस्थाविशेषः? इति शङ्कायां वाऽऽह—**परिणामेति**॥

**तत्रैवमित्यादिटीकाया** अयमर्थः—**तत्र** अस्मत्प्रत्ययविषयत्वे सति। **एवंभूतस्येति**—चैतन्यैकरसस्याहंकर्तुरहंकारैक्याध्यासमुपगतस्य॥ **व्यापारविशेष इति**—सत्त्वप्रधानान्तःकरणपरिणाम इत्यर्थः। व्यापारविशेषस्य प्रयोजनमाह—**सकर्मकत्वादिति** [सकर्मत्वात्]॥ हर्षादेः सुखादेरव्यवस्थातो विशेषं दर्शयति—**कर्मकारकेति**॥ कर्मकारकाभिमुखत्वे हेतुमाह—**सकर्मकत्वादिति**॥ आश्रयगतातिशयाधाने हेतुमाह—**स्वाश्रय इति**। स्वाश्रयगतफलहेतुत्वादित्यर्थः। गतिक्रियायाः कर्तरि ग्रामप्राप्त्यतिशयजनकत्वं दृष्टम्, तद्वद् ज्ञानस्यापि क्रियात्वात् स्वश्रय एवातिशयजनकत्वमित्याशङ्क्याह—**स चेति**॥

**ऋजुविवरणम्**

ननु चतुष्टयसन्निकर्षादेरन्वय-व्यतिरेकाभ्यां हेतुत्वप्रदर्शनान्नातिप्रसङ्गः इत्याशङ्क्याह—**पूर्वभावित्वाच्चेति**॥

व्यापारशब्देन परिस्पन्दाभिधानशङ्कानिवृत्त्यर्थमाह—**परिणामोऽभिधीयत इति**॥ कथमन्यत्रादृष्टमेतादृशपरिणामवत्त्वमन्तःकरणस्य? इत्याशङ्क्याह—**प्रकाशस्वभावमिति**॥ ननु प्रकाशस्वभावेऽप्यात्मनि नैतादृशः परिणामो दृश्यते, तत् कथमन्तःकरणस्य? इत्याशङ्क्याह—**सावयवमिति**॥ किमिति सर्वदाऽन्तःकरणस्यैतादृशः परिणामो न भवेत्? यद्वा—भवत्वन्तःकरणमुपादानम्; निमित्तेन विनापि नैतादृशकार्यसंभवः, क्वचिदेव विषये ज्ञानं सन्निहितं च विहाय दूरतरविषय इत्याशङ्क्याह—**अदृष्टेन्द्रियादीति**॥ तथापि कथं दूरस्थवस्तुप्रतीतिरिति? तदाह—**ध्रुवादिविषयेति**॥ ननु इच्छादिपरिणामवदेवायमपि स्यात्, तथा सति नानेन व्यवहारनिर्वाह इत्याशङ्क्याह—**दीर्घप्रभाकारेणेति**॥ "स च प्राप्नोती"त्यनेनावस्थाविशेषो ज्ञातुर्ज्ञेयेन सम्बन्ध इत्युक्तम्, तदनुपपन्नम्; नहि क्रियाजन्यस्याश्रयगतातिशयस्य संम्बन्धत्वम्। "कर्मसम्बन्धः" इति चानुपपन्नम्; नहि तस्याश्रयगतस्य विषयसम्बन्धसंभवः, इत्याशङ्क्य साभिप्रायमवतारयति—**परिणामद्वारेणेति**॥

## पञ्चपादिका

तेन विषयविशेषसम्बद्धमेवान्तःकरणं चैतन्यस्यावच्छेदकम्। कर्मकारकमपि प्रधानक्रियासिद्धौ स्वव्यापाराविष्टं

## पञ्चपादिकाविवरणम्

स्यादन्तःकरणस्य स्वपरिणामद्वारेण विषयसम्बन्धः, आत्मनस्तु विषयविशेषावभासः कथमिति ? तदाह—**तेन विषयविशेषसम्बद्धमिति**। सर्वत्राविद्यावृततयाऽनभिव्यक्तस्वभावमपि चैतन्यम् अन्तःकरणं येन येनावस्थाविशेषेण विवर्तते, तेन तेनाकारेण व्यज्यते, अयःपिण्डेनेव चतुष्कोणत्वाद्यवस्थाविशेषमापद्यमानेन कृशानुः, इति विषयसंसृष्टान्तःकरणावच्छिन्नं चैतन्यं तदाकारमवभासत इति भावः। ननु प्रमातृरूपावच्छिन्नं चैतन्यं तद्रूपेण भासताम्, कथं चैतन्यस्य विषयावच्छेद इति ? तदाह—**कर्मकारकमपीति**॥ **स्वव्यपाराविष्टमिति** परिणामसंसर्गादापन्नजाड्याभिभवलक्षणयोग्यत्वमुच्यते। अन्तःकरणं हि स्वस्मिन्निव स्वसंसर्गिण्यपि चैतन्याभिव्यक्तियोग्यतामापादयतीति भावः॥

ननु अवच्छेदकभेदे चित्प्रकाशभेदात् कथं विषयावच्छिन्नानुभवस्य प्रमातृरूपावभाससंसर्गः ? असंसर्गे वा कथं

## तत्त्वदीपनम्

प्राप्नोतिक्रिययाऽऽहितस्य कर्तृसमवेतग्रामसंबन्धस्य यथा ग्रामव्यापित्वम्, तथा ज्ञानस्यापि सकर्मकत्वात् तदाहितः संबन्धो ज्ञातृ-ज्ञेयतालक्षण इति॥

आत्मनो विषयविशेषसंबन्धाभावान्न तद्भानमिति शङ्कते—**स्यादन्तःकरणस्येति**॥ आत्मनोऽपि परिणामद्वारा तत्संबन्ध इत्याह—**तदाहेति**॥ अन्तःकरणस्य विषयविशेषेण संबन्धो यस्मात्, तस्मात् विषयविशेषसंबद्धमन्तःकरणं चैतन्यस्यावच्छेदकं स्वगतविषयविशेषसंबन्धमापादयतीति **टीकार्थः**॥ आत्मनो विषयसंबन्धसंभवेऽप्यनभिव्यक्तत्वात् कथं व्यवहारहेतुत्वम् ? तत्राह—**सर्वत्रेति**॥ अथवा सर्वगतत्वेन स्वत एव विषयसंबन्धसंभवात् किं परिणामेन ? इत्याशङ्क्याह—**सर्वत्रेति**॥ सर्वत्र विद्यमानमप्यविद्यावृततयाऽनभिव्यक्तस्वभावमपि चैतन्यं तेनाकारेण व्यज्यत इत्यन्वयः। केनाकारेणेति वीक्षायामाह—**अन्तःकरणमिति**॥ परिणामोऽ**वस्थाविशेष**शब्दार्थः। इत्थंभावे तृतीया। **तदाकारमिति**—प्रमात्राकारमित्यर्थः। चैतन्यस्यान्तःकरणाभिव्यक्ततया तदाकारत्वेऽप्यस्वच्छविषयानभिव्यक्ततया तदाकारत्वाभावात् कथं घटादिसाधकत्वम् ? इति शङ्कते—**ननु प्रमातृरूपेति**॥ **विषयावच्छेद इति**—विषयेणावच्छेदस्तद्युक्त इत्यर्थः। अन्तःकरणवद् विषयस्यापि तत्संबद्धस्य चैतन्यव्यञ्जकत्वान्न विरोध इत्याह—**तदाहेति**॥

**कर्मकारकमित्यादिटीकाया** एषोऽर्थः—कर्मकारकमप्यपरोक्षतामभिव्यनक्तीत्यन्वयः। विषयेऽपरोक्षतासद्भावेऽभिव्यक्तिः, सैव कुत इति ? तत्राह—**चैतन्येति**। विषयस्य चैतन्यविवर्तत्वात्तत्रापि तदस्तीत्यर्थः। व्यञ्जकत्वे हेतुमाह—**स्वव्यापारेति**॥ स्वव्यापाराविष्टस्यागन्तुकत्वे हेतुमाह—**प्रधानक्रियेति**॥ वृत्तिः **प्रधानक्रिया**शब्दार्थः॥

'स्वव्यापाराविष्टमि"त्यत्र कर्मकारकस्य चैतन्यव्यञ्जकत्वमुक्तम्, तदसंभवि; अप्रकाशस्वभावत्वात्। तद्व्यापारश्च कीदृशः ? इति न ज्ञायत इत्याशङ्क्याह—**स्वव्यापाराविष्टमिति**॥ आपन्नं तद्गतजाड्याभिभवलक्षणं चैतन्याभिव्यञ्जकत्वरूपयोग्यत्वं येन तत् तथोक्तम्। अन्तःकरणस्य चिद्व्यञ्जकत्वस्वाभाव्यात् तत् कथं स्यात् ? तत्राह—**अन्तःकरणमिति**॥ प्रदीपः स्वस्मिन्नन्धकारसंसर्गविरोधी स्वसंसर्गिणि विषयेऽप्यन्धकारसंसर्गं निरुणद्धि, तद्वदन्तःकरणमपीत्यर्थः॥

अन्तःकरण-विषययोश्चैतन्यव्यञ्जकत्वमुक्तम्, तदाक्षिपति—**नन्ववच्छेदकेति**॥ अन्तःकरण-तद्वृत्ती प्रमातृविषयावच्छेदकशब्दार्थः। जलभाजनभेदेन तत्प्रतिबिम्बितचन्द्रभेदाद् यथा परस्परासंसर्गः, तद्वत् व्यञ्जकभेदाद् व्यङ्ग्यस्यापि भेद इति न परस्परसंसर्ग इत्यर्थः। प्रमातृरूपस्यावभासो येन चैतन्येन, तत्प्रमातृरूपावभासम्; तेन संसर्गः। अथवा प्रमातृरूपः प्रमात्राकारः, स चासाववभासश्चेति प्रमातृरूपावभास इत्यर्थः। संसर्गाभावे को दोष इति ? तत्राह—**असंसर्ग इति**॥ तत्र

## ऋजुविवरणम्

"तेने"त्यनेन विषयसंसृष्टान्तःकरणस्य चैतन्यावच्छेदकत्वमात्मनो विषयावभासे कारणमुक्तम्; तत् कथम् ? अविद्यावृतं हि सर्वत्र चैतन्यम्, तत् कथमवच्छेदमात्रेणावभाससंभवः ? अभिव्यक्तावपि न तावन्मात्रेण विषयावभासः, इत्याशङ्क्याभिप्रायमाह—**सर्वत्राविद्यावृतेति**। **कथं चैतन्यस्येति**। अयमर्थः—यत्राभिव्यक्तिर्भवति, तदपरोक्षम्, नच विषयेऽभिव्यक्तौ हेतुरस्ति; विषयस्याविद्यातिरोधायकत्वासामर्थ्यात्, अनभिव्यक्तौ च विषयावभासायोगादिति। "स्वव्यापाराविष्टमि"ति कथमुक्तम् ? कर्मकारकस्य चैतन्याभिव्यञ्जकव्यापारायोगात्, प्रकाशस्वभावत्वं तादृग्व्यापारवत्त्वे प्रयोजममुक्तमन्तःकरणे, नात्र तदस्ति। अथ प्रधानक्रियासिद्धौ सत्यामिति विवक्षितम्, तथापि कथं स्वव्यापाराविशिष्टत्वम् ?

## पञ्चपादिका

**चैतन्यविवर्तत्वात्** **प्रधानक्रियाऽऽहितप्रमात्रवस्थाविशेषावच्छिन्नापरोक्षतैकरूपामपरोक्षतामभिव्यनक्ति। ततश्चात्मनोऽन्तःकरणावस्थाविशेषोपाधिजनितो विशेषः। विषयानुभवसंशब्दितो विषयस्थापरोक्षैकरसः फलम्,**

## पञ्चपादिकाविवरणम्

'मयेदमवगतमि'ति प्रमातृ-प्रमेयसंसर्गावभासिसंवेदनं स्यात्? अनुभवभेदात्. एकस्मिन् सम्बन्धावगमे पदार्थयोरवभासायोगादिति? तत्राह—**प्रधानक्रियाऽऽहितप्रमात्रवस्थाविशेषावच्छिन्नापरोक्षतैकरूपामिति।** एकामित्यर्थः। परिणामस्योभयसंसर्गाद् व्यञ्जकाभेदेन व्यङ्ग्याविच्छेद इति भावः। ननु उभयत्र चैतन्याभिव्यक्त्यविशेषे घटावच्छिन्नानुभवः प्रमाता? किं वाऽन्तःकरणावच्छिन्नः, इति न विशेषः स्यादिति? नेत्याह—**ततश्चात्मनोऽन्तःकरणावस्थाविशेषोपाधिजनितो विशेष इति।** प्रमातेति वाक्यशेषः। कर्तुर्हि प्रमातृता, न कर्मणः। तत्रान्तःकरणस्य कर्तृत्वात्तदवच्छिन्नः प्रमातेत्यर्थः। ननु चैतन्यस्यैकत्वे प्रमातैव फलमिति विरुद्धमापन्नमिति? तत्राह—**विषयानुभवसंशब्दितो विषयस्थापरोक्षैकरसः फलमिति॥** अन्तःकरणावच्छिन्नतया प्रमाता, विषयावच्छिन्नतया फलमिति भावः॥

ननु क्रिया-फलयोरन्तःकरणात्मसमवायिनोर्भिन्नाश्रयत्वम्, घटान्तःकरणविषयतया च भिन्नविषयत्वम्, इति क्रिया-

## तत्त्वदीपनम्

हेतुमाह—**अनुभवेति।** व्यङ्ग्यचैतन्यभेदादित्यर्थः। "मयेदमवगतमि"ति संबन्धाववोधः **सम्बन्धावगमशब्दार्थः। पदार्थयोरिति**—प्रमातृ-प्रमेययोरित्यर्थः॥ अनुभवभेदोऽसिद्ध इत्याह—**तत्राहेति॥** प्रधानक्रिययाऽऽहितो यः प्रमातर्यवस्थाविशेषः, तेन हेतुनाऽवच्छिन्ना, अभिव्यक्ता या अपरोक्षता तया, एकरूपामिति विग्रहः। विषयविशेषसंबन्धोऽवस्थाविशेषशब्दार्थः; चिद्व्यञ्जकत्वयोग्यत्वं वा। "एकरूपामि"त्युक्ते समानरूपामिति निर्दिश्यत इति शङ्का स्यात्, तदर्थमाह—**एकामिति॥** अवच्छेदकभेदेनानुभवभेद उक्त इत्याशङ्क्याह—**परिणामस्येति।** व्यञ्जकभेदे व्यङ्ग्यभेदो भवेत्, नच तथाऽत्र; एकस्य परिणामस्य प्रमातृ-प्रमेयसंसृष्टतया व्यञ्जकत्वादित्यर्थः। विषयविशेषे चैतन्याभिव्यक्त्यभ्युपगमे तस्यापि प्रमातृतापातान्नाभिव्यक्तिरिति चोदयति—**ननूभयत्रेति॥** विशेषाभावोऽसिद्ध इत्याह—**नेत्याहेति॥** परिणामविशेषो**ऽवस्थाविशेष**शब्दार्थः। प्रमातृस्वरूपजिज्ञासायामुपाधिजनितो विशेषः फलमिति फलस्वरूपं कथ्यत इत्यसंगतिरित्यत्राह—**प्रमातेति॥** टीकापेक्षितहेतुमाह—**कर्तुर्हीति॥** प्रमातृ-फलसांकर्याऽऽपातान्न चैतन्यस्यैकतयाऽभिव्यक्तिरिति शङ्कते—**ननु चैतन्यस्येति।** कर्तृ-फलयोर्भेदस्य लोकप्रसिद्धत्वात्तद्विरुद्धं कर्तुः फलत्वमित्यर्थः। उपाधिभेदादसांकर्यमित्याह—**तत्राहेति॥** उपाधिभेदमेव दर्शयति—**अन्तःकरणेति।** विषयस्थश्चासावपरोक्षैकरसश्चेति तथोक्तः। आत्मेति शेषः। बोधैकरसस्यात्मनोऽजन्यत्वात् कथं फलत्वम्? इति शङ्कायां 'विषयानुभवसंशब्दित' इत्युक्तम्। वृत्तिसंसृष्टविषयाभिव्यक्तचैतन्यस्य विषयानुभवत्वम्, ततश्च फलत्वव्यपदेश उचित इत्यर्थः॥

ननु एवं सति क्रिया-फलयोः समानाश्रय-विषयत्वप्रसिद्धिविरोधः स्यादिति शङ्कते—**ननु क्रियेति॥** क्रियाया अन्तःकरणपरिणामत्वात्तत्समवायित्वम्, फलस्य तु चैतन्यप्रतिबिम्बितत्वाद्बिम्बभूतात्मसमवायित्वम्, इति भिन्नाश्रयत्वम्। तथा तयोर्भिन्नविषयत्वं च—क्रियाया घटविषयत्वम्, चैतन्यस्यान्तःकरणप्रतिबिम्बिततया तत्साधकत्वम्। नच वृत्तिसंसृष्टविषयव्यक्तं चैतन्यं तद्विषयमिति—शङ्क्यम्; चिद्भास्याया वृत्तेस्तद्विषयत्वादित्यर्थः॥ समानाश्रय-विषयत्वप्रसिद्धिविरोध-

## ऋजुविवरणम्

व्यधिकरणत्वात्, इत्याशङ्क्य व्याचष्टे—**परिणामसंसर्गादिति॥** कथं परिणामसंसर्गाद् विषयस्य तादृशी योग्यता? इत्याशङ्क्याह—**अन्तःकरणं हीति॥**

"अपरोक्षतैकरूपामि"ति समानरूपत्वमपि प्रतीयते, तद्व्यावृत्त्यर्थमाह—**एकामित्यर्थ** इति॥ ननु कथमेकत्वमपरोक्षतया, अवच्छेदकभेदे भेदस्योक्तत्वादित्याशङ्क्याभिप्रायमाह—**परिणामस्योभयसंसर्गादिति॥** "ततश्चात्मनोऽन्तःकरणावस्थे"त्यनेनोपाधिजनितविशेषस्यैव फलत्वमुक्तमिव प्रतिभाति, ग्रन्थैक्यात्। ततश्चासंबद्धो ग्रन्थः स्यात्; पृष्टप्रमातृरूपानिरूपणात्, इत्याशङ्क्याह—**प्रमातेति॥ वाक्यशेष इति॥** कथमन्तःकरणावच्छिन्नस्यैव प्रमातृत्वम्, अविशेषादित्याशङ्क्य व्याचष्टे—**कर्तुर्हीति॥** "विषयस्थापरोक्षैकरसः"इति वदता शुद्धस्यैव चैतन्यस्य फलत्वमुक्तम्। तथा सति प्रमातुरेव फलत्वमिति विरोधः तदवस्थ एव, भेदकानिरूपणात्। अफलत्वं वा, जन्यत्वायोगात्; इत्याशङ्क्याभिप्रायमाह—**अन्तःकरणावच्छिन्नतयेति॥**

**ननु क्रिया-फलयोरिति।** क्रियेति वृत्त्यभिधानम्, तदवच्छिन्नं चैतन्यं फलमिति। **घटान्तःकरणेति।** वृत्तिर्घट-

### पञ्चपादिका

**इति क्रियैकविषयता फलस्य युज्यते। एवं चाहङ्कर्ता स्वांशचैतन्यबलेन व्यापाराविष्टतया च प्रमाता इति 'बुद्धिस्थमर्थं पुरुषश्चेतयत' इत्युच्यते ॥**

### पञ्चपादिकाविवरणम्

फलयोरेकाश्रयत्वैकविषयत्वनियमविरोध इति ? नेत्याह—**इति क्रियैकविषयता फलस्येति** ॥ **विषयेत्याश्रयस्याऽप्युपलक्षणम्**। अन्तःकरणात्मनोरैक्याध्यासेनैकाश्रयत्वम्, चैतन्यस्यापि घटावच्छेदादेकविषयत्वमिति। ननु 'बुद्धिस्थमर्थं पुरुषश्चेतयते' इति सांख्याः, कथं तद्विरुद्धमात्मा स्वचैतन्योपरक्तं चेतयत इति ? तत्राह—**एवंचाहं कर्तेति**। प्रथम बुद्धिस्थमर्थं तदात्मतामापन्नः पश्चाच्चेतयत इत्यर्थः। उक्तं तावत् सर्वगतस्याप्यात्मनोऽविद्यावृतप्रकाशस्य परिच्छिन्नान्तःकरणपरिणामोपाध्यभिव्यक्त्यपेक्षया विषयविशेषं प्रति प्रमातृत्वम् ॥

### तत्त्वदीपनम्

शङ्कायां समानविषयत्वमेव समाधीयते, तत् कस्मात् ? इत्याशङ्क्याह—**विषयेति** ॥ आश्रय-विषयभेदस्योक्तत्वात् कथं फलस्य क्रियासमानाश्रय-विषयत्वम् ? तत्राह—**अन्तःकरणेति**। परिणाम्यैक्याध्यासादात्मनः क्रियाश्रयत्वम्, अन्तःकरणस्य चात्मैक्यारोपादनुभवाश्रयत्वं चेति समानाश्रयत्वम्, अन्तःकरण-तद्वृत्तिसाधकचैतन्यस्य वृत्तिद्वारा घटसाधकयोरेकविषयत्वं चेत्यर्थः। कर्मकारकाभिव्यक्तचैतन्यस्य तत्साधकत्वे सांख्यवचनविरोधः स्यादिति चोदयति—**ननु बुद्धिस्थमिति** ॥ विरोधनिरासप्रकारमाह—**प्रथममिति** ॥ वृत्तिद्वारा बुद्धावर्थः प्रतिबिम्बितो भवति, पश्चात् बुद्ध्यैक्याध्यासमापन्न आत्मा वृत्तिसंसृष्टविषयचैतन्याभेदेनाभिव्यक्तोऽर्थं चेतयतीत्यविरोधः ॥ आत्मनोऽभिव्यक्त्यभ्युपगमेऽविद्याया निवृत्तत्वात् संसारोच्छेदः स्यात्, विषयविशेषप्रमातृता च न स्यात्, आत्मनोऽनभिव्यक्तौ विषयाभिव्यक्तिर्न स्यादित्याशङ्क्याह—**उक्तमिति** ॥ सर्वगतस्याविद्यावृतप्रकाशस्याप्यात्मनोऽन्तःकरणपरिणामोपाधावभिव्यक्त्यपेक्षया प्रमातृत्वमित्यन्वयः। नच—अविद्यानिवृत्त्या संसारोच्छेद इति—वाच्यम्; पूर्णाकारपरिणामस्य निवर्तकत्वाद् घटाकारपरिणामस्य परिच्छिन्नत्वान्न निवर्तकत्वम्, तत्रैवाभिव्यक्तत्वात्तत्प्रमातृत्वं चेत्याशयेनाह—**परिच्छिन्नेति** ॥

### ऋजुविवरणम्

विषया; तत्रातिशयहेतुत्वात्। वृत्त्यवच्छिन्नचैतन्यस्य वृत्तिविषयत्वम्। अन्तःकरणशब्देन वृत्तिरभिधीयते। अथवाऽन्तःकरणविषयत्वमेव विवक्षितं भवतु; वृत्त्यवच्छिन्नचैतन्यस्याप्यन्तःकरणावभासहेतुत्वात्। क्रियावच्छिन्नस्यैव क्रियाफलत्वं न विषयावच्छिन्नस्य; विषयावच्छेदे विषयस्यैव प्राधान्यात्, विषयस्थचैतन्यस्य फलत्वोक्तिस्तु महाफलाभिप्राया, इदन्तु चोद्यमवान्तरविषयाभिप्रायमिति विवेकः। यद्वा, विषयस्थचैतन्याभिप्रायेणैव चोद्यम्, तत्र चाश्रयभेदः स्पष्टः, विषयभेदोऽपि; विषयस्यान्तःकरणावभासकत्वादिति। ननु आश्रय-विषयैकत्वनियमविरोधेन चोद्ये कृते, "इति क्रियैकविषयते"त्यनेनैकविषयत्वेनैव परिहारो न युक्त इत्याशङ्क्य पूरयति—**विषयेत्याश्रयेति** ॥ ननु आश्रय-विषयभेदस्य स्पष्टत्वात् कथम् "इति क्रियैकविषयत्वमि"त्युक्तम् ? इत्याशङ्क्याभिप्रायमाह—**अन्तःकरणात्मनोरिति** ॥ "चैतन्यस्यापी"त्यनेनापिशब्देनैतदुक्तम्—वृत्तिवच्चैतन्यमपि विषयविषयमिति। कथं 'बुद्धिस्थमर्थं चेतयते' इत्युच्यते ? चैतन्यसम्बन्धस्याप्युक्तत्वात्, बुद्धिसम्बन्धे वा पुरुषसम्बन्धाभावात् ज्ञातत्वायोगादित्याशङ्क्य व्याचष्टे—**प्रथमं बुद्धिस्थमिति** ॥ "तत्रैवंभूतस्ये"त्यादिना "बुद्धिस्थमर्थमि"त्यन्तेनात्मनो विषयभेदावभासः साधितः, "तत्र च प्रमातुरि"त्यनेनापि तदेव साध्यते, अतः पौनरुक्त्यमित्याशङ्क्याह—**उक्तं तावदिति** ॥ अत्र च प्रमातृस्वरूपसाधनम्, 'तत्र च प्रमातुरि"त्यस्य विषयं तत्रैव वक्ष्यति—'तदेवमुपाधिवशादि"त्यनेन। अथवा कथमन्तःकरणाधीनं प्रमातृत्वमात्मनः ? सर्वगतत्वेन सर्वसंयोगात्, परिच्छिन्नत्वे तु कथंचिदन्याधीनसंसर्गात् प्रमातृत्वं भवेद ? इत्याशङ्क्याह—**उक्तं तावदिति** ॥ **अपिशब्दः** शङ्काद्योतकः। यद्यपि सर्वगतः, तथाऽपीत्यर्थः। अथवा, अपिशब्दात् किमु वक्तव्यं परिच्छिन्नत्वेऽहङ्कारोपाधिनिमित्तं प्रमातृत्वमिति दर्शितम्। ननु सर्वगतत्वे सति कथं विषयविशेषं प्रति प्रमातृत्वमिति दर्शितम् ? तत्राह—**परिणामोपाध्यभिव्यक्त्यपेक्षयेति** ॥ ननु परिणामोपाधिनाऽपि सर्वत्राभिव्यक्तिः कस्मान्न भवति ? इत्याशङ्क्याभिप्रायमाह—**परिच्छिन्नान्तःकरणेति** ॥ ननु स्वप्रकाशस्य कथमभिव्यञ्जकापेक्षेति ? तत्राह—**अविद्यावृतप्रकाशेति** ॥

"तत्र च प्रमातुरि"त्ययं ग्रन्थो व्याहतः; "विषयसम्बन्धसञ्जातविशेषः"इत्युक्त्वा "सर्वान् प्रत्यविशिष्टः" इति

### पञ्चपादिका

**तत्र च प्रमातुः स्वयंज्योतिषो विषयसम्बन्धसञ्जातविशेषोऽनुभवोऽपरोक्षतया सर्वान् प्रत्यविशिष्टोऽपि कारकाणां सम्भूय प्रधानक्रियासाधनत्वाद्, येन सह साधनम् तन्निष्ठ एव, नान्यत्र। कर्मकारकमपि येन सह साधनम्, तस्यैवापरोक्षम्; गन्तृसम्बन्ध इव ग्रामस्य॥**

### पञ्चपादिकाविवरणम्

ननु केयमभिव्यक्तिः? आवरणाभिभव एव, न स्वरूपातिशयः। ननु उक्तोपाधिः किंप्रमाणकः? उक्तम्—"ह्रीर्धीर्भीरित्येतत्सर्वं मन एवे"ति। धीशब्दवाच्यज्ञानपरिणामवन्मनो विज्ञानं बुद्धिरिति। तदेवमुपाधिवशान्नियमेऽपि तदज्ञानाद् यच्चोदितम्—चैतन्यस्य सर्वविषयाविशेषित्वात् सर्वमस्य युगपदवभासेतेति, तत् परिहरति—**तत्र च प्रमातुः स्वयंज्योतिष इति**। परिणामसंसृष्टकर्मोपाधिनियमान्नासंसृष्टेषु चैतन्याभिव्यक्तिः, इति नैकस्य प्रमातुः सर्वविषयावभास इति भावः। ननु कर्मकारकेऽपि चैतन्यमभिव्यक्तं चेत्, सर्वप्रमातृसाधारणतया सर्वेषामवभासतामिति? नेत्याह—**कर्मकारकमपीति**। एतत्प्रमातृचैतन्याभिन्नतयैवाभिव्यक्तं तद्विषयचैतन्यं न प्रमात्रन्तरचैतन्याभेदेनाभिव्यक्तम्, अतो न सर्वेषामवभास्यत्वमित्यर्थः॥

### तत्त्वदीपनम्

आत्मनः स्वप्रकाशत्वात् कथमागन्तुकाभिव्यक्तिरिति शङ्कते—**ननु केयमिति**॥ विषयस्थचैतन्यस्याऽऽवरणाभिभूतत्वादभिव्यक्तिर्युक्तेत्याह—**आवरणेति**॥ **अभिभवशब्देन** प्रतिबन्धो विवक्ष्यते। विषयावच्छिन्नात्माज्ञाननिवृत्तिर्वाऽभिभवः। परिणामलक्षणोपाधौ प्रमाणं पृच्छति—**ननूक्तेति**॥ श्रुतिः प्रमाणमित्याह—**उक्तमिति**॥ ननु अत्र लज्जादिधर्मिकं मन उक्तम्, न ज्ञानपरिणामवदन्तःकरणमिति? तत्राह—**धीशब्देति**। ज्ञानपरिणामवन्मनः तद्विज्ञानं बुद्धिरित्युच्यत इत्यन्वयः। बुद्धिमनसोरेकत्वात् परिणामवती बुद्धिः सिद्धेत्यर्थः। विषयस्य व्यवस्थायाः सिद्धत्वाद् 'तत्र चे'त्यादिग्रन्थवैयर्थ्यमाशङ्क्योपसंहारपरतया व्याचष्टे—**तदेवमिति**। उपाधितो व्यवस्थाभावेऽपि तदज्ञानाद् यचोदितम्—सर्वमस्य भासेतेति, तत् परिहरतीत्यन्वयः॥ यस्य कारकस्य प्रधानक्रियासाधनत्वम्, तन्निष्ठ एवानुभव इति कथमुक्तम्, सर्वविषयाणामपि चित्संनिधानेन चिद्व्यञ्जकत्वाविशेषात्? तत्राह—**परिणामेति**॥ परिणामेन संसृष्टो यः कर्मकारकलक्षण उपाधिः, तत्रैव चैतन्याभिव्यक्तिनियमान्नातिप्रसङ्ग इति भावः। **तत्रेत्यादेरयमर्थः**—स्वप्रकाशस्यानवच्छिन्नस्यात्मन एकविषयभाने सकलविषयभानं स्यात्। नच—तत्तद्विषयव्यक्तचैतन्यस्य तत्तत्साधकत्वाङ्गीकृतेर्नायं प्रसङ्ग इति—शङ्क्यम्; परिणामविशिष्टविषयस्य व्यञ्जकत्वे गौरवाद् विषयमात्रस्य तद्व्यञ्जकत्वमिति वाच्यम्, तथाचातिप्रसक्तिरिति चोद्यार्थः। कर्त्रादिकारकाणि संभूय ज्ञानक्रियां साधयन्तीत्यविगीतम् तथाच कारकान्तरं येन येन कर्मकारकेण सहितं तत्साधनम्, तेन ज्ञानेन संसृष्टविषयेण व्यक्त्यनुभवे तत्सिद्धिः। नच गौरवं चोद्यम्, प्रामाणिकेऽर्थे गौरवस्यादोषत्वादिति समाधानग्रन्थार्थः। कारकान्तरं येन कर्मकारकेण प्रधानक्रियासाधनम्, तन्निष्ठतयाऽनुभव इति **टीकार्थः**। प्रकारान्तरेणानियममाशङ्कते—**ननु कर्मेति**। इदमुक्तं भवति—पटगतशौक्ल्यस्य सर्वसाधारण्यवत्पटव्यक्तचैतन्यस्यापि सकलजनसाधारण्यादनियम इति। साधारण्यमसिद्धमित्याह—**नेत्याहेति**॥ येन प्रमात्रा सह प्रधानक्रियायाः साधनं कर्मकारकम्, तस्यैवापरोक्षमिति कथं नियमः, प्रदीपस्थापकव्यतिरिक्तानामपि तदुचितकार्यदर्शनाद्? इत्यत्राह—**एतदिति**॥ एतत्प्रमात्रभेदेनाभिव्यक्तस्य विषयगतचैतन्यस्य तत्साधकत्वाङ्गीकारात् सकलप्रमात्रभेदेन चानभिव्यक्तत्वान्न सर्वेषां भानप्रसङ्ग इत्यर्थः॥

### ऋजुविवरणम्

वक्तुमशक्यत्वात्, न हि विषयविशेषसम्बन्धसञ्जातविशेषत्वं यस्योच्यते, तस्यैव साधारण्यमित्याशङ्क्य, विषयसम्बन्धेन विशेषो यस्य भवति, तस्यैव चैतन्यस्य सर्वविषयसम्बन्धस्य साधारणत्वात् सर्वत्राभिव्यक्त्या सर्वावभास इत्यभिप्रायेण चोद्यं दर्शयति—**चैतन्यस्य सर्वविषयेति**॥ कथं विषयसम्बन्धसंजातविशेषत्वं हेतुः, सर्वविषयसम्बन्धिनः सर्वविषयानुभवसंभवात्? तथा "येन सह साधनम्, तन्निष्ठः" इत्यप्ययुक्तम्, सर्वविषयाणामपि चैतन्यसन्निधानेनाभिव्यक्तिसाधनत्वानुभवात्, इन्द्रियसम्बन्धाविशेषादित्याशङ्क्याभिप्रायमाह—**परिणामसंसृष्टेति**॥ कथं "येन सह साधनम्, तस्यैवापरोक्षत्वमि"त्युक्तम्? नहि साधारण्येनाभिव्यक्तौ सत्यां साधनत्वमात्रं पुरुषविशेषस्यापरोक्षत्वनियामकम्; साधारण्येनोत्पन्नघटादौ व्यभिचारादित्याशङ्क्याभिप्रायमाह—**एतत्प्रमातृचैतन्येति**॥

## पञ्चपादिकाविवरणम्

ननु स्वयं प्रकाशमानस्य प्रदीपादिवत् स्वसंसर्ग्यशेषवस्तुप्रकाशित्वे प्राप्ते, कथमहङ्कारोपाधिनियमः कल्प्यते ? नच— अन्तःकरणपरिणामसंसृष्टविषयादन्यत्र चैतन्यमुपरक्तमपि न प्रकाशयतीति—युक्तम्; प्रकाशसंसर्गस्यैव प्रकाशमानताभिधानात्। विषयान्तरेषु चैतन्यस्यासङ्गितया नोपराग इति चेत् ? अन्तःकरणेऽपि तद्वसङ्गितया नोपरागः, इति तदुपाधिनाऽपि न किंचिदपि प्रकाशेत। स्यादेतत्—अन्तःकरणावच्छिन्नो हि जीवः प्रतिबिम्बस्थानीयः परिच्छिन्नस्तत्संसृष्टमेवं विषयं प्रकाशयेद्, ब्रह्म तु बिम्बस्थानीयं सर्वगतत्वात् सर्वमवभासयिष्यति। नच ब्रह्मणि सर्वदर्शित्वं मुखावदातत्ववद् जीवमनुगच्छेत्, जीवगतं वा किञ्चिज्ज्ञत्व मुखश्यामत्वादिवन्न ब्रह्मानुगच्छतीति सर्वमुपपन्नम्—इति ? नैतत्सारम्; तथा सति विषयावच्छिन्नचैतन्यस्य ब्रह्मचैतन्यतयाऽहङ्कारावच्छिन्नजीवानुषङ्गाभावात् सर्वज्ञत्वमिव विषयावभासोऽपि जीवस्य न स्यात्। ननु जीवोपाधेरन्तःकरणस्य विषयस्य च परस्परान्वयादुभयावच्छिन्नमपि चैतन्यमन्योन्यसंसृष्टम्, इति युक्तो जीवस्य विषयावभास इति ? नैतद् युक्तम्; तथा सति सर्वगतेन ब्रह्मणा नित्यसंसृष्टमन्तःकरणम्, इति तदुपाधौ जीवब्रह्मचैतन्याभेदाभिव्यक्तेर्ब्रह्मसार्वज्ञ्यं जीवस्य नित्यवत्प्रकाशेत ॥

अथ मतम् सर्वगतमपि चैतन्यमविद्यावृतत्वात् स्वयमपि तावन्न प्रकाशेत; नच स्वयमप्रकाशमानश्चैतन्यप्रकाशः प्रदीपवत् प्रकाश्यमवभासयितुं क्षमः, अङ्गुलिमात्रेणादित्यवत् परिच्छिन्नेनाप्यज्ञानेन सर्वगतमपि चैतन्यं तिरोधीयते। तत्रान्तः-

## तत्त्वदीपनम्

उक्तां व्यवस्थामाक्षेपसमाधानपुरःसरं स्पष्टीकर्तुमाक्षेपमवतारयति—**ननु स्वयमिति** ॥ सर्वगतनित्यप्रकाशात्मनः सकलप्रकाशनसामर्थ्येऽपि तत्प्रकाशनानुपलम्भादुपाधिः स्वीकार्यश्चेत्, तत्रोपाधेः कुत्रोपयोगः ? इति विवेचनीयम्—किं विषयप्रकाशने ? उत तदुपराग इति ? तत्राद्यं प्रतिक्षिपति—**नचेति** ॥ द्वितीयमनुवदति—**विषयेति** ॥ विषयसंबन्धवदुपाधिसंबन्धोऽप्यसंभवी, तत्संबन्धे वा विषयसंबन्धोऽपि स्यादित्याह—**अन्तःकरणेऽपीति**। स चासावुपाधिश्चेति तदुपाधिः, तेनेत्यर्थः। उपाधेरनिरूपणादात्मनः संसृष्टसकलभासकत्वापादनमाकर्ण्य तदसहमानः सिद्धान्ती प्रत्यवतिष्ठते—**स्यादेतदिति** ॥ किं जीवस्य सकलभासकत्वं प्रसञ्जयसि ? उत ब्रह्मणः ? इति विकल्पयाद्यं दूषयति—**अन्तःकरणेति** ॥ अवच्छिन्नः, प्रतिबिम्बस्थानीय इति च मतद्वयमनुसृत्योक्तमिति द्रष्टव्यम्। द्वितीये त्विष्टापत्तिरित्याह—**ब्रह्म त्विति** ॥ प्रत्यग्ब्रह्मगतं सार्वज्ञ्यं जीवे स्यात्, जीवगताल्पत्वं च ब्रह्मणीत्याशङ्क्योपाधिभेदाद् व्यवस्थेत्याह—**नचेति** ॥ परिच्छिन्नत्वात् जीवस्य युगपत् सकलासंसर्गवत् कतिपयसंसर्गस्याप्यसंभवात् कस्यापि भानं न स्यादित्याह—**नैतत्सारमिति** ॥ परिच्छिन्नस्यापि जीवस्य वृत्तिद्वारा विषयचैतन्यसंबन्धात् तद्भासकत्वं प्रसक्तमिति शङ्कते—**ननु जीवेति** ॥ "परस्परान्वयादित्य"त्र वृत्तिद्वारेत्यनुषङ्गः। अतिप्रसङ्गेनोत्तरमाह—**नैतद्युक्तमिति**। एकोपाधिसंसर्गाद् विषयजीवचैतन्ययोरभेदेनाभिव्यक्त्यभ्युपगमे सर्वज्ञत्वादिलक्षणब्रह्मणो जीवस्य चैकान्तःकरणसंसर्गादभेदाभिव्यक्तिरिति सार्वज्ञ्यादिकमपि जीवस्य प्रतीयादित्यर्थः ॥

बुद्ध्यवच्छिन्नो जीव इति नोपेयते, किं त्वविद्यावच्छिन्नः सर्वगतश्चेति, ततश्च विषयसंसर्गात् तद्भानं घटत इत्याह—**अथेति** ॥ तर्हि सर्वसंसर्गित्वात् सर्वं जीवः पश्येदित्याशङ्क्याह—**सर्वगतमपीति** ॥ **स्वयमपीत्यस्यायमर्थः**—चैतन्यं स्वरूपेणापि न प्रथते, अन्यन्न प्रकाशयतीति किमु वक्तव्यम् ? अप्रकाशमानत्वेऽपि नयनवद्भासकमित्याशङ्क्याव्यवधानेन प्रकाशकत्वान्मैवमित्याह—**नचेति** ॥ अविद्या सर्वगता ? उत परिच्छिन्ना ? नाद्यः, मानाभावात्। न द्वितीयः, परिच्छिन्नस्य सर्वगतचैतन्यतिरोधायकत्वासंभवादित्याशङ्क्याह—**अङ्गुलिमात्रेणेति** ॥ "परिच्छिन्नेनापी"त्यत्रापिशब्दादज्ञानस्यापरिच्छेदं सूचयति। "मायां तु प्रकृतिं विद्यादि"त्यादिना सकलभूतभौतिकोपादानतया सर्वगतत्वप्रतिपत्तेरित्यर्थः। तर्ह्यविद्यावृतत्वान्न

## ऋजुविवरणम्

**ननु स्वयंप्रकाशस्येति**—नित्यप्रकाशत्वात् सर्वगतत्वेनात्मनो नोपाधिना व्यवस्थितविषये प्रमातृत्वमिति भावः। ननु चैतन्यस्यावृतत्वात् संसर्गेऽपि न प्रकाशत्वमित्याशङ्क्याह—**नचान्तःकरणेति** ॥ साक्षिणो नावरणम्। परिच्छिन्नत्वाद्वा-ज्ञानस्य सर्वत्रानावारकत्वमिति परिहरति—**प्रकाशसंसर्गस्यैवेति** ॥ तर्हि ब्रह्मणो न सर्वावभासनसामर्थ्यमित्याशङ्क्याह—**ब्रह्म तु बिम्बस्थानीयमिति** ॥ तर्हि तेनैव सर्वदर्शित्वेन जीवस्यावभास इत्याशङ्क्याह—**नच ब्रह्मणीति** ॥

"अथ मतमि"ति ग्रन्थः स्वावभासकव्यतिरिक्तविषयगतचैतन्याभिप्रायेणापि व्याख्येयः। परिच्छिन्नमज्ञानं कथमन्यत्रावरणम् ? इत्याशङ्क्याह—**अङ्गुलिमात्रेणेति** ॥ ब्रह्मणोऽप्यसङ्गत्वेन न सर्वावभासकत्वसम्भवः, तद्वज्जीवस्य वा सर्वावभास

## पञ्चपादिकाविवरणम्

करणोपरागेणावरणाभिभवात्तत्रैवाभिव्यक्तं चैतन्यं किंचिदेव प्रकाशयति—इति। तदपि न युक्तम्; कार्यभूतेनान्तःकरणेन स्वोपादनाज्ञानाभिभवायोगात्। तस्मान्न युक्तं किंचिज्ज्ञत्वेऽहङ्कारोपाधिवर्णनम्—इति॥ अत्रोच्यते—युक्त एवायमुपाधिः, सर्वंगतस्यापि जीवस्यासङ्गितया सर्वेणासंयोगात्। प्रकाशस्य च संयुक्तवस्त्ववभासित्वाद्, ब्रह्म तु सर्वोपादानतया स्वात्माभिन्नं जगदात्मानमिवावभासयति; नतु जीवः, अनुपादानत्वात्। कथं पुनः सर्ववस्तुदेशाव्यवहिततया सर्वंगतस्य विषयान्तरेष्वसङ्गितयाऽसंसृष्टस्यान्तःकरणसंसर्गिता संभवेत्? उच्यते—यथा गोत्वादयो जातिविशेषाः केसरादिमद्व्यक्त्यन्तरप्रदेशसंनिहिता अपि स्वभावविशेषादश्वादिव्यक्त्यसङ्गितया तैरनभिव्यक्ता अपि सास्नादिमत्पिण्डसङ्गितयाऽभिव्यज्यन्ते; यथा वा प्रदीपप्रभा वाय्वाकाश-रस-गन्धादिप्रदेशव्यापिन्यपि स्वभावविशेषात् तानि न प्रकाशयन्ती रूपसंसर्गितया तदेव प्रकाशयति, एवं चैतन्यमपि स्वभावविशेषादन्तःकरणे संसृज्यते, नान्यत्रेति युक्तम्। यथाच केवलेन वह्निना न दाह्यमपि तृणादि, अयःपिण्डसमारूढेन दह्यते; तथाऽहङ्कारसमारूढेनाऽऽत्मना, केवलेनाप्रकाश्या अपि विषयाः प्रकाश्यन्त इति युक्तमहङ्कारोपाधिवर्णनम्।

अथवा; सोपाधिकत्वाज्जीवः परिच्छिन्नो न सर्वमवभासयति; जीवावच्छेदनिमित्तान्तःकरणपरिणामसंसर्गकृताभिव्यक्तित्वाद्विषयावच्छिन्नचैतन्यस्य जीवचैतन्यता च न विरुद्ध्यते। ब्रह्माकारपरिणतान्तःकरणसंसर्गाभावाच्च न नित्यवद्

## तत्त्वदीपनम्

किंचिदपि जानीयात्, ज्ञाने वा सर्वं जानीयादित्याशङ्क्याह—**तत्रान्तःकरणेति**। अदृष्टेन्द्रियादिसहकृतमन्तःकरणं यदाकारेण परिणमते, तत्संसर्गात् तद्विषयावच्छिन्नचिद्गतावरणाभिभवे तस्य प्रकाशः, नान्यस्येत्युचितमित्यर्थः॥ कार्यस्य कारणाभिभावकत्वादर्शनादन्तःकरणस्याज्ञानाभिभावकत्वमयुक्तमित्याह—**तदपि न युक्तमिति**॥ अन्तःकरणावच्छिन्नत्वेऽविद्यावच्छिन्नत्वे च प्रमातृत्वादिव्यवस्था घटत इत्याह—**अत्रोच्यत इति**॥ तत्र प्रथममविद्यावच्छिन्नत्वमादाय व्यवस्थामुपपादयति—**युक्त इत्यादिना**॥ संयोगाभावेऽपि प्रकाशकत्वं किं न स्यादित्याशङ्क्याह—**प्रकाशस्य चेति**॥ असङ्गित्वे ब्रह्मणो यथा सकलभासकत्वम्, तद्वज्जीवस्यापि स्यादित्याशङ्क्य वैषम्येणोत्तरयति—**ब्रह्म त्विति**॥ तदभेदाज्जीवस्यापि तथात्वमित्याशङ्क्याह—**नतु जीव इति**। चिन्मात्रस्य तदभेदे परिच्छिन्नज्ञानशक्तेर्जीवस्य नोपादानत्वम्, ततः सकलभासकत्वानुपपत्तिरित्यर्थः॥ तदेवं स्वतो विषयसंबन्धाभावात्तत्सिद्ध्यर्थमुपाधिराश्रयणीय इत्युक्तम्, तत्रोपाधिसंसर्गवद् विषयसंसर्गोऽपि स्यात्, अन्यथोपाधिसंसर्गस्याप्यनुपपत्तिरिति शङ्कते—**कथं पुनरिति**॥ सर्वंगतत्वेऽपि कस्यचित् केनचित्संसर्गः केनचिदसंसर्ग इत्युभयथापि दर्शनान्न विरोध इत्याह—**उच्यत इति**॥ [1]'सर्वसर्वंगता जातिरिति मतमाश्रित्य दृष्टान्तमाह—**यथेति**॥ व्यक्तिसर्वंगता जातिरिति पक्षे दृष्टान्तमाह—**यथा वा प्रदीपेति**॥ स्वरूपेणासमर्थस्याप्युपाधिसंबन्धात् सामर्थ्ये दृष्टान्तमाह—**यथाचेति**। केवलेनाप्रकाश्या अपि विषया परिणताहंकारसमारूढेनात्मना प्रकाश्यन्त इत्यन्वयः॥

सर्वंगतो'जीव इत्यादाय प्रतिकर्मव्यवस्था स्थापिता, संप्रति तस्य परिच्छिन्नत्वेऽपि व्यवस्था घटयितुं शक्यत इत्याह—**अथवेति**॥ **सोपाधिकत्वादिति**—अन्तःकरणोपाधिकत्वादित्यर्थः। अहंकारावच्छिन्नचैतन्यस्य विषयचैतन्यासंबन्धाद् विषयभानासंभव इति यदभ्यधायि, तद् दूषयति—**जीवेति**। जीवावच्छेदे निमित्तं यदन्तःकरणम्, तत्परिणामसंसर्गेण कृताऽभिव्यक्तिर्यस्य तत्, तथोक्तम्। विषय-प्रमातृचैतन्ययोरेकान्तःकरणपरिणामसंबन्धादभेदेन स्फुरणम्, ततो विषयप्रथोपपद्यत इत्यर्थः॥

प्रत्यग्-ब्रह्मणोरप्येकान्तःकरणसंबन्धाद् ब्रह्मणोऽपि प्रत्यक्त्वेन स्फुरणं स्यादिति यदवादि, तत्र वक्तव्यम्—किं ब्रह्माकारपरिणतान्तःकरणसंसर्गात् स्फुरणम्? उतान्तःकरणमात्रसंसर्गात्? इति विकल्पाद्यं दूषयति—**ब्रह्मेति**॥ द्वितीयं

## ऋजुविवरणम्

इत्याशङ्क्याह—**ब्रह्म त्विति**। ननु [2]'व्यक्तिसर्वंगता, जातिनः सर्वसर्व गता, तेनैव व्यक्त्यन्तरासङ्ग इतीदं वक्तुं शक्यत इति, तदर्थं दृष्टान्तान्तरमाह—**यथा वा प्रदीपप्रभेति**॥ **यथा वा केवलेनेत्यनेन** सर्वविषयसम्बन्धमङ्गीकृत्यापि केवलस्याप्रकाशकत्वम्, अन्तःकरणसहकृतस्यैव प्रकाशकत्वमिति दर्शितम्॥

ननु जीवस्य परिच्छिन्नत्वाभ्युपगमेऽपि विषयावभासो जीवस्य न सम्भवति; विषयस्थचैतन्यस्य ब्रह्मचैतन्यत्वादित्याशङ्क्य परिहरति—**जीवावच्छेदनिमित्तेति**॥ जीवोपाधिभूतान्तःकरणेन ब्रह्मणो नित्यसम्बद्धत्वाद् नित्यवद् ब्रह्मप्रकाशप्रसङ्ग इति यच्चोदितम्, तत् परिहरति—**ब्रह्माकारपरिणतान्तःकरणेति**॥ ननु किं तदाकारपरिणामेन, अन्तःकरणसम्बन्धादेव

---

१. पूर्वमुद्रितपाठस्तु—'सर्वंगता जातिरिति मतमाश्रित्य दृष्टान्तमाह—**यथेति**। व्यक्तिः सर्वंगता, न जाति'रित्यादिः॥

२. पूर्वमुद्रिते—व्यक्तिः सर्वंगतेति पाठः।

### पञ्चपादिका

**ननु—नीलादिविषयोऽपि चेदपरोक्षस्वभावः, नीलात्मिका संविदित्युक्तं स्यात्; अतः स एव माहायानिकः पक्षः समर्थितः ? मैवम्; परस्परव्यावृत्तौ नील-पीतावभासेते, अपरोक्षता तु न तथा; एकरूपावगमाद्विच्छेदावभासेऽपि, अतो न**

### पञ्चपादिकाविवरणम्

ब्रह्मणः प्रकाशप्रसङ्गः। नचान्तःकरणस्वरूपमात्रसंसर्गिणोऽभिव्यक्तिरङ्गीकृता; तद्गतधर्मादीनामपि प्रसङ्गात् जीवाकाराहं-वृत्तिपरिणतान्तःकरणेन च जीवोऽभिव्यज्यते; अन्यथा जीवस्य सुषुप्तेः। अतः परिच्छिन्नत्वान्न सर्वविषयावभासिता।

अथवा; अज्ञानावृतः स्वयमप्रकाशमानतया विविधविषयाननवभासयन्नन्तःकरणोपरागादावरणतिरोधाने तत्रैवाभि-व्यक्तस्तत्संसृष्टमेव विषयमवभासयति। दृष्टं च वृश्चिक-वृक्षादिकार्यस्य गोमय-मृदादिकारणस्वभावतिरोधायकत्वम् इति सिद्धैवात्मनि प्रमातृत्वादिव्यवस्थेति ॥

विषयस्य चैतन्यविवर्तत्वात्तदभिन्नमपि चैतन्यमहमवभासैकरूपमुक्तम्, तत्रापसिद्धान्तप्रसङ्गं चोदयति—**ननु नीलादिविषयोऽपि चेदिति** ॥ यत्किञ्चित्साम्यादपसिद्धान्ते सर्वसिद्धान्तसङ्करः स्यात्, अस्ति चात्र महान् सिद्धान्तभेदः। क्षणिकाद् विज्ञानाद्भेदेनार्थक्रियासामर्थ्यसत्त्वशून्यं विषयमाहुर्विज्ञानवादिनः, तत्त्वदर्शिनस्त्वद्वितीयात् संवेदनादभेदेऽपि विषयस्य भेदेना-प्यर्थक्रियासामर्थ्यसत्त्वं स्थायित्वं चाबाधितमस्तीति वदन्ति। तत्र कथं सिद्धान्तसङ्करः? इति वदितुं संवेदनैक्यं दर्शयति—**मैवम्; परस्परव्यावृत्ताविति** ॥ अस्त्वेकरूपता प्रत्यभिज्ञानात्, भेदोऽपि 'घटसंवित्' 'पटसंविदि'त्यवभासत इति, तत्राह—**विच्छेदाव-भासेऽपीति** ॥

### तत्त्वदीपनम्

दूषयति—**नचेति** ॥ अन्तःकरणमात्रसंसर्गात् प्रत्यग्व्यक्तिवत् ब्रह्मव्यक्तिरपि किं न स्यात् ? इत्याशङ्क्य दृष्टान्तान्तरमाह—**जीवाकारेति** ॥ तत्र विनिगमकमाह—**अन्यथेति**। जीवाकाराहंवृत्त्यभावे जीवस्य भानादर्शनादित्यर्थः। 'बुद्ध्यवच्छिन्नो जीवः' इति मते प्रमातृत्वव्यवस्थोपपन्नेत्युपसंहरति—**अत इति** ॥

जीवस्य सर्वगतत्वे विषयोपरागार्थमुपाधिरेष्टव्य इत्युक्तम्, संप्रत्यावरणाभिभवार्थमिति मतान्तरमुपन्यस्यति—**अथवेति** ॥ विषयाकारेण परिणतान्तःकरणमन्तः**करण**शब्दार्थः। विषयस्थचिद्गतावरणम**ावरण**शब्दार्थः। कार्यस्य कारणाभिभावकत्वं नेति यदुक्तम्, तत्राह—**दृष्टमिति** ॥ वेणूत्थो दहन **आदि**शब्दार्थः। प्रतिकर्मव्यवस्थामुपसंहरति—**इति सिद्धेति** ॥ सर्वगतत्वे विषयोपरागार्थत्वेनावरणतिरोधायकत्वेन चोपाधेरुपयोगः, परिच्छिन्नत्वेऽपि विषयसंसर्गार्थमित्युपाध्य-पेक्षया व्यवस्था युक्तेत्यर्थः। **इति**शब्देनाद्वैतिमतनिरवद्यतोच्यते।

विषयाभिव्यक्तचैतन्येन तत्प्रतीतेरभिहितत्वात् विषय-संविदोरभेदानभिधानात् कथमपसिद्धान्तश्चोद्यते—'ननु नीला-दी'त्यादिना ? तस्मादसंगतेयं टीका; इत्याशङ्क्य तात्पर्यमाह—**विषयस्येति** ॥ विषयस्य चैतन्यविवर्तत्वेन तदभेदेऽप्यात्मनोऽन्य-स्याभ्युपगमान्नापसिद्धान्त इत्याशङ्क्याह—**अहमवभासेति**। अहमित्यवभासो यस्य स तथोक्तस्तेनाभिन्नमित्यर्थः। प्रमातृ-विषयचैतन्ययोरभेदेनाभिव्यक्तेरुपपादनादस्ति चोद्यावसर इत्यर्थः। अनुवृत्त-व्यावृत्तभावेन विषय-संविदोर्भेदेऽपि विषयस्य चिदभेदाभ्युपगमादपसिद्धान्तप्रसङ्गो दुर्वारः। ततो "मैवमि"त्यादिग्रन्थासामञ्जस्यमाशङ्क्य, किं यत्किंचित्साम्येनापसिद्धान्तं ब्रवीषि ? उत सर्वसाम्येन ? इति विकल्प्याद्यं दूषयति—**यत्किंचिदिति** ॥ सर्वसाम्यं त्वसिद्धमित्याह—**अस्ति चेति** ॥ सिद्धान्त-मेवाह—**क्षणिकादिति** ॥ बाधितस्थायित्वं त्वन्मतेऽप्यस्तोति विशिनष्टि—**अबाधितमिति**। विषयाणां संवेदनप्रतियोगिक-प्रामाणिकभेदाभावेऽप्यारोपितभेदोररीकरणान्न मीमांमकमतप्रसङ्गोऽपीत्यर्थः ॥ 'गौर्गौरि'त्येकरूपताप्रतिभासेऽपि गोभेदस्त्वयाऽऽ-श्रीयते, तद्वदत्रापीति शङ्कते—**अस्त्विति**। इदमुक्तं भवति—खण्ड-मुण्डादिभेदस्याध्यक्षसिद्धत्वात् "गौर्गौ"रित्यनुवृत्तप्रत्ययस्य यथा सामान्यविषयत्वम्, तथा संविद्यप्यनुवृत्तप्रत्ययस्य सामान्यविषयत्वम्, भेदप्रतीतेश्च व्यक्तिभेदविषयत्वम्, ततो न संविदैक्य-

### ऋजुविवरणम्

ब्रह्मप्रकाशो भवतु; प्रकाशरूपत्वादन्तःकरणस्यापि ? इत्याशङ्क्याह—**नचान्तःकरणस्वरूपमात्रेति** ॥ ननु अन्तःकरणमात्र-संसर्गेण जीवस्याभिव्यक्त्यङ्गीकरणमस्तीत्याशङ्क्याह—**जीवाकाराहंवृत्तीति** ॥

ननु "नीलादिविषय"इत्यनेन कथमपसिद्धान्त आपादितः ? ज्ञानार्थयोरभेदो हि तैरभ्युपगतः; अत्रतु चैतन्यस्य विषये-ऽभिव्यक्तिरुक्ता, नतु तयोरभेदः। तथा "नीलात्मिका संविदित्युक्तम् स्यादि"त्युक्तम्, तदप्यसंबद्धम्; नहि विषये चैतन्याभि-व्यक्तिमात्रेणाभेद उक्तो भवति। नापि स्वगतचैतन्याभेदेऽपसिद्धान्तः; अहंप्रत्ययसमारूढेन ज्ञानेन भेदात्, तस्मादसंबद्धं चोद्य-

## पञ्चपादिका

**-तत्स्वभावता। यदि स्यात्, तद्वदेव व्यावृत्तस्वभावताऽप्यवभासेत, नच तथा। किंच तैरपि नीलात्मकसंविदोऽन्य एव**

## पञ्चपादिकाविवरणम्

-स्वरूपप्रत्यभिज्ञा परोपाधिविच्छेदेन न बाध्यत इति भावः॥

ननु एकत्वेऽपि संविदां विषयाभेदः किं न स्यादितितत्राह—**यदि स्यादिति**॥ अनुवृत्तस्य व्यावृत्तात्यन्ताभेदः, अनुवृत्तत्वात्, आकाश-घटादिवदित्यनुमानमुक्तम्। इदानीं प्रत्यक्षोऽपि विषय-संविद्भेद इत्याह—**किंच तैरपीति**॥ नीलात्मकसंविदिति नीलमेवोच्यते; युगपद्विषयविषयिसंविद्द्वयानभ्युपगमात्। **प्रत्यगवभास** इति अहंसंवेदनमात्रम्। 'अहं नीलं पश्यामी'ति कर्तृ-कर्मतया भेदप्रत्यक्ष इत्यर्थः॥

## तत्त्वदीपनम्

-मिति। भेदावभासेऽप्यपरोक्षता न भिद्यत इति कथमुक्तम्, भेदावभासस्य व्यक्तिभेदविषयत्वात्, प्रत्यभिज्ञानस्य च सामान्यविषयत्वादिति, तत्राह—**स्वरूपेति**। दृष्टान्ते व्यक्तिभेदस्य प्रामाणिकत्वात् प्रत्यभिज्ञायाः सामान्यविषयत्वं घटते, प्रकृते तु संविद्भेदस्याप्रामाणिकत्वात् प्रत्यभिज्ञायाः स्वरूपविषयत्वमित्यर्थः। ननु नीलसवित्पीतसंविदिति भेदः प्रतीयते, तत्राह—**परोपाधीति**॥ उपाधिभेदमन्तरेणाविभाव्यमानभेदत्वान्न संविदां स्वतो भेदः, किंत्वौपाधिकः, गगनभेदवत्, अतो न भेदप्रत्ययस्य बाधकत्वमित्यर्थः॥

ब्रह्मानुवृत्तं विषयाश्च व्यावृत्ताः, तथाऽप्यभिन्ना इति त्वयोपेयते, तद्वत् संवित्संवेद्ययोरप्यभेद इति शङ्कते—**नन्विति**॥ तत्रापि वास्तवमैक्यं नाङ्गीक्रियते, त्वया तु वास्तवमैक्यमिष्यत इति वैषम्यमित्यभिसन्धायाह—**तत्राहेति**॥ एकेन प्रमाणेन साधितेऽर्थे प्रमाणान्तरोपन्यासे "किंचे"त्युक्तिर्युक्ता, नच पूर्वत्र प्रमाणोपन्यास पश्याम इत्याशङ्क्याह—**अनुवृत्तस्येति**॥ संवित्संवेद्ययोरनुवृत्त-व्यावृत्तता भेदविधुरता चेत्यत्र दृष्टान्तमाह—**आकाशेति**। अनुवृत्तम्, न तत्त्वतो व्यावृत्ताभेदवत्, अनुवृत्तत्वात्; आकाशवत्। नच जातौ व्यभिचारः; तस्याः पक्षतुल्यत्वादित्यर्थः॥ ननु "नीलात्मिका संविदि"त्यत्र नील-संविदोरभेद उक्तः, तथाच नीलसंविदोऽहमवभासस्य च भेदसाधनमसंगतमित्याशङ्क्याह—**नीलात्मिकेति**॥ तत्र हेतुमाह—**युगपदिति**॥ नच—संविच्छब्देन नीलस्वरूपविवक्षायां 'नीलादन्यः' इत्युच्यताम्, किं संविद्ग्रहणेन? इत्यपि—वाच्यम्; संविद्व्यतिरेकेण नीलाभावे तत्संवित्त्वानुपपत्तेर्नीलसत्तेष्टव्या इति द्योतनार्थत्वात्संविद्ग्रहणस्येत्यर्थः। "प्रत्यगवभासः" इत्यत्र प्रतीचोऽवभास इति विग्रहशङ्का स्यात्, नच सोपपद्यते; अवभासव्यतिरिक्तप्रतीचोऽनभ्युपगमादिति, तत्राह—**प्रत्यगिति**॥ 'अहं नीलं पश्यामी'ति ज्ञानमपरोक्षमिति प्रसिद्धम्, तेन संविदो ग्राह्यत्वे विषय-विषयिसंविदोस्तुल्यकालत्वं स्यात्। नच तद् युज्यते। तस्माद् येन नीलेन संविदोऽभेद उच्यते, तस्मान्नीलादहमुल्लेखस्यान्यत्वं तैरङ्गीक्रियते। तयोर्ग्राह्य-ग्राहकता वाऽनुभवसिद्धेति तद्भेदस्य प्रात्यक्ष्यम्। नच—आलयविज्ञानस्य घटादेश्च भेदस्तदङ्गीकृतः, इति तत्साधनं सिद्धसाधनं प्रस्तुताननुसारि चेति—

## ऋजुविवरणम्

-मित्याशङ्क्य तत्परिहाराय वृत्तसङ्कीर्तनपूर्वकमवतारयति—**विषयस्य चैतन्यविवर्तत्वादिति**॥ "मेवमि"त्यादिग्रन्थोऽसङ्गतः; न ह्यपरोक्षताया एकत्वसाधनं पूर्वचोद्यपरिहार उपयुज्यते, इत्याशङ्क्याभिप्रायमाह—**यत्किञ्चित्साम्यादपसिद्धान्तेति**॥ ननु कथं विच्छेदावभासे सति संवेदनस्य भेदो नास्तीत्युच्यते, अभेदप्रतिभासविरोधित्वाद्? इत्याशङ्क्याभिप्रायमाह—**स्वरूपप्रत्यभिज्ञेति**॥

"यदि स्यादि"त्यनेन व्यावृत्तताऽङ्गीकारे दूषणमुक्तमिति प्रतिभाति. तदसारम्; भेदस्य निरस्तत्वात्. अङ्गीकारहेत्वभावात्, "किंचे"ति चायुक्तम्; अर्थान्तरविषयत्वात्तस्येत्याशङ्क्यावतारयति—**नन्वेकत्वेऽपीति**॥ "यदि स्यादि"त्यनेन कथं संविद्विषययोरभेदे तद्वदेव विषयवदेव व्यावृत्ततावभास आपादितः, 'नीलसंविदि'ति व्यावृत्तप्रतीतेर्विद्यमानत्वात्, नहि विद्यमानस्यैवानिष्टत्वेनापादनं युक्तम्; एवंच सत्यनन्तरग्रन्थेऽपि "किंचे"ति न युक्तं वक्तुम्, पूर्वं भेदसाधकप्रमाणस्यानुक्तत्वात्, तथा "तैरपि नीलव्यतिरिक्तसंविदङ्गीक्रियते" इति न युक्तम्, परसिद्धान्तापरिज्ञानलक्षणनिग्रहस्थानप्रसङ्गात्; इत्याशङ्क्य, वृत्तग्रन्थाभिप्रायकथनपूर्वकमवतारयति—**अनुवृत्तस्य व्यावृत्तादिति**॥ अत्यन्तभेदोऽनुमानेनेष्यते; भेदाभेदस्यानङ्गीकारादिति। ननु नीलसंविद्भेदः "प्रत्यक्षः" इत्यनेन ग्रन्थेन कथमुच्यते, तैरपि 'नीलात्मिकसंविद' इत्यभेदस्यैवोक्तत्वात्, तथा नीलात्मिकसंविद्भेदासाधकत्वात्, इत्याशङ्क्य व्याचष्टे—**नीलात्मिकसंविदिति**॥ **नीलमेवेति**। "प्रत्यगवभास"इत्यनेन

## पञ्चपादिका

पराग्व्यावृत्तोऽपरोक्षः प्रत्यगवभासः स्वरूपमात्रे पर्यवसितो विकल्प उपेयते। प्रतीयते च नीलसंवित् प्रत्यग्व्यावृत्तेदन्तया ग्राह्यरूपा। ततश्च वस्तुद्वयं ग्राह्य-ग्राहकरूपमितरेतरव्यावृत्तं सिद्धम्।

नैतत्; द्वयोरपि स्वरूपमात्रनिष्ठयोः कुतो विषयविषयिभावः? कथं पुनः—'इदमहं जानामी'ति तयोर्ग्राह्य-

## पञ्चपादिकाविवरणम्

अत्र विज्ञानवादी चोदयति—**नैतद्; द्वयोरपीति**॥ अयं भावः—संविदोऽन्यच्चेन्नीलम्, न तत् संवेदनेऽवभासेत। भासते चेत्, सर्वं किमिति नावभासते? विशेषसम्बन्धाभावाद् नीलस्य। संविदो जनकता विशेषसम्बन्ध इति चेत्? न; इन्द्रियस्यापि विषयताप्रसङ्गात्। तस्मात् स्वाभाविकासाधारणाभेदसम्बन्धादेव विज्ञाने नीलमवभासते इति। सिद्धान्ती तु

## तत्त्वदीपनम्

भ्रमितव्यम्; आलयविज्ञानस्य परैरात्मत्वेनाभ्युपगतस्य विषयसंविदश्चाद्वैतवादिभिरैक्याङ्गीकृतेः। 'नीलादहमुल्लेखो भिन्नः' इत्यननुभवाद् न कथं तद्भेदस्य प्रात्यक्ष्यम्? तत्राह—**अहं नीलमिति**॥ (टीकायाम्) **नीलात्मकसंविदः** इत्यादेरेषोऽर्थः—अहंकारस्य चैतन्यव्यतिरेकेऽपि चैतन्यस्या'हमि'ति भानवन्नीलाहंधियोरैक्यमित्याशङ्कायामाह—**पराग्व्यावृत्त इति**॥ नित्यानुमेयव्यावृत्त्यर्थम्—**अपरोक्षेति**॥ प्रत्यगवभास इति पदच्छेदः। **विकल्प** इत्यस्य व्याख्या **प्रत्यगवभास** इति। अन्यत्वे हेतुमाह—**स्वरूपेति**॥ न केवलमन्यत्वोपगमः, किंतु तदनुभवोऽपीत्याह—**प्रतीयत इति**॥

"नैतद; द्वयोरपी"त्यत्र विषय-विषयिभावो निराक्रियते, तदनुपपन्नम्; बौद्धेन तदनभ्युपगमादित्याशङ्क्य, परमते विषय-विषयिभावो न संभवतीति चोदयतीत्याह—**अत्रेति**॥ कुत इति शब्दसूचितामनुपपत्तिं दर्शयति—**अयमिति**॥ किं संविदाऽसंबद्धं नीलं भाति? उत संबद्धम्? इति विकल्प्याद्यं दूषयति—**संविद इति**। अतिप्रसङ्गादित्यर्थः। संविदो नीलाकारत्वात्तद्भासकत्वमिति शङ्कते—**भासते चेदिति**॥ संबन्धमन्तरेण तदाकारत्वे सर्वावभासकत्वं किं न स्यादित्याह—**सर्वमिति**॥ द्वितीयं निरस्यति—**विशेषेति**। संयोगादिमूलसंबन्धाः संवित्संवेद्ययोर्न भेदादिना निरूपणपथमवतरन्तीत्यर्थः। जन्य-जनकतासंबन्ध इति शङ्कते—**नीलस्येति**॥ किं जनकत्वमात्रं संबन्धः? आहो विषयतया जनकत्वम्? नाद्यः, अतिप्रसङ्गादित्याह—**नेन्द्रियस्येति**॥ न द्वितीयः, मूलसंबन्धाभावाद्विषय-विषयिभावस्याप्यनुपपत्तेर्विषयतया जनकताऽयोगादित्यर्थः। भेदपक्षे विषय-विषयितासंभवसाधनफलमाह—**तस्मादिति**॥ नील-विज्ञानयोर्योऽयमभेदसंबन्धः, स नान्यस्येत्याह—**असाधारणेति**॥ नच तत्र हेतुगवेषणा युक्तेत्याह—**स्वाभाविकेति**। स्वरूपमात्रे निष्ठा ययोस्तौ स्वरूपमात्रनिष्ठौ, तयोः; परस्परमसंसृष्टस्वरूपयोरित्यक्षरार्थः॥ "कथं पुनरि"ति ग्रन्थः पूर्वपक्षिणः? उत सिद्धान्तिनः? नाद्यः; पौनरुक्त्यापातात्, नान्त्यः; सिद्धान्तिना ग्राह्य-ग्राहकताऽङ्गीकृतेर्दूषणासंभवात्, प्रश्नाननुसारित्वाच्चेत्यत आह—**सिद्धान्ती त्विति**॥ तयोर्यो

## ऋजुविवरणम्

प्रत्यग्भूतस्यावभास इति प्रतीयते, प्रत्यगाकारोऽवभास इति वा; तथा सति स्वरूपमात्रपर्यवसित इति विरुद्धम्, अनेन विषयाद्भेदसिद्ध्यर्थमनन्याकारस्योक्तत्वात्; 'उपेयते' इति च विरुध्येत्, अनङ्गीकारात्; प्रत्यक् चासाववभासश्चेति विग्रहे व्यर्थविशेषणत्वम्, व्यावर्त्याभावादित्याशङ्क्य व्याचष्टे—**अहंसंवेदनमात्रमिति**॥ **उपेयत** इति (टीकायाम्) उपगन्तव्यमित्युक्तं भवति। पराग्व्यावृत्तो विकल्प उपेयः। नीलं चेदन्यथा प्रतीयते, ततश्च वस्तुद्वयं ग्राह्य-ग्राहकरूपं सिद्धमिति कथमुक्तम्? नहि संविदः प्रत्यक्षाङ्गीकारः कर्तव्य इत्युक्तिमात्रेण विषयस्येदन्ततया प्रतीतिमात्रेण च 'नीलमिदमि'ति प्रतीतौ तयोर्भेदः प्रत्यक्षो भवतीत्याशङ्क्य समुदायार्थमाह—**अहंनीलं पश्यामीति**॥

"नैतदि"ति परिहारे प्राचुर्येण प्रयुज्यते। तथा सति सिद्धान्तग्रन्थत्वशङ्का स्यात्, सिद्धान्तग्रन्थत्वे च विषय-विषयित्वनिराकरणमसम्बद्धं भवेत्। नचैवमन्वयः—स्वरूपमात्रनिष्ठयोः कुतो विषय-विषयिभाव इति नैतन्मन्तव्यमिति; प्रतिज्ञामात्रत्वप्रसङ्गात्, न चाभिप्रायिका युक्तिः; उत्तरग्रन्थानाञ्जस्यात्, पौनरुक्त्यं चेत्येतद्व्युदासायाह—**अत्र विज्ञानवादीति**॥ "नैतद् द्वयोरि"त्यनेन न स्वाभिमताभेदसाधनं क्रियते; नापि पराभ्युपगतविषयविषयिभावनिराकरणम्; स्वरूपमात्रे निष्ठा नितरां स्थितिर्ययोरिति स्वनिष्ठत्वं प्रतीयते, नानेन हेतुना विषय-विषयिभावो निराकर्तुं शक्यते, हेतोरसिद्धिप्रसङ्गात्, नीलादेर्विषयस्यान्यनिष्ठताप्रतीतेः। नापि स्वरूपमात्रनिष्ठत्वमसंबन्धित्वं विवक्षितम्, सम्बन्धिनोरेवेषु-कुड्ययोर्विषय-विषयित्वादर्शनात् नापि भिन्नत्वं स्वरूपनिष्ठत्वम्, तस्यापि विषय-विषयित्वनिराकरणासामर्थ्यात्, विषय-विषयिभावे स्वरूपनिष्ठत्वेन-

## पञ्चपादिका

**ग्राहकताऽवभासः ? नायं तदवभासः, किन्तु—'अहमि'ति 'इदमि'ति 'जानामी'ति च परस्परव्यावृत्ता विकल्पा एते। कथं**

## पञ्चपादिकाविवरणम्

भेदावभासोऽपि प्रत्यक्षो युक्त्या कथमपह्नूयत इत्याह—**कथं पुनरिदमहं जानामीति** ॥ विज्ञानवादी तु नैतत् त्रयमेकसंवित्प्रतिभासि, किंतु संवित्त्रयमेतत्क्रमवर्तीति परिहरति—**नायं तदवभास इति** ॥ क्रमवर्तित्वेऽन्यसंवित्कालेऽन्यन्नावभासेत, इदं तु त्रितयं युगपत्प्रत्यक्षमेवावभासते, ततः प्रत्यक्षविरुद्धः क्रम इत्याह सिद्धान्ती—**कथं पुनस्तेष्विति** ॥

## तत्त्वदीपनम्

ग्राह्यग्राहकताऽवभासः, स त्वन्मते कथं स्यादिति **टीकायोजना**। 'अहमिदं जानामी'ति ग्राह्य-ग्राहकताऽनुभवविरोधान्नाभेद इत्युक्ते, अनुभव एवासिद्धः; 'अहम्''इदम्' 'जानामी'त्याकारज्ञानत्रयाभ्युपगमादिति यदुक्तम्, तदनुपपन्नम्, युगपत् संवित्त्रयानुपपत्तेः। तस्मात् त्र्याकारमेकं ज्ञानमेष्टव्यमित्यत्राह—**विज्ञानवादी त्विति** ॥ **त्रयमिति**—ग्रहीतृ-ग्रहणग्राह्यलक्षणमित्यर्थः। ज्ञानत्रितये संबन्धावगमोऽनुपपन्न इत्युक्तमयुक्तम्; संबन्धावगमस्यैवासिद्धेरित्याशङ्क्य तात्पर्यमाह—**क्रमेति** ॥ **"त्रितयमि"**-त्यत्रान्योन्यसंसृष्टमिति शेषः ॥

"तद्वासने"त्यादेः पूर्वग्रन्थशेषत्वम्; संबन्धावगमाभावप्रतिपादनस्योभयत्राविशेषात्, ततश्च पौनरुक्त्यम्, इत्यत

## ऋजुविवरणम्

हेतुना निरस्ते, तेनाभेदादेव प्रतीतिरित्यभेदसिद्धिः; नतु तदस्ति; अतः स्वपक्षसाधन-परपक्षनिराकरणासामर्थ्यादसमञ्जस इत्याशङ्क्याभिप्रायमाह—**अयं भावः संविदोऽन्यच्चेदिति** ॥ "कथं पुनरहमिदमि"ति ग्रन्थो न पूर्ववादिनः; पूर्वग्रन्थेन पौनरुक्त्यप्रसङ्गात्, "नायंतदवभास" इत्यनन्तरग्रन्थे निषेधाभावप्रसङ्गाच्च । नापि सिद्धान्तिनः; तेन ग्राह्य-ग्राहकभावस्याभ्युपगतत्वात् "कथं तयोर्ग्राह्य-ग्राहकभावः" इति वक्तुमयुक्तत्वात्। नापि ग्राह्य-ग्राहकभावस्य प्रतीयमानत्वात् कथमेकत्वं संविद्विषययोर्घटत इति प्रतीतिविरोधापादनमनेन क्रियते; भेदपक्षे प्रतीतेरप्यनुपपत्तेरुक्तत्वादित्याशङ्क्यावतारयति—**सिद्धान्ती तु भेदावभास इति** ॥ "नायं तदवभासः" इति तच्छब्देन किं निर्दिश्यते ? न तावत् प्रकृतकर्तृ-कर्मत्वनिर्देशः, 'तदवभासोऽयं न संभवती'ति निषेधानुपपत्तेः, 'अहमिदमि'ति प्रतीतिविरोधात्, अन्यस्यासन्निधानात्, किन्तु 'इद'मिति 'अह'मिति अनेन विरोधापत्तेश्च, तत्र हि परस्परव्यावृत्ताकारतयाऽभ्युपगमात्पूर्वभागेन तन्निषेधात्। कस्यायं ग्रन्थ इत्यपि न ज्ञायते; "नायं तदवभासः" इत्यनेन पूर्वोक्तार्थनिषेधेन पूर्वपक्षानुकूल्यप्रतीतेस्तत्र निषेध्यानुपपत्त्या "किन्त्विदमि"त्यनेनाकारत्रयाङ्गीकारेण च सिद्धान्तानुकूल्यप्रतीतेरित्यसामञ्जस्यमाशङ्क्यावतारयति—**विज्ञानवादी तु नैतत्त्रयमिति** ॥ अवभासस्य निषेधानुपपत्तेः, 'आनर्थक्यतदङ्गन्यायेन' एकत्वमवभासगतं निषिद्ध्यत इति दर्शितवान्। **संवित्त्रयमित्यनेन** "विकल्पाः" इति व्याख्यातम्। **क्रमवर्तीत्यनेन** "परस्परव्यावृत्ताः" इति व्याख्यातम्; इतरथा व्यावृत्ताकारत्रयमात्रकथने सिद्धान्तवाद्यभ्युपगतकर्तृ-कर्मज्ञानाभ्युपगमाशङ्कानिवृत्तेरभावात्। "कथं पुनस्तेषु कटाक्षेणापी"त्यनेन सम्बन्धावगमो न संभवति, कटाक्षेणाप्यन्योन्यमनीक्षमाणत्वादित्युक्तम्। तत्र कथमन्योन्यमनीक्षमाणत्वं सम्बन्धावगमाभावे हेतुत्वेनोच्यते ? नहि सम्बन्धावगमेऽन्योन्यमीक्षमाणत्वं प्रयोजकम्, येनेक्षणाभावेन सम्बन्धावगमाभावः साध्येत। तथा किमस्मिन् ग्रन्थे प्रतिपाद्यम् ? इति न ज्ञायते—किमत्र सम्बन्धावगमोऽस्ति, स कथमित्युच्यते ? किं वा सम्बन्धावगम एव न संभवतीति ? न तावत् प्रथमः कल्पः; पूर्वग्रन्थे हि संवित्त्रयं क्रमवर्तित्वेनोक्तम्, तेनैवैकसंविदभावोऽप्युक्तः, अतः "कथं संबन्धावगमः" इत्याक्षेपोऽनुपपन्नः। नापि द्वितीयः; नहि सम्बन्धावगमाभावे पूर्ववादिनः किञ्चिद्विरुध्यते; तेनापि संबन्धावगमाभावाङ्गीकारात्। नच पूर्ववादिन एवायं ग्रन्थः; पूर्वग्रन्थे संवित्त्रयमित्युक्तम्, अत एव संबन्धावगमोऽपि कथमित्युत्तरग्रन्थानाञ्जस्यप्रसङ्गात्। नायं ग्रन्थः सिद्धान्तेऽप्युपयुज्यते; "अहमि"त्यादिसंवित्त्रयमेतदित्युक्तम्, नच तन्निराकरणेन विना सिद्धान्तसिद्धिः। नापि तन्निराकरणहेतुरत्रास्ति; तस्मादप्रयोजन इत्याशङ्क्यावतारयति—**क्रमवर्तित्वेऽन्यसंविदिति** ॥ "क्रमवर्तित्व" इत्यनेन "कटाक्षेणाप्यन्योन्यमनीक्षमाणेष्वि"ति व्याख्यातम् ॥

"तद्वासनासमेते"त्यत्र तच्छब्देन पूर्वग्रन्थे निर्दिष्टत्वात् सम्बन्धावगम एव प्रतीयते; तथा सति विज्ञानवादिमतविरोधः; सम्बन्धज्ञानाभावेन तत्संस्कारानभ्युपगमात्। नापि पूर्वग्रन्थोक्तसम्बन्धावगमस्योपपादनम्; "समनन्तरप्रत्ययसमुत्थमित्य"नेन विरोधप्रसङ्गात्। विज्ञानवादिना हि तथाविधं ज्ञानमभ्युपगम्यते, न सिद्धान्तवादिना। अतो न ज्ञायते कस्यायं ग्रन्थ इति ?

### पञ्चपादिका

**पुनः तेषु कटाक्षेणाप्यन्योन्यमनीक्षमाणेष्वयं सम्बन्धावगमः ? तद्वासनासमेतसमनन्तरप्रत्ययसमुत्थं सङ्कलनात्मकं प्रत्ययान्तरमेतत्; नेहसम्बन्धावगमः किं पुनः एवमनुभवानारूढामेव प्रक्रियां विरचयति भवान् ?**

### पञ्चपादिकाविवरणम्

आह विज्ञानवादी—**तद्वासनासमेतसमनन्तरप्रत्ययसमुत्थमिति** ॥ 'अहमि'त्यहंकल्पनोपारूढं कदाचिद् विज्ञानं भवति, अनन्तरं च 'इदमि'ति विषयविकल्पितं विज्ञानं भवति। ते एव विज्ञाने वासना; सजातीयज्ञानस्य पूर्ववृत्तसजातीयज्ञानमेव वासना, नान्यः संस्कार इत्युक्तम्। तत्र वासनाद्वयसमेतात् 'जानामी'ति क्रियाविकल्पप्रत्ययात् कारणत्रितयानुरूपेण—'अहमिदं जानामी'ति विषयक्रियाऽहंकल्पनाविकल्पितं त्र्याकारमेकं विज्ञानमुत्पद्यत इत्याह सिद्धान्ती—**किं पुनरेवमिति** ॥ नहि केवलम्—'अयमहमि'ति च'इदमि'ति वा 'जानामी'ति वा प्रत्यया दृष्टाः, किंतु प्रथमत एव प्रत्ययः—'अहमिदं जानमी'ति कर्तृ-कर्मानुभवात्मको दृष्टः। तस्माद् यथाप्रतिभासमेवा'हमि'ति विज्ञानाद् भिन्नमर्थक्रियासमर्थं नीलवस्त्वनु-

### तत्त्वदीपनम्

आह—**विज्ञानवादीति** ॥ पूर्वत्र संविद्भेदोपगमे योऽयं संबन्धावगमः प्रसिद्धः, स न स्यादित्युक्तम्, अत्र तु तस्यासिद्धिरुच्यत इति नैकग्रन्थ्यमित्यर्थः ॥ "तद्वासने"त्यत्र तच्छब्देनानन्तरप्रस्तुतसंबन्धावगमनिर्देशशङ्का स्यात्, नच सोपपद्यते; तस्य विज्ञानवादिनाऽनभ्युपगमादित्यत आह—**अहमिति**। "अहमि"त्येवंरूपकल्पनासहितमित्यर्थः ।। **विषयविकल्पितमिति**। विषयरूपकल्पनाविशेषितमित्यर्थः। तयोर्वासना तद्वासनेति विग्रहशङ्का स्यात्, नच सोपपद्यते; ज्ञानान्यवासनाऽनभ्युपगमात्, तत्राह—**ते एवेति** ॥ कर्मधारयसमास उपपत्तिमाह—**नान्य इति** ॥ संस्काराश्रयस्य स्थायिनोऽभावात् पूर्वज्ञानमेव संस्कार इत्युक्तं बौद्धग्रन्थ इत्यर्थः। प्राङ्निष्पन्नस्य सकलज्ञानस्योत्तरज्ञानं प्रति वासनात्वमित्याशङ्क्येत, ततश्चोत्तरज्ञानस्यानन्ताकारता स्यात्, इत्यत आह—**सजातीयेति** ॥ विजातीययोर्वास्य-वासकताऽप्रसिद्धेरित्यर्थः। फलितमाह—**तत्रेति** ॥ क्रियाविकल्पप्रत्ययात् त्रितयाकारमेकं ज्ञानमुत्पद्यत इत्यन्वयः। आकारोत्पत्तौ हेतुमाह—**कारणेति**। "किं पुनरि"त्यत्र संबन्धावगमस्यानुभवानारूढत्वाभिधानात् पूर्वग्रन्थशेषत्वशङ्का स्यात्, नचैवं संभवति; उत्तरत्र तन्निरसनाभावादित्यत आह—**आहेति** ॥ एवंशब्देन संकलनात्मकता परामृश्यते। प्रक्रियाया अनुभवानारूढत्वमभिनयति—**न हीति** ॥ न केवलमेकाकारप्रत्ययादर्शनम्, प्रत्युत त्रयात्मकं ज्ञानमुदेतीत्याह—**किंत्विति** ॥ कर्ता च कर्म चानुभवश्चेति कर्तृ-कर्मानुभवाः, त एवात्मा, आकारो यस्य; स तथोक्तः। फलितमाह—**तस्मादिति** ॥ अनुभवानारूढप्रक्रियेति प्रतिज्ञाय तत्र हेतुरुपन्यस्यते—"क्षणविध्वंसिनः" इत्यादिना ग्रन्थेनेति

### ऋजुविवरणम्

तदर्थमवतारयति—आह **विज्ञानवादीति** ॥ "तद्वासने"ति तच्छब्देन प्रकृतसम्बन्धज्ञाननिर्देशशङ्कां निराकर्तुम्। तथा भवत्वन्या वासना, तथाऽपि सा चासौ वासना चेति, तद्वासना; यद्वा—तस्य वासनेति, एकैव वासना स्यात् ? व्युत्पत्तावेकवचनस्यौत्सर्गिकत्वात् तथासति तत्सहितसमनन्तरप्रत्ययसमुत्थत्वेऽपि विज्ञानस्य यत्किञ्चिदाकारद्वयमेव स्यात्। पूर्वग्रन्थोक्तसकलनिर्देशेऽपि बह्वाकारता, नाभिमताकारत्रयसिद्धिः। कथं विज्ञानमात्रवादिनो वासनाऽपि सम्भवेत् ? इत्याशङ्क्य तद् दर्शयति—**अहमित्यहंकल्पनोपारूढमिति** ॥ ननु ज्ञानस्य वासनात्वे नियामकाभावत् सर्वं पूर्ववृत्तज्ञानमुत्तरज्ञानं प्रति वासना स्यात्; ततश्चानन्ताकारं ज्ञानं स्यात्, इत्याशङ्क्याह—**सजातीयज्ञानस्येति** ॥ ननु ज्ञानजन्योऽतिशयो वासना, तदन्या वा सदृशी वासनाऽङ्गीकार्या. ननु ज्ञानयोर्वासनात्वमित्याशङ्क्याह—**ज्ञानमेव वासना, नान्य इति। उक्तमिति** ॥ तद्दर्शनाभिप्रायेण। अथवा—"स्वेनैवास्यां ज्ञानसन्ततावि"त्यत्रात्मख्यातिनिराकरणावसर उक्तम्, तदभिप्रायेण। "किं पुनरेवमि"त्यनेन पूर्वग्रंथोक्तेऽर्थे प्रश्नं कृत्वा "क्षणविध्वंसिनः"इत्यनेन हेतूपवर्णनमित्येकग्रन्थत्वं प्रतिभाति; तथासति व्यधिकरणत्वम्, "किं पुनरेवमि"त्यनेन सङ्कलनात्मकं ज्ञानमित्यनुभवानारूढं किमर्थं कल्प्यत इति पृष्टे, "क्षणविध्वंसिनः"इत्यनेन क्षणिकस्य क्रियानिमित्तसम्बन्धेनावभासासंभवाद ज्ञानार्थयोरभेदसाधनात् संकलनात्मकज्ञानकल्पनायां पृष्टकारणानिरूपणादित्याशङ्क्यावतारयति—**सिद्धान्तीति। किंपुनरेवमिति** ॥ किमुदमनुभवानारूढत्वम्—किमनुभवविरुद्धत्वम् ? किं वा न्यायमूलानुभवानारूढत्वम् ? नाद्यः; अनुभवानारूढत्वेन प्रक्रियानिराकरणायोगात्; न्यायमूलप्रक्रियाश्रयणस्यापि युक्तत्वात्। तथाहि—'अहमि'त्यादिसंवित्त्रयस्य यौगपद्याभावेनैकसंविद्विषयत्वायोगादेककालीनप्रतिभासस्य च संकलनात्मकत्वेऽप्युपपन्नत्वाद् न ज्ञानाद् भेदेनार्थसिद्धिरित्याशङ्क्याभिप्रायमाह—**नहि केवलमहमिति चेति** ॥ "क्षणविध्वंसिनः क्रियानुपपत्तेरि"त्यनेन किमुच्यते ? न तावत् क्षणिकस्य क्रियानिमित्तसम्बन्धे-

### पञ्चपादिका

**क्षणविध्वंसिनः क्रियानुपपत्तेः; स्थायित्वे हि सत्यहमुल्लेख्यस्य स्थायिनैव नीलादिना क्रियानिमित्तः सम्बन्धः, ततश्च क्रिया निमित्तैव नीलादेरप्यपरोक्षता स्यात्, नच स्थायित्वमस्ति ।**

### पञ्चपादिकाविवरणम्

मन्तव्यमिति भावः। सत्यं नानुभवमाश्रित्य संवेदनादभिन्नं नीलं ब्रूमः, किन्तु विज्ञानेन नीलस्य प्रतिभासान्यथानुपपत्त्या। कथम्? स्थायित्वे हि विज्ञान-विषययोः क्रियानिमित्तासाधारणपरस्परसम्बन्धादसाधारणो विषयावभासः स्यात्, क्षणिकस्य त्वागन्तुकसम्बन्धाभावे यदि स्वाभाविकाभेदसम्बन्धोऽपि न स्यात्, तत्र चैतन्येनासंसृष्टस्य प्रतिभास एव न स्यात्। अतः प्रतिभासानुपपत्तिरभेदं साधयतीति विज्ञानवादी वर्णयति—**क्षणविध्वंसिनः क्रियानुपपत्तेरिति ॥**

तत्र प्रत्यक्षेण विज्ञानानां क्षणिकत्वमुच्यते? किं वाऽनुमानेन? ननु प्रत्यक्षेण? तथाहि—वर्तमानावभासि ज्ञानं स्वात्मनोऽवर्तमानाद् व्यावृत्तिमपि गमयति, नीलज्ञानमिवानीलव्यावृत्तं नीलम्; अतो वर्तमानक्षणमात्रं विज्ञानं प्रत्यक्षमिति।

### तत्त्वदीपनम्

वक्तुं न शक्यते; तस्यानुभवानारूढत्वासाधकत्वात्। नच पूर्वपक्षिणोऽयं ग्रन्थः; क्रियानिमित्तसंबन्धनिरासस्य क्षणिकत्वस्य च प्रस्तुतानुपयोगित्वादित्याशङ्क्य पूर्वपक्षत्वेन व्याचष्टे—**सत्यमति ॥** अङ्गीकृतमंशमाह—**नानुभवमिति ॥** प्रतिभासानुपपत्तिः प्रतिभास्यमात्रमाक्षिपति, नाभेदमिति शङ्कते—**कथमिति ॥** तत्र वक्तव्यम्—किं स्थायिनोः प्रतिभास्य-प्रतिभासकभावः? उत क्षणिकयोः? इति विकल्प्याद्यं प्रत्याह—**स्थायित्व इति ॥** क्रियाशब्देनान्तरबाह्येन्द्रियव्यापारोऽभिधीयते। स्थायित्वे विषयावभासः स्यादिति वदता काक्वा स्थायित्वाभावो निर्दिष्टः, तत्र हेतुस्तूत्तरत्र वक्ष्यमाणो द्रष्टव्यः। द्वितीयं प्रत्याह—**क्षणिकस्येति ॥** क्रियानिमित्तो ह्यसाधारणसंबन्धः। क्रिया च क्षणिकपक्षेऽनुपपन्नेत्यर्थः। संबन्धिनः प्रतिभास इति सामान्य-व्याप्तिः, क्रियानिमित्तः संबन्ध इति विशेषव्याप्तिः; ततः क्रियानिमित्तसंबन्धरूपविशेषस्य क्षणिकत्वेऽसंभवादभेदसंबन्ध आस्थेय इति समुदायार्थः॥

संविदां प्रतिक्षणं भेदस्याननुभूयमानत्वान्न क्षणिकमिति कथमुच्यते? आनुमानिकभेदसंभवादित्याशङ्क्य, विकल्पोत्तरत्वेन व्याख्यातुं विकल्पयति—**तत्रेति ॥** व्यापकविशेषाभावस्य क्षणिकत्वायत्तत्वात्, तन्निराकरणे व्यापकविशेषाभावो न सिद्ध्यतीत्याशयेन क्षणिकत्वविकल्प इति द्रष्टव्यम्। क्षणिकत्वस्याप्रत्यक्षत्वाद्विकल्पासंभवइत्याशङ्क्य प्रत्यक्षत्वं समर्थ्यते—**नन्विति ॥** नीलाकारज्ञानस्य नीलाभावव्यवच्छेदेन तदविनाभूतपीतादिव्यवच्छेदकत्ववद् वर्तमानमात्राकारज्ञानस्यावर्तमानता-

### ऋजुविवरणम्

नावभासासंभवात्। क्षणिकत्वमेव नास्तीति विज्ञानवादिनोऽनिष्टापादनमनेन क्रियते; असङ्गतत्वात्, अभेदनिराकरणस्य प्रस्तुतत्वात्। नापि क्षणिकत्वेन हेतुना विज्ञानवादिना क्रियानिमित्तसम्बन्धाभावेनाभेदः साध्यत इति तन्निराकरणमभेद-निराकरणार्थमेव क्रियत इति वक्तुं युक्तम्; "तद्येवमि"ति भेदापादनग्रन्थोऽसमञ्जसः स्यात्। नापि विज्ञानवादिनोऽयं ग्रन्थः; "क्षणविध्वंसिनः क्रियाऽनुपपत्तेरि"ति हेतुमात्रस्यैवोक्तत्वात्, साध्यनिर्देशाभावात्। अथ स्थायिन एव क्रियानिमित्तसम्बन्धादव-भासः, इति स्थायिनः क्रियानिमित्तसम्बन्धेनावभासप्रदर्शनादर्थादत्र क्षणिकस्य क्रियानिमित्तसम्बन्धाभावादभेदेन भवितव्य-मित्युच्यते? तत्र भेदग्राहकप्रमाणस्योक्तत्वात् तद्विरोधेनाभेदासिद्धेः, अभेदग्राहकप्रमाणानुपन्यासाच्च। तस्मादसम्बन्धः, इत्याशङ्क्य साभिप्रायमवतारयति—**सत्यं नानुभवमाश्रित्येति ॥** ननु प्रतिभासानुपपत्तिः सम्बन्धमात्रोपक्षीणा कथमभेद-साधिकेति पृच्छति—**कथमिति ॥**

"यद्येवमि"त्यनेन भेदापादनम्, "स च विद्यते न वे"ति विकल्पश्च व्यर्थः; भेदस्य विज्ञानवादिनाऽप्यङ्गीकृतत्वात्; प्रतिभासानुपपत्त्या भेदेन भवितव्यमिति चोदिते, संविद्भेदापादनस्य तद्गतविकल्पस्य चासंगतत्वाच्चेत्याशङ्क्य, पूर्वग्रन्थे हि प्रतिभासानुपपत्तिरभेदसाधिकेत्युक्तम्, तच्चैवम्—प्रतिभासो हि सम्बन्धिन इति सामान्यव्याप्तेः क्रियानिमित्तसंम्बन्धस्य व्यापकविशेषस्य क्षणिकत्वेनासंभवादभेदासिद्धिरिति। तत्र व्यापकविशेषाभावसाधकस्य क्षणिकत्वस्य निराकरणेनार्थापत्तिः "सामग्र्यभावेन नाभेदसाधिके"त्यनेन ग्रन्थेन प्रतिपाद्यत इति तात्पर्यं मनसि निधाय विकल्प्यावतारयति—**तत्र प्रत्यक्षेण विज्ञानानामिति ॥** तत्रानुमानं स्वयमेवोपन्यस्य निराकरिष्यति—"अथान्ते"त्यादिना। प्रत्यक्षस्य त्वनुपन्यस्तस्यैव निराकरणे तुच्छत्वशङ्का स्यात्; अज्ञातस्य निराकरणं च न संभवतीति, तन्निवृत्त्यर्थमाह—**ननु प्रत्यक्षेणेति ॥** "अथात्यन्तसादृश्यादि"-

### पञ्चपादिका

**यद्येवम्, 'अहमि'ति संविदः प्रतिक्षणं स्वलक्षणभेदेन भाव्यम्, स किं विद्यते ? न वा ? इति स्वसंविदमगूहमानैरेवाभिधीयताम् । अथ अत्यन्तसादृश्याद् न भेदोऽवभासत इति ? संविदोऽपि चेत् स्वरूपं नावभासते, आयातमान्ध्यमशेषस्य जगतः । अपिच तद्रूपप्रतिभासे सादृश्यकल्पना प्रमाणविरुद्धा, निष्प्रमाणिका च ।**

### पञ्चपादिकाविवरणम्

न तावत् प्रत्यक्षेण विज्ञानभेदावभास इत्याह—**यद्येवमहमिति संविद इति** ॥ ननु सत्यपि भेदावभासेऽतिसादृश्यान्न स्पष्टमवभासत इति शङ्कते—**अथात्यन्तसादृश्यादिति** ॥ कोऽयमभिप्रायः ? यदि तावत् संविदोऽन्यो भेदो ज्ञानान्तरगम्यश्च सादृश्यदोषात् स्पष्टं नावभासत इत्यभिप्रायः, तदा धर्मि-प्रतियोगिसंविदोः संविदन्तराविषयत्वाद् न तयोर्भेदग्रहणं स्यात्, विषयत्वे वा धर्मि-प्रतियोगि-भेदाख्यत्रितयमपि भेदसंवेदने कल्पितं तदभिन्नं वा स्यात् । अथ संवित्स्वरूपमेव भेदः, संवेदनमेव तज्ज्ञानमिति ? तत्राह—**संविदोऽपि चेदिति** ॥ अपि च ऐक्यप्रतिभासे सादृश्यकल्पनं प्रमाणविरुद्धम्, भिन्नयोरैक्यभ्रमश्च सादृश्यकल्पनायां प्रमाणम्, तदभावाच्च न सादृश्यसिद्धिरित्याह—**अपिच तद्रूपप्रतिभास इति** ॥

### तत्त्वदीपनम्

व्यावृत्तिगमकत्वात् क्षणिकत्वस्य प्रत्यक्षत्वमित्यर्थः ॥ क्षणिकत्वस्य प्रत्यक्षतामुपपाद्य, तन्निराकरणपरत्वेन टीकामवतारयति—**न तावदिति** ॥ भेदस्य प्रत्यक्षत्वाभ्युपगमान्न भासत इति कथम् ? इत्याशङ्क्य, विद्यमानस्यापि भेदस्य ज्वालाभेदवदनुपलम्भ इति शङ्कते—**नन्विति** ॥ भेदाप्रतिभासे चोदिते, संवित्स्वरूपानवभासनाद् जगदान्ध्यप्रसञ्जनमनवसरपराहतमित्याशङ्क्याह—**कोऽयमभिप्राय इति** ॥ किं भेदः संविदतिरिक्तो ज्ञानान्तरगम्यश्च ? उत स्वरूपम् तज्ज्ञानमेव तज्ज्ञानमिति ? किंशब्दार्थः । आद्यमनुवदति—**यदि तावदिति** ॥ ज्ञानान्तरं किं भेदमात्रं गृह्णाति ? उत धर्म्यादिविशेषितम् ? इति विकल्प्याद्ये कल्पे संविद्भेदो न सिद्धयतीत्याह—**तदेति** ॥ तदा तयोर्न भेदग्रहः स्यादिति संबन्धः । द्वितीयं दूषयति—**धर्मि-प्रतियोगीति** ॥ तस्मिन् कल्पितो यथा घट इत्यर्थः । धर्म्यादीनां संविदभिन्नत्वं वा स्यात्, विषय-विषयिणोरभेदाङ्गीकारादित्याह—**तदभिन्नं वेति** ॥ द्वितीयमनुवदति—**अथेति** ॥ संविद्भेदबोधयोरेकत्वाद् भेदानवबोधे बोधानवबोधाद् जगदान्ध्यापात इत्याह—**तत्राहेति** ॥ सादृश्याङ्गीकारेण दूषणमुक्त्वा तस्याप्यसिद्धिरुच्यते—**अपिचेत्यनेन ग्रन्थेन** ॥ तत्र तच्छब्देन प्रस्तुतसंवित्स्वरूपाभिधानाद् न तद्विरुद्धत्वं सादृश्यस्य, अप्रामाणिकत्वं चासिद्धमित्याशङ्क्याह—**अपि चेति** ॥ असिद्धिं परिहरति—**भिन्नयोरिति** ॥

### ऋजुविवरणम्

त्यनेन भेदो नावभासत इति कथमाशङ्कितम्, पूर्वापरविरोधप्रसङ्गात्, पूर्वग्रन्थे प्रत्यक्षत्वेन तन्मतस्य प्रक्रान्तत्वात्, इदानीं तद्विरोधेन "नावभासते" इति शङ्कितुमशक्यत्वात् ? इत्याशङ्क्यावतारयति—**ननु सत्यपि भेदावभास इति** ॥ "संविदोऽपि चेदि"त्यनेन स्वरूपानवभासेऽन्धत्वमुक्तम्, तदप्रस्तुतम्; पूर्वग्रन्थे हि स्वरूपावभासमङ्गीकृत्य स्पष्टं भेदो नावभासत इति चोदितत्वात्, अनेन ग्रन्थेन स्वरूपानवभासमात्रमनूद्यान्ध्यस्योक्तत्वात्, इत्याशङ्क्य चोद्याभिप्रायमाविष्करोति—**कोऽयमभिप्राय इति** ॥ संविदोऽपि चेत् स्वरूपमि"ति विशेषणोपादानाद् अर्थाद् धर्मपक्षोऽपि चोद्यविषय इति द्योतितम्, अथवा चोद्ये न भेदोऽवभासत इति भेदग्रहणम्, परिहारे च स्वरूपग्रहणं कुर्वन् पक्षद्वयमसूसुचत् । तत्राभिप्रायिकदूषणं पक्षमादौ दर्शयति—**यदि तावत्संविदोऽन्य इति** ॥ धर्मपक्षे स्वरूपातिरेकादवभासकभेदोऽप्यर्थादुक्त एवेति सोऽपि दर्शितः—**ज्ञानान्तरगम्यश्चेति** ॥ तथा स्वरूपपक्षेऽशेषस्य जगत आन्ध्यमिति वदतेतरस्मिन् पक्षे कस्यचिदान्ध्यं द्योतितम्, तद् दर्शयति—**तदा धर्मि-प्रतियोगीति** ॥ तथा "आन्ध्यमि"ति विशेषणसामर्थ्यादितरस्मिन् पक्षे स्वरूपानवभास एव प्रदर्शितः; आन्ध्यशब्दस्य विद्यमानपदार्थानवभासवाचित्वात्, इतरत्र तद्वैपरीत्येनाभासवत्त्वमेव द्योतितम्, तद् दर्शयति—**विषयत्वे वा धर्मीति** ॥ "अपिच तद्रूपावभासे" इत्यत्र तच्छब्देन संवेदनं परामृश्यत इति प्रतीतिः स्यात्; पूर्वग्रन्थे प्रकृतत्वात्, तथा सति प्रतिभासमानत्वस्य सादृश्यकल्पनोपयोगित्वात्, अप्रतीयमाने सादृश्यकल्पनाभावात् कथं प्रमाणविरुद्धत्वमुक्तम् ? तथा तद्रूपप्रतिभास एव निष्प्रमाणकत्वे हेतुत्वेनोक्तः, सोऽपि कथम् ? नहि "स्वरूपं नावभासते" इति सादृश्यकल्पनायां निष्प्रमाणकत्वमुच्यते, इत्याशङ्क्यावतारयति—**अपि चैक्यप्रतिभास इति** ॥ ननु प्रतीते वस्तुस्वरूपे भेदानवभासो दृष्टो ज्वालादौ, तथा "अपी"ति शङ्कानिवर्तकत्वे संभवति न युक्त्यन्तरत्वेनावतारणं युक्तम्; "अपि चे"ति चायुक्तम्, सादृश्यनिरासे पूर्वं युक्त्यन्तरानभिधानात् ? मैवम्; स्पष्टत्वात्, शङ्काया अर्थान्निरस्तत्वाच्च । पूर्वं स्वरूपत्वाद् भेदानवभासो निरस्तः, इदानीं सादृश्याभावेनापि स निरस्यति इति "अपिचे"त्युक्तम् ।

### पञ्चपादिका

**तद्रूपप्रतीतेर्व्यामोहत्वान्न प्रमाणविरुद्धता, नाप्यप्रामाणिकता; निर्बीजभ्रान्त्ययोगादिति चेत्? न; इतरेतराश्रयत्वात्—सिद्धे व्यामोहे सादृश्यसिद्धिः, प्रमाणविरोधाभावात्, प्रमाणसङ्भावाच्च; सिद्धे च सादृश्ये तन्निमित्ता व्यामोहसिद्धिः ॥**

### पञ्चपादिकाविवरणम्

ननु ऐक्यावभासस्य व्यामोहत्वान्न सादृश्यकल्पना प्रमाणविरुद्धा, ऐक्यभ्रमश्च भिन्नेषु सादृश्यमन्तरेणानुपपन्न इत्यर्थापत्तिमूला च सादृश्यकल्पना; अतः सिद्धं सादृश्यमित्याह पूर्ववादी—**तद्रूपप्रतीतेर्व्यामोहत्वादिति** ॥ मैवम्; ऐक्यभ्रमसादृश्यसिद्ध्योरितरेतराश्रयत्वादिति परिहरति—**न, इतरेतराश्रयत्वादिति** ॥

ननु ऐक्यावभासस्य प्रामाण्यं न स्वतः सिद्धयति, किन्तु सादृश्यस्य निर्मूलत्व-प्रमाणविरुद्धत्वापेक्षया; सादृश्यस्य च निर्मूलत्व-प्रमाणविरुद्धत्वमैक्यप्रतिभासस्य प्रामाण्यापेक्षयेति तुल्यं तवापीतरेतराश्रयत्वमिति चोदयति—**स्यादेतत्; अथवा-**

### तत्त्वदीपनम्

"तद्रूपप्रतीतेरि"त्यत्र तच्छब्देन प्रस्तुतसादृश्याभिधानशङ्का स्यात्, तथा चापसिद्धान्तः; तत्रैक्यप्रतिभासस्योक्तत्वात्, तस्य तच्छब्देनाभिधानेऽपि सादृश्यस्याप्रामाणिकत्वम्; भ्रान्तेः सादृश्यव्याप्त्यभावादित्याशङ्क्याभिप्रायं दर्शयति—**नन्वैक्येति** ॥ ऐक्यप्रतिभासविरोधस्याभिधानात्तस्य तच्छब्देनाभिधानमित्यर्थः। भ्रान्तिमात्रस्य सादृश्यव्याप्त्यभावेऽपि तद्विशेषस्य व्याप्तिरस्तीत्याह—**ऐक्येति** ॥ भिन्नयोरैक्यभ्रमो भेदतिरोधानमन्तरेण धर्मि-प्रतियोगिप्रतिपत्तिमात्रेण तद्विशेषितभेदः प्रतिपत्तुं न शक्यः। नच धर्मि-प्रतियोगिनोः प्रतिपत्तिः; स्वप्रकाशत्वेन संविदन्तरागोचरत्वादित्यर्थः। विपक्षे बाधकमाह—**विषयत्व इति** ॥ विमतम्, भेदसंवेदने कल्पितम्, तद्विषयत्वात्, न संभवति, तिरोधानं च न सादृश्यं विना, इति तत्सिद्धिरित्यर्थः। "इतरेतराश्रयत्वादि"त्यत्रापेक्षितं पूरयन्नाह—**मैवमिति** ॥

व्यामोहपक्षोक्तेतरेतराश्रयत्वस्याव्यामोहत्वपक्षेऽपि साम्यमुक्तम्—"स्यादेतदि"त्यत्र, तदनुपपन्नम्; ऐक्यप्रतिभासस्य स्वतः प्रामाण्यादित्याशङ्क्याह—**नन्वैक्येति** ॥ ज्वालैक्यप्रतिभासस्यापि स्वतस्त्वापातादित्यर्थः। किं प्रयुक्तं तर्हि प्रामाण्यम्? इति पृच्छति—**किन्त्विति** ॥ सादृश्यस्याविरुद्धत्व-समूलत्वसिद्धावैक्यप्रतिभासस्य प्रामाण्यासिद्धेस्तत् तन्निर्मूलत्वाद्यायत्तम्, तन्निर्मूलत्वादि चैकस्य प्रामाणिकत्वायत्तमितीतरेतराश्रयत्वमित्यर्थः। "नैतदि"त्यत्र प्रतीतेः प्रामाण्यमनपेक्षमित्युक्तमयुक्तम्; हेतावपेक्षासद्भावादित्याशङ्क्य, विज्ञानसामग्र्यतिरिक्तहेत्वपेक्षा निरस्यत इत्याह—**ऐक्येति** ॥ विज्ञानप्रयोजकप्रयोज्यत्वे संभवत्यति-

### ऋजुविवरणम्

"तद्रूपप्रतीतेरि"त्यनेन किमुच्यत इति न ज्ञायते। न तावदैक्यावभासस्य प्रमाणविरुद्धत्वमप्रमाणत्वं चाशङ्क्य निराक्रियते; नहि—"तद्रूपप्रतीतेरि"ति सादृश्यं निर्दिश्य तत्प्रतीतेर्व्यामोहत्वादैक्यावभासस्य न प्रमाणविरुद्धता, तस्यैव चाप्रमाणकत्वमपि नास्ति, भ्रान्तित्वे कारणाभावादिति—शक्यं वक्तुम्; उत्तरग्रन्थानाञ्जस्यात्, "स्यादेतदि"त्यनेन पौनरुक्त्याच्च। नापि पूर्वोक्तं सादृश्यपक्षे दूषणमनेन परिह्रियते। "तद्रूपप्रतीतेरि"त्यनेन कथञ्चिदैक्यं निर्दिश्येत; तत्र प्रयुक्तशब्दत्वात्, सन्निहितत्वाच्चैक्यस्य; तथापि नाप्रमाणकत्वं परिहर्तुं शक्यते; निर्बीजभ्रान्त्ययोगात्, अस्याः सादृश्यासाधकत्वात्। भ्रान्तिर्हि कारणेन विनाऽनुपपन्ना कारणं कल्पयति। नैतावता सादृश्यसिद्धिः; भ्रान्तेस्सादृश्येन जन्यताया नियमाभावात्। तस्मादनवधृतार्थो ग्रन्थ इत्याशङ्क्यावतारयति—**नन्वैक्यावभासस्येति** ॥ "तद्रूपप्रतीतेरि"ति व्याख्यातम्। "न प्रमाणविरुद्धते"त्यत्र कस्येति विशेषस्यनुपादानात् स्पष्टयति सादृश्यकस्यनेति ॥ निर्बीजभ्रान्त्ययोगादि"त्यस्य व्याख्या—**ऐक्यभ्रमश्च भिन्नेष्विति** ॥ सिद्धे व्यामोहे सादृश्यसिद्धिरित्युक्तम्, तत्र कस्य व्यमोह इति न ज्ञायते; व्यामोहमात्रस्य सादृश्यहेतुत्वाभावाद नान्योन्याश्रयत्वम्; तदर्थं विविच्यावतारयति—**मैवमैक्यभ्रम-सादृयसिद्धयोरिति** ॥

"स्यादेतदि"त्यनेन सिद्धान्तपक्षेऽपीतरेतराश्रयसाम्यमुक्तम्; ऐक्यावभासप्रामाण्यस्यान्यानपेक्षित्वादित्याशङ्क्यावतारयति—**नन्वैक्यावभासस्येति**। परतः प्रामाण्यादिति भावः। "नैतत्स्वारसिकमि"त्यनेनाविशेषेण प्रामाण्यकीर्तनं न युक्तम्; सादृश्येऽपि प्रसङ्गादित्याशङ्क्यावतारयति—**ऐक्यावभास इति** ॥ "अप्रामाण्यपूर्विके"त्युक्तम्, तदनुपपन्नम्; न ह्यप्रामाण्यं सादृश्येन विनाऽनुपपन्नम्, तथा "अप्रामाण्यपूर्विके"ति न ज्ञायते, नात्र प्रमाणेन कस्यचित् सिद्धिः, तदर्थमभिप्रायमाह—**ऐक्यभ्रमो हीति** ॥

### पञ्चपादिका

**स्यादेतत्—अव्यामोहेऽपि तुल्यमेतत्—सिद्धे हि सादृश्यकल्पनाया अप्रामाणिकत्वे प्रमाणविरोधे च तद्रूपप्रतीतेरव्यामोहत्वम्, अव्यामोहत्वे चास्याः सादृश्यकल्पनाया निष्प्रमाणकत्वं प्रमाणविरोधश्च ? नैतत्; स्वारसिकं हि प्रामाण्यं प्रतीतेरनपेक्षम्। तथाच तत्प्रामाण्यात् सादृश्यकल्पना निष्प्रामाणिकी प्रमाणविरुद्धा च; न तु सादृश्यकल्पना स्वतःसिद्धा, येन प्रामाण्यमावहेत्, अप्रामाण्यपूर्विकैव सा।**

### पञ्चपादिकाविवरणम्

**मोहेऽपीति** ॥ ऐक्यावभासो न सादृश्याभावापेक्षः, किन्तु स्वत एव प्रमाणमिति परिहरति—**नैतत्स्वारसिकमिति** ॥ ननु सादृश्यमपि स्वत एव सिद्धमित्याशङ्क्याह—**न तु सादृश्यकल्पना स्वत इति** ॥ कुतस्तर्हि सादृश्यसिद्धिरिति ? अत आह—**अप्रामाण्यपूर्विकेति** ॥ ऐक्यभ्रमो हि भिन्नेषु सादृश्यं कल्पयतीति भावः ॥

ननु केयं प्रत्यभिज्ञा नाम, यत्सामर्थ्यबलात् संविदैक्यं प्रतीयते ? पूर्वानुभवसंस्कारसहितादिदानींतनवस्तुप्रमिति-

### तत्त्वदीपनम्

रिक्तापेक्षायां गौरवं स्यादित्यर्थः। नच ज्वालैक्यप्रतिभासस्यापि स्वतस्त्वप्रसङ्गः शङ्क्यः; ज्वालाभेदग्राहिप्रमाणविरोधेन स्वतःप्रामाण्यानुपपत्तेरित्यर्थः। प्रतीतेः प्रामाण्यं स्वारसिकं यस्मात्, अतोऽनपेक्षमिति टीकायोजना। सादृश्यकल्पनाया अपि स्वतस्त्वसंभवान्नास्मन्मतेऽपीतरेतराश्रयत्वमित्याह—**ननु सादृश्यमिति** ॥ **स्वत एवेति**—ऐक्यप्रतिभासस्य व्यामोहत्वापेक्षां विनेत्यर्थः। सादृश्यकल्पनायाः स्वाभाविकत्वं एकक्षणवर्तिन्येकस्मिन् भावेऽपि यदैक्यप्रतिभानम्, तदाऽपि सादृश्यनिमित्तं स्यादिति परिहाराभिप्रायः। "गोसदृशो गवयः" इत्यादावैक्यभ्रमान्तरेणापि सादृश्यसिद्धेर्न तदपेक्षं सादृश्यमिति शङ्कते—**कुत इति** ॥ गो-गवययोरैक्यस्याप्रतीयमानत्वान्नैतद्भ्रान्तित्वापेक्षं सादृश्यम्, अत्र चैक्यप्रतिभासात् तद्भ्रान्तिं विना न सादृश्यमित्याशयवानाह—**अत आहेति** ॥ "अप्रामाण्यपूर्विके"त्यत्र कस्याप्रामाण्यमिति वीक्षायामाह—**ऐक्येति** ॥

प्रत्यभिज्ञाप्रत्यक्षविरोधात्सादृश्यासिद्धौ न त्वेतन्निमित्तं भेदाभानमित्युक्ते प्रत्यभिज्ञासंगतिमाशङ्कते—**ननु केयमिति** ॥ प्रत्यभिज्ञानिरूपणस्य प्रकृतसंगतिमाह—**यत्सामर्थ्येति** ॥ किं पूर्वानुभवसंस्कारात् प्रत्यभिज्ञोत्पद्यते ? उताक्षसंयोगात् ? अथवोभाभ्याम् ? नाद्यः; संस्कारस्यानुभूतमात्रग्राहित्वात्, एतद्देशादिवैशिष्ट्यग्राहित्वायोगात्। न द्वितीयः; अक्षस्य वर्तमानग्राहित्वेन तद्देशादिवैशिष्ट्यग्राहित्वासंभवात्। तृतीये सामग्रीद्वयप्रसूतत्वात्प्रत्यभिज्ञाया अनुभवत्वं स्मरणत्वं च स्यात्। तथाच तदेतद्देश-कालविशिष्टैक्यलक्षणविषयासंभवात् परोक्षत्वेनापरोक्षत्वेन च ज्ञानस्वरूपानिरूपणात् तत्प्रत्यभिज्ञाप्रामाण्यमसंभवीत्यर्थः। तत्र कारणस्य दुर्निरूपत्वं तावदसिद्धमित्याह—**पूर्वेति** ॥ पूर्वानुभवसंस्कारसहितेदानीन्तनप्रमितिकारणं प्रत्यभिज्ञासामग्रीत्यर्थः। यत्तूक्तं—प्रत्यभिज्ञायाः स्मृतित्वमनुभूतित्वं च स्यादिति; तत्रेदमभिधीयते—संस्कारमात्रजन्यत्वं स्मृतित्वव्यापकम्, तद् व्यावर्तमानं स्मृतित्वमप्यादाय व्यावर्तयति। नच—अनुभवत्वे तद्देशादिवैशिष्ट्यग्राहित्वं न स्यादिति—शङ्क्यम्;

### ऋजुविवरणम्

**ननु केयं प्रत्यभिज्ञेति**। अयं भावः—वर्तमानस्वरूपग्राहिज्ञानव्यतिरेकेण प्रत्यभिज्ञा नामैक्यसाधिका प्रत्यक्षरूपा निरूपयितुं न शक्यते; अक्षाणां भूतकालविशिष्टे रूपेऽसामर्थ्यादिति। तत्र ज्ञानं 'प्रत्यभिज्ञे'त्युक्ते सर्वज्ञानानां प्रत्यभिज्ञात्वं स्यात्, तन्निवृत्त्यर्थमाह—**प्रत्यक्षज्ञानमिति** ॥ "प्रत्यक्षज्ञानमि"त्युक्तेऽभिज्ञायामतिप्रसङ्गः स्यात्, तदर्थमाह—**एकस्य कालद्वयसम्बन्धविषयमिति** ॥ ननु प्रत्यभिज्ञयाऽपि न स्थायित्वं सिद्ध्यति; ज्वालाप्रत्यभिज्ञादावेतादृशज्ञानेऽपि स्थायित्वादर्शनात् ? इत्याशङ्क्याह—**पूर्वानुभवेति** ॥ सादृश्यस्य तत्र प्राधान्येन कारणत्वमित्यर्थः। यद्वा, भ्रान्तिसंस्कारसहितप्रमाणकारणजनितेन स्थायित्वसिद्धिर्नास्ति भ्रान्तरजतानुभावानन्तरं सम्यग् रजतानुभवे सत्युत्पद्यमानप्रत्यभिज्ञानादौ, तदर्थं विशिनष्टि—**पूर्वानुभवसंस्कारसहितादिति** ॥ अनुभवसंस्कारसहितकारणजनितज्ञानेऽपि स्थायित्वसिद्धिर्नास्ति, केशस्वप्नादिप्रत्यभिज्ञादावतिव्याप्तिश्च लक्षणस्य, तदर्थमाह—**प्रमितिकारणादिति** ॥ अथवा, कथमेकस्य कालद्वयसम्बन्धविषयं प्रत्यभिज्ञानमुत्पद्यते ? वर्तमानमात्रग्राहित्वेनेन्द्रियाणामेतादृशज्ञानजननासामर्थ्यात्, संस्कारस्य चानुभूतवस्तुमात्रविषयत्वादित्याशङ्क्याह—**पूर्वानुभवसंस्कारेत्यादिना** ॥ अस्मिन् पक्षे—"अनुभवप्रमितिकारणादि"ति विशेषणाभ्यामुभयविधप्रत्यभिज्ञावैषम्यम्। 'पूर्वानुभवसंस्कारसहितादिदानीन्तनवस्तुप्रमितिकारणाद् जातं प्रत्यक्षज्ञानं प्रत्यभिज्ञे'त्युक्ते सविकल्पज्ञाने व्यभिचारः; तदर्थमाह—**एकस्य**

**पञ्चपादिकाविवरणम्**

कारणाज्जातमेकस्य कालद्वयसम्बन्धविषयकं प्रत्यक्षज्ञानं प्रत्यभिज्ञेति चेत् ? न तर्ह्यात्मनि सा सम्भवति। कथम् ? विज्ञानस्वभावस्य ह्यात्मनः स्थायित्वे, स्वयंप्रकाशस्य ज्ञानान्तरागम्यत्वात् तद्विनाशसंस्काराभावात्, स्वरूपस्य चाविनाशात्, अविनाशिनः संस्काराभावात्, स्वयंप्रकाशस्येदानींतनस्वरूपव्यतिरिक्तप्रमाणकारणाभावाच्च न प्रत्यभिज्ञाकारणं तावदात्मनि सम्भवति। नच स्वरूपज्ञानमेव प्रत्यभिज्ञा; तस्य प्रदीपप्रभावद् वर्तमानप्रकाशिनः पूर्वापरपरामर्शात्मकताऽयोगात्; 'सोऽहमि'ति च विषयाकाराभ्युपगमे 'सः' इत्य'हमि'ति चाकारभेदेन विषयभेदाज्ज्ञानभेदसिद्धेः। तस्मान्नात्मनि प्रत्यभिज्ञा, इति युक्त्या व्यामोहत्वसिद्धिः इति ॥

अत्रोच्यते अन्तःकरणविशिष्टे तावदात्मनि प्रत्यभिज्ञानं ब्रूमः, न निष्कलङ्कात्मस्वरूपमात्रे; तस्य मोक्षावस्थायिनः

**तत्त्वदीपनम्**

संस्कारसहकृतेन्द्रियस्य तत्ताग्राहित्वोपपत्तेरिति द्रष्टव्यम्। विषयासंभवं निरस्यति—**एकस्येति** ॥ तदेतद्देश-कालोपलक्षितस्वरूपं प्रत्यभिज्ञाविषय इत्यर्थः। प्रत्यभिज्ञास्वरूपमाह—**प्रत्यक्षेति** ॥ उक्तां प्रत्यभिज्ञामनात्मन्यभ्युपेत्यात्मनि सा नोपपन्नेत्याह—**न तर्हीति** ॥ 'सोऽहमि'ति प्रत्यभिज्ञाया अनुभवसिद्धत्वात् कथं तदपलापः ? इत्याशङ्क्ते—**कथमिति** ॥ सामग्र्यसंभवात् प्रत्यभिज्ञानुभवो भ्रम इत्याह—**विज्ञानस्वभावस्येत्यादिना** ॥ आत्मनः स्थायित्व आत्मनि प्रत्यभिज्ञाकारणं तावन्न संभवतीति संबन्धः ॥ संस्कारः कारणमिति वदन् प्रष्टव्यः—किमागन्तुकज्ञानसंस्कारः कारणम् ? उत स्वरूपज्ञानसंस्कारः ? नाद्य इत्याह—**स्वयंप्रकाशस्येति** ॥ स्वयंप्रकाशत्वमुपपादयति—**विज्ञानेति** ॥ द्वितीयं प्रत्याह—**स्वरूपस्येति** ॥ प्रमितिकारणाभावमाह—**स्वयंप्रकाशस्येति** ॥ वेदनान्तरवेद्यस्य स्थायित्वमुक्तप्रत्यभिज्ञानात् सिध्यति, आत्मनस्तु स्वरूपज्ञानमेव प्रत्यभिज्ञा, ततः स्थायित्वासिद्धिरित्याशङ्क्याह—**नचेति** ॥ प्रत्यभिज्ञाविषयोऽपि दुर्लभ इत्याह—**सोऽहमिति** ॥ किं ज्ञानव्यतिरिक्तो विषयाकार उपेयते ? उत न ? आद्य आकारभेदेन विषयभेदाद् ज्ञानभेदः। द्वितीये ज्ञानातिरिक्तविषयाकाराभावान्न स्थायित्वविषयिणी प्रत्यभिज्ञेत्यर्थः। प्रत्यभिज्ञानिराकरणमुपसंहरति—**तस्मादिति** ॥

विकल्पासहत्वान्नैतदित्याह—**अत्रोच्यत इति** ॥ किंविशिष्टे प्रत्यभिज्ञाऽसंभवः ? उत केवले ? इति विकल्प्याद्यस्तावदनुपपन्न इत्याह—**अन्तःकरणेति** ॥ द्वितीयं निरस्यति—**न निष्कलङ्केति** ॥ कथं तर्हि तस्य स्थायित्वमिति ? अत्राह—**तस्येति** ॥ "अजो नित्यः शाश्वतः" इत्यादिरागमः **शास्त्र**शब्दार्थः। अन्तःकरणस्यान्वहविनाशित्वात्तद्विशिष्टस्यापि विनाशित्व-

**ऋजुविवरणम्**

**कालद्वयसम्बन्धविषयकमिति** ॥ मा भूदात्मनः स्थायित्वे जन्यज्ञानं प्रत्यभिज्ञारूपम्, स्वरूपचैतन्यमेव प्रत्यभिज्ञेत्याशङ्क्याह—**नच स्वरूपज्ञानमेवेति** ॥ ननु वर्तमानप्रकाशिनोऽपि चैतन्याद् वर्तमानकालापगमे तद्विशिष्टरूपापगमात् तद्विनाशात् संस्कार उत्पद्यते; तत्संस्कारसहितचैतन्यस्य पूर्वापरकालसम्बन्धिस्वरूपावभासकत्वं भविष्यति। अथवा, 'सोऽहमि'ति प्रत्यभिज्ञा तावदस्ति, तथाच सति स्थितस्य कार्यस्य यथासंभवं कारणं कल्पनीयम्, स्थायित्वं च तथैव सिद्ध्यतीत्याशङ्क्य, तत्र विषयाकारोऽभ्युपगम्यते वा ? न वा ? इति विकल्प्य, विषयत्वाभ्युपगमे दूषणमाह—**सोऽहमिति च विषयेति च** ॥ इतरस्मिंश्च पक्षे ज्ञानव्यतिरेकेण विषयाकाराभावे तया स्थायित्वसिद्धिः शङ्कितुमप्यशक्येति सुपरिहरत्वात् नोक्तं दूषणम्। प्रत्यभिज्ञास्वरूपमेव यदा नास्ति, तदा तन्मूलकारणकल्पना दूरनिरस्तेत्याह—**तस्मान्नात्मनि प्रत्यभिज्ञेति** ॥ इदानीमस्य प्रत्यभिज्ञानिराकरणस्य प्रकृतोपयोगं दर्शयति—**इति युक्त्या व्यामोहत्वसिद्धिरिति** ॥ एवंच सादृश्यकल्पनायां प्रमाणविरुद्धत्वं निष्प्रमाणकत्वं च नास्तीति भावः।

**अन्तःकरणविशिष्टे तावदिति** ॥ व्यवहारोपयोगिनः स्थायित्वं वक्तव्यम्, तच्च विशिष्टस्यैव, तेनैव च पूर्वोक्ताविषयत्वं परिहृतम्। विशिष्टविषयत्वकथनस्य पूर्वोक्तसर्वदूषणपरिहारोपयोगित्वात् तदेवादौ क्रियत इति तावत्पदस्यार्थः। तर्हि शुद्धस्य नित्यत्वं न स्यादित्याशङ्क्याह—**तस्येति** ॥ "मोक्षावस्थायिन" इति शास्त्रैकसमधिगम्यत्वे हेतुः। मोक्षेऽवस्थातुं शक्तिर्यस्य स्वरूपमात्रस्य, तत्स्वरूपमात्रं मोक्षावस्थायि; तस्य मोक्षावस्थायिन इति विग्रहः। "मोक्षावस्थायिनः" इति व्यवहारानुपयोगित्वं दर्शयति। ननु आत्मनि प्रत्यभिज्ञानं वक्तव्यम्, तच्चान्तःकरणव्यतिरिक्तमेव, तस्य च संसारावस्थायामप्यवस्थानमस्ति; अनादित्वात्, अतस्तत्रापि प्रत्यभिज्ञानं वक्तुं शक्यत एव; ततस्तद्विहाय किमर्थं विशिष्टे प्रत्यभिज्ञानकथनम् ? तथा "मोक्षा-

## पञ्चपादिकाविवरणम्

शास्त्रैकगम्यत्वात्, संसारावस्थायामन्तःकरणविशिष्टरूपानपायात्, तस्यैव प्रत्यभिज्ञया स्थायित्वाभिधानात्। तत्र चान्तःकरणजन्याहंप्रत्ययाधीनत्वाद्विशिष्टात्माभिव्यक्तेः पूर्वकालविशिष्टात्मानुभवनिमित्ताहंवृत्तिसंस्कारसहितमन्तःकरणमेवेदानींतनात्माभिव्यक्तिनिमित्तं सद् पूर्वापरकालविशिष्टात्मविषयं प्रत्यभिज्ञानमुत्पादयति ॥

ननु पूर्वापराभिज्ञयोरविषयतयाऽभिव्यक्तस्यात्मनः कथं प्रत्यभिज्ञाविषयत्वमिति ? नैष दोषः; यथा संवेदनस्य स्वसंविदितरूपस्यापि कालान्तरे स्वसंस्कारजनितस्मृतिविषयत्वम्, तद्वदिहाप्यभिज्ञायामविषयस्यापि प्रत्यभिज्ञाविषयत्वं न विरुध्यते ॥ ननु स्वयंप्रकाशस्य विषयतैवानुपपन्ना ? नैवम्; देश-कालान्तःकरणविशिष्टतया विषयतोपपत्तेः। यथा धर्मस्यागमैकसमधिगम्यस्यापीदानीं फलदानायोन्मुखीभावादिलक्षणधर्मविशिष्टतया वर्तमानफलोदयलिङ्गादिगम्यत्वम्, तद्वत् ॥

ननु एकस्यैवात्मनः प्रत्यभिज्ञायां कथं कर्तृ-कर्मतया युगपद्विरुद्धरूपद्वयान्वयः ? ननु सर्ववादिनां देहव्यतिरिक्ताद्यनुमानविषयतया कर्तृ-कर्मभावः संप्रतिपन्नः ? तन्न; अनुमानादौ विषयस्य कारकताऽभावादाकारमात्रतया विषयत्वात् तत्र कर्तृतैवात्मनः, न कर्मता, प्रत्यक्षे तु पुनर्विषयस्यापि स्वविषयज्ञानजनकतया कर्मकारकत्वात् प्राप्तैवात्मनो युगपदेकस्यां क्रियायां विरुद्धरूपद्वयापत्तिः इति ॥

## तत्त्वदीपनम्

मिति न प्रत्यभिज्ञाविषयत्वम्, तत्राह—**संसारावस्थायामिति** ॥ नच विशिष्टानपाये सिद्धान्तविरोधः; "तदापीतेः संसारव्यपदेशादि"त्यत्र वेदान्तहृदयवेदिना बादरायणमुनिना सुषुप्त्याद्यवस्थास्वपि सूक्ष्मशरीरस्य सूक्ष्मरूपेणावस्थानाभिधानादित्यर्थः॥ एवं प्रत्यभिज्ञाया विशिष्टविषयत्वमुपपाद्य तस्याः सामग्रीं दर्शयति—**तत्र चेत्यादिना** ॥ **विशिष्टात्मविषयमिति**—पूर्वापरकालोपलक्षितस्वरूपविषयमिति यावत्।

पूर्वानुभवसंस्कारसहितान्तःकरणस्य पूर्वोत्तरकालोपलक्षितात्मप्रत्यभिज्ञाजनकत्वमुक्तम्, तत्रात्मनोऽविषयत्वादन्तःकरणस्य तद्विषयप्रत्यभिज्ञाजनकत्वमनुपपन्नमित्याह—**ननु पूर्वेति** ॥ तत्र वक्तव्यम्—किमभिज्ञाविषयत्वाभावात् तद्भावनाविषयत्वम् ? उत स्वप्रकाशत्वादिति ? तत्राद्यस्तावदयुक्त इत्याह—**नैष इति** ॥ विशिष्टविषयं प्रत्यभिज्ञानम्, तत्र चोभयविधमपि विषयत्वमुपपद्यत इति भावः। "अविषयस्यापी"त्यत्रापिशब्देन वृत्तिरूपाभिज्ञाविषयत्वमस्तीति सूचयति। द्वितीयमुत्थापयति—**ननु स्वयमिति** ॥ किं निरुपाधिकस्याविषयत्वं स्वप्रकाशत्वादिति ब्रवीषि ? उत सोपाधिकस्य ? इति विकल्प्याद्यङ्गीकारेण द्वितीयं दूषयति—**नैवमिति** ॥ स्वरूपेण प्रमाणान्तराविषयत्वेऽपि विशिष्टस्य तद्विषयत्वे दृष्टान्तमाह—**यथेति** ॥ "चोदनालक्षणोऽर्थो धर्मः" इत्यत्रागमैकसमधिगम्यतायाः सिद्धत्वेपि सुखादिलिङ्गेन फलोन्मुखत्वविशिष्टाकारेणादृष्टमनुमीयते यथा, तद्वदत्रापीत्यर्थः।

विधान्तरेण विषयत्वमाक्षिपति—**नन्विति** ॥ कर्तृत्वं क्रियोपसर्जनत्वम्, कर्मत्वं प्राधान्यम्, गुणप्रधानभावस्य भिन्नव्यक्तिनिष्ठत्वान्नैकस्मिन् संभव इत्यर्थः। गुण-प्रधानभावस्य भिन्नव्यक्तिनिष्ठत्वनियमोऽसिद्ध इत्याह—**ननु सर्वेति** ॥ इन्द्रियाद्यतिरेक **आदि**शब्दार्थः। अनुमानविषयत्वं नाम किं कर्मतया जनकत्वम् ? उत तदाकारप्रदत्वम् ? इति विकल्याद्येऽसिद्धिमाह—**तन्नेति** ॥ भविष्यदादेरसत्त्वान्न ज्ञानजनकतया विषयत्वमित्यर्थः। द्वितीये न विरोध इत्याह—**आकारमात्रतयेति** ॥ आकारवत्त्वमात्रेणेत्यर्थः। प्रत्यक्षविषयस्य तु कर्मकारकत्वाद् विरोधो दुर्वार इत्याह—**प्रत्यक्षे त्विति** ॥ तस्मात् कर्तृ-कर्मविरोधान्नात्मनो विषयत्वमित्यर्थः।

## ऋजुविवरणम्

वस्थायिनः शास्त्रैकसमधिगम्यत्वादि"ति चायुक्तं वक्तुमिति, तत्राह—**संसारावस्थायामिति** ॥ अथवा, कथमन्तःकरणविशिष्टे प्रत्यभिज्ञानमुच्यते ? अन्तःकरणापगमे तद्विशिष्टस्वरूपापगमाद् नाभिमतस्थायित्वसिद्धिरित्याशङ्क्याह—**संसारावस्थायामिति** ॥ ननु अन्तःकरणविशिष्टविषयमपि प्रत्यभिज्ञानं कथं घटते, विशिष्टचैतन्यस्याप्यन्यप्रकाश्यत्वाभावेन तद्विषयज्ञानस्य जन्यस्याभावात् तद्विनाशजसंस्काराभावात् ? इदानीन्तनस्वरूपेऽपि प्रमाजनकस्य कारणस्याभावाद् नात्मविषयं प्रत्यभिज्ञानमुपपद्यत इति, तत्राह—**तत्र चान्तःकरणजन्येति** ॥

**ननु पूर्वापराभिज्ञयोरिति** ॥ ज्ञानविषयत्वं नाम ज्ञाननिमित्ताविद्यानिवृत्तिभाक्त्वम् ? प्रकाशातिशययोगित्वं वा ? उभयमप्यात्मनो न संभवति; स्वरूपावरणाभावात्, प्रकाशरूपे प्रकाशातिशयायोगादिति। **प्रत्यभिज्ञाविषयत्वं न विरुध्यत इति** ॥ अयं भावः—विशिष्टविषयं प्रत्यभिज्ञानम्। तत्र चोभयविधमपि विषयत्वमुपपद्यत इति। ननु स्वतो विषयत्वाभावे-

### पञ्चपादिकाविवरणम्

उच्यते अन्तःकरणविशिष्टतयाऽऽत्मनो ज्ञातृत्वम्, पूर्वापरकालविशिष्टतया च ज्ञेयत्वमित्युपाधिभेदादविरोध इति। 'सोऽहमि'ति च प्रत्यभिज्ञायाः स्वानुभवसिद्धत्वाद् यथाकथंचिन्निमित्तं कल्पयितव्यम्, व्यवहाराविसंवादाद् भ्रान्तित्वायोगात्। नच 'सोऽहमि'त्याकारभेदादर्थभेदेन ज्ञानभेदो युक्तः; विज्ञानं क्षणिकमित्याकारभेदेनार्थभेदाद्विज्ञानस्य क्षणिकताऽभावप्रसङ्गात् सत्यम्; विज्ञाने क्षणिकत्वादिधर्मोपरागो विकल्पव्यवहारमात्रम्, न सत्यतोऽस्तीति चेत्? तथा स्थायित्वादिव्यवहाराश्च कालादिधर्मोपाधित्वाद्विज्ञाने विकल्पव्यवहारा इत्यविशेषः। इयांस्तु विशेषः—सति काले स्थायित्वादिविकल्पप्रत्ययाः 'सोऽहमि' त्याद्यनुभवसिद्धा व्यवहाराविसंवादिनोऽर्थक्रियासामर्थ्याश्च दृश्यन्ते, न तथा क्षणिकत्वादिव्यवहारा इति॥

अत्र प्राभाकरा मन्यन्ते—नैवम्प्रत्यभिज्ञायां विषयत्वेनायमात्मा सिद्ध्यति, किंत्वाश्रयत्वेन इति। तदयुक्तम्; पूर्वापरकालविशिष्टस्यात्मनः क्षणमात्रवृत्तिप्रत्यभिज्ञानाश्रयत्वायोगात्तदाश्रयतया स्थायित्वसिद्ध्यभावात्। ननु पूर्वकालसंवेदन-

### तत्त्वदीपनम्

एकस्मिन्नप्युपाधिभेदात् कर्म-कर्तृभावो युक्त इत्याह—**उच्यत इति**॥ **कालविशिष्टतयेति**—तदुपलक्षिततयेत्यर्थः। उपाधिभेदकल्पनया विरोधनिराकरणाद् वरं प्रत्यभिज्ञानङ्गीकरणमित्याशङ्क्याह—**सोऽहमिति**॥ चशब्दः शङ्कानिवृत्त्यर्थः। **यथा कथंचिदिति**—उपाधिसंबन्धं विना ज्ञातृ-ज्ञेयभावासंभवेऽप्युपाधितस्तत्संभव इत्यर्थः। उपाधितो विरोधनिरासे न कुत्रापि कर्तृ-कर्मविरोधः स्यादिति शङ्कायां वाऽऽह—**सोऽहमिति**। यथाऽत्रानन्यथासिद्धं कल्पकम्, न तथेतरत्रेत्यर्थः। ज्वालाप्रत्यभिज्ञावद् भ्रान्तित्वमाशङ्क्याह—**व्यवहारेति**॥ भेदग्राहिप्रमाणविरोधाद् ज्वालाप्रत्यभिज्ञायां भ्रान्तित्वम्, नच तथाऽत्र बाधकमस्तीत्यर्थः॥ आकारभेदाद् ज्ञानभेद इति यदभ्यधायि, तत् प्रतिक्षिपति—**नच सोऽहमिति**॥ किं परमार्थतो ज्ञानस्य क्षणिकत्वाभावं ब्रवीषि? उत व्यवहारतः? इति विकल्प्याद्यमङ्गीकरोति—**सत्यमिति**॥ अङ्गीकृतमंशमाह—**विज्ञान इति**॥ मात्रचोऽर्थमाह—**न सत्यत इति**॥ धर्मस्य धर्मिणो भिन्नत्वादिरूपेणानिरूपणात् वस्तुतो ज्ञानं निर्धर्मकमित्यर्थः॥ नापि द्वितीयः; क्षणिकत्वस्य प्रामाणिकत्वादिति द्रष्टव्यम्। तुल्यमुत्तरमित्याह—**तथेति**॥ जन्यत्वादिकमादिशब्दार्थः॥ "कालादी"त्यत्रादिशब्देनान्तःकरणवृत्तिर्गृह्यते। कालस्य स्थायित्वधर्मित्वात् तदनुवेधाद् ज्ञाने स्थायित्वव्यवहारः। वृत्तेर्जन्यादिधर्मित्वात् तत्संबन्धाद् ज्ञानेऽपि तद्व्यवहारः। वस्तुतस्तु निर्धर्मकत्वमित्यर्थः। किं तर्ह्युभयोरन्तरम्? तत्राह—**इयांस्त्विति**॥ विकल्पप्रत्यये प्रमाणमाह—**सोऽहमिति**॥ अनुभवस्तु तन्मतेऽप्यस्ति, तदर्थमाह—**व्यवहारेति**॥ न केवलं विसंवादाभावः, प्रत्युत संवादश्चेत्याह—**अर्थक्रियेति**॥

आत्मनः प्रत्यभिज्ञाविषयत्वेन स्थायित्वसाधनमाकर्ण्य तदसहमानाः प्राभाकराः प्रत्यवतिष्ठन्त इत्याह—**अत्र प्राभाकरा इति**॥ विषयत्वेऽनात्मत्वापातादित्यर्थः। संविदधीनप्रकाशस्य तत्कर्मतया व्याप्तत्वाद् नाश्रयतया सिद्धिरित्याह—**तदयुक्तमिति**॥ आश्रयतया सिद्धावपि स्थायित्वं दुःसाधमित्याह—**पूर्वेति**॥ ज्ञानस्य क्षणिकत्वात् तदाश्रयत्वेनैकक्षणवर्तिरूपं सिध्येत्, न पूर्वकालसंबन्धि; तस्यानाश्रयत्वात्, ततश्च न स्थायित्वसिद्धिरित्यर्थः। प्रत्यभिज्ञामन्तरेणापि स्थायित्वं सिद्ध्यतीति शङ्कते—**ननु पूर्वकालेति**॥ स्मर्यमाणज्ञानस्य निराश्रयत्वायोगात् तदाश्रयत्वेन तत्कालविशिष्टं रूपं सिध्यति, वर्तमानस्मृत्या-

### ऋजुविवरणम्

ऽन्यविशिष्टतयाऽपि विषयत्वं कथमुपपद्यते? इत्याशङ्क्य दृष्टान्तमाह—**यथा धर्मस्येति**॥

नन्वेवं प्रत्यभिज्ञानस्य विशिष्टविषयत्व परिकल्प्य रूपभेदेन कर्तृ-कर्मविरोधपरिहारकल्पनायां गौरवं स्यात्, ततो वरं प्रत्यभिज्ञैव नास्तीत्युक्तमित्याशङ्क्याह—**सोऽहमिति च प्रत्यभिज्ञाया इति**॥ तर्हि ज्वालादिप्रत्यभिज्ञानवद् भ्रान्तित्वमेवाङ्गीक्रियतामित्याशङ्क्याह—**व्यवहाराविसंवादादिति**॥ ननु भ्रान्तित्वे कारणमुक्तम्, विषयभेदाद् ज्ञानभेदेन भवितव्यम्, विषयाकारानभ्युपगमे नतरां प्रत्यभिज्ञोपपद्यत इति, तत्राह—**नच सोऽहमिति**॥ **आकारभेदादिति**॥

**अत्र प्राभाकराः** इत्यादेरेषोऽर्थः—सर्वज्ञानेष्वाश्रयत्वेनैवात्मनः सिद्धिः, न विषयतया; कर्तृ-कर्मत्वविरोधात्, विषयानुभवव्यतिरेकेणात्मविषयज्ञानसद्भावे प्रमाणाभावात्। एतच्च "प्रमातृ-प्रमिती"त्येतद्व्याख्यानावसरे प्रदर्शितत्वान्नेहोक्तम्। आश्रयैकत्वसिद्धिश्च—'सोऽयं देवदत्तः' इति प्रत्यभिज्ञोत्पत्तौ 'सोऽयमि'ति विषयाकारानुसन्धाने ग्रहीताऽप्याश्रयत्वेनानुसन्धीयते तत्तदभिज्ञायामिवेति भावः। **पूर्वापरकालेति**। एकमेवेदं प्रत्यभिज्ञानम्, तच्च संस्कारसहितसामग्रीजन्यत्वात् पूर्वकालविशिष्टवस्तुग्राहकम्, नतु स्मृतिसहकृतसामग्रीजन्यत्वेन तद्विषयत्वम्; कथंचित् स्मृतिजन्यत्वे स्मृत्या पूर्वकालीना-

## पञ्चपादिकाविवरणम्

मिदानीमनुस्मर्यमाणं स्वाश्रयं तदानीन्तनमात्मानं साधयति, स्मृतिश्च स्वाश्रयतयेदानींतनमात्मानं साधयति, इति कालद्वयविशिष्टात्मसिद्धिरिति ? नैतत् सारम्; स्मृति-पूर्वानुभवौ हि तत्तत्कालमात्मानं साधयतः, अभिज्ञाप्रत्यक्षद्वयवत् एकस्य कालद्वयसम्बन्धः केन सिद्ध्यतीति वक्तव्यम् । पूर्वापरसंविद्द्वयमेव साधयतीति चेत् ? मैवम्; घटादिष्वभिज्ञाद्वयव्यतिरेकेण प्रत्यभिज्ञोपादानात् । किंच न तावत् स्वयमेव संविद्द्वयं साधयति; एकैकस्य कालद्वयवदात्माश्रयत्वाभावात् । नच संभूय पूर्वापरसंविद्द्वयं तद्वन्तमात्मानं साधयति; अन्योन्यस्यान्योन्यसंविद्विशिष्टात्माश्रयत्वाभावात् । अथ संविद्द्वयमेव पूर्वापरसंविद्द्वयाश्रयात्मै-

## तत्त्वदीपनम्

श्रयत्वेन वर्तमानमिति कालद्वयवैशिष्ट्यसिद्धिरित्यर्थः । विकल्पासहत्वान्नैतच्चोद्यमित्याह—**नैतदिति** ॥ कालद्वयविशिष्टयोर्यैदैक्यम्, तत् किं स्मृत्या सिद्ध्यति ? उत पूर्वानुभवेन ? आहो अन्येन ? इति विकल्प्योभयं निरस्यति—**स्मृतीति** । स्मृतेर्वर्तमानात्मसाधनेनोपक्षयात् पूर्वानुभवस्य च तत्कालीनसाधनेनेति न विवक्षितसिद्धिरित्यर्थः । नापि तृतीयः; तादृशस्य प्रत्ययान्तरस्यानिरूपणादित्यभिसन्धिः ॥ किंशब्दस्य प्रश्नार्थतां मत्वा चोदयति—**पूर्वापरेति** ॥ पूर्वानुभव-स्मृती **पूर्वापरसंविच्छ**ब्दार्थः ॥ किं सर्वत्र संविद्द्वयमेव कालद्वयसंबन्धसाधकमुपेयते ? उतात्मनि ? इति विकल्प्याद्यमपसिद्धान्तेन दूषयति—**न घटादिष्विति** ॥ द्वितीयेऽप्येतद्विवेचनीयम्—किं संविद्द्वयमेकैकं साधयति ? उत संभूय ? उत संविदन्तरोत्पादनेन ? इति विकल्प्याद्यं दूषयति—**न तावदिति** ॥ **स्वयमेवेति**—एकैकमित्यर्थः । द्वितीयं दूषयति—**नचेति** ॥ स्मृतिसमये पूर्वानुभवाभावात्तत्समये च स्मृतेरभावान्नान्योन्यसंविद्विशिष्टाश्रयतया स्थायित्वसिद्धिरित्यर्थः । तृतीयमुत्थापयति—**अथेति** ॥ अस्मिन्

## ऋजुविवरणम्

नुभवोपस्थापनेन तदानीन्तनानुभवितुरुपस्थापनात् तज्जन्यज्ञानेऽपि तस्यानुसन्धानं स्यात्, तच्च पूर्वं निरस्तम्—"अयमेव च न्यायः 'प्रत्यभिज्ञानेऽपी'त्यत्र । तथा च सति न प्रत्यभिज्ञाज्ञानेनाश्रयस्थायित्वसिद्धिरिति भावः ॥ ननु एकैकस्यासमर्थत्वेऽपि मिलितयोः साधकत्वं सम्भवति; अन्यत्र तथा दर्शनात्, इति चोदयति—**पूर्वापरसंविदिति** ॥ यद्वाऽनुभवितुरेव स्मर्तृत्वनियमादेकत्वसिद्धिः । अथवा, 'अनुभूतं मये'त्यत्र स्मर्तुरेवानुभवितृत्वप्रतिभासनादेकस्य कालद्वयसम्बन्धः प्रतीयत एव, किं प्रमाणान्वेषणेन ? इति भावः । संविद्द्वितयमपि न साधयति; सहितयोः कालद्वयसम्बन्धिविषयत्वे विद्यमानेऽपि साधकत्वादर्शनादिति परिहरति—**मैवं घटादिष्विति** ॥ यद्वा, स्मर्यमाणस्यैवानुभूयमानत्वेनैकत्वसिद्धावपि प्रत्यभिज्ञोपादानदर्शनादत्रापि तदङ्गीकरणीयमिति भावः । ननु अभिज्ञाद्वयं न साधयति; अयुगपद्भावात्, इहतु युगपदुपस्थितसंविद्द्वितयं साधयति, प्रत्यक्षज्ञानस्य ज्ञानान्तरासन्निधानाद्विषयाधिक्याभावाच्चेति, चेत्-मैवम्, किमेकैकमेवान्यसन्निधानात् साधयति ? मिलितं वा ? नाद्य इत्याह—**किञ्च न तावदिति** । नहि स्मरणसमये स्मृतेरनुभवस्य वाऽऽश्रयाधिक्यं भवति, येन कालद्वयसम्बन्धः सिध्येदिति भावः । न द्वितीय इत्याह—**नापि संभूयेति** ॥ एतदुक्तं भवति—ज्ञानान्तरसन्निधाने ज्ञानान्तरस्याधिकार्थसाधकत्वं भवत्याश्रये विषये वा सत्याधिक्ये, अत एव नोभयम्; स्मरणविशिष्टस्यात्मनोऽनुभवविषयत्वेऽनुभवविशिष्टस्य स्मरणविषयत्वे द्वयोर्वोभयविशिष्टविषयत्व एकस्य कालद्वयसम्बन्धः सिद्ध्येत्, नतु तदस्ति; स्मरणस्य भूतकालवस्तुविषयत्वात्, स्मरणानुभवयोरेकविषयत्वप्रतीतावपि न ताभ्यां कालद्वयसम्बन्धसिद्धिरिति तत्सिद्ध्यर्थं प्रत्यभिज्ञोपादानम्, प्रकृते तु स्मरणस्य वर्तमानाश्रयसापेक्षत्वादनुभवाश्रय एव स्मृतिनियमाद् वर्तमानाश्रयप्रतीतेश्च कालद्वयसंम्बन्धसिद्धिरिति । तर्ह्यत्रापि स्मरणेन वर्तमानाश्रयप्रतीतिः, स्मर्यमाणानुभवेन च स्वाश्रयात्मप्रतीतिरिति नैकस्य कालद्वयसम्बन्धसिद्धिः । ननु 'अनुभूतं मये'त्येकत्वं प्रतीयत इत्युक्तम्; यद्वा, स्मरणानुभवयोरेकाश्रयत्वेन तदेकाश्रयत्वसिद्धिरिति ? सत्यमुक्तम्, तदेव निरूपयितुं न शक्यते—किं स्वयमेव ? अनुपपत्तिसहकृतं वा ? अनुपपत्तिरेव वा ? यदा स्वयमेव, तदा किमेकैकम् ? उत मिलितमिति ? न तावत् प्रथमः कल्प इत्याह—**किञ्च न तावदिति** ॥ न द्वितीय इत्याह—**नापि संभूयेति** ॥ एतदुक्तं भवति—ग्रहणविशिष्टस्य स्मरणविषयत्वे स्मरणविशिष्टस्य वाऽऽत्मनो ग्रहणविषयत्व एकैकेन प्रातिस्विकाश्रयस्य गृहीतत्वात् तदेकस्य ग्रहणाश्रयस्यैव स्मरणविषयत्वात् स्मरणाश्रयस्यैव ग्रहणविषयत्वेनैकविषयत्वाद् विषयस्यैव चाश्रयत्वादाश्रयैकत्वसिद्धिर्नान्यथा, इति विषयत्वनिराकृतिः । अन्यसहितस्यापि न साधनत्वम्; न ह्युत्पन्नज्ञानस्य सामग्र्यन्तरसन्निधानादाश्रयाधिक्यं भवति, विषयाधिक्यं तु दूरतः । नाप्यन्यदेव साधयति; ग्रहण-स्मरणयोराश्रयैकत्वग्रहणपुरःसरत्वान्नियमप्रमाणस्य । पारिशेष्याद्विषयत्वेन जनकत्वपक्षमवलम्बते—**अथ संविद्द्वयमेवेति** ॥ ननु 'अनुभूतं मये'ति स्मर्तुरेवानुभवितृत्वं प्रतीयते,

## ऋजुविवरणम्

तत् कथमाभ्यां स्थायित्वं न सिद्धयतीति युक्त्या तदपह्नवः क्रियते ? इत्याशङ्क्याह—**किं चानुभूतमिति** ॥ यद्वा पूर्वं- माश्रयतया स्थायित्वसिद्धिर्नास्तीति युक्त्याऽभिहितम्, इदानीं विषयत्वप्रतीतिसामर्थ्यादपि नाश्रयत्वसिद्धिरित्याह—**किं चानुभूतमिति** ॥ एतदुक्तं भवति—विशिष्टानुभवस्य स्मर्यमाणत्वाद् विशेषस्यापि प्रतीयमानस्य विषयत्वेनैव प्रतीतिरिति । ननु न विशिष्टविषयं स्मरणम्, किन्तु संवेदनविषयम्, आत्मनः स्वसंवेदनाश्रयतया प्रतीतिरन्यथासिद्धा, इति कथं विशिष्टप्रतीत्या विशेषणस्य विषयत्वं कल्प्यत इति ? तत्राह—**तस्याविद्यमानस्येति** ॥ ननु अविद्यमानस्यापि स्मृतिविषयतया प्रतीयमानस्य स्वाश्रयसाधकत्वसंभवात् कथं विषयत्वेनैव प्रतीतिरात्मनो निश्चीयत इति ? तत्राह—**स्वयं प्रकाशमानं हीति** ॥ कथं स्वयंप्रकाशमानत्वमेव प्रयोजकत्वेनाश्रीयते; ननु प्रकाशमानत्वमेवेति ? तत्राह—**अन्यथा धर्मादीनामिति** ॥

अथवा, मा भूत् स्मरणानुभवयोः साधकत्वम्, अभिज्ञाद्वयेन सिद्धयतीति चोदयति—**पूर्वापरसंविद्द्वयमिति** ॥ अस्यायमभिप्रायः—संविद्द्वयाश्रयस्वरूपमेकमेव प्रतीयते, कालद्वयसंबन्धश्च प्रतीयते, नच तस्यैक्यमपरमस्ति, यत्प्रत्यभिज्ञा- गम्यं स्यात् । **मैवं घटादिष्विति** । घटादिष्वभिज्ञाद्वयेऽप्येकं स्वरूपं प्रतीयते, ऐक्यान्तराभावोऽप्यविशिष्टः; तथाऽपि प्रत्यभिज्ञोपादानदर्शनादत्रापि तदङ्गीकरणीयमिति भावः । ननु ऐक्यद्वयाभावेऽपि घटादावभिज्ञाद्वये प्रतीयमाने कालद्वय- विशेषणसामर्थ्यात् प्रसक्तस्वरूपभेदनिवृत्त्यर्थं प्रत्यभिज्ञोपादानम्; तयोरसामर्थ्यात्, जातौ त्वनेकत्रैकाकारप्रतीतिरेकत्वं- कल्पयति, 'अहमि'त्येकाकारप्रतीतिमात्रेण नात्मैकत्वसिद्धिः, आत्मान्तरेप्यहमाकारस्य विद्यमानत्वेऽप्येकत्वाभावात्, अतश्चैक्या- कारप्रतीतिव्यतिरेकेणास्यां प्रासक्तभेदनिवृत्तिद्वारेण कालद्वयसम्बन्धसिद्धिरेकस्य वक्तव्या । सा चात्र कालद्वयसम्बन्धितयैकता किमाभ्यां साक्षादेव साध्यते ? किं वा संविद्द्वयवत एकत्वप्रतीतिसामर्थ्यात् ? इति वक्तव्यम् । साक्षात्त्वपक्षेऽप्येकैकेन ? उत द्वाभ्यामेव ? इति विकल्प्य द्वितीयपक्षेऽपि संविद्द्वयवतः एकत्वं किमेकैकेन ? उत द्वाभ्यामेव ? इति विकल्पः । न तावत् प्रथमः कल्प इत्याह—**किंचेति** ॥ न द्वितीय इत्याह—**नच संभूयेति** ॥ शेषं नेयम् ॥

अथवा, **पूर्वापरसंविद्द्वयमेवेति** ॥ अयं भावः—प्रत्यभिज्ञावादिनाऽपि विषयप्रत्यभिज्ञाया एकाश्रयाभिज्ञाजन्यत्वं वक्तव्यम्; भिन्नाश्रयाभिज्ञयोः प्रत्यभिज्ञाजनकत्वादर्शनात्, एवंच सति ताभ्यामेव स्थायित्वसिद्धेर्न तद्विषयप्रत्यभिज्ञोपयोग इत्याह—**न घटादिष्वभिज्ञाद्वयेति** ॥ अयं भावः—एकविषयाभिज्ञयोरेव प्रत्यभिज्ञाजनकत्वनियमेऽपि प्रत्यभिज्ञाङ्गीकारादत्रापि तदङ्गीकरणं युक्तमिति । ननु घटादौ नाभिज्ञाद्वयातिरेकेण प्रत्यभिज्ञोपादानं युक्तम्; अभिज्ञाद्वयस्यैव प्रत्यभिज्ञाजनकत्वनियमा- भावात्, देवदत्तविषयाभिज्ञया च सदृशयज्ञदत्तविषयप्रत्यभिज्ञोत्पत्तिदर्शनात्, एकाश्रयाभिज्ञयोरेव प्रत्यभिज्ञाजनकत्वमित्यस्य व्यभिचारादर्शनान्न प्रत्यभिज्ञोपयोग इति । विषयप्रत्यभिज्ञाजनकाभिज्ञयोरेकाश्रयत्वं सत्तया, ज्ञाततया वा प्रत्यभिज्ञावैयर्थ्या- पादकम् ? न तावदाद्यः पक्षः; अतिप्रसङ्गात्, द्वितीयेऽप्याभ्यामेव ज्ञातत्वम् ? उत प्रत्यभिज्ञोत्पादकसामर्थ्येन ? तथा संविद्द्वयं किं साक्षात् कालद्वयसम्बन्धसाधकम् ? उत संविद्द्वयवानेक एवेति साधयति ? अर्थाद्भिन्नकालसंविद्द्वयवत एकत्वे तस्यापि कालद्वयसंबन्धावगाहिप्रत्यभिज्ञया स्थायित्वे पश्चात् तत्सामग्रीनिरूपणसमये तदाश्रयाभिज्ञयोरेव कारणत्वं निश्चीयते; तथा सत्युत्तरकालीनमेकाश्रयज्ञानं प्रत्यभिज्ञागृहीतैकत्वसाधकत्वादनुवादकमेव । प्रत्यभिज्ञाया अनङ्गीकारे पूर्वमेव प्रत्यभिज्ञामनपेक्ष्य ताभ्यामेवैकत्वसिद्धिर्वक्तव्या । सा च न संभवति; यद्वा घटादिषु प्रमाणप्रत्यभिज्ञाया एकविषयाभिज्ञाजन्यत्वम्; नियमज्ञानस्य प्रत्यभिज्ञानिमित्तस्थायित्वसापेक्षत्वात्पूर्वभाविप्रत्यभिज्ञावैयर्थ्यापादकत्वायोगात्, अत्र त्वात्मैकविषयप्रत्यभिज्ञाऽनङ्गीकारे ताभ्यामेवाश्रयैकत्वसिद्धया भवितव्यम्, सा न संभवतीत्याह—**किंच न तावदिति** ॥ संविद्द्वयमेव साधयति ? ज्ञानान्तर- जननेन वा ? प्रथमपक्षेऽप्येकैकमेव कालद्वयसम्बन्धसाधकम् ? उत मिलितमिति ? न तावत् प्रथमः कल्प इत्याह—**किंच न तावदिति** ॥ द्वितीयपक्षे दूषणमाह—**नच संभूयेति** ॥ अत्र विषयत्वेन सिद्धिनिराकरणम्—प्रत्यभिज्ञानङ्गीकारे विषयत्वे- नाप्यभिज्ञयोर्नैकस्यात्मनः कालद्वयसम्बन्धसिद्धिः; किमुत केवलाश्रयत्वपक्षे कालद्वयसंबन्धसिद्धिरिति दर्शयितुम् । यद्वा, ज्ञानेन सिद्धिर्विषयस्यैव, नाश्रयस्य, अत्रापि विषयत्वेन भवितव्यमित्यापाद्य विशिष्टविषयत्वाभावेन कालद्वयसम्बन्धासाधकत्वमुक्तम् । ज्ञानान्तरजनकत्वपक्षमाशङ्कते—**तथेति** ॥

इदानीं **पूर्वापरसंविद्द्वयमेवे**त्यादेरर्थान्तरम्—यथा गोत्वादिजातेरभिज्ञाद्वयमेवैकत्वसाधकम्, एवमभिज्ञाद्वय- मेवाश्रयैकत्वसाधकमित्याह—**पूर्वापरेति** ॥ **घटादिष्विति**; यथा घटादिव्यक्तौ 'अयं घटोऽयं पटः' इत्यभिज्ञानेऽपि प्रत्यभिज्ञाङ्गी- करणम्, तद्वदात्मन्यप्यङ्गीकरणीयमिति भावः । ननु जातिवैषम्यं घटादिज्ञानेषु विद्यते; प्रत्यभिज्ञाने विलक्षणरूपप्रतीतेः, जातौ

### पञ्चपादिका

**अथ अन्ते क्षयदर्शनादादौ क्षयानुमानम्; अतो भिन्नत्वात् सादृश्यकल्पनेति ?**

### पञ्चपादिकाविवरणम्

कत्वविषयसंविदन्तरमुत्पादयति ? सिद्धं तर्हि प्रत्यभिज्ञानमात्मविषयम् । किंच 'अनुभूतं मये'त्याश्रयविशिष्टपूर्वसंविदनुस्मृतेः स्वानुभवसिद्धत्वात् स्मर्यमाणतयैवेदानीं पूर्वानुभूतात्मसिद्धिः, न पूर्वसंवेदनाश्रयतया, तस्याविद्यमानस्येदानीमसाधकत्वात् । स्वयं प्रकाशमानं हि संवेदनमात्माश्रयं साधयति, न स्मृतिविषयतया परप्रकाश्यम्; अन्यथा धर्मादीनामपि परतः सिद्धानां स्वाश्रयात्मसाधकत्वप्रसङ्गात् । तस्मात् सिद्धमात्मनि प्रत्यभिज्ञानमिति ॥

स्यात् तर्ह्यनुमानात् क्षणिकत्वमिति घटादौ साधयति—**अथान्ते क्षयदर्शनादिति** ॥ घटस्य विनाशानन्तरपूर्वक्षण-

### तत्त्वदीपनम्

कल्पे त्वस्मदिष्टसिद्धिरित्याह—**सिद्धमिति** ॥ इतश्चात्मनो विषयत्वमुपेयमित्याह—**किंचेति** ॥ विशिष्टस्मरणानुपपत्त्या न विशिष्टात्मनः स्मर्यमाणत्वम्; संविन्मात्रस्य स्मर्यमाणत्वात्, तदाश्रयत्वेनात्मप्रथासम्भवाच्चेत्याशङ्क्याह—**न पूर्वेति** ॥ पूर्वानुभवस्येदानीमविद्यमानत्वेऽपि प्रकाशमानत्वमात्रेण साधकत्वं स्यात्; यथा बहुनीलाम्बुदानुमिताया वृष्टेर्वर्तमानकालसत्त्वाभावेऽपि कृषीवलप्रवृत्तिहेतुत्वम्, तद्वदित्याशङ्क्याह—**स्वयंप्रकाशमानमिति** ॥ वृष्ट्यादेरविद्यमानस्यापि ज्ञानद्वारा साधकत्वम्, संवेदनं तु स्वयंप्रकाशमानं सद् आश्रयं साधयति । स्वयंप्रकाशमानत्वं च स्वसत्तायाम्, इति नाविद्यमानस्याप्रतीतस्याश्रयसाधकत्वम् । न खल्ववर्तमान-स्मर्यमाणप्रदीपाश्रयत्वेन मन्दिरप्रथा दृष्टेत्यर्थः । प्रकाशमानत्वमात्रेणाश्रयसाधकत्वेऽतिप्रसक्तिमाह—**अन्यथेति** ॥ प्रत्यभिज्ञासमर्थनमुपसंहरति—**तस्मादिति** ॥ कारण-विषयाद्यनुपपत्त्यभावस्तच्छब्दार्थः । प्रत्यभिज्ञाविरोधेन सादृश्यकल्पनासम्भवान्न सादृश्यप्रतिबद्धं संविद्भेदभानम्, ततश्च स्वलक्षणभेदादर्शनाद् न प्रत्यक्षं क्षणिकतां साक्षात्कर्तुं क्षमत इत्यर्थः ॥

क्षणिकत्वस्य प्रत्यक्षत्वे निरस्ते तस्यानुमानिकत्वं वक्तव्यम् । किमिदमुच्यते—क्षयानुमानमिति ? नच—आदौ क्षयानुमानमेव तदनुमानमित्यपि—शङ्क्यम्; संविदामैकरूप्यस्य साधितत्वात्, अन्ते क्षयदर्शनादित्यस्यानुपपत्तेरित्याशङ्क्य तात्पर्यमाह—**स्यात्तर्हीति** ॥ घटादेः क्षणिकतां प्रसाध्य, तद्दृष्टान्तेन संवित्क्षणिकतां साधयामीत्यनुसन्धानेन घटादेः क्षणिकत्वं साध्यत इत्यर्थः । अन्तः-क्षयशब्दयोः पर्यायत्वेन वैयर्थ्यमाशङ्क्याह—**घटस्येति** ॥ यस्मिन् क्षणे विनाशः प्रसिद्धः, तस्मादव्यहित-

### ऋजुविवरणम्

तु न तथा; 'गौरयं गौरयमि'त्येकाकारप्रतीतेः, एकव्यक्तौ त्वेकाकारप्रतीतिर्न जातिनिबन्धना; अतस्तत्राभिज्ञाभ्यामेवैकत्वम्, व्यक्तौ तु प्रत्यभिज्ञयैकत्वम्, आत्मनि तु न जातिवैलक्षण्यमस्ति; 'अहमहमि'ति सर्वज्ञानेषु ग्राहकाकारस्यैकत्वप्रतीतेः । अतश्च न प्रत्यभिज्ञाया उपयोगः ? मैवम्; "अयं गौरयं च गौरि"ति स्वरूपातिरेकेण प्रत्यभिज्ञायते, अत्रापि यदि स्वरूपातिरेकेणाश्रयस्य कालद्वयसंबन्ध आभ्यां सिद्ध्येत्, तदा भवेत् प्रत्यभिज्ञावैयर्थ्यम्, नच तदाभ्यामेकैकाभ्यां समुदिताभ्यां वोपपद्यत इत्याह—**किंच न तावदिति** ॥ शेषं नेयम् ॥

"अथान्ते क्षयदर्शनादि"त्यनेन क्षयानुमानं क्रियते, तदसङ्गतम्; क्षणिकत्वं हि प्रस्तुतम्, तद्विहाय क्षयानुमानात् । तथा प्रकृतत्वात् संवेदने क्षयानुमानमिति प्रतिभाति, तथा सति "क्षयदर्शनादि"त्यसंबन्धः, संवेदनस्यान्ते क्षयदर्शनाभावात्; अथवा "अथान्ते क्षयदर्शनादि"त्युक्तम्, "आदौ क्षयानुमानमि"ति च, तत्र किमिदं क्षयानुमानम् ? कुत्र वा क्षयदर्शनम् ? कुत्र वा क्षयानुमानमिति च न ज्ञायते, तदर्थं विविच्यावतारयति—**स्यात्तर्ह्यनुमानादिति** ॥ अनुमानशब्दप्रयोगस्तु पूर्वं विकल्पितपक्षयोर्मध्ये प्रत्यक्षं दूषितम्, तत्रैव द्वितीयपक्षस्वीकार इति दर्शयितुम्, व्यवहितत्वात् । ननु नायं ग्रन्थः क्षणिकत्वानुमानं गमयति; अत्र ह्यादौ क्षयः साध्यः, अन्ते क्षयदर्शनं हेतुरिति प्रतिभाति; तथा सति व्यधिकरणत्वं स्यात्, "अथान्ते क्षयदर्शनादि"ति सपक्षप्रदर्शनम्, हेत्वन्तरेणैव क्षयानुमानमिति, तथाऽपि न क्षणिकत्वसिद्धिः, बाधितविषयं चानुमानं स्यात्, अन्ते क्षयदर्शनादेवादौ सत्ताप्रतीतेः । नहि पूर्वमपि विनष्टस्य पश्चात् नाशदर्शकनं संभवति । स्थितस्यैव नाशः, नतु नष्टस्य । अन्यत्र क्षयदर्शनमन्यत्र क्षयानुमानमिति च विप्रतिषिद्धम् । अथान्तशब्दो विनाशवाची ? तत् कथमन्ते क्षयानुमानमित्युक्तम्, क्षये क्षयदर्शनादिति पुनरुक्तत्वात् । एवं च क्षयदर्शनमात्रं सपक्षः स्यात्, तथासत्यनुमानं न भवेत्; साध्यसाधनविकल्पत्वप्रसङ्गात् । अथान्तशब्दो मध्यपरत्वेन स्वीक्रियेत, तथाऽपि सपक्षाभाव इत्याशङ्क्य व्याचष्टे—**घटस्य विनाशानन्तरेति** ॥

### पञ्चपादिका

**आदौ सत्तादर्शनादन्तेऽपि सा किं नानुमीयते । क्षयानुभवविरोधादिति चेत् ?**

### पञ्चपादिकाविवरणम्

विशिष्टसत्त्वमन्त इत्युच्यते । तस्य स्वसत्ताक्षणादुत्तरक्षणे विनाशो दृष्टः । तत्रान्त्यक्षणावच्छिन्नघटसत्त्वात् पूर्वं-पूर्वक्षणावच्छिन्नघटसत्त्वान्यादिरित्युच्यन्ते । तान्यपि, स्वसत्ताक्षणादुत्तरक्षणे विनाशव्याप्तानि, घटसत्त्वात्, अन्त्यक्षणावच्छिन्नघटसत्त्ववदित्यनुमानम् । ततश्च सतोऽनन्तरं विनाशात् क्षणिकत्वसिद्धिरिति क्षणिकेष्वैक्यं सादृश्यनिबन्धनमिति ॥

तत्र प्रत्यनुमानमाह—**आदौ सत्तादर्शनादिति** ॥ आदिरिति घटसत्तावच्छेदकाः क्षणा उच्यन्ते । अन्त इति विनाशावच्छेदकत्वेनाभिमताः क्षणाः । तत्रान्त्यक्षणाः सर्वे, घटसत्तया व्याप्ता इति साध्यते, कालत्वात्, सत्तावच्छेदककालवदिति प्रत्यनुमानम् । अभावानुभवविरुद्धमन्ते सत्तानुमानमिति चोदयति—**क्षयानुभवेति** ॥ तर्ह्यन्त्यक्षणात् पूर्वक्षणावच्छिन्न-

### तत्त्वदीपनम्

पूर्वक्षणावच्छिन्नं यत् सत्त्वं तदन्तशब्देन गृह्यते । तस्य सत्ताक्षणानामन्तिमशब्दावाच्यत्वं च घटत इत्यपि द्रष्टव्यम् ॥ अन्तशब्देन सत्ताक्षणस्य विवक्षायां तस्मिन् क्षयदर्शनादित्युक्तमयुक्तम्, तत्राह—**तस्येति** ॥ सत्ताक्षणधर्मिणी सत्तावच्छेदकक्षणादव्यवहितोत्तरकाले विनाशदर्शनादित्यर्थः । स्वसत्ताक्षणादुत्तरणे विनाशदर्शनादित्यभिधाय, "आदौ क्षयानुमानादि"ति वदता मन्तिमक्षणस्यैवादिशब्देनोपात्तत्वमिति शङ्का स्यात्, नच तथोपपद्यते; विरोधादित्याङ्क्याह—**तत्रेति** ॥ भवतु तेषामादिक्षणत्वम्, तथाऽपि तत्र क्षयानुमानं व्याहतमित्याशङ्क्यानुमानमाह—**तान्यपीति** ॥ विनाशव्याप्तानीत्युक्ते सिद्धसाध्यता; यदा कदाचिद्विनाशव्याप्त्युपगमात्, तत्राह—**उत्तरेति** ॥ अत्राव्यवहितेति विशेषणं द्रष्टव्यम् । यस्मात्कस्माच्चिदुत्तरक्षणे विनाशव्याप्त्या सिद्धसाध्यत्वं निराकर्तुमाह—**स्वसत्तेति** ॥ पटसत्ताक्षणं व्यावर्तयति—**घटेति** ॥ तथाऽपि कथं क्षणिकत्वसिद्धिः ? इत्याशङ्क्याह—**ततश्चेति** ॥ स्वसत्ताक्षणादव्यवहितोत्तरक्षणविनाशित्वे क्षणिकत्वसिद्धिरित्यर्थः ॥ भिन्नत्वात् सादृश्यकल्पनमिति कथमुक्तम् ? भिन्नेऽपि घट-पटादौ सादृश्यानुपलब्धेरित्याशङ्क्य, भिन्नत्वे सत्यैक्येन प्रतीयमानत्वं सादृश्यकल्पकमित्याह—**इति क्षणिकेष्विति** ॥

अन्ते सत्त्वानुमानं नानिष्टमित्याशङ्क्याह—**तत्रेति** ॥ आद्यन्तशब्दार्थस्य पूर्वत्र व्याख्यातस्याङ्गीकरणे कथं तत्सत्त्वानुमानस्य प्रत्यनुमानत्वम् ? इत्याशङ्क्यमादिशब्दार्थः प्राक्तन एव, अन्तशब्दार्थस्त्वन्य इत्याह—**आदिरित्यादिना** ॥ अक्षरार्थमभिधाय समुदायार्थमाह—**तत्रेति** ॥ "क्षयानुभवविरोधादि"त्यनेन पूर्वोक्ते हेतुरुपन्यस्यति इति प्रतिभाति, नच तदुपपद्यते; वैयधिकरण्यादित्याशङ्क्याह—**अभावेति** ॥ सतोऽविनाशदर्शनात् कथं तद्विरुद्धं क्षयानुमानम् ? इत्याशङ्क्य तात्पर्यमाह—**तर्ह्यन्त्येति** ॥

### ऋजुविवरणम्

लक्षणयेति भावः । अथवाऽन्तशब्दः स्वरूपवाची विवक्षयाऽन्त्यक्षणावच्छिन्नं सत्त्वमाह । अथवाऽग्रवाचित्वेनैवान्तशब्दो व्याख्यातः । "क्षयदर्शनादि"ति नाशित्वमात्रं प्रतीयते, तथा सति क्षणिकत्वे दृष्टान्तत्वं न स्यात्; साध्यविकलत्वात्, अतो व्याचष्टे—**तस्य स्वसत्ताक्षणादिति** ॥ "आदौ क्षयानुमानमिति कथमुक्तम् ? उत्पन्नस्य च स्थितस्य च नाशः; नादावेव नाशः संभवति । बाधितविषयत्वं चोक्तम् । तथाऽभिमतसाध्यासिद्धिः । आदौ क्षयेऽप्यवच्छिन्नत्वेन मध्य आर्थिकस्य क्षणिकत्वासिद्धेः, इत्याशङ्क्य व्याचष्टे—**तत्रान्त्यक्षणावच्छिन्नेति** ॥ तत्रान्त्यक्षणात्पूर्वपूर्वक्षणावच्छिन्नसत्त्वानां क्षयानुमानेऽपि नाभिमतसाध्यसिद्धिः; सिद्धसाध्यता च । तथा हेत्वभावाच्च नानुमानमित्याशङ्क्याह—**तान्यपि स्वसत्ताक्षणादिति** ॥ "अतो भिन्नत्वात्-सादृश्यकल्पने"ति कथमुक्तम् ? भिन्नत्वस्य सादृश्यगमकत्वाभावात्, भिन्नघट-पटादौ सादृश्यादर्शनादित्याशङ्क्य व्याचष्टे—**क्षणिकेष्वैक्यमिति** ॥

"आदौ सत्ते"ति किमर्थम् ? न ह्यनेन पूर्ववादिनः किञ्चिद्विरुद्धमभिहितम्, अन्ते सत्त्वस्य संप्रतिपन्नत्वादनुमानानुपपत्तेरित्याशङ्क्याह—**तत्र प्रत्यनुमानमिति** ॥ तत्राद्यन्तशब्दयोरर्थः पूर्वग्रन्थोक्त एव प्रतीयेत; सन्निहितत्वात्, तथा सति न तत्प्रत्यनुमानम् । नह्यन्ते सत्ता पूर्वानुमानविरोधिनी, अनभ्युपगता वा; अतः सिद्धसाध्यतेत्युक्तम् । अथ प्रत्यनुमानसिद्ध्यर्थं सत्त्वेन प्रतीयमानाः क्षणादिशब्दभाजः, "अन्तः" इति विनाशो प्रसिद्धत्वात् तदवस्थो घटो विवक्ष्यते, तथा सत्युत्तरक्षणावच्छिन्नघटस्य पक्षीकरणादाश्रयासिद्धत्वमित्याशङ्क्य व्याचष्टे—**आदिरिति** ॥ **घटसत्तावच्छेदका इति** अन्तशब्देन कालविवक्षां कृत्वा; पूर्वं वस्तुविवक्षायामुभयविकलत्वप्रसङ्गात् तत्रापि कालविवक्षेति मन्तव्यम् । एवमपि हेत्वभावादनुमानासंभव इत्याशङ्क्यानुमानस्वरूपं दर्शयति—**तत्रान्त्यक्षणा इति** ॥

## पञ्चपादिका

**इहापि तद्रूपसत्त्वादनुभवविरोधः; न ह्युभयोरनुभवयोः कश्चिद् विशेषः ॥**

**अथ मन्येत—योऽसौ स्थिरत्वेनाभिमतोऽहमुल्लेखः, स किं कांचिदर्थक्रियां कुर्याद्वा ? न वा ? यदि न कुर्यात्, असत्लक्षणप्राप्तेर्न परमार्थवस्तु; अथ कुर्यात्, न तर्हि स्थायी; स्थायिनोऽर्थक्रियाऽयोगात् । कथमयोगः ? इत्थमयोगः—स तां कुर्वन् क्रमेण कुर्यात् ? यौगपद्येन वा ? न तावत् क्रमेण;**

## पञ्चपादिकाविवरणम्

घटसत्त्वानामनन्तरक्षयानुमानमपि प्रत्यभिज्ञाविरुद्धमिति परिहरति—**इहापीति** ॥ क्षयानुभवोऽभिज्ञाऽनुमानं बाधते, न प्रत्यभिज्ञा अनुमानात् दुर्बलेति ? नेत्याह—**नह्युभयोरिति** ॥

सर्वे भावाः, क्षणिकाः, अर्थक्रियाकारित्वात्, यदक्षणिकं न तदर्थक्रियाकारि, यथा शशविषाणमित्यनुमानान्तरं दर्शयितुं स्थायिनोऽर्थक्रियानुपपत्तिमाह—**अथ मन्येत योऽसौ स्थिरत्वेनाभिमत इत्यादिना** ॥ ननु स्थिरस्यैव निमित्तसंयोगादन्यथाभूतस्य क्रियापूर्वकं कार्यमुत्पादयितुं सामर्थ्यम्, न क्षणिकस्येति सिद्धान्ती चोदयति—**कथमयोग इति** ॥ **इत्थमयोग** इत्यादिः परिहारः । **क्रमेणेति**; अनेकानि सातत्येन कुर्यादित्यर्थः । एकं वाऽनेकं वा कार्यं सकृत् कृत्वोपरमत इत्याह—**यौगपद्येनेति** ॥ क्रमपक्षं दूषयति—**न तावदिति** ॥ अनेकानि कार्याणि कर्तुं समर्थश्चेत्, पुष्कलकारणस्य भावादेकस्यानेककार्य-

## तत्त्वदीपनम्

क्षयानुभवः सत्तानुमानं यथा बाधते, तथा प्रत्यभिज्ञानुभवस्य क्षणिकत्वानुमानबाधकत्वमुक्तम्, तत्र विशेषं शङ्कते—**क्षयेति** ॥ अभिज्ञाया एकदेश-कालावच्छिन्नार्थबोधकतया झटित्युत्पत्तेः, अनुमानस्य च लिङ्गदर्शन-व्याप्तिस्मरणादिद्वारा विलम्बेनोत्पत्तेरभिज्ञाया अनुमानबाधकत्वं घटते, प्रत्यभिज्ञायास्तु तदेतद्देश-कालप्रतिपत्तिपूर्वकमुत्पद्यमानत्वात् तदनुमानस्य चाविलम्बितोत्पत्तिकत्वान्न बाध्य-बाधकतेत्यर्थः ॥ प्रत्यभिज्ञाया बाध्यत्वमनुमानस्य बाधकत्वं च ज्वालाप्रत्यभिज्ञायां दृष्टम्, तथाच प्रकृतेऽपि तथात्वमाशङ्क्य न प्रत्यभिज्ञाया बाधकत्वमित्याशयेनाह—**अनुमानादिति** ॥ क्षयानुभवस्य च धर्मि-प्रतियोगि-प्रतिपत्तिसापेक्षतया विलम्बितोत्पत्तिकत्वस्याविशेषादिति परिहरति—**नेत्याहेति** ॥ ज्वालाप्रत्यभिज्ञावत् प्रत्यभिज्ञाबाध्यत्वशङ्कायामभिज्ञात्वाविशेषाद् 'द्वौ चन्द्रावि'ति प्रत्ययवदितरस्य बाधकत्वशङ्काया दुर्वारत्वमिति द्रष्टव्यम् ॥

"अथ मन्येत" इत्यादौ स्थायिनोऽर्थक्रियाकारित्वं निराकारि, न चैतावता क्षणिकता सिध्येत्, अर्थक्रियाकारितायाः क्षणिकताव्याप्त्यभावादित्याशङ्क्याह—**सर्व इति** ॥ **अर्थक्रियानुपपत्तिमाहेति**—व्यतिरेकव्याप्तिमाहेत्यर्थः ॥ "कथमयोगः" इत्यत्र कथंशब्दस्याक्षेपार्थत्वमाह—**ननु स्थिरस्येत्यादिना** ॥ त्वत्पक्षेऽर्थक्रिया न भवति चेत्याह—**न क्षणिकस्येति** ॥ क्षणिकस्य सहकारिसम्बन्धोत्तरकालं क्रिया, ततः कार्यमित्यनेकक्षणस्थायित्वात् परिहारस्याभासत्वमाशङ्क्याह—**इत्थमयोग इति** ॥ अङ्कुरोत्पत्त्यव्यवहितपूर्वक्षणस्य समर्थक्षणत्वात् तस्य चानपेक्षत्वाद् विपर्ययपर्यवसायित्वमित्यर्थः । "तामि"त्येकवचनप्रयोगादर्थक्रियाया एकत्वम्, ततश्च क्रम-यौगपद्यविकल्पासंभव इत्याशङ्क्याह—**क्रमेणेत्यादिना** । जात्युपाधावेकवचनप्रयोग इत्यर्थः ॥ विच्छिद्यकरणशङ्कां व्यावर्तयति—**सातत्येनेति** ॥ सकृत् कृत्वा पुनः सकृत् करोतीति यौगपद्यशब्देनोच्यत इति शङ्का स्यात्, तथाचासत्त्वप्रसञ्जनं न स्यादित्याशङ्क्याह—**एकमिति** ॥ यथैकं कार्यं सकृत्कृत्वोपरमते, तथाऽनेकमपीत्यर्थः ॥ कालान्तरता व्यर्था; क्रियाजननसामर्थ्यस्य पूर्वस्मिन् क्षणेऽभावात् कथं तदा कार्यकरणम् ? इत्याशङ्क्य, सामर्थ्यासामर्थ्यलक्षणविरुद्धधर्मस्यैकस्मिन्नसंभवात् समयान्तरभाव्यर्थक्रियासामर्थ्यमुपेयम्, ततश्चातिप्रसक्तिरित्याह—**अनेका-**

## ऋजुविवरणम्

प्रत्यक्षानुमानयोः क्षणिकत्वसाधकत्वं निरस्तम् । किमर्थमिदानीं स्थायिनोऽर्थक्रियानिराकरणम् ? नहि स्थायिनोऽर्थक्रियानिराकरणेनाभिमतं क्षणिकत्वं सिध्यति । स्थायिनोऽर्थक्रियानिराकरणेऽर्थक्रियैव न भवेत् । ननु अर्थक्रियया स्थायित्वनिराकरणं न सिध्यति; अर्थक्रियायाः क्षणिकत्वेन व्याप्त्यभावात्, अतोऽर्थक्रियाकारित्वादेव न स्थायीति कथमुक्तम् ? इत्याशङ्क्याभिप्रायमाह—**सर्वे भावा इति** ॥ ननु अर्थक्रिया नामैका प्रतीयते, कथं तत्र क्रम-यौगपद्यविकल्पः ? तथा क्रमशब्दप्रयोग उभयत्र दृश्यते, एककर्तृके निरन्तरोत्पद्यमाने, व्यवधानेनोत्पद्यमानेऽपि । तत्र व्यवधानपक्षस्योत्तरत्र दूष्यमाणत्वादविशेषेण क्रममात्रविवक्षायां तेन पौनरुक्त्यं स्यात्, तदर्थमाह—**क्रमेणेति** ॥ **नानेकानीति** ॥ ननु कथं विशेषाभावेन युगपत् सर्वकार्यकरत्वमापाद्यते ? सामग्रीसापेक्षत्वेन विशिष्य वक्तुं शक्यत्वात्, एकस्मिन् क्षण एकस्यानेककार्यकरत्वाभावाच्चेत्या-

### पञ्चपादिका

पूर्वोत्तरकालयोस्तस्य विशेषाभावेऽपि, किमिति पूर्वस्मिन्नेव काल उत्तरकालभाविनीमपि न कुर्यात्? नापि यौगपद्येन; यावज्जीवकृत्यमेकस्मिन्नेव क्षणे कृतम्, इत्युत्तरकाले तद्विरहादसल्लक्षणप्राप्तेः। अतोऽर्थक्रियाकारित्वादेव न स्थायी। तेन प्रतिक्षणं भिन्नेष्वहमुल्लेखेषु तद्बुद्धिः सादृश्यनिबन्धना—इति।

उच्यते; अथ केयमर्थक्रिया, यदभावादसल्लक्षणत्वप्राप्तिः? स्वविषयज्ञानजननम्? प्राप्तं तर्हि सर्वासामेव संविदां स्वसंविदितरूपत्वेन स्वविषयज्ञानाजननादसल्लक्षणत्वम्। न सन्तानान्तरेऽपि तज्जननम्; अनैन्द्रियकत्वात्,

### पञ्चपादिकाविवरणम्

दर्शनाच्च सकृदेव कुर्यादिति भावः। द्वितीयं पक्षं दूषयति—**नापि यौगपद्येनेति**॥ अर्थक्रियाकारित्वलक्षणत्वात् सत्त्वस्येति भावः। अतः सकृत्कर्तुः कालान्तरे पुनः कर्तृत्वे निमित्ताभावादकर्तृत्वे वाऽसत्त्वात् सकृदेव सत्त्वमित्युपसंहरति—**अतोऽर्थक्रियाकारित्वादेवेति**॥

सिद्धान्ती तु—स्थायिनः सकृदेव कार्यं कृत्वा तूष्णीम्भूतस्यापि नासत्त्वप्राप्तिः, सत्त्वस्यार्थक्रियाकारित्वलक्षणत्वाभावात्, इत्युपपादयति—**अथ केयमित्यादिना**॥ तत्राह—**स्वविषयज्ञानजननमिति**॥ युक्तं बाह्यार्थानामेतादृशं सत्त्वम्, विज्ञानानां तु स्वविषयविज्ञानाजनकत्वान्न सत्त्वलक्षणमिति दूषयति—**प्राप्तं तर्हि सर्वासामिति**॥ ननु एकसन्तानज्ञानानामन्योन्य-विषय-विषयिताऽभावेऽपि पुरुषान्तरज्ञानस्य विषयतया पुरुषान्तरज्ञानं जनकमित्यर्थक्रियालाभः संविदामिति? नेत्याह—**न सन्तानान्तरेऽपीति**॥ पुरुषान्तरज्ञानं प्रति पुरुषान्तरज्ञानस्याप्रत्यक्षत्वात्, अनुमेयत्वादिति भावः। अनुमानज्ञानविषयत्वात्

### तत्त्वदीपनम्

**नीति**॥ एकस्य युगपद् बहुकार्यजनकत्वादर्शनात् कथमेकस्मिन् क्षणे बहुकार्यकरत्वम्? इत्यपि न शङ्क्यमित्याह—**एकस्येति**॥ धूम-ज्वालाद्यनेककारित्वस्यैकस्मिन् वह्नौ युगपदुपलम्भादित्यर्थः। अर्थक्रियाऽभावेऽपि सत्त्वं किं न स्यात्? इत्याशङ्क्याह—**अर्थक्रियेति**॥ सर्वस्य युगपत्करणेऽपि पुनः करणं किं न स्यात्? इत्याशङ्क्याह—**अतः सकृतिति**॥ अनिष्पन्नं हि निष्पादनीयम् यावज्जीवकृत्यस्य चैकस्मिन् क्षणे कृतत्वान्न पुनः करणमित्यर्थः—**इत्युपसंहरतीति**॥ इत्यभिसन्धायोपसंहरतीत्यर्थः।

स्थायिवादिमतेऽप्यर्थक्रियायाः प्रतिपन्नत्वात् कथं तन्निराकरणम्? इत्याशङ्क्य तात्पर्यमाह—**सिद्धान्तीति**॥ किं स्वविषयज्ञानजननमर्थक्रिया? उत क्षणान्तरोत्पादः? इति किंशब्दार्थः। आद्यमुत्थापयति—**तत्राहेति**॥ संविदो नार्थक्रिया-लक्षणनिरसनं कस्मात्? इत्याशङ्क्याह—**युक्तमिति**॥ किं स्वसन्ताने ज्ञानजननम्? उत संतानान्तरे? नाद्यः; प्रकाशत्वेन स्वविषयज्ञानजनकत्वासंभवादित्यर्थः। द्वितीयमनुवदति—**नन्वेकेति**॥ नच विषयत्वे स्वप्रकाशत्वभङ्गः; स्वज्ञानं स्वप्रकाशमित्यभ्युपगमादित्यर्थः। सन्तानान्तरशब्देन किं संसारिसन्तानो विवक्षितः? उतेतरः? इति विकल्प्याद्यमयुक्तमित्याह—**नेत्याहेति**॥ तत्रापि किं स्वविषयप्रत्यक्षज्ञानजनकत्वम्? उतानुमानजनकत्वम्? इति विकल्प्याद्यनिरासार्थमुक्तम्—"अनैन्द्रियकत्वादि"ति, तदनुपपन्नम्; किं स्वात्मानं प्रत्यनैन्द्रियकत्वम्? उत परं प्रति? नाद्यः, असिद्धेः; न द्वितीयः, पुरुषान्तरस्य पुरुषान्तरज्ञानव्यवहारभङ्गप्रसङ्गादित्याशङ्क्याह—**पुरुषान्तरेति**॥ अथवा, अनैन्द्रियकत्वमसिद्धम्, स्वज्ञानस्यापरोक्षत्वात्, इत्याशङ्क्याह—**पुरुषान्तरज्ञानस्येति**॥ **टीकायां** पुरुषान्तरस्येति शेषः। कथं तर्हि तत्प्रथा? इत्याशङ्क्य चेष्टादिलिङ्गेनेत्याह—**अनुमेयत्वादिति**॥ द्वितीयमनुवदति—**अनुमानज्ञानेति**॥ अनुमानेऽप्यर्थजन्यत्वाभावं वदता प्रत्यक्षस्याप्यर्थजन्यत्वं

### ऋजुविवरणम्

शङ्क्याह—**अनेकानि कार्याणीति**॥ कथमुत्तरकाले तत्क्रियाभावेनासत्त्वमापादितम्? इत्याशङ्क्याभिप्रायमाह—**अर्थक्रियाकारीति**॥ ननु अर्थक्रियां कृत्वोपरतस्यापि कारणान्तरवशात् पुनःकर्तृत्वसंभवात् कथं न स्थायित्वम्? इत्याशङ्क्यावतारयति—सकृत्कर्तुः कालान्तर इति॥

"केयमर्थक्रियेत्यादिनाऽर्थक्रियानिराकरणं निष्प्रयोजनं, यस्मात्तेनापादितं क्षणिकत्वं निराकर्तव्यम्, नान्यत्; स्वेनाप्यङ्गीकृतत्वाच्च नार्थक्रियानिराकरणं युक्तमित्याशङ्क्याभिप्रायमाह—**सिद्धान्ती तु स्थायिन इति**॥ "अनैन्द्रियकत्वादि"-त्युक्तम्; तत्र कस्यानैन्द्रियकत्वमिति न ज्ञायते, असिद्धयादि च भवेत्, तदर्थं व्याचष्टे—**पुरुषान्तरेति**॥ ननु ऐन्द्रियकत्वाभावे पुरुषान्तरज्ञानं प्रतीयते, तत् कथम्? इत्याशङ्क्याभिप्रायमाह—**अनुमेयत्वादिति**॥ "अनुमानेऽपी"ति कथमुक्तम्? प्रत्यक्षेऽप्यर्थजन्यत्वाभावप्रसङ्गाद्, अपेः समुच्चयार्थत्वात्, "अर्थजन्यत्वाभावादि"ति चायुक्तम्; असिद्धत्वादित्याशङ्क्याभिप्रायमाह—

### पञ्चपादिका

**अनुमानेऽप्यर्थजन्यत्वाभावात् । न सार्वज्ञेऽपि साक्षात् स्वसंविदं जनयति; संसारसंविदेकरूपत्वप्रसङ्गात्,**

### पञ्चपादिकाविवरणम्

तर्हि सन्तानान्तरज्ञानस्य सन्तानान्तरज्ञानं जनकमिति नेत्याह—**अनुमानेऽपीति** ॥ प्रत्यक्षमेवार्थजन्यम्, नानुमानादीति ते मतमित्यर्थः। ननु सर्वं संवेदनजातं सर्वज्ञज्ञानस्य विषयतया जनकं भवति, तस्य सर्वविषयप्रत्यक्षत्वादित्यत आह—**न सार्वज्ञेऽपीति** ॥ **साक्षादिति** ॥ सह विज्ञानोपप्लवैरव्यधानेन सर्वज्ञज्ञानोपरक्ततया; तदभेदेनेत्यर्थः। तत्र हेतुः—**संसारसंविदेकरूपत्वप्रसङ्गादिति** ॥ संविद्विषययोरभेदोपगमात् सांसारिकज्ञानैः सोपप्लवैः सर्वज्ञज्ञानं दूषितं स्यादिति भावः। ननु सर्वोपप्लवोपरक्तमपि तत्त्वज्ञानेन बाधितत्वान्न दोषमावहति, न तावत्तदेव ज्ञानं सोपप्लवं बाधते; प्राप्ति-बाधयोरेकस्मिन् क्षणेऽनुपपत्तेः

### तत्त्वदीपनम्

निरस्तं स्यात्, अपिशब्दप्रयोगात्; असिद्धिश्च हेतोरित्याशङ्क्याह—**प्रत्यक्षमिति** ॥ अपिशब्देनागमज्ञानादेरर्थजन्यत्वं निरस्तम्। न चासिद्धता; अवर्तमानस्य जनकताऽसंभवादित्यर्थः। नचात्र युक्तिः प्रष्टव्या, त्वयाऽङ्गीकृतत्वादित्याह—**इति ते मतमिति** ॥ द्वितीयमुत्थापयति—**नन्विति** ॥ पुरुषान्तरे पुरुषान्तरज्ञानस्य स्वविषयप्रत्यक्षानुमानजनकत्वस्य निरस्तत्वात् कथं कल्पान्तरोत्थितिः ? तत्राह—**तस्येति** ॥ ईश्वरस्यास्मद्विलक्षणत्वात् सर्वमपरोक्षं भवतीत्यर्थः। सर्वो विषयः प्रत्यक्षोऽस्येति सर्वविषयप्रत्यक्षम्, तस्य भावस्तत्त्वम्, तस्मादित्यक्षरार्थः। सर्वस्येश्वरप्रत्यक्षत्वेन साक्षात् संविज्जनकत्वस्य सिद्धत्वात् 'साक्षादि'ति विशेषणं व्यर्थमित्याशङ्क्याह—**साक्षादिति** ॥ किमुपप्लुतं ज्ञानं तस्य विषयः। उत ज्ञानमात्रम् ? इति विकल्प्याद्यनिरासार्थं विशेषणोपादानं युक्तमित्यर्थः। अर्थान्तरमाह—**अव्यवधानेनेति** ॥ तदेव स्पष्टयति—**सर्वज्ञेति** ॥ उपरक्तत्वं संबन्धमात्रमिति निराकर्तुमाह—**तदभेदेनेति** ॥ नच—अस्मिन् पक्षे विशेषणं व्यर्थमिति—शङ्क्यम्; किमनयोरभेदः ? उत भेदः ? इति विकल्प्याद्यनिरासार्थत्वादित्यर्थः। संविदेकत्वं संवित्समानस्वभावत्वम्, तस्य चेष्टत्वाद्धेतोराभासत्वमित्याशङ्क्याह—**तत्रेति** ॥ हेतुत्वं व्यनक्ति—**संविद्विषययोरिति** ॥ **एकरूपत्व** अभिन्नत्वम्. ततश्च हेतुत्वं युक्तमित्यर्थः। **दूषितं स्यादिति** ॥ ततश्च हेयं स्यादित्यर्थः ॥ यथा ब्रह्म स्वाभिन्नान् जीवान् पश्यदपि न तद्दोषेण दूष्यते; तस्य बाधितत्वात्, तद्वदेवात्रापीति चोदयति—**ननु सर्वेति** ॥ यस्मिन् ज्ञान उपप्लवः, तत् किं तं बाधते ? आहो ज्ञानान्तरमिति विकल्प्याद्यं दूषयति—**न तावदिति** ॥ यस्मिन् क्षण उपप्लवप्रसक्तिः, तस्मिन् क्षणे बाधः ? उत क्षणान्तरे ? नाद्य इत्याह—**प्राप्तीति** ॥ प्राप्तस्य बाधो वक्तव्यः,

### ऋजुविवरणम्

**प्रत्यक्षमेवेति** ॥ "न सार्वज्ञेऽपी"त्यनेन कथं स्वविषयज्ञानजनकत्वमाशङ्क्य निराक्रियते ? स्वविषयप्रत्यक्षज्ञानजनकत्वस्य निराकृतत्वात्, अनुमानपक्षे च विषयस्य जनकत्वाभावस्योक्तत्वात्, अतो न पुनराशङ्का युक्ता। तथा "सार्वज्ञे" इति तद्धितेन किं निर्दिश्यते ? इति न ज्ञायते, तदर्थं सोपपादनमवतारयति—**ननु सर्वं संवेदनजातमिति** ॥ "साक्षादि"त्यनेन यदि ज्ञानस्यैवाव्यवधानेन जनकत्वमुच्यते, तर्हि संसारसंविदेकरूपत्वप्रसङ्गलक्षणो हेतुरसिद्धः स्यात्; संवेदनस्यैव जनकत्वात्, संसारसंविदेकरूपत्वेन च सर्वज्ञज्ञानस्योपप्लुतत्वस्य विवक्षितत्वादित्याशङ्क्याह—**साक्षादिति** ॥ **सह विज्ञानोपप्लवैरिति** ॥ यद्वा, साक्षादिति व्यर्थम्; प्रत्यक्षज्ञानजनकत्वस्य विवक्षितत्वात्, तत्सामर्थ्यादेव साक्षात्त्वस्य लब्धत्वात्, प्रत्यक्षे विषयस्य साक्षादेव व्यापारादित्याशङ्क्य व्याचष्टे—**साक्षादिति** ॥ **सहेति** ॥ तथापीन्द्रियाणां विषयसाहित्येन जनकत्ववद् एतदिति शङ्का स्यात्; तदर्थमाह—**अव्यवधानेनेति** ॥ इन्द्रियाणां विषयव्यवधानादिति भावः। यद्वा "साक्षाद"त्यस्य व्याख्या—**अव्यवधानेनेति** ॥ तथापि सजातीयज्ञानस्योत्तरज्ञानजनकत्वेऽपि नोत्तरज्ञानस्य पूर्वज्ञानाकारत्वम्, तद्वदिति शङ्का स्यात्; यद्वा ज्ञानजनकत्वमव्यवधानेन विषयाणां सर्वैरभ्युपगतम्, नतु ज्ञानस्य तदाकारत्वम्, तद्वदत्रापीति शङ्कानिवृत्त्यर्थमाह—**सर्वज्ञज्ञानोपरक्ततयेति** ॥ तथाऽपि भिन्नयोरुपराग इति शङ्कानिवृत्त्यर्थमाह—**तदभेदेनेति** ॥ यद्वा अव्यवधानेन तदुपरक्तत्वं हेतुर्भिन्नयोरुपरागेऽपि, न तदाकारत्वम्, तदर्थम्—**तदभेदेनेति** ॥ यद्वा सह विज्ञानोपप्लवैर्जनकत्वेऽपि तावन्मात्रेण तस्य दूषणमापादयितुं न शक्यते, तदर्थमाह—**तदभेदेनेति** ॥ अभेदेन तावन्मात्रत्वे नाभिमतदूषणं भवेत्, तदर्थमाह—**सर्वज्ञज्ञानोपरक्ततयेति** ॥ यद्वा सह विज्ञानोपप्लवैः सर्वज्ञज्ञानेनाभेदोऽपि कथं घटते ? इत्याशङ्क्याह—**सर्वज्ञज्ञानोपरक्ततयेति** ॥ ननु उपरागोऽपि देशादिभेदात् कथं घटते ? इत्याशङ्क्याह—**अव्यवधानेनेति** ॥ एतदुक्तं भवति—अव्यवधानेन जनकत्वादुपरागः, तदुपरक्तत्वेन चाभेदः, इति हेतु-हेतुमद्भावो दर्शितः; तैरङ्गीकृतत्वात्। तदुक्तम्—

### पञ्चपादिका

**अतद्रूपत्वे तद्विषयत्वायोगात् ॥ अथ क्षणान्तरोत्पादोऽर्थक्रिया ? चरमक्षणस्यासल्लक्षणत्वप्रसङ्गः ।**

### पञ्चपादिकाविवरणम्

ज्ञानान्तरस्य तु न पूर्वज्ञानोपप्लवो विषयः, येन तदनुवादेन बाधः स्यात्, विषयत्वे च बाधकज्ञानेऽप्युपप्लवानामभेदः स्यात् । तर्हि विनैवोपप्लवैः सार्वज्ञे ज्ञाने विज्ञानान्युपरज्यन्त इति, नेत्याह—**अतद्रूपत्व इति** ॥ सर्वज्ञस्य लौकिकोपप्लवानवभासनादुपदेशायोग इति भावः ॥

अथ न स्वविषयज्ञानजननमर्थक्रिया, किन्तु सजातीयक्षणान्तरोत्पाद इति चोदयति—**अथेति** ॥ उत्तरमाह—**चरमक्षणस्यासल्लक्षणत्वप्रसङ्ग इति** ॥ अयमर्थः—अहमितिसन्तानपतितानि विज्ञानानि स्थायित्वानुसन्धान-कल्पनाभ्यां रागादिदोषैर्विषयैश्चोपप्लुतानि पूर्व-पूर्वसजातीयविषयविज्ञानलक्षणसंस्कारेभ्य उत्तरोत्तराण्युत्पद्यन्ते । तत्र सर्वमिदं क्षणिकमिति

### तत्त्वदीपनम्

नचैकस्मिन् क्षणे ते भवत इत्यर्थः । द्वितीये क्षणिकत्वक्षतिरित्यर्थः । द्वितीयेऽपि पूर्वज्ञानोपप्लवः किं तस्य विषयः ? उत न ? नाद्य इत्याह—**ज्ञानान्तरस्येति** ॥ पूर्वज्ञानग्रहणमन्तरेण न तदुपप्लवो ग्रहीतुं शक्यः, नच तद्ग्रहणयोग्यम्; एकसन्ततिपतितयोर्विषय-विषयिभावानभ्युपगमादित्यर्थः । द्वितीयं प्रत्याह—**येनेति** ॥ उपप्लवप्रतिपत्तौ तदनुवादेन बाधो युज्यते, नान्यथा; तस्मादविषयत्वानुपपत्तिरित्यर्थः । विषयत्वमङ्गीकृत्य दूषणमाह—**विषयत्व इति** ॥ विषय-विषयिणोरभेदोपगमादुपप्लवस्य ज्ञानाभिन्नतया न बोध्यत्वम्, ज्ञानस्यापि बाधापातादित्यर्थः ॥ सर्वज्ञज्ञानेन विज्ञानमात्रं विषयीक्रियत इति विकल्पान्तरमुत्थापयति—**तर्हीति** ॥ किं ज्ञानमात्रस्य विषयत्वायोगः ? उत विशिष्टस्य ? नाद्य; उपप्लवविषयत्वाभावेऽपि ज्ञानमात्रविषयत्वसंभवात्, न द्वितीयः; इष्टापत्तेः, इत्याशङ्क्याह—**सर्वज्ञस्येति** ॥ दुष्टं दृष्ट्वोपदेष्टव्यम्; अन्यथा मुक्तान् प्रत्युपदेशः स्यादित्यर्थः ।

क्षणान्तरं नाम ज्ञानान्तरम्, तद् निरस्तम्, इति कथं पुनराशङ्का ? तत्राह—**अथेति** ॥ चरमक्षणस्यापि क्षणत्वात् क्षणान्तरोत्पादकत्वम्, ततः कथमसत्त्वप्रसक्तिः ? इत्याशङ्क्य, क्षणान्तरोत्पादकत्वे चरमत्वं हीयेतेत्याह—**उत्तरमाहेति** ॥ सजातीयपूर्वक्षणस्योत्तरक्षणोत्पादकत्वनियमात् चरमक्षण एव नास्तीति तटस्थशङ्कां निरस्यति—**अयमर्थ इति** ॥ **अनुसन्धानकल्पना** ज्ञातृ-ज्ञान-ज्ञेयसंबन्धरूपकल्पना । तथापि कथं चरमक्षणोदयः ? इत्याशङ्क्य चतुर्विधभावनाप्रभेदात् तदुदय इति वक्तुं भावनानामुपयोगमाह—**तत्रेति** ॥ स्वमसाधारणं लक्षणं स्वरूपं यस्य तत् **स्वलक्षणम्**; असङ्गमिति भावनयेत्यर्थः । ज्ञानव्यतिरिक्तं सर्वं दुःखम्, तद्धेतुत्वादिति भावनयेत्यर्थः । रागादिदोषाभ्यां प्रवृत्तिः, ततः सुखदुःखोपप्लवा इत्यर्थः । उपप्लुतज्ञानस्य विरोध्यभाव उपप्लुतज्ञानान्तरोत्पादकत्वम् । विरोधिभावनाप्रभेदैरुपप्लवस्य निरस्तत्वान्निरुपप्लवं ज्ञानं जायते । ततश्चरमक्षणाभावचोद्यमसङ्गतमित्यर्थः ॥ भवतु चरमक्षणः, तथाऽपि कथमसत्त्वं तस्य इत्याशङ्क्य, सोऽपि किं क्षणान्तरजनकः ?

### ऋजुविवरणम्

"भिन्नकालं कथं ग्राह्यमिति चेद् ग्राह्यतां विदुः । हेतुत्वमेव युक्तिज्ञा ज्ञानाकारार्पणक्षमम् ॥" इति । "संसारसंविदेकरूपत्वप्रसङ्गादि"ति ॥ किमनेन पूर्ववादिनोऽनिष्टमापादितम् ? नहि संविदेकरूपत्वं समानरूपत्वमनभ्युपगतम्, अनिष्टं वा, तथा कस्य संसारसंविदेकरूपत्वम्, इति न ज्ञायते, तदर्थमभिप्रायमाह—**संविद्विषययोरिति** ॥ "अतद्रूपत्वे तद्विषयत्वायोगादि"ति व्यधिकरणम्; नहि जनकज्ञानस्योपप्लवशून्यत्वे जन्यसर्वज्ञज्ञानस्योपप्लुतत्वाभावो ज्ञानविषयत्वं निरुणद्धीत्याशङ्क्याभिप्रायमाह—**सर्वज्ञस्येति** ॥

पूर्वग्रन्थेष्वपि क्षणान्तरजनकत्वं निरस्तम्; क्षणान्तरस्यापि ज्ञानरूपस्य विवक्षितत्वात्, "अथ क्षणान्तरे"त्यनेनापि तदेव निरस्यते; अतः पौनरुक्त्यमित्याशङ्क्य विषयभेदमाह—**अथ न स्वविषयेति** ॥ "मैवमि"त्यादेः प्रयोगे परिहारोऽपि स्पष्टतया प्रतीयते, तदभावादवतारयति—**उत्तरमाहेति** ॥ कथं चरमक्षणस्यासत्त्वमापादितम् ? नहि चरमक्षणो नाम निरूपयितुं शक्यते; अनन्तत्वादापेक्षिकत्वाच्च चरमत्वस्य । नच हेतुरपि चरमत्वे निरूपयितुं शक्यते । कथं वा तस्यासत्त्वमिति न ज्ञायते । भवतु वा चरमस्यैकस्यासत्त्वम्, नानेन किंचिद्धीयते; अन्येषामर्थक्रियालाभेन सत्त्वलाभादित्याशङ्क्य व्याचष्टे—**अयमर्थः—अहमिति सन्तानेति** ॥ "चरमत्वानुपपत्तेरि"ति कथमुक्तम् ? सर्वज्ञज्ञानजननेऽपि तस्य सन्तानान्तरत्वात्, इत्याशङ्क्या-

### पञ्चपादिका

**नच सार्वज्ञज्ञानजननेनार्थवत्त्वम्; चरमत्वानुपपत्तेर्मुक्त्यभावप्रसङ्गात् । नच संवित् संविदो विषयः; संविदात्मना भेदाभावात्, प्रदीपस्येव प्रदीपान्तरम् ॥**

### पञ्चपादिकाविवरणम्

भावनया स्थायित्वकल्पना निवर्तते; स्वलक्षणभावनया द्रव्य-गुण-शब्द-कर्म-विशेषण-विशेष्यकल्पना विनश्यति; दुःखमिति भावनया रागादिदोष-प्रवृत्ति-सुख-दुःखोपप्लवाः क्षीयन्ते; शून्यमिति भावनया विषयोपप्लवविगमः; ततश्च भावनाभेदैश्चतुर्भिश्चतुर्विधोपप्लवे क्रमेण मन्दीकृते, भावनाप्रकर्षपर्यन्तात् समनन्तरप्रत्ययात् सर्वोपप्लवविरहि विज्ञानमुत्पद्यते, तत् संसारसन्तानस्यान्त्यत्वाच्चरमम्, इति तस्य कार्यान्तराभावादसत्त्वप्रसङ्गात् क्रमेण सर्वमसदेव पूर्वं स्यादिति । ननु चरमक्षणोऽपि स्वसन्तानज्ञानान्तराभावेऽपि सर्वज्ञज्ञानं विषयतया जनयतीति, नेत्याह—**नच सार्वज्ञज्ञानजननेति** ॥ तुल्यस्वभावयोः कार्यंकारणभाव एवैकसन्तानता नाम, चरमक्षण-सार्वज्ञज्ञानयोर्विशुद्धतया तुल्यस्वभावयोः कार्य-कारणभावादविच्छिन्नः सन्तान इति भावः । मा भूत् सन्तानविच्छेद इति ? नेत्याह—**मुक्त्यभावप्रसङ्गादिति** ॥ सन्तानविच्छेदो हि मुक्तिरभिप्रेतेति भावः । अथ सर्वज्ञसन्तानस्य तुल्यसन्तानस्य तुल्यस्वभावतया जनकत्वात् तत्सन्तानैक्यमेव मुक्तिरिति ? तर्हि विषयतया जनकत्वमेव नास्तीत्याह—**नच संवित् संविदो विषय इति** ॥ प्रत्यक्षत्वं विषयशब्देनोच्यते; पुरुषान्तरसंवेदनस्यानुमेयत्वात् । अथवा प्रत्यक्षस्यैव संवेदनस्य देहान्तरसम्बन्ध एवानुमीयत इति सर्वप्रमाणाविषयः संविदिति । अथवा—**संविदात्मना भेदाभावादित्य-**

### तत्त्वदीपनम्

उत न ? चरमे दूषणमाह—**तस्येति** ॥ अर्थक्रियाकारि सदित्यभ्युपगमादित्यर्थः । असत्त्वमप्यस्तु, को दोषः ? इत्यत्राह—**क्रमेणेति** ॥ चरमक्षणस्यासत्त्वे तज्जनकतया न पूर्वस्य सत्त्वम्, ततश्च तत्पूर्वस्याप्येवमेव, इति सर्वासत्त्वमित्यर्थः । द्वितीयेऽपि किं स्वसन्ताने कार्यारम्भकत्वम् ? उत सन्तानान्तरे ? आद्ये चरमत्वव्याघात इत्यभिप्रेत्य द्वितीयमुत्थापयति—**ननु चरमेति** ॥ स्वसन्ताने जनकत्वाभावान्न चरमत्वानुपपत्तिरित्याशङ्क्य, एतज्जन्यचैतन्यसन्तानान्तरत्वं न सिद्ध्यतीत्याह—**तुल्येति** ॥ नच—सर्वविषयतयाऽतुल्यस्वभावत्वान्नैकसन्तानत्वमिति—शङ्क्यम्; सर्वत्रापि कस्यचिद्वैषम्यस्य भावादेकसन्तानताऽनुपपत्तेरित्यर्थः ॥ सन्तानानुच्छित्तावपि सांसारिकोपप्लवविगममात्रेण मुक्तिः स्यादित्याशङ्क्य, सिद्धान्तक्षतेर्नैवमित्याह—**सन्तानेति** ॥ सर्वज्ञसन्तानैक्यं मोक्ष इति मतान्तरमुत्थापयति—**अथेति** ॥ हेत्वसिद्धया दूषयति—**तर्हीति** ॥ **संविदात्मनेत्यस्यायमर्थः—भेदाभावात्** वैलक्षण्याभावादित्यर्थः । तत्र हेतुमाह—**संविदात्मनेति** ॥ संविद्रूपेण समयोर्न विषय-विषयिभाव इत्यत्र दृष्टान्तमाह—**प्रदीपस्येति** ॥ स्वप्रकाशमपि पुरुषान्तरसंवेदनं पुरुषान्तरसंवेदनस्य विषयो भवति, ततः कथं संविदोरविषयत्वाभिधानम् ? तत्राह—**प्रत्यक्षत्वमिति** ॥ पुरुषान्तरसंवेदनस्य प्रत्यक्षत्वाभावान्न तत्र व्यभिचार इत्यर्थः । पुरुषान्तरसंवेदनस्याप्रत्यक्षत्वात् कथं तत्प्रतीतिः ? तत्राह—**पुरुषान्तरेति** ॥ संविदोऽद्वितीयत्वात् कथं संविदितरविषयत्वम् ? इत्याशङ्क्य, इष्टापत्त्योत्तरमाह—**अथवेति** ॥ अथवेत्यस्य—'अविषयः' इत्यनेन संबन्धः । पुरुषान्तरसंवेदनस्यानुमेयत्वमाश्रित्याप्रत्यक्षत्वम्, प्रत्यक्षेऽपि, अत्र तु तदपि नेत्युच्यत इत्यर्थः । चेष्टादिलिङ्गेन परसंवेदनानुमानमिष्टमिति, तत्राह—**प्रत्यक्षस्येति** ॥ संविद्भेदमङ्गीकृत्य न समानयोर्विषय-विषयिभावः प्रदीपवदित्येवं व्याख्यानं सिद्धवत्कृत्वा भेदाभावपरतया "संविदात्मने"ति ग्रन्थं व्याचष्टे—**अथवेति** ॥ संविदन्तरात् संवेदनस्य व्यावर्तकं किं संवित्त्वम् ? उतासंवित्त्वम् ?

### ऋजुविवरणम्

भिप्रायमाह—**तुल्यस्वभावयोरिति** ॥ कथं मुक्त्यभावप्रसङ्गः ? सांसारिकोपप्लवविगमात्, तावन्मात्रेण मुक्त्युपपत्तेरित्याशङ्क्याभिप्रायमाह—**सन्तानविच्छेदो हीति** ॥ "नच संवित्संविदो विषयः" इति कथमुक्तम् ? संवेदनविषयज्ञानादर्शनादित्याशङ्क्य व्याचष्टे—**प्रत्यक्षत्वं विषयशब्देनेति** ॥ अथवा "संविदात्मने"त्यनेन प्राचीनपक्षद्वयेऽयं हेतुः समानस्वभावविवक्षयेति द्योतितम् । "संवित् संविदन्तरादि"त्यसम्बन्धम्; एवं भेदनिराकरणेऽतिप्रसङ्गात्, घटो घटान्तराद् न घटाकारेण भिद्यते; प्रतियोगिनोऽघटत्वप्रसङ्गात्, एको घटः स्यात्, अघटाकारेण भेदेऽपि घट एक एव स्यादिति सर्वत्र भेदापलापस्य शक्यत्वात् ? मैवम्; घटादेः स्वरूपस्य प्रत्यक्षेणैव विलक्षणत्वप्रतीतेर्नैकत्वमापादयितुं शक्यम्, अत्र तु प्रतीयमान एव स्वरूपस्यैकत्वे भेदमप्रतीयमानं परिकल्प्य विषय-विषयित्वकल्पने भेद एव न सिद्ध्यति; भेदनिरूपणस्य भेदकाकारसापेक्षत्वात्, तस्य च स्वरूपाकारान्तराभ्यामनिरूपणात् । एवं यत्र भेदोऽस्ति, तत्र तत्र प्रामाणिको भेदाकारोऽस्त्येव, अत्र तु भेदकारो नास्तीति न भेदसिद्धिरिति भावः ।

### पञ्चपादिका

**किञ्च नार्थक्रियातः सत्त्वं भवति; स्वकारणनिष्पन्नस्य कार्यजननात्। अतः प्रतीतिर्वक्तव्या। तत्र तस्या अन्यतः सत्त्वप्रतीतिः, तस्या अप्यन्यतः; इत्यनवस्थानान्न क्वचित् सत्तावगमः, इति शून्यं जगदभविष्यत्। ननु स्वज्ञानार्थक्रियायाः स्वयंसिद्धत्वान्नानवस्था ? न तर्ह्यर्थक्रियातः सत्तावगमः; न हि स्वरूपमेव स्वस्यार्थक्रिया ॥**

### पञ्चपादिकाविवरणम्

स्यायमर्थः—संवित् संविदन्तरान्न संविदाकारेण भिद्यते; प्रतियोगिनोऽसंवित्त्वप्रसङ्गादेका संवित् स्यात्। असंविदाकारेण भेदेऽपि संविदेकैव स्यात्, इति न संविदां विषय-विषयिभाव इति ॥

**किंचेति** ॥ अर्थक्रिया नाम कारणसत्त्वे हेतुः ? प्रतीतिनिमित्तं वा ? इति विकल्प्य हेतुत्वे दूषणमाह—**स्वकारण-निष्पन्नस्येति** ॥ कार्यात्प्रागेव कारणस्य निष्पन्नत्वादित्यर्थः। नच निष्पन्नमप्यर्थक्रियातः पूर्वमसदिति शक्यं वक्तुम्; शशविषाण-तुल्यत्वेनाकारणत्वप्रसङ्गात्। प्रतीतिपक्षेऽनवस्थादूषणमाह—**तत्र तस्या अन्यत इति** ॥ ननु कार्यमर्थक्रिया नाम, ज्ञानानि च पूर्वेषामुत्तरोत्तराणि कार्याणि स्वयंसिद्धानि, इति न प्रतीत्यनवस्थेति चोदयति—**ननु स्वज्ञानार्थक्रियाया इति** ॥ तर्हि कार्य-कारणभूतानां ज्ञानानां स्वयं सिद्धत्वान्नार्थक्रिया सत्ताऽवगतिनिमित्तमित्याह—**न तर्ह्यर्थक्रियात इति** ॥ मा भूत् कारणभूतं ज्ञानं कार्यभूतज्ञानाधीनप्रकाशम्, स्वयंप्रभत्वात्, तथाऽपि स्वयं स्वेनैवावभासत इति स्वयमेव स्वस्यार्थक्रियेत्याह—**नहि स्वरूप-**

### तत्त्वदीपनम्

नाद्य इत्याह—**संविदिति** ॥ प्रतियोगिनोऽपि संवित्त्वे सवित्त्वं तस्य व्यावर्तकं न स्यात्, यथा घटत्वं न घटयो-र्व्यावर्तकं तथेत्यर्थः। द्वितीयं प्रत्याह—**असंविदिति** ॥ **एकैव स्यादिति** ॥ प्रतियोगिसंविदेव स्यादित्यर्थः।

अर्थक्रियातः सत्त्वाभावे पूर्वमेकस्य हेतोरनभिधानात् "किंचे"त्यनुपपन्नमित्याशङ्क्य, विकल्पपूर्वकं व्याचष्टे—**किं चेति** ॥ अर्थक्रियाकारित्वं न सत्त्वलक्षकमित्यत्रोपपत्त्यन्तरं चशब्देन समुच्चीयते, किंशब्दस्तु विकल्पद्वयं सूचयति। "अर्थक्रिया सत्त्वनिष्पादिके"त्यत्रापि विवेचनीयम्—किमनिष्पन्ना निष्पादयति ? उत निष्पन्नेति ? तत्राद्यं निराकर्तुम्—**स्वकारणनिष्पन्नस्येत्युक्तम्** ॥ तस्यायमर्थः—स्वकारणशब्देनार्थक्रियानिष्पादकमुच्यते। तस्याभिनिष्पन्नस्यार्थक्रियास्वरूपस्य सत्त्वलक्षणकार्यजनकत्वाद् नानिष्पन्नस्य हेतुत्वमिति। द्वितीयं प्रत्याह—**कार्यादिति** ॥ निष्पन्नत्वं च कारणनिष्पत्तौ, तन्निष्पत्तिश्च स्वाधीनकार्यात् प्रागेवेत्यर्थः ॥ घटस्य कारणं मृदादि, तस्मान्निष्पन्नस्य घटस्यार्थक्रियाजनकत्वमित्युक्तं टीकायाम्, एतावता कथं सत्त्वस्यार्थक्रियाऽधीनत्वाभावः ? इति शङ्कयामाह—**कार्यादिति** ॥ उदकाहरणादिलक्षणार्थक्रिया-जननात् पूर्वमेव घटसत्त्वस्य लाभान्न तदधीनं सत्त्वम्, इतरथेतरेतराश्रयादित्यर्थः। कारणनिष्पत्तिरर्थक्रियाधीनेति न ब्रूमः, किंतु तत्सत्तेत्याशङ्क्याह—**नचेति** ॥ (टीकायाम्) **तत्र तस्या** इत्यादेरयमर्थः—अर्थक्रिया सत्त्वज्ञापिका चेत्, तर्हि तस्या अपि प्रतिपन्नाया ज्ञापकत्वं वक्तव्यम्। प्रतिपत्तिश्चार्थक्रियान्तराधीना, तस्या अप्येवमेवेत्यनवस्थेति। ज्ञानविषयज्ञानस्यानिरस्त-त्वात् "स्वज्ञानार्थक्रियायाः" इत्यसंगतमित्याशङ्क्य, स्वजन्यज्ञानं स्वज्ञानमिति विवक्षितत्वान्न दोष इत्याह—**ननु कार्य-मिति** ॥ ज्ञानस्य प्रकाशत्वमात्रेण कारणसत्त्वावगमस्य कथमर्थक्रियाऽनधीनत्वम् ? इत्याशङ्क्याह—**तर्हि कार्येति** ॥ स्वप्रकाश-

### ऋजुविवरणम्

ननु अर्थक्रिया सत्त्वोत्पादिका न भवतीत्यत्र पूर्वं युक्त्यन्तरानभिधानात् "किंचे"ति वक्तुं न युक्तमित्याशङ्क्या-वतारयति—**किंचेति** ॥ **अर्थक्रिया नामेति** ॥ "स्वकारणनिष्पन्नस्ये"त्यत्र कारणशब्देनार्थक्रियानिष्पादकमभिधीयते, "निष्पन्नस्य" इत्यनेन निष्पाद्यमर्थक्रियास्वरूपम्, "कार्यजननादि"त्यत्र कार्यशब्देन सत्त्वं निर्दिश्यत इति प्रतिभाति; तथा सति साध्यहेत्वोर्व्याघातः स्यात्, स्वकारणान्निष्पन्नस्य कार्यस्य सत्त्वजनकत्वप्रतीतेः। अथ "स्वकारणनिष्पन्नस्ये"त्यात्रार्थ-क्रियाजनकस्य कारणस्य निष्पत्तिरभिप्रेता; तथा सति षष्ठ्यर्थस्यानन्वयः स्यात्, "कार्यजननादि"ति च हेतुना न साध्यं किञ्चिद् दृश्यते। अथ षष्ठ्यनादरेण पञ्चम्यर्थः स्वीक्रियते; तथाऽपि "जनना"दिति पञ्चम्या अनन्वयः स्यात्, हेतोरनुपयोगश्च स्यादित्याशङ्क्य व्याचष्टे—**कार्यात्प्रागेवेति** ॥ दिग्योगे पञ्चमीत्यर्थः। षष्ठ्यर्थस्य चानादरेण हेतुत्वमेव विवक्षितमिति भावः। ननु स्वकारणान्निष्पन्नस्याप्यर्थक्रियाजननात् प्रागसत्त्वमेवेत्याशङ्क्याह—**नच निष्पन्नमपीति** ॥ "स्वज्ञानार्थक्रियायाः" इत्ययुक्तम्, स्वस्य ज्ञानं स्वजन्यं निरस्तम्, अविषयत्वात्। नच तद्व्यतिरिक्तं स्वज्ञानमस्ति। नापि तस्य पूर्वज्ञानार्थक्रिया-रूपत्वम्, इत्याशङ्क्याह—**ननु कार्यमिति** ॥ "ननु तर्ह्यर्थक्रियातः" इत्ययुक्तम्; कार्यज्ञानस्वप्रकाशत्वस्य पूर्वज्ञानसत्त्वे ग्राह्यत्व-विरोधित्वाभावादित्याशङ्क्याह—**तर्हि कार्य-कारणेति** ॥

## पञ्चपादिका

यत्पुनः क्रमेणार्थक्रिया न युज्यते; पूर्वोत्तरकालयोस्तस्य विशेषाभावादिति ? नैष दोषः; स्थायिनोऽपि कारणस्य सहकारिसव्यपेक्षस्य जनकत्वाद् विशेषाभावादित्ययुक्तम्। अथ कारणस्यान्यापेक्षा न युक्ता, अकारणस्यापि नतरामित्यसहकारि विश्वं स्यात्। अथाकारणं कारणोत्पत्तयेऽपेक्षत इति चेत् ? अथ तत् कारणस्य कारणम् ? अकारणं वा ? कारणं चेत्, नापेक्षितुमर्हति। अकारणं चेत्, नतराम्।

## पञ्चपादिकाविवरणम्

मेवेति ॥ तस्मान्नार्थक्रियाकारित्वलक्षणं सत्त्वम्, किन्तु स्वाभाविकम्, इति सकृत्कार्यं कृत्वा तूष्णीभूतस्यापि स्थायिनः सत्त्वं न विरुध्यत इति ॥

इदानीं क्रमेणापि कार्यं कृत्वा सत्त्वं न विरुद्धयत इत्याह—**यत्पुनः क्रमेणेति** ॥ शक्तस्यापि सहकारिसन्निधानविशेषक्रमापेक्षया कार्यक्रमो युज्यत इत्याह—**स्थायिनोऽपीति** ॥ शक्तस्य सहकारिकारणापेक्षामपलपति—**अथ कारणस्येति** ॥ गूढाभिसन्धिरुत्तरमाह—**अकारणस्यापि नतरामिति** ॥ मा भूत् तर्हि शक्तस्याशक्तस्य च सहकार्यपेक्षेति, तत्राह—**असहकारि विश्वं स्यादिति** ॥ शक्तस्यैव सहकार्यपेक्षया कार्यकरत्वानुभवविरोध इति भावः। अशक्ता एव पदार्थाः सामग्रीलक्षणकारणोत्पत्तौ परस्परमपेक्षन्ते, इति नानुभवविरोध इत्याशङ्कते—**अथाकारणं कारणोत्पत्तय इति** ॥ कार्यं प्रत्यशक्ता अपि पदार्थाः सामग्रीकारणं प्रति शक्ता वा ? न वा ? इति विकल्पयति—**अथ तत् कारणस्येति** ॥ उभयत्र दूषणम्—**कारणं चेदिति** ॥

## तत्त्वदीपनम्

त्वेऽप्यर्थक्रियागम्यत्वं युक्तमिति शङ्कते—**मा भदिति** ॥ एकस्यैव कार्यत्वं कारणत्वं चायुक्तमित्याह—**नेति** ॥ टीकायामपेक्षितमुपसंहारं दर्शयति—**तस्मादिति** ॥

सकृत् सकलकार्यकरणपक्षीकारे क्रमपक्षे दूषणं मुधेत्यत्राह—**इदानीमिति** ॥ क्रमेण कार्यं कृत्वा स्थितस्यापि सत्त्वं न विरुध्यत इतीदानीमाहेति योजना। कारणस्य स्थायित्वेऽपि सहकार्यपेक्षया जनकत्वाद् न सदा कार्यप्रसङ्गः इत्युक्तमयुक्तम्; कारण-सहकारिणोरुभयोरपि स्थायित्वात् क्रमानुपपत्तेः, इत्याशङ्क्य, सन्निधानविशेषस्यागन्तुकत्वात् तत्क्रमापेक्षया कार्यक्रमो युक्त इत्याह—**शक्तस्यापीति** ॥ चोद्यवादिनाऽपि सहकारिण अवस्थानात् कथं निरसनम् ? इत्याशङ्क्य, सहकारी नापलप्यते, किंतु समर्थस्यान्यापेक्षेत्याह—**शक्तस्येति** ॥ शक्तस्य सहकार्यपेक्षायां निरस्तायां सैव समर्थनीया, न त्वकारणस्य तन्निरसनं युक्तमित्याशङ्क्याह—**गूढेति** ॥ शक्तस्यापि सहकार्यपेक्षया कार्यकरत्वानुभवात् सहकार्याश्रयणीय इति गूढोऽभिसन्धिः। सहकारिनिरसनस्येष्टापत्तितां शङ्कते—**मा भूदिति** ॥ सहकार्यपलापवादिनं प्रत्यसहकारि स्यादित्यसमञ्जसमित्याशङ्क्याह—**शक्तस्येति** ॥ कारणोत्पत्तये सहकारिणमपेक्षत इत्यभिधानात् कारणत्वं प्रतीयते, ततश्चाकारणमिति व्याघातः। कारणस्योत्पन्नत्वात् तदुत्पत्तय इत्येतच्च विरुध्यत इत्याशङ्क्य तात्पर्यमाह—**अशक्ता इति** ॥ अकारणं कारणम् ? अथाकारणम् ? इति विकल्पस्य व्याघातेनासंभवमाशङ्क्याह—**कार्यं प्रतीति** ॥ कार्यापेक्षयाऽसमर्थस्यापि सामग्रीं प्रति सामर्थ्यादिविकल्पनाद् न व्याघात इत्यर्थः। सामग्रीं प्रत्यसमर्थस्यापि तत्सामग्रीसिद्धये सहकार्यपेक्षेति दूषणाभासत्वमाशङ्क्याह—**उभयत्रेति** ॥ उक्तविकल्पदूषणयोस्तत्रापि सत्त्वात् तत्सामग्र्यां सहकार्यपेक्षेति वक्तव्यम्। तथाचान्धपरम्परेत्यर्थः ॥ सहकार्यनपेक्षत्वेऽनुभवविरोधस्यो-

## ऋजुविवरणम्

"स्थायिनो"पीति व्यर्थम्; अयौगपद्यस्य तन्निमित्तत्वादित्याशङ्कयाह—**शक्तस्यापीति** ॥ "कारणस्यान्यापेक्षा न युक्ते"ति कथमुक्तम् ? नहि कारणत्वमन्यापेक्षित्वे विरुद्धयते, येन हेतुत्वेन न विवक्ष्येत। इष्टविघातकारी चायं हेतुः; चोद्यवादिनाऽपि कारणस्यानन्यापेक्षित्वस्याङ्गीकृतत्वादित्याशङ्क्य व्याचष्टे—**शक्तस्येति** ॥ शक्तस्य सहकारिसापेक्षत्वस्य संप्रतिपन्नत्वात् तदसंभवेन चोद्ये कृते, तत्समर्थनं कर्तव्यम्, न त्वकारणस्य सहकारिकारणापेक्षानिराकरणं युक्तमित्याशङ्क्यावतारयति—**गूढाभिसन्धिरिति** ॥ "असहकारि विश्वमि"त्यनिष्टापादनं न युज्यते; सहकारिव्यपेक्षत्वं मा भूदिति चोदितत्वादित्याशङ्क्याह—**शक्तस्यैवेति** ॥ "अथाकारणं कारणोत्पत्तये"इति व्याहतम्; "उत्पत्तयेऽपेक्षते" इत्यनेन कारणत्वप्रतीतेः, अकारणमि'ति विरुद्धत्वात्। "अकारणमि"ति च न ज्ञायते—कुत्राकारणमिति ? "कारणोत्पत्तये" इति चाप्रस्तुताभिधानम्। कार्योत्पत्तौ कारणस्य सहकारिसव्यपेक्षत्वं हि निरूपणीयम्। तद् विहाय "कारणोत्पत्तये" इत्यभिधानात्, पूर्वोक्तानुभवविरोधश्चापरिहृतः, अतः कथमत्र चोद्यमित्याशङ्क्य व्याख्यानेनावतारयति—**अशक्ता एवेति** ॥ **अकारणमित्येतद्** व्याख्यातम्।

## पञ्चपादिका

**अथ नापेक्षा हेतूनां सहकारिणीति ब्रूयात् ? दर्शनेन बाध्येत; दृष्टं हि सहकार्यपेक्षत्वं हेतूनाम् । तस्माद् यथैव हेतोर्हेतुत्वं सति कार्ये केनाप्यतर्कणीयेन क्रमेण ज्ञायते सत्येव हेतौ कार्यस्य दर्शनात्, तथा समेतसहकारिण्येव दर्शनात् सहकार्यपेक्षत्वं तद् विज्ञेयम् ॥**

**यस्तु मन्यते—सहकारिजनितविशेषो हेतुः कार्यं जनयति; अन्यथाऽनुपकारिणोऽपेक्षाऽयोगात्—इति । स वक्तव्यः—विशेषस्य स हेतुः ? अहेतुर्वा ? अहेतुश्चेत्, विशेषोत्पत्तौ नापेक्ष्येत, तत्र केवला एव सहकारिणो विशेषमुत्पादयेयुः, ततश्च कार्यं स्यात् । अथ हेतुः ? सहकारिभिर्जनितविशेषस्तमेव कथं कुर्यात् ? विशेषस्य वा जननेऽनवस्था ।**

## पञ्चपादिकाविवरणम्

**अथ नापेक्षेत्युक्तार्थम्** ॥ ननु शक्ताशक्तयोरपेक्षाऽभावे कथं सहकार्यनुभवः कथ्यते ? ननु कार्यस्याप्यसत्त्वाविशेषात् सर्वस्माद् जन्म किं न स्यात् ? कारणस्य वा विशेषसम्बन्धहीनस्य सर्वस्य जनकता किं न स्यात् ? इत्यव्यस्थायां कथं कार्य-कारणभावमात्रं त्वया व्यवस्थाप्यते ? अथान्वयव्यतिरेकसामर्थ्यात् कार्य-कारणनियम इति, सहकारिणोऽपि तथेत्याह—**तस्माद्यथैव हेतोरिति** ॥

क्व तर्हि सहकार्युपयोग इति ? तत्र मतान्तरमुपन्यस्य पूर्ववादिनं दूषयति—**यस्तु मन्यते सहकारिजनितविशेष इति** ॥ यः सहकारिणमपेक्षते, स स्वात्मनि विशेषोत्पत्तौ शक्तो वा ? न वा ? इति विकल्प्याहेतुत्वे दूषणमाह—**विशेषोत्पत्ताविति** ॥ नह्यशक्तं सहकारिसहस्रसन्निधानेऽपि किंचित्कुर्वद् दृष्टमित्यर्थः । हेतुत्वे दूषणमाह—**अथ हेतुरिति** ॥ तत्र प्रथमविशेषस्य

## तत्त्वदीपनम्

दीरितत्वात् पौनरुक्त्यमित्याशङ्क्यापेक्षाऽभावस्यानिष्टपर्यवसायितां दर्शयितुमुक्तस्मारणमित्याशयेनाह—**अथेति** ॥ 'अहं मनुष्यः' इत्यनुभववत् सहकार्यनुभवस्यापि युक्त्यसहत्वादसाधकत्वमिति शङ्कते—**नन्विति** ॥ अनुभवविरोधाद् युक्तय एवाभासीभवन्ति; अन्यथाऽतिप्रसङ्गः स्यादित्याह सिद्धान्ती—**नन्विति** ॥ दध्नः क्षीर-मृदादावसत्त्वाविशेषे क्षीराद् जन्म निर्निमित्तम्, इति सर्वस्मादुत्पत्तिः स्यादित्यर्थः । मृदादेर्दधिजननासामर्थ्यम्, क्षीरस्य च तज्जननसमर्थत्वादुत्पत्तिरित्याशङ्क्य मृदादेरसामर्थ्यमसिद्धमित्याह—**कारणस्येति** ॥ अन्वय-व्यतिरेकविरोधान्न क्षीर-दध्नोरुपादानोपादेयभावापलापो युक्त इति शङ्कते—**अथेति** ॥ तुल्यमुत्तरमित्याह—**सहकारिण इति** । **अतर्कणीयेन क्रमेणेति (टीकायाम्)**—अतर्कणीयेन प्रकारेणेत्यर्थः ।

सहकार्यपेक्षामङ्गीकृत्योपयोगप्रकारं पृच्छति—**क्व तर्हीति** ॥ हेतौ कार्ये वा सहकारिण उपयोग इति विमर्शार्थः ॥ क्षणिक्षिकत्ववादिना सहकारिणा हेतौ विशेषजन्मानङ्गीकरणात्—"यस्तु मन्यते" इत्यादेरनुपपत्तिरित्याशङ्क्याह—**तत्रेति** ॥ वैशेषिकादिमतं **मतान्तरशब्दार्थः** । **उपन्यस्य** तन्निराकृत्य; **पूर्ववादिनम्** क्षणिकत्ववादिनं दूषयतीत्यर्थः । अथवा, पूर्ववादिनं वैशेषिकादिकमित्यर्थः । सहकारिणा जनितो विशेषो यस्मिन् हेतौ स तथेति विग्रहः "विशेषस्य स हेतुरि"त्यत्र तच्छब्देन सहकारी गृह्यते ? आहो प्रधानहेतुः ? आद्ये विकल्पासंभवः; सहकारिणो हेतुत्वोक्तेः । नापि द्वितीयः; विशेषाश्रयत्वेन तस्यापि हेतुत्वसिद्धेरित्याशङ्क्य तात्पर्यमाह—**यः सहकारिणमिति** ॥ असमर्थस्यापि सहकारिसाकल्यापेक्षया कार्यप्रसवहेतुत्वम्, तत्राह—**नहीति** ॥ धूमजननासमर्थस्य शिलादेरिन्धनभारेणापि तज्जनकत्वं नोपलब्धचरमित्यर्थः ॥ प्रधानकारणस्य विशेषाकारणत्वे तदजनिः स्यादित्याशङ्क्य, तस्यान्यथासिद्धेस्तस्य वैयर्थ्यमेव स्यादित्युक्तं टीकाकृता, तत्र "केवला एवे"त्यनेन सविशेषस्य बीजस्य जनकत्वेष्टेः—"जनितविशेषः" इत्ययुक्तमित्याशङ्क्यासमर्थत्वेऽपि किं निर्विशेषस्य हेतोर्विशेषहेतुत्वम् ? उत सविशेषस्य ? आद्ये विशेषजनकत्वं न स्यात्; उच्छूनताऽनपेक्षबीजस्याङ्कुरजनकत्वादृष्टेः । नापि द्वितीयः; अनवस्थानात्; विशेषोत्पादनोपयोगित्वेन यो विशेषः समाश्रितः, तदुपपत्तावपि विशेषान्तरमाश्रयणीयम्, एवं तस्य एवं तस्यापीत्यनवस्थेत्याह—**हेतुत्व इत्यादिना** ॥ "अथ मतमि"त्यत्र कचिद्विशेषानपेक्षत्वं कचित्तदपेक्षत्वमित्युक्तम्, तत्र को हेतुः ? इत्याशङ्क्य

## ऋजुविवरणम्

**ननु शक्ताशक्तयोरिति** । अपेक्षायां कारणसापेक्षत्वनिरूपणम् । तदभावेऽनुभवो विद्यमानोऽपि न सापेक्षत्वज्ञापक इति भावः । "तस्माद्यथैवे"त्यसम्बद्धम्; दृष्टान्तवैषम्यात्, युक्त्या निरूपणासहस्याप्यनुभवमात्रेण व्यवस्थापने हि साम्यम्, तदत्र निरूपणासहत्वं कथम् ? इति न ज्ञायते । सम्प्रतिपत्तौ च दृष्टान्तता' साऽपि न ज्ञायते, इत्याशङ्क्यासम्प्रतिपत्तिं दर्शयितुमव्यवस्थां दर्शयति—**ननु कार्यस्यापीति** ॥ **अथान्वयव्यतिरेकेति** । अनेन संप्रतिपत्तिमाविष्करोति ।

**"सहकारिजनितविशेषः"** इति टीकापदम् । सहकारिभिर्जनितो विशेषो यस्मिन् हेतौ स हेतुः, सहकारिजनित-

## पञ्चपादिका

**अथ मतम्—न सर्वं कार्यं सहकारिजनितात्मभेदहेतुजन्यम्, समग्रेषु हेतुषु तावत्येवाभवदङ्कुरादि; तथा किञ्चित्सन्निहितसहकारिहेतुजन्यम्, यथाऽक्षेपकारीन्द्रियादिज्ञानम्; तत्राद्यो विशेषः सहकारिसन्निधानमात्रलभ्यः; अक्षेपकारीन्द्रियादिज्ञानवदिति नानवस्था? अनुपकुर्वन्नपि तर्हि सहकार्यपेक्ष्येत। न हि तत्र हेतोः सहकारिभ्य आत्मभेदः। नानुपकुर्वन्नपेक्ष्यते; अतिप्रसङ्गात्। स्वरूपे तु नोपकरोति, किन्तु कार्ये; तत्सिद्धेस्तन्नान्तरीयकत्वात्? नित्योऽपि तर्ह्यनाधेयातिशयो भावः कार्यसिद्धये क्षणिक इव सहकारिणमपेक्षत इति किन्नाभ्युपेयते?**

## पञ्चपादिकाविवरणम्

विशेषान्तरापेक्षयाऽनवस्थाप्रसङ्गदोषपरिहाराय किंचिदेव सहकारिभिः कारणे विशेषो जन्यते कार्यजननाय, क्वचित्तु कारणे विशेषजन्मानपेक्षमेव सहकारिभिः कार्यं जन्यत इत्यव्यवस्थां स्वयमेव दर्शयति—**अथ मतं न सर्वं कार्यमिति**॥ **तावत्येवाभवत्** उच्छूनताविशेषे सत्येवेत्यर्थः। तर्हि शक्तिमता कारणेन स्वात्मन्यनुपकुर्वन्नपि सहकार्यपेक्ष्यत इति त्वयैव स्वपक्षो निरस्त इति परिहरति—**अनुपकुर्वन्नपि तर्हीति**॥ आह साक्षात् क्षणिकवादी—**नानुपकुर्वन्निति**॥ सर्वस्य सहकारित्वप्रसङ्गादित्यर्थः। क्व तर्ह्युपकरोति? तदाह—**स्वरूपे तु नोपकरोतीति**॥ कार्यं हि सहकारिणा जायमानमुपक्रियत इत्यर्थः। तर्हि क्षणिकस्येव नित्यस्यापि कार्यस्योपकाराय सहकार्यपेक्षा न विरुध्यत इति परिहरति—**नित्योऽपि तर्ह्यनाधेयातिशय इति**॥ तदेव

## तत्त्वदीपनम्

हेतुं दर्शयति—**तत्रेति**। हेताविति यावत्। **प्रथमविशेषस्य** उच्छूनताविशेषस्य। सहकारिभिर्जनितः स्वरूपविशेषो यस्मिन् हेतौ स तथोक्तः, तेन हेतुना जन्यम्; सहकारिजनितात्मभेदहेतुजन्यमिति यावत्। "तावत्येव" इत्यनेन, समग्रहेतूनां सन्निधानात् तत्परामर्शशङ्का स्यात्; तथाच पौनरुक्त्यमित्याशङ्क्यार्थमाह—**तावत्येवेति**॥ यावति विशेषे जाते कार्योदयस्तावत्येवेति यावत्। क्षेपो विलम्बः, तमन्तरेण करोतीत्यक्षेपकारि, तच्चेन्द्रियं चेत्यक्षेपकारीन्द्रियम्, तदादिः कारणं यस्य तदक्षेपकारीन्द्रियादि, तच्च ज्ञानं चेति तथोक्तम्। इन्द्रियं सहकारिजनितविशेषमाश्रित्य न कार्यकरम्, किंतु सहकारिसंनिधिमात्रेण; अन्यथाऽनवस्थानादित्यर्थः। इन्द्रियम्, आदिर्यस्य कारणवर्गस्य तदिन्द्रियादि, अक्षेपकारि च तदिन्द्रियादि चेति तथोक्तम्; तदुत्थितज्ञानमिति वा विग्रहः॥ सहकारिणः कार्यजनकत्वात्—"अनुपकुर्वन्नि"ति कथमुक्तम्? इत्याशङ्क्याह—**तर्हीति**॥ सहकारिजनितविशेषस्य हेतोर्यद्धेतुत्वमुक्तम्, तद्भज्येत विशेषजनने; लिङ्गादेर्विशेषजनकत्वाभावादित्यर्थः। "नानुपकुर्वन्नित्यादिना सहकारिणः कार्यहेतुत्वमुक्तम्, तत्प्रक्रमविरुद्धमित्याशङ्क्याह—**साक्षादिति**॥ अतिप्रसङ्गं स्पष्टयति—**सर्वस्येति**॥ "कार्यं उपकरोती"ति कथमुक्तम्? सहकारिसंबन्धात् प्राक् कार्याभावादित्याशङ्क्याह—**कार्यं हीति**॥ सहकारिणः कार्यजनकत्वमेव तदुपकारकत्वमित्यर्थः। किं कारणस्यापेक्षा? उत कार्यस्य? आद्ये तुल्यमुत्तरमित्याह—**तर्हीति**॥ क्षणिकस्य सहकार्यपेक्षया कथं कार्यजनकत्वम्? उत्पत्त्यनन्तरक्षणविनाशात्, ततश्च दृष्टान्तसिद्धिरिति शङ्कानिराकरणेन तत्प्रपञ्च्यत इत्याह—

## ऋजुविवरणम्

विशेष इति विग्रहः। कथं हेतुत्वे सहकार्यपेक्षत्वं नास्तीत्युक्तम्? स्वतोऽहेतोरपि सहकार्यपेक्षया कार्यकरत्वसम्भवादित्याशङ्क्य व्याचष्टे—**नह्यशक्तमिति**॥ "अहेतुश्चेदि"ति व्याख्यातम्। **सहकारिजनितात्मभेदहेतुजन्यमि**"ति। सहकारिभिर्जनित=उत्पादित आत्मभेदस्स्वरूपगतोऽपि विशेषो यस्मिन् हेताविति **टीकापदविग्रहः**। "तावत्येवाभवदि"त्यत्र "तावती"ति किं निर्दिष्टमिति न ज्ञायते; यद्वा, "तावत्येवे"त्यनेन समग्रत्वमेव निर्दिष्टमिति प्रतीयते, समग्रत्वस्य सन्निहितत्वात्, एवकारेणान्यनिवृत्तिप्रतीतेश्च॥ तथा सति "किञ्चित्सन्निहिते"त्यनेन पुनरुक्तं स्यात्; तत्रापि सहकारिसन्निधानमात्रस्योक्तत्वात्, तदर्थं व्याचष्टे—**उच्छूनताविशेष इति**॥ (टीकायाम्) **अक्षेपकारीति**। न विद्यते क्षेपः प्रक्षेपो विशेषस्य सहकारिभिर्येष्विन्द्रियेषु, तान्यक्षेपाणि; अक्षेपेणैव कुर्वन्तीत्यक्षेपकारीणीति, तान्यादिः कारणं यस्मिन् ज्ञाने, तद् ज्ञानमक्षेपकारीन्द्रियादीति विग्रहः। अथवा, इन्द्रियमादिर्यस्य कारणजातस्य, तदिन्द्रियादि; परस्परं क्षेपेण विशेषस्य जननेन विना करोतीत्यक्षेपकारि। अक्षेपकारि च तदिन्द्रियादि चाक्षेपकारीन्द्रियादि; इन्द्रियादेः सकाशाज्जन्यं ज्ञानमिन्द्रियादिज्ञानमिति विग्रहः। "नानुपकुर्वन्नि"ति पूर्वोक्तिविरुद्धमित्याशङ्क्याह—**साक्षादिति**॥ अतिप्रसङ्गमेव विशिनष्टि—**सर्वस्येति**॥ यदि कार्यं उपकरोति सहचारिवर्गः कारणस्य, तर्ह्यर्थात् कारणस्वरूप एवोपकार इत्युक्तो भवेत्; अन्यथा कारणमुपकारमेवापेक्षत इति कथमुक्तम्? नहि कार्यं उपकृते कारणमुपकृतं भवति; अतो "यस्तु मन्यते" इत्यनेन पुनरुक्तमित्याशङ्क्य व्याचष्टे—

### पञ्चपादिका

यथैव क्षणिको भावः सहकारिसमवधान एव कार्यं जनयति, सामग्रीसाध्यत्वात्, तथा नित्योऽपि स्वरूपानुपयोगित्वेऽपि सहकारिसमवधानं कार्योपयोगादपेक्षेत ॥

अथ मतम्—क्षणिकोऽपि नैवापेक्षते, जन्यजनकस्य स्वयमन्यापेक्षानुपपत्तेः कार्यं तु यदन्यसन्निधौ भवति तत्; तस्यान्यसन्निधावेव भावादन्यथा चाभावात् नित्यस्य तु जनकस्य सर्वदा जननप्रसङ्गः। को हेतुरन्यापेक्षायाः ?

### पञ्चपादिकाविवरणम्

प्रपञ्चयति—**यथैव क्षणिको भाव इति** ॥ **सामग्रीसाध्यत्वादिति** ॥ बहुकारकव्यापारसाध्यत्वादित्यर्थः।

पुनश्चोपकार्यमेवोपकारकं सहकारिणमपेक्षते, नानुपकार्यं कारणमित्याशङ्क्ते—**अथ मतं क्षणिकोऽपि नैवापेक्षत इति** ॥ यदन्यसंनिधौ भवति, तदपेक्षत इति सम्बन्धः। नित्येऽपि तर्हि कारणे कार्यमेव सहकारिणमपेक्ष्य क्रमेण भवतीति ? नेत्याह—**नित्यस्य तु जनकस्येति** ॥ सहकारिणां कारणस्य च सर्वदा भावात् सर्वदा कार्य-जननादित्यर्थः। ननु सहकारिणामपि सन्निधानमपेक्ष्यत इति ? नेत्याह—**को हेतुरिति** ॥ कारण-सहकारिणोरपि सम्बन्धः कार्यं चेत्, सोऽपि कारण-सहकारिभ्यां

### तत्त्वदीपनम्

**तदेवेति** ॥ सहकारिसंपत्तिसमय उत्पद्यमानस्य क्षणिकस्य कार्यकरत्वात् सहकार्यपेक्षोच्यत इत्यर्थः। सहकारिसमवधाने यत्तु कार्यजन्म, तस्य सामग्रीसाध्यत्वपदाभिलप्यत्वात् पौनरुक्त्यमित्याशङ्क्याह—**सामग्रीति** ॥ घटादेर्मृद्दण्डादिकारकव्यापारनिर्वर्त्यत्वान् तत्समवधाने कार्यजन्मेत्यपौनरुक्त्यमित्यर्थः।

कारणस्य न सहकार्यपेक्षेत्युक्तम्—"अथ मतमि"त्यत्र, न तत् संभवति;कार्यसिद्धये तदपेक्षाऽसंभवादित्याशङ्क्याह—**पुनरिति** ॥ उपकार्यमेव सहकारिणमपेक्षते, न पुनः कारणमिति संबन्धः। चशब्दोऽवधारणार्थः। स च नञा संबध्यते। यस्य यत्र किंचिदायतते, तत् तदपेक्षते। सहकारिणा च तत्र विशेषानुत्पत्तेर्न तत्रापेक्षेत्यर्थः॥ "कार्यं त्वि"त्यत्र अन्यसन्निधौ भावमात्रमुक्तम्, न सहकार्यपेक्षत्वमित्याशङ्क्याध्याहारेण योजयति—**यदन्येति** ॥ साम्यमाशङ्क्ते—**नित्येऽपीति** ॥ सहकार्यपेक्षायामपि क्रमभवनमनुपपन्नमित्याह—**नेत्याहेति** ॥ प्रधानहेतोर्नित्यत्वेऽपि क्रमभाविसहकार्यपेक्षया क्रमभवनमाशङ्क्य किं सहकारिणोऽपि स्वरूपेण हेतुत्वम् ? उत सन्निहिततया ? इति विकल्प्याद्यं प्रत्याह—**सहकारिणामिति** ॥ यत्र कुत्रचित्सहकारिणामस्तित्वं सदा सिद्धमित्यर्थः। द्वितीयमनुवदति—**ननु सहकारिणामिति** ॥ अपिशब्दस्य सन्निधानमित्यनेन संबन्धः। संन्निधानयापि सदा भावान्न क्रमजन्मेत्याह—**नेत्याहेति** ॥ "अन्याऽपेक्षाया" इत्यत्र सहकारिव्यतिरिक्तापेक्षा निषिध्यते ? उत सहकारितत्संबन्धातिरिक्तापेक्षा ? नाद्यः, संबन्धापेक्षाया उक्तत्वात्; न द्वितीयः, संबन्धासंभवादित्याशङ्क्य, किं संबन्धस्यानागन्तुककत्वम् ? उतागन्तुकत्वम् ? आद्ये सदा भवनं स्यादित्यभिप्रेत्य द्वितीयमनूद्य दूषयति—**कारणेति** ॥ संबन्धः किं कारण-सहकारिमात्राद्भवति ? उतान्यस्मात् ? नाद्यः, सदा कार्यप्रसङ्गात्, न द्वितीयः, अन्यस्यापि सदा भावात्। तत्राप्यन्यापेक्षाया-

### ऋजुविवरणम्

**कार्यं होति** ॥ "कारणस्योपकारक"मि व्यपदेशस्य गतिरुक्ता टीकायाम्—**तत्सिद्धेरिति**। कारणोपकारसिद्धेरित्यर्थः। (टीकायाम्) **तन्नान्तरीयकत्वादिति**। तेन कार्येणैवोपक्रियमाणेन नान्तरीयकतया भवतीति। सहकारिसमवधाने भवनस्य सामग्रीसाध्यत्वस्य च भेदाभावात् साध्याविशिष्टत्वमित्याशङ्क्याह—**बहुकारकेति** ॥

"अथ मतमि"त्यनेन किमाकाङ्क्षते ? इति न ज्ञायते, अंशे विरोधादंशे व्यक्तत्वात्; "क्षणिकोऽपि नैवापेक्षते" इति विरुद्धम्, अन्यजनकस्यापि स्वकार्यसिध्यर्थमन्यापेक्षाया उक्तत्वात्; "कार्यं त्वि"त्यनेनान्यसन्निधौ भावाभावमात्रमुक्तम्, न त्वपेक्षाऽनपेक्षे उक्ते; नच कस्याप्यपेक्षैव नास्तीत्यस्मिन् ग्रन्थे तन्मतमनूद्यते, अनुभवविरोधस्योक्तत्वात्, असदनुवादप्रसङ्गाच्च। अथ कार्यमेवापेक्षते, न करणमिति, तथाऽपि "नानुपकुर्वन्नि"त्यनेन पुनरुक्तमित्याशङ्क्यावतारयति—**पुनश्चेति** ॥ दूषणान्तरं वक्तुमाशङ्कितमिति भावः। ननु कार्यस्याप्यन्यसन्निधौ भावाभावमात्रमुक्तम्, नतु सहकार्यपेक्षत्वमत्र प्रतीयत इत्याशङ्क्याध्याहृत्य योजनान्तरं दर्शयति—**तदपेक्षत इति सम्बन्ध इति** ॥ ननु जनकस्य स्थायित्वेऽपि न सर्वदा कार्यजननं भवति; कार्यस्य सहकार्यपेक्षया क्रमभावेनोपपत्तेरित्याशङ्क्याभिप्रायमाह—**सहकारिणामिति** ॥ "को हेतुरन्यापेक्षयाः" इत्यन्यशब्देन सम्बन्धं निर्दिश्य तदपेक्षो हेतुः कः ? इत्याक्षिप्तमिव प्रतिभाति; तस्य सन्निहितत्वात्, सम्बन्धसापेक्षत्वे च चोदिते तदपेक्षानिराकरणस्यैव प्रतीतेः, तथा सत्यसंबद्ध एव स्यात्; सम्बन्धेन विना जनकत्वायोगात्, संबन्धापेक्षिणोऽपि जनकत्वस्यैव

## पञ्चपादिका

**क्षणिकस्तु यो जनको भावः, स न पुरस्तात्, न पश्चात्, इति न पूर्वोत्तरकालयोः कार्योत्पादः ॥**

**इदमयुक्तम् वर्तते ।**

## पञ्चपादिकाविवरणम्

सदा भवति, इति कार्यजन्म सदा भवेदित्यर्थः। ननु क्षणिकादपि सहकारिसव्यपेक्षात् किमिति सदा कार्यं न जायते ? विशेषवति सत्ताक्षणे कार्यजन्माभावात्, पूर्वोत्तरकालयोर्विशेषाभावादिति, तत्राह—**क्षणिकस्तु यो जनक इति** ॥

**इदमयुक्तं वर्तत इति** ॥ अयमर्थः—न तावदग्निस्वलक्षणस्यैव धूमस्वलक्षणं प्रति कारणत्वमवगन्तुं शक्यम्, क्षणमात्रापवर्गिणोरन्वय-व्यतिरेकबुद्धिद्वयकालावस्थानायोगात्, किन्त्वग्नि-धूमसन्तानयोरन्वयव्यतिरेकाभ्यामग्निस्वलक्षणानि धूमस्वलक्षणानां कारणानीति सामान्योपाधौ प्रमातव्यम्। तत्राग्निस्वलक्षणानां विशेषाभावादङ्गारगतादप्यग्निस्वलक्षणाद् धूमजन्म किं न स्यात् ? काष्ठस्वलक्षणाभावादिति चेत् ? न; तस्यापि स्वसन्ताने विद्यमानत्वात्। अग्नि-काष्ठस्वलक्षणसंसर्गापेक्षा विद्यत इति ? न; सन्तानद्वयनित्यत्वे तन्निमित्तसन्निधानस्यापि सदा प्रसङ्गाद्; तत्राप्यन्यापेक्षेति चेत् ? इहापि। नित्येऽपि

## तत्त्वदीपनम्

मनवस्था स्यादित्यर्थः। कार्यसातत्यप्रसङ्गस्तवापि सम इति शङ्कते—**ननु क्षणिकादिति** ॥ सत्ताक्षणस्य कार्यहेतुत्वात् तस्य च सदा भावाद् नातिप्रसङ्ग इत्याशङ्क्य, किं यस्मिन् क्षणे सत्ता, तस्मिन् क्षणे कार्यजन्म ? उतोत्तरक्षणे ? इति विकल्प्याद्यं प्रत्याह—**विशेषवतीति** ॥ अव्यवहितपूर्वक्षणवर्ति कारणमित्यङ्गीकरणादेकक्षणमात्रवर्तिनोर्न कार्य-कारणतेत्यर्थः। द्वितीयं प्रत्याह—**पूर्वेति** ॥ उत्तरक्षणे कारणसत्ताऽभावेऽपि कार्यं स्यात्; असत्त्वाविशेषादित्यर्थः। कार्यापेक्षया नियतप्राक्सत्त्वस्य कारणत्वे प्रयोजकत्वात् तस्य सदा भावाद् नातिप्रसङ्ग इत्याह—**तदाहेति (तत्राहेति)** ॥

स्थायित्वपक्षे कार्यसातत्यम्, इतरत्र च तदभाव इत्युक्तम् तत्र कस्यायुक्तत्वमुच्यते "इदमयुक्तमि"त्यत्र,—किं स्थायिमते कार्यसातत्यस्यायुक्तत्वम् ? अथवेतरस्य ? नाद्यः; कारणसहकारिणां तत्संबन्धानां सदा भावेन कार्यसातत्यस्य दुर्वारत्वात्। न द्वितीयः; तत्र कार्यसातत्यहेत्वभावादित्याशङ्क्याह—**इदमयुक्तमिति** ॥ यस्मादग्निस्वलक्षणाद् यो धूमस्वलक्षण उत्पद्यते, अनयोरेव कार्य-कारणताधिगतिः ? आहो वह्नि-धूमजातीययोः ? इति विकल्प्याद्यं दूषयति—**न तावदिति** ॥ स्वम् असाधारणं व्यावृत्तम् लक्षणम् रूपं यस्य, स **स्वलक्षणः** ॥ किमन्वयव्यतिरेकाभ्यां तदधिगतिः ? उतान्वयमात्रात् ? नाद्य; द्रष्टुः स्थिरस्याभावादित्याह—**अन्वयेति** ॥ अग्नौ सति धूम इति ज्ञानमन्वयबुद्धिः, अग्न्यभावे धूमाभाव इति बोधो व्यतिरेकबुद्धिः, तयोरेककालेऽवस्थानं न युज्यत इत्यक्षरार्थः। द्रष्टुरिति शेषः। किंच धूमाभावे तदर्थिना तज्जननसमर्थोऽग्निरुपादीयते, तयोश्च जन्यजनकताया अग्रहणाद्धूमार्थिनाऽग्न्युपादानं न स्यात्, इत्याह—**क्षणमात्रापवर्गिणोरिति** ॥ ययोस्तु तद्ग्रहणं तयोर्नष्टत्वादित्यर्थः। आकाङ्क्षापूर्वकं द्वितीयपक्षमवतारयति—**किन्त्विति** ॥ ततः किमिति ? अत्राह—**तत्रेति** ॥ सहकार्यभावान्नाङ्गारावस्थाने धूमजन्मेति शङ्कते—**काष्ठेति** ॥ किं काष्ठस्वलक्षणमात्राभावो हेतुः ? उत सन्निहितस्वलक्षणाभावः ? आद्येऽसिद्धिरित्याह—**न तस्यापीति** ॥ द्वितीयमनुवदति—**अग्नीति** ॥ किमग्नि-काष्ठसंसर्गोत्पत्तौ तयोरेव हेतुत्वम् ? उतान्यस्यापीति विकल्प्याद्यं दूषयति—**न संतानेति** ॥ द्वितीयमनुवदति—**तत्रापीति** ॥ संयोजकोऽन्यशब्दार्थः। साम्येन समाधत्ते—**इहापीति** ॥ तदेव विवृणोति—**नित्येऽपीति** ॥ संसर्गिसद्भावेऽप्यसंसर्गार्थमन्यापेक्षाङ्गीकरणे कारणसहकारिसद्भावेऽपि संयोजक-

## ऋजुविवरणम्

हेतुत्वात्, "को हेतुरि"ति वक्तुमयुक्तत्वादित्याशङ्क्य व्याचष्टे—**कारणसहकारीति** ॥ अन्यशब्देन कारण-सहकारिव्यतिरिक्तं कारणान्तरं निर्दिश्यते, तदपेक्षा चात्र निवार्यत इति व्याख्यातम्। कथं क्षणिकात् सर्वदा कार्यमापाद्यते ? क्षणमात्रवर्तित्वेन कार्यस्यापि क्षण एव भावोपपत्तेरित्याशङ्क्याह—**विशेषवति सत्ताक्षण इति** ॥

"इदमयुक्तमिति किमुक्तम् ? किं पूर्ववादिनोऽपि सर्वदा कार्यप्रसङ्गाद् न युक्तमित्युक्तमित्युच्यते ? किं वा स्वपक्षे सर्वदा कार्यप्रसङ्गो न युक्त इति ? न तावत् प्रथमः कल्पः; क्षणिकस्य पूर्वोत्तरकालयोरसत्त्वेन सर्वदा कार्यप्रसङ्गाभावस्योक्तत्वात् द्वितीयपक्षे सम्बन्धे कारणान्तरापेक्षायोगात् सदा सम्बन्धः, कार्यं च सदा स्यादित्युक्तम्; अतः किम्—"अयुक्तमि"ति न ज्ञायते तदर्थमवतारयति—**इदमयुक्तमिति** ॥ **अयमर्थ इति** ॥ **इहापीति**—अन्यापेक्षेत्यर्थः। ननु सम्बन्धस्य कारणान्तराक्षणिकपक्षेऽप्येवं सम्बन्धजनकस्य सर्वदा भावेन सम्बन्धस्य सातत्यं कार्यस्य चेत्यापादयितुं शक्यते, किंतु कार्यस्य कादा-

## पञ्चपादिका

**किमत्रायुक्तम्? सति नियमेऽपि निरपेक्षत्वम्। तथाहि—यः कश्चित् कस्यचित् क्वचिन्नियमः, स तदपेक्षाप्रभावितः; अनपेक्षत्वे नियमानुपपत्तेः। एवं हि कार्यकारणभावसिद्धिः। कार्यार्थिभिश्च विशिष्टानां हेतूनामुपादानम्।**

## पञ्चपादिकाविवरणम्

सहकारिसन्निधानस्य कदाचिद्भावाद् नित्यवत् कार्यजननप्रसङ्गो न युक्तो वर्तत इति। ननु सहकारिसन्निधानादेव कार्योदय-नियमेऽपि धूम-काष्ठसन्तानयोर्नोपकार्योपकारकसम्बन्ध इत्याह—**किमत्रायुक्तमिति**॥ परिहरति—**सति नियम इति**। सहकारिणां कार्येणान्वय-व्यतिरेकनियमेऽपि नोपकार्योपकारकसम्बन्ध इत्युक्तिविरुद्धेत्यर्थः। ननु अन्वय-व्यतिरेकनियमस्योपकार्योपकारकसम्बन्धव्याप्तिः क्व दृष्टेति? दृष्टा कार्य-कारणयोरित्याह—**तथाहि यः कश्चिदिति**॥ उपकार्योपकारकसम्बन्धाभावे जल-धूमयोरिवान्वय-व्यतिरेकनियमानुपपत्तेरिति भावः॥ ननु ययोरेवाग्नि-धूमस्वलक्षणयोः कार्य-कारणभावो दृष्टः, तत्रैवान्वय-व्यतिरेकनियमः, नाग्नि-धूमसन्तानयोः, येनाविशेषात् सर्ववह्निस्वलक्षणेषु धूमस्वलक्षणकारणेषु काष्ठसंयोगासंयोगाभ्यां धूमभावाभावदर्शनेन सहकारिकारणेष्वन्वय-व्यतिरेकनियमोऽपेक्षालक्षणोपकार्योपकारकसम्बन्धश्च स्यात्, तस्मान्न कार्य-कारणस्वलक्षणादन्यत्र सामान्योपाधौ कार्य-कारणयोग्यताप्राप्तिरिति, तत्राह—**एवं हि कार्य-कारणभावसिद्धिरित्यादिना**॥ सामान्योपाधौ हि व्यवहारो दृश्यत इति भावः। अस्तु सामान्योपाधौ जन्य-जनकयोग्यतानियमः, ततः किमिति? तत्राह—**तत्र न यदि**

## तत्त्वदीपनम्

पेक्षत्वेऽपि कारणेनापि सर्वदा संबन्धजननेन सर्वदा कार्यमापादयितुं शक्यत इत्याशङ्क्याह—**नित्येऽपि सहकारीति**। सातत्याभावात् सन्निधेरागन्तुकत्वम्। अतश्च नोक्तदोष इत्यर्थः॥ सहकारिसन्निधानस्य कार्यं प्रत्यन्वय-व्यतिरेकावङ्गीकृत्योपकार्योपकारकभावमाक्षिपति—**ननु सहकारीति**॥ प्रमाणाभावादिति शेषः। एकग्रन्थत्वशङ्कां निरस्यति—**परिहरतीति**॥ प्रमाणाभावादित्युक्तं धुनीते—**सहकारिणामिति**॥ अन्वय-व्यतिरेकनिरपेक्षस्योपकार्योपकारकसंबन्धव्याप्त्यदृष्टेर्नोपकार्योपकारकभाव इत्याह—**नन्वन्वयेति**॥ व्याप्त्यदर्शनमसिद्धमित्याह—**दृष्टेति**॥ **कार्य-कारणयोरिति**—उपादानोपादेययोरित्यर्थः। कस्यचित्कार्यविशेषस्य क्वचिदुपादानकारणविशेषे यः कश्चिदन्वय-व्यतिरेक इत्यक्षरार्थः। नियमानुपपत्तिं स्पष्टयति—**उपकार्येति**॥ सहकारिणां कार्यान्वय-व्यतिरेकवत्त्वभावात्तयोरुपकार्योपकारकभावसंबन्धः, नच तदस्तीति शङ्कते—**ननु ययोरिति**। न द्रष्टुर्व्यक्तिभेदेऽपि तत्सन्तानैक्यादन्वयादिना कार्य-कारणताऽधिगतिर्युक्तेत्यर्थः॥ धूमार्थिनोऽग्न्युपादानोपपत्त्या तज्जातीययोः स इत्युक्तं निरस्यति—**नाग्नीति**। व्यक्तौ हेतु-हेतुमद्भावेऽपि दहनोपादानमुपपद्यते; धूमः दहनोत्थः धूमजातीयत्वात्; संमतवदित्यनुमानादित्यर्थः॥ सामान्योपाधौ कार्य-कारणभाव इत्युक्तं, तत्र हेतुमाह—**सामान्योपाधाविति**। स्वलक्षणयोः कार्य-कारणभावपक्षे दध्यर्थिना दुग्धोपादानं न स्यात्, जातेरभावात्, कल्पितजात्यङ्गीकृतौ सिद्धं नः समीहितम्, सन्तानस्य च अवास्तवत्वात् सन्तानिनो द्रष्टुश्च क्षणिकत्वात् कथमन्वयादिग्रहः स्यादित्यर्थः॥ कार्य-कारणयोः सहकार्यनपेक्षाया उक्तत्वात् पौनरुक्त्यमित्याशङ्क्य तत्प्रपञ्चनार्थत्वान्नैवमित्याह—**तदेवेति**॥ अथवा, कार्य-कारणयोः सहकार्यनपेक्षा कुतः? इति शङ्कायामाह—**तदेवेति**॥

## ऋजुविवरणम्

चित्कत्वेन सम्बन्धकादाचिकत्वमङ्गीकर्तव्यम्, कदाचिदेव सम्बन्धप्रतीत्या वा; तदत्रापि सम्बन्धकादाचित्कत्वेन कार्यकादाचित्कत्वम्, इत्यपिशब्दस्यार्थः। किमत्रायुक्तमित्यसम्बन्धम्; सर्वदा कार्यजननप्रसङ्गस्योभयत्र समानस्योक्तत्वात्, अन्वय-व्यतिरेकसिद्धकारणसन्निधानापेक्षया कादाचित्कत्वस्य साम्यमप्युक्तमेव, तेन नात्राधिकं दृश्यते, इत्याशङ्क्यावतारयति—**ननु सहकारीति**। काष्ठसंयोगाभावेन धूमस्य कादाकित्कत्वं नियन्तुं न शक्यते, इति चोद्याभिप्रायः॥ कस्य केन नियमः? इति न ज्ञायते, तथा "निरपेक्षत्व"मिति च साकाङ्क्षम्; कस्य किमपेक्षा? इत्यनुक्तत्वात्, तदर्थं व्याचष्टे—**सहकारिणामिति**॥ "तथाही"ति पुनरुक्तो ग्रन्थः; पूर्वग्रन्थ एवान्वय-व्यतिरेकनियमेनोपकार्योपकारसम्बन्धस्योक्तत्वात्, अत्रापि "यः कश्चित् कस्यचिन्नियमः स तदपेक्षाप्रभावितः" इति नियमेनोपकार्योपकारकत्वमुच्यते; नचाधिक्येन विना तस्य विवरणमपि सम्भवतीत्याशङ्क्य विषयान्तरं दर्शयति—**नन्वन्वय-व्यतिरेकेति**॥ ननु कार्य-कारणयोरपि नियमेनोपकार्योपकारकत्वे किमत्र कारणमनन्यथासिद्धमुक्तम्? नियममात्रे तु पूर्ववदेव वदितुं शक्यत्वादित्याशङ्क्याह—**उपकार्योपकारकसम्बन्धाभाव इति**॥ "एवं हि कार्य-कारणभावसिद्धिरि"ति कथमुक्तम्? नहि सामान्ययोः कार्य-कारणभावः; तथा स्वलक्षणयोः कार्य-कारणभावेऽपि तत्सिद्धिः समाना, उपादानमपि स्वलक्षणस्यैव, न सामान्यस्येत्याशङ्क्याभिप्रायमाह—**सामान्योपाधाविति**॥ "स्वयं

**पञ्चपादिका**

**तत्र यदि न क्षणिकं कारणं सहकारिणमपेक्षते, नापि तत्कार्यम्, कथं नियमः ? तथाहि—हेतुपरम्पराप्रतिबन्धान्न हेतुः स्वरूपे सहकारिणमपेक्षते न कार्ये, स्वयंजननशक्तेः। नापि कार्यम्; एकस्यापि शक्तिमत्त्वेन प्रसह्यजननात् तत्र सहकारिसन्निधिनियमोऽनर्थकः स्यात्। काकतालीयमुच्यते ? तथाच कार्य-कारणव्यवहाराः सर्वं एवोत्सीदेयुः। तस्मात् क्षणिकस्यापि भावस्य स्वयं जनकस्य स्वरूपानुपयोगिन्यपि सहकारिणि कार्यसिद्धयेऽपेक्षा वाच्या; कार्यस्यैव वा सामग्रीसाध्यत्वात्, तत्र नियमात्। तथा नित्येऽपीति न विशेषं पश्यामः॥**

**तदेवमहंकर्तुः सदैकरूपावगमात् स्थायित्वेऽप्यर्थक्रियासम्भवान्न नीलस्य स्वगतापरोक्षत्वमात्रेण माहायानिकः पक्षः समर्थ्यते, किन्तु ग्राहकस्याहङ्कर्तुरात्मनः स्थायिनोऽभावे। स चैकरूपोऽनुभवाद् युक्तिबलाच्च प्रसाधितः।**

**पञ्चपादिकाविवरणम्**

**क्षणिकं कारणमिति**॥ तदेव साधयति—**तथाहि हेतुपरम्पराप्रतिबन्धादिति**॥ कारणस्य स्वयंशक्तित्वादित्यर्थः। नापि कार्यं सहकारिणमपेक्षत इति, कारणादेव जननादित्यर्थः। ननु वह्निस्वलक्षणाद् धूमजन्मनि काष्ठसंसर्गस्यापि सन्निधानात् तदपि सहकारि कल्प्यत इति ? तन्न; प्रागपि हि कृशानुस्वलक्षणस्य धूमजननयोग्यस्य काष्ठसंसर्गाभावात् तदहेतुत्वलक्षणस्य व्यतिरेकस्य दर्शनमन्तरेणान्वयमात्रान्न सहकारित्वसिद्धिरित्याह—**काकतालीयमुच्यत इति**॥ तर्हि मा भूत् सहकार्यपेक्षेति, कारणमपि मा भूदित्याह—**तथाच कार्य-कारणव्यवहारा इति**॥ तस्मात् क्षणिक-नित्ययोः सहकारिसन्निधानक्रमस्याविशेषात् कारणत्वमविशिष्टमित्युपसंहरति—**तस्मात् क्षणिकस्यापीति**॥ अयमर्थः—यथैकस्मादग्निस्वलक्षणात् समानदेशे वह्निः, उपरिष्टाद् धूमः, अधस्ताद्भस्म, पुरुषे विज्ञानमिति सहकारिभेदेनैकस्मादनेकानि कार्याण्युत्पद्यन्ते, तथैकस्मात् कारणात् कालभेदेन सहकारिभेदात् कार्यभेदा इति॥

तस्मात् सत्यपि विषयाभेदेऽहंसंवेदनस्य यथाप्रतिभासमद्वितीयात् संवेदनाद् भेदेनाप्यर्थक्रियासमर्थतयास्थायित्वमस्तीति महदेतत्सिद्धान्तवैलक्षण्यमस्तीत्युपसंहरति—**तदेवमहङ्कर्तुः सदैकरूपावगमादिति**॥ यत्किञ्चित्साम्येन च सिद्धान्तसाङ्कर्ये मन्त्रार्थवादेतिहास-पुराणप्रामाण्यानभ्युपगमाद् देवता-स्वर्गेश्वर-मोक्षानभ्युपगमात् क्षणिकप्रमाणसम्बन्धस्य क्षणिकस्यैव सत्त्वा-

**तत्त्वदीपनम्**

**हेतुपरम्पराप्रतिबन्धादिति**—पूर्व-पूर्वक्षणादुत्तरोत्तरक्षणोत्पत्तेरित्यर्थः॥ "स्वयं जननशक्तेरि"त्यभिधानात् स्वभाववादशङ्का स्यात्, तदर्थमाह—**कारणस्येति**॥ "जननादि"त्यस्यापेक्षितं पूरयति—**कारणादेवेति**॥ अन्वयभावात् कार्य-कारणतासिद्धेर्न व्यतिरेकापेक्षा, ततश्च व्यक्त्योरेव हेतुत्वान्नातिप्रसङ्ग इति शङ्कते—**ननु वह्नीति**॥ अन्वयमात्रेण कार्यनिष्पादकत्वे पक्वतालफलपतनकालीनकाकसंबन्धस्यापि पतनसाधकतापाताद् नैतदित्याह—**तन्नेति**॥ **प्रागपीति**; काष्ठसंसर्गादिति शेषः। स्पष्टार्थ उत्तरग्रन्थः॥ स्थायिनः कारणत्वेऽप्येकस्यानेककार्यकरत्वं कथम् ? अन्यत्रादृष्टत्वादित्याशङ्क्याह—**अयमर्थ इति**॥ **पुरुषे विज्ञानमिति**—स्वविषयज्ञानमित्यर्थः॥ **सहकारिभेदादिति**॥ एकस्माद् अग्निक्षणात् काष्ठादिसहकारादुत्तरो वह्निक्षणो जायते; आर्द्रतासहकाराद् धूमः; इन्धनसहकाराद् भस्म; नयनसंयोगसहकाराद्विज्ञानमिति॥ परमप्रकृतमुपसंहरति—**तस्मादिति**॥

विषय-चैतन्ययोरभेदमात्रेणापसिद्धान्तः स्यादित्याशङ्क्य, सर्वसिद्धान्तसंकरः स्यादित्युक्तं विवृणोति—**यत्किंचिदिति**॥ किमेतद् गुरोश्चोद्यम् ? उत वार्तिककारस्य ? अथवैकदेशिनः ? इति विकल्प्याद्यं प्रत्याह—**मन्त्रेति**॥ **प्रामाण्या-**

**ऋजुविवरणम्**

जननशक्तेरि"त्यत्र कस्य स्वयंजननशक्तिरिति न ज्ञायते, तदर्थं व्याचष्टे—**कारणस्येति**॥ एकस्यापि प्रसह्य बलाद् जनकत्वमुक्तम्, तत्र कस्यैकस्य ? इति न ज्ञायते; अथवा "शक्तिमत्त्वेन जननादुत्पत्तेरि"त्युक्तम्, तत्र कस्मादिति न ज्ञायते; तदर्थं व्याचष्टे—**कारणादेवेति**॥ अथ सामान्योपाधावेव व्यवहार इति नियन्तुं न शक्यते; स्वलक्षणोपाधावपि ज्ञातुं शक्यत्वात्। अतश्च नास्मत्पक्षे सर्वदा कार्यजननमापादयितुं शक्यते, इत्यभिप्रायेण चोदयति—**ननु वह्निस्वलक्षणादिति**॥ नन्वन्वय-व्यतिरेकनियमात् सहकार्यपेक्षत्वमस्तु, ननु क्रमेणानेककार्यकरत्वं भवति, एकस्यानेककार्यादर्शनात्; सम्भवेऽपि सकृदेव जनकत्वान्न स्थायित्वसिद्धिरित्याशङ्क्य व्याचष्टे—**अयमर्थो यथैकस्मादिति**॥

**मन्त्रार्थवादेति** अन्यपरत्वात् **प्रामाण्यानभ्युपगमादित्युक्तम्**॥

## पञ्चपादिकाविवरणम्

भ्युपगमाद् लोकायत-बौद्धांशद्वयपरिणतः प्राभाकरः, भेदाभेदाभ्युपगमाद् मन्त्राद्यप्रामाण्याच्च लोकायत-क्षपणकांशद्वयपरिणतो वार्तिककारः। यस्तु कश्चित्—क्षपणकपादावनतशिरोबिम्बस्तत्त्वदर्शन-तन्निष्ठपरमहंसप्रद्वेषतीव्रवायुविक्षिप्तविवेकविज्ञानलवः स्व-परपक्षगुण-दोषविभागदूरीकृतविज्ञानो भेदाभेदाभ्यां बन्ध-मोक्षादिसङ्करमिव कुर्वन् दुर्ज्जनरमणीयां वाचं जल्पति—'सुगत-विज्ञानवादसमानोऽयं वेदान्तवाद' इति; स सम्प्रदायश्रवणपरिचयशून्यतया दर्शनविवेकमनवबुद्ध्यमानो नापवाद्यः; किन्तु शोचनीय इत्युपेक्षणीयो विद्वद्भिः॥

ननु विज्ञाने प्रपञ्चस्य कल्पितत्वं तव तस्य च तुल्यम्? सत्यम्; विज्ञाने प्रतिभास्यमानत्वं च तव तस्य च तुल्यम्, इति विज्ञानवादस्त्वदीयं दर्शनं किं न स्यात्? सत्यपि प्रतिभास्यत्वे सत्य-मिथ्याविभागोऽस्तीति चेत्? इहापि सत्यपि मिथ्यात्वेऽर्थक्रियासामर्थ्यसत्त्वासत्त्वविभागोऽस्त्येव। कल्पितत्वे नेयं विभागसिद्धिरिति चेत्, प्रतिभास्यत्वेऽपि न सत्यमिथ्या-विभागसिद्धिः। दृश्यतेऽयं विभाग इति चेत्? तदेव विभागदर्शनं मम किं न स्यात्? घटादेर्मिथ्यात्वमप्रसिद्धमिति चेत्? न;

## तत्त्वदीपनम्

**नभ्युपगमात्** स्वार्थे प्रामाण्यानभ्युपगमादित्यर्थः। विग्रहवती चतुर्थ्यन्तशब्दातिरिक्तदेवता नाभ्युपेयते गुरुणा, तथेतराभ्यामिति साम्यम्। तथा मन्त्रादिप्रसिद्धस्वर्गाद्यनभ्युपगमोऽप्यविशिष्टः। वेदान्तप्रसिद्धमोक्षानभ्युपगमोऽपीति। द्वितीयं दूषयति—**भेदाभेदेति**॥ तृतीयमुत्थापयति—**यस्त्विति**। क्षपणकस्य पादौ क्षपणकपादौ तयोरवनतं शिरोबिंबं यस्य तथोक्तः, अनेन च विशेषणेन भेदाभेदवादित्वेन क्षपणकविनेयत्वम्, ततस्तत्समयस्योपेक्ष्यत्वमुक्तम्॥ तत्त्वज्ञानशून्यत्वाच्च तन्मतमुपेक्ष्यमित्याह—**तत्त्वदर्शनेति**। तत्त्वदर्शनं च तन्निष्ठपरमहंसश्चेति तत्त्वदर्शन-तन्निष्ठपरमहंसौ, तयोः प्रद्वेष एव तीव्रो वायुः, तेन विक्षिप्तो विवेकज्ञानलवो यस्य, स तथोक्तः॥ न्यायशून्यत्वाच्चोपेक्ष्यत्वमित्याह—**स्वपरेति**। स्वस्य परस्य च पक्षौ स्व-परपक्षौ, तयोर्गुणा दोषाश्च स्वपरपक्षगुण-दोषाः, तेषां विभागे दूरीकृतं ज्ञानं यस्य, स तथोक्तः॥ दृष्टादृष्टार्थप्रवृत्ती च तस्य न संभवत इत्याह—**भेदेति**॥ बन्धस्यापुरुषार्थत्वान्मोक्षस्य च तदभिन्नत्वान्न तदर्था प्रवृत्तिः, नापि बन्धार्था; मोक्षाभिन्नतया बन्धासंभवात्। **आदिशब्देन** ब्राह्मण्यादिकं गृह्यते। तर्हि किं तज्जल्पनं व्यर्थम्? तत्राह—**दुर्जनेति**॥ अपवाद्यत्वाभावे हेतुमाह—**संप्रदायेति**। वेदान्तसंप्रदायश्रवणाभावात् तत्परिचयाभावाच्च वेदान्तसमयस्य बौद्धसिद्धान्तादन्तरं न जानाति। तस्मान्नापवादयोग्यत्वम्; "विवादश्च विवाहश्च समैरेवेष्यते बुधैरि"ति न्यायादित्यर्थः॥ तर्हि स्त्रीकार्यत्वं प्राप्तमित्याह—**किन्त्विति**॥ तत्रापि न योग्यतेत्याह—**शोचनीय इति**॥

संप्रदायश्रवणादिशून्यत्वमसिद्धमिति क्रुद्धः शङ्कते—**ननु विज्ञान इति**॥ कल्पितत्वमात्रमङ्गीकरोति—**सत्यमिति**॥ तर्ह्यन्यसमयापत्तिरित्याशङ्क्य, त्वत्पक्षेऽप्येतद् दूषणं तुल्यमित्याह—**विज्ञान इति**॥ वैधर्म्यान्तरसद्भावान्न मे विज्ञानवादापत्तिरिति शङ्कते—**सत्यपीति**॥ प्रतिभास्यं सत्यं मम, इतरस्य तु मिथ्येति वैधर्म्यात् कथमपसिद्धान्त इत्यर्थः। तुल्यमुत्तरमित्याह—**इहापीति**॥ स्वप्नोपलब्धकलधौतादौ सत्यमिथ्याविभागाभावात्कल्पितत्वेन विभागासिद्धिरिति शङ्कते—**कल्पितत्व इति**॥ साम्येन दूषयति—**प्रतिभास्यत्व इति**। प्रतिभास्यत्वाविशेषात् सत्यत्वं मिथ्यात्वं चोभयोः स्यात्, न वैषम्यमित्यर्थः। अनुभवावष्टम्भेन विभागं शङ्कते—**दृश्यत इति**। स्वप्नदृश्यस्य मिथ्यात्वम्, जाग्रद्दृश्यस्य च सत्यत्वम्, इत्येवंविधो विभागोऽनुभवसिद्धत्वान्न निराकार्य इत्यर्थः। स्वप्नोपलब्धस्यार्थक्रियाऽसमर्थत्वम्, जाग्रद्दृश्यस्य च वैपरीत्यमित्यनुभवादेव स्वीकार्यमित्याह—**तदेवेति**॥ जाग्रद्दृष्टस्य मिथ्यात्वासिद्धेर्नायं विभागो युक्त इति शङ्कते—**घटादेरिति**॥ जाग्रद्दृश्यस्य ममासिद्धत्वाद्विभागासिद्धिस्तुल्येत्याह—**न प्रतिभास्येति**॥ त्वन्मते सर्वस्य मिथ्यात्वात् कस्यचिदर्थक्रियाकारित्वम्, कस्यचिन्नेति

## ऋजुविवरणम्

**दृश्यतेऽयं विभागः** इत्यस्यायमर्थः—स्वप्नादिदृश्ये पदार्थे मिथ्यात्वम्, जाग्रद्दृश्ये सत्यत्वमिति। **तदेव विभागदर्शनमिति**॥ अयमर्थः स्वप्नादौ नार्थक्रियाकारित्वम्, इतरत्रार्थक्रियाकारित्वमिति॥ **घटादेरिति**। मिथ्यात्वे प्रमाणतः सिद्धेऽर्थक्रियानिमित्तो विभाग इति वक्तुं शक्यते; तदभावात् सत्यत्वे न विभाग इति भावः॥ **प्रतिभास्येति**॥ सिद्धे हि सत्यत्वे तन्निमित्तो विभागः; अर्थक्रियायाः सत्यत्वसापेक्षत्वात्। तदभावे तु सत्यत्वेन विनाऽप्यर्थक्रियाया विद्यमानत्वात् तन्निमित्तो विभागो भवेत्, न त्वन्यतरनिर्णय इत्याशङ्क्याह—**शुक्तिरजत-घटयोरिति**। ननु मिथ्याभूतस्यान्यत्र कार्यकरत्वे दृष्टे, शुक्ति-

### पञ्चपादिका

**ननु नानुमेयादिष्वपरोक्षता दृश्यते ? उच्यते; नानुमेयादिष्वपरोक्षत्वम्; स्वज्ञानोत्पत्तावव्यापृतत्वात्,**

### पञ्चपादिकाविवरणम्

प्रतिभासस्यसत्यत्वस्याप्यसिद्धत्वात् । शुक्तिरजत-घटयोरर्थक्रियाभावाभावसत्त्वासत्त्वविभागदर्शनाच्च । दृश्यते च माया प्रीति-द्वेषादिकारणम् । श्रूयते च देवासुरसंग्रामादिषु मायाविनिर्मितशस्त्रभेदानां दाह-च्छेद-भेदादिहेतुत्वमित्यलमतिप्रसङ्गेन ॥

ननु विषयस्यापि चैतन्यव्यञ्जकतयाऽपरोक्षत्वेऽनुमानादिष्वपि तथा स्यात्, न तथा दृश्यत इति चोदयति—**ननु नानुमेयादिष्विति** ॥ अन्तःकरणपरिणामसंसर्गकृतयोग्यत्वापत्त्या विषयस्य चैतन्यं प्रति व्यञ्जकत्वम्, तदनुमेयादिष्ववर्तमानत्वसम्भवात्तेषु वर्तमानधर्मद्वयोत्पत्त्ययोगान्नापरोक्षतेति परिहरति—**नानुमेयादिष्वपरोक्षत्वमिति** ॥ **अव्यापृतत्वादिति**—कारकत्व-व्यञ्जकत्वधर्मद्वयानुपपत्तेरित्यर्थः । नहि विनष्टे घटेऽग्निसंयोगाल्लौहित्यमुत्पद्यते । ननु अतीतानागताकारेण वृष्ट्यादेर्वर्तमानत्वमपि दृश्यते, न; वृष्टेर्युगपदतीतत्व-वर्तमानत्वायोगात् अतीतताधर्मस्यापि वर्तमानकालो घटादेरिव नान्वयितयाऽव-

### तत्त्वदीपनम्

विभागः कथं घटेत ? इत्याशङ्क्यानुभूयमानत्वान्न विरुध्यत इत्याह—**शुक्तीति** ॥ मिथ्याभूतस्यार्थक्रियाकारित्वं संमतं चेत्याह—**दृश्यते चेति** ॥ मायात्मकहस्त्यादिज्ञानस्य प्रीत्यादिकारणत्वम्, न हस्त्यादेरित्याशङ्क्य दृष्टान्तान्तरमाह—**श्रूयते चेति** ॥ असत्यस्यापि प्रतिबिम्बादेः सत्यबिम्बादिबोधकत्वं चोदाहार्यमित्याह—**अलमिति** ॥

अहंकर्तुः स्थायित्वप्रसाधनस्य प्रस्तुतत्वादनुमेयादिष्वापरोक्ष्याभावचोद्यस्यासङ्गतिमाशङ्क्याह—**नन्विति** । प्रसङ्गागतं सुगतसमयं निरस्य, प्रस्तुतां प्रतिकर्मव्यवस्थामास्थायेदं चिन्त्यत इत्यर्थः ॥ प्रत्यक्षविषयवदेवानुमेयस्यापि व्यापृतत्वसंभवात् कथमव्यापृतत्वाभिधानम् ? इत्याशङ्क्य, संभवं दर्शयितुमापरोक्ष्यप्रयोजकमाह—**अन्तःकरणेति** ॥ **योग्यत्वशब्देन** जाड्याभिभवो गृह्यते । परिणामद्वारा संसृष्टविषयस्य व्यञ्जकत्वं भवतु, तथाऽप्यनुमेयादेः कथं नापरोक्ष्यम् ? तत्राह—**तदनुमेयादिष्विति** । **तत्** तत्र । परिणामसंसृष्टविषयस्य चैतन्यव्यञ्जकत्वे सत्यनुमेयादिषु नापरोक्षतेति संबन्धः । तत्र हेतुमाह—**अवर्तमानत्वसंभवादिति** ॥ कारणत्व-व्यञ्जकत्वे **धर्मद्वयशब्दार्थः** । "अव्यापृतत्वादि"त्यत्र कारणताऽभावाभिधानाद् धर्मद्वयोत्पत्त्ययोगादिति कथमुक्तम् ? तत्राह—**अव्यापृतत्वादिति** । अव्यापृतत्वमुपलक्षणार्थमित्यर्थः ॥ धर्मद्वयानुत्पत्तौ हेतुमाह—**नहीति** ॥ अवर्तमानत्वं किं स्वरूपेण ? आहो अतीताद्याकारेण ? इति विकल्पाद्यमङ्गीकृत्य द्वितीयेऽसिद्धिमाह—**नन्विति** ॥ विकल्पासहत्वान्नैतदित्याह—**नेति** ॥ अतीताद्याकारेण वृष्टिर्वर्तत इति कोऽर्थः ? वृष्टिः स्वरूपेण वर्तते ? आहो तस्यातीतादिर्धर्मः ? नाद्य इत्याह—**वृष्टेरिति** ॥ द्वितीयं प्रत्याह—**अतीतेति** । घटोऽस्तीत्युक्ते वर्तमानकालान्वयित्वं घटस्य यथोपलभ्यते, तद्वदतीतत्वादिधर्मस्य वर्तमानकालान्वयित्वं न घटते; धर्मिव्यतिरेकेण धर्मस्यासंभवादित्यर्थः ॥ 'संप्रति वृष्टिरतीता वर्तते, इत्यादिव्यपदेशस्य का गतिरिति शङ्कते—**किन्त्विति** ॥ वृष्टेर्वर्तमानकालसंबन्धाभावापेक्षयाऽयं व्यपदेश इत्याह—**प्रतियोगितयेति** ॥ 'घटो ने'त्यत्र यथा घटस्याभावप्रतियोगितयाऽवच्छेदकत्वं प्राप्तम्, तथा प्राक्कालसंबन्धित्वस्य वर्तमानकालविरोधात्

### ऋजुविवरणम्

रजत-घटादेर्मिथ्यात्वाविशेषेऽपि कस्यचिदर्थक्रियाकारित्वम्, कस्यचिद् न, इति विभागः सिद्ध्येत्, तदभावेऽर्थक्रियासामर्थ्यादिव सत्त्वसिद्धेस्तदेव भेदकं भवेदित्याशङ्क्याह—**दृश्यते चेति** ॥ ननु ज्ञानमेव सत्यं तत्र प्रीत्यादिकारणम्, न मिथ्याभूतोऽर्थ इति वक्तुं शक्यते, इत्याशङ्क्यान्यदुदाहरति—**श्रूयते चेति** ॥

"ननु नानुमेयादिष्वि"त्यसंगतो ग्रन्थ इत्याशङ्क्य सङ्गतिमाह—**ननु विषयस्यापीति** ॥ "नानुमेयादिष्वि"ति परिहारोऽगमकः; प्रत्यक्षवदेव परोक्षस्य वक्तुं शक्यत्वात्, वैषम्याभावात् । "अव्यापृतत्वादि"ति चासिद्धम्; प्रत्यक्षवदेव व्यापारस्यापि वक्तुं शक्यत्वादित्याशङ्क्यावतारयति—**अन्तःकरणपरिणामेति** ॥ ननु धर्मद्वयोत्पत्त्ययोगाद् नापरोक्षतेति कथमुक्तं टीकाकारेण ? अव्यापृतत्वमेवापरोक्षत्वाभावे कारणत्वेनोक्तं यतः, ततो विरोधः, असिद्धिश्चेत्याशङ्क्य व्याचष्टे—**अव्यापृतत्वादिति** ॥ **कारकत्वेति** ॥ ननु वर्तमानेऽपि वृत्तिसङ्गात् कारकत्वं व्यञ्जकत्वं चोत्पद्यतामित्याशङ्क्याह—**नहि विनष्ट इति** ॥ ननु अतीतताधर्मो वर्तमानकालसम्बन्धितया प्रतीयते, अतस्तेनाकारेण वर्तमानस्य घटादेः कारकत्वादि भविष्यतीत्याशङ्क्याह—**अतीतताधर्मस्यापीति** ॥ ननु अतीतताधर्मस्य वर्तमानत्वाभावे तस्याभाव एव स्यात्; तथा सति घटस्य वर्तमानत्वप्रसङ्गः, अतश्चातीताकारस्य वर्तमानत्वात् तेनाकारेण कारकत्वादि भवेदित्याशङ्क्याह—**किंचातीताकारेणेति** ॥ प्रत्यक्षेऽपि तर्हि कार-

## पञ्चपादिका

लिङ्गादीनामेव कुतश्चित्सम्बन्धविशेषाद्विशिष्टैकार्थज्ञानहेतुत्वात्, प्रमेयस्य च स्वज्ञानोत्पत्तिहेतुत्वे प्रमाणाभावात्। अलं प्रसङ्गागतप्रपञ्चेन। स्वावसर एवैतत् सुगतमतपरीक्षायां निपुणतरं प्रपञ्चयिष्यामः॥

तदेवमहङ्कारग्रन्थिरस्मच्छब्दसंशब्दितः। प्रत्ययश्चासौ; आदर्श इव प्रतिबिम्बस्यानिदश्चित्संवलितत्वेन तस्याभि-

## पञ्चपादिकाविवरणम्

च्छेदकः, किन्तु प्रतियोगितया, इति घटादिवन्न वर्तमानतासिद्धिः। किंच अतीताकारेण वर्तमानस्य नेदानीन्तनक्रियागुणाश्रयत्वम्; अतीताकारतया वर्तमानस्य घटस्य वर्तमानलौहित्यगमनाश्रयत्वादर्शनात्। अतो नानुमेयादिषु कारकत्व-व्यञ्जकत्वे युक्ते। प्रत्यक्षे पुनरिन्द्रियसंयोगस्य गुणस्य गुणिव्यापारमन्तरेणाव्यापाराद् युक्तो विषयस्य सामग्र्यन्तर्भाव इति। कथं तर्हि विषयव्यापाराभावेऽनुमेयादिषु विषयाकारता विज्ञानस्येति ? तदाह—**लिङ्गादीनामेवेति**॥ ननु अतीते वर्तमानविषयत्वजन्मवत् कारकत्वमपि स्यादिति ? नेत्याह—**प्रमेयस्य चेति**॥ विषयत्वं नामानुमेयेषु सुषुप्तिव्यावृत्तिः। सा चामावस्तद्धर्मो न भवति। विज्ञानाकारताऽपि न विषयव्यापारः, किंतु विज्ञानस्यैव, इति नातीतेऽर्थक्रियाकारित्वम्। जानातेश्चानुमेयादिषु फलापेक्षया सकर्मकत्वम्, न कर्मकारकापेक्षयेति; सकर्मकारकत्वे च प्रत्यक्षवदपरोक्षताऽपि स्यादिति॥

अर्थमुपवर्ण्येदानीम्—"अस्मत्प्रत्ययविषयत्वादि"ति भाष्यं योजयति—**तदेवमहङ्कारग्रन्थिरिति**॥ ननु "शारीरः" "क्षेत्रज्ञः"इत्यादिबहुविधोपाधिसंसृष्टमात्मानं वर्णयति श्रुतिः; तत्र कथमहङ्कारस्यैवोपाधितेति चोदिते, अहङ्कार-तत्संस्कारो-

## तत्त्वदीपनम्

तस्य तत्प्रतियोगितयाऽवच्छेदकत्वमिति वाऽऽह—**प्रतियोगितयेति**॥ अतीताद्याकारेण वृष्टेर्वर्तमानत्वमङ्गीकृत्य वर्तमानधर्माश्रयत्व निराकरोति—**किंचेति**॥ कर्मकारकव्यापारं विनाऽनुमानोदयवत् प्रत्यक्षोदयोऽपीपि घटादेः कारकत्वासिद्धिरित्याशङ्क्याह—**प्रत्यक्ष इति**। गुणानां निष्क्रियत्वाङ्गीकरणात् संयोगस्य व्यापारानुपपत्तेर्गुणिनोऽर्थस्य व्यापारो वक्तव्यः, इति कर्मतया जनकत्वमित्यर्थः॥ ज्ञानस्य विषयाकारत्वात् तज्जन्यत्वमाश्रयणीयम्, अन्यथा न तदाकारत्वं सिध्यतीति शङ्कते—**कथं तर्हीति**॥ विषयस्य ज्ञानजननव्यापाराभावेऽपि लिङ्गादीनामविनाभावादिसंबन्धविशेषाद्विषयाकारज्ञानजनकत्वं युक्तमित्याह—**तदाहेति**॥ अतीतादेः कारकत्वानुपपत्तिवद् विषयत्वमपि न स्यात्; अन्यथा कारकत्वमपि दुर्वारं स्यादिति शङ्कते—**नन्वतीत इति**॥ विषयत्वस्यैवाभावान्न कारकत्वप्रसक्तिरित्याह—**नेत्याहेति**॥ विषयत्वस्योपलभ्यमानत्वात् कथं तदभावः ? इत्याशङ्क्य, विषयत्वाभावं दर्शयितुं विषयशब्दार्थमाह—**विषयत्वं नामेति**॥ **सुषुप्तिव्यावृत्तिः** तद्विषयाज्ञाननिवृत्तिरित्यर्थः। ततः किमिति ? अत आह—**सा चेति**॥ अज्ञानस्यात्माश्रयत्वात् तद्व्यावृत्तेरप्यात्माश्रयत्वं युक्तमित्यर्थः। अविद्यमानस्याप्यर्थस्य बुद्धौ प्रतिबिम्बितत्वाद् जनकत्वं किं न स्यादिति ? तत्राह—**विज्ञानेति**। विज्ञाने धर्मिणि या विषयस्याकारता स्वप्रतिबिम्बनम्, असौ न विषयव्यापारः; तस्य नष्टत्वादित्यर्थः॥ कथं तर्हि विज्ञाने विषयाकारता ? इति पृच्छति—**किंत्विति**॥ अविनाभावादिसंबन्धबलाद् ज्ञानमेव तदाकारमित्याह—**विज्ञानस्येति**॥ जानातेः सकर्मकत्वनियमात् कथं कर्मासंभवः ? इत्याशङ्क्याह—**जानातेरिति**॥ **फलापेक्षयेति** सुषुप्तिव्यावृत्त्यपेक्षयेत्यर्थः। विपक्षे बाधमाह—**सकर्मकारकत्व इति**। अवर्तमानस्य कारकत्वानुपपत्तावपि वर्तमानस्यानुमेयस्य कारकत्वं स्यादिति चेत् ? मैवम्; इन्द्रियसंयुक्तस्यार्थस्य कर्मकारकत्वम्, अनुमेयस्य चेन्द्रियासंयुक्तत्वात् कथं कारकत्वमित्यर्थः॥

अनुमेयापरोक्ष्यासंभवस्य प्रस्तुतत्वात् "तदेवमि"त्यत्र तस्यैवोपसंहरणं प्रतिभाति। नच तदुपपद्यते; अस्मत्प्रत्ययविषयत्वव्याख्यानरूपत्वात्तस्येत्याशङ्क्याह—**अर्थमिति**॥ **नन्विति**॥ **तत्र**—वेदान्तार्थं एवं स्थिते सतीत्यर्थः, अतोऽहङ्कारस्येद-

## ऋजुविवरणम्

कत्वं व्यञ्जकत्वं च मा भूत्; तेन विनाऽप्यनुमानज्ञानवदुत्पत्त्युपपत्तेरित्याशङ्क्याह—**प्रत्यक्षे पुनरिति**॥ कथं ज्ञानोत्पत्तिहेतुत्वे प्रमाणाभावः ? विषयत्ववदेवानुमातुं शक्यत्वादित्याशङ्क्याह—**विषयत्वं नामेति**॥ ननु ज्ञाने स्वाकारसमर्पकत्ववद् ज्ञानजनकत्वमस्यापि स्यादिति ? नेत्याह—**विज्ञानाकारताऽपीति**॥ कथं तर्हि अनुमेयादिषु सकर्मकजानातेः प्रयोगः—'अग्निं जानाती'ति ? तत्राह—**जानातेरिति**॥ कथं फलापेक्षयैव सकर्मकत्वम्, न मुख्यकर्मापेक्षयेति ? तत्राह—**सकर्मकारकत्वे चेति**॥

"तदेवमि"त्युपसंहार इति प्रतिभाति, नतु तथात्वम्; भाष्यव्याख्यानप्रतीतेः। नच तदपि युक्तम्; "अस्मत्प्रत्ययत्वाभिमतोऽहंकारः", "तदेवं यद्यपी"त्यनेन पौनरुक्त्यप्रसङ्गादित्याशङ्क्य विषयभेदमाह—**अर्थमुपवर्ण्येति**॥ अथवा अस्य भाष्यस्य

## पञ्चपादिका

**व्यक्तिहेतुत्वात्। अतस्तस्य विषयवद् भवतीत्युपचारेणानिदं चिदात्मधातुरस्मत्प्रत्ययविषय उच्यते। स पुनरेवम्भूतो जाग्रत्स्वप्नयोरहमुल्लेखरूपेण, सुषुप्ते तत्संस्काररञ्जिताग्रहणाविद्याप्रतिबद्धप्रकाशत्वेन च गतागतमाचरन् संसारी, जीवः विज्ञानघनः, विज्ञानात्मा, प्राज्ञः, शरीरी, शारीरः, आत्मा, सम्प्रसादः, पुरुषः प्रत्यगात्मा, कर्ता भोक्ता, क्षेत्रज्ञ इति च श्रुति-स्मृतिप्रवादेषु गीयते।**

**किञ्च न केवलमस्मत्प्रत्ययविषयत्वादध्यासार्हः; अपरोक्षत्वाच्च,**

## पञ्चपादिकाविवरणम्

परक्ताज्ञानोपाधिकस्यैवात्मनोऽवस्थात्रयेऽपि बाह्यबहुविधोपाध्यन्तरनिमित्तोऽयं व्यपदेश इत्याह—**स पुनरेवंभूतो जाग्रत्स्वप्नयोरिति॥ गतागतमाचरन्नित्येकानेकोपाध्युपराग** उच्यते।

सविकल्पकेऽधिष्ठाने सविकल्पाध्यास इति वदता—"अस्मत्प्रत्ययविषयत्वा"दिति परिहार उक्तः। इदानीं निर्विकल्पकेऽपि सविकल्पाध्यासः संभवतीत्याह—**किंच न केवलमिति**॥ ननु नित्यानुमेय आत्मा कथमपरोक्षतया सिद्ध इति? नेत्याह—

## तत्त्वदीपनम्

मनिदंरूपत्वम्; इदमाकारस्यान्तःकरणपरिणामसंसृष्टतया चैतन्यव्यञ्जकत्वम्; नचापराद्धान्तः; चैतन्यस्याद्वितीयत्वात्; नवाऽनुमेयस्यापरोक्षता; इत्येवं विषयधर्मजातं **तच्छब्दार्थः** (टीकायाम्)॥ अस्मत्प्रत्ययशब्दार्थस्य सप्रपञ्चं प्रतिपादनात्—"अपरोक्षत्वादि"ति भाष्यं व्याख्यायताम्, किं "स पुनरि"त्यादिना? इत्याशङ्क्य तद्व्यावर्त्यां शङ्कां दर्शयति—**नन्विति**। आत्मनोऽनेकोपाधिसंबद्धत्वादहंकारस्यैवोपवर्णने भाष्यकारस्य कोऽभिप्राय इति चोद्यार्थः। कार्याध्यासेऽहंकाराध्यासस्य प्राधान्येनोपवर्णनमिति समाधानग्रन्थार्थः॥ जाग्रत्स्वप्नयोरहंकारस्योपाधित्वम्, सुषुप्तावविद्याया उपाधित्वमित्युपाधिद्वयशङ्का स्यात्, तदर्थमाह—**गतागतमिति**॥

(टीकायाम्) **स पुनरिति**—एवंभूतश्चिदेकरसः। अहमित्युल्लिख्यत इत्यहमुल्लेखः, तद्रूपेण तदुपाधिनेत्यर्थः॥ सुषुप्तावहमुपाध्यभावान्मुक्तिः स्यादित्याशङ्क्याह—**सुषुप्त इति**॥ अविद्यायाः प्रतिबन्धकत्वं च न अग्रहणोत्तरकालमित्याह—**अग्रहणेति**॥ जागरितात् स्वप्नं स्वप्नात् सुषुप्तं तद्विपर्ययेणागमनमित्येवं **गतागतशब्दार्थः**। **जीवः** प्राणोपाधिः। तेजोरूपान्तःकरणैक्याध्यासाद् **विज्ञानघनत्वम्**। तादात्म्याध्यासेन **विज्ञानात्मत्वम्**। अज्ञानैक्याध्यासेन च **प्राज्ञत्वम्**। शरीरसंबन्धाध्यासमाह—**शरीरीति**॥ **शारीर** इति—शरीरप्रेरकतया स्थित इत्यर्थः। न केवलं तत्रैव स्थितः, किं त्वन्यत्रापीत्याह—**आत्मेति**॥ सुषुप्त्यवस्थासंबन्धमाह—**संप्रसाद** इति॥ शरीरैक्याध्यासे कर-शिरश्चरणादिमत्त्वभ्रमविषय इत्याह—**पुरुष** इति॥ **प्रत्यगात्मेति** विशेष्यनिर्देशः। अन्यस्य कर्तृत्वमन्यस्य भोक्तृत्वमिति शङ्कां निरस्यति—**कर्ता भोक्तेति**॥ क्रियावद्बुद्ध्यैक्याध्यासात्कर्तृत्वम्, सुखाद्याकारेण परिणतबुद्धिद्रष्टृतया भोक्तृत्वम्। तत्रोपपत्तिमाह—**क्षेत्रज्ञ इति**॥

अस्मत्प्रत्ययविषयत्वाभावेऽप्यपरोक्षत्वादधिष्ठानं व्यर्थमित्याशङ्क्याह—**सविकल्पक इति**॥ इन्द्रियाविषयत्वे कथमपरोक्षत्वम्? इति शङ्कायां प्रत्यगात्मप्रसिद्धेरित्यभिदधौ, तत्र प्रसिद्धिरन्यथासिद्धेत्याह—**नन्विति**। अन्तःकरणे चित्प्रति-

## ऋजुविवरणम्

व्याख्यानेन समापितस्य क्षणभङ्गनिराकणेन व्यवहितस्य पुनर्व्याख्याने कः प्रसङ्गः? इत्याशङ्क्याह—**अर्थमुपवर्ण्येति**॥ "स पुनरेवंभूतः"इत्यनेनाहंकार-तत्संस्कारसहिताविद्याप्रतिबन्ध[विव]स्यैवानेकव्यपदेश इति प्रदर्शितम्, तत् किमर्थम्? नहि तन्निरूपणस्येदानीं संगतिरस्तीत्याशङ्क्योपयोगमाह—**ननु शारीरः क्षेत्रज्ञ इति**॥ "गतागतमाचरन्नि" किमर्थम्? न ह्यनेन व्यपदेशहेतुरुक्तः; गतागतं गमनागमनमिति क्रियामात्रप्रतीतेः। नच क्रियामात्रनिमित्ताः शरीरित्वादिव्यपदेशाः। अतस्तद्व्यपदेशहेतुं विहाय नैतत्कीर्तनं युक्तम्। नच 'गतागतमि'ति कर्मणि निष्ठां कृत्वोपाधिविवक्षा; तथाऽप्युपाधिद्वयप्रतीतेर्नानेकव्यपदेशः समर्थितः स्यादित्याशङ्क्य व्याचष्टे—**एकानेकोपाध्युपराग इति**॥

"किंच न केवलमि"त्यनेनोत्तरभाष्यं युक्त्यन्तरपरत्वेन व्याख्यातमिव दृश्यते, तदनुपपन्नम्; तथा सति विषयत्वमेवाध्यासे मुख्यकारणमङ्गीकृतं भवेत्, तथा सति "न तावदयमेकान्तेने"त्यनेन विरोधः स्यात्। तथा—"न; अनादित्वेन प्रत्युक्तत्वादि"त्येतद्व्याख्यानावसरे निर्विकल्पकेऽपि सविकल्पकाध्यासः संभवतीत्युक्तम्; तथा "अप्रत्यक्षेऽपी"त्यत्राप्युच्यते, तद्विरोधश्च स्यादित्याशङ्क्यावतारयति—**सविकल्पकेऽधिष्ठान इति**॥ कथं स्व-परसंवेद्ययोर्विशेषो न स्यात्? स्वसंवेद्य-परसंवेद्य-

### पञ्चपादिका

तत्साधनार्थमाह—प्रत्यगात्मप्रसिद्धेरिति ॥ **न ह्यात्मन्यप्रसिद्धे स्व-परसंवेद्ययोर्विशेषः। नच संवेद्यज्ञानेनैव तत्सिद्धिः; अकर्मकारकत्वाद, अतिप्रसङ्गात्।**

### पञ्चपादिकाविवरणम्

**नह्यात्मन्यप्रसिद्ध इति** ॥ स्व-परयोः-'मयेदं विदितमि'ति कर्तृ-कर्मसम्बन्धावगमशून्यत्वाविशेषात्। अनुभवनिमित्तज्ञानाश्रयत्वमन्यतरस्य विशेष इति चेत्? न; आत्मपदार्थानुभवाभावे सम्बन्धावगमायोगात्, अनुभवसम्बन्धाभावाविशेषेऽन्यतराश्रयज्ञानानुमानायोगादिति भावः। अस्तु तर्हि विषयानुभवाश्रयतया सिद्धिरिति? नेत्याह—**नच संवेद्यज्ञानेनेति** ॥ ननु संवित् स्वोपाधिं साधयति, न कर्मकारकमिति? न तावदाश्रयत्वमुपाधिः, विषयेऽभावात्। आश्रयविषयत्वमुपाधिरिति चेत्? किं विषयत्वं नाम? संवित्प्रयुक्तव्यवहारयोग्यत्वमिति चेत्? न; आत्माऽपि तर्हि विषयः स्यात्। आश्रयव्यतिरिक्तत्वे सति संविद्व्यावर्तकत्वमिति चेत्? चक्षुषोऽपि प्रसङ्गः। नचाश्रयव्यतिरिक्तत्वे सति तत्प्रयुक्तव्यवहारयोग्यो विषयः; संवित्तदाश्रयसम्बन्धस्यापि

### तत्त्वदीपनम्

'बिम्बोदयः, तादृशबिम्बपूर्वकः, प्रतिबिम्बत्वात्; संमतवदित्यनुमानादात्मसिद्धिरित्यर्थः ॥ स्वप्रकाशत्वेनात्मनोऽपरोक्षत्वात्तद्विरुद्धं परोक्षत्वाभिधानमित्याशयेन स्वप्रकाशत्वं तावदाह—**नेत्याहेति** ॥ "मयेदं विदितमि"ति विशिष्टप्रत्ययस्तावदनुभूयते। तत्रायमात्मा विशेषणप्रतिपत्तिपूर्वकः? उत न? इति विकल्प्यान्त्यनिरासार्थम्—"न ह्यात्मनी"त्युक्तम्, तत्र स्वविदितत्वलक्षणविशेषसद्भावात् कथं विशेषाभावः? इत्याशङ्क्याह—**स्व-परयोरिति**। विशेषणभूतात्माप्रतिपत्तौ कर्तृ-कर्मसंबन्धो बोद्धुमशक्यः। ततश्च "मयेदं विदितमि"त्यनुसन्धानाभावान्न विशेषसिद्धिरित्यर्थः। विशेषाभावोऽसिद्ध इति शङ्कते—**अनुभवेति**। अनुभवः घटप्राकट्यम्, तस्य निमित्तं यज्ज्ञानम्, तदाश्रयत्वमिति यावत् ॥ उक्तविशेषमङ्गीकृत्य तदसिद्धौ संबन्धावगमासिद्धिदोषस्तदवस्थ इत्याह—**नात्मपदार्थेति** ॥ संप्रत्यङ्गीकृतं परिहरति—**अनुभवेति**। घटानुभवेनात्मनः संबन्धाभावात्तद्धेतुज्ञानानुमानानुपपत्तिरित्यर्थः ॥ आत्मप्रतिपत्तिपूर्वको विशिष्टप्रत्यय इत्यत्रेदं निरूपणीयम्—किं संविदाश्रयतया तत्प्रतिपत्तिः? उत तत्कर्मतयेति? तत्राद्यमुत्थापयति—**अस्त्विति** ॥ संविदधीनप्रकाशतायाः संवित्कर्मतया व्याप्तत्वात् तदभावेऽभाव इत्याह—**नेत्याहेति** ॥ आत्मा, न स्वातिरिक्तसंविदधीनव्यवहारविषयः, संवित्कर्मत्वानधिकरणत्वे सत्यपरोक्षत्वात्; संवेदनवत्, विपक्ष एकेन ज्ञानेन सकलप्रथाप्रसङ्ग इति **टीकार्थः** ॥ संवित्कर्मताया व्यापकत्वमसिद्धमिति शङ्कते—**ननु संविदिति** ॥ **स्वोपाधिम्** विशेषणमित्यर्थः। अत एवातिप्रसङ्गोऽपि निरस्य इति द्रष्टव्यम् ॥ किमुपाधिशब्देनाश्रयो विवक्षितः? उत विषयः? आहो आश्रयविषययोरन्यतरः? इति विकल्प्याद्यं निरस्यति—**न तावदिति** ॥ द्वितीये आत्मासिद्धिरित्यभिप्रेत्य तृतीयं शङ्कते—**आश्रयेति**। आश्रय-विषययोरन्यतरत्वमित्यर्थः। विषयशब्दार्थस्य दुर्निरूपत्वाद्विशिष्टलक्षणासिद्धिरित्यभिप्रेत्याह—**किं विषयत्वमिति** ॥ किं संवित्प्रयुक्तव्यवहारयोग्यत्वं विषयत्वम्? उत संविद्व्यावर्तकत्वम्? अथवा; आश्रयान्यत्वे सति तत्प्रयुक्तव्यवहारयोग्यत्वम्? उत कर्मकारकत्वम्? इति **किंशब्दार्थः**। आद्यमनुवदति—**संविदिति** ॥ अतिव्याप्त्या दूषयति—**आत्माऽपीति** ॥ द्वितीये किं संविद्व्यावर्तकत्वमात्रं विषयत्वम्? उतान्याश्रयत्वे सति संविद्व्यावर्तकत्वम्? नाद्यः; आत्मनि व्यभिचारादित्यभिप्रेत्य द्वितीयमुत्थापयति—**आश्रयेति** ॥ "चाक्षुषं ज्ञानमि"त्युक्ते चक्षुषोऽपि विशेषणत्वाद्विषयत्वप्रसक्तिरित्याह—**चक्षुष इति** ॥ तृतीयं प्रत्याह—**नचेति**। नच संबन्धस्य विषयत्वप्रसञ्जन-

### ऋजुविवरणम्

त्वेनैव विशेषसिद्धेरित्याशङ्क्य साधयति—**स्व-परयोर्मयेदमितीति** ॥ **अनुभवनिमित्तेति** ॥ अयं भावः—अनुभवे निमित्तम्, अनुभवनिमित्तम्, तच्च तद् ज्ञानं चानुभवनिमित्तज्ञानम्, ज्ञानस्याश्रयो ज्ञानाश्रयः, तस्य भावो ज्ञानाश्रयत्वमिति। अनुभवः फलरूपः कर्तृव्यापारं गमयति; फलस्य कर्तृव्यापाराविनाभावादिति—**सम्बन्धावगमायोगादिति** ॥ आत्मनाऽनुभवस्य सम्बन्धावगमो न संभवति; ज्ञातयोः संन्धावगम इत्यर्थः ॥ ननु अनुभवसंबन्धस्यात्मसम्बन्धावगमो मा भूत्, फलत्वेन तु कर्तृव्यापारानुमानसम्बन्ध उक्तः; तेनैव स्व-परयोर्विशेषोऽपि सिध्यतीत्याशङ्क्याह—**अनुभवसम्बन्धाभावाविशेषे चेति**। अनुभवसम्बन्धाभावोक्तिस्तु ज्ञानाभावाभिप्राया। फलत्वेन कर्तृव्यापारमात्रानुमानं भवेत्, नान्यतराश्रयज्ञानानुमानम्, लिङ्गस्यान्यतरासम्बन्धात्। कर्मकारकत्वं विनाऽवभासाङ्गीकारो न युक्तः, **अतिप्रसङ्गादिति** हेतुः टीकायाम्। तत्रावगमाभावादिति भावः ॥ यद्वा, विषयगतफलाभिप्रायकर्मकारकत्वेन विनाऽवभासो व्यवस्थापयितुं शक्यत इति चोदयति—**ननु संविदिति** ॥ ननु

## पञ्चपादिका

**नच ज्ञानान्तरेण; भिन्नकालत्वे संवेद्यसम्बन्धानवगमात्, स्व-परसंवेद्याविशेषात् । न ह्येककालं विरुद्धविषयद्वय-ग्राहिज्ञानद्वयोत्पादः । नहि देवदत्तस्याग्र-पृष्ठदेशस्थितार्थव्यापिगमनक्रियाद्वयावेशो युगपद् दृश्यते । आह—मा भूच्चलनात्मकं क्रियाद्वयं युगपत्, परिणामात्मकं तु भवत्येव ? मैवम्; परिस्पन्दात्मकमपि भवत्यविरुद्धम्—यथा गायन् गच्छतीति । परिणामात्मकमपि न भवति विरुद्धम्—यथा यौवन-स्थाविरहेतुः ।**

## पञ्चपादिकाविवरणम्

विषयत्वप्रसङ्गात् । नच सम्बन्धो नास्ति तव वक्तुम् । तस्मात् संप्रयुक्तादि वस्त्वेवावभास्यत इति ।

अस्तु तर्ह्यात्मविषयज्ञानान्तरादिति ? नेत्याह—**नच ज्ञानान्तरेणेति** ॥ कुतः ? तच्च ज्ञानान्तरं विषयानुभवसमकालं वा ? भिन्नकालं वा ? भिन्नकालत्वे दूषणमाह—**भिन्नकालत्व इति** ॥ एककालत्वमिति चेत् ? तत्राह—**न ह्येककालमिति** ॥ निरवयवस्य युगपदेकदेशे वा भिन्नदेशे वा परिणामद्वयायोगादित्यर्थः । एकस्य युगपत् सामस्त्येन परिस्पन्दद्वयमनुपपन्नम्, परिणामस्तु संभवतीत्याह—**मा भूदिति** ॥ परिणामद्वयमपि कार्त्स्न्येन युगपन्न सम्भवतीत्याह—**मैवमिति** ॥ **यौवन-स्थाविरयोः**

## तत्त्वदीपनम्

मिष्टमित्यपि—शङ्क्यम्; संविदात्मसंबन्धस्य समवायरूपत्वेनाप्रत्यक्षत्वाभ्युपगमव्याघातादित्यर्थः ॥ आत्मत्वात्कुतः संबन्धः ? कुतस्तरां च तत्रातिव्याप्तिः ? तस्य संवित्प्रयुक्तव्यवहारयोग्यत्वं चासिद्धमित्याशङ्क्य, सिद्धान्तविरोधात् त्वयेत्थं वक्तुं न शक्यत इत्याह—**तवेति** । चतुर्थेऽतीतादेर्विषयत्वं न स्यादित्यर्थः ॥ तस्मात् संवित्कर्मताया व्यापकत्वं सिद्धमित्याह—**तस्मादिति** । संयुक्तसमवेतमा**दि**शब्दार्थः ॥

संवित्कर्मतयाऽऽत्मसिद्धिरिति पक्षान्तरमुत्थापयति—**अस्तु तर्हीति** ॥ **कुत** इत्यारभ्य **निरवयवस्ये**त्यतः प्राक्तनः स्पष्टार्थः ॥ ज्ञानद्वयं विरुद्धमित्युक्तं टीकायाम्, तत्र विरोधं व्यनक्ति—**निरवयवस्येति** ॥ एकविषयत्वेनापि तद्द्वयस्य विरुद्धत्वाद्विषयद्वयेति विशेषणं कस्मात्; इत्याशङ्क्याह—**एकदेशेति** ॥ **देश**शब्दो विषयवाची । टीकायां विशेषणमविवक्षितमित्यर्थः ॥ अन्यथा वा, देशभेदेन ज्ञानद्वयमविरुद्धमित्याशङ्क्याह—**निरवयवस्येति** ॥ **एकदेशे** चेति दृष्टान्तार्थः । एकदेशे यथा परिणामद्वयासंभवः, एवं भिन्नदेशेऽपीति, देशभेदाभावादित्यर्थः । परिस्पन्दात्मकक्रियाद्वयस्य भागाभ्यामेकत्र संभवाद् "मा भूदि"ति ग्रन्थानुपपत्तिरित्याशङ्क्याह—**एकस्येति** ॥ परिणामद्वयस्यापि भागेन तत्र संभवाद् 'मैवमि'त्याद्यसङ्गतमित्याशङ्क्याह—**परिणामेति** ॥ शरीरस्य सभागत्वाद् यौवनस्थाविरनिमित्तं परिणामद्वयं संभवति, ततश्च दृष्टान्तसंगतिरित्याशङ्क्याह—**यौवनेति** ॥ नच—यूनोऽपि पालित्यदर्शनात् परिणामद्वयसंभव इत्यपि—शङ्क्यम्; तस्य पित्तादिधातुवैषम्यनिमित्तत्वात्;

## ऋजुविवरणम्

संविदात्मनोरसम्बन्ध एव नास्ति, कथं तत्रातिप्रसङ्गः ? इत्याशङ्क्याह—**नच सम्बन्धो नास्तीति** ॥ **तस्मात् संप्रयुक्तादी**त्यादिशब्देन संप्रयुक्तगतत्वादि विवक्षितम् ।

ननु एकस्मिन् शरीर आध्मानं विशुष्कता चेत्यादिविरुद्धपरिणामो दृश्यते, तद्वदात्मनोऽपि स्यात्; अथवा, कथं विषयद्वयग्राहिज्ञानद्वयस्य विरोधः ? येन ज्ञानद्वयोत्पत्त्यसंभव उच्येत; इत्याशङ्क्याभिप्रायमाह—**निरवयवस्येति** ॥ "मा भूत् चलनात्मकमि"त्यनुपपन्नम्; चलनात्मकक्रियाद्वयस्यापि युगपद् दृश्यमानत्वादित्याशङ्क्याह—**एकस्य युगपदिति** ॥ परिस्पन्दद्वयं पदार्थेषु दृश्यत एव, तदर्थमाह—**एकस्येति** ॥ एकस्यापि क्रमेण दृश्यते, तदर्थमाह—**युगपदिति** ॥ युगपदप्येकदेशे दृश्यते, तदर्थमाह—**सामस्त्येनेति** ॥ अनयैव दिशा प्रतिलोमतो विशेषणोपयोगो द्रष्टव्यः । "मैवमि"त्यनेन परिस्पन्दत्व-परिणामत्वयोः संभवासंभवप्रयोजकत्वं नास्ति, किंतु विरुद्धत्वाविरुद्धत्वमेव संभवासंभवप्रयोजकमित्युक्तम्, तदप्रस्तुतम्; परिणामद्वयस्य युगपद्भावात्, ज्ञानद्वयमपि परिणामरूपं संभवेदिति चोदिते, तदसंभवकारणं वक्तव्यम् । नच विरोधिनोऽन्यत्रासंभवमात्रेणात्रासंभवः सिद्ध्यति; विरोधप्रयोजकानिरूपणेन विरोधासिद्धेरित्याशङ्क्यावतारयति—**परिणामद्वयमपीति** ॥ ननु कार्त्स्न्यमत्रासंभवे प्रयोजकत्वेन विवक्षितमिति कथं गम्यते ? इत्याशङ्क्य द्योतकं दर्शयति—**यौवन-स्थाविरयोरिति** ॥ अथवा, यदि परिणामद्वयस्य युगपदसंभवे कार्त्स्न्येन परिणामः कारणं भवेत्, कथं तर्हि यौवन-स्थाविरयोरसंभव उक्तः ? इत्याशङ्क्याभिप्रायमाह—**यौवन-स्थाविरयोरिति** ॥ आत्मनि तर्ह्येकदेशेन ज्ञानद्वयपरिणामः संभवत्येव, अतश्चैवमपि नात्मनि ज्ञानद्वयाभावसिद्धिरित्याशङ्क्याभिप्रायमाह—**नच भागेनेति** ॥ "तस्मात् प्रत्यगात्मा स्वयं प्रसिद्धः"इति कथमुपसंहृतम् ? नहि विषयानुभवाश्रयतया

**पञ्चपादिका**

**तस्मात्प्रत्यगात्मा स्वयंप्रसिद्धः सर्वस्य हानोपादानावधिः स्वयमहेयोऽनुपादेयः स्वमहिम्नैवापरोक्षत्वादध्यासयोग्यः ॥**

**ननु न क्वचिदपरोक्षमात्रेऽध्यासो दृष्टपूर्वः, सर्वत्राक्षिसम्प्रयोगितया पुरोऽवस्थितापरोक्ष एव दृश्यते, इत्याशङ्क्याऽऽह-**

**पञ्चपादिकाविवरणम्**

कृत्स्नशरीरवर्तित्वादिति। नच भागेन परिणामः; निरवयवत्वादिति भावः। **तस्मादिति** परिशेषात् स्वयंप्रकाशतयाऽपरोक्षत्वोपसंहारः।

अध्यस्यमानेनैकेन्द्रियग्राह्यत्वमधिष्ठानस्य वक्तव्यम्, नापरोक्षतामात्रेण कृत्यमित्याशङ्क्याऽऽकाशदृष्टान्त इति भाष्यतात्पर्यमाह—**ननु न क्वचिदिति** ॥

अत्र शब्दस्य बाह्यैकेन्द्रियग्राह्यत्वाद् गन्धवद् द्रव्यव्यतिरेकेणोपलब्धेः सम्भवाद् विशेषगुणत्वे वक्तव्ये स्पर्शादिगुण-

**तत्त्वदीपनम्**

अन्यथा कृत्स्नशरीरव्यापित्वं स्यादित्यर्थः। अंशभेदेनात्मनः परिणामद्वयशङ्कां प्रत्याह—**नचेति** ॥ स्वप्रकाशत्वे किं प्रमाणमुपन्यस्तमिति वीक्षायां परिशेषानुमानमाह—**तस्मादिति** ॥ (टीकायाम्) **सर्वस्येत्यादेरयमर्थः**—अन्तःकरण-तद्वृत्तिभावाभावसाक्षित्वादपि स्वप्रकाशत्वमित्याह—**सर्वस्येति** ॥ आत्मनोऽप्युत्पत्तिविनाशित्वान्न हानाद्यवधित्वमित्याशङ्क्य श्रुत्यादिविरोधान्मैवमित्याह—**स्वयमहेय इति** ॥

संप्रयोगितयाऽपरोक्षस्याधिष्ठानत्वदर्शनादात्मनश्चातथात्वान्नाधिष्ठानत्वमित्यनुपपन्नम्, आपरोक्ष्यमात्रस्य प्रयोजकत्वात्। संप्रयोगित्वं तु तद्धेतुतयाऽन्यथासिद्धमित्याशङ्क्याऽऽह—**अध्यस्यमानेनेति** ॥ अध्यस्यमानाधिष्ठानयोरेकेन्द्रियाग्राह्यत्वे 'इदं रजतमि'ति संभिन्नतया प्रतिभासो न स्यात्; अतश्चैकेन्द्रियग्राह्यत्वस्याधिष्ठानत्वव्यापकत्वादात्मन्यसंभवान्न तस्याधिष्ठानत्वमित्यर्थः ॥

एकेन्द्रियग्राह्यत्वस्य न व्यापकत्वम्; तदभावेऽपि गगने मलिनताद्यध्यासस्य दर्शनादित्युक्तम्, तन्नोपपद्यते; इन्द्रियाग्राह्यत्वे तत्सिध्युदयाभावात्, कैश्चिदिन्द्रियग्राह्यत्वोपगमाच्चेत्याशङ्क्योभयाभावस्तावदसिद्ध इत्याह—**अत्रेति** ॥ तत्र वादिनां मध्ये वैशेषिकादयो गगनमनुमिमत इत्यन्वयः। अनुमानं दर्शयितुं शब्दस्य विशेषगुणत्वं तावदाह—**शब्दस्येति** ॥ "इन्द्रियग्राह्यत्वादि"त्युक्ते संयोगादौ व्यभिचारः, तदर्थमाह—**एकेति**। संयोगादीनां द्वीन्द्रियग्राह्यत्वात् तन्निवृत्तिरित्यर्थः। आत्मनि व्यभिचारनिवारणार्थम्—**बाह्येति**। प्रभादौ व्यभिचारवारणार्थम्—"गुणत्वे सती"ति विशेषणं द्रष्टव्यम्। प्रभा-कुम्भसंयोगव्यावृत्त्यर्थं "बाह्यैकेन्द्रियग्राह्यजातीय" इत्यपि विशेषणं द्रष्टव्यम्। शब्दस्य विशेषगुणत्वमाश्रयव्यतिरेकेण न स्यादित्याशङ्क्याह—**गन्धवदिति**। द्रव्यग्रहणमन्तरेणापि गन्धो यथोपलभ्यते, तद्वच्छब्देऽप्युपलम्भसंभव इत्यर्थः। शब्दस्य भूतचतुष्टयान्य-

**ऋजुविवरणम्**

स्वविषयज्ञानेन वा सिद्ध्यभावमात्रेण स्वयंप्रकाशत्वं सिद्ध्यति, ज्ञानान्तरेणासिद्धे स्वयंप्रकाशत्वसाधकत्वाभावात्, प्रकारान्तरेण सिद्धिसंभवाच्चेत्याशङ्क्याह—**तस्मादिति** ॥ **परिशेषादिति** ॥ यद्वा "स्वयं प्रसिद्धः" इति व्यर्थम्; नहि तत्प्रसिद्धौ विप्रतिपत्तिरस्ति। "स्वमहिम्ने"ति चासंबद्धम्; स्वस्य महिमा ज्ञानमिति पुनरपि स्वविषयज्ञानप्रसङ्गात्, इत्याशङ्क्याऽऽह—**स्वयं प्रसिद्ध इति** (टीकायाम्) ॥ अनेनात्मनोऽप्रसिद्धत्वं निरस्तम्, पारिशेष्यात् स्वयंप्रकाशत्वसिद्ध्यर्थम्। प्रसिद्धौ हि सत्यां कारणान्तराभावे पारिशेष्यात्स्वयंप्रकाशत्वं सिद्ध्यति, नाप्रसिद्धाविति।

"ननु न क्वचिदि"त्यत्र संप्रयोगितया पुरोऽवस्थितत्वमेव प्रयोजकमङ्गीकृत्य शङ्का कृता; सा न युक्ता; "कथं पुनरि"त्युपक्रमोक्तं हि प्रयोजकमङ्गीकृत्य शङ्का कर्तव्या, नतु तदेकदेशेन; तथा मनोगोचरतयाऽऽकाशेऽपि संप्रयोगितया पुरोवस्थितत्वसंभवाद्, न व्यभिचारोऽपि दर्शयितुं शक्यत इत्याशङ्क्याऽऽह—**अध्यस्यमानेनेति** ॥ अथवा—"ननु न क्वचिदि"त्यनेन "अप्रत्यक्षेऽपी"ति भाष्यस्य व्याख्यानेनोत्तरग्रन्थस्य पौनरुक्त्यमित्याशङ्क्य विषयभेदमाह—**अध्यस्यमानेनेति** ॥

"अप्रत्यक्षेऽपी"ति कथमुक्तम्? अपरोक्षताङ्गीकारात्, अपरोक्षेऽधिष्ठाने सर्वत्राध्यासाङ्गीकारात्, तद्विरोधात्। नापि परमताभिप्रायम्; परेषामाकाशस्वरूपे प्रत्यक्षत्वे च विवादात्; इत्याशङ्क्य, परमताभिप्रायमेतदिति वक्तुं तन्मतानि दर्शयति—**अत्र शब्दस्येत्यादिना** ॥ "बाह्येन्द्रियग्राह्यत्वादि"ति हेतौ सङ्ख्यादावनैकान्तिकः स्यात्, तदर्थमाह—**एकेन्द्रियग्राह्यत्वादिति** ॥ "गुणत्वे सती"ति द्रष्टव्यम्। गुरुत्वमपि बाह्येन्द्रियग्राह्यमिति केचित्, तदर्थमाह—**द्रव्यव्यतिरेकेणेति** ॥

## पञ्चपादिकाविवरणम्

चतुष्टयसहवृत्तित्वाभावाद्, बाह्येन्द्रियग्राह्यत्वाद् दिक्काल-मनसां विशेषगुणशून्यत्वाद् भूतचतुष्टयात्म-दिगादिव्यतिरिक्तद्रव्यस्यैव विशेषगुणः शब्दः। तद्गुणश्चाकाश इति वैशेषिकादयोऽनुमिमते। बौद्ध-लौकायताश्चानुपलब्धिलिङ्गकं मूर्तद्रव्याभावमात्र-माकाशमनुमिमते। प्राभाकराणां त्वस्त्येवाकाशोऽनुपलब्धिलिङ्गः; मूर्तद्रव्याभावमात्रत्वात्, भावान्तरस्यैव चाभावत्वात्। क्षपणक-वार्तिककारीयास्तु चाक्षुषमाकाशमिच्छन्ति। तथा सति स्पर्शवत्त्वमपि स्यात्। अस्त्विति चेत्? न; रूपस्पर्शवत्येव

## तत्त्वदीपनम्

तमगुणत्वसंभवान्न तदाधारत्वेनाम्बरसिद्धिरित्याशङ्क्याह—**स्पर्शादीति**॥ शब्दस्य स्पर्शवद्विशेषगुणत्वे स्पर्शादिषु सत्सु न निवृत्तिः स्यात्, अस्मत्प्रत्यक्षाणां स्पर्शवद्विशेषगुणानां यावद्द्रव्यभावित्वात्, नचैतदस्ति; शब्दो न स्पर्शवद्विशेषगुणः, अस्मत्प्रत्यक्षत्वे सति अयावद्द्रव्यभाविविशेषगुणत्वात्, व्यतिरेकेण रूपादिवत्, तदिदमुक्तम्—**सहवृत्तित्वाभावादिति**॥ आत्मगुणत्वं व्यावर्तयति—**बाह्येन्द्रियेति**॥ दिगादिगुणत्वं निरस्यति—**दिक्कालेति**॥ तथाऽपि कथमाकाशस्य सिद्धिः? इत्याशङ्क्याऽऽह—**भूतचतुष्टयेति**॥ शब्दः, साश्रयः, गुणत्वात्, रूपवत्; पृथिव्याद्यष्टद्रव्यस्य चाश्रयत्वासंभवात्तदाश्रयत्वेनाकाश-सिद्धिरित्यर्थः। मतान्तरमाह—**बौद्धेति**॥ अनुपलब्धिर्लिङ्गं गमकं यस्य तदनुपलब्धिलिङ्गम्। योग्यत्वे सत्यनुपलब्ध्या कथं गगनसिद्धिः? अनुपलब्धेरभावसाधकत्वादित्याशङ्क्याह—**मूर्तेति**। विमतः, अभावः, योग्यत्वे सत्यनुपलभ्यमानत्वात्; संप्रतिपन्नवदित्यर्थः। गुरुमतमाह—**प्राभाकराणामिति**॥ तत्र प्रमाणमाह—**अनुपलब्धीति**॥ भावरूपस्य कथमनुपलब्धि-लिङ्गत्वम्? तत्राह—**मूर्तेति**॥ अभावमात्रत्वे—'अस्ती'ति वचनं व्याहतमित्याशङ्क्याह—**भावान्तरस्येति**॥ इन्द्रिया-ग्राह्यत्वेऽप्यनुमानाद् गगनस्य सिद्धिमभिधाय, वादिभिरभिधीयमानमिन्द्रियग्राह्यत्वं निराकर्तुं तन्मतमाह—**क्षपणकेति**॥ अन्वय-व्यतिरेकाभ्यां तस्य चाक्षुषत्वमित्यर्थः। चाक्षुषद्रव्यस्य स्पर्शवत्वव्याप्तत्वात्तदभावे न चाक्षुषत्वं युक्तमित्यभिप्रेत्याह—**तथा सतीति॥ स्पर्शवत्त्वमिति**—स्पर्शगुणकत्वमित्यर्थः। विमतम्, न चाक्षुषम्, द्रव्यत्वे सति स्पर्शविधुरत्वात्; मनोवत्। विपक्षे स्पर्शवत्त्वप्रसङ्गो बाध इत्युक्ते इष्टापत्तिं शङ्कते—**अस्त्विति**॥ तथापि नीरूपत्वान्न चाक्षुषत्वमित्याह—**न रूपेति**। रूपवद्द्रव्ये चक्षुषः प्रवृत्तिनियमात् स्पर्शवति स्पर्शनेन्द्रियप्रवृत्तिनियमादित्यक्षरार्थः। "स्पर्शवती"ति विशेषणेनोद्भूतस्पर्शवत्त्वेन स्पार्शनप्रत्यक्षं स्यादित्युक्तमिति द्रष्टव्यम्। विमतम्, न चाक्षुषम्, अरूपद्रव्यत्वात्; आत्मवदित्युक्तेऽन्वय-व्यतिरेकविरोधः

## ऋजुविवरणम्

अथवा—अयमपि स्वतन्त्रो हेतुः; अस्यैव पृथिव्यादिगुणत्वनिराकरणसामर्थ्येऽपि विशेषगुणत्वमर्थान्तरसाधकत्वसंभवप्रदर्शनार्थम्। **गन्धवदिति** निदर्शनम्। **विशेषगुणत्वे वक्तव्ये**—इति साध्यनिर्देशः। पृथिव्यादिद्रव्यचतुष्टयगुणत्वमस्त्वित्याशङ्क्याऽऽह—**स्पर्शादिगुणचतुष्टयेति**॥ तर्ह्यात्मगुणत्वमस्त्वित्याशङ्क्याह—**बाह्येन्द्रियग्राह्यत्वादिति**॥ तर्हि दिक्काल-मनसां गुणत्वम्, इत्याशङ्क्याऽऽह—**दिक्काल-मनसामिति**॥ **अनुपलब्धिलिङ्गकमिति**॥ मूर्तद्रव्यानुपलब्धिर्लिङ्गं यस्याकाशस्य, तदनुपलब्धि-लिङ्गम्। ननु बौद्धादिवदेव प्राभाकरा अप्यनुपलब्धिलिङ्गमिच्छन्ति, अतः पृथक्कृत्य ग्रहणं न युक्तमित्याशङ्क्याऽऽह—**प्राभा-कराणामिति**॥ कथं तर्ह्यनुपलब्धिलिङ्गत्वमित्याशङ्क्याह—**मूर्तद्रव्याभावमात्रत्वादिति**॥ मूर्तद्रव्याभावमात्रत्वे कथमस्त्येव? इत्याशङ्क्याह—**भावान्तरस्यैवेति**॥ **तथा सति स्पर्शवत्त्वम्** स्पर्शगुणवत्त्वमपीत्यर्थः; चाक्षुषस्य स्पर्शवत्त्वनियमात्। अथवा, "तथा सती"त्यत्रत्येनापिशब्देन रूपवत्त्वमापादितम्। यद्वा, "स्पर्शवत्त्वमपी"त्यनेन चाक्षुषत्वे स्पर्शनग्राह्यत्वं स्यादित्युक्तम्। **अस्त्विति चेदिति**॥ अयमर्थः—स्पर्शगुणवत्त्वमस्तु; अथवा स्पर्शादिना विना चाक्षुषत्वमस्तु; रूपादौ रूपाद्यभावेऽपि चक्षुरादि-प्रवृत्तिदर्शनात्। द्वितीयपक्षेऽप्येवं चोद्यम्—अस्तु चाक्षुषत्वम्; रूपवत्त्वाद्यभावेऽपि काले चाक्षुषत्वदर्शनात्, मा भूत् स्पर्शवत्त्वम्; स्पर्शगुणाभावादिति। यद्वा, अस्तु स्पर्शनग्राह्यत्वमिति चोद्यार्थः। **न, रूप-स्पर्शवत्येव द्रव्य** इति॥ चक्षुः-स्पर्शनयोः प्रवर्तनं रूपस्पर्शनवत्येव द्रव्ये, तदभावे न संभवति। नचाकाशे तदुभयमिति। अवधारणेन चैतदुक्तम्—रूपवत्येव चक्षुषः प्रवृत्तिः; रूपस्पर्शवत्येव स्पर्शनप्रवृत्तिरिति; नतूभयगुणवत्येकैकस्य प्रवृत्तिरित्यवधारणेन विवक्षितम्। तथा सति चाक्षुषत्वे रूपवत्त्वम्, रूपवत्त्वे च स्पर्शवत्त्वम्, स्पर्शवत्त्वे च तदिन्द्रियग्राह्यत्वमिति। गुणादीनां तद्रहितानामेव चाक्षुषत्वं दृष्टमिति—"द्रव्यस्ये"-त्युक्तम्। कालस्य तु द्रव्यरूपस्यानङ्गीकारान्न व्यभिचारः, अङ्गीकारे त्वाकाशवदेवाचाक्षुत्वमिति। ननु चक्षुःप्रसारणान्वय-व्यतिरेकानुविधायित्वमाकाशावभासस्य विद्यते, अतश्चाक्षुषत्वं नियमविरोधेऽपि स्वीक्रियत इत्याशङ्क्याह—**चक्षुःप्रसारणस्येति**॥

**पञ्चपादिका**

नचायमस्ति नियम इति ॥ अप्रत्यक्षेऽपि ह्याकाश इति। **परोक्ष इत्यर्थः। अथवा अक्षव्यापारमन्तरेणाप्यपरोक्ष आकाशे बालाः अयथार्थदर्शिनः,** तलम् इन्द्रनीलतमालपत्रसदृशम् मलिनताञ्च धूमादिकमन्यच्च नीलोत्पलसमानवर्णतादि, **अध्यस्यन्ति। 'एवमविरुद्धः'** इति सम्भावनां निगमयति। यथाऽऽकाशस्याक्षव्यापारमन्तराऽप्यपरोक्षता, तथा दर्शयिष्यामः ॥

**ननु ब्रह्मविद्यामनर्थहेतुनिबर्हणीं प्रतिजानताऽविद्याऽनर्थहेतुः सूचिता, ततः सैव कर्तृत्वाद्यनर्थबीजमुपदर्शनीया, किमिदमध्यासः प्रपञ्च्यते ?** इत्याशङ्क्याह—**तमेतमेवंलक्षणमध्यासं पण्डिताः प्रमाणकुशलाः अविद्येति मन्यन्ते।**

**पञ्चपादिकाविवरणम्**

द्रव्ये चक्षुरादिप्रवृत्तिनियमात्, चक्षुःप्रसारणस्य चाकाशानुमानलिङ्गदर्शनेऽन्यथासिद्धत्वात्। तस्मात् **अप्रत्यक्षेऽपि ह्याकाश इत्युक्तम्। अथवेति।** साक्षिवेद्यतया, मनोमात्रगम्यतया वाऽपरोक्ष इत्यर्थः। इन्द्रनीलमिव नीलमित्यर्थः। **एवमविरुद्ध** इत्यादिः स्पष्टार्थः। प्रतिपन्नोपाधौ निरस्यमानमर्थमविद्यान्वय-व्यतिरेकाभ्यामविद्यां मन्यन्त इत्यर्थः ॥

न केवलमविद्यान्वयव्यतिरेकसामर्थ्यादविद्योपादानतयाऽविद्यात्वम्, किन्तु विद्याविपरीतत्वाच्चेत्याह—**तद्विवे-**

**तत्त्वदीपनम्**

स्यादित्याशङ्क्याह—**चक्षुषः प्रसारणस्येति ॥** आकाशस्यानुमाने यल्लिङ्गं योग्यानुपलब्धिलक्षणम्, तस्य दर्शनेनान्यथासिद्धत्वादित्यर्थः। योग्यत्वे सत्यनुपलब्धेरभावप्रतिपत्तिसामग्रीत्वात् चक्षुषः प्रसारणस्य तत्रान्तर्भावादन्यथासिद्धिरित्यर्थः। सिद्धान्ते तु चक्षुषः प्रसारणे आकाशानुगतसत्तायाः स्फुरणात्तद्विषयत्वेनान्यथासिद्धिरित्यर्थः। 'इह पक्षी प्लवते' इति गगनं प्रत्यक्षतोऽनुभूयते, इत्याशङ्क्यानुभवस्य गगनविततितेजःपुञ्जविषयत्वान्मैवमित्यभिप्रायेणाऽऽह—**तस्मादिति ॥** अक्षव्यापारमन्तरेण गगनस्याऽऽपरोक्ष्याभिधानमयुक्तम्, बाह्यस्याक्षविषयत्वेनैवाऽऽपरोक्ष्यस्य संभवादित्याशङ्क्याऽऽह-**अथवेति ॥** साक्षिणमनङ्गीकुर्वाण प्रत्याहऽऽ-**मनोमात्रेति।** मनसोऽसहायस्य बहिरप्रवृत्तिरित्याशङ्क्य कार्यदर्शनेन बहिःप्रवृत्तिकल्पनसंभवादिति प्रौढ्यवलम्बनेनोक्तमिति द्रष्टव्यम्। किमाकाशस्य नित्यानुमेयत्वम् ? उतापरोक्षस्पष्टीकरणार्थमनुमानम् ? नाद्यः; अपरोक्षानुभवविरोधात् द्वितीयस्त्वङ्गीक्रियते। यच्चेदमुच्यते—मूर्तद्रव्याभाव इति, तदप्यसङ्गतम्; विहायस्येकस्मिन्वयसि सञ्चरति वयोऽन्तरे सञ्चरणं न स्यात्; प्रतिबन्धसद्भावात्। नच—यत्रावरणाभावस्तत्र सञ्चरणमित्यपि—शङ्क्यम्; आवरणाभावाधिकरणत्वेन तदतिरिक्तगगनसिद्धेरित्यभिसन्धिः। 'गगनम् इन्द्रनीलमि'ति बुद्ध्यभावात् कथमिन्द्रनीलमित्युक्तमित्याशङ्क्याऽऽह—**इन्द्रनीलमिवेति ॥**

लक्षण-संभावनाभ्यामध्याससमर्थनं सूत्रासङ्गतम्, अध्यासस्यासूत्रितत्वादित्याशङ्क्याविद्यायाः सूत्रितत्वादध्यासस्याविद्यात्वात्तद्दर्शनमित्युक्तम्, तदयुक्तम्, तस्याविद्यात्वे प्रमाणाभावात्। नच पण्डितमतिविषयत्वेन प्रामाणिकत्वम्; अतिप्रसङ्गादित्याशङ्क्याऽऽह—**प्रतिपन्नेति ॥** "प्रमाणकुशलाः" इत्यनेनान्वय-व्यतिरेकावुक्तावित्यर्थः।

अध्यासस्याविद्यात्वसाधनस्योपक्रान्तत्वात् "तद्विवेकेने"त्यत्र विद्याप्रदर्शनमनुपपन्नमित्याशङ्क्याह—**न केवलमिति ॥** अध्यासनिवृत्तिफलसंभवात् तद्वर्णनमुचितम्; अतः कथमध्यासवर्णनस्यायुक्तत्वम् ? इत्याशङ्क्य निवृत्तिरन्यथाऽपि सम्भवती-

**ऋजुविवरणम्**

कथमक्षव्यापारमन्तरेणापरोक्षत्वमुपपद्यते ? इत्याशङ्क्य व्याचष्टे—**साक्षिवेद्यतयेति ॥** "इन्द्रनीलमि"ति कथमुक्तम् ? नहीन्द्रनीलबुद्धिराकाशे स्वीक्रियते, इत्याशङ्क्य व्याचष्टे—**इन्द्रनीलमिवेति ॥** "अध्यासमविद्येति मन्यन्ते"इति कथमुक्तम् ? विरोधात् नहि प्रमाणाभावे "पण्डिता मन्यन्ते"इत्येतावन्मात्रेणाविद्यात्वसिद्धिः। नापि तेषां पण्डितत्वम्; प्रमाणाभावेऽप्यन्यदन्यत्वेन मन्यन्ते यतः। तथा "तमेतमि"ति कीदृशस्य निर्देशः ? इति न ज्ञायते, तदर्थम्—व्याचष्टे—**प्रतिपन्नोपाधाविति ॥**

"तद्विवेकेने"ति भाष्यकारेण विवेकशब्दप्रयोगः कृतः, स न युक्तः; अविवेकानङ्गीकारात्, अध्यासस्वरूपप्रदर्शनावसरेऽविद्यास्वरूपप्रदर्शनस्यासङ्गतत्वादित्याशङ्क्याभिप्रायमाह—**न केवलमविद्यान्वयेति ॥** "विद्याविपरीतत्वाच्चे"त्यनेन विवेकप्रतियोगितयाऽविवेकमात्रमध्यास इति शङ्कानिरासः कृतः। "अध्यस्तातद्रूपे"ति व्याख्याने विवक्षाऽप्युक्ता। "यद्येवमि"-त्यनेनाविद्येत्येवोपक्रमः कृतो युक्तः; इतरथाऽध्यासस्याविद्यात्वेन विना ज्ञाननिवर्त्यत्वाभावात्, तदपि वक्तव्यमिति यत्नगौरवं स्यादित्युक्तम्। तदयुक्तम्; अध्यासनिवृत्तिः प्रयोजनम्, सा चाध्यासस्याविद्योपादानत्वकथनेन विना न सिध्यति। अतः प्रयोजनवशाद्गौरवं न दोषायेत्याशङ्क्यावतारयति—**नन्वविद्यामुपवर्ण्येति ॥** "नैतत्सारमि"त्यनेनैतदुक्तम्—अविद्याशब्देनाच्छादनप्रधानरूपमभिधीयते, नतु विक्षेपरूपम्, तदभिधानमेव चात्र प्रकृतोपयोगितया वर्णितव्यमित्युक्तम्, तदयुक्तम्; अविद्यानिवृत्तौ

## पञ्चपादिका

तद्विवेकेन च वस्तुस्वरूपावधारणं विद्यामाहुः **अध्यस्तातद्रूपसर्पविलयनं कुर्वद् वस्तुस्वरूपं रज्जुरेवेत्यवधारयद् विज्ञानं विद्येति प्रसिद्धमेव लोके ब्रह्मविदो वदन्ति। यद्येवम्, अध्यास इति प्रक्रम्य पुनस्तस्याविद्याभिधानव्याख्याने यत्नगौरवाद् वरमविद्येत्येवोपक्रमः कृतः ? नैतत् सारम्; अविद्येत्येवोच्यमान आच्छादकत्वं नाम यत् तस्यास्तत्त्वम्, तदेवाभिहितं स्यात्, नातद्रूपावभासितयाऽनर्थहेतुत्वम्। अतोऽतद्रूपावभासित्वमध्यासशब्देन प्रकृतोपयोगितयोपक्षिप्य पुनस्तस्याविद्याशब्दतया विद्यामात्रापनोदनार्हत्वं दर्शनीयम्। तदेतदाह**—यत्र यदध्यासः, तत्कृतेन दोषेण गुणेन वाऽणुमात्रेणापि स न सम्बध्यते **इत्यवास्तवमनर्थं दर्शयति। वास्तवत्वे हि न ज्ञानमात्रात् तद्विगमः इति प्रतिज्ञा हीयेत॥**

## पञ्चपादिकाविवरणम्

**केनेति**॥ ननु अविद्यामुपवर्ण्य तस्या ज्ञाननिवर्त्यत्वप्रदर्शनेनाध्यासनिवृत्तिसिद्धेः किमध्यासोपवर्णनेन? इति चोदयति—**यद्येवमध्यास इति। प्रक्रम्येति**॥ पुरुषाकाङ्क्षाया अनर्थनिवृत्तिविषयत्वाद् अनर्थस्यैवाविद्यात्वेन ज्ञाननिवर्त्यत्वं वक्तव्यमिति परिहरति—**नैतत्सारमिति**॥ अनर्थस्यैवाविद्यात्मकत्वे तदाश्रये विषये वा वस्तुतस्तन्निमित्तगुणदोषाभावाद् ज्ञानेन सर्वानर्थनिवृत्तिः फलिष्यति, तत्फलवचनमुत्तरभाष्यमित्याह—**तदेतदाह "यत्र यदध्यास"** इति॥ अविद्याध्यासविषयत्वप्रयुक्तस्तावद् गुणदोषाभावः सिद्धः॥ अत्राध्यासपरिणामितयाऽऽश्रयत्वप्रयुक्तदोष-गुणाभावः कथ्यते। कथम्? अनाद्यविद्याध्यासस्य

## तत्त्वदीपनम्

त्याऽऽह—**नन्वविद्यामिति**॥ **टीकाया**'मविद्ये'त्येव कृत उपक्रमो वरमिति योजना। अविद्यायां वर्ण्यमानायामाच्छादकत्वमेवोक्तं स्यात्, न तु विक्षेपरूपत्वमित्युक्तम्; तत्र विक्षेपरूपाभिधाने किं प्रयोजनम्? न स्वरूपेणानर्थत्वम्; सुषुप्तौ तददर्शनात्। ततश्च विक्षेपहेतुत्वेनानर्थत्वं वक्तव्यं निवृत्तिसिद्धये इत्यर्थः। **प्रकृतोपयोगितयेति**॥ (टीकायाम्)॥ अनर्थहेतुतया निवृत्तिसिद्ध्यर्थं प्रवर्तकसूत्रतया प्रवृत्तिसिद्ध्यर्थं वेत्यर्थः। अध्यासस्यानर्थात्मकस्याविद्याशब्दतया विद्यामात्रनिवर्त्यत्वमुक्त्वा तस्मिन्नर्थे भाष्यमवक्ष्यत्—"तदाहे"ति, तदनुपपन्नम्; भाष्ये गुणदोषासंबन्धमात्रप्रतिपादनादित्याशङ्क्याऽऽह—**अनर्थस्येति**॥ **आश्रयशब्देन** भ्रान्तिपरिणामिनिर्देशः। **विषयपदमधिष्ठानवाचि**। **तत्** एतदित्यर्थः। **तत्** तत्र; अनर्थस्याविद्यात्मकतया विद्यानिवर्त्यत्वे सति। **एतत्पदं बुद्धिस्थं फलमाह**॥ "न संबन्ध्यत" इति कथमुक्तम्? संबन्धस्य प्रतीयमानत्वादिति शङ्कायां **टीकाकृतोक्तम्—अवास्तवमिति**। **अवास्तवत्वमुपपादयति—वास्तवत्व इति** (टीकायाम्)॥ आश्रय-विषयत्वप्रयुक्तगुण-दोषासंस्पर्शाभिधानमनुपपन्नम्; विषयत्वप्रयुक्तगुणाद्यसंस्पर्शस्य शुक्तिकादिदृष्टान्तेन सिद्धत्वेऽप्याश्रयत्वप्रयुक्तगुणादिसंस्पर्शोऽतिदुर्वारः। सर्पादिभ्रान्त्याश्रये परमार्थत एव भय-कम्पादिदृष्टेरित्याशङ्क्य तात्पर्यमाह—**अविद्येति**॥ **तावदिति**—लौकिकन्यायेन सिद्धत्वान्न किंचिद् वक्तव्यमस्तीत्यर्थः॥ आत्मनः परिणामित्वे तन्निमित्तगुणादिसंस्पर्शो दुर्वार इत्याह—**कथमिति**॥ आत्मनः किमज्ञानाध्यासपरिणामित्वम्? उताहङ्काराध्यासपरिणामित्वम्? इति विकल्प्याद्यं दूषयति—**अनाद्यविद्येति**॥

## ऋजुविवरणम्

तन्निवृत्तिसिद्धेः, किं तज्ज्ञानेन? तथाऽऽच्छादनरूपस्य प्रधान्येनाभिधानम्, न तु तदेवाभिधेयम्; विक्षेपरूपस्याप्यभिधेयरूपत्वात्, अतोऽविद्ययोपक्रमेऽपि प्रकृतोपयोगः सिध्यत्येव, तेन नायमध्यासोपक्रमे हेतुरित्याशङ्क्याभिप्रायमाह—**पुरुषाकाङ्क्षाया इति**। "तदेवाहे"त्युक्यम्, पूर्वग्रन्थे हि विद्यामात्रापनोदार्हत्वं दर्शनीयमित्युक्तम् "तदेवाहे"त्यत्र तच्छब्देन तदेव निर्दिश्यते। नच तदस्मिन् भाष्ये प्रतीयते; गुण-दोषाभावमात्रप्रतीतेः। तथा परस्परव्याहतश्च; "तदेवाहे"त्युक्त्वाऽनन्तरग्रन्थे—"अवास्तवमनर्थं दर्शयती"त्युक्तत्वात्। नचार्थद्वयमस्मिन् भाष्ये प्रतीयते। नाप्येकैकस्यार्थद्वयमुपपद्यते, इत्याशङ्क्याभिप्रायमाह—**अनर्थस्यैवाविद्यात्मकत्वेनेति**॥ ननु आत्मनोऽध्यासविषयत्वे, आश्रयविषयत्वे च कथं तन्निमित्तगुण-दोषाभावः? इत्याशङ्क्याऽऽह—**अविद्याध्यासविषयत्वेति**॥ विषयत्वं विना यद्यध्यासः साधितः, तदा तन्निमित्तगुणाद्यभावः सिद्ध एव। अथवोदाहरणे विषयत्वप्रयुक्तगुण-दोषाभावः सिद्धः, इति न तत्र चोद्यमिति **तावत्पदस्यार्थः**। अथवाऽसङ्गत्वमविकारित्वं चात्मनः पूर्वमेव सिद्धम्, किमर्थं पुनर्गुण-दोषाभावकीर्तनम्? पुनरुक्तिप्रसङ्गादित्याशङ्क्य परिहरति—**अविद्याध्यासविषयत्वेति**॥ अथवा, यत्रेति सप्तम्यर्थत्वाद्विषयत्वप्रयुक्तगुण-दोषाभावः सिध्येदाकाशादिवत्, नैतावताऽऽत्मनो गुण-दोषाद्यभावः सिध्यति; आश्रयत्वप्रयुक्तस्य गुण-दोषस्यापरिहार्यत्वादित्याशङ्क्याह—**अविद्याध्यासविषयत्वेति**। आश्रयत्वप्रयुक्तस्तु बहिरेव कथ्यत इत्यर्थः॥ ननु आश्रयत्वप्रयुक्तगुण-दोषौ न स्त इति कथमुच्यते? न ह्यध्यासपरिणामिनस्तन्निमित्तगुण-दोषाभावः संभवतीत्याक्षिपति—**कथमिति**॥ अज्ञानाकारेण तदवभासाकारेण वा न परिणाम इत्याह—**अविद्याध्यासस्येति**॥ ननु परिणामित्वाभावे कथमात्मा-

## पञ्चपादिका

**एवं तावद् युष्मदस्मदित्यादिना** मिथ्याऽज्ञाननिमित्तः सत्यानृते मिथुनीकृत्याहमिदं ममेदमिति नैसर्गिकोऽयं लोकव्यवहारः इत्यन्तेन भाष्येण सिद्धवदुपन्यस्तमात्मानात्मनोरितरेतरविषयमविद्याख्यमध्यासं सिषाधयिषुः, तस्य लक्षणमभिधाय, तत्सम्भवं चात्मनि दर्शयित्वा, पुनस्तत्र सद्भावनिश्चयमुपपत्तित उपपादयितुमिच्छन्नाह—तमेतमविद्याख्यमात्मानात्मनोरितरेतराध्यासं पुरस्कृत्य सर्वे प्रमाण-प्रमेयव्यवहारा लौकिका वैदिकाश्च प्रवृत्ताः, सर्वाणि च शास्त्राणि विधि-प्रतिषेध-मोक्षपराणीति ॥ **मोक्षपरत्वं च शास्त्रस्य विधि-प्रतिषेधविरहिततयोपादान-परित्यागशून्यत्वात् स्वरूपमात्रनिष्ठत्वमङ्गीकृत्य पृथक् क्रियते ।**

## पञ्चपादिकाविवरणम्

नित्यचैतन्यावभास्यत्वान्न तत्राध्यासपरिणामः । कादाचित्काध्यासपरिणामस्याविद्योपादानत्वादविद्यासंभेदादात्माश्रयत्वादिसिद्धिरिति । **प्रतिज्ञेति सूत्रकारस्य**—ज्ञानेन बन्धनिवृत्तेरर्थात्सूत्रणमुच्यते ॥

वृत्तसंकीर्तनपूर्वकमुत्तरभाष्यस्य तात्पर्यमाह—**एवं तावद्युष्मदस्मदित्यादिनेति** ॥ अत्र च प्रमातृ-प्रमाण-प्रमेय-कर्तृ-कर्म-कार्य-भोक्तृ-भोग-भोग्यस्वलक्षणस्य व्यवहारत्रयस्य शरीरेन्द्रियादिष्वहं-ममाध्यासपुरःसरत्वं प्रत्यक्षमिति प्रत्यक्षोपन्यासः कृतः । ननु "विधि-प्रतिषेधपराणि शास्त्राणी"त्येव वक्तव्यम्, तन्निष्ठत्वात् सकलशास्त्रस्य; किमिदं मोक्षपराणीति ? तत्राह—**मोक्षपरत्वं चेति** ॥

## तत्त्वदीपनम्

द्वितीयं प्रत्याह—**कादाचित्केति** ॥ आगन्तुकाध्यासस्याविद्याश्रयत्व आत्मनो नित्यमुक्तत्वाद् ज्ञानवैयर्थ्यमित्याशङ्क्याऽविद्यातत्कार्ययोरात्मन्यध्यस्तत्वाद् ज्ञानस्यार्थवत्त्वमित्याह—**अविद्येति** ॥ "प्रतिज्ञा हीयेते"त्यत्र किं भाष्यकृतः प्रतिज्ञा उच्यते ? उत सूत्रकृतः ? नाद्यः; तददर्शनात्; न द्वितीयः; विचारकर्तव्यतायास्तत्र प्रतिज्ञादर्शनादित्याशङ्क्याऽऽह—**प्रतिज्ञेति** ॥ ब्रह्मज्ञानप्रयोजनां विचारकर्तव्यतां सूत्रयताऽऽचार्येण बन्धनिवृत्तिः सूत्रिता; ज्ञानस्य स्वरूपेणापुरुषार्थत्वादित्यर्थः ॥

पूर्वोत्तरभाष्ययोरध्यासविषयत्वाद् मध्ये वृत्तकीर्तनमनुपपन्नमित्याशङ्क्य, लक्षणादेः पुरोक्तत्वात् प्रमाणस्य च "कथं पुनरि"-त्यत्रोच्यमानत्वाद् व्यवहारस्य चाध्यासपुरःसरतायां द्वितीयभाष्ये सिद्धत्वादुत्तरभाष्यमसङ्गतमिति शङ्कायां प्रमाणपरत्वाद् नास्य तावद् वैयर्थ्यमित्याशयेनाह—**वृत्तेति** ॥ कर्त्रादिव्यवहारस्याविद्याविषयत्वमत्र कस्माद् नोक्तम् ? प्रमाणं चोपन्यस्यमानं न पश्यामः, इत्याशङ्क्याऽऽह—**अत्रेति** ॥ प्रमात्रादिव्यवहारस्येतरेतरोपलक्षणत्वाद् "अध्यासं पुरस्कृत्ये"ति च साक्षिप्रत्यक्षस्योक्तत्वाद् नावद्यमित्यर्थः ॥ शास्त्रस्य विधि-प्रतिषेध-मोक्षपरत्वमुक्तम्, तदाक्षिपति—**ननु विधीति** ॥ शास्त्रस्य प्रवृत्ति-निवृत्त्युपदेशनस्वाभाव्यात् ब्रह्मणश्च प्रवृत्त्याद्यसंस्पर्शित्वान्न तत्परत्वं शास्त्रस्येति चोद्यार्थः । नच प्रवृत्त्याद्युपदेष्टृतया शास्त्रत्वम्; अतिप्रसङ्गात्, किंतु पुरुषार्थोपदेष्टृतया, तच्च वेदान्तेष्वस्तीत्यभिप्रायेणाह—**तत्राहेति** ॥ वेदान्तेषु विधि-प्रतिषेधवाचकपदाभावाद् ब्रह्मविषयोपादानाद्यसंभवादध्याहारस्यानुपपत्तेः स्वरूपमात्रनिष्ठमपि शास्त्रमस्तीति पृथक्करणमिति **टीकार्थः** ॥

## ऋजुविवरणम्

श्रयत्वमध्यासस्य ? इत्याशङ्क्याह—**अविद्यासंभेदादिति** ॥ "प्रतिज्ञा हीयेते"ति कथमुक्तम् ? नहि बन्धनिवृत्तिप्रतिज्ञाऽस्ति, येनैवमुच्येत, इत्याशङ्क्य व्याचष्टे—**प्रतिज्ञेति** ॥ **सूत्रकारस्येति** ॥

एवम्—"अध्याससद्भावमि"त्यादिनाऽध्यासमुपपत्तित उपपादयितुमिच्छन्नाहेति भाष्यमवतारितम्, तत्र कथमुपपादनं कृतमिति न ज्ञायते, नहि "इतरेतराध्यासं पुरस्कृत्य व्यवहाराः"इत्येतावन्मात्रेणाध्याससिद्धिः प्रमाणाधीनत्वात्सिद्धेः । तथा "प्रमाण-प्रमेयव्यवहारा लौकिकाः"इत्युक्तम्, के ते ? इति न ज्ञायते; तदर्थं व्याचष्टे—**अत्र च प्रमातृ-प्रमाणेति** ॥

"बाढमुक्तलक्षणे"त्यत्रैतदुक्तम्—उक्तलक्षणं संभावनं चास्ति, नैतावता तत्सद्भावसिद्धिरिति, तदयुक्तम्; प्रमाणस्याप्युक्तत्वात्, लक्षण-संभावनामात्राङ्गीकारायोगात्, नैतावता तत्सद्भावसिद्धिरिति चायुक्तम्; प्रमाणस्याप्युक्तत्वात्, तदसिध्ययोगात् । तथा सह विवरणेन भाष्यमसङ्गतम्; पूर्वभाष्ये हि व्यवहारत्रितयस्याध्यासपुरःसरत्वमुक्तम्, अनन्तरं तत्रैव प्रश्नादिकरणं युक्तम् । नह्यविद्यावद्विषयत्वं प्रकृतं निरूप्यं वा, कुतस्तत्र प्रश्नकरणम् ? समाप्ते वा पूर्वस्मिन्नर्थान्तरविषयप्रसङ्गो युक्तः, नात्र तथेत्याशङ्क्याह—**कथं पुनरित्यादीति** ॥ अत्र प्रमाणान्तरविषयत्वप्रतीतिरेवं प्रत्यग्दृश्यपि संभवेदित्यन्वयो न संभवति, अन्यत्रापि संभवप्रतीतेः । न चान्यत्रासंभवशङ्का, येन संभवः प्रदर्श्येत, अतश्च प्रत्यग्दृशि संभवेदपीत्यन्वयः; तथा

### पञ्चपादिका

कथं पुनरविद्यावद्विषयाणि प्रत्यक्षादीनि प्रमाणानि शास्त्राणि चेति ॥ **बाढम्, उक्तलक्षणाऽविद्या प्रत्यग्दृश्यपि सम्भवेत्, नैतावता तत्सम्भवः सिध्यति; तेन निदर्शनीयः सः । प्रमातारमाश्रयन्ति प्रमाणानि, तेन प्रमाता प्रमाणानामाश्रयः; नाविद्यावान्, अनुपयोगादित्यभिप्रायः । अथवा—कथमविद्यावद्विषयाणि प्रत्यक्षादीनि शास्त्राणि च प्रमाणानि ? इति सम्बन्धः । अविद्यावद्विषयत्वे सत्याश्रयदोषानुगमादप्रमाणान्येव स्युरित्याक्षेपः ॥**

### पञ्चपादिकाविवरणम्

"कथं पुनरि"त्यादिभाष्यस्याध्यासोपादानं व्यवहारत्रितयमित्यत्र प्रमाणान्तरप्रश्नविषयत्वं दर्शयति—**बाढमुक्तलक्षणाऽविद्येत्यादिना** ॥ "कथं पुनरि"त्याक्षेपार्थं दर्शयति—**प्रमातारमाश्रयन्तीति** ॥ अविद्याध्यासपरिनिष्पन्नाहङ्कारात्मसंपिण्डितोपादानत्वे प्रमाणानां प्रामाण्यमेव न सिध्यतीत्यस्मिन्नर्थे भाष्यं योजयति—**अथवा कथमविद्यावद्विषयाणीति** ॥ अविद्यावदुपादानत्वे का प्रामाण्यानुपपत्तिरिति ? तदाह—**अविद्यावद्विषयत्व इति** ॥

### तत्त्वदीपनम्

"कथं पुनः प्रत्यगात्मनी"त्यत्रासंभवाशङ्कायाः परिहृतत्वात् पुनस्तच्छङ्कानुदय इति भाष्यानुपपत्तिमाशङ्क्य, प्रमाणप्रश्नपरतया भाष्यं व्याचख्यौ, तदयुक्तम्; प्रमाणस्य पूर्वोक्तत्वादित्याशङ्क्य तात्पर्यमाह—**कथं पुनरिति** ॥ "निदर्शनीयम्" इत्यत्र नितरां दर्शनीयमिति प्रमाणान्तरं च दर्शनीयमित्युक्तम्; साक्षिणः प्रतिवाद्यसंमतत्वात् । नच—"कथं पुनरि"त्यतः प्रागध्यासस्वरूप-तत्संभावनाय, तदादि तत्सद्भावनिर्णयार्थमिति टीका विरुध्यते, प्रमाणस्य पूर्वभाष्येऽप्युक्तत्वादिति—शङ्क्यम्; साक्षिण इतरासंमतप्रमाणस्यात्रैव प्रदर्श्यमानत्वादित्यर्थः ॥ प्रमाणादीनामविद्यावद्विषयत्वे किं प्रमाणमिति प्रश्नपरत्वं भाष्यस्याश्रित्योपयोगाभावादविद्यावद्विषयत्वमनुपपन्नमित्यभिप्रायप्रदर्शनमसङ्गतमित्याशङ्क्य, व्याख्यानान्तरस्य क्रियमाणत्वाददोष इत्याह—**कथं पुनरिति** । पूर्वस्मिन् व्याख्याने अविद्यावद्विषयाणि, पुनः कथम् ? साक्षिव्यतिरिक्तं किं मानम् ? इति योजना । द्वितीये कथं प्रमाणान्यविद्यावद्विषयाणि ? प्रमाणानां प्रमात्राश्रयत्वादिति योजना ॥ प्रत्यक्षादीनां प्रमात्राश्रयत्वान्नाविद्यावदाश्रयत्वम्, ततः कथमप्रामाण्यप्रसञ्जनम् ? इत्याशङ्क्य, प्रमातृत्वस्याविद्याविलसितत्वात् तद् युक्तमित्याह—**अविद्येति** ॥ अहंकारश्चात्मा चेत्यहंकारात्मानौ, तयोः संपिण्डितरूपमहंकारात्मसंपिण्डितं चेति तथोक्तम्, तदुपादानं येषां तानि तथोक्तानि, तेषां भावस्तत्त्वं तस्मिन्निति विग्रहः । अविद्यावदुपादानत्वेऽपि सत्यविषयत्वेन प्रामाण्यमिति शङ्कते—**अविद्यावदिति** ॥ त्वन्मते सत्यविषयत्वमपि न सिध्यतीत्याह—**तदाहेति** ॥

### ऋजुविवरणम्

सति पूर्वमुक्तं प्रमाणमपि शब्दादनूदितमेव । एवं च सति प्रमाणान्तरविषयत्वं स्पष्टमेव ॥ अथवा—प्रत्यग्दृश्यपि संभवेदित्येवान्वयः संभवतु । अत्र प्रत्यग्रूपत्वेनासंभवाशङ्का भवति । अत्रासंभवप्रकारानुवादोऽपिशब्देन क्रियते । यद्यपि प्रत्यग्रूपः, तथाऽपि संभवेदिति । एवमपि "नैतावते" त्यत्रैतावतेति किं निर्दिश्यते ? न तावल्लक्षण-संभावनयोरेव निर्देशो घटते; ताभ्यामसद्भावसिद्धिप्रसक्त्यभावात्, नैतावता तत्सद्भाव इति निषेधानुपपत्तेः । अतश्च "नैतावते"त्यनेन प्रकृतलक्षण-संभावनाप्रमाणं निर्दिश्यते; तेनासिद्धिरपि । एवम्—"अहं मनुष्यः" इति प्रमाणम्, तद् गौणमित्यपि वक्तुं शक्यते, इति नाध्यासमेव गमयतीति । अत एवोक्तं पुरस्तात्—"कथं पुनरविद्यावद्विषयाणी"त्यतः प्रागध्यासस्वरूप-तत्संभावनायेति; इतरथा "अविद्यावद्विषयाणी"-त्यतः प्रागित्यवधिकरणस्य विरोधो दुष्परिहरः । "तमेतमेवमि"त्यत्र प्रत्यक्षोपन्यासो वाऽस्तीति वक्तव्यम्, अवधिर्वा । तदुभयमपि वक्तुं न शक्यते; ग्रन्थेऽव्यक्तत्वात्, अतश्च "तमेतमि"त्यत्रोक्तस्य प्रमाणस्य प्रत्यक्षस्य"कथं पुनरि"त्यारभ्य दृढीकरणादवधिकरणमिति शोभनम् । "तेन निदर्शनीयः सः" इत्युक्त्वा "प्रमातारमि"त्यनन्तरं लिखितत्वादध्यासपुरःसरत्वप्रतिपादकेन भवितव्यम् । नच तत्प्रतिपादनमत्र दृश्यते; अविद्यावत्त्वस्यानुपयोगप्रतीतेः । नच पूर्वग्रन्थशेष एवायम्; पूर्वग्रन्थे प्रमाणप्रश्नः कृतः; न तत्रानुपयोगकथनमुपयुज्यते, अतोऽनुपपन्न इत्याशङ्क्याह—**कथं पुनरित्याक्षेपार्थमिति** ॥ अथवा—"कथमि"त्यादिग्रन्थः "प्रमातारमि"त्यनेन पुनरुक्तः; तत्राविद्यावान् प्रमाणाश्रयो न भवतीत्युक्तम्, अथवेत्यत्रापि प्रत्यक्षादीनि शास्त्राणि च प्रमाणानि कथमविद्यावद्विषयाणीत्यन्वयप्रतिभानात् अथ "प्रमातारमि"त्यत्रार्थप्रदर्शनम्, अनन्तरं योजनाप्रदर्शनमिति पौनरुक्त्यपरिहारः ? तन्न; तत्रैव सामर्थ्याद्योजनाप्रतीतेः, "अथवे"त्युक्तिविरोधाच्च । ननु "प्रमाणानी"ति मध्ये स्थितस्यान्ते प्रक्षेपात्तेनैव 'कथमि'त्यस्यान्वयान्न पौनरुक्त्यम् ? मैवम्; नान्ते प्रक्षेपोऽन्वयकारणम्; सन्निहितेनैवान्वयसंभवात् । अथ प्रमाणानीत्यस्य मध्ये स्थितस्यान्ते

### पञ्चपादिका

उच्यते; देहेन्द्रियादिष्वहं-ममाभिमानहीनस्य प्रमातृत्वानुपपत्तौ प्रमाणप्रवृत्त्यनुपपत्तेरिति भाष्यकारस्य वस्तुसंग्रहवाक्यम् ॥ अस्यैव प्रपञ्चः—नहीन्द्रियाण्यनुपादायेत्यादिः। न हि देहेन्द्रियादिष्वहं-ममाभिमानहीनस्य सुषुप्तस्य प्रमातृत्वं दृश्यते। यतो देहेऽहमभिमानः, इन्द्रियादिषु ममाभिमानः। आदिशब्देन बाह्वाद्यवयवग्रहणम्। देहशब्देन सशिरस्को मनुष्यत्वादिजातिसम्भिन्नोऽवयव्यभिमतः, न शरीरमात्रम्; देहोऽहमिति प्रतीत्यभावात्। सर्वो हि मनुष्योऽहम् देवोऽहमिति जातिविशेषैकाधिकरणचैतन्य एव प्रवर्तत इति स्वसाक्षिकमेतत्।

### पञ्चपादिकाविवरणम्

"उच्यते देहेन्द्रियादिष्वि"त्यादिपरिहारभाष्यमवतारयति **वस्तुसंग्रहवाक्यम्**। **अस्यैव प्रपञ्च इति** व्यवहारत्रितयमध्यासोपादानमित्यत्रार्थापत्ति-व्यतिरेक्यनुमानप्रदर्शनाय। यत्र यत्राध्यासाभावः संप्रतिपन्नः, तत्र व्यवहाराभावो दृष्ट इति व्यतिरेकव्याप्तिं भाष्यार्थं दर्शयति—**नहि देहेन्द्रियादिष्विति** ॥ देहादिशब्दार्थं विभागेनाध्यासं च कथयति—**यतो देहेऽहमभिमान इत्यादिना** ॥ प्रमाणान्तरप्रदर्शनाय व्यवहारत्रयमूलाध्यासे प्रत्यक्षमुक्तमनुवदति—**सर्वो हि मनुष्योऽहमिति** ॥

### तत्त्वदीपनम्

भाष्यव्याख्यानस्य प्रस्तुतत्वात्—"एतत्संग्रहवाक्यम्, अस्यैव प्रपञ्चः" इत्येतत् कुत्रोपयुज्यते? इत्याशङ्क्य, पौनरुक्त्यनिरासेन तात्पर्यं कथ्यत इत्याह—**उच्यत इति** ॥ विभागो विभजनमपुनरुक्तत्वमिति यावत्। प्रमाणान्तरप्रश्ने प्रतिवचने तदेव प्रदर्शनीयम्, नच तत्प्रदर्श्यत इति भाष्यासङ्गतिमाशङ्क्याह—**व्यवहारत्रितयमिति** ॥ "यतो देहः" इत्यादिना व्यतिरेकव्याप्तो हेतुः प्रदर्श्यत इति, नच तदुपपद्यते; तदसाधकत्वादित्याशङ्क्याह—**देहादीति** ॥ एतदुक्तं भवति—सुषुप्तावहं-ममाभिमानाभावादप्रमातृत्वं चेत्, कदाचिदपि प्रमातृत्वं न स्यात्; न खलु देहेऽहमित्यभिमानो लक्ष्यते, तथा इन्द्रियेष्विति शङ्कायां देहादिशब्दार्थस्य विभागेनाध्यासप्रदर्शनस्योचितत्वमिति ॥

**देहशब्देनेत्यादेरेषोऽर्थः**—बाह्वाद्यवयवानां देहशब्दान्तर्भावात्पृथग्ग्रहणमयुक्तमित्याशङ्क्याऽऽह—**देहशब्देनेति** ॥ देहशब्देनावयव्यभिमत इत्यन्वयः छिन्नबाह्वाद्यवयवेऽप्यहंबुद्धिवत् छिन्नशिरसोऽप्यवयवित्वात्तद्धीनेऽभिमानप्रसिद्धिं निरस्यति—**सशिरस्क इति** ॥ एवंभूतेऽप्यवयविनि देहे-'अहमि'त्यभिमानशङ्कां निरस्यति—**मनुष्यादीति** ॥ प्रसिद्धेरध्यासमूलत्वे साक्षिप्रमाणस्य दर्शितत्वात्पुनस्तत्प्रदर्शनं व्यर्थमित्याशङ्क्य तात्पर्यमाह—**प्रमाणान्तरेति** ॥ नचानुवादवैयर्थ्यम्, पराभिप्रायेण

### ऋजुविवरणम्

प्रयोगे कारणान्तराभावात् कथमित्यनेनान्वयः, एवमपि कथं—"प्रमाणानी"ति प्रामाण्याक्षेपो न घटते; अन्तःकरणात्मनोः सम्पिण्डितयोरुपादानत्वस्योक्तत्वात्, अविद्यावदुपादानत्वाभावादित्याशङ्क्यावतारयति—**अविद्याध्यासपरिनिष्पन्नेति** ॥

वस्तुसंग्रहः, उत्तरेण तत्प्रपञ्च इति कथनं किमर्थम्? भाष्यव्याख्यानस्य प्रस्तुतत्वात्। नच—अनेन भाष्यव्याख्यानमेव क्रियत इति—युक्तम्; उत्तरव्याख्यानेन पौनरुक्त्यप्रसङ्गादित्याशङ्क्याभिप्रायमाह विभागेन—**अवतारयतीति** ॥ "नहि देहेन्द्रियादिष्वि"त्यसङ्गतो ग्रन्थः; प्रश्नानन्तरं तस्योत्तरे वक्तव्ये तद्विहाय देहेन्द्रियादिष्वभिमानहीने सुषुप्तौ व्यवहाराभावप्रदर्शनात्। उद्भाष्यं च; भाष्ये हि देहादिष्वभिमानाभावे व्यवहारासंभवादभिमानेन भवितव्यमित्युक्तत्वात्, इत्याशङ्क्याभिप्रायमाह—**व्यवहारत्रितयमिति** ॥ "यतो देहेऽहमभिमानः" इत्यादिना हेतुरुक्त इति प्रतिभाति, तदयुक्तम्; पूर्वग्रन्थे ह्यध्यासाभावे व्यवहाराभावात् सुषुप्त इति व्यतिरेकव्याप्तिरुक्ता, सा नानेन साध्यते; तत्रैव साधकस्योक्तत्वात्। अस्यापि तत्साधकत्वमिति यद्युच्येत, वैयधिकरण्यमेव स्यात्, नहि देहादिष्वहं-ममाभिमानो देहादिशब्दार्थप्रतिपादनं च सुषुप्तौ व्यवहाराभावं साधयति। विभागेनाध्यासप्रदर्शनमप्यप्रयोजकम्; यथासंख्यन्यायेन विभागसिद्धेः। तेनायं न युक्त इत्याशङ्क्य व्याचष्टे—**देहादिशब्दार्थमिति** ॥ अयमर्थः—"देहेन्द्रियादिष्वहं-ममे"ति भाष्य उभयप्रकारोऽप्यध्यासः सर्वत्रोक्त इति प्रतिभाति; अनेकपदार्थकीर्तनेन यथासंख्यन्यायासंभवात्। तथाच सति विरुद्धं भाष्यं भवेत्; 'मे मनुष्य' इति प्रतीत्यसंभवात्, 'अहमिन्द्रियमि'ति च; तन्निवृत्त्यर्थं विभागप्रदर्शनमिति। देहशब्दार्थप्रयोजनं स्पष्टम्। "सर्वो हि मनुष्यः" इत्यनेन ग्रन्थेन जातिविशेषैकाधिकरण्यं सामानाधिकरण्यम्; तच्च तच्चैतन्यं च जातिविशेषैकाधिकरणचैतन्यम्; तस्मिन्चैतन्ये सति प्रवर्तत इति स्वसाक्षिकमित्युक्तम्। व्यतिरेकव्याप्तेरुक्तत्वादनुमानमेव प्रदर्शनीयम्, नतु प्रत्यक्षम्; प्रक्रमविरोधात्, पौनरुक्त्यप्रसङ्गाच्च, "तमेतमि"ति भाष्ये प्रत्यक्षस्योक्तत्वादित्याशङ्क्य व्याचष्टे—**प्रमाणान्तरप्रदर्शनायेति** ॥ अनुमानविशेषणोपयोगस्त्वेवम्। तत्र न तावद् जाग्रत्

## पञ्चपादिकाविवरणम्

अत्रायं प्रयोगः—देवदत्तस्य जाग्रत्स्वप्नकालौ, तस्यैव कर्तुः करणभूतदेहेन्द्रियादिष्वहंममाध्यासपुरःसरप्रमातृत्वादिव्यवहारवन्तौ, तस्यैव सुषुप्तिकालादन्यकालत्वात्; यः कालस्तथाविधव्यवहारवान्न भवति, न स तस्यैव सुषुप्तिकालादन्यकालः, यथा तस्यैव

## तत्त्वदीपनम्

प्रमाणान्तरोपन्यासः, स्वमते तु साक्ष्येव प्रमाणमिति दर्शनार्थत्वादित्यर्थः । **जातिविशेषेत्यस्यायमर्थः**—जातिविशेषेणैकाधिकरणं समानाधिकरणं जातिविशेषैक्यमापन्नम्; तच्च चैतन्यं चेति तथोक्तम्; तस्मिन् सतीत्यर्थः । अथवा—जातिविशेषैक्यापन्नं चैतन्यं यस्य स तथोक्त इति ॥

भाष्यटीकयोर्विवक्षितं प्रमाणान्तरमाह—**अत्रेति** ॥ अवस्थामात्रपक्षीकरणे यस्य कस्यचिद् देहेन्द्रियादिष्वभिमानपुरःसरव्यवहारत्वप्रसाधने बाधः स्यात्, तदर्थमाह—**देवदत्तस्येति** ॥ जाग्रत्स्वप्नकालयोरन्यतरपक्षीकरण इतरत्र साध्यसद्भावेन व्यतिरेकित्वं साध्याभावे सव्यभिचारिता; तस्मादुभयोः पक्षीकरणम् । 'प्रमातृत्वादिव्यवहारवन्तावि'त्युक्ते सिद्धसाध्यता, तदर्थमाह—**अध्यासपुरःसरेति** ॥ एतावत्युक्ते रजताद्यध्यासपुरःसरव्यवहारवत्त्वसाधनेन बाधः, तदर्थमाह—**अहं-ममेति** ॥ यस्मिन् कस्मिंश्चिदहं-ममाभिमानपुरःसरव्यवहारवत्त्वसाधनाद् बाधशङ्कां निराकर्तुमाह—**देहेन्द्रियादिष्विति** ॥ अन्यदीयदेहेन्द्रियेष्वहं-ममाभिमानपुरःसरव्यवहारवत्त्वसाधने बाधः स्यात्, तदर्थं विशेषणम्—**तस्येति** ॥ कर्तृः करणभूतेति साध्यविशेषणं संबन्धापेक्षां द्योतयितुम्; "इतरदेशकालत्वादि"त्युक्ते सुषुप्तिकाले सव्यभिचारत्वम्, तदर्थमाह—**सुषुप्तिकालादिति** ॥ एतावत्युक्तेऽसिद्धिः स्यात्, देवदत्तजाग्रत्स्वप्नकालयोर्यज्ञदत्तसुषुप्तिकालत्वं विद्यते । नच स्वस्मात्स्वस्यान्यत्वसिद्धिः, तदर्थमाह—**तस्यैवेति** ॥ "देवदत्तसुषुप्तिकालादन्यकालत्वादि"त्युक्ते पुरुषान्तरजाग्रदादिकालयोर्व्यभिचारः स्यात्, तदर्थं देवदत्तसुषुप्तिकाला-

## ऋजुविवरणम्

स्वप्नकालयोरेव पक्षीकरणं युक्तम्; स्वरूपेण तयोरनिरूपणात्, अवस्थोपाधिकौ तौ नावस्थावन्तं विहाय निर्देष्टुं युक्तौ । नचावस्थामात्रयोगेन पक्षत्वं कालयोः; यत्र काप्यध्याससाधनादात्मन्यध्यासपूर्वत्वासिद्धेः । यदि चाध्यास एव स्वरूपेण साध्येत, तत्र जाग्रत्स्वप्नकालावध्यासपुरस्सरव्यवहारवन्ताविति, तदा हेतुरसिद्धः स्यात्; अवस्थान्तरयोगेन तयोः सुप्तिरूपत्वस्यापि संभवात्, पुरुषेणाविशेषितत्वात् दृष्टान्तश्च न स्यात्; सुषुप्तिरूपत्वादन्यरूपत्वस्यापि संभवात्, तदर्थम्—"देवदत्तस्ये"त्युक्तम् । तत्र देवदत्तस्य जाग्रत्कालमात्रपक्षीकरणेऽध्यासपुरःसरव्यवहारवतः स्वप्नस्य विद्यमानत्वाद् व्यतिरेक्यनुमानमेव न भवेत्, नाप्यन्वय-व्यतिरेकित्वम्; स्वप्नेऽध्यासपुरस्सरत्वस्य परसिद्धत्वाभावेन दृष्टान्तासंभवात् । यदि स्वप्नेऽध्यासपुरःसरत्वं नास्तीत्युच्यते, तर्हि देहेन्द्रियादिष्वहंममाध्यासहीनस्य सुषुप्तस्य व्यवहारादर्शनादिति योऽयं व्यतिरेकः, स न सिध्येत्; अध्यासहीनस्य स्वप्ने व्यवहारस्य दर्शनात्, अतश्चोभयोः पक्षत्वं जाग्रत्स्वप्नयोरिति । तत्र "प्रमातृत्वादिव्यवहारवन्तावि"त्येतावदिति साध्ये सिद्धसाध्यता स्यात्, तन्निवृत्त्यर्थमाह—**अध्यासपुरःसरेति** ॥ एवमपि सिद्धसाध्यता स्यात्; प्रमातृत्वादिव्यवहारे रजताद्यध्यासपुरःसरत्वस्य विद्यमानत्वात्, तदर्थमाह—**अहं-ममेति** ॥ एवमपि बौद्धमताभिप्रायेण सिद्धसाध्यता स्यात्; ज्ञान एवाहं-ममाध्यासपुरःसरमपि व्यवहाराङ्गीकारात्, इत्याशङ्क्याह—**देहेन्द्रियादिष्वहंममेति** ॥ एवमप्यन्यदेहेन्द्रियादिष्वहं-ममाध्यासे स्वदेहाभिमानोत्पत्तिसंभवाद् नाभिमताध्याससिद्धिः, सिद्धसाध्यता चांशे, तदर्थमाह—**करणभूतदेहेन्द्रियादिष्विति** ॥ करणभूतदेहेन्द्रियादिष्वन्यस्याहं-ममाध्यासे देवदत्तव्यक्तावबुक्तसाध्ये विद्यमानेऽपि नाभिमताध्याससिद्धिः, सिद्धसाध्यता च स्यात्, तदर्थमाह—**कर्तुरिति** ॥ अन्यस्य करणभूतदेहेन्द्रियादिष्वहं-ममाध्यासपुरःसरस्य देहादिना ज्ञानोत्पत्तौ सिद्धसाध्यता स्यात्, तदर्थमाह—**तस्येति** ॥ पुरःशब्दस्य पूर्वभावित्ववाचित्वमङ्गीकृत्य व्यावर्त्यभेदो दर्शितः । इदानीं हेतुत्ववाचित्वमङ्गीकृत्य तस्यैव कर्तुः करणतेत्येतावता प्रकारान्तरेण व्यावर्त्यत्वमुच्यते । उत्तराणां हेतुत्वेऽपि पूर्वोक्तस्यैव व्यावर्त्यत्वात्, तत्र देहेन्द्रियाद्यध्यासपुरःसरत्वं समुदितं वा साध्यम् ? व्यस्तं वा ? पक्षद्वयेऽपि बाधितविषयत्वम्; व्यवहाराभावदर्शनात्, अनैकान्तिकश्च हेतुः स्यात्, तदर्थमाह—**करणभूतेति** ॥ अथवा, देहेन्द्रियादिष्वध्यासपुरःसरत्वे साध्येऽविशेषात् सर्वदेहादिष्वध्यासपुरःसरत्वं साध्यं भवेत्, तथा सति बाधितविषयत्वमनुमानस्य, तदर्थमाह—**करणभूतेति** ॥ एवमप्यन्यचित्तादौ व्यवहारो नाध्यासपुरःसरो दृश्यते; तेन बाधितविषयत्वम्, असंप्रज्ञातसमाधिदशायामपि न तादृग्व्यवहारः, तदर्थमाह—**कर्तुरिति** ॥ उन्मत्तव्यवहारे कस्मिंश्चित् सिद्धसाध्यता, तदर्थमाह—**तस्यैवेति** ॥ "सुषुप्तिकालादन्यकालत्वादि"ति हेतावसिद्धता स्यात्, तदर्थमाह—**तस्येति** ॥ "तस्य सुषुप्तिकालादन्यकालत्वादि"ति हेतौ पुरुषान्तरसुषुप्तिकालेऽपि हेतोर्विद्यमानत्वादनैकान्तिकता, तदर्थमाह—

## पञ्चपादिकाविवरणम्

सुषुप्तिकाल इति। व्यवहारत्रितयं वा दर्शिताध्यासोपादानमन्तरेणानुपपन्नम्; अध्यासाभावे व्यवहारादर्शनात्सुषुप्ते, इत्यर्थापत्तिः॥ ननु कर्तृ-करणयोः सम्बन्धमात्रं व्यवहारेऽपेक्ष्यते, न तादात्म्यसंबन्धः, इति तत्र परिशेषानुमानार्थापत्तिसिद्धये

## तत्त्वदीपनम्

दन्यत्वे सति तत्कालत्वादिति द्रष्टव्यम्। केवलव्यतिरेकिणमनङ्गीकुर्वाणं प्रत्यर्थापत्तिमाह—**व्यवहारत्रितयं**॥ "अनुपपन्नमि"-त्यत्राध्यासं गमयतीति शेषः। अनुपपत्तिमेवाह—**अध्यासाभाव इति**॥ देहादीनां प्रमातुश्च यः कर्तृ-करणभावः, स संबन्धपुरःसर इति सामान्यव्याप्तिः। स्व-स्वाम्यादिसंबन्धलक्षणव्यापकविशेषश्च नात्र विद्यते, इति व्याप्तिसामान्यविशेषाभावबोधसूताऽर्थापत्तिः प्रमाणमित्यर्थः। स्वत्वादिना व्यवस्थितमनुप्यावयव्यादिना व्यवहारस्योभयसंमतत्वात् कथं तन्निरसनमित्याह—**ननु कर्त्रिति**॥ कर्तृ-करणयोः संबन्धमात्रे सति तादात्म्याभावापराधेन तत्कार्याभावादर्शनादर्थापत्तेरन्यथोपपत्तिः। अनुमानस्याप्रयोजकत्वमिति शङ्कार्थः। प्रमातृत्वादिव्यवहारोपयोगिनां संबन्धान्तराणामनिरूपणात् कल्पिततादात्म्यमेव संबन्धः, ततश्च नानुमानार्थापत्त्यदृष्टेत्याह—**तत्रेति**॥ किं स्व-स्वामिता संबन्धः? आहो विनियोज्य-विनियोजकता? किं वा संयोगः? उत समवायः? आहो

## ऋजुविवरणम्

**तस्यैवेति**॥ अत्र संग्रहः—

जाग्रदादिः स्वरूपेण न कालोऽस्ति कदाचन। अवस्थोपहितः कालो जाग्रत्स्वप्नादिशब्दभाक्॥
पक्षीकर्तुं कथं शक्यौ पुरुषेणाविशेषितौ। अवस्थामात्रयोगेन पक्षत्वं यदि चेष्यते॥
आत्मन्यध्यासपूर्वत्वं व्यवहारस्य नो भवेत्। तथैव चेद्यदीष्येत साध्यं हेतोरसिद्धता॥
अवस्थान्तरयोगेन सुषुप्तिरूपत्वसंभवात्। साध्य-दृष्टान्तयोश्चैवमसिद्धेस्तौ विशेषितौ॥
जाग्रन्मात्रस्य पक्षत्वे व्यतिरेकी न सिध्यति। विद्यमानसपक्षत्वाद् अहंमानाद्यसंभवः॥
विपक्षे वर्तनात् स्वप्ने हेतुर्नैगमिको भवेत्। अन्वय-व्यतिरेकित्वं सपक्षाभावतो नहि॥
स्वप्ने तत्पूर्वकत्वं हि विगीतं तेन पक्षता।
प्रमातृतादिव्यवहारवन्तावित्येव साध्यं नहि कर्तुमेति॥
सिद्धस्य साध्यत्वमिहेदृशे स्यात्तेनोक्तमध्यासपुरःसरेति॥
अध्यासान्तरपूर्वत्वाद् सिद्धसाध्यतया पुनः। दृष्टं भवेत्तदर्थं हि शरीरादि समीरितम्॥
भृत्यदेहेऽभिमानेऽपि नोपादानत्वमिष्यते। केवलस्य प्रमातृत्वमितरस्य निमित्तता॥
कर्तुः करणभूतेति शङ्कां नोदितुमीरितम्। कर्तुः कस्यचिदेवैतदुन्मत्तस्य भवेदिति॥
शङ्कानिवारणायैव तस्यैवेति समीरितम्। शरीराद्यभिमानेन विना नैव यदीष्यते॥
उपादानत्वमेवातः शुद्धस्यासंभवेन च। सुप्तिकालान्यकालत्वं हेतुश्चेत्स्यादसिद्धता॥
व्यभिचारोऽपि चानेन तस्येति हि समीरितम्। तस्यापि सुप्तेरन्यत्वं सुप्तिकालेऽपि विद्यते॥
व्यवहारो न तादृक् तत्सावधारणमीरितम्॥

"न स्वत्वेने"ति व्यर्थम्; अनुमानार्थापत्तिभ्यामध्यासपुरःसरत्वस्य साधितत्वादित्याशङ्क्योपयोगसिद्ध्यर्थं चोदयति—**ननु कर्तृ-करणयोरिति**॥ ननु एतच्चोद्यमेव नोदेति; नह्यपेक्षया सम्बन्धाङ्गीकारः, किन्तु प्रमाणवत्त्वेन, उक्तं च प्रमाणमध्यासे; अतः सम्बन्धान्तरनिराकरणं व्यर्थमित्याशङ्क्याभिप्रायमाह—**तत्र परिशेषानुमानेति**॥ अयमर्थः—'परिशेषानुमानत्वात् सम्बन्धान्तरवारणे। तादात्म्यमेव हेतुः स्यात्, तेनात्रान्यनिराकृतिः'। एतदुक्तं भवति—नानुमानार्थापत्तिभ्यामेवाध्यासपुरःसरत्वं सिध्यति; अनुमाने व्यर्थविशेषणत्वाप्रयोजकत्वयोः शङ्कितुं शक्यत्वात्, अर्थापत्तेरन्यथाप्युपपत्तेः। तथाहि—यः कालस्तथाविधव्यवहारवान् न भवतीत्यत्र 'तथाविधे'ति व्यर्थम्; व्यवहारवत्त्वाभावमात्रेणैव सुप्तिकालादन्यत्वनिषेधसिद्धेः। तथा "यः कालस्तथाविधव्यवहारवान् न भवती"त्यत्राध्यासपुरःसरव्यवहारवत्त्वाभावे सुषुप्तिकालदन्यकालत्वमपि नास्तीति व्यतिरेकव्याप्तिरयुक्ता; यत्र तथाविधव्यवहारवत्त्वाभावः, तत्र सुप्तिकालादन्यकालत्वाभावासिद्धेः। तथा व्यवहारत्रितयस्याध्यासोपादानत्वमन्तरेण नानुपपत्तिः; सम्बन्धान्तरेणाप्युपपत्तेः। अतो व्यर्थविशेषणत्वादिपरिहाराय सम्बन्धान्तरनिरा-

## पञ्चपादिका

**न स्वत्वेन संबन्धिना मनुष्यावयविना तदनुस्यूतेन वा चक्षुरादिना प्रमात्रादिव्यवहारः सिध्यति; भृत्यादिमनुष्यावयविनाऽपि प्रसङ्गात् ॥**

**अपर आह—आत्मेच्छानुविधायित्वं कार्यकरणसंघातस्यात्मना सम्बन्धः, तस्यापि तस्य यथेष्टविनियोजकत्वं तेन सम्बन्धः, तत आत्मनः प्रमात्रादिकः सर्वः क्रिया-कारक-फलव्यवहारः। तथा चोत्तिष्ठामीतीच्छयोत्तिष्ठत्युपविशति च। नच भृत्यादिषु तदस्ति। तेन तत्र प्रमात्रादिव्यवहाराभावो न मिथ्या; मुख्याभिमानाभावात्—इति। नैतत् संविदि बहुमानवतो**

## पञ्चपादिकाविवरणम्

सम्बन्धान्तराणि व्यावर्तयन् न तावत् स्व-स्वामिसम्बन्ध इत्याह—**न स्वत्वेन सम्बन्धिनेति** ॥ सुषुप्तेऽपि तस्य भावादित्यभ्युच्चयः।

इच्छानुविधायित्वमेव व्यवहारनिमित्तम्, तदभावात्सुषुप्ते व्यवहारविपर्ययः, इति चोदयति—**अपर आहाऽऽत्मेच्छानुविधायित्वमिति** ॥ अस्त्विच्छामात्रेण विनियोज्य-विनियोजकसम्बन्धः, ततः किमिति? तत्राह—**तत आत्मन इति** ॥ ननु एतत्सम्बन्धमूलो व्यवहार इति किमत्र प्रमाणमिति? अत आह—**तथाचोत्तिष्ठामीति** ॥ ननु भृत्यादयोऽपि तदिच्छानुविधायिनः, तच्छरीरेणापि व्यवहारः स्यादिति? नेत्याह—**न च भृत्यादिषु तदस्तीति** ॥ उच्यते—यदीच्छानुविधानयोग्यतामात्रं सम्बन्धः, सुषुप्तेऽपि तदस्तीति तत्रापि व्यवहारः स्यात्। अथेच्छयाऽनुविधीयमानत्वं सम्बन्धः, अत्यातुरे तदभावात्प्रमातृत्वादिव्यवहारो न स्यात्। अथ दृश्यतेऽयं सम्बन्धो व्यवहारमूलमिति, नेत्याह—**नैतत्संविदि बहुमानवतो युक्तमिति** ॥ नच

## तत्त्वदीपनम्

भोक्तृ-भोग्यता? किं वा स्वकर्मारभ्यत्वम्? उत स्वेन्द्रियाधिष्ठेयत्वम्? अन्यो वा? इति विकल्प्याऽऽद्यं दूषयति—**न तावदिति** ॥ स्व-स्वामिभावस्याप्रयोजकत्वे हेत्वन्तरमाह—**सुषुप्तेऽपीति** ॥ नच—सुषुप्ते चक्षुरादिसहकार्यभावात् कथं प्रमात्रादिव्यवहारप्रसक्तिरिति—शङ्क्यम्; स्वत आत्मनः प्रमातृत्वशक्तिमत्त्व एतद् भवेत्; नच संभवति। प्रमातृत्वं प्रमाकर्तृत्वम्, तच्चेतरकारकाप्रयोज्यत्वे सति सकलकारकप्रयोक्तृत्वम्; न तत् कूटस्थस्य संभवतीत्यर्थः ॥

देहादेरिच्छानुविधायित्वस्य सिद्धान्तिनाभ्युपगतत्वान्नानिष्टं किंचित्—"अपर आहे"त्यनेनोक्तमित्याशङ्क्याऽऽह—**इच्छेति** ॥ तत्र हेतुमाह—**तदभावादिति** ॥ अन्वय-व्यतिरेकाभ्यामुक्तं संबन्धहेतुत्वं निश्चीयत इत्यर्थः। शरीरस्यात्मना संबन्धस्तदिच्छानुविधायित्वं चेत्, तर्ह्यात्मनो न शरीरादिसंबन्धः; तदिच्छाननुविधायित्वादित्याशङ्क्योक्तं **टीकाकृता—तस्यापीति** ॥ **तस्य** आत्मनोऽपि। **तेन** कार्यकारणसंघातेन। **संबन्धः** तस्य देहादेर्यथेष्टविनियोजकत्वमित्यन्वयः। **तस्येति** कर्मणि षष्ठी। तत्रेष्टापत्तिं शङ्कते—**अस्त्विति** ॥ उक्तसंबन्धादेव व्यवहारभावान्नाध्याससिद्धिः, ततश्चानिष्टापत्तिरित्याह—**तत्राहेति** ॥ "तथाचे"त्यनेनेच्छानुविधायित्वमङ्गीकृत्य—"उत्तिष्ठामी"त्यादिना तदेवोच्यते, ततश्च वैयर्थ्यमित्याशङ्क्य तद्व्यावृत्त्यर्थं शङ्कामाह—**नन्वेतदिति** ॥ अनुभवः प्रमाणमित्याह—**अत आहेति** ॥ उक्तसंबन्धाद् यथा व्यवहारसिद्धिः, तथा तदनुरोधेनानुभवोऽपीति **टीकार्थः**। अतिप्रसङ्गान्न विनियोज्य-विनियोजकत्वसंबन्ध इति शङ्कते—**नन्विति** ॥ किमिच्छाऽनुविधायित्वमात्रस्य प्रयोजकत्वं निरस्यते? उताव्यवधानेनेच्छानुविधायित्वस्य? नाद्यः; इष्टापत्तेः, इत्यभिप्रेत्य द्वितीयं दूषयति—**नेत्याहेति** ॥ स्वामिन इच्छाऽनुविधायिनी कदाचित् भृत्यादावविच्छा जायते, ततो व्यवहार इत्युक्तप्रयोजकाभावान्नातिप्रसङ्ग इत्यर्थः। अनुभवस्योभयत्रापि सद्भावाद् "नैतत् संविदि" इत्युक्तमयुक्तमित्याशङ्क्य, त्वदनुभवस्य दुर्निरूपविषयत्वाद् दौर्बल्यमित्याह—**उच्यत इति** ॥ किमिच्छाऽनुविधानयोग्यतामात्रं संबन्धः? उतेच्छाऽनुविधीयमानत्वं संबन्धः? इतिविकल्प्योभावप्यतिव्याप्त्यव्याप्तिभ्यां दूषयति—**यदीत्यादिना** ॥ उक्तसंबन्धस्यानुभूयमानत्वात् तदपलापोऽयुक्त इति शङ्कते—**अथेति** ॥ अनुभवशरणं प्रत्यनुभवान्तरविरोधेनोत्तरमाह—**नेत्याहेति** ॥ त्वदीयाऽनुभवो गौण इत्याशङ्क्याऽऽह—

## ऋजुविवरणम्

करणमिति भावः ॥

"नैतत्संविदि बहुमानवतः" इत्ययुक्तम्, तेनापि संविन्मूलस्योक्तत्वात्, 'मनुष्योऽहमि'ति प्रतीतिरेव तद्धेतुत्वानिवर्तकत्वात्, अन्यथासिद्धत्वाच्च; अतो नेच्छानुविधायित्वस्याहेतुत्वमित्याशङ्क्याऽऽह—**उच्यते यदीच्छेति** ॥

"विधिमुखोपदर्शितमि"त्युक्तम्, तत्र द्विविधं बोधकत्वं प्रमाणानाम्—विधिमुखं निषेधमुखं च। अयमित्थंभूत इति

### पञ्चपादिका

युक्तम्; तथाहि—'मनुष्योऽहमि'ति स्वसाक्षिका संवित्, न 'मे मनुष्यः' इति। गौणीति चेत्? भवानेवात्र प्रमाणम्। अपिच, इच्छाऽपि परिणामविशेषः, स कथमपरिणामिन आत्मनः स्यात् परिणाम्यन्तःकरणसंवलिताहङ्कर्तृत्वमन्तरेण। तथाचानुभवः—'अहमुत्तिष्ठामी'ति इच्छयोत्तिष्ठत्युपविशति च। तस्माद्यत्किञ्चिदेतत्। अतः स्वयमसङ्गस्याविकारिणोऽविद्याऽध्यासमन्तरेण न प्रमातृत्वमुपपद्यते।

### पञ्चपादिकाविवरणम्

गौणत्वम्, मुख्यानुभवविरोधादित्याह—**गौणीत्यादिना**॥ इच्छाऽप्यध्यासमूलैवेत्याह—**अपि चेच्छाऽपि परिणामविशेष इति**॥ अन्तःकरणाध्यासमूलैवेच्छेत्यत्र प्रत्यक्षमाह—**तथाचानुभव इति**॥ नचात्मानात्मनोः संयोग-समवायौ व्यवहारनिमित्तम्; सुषुप्तेऽपि भावात्। भोक्तृ-भोग्यान्वय-स्वकर्मारभ्यत्वस्वेन्द्रियाधिष्ठेयत्वादीनां भोगाद्यध्यासापेक्षत्वात् भृत्यादिशरीरे च भावात्। अव्यवधानेन भोग्यत्वं मूलसम्बन्ध इति चेत्? यदि भोगयोग्यता सम्बन्धः, सुषुप्तेऽप्यस्ति यद्यव्यवधानेन भुज्यमानसम्बन्धः? तन्न; आत्मनः सर्वशरीर-देश-कालाव्यवधाने सत्यत्रैव भोगान्वयस्य मूलसम्बन्धान्वेषणात्। तस्माद्यत्किञ्चिदेतत्सम्बन्धान्तरम्। अतः परिशेषादर्थापत्त्यनुमानाभ्यामध्यास एव व्यवहारमूलं सिद्ध इत्युपसंहरति—**अतः स्वयमसङ्गस्येति**॥

ननु सर्वशरीरसंनिधानाविशेषे सत्यात्मनः कथमस्मिन्नेव शरीरेऽध्यासनियम इति? अनादिस्तावदविद्याऽध्यासः। तत्परिणामत्वाल्लिङ्गशरीरे तत्कार्यभूतसूक्ष्मशरीरारब्धत्वात्तत्संश्लेषाद्वा स्थूलशरीरे चाध्यासनियमो न विरुध्यते।

### तत्त्वदीपनम्

**नचेति**॥ उपाधियोगेनापीच्छासंभवात् कथं तन्निराकरणम्? इत्याशङ्क्याऽऽह—**इच्छाऽपीति**। इच्छाऽनुविधीयमानत्वं संबन्ध इति वदताऽप्यध्यास एष्टव्यः, कूटस्थासङ्गादिस्वभावात्मनि तत्त्वत इच्छाऽसंभवादित्यर्थः। "तथाचानुभवः" इत्यत्रेच्छयाऽनुविधीयमानत्वस्य संबन्धतासंप्रतिपत्तेः सिद्धान्तिनस्तदुदाहरणमनुपयुक्तमित्याशङ्क्य तात्पर्यमाह—**अन्तःकरणेति**॥ तृतीय-चतुर्थौ दूषयति—**नात्मेनीति**॥ परिशिष्टकल्पान्तराणि निरस्यति—**भोक्तृभोग्येत्यादिना**। **इन्द्रियाधिष्ठेयत्वं** स्वेन्द्रियं प्रति वशवर्तित्वम्, स्वप्राणपरिपाल्यत्वादिरादिशब्दार्थः। आत्मनि भोगाद्यथाऽध्याससिद्धावुक्तसंबन्धसिद्धिस्तत्सिद्धौ च भोगाद्यध्याससिद्धिरितीतरेतराश्रयत्वमित्यर्थः॥ भोक्तृ-भोग्यान्वय-स्वकर्मारभ्यत्व-स्वेन्द्रियाधिष्ठेयत्वानामसंबन्धत्वे हेत्वन्तरमाह—**भृत्यादीति**॥ तत्र व्यभिचारं निराकर्तुं विशिनष्टि—**अव्यवधानेनेति**॥ किं भोगयोग्यत्वं भोग्यत्वम्? उत भुज्यमानत्वम्? इति विकल्प्याद्यं दूषयति—**यदीत्यादिना**॥ द्वितीयमनुवदति—**यद्यव्यवधानेनेति**॥ संबन्धमन्तरेणायमेव न सिध्यतीत्याह—**तन्नेति**॥ शरीरविशेषेण संबन्धविशेषाभावेऽस्मिन्नेव शरीरे भोगसंबन्धो न भवेत्, अत्र सन्निधानात्तदङ्गीकारे सर्वशरीरे संबन्धात् सर्वत्र भोग आपद्येत; नच स उपपद्यत इत्यर्थः। एतच्छब्दपरामृष्टमर्थमाह—**तस्मादिति**॥ आत्म-देहादीनां संबन्धान्तरसंभवेनार्थापत्त्यनुमानयोरन्यथासिद्धिशङ्कायां संबन्धान्तरनिरासानन्तरं टीकाकारस्य प्रमाणोपसंहरणं युक्तम्, न प्रमेयोपसंहरणमित्याशङ्क्य, प्रमाणोपसंहरणसिद्धवत्करणाददोष इत्याह—**अत इति**॥

अध्यासाभावे शरीरविशेषेण भोगान्वयासंभववदध्यासाभावेऽप्यनियमस्तुल्य इति शङ्कते—**ननु सर्वेति**॥ किं सूक्ष्मशरीरेऽध्यासानियम आक्षिप्यते? उत स्थूलशरीरे? इति विकल्प्योभयथाऽप्यसंभवं दर्शयितुमविद्याध्यासस्यानादित्वं तावदाह—**अनादिस्तावदिति**॥ अनादित्वान्न तत्रानियमशङ्केत्यर्थः। भवत्वविद्याध्यासानादित्वम्, तथापि शरीरे कथमध्यासनियमः? इत्याशङ्क्याऽऽह—**तत्परिणामत्वादित्यादिना**॥ लिङ्गशरीरेऽध्यासनियमो न विरुध्यत इति संबन्धः॥ अखण्डानन्दस्वभावं चैतन्यमविद्यासहायं सृज्यमानप्राणिकर्मानुरोधेनेक्षणपुरःसरमपञ्चीकृतपञ्चभूतान्युत्पादयति। तानि च तत्कर्मानुरोधेन लिङ्गशरीरं जनयन्ति। तच्च द्विविधम्—समष्टि-व्यष्टिरूपेण। तत्समष्टिरूपेण नानियमशङ्का, तस्यैकत्वात्। नापि व्यष्टौ, एतत्कर्मार्जितत्वेन तस्मिन्नेवान्वयसंभवात्। इत्येतत् सर्वं हृदि निधायाऽऽह—**तत्परिणामत्वादिति**॥ द्वितीयं प्रत्याह—**तत्कार्येति**॥ तस्या अविद्यायाः कार्यं तत्कार्यम्, तच्च भूतं चेति तत्कार्यभूतम्, तच्च सूक्ष्मशरीरं चेति तथोक्तम्, तेनारब्धत्वादिति विग्रहः। सूक्ष्मशरीराकारेण परिणतत्वाद्भूतानां सूक्ष्मशरीरत्वमुक्तम्। तच्च विशेषणं सूक्ष्मशरीरस्यकर्मानुरोधेन भूतानां स्थूलशरीरस्रष्टृत्वोपपादनार्थम्। इदमत्र विवक्षितम्—अपञ्चीकृतभूतानि कर्मानुरोधाच्चिदधिष्ठानाच्च पञ्चीकृतत्वमापद्यन्ते। तानि च पञ्चीकृतानि प्राग्भवसञ्चितसुकृतदुष्कृतानुरोधेन स्थूलं शरीरमारभन्ते। तत्र यद् यत्कर्मणाऽऽरब्धम्, तस्य तत्र प्रवेशः, नान्यत्र। नच—अदृष्टेन

## पञ्चपादिका

**तेन यद्यपि प्रमातृत्वशक्तिसन्मात्रं प्रमाणप्रवृत्तौ (सद्भावमात्रं) निमित्तम्, तदेव त्वविद्याध्यासविलसितम्; इत्यविद्यावद्विषयता प्रमाणानामुच्यते। तथा निरपेक्षाणां स्वसामर्थ्येनार्थसिद्धिं विदधतां बाधानुपलब्धेः प्रामाण्यमविद्यावद्विषयत्वं च विधिमुखोपदर्शितं न 'ने'ति शक्यमपह्नोतुम्।**

## पञ्चपादिकाविवरणम्

ननु प्रमातैव व्यवहाराश्रयो नाध्यास इति ? न; प्रमातृत्वमेवाध्यासपरिनिष्पन्नमित्याह—**तेन यद्यपीति**॥ यत्त्वध्यासपरिनिष्पन्नाहङ्कारात्मसंपिण्डितोपादानत्वे कारण-दोषादप्रामाण्यं प्रमाणानामिति; तत्र यदि प्रतिपन्नोपाधौ केनापि प्रमाणेनाबाध्यत्वलक्षणतत्त्वावेदनप्रामाण्यहानिरुच्यते, तदङ्गीकृतमेव। अथागमेन परमार्थसत्यत्वांशे बाध्यमानेऽपि व्यवहारसमर्थवस्त्वङ्गताप्रामाण्यहानिरुच्यते ? न; तत्र बाधाभावादित्याह—**तथा निरपेक्षाणामिति**॥ **विधिमुखोपदर्शितमिति**—व्यवहाराङ्गतायां प्रत्यक्षेणाध्यासमूलतायां प्रत्यक्षानुमानार्थापत्तिभिः प्रदर्शितमुभयमित्यर्थः। अर्थक्रियासमर्थत्वाच्च। शब्दादिप्रत्यक्षाणामविद्यानिवृत्ति-ब्रह्मावगतिलक्षणार्थक्रियाहेतुत्वं मिथ्यात्वेऽपि शब्दादीनां न विरुध्यते॥

## तत्त्वदीपनम्

संबन्धविशेषाभावान्न तन्निमित्ता व्यवस्थेति—शङ्क्यम्; एतद्गात्रनिर्वर्तितत्वेनैतदीयत्वात्। न परस्पराश्रयता; गात्रादृष्टभेदाङ्गीकरणात्। नचात्र प्रमाणाभावः; "रमणीयचरणा रमणीयां योनिमापद्यन्ते"इत्यादिश्रुतेरिति। अन्तःकरणसंबन्धस्यात्मनो नियतत्वात् तद्द्वारा वा नियम इत्याह—**तत्संश्लेषाद्वेति**॥ नच—तत्संश्लेषेऽप्यनियम इति—वाच्यम्; कर्मानुरोधान्नियमसंभवात्; यद् यथा प्रतीयते, तत्तथेत्यभ्युपगमाच्च मायावादिनं प्रति नैतच्चोद्यमवतरति। नच परमतेऽप्यदृष्टानुरोधाद् भोगव्यवस्थोपपत्तिः; अदृष्टस्याप्यनियतत्वात्। नच तत्कार्येन्द्रियैर्निर्वर्तितत्वात्तस्य नियतत्वम्; अविद्याध्यासमन्तरेण कार्यादिस्तदीयताऽयोगात्, आत्मनोऽसङ्गाद्वयभावत्वादित्यर्थः॥ एवं प्रमाणप्रश्नोत्तरमभिधाय, आक्षेपमवतारयति—**ननु प्रमातेति**॥ अनुपयोगादिति शेषः। करणाप्रयोज्यत्वे सति तत्प्रेरकत्वं कर्तृत्वम्, तस्य कूटस्थासङ्गेऽसंभवादध्यासमूलं प्रमातृत्वमित्यभिप्रेत्याह—**न प्रमातृत्वमिति**॥ आक्षेपान्तरमुत्थापयति—**यत्त्विति**॥ अविद्यावदुपादानत्वे प्रामाण्यानुपपत्तिमात्रं चोद्यते ? उत तदनुपपत्त्याऽविद्यावदनुपादानत्वम् ? आद्ये, किं तत्त्वावेदनस्य प्रामाण्यहानिः ? उत व्यावहारिकस्य ? इति विकल्प्याद्यमङ्गीकरोति—**अत्र यदीति**॥ एतच्चोपनिषद्व्यतिरिक्तप्रमाणविषयमिति द्रष्टव्यम्। द्वितीयमनुवदति—**अथेति**॥ "नेह नानाऽस्ति किंचने"त्यागमेन भेदस्य परमार्थत्वं बाध्यत इत्यर्थः। व्यवहारसमर्थं च तद्वस्तु चेति व्यवहारसमर्थवस्तु, तदङ्गतालक्षणं यत्प्रामाण्यम्, तस्य हानिरिति विग्रहः। वस्त्वङ्गत्वं तद्बोधकत्वमिति यावत्॥ बाधायोग्यं प्रामाण्यम्, अत्र तु तन्नेत्याह—**न, तत्रेति**। (टीकायाम्) "तथा निरपेक्षाणामि"त्यादेरेषोऽर्थः किं सापेक्षतालक्षणमप्रामाण्यम् ? उताबोधकतालक्षणम् ? आहो विसंवादलक्षणम् ? इति विकल्प्य क्रमेण दूषयति—**तथेत्यादिना**॥ प्रामाण्यानुपपत्तेरविद्यावदुपादानत्वासंभव इति पक्षं निराचष्टे—**अविद्यावद्विषयत्वमिति** (टीकायाम्) "विधिमुखोपदर्शितमि"त्यत्र विधिः प्रेरणादिरूप इति शङ्कां निरस्यति—**विधिमुखोपदर्शितमित्यादिना** (टीकायाम्) प्रत्यक्षेण प्रमाणादेर्व्यवहाराङ्गतायां सिद्धायां, प्रत्यक्षानुमानार्थापत्तिभिः प्रमातृत्वादिव्यवहारस्याध्यासमूलतायां च सिद्धायां प्रामाण्यमविद्यावद्विषयत्वं चेत्युभयं प्रदर्शितमिति योजना। इदमेतादृशमिति बोधनं विधिः प्रत्यक्षम्, तन्मुखमादिर्यस्यानुमानादेस्तद्विधिमुखमित्यर्थः। शब्दादयोनार्थक्रियाकारिणः मिथ्यात्वात्, बाध्यधूमवत्। ततश्च न प्रामाण्यमित्याशङ्क्याऽऽह—**अर्थक्रियेति**। शब्दादीनां मिथ्यात्वेऽप्यविद्यानिवृत्त्याद्यर्थक्रियाहेतुत्वं न विरुध्यत इत्यन्वयः। तत्र हेतुमाह—**अर्थक्रियासमर्थत्वादिति**। शब्दादिविषयत्वादित्यर्थः। शब्दादीनामर्थक्रियासामर्थ्यस्यानुभूयमानत्वात्तद्विरोधेऽनुमानानुदय इत्यर्थः॥

## ऋजुविवरणम्

भावमुखेन यद्बोधकत्वम्, तदेव विधिमुखेन बोधकत्वम्। अन्यनिषेधमुखेनान्यनिरूपणं निषेधमुखमिति। अथवा, "विधिमुखोपदर्शितमि"त्यादिना "प्रदर्शितं न नेति शक्यमि"त्यत्रैवमर्थः प्रतिभाति—यद्विधिमुखोपदर्शितम्, न नेति शक्यमपह्नोतुमिति। ननु अत्रेदं प्रमाणम्, अतो नास्यापह्नव इत्युक्तमित्याशङ्क्य व्याचष्टे—**विधिमुखोपदर्शितमित्यादिना**॥ "प्रदर्शितमुभयमि"त्युक्ते किं केन प्रदर्शितमित्यपेक्षायामाह—**व्यवहाराङ्गतायामिति**॥ व्यवहाराङ्गत्वं प्रत्यक्षेण, अध्यासमूलत्वं प्रत्यक्षादिभिरिति। अथवा, व्यवहाराङ्गतायां प्रत्यक्षम्, अध्यासमूलतायां प्रत्यक्षानुमानार्थापत्तय इति। प्रातिपदिकार्थे तृतीया। अथवा, व्यवहा-

### पञ्चपादिका

**दोषस्त्वागन्तुक एव मिथ्यात्वे हेतुः, न नैसर्गिकः; तथोपलब्धेः।**

### पञ्चपादिकाविवरणम्

ननु अर्थक्रियासंवादात् प्रामाण्यप्रसङ्गः ? न; ज्ञानादेवार्थंतथात्ववदर्थावगमादेवार्थक्रियासामर्थ्यनिश्चयात्, अन्यथा तवापि तथात्वज्ञानात्प्रामाण्यप्रसङ्गः। ननु ब्रह्मज्ञानस्याप्यध्यासोपादानत्वान्मिथ्यात्वमापन्नम् ? यदि तावत् स्वरूपमिथ्यात्वमुच्यते, अङ्गीकृतमेव तत्; अथ विषयमिथ्यात्वं न ब्रह्मणि, बाधाभावात्। प्रपञ्चस्यापि बाधादेव मिथ्यात्वम्, नाध्यासोपादानज्ञानगम्यत्वात्। ननु दुष्टकारणजन्यस्य विषयतोऽपि मिथ्यात्वं दृष्टमिति, नेत्याह—**दोषस्त्वागन्तुक इति**॥ प्रमाणकारणेषु सत्सु पश्चाद्भवन् दोषो दोष इत्युच्यते, स आगन्तुक इत्युक्तः। प्रमाणकारणत्वेनैव यो दोषो व्यवतिष्ठते, स न दोषः; कारणत्वात्; अविद्याध्यासस्तु चैतन्यस्याद्वितीयावभासं प्रत्येव दोषः, न द्वैतावभासं प्रति; तस्य कारणत्वात् यथा काचादिश्चक्षुरादि-

### तत्त्वदीपनम्

शब्दादीनामर्थक्रियाकारितया प्रामाण्यं चेत्, प्रामाण्यपरतस्त्वं दुर्वारमित्याशङ्कते—**नन्वर्थेति**॥ ज्ञानं स्वत एव प्रमाणम्, संवादज्ञानं त्वप्रामाण्यशङ्कानिरासार्थम्; अतो न स्वतस्त्वविरोध इत्याह—**अज्ञानादेवेति**॥ यथा मीमांसकमते स्वतःप्रमाणस्यापि ज्ञानस्यार्थतथात्वं मृग्यते, नच परतस्त्वम्, ज्ञानादेवार्थंतथात्वनिश्चयात्; तद्वदत्रापीत्यर्थः। विपक्षे दण्डमाह—**अन्यथेति**॥ ब्रह्मज्ञानम्, मिथ्या, अज्ञानोपादानत्वात्, संमतवत्; ततश्च न तस्याविद्यानिवर्तकत्वमिति शङ्कते—**ननु ब्रह्मेति**॥ अध्यस्यत इत्यध्यासोऽज्ञानम्। दूषणान्तराभिधित्सया परिहृतस्यापि पुनरुत्थापनमिति द्रष्टव्यम्॥ किं स्वरूपस्य मिथ्यात्वं विवक्षितम् ? उत विषयस्य ? इति विकल्प्याद्ये सिद्धसाध्यतेत्याह—**यदि तावदिति**॥ नच—तस्य मिथ्यात्वेऽविद्यानिवर्तकत्वमनुपपन्नमिति—शङ्क्यम्; मिथ्याभूतस्यापि स्वप्नोपलब्धकुञ्जरारोहणादेरर्थक्रियाकारित्वदर्शनादित्यर्थः। द्वितीयमनुवदति—**अथेति**॥ ब्रह्मज्ञानम्, न विषयतो मिथ्या, अनुपलभ्यमानबाधत्वात्; संमतवत्, इत्यभिप्रायेणाऽऽह—**न ब्रह्मणीति**॥ ब्रह्म, मिथ्या, अध्यासोपादानज्ञानगम्यत्वात्, प्रपञ्चवदित्याशङ्क्याऽऽह—**प्रपञ्चस्यापीति**। "नेह नानाऽस्ति किंचने"ति प्रतिपन्नोपाधौ प्रपञ्चस्य निषिध्यमानत्वात् परमार्थसद्विलक्षणत्वम्, ब्रह्मणश्चातथात्वादप्रयोजको हेतुः; अन्यथा मिथ्याज्ञानविषयत्वादिदमोऽपि मिथ्यात्वं स्यादित्यर्थः। ब्रह्मज्ञानम्, विषयतो मिथ्या, दुष्टकारणजन्यत्वात्; संमतवदिति शङ्कते—**ननु दुष्टेति**॥ अप्रयोजको हेतुरित्याह—**नेत्याहेति**॥ आगन्तुकदोषस्य मिथ्यात्वहेतुत्वम्, इतरस्य च तद्वैपरीत्यं चेत्, जन्मत एव दुष्टाक्षस्य उत्पद्यमानज्ञानस्य मिथ्याविषयत्वं न स्यादित्याशङ्क्यागन्तुक-नैसर्गिकशब्दार्थमाह—**प्रमाणेत्यादिना**॥ कथं तर्हि "अविद्या विद्यत एवे"त्यत्र दोषत्वमुक्तम् ? तत्राह—**अविद्येति**॥ एकस्य क्वचिद् दोषत्वं क्वचित् गुणत्वं चेत्येतत् कुत्रोपलब्धम् ? तत्राह—**यथेति**। काचादेः शुक्तित्वादिविशेषांशप्रतिबद्धत्वाच्चक्षुरादौ दोषत्वम्, स्वहेतुपापादृष्टानुमापकत्वेन च गुणत्वं

### ऋजुविवरणम्

राङ्गतायां प्रत्यक्षेण प्रदर्शितायाम्, अध्यासमूलतायां व्यवहारस्य प्रत्यक्षानुमानार्थापत्तिभिः प्रदर्शितायां सत्यामशक्यमपह्नोतुमित्यर्थः। अस्मिन् पक्षे "प्रदर्शितमुभयमि"ति हेतुनिर्देशः, प्रदर्शितो यस्मादित्यर्थः। मा भूद्बाधो मिथ्यात्वे; शब्दादीनां कथं तत्त्वज्ञानादिहेतुत्वम् ? इत्याशङ्क्याऽऽह—**अर्थक्रियासमर्थत्वाच्चेति**॥

भवतु ज्ञानादेवार्थक्रियानिश्चयः; तथापि तेन निश्चितार्थक्रियायां प्रामाण्यनिश्चयेऽपि परतः प्रामाण्यमित्याशङ्क्याऽऽह—**अन्यथा तवापीति**॥ **ननु ब्रह्मज्ञानस्यापीति**॥ ब्रह्मज्ञानं धर्मि, मिथ्येति साध्यो धर्मः, अध्यासोपादानत्वात्; प्रपञ्चज्ञानवत्। **अर्थविषयेत्यत्रैवं** प्रयोगः—ब्रह्मज्ञानं धर्मि, मिथ्याविषयमिति साध्यो धर्मः; अध्यासोपादानत्वात्; प्रपञ्चज्ञानवत्। अथवा, ब्रह्म धर्मि, मिथ्येति साध्यो धर्मः, अध्यासोपादानज्ञानविषयत्वात्, प्रपञ्चवत्। "न; ब्रह्मणि बाधाभावादि"त्यनेन सोपाधिकत्वमुक्तम्, कथमस्योपाधित्वम् ? अध्यासोपादानज्ञानगम्यत्वेनैव प्रपञ्चे मिथ्यात्वदर्शनात्, साध्यसमव्याप्त्यभावादित्याशङ्क्याऽऽह—**प्रपञ्चस्यापीति**॥ अथवा, "बाधाभावादि"त्यनेनाप्रयोजकत्व उक्ते कथमस्याप्रयोजकत्वम् ? व्याप्तिदर्शनादित्याशङ्क्याऽऽह—**प्रपञ्चस्यापीति**॥ दुष्टकारणजन्यत्वेन बाध्यार्थमनुमातुं शक्यत इति चोदयति—**ननु दुष्टकारणजन्यस्येति**॥ "दोषस्त्वागन्तुकः" इत्यसम्बद्धमुक्तम्, अविद्याया अनागन्तुकत्वेऽपि दोषत्वस्योक्तत्वात्, विद्यत एवात्रापि दोषकारणजन्यत्वमित्याशङ्क्य व्याचष्टे—**प्रमाणकारणेष्विति**॥ ननु अध्यासव्यतिरेकेण पूर्वं विषयज्ञानकारणेन भवितव्यम्; अविद्याध्यासस्य दोषत्वेन व्यतिरिक्तप्रमाणाकाङ्क्षत्वात्, इत्याशङ्क्याऽऽह—**अविद्याध्यास** इति॥ यद्वा, एवमविद्याया दोषत्वमेव न स्यात्; प्रमाणकारणेषु सत्सु पश्चाद्भा-

## पञ्चपादिका

**नच सर्वसाधारणे नैसर्गिके दोषबुद्धिः। तथा हि—क्षुत्पिपासोपजनिते सन्तापे शश्वदनुवर्तमाने जाठराग्निकृतविकारेऽन्नपाननिष्यन्दे वा न रोगबुद्धिर्जनस्य; मुहूर्तमात्रपरिवर्तिनि मन्दे ज्वरे प्रतिश्याये वाऽल्पकफप्रसुतावपि रोगबुद्धिः, अनैसर्गिकत्वात्। अनैसर्गिकं च दोषमभिप्रेत्योक्तम्—"यस्य च दुष्टं करणं यत्र च मिथ्येति प्रत्ययः, स एवासमीचीनः प्रत्ययो नान्यः" इति॥**

**इतश्चैतदेवम्—पश्वादिभिश्चाविशेषात्॥ तथा च पश्वादयः प्रमातृत्वादिव्यवहारकाले प्रवृत्तिनिवृत्त्यौदासीन्यं भजमानाः कार्य-करणसंघात एवाहंमानं कुर्वन्तीति प्रसिद्धं लोके। तदेकरूपयोगक्षेमा हि मनुष्या जन्मत एव पश्वादिभ्योऽधिकतरविवेकमतयः शास्त्राधेयसाम्परायिकमतिसामर्थ्या अपि; अतस्तदेकरूपकार्यदर्शनात् कार्य-करणसंघातेऽप्यात्माभिमानः समानो युक्तः।**

## पञ्चपादिकाविवरणम्

दोषस्तथाविधपापादृष्टोदयमनुमापयंस्तत्र प्रमाणत्वाद् न दोषः, तद्वदित्यर्थः। चैतन्यदोषत्वादेव तत्प्रकाश्याव्यवहार्यब्रह्मविपरीतं व्यवहारयोग्यं वस्तु प्रदर्शयति। दोषत्वं चाविद्यायाश्चैतन्यस्य तथाऽवभासविरोधितयाऽन्यथाप्रतिभासनिमित्तत्वात्। कथमागन्तुके दोषबुद्धिः, न नैसर्गिके? इत्येतावन्मात्रे दृष्टान्तमाह—**नच सर्वसाधारण इति**॥ ननु भाष्यकारेण दोषगात्रमेव विषयतोऽपि ज्ञानमिथ्यात्वे हेतुरुक्त इति? नेत्याह—**अनैसर्गिकं च दोषमिति**॥

ननु अविवेकिव्यवहारोऽध्याससमूलो भविष्यति, न विवेकिव्यवहार इति? नेत्याह—**इतश्चैतदेवं पश्वादिभिश्चेति**॥ पश्वादिदृष्टान्तेऽध्यासमूलतां व्यवहारस्य दर्शयति—**तथाच पश्वादय इति**॥ अध्यासानुमाने हेतुभूतव्यवहारस्य विवेकिष्वपि पक्षधर्मतामाह—**तदेकरूपयोगक्षेमा इति**॥ तत्र हेतुदर्शनाद् हेतुमन्तमध्यासमनुमिमीते—**अतस्तदेकरूपकार्यदर्शनादिति**॥

## तत्त्वदीपनम्

यथा, तथेत्यर्थः। अविद्याया अद्वैतावभासं प्रति दोषत्वमुक्तम्, तत् कथम्? अत्राह—**चैतन्येति**। चित्प्रकाश्याव्यवहार्यब्रह्मविपरीतवस्तुप्रकाशकत्वाद् दोषत्वमित्यर्थः। पापादृष्टानुमापकस्य काचादेरदोषत्वम्, तद्वदविद्याया अपि व्यवहारयोग्यप्रकाशकत्वाददोषत्वमित्याशङ्क्याऽऽह—**अदोषत्वमिति**। व्यवहारयोग्यवस्तुप्रकाशकत्वमात्रेण न दोषत्वं ब्रूमः, किन्तु सच्चिदानन्दस्वप्रकाशमानप्रतिबन्धेन तद्विपरीतावभासहेतुत्वात्, चक्षुःप्रकाश्यशुक्त्यादिविपरीतप्रकाशककाचादिवदित्यर्थः। "नच सर्वसाधारण" इत्यादिनाऽऽगन्तुकस्य दोषत्वं नेतरस्येत्युक्तम्, तदनुपपन्नम्; आगन्तुकस्य मिथ्यात्वहेतुत्वं नेतरस्येति प्रस्तुतत्वात्, प्रस्तुते दृष्टान्ताभिधानस्योचितत्वादित्याशङ्क्य तात्पर्यमाह—**कथमिति**॥ **प्रतिश्याय**शब्देन नासिकाविवरनिस्सृतकफोत्थनीरबिन्दुरभिधीयते। आगन्तुकदोषस्य विषयमिथ्यात्वहेतुत्वम्, नेतरस्येत्येतत् शबरस्वामिवचनपराहतमिति चोदयति—**ननु भाष्येति**॥ "यस्य च दुष्टं करणमि"त्यत्रेति शेषः। आगन्तुकदोषे दोषत्वप्रसिद्धेरितरत्र तदभावात्सामान्यवचनं विशेषविषयत्वेन निर्णीयत इत्यभिप्रायेणाह—**नेत्याहेति**॥

प्रमाणादीनामविद्यावदाश्रयत्वेऽनुपपत्त्यभावात् प्रमाणादिव्यवहारस्याध्यासमूलत्वमुक्तम्। तत्र वक्तव्यम्—किमविवेकिव्यवहारस्याध्यासमूलत्वम्? उतेतरस्य? इति विकल्प्याद्ये सिद्धसाध्यतेत्याह—**नन्वविवेकीति**॥ द्वितीयस्त्वनुपपन्न इत्याह—**न विवेकीति**॥ अध्यासस्याविवेकपुरस्सरत्वाद्विवेकिनां च तदभावात् कथमध्यासपुरःसरत्वं व्यवहारस्येत्यर्थः। विवेकिशब्देन किं बुद्धिमत्त्वमात्रं विवक्षितम्? उत शास्त्रीयविवेकवत्त्वम्? इति विकल्प्याद्ये व्यवहारस्याध्यासमूलत्वं दुर्वारमित्याह—**नेत्याहेति**॥ विवेकिनां व्यवहर्तृत्वादध्यासवत्त्वेन पश्वादिविशेषाभावमुक्तं विहाय पश्वादावध्यासप्रदर्शनमयुक्तमित्याशङ्क्याऽऽह—**पश्वादीति**॥ 'तदेकरूपे'त्यत्र पश्वादीनां मनुष्याणां च साम्यमुच्यते। 'अतस्तदेकरूपे'त्यनेन पौनरुक्त्यं स्यात्,

## ऋजुविवरणम्

वित्वाभावादित्याशङ्क्याऽऽह—**अविद्याध्यास इति**॥ अथवा, व्यावहारिकप्रामाण्याभावोऽपि दोषजन्यत्वेनानुमातुं शक्यत इत्याशङ्क्याऽऽह—**अविद्याध्यास इति**॥ ननु दोषस्य कारणत्वेऽपि न दोषत्वमपगच्छति, ततस्तत्प्रयुक्ताप्रामाण्यमपि स्यात्, वस्तुनि विकल्पाभावात्, इत्याशङ्क्य दृष्टान्तमाऽऽह—**यथा काचादिरिति**॥ एवं तर्हि नाविद्याध्यासेन प्रपञ्चज्ञानसंभवः, चैतन्यदोषत्वादित्याशङ्क्याऽऽह—**चैतन्यदोषत्वादिति**॥ यद्वा, दृष्टदोषजन्यत्वमुपाधिर्न भवति; प्रपञ्चज्ञाने तदभावेऽपि विषयतो मिथ्यात्वदर्शनात्, इत्याशङ्क्याऽऽह—**चैतन्यदोषत्वादेवेति**॥ ननु सिद्धे दोषत्वे चैतन्यविपरीतवस्तुप्रतीतिहेतुत्वम्, तदेव कथम्? इत्याशङ्क्याऽऽह—**दोषत्वं चेति**॥ कथं तर्हि टीकाकारेण नैसर्गिकानैसर्गिकत्वेन क्षुत्पिपासाप्रभृतीनामदोषत्वं दोषत्वं चोदाहृतम् नैसर्गिकस्यापि

### पञ्चपादिका

ननु पश्वादीनामपि कार्य-करणसंघातेऽहङ्कारानुबन्ध इति कुतोऽवसीयते। येन सिद्धवदभिधीयते? उच्यते—प्रौढमतिभ्य एव प्रत्यक्षादिवृत्तकुशलेरात्मा व्युत्पाद्यते, अन्यथा तदनर्थकत्वप्रसङ्गात्। एवमेव प्रमाणविचारविरहं सर्वः संप्रतिपद्येत॥

ननु गोपालाङ्गनादयः प्रमाणविरहमेव वर्तमानदेहपातेऽपि स्थायिनं भोक्तारं मन्यमानास्तदर्थमाचरन्ति? न; तदभिज्ञव्यवहारमात्रप्रमाणकत्वात्।

### पञ्चपादिकाविवरणम्

पश्वादिदृष्टान्तेऽप्यध्याससद्भावे प्रमाणं चोदयति—**ननु पश्वादीनामिति**॥ पदार्थद्वयदर्शने सति प्रत्यक्षानुमानागमैर्भेदाप्रतिपत्तावध्यासः परिशिष्यत इत्याह—**प्रौढमतिभ्य इति**॥ स्वाभाविकप्रत्यक्षेण विवेकदर्शने दोषमाह—**एवमेवेति**॥

ननु अनुमानागमविचारहीनानामप्यदृष्टार्थं व्यवहारदर्शनात् प्रत्यक्षेणैव विवेको गृह्यत इति चोदयति—**ननु गोपालाङ्गनादय इति**॥ न प्रत्यक्षेण विवेकग्रहः, किन्त्वाप्तवचनादित्याह—**न; तदभिज्ञव्यवहारेति**॥ प्रत्यक्षश्चेद्विवेकः, विशेषतः

### तत्त्वदीपनम्

तदर्थमपुनरुक्तमर्थमाह—**अध्यासेति**॥ विवेकिव्यवहारः, अध्यासनिबन्धनः, व्यवहारत्वात्; पश्वादिव्यवहारवदित्युक्तम्, तदनुपपन्नम्; तस्याप्रसिद्धत्वात्। तथाच साध्यविकलो दृष्टान्त इति चोदयति—**पश्वादीति**॥ शरीरादावहंकारानुबन्धो गौणत्वेनाप्युपपत्स्यत इत्यभिसन्धिः। दृष्टान्तेऽध्यास आक्षिप्ते तत्समर्थनं विहाय प्रौढमतीनां व्युत्पाद्यत्वं कस्मात् सिद्धान्तिनोक्तम्? इत्याशङ्क्य तात्पर्यमाह—**पदार्थेति**॥ आत्मानात्मानौ **पदार्थद्वयशब्दार्थः**॥ "उच्यते" इत्यादेरयमर्थः—देहात्मनोर्भेदानधिगतावहं-ममाभिमानस्याध्यासत्वम्; ज्ञातभेदयोरभेदाभिमानस्य गौणत्वादित्याशयेनोत्तरयति—**उच्यत इति** (टीकायाम्)॥ कथं भेदानधिगतिरिति चेत्? तत्र वक्तव्यम्—किमनुमानाद् व्यतिरेकसिद्धिः? उतागमात्? अथवा प्रत्यक्षात्? इति विकल्प्य कल्पद्वयं दूषयति—**प्रौढमतिभ्य इति** (टीकायाम्)। व्युत्पादनयोग्येभ्य इत्यर्थः। पश्वादीनामुपदेष्टृत्वनिराकरणार्थं प्रत्यक्षादीति विशेषणम्। पश्वानीनामप्रौढमतित्वादुपदेष्टृभावाच्च न व्युत्पाद्यत्वमित्यर्थः। तृतीयं कल्पं शङ्कते—**अन्यथेति** (टीकायाम्)। व्युत्पाद्यत्वं विनाऽप्यधिगतावित्यर्थः। प्रत्यक्षाद्विवेकसिद्धिं ब्रुवाणं प्रत्युपदेशानर्थक्यप्रसञ्जनं नानिष्टमित्याशङ्कायां—"एवमेवे"त्याद्युक्तमनुपपन्नम्, युक्तिसहकृतप्रत्यक्षस्याभेदबोधकत्वात्, सर्वेषां च तदभावादित्याशङ्क्याऽऽह—**स्वाभाविकेति**॥ **एवमेवेति**—पश्वादिवदित्यर्थः।

सर्वेषां प्रत्यक्षेणात्मप्रतिपत्त्यभावेऽपि केषां चितदस्तीत्युक्तम्—"ननु गोपाले"त्यत्र, तदनुपपन्नम्; तत्र प्रमाणाभावादित्याशङ्क्य तात्पर्यमाह—**नन्विति**॥ अदृष्टोद्देशेन देव-भूदेवसमाराधनसंदर्शनात् देहस्य चात्र भस्मीभावोपलम्भात् कालान्तरीयफलभोक्त्रधिगतिस्तेषां निश्चीयते; आगमाद्यप्रवीणत्वाच्च प्रत्यक्षाद्विवेकाधिगतिरित्यर्थः॥ "व्यवहारबलाद्भेदः प्रत्यक्ष" इत्युक्ते तदभिज्ञव्यवहारमात्रं व्यतिरेकस्य प्रत्यक्षत्वे प्रमाणमिति सिद्धान्तिनोक्तमिति प्रतिभाति, तन्न संभवति; अनिष्टापादनाभावादित्याशङ्क्य टीकार्थं स्पष्टयति—**न प्रत्यक्षेणेति**॥ देहव्यतिरिक्तात्मज्ञानवानाप्तः, तदभिवदनादिरप्यात्मनि प्रमाणमिति **टीकार्थः**॥ उक्तेऽर्थे विनिगमनमुक्तम्—"तथाचे"त्यत्र, तदनुपपन्नम्; व्यतिरिक्तात्मविशेषप्रतिपत्तेरित्याशङ्क्याऽऽह—**प्रत्यक्ष इति**॥ **विशेष इति**—असंसार्यादिरूपेणेत्यर्थः। "प्रत्यक्षादिव्यवहारः" इति भाष्ये हेतूपसंहरणं प्रतिभाति, न हेतुमतः; तत्र कोऽभिप्रायः? इत्याशङ्क्य हेतुमतोऽप्युपसंहरणमस्तीत्याह—**अत इति**॥ स चासौ कालश्चेति कर्मधारयसमासः? उत

### ऋजुविवरणम्

दोषत्वात्? अथवा, विषमो दृष्टान्तः; "दोषस्त्वागन्तुकः" इत्यत्रागन्तुकस्यैव मिथ्यात्वहेतुत्वमुक्तम्, तदेव निदर्शनीयम्, नान्यदित्याशङ्क्याभिप्रायमाह—**कथमागन्तुक इति**॥

पश्वादिव्यवहारेऽध्यासपूर्वकत्वे किं प्रमाणमिति चोदिते, "प्रौढमतिभ्यः"इत्यनेन प्रौढमतिभ्यो ह्यात्मव्युत्पादनं दृश्यते, अतस्तेषां व्युत्पादनात् प्राग् यथाऽध्यासः, तद्वदत्रापि। अथवा, प्रौढमतिभ्योऽपि व्युत्पादिते सत्येवात्मज्ञानम्, किमुत पश्वादीनाम् पूर्वं ज्ञानं नास्तीति वक्तव्यम्। इत्युक्तम्, तदसंबद्धम्; विवेकिष्वध्यासपुरःसरत्वं कथमिति तत्रैव चोदिते पश्वादिदृष्टान्तोपादानात्, पुनस्तत्रापि चोदिते प्रौढमतिष्वध्यासदर्शनेन पश्वादिष्वपि तत्साधन इतरेतराश्रयप्रसङ्गात्, इत्याशङ्क्याभिप्रायमाह—**प्रत्यक्षानुमानेति**॥

स चासौ कालश्चेति तत्काल इति विग्रहः प्रतिभाति, तथा सति "व्यवहारः"इत्यनेन सामानाधिकरण्यं न स्यात्; नच तस्य व्यवहारस्येति विवक्षितम्, नापि तस्याध्यासस्य काल इति, अनन्वयात्; नापि तस्याध्यासस्य काल एव कालो

## पञ्चपादिका

**तथाच ते पृष्टाः—कः परलोकसम्बन्धी ? इति, 'न विद्मो विशेषतः, प्रसिद्धो लोके' इति प्रतिब्रुवन्ति । तस्माद् युक्तमुक्तम्—पश्वादीनां च प्रसिद्धोऽविवेकपूर्वकः प्रत्यक्षादिव्यवहारः, तत्सामान्यदर्शनाद् व्युत्पत्तिमतामपि पुरुषाणां प्रत्यक्षादिव्यवहारस्तत्कालः समान इति ॥**

**एवं तावत् प्रत्यक्षादीनि प्रमाणानि चक्षुरादिसाधनानि । तानि च नाधिष्ठानशून्यानि व्याप्रियन्ते । अधिष्ठानं च देहः ।**

## पञ्चपादिकाविवरणम्

प्रत्यगात्मानं प्रतिपद्येरन्नित्याह—**तथाच ते पृष्टा इति** ॥ अतो निगमनवाक्यमुपपन्नमित्याह—**तस्माद्युक्तमुक्तमिति** ॥ तस्य व्यवहारस्य काल एव कालो यस्याध्यासस्य, सोध्यासस्तत्कालः, स च पश्वादिभिर्विवेकिनामपि समान इति ॥

**एवं तावत्प्रत्यक्षादीनीत्युक्तानुवादः** "न तेनानध्यस्तात्मभावेने"ति भाष्यं पूर्वं न व्याख्यातम्, तदनुवादग्रन्थे व्याचष्टे॥ तत्रेयमाशङ्का–भवत्वध्यासस्य व्यवहारनिमित्तता, तथापि रजतादिवद् निमित्तकारणमेवाध्यासो व्यवहारस्य, आत्मैव केवलस्तूपादानमिति ? तत्राह–**न तेनानध्यस्तात्मभावेनासङ्गस्येति** । अयमर्थः–रजताद्येध्यासानां व्यवहाराश्रयकोटिनिक्षिप्तत्वाभावात् तदन्तरेण चत्मानि प्रमातृत्वादिव्यवहारदर्शनात् निमित्तकारणतैव युक्ता, इह तु पुनराश्रयकोटिनिक्षिप्तत्वात् केवलात्मनि सुषुप्ते व्यवहारदर्शनात् उपादानकारणस्याभ्यर्हितत्वात् अन्वयव्यतिरेकवतोऽध्यासोपादान-कारणत्वमेव व्यवहारं प्रति कल्पयितुं युक्तमिति । **शास्त्रं पुनरित्युत्तरभाष्यस्याशङ्का** । **तस्यापीति** तात्पर्याभिधानम् । **शास्त्रीये त्विति** अदृष्टार्थप्रवृत्तौ व्यतिरेकज्ञानमभ्यनुजानाति ।

अभ्यनुज्ञामाक्षिपति—**ननु फलनैयमिकेति** ॥ फलचोदना तावत् पश्वादीनामस्मिन्नेव जन्मनि लब्धुं शक्यत्वात्, तज्जन्यसुखस्य च स्वर्गस्य पश्वादिचोदनाफलत्वाभावाद् ज्योतिष्टोमादिफलत्वोपपत्तेः, निरतिशयप्रीतेरप्यत्रैव सम्भवात्, न देहान्तरसम्बन्धिनमात्मानमापादयति नैयमिक-नैमित्तिकचोदना तु सुतराम्, फलशून्यत्वात् । फलवत्त्वे वा दृष्टेनैवोपभोक्तुं शक्यत्वात् । प्रायश्चित्तस्य तु दोषनिबर्हणफलत्वात्, दोषफलस्यास्मिन् जन्मनि भोक्तुं शक्यत्वात्, जन्मान्तरस्य चैतादृशत्वात्, फलादर्शने च कारीर्यादिवदङ्गवैकल्यप्रतिबद्धतया सहकार्यभावकल्पनोपपत्तेः, मन्त्रौषधादिसिद्धेनानेनापि शरीरेण स्वर्गादिभोगसम्भवाद् न देहव्यतिरेकज्ञानोपयोग इति तत्र देवताधिकरणन्यायेन मन्त्रादिप्रामाण्याद् विशिष्टदेश-काल-शरीरादिभोग्यं स्वर्गादि फलमङ्गीकृत्येदमुक्तमिति परिहरति—**सत्यमेवं तथाऽपीति** ॥

ननु मन्त्रादि(समन्वय)प्रामाण्यमनपेक्ष्यैव चोदनाभिरेव व्यतिरिक्तात्माऽपेक्ष्यते, कर्ममात्रनिर्णयप्रवृत्तेन भाष्यकारेणात्मनो निरूपितत्वादिति ? तत्राह—**तथाच विधिवृत्तेति** ॥ विधिभिरेवापेक्षितश्चेत्, सूत्रेणापि भवितव्यमित्यर्थः । ननु अनपेक्षितस्यासूत्रितस्य च भाष्यकारेण प्रतिपादनमयुक्तमित्याक्षिपति—**तत्कस्य हेतोरिति** ॥ "तत् प्रमाणं बादरायणस्यानपेक्षत्वादि"ति सूत्रावयवेन मन्त्रादिप्रामाण्यद्वारेण परम्परया सूत्रित एवात्मेति परिहरति—**धर्मजिज्ञासेति कार्यार्थविचारं प्रतिज्ञायेति** ॥ एवं सूत्रार्थपरम्परया भूतेऽप्यर्थे प्रामाण्यमाश्रित्य भाष्यकारेणात्मविचारः कृतः, न चोदनासामर्थ्यमाश्रित्येति

## तत्त्वदीपनम्

तस्य कालस्तत्काल इति षष्ठीसमासः ? नाद्यः; व्यवहारस्य कालत्वाभावात्, न द्वितीयः; किं तच्छब्देन व्यवहारः परामृश्यते ? उताध्यासः ? नाद्यः; व्यवहारस्य कालत्वाभावात्; अत एव न द्वितीयोऽपि संगच्छत इत्याशङ्क्याऽऽह—**तस्येति** ॥ मध्यमपदलोप्ययं समास इत्यर्थः । नचाध्यासस्य व्यापकत्वाद् व्यवहारस्य च व्याप्यत्वादध्यासस्य काल एव कालो यस्य स तत्काल इति विवेचनीयम्, किमिदमुच्यते—व्यवहारस्य काल एव कालो यस्येति चेत् ? तत्र ब्रूमः—व्यवहारस्य व्याप्यत्ववद् व्यापकत्वमप्यध्यासं प्रत्यस्तीति प्रदर्शयितुमेवं समासमाचार्याश्चक्रिर इत्यर्थः । नचात्रान्वयासंभवः; 'च' शब्दाध्याहारेण तत्कालपदोदिताध्यासस्य व्यवहारस्य च समत्वाभिधानादित्याह—**स च पश्वादिभिरिति** ॥ शास्त्रीये तु व्यवहारे" इत्यत्र व्यतिरिक्तात्मज्ञानमनुज्ञायौपनिषदात्मज्ञानं प्रतिचिक्षेप, तदनुपपन्नम्, तस्य प्रकृताननुसारित्वादित्याशङ्क्य, वृत्तानुवादेन तात्पर्यं कथ्यते—"**एवं तावदि**"त्यत्र "तत्रानुवादत्वेन तेने"त्यादिना भाष्यव्याकरणमनुपपन्नमित्याशङ्क्याऽऽह—**एवं तावदिति** ॥ अनुवादत्वे भाष्यव्याख्यानमनुचितमिति यत्तूक्तम् तत्राह—**न तेनेति** ॥ पूर्वमव्याख्यातत्वादनुवादव्याजेन व्याख्योपपत्तिरित्यर्थः ।

## ऋजुविवरणम्

यस्येति व्यवहारपरत्वम्, असाध्यनिगमनप्रसङ्गात्; इति, मध्यमपदलोपिसमासान्तरं दर्शयति—**तस्य व्यवहारस्येति** ॥

"न तेनानध्यस्तात्मभावेनासङ्गस्ये"त्यनेन गतभाष्यव्याख्यानं कृतम्, तदसङ्गतम्; इत्याशङ्क्याभिप्रायमाह—**पूर्वं न व्याख्यातमिति** ॥ "अनुवादः"इत्यनेन धीस्थताकारणमुक्तम् । अथवा, "अनुवादग्रन्थे"इत्यनेन शङ्काबीजमुक्तम् । किमर्थं

## पञ्चपादिका

**न तेनानध्यस्तात्मभावेनासङ्गस्याविकारिणश्चैतन्यैकरसस्यात्मनः प्रमातृत्वमुपपद्यते, इत्यनुभवारूढमविद्यावद्विषयत्वं प्रत्यक्षादीनामुपदिश्य, पश्वादिव्यवहारसाम्येन कार्यतोऽप्यापाद्य, शास्त्रं पुनः प्रतिपन्नात्मविषयमेव, तेन न तत्राध्यासपूर्विका प्रवृत्तिरिति विशेषमाशङ्क्य, तस्याप्यविद्यावद्विषयत्वप्रदर्शनायाऽऽह—शास्त्रीये तु व्यवहारे यद्यपि बुद्धिपूर्वकारी नाविदित्वाऽऽत्मनः परलोकसम्बन्धमधिक्रियत इति ॥**

## पञ्चपादिकाविवरणम्

आत्मैव केवलस्तूपादानमिति ? तत्राह—**न तेनानध्यस्तात्मभावेनासङ्गस्येति** अयमर्थः—रजताद्यध्यासानां व्यवहाराश्रयकोटिनिक्षिप्तत्वाभावात् तदन्तरेण चात्मनि प्रमातृत्वादि व्यवहारदर्शनात् निमित्तकारणतैव युक्ता, इह तु पुनराश्रयकोटिनिक्षिप्तत्वात् केवलात्मनि सुषुप्ते व्यवहारदर्शनात् उपादानकारणस्याभ्यर्हितत्वात् अन्वयव्यतिरेकवतोऽध्यासोपादानकारणत्वमेव व्यवहारं प्रति कल्पयितुं युक्तमिति । **शास्त्रं पुनरित्युत्तरभाष्यस्याशङ्का । तस्यापीति** तत्पर्याभिधानम् । **शास्त्रीये त्विति** अदृष्टार्थप्रवृत्तौ व्यतिरेकज्ञानमभ्यनुजानाति ।

## तत्त्वदीपनम्

नच स्थानातिक्रमणेन व्याख्यानमसङ्गतमिति—शङ्कनीयम्; शङ्कानिमित्ताभिधाने शङ्कावकाशादित्याह—**तत्रेति** ॥ अध्यासस्य हेतुत्वे सिद्धे निमित्तत्वमेव, नोपादानत्वमिति शङ्कासंभव इत्यर्थः ॥ व्यवहारस्याध्यासपुरस्सरत्वमुक्तम्, तत्र किं तस्य निमित्तत्वम् ? उतोपादानत्वम् ? आद्ये सिद्धसाधनता, इत्याह—**भवत्विति** ॥ द्वितीयस्त्वनुपपन्न इत्याह—**तथापीति** ॥ रजताध्यासादेर्व्यवहारं प्रति निमित्तत्वादत्रापि तदेव युक्तमित्यर्थः । किं तर्ह्युपादानम् ? तत्राह—**आत्मैवेति** ॥ **केवल** इति—अनध्यस्तात्मभाव इत्यर्थः । ( टीकायाम् ) असङ्गस्येत्यादेरयमर्थः—प्रमातृत्वं ततः स्वतो न संभवति, संवित्स्वभावत्वादित्याह—**चैतन्येति** ॥ कर्तृत्वमप्यसंभवीत्याह—**अविकारिण इति** ॥ सहकारिसंबन्धाभावादपि न तस्य कर्तृत्वमित्याह—**असङ्गस्येति** ॥ रजताध्यासस्य निमित्तत्वमेवेति यदुक्तम्—तत्राह—**अयमर्थ इति** ॥ व्यवहाराश्रयः प्रमाता रजताध्यासश्चात्माश्रय इत्यसिद्धो हेतुरित्याशङ्क्याह—**तदन्तरेणेति** । रजताध्यासस्य प्रमातरि सद्भावेऽपि न प्रमातृत्वप्रयोजकत्वम्, तदभावेऽपि व्यवहारदर्शनात् । ततश्च तस्य निमित्तत्वं युक्तमित्यर्थः । ततो वैषम्यमाह—**इह त्विति** ॥ तत्र हेतुमाह—**केवलेति** ॥ निमित्ताभावादपि नैमित्तिकाभावप्रसिद्धेर्व्यतिरेकस्यान्यथासिद्धिमाशङ्क्याह—**उपादानेति** ॥ सत्ता-स्थितिहेतुतयोपादानस्यान्तरङ्गत्वादन्वयः, अतस्तद्विषयत्वम् । नच—मिथ्याज्ञान-तत्संस्कारयोर्निमित्तत्वमात्रस्य पुरोक्तत्वात्तद्विरोध इद्धि—वचनीयम्; मिथ्याज्ञानस्यानुपादानत्वेऽपि तद्विषयाहंकारादिसंपिण्डितरूपस्योपादानत्वसंभवादित्यर्थः । उपदिश्य, आपाद्य, आशङ्क्याहेति ग्रन्थच्छायाऽनुसारेण शङ्काप्रदर्शनस्याप्यनुवादप्रतीतिं व्यावर्तयति—**शास्त्रं पुनरिति** ॥ "विद्वान् यजेत"इत्यादिवाक्याद् ज्ञानवदात्मविषयत्वं शास्त्रस्य, ततो नाध्यासपुरस्सरत्वमिति शङ्कार्थः । शास्त्रीयविवेकवत्त्वमिति कल्पनान्तरमत्रोत्थापितमित्यर्थः ॥ "शास्त्रीये"त्विति भाष्येऽविद्यावद्विषयत्वस्यानुक्तत्वात् "तस्याप्यविद्यावद्विषयत्वप्रदर्शनाये"ति ग्रन्थानुपपत्तिरित्याशङ्क्य तस्य तात्पर्यार्थत्वाददोष इत्याह—**तस्यापीति** ॥ "कारीर्या यजेते"त्यादिशास्त्रीयव्यवहारस्य व्यतिरेकज्ञानानपेक्षणात्तदभ्यनुज्ञासंभवमाशक्याह—**शास्त्रीये त्विति** ॥

## ऋजुविवरणम्

दानत्वमिति शङ्का स्यात् । ननु पूर्वमिति भावः । कथमनेनोपादानत्वमुक्तम् ? चैतन्यैकरसत्वेन स्वतः प्रमातृत्वाभावे, अविकारित्वेनागन्तुकविकाराभावे, असङ्गत्वेनान्यनिमित्तप्रमातृत्वाभावे चोक्ते नाध्यासस्योपादानत्वमुक्तम्, किन्त्वध्यस्तात्मभावेन भवितव्यमित्युक्तम् । अथवा, "न तेनानध्यस्तात्मभावेने"त्यनेनैव व्याख्यानं कृतम् । देहादिष्वात्मभावाध्यासेन विनाऽऽत्मनः प्रमातृत्वं नास्ति । प्रमाश्रयत्वं हि प्रमातृत्वम् । नच तदात्मनः संभवति; विषयेण प्रमासाधनैर्वाऽसङ्गत्वेन संसर्गाभावात् । नच केवलस्यैव तदाकारपरिणामः; अविकारित्वात् । अविकारित्वं च चैतन्यैकरसत्वात् । अथवा, स्वाभाविकप्रमाश्रयत्वेन विषयतादात्म्येन वा प्रमातृत्वं "चैतन्यैकरसस्ये"त्यनेन निरस्तम् । नच तावतोपादानत्वमुक्तम्; कुठारेण विनाऽऽत्मनश्छेतृत्वाभावेऽपि नैव कुठारस्योपादानत्वम्, तद्वदध्यासस्वरूपनिर्मुक्ताभावात् केवलस्य प्रमातृत्वाभाव इत्यपि वक्तुं शक्यते । अतो न निमित्तवैलक्षण्यमध्यासस्यानेनोक्तमित्याशङ्क्याभिप्रायमाह—**अयमर्थो रजतेति** ॥

**पञ्चपादिका**

**ननु फल-नैयमिक-नैमित्तिक-प्रायश्चित्तचोदना वर्तमानशरीरपातादूर्ध्वकालस्थायिनं भोक्तारमन्तरेणापि प्रमाणतामश्नुवत एव। यथा चैतदेवम्, तथा—"एक आत्मनः शरीरेभावादि"त्यधिकरणारम्भे दर्शयिष्यामः ?**

**पञ्चपादिकाविवरणम्**

अभ्यनुज्ञामाक्षिपति—**ननु फलनैयमिकेति** ॥ फलचोदना तावत् पश्वादिनामस्मिन्नेव जन्मनि लब्धुं शक्यत्वात्, तज्जन्यसुखस्य च स्वर्गस्य पश्वादिचोदनाफलत्वाभावाद् ज्योतिष्टोमादिफलत्वोपपत्तेः, निरतिशयप्रीतेरप्यत्रैव सम्भवात्, न देहान्तरसम्बन्धिनमात्मनमापादयति। नैयमिक-नैमित्तिकचोदना तु सुतराम्, फलशून्यत्वात् फलवत्त्वे वा दृष्टेनैवोपभोक्तुं शक्यत्वात्। प्रायश्चित्तस्य तु दोषनिबर्हणफलत्वात् दोषफलस्यास्मिन् जन्मनि भोक्तुं शक्यत्वात्, जन्मान्तरस्य चैतादृशत्वात्,

**तत्त्वदीपनम्**

देहव्यतिरिक्तात्मज्ञानं विनाऽपि फलादिचोदनानां प्रामाण्यसमर्थनस्यात्र पूर्वपक्ष-सिद्धान्तयोरनुपयोगादविद्यावद्विषयत्व-तदभावयोर्वादिप्रतिवादिनोरिहाभिप्रेतत्वाद् "ननु फले"त्यादिग्रन्थोऽसमञ्जस इत्याशङ्क्य, परलोकसंबन्ध्यात्मज्ञानं विना न प्रवृत्तिरित्यवसरमालक्ष्य, लब्धावसरश्चार्वाकवरः शङ्कत इत्याह—**अभ्यनुज्ञामिति** ॥ टीकाऽपेक्षितं हेतुं व्यनक्ति—**फलेति** ॥ फलचोदना तावद् देहान्तरसंबन्धिनमात्मानं नापादयतीति संबन्धः। कुत इति चेत्, तत्र वक्तव्यम्—किं पश्वादिफलचोदना व्यतिरिक्तात्मापादिका ? उत स्वर्गादिफलचोदनेति ? नाद्य इत्याह—**पश्वादीनामिति** ॥ नच—पश्वादीनामस्मिन्नेव जन्मनि लाभे चित्रादेः कारीर्यादितुल्यतेति—शङ्क्यम्; कारीर्यादेर्नियतसमनन्तरफलत्वे पश्वादिचोदनानां चास्मिन्नेव जन्मनि यदा कदाचित्फलसंबन्धपरत्वादिति वैषम्यादित्यर्थः। द्वितीयेऽपि किं लोकविशेषः स्वर्गः ? उत सुखमात्रम् ? नाद्यः; तत्र मानाभावात्। द्वितीये न विवक्षितात्मसिद्धिरित्यभिप्रायेणाह—**तज्जन्येति** ॥ स्वर्गस्यास्मिन् जन्मनि लब्धुं शक्यत्वादिति संबन्धः। पश्वादिजनितसुखस्य पश्वादिचोदनाफलत्वाद् न ज्योतिष्टोमादिफलत्वम्, तत्राह—**पश्वादीति** ॥ "चित्रया यजेत पशुकामः" "सांग्रहण्या यजेत ग्रामकामः" इत्यादिचोदनानां पश्वादिसमर्पकत्वम्, यथाश्रुत्यङ्गीकारस्य युक्तत्वादित्यर्थः। निरतिशयप्रीतेः स्वर्गशब्दार्थत्वात्तद्भोक्तृत्वेन व्यतिरिक्तात्मसिद्धिः ? अत्राह—**निरतिशयेति** ॥ कार्तवीर्यादिवत्साम्राज्यादिपदप्राप्त्या तद्भोगस्यापीह संभवादित्यर्थः ॥ फलचोदनाया अनपेक्षत्वमभिधाय, नैयमिकनैमित्तिकचोदनयोरप्यनपेक्षत्वमप्ह—**नैयमिकेति** ॥ "यावज्जीवमग्निहोत्रं जुहुयादि"त्याद्या **नैयमिक**चोदना; 'गृहदाहवान् यजेत्' इत्याद्या **नैमित्तिक**चोदना। फलवतोऽपि यदा न भोक्त्राक्षेपकत्वम्, तदा तद्विधुरस्य नाक्षेपकत्वमिति किमु वक्तव्यमित्याह—**सुतरामिति** ॥ नैयमिकादेरपि फलवत्त्वं ब्रुवाणं भाट्टं प्रत्याह—**फलवत्त्व इति**। सुख-दुःखप्राप्ति-निवृत्तिफलस्य दृष्टेनैव शरीरेणोपभोगसंभवान्नादृष्टार्थकल्पनेत्यर्थः। नापि प्रायश्चित्तचोदनाया व्यतिरिक्तात्मप्रापकत्वमित्याह—**प्रायश्चित्तस्येति**। "तरति ब्रह्महत्यां योऽश्वमेधेन यजते" इत्याद्या प्रायश्चित्तचोदना। अकृतप्रायश्चित्तदोषफलोपभोगाय व्यतिरिक्तापेक्षेति शङ्कां प्रत्याह—**दोषेति** ॥ **दोषफलम्** दुःखम्, तच्चात्र सुलभमित्यर्थः ॥ ब्रह्महत्यायाश्च सूकराद्यनेकयोनिसंबन्धफलत्वात् तदुपभोक्तृतया व्यतिरिक्तात्मसिद्धिरित्याशङ्क्याह—**जन्मान्तरस्येति** ॥ जन्मान्तरसम्बन्धस्य न स्वरूपेण फलत्वम्, किं तु दुःखहेतुत्वेन; तच्च दुःखमत्रैव भोक्तुं शक्यम्, इति न जन्मान्तरापेक्षा; सूकरादिसमानदुःखपरतयाऽपि संभवादित्यर्थः। चित्रादिफलस्यास्मिन् जन्मनि कदाचिदनुपलम्भाद्

**ऋजुविवरणम्**

ननु स्वर्गसाधनकर्मणां व्यतिरिक्तात्मना विनाऽप्युपपत्तिरस्तीत्याशङ्क्याह—**तज्जन्यसुखस्येति** ॥ कथं क्रत्वादिजन्यसुखस्य ज्योतिष्टोमादिकर्मफलत्वम् ? कर्मान्तरफलत्वादित्याशङ्क्याह—**पश्वादिचोदनाफलेति** ॥ ननु निरतिशयप्रीतिर्हि स्वर्गः तादृशं च ज्योतिष्टोमादिफलम्, तच्च देहान्तरसम्बन्धमापादयति, तदुक्तम्—"अन्यथाऽनुपपत्त्या तु विधिनाऽऽत्मन्यपेक्षिते" इति, तत्राह—**निरतिशयप्रीतेरिति** ॥ ननु नित्यकर्मणां प्रत्यवायपरिहारार्थत्वात् प्रत्यवायस्य च जन्मान्तरे फलहेतुत्वात् तन्निवर्तकनित्यकर्मणां व्यतिरिक्तात्मना विनाऽनुपपत्तिः; तदभावे नरकादिफलप्रत्यवायनिवृत्त्यर्थे नित्यकर्मसु प्रवृत्त्यनुपपत्तेः, इत्याशङ्क्याऽऽह—**फलवत्त्वं वेति** ॥ ननु जन्मान्तर एव तद् भोक्तुं शक्यते; नास्मिन् जन्मनि; ततो जन्मान्तराक्षेपकत्वम्, इत्याशङ्क्याऽऽह—**जन्मान्तरस्येति** ॥ ननु अनुष्ठितधर्मस्यापि फलादर्शनात्, ध्रुवफलत्वाच्च कर्मणाम्, जन्मान्तराक्षेपकत्वमित्याशङ्क्याऽऽह—**फलादर्शने चेति** ॥ ननु स्वर्गो नाम विशिष्टदेशादिजन्यो भोगः, न चानेन शरीरेण स भोक्तुं शक्यते, इत्याशङ्क्याऽऽह—**मन्त्रौषधादिसिद्धेनेति** ॥ "सत्यमेवमि"त्यादिना व्यतिरिक्तात्मज्ञानापेक्षित्वे "प्रामाणिकमर्थमङ्गीकृत्ये"ति

### पञ्चपादिका

**सत्यमेवम्; तथाऽपि सकलशास्त्रपर्यालोचनापरिनिष्पन्नं प्रामाणिकमर्थमङ्गीकृत्याह भाष्यकारः ।**

**तथा च विधिवृत्तमीमांसाभाष्यकारोऽप्युत्सूत्रमेवात्मसिद्धौ पराक्रान्तवान् । तत् कस्य हेतोः ? "धर्मजिज्ञासे"ति कार्यार्थविचारं प्रतिज्ञाय तदवगमस्य प्रामाण्येऽनपेक्षत्वं कारणमनुसरता सूत्रकारेण विशेषाभावात् स्वरूपनिष्ठानामपि**

### पञ्चपादिकाविवरणम्

फलादर्शने च कारीर्यादिवदङ्गवैकल्यप्रतिबद्धतया सहकार्यभावकल्पनोपपत्तेः, मन्त्रौषधादिसिद्धेनानेनापि शरीरेण स्वर्गादि-भोगसम्भवाद् न देहव्यतिरेकज्ञानोपयोग इति । तत्र देवताधिकरणन्यायेन मन्त्रादिप्रामाण्याद् विशिष्टदेश-काल-शरीरादिभोग्यं स्वर्गादि फलमङ्गीकृत्येदमुक्तमिति परिहरति—**सत्यमेवं तथाऽपीति** ॥

ननु मन्त्रादि(समन्वय)प्रामाण्यमनपेक्ष्यैव चोदनाभिरेव व्यतिरिक्तात्माऽपेक्ष्यते, कर्ममात्रनिर्णयप्रवृत्तेन भाष्यकारेणात्मनो निरूपितत्वादिति ? तत्राह—**तथाच विधिवृत्तेति** ॥ विधिभिरेवापेक्षितश्चेत्, सूत्रेणापि भवितव्यमित्यर्थः । ननु अनपेक्षितस्यासूत्रितस्य च भाष्यकारेण प्रतिपादनमयुक्तमित्याक्षिपति—**तत्कस्य हेतोरिति** ॥ "तत् प्रमाणं बादरायणस्यानपेक्षत्वादि"ति सूत्रावयवेन मन्त्रादिप्रामाण्यद्वारेण परम्परया सूत्रित एवात्मेति परिहरति—**धर्मजिज्ञासेति कार्यार्थविचारं प्रतिज्ञायेति** ॥ एवं सूत्रार्थपरम्परया भूतेऽप्यर्थे प्रामाण्यमाश्रित्य भाष्यकारेणात्मविचारः कृतः, न चोदनासामर्थ्यमाश्रित्येति

### तत्त्वदीपनम्

अदत्तफलस्य कर्मणः क्षयायोगात् फलोपभोगाय देहान्तरसम्बन्धापेक्षेत्यत्राह—**फलादर्शन इति** ॥ साङ्गानुष्ठानेऽपि फलादर्शना-दङ्गवैकल्यकल्पनमयुक्तमित्याशङ्क्य, प्रतिबन्धाद् बहुसहकार्यभावाद्वा फलादर्शनं युक्तमित्याह—**प्रतिबन्धेति** ॥ देशान्तरादि-भोग्यं स्वर्गमङ्गीकृत्याह—**मन्त्रेति** ॥ फलादिचोदनानां व्यतिरिक्तात्मानं विनाऽनुपपत्त्यभावात्प्रमाणान्तरस्य च तत्साधकस्या-सम्भवाद् व्यतिरेकाभ्यनुज्ञानमयुक्तमित्याक्षेपे कृते, तदङ्गीकारेण समाधानमयुक्तमित्याशङ्क्य तात्पर्यमाह—**तत्रेत्यादिना** तत्र चोद्यं परिहरतीति संबन्धः । अन्यपराणां वाक्यानां प्रमाणान्तरविसंवाद-संवादाभावे स्वार्थे प्रामाण्यमिति देवताधिकरण-न्यायः । **विशिष्टो देशो** मेरुपृष्ठादिः । **विशिष्टकालः** शरीरपातोत्तरक्षणः । **विशिष्टं शरीरम्** तैजसादि । **टीकाया** एषा योजना—चोदनामात्रपर्यालोचनया व्यतिरिक्तात्मसिद्धिरित्येतदङ्गीकरोति—**सत्यमेवमिति** ॥ तर्ह्यभ्यनुज्ञानमनुपपन्नमित्याशङ्क्याह—**तथाऽपीति** ॥

मन्त्रादिप्रामाण्यात्विशिष्टदेश-कालोपभोग्यस्वर्गोपलब्धेस्तस्य च व्यतिरिक्तात्मना विनाऽसंभवात् स आश्रयणीय इत्युक्तमनुपपन्नम्, मन्त्राद्यप्रामाण्यवादिना शबरस्वामिना व्यतिरिक्तात्मसमर्थनादिति शङ्कते—**नन्विति** । चोदनानामति-रिक्तानपेक्षत्वे व्यतिरिक्तात्मनिरूपणवैयर्थ्यं स्यात्; विधिवाक्यार्थमात्रनिर्णयप्रवृत्तत्वाच्छबरस्वामिनः । ततश्च मन्त्रादि-प्रामाण्यमाश्रित्य व्यतिरेकाभ्यनुज्ञानमसंगतमित्यर्थः । चोदनातपेक्षितत्वं तावदसिद्धमित्याह—**तत्राहेति** ॥ विधौ वृत्ता मीमांसा, **विधिवृत्तमीमांसा** । विधेर्वृत्तं विधिवृत्तम्, तद्विषया वा मीमांसा **विधिवृत्तमीमांसा** । उत्सूत्रप्रतिपादितत्वमात्रेण कथं विध्यन-पेक्षितत्वम् ? तत्राह—**विधिभिरेवेति** । विध्यपेक्षितन्यायप्रतिपादनार्थं जैमिनेर्व्यापारः । ततश्च विध्यपेक्षितत्वे तत्सूत्रणं स्यात् । नच तदुपलभ्यते । तस्मान्मन्त्राद्यपेक्ष्यैव तत्प्रतिपादनमित्यर्थः । भाष्यकृतो विध्यपेक्षितप्रतिपादकसूत्रार्थव्याख्यान-प्रवृत्तत्वादसूत्रितप्रतिपादकत्वे सूत्राननुसारित्वादिति शङ्कते—**नन्विति** ॥ अयुक्तत्वे हेतुमाह—**भाष्यकारेणेति** ॥ प्रामाण्य-प्रयोजकस्यानपेक्षत्वस्य कुत्र सूत्रणमिति न ज्ञायते ? तत्राह—**तत्प्रमाणमिति** ॥ "औत्पत्तिकस्तु शब्दस्यार्थेन संबन्धस्तस्य ज्ञानमुपदेशोऽव्यतिरेकश्चार्थेऽनुपलब्धे तत् प्रमाणं बादरायणस्यानपेक्षत्वा"दिति सूत्रम् । तस्मिंश्च सूत्रे विधिवाक्यस्यापौरुषेयत्वेनान पेक्षत्वं प्रामाण्यप्रयोजकमुक्तम्, तन्मन्त्रादिष्वविशिष्टम्, इति तत्प्रामाण्यमप्यर्थात्सूत्रितमित्यर्थः । उक्तेऽर्थे विनिगमनकारणं पृच्छति—**एवमिति** ॥ भाष्यकारेण योऽयमात्मविचारः कृतः, स भूतेऽर्थे प्रामाण्यमाश्रित्य, न चोदनासामर्थ्यमाश्रित्येति कथमव-

### ऋजुविवरणम्

प्रामाणिकत्वं हेतुत्वेनोक्तम्, प्रामाणिकत्वे च सकलशास्त्रपर्यालोचनापरिनिष्पन्नत्वं हेतुः, तत्र कस्य प्रामाणिकत्वमिति न ज्ञायते ? न तावद् देहान्तरोपभोग्यफलस्य प्रामाणिकत्वम्; देहान्तरोपभोग्यत्वग्राहकप्रमाणस्यादर्शनात्, विधीनां चातद्गोचरत्वात् ततश्चात्मनोऽपि न प्रामाणिकत्वं युक्तम्; विध्यपेक्षितत्वात्, अन्यस्य तत्साधकत्वादर्शनादित्याशङ्क्य व्याचष्टे—**तत्र देवताधिकरणेति** ॥ देवताधिकरणे हि प्रमाणान्तरसंवाद-विसंवादाभावे मन्त्राद्यर्थवादानां प्रामाण्यमुक्तमिति भावः ।

### पञ्चपादिका

वाक्यानां प्रामाण्यमनुसृतं मन्यते, तथा "चोदना हि भूतं भवन्तं भविष्यन्तं सूक्ष्मं व्यवहितं विप्रकृष्टमित्येवंजातीयकमर्थं शक्नोत्यवगमयितुमि" ति वदंश्चोदनाशेषत्वेनापि स्वरूपावगमेऽनपेक्षत्वमविशिष्टमवगच्छतीत्यवगम्यते । स च स्वरूपावगमः कस्मिन् कथं वेति धर्ममात्रविचारं प्रतिज्ञाय, तत्रैव प्रयतमानेन भगवता जैमिनिना न मीमांसितम्, उपयोगाभावात् । भगवांस्तु पुनर्बादरायणः पृथग् विचारं प्रतिज्ञाय व्यचीचरत् समन्वयलक्षणेन । तत्र च देहान्तरोपभोग्यः स्वर्गः स्थास्यति । तच्च सर्वं कार्यकरणसंघातादन्येन भोक्त्रा विना न सिध्यति ।

तत्सिद्धिश्च नागममात्रायत्ता, प्रमाणान्तरगोचरस्य तदभावे तद्विरोधे वा शिलाप्लवनवाक्यवदप्रामाण्यप्रसङ्गात् ।

### पञ्चपादिकाविवरणम्

कथमवगम्यत इति ? तत्राह—**तथा चोदना हि भूतमिति** ॥ तर्हि चोदनापेक्षितत्वात् समन्वयोऽप्यत्रैव वर्णनीय इति ? नेत्याह—**स च स्वरूपावगम इति** ॥ ननु धर्मे प्रयतमानेनाप्यपेक्षितत्वात् कर्तव्य एवात्मविचार इति ? नेत्याह—**उपयोगाभावादिति** ॥ नहि धर्ममात्रं व्यतिरिक्तात्मानमपेक्षते, किन्तु फलमपेक्षते, फले च न प्रयतते जैमिनिरित्यर्थः । ननु फलमप्यपेक्षते चेत्, तत्रापि प्रयत्नो युक्त इति ? न; अन्यथासिद्धत्वादित्याह—**भगवांस्तु पुनरिति** ॥ ननु ब्रह्मैव तत्र विचारितम्, न चोदनाफलमिति, तत्राह—**तत्र च देहान्तरोपभोग्य इति** ॥ **तच्च सर्वमिति** स्पष्टार्थः ॥

ननु समन्वयसामर्थ्यादेव व्यतिरिक्तात्मसिद्धेरात्मविचारः पिष्टपेषणमिति ? नेत्याह—**तत्सिद्धिश्चेति** ॥ ननु

### तत्त्वदीपनम्

गम्यत इति योजना । तद्वचनं तत्र प्रमाणमित्याह—**तत्राहेति** ॥ "चोदना हि भूतमि"त्यत्र चोदनाया भूतादिबोधकत्वं लक्ष्यते । तत्र विधिवाक्यानां क्रियार्थत्वात्साक्षाद्भूतादिबोधकत्वासंभवाच्छेषभूतमन्त्रादिद्वारेण तद्बोधकत्वं वक्तव्यम् । ततश्च मन्त्रादिप्रामाण्यमाश्रित्यात्मविचारं चकार शबरस्वामीति समाधिग्रन्थार्थः । सिद्धार्थनिष्ठानामपि वाक्यानां प्रामाण्यस्य सूत्रितत्वेन तत्प्रामाण्यविशेषोऽपि तत्र विचारणीय इत्याह—**तर्हीति** ॥ **वर्णनीय इति** जैमिनिनेति शेषः ॥ स्वरूपस्यावगमो येन शब्देन, स स्वरूपावगमः, कस्मिन् किं चोदनाशेषभूत आत्मनि प्रमाणम् ? उत स्वतन्त्र इति विमर्शः । **कथं चेति** ( टीकायाम् ) । किमखण्डार्थम् ? उत संसृष्टार्थमिति ? वेदान्तानां प्रामाण्यस्यासूत्रितत्वेऽपि विधिवाक्यार्थनिरूपणप्रवृत्तत्वात्तद्विचारः कृतो जैमिनिनेत्यर्थः । आत्मविचारस्य विधिवाक्यार्थनिरूपणाविघातित्वात्तदनुकूलत्वाच्च स कर्तव्य इत्याह—**ननु धर्म इति** ॥ असिद्धो हेतुरित्याह—**नेत्याहेति** ॥ धर्मस्य व्यतिरिक्तात्मापेक्षितत्वात्कथमुपयोगाभाव उक्तः ? तत्राह—**नहीति** ॥ किं धर्मस्य स्वरूपेण व्यतिरिक्तात्मापेक्षा ? उत फलद्वारा ? नाद्यः; उपयोगानिरूपणात् । न द्वितीयः; फलनिरूपणार्थप्रवृत्तत्वाज्जैमिनेरित्यर्थः । धर्मस्य फलापेक्षत्वात्तत्रापि यत्नो युक्त इति शङ्कते—**ननु फलमिति** ॥ निष्फलस्तावद् धर्मोपदेशो न संभवति; फलस्य कस्यचित्कालान्तरे संभवात् । तस्य च व्यतिरिक्तात्मानं विनाऽनुपपत्तेस्तद्विचारो युक्त इत्यर्थः । उत्तरमीमांसायां तत्सिद्धेर्न तत्र प्रयत्न इत्याह—**नान्यथेति** ॥ उत्तरमीमांसाया ब्रह्मपरत्वान्न कर्मफलनिरूपणपरत्वमिति चोदयति—**ननु ब्रह्मेति** ॥ वेदान्तानां भूतेऽर्थे प्रामाण्ये सिद्धे कर्मप्रतिपादकार्थवादादेरपि प्रामाण्यादि सेत्स्यतीत्याशयेनाह—**तत्राहेति** ॥

वाक्यपर्यालोचनयैवात्मनः सिद्धत्वाद् बादरायणस्यापि तद्विचारो न युक्त इति शङ्कते—**ननु समन्वयेति** ॥ भूतस्य प्रमाणान्तरयोग्यत्वात् तदभाव-तद्विरोधयोः सतोर्न वाक्यमात्रात् तत्सिद्धिरित्याह—**नेत्याहेति** ॥ तर्हि देहातिरिक्तात्मनि प्रमाणाभावाद् देह एवात्मेत्याह—**ननु प्रमाणेति** ॥ आत्मनः प्रमाणान्तरयोग्यत्वमसिद्धम्; तद्योग्यत्वेऽध्यक्षादिवद् वेदान्तानां प्रामाण्यात् । नच प्रमाणान्तरविरोधः; तस्याभासत्वादित्यभिसन्धायाह—**तत्राहेति** ॥ अतःशब्देनाप्रामाण्यस्य परामृष्टत्वात्

### ऋजुविवरणम्

विध्यनपेक्षितत्व उत्सूत्रत्वं हेतुत्वेनोक्तम्—"उत्सूत्रमेवे"त्यनेन, तदयुक्तम्; न ह्युत्सूत्रं भाष्यकारेण प्रतिपादितमिति कृत्वा विध्यनपेक्षितत्वं निश्चेतुं शक्यम्; विध्यपेक्षितत्वेनोत्सूत्रमपि प्रतिपादितमिति वक्तुं शक्यत्वादित्याशङ्क्य व्याचष्टे—**विधिभिरेवेति** ॥ कथम् "उपयोगाभावादि"त्युक्तम् ? धर्मेण व्यतिरिक्तात्मनोऽपेक्षितत्वादित्याशङ्क्याह—**नहि धर्ममात्रमिति** ॥

**पिष्टपेषणमिति**—"नात्माऽश्रुतेरि"त्यादिभिरात्मनिरूपणं कृतम्, तद् व्यर्थमित्यर्थः । "तेने"ति सन्निहितत्वादप्रामाण्यमेव निर्दिष्टमिति शङ्का स्यात्, तथा सति "अतः" इत्यनेन पुनरुक्तम् । नच हेत्वन्तरपरत्वम्; तस्यादर्शनात् । नच हेत्वन्तरेऽपि बाधकप्रमाणस्याप्रामाण्ये सत्यात्मसिद्धिरित्याशङ्क्य, 'तेन' व्याचष्टे—**विरोधपरिहारफलेन विचारेणेति** ॥

### पञ्चपादिका

**अतस्तत्सिद्धौ पराक्रान्तवांस्तेन। सत्यं विनाऽपि तेन सिध्येत्प्रामाण्यम्, अस्ति तु तत्। तस्मिन् विद्यमाने न तेन विना प्रामाण्यं सिध्यति फलादिचोदनानामिति मत्वाऽऽह—शास्त्रीये तु व्यवहारे यद्यपि बुद्धिपूर्वकारी नाविदित्वाऽऽत्मनः परलोकसंबन्धमधिक्रियते इति॥ तथाऽपि न वेदान्तवेद्यमिति॥ किं तदित्यत आह—असंसार्यात्मतत्त्वं न तदधिकारेऽपेक्ष्यते। अनुपयोगादधिकारविरोधाच्च। अशनायाद्यतीतमित्यसंसार्यात्मतत्त्वं दर्शयति। अशनायाद्युपप्लुतो हि सर्वो जन्तुः स्वास्थ्यमलभमानः प्रवर्तते, तदपाये स्वास्थ्ये स्थितो न किंचिदुपादेयं हेयं वा पश्यति। अपेतब्रह्मक्षत्रादिभेदमिति प्रपञ्चशून्यमेकरसं दर्शयति। प्राक् च तथाभूतात्मविज्ञानात्प्रवर्तमानं शास्त्रमविद्यावद्विषयत्वं नातिवर्तत इति॥ "तत्त्वमसी"तिवाक्यार्थावगमादर्वागविद्याकृतं संसारमहमुल्लेखमाश्रित्य प्रवर्तमानं शास्त्रं नाविद्यावद्विषयत्वमतिवर्तते।**

### पञ्चपादिकाविवरणम्

प्रमाणान्तरयोग्यस्य तदभाव-विरोधयोः शब्दस्याप्रामाण्याद् नात्मसिद्धिरिति? तत्राह—**अतस्तत्सिद्धौ पराक्रान्तवांस्तेनेति**॥ विरोधपरिहारफलेन विचारेणेत्यर्थः॥ "सत्यम् विनाऽपि तेन सिध्येदि"त्यादिनोक्तमर्थं संक्षेपतो दर्शयति—**अस्ति तु तदिति**॥ भूतेऽर्थे प्रामाण्यम्; स्वर्गादावित्यर्थः—**न तेन विनेति**॥ व्यतिरिक्तात्मना विनेत्यर्थः। ननु सूत्रकार-भाष्यकाराभ्यां देवताधिकरणे मुखत एव देवतादिषु मन्त्रादिप्रामाण्यं नास्तीत्युक्तम्, तत् कथं सूत्रावयवसामर्थ्यात् प्रामाण्यमनुमतमिति मन्यते? नैष दोषः; तत्र देवताया विग्रहवत्त्वे सन्निपत्योपकारकत्वप्रसङ्गाद् योग्यानुपलब्धिविरोधात्, कर्मणि विरोधप्रसङ्गाभिप्रायेणोक्तत्वात्, नाप्रामाण्याभिप्रायेण, अर्थवादलिङ्गानामपि तत्र तत्र द्वादशलक्षण्यां प्रमाणत्वेनोदाह्रियमाणत्वादिति। **तथाऽपि न वेदान्तवेद्य**मित्यादिभाष्यव्याख्यानं स्पष्टार्थम्। तत्र "**अशनायाद्यतीतमि**"त्यादिना कर्त्रन्वयाधिकारान्वयभोक्त्रन्वयाः क्रमेण निरस्यन्ते। "प्राक् चेत्यादि" भाष्यव्याख्यानम्—**तत्त्वमसीति वाक्यार्थावगमादित्यादि**॥ कथं पुनर्व्यतिरेकज्ञानेनाध्यासस्य सहवृत्तिः? परोक्षापरोक्षविभागात् चन्द्रैकत्वद्वित्वज्ञानवदविरोध इति केचित्। सूक्ष्मशरीरस्यात्माविद्याकार्यत्वात् कार्य-कारणयोर्भेदाभेदभावात्

### तत्त्वदीपनम्

"तेने"त्यत्रापि तत्परामर्शशङ्का स्यात्, तदर्थमाह—**विरोधेति**। विचारस्य प्रस्तुतत्वाद् योग्यतया तस्य ग्रहणमित्यर्थः। फलाभावादुक्तसंकीर्तनं व्यर्थमित्याशङ्क्याह—**सत्यम्** इत्यादिनेति। विस्तरेणोक्तस्य संक्षेपेण प्रदर्शने बुद्धिसौकर्यं भवतीत्यर्थः। "अस्ति तु तदि"त्यत्र देहातिरिक्तात्माभावेऽपि फलादिचोदनानां प्रामाण्यस्य प्रस्तुतत्वात् तत्परामर्शशङ्का स्यात्, तत्राह—**अस्ति तु तदिति**॥ प्रयाण्यादेर्विद्यमानत्वादेव तेन विना प्रामाण्यं नेति निषेधानुपपत्तिमाशङ्क्याह—**न तेन विनेति**। मन्त्रादीनां स्वार्थे प्रामाण्यं न सूत्रकार-भाष्यकृदभिप्रेतम्, स्वोक्तिविरोधादिति शङ्कते—**ननु सूत्रेति**॥ प्रामाण्यनिषेधस्यान्याभिप्रायत्वान्न विरोध इत्याह—**नैष इति**॥ विग्रहवताम् ऋत्विगादीनां प्रत्यक्षतो हविर्भागस्वीकारवद् देवतादीनामपि तथात्वं स्यात्, न च तदुपलभ्यते, तस्माद् देवता नागतेति कर्मानुष्ठानलोपः स्यात्; तन्निरासार्थमप्रामाण्याभिधानमित्यर्थः। अप्रामाण्याभिप्रायत्वं कस्मान्न? इत्याशङ्क्याह—**नाप्रामाण्येति**॥ "अशनायाद्यतीतमि"ति भाष्यस्थविशेषणानां कृत्यमाह—**तत्रेति**॥ 'मयेदमनुष्ठेयमि'ति बुद्धिः **कर्त्रन्वयः**। 'मदभिलाषितसाधनमिदमि'त्यन्वयोऽधिकारान्वयः। 'ममाऽयं नियोगः' इति स्वामित्वेनाऽन्वयो **भोक्त्रन्वयः**॥ वाक्यार्थावगमोत्तरकालमपि शास्त्रस्याविद्यावद्विषयत्वाद् भाष्य-टीकयोरनुपपत्तिमाशङ्क्यावगमशब्देन साक्षात्कारस्य विवक्षितत्वान्नानुपपत्तिरित्यभिप्रायेणाह—**प्राक् चेति**। भाष्यव्यावर्त्यां शङ्कामाह—**कथं पुनरिति**॥ अदृष्टार्थप्रवृत्तौ व्यतिरेकज्ञानं तावदपेक्षितम्। ज्ञानाध्यासयोस्तु निवर्त्य-निवर्तकभावप्रसिद्धेर्न शास्त्रीयस्य व्यवहारस्याविद्यावद्विषयत्वमित्यर्थः। निवर्त्य-निवर्तकभावोऽसिद्ध इत्याह—**परोक्षेति**॥ अपरोक्षभ्रमस्यापरोक्षज्ञाननिवर्त्यत्वनियमाद् व्यतिरेकज्ञानस्य च परोक्षत्वान्न निवर्तकत्वमित्यर्थः॥ स्वयूथ्यमतमाह—**सूक्ष्मशरीरस्येति**। आत्मा चाविद्या चेत्यात्माऽविद्ये,

### ऋजुविवरणम्

"सत्यं विनाऽपि तेने"ति पुनरुक्तमित्याशङ्क्य, प्रयोजनभेदेन पौनरुक्त्यं परिहरति—**संक्षेपत इति**॥ "अस्ति तु तदि"ति तच्छब्देन सन्निहितत्वाद् विधिप्रामाण्यमेव निर्दिश्यत इति शङ्का स्यात्, तथा सत्युत्तरग्रन्थेऽपि "तस्मिन् विद्यमाने" इत्यत्र तस्यैव निर्देशः स्यात्; तथा सति व्यतिरिक्तात्मना विना चोदनाप्रामाण्याभाव इति मत्वेति ग्रन्थार्थः स्यात्, एवंच पूर्वग्रन्थविरोधः स्यादित्याशङ्क्याह—**भूतेऽर्थ इति**॥ "तेन विने"ति प्रामाण्यमेव सन्निहितत्वान्निर्दिश्येत; तथा सति व्याहतोक्तिः स्यात्, वैयधिकरण्यं च; न ह्यन्यप्रामाण्याभावेऽन्यस्याप्रामाण्यमित्याशङ्क्य व्याचष्टे—**व्यतिरिक्तात्मना विनेति**॥ ननु एकेनैव

## पञ्चपादिका

**तस्माद् युक्तमुक्तं प्रत्यक्षादीनां प्रमाणानां शास्त्रस्य चाविद्यावद्विषयत्वम् ॥**

**तदेव दर्शयति—तथाहि—**"ब्राह्मणो यजेते"त्यादीनि शास्त्रण्यात्मन्यतदध्यासमाश्रित्य प्रवर्तन्ते । **वर्ण-वयोऽध्यासः** "अष्टवर्षं ब्राह्मणमुपनयीते"त्यादिः । आश्रमाध्यासः—"न ह वै स्नात्वा भिक्षेते"ति । अवस्थाध्यासः—"यो ज्योगामयावी स्यात् स एतामिष्टिं निर्वपेदि"ति । आदिशब्देन "यावज्जीवं जुहुया"दिति जीवनाध्यासः । एवमध्याससद्भावं प्रसाध्य, "स्मृतिरूपः" इत्यादिना "सर्वथाऽपि त्वन्यस्यान्यधर्मावभासतां न व्यभिचरती"त्यन्तेन भाष्येण लक्षितं निरुपचरितमतदारोपम्—अध्यासो नामातस्मिंस्तद्बुद्धिरित्यवोचामेति परामृशति । कस्य युष्मदर्थस्य कस्मिन्नयुष्मदर्थे तद्विपर्ययेण चाध्यास इति विवेकतः प्रदर्शयितुम् । अतस्मिन्नयुष्मदर्थेऽनिदंचिति तद्बुद्धिर्युष्मदर्थावभास इत्यर्थः । तदाह—तद्यथा पुत्रभार्यादिष्वित्यादि ॥

ननु प्रणव एव विस्वरः; नहि पुत्रादीनां वैकल्यं साकल्यं वाऽऽत्मनि मुख्यमध्यस्यति, मुख्यो ह्यतदारोपो दर्शयितुं प्रारब्धः ? सत्यम्; स एव निदर्श्यते । कथम् ? तद्यथा बालके प्रातिवेश्यमात्रसम्बन्धिना केनचिद्वस्त्रालङ्कारादिना पूजिते निरुपचरितमात्मानमेव पूजितं मन्यते पिता, पूजयिताऽपि पितरमेवापूपुजमिति मन्यते, यतो न बालकस्य पूजितत्वाभिमानः, अव्यक्तत्वात्; तथैव राजानमुपहन्तुकामोऽनन्तरो विजिगीषुस्तद्राष्ट्रे ग्राममात्रमप्युपहत्य तमेवोपघ्नन्तमात्मानं मन्यते,

## पञ्चपादिकाविवरणम्

स्थूलशरीरस्याग्न्ययःपिण्डवत् सूक्ष्मशरीरेण संश्लेषाद् भेदज्ञानेऽप्यध्यास इत्यपरे । सर्वथाऽपि यावदपरोक्षज्ञानमध्यासो न निवर्तत इति भावः । **तस्मादित्यध्यासप्रमाणोपसंहारः ॥**

नच केवलं प्रत्यक्षानुमानार्थापत्तिभिरेवाध्याससिद्धिः, किन्त्वागमोऽपि विधेर्बोद्धारमधिकारिणं ब्राह्मणादिशब्दैरनुवदंश्चेतनाचेतनयोरैक्यावभासं दर्शयतीत्याह—**तदेव दर्शयति तथाहीति ॥ यो ज्योगामयावी** उज्ज्वलामयवानित्यर्थः । वृत्तसङ्कीर्तनपूर्वकमध्यासो नामेति लक्षणभाष्यमवतारयति—**एवमध्याससद्भावं प्रसाध्येत्यादिना ॥** किमिति पुनरत्रोक्तलक्षणानुवाद इति ? तदाह—**कस्य युष्मदर्थस्येति** ॥ भाष्यं योजयति—**कस्मिन्नयुष्मदर्थं इत्यादिना ॥** "आत्माऽनात्मनोरितरेतराध्यासं पुरस्कृत्ये"त्यादिना प्रत्यक्षतो दर्शितस्याध्यासस्य विभज्य प्रदर्शनायोत्तरं भाष्यमित्याह—**तदाह-तद्यथा पुत्रभार्यादिष्वित्यादि ॥ तथाऽन्तः-**

## तत्त्वदीपनम्

तत्कार्यत्वादित्यर्थः । मिथ्याज्ञान-तत्संस्कारयोर्निमित्तत्वमभिप्रेत्य—"आत्माविद्याकार्यत्वादि"त्युक्तम्, शरीरात्मनोरुपादानोपादेयभावाद् भिन्नाभिन्नत्वम्, ततश्च भेदज्ञाने सत्यप्यभेदज्ञानानुवृत्तिर्युक्तेत्यर्थः । कथं तर्हि स्थूलशरीराभिमानानुवृत्तिरिति ? तत्राह—**स्थूलशरीरस्येति ॥** सूक्ष्मशरीरारम्भकस्य कर्मवृन्दस्य स्थूलशरीरं विना स्वफलदानेऽसमर्थत्वात् स्वारभ्यभूतद्वारेण वा तदारम्भकत्वम् । एतदभिप्रेत्योक्तम्—**संश्लेषादिति ॥** किं तर्ह्यादर्तव्यमिति ? अत आह—**सर्वथेति ॥** आचार्यमतस्येतरस्य वाऽनुसरणेऽपीत्यर्थः । प्रमाणानवद्यतामनुपसंहृत्य प्रमेयोपसंहरणे को हेतुः ? इत्याशङ्क्यानुपसंहरणमसिद्धमित्याह—**तस्मादिति ॥**

"सर्वाणि शास्त्राणी"त्यत्र शास्त्रीयव्यवहारस्याविद्यावद्विषयत्वसिद्धेः—"तथा ही"त्येतत् कथम् ? इत्याशङ्क्य तात्पर्यमाह—**नचेति ॥** "ब्राह्मणो यजेते"त्यादौ चिदचितोरैक्यावभासो न प्रतीयते, इत्याशङ्क्याऽऽह—**विधेरिति ॥** मदभिलषितसाधनमिदं कर्मेति प्रतिपत्तिसमर्थस्याधिकारिणः कर्तव्यविशेषोपदेशात् चेतनस्तावत् प्रतीयते, तस्य च वस्तुतो ब्राह्मणत्वाद्यसंभवादारोपितैक्यं प्रतीयत इत्याशयः । अध्याससद्भावं प्रसाध्य लक्षितं परामृशतीत्यभिधानात् प्रसाधनस्य पूर्वकालीनत्वं लक्षणस्योत्तरकालीनत्वं प्रतिभाति, तत्राह—**वृत्तेति ॥** लक्षितमध्याससद्भावं प्रसाध्य परामृशतीत्यन्वयः ॥ कस्य युष्मदर्थस्य कस्मिन्नस्मदर्थेऽध्यासः ? इति विमर्शे तस्योत्तरम्—"एतस्मिन्नि"ति शङ्का स्यात्, तत्राह—**भाष्यमिति ॥** "पुत्र-भार्यादिष्वि"त्यादिनाऽध्यासानुभवः प्रदर्श्यत इति शङ्का स्यात्, नच सोपपद्यते; अनुभवस्य पुरोक्तत्वादित्याशङ्क्याऽऽह—**आत्मानात्मनोरिति ॥ विभज्य प्रदर्शनायेति**—देहविशिष्टे साकल्यादीनामारोपः, देहस्य चान्तःकरणविशिष्टे, तस्य च प्राक्तनाहंकारसंस्कार-

## ऋजुविवरणम्

पदेनासंसार्यात्मतत्त्वसिद्धिर्भवति, नचैकरसत्वप्रदर्शने प्रयोजनमपीत्याशङ्क्याह—**कर्त्रन्वयेति ॥**

"तदेवे"ति व्यर्थम्; पूर्वप्रमाणैः साधितत्वात्, इत्याशङ्क्याह—**नच प्रत्यक्षेति ॥** आत्मशब्दस्य विशिष्टवाचित्वमुक्तम्, अस्मदर्थश्चाहंप्रत्ययिसंभिन्न इति, तदयुक्तम्; विशिष्टे प्रयोगाभावात्, प्रसिद्धार्थहानेनाप्रसिद्धार्थस्वीकारे प्रयोजनाभावात्,

## पञ्चपादिका

**सोऽप्युपहतोऽस्मीति संतप्यते । तदेवं प्रसिद्धव्यतिरेकस्यात्मनि मुख्य एवाध्यासो दृष्टः, किमु वक्तव्यम्—कृश-स्थूलाद्यभिमानस्य मुख्यत्वमिति कथयितुमाह—**अहमेव विकलः सकलो वेति बाह्यधर्मानात्मन्यध्यस्यतीति ॥ **बाह्येषु पूजादेर्धर्ममात्रस्यैव युष्मदर्थस्याध्यासः ॥ अस्मदर्थश्चाहंप्रत्ययिसम्भिन्न एवानिदंचिदंशो विषयः, न पुनः शुद्ध एवाहंप्रत्ययिन एवाध्यासेऽध्या-**सान्तरानास्कन्दितः । देहधर्मान् कृशत्वादीनिति **धर्मिणोऽपि धर्मशब्दस्तु मनुष्यत्वादिधर्मसमवायिन एवाध्यासः, न 'देहोऽहमि'ति कथयितुम् । तन्निमित्तश्च शास्त्रेणेतश्चेतश्च नियमः क्रियते ।** तथेन्द्रियधर्मान्मूकत्वादीनिति **धर्ममात्रम् ।**

तथाऽन्तःकरणधर्मान् कामादीनिति **धर्मग्रहणम् ।**

## पञ्चपादिकाविवरणम्

**करणर्धानित्यतः** प्राक्तनो ग्रन्थः स्पष्टार्थः । अत्रोत्तरोत्तराध्यासविशिष्टे पूर्वपूर्वाध्यास इति कथयितुमात्मन्यध्यस्यतीत्यात्म-शब्दार्थमाह—**अस्मदर्थश्चाहंप्रत्ययिसम्भिन्न इति** ॥ ननु शरीरमप्यध्यस्यते, न धर्मा एवेत्यत आह—**धर्मिणोऽपीति** । ग्रहणमित्य-ध्याहारः । धर्मशब्दस्तर्हि किमिति गृहीत इत्यत आह—**धर्मशब्दस्त्विति** ॥ शास्त्रीयव्यवहारमूलत्वेन प्राधान्याच्च धर्माध्यासस्य प्राधान्येन ग्रहणमित्याह—**तन्निमित्तश्चेति** ॥

ननु अन्तःकरणधर्माः कामादयो दण्ड्यादिवत् सम्बन्धितयाऽवगमान्नाध्यासमर्हन्तीति ? नेत्याह—**तथाऽन्तःकरण-धर्मान् कामादीनिति** ॥ तथाहि—सत्यन्तःकरणे भावादसति च सुषुप्ते तेषांमभावादन्तःकरणधर्माः कामादयः सम्बन्धितयाऽध्य-स्यन्ते, न तु तादात्म्येनेति भावः । ननु आत्मसमवायिनामेव कामादीनामन्तःकरणस्य चान्वय-व्यतिरेकौ करणविषयतयाऽन्यथा-सिद्धौ ? न; कार्यस्य कारणपरतन्त्रतानियमात् करणनियमाभावात्, करणकल्पनादुपादानकल्पनस्याभ्यर्हितत्वात्, चक्षुरादि-

## तत्त्वदीपनम्

विशिष्टात्मनीत्येवंरूपेण विभागप्रदर्शनार्येत्यर्थः ॥ **स्पष्टार्थ इति—**उत्सर्गतः स्पष्टार्थत्वम् । कानिचित्त्वस्पष्टपदानि व्याख्यायन्त इत्यर्थः । आत्मशब्दस्य प्रसिद्धार्थत्वात् किं तद्व्याख्यानेनेति ? तत्राह—**अत्रोत्तरेति** ॥ **अत्राध्यासानां मध्य इत्यर्थः** । पाठक्रमम-भिप्रेत्योत्तरेत्युक्तम् । देहधर्ममात्राध्यास उक्तः स नोपपद्यते, धर्मिणोऽप्यध्यासदर्शनादिति शङ्कते– **ननु शरीरमिति** ॥ अपेक्षितं पूरयति—**ग्रहणमिति** ॥ धर्म्यध्यासे धर्माध्यासस्यार्थसिद्धत्वात् तद्ग्रहणं वक्तव्यमिति शङ्कते—**धर्मशब्द इति** ॥ मनुष्यत्व-ब्राह्मणत्वादिकं विहाय केवलदेहेऽभिमानाभावेन प्राधान्यात्तद्ग्रहणमित्याह—**अत आहेति** ॥ तत्र हेत्वन्तरमाह—**शास्त्रीयेति** ॥

कार्य-कारणत्वादीनामात्मन्यारोपमङ्गीकृत्य सुखादीनामारोपमाक्षिपति—**नन्वन्तःकरणेति** ॥ "अहं सुखमि"त्यभि-मानाभावात् 'सुखी'ति च सद्भावान्न तदध्यास इत्यर्थः । कूटस्थासङ्गाद्वयात्मनि स्वतोऽसंभवात्, तेषामध्यस्तत्वमाह—**नेत्याहेति** ॥ कामादीनामन्तःकरणधर्मत्वे सिद्ध आत्मन्यध्यस्तता, तदेवासिद्धमित्याशङ्क्याऽऽह—**तथाहीति** ॥ 'इदं रजतमि'-त्यादिवत्तादात्म्येनानुपलम्भात् कथमध्यासः ? इत्याशङ्क्याऽऽह—**संबन्धितयेति** । यत्र तादात्म्याध्यासः, तत्र सामाना-धिकरण्यम्, अत्र च तदभावान्न सामानाधिकरण्यप्रथाऽपेक्ष्यत इत्यर्थः । अन्वय-व्यतिरेकयोरन्यथासिद्धिं शङ्कते—**नन्वात्मेति** ॥ अवश्यापेक्षितानपेक्षितयोरपेक्षितं समर्थनीयमिति न्यायात् करणस्यानपेक्षितत्वान्न तद्विषयत्वमित्याह—**न कार्येति** । करण-व्यापारस्य करणान्तरानपेक्षत्वान्न कार्यस्य करणनियम इत्यर्थः । करणव्यापारातिरिक्तकार्यस्य करणजन्यत्वमित्यनियममा-शङ्क्याह—**करणकल्पनादिति** ॥ **अभ्यर्हितत्वं** सत्ता-स्थितिहेतुत्वेनान्तरङ्गत्वम् । करणान्तरस्य क्लृप्तत्वाच्च न तद्विषयत्व-मित्याह—**चक्षुरादीति** ॥ करणान्तरस्य क्लृप्तत्वान्न करणविषयत्वं चेत्, तर्ह्युपादानान्तरस्य क्लृप्तत्वान्न तयोस्तद्गमकत्वमिति

## ऋजुविवरणम्

अथवा—प्रसिद्धार्थत्वात् किं व्याख्यानेन ? इत्याशङ्क्याभिप्रायमाह—**अत्रोत्तराध्यासेति** ॥ यद्यपि देहाद्यध्यासस्यैव वस्तुत उत्तरत्वम्; तथाऽपि भाष्यकारेण तत्पुरःसरमेवाध्यासस्य प्रदर्शितत्वात् तन्निर्देशाभिप्रायेणैवमुक्तम् । तन्निर्देशोऽपि समूलतार-तारतम्येन प्रतिपादनस्य सौकर्यापेक्षया; तस्यैव च व्यवहारप्रत्यासत्तेरिति मन्तव्यम् ।

ननु नान्तःकरणधर्मत्वे कामादीनां प्रमाणमस्ति; कथं सिद्धवदुपादानम् ? इत्याशङ्क्याह—**तथाहि सत्यन्तःकरण इति** ॥ भवत्वन्तःकरणधर्मत्वम्, तथाऽपि कथमात्मन्यध्यस्तता ? सम्बन्धमात्रप्रतीतेः, अध्यासे हि तादात्म्यप्रतीत्या भवित-व्यमित्याशङ्क्याह—**सम्बन्धितयेति** ॥ ननु अन्यथासिद्धावन्वय-व्यतिरेकौ न धर्मत्वसाधकावित्याह—**नन्वात्मसमवायिनामिति** ॥ समवायनिमित्तः सम्बन्धावभासः, नाध्यासनिमित्त इति भावः । **कार्यस्येति** ॥ कामादीनामन्त.करणपारतन्त्र्यं दृश्यते;

### पञ्चपादिका

**अन्तःकरणमित्यहंप्रत्ययिनो विज्ञानशक्तिभागोऽभिधीयते । तस्य धर्माः कामादयः ।**

एवमहंप्रत्ययिनमिति **धर्मिग्रहणम्** । प्रत्ययाः कामादयोऽस्येति प्रत्ययी, अहं चासौ प्रत्ययी चेत्यहंप्रत्ययी ॥ तमशेषस्वप्रचारसाक्षिणि प्रत्यगात्मन्यध्यस्येति ॥ **स्वशब्देनाहङ्कारग्रन्थिः संसारनृत्यशालामूलस्तम्भोऽभिधीयते । तस्य प्रचारः काम-सङ्कल्प-कर्तृत्वादिरनेकविधः परिणामः, यन्निमित्तं ब्रह्मादिस्थावरान्तरेषु प्रदीप्तशिरा इव परवशो जन्तुर्बम्भ्रमीति । तं प्रचारमशेषमसङ्गित्तयाऽविकारित्वेन च हानोपादानशून्यः साक्षादव्यवधानमवभासयति चितिधातुः । स एव देहादिष्विदन्तया बहिर्भावमापद्यमानेषु प्रातिलोम्येनाञ्चतीवोपलक्ष्यते, इति प्रत्यगुच्यते, आत्मा च; निरुपचरितस्वरूपत्वात् तत्राध्यस्य** । तं च प्रत्यगात्मानमिति ॥

### पञ्चपादिकाविवरणम्

करणान्तरभावाच्च । ननु 'अहंकामी'त्यादिप्रत्यक्षप्रत्ययादात्माऽप्युपादानान्तरमस्तीति चेत् ? न; दण्ड्यादिवत् सम्बन्धिप्रत्ययात्, उपादानत्वे तादात्म्याद् 'अहं कामः' इति स्यात् । तस्मान्न्यायसहकृतान्वय-व्यतिरेकावन्तःकरणस्यैव कामाद्युपादानत्वं कल्पयत इति भावः । **अन्तःकरणमित्यहंप्रत्ययिन इत्यादिः स्पष्टार्थः** ॥

'अशेषस्वप्रचारसाक्षिणि' 'प्रत्यगात्मनी'तिपदद्वयं व्याचष्टे—**स्वशब्देनाहङ्कारग्रन्थिरित्यादिना** ॥ साक्षिशब्दार्थमाह—**असङ्गित्तयाऽविकारित्वेनेत्यादिना** ॥ कथं पुनः सर्वान्तरस्यात्मनः प्रत्यगञ्चनमिति ? देहादिषु विप्रसृतचैतन्यस्य चित्तसमाधानविषयेऽन्तरनुप्रवेशभ्रमापेक्षयेत्याह—**स एव देहादिष्वदन्तयेति** ॥

### तत्त्वदीपनम्

शङ्कते—**नन्वहमिति** ॥ 'मृद् घटः' इत्यादिवदात्मतादात्म्येनानुपलम्भान्न तस्योपादानत्वमित्याह—**न दण्ड्यादिवदिति** ॥ सामानाधिकरण्याभावेनात्मनोऽनुपादानत्वेऽन्तःकरणस्यापि नोपादानत्वम्; सामानाधिकरण्याभावस्याविशेषात्, इत्याशङ्क्याऽऽह—**तस्मादिति** ॥ सामानाधिकरण्याभावस्योभयत्राविशेषेऽप्यात्मनः कूटस्थादिरूपत्वान्न तत्परिणामत्वं कामादीनाम्, अन्तःकरणस्य च तद्वैपरीत्यादुपादानत्वं युक्तमित्यर्थः । अन्तःकरणस्य चिदचित्संवलितत्वात् तद्ग्रहणशङ्कायामन्तःकरणमित्याद्युक्तम्, तच्च स्पष्टार्थमित्याह—**अन्तःकरणमिति** ॥

'अशेषस्वप्रचारसाक्षिणि' 'प्रत्यगात्मनी'त्यनयोः स्पष्टार्थत्वान्न व्याख्यानापेक्षेत्याशङ्क्य, व्यावर्त्यशङ्कासद्भावेन, व्याख्यानमपेक्षितमित्याशयेनाह—**अशेषस्वप्रचारेति** ॥ स्वशब्देनात्मोच्यत इति शङ्कानिराकरणार्थं स्वशब्दव्याख्यानमिति द्रष्टव्यम् । प्रचरणमनेनेति प्रचारः कामादिः, न तु गमनादिरित्यभिप्रायेण प्रचारशब्दस्य व्याख्यानम् । असङ्गित्वादेः प्राक् सिद्धत्वात्तदभिधानं व्याख्योपयोगितयेत्याह—**साक्षीति** ॥ (टीकायाम्) **असङ्गित्तयेत्यादेरयमर्थः**—साक्षादेव भासयतीति साक्षी । परिणामद्वारा भासकत्वं निराकर्तुमाह—**हानेति** ॥ समावस्थाया हानम्, विषमावस्थाया उपादानम्, ताभ्यां हीन इत्यर्थः । तत्र हेतुमाह—**अविकारित्वेनेति** ॥ तदुपपादयति—**असङ्गित्तयेति** ॥ 'प्रत्यागात्मनी'त्यत्र प्रत्यक्त्वमुक्तम्, तदाक्षिपति—**कथं पुनरिति** । अन्तर्मुखतया गमनं प्रत्यगञ्चनम्, तत् सर्वान्तरस्य व्याहतमित्यर्थः । नौयानविभ्रमात् नगेषु गतिकल्पनवच्चित्तवृत्तिगमनापेक्षया गमनमित्याह—**देहादिष्विति** ॥

### ऋजुविवरणम्

तदन्तःकरणकार्यत्वे सति संभवति; कार्यस्योपादानपारतन्त्र्यनियमात्, करणपारतन्त्र्यनियमाभावादित्यर्थः । ननु अन्तःकरणसंयोगस्यासमवायिकारणत्वादसमवायिकारणनाशस्यापि नाशहेतुत्वात्अन्तःकरण पारतन्त्र्यमन्यथासिद्धमित्याशङ्क्याह—**करणकल्पनादिति** ॥ ननु करणमप्यभ्यर्हितमेव, तेन विना कार्यादर्शनादित्याशङ्क्याऽऽह—**चक्षुरादिकरणान्तरेति** ॥ नाभ्यर्हितत्वादुपादानत्वकल्पना; उपादानान्तरप्रतीतेः, इति चोदयति—**नन्वहं कामीति** ॥ नच सम्बन्धमात्रनिबन्धनत्वम्; उपादानान्तरसिध्यायत्तत्वात्, तस्य चैतदन्यथासिद्धिसापेक्षत्वादिति भावः ।

ननु अन्तःकरणेन तादात्म्यप्रतीत्यभावात् कथं तदुपादानत्वमपि कामादीनाम् ? मैवम्; "कामः सङ्कल्पो विचिकित्से"त्यादिश्रुतौ "सर्वं मन एवे"ति सामानाधिकरण्यात् । "स्वप्रचारसाक्षिणी"त्याक्षिपति—**ननु न साक्षिवेद्यमिति** ॥ अयं भावः—नान्तःकरणमध्यस्तम्, कामादिधर्मकं वा । साक्षिवेद्यत्वे हि तत्राध्यस्तत्वम्, कथञ्चिदन्वय-व्यतिरेकौ न्यायानुगृहीतौ कामाद्युपादानविषयाविति च वक्तुं शक्यते । क्रमरूपकार्यान्यथानुपपत्त्या तु कल्प्यमानं करणत्वेनानध्यस्तत्वेनैव कल्प्यते, इति तद्ग्राहकप्रमाणविरोधादन्वयव्यतिरेकावपि करणविषयाविति । ननु कारणं तावत्कल्पयितव्यम्, तच्चान्तःकरणमात्मा वेति

## पञ्चपादिकाविवरणम्

ननु न साक्षिवेद्यमन्तःकरणम्, किन्त्वात्मेन्द्रिय-विषयेषु समवहितेषु ज्ञानोत्पादक्रमसामर्थ्यगम्यमिति ? न; अन्यथासिद्धत्वात्; आत्मन एव क्रमज्ञानजननसामर्थ्यकल्पनयाऽन्यथासिद्धः क्रमज्ञानोत्पादः। द्रव्यान्तरतत्क्रमसामर्थ्यकल्पनागौरवाच्च वरं प्रसिद्धस्यैवात्मनः क्रमसामर्थ्यकल्पनालाघवम्। ननु नार्थापत्त्या मनः कल्पयामि, येनान्यथासिद्धिः स्यात्, किन्त्वनुमानेन; तथाहि—आत्मनः सर्वविषयसन्निधाने क्रमकार्योत्पादः, कर्तुः क्रमकारिसाधारणकरणापेक्षः, सन्निहितबहुविषयस्य कर्तुः क्रमकार्योत्पादत्वात्, सन्निहितबहुच्छेद्यस्य देवदत्तस्य कुठारसापेक्षक्रमच्छेदनवत्—इति ? नैतत्सारम्; मनसः प्रतीन्द्रियसंयोगव्यापारे क्रमवर्तिनि साधारणकारणान्तरशून्येऽनैकान्तिकत्वात्, फलस्य च वृक्षात्पततः क्रमवर्तिन्याकाशसंयोगे कुठारादिव्यापारे चानैकान्तिकत्वात्, इन्द्रियाणां प्रतिविषयसंयोगव्यापारे चानैकान्तिकत्वाच्च।

अथ मतम्—विज्ञानादि विशेषगुणजन्म, स्वाश्रये द्रव्यान्तरसंयोगलक्षणासमवायिकारणापेक्षम्, नित्यद्रव्यविशेषगुण-

## तत्त्वदीपनम्

अन्तःकरण-तद्धर्माणां साक्षिवेद्यत्वमुक्तम्, तदाक्षिपति—**ननु न साक्षीति**॥ मनः, परोक्षम्, अणुत्वात्, परमाणुवत्, साक्षिणोऽसंप्रतिपत्तेश्चेत्यर्थः। कुतस्तर्हि तत्प्रथेत्याह—**किन्त्विति**॥ अर्थापत्त्येत्याह—**आत्मेति**॥ क्रमेण ज्ञानोत्पादः करणक्रमपुरःसर इति सामान्यव्याप्तिः। नचात्मेन्द्रिय-विषयसमवधानापेक्षया क्रमोपपत्तिः, इति व्याप्तिसामान्य-व्यापकविशेषाभावोपलब्धिप्रसूतार्थापत्तिरन्तःकरणे प्रमाणमित्यर्थः। व्यापकविशेषाभावोऽसिद्ध इत्याह—**नान्यथेति**॥ अन्यथासिद्धिमेवाह—**आत्मन इति**॥ अन्यथैवोपपत्तिमाह—**द्रव्यान्तरेति**। अप्रसिद्धद्रव्यान्तरम्, तत्र क्रमजननसामर्थ्यं चेति द्वयं कल्प्यं तव, मन्मते धर्मिणः प्रसिद्धत्वात् तत्र क्रमजननसामर्थ्यमात्रं कल्प्यमिति लाघवमित्यर्थः॥ अनुमानं मनसि प्रमाणमिति शङ्कते—**नन्विति**॥ कार्योत्पाद इत्युक्ते एकक्षणवर्त्यनेककार्योत्पादस्य क्रमकारिकारणापेक्षत्वाभावात्तत्साधने बाधः स्यात्, तदर्थं—**क्रमेति**॥ विषयासंनिधानादन्यथासिद्धिं निराकर्तुं—**सर्वविषयेति**॥ "करणापेक्षः" इत्युक्ते चक्षुरादिना सिद्धसाध्यता, तदर्थं विशिनष्टि—**साधारणेति**॥ एतावत्युक्ते बाह्येन्द्रियसंयोगलक्षणकरणाऽपेक्षया सिद्धसाध्यत्वम्, तदर्थम्—**क्रमकारीति**॥ ईश्वरप्रयत्नव्यवच्छेदार्थम्—**कर्तुरिति** विशेषणम्। ईश्वरप्रयत्नस्य कर्तृव्यापारागोचरत्वाद् व्यवच्छेद इत्यर्थः। "कार्योत्पादत्वादि"त्युक्ते एकक्षणवर्तिकार्योत्पादे व्यभिचारः स्यात्, तदर्थम्—**क्रमेति** विशेषणम्, सामग्रीक्रमापेक्षया ज्ञायमानक्रमकार्योत्पादनिरासार्थम्—**सन्निहितेति** विशेषणम्॥ करणव्यापारनिरासार्थम्—**कर्तुरित्युक्तम्**॥ व्यभिचारित्वान्नायं हेतुः साधुरित्याह—**नैतत्सारमिति**॥ किं कर्तृमात्रम्? उत प्रधानकर्ता? नाद्य इत्याह—**मनस इति**। द्वितीये क्रियायाः संयोगादिजनने करणान्तरनैरपेक्ष्यवन्नैरपेक्ष्यमित्यर्थः। नच—संयोगोत्पादेऽपीश्वरप्रयत्नापेक्षणान्न व्यभिचार इत्यपि—शङ्क्यम्; कर्तृव्यापारगोचरस्य करणत्वाभ्युपगमात्, ईश्वरप्रयत्नस्य चास्मद्व्यापाराविषयत्वात्। अन्यथेश्वरप्रयत्नेन सिद्धसाध्यता दुर्वारा स्यादित्यर्थः। व्यभिचारस्थलान्तरमाह—**फलस्य चेति**॥ नच—कुठारव्यापारे कर्तुः क्रमकार्योत्पादकत्वमित्यपि—शङ्क्यम्; स्वव्यापारं प्रति करणस्य कर्तृत्वोपगमादित्यर्थः॥

अनुमानान्तरमुत्थापयति—**अथ मतमिति**॥ धर्मिणि विशेषगुणपदं स्वरूपपरम्। "कारणापेक्षमि"त्युक्ते समवायिकारणापेक्षतया सिद्धसाध्यत्वम्, तदर्थम्—**असमवायीति**॥ यत्किंचिदसमवायिकारणपुरःसरतयाऽर्थान्तरमपाकर्तुमाह—

## ऋजुविवरणम्

विशेषः कथमिति? तत्राह—**द्रव्यान्तर-तत्क्रमसामर्थ्येति**॥ साधारणकारणापेक्ष इत्युक्ते सिद्धसाध्यता, तदर्थमाह—**क्रमकारीति**॥ एवमपि कर्तरि सिद्धसाध्यता, तदर्थम्—**कर्तुरिति**॥ क्रमकार्योत्पादत्वादित्येव हेतौ करणकार्येऽनैकान्तिकं स्यात्, तदर्थम्—**कर्तुरिति**॥ एवमपि विषयासन्निधानेऽपि क्रमसंभवादनैकान्तिकं स्यात्, तदर्थम्—**सन्निहितेति** पदम्। मनसः क्रमेणेन्द्रियसंयोगेऽदृष्टस्य करणत्वं वक्तुं शक्यत इति दृष्टान्तान्तरमाह—**फलस्येति**॥ फलसंयोगे च गुरुत्वमेव कारणं वक्तुं शक्यते, तदर्थमन्यदुदाहरति—**कुठारादिव्यापार इति**॥ यद्वा, अदृष्टस्यात्रापि संभवात् तद्व्यतिरिक्तस्यैव साध्यत्वम्, तत्र च दृष्टान्तसमुच्चय इति।

जन्यत्वे हेतावुदकगतकर्मण्यनैकान्तिकत्वम्, तदर्थमाह—**गुणत्वे सतीति**॥ गुणत्वे सति संयोगजन्यत्वं संख्यादेरप्यस्ति, तदर्थम्—**विशेषगुणत्वम्**॥ एवमपि रूपादिष्वनैकान्तिकः; तत्र संयोगस्यासमवायिकारणत्वाभावात्, तदर्थमाह—

### पञ्चपादिकाविवरणम्

जन्मत्वात्, अग्निसंयोगजन्यपरमाणुगतपाकजलौहित्यवदित्यनुमानम्; यत् तद् द्रव्यान्तरम्, तन्मनः—इति ? नैतत्; शरीरेन्द्रियसंयोगस्य सिद्धत्वाद् द्रव्यान्तरसंयोगेऽनुमानायोगात् स्वप्नस्मृत्यादिज्ञानेष्वपि शरीरादिसंयोगानपायाद् द्रव्यान्तरसंयोगकल्पनानुपपत्तेः । तस्मान्नानुमानार्थापत्ती मनसि प्रमाणम् । आगमाच्च प्रागेव मनः सिद्धम् । नचैन्द्रियकत्वम्; अणुपरिमाणे परमाणुवदयोग्यत्वात्, अनन्तपरिमाणे मनसि युगपत् संयोगाद् युगपज्ज्ञानजन्मप्रसङ्गात्, मध्यमपरिमाणे च मनसि स्वप्नावस्थायामिन्द्रियाभावेऽपि मनोदर्शनाद् 'मम मनोऽन्यत्र गतमि'त्यनुभवाच्च साक्षिवेद्यमेव मन इति ॥

### तत्त्वदीपनम्

**संयोगेति** ॥ यत्किंचित्संयोगलक्षणासमवायिकारणापेक्षत्वव्यावृत्त्यर्थम्—**स्वाश्रय इति** ॥ येन द्रव्यान्तरेण संयोगः, तद् मन इत्यभिसन्धिः । समवायिकारणप्रत्यासन्नमसमवायिकारणम्, प्रत्यासत्तिश्च द्वेधा—कार्यैकार्थसमवायः, कारणैकार्थसमवायश्चेति । अत्र च ज्ञानादिलक्षणकार्येणैकस्मिन्नात्मनि समवेतत्वात् संयोगस्य समवायिकारणप्रत्यासन्नत्वमिति द्रष्टव्यम् । "जन्मत्वादि"त्युक्ते संयोगोत्पादकाद्यकार्यजन्मनि व्यभिचारः, तदर्थम्—**गुणेति** ॥ विभागगुणजन्मव्यावृत्त्यर्थं—**विशेषेति** ॥ पटादिसमवेतशौक्ल्यादिजन्मव्यावृत्त्यर्थम्—**नित्यद्रव्येति** ॥ "नित्यद्रव्यगुणजन्मत्वादि"त्युक्ते परमाणुगतसंख्यादौ व्यभिचारः, तदर्थम्—**विशेषेति** ॥ तथाऽपि कथं मनसः सिद्धिः ? इत्याशङ्क्य परिशेषादित्याह—**यत्तदिति** ॥ परिशेषासिद्धयोत्तरयति—**नैतदिति** ॥ शरीरेन्द्रियैः संयोगस्येत्यर्थः । विभागज-शब्दजन्मनि संयोगासमवायिकारणानपेक्षे व्यभिचारश्चेत्यर्थः । सर्वत्र शरीरादेः संयोगस्यासमवायिकारणत्वं वक्तुं युक्तम्; शरीरेन्द्रियव्यापाराभावेऽपि स्वप्ने ज्ञानजननदर्शनात्; ततश्च द्रव्यान्तरसंयोगस्यासमवायित्वमित्याशङ्क्याऽऽह—**स्वप्नेति** ॥ आत्मनः सर्वमूर्तद्रव्यसंयोगितया तदाऽपि संयोगस्य भावात् कथं द्रव्यान्तरकल्पनमित्यर्थः । सुखसाक्षात्कारः, इन्द्रियजः, साक्षात्कारत्वात् रूपादिसाक्षात्कारवत्, सुखाद्युपलब्धिः करणजन्या कार्यत्वाच्छिदिक्रियावदित्यनुमानमिति चेत् । मैवम् । किं साक्षात्कारमात्रस्य धर्मित्वं हेतुत्वं च ? उतानीश्वरसाक्षात्कारस्य ? आद्ये किमीश्वरसाक्षात्कारस्यापि धर्मित्वम् ? उत न ? धर्मित्वे बाधः, इतरत्र व्यभिचारः । द्वितीये साक्षिवेद्यत्वसंभवादप्रयोजकत्वम् । द्वितीये हेतौ यत् कार्यम्, तत्कारणजन्यमिति न नियमः; करणव्यापारे व्यभिचारादित्यर्थः ॥ अस्तु तर्ह्यागमो मनसि प्रमाणमित्यत आह—**आगमादिति** ॥ आगमज्ञानविधुरबालगोपालादीनामपि मनःसिद्धेर्न तत्सिद्धत्वमित्यर्थः । परिशेषात् साक्षिसिद्धत्वं मनसो दर्शयितुमैन्द्रियकत्वं निरस्यति—**नचेति** ॥ मनसः किमणुत्वम् ? उतानन्तत्वम् ? अथवा मध्यमपरिमाणत्वम् ? इति विकल्प्य क्रमेण दूषयति—**अणुपरिमाण** इत्यादिना ॥ मा भून्मन इत्यपि न शङ्क्यमित्याह—**मम मन इति** ॥ कथं तर्हि तत्सिद्धिरिति ?अत आह—**साक्षीति** ॥ मनः, अपरोक्षम्, बोधासमवायिकारणाधारत्वात्, आत्मवत् । तत्र चैन्द्रियकत्वेन स्वप्रकाशतया वाऽऽपरोक्षत्वानुपपत्तेरपरोक्षसाक्ष्यध्यस्तया तत्सिद्धिरित्यर्थः ॥

"यदि युष्मदर्थस्ये"त्यत्रेतरेतराध्यासे दूषणमुक्तम्, तत् कस्मात् ? इतरेतराध्यासस्यैवादर्तव्यत्वादित्याशङ्क्योत्तर-

### ऋजुविवरणम्

**नित्यद्रव्येति** ॥ अनयैव दिशा प्रतिलोमतो विशेषणोपयोगो ज्ञेयः । कथं शरीरादिसंयोगस्यासमवायिकारणत्वम् ? शरीरव्यापाराभावेऽप्युत्पद्यमानस्वप्नादिज्ञानेषु द्रव्यान्तरसंयोगकल्पनाप्रसङ्गात्, इत्याशङ्क्याऽऽह—**स्वप्नस्मृत्यादिज्ञानेष्विति** ॥ तर्हि मनःसद्भाव एव निष्प्रमाणकः, इत्याशङ्क्याऽऽह—**आगमाच्चेति** ॥ **प्रागहंकारटोकायामित्यर्थः** । अथवा, मा भूदनुमानार्थापत्तिगम्यत्वम्, आगमगम्यत्वं तु भविष्यतीत्याशङ्क्याऽऽह—**आगमाच्च प्रागेवेति** ॥ आगमव्यवहारहीनानामपि तत्प्रतीतिदर्शनादिति भावः । तर्हि प्रत्यक्षत्वम्, इत्याशङ्क्याऽऽह—**नचैन्द्रियकत्वमिति** ॥ **अणुपरिमाण इति** ॥ तन्मताभिप्रायेण सौक्ष्म्याभिप्रायेण वा । मा भूद् अणुत्वम्, परिमाणान्तरमेव स्यादित्याशङ्क्य परममहत्परिमाणं निराकरोति—**अनन्तपरिमाण इति** ॥ मध्यमपरिमाणपक्षेऽपि नैन्द्रियकत्वम्; इन्द्रियाभावेऽपि स्वप्ने प्रतीतिदर्शनादित्याह—**मध्यमपरिमाणे चेति** ॥ ननु मनसः प्रतीतिरेव नास्ति, कथं सिद्धवदिन्द्रियव्यतिरेकोऽभिधीयते ? कथं वा साक्षिवेद्यत्वम् ? इत्याशङ्क्याऽऽह—**मम मनोऽन्यत्रेति** ॥

ननु नोभयोरध्यस्तत्वम्; एकतराध्यासेन व्यवहारसिद्धेः, तथोभयोरध्यस्तत्वे विशेषावभासाभाव उक्तः, तथोभयोरपि मिथ्यात्वं चेत्याशङ्क्याभिप्रायमाह—**अयमर्थः एकतराध्यास इति** ॥ ननु अगृहीतविशेषस्यैव वस्तुनोऽधिष्ठानत्वं दृष्टम्, अतस्तद-

### पञ्चपादिका

यदि युष्मदर्थस्यैव प्रत्यगात्मन्यध्यासः स्यात्, प्रत्यगात्मा न प्रकाशेत। नहि शुक्तौ रजताध्यासे शुक्तिः प्रकाशते। प्रकाशते चेह चैतन्यमहङ्कारादौ। तथा यदि चैतन्यस्यैवाहङ्कारादावध्यासो भवेत्, तदा नाहङ्कारप्रमुखः प्रपञ्चः प्रकाशेत। तदुभयं मा भूदित्यनुभवमेवानुसरन्नाह—तं च प्रत्यगात्मानं सर्वसाक्षिणं तद्विपर्ययेणान्तःकरणादिष्वध्यस्यतीति॥ नात्र विवदितव्यम्—इतरेतराध्यासे पृथगवभासनान्न मिथ्या, गौणोऽयमिति; तथाऽनुभवाभावान्मुख्याभिमानः। नहि दृष्टेऽनुपपन्नं नाम॥

ननु अन्तःकरण एव प्रत्यगात्मनः शुद्धस्याध्यासः, अन्यत्र पुनश्चैतन्याध्यासपरिनिष्पन्नापरोक्ष्यमन्तःकरणमेवाध्यस्यते; अत एव—"तद्विपर्ययेण विषयिणस्तद्धर्माणां च विषयेऽध्यासो मिथ्येति भवितुं युक्तमि"त्युक्तम्,

### पञ्चपादिकाविवरणम्

'तं च प्रत्यगात्मान' मित्यात्मनोऽन्तःकरणादिष्वध्यासो दर्शितः; तदयुक्तम्; इतरेतराध्यासे द्वयोरध्यस्यमानत्वान्मिथ्यात्वापातात्, द्वयोरप्यधिष्ठानत्वे द्वयोर्विशेषावभासो न स्यादिति, तत्राह—**यदि युष्मदर्थस्यैवेति**॥ **अयमर्थः**—एकतराध्यासेऽन्यतरस्य सामान्यावभासोऽन्यतरस्यैव विशेषावभासश्च स्यात्। अत्र चिज्जडरूपेण द्वयोर्विशेषावभासो द्वयोरितरेतराध्यासं गमयति; अध्यासे विशेषावभासस्याध्यस्यमानताप्रयुक्तत्वात्। नच द्वयोरपि मिथ्यात्वापातः; चेतनस्याचेतने स्वरूपाध्यासाभावात्, संसृष्टतयैवाध्यासात्। नच विशेषावभासादधिष्ठानत्वविरोधः; अधिष्ठानधर्मतया विशेषस्याप्रतीतेः, अधिष्ठानान्तरधर्मतया प्रतीतेरिति। ग्रन्थस्तु स्पष्टार्थः। ननु द्वयोः विशेषात्मनाऽवभासमानयोर्नाध्यासः सम्भवति, सामानाधिकरण्यमस्ति चेत्, गौणमिति? नेत्याह—**नात्र विवदितव्यमिति**॥ ननु विशेषावभासेऽध्यासविरोध उक्तः नेत्याह—**नहि दृष्टेऽनुपपन्नमिति**॥

तद्विपर्ययेणान्तःकरणादिष्वित्यादिशब्दो विरुद्ध इत्याह—**ननु अन्तःकरण एव प्रत्यगात्मन इति**॥ अन्तःकरणविशिष्टस्यैव बहिरध्यास इति कुत इति? तत्राह—**अत एव तद्विपर्ययेणेति**॥ ननु तस्मिन् भाष्ये विशिष्टस्यैवाध्यासः कथमुक्त

### तत्त्वदीपनम्

ग्रन्थस्य व्यावर्त्यामाशङ्कामाह—**तं चेत्यादिना**॥ द्वयोरध्यस्यमानत्वप्रयुक्तं दोषमभिधायाधिष्ठानत्वप्रयुक्तं दोषमाह—**द्वयोरपीति**॥ सामान्यत आकलितस्य विशेषतोऽनाकलितस्य चाधिष्ठानत्वनियमादत्र चोभयोश्चिज्जडरूपेण विशेषतः प्रसिद्धेर्नाधिष्ठानत्वमित्यर्थः॥ मिथ्यात्वापातान्नोभयोरध्यस्तत्वमधिष्ठानत्वं चेति यदुक्तम्, तत्राह—**अयमर्थ इति**॥ किं मिथ्यात्वापातादन्यतरस्याध्यस्तत्वमधिष्ठानत्वं च सिषाधयिषितम्? उतेतरेतराध्यासे मिथ्यात्वादिप्रसङ्गस्य कः समाधिरिति? तत्राद्यं दूषयति—**एकतरेति**॥ अस्तु को दोष इति? अत्राह—**अत्रेति**॥ तत्र हेतुमाह—**अध्यास इति**॥ द्वितीयं दूषयति—**नचेति**॥ विशेषत आकलितत्वादनधिष्ठानत्वमिति यदुक्तं तत्राह—**न च विशेषेति**॥ किमधिष्ठानगततया विशेषस्फुरणमधिष्ठानत्वविरोधि? उत विशेषस्फुरणमात्रम्? इति विकल्प्याद्येऽसिद्धिमाह—**अधिष्ठानेति**॥ द्वितीयं दूषयति—**अधिष्ठानान्तरेति**॥ विशेषस्फुरणमात्रस्याधिष्ठानत्वविरोधे रजतत्वलक्षणविशेषस्फुरणादिदमोऽधिष्ठानत्वं न स्यादित्यर्थः॥ एवं समुदायार्थमभिधायोक्तमर्थं टीकारूढं कर्तुं पुनश्चोदयति—**ननु द्वयोरिति**॥ 'अहं मनुष्यः' इति सामानाधिकरण्यस्योपलम्भात् कथं तन्निरसनम्? इति शङ्कते—**सामानाधिकरण्यमिति**॥ गौणत्वानुभवाभावान्न गौणत्वमित्याह—**नेत्याहेति**॥ गौणत्ववदध्यासोऽप्यसंगत इति शङ्कते—**ननु विशेषेति**॥ स्वगततया विशेषस्यास्फुरणान्न विरोध इत्याह—**नेत्याहेति**।

विशिष्टस्यान्यत्राध्यासे को दोषः? इत्याशङ्क्य दोषमाह—**तद्विपर्ययेणेति**॥ **"अन्तःकरणविशिष्टस्ये"**त्यारभ्य **"यद्यपी"**त्यतः प्राक्तनो ग्रन्थः स्पष्टार्थः। "सत्यमि"त्यत्र विशिष्टस्याध्यासाङ्गीकरणे कथं केवलस्याध्यस्तत्वाभिधानम्? तत्राह—**यद्यपीति**॥

### ऋजुविवरणम्

भावान्नाधिष्ठानत्वमित्याशङ्क्याह—**नच विशेषावभासादिति**॥ "तस्यैवे"त्यत्र "सचितिकमि"त्युपन्यस्तस्यात्मनो निर्देशः; आत्मन इति विशेष्यत्वप्रतीतेः, नच तद् युक्तम्; अध्यस्यमानस्याधिष्ठाने कार्यायोगात्, व्यर्थं च तत्कीर्तनमित्याशङ्क्याह—**तस्यैव विषयस्येति**॥ "तस्यैवे"त्यनेन यत्रेत्युपात्तस्यात्माध्यासाधिष्ठानस्य निर्देश इत्युक्तम्। **स एवात्मेति**॥ अहंकार एवात्मेति प्रतिपत्तिः स्यात्, नतु देहादिरिति। तथा सति देहादिष्वहंकारविप्रतिपत्तिः स्यात्? देहो वाऽहम्? इन्द्रियं वेति? एतावत्त्वाच्च प्रयोजकस्येत्यर्थः।

**पञ्चपादिका**

**अन्यथा चैतन्यमात्रैकरसस्य कुतो धर्माः येऽध्यस्येरन् ? सत्यमाह भवान्; अपि त्वन्यत्रान्तःकरणं सचितिकमेवाध्यस्यमानं यत्राध्यस्यते, तस्यैवात्मनः कार्यकरत्वमापाद्य स्वयमविद्यमानमिव तिरस्कृतं तिष्ठति चिद्रूपमेव सर्वत्राध्यासे, स्वतः परतो वा न विशिष्यते, तेनोच्यते—**तं च प्रत्यगात्मानं सर्वसाक्षिणं तद्विपर्ययेणान्तःकरणादिष्वध्यस्यतीति ॥ **अत एव बुद्ध्यादिष्वेव चिद्रूपमनुस्यूतमुत्प्रेक्षमाणा बुद्धि-मनः-प्राणेन्द्रिय-शरीरेष्वेकैकस्मिंश्चेतनत्वेनाहङ्कर्तृत्वं योजयन्तो भ्राम्यन्ति ।**

एवमयमनादिरनन्तो नैसर्गिक इति निगमयति ॥ **ननु उपन्यासकाले "नैसर्गिकोऽयं लोकव्यवहार" इति लोकव्यवहारो नैसर्गिक उक्तः, कथमिहाध्यासो निगम्यते; 'अनादि'रिति चाधिकावापः ? अत्रोच्यते; तत्रापि प्रत्यगात्मन्यहङ्काराध्यास एव नैसर्गिको लोकव्यवहारोऽभिप्रेतः; स च प्रत्यगात्माऽनादिसिद्धः, तस्मिन् नैसर्गिकस्यानादित्वमर्थसिद्धम् । अतः प्रक्रमानुरूपमेव निगमनम्, नचाधिकावापः ॥**

**ननु भवेदनादिः, अनन्तः कथम् ? यदि स्यात्, तत्प्रहाणाय कथं वेदान्ता आरभ्यन्ते ? अन्तवत्त्वेऽपि तर्हि कथम्, स्वतोऽन्यतो वा तत्सिद्धेः ? तस्मादनन्तस्य प्रहाणाय वेदान्ता आरभ्यन्त इत्युक्ते, अर्थाद् एष एव प्रहाणहेतुः, असत्यस्मिन्ननन्त इति निश्चीयते ।** मिथ्याप्रत्ययरूप इति रूपग्रहणं लक्षणतस्तथा रूप्यते, न व्यवहारत इति **दर्शयितुम् ।** कर्तृत्व-भोक्तृत्वप्रवर्तनः इत्यनर्थहेतुत्वं दर्शयति हेयतासिद्धये । **तेन कर्तुर्भोक्तुश्च सतो मिथ्याज्ञानं दोषप्रवर्तनमिति येषां मतम्, तन्निराकृतं भवति ।** सर्वलोकप्रत्यक्ष इति **"देहेन्द्रियादिष्वहंममाभिमानहीनस्य"**त्युपन्यस्य **"नहीन्द्रियाण्यनुपादाये"**त्यादिना **योऽनुभवो मिथ्यात्वसिद्धयेऽनुसृतस्तं निगमयति ॥**

**एवं तावत्सूत्रेणार्थादुपात्तयोर्विषय-प्रयोजनयोः सिद्धये जीवस्याब्रह्मस्वरूपत्वमध्यासात्मकमुपदर्श्य, अस्यानर्थहेतोः**

**पञ्चपादिकाविवरणम्**

इति ? धर्मग्रहणसामर्थ्यादित्याह—**अन्यथा चैतन्यमात्रैकरसस्येति** ॥ यद्यपि चैतन्यस्य विषयेऽध्यासेऽन्तःकरणमुपाधिः, तथाऽपि चैतन्यमेव विषयावच्छिन्नं प्रकाशः, तेनान्तःकरणमिति प्रतिभासाभिप्रायेणोक्तमित्याह—**सत्यमाह भवानिति** ॥ तस्यैव विषयस्यात्मानं प्रति कार्यकरत्वमापाद्येत्यर्थः । ननु बहिरप्यहङ्कारस्य चैतन्यवत्सम्बन्धोऽवभासते—'अहं मनुष्यः' इत्यादावित्यत आह—**अत एव बुध्यादिष्विति** ॥ चिन्मात्रस्यावगमादेव सर्वदार्थेष्वात्मत्वविभ्रम इत्यर्थः, अन्यथाऽहङ्कारस्य चैतन्याव्यतिरेकात् स एवात्मेति प्रतिपत्तिः स्यादिति ।

**ननु उपन्यासकाले"नैसर्गिकोऽयं लोकव्यवहारः"** इत्यारभ्य **"कर्तृत्व-भोक्तृत्वप्रवर्तकः"** इत्यतः प्राक्तनो ग्रन्थः स्पष्टार्थः । अत्र सांख्यव्यतिरिक्ताः सर्वे वादिनः स्वत एव कर्तृत्व-भोक्तृत्वशक्तिमतः प्रवृत्तिमात्रनिमित्तमध्यास इति वदन्ति, तान्निराकरोति—**तेन कर्तुर्भोक्तुश्चेति** ॥ **सर्वलोकप्रत्यक्ष** इत्यादिः स्पष्टार्थः ।

"अस्यानर्थहेतो"रिति भाष्यस्य वृत्तसङ्कीर्तनपूर्वकं तात्पर्यमाह—**एवं तावत् सूत्रेणार्थादुपात्तयोरिति** ॥ ननु अनर्थस्य

**तत्त्वदीपनम्**

( टीकायाम् ) **सत्यमाहेत्यादेरयमर्थः** ॥ सचितिकमन्तःकरणं देहादावध्यस्यत इत्यङ्गीकरोति—**सत्यमिति** ॥ तर्ह्यादिशब्दो विरुध्यत इत्यत आह—**अपि त्विति** ॥ अन्यत्र देहादावध्यस्यमानमन्तःकरणं सचितिकमेव यत्राध्यस्यते, तस्य देहादेरात्मानं प्रति कार्यकरत्वमापाद्य स्वयमविद्यमानमिव तिरस्कृत्य तिष्ठतीति योजना । "तस्यैवात्मनः" इत्युभयोः सामानाधिकरण्यमित्याशङ्क्याह—**तस्यैवेति** ॥ **आत्मन** इति कर्मणि षष्ठी । अन्तःकरणस्य तिरस्कृतत्वेऽपि तस्य देहादावध्यासात् कथं केवलस्य स स्यादिति ? अत्राह—**चैतन्यमिति** ॥ **सर्वत्र** देहादावन्तःकरणे । चैतन्यं तत्र विशिष्यत एव कस्तर्हि विशेष इति ? तत्राह—**स्वत इति** ॥ क्वचिदुपाधावपेक्षा, क्वचिदनपेक्षेत्यर्थः ( टीकायाम् ) ॥ देहादावन्तःकरणस्य प्रतिभासाभावोऽनुभवविरुद्ध इति शङ्कते—**ननु बहिरिति** ॥ नास्तिकस्य देहादावात्मत्वभ्रमानुपपत्त्याऽहंकारस्य देहादावात्मप्रतिभासो नाश्रयणीय इत्याह—**अत आहेति** ॥ अतःशब्दार्थमाह—**चिन्मात्रस्येति** ॥ अहंशब्दस्य चिन्मात्रमर्थ इति नास्तिकाभिमान इत्यर्थः । विपक्षे दण्डमाह—**अन्यथेति** ॥ चैतन्यस्याहंकारेऽध्यासस्तद्विशिष्टस्यैव देह इति विशिष्टस्यानात्मत्वादात्मत्वभ्रमो न स्यादित्यर्थः ।

आत्मनः कर्तृत्वादिशक्तिमतः प्रवृत्तेर्मिथ्याज्ञानस्यानुपयोगः, ततश्च मिथ्याज्ञानं दोषप्रवर्तकमित्ययुक्तमित्याशङ्क्य, सह

### पञ्चपादिका

प्रहाणायेति प्रयोजनं निर्दिशति । हेतोः प्रहाण्या हि हेतुमतः प्रहाणिरात्यन्तिको यतः ।

ननु अनर्थहेतुरध्यासोऽनादिः, स कथं प्रहीयते ? तथाहि—मनुष्यादिजातिविशेषमात्राध्यासस्ततो विविक्तेऽपि न्यायतोऽहंप्रत्ययेऽनादित्वात्पूर्ववदविकलो वर्तते । नायं दोषः ॥

### पञ्चपादिकाविवरणम्

प्रहाणायेति वक्तव्यम्, न हेतोः प्रहाणायेति ? अत आह—**हेतोः प्रहाण्या हीति** ॥

प्रयोजनभाष्यमाक्षिपति—**नन्वनर्थहेतुरध्यासोऽनादिरिति** ॥ ननु शास्त्रप्रामाण्यान्निवर्ततामिति ? न, प्रत्यक्षविरोधादित्याह—**तथाहि मनुष्यत्वादीति** ॥ नहि सादित्वमनादित्वं वा विनाशाविनाशयोर्निमित्तम्, किन्तु विरोधिसन्निपातासन्निपाताविति परिहरति—**नायं दोष इति** ॥

लोके तावदनादिः प्रागभावो निवर्तते; सुगतानां तत्त्वपरिभावनाप्रकर्षेणानादिवासनासन्तानानां निवृत्तिरिष्टा; नैयायिकादीनामप्यनादिर्मिथ्याज्ञानप्रवाहः परमाणुश्यामता च निवर्तते; सांख्यानामप्यविवेकोऽनादिः निवर्तते विवेकेन; मीमांसकादीनामिदानींतनधर्मतत्त्वज्ञानप्रागभावोऽनादिर्निवर्तते । अनादिभावरूपमात्मवन्न निवर्तत इति चेत् ? न; अनिर्वचनीयत्वादज्ञानस्य । अनादिर्न निवर्तत इति सामान्यव्याप्तिः, ज्ञानेनाज्ञाननिवृत्तिरिति तु विशेषव्याप्तिः; अतः सैव बलवती ॥ ननु स्वोपादानगतोत्तरावस्था विनाशः, तत्र कथमनादेर्निरुपादानस्य विनाशः ? न; स्वाश्रयगतोत्तरावस्थेत्येतावत्त्वात्, अन्यथाऽणुश्यामत्वादीनाम-

### तत्त्वदीपनम्

कारित्वेनोपयोग इत्याह—**अत्रेति** । मिथ्याज्ञानं रागद्वेषादिदोषोत्पादनेन प्रवृत्तिकारणमिति टीकार्थः । अध्यासेऽनुमानार्थापत्यागमानामुपन्यस्तत्वात्सर्वलोकप्रत्यक्ष इति कथमुक्तमित्याशङ्क्याऽनुभवस्याऽध्याससाधनत्वात् प्रमाणान्तरस्य च तत्साधकत्वेन विवक्षितत्वान्न विरोध इत्यभिप्रायेणोक्तं देहेन्द्रियाष्विति अध्यासात्मकत्वमब्रह्मरूपत्वं निर्दिश्य प्रयोजनं निर्दिशति इत्यनुपपन्नमित्यस्याऽनर्थहेतोरित्यस्याऽध्यासप्रदर्शकत्वाभावादित्याशङ्क्याह—**अस्येति** । अध्यासात्मकमब्रह्मरूपत्वमुद्दिश्य इति वृत्तार्थोऽनूदित इत्यर्थः । हेतोः—स्वरूपेणापुरुषार्थत्वाभावात् "तत्प्रहाणाये"त्ययुक्तमिति शङ्कते—**नन्विति** ॥ यद्यपि हेतुनिवृत्तिः स्वरूपेणानभिलषिता; तथाऽपि कार्यस्यात्यन्तोच्छेदसिद्ध्यर्थं हेतुनिवृत्तिनिर्देश इत्याह—**अत आहेति** ॥

"कथं प्रहीयते"इत्यत्र कथमः प्रश्नार्थतां निरस्यति—**प्रयोजनेति** ॥ विमतम्, अनिरस्यम्, अनादित्वात्, आत्मवदित्युक्ते शास्त्रविरोधं शङ्कते—**ननु शास्त्रेति** ॥ "तरति शोकमात्मवि"दित्यादि शास्त्रशब्दोपात्तम् । तस्य प्रामाण्यमेवासिद्धमित्याह—**न प्रत्यक्षेति** ॥ **अहंप्रत्यये विविक्तेऽपीति**—विविक्तविषयेऽपीत्यर्थः । अनादेर्न निवृत्तिरित्युक्ते ज्ञानान्तरोत्पत्तिप्रदर्शनमनुपयुक्तमित्याशङ्क्य, "नायमि"त्यत्र सूचितां युक्तिमाह—**न हीति** ॥

सादित्वादेरनिमित्तत्वे हेतुं दर्शयति—**लोके तावदित्यादिना** ॥ अनादिर्न निवर्तत इत्यत्र किमनादित्वमात्रं विवक्षितम् ? उतानादिभावत्वम् ? आद्येऽपि किं लौकिकस्य बोधम् ? उत वादिनाम् ? इति विकल्प्याद्यं दूषयति—**लोके तावदिति** ॥ द्वितीयेऽपि किं सुगतस्य ? उत नैयायिकस्य ? अथवा सांख्यस्य ? उत मीमांसकस्य ? इति विकल्प्य क्रमेण दूषयति—**सुगतानामित्यादिना** ॥ द्वितीयं पक्षमुत्थापयति—**अनादीति** ॥ भावशब्देन किं सत्त्वं विवक्षितम् ? उताभाववैलक्षण्यम् ? इति विकल्प्याद्ये विशेष्यासिद्धिमाह—**नानिर्वचनीयत्वादिति** ॥ अनादित्वे सति भावस्य निवृत्तिरस्तु, को बाधः ? नच सामान्यव्याप्तिर्बाधः, ततो विशेषव्याप्तेर्बलीयस्त्वादित्यभिप्रायेणाह—**अनादिर्न निवर्तत इति** ॥ लोके ज्ञानाज्ञानयोर्निवर्त्य-निवर्तकतादर्शनाद् ब्रह्मज्ञानाज्ञानयोरपि तथात्वमित्यर्थः । प्रकारान्तरेणानादेर्नाशासंभवं शङ्कते—**ननु स्वोपादानेति** ॥ घटादेर्नाशो नाम स्वकारणसमवायिनी कपालाद्यवस्था, अज्ञानस्य चाकार्यत्वान्न स्वकारणसमवायिन्युत्तरावस्थेत्यविनाश इत्यर्थः । व्यर्थविशेषणतया परिहरति—**न स्वाश्रयेति** ॥ स्वाश्रयगतोत्तरावस्थाया नाशत्वसंभवे समवायिकारणेति विशेषणं व्यर्थम्, तथा-

### ऋजुविवरणम्

नायं दोष इति कथमुक्तम् ? नहि ज्ञानान्तरोत्पत्त्यङ्गीकारेण निवृत्तिः सिद्धा; अनादित्वस्य तदवस्थत्वादित्याशङ्क्याह—**न(हि)सादित्वमिति** ॥

## पञ्चपादिका

**तत्त्वमसीत्यादिवाक्याद् ब्रह्मरूपावगाहिज्ञानान्तरोत्पत्तेरिष्टत्वात्। तद्धि ब्रह्मणोऽवच्छिद्यैव चैतन्यस्य ब्रह्मरूपत्वप्रच्छादनेन जीवरूपत्वापादिकामनादिसिद्धामविद्यामहङ्कारादिविक्षेपहेतुं निराकुर्वदेवोत्पद्यते। ततः कारणनिवृत्तौ तत्कार्यम् 'अहमि'ति जीवे भोक्तृत्वरूपता सपरिकारा निवर्तत इति युज्यते। अहंप्रत्ययः पुनरनादिसिद्धेनैव कार्य-कारणमात्रेण सहभावादविरोधान्न स्वरूपविवेकमात्रेण निवर्तते। नापि ज्ञानान्तरमुत्पन्नमिति विशेषः।**

## पञ्चपादिकाविवरणम्

निवृत्तिप्रसङ्गात्। अभाववैलक्षण्यादात्मवदज्ञानस्यानिवृत्तिरिति चेत्? न; सद्वैलक्षण्यात् प्रागभाववन्निवृत्तिः किं न स्यात्? कस्तर्हि निर्णयः? ज्ञानाज्ञानकृतो विशेषान्वय इत्युक्तम्॥

यत्तु व्यतिरेकज्ञानेऽप्यध्यासो न निवर्तत इति, तत्राह—**तत्त्वमसीत्यादिवाक्यादिति**॥ ननु व्यतिरेकब्रह्मात्मज्ञानयोरध्यासनिवृत्तौ को विशेष इति? तत्राह—**तद्धि ब्रह्मणोऽवच्छिद्येति**॥ नच व्यतिरेकानवबोधनिमित्तः संसारः, किन्तु ब्रह्मानवबोधनिमित्त इति श्रुति-तदर्थापत्तिभ्यां दर्शितम्। अतस्तत्त्वज्ञानान्निवर्तत इति भावः। ननु ज्ञानमज्ञानस्यैव निवर्तकम्, कथमध्यासस्य निवृत्तिरिति? तत्राह—**ततः कारणनिवृत्ताविति**॥ ननु अहंप्रत्ययोऽप्यर्थतस्तथाभूतब्रह्मविषय एव, स किमित्यज्ञानं न निवर्तयतीति? ब्रह्मात्मतानवभासकत्वादित्याह—**अहंप्रत्ययः पुनरिति**॥ ननु विचाराद्विवेकज्ञानान्तरमुत्पन्नं निवर्तयेदिति? न; अप्रमाणज्ञानत्वादित्याह—**नापि ज्ञानान्तरमिति**॥

## तत्त्वदीपनम्

चात्मनो ब्रह्मस्वरूपाभिव्यक्तिरविद्यानिवृत्तिरिति किमत्रावद्यमित्यर्थः। न केवलं व्यर्थविशेषणता, किंत्वव्याप्तिश्चेत्याह—**अन्यथेति**॥ प्रागभावादिरादिशब्दार्थः॥ कल्पान्तरमुत्थापयति—**अभावेति**॥ अत्रानादित्वं विशेषणं द्रष्टव्यम्। अनुमानपराहतिमाह—**न, सद्वैलक्षण्यादिति**॥ समानबलत्वान्नानयोर्बाध्य-बाधकतेति शङ्कते—**कस्तर्हीति**॥ समानबलवत्त्वमसिद्धमित्याह—**ज्ञानाज्ञानेति**॥

आत्मज्ञाने सत्यप्यध्यासानिवृत्तेर्न तयोर्निवर्त्य-निवर्तकतेत्युक्तं चोद्यमनुवदति—**यत्त्विति**॥ लौकिकात्मज्ञानानिवर्त्यत्वेऽप्यौपनिषदात्मज्ञाननिवर्त्यत्वमध्यासस्य युक्तमित्याह—**तत्राहेति**॥ औपनिषदात्मज्ञानम्, नाध्यासनिवर्तकम्, आत्मज्ञानत्वात्; लौकिकात्मज्ञानवदिति; इतरथेतरस्यापि निवर्तकत्वप्रसङ्ग इति शङ्कते—**ननु व्यतिरेकेति**॥ विशेषाभावोऽसिद्ध इत्याह—**तत्राहेति**॥ औपनिषदात्मज्ञानस्याज्ञाननिवर्तकत्वादध्यासनिवर्तकत्वम्, इतरस्य तु तद्वैपरीत्यम्; अनिवर्तकत्वमित्यर्थः। अज्ञानानिवर्तकत्वेऽप्यध्यासनिवर्तकत्वं व्यतिरेकज्ञानस्य किं न स्यात्? इत्याशङ्क्याऽऽह—**नचेति**॥ यदविद्याविजृम्भितोऽध्यासः, तद्विद्यया तन्निरास इति निश्चयः, न तद्व्यतिरेकाज्ञाननिमित्तत्वं संसारस्य, इति न व्यतिरेकज्ञाननिवर्त्यत्वमित्यर्थः। अथवा, इतोऽपि न व्यतिरेकज्ञानस्य निवर्तकत्वमित्याह—**नचेति**॥ अर्थस्तु पूर्ववदेव। **श्रुति-तदर्थापत्तिभ्यामिति**—"इन्द्रो मायाभिः पुरुरूप ईयते" "मायां तु प्रकृतिं विद्यादि"त्याद्या श्रुतिः; बन्धस्य ब्रह्मज्ञाननिरस्यत्वानुपपत्तिरर्थापत्तिः॥ ज्ञानाज्ञानयोर्निवर्त्य-निवर्तकताप्रसिद्धेर्ज्ञानस्य नाध्यासनिवर्तत्वमिति शङ्कते—**नन्विति**॥ अर्थान्निवृत्ति—रित्याह—**तत्राहेति**॥ ज्ञानत्वाविशेषादुभयोरप्यज्ञाननिवर्तकत्वं तुल्यमिति शङ्कते—**नचाहंप्रत्यय (नन्वहंप्रत्यय) इति**॥ **तथाभूतेति**॥ प्रत्यग्भूतब्रह्मानाकारत्वान्न निवर्तकत्वमित्याह—**ब्रह्मात्मेति**॥ **टीकाया एषोऽर्थः**—न स्वरूपविवेकमात्रेण सकलोऽध्यासो निवर्तते; ब्रह्मानाकारत्वात्। विवेकमात्रेणानिवर्त्यत्वे हेत्वन्तरमाह—**अहंप्रत्यय इति**॥ व्यतिरेकविषयाहंप्रत्ययानिवर्त्यत्वेऽपि विचारजन्यज्ञानेनागन्तुकेन निवृत्तिः स्यादिति शङ्कते—**ननु विचारादिति**॥ विचारशब्देन किमनुमानं विवक्ष्यते? उत तर्कः? नाद्यः; परोक्षत्वादित्यभिप्रायेण द्वितीयं प्रत्याह—**नाप्रमाणेति**॥

## ऋजुविवरणम्

कथं विरोधिसन्निधिमात्रमेव प्रयोजकम्? कथं वाऽनादेस्तत्सन्निपातसंभवः? इत्याशङ्क्याह—**लोके तावदिति**॥ **न, सद्वैलण्यादिति**॥ अनेन विरुद्धाव्यभिचारित्वम्, अनुमानेन वा बाधो दर्शितः।

"तद्धि ब्रह्मणः" इत्यनेन ब्रह्मज्ञानमविद्यां निराकुर्वदुत्पद्यत इत्युक्तम्, तत्र व्यतिरेकज्ञानेनास्य को विशेषः? व्यतिरेकज्ञानस्यानिवर्तकत्वादेतदपि न निवर्तकमिति चोदिते, निराकरणेनोत्पत्तेरित्युक्ते साध्यस्यैव हेतुत्वं स्यात्, नाप्यसहभावेन विरोधाद्विशेषः; तस्याप्रयोजकत्वादित्याशङ्क्याभिप्रायमाह—**नच व्यतिरेकानवबोधेति**॥

**पञ्चपादिका**

ननु—निरतिशयानन्दं ब्रह्म श्रूयते, ब्रह्मावाप्तिसाधनं च ब्रह्मविद्या, "स यो ह वै तत्परमं ब्रह्म वेद ब्रह्मैव भवती"त्यादिश्रुतिभ्यः; तस्मान्निरतिशयसुखावाप्तय इति वक्तव्यम्, किमिदमुच्यते—"अनर्थहेतोः प्रहाणाये"ति ? ननु चानर्थस्यापि समूलस्य प्रहाणं श्रूयते ब्रह्मविद्याफलम्—"तरति शोकमात्मवित्" "जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः" इति च ॥ उभयं तर्हि वक्तव्यम्; श्रूयमाणत्वात् पुरुषार्थत्वाच्च ? न वक्तव्यम्। कथम् ? "आत्मैकत्वविद्याप्रतिपत्तये" इत्यात्मनो जीवस्य ब्रह्मात्मकता शास्त्रस्य विषयः तेनानन्दात्मकब्रह्मस्वरूपताप्राप्तिर्जीवस्य विषयतयैव संवृत्ता। न च सा विषयाद्बहिः, येन पृथङ्निर्देशार्हा स्यात्, समूलानर्थहानिस्तु बहिः शास्त्रविषयाद् ब्रह्मात्मरूपात्।

**पञ्चपादिकाविवरणम्**

ननु नानर्थनिवृत्तिः शास्त्रस्य प्रयोजनम्, किंतु निरतिशयब्रह्मानन्दावाप्तिः, इति पुनः प्रयोजनभाष्यमाक्षिपति—**ननु निरतिशयानन्दं ब्रह्म श्रूयत इति** ॥ यथा शास्त्रजन्यब्रह्मविद्याफलमानन्दावाप्तिः, तथाऽनर्थनिवृत्तिरपि श्रुता, तत्र कथं प्रयोजनाक्षेप ? इत्याह—**ननु चानर्थस्यापीति** ॥ तर्हि कृत्स्नस्य फलस्य संकीर्तनं कर्तव्यम्, न फलांशस्येति चोदयति—**उभयं तर्हीति** ॥ न प्रयोजनत्वेन वक्तव्याऽऽनन्दावाप्तिर्विषयत्वनिर्देशसामर्थ्यादिव पुरुषाकाङ्क्षया प्रयोजनत्वसिद्धेः श्रुत्यर्थाभ्यां प्रयोजनसम्पूर्णतासिद्धिर्विषयनिर्देशलाभश्चेति युक्तोऽयं व्यपदेश इत्याह—**न वक्तव्यमित्यादिना** ॥ ननु ब्रह्मात्मतैव विषयो भवतु, आनन्दावाप्तिस्तु पृथक् प्रयोजनत्वेन निर्दिश्यतामिति ? नेत्याह—**नच सा विषयाद्बहिरिति** ॥ ब्रह्मात्मतैवानन्दप्राप्तिरित्यर्थः। ननु अनर्थनिवृत्तेरपि फलवचनविषयत्वात्साऽपि शास्त्रविषय इति ? नेत्याह—**समूलानर्थहानिरिति** ॥ ब्रह्मात्मैकत्वमेव शास्त्रविषयः, फलं त्वर्थसिद्धमिति भावः। तर्हि ब्रह्मात्मैकत्वशास्त्रविषय एवानर्थनिवृत्तिर्न फलवचनविषय इत्याह—**अनर्थहेतुप्रहाण-**

**तत्त्वदीपनम्**

अनर्थहेतुनिवृत्तेरप्यर्थ्यमानतया पुमर्थत्वादाक्षेपानुपपत्तिमाशङ्क्याऽऽह—**ननु नानर्थेति** ॥ सुखप्रतिबन्धकत्वात्तन्निवृत्तिप्रार्थनमित्यभिसन्धिः। अनर्थप्रहाणस्यान्यथासिद्धेरभिहितत्वात् "ननु चानर्थस्यापी"त्यस्यानुपपत्तिमाशङ्क्याऽऽह—**यथेति** ॥ सुखप्राप्तेरर्थ्यमानत्वात् फलत्वाच्च यथा पुरुषार्थता, तद्वद् दुःखनिवृत्तेरपीत्यर्थः। अनर्थनिवृत्तेः पुमर्थत्वेऽपि नात्र तत्संकीर्तनम्, तस्य प्रवृत्तिफलत्वात्, प्रवृत्तेश्चानन्दावाप्तिकथनेन सिद्धेर्नोभयं वक्तव्यमित्याशङ्क्याऽऽह—**तर्हीति** ॥ **कृत्स्नेति**—यद्यप्येककथने प्रवृत्तिसिद्धिः; तथापि फलस्य साकल्येन संकीर्तने आदरेण प्रवृत्तिसिद्धिरित्यर्थः। आनन्दावाप्तेरर्थ्यमानत्वात् फलत्वम्, इति फलत्वेन पृथङ् निर्देष्टव्यमित्याशङ्क्य, तस्यार्थसिद्धत्वान्न पृथक् कीर्तनमित्याह—**न प्रयोजनत्वेनेति** ॥ अग्निसंयोगान्नवनीते यथा द्रवावस्थोपजनिः, तद्वदानन्दात्मकेन जीवेनानन्दात्मके ब्रह्मण्युपास्यमान आनन्दावस्थोपजायते, ततश्च पृथङ्निर्देशो युक्त इत्याशयेन शङ्कते—**ननु ब्रह्मेति** ॥ अनानन्दात्मकत्वमसिद्धमित्यभिप्रायेणाह—नेत्याहेति। "एष ह्येवानन्दयाती"ति ब्रह्मण आनन्दहेतुत्वश्रवणात् कथं तस्यानन्दात्मकत्वमित्याशङ्क्याऽऽह—**ब्रह्मात्मतैवेति** ॥ "विज्ञानमानन्दं ब्रह्म" "यदेष आकाश आनन्दः" इत्यादिवाक्यात् ब्रह्मण आनन्दत्वम्, तदभेदादितरोऽपि तादृशः। ततश्च प्रतिबन्धनिवृत्त्यपेक्षया भेदव्यपदेश इत्यर्थः॥ अनर्थनिवृत्तेरभावत्वाद्विषयान्तर्भावशङ्कासंभवात् "समूलानर्थेति" ग्रन्थानुपपत्तिमाशङ्क्याऽऽह—**नन्वनर्थेति** ॥ "तरति शोकमात्मवित्" "यदा सर्वे प्रमुच्यन्ते" इत्यादिफलवचनशब्दार्थः। किमनर्थनिवृत्तेः प्रत्यग्ब्रह्मैक्य विषयान्तर्भाव उच्यते ? किं वा पृथग्विषयत्वम् ? नाद्य इत्याह—**नेत्याहेति** ॥ द्वितीयं दूषयति—**ब्रह्मात्मैकत्वमिति** ॥ अज्ञातज्ञापकं हि शास्त्रम्, ब्रह्मात्मैक्यस्य चाज्ञातत्वाद्विषयत्वम्; अविद्यातत्कार्यप्रतिभासनिवृत्तेर्ब्रह्मापरोक्षोदयनान्तरीयकत्वान्न प्रतिपाद्यत्वमित्यर्थः। ब्रह्मैक्यस्य शास्त्रविषयत्वेऽनर्थनिवृत्तेरपि तद्विषयत्वमुपगन्तव्यम्, ब्रह्मणो निष्प्रपञ्चत्वादिति शङ्कते—**तर्हि ब्रह्मेति** ॥ तत्त्वमस्यादिशास्त्रे प्रपञ्चाभावाप्रतिपत्तेर्न तस्य विषयत्वमिति शङ्कते—**ननु तत्त्वमसीति** ॥ तत्त्वमस्यादिवाक्यादापात-

**ऋजुविवरणम्**

"न वक्तव्यमि"त्ययुक्तम्; विषयत्वेन लाभेऽपि प्रयोजकत्वेनानिर्देशात्, तत्साफल्याय वक्तव्यत्वादित्याशङ्क्याह—**न प्रयोजनत्वेनेति** ॥ ननु ब्रह्मप्राप्तिरन्या, अन्या चानन्दप्राप्तिः, अतः कथं विषयाद् बहिष्ठत्वाभावः ? इत्याशङ्क्य व्याचष्टे—**ब्रह्मात्मतैवेति** ॥ भवतु ब्रह्मरूपाच्छास्त्रविषयाद् बहिष्ठं फलम्, शास्त्रस्यापि विषयत्वात्, न प्रयोजनत्वेन निर्देश्यमित्याशङ्क्याभिप्रायमाह—**ब्रह्मात्मैकत्वमेवेति** ॥ भवतु ब्रह्मप्रतिपादनपूर्वकं जीवस्य ब्रह्मरूपत्वप्रतिपादनम्; तथाऽपि नाभावस्य वाक्यार्थत्वम्, भावरूपैक्यपरत्वात् शास्त्रस्येत्याशङ्क्य व्याचष्टे—**वाक्यार्थस्येति** ॥

## पञ्चपादिका

**अनर्थहेतुप्रहाणमपि तर्हि न पृथङ्निर्देष्टव्यम्, यतः सर्वेषु वेदान्तेष्वलौकिकत्वाद् ब्रह्मणस्तत्प्रतिपादनपूर्वकमेव जीवस्य तद्रूपता प्रतिपाद्यते ।**

**तद्यथा—"सदेव सोम्येदमग्र आसीदि"त्युपक्रम्य—"ऐतदात्म्यमिदं सर्वं तत्सत्यम् स आत्मे"त्यवसानं निरस्त-समस्तप्रपञ्चं वस्तु तत्पदाभिधेयं समर्पयदेकं वाक्यम्; तथा सति तादृशेन तत्पदार्थेन संसृज्यमानस्त्वंपदार्थः पराकृत्यैव निर्लेपमनर्थहेतुमग्रहणमन्यथाग्रहणं च तथा निश्चीयत इति । यद्येवं ब्रह्मात्मावगतिनान्तरीयकमनर्थहेतोरविद्यायाः प्रहाणम्, न शब्दस्य तत्र व्यापारः, तेन पृथङ्निर्दिश्यते ।**

## पञ्चपादिकाविवरणम्

**मपि तर्हीति** ॥ ननु तत्त्वमस्यादिवाक्येऽप्यनर्थनिवृत्तिविषयतया नावगम्यत इति ? तत्राह—**यतः सर्वेषु वेदान्तेष्विति** ॥ वाक्यार्थस्य भावरूपत्वेऽपि ब्रह्मपदार्थस्यानर्थाभावविशिष्टतयैव प्रतिपादनात्सोऽपि विषय इत्यर्थः ॥

ननु न पदार्थप्रतिपादकं वाक्यमस्ति, किन्त्वैक्यप्रतिपादकमेवेत्याशङ्क्याह—**तद्यथा सदेव सोम्येदमित्यादि । समर्पयदेकं वाक्यमिति** ॥ अयमर्थः—अलौकिकत्वाद् ब्रह्मपदार्थं प्रतिपाद्य तादात्म्यवाक्येनैकवाक्यमिति । ननु ब्रह्मणि निष्प्रपञ्चे शास्त्रविषये जीवगतानर्थनिवृत्तिः कथं शास्त्रविषयः ? इत्याशङ्क्याह—**तथा सति तादृशेन तत्पदार्थेनेति** ॥ एवमपि स्वाभाविक-निष्प्रपञ्चता शास्त्रविषयः, अविद्या-तत्कार्यनिरासस्तु निष्प्रपञ्चब्रह्मात्मतावगतिसामर्थ्यलभ्या न शास्त्रविषयः, अविद्या-तत्कार्य-प्रतिभासाभावस्य तत्प्रतिभासविरोधादेव शास्त्रेण प्रतिपादयितुमशक्यत्वादिति परिहरति—**यद्येवं ब्रह्मात्मावगति-नान्तरीयकमिति** ॥

ननु यथा प्रातिभासिकाविद्या-तत्कार्यविरोधान्न तदभावविशिष्टो वाक्यार्थः प्रतिपत्तुं शक्यते, तथा ब्रह्मणि प्रपञ्चाव-भासविरोधान्निष्प्रपञ्चं ब्रह्मात्मत्वेन नावेदयितुं शक्यमस्थूलादिवाक्यैः इति ? उच्यते; न तावत् प्रत्यक्षादिसिद्धो ब्रह्मणि प्रपञ्चः, तस्य तदगोचरत्वात्; न च प्रपञ्चसिद्धिमात्रेण ब्रह्मसम्बन्धावगमः कारणमात्रकल्पकत्वात्तस्य । ननु "इदं सर्वं यदय-

## तत्त्वदीपनम्

तोऽप्रतिपत्तावपि वाक्यान्तरात् प्रतिपत्तिरित्याह—**तत्राहेति** ॥ ब्रह्मणो भावरूपत्वात् तस्मिन्नभावानन्तर्भावात् कथमभावस्या-विषयत्वम् ? तत्राह—**वाक्यार्थस्येति** ॥ 'निर्घटं भूतलमि'ति वाक्यस्य यथाऽभावविशिष्टभूतलविषयत्वम्, तद्वदस्यापीत्यर्थः ॥

ब्रह्मणो वाक्प्रमेयत्वमाक्षिपति—**ननु न पदार्थेति** ॥ पदार्थस्य स्मर्यमाणत्वादित्यर्थः ॥ पदार्थस्य स्मर्यमाणत्वाद-वाक्यार्थत्वमिति शङ्कां निरस्यति—**अयमर्थ इति** ॥ कर्तृत्वादिनिवृत्तेर्ब्रह्मण्यनन्तर्भावात्तस्याः पृथङ्निर्देशोऽयुक्त इति शङ्कते—**ननु ब्रह्मणीति** ॥ संसारिणोऽसंसारिरूपत्वानुपपत्तेर्विरुद्धरूपनिवृत्तिरपि प्रमीयत इति समाध्यर्थः । निष्प्रपञ्चप्रत्यग्ब्रह्मैक्यस्य शास्त्रप्रमेयत्वात् कथं न शब्दस्य तत्र व्यापार इत्युक्तम् ? इत्याशङ्क्य, परमर्थतो निष्प्रपञ्चत्वं शास्त्रप्रमेयम् ? उताविद्या-तत्कार्यप्रतिभासनिरसनम् ? इति विकल्प्याद्योऽङ्गीक्रियत इत्याह—**एवमपीति** ॥ द्वितीयं दूषयति—**अविद्येति** ॥ शास्त्राविषयत्वं हेतुमाह—**अविद्येति** ॥ **अशक्यत्वात्** अयोग्यत्वादित्यर्थः । तत्र हेतुः—**तत्प्रतिभासेति** ॥ अविद्या-तत्कार्यं **तच्छब्दार्थः** ॥

स्वाभाविकनिष्प्रपञ्चस्य शास्त्रप्रमेयत्वमङ्गचकारि, तदाक्षिपति—**ननु यथेति** ॥ विकल्पासहत्वान्नैतदित्याह—**उच्यत इति** ॥ किं प्रत्यक्षादिना ब्रह्मणि प्रपञ्चतत्संबन्धोऽधिगतः ? उतागमेन ? नाद्य इत्याह—**न तावदिति** ॥ ब्रह्मणः प्रत्यक्षाद्यगोचरत्वेऽपि प्रपञ्चस्योपलभ्यमानत्वात् तत्संबन्धप्रथा किं न स्यात् ? इत्याशङ्क्य, संबन्धस्योभयनिष्ठत्वादेकाग्रहणेऽ-ग्रहणमित्याह—**नचेति** ॥ द्वितीये निष्प्रपञ्चप्रकरणपठितैः—"इदं सर्वमि"त्यादिभिः सप्रपञ्चत्वं बोध्यते ? उत जगदुपादानत्व-

## ऋजुविवरणम्

कथं ब्रह्मपदार्थसमर्पणेनैकवाक्यत्वम् ? पदार्थप्रतिपादनस्य लोकव्युत्पन्नत्वात्, अथवा—ब्रह्मपदार्थसमर्पणेनैक-वाक्यत्वेऽपि कथमनर्थनिवृत्तेः शास्त्रविषयत्वम् ? समर्पकस्य वाक्यस्य मननवदेव विमर्शमात्रजनकत्वादित्याशङ्क्य व्याचष्टे—**अलौकिकत्वादिति** ॥ "यद्येवमि"त्यनेन नान्तरीयकत्वं हेतुत्वेनोक्तमिति प्रतिभाति; असिद्धं तु तत्, "न शब्दस्ये"त्यपि न हेतुः; व्यापाराभावस्यासिद्धत्वात्, नच हेत्वन्तरम्; अतो न पृथङ्निर्देशनिराकरणासिद्धिरित्याशङ्क्याह—**एवमपि स्वाभाविकेति** ॥ ननु निषेधशास्त्रस्य स्वाभाविकप्रपञ्चनिषेधकत्ववन्मिथ्याभूतप्रपञ्चनिषेधकत्वमपि सामर्थ्यविशेषादङ्गीकर्तव्यम्, तथा सति विषयत्वेनैव लब्धत्वान्न फलत्वेन निर्देशसंभव इत्याशङ्क्याह—**अविद्या-तत्कार्येति** ॥

## पञ्चपादिकाविवरणम्

मात्मेत्यादिसप्रपञ्चवाक्यैर्ब्रह्मणि प्रतिभासते प्रपञ्चः ? सत्यम्; तेषां ब्रह्मणः सर्वोपादानकारणत्वसामर्थ्यसिद्धसार्वात्म्यानुवादेन निषेध्यसमर्पकतया निषेधकवाक्यैरेकवाक्यतयाऽन्वयान्निष्प्रपञ्चविरोधित्वाभावात्। नच सर्वोपादानतया सर्वात्मभावेऽसिद्धे सप्रपञ्चवाक्यैः सर्वात्मता प्रतिपादयितुं शक्यते। नच निषेधवाक्यैर्निषेध्याकाङ्क्षितसमर्पणेनैकवाक्यतासंभवे वाक्यभेदं कृत्वा स्वातन्त्र्येण प्रयोजनवन्निष्प्रपञ्चविरुद्धं सप्रपञ्चं प्रयोजनशून्यं च प्रमातुं शक्यम्। दृष्टश्च सुषुप्ते चेतनस्य निष्प्रपञ्चता पुरुषार्थं इति। श्रुतं च—"अशब्दमस्पर्शमरूपमव्ययं निचाय्य तन्मृत्युमुखात् प्रमुच्यते" इति। दृष्टा च चेतनस्य सप्रपञ्चताऽनर्थकरीति। नच तत्र श्रूयते फलम्। अतो निषेधैरेकवाक्यता युक्ता। नच निषेध्यप्रपञ्चानुवादप्रतिभासो निष्प्रपञ्चप्रमितिं बाधते; तादर्थ्याद-

## तत्त्वदीपनम्

प्रतिपादकैः ? अथवोपास्तिप्रकरणपठितैः "सर्वकर्मे"त्यादिभिः इति विकल्पाद्यमुत्थापयति—**नन्विदं सर्वमिति**॥ प्रतिभासमात्रमङ्गीकरोति—**सत्यमिति**॥ तर्हि तद्विरोधः स्यादिति, अत आह—**तेषामिति**॥ तेषां निष्प्रपञ्चविरोधित्वाभावादित्यन्वयः। तत्र हेतुमाचष्टे—**ब्रह्मण इति**। प्रपञ्चसंबन्धस्यान्यतः प्राप्तत्वात्—"इदं सर्वमि"त्यादेर्न तत्प्रतिपत्तिहेतुत्वमिति न निष्प्रपञ्चवाक्यस्य बाधकमित्यर्थः। तत्रैव हेत्वन्तरमाह—**निषेधेनेति**॥ "नेति नेती"त्यादीनां निषेध्याकाङ्क्षत्वादाकाङ्क्षितनिषेध्यसमर्पकत्वान्न तद्विरोधात् स्वार्थे प्रामाण्यमित्यर्थः। श्रुतेः श्रुतार्थापत्तिसमधिगतबोधकत्वेन नानुवादकत्वम्, ततः प्रागेबार्थाबबोधकत्वादित्याशङ्क्याह—**नचेति**। असिद्धे इति पदच्छेदः। "यदिदं सर्वमि"ति यच्छब्दसमानाधिकृतं तत्सर्वम्, यच्छब्दस्य चोत्सर्गतोऽन्यसिद्धबोधित्वान्न स्वयं सार्वात्म्यं बोधयतीत्यर्थः॥ "इदं सर्व"मित्यादेर्निषेधवाक्यैकवाक्यत्वं कस्मात् ? अर्थविशेषपरत्वं किं न स्यात् ? इत्याशङ्क्याह—**नचेति**। निषेध्यं च तदाकाङ्क्षितं चेति निषेध्याकाङ्क्षितम्, तत्समर्पणेनेत्यर्थः। तन्निषेधवाक्यैरेकवाक्यतासंभवे वाक्यभेदं कृत्वा प्रपञ्चवाक्येन सप्रपञ्चं प्रमातुं न शक्यमित्यन्वयः; 'संभवत्येकवाक्यत्वे वाक्यभेदो हि नेष्यते' इति न्यायविरोधादित्यर्थः। 'फलवत्सन्निधावफलं तदङ्ग'मिति न्यायादपि न सप्रपञ्चं प्रतिपाद्यमित्याह—**स्वातन्त्र्येणेति**॥ प्रयोजनवच्च निष्प्रपञ्चं चेति प्रयोजनवन्निष्प्रपञ्चम्, तच्च ब्रह्म चेति तत्तथोक्तम्, तद्विरुद्धमिति विग्रहः। निष्प्रपञ्चवाक्यस्य कथं प्रयोजनवत्त्वम् ? इति वीक्षायामाह—**दृष्टश्चेति**॥ न केवलं दर्शनमेव, किं तु श्रवणमपीत्याह—**श्रुतिश्चेति**॥ **निचाय्य** साक्षात्कृत्येत्यर्थः। अनर्थव्रातम् **मृत्युः**, तस्य **मुखम्** कारणम्, अज्ञानम्; तस्मान्मुक्तो भवतीत्यर्थः। निष्प्रपञ्चस्य प्रयोजनवत्त्वमुक्त्वा, इतरस्य तद्विधुरतामाह—**दृष्टा चेति**॥ 'अहं मनुष्यः' इत्याद्यभिमाने दुःखादयो दृष्टा इत्यर्थः॥ चन्दन-वनितादिसंपर्कात् सुखोदयात् स्वर्गाद्युद्देशेन यागादिविधेश्च न सप्रपञ्चस्याप्यपुमर्थत्वमित्याशङ्क्य, तस्याभासत्वादनाभासफलं न श्रूयत इत्याशयेनाह—**नचेति**॥ मा भूत् तर्हि फलवत्त्वमित्याशङ्क्य, अध्ययनविध्युपात्तत्वेन नैरर्थक्यासंभवान्निषेध्यसमर्पकतया निषेधवाक्यैकवाक्यत्वमित्याह—**अत एवेति**। सप्रपञ्चवाक्यमित्याह—**अत इति**॥ प्रपञ्चवाक्यानां प्रमित्यजनकत्वेऽपि तत्प्रतीतिजनकत्वादस्त्येव विरोध इत्यत्राह—**नचेति**॥ अनुवाद-प्रमित्योरनुवादस्य दुर्बलत्वान्न बाधकत्वमित्यर्थः। किंच बाधकत्वे स्वयमपि बाधितं स्यादित्याह—**तादर्थ्यादिति**॥

## ऋजुविवरणम्

**तस्य** ब्रह्मणः। **तदगोचरत्वात्** प्रत्यक्षादिप्रमाणागोचरत्वादित्यर्थः। सम्बन्धिग्रहणपुरःसरं हि सम्बन्धग्रहणम्, अन्यतरसम्बन्ध्यग्रहणेऽपि न सम्बन्धग्रहणमिति भावः। ननु प्रपञ्चः प्रतीयते; तस्य केनचिदाश्रयेण भवितव्यम्, निराश्रयस्य कार्यस्यासंभवादित्यनुपपत्त्या ब्रह्मसम्बन्धः प्रतीयत इत्याशङ्क्याह—**नच प्रपञ्चसिद्धिमात्रेणेति**॥ अन्यथाऽपि सिद्धत्वादिति भावः। कथम् "इदं सर्वमि"त्यादिवाक्यानां सर्वोपादानसामर्थ्यसिद्धप्रपञ्चानुवादकत्वेन महावाक्येनैकवाक्यत्वम् ? प्रतिपादकत्वमेव कस्मान्न भवति ? इत्याशङ्क्याह—**नच सर्वोपादानतयेति**॥ ननु अस्य वाक्यस्य स्वातन्त्र्येण सर्वात्मत्वप्रतिपादने संभवति सति तद् विहाय, अन्यतः प्राप्तसप्रपञ्चानुवादेन निषेधवाक्येनैकवाक्यता न युक्ता कल्पयितुम्; तुल्यत्वाद्वेदवाक्यानामित्याशङ्क्याह—**नच निषेधवाक्यैरिति**॥ कथं निष्प्रपञ्चत्वं पुरुषार्थत्वेनेति निश्चितम् ? येन निषेधवाक्यैकवाक्यत्वमुच्यते, इत्याशङ्क्याह—**दृष्टश्चेति**॥ भवतु निष्प्रपञ्चता पुरुषार्थः नैतावता तदेकवाक्यत्वं संभवति, सप्रपञ्चत्वस्यापि पुरुषार्थत्वेन समर्थत्वादित्याशङ्क्याह—**दृष्टा च चेतनस्येति**॥ ननु सप्रपञ्चत्वमेकान्ततो नानर्थहेतुः; तेनापि पुरुषार्थदर्शनात्, अतो नापुरुषार्थत्वेनान्यार्थत्वमित्याशङ्क्याह—**नच तत्र श्रूयत इति**॥ ननु अनुवादवाक्येऽनूद्यं प्रतिभासते; तेन प्रतिभासेन विरोधो निष्प्रपञ्चत्वबोधस्येत्याशङ्क्याह—**नच निषेध्यानुवाद इति**॥ अनुवादग्रहणेन दौर्बल्यं द्योतितम्, प्रमिति-तादर्थ्यग्रहणाभ्यामितरस्य प्राबल्यं दर्शितम्॥

## पञ्चपादिकाविवरणम्

नुवादस्य। ननु अप्राप्तं प्रपञ्चं ब्रह्मणि सप्रपञ्चवाक्यैः प्रापय्य पुनस्तन्निषेधोऽनर्थक एव; "प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरमि"ति न्यायात्? उच्यते; अद्वितीयब्रह्मप्रतिपत्त्यर्थं सर्वंजगदुपादानत्वप्रतिपादनसामर्थ्यादेव प्राप्तस्य ब्रह्मणि प्रपञ्चस्याद्वितीयपुरुषार्थसिध्यर्थमनूद्य निषेधो युज्यते। ननु तर्हि सर्वोपादानत्वसामर्थ्यादेव सप्रपञ्चताप्रमितिः प्राप्ता? न; श्रुतिसामर्थ्यप्राप्तस्य सप्रपञ्चत्वस्य साक्षान्निषेधश्रुतिविरोधे दौर्बल्यात्। न तर्हि सर्वोपादानतया सप्रपञ्चताप्राप्तिः, न; यावद्बाधं श्रुतोपादानत्वसामर्थ्यादेव शुक्तिकारजतादिवत् सप्रपञ्चताप्रतिभासात्। प्रतिपन्नमेव तु बलवत्प्रमाणेन बाध्यते, नाप्रतिपन्नम्, नापि प्रमितम्। नचोपासनाप्रकरणपठितसप्रपञ्चवाक्यैर्ब्रह्म तथा प्रमीयते; अन्यपराणां तत्परवाक्यविरोधात्, आरोपितरूपेणाप्युपासनासंभवात्, सृष्टिवाक्यैरद्वितीयब्रह्मप्रतिपत्तये निषेध्यप्राप्तिपरैः प्राप्तत्वाच्च। तस्मान्निष्प्रपञ्चब्रह्मात्मप्रमितौ शाब्दी वा लौकिकी वा प्रमितिर्न विरुध्यते॥

## तत्त्वदीपनम्

सप्रपञ्चवाक्यानां निषेधपरत्व आनर्थक्यप्रसङ्गात् सप्रयोजनपरत्वमिति शङ्कते—**नन्वप्राप्तमिति**॥ प्रयोजनसद्भावान्न पङ्कप्रक्षालनसाम्यमित्याह—**उच्यत इति**॥ भेदग्राहकप्रमाणविरोधाद् नाद्वितीयमिति शङ्कायां भेदप्रपञ्चस्य ब्रह्मोपादानत्वात् कार्यस्य चोपादानव्यतिरेकेणानिरूपणाददद्वितीयमित्यद्वैतसिद्धयर्थं ब्रह्मणि प्रपञ्चमारोपयामास श्रुतिः, तत्रारोपितस्यापि सर्पादेरनर्थहेतुतादर्शनादारोपितनिवृत्त्यर्थो निषेधः साधीयानित्यर्थः॥ उपादानत्वप्रतिपादकवाक्याद् ब्रह्मणः सप्रपञ्चत्वमिति द्वितीयं विकल्पमुत्थापयति—**ननु तर्हीति**॥ उपादानोपादेययोस्तादात्म्यं दृष्टम्, ब्रह्मणश्चोपादानत्वात् सप्रपञ्चत्वमित्यर्थः। श्रुति-तदर्थापत्त्योर्विरोधेऽर्थापत्तिर्नेदिति; बलीयस्या श्रुत्या बाधितत्वात्, अतश्च निष्प्रपञ्चत्वमित्याह—**न श्रुतसामर्थ्येति**॥ अर्थापत्तेरुपजीव्यप्रपञ्चविषयत्वेन प्राबल्याद् न श्रुत्या बाध्यत इति शङ्कते—**न तर्हीति**॥ प्रपञ्चाप्राप्तौ निषेध्यासंभव इत्यर्थः। 'इदं रजतमि'त्याद्यनुभवस्योपजीव्यविषयत्वेऽपि बाध्यत्ववदर्थापत्तेरपि बाध्यत्वं युक्तमित्यभिप्रेत्याह—**न यावद्बाधमिति**॥ प्रतिपन्नरजतादेरपि कथं बाध्यत्वम्? इत्याशङ्क्य, बाध्यत्वं कथमिति प्रश्नमात्रम्? उताप्रतिपन्नस्य बाध्यत्वं विवक्षितम्? इति विकल्प्याद्यस्योत्तरमाह—**प्रतिपन्नमिति**॥ प्रतिपन्नं बलवत्प्रमाणेन बाध्यत एवेत्यन्वयः। **तुशब्दस्तु** बाधकत्वशङ्कानिरासार्थः। रजतादेर्भ्रान्तिप्रतिपन्नत्वाद्बाध्यत्वम्, अधिष्ठानप्रत्ययस्याभावप्रत्ययस्य वा प्रमाणत्वाद् बाधकत्वमित्याशयः। द्वितीये प्रसक्त्यसंभवान्न निषेधसंभव इत्याह—**नाप्रतिपन्नमिति**॥ अप्रतिपन्नस्यानिषेध्यत्वात् प्रतिपन्नस्यैव निषेध्यत्वमापादितमित्याशङ्क्याऽऽह—**नापीति**॥ प्रमितस्य निषेध आत्मनोऽपि निषेधप्रसङ्गाद् भ्रान्तिप्रतिपन्नस्य निषेध्यत्वं वक्तव्यम्, ततश्च न निष्प्रपञ्चप्रमितिविरोध इत्यर्थः। तृतीयं प्रत्याह—**नचोपासनेति**॥ "सर्वकामः" इत्यादि **सप्रपञ्चवाक्यार्थः**। अन्यपराणां तत्पराणां च विरोधेऽन्यपरदौर्बल्यमिति प्रसिद्धम्, ततः "सर्वकर्मे"त्यादीनामुपासनापरत्वान्न निषेधश्रुतिबाधकत्वमित्यर्थः। उपास्तिपरत्वेऽपि सप्रपञ्चपरत्वम्, अन्यथा निर्विषयत्वेनोपास्त्यसंभवादित्याह—**आरोपितेति**॥ "वाचं धेनुमुपासीत" इत्यादौ यथा समारोपितविषयमुपासनम्, तद्वदत्रापीत्यर्थः। अन्यतः प्राप्त्यर्थत्वादपि 'सर्वकर्मे'त्यादीनां न तत्परत्वमित्याह—**सृष्टिवाक्यैरिति**॥ सप्रपञ्चस्याप्रामाणिकत्वसमर्थनफलमाह—**तस्मादिति**॥

## ऋजुविवरणम्

अद्वितीयत्वप्रतिपत्त्या सर्वंजगदुपादानत्वप्रतिपादनं कर्तव्यमित्याह—**उच्यते; अद्वितीयेति**॥ अद्वितीयं ब्रह्मात्र प्रतिपाद्यम्। अद्वितीयार्थतासिद्धिश्च प्रत्यक्षादिसिद्धप्रपञ्चस्य ब्रह्मण्येवोत्पत्त्यादिप्रतिपादनेन, कारणान्तरे तदभावप्रतिपादने सति भवति; ननु तत्र निषेधमात्रेणाद्वितीयत्वसिद्धिः; कारणान्तरनिषेधेन विना तत्राभावासिद्धेः, तत्राभावासिद्धौ चाद्वितीयत्वसिध्यभावादिति भावः। **ननु तर्हीति**; प्रमितस्य न निषेध इति भावः। **न; श्रुतिसामर्थ्येति**। प्रबलप्रमाणेन विरोधे सति दुर्बलं न प्रमाजनकमिति भावः। **न तर्हीति**। यदुक्तमद्वितीयत्वसिध्यर्थं जगदुपादानत्वप्रतिपादनं कर्तव्यम्, उपादानत्वेन चार्थात् सप्रपञ्चत्वप्राप्तिः, सप्रपञ्चत्वप्राप्तौ सत्यां निषेधश्रुत्या तन्निषेधः क्रियतेऽद्वितीयत्वसिद्धयर्थमिति, तन्न स्यात्; सर्वोपादानत्वस्य सप्रपञ्चताप्रापकत्वाभावात्। कथं प्रापकत्वाभाव इति चेत्? न; निषेधश्रुतिविरोधात्, तदप्राप्तौ निषेधोऽपि निषेध्याभावान्न भवेदिति भावः॥ ननु शुक्तिरजतादौ यावद्बाधं रजतप्रतिभासो युक्तः; भिन्नकालत्वाद् बाधस्य, इह तु उपादानसामर्थ्य-निषेधयोरसमकालत्वान्न च यावद्बाधं वचनस्यार्थो विद्यत इत्याशङ्क्याह—**प्रतिपन्नमेव तु बलवत्प्रमाणेनेति**॥ बाधस्यापि प्राप्तिसापेक्षत्वात् न तत्समकालत्वमिति भावः तर्हि यावद्बाधं प्रमितिरेव कस्मान्नाङ्गीक्रियते? इत्याशङ्क्याह—

## पञ्चपादिकाविवरणम्

ननु जीवोऽपि वाक्यार्थप्रमितिविषयः, तस्मिन्प्रपञ्चे प्रत्यक्षावगते कथं निष्प्रपञ्चवाक्यार्थप्रमितिरिति ? उच्यते। न तावदनुमानादिगम्यः कर्तृत्वादिप्रपञ्चः, अपरोक्षत्वात्। नापि चक्षुरादिगम्यः; प्रत्यगात्मनो बाह्येन्द्रियाविषयत्वात्। मानसप्रत्यक्षगम्य इति चेत् ? किं तत्र प्रमाणम् ? सत्येव मनस्यात्मनि बन्धोपलब्धेः, असति च सुषुप्तेऽनुपलब्धेरन्वयव्यतिरेकौ प्रमाणमिति चेत् ? न; अन्यथासिद्धत्वात्; आत्मनि कर्तृत्वादिप्रपञ्चसत्ताकारणतयाऽप्यन्वय-व्यतिरेकोपपत्तेः। सुषुप्ते कर्तृत्वाद्यनवभासः किं मनसोऽभावात् किं वा स्वयमभावात्—इति संदिग्धव्यतिरेकत्वात्। प्रतीतिः करणमप्यपेक्षत इति चेत् ? न; आत्मचैतन्येनैवाव्यवधानात् प्रतिभासोपपत्तेः। ननु कर्तृत्व-भोक्तृत्व-राग-द्वेष-सुख-दुःखादयोऽप्यात्मनि स्वयंप्रकाशा इति बौद्ध-प्राभाकराः कल्पयन्ति ? नैतद् युक्तम्; तेषां द्रव्यत्वे बहुप्रकाशगुणकल्पनया तद्विशिष्टात्मप्रकाशकल्पनादात्मन एवैकं प्रकाशगुणं परिकल्प्य तदन्वयादितरेषां प्रकाशकल्पनाया लघीयस्त्वात्। तेषां गुणत्वे सति गुणस्य गुणान्तराभावान्न स्वयंप्रकाशता। त एव प्रकाशगुणा इति चेत् ? न; प्रकाशगुणस्य स्वाश्रयोपाधावादित्यादाविवानुत्पत्तेः। बन्धस्य स्वसत्तायां प्रतीतिव्यतिरेका-

## तत्त्वदीपनम्

प्रकारान्तरेण निष्प्रपञ्चप्रमितेर्विरोधं शङ्कते—**ननु जीव इति**॥ प्रत्यग्ब्रह्मैक्यवाक्यार्थविषयया प्रमित्या जीवो विषयीक्रियत इति वक्तव्यम्; अन्यथा तद्विषयत्वासंभवः। नच जीवविषयत्वं संभाव्यते; संसारिरूपस्य त्वंपदार्थस्यासंसार्यैक्याभावादित्यर्थः। किं त्वंपदलक्ष्यस्यैक्यासंभवः ? उत वाच्यस्य ? नाद्यः; लक्ष्ये संसारित्वाद्यसंभवात्। द्वितीयस्त्वङ्गीक्रियत इत्याशयेनाह—**उच्यत इति**॥ कर्तृत्वसुखादेः प्रामाणिकत्वात्तस्य निराश्रयत्वासंभवाच्चेतनाश्रयत्वं वक्तव्यमित्याशङ्क्य, किं कर्तृत्वादेरानुमानिकत्वम् ? उत प्रत्यक्षत्वम् ? उत प्रमाणान्तरगम्यत्वम् ? इति विकल्प्याद्यं प्रत्याह—**न तावदिति**॥ द्वितीयेऽपि किं बाह्येन्द्रियप्रत्यक्षत्वं ? उतान्तरेणेन्द्रियेणेति विकल्प्याद्यं प्रत्याह—**नापीति**॥ बाह्येन्द्रियमपि किं कर्तृत्वादिमात्रं विषयीकरोति ? उतात्मविशेषितम् ? प्रथमे नात्मनः सप्रपञ्चत्वमित्यभिप्रेत्य द्वितीयं प्रत्याह—**प्रत्यगात्मन इति**॥ आत्मन इन्द्रियाविषयत्वात्तद्विशिष्टकर्तृत्वादेरपि न तद्विषयत्वमित्यर्थः। द्वितीयमुत्थापयति—**मानसेति**॥ प्रमाणाभावान्नैतदित्याह—**किं तत्रेति**॥ प्रमाणाभावोऽसिद्ध इत्याह—**सत्येवेति**॥ अनन्यथासिद्धान्वय-व्यतिरेकयोः साधकत्वादत्र च तादृक्त्वाभावान्नैतदित्याह—**नान्यथेति**॥ तदेव साधयति—**आत्मनीति**॥ **सत्ताकारणतयाऽपीत्यस्यैषोऽर्थः**—मनसः कर्तृत्वादिसत्ताकारणत्वात् तद्विषयतयाऽन्वयादिसंभव इत्यर्थः। किंच व्यतिरेकस्य संदिग्धत्वादन्वयमात्रस्य चासाधनत्वान्न कर्तृत्वादेर्मानसत्वमित्याह—**सुषुप्त इति**॥ कर्तृत्वादिसाक्षात्कारः, करणजः, साक्षात्कारत्वात्, संप्रतिपन्नवत्। करणान्तरस्य चासंभवाद् मनसः करणत्वम्। ततश्च तदभावात् कर्तृत्वाद्यनवभास इति व्यतिरेकनिश्चय इति शङ्कते—**प्रतीतिरिति**॥ करणजन्यत्वं विनाऽपि साक्षात्कारत्वसंभवान्नायं प्रयोगः साधुरित्याह—**नात्मेति**॥ सुखाद्याकारान्तःकरणपरिणामव्यवधानमन्तरेणात्मा स्वाध्यस्तं सुखादिकं साधयतीत्यर्थः। सुखादीनामात्मसिद्धत्वमुक्तमसहमानः शङ्कते—**ननु कर्तृत्वेति**॥ प्रमाणाभावान्मैवमित्याह—**नैतदिति**॥ सुखादयः, स्वप्रकाशाः, स्वसत्तायां प्रतीतिव्यतिरेकविधुरत्वात्, संवेदनवत्, इत्यनुमानं प्रमाणमिति चेत् ? तत्र वक्तव्यम्—किं तेषां द्रव्यत्वम् ? उत गुणत्वम् ? आद्ये किं प्रकाशगुणकत्वम् ? उत प्रकाशस्वभावत्वम् ? तत्राद्ये पक्षे बाधकतर्कपराहतत्वादप्रयोजकत्वमित्याह—**तेषामिति**॥ **तदन्वयादिति**—प्रकाशगुणवदध्यासादित्यर्थः। स्वभावपक्षोऽपि गौरवप्रतिहत इति द्रष्टव्यम्। द्वितीयेऽपि किं सुखादेः प्रकाशो गुणः ? उत स्वभावः ? इति विकल्प्याद्यं दूषयति—**तेषामिति**॥ द्वितीयमनुवदति—**त एवेति**॥ सुखादीनां स्वाश्रयोपाधौ जायमानत्वान्न प्रकाशगुणत्वमित्याह—**न प्रकाशेति**॥ अयमर्थः—यः प्रकाशगुणः, स

## ऋजुविवरणम्

**नापि प्रमितमिति**॥ ननु "सर्वं खल्विदमि"त्यादिवाक्यैः सप्रपञ्चत्वं प्रतीयते, इत्याशङ्क्याह—**नचोपासनाप्रकरणेति**॥ ननु उपासनापरत्वेऽप्युपास्यस्य सप्रपञ्चत्वात्प्रपञ्चाभावे सत्युपासनानुपपत्तेस्तत्परत्वात्समकक्षत्वमित्याशङ्क्याह—**आरोपितरूपेणापीति**॥ ननु आरोपोऽपि नात्यन्तमप्राप्तस्य भवति, अपः प्रापकत्वेन तत्परत्वमित्याशङ्क्याह—**सृष्टिवाक्यैरिति**॥

कथं प्रपञ्चसत्ताकारणत्वेन मनसोऽन्वय-व्यतिरेकयोरन्यथासिद्धत्वम् ? सुषुप्तौ भोक्तृत्वाद्यनवभासे प्रतीतिहेतुत्वमेव निश्चीयत इत्याशङ्क्याह—**सुषुप्ते कर्तृत्वाद्यनवभास इति**॥ **अव्यवधानात्** तत्रैवाध्यस्तत्वेन साक्षात्संबन्धादित्यर्थः। ननु यदा सम्बन्धसत्ता, तदा प्रतीतिनियमोऽस्ति; अतः स्वसत्तायामस्फुरणशून्यत्वं स्वप्रकाशत्वेन विनाऽनुपपद्यमानं तत् कल्पयतीत्याशङ्क्याह—**बन्धस्य स्वसत्तायामिति**॥ किमिति बन्धापरोक्ष्यमात्मचैतन्यमात्रनिबन्धनमिति कल्प्यते ? क्लृप्तकारणा-

## पञ्चपादिका

**युक्तं चैतत्—नहि विपर्यासगृहीतं वस्तु तन्निरासादृते तत्त्वतो निर्णेतुं शक्यम्। तस्मात् पूर्वावसितमतद्धर्मं निरस्यदेव तत्त्वावद्योति वाक्यं तत्त्वमवसाययति ॥**

## पञ्चपादिकाविवरणम्

भावेऽपि न स्वयंप्रकाशमानतां कल्पयति; नित्यात्मप्रकाशसंसर्गादपि तदुपपत्तेः। नच क्लृप्तकारणाभावेऽपि बन्धापरोक्ष्ये प्रमाणकारणान्तरं कल्पयितुं युक्तम्; निष्प्रपञ्चागमविरोधात्, "इन्द्रो मायाभिरि"ति मिथ्याकारणान्तरक्लृप्तेश्च। तस्मादज्ञानादिसत्यमिथ्यावस्तुसाधारणेन साक्षिमात्रेण वेद्यत्वात् प्रपञ्चस्यासत्यतो निष्प्रपञ्चब्रह्मात्मप्रमितिः; सप्रपञ्चप्रमित्या न बाध्यते। तस्माद् अविद्या-तत्कार्यप्रपञ्चप्रतिभासाभावस्य तद्विरोधादेव ब्रह्मात्मविशेषणत्वेन प्रमातुमशक्यत्वाद् ब्रह्मात्मावगतिनान्तरीयकतया प्रतिभासिकबन्धनिवृत्तिरिति सूक्तम् ॥

ननु अनर्थनिवृत्तिर्न शास्त्रविषयश्चेत्, कथं विषयावगतिसामर्थ्यलभ्येति ? तत्र किमनर्थनिरासः पर्यनुयुज्यते ? तन्निरासप्रतिभासो वा ? यदि निरासः, तत्राह—**युक्तञ्चैतदिति** ॥ तत्त्वावभासविरोधित्वादविद्या-तत्कार्यत्वाच्चेति भावः ॥

## तत्त्वदीपनम्

स्वाश्रयोपाधौ न जायते; यथा सवितृप्रकाशः। सुखादयः स्वाश्रयोपाधौ जायन्ते। तस्मान्न प्रकाशगुणत्वमित्यर्थः। अस्वप्रकाशगुणत्वे स्वसत्तायां प्रतीतिव्यतिरेकराहित्यं कथं घटते ? इत्याशङ्क्याऽऽह—**बन्धस्येति** ॥ कर्तृत्वादिः प्रमाणान्तरगम्य इति तृतीयं पक्षं दूषयति—**नचेति** ॥ प्रमाणान्तराकल्पने हेत्वन्तरमाह—**इन्द्र इति** ॥ अवस्थाभेदाद् "मायाभिरि"ति बहुवचनम्। मायाऽवच्छिन्नः परमेश्वर एव तत्तदाकारेण परिणमते; अज्ञातस्रजः सर्पाद्याकारभाववदित्यर्थः। साक्षिणा प्रपञ्चस्य प्रतीयमानत्वान्निष्प्रञ्चप्रमितेस्तद्विरुद्धत्वशङ्कामुपसंहारव्याजेन निरस्यति—**तस्मादिति** ॥ प्रपञ्चसंबन्धस्य प्रामाणिकत्वाभावस्तच्छब्दार्थः। साक्षिसिद्धं परमार्थसदिति नियन्तुं न शक्यम्, मिथ्यावस्तुनोऽपि साक्ष्यधीनसिद्धित्वात्। ततश्च न तद्विरुध्यत इत्यर्थः। परमप्रकृतमुपसंहरति—**तस्मादिति** ॥ अविद्यादेर्भासमानत्वं तच्छब्दार्थः—**तद्विरोधादिति** ॥ प्रपञ्चप्रतिभासविरोधादित्यर्थः ॥

बन्धनिवृत्तेर्ब्रह्मावगतिनान्तरीयकत्वमाक्षिपति—**नन्वनर्थ इति** ॥ प्रमाणाभावादित्यर्थः। विपर्यासनिरासमन्तरेण वस्तु निर्णेतुमशक्यमित्युक्तम्, तत्र हेतुमाह—**तत्त्वावभासेति** ॥ विरोधं व्यनक्ति—**अविद्येति** ॥ अन्वयव्यतिरेकाभ्यां च विपर्यासस्य तत्त्वज्ञाननिवर्त्यत्वेनाधिगतिश्चशब्दार्थः ॥

तत्त्वमस्यादिवाक्ये नञाद्यभावेऽपि तज्जन्यज्ञानस्य विपर्यासनिवर्तकत्वसंभवात्, "ननु नञादेरि"त्यस्यायोगमा-

## ऋजुविवरणम्

भावेऽपि प्रमाणकारणान्तरमेव कल्प्यतामित्याशङ्क्याह—**नच क्लृप्तकारणाभावेऽपीति** ॥ कथं निष्प्रपञ्चागमविरोधेन प्रमाणकारणान्तरकल्पना निवार्यते ? प्रपञ्चावगमस्यापि कारणेन विनाऽनुपपद्यमानस्य तत्कल्पकत्वसामर्थ्यात् सिद्धे प्रमाणकारणे निष्प्रपञ्चावगम एवान्यथा क्रियतामित्याशङ्क्याह—**इन्द्रो मायाभिरिति** ॥ ननु—चैतन्येनापि सप्रपञ्चत्वप्रतीतौ कथं निष्प्रपञ्चत्वप्रतीतिः ? तद्विरोधात्, इत्याशङ्क्याह—**तस्मादज्ञानादीति** ॥ साक्षिणः प्रमाणत्वाभावात्। न च मिथ्याऽवभासेन विरोधः; सत्यस्यैव निषेधप्रतियोगित्वात्, मिथ्याभूतस्य साक्षिवेद्यत्वेन प्रतीति-निषेधयोर्भिन्नविषयत्वादिति भावः।

"युक्तं चैतदि"त्यादि पूर्वग्रन्थविरुद्धम्; पूर्वग्रन्थे हि बन्धनिषेधस्य शास्त्रीयत्वं नास्तीत्युक्तम्, अत्र विपर्यासगृहीतस्य विपर्यासनिरासादृते निर्णयाभावात् तन्निरासपूर्वकं निर्णयेन भवितव्यमिति वदता विषयत्वप्रतिपादनादित्याशङ्क्य चोद्यपूर्वकमवतारयति—**नन्वनर्थनिवृत्तिरिति** ॥ शास्त्रविषयस्यैव विषयावगतिसामर्थ्यलभ्यत्वमैन्द्रियकज्ञानस्येवेन्द्रियविषयविषयित्वमिति भावः। "नहि विपर्यासे"त्यनेन विपर्यासनिरासादृते निर्णयासंभवाद् निरासो भवतीत्युक्तम्, तदसम्बद्धम्; पूर्वं हि ज्ञानाज्ञानयोर्विरोधात् कर्तृत्वादेस्तत्कार्यत्वे निवृत्तिसंभवः, नान्यथेत्यज्ञानकार्यत्वमुक्तम्, इदानीं विपर्यासत्वमेव निवर्त्यत्वप्रयोजकमुपादीयते, इत्याशङ्क्याह—**तत्त्वावभासेति** ॥

"ननु च नञादेरि"त्ययुक्तं चोद्यम्; तत्त्वज्ञानस्य निवर्तकत्वात्, तस्य चात्र संभवादित्याशङ्क्याह—**ननु नेदं रजतमितीति** ॥ "नेदं रजतमिति यत्रे"त्यनेन विपर्यासमात्रनिरासो वस्तुतत्त्वाप्रतिपत्तिश्च यस्मिन् ज्ञाने तत्र नञपेक्षा भवति, न

**पञ्चपादिका**

**ननु च नञादेर्निरासकृतो निरस्यमानवाचिनश्च पदस्याश्रवणात्कथं तन्निरस्यदेवेति ? उच्यते; नेदं रजतमिति यत्र विपर्यासमात्रं निरस्यते, न वस्तुतत्त्वमवबोध्यते, तत्र तथा भवतु; इह पुनर्विज्ञानमेव तादृशमुत्पन्नम्, यद् विरोधिनिराकरणमन्तरेण न स्वार्थं साधयितुमलम्, तुलोन्नमनव्यापार इवानमननान्तरीयकः। तथा ह्युन्नमनव्यापारः स्वविषयस्य तुलाद्रव्यस्योर्ध्वदेशसम्बन्धं न साधयितुमलम्, तत्कालमेव तस्याधोदेशसम्बन्धमनपाद्य। नचोन्नमनकारकस्य हस्तप्रयत्नादेरानमनेऽपि कारकत्वम्; प्रसिध्यभावात्, अनुभवविरोधाच्च।**

**तदेवं विपर्यासगृहीते वस्तुनि तत्त्वावद्योतिशब्दनिमित्त आत्मनो ज्ञानव्यापारो**

**पञ्चपादिकाविवरणम्**

ननु 'नेदं रजतमि'ति विज्ञानम्, तत्र 'रजतमि'ति विपर्यासं निवर्तयति, इह तु 'अहं ब्रह्मास्मी'ति विज्ञानं वस्तुस्वरूपनिष्ठं न प्रपञ्चनिषेधविषयम्, तत्र कथं विपर्यासनिरासः ? इति चोदयति—**ननु च नञादेर्निरासकृत इति**॥ तत्र द्वे ज्ञाने विपर्यासविरोधिनी—विरोधिशुक्तिकादिभावान्तरात्मज्ञानम्, अध्यस्तवस्तुतत्त्वाभावज्ञानं च। तत्राध्यस्ततत्त्वाभावज्ञानेनाध्यासनिरासे नञाद्यपेक्षा, न विरोधिभावान्तरज्ञान इति परिहरति—**नेदं रजमिति यत्रेति**॥ ब्रह्मणि तु विरोधिभावान्तरज्ञानादध्यासनिवृत्तिरित्याह—**इह पुनर्विज्ञानमेव तादृशमिति**॥ ननु सर्वो हि व्यापारः स्वविषयमेव साधयति, न नान्तरीयकमर्थान्तरम्; अतो विपर्यासनिरासविषयो ज्ञानव्यापारो वक्तव्यः, न भावान्तरविषय इति ? नेति दृष्टान्तमाह—**तुलोन्नमनव्यापार इवेति**॥ अन्यविषयव्यापारादन्यविषयस्य नान्तरीयकतासिद्धिं साधयति—**तथाह्युन्नमनव्यापार इति**॥ ननु व्यापार एवोभयविषय इत्युभयं विषयतयैव सिध्यति, नान्यतरन्नान्तरीयकमिति ? नेत्याह—**नचोन्नमनकारकस्येति**॥

भवतु शुक्ति-ब्रह्मात्मज्ञानाभ्यां रजत-बन्धयोर्नान्तरीयको निरासः, निरासप्रतिपत्तिस्तु कथमिति ? सापि नान्तरीयकेत्याह—**तदेवं विपर्यासगृहीते वस्तुनीति**॥ **एवमिति**—यथा निरासस्तथा तत्प्रतिपत्तिरपीत्यर्थः। अभिनयेन दर्शयति—

**तत्त्वदीपनम्**

शङ्कयाऽऽह—**नन नेदमिति**॥ **निषेधविषयमिति**—अभावविषयमित्यर्थः॥ निषेधज्ञानस्य निवर्तकत्वम्, न भावान्तरज्ञानस्येति चोदिते, निषेधज्ञानस्य लोके निवर्तकत्वेऽप्यत्र भावान्तरज्ञानं निवर्तकमिति कथमुक्तम् ? व्याप्तिविरोधादित्याशङ्क्य व्याप्तेरुभयथा भावमाह—**तत्र द्वे इति**॥ उभयथाऽपि दर्शने कर्तृत्वादिनिवृत्तिः कं पक्षमवलम्बताम् ? तत्राह—**ब्रह्मणीति**॥ असंसार्यद्वितीयब्रह्माकारतयोत्पद्यमानस्तत्त्वप्रत्ययः स्वस्य विरोध्यध्यासनिवर्तक इत्यर्थः। इष्वादिव्यापाराणां स्वगोचरातिशयकारित्वनियमादर्थान्तरसाधकत्वमनुपपन्नमिति शङ्कते—**ननु सर्वं इति**॥ अन्यविषयस्याप्यन्यसाधकतादर्शनात्स्वविषयमेव साधयतीति नियमोऽनुपपन्न इत्याह—**नेतीति**॥ उन्नमनव्यापारस्याप्यन्यविषयस्य कथमानमनसाधकत्वम् ? इत्याशङ्क्य, साधकत्वप्रकारः पृच्छयते ? उतोन्नमनव्यापारस्याप्यनमनविषयत्वं साध्यते ? इति विकल्प्याऽऽद्यं दूषयति—**अन्यविषयेति**॥ द्वितीयमुत्थापयति—**ननु व्यापार इति**॥ लोकप्रसिद्ध्यनुभवविरोधान्नैवमित्याह—**नेत्याहेति**॥

ब्रह्मज्ञानस्य विपर्ययनिवृत्तिहेतुत्वमुपपाद्य, "तदेवमि"त्यनेन तद्भानहेतुतोपसंह्रियते, तदनुपपन्नमित्याशङ्क्य, तद्व्यावर्त्यां शङ्कामाह—**भवत्विति**॥ विपर्ययनिवृत्तिहेतुत्वस्य तच्छब्देनोक्तत्वादेवमित्येतद् व्यर्थमित्याशङ्क्याऽऽह—**एवमिति**॥ ज्ञानस्य व्यापार एव 'नाऽहं कर्ता' 'ब्रह्माहमि' ति ग्राहयतीत्युक्तत्वादभावबोधस्य नान्तरीयकत्वमनुपपन्नमित्याशङ्क्य, नान्तरीयकोऽर्थः स्पष्टीक्रियत इत्याह—**अभिनयेनेति**॥ तथाऽपि नान्तरीयकस्य पूर्वनिर्देशोऽनुपपन्न इत्याशङ्क्य, "अग्निहोत्रं

**ऋजुविवरणम्**

वस्तुतत्त्वज्ञानं इत्युक्तम्, तदसंबद्धम्; नञ्संबन्धमन्तरेण तत्त्वाप्रतिपत्तौ निवर्तकत्वादर्शनाद्विषयभेदनिरूपणायोगात्। "इह पुनर्विज्ञानमेव तादृशमि"त्यप्यसंबद्धम्; "नञ्वियुक्तस्य निषेधकत्वादर्शनात्" इति चोदिते विज्ञानमेव तादृशमिति वक्तुं न शक्यते; नञा सम्बन्धाभावे विज्ञानस्य तादृशत्वायोगात्, इत्याशङ्क्याह—**अत्रेति**॥ "इह पुनरि"त्यनेन कथं नञ्सम्बन्धानपेक्षत्वमुक्तमिति न ज्ञायते, विज्ञानस्य सामर्थ्यमात्रप्रतिपादनात्, तस्य च पक्षद्वयसाधारणत्वात्; नच नञपेक्षानिवारणमत्र न क्रियते; "तत्र तथे"ति वचनस्वारस्यात् तथा प्रतीतेः; अतोऽयुक्त इत्याशङ्क्याह—**ब्रह्मणि तु विरोधीति**॥

"तदेवमि"त्युपसंहार इव प्रतिभाति, तथा सत्यन्यदुक्तम्, अन्यदुपसंह्रियत इत्याशङ्का स्यात्; तन्निवृत्त्यर्थमवतारयति—**भवतु शुक्ति-ब्रह्मात्मेति**॥ "तदेवमि"ति व्याचष्टे—**यथानिरास इति**॥ ननु नान्तरीयकस्य कथं पूर्वनिर्देशः कृतः ?

### पञ्चपादिका

'नाहं कर्ता ब्रह्माहमिति ग्राहयति; 'नेदं रजतं शुक्तिकेयमि'ति यथा। तस्मात् 'शुक्तिकेयमि'त्येव निराकाङ्क्षं वाक्यम्, 'नेदं रजतमि'त्यनुवादः॥

अत एवाख्यातपदस्य वाक्यत्वे क्रियाज्ञानादेव तत्साधनमात्रेऽपि प्रतीतिसिद्धेः पदान्तराणि नियमायानुवादाय वेति न्यायविदः। तथाचाहुः—"यजतिचोदना द्रव्य-देवता-क्रियासमुदाये कृतार्थत्वादि"ति॥ अपरे तु "यज्ञं व्याख्यास्यामो द्रव्यं

### पञ्चपादिकाविवरणम्

**नाहं कर्ता ब्रह्माऽहमिति**। व्युत्क्रमेण सम्बन्धः। ब्रह्माहमिति वाक्यार्थबोधेऽहं ब्रह्मैव चेत्, नाहं कर्तेति नान्तरीयकबोधः। 'नेदं रजतमि'त्यत्राप्येषैव योजना। ननु वाक्यमेव द्व्यर्थं किं न स्यादिति? नेत्याह—**तस्माच्छुक्तिकेयमित्येव निराकाङ्क्षमिति**॥ **अनुवाद** इति; वाक्यार्थज्ञाननान्तरीयकसिद्धस्यानुवाद इत्यर्थः॥

अर्थान्तरज्ञानेनार्थान्तरज्ञानस्य नान्तरीयकप्रतिभासे दृष्टान्तमाह—**अत एवाख्यातपदस्येति**॥ वाक्यार्थभूतक्रियावाचकत्वादाख्यातस्य वाक्यत्वम्। क्रियाज्ञानसामर्थ्यादेव सर्वसाधनानां निकल्पेन क्रियान्वयप्रतिपत्तौ पदान्तराण्यन्यतमनियमार्थानि, नित्यवदन्वयप्रतिपत्तावनुवादमुखेनान्यनिवृत्त्यर्थानीत्यर्थः। सम्भवति च नित्यवदन्वयप्रतिपत्तिः; एकस्य बहुसाधनतोपपत्तेः। **तथाचाहुः-"यजतिचोदने"**त्यादि। उदाहरणान्तरं श्रुतार्थापत्त्यैवार्थान्तरप्रतिपत्तौ॥ कथं द्रव्य-देवतयोर्यागश्रुत्यन्यथा-

### तत्त्वदीपनम्

जुहोति" "यवागूं पचती"तिवद्वैपरीत्येन संबन्ध इत्याह—**व्युत्क्रमेणेति**॥

साध्यक्रियाज्ञानात्साधनप्रतीतिरुदाहृता, ब्रह्मज्ञानं प्रति निरासस्यासाधनत्वमिति वैषम्यमित्याशङ्क्य तात्पर्यमाह—**अर्थान्तरेति**॥ पदसमुदायस्य वाक्यत्वात् पदमात्रस्य वाक्यत्वं कथमुक्तम्? इत्याशङ्क्याऽऽह—**वाक्यार्थेति**॥ क्रियाज्ञानसामर्थ्यात् साधनस्यापि प्रतीतत्वात् पदान्तरस्यानुवादकत्वं भवेत्, न नियमार्थत्वम्, पक्षे प्राप्तौ नियमसंभवादित्याशङ्क्याऽऽह—**क्रियाज्ञानेति**॥ क्रियायाः साधनापेक्षत्वाद् ब्रीहि-यवादीनां विकल्पेन साधनताप्रतिपत्तौ पदान्तरस्य नियमार्थत्वम्, युगपद् बहुसाधनकारणानां प्रतिपत्तावनुवादकत्वमित्यर्थः। बहूनामेकक्रियां प्रति युगपत् कथं साधनत्वेनान्वय इत्याशङ्क्याह—**संभवति चेति**॥ गुडदध्याद्यनेकसाधनानामेकभुजिक्रियासाधनत्वदर्शनादित्यर्थः॥ "यजतिचोदने"त्यत्र चोदनाया द्रव्याद्यात्मत्वं सामानाधिकरण्येनोच्यते, तच्चानुपपन्नम्। नच—अत्र चोदनाया द्रव्याद्यभिधायित्वं विवक्षितमिति—शङ्क्यम्; तस्य प्रस्तुतानुपयोगादित्याशङ्क्य तात्पर्यमाह—**तथाचेति**। **उदाहरणान्तरमिति**। अभियुक्तोक्त्यन्तरमुदाह्रियत इत्यर्थः, न दृष्टान्तान्तरमत्रोक्तम्; पूर्वोक्तस्यैवोच्यमानत्वादिति द्रष्टव्यम्। कथं क्रियावद् द्रव्य-देवतयोरपि वाच्यत्वं प्रतीयते नान्तरीयकत्वात्? इति शङ्कते—**कथमिति**॥ अनुपपत्तिगम्यतया यजत्यर्थता कथम्? यजत्यभिधेयत्वमेव किं न स्यादित्यक्षरार्थः। क्रियामात्रबोध-

### ऋजुविवरणम्

तथा "शब्दनिमित्तः" इत्युपक्रम्य, नाहं कर्तेति प्रदर्शितत्वात्, नान्तरीयकत्वासंभव इत्याशङ्क्य व्याचष्टे—**व्युत्क्रमेणेति**॥ ननु "नेदं रजतमित्यनुवादः" इत्यसम्बद्धमुक्तम्; तस्य पुरोवादसाकाङ्क्षत्वेन पूर्ववाक्यस्य व्यर्थत्वप्रसङ्गात्, इत्याशङ्क्य व्याचष्टे—**अनुवाद इति॥ वाक्यार्थेति॥**

"अत एवाख्यातस्ये"त्यसङ्गम्, व्यधिकरणं च। नहि बन्धनिवृत्तेर्नान्तरीयकताप्रतिभासः क्रिया ज्ञानादेव सर्वसाधनानां क्रियान्वयप्रतीतिं साधयति, येन "अतः" इत्युच्येतेत्याशङ्क्यावतारयति—**अर्थान्तरज्ञानेनेति**॥ नान्तरीयकत्वमुपजीव्यमित्युक्तं भवति। कथमाख्यातपदस्य वाक्यत्वमुक्तम्? विरोधात्, अनेकपदात्मकं हि वाक्यम्, नैकं पदमित्याशङ्क्य व्याचष्टे—**वाक्यार्थभूतक्रियेति**॥ "क्रियाज्ञानादेव तत्साधनप्रतीतिरि"त्यसंबद्धमुक्तम्; अन्यज्ञानस्यान्यप्रतिभासकत्वायोगात्, इत्याशङ्क्याह—**क्रियाज्ञानसामर्थ्यादिति**। क्रिया हि कारकनिष्पाद्यस्वभावा, तेन तद्बोधकस्य नान्तरीयकं तत्साधनबोधकत्वं यथा, तद्वदित्यर्थः। "नियमायानुवादाय वे"त्यसंबद्धमुक्तम्; साधनमात्रप्रतीतौ नियमायोगात्, पाक्षिकविषयत्वान्नियमस्य, पाक्षिकप्रतीतिविवक्षायाम्—"अनुवादायवे"त्यसंबद्धं भवेत्, पक्षे प्राप्तावनुवादायोगादित्याशङ्क्य, प्रतीतिशब्दस्य विभज्यार्थं दर्शयति—**विकल्पेन क्रियान्वयप्रतिपत्ताविति**॥ अनुवादपक्षे प्रतीतिशब्दं व्याचष्टे—**नित्यवदन्वयप्रतिपत्ताविति**॥ नियमपक्षे त्वन्यनिवृत्तिरर्थात्, अनुवादपक्षेत्वन्यनिवृत्तिरेवार्थ इति कथमेकक्रियायां सर्वसाधनानां नित्यवदन्वयप्रतिपत्तिः? इत्याशङ्क्याह—**संभवति च नित्यवदिति**॥ तथाचाहु "यजतिचोदने"त्यादिरित्यत्रोदाहरणान्तरशब्दप्रयोगाद द्वितीयोदाहरणप्रयोजनमाहेति

### पञ्चपादिका

देवता त्यागः" इति । कथम् क्रियामात्रवाचिनो द्रव्यदेवताभिधानं नान्तरीयकं तद्विषयज्ञाननिमित्तत्वं विहाय । प्रत्यक्षबाधस्याप्ययमेव प्रकारः, असंप्रयुक्तविषयत्वाद्बाधस्य ॥

**तदेवमशाब्दमविद्याविलयं मन्वानः श्रुति-न्यायकोविदो भगवान् भाष्यकारो विषयात् पृथङ् निर्दिशति—अस्यानर्थहेतोः प्रहाणायेति ॥ चतुर्थीप्रयोगोऽपि विद्यासामर्थ्यसिद्धिमभिप्रेत्य, न तदर्थमुपादानम् ।**

### पञ्चपादिकाविवरणम्

नुपपत्तिगम्यतया यजत्यर्थतेत्याशङ्क्याह—**कथं क्रियामात्रवाचिन इति** ॥ ननु यत्र विपर्यासगृहीतस्य वस्तुनो विरोधिभावान्तरात्मविषयं वाक्यं विपर्यासं निवर्तयति, तत्र विपर्यासनिरासप्रतिपादने वाक्यस्य सामर्थ्याभावान्नान्तरीयकं निरासज्ञानमस्तु; यत्र पुनः प्रत्यक्षं बाधकम्, तत्र विपर्यासनिरासविशिष्टभावान्तरज्ञानमेव बाधकम्; न तत्र विपर्यासनिरासस्य नान्तरीयकज्ञानम्, इहाप्यपरोक्षज्ञानाद् बन्धनिवृत्तेरुभयविषयमेव ज्ञानं नान्यतरस्य नान्तरीयकतेत्याशङ्क्याह—**प्रत्यक्षबाधस्यापीति** ॥ न तावदनुपलब्धिगम्यो रजताभावः; पुरोदेशे दृश्यमानत्वात्; अथ संप्रयोगगम्य इति, नेत्याह—**असंप्रयुक्तविषयत्वादिति** ॥ रजत-तदभावौ न संप्रयोगयोग्यावित्यर्थः ।

**तदेवमशाब्दमित्युपसंहारः** स्पष्टार्थः ॥ ननु ब्रह्मविद्याफलमनर्थहेतुनिरासो न वेदान्तारम्भफलम्, तत्र कथं 'प्रहाणाय वेदान्ताः' ? इत्याशङ्क्याऽऽह—**चतुर्थीप्रयोगोऽपीति** ॥ **उपादानं** वेदान्तारम्भ इत्यर्थः । तर्हि ब्रह्मविद्याफलत्वान्न शास्त्रस्या-

### तत्त्वदीपनम्

कल्पसंभवेऽनेकत्र शक्तिकल्पनायां गौरवं स्यादिति समाध्यर्थः । यजतिचोदना क्रियां साक्षाद् बोधयन्ती द्रव्य-देवतयोरपि प्रतीतिमुपजनयति, तत्र हेतुमाह—**समुदाय इति** ॥ द्रव्यदेवताक्रियाणां समुदायबोधे चोदनाया आकाङ्क्षोपरमादिति सूत्रार्थः ॥ उक्तन्यायस्य प्रत्यक्षबाधेऽपि समानत्वादतिदेशो व्यर्थ इत्याशङ्क्याभ्यधिकां शङ्कामाह—**ननु यत्रेति** ॥ पदार्थस्य वाक्यार्थत्वाद् विपर्यासनिरासस्य चापदार्थत्वान्न वाक्यगम्यत्वम्, ततो नान्तरीयको निरासबोध इत्यर्थः । ततो वैषम्यमाह—**यत्र पुनरिति** ॥ तथाऽपि प्रस्तुते किमायातमिति ? अत्राह—**इहापीति** ॥ परोक्षबाधेऽधिष्ठानज्ञानस्य विपर्यासनिरास-तत्प्रतिभासहेतुत्वं यथा नान्तरीयकम्, तद्वत् प्रत्यक्षबाधेऽपीत्युक्तम्, तत्र नान्तरीयकत्वं कस्मात् ? इति वीक्षायां प्रकारान्तरासंभवादित्याशयेनाभावबोधस्य प्रत्यक्षत्वं निराकर्तुमनुपलब्धिगम्यत्वं तावन्निरस्यति—**न तावदिति** ॥ रजताभावज्ञानं संप्रयोगजमिति मतान्तरमुत्थापयति—**अथेति** ॥ संप्रयोगजन्ये ज्ञानेऽभावः प्रतीयत इत्यर्थः । बाधस्यासंप्रयुक्तविषयत्वमसिद्धम्, इत्याशङ्क्याऽऽह—**रजतेति** ॥ रजतस्य प्रतिभासमात्रशरीरतया संप्रयोगायोग्यत्वात् तदभावस्यापि संप्रयोगानर्हत्वमित्यर्थः ॥

विद्याऽविद्ययोर्विरोधप्रसिद्धेर्नानर्थनिवृत्तेर्वेदान्तफलत्वमिति शङ्कते—**ननु ब्रह्मेति** ॥ विद्याद्वारेणानर्थनिवृत्तेर्वेदान्तफलत्वं युक्तमिति समाध्यर्थः । उपादानशब्दस्यार्थक्रियापरत्वं व्यावर्तयति—**उपादानमिति** ॥ अनर्थनिवृत्तेर्विद्याद्वारा शास्त्रफलत्वं कस्मात् ? शास्त्रस्य प्रमितिः फलम्, प्रमितेस्त्वनर्थनिवृत्तिः किं न स्यात् ? इति शङ्कते—**तर्हीति** ॥ ब्रह्मविद्या फलं यस्य

### ऋजुविवरणम्

गम्यते । "श्रुतार्थापत्त्यै"वेति पूर्वं यजिबोधान्तर्गतत्वं विवक्षितमिति द्योतितम् । ननु यजिवाच्यत्वमेव कस्मान्नाङ्गीक्रियत इति चोदयति—**कथं द्रव्य-देवतयोरिति** ॥ **वाक्यस्य सामर्थ्याभावादिति** ॥ अयमर्थः—पदार्थस्यैव वाक्यार्थत्वाद्विपर्यासनिरासविषयपदाभावात् कथं प्रत्यक्षबाधे पूर्वन्यायातिदेशः ? व्यपकान्तराभावे हि स्थितस्याभावस्य नान्तरीयकतया प्रतिभासो भवेत्; तदभाव एव कथमित्याशङ्क्याह—**न तावदनुपलब्धीति** ॥ अनेनानुपलब्धिलिङ्गमभावप्रमाणं वा ग्राहकं न भवति; अपरोक्षत्वादित्युक्तम्—**अथ सम्प्रयोगजन्य इति** ॥ **अस्यायमर्थः** ॥ संप्रयोगादुत्पद्यते ज्ञायते चेति संप्रयोगजन्यज्ञानजन्यत्वेन तज्जन्यत्वं ज्ञानविषयत्वमपीति चोद्यार्थः । अथवा, संप्रयोगजन्ये ज्ञाने प्रतीयत इति चोद्यार्थः । असंप्रयुक्ततया बाधस्याविषयत्वमित्ययुक्तमुक्तम्; संप्रयोगोऽपि तेन भवत्विति चोदितुं शक्यत्वादित्याशङ्क्य व्याचष्टे—**रजत-तदभावाविति** ॥ रजतस्य प्रतिभानमात्रम्, पुरोवर्तित्वेनाविषयत्वम्, :निरासस्य तु ज्ञानाधीनत्वात् पूर्वं तदभावादेव न सम्प्रयोगयोग्यत्वमित्यर्थः । सम्प्रयुक्तत्वाभावे तज्जन्यज्ञानस्यापि न तद्विषयत्वम्; इन्द्रियविषयस्यैव ज्ञानविषयत्वादिति ॥

"न तदर्थमुपादानमि"त्यत्र तच्छब्देन विद्यासामर्थ्यसिद्धत्वविवक्षया चतुर्थीप्रयोगो न भवति, वेदान्तारम्भो वेत्युक्तमिति प्रतिभाति; एकग्रन्थत्वात्, तदयुक्तम्; इष्टव्याघातादित्याशङ्क्य व्याचष्टे—**वेदान्तारम्भ इति** । तच्छब्देन विद्या निर्दिश्यते;

## पञ्चपादिका

प्रयोजनत्वं च पुरुषाकाङ्क्षयैवास्तु। न हि विद्या गवादिवत्तटस्था सिध्यति, येनाप्तिः पृथगुपादीयेत। सा हि वेदित्राश्रया वेद्यं तस्मै प्रकाशयन्त्येवोदेति। सत्यमेवमन्यत्र; प्रकृते पुनर्विषये विद्योदितापि न प्रतिष्ठां लभते, असम्भावनाभिभूतविषयत्वात्।

## पञ्चपादिकाविवरणम्

नर्थनिरासः प्रयोजनम्? न; परम्परयाऽपि पुरुषाकाङ्क्षितप्रयोजनत्वोपपत्तेरित्याह—**प्रयोजनत्वं चेति**॥ विद्याप्रतिपत्तय इति
प्रतिपत्तिशब्दमाक्षिपति—**नहि विद्या गवादिवदिति**॥ ज्ञानं हि वस्तुतः प्रतीतितश्च ज्ञातुरुत्पत्त्यैवाप्तमेवेत्यर्थः। तत्र प्रत्यक्षान्तरेषु
स्वविषयेण सहापरोक्षावभासा विद्या भवति, आप्तिशब्देन च विषयेण सहापरोक्ष्यनिश्चयो विवक्ष्यते, तदिह न संभवतीत्याह—
**सत्यमेवमन्यत्रेति**॥ अत्र "विद्या"इति शक्तितात्पर्यविचारसहकृताच्छब्दाद् यत् प्रमाणज्ञानमुत्पद्यते, तदभिधीयते। तस्य
"प्रतिष्ठा" स्वविषयेण सहापरोक्ष्यमिति। **तत्र"असंभावनेति** चित्तस्य ब्रह्मात्मपरिभावनाप्रचयनिमित्ततदेकाग्रवृत्त्ययोग्य-
तोच्यते। "विपरीतभावनेति शरीराद्यध्याससंस्कारप्रचयः।

ननु अपरोक्षावभासनिमित्तप्रमाणगृहीते वस्तुनि नोभयविधचित्तदोषादपरोक्षनिश्चयाभावदर्शनमस्तीति? तत्राह—

## तत्त्वदीपनम्

सुखप्राप्ति-दुःखनिवृत्त्योरन्यतरस्य पुरुषाणां काङ्क्षि-
शास्त्रस्य, तद् ब्रह्मविद्याफलम्, तस्य भावस्तत्त्वम्; तस्मादिति विग्रहः। टीकायामाकाङ्क्षाशब्दः कर्मपर इति
तत्वाद्विद्यायाश्च तथात्वाभावात् शास्त्रमनर्थनिवृत्तौ पर्यवस्यतीत्याह—न; **परम्परयेति**॥ 
द्रष्टव्यम्॥ ईप्सितानर्थनिवृत्तेः प्रयोजनत्वमभिधाय, "नहि विद्ये"ति विद्यायास्ताटस्थ्यं निराक्रियते, तदसङ्गतम्; प्रस्तुतानुप-
योगात्, आप्तेर्भाष्येऽनुपात्तत्वात् तदाक्षेपोऽप्ययुक्त इत्याशङ्क्य तात्पर्यमाह—**विद्येति**॥ प्रतीतिविशिष्टतया आप्तिः प्रतिपत्ति-
शब्देन विवक्ष्यत इति शङ्कायामाह—**ज्ञानं हीति**॥ वेदित्राश्रयत्वेन वेद्यप्रकाशकत्वेन च विद्याया उत्पन्नत्वादप्यनुपपत्तिशङ्कायां
तदपरिहारेणाप्रतिष्ठोपपादनमसंगतमित्याशङ्क्य तात्पर्यमाह—**तत्रेत्यादिना**॥ तत्रैषा योजना—आप्तिशब्देन विषयेण सहाऽप-
रोक्ष्यमुत्पन्नाया विद्याया आप्तिरिति यद्विवक्ष्यते, तन्न संभवतीति संबन्धः। घटादिप्रत्यक्षवदत्रापि तथात्वं किं न स्यात्?
इत्याशङ्क्य स्पष्टविषयत्वान्न तत्रानाप्तिरित्याह—**तत्र प्रत्यक्षेति**॥ अपरोक्षविद्याया एव विद्याशब्दत्वात् कथमाप्तिरित्याशङ्क्य,
विद्याशब्दार्थमाह—**अत्र विद्येति**॥ **अत्र** भाष्ये इत्यर्थः। अस्य पदस्यास्मिन्नर्थे सामर्थ्यम्, अस्य वाक्यस्यास्मिन्नर्थ इति योऽयं
विचारः, तत्सहकृतादित्यर्थः। प्रतिष्ठाशब्दस्य स्थितिवाचित्वशङ्कां निरस्यति—**तस्य प्रतिष्ठेति**॥ असंभावनादेर्विचारेणा-
निरस्तत्वादसंभावनाभिभूतविषयत्वमसिद्धमित्याशङ्क्याह—**तत्रासंभावनेति**॥ ब्रह्मण आत्मभावेन परिभावना, तथा तस्याः
प्रचयो निमित्तं यस्याः सा, तथोक्ता, सा च तदेकाग्रवृत्तिश्चेति तथा, तां प्रति चित्तस्ययोग्यता सा तथोक्ता॥
वेदान्तानामपरोक्षप्रमाकरणत्वाङ्गीकरणात् कथं तत्त्वविद्यायामप्रतिष्ठत्वमिति शङ्कते—**नन्वपरोक्षेति**॥ असं-

## ऋजुविवरणम्

साक्षात् तत्प्रयोजनत्वं न विवक्षितमित्युक्तम्। "नहि विद्या गवादिवदि"त्यनेनाप्तेः पृथगुपादानमाक्षिप्तम्, तदसङ्गतम्; नह्याप्तिः
क्वाप्युपात्ता दृश्यते, येनाक्षिप्य साध्येत; अतो हेय इत्याशङ्क्यावतारयति—**विद्याप्रतिपत्तय इति**॥ **प्रतिपत्तिशब्दमिति**॥
"नहि विद्या गवादिवदि"त्यादिनाऽत्माश्रयत्वेन बेद्यप्रकाशकत्वेन चोत्पद्यत इत्युक्तम्, प्रतीतितोऽवाप्तिर्नोक्ता। तथा च सति
प्रतीतितोऽवाप्तिसिध्यर्थं प्रतिपत्तिग्रहणं भाष्यगतं युक्तम्, अत आक्षेपोऽनुपपन्न इत्याशङ्क्याभिप्रायमाह—**ज्ञानं हि वस्तुत इति**॥
"सत्यमेवमि"त्युक्तं वैषम्यम्; पृथगाप्त्यभावेनाक्षेपे प्रतिष्ठाभावाभिधानात्, न च तावन्मात्रेणानवाप्तिः; संशयादौ व्यभिचारा-
दित्याशङ्क्यावतारयति—**तत्र प्रत्यक्षान्तरेष्विति**॥ टीकायाम् 'विद्योदितापि न प्रतिष्ठां लभत' इत्युक्तम्, तत्र विद्याशब्द-
प्रयोगेणापातप्रतीतिमात्रमुक्तमिव प्रतिभाति; प्रतिष्ठाऽभावकीर्तनात्, असंभावना-विपरीतभावनाऽभिभूतविषयत्वस्य प्रतिष्ठा-
भावहेतुत्वेन कीर्तनाच्च। न च प्रमाणज्ञाने प्रतिष्ठाऽभावोऽसंभावनादि च संभवति; तथा सति व्यधिकरणत्वं परिहारस्य
तदवस्थम्। भाष्ये हि वेदान्तजनितज्ञाने 'प्रतिपत्ति'शब्दः प्रयुक्तः, न च तत्र प्रतिष्ठाऽभावादि वक्तुं शक्यते, तेन नानेन प्रतिपत्ति-
शब्दः समर्थ्यत इत्याशङ्क्याह—**अत्र विद्येति**॥ **शक्ति-तात्पर्येति**॥ कथं तर्ह्यप्रतिष्ठेत्याशङ्क्याह—**तस्य प्रतिष्ठेति**॥ कथं तर्ह्य-
संभावनाद्यभिभूतविषयत्वमुक्तम्? विचारेण तदपनयनादित्याशङ्क्य व्याचष्टे—**तत्रासंभावनेति**।**"चित्तस्येति**॥

ननु विषमो दृष्टान्तः; तत्रापि ज्ञानस्य विषयेण सहापरोक्ष्यादित्याशङ्क्याभिप्रायमाह—**असंभावितविशेषांशेति**॥

## पञ्चपादिका

तथा च लोकेऽस्मिन् देशे काले चेदं वस्तु स्वरूपत एव न सम्भवतीति दृढभावितम्, यदि तत्कथञ्चिद्दैववशादुपलभ्येत, तदा स्वयमीक्षमाणोऽपि तावन्नाध्यवस्यति, यावत् तर्केण तत्सम्भवं नानुसरति। तेन सम्यग्ज्ञानमपि स्वविषयेऽप्रतिष्ठितमनवाप्तमिव भवति। तेन तत्स्वरूपप्रतिष्ठायै तर्कं सहायीकरोति। अत एव प्रमाणानामनुग्राहकस्तर्क इति तर्कविदः॥

अथ कोऽयं तर्को नाम ? युक्तिः। ननु पर्याय एषः, स्वरूपमभिधीयताम्। इदमुच्यते—प्रमाणशक्तिविषयतत्सम्भवपरिच्छेदात्मा प्रत्ययः।

## पञ्चपादिकाविवरणम्

**तथाच लोकेऽस्मिन्देशे काल इति॥** यथा दूरदेशवर्तिन्यार्द्रमरीचफलादौ तथाविधवस्तुदर्शनसंस्कारशून्यतया विपरीतसंस्कारवत्तया च प्रत्यक्षदृष्टेऽपि न निश्चिनोति। असंभावितविशेषांशापरोक्षनिश्चयो नोत्पद्यत इत्यर्थः। ननु प्रमाणादनिश्चीयमानः कथं तर्कप्रत्ययान्निश्चीयत इति ? तत्राह—**अत एव प्रमाणानामिति॥** प्रसिद्धैव सहकारिसंपत्तौ फलसिद्धिरित्यर्थः।

ननु तर्कस्यापि प्रमाणत्वे कथं प्रमाणद्वयादर्थनिश्चयो भवति ? अप्रमाणत्वे नतरामिति मन्वान आह—**अथ कोऽयमिति॥** अप्रमाणमपि तर्कः सहकार्येव; प्रत्ययविशेषत्वात्, इत्याह—**प्रमाणशक्तिविषयतदिति**। तेषां तत्त्वं तदित्युच्यते। प्रमाणादितत्त्वे संभवासंभवप्रत्ययस्तर्को न निश्चयरूप इत्यर्थः॥

## तत्त्वदीपनम्

भावनादिरुभयविधो दोषः। "तथाच लोक" इत्यनेन सूचितमुदाहरणं स्पष्टयति—**यथा दूरदेश इति॥** मरीचफलमिदमित्याप्तोक्तौ तथा निश्चिनोतीत्याशङ्क्याह—**असंभावितेति॥** आर्द्रताविशिष्टमरीचिफलत्वं **विशेषांशशब्दार्थः**। यथा यवाङ्कुरजननासमर्थस्य शालिबीजस्य सहकार्यनुरोधादपि तदजनकत्वम्, तद्वद्वेदान्तानामपीति शङ्कते—**नन्विति॥** वेदान्तेष्वसामर्थ्यमसिद्धमित्याह—**तत्राहेति॥** सामर्थ्ये सहकार्यपेक्षा न युक्तेत्याशङ्क्याह—**प्रसिद्धेति॥** धूमजननसमर्थस्यापि दहनस्येन्धनसन्निधौ धूमजनकत्ववद् वेदान्तानामपि तथात्वमित्यर्थः। प्रकारान्तरेण तर्कापेक्षां प्रतिक्षिपति—**ननु तस्येति (तर्कस्येति)॥** आलोकादिवदप्रमाणत्वेऽपि सहकारित्वं युक्तमित्याह—**अप्रमाणमपीति॥** "प्रमाणशक्तिविषयतत्संभवासंभवे"त्यत्र तच्छब्दस्य वैयर्थ्यमित्याशङ्क्याह—**तेषामिति॥** परिच्छेदशब्दस्य निश्चयवाचित्वशङ्कां निरस्यति—**प्रमाणादीति॥**

वेदान्तानां प्रमितौ तर्कापेक्षत्वेऽप्रामाण्यापत्तिरित्युक्तम्, तत्रानपेक्षताप्रामाण्यभङ्गप्रसञ्जनमिष्टमित्याशङ्क्यानिष्टापत्तिं दर्शयितुं पूर्वतन्त्रनिर्वृत्तमर्थमाह—**तत्रेत्यादिना॥** उभयं स्वत इति **सांख्याः**; परत इति **नैयायिकादयः**; तृतीयस्तु सुगतमतानुसारिणाम्। तत्राद्यं दूषयति—**तत्रेति॥** स्वतस्त्वं ज्ञानसामग्रीमात्रप्रयोज्यत्वम्। तत्रोभयोरपि स्वतस्त्व एकव्यक्तावपि सद्भाव आपतेत्, स च विरुद्ध इत्यर्थः। अथवाऽग्निरुष्णः शीतश्चेति वाक्यं यथा विरुद्धार्थत्वादप्रमाणम्, तथा

## ऋजुविवरणम्

"अत एव प्रमाणानामि"ति व्यधिकरणम्; प्रमाणादनिश्चिते कथं तर्कप्रत्ययस्य निश्चायकत्वमिति चोदिते तत्परिहारमनुक्त्वा सहकारित्वनिरूपणादित्याशङ्क्याभिप्रायमाह—**प्रसिद्धैव सहकारीति॥**

अप्रमाणत्वे सुतरामसहकारित्वमिति यच्चोदितम्, तत्परिहारेणावतारयति—**अप्रमाणमपीति॥** "परिच्छेदात्मा प्रत्ययः" इति वदता निश्चयप्रत्ययस्यैव तर्कत्वमुक्तमिव प्रतिभाति, तन्निवृत्त्यर्थमाह—**प्रमाणादितत्त्व इति॥**

"नन्वेवमि"त्यनेनानपेक्षत्वापगमेनाप्रामाण्यं भविष्यतीति यच्चोदितम्, न तदनिष्टम्; भवतु नामानपेक्षत्वहानेनाप्रामाण्यम्, नह्यनपेक्षत्वेन प्रामाण्यं सिद्धम्, न वा तत्प्रमाणत्वेनापि सिद्धम्; अतस्तदपगमेन चोद्यकरणमयुक्तमित्याशङ्क्यावतारयति—**तत्रेदं निरूपितमिति॥** उभयं स्वत इति **सांख्याः**; उभयं परत इति **वैशेषिकादयः**; प्रामाण्यं परतः, अप्रामाण्यं स्वत इति **बौद्धाः॥** **विरोधादिति**। अयमर्थः—प्रमाणत्वमप्रमाणत्वं च परस्परपरिहारस्थितलक्षणेन विरोधेन विरुद्धम्; अतो नैकस्य ज्ञानस्य युगपत्तयोः संभवः। न च रक्तारक्तत्वयोरेकत्र क्रमेण समावेशवत् प्रमाणत्वाप्रमाणत्वयोः समावेशसंभवः; क्षणिकत्वाद् ज्ञानस्य तथा "स्वतो द्वयमि"ति वदतः प्रमाणत्वाप्रमाणत्वे प्रति परापेक्षाऽपि नास्तीति क्रमेणापि न तयोः संभवः; तत्र विरोधपरिहाराय नीलपीतवद्भिन्नव्यक्तिगतत्वं परिगृह्णाति—**ननु व्यक्तिभेदेनेति॥** **प्रतीतितस्त्विति**। बोधस्वरूपत्वं सर्वज्ञानेषु

## पञ्चपादिकाविवरणम्

तत्रेदं निरूपितं प्रथमे तन्त्रे—ज्ञानानां प्रामाण्यमप्रामाण्यं च स्वत इति केचित्। उभयमपि परत इत्यन्ये। प्रामाण्यं परतः, अप्रामाण्यं स्वत इत्यपरे। अप्रामाण्यं परतः, स्वतः प्रामाण्यमिति वेदवादिनः। तत्र न तावज्ज्ञानानां प्रामाण्यमप्रामाण्यं च स्वत इति युज्यते; विरोधात्। ननु व्यक्तिभेदेन व्यवस्था? सत्यमर्थतस्तथैव, प्रतीतितस्तु प्रमाणाप्रमाणप्रतिभासाविशेषात् कस्य किमित्यनवगमाद् व्यवहाराभावप्रसङ्गात्। नच मूर्तामूर्तविभागवत् प्रमाणाप्रमाणविभागः प्रत्यक्षतोऽवभासते अर्थतस्तु व्यक्तिभेदे न व्यवस्थीयते। नाप्युभयं परतः; प्रमाणाप्रमाणविभागहीनस्य ज्ञानस्य स्वरूपानवगमात्। नापि प्रामाण्यमर्थ-

## तत्त्वदीपनम्

एकस्य ज्ञानस्य प्रामाण्यमप्रामाण्यं चेत्येतद् विरुद्धमित्यर्थः। ज्ञानसामग्रीव्यक्तीनां भिन्नत्वात्प्रामाण्यादिव्यवस्थेति शङ्कते—**ननु व्यक्तीति**॥ दोषासहकृतज्ञानसामग्र्युत्पन्नज्ञानव्यक्तौ प्रमात्वम्, इतरथाऽप्रमात्वमिति व्यवस्थेत्यर्थः। उत्पत्तिव्यवस्थामङ्गीकरोति—**सत्यमर्थत इति**॥ तर्हि न विवादः, तत्राह—**प्रतीतित इति**॥ प्रामाण्याप्रामाण्ययोर्ज्ञानज्ञापकज्ञाप्यत्वे एकव्यक्तावुभयोर्भानप्रसङ्गाद् व्यवहारविशेषो न स्यादित्यर्थः। प्रमाणाप्रमाणप्रतिभासाविशेषोऽसिद्ध इत्याशङ्क्याऽऽह—**नचेति**॥ प्रत्यक्षतो विभागप्रतिपत्तौ प्रामाण्याप्रामाण्यविवादो न स्यादित्यर्थः। चक्षुषः सत्तयाऽव्यवहारहेतुत्ववत् प्रमाणाप्रमाणयोरपि सत्तया व्यवहारहेतुत्वं स्यादित्याशङ्क्याऽऽह—**अर्थत इति**॥ अर्थतः स्वभावत इति यावत्। प्रमाणाप्रमाणव्यक्त्योर्भेदेऽसंकरेऽपि व्यवहारो न व्यवस्थाप्यते। इन्द्रियस्याऽज्ञायमानत्वेऽपि ज्ञानद्वारा व्यवहारहेतुत्वम्। प्रमाणाप्रमाणज्ञानयोस्तु साक्षाद् व्यवहारहेतुत्वाद् ज्ञायमानत्वं वक्तव्यमित्यर्थः। द्वितीयं पक्षं दूषयति—**नापीति**॥ ज्ञानमात्रे सिद्धे तत्प्रयोजकातिरिक्तप्रयोज्यत्वम्, न प्रमाणाप्रमाणातिरिक्तं ज्ञानमस्तीत्यर्थः॥ स्वतःप्रामाण्यवादिनाऽपि ज्ञानमाश्रयणीयम्; अन्यथा ज्ञानमात्रप्रयोजकातिरिक्तप्रयोज्यत्वलक्षणमप्रामाण्यपरतस्त्वं न सिध्यतीत्याशङ्क्य, किं प्रामाण्यं परतो ज्ञायते। उत न ज्ञायते। आद्येऽपि किं कारणगुणज्ञानाद् ज्ञायते? उतार्थक्रियासंवादज्ञानात्? नाद्य इत्याह—**नापि प्रामाण्यमिति**॥ गुणजन्यत्वात् 'इदं प्रमाणमि'त्यधिगम्यते चेत्,

## ऋजुविवरणम्

स्वतः साधारणमेव प्रतीयते; ननु तत्र कश्चिद्विशेषः प्रतीयत इति भावः॥ **कस्य किमित्यनवगमादिति**। कस्य प्रामाण्यम्? कस्य वाऽप्रामाण्यमित्यर्थः॥ ननु प्रतीयत एव ज्ञानानां प्रामाण्यमप्रामाण्यं च; अतः कथं व्यवहाराभाव इति चेत्, तत्र किं ज्ञानेनैव प्रतीयते? अर्थतो वा? न तावत् प्रत्यक्षेणेत्याह—**नच मूर्तामूर्तेनेति**॥ नाप्यर्थत इत्याह—**अर्थतस्त्विति**। व्यक्तिगतत्वेन व्यवस्थीयते प्रामाण्यमप्रामाण्यं च। नाप्यर्थतः तत्प्रतीतेः, अर्थस्य तत्सामर्थ्याभावादिति भावः। अथवा, स्वभावतो विद्यमानं प्रामाण्यं तथैवं व्यक्तिभेदेन व्यवह्रियत इत्याशङ्क्याऽऽह—**अर्थतस्त्विति**॥ **अर्थतः** स्वभावतः व्यक्तिभेदे प्रामाण्यमप्रामाण्यं च व्यवस्थीयते, न प्रतीयत इति वा योजना। अथवा, मा भूत् प्रत्यक्षेण स्वतो ज्ञाने विशेषावभासः, अर्थतस्तु व्यवस्था भविष्यति—यस्य तथाभूतोऽर्थः तत्प्रमाणमिति व्यवह्रियते, यस्य चातथाभूतः, तदप्रमाणमिति, प्रवृत्त्यादिकमपि तेनैव; अतः कस्य किमित्यनवगमादित्यसम्बद्धमेवेत्याशङ्क्याऽऽह—**अर्थतस्त्विति**॥ विषयतोऽपि किं यस्य परमार्थभूतोऽर्थः, तत्प्रमाणमितरदप्रमाणमिति प्रतीतिरुच्यते? उत यस्य विषयस्य परमार्थत्वं निश्चितं भवति, तत्र प्रमाणत्वनिश्चयः? तत्र प्रथमपक्षे व्यवस्थामात्रम्, ननु विशेषेण प्रमाणत्वादिनिश्चयः। द्वितीये तु निश्चितेऽर्थतथात्वे प्रामाण्यादि निश्चयः, पूर्वं तु व्यवस्थामात्रमेव भवेत्, ननु प्रतीतिः॥ अनेन—अर्थतथात्वे ज्ञानान्तरेण संवादादिना निश्चिते प्रामाण्यादिनिश्चय इति पक्षो—निरस्तः॥ नच स्वतोऽद्वयवादिनां प्रामाण्याप्रामाण्यनिश्चये संवादाद्यपेक्षा शक्या वक्तुमिति। अथवा, किं प्रमाणत्वाप्रमाणत्वप्रतीत्या? इन्द्रियगतशक्तिवत्सत्तयैव व्यवहारहेतुरित्याशङ्क्याऽऽह—**अर्थतस्त्विति**॥ स्वभावतो व्यक्तिभेदे व्यवस्थामात्रं प्रामाण्यादेव न तावन्मात्रेण व्यवहारः। अथवाऽर्थतो व्यक्तिभेदे भिन्नविषयेव्यवहारो न व्यवस्थीयते। एतदुक्तं भवति—स्वरूपतो विद्यमानं प्रामाण्यं व्यवस्थितविषयत्वेन व्यवहारहेतुः; प्रतीतिसापेक्षत्वात्तस्य, इन्द्रियशक्तेरगृहीताया एव कार्यकरत्वदर्शनात्, तथा नेह तथेति वैषम्यम्। **प्रमाणाप्रमाणेति**। यदा ज्ञानं प्रतीयते, तदा प्रमाणत्वेन वाऽप्रमाणत्वेन वा प्रतीयते; अत उभयमपि परत इति वक्तुं न शक्यत इत्यर्थः। अथवा, प्रमाणाप्रमाणभागहीनस्य स्वरूपावगम एव न संभवति; निःस्वभावत्वादित्यर्थः॥ ननु प्रामाण्यमर्थपरिच्छेदसामर्थ्यम्, न स्वरूपम्; नचोत्पन्नमात्रमेव ज्ञानं स्वविषयनिश्चायकम्, प्रमाणेतरयोस्तदानीं

## पञ्चपादिकाविवरणम्

परिच्छेदसामर्थ्यं कारणगुणज्ञानात्परतोऽवगम्यते; अनवस्थापातात्। नापि ज्ञानकारणव्यतिरिक्तात् कारणात् प्रामाण्यं जन्यते। क्षणमात्रापवर्गिणि ज्ञाने तदयोगात्, प्रतिभासतो भ्रान्ति-सम्यग्ज्ञानयोर्विशेषाभावे चक्षुरादिगुणजन्यत्वावगमात् प्राक् प्रामाण्यनिश्चयाभावाद् व्यवहाराभावप्रसङ्गात्, प्रामाण्यनिमित्तचक्षुरादिगुणज्ञानस्यापि गुणान्तरजन्यत्वावगममन्तरेण प्रामाण्यनिश्चयनिमित्तत्वायोगात्, प्रतिभासतो भ्रान्तेरविशेषात् स्वतो गुणजन्यत्वानिश्चयात्, ज्ञानस्य गुणान्वय-

## तत्त्वदीपनम्

तर्हि गुणजन्यत्वज्ञानस्यापि प्रामाण्यं गुणजन्यत्वेन निर्धारणीयम्, तत्प्रामाण्यस्यापि तथात्वमित्यनवस्था। नच—गुणज्ञानस्य प्रामाण्याऽनिश्चयेऽप्याद्यज्ञानप्रामाण्यव्यवहारहेतुत्वमिति—शङ्कनीयम्; आद्यज्ञानस्यापि तथैव स्वविषयव्यवहारहेतुत्वेनानपेक्षाप्रसङ्गादित्यर्थः। द्वितीयं जन्मपक्षं प्रत्याह—**नापि ज्ञानेति**॥ किं ज्ञानोत्पत्त्यनन्तरं प्रामाण्यं जायते? उत ज्ञानेन साकम्? इति विकल्प्याद्यं प्रत्याह—**क्षणमात्रेति**॥ नच—ज्ञानस्य द्वि-त्रिक्षणावस्थायित्वात् तत्र प्रामाण्यजन्मसंभव इति—शङ्क्यम्; कार्यसमवायिकारणतया द्रव्यत्वापातादित्यर्थः। प्रामाण्यं परतो ज्ञायत इत्यत्र दोषान्तरमाह—**प्रतिभासत इति**॥ गुणजन्यत्वावगमोत्तरकालं प्रामाण्यनिश्चयपुरःसरो व्यवहार इत्याशङ्क्योक्तामनवस्थां प्रपञ्चयति—**प्रामाण्यनिमित्तेति**॥ स्वेनैव स्वस्य गुणजन्यत्वमिति निश्चयाद् नानवस्था, इत्याशङ्क्याऽऽह—**स्वत इति**॥ फलज्ञानस्य गुणजन्यत्वानाकारत्वान्न तन्निश्चायकत्वमित्यर्थः। गुणान्वय-व्यतिरेकाभ्यां प्रामाण्यपरतस्त्वमुपलभ्यमानं कथं युक्त्या निह्नूयते? इत्याशङ्क्याऽऽह—**ज्ञानस्येति**॥ गुणमङ्गीकृत्य तदन्वय-व्यतिरेकयोरन्यथासिद्धिरवादि, इदानीं न दोषनिवृत्त्यतिरेकेण गुणोऽस्तीत्यत्राह—**दोषनिवृत्तेति**॥ प्रामाण्य-ज्ञानयोर्युगपद्भावपक्षं निरस्यति—**अन्यत इति**॥ ज्ञानस्य प्रामाण्यसमवायिकारणत्वात् कारणस्य नियतप्राक्क्षणवर्तित्वान्न तयोः सहसंभव इत्यर्थः। अर्थक्रियासंवादज्ञानात् प्रामाण्यनिश्चय इति कल्पं निरस्यति—**अर्थक्रियेति**॥ अर्थक्रियाकारिविषयज्ञानस्य प्रामाण्यं येनार्थक्रियाज्ञानेन ज्ञायते, तस्य प्रामाण्यं किं परतः? उत स्वतः? आद्ये तत्प्रामाण्यनिश्चयार्थं तदर्थक्रिया ज्ञातव्या, एवं तत्र तत्रापीत्यनवस्थेत्यर्थः। द्वितीयमुत्थापयति—**साधनेति**॥ अर्थक्रियाकारि वस्तु **साधन**शब्दार्थः। **फल**शब्देनार्थक्रिया कथ्यत इत्यर्थः। क्वचित्प्रामाण्यस्वतस्त्वाङ्गीकार इतरत्रापि तदनुमानं सुकृतमित्याह—**तद्वदिति**॥ विमतानि, स्वतः प्रमाणानि, नियतप्रमाणत्वात्; संमतवदित्यर्थः। विपक्षे दण्डमाह—**अन्यथेति**॥ साधनज्ञानानां प्रामाण्य-

## ऋजुविवरणम्

विशेषानवभासात्; अतोऽन्यतः प्रामाण्ये विषयनिश्चायकत्वम्। नच स्वरूपावभासाभावः; असत्यपि प्रामाण्याद्याकारे ज्ञाने सत्त्व-ज्ञेयत्व-गुणत्वादिसंभवात् प्रतीतिरुपपद्यते, अन्यतः प्रामाण्यं चेति। तत्र किं परतः प्रामाण्यम्—ज्ञाने? उत्पत्तौ वा? तत्र न तावत् प्रथमः कल्प इत्याह—**नापि प्रामाण्यमिति**॥ **अनवस्थापातादिति**। अयमर्थः—कारणगुणज्ञानं हि स्वयं गुणजन्यत्वेनार्थपरिच्छेदकतया निश्चितं सदन्यस्य ज्ञानस्य गुणजन्यत्वेनार्थपरिच्छेदकत्वं गृह्णाति? गुणजन्यत्वेनानिश्चितं वा? निश्चितं चेत्, निश्चयोऽपि न तावत्स्वेनैव; असामर्थ्यात्, अन्येन निश्चयेऽपि तदप्यन्येन निश्चितसामर्थ्यमेव निश्चायकम्, तदपि तादृशेनेत्यनवस्था। द्वितीये पक्षे परिहारमाह—**नापि ज्ञानकारणव्यतिरिक्तादिति**। क्षणमात्रेऽपवर्गो विनाशो यस्य, तत् क्षणमात्रापवर्गि, तस्मिन्निति। एतदुक्तं भवति—प्रामाण्योत्पादकं ज्ञानं स्वयमुत्पन्नं यावत्प्रामाण्यमुत्पादयति, तावत्पूर्वज्ञानस्य विनष्टत्वादेव तज्जन्यप्रामाण्याधारत्वायोगादिति कथं कारणगुणज्ञानात् प्रामाण्यनिश्चयेऽनवस्थोक्ता। मूलक्षयाभावात्, यदा प्रामाण्यं जिघृक्षितं भवति, तदा गुणज्ञानेन निश्चीयते; इतरत्र नापेक्षेति। अथवा, सहैवोत्पद्यते प्रामाण्यमतश्च, परतो प्युत्पत्तिसंभव इति, तथाऽपि स्वेनैव ज्ञायते वा? नवा? तत्रानवभासे दूषणमाह—**प्रतिभासत इति**॥ मा भूत् प्रामाण्यनिश्चयात्प्राग्व्यवहारः, गुणजन्यत्वानिश्चयेन प्रामाण्ये निश्चिते व्यवहारः, इत्याशङ्क्याऽऽह—**प्रामाण्यनिमित्तचक्षुरादीति**। ननु गुणजन्यज्ञानस्य गुणजन्यत्वानिश्चयेऽपि गुणविषयत्वात् प्राधान्येन गुणजन्यत्वाच्च निश्चायकत्वमित्याशङ्क्याऽऽह—**प्रतिभासत इति**॥ कथं प्रमाणज्ञाने गुणजन्ये सति प्रतिभासतो विशेषाभावः? इत्याशङ्क्याऽऽह—**स्वतो गुणजन्यत्वेति**॥ यद्वा, प्रतिभासतो विशेषाभावात्पूर्वमुक्तमुपसंहरति—**प्रतिभासत इति**॥ कथं विशेषाभावः? स्वेनैव गुणजन्यत्वानिश्चयादित्याशङ्क्याऽऽह—**स्वतो गुणजन्यत्वेति**॥ ननु गुणान्वय-व्यतिरेकाभ्यां प्रामाण्यस्य तावद् गुणेन विज्ञान-

## पञ्चपादिकाविवरणम्

व्यतिरेकयोश्च प्रामाण्यप्रतिबन्धकदोषाभावविषयतयाऽन्यथासिद्धत्वात्, दोषनिवृत्तिव्यतिरेकेणेन्द्रियादिषु गुणादर्शनाच्च अन्यतोऽपि प्रामाण्यस्य ज्ञानेन सह जन्माभावः। अर्थक्रियासंवादज्ञानात् प्रामाण्यनिश्चयेऽपि तुल्योऽनवस्थादिदोषः। साधनज्ञानानामेवार्थक्रियासंवादात् प्रामाण्यम् न फलज्ञानानाम्, अर्थक्रियान्तराभावात्; अतो नानवस्थेति चेत् ? तद्वदेव साधनज्ञानानामपि तत् स्वत एव स्यात्; अन्यथा प्रवृत्तस्यार्थक्रियातः प्रामाण्यम् , प्रामाण्याच्च प्रवृत्तिरितीतरेतराश्रयं स्यात्। नच प्रामाण्यनिश्चयाय प्रवृत्तिः; असंदिग्धार्थत्वाज्ज्ञानानाम्। रूपकपरीक्षादौ प्रत्ययचतुष्टयाद् दृश्यतेऽर्थनिश्चय इति चेत् ? न; प्रथमज्ञानस्यैव संशयादिप्रतिबन्धनिरासित्वादुत्तरज्ञानानाम्। तस्माद् ज्ञानोत्पत्तिमात्रप्रयुक्तार्थव्यवहारदर्शनात् प्रतीतितोऽर्थतश्च स्वत एवार्थनिश्चयः प्रामाण्यम्। अप्रामाण्यजन्म दोषसहितात् कारणात् तत्प्रतीतिर्बाधात्, इति परत एवाप्रामाण्यं युक्तम्। नचाप्रामाण्यस्य परतो जन्म संभवति, प्रामाण्यप्रागभावत्वादिति चेत् ? न;

## तत्त्वदीपनम्

मर्थक्रियाधीनं चेत्, तदा साधनज्ञानप्रामाण्यं निश्चित्य प्रवृत्तस्यार्थक्रियासंदर्शनेन प्रामाण्यं वक्तव्यम्, प्रामाण्यसिद्धौ च प्रवृत्तिसंभव इति परस्पराश्रयत्वमित्यर्थः। प्रामाण्यनिश्चयमन्तरेणापि तन्निश्चयार्थप्रवृत्तिसंभवान्नेतरेतराश्रयत्वमित्याशङ्क्य, किं सर्वत्र प्रामाण्यनिश्चयार्थं प्रवृत्तिः ? उत क्वचिदिति विकल्प्याद्यं निरस्यति—**नच प्रामाण्येति** ॥ **ज्ञानानामिति**। अभ्यस्तविषयज्ञानानामित्यर्थः ॥ द्वितीयमुत्थापयति—**रूपकेति** ॥ **प्रत्ययचतुष्टयादिति**—निरीक्षण-दहनच्छेदन-निघर्षणप्रत्ययेभ्य इत्यर्थः। प्रमाणसंप्लवापाताद् बहूनां संभूय प्रामाण्यानुपपत्तेरेकस्य प्रमितिजनकत्वम्, इतरस्य प्रतिबन्धनिरासित्वमित्याश्रयणीयमित्याह—**न, प्रथमेति** ॥

प्रामाण्यस्य परतस्त्वम्, अप्रामाण्यस्य च स्वतस्त्वमिति मतं निरस्यति—**तस्मादिति** ॥ अर्थनिश्चयः प्रामाण्यं च स्वत एवेति योजना। स्वत इत्येतद् विवृणोति—**प्रतीतित इति** ॥ अप्रामाण्यस्योत्पत्तिपरतस्त्वमाक्षिपति-**नचेति** ॥ स्वतो जन्मासंभव इति चशब्दार्थः। अभावत्वमसिद्धमित्याह—**नाज्ञानेति** ॥ नच—अज्ञानस्यापि प्रागभावत्वाद् जन्मासंभव इति-शङ्क्यम्; अन्यवस्तुज्ञानस्याज्ञानशब्देन विवक्षितत्वात्। तच्चोक्तम्—"प्रत्यक्षादेरनुत्पत्तिः प्रामाण्याभाव उच्यते। आत्मनोऽपरिणामो वा विज्ञानं वाऽन्यवस्तुनि" ॥ इति। तस्याजन्यत्वेऽपि इतरयोर्जनिसंभव इति। नचाज्ञानवैयर्थ्यम्; अप्रामाण्यस्य भावतासमर्थनस्य विवक्षितत्वात्, अज्ञानस्यापि भावत्वात्। तथाचोक्तम्-"अप्रामाण्यं त्रिधा भिन्नं मिथ्यात्वाज्ञान-संशयैः"— इति ॥ प्रकारान्तरेणाप्रामाण्यपरतस्त्वमाक्षिपति—**ननु स्वत इति** ॥ उष्णस्य वह्नेः शीतताऽसंभाववत् स्वतःप्रमाणस्य परतोऽप्रामाण्यं विरुद्धमित्यर्थः। स्फोटजननसमर्थस्यापि वह्नेर्मण्यादिप्रतिबन्धादन्यथात्वम्; तद्वत् स्वतःप्रमाणस्य परतोऽप्रामाण्यमित्येतन्न विरुद्धमित्याह—**दोषेति** ॥

## ऋजुविवरणम्

कारणातिरिक्तकारणेन जन्म सिद्धं निराकर्तुं न शक्यते, इत्याशङ्क्याऽऽह—**ज्ञानस्य गुणान्वयेति** ॥ कथं गुणान्वय-व्यतिरेकयोर्दोषाभावविषयत्वम्, वैयधिकरण्यात्; नह्यन्यविषयावन्वय-व्यतिरेकावन्यविषयौ भवतः ? इत्याशङ्क्याऽऽह—**दोषनिवृत्तिव्यतिरेकेणेति** ॥ अथवा, दोषाभावविषयत्वमेव—गुणेभ्यो दोषाभावः, तदभावाच्च प्रतिबन्धकाभावेन प्रामाण्यमिति। एवंच प्रामाण्यप्रतिबन्धकदोषाभावहेतुत्वेन गुणान्वय-व्यतिरेकयोरन्यथासिद्धत्वमेवमङ्गीकृत्य गुणसद्भावान्वय-व्यतिरेकयोरन्यथासिद्धिरुक्ता। इदानीं गुणा एव न सन्ति; कथं तेषामन्वय-व्यतिरेकावित्याह—**दोषनिवृत्तिव्यतिरेकेणेति** ॥ ननु अर्थक्रियासंवादादेव प्रामाण्यनिश्चयः, अतो न व्यवहारासंभव इत्याशङ्क्याऽऽह—**अर्थक्रियासंवादेति** ॥ ननु नेतरेतराश्रयः; निश्चित एव प्रामाण्ये तन्निश्चयाय प्रवृत्त्युपपत्तेरित्याशङ्क्याऽऽह—**नच प्रामाण्येति** ॥ **असन्दिग्धार्थत्वादिति** प्रवर्तकज्ञानानामित्यर्थः। अथवा, प्रमाणज्ञानानामिति शेषः। सन्देहे निश्चयाय प्रवृत्तिः, असन्दिग्धार्थत्वे च न प्रामाण्यनिश्चयाय प्रवृत्तिरिति भावः। **प्रत्ययचतुष्टयादिति**—निरीक्षण-दाह-च्छेद-निघर्षणप्रत्ययेभ्य इत्यर्थः। स्वतःप्रामाण्यसमर्थनेन परतःप्रामाण्यसमर्थनेन च बौद्धमतनिरसनसिद्धेस्तदेव क्रियते, न तु बौद्धमतस्य पृथङ् निराकरणं कृतम्। ननु स्वतः परतश्चोभयाभावे किं तत्प्रामाण्यम् ? कथं च तत् स्वतस्तया व्यवस्थाप्यत इति ? तदाह—**तस्मादिति** ॥ अथवा, स्वतःप्रामाण्यपक्षेऽप्यनवस्थादूषणं समानम्; अपवादकदोषाभावज्ञानस्यापेक्षितत्वादित्याशङ्क्याऽऽह—**तस्माद् ज्ञानोत्पत्तिमात्रेति** ॥ कथं तर्ह्यप्रामाण्यं परतः; उत्पादक-

## पञ्चपादिका

ननु एवं तर्कसापेक्षं स्वमर्थं साधयतोऽनपेक्षत्वहानेरप्रामाण्यं स्यात्? न स्यात्; स्वमहिम्नैव विषयाध्यवसायहेतुत्वात्। क्व तर्हि तर्कस्योपयोगः? विषयासम्भवाशङ्कायां तथाऽनुभवफलानुत्पत्तौ तत्सम्भवप्रदर्शनमुखेन फलप्रतिबन्धविगमे। तथाच तत्त्वमसिवाक्ये त्वंपदार्थो जीवस्तत्पदार्थब्रह्मस्वरूपतामात्मनोऽसम्भावयन् विपरीतं च रूपं मन्वानः समुत्पन्नेऽपि ज्ञाने तावन्नाध्यवस्यति; यावत्तर्केण विरोधमपनीय तद्रूपतामात्मनो न सम्भावयति॥

ततः प्राग् विद्योदिताऽपि वाक्यादनवाप्तेव भवति। अवाप्तिप्रकारश्च वेदान्तेष्वेव निर्दिष्टः साक्षादनुभवफलोद्देशेन। तेनोच्यते—विद्याप्रतिपत्तये इति॥

## पञ्चपादिकाविवरणम्

अज्ञानसंशयमिथ्यात्वानामप्रामाण्यानां भावरूपत्वात्। ननु स्वतःप्रमाणस्य कथं परतोऽप्रामाण्यम्। स्वभावविरोधादिति चेत्? दोषप्रतिबन्धबलादग्नेरिव शैत्यस्पर्शो न विरुध्यते। स्वतःप्रामाण्यादेव च यावद्दोषावगमं ज्ञानादेव व्यवहारदर्शनम्। तस्मात् प्रामाण्यतत्प्रतीत्योर्गुण-तज्ज्ञानान्तराद्यनपेक्षमेव ज्ञानं स्वतः सत्तयैव निश्चयव्यवहारनिमित्तमिति स्थापितम्॥

तदेतद्विरुध्यते तर्कप्रत्ययापेक्षया ज्ञानस्य स्वविषयं प्रति निश्चायकत्वे इति चोदयति—**नन्वेवं तर्कसापेक्षं स्वमर्थ-मिति**॥ परिहरति **न स्यात्, स्वमहिम्नैवेत्यादिना**॥ प्रमाणादेवार्थापरोक्ष्यनिश्चये तत्प्रतिबन्धविगमे तर्कस्योपयोगान्नार्थ-निर्णयहेतुतेत्युक्तम्। ननु एवं बहिरर्थे प्रमाणप्रतिबन्धसम्भवात्तद्विगमाय भवतु तर्कोपकारः, न तथाऽऽत्मनि; स्वयंप्रकाशे प्रतिबन्धाभावादिति? तत्राह—**तथाच तत्त्वमसिवाक्ये त्वंपदार्थ इति**॥ **"असम्भावयन्"** इति आपरोक्ष्याभाव उच्यते। **विपरीतमिति** च पारोक्ष्यमुच्यते॥

अत्रायमाशयः—लोके तावद्विषयस्यापरोक्षता संविदभेदाद्वा, विषयस्याव्यवधानतया स्वसंविज्जनकत्वाद्वा, प्रमाण-कारणेन्द्रियसंप्रयुक्तत्वाद्वा भवति; उक्तकारणत्रयहीनेऽनुमेयादौ परोक्षतादर्शनात्। तत्र ब्रह्मण एव सर्वसंविदुपादानत्वाद् ब्रह्माकारशब्दप्रमाणजन्यसंवेदनेऽपि तदभिन्नतया वा तज्जनकतया वा ब्रह्मापि प्रथममेवापरोक्षतयाऽवभासते। तच्च चित्तस्याति-

## तत्त्वदीपनम्

स्वतःप्रामाण्ये हेत्वन्तरमाह—**स्वत इति**॥ शुक्तिकायामपि रूप्यबोधे रजतार्थिनामसंदिग्धप्रवृत्तिदर्शनात् प्रामाण्यस्वतस्त्वम्; अन्यथा झटिति निःशङ्कव्यवहारानुपपत्तिरित्यर्थः॥ अस्तु प्रामाण्यं स्वतः, प्रकृते तु किमायातम्? अत्राह—**तस्मादिति**॥

तर्कापेक्षायामपि स्वतस्त्वं न हीयत इत्याह—**परिहरतीति**॥ प्रमाणस्यार्थप्रमितिजननेऽनपेक्षत्वेऽपि प्रतिबन्धनिरासे तर्कापेक्षणात् स्वतस्त्वं सिद्धम्। ततश्च "तथाचे"त्यादिग्रन्थानुपयोगः, इत्याशङ्क्य, वृत्तसंकीर्तनपूर्वकं तद्व्यावर्त्यां शङ्कामाह—**प्रमाणादेवेत्यादिना**॥ स्वप्रकाशेऽपि प्रतिबन्धो दृष्ट इत्याह—**तत्राहेति**॥ युक्तितोऽसंभावनादेर्निरस्तत्वात् कथम्—"असंभाव-यन्विपरीतं च मन्वानः" इत्युक्तमित्याशङ्क्याऽऽह—**असंभावयन्निति**॥

तत्त्वमस्यादिवाक्यादसंभावना-विपरीतभावनाऽभिभूतविषया विद्योत्पद्यते, तस्या आप्तिरप्रतिबन्धापरोक्षप्रत्ययोत्पाद इत्युक्तम्, तदयुक्तम्; शब्दस्य परोक्षज्ञानजननस्वाभाव्यादात्मापरोक्षज्ञानजनकत्वासंभवादित्याशङ्क्य, शब्दात् ब्रह्मण्यपरोक्ष-प्रतिपत्तिं दर्शयितुमनात्मन्यपरोक्षाभिधामाह—**लोके तावदिति**॥ अतीताद्यर्थस्यापि संस्कारद्वारा संविज्जनकत्वव्यावर्त-

## ऋजुविवरणम्

ज्ञापकयोरभावादिति? तदाह—**अप्रामाण्येति**॥ **अज्ञान-संशयेति**॥ 'अज्ञानमि'त्यनुत्पत्तिलक्षमणप्रामाण्यमाकाशादीनामिति। कथं तर्ह्यप्रमाणाज्ञानेन त्वत्पक्षे व्यवहारः? इत्याशङ्क्याऽऽह—**स्वतःप्रामाण्यादिति**॥ अथवा, विद्यमानप्रामाण्यप्रतिबन्ध एव कथं निश्चीयते? स्वत एवाप्रामाण्यं कस्मान्न भवति? इत्याशङ्क्याऽऽह—**स्वतःप्रामाण्यादेवेति**॥

यौक्तिकासंभावनादिप्रतीतिनिराकरणार्थं व्याचष्टे—**आपरोक्ष्याभाव इति**॥

ननु सिद्धे ब्रह्मणि शब्दस्यापरोक्षज्ञानजनकत्वे प्रतिष्ठाशब्दस्तत्परो व्याख्यायेत, असंभावनादिशब्दानां तस्याजन्यत्वेऽपी-तरयोर्जनिसंभव इति। नचाज्ञानमन्यार्थता च स्वीक्रियेत, नच शब्दस्यापरोक्षज्ञानजनकत्वमस्ति; सामर्थ्यादर्शनात्, नाप्यत्रा-परोक्षज्ञानमेवोत्पद्यत इति प्रमाणमस्ति; अतो नेदं व्याख्यानं न्याय्योपेतम्, नापीदृक्ग्रन्थस्वारस्यानुरोधीत्याशङ्क्याऽऽह—**अत्राय-**

## पञ्चपादिकाविवरणम्

सूक्ष्मेऽनेकाग्रतादोषाद् विपर्ययसंस्कारदोषाच्च प्रतिबद्धं भ्रान्त्या परोक्षवदवभासते। तत्रापरोक्षज्ञानमुद्दिश्य यज्ञादीनां शमादीनां निदिध्यासनादीनां च विधानसामर्थ्याद् यज्ञादिनिर्बर्हितकल्मषप्रतिबन्धम्, शमादिनिरुद्धविपरीतप्रवृत्तिदोषम्, मननसंदर्शितप्रमेयादिसंभावनागुणप्रदीपोज्ज्वलितम्, अतिसूक्ष्मतरब्रह्मात्मविषयनिदिध्यासनप्रचयपरिनिर्मिततदेकाग्रवृत्तिगुणं चित्तेन्द्रियं पारोक्ष्यविभ्रमनिमित्तप्रतिबन्धनिरासेन शब्दादेवापरोक्षनिश्चयनिमित्तं भवतीति गम्यते; लोके चातिसूक्ष्मवस्तुनिर्धारणे चित्तैकाग्र्यविशेषापेक्षाया दर्शनात्। तर्कशब्देन चात्रैतादृशं सर्वप्रतिबन्धनिरासि चित्तदर्पणमुच्यते ; यौक्तिकासंभावना-विपरीत-

## तत्त्वदीपनम्

नार्थम्—**अव्यवधानतयेति** विशेषणम् ॥ उक्तमर्थं व्यतिरेकमुखेनोपपादयति—**उक्तेति** ॥ फलितमाह—**तत्रेति** ॥ अनात्माकारान्तःकरणपरिणामप्रतिबिम्बितसंविदां बिम्बभूतब्रह्मोपादानत्वात् सर्वसंविदुपादानत्वं ब्रह्मण इत्युक्तम्, तच्च कैमुतिकन्यायेन ब्रह्मणः संविदभिन्नत्वदर्शनायेति द्रष्टव्यम्। शब्दमात्रस्य परोक्षज्ञानजनकत्वस्वाभाव्येऽपि स्वयंप्रकाशापरोक्षात्मन्यपरोक्षज्ञानजनकत्वमविरुद्धमित्यर्थः। ब्रह्मणः प्रथममपरोक्षतया प्रतिपत्तौ मननादिविधानमनर्थकमित्याशङ्क्याऽऽह—**तच्चेति** ॥ तच्च ब्रह्म भ्रान्त्या परोक्षवदवभासत इत्यन्वयः। भ्रान्तौ हेतुमाह—**चित्तस्येति** ॥ कथं तर्ह्यप्रतिबन्धसिद्धिः ? इत्यत आह—**तत्रेति** ॥ अपरोक्षज्ञानमुद्दिश्य यज्ञादिविधानसामर्थ्यान् चित्तेन्द्रियमापरोक्ष्यनिश्चयनिमित्तं भवतीत्यन्वयः। "यज्ञादीनामि"-त्यत्रादिशब्देन दानादिर्गृह्यते। "शमादीनामि"त्यत्रादिशब्देन दमोपरमप्रभृतिर्गृह्यते। "निदिध्यासनादीनामि"त्यत्रादिशब्देन मननादिकं गृह्यते ॥ यज्ञादीनामप्रामाण्यात् कथमपरोक्षहेतुत्वम् ? इत्याशङ्क्य, उपयोगप्रकारमाह—**यज्ञादीति** ॥ यज्ञादिना निर्बर्हितः कल्मषलक्षणः प्रतिबन्धो यस्मिन्, तत्तथोक्तम्। शमादिनिरुद्धो विपरीतप्रवृत्तिदोषौ यत्र, तथोक्तम्। अनात्मविषयप्रवृत्तिः **प्रवृत्तिशब्दार्थः**। अनात्मनीव मुक्तावपि न प्रवृत्तिः; असंभावनाप्रतिबन्धाद् इत्याशङ्क्याऽऽह—**मननेति** ॥ मननेन संदर्शितः प्रमेयादिसंभावनालक्षणो यो गुणः, स एव प्रदीपः, इति मननसंदर्शितप्रमेयादिसंभावनागुणप्रदीपः, तेनोज्ज्वलितं प्रतिबन्धकनिवर्तकत्वेन प्रदीपसमम् अतिसूक्ष्मतरं यद् ब्रह्म, तदात्मविषयनिदिध्यासनं, तस्य प्रचयेन परिनिर्मितस्तदेकाग्रवृत्तिस्वलक्षणो गुणो यस्मिन्, तत्तथोक्तम्। "चित्तेन्द्रियमि"त्यत्रेन्द्रियशब्देन शब्दसहकारितया चित्तस्यापरोक्षप्रत्ययहेतुत्वं द्योत्यते। चित्तैकाग्र्यस्योपकारकत्वमन्वयव्यतिरेकसिद्धमित्याह—**लोके चेति** ॥ टीकायां प्रतिबन्धनिवर्तने तर्कस्य सहकारित्वमवादि, अत्र तु चित्तस्य सहकारित्वमुच्यत, इति विरोध इत्याशङ्क्याऽऽह—**तर्कशब्देनेति** ॥ अत्र टीकायां तर्क-

## ऋजुविवरणम्

माशयः—**लोक इति** ॥ यदि प्रथममेवापरोक्षतया ज्ञायते, तर्हि तथैव व्यवहारः स्यादित्याशङ्क्याऽऽह—**तच्च चित्तस्येति** ॥ ननु—प्रथममेव यद्यपरोक्षज्ञानमुत्पन्नं चित्तगतानेकाग्रतादोषात् परोक्षवदवभासते, तर्हि तन्निमित्तदोषाणामनेकत्वात् तन्निरासमर्थकारणाभावान्न कदाचिदापरोक्ष्यनिश्चय इत्याशङ्क्याऽऽह—**तत्रापरोक्षज्ञानमिति** ॥ नच यज्ञादीनां विधानादेव तन्निवर्तकत्वं निश्चेतुं शक्यते; ज्ञानाङ्गत्वे प्रमाणाभावे न त्वापरोक्ष्यप्रतिबन्धनिरासहेतुत्वमित्याशङ्क्य, तमेव प्रथमं निरूपयति—**अपरोक्षज्ञानमुद्दिश्येति** ॥ **यज्ञादिनिर्बर्हितेति** ॥ 'धर्मेण पापमपनुदति'' ''तपसा कल्मषमि''ति श्रुति-स्मृत्योर्निवर्तकत्वप्रतीतेर्यज्ञादिभिर्निवर्तितकल्मषप्रतिबन्धो यस्मिन् चित्तेन्द्रिये, तच्चित्तं यज्ञादिनिर्बर्हितकल्मषप्रतिबन्धमिति ॥ लौकिकं विनियोगं दर्शयति—**शमादिनिरुद्धेति** ॥ शमादिभिर्निरुद्धो विपरीतप्रवृत्तिदोषो यस्मिंश्चित्तेन्द्रिय इति विग्रहः। **दोषशब्दो** रागद्वेषपरः; शमादीनामुपशमरूपत्वाद् बाह्येन्द्रियाणामन्तःकरणस्य चोपरमे सामर्थ्याद्विपरीतप्रवृत्तिदोषस्य च निषेधः; इन्द्रियप्रवृत्तिसापेक्षत्वाद्विपरीतप्रवृत्तेर्दोषस्य चेत्यर्थः। अथवा, विपरीतप्रवृत्तिरेव दोष इति। मननेन सन्दर्शिता चासौ प्रमेयादिसंभावना च, संभावनैव गुणः संभावनागुणः; स एव प्रदीपः, तेन प्रदीपेनोज्ज्वलितं चित्तेन्द्रियमिति। पुनरपि तदेव विशिनष्टि—**अतिसूक्ष्मतरेति** ॥ अतिसूक्ष्मतरं ब्रह्म आत्मत्वेन प्रत्यग्रूपमेव विषयो यस्य, तदतिसूक्ष्मतरब्रह्मात्मविषयम्, ब्रह्मात्मविषयं च तन्निदिध्यासनम्, ब्रह्मात्मविषयनिदिध्यासनम्, निदिध्यासनस्य प्रचयो निदिध्यासनप्रचयः, निदिध्यासनप्रचयेन परिनिर्मिततदेकाग्रवृत्तीति, तस्मिन् ब्रह्मात्मैकत्वे एकाग्ररूपा वृत्तिरेकाग्रवृत्तिः, एकाग्रवृत्तिरेव गुण एकाग्रवृत्तिगुणः, प्रचयेन परिनिर्मितः ब्रह्मात्मैकत्वविषयः एकाग्रवृत्तिरूपो गुणो यस्मिन् चित्ते, तदेवंभूतम्—इति विग्रहः। कथं चित्तैकाग्र्यहेतुत्वमलौकिकं कल्प्यते ? इत्याशङ्क्याऽऽह—**लोके चेति** ॥ ननु तर्कस्य प्रतिबन्धनिरासकत्वमुक्तं टीकाकृता; तद्विरोधः,

## पञ्चपादिकाविवरणम्

भावनानिरासितर्काणां प्रथमज्ञानेऽन्तर्भूतत्वात्। एवं च "तं त्वोपनिषदमि"ति तद्धितप्रत्ययेन ब्रह्मावगतिहेतुत्वं शब्दस्य दर्शितमुपपन्नं भवति; अपरोक्षावगतेरेव सम्यगवगतित्वादिति ॥

अन्यन्मतम्—न प्रथमोत्पन्नं शाब्दज्ञानमेव प्रतिबन्धविगमापेक्षयाऽपरोक्षावभासं भवति, किंतु शब्द एव प्रथमं ब्रह्मणि परोक्षज्ञानमुत्पाद्य पुनर्वर्णितचित्तदर्पणसहकारिकारणापेक्षया द्वितीयमपरोक्षज्ञानमुत्पादयति; शब्दादीनां तद्धित-प्रत्ययादिनाऽपरोक्षज्ञाने विनियोगसामर्थ्यात्, यथा संप्रयोगोऽभिज्ञामुत्पाद्य पुनः पूर्वानुभवसंस्कारापेक्षया प्रत्यभिज्ञा-मुत्पादयति, तद्वत्। नच स्वयम्प्रकाशे ब्रह्मणि परोक्षज्ञानं विभ्रमः; स्वयम्प्रकाशेऽपि पुरुषान्तरसंवेदने परोक्षानुमान-दर्शनादिति।

## तत्त्वदीपनम्

शब्दस्य कथं चित्ते वृत्तिः? इत्याशङ्क्य प्रतिबन्धनिवर्तनगुणयोगेनेत्याह—**सर्वेति** ॥ शक्तितात्पर्यावधारणहेतवस्तर्कास्तर्क-शब्देन गृह्यन्ताम्? तत्राह—**यौक्तिकेति** ॥ **प्रथमज्ञान इति**—प्रथमज्ञानसाधनमित्यर्थः। शब्दस्यापरोक्षज्ञानसाधनत्वं लोकविरुद्धं कस्मात् कल्प्यते? इत्याशङ्क्याऽऽह—**एवं चेति** ॥ परोक्ष-प्रत्यक्षहेतुत्वेनापि तद्धितप्रत्ययो घटत इत्याशङ्क्याऽऽह—**अपरोक्षेति** ॥ अपरोक्षस्वभावे वस्तुनि परोक्षप्रत्ययस्य विभ्रमत्वाद् न तज्जनकत्वेन शब्दस्य प्रामाण्यम्, किं त्वपरोक्षहेतुत्वेनेत्यर्थः ॥

वेदान्तानां ब्रह्मण्यपरोक्षप्रमितिजनकत्वात् प्रतिबन्धविगमे तर्कापेक्षेत्युक्तम्; संप्रति शब्दस्य परोक्षज्ञानजननस्वा-भाव्याद् वेदान्तानामपि तथात्वम्, सहकार्यपेक्षया चापरोक्षप्रमितिहेतुत्वमिति मतान्तरमुत्थापयति—**अन्यन्मतमिति** ॥ शब्दस्य परोक्षज्ञानजनकत्वादिति द्रष्टव्यम्। चित्तदर्पणस्यैव परोक्षज्ञानहेतुत्वात् किं शब्दादिना? इत्याशङ्क्याऽऽह—**शब्दादीनामिति** ॥ यज्ञादय **आदिशब्दार्थः**। "तद्धितप्रत्ययादिने"त्यत्रादिशब्देन "यज्ञेन दानेने"ति तृतीयाश्रुतिः संगृह्यते। सहकार्यपेक्षयाऽपि शब्दः कथं परोक्षज्ञानजननस्वाभाव्यं जह्यात्? तत्राह—**यथेति** ॥ अपरोक्षे परोक्षप्रत्ययजनकत्वेऽप्रामाण्यं स्यादित्या-शङ्क्याह—**नचेति** ॥ परोक्षप्रत्ययजनकस्यापि सहकार्यपेक्षयाऽपरोक्षप्रमितिजनकत्वं युक्तमिति **इतिशब्दार्थः**।

कः पक्ष आस्थेयः इत्याशङ्क्योभयथाऽपि प्रतिपत्तिशब्दो न विरुध्यत इत्याह—सर्वथेति ॥ पूर्वपक्ष एव सिद्धान्त इति **रहस्यम्**। वाक्यादपरोक्षप्रत्ययोत्पत्तावुपाय पृच्छति—**कैः पुनरिति** ॥ शम-दमाद्यपेक्ष्यं लभ्यत इत्याह—**तत्राहेति** ॥

अपरोक्षज्ञानोत्पत्तौ श्रवणस्य प्राधान्यम्, इतरयोः सहकारित्वमुक्तम्, तदसहमानः शङ्कते—**ननु मननेति** ॥ तत्र हेतुमाह—**यावतेति** ॥ श्रवणमननयोर्निदिध्यासनस्वरूपोपकारकत्वात् तस्याङ्गित्वम्, इतरयोस्त्वङ्गत्वमित्यर्थः। **अर्थ-संभावनेति**—संभावनाहेतवो या उपपत्तयस्तत्पर्यालोचनद्वारेणोत्पन्नेत्यर्थः ॥

## ऋजुविवरणम्

इत्याशङ्क्याऽऽह—**तर्कशब्देनेति** ॥ किमर्थं मुख्यतर्कहानेनान्यस्वीकारः? इत्याशङ्क्याऽऽह—**यौक्तिकेति** ॥ ननु अपरोक्षज्ञान-मुत्पद्यत इत्यङ्गीकृत्य सर्वेषामन्यथाकरणे बहुतरस्यामुख्यत्वप्रसङ्गात् किमर्थमेवमाश्रितम्? इत्याशङ्क्याऽऽह—**एवं चेति** ॥ ननु तत्रापि ज्ञानहेतुत्वं प्रतीयते, न त्वपरोक्षज्ञानहेतुत्वमित्याशङ्क्याऽऽह—**अपरोक्षावगतेरेवेति** ॥ लोके तु विषयस्याजन-कत्वाच्छब्दज्ञाने विषयस्यापरोक्षत्वाभावः। इह च तद्वैषम्यमिति परिहाराभिप्रायः ॥

"अन्यन्मतमि"ति मतान्तरप्रदर्शने कारणमिदम्—न शब्दस्यापरोक्षज्ञानजनकत्वं प्रथमत एव क्वापि दृष्टम्। यत्रापि 'त्वं दशमः' इत्यादौ दृश्यते, तत्रापि नात्यन्तमनधिगत एवार्थे ज्ञानम्। अतः प्रथममपरोक्षज्ञानासंभव इति मनसि निधाय, ननु द्वितीयज्ञानेऽपि शब्दस्यैव हेतुत्वं कस्मादङ्गीक्रियते? इत्याशङ्क्याह—**शब्दादीनां तद्धितेति** ॥ आदिशब्देनेतरेषां विनियोजक-प्रमाणपरिग्रहः ॥ ननु प्रथमपरोक्षज्ञानजननसामर्थ्याभावे पश्चादन्यसहितस्यापि कथं जनकत्वम्? इत्याशङ्क्याऽऽह—**यथा सम्प्रयोग इति** ॥ ननु अपरोक्षवस्तुनि प्रथमं परोक्षज्ञानजनकत्वे प्रामाण्यमेव न स्यात्; अन्यथाज्ञापकत्वादित्याशङ्क्याह—**नच स्वयंप्रकाश इति** ॥ परमार्थतस्तु नायमपरितोषात् पक्षान्तरपरिग्रहः, किन्तु विषयव्याप्त्यर्थ एव। "**सर्वथाऽपी**"ति वदतै-तदेव द्योतितम् ॥

## पञ्चपादिकाविवरणम्

सर्वथाऽप्यापरोक्ष्यस्य प्रयत्नान्तरलभ्यत्वाद् युक्तं पृथक्प्रतिपत्तिशब्दग्रहणमित्याह—**ततः प्राग्विद्योदितापीति** ॥ कैः पुनः सहकारिभिः शब्दप्रमाणादापरोक्ष्यं लभ्यत इति ? तत्राह—**अवाप्तिप्रकारश्च वेदान्तेष्वेव निर्दिष्ट इति** ॥

ननु मनन-निदिध्यासनयोः कथं श्रवणं प्रत्यङ्गतावगमः ? यावता ब्रह्मण्येव शक्ति-तात्पर्यविशिष्टवेदान्तशब्दावधारणात् श्रवणशब्दाभिधेयादात्मन्यवबुद्धे पश्चाद् मननमर्थसंभावनोपपत्तिपर्यालोचनाद्वारा जनिता ब्रह्मणि प्रत्ययावृत्तिरुत्पद्यते ; ततश्च प्रमाण-युक्तिसंभावनाभ्यां परिनिश्चितेऽपि विषये, तदेकाकारं चित्तसमाधानं निदिध्यासनमुत्पद्यते ; तदेवं निदिध्यासनस्वरूपोपकारितया श्रवण-मननयोस्तदङ्गभावेऽवगते न युज्यते श्रवणाङ्गता मनन-निदिध्यासनयोः—इति ?

अत्रोच्यते—यस्मिन्पक्षे शक्ति-तात्पर्यविशिष्टशब्दावधारणं प्रथमं ब्रह्मणि परोक्षज्ञानमुत्पाद्य मनन-निदिध्यासनसंस्कारविशिष्टान्तःकरणापेक्षयाऽपरोक्षज्ञानमुत्पादयति, तत्र ब्रह्मणि परोक्षज्ञानस्य निदिध्यासनोपकारितया तदङ्गत्वेऽपि तात्पर्यविशिष्टशब्दावधारणादपरोक्षज्ञानोत्पत्तौ मनन-निदिध्यासने श्रवणस्य फलोपकार्यङ्गतामश्नुवाते ।

ननु अपरोक्षफलोदयेऽपि निदिध्यासनाङ्गतैव श्रवण-मननयोः किं न स्यात् ? त्रयाणामपि सन्निपत्योपकाराविशेषात् दर्श-पूर्णमासवत्समप्रधानता वा किं न स्यादिति ? उच्यते—विशिष्टशब्दावधारणं प्रमेयावगमं प्रत्यव्यवधानेन कारणं भवति ; प्रमाणस्य प्रमेयावगमं प्रत्यव्यवधानात् । मनन-निदिध्यासने तु चित्तस्य प्रत्यगात्मप्रवणतासंस्कारपरिनिष्पन्नतदेकाग्रवृत्तिकार्यद्वारेण ब्रह्मानुभवहेतुतां प्रतिपद्येते, इति फलं प्रत्यव्यवहितस्य करणस्य विशिष्टशब्दावधारणस्य व्यवहिते मनन-निदिध्यासने तदङ्गे अङ्गीक्रियेते । यदा तु पुनः शब्दादेव प्रथममपरोक्षानुभवफलं विज्ञानमुत्पन्नम्, भ्रान्तिविक्षेपसंस्कारखचितान्तःकरणदोषादर्थेऽपि परोक्षानुभवफलतया विभ्रान्त्याऽवतिष्ठते, तदा मनन-निदिध्यासने चित्तगतविक्षेपादिदोषप्रतिबन्धनिरासेनापरोक्षफलप्रतिष्ठाहेतुतया प्रमाणस्य फलोपकार्यङ्गमिति न विरुध्यते ।

## तत्त्वदीपनम्

विकल्पासहत्वान्नायं पक्षः साधुरित्याह—**अत्रोच्यत इति** ॥ शब्दः स्वतः परोक्षज्ञानजनक इति पक्षमाश्रित्य निदिध्यासनस्याङ्गित्वमुच्यते ? उत शब्दस्यापरोक्षज्ञानजकनत्वप्रतिबन्धनिरासे च सहकार्यपेक्षेति ? तत्राद्यमनूद्य दूषयति—**यस्मिन्पक्ष इत्यादिना** ॥

अपरोक्षज्ञानोत्पत्तावपि निदिध्यासनस्याङ्गित्वं किं न स्यात् ? इति शङ्कते—**नन्वपरोक्षेति** ॥ श्रवणमननयोरङ्गत्वे प्रमाणाभावश्चेत् तर्हि समप्राधान्यं स्यादित्याह—**त्रयाणामपीति** । श्रवण-मनन-निदिध्यासनानां परस्परं सन्निपत्यज्ञानजनकत्वे विशेषाभावात् समप्राधान्यमित्यर्थः ॥ विशेषाभावोऽसिद्ध इत्याह—**उच्यत इति** ॥ शक्तितात्पर्यवैशिष्ट्यं विशिष्टशब्दार्थः । करणत्वे हेतुमाह—**अव्यवधानेनेति** ॥ तदुपपादयति—**प्रमाणस्येति** ॥ मननादेस्तु वैपरीत्यमाह—**मननेति** ॥ प्रत्यगात्मप्रवणतालक्षणो यः संस्कारः, तेन निष्पन्ना या ब्रह्मैकाग्र्यलक्षणा वृत्तिः, सैव कार्यम्, तद्द्वारेणेत्यर्थः । अव्यवधानफलमाह—**इति फलमिति** ॥ कल्पान्तरे तु मननादेरङ्गत्वमेवेत्याह—**यदा त्विति** ॥ भ्रान्तिरेव विक्षेपो भ्रान्तिविक्षेपः, तस्य संस्कारेण खचितं मिश्रितं यदन्तःकरणम्, तद्दोषादित्यर्थः ॥

अन्वय-व्यतिरेकाभ्यां निदिध्यासनस्यैव परोक्षप्रमितिहेतुत्वं केचित् कल्पयाञ्चक्रुः, तद् दूषयति—**नचेति** ॥ नष्टपुत्रादिचिन्तनजनितापरोक्षप्रत्ययस्य भ्रान्तित्ववदेवास्यापि भ्रान्तित्वान्न प्रामाण्यं सिध्यतीत्याह—**तस्येति** ॥ दृष्टान्ते यथार्थत्वाभावादप्रामाण्यम् , अत्र तु तद्वैपरीत्यमित्याह—**शब्दावगतेति** ॥ शब्दबोधप्रसूतनिदिध्यासनजनितत्वादपरोक्षप्रत्ययस्याप्रामाण्यमित्यर्थः—**तद्द्वारेणेति**, शब्दद्वारेणेत्यर्थः । कल्पनालाघवादपरोक्षप्रत्ययस्य शब्दजत्वकल्पनमुचित-

## ऋजुविवरणम्

"अतः (ततः) प्रागवदि"त्युपसंहारोऽसम्बद्धः; साध्यानुपसंहारात् । प्रतिपत्तिशब्दस्य वैयर्थ्येन चोद्ये कृते तत्र प्रतिपत्तिशब्दार्थं निरूप्य तदेवोपसंहर्तुं युक्तम्, न त्वनवाप्तेरुपसंहारो युक्तः, तस्य साधनत्वात् । नाप्यनवाप्तिरेव । "अतः" इत्यनेन हेतूपन्यासेन साध्यते; पूर्वमेवानवाप्तेः साधितत्वादित्याशङ्क्याऽवतारयति—**सर्वथाऽप्यापरोक्ष्यस्येति** ॥

निदिध्यासनस्याप्यापरोक्ष्यादन्तरङ्गत्वादित्यभिप्रायेणाह—**नन्वपरोक्षफलेति । त्रयाणामपीति** ॥ **अगृह्यमाणविशेषणत्वात् समप्राधान्यम्**, आपरोक्ष्ये च सर्वेषां सामर्थ्यमविशिष्टमिति भावः ॥

## पञ्चपादिका

ननु आत्मैकत्वविद्याप्रतिपत्तिर्नानर्थहेतुप्रहाणाय प्रभवति; तथाहि—जीवस्य कार्यकरणसंघातादन्यत्वप्रतिपत्ते-र्ब्रह्मस्वरूपताप्रतिपत्तिर्न विशिष्यते, उभयत्राप्यहङ्कारग्रन्थेर्मनुष्याभिमानपर्यन्तस्याविकलमनुवर्तमानत्वात् ? उच्यते—भवतु तत्राविद्याया अनिवर्तितत्वात्, तत्, इह पुनरपसारिताविद्यादोषं ब्रह्मात्मज्ञानमुदयमासादयत् कथं तन्निमित्तं भोक्त्रादि-ग्रन्थिप्रवाहं नापनयति ? नहि जीवस्य ब्रह्मात्मावगमस्तद्विषयानवगममबाधमान उदेति ॥

## पञ्चपादिकाविवरणम्

नच शब्दकरणमन्तरेण निदिध्यासनादेवापरोक्षानुभवफलजन्म संभवति ; तस्य प्रामाण्यासिद्धेः । शब्दा-वगतब्रह्मात्मविषयत्वादपरोक्षस्य तद्द्वारेण प्रामाण्यनिश्चय इति चेत् ? नैवम्; उत्पन्नस्य हि विज्ञानस्य प्रमाणान्तराधीन-विषयसद्भावनिश्चयाधीनप्रामाण्यकल्पनाद् वरं स्वस्यैव क्लृप्तप्रमाणजन्यत्वकल्पनम्; अन्यथा परतःप्रामाण्यात्, इतरत्र स्वतःप्रामाण्यात् । तस्माद् युक्तं श्रवणस्य फलोपकार्यङ्गता मनन-निदिध्यासनयोरिति ॥

ननु ब्रह्मापरोक्षज्ञानमपि नानर्थनिवृत्तिनिमित्तम्; सत्यपि तस्मिन् संसारानुवृत्तिदर्शनात्, अन्यथा सद्य एव शरीरपातः स्यादिति चोदयति—**नन्वात्मैकत्वविद्याप्रतिपत्तिरिति** ॥ ननु व्यतिरेकज्ञानात् तत्त्वज्ञानस्य विशेषो दर्शितः ? सत्यम्; फलतो न विशेष इत्याह—**तथाहि जीवस्येति** ॥ नैतद् युक्तम्; तत्त्वापरोक्ष्यात्समूलाध्यासनिवृत्ते रन्वयव्यतिरेक-शास्त्रसिद्धत्वादित्याह- **भवतु तत्राविद्याया इति** । ननु अध्यासविरोधिव्यतिरेकावगमवत्तत्त्वावबोधोऽध्यासविरुद्धोऽपि तन्नापनयतीत्यनुमीयतामिति ? नेत्याह—**नहि जीवस्येति** ॥ अनवबोधविरुद्धं तत्त्वज्ञानम्, न व्यतिरेकज्ञानमित्यर्थः ।

## तत्त्वदीपनम्

मित्याह—**नैवमिति** ॥ प्रमाणान्तराधीनो योऽयं विषयसद्भावनिश्चयः, तदधीनं यत्प्रामाण्यं तत्कल्पनात् क्लृप्तप्रामाण्य-शब्दजन्यत्वकल्पनं वरमित्यर्थः । विपक्षे दण्डमाह—**अन्यथेति** ॥

अपरोक्षप्रत्ययेऽप्यहंकारग्रन्थेरविकलमनुवर्तमानत्वान्नानर्थनिवर्तकत्वमित्युक्तम्, तत्र हेत्वसिद्धिमाशङ्क्याह—**ननु ब्रह्मेति** ॥ व्यतिरेकमुखेन तदेव द्रढयति—**अन्यथेति** ॥ सद्यः शरीरपाताभ्युपगमेपि जीवन्मुक्त्यादिप्रतिपादक-शास्त्रपीडा स्यादित्यर्थः ॥ विमतम्, नानर्थनिवर्तकम्, ज्ञानत्वात्, व्यतिरेकज्ञानवदित्युक्ते अद्वयानन्दाद्यनाकारत्वान्न व्यतिरेकज्ञानस्य निवर्तकत्वम्, अत्र तु तद्वैपरीत्यमिति विशेषे शङ्कते—**ननु व्यतिरेकेति** ॥ उक्ते विशेषसद्भावेऽपि ब्रह्मज्ञानस्य नानर्थनिवर्तकत्वम्, अनुभवविरोधादित्यभिप्रायेणाह—**सत्यमिति** ॥ व्यतिरेकिज्ञाने सत्यपि संसारानिवृत्ति-र्घटते ; मूलाज्ञानस्यानिवर्तितत्वात्; ब्रह्मज्ञानेनाज्ञानस्य निवर्तितत्वात् संसारनिवृत्तिरिति वैषम्यमुक्तम्, तत्र प्रमाणाभा-वाद् नैतद्वैषम्यमिति शङ्कायामाह—**नैतद्युक्तमिति** ! **अन्वय-व्यतिरेकेति**; अन्वय-व्यतिरेकाभ्यां शास्त्रेण च सिद्धत्वादिति विग्रहः । रज्जुतत्त्वसाक्षात्कारे समूलसर्पभ्रमनिवृत्ते, अन्यथा चाभावात्, इत्यन्वय-व्यतिरेकानुरोधेन ब्रह्मतत्त्वसाक्षात्कार-स्यापि समूलसकलसंसारनिवर्तकत्वं कल्प्यते । विमतम्, समूलकार्यनिवर्तकम्, अधिष्ठानतत्त्वसाक्षात्कारत्वात्, रज्जुतत्त्व-साक्षात्कारवदिति । "तरत्यविद्यां विततम्" "भिद्यते हृदयग्रन्थिः" इत्यादिशास्त्रशब्दार्थ इति । अन्वय-व्यतिरेकलक्षण-शास्त्रसिद्धत्वादिति वा विग्रहः । "यत्र हि द्वैतमिव भवति" "यत्र त्वस्य सर्वमात्मैवाभूदि"त्यादिवाक्यादुक्तार्थनिश्चय इत्यर्थः ॥ व्यतिरेकज्ञानस्यानिवर्तकत्ववत् तत्त्वज्ञानस्यापि न तन्निवर्तकत्वमनुमीयत इति शङ्कते—**नन्वध्यासेति** ॥ अध्यस्यत इत्यध्यासो ज्ञानम्, शास्त्रानुमानयोः परस्परविरोधेन संशयादपि पक्षासिद्धिरित्यभिप्रायः । दृष्टान्ते विरोधासंप्रतिपत्त्योत्तरयति—**नेत्याहेति** ॥ हिशब्दसूचितमर्थमाह—**अनवबोधेति** । यद्विषयमज्ञानं तत् तत्त्वज्ञानेन

## ऋजुविवरणम्

ननु निदिध्यासनस्यैवापरोक्षज्ञानजनकत्वदर्शनादत्रापि तदेवास्तु, किं श्रवणस्य साधनत्वकल्पनया ? इत्या-शङ्क्याऽऽह—**नच शब्दकरणमन्तरेणेति** ॥

भवतु संसारानुवृत्तिः, कथमेतावताऽज्ञानानुवृत्तिर्निश्चेतुं शक्यते ? इत्याशङ्क्याऽऽह—**अन्यथेति** । कार्यदर्श-नान्यथानुपपत्त्याऽनुवृत्तिर्निश्चेतुं शक्यत इत्यर्थः । "तथाही"ति विवरणमसङ्गतम्; ब्रह्मज्ञानस्यानिवर्तकत्वमिति चोद्यं कृत्वा व्यतिरेकज्ञानेनाविशेषप्रदर्शनात्, इत्याशङ्क्यावतारयति—**ननु व्यतिरेकेति** ॥ अपसारिताविद्यादोषो येन ज्ञानेन,

## पञ्चपादिका

**ननु ब्रह्मज्ञानादग्रहणापाये तन्निमित्तस्याहङ्कारग्रन्थेस्तत्कालमेवाभावः प्रसज्येत ? न; संस्कारादप्यग्रहणानुवृत्तेः सम्भवात्; भयानुवृत्तिवत्। तथाहि—सम्यग्ज्ञानान्निवृत्तमपि भयं स्वसंस्कारादनुवर्तते, कम्पादिनिमित्तं च भवति। तथाऽग्रहणमपि स्वसंस्कारादनुवर्ततेऽहङ्कारग्रन्थेश्च निमित्तं भवतीति न किञ्चिदनुपपन्नमस्ति ॥**

## पञ्चपादिकाविवरणम्

सशरीरेन्द्रियस्यैवापरोक्षावगमात् ॥

तर्हि सद्य एव शरीरपातः स्यादिति चोदयति—**ननु ब्रह्मज्ञानादिति** ॥ तत्त्वज्ञानादविद्यानिरोधेऽपि पुनरनुवृत्तिर्युज्यत इत्याह—**न संस्कारादिति** ॥ तदेव प्रपञ्चयति—**तथाहीति** ॥ ननु क्रिया-ज्ञानयोरेव संस्कारः सम्भवति, नाज्ञानतत्कार्ययोः ? न; गन्धादिसंस्कारदर्शनात्, प्रलयावस्थायां सर्वकार्यसंस्कारोपगमात्, सर्वत्र च विनाशमात्रप्रयुक्तसंस्कारजन्मानुमानात्, अविद्या-तत्कार्यस्य भ्रान्तिज्ञानात्मकत्वात्, अज्ञानादौ च साक्षिचैतन्यावच्छेदकज्ञानाभासोपगमात्संस्कारसिद्धेः।

## तत्त्वदीपनम्

निवर्त्यते, अद्वैतानन्दात्मविषयं चाज्ञानम्, इति तज्ज्ञानान्निवर्त्यते, न व्यतिरेकज्ञानेनेत्यर्थः ॥ ब्रह्मज्ञानेनाज्ञाननिवृत्तावहंकारस्याप्यभावप्रसङ्ग इत्युक्तं टीकायाम्, तत्रेष्टापत्तिमाशङ्क्य तात्पर्यमाह—**सशरीरेति**। शरीरस्याप्यज्ञानविलासत्वादहंकारग्रन्थिवत्सद्य एव विलयः स्यादित्यर्थः। सोऽपीष्ट एवेति शङ्कां निरस्यति—**सशरीरेति**। शरीरादियुक्तस्य ब्रह्माऽऽपरोक्ष्यमनुभूयते, तद्विरुद्धं सद्यस्तद्विलयाभिधानमित्यर्थः ॥

अग्रहणानुवृत्तौ तत्त्वज्ञानवैयर्थ्यमिति शङ्कां निरस्यति—**तत्त्वज्ञानादिति**। ज्ञानाज्ञानयोर्निवर्त्य-निवर्तकभावसिद्धेरित्यर्थः। न चानुभवविरोधोऽपीत्याह—**अपि पुनरिति**। भ्रमणसंस्कारात्तदनुवृत्तिवदनुवृत्तिर्युक्तेत्यर्थः ॥ अज्ञानजनितविपरीतज्ञानाद् भयानुवृत्तिः, न संस्कारात्, ततश्च दृष्टान्तोऽसंप्रतिपन्न इत्याशङ्क्य, सम्यगपरोक्षप्रत्यये अज्ञानस्थित्यसंभवात् संस्कारानुवृत्तिर्युक्तेत्याह—**तदेवेति** ॥ संस्कारस्यैवासंभवात् कथं ततः संसारानुवृत्तिः ? इति शङ्कते—**ननु क्रियेति** ॥ भ्रमणादिः **क्रिया**शब्दार्थः। वेग-स्थितिस्थापकयोः क्रियासंस्कारत्वम्, भावनाया ज्ञानसंस्कारत्वमिति विभागः। क्रिया-ज्ञानयोरेव संस्कारजनकत्वमित्ययुक्तम्; अन्यस्यापि संस्कारहेतुत्वदर्शनादिति सिद्धान्तयति—**न गन्धादीति**। अपनीतपुष्पायां पुटिकायां पुष्पाभावे स्वरूपतो गन्धानुवृत्त्यसंभवात् संस्कारादनुवृत्तिर्वक्तव्येत्यर्थः। रस **आदि**शब्दार्थः। गन्धाद्याश्रयत्वेन प्रसूनत्रसरेण्वादीनां स्थितिमाशङ्क्याह—**प्रलयेति**। तत्र संस्काराभावे पुनस्तथाभूतकार्यानुपपत्तेः संस्कारः समस्तीत्यर्थः ॥ प्रलयानङ्गीकारवादिनं प्रत्याह—**सर्वत्रेति**। विमतम्, संस्काराधायकम्, विनश्य-

## ऋजुविवरणम्

तदपसारितःविद्यादोषमिति कथमुक्तम् ? तस्यैवासंभवेन चोद्ये कृते तदेव कथमुत्तरम् ? साध्याविशिष्टत्वप्रसङ्गात्, इत्याशङ्क्याभिप्रायमाह—**नैतद्युक्तं तत्त्वापरोक्ष्यादिति ॥ (टीकायाम्) अविद्यादोषमिति** क्रियाविशेषणं वा। "न हि जीवस्ये"त्यनेन ब्रह्मज्ञानस्यानवगमनिवर्तकत्वेन विनोत्पत्तिरेव न संभवतीति कथमुक्तम् ? व्यतिरेकज्ञानवदेवोत्पत्तिसंभवाद्, इत्याशङ्क्याभिप्रायमाह—**अनवबोधविरुद्धमिति** ॥ कथं व्यतिरेकज्ञानस्यानवबोधेन विरोधाभावः इत्यशङ्क्याऽऽह—**सशरीरेन्द्रियस्येति** ॥

क्रिया-ज्ञानव्यतिरिक्तस्यापि गन्धादेः पुष्पकरण्डकादिषु संस्कारो दृश्यत इति परिहरति—**न गन्धादीति** ॥ **आदि**शब्देन रसादिसंस्कारपरिग्रहः। ननु गन्धाद्याश्रयस्यैव स्थित्या तत्प्रतिभासः; न गन्धसंस्कारात्, अतो नानेन दृष्टान्तेन क्रियाज्ञानव्यतिरिक्तवस्तुसंस्कारसिद्धिरित्याशङ्क्य, अन्यदुदाहरति—**प्रलयावस्थायामिति** ॥ ननु नाभ्युपगममात्रेण सर्वसंस्कारसिद्धिः; अभ्युपगममात्रस्याप्रमाणत्वात्, अन्यस्य च संस्कारग्राहकप्रमाणस्यादर्शनात्, इत्याशङ्क्याह—**सर्वत्र विनाशमात्रेति** ॥ ननु क्रियाज्ञानत्वमेव संस्कारानुमापकं भवितुं शक्नोति; तस्यैव स्मरणादिलक्षणकार्यसामर्थ्यात् संस्कारजनकत्वावगमात्, कार्यमात्रप्रयुक्त्या संस्कारानुमाने सोपाधिकत्वप्रसङ्गादित्याशङ्क्याह—**अविद्यातत्कार्यस्येति** ॥ अथवा अतीतकल्पसादृश्यादुत्तरकल्पस्य यादृच्छिकत्वं स्यादित्यनेन द्वितीयसूत्रे वक्ष्यमाणन्यायेन कार्यस्य संस्कारजनकत्वम्, तेनैव न्यायेन सर्वत्रानुमानमात्रम्; उत्तरग्रन्थे तु तन्मतेन ज्ञान-क्रिययोरेव संस्कारजनकत्वं सिद्धवत्कृत्य ज्ञानत्वमपि संवादयितुं शक्यत इत्याह—**अविद्या-तत्कार्यस्येति** ॥ ननु सिद्धे भ्रान्तिज्ञानात्मकत्वे तत्संस्कारसिद्धिः, तदेव

### पञ्चपादिकाविवरणम्

ननु संस्कारात् स्मृतिमात्रहेतोः कथमपरोक्षद्वैतावभासः स्यात् ? अविद्यावत्संस्कारस्यापि चैतन्यदोषत्वादिति वदामः। अपरोक्षावभासकारणगतो दोषोऽपरोक्षभ्रमहेतुरिति सिद्धत्वात्, आत्ममात्रस्यैवाविद्याश्रयत्ववत् संस्काराश्रयत्वोपपत्तेश्च, अविद्यासंस्कारव्यतिरिक्तकार्याणामेवाविद्योपादानत्वात्, आत्मनो मिथ्याभूतसंस्कारोपादानत्वाभावेऽप्याश्रयोपाधित्वस्याविद्योपाधित्ववदविरोधात्। तत्त्वज्ञानानुसन्धानादेव च क्रमेण संस्कारनिवृत्तेः कंचित्कालमवस्थायैव विदेहमुक्तिर्न विरुध्यते। अविद्यालेशो वा तमोलेशवत् संस्कारशब्देनाभिधीयत इति निरवद्यम्॥

### तत्त्वदीपनम्

मानक्रियत्वात्, इत्यनुमानादज्ञानादेरपि संस्कारसंभव इत्यर्थः। क्रिया-ज्ञानयोरेव संस्कार इति नियमोररीकरणेऽपि न दोष इत्याह—**अविद्येति**॥ अविद्यातत्कार्यदेहादेर्ज्ञानविषयत्वं न ज्ञानत्वम्, ज्ञानं च साक्षिचैतन्यम्, तच्च नित्यसिद्धम्, इति कथं संस्कारः ? इत्याशङ्क्याह—**अज्ञानादाविति**। अज्ञानं स्वाकारेणान्तःकरणाकारेण च परिणमते। तस्मिंश्च परिणामे चित्प्रतिबिम्बो भवति। ततश्च परिणामनाशात् संस्कार उत्पद्यत इत्यर्थः। चित्प्रतिबिम्बहेतुरज्ञानपरिणामो **ज्ञानाभास**शब्दार्थः। अपरोक्षप्रतीत्या संस्कारातिरिक्तकारणं वक्तव्यमिति शङ्कते—**ननु संस्कारादिति**। संस्कारमात्रस्यापरोक्षप्रतीतिजनकताऽदर्शनादित्यर्थः। संस्कारस्य दोषत्वादपरोक्षप्रतीतिहेतुत्वमविरुद्धमित्याह—**अविद्यावदिति**॥ दोषत्वमात्रेण कथमपरोक्षप्रतीतिहेतुत्वम् ? इत्याशङ्क्याह—**अपरोक्षेति**। अपरोक्षावभासकारणनयनदोषस्यापरोक्षज्ञानहेतुत्वं प्रसिद्धम्। तथाच चैतन्यस्याप्यपरोक्षप्रतीतिहेतुत्वात् तद्गतसंस्कारस्याप्यपरोक्षप्रतीतिहेतुत्वमविरुद्धमित्यर्थः॥ संस्कारः किं निराश्रयः ? उत साश्रयः ? नाद्यः; निराश्रयसंस्कारादर्शनात्। द्वितीयेऽपि किम्—अनात्माऽऽश्रयः ? उतात्माऽऽश्रय ? नाद्यः; तस्य निवृत्तत्वात्। न द्वितीयः; असङ्गत्वव्याघातादित्याशङ्क्याह—**आत्ममात्रस्येति**। अविद्याश्रयत्वे यथा नासङ्गत्वं व्याहन्यते, तद्वदत्रापीत्यर्थः। संस्कारः किं निरुपादानः ? उत सोपादानः ? नाद्यः; भावकार्यस्य सोपादानत्वनियमात्। द्वितीये उपादानान्तराऽसंभवादविद्याया उपादानत्वं वक्तव्यं, न च तद् युज्यते; संस्कारसमयेऽविद्याऽभावात्, भावसंस्कारस्यैवासंभवादित्याह—**अविद्येति**। सकलमूलेपादानसंस्कारस्य सोपादानत्वासंभवात् तदतिरिक्तभावकार्य एवेयं व्याप्तिरित्यर्थः। आत्मा, न संस्काराश्रयः, अनुपादानत्वात्, यद् यस्यानुपादानम्, न तत् तस्याश्रयः, यथा घटानुपादानं तन्तुरित्याशङ्क्याह—**आत्मन इति**। अविद्यानुपादानत्वेऽपि यथाऽऽत्मनस्तदाश्रयत्वम्, तद्वत् संस्काराश्रयत्वमित्यर्थः। सामान्यनित्यगुणादौ व्यभिचार इति द्रष्टव्यम्॥ संस्कारस्य किं तत्त्वज्ञानं निवर्तकम् ? उताऽन्यत् ? नाद्य; तेन सह स्थितत्वात, न द्वितीयः; तददर्शनात्, ततश्च मुक्त्यसंभव इत्याशङ्क्याह— **तत्त्वज्ञानेति**। तत्त्वज्ञानसंस्कारस्येतरसंस्कारनिवर्तकत्वान्न किंचिदवद्यमित्यर्थः॥ संस्कारादनुवृत्तिसमर्थने भावकार्यं सोपादानमिति प्रसिद्धिविरोध इत्याशङ्क्य पक्षान्तरं कक्षीकरोति—**अविद्यालेश इति**॥ प्रारब्धकार्यसंपादनपटीयानविद्याया अवस्थाविशेषो लेशशब्दस्यार्थः। नच तत्र प्रमाणाभावः; जीवन्मुक्त्यादिशास्त्रस्य प्रमाणत्वादित्यर्थः॥

### ऋजुविवरणम्

कथम् ? इत्याशङ्क्याह—**अज्ञानादौ चेति**॥ भवतु चैतन्यदोषत्वम्, तथाऽपि कथमपरोक्षभ्रमहेतुत्वम् ? इत्याशङ्क्याह—**अपरोक्षावभासकारणेति**॥ ननु संस्कारो निराश्रयो भवितुं नार्हति, नचात्ममात्रस्य शुद्धस्य तदाश्रयत्वमुपपद्यते; अतः संस्काराश्रयत्वेन ज्ञानमपि तिष्ठेदित्याशङ्क्याह—**आत्ममात्रस्यैवेति**॥ ननु सर्वस्य कार्यस्य सोपादानत्वादज्ञानस्यैव सर्वकार्योपादानत्वनियमादज्ञानाभावे संस्कारायोगः, अज्ञानस्थितौ तु सुतरां तत्संकारायोगः, इत्याशङ्क्याह—**अविद्यासंस्कारव्यतिरिक्तेति**॥ ननु आत्मन उपादानत्वे सत्याश्रयत्वमहंकारादौ दृष्टम्, तदभावे कथमात्माश्रयत्वम् ? नचात्मनः केवलस्योपादानत्वम्; मिथ्याभूतत्वात्संस्कारस्येति, तत्राह—**आत्मनो मिथ्याभूतेति**॥ संस्कारस्य निवर्तकाभावान्निर्हेतुकविनाशाभावाद् न विनाशः, तथाच सति मुक्तिरेव न स्यादित्याशङ्क्याह—**तत्त्वज्ञानानुसन्धानादेवेति**॥ ननु संस्कारस्यावारकत्वं न संभवति; भ्रमसंस्कारे सत्यपि तत्त्वज्ञानदर्शनात्, तथाऽस्मिन् पक्षे कार्यस्य सोपादानत्वनियमभङ्गोऽपि स्यात्, अतो न संस्कारादग्रहणानुवृत्तिरित्याशङ्क्य पक्षान्तरमाह—**अविद्यालेशो वेति**॥

**पञ्चपादिका**

**ननु न सर्वे वेदान्ता विद्यार्थमेवारभ्यन्ते, तदेकदेशः क्रममुक्तिफलायैश्वर्याभ्युदयार्थं कर्मसमृद्धये चोपासनानि विविधान्युपदिशन्नुपलभ्यते ? सत्यम्; उपासनाकर्म तु ब्रह्म, तच्चापाकृताशेषप्रपञ्चं जीवस्य निजं रूपमिति निरूपयितुमखिलप्रपञ्चजन्मादिहेतुतया प्रथमं सर्वात्मकं सर्वज्ञं सर्वशक्ति च ब्रह्म लक्षितम्। अस्यां चावस्थायामनपाकृत्यैव ब्रह्मणि प्रपञ्चं तेन तेन प्रपञ्चेनोपधीयमानं ब्रह्म तस्मै तस्मै फलायोपास्यत्वेन विधीयते, दर्शपूर्णमासार्थाप्प्रणयनमिव गोदोहनोपरक्तं पशुभ्यः; तस्मात्तदर्थोपजीवित्वादितरस्यात्मैकत्वविद्याप्रतिपत्तये सर्वे वेदान्ता आरभ्यन्त इति न विरुध्यते ॥**

**पञ्चपादिकाविवरणम्**

**ननु न सर्वे वेदान्ता** इति स्पष्टार्थः ॥ तत्र निर्विशेषब्रह्मप्रतिपत्त्यर्थेषु वेदान्तेषु सगुणब्रह्मोपासनानां तावत् प्रासङ्गिकत्वं दर्शयति—**सत्यमुपासनाकर्म त्विति** ॥ ननु निर्विशेषं चेद् ब्रह्म प्रतिपाद्यम्, तस्य कथं सगुणोपासनालम्बनं सप्रपञ्चं ब्रह्माङ्गभूतं स्यात्, येनाश्रित्य विधानमुच्यत इति ? अध्यारोपापवादन्यायमभिप्रेत्येत्याह—**तच्चापाकृताशेषप्रपञ्चमिति** ॥ निराक्रियमाणे प्रपञ्चे कथमुपासनाविधानं निराकरणप्रत्ययविरोधादिति ? तत्राह—**अस्यां चावस्थायामिति** ॥ ननु आश्रित्य विधाने गोदोहनवदधिकृताधिकारताऽपि स्यादिति मुमुक्षोरेवोपासनास्वप्यधिकारः स्यादिति ? उच्यते; अपां प्रणयनस्य प्रकृततयोद्देश्यत्वाद् न गोदोहनविधिनाऽनुष्ठेयतया सिद्धिः; अतः प्राप्तोद्देशनत्वात्

**तत्त्वदीपनम्**

ऐश्वर्यादिफलकोपासनविधावप्युपनिषत्पदकदम्बकसंदर्शनात् सर्वासामुपनिषदामात्मैकत्वविद्याप्रतिपत्त्यर्थत्वमुक्तमयुक्तमित्याशङ्कयोक्तमर्थमङ्गीचक्रे "सत्यमि"ति, तदसंगतम्, तस्मिन् पक्ष आत्मविद्याप्रतिपत्त्यर्थत्वव्याघातादित्याशङ्क्याह—**तत्र निर्विशेषेति**। ब्रह्माब्रह्मोपासनानां मध्ये निर्विशेषब्रह्मणि चेतसोऽवतरणासंभवात्तत्र प्रपञ्चसंबन्ध आरोपितः, ततस्तत्प्रतिपत्त्यर्थत्वं सगुणवाक्यानामुचितमित्यर्थः। कथं तर्ह्युपास्तिविषयत्वम् ? इत्याशङ्क्याह—**सगुणेति** ॥ **प्रासङ्गिकत्वमिति**—निर्विशेषब्रह्मप्रतिपादनप्रसङ्गादापातत्वमित्यर्थः। (टीकायाम्) सत्यमित्यादेरयमर्थः—वेदान्तेषूपासनोपदेशमङ्गीकरोति—**सत्यमिति** ॥ तर्हि भाष्यविरोध इति, नेत्याह—**उपासनेति** ॥ निर्विशेषप्रतिपत्त्यङ्गसविशेषब्रह्माश्रयणेनोपासनविधानाश्रयणेन गोदोहनादिविधानवदिति तत्र दृष्टान्तो विषम इति शङ्कते—**ननु निर्विशेषमिति**। निर्विशेष-सविशेषयोर्विरोधादङ्गाङ्गिभावानुपपत्तेर्नाश्रित्य विधानमित्यर्थः। **येनेति**; सप्रपञ्चस्याप्यङ्गत्वहेतुना तदाश्रयणेनोपासनाविधानं युज्यत इत्यर्थः। कल्पिताकल्पितरूपत्वात् तयोरङ्गाङ्गिता युक्तेत्याशयेनाह—**अध्यारोपेति** ॥ अपवादस्यारोपापेक्षत्वादारोपस्य निर्विशेषप्रतिपादकत्वं युज्यते, यथा 'तद्रजतमभादि'त्यत्रारोपितरजतस्य शुक्तिप्रमितिहेतुत्वम् तद्वदित्यर्थः। "नेति नेत्या"दिवाक्येनारोपितस्य निरस्यमानत्वान्न तद्विषयमुपासनमिति शङ्कते—**निराक्रियमाण इति** ॥ तत्त्वज्ञानात् प्रागवस्थायामुपास्तिविधानं घटत इत्याह—**तत्राहेति** ॥ **अस्यामिति** आरोपावस्थायामित्यर्थः। आश्रित्यतविधानमाक्षिपति—**नन्वाश्रित्येति**। दर्श-पूर्णमासाङ्गत्वेन प्राप्ताप्प्रणयनमाश्रित्य तदधिकारिण एवं पशुकामनायां चमसपरित्यागेन गोदोहनविधानं दृष्टम्, तद्वद्विद्यार्थत्वेन प्राप्तप्रपञ्चाश्रयणेनोपासनविध्यङ्गीकरणे मुमुक्षोरेवोपासनास्वधिकारः स्यात्, नच स उपपद्यते; तस्यैहिकामुष्मिकभोगनिर्विण्णत्वादित्यर्थः। दृष्टान्तो विषम इत्याह—**उच्यत इति** ॥

**ऋजुविवरणम्**

"सत्यमि"त्यादिनाऽन्यार्थप्रपञ्चमाश्रित्योपासनाविधानात् सर्वेषां तादर्थ्यं न विरुध्यत इत्युक्तम्, तदसंबद्धम्; नह्याश्रित्य विधानमात्रेण तादर्थ्यमित्याशङ्क्याभिप्रायमाह—**तत्र निर्विशेषब्रह्मेति** ॥ **प्रासङ्गिकत्वमित्यनेनैतदुक्तम्**—प्राधान्येन प्रवृत्तिर्वेदान्तानां ब्रह्मात्मैक्यपरेति। **ननु निर्विशेषं चेदिति**। अयमर्थः—निर्विशेषब्रह्मणो न सगुणं ब्रह्माङ्गम्। अङ्गाश्रितश्च सर्वत्राश्रित्य विधिरिति। **अध्यारोपापवादेति**। अध्यारोप्यापवादः क्रियते, अपवादस्याध्यारोपसापेक्षत्वात्, अपवादार्थं प्राप्तप्रपञ्चाश्रितत्वादुपासनाविधेराश्रित्य विधानोक्तिः, न त्वङ्गाश्रयाभिप्रायेणेति। **आश्रित्य विधानेति**—अन्यार्थप्राप्तप्रपञ्चमाश्रित्येत्यर्थः। **गोदोहनवदिति**। "गोदोहनेन पशुकामस्य प्रणयेदि"त्यत्र दर्श-पूर्णमासार्थं प्रणयनमाश्रित्य पशुकामिनो गोदोहनविधानाद् दर्श-पूर्णमासाधिकारिण एव गोदोहनाधिकारः, इति मुमुक्षोः प्राप्तसप्रपञ्चाश्रयत्वादुपासनस्य मुमुक्षोरेवोपासनास्वधिकार इति। "तस्मात्तदर्थोपजीवित्वादि"त्युपसंहारोऽसम्बद्धः; सर्वविद्या-

### पञ्चपादिका

**ननु अब्रह्मोपासनान्यपि वेदान्तेषु दृश्यन्ते प्राणादिविषयाणि ? सत्यम्; तान्यपि कार्यब्रह्मावाप्तिक्रमेण मुक्तिफलान्येव । वक्ष्यत्येतत्सूत्रकारः—"कार्यात्यये तदध्यक्षेण सहातः परमभिधानादि"ति ।** यथा चायमर्थः सर्वेषां वेदान्तानाम्, तथा वयमस्यां शारीरकमीमांसायां प्रदर्शयिष्याम इति **प्रतिज्ञातेऽर्थे वेदान्तानां तात्पर्यमुपदर्शयितुं समन्वयसूत्रप्रमुखैः सूत्रवाक्यैर्ग्रथितो न्याय इति दर्शयति । शरीरमेव शरीरकम्, शरीरके भवः शारीरको जीवः । तमधिकृत्य कृतो ग्रन्थः शारीरकः ।**

### पञ्चपादिकाविवरणम्

प्रणयनस्य, स्वतन्त्रपशुकामिनोऽप्राप्तत्वात्, प्राप्तप्रणयनस्य दर्श-पूर्णमासाधिकारिण एव पशुकामस्य गोदोहनेऽप्यधिकारो दर्शितः । सप्रपञ्चब्रह्मप्रतिपत्तिश्चाश्रीयमाणा मुमुक्षोरमुमुक्षोश्च शब्दादविशेषेण प्राप्तेति तदाश्रित्य विधानं अमुमुक्षूणामप्युपपद्यते, इति न मुमुक्ष्वधिकारकल्पना, किन्त्वाश्रित्य विधानमात्रमिति निरवद्यम् । अतो महातात्पर्यप्रक्रमो ब्रह्मपर इत्युपसंहरति—**तस्मात्तदर्थोपजीवित्वादिति** ॥

**ननु अब्रह्मोपासनान्यपीत्यादेरयमर्थः**—साक्षाद्वा परम्परया वाऽन्तःकरणशुद्धिद्वारेण ब्रह्मात्मैकत्वावगतिपराः सर्वे वेदान्ता इति । वेदान्तविषय-प्रयोजनयोरेव विचारशास्त्रस्यापि विषय-प्रयोजनत्वम्, इति कथयितुमाह **यथाचायमर्थ इति** ॥ भाष्यस्य तात्पर्यमाह—**प्रतिज्ञातेऽर्थ इति** ॥ **शरीरमेवेत्यादिः** स्पष्टार्थः ॥

### तत्त्वदीपनम्

एतदुक्तं भवति—"प्रणयेदिति यत् तद् गोदोहनेने"ति प्राप्तप्रणयनोद्देशेन गोदोहनं विधीयते; अन्यथोभयत्र तात्पर्यापातात् । प्रणयनस्य च दर्शपूर्णमासाधिकारिसंबन्धित्वेन प्राप्तत्वात्स्वतन्त्रपशुकामिनोऽप्राप्तत्वाच्च तस्यैव गोदोहनाधिकारः । नच तथा सप्रपञ्चं ब्रह्म मुमुक्षोरेव प्राप्तम्, इति सर्वेषां फलकामिनामुपासनास्वप्यधिकार इति । **प्राप्तोद्देशनत्वादिति** । प्राप्तमुद्देशनं यस्य तथोक्तम्, तस्य भावस्तत्त्वम्, तस्मादित्यर्थः ॥ सर्वशब्दार्थमुपसंहरति—**अत इति** ॥ निष्प्रपञ्चब्रह्मप्रतिपत्त्यर्थं यदिदं सप्रपञ्चम् तदुपजीवित्वादुपासनाभागस्येत्यक्षरार्थः ।

निर्विशेषब्रह्माङ्गसप्रपञ्चाश्रयणेनोपासनं विदधतां वाक्यानामात्मविद्यार्थत्वेऽप्यब्रह्मोपासनानामतथार्थत्वात् सर्वशब्दविरोधस्तदवस्थः, इत्याशङ्क्य, तेषामपि क्रममुक्तिफलत्वमभिदधौ, तदसंभवि, तथात्वेऽपि विद्यार्थत्वाभावाद् "विद्याप्रतिपत्तये" इत्यस्यायोगादित्याशङ्क्य तात्पर्यमाह—**नन्वब्रह्मेति** ॥ **इत्यादेरित्यस्यायमर्थः** "नन्वब्रह्मे"त्यादिपूर्वपक्ष 'इति'शब्दोक्त आदिर्यस्य सिद्धान्तग्रन्थस्य, स इत्यादिस्तस्येत्यर्थः । **परम्परयेत्युक्तं** विवृणोति—**अन्तःकरणेति** ॥ सर्वेषां वेदान्तानां विद्यार्थत्वे निर्दिष्टे तात्पर्यालोचनया तस्यार्थस्य सिद्धेः—"यथा चे"ति भाष्यस्य वैयर्थ्यमाशङ्क्याह—**वेदान्तेति** । वेदान्तानां विषयप्रयोजनादिमत्त्वेऽपि विचारशास्त्रस्य तद्विधुरत्वादनारभ्यत्वमिति शङ्कायां वेदान्तव्याख्यानरूपत्वात् तदीयविषयादिकमेवास्यापीति प्रदर्शनं भाष्यार्थ इत्यर्थः । वेदान्तैरेव विषयादिसिद्धेर्विचारशास्त्रनैरर्थक्यम्, तेन "मीमांसायां प्रदर्शयिष्यामः" इत्येतदसंगतमित्याशङ्क्याह—**भाष्यस्येति** । वेदान्तार्थाप्रतिपत्त्यादिनिरासेन तदर्थं द्रढयितुं विचारशास्त्रारम्भ इत्यर्थः ॥

### ऋजुविवरणम्

प्रयोजनं येषां ते, तदर्थाः ; तानुपजीव्य प्रवर्तन्त इति तदर्थोपजीविनः । यद्वा, तेषामर्थः, तदर्थः; तदर्थमुपजीव्य वर्तनात् तदुपजीवित्वम् । नहि तदर्थोपजीवित्वमात्रेण तादर्थ्यं भवति; अतः प्रासङ्गिकत्वेऽपि स्वार्थपरत्वसंभवात् कथं सर्वेषां तादर्थ्यम् इत्याशङ्क्याभिप्रायमाह—**अतो महातात्पर्येति** ॥

"सत्यं तान्यपी"त्यनेन क्रममुक्तिप्रदर्शनं व्यधिकरणम्; विद्यार्थत्वाभावेन चोद्ये कृते क्रममुक्त्यर्थत्वप्रदर्शनात् । किंचान्यान्यपि "चक्षुष्यः श्रुतो भवती"त्यादिदृष्टफलान्युपासनानि दृश्यन्ते; अतो न फलेनापि ज्ञान उपयोग इत्याशङ्क्याभिप्रायमाह—**साक्षाद्वा परम्परयेति** ॥ "यथाचायमर्थः" इत्यनेन भाष्येण ब्रह्मात्मैकत्वप्रतिपादकत्वं "दर्शयिष्यामः" इत्युक्तम्, तदप्रयोजनम्; वेदान्तारम्भस्य प्रतिज्ञातत्वात्, तस्मिन् कृते तत्प्रदर्शनस्यापि सिद्धत्वात् किमर्थं पृथक् प्रदर्शनप्रतिज्ञा ? इत्याशङ्क्य प्रयोजनमाह—**वेदान्तविषयेति** ॥ एतदुक्तं भवति—विषय-प्रयोजनाभावेऽनारम्भशङ्का विचारशास्त्रेऽपि तुल्या, सा चानेनैव परिहृतेति ॥

## पञ्चपादिका

**तदिह वेदान्तानां जीवस्य तत्त्वमधिकृत्य प्रवृत्तानां ब्रह्मरूपतायां पर्यवसानमिति कथयितुं प्रणीतानां शारीरकं जीवतत्त्वमधिकृत्य कृतत्वमस्तीति शारीरकाभिधानम् । मुमुक्षुत्वे सत्यनन्तरं ब्रह्मज्ञानं कर्तव्यमिति यद्यप्येतावान्सूत्रस्य श्रौतोऽर्थः; तथाऽप्यर्थाद् ब्रह्मज्ञानस्य मोक्षः प्रयोजनं निर्दिष्टं भवति । तथाहि—पुरुषार्थवस्तुकामनानन्तरं यत्र प्रवृत्तिरुपदिश्यते, तस्य तत्साधनत्वमप्यर्थात् निर्दिष्टं प्रतीयते ।**

## पञ्चपादिकाविवरणम्

वेदान्तानां शारीरकपरत्वेऽपि विचारस्य कथं शारीरकपरत्वमिति ? तदाह—**तदिह वेदान्तानामिति** ।। ननु विचारकर्तव्यतामात्रं सूत्रार्थः; तत्र विषय-प्रयोजनयोरसूत्रितयोरुपादानं वेदान्त-तद्विचारसंबन्धितया नोपपद्यते, इत्याशङ्कामपनुद्य, वृत्तसङ्कीर्तनपूर्वकमुत्तरभाष्यस्य तात्पर्यमाह—**मुमुक्षुत्वे सत्यनन्तरमित्यादिना** ।। कथं ब्रह्मज्ञानस्य मोक्षः प्रयोजनमर्थसिद्धमिति ? तदाह—**पुरुषार्थवस्तुकामनेति** । **प्रवृत्तिरिति** प्रवृत्तिविषयेष्टसाधनताऽभिधीयते । सैव हि विधिरिति वक्ष्यामः ।।

यस्मिन्धात्वर्थे प्रवृत्तेर्हितसाधनता लिङादिपदैरुपदिश्यते, स धात्वर्थः सामान्येन हितसाधनोऽधिकारिविशेषणेन फलविशेषेण सामर्थ्यात् सम्बध्यते सामान्यप्रतीतेर्विशेषपर्यवसानमन्तरेणानुपपत्तेः । ततश्च विचारो हि सामान्येन हितसाधनतयाऽवगम्यमानः स्वसामर्थ्यसिद्धज्ञानद्वारेणाधिकारिविशेषणमोक्षविशेषफले पर्यवस्यतीत्यर्थः । ननु च पुरुषार्थकामिनो यत्र नियोग उपदिश्यते, तत्र नियोगो धात्वर्थस्य पुरुषार्थसाधनत्वं कल्पयति; ततश्च विधीयमानो विचारो

## तत्त्वदीपनम्

उत्तरभाष्यव्याख्यानं विहाय मध्ये सूत्रार्थानुवर्णनमसङ्गतमित्याशङ्क्याह—**ननु विचारेति** ।। ज्ञानस्य स्वरूपेणापुरुषार्थत्वेऽपि न मोक्षफलत्वम्; अन्यस्य कस्यचित् फलत्वसंभवात्, इति शङ्कते—**कथमिति** ।। कृतकराशेर्निर्विण्णत्वान्मोक्षस्यैव फलत्वमित्याह—**तदाहेति** ।। इष्टसाधनस्य लिङर्थत्वाद् भावनापरपर्याया प्रवृत्तिर्लिङर्थं इति कथमुक्तम् ? तत्राह—**प्रवृत्तिरिति** ।। प्रेरणादेर्लिङर्थत्वात् कथमिष्टसाधनता लिङर्थः ? इत्याशङ्क्याह—**सैवेति** ।।

इष्टसाधनतामात्रस्य लिङर्थत्वाद् ब्रह्मज्ञानस्य कथं मोक्षसाधनत्वं सेत्स्यति ? इत्याशङ्क्याह—**यस्मिन्नित्यादिना** ।। अपेक्षितं पूरयति—**लिङादीति** ।। **सामर्थ्याद्** अनुपपत्तेरित्यर्थः । सामर्थ्यमेवाह—**सामान्येति** ।। सामान्योक्तं न्यायं प्रस्तुते योजयति—**विचारो हीति** ।। इष्टसाधनत्वं लिङर्थं इत्याकर्ण्य तदमृष्यमाणः **प्राभाकरः** शङ्कते—**ननु पुरुषार्थेति** ।। लोके लिङादेः कार्ये शक्तिग्रहात् तदनुसारेण वेदेऽपि लिङादिना कार्यं बोध्यते, तच्च भावार्थविलक्षणम्, भावार्थस्य क्षणभङ्गुरतया समयान्तरभाविफलसाधनत्वासंभवादित्यभिप्रेत्याह—**नियोग इति** ।। इदमुक्तं भवति—लिङादिबोधितो नियोगो नियोज्यविषयमपेक्षते, कस्य कुत्र नियोग इति ? प्रकृत्युपात्तो यागो विषयत्वेन, स्वर्गकामी नियोज्यत्वेन च लक्ष्यते, यागस्य चेप्सितस्वर्गासाधनत्वे स्वर्गकामिनियोगविषयत्वानुपपत्तेः । ततश्च लिङादिबोधितनियोगसामर्थ्यात् याग-स्वर्गयोः साध्यसाधनतासंबन्ध इत्यर्थः । फलितं दर्शयति—**ततश्चेति** ।। नियोगपक्षे धात्वर्थस्य पुरुषार्थ-

## ऋजुविवरणम्

ननु अनन्तरभाष्यव्याख्याने प्रस्तुते, किमर्थम् "मुमुक्षुत्वे सत्यनन्तरमि"त्यादिना सूत्रार्थानुवादः कृतः, असंगतत्वात् ? इत्याशङ्क्यावतारयति—**ननु विचारकर्तव्यतामात्रमिति** ।। प्रवृत्तिशब्देन पुरुषव्यापारस्य भावनाख्यस्य स्वीकारशङ्कानिराकरणायाह—**प्रवृत्तिविषयेष्टसाधनतेति** ।। ननु मुख्यं प्रयत्नं विहायेष्टसाधनत्वाभिधायित्वं कथं निश्चीयते ? मुख्यप्रयत्नहानेन तस्यैव स्वीकारे कारणादर्शनादित्याशङ्क्याह—**सैव हि विधिरिति** ।।

"यत्रे"ति व्याचष्टे—**यस्मिन् धात्वर्थ इति** ।। "उपदिश्यते" इत्यत्र कैरुपदिश्यते ? इत्यपेक्षायामाह—**लिङादिपदैरिति** ।। ननु टीकाग्रन्थः परस्परव्याहतः, "उपदिश्यते" इत्यनेनेष्टसाधनत्वस्य वाचनिकत्वमुक्तम्, तत्साधनत्वमप्यर्थादित्यार्थिकत्वं चोक्तम्; नह्येकस्मिन्नुपदेश एकस्य श्रौतत्वमार्थिकत्वं चोपपद्यते, इत्याशङ्क्य विषयभेदमाह—**स धात्वर्थः सामान्येनेति** ।। एवं सामान्येनोक्त्वा प्रकृते योजयति—**विचारो हीति** ।। **ननु पुरुषार्थेति** । क्रियातिरिक्तं कार्यं लिङाद्यभिधेयम् । तच्च कृतिसाध्यं प्रधानं तेन च प्रवर्तकेन रूपेणाभिधीयते । तच्च कृतिसाध्यं घटे प्रवर्तकम् । नियुङ्क्त इति नियोगः । नव यागादेः फलसाधनत्वाभावे तत्र प्रवर्तकत्वमुपपद्यते; अतो नियोगसामर्थ्यात् फलसाधनत्वं

## पञ्चपादिकाविवरणम्

नियोगसामर्थ्यान्मोक्षसाधनमिति कल्प्यताम्, किमिष्टसाधनत्वविधिसामर्थ्यकल्पनयेति ? नैतत् सारम्; अनुपपत्त्यभावात्। तथाहि—नियोगस्वरूपं तावन्न फल-धात्वर्थसंबन्धमन्तरेणानुपपन्नम्; अनाप्तनियोगे नैयमिके चाऽदर्शनात्। प्रवर्तकत्वमनुपपन्नमिति चेत्, यदि फलकामनाऽपि नियोगेन प्रवृत्तावपेक्ष्यते, सैव तर्हि प्रवृत्तिहेतुः, न नियोगः; प्रत्यक्षादिषु तस्याः प्रवर्तने स्वातन्त्र्यदर्शनात्। अथ नापेक्ष्यते कामः, तर्हि फलकामनामनपेक्ष्य बलवदनिल-सलिलौघनुद्यमान इव पुरुषे नियोगेन प्रवर्त्यमाने न फलसंबन्धकल्पनावकाशः; सलिलादिनोदनेऽपि प्रसङ्गात्। ननु फलकामिनो नियोगः प्रमीयमाणोऽनुपपन्नः फलसंबन्धमन्तरेण; अन्यथा फलकामिनियोगो न स्यात् ? कोऽयमभिप्रायः ? यदि तावत् फलकामना नियोगाधिकारिविशेषणं न स्यात् फल-धात्वर्थसंबन्धमन्तरेणेति, तन्न, जीवनादीनामसाध्यानामप्यधिकारिविशेषणत्वदर्शनात्। साध्यस्य विशेषणत्वमनुपपन्नमिति चेत् ? न तावदनेन साध्यत्वं सिद्धवत्कर्तुं शक्यते। स्वरूपेण साध्यत्वं

## तत्त्वदीपनम्

साधनत्वं न सिध्यतीत्याह—**नैतदिति** ॥ फल-धात्वर्थसंबन्धाभावे नियोगस्वरूपानुपपत्तिः ? उत तत्प्रवर्तकत्वस्य ? आहो फलकामिनियोगस्य ? इति विकल्प्याद्यमर्थं प्रत्याह—**तथाहीति** ॥ नचात्र विकल्पासंभवः; पूर्वोक्ताभिप्रायस्यास्पष्टत्वादिति द्रष्टव्यम्। 'स्वर्गकामः सिकता भक्षयेदि'त्यनाप्तनियोगः। **च**शब्देन नैमित्तिकं समुच्चिनोति। द्वितीयमुत्थापयति—**प्रवर्तकत्वमिति** ॥ नियोगः किं फलकामनामपेक्ष्य प्रवर्तयति ? उत न ? आद्ये कामस्यैव प्रवर्तकत्वमापतितमित्याह—**यदीति** ॥ नियतपूर्वक्षणवर्तित्वात् कामनाया इत्यर्थः। इतरस्याप्यावश्यकत्वादुभयोः प्रवर्तकत्वशङ्कां निरस्यति —**न नियोग** इति ॥ द्वितीयमनुवदति—**अथेति** ॥ अस्मिन्पक्षे न धात्वर्थस्य फलसम्बन्धसिद्धिरित्याह—**तर्हि फलेति** ॥ तृतीयमुत्थापयति—**ननु फलेति** ॥ "नियोग" इत्यत्र यागविषय इति पदं द्रष्टव्यम्। अनुपपत्तिमेवाह—**अन्यथेति** ॥ किं कामनाया अधिकारिविशेषणत्वमात्रानुपपत्त्या फल-धात्वर्थसंबन्धसिद्धिरुच्यते ? उत साध्यस्य विशेषणत्वानुपपत्त्या ? इति विकल्पयति—**कोऽयमिति** ॥ आद्यमनूद्य प्रत्याह—**यदि तावदिति** ॥ गृहदाहादिरा**दि**शब्दार्थः। द्वितीमुत्थापयति—**साध्यस्येति** ॥ किं येन धात्वर्थेन फलसंबन्धः सिषाधयिषितः, तत्साध्यत्वम् ? उत साध्यत्वमात्रं साध्यशब्देन विवक्षितमिति ? प्रथमं प्रत्याह—**न तावदिति**। स्वर्गादेर्यागसाध्यत्वे सिद्धे तद्विशेषणत्वानुपपत्त्या साध्य-साधनसंबन्धसिद्धिः, तत्सिद्धौ च यागसाध्यत्वं स्वर्गादेरितीतरेतराश्रयत्वमित्यर्थः। द्वितीयमनुवदति—**स्वरूपेणेति** ॥ किं

## ऋजुविवरणम्

प्रतीयत इति भावः। नियोगोऽनुपपत्त्या साधनत्वं कल्पयति; अन्तरङ्गत्वात्। स्वरूपानुपपत्तिं निराकरोति—**नियोगस्वरूपमिति** ॥ ननु—नियोगो धात्वर्थे प्रेरकः; नच धात्वर्थस्य फलसाधनत्वाभावे तत्र प्रवर्तकत्वमुपपद्यते, इति तस्य कथं फलसाधनत्वं कल्प्यते ? इति चोदयति—**प्रवर्तकत्वमनुपपन्नमिति** ॥ प्रवर्तकत्वसिध्यर्थं फलकामनामप्यपेक्षते वा ? न वा ? सापेक्षत्वे दूषणमाह—**यदि फलकामनाऽपीति** ॥ द्वितीयं पक्षं परिगृह्णाति—**अथ नापेक्ष्यत इति** ॥ **ननु फलकामिन इति**। कामिकार्यतया यागे प्रवर्तकः; तस्यापि काम्यमानसाधनत्वाभावे प्रवर्तकत्वानुपपत्तेः, तृप्तिकामनियोगविषयस्य भोजनादेस्तृप्तिसाधनत्वं दृष्टम्; अतत्साधने ग्रामगमनादौ तस्य नियोगादर्शनात्, एवं सर्वत्र द्रष्टव्यम्। फलस्य धात्वर्थसाध्यत्वाभावे पुरुषस्य कर्मण्यैश्वर्यलक्षणाधिकाराभावः; फलभागित्वाभावात्, ततोऽधिकारापर्यवसितो विधिरेव न भवतीति। यद्वा, फलकामिव्यावृत्ततयाऽवगम्यमानः प्रवर्तको नातत्साधने तेनाकारेण प्रवर्तकः; तदभावे विषयाधीनस्वसिध्यभाव इत्यपि प्रतिभानात् पृच्छति—**कोऽयमभिप्राय इति**। **यदि तावत् फलकामनेति**; काम्यमानं फलमित्यर्थः। जीवनादीनामिव कर्मजन्यफलभागित्वमैश्वर्यं न भवति; नित्ये व्यभिचारात्, फलाभावे स्वामित्व-शेषित्वयोरनिरूपणात्, कर्मजन्यापूर्वेण शेषित्वरूपाधिकारपर्यवसानाच्च, अतो नाधिकारापर्यवसानमिति भावः। द्वितीयपक्षे कामनान्तर्भावाद् दूषणमुक्तमित्यनुपन्यासः ॥ ननु कमियोगात्साध्यत्वेन प्रतीयमानो विशेषणम्, तथा सति कर्मण्यैश्वर्यपर्यवसायी विधिस्तत्साधनत्वं ज्ञापयति, तदभावे तस्य तत्रैश्वर्यायोगादिति चोदयति—**साध्यस्येति**। साध्यत्वेन यदधिकारिविशेषणम्, तन्नियोगविषयभूतधात्वर्थसाध्यत्वेनैवेत्यर्थः। कथं साध्यत्वमविवक्षितम्, बोधकशब्दस्य विद्यमानत्वात् ?

### पञ्चपादिकाविवरणम्

चेत् ? न; अविवक्षितत्वात् । तथाहि—अधिकारिविशेषव्यावृत्तिमात्रप्रयोजनतया विशेषणपरेण शब्देन साध्यता न विवक्ष्यते । नार्थादपि साध्यत्वविवक्षा, तत्र प्रमाणस्याद्याप्यदर्शनात् । कामनैव च सिद्धस्वरूपाऽधिकारिविशेषणम्, स्वर्गस्य तद्व्यावर्तकत्वात् ॥

किञ्च अन्यसाध्यस्यापि व्यापारान्तरेऽधिकारिविशेषणत्वं दृश्यते, "अध्येतुकामो भैक्ष्यं चरेत्", "परस्त्रीकामः प्रायश्चित्तं कुर्यात्", "ग्रामकामो भुङ्क्ष्वे"त्यादौ । नचाधिकारिविशेषणत्वमपि स्वर्गकामनायाः संभवति; अयोगान्ययोगव्यवच्छेदासंभवात् । तथाहि—स्वर्गकामपदं दर्श-पौर्णमासनियोगस्य पुरुषेणासंयोगं न व्यवच्छिनत्ति; नित्यविधिनैव पुरुषान्वयस्य सिद्धत्वात् । नापि नियोगस्यास्वर्गकामसंबन्धव्यवच्छेदार्थं विशेषणम्; अत्रापि दर्श-पूर्णमासनित्यविधिसंबन्धविरोधात् । नच नित्य-काम्यनियोगभेदः; साङ्गदर्श-पौर्णमासनियोगस्याविशिष्टत्वात्,

### तत्त्वदीपनम्

स्वर्गकामपदात् साध्यताप्रतिपत्तिः ? उतार्थात् ? इति विकल्प्याद्यमपवदति—**नाविवक्षितत्वादिति** ॥ तदेव स्पष्टयति—**तथाहीति** । नियोगस्य नियोज्यसापेक्षत्वादपेक्षिताधिकारिविशेषसमर्पकं स्वर्गकामपदं न साध्यतां समर्पयतीत्यर्थः । **अधिकारिविशेषेति**; अधिकारिविशेषस्य व्यावृत्तिविशेषणम्, तन्मात्रप्रयोजनतयेत्यर्थः । द्वितीयं प्रत्याह—**नार्थादपीति**; विशेषणत्वानुपपत्त्याऽपीत्यर्थः । जीवनादेरसाध्यस्यापि विशेषणत्ववदसाध्यस्यापि स्वर्गादेर्विशेषणत्वं संभवतीत्यर्थः । स्वर्गस्याधिकारिविशेषणत्वमङ्गीकृत्य साध्यत्वं निराकारि, नच विशेषणत्वमपीत्याह—**कामनेति** ॥ स्वर्गोऽप्यधिकारिविशेषणतया भातीत्याशङ्क्य, कामनाविशेषणत्वान्मैवमित्याह—**स्वर्गस्येति** ॥

काम्यमानत्वात् स्वर्गस्य साध्यत्वं परम्परयाऽधिकारिविशेषणत्वं चेत्याशङ्क्य विशेषणत्वेऽपि न फल-धात्वर्थसंबन्धसिद्धिरित्याह—**किंचेति** । अध्ययनादेर्भैक्ष्याचरणाद्यसाध्यत्वेऽपि भैक्षाचरणादिनियोगाधिकारिविशेषणत्वदर्शनवत् स्वर्गस्य यागासाध्यत्वेऽपि यागनियोगाधिकारिविशेषणत्वं स्यादित्यर्थः । वस्तुतः कामनाया अपि नाधिकारिविशेषणत्वमित्याह—**नचेति** ।। किं पुरुषे दर्श-पूर्णमासविनियोगयोरसंबन्धस्य व्यावृत्त्यर्थं विशेषणम् ? उतान्ययोगस्य ? इति विकल्प्योभयथाऽसंभवमाह—**अयोगेति** । नियोग-पुरुषयोरसंबन्धोऽयोगः; अस्वर्गकामिनियोगसंबन्धोऽन्ययोगः । असंभवमेवाह—**तथाहीति** ॥ नित्य-काम्यनियोगयोर्भेदात् स्वर्गकामपदस्यायोगान्ययोगव्यवच्छेदकत्वसंभवमाशङ्क्याह—**नचेति** । किं नित्य-काम्यनियोगवैजात्यं भिन्नत्वम् ? उत व्यावृत्तिमात्रम् ? नाद्य इत्याह—**साङ्गेति** ।

### ऋजुविवरणम्

इत्याशङ्क्याह—**तथा ह्यधिकारीति** ।। मा भूच्छब्दतः साध्यत्वप्रतीतिः, अर्थाद्भविष्यतीत्याशङ्क्याह—**नार्थादपीति** । **तत्र प्रमाणस्येति**—कस्यानुपपत्त्या फलस्य साध्यत्वमिति निश्चयो नास्तीत्यर्थः । ननु कर्मियोगात् स्वर्गः साध्यत्वेन प्रतीयते, अतः साध्यस्वर्गवानधिकारी प्रतीयते; साध्यस्य साधनाकाङ्क्षत्वात्, धात्वर्थस्य चान्योत्पादनस्वभावत्वात्, अत उभयसामर्थ्यात् फल-धात्वर्थयोः साध्य-साधनभावः, इति विमर्शोत्तरकालं कालान्तरवर्तिसाध्यस्वर्गसिध्यर्थमस्थायिकार्ये व्युत्पत्तिकल्पना । तस्य च नियोज्यापेक्षस्य नियोज्यविशेषणापेक्षायां नियोगसाध्यस्यैव नियोज्यविशेषणत्वात् स्वर्गो विशेषणम्, पश्चात् कर्मण्यैश्वर्यपर्यवसायिनः साध्य-स्वर्गस्यैवाधिकारिविशेषणत्वं बोध्यत इत्याशङ्क्याह—**कामनैवेति** ।।

ननु कामनाया अपि स्वर्गविशेषिताया अधिकारिविशेषणत्वं वक्तव्यम्, तदागमन्यायात् तत्कामिनामैश्वर्यं काम्यमानसाधनत्वेन । यद्वा, **अधि** उपरि, यस्मात् करणं पुरुषस्य भवति, सोऽधिकार इति व्युत्पत्त्या फलमेव सामान्येन प्रतीयते, कर्मण्यैश्वर्येऽप्यधिकारे फलमेव प्रतीयते; फलसाधनत्वेनैव पुरुषार्थत्वात् कर्मणाम् । तदुक्तम्—"कर्माण्यपि जैमिनिः फलार्थत्वात्" इति । अतः फलमेव विशेषणम् । तस्य च साध्यत्वेनैव प्रतीतत्वादेतत्साधनसाध्यत्वमपीत्याशङ्क्याह—**किंचान्यसाध्यस्येति** ।। परस्त्रीकामनायाः प्रायश्चित्तप्रकरणसामर्थ्याद् निमित्तत्वनिश्चयादन्यसाध्यत्वमेव । ग्रामादिष्वपि प्रमाणान्तरेणान्यसाध्यत्वावगमाद् व्यावर्तकत्वमात्रम्, इह तु साध्यत्वेन प्रतीतस्य विशेषणत्वात् प्रमाणान्तरेण साधनान्तराप्रतीतेः सामर्थ्याद् धात्वर्थसाध्यत्वं प्रतीयत इत्याशङ्क्याह—**नचाधिकारिविशेषणत्वमिति** । पूर्वं विशेषणत्वमङ्गीकृत्य साध्यत्वं निरस्तम्, इदानीं विशेषणत्वमपि नास्तीत्यपिशब्दार्थः । ननु नित्यनियोगसम्बन्धो यावज्जीववाक्येन क्रियते, अनेन तु काम्यदर्श-पूर्णमासयोः स्वर्गकामेनायोगव्यवच्छेदोऽन्ययोगव्यवच्छेदश्च क्रियत इति

### पञ्चपादिकाविवरणम्

अधिकारिमात्रभेदात्। तस्मात् "दण्डी प्रैषानन्वाहे"तिवद् विशेषणस्वर्गपरमिदं वचनम्, न विशिष्टपुरुषपरम्, इति फलवचनमेतत् स्वर्गकामपदम्। अर्थात् स्वर्गकामोऽधिकारी भवति। फलवचनं च साधनवचनेनान्विताभिधानमर्हति, इति न नियोगाभिधानावकाशः। ततश्चेष्टसाधनत्वमेव लिङादिशब्दार्थो विधिरिति॥

अन्ये मन्यन्ते—विषयनियोज्यव्यावृत्ते नियोगेऽभिधीयमाने विषय-नियोज्ययोरन्वयः सामर्थ्यादवगम्यते; अन्यथाऽधिकारिणो विषयेण कर्तृ-कर्मानन्वयेनाननुष्ठीयमाने विषये नियोगस्य निर्वृत्त्ययोगात्, ततश्चाधिकारिणा धात्वर्थोऽन्वीयमानस्तद्विशेषणेन स्वर्गेणाप्यन्वेति; विशिष्टेनान्वयस्य विशेषणेनाप्यन्वयात्। तत्रान्वयो गुणप्रधानभावादृते नोपपद्यते, इति स्वर्गः प्राधान्येन, कर्म गुणभावेन, इति संपत्स्यते साध्य-साधनसंबन्धः—इति॥

### तत्त्वदीपनम्

भेदमात्रं त्वस्वर्गकामसंबन्धेऽपि न विरुध्यत इत्यर्थः। नियोगस्योभयत्रैकविधत्वे नित्य-काम्यविभागः कथं घटेत? इत्याशङ्क्याह—**अधिकारिति**। कामिनिर्वर्तितस्य काम्यत्वम्, जीवनादिविशिष्टाधिकारिनिर्वर्तितस्य नित्यत्वमित्यर्थः। स्वर्गकामपदस्याधिकार्यसमर्पकत्वे वैयर्थ्यमित्याशङ्क्य, फलसमर्पकत्वेनार्थवत्त्वमाह—**तस्मादिति**। अधिकारिसर्पकत्वाभावस्तच्छब्दार्थः। "मैत्रावरुणः यष्टिया'दिति वाक्यान्तरसिद्धप्रैषानुवादेन दण्डसंबन्धः प्रतिपाद्यते—"प्रैषानन्वाहे'ति यत्, तद् दण्डी सन्निति, तद्वदस्यापि विशेषणपरत्वमित्यर्थः। स्वर्गकामपदस्य फलसमर्पकत्वेऽधिकारिसमर्पकाभावान्निरधिकारमिदं शास्त्रमापद्येतेत्यत्राह—**अर्थादिति**। स्वर्गकामादिपदसमभिव्याहृतलिङादिना यागस्य स्वर्गसाधनत्वे बोधिते 'मदभीप्सितफलसाधनमिदं कर्मे'ति कर्माधिकारितां भजते, ततो न निरधिकारत्वमित्यर्थः। भवतु स्वर्गकामपदस्य फलसमर्पकत्वम्, तथाऽपि कथं नियोगस्यावाक्यार्थत्वम्? इत्याशङ्क्याह—**फलवचनमिति**॥ 'इष्टसाधनमि' त्युक्ते कस्येष्टस्थ साधनमिति वीक्षायामपेक्षितविशेषसमर्पकं स्वर्गकामपदम्, स्वर्गकामपदात् स्वर्गे प्रतिपन्ने किं तस्य साधनमित्याकाङ्क्षायाम्—साधनविशेषसमर्पकं लिङादिपदम्, इति न नियोगकल्पनमित्यर्थः। इष्टसाधनस्यापि न लिङर्थत्वम्; प्रवर्तकस्य तदर्थत्वात् इष्टसाधनस्य मरीचिमण्डलोदयादौ व्यभिचारान्न प्रवर्तकत्वम्। तस्मादन्य एव लिङर्थ इत्याशङ्क्याह—**ततश्चेति**। कृतियोग्येष्टसाधनत्वस्य लिङर्थत्वान्नातिप्रसङ्ग इत्यर्थः॥

लिङादिबोधितनियोगस्य सामर्थ्यात् फल-धात्वर्थसंबन्धसिद्धिरिति मतं निराकृत्य, विशिष्टाधिकार्यन्वयानुपपत्त्या धात्वर्थ-फलसंबन्धसिद्धिरिति मतान्तरमुत्थापयति—**अन्य इति**। विषय-नियोज्यौ विना नियोगाभिधानानुपपत्तेस्तद्विशिष्टो नियोगो विधीयते। तथाच विषय-नियोज्ययोरपि परस्परनिर्वर्त्यनिर्वर्तकतालक्षणसंबन्धसिद्धिरित्यर्थः हेतुमाह—**सामर्थ्यादिति**॥ अनुपपत्तेरित्यर्थः अनुपपत्तिमेवाह—**अन्यथेति**॥ **कर्तृ-कर्मानन्वयेनेति**; निर्वर्त्य-निर्वर्तकतालक्षणसंबन्धाभावेनेति यावत्। अयमर्थः—कृतिसाध्यतया नियोगस्तावदुपलक्ष्यते। साक्षाच्च तस्य कृतिसाध्यत्वाभावाद् यागनिर्वृत्त्या नियोगनिर्वृत्तिरिति वक्तव्यम्, नचानुष्ठात्रभावे यागनिर्वृत्तिः, इति याग-नियोज्ययोर्निर्वर्त्यनिर्वर्तकतालक्षणोऽन्वय उपेय इति। विषय-नियोज्ययोरन्वयेऽपि फलविशेषणान्वयः कथम्? अत्राह—**ततश्चेति**। विषय-नियोज्ययोरन्वयस्तच्छब्दार्थः। धात्वर्थस्य स्वर्गकामेनान्वीयमानत्वात् स्वर्गेणान्वयो वक्तव्यः; इतरथा विशिष्टान्वय एव न स्यादित्यर्थः। फल-धात्वर्थयोः सम्बन्धेऽपि कथं साध्यसाधनता? तत्राह—**तत्रेति**। दर्शपूर्णमासवत् समप्रधानभावेनानयोरन्वयस्तावन्न संभवति, ईप्सितानीप्सितरूपत्वात्। तस्माद् गुणप्रधानभावेनाऽन्वयो वक्तव्यः, तत्र स्वर्गस्येप्सिततत्वेन साध्यत्वम्, यागस्य च क्रियात्मकत्वात् साधनत्वमिति साध्यसाधनभाव इत्यर्थः॥

### ऋजुविवरणम्

विशेषणत्वमुपपद्यत इत्याशङ्क्याह—**नच नित्य-काम्येति**॥ ननु एवं सति शब्दविरोधः; स्वर्गे कामो यस्य, असौ स्वर्गकामः, इति विशिष्टः पुरुषः प्रतीयते, नच पुरुषस्वत्वाभावः, इष्टविशेषप्रतीत्यभाव इष्टसाधनवाक्यार्थस्याप्यभावप्रसङ्गात्, त्वयाऽप्यधिकारिसिध्यर्थं विशिष्टपुरुषप्रतीतेरङ्गीकरणीयत्वादित्याशङ्क्याह—**तस्माद् दण्डीति**॥ भवतु फलपरत्वं स्वर्गशब्दस्य, तथाऽपि तस्य धात्वर्थसाध्यत्वं नियोगायत्तमिति कृत्वा नियोगाभिधानम्, अथवा भवतु फलपरत्वम्; तथाऽपि कथं साध्य-साधनभावः? इत्याशङ्क्याह—**फलवचनं चेति**। नियोगाभिधायकत्वकल्पनमपि तद्विरुद्धमिति भावः॥

### पञ्चपादिका

**तथा सति कुतस्तन्मोक्षसाधनं ब्रह्मज्ञानं भवतीत्यपेक्षायामर्थादस्माच्छास्त्राद्भवतीति शास्त्रस्य ब्रह्मज्ञानं विषयो निर्दिष्टः । तदेवं मुमुक्षुत्वानन्तरं ब्रह्मज्ञानकर्तव्यतोपदेशमुखेन वेदान्तानां विषयप्रयोजननिर्देशेऽप्यार्थं सूत्रस्य व्यापारं दर्शयित्वा तदपेक्षितमप्यर्थान् सूत्रितमविद्यात्मकबन्धमुपवर्ण्य प्रतिज्ञातार्थसिद्धये हेत्वाकाङ्क्षायामस्मिन्नेव तं प्रदर्शयिष्याम इति व्याख्येयत्वमुपक्षिप्य व्याख्यातुकामः प्रथमं तावत्प्रयोजन-विषययोरुपादाने निमित्तमाह—वेदान्त-मीमांसाशास्त्रस्य व्याचिख्यासितस्येदमादिमं सूत्रम्—"अथातो ब्रह्मजिज्ञासे"ति ॥ अयमस्यार्थः—शास्त्रस्यादिरयम् । आदौ**

### पञ्चपादिकाविवरणम्

नैतत्सारम्; जीवन-गृहदाहादिविशेषणेनापि यागस्यान्वयप्रसङ्गात् । को दोष इति चेत् ? जीवना-देर्धात्वर्थं प्रत्यङ्गत्वेनान्वये विकृतावतिदेशः प्राप्नुयात् । तत्र "यावज्जीवं सौर्यं चरुं निर्वपेदि" ति स्यात् । प्राधान्येनान्वये जीवनादेरपि कर्मसाध्यत्वं स्यात् । तस्मात् स्वर्गकामपदं फलविशेषपरतया सामान्येन श्रेयःसाधन-विध्यभिधायिना लिङादिपदेनान्विताभिधानं करोति । ननु शाब्दे फलविशेषान्वये सामान्येन श्रेयःसाधनत्वापर्यवसान-सामर्थ्याद् विशेषान्वय इत्युक्तमयुक्तम् ? नैष दोषः; विशेषसाकाङ्क्षश्रेयःसामान्यसाधनत्वविधिसामर्थ्यात् स्वर्गकामपदं फलविशेषपरं कल्प्यते, विध्याकाङ्क्षानिबन्धनत्वात् पदान्तरतात्पर्यस्य । ततश्च विधिसामर्थ्यात् फलसम्बन्ध इत्युक्तम् । ननु तिङ्कृत्तद्धित-समासैरनभिहित इति विशेषणाद् लिङा यागस्य करणताभिधाने 'ज्योतिष्टोमेने'ति तृतीया नोपपद्यय इति ? न; याग-ज्योतिष्टोमसामान्य-विशेषप्रकृत्यर्थभेदोपरक्तकरणत्वभेदाददोष

### तत्त्वदीपनम्

विशिष्टान्वयानुपपत्त्या विशेषणान्वयमतिप्रसङ्गेन दूषयति—**नैतत्सारमिति** । परस्त्रीकाम आदिशब्दार्थः । इष्टापत्तिं शङ्कते—**को दोष इति** ॥ जीवनादेर्यागेनान्वीयमानत्वं किमङ्गतया ? उतोद्देश्यत्वेन ? इति विकल्प्या-द्यमतिप्रसङ्गेन दूषयति—**जीवनादेरिति** ॥ प्राकृतानां विकल्पान्वयादतिदेश इष्यत इत्याशङ्क्याह—**तत्रेति** । नच यावज्जीवमनुष्ठेयत्वम्; काम्यत्वव्याघातादित्यर्थः । द्वितीयं दूषयति—**प्राधान्येनेति** । जीवनस्य कर्मान्तराधीनत्वा-न्नेदानीन्तनकर्मसाध्यत्वम्, तथा गृहदाहादेरपि सिद्धत्वान्नैतत्साध्यत्वमित्यर्थः । मतान्तरे धात्वर्थ-फलसंबन्धाऽ-सिद्धेस्तस्य लिङाद्यर्थत्वं नाश्रयणीयमित्युपसंहरति—**तस्मादिति** ॥ विशेष-सामान्यपदाभ्यां स्वर्गकामपद-लिङादि-पदयोर्वैयर्थ्यशङ्कां निरस्यति—**स्वर्गेति** ॥ स्वर्गकामपदसमभिव्याहृतलिङादिना विशेषप्रतिपत्त्युपगमे पूर्वापरविरोधः स्यादिति शङ्कते—**ननु शाब्देति** । यागस्वर्गसम्बन्धस्य शाब्दत्वे लिङादिबोधितसामान्यापर्यवसानात्तत्सिद्धिरित्युक्तं पीडयेतेत्यर्थः । पराशयानवबोधविलसितेयं विरोधङ्शकेत्याह—**नैष दोष इति** । प्रधानाकाङ्क्षानुसारेणेतरपदार्थ-समर्पकत्वात्प्रधानस्य लिङादेः श्रेयःसामान्यसाधनबोधित्वादाकाङ्क्षितार्थसमर्पकत्वं स्वर्गकामपदस्य । तस्मादपर्यव-सानात् फलविशेषसिद्धिरित्युक्तमिति न विरोधः ॥ इष्टसाधनस्य लिङर्थत्वे 'ज्योतिष्टोमेने'ति तृतीया विरुध्येतेति शङ्कते—**नन्विति** ॥ लिङा यागस्य करणताभिधाने 'ज्योतिष्टोमेने'ति तृतीया नोपपद्यत इति प्रथमं सम्बन्धानुपपत्ति-मेवाह—**तिङ्कृदिति** । तिङश्च कृतश्च तद्धिताश्च समासाश्चेति तिङ्कृत्तद्धितसमासाः, तैरनभिहितकरणकारके तावत्तृतीयाविधानं लक्ष्यते, तत्र च तिङा करणताया अभिहितत्वात्तृतीया विरुध्यत इत्यर्थः । तृतीया-लिङोः सामान्य-विशेषविषयत्वान्न व्याकरणविरोध इत्याह—**न यागेति** । देवतोद्देशेन द्रव्यत्यागरूपयागसामान्यगतं करणत्वं तिङर्थः, यागविशेषगतं करणत्वं तृतीयार्थ इत्यविरोध इत्यर्थः ॥ इष्टसाधनताया लिङर्थत्वे नित्यकाम्यविभागानुपपत्तिरिति शङ्कायामाह—**इत्य-क्तमिति** ॥

### ऋजुविवरणम्

कस्यानुपपत्त्या विषयनियोज्ययोरन्वय इति ? तदाह—**अधिकारिण इति** । शेषं सुगमम् ॥

तत्त्वं पदार्थं प्रतिभासमानं मृषा हि भेदादि न तात्त्विकं तत् । अद्वैतसिध्यर्थमिदं हि तावन्निरूपितं लक्षणसंभवाद्यैः ॥
मुक्तिश्च तस्मादिति वर्णकेऽस्मिन्नाद्ये तदेवेह निरूपणीयम् । निरञ्जनानन्दचिदेकरूपं प्रत्यक्स्वरूपं प्रतिपाद्यतेऽस्मिन् ॥

इति स्वामीन्द्रपूर्णपूज्यपादशिष्यसर्वशास्त्रविशारदजनार्दनात्मजसर्वज्ञविष्णुभट्टोपाध्यायकृतौ
ऋजुविवरणेऽध्यासभाष्यं नाम प्रथमवर्णकं समाप्तम् ॥

### पञ्चपादिका

च प्रवृत्त्यङ्गतया प्रयोजनं विषयश्च दर्शनीयः। सूत्रं चैतत्। अतो यः कश्चिदर्थः शब्दसामर्थ्येनार्थबलाद्वा उत्प्रेक्षितः स सर्वस्तदर्थ एवेति भवत्ययमर्थकलापस्तन्महिमाधिगतः। एवं सूत्रस्यादित्वेन कारणेन सूत्रतया च विषयप्रयोजनं तत्सिद्धिकरं चाविद्याख्यं बन्धं तत्सामर्थ्यावगतमापाद्य तत्र सूत्रसामर्थ्यं दर्शयितुं प्रतिपदं व्याख्यामारभते ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्य-श्रीशङ्करभगवत्पादान्तेवासिवर-श्रीपद्मपादाचार्यकृतौ पञ्चपादिकायाम्
प्रथमवर्णकं समाप्तम् ॥

### पञ्चपादिकाप्रकरणम्

इत्यलमतिप्रसङ्गेन ॥

विषयसिद्धिः कथमिति ? तदाह—**तथा सति कुत इति** ॥ तद्वेवमित्याद्युक्तानुकीर्तनम्। **प्रथमं तावदिति** भाष्यस्य तात्पर्यकथनम्। ननु विषयः समन्वयलक्षणेनैव गम्यते, प्रयोजनं च चतुर्थाध्यायेनैव प्रमीयते; तत्र किमिति विषय-प्रयोजने प्रथमसूत्रेण सूचिते इति ? तदाह—**शास्त्रस्यादिरयमिति** ॥ ननु एकस्य सूत्रवाक्यस्यानेकार्थत्वमयुक्तमिति ? तत्राह—**सूत्रं चैतदिति** ॥ तत्राथशब्द इत्यादिपदव्याख्यानभाष्यस्य वृत्तसङ्कीर्तनपूर्वकं तात्पर्यमाह—**एवं सूत्रस्यादित्वेनेति** ॥

इति श्रीमत्परमहंसपरिव्राजकानन्यानुभवपूज्यपादशिष्यस्वप्रकाशानुभवभगवतः कृतौ
पञ्चपादिकाविवरणेऽध्यासभाष्यं नाम प्रथमवर्णकं समाप्तम् ॥

### तत्त्वदीपनम्

अन्याप्रतिपाद्यत्वे सत्येतत्प्रतिपाद्यो हि विषयः, तत्र च सूत्रे प्रतिपादकविशेषाप्रतिपत्तेः कथं विषयप्रतिपत्तिरिति शङ्कते—**विषयसिद्धिरिति** ॥ ब्रह्मणः प्रमाणान्तरानधिगमनीयत्वाच्छास्त्रादेव तत्प्रतिपत्तेरित्यर्थाद्विषयनिर्देश इत्याह—**तदाहेति** ॥ आदिसूत्रत्वस्य ज्ञातुं शक्यत्वात्तत्कथनं व्यर्थमित्याशङ्क्य, आदिसूत्रत्वं ज्ञापयितुं न प्रवृत्तमित्याह—**प्रथमं तावदिति** । आदिसूत्रत्वात्प्रथममुपादानमित्यर्थः। आदिसूत्रत्वेऽपि तयोः प्रथममुपादानं कस्मादिति शङ्कते—**नन्विति** ॥ विषय इति। समन्वयस्य लक्षणं ज्ञापनं येनाऽध्यायेन स तथोक्तः। आदित्वात्प्रथमोपादानमित्याह—**तदाहेति** ॥ बह्वर्थत्वे वाक्यभेदः स्यादिति शङ्कते—**ननु एकस्येति** ॥ सूत्रस्य बह्वर्थत्वं भूषणम् इत्याह—**तत्राहेति** ॥

"अल्पाक्षरमसंदिग्धं सारवद्विश्वतोमुखम्। अस्तोभमनवद्यं च सूत्रम् सूत्रविदो विदुः ॥"

इत्यादिवाक्यात्सूत्रस्यानेकार्थतायामलंकारताऽधिगतिरित्यर्थः। सूत्रवाक्यार्थस्य दर्शितत्वात् प्रतिपदं व्याख्यामारभते भाष्यकार इत्युक्तमयुक्तमित्याशङ्क्य तात्पर्यकथनवत्पदव्याख्यानमपि कर्तव्यम्, 'पदच्छेदः पदार्थोक्ति'रित्यादेर्व्याख्यानलक्षणत्वादित्याशयेनाह—**तत्राथशब्द इति** ॥ बन्धस्याध्यासात्मकत्वात्प्रत्यग्ब्रह्मैक्यलक्षणो विषयोऽनर्थनिवृत्तिलक्षणं प्रयोजनं चेति सिद्धम्। ततश्च संभावितविषयफलत्वाद्वेदान्तशास्त्रमारम्भणीयमिति प्रथमवर्णकसिद्धम्।

इति श्री परमहंसपरिव्राजकाचार्याखण्डानुभूतिशिष्येणाऽखण्डानन्दमुनिना विरचिते विवरणतत्त्व-
दीपनेऽध्यासभाष्यं नाम प्रथमवर्णकं समाप्तम् ॥

ॐ

श्रीशङ्करभगवत्पादाचार्यप्रणीतम्

# श्रीमद्ब्रह्मसूत्रभाष्यम्

## तत्र द्वितीयं वर्णकम्[1]

वेदान्तमीमांसाशास्त्रस्य व्याचिख्यासितस्येदमादिमं सूत्रम्—

## अथातो ब्रह्मजिज्ञासा ॥१॥

### पञ्चपादिका

सिद्धैव ननु ब्रह्मजिज्ञासा—"अथातो धर्मजिज्ञासे"ति

### पञ्चपादिकाविवरणम्

तत्रोक्तस्तावद्विचारविधेः फलानुबन्धो व्यवहितविषयब्रह्मात्मतानुबन्धश्च । इदानीमव्यवहितविचारविषयानुबन्धमन्यत एवाप्राप्तानुष्ठानं दर्शयितुं प्रथममाक्षिपति—सिद्धैव ननु ब्रह्मजिज्ञासेति । वेदान्तानामर्थनिर्णयापेक्षितो न्याय-

### तत्वदीपनम्

विचारविध्यपेक्षितविषय-फलाधिकार्यनुबन्धानां मध्ये विषय-फले तावत् प्रतिपादिते, अर्थादधिकार्यपि सिद्ध एव, इति किं 'सिद्धैव ननु ब्रह्मजिज्ञासे'त्यादिना ? नच—विचारविषयदर्शनार्थं वर्णकान्तरप्रारम्भ इति—शङ्क्यम् । असंदिग्धतयाऽऽप्रतिपाद्यत्वात् । गतार्थत्वागतार्थत्वाभ्यां संदेहेऽप्येतद्विचारस्यैव प्राथम्यं किं न स्यादित्याशङ्क्य तात्पर्यमाह—तत्रेति । फलमेवानुबन्धः । अनुबध्यते संबध्यते विधिनेत्यनुबन्धः । व्यवहितेति पदच्छेदः । विचारविधिवाक्योत्थज्ञानस्य विचारः साक्षाद् विषयप्रणाड्या ब्रह्मात्मतेति विभागः ॥ अनर्थनिवृत्याऽऽनन्दावाप्तिफलस्येप्सितत्वाद् ब्रह्मण आत्मत्वाच्च तद्विचारस्य प्राचीनतन्त्रन्यायेन सिद्धत्वान्न पुनः कर्तव्यता, अनन्यसाधारणस्य विषयत्वादिति शङ्कायां तन्निराकरणाय प्रवृत्तिः, इत्यनयोः पौर्वापर्यं युक्तमित्यर्थः ॥ विचारशास्त्रं विषयः, तत् किमारम्भणीयम् ? उतानारम्भणीयम् ? इति गतार्थत्वागतार्थत्वाभ्यां संदेहे पूर्वपक्षमाह—प्रथममिति । "धर्मजिज्ञासे"त्यत्र ब्रह्मजिज्ञासा

### ऋजुविवरणम्

अभावयन् भावमपीह सम्यग् वदेद्विदित्वाऽपि तमन्यथा वा ।
विद्वत्समूहे विदितात्ममोहो नापत्रपेदेष कथं नु वादी ॥
मायाङ्गनालास्यवितानभूमिं विनेयमायाविनिवारणं तम् ।
आनन्दरूपं निजबोधयुक्तं नौमीन्द्रपूर्णं करुणात्तदेहम् ॥

अगतार्थविचारेण विचार्यं यन्निरञ्जनम् । सदानन्दचिदेकं तदिन्द्रपूर्णगुरुः स्वयम् ॥
"सिद्धैव ब्रह्मजिज्ञासे" त्यादिना किं निरूपितम् । न तावदयमाक्षेपो विचारविधिगोचरः ॥
अनुबन्धद्वयं तावत्पूर्वत्रैव निरूपितम् । अधिकारोऽपि तेनार्थात्फलकामस्य सिध्यति ॥
अनुबन्धत्रयं मुक्त्वा नाक्षेपः सुकरो भवेत् । विचारस्यापि नानेन न्यायेनाक्षेपसंभवः ॥
विषयादेः पुनः क्षेपे पौनरुक्त्यं भवेत्, ततः । सङ्गतिश्चापि नैवास्य वर्णकस्योपलभ्यते ॥
तेन पूर्वं यथेच्छं वा प्रारभ्यं वर्णकं त्विदम् । कथंचिदर्थभेदोऽपि पूर्वमेवाथवा भवेत् ॥

---

१. यद्यपि पञ्चपादिकायामिदं वाक्यं प्रथम एव वर्णक आदाय व्याख्यातं, तथापि प्रतिवर्णकं भाष्येणापि भवितव्यमिति कृत्वा भाष्यरत्नप्रभाख्यव्याख्यामनुसरताऽत्र द्वितीये स्थापितमिति द्रष्टव्यम् । द्वितीयान्ते तत्त्वदीपनकृद्भिरपीदं वाक्यं परामृष्टं दृश्यते । प्रथमसूत्रस्य वर्णकचतुष्टयेन विभजनं कथमर्थवदित्यत्रेयं कारिका साम्प्रदायिकेषु प्रसिद्धा—अध्यासोऽन्यागतार्थत्वं लाभश्चास्याधिकारिणः । ब्रह्मणश्च विचार्यत्वं चत्वारो वर्णका अमी ॥ इति ॥

### पञ्चपादिका

**सकलवेदार्थविचारस्योदितत्वात्, ब्रह्मज्ञानस्य च चोदनालक्षणत्वेन धर्मस्वरूपत्वात्, अतः सिद्धैव ब्रह्मजिज्ञासाऽपि,**

### पञ्चपादिकाविवरणम्

कलापः—"अथातो धर्मजिज्ञासे"त्यादिसूत्रैः सूत्रित इत्यर्थः। ननु विधिवाक्यार्थनिर्णयस्तत्र प्रवृत्तः? इत्याशङ्क्याह—**सकलवेदार्थस्य विचारितत्वादिति**। वेदस्य कार्यमात्रपरत्वादित्यर्थः॥

ननु वेदान्ततात्पर्यान् ब्रह्मावगम्यते, न कार्यम्, अनवगम्यं च न वाक्यप्रमेयमिति? तत्राह—**ब्रह्मज्ञानस्य चेति**॥ ननु क्रियाविधिकलापो निरूपितः, ज्ञानविधिनिरूपणायेदमारभ्यत इति? नेत्याह—**अतः सिद्धैवेति**। उत्पत्ति-विनियोग-प्रयोगाधिकाराणां विध्यपेक्षितरूपाणां क्रियाप्रतिपत्त्योरविशेषेण निरूपितत्वादित्यर्थः।

### तत्त्वदीपनम्

सिद्धेति कथम्? वैयधिकरण्यात्, न खलु घटस्य कृतकत्वं शब्दस्यानित्यतां गमयितुमीष्टे, इत्याशङ्क्याह—**वेदान्तानामिति**॥ अथवा, ब्रह्मप्रतिपादकवाक्यान्युदाहृत्य तत्राविचारणात् कथं गतार्थत्वम्? इत्याशङ्क्य वाक्योदाहरणाभवेऽपि तत्प्रतिपादकन्यायसंदर्भः सिद्ध इत्याह—**वेदान्तानामिति**॥ पूर्वोत्तरमीमांसयोर्विषयभेदं शङ्कते—**ननु विधीति** पूर्वोत्तरकाण्डयोर्भिन्नप्रमेयतया न्यायोऽपि भिन्न इत्यर्थः। तत्र धर्मस्य विचारितत्वाद् ब्रह्मणश्चाविचारितत्वात् कथं सर्वस्य निरूपितत्वम्? इत्याशङ्क्याह—**वेदस्येति**। लोके सकलपदानां कार्यपरतया सङ्गतिग्रहणात् कार्यमेव वेदार्थः। तस्य च तत्र निरूपितत्वात् किमपरमविशिष्टम्? यद्विचाराय पुनरारम्भ इत्यर्थः॥

सर्वस्य वेदस्य कार्यपरत्वमुक्तम्, तदाक्षिपति—**ननु वेदान्तैरिति**। तात्पर्यपर्यालोचनया यद् येन प्रमीयते तत् तत्परम्, कार्यं च न वेदान्तैः प्रमीयते, इति न तस्य तदर्थत्वम्, किं तु ब्रह्मणः, तत्रोपक्रमादिना पर्यवसितत्वादिति शङ्कार्थः। "आत्मा द्रष्टव्यः" इत्यादौ ज्ञानविधिरुपलभ्यते, तदपेक्षितार्थप्रतिपादकानि चेतराणि, ततः कथं वेदान्तानामकार्यनिष्ठत्वम्? इत्याशयेनाह—**तत्राहेति**॥ विधिपरत्वाविशेषेऽपि विध्योर्भिन्नत्वात् तदर्थनिरूपणार्थं पृथगारम्भ इति शङ्कते—**ननु क्रियेति**॥ विधिभेदेऽपि न्यायसाम्यान्न पुनरारम्भ इत्याह—**नेत्याहेति**॥ न्यायसामान्यमेवाह—**उत्पत्तीति**॥ अयमर्थः—कर्मस्वरूपमात्रबोधको विधिरुत्पत्तिविधिः, "आग्नेयोऽष्टाकपालः" इत्यादिः। अङ्गसंबन्ध-

### ऋजुविवरणम्

सिद्धे विचारे ह्यगते विधेये वेदान्तवाक्यानुगतं फलादि।
निरूपणीयं ननु पूर्वमेव निरूपणं स्याद् विधिमूलकत्वात्॥
शङ्कामिमां चेतसि सन्निधाय वृत्तानुकीर्त्या क्रमहेतुभूतम्।
आक्षेपबीजं प्रकटीचकार "तत्रोक्त"इत्यादिसमीरितेन॥

**तावच्छब्दः** क्रमार्थः। **विचारविधेरिति** विधिग्रहणेन वेदान्तानां विधिविषयत्वेन विधिं प्रति प्राधान्यमसूसुचत्। "विचारविधेः फलानुबन्धः" इत्यनेनान्यदपि द्योतितम्—यद्यपि वेदान्तानां प्राधान्येन विषयादिनिरूपणपरं पूर्ववर्णकम्; तथाऽपि करणेतिकर्तव्यताभावेनैकविषयत्वाद्विधिविषयादिनिरूपणमपि कृतम्। अतो नाकस्मिकत्वं विधिविषयविचारस्य शङ्कनीयम्। व्यवहितग्रहणेन विषयभेदो दर्शितः। **इदानीमिति** आक्षेपफलप्रदर्शनपूर्वकमाक्षेपविषयं सहेतुकं दर्शयति। एतदुक्तं भवति—

स्वरूपोपाधिरूपत्वाद्विषयादि निरूपितम्। व्यवधानेऽपि पूर्वं तत्प्रयोगानुगतं त्विह॥

**अत्रैवं विचारसंक्षेपः**—विचारविधिर्विचारमारम्भयति? नवेति? नेति तावत्प्राप्तम्; अनन्यसाधारणविषयाभावात्, तन्निर्णयप्रयोजनाभावाच्चेति। आरम्भयतीति सिद्धान्तः; तस्य विध्यन्तरप्रयुक्तत्वाभावेनैतद्विधिविषयत्वसंभवात्, तद्द्वारा प्रयोजनस्यापि संभवादिति। ननु व्यधिकरणं चोद्यम्—"अथातो धर्मजिज्ञासे"त्यादिना "ननु ब्रह्मजिज्ञासे"ति? इत्याशङ्क्याभिप्रायमाह—**वेदान्तानामिति**॥ कथं सकलवेदार्थस्य विचारितत्वम्? वेदान्तानामुदाहृतत्वात्, ब्रह्मणश्चानिरूपितत्वात्, इत्याशङ्क्य व्याचष्टे—**वेदस्येति**॥

"अतः सिद्धैवे"ति कथमुक्तम्? ज्ञानविधिनिरूपणाभावादित्याशङ्क्य व्याचष्टे—**उत्पत्ति-विनियोगेति**॥

## पञ्चपादिकाविवरणम्

ननु तत्र यथा प्रथमेऽध्याये वेदस्य प्रामाण्यं निरूपितम्; द्वितीये कर्मोत्पत्तिविधिभेदः; तृतीये विहितानामङ्गाङ्गि-

## तत्त्वदीपनम्

बोधको विधिर्विनियोगविधिः, 'प्रयाजादिभिरुपकृत्ये'त्यादिः। साङ्गे कर्मण्यमुष्टापको विधिः प्रयोगविधिः, "प्रयाजादिभिरुपकृत्य दर्श-पूर्णमासाभ्यां यजेते"त्यादिः। कामनाजीवनादिनिमित्तवतः कर्मण्यैश्वर्यप्रतिपादको विधिरधिकारविधिः, "स्वर्गकामो यजेते"त्यादिः॥

वेदान्तानां विधिपरत्वेऽप्याशङ्कान्तरनिरासार्थं पुनः प्रारम्भ इति प्रत्यवतिष्ठते—**नन्विति**। लोके वाक्यस्य प्रमाणान्तरदृष्टार्थबोधित्वं नियतम्, ततो वेदस्यापि तथात्वम्; "अविशिष्टस्तु वाक्यार्थः" इति न्यायात्, नच सत् संभवति; धर्मादौ मानान्तरानुपपत्तेरित्यादिन्यायाद् वेदस्याप्रामाण्यमिति प्रापय्य राद्धान्तितम्—पुंवाक्यस्यायं स्वभावो यत् प्रमाणान्तरसिद्धबोधित्वम्, त्रय्याश्च पुंबुद्धिरचितत्वसाधकताऽनिरूपणादनपेक्षता; तथा तदर्थे बाधानुपलब्धेरविसंवादित्वादिति न्यायात् तस्या मानत्वमिति प्रथमे पादे समर्थितम्। पुनश्चार्थवादादेर्धर्माबोधकतयाऽप्रामाण्यशङ्कायां विध्यपेक्षितप्राशस्त्यापूर्वोपकारिप्रत्यय-विधेयार्थ-परिच्छित्तिजननेन प्रामाण्यमुक्तम्; तथा स्मृतेरपि, इति विध्यर्थवाद-मन्त्र-नामधेय-स्मृत्यात्मकवेदस्य प्रामाण्यमित्यर्थः॥

वेदादेव श्रेयःसाधनाद्यवच्छिन्नभावनादिबोधात् प्रवृत्त्यादिसिद्धेः किमपरमवशिष्टम्? इति शङ्कानिरासेन विध्यंशभेदं निरूपयितुं द्वितीयं प्रवृत्तमित्याशयेनाह—**द्वितीय इति**। कर्म चोत्पत्तिविधिश्चेति कर्मोत्पत्तिविधी, तयोर्भेद इति विग्रहः। प्रस्थानभेदमाश्रित्य कर्मोत्पत्तिविधी इत्युक्तम्, कर्मविषयोत्पत्तिविधीनां भेद इति वा विग्रहः। तत्र तत्रोपलभ्यमानं कर्मैकम्? उत नाना? इति जिज्ञासायां यत्र शब्दान्तराभ्यास-संख्या-गुण-प्रक्रिया-नामधेयाद्यन्यतमं भेदकं प्रमाणमुपलभ्यते, तत्र भेदः, नेतरत्रेति चिन्तितम्; अन्यथाऽनुष्ठानविशेषासंभवादित्यर्थः॥

विनियोगविधेः शेष-शेषिसंबन्धबोधनलक्षणविनियुक्तिव्यापारनिरूपणार्थं तृतीयं लक्षणमारब्धम्, तदनुपपन्नम्; किमुपकारित्वातिरिक्तं शेषत्वम्? उत तदेव? अन्त्य आधानादेरपि शेषत्वं स्यात्, नाऽग्निमोऽपि; तत्स्वरूपप्रमाणयोरनिरूपणात्। किं परार्थत्वं शेषत्वम्? उतान्योद्देशेन क्रियमाणत्वम्? आद्य उपकारकत्वमेव शेषत्वं स्यात्, द्वितीय उद्देश्यस्य सिद्धत्वम्? उत प्रयोजनत्वम्? आद्ये दर्शादेरपि सिद्धत्वात्तन्न वर्तमानस्य प्रोक्षणादेरपि तदङ्गत्वं स्यात्, द्वितीये स्वर्गोद्देशेन प्रवृत्तयागादेरपि तत्त्वात् तदुपकारकत्वमेव स्यात्। श्रुतिस्तावन्न शेषशेषितायां प्रमाणम्; "सक्तून् जुहोती"त्यादौ व्यभिचारात्। तत एव न तन्मूला लिङ्गादयोऽपि मानत्वं भजेरन्। नचानङ्गत्वेऽननुष्ठेयत्वम्; आधानादिवदुपपत्तेः, इति शङ्कायां तन्निरासेन विध्यंशभेदनिरूपणार्थं तृतीयमारब्धमित्याह—**तृतीय इति**। नच तत्स्वरूपानिरूपणम्; समीहितप्रवृत्तिविषयत्वाधीनप्रवृत्तिविषयत्वं शेषत्वम्। नच तत्र मानाभावः; श्रुत्यादीनामेव मानत्वात्, नचाव्यभिचरितविधितः सामान्यसंबन्धसिद्धौ श्रुत्यादिकं विशेषसिद्धौ प्रभवति। ततश्च "सक्तून् जुहोती"त्यादिवाक्यस्य होमस्यासमीहितसक्तुगतातिशयावबोधित्वानुपपत्तेस्तन्निरपेक्षश्रुत्यादीनां न तत्र मानता। आधानादेश्चाग्निप्रयुक्तस्योत्तरयागानङ्गस्योपकारकत्वम्। नचास्य तथा त्वम्; प्रयोजकान्तरानिरूपणात्। तस्मात् शेषत्वव्युत्पादनार्थं तृतीयलक्षणारम्भ उचित इत्यर्थः॥

## ऋजुविवरणम्

**कर्मोत्पत्तिविधिभेद इति**॥ तथाचाहुर्वार्तिककारीयाः—कर्मभेदोऽध्यायार्थः, स चोत्पत्तिविधिभेदे सति भवति, नान्यथा, इति कर्मभेदसिद्ध्यर्थमुत्पत्तिविधिभेदनिरूपणं क्रियत इति। एतदेव व्यक्तमुक्तं प्रकरणान्तराधिकरणे—"सत्यं कर्माविधातव्यम् तथाऽपि तु न भिद्यते। उत्पत्तिविधिभेदे हि भेदो नास्ति च सोऽत्र न॥" इति॥ **क्रतुपुरुषार्थेति**। किंचिदङ्गजातं क्रतुं निमित्तीकृत्यापूर्वप्रयुक्तम्। क्रतुशब्देनापूर्वं बोध्यते। किञ्चित् पुरुषार्थप्रयुक्तमिति फलप्रयुक्तमित्यर्थः॥

**पञ्चपादिकाविवरणम्**

भावो निरूपितः; चतुर्थे क्रतु-पुरुषार्थप्रयुक्तानुष्ठेयपरिमाणाम्; पञ्चमेऽनुष्ठानक्रमः; षष्ठे विध्यपेक्षितोऽधिकारनिर्णयः, इति पूर्वषट्केन प्रकृतिविध्यपेक्षितो विचारः कृतः। समग्राङ्गसंयुक्तो विधिः प्रकृतिः; विकलाङ्गसंयुक्तो विकृतिरित्युच्यते। तत्र सप्तमेन प्रकृत्युपदिष्टानामङ्गानां विकृतावतिदेशो निर्णीतः। अष्टमे तु "आग्नेयोऽष्टाकपालः" इत्यादि-

**तत्त्वदीपनम्**

उक्तन्यायेनेतिकर्तव्यताविशिष्टे कर्मस्वरूपे प्रतिपन्ने कामिनो जीवनादिनिमित्तवतो वा प्रवृत्तिसिद्धेः किं प्रयोगविधिव्यापारनिरूपणेन ? साङ्गप्रधानयौगपद्यानुष्ठानसिद्धिः प्रयोगविधेः फलम्, नच तत् संभवति; प्रयोगविधित्वाभिमते फलवाक्येऽङ्गाश्रुतेः। अतो न चतुर्थमारब्धव्यमित्याह—**चतुर्थ इति**। विधिं क्रतुशब्देन लक्षयित्वा तत्प्रयुक्ततयाऽनुष्ठेयस्य फलप्रयुक्ततया चानुष्ठेयस्य च परिमाणं चिन्तितमित्यक्षरार्थः। प्रवर्तकान्तरानिरूपणाद्विधेः प्रवर्तकत्वं वक्तव्यम्, साङ्गप्रधानयौगपद्यानुष्ठानस्यान्यतोऽसंभवात् प्रयोगविध्यायत्तत्वम्। नच तत्राङ्गाश्रुतिः; साङ्गप्रधानवाक्यैकवाक्यतालब्धमहावाक्यस्य तद्विधित्वापत्तेरिति ॥

अक्रियाकारकत्वेन क्रमस्याविधेयत्वादविहितस्य चानङ्गतया प्रयोगविधिविधेयत्वं न संभवति। नचैकस्य कर्तुर्युगपदनेकानुपपत्त्या प्रयोगवचनस्य क्रमविधायकत्वम्, व्युत्क्रमेणाप्यनुष्ठानोपपत्तेर्नियतक्रमासिद्धेः, तद्विषयं पञ्चममनारब्धव्यमिति शङ्कायां तन्निरूपणार्थमिदमारब्धव्यमित्याह—**पञ्चम इति**। नियतक्रमानास्थाने किमनेन क्रमेणेदमनुष्ठेयम्, उताऽन्येन ? इति चिन्तया प्रयोगविक्षेपापत्तावविक्षिप्तसाङ्गप्रधानयौगपद्यानुष्ठानानुपपत्त्या नियतः क्रम आश्रयणीयः। तत्र क्रमस्याक्रियाकारकत्वेऽपि श्रुत्यर्थ-पाठ-स्थान-मुख्य-प्रवृत्तिलक्षणप्रमाणसद्भावेन प्रयोगविधिना स्वाङ्गतयाऽऽक्षिप्यत इति क्रमनिरूपणमुचितमित्यर्थः ॥

भावनाया भाव्याकाङ्क्षायामेकपदोपात्तयागादिर्भाव्यत्वेन संबध्यते; न स्वर्गादि भिन्नपदोपात्तत्वात्, स्वर्गपदस्य च सुखसाधनद्रव्यवाचित्वात्, 'भूतं भव्यायोपदिश्यते' इति न्यायाच्च। ततश्च स्वर्गादिना यागादि भावयेदिति वाक्यार्थोऽवगम्यते। नच तस्य काम्यतानुपपत्तिः; साधनस्यापि काम्यत्वात्। तस्मात् कर्मणः फलविधुरत्वात् तद्भोक्तृत्वलक्षणकर्मैश्वर्यस्याधिकारस्यासंभवात् तद्व्युत्पादनार्थं लक्षणान्तरं नारब्धव्यमिति शङ्कानिरासेनाधिकार-व्युत्पादनार्थं षष्ठमारब्धव्यमित्याह—**षष्ठ इति**। कर्मणां फलविधुरत्वे वाद्यादिवत् प्रवर्तकतया प्रामाण्यं न स्यात्। नच यागादेः स्वतःफलत्वम्; क्लेशात्मकत्वात्, श्रेयःसाधनान्वितभावनायाः प्रत्ययार्थत्वादेकप्रत्ययोपात्तस्वर्गादेः फलत्ववद्भोक्तृत्वलक्षणाधिकारनिरूपणमुचितमित्यर्थः। पूर्वोत्तरषट्कयोर्हेतु-हेतुमत्त्वलक्षणसङ्गतिकथनार्थं पूर्वषट्कार्थं संकलयति—**इति पूर्वेति**। प्रकृति-विकृतिस्वरूपमाह—**समग्रेति**। दर्श-पूर्णमास-सोमयागादिः प्रकृतिः, "सौर्यं चरुं निर्वपेत्" इत्यादिर्विकृतिः ॥

अतिदेशं निरूपयितुं लक्षणान्तरमारब्धव्यम्। नच तदुपपद्यपे; उपदेशेनैव सर्वत्र सर्वधर्माणां प्राप्तत्वात्। तथाहि—करणभूतधात्वर्थस्याङ्गापेक्षत्वात् तदुद्देशेन तावद्धर्मा विधीयन्ते। यज्ञादिश्रुतिसामर्थ्याच्च सर्वेषां धात्वर्थानां प्रतिपन्नानां प्रकरणादिना विशेष्टुमशक्यत्वात्, उद्देश्यत्वात्, ग्रहस्य चोद्देश्यैकत्वेनाविशेष्यत्वात्। ततो यागादिमात्रोद्देशेन विधीयमानानां धर्माणां विकृतावप्युपदेशेन प्राप्तत्वात्, तद्व्युत्पादनवैयर्थ्यमिति शङ्कानिरासेन विधिभेदोपपिपादयिषया सप्तममारब्धव्यमित्याह—**तत्र सप्तमेनेति**। भावनायाः प्राधान्यात् तदाकाङ्क्षयाऽऽङ्गानां संबन्धो वक्तव्यः। तत्र च साक्षात्तदन्वयानुपपत्तेः पश्चात्करणसंबंधः। नच सकलभावनासंबन्धित्वेनाङ्गाधिगतिः; भावनाया विधेयत्वात्; धर्मविधावविधेयत्वात् प्रकरणादिना विशेषणोपपत्तेः प्रतिप्रकरणं धर्माणां व्यवस्थितत्वम्। तत्र च सौर्यादीनि कर्माण्यविहितेतिकर्तव्यताकानि लक्ष्यन्ते। करणानां चेतिकर्तव्यताऽनुगृहीतानामुपकारकत्वदृष्टेः, अत्रापि तदपेक्षायां प्रयाजादिवैदिकपदार्थवर्गस्य दर्श-पूर्णमासाद्युपकारकत्वेन सामर्थ्यस्य क्लृप्तत्वात् तस्योपकारत्वं कल्प्यते, इत्यतिदेशसिद्धिरित्यर्थः ॥

विशेषातिदेशं निरूपयितुं लक्षणान्तरं प्रवर्तते। नच तद्युज्यते; विकृतिभावनाया विध्यन्ताकाङ्क्षयाऽतिदेशप्राप्तिसमये विशेषहेत्वदर्शनात्, सर्वेषां प्राकृतकर्मणां सकलविध्यन्तातिदेशस्यैवोपपत्तेः। ननु करणमुपकाराय

## पञ्चपादिकाविवरणम्

प्रकृत्युपदिष्टानामङ्गानां "सौर्यं चरुं निर्वपेदि" त्यादिविकृतौ द्रव्य-देवतादिसामान्यद्वारेण विशेषातिदेशो निरूपितः। नवमे तु प्रकृत्युपदिष्टमन्त्र-साम-संस्कारकर्मणां विकृतावतिदिष्टानां प्रकृति-विकृत्योर्द्रव्य-देवताभेदे सति प्रकृतिगत-द्रव्यादिशब्दं विहाय विकृतिगतद्रव्यादि-शब्दाध्याहारलक्षण ऊहो दर्शितः; यथा—"अग्नये जुष्टमि"ति मन्त्रस्य विकृतौ 'सूर्याय जुष्टमि'ति पदप्रक्षेपः। दशमे तु विकृतावतिदिष्टानामङ्गानां प्रकृतौ सावकाशानां विकृतिगत-विशेषाङ्गोप-देशादिना बाधो दर्शितः—यथा प्रकृतेर्विकृतावतिदेशप्राप्तानां बर्हिषां "शरमयं बर्हिरि"ति विकृतौ विशेषोपदेशेन बाधः। एकादशे त्वनेकशेषिविधिप्रयुक्तस्य शेषस्य सकृदनुष्ठानादेव सर्वशेषिणामुपकारसाम्यं तन्त्रं नामोक्तम्—यथा "यदाग्नेयोऽष्टा-कपालः" "उपांशुयाजमन्तरा यजति" "अग्नीषोमीयमेकादशकपालमि"ति च पौर्णमासकर्मत्रयप्रयुक्तस्य प्रदेयाजाः

## तत्त्वदीपनम्

विध्यन्तमपेक्षते। प्रकृतौ च सकलविध्यन्तानामुपकारकत्वेन क्लृप्तत्वाद्विशेषातिदेश इति चेत्? तथाऽपि नियाम-काभावाद् यस्य कस्यचिदतिदेश इति शङ्कायां तन्निराकरणेन विशेषातिदेशं न्यरूपयदित्याह—**अष्टम इति**। सर्वस्येति-कर्तव्यतयोपकारकत्वे तावन्न मानम्। नच विध्वन्तविशेषकल्पकाभावः, तस्य प्रकृतौ क्लृप्तोपकारत्वात् सादृश्यात् तत्कल्पनासंभवात्, कर्मण्याग्नेवाङ्गप्रवृत्तिरेकदेवतात्वेन, ऐन्द्राग्नस्य द्विदैवतत्वेनाग्नीषोमीयस्य पशुबन्धान्तरेषु दैक्षस्य पशोः प्रवृत्तिर्द्रव्यसारूप्यात्, ऐकादशिनि सवनीयस्य सुत्याकालत्वसामान्यादित्यर्थः॥

प्रकृतौ करणावच्छिन्ना तावद्भावना प्रतीयते, करणीभूतदर्श-पूर्णमासस्वरूपाकाङ्क्षायां चेतिकर्तव्यतान्वयः। तथा च—"अग्नये जुष्टं निर्वपामि" इत्यादिमन्त्राणामवघातादिसंस्काराणां च साधनांशप्रयुक्तत्वेऽप्याग्नेयादिस्वरूप-साधनांशप्रयुक्तत्वोपपत्तेर्यागान्तरसाधने नीवारसूर्यादावप्राप्तेरूह्यायोगात् तद्व्युत्पादनार्थं न नवमं लक्षणमारभ्यमिति शङ्कानिरासेन विधिव्यापारभेदनिरूपणार्थं तदारम्भ इत्याह—**नवमे त्विति**। भावनाया भाव्यसिद्धये करणेतिकर्तव्य-ताकाङ्क्षणात्करणेतिकर्तव्यतयोर्भावनाऽन्वयपश्चाद्भाविनोऽनुग्राहकत्वस्य भाव्यसिद्धयर्थत्वावगतेः फलस्य चापूर्वद्वारा भाव्यत्वेनापूर्वस्यैव साक्षाद्भाव्यत्वावगमात्, करणस्येतिकर्तव्यतान्वयोऽपूर्वसाधनत्वप्रयुक्तः, न स्वरूपप्रयुक्त इति प्रतीतेः, संस्काराणां मन्त्राणामपूर्वसाधनांशप्रयुक्तत्वान्नीवारसूर्यादावप्यपूर्वसाधनत्वाविशेषात् प्राप्तेरनूदितामां च तदुपकारकरणा-शक्तेरूहव्युत्पादनमुचितमित्यर्थः। मन्त्राश्च सामानि च संस्कारकर्माणि चेति तथोक्तानि, अग्नि-सूर्यरूपेण देवताभेदे "अग्नये जुष्टम्" इति मन्त्रस्यातिदेशप्राप्तस्य विकृतौ प्रसरानुपपत्तावग्निपदपरित्यागेन सूर्यपदप्रक्षेपः, 'गिरा गिरा च दक्षसे' इत्यत्र गिरेतिपदपरित्यागेनेरापदप्रक्षेपः साम्नामूहः। द्रव्यान्तरसंबन्धिनोऽवघातदेर्द्रव्यान्तरसंबन्धः संस्कारोहः॥

प्राकृताङ्गस्य विकृतौ लुप्तकार्यस्याननुष्ठेयत्वमुपपादयितुं दशम आरभ्यते, न च तत् संभवति। विकृति-भावनेतिकर्तव्यतामपेक्षते। तत्राश्रुतावतिदेशप्राप्तमाश्रयणीयम्। नच—तत्कार्यस्य तुषविमोकादेरसंभवादपवाद इति—वाच्यम्; पदार्थावगत्युत्तरकालीनत्वादुपकारकल्पनायाः प्रकृतौ, विकृतावपि प्रथमं पदार्थानां प्राप्तेस्तत्र दृष्टातिशयासंभवे कृष्णलादावदृष्टं कल्प्यं, "कृष्णलान् घृते श्रपयती" त्यादाविवेति प्राप्ते; तन्निरासेन प्रयोगविधिव्यापारनिरूपणार्थं लक्षणान्तरमारब्धव्यमित्याह—**दशम इति**। वैकृतभावनया समधिगतकरणविशेषया करणोपकारमाकाङ्क्षमाणया प्राकृतोपकार आक्षिप्यते, उपकारस्य च पदार्थतन्त्रत्वात्तेषामाक्षेपः। तत्र चोपकारलोपे तल्लोपः। तथा चावघात-कार्यस्य तुषविमोक्षादेः कृष्णलादावसंभवात् कुशादिकार्यस्य च वेद्यास्तरणादेः प्रत्यक्षोपदिष्टशरमयादिना सिद्धेस्तद-नवताराद् बाधनिरूपणमुचितमिति॥

तन्त्रं न निरूप्यम्, तस्यैवासंभवात्; दर्श-पूर्णमास-ज्योतिष्टोमादिष्वङ्गानां तन्त्रैक्यं तावदनुपलब्धम्। नच—प्रयोगैक्याभावनिबन्धनं तदिति—शङ्क्यम्; आग्नेयादिष्वपि प्रयोगैक्यासंभवात्तन्त्रानुपपत्तेः। नचैकफलसाधन-त्वेन प्रयोगैक्यम्; तेषामुत्पत्तिवाक्येऽन्योन्यनिरपेक्षतया फलकरणताऽधिगतेरित्यानारम्भशङ्कानिरासेन प्रयोगविधि-व्यापारभेदप्रदर्शनार्थं आरम्भ इत्याह—**एकादश इति**॥ यद्यप्युत्पत्तिवाक्ये प्रत्येकं फलसाधनताशक्तिरधिगता; तथाऽपि फलविशेषाकाङ्क्षापरिपूरकफलवाक्ये तेषामेकसाध्यसाधनत्वं तृतीययाऽधिगतम्; तथा चैकफलसाधनतया एकप्रयोगाङ्गतयाऽङ्गतन्त्रोपपत्तेस्तद्व्युत्पादनमुचितमित्यर्थः।

### पञ्चपादिका

**अभ्यधिकाशङ्काभावादिति ?**

### पञ्चपादिकाविवरणम्

सकृदनुष्ठानादेव शेषित्रयोपकार इति। द्वादशे त्वेकशेषिप्रयुक्तस्य शेषानुष्ठानस्याप्रयोजकसामर्थ्ययुक्तशेष्यन्तरेऽप्युपकारः प्रसङ्गो नाम दर्शितः—यथा पशुविधिप्रयुक्तानामङ्गानां पशुपुरोडाशेऽप्युपकारः। तदेवं प्रत्यध्यायमाशङ्कान्तरनिराकरणेन विध्यंशभेदो निरूपितः, तथा प्रतिपत्तव्यस्य ब्रह्मणः प्रत्यक्षादिभिरसिद्धत्वात् प्रतिपत्तिविध्ययोगाशङ्कायां तन्निराकरणायेदमारभ्यत इति, तत्राह—**अभ्यधिकाशङ्काऽभावादिति**। यूपाहवनीयादिवद् ब्रह्मणः सिद्धिः, असिद्धौ वाऽऽरोपितरूपेणैवोपासनसिद्धिरित्यर्थः॥

अत्र पूर्ववादी सिद्धान्त्येकदेशीयान् दूषयितुं वेदान्तानां विधिनिष्ठत्वमङ्गीकृत्यैव याऽभ्यधिकाशङ्का, तन्निरा-

### तत्त्वदीपनम्

पशुतन्त्रमध्यपतितस्य पशुपुरोडाशाख्यस्य कर्मणो न पशुमात्रोद्देशानुष्ठिताङ्गजनितोपकारशलित्वम्। अनुद्दिश्यमानपुरोडाशाद्युपकारित्वे प्रमाणाभावात्; प्रसङ्गानुपपत्तेः, तद्व्युत्पादनार्थं न लक्षणान्तरारम्भ इति शङ्कानिरासेन विधिव्यापारभेदनिरूपणार्थं आरम्भ इत्याह—**द्वादश इति**। प्रधानोद्देशेनाङ्गानां विधाने त्वर्थादन्योपकारकत्वम्, जामान्नार्थं स्थापितस्य दीपस्यान्योपकारकत्ववत्। अतः प्रासङ्गिकोपकारस्यापि शास्त्रप्रमाणकत्वात् तद्व्युत्पादनार्थं लक्षणान्तरमुचितमित्यर्थः॥ अप्रयोजकं च तत्सामर्थ्ययुक्तं चेत्यप्रयोजकसामर्थ्ययुक्तम्, तच्च तत् शेष्यन्तरं चेत्यप्रयोजकसामर्थ्ययुक्तशेष्यन्तरम्, तत्रेत्यर्थः। प्रयोजकं यत्सामर्थ्यं तेन युक्तं न संभवतीत्यप्रयोजकसामर्थ्ययुक्तम्, तच्च शेष्यन्तरं चेति तथोक्तं तत्रेति वा विग्रहः। "अग्नीषोमीयं पशुमालभेते"त्येष पशुविधिः। तत्प्रयुक्तानि यानि प्रयाजादीन्यङ्गानि, तत्कृतस्तूपकारः पशुपुरोडाशाख्येऽपि कर्मण्यविशिष्ट इत्यर्थः॥

दृष्टान्यमुपसंहरति—**तदेवमिति**। **तत्** तत्र पूर्वस्मिंस्तन्त्रे। **एवम्** उक्तविषयात्। दार्ष्टान्तिकमाह—**तथेति**। आम्नायस्य विधिपरत्वान्न ततोऽति सिद्धिरिति द्रष्टव्यम्॥ प्रतिपत्तव्याभावेन प्रतिपत्तिविध्यसंभवस्योक्तत्वात् कथमभ्यधिकाशङ्काऽभावः? तत्राह—**यूपेति**। अयमर्थः—"यूपं तक्षति", "यूपमष्टाश्रीकरोति", "खादिरो यूपो भवति"त्यादिवाक्यपर्यालोचनया तक्षणादिसंस्कारविशेषविशिष्टो दारुविशेषो यूपोऽलौकिकोऽप्याम्नायाद् विधिपरान्निश्चीयते; यथा वाऽलौकिकोऽप्याहवनीयः—"अग्नीनादधीते"त्यादिवाक्यात् संस्क्रियोऽग्निरियि निश्चीयते; यथा वा स्वर्गकामपदसमभिव्याहारादलौकिकस्याप्यपूर्वस्याधिगतिः; तथा विधिपरादपि सत्यादिवाक्याद् ब्रह्मसिद्धिरिति। द्वैतग्राह्यध्यक्षादिविरोधादाम्नायोऽन्यपरस्तत्साधयितुं नेष्ट इत्याशङ्क्याह—**असिद्धावपीति**। "वाचं धेनुमुपासीते"त्यादाविवाऽऽरोपितब्रह्मोपास्तिसंभवान्नाधिकाशङ्केत्यर्थः॥

आरम्भसमर्थनं किं पूर्वपक्षिणः? उत सिद्धान्तिनः? नाद्यः; तस्यानारम्भवादित्वात्। न द्वितीयः; विध्युपगमेनारम्भसमर्थनात्, सिद्धान्तिना च तदनङ्गीकरणादित्याशङ्क्याह—**अत्रेति**। अत्रानारम्भचोद्ये सिद्धान्त्येक-

### ऋजुविवरणम्

"अभ्यधिकाशङ्काऽभावादि"त्यसम्बद्धम्; प्रतिपत्तव्याभावेन विध्यसंभवस्योक्तत्वात्, इत्याशङ्क्याभिप्रायमाह—**यूपाहवनीयादिवदिति**॥ ननु यूपाहवनीयादिवत् न ब्रह्मणः सिद्धिः, तत्र "यूपं तक्षती"ति यूपोद्देशेन तक्षणादिविधानं न संभवति, यूपस्याप्रसिद्धत्वात्; अतः खदिरादि छिनत्ति यूपीकर्तुमित्यलौकिकाकारस्य साध्यत्वं प्रतीयते। तथाच संशयात् तस्य विनियोगदर्शनादलौकिकाकारसिद्धिः, तथा "अग्नीनादधीत" इति साध्यतया प्राप्तानामग्नीनाम्—"आहवनीये जुहोती"त्यपूर्वसंज्ञया विनियोगादाधान-पवमानेष्टिजन्यातिशयवाचित्वनिश्चयादलौकिकाकारसिद्धिः। नत्वत्र ब्रह्मणि प्रमाणमस्ति; विधिवाक्यस्य "योषितमग्निमि"त्यादिवाक्यवदग्राहकत्वात्, अन्यस्य कार्यपरत्वेन तत्र तात्पर्याभावादित्याशङ्क्याह—**असिद्धौ वेति**॥

"अत्र केचिदि"त्यादिग्रन्थो न सिद्धान्तिनः; स्वपक्षे दूषणपरिहारस्य प्रस्तुतत्वात् तद्विहायान्यस्यासङ्गतेः, नापि पूर्वपक्षवादिनः; तेन "अभ्यधिकाशङ्के"त्यनेनैवारम्भस्य निरस्तत्वाद् पुनर्निरासे पौनरुक्त्यप्रसङ्गात्, नापि

### पञ्चपादिका

**अत्र केचित् अभ्यधिकाशङ्कां दर्शयन्तो ब्रह्मजिज्ञासां पृथक् आरभन्ते। केयमत्राभ्यधिकाऽऽशङ्का? "चोदनालक्षणोऽर्थो धर्मः" इति ब्रुवता विधेः प्रामाण्यं दर्शितम्। अत्र केषुचिद् वाक्येषु विधिरेव न श्रूयते—"सदेव सोम्येदमग्र आसीदि"त्येवमादिषु। यत्रापि विधिः श्रूयते "आत्मा वा अरे द्रष्टव्यः", "तस्मिन् यदन्तस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यमि"ति, तत्र यद्यपि कृत्या अविशेषेण विधौ स्मर्यन्ते, तथाऽपि, यो भावाभिधायी तव्यप्रत्ययः, स क्रियायां पुरुषं नियोक्तुं शक्नोति। यत्र पुनः कर्म प्राधान्येनोच्यते, तत्र द्रव्ये गुणभूतां क्रियां कार्यान्तरसम्बन्धित्वेन विधातुं न**

### पञ्चपादिकाविवरणम्

करणायैव तेषामारम्भप्रकारं दर्शयति—**अत्र केचिदिति**॥ ननु क्वचिदेव विधिश्रवणेऽपि तदाकाङ्क्षितानुबन्धसमर्पणेन व्यवहितमपि वेदान्तवाक्यजातं तदेकवाक्यतया संबध्यते, किं सर्वत्र विधिश्रवणेन? इत्याशङ्क्याह—**यत्रापि विधिः श्रूयत इति**। तत्रापि विधेरनुपपत्तिरिति भावः॥ ननु भाव-कर्मणोर्विहितानामपि कृत्यप्रत्ययानां "कृत्याश्चे"ति विधौ स्मरणात् तव्यप्रत्ययेन ज्ञानं विधीयत इति? तत्राह—**तत्र यद्यपि कृत्या इति**। तथापीह विधिर्न सम्भवतीत्यर्थः। ननु गन्तव्यमिति गमनविधानवद् ज्ञानं विधीयताम्? सत्यम्, युक्तं भावविषये तव्यप्रत्यये विधानमित्याह—**यो भावाभिधायीति**। भाव इति धात्वर्थमात्रमुच्यते। तत्प्राधान्येन स्वतन्त्रफलाय विधातुं शक्यत इत्यर्थः। ननु कर्माभिधायितव्यप्रत्ययादपि धात्वर्थविषयो विधिरवगम्यते—"स्वाध्यायोऽध्येतव्यः" इति? तत्राह—**यत्र पुनः कर्म प्राधान्येनोच्यत इति**॥ तत्रापि स्वतन्त्रफलाय वा कर्म विधीयते? किं वा कर्मकारकगतफलायेति? न तावत् स्वतन्त्रफलायेत्याह—**तत्र द्रव्ये**

### तत्त्वदीपनम्

देशीयान् दूषयितुं पूर्ववादी तेषामारम्भप्रकारं दर्शयतीति संबन्धः। सिद्धान्त्यभिमतादारम्भप्रकाराद् वैलक्षण्यमाह—**वेदान्तानामिति**। विधिनिष्ठत्वमङ्गीकृत्यैव योऽयमारम्भप्रकारः, तं दर्शयतीति संबन्धः। विधि विचारस्य पूर्वत्र निर्वृत्तत्वात् पुनरारम्भो व्यर्थ इत्याशङ्क्याह—**याऽधिकाशङ्केति**॥ "सोऽरोदीदि"त्यादिवाक्यानां विधिविधुराणामपि विध्यपेक्षितप्रतिपादकत्वेन यथा प्रामाण्यम्, तद्वत्सत्यादिवाक्यानामिति शङ्कते—**ननु क्वचिदिति**। "आत्मा वा अरे द्रष्टव्यः"इत्यादावित्यर्थः। **अनुबन्धेति**—प्रतिपत्तिविध्यपेक्षितविषयसमर्पणेनेत्यर्थः। अपेक्षितं पूरयति—**तत्रापीति**। "तयोरेव कृत्य-क्त-खलर्थाः" इति सूत्रेण भाव-कर्मणोस्तव्यप्रत्ययस्य विधानादत्र विध्यर्थत्वमित्यर्थः। तव्यप्रत्ययस्य भावाद्यभिधायित्ववद्विध्यभिधायित्वमपि युक्तमिति शङ्कते—**नन्विति**॥ किं कृत्यप्रत्ययस्य भाव-कर्मणी अर्थः? उत ते एव? इति विकल्प्याद्यमङ्गीकरोति—**भावेति**॥ द्वितीयं निरस्यति—**कृत्याश्चेति**॥ तव्यप्रत्ययस्य त्रिषु विधानाविशेषेऽप्यत्र विध्यर्थत्वं न संभवतीत्याशयेनाह—**तत्राहेति**॥ यद्यपीत्यत्रापेक्षितं पूरयति—**तथाऽपीति**। "आत्मा वा अरे द्रष्टव्यः" इत्यस्य कर्मप्रधानत्वान्न विधिप्रधानत्वमित्यर्थः। कर्मविषयत्वेऽपि विध्यर्थत्वं दृष्टमिति शङ्कते—**नन्विति**॥ गमनविधानमात्रमङ्गीकरोति—**सत्यमिति**॥ नच तद्वदत्रापि विधिपरत्वमित्याह—**युक्तमिति**। "गन्तव्यमि"त्यत्र तव्यप्रत्ययात् क्रियायाः साध्यताप्रतिपत्तेर्न कर्मपरत्वम्, अस्य च कर्मपरत्वान्न विधिप्रधानत्वमित्यर्थः। सर्वप्रत्ययानां भावत्वाधिकरणवस्त्वभिधायित्वाद्भावाभिधायीति विशेषणवैयर्थ्यमाशङ्क्याह—**भाव इति धात्वर्थेति**। क्रियामात्रमित्यर्थः। फलाभावे क्रियायां पुरुषनियोगानुपपत्तेः फलपरत्वे च क्रियाप्रधानत्वादित्यनुपपन्नमित्याशङ्क्याह—**तत्प्राधान्येनेति**। धात्वर्थमात्रं तच्छब्दार्थः। प्राधान्येनेत्येतद् विवृणोति—**स्वतन्त्रेति**। कर्मकारकासमवेतादृष्टफलायेत्यर्थः। तत्र हेतुमाह—**तत्प्राधान्येनेति**॥ कर्मपरस्यापि विधिपरत्वं दृष्टमिति शङ्कते—**ननु कर्मेति**॥

### ऋजुविवरणम्

तस्यैव पुनराक्षिप्य समर्थनम्; केचिद्ग्रहणानर्थक्यप्रसङ्गादित्याशङ्क्यावतारयति—**अत्र पूर्ववादीति**॥ "यत्रापी"त्यत्र वाक्यार्थप्रतीत्यभावेन साकाङ्क्षत्वादभिप्रायं दर्शयति—**तत्रापीति**। भाव-कर्मणोर्विहितत्वात् तव्यप्रत्ययस्य न तत्र विध्यर्थत्वसंभव इति विवक्षितम्। अयं चाभिप्राय उत्तरग्रन्थेऽनुवादव्याजेन सूचितः—**भाव-कर्मणोर्विहितानामिति**। "तत्र यद्यपि कृत्याः" इत्यस्य साकाङ्क्षत्वात्पूरयति—**तथाऽपीहेति**। "यो भावाभिधायी" त्यसंबद्धम्; सर्वेषां भावाभिधायित्वात् "क्रियाप्रधानत्वादि"ति चागमको हेतुः; कर्मप्रधानस्यापि क्रियायां प्रवर्तकत्वदर्शनादित्याशङ्क्य व्याचष्टे—**भाव इति धात्वर्थमात्रमिति**।

## पञ्चपादिका

**शक्नोति । द्रव्यपरत्वे चानुत्पाद्यत्वात्, अविकार्यत्वात्, अनाप्यत्वात् असंस्कार्यत्वात्, संस्कृतस्य च कार्यान्तरे उपयोगाभावादसंस्कार्यत्वम् । अतः—"आत्मानमुपासीते"त्यात्मन ईप्सिततमत्वं न सम्भवति ॥**

## पञ्चपादिकाविवरणम्

**गुणभूतामिति** ॥ अथ कर्मकारकसमवायिफलाय विधिः ? तत्राह—**द्रव्यपरत्व इति** ॥ ननु आत्मनि विहितक्रियासामर्थ्यादज्ञानाधर्मादिमलापकर्षः संस्कारः स्यादिति ? नेत्याह—**संस्कृतस्य चेति** ॥

तत्र "सक्तून् जुहोती"ति क्रतुप्रकरणे श्रवणात् क्रत्वङ्गता सक्तुहोमस्यावगता । तत्राङ्गानि च द्विविधानि—अर्थकर्माणि संस्कारकर्माणि च । क्रतुकारकाण्यनाश्रित्य स्वातन्त्र्येण विहितानि प्रयाजादीन्यर्थकर्माणि, व्रीह्यादिकारकगुणभूतानि संस्कारकर्माणि । तत्र न तावत् सक्तुहोमस्यार्थकर्मता; सक्तुद्रव्यस्य गुणभूतत्वात् प्रोक्षणादिवत् । संस्काकर्म च द्विविधम्—विनियुक्तसंस्कारः, यथा "व्रीहिभिर्यजेते"ति विनियुक्तव्रीहीनुद्दिश्य प्रोक्षणादिसंस्कारः । कश्चिद्विनियोक्ष्यमाणसंस्कारः, यथा "आहवनीये जुहोती"ति विनियोक्ष्यमाणस्याधानेन संस्कारः ; संस्कृतस्य विनियोग इत्यर्थः । तत्र होमेन भस्मीकृतानां सक्तूनामुभयथाऽपि क्रतौ विनियोगाभावाद् वैयर्थ्याद्योगाच्च संस्कारकर्मत्वं परित्यज्य 'सक्तूनि'ति प्राधान्यं च विहाय 'सक्तुभिरि'ति गुणभावेन कर्मप्राधान्यमुपादायार्थकर्मता निरूपिता यथा;

## तत्त्वदीपनम्

कार्यान्तरसंबन्धित्येन विनियोक्तुं न शक्नोतीत्युक्तम्, तदिष्टमित्याशङ्क्य विकल्पोत्तरत्वेन व्याचष्टे—**तत्रापीति** ॥ द्वितीयमुत्थापयति—**अथेति** ॥ (टीकायाम्) **द्रव्यपरत्वे** इत्यादेरयमर्थः—कृत्यप्रत्ययस्य कर्मकारकगतातिशयफलार्थक्रियाविधिपरत्वेऽङ्गीक्रियमाण आत्मन्युत्पत्त्याद्यन्यतमकर्मफलं वक्तव्यम् । नच तत् संभवति । न तावदात्मन उत्पत्तिः ; अनादित्वात्, नापि विकारसंभवः ; नित्यत्वात्, नाप्याप्तिः ; सर्वगतत्वेन नित्याप्तत्वात्, नापि संस्कार्यत्वम् । संस्कारो द्विविधः—गुणाधानलक्षणो मलापकर्षलक्षणश्चेति । नाद्यः ; निर्गुणत्वादिति द्वितीयमुत्थापयति—**नन्वात्मनीति** ॥ विनियुक्तविनियोक्ष्यमाणयोः संस्कारसंदर्शनादात्मनश्चोभयरूपत्वाभावान्न संस्कार्यत्वमित्याह—**नेत्याहेति** ॥

आत्मप्राधान्यभङ्गेनोपास्तेः प्राधान्यमास्थीयते सक्तुन्यायेनेत्युक्तम्, तत्र कोऽसौ सक्तुन्यायः ? इति वीक्षायां पूर्वतन्त्रनिर्वृत्तमर्थमाह—**तत्र सक्तूनित्यादिना** ॥ **तत्र** पूर्वतन्त्रे । भवत्वङ्गाङ्गिता, तथाऽपि कथं "सक्तून् जुहोति"त्यत्र गुण-प्रधानभाववैपरीत्यम् ? इत्याशङ्क्य वैपरीत्यं दर्शयितुमङ्गद्वैविध्यमाह—**तत्रेति** ॥ अङ्गाङ्गिनोरिति यावत् । कान्यर्थकर्माणि ? कानि चेतराणि ? इति वीक्षायामाह—**क्रतूपकारकाणीति** ॥ **अनाश्रित्य स्वातन्त्र्येणे**त्यनयोर्व्याख्यान-व्याख्येयभाव इति द्रष्टव्यम् । अनूयाजादिरादिशब्दार्थः । एवमङ्गद्वैविध्यं प्रदर्श्यास्यार्थकर्मतां निरचष्टे—**तत्रेति**; अर्थकर्म-संस्कारकर्मणोर्मध्य इत्यर्थः । "व्रीहीन् प्रोक्षति" "पत्न्यवेक्षत"इत्यत्र प्रोक्षणावेक्षणादिकं प्रति व्रीह्यादीनां यथा प्राधान्यम्, तथा "सक्तून् जुहोती"त्यत्र द्वितीयाश्रुत्या सक्तूनां प्राधान्यं होमस्योपसर्जनत्वं च लक्ष्यत इति नार्थकर्मत्वमित्यर्थः ॥ तर्हि संस्कारकर्मत्वं किं न स्यात् ? इत्याशङ्क्य तदसंभवं दर्शयितुं तद्द्वैविध्यमाह—**संस्कारकर्मेति** । विनियुक्त-विनियोक्ष्यमाणसंस्काररूपेण द्विविधत्वमित्यर्थः । विनियोक्ष्यमाणसंस्कार इत्युक्तेऽग्निमात्रस्य विनियोक्ष्यमाणत्वात्संस्कारवैयर्थ्यशङ्का स्यात्, तदर्थमाह—**संस्कृतस्येति** ॥ भवत्वेवम्, ततः किमिति ? अत आह—**तत्र होमेनेति** ॥ मा भूत् तर्हि विनियोगः, इत्याशङ्क्याह—**वैयर्थ्येति** । स्वतन्त्रफलसाधनत्वाश्रवणाद् दर्श-पूर्णमासप्रकरणे पाठात्

## ऋजुविवरणम्

"अथ पुनर्विपरीतः" इत्यनेन सक्तुषु गुणप्रधानभावो विपरीतः स्वीक्रियत इत्युक्तम्, तत्रादौ केन प्रकारेण सक्तुषु विनियोगः प्रतीयते ? प्रथमप्रतीते च काऽनुपपत्तिः ? अनुपपत्तौ सत्यां केन प्रकारेण विनियोग आश्रितः ? प्रकृते च कथं विनियोगाश्रयणम् ? इत्यपेक्षायां विवृणोति—**"तत्र सक्तून् जुहोती"ति क्रतुप्रकरण** इति ॥ विनियोक्ष्यमाणस्येत्युक्तेऽग्निस्वरूपमात्रे विनियोगशङ्का स्यात्, तन्निवृत्त्यर्थमाह—**संस्कृतस्येति** । "तत्रापि न ज्ञायते" इत्यसंबद्धम्; उपासनास्वरूपस्यात्मनस्तन्निर्वर्तकत्वस्य चोक्तत्वादित्याशङ्क्यावतारयति—**तत्र होमेनेति** । "अथ ज्ञायते" इति व्याहतम्; विभक्ति-

## पञ्चपादिका

**अथ पुनर्विपरीतो गुण-प्रधानभावः सक्तुन्यायेन कल्प्येत; तत्रापि न ज्ञायते—किं तदुपासनम् ? कथं चात्मना तत् क्रियत इति ? अथ ज्ञायते ज्ञानमुपासनम्, आत्मा च विषयभावेन तन्निर्वर्तयतीति ? एवं तर्हि तदेवायातम्—ज्ञानेनात्माऽऽप्यत इति; तच्च कृतकरणमनर्थकम्, नित्याप्तत्वादात्मनः । संस्कार्यत्वे चोपयोगाभाव उक्तः । अतो विध्यभावादविवक्षितार्था वेदान्ताः, इति धर्मजिज्ञासानन्तरं स्नाने प्राप्त इदमारभ्यते—अथातो ब्रह्मजिज्ञासेति । अनन्तरं ब्रह्म जिज्ञासितव्यम्, न स्नातव्यमित्यभिप्रायः । कर्माभिधायिनोऽपि कृत्यप्रत्ययान्नियोगसंप्रत्ययान्न नियोक्तृत्वं निराकर्तुं शक्यते, 'कटस्त्वया कर्तव्यः' 'ग्रामस्त्वया गन्तव्यः' इतिवत् । यत्तूक्तम्—द्रव्यपरत्वे प्रयोजनाभावादानर्थक्यं नियोगस्य—इति; तदसत्, अविद्योच्छेदस्योपलभ्यमानत्वात् अविद्या च संसारहेतुभूता ॥**

## पञ्चपादिकाविवरणम्

तथा' आत्मानमि'ति साध्यतया प्राधान्यं विहाय, 'आत्मनोपासीते'ति गुणत्वोपगमेन स्वतन्त्रफलायोपासनं प्राधान्येन विधीयतामिति शङ्कते—**अथ पुनर्विपरीत इति** ॥ तत्र यथा होमप्राधान्येऽपि सकर्मकत्वाद्धातोः सक्तव एव कर्मकारकतया भस्मीक्रियन्ते, एवमवगमस्यापि सकर्मत्वादर्थतः कर्माभावे न विधानमिति परिहरति—**तत्रापि न ज्ञायत इति** ॥ शब्दतः करणत्वेऽप्यर्थतः कर्मताऽऽत्मन एवेत्याशङ्कते—**अथ ज्ञायत इति** ॥ तर्हि कर्मकारकत्वे सत्यात्मनि कश्चिदतिशयो वक्तव्यः, तदभावान्निष्कर्मकं ज्ञानं न विधातुं शक्यत इत्याह—**एवं तर्हि तदेवायातमिति** ॥ ननु अवभास्यतयाऽवाप्तिरात्मनि विधेयक्रियाफलमिति ? नेत्याह—**तच्च कृतकरणमनर्थकमिति** । नित्यचैतन्येन प्रतीतितोऽवाप्तत्वान्न ज्ञान-

## तत्त्वदीपनम्

फलकल्पनानुपपत्तेः, अध्ययनविध्युपात्तत्वेनानर्थक्यासंभवाच्च श्रुतिभङ्ग इत्यर्थः । **कर्मप्राधान्यमिति**—क्रियाप्राधान्यमित्यर्थ । दार्ष्टान्तिकमाह—**तथाऽऽत्मानमिति साध्यतयेति** । उपास्तिजनितातिशयविशिष्टतयेत्यर्थः । **स्वतन्त्रफलायेति**—मुक्तिफलायेत्यर्थः । उपासनशब्दस्य प्रसिद्धार्थत्वादात्मनः कर्तृत्वस्य च प्रसिद्धत्वात् "तत्रापीति" प्रश्नानुपपत्तिमाशङ्क्याह—**तत्र यथेति** ॥ सक्तूनां शब्दतः प्रधान्यभङ्गेऽप्यर्थात् कर्मत्ववदुपास्तेरप्यात्मा कर्म ? उत न ? नान्त्यः ; उपास्तेर्ज्ञानापरपर्यायत्वाद् ज्ञानस्य च सकर्मकत्वात् कर्माभावेऽनुपपत्तेः । तथाऽऽत्मनस्तादृगुपासननिर्वर्तकत्वं चानुपपन्नमिति **टीकार्थः** । आद्यं कल्पमुत्थापयति—**शब्दत इति** ॥ जानातेः सकर्मकत्वादुपास्तेरपि तदपरपर्यायत्वात् सकर्मकत्वमित्यभिसन्धायोक्तम्—**ज्ञानमिति** ॥ आत्मनः कर्मत्व आत्मनेति तृतीया कथम् ? तत्राह—**आत्मनेति** ॥ आत्मनो विषयत्व आप्यत्वं स्यादिति कथमुक्तम् ? विषयस्याप्यत्वे नियमाभावादित्याशङ्क्याह—**तर्हीति** । येन यस्यातिशय उत्पाद्यते, स तस्य विषय इति नियमादात्मनश्च विषयत्वे क्रियाजनितातिशयशालित्वं वक्तव्यम्, तत्र चोत्पत्ति-विकृति-संस्कृतीनां नित्याविकार्य-निर्गुणात्मन्यसंभवादाप्तिर्वक्तव्या, सा च न संभाव्यते, भेदाभावात्, अन्यश्चान्येन प्राप्यते । तस्मान्निष्कर्मकबोधाभावात् तद्विध्यनुपपत्तिरित्यर्थः । आत्मनः स्वरूपेणाप्तत्वेऽप्यवभास्यत्वविशिष्टाकारेणाप्तिसंभव इति शङ्कते—**नन्ववभास्यतयेति** ॥ आत्मनः स्वप्रकाशाव्यभिचारित्वान्नात्र प्रकाशसंवन्धस्य क्रियाफलत्वमित्याह—**नेत्याहेति** ॥ अवभास्यत्वविशिष्टाकारेण साध्यत्वशङ्कायां नित्यावभासत्वादिति वक्तव्यम्, किमिदमुक्तं नित्याप्तत्वादिति ? तत्राह—**नित्येति** ॥ नित्येन चैतन्येन नित्यसंवन्धत्वान्न क्रियाऽधीनप्रकाशत्वमित्यर्थः ॥

(टीकायाम)**कर्माभिधायिन** इत्यादेरयमर्थः—"द्रष्टव्यः" इत्यत्र तव्यप्रत्ययस्य कर्मपरत्वान्न नियोगप्रतीतिरिति यत्तूक्तम्, तत्राह—**कर्मेति** ॥ 'कटस्त्वया कर्तव्यः' इत्यादावुत्पत्त्यादिफलसंभवान्नियोगसंभवेऽपि नात्र तत्संभवः ;

## ऋजुविवरणम्

व्यत्ययेन पूर्वमात्मनः कर्तृत्वभावेन निर्वर्तकत्वमुक्तम्, अत्र तु विषयभावेन निर्वर्तकत्वकीर्तनात्, इत्याशङ्क्यावतारयति—**शब्दतः करणत्वेऽपीति** ॥ "एवं तर्ही" त्यसंवद्धम्; नहि विषयत्वं प्राप्यत्वेन नियतम्, येनैवमुच्यते, इत्याशङ्क्याह—**तर्हि कर्मकारकत्व इति** । कृतकरत्वे "नित्याप्तत्वादि"ति हेतुरुक्तः, व्याधिकरणः सः; न ह्यात्मनो नित्याप्तत्वे सति ज्ञाततयाऽऽप्तिकरणस्य विधेयज्ञानस्य कृतकरत्वदोषः, इत्याशङ्क्य व्याचष्टे—**नित्यचैतन्येनेति** ॥ 'नित्ये'त्यस्य व्याख्या—**नित्यचैतन्येनेति** ॥ "आप्तत्वादि"त्यस्य व्याख्या—**प्रतीतितोऽवाप्तत्वादिति** ॥ तत्रैकदेशिना परिहारावसरेऽ-

### पञ्चपादिका

**अपरे पुनरेवमारभन्ते—ब्रह्मणि प्रत्यक्षादिप्रत्ययान्तराणामसंभवात् परिनिष्पन्ने वस्तुनि प्रतिपत्तिहेतुतया सम्भावितसामर्थ्यानामप्याम्नायस्य पुनः कार्यविषयतया सुतरामसम्भवं मन्वानस्य भवति संकर्षपर्यन्ते एव वेदार्थविचारावसानमिति बुद्धिः, तन्निरासार्थं पुनः प्रतिज्ञातम्। इहापि सर्वेष्वेवात्मज्ञानविधानेषु कार्यनिष्ठतां वर्णयन्ति समाम्। तत्त्वावबोधश्च कार्यम्, अधिकारनियोगविषयतयाऽवगमात्—इति। ततस्तद्विचारार्थं शास्त्रमारब्धव्यमिति ॥**

### पञ्चपादिकाविवरणम्

कर्मेतेत्यर्थः। **अपरे पुनरित्यतः** प्राक्तनो ग्रन्थः स्पष्टार्थः ॥ अविद्याऽधर्मादिनिवृत्तिः संस्कारः, नच संस्कृतस्यान्यत्र विनियोगाकाङ्क्षा; स्वयं पुरुषार्थत्वात्, अपुरुषार्थसंस्कारस्य च नियोगापेक्षत्वात् तदर्थमारभ्यत इति पृथगारम्भवादिनो मतम् ॥

**अपरे पुनरेवमारभन्त** इत्यादेरयमर्थः—प्रतिपत्तिविध्यपेक्षितोऽपि चतुर्विधो न्यायः प्रथमतन्त्रे निरूपितः। तत्र तद्विषयस्य ब्रह्मणो निरूपणाय शास्त्रमारब्धव्यम्, तच्च न संभवति; ब्रह्मणि प्रमाणाभावादिति ॥ **अत्रोच्यत** इत्यतः प्राक्तनो ग्रन्थः स्पष्टार्थः ॥ **अधिकारिनियोगविषयतयेति**। अयमर्थः—ज्ञानस्य फलसम्बन्धोऽवगम्यते; तत्फलकामिना तदनुष्ठेयम्, नियोगाच्चानुष्ठानमिति फलकामिनियोगविषयतयाऽवगमादिति भावः ॥

### तत्त्वदीपनम्

प्रयोजनाभावात्, इत्युक्तमनुवदति—**यत्त्विति** ॥ मलापगमरूपसंस्कारसंभवादसिद्धो हेतुरित्याह—**तदसदिति** ॥

संस्कृतस्यान्यत्र विनियोगाभावान्न संस्कारः फलमित्युक्तम्, तन्निराकर्तुं लौकिकसंस्कारवैलक्षण्यमाह—**अविद्याधर्मेति** ॥ भवत्वेवम्, ततः किमिति ? अत आह—**नचेति** ॥ सुखप्राप्ति-दुःखनिवृत्त्यन्यतरस्य पुमर्थत्वात् प्रोक्षणादिजनितसंस्कारस्याताद‍ृक्त्वान्नियोगानुप्रवेशित्वं युज्यते, न तथाऽत्रेत्यर्थ ॥

ब्रह्मणि मानाभावाद् ब्रह्ममीमांसा नारभ्येत्यधिकाशङ्कानिरासार्थं पुनरारम्भ इत्युक्तम्—**अपरे पुनरित्यत्र**, तन्न संभवति; विधिनिरूपणायाः संभवादित्याशङ्क्याशयमाह—**अपरे पुनरिति** ॥ (टीकायाम) **संकर्षपर्यन्त** इत्यादेरयमर्थः—देवताकाण्डं **संकर्ष**शब्दार्थः। आम्नायो न ब्रह्मणि मानम्; कार्यपरत्वादित्युक्तम्, तत्र कार्यपरत्वमङ्गीकरोति—**इहापीति**। कर्मकाण्डवदित्य**पि**शब्दार्थः। **आत्मज्ञानविधानेष्विति**—आत्मप्रतिपादकसत्यादिवाक्येष्वित्यर्थः। **समामिति** कर्मकाण्डसमामित्यर्थः। तर्हि ब्रह्मण्यप्रामाण्यमिति, तत्राह—**तत्त्वेति** ॥ निर्विषयज्ञानविध्यनुपपत्त्या वेदान्तानां ब्रह्मण्यवान्तरतात्पर्यमित्यभिसन्धिः। तत्र हेतुमाह—**अधिकारीति** ॥ कोऽसावधिकारिनियोगः ? कथं वा तद्विषयत्वम् ? इति शङ्कायामाह—**ज्ञानस्येति**। "तरति शोकमात्मविदि"त्यादिना ज्ञानस्य शोकनिवृत्त्यादेश्च साध्य-साधनताऽवभासते। निरधिकारज्ञाननिर्वृत्तिद्वारा कृतिव्याप्यत्वमिति ज्ञानं नोत्पत्तुमर्हतीति शोकविषयो न संभवति; ततो "द्रष्टव्यः" इत्यत्र प्रवृत्त्युपात्तं ज्ञानं विषयप्वेन संबध्यते, नियोगस्य च साक्षात्कृतिव्याप्यत्वसंभवाद् ज्ञानस्य कार्यत्वमित्यर्थः। "इतः" **अर्थः** इत्यनेन संबन्धः। उक्तार्थस्य टीकारूढतामाह—**फलेति** ॥

### ऋजुविवरणम्

विद्योच्छेदः प्रयोजनमित्युक्तम्, तत्राविद्योच्छेदस्य संस्काररूपत्वासंभवे यत्कारणमुक्तम्, तन्न परिहृतम्, तथा "अविद्या च संस्कारहेतुभूते"ति कीर्तनं व्यर्थमित्याशङ्क्याभिप्रायमाह—**अविद्याधर्मादीति** ॥

"अपरे पुनरेवमि"त्यादिना ब्रह्मणि लौकिकस्य प्रमाणस्य वेदस्य चासंभवाच्छास्त्रानारम्भ इत्युक्तम्, तदनुपपन्नम्; विधिनिरूपणाय शास्त्रारम्भ इति वक्तुं शक्यत्वात्, पौनरुक्त्यं च स्यादित्याशङ्क्याभिप्रायमाह—**अपरे पुनरेवमित्यादेरिति** ॥ "तत्त्वावबोधश्च कार्यमि"ति प्रति प्रतिज्ञायाधिकारिनियोगविषतयाऽवगमो हेतुत्वेनोक्तः। तत्र कथं ज्ञानस्य कार्यत्वम् ? धात्वर्थस्य कार्यत्वायोगात्, ज्ञानस्य कार्यत्वे वा न नियोगकल्पनावकाशः; अन्यस्यैव कार्यत्वात्, नापि ज्ञानस्य तद्विषयत्वसंभवः; कोऽयमधिकारिनियोगः ? कथं च तद्विषयत्वमिति न ज्ञायते, तदर्थमभिप्रायमाह—**ज्ञानस्य फलसम्बन्ध इति** ॥

### पञ्चपादिका

**अत्रोच्यते—नारब्धव्यम्; गतार्थत्वात् । कथम् ? यस्तावत्प्रथम आरम्भप्रकारः कर्मणि कृत्यप्रत्यये न नियोगसंप्रत्यय इति, तत् स्वयमेव विधायकत्वं दर्शितम् । प्रसिद्धं चैतत् "स्वाध्यायोऽध्येतव्यः" इत्येवमादीनां विधायकत्वम् । नात्राधिकाशङ्काकारणं किञ्चित् । ननु चतुर्विधस्यापि क्रियाफलस्यात्मन्यसंभव उक्तः । यद्येवं सक्तुन्यायो भविष्यति ? तदपि न; आत्मविषयज्ञानस्य नित्यसिद्धत्वादित्युक्तम् । सिद्धस्यैव पुनरभ्यासो विधिनिमित्त**

### पञ्चपादिकाविवरणम्

**अत्रोच्यते** इत्यादिनाऽऽरम्भद्वयं पूर्ववादी निराचष्टे । यदि लोके कृत्यप्रत्ययो न नियोगं गमयतीति शङ्कते, तन्नास्तीत्याह—**तत्स्वयमेवेति** ।। अथ वेदे, तत्राह—**प्रसिद्धं चैतदिति** । अतः प्रथमसूत्रेणाध्ययनविधिमङ्गीकुर्वतां गत एवायं विचार इत्यर्थः । **ननु चतुर्विधस्येत्यादिरुक्तार्थः** । करणत्वेऽपि चात्मन एव कर्मकारकत्वे स्वतोऽपरोक्षतया नित्यसिद्धस्य विधेयक्रियाजन्यप्रतिभासायोगादकर्मत्वान्निष्कर्मकं ज्ञानं न विधातुं शक्यमित्युक्तमित्याह—**तदपि नेति** । आत्मनि च चतुर्विधफलाभावादकर्मत्वेऽपि कर्तृसमवायिमोक्षफलायतदवभासिज्ञानसन्ताननियमविधिः स्यात्; यथा "हिरण्यं बिभृयादि"ति पक्षेऽप्राप्तस्य नियमविधिरभ्युदयफलः, तद्वदित्याह—**सिद्धस्यैवेति** । ननु अवस्थात्रयेऽपि

### तत्त्वदीपनम्

"अत्रोच्यत" इति उपक्रमादुत्तरग्रन्थस्य सिद्धान्तत्वमिव प्रतिभाति । नच तदुपपद्यते; अनारम्भस्य समर्थ्यमानत्वादित्याशङ्क्याह—**अत्रोच्यत इति** ।। किं लोके कर्माभिधायिकृत्यप्रत्ययान्नियोगाप्रतिपत्तिः ? उत वेदे ? इति विकल्प्याद्यं दूषयति—**यदीति** । 'कटस्त्वया कर्तव्यः' इत्यादौ नियोगप्रतिपत्तेरित्यर्थः । द्वितीयमनूद्य प्रत्याह—**अथेत्यादिना** । आशङ्कानिराकरणफलमाह—**अत इति** । अध्ययनविधेर्विधायकत्वप्रसिद्धिरतःशब्दार्थः । "स्वाध्यायोऽध्येतव्यः" इत्यत्र कर्मकारकस्य वैफल्यात् सक्तुन्यायेन 'स्वाध्यायेनाधीयीते'त्यध्ययनस्य प्राधान्यमित्याशङ्क्याह—**प्रथमेति** । स्वाध्यायस्याध्ययनक्रियया संस्कार्यत्वात् संस्कृतस्वाध्यायजनितविज्ञानस्य फलवत्त्वात् कर्मकारकप्राधान्येऽपि विधिपरत्ववद् "द्रष्टव्यः" इत्यत्रापि विधिपरत्वसंभवान्नाधिकाशङ्केत्यर्थः ।। किंच कृत्स्नाध्ययनानन्तरं वेदार्थविचारकर्तव्यतां सूत्रयन् जैमिनिर्ज्ञानकाण्डार्थस्यापि विचार्यतां प्रतिजज्ञे, विचारप्रयोजकस्याविशेषादित्याशयवानाह—**प्रथमेति** । आत्मनि क्रियाजनितातिशयानिरूपणान्न कर्मकारकत्वम्, ततः कथमधिकाशङ्काऽभावः ? इति शङ्कायां कर्मकारकत्वासंभवेऽप्यात्मनः करणत्वकल्पनाद् नाधिकाशङ्काऽवतार इत्यनारम्भवादिनोक्ते "तदपि ने"त्यत्र कर्मकारकत्वं निरस्तम्, तदिष्टमेव; आत्मनः करणत्वोपगमात्, इत्याशङ्क्याह—**करणत्वेऽपीति** । जानातेः सकर्मकत्वात् शब्दतः करणत्वेऽप्यर्थत आत्मनः कर्मकारकत्वमुपगन्तव्यम्, नच तदुपपद्यते; आत्मनः स्फुरद्रूपत्वात्, ज्ञानक्रियाजन्यस्फुरणातिशयशालित्वायोगात्; ततो न ज्ञानविधिरित्यधिकाशङ्का युक्तेत्यर्थः । स्वरूपज्ञानस्याप्यात्मव्यवहारहेतुत्वात् तद्विषयत्वमात्मन उक्तं **टीकायामिति** द्रष्टव्यम् । 'अहमि'त्यात्मज्ञानस्य सिद्धत्वात् तत्र विधिर्व्यर्थः, ततश्च "सिद्धस्यैवे" त्यादिग्रन्थानुपपत्तिरित्याशङ्क्याह—**आत्मनीति** ।। **हिरण्यं बिभृयादिति** । "तस्मात् सुवर्णं हिरण्यं धार्यमि"त्यत्र

### ऋजुविवरणम्

"प्रसिद्धं चे"त्यसम्बद्धम्; कथं स्वाध्यायवाक्यस्य विधायकत्वं प्रसिद्धम् ? कर्माभिधायकत्वेनाविधायकत्वशङ्कानिरासापेक्षत्वात्, "नात्राधिकाशङ्काकारणमि"त्यप्यसम्बद्धमुक्तम्; अधिकाशङ्काया अपरिहृतत्वादित्याशङ्क्याभिप्रायमाह—**अतः प्रथमसूत्रेणेति** ।। सक्तुन्यायेन कर्तृत्वमात्मनो भवतीत्यधिकाशङ्कापरिहारे कृते टीकाकारेण "तदपि ने"त्यादिना सक्तुन्यायासंभवेनाधिकाशङ्का प्रदर्शिता "आत्मविषयज्ञानस्य नित्यसिद्धत्वादि"ति च हेतुरुक्तः, स च व्यधिकरणः; न ह्यात्मविषयस्य ज्ञानस्य सिद्धत्वमात्मन उपासनाकर्तृत्वनिषेधायालम्, "इत्युक्तमि"ति च न ज्ञायते—किमुक्तम् ? कुत्रोक्तम् ? इति, एतन्मनसि निधाय व्याचष्टे—**करणत्वेऽपि चात्मन इति** ।। "सिद्धस्यैव पुनरि"त्यसंबद्धम्; अकर्मकत्वेन पूर्वं विधिनिराकरणं कृतम्, अत्रापि कर्मत्वाभावेनैव विध्यभावः सिध्यति । "विधिनिमित्तः" इत्यप्यसंबद्धमुक्तम्, त्रिकालाप्राप्तविषयत्वाद् विधेः, विषमश्च दृष्टान्तः; हिरण्यधारणे विध्यभावात्, फलवत्त्वाच्चेत्याशङ्क्यावतारयति—**आत्मनि च चतुर्विधफलाभावादिति** अधिकाशङ्कानिराकरणावसरे कथंचिद्

**पञ्चपादिका**

**उपासनाख्यो भविष्यति; अभ्युदयफले हिरण्यधारणवत् । ननु न विधानतोऽप्यात्मविषयज्ञानसन्तानः कर्तव्यः, स तु नित्यमात्मनि जाग्रतः सिद्धः ? एवं तर्ह्यर्थाविरुद्धेषु कालेष्वात्मन्येव चेतःसमाधानं भविष्यति ॥**

**यत्पुनरात्मज्ञानादविद्योच्छेदस्तदुच्छेदात् संसारनिवृत्तिः फलमित्युपन्यस्तम्; तदसत्, अहमित्यात्मानं नित्यमेव**

**पञ्चपादिकाविवरणम्**

ज्ञानसन्तानाविच्छेदान्न नियमविधिरित्याह—**ननु न विधानतोऽपीति** । तर्ह्यनात्मप्रतिभासनिवृत्तये परिसङ्ख्याविधिरदृष्टार्थः स्यादित्याह—**एवं तर्हीति** । अतो गतार्थत्वान्नाधिकाशङ्केति भावः ॥

सत्यपि ज्ञानविधाने प्रयोजनाभावान्न शास्त्रारम्भ इत्याह—**यत्पुनरात्मज्ञानादित्यादि** । नचानर्थनिवृत्तौ स्वममहेतुरपि ज्ञानसन्तानो विधानादनर्थं निवर्तयति; विशेषाभावादित्यर्थः । तर्ह्यलौकिकात्मतत्त्वज्ञानमविद्यादिदोषनिवृत्तिफलं

**तत्त्वदीपनम्**

हिरण्यधारणं किं क्रत्वङ्गतया विधीयते ? आहो यद्धिरण्यम्, तद्धार्यमिति धारणसंस्कारः ? आहो पुरुषार्थो हिरण्यधारणविधिः ? तत्र नान्त्यः संभवति; फलस्याश्रुतत्वात् ततः क्रत्वङ्गतया धारणविधिपरत्वम्, संस्कारविधिपरत्वं वेति प्राप्ते, प्रतिविधीयते—तत्र न तावत् संस्कारविधिपरत्वम्; क्रत्वङ्गहिरण्याप्रतिपत्तेः । न खलु हिरण्यपदमात्रात् क्रत्वङ्गताप्रतीतिः; लोकेऽपि हिरण्यसद्भावात् । नच कृत्यप्रत्ययबलाद् हिरण्यस्य संस्कार्यता; संस्कारस्य स्वरूपेण फलत्वाभावात् । नच क्रत्वनुप्रवेशितया फलवत्त्वम्; तत्र मानाभावात् । नच क्रत्वङ्गतया हिरण्यधारणविधेः फलवत्त्वम्; कंचित्क्रतुमनारभ्याम्नानात्; तथा सति पुरुषार्थोऽयं विधिरिति श्लिष्यते । नच फलाश्रवणम्; "दुर्वर्णोऽस्य भ्रातृव्यः" इत्याद्यर्थवादबलाद् भ्रातृव्यदुर्वर्णतायाः स्वस्य शोभनरूपतायाश्चाधिगतेः । तस्मात् पुरुषार्थत्वम्; तथा चात्मज्ञानाभ्यासोऽपि मोक्षार्थं विधीयते "द्रष्टव्य" इत्यादिनेत्यर्थः ॥ अभ्यासस्य सिद्धत्वेऽपि विधेयत्वं युज्यते, हिरण्यधारणवत् । ततश्च "ननु न विधानतः" इत्याद्यनुपपन्नमित्याशङ्क्याह—**नन्ववस्थेति** । सुषुप्तावप्यविद्योपहितचैतन्यप्रतिभासादवस्थात्रयेऽपीत्युक्तम्, द्वयोः साधनयोः पक्षेऽप्राप्तावन्यतरनिवृत्तिफलको नियम आश्रीयते, नचात्र पक्षेऽप्राप्तिरस्ति; आत्मज्ञानस्य सदा सिद्धत्वादित्यर्थः । आत्मनि नित्यं जाग्रतः पुरुषस्य ज्ञानसंतानो नित्यसिद्ध इति संबन्धः । 'आत्मनी'ति विषयसप्तमी । ज्ञानविध्यसंभवे चोदिते, आत्मन्येव चेतःसमाधानाभिधानं चोद्याननुरूपमित्याशङ्क्य, पक्षान्तरप्रदर्शनार्थत्वान्न विरोध इत्याह—**तर्ह्यनात्मेति** ॥ व्यवहारभङ्गशङ्कां निरस्यति-**अर्थाविरुद्धेष्विति** । गात्रयात्रानिर्वाहकसमयातिरिक्तसमयेष्वित्यर्थः । अधिकाशङ्कानिराकरणं प्रक्रम्य विधित्वसमर्थनमेव कृतम्; तत्र को हेतुरित्याशङ्क्याह—**अत इति** । विधिसंभवोऽतःशब्दार्थः । विध्यभावादविवक्षितार्थत्वाशङ्कायां विधिं समर्थयता सङ्कैव निराकृतेति न विरोध इत्यर्थः । तर्हि विधिनिरूपणार्थमेवारम्भ इत्याशङ्क्याह—**गतार्थत्वादिति** ॥

शङ्काद्यादिनिराकरणस्य प्रस्तुतत्वात् तेन चाविद्याद्युच्छेदस्यानुपन्यस्तत्वात् तन्निराकरणमनुपपन्नमित्याशङ्क्य, तत्र पूर्वपक्षवत् सिद्धान्तोऽप्यसमञ्जस इत्येतत् टीकाकृतोक्यत इत्याह—**सत्यपीति** ॥ कर्मप्रधानात् कृत्यप्रत्ययादपि नियोगप्रत्यय इत्येकदेश्युक्तमङ्गीकृतम्—**सम्प्रतीति** ॥ अत्र किं लौकिकात्मज्ञानादविद्यानिवृत्तिः ? उतालौकिकात्मज्ञानात् ? नाद्यः; अनुपलब्धेरिति **टीकार्थः** । लौकिकात्मज्ञानस्य स्वरूपेणानिवर्तकत्वेऽपि विधियमानाकारस्य निवर्तकत्वशङ्कां निरस्यति—**नचानर्थेति** । विधीयमानस्यापि संसारिविषयत्वमविशिष्टमिति न निवर्तकत्वम्; विरुद्धयो-

**ऋजुविवरणम्**

विधित्वसमर्थनमसङ्गतमित्याशङ्क्याह—**अतो गतार्थत्वादिति** ॥

ननु पूर्वं निवर्तकत्वसामर्थ्याभावात् संसारानिवृत्तिः, विधानोत्तरकालं तु निवर्तक इत्याशङ्क्य व्याचष्टे—**नचानर्थनिवृत्ताविति** । "तदसत्; विधिर्हि"त्यनेन नालौकिकात्मज्ञानं निराकर्तुं शक्यम्, तस्यापि ज्ञानत्वाकारेण सिद्धत्वात्; अथ सामान्यतः सिद्धिशब्देन व्यक्तिसिद्धिरेव विवक्षिता, न तर्हि विधेयत्वं संभवति, प्रसिद्धत्वादेव । नाप्येवंविधे विधानं

## पञ्चपादिका

**जानाति सर्वो लोकः। न च संसारो निवृत्तः। अथ पुनरहंप्रत्ययावसेयादन्यदेवात्मरूपं पराकृतभोक्तृ-भोक्तव्य-भोगग्रन्थि ज्ञेयत्वेनात्मज्ञानविधिना ज्ञाप्यत इति; तदसत्, विधिर्हि सामान्यतःसिद्धस्य क्रियात्मनो विशेषसिद्धौ प्रभवति, नात्यन्तासिद्धसद्भावे। तद् यदि नाम ज्ञानं लोके सिद्धम्, तथाऽपि निरस्तप्रपञ्चात्मविषयमसिद्धमाकाशमुष्टिहननवन्न विधातुं शक्यम्। अथ तादृगात्मज्ञानं सिद्धम्, किं विधिना ?**

**यदपि मतान्तरम्—प्रत्यक्षादेरगोचरत्वात् शास्त्रस्य च कार्यार्थत्वात् संकर्षपर्यन्त एव विचारे वेदार्थपरिसमाप्तौ प्राप्तायां वेदान्तेष्वपि कार्यनिष्ठता समाना; ब्रह्मतत्त्वावबोधश्च कार्यम्, अधिकारिनियोगविषयतयाऽवगमात्; अतस्तद्विचाराय शारीरकारम्भः—इति, तदप्युक्तेन न्यायेन ब्रह्मावगमस्य सिद्धत्वेऽसिद्धत्वे च कार्यत्वासंभवेन प्रत्युक्तम् ॥**

## पञ्चपादिकाविवरणम्

विधीयतामित्याशङ्कते—**अथ पुनररहंप्रत्ययवसेयादिति** ॥ न; अत्यन्तमसिद्धमुद्दिश्य विधानानुपपत्तेरित्याह—**तदसत्; विधिर्हीति**। यथा सामान्यप्रसिद्धं यागमुद्दिश्य पूर्वानुभूतयागव्यक्तिसदृशं व्यक्त्यन्तरं बुद्धिस्थमेव विधीयते, एवमलौकिकात्मज्ञानं सामान्यतः प्रसिद्धमुद्दिश्य पूर्वानुभूतज्ञानव्यक्तिसदृशं व्यक्त्यन्तरं बुद्धावाकलय्य तत् कर्तव्यतया विधेयमित्यर्थः। ननु ज्ञानसामान्यस्य लोके सिद्धत्वात् ततुद्देशेन विधाने तद्व्यक्तित्वेनालौकिकात्मज्ञानं कर्तव्यतया प्रतीयतामिति ? नेत्याह—**तद्यदि नाम ज्ञानमिति**। तादृगात्मज्ञानस्य ज्ञानसामान्यव्यक्तित्वेनाप्रद्धित्वात् तादृशं ज्ञानं कर्तव्यतया बुद्धावारोपयितुं न शक्यमित्यर्थः। अथ तादृगात्मज्ञानं सिद्धम्, किं स्वात्मनि ? पुरुषान्तरे वा ? पुरुषान्तरे चेत्, अन्यस्याधिकारिणस्तदप्रतिपत्तेर्न तादृशं व्यक्त्यन्तरं कर्तव्यतया बुद्धावारोपयितुं शक्यम्। अथ स्वात्मनि ? तत्राह—**किं विधिनेति** ॥ **यदपि मतान्तरमित्यादिरुक्तार्थः। तद्विचाराय** ब्रह्मविचाराय शास्त्रारम्भ इत्यर्थः ॥

## तत्त्वदीपनम्

निवर्त्य-निवर्तकतादृष्टेरित्यर्थः। निर्विशेषात्मज्ञानं विधीयत इत्युक्तम् "अथ पुनरि"त्यत्र, तदसंभवि; आत्मनि संसाराभावात, अनात्मनि च तदसंभाद् न तन्निवृत्तिफलत्वं निर्विशेषात्मज्ञानस्येत्याशङ्क्य वस्तु आत्मनि दोषासंभवे कल्पितदोषनिवर्हणार्थं, विधिरर्थवानित्याह—**तर्ह्यलौकिकेति** ॥ अप्रसिद्धेर्विधिर्न संभवतीत्युक्तम् "तदसदि"त्यत्र, तत् कस्मादिति वीक्षायामाह—**नात्यन्तमिति**। ज्ञानस्योद्देश्यत्वासंभवादित्यर्थः। तत् कस्मादिति ? अत्राह—**यथेति** ॥ आत्मज्ञानेऽपि सामान्यप्रसिद्धिरस्त्येवेति शङ्कते—**ननु ज्ञानेति** ॥ अलौकिकात्मज्ञाने कथं तर्हि कर्तव्यता सिध्येदिति ? अत आह—**तद्व्यक्तित्वेनेति** ॥ मात्र सामान्यप्रसिद्धिरित्याह—**नेत्याहेति** ॥ लौकिकात्मज्ञानस्य सिद्धत्वात् तत्र कथं सामान्यसिध्यभावः ? इत्याशङ्कान्तरस्य सिद्धत्वमसिद्धत्वं वेति विकल्प्यान्त्यं प्रत्याह—**तादृगात्मेति** ॥ प्रथममुत्थापयति। **अथेति** ॥ विकल्पासहत्वान्नैतदित्याह—**किं स्वात्मनीति** ॥

अववोधस्य प्रकृतत्वात् "तद्विचाराये"त्यत्र तच्छब्देन तद्ग्रह इति शङ्का स्यात्, तदर्थमाह—**ब्रह्मविचारायेति** ॥

## ऋजुविवरणम्

दृश्यते, इत्याशङ्क्य व्याचष्टे—**यथा सामान्यप्रसिद्धमिति** ॥ **अलौकिकात्मज्ञानमिति**—विधिस्वाभाव्यात् प्रसिद्धविलक्षणव्यक्तिलाभ इत्यर्थः। "तद्यदि नामे"त्यनेन कथं विधानायोग्यत्वमुक्तम् ? न ह्याकाशमुष्टिहननकल्पत्वमस्यास्ति; अनुष्ठातुं शक्यत्वादित्याशङ्क्य व्याचष्टे—**तादृगात्मज्ञानस्येति** ॥

"अतस्तद्विचाराये"त्यत्र तच्छब्देन तत्त्वावबोधस्य निर्देश इति शङ्का स्यात्; प्रकृतत्वात्, तथा सत्यारम्भ एव न सिध्येत्; तदर्थं व्याचष्टे—**ब्रह्मविचारायेति** ॥

### पञ्चपादिका

**अपरं मतम्—सत्यं कार्यविषयो वेदः, न तु तावन्मात्रे। तस्मिन् सति यो योऽर्थोऽवगम्यते स स वेदार्थः; यथा रूपे सति चक्षुषः प्रवृत्तिः, न च रूपमात्रं चक्षुषो विषयः, किंतु तस्मिन् सति द्रव्यमपि; एवमिहापि वस्तुतत्त्वमपि**

### पञ्चपादिकाविवरणम्

**अपर मतमिति** स एव प्रतिपत्तिविधिवादी स्वपक्षमुपपादयति—सत्यम्, कार्यपरादपि वेदाद् ब्रह्मणोऽपि प्रतिपत्तेर्युक्तः प्रतिपत्तिविधिरित्याह—**नतु तावन्मात्र इति** ॥ ननु विरुद्धमिदम्, अर्थान्तिरपरात् शब्दादर्थान्तरप्रतिपत्तिरिति ? तत्राह—**तस्मिन् सतीति** । विधिप्रमाणाद्विधिसंसृष्टतयाऽन्येऽपि पदार्थास्तदपेक्षिताः प्रमीयन्त इत्यर्थः । यथा रूपविषयस्य चक्षुषस्तत्संसर्गि सर्वं विषय इति दृष्टान्तमाह—**यथा रूपे सतीति** ॥ ननु "द्रष्टव्यः" इत्यादिना नापरोक्षज्ञानं विधेयम्; सुखसंवेदनतया स्वर्गादिवत् पुरुषार्थस्याविधेयत्वात्, नापि शाब्दज्ञानम्; तत्र विधेरश्रवणादिति

### तत्त्वदीपनम्

कार्यशेषत्वेन वेदान्तानां ब्रह्मणि प्रामाण्यमित्युक्तम्, "अपरं मतमि"त्यत्र, तदयुक्तम्, पौनरुक्त्यप्रसङ्गादित्याशङ्क्य तत्प्रपञ्चनरूपत्वान्मैवमित्याह—**अपरं मतमिति** ॥ **स एवेति**, द्वितीयासंभवादित्यर्थः । ननु "तावन्मात्रे" इत्यत्र कार्ये ब्रह्मणि च प्रामाण्यमुक्तम्, तदयुक्तम्; उभयत्र प्रामाण्यकल्पकाभावादित्याशङ्क्याह—**सत्यमिति** । निर्विषयप्रतिपत्तिविध्यसंभवाद् ब्रह्मणोऽपि प्रामाण्यमित्यर्थः । वाक्यभेदप्रसङ्गाद् नोभयत्र तात्पर्यकल्पनमिति शङ्कते—**ननु विरुद्धमिति** ॥ वाक्यभेदप्रसङ्गं निरस्यति—**विधिप्रमाणादिति** । स्वतन्त्रार्थप्रतीत्यनङ्गीकरणान्न वाक्यभेद इत्यर्थः । "यथा रूपे सती"त्यत्र चक्षू रूपं विषयीकुर्वद् द्रव्यमपि विषयीकरोतीत्युक्त्या घटव्यापि गगनमपि गमयतीति प्रतिभानं स्यात्, तन्निरस्यति—**यथेति** ॥ कथंशब्दसूचितामनुपपत्तिं दर्शयति—**ननु द्रष्टव्य इति** ॥ ज्ञानविध्यसंभवचोद्ये सर्व-

### ऋजुविवरणम्

'अपरं मत'मित्यादावङ्गीकृत्य विधिं पुनः । ब्रह्मण्यपि प्रमाणत्वं वेदान्तानां प्रदर्शितम् ॥
अपरग्रहणात् तत्र मतान्यत्वं प्रतीयते । अयुक्तं तन्मतान्यत्वं प्रत्यभिज्ञाविरोधतः ॥
पौनरुक्त्येन पूर्वस्य कीर्तनं नैव युज्यते ॥

तस्मान्न मतान्तरम्; पूर्वोक्ताद्विशेषाभावात्, पूर्वत्रापि "ब्रह्मतत्त्वावबोधश्च कार्यम्, अतस्तद्विचाराये"ति वदता ब्रह्मण्यपि प्रामाण्यमङ्गीकृतमेव; अन्यथा ब्रह्मणि प्रमाणाभावाद् न शास्त्रारम्भ इति शङ्काया अपरिहारात्, नापि तस्यैव कीर्तनम्; अनवसरत्वात् पुनरुक्तत्वप्रसङ्गाच्चेत्याशङ्क्य ग्रन्थसमुदायस्य तात्पर्यमाह—**अपरं मतमिति** । **स एवेति**; पूर्वं ब्रह्मणि प्रामाण्यमस्तीत्यभिप्रेतम्, नतु तदित्थमिति प्रदर्शितम्; इदानीं प्रामाण्यप्रकारप्रदर्शनेन तस्यैव पुनरुपपादनं क्रियत इति भावः । ननु अवगमस्य कार्यत्वासंभवेन तन्मतं दूषितम्, पुनस्तन्मतसमर्थने क्रियमाणे तद्दूषणपरिहारेण प्रतिपत्तिविधिसंभवः प्रदर्शनीयः; "कार्यविषयः" इति च व्यर्थम्, प्रतिपत्तिविधिसमर्थनस्य प्रस्तुतत्वाद् न तद्विहायान्यस्यापि वेदार्थत्वप्रदर्शनमुपयुज्यते; नापि प्रतिपत्तिविधिसंभवः, प्रतिपत्तव्याभावात्, वेदस्य कार्यनिष्ठत्वाभावात्, इत्याशङ्क्याह—**सत्यं कार्यपरादपीति** ॥ कथमवगतिमात्रेण वेदार्थत्वम् ? नान्तरीयके व्यभिचारात्, अस्यानिष्टत्वाच्च, प्रमाणादन्यस्य प्रमित्ययोगादित्याशङ्क्याह—**विधिप्रमाणादिति** ॥ "यथा रूपे सती"ति विषम इवाभाति; अन्यप्रमाणादन्यप्रमितौ दृष्टान्तो दर्शनीयः; अत्र रूपे सति वस्त्वन्तरे प्रवर्तमानस्य स्वविषय एव प्रवृत्तेरित्युक्तत्वादित्याशङ्क्यावतारयति—**यथा रूपविषयस्येति** ॥ "कथमि"त्यनेन प्रकृतविषय आक्षेपः प्रश्नो वा क्रियत इति प्रतिभाति, प्रकृतं च ब्रह्मण्यपि प्रामाण्यम्, प्रतिपत्तिविधिसंभवश्च, न तावत् तदुभयाक्षेप-प्रश्नावुच्येते "तदुच्यते" इत्यारभ्यान्यस्यैव निरूपितत्वात्, नापि परिहारपर्यालोचनयाऽर्थान्तरविषयत्वकल्पना; असंगतत्वप्रसङ्गादित्याशङ्क्यावतारयति—**ननु द्रष्टव्य इत्यादिनेति** ॥ **तत्र विधेरिति**; शाब्दज्ञानं कर्तव्यमित्यश्रवणादित्यर्थः । "उच्यते" इत्यादिना प्रतीकग्रहणेन सर्वस्यात्मस्वभावताविधान-

## पञ्चपादिका

**विषयः। कथं? तदुच्यते; "इदं सर्वं यदयमात्मे"ति न तावत् सर्वात्मरूपताऽऽत्मन उपदिश्यते। यदि सर्वरूपताऽऽत्मन उपदिश्येत, ततः सर्वस्याचेतनत्वात् तद्रूपत्वे बौद्धृत्वहानौ बोधकत्वं शब्दस्य हीयेत; अतः सर्वस्यात्मस्वभावता विधीयते। अनात्मस्वभावविलयेन हि वस्तुनोऽवगतिर्दृष्टा।**

**नन्वत्र विधिर्न श्रूयते? एवं तर्हि कल्प्यतां विधिः। किं प्रतीते विध्यर्थे विधिः कल्प्यते? उताप्रतीत इति? यदि**

## पञ्चपादिकाविवरणम्

चोदयति—**कथमिति**॥ अस्ति शाब्दज्ञाने विधानमित्याह—**उच्यत इति**॥ ननु इदं वाक्यमात्मनोऽनात्मरूपताविधानपरम्; अतोऽपुरुषार्थत्वान्न विधेयमिति? नेत्याह—**न तावत् सर्वात्मरूपतेति**। प्रतिपन्नमुद्दिश्याप्रतिपन्नात्मरूपस्यैव विधानादित्यर्थः। दूषणान्तरमाह—**यदि सर्वरूपताऽऽत्मन** इति॥ किं तर्हि विधीयत इति? अत आह—**अतः सर्वस्येति**॥ "नेति ने"त्यादिवाक्यपर्यालोचनयाऽप्यनात्मोपमर्देनात्मैव विधेय इत्याह—**अनात्मस्वभावविलयेनेति**॥

ननु आत्मनोऽद्वितीयत्वप्रतिपादनपरमिदं वाक्यम्, न तत्र ज्ञाने वस्तुनि वा विधिरवगम्यत इत्याह—**नन्वत्र विधिर्न श्रूयत इति**॥ "पूषा प्रपिष्टभागः" इत्यादाविव कल्प्यतामित्याह—**कल्प्यतां तर्हीति**॥ **किं प्रतीते विध्यर्थ** इत्यादेरयमर्थः—कालत्रयानवमृष्टेऽनुष्ठानयोग्ये कर्मणि शब्दसामर्थ्यात् प्रतिपन्ने तदन्यथानुपपत्त्या च कर्तव्यरूपे नियोगेऽवगते विधायकपदार्थे पश्चाद्विधिर्विधायकपदं कल्प्यते? किं वा एवंविधार्थेऽप्रतिपन्नेऽननुष्ठेये वस्तुमात्रे च प्रतिपन्ने विधिपदं कल्प्यत इति? प्रतीते चेत्, प्रमितयेऽनुवादाय वा पदं कल्प्यते? नानुवादेन प्रयोजनम्। प्रमितये चेत्,

## तत्त्वदीपनम्

स्यात्मत्वमुच्यते, तत् प्रस्तुताननुसारीत्याशङ्क्याह—**अस्तीति**॥ "इदं सर्वं यदयमात्मे"त्यत्रात्मनोऽनात्मरूपत्वं विधीयते? उतानात्मनस्तद्रूपत्वम्? नाद्यस्तावद्युज्यत इत्याह—**नन्विदमिति**। न द्वितीयोऽपि; विरोधादित्यर्थः। आद्यः पक्षोऽनङ्गीकारपराहत इत्याह—**नेत्याहेति**॥ अनुपदेशे हेतुमाह—**प्रतिपन्नमिति**॥ अनात्मन आत्मताऽपि न विधेया; विरोधादित्याशयेन शङ्कते—**किं तर्हीति**॥ आरोपितरूपपरिहाराय तस्यात्मत्वं प्रतिपाद्यत इत्याह—**अत आहेति**॥ "नचैतदुत्प्रेक्षामात्रम्; दृष्टत्वादि"त्युक्तं टीकायाम्, तत् स्पष्टयति—**नेतीति**॥

"इदं सर्वमि"त्यत्र विध्यश्रवणेऽपि पूर्वोत्तरवाक्ययोर्विधिश्रवणाशङ्कां निरस्यति—**नन्वात्मन इति**॥ वाशब्दश्चार्थे। अश्रुतस्यापि विधेः कल्पनायां दृष्टान्तमाह—**पूषेति**। प्रपिष्टरूपो भागोऽस्येति प्रपिष्टभाग इति समाससामर्थ्याद् द्रव्य-देवतासंबन्धः प्रतीयते, तस्य चापूर्वत्वात् पूषोद्देशेन पिष्टद्रव्यत्यागः कर्तव्य इति विधिपदं यथा कल्प्यते, तथाऽत्रापीत्यर्थः॥ विधिपदकल्पनात् प्राग्विध्यर्थज्ञापकाभावात् "किं प्रतीते" इत्यादिविकल्पोऽनुपपन्नः, तथा विध्यर्थप्रतिपत्तौ विधिकल्पनं वृथेत्याशङ्क्य तात्पर्यमाह—**किं प्रतीत इति**॥ पचतीत्यादौ क्रियाप्रतिपत्तावपि न विधिपदकल्पनम्, तत्राह—**कालत्रयेति**॥ नियोगस्य विधित्वात् कथं तदर्थत्वमुक्तं टीकायाम्? तत्राह—**विधायकेति**॥ विधिशब्दस्यार्थपरत्वं

## ऋजुविवरणम्

प्रदर्शनमसंगतम्; प्रकृतचोद्यस्यापरिहारात्, इत्याशङ्क्यावतारयति—**अस्ति शाब्देति**॥ **न विधेयमिति**। आत्मनोऽनात्मरूपत्वं तज्ज्ञानं वा न विधेयमित्यर्थः॥ ननु "यदयमात्मे"ति यच्छब्दसम्बन्धादात्मनोऽनुवादेनानात्मरूपताविधानं प्रतीयते, इत्याशङ्क्याभिप्रायमाह—**प्रतिपन्नमिति**॥ "यदिदं सर्वं तदयमात्मे"ति वचनव्यक्तिरित्यर्थः। "अनात्मस्वरूपविलयेन ही"त्यत्र 'हि'शब्दश्रवणात् पूर्वोक्तार्थे हेतुरनेनोक्त इति प्रतिभाति; तदसम्बद्धम्, अनात्मोपमर्देनात्मनोऽवगतिदर्शनाभावात्, व्यर्थो हेतुः; पूर्वमेव हेतोरुक्तत्वादित्याशङ्क्यावतारयति—**नेति नेतीत्यादि**। न्यायत उक्तेऽर्थे प्रमाणदर्शनं क्रियत इति भावः॥

"प्रतीते विध्यर्थे"इत्यादिविकल्पोऽनुपपन्नः; विध्यर्थे ज्ञापकाभावे ज्ञानशङ्काया असंभवित्वात्, तथा कोऽयं विध्यर्थः? कश्च विधि? इति न ज्ञायते; विप्रतिपत्तिदर्शनात्, इत्येतन्मनसि निधाय व्याचष्टे—**इत्यादेरयमर्थ इति**।

## पञ्चपादिका

**प्रतीते कल्प्यते, कल्पनावैयर्थ्यम् । अर्थप्रतीत्यर्थं हि शब्दो मृग्यते । प्रतीतेऽर्थे शब्दं कल्पयता किं कृतं स्यात् ? अथाप्रतीत एव विध्यर्थे विधिं कल्पयित्वा ततोऽर्थः प्रतिपत्तव्य इति ? अपूर्वं प्रमाणकौशलम् ॥**

**ननु अश्रूयमाणविधिष्वपि "तस्मात्पूषा प्रपिष्टभागोऽदन्तको हि"त्यादिषु विधिः कल्पितः ? सत्यम्; युक्तं तत्र पूष्णः पिष्टद्रव्यसम्बन्धः समासाभिहितो न सिद्धो वर्तते, नापि कुतश्चिद्भविष्यतीति; प्रमाणाभावात् । नापि विधिना केनचित् पदैकवाक्यता, येन वपोत्खननादिवत् कथंचिदालम्बनं कल्प्येत; अतो निरालम्बनत्वपरिहाराय कार्यपरता कल्प्यत इति ।**

## पञ्चपादिकाविवरणम्

तत्राह—**प्रतीते कल्पनावैयर्थ्यमिति** । प्रतिपादकतया लिङादिपदकल्पनावैयर्थ्यमित्यर्थः । अननुष्ठेयवस्तुप्रतिपत्तौ विधिकल्पनाहेत्वभावान्न तत्र पदादनुष्ठेयप्रतिपत्तिरित्याह—**अथाप्रतीत इति** । अर्थवादसंसर्गेष्वपि कल्पनाप्रसङ्गादिति भावः ॥

ननु विकल्प-दूषणयोः सर्वत्राविशेषान्न क्वचिदपि विधिकल्पनमिति मन्वानश्चोदयति—**नन्वश्रूयमाणेति** ॥ यत्र द्रव्य-देवतासंबन्धः कालत्रयानवमृष्टः प्रमीयमाणः स्वाविनाभूतं यागं गमयति, यागश्च स्वाविनाभूतं नियोगमिति श्रुतसामर्थ्यादेव विध्यर्थः प्रतिपन्नः, तत्र व्यवहारमात्राय पूषोद्देशेन पिष्टद्रव्यत्यागः कर्तव्य इत्युपसंह्रियते, न तथेह श्रुतसामर्थ्याद्विध्यर्थः प्रतिपन्न इत्याह **सत्यं युक्तं तत्रेति** ॥ ननु इहापि श्रुतस्यात्मनः सामर्थ्यान्नियोगः प्रतिपन्न इत्याह—

## तत्त्वदीपनम्

निरस्यति—**विधिरिति** ॥ कल्पकाभावेन कल्पनापत्तिशङ्कां निरस्यति—**अननुष्ठेय इति** । "इदं सर्वमि"त्यादिवाक्यात् प्रतीयमानस्य पदार्थसंसर्गस्य क्रियामन्तरेणानुपपत्तेः सा तावत् प्रतीयते, सा च नियोगमाक्षिपति, ततस्तद्व्यवहाराय विधिपदं कल्प्यते ? उत पदार्थसंसर्गमात्रस्य तत्कल्पकत्वम् ? इति विकल्पार्थः । अधिष्ठानबोधनान्तरीयकसिद्धेरभावस्य, यथाऽनुवादकं 'नेदं रजतमि'ति वचनम्, तथाऽनुवादाय विधिपदकल्पनमित्यभिसन्धायोक्तम्—**अनुवादायेति** ॥ **नानुवादेनेति** । अनन्यथासिद्धप्रयोजनं विनाऽनुवादकल्पनाऽयुक्तेत्यर्थः । निर्विकल्पकज्ञानेन वस्तुनि दृष्टेऽपि यथा सविकल्पकज्ञानापेक्षा, तद्वदत्रापीत्याशङ्क्याह—**प्रतिपादकतयेति** ॥ तत्र प्रमेयभेदसद्भावाद् ज्ञानान्तरप्रार्थनम्, नच तथाऽत्र प्रमेयभेदः, इति विधिपदकल्पनं मुधेत्यर्थः ॥ "अपूर्वमिदं प्रमाणकौशलमि"त्यत्र प्रमाणकौशलस्यापूर्वत्वमुक्तम्, तत् कथम् ? इति वीक्षायामाह—**अननुष्ठेयेति** ॥ पदार्थसंसर्गस्य विधिपदकल्पकत्वात् तत्र हेत्वभावोऽसिद्ध इत्याशङ्क्याह—**अर्थवादेति** । सोऽरोदी"दित्यादिवाक्योपलब्धपदार्थसंसर्गेष्वपि विधिपदकल्पनमापतेदित्यर्थः ॥

"पूषा प्रपिष्टभागः" इत्यत्रापि विध्यर्थप्रतिपत्त्यप्रतिपत्त्योर्विधिपदकल्पनानुपपत्तिः समेत्याशङ्क्य तात्पर्यमाह—**ननु विकल्पेति** ॥ उक्तचोद्यपरिहारानभिधानात् "सत्यमि"त्यादिग्रन्थानुपपत्तिरित्याशङ्क्य तात्पर्यमाह—**यत्रेति** ॥ तर्हि प्रतिपन्ने विध्यर्थे विधिपदकल्पनं वृथेत्याशङ्क्याह—**तत्र व्यवहारेति** । प्रवृत्तेः साङ्गप्रधानकर्मावच्छिन्ननियोगबोधाधीनत्वात् तस्य च विधिपदं विना विध्यर्थेऽनुपपत्तेस्तत्कल्पनमित्यर्थः । "स प्रजापतिरात्मनो वपामुदक्खिददि"त्यादौ यथा विधिकल्पनं विनाऽर्थवत्त्वम्' तद्वदत्रापीति शङ्कायां **टीकायामुक्तम्—नापीति** ॥ "नियोगमाक्षिपती"त्यत्राक्षेपवाचक इति शङ्का स्यात्, नच सोपपद्यते; नियोज्यत्वहेतोर्वैयधिकरण्यात्, इत्याशङ्क्याक्षेपशब्दः प्रतिपत्तिवाचीति दर्शयति—**नन्विहापीति** ॥ पुरुषस्य नियोगाक्षेपकत्वचोद्ये नियोगस्य पुरुषाक्षेपकत्वाभिधानमनुचितमेवेत्याशङ्क्य

## ऋजुविवरणम्

प्रमितेऽप्यर्थे शब्दकल्पनादर्शनात् कथं व्यर्थत्वम् ? इत्याशङ्क्य व्याचष्टे—**प्रतिपादकतयेति** ॥ "अथाप्रतीते"इत्यनेन द्वितीयपक्षेऽपूर्वं कौशलमिति वदतः किमत्रापूर्वत्वं विवक्षितमिति न ज्ञायते, तदर्थमवतारयति—**अननुष्ठेयेति** ॥ ननु संसर्ग एव विधिकल्पको दृष्टः, तत् कथं कल्पनाहेत्वभावः ? इत्याशङ्क्याभिप्रायमाह—**अर्थवादेति** ॥

"नन्वश्रूयमाणे"त्यादि चोद्यं व्यर्थम्, न्यायत इह कल्पनानुपपत्तेर्दर्शितत्वात्, न ह्यन्यत्र कल्पनाप्रदर्शनेनात्र दोषापगमो भवति; नाप्यत्र दोषाभावे तद्विषयचोद्यस्योपयोगः इत्याशङ्क्यावतारयति—**ननु विकल्प-दूषणयोरिति** ॥ "सत्यं युक्तं तत्रे"त्यनेन द्रव्य-देवतासम्बन्धस्य कार्यत्वमुक्तमिव प्रतिभाति; प्रकृतत्वात्, नच तद् युक्तम्; नियोगस्यैव कार्यत्वात्, नापि नियोगविषयत्वेन कार्यत्वम्; भावार्थविषयत्वान्नियोगस्य, असंगतं च; तत्रापि पूर्वचोद्यसाम्यात्, इत्याक्षेपे तत्र वैषम्यस्यानुक्तत्वादित्याशङ्क्यावतारयति—**तत्र ( यत्र ) द्रव्य-देवतासम्बन्ध इति** ॥

### पञ्चपादिका

**ननु इहाप्यात्मपदं चेतनस्य भोक्तुर्वाचकम्; स च नियोज्यत्वान्नियोगमाक्षिपति ? नैतत्सारम्; नियोगो हि पुरुषविशेषमनाश्रित्यानुपलब्धो लोके तमाक्षिपेद् विश्वजिदादिषु। पुरुषः पुनः किं नियोगमन्तरेण नोपलब्धो लोके ? येन विधिकल्पना भवेत्॥**

**अथापि भवतु नाम विधिः, नासौ धातुना विना केवलो लभ्यते, धातुनैव सह कल्प्यते। कोऽसौ धातुः ? यदि तावत्कर्तव्यमिति,**

### पञ्चपादिकाविवरणम्

**नन्विहाप्यात्मपदमिति**॥ न; याग-नियोगयोर्नियोगप्रतिपत्तारमन्तरेणानुपपत्तिवत् प्रतिपत्तुर्नियोगमन्तरेणानुपपत्त्यभावादित्याह—**नैतत्सारम्; नियोगो हीति**॥

ननु यः कश्चिद्वेदे संसर्गः प्रतिपन्नः, स साक्षात्परम्परया वा नियोगसंसृष्ट एव; "वायुर्वै क्षेपिष्ठे"त्यादावपि परम्परया विधिसंसर्गाभ्युपगमात्, तत्र सर्वस्यात्मस्वभावताऽप्यविनाभावाद्विधिमुपस्थापयतीति, तत्राह—**अथापि भवतु नामेति**। भावार्थविषयत्वान्नियोगस्य नासौ भूतसंसर्गविषय इति भावः। एवं तर्हि भावार्थोऽपि विधिविषयः संसर्गमात्रेणाविनाभूतः, इति सोऽपि कल्प्यतामित्याह—**धातुनैव सह कल्प्यत** इति॥ सर्वधात्वर्थदोषविवक्षया पृच्छति—**कोऽसाविति**॥ प्रथमं सर्वधात्वर्थसामान्यातिलङ्घने कारणाभावात् कृतिधातुमुपस्थापयति—**यदि तावत्कर्तव्यमिति**॥

### तत्त्वदीपनम्

निदर्शनार्थत्वाद् न विरोध इत्याह—**न यागेति**। "प्रतिपत्तारमि"त्यत्र यागकर्तारमिति पदं द्रष्टव्यम्। क्रियायाः कर्तारं विना यथाऽनुपपत्तिः, नियोगस्य च नियोज्यं विना यथाऽनुपपत्तिः, तथाऽत्र नानुपपत्तिरित्यर्थः॥

विधेर्निरस्तत्वात्—"अथापी"त्यत्र कथं तस्याङ्गीकृतिः ? इत्याशङ्क्याह—**ननु यः कश्चिदिति**॥ पदार्थसंसर्गस्य किं साक्षान्नियोगसंसर्गः ? उत परम्परया ? नाद्यः; "सोऽरोदीदि"त्यादौ व्यभिचारात्, नेतरः, स्वर्गकामवाक्ये व्यभिचारादित्याशङ्क्याह—**साक्षादिति**। नियोगस्य प्राधान्यात् तत्संसृष्टत्वं तावदवश्यंभावि, क्वचित् साक्षात् कचित्प्रणाडचेति विभागः। वैदिकपदार्थसंसर्गो नियोगसंसृष्ट इति न नियमः; "वायुर्वै क्षेपिष्ठे"त्यादौ व्यभिचारात्, इत्याशङ्क्याह—**वायुरिति**। "वायव्यं श्वेतमालभेत भूतिकामः" इत्येतद्विध्यपेक्षितवायुप्राशस्त्यबोधनद्वारा "वायुर्वै क्षेपिष्ठा देवता" इत्यादेरपि विधिसंसृष्टत्वमित्यर्थः। **अविनाभावादिति**—विधिं विना पदार्थसंसर्गस्यानुपपत्तेरित्यर्थः। 'फलिताः द्रुमाः'इत्यादौ विधिमन्तरेणापि पदार्थसंसर्गदृष्टेर्न नियम इत्याशयेनोक्तम्—**अथापीति**॥ निर्विषयस्य नियोगस्यानुपलब्धेरनिष्पत्तेश्च कल्पितोऽपि नियोगोऽकिंचित्कर इत्याह—**नासाविति** (टीकायाम्)॥ केवलस्य निर्विषयस्यानुपलब्धेरपि भूतविषयत्वेन लाभमाशङ्क्याह—**भावार्थेति**॥ अथवा, धातुमन्तरेण विधेरनुपपत्त्यभावात् "नासावि"त्यादिग्रन्थानुपपत्तिमाशङ्क्याह—**भावार्थेति**। कृतिसाध्यत्वेन तावन्नियोगोऽवभासते, कृत्या च साक्षात्साध्यत्वविशिष्टतया तदप्रतिपत्तेः कृतिसाध्यभावार्थसाध्यत्वेन तत्प्रतिपत्तिरित्यर्थः। कल्पकाभावात् कथं धातुनैव सह कल्प्यतामित्युक्तमित्याशङ्क्याह—**एवं तर्हीति**॥ किंशब्दस्याक्षेपार्थतामाह—**सर्वेति**॥ कृतिधातोरेव प्रथमं निराकरणे को हेतुरिति ? अत आह—**प्रथममिति**। कृधात्वर्थस्य 'यागः कर्तव्यो दानं कर्तव्यमि'ति सकलधात्वर्थानुगततयोपलम्भात् प्रथमं तदनुवादेन निरसनमित्यर्थः॥ अनात्मोपमर्दस्यात्मप्रतिपत्त्यनुपयोगित्वात् "अनात्मस्वभावता न निवृत्ते"त्यस्य दूषणाभास-

### ऋजुविवरणम्

कथं वैदिकसंसर्गस्य नियोगेनाविनाभावः ? अर्थवादसंसर्गेषु व्यभिचारादित्याशङ्क्याह—**"वायुर्वै क्षेपिष्ठे"-त्यादाविति**॥ "नासौ धातुना विने"त्ययुक्तम्; वैदिकसंसर्गस्य कल्पकत्वाङ्गीकारात्, तस्य चेह विद्यमानत्वात्, पुनस्तस्य विधिसंसर्गानङ्गीकारे "अथापी"त्यनेन विरोधादित्याशङ्क्याभिप्रायमाह—**भावार्थविषयत्वादिति**॥ अयमर्थः—अपूर्वकृतिसम्बन्धघटकस्तन्निरूपको विषयः। स च भावार्थो 'भावार्थनय'साधित इति॥ "धातुनैव सहे"त्ययुक्तम्; धातोः कल्पकाभावात्, इत्याशङ्क्यावतारयति—**एवं तर्हीति**॥ ननु यो विवक्षितो धातुः; तन्निराकरणेनैवालम्, किं धातुविषयप्रश्नेन इत्याशङ्क्याभिप्रायमाह—**सर्वेति**॥ सर्वेषु धातुषु दूषणं वक्तव्यं चेत्, केन विशेषेण कृतिधातोरादौ निराकार्यत्वेनोपन्यासः ? इत्याशङ्क्याभिप्रायमाह—**प्रथमं सर्वेति**॥ मा भूत प्रपञ्चस्वरूपविलयः; कथं तदभावो दूषणम् ? नहि

## पञ्चपादिका

**तत्रानात्मस्वभावता न निवृत्ता प्रपञ्चस्य । यथा—'अमी पिष्टपिण्डाः सिंहाः क्रियन्तामि'ति पिष्टस्वभावता न निवृत्ता । इतिकर्तव्यता चानिर्दिष्टा; तत्र साकाङ्क्षं वचनमनर्थकं स्यात् ।**

**अथ ज्ञातव्य इत्यध्याह्रियेत ? एवमपि स एव दोषः; अनात्मस्वभावता न निवृत्तेति । अशक्यार्थोपदेशश्च; नहि वस्तु वस्त्वन्तरात्मना ज्ञातुं शक्यते । एवं तर्हि ज्ञातव्य इत्यध्याह्रियेत, तत्र धात्वर्थोऽनुवादः, प्रत्ययो विधायकः । कुतः प्राप्तेरनुवादः ?**

## पञ्चपादिकाविवरणम्

तत्र दूषणमाह—**तत्रानात्मस्वभावतेति** । प्रपञ्चविलयनेनैव ह्यात्मदर्शनमिति भावः । दूषणान्तरमाह—**इतिकर्तव्यता चेति** । शमादयस्तु ज्ञानेतिकर्तव्यम्, न प्रपञ्चविलयनेतिकर्तव्यमित्यर्थः ।

धात्वन्तरमाह—**अथेति** ।। दूषयति—**एवमपीति** । नहि योषिदादिष्वग्न्यादिभावेन ज्ञायमानेषु योषिदादिभावो निवर्तते; विधेयबुद्धेरप्रामाणिकत्वादिति भावः । उभयथाऽपि धात्वर्थविधौ दूषणान्तरमाह—**अशक्यार्थोपदेशश्चेति** । ननु योषिदग्न्यादिषु मानसी क्रिया, ज्ञानं तु विधीयमानमनात्मानं निवर्तयतीति ? तत्राह—**नहि वस्तु वस्त्वन्तरात्मनेति** । तर्हि पुरुषस्वरूपप्रविलयनेन स्थाणुनिश्चयप्रमाणवदनात्मप्रविलयेनात्मनो निश्चायकं प्रमाणज्ञानमन्यतः प्राप्तमनूद्य विधिमात्रमध्याह्रियत इत्याह—**एवं तर्हि ज्ञातव्य** इत्यादिना ।। तर्हि विधिवाक्यार्थमितिव्यतिरेकेण ब्रह्मसंवेदनस्यान्यतः प्राप्तस्यानुवादो वक्तव्यः; नच प्रमाणान्तरमस्तीत्याह—**कुतः प्राप्तेरिति** ।। ननु विधायकपदव्यतिरिक्तेभ्यो वेदान्ताभि-

## तत्त्वदीपनम्

त्वमाशङ्क्याह—**तत्र दूषणमिति** ।। सम्यग्दूषणत्वमेवाह—**प्रपञ्चेति** । कर्त्रादिप्रपञ्चप्रतिपत्तावात्मदर्शनासंभवात् तदुपमर्देनैव तत्संभव इत्यर्थः । **चशब्दार्थमाह—दूषणान्तरमिति** ।। "शान्तो दान्तः" इत्यत्र शमादीतिकर्तव्यताप्रतिपत्तेस्तदनिर्देशासिद्धिमाशङ्क्याह—**शमादय इति** । "शान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वाऽऽत्मन्येवाऽऽत्मानं पश्येदि"ति ज्ञानाङ्गत्वं शमादीनां लक्ष्यत इत्यर्थः ।

विध्यध्याहारस्याङ्गीकृतत्वात् "अध्याह्रियेते" त्यनुपपन्नमित्याह—**धात्वन्तरमिति** ।। "तरति शोकमात्मवित्" "भिद्यते हृदयग्रन्थिरि"त्यादिना प्रपञ्चस्य ज्ञाननिवर्त्यत्वप्रतिपत्तेरनात्मस्वभावता न निवृत्तेत्यनुपपन्नमित्याशङ्क्य, त्वन्मत एव श्रुतिर्नोपपद्यत इत्याशयेनाह—**दूषयतीति** ।। आशयमेवाह—**न हि योषिदिति** ।। दृष्टान्तो विषम इति शङ्कते—**ननु योषिदिति** ।। ज्ञायतेऽर्थोऽनेनेति ज्ञानम्, न चान्यस्यान्यात्मतालक्षणोऽर्थोऽस्तीति ज्ञानमेव न भवेदित्यभिप्रायेणाह—**तत्राहेति** ।। पूर्वत्र ज्ञानविधेर्निरस्तत्वाद् "एवं तर्ही"त्यत्र न ज्ञानविधिशङ्केत्याशङ्क्याह—**तर्हीति** ।। प्रपञ्चः परमार्थ इत्यभ्युपेत्य न न तस्य ज्ञानेनोपमर्द इत्युक्तम्, संप्रति तस्याध्यस्तत्वमाश्रित्य ज्ञाननिरस्यत्वमुच्यत इत्यर्थः । विधित आत्मज्ञानप्राप्तेः "कुतः प्राप्तिरि"त्ययुक्तमित्याशङ्क्याह—**विधीति** । आत्मज्ञाने सिद्धे तदनुवादेन ज्ञानं विधातव्यम्, विधाने च ज्ञानसिद्धिः, इतीरेतराश्रयप्रसङ्गादन्यतो ज्ञानप्राप्तिर्वक्तव्या, न चान्यत्वमस्तीत्यभिप्रायः । "अभिधानतः" इत्यत्र किं विधिरभिधानम् ? उतान्यत् ? इति वीक्षायामाह—**ननु विधायकेति** ।। अभिधानमपि विध्यपेक्षया

## ऋजुविवरणम्

प्रपञ्चविलयो विहितः, नापि तेन विनाऽनुपपत्तिरित्याशङ्क्याभिप्रायमाह—**प्रपञ्चविलयनेनेति** ।। ननु इतिकर्तव्यतानिर्देशो दृश्यते—"शान्तो दान्तः"इत्यादिना, अत इतिकर्तव्यताया अनिर्देशोऽसिद्ध इत्याशङ्क्याभिप्रायमाह—**शमादय इति** ।।

"एवमपि स एवे"ति कथमुक्तम् ? प्रपञ्चस्य ब्रह्मरूपत्वज्ञाने प्रपञ्चाकारस्य मिथ्याभूतस्य निवृत्तिसंभवादित्याशङ्क्याभिप्रायमाह—**नहि योषिदादिष्विति** ।। अशक्यार्थोपदेश इत्ययुक्तम्; योषिदादिवदेव प्रपञ्चस्य ब्रह्मात्मतया ज्ञातुं शक्यत्वात् । पूर्वपक्ष एवेदं वक्तव्यम्, केन विशेषेणेहोच्यते ? इत्याशङ्क्यावतारयति—**उभयथाऽपि धात्वर्थेति** ।। "नहि वस्तु वस्त्वन्तरात्मने"ति पुनरुक्तम्, "अशक्यार्थे"त्यनेनाशक्यत्वस्योक्तत्वात्; अयुक्तं च, योषिदादिवदेव ज्ञातुं शक्यत्वात्; इत्याशङ्क्यावतारयति—**ननु योषिदग्न्यादिष्विति** ।। "एवं तर्ही"ति पुनरुक्तम्; अप्रमाणज्ञाने विवक्षिते "अथ ज्ञातव्यः"इत्यनेन, प्रमाणज्ञाने तु विवक्षिते "नहि वस्त्वि"त्यनेन, परिहारोऽपि स एवेत्याशङ्क्यावतारयति—**तर्हि पुरुषस्वरूपेति** ।।

**पञ्चपादिका**

**अभिधानत इति ब्रूमः। एवं तर्हि विधानमनर्थकम्, स्वाध्यायकाल एव निष्पन्नत्वात् ज्ञानस्य। पुनः कर्तव्यतया चोद्यते, यथा मन्त्रेषु।**

**पञ्चपादिकाविवरणम्**

धानेभ्य इत्याह—**अभिधानत** इति ॥ तर्हि विधिनिमित्तप्रतिपत्तिमनपेक्ष्याभिधानप्रमाणादेव ब्रह्मसंवेदने सिद्धे न विधिना कृत्यमित्याह—**एवं तर्हि विधानमनर्थकमिति** ॥ ननु निष्पन्नेऽपि संवेदने पुनस्तादृशं व्यक्त्यन्तरं चोद्यत इत्याह—**पुनः कर्तव्यतयेति** ॥ ननु किं तेन कार्यम्? पूर्वेणैव प्रयोजनसिद्धेरिति? तत्राह—**यथा मन्त्रेष्विति** ॥

अयमर्थः—मन्त्राः स्वाध्यायविधिनैवोपात्ता गृहीतपद-पदार्थसम्बन्धस्य स्वार्थे प्रत्ययमुत्पाद्य व्यवस्थिताः स्वार्थस्याननुष्ठेयत्वाद् ब्राह्मणवाक्यैश्च प्रमितत्वात् प्रवृत्ति-निवृत्तिप्रयोजनशून्या व्यवतिष्ठन्ते। तत्र—"ऐन्द्र्या गार्हपत्यम्", "बर्हिर्देवसदनं दामि", "इमामगृभ्णन् रशनामृतस्येत्यश्वाभिधानीमादत्ते" इत्यादिश्रुति-लिङ्ग-वाक्यादिभिर्व्रीह्यादिवत्कर्माङ्गभावेन विनियुक्ताः प्रधानापूर्वनिर्वृत्ति-द्वारेण प्रयोजनवन्तो 'मन्त्रा' इत्युच्यन्ते। तत्र मन्त्राः केनोप-

**तत्त्वदीपनम्**

प्रमितिं जनयतीति न विधिवैयर्थ्यमित्याशङ्क्याह—**तर्हि विधीति**। ज्ञाने विध्यसंभवान्न विध्यधीनं ज्ञानमित्यर्थः। निष्पादितक्रिये कर्मण्यविशेषाधायिनः साधनस्य साधनत्वं हीयेतेति न्यायविरोधात् "पुनः कर्तव्यतये"त्यनुपपन्नमित्याशङ्क्याह—**ननु निष्पन्न इति** ॥ अनन्यथासिद्धप्रयोजनाभावान्न ज्ञानान्तरकल्पनं युक्तमिति शङ्कते—**ननु तेनेति** ॥ प्रयोजनाभावोऽसिद्ध इति सनिदर्शमाह—**तत्राहेति** ॥

"यथा मन्त्रेष्वि"त्युक्तं विवृणोति—**अयमर्थ इति** ॥ मन्त्राः किमदृष्टार्थाः? उत दृष्टार्थाः? इति संदेहे पूर्वतन्त्रोक्तं पूर्वपक्षमाह—**मन्त्रा** इत्यारभ्य **व्यवतिष्ठन्त** इत्यतः प्राक्तनेन ग्रन्थेन ॥ अङ्गुल्यग्रादिवाक्यसाम्यं व्यावर्तयति—**स्वाध्यायेति**। अध्ययनभावनाभाव्यत्वेन स्वाध्यायमभिदधता स्वाध्यायशब्देन कृत्स्नवेदवाचिना मन्त्राणामपि भाव्यत्वं निर्दिष्टम्, तथाच न नैरर्थक्यमित्यर्थः। नच प्रवर्तकत्वेनार्थवत्त्वमित्याह—**गृहीतेति**। विदितपदपदार्थसङ्गतिकस्य पुंसः प्रतीतिं जनयन्ति मन्त्राः, न तु प्रवृत्तिम्। तत्र हेतुमाह—**स्वार्थस्येति**। गृहीतः पद-पदार्थसंबन्धो येन पुंसा स तथोक्तः। बोधकत्वेनार्थवत्त्वं व्यावर्तयति **ब्राह्मणेति** ॥ तस्माददृष्टार्था मन्त्रा इति पूर्वपक्षे, सिद्धान्तमाह—**तत्रेति** ॥ तत्र मन्त्राः प्रधानापूर्वनिर्वृत्तिद्वारेण प्रयोजनवन्त इत्युच्यन्त इति सम्बन्धः ॥ अपूर्वं फलमिति युज्यतेऽङ्गानाम्, न तु मन्त्राणामित्यत्राह—**श्रुतीति** ॥ तदेवाह—**ऐन्द्र्येति**। ऐन्द्र्येति तृतीयाश्रुत्या इन्द्रलक्षणाग्निप्रकाशिकाया ऋचो गार्हपत्योपस्थाने विनियोगः समधिगतः। तथा पुरोडाशसदनभूतं बर्हिः खण्डयामीति श्रुतपदसामर्थ्याद् बर्हिषो लवने "बर्हिर्देवसदनं दामि"इत्यादेर्मन्त्रस्य विनियोगः। तथा ऋतस्य सत्यफलसाधनभूतस्याश्वस्य इमां रशनां गृहीतवन्त इति मन्त्रस्य "इत्यश्वाभिधानीमादत्ते" इति वाक्याद् रशनाऽऽदाने विनियोगः प्रतीयते। प्रकरण-स्थान-समाख्या आदिशब्दार्थः। प्रधानापूर्वनिर्वर्तकत्वं किं दृष्टद्वारा? उतादृष्टद्वारा? इति वीक्षायामाह—**तत्र मन्त्रा इति** ॥

**ऋजुविवरणम्**

"यथा मन्त्रेष्वि"त्यत्र कस्य पूर्वप्राप्तस्य पुनर्विधानम्? कथं वा प्राप्तिः? किंनिमित्तं पुनर्विधानम्? किंच तत्र विधायकम्? कथं च दृष्टान्त-दार्ष्टान्तिकयोस्साम्यम्? इति न ज्ञायते, अथ ज्ञाने पुनः कर्तव्यतायां दृष्टान्तत्वेनोपादानाद् मन्त्रेषु ज्ञानमेव कर्तव्यतया प्रतीयते; तथापि—

अर्थावबोधे विनियुज्यतेऽसौ स्वाध्यायवाक्यात्सकलो हि वेदः।
मन्त्रे पुनः को हि विशेषहेतुः कर्तव्यता येन तदीयबोधः ॥

इत्याशङ्क्याभिप्रायमाह—**अयमर्थो मन्त्रा इति** ॥

मन्त्रे प्रयोजनाभावो जपार्था वा भवन्तु ते।
पुनःकर्तव्यता नैव तद्बोधे लभ्यते ननु ॥

इत्याशङ्क्याह—**तत्रैन्द्र्येति** ॥ भवत्वेवमपूर्वार्थत्वम्, तथापि कथं पुनर्ज्ञानानुष्ठानलाभ इति? तदाह—**तत्र मन्त्राः केनेति** ॥

### पञ्चपादिका

**प्रयोगवचनस्तत्र विधायक इति ? इहापि प्रयोगवचनो विधायकः ।**

### पञ्चपादिकाविवरणम्

-कारेणापूर्वसिद्धेरुपकुर्वन्ति इति वीक्षायामध्ययनविधेरर्थज्ञानार्थत्वाद् दृष्टोपकारे सत्यदृष्टकल्पनानुपपत्तेस्तेष्वनुष्ठानकाले प्रतिपत्त्यपेक्षस्य द्रव्य-देवतादेः प्रतिपत्तिमुत्पाद्य तद्द्वारेणापूर्वस्योपकुर्वन्तीति कल्प्यते । ततश्च मन्त्रैरेवानुस्मृत्याऽनुष्ठानेऽपूर्वसिद्धिः, न ब्राह्मणवाक्यैः, इति गम्यते । तत्र प्रयोगविधिरङ्गैरपूर्वोपकारं कारयन्मन्त्रैरर्थज्ञानं कारयतीति । तत्र यथा प्रयोगवचनो मन्त्रैः प्रथमोत्पन्नज्ञानातिरिक्तमपूर्वोपकारि ज्ञानान्तरमनुष्ठापयति, एवं ब्रह्मसंवेदनमपरमनुष्ठीयते मोक्षफलायेति ।

ननु युक्तं तत्र स्वार्थे प्रत्ययमुत्पाद्य निवृत्तानां मन्त्राणां श्रुत्यादिविनियोगसामर्थ्यात्प्रयोगवचनेन ज्ञानस्य पुनः कर्तव्यत्वम्, नचात्मज्ञाने प्रयोगवचनोऽस्तीत्याह—**प्रयोगवचनस्तत्र विधायक इति** ।। इहापि तर्हि स सम्पाद्यत इत्याह पूर्ववादी—**इहापि प्रयोगवचनो विधायक** इति ।। कथम् ? 'वेदान्तवाक्यैरात्मज्ञानं कुर्यादि'ति सर्ववेदान्तशब्दकरणविशिष्टोत्पत्तिविधिस्तावदध्याहृतः "सोमेन यजेते"तिवत् । स च विधिः 'कथं ज्ञानं कर्तव्यमितीतिकर्तव्यभेदमीक्षमाणः प्रकरणपठितशमादिविधीन् फलवदात्मज्ञानविधिसन्निहितानितिकर्तव्यतात्वेन विनियोजयन् विनियोगविधिः सम्पद्यते ।

### तत्त्वदीपनम्

अध्ययनविधेरर्थावबोधपर्यन्तत्वेऽपि हुंफडादीनामदृष्टजनत्वम् दृष्टम्, तद्वत् स्यादिति शङ्कायामाह—**दृष्टेति** ।। अपूर्वस्य मन्त्राकाङ्क्षाऽभावान्मन्त्रस्य कथं तदङ्गत्वम् ? इत्याशङ्क्याह—**अनुष्ठान इति** ।। द्रव्यादिप्रतिपत्तेर्ब्राह्मणवाक्यादपि सिद्धत्वान्न मन्त्राकाङ्क्षेत्याशङ्क्याह—**ततश्चेति** । मन्त्राणामानर्थक्यानुपपत्त्या तेनैव द्रव्यादिकं स्मृत्वा कर्मानुष्ठानेऽपूर्वनिष्पत्तिरिति नियम्यत इत्यर्थः । तथाऽपि मन्त्रैरेवानुष्ठानसमयेऽर्थज्ञानं संपादनीयमिति विधिवचनाभावान्न तदित्याशङ्क्याह—**तत्रेति** ।। निर्दिष्टं दृष्टान्तं संक्षेपेण दर्शयन् दार्ष्टान्तिकमाह—**तत्र यथेति** ।।

अपूर्वोपकारिप्रत्ययस्य प्रयोगवचनादनुष्ठेयत्वे श्रुत्यादिकमुपेक्षितं स्यादित्याशङ्क्य तात्पर्यमाह—**ननु युक्तमिति** ।। प्रयोगवचनो ह्यङ्गं प्रयुङ्क्ते । अङ्गत्वं च श्रुत्यादिसमधिगम्यमिति न तद्वैयर्थ्यमित्यर्थः ।। आत्मज्ञाने प्रयोगवचनानुपलब्धेः "इहापि"त्येतदनुपपन्नमित्याशङ्क्यानुपलम्भेऽपि तस्य न्यायकल्प्यत्वान्न विरोध इत्याह—**इहापीति** । प्रयोगविधेरुत्पत्ति-विनियोगाधिकारविधिपुरःसरत्वात्तदभावेऽपि कथं प्रयोगविधिः ? इति शङ्कते—**कथमिति** ।। तदभावोऽसिद्ध इत्याह—**वेदान्तेति** ।। आत्मज्ञानं कुर्यादित्येतावानुत्पत्तिविधिः, तस्य करणाकाङ्क्षां निवारयितुम्—"वेदान्तैरि"त्युक्तम् । करणस्येतिकर्तव्याकाङ्क्षया तत्संबन्धबोधकत्वोपाधावुत्पत्तिविधेरेव विनियोगविधित्वमित्याह—**सर्वेति** । शमादिविधीनां ज्ञानविधिशेषत्वे युक्तिमाह—**फलवदिति** । नियोज्याभावे विध्यनुपपत्तेर्नियोज्यसंबन्धबोधकत्वोपाधौ

### ऋजुविवरणम्

ननु अध्ययनविधेरर्थज्ञानप्रयोजनत्वेऽपि हुंफडादिषु केवलादृष्टजनकत्वं दृष्टम्, तद्वदिहापि स्यादित्याशङ्क्याह—**दृष्टोपकारे सतीति** ।। ननु भवत्वध्ययनविधेरर्थज्ञानार्थत्वम्, भवतु च दृष्टोपकारसंभवः, नैतावता तस्य स्वीकारः; शेषिण आकाङ्क्षितोपकारजनकत्वं हि शेषस्याङ्गीकार्यम्, नत्वन्यापेक्षया संभवमात्रेणैवोपकारलाभः, इत्याशङ्क्याह—**अनुष्ठानकाल इति** ।। ननु अनुष्ठानकाले यद्यपि द्रव्यदेवताप्रतिपत्तिरपेक्षिता; तथाऽपि न मन्त्रैरेव प्रतीतिरिति नियन्तुं शक्यते; ब्राह्मणवाक्यस्यापि प्रतिपत्तिहेतोर्विद्यमानत्वात्, इत्याशङ्क्याह— **ततश्च मन्त्रैरपीति** ।।

"**इहापी**"त्यत्र कस्यायं ग्रन्थ इति वक्तुं न ज्ञायते, नन्वित्यादीनां द्योतकानामभावात्, अतो व्यक्तं करोति—**पूर्ववादीति** । सिद्धान्त्येकदेशीत्यर्थः । ननु नात्र प्रयोगः सम्पादयितुं शक्यते; उत्पन्ने कर्मणि विनियोगोत्तरकालमधिकारसम्बन्धे पश्चात्प्रयोगः, इह तूत्पत्त्याद्यभावादित्याक्षिपति—**कथमिति** ।। **विशिष्टोत्पत्तिविधिरिति**—विशिष्टस्याज्ञातस्य ज्ञापको विधिरध्याहृतः । ननु विशिष्टप्रतीतौ नोत्पत्तिविधित्वं संभवति; स्वरूपज्ञानमात्रहेतुत्वादुत्पत्तिविधेः, इत्याशङ्क्य दृष्टान्तमाह—**सोमेनेति** । "सोमेन यजेते"त्यत्र सोमशब्दस्यार्थान्तरे रूढस्य नामत्वासंभवाद् गुणवाचित्वे पृथगुत्पत्त्यभावाद्विशिष्टोत्पत्तिरप्यङ्गीकृता, तद्वदित्यर्थः । **इतिकर्तव्यभेदमिति**—इतिकर्तव्यमेव भेदे विद्यत इति व्युत्पत्त्या स्वव्यतिरिक्तमे-

**पञ्चपादिका**

**ननु मन्त्रेषु स्वार्थस्यान्यतः सिद्धत्वात् प्रत्ययपरत्वं युज्यते, इह तु स्वार्थविधिपराणां शब्दानां प्रत्ययपरत्वं विरुध्यते ?**

**पञ्चपादिकाविवरणम्**

पुनश्च साङ्गे कर्मणि नियोज्यमधिकारिणं 'ममेदं कर्तव्यमि'ति प्रतिपत्तारमाकाङ्क्षन्नर्थवादगतं मोक्षं रात्रिसत्रन्यायेनोपसंहृत्य 'मोक्षकामो वेदान्तवाक्यकरणैः शमदीतिकर्तव्यतानुगृहीतैरात्मज्ञानं कुर्यादि'ति स एव विनियोगविधिरधिकारविधिः सम्पद्यते। पुनः स एव साङ्गं तत्त्वज्ञानमधिकारिणमनुष्ठापयन्प्रयोगविधिः सम्पद्यत इति।

पुनश्च सिद्धान्ती मन्त्रेभ्यो वेदान्तानां वैलक्षण्यमाह—**ननु मन्त्रेष्वेति** ॥ **प्रत्ययपरत्वमिति**। अपूर्वोपकारि-

**तत्त्वदीपनम्**

विनियोगविधेरेवाधिकारविधित्वमित्याह—**पुनश्चेति** ॥ **नियोज्यमिति**। नियुङ्क्त इति नियोगः प्रेरकः; 'मम प्रेरकोऽयं नियोग' इति नियोज्यत्वेनान्वितमित्यर्थः। **अधिकारिणमिति**। मत्फलसाधनमिदं कर्मेति भोक्तृत्वेनान्वितमित्यर्थः। **'ममेदं कर्तव्यमि'**ति 'मयेदं कार्यमि'ति कर्तृत्वेनान्वितमित्यर्थः। **रात्रिसत्रन्यायेनेति**। 'प्रतितिष्ठन्ति ह वै य एता रात्रीरुपयन्ती'ति श्रूयते। तत्र वर्तमानापदेशित्वेऽप्यपूर्वत्वादुपयन्तीत्यस्य विधित्वं तावत्सिद्धम्। तत्र रात्रिसत्रस्य निरधिकारस्यानुपपत्तेः कश्चिदधिकारी वक्तव्यः। स किं स्वर्गकामः? उत प्रतिष्ठाकामः? इति जिज्ञासायां 'स स्वर्गः स्यात् सर्वान् प्रत्यविशिष्टः' इति न्यायात् स्वर्गकाम इति तावत्प्राप्तम्। "यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं श्रृणोति" तिवत् "प्रतितिष्ठन्ती"त्यस्यापि वर्तमानापदेशत्वात् फलविधित्वानुपपत्तेः स्तुतिमात्रत्वमिति स्वर्गकाम एव नियोज्य इति प्राप्ते, सिद्धान्तितम्—"फलमात्रेयो निर्देशादश्रुतौ ह्यनुमानं स्यादि"ति। वर्तमानापदेशित्वेऽपि श्रुतिसमर्पितं संनिहितं प्रतिष्ठाफलं विहाय भिन्नवाक्योपात्तस्वर्गफलकल्पनाऽयोगात् प्रतिष्ठां फलत्वेनादाय प्रतिष्ठाकामो रात्रिसत्रं कुर्यादिति विधिः विपरिणम्यते। तथा "तरति शोकमात्मवित्" "ब्रह्म वेद ब्रह्मैव भवती"त्याद्यर्थवादसमर्पितं मोक्षं फलत्वेन संगृह्य तत्काम आत्मज्ञानं कुर्यादिति विनियोगविधेरधिकारविधित्वमिति। अनुष्ठानस्य विध्यायत्तत्वादनुष्ठापयितृत्वोपाधावधिकारविधेः प्रयोगविधित्वमाह—**पुनः स एवेति** ॥

"ननु मन्त्रेष्वि"त्येकदेशिनश्चोद्यमिति प्रतिभाति; नन्वित्युपक्रमात्, इति शङ्कायामाह—**पुनश्चेति**। सिद्धान्तोपयुक्तार्थाभिधायित्वादनारम्भवाद्येव सिद्धान्तिशब्देन शब्दित इति द्रष्टव्यम्। मन्त्राणामर्थपरत्वाभावात् प्रत्ययपरत्वम्, वेदान्तानां त्वर्थपरत्वान्न प्रत्ययपरत्वमित्युक्तं टीकायाम्, तदनुपपन्नम्; प्रत्ययपरत्वेऽर्थपरताया अवश्यंभावित्वात्, अन्यथा

**ऋजुविवरणम्**

वाङ्मजातमित्यर्थः। **नियोज्यम्**—कार्यबोद्धारम्, प्रतीत्यनुबन्धिनम्। **अधिकारिणम्** कर्मण्यैश्वर्यवन्तम्, मदर्थं कर्मेति प्रतिपत्तारम्। ननु नियोज्यादधिकारिणो भेदे कथं नियोज्यमधिकारिणमिति सामानाधिकरण्यम्? प्रथमं नियोज्यत्वेनान्वितस्यैवाधिकारित्वेनान्वयादिति ब्रूमः। **ममेदं कर्तव्यमिति प्रतिपत्तारमिति** नियोज्यस्वरूपप्रदर्शनम् ॥ **रात्रिसत्रन्यायेनेति**। स चैवम्—रात्रिसत्रे श्रूयते, "प्रतितिष्ठन्ति ह वा य एता रात्रीरुपयन्ती"ति। तत्र नियोज्यः कल्प्यः। स च किं स्वर्गकामो भवति? किं वाऽऽर्थवादिकप्रतिष्ठाकामः? इति सन्देहे "सः स्वर्गः स्यात्सर्वान् प्रत्यविशिष्टत्वादि"ति पूर्वाधिकरणन्यायेन स नियोज्यविशेषणीभूतः स्वर्गः स्यात्, "सर्वान् प्रत्यविशिष्टत्वात्" सर्वसाधारणत्वात्, सर्वेषां तदर्थित्वात्; इति विश्वजिदादिन्यायेन पूर्वपक्षं कृत्वा राद्धान्तितम्—"फलमात्रेयो निर्देशादि"ति। आर्थवादिकमेव फलं स्वीक्रियत एवेत्यात्रेयो मन्यते; तस्य निर्दिष्टत्वात् सार्थवादेनैव वाक्येन नियोगः प्रतीयते; सम्भूयकारित्वव्युत्पत्तेः। तेन नियोगोऽर्थवादसामञ्जस्यायार्थवादिकमेव फलं स्वीकरोतीति ॥

"नन्वि"त्युपक्रमाच्चोद्यमेतदिति शङ्कानिवृत्त्यर्थमाह—**पुनश्च सिद्धान्तीति**। सिद्धान्तैकदेशिनिराकरणेन स्वपक्षसाधनस्य प्रकृतत्वात्पूर्वपक्ष्येवात्र सिद्धान्तीत्यभिधीयते। "प्रत्ययपरत्वमिति" विरुद्धमभिधीयते; स्वार्थस्यान्यतः सिद्धत्वे प्रत्ययपरत्वमपि न युज्यते, प्रत्ययपरत्वमेव स्वार्थपरत्वं यतः, इत्याशङ्क्य व्याचष्टे—**प्रत्ययपरत्वमित्यपूर्वोप-**

### पञ्चपादिका

**नैष दोषः; अन्यार्थमपि कृतमन्यार्थं भवति। तद्यथा—शाल्यर्थं कुल्याः प्रणीयन्ते, ताभ्यश्च पानीयं पीयत उपस्पृश्यते च, एवमिहापि। यथा वा पदार्थानां विधायकः शब्दः क्रमस्यापि विधायकः, एवं स्वार्थस्य विधायकः शब्दः प्रत्ययस्यापि विधायको भविष्यति॥**

**तदेतदनिरूपितमिव दृश्यते। कथम्? मन्त्राः स्वाध्यायाध्ययनविधिनोपादापिताः स्वार्थस्यान्यतः सिद्धत्वात् तं प्रमातुमशक्नुवन्तः प्रमाणत्वात् प्रच्युता व्रीह्यादिवत् प्रमेयतामापन्नाः श्रुत्यादिप्रमाणैः युक्तम् यद्विनियुज्येरन्, विनियुक्ताश्चानुष्ठेयस्यानुष्ठानकाले स्मृत्यपेक्षस्य स्मारकतया गृह्येरन्निति; इह तु "इदं सर्वं यदयमात्मे"ति यत् पदसमन्वयनिमित्तं सर्वस्यात्मस्वभावताग्राहि विज्ञानम्, तत् स्वविषयस्यान्यतोऽसिद्धत्वात् प्रमेयपरत्वान्न विधेर्विषयः। अथ विधेर्विषयः, न**

### पञ्चपादिकाविवरणम्

प्रत्ययमात्रे मन्त्राणां तात्पर्यम्, नार्थतथात्व इत्यर्थः। तत्र वेदान्तानां स्वार्थविधिपरत्वं प्रयोजनवदज्ञातार्थावगन्तृत्वादिति। तत्र विधेयप्रत्ययसमर्पणेन विधिपरत्वमज्ञातार्थपरत्वं चोभयं न विरुद्धमित्याह—**अन्यार्थमपि कृतमिति**॥ ननु स्थायिपदार्थानां क्रमेण वा युगपद्वाऽनेकानि कार्याणि सम्भवन्ति, शब्दस्य तु तात्पर्यात् सकृत्कार्यहेतोः कथमुभयपरत्वमिति? तत्राह—**यथा वा पदार्थानामिति**॥

सिद्धान्ती ब्रह्मण्याभिधानिकप्रथमप्रत्ययोपगमेनैव पुरुषार्थसिद्धेर्न मन्त्रेष्विव विधिशेषतयां द्वितीयप्रत्ययायोत्पत्ति-विनियोगाधिकार-प्रयोगविधिकल्पनमपेक्ष्यत इति दर्शयितुं मन्त्रेभ्यो वैलक्षण्यमाह—**तदेतदनिरूपितमिवेति**। विधिविषयसमर्पणेन विधिप्रमितिशेषस्य योषिदग्न्यादिवाक्यस्य तज्जन्यज्ञानस्य वा प्रमेयपरत्वादर्शनादिति वाक्यशेषः। ननु लौकिकप्रमाणगम्यत्वात् प्रमेयस्य तत्परत्वाभावः, इह तु विधि-ब्रह्मणोरलौकिकत्वादुभयपरत्वं स्यादिति?

### तत्त्वदीपनम्

प्रत्ययपरत्वस्यैवानुपपत्तेरिति शङ्कायामाह—**प्रत्ययपरत्वमिति**॥ मात्रचोऽर्थमाह—**नार्थेति**। "वाचं धेनुमुपासीते"त्यादौ स्वार्थाभावेऽपि यथोपास्तिविधिपरत्वम्, तथाऽत्रापीत्यर्थः। भूतार्थत्वाद् वेदान्तानामपि न स्वार्थविधिपरत्वमिति शङ्कायामाह—**तत्रेति**॥ भूतार्थत्वेऽपीत्यर्थः—**स्वार्थविधिपरत्वमिति**॥ स्वार्थबोधपरत्वमित्यर्थः। "अन्यार्थमपि प्रकृतमि"त्यत्रान्यशब्दार्थमाह—**तत्र विधेयेति**॥ **तत्र** वेदान्तेषु। कुल्यादृष्टान्तो विषम इति शङ्कते—**ननु स्थायीति**॥ शब्दस्य क्षणिकत्वान्न क्रमेण कार्यकरत्वमित्याह—**सकृदिति**। स्थायित्वेऽपि शब्दस्य तात्पर्यवृत्त्या बोधकत्वम्। नचोभयत्र तात्पर्यमित्यभिप्रायेणाह—**तात्पर्यादिति**। समिदादयो यागाः **पदार्थशब्दार्थः**। "समिधो यजती"त्यादिवाक्यं **शब्दशब्दार्थः**। एकेन कर्त्रा बहूनां युगपन्निर्वर्त्यत्वानुपपत्तेः क्रमो विधीयते, तद्वदत्रापि विधिपरत्वं प्रमेयपरत्वं चेति **टीकार्थः**॥

वेदान्तानामुभयपरत्वसंभवे चोदिते तदसंभवः पूर्वपक्षिणा प्रदर्शनीयः, किमिदमुच्यते—मन्त्राणामप्रमाणत्वात्कर्मसु विनियोग इति? तत्राह—**सिद्धान्तीति**। अनारम्भवादीति यावत्। ज्ञानस्य विधेयत्वेन प्रमेयपरत्वमित्युक्तम्—"नच प्रमेयमवगमयितुं क्षममि"त्यत्र, तत्र हेतुमाह—**विधिविषयेति**। नियोगो **विधिशब्दार्थः**। योषिदादिदृष्टान्तो विषम इति शङ्कते—**ननु लौकिकेति**॥

### ऋजुविवरणम्

**कारीति**॥ वेदान्तानां कथं स्वार्थपरत्वं निश्चितम्? येन प्रत्ययपरत्वं निराक्रियते, इत्याशङ्क्योपपादयति—**तत्र वेदान्तानामिति**॥

"तदेतदनिरूपितमि"त्यादिना मन्त्रेषु प्रामाण्यच्युतेर्विनियोगः; तेन स्मारकतया ग्रहणमिति प्रदर्शितम्, तदसंगतम्; उभयपरत्वं संभवतीति चोदिते तदसंभवो दर्शनीयः, नान्यप्रदर्शनमुपयुज्यत इत्याशङ्क्यावतारयति—**सिद्धान्ती ब्रह्मणीति**॥ "अथ विधेर्विषयः"इत्यनेन विधिविषयत्वे प्रमेयपरत्वं नास्तीत्युक्तम्, नतु युक्तिरभिहिता। नच वचनमात्रेणार्थसिद्धिः, इत्याशङ्क्य पूरयति—**विधिविषयेति**॥ "न युगपदि"त्यनेनोभयपरत्वमाशङ्क्य वैरूप्यमुक्तम्, तदयुक्तम्; योषिदग्न्यादिवाक्यवदुभयपरत्वाभावस्य पूर्वग्रन्थेनैव सिद्धत्वाद् न पुनः शङ्कोदयः, तेन न युगपत् क्रमविकल्पो युक्त इत्याशङ्क्यावतारयति—**ननु लौकिकेति**। प्रमाणान्तरयोग्ये वस्तुनि न विधेस्तात्पर्यम् तद्विरोधात्, अतिप्रसङ्गाच्चेति

## पञ्चपादिका

**प्रमेयमवगमयितुमलम् । न च युगपदुभयं सम्भवति; वैरूप्यप्रसङ्गात् ॥ नन्वेवं सति गुणकर्मणां सर्वत्र विधानं निराकृतं स्यात् ?**

## पञ्चपादिकाविवरणम्

नेत्याह—**न युगपदुभयमिति** ॥ ज्ञानं प्रति ब्रह्मणः प्रमेयतया प्राधान्यम्, विधेयज्ञानविशेषणतया गुणभावः, प्रमेयत्वादुपादेयता, विधिं प्रत्युद्देश्यता, प्रमेयत्वाद्विधेयता, विधानायानुवाद्यता च, इति ब्रह्मणः स्वज्ञानस्य विधिविषयतया तत्प्रमितिशेषत्वे च प्राधान्योपादेयत्व-प्रमेयत्वानि तद्विरुद्धगुणत्वोद्देश्यत्वानुवाद्यत्वानि चैकस्यां शब्दजन्यप्रमितौ प्रसज्यन्ते । तदिदं वैरूप्यम् । ननु प्रथमज्ञानमर्थपरम्, द्वितीयज्ञानं विधिविषयतया तत्परमित्यविरोधः किं न स्यात् ? न; शब्दस्योभयपरत्वाभावे तज्जन्यज्ञानस्यासकृज्जनितस्याप्युभयपरत्वानुपपत्तेः ।

ननु वैरूप्यप्रसङ्गो न दोषमावहति, अन्यथा गुणकर्मविधानानुपपत्तेरिति चोदयति—**नन्वेवं सति गुणकर्म-**

## तत्त्वदीपनम्

अलौकिकत्वमङ्गीकृत्योभयपरत्वं दूषयति—**नेत्याहेति** । विरुद्धरूपभावो वैरूप्यम्, तत्प्रसङ्गादित्युक्तम्, तत्र किं तद्वैरूप्यम् ? कथं वा तत्प्रसङ्गः ? इत्याशङ्कायामेकस्यैव ज्ञानस्य विधेयपरत्वं प्रमेयपरत्वं च ? अथवैकस्य प्रमेयपरत्वम् ? अन्यस्य विधिपरत्वम् ? इति विकल्पाद्यं दूषयति—**ज्ञानं प्रतीति** ॥ **प्रमेयतयेति** ज्ञानक्रियाजन्यफलशालितयेत्यर्थः । **विधेयज्ञानविशेषणतयेति**—विधेयं यद् ज्ञानम्, तत् प्रति विशेषणम्, तस्य भावः, तत्ता, तयेति विग्रहः । कर्मकारकतया ज्ञानजनकत्वाद् ब्रह्मणो गुणत्वमित्यर्थः । **प्रमेयत्वादुपादेयतेति** प्रमाजन्यातिशयविशिष्टत्वरूपेणोपादेयता साध्यत इत्यर्थः । **विधिं प्रतीति** सिद्धप्रमितिविशिष्टतया सिद्धत्वमुद्देश्यत्वमित्यर्थः । **प्रमेयत्वाद् विधेयतेति**—अज्ञातं हि प्रमेयं भवति, ततश्च प्रमेयत्वाद्विधेयता; अज्ञाततेत्यर्थः । **विधानायाऽनुवाद्यतेति**—विधानाय ज्ञानमुद्देष्टव्यम्, उद्देशश्च ज्ञाते । तथाच सविषयस्योद्देश्यत्वाद्विषयस्याप्युद्देश्यत्वेनानुवाद्यत्वमित्यर्थः । ततः किमिति ? अत आह—**इतीति** । ब्रह्मणः प्रसज्यन्ते इत्यनेन संवन्धः । गुणत्वादिप्रापकमाह—**स्वज्ञानस्येति** ॥ प्राधान्यादिप्रापकमाह—**तत्प्रमितीति** । ब्रह्म तच्छब्दार्थः । अथवा, ज्ञानस्य विधेयत्वाद्विधिप्रमितिशेषत्वे तथा ब्रह्मपरत्वे चाश्रिते सतीति योजना । प्रमेयत्वपदं विधेयत्वपरमिति द्रष्टव्यम् । द्वितीयं पक्षमुत्थापयति—**ननु प्रथमेति** । शब्दानामुभयत्र तात्पर्याभावादेकत्र तात्पर्यं वक्तव्यम्, ततश्च कथं तज्ज्ज्ञानमुभयपरं स्यादित्याह—**न शब्दस्येति** ॥

ननु "एवं सती"ति चोद्यं न फलपर्यवसायि ? अन्यत्र विध्यसंभवमात्रेणात्रोक्तदोषानुद्धरणादित्याशङ्क्य तात्पर्यमाह—**ननु वैरूप्येति** ॥ "यत्रोभयोः समो दोषः परिहारोऽपि वा समः । नैकः पर्यनुयोक्तव्यस्तादृगर्थविचारणे" ॥

## ऋजुविवरणम्

भावः । **प्रमेयतयेति** । प्रमया ईयत इति प्रमेयमिति प्रमायास्तादर्थ्यं प्रतीयते, इति प्रमेयत्वं प्राधान्ये हेतुः । **विशेषणतयेति** । व्यावर्तकत्वेन तादर्थ्यम् । **प्रमेयत्वात्** प्रमाविषयत्वात् । प्रमाजन्यातिशययोगित्वं हि विषयत्वम्, तेन रूपेणोपादेयतया साध्यत इत्यर्थः । **उद्देश्यता** सिद्धता । **प्रमेयत्वाद्विधेयता**—अज्ञातता प्रमेयत्वहेतुः; अज्ञातस्यैव विषयत्वात् । **अनुवाद्यता** ज्ञातता; ज्ञातस्यैवोद्देश्यत्वात् । ब्रह्मणः प्रसज्यत इत्यन्वयः । **प्राधान्योपादेयत्व-प्रमेयत्वानीति** । "ज्ञानं कर्तव्यमि'त्युक्ते कृतेर्ज्ञानार्थत्वाद् ज्ञानस्य च **प्राधान्यम्**, कृतिसाध्यत्वादु**पादेयत्वम्, प्रमेयत्वम्** अज्ञातत्वं तेन रूपेणेति । **तद्विरुद्धेति** । कृतिव्यावर्तकत्वाद् गुणत्वमुद्देश्यत्वं सिद्धत्वमनुवाद्यत्वं ज्ञातत्वमिति । यद्वा, "ज्ञानस्य विधिविषयतये"ति विषयं प्रदर्श्य, "प्राधान्ये"त्यनेन ब्रह्मण्येवोक्तविरुद्धत्रिकस्य संकलय्य सकलस्य प्रदर्शनं कृतम् । ज्ञानभेदे हि सर्वत्र वैरूप्यसंभवान्न दूषणत्वम्, तदर्थमाह—**एकस्यामिति** ॥

"नन्वेवं सती"ति चोद्यं व्यर्थम्; स्वपक्षे दोषपरिहारासाधकत्वात्, नहि तत्र विधानानुपपत्तिप्रदर्शनमेवानेन क्रियते; सिद्धान्तान्तरदूषणरूपनिग्रहस्थानप्रसङ्गात्, इत्याशङ्क्यावतारयति—**ननु वैरूप्यप्रसङ्ग इति** ॥ गुणानां कर्मणां चेति न विवक्षितम्, नापि गुणभूतकर्मणामिति; उभयथाऽपि चोद्यानुदयात्, तेन पारिभाषिकत्वाद् गुणकर्मणामिति पदं

### पञ्चपादिका

**न निराकृतं स्यात्; यत्र प्रमाणान्तरसिद्धं गुणकर्मणः कर्मकारकम्, तत्र तस्योत्पत्त्याद्यन्यतमफलं तद् विधीयते; यत्र पुनः प्रमाणान्तरादसिद्धो ज्ञानस्य कर्मभूतो विषयः, स तेनैव प्रमीयमाणो न सिद्धवदुद्देश्यः, येन तदुद्देशेन तत्रातिशयाधानाय ज्ञानं विधीयेत ॥**

### पञ्चपादिकाविवरणम्

**णामिति ॥** क्रत्वङ्गभूतकारकसंस्कारार्थानि कर्माणि गुणकर्माणि । तत्र क्रियाजन्यातिशयविशिष्टमेव कर्मकारकं कारकविभक्त्यभिधेयमित्यङ्गीकृत्य वैरूप्यमुच्यते । व्रीहीणां तावत् प्रमाणान्तरसिद्धत्वात् कारकत्वाच्चानुवाद्यत्व-गुणत्वोद्देश्यत्वानि सिद्धानि, विधेयप्रोक्षणजन्यातिशयवत्तया साध्यत्वात् उपादेयत्व-प्राधान्य-विधेयत्वानि विभक्तिसामर्थ्यात्प्रतीयन्ते, इत्येकस्यां प्रमितौ गुणकर्मसु वैरूप्यमिति ॥

तत्र न क्रियाजन्यातिशयो वैभक्तिकः, किन्तु तदर्थक्रियाविध्यनुपपत्तिगम्यः ; अतः शाब्दज्ञाने गुणत्वोद्देश्यत्वानुवाद्यत्वान्येव प्रतीयन्ते, प्राधान्य-प्रमेयत्वोपादेयत्वानि त्वर्थापत्तिप्रमित्यन्तरेऽवभासन्ते, इति ज्ञानभेदान्न वैरूप्यदोष इति परिहरति—**न निराकृतं स्यादिति ॥** इहापि तर्हि ब्रह्मज्ञान-विधेयज्ञानयोर्भेदाद् विरुद्धत्रिकस्य व्यवस्थयाऽवभास इति, नेत्याह—**यत्र पुनः प्रमाणान्तरादिति ॥**

ननु इहापि ज्ञानद्वयमेवेष्यताम्, कस्तर्हि सामग्रीभेदः ? नचैकसामग्रीजन्यज्ञानसहस्रस्यापि प्रमेयभेदः

### तत्त्वदीपनम्

इति न्यायविरोधादेतादृशबोधानुत्थितिरित्यर्थः । गुणकर्मपदस्याप्रसिद्धार्थत्वाद् व्याचष्टे—**क्रत्वङ्गेति ॥** ब्रह्मज्ञानस्य प्रमेयपरत्वाद् विधेयत्वाच्च वैरूप्यं प्रसज्यत इत्युक्ते गुणकर्मविधानानुपपत्तेर्न वैरूप्यप्रसङ्गो दोष इत्युक्तम्, तन्न युक्तम्, तत्र शब्दाद् व्रीहीणां गुणत्वादिकं प्रथते, प्राधान्यादिकं त्वर्थापत्त्येति वैषम्यादित्याशङ्क्याह—**तत्रेति ॥** "व्रीहीनि"ति द्वितीयया कर्मकारकत्वेन प्राधान्यादिकमपि प्रथत इत्यर्थः । वैरूप्यमेव स्पष्टयति—**व्रीहीणामिति ।** अनुवाद्यत्वोद्देश्यत्वयोर्हेतुः प्रमाणान्तरसिद्धत्वम्, गुणत्वे च कारकत्वमिति द्रष्टव्यम् ॥

शाब्द्यामेकस्यां प्रतिपत्तौ प्राधान्यादिप्रतिपत्तेरुपपादितत्वाद् "न निराकृतं स्यादि" त्याद्यनुपपन्नम्, इत्याशङ्क्य प्रतिपत्तिभेदमाह—**तत्र न क्रियते ।** व्रीह्याद्युद्देशेन विहितप्रोक्षणक्रियानिष्पत्त्युत्तरकालमतिशयो जायते, ततश्च व्रीहिमात्रं विभक्त्यर्थं इत्यर्थः । प्रकृतेऽपि ज्ञानभेदाङ्गीकारेण गुणकर्मसाम्यं शङ्कते—**इहापीति ।** नच "प्रथमज्ञानमि"-त्यनेन पौनरुक्त्यं शङ्क्यम्; तत्रैकस्मात् शब्दादुत्पन्नज्ञानद्वयस्योभयपरताया निरस्तत्वात् । अत्र च करणभेदेन ज्ञानभेदस्याभिप्रेतत्वादिति द्रष्टव्यम् । करणभेदोऽसिद्ध इत्याह—**नेत्याहेति ॥**

आत्मा, प्रमाणान्तरगम्यः, भूतत्वात्; संमतवत्, इत्याशयेन शङ्कते—**नन्विहापीति ॥** भूतत्वेऽपि प्रमाणान्तरायोग्यत्वान्न तद्गम्यत्वमित्यभिप्रेत्याह—**कस्तर्हीति ॥** सामग्रीभेदाभावेऽपि ज्ञानद्वयं जायतामिति मन्वानं विस्मरणशीलं प्रत्याह—**नचेति ।** एकसामग्र्युत्थज्ञानद्वयस्य प्रमेयभेदपरताऽदृष्टेरित्यर्थः । सामग्रीभेदाभावोऽसिद्ध इति शङ्कते—**अस्तु तर्हीति ।** विधिविधुराणि पदानि स्वारसिकवृत्त्या ब्रह्मज्ञानं जनयन्ति, तच्च स्वतःपुरुषार्थसंस्पर्शमलभमानं विधिद्वारा

### ऋजुविवरणम्

व्याचष्टे—**क्रत्वङ्गभूतेति ॥** कथमत्र वैरूप्यम् ? संस्कारस्य विधिसामर्थ्यलभ्यस्य शब्देन प्रतीत्यभावात्, एकप्रतीतिप्राप्तस्यैव दूषणहेतुत्वादित्याशङ्क्याह—**तत्र क्रियाजन्येति ॥**

"न निराकृतमि"ति कथमुक्तम्, एकप्रमाणगम्यत्वाङ्गीकारेण चोद्यस्य कृतत्वात् ? तथा, "यत्र प्रमाणान्तरसिद्धमि"त्यनेन शब्दव्यतिरिक्तप्रमाणान्तरमुक्तमिति प्रतिभाति, तदयुक्तम्; प्रमाणान्तरस्यादर्शनात्; "उत्पत्त्याद्यन्यतमं फलं विधीयते" इति वदता प्राधान्यादीनां शाब्दत्वमुक्तमिति प्रतिभाति, तथा सति ज्ञानभेदाभावाद् वैरूप्यम्; अतिशययुक्तत्वेन तद्रूपता, तद्युक्तत्वबोधकपदाभावे शाब्दत्वायोगादित्याशङ्क्याह—**तत्र न क्रियेति ॥**

ननु एकयैव सामग्र्या द्विविधं ज्ञानमुत्पाद्यताम्, किं सामग्रीभेदेन ? इत्याशङ्क्याह—**नचैकसामग्रीति ॥** "अथार्थवादे"त्यनेन विधायकपदव्यतिरिक्तपदानां बोधकत्वमर्थवाददृष्टान्तेन चोदितमिव प्रतिभाति; दृष्टान्तसामर्थ्यात्

## पञ्चपादिका

तस्मादत्र युगपदुभयासम्भवाद् भवत्येव वैरूप्यप्रसङ्गः। नच स एव समन्वयः स्वावयवाद्विधेर्विभक्तः कार्यक्षमः; अवान्तरवाक्यस्य प्रमाणत्वायोगात्। अथ अर्थवादपदानामिव परस्परतः संसृज्य कञ्चिदर्थमवबोध्य विधिसम्बन्धमनुभवेदित्यभिप्रायः? तदसत्; युक्तमर्थवादपदानि स्वार्थफलरहितानि तत्र पर्यवसानाभावात् फलवदङ्गतामश्नुवीरन्निति, इह पुनरपरामृष्टविधिः पदसमन्वयः स्वार्थमवगमयन्निरस्तनिखिलप्रपञ्चावग्रहमपास्तातिशयानन्द-नित्यानुभवैकरसं शिवमद्वैतमात्मतत्त्वमवगमयेत्, तत्र कुतो विधिशेषत्वम्, कृतं कृत्यं प्राप्तं प्रापणीयम्? "आत्मलाभान्न परं विद्यते" इति स्मृतेः॥

अथ पुनः शाब्दज्ञानान्न तथाऽनुभवः, तेन साक्षात्करणाय विधिरिति किं तज्ज्ञानमनुभवाय विधीयते—प्रत्यक्षा-

## पञ्चपादिकाविवरणम्

सम्भवति। अस्तु तर्हि विधायकपदव्यतिरिक्तपदसमुदायस्य पृथगेव ब्रह्मस्वरूपं प्रतिपाद्य पुनस्तदनुवादज्ञानं जनयित्वा तस्य विधिविषयत्वसमर्पणेन पुनर्विधायकपदेन पदैकवाक्यतेति, नेत्याह—**नच स एव समन्वय इति**॥ ननु तर्हि विधिपदेन यानि पदैकवाक्यभूतानि, तद्व्यतिरिक्तपदानां पृथगन्वयेन ब्रह्मप्रतिपत्तिशेषतेत्याशङ्कते—**अथार्थवादपदानामिवेति**॥ एवं तर्हि न ब्रह्मवाक्यस्य विधिवाक्यशेषता, नाप्यर्थवादतेत्याह—**तदसत्; युक्तमर्थवादपदानीति**॥ ननु इहापि भूतार्थत्वादर्थवादजन्यज्ञानवद्विधिशेषतेति, नेत्याह—**इह पुनरपरामृष्टेति**। प्रयोजनपर्यन्तत्वाय विधिशेषता, न भूतत्वनिमित्तेति भावः॥

यद्यपि शाब्दज्ञानादग्रहणं निवर्तते; तथाऽपि मिथ्याज्ञान-तत्संस्काराविद्यानिवृत्तिरपरोक्षानुभवात्, तस्य च शाब्दज्ञानादनुत्पद्यमानफलस्य सिद्धये ज्ञानं विधीयत इत्याशङ्कते—**अथ पुनः शाब्दज्ञानादिति**॥ तर्हि विधीयमानज्ञानस्य

## तत्त्वदीपनम्

पुरुषार्थसस्पर्शि, इति विध्येकवाक्यता सत्यादिपदानामित्यर्थः॥ किं पदैकवाक्ये पृथगर्थप्रतिपत्तिमुत्पाद्य विध्येकवाक्यत्वं कथ्यते? आहो वाक्यैकवाक्ये? नाद्य इत्याह—**नेत्याहेति**॥ पदैकवाक्येऽप्यवान्तरवाक्यकल्पनया प्रामाण्याङ्गीकृतौ "न सुरां पिबेदि"त्यादावप्यवान्तरवाक्यकल्पनया तस्य प्रामाण्यमापतेत्, नच तथाऽऽस्थीयते, युज्यते वेति **टीकार्थः**। द्वितीयं पक्षमुत्थापयति—**ननु तर्हीति**॥ दृष्टान्तो विषम इत्युक्तम्—"तदसदि"त्यत्र, तदसंगतम्; अर्थवादपदानामिवार्थवादत्वाद् विधिशेषतया पुमर्थसंस्पर्शित्वादित्याशङ्क्य, असिद्धो हेतुरित्याह—**एवं तर्हीति**॥ प्रकारान्तरेण सत्यादिवाक्यस्य विधिशेषत्वं शङ्कते—**नन्विहेति**॥ विषमो दृष्टान्त इत्याह—**नेत्याहेति**॥ तथाऽप्यनुमानस्य किं दूषणमिति? अत आह—**प्रयोजनेति**। स्वार्थप्रतिपादने फलविधुरत्वमुपाधिरित्यर्थः॥

**टीकायां** 'शिवमि'त्युक्त्याऽऽत्मनः सुखत्वमुक्तम्, तत्राज्ञायमानस्य तस्यापुमर्थत्वाद् ज्ञातत्वम्, तथाचाद्वैतहानिशङ्कायां तत्स्फुरणमर्थ्यते, न तु तद्विषयमित्यभिसन्धिनोक्तम्—**अनुभवेति**॥ आत्मनः सुखत्वात् कथमनुभवैकरसत्वम्? इत्याशङ्क्यानयोरभेदादित्याह—**आनन्देति**॥ तयोः सविशेषत्वात् कथमभेदः? इति शङ्कायामुक्तम्—**अपास्तेति**। तच्चोभयोर्विशेषणम्॥

शाब्दज्ञानादग्रहणस्य निवृत्तत्वात् किं साक्षात्कारेण? इत्याशङ्क्य तात्पर्यमाह—**यद्यपीति**॥ आत्मज्ञानस्य

## ऋजुविवरणम्

सन्निधानसामर्थ्याच्च, तथा सति विषमो दृष्टान्तः; अर्थवादपदानां पृथग्बोधकत्वाभावात्, पूर्वग्रन्थे निरस्तत्वादित्याशङ्क्यावतारयति—**ननु तर्हि विधिपदेनेति**। अर्थवादपदानां कथंचिदन्वयमङ्गीकृत्य दृष्टान्तः, अथवा, अङ्गवैषम्येणार्थवादतुल्यतां कृत्वा विधिवाक्यशेषतामात्रे दृष्टान्त इति ज्ञेयम्। भवतु नामात्मलाभः परमपुरुषार्थः; तथाऽपि भूतार्थत्वनिमित्तं विधिशेषत्वं पराकर्तुं न शक्यत इत्याशङ्क्याभिप्रायमाह—**प्रयोजनपर्यन्तत्वायेति**॥

"अथ पुनरि"त्यत्र "न तथे"ति पूर्वग्रन्थोक्तस्वरूपं निर्दिश्य, तदनुभवनिषेध इति प्रतिभाति, तदयुक्तम्; अनुभवदर्शनात्, "तेन साक्षात्करणाये"ति व्यधिकरणम्; "अनुभवाये"ति वक्तव्यत्वात्, अथ पूर्वमनुभवः साक्षात्कारः, अतस्तन्निषेध इति, तदयुक्तम्; अनुपयोगात्, शब्दादुत्पत्तिसंभवाच्च, विधानसंभवश्चोक्तः; तेन नाधिकं किंचिदित्याशङ्क्याह—**यद्यपीति**॥ "किं तद् ज्ञानमि"ति पृष्ट्वा प्रत्यक्षगोचरत्वनिराकरणं ब्रह्मणोऽसङ्गतम्। नच तन्मुखेन ज्ञानस्वरूपनिराकरणम्; विधीयमानज्ञानजन्यत्वमपरोक्षस्येति चोद्येऽक्षजत्वशङ्कानुदयादसंगतं निराकरणमित्याशङ्क्याह—

### पञ्चपादिका

दीनां तावदगोचरः; "न चक्षुषा गृह्यते" इत्यादिमन्त्रवर्णात्। शाब्दं च नेष्यते भवता ? सत्यम्, न शाब्दज्ञानं विधिविकलमनुभवायालम्, विहितं त्वनुभवहेतुरिति । तदयुक्तम्; यत् तावत् स्वाध्यायाध्ययनविधिग्राहितात् पदसमन्वयात् स्वभावतः समुत्पन्नम्, तत् तावन्न विधीयते; प्रमेयपरतया विधिविषयत्वानुपपत्तेरित्युक्तम् । अथ पुनस्तदेव ज्ञानं सन्तनुयादिति

### पञ्चपादिकाविवरणम्

व्रीह्यादिवत्करणकारकं वक्तव्यम्, तत्र सम्भवतीत्याह—**किं तज्ज्ञानमिति** ॥ ननु प्रत्यक्षादीनामपरोक्षज्ञानसाधनत्वं प्रसिद्धमिति ? नेत्याह-प्रत्यक्षादीनामिति ननु शब्द एवा परोक्षज्ञान साधनं न; पूर्वज्ञानवदतत्फलत्वप्रसङ्गादित्याह—**शाब्दं चेति** ॥ ननु विधीयमानं शाब्दं ज्ञानमिति, किं विधीयमानतयाऽपरोक्षफलं प्राथमिकज्ञानम् ? तत्सन्तानो वा ? न तावत् प्राथमिकमित्याह—**तदयुक्तं यत्तावदिति** । उभयपरत्वे वैरूप्यस्य दर्शितत्वादिति वाक्यशेषः। ननु प्रथमज्ञानेनावगते ब्रह्मणि तदुद्देशेन प्रत्ययसन्तानो विधीयताम्, तत्संस्कारप्रचयादपरोक्षसिद्धेरिति शङ्कते—**अथ पुनस्तदेव ज्ञानमिति** ॥ किमुपासनविधिसामर्थ्यादिदमवगतम् ? किं वा "आत्मन्येवात्मानं पश्येदि"ति दर्शनविधानसामर्थ्यादिति ? न तावदुपासने विधिः श्रूयते; "आत्मेत्येवोपासीत" "आत्मानमेव लोकमुपासीन"

### तत्त्वदीपनम्

विधित्सितत्वात् किं तद् ज्ञानम् ? इति प्रश्नानुपपत्तिमाशङ्क्य तात्पर्यमाह—**तर्हीति** ॥ किं चक्षुराद्यन्यतममात्मप्रतिपत्तौ करणम् ? उत शब्दः ? इति विकल्प्याद्यमुत्थापयति—**ननु प्रत्यक्षेति** ॥ श्रुतिविरोधान्नैवमित्याह—**नेत्याहेति** ॥ द्वितीयमनुवदति—**ननु शब्द एवेति** । शब्दस्य परोक्षज्ञानजननस्वाभाव्यात् तद्वैपरीत्यमयुक्तमित्याह—**न पूर्वेति** ॥ अविहितस्यापि प्रत्ययस्य विहितप्रत्ययवत् शाब्दप्रत्ययत्वादनुभवफलकत्वम् ? इतरस्यापि तत्र स्यादिति टीकाऽनुपपत्तिमाशङ्क्य, सहकार्यपेक्षया शाब्दज्ञानस्यान्यथात्वमिति शङ्कते—**ननु विधीयमानमिति** ॥ शाब्दज्ञानमात्रस्य विधेयत्वानङ्गीकृतेरनुक्तोपालम्भः, इत्याशङ्क्य विकल्पोत्तरपरतया व्याचष्टे—**किं तदिति** । नच शाब्दज्ञानस्य विधेयतोक्तेर्विकल्पानुपपत्तिरित्याशङ्क्य, किं शाब्दज्ञानमात्रस्य विधेयत्वम् ? उतावृत्तिविशिष्टस्येति विकल्पोपपत्तेरिति द्रष्टव्यम्। उभयरूपत्वाभावे हेतुमाह—**उभयपरत्व इति** ॥ अलौकिकात्मज्ञानमात्रस्यासिद्धत्वात् कथं तदुद्देशेन संतानविधानाभिधानम् ? इत्याशङ्क्य टीकार्थं स्पष्टयति—**ननु प्रथमेति** ॥ उत्तरोत्तरज्ञानजनिसमये पूर्वपूर्वज्ञानस्य नष्टत्वात् कथमपरोक्षप्रथोदयः ? तत्राह—**तत्संस्कारेति** ॥ "उपासीते"त्यादिशब्दात् प्रतिपत्तेः "तत्कथं लभ्यते" इत्ययुक्तमित्याशङ्क्य विकल्पपूर्वकं व्याचष्टे—**किमुपासनेति** ॥ **स्वभावसिद्धेति** । अलौकिकात्मप्रत्ययमुपासीतेत्यनूद्य निष्प्रपञ्चात्मा प्रमाणान्तरानधिगत आत्मैवेति वाक्येन प्रतिपाद्यत इत्यर्थः । अलौकिकात्मप्रतिपादकत्वं कस्मात् ? यथाश्रुति तदुपास्तिविधिपरत्वमेव किं न स्यात् ? इत्याशङ्क्याह—**एवकारेति** ॥ ततः किमिति ? अत आह—**वाक्यस्येति** ॥ "यद्वृत्तयोगः प्राथम्यमित्याद्युद्देश्यलक्षणम् । तद्वृत्तमेवकारश्च स्यादुपादेयलक्षणम्" ॥ इत्यभियुक्तोक्तेरित्यर्थः । विशेषणपरत्वादित्युक्तं व्यतिरेकमुखेन द्रढयति—**उभयेति** ॥ "निदिध्यासितव्यः" इति वाक्यादुपासनविधिमवगच्छाम इत्याशङ्क्याह—**निदिध्यासितव्य इति** । "निदिध्यासितव्यः" इत्यत्रापि वाक्येनोपास्तिविधानमिति शेषः । तत्र हेतुमाह—**आत्मेति** । पूर्वोत्तरवाक्ययोरात्मपरत्वादेतदपि तत्परमित्यर्थः । "अधस्तात्समिधं धारयन्ननुद्रवेदि"त्यधोधारणविधिपरेऽपि

### ऋजुविवरणम्

**तर्हि विधीयमानस्येति** ॥ "शाब्दं च नेष्यते" इत्ययुक्तम्; तेन तथैव चोदितत्वात्, अनङ्गीकारे चोत्तरग्रन्थे "सत्यमि"ति चोद्यानुपपत्तिप्रसङ्गादित्याशङ्क्यावतारयति—**पूर्वज्ञानवदिति** ॥ प्रमेयपरस्यैव विधिविषयत्वमपि भवत्विति टीकायामनुपपत्तिमाशङ्क्याह—**उभयपरत्व इति** ॥ "अथ पुनस्तदेवे"त्ययुक्तम्; सिद्धस्यावृत्त्यनुपपत्तेः, इत्याशङ्क्याह—**ननु प्रथमेति** ॥ "तत्कथमि"त्यसम्बद्धम्; उपास्ति-ध्यायत्योर्विद्यमानत्वादित्याशङ्क्य, तस्यार्थान्तरत्वं दर्शयितुं तयोरविधायकत्वं दर्शयति—**किमुपासनाविधीति** ॥ कथमेषामलौकिकात्मविषयत्वप्रतिपादनपरत्वमेव, ननूपासनास्वरूपविधायकत्वमिति ? तदाह—**एवकारविशेषणेति** ॥ सगुणश्रुतौ गुण एव विधिः संक्रामतीत्यर्थः । कथं गुण एव विधिः संक्रामति ? उभयस्य विधेयत्वं कस्मान्नाङ्गीक्रियते, इत्याशङ्क्याह—**उभयप्रतिपादन इति** । भिन्नपदोपात्तयोः सम्बन्धाभावे विशिष्टविध्यसंभव इति भावः । तर्हि विशेषणरहितम् 'उपासितव्यम्' इत्यादिवाक्यं विधायकमस्त्वित्याशङ्क्याह—**आत्मप्रति-**

### पञ्चपादिका

**विधीयते ? तत् कथं लभ्यत उपास्ति-ध्यायत्योर्ज्ञानसन्तानवाचिनोरन्यतरस्याप्युपादानमन्तरेण ? नापि ज्ञानेनैव स्वसन्तानो लक्ष्यते; साहचर्याद्यव्यभिचरितसम्बन्धाभावात् । नाप्यभ्यासात् साक्षाद्भावः सिद्धः ।**

### पञ्चपादिकाविवरणम्

"तमेव धीरो विज्ञाये"त्यादेः स्वभावसिद्धप्रत्ययोपादानेनालौकिकात्मविषयप्रतिपादनपरत्वात् एवकारविशेषणश्रवणाद् वाक्यस्य विशेषणपरत्वात्, उभयप्रतिपादने वाक्यभेदात्, "निदिध्यासितव्यः" इति चात्मप्रतिपादनपरे वाक्यभेदाभावाय स्तुतिपरत्वात् । अथ दर्शनविधिसामर्थ्यादिति ? नेत्याह—**तत्कथं लभ्यत उपास्ति-ध्यायत्योरिति** ।। ननु ज्ञानस्य सर्वत्र प्रवाहेणाविनाभावाज्ज्ञानविधानेन सन्तानविधिर्लक्ष्यत इति ? नेत्याह—**नापि ज्ञानेनैवेति** ।। अथापि कथञ्चिदुपासनविधानं कल्प्येत निदिध्यासनविधेः; तथाप्यपरोक्षफलस्याहेतुत्वादुपासनस्य न शाब्दज्ञानाद्विशेष इत्याह—**नाप्यभ्यासादिति** । अभ्यासस्याप्रमाणत्वाद्विषयस्यासम्प्रयुक्तवाच्च न वस्त्वापरोक्ष्यमभ्यासात्, किन्तु मिथ्याऽऽपरोक्ष्यमित्यर्थः ।।

ननु "ततस्तु तं पश्यते निष्कलं ध्यायमानः" इति ध्यानमपरोक्षफलं श्रूयते ? सत्यम्; एकत्र चित्तस्य समवधानता तदैकाग्र्यनिमित्तं भवति, तदेकाग्रचेतसा सहकारिणा शब्द एव "औपनिषदमि"ति तद्धितप्रत्ययसामर्थ्याद-

### तत्त्वदीपनम्

वाक्ये यथोपरिधारणविधिः, तथाऽत्रापीत्याशङ्क्याह—**वाक्यभेदेति** । तत्रैकार्थ्यासंभवाद् वाक्यभेदः, न तथाऽत्र, तव्यप्रत्ययस्याहार्थेऽपि स्मरणात् स्तावकत्वेनाप्यन्वयोपपत्तेरित्यर्थः । द्वितीयमनुवदति—**अथेति** ।। उपास्तिवाचकपदाभावेऽपि ज्ञानशब्देन तस्य लक्ष्यमाणत्वाद्विधानं युक्तमिति शङ्कते—**ननु ज्ञानस्येति** ।। **अविनाभावादिति** । ज्ञान-प्रवाहयोः साहचर्यमात्रं विवक्षितम्; अनात्मज्ञानवदात्मज्ञानस्यापि प्रवाहसाहचर्यात्, तेन तल्लक्षणेत्यर्थः । प्रवाहाभावेऽपि ज्ञानस्य दृष्टत्वान्न लक्षणेत्याह—**नेत्याहेति** ।। अभ्यासस्याविधेयत्वे साक्षात्कारहेतुत्वं दूरापास्तमित्युत्तरग्रन्थवैयर्थ्यमाशङ्क्योपासनविधिमङ्गीकृत्य तस्य साक्षात्कारहेतुत्वं निरस्यतीत्याह—**अथापीति** ।। **कथंचिदिति** वाक्यभेदेनेत्यर्थः । कामुकस्य कामिनीध्यानात्तदापरोक्ष्यदृष्टेः कथं तस्य तद्धेतुत्वाभावः ? इत्याशङ्क्याह—**अभ्यासस्येति** ।। इन्द्रियसंप्रयुक्तं ह्यपरोक्षम्, नष्टव्यवहितकामिन्यादेरतादृक्त्वान्नापरोक्षत्वमित्य'ह—**विषयस्येति** ।।

आत्मज्ञानाभ्यासस्य साक्षात्कारहेतुतायाः श्रुतत्वात् कथं तदपलापः ? इति शङ्कते—**ननु "तत" इति** ।। अन्तःकरणशुद्धिसमनन्तरमित्यर्थः । श्रवणमात्रमङ्गीकरोति—**सत्यमिति** ।। तर्हीष्टसिद्धिरित्याशङ्क्य, ध्यानं किं साक्षात् साक्षात्कारं प्रसूते ? उत परम्परया ? इति विकल्प्यान्त्यमङ्गीकरोति—**एकत्रेति** । **समवधानता**शब्देन ध्यानं विवक्षितम् । ननु ऐकाग्र्यस्य प्रमाकरणत्वाप्रसिद्धेः कथं तद्द्वारेण साक्षात्कार इति ? तत्राह—**तदैकाग्र्येति** ।। तत्र हेतुमाह—**औपनिषदमिति** ।। एवं कल्पनायां "ध्यायमानः पश्यते"इति श्रुतिः पीडचेतेत्याशङ्क्याह—**ध्यायमान इति** । ज्ञायतेऽनेनेति ज्ञानमन्तःकरणम्, तस्य प्रसाद ऐकाग्र्यम्, तेन सहकारिणा शब्दादात्मतत्त्वं ध्यानवान् पश्यतीत्यर्थः । ध्यानस्य शब्दसहकारित्वमदृष्टचरमिति शङ्कां निरस्यति—**चित्तेति** । स्पष्टदृष्टौ ध्यानानपेक्षायामपि सूक्ष्मदृष्टौ तदपेक्षाऽन्वयाद्यधिगतेरित्यर्थः । परिशिष्टमाद्यं कल्पं प्रत्याह—**दृष्टेनेति** । ध्यानस्य साक्षात्प्रमितिहेतुताया लोकेऽदृष्टत्वात् कल्पनाऽनुपपत्तेरित्यर्थः । अन्वय-व्यतिरेकसिद्धसाधनत्वादपि नाभ्यासे विधिरित्याह—**आपरोक्ष्येति** ।। "मनन-निदिध्यासनाभ्यां सह

### ऋजुविवरणम्

**पादनेति** ।। "नाप्यभ्यासादि"ति व्यर्थम्; अभ्यासस्य विधाननिराकरणे साक्षाद्भावहेतुत्वशङ्काया दूरनिरस्तत्वात्, इत्याशङ्क्यावतारयति—**अथापि कथञ्चिदिति** ।। ननु अभ्यासस्य साक्षात्कारहेतुत्वं दृष्टं कामिनीध्याने, इत्याशङ्क्याभिप्रायमाह—**अभ्यासस्येति** ।।

"नापि श्रूयते"इति ग्रन्थमाक्षिपति—**ननु "ततस्तु तमि"ति** ।। ननु शब्दस्यैवापरोक्षज्ञानसाधनत्वम्, ध्यानस्य तु निमित्तत्वमेवेति वक्तुं न शक्यते; "ध्यायमानः पश्यती"ति साक्षाद्धेतुत्वप्रतीतिविरोधात्, इत्याशङ्क्य व्याचष्टे—**ध्यायमानो ज्ञानेति** ।। ननु ध्याननिरपेक्षशब्दस्य लोके बोधकत्वदर्शनादत्रापि शब्दस्य हेतुत्वे ध्यानस्य वैयर्थ्यमित्याशङ्क्याह—**चित्तैकाग्र्यस्येति** ।। ननु कथमैकाग्र्यद्वारेणैव हेतुत्वम् ? ननु साक्षादित्याशङ्क्याह—**दृष्टोपकारसिद्धाविति** ।। ननु अदृष्टस्य साधनस्त्वस्य कल्पनं नास्ति; विधानसामर्थ्यादेव साधनत्वसिद्धेः, इत्याशङ्क्याह—**आपरोक्ष्यकामस्येति** ।।

### पञ्चपादिका

**नापि श्रूयते, येन तदुद्देशेन ज्ञानसन्तानो विधीयेत। ननु किमत्र श्रवणेन? स्वयमेव साक्षात्कारकरणाय पुरुषार्थत्वादभिमुखः पुरुषः; सिद्धश्च ज्ञानाभ्यासः शास्त्रश्रवणादौ साक्षात्करणे हेतुः यद्येवम्, किं विधिना? स्वयमेव पुरुषार्थे निर्ज्ञाते हेतौ प्रवर्तते। यत् पुनर्निदर्शनम्—शाल्यर्थं कुल्याः प्रणीयन्त इति; युक्तं तत्र; प्रत्यक्षत उभयार्थताया उपलभ्यमानत्वात्, इह पुनर्न्यायतः प्रतिपत्तव्यम्। स च न्यायो न युगपत् सम्भवतीत्युक्तम्।**

### पञ्चपादिकाविवरणम्

परोक्षज्ञामुत्पादयति। ध्यायमानो ज्ञानप्रसादेन पश्यतीति वाक्यस्यान्वयात्। चित्तैकाग्र्यस्य सूक्ष्मवस्तुदर्शननिमित्तत्वात्, दृष्टेनैवोपकारसिद्धावदृष्टकल्पनायोगात्। आपरोक्ष्यकामस्योपासनायां स्वयंप्रवृत्तेः, दृष्टार्थत्वाच्च निदिध्यासनविधानस्येत्युक्तम्। तदेतदाह—**नापि श्रूयत इति**॥ दृष्टसामर्थ्यानुवादत्वाद्वाक्यस्य विधिर्न श्रूयत इत्यर्थः। ननु ऐकाग्र्यद्वारेणापरोक्ष्यनिमित्तत्वाद् दृष्टद्वारेणापि प्रवर्ततामिति चोदयति—**ननु किमत्र श्रवणेनेति**॥ परिहारग्रन्थः स्पष्टार्थः। अतो ज्ञानद्वयाभावादेकस्य ज्ञानस्योभयार्थताऽयोगान्न ब्रह्मज्ञानं विधेयमिति भावः॥ **यत्पुनरिति** स्पष्टार्थः। न

### तत्त्वदीपनम्

श्रवणं नामाङ्गि विधीयते" इत्यत्र निदिध्यासनविधिराश्रितः, ततः कथं तन्निरसनमित्याशङ्क्याह—**अदृष्टार्थत्वादिति**। साक्षादापरोक्ष्यहेतुत्वेन निदिध्यासनं विधीयत इति यन्मतम्, तदत्र निषिध्यते, प्रथमवर्णके तु निदिध्यासनविध्यायत्तं यदिदं चित्तैकाग्र्यलक्षणदृष्टफलसमवाय्यदृष्टम्, तस्मिन् सति शब्दादेवापरोक्षप्रत्ययोत्पत्तेरभिधानान्न किंचिदप्यवद्यमित्यर्थः। दृष्टार्थत्वादिति पाठे कथं स्वतः प्रवृत्तिरिति शङ्कां निराचष्टे—**दृष्टार्थत्वादिति**॥ "ततस्तु तं पश्यते" इति श्रूयमाणत्वात् "नापि श्रूयते" इति कथमुक्तम्? इत्याशङ्क्य, किं ध्यायमान इत्यस्याप्रवृत्तप्रवर्तकत्वम्? उत विधिः? इति विकल्प्याद्यं दूषयति—**दृष्टेति**। ध्यानस्यैकाग्र्यद्वारेण यदिदं ज्ञानहेतुत्वं प्राप्तम्, तदनूद्यत इत्यनुवादाभिप्रायमेतदित्यर्थः। द्वितीयं प्रत्याह—**विधिरिति**॥ विध्यङ्गीकारेणारम्भसमर्थनस्य प्रस्तुतत्वात् "ननु किमत्र श्रवणेने" त्युनुपपन्नमित्याह—**नन्वैकाग्र्येति**। नाप्रवृत्तप्रवर्तकम्, किंतु बोधकमेतदित्यर्थः। समुच्चयार्थेनापिशब्देन विधेरभिधानम्। विधिं विना पुमान् ध्याने कस्मात् प्रवर्ततामिति? तत्राह—**दृष्टेति**। दृष्टमैकाग्र्यं द्वारं कारणं यस्य साक्षात्कारस्य, स तथोक्तः, तेनेति विग्रहः। साक्षात्कारनिमित्तमिति यावत्। तथाऽपि ध्याने प्रवृत्तिः कस्मादिति? अत्राह—**ऐकाग्र्येति**॥ अत्र ध्यानेऽप्रवृत्तप्रवर्तकत्वलक्षणविधिश्रवणेन किं फलिष्यति? न तावत् साक्षात्कृतौ प्रवर्तयतीत्याह—**स्वयमिति**॥ नापि तत्साधनेच्छालक्षणा प्रवृत्तिस्तन्निबन्धना, अन्यतः सिद्धत्वादित्याह—**सिद्ध इति**। तस्मात्तन्निर्वर्तनलक्षणप्रवृत्तेर्विध्यधीनत्वं वक्तव्यम्। तदर्थं विधिकल्पनमिति **टीकार्थः**। फलगुणादिनाऽपि प्रवृत्तिसंभवान्न तदर्थं विधिकल्पनमिति परिहाराभिप्रायः। टीकायामपेक्षितमुपसंवरणं पूरयति—**अत इति**॥ कचिदुभयार्थतादृष्टौ तन्न्यायेनेतरत्रापि तत्कल्पनात् समाध्याभासत्वमाशङ्क्य, किं शब्दस्य क्रमेणोभयार्थत्वम्? उत युगपत्? नाद्य इत्याह—**न स्थायीति**। कुल्यायाः स्थायित्वात् क्रमेणानेकार्थत्वं घटते, न तु शब्दस्य; तात्पर्यवृत्त्या बोधकत्वात्, तात्पर्यस्य चोभयार्थताऽयुक्तेरित्यर्थः॥ (टीकायाम्) **स चे**त्यस्यायमर्थः—कस्तर्हि न्यायः, इत्याशङ्क्य निर्विषयज्ञानविध्यनुपपत्त्योभयार्थत्वमुक्तं स्मरेत्याह—**स चेति**॥ ओमिति चेत्, तत्राह—**नेति**॥ कल्पान्तरमप्यनेन निरस्तमिति॥ वैरूप्यप्रसङ्गेन निरस्तमिति द्रष्टव्यम्। अथवा, अवगमविध्यनुपपत्त्योभयपरत्वं स्वीक्रियताम्, तत्राह—**स चेति**॥ उभयपरत्वे साधको न्यायो नेति कथमुच्यते? तदुपलब्धेरित्याशङ्क्य, विरुद्धत्रिकद्वयापत्तिरूपन्यायान्तरपराहतेनैवमित्याह—**न युगपदिति**॥

### ऋजुविवरणम्

अथवा भवतु नामैकाग्र्यद्वारेण हेतुत्वम्, तथाऽपि विधानस्य विद्यमानत्वात् "नापि श्रूयते" इति ग्रन्थस्यासामञ्जस्यं तदवस्थमित्याशङ्क्याह—**आपरोक्ष्येति**॥ कथं स्वयमेव प्रवर्तत इति? तदाह—**दृष्टार्थत्वाच्चेति**। अदृष्टार्थत्वादिति पाठं नियमादिवैयर्थ्यमिति ज्ञेयम्। "तदेतदाहे" त्युक्तार्थे टीकामवतारयति प्रकृतसमर्थनमस्योपपादनार्थमिति दर्शयितुम्। ननु एवमपि 'न श्रूयत' इति न वक्तव्यम्; श्रवणस्य विद्यमानत्वादित्याशङ्क्यानुवादाभिप्रायमेतत् श्रवणवचनमिति व्याचष्टे—**दृष्टसामर्थ्येति**॥ "ननु किमत्र श्रवणेने" ति चोद्यमनुपपन्नम्; स्वसिद्धान्तविरोधात्, विधिनिष्ठत्वमङ्गीकृत्यैव तत्सिद्धान्तप्रवृत्तेः, इत्याशङ्क्यावतारयति—**नन्वैकाग्र्यद्वारेणेति**॥ शब्दजन्यज्ञानव्यतिरेकेण द्वितीयज्ञानस्य प्रापकं प्रमाणं ज्ञानं

### पञ्चपादिका

**यदपीदमुक्तम्—पदार्थानां विधायकः शब्दः क्रमस्यापि विधायकः; एवमैकात्म्यस्य प्रतिपादकः समन्वयो विधिविषयमपि ज्ञापयिष्यतीति, तदप्यपेशलम् । यत् तावत्प्रत्येकं प्रयाजादिविधयः, तैः पुनर्न तेषामेव विधानम् । नापि ते क्रमशब्दाभिधेयाः । प्रयोगवचनोऽपि प्रयुञ्जानस्तानेव प्रयुङ्क्ते ।**

### पञ्चपादिकाविवरणम्

स्थायिवस्तुदृष्टान्तेन तात्पर्यसापेक्षशब्दव्यापारनिर्णय इत्याह—**युक्तं तत्रेति** ॥

ननु "समिधो यजति", "तनूनपातं यजति", "इडो यजति", "बर्हिर्यजति", "स्वाहाकारं यजती"ति पञ्च वाक्यानि पञ्च पदार्थान् विधाय तेषां क्रममपि विदधति, अतः शब्दस्यैव द्वैयर्थ्यमित्युक्तमनुवदति—**यदपीदमुक्तमिति** ॥ पदार्था एव शब्दगम्याः, क्रमस्त्वर्थापत्तिगम्यो न शब्दगम्य इति परिहरति—**यत्तावत्प्रत्येकमिति** । ये तावदित्यर्थः । **तेषामेव न क्रमस्य विधानमित्यध्याहारः** ॥ किं पदार्थेभ्योऽर्थान्तरभूतस्य क्रमस्य वाक्यैः प्रतिपादनमुच्यते ? किं वा पदार्थमात्रस्यैव क्रमस्य प्रतिपादनमिति ? न तावदुत्तरः कल्प इत्याह—**नापि ते क्रमशब्दाभिधेया इति** ॥ ननु विहितमङ्गं भवति, अङ्गं च प्रयुङ्क्ते प्रयोगविधिः; अतः प्रयोगवचनप्रयोज्यत्वेन क्रमस्यापि विधेयत्वे वाक्येभ्य

### तत्त्वदीपनम्

पदार्थानां विधायकः शब्दः क्रमस्यापि विधायक इत्युक्तम्, तत्र कोऽसौ विधायकः शब्दः ? इति वीक्षायामाह—**ननु समिध इति** ॥ प्रतिवचनस्य प्रश्ननननुसारित्वमाशङ्क्य तात्पर्यमाह—**पदार्था इति** । एकस्य युगपदनेककर्मानुष्ठानानुपपत्त्या क्रमप्रतिपत्तिरित्यर्थः । शब्दस्योभयत्र प्रामाण्यं किं न स्यादित्यत आह—**न शब्देति** । अन्यथासिद्धत्वादित्यर्थः । यच्छब्दस्यैकवचनत्वात् "न तेषां विधानम्" इत्यनेनान्वयोऽयुक्त इत्याशङ्क्याह—**ये तावदिति** । **प्रत्येकमिति**—कर्म कर्म प्रतीत्यर्थः । प्रयाजादिविधिभिः प्रयाजादीनां विधानमङ्गीकृतम्, ततश्च न तेषामेव विधानमित्यनुपपन्नमित्याशङ्क्याह—**तेषामेवेति** ॥ प्रयाजादीनां क्रमशब्दाभिधेयत्वस्य तेनानुक्तत्वात् तन्निषेधोऽसमञ्जस इत्याशङ्क्य, हेत्वन्तराभिप्रायेण विकल्पपूर्वकमवतारयति—**किं पदार्थेभ्य इति** । एकैकपदार्थप्रतिपत्तावपि तदप्रतिपत्तेर्न पदार्थात्मकत्वं क्रमस्येत्यर्थः । आद्यपक्षमुत्थापयति—**ननु विहितमिति** ॥ वाक्यैक्रमस्य विधानमित्यत्र हेतुमाह—**प्रयोगवचनेति** ॥ प्रयोज्यत्वमात्रेण कथं क्रयस्य विधेयत्वम् ? इत्याशङ्क्याह—**अङ्गमिति** ॥ तथाऽपि कथं तस्य विधेयत्वमिति ? तत्राह—**विहितमङ्गं भवतीति** । विहितस्याङ्गत्वादङ्गस्य च प्रयोगवचनप्रयोज्यत्वाद् विधायकान्तरस्यानिरूपणाद् वाक्यमेव विधायकमित्यर्थः । प्रयीगवचनप्रयोज्यत्वमेवासिद्धमित्याह—**नेत्याहेति** ॥ टीकापेक्षितं हेतुमाह—**विहितस्येति** ॥ पदार्थानामेव विहितत्वमसिद्धम्; प्रयोगवचनप्रयोज्यत्वेन क्रमस्यापि विहितत्वादिति मन्वानं प्रत्याह—**अन्यथेति** । **प्रयोगवचनप्रयोज्यत्वेन** विहितत्वेनेत्यर्थः । प्रयोगवचनप्रयोज्यत्वमन्तरेणापि क्रमस्य विहितत्वं सेत्स्यति; इति नेतरेतरा-

### ऋजुविवरणम्

नास्तीत्युक्तम्, नतु तस्य प्रकृतोपयोगः कथितः; अतो ग्रन्थसमुदायस्याभिप्रायमुपसंहारेण दर्शयति—**अतो ज्ञानद्वयेति** ॥

"यत्तावदि"त्यत्र यच्छब्दस्यैकवचनस्य "विधयः" इत्यनेन बहुवचनेनान्वयायोगाद् व्याचष्टे—**ये तावदिति** ॥ "न तेषामि"त्यनेन प्रयाप्तादीनामेवोपात्तत्वेन योग्यत्वाद् निर्देशः, तथा सति तैर्विधिभिस्तेषां प्रयाजादीनां न विधानमित्युक्तं स्यात्, यद्वाऽवधारणेनान्यस्यापि विधानप्रतीतेर्विरोधः, तदर्थमाह—**तेषामेव न क्रमस्येति** ॥ "नापि ते क्रमशब्दाभिधेयाः"इत्यत्र शब्दाभिधेयत्वनिराकरणं दृश्यते, तदप्रस्तुतम्; "प्रयोगवचनोऽपी"त्यनेन प्रयोगविधिप्रयोज्यत्वनिरसनं चायुक्तम्; नहि तेन प्रयोगविधिप्रयोज्यत्वमुक्तम् । यच्च समिदादिवाक्यानां क्रमविधायकत्वं तेनोक्तम्, तच्च न परिहृतम्; अतो व्यर्थो ग्रन्थ इत्याशङ्क्यावतारयति—**किं पदार्थेभ्य इति** ॥ तेषामिति धर्मपक्षस्य प्रकृतत्वेन धीस्थत्वादादौ निर्देशः कृतः, स्वरूपपक्षस्य तु द्वितीयस्यापि निरन्तरत्वादादौ निराकरणं कृतम् । प्रयोगविधिप्रयोज्यत्वनिराकरणमप्रस्तुतम्, तेन हि पदार्थविधायकानामेव क्रमविधायकत्वमुक्तम्; अतः "प्रयोगवचनोऽपी"त्यस्य वैयर्थ्यमिति यदुक्तम्, तत्परिहाराय प्रयोगविधिप्रयोज्यत्वनिराकरणम्, समिदादिवाक्यविधेयत्वनिराकरणार्थं प्रयोगविधिप्रयोज्यत्वेन समिदादिवाक्यविधेयत्वस्य विवक्षितत्वात्; इति प्रदर्शनपूर्वकं द्वितीयं पक्षं परिगृह्णाति—**ननु विहितमिति** ॥ "तानेव प्रयुङ्क्ते"इति प्रतिज्ञामात्रमेव कृतम्, नतु युक्तिरभिहिता; अतस्तद् व्याचष्टे—**विहितस्यैवेति** ॥ भवतु विहितस्यैव प्रयोज्यत्वम्, तथाऽपि

### पञ्चपादिका

**न ते क्रम इत्युक्तम् ॥**

**नच क्रमो नामैकान्ततो नास्त्येव; तद्बुद्धि-शब्दयोर्निरालम्बनत्वप्रसङ्गात्। तत्र क्रमो नाम वस्तुभूतो धर्मो विद्यत एव। त एव केनचिदुपाधिना वनवत् क्रमबुद्धिशब्दालम्बनं भवेयुः। स्मृतिविज्ञानमेव वाऽनुष्ठानकाले यथोपलब्धि**

### पञ्चपादिकाविवरणम्

एवापदार्थस्यापि क्रमस्य विधिरेष्टव्य इति? नेत्याह—**प्रयोगवचनोऽपीति**। विहितस्यैव प्रयोज्यत्वात् पदार्थानामेव विहितत्वादित्यर्थः; अन्यथा विहिते[1] प्रयोगविधिः, प्रयोगविधौ च विधिकल्पनेतीतरेतराश्रयात्। ननु पदार्था एव क्रमः, तस्मात् पदार्थान् प्रयुञ्जानः क्रममपि प्रयुङ्क्त इति? नेत्याह—**न ते क्रम इत्युक्तमिति ॥**

अपर आह—न क्रमो नाम कश्चिदस्ति, एकैकस्मिन् पदार्थेऽदर्शनात्, अनेकपदार्थाश्रयत्वे पदार्थयौगपद्यात् क्रमायोगात्, अयौगपद्ये चोभयाश्रयधर्मायोगादिति। तत्राह—**न च क्रमो नामेति ॥** ननु संयोगवदुभयाश्रयत्वे पदार्थयौगपद्यमित्युक्तम्? तत्राह—**तत्र क्रमो नाम वस्तुभूत इति**। क्रमत्वादेव न यौगपद्यापेक्षेति भावः। ननु देश-काल-वस्तूपाधिपरामर्शमन्तरेण क्रमो न दृश्यत इति? तदाह—**त एवेति ॥** ननु अनुष्ठेयपदार्थानामनिष्पन्नस्वभावत्वाद् न देश-काल-वस्तुक्रम इति? तत्राह—**स्मृतिविज्ञानमेवेति**। पाठक्रम एव स्मर्यमाणोऽनुष्ठेयपदार्थेषूपरज्यत इत्यर्थः।

### तत्त्वदीपनम्

श्रयत्वमिति शङ्कते—**ननु पदार्था इति**। एकैकतरूपलब्धावपि वनानुपलब्धिवदेकैकपदार्थोपलब्धावपि क्रमानुपलब्धिर्युक्तेत्यर्थः। वनस्य तर्वात्मकत्वाभावादनुपलब्धिः, क्रमस्य तदात्मकत्वे तदुपलब्धादुपलब्धिः स्यात्, नच साऽस्ति, इति पदार्थात्मकत्वमसिद्धमित्याह—**नेत्याहेति ॥**

पदार्थविधायकेन क्रमसिद्धिमङ्गीकुर्वता क्रमाभावो नाश्रीयते, ततश्च तन्निषेधोऽनुपपन्न इत्याशङ्क्याह—**अपर आहेति ॥** किमेकैकपदार्थवृत्तिः क्रमः? उतानेकपदार्थवृत्तिः? नाद्य इत्याह—**एकैकस्मिन्निति ॥** द्वितीयेऽपि किं युगपदुत्पद्यमानानेकवृत्तिः? उत क्रमेण? नाद्य इत्याह—**अनेकेति**। **क्रमायोगादिति**—क्रमभवनायोगादित्यर्थः। द्वितीयेऽपि किमपरिसमाप्यानेकत्र वर्तते? उत परिसमाप्य? इति वक्तव्यम्। नाद्य इत्याह—**अयौगपद्य इति**। जाताजातयोः संयोगादृष्टेरित्यर्थः। द्वितीये त्वेकव्यक्त्युपलम्भे 'गौरि'त्युपलब्धिवदेकव्यक्तिप्रतिपत्तावपि क्रमप्रतिपत्तिः स्यादित्यर्थः। उपलभ्यमानोऽपि क्रमो न निरूपणपथमवतरतीत्युक्तमनुवदति—**ननु संयोगवदिति ॥** यौगपद्यप्रसङ्गमुक्तं निरस्यति—**क्रमत्वादिति**। संयोगस्य न संयोगविशिष्टेऽवयविनि वृत्तिः, नापि तदभावविशिष्टे, किंतु प्रयोगयोग्ये; तथा क्रमस्यापि एकक्षणावच्छिन्नपदार्थवृत्तित्वे क्रमत्वव्याघाताद् अयुगपद्भाविपदार्थवृत्तित्वम्। नच—अविद्यमानत्वात् पदार्थानां तदाश्रयत्वं नेति—शङ्क्यम्, अविद्यमानस्यापि प्रतियोगिनोऽभावनिरूपकत्ववद् भविष्यदादेर्व्याप्तिनिरूपकत्ववत् क्रमाश्रयत्वोपपत्तेः। तस्मादयुगपद्भाविष्वपि क्रमोपपत्तिरित्यर्थः ॥ एकदेशतरुव्यतिरेकेण वनानुपलब्धिवत्पदार्थादिव्यतिरेकेण क्रमानुपलम्भात् गौरवाच्च कथं तत्स्वीकरणमिति शङ्कते—**ननु देशेति ॥** इष्टापत्त्योत्तरमाह—**तदाहेति ॥** दृष्टान्तो विषम इति शङ्कते—**नन्वनुष्ठेयेति**। तरूणामेकदेशत्वात् तदुपाधौ वनबुद्ध्यादिविषयत्वम्, समिदादीनां युगपदभावान्नैकदेशकालतया क्रमबुद्ध्यादिविषयत्वमित्यर्थः। स्मृतिज्ञानस्योपलब्ध्यनुरोधेन पदार्थपरामर्शित्वेऽपि कथं पदार्थे क्रमप्रतिपत्तिः? इत्याशङ्क्याह—

### ऋजुविवरणम्

विहितत्वमेव प्रयोगसामर्थ्यान्निश्रीयतामित्याशङ्क्याह—**अन्यथा विहित इति ॥**

कथमस्य वस्तुभूतत्वम्? युगपद्वर्तमानाश्रयाभावात्, असङ्गतश्चायं ग्रन्थ इत्याशङ्क्याभिप्रायमाह—**क्रमत्वादेवेति ॥** "स्मृतिविज्ञानमि"त्यनेन यथोपलब्धिपदार्थपरामर्श उक्तः, नतु क्रमप्रतीतौ निमित्तमुक्तम्, नच पदार्थोपलब्धिनिरूपणमुपयुज्यते, इत्याशङ्क्य व्याचष्टे—**पाठक्रम एवेति**। **ननु क्रमस्येति**। यदि क्रमोऽङ्गीक्रियते, तर्हि विधायकेन भवितव्यम्; तदभावे विधिस्वीकाराभावात्, यथा सति समिदादिवाक्यानामेव विधायकत्वेन दृष्टान्ततेति भावः। **न, क्रमस्येति**। क्रमस्वरूपमेवाङ्गीक्रियते, नतु विधेयता, तेन न विधायकापेक्षेति भावः। तर्हि क्रमाप्रतिपत्तिरेव, प्रतीतौ वा विधेयत्वनिराकरणमित्याशङ्क्याह—**किन्त्वनुष्ठेयेति**। प्रयुक्त्युत्तरकालत्वेन नियोगसिध्द्यर्थत्वाभावादविधेय इति भावः ॥

---

१. प्रयोगवचप्रयोज्यत्वेनेति तत्त्वदीपनादृतः पाठः।

## पञ्चपादिका

पदार्थान् परामृशेत् । सर्वथाऽस्ति तावदेकैकपदार्थालम्बनज्ञानातिरिक्तं ज्ञानान्तरम् । तच्चैकत्वात् कर्तुः, अनेकत्वात् पदार्थानाम्, युगपदनुष्ठानासम्भवादपेक्षितं सन्निहितं च प्रयोगवचनेन गृह्यत इति युक्तम् । न तथेह ज्ञानद्वयमस्ति, यदेकात्म्ये विधिविषयत्वे च वर्तेत । तस्मादिह विधेयाभावाद् विधानाश्रवणात्, अध्याहारे च प्रमाणाभावाद् न प्रयोगवचनोऽस्ति, यो मन्त्राणामिव ज्ञानस्यापि पुनः प्रयोगं विधास्यते । तस्मादसदेतत् कार्यविषयोऽर्थे वेदो वस्तुतत्त्वमनवबोधयति—इति ॥

यत् पुनर्निदर्शनं चक्षू रूपे सति द्रव्यमपि बोधयति, एवं कार्ये सति तत्त्वमपि वेदोऽवगमयतीति; युक्तं तत्र यद्यदवबोधयति चक्षुः, तत्र तत्र स्वतन्त्रमेव प्रमाणम्, इह पुनर्यत्र तात्पर्यम्, तस्य प्रमेयता, न यद्यत् प्रतीयते, तस्य तस्येति वैषम्यम् ॥

## पञ्चपादिकाविवरणम्

**सर्वथेत्युपसंहारः** । ननु क्रमस्य विधायकं वक्तव्यम् ? न; क्रमस्याविधेयत्वात् किंत्वनुष्ठेयविशेषणतया प्रमीयते क्रमः, न विधीयते, अननुष्ठेयत्वात् । केन तर्हि प्रमीयते ? एकस्यानेकपदार्थप्रयोगानुपपत्त्येत्याह—**तच्चैकत्वात्कर्तुरिति** ॥ **सन्निहितं चेति** । अर्थक्रमाभावे पाठक्रम इत्यर्थः ॥ तस्मात् सर्वत्र प्रमाणद्वयेनैव प्रमेयद्वयसिद्धिरिति प्रकरणार्थः ॥

**न तथेह ज्ञानद्वयमित्यारभ्य वेदोऽवगमयतीतिपर्यन्तः** स्पष्टार्थः ॥ प्रतिवस्तुसंप्रयोगं निरपेक्षमेव प्रमाणं चक्षुः, न तथा प्रतिपदार्थे प्रमाणं शब्दः, किन्तु यत्र तात्पर्यम्, तत्र सम्भूयैव प्रमाणमित्याह—**युक्तं तत्र यद्यदवबोधयतीति** ॥

## तत्त्वदीपनम्

**पाठेति** ॥ क्रमविधायकाभावान्न तस्यानुष्ठेयत्वमिति शङ्कते—**ननु क्रमस्येति** ॥ अननुष्ठेयत्वमिष्टमित्याह—**न क्रमस्येति** अक्रियात्वादित्यर्थः । व्युत्क्रमेणाप्यनुष्ठानं स्यादिति ॥ शङ्कते—**किंत्विति** ॥ पाठक्रमानुसारेणार्थेऽपि क्रमप्रतिपत्तेर्न तदपलाप इत्याह—**अनुष्ठेयेति** ॥ अक्रियात्मनोऽपि दध्यादेर्यथा क्रियोपरक्ततया विधेयत्वम्, तद्वदत्रापीति शङ्कां निरस्यति—**न विधीयत इति** ॥ अथवा अतिप्रसङ्गचोदकस्य क्रमे मानं वक्तव्यमिति विवक्षितम् ? उत विधायकम् ? इति विकल्प्याद्यं निराचष्टे—**अनुष्ठेयेति** ॥ द्वितीयं निरस्यति—**न विधीयत इति** ॥ कुतस्तर्हि क्रमप्रतिपत्तिरिति शङ्कते—**केनेति** । पदार्थानामलौकिकत्वात् क्रमस्तावन्न लौकिकः, नापि शाब्दः; तस्यान्यपरत्वा दित्यर्थः । पूर्वोत्तरवाक्ययोरपि क्रमाप्रतिपत्तेः "संनिहितं चे"ति कथमुक्तमित्याशङ्क्याह—**संनिहितं चेति** । **तच्चेत्यादेरयमर्थः**—**तत् ज्ञानान्तरम्** । **प्रयोगवचनेन गृह्यत इति** संबन्धः । प्रयोगवचनस्य न क्रमज्ञानापादकत्वम्; अनुपपत्त्यदर्शनादित्यत्राह—**एकत्वादिति** ॥ व्युत्क्रमेणानुष्ठानेऽप्याकाङ्क्षोपरमशङ्कां निरस्यति—**संनिहितमिति** । अनतिक्रम्येति शेषः । पदार्थानामनिष्पन्नत्वात् तत्क्रमाभावेऽपि पाठक्रममनतिक्रम्य संनिहितमनुष्ठेयमाग्नेयादिप्रयोगवचनेन गृह्यत इति योजना । संनिहितविषयत्वेन संनिहितमिति वा । दृष्टान्तनिरसनोपसंहरणमपेक्षितं दर्शयति—**तस्मादिति** ॥ अथवा, नियोगबोधकेन लिङादिपदेन यथा विषयादिसिद्धिः, तद्वदत्राप्युभयसिद्धिः किं न स्यादिति शङ्कायामाह—**न तस्मादिति** । लिङादेर्नियोगप्रतिपत्तिः, अर्थाद्विषयादिप्रतिपत्तिः, इति प्रमाणभेद इत्यर्थः ॥

चक्षुर्यद्यदवबोधयति, तत्र तत्र स्वतन्त्रमेव प्रमाणमि"त्युक्तम्, तदनुपपन्नम्; संप्रयोगसापेक्षत्वादित्याशङ्क्याह—**प्रतिवस्त्विति** । वस्तु वस्तु प्रति संप्रयोगो विद्यते यस्य, तत् प्रतिवस्तुसंप्रयोगम्, संप्रयोगे सति तावन्मात्रेऽक्षस्य प्रामाण्यं संभवतीत्यर्थः ॥

आभिधानिकप्रत्ययो विधिविषय एवेति कथमुच्यते ? आत्मनोऽपि प्रतिपत्तेरित्याशङ्क्याह—**नन्वाभिधानिकमिति** । यद्यप्यात्मा शब्दात्प्रतीयते; तथाऽपि न तस्य तत्र तात्पर्यमित्यर्थः ॥ किंपरं तर्हि ज्ञानम् ? इति पृच्छति—**किंत्विति** । विधिविषयत्वं कथमिति वीक्षायामाह—**विधायकेति** । प्रमितिविषयत्वं नाम प्रमितिनिर्वाहकत्वमित्यर्थः । अवगमस्य सविष-

## ऋजुविवरणम्

"यद्यदवबोधयती"त्यनेन कथं वैषम्यम् ? यत्र बोधमुत्पादयति, तत्र स्वतन्त्रस्य प्रामाण्यं भवतु, इतरत्र तात्पर्याधीनता प्रमेयस्य भवतु, तथाऽपि यत्र यत्र शब्दो बोधमुत्पादयति, तत्र तत्र चक्षुरिन्द्रियंशब्दबोधकत्वसंभवादुभयपरत्वप्रसङ्गादित्याशङ्क्याह—**प्रतिवस्तुसंप्रयोगमिति** ॥

### पञ्चपादिका

**आह—मा भूद् ज्ञानद्वयम्, योऽयमाभिधानिकः प्रत्ययः, स विधिविषय एव भवतु। तस्मिन् विहितेऽर्थात् सर्वस्यात्मस्वभावता सिध्यति; सविषयत्वादवगमस्य। एवमप्यविवक्षितोऽर्थः शब्दात्, विवक्षितस्त्वर्थादिति शोभतेतरां वाक्यार्थवित्ता !! नच नियोगतः प्रतिपत्तिविधिर्वास्तवं संसर्गं गमयति। भवन्ति हि परिकल्पितविषया अपि प्रतिपत्त्यश्चोदनालक्षणाः फलवत्यः "वाचं धेनुमुपासीते"त्येवमाद्याः। एतदेवात्र युक्तम्; अतत्परस्य प्रत्यक्षादिविरोधे तथाऽध्यवसायहेतुत्वायोगात्।**

### पञ्चपादिकाविवरणम्

ननु आभिधानिकमात्मतत्त्वज्ञानं प्रमेयपरमेव मा भूत्, किन्तु विधिविषयतया विधायकपदजन्यविधिप्रमितिविषयत्वेन विधिशेष इत्याह—**मा भूदिति**॥ कथं तर्हि ब्रह्मात्मसिद्धिरिति ? तत्राह—**तस्मिन् विहितेऽर्थादिति**॥ ननु कस्यानुपपत्त्या तत्त्वसिद्धिरिति ? तदाह—**सविषयत्वादिति**। अवगमसिध्यन्यथानुपपत्त्यैवेत्यर्थः। परिहरति—**एवमप्यविवक्षितोऽर्थ इति**। एकस्मिन् विषये प्रथमप्रतिपत्तिरप्रमाणम्, तस्मिन्नेव द्वितीयज्ञानं प्रमाणमिति, श्रुतिश्च न प्रमाणं श्रुत्यर्थापत्तिश्च प्रमाणमित्यादि विरुद्धमित्यर्थः। किञ्चावगमविधानानुपपत्तिर्नावगम्यस्य वस्तुत्वं गमयतीत्याह—**नच नियोगत इति**॥ ननु ज्ञानस्य स्वतःप्रामाण्यात् तथाभूतार्थतैव युक्ता; अन्यथाऽऽरोपितज्ञानस्य विधौ प्रयोजनाभावादिति, तत्राह—**भवन्ति हि परिकल्पितविषया इति**। आभिधानिकप्रत्ययस्य विधिसंसर्गात् प्रागपि स्वतःप्रामाण्यं किं न स्यादिति भावः। ननु विधेयज्ञानस्यापि स्वविषयप्रमितिरेव दृष्टं फलम्, तत्परित्यज्यारोपितविषयत्वेऽदृष्टकल्पना स्यादिति ? तत्राह—**एतदेवात्र युक्तमिति**। सकलप्रमाणविरोधेन दृष्टकल्पनाददृष्टकल्पनमेव युक्तमित्यर्थः॥

### तत्त्वदीपनम्

यत्वं कथमिति वीक्षायामाह—**अवगमेति**॥ शब्दादप्रतीयमानोऽप्यर्थात् प्रतिपन्न एव, इति परिहारस्याभासत्वमाशङ्क्याह—**परिहरतीति**॥ सम्यक्परिहारत्वमाह—**एकस्मिन्निति**। श्रुत्यनुपपत्तिः किं श्रुतावन्तर्भवति ? उत न ? आद्ये शब्दाद् जायमानस्याद्यज्ञानस्य ब्रह्मण्यप्रामाण्यम्, द्वितीयस्य तु प्रामाण्यमित्यतिसाहसमित्यर्थः। द्वितीयं दूषयति—**श्रुतिरिति**। प्रत्यक्षादिविरोधादनुपपत्तिरपि न प्रमाणमित्यर्थः। 'तत्त्वमस्या'दिना विधिर्न प्रतीयते, तथाऽपि तत् तत्र प्रमाणमिति विरुद्धमित्यादिशब्दार्थः। प्रतिपत्तिविधिना करणेतिकर्तव्यसंसर्गंप्रतिपत्तेर्नियमेन वास्तवं संसर्गं न गमयतीति कथमुक्तम् ? इत्याशङ्क्याह—**किंचेति**। अवगम्यसत्त्वमन्तरेणानुपपत्त्यभावादित्यर्थः। अनुपपत्त्यभावोऽसिद्ध इति शङ्कते—**नन्विति**॥ हेत्वन्तरमाह—**अन्यथेति**॥ **आरोपितज्ञानस्य** आरोपितविषयज्ञानस्य। **प्रयोजनाभावादिति** अत्रोपासनविधिवैयर्थ्यं स्यादित्यनुषङ्गः॥ समारोपितविषयाणामपि वाग्धेन्वाद्युपास्तीनां चोदनाप्रामाण्याद् यथा फलवत्त्वमाश्रीयते, तथाऽत्रापीत्यहा - **तत्राहेति**॥ स्वतःप्रामाण्यात् तथाभूतार्थत्वमित्युक्तं निरस्यति—**आभिधानिकेति**। स्वतःप्रामाण्ये विधिसंसर्गाभावेऽपि तस्य प्रामाण्यं किं नाश्रीयत इत्यर्थः। दृष्टान्तो विषम इति शङ्कते—**ननु विधेयेति**। वाग्धेन्वादेरविद्यमानत्वादारोपितविषयत्वं युक्तम्, आत्मनस्तु परमार्थत्वात् तत्प्रमितिजनकत्वेन ज्ञानस्य फलवत्त्वसंभवे समारोपितविषयत्वेनादृष्टफलकल्पनमयुक्तमित्यर्थः। प्रत्यक्षविरोधात् "वाचं धेनुमुपासीते"त्यादेर्यथा स्वविषयप्रमितिजनकत्वाभावः, यथाऽत्रापीत्याह—**तत्राहेति**॥

### ऋजुविवरणम्

"आह मा भूदि"ति ज्ञानद्वयनिषेधेन कथं चोद्यं क्रियते ? आभिधानिकज्ञानस्य विधिविषयत्वेऽपि प्रमेयपरत्वे परिपन्थ्यभावात्, "तस्मिन् विहिते" इति च व्याहतम्; आभिधानिकज्ञानेन प्रमेयसिद्धावर्थसापेक्षत्वाभावात्, "सविषयत्वादि"ति च विरुद्धो हेतुः; अनुपपत्तिनैरपेक्ष्येण ज्ञानादेव तत्सिद्धिप्रतीतेः, तथा सति ज्ञानद्वयमेव, तच्च पूर्वं निरस्तम्; अतो नाधिकमित्याशङ्क्याह—**नन्वाभिधानिकमिति**॥ "सविषयत्वादि"त्यस्येष्टविघातकारित्वं परिहरति—**अवगमसिध्यन्यथाऽनुपपत्त्येति**॥ "शोभतेतरामि"त्यत्र विरुद्धलक्षणयाऽशोभास्पदत्वमुक्तम्, तत्र कथमशोभनत्वम् ? शब्दादविवक्षायामर्थात्सिद्धिसंभवादित्याशङ्क्याभिप्रायमाह—**एकस्मिन्नेवेति**॥ ननु एकविषयत्वेऽपि पूर्वज्ञानमन्यपरशब्दजन्यतया न प्रमाणम्, द्वितीये तु तात्पर्यात्प्रामाण्यनिश्चयः ? इत्याशङ्क्याह—**किंचावगमविधानेति**। विधितात्पर्यं नास्तीति भावः। **नियोगत इति**। नियमेनेत्यर्थः। ननु तत्राभिधानिकज्ञानस्य विरोधेन प्रामाण्यासंभवात् कल्पितविषयत्वं योषिदादिषु, इह तु संभवात् स्वतः प्रामाण्यमित्याशङ्क्याह—**आभिधानिकेति**॥ भवत्वतत्परत्वादिकम्, तथाऽपि दृष्टफलत्वाधिरोधाददृष्टकल्पनापरिहाराच्च प्रतीतिरेव फलमित्याशङ्क्याभिप्रायमाह—**सकलप्रमाणेति**॥ "आत्मोपासनं मोक्षफलं

### पञ्चपादिका

तस्मात् कार्यनिष्ठे वेदे वस्तुतत्त्वसिद्धिर्मनोरथ एव। अतोऽप्रत्यहंधावसेय एवात्मा। न तस्य शब्दावसेयमतीन्द्रियं रूपान्तरमस्ति; शब्दस्य तत्र सामर्थ्याभावात्। एवं च सति "अयमात्मा ब्रह्म", "एष त आत्माऽन्तर्याम्यमृतः" इति ब्रह्मान्तर्याम्यादिशब्दा अहंप्रत्ययावसेय एवात्मनि कथंचिद् वर्तन्ते। तेन "स आत्मा तत्त्वमसी"ति विद्यमानैरारोपितैश्च गुणैरात्मोपासनं मोक्षफलं च विधीयत इति युक्तम्। अतः कार्यानुरक्तस्य वेदार्थस्य सम्भवात् तस्य च सर्वात्मना विचारितत्वात् किमपरमवशिष्टं यद् ब्रह्मजिज्ञासारम्भं प्रयुञ्जीत ?

उच्यते—स्यादेतदेवम्, यदि सर्व एव वेदार्थो विचार्यत्वेन "अथातो धर्मजिज्ञासे"त्युपक्रान्तः,

### पञ्चपादिकाविवरणम्

**तस्मात् कार्यनिष्ठे वेदे** इत्यनारम्भवादी सिद्धान्त्येकदेशीयदूषणमुपसंहरति॥ ननु वेदान्तानां धर्म-ब्रह्मविषयत्वाभावेऽध्ययनविध्युपात्तानामानर्थक्यं स्यादिति, नेत्याह—**एवं च सत्ययमात्मा ब्रह्मेत्यादिना**। तत्रात्मनो वेदान्तसङ्कीर्तितसमस्तगुण विशिष्टस्योपासनोत्पत्तिविधौ शमादीतिकर्तव्योपसंहारेण विनियोगविधौ मोक्षकामनियोज्यसम्बन्धितया चाधिकारविधौ साङ्गे कर्मण्यधिकारिणोऽनुष्ठापकतया च प्रयोगविधौ वेदान्ताः पर्यवस्यन्ति; तच्च सर्वं निरूपितमिति॥

अत्र किं शब्दानां कार्यान्वितस्वार्थावबोधसामर्थ्यात् सर्वो वेदः कार्यपरतया निरूपित इत्युच्यते ? किं वा सूत्रकाराद्यभियुक्तवचनसामर्थ्यादिति ? न तावत्प्रथमः कल्पः; समन्वयसूत्रे तस्य निराकरिष्यमाणत्वात्। अभियुक्तवचनसामर्थ्याच्चेत्, तत्राह—**स्यातदेतदेवं यदि सर्व एव वेदार्थ** इति॥ ननु धर्मस्यैवोपक्रान्तत्वेऽपि

### तत्त्वदीपनम्

अदृष्टकल्पना स्यादित्युक्तं निरस्यति—**सकलेति**॥ कार्यनिष्ठत्वे वस्त्वसिद्धेर्न कार्यनिष्ठत्वमिति भ्रमं निरस्यति—**तस्मादिति**। कार्यपरत्वं च सिद्धान्त्येकदेशिनोच्यते। तत्र कार्यनिष्ठत्वे वस्तुनिष्ठत्वं न संभवतीति तन्मतनिरसनमित्यर्थः। (टीकायाम्) **अत** इत्यादेरयमर्थः—कार्यनिष्ठं वचो न वस्तुपरं चेत्, कथं तर्ह्यात्मसिद्धिः ? इत्याशङ्क्य, किमात्ममात्रासिद्धिः ? उत विशेषासिद्धिः ? इति विकल्प्याद्यो नेत्याह—**अत इति**। उभयपरत्वानुपपत्तिरतःशब्दार्थः। द्वितीयं निरस्यति—**न तस्येति**॥ "तत्त्वमसि" "अयमात्मा ब्रह्मे"त्यादीनां न वस्तुनि प्रामाण्यम्; अनिष्टे; नापि धर्मे; तस्याप्रतिपत्तेः। अतश्च नास्तिकतुल्यता स्यादिति शङ्कते—**ननु वेदान्तानामिति**॥ "आदित्यो यूपः" इत्यादौ यूपादिशब्दानां यथोपचारादन्यत्र प्रवृत्तिः, तद्वदत्रापीत्याह—**नेत्याहेति**॥ सर्वात्मनेत्यस्यार्थमाह—**तत्रात्मन इति**॥ तत्रेति पदं निरूपितमित्यनेनानुषज्यते। उत्पत्तिविध्यादिः प्रागेव व्याख्यातः॥

"उच्यते" इत्यादिना सर्वस्य वेदार्थस्य न विचारितत्वमित्युक्तम्, तदसाधु; वेदान्तानामुदाहृत्य विचारणाभावेऽपि तेषां विधिपरत्वाद्विध्यपेक्षितन्यायस्य च पूर्वतन्त्रोदीरितत्वेनानारम्भोक्तेरित्याशङ्क्य, कार्यपरत्वमेवासिद्धमित्याह—**अत्रेति**। पूर्वतन्त्र इत्यर्थः। धर्मस्योपक्रान्तत्वेऽपि यथा प्रसङ्गात् प्रतिषेधचोदनार्थौ निरूपितः, तद्वद्वेदान्तार्थोऽपि निरूपित इति शङ्कते—**ननु धर्मस्येति**॥ **प्रासङ्गिकत्वेनेति**। सर्वो वेदो धर्मे प्रमाणमित्युक्ते वेदान्तानां कथं धर्मे

### ऋजुविवरणम्

विधीयते"इत्युक्तम्, ननु तत्र चातुर्विध्यं दर्शितम्। तच्च नियोगवादे विशेषसंभवाद् दर्शयति—**तत्रात्मन इति**॥

"उच्यते; स्यादेतदि"त्यादिः परिहारो न युक्तः; नहि तेन सर्वो वेद उदाहृत्य विचारित इत्याक्षेपः कृतः; किन्तु कार्यनिष्ठत्वाद् वेदस्य कार्योपयोगिसकलन्यायस्य निरूपितत्वादवशिष्टाभाव इति; अतो न युक्तोऽयं परिहार इत्याशङ्क्यावतारयति—**अत्र किं शब्दानामिति**॥ अयमभिप्रायः—

उपेत्य कार्यनिष्ठं हि प्रामाण्यं वेदगोचरम्। मीमांसारम्भ आक्षिप्तो येनैवं पूर्ववादिना॥
विधिप्रयोज्यता नैव विचारस्योपपद्यते। विध्यन्तरहृतो नैव विषयोऽस्य विधेर्भवेत्॥
"अथातो ब्रह्मजिज्ञासे"त्येतत्तेन विधायकम्। न भवेत् तेन शास्त्रस्य पृथगारम्भसंभवः॥
इत्याक्षेपः कृतो नात्र कार्यनिष्ठत्वसाधनात्। सिद्धे वेदस्य कार्यार्थे प्रामाण्ये क्षेपसम्भवः॥
स्यादेतदिति टीकायां तदेवासिद्धमीरितम्॥

### पञ्चपादिका

**विचारियश्च स्यात्, यावता कार्यनिष्ठ एव वेदभागो विचारितः, न वस्तुतत्त्वनिष्ठः ॥**

### पञ्चपादिकाविवरणम्

प्रासङ्गिकत्वेनेदं ब्रह्म निरूपितमिति, नेत्याह—**विचारितश्चेति** ॥ कथमवगम्यते न वेदार्थोपाधौ विचारः प्रवृत्त इति ? सूत्र-भाष्य-वार्तिककारवचनसामर्थ्यादित्याह—**यावता कार्यनिष्ठ एवेति** ॥

अत्रायमाशयः—"अथातो धर्मजिज्ञासा"। धर्ममीमांसाशास्त्रं विषयः। तत् किमारम्भणीयम् ? न वा ? इति विचारः। नारम्भणीयमिति पूर्वः पक्षः; विचार्यमाणार्थनिर्णये प्रत्यक्षादीनामसाधनत्वात् आम्नायस्य चाध्ययनविधिनाऽदृष्टार्थतया विनियोगात्। तदर्थमध्ययनविधिरदृष्टार्थो दृष्टार्थो वा ? इति विचार्यते। दृष्टसाधने विधेरयोगाददृष्टनियमाद् विधिरदृष्टार्थ इति प्राप्तम्। ननु स्वाध्यायोऽध्ययनक्रियाकर्मतयाऽवगम्यमानः संस्कार्यो वा, आप्यो वा,

### तत्त्वदीपनम्

प्रामाण्यम् ? इति शङ्कायां सर्वस्य वेदस्य कार्याधीनत्वात् तच्छेषत्वेन वेदान्तानामपि प्रामाण्यस्याभ्युपगमनीयत्वाद् ब्रह्मणस्तत्र निरूपितत्वमिति भावः। उक्तार्थे विनिगमकारणं पृच्छति—**कथमिति** ॥ विवक्षितवेदान्तार्थनिरूपणमनुपलब्धिविरुद्धमित्याह—**नेत्याहेति**। अनुपलब्धिरसिद्धेत्यभिसन्धिः। "यावते"त्यत्रापेक्षितहेतुमाह—**सूत्रेति** ॥

सामर्थ्यमेव दर्शयति—**अत्रायमाशय इति**। आलम्बनसंभवासंभवाभ्यां चिन्तेति द्रष्टव्यम्। **विचारो** नाम प्रमाणानुग्राहकस्तर्कः। तच्चानुग्राह्यं प्रमाणं प्रत्यक्षादि ? उताम्नायः ? नाद्य इत्याह—**विचार्यमाणेति**। धर्मस्य प्रत्यक्षाद्ययोग्यत्वान्न तेषामनुग्राह्यत्वमित्यर्थः। द्वितीयं दूषयति—**आम्नायस्येति** ॥ अदृष्टार्थतया विनियोगोऽसिद्ध इत्याशङ्क्याह—**तदर्थमिति**। हेतुसिद्ध्यर्थमित्यर्थः। **अध्ययनविधिरिति** तव्यप्रत्ययाभिधेयशब्दभावना कथ्यते। शब्दभावनाभाव्यार्थभावनायाः किमदृष्टं फलं भाव्यम् ? उत दृष्टम् ? इति विमर्शार्थः। अन्तिमं दूषयति—**दृष्टेति**। अन्वयव्यतिरेकसिद्धफलसाधने विध्यसंभव इत्यर्थः। "व्रीहीनवहन्यादि"त्यत्र दृष्टफलसाधनेऽपि विधिर्दृष्टः इत्याशङ्क्य तत्राप्यदृष्टमस्तीत्याह—**अदृष्टेति** ॥ यत्रादृष्टम् तत्रैव विधिरिति नियमादित्यर्थः। तस्मादाद्यः पक्ष उपादेय इत्याह—**अदृष्टार्थ इति** ॥ किमध्ययनविधेः स्वतन्त्रादृष्टार्थत्वम् ? उत कर्मकारकसमवाय्यदृष्टार्थत्वम् ? इति विकल्प्याद्यं दूषयति—**ननु स्वाध्याय इति** ॥ **अवगम्यमान** इति तव्यप्रत्ययेनेत्यर्थः। क्रियाजनितातिशयशालित्वं **संस्कार्यत्वशब्दार्थः**।

### ऋजुविवरणम्

"ननु धर्मस्ये"त्यनुवादव्याजेन धर्मग्रहणसामर्थ्यात् तयैव विचारितत्वं टीकाकारस्याभिप्रेतमिति दर्शितम्। ननु धर्मोपक्रमात्सर्ववेदार्थस्य विचारितत्वं नास्तीति वक्तुं न शक्यते, किन्तु वेदार्थोपाधौ विचारप्रवृत्त्यभावे; इतरथा वेदार्थ एव धर्मशब्दः कया विवक्षया प्रयुक्तः; तावन्यात्र एव वेदार्थ इति वक्तुं शक्यत्वादिति पृच्छति—**कथमवगम्यत इति** ॥ "यावता कार्ये"ति परिहारो न युक्तः; "विचारितः" इत्यनेन वेदार्थोपाधिविचारप्रवृत्त्यभावे प्रमाणानुपन्यासात्, तथा येन केनचिद्विचारितत्वे प्रमादादपि तथा विचारित इति वक्तुं शक्यत एव, तदर्थमवतारयति—**सूत्र-भाष्य-वार्तिकेति** ॥

एवमपि व्यधिकरणोऽयं परिहारः; कार्यनिष्ठस्यैव विचारित्वं वेदार्थोपाधिविचारं न निवारयति, वेदार्थोपाधौ विचारं प्रक्रम्य तथा विचार इति वक्तुं शक्यत्वात्; अतः कथं तद्वचनसामर्थ्यादप्येकदेशविचारोऽयम्, न सर्ववेदार्थविचार इति सिध्यति ? इत्याशङ्क्याभिप्रायमाह—**अयमाशय इति** ॥ अथवा, यावता 'कार्यनिष्ठ' इति व्यर्थम्; पूर्वग्रन्थेनैव सर्ववेदार्थस्य विचारितत्वं निराकुर्वता कार्यनिष्ठस्यैव विचारितत्वमुक्तम्, अथ तत्र वेदार्थस्य विचारितत्वं नास्ति, किन्त्वेकदेशस्येति प्रतीयते; तथाऽपि धर्मग्रहणसामर्थ्याद् एकदेशविशेषोऽपि निश्चित एव; अतो व्यर्थं इत्याशङ्क्यावतारयति—**कथमवगम्यत इति** ॥ "यावता कार्यनिष्ठ एवे"त्यनेन प्रतिज्ञा, उत्तरेण विचारस्वरूपप्रदर्शनमिति प्रतिभाति; तथा सति "कथं धर्मो नामे"त्यादिनैव ग्रन्थेनालम्, किं "तथाहि शास्त्रारम्भः" इत्यनेन, पुनरुक्तत्वादित्याशङ्क्याभिप्रायमाह—**अयमाशय इति** ॥ **आम्नायस्येति**। अध्ययनस्यादृष्टार्थत्वे यदैकस्मादपूर्वम्, 'तदेकतरत्तदर्थमि'ति न्यायेनानर्थपरः स्वाध्यायो न विचारार्ह इति भाव। **अध्ययनविधिरदृष्टार्थो दृष्टार्थो वेति**। "स्वाध्यायोऽध्येतव्यः"इत्यत्र तव्यप्रत्ययव्यापारः शब्दभावना, तद्भाव्यपुरुषप्रवृत्तिलक्षणार्थभावनाया अंशत्रयाकाङ्क्षिण्याः किमदृष्टफलं भाव्यम् ? उत दृष्टमित्यर्थः। **दृष्टसाधन इति**। अप्रवृत्तप्रेरणात्मको विधिरिति निर्णीतम्, स तु दृष्टफलसाधने विधित्वव्याघाताददृष्ट-

## पञ्चपादिकाविवरणम्

इति दृष्टसम्भवे कथमदृष्टार्थता सम्भवेत् ? न; संस्कृतस्य क्रत्वन्तरे विनियोजकप्रमाणाभावात्, अवाप्तस्य च निष्फलत्वात्। ननु अवाप्तादाम्नायात् फलवदर्थावबोधे दृष्टफले नादृष्टं कल्पयितुं शक्यते ? न; दृष्टफलसाधनेऽन्यत एव प्रवृत्तेर्विधिवैयर्थ्यप्रसङ्गात्। ननु कर्मकारकप्रधानस्याध्ययनस्य कथं स्वतन्त्रादृष्टफलत्वं कल्प्येत ? न; कर्मकारकस्य वैफल्यात् सक्तुन्यायेन 'स्वाध्यायेनाधीयीते'ति वैपरीत्यकल्पनात्। ननु न श्रूयते फलमध्ययनस्यार्थवादेऽपि ? तन्न; जपाध्ययनफलस्य घृतकुल्यादेरध्ययनत्वसामान्येन प्रथमाध्ययनेऽप्यतिदिश्य रात्रिसत्रन्यायेन 'घृतकुल्यादिकामः स्वाध्याये-नाधीयीते'ति फलविपरिणामात्। संस्कारकर्मत्वाभावाच्च न फलश्रुतेरर्थवादता। ननु अदृष्टार्थत्वेऽपि स्वाभाविकस्या-

## तत्त्वदीपनम्

अवाप्तिः स्वाधीनोच्चारणक्षमत्वम्, तद्विषयत्वमवाप्यत्वमित्यर्थः। कर्मकारकगतत्वेन दृष्टस्यातिशयस्यात्र संभवात् कथं स्वतन्त्रादृष्टार्थत्वमित्याह—**इतीति**॥ दृष्टसंभवोऽसिद्ध इत्याह—**न संस्कृतस्येति**। क्रतौ विनियुक्तस्य विनियोक्ष्य-माणस्य वा संस्कारो दृष्टः, स्वाध्यायश्च न तादृशः, इति न संस्कार्यत्वमित्यर्थः। सुख-दुःखप्राप्ति-निवृत्त्योरन्यतरस्य फलत्वात् स्वाध्यायाप्तेश्चानीदृक्त्वाद् नाप्तेरपि फलत्वमित्याह—**अवाप्तस्येति**॥ अवाप्तेः स्वरूपेणाफलत्वेऽपि प्रणाड्या फलत्वमस्तीति शङ्कते—**नन्विति**॥ फलत्वमङ्गीकृत्य विधित्वं दूषयति—**न, दृष्टेति**॥ **अन्यत** इति—रागादिनेत्यर्थः। "व्रीहीनवहन्यात्" इति कर्मकारकसमवाय्यदृष्टार्थो यथा विधिः, तद्वत् "स्वाध्यायोऽध्येतव्यः" इत्यत्राप्यवाप्तस्वाध्याय-समवेतादृष्टार्थत्वेन विधिरर्थवान् स्यादिति चेत् ? मैवम्; वैषम्यात्, "व्रीहिभिर्यजेते"ति व्रीहीणां दर्श-पूर्णमासापूर्वे विनियुक्तानां कथमपूर्वसाधनत्वम् ? इति वीक्षायां पुराडाशादिद्वारेति निश्चीयते। पुराडाशभावश्च तण्डुलनिष्पत्त्या, तण्डुलनिष्पत्तिश्चावहननेनैवेति नियम्यते। नच तथा स्वाध्यायस्यापूर्वाङ्गत्वम्, येनाध्ययने नियमो घटेतेति। तस्मात् कर्मकारकसमवाय्यदृष्टार्थो विधिरित्यमपि पक्षोऽसङ्गत इति द्रष्टव्यम्॥ तव्यप्रत्ययविरोधान्न स्वतन्त्रादृष्टार्थत्वमिति शङ्कते—**ननु कर्मेति**। 'ग्रामो गन्तव्यः' इत्युक्ते यथा गमिक्रियाया ग्रामसमवेतातिशयसाधनत्वम्, तद्वदध्ययनस्यापि स्वाध्यायगतातिशयहेतुत्वस्य तव्यप्रत्ययात् प्रतिपत्तेः कथां स्वतन्त्रादृष्टफलत्वमित्यर्थः। "सक्तून् जुहोति" इत्यत्र सक्तुप्राधान्यभङ्गवत् स्वाध्यायेऽपि प्राधान्यं त्यज्यताम्, क्रियाजनितातिशयानिरूपणादित्याह—**न, कर्मकारकस्येति**॥ वाक्यस्य तर्हि का गतिः ? इत्याशङ्क्याह—**सक्तुन्यायेनेति** अध्ययनविधेर्न स्वतन्त्रादृष्टार्थत्वं फलाश्रवणादिति शङ्कते—**ननु न श्रूयत इति**॥ "यदृचोऽधीते पयसः कूल्या अस्य पितॄन् स्वधा अभिवहन्ती"त्याद्यर्थवादेषु फलं श्रूयत इत्या-शङ्क्य, तस्य नित्यजपाध्ययनविधिफलत्वान्न प्रथमाध्ययनविधिफलत्वमित्याह—**अर्थवादेऽपीति**॥ फलाश्रवणमसिद्ध-मित्याह—**तन्न जपेति**। घृतकुल्यादेरिति कर्मणि षष्ठी। "न स पापं श्लोकं शृणोति"त्यादिफलश्रवणस्य यथाऽविद्य-मानार्थवादत्वम्, तद्वदस्यापीत्याशङ्क्याह—**संस्कारेति**। विनियुक्त-विनियोक्ष्यमाणयोः संस्कारो दृष्टः, स्वाध्यायस्य चातथात्वान्न तदध्ययनस्य संस्कारकर्मत्वम्। तथाऽद्रव्यत्वात् क्रत्वनङ्गत्वाच्च न तत्फलश्रुतेरर्थवादता। इतरस्य तु वाक्यात् क्रत्वङ्गतायां सिद्धायां पर्णतादिफलश्रवणस्यार्थवादत्वं घटत इत्यर्थः। श्रुतव्याकरणस्य वैदिकपदश्रवणादर्थ-प्रतिपत्तिर्जायमाना लक्ष्यते, अतश्चाम्नायमूलविचारप्रवृत्तिरिति शङ्कते—**नन्वदृष्टेति**॥ अङ्गुल्यग्रादिवाक्योत्थप्रतिपत्ति-

## ऋजुविवरणम्

मवलम्बत इति भावः। **ननु स्वाध्याय इति**। दृष्टं निर्वर्त्यमत्र नास्ति, ततोऽदृष्टार्थत्वमुक्तम्—"धर्ममात्रे तु कर्म स्यादि"-त्यत्र, अत्र तु दृष्टमस्तीति भावः। **दृष्टफलसाधन इति**। मा भूद्विधिः; अध्ययनेनैव स्वाध्यायमर्थाववोधं वा भावयेदिति नियमविधिरस्तु, मैवम्; तयोः श्रवणादिनापि सिद्धिदर्शनेन मानान्तरविरोधाद् न नियमः स्यात्; अनारभ्याधीतत्वात्, क्रतुसंस्पर्शाभावाद् न नियमसंभव इति भावः॥ ननु अनन्यनिष्ठभावार्थेऽदृष्टार्थत्वमुक्तम्, इह त्वन्यनिष्ठ इति चोदयति—**ननु कर्मकारकेति**॥ **जपाध्ययनफलस्येति**। अयमर्थः—स्वाध्यायविधिर्हि स्वाध्यायकरणिकामध्यनभावनां विदधाति। सच भाव्यमाकाङ्क्षमाणोऽध्ययनत्वं स्वाध्यायपदयुक्तत्वं वा चोदनालिङ्गमतिदेशप्रमाणमपेक्ष्य घृतकुल्यादिकं स्वीकरोतीति। अयं च भट्टोम्वेकपक्षः। अन्ये तु यस्यैवान्यथाऽभिप्रायमाहुः—फलार्थवादयोर्नातिदेशः संभवति; विश्वजिदादिष्वधिकारिकल्पनानुपपत्तिप्रसङ्गात्, तेन न घृतकुल्यादिफलत्वं विवक्षितम्, किन्तु स्वर्गादिफलत्वमेवेति। तस्मिंश्च पक्षे इदमुपलक्षणमात्रमिति मन्तव्यम्। ननु इयं फलश्रुतिरपापश्लोकश्रवणवदर्थवादरूपा फलं समर्पयितुं न

### पञ्चपादिकाविवरणम्

-र्थावबोधसामर्थ्यस्य का हानिः ? न; विषनिर्हरणादिकार्यान्तरे विनियुक्तानां मन्त्राणामर्थविवक्षाप्रतिबन्धदर्शनात्। तस्मादाम्नायस्यार्थविवक्षाऽभावात्, प्रत्यक्षाद्यविषयत्वात्, प्रमाणानुग्राहकत्वाच्च विचारस्य, निरालम्बनो धर्मविचारो नारब्धव्य इति प्राप्तम् ॥

आरम्भणीय एवायं विचार इति सिद्धान्तः; तस्य स्वाध्यायाध्ययनविधिप्रमितकर्तव्यत्वात् ॥ ननु निरालम्बनत्वमुक्तम् ? न; आम्नायस्यालम्बनत्वात्। ननु अदृष्टार्थोऽसौ दर्शितः ? न; अध्ययनस्य कर्मकारकप्रधानत्वात् स्वतन्त्रादृष्टार्थत्वायोगात्। ननु कर्मकारके न किञ्चित् प्रयोजनमस्तीत्युक्तम् ? न; उभयस्याप्युपपत्तेः—अध्ययनेन दृष्टद्वारेणाप्यते, साङ्गाध्ययनविधिसामर्थ्यात् संस्क्रियते च स्वाध्याय इति। ननु संस्कृतस्य विनियोगाभाव उक्तः ? न; क्रतुविध्युपादानप्रमाणादेव विनियोगसिद्धेः। क्रतुविधिर्हि स्वविषयावबोधमाकाङ्क्षमाणस्तस्य जनकतया संस्कृतं स्वाध्यायमुपादत्ते। ननु उपादानप्रमाणं ज्ञानस्य जनकतया स्वाध्यायमात्रमादत्ते, न संस्कारमिति ? सत्यम्; अध्ययनविधि-

### तत्त्वदीपनम्

वदाभासत्वेनाप्याम्नायार्थप्रतिपत्तिर्घटत इत्याशयेनाह—**न विषेति**। अर्थविवक्षायाः प्रतिबन्धोऽभावः, तस्य दृष्टेरित्यर्थः। पूर्वपक्षमुपसंहरति—**तस्मादिति**। अदृष्टार्थत्वं **तच्छब्दार्थः**। **अविषयत्वादित्यत्र** विचार्यमाणार्थस्येति शेषः। प्रमाणवदेव विचारस्यापि स्वातन्त्र्येणार्थसाधकत्वात् किमालम्बनान्वेषणेन ? इत्याशङ्क्याह—**प्रमाणेति**। प्रमाणप्रतिपन्नार्थसंभवासंभवसाधकत्वस्वाभाव्याद् विचारस्यानुग्राह्यं वक्तव्यम्, नच तदस्तीति विचारानारम्भ इत्यर्थः ॥

**स्वाध्यायाध्ययनविधिप्रमितकर्तव्यत्वादिति**। "अध्येतव्यः" इति तव्यप्रत्ययाभिहितशब्दभावना भाव्यं विनाऽनुपपद्यमाना पुंस्प्रवृत्तिलक्षणामर्थभावनामुत्पादयति, सा च भाव्यं विनाऽनुपपन्ना, इति यो भाव्यत्वेन संबध्यते, तस्य फलवदर्थावबोधपन्तत्वाभावे भाव्यतार्यनुपपत्तेरर्थावबोधपर्यन्तताऽऽक्षिप्यते ; अर्थनिर्णयस्य च विचाराधीनत्वाद् विचारकर्तव्यतामध्ययनविधिराक्षिपतीत्यर्थः। स्वाध्यायस्याविवक्षितार्थत्वान्न तदर्थनिर्णयार्थं विचारप्रवृत्तिः, अर्थभावनाभाव्यं त्वन्यदेव किंचिदित्यभिसन्धाय शङ्कते—**नन्विति** ॥ गूढाभिसंधिरुत्तरयति—**नाम्नायस्येति** ॥ यथाश्रुतमादाय शङ्कते—**न दृष्टार्थ इति** ॥ सिद्धान्ती स्वाभिसन्धिमुद्घाटयति—**नाध्ययनस्येति** ॥ क्रियाजन्यातिशयशालिनः कर्मकारकत्वात् स्वाध्याये चातिशयानिरूपणाद् नास्य कर्मकारकत्वमिति शङ्कते—**ननु कर्मकारक इति** ॥ अतिशयानिरूपणमसिद्धमित्याह—**नोभयस्येति**। अवाप्ति-संस्कारलक्षणातिशयस्येत्यर्थः। तदेव विवृणोति—**अध्ययनेनेति**। **अवाप्तिः** स्वाधीनोच्चारणक्षमत्वम्, तदर्थो वाङ्मनसव्यापारोऽ**ध्ययनमिति** विभागः। **दृष्टद्वारेणेति**। प्रथमं पाद आप्यते, अनन्तरमर्धर्चः, ततः पूर्णमाप्यते, इति क्रमेण सकलस्वाध्यायावाप्तिरित्यर्थः। **साङ्गेति**—प्राङ्मुखादीतिकर्तव्यतासहितेत्यर्थः। स्वाध्यायस्याविनियुक्तत्वान्न संस्कारः फलमिति शङ्कते—**ननु संस्कृतस्येति** ॥ विनियोगाभावोऽसिद्ध इत्याह—**न क्रतुविधीति**। क्रतुविध्यनुपपत्तिप्रमाणादित्यर्थः। स्वाध्यायमन्तरेण क्रतुविधेरनुपपद्यमानं रूपं न पश्याम इत्याशङ्क्याह—**क्रतुविधिरिति**। करणेतिकर्तव्यताज्ञानाभावेऽनुष्ठानानुपपत्तेस्तज्ज्ञानमवश्यंभावि, तच्च न स्वाध्यायं विना, इति संस्कृतस्वाध्यायाक्षेप ईत्यर्थः। स्वाध्यायमात्राद् बोधोत्पत्तेर्न संस्कारस्याक्षेप इति शङ्कते—**ननूपादानेति** ॥ पाठकादेः स्वाध्यायश्रवणेऽपि बोधानुत्पत्तेः कथं स्वाध्यायमात्रस्य तज्जनकताभिधानमिति ? अत्राह—**न संस्कारमिति** संस्कारमन्तरेणापि साङ्गाध्ययनवतो बोधो युक्त इत्यर्थः। क्रतुविधिः स्वरूपेण न संस्कारमाक्षिपति ? उतान्यापेक्षयाऽपि ?

### ऋजुविवरणम्

शक्नोतीत्याशङ्क्याह—**संस्कारकर्मत्वेति** ॥ ननु अदृष्टार्थत्वेऽपि विचारारम्भः संभवति; विचारानुग्राह्यस्य वेदस्य प्रमाणत्वादिति चोदयति—**नन्वदृष्टार्थत्वेऽपीति** ॥ मा भूदाम्नायस्यार्थविवक्षा, केवलविचार एव कस्मान्न भवति ? इत्याशङ्क्याह—**प्रमाणानुग्राहकत्वादिति** ॥

"क्रतुविध्युपादाने"त्युपादानशब्दः श्रुतार्थापत्त्यभिप्रायेणेति मन्तव्यम्; कथं क्रतुविध्युपादानेन विनियोज्यत्वम् ? नहि क्रत्वपूर्वस्य तेन बिनाऽनुपपत्तिरित्याशङ्क्याह—**क्रतुविधिर्हीति**। **ननूपादानप्रमाणमिति**। श्रुत्यादिसमर्पितस्य विधिना स्वीकारः, नेह तदस्तीति। अनारभ्याधीतश्चाध्ययनविधिः, न क्रत्वनुप्रविष्टः; अतस्ततो न नियमविधिरिति भावः। **अध्ययनविधिसामर्थ्यादिति**। कर्मकारकप्रधानाध्ययनविधानतः शब्दस्वभावसिद्धार्थस्वभावानुरोधेन क्रत्व-

**पञ्चपादिकाविवरणम्**

सामर्थ्यादेव संस्कृतस्वाध्यायजन्यविशिष्टज्ञानवतैवानुष्ठितो यागोऽपूर्वं जनयतीति कल्प्यते । अतो विधिसामर्थ्यमीक्षमाणः क्रतुविधिः स्वविषयज्ञानजनकतया संस्कृतस्वाध्यायमुपादत्ते । ननु स्वतन्त्रादृष्टं कल्प्यतामित्युक्तम् ? न; दृष्टार्थाक्षरस्वीकरण-तज्जन्यज्ञानादिसमवाय्यदृष्टसम्पत्तौ श्रुतविरोधेन कारकवैपरीत्यमादाय स्वतन्त्रादृष्टकल्पनानुपपत्तेः । आधानवदनङ्गस्याप्यध्ययनस्य क्रतूपकारित्वं न विरुध्यते । ननु तव्यप्रत्ययेन प्रकृत्यर्थोपरक्तमपूर्वमेव स्वतन्त्रमभिधीयते ? तन्न अपूर्वाभिधानेऽपि भिन्नपदोपात्तप्रकृत्यर्थोपरक्तापूर्वाभिधानाद् वरमेकपदोपात्तकर्मकारकगतापूर्वाभिधानम् । भावार्थजन्यमपूर्वं न द्रव्यादिजन्यमित्येतावत्, समवायस्तु यत्र क्वापि संभवति । अदृष्टार्थतया च स्वाध्यायस्यार्थविवक्षाऽभावेऽ-

**तत्त्वदीपनम्**

इति विकल्पाद्यमङ्गीकरोति—**सत्यमिति** ॥ द्वितीयं दूषयति—**अध्ययनेति** ॥ वाक्यपाठमात्रजनितज्ञानस्यापूर्वोपकारकत्वे लिखितपाठाद्यवाप्तवेदोत्थज्ञानस्यापूर्वोपकारकत्वसंभवात् साङ्गाध्ययनविधानं न स्यात्, अस्ति च तत् । तस्मात् संस्कृतस्वाध्यायोत्थज्ञानस्यापूर्वजनकत्वमित्यर्थः । तथाऽपि कथं क्रतुविधेः संस्काराक्षेपकत्वमिति ? तत्राह—**अत इति** ॥ **विधिसामर्थ्यमिति**—साङ्गाध्ययनविधिसामर्थ्यमित्यर्थः । दृष्टादृष्टप्रयोजनकल्पनाद् वरं स्वतन्त्रादृष्टकल्पनमित्याशयेनोक्तं चोद्यं स्मारयति—**ननु स्वतन्त्रेति** ॥ "प्रमाणवन्त्यदृष्टानि कल्प्यानि सुबहून्यपी"ति न्यायमभिसन्धाय समाधत्ते—**न दृष्टेति** । दृष्टं यदिदमक्षरस्वीकरणम्, तज्जन्यज्ञानादि, तत्समवायीत्यर्थः । प्रवृत्तिरादिशब्दार्थः । **श्रुतिविरोधेनेति** । "स्वाध्यायोऽध्येतव्यः" इति तव्यप्रत्ययेन कर्मकारकभूतस्य स्वाध्यायस्य प्राधान्यम्, अध्ययनस्य च तच्छेषत्वं लक्ष्यते, तत्परित्यागेन स्वाध्यायस्योपसर्जनत्वमादायाध्ययनस्य स्वतन्त्रादृष्टार्थत्वकल्पनमयुक्तमित्यर्थः ॥ अध्ययनस्य क्रत्वङ्गताऽभावात् कथं तदुपकारकत्वमित्याशङ्क्याह—**आधानवदिति** ॥ अध्ययनस्य स्वाध्यायसंस्कारार्थत्वं तव्यप्रत्ययविरुद्धमिति शङ्कते—**ननु तव्येति** । अवधारणस्योपरक्तमित्यनेनानुषङ्गः । अध्ययनस्यापूर्वद्वारेण फलसाधनत्वं कस्मात् ? स्वाध्यायसंस्कारद्वारेण फलसाधनत्वमेवास्त्वित्याशङ्क्याह—**स्वतन्त्रमिति** । स्वाध्यायासमवेतमित्यर्थः । अपूर्वस्य प्रकृत्यर्थेनान्वयः; तयोः समानपदोपात्तत्वाद् न स्वाध्यायेन भिन्नपदोपात्तेनेत्यर्थः । इष्टसाधनतादेः प्रत्ययार्थत्वान्नापूर्वस्य तदर्थत्वमित्याह—**तन्नेति** ॥ अङ्गीकृत्याह—**अपूर्वेति** । "सुप्तिङन्तं पदमि"ति पाणिनिस्मरणाद् यद्यप्यध्येतव्य इत्येकं पदम्; तथाऽपि "पद गतावि"ति स्मरणाद् बोधकं पदमित्याश्रित्य तव्यप्रत्ययात् प्रकृतेः क्रियाबोधकत्वाद् भिन्नत्वनिर्देश इत्यर्थः । "तयोरेव कृत्य-क्त-खलर्थाः" इति तव्यप्रत्ययस्य कर्मण्यपि स्मरणादेकपदोपात्तत्वं कर्मकारकस्य । तत्र तव्यप्रत्ययस्य स्वोपात्तकर्मकारकसमवेतापूर्वाभिधाने नैरपेक्ष्यम्; इतरथा पदान्तरसापेक्षत्वम्, तथाच लाघवादाद्यः पक्ष आस्थेय इत्यर्थः ॥ अपूर्वस्य क्रियाजन्यत्वात् तदुपरक्तत्वं युक्तमित्याशङ्क्याह—**भावार्थेति** । यद् येन जायते, तत् तत्समवायीति न नियन्तुं शक्यम्; छिदिक्रियासाध्ये द्वैधीभावादौ व्यभिचारादित्यर्थः । अध्ययनस्यादृष्टार्थत्वे विषमन्त्रवद् वेदस्या-

**ऋजुविवरणम्**

व्यभिचरितसम्बन्धपदार्थमुखेन वा पर्णमय्या इव क्लृप्ते क्रत्वनुप्रवेशे नियमसंभवः । संस्कृतस्य विनियोगात् फलवत्कर्मावबोधोपयोगेन निरुद्धकार्यतया न सक्तुन्याय इति भावः । ननु अध्ययनस्यानङ्गस्य कथं क्रतूपकारकत्वमित्याशङ्क्याह—**आधानवदिति** ॥ ननु नाध्ययनस्य स्वतन्त्रादृष्टसाधनत्वं कल्प्यम्, अपितु श्रूयते; यद्वा, न क्रतूपकारकत्वं संभवति, स्वतन्त्रादृष्टसाधनत्वादिति चोदयति—**ननु तव्यप्रत्ययेनेति** ॥ **अपूर्वाभिधानेऽपी**त्यत्र प्रकृत्यर्थस्य धात्वर्थस्य भिन्नपदोपात्तत्वाभिधानं तव्यप्रत्ययस्य कर्माभिधायित्वेन कर्मप्रधानत्वात् प्रकृत्यंशस्य पृथगर्थत्वात्पृथक्पदत्वमङ्गीकृत्य । **एकपदोपात्तकर्मकारके**त्यत्रापि कर्माभिधायित्वात्तव्यप्रत्ययस्य, कर्मगतापूर्वाभिधायकत्वेनैकार्थत्वाभिप्रायेणैकपदत्वम् । यद्वा—

तव्यप्रत्यय एवेदं कर्ममात्रं ब्रवीति सः । विशेषे त्वन्यसाकाङ्क्षो यज्ज्योतिरिव तत्र तु ॥
प्रकृतिप्रत्ययार्थस्य लाभात् प्रत्यय एव तैः । पदमित्युच्यते यद्वा विशेषार्पकसंयुतः ॥

ननु भावार्थगतत्वाभावेऽपूर्वस्य भावार्थाधिकरणविरोध इत्याशङ्क्याह—**भावार्थेति** ॥ ननु दृष्टार्थत्वे स्वाध्यायस्यार्थविवक्षा न स्यात्, जपमन्त्रवदित्याशङ्क्याह—**अदृष्टार्थतयेति** ॥ ननु अध्ययनवाक्यस्यादृष्टार्थत्वं तस्यार्थविवक्षाप्रतिबन्धकं न भवति; स्ववाक्यार्थमध्ययनावच्छिन्नफलभावनारूपं प्रत्येवैतदर्थ्यम्, नार्थान्तरे; तेन नान्यपरत्वेनाविवक्षितार्थत्वं, इतरवाक्यानां तु यागाद्यवच्छिन्नफलभावनारूपात् स्वार्थादन्यत्रैदमर्थ्यमित्यविवक्षितार्थताऽन्यविनियोज्यत्वं चार्थविवक्षा-

### पञ्चपादिका

**तथाहि—शास्त्रारम्भो व्याख्यातृभिरेवं निरूपितः। कथम्? धर्मो नाम कश्चित्साधयितुः कालान्तरे श्रेयःसाधनो लोकाख्यप्रमाणाभासोत्थेन ज्ञानेन सामान्यतो विषयीकृतः।**

### पञ्चपादिकाविवरणम्

ध्ययनविधिवाक्यस्याप्यर्थविवक्षाऽभावाद् अदृष्टार्थतयाऽध्ययनविधानमेव न स्यात्। तस्मात् साङ्गाध्ययनविधिप्रयुक्तादृष्टस्य स्वसमवायितयाऽक्षरग्रहणार्थावबोधक्रतुप्रवृत्त्यादिदृष्टफलसापेक्षत्वात् स्वाध्यायस्य स्वभावनिमित्तार्थावबोधप्रतिबन्धकताऽभावाद् विवक्षितार्थमाम्नायमवलम्ब्य धर्मविचारः कर्तव्य इति॥

तदेवमर्थविवक्षया धर्मविचारावसरप्रदर्शनपरे शास्त्रारम्भे न सर्ववेदार्थविचारसिद्धिः; इति प्रारभ्यमाणविचारो धर्मविषयः, न वेदार्थमात्रविषय इत्युपपादयति—**तथाहि शास्त्रारम्भ इति**॥ ननु "वेदवाक्यान्येव विचारयेदि"त्यादिभाष्यलिङ्गाद् वेदार्थमात्रविचारारम्भोऽवगम्यत इति शङ्कते—**कथमिति**॥ सामान्यप्रसिद्धि-विशेषविप्रतिपत्त्योर्भाष्यकारेण धर्मे प्रदर्शितत्वात् स एव विचार्यत इत्याह—**धर्मो नाम कश्चित् साधयितुरिति**॥ एवं विषय-विप्रतिपत्ती

### तत्त्वदीपनम्

विवक्षितार्थत्वं स्यादिति यत्तूक्तम्, तदनुपपन्नम्। किं स्वतन्त्रादृष्टार्थत्वमेवार्थपरताप्रतिबन्धकम्? उतेतरदपि? आद्येऽपीदं विवेचनीयम्—किमाम्नायमात्रस्य? अथवाऽध्ययनविधायकव्यतिरिक्तस्येति? नाद्य इत्याह—**अदृष्टार्थतयेति**॥ न द्वितीयोऽपि, अध्ययनविधिवाक्यस्य विवक्षितार्थत्ववदितरत्रापि तदुपपत्तेरित्यर्थः। द्वितीयमुपसंहारव्याजेन निरस्यति—**तस्मादिति**॥ अदृष्टस्य प्रतिबन्धकत्वाभावादित्यनेन संबन्धः। तत्र हेतुमाह—**स्वसमवायितयेति**॥

अदृष्टं स्वशब्दार्थः, स्वाध्यायो वा। मीमांसारम्भप्रदर्शनफलमाह—**तदेवमिति**। स्वाध्यायाध्ययनस्य विचारहेतुत्वात् तदनन्तरं तस्यावसर इत्यर्थः॥ पूर्वग्रन्थेन प्राचीनविचारस्यैकदेशविषयत्वसिद्धेः "तथाचेत्यादि"ग्रन्थवैयर्थ्यमित्याशङ्क्याह—**प्रारभ्यमाणेति**। आरम्भपर्यालोचनयाऽगतार्थत्वं पूर्वत्रोक्तम्, अत्र त्वारभ्यमाणपर्यालोचनयाऽपि तदुपपाद्यत इत्यर्थः। कथंशब्दसूचितामनुपपत्तिं दर्शयति—**ननु वेदेति**॥ प्रतिवचनस्य प्रश्नाननुसारित्वशङ्कां निरस्यति—**सामान्येति**। वेदार्थमात्रविचारपक्षे तत्रैव सामान्यप्रतिपत्तिविशेषविप्रतिपत्ती दर्शनीये, तथा नच प्रदर्शिते। तस्माद्धर्मविषयसामान्यादिप्रसिद्धयादिदर्शनाद् वेदवाक्यानीत्यविशेषवचनं तद्विशेषविषयत्वेन नियम्यत इत्यर्थः। "तत्राग्निहोत्रादिलक्षणः" इत्यादिः किं पूर्वपक्षिणो ग्रन्थः? उत सिद्धान्तिनः? नाद्यः; तेनाग्निहोत्रादेर्धर्मत्वेनानङ्गीकरणात्, न द्वितीयः; वेदवाक्यानां विचारावसराद्यङ्गीकरणात् तन्निषेधानुपपत्तेः। अतश्चासंगतोऽयं ग्रन्थ इत्याशङ्क्य तात्पर्यमाह—**एवमिति**॥

### ऋजुविवरणम्

प्रतिबन्धकम्, नतु विनियोज्यत्वमात्रम्, स्वाध्याये तु न तथाविधमर्थाविवक्षाकारणमस्तीत्याह—**तस्मात्साङ्गाध्ययनेति**॥ **स्वसमवायितया** अक्षरसमवायितयेत्यर्थः। एतदुक्तं भवति—स्वकर्त्रदृष्टस्य निरपेक्षस्वर्गादिफलत्वादर्थविवक्षाप्रतिबन्धकत्वमपि स्यात्, कर्मगतस्य तु कर्मद्वारेणैव फलमपेक्षितं स्वाध्यायगतकर्मत्वप्रतीतिनिर्वाहाय; स्वतन्त्रफलकल्पनायां गौरवप्रसङ्गात्, अक्षरसामर्थ्यसिद्धार्थावबोधफलत्वे तु नासौ दोषः, इति विनियोगोऽपि न सामर्थ्यसिद्धार्थावबोधप्रतिबन्धकः; "वसन्ताय कपिञ्जलानालभेत"इत्यादिषु व्यभिचारात्। तदुक्तम्—"विधिशक्तिर्न मन्त्रस्य नियोगेनापनीयते। स्वतो विधास्यति ह्येष नियोगात् स्मारयिष्यति॥" इति।

"तथाच शास्त्रे"ति ग्रन्थः पुनरुक्तः; पूर्वेणैव शास्त्रस्यैकदेशविषयत्वसिद्धेरित्याशङ्क्यावतारयति—**प्रारभ्यमाणेति**॥ "कथमि"ति न प्रश्नः? पौनरुक्त्यात्, प्रतिवचनं च नाञ्जसमित्याशङ्क्याह—**ननु वेदवाक्यान्येवेति**॥ "धर्मो नामे"त्यनेन धर्मे विप्रतिपत्तिः प्रदर्शिता, सा जिज्ञासायोग्यत्वोपयोगिनी। न भाष्यकारादिभिर्धर्मविचारः कृत इति तदेव चोदितत्वात् दर्शनीयमित्याशङ्क्याह—**सामान्यप्रसिद्धेति**॥ "तत्राग्निहोत्रादिलक्षणः" इत्यादिग्रन्थः किमर्थः? इति न ज्ञायते; परस्परव्याहतत्वात्, अग्निहोत्रादिलक्षणस्य धर्मत्वं प्रतिज्ञाय तत्प्रतिपादकानां विचारावसरे विवक्षितार्थत्वनिराकरणादित्याशङ्क्यावतारयति—**एवं विषयविप्रतिपत्ती इति**॥ तत्राग्निहोत्रादौ कथं पूर्वपक्षपरिग्रहः?

## पञ्चपादिका

**तद्विशेषं प्रति विप्रतिपन्नाः परीक्षकाः केचिदग्निहोत्रादिकं धर्ममाचक्षते; केचिच्चैत्यवन्दनादिकम्। तत्राग्निहोत्रादिलक्षण एव धर्मोऽभिप्रेतः। न तत्प्रतिपादकानां वेदवाक्यानां विचारावसरः, नापि विवक्षितार्थत्वम्। अतश्चैत्यवन्दनादीनामेवान्यतमो धर्मः। तत्प्रतिपादकानां बुद्धादिवाक्यानामेवान्यतमं विचार्यम्; न वा तदपि। नहि पौरुषेये वाक्ये शब्दशक्त्यनुसारेणार्थः; अपि तु तेन विवक्षित इति॥**

**एवमाशङ्किते—धर्माय वेदवाक्यानि विचारयंस्तदर्थविवक्षाविचारावसरप्रदर्शनार्थम्—"अथातो धर्मजिज्ञासे"ति सूत्रयामास जैमिनिः वेदमधीत्यानन्तरं धर्मजिज्ञासा कर्तव्या, न स्नानं गुरुकुलनिवृत्तिरूपमिति दर्शयितुमिति। एवं स्थिते शास्त्रारम्भे, न सर्ववेदार्थविषयं शास्त्रमिति प्रतीतिः, किन्तु धर्मातिरिक्तोऽपि सिद्धरूपो वेदार्थोऽस्ति, स च पर्युदस्तो जैमिनिना; न्यायान्तरविषयत्वादिति गम्यते॥**

## पञ्चपादिकाविवरणम्

दर्शयित्वा धर्मविषय एव पूर्वपक्षप्राप्तिं दर्शयतीत्याह—**तत्राग्निहोत्रादिलक्षण एवेति**॥ नकारस्तु पूर्व-परयोः सम्बध्यते। **एवमाशङ्किते** इत्यतः प्राक्तनो ग्रन्थः स्पष्टार्थः॥

एवमाशङ्किते शास्त्रारम्भे सिद्धान्तसूत्रं तत्प्रतिपाद्यार्थकथनेनावतारयति—**धर्माय वेदवाक्यानीति**॥ यस्याम्नायस्यार्थविवक्षा, तस्यैवाम्नायस्य विचारावसरश्चेतितदर्थविवक्षा-विचारावसरौ। विवक्षा-विचारावसर-धर्मविचारान् सूत्रार्थान् सूत्रयोजनया दर्शयति—**वेदमधीत्यानन्तरमिति**॥ ततः किमायातमिति ? अत आह—**एवं स्थित इति**॥ किं तत्र विवक्षितं गम्यत इति ? तत्राह—**किंतु धर्मातिरिक्त इति**॥ अयमर्थः—वेदस्यार्थविवक्षाप्रदर्शनेन वेदार्थविचारः कर्तव्य इति वक्तव्ये धर्मग्रहणं कुर्वन् मा भूत् सर्ववेदार्थविचारप्रतिज्ञा, किंत्वेकदेशविचारोऽयमिति मन्यते सूत्रकार इति गम्यते।

## तत्त्वदीपनम्

पूर्वपक्षत्वमप्यनुपपन्नमित्युक्तमित्याशङ्क्याह—**नकारस्त्विति**॥ (टीकायाम्) तत्रेत्यादेरेषोऽर्थः—यावज्जीवादिवाक्येषु सत्सु कथमग्निहोत्रादेर्धर्मत्वाभावः ? इति शङ्कायामुक्तम्—**न तत्प्रतिपादकानामिति**॥ विवक्षितार्थत्वाद्विचारानवसरो वा कथमिति ? अत आह—**नापीति**॥ वक्तुर्विवक्षाधीनं शब्दतात्पर्यम्, अपौरुषेये च वेदे तन्न घटत इत्यर्थः। बुद्धादिवाक्यमपि न विचार्यम्, विवक्षाऽनुरोधेन तस्यप्रामाण्यादित्याह—**नवेति**॥

फलाभावद् विचारवैयर्थ्यमित्याशङ्क्याह—**धर्मायेति**॥ अविवक्षितार्थत्वान्न विचारः, विवक्षितार्थत्वेऽपि न तद्विचारप्रयोजकमस्तीत्याशङ्क्याह—**तदर्थेति**। स चासावर्थश्चेति तदर्थः। तद्विवक्षया विचारावसर इति प्रतिभासं व्यावर्तयति—**तस्येति**॥ सूत्रव्याख्यानमिहानुपयुक्तमित्याशङ्क्याह—**विवक्षेति**॥ भूतार्थविचारो जैमिनिना पर्युदस्त इति कथं गम्येति ? तत्राह—**अयमर्थ इति**॥

## ऋजुविवरणम्

नहि पूर्वपक्षिणोऽग्निहोत्रादेर्धर्मत्वमभिप्रेतमित्याशङ्क्य व्याचष्टे—**नकारस्त्विति**॥

"न तत्प्रतिपादकानामि"त्यत्रत्यो नकारोऽग्निहोत्रादिलक्षण एव धर्मो नेत्यत्राप्यन्वीयत इति तदर्थविवक्षा। "विचारावसरः" इति स एव धर्मरूपोऽर्थः, तदर्थविवक्षायां विचारावसरप्रदर्शनार्थमिति प्रतिभाति; तदयुक्तम्; धर्मे विवक्षाप्रदर्शनाभावात्; यद्वा, तस्याम्नायस्यार्थस्तदर्थ इति निर्देशेऽपि तदर्थविवक्षायां विचारावसर इति प्रतिभाति, तदयुक्तम्; तावन्मात्रस्य सूत्रार्थत्वप्रसङ्गादित्याशङ्क्य व्याचष्टे—**तस्यैवाम्नायस्येति**॥ ननु न धर्मग्रहणसामर्थ्यात् सिद्धस्वरूपवेदार्थपर्युदाससिद्धिः; नहि तेन विना धर्मग्रहणानुपपत्तिरित्याशङ्क्य व्याचष्टे—**अयमर्थो, वेदस्येति**॥

### पञ्चपादिका

**तत्कथं ? यत्तावदिदमुच्यते; धर्मो नाम लोकप्रवादात् सामान्यतः सिद्धः । तस्य स्वरूप-प्रमाणयोर्विप्रतिपत्तावग्निहोत्रादिरपि वेदार्थो धर्मतया विचारपदवीमुपारोहेति;**

### पञ्चपादिकाविवरणम्

ननु 'अथातः'शब्दाभ्यां स्वाध्यायस्य पूर्वनिर्वृत्ततया विचारहेतुत्वमुच्यते। स्वाध्यायो हि स्वार्थविचारहेतुर्भवति, न धर्मविचारहेतुः; अतः 'अथातः' शब्दविरोधान्न धर्मविचारः प्रतिज्ञातुं शक्यत इति चोदयति—**तत्कथं यत्तावदिदमिति** ।। सामान्यविशेषाभ्यां विचार्यमाणप्रधानाभिधायिधर्मपदग्रहणसामर्थ्यात्, तस्यैव विप्रतिपत्त्या पुरुषार्थसाधनतया च जिज्ञासितत्वात्, प्रामाण्यप्रतिपादनात् प्राग्वेदार्थे सामान्यप्रतिपत्ति-विशेषविप्रतिपत्ति-पुरुषार्थसाधनत्वादीनामनवगमात्, जिज्ञासितत्वायोगाद् धर्म एव विचार्यत इत्याह—**उच्यते, धर्मो नामेत्यादिना** ।। तत्र धर्मे जिज्ञासायोग्यत्वप्रदर्शनेन वेदार्थे तदभावं विवक्षति—**लोकप्रवादादिति** ।। ननु धर्मविचारे स्वाध्यायस्य पूर्वनिर्वृत्ततया हेतुत्वम्, अर्थविवक्षायाः प्रदर्शनं चानुपयोगीत्युक्तम् ? सत्यम्; अग्निहोत्रादेरपि धर्मस्कन्धत्वाद् दैवगत्या च धर्मत्वादुपयोग इत्याह—**अग्निहोत्रादिरपि वेदार्थ इति** ।।

### तत्त्वदीपनम्

सामान्यप्रसिध्यादेर्धर्मविषयत्वोक्तेर्न प्रश्नावसरः, इत्याशङ्क्य तात्पर्यमाह—**नन्वथेति** ।। **स्वाध्यायस्येत्यत्र** विषयवाचकेन विषयिणोऽध्ययनस्याभिधानमिति द्रष्टव्यम् ।। अध्ययनस्य विचारहेतुत्वेऽपि कथं सकलवेदार्थविचारप्रतिज्ञासिद्धिः ? इत्याशङ्क्याह—**स्वाध्याय इति** । स्वाध्यायाध्ययनस्य भाव्यसाकाङ्क्षत्वाद् भाव्यस्य चार्थावबोधस्य विचारमन्तरेणानुपपत्तेर्वेदार्थविचार आक्षिप्यत इत्यर्थः । धर्मस्यापि तदर्थत्वान्न तद्विचारप्रतिज्ञाविरोध इत्याशङ्क्याह—**न धर्मेति** । स्वाध्यायाध्ययनमात्रभाव्यस्यार्थावबोधस्य सकलवेदार्थविचारहेतुत्वम्, न तु धर्मरूपतद्विशेषविचारहेतुत्वमित्यर्थः । विरोधस्यानिराकरणात् प्रतिवचनस्याननुरूपत्वमाशङ्क्योत्तरग्रन्थसंदर्भस्य तात्पर्यमाह—**सामान्येति** । इत्थम्भावे तृतीया । 'श्रेयःसाधनं धर्मः' इति सामान्यरूपेण, अग्निहोत्रादिरेवेति विशेषरूपेण विचार्यमाणः, तत एव प्रधानभूतो यो धर्मस्तस्याभिधायि यद्धर्मपदम्, तद्ग्रहणसामर्थ्यादिति विग्रहः । 'अथातः'शब्दाभ्यां प्राबल्यं दर्शयितुम्—**प्रधानेति** विशेषणम् । तदुपपादयितुम्—**सामान्येत्यादि** । धर्मस्यैव विचार्यत्वे हेत्वन्तरमाह—**तस्येति** ।। न केवलं विप्रतिपन्नत्वेन संदिग्धत्वाद्धर्मस्य विचार्यत्वम्, किं तु फलत्वादपीत्याह—**पुरुषार्थेति** ।। वेदार्थस्य तद्वैलक्षण्यमाह—**प्रामाण्येति** ।। वेदप्रामाण्यसिद्धौ तदर्थोऽधिगम्यते, नान्यथा । अत एव न विशेषप्रतिपत्त्यादेरधिगम इत्यर्थः ।। एवं समुदायार्थमभिधायोक्तमर्थं टीकारूढं करोति—**तत्रेति** ।। 'अथातः'शब्दपर्यालोचनया वेदार्थ एव विचारित इत्युक्तमनुवदति—**ननु धर्मेति** ।। **उक्तमिति** ।। उक्तमङ्गीकरोति—**सत्यमिति** ।। तर्हि न धर्मस्य विचार्यतेत्यत आह—**अग्निहोत्रादेरिति** ।। **धर्मस्कन्धत्वादिति**—धर्मविप्रतिपत्तिस्कन्धत्वादित्यर्थः । तर्हि चैत्यवन्दनादेरपि धर्मस्कन्धत्वात् सोऽपि विचार्यः स्यादित्याशङ्क्याह—**दैवगत्येति** ।। **धर्मत्वादिति**, अग्निहोत्रादेर्वेदबोध्यश्रेयःसाधनत्वाधिकरणत्वादित्यर्थः । नच—अस्मिन् पक्षे स्वाध्यायस्य

### ऋजुविवरणम्

भवतु स्वाध्यायस्य विचारहेतुत्वम्, नैतावता वेदार्थविचारसिद्धिः; धर्मविचारेऽपि तस्य हेतुत्वात्, इत्याशङ्क्याह—**स्वाध्यायो हीति** ।। **सामान्यविशेषाभ्यामिति** सामान्यप्रसिद्धि-विशेषविप्रतिपत्तिभ्यामित्यर्थः । ननु वेदस्य विवक्षितार्थत्वप्रदर्शनमनुपयोगीति चोद्यस्य "अग्निहोत्रादिरि"ति न परिहारः; धर्मत्वाकारेण जिज्ञास्यत्वप्रदर्शनस्य व्यधिकरणत्वात् । न हि तेन वेदार्थजिज्ञासादर्शनात् वेदार्थोपाधिर्विचार इति चोदितम्; अनुपयोगपर्यवसितत्वात् । अथानुपयोगमुखेन वेदार्थविचारपरत्वम्; तथाऽप्युपयोग एव कथनीयः, नतु धर्मस्य योग्यत्वनिरूपणं युक्तम् । न वेदार्थस्यापि तेनैव रूपेण योग्यत्वनिरूपणं युक्तम्, "यतो न वेदार्थे"त्यनेन निरूपितत्वात् "अग्निहोत्रादिरपी"ति वदता अन्यस्यापि विचारावसरप्रदर्शनाद् विरुद्धम्; "यतस्तस्यापी"ति चाग्निहोत्रादिग्रहणमनुपयोगि; तत्रानर्हत्वशङ्काकारणाभावात्, तेन नादेयोऽयं ग्रन्थ इत्याशङ्क्याह—**सत्यमग्निहोत्रादेरपीति** । **दैवगत्या चेति** । वेदबोध्यश्रेयस्साधनत्वयुक्तत्वं धर्मत्वम्, तस्याग्निहोत्रादेर्विद्यमानत्वेन तद्ग्रहणमुपयोगश्चेति भावः । यद्वा, धर्मस्कन्धस्यापि चैत्यवन्दनस्य नैव विवक्षितार्थत्वप्रदर्शनमुपयुज्यते, धर्मत्वाकारेणापि कथमुपयोगः ? इत्याशङ्क्याह—**दैवगत्या चेति** ।। "तेन विवक्षितो-

### पञ्चपादिका

**यतस्तस्यापि विचारावसरो विद्यते, तेन विवक्षितोऽसौ ।**

**नचाध्ययनमात्रात् कृतकृत्यता । अतोऽध्ययनानन्तरं न गुरुकुलान्निवर्तितव्यम्, किन्तु वेदार्थो धर्मः, किं वाऽन्य एवेति जिज्ञासामर्हतीति वदितुं धर्मग्रहणं युक्तम्—"अथातो धर्मजिज्ञासे"ति, न वेदार्थजिज्ञासेति; यतो न वेदार्थतया ज्ञाने प्रवृत्तिः । यत्पुनर्धर्मस्य स्वरूप-प्रमाणकथनाय द्वितीयं सूत्रम्, तद्वेदप्रमाणको धर्म इति स्यात्, किमिदं "चोदनालक्षणः" इति ? तद् नूनम् 'न सर्वो वेदो धर्म एव कार्यात्मके पर्यवस्यति, कश्चिदस्य भागः कार्यताशून्ये वस्तुतत्त्वेऽपि वर्तत' इति मन्यते ॥**

### पञ्चपादिकाविवरणम्

**यत इति** । विप्रतिपत्तिस्कन्धत्वादित्यर्थः । तेन विवक्षितोऽसौ स्वाध्याय इति प्रदर्शनीयमित्यर्थः ॥

ननु पुरुषार्थत्वाच्चेद् धर्मविचारः, अध्ययनेनैव तत्सिद्धेः किं धर्मविचारेणेति ? नेत्याह—**नचाध्ययनमात्रादिति** ॥ अतो न 'अथातः'शब्दविरोध इत्याह—**अतोऽध्ययनानन्तरमिति** ॥ किंच धर्मशब्दस्य प्रधानत्वाद् 'अथातः'शब्द-विरोधेऽपि धर्मविचार एव युक्त इत्याह—**इति वदितुं धर्मग्रहणं युक्तमिति** ॥ पुरुषा हि धर्ममेव जिज्ञासन्ते, न वेदार्थम्; तस्यापि धर्मत्वप्रयुक्तत्वादुपादानस्येत्याह—**यतो न वेदार्थेति** ॥ सामान्यग्रहण-विशेषविप्रतिपत्ति-पुरुषार्थसाधनत्व-धर्म-शब्दग्रहणैर्धर्मविचारपरं प्रथमसूत्रमित्युक्तम्, द्वितीयमपि सूत्रं तथैवेत्याह—**यत्पुनर्धर्मस्येति** ॥ धर्मलक्षणपरं सूत्रम्, अर्थात् प्रमाणप्रतिज्ञेति प्राभाकराः । मुखतः प्रमाणप्रतिज्ञा, अर्थाद् धर्मलक्षणत्वमिति वार्तिककारीयाः । सर्वथाऽप्युभयं विवक्षित-मिति । तत्र वेदग्रहणे प्राप्ते सर्वो वेदो धर्मविषयो मा भूदिति चोदनामग्रहीदिति गम्यत इत्याह—**तन्नूनमिति** ।

### तत्त्वदीपनम्

हेतुत्वादिकथनमनुपयोगि स्यादिति—वाच्यम्; अग्निहोत्रादेरपि वेदार्थत्वात् तत्प्रदर्शनस्याप्युपयोगित्वादित्यर्थः । तदभि-प्रेत्य "वेदार्थ" इत्युक्तं **टीकायाम्** । वेदार्थोऽपि श्रेयःसाधनत्वाद् विचार्य इति वक्तव्यम्, तच्चात्राप्यस्तीति । तदिद-मुक्तम् । किंच धर्मप्रमाणविप्रतिपत्त्युपलब्धेराम्नायार्थविवक्षाप्रदर्शनमुपयुक्तमित्युक्तम्—"यतः" इत्यत्र, तत्र यच्छब्देन प्रकृतस्य विचार्यस्य परामर्शशङ्कां व्यावर्तयति—**यत इति** । "स्वरूप-प्रमाणयोर्विप्रतिपत्तावि"त्यत्रोक्तप्रमाण-विप्रतिपत्तेर्यच्छब्देन परामर्श इत्यर्थः । "विवक्षितोऽसावि"त्यत्रापराग्निहोत्रादिपरामर्शशङ्कां निरस्यति—**तेनेति** ॥

"जप्येनैव तु संसिध्येद् ब्राह्मणो नात्र संशय" इत्यादिवाक्यादध्ययनस्य जपद्वारेण पुरुषार्थहेतुत्वप्रतिपत्ते-र्विचारो वृथेति शङ्कते—**ननु पुरुषार्थत्वादिति** ॥ कर्मकारकप्रधानाध्ययनविधायि-तव्यप्रत्ययविरोधान्न तस्य स्वतन्त्र-पुरुषार्थसाधनत्वमित्याह—**नेत्याहेति** ॥ टीकापेक्षितं विरोधनिराकरणोपसंहरणमाह—**अत इति** ॥ **इत्याहेति**; इत्यभि-सन्धाय धर्मजिज्ञासा युक्तेत्याहेत्यर्थः । विरोधमङ्गीकृत्य दूषणमाह—**किंचेति** । विचार्यमाणविषयत्वेन धर्मशब्दस्य प्राधान्यमित्यर्थः । किंच जिज्ञासितं हि विचार्यम्, धर्मश्च जिज्ञासितः, इति स एव विचार्य इत्याह—**पुरुषो हीति** ॥ वेदार्थजिज्ञासाया अपि दृष्टत्वाद् धर्ममेवेति कथमुक्तम् ? तत्राह—**तस्यापीति** ॥ चोदनाया वेदात्मकत्वात् "चोदना-लक्षणो धर्मः" इत्यभिधानं युक्तमित्याशङ्क्य तात्पर्यमाह—**सामान्येति** । यद्यपि चोदनाया वेदात्मकत्वम्; तथाऽप्यचोद-नात्मकवेदार्थविशेषशङ्कां व्यावर्तयितुं वेदग्रहणं युक्तमित्यभिप्रायः । एकस्य सूत्रवाक्यस्य स्वरूप-प्रमाणपरत्वमयुक्तम्, इत्याशङ्क्य श्रुत्यर्थाभ्यामुभयोर्विवक्षितत्वान्न विरोध इत्याह—**धर्मेति** ॥ चोदनाग्रहणस्य भूतार्थप्रतिपादकवेदवाक्येन बिना नानुपपत्तिरित्याशङ्क्याह—**तत्र वेदेति** ॥

### ऋजुविवरणम्

ऽसावि"त्यत्र संनिहिताग्निहोत्रादीनां निर्देशशङ्का स्यात् । नहि तस्य विवक्षितत्वमत्र व्युत्पाद्यं योग्यं वा; नाप्यन्यत् सन्निहितमस्ति, तेन साकाङ्क्षत्वादनर्थकम्, इत्याशङ्क्य पूरयति—**स्वाध्याय इति** ॥

ननु धर्मस्यापि वेदार्थत्वाविशेषाद् धर्मग्रहणमेव कर्तव्यमिति नियन्तुं न शक्यते, प्राधान्यं च वेदार्थस्य सम्पादयितुं शक्यते, अतो न धर्मग्रहणमित्याशङ्क्याह—**पुरुषा हि धर्ममेवेति** ॥ वेदार्थजिज्ञास्यत्वं नास्तीति कथमुक्तम् ? धर्मस्यापि वेदार्थस्य जिज्ञास्यत्वदर्शनात्, इत्याशङ्क्याह—**तस्यापि धर्मत्वेति** ॥ "स्वरूप-प्रमाणकथनाये"त्युक्तम्, विरोधादित्याशङ्क्याह—**धर्मलक्षणेति** ॥ तत्र "तन्नूनम्" इति न सम्बद्धम्; नहि चोदनाग्रहणस्य वस्तुतत्त्वनिष्ठवेदभागेन विनाऽनुपपत्तिरित्याशङ्क्यावतारयति—**इति तत्र वेदग्रहण इति** ॥

### पञ्चपादिका

**ननु चोदनाग्रहणस्यान्यदेव प्रयोजनम्, "चुद प्रेरणे" इति ॥ प्रेरणाकर्मणश्चोदनेति रूपम्; ततः प्रेरणात्मको**

### पञ्चपादिकाविवरणम्

ननु चोदनाग्रहणं सर्ववेदस्य धर्मे प्रामाण्यपरिहाराय न भवति, किंत्वन्यदेव प्रयोजनमित्याह—**ननु चोदनाग्रहणस्येति** ॥ अयमर्थ—लिङादिशब्दव्यापारः पुरुषप्रवृत्तिलक्षणार्थभावनालक्षणभाव्यनिष्ठ स्वज्ञानकरणकः स्तुतिनिन्दार्थवादादिज्ञानेतिकर्तव्यताको लिङादिशब्देनाख्यातत्वसामान्यादर्थभावनाभिधायिनाऽपि **लिङ्विशेषेणाभिधीयमानः** शब्दभावनेति कथ्यते । शब्द एव वा प्रदर्शितांशत्रयविशिष्टः शब्दभावना, शब्दगुणो वा । सर्वत्र हि करण-

### तत्त्वदीपनम्

"अन्यदेव प्रयोजनमि"त्यत्र कस्मादन्यदिति वीक्षायामाह—**ननु चोदनेति** । अर्थभावनालक्षणपुरुषप्रवृत्तेः पुरुषार्थपर्यवसायित्वं बोधयितुं चोदनाग्रहणमित्यर्थः ॥ प्रयोजनान्तरं दर्शयितुं चोदनाशब्दनिष्पत्तिः प्रदर्श्यते—**चुद प्रेरणे** इति **टीकायाम्** । तस्यार्थः—प्रेरणा कर्मवाच्यं यस्य धातोः, स प्रेरणाकर्मा, तस्य निष्पन्नं रूपं चोदनेति । शब्दभावना विधिरिति केचित्; इष्टसाधनमित्यन्ये; नियोग इत्यपरे;, ततः कथं प्रेरणात्मको विधिरित्युक्तमित्याशङ्क्याह—**अयमर्थ इति** । प्रेरणा लिङ्गादिशब्दव्यापारः, स च शब्दभावनेति कथ्यत इति संवन्धः । परिस्पन्दपरिणामलक्षणोऽर्थभावनोत्पादनानुकूलः शब्दव्यापारः शब्दभावनेति द्रष्टव्यम् । शब्दभावना प्रवर्तिका चेत्, तर्हि तयैवालम्, किमर्थभावनया ? येन तद्भाव्यत्वेन स्वर्गादिकमाद्रियते, तत्राह—**पुरुषेति** । शब्दभावनाया भाव्यसाकाङ्क्षत्वाद् भाव्यान्तरादर्शनाच्च धात्वर्थोत्पत्त्यनुकूल औदासीन्यप्रच्युतिलक्षणः कर्तृव्यापारोऽर्थभावनाभाव्य आस्थेय इत्यर्थः ॥ तर्हि शब्दव्यापारस्य सदा पुंस्प्रवृत्तिजनकत्वं किं न स्यात् ? इत्याशङ्क्य, सहकार्यभावाद् मैवमित्याह—**स्वज्ञानेति** ॥ शब्दभावना स्वशब्दार्थः । तथाऽपि सर्वान् किमिति न प्रवर्तयतीति ? अत्राह—**स्तुतीति** । "स प्रजापतिरात्मनो वपामुदखिदि"त्यादिः स्तुत्यर्थवादः ; "सोऽरोदीदि"त्यादिर्निन्दार्थवादः, तदुत्थज्ञानमितिकर्तव्यतेति यावत् । फलवाक्यमादिशब्दार्थः । शब्दभावनाप्रतिपत्त्युपायाभावात् कथं तद् ज्ञानमिति ? अत आह—**लिङादीति** । लिङादिशब्देनाभिधीयमान इति संबन्धः ॥ लिङादीनामर्थभावनाभिधायित्वाद् न शब्दभावनाभिधायित्वमित्यत आह—**आख्यातेति** ॥ कथं तर्हि शब्दभावनाभिधायकत्वम् ? तत्राह—**लिङ्विशेषेणेति** । लिङ्रूपो विशेषो यस्य स तथोक्तः । लिङ्शब्दश्च प्रत्ययान्तरगत-

### ऋजुविवरणम्

"प्रेरणाकर्मणः" इति प्रेरणैव कर्म वाच्यं यस्यासौ, प्रेरणाकर्मा; तस्यैवं रूपमिति । ननु "चुद प्रेरणे"इत्यत्र द्वयं प्रतीयते—शब्दः, तद्वाच्यः प्रेरणा च; तत्र को विधिः—लिङादिशब्दः ? तदर्थो वा ? यदि शब्दः ; ततः "प्रेरणाकर्मणः"इत्यनुपपन्नम्; शब्दस्य तदात्मकत्वाभावात् अथार्थः, तदा "पुरुषार्थे प्रेरयितुमशक्नुवन्नि"ति व्यर्थं विशेषणम्; नह्यर्थस्य प्रेरणात्मकस्य प्रेरकत्वमस्ति । नापि पुरुषार्थे प्रेरकत्वम्; स्वव्यापारत्वाभावात् पुरुषार्थस्य । तदुक्तम्—"स्वव्यापारे हि पुरुषः कर्तृत्वेन नियुज्यते"इति । "तस्य लिप्सार्थलक्षणे"ति च "भावनाकर्मतामापादयती"त्यपि व्यधिकरणम्; पुरुषार्थे प्रवर्तकत्वं हि वक्तव्यम्, नतु भावनाकर्मत्वापादनेन तत् परिहृतं भवति; नाप्येतद् द्वयं मुक्त्वान्यदस्मिन् ग्रन्थे विधिरूपं प्रतीयते, यस्यानुपपत्त्या स्वर्गादीनां भावनाकर्मता स्यात् अतो न चोदनाग्रहणस्य प्रयोजनान्तरं भवतीत्याशङ्क्य व्याचष्टे—**अयमर्थ इति** ॥ "प्रेरणात्मको विधिरि"त्यस्य व्याख्या—**लिङादिशब्दव्यापार इति** ॥ लिङादिशब्दस्य हि वाच्यद्वयम्—स्वव्यापारो विधिरूपः ; पुरुषव्यापारश्च । तत्र पुरुषव्यापारस्याप्यभिधेयत्वं दर्शयितुमंशत्रयाभावे प्रवर्तकत्वाभावाच्च तद् दर्शयति—**पुरुषप्रवृत्तीति** । अनेन कथं व्यापारस्य प्रवर्तकत्वमिति चोद्यं परिहृतम्; शब्दव्यापारत्वात् तस्य **स्वज्ञानकरणकः** इत्यनेन सर्वदा प्रवर्तकत्वं च निरस्तम् । ननु लिङादिव्यापारस्यैतादृशस्य बोधकं न किंचिदुपलभ्यते । बोधकाभावेन तज्ज्ञानाभावात् । कथं ज्ञानस्य करणत्वम् ? अज्ञातस्य च व्यापारस्य कथं प्रवर्तकत्वम् ? स्वरूपास्तित्वं च न तस्येत्याशङ्क्याह—**लिङादिशब्देनेति** ॥ "लिङादिशब्देने"त्यादिना "शब्दभावनेति कथ्यते" इत्येवमन्तेन बोधकशब्दप्रदर्शनपूर्वकं स्वरूपं दर्शयता लिङादिशब्द-तद्वाच्यपुरुषप्रवृत्तिव्यतिरेकेण तृतीयं नास्तीति चोद्यं परिहृतम् । कथं लिङादिशब्दव्यापारस्य ज्ञानं करणम् ? साधकतमं हि करणं भवति । नच शब्दव्यापारे ज्ञानं साधकतमं भवति । करणानुग्राहिणी चेतिकर्तव्यता । तदभावे च नेतिकर्तव्यतानिरूपणं युक्तम् । अन्यार्थप्रवृत्तकृतिव्यापारत्वमपि

## पञ्चपादिका

**विधिरपुरुषार्थे प्रेरयितुमशक्नुवन् पदान्तराभिहितमपि स्वर्गादिकं भावनाकर्मतामापादयति एकपदोपादानात् संनिहिततरं धात्वर्थं विहायेति कथयितुमिति ?**

**नैतत्सारम्; अध्ययनविधिरध्ययने माणवकं प्रेरयन्नध्ययनस्य पुरुषार्थस्वरूपार्थावबोधकत्वमनापाद्य न शक्नोति प्रेरयितुम्; पारम्पर्येणाप्यपुरुषार्थे विधेरपर्यवसानात्, अतस्तदर्थं न चोदनाग्रहणम्; वेदग्रहणेनापि तत्सिद्धेः ।**

## पञ्चपादिकाविवरणम्

मितिकर्तव्यतानुगृहीतं भाव्यनिर्वृत्तिद्वारेणैव भावनां प्रति करणं भवति । तत्र शब्दभावनाविषयं ज्ञानं लिङादिशब्दजन्यं प्रवर्तकज्ञानत्वात् स्तुत्यादिज्ञानानुगृहीतं पुरुषप्रवृत्ति-निवृत्तिहेतुः, इति भाव्यनिवृत्तिद्वारेण शब्दभावनां प्रति करणमुच्यते । सा च शब्दभावना पुरुषप्रवृत्तिमुत्पादयन्ती तस्याः पुरुषार्थविषयत्वमन्तरेण नोत्पादयितुं क्षमते; अपुरुषार्थे पुरुषस्याप्रवृत्तेः । ततश्चोदनाप्रयुक्तपुरुषप्रवृत्तेः समानपदोपात्तमपुरुषार्थं धात्वर्थं भाव्यं विहाय पुरुषविशेषणमपि स्वर्गादिकं भाव्यत्वेनोपादाय धात्वर्थकरणिका प्रयाजादीतिकर्तव्यताका स्वर्गादिभाव्यनिष्ठा पुरुषप्रवृत्तिरर्थभावना संपद्यते । तदेवंविधार्थभावनानिष्पत्तये शब्दभावनायाः प्रवर्तकत्वद्योतनाय चोदनाग्रहणम्—इति ॥

**नैतत् सारम्; अध्ययनविधिरित्यादिः**परिहारः । तस्यायमर्थः—"स्वाध्यायोऽध्येतव्यः" इति तव्यप्रत्ययव्यापारः शब्दभावना, अध्ययने पुरुषप्रवृत्तिलक्षणार्थभावनाभाव्यनिष्ठा स्वविषयप्रवर्तकज्ञानकरणिकाऽध्ययनफला अर्थ-

## तत्त्वदीपनम्

विशेषोपलक्षणार्थः । लिङादिशब्दस्याख्यातत्वाकारेणार्थभावनाभिधायकत्वम् लिङादिविशेषाकारेण शब्दभावनाभिधायकत्वमित्यर्थः । पक्षान्तरमाह—**शब्द एवेति** ॥ **शब्दगुणो वेति** । अर्थभावनायाः स्वरूपेण निष्पन्नत्वेऽप्यर्थभावनानिष्पादकत्ववैशिष्टचोत्पत्तौ ज्ञानस्य करणत्वमित्यर्थः । सामान्योक्तन्यायं प्रस्तुते योजयति—**तत्र शब्देति** ॥ ततः किमिति ? अत आह—**सा चेति** ॥ **तस्या** इति पुरुषप्रवृत्तेरित्यर्थः । अर्थभावनायाः पुरुषार्थपर्यवसायित्वेऽपि कथं स्वर्गादिभाव्यता ? तस्य पुरुषविशेषणत्वात्, धात्वर्थस्य च संमानपदोपात्ततया संनिहितत्वादित्याशङ्क्याह—**ततश्चेति चोदनेति** । शब्दभावनाभाव्यार्थभावनाया इत्यर्थः ॥ न स्वर्गादेर्भावनाभाव्यत्वम्, अदृष्टेरित्याशङ्क्य, सेतिकर्तव्यधात्वर्थानुष्ठानात् स्वर्गसिद्धिर्युक्तेत्याशयेनाह—**धात्वर्थेति** ॥ तथाऽपि वेदपदव्युदासेन चोदनाग्रहणे किं निमित्तम् ? इत्याशङ्क्याह—**तदेवमिति** ॥

अध्ययनस्य पुरुषार्थपर्यवसायित्वेऽपि यागभावनायाः कथं स्वर्गपर्यवसायित्वम् ? ततः परिहारस्याभासत्वमित्याशङ्क्याह—**नैतत्सारमिति** ॥ समाधिप्रकारमेवाह—**तस्येति** । स्वविषयं प्रवर्तकं ज्ञानं चेति स्वविषयं प्रवर्तकं ज्ञानं,

## ऋजुविवरणम्

न संभवति; भावनायां प्रवृत्तक्कतेरभावादित्याशङ्क्य करणस्वरूपमाह—**सर्वत्र हि करणमिति** ॥ तथा प्रकृतेऽपि करणत्वं दर्शयति—**शब्दभावनेति** ॥ कथं तत्र स्तुत्यादिज्ञानानुगृहीतमेव करणमिति तन्निश्चीयत इति ? तदाह—**प्रवर्तकज्ञानत्वादिति** ॥ अथवा, भवतु करणमेवंविधम्, ज्ञानस्य तु कथं करणत्वमित्याशङ्क्याह—**तत्र शब्दभावनेति** ॥ "प्रेरणात्मकः" इत्यत्रार्थद्वयं प्रतीयते—प्रेरणारूपम्, तदुत्पाद्यं च; सिद्धवस्तुनः प्रेरकत्वाभावात् । तच्च प्रेरणादिरूपं "लिङादिशब्दव्यापारः" इत्यनेन दर्शितम् इदानीं द्वितीयं प्रेरणाकर्मरूपं दर्शयति—**पुरुषप्रवृत्तिमिति** ॥ "अपुरुषार्थे प्रेरयितुमशक्नुवन्नि"त्येतद् व्याचष्टे—**तस्याः पुरुषार्थविषयेति** ॥ **समानपदोपात्तम्** एकपदोपात्तमित्यर्थः । **पुरुषविशेषणमपीति** । स्वर्गो कामना यस्यासौ स्वर्गकाम इति पुरुषस्य प्राधान्यं प्रतीयते; तथाऽपि विधिसामर्थ्यात् काम्यमानता; सामर्थ्यात्, पुरुषस्य क्रियाक्षेपतः प्राप्तत्वाच्च ? 'साधकं तु तादर्थ्यादि'ति न्यायेन स्वर्गप्रधानत्वं शब्दस्य विनिश्चित्य साध्यता निश्चीयत इति भावः ॥

"अध्ययनविधि"रित्यसम्बद्धम्; नहि विधिरध्ययने पुरुषं प्रवर्तयति; ताल्वोष्ठपुटव्यापारत्वादध्ययनस्य, स्वव्यापारे हि पुरुषः कर्तृत्वेन नियुज्यत इति हि न्यायविदः । तथा "अध्ययनस्य पुरुषार्थरूपार्थावबोधकत्वमि"त्यसम्बद्धम् । नाध्ययनस्य क्रियारूपस्यार्थावबोधकत्वसंभवः; शब्दधर्मत्वात् तस्येत्याशङ्क्य व्याचष्टे—**तस्यायमर्थ इति** ॥

### पञ्चपादिका

**अपिच वेदग्रहणमेव युक्तम् असन्देहात्; चोदनाग्रहणे हि सन्देहः स्यात्, लोकेऽपि विद्यमानत्वात्। अथ वेदाधिकरणे "वेदांश्चैके सन्निकर्षमि"ति विशेषाभिधानाद् वैदिकत्वसिद्धिरिति ? सोऽयमाभाणको लोके "पिण्डमुत्सृज्य करं लेढी"ति सूत्रकारस्याप्यकौशलं प्रदर्शितं स्यात्। ततश्चोदनाग्रहणादचोदनात्मकोऽपि वेदभागोऽभिप्रेत इति गम्यते, येन वेदार्थमात्रस्य**

### पञ्चपादिकाविवरणम्

वादादिविज्ञानेतिकर्तव्यताका भवति। सा च पुरुषप्रवृत्तिलक्षणामर्थभावनामध्ययनकरणिकां स्वाध्यायभाव्यनिष्ठां प्राङ्मुखत्वादीतिकर्तव्यताकामुत्पादयति। सा च भाव्यस्य स्वाध्यायस्य फलवद्विज्ञानजनननिमित्तत्वमन्तरेणार्थभावनामुत्पादयितुमसमर्था स्वाध्यायगतलिङादिशब्दाभिधेयक्रतुभावनानां स्वर्गादिविषयत्वं परम्परया कल्पयति, इत्यध्यनविधिसामर्थ्यादेव वेदस्य विशिष्टफलविषयभावनानां प्रतिवादकत्वं सिद्धम्। अतो वेदग्रहणेनैव भावनानां धात्वर्थे विहाय स्वर्गाद्यालम्बनत्वं सिध्यतीति ॥

अपिच चोदनाग्रहणे वेदान्तानामर्थान्तरपरत्वाशङ्का स्यात्, तन्निवृत्तये वेदग्रहणमेव युक्तमित्याह—**अपिच वेदग्रहणमेवेति**॥ संदेहान्तरमाह—**चोदनाग्रहणे हीति**॥ ननु वेदाध्ययनानन्तरं धर्मविचारं प्रतिज्ञाय चोदनालक्षण इति ब्रुवन् वैदिकचोदनामेव ब्रवीति ? न; तत्र विशेषाभावात्। अनेन च सूत्रेण तत्रापि सर्वचोदनानन्तर्यं किं न स्यात् ? प्रकारान्तरेण वैदिकचोदनानियममाह—**अथ वेदाधिकरण इति**॥ लक्षणसूत्रे प्राप्तं वेदग्रहणं विहायान्यत्र कुर्वन्न बुद्धिपूर्वंकारी स्यादिति परिहरति—**सोऽयमाभाणक इति**॥ अतो वेदान्तानां धर्मपरत्वपर्युदासाय चोदनाग्रहणमित्याह—**तत-**

### तत्त्वदीपनम्

तत्करणं यस्याः, सा तथोक्ता। अध्ययनस्य फलमध्ययनफलम्, तत्प्रतिपादका येऽर्थवादादयः, तदुत्थं ज्ञानमितिकर्तव्यता यस्याः, सा तथोक्ता। प्राकरणिकस्य ज्ञानस्याप्यङ्गत्वात् तद्धेतुप्रकरणमादिशब्दार्थः। उत्तरो ग्रन्थः स्पष्टार्थः॥

टीकोक्तप्रकारादन्यथा संदेहव्युदासमाह—**अपिचेति**। प्रवर्तकवचनस्य चोदनात्वात् तल्लक्षणो धर्म इत्युक्तेऽप्रवर्तकसत्यादिवाक्यानामर्थान्तरपरत्वशङ्का स्यात्, तन्निरासार्थं सर्वस्य वेदस्य धर्मे प्रामाण्याभिधानमुचितमित्यर्थः। "असन्देहादि"त्येतत्प्रपञ्चरूपत्वमुत्तरग्रन्थस्य व्यावर्तयति—**संदेहान्तरमिति**। चोदनानां च लोके वेदे च विद्यमानत्वात् "चोदनालक्षणोऽर्थो धर्मः" इत्यत्र कीदृश्या ग्रहणमिति विशयः स्यात्, तन्निरासार्थं वेदग्रहणमेवोचितमित्यर्थः। सन्देहव्युदासस्यान्यथोपपत्तिं शङ्कते—**ननु वेदेति**। वेदस्य प्रथमसूत्रे प्रस्तुतत्वाद् द्वितीयसूत्रेऽपि वेदचोदनैवोपादीयत इत्यर्थः। प्रथमसूत्रस्यापि संदिग्धार्थत्वान्न तेनैतन्नियम इत्याह—**न तत्रेति**। प्रथमसूत्र इत्यर्थः। **विशेषाभावादिति**। वेदाध्ययनानन्तरमिति विशेषाभावादित्यर्थः॥ अथशब्दस्यानन्तर्यार्थत्वात् कस्यानन्तर्यमिति वीक्षायां वेदाध्ययनानन्तर्यं परिशेषात् सिध्यतीत्याशङ्क्य परिशेषोऽसिद्ध इत्याह—**अनेनेति**॥ वेदाधिकरणपर्यालोचनया चोदनाशब्दार्थो निरूप्यत इत्याह—**प्रकारान्तरेणेति**॥ **एके** नैयायिकादयो वेदान् पुरुषबुद्धिविरचितानाचक्षते। तत्र हेतुमाह—**संनिकर्षमिति**। पुरुषसंबन्धाभावे 'काठकमि'त्यादिसमाख्यानुपपत्त्या पुम्बुद्धिप्रभवत्वमिति वेदाधिकरणाक्षरार्थः। सूत्रकारस्य कथमकौशलमिति शङ्कायामाह—**लक्षणेति**॥ सूत्र-भाष्य-वार्तिककाराभिप्रायेण वेदैकदेशस्य विचारितत्वं प्रागुक्तम्, तत्कथं सूत्रकार

### ऋजुविवरणम्

"चोदनाग्रहणे ही"ति 'हि'शब्दप्रयोगात् पूर्वस्यैव विवरणमेतदिति प्रतीयते; तथा सत्युत्तरग्रन्थोपपादितलौकिक-वैदिकयोर्मध्ये सन्देह एव विवक्षितः स्यात्, तथा सति पूर्वं वेदान्तानामर्थान्तरपरत्वशङ्का स्यादिति व्याख्यानमसम्बद्धमेव स्यात्, तदर्थं व्याचष्टे—**सन्देहान्तरमिति**॥ **तत्र विशेषाभावादिति**। तत्र तस्मिन् सूत्रे। वेदाध्ययनानन्तरमिति **विशेषाभावात्**। **अथ**शब्दस्यानन्तर्यमात्रवाचित्वात्; अथवा, अध्ययनविधिप्रयुक्तत्वाद् विचारस्य तदानन्तर्येऽपि तस्यैव हेतुत्वमिति निश्चेतुं न शक्यते; आनन्तर्ये हेतुत्वे च तात्पर्यायोगादिति। अथवा न तेन वैदिकनियमः; धर्मप्रमाणमात्रस्य प्रथमसूत्रे प्रामाण्यप्रतिज्ञाङ्गीकारायोगादित्यर्थः। ननु 'अथातः' शब्दाभ्यां वेदस्य हेतुत्वप्रतीतेरनन्तरं चोदनाग्रहणाद् वैदिकत्वनियम इति चेत्, तत्राह—**अनेन चेति**। द्वितीयसूत्रगतचोदनाग्रहणसामर्थ्येन पूर्वसूत्रेऽपि सर्वचोदनानन्तर्यं

## पञ्चपादिका

धर्मत्वं मा भूदिति चोदनेत्यवोचत् । तदेवं सूत्रकार एव स्वशास्त्रविषयातिरिक्तं वेदभागमविचारितमसूसुचत् ।।

ननु "दृष्टो हि तस्यार्थः कर्मावबोधनम्", "तद्भूतानां क्रियार्थेन समाम्नायः", "आम्नायस्य क्रियार्थत्वादि"ति च सर्वस्य कार्यार्थत्वं दर्शितम् ? सत्यम्; तत्प्रक्रमबलात् तन्निष्ठो वेदभाग इति गम्यते, न सर्वत्र । अपिच "दृष्टो हि तस्यार्थः कर्मावबोधनमि"ति न सर्वस्य कर्मावबोधनमर्थ उच्यते कथम् ? वेदाध्ययनानन्तरं स्नानविधायकमाम्नायमुपलभ्य वेदस्यानर्थकत्व आशङ्किते "अतिक्रमिष्याम इममाम्नायम्, अनतिक्रामन्तो वेदमर्थवन्तं सन्तमनर्थकमवकल्पयेम; दृष्टो हि तस्यार्थः कर्मावबोधनमि"त्यर्थसद्भावः प्रदर्शितः, नार्थान्तरासद्भावः । सोऽयमयोगव्यवच्छेदः, नान्ययोग-

## पञ्चपादिकाविवरणम्

श्चोदनाग्रहणादिति ।। तस्मात् सूत्र-भाष्य-वार्तिककाराभिप्रायेण ब्रह्मपरत्वमेव, न धर्मपरत्वमित्याह—तदेवं सूत्रकार इति ।।

ननु तेषामेव कृत्स्नस्य वेदस्य धर्मे विनियोजकं वचनमस्तीत्याह—ननु दृष्टो हि तस्यार्थ इति ।। सत्यम्; धर्मचोदनासूत्रप्रक्रमसामर्थ्यादुत्तरं सामान्यवचनं प्रकृतविशेष उपसंह्रियत इत्याह—सत्यम्; तत्प्रक्रमबलादिति ।। सामान्येन परिहारमभिधाय प्रत्येकमाह—अपिच दृष्टो हीति ।। ननु आम्नायशब्देन सकलवेदस्य धर्मावबोधे विनियोगः स्पष्ट इति चोदयति—कथमिति ।। न विनियोगकार्त्स्न्यपरं भाष्यम्, किंत्वाम्नायस्यार्थसद्भावपरम्; यथा 'रूपं प्रत्यक्षमि'त्युक्ते न सर्वप्रत्यक्षस्य रूपे विनियोगः, किन्तु रूपस्य प्रत्यक्षान्वयमात्रं कथ्यते, तद्वदिति परिहरति—वेदाध्ययनानन्तरमित्यादिना ।। अयोगव्यवच्छेद इति । वेदस्य कर्मावबोधेनासंबन्धं निराकृत्य संबन्धः प्रतिपाद्यत इति । नान्ययोगव्यवच्छेद इति । वेद-

## तत्त्वदीपनम्

एवेत्युक्तम् ? इत्याशङ्क्योपलक्षणपरतया व्याचष्टे—तस्मादिति ।।

सूत्रकृदादिवचनसामर्थ्यादेकदेशस्य विचारितत्वप्रतिपत्तेः कथं चोद्योऽस्त्वित्याशङ्क्याह—ननु तेषामिति ।। तस्य आम्नायस्य कर्मावबोधनम् नियोगज्ञापनम्, दृष्टं प्रयोजनमिति भाष्यार्थः । तेषु पदार्थेषु भूतानाम् वर्तमानानां पदानाम्, कार्येण वाक्यार्थेन तत्प्रतिपत्त्यर्थत्वेन समाम्नाय इति सूत्रार्थः । नच—परस्परविरोधात् तद्वचनमप्रमाणमिति—शङ्क्यम्; उत्तरानुसारेण प्राचीनवचनान्तरस्य नयनसंभवादित्यर्थः । "सत्यमि"त्यत्रोपक्रमानुसारेणोत्तरस्य नयनमित्युक्तम्, तत् कस्मात् ? विशेषाभावादित्याशङ्क्य तात्पर्यमाह—सत्यमिति ।। कार्यार्थत्वं दर्शितमित्युक्तमङ्गीकृतं चेत्, तर्हि कथमेकदेशविशेषणत्वं विचारस्येत्याशङ्क्याह— धर्मेति । धर्मसूत्रं चोदनासूत्रं चेति धर्म-चोदनासूत्रे, तयोः प्रक्रमसामर्थ्यादित्यर्थः ।। "दृष्टो ही"ति ग्रन्थस्यैकदेशविषयत्वोक्तेः—"अपिचे"ति पुनरुक्तमित्याशङ्क्याह—सामान्येति । तत्र कृत्स्नवेदवाचकपदाभावादिति द्रष्टव्यम् । कथंशब्दसूचितामनुपपत्तिं दर्शयति—नन्वाम्नायस्येति । "अतिक्रमिष्याम इममाम्नायमि"त्यत्राम्नायस्य प्रकृतत्वात् तच्छब्देन तत्परामर्शः । कर्मावबोधनं दृष्टोऽर्थ इति विशेषणादर्थान्तरव्यावृत्तिर्लक्ष्यते । ततः कथं नार्थान्तरसद्भाव इत्युक्तमित्याशङ्क्याह—न विनियोगेति । कृत्स्नस्य वेदस्य न कर्मणि विनियोगपरत्वमित्यर्थः । यद्यप्यानर्थक्यशङ्कायामर्थमात्रप्रदर्शनमुचितम्; तथाऽपि 'धर्मजिज्ञासे'त्युपक्रमानुरोधेन कर्मावबोधनमित्युक्तम्, न तु सकलस्याम्नायस्य कर्मणि विनियोगाभिप्रायेणेत्यर्थः । अतिक्रमिष्याम इति । अधीत्य अर्थं मीमांसित्वा, स्नायादिति कल्पयाम इत्यर्थः । अयोगान्ययोगव्यवच्छेदशब्दमस्पष्टत्वाद् व्याचष्टे—अयोगव्यवच्छेद इत्यादिना ।। यद्यपि न निखिल-

## ऋजुविवरणम्

किं न स्यात् ? तस्यासन्दिग्धत्वात्, प्रथमसूत्रस्य साधारणत्वादिति भावः । "तदेवं सूत्रकारः" इति विशेषोपसंहारस्य प्रक्रमविरुद्धत्वपरिहारायावतारयति—तस्मात्सूत्रभाष्येति ।।

ननु सूत्रकारादिवचनसामर्थ्यादेकदेशस्यैव कार्यपरत्वं प्रतीयत इत्युक्तम्, तत् कथं चोद्यमित्याशङ्क्यावतारयति—ननु तेषामेवेति ।। "सत्यमि"त्यनेन सर्वं व्याख्यातम्, "तेनापि चे"ति पुनरुक्तमित्याशङ्क्याह—सामान्येनेति ।। शेषं नेयम् ।।

## पञ्चपादिका

**व्यवच्छेदः । कर्मशब्देन धर्म एव कार्यत्वादभिहितः; यतस्तदवबोधप्रवृत्तौ वेदस्यार्थवत्त्वं मृगयते—किं वेदस्यार्थो विद्यते ? न वा ? स च धर्मत्वेनावगन्तुं शक्यते ? न वेति ? तस्मान्न कर्मावबोधनमेव वेदार्थोऽभिप्रेतो भाष्यकृतः । यत्पुनः—"आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानामि"ति, तत्र यद्यानर्थक्यमर्थाभावः; तदसत्, यत एकमेव भूतार्थमनुवदन्तीति दर्शितोऽर्थः । अथ निष्प्रयोजनत्वम् स्वाध्यायाध्ययनविधिर्निष्प्रयोजनमक्षरमात्रमपि न ग्राहयतीति; भवतु "सोऽरोदीदि"त्यादीनाम्; अपुरुषार्थप्रतिपादकत्वात्, एकवाक्यत्वात् पृथक् कार्यकल्पनानुपपत्तेः, कल्पयितुं चाशक्यत्वात् । यानि पुनरपास्ताशेषाशिवमात्मानमनुभवपर्यन्तमवबोधयन्ति वाक्यानि, तान्यनवद्यप्रयोजनत्वाद् भवन्तितरामेव प्रयोजनवन्ति । अतः स्वयमपुरुषार्थत्वात् तदर्थोपकारितया कथञ्चित् पुरुषार्थस्तावकत्वेन प्रयोजनवत्त्वमुक्तम्, न सर्वस्यैवाक्रियार्थत्वेनानर्थक्यमाशङ्क्य क्रियार्थत्वेनार्थवत्त्वमुक्तम् । तथाच तद्विधान्येव तत्र वाक्यान्युदाहृतानि ॥**

## पञ्चपादिकाविवरणम्

स्यार्थान्तरसंबन्धो नास्तीति नाभिधीयत इत्यर्थः । ननु कर्मशब्दः प्रमेयमात्रपरतया धर्म-ब्रह्मणोरविशिष्टः किं न स्यादिति ? नेत्याह—**कर्मशब्देन चेति** ॥ क्रियायां विषयमात्रे च प्रसिद्धस्य शब्दस्य कुतः क्रियापरत्वमिति ? प्रकरणादित्याह—**यतस्तदवबोध इति** ॥ **तस्मादित्युपसंहारः** ॥ यत्पुनरित्युक्तानुवादः ॥ आनर्थक्यशब्देनाभिधेयाभावः प्रयोजनाभावो वाऽभिधीयते ? न तावदभिधेयाभाव इत्याह—**तत्र यद्यानर्थक्यमर्थाभाव इत्यादिना** ॥ **अथेति** निष्प्रयोजनत्वमनूद्य दूषणमाह—**भवतु सोऽरोदीदिति** ॥ ननु तेषामपि "पूषा प्रपिष्टभागः" इत्यादिसंसर्गेष्विव प्रयोजनं कल्प्यतामिति ? नेत्याह—**एकवाक्यत्वादिति** ॥ ननु "अधस्तात् समिधं धारयन्ननुद्रवेदुपरि हि देवेभ्यः" इत्युपरिधारणस्य पूर्वेणैकवाक्यस्य विधानवत् सप्रयोजनो विधिः कल्प्यतामिति ? नेत्याह—**कल्पयितुं चाशक्यत्वादिति** ॥ वेदान्तवाक्यान्यपि तर्हि प्रयोजनशून्यतया क्रियार्थानीति ? नेत्याह—**यानि पुनरपास्ताशेषाशिवमिति** ॥ अतः सूत्रं क्रियाप्रकरणपठितवाक्यविषयमित्याह—**अतः स्वयमपुरुषार्थत्वादिति** ॥ क्रियाप्रकरणपठितानामेव प्रयोजनशून्यानां स्तावकत्वेन क्रियान्वयो दर्शितः, न वेदान्तानामित्यत्र लिङ्गमाह—**तथाच तद्विधान्येवेति** । न वेदान्तवाक्यं किंचिदप्यर्थवादाधिकरणे क्रियाशेषत्वेनोदाहृतमस्तीत्यर्थः ॥

## तत्त्वदीपनम्

स्याम्नायस्य धर्मे विनियोगपरं भाष्यम्; तथाऽपि धर्मवदेव ब्रह्मणोऽपि वेदार्थत्वोक्तेर्न पृथग् ब्रह्मविचार इत्याशयेनाशङ्कते—**ननु कर्मेति** ॥ कर्मशब्दस्योभयत्र प्रयोगेऽपि नात्र तद्विवक्षेत्याह—**नेत्याहेति** ॥ तत्र हेतुं पृच्छति—**क्रियायामिति** । धर्मस्यात्र प्रकृतत्वात् स एवात्र निर्दिश्यत इत्याह—**प्रकरणादिति** ॥ आनर्थक्यमर्थाभाव इति तेनानुक्तत्वात् तन्निराकरणमनुचितमित्याशङ्क्य विकल्पपूर्वकं व्याचष्टे—**आनर्थक्येति** ॥ "अथे"त्यनेन द्वितीयं विकल्पमनूद्य "स्वाध्यायाध्यनविधिरि"त्यनेन तस्य निरसनमिति प्रतिभाति, तदर्थमाह—**अथेति** । "अथे"त्यारभ्य "न ग्राहयती"त्यन्तोऽनुवादः । उत्तरेण दूषणमित्यर्थः । निष्प्रयोजनत्वमिष्टमिति शङ्कायामध्ययनविध्युपात्तत्वान्न तस्येष्टत्वमित्यभिप्रायेणोक्तम्—**स्वाध्यायेति** ॥ यद्यपि "सोऽरोदीदि"त्यादिवाक्ये पुरुषार्थसंसर्गो नोपलभ्यते; तथाऽपि स कल्प्यत इति शङ्कते—**ननु तेषामिति** ॥ वाक्यभेदप्रसङ्गाद् न पृथक् फलकल्पनमित्याह—**नेत्याहेति** ॥ वाक्यभेदोऽपि क्वचित् दृष्ट इति शङ्कते—**नन्वधस्तादिति** ॥ उपरिधारणस्यापूर्वत्वात् पूर्वेणैकवाक्यताऽनुपपत्तेश्च तत्र वाक्यभेदकल्पनम्, न तथाऽत्र तत्कल्पकमस्तीत्याह—**नेत्याहेति** ॥ पुमर्थशून्यत्वात् "सोऽरोदीदि"त्यादिवाक्यानां क्रियार्थत्वं चेत्, तर्हि वेदान्तानामपि भूतार्थत्वात् फलशून्यत्वमिति शङ्कते—**वेदान्तेति** ॥ फलशून्यत्वमसिद्धमित्याह—**नेत्याहेति** ॥ वेदान्तानां सफलत्वमभिधाय, "अतः स्वयमि"त्यत्र फलवैधुर्याभिधाने विरोध इत्याशङ्क्याह—**अत इति** । वेदान्तानां क्रियासंस्पर्शमन्तरेण फलवत्त्वसंभवोऽतः शब्दार्थः केषांचिदेव क्रियाशेषत्वम्, न सर्वेषामित्येतत्प्रतिपादकवचनोदाहरणमनुपलब्धिविरुद्धमित्याशङ्क्याह—**क्रियेति** ॥ तद्विधान्येवेत्येवकारार्थमाह—**न वेदान्तेति** ॥

## पञ्चपादिका

**यदपि केचित् शास्त्रप्रस्थानमन्यथा वर्णयन्ति—न हि किलैवं शास्त्रं प्रस्थितम्—किं वेदलक्षणो धर्मः ? उत बुद्धवाक्यादिलक्षण ? इति । किं तर्हि ? अधीतवेदस्य योऽर्थोऽवगतः, तत्रैव विप्रतिपत्तयः सन्ति—किमयमसौ ? उतायम् इति तन्निराकरणार्थः शास्त्रारम्भः—इति ॥**

## पञ्चपादिकाविवरणम्

**यदपि केचिदिति** प्राभाकराणां शास्त्रारम्भप्रकारं दर्शयति । अयमाशयः—अध्ययनविधिर्हि विचारं विदधाति । स च स्वाध्यायस्य फलपर्यन्ततामाकाङ्क्षन् वेदार्थविचारमेव विदध्याद्, न धर्मविचारमिति । ननु सामान्यप्रतिपत्तिविशेषविप्रतिपत्तिभ्यां जिज्ञासितोऽर्थो विचारमर्हति, न तथा वेदार्थ इति ? तत्राह—**किं तर्हि ? अधीतवेदस्येति** ॥ "उद्भिदा यजेत पशुकामः" इत्यत्र पशुकाममुद्दिश्य यागो विधीयते ? यागविधानं वोद्दिश्य पशुकामाधिकारः ? किं वोभयमिति ? तथा सत्रे यजमाना एवर्त्विजः, इति यजमानानुद्दिश्य ऋत्विग्भावो विधीयते ? किंवर्त्विज उद्दिश्य यजमानभावो विधीयते ? इत्यादिवचनव्यक्तिसंशयाद् विचार इति ॥

"अथातो धर्मजिज्ञासा" । वेदार्थविचारो विषयः । स कर्तव्यो वा ? नवा ? इति विचारः । नेति तावत् प्राप्तम्; आलम्बनप्रमाणाभावात् । ननु आम्नायालम्बनो विचारः स्यात्, न, अध्यापनविधिशेषतयाऽऽम्नायस्य स्वार्थविवक्षाऽभावात् । कथम् ? अध्ययनं तावदध्यापनविधिप्रयुक्तानुष्ठानत्वात् तच्छेषतामश्नुते । स्वाध्यायोऽप्यध्ययन-

## तत्त्वदीपनम्

"केचिदि"त्यत्र केषां ग्रहणमिति वीक्षायामाह—**यदपि केचिदिति** ॥ धर्मोपाधौ शास्त्रारम्भः पूर्वत्र निर्दिष्टः, ततोऽन्यथा शास्त्रारम्भेऽधर्मोपाधौ विचार इत्युक्तं स्यात्, स चानुपपन्नः, नच तत्र हेतूपन्यास इत्याशङ्क्याह—**अयमाशय इति** ॥ सामान्यप्रतिपत्त्यादेर्वेदार्थेऽसंभवान्न तदुपाधौ विचार इति शङ्कते—**नन्विति** ॥ असंभवोऽसिद्ध इत्याह—**तत्रेति** ॥ वेदार्थाविप्रतिपत्तिमभिनयति—**उदिति** ॥

उद्देश्य-विधेयभावनिरूपणार्थं उपक्रम इत्यनुपपन्नम्; आद्ये सूत्रे तदनुपादानात्, इत्याशङ्क्य, सामान्येन वेदार्थस्य विचार्यत्वसिद्धौ तद्विशेषविचारोपपत्तिरित्याशयेन वेदार्थमात्रविचारं समर्थयते सूत्रकृदित्याह—**अथात इति** । आलम्बनप्रमाणभावाभावाभ्यां चिन्तेति द्रष्टव्यम् । पूर्वपक्षमाह—**नेतीति** । हेत्वसिद्धिं शङ्कते—**नन्वाम्नायेति** ॥ तस्य विवक्षितार्थत्वसिद्धौ तद्विचारो युज्यते तदेवासिद्धमित्याह—**नाध्यापनेति** ॥ अध्यापनविधिशेषत्वमसिद्धमित्याह—**कथमिति** ॥ "उपनयीत तमध्यापयीते"ति उपनयनाध्यायनयोरेकाधिकारत्वादुपनयनविधेश्च साधिकारत्वादध्यापनविधेरपि साधिकारत्वम् । अध्यापनस्यैवाध्ययनमन्तरेणासंभवादध्ययनस्य तच्छेषत्वमित्याह—**अध्ययनमिति** ॥ तथाऽपि कथं स्वाध्यायस्य तच्छेषत्वम् ? तत्राह—**स्वाध्यायोऽपीति** । अध्येतव्याभावेऽध्ययनासंभवात् स्वाध्यायस्याध्ययनविधि-

## ऋजुविवरणम्

कथं प्रकारान्तरेण शास्त्रारम्भः संभवति; धर्मस्यैव जिज्ञासितत्वात् । नहि धर्मोपाधिं मुक्त्वाऽन्यद् विचारस्य प्रयोजकमप्यस्तीत्याशङ्क्याह—**अयमाशय इति** ॥

यद्येवं वचनस्य व्यक्तिसन्देहाद् विचारारम्भः, तर्ह्येकदेशविचारः स्पष्ट एव, तेन नायमारम्भः पृथगुपन्यसनीयः, इत्याशङ्क्याह—**अथातो धर्मजिज्ञासेति** ॥ यद्यपि वचनव्यक्तिसन्देहनिरासार्थः सकलशास्त्रारम्भः; तथाऽप्युपोद्घातत्वेन प्रारम्भः सर्ववेदार्थविषय इति दर्शयति—**वेदार्थविचारो विषय इति** ॥ अध्ययने शब्दात् कस्यचिदप्यधिकारो नावगम्यते, अनन्यप्रयुक्तविषयाभावाच्च न कल्प्यः । तत्र प्रथमभावित्वात् प्रयोजकविध्यधिकारस्य तन्निष्पत्तिरध्ययनस्य प्रयोजनम्, तथा सत्यर्थाववोधप्रयोजनत्वाभावाद् नाध्ययनविधिविधेयो विचार इति वर्तमानप्राभाकराः । तत्र शेषत्वे पूर्वपक्षान्तर्गतत्वेनास्य पक्षस्य लाभात् चिरन्तनपक्षमेव दर्शयति—**अध्यापनविधिशेषतयेति** ॥ यद्वा, इदानीन्तनैरपि राद्धान्तेऽपूर्वार्थत्वमङ्गीकृत्यार्थाववोधप्रयोजनत्वस्वीकारादनन्तरपूर्वपक्षान्तर्गतत्वेनापि स्वीकारादनुपन्यासः । ननु न वेदाध्यापनविधिशेषत्वं संभवति; विनियोजनकाभावात्, इत्याक्षिपति—**कथमिति** ॥ अध्ययनस्याध्यापनविधिप्रयुक्तिप्रकार उत्तरग्रन्थे व्यक्त इति नेह प्रतन्यते । **स्वाध्यायोऽपीति** । अध्ययनं नामोच्चारणम्, तच्चोच्चार्यमाणनिष्ठम्, अतस्तेन

### पञ्चपादिकाविवरणम्

निर्वृत्तिद्वारेणाध्यापननिर्वृत्तिपरो विषनिर्हरणादिवाक्यवन्न स्वार्थविवक्षामर्हतीति केचित्। अन्ये तु—स्वाध्यायविधिवाक्ये तव्यप्रत्ययेनापूर्वस्य प्रतिपादनात् तदङ्गता तावत् स्वाध्यायस्याधिगता। तत्र विहिताध्ययनस्य प्रयोजकत्वादध्यापनविधेः प्रथमावगतामपूर्वाङ्गतामनपाकृत्यैवाध्ययनेनाध्यापनं निर्वर्त्यत—इति। ततश्चापूर्वाङ्गत्वादविवक्षितार्थत्वाद् विचारानारम्भः प्राप्तः॥

तत्रारम्भणीयो विचारः;. स्वाध्यायस्य विवक्षितार्थत्वात्। ननु अध्यापनविधिशेषः स्वाध्याय इत्युक्तम्? न; प्रयुक्तिमात्रेणाङ्गत्वानुपपत्तेः। न ह्याधानमुत्तरक्रतुप्रयुक्तिमात्रात् तदङ्गं भवति। ननु लिङ्ग-संख्या-प्रयाजादयः क्रतुविधिप्रयुक्तानुष्ठानास्तदङ्गतामश्नुवते? न; प्रकरणादिविनियोगप्रमाणसामर्थ्यादङ्गभावः, तदङ्गत्वाच्च तत्प्रयुक्ता-

### तत्त्वदीपनम्

निष्पत्तिद्वाराऽध्यापनविधिनिष्पत्तिपरत्वमित्यर्थः। तथाऽपि कथमर्थविवक्षाऽभावः? इत्याशङ्क्याह—**विषेति**। अध्यापनविधिप्रयुक्तिमात्रादध्ययनस्य न तदङ्गत्वम्, न ह्याधानमुत्तरक्रतुप्रयुक्तिमात्रात् तदङ्गमित्याशङ्कायां तेषामेव पक्षान्तरमाह—**अन्ये त्विति**। "भूतं भव्यायोपदिश्यते" इति न्यायात् स्वाध्यायस्यापूर्वशेषत्वमित्यर्थः। स्वाध्यायाध्ययनस्याध्यापनविधिनिर्वर्तकतया विनियुक्तत्वात् कथं तस्याध्ययनापूर्वशेषत्वम्? तत्राह—**तत्र विहितेति**। अध्यापनविधेरध्ययनमात्रप्रयोजकत्वेऽनुपनीताध्यापनमप्यापतेत्। तस्माद् विहिताध्ययनप्रयोजकत्वम्, इति स्वाध्यायस्याध्ययननियोगाङ्गत्वमित्यर्थः॥

सिद्धान्तमाह—**तत्रेति**। स्वाध्यायस्य विवक्षितार्थत्वात् तदनुग्राहकविचारारम्भो युक्त इत्यर्थः। विवक्षितार्थत्वमसिद्धमित्युक्तं चोद्यं स्मारयति—**नन्वध्यापनेति**॥ अध्यापनविधिप्रयुक्तानुष्ठानत्वादध्ययनस्य तदङ्गत्वमित्येतत्तावदयुक्तमित्याह—**न, प्रयुक्तीति**॥ प्रयोजकत्वमपि दृष्टमिति शङ्कते—**ननु लिङ्गेति**। "पशुना यजेत" "अरुणया क्रीणाती"ति लिङ्गम्; "सप्तदश प्राजापत्यानि"त्यादौ संख्या। प्रोक्षणादिरादिशब्दार्थः। तत्रापि न तत्प्रयुक्तिमात्रमङ्गत्वप्रयोजकमित्याह—**न प्रकरणादीति**॥ श्रुत्यादिवत् प्रयुक्तिमात्रमपि प्रयोजकमिति न शङ्क्यम्, निरस्तत्वादित्याह—**नचेति**॥

### ऋजुविवरणम्

विनाऽनुपपत्तेस्तदाक्षिपति। अतोऽध्ययनप्रयोजको विधिः तदुपकारकमपि प्रयुङ्क्ते। प्रयुक्तस्य चाङ्गत्वाद् न विवक्षितार्थत्वमिति भावः। अत्र प्रयुक्तिमात्रादङ्गत्वं न संभवति; अनङ्गस्याप्युपकारस्य प्रयुक्तिसंभवात्, अतो नाविवक्षितार्थत्वमस्मिन् पक्ष इति प्रकारान्तरमाहुः, तद् दर्शयति—**अन्ये त्विति**॥ ननु अध्ययनविधौ स्वाध्यायस्यापूर्वाङ्गत्वेऽप्यध्यापनविधिना प्रयुक्ततया अध्ययनस्यापूर्वार्थता व्यावर्तिता अनिरुद्धकार्यस्य शेषित्वानिर्वाहात्, अतः स्वाध्यायस्यापि तद्द्वारा शेषत्वव्यावृत्तिरित्याशङ्क्याह—**तत्र विहिताध्ययनस्येति**॥

यद्यपि प्रयोजकविध्यधिकारः प्रथमभावी, तथाऽपि न तन्निष्पत्तिरध्ययनप्रयोजनम्; अकर्तृगतत्वात्, कर्तृगतस्यैवैश्वर्यस्य कर्तृत्वोपपादकत्वात्। ऋत्विगादेरपीयमेवं विधा। नचाध्ययने कर्तुरन्यस्याधिकारः, येन साक्षात् कर्तृगतोऽधिकार ऋत्विजामिव न शास्त्रार्थः स्यात्। तच्च क्रियास्वभावजन्यं दृष्टम्; अन्तरङ्गत्वादित्याह—**आरम्भणीय इति**॥ कथं प्रयुक्तिमात्रादङ्गत्वानुपपत्तिरित्याशङ्क्य व्यभिचारं दर्शयति—**नह्याधानमिति**॥ **ननु लिङ्गसंख्येति**। न प्रयुक्तिरङ्गत्वव्यभिचारिणीति वक्तुं शक्यम्; ग्राहकगृहीतपश्वेकत्वादेस्तत्साधनपश्वङ्गताऽभावप्रसङ्गात्। नच तृतीयाऽङ्गत्वं बोधयति। सा हि प्रातिपदिकार्थान्वितकरणत्वैकत्वे विवक्षति; नतु करणत्वविशिष्टस्यैकत्वम्, एकत्वविशिष्टस्य वा करणत्वम्, येन वाक्यादेवापूर्वसाधनावस्थक्रत्वन्वयिपशुवदपूर्वीयक्रतुकरणावस्थपश्वन्वयित्वेनैकत्वकरणत्वयोस्तदङ्गता स्यात्, विरम्यव्यापारानुपपत्तेः, प्रातिपदिकगतस्वार्थाभिधायकत्वेनानुशासनात्। नापि संख्यासामर्थ्यादप्यन्वयः; संख्यायाः संख्येयमात्रावच्छेदकत्वेन न लिङ्गं साधनावस्थपश्वङ्गत्वे मानम्। तेन प्रायुक्तिकमेव शेषत्वम्। सुतरां प्रयाजादेः; अन्वयमात्रबोधस्याप्यभावात् संख्याविधैव। मैवम्; प्रयुक्तिर्हि विध्याक्षेपरूपमुपादानम्। तच्च न संख्याया अङ्गत्वे मानम्, किन्तु लिङ्ग-संख्ययोः स्वभावतः संख्येयावच्छेदकत्वात्। परतन्त्रस्य परङ्गताधीः, किन्तु यदंशि स्वरूपम्, तस्य स्वरूपमात्रेणाङ्गित्वे सान्निध्यान्मानधीस्थग्राहकसम्बन्धविरोधाद् ग्राहकीयपश्वन्वयित्वमङ्गित्वस्यौपादानिकमिति परिहरति—

## पञ्चपादिका

**तत्रापि न निखिलवेदार्थविचारप्रतीतिः ।**

## पञ्चपादिकाविवरणम्

नुष्ठेयता । न तथेह विनियोगे प्रमाणमस्ति । नच प्रयुक्तिमात्रादङ्गतेति विशेषः । अतः स्वातन्त्र्याद् विवक्षितार्थः स्वाध्याय इति । यत्त्वध्ययनापूर्वाङ्गतेति, तत्राप्यपूर्वस्य प्रयोजनाकाङ्क्षायां दृष्टे सत्यदृष्टकल्पनाऽनुपपत्तेः स्वाध्यायसामर्थ्यजन्यं प्रयोजनवद्विज्ञानं फलत्वेन कल्प्यते । ननु न नैयोगिकं तत्, किन्तु दृष्टसामर्थ्यजन्यं फलविज्ञानम् ? सत्यम्;[1] नैयोगिकफलस्यैव विज्ञानस्यानुष्ठानाङ्गतयाऽपूर्वोपकारः कल्प्यते; अथवाऽर्थे तात्पर्यं विज्ञानस्य नैयोगिकफलत्वाधीनमिति कल्प्यते; लौकिकतात्पर्यनिमित्तविवक्षाद्यभावात् । तदेवं विवक्षितार्थत्वात् शास्त्रमारम्भणीयमिति ॥

तत्र वेदार्थविचारारम्भेऽपि न वेदान्तानां गतार्थत्वमिति परिहरति—**तत्रापि न निखिलवेदार्थेति** । वेदार्थोपाधिविचारेऽपि धर्मग्रहणसामर्थ्यात् तदेकदेशो विचारित इति भावः । ननु कृत्स्नाध्ययनविधिप्रयुक्तो विचारः कथमेक-

## तत्त्वदीपनम्

मतान्तरमनूद्य निरस्यति—**यस्त्विति** । अपूर्वस्य स्वरूपेणापुरुषार्थत्वात् पुरुषार्थपर्यवसायित्वं वक्तव्यम् । नच दृष्टे फले संभवत्यदृष्टकल्पना युक्तेत्यर्थावबोधः फलमित्यर्थः ॥ अर्थावबोस्य न विधिफलत्वम्, अन्वय-व्यतिरेकसिद्धत्वादिति शङ्कते—**नन्विति** । अन्वय-व्यतिरेकाभ्यां स्वाध्यायस्य पदार्थावबोधजननसामर्थ्यं दृष्टम्, तज्जन्यमित्यर्थः । दृष्टसामर्थ्यजन्यमित्येतदङ्गीकरोति—**सत्यमिति** ॥ न तर्हि विधिफलत्वमित्यत्राह—**नैयोगिकेति** । साङ्गाध्ययनसंस्कृतस्वाध्यायसमुत्थं यद् ज्ञानम्, तदेवापूर्वोपकारि; अन्यथा विधिवैयर्थ्यं स्यादित्यर्थः । लोके विवक्षाया मानादेस्तात्पर्यनिमित्तत्वं समधिगतम्, तस्या वेदेऽनुपपत्तेः साङ्गाध्ययननियोगाधीनं तात्पर्यकल्पनमित्याह—**अथवेति** ॥

"तत्रे"त्यस्यार्थमाह—**तत्र वेदार्थेति** ॥ वेदार्थोपाधौ विचारस्य प्रवृत्तत्वात् कथं न निखिलप्रतीतिरित्युक्तम् ? इत्याशङ्क्याह—**वेदार्थेति** ॥ वेदार्थमात्रस्य विचार्यत्वे धर्मग्रहणानुपपत्तिरित्यर्थः । कथंशब्दसूचितामनुपपत्तिं दर्शयति—

## ऋजुविवरणम्

**न प्रकरणादीति** । प्रकरणात् प्रयाजादीनां विनियोगः । **तत्राप्यपूर्वस्येति** । न ह्यध्ययनविधावनुष्ठानाय नियोगाभिधानाय वा नियोज्यापेक्षाऽस्तीत्युक्तम्, तथाऽप्यश्रुते शेषिरूपाधिकारिण्यज्ञातपरार्थस्य विधेः कृत्युद्देश्यत्वासंभवात् कृतिप्राधान्यमेव न पर्यवस्यतीति तत्प्राधान्यपर्यवसानायाधिकारापेक्षा युक्ता । साध्यविशिष्टश्च पुरुषः कृत्युद्देश्यः, न साध्यं केवलम्, तेन तयोरेकैव कृतिप्रधानता । विधिश्च स्वसाधने कर्मणि कस्यचिदधिकारपर्यवसितः । सच यत्र नियोगपराच्छब्दात् प्रतीयते, तत्र फलान्तराभावेऽपि नियोगतः कर्मफलात् तन्निरूपणम्, यत्र तु शब्दात्, न तत्र फलान्तरेण तन्निरूपणं कार्यम्, न विधिमात्रतः । अतो विषयफलत एव निरूपणं युक्तमित्यर्थावबोधस्वीकार इति भावः । **ननु न नैयोगिकमिति** । नार्थावबोधस्य प्रयोजनत्वम्; नियोगसाध्यत्वाभावेनैकस्मिन् वाक्ये साध्यद्वयप्रसङ्गादिति भावः । **सत्यमनैयोगिकमिति** । नैकस्मिन् वाक्ये साध्यद्वयं प्रतीयते, अपित्वर्थज्ञानमार्थिकमेवाधिकारिपर्यवसानोपयोगित्वेन विधानात् स्वीक्रियत इति भावः । इदानीं त्वदुपकारकत्वे न तत्फलत्वम्, व्यभिचारात्, इत्याशङ्क्य; कारकदशायामनुत्पत्तिमङ्गीकृत्य तज्जन्यत्वेनैव तत्फलत्वं दर्शयति—**अथयेति** ॥ ननु शब्दसामर्थ्यजन्यज्ञानस्य कथं नैयोगिकफलत्वम् ? कल्पकाभावादित्याशङ्क्याह—**अर्थे तात्पर्यमिति** ॥ अत एव शूद्राणां नैयोगिकफलस्य ज्ञानस्याङ्गभूतस्याभावात् कर्मानधिकारः ; अन्यथा ज्ञानमात्रस्य तेषामपि संभवाद् भवेदेव कर्माधिकारः । यद्वा, "सत्यम्; नैयोगिके"तिपाठः । सत्यमित्यर्धाङ्गीकारः । सामर्थ्यजन्यस्यापि नैयोगिकफलत्वम्; नैयोगिकफलस्यैव ज्ञानस्यानुष्ठानद्वाराऽपूर्वोपकारकत्वादपूर्वोपकारकत्वान्यथानुपपत्त्याऽपूर्वफलत्वं कल्प्यते । नैयोगिकफलस्यैव ज्ञानस्यानुष्ठानाङ्गत्वे सिद्धे नैयोगिकफलत्वकल्पना, तदेवासिद्धमित्याशङ्क्यावतारयति—**अथवाऽर्थे इति** ॥ सोऽयं मध्येऽधिकारः, स चार्थावबोधो नाध्ययनमात्रात्, इति तदितिकर्तव्यताभूतं विचारमध्ययनविधिरेव प्रमितिसिध्यर्थमाक्षिपतीत्याह—**तदेवमिति** ॥

कथं निखिलवेदार्थविचारप्रतिपत्त्यभावः ? वेदार्थोपाधौ विचारस्य प्रवृत्तत्वादित्याशङ्क्याभिप्रायमाह—**वेदार्थोपाधीति** ॥ **ननु कृत्स्नाध्ययनविधीति** । कृत्स्नस्य वेदस्य विचारप्रयोजको विधिः कृत्स्नाध्ययनविधिः ; तत्प्रयुक्त

---

१. नैयोगिकेति तत्त्वदीपनपाठः । ऋजुविवरणे नैयोगिकेति, अनैयोगिकेति द्विविधोपि पाठः सूचितः ।

### पञ्चपादिका

**तत्कथम् ? तथा सति 'अथातो वेदार्थजिज्ञासे'ति स्यात्; यतो न धर्म इति कृत्वा विचारः, किन्तु वेदार्थ इति सत्यम्; तथाऽपि शास्त्रकाराणां पुरुषार्थसिद्ध्यर्थं शास्त्रप्रणयनम्; ततश्च पुरुषार्थकथनार्थं धर्मग्रहणमिति ॥**

**एवं तर्हि धर्म इत्येव कृत्वा विचारो भवतु; तस्य पुरुषार्थत्वात्संदिग्धत्वाच्च ।**

### पञ्चपादिकाविवरणम्

देशविषयः स्यादिति चोदयति—**तत्कथमिति** ॥ परिहरति—**तथा सत्यथात इति** । प्रतिवाक्याध्ययनविचारं विधिव्यापारभेदात् प्रयोजनभेदवशादेकदेशविचारेऽपि न विधिप्रयोज्यत्वविरोधः; यथा चक्षुषा रूपं पश्येदिति विधिप्रयुक्त्या रूपैकदेशनीलदर्शनेऽपि तत्प्रयुक्तिर्न विरुध्यते, तद्वदित्यर्थः । अन्यथा विध्यनुसारेण कृत्स्नवेदार्थविचारविवक्षायां धर्मग्रहणं न स्यादित्याह—**यतो न धर्म इति कृत्वेति** ॥ धर्मग्रहणस्य न वेदार्थैकदेशविचारपर्युदासः प्रयोजनम्, किंतु वेदार्थस्य पुरुषार्थतासिद्धिः प्रयोजनमिति शङ्कते—**सत्यम्; तथापि शास्त्रकाराणामिति** ॥

परिहरति—**एवं तर्हीति** ॥ धर्मशब्दस्य हि वेदार्थे प्रयोगनिमित्तं वक्तव्यम् न तावद् रूढिः; चैत्यवन्दनादावपि प्रयोगविप्रतिपत्तेः । अथान्वय-व्यतिरेकसिद्धः श्रेयःसाधनाभिधायी धर्मशब्दः, तथाभूतत्वाद्वेदार्थस्यापि धर्मशब्दस्तत्र प्रवर्तत इति ? एवं तर्हि स्वाध्यायपाठादेव ब्रह्मणः प्रतीयमानस्य धर्मशब्दाभिधेयत्वाभावात् श्रेयोरूपत्वात् तस्यार्थात् पर्युदस्तत्वाद् 'धर्म'इत्येवं कृत्वा विचारो युक्तः ; अन्यथाऽऽपातप्रतिपन्नधर्मब्रह्मसंग्रहज्ञापनाय वेदार्थजिज्ञासेति

### तत्त्वदीपनम्

**ननु कृत्स्नेति** । विचारस्यैकदेशविषयत्वे कृत्स्नाध्ययनविधिप्रयुक्त्यनुपपत्तिरित्यर्थः ॥ 'मैवमि'त्यादिपरिहारसूचकाभावादेकग्रन्थत्वशङ्कां निरस्यति—**परिहरतीति** ॥ किं विचारस्य कृत्स्नाध्ययनविधिप्रयुक्तत्वात् सकलवेदार्थविषयत्वं विवक्षितम् ? अथवैकदेशविषयत्वे कृत्स्नाध्ययनविधिप्रयुक्त्यनुपपत्तिः ? तत्राद्ये दूषणं टीकायामभिधाय द्वितीयं दूषयति—**प्रतिवाक्येति** । वाक्याध्ययनं वाक्याध्ययनं प्रति, तथा वाक्यविचारं वाक्यविचारं प्रति चेत्यर्थः । अध्ययनविधेः सकलवेदसाधारण्येऽपि केषांचिद्वाक्यानामध्ययन इतिकर्तव्यभेदापेक्षणाद् विधिव्यापारभेदः तथाच मुमुक्षूणामल्पत्वाद्भोगार्थिनां च बहुलत्वात् तदभिलषितस्वर्गाद्यनुरोधेन तद्वाक्यविचार आक्षिप्यते, न कृत्स्नवेदविचारः ; सर्वेषां वेदान्तार्थजिज्ञासाभावादित्यर्थः । तत्र दृष्टान्तमाह—**यथेति** ॥ "तथा सती"त्येन हेतोरुक्तत्वात् "यतः" इत्यादेर्वैयर्थ्यमित्याशङ्क्य, अस्मिन् कल्पे न केवलमश्रुतकल्पना, श्रुतत्यागोऽपीत्याह—**अन्यथेति** ॥ 'धर्मजिज्ञासे'ति धर्मग्रहणादेकदेशविचारपर्युदासः, इतरथा वेदार्थजिज्ञासेति स्यादित्युक्ते "सत्यमि"ति तदङ्गीकारः पूर्वपक्षिण आभाति, तथाच न विप्रतिपत्तिरित्याशङ्क्याभिप्रायं दर्शयति—**धर्मेति** ॥ तर्हि धर्मग्रहणमनुपपन्नमिति शङ्कते—**किंत्विति** ॥ प्रयोजनवशाद् ग्रहणमित्याह—**वेदेति** ॥

धर्मोपाधौ न विचारप्रवृत्तिरित्येतावन्मात्रं सत्यशब्देनाङ्गीक्रियते ; धर्मशब्देन वेदार्थस्य विवक्षितत्वात् तस्यापि विचारयोग्यतया वेदार्थोपाधौ विचारस्य युक्तत्वात्, ततः परिहारस्याभासत्वमाशङ्क्याह—**परिहरतीति** ॥ सम्यक्परिहारमेवाह—**धर्मशब्दस्येति** ॥ धर्मशब्दः किं वेदार्थे रूढ्या वर्तते ? आहो गुणयोगेन ? नाद्य इत्याह—**न तावदिति** । अविप्रतिपन्नप्रयोगस्य रूढित्वादत्र च प्रयोगविप्रतिपत्तेर्न वेदार्थे रूढत्वमित्यर्थः । द्वितीयमनुवदति—**अथान्वयेति** ॥ "वेदार्थोपाधौ विचारः" इति वदता किमभिसंहितम् ? किं तदर्थब्रह्मपर्युदासः ? उत संग्रहः ? इति । तत्राद्योऽयुक्त इत्याह । **एवं तर्हीति** । तत्र हेतुमाह । **श्रेय इति** । श्रेयः-साधनं धर्म-

### ऋजुविवरणम्

इत्यर्थः । अध्ययनविधिव्यापारो विचारश्चैक एवेति तत्प्रयुक्तो विचारः सर्वविषयः स्यादिति भावः । यद्यपि वेदार्थग्रहणं न कृतं सूत्रकृता; तथाऽपि विधिसामर्थ्यात् सर्ववेदार्थविचारस्तावत्प्रतीयते, धर्मग्रहणस्य विवक्षान्तरमपि वक्तुं शक्यत एव; अतो नैकदेशस्य विचारसिद्धिरित्याशङ्क्याह—**प्रतिवाक्याध्ययनमिति** ॥ ननु विधिस्वारस्यात् प्राप्तं सर्वविषयत्वं परित्यज्य कथमेकदेशविषयत्वं विचारस्येत्याशङ्क्याह—**अन्यथा विध्यनुसारेणेति** ॥

"धर्म इत्येव कृत्वे"त्यसम्बद्धम्; वेदार्थस्य सन्दिग्धत्वाद् धर्मशब्दप्रयोगसामर्थ्यात् पुरुषार्थलाभाच्च तस्यैव जिज्ञास्यत्वोपपत्तेरित्याशङ्क्याभिप्रायमाह—**धर्मशब्दस्य हीति** ॥ कथं ब्रह्मणो धर्मरूपत्वाभावः ? इत्याशङ्क्याह—**श्रेयोरूपत्वादिति** ॥ ननु विचारात्प्राग् ब्रह्म न प्रतीयते, धर्मवत्कथं तत्संग्रहणाय वेदार्थग्रहणमापद्येतेत्याशङ्क्याह—

### पञ्चपादिका

**तथा चोत्तरमपि सूत्रमनुगुणं भवति—"चोदनालक्षणोऽर्थो धर्मः" इति धर्मस्वरूपविप्रतिपत्तिनिरासपरम्। इतरथा वेदार्थविप्रतिपत्तौ तन्निरासार्थं 'चोदनालक्षणो वेदार्थः' इति स्यात्, यतो न धर्मग्रहणे सति वेदार्थविप्रतिपत्तिः शक्या निराकर्तुम्। कथम्?**

### पञ्चपादिकाविवरणम्

वक्तव्यमिति भावः। नह्यनुष्ठेयश्रेयः साधनवत् अननुष्ठेयश्रेयोरूपमपि ब्रह्मपदान्वयमात्रादेव विचारात्प्राङ् न प्रतीयत इति शक्यं वक्तुम्। लक्षणसूत्रमपि धर्मविषयम्, न वेदार्थविषयमित्याह—**तथाचोत्तरमपीति**। लक्षणं हि लक्ष्यस्यान्यप्रसङ्गविभ्रमनिरासपरम्। तत्र च धर्म एव चैत्यवन्दनादौ प्रसक्ततया विप्रतिपन्नः, न वेदार्थः। अतो लक्षणस्य कृतार्थत्वाय धर्म एव लक्ष्यत इत्याह—**धर्मस्वरूपविप्रतिपत्तिनिरासपरमिति**॥ ननु—वेदार्थेऽपि विप्रतिपत्तयः सन्ति-किमर्थवादलक्षणो वेदार्थः, किं वा चोदनालक्षणः? इति; तन्निरासाय लक्षणमुच्यत--इति? तत्राह—**इतरथा वेदार्थविप्रतिपत्ताविति**। मन्त्रादिषु कार्यस्याप्रतीतेर्येन यत्प्रतीयते स तस्यार्थ इति, नियमान्नैवं विप्रतिपत्तिरिति भावः। ननु धर्मग्रहणेऽप्यर्थवादलक्षणत्वं निराकृत्य चोदनालक्षणत्वं वेदार्थस्य किन्न सिध्यतीति? अत आह—**यतो न धर्मग्रहणे सतीति**। वेदार्थविप्रतिपत्तिनिराकरणप्रतिभासाभावाद् धर्मविप्रतिपत्तिनिरासप्रतिभासादप्रतिपन्नवेदार्थविप्रतिपत्तिनिरासग्रहणायोगादित्यर्थः।

अथ धर्मशब्दस्य वेदार्थे प्रयोगात् तद्विप्रतिपत्तिनिरास एव विवक्ष्यतामिति चोदयति—**कथमिति**। तत्र न तावद् रूढिमाश्रित्य धर्मशब्दस्य वेदार्थे प्रयोग इत्युक्तम्। नापि लक्षणया; अभिधेयादन्यस्य लक्ष्यत्वेन वेदार्थस्याधर्मत्व-

### तत्त्वदीपनम्

शब्दार्थः, ब्रह्म च श्रेयः, इति न धर्मशब्दवाच्यत्वमित्यर्थः। न द्वितीय इत्याह—**अन्यथेति**॥ ब्रह्मण आपातप्रसिद्धिरसिद्धेत्याशङ्क्याह—**न ह्यनुष्ठेयेति**। अनुभवविरोधादित्यर्थः। धर्मग्रहणसामर्थ्याद् विचारस्यैकदेशविषयत्वं पूर्वत्रोक्तम्, "तथाचे"त्यत्रापि तदेवोच्यते, इति पौनरुक्त्यमित्याशङ्क्याह—**लक्षणेति**। वेदार्थजिज्ञासोपक्रमे तस्यैव लक्षणं वक्तव्यम्, नान्यस्येत्यर्थः। वेदार्थविषयमेव लक्षणाभिधानमिति शङ्कां निरस्यति—**लक्षणं हीति**॥ वेदार्थेऽपि विप्रतिपत्तेः संभवात् तन्निराकरणार्थं लक्षणाभिधानं युक्तमिति शङ्कते—**ननु वेदेति**॥ अस्मिन्पक्षे सूत्रमननुगुणं स्यादित्याह—**तत्राहेति**॥ किंच "किमर्थवादलक्षणः" इत्यत्र कार्यरूपे वेदार्थे विप्रतिपत्तिरभिसंहिता? उत ब्रह्मरूपे? अथवोभयरूपे? नाद्य इत्याह—**मन्त्रादिष्विति**॥ नेतरः; विधेर्मन्त्रादेश्च तदप्रतिपत्तेरित्यभिसन्धिः। धर्मशब्देन वेदार्थस्य विवक्षितत्वाद् विप्रतिपत्तिनिरासः संभवतीत्याशयेन शङ्कते—**ननु धर्मेति**॥ आशयानवबोधेनोत्तरमाह—**अत आहेति**॥ टीकापेक्षितं हेतुमाह—**वेदार्थेति**। अप्रतिपन्नस्य वेदार्थविप्रतिपत्तिनिरासस्य ग्रहणं स्वीकारः, तस्यायोगादिति विग्रहः।

पूर्ववादी स्वाशयमुद्घाटयति—**अथ धर्मशब्दस्येति**॥ टीकायां लक्षणा-रूढिनिरासाभावात् ताभ्यां धर्मशब्दस्य वेदार्थे प्रवृत्तिशङ्कां निरस्यति—**तत्र न तावदिति** विप्रतिपन्नप्रयोगत्वादित्यर्थः। लक्षणापक्षं दूषयति—**नापीति**॥ लक्षणाशब्देन किं जहल्लक्षणा विवक्षिता? उताजहल्लक्षणा? नाद्य इत्याह—**अभिधेयादिति**। गङ्गापदलक्ष्यस्य तीरस्य

### ऋजुविवरणम्

**नह्यनुष्ठेयेति**॥ ननु धर्मग्रहणसामर्थ्याद् वेदार्थग्रहणाभावात् तन्निरासपरत्वं निराकर्तुं शक्यते, सिध्येद् लक्षणस्योपयोगस्तावत्; अस्मिन्नपि पक्षे धर्मग्रहणस्य प्रकारान्तरेणाप्युपयोगस्य वक्तुं शक्यत्वात्, इत्याशङ्क्याभिप्रायमाह—**मन्त्रादिष्विति**॥ ननु वेदार्थग्रहणाभावाद् वेदार्थविप्रतिपत्तिनिराकरणाभाव इत्यसंबद्धम्, पूर्वसूत्रेण विशेषाभावप्रसङ्गात्; पूर्वसूत्रे हि वेदार्थग्रहणाभावाद्धर्मग्रहणे सत्येव प्राधान्येनोक्तम्, अत्र लक्षणानुपपत्तिर्दर्शनीया, सा च नोक्ता; धर्मग्रहणस्य न वेदार्थविप्रतिपत्तिनिरासेऽपि कथंचित् प्रयोगो वक्तुं शक्यत इत्येतन्मनसि निधायाऽभिप्रायमाह—**मन्त्रादिष्विति**॥ "यतो न धर्मग्रहणे"इत्यसम्बद्धम्; धर्मस्यैव वेदार्थत्वात् धर्मस्य चोदनालक्षणत्वे वेदार्थे तद्विप्रतिपत्तिनिरासासिद्धिः। "न शक्या निराकर्तुमि"त्यसंबद्धमि"त्याशङ्क्य व्याचष्टे—**वेदार्थविप्रतिपत्तिनिराकरणेति**॥ **ग्रहणायोगात्** स्वीकारायोगादित्यर्थः।

प्रकारान्तरेणापि धर्मशब्दस्य प्रयोगसंभवात् कथं टीकाकारेण पक्षद्वयमेव जघन्यं निराक्रियते? इत्याशङ्क्य पारिशेष्यादित्यभिप्रायमाह—**न तावद्रूढिमिति**॥ "यत्तावदि"त्यनेन यो धर्मः, स चोदनालक्षण इति वचनव्यक्त्यभावात्,

### पञ्चपादिका

**यत्तावत् चोदनालक्षणो योऽर्थः, स धर्म इति धर्मत्वं ज्ञाप्येत, तदा स एव वेदार्थो नान्य इति न लभ्यते ॥ अथ पुनः स धर्म इति नाम-नामिसम्बन्धो विधीयते, तदप्रक्रान्तम्; निष्प्रयोजनम्, अतिप्रसङ्गश्चापद्येत ॥**

### पञ्चपादिकाविवरणम्

प्रसङ्गात् । इदानीं स्वार्थप्रक्षेपेण वा तत्र प्रवृत्तिः ? शब्दमात्रस्य वा संज्ञा-संज्ञिसम्बन्धपरतयोपयोग इति शिष्यते ? तत्र न तावत् स्वार्थप्रक्षेपेणेत्याह—**यत्तावच्चोदनालक्षणो योऽर्थ इति** । चोदनालक्षणस्य धर्मत्वेऽभिधीयमाने धर्मस्य वा चोदनालक्षणत्वे, वेदार्थस्त्वेतावानिति न निर्णीतं भवति; चोदना-धर्मशब्दयोर्वेद-तदर्थाभिधायित्वाभावात्; यथा यच्चाक्षुषं तद्रूपमित्युक्ते न सर्वस्य प्रत्यक्षस्य रूपमर्थ इत्युक्तं भवति, तद्वदिति भावः ।

चोदनालक्षणेऽर्थे धर्मसंज्ञाविधिपरत्वं सूत्रस्य निराकरोति—**अथ पुनरित्यादिना** । अङ्गीकृत्य दूषणमाह—**अथापि कथञ्चिदिति** । अयं भावः—चोदनालक्षणस्य वेदार्थत्वेऽर्थशब्दस्य वैयर्थ्यं स्यात्; श्येनादीनामपि चोदनालक्षणत्वाद् वेदार्थत्वाच्च तद्व्यावृत्त्यनुपपत्तेः । अचोदनालक्षणत्वेऽवेदार्थत्वे च ताभ्यामेव श्येनादिनिवृत्तेरर्थशब्दस्य वैयर्थ्यं स्यात्, लक्षणवाक्येऽनुवादमात्रानुपपत्तेश्च । प्रमाणप्रतिज्ञायामप्यर्थशब्दस्य वैयर्थ्यं स्यात्, धर्मविचारपक्षे श्येनादेः प्रतिषेधचोदना-

### तत्त्वदीपनम्

गङ्गात्वाभाववज्जहल्लक्षणायां धर्मपदेन लक्ष्यमाणस्य वेदार्थस्य धर्मत्वं हीयेतेत्यर्थः । तस्मात् पक्षान्तरं परिशिष्यत इत्याह—**इदानीमिति** ॥ **स्वार्थप्रक्षेपेण** अजहल्लक्षणयेत्यर्थः । **संज्ञेति** । डित्थादिशब्दविशेषो यथाऽर्थविशेषे संकेतितः, तद्वन्द्धर्मशब्दोऽपि वेदार्थे संकेतित इत्यर्थः । तत्राद्यं दूषयति—**तत्र न तावदिति** ॥ **यत्तावदिति**—यदि तावदित्यर्थः । अजहल्लक्षणया धर्मशब्दस्य वेदार्थे प्रवृत्तौ तदियत्ता न सिध्यतीत्युक्तम्, तत्र हेतुमाह—**चोदनालक्षणस्येति** ॥ चोदनाशब्दस्य वेदैकदेशवाचित्वाद् धर्मशब्दस्य च श्रेयःसाधनवाचित्वाद् न वेदार्थेयत्तासिद्धिरित्यर्थः ॥

"अथ पुनरि"त्यत्र कस्य नामत्वम् ? कस्य वा नामित्वं विवक्षितमिति विवक्षायामभिप्रायमाह—**चोदनेति** ॥ धर्मस्य विचारोपक्रमविरुद्धं नाम-नामिसंबन्धप्रतिपादनमित्याह—**तदप्रक्रान्तमिति** (टीकायाम्) ॥ अनुपक्रान्तत्वेऽप्यनन्यथासिद्धफलभावे तदभिधानं युज्यते, नच तदस्तीत्याह—**निष्प्रयोजनमिति** ॥ एतादृशस्यापि प्रतिपादन इदं प्रतिपाद्यं नेदमिति नियमो न स्यादित्याह—**अतिप्रसङ्ग इति** ॥ धर्मशब्दस्य वेदार्थवाचकताया निरस्तत्वाद् वेदार्थ एव चोद्यत इति कथमुक्तमित्याशङ्क्य, अङ्गीकारवादत्वान्न विरोध इत्याह—**अङ्गीकृत्येति** ॥ धर्मशब्दस्य वेदार्थवाचकत्वमङ्गीकृतं चेत्, तर्हि "कथंचिदिति" व्यर्थमित्याशङ्क्य तात्पर्यमाह—**अयं भाव इति** ॥ श्येनादिव्यावृत्त्यर्थमर्थपदमित्याशङ्क्य, श्येनादीनां चोदनालक्षणत्वं वेदार्थत्वं चास्ति ? उत न ? इति ? विकल्प्याद्यं दूषयति—**श्येनादीनामिति** ॥ द्वितीयं दूषयति—**अचोदनेति** ॥ ताभ्यां सिद्धोऽर्थोऽनूद्यतेऽर्थशब्देनेत्याशङ्क्याह—**लक्षणेति** ॥ द्वितीयसूत्रं लक्षणपरमिति पक्षेऽर्थशब्दवैयर्थ्यमभिधाय प्रमाणपरत्वपक्षेऽपि तद् दर्शयति—**प्रमाणेति** ॥ धर्मोपाधौ विचारप्रतिज्ञायां कथमर्थशब्दो-

### ऋजुविवरणम्

अप्रतिषिद्धमनुमतमि"ति न्यायेन स्वीकारशङ्का स्यात्, तथा वेदार्थस्यैतावत्त्वं न लभ्यत इत्युक्तम्, नतु युक्तिरभिहिता; अतस्तत्राभिप्रेतां युक्तिं दर्शयति—**चोदनालक्षणस्येति** ॥ **रूपम्** विषय इत्यर्थः ॥

ननु धर्मशब्दवाच्यत्वमङ्गीकृत्य दूषणं वक्तुं प्रारभ्य "कथञ्चिदि"ति न युक्तं वक्तुम्; उक्तदूषणस्याङ्गीकृतत्वात्, तदभिप्रायेणापरितोषानुपपत्तेः, नच वेदार्थस्य धर्मशब्दवाच्यत्वेऽन्यद् दूषणमस्ति; अतः कथञ्चिदिति वक्तुं न युक्तमित्याशङ्क्याभिप्रायमाह—**अयं भाव इति** ॥ ननु अर्थशब्दः श्येनादिव्यावृत्त्यर्थो भवति, कथं वैयर्थ्यमित्याशङ्क्याह—**श्येनादीनामपीति** ॥ अत्र चोदनालक्षणत्वसामर्थ्यात् प्राप्तमर्थवत्त्वमर्थशब्दोऽनुवदतीत्याशङ्क्याभिप्रायमाह—**लक्षणवाक्य इति** ॥ मा भूल्लक्षणपरत्वं शब्दस्य, प्रमाणप्रतिज्ञैवानेन क्रियतामित्याशङ्क्याह—**प्रमाणप्रतिज्ञायामपीति** ॥ धर्मविचारपक्षेऽप्यर्थशब्दवैयर्थ्यमित्याशङ्क्याह—**धर्मविचारपक्ष इति** ॥ ननु न चोदनाशब्दस्य कृत्स्नवेदलक्षणापरत्वम्,

## पञ्चपादिका

**अथापि कथंचिद् धर्मशब्देन वेदार्थ एवोच्यत इति कल्प्येत, तथा सति चोदनालक्षणो वेदार्थो नार्थवादादिलक्षणः, इति सिद्धप्रामाण्यवेदार्थविचारोऽयं स्यात्, उत्तरलक्षणवत् ।**

## पञ्चपादिकाविवरणम्

विषयस्यानर्थत्वेनाधर्मत्वसिद्धिः प्रयोजनमिति । तथा चोदनाशब्दोऽपि कृत्स्नवेदलक्षणापरो वक्तव्यः । कथम् ? चोदनाव्यतिरिक्तोऽपि वेदभागोऽस्ति वा ? न वा ? नास्ति चेत्, चोदनालक्षणोऽर्थश्चोदनार्थ इति लक्ष्य-लक्षणयोरैक्यमेव स्यात् । अस्ति चेत्, सोऽप्यर्थवान् वेदभागः ? निरर्थको वा ? अर्थवांश्चेत्, कथं चोदनाप्रमेयोऽचोदनाभागस्यार्थः स्यात् ? अर्थशून्यश्चेत् चोदनाव्यतिरिक्तो वेदभागः, कथं तर्हि चोदनार्थोऽर्थानर्थवद्भागद्वयसमुदायोवेदार्थः स्यात् । तस्माच्चोदनाशब्दः कृत्स्नवेदलक्षणापर इति । चोदनालक्षणो वेदार्थ इति वाक्ये शब्दद्वयदूषणमभिप्रेत्य—**अथापि कथंचिदित्युक्तम्** ॥ तथा सति वेदस्य प्रामाण्यादर्थवत्त्वनिश्चये विचारात् प्रागेव संजाते किं वेदार्थश्चोदनालक्षणः ? किं वाऽर्थवादादिलक्षणः ? इति विशये, नार्थवादादिलक्षणः किन्तु चोदनालक्षणो वेदार्थ इति निर्णयपरं सूत्रं स्यात्, तच्चानुपपन्नम्; निश्चितत्वादर्थवत्त्वस्येत्याह—**तथा सति चोदनालक्षण इति** ॥

ननु प्रथमसूत्रे स्वाध्यायस्यार्थविवक्षायाः प्रदर्शितत्वादर्थवत्त्वनिश्चयात् तदुद्दिश्य लक्षणविधानं युक्तम् ? न; अनिश्चिते प्रामाण्येऽर्थविवक्षाऽयोगात् । तत्र चाध्ययनविधिप्रयुक्ताप्रामाण्यमात्रनिराकरणेनार्थविवक्षा दर्शिता, नतु पौरुषेयत्व-प्रमाणान्तरयोग्यविषयत्वादिनिमित्ताप्रामाण्यं निराकृत्य तत्र प्रामाण्यं व्यवस्थापितम् । तस्मादर्थवत्त्वानिश्चयाद्

## तत्त्वदीपनम्

ऽर्थवान् ? इत्याशङ्क्याह—**धर्मेति** ॥ एवं गुरुमतेऽर्थशब्दवैयर्थ्यमभिधाय दोषान्तरं समुच्चिनोति—**तथेति** ॥ चोदनाशब्देन कृत्स्नवेदलक्षणायां को हेतुरिति शङ्कते—**कथमिति** ॥ **लक्ष्यलक्षणयोरैक्यमिति** । अस्यायमर्थः—धर्मशब्दाभिहितवेदार्थशब्देन चोदनालक्षणोऽर्थो निर्दिश्यते, "चोदनालक्षणः" इत्यत्रापि स एव निर्दिश्यते, इति लक्ष्य-लक्षणयोरैक्यं स्यादिति । आद्यमनुवदति—**अस्ति चेदिति** ॥ विकल्पासहत्वान्नायमपि साधुरित्याह—**सोऽपीति** ॥ आद्ये चोदनाभागप्रमेयस्य चोदनाप्रमेयत्वं व्याहन्येतेत्याह—**अर्थवानिति** ॥ द्वितीयेऽपि व्याघात इत्याह—**अर्थशून्य इत्यादिना** ॥ **अर्थानर्थवदिति**—सविषयनिर्विषयरूपवाक्यद्वयसमुदायरूपवेदार्थ इत्यर्थः । फलितं दर्शयति—**तस्मादिति** ॥ **शब्दद्वयेति** । अर्थशब्दवैयर्थ्यं चोदनाशब्दस्य स्वार्थपरित्यागश्चेति दूषणद्वयमित्यर्थः ॥ वेदप्रामाण्यस्य मीमांसकेनाभ्युपगमात् सिद्धप्रामाण्यविचार इतीष्टमित्याशङ्क्य तात्पर्यमाह—**तथा सतीति** ॥ **विचारादिति**—प्रामाण्यविचारादित्यर्थः ।

अनिश्चितत्वमसिद्धमिति शङ्कते—**ननु प्रथमेति** ॥ किं वेदप्रामाण्यनिश्चयपूर्वकमर्थवत्त्वं निश्चितम् ? उत न ? इति विकल्प्यान्त्ये दूषणमाह—**नानिश्चित इति** ॥ आद्येऽपि किं विधिप्रयुक्ताप्रामाण्यमात्रस्य निराकरणम् ? उत सर्वप्रकाराप्रामाण्यस्य ? इति विकल्प्याद्यमङ्गीकरोति—**तत्र चेति** ॥ द्वितीयं दूषयति—**नत्विति** । विरुद्धार्थत्वादिरादिशब्दार्थः । सकलप्रकाराप्रामाण्यनिराकरणस्य सूत्रेऽनुपलम्भादित्यर्थः । अर्थात् प्रामाण्य तत्र निर्दिष्टमिति शङ्कते—

## ऋजुविवरणम्

स्वार्थमात्रपरत्वेऽपि लक्षणं संभवेत्, अतोऽनुपपत्त्यभावान्न लक्षणेत्याक्षिपति—**कथमिति** ॥ **कथं चोदनाप्रमेय इति** । यश्चोदनाप्रमेयः, स वेदार्थ इति वचनव्यक्तौ, सकलवेदबोध्यत्वं विधेयम् । तत्रैवं योजना—चोदनाप्रमेय इतरभागस्य कथमर्थः स्यादिति ? विरोधात् । अथ यो वेदार्थः, स चोदनालक्षण इति, तत्राप्यनुपपत्तिरनेनैवोच्यते—चोदनाव्यतिरिक्तवेदभागस्यार्थश्चोदनाप्रमेयः कथं स्यादिति ? **कथं तर्हीति** । वेदस्य भागद्वयम्—अर्थवान् चोदनाभागः, अपरश्चार्थशून्यः । तत्र पूर्ववदेव योजना—यदा चोदनार्थोऽनूद्यः, तदा चोदनाया अर्थोऽर्थानर्थवद्भागद्वयस्य वेदस्य कथमर्थः स्यात् ? निरर्थकत्वविरोधात् । अथ वेदार्थोऽनूद्यः, तदा सार्थक-निरर्थकभागद्वयवेदस्यार्थश्चोदनाया अर्थः कथं स्यादिति ? (टीकायाम्) **उत्तरलक्षणवदित्यत्र लक्षणशब्दोऽध्यायवाची ।**

## पञ्चपादिका

**तत्रानन्तरं प्रामाण्यप्रतिपादनं न युज्येत ॥**

**"वृत्तं प्रमाणलक्षणमि"ति च मन्त्रार्थवादेषु च कार्यार्थत्वे विप्रतिपत्तिर्न स्यात् । सा चोत्तरत्रैव निरस्यते ।**

**अतः पूर्वोक्तेन न्यायेन कार्यनिष्ठ एव वेदभागो विचार्यतया प्रक्रान्तो विचारितश्च, न वस्तुनिष्ठः, इत्यतो वस्तुतत्त्वनिष्ठं वेदभागं विचारयितुमिदमारभ्यते 'अथातो ब्रह्मजिज्ञासेति' ॥**

इति परमहंसपरिव्राजकाचार्य-श्रीशङ्करभगवत्पादान्तेवासिवर-श्रीपद्मपादाचार्यकृतौ पञ्चपादिकायां जिज्ञासासूत्रावतरण माम द्वितीयवर्णकं समाप्त ॥

## पञ्चपादिकाविवरणम्

वेदार्थश्चोदनालक्षण इति नियन्तुं न शक्यते । अथ प्रथमसूत्रसामर्थ्यादेवार्थवत्त्वमङ्गीकृत्य लक्षणविधानमिति ? तत्राह—**तत्रानन्तरं प्रामाण्यप्रतिपादनं न युज्येतेति** ॥ ननु तस्यैव दृढीकरणाय पुनःप्रतिपादनम् ? न; अर्थवत्त्वे निश्चिते दृढीकरणप्रयोजनाभावात्, अनिश्चिते च लक्षणप्रवृत्त्यभावात् ॥

ननु वेदप्रामाण्यस्यापि वेदार्थत्वादेव प्रतिपादनम्, न वेदस्यार्थवत्त्वनिश्चयायेति ? न; वेदप्रामाण्यस्यापि वेदार्थत्वे, सिद्धे वस्तुनि प्रामाण्यप्रसङ्गात् । भाष्यकारश्च द्वितीयाध्यायमारभमाणो "वृत्तं प्रमाणलक्षणमि"ति प्रथमाध्यायेन वेदस्य प्रामाण्यमेव साधितं दर्शयति, तन्न युज्यते वेदस्यार्थवत्त्वनिश्चयपूर्वे विचारे । अतो धर्मे प्रमाणप्रतिज्ञैव, लक्षणं वा द्वितीयसूत्रेण क्रियत इत्याह—**वृत्तं प्रमाणलक्षणमिति चेति** ॥ किंच अस्मिन्नेव सूत्रे मन्त्रार्थवादयोर्धर्मे प्रामाण्यनिराकरणादर्थवादाधिकरणमनपेक्षितं स्यादित्याह—**मन्त्रार्थवादेषु चेति** ॥ स्तावकत्वेनान्वयप्रकारप्रतिपादनार्थमधिकरणमिति चेत् ? न; अत्रैव धर्मे प्रामाण्यनिराकरणात्, धर्मस्य प्रतिपादकतया तत्र पूर्वपक्षानुदयात् ॥

उपसंहरति—**अतः पूर्वोक्तेन न्यायेन कार्यनिष्ठ एव वेदभागो विचार्यतया प्रक्रान्तो विचारितश्च; न वस्तुनिष्ठ, इत्यतो वस्तुतत्त्वनिष्ठं वेदभागं विचारयितुमिदमारभ्यते 'अथातो ब्रह्मजिज्ञासेती'ति** ।

इति श्रीमत्परमहंसपरिव्राजकाचार्यानन्यानुभवपूज्यपादशिष्यप्रकाशानुभवभगवतः कृतौ पञ्चपादिकाविवरणे द्वितीयवर्णकं समाप्तम् ॥

## तत्त्वदीपनम्

**अथेति** ॥ प्रथमसूत्र एव प्रामाण्यसिद्धौ "तत् प्रमाणं बादरायणस्ये"त्यादिना पुनः प्रामाण्यप्रतिपादनं मुधेत्याह—**तत्राहेति** ॥ उक्तप्रपञ्चनरूपत्वान्नोत्तरग्रन्थवैयर्थ्यमिति शङ्कते—**ननु तस्येति** ॥ किमर्थवत्त्वे निश्चिते तद्दृढीकरणार्थमारम्भः ? उतानिश्चिते ? इति विकल्प्योभयमपि क्रमेण निरस्यति—**नार्थवत्त्वे इत्यादिना** ॥

प्रथमसूत्र एव वेदप्रामाण्यं सिद्धम् । नच एतावतोत्तरत्र न तत्प्रतिपादनानुपपत्तिः, कर्मवदेव प्रामाण्यस्यापि वेदार्थत्वात् प्रतिपादनोपपत्तेरिति—शङ्कते । **ननु वेदेति** । न च प्रामाण्यस्य वेदार्थत्वमसिद्धमिति शङ्क्यम्, अध्ययनविधिर्ह्यध्ययनस्य फलपर्यन्ततार्थं वेदस्य फलवदर्थावबोधनसामर्थ्यं प्रतिपादयति, तेन वेदप्रामाण्यस्यापि वेदार्थतोपपत्तिरित्यभिप्रायः । प्रामाण्यस्य वेदार्थत्वमसिद्धमित्याह—**न वेदेति** ॥ प्रथमसूत्र एव प्रामाण्यप्रतिपादनमितोऽप्ययुक्तमित्याह—**भाष्यकार इति** ॥ वेदार्थस्य चोदनाप्रमाणकत्वं न द्वितीयसूत्रार्थ इत्यत्रोपपत्त्यन्तरं समुच्चिनोति—**किं चास्मिन्निति** ॥ **अर्थवादाधिकरणमिति** । "आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानां तस्मादनित्यमुच्यते"इति सूत्रम् । सर्वस्याम्नायस्य धर्मपरत्वेनार्थवत्त्वे "वायुर्वै क्षेपिष्ठे"त्यादीनामपि तथात्वं वक्तव्यम्, अन्यथाऽऽनर्थक्यं स्यादित्येतद्धयत्र प्रतिपाद्यते । नच तद् युज्यते; द्वितीयसूत्र एव धर्मेऽप्रामाण्यनिराकरणादित्यर्थः । सिद्धबोधिनो मन्त्रादेः साक्षाद् धर्मे प्रामाण्यानुपपत्तेरानर्थक्यं स्यादिति शङ्कायां गतिप्रदर्शनार्थमधिकरणारम्भो युक्त इति शङ्कते—**स्तवाकत्वेनेति** ॥ प्रयोगविध्यपेक्षितप्राशस्त्यानुष्ठानोपयुक्तद्रव्य-देवतादिस्मरणद्वारा विध्यन्वयित्वमित्यर्थः । तथाऽपि पूर्वपक्षाभावान्नाधि-

## ऋजुविवरणम्

ननु अप्रामाण्यनिराकरणेन विवक्षितार्थत्वं प्रथमसूत्र एव सिद्धम्, अतः प्रमाणत्वाद् विवक्षितार्थत्वमपि तेनैव सिद्धमित्याशङ्क्याह—**तत्र चाध्ययनविधीति** ॥

ननु उत्तरत्र प्रामाण्यस्य प्रतिपादनेन पूर्वमर्थविवक्षाऽभाव इति वक्तुं न शक्यते; तस्यान्यार्थत्वात् इति

## तत्त्वदीपनम्

करणारम्भ इत्याह—**न, अत्रेति** ।। तस्मादगतार्थत्वाद् वेदान्तमीमांसाशास्त्रमारम्भणीयमिति **सिद्धम्** । **तदेतदभिप्रेत्योक्तम्** (भाष्ये)—"वेदान्तमीमांसाशास्त्रस्य व्याचिख्यासितस्येति" ।।

इति परमहंसपरिव्राजकाचार्याखण्डानुभूतिशिष्येणाऽखण्डानन्दमुनिना विरचिते विवरणतत्त्वदीपने **जिज्ञासासूत्रावतरणं** नाम द्वितीवर्णकं समाप्तम् ।।

## ऋजुविवरणम्

चोदयति—**ननु वेदप्रामाण्यस्येति** ।। शेषं सुगमम् ।।

इति स्वामीन्द्रपूर्णपूज्यपादशिष्य-सर्वशास्त्रविशारदजनार्दनात्मज-सर्वज्ञ-विष्णुभट्टोपाध्यायकृतौ ऋजुविवरणे काल **जिज्ञालासूत्रावतरणं** नाम द्वितीयवर्णकं समाप्तम् ।।

ॐ

श्रीशङ्करभगवत्पादाचार्यप्रणीतम्

# श्रीमद्ब्रह्मसूत्रभाष्यम्

## तृतीयं वर्णकम्

तत्र अथशब्द आनन्तर्यार्थः परिगृह्यते नाधिकारार्थः, ब्रह्मजिज्ञासाया अनधिकार्यत्वात् । मङ्गलस्यापि[१] वाक्यार्थे समन्वयाभावात् । अर्थान्तरप्रयुक्त एव ह्यथशब्दः श्रुत्या मङ्गलप्रयोजनो भवति । पूर्वप्रकृतापेक्षायाश्च फलत आनन्तर्याव्यतिरेकात् ॥

सति चानन्तर्यार्थत्वे, यथा धर्मजिज्ञासा पूर्ववृत्तं वेदाध्ययनं नियमेनापेक्षते, एवं ब्रह्मजिज्ञासापि यत् पूर्ववृत्तं नियमेनापेक्षते तद्वक्तव्यम् । स्वाध्यायानन्तर्यं तु समानम् । नन्विह कर्मावबोधानन्तर्यं विशेषः ?

न, धर्मजिज्ञासायाः प्रागप्यधीतवेदान्तस्य ब्रह्मजिज्ञासोपपत्तेः । यथा च हृदयाद्यवदानानां आनन्तर्यनियमः, क्रमस्य विवक्षितत्वात्, न तथेह क्रमो विवक्षितः, शेषशेषित्वेऽधिकृताधिकारे वा प्रमाणाभावात् धर्मब्रह्मजिज्ञासयोः । फलजिज्ञास्यभेदाच्च । अभ्युदयफलं धर्मज्ञानम्, तच्चानुष्ठानापेक्षम् । निःश्रेयसफलं तु ब्रह्मज्ञानम्, न चानुष्ठानान्तरापेक्षम् । भव्यश्च धर्मो जिज्ञास्यो न ज्ञानकालेऽस्ति, पुरुषव्यापारतन्त्रत्वात् । इह तु भूतं ब्रह्म जिज्ञास्यं नित्यनिर्वृत्तत्वान्न पुरुषव्यापारतन्त्रम् । चोदनाप्रवृत्तिभेदाच्च; या हि चोदना धर्मस्य लक्षणं, सा स्वविषये नियुञ्जानैव पुरुषं अवबोधयति । ब्रह्मचोदना तु पुरुषमवबोधयत्येव केवलम् । अवबोधस्य चोदनाजन्यत्वात् न पुरुषोऽवबोधे नियुज्यते । यथा अक्षार्थ सन्निकर्षेणार्थावबोधे तद्वत् ॥

तस्मात् किमपि वक्तव्यं यदनन्तरं ब्रह्मजिज्ञासोपदिश्यत इति ॥

उच्यते—नित्यानित्यवस्तुविवेकः, इहामुत्रार्थफलभोगविरागः, शमदमादिसाधनसंपत्, मुमुक्षुत्वञ्च । तेषु हि सत्सु प्रागपि धर्मजिज्ञासाया ऊर्ध्वं च शक्यते ब्रह्म जिज्ञासितुं ज्ञातुं च, न विपर्यये । तस्मादथ'शब्देन यथोक्तसाधनसंपच्यानन्तर्यमुपदिश्यते ॥

'अत'शब्दो हेत्वर्थः । यस्माद्वेद एवाग्निहोत्रादीनां श्रेयस्साधनानां अनित्यफलतां दर्शयति—"तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते" इत्यादिः ।

---

टिप्पणी—१. पंचपादिकासम्मतो'ऽपि'कारः । भामत्यां 'मङ्गलस्य च' इति पाठः ।

तथा ब्रह्मज्ञानादपि परं पुरुषार्थं दर्शयति—"ब्रह्मविदाप्नोति परम्" इत्यादिः । तस्माद्यथोक्तसाधनसंपत्त्यनन्तरं ब्रह्मजिज्ञासा कर्तव्या ॥

ब्रह्मणो जिज्ञासा ब्रह्मजिज्ञासा । ब्रह्म च वक्ष्यमाणलक्षणं "जन्माद्यस्य यतः" इति । अत एव न ब्रह्मशब्दस्य जात्याद्यर्थान्तरमाशङ्कितव्यम् ॥

'ब्रह्मण': इति कर्मणि षष्ठी न शेषे, जिज्ञास्यापेक्षत्वाज्जिज्ञासायाः, जिज्ञास्यान्तराऽनिर्देशाच्च । ननु शेषषष्ठीपरिग्रहेऽपि ब्रह्मणो जिज्ञासाकर्मत्वं न विरुध्यते, संबन्धसामान्यस्य विशेषनिष्ठत्वात् ? एवमपि प्रत्यक्षं ब्रह्मणः कर्मत्वमुत्सृज्य सामान्यद्वारेण परोक्षं कर्मत्वं कल्पयतो व्यर्थः प्रयासः स्यात् ॥

न व्यर्थः, ब्रह्माश्रिताशेषविचारप्रतिज्ञानार्थत्वादिति चेत् ?

न—प्रधानपरिग्रहे तदपेक्षितानामर्थाक्षिप्तत्वात् । ब्रह्म हि ज्ञानेनाप्तुमिष्टतमत्वात् प्रधानम् । तस्मिन् प्रधाने जिज्ञासाकर्मणि परिगृहीते यैर्जिज्ञासितैः विना ब्रह्म जिज्ञासितं न भवति तान्यर्थाक्षिप्तान्येव इति न पृथक् सूत्रयितव्यानि । यथा राजाऽसौ गच्छतीत्युक्ते सपरिवारस्य राज्ञो गमनमुक्तं भवति, तद्वत् । श्रुत्यनुगमाच्च । "यतो वा इमानि भूतानि जायन्ते" इत्याद्याः श्रुतयः, "तद्विजिज्ञासस्व तद्ब्रह्म" इति प्रत्यक्षमेव ब्रह्मणो जिज्ञासाकर्मत्वं दर्शयन्ति । तच्च कर्मणिषष्ठीपरिग्रहे सूत्रेणानुगतं भवति । तस्मात् ब्रह्मणः इति कर्मणि षष्ठी ॥

ज्ञातुमिच्छा जिज्ञासा । अवगतिपर्यन्तं ज्ञानं सन्वाच्याया इच्छायाः कर्म, फलविषयत्वादिच्छायाः । ज्ञानेन हि प्रमाणेनावगन्तुमिष्टं ब्रह्म । ब्रह्मावगतिर्हि पुरुषार्थः, निःशेषसंसारबीजाविद्याद्यनर्थनिबर्हणात् । तस्मात् ब्रह्म जिज्ञासितव्यम् ॥

॥ इति ब्रह्मसूत्रभाष्ये तृतीयं वर्णकम् ॥

# पञ्चपादिका

**तत्राथशब्द आनन्तर्यार्थः परिगृह्यते, नाधिकारार्थः ॥**

## पञ्चपादिकाविवरणम्

तत्र लोकेऽथशब्दस्य चत्वारोऽर्था वृद्धव्यवहारे प्रयोगसामर्थ्यात् प्रसिद्धाः—आनन्तर्यम्, अधिकारः, मङ्गलाचरणम्, प्रकृतादर्थादर्थान्तरत्वं च । तत्रेतरपर्युदासेनानन्तर्यमथशब्देनोपादीयत इत्यस्मिन्नर्थे "सति चानन्तर्यार्थत्वे" इत्यतः प्राक्तनभाष्यस्य तात्पर्यमाह—**तत्राथशब्द आनन्तर्यार्थ** इत्यादिना ॥ कथम्? जिज्ञासाशब्दस्यावयवार्थेनार्थवत्त्वे सतीच्छायाः कर्तव्यतया प्रारम्भानुपपत्तेः, प्रत्यधिकरणं चाप्रतिपाद्यत्वान्नाधिकारार्थोऽथशब्दः । ब्रह्मज्ञानेच्छाया मङ्गला-

## तत्त्वदीपनम्

फलसिद्धावर्थात् तत्कामोऽधिकारी सिध्यति, किमुत्तरग्रन्थेनेति चेत्? मुमुक्षुत्वमात्रस्याधिकारनिमित्तत्वासंभवाद् विशेषणान्तरमेष्टव्यम् । तथाच साधनचतुष्टयविशिष्टाधिकारिनिरूपणार्थं वर्णकान्तरप्रारम्भो युक्तः । व्यवहिताव्यवहितविषयफलसिध्युत्तरसमयेऽधिकारिव्युत्पादनं सुकरमिति पौर्वापर्यम् । वेदान्तशास्त्रमारम्भणीयम्, उतानारम्भणीयमिति विशिष्टाधिकारिसंभवासंभवाभ्यां संदिह्यते । तत्र विशिष्टाधिकारिणि प्रमाणाभावादिदं शास्त्रमनारम्भणीयमिति पूर्वः पक्षः । "परीक्ष्य लोकान् कर्मचितान्" "शान्तोः दान्तः" इत्यादिवाक्यपर्यालोचनया साधनचतुष्टयविशिष्टाधिकारिप्रतिपत्तेरारम्भणीयमिति सिद्धान्तः ।

तत्रानन्तर्याभिधानमुखेनाधिकारिसमर्पणार्थोऽयमथशब्द इति प्रतिपादयितुमधिकारार्थत्वं तस्य प्रतिचिक्षेप भाष्यकृत्; तदनुपपन्नम्, एकस्य शब्दस्यानेकार्थत्वानुपपत्तेरधिकाराद्यर्थत्वशङ्कानवतारात् । ततश्च भाष्यं तद्व्याख्यानं चासङ्गतमित्याशङ्क्य तात्पर्यमाह—**तत्रेत्यादिना** । तत्रेति पदमथशब्देनेत्यनेनानुषज्यते । सूत्रपदानां मध्य इत्यर्थः ॥ इतरपर्युदासस्योत्तरत्र प्रतिपाद्यत्वेऽपि सुखप्रतिपत्त्यर्थं संक्षेपेण तं दर्शयितुमाकाङ्क्षामवतारयति—**कथमिति** । इतरस्य पर्युदास इति शेषः । जिज्ञासाशब्दस्य यौगिकत्वमादायाधिकाराद्यर्थत्वं मन्यते? उत रूढिम्? तत्राद्ये दूषणमाह—**जिज्ञासेति** ॥ इच्छायाः प्रारम्भो नाम किं कर्तव्यता? उत प्रतिपाद्यता? नाद्यः; विषयसौन्दर्यलभ्यत्वादिच्छाया

## ऋजुविवरणम्

पदवाक्यसमासैश्च प्रकृति-प्रत्ययादिभिः । मानैर्ज्ञेयं सदेकं चिद्गुरुरूपं निरूपितम् ॥
द्वितीयवर्णकेनैव शास्त्रारम्भः समर्थितः । पदव्याख्या तृतीयेन क्रियतेऽवसरादिह ॥
ज्ञातेऽत्र सूत्रे प्रथमं विचार्ये ब्रह्मस्वरूपे तदपीह योग्यम् ।
विचारणायाथ भवेन्नवेति जिज्ञास्यते तेन कृतोत्तरा सा ॥

"तत्राथशब्द आनन्तर्यार्थः" इत्यादिभाष्यम् । 'जिज्ञासाशब्दस्यावयवार्थाङ्गीकारो युज्यते' इति वदता किमुक्तमिति न ज्ञायते । भाष्यस्य युक्तत्वं नामार्थद्वारेण । भाष्ये चात्र बहवोऽर्थाः प्रतीयन्ते । नच तेषु सर्वेष्ववयवार्थग्रहणमुपयुज्यते; समुदायार्थग्रहणेऽप्यानन्तर्यस्य साधयितुं शक्यत्वात् । नचैकदेशोपपत्तिरेवात्र विवक्षिता; "इत्यादिभाष्यमि"ति बहुस्वीकारप्रतीतेः । अतो न भाष्यस्यानेनोपपन्नत्वं भवति । अयुक्तं च "तत्राथशब्द आनन्तर्यार्थः" इत्यादिभाष्यम्; एकस्य शब्दस्यैक एवायमानन्तर्यरूपोऽर्थः; अन्याय्यश्चानेकार्थत्वमिति न्यायात्; अतो नार्थान्तरनिराकरणेन कृत्यम्; टीकाग्रन्थोऽप्ययुक्तः; भाष्यानुपपत्तिमपरिहृत्याप्रस्तुतयुक्तत्वकीर्तनात् । किंच का तत्र युक्तता? आदिग्रहणेन कियद्विवक्षितमिति न ज्ञायते; उत्तरभाष्यस्य पुनर्व्याख्याकरणात् पौनरुक्त्यं च । तेन सह विवरणेन भाष्यं हेयमित्याशङ्क्यावतारयति—**तत्र लोक इति** । 'तत्रे'ति निर्धारणे । तेषु पदेष्वित्यर्थः । ननु अवयवार्थग्रहणेऽपि कथमधिकाराद्यर्थ-

### पञ्चपादिका

**ब्रह्मजिज्ञासाया अनधिकार्यत्वादित्यादि भाष्यम् । तद् जिज्ञासाशब्दस्यावयवार्थेनार्थवत्त्वे युज्यते । अधिक्रियायोग्यस्य ब्रह्मणस्तज्ज्ञानस्य वा प्राधान्येनानिर्देशात्, प्रधानस्य चेच्छाया अनधिकार्यत्वात् ॥**

**अयं तु जिज्ञासाशब्दो विचारवचनो मीमांसापरपर्यायः प्रयुक्तोऽभियुक्तैः, इदमतो जिज्ञासन्ते—किं क्रतुगुण-**

### पञ्चपादिकाविवरणम्

चरणार्थत्वस्य प्रसिद्धतरत्वात्, अप्रसिद्धत्वेऽपि प्रशंसापरतयाऽर्थवादत्वप्रसङ्गात् सूत्रस्य न मङ्गलाचरणार्थता। इच्छायाश्च कुतश्चित्प्रकृतादर्थादर्थान्तिरभावस्य प्रसिद्धतरत्वान्नाभिधानेन कृत्यम्, इत्यथशब्दस्य न तदर्थतेति । ननु इच्छायाः कुतश्चिदानन्तर्यमपि प्रसिद्धम् ? सत्यम्; हेतु-फलभावेनानन्तर्यस्य विवक्षितत्वादानन्तर्याभिधानमुखेन पूर्वं । प्रकृतपुष्कलकारणमथशब्देनावद्योत्यते । ननु ब्रह्मज्ञाने प्रवृत्तिपर्यन्तेच्छोदयसामर्थ्यादेव पुष्कलकारणमनुभीयते, किमथशब्देन ? सत्यम्; इच्छोदयप्रभृतीष्यमाणज्ञानोदयपर्यन्तस्य कार्यस्य पुष्कलकारणतया पूर्वप्रवृत्तस्य शास्त्रीयस्याधिकारिविशेषणस्य प्रतिपत्तिपरत्वादथशब्दस्य न दोषः। तत्प्रतिपत्तिश्चे ष्यमाणज्ञाने प्रवृत्तिपर्यन्तेच्छोदयद्वारेण प्रवृत्त्यङ्गभावं भजते, इति तेनानन्तर्याभिधानमुखेन प्रवृत्तिनिमित्तविशिष्टेच्छोदयप्रभृतेर्ज्ञानोदयपर्यन्तस्य कार्यस्य पुष्कलकारणतया पूर्वनिर्वृत्तसाधनचतुष्टयावद्योतनायानन्तर्यार्थोऽथशब्द इति सूक्तम् ॥

ननु जिज्ञासाशब्दस्य विचारे रूढस्य कथमवयवार्थेनार्थवत्त्वमादीयते ? "रूढिर्हि योगमपहरती"ति न्यायात्, इत्याक्षिपति—**अयं तु जिज्ञासाशब्दो विचारवचन** इत्यारभ्योच्यत इत्यतः प्राक्तनेन ॥ ग्रन्थः स्पष्टार्थः ॥

### तत्त्वदीपनम्

इत्याशयवानाह—**इच्छाया इति** ॥ न द्वितीयोऽपीत्याह—**प्रत्यधिकरणमिति** । पूर्वपक्षसिद्धान्ताभ्यामिच्छाप्रतिपादनस्य प्रत्यधिकरणमदृष्टेरित्यर्थः । मङ्गलार्थत्वं दूषयति—**ब्रह्मेति** । प्रसिद्धतरत्वान्न तद् वक्तव्यमित्यर्थः । हेत्वसिद्धिं मन्वानं प्रत्याह—**अप्रसिद्धत्व इति** । नचार्थवादत्वमिष्टमित्यपि शङ्क्यम्, सूत्रस्य न्यायप्रतिपादकत्वादित्यर्थः । प्रकृतादर्थान्तिरमथशब्दार्थ इति पक्षं निरस्यति—**इच्छाया इति** । परिशेषादानन्तर्यार्थत्वमितीतिशब्दार्थः । अर्थसिद्धत्वादानन्तर्यमपि न निर्देष्टव्यमिति शङ्कते—**नन्विच्छाया इति** ॥ आनन्तर्यमात्रस्य प्रसिद्धिमङ्गीकरोति—**सत्यमिति** ॥ तर्ह्य थशब्दो वृथा, तत्राह—**हेतुफलेति** । मुख्यं ह्यानन्तर्यं प्रतिपाद्यम्, तच्च हेतु-फलयोः, अहेतु-फलयोस्त्वानन्तर्यममुख्यम्; व्यभिचारात्, व्यवधेश्चेत्यर्थः । तथाऽपि तदभिधानं मुधेत्याशङ्क्याह—**आनन्तर्येति** ॥ अथवा, हेतु-फलभावेन प्रकृतादर्थान्तरमथशब्देन समर्प्यत इति शङ्कां निरस्यति—**आनन्तर्येति** । यस्यानन्तरं यद्भवति, स तस्य हेतुरिति हेतुत्वसिद्ध्यर्थमानन्तर्यमाश्रयणीयम्, ततस्तदेव समर्प्यतामित्यर्थः ॥ पुष्कलकारणस्यापि कार्यलिङ्गानुमितत्वाद् नाथशब्दापेक्षेति शङ्कते—**ननु ब्रह्मेति** ॥ अनुमेयत्वमङ्गीकरोति—**सत्यमिति** ॥ तर्ह्य थशब्दवैयर्थ्यम् ? नेत्याह—**नेति** ॥ शास्त्रीयविशेषणप्रतिपत्तिर्वा कस्मादिति ? तत्राह—**तत्प्रतिपत्तिरिति** । यदिदं पूर्ववृत्तं पुष्कलकारणम्, तस्य शास्त्रीयत्वज्ञानाभावे निःसंदिग्धा प्रवृत्तिर्न स्यात्, शास्त्रपर्युदस्तत्वशङ्काया अपि संभवात् । तस्माच्छास्त्रीयाधिकारिविशेषणसमर्पणार्थत्वमथशब्दस्येत्यर्थः । किं तच्छास्त्रीयं विशेषणमिति शङ्कां निराकुर्वन् स्वमतमुसंहरति—**तेनेति** । अधिकारिविशेषप्रतिपत्तेः प्रवृत्त्युपयोगित्वं तच्छब्दार्थः ।

### ऋजुविवरणम्

त्वनिराकरणम् ? तस्यैवाधिकार्यत्वादिसंभवादित्यभिप्रायेण पृच्छति—**कथमिति** ॥ प्रारम्भो द्विविधः—कर्तव्यतया, प्रतिपाद्यतया च । तत्र प्रथमपक्षं निराकरोति—**इच्छायाः कर्तव्यतयेति** । वस्तुसौन्दर्यादिजन्यत्वादिति भावः । द्वितीयपक्षे दूषणमाह—**प्रत्यधिकरणं चेति** ॥ **सत्यं हेतु-फलभावेनेति** । मुख्यमानन्तर्यमत्र प्रतिपाद्यम्, तच्च हेतु-फलयोरेव, अहेतुफलयोस्तु लोकसिद्धं नानन्तर्यम्; व्यभिचारात्; व्यवधानाच्चेति भावः । **सत्यमिच्छोदयेति** । अनुमानेन कारणावगतिर्भवति; न कारणज्ञानार्थमथशब्दः, किंतु तस्याधिकारिविशेषणतया ज्ञानार्थम्, तच्च नानुमानेन भवति; शास्त्रैकसमधिगम्यत्वादिति भावः । ननु स्वरूपेण विद्यमानं स्वकार्यं कर्तुं शक्नोति; न तत्प्रतिपत्त्या कृतमित्याशङ्क्याह—**तत्प्रतिपत्तिश्चेति** । अज्ञाते साधन इच्छामात्रं भवति, सामर्थ्यप्रतिपत्त्या तु विशिष्टेच्छोत्पत्तिद्वारेण प्रवृत्तिरेव क्रियत इति विशेषः ॥

## पञ्चपादिका

कमुपासनं स्वामिकर्म ? उतर्त्विक्कर्मे"ति ? इदन्तु जिज्ञास्यम्—किं नु खल्विमौ तप्य-तापकावेकस्यात्मनो भेदौ ? उत जात्यन्तरम् ? इति। धर्ममीमांसाभाष्यकारोऽपि संघातमेव प्रायुङ्क्त—"धर्मं जिज्ञासितुमिच्छेदि"ति, संघातवाच्यत्वाद्विचारस्य; अन्यथैवमवक्ष्यत्—"धर्मं ज्ञातुमिच्छेदि"ति। अत एव धर्माय जिज्ञासा 'धर्मजिज्ञासे'ति संघातस्यार्थवत्त्वमङ्गीकृत्य चतुर्थीसमासो दर्शितः। तदनुसारेण चैतानि भाष्याणि—"एवं वेदवाक्यान्येवैभिर्विचार्यन्ते" "वेदवाक्यानि विचारयितव्यानि" "कथं वेदवाक्यानि विचारयेदि"ति च; पुनश्च "क्रत्वर्थ-पुरुषार्थयोर्जिज्ञासा" "क्रत्वर्थपुरुषार्थौ जिज्ञास्येते" इति। इहापि भाष्यकारो वक्ष्यति—"तस्माद् ब्रह्म जिज्ञासितव्यमि"ति। पुनश्च "वेदान्तवाक्यमीमांसा तदविरोधितर्कोपकरणा निःश्रेयसप्रयोजना प्रस्तूयते" इति। अतः संघातस्यार्थवत्त्वादधिकारार्थता युज्यते। शास्त्रवचनो हि जिज्ञासाशब्दः; तेन ब्रह्मजिज्ञासाऽधिकृता वेदितव्येति॥

उच्यते; नायं जिज्ञासाशब्दः परित्यक्तावयवार्थः केवलमीमांसापर्यायः प्रयुज्यमानो दृश्यते। नापि स्मरणमस्ति।

## पञ्चपादिकाविवरणम्

**उच्यते नायं जिज्ञासाशब्द** इत्यादिः परिहारः। अयमाशयः—चत्वारः शब्दप्रवृत्तिप्रकाराः। तत्र रूढिः—यथा वृद्धव्यवहारेऽभिधानाभिधेयव्यतिरिक्तमनपेक्ष्यैव प्रयोगसामर्थ्याद् अखण्डाभिधानसम्बन्धः। योगः—समासादिनैकपद्यमापन्नस्य शब्दस्य स्वावयवगतानेकाभिधानशक्तिद्वारेण विशिष्टार्थाभिधानम्। एतच्चोभयं मुख्यवृत्तिरित्युच्यते॥ गौणस्तुः—स्वाभिधेयादर्थादर्थान्तरे गुणयोगाद् लक्षणया वृत्तिरिति। तत्रैकस्यैव शब्दस्यार्थान्तरे रूढस्य अर्थान्तरे च

## तत्त्वदीपनम्

जिज्ञासाशब्दो विचारे रूढ इत्युक्तम्—**अयं तु जिज्ञासाशब्द** इत्यत्र (टीकायाम्)॥ तत्रावयववृत्त्याऽर्थप्रतिपत्तिसंभवे रूढ्याश्रयणेन कथमधिकाराद्यर्थत्वशङ्का ? इति शङ्कायामाह—**ननु जिज्ञासेति**॥

**टीकाया** अयमर्थः—जिज्ञासाशब्दस्य कथं विचारवचनत्वमित्याशङ्कायां तथा वृद्धैः प्रयुक्तत्वादित्याह—**मीमांसेति**॥ प्रयोगमेव दर्शयति—**इदमिति**॥ **क्रतुगुणकर्मिति** क्रत्वङ्गोद्गीथादिविषयमित्यर्थः। जीव-संसारौ **तप्य-तापक**शब्दार्थः। **संघातं प्रायुङ्क्तेति**—अखण्डशब्दमेव प्रायुङ्क्तेत्यर्थः। तथाऽपि कथं विचारार्थत्वमिति ? अत आह—**संघातेति**॥ उक्तं व्यतिरेकमुखेनोपपादयति—**अन्यथेति**। जिज्ञासाशब्दस्यावयवशक्त्याऽर्थपरत्वे 'धर्मं जिज्ञासितुमिच्छेदि'त्यनुपपन्नम्, जिज्ञासाशब्देनेच्छाया निर्दिष्टत्वात्, इच्छाविषयत्वेनेच्छान्तरप्रसक्तेः। तस्माद्'धर्मं ज्ञातुमिच्छेदि'त्यभिधानं स्यादित्यर्थः। तत्रैव लिङ्गान्तरमाह—**अत एवेति**। जिज्ञासाशब्दस्य यौगिकत्व इष्यमाणस्य फलत्वसिद्धेस्तन्निर्देशानपेक्षणाद् विषयस्य चानिर्दिष्टत्वात् षष्ठीसमासः स्यात्, विचारार्थत्वे त्वस्य प्रयोजनापेक्षायां चतुर्थ्या प्रयोजननिर्देशो युक्त इत्यर्थः। उत्तरत्र विचारस्य निर्दिष्टत्वात् संदिग्धार्थं जिज्ञासापदं तद्विषयत्वेन व्याख्येयमित्याह—**तदनुसारेणेति**। अस्मदुक्तानुसारेणेत्यर्थः॥ **एभिर्न्यायैः**। **क्रत्वर्थः** क्रतुस्वरूपोपकारी प्रोक्षणादिः; फलोपकारी प्रयाजादिः। फलोद्देशेन क्रियमाणं कर्म फलं च पुरुषश्चेत्येते **पुरुषार्थ**शब्दार्थः। **संघातस्यार्थवत्त्वादिति**—अखण्डशब्दस्य विचारलक्षणार्थेनार्थवत्त्वादित्यर्थः॥ अतःशब्दार्थमाह—**शास्त्रेति**। विचारवचन इत्यर्थः। वाक्यार्थमाह—**तेनेति**॥

जिज्ञासाशब्दस्यावयवार्थत्वमाश्रित्य कथं समाधिरभिधीयते ? रूढिर्योगमपहरतीति न्यायविरोधादित्याशङ्क्याह—**उच्यत इति**॥ तस्यायमर्थः—किमभियुक्तोक्तिमात्राद् जिज्ञासाशब्दस्य विचारवाचित्वं विवक्षितम् ? उत निघण्ट्वादिसहकृतोक्तेरिति विकल्पद्वयं हृदि निधायाह—**उच्यत इति** (टीकायाम्)॥ आद्यं निरस्यति—**नायमिति**। केवला

## ऋजुविवरणम्

"अयं तु जिज्ञासाशब्दः"इत्याक्षेपो न युक्तः; नहि वृद्धप्रयोगमात्रं विचारविषयं मुख्यत्वेन लाक्षणिकत्वेन चानिश्चितं संघातस्यावयवशक्त्या प्रतीयमानार्थानुपादाने कारणं भवितुं शक्नोतीत्याशङ्क्यावतारयति—**ननु जिज्ञासाशब्दस्येति**॥

"नायं जिज्ञासाशब्दः" इति परिहारेऽवयवार्थपरित्यागो नास्तीत्युक्तम्, तद् व्यर्थम्; अवयवार्थपरित्यागेऽपि विचारे प्रयोगाच्छक्तिसिद्धेः, इतरथा प्रयोगानुपपत्तेः। "प्रयुज्यमानो न दृश्यते" इति चायुक्तम्; दर्शितत्वाच्छब्द-

## पञ्चपादिका

**न चावयवार्थेनार्थवत्त्वे सम्भवति समुदायस्यार्थान्तरकल्पना युक्ता। ननु न वयं कल्पयामः, दर्शितः शिष्टप्रयोगः ? न;**

## पञ्चपादिकाविवरणम्

योगवृत्तिसम्भवे 'रूढिर्योगमपहरती'ति न्यायेन योगं परित्यज्य रूढिरुपादीयते। रूढि-योग-मुख्यवृत्तिसम्भवे गौणः परित्यज्यते; तत्रैकस्मिन्नर्थे क्लृप्तसामर्थ्येन शब्दस्य योगवृत्तिसम्भवे तत्रैव तस्यैव शब्दस्य शक्त्यन्तरकल्पनानिमित्त-कार्यान्तराभावात्। ननु पङ्कजशब्दादिषु योगरूढिरिति वृत्त्यन्तरं कल्प्यत इति ? न; तत्रापि योगवृत्त्यैवार्थप्रतिपत्तेः। ननु उत्पलादिवस्त्वन्तरं विहाय पङ्कजशब्दाज्झटिति तामरसे प्रतिपत्तिदर्शनाच्छक्तिद्वयमेव कल्पनीयम् ? न; प्रयोगबाहुल्यादपि

## तत्त्वदीपनम्

च सा मीमांसा चेति केवलमीमांसा, तस्याः पर्यायः। केवलशब्दार्थमाह—**परित्यक्तेति**। अवयवार्थोपादानेनापि प्रयोगोपपत्तिरित्यभिसन्धिः। द्वितीयं निरस्यति—**नापीति**॥ योगाद् रूढेः प्राबल्यान्न योगवृत्तिपरिग्रहः, तत्राह—**नचेति**॥ शिष्टप्रयोगस्यावयवार्थेनार्थवत्त्वासंभवाद्विचारार्थत्वमित्याशयवानाह—**ननु न वयमिति**॥ असिद्धो हेतु-रित्याह—**न तस्येति**॥ परिहारप्रकारमाह—**अयमाशय इति**॥

न्यायस्य विषयभेदं दर्शयितुं शब्दप्रवृत्तिभेदानाह—**चत्वार इति**। रूढि-योग-गौण-लक्षणारूपा इत्यर्थः। क्रमेण तानेवाह—**तत्रेत्यादिना**॥ अखण्डाभिधानस्याभिधेयेन संबन्धो रूढिरित्युक्ते साङ्केतिकशब्देष्वतिव्याप्तिः, तदर्थम्—**अभिधानाभिधेयव्यतिरिक्तमिति**। साङ्केतिकशब्देषु सङ्केतापेक्षेति यावत्। यौगिकशब्दव्यावृत्त्यर्थम्—**अखण्डेति** विशेषणम्। कथं तत्प्रतिपत्तिरित्याकाङ्क्षायामुक्तम्—**वृद्धव्यवहारे प्रयोगसामर्थ्यादिति**। अत्र 'गौर्घटः' इत्याद्युदाहरणम्। विशिष्टार्थाभिधानं योग इत्युक्ते वनसेनादिष्वपि प्रसंगः तदर्थं स्वावयवेति। वाक्यस्य अवयवपदगतशक्तिद्वारेण विशिष्टार्थाभिधायित्वं व्यावर्तयितुं ऐकपद्यमिति विशेषणम्। तत्र हेतुमाह **समासादिनेति**। प्रत्ययश्चादिशब्दार्थः पाचक-लावकादिशब्दा अत्रोदाहरणम्। गौणलक्षणाभ्यां रूढियोगयोः प्राबल्ये द्योतयितुमाह—**एतदिति**। अर्थान्तरे वृत्तिर्गौण इत्युक्ते यतः कुतश्चिदर्थान्तरे वर्तमानस्य गोशब्दस्यापि गौणत्वं स्यात् तदर्थं **स्वाभिधेयादिति**। एतावत्युक्ते सोमशब्दः शीतांशौ वर्तमानः उमासहिते श्रीशङ्करेऽपि वर्तत इत्यतिव्याप्तिः तदर्थं लक्षणयेति। नच लक्षणागौणसाङ्कर्यम्। अभिधेयाविनाभूते वृत्तिर्लक्षणा, तद्गतगुणयुक्ते वृत्तिर्गौणी इति विभागसंभवात् इत्यर्थः। फलितं दर्शयति—**तत्रेति**। एकस्य शब्दस्यार्थान्तरे रूढ्या प्रवृत्तस्यार्थान्तरे च योगवृत्त्या प्रयोगे किं रूढ्यवलम्बनेनार्थो ग्राह्यः उत योगालंबनेनेति विशये रूढ्यर्थो ग्राह्यः ; तस्या अविलम्बितप्रतिपत्तिकत्वात्, तत्र च रूढिर्योगमपहरतीति न्यायावसर इत्यर्थः। यत्र तु मुख्यामुख्यग्रहणशङ्का, तत्र मुख्यस्य ग्रहणमितरस्य परित्याग इत्याह—**रूढीति**। रूढिश्च योगश्चेति रूढि-योगौ, तावेव मुख्यवृत्ती, तयोः संभव इति विग्रहः। कथं तर्हि जिज्ञासाशब्दाद् विचारपरित्यागेनेच्छाप्रतिपत्तिः ? तत्राह—**तत्रैकस्मिन्निति**॥ तत्र हेतुमाह—**क्लृप्तसामर्थ्येनेति**। अवयवशक्तेरित्यर्थः। अखण्डशक्त्या विनाऽनुपपद्यमानकार्याभावान्न तत्कल्पनम्, तथा च कल्प्याया रूढेर्योगात्प्राबल्यं नावकल्पत इत्यर्थः॥ पङ्कजशब्दादिषु योगसंभवेऽपि यथा वृत्त्यन्तरमाश्रितम्, तद्वदत्र योगसंभवेऽपि रूढिकल्पनं स्यादिति शङ्कते **ननु पङ्कजेति**॥ अप्रसिद्धत्वात् कल्पनागौरव-प्रसङ्गाच्च न वृत्त्यन्तरकल्पनमित्यत्राह—**शक्तिद्वयमिति**। पूर्वत्रैकशब्दस्य द्वाभ्यां शक्तिभ्यामेकस्मिन्नर्थे वृत्तिरुक्ता, अत्र त्ववयवशक्त्याऽनेकार्थत्वम्, अखण्डशक्त्या तामरसार्थत्वमिति विभागः। दृष्टान्तोऽसंप्रतिपन्न इत्याह—**न तत्रापीति**॥ दृष्टान्तं समर्थयते—**ननूत्पलेति**। पङ्कजशब्दो योगवृत्त्या तामरसं बोधयति चेत्, तर्हि योगवृत्तेरुत्पलादिष्वप्यविशेषात्

## ऋजुविवरणम्

प्रयोगस्य, स्मरणस्यापि प्रयोगमूलत्वात्। "नचावयवार्थेने"त्यप्यसम्बद्धम्; अवयवशक्तेः संभवेऽपि समुदायशक्तेस्तत्तिरो-धायकत्वाविशेषादित्याशङ्क्याभिप्रायमाह—**अयमाशयश्चत्वार इति**॥ **गुणयोगादिति**—स्वाभिधेयगतगुणयोगादित्यर्थः॥ **लक्षणया वृत्तिरिति**—अभिधेयाविनाभावेन वृत्तिरित्यर्थः। **गौणस्त्वभिधेयादर्थादर्थान्तरे लक्षणयेत्येव** पाठे लक्षणापूर्व-कत्वोक्त्यैव लक्षणाया उक्तत्वादनुपन्यासः। तदुक्तम्—"अभिधेयाविनाभूतप्रतीतिर्लक्षणेष्यते। लक्ष्यमाणगुणैर्योगाद्वृ-त्तेरिष्टा तु गौणता"॥ इति॥ **तत्रैकस्मिन्नर्थ इति**। क्लृप्ता रूढिर्योगापहारिणी, नतु कल्प्येत्यर्थः : **ननु पङ्कजादिष्विति**।

## पञ्चपादिका

**तस्यान्यथासिद्धत्वात् । कथमन्यथासिद्धत्वम् ? अन्तर्णीतविचारार्थत्वाज्जिज्ञासाशब्दस्य । तथाहि—विचारपूर्वकसाध्यज्ञानविषयेच्छा जिज्ञासाशब्दात् प्रतीयते, नोपदेशमात्रसाध्यज्ञानविषया; एवं प्रयोग-प्रत्यययोर्दर्शनात्, तेन जिज्ञासाशब्दस्यावयवार्थेनार्थवत्त्वाद् युक्तमुक्तम्—ब्रह्मजिज्ञासाया अनधिकार्यत्वादिति ॥**

## पञ्चपादिकाविवरणम्

सामर्थ्यविशेषे प्रथमप्रतिपत्तिदर्शनात् । यथा नवस्वर्थेषु शक्त्यविशेषेऽपि गोशब्दात् सास्नादिमदाकृतौ प्रयोगबाहुल्यादेव प्रथमप्रतिपत्तिः । तस्मात् क्लृप्तसामर्थ्यादेव प्रयोगप्रतिपत्तिसम्भवे न शक्त्यन्तरकल्पनेत्याह—**नायं जिज्ञासाशब्द इति ॥ कथमित्यतः** प्राक्तनो ग्रन्थः स्पष्टार्थः ॥ ननु अवयवार्थसंसर्ग एव योगवृत्त्याऽपि शब्देन प्रतिपाद्यते, विचारस्तु न जिज्ञासाशब्दावयवार्थः, कथं तदवगमस्य क्लृप्तसामर्थ्येनैवान्यथा सिद्धिरिति चोदयति—**कथमन्यथासिद्धत्वमिति** ॥ स्वयमवयवार्थत्वाभावेऽप्यवयवार्थसंसर्गाविनाभावादपि तल्लक्षणया प्रयोग-प्रत्ययोपपत्तौ न शक्त्यन्तरकल्पना; अनन्यथासिद्धकार्याभावादिति परिहरति—**अन्तर्णीतविचारार्थत्वादिति** ॥ ननु ज्ञानमात्रमिष्यमाणं कथं विचारेणाविनाभूतमिति ? तदाह—**तथाहीति** ॥ किं तत्र प्रमाणमिति ? तदाह—**एवं प्रयोग-प्रत्यययोरिति** । ज्ञानं खल्विष्यमाणं विषयेण सहावगतमिष्यते, अनवगतविषयेच्छाऽयोगात् । ततश्च प्रतिपन्ने वस्तुनि ज्ञानमिष्यमाणं संदिग्धे निश्चयफलं वा परोक्षेऽपरोक्षफलं वेष्यते ।

## तत्त्वदीपनम्

पङ्कजशब्दात् तत्प्रतिपत्तिरपि स्यात्, नच तथा प्रतिपाद्यते । तस्मात् तामरसे शक्त्यन्तरं वृत्त्यन्तरं वाऽऽश्रयणीयमित्यर्थः । कल्पनागौरवप्रसङ्गाद् न वृत्त्यन्तराद्याश्रयणीयम् । नच तामरसप्रतिपत्त्यनुपपत्त्या तदाश्रयणीयम्; प्रतिपत्तेरन्यथाऽप्युपपत्तेरित्याह—**न प्रयोगेति** ॥ तत्र दृष्टान्तमाह—**यथेति** ॥ **नवस्विति**, दिग्-दृष्टि-दीधिति-स्वर्ग-वज्र-वाग्-बाण-वारि-भूलक्षणेष्वित्यर्थः । अनन्यथासिद्धकार्याभावान्न शक्त्यन्तरमित्युपसंहरति—**तस्मादिति** ॥ उपवर्णितेऽर्थे टीकां पातयति—**इत्याहेति** ॥ कथंशब्दसूचितामनुपपत्तिं दर्शयति—**नन्ववयवेति** ॥ **अन्यथा** अखण्डशक्त्या विनेति यावत् ॥ जिज्ञासाशब्दस्य यौगिकत्वे कथं विचारार्थत्वम् ? विचारस्यावयवार्थत्वाभावादित्याशङ्क्य, किं जिज्ञासाशब्दस्य विचारे प्रवृत्ति-प्रत्ययौ पृच्छ्येते ? अथवा तस्य शक्त्यन्तरं कल्प्यम् ? इति विकल्प्याद्यं प्रत्याह—**स्वयमिति** । लक्षणानिमित्तसंबन्धमाह—**अवयवार्थेति** । अविनाभावस्योत्तरत्र प्रपञ्च्यमानत्वान्नासिद्धिरित्यर्थः । द्वितीयं निरस्यति—**अपीति** । लक्षणयाऽपीति संबन्धः । उभयमपि किं न स्यादिति ? अत आह—**अनन्यथेति** ॥ अविनाभावोऽसिद्ध इति शङ्कते—**नन्विति** ॥ ज्ञानमात्रस्य विचाराविनाभावः ? उत तद्विशेषस्य ? नाद्य इत्याह—**ज्ञानेति** । नृत्तादिदिदृक्षूणां विचारादृष्टेः । अतएव नेतरोऽपीत्यर्थः । निरूपकाणां ज्ञानविशेषस्य विचाराविनाभावप्रतिपत्तेर्नासिद्धिरित्याह—**तदाहेति** । तत्राहेत्यर्थः । उक्तेऽर्थे कल्पकं पृच्छति—**किं तत्रेति** ॥ विचारसाध्यज्ञानेच्छाविषयत्वेन जिज्ञासाशब्दस्योत्तमवृद्धेन प्रयुज्यमानत्वाद् मध्यमवृद्धस्य तथा प्रत्ययदर्शनाच्चाविनाभाव इत्याह—**तदाहेति** ॥ हेत्वसिद्धिं मन्वानं प्रत्याह—**ज्ञानमिति** ॥ अवगतेरनवगतौ कामनाऽनुपपत्तेरवगतिरङ्गीकार्या, तत्र च विशेषणस्येव विशेष्यस्याप्यवगतिः ? उत न ? इति विकल्प्याद्यमवतारयति—**विषयेणेति** ॥ द्वितीयनिरासेनेतरत्र हेतुमाह—**अनवगतेति** । अनवगतो विषयो यस्य ज्ञानस्य तत्तथा, तत्रेच्छायोगादित्यर्थः । अस्तु विषयविशेषितज्ञानप्रतिपत्तिः ; तथाऽपि तत्रेच्छाऽनुपपन्नेत्याशङ्क्याह—**ततश्चेति** । आद्यज्ञानेन संदिग्धतया प्रतिपत्तौ तत्र निर्णयज्ञानं काम्यते, असंदिग्धतया प्रतिपत्तावप्यपरोक्षज्ञानमिति

## ऋजुविवरणम्

यथा पङ्कजादिषु योगसंभवेऽपि वृत्त्यन्तरादि कल्पितम्, तद्वदत्रापि कल्प्यत इति भावः । पूर्वग्रन्थे योगसंभवे न रूढिः कल्प्यत इत्युक्तत्वात्—"अन्यथासिद्धत्वादि"त्यत्रापि सन्निहितत्वाद् योगवृत्त्यैव प्रतिपत्तिरुक्तेति कृत्वा चोदयति—**नन्ववयवार्थेति** । अन्यथासिद्धत्वाभावे शक्त्यन्तरमेव कल्पनीयमिति भावः । "एवं प्रयोग-प्रत्यययोरि"त्यसम्बद्धमुक्तम्; नहि जिज्ञासाशब्दो विचारसाध्यज्ञानेच्छायां प्रयुक्तः, नापि प्रतीतिरस्तीति वक्तुं शक्यते; पुनश्च मुख्यत्वप्रसङ्गादित्याशङ्क्याभिप्रायमाह—**ज्ञानं खल्विष्यमाणमिति** ॥

"नन्वेवमपि कुतः"इत्यादिना विचारस्वीकारमङ्गीकृत्याधिकारार्थतया चोद्यं क्रियते, तदनुपपन्नम्; नहि

## पञ्चपादिका

**ननु एवमपि कुत एतत् ? अन्तर्णीतं विचारमाश्रित्य शब्दतो गुणत्वेऽप्यर्थलक्षणेन प्राधान्येन ब्रह्म-तज्ज्ञानयोरधिकारयोग्यत्वाच्चाधिक्रियमाणत्वमङ्गीकृत्याधिकारार्थत्वं किमिति न गृह्यते, येन शब्दलक्षणेन प्राधान्येनेच्छाया अनधिकार्यत्वादानन्तर्यार्थत्वमेव परिगृह्यत इति ? उच्यते—शास्त्रस्यानारम्भप्रसङ्गादधिकारार्थत्वानुपपत्तेः ।**

## पञ्चपादिकाविवरणम्

तच्चोभयं प्रमाणादिविचारप्रयत्नसाध्यम्, इति प्रतिपन्ने वस्तुनि विशिष्टज्ञानमिष्यमाणं प्रमाणादिविचारमविनाभावेन गमयति, इति विचारसाध्यज्ञाने प्रयोगप्रत्ययावित्यर्थः ॥

ननु नेच्छामात्रं सूत्रेण प्रतिपाद्यते, प्रयोजनाभावात्, किंत्विष्यमाणज्ञानप्रदर्शनमुखेन तत्साधनं विचारमन्तर्णीतमुपलक्ष्य स एव तात्पर्येण प्रतिपाद्यते, अतो विचार-ज्ञान-ब्रह्मणामन्यतमस्य तात्पर्येण प्रतिपाद्यस्यारम्भायाथशब्द इति चोदयति—**नन्वेवमपि कुत एतदिति** ॥ तदेव प्रपञ्चयति—**अन्तर्णीतं विचारमाश्रित्येति** । अर्थलक्षणेन प्राधान्येनान्तर्णीतं विचारमाश्रित्येति सम्बन्धः । अतस्त्रयाणामन्यतमस्याधिक्रियमाणत्वमङ्गीकृत्येति योजना । तत्राथशब्देनानन्तर्याभिधानमुखेन शास्त्रीयसाधनचतुष्टयसंपन्नाधिकारिविशेषस्य न्यायतः समर्पणाभावे विचारारम्भार्थत्वे च कर्तव्यतया विधीयमानो विचारो निरधिकारोऽननुष्ठेयः स्यादिति परिहरति—**उच्यते, शास्त्रस्यानारम्भप्रसङ्गादिति** ॥ ननु विचारविधिरेव विश्वजिन्न्यायेनाधिकारिविशेषं कल्पयित्वा प्रवृत्तिपर्यन्तो भविष्यति, किमथशब्देनेति ? ननु

## तत्त्वदीपनम्

विभागः । ततः किमिति ? अत आह—**तच्चेति** ॥ प्रमेयमादिशब्दार्थः । विचारविषयः प्रयत्नो **विचारप्रयत्नः** । तथाऽपि कथं जिज्ञासापदेन विचारसिद्धिः ? तत्राह—**इति प्रतिपन्न इति** । विचारस्य साधनत्वाद् विशिष्टज्ञानस्य च साध्यत्वात् तयोरविनाभाव इत्यर्थः । ततश्च टीकाग्रन्थो युक्त इत्याह—**इति विचारेति** ॥

'ज्ञातुमिच्छा जिज्ञासे'तीच्छायाः प्राधान्यप्रतिपत्तेः कया युक्त्या विचारादेः प्राधान्यम् ? इति शङ्कायामाह—**ननु नेच्छेति** । शब्दतः प्राधान्यप्रतिपत्तावपीच्छाया अपि प्रतिपाद्यत्वान्न तस्या अर्थतः प्राधान्यमित्यर्थः । किं तर्हि प्रतिपाद्यम् ? इति पृच्छायामाह—**किंत्वित्यादिना** ॥ जिज्ञासाशब्दस्यावयवार्थत्वेऽप्यानन्तर्यार्थत्वमप्यथशब्दस्य कस्मादिति टीकार्थः । इच्छाया अनारभ्यत्वादानन्तर्यार्थत्वमित्याशङ्क्याह—**तदेवेति** ॥ "प्राधान्येने"त्यस्य "ब्रह्म-तज्ज्ञानयोरि"त्यनेन संवन्ध इति शङ्का स्यात्, नच सा युज्यते; विचाराश्रयणवैयर्थ्यापातादित्याशङ्क्यान्वयमाह—**अर्थलक्षणेनेति** ॥ विचारमाश्रित्य ब्रह्म-तज्ज्ञानयोरधिक्रियमाणत्वमङ्गीकृत्येत्यन्वय इति शङ्का स्यात्, ततश्च विचाराश्रयणं वृथेत्याशङ्क्यान्वयमाह—**अत इति** । आरम्भयोग्यत्वमतःशब्दार्थः । अर्थलक्षणेन प्राधान्येनान्तर्णीतं विचारमाश्रित्य तस्याधिक्रियमाणत्वमङ्गीकृत्याधिकारार्थत्वम्, तथा ब्रह्म-तज्ज्ञानयोः शब्दतो गुणत्वेऽपि ब्रह्म-तज्ज्ञानयोरर्थलक्षणप्राधान्येनाधिकारयोग्यत्वादधिक्रियमाणत्वमङ्गीकृत्याधिकारार्थत्वं किमिति न गृह्यते ? इति योजना द्रष्टव्या । "आरम्भार्थत्वेऽनारम्भप्रसङ्गादि"ति कथमुक्तम् ? तत्राह—**तत्राथशब्देनेति** ॥ **तत्र** सूत्र इत्यर्थः । **न्यायत** इति वक्ष्यमाणादित्यर्थः । 'विश्वजिता यजेते'त्यत्राधिकार्यश्रवणेऽपि यथा प्रवृत्तिः, तद्वदत्रापीति शङ्कते—**ननु विचारेति** । **विश्वजिन्न्यायेनेति** । "विश्वजिता यजेते"ति श्रुतम्; नियोज्याभावेऽनुष्ठानानुपपत्तेर्नियोज्यस्तावदेष्टव्यः । स किम-

## ऋजुविवरणम्

विचारोऽत्र सूत्रे प्रतिपाद्यते, किंत्वविनाभावमात्रेण प्रतीयते । अतश्च तन्निबन्धनं प्राधान्यं तस्यान्यस्य वा नाधिकारकारणमित्याशङ्क्यावतारयति—**ननु नेच्छामात्रमिति** ॥ "अर्थलक्षणेन प्राधान्येन ब्रह्म-तज्ज्ञानयोरधिकारयोग्यत्वादि"-त्युत्तरेणान्वयः प्रतिभाति; तथा सति विचारस्य हि पुरुषाधीनत्वेनाधिक्रियमाणत्वसंभवादिदानीं तस्य स्वीकारः । अतः प्राधान्यमपि तत्रैव वक्तव्यम्; अन्यथेच्छाप्राधान्येऽपि ब्रह्म-तज्ज्ञानयोरर्थतः प्राधान्यादधिक्रियमाणत्वसंभवादिति मनसि कृत्वा योजनां दर्शयति—**अर्थलक्षणेन प्राधान्येनान्तर्णीतमिति** ॥ "अधिक्रियमाणत्वमङ्गीकृत्ये"त्यत्र ब्रह्म-तज्ज्ञानयोःप्रतीतिः स्यात् ; पूर्वं तयोः प्रकृतत्वात्, तथा सति विचारस्याधिक्रियमाणत्वाभावशङ्का स्यात्, तदभावे ब्रह्म-तज्ज्ञानयोरपि न स्यात्, तदर्थं व्याचष्टे—**अतस्त्रयाणामपीति** ॥ अत्रैवमधिकरणसंक्षेपः—शास्त्रं नारम्भणीयम् ? उतारम्भणीयमिति संशये, निरधिकारत्वाद् नारम्भणीमिति पूर्वः पक्षः । अथशब्दोपात्तसाधनचतुष्टयसंपन्नस्य विद्व-

### पञ्चपादिका

**कथं ? अधिकारार्थत्वे ह्यप्रयोजनं शास्त्रं काकदन्तपरीक्षावदनारम्यं स्यात्, तत्र कस्याधिकार उच्येत ? ॥**

**ननु ब्रह्मज्ञानं प्रयोजनम्; तदर्थः शास्त्रारम्भः ?**

### पञ्चपादिकाविवरणम्

कर्तव्यतयाऽवगतो विचारोऽपि प्रारम्भमर्थाद् गमयति, किं विचारप्रारम्भार्थेनाथशब्देन ? ननु विधिसामर्थ्यादुभयप्राप्तौ कस्तत्र निर्णयः ? विध्यपेक्षितोपाधित्वादानन्तर्याभिधानमुखेनाधिकारिसमर्पणमेव युक्तमित्याह—**अधिकारार्थत्वे ह्यप्रयोजनमिति**। प्रवृत्तिद्वारेण प्रयोजनपर्यन्तताशून्यमित्यर्थः। ननु मोक्षकामः कल्प्यते ? न; प्रसज्ज्यप्रतिषेधप्रसङ्गात्। तथाहि—कर्तव्य इत्युक्तेऽविशेषात् सर्वाधिकारप्रतिपत्तौ तदनुपपत्त्या विशिष्टाधिकारः कल्पनीयः। ततो वरं शब्देनैव विशिष्टाधिकारिसमर्पणमिति भावः॥

ननु रात्रिसत्रन्यायेनार्थवादगतमेव मोक्षं ब्रह्मज्ञानं वा प्रयोजनं साध्यत्वेन परिणमय्य मोक्षकामो ब्रह्मज्ञानकामो वा विचारयेदिति विधिप्रतिपत्तिसमयेऽधिकारविशिष्टविधिप्रतिपत्तेः न प्रसज्ज्यप्रतिषेध इति चोदयति—**ननु ब्रह्मज्ञानं प्रयोजनमिति**॥ तत्रेदं वक्तव्यम्—किं सर्वेषां फलकामितया सर्वाधिकारं शास्त्रमुच्यते ? किं वा विशिष्टाधिकारमिति ?

### तत्त्वदीपनम्

विवक्षितविशेषः ? उत स्वर्गकामः ? इति जिज्ञासायां नियामकाभावाद् यः कश्चिदिति पूर्वपक्षं प्रापय्य सिद्धान्तित—स्वर्गकामो नियोज्य इति। निरतिशयप्रीतिः स्वर्गः, तत्र च सर्वेषामाकाङ्क्षादर्शनात् तत्कामोऽधिकारीति। तथाचाधिकारिविशेषाभावे विचारविधेरप्यनुपपत्तेः स आश्रयणीयः, इति न प्रवृत्त्यनुपपत्तिरित्यर्थः। अथशब्द आनन्तर्याभिधानद्वाराऽधिकारिसमर्पकः' आरम्भस्त्वर्थादित्याश्रीयतामिति शङ्कते—**ननु कर्तव्यतयेति**। **अवगत इति**। श्रुतावित्यर्थः। नियामकाभावान्नैवमिति शङ्कते—**नन्विति**। अथशब्द आरम्भार्थोऽधिकार्यर्थो वेति संशय एव, न तत्र निर्णायकमस्तीत्यर्थः। निर्णायकाभावोऽसिद्ध इत्याह—**विध्यपेक्षितेति**। विधिना अपेक्षितश्चासावुपाधिश्च विध्यपेक्षितोपाधिः, तस्य भावस्तत्त्वम्, तस्मादिति विग्रहः। अधिकारिणमन्तरेण विधिप्रतिपत्त्यनुपपत्तेः, प्रथमापेक्षितोऽधिकारी विधिप्रतिपत्त्युत्तरकालीनमनुष्ठानमिति प्रथमापेक्षितोऽधिकार्यथशब्देन समर्प्यत इत्यर्थः॥ मोक्षलक्षणप्रयोजनसंभवादप्रयोजनमिति कथमुक्तम् ? इत्याशङ्क्याह—**प्रवृत्तीति**। निर्णीताधिकार्यभावात् प्रवृत्त्यनुपपत्तेर्न पुरुषार्थसिद्धिरित्यर्थः। विधेरधिकार्याकाङ्क्षाया अन्यत एवोपशान्तत्वाद् नाथशब्दस्याधिकारिसमर्पकत्वमिति शङ्कते—**ननु मोक्षेति**॥ कल्पनमेवायुक्तमित्याह—**न प्रसज्ज्यप्रतिषेधप्रसङ्गादिति**॥ तदेव दर्शयति—**तथाहीति**॥ एतदभिसन्धायोक्तम्—**तत्र कस्येति**॥

अधिकार्यभावादारम्भार्थत्वे निरस्ते "नन्वि"त्यादेरनवसरः। नच—ब्रह्मज्ञानकामाधिकारिणः कल्प्यत्वात् तदुपपत्तिरिति—शङ्क्यम्; प्रसज्ज्यप्रतिषेधप्रसङ्गोक्तेरित्याशङ्क्यविधिप्रतिपत्तिसमय एवाधिकारिविशेषस्य क्लृप्तत्वान्न प्रसज्ज्यप्रतिषेधः; इतरथा न कुत्रापि विशिष्टाधिकारिकल्पनमित्याशयेन शङ्कते—**ननु रात्रिसत्रेति**॥ सर्वेषां ब्रह्मज्ञानार्थिताया अनुक्तत्वान्न निषेधानुपपत्तिरित्याशङ्क्य, विकल्पोत्तरत्वेन व्याख्यातुं विकल्पयति—**तत्रेदमिति**॥ आद्ये बहुवक्तव्यसंभवादन्तिमं तावन्निरस्यति—**विशिष्टेति**। विधिप्रतिपत्तौ सत्यां निरधिकारस्य विधेरसंभवादधिकार्याकाङ्क्षायामर्थ-

### ऋजुविवरणम्

मानत्वाद् आरम्भणीयमिति सिद्धान्तः। "शास्त्रस्यानारम्भप्रसङ्गात्" इति विरुद्धम्; प्रारम्भार्थेऽथशब्दे तदभावायोगादित्याशङ्क्याह—**तत्राथशब्देनेति**॥ "अधिकारार्थत्वे ह्यप्रयोजनमि"ति कथमुक्तम् ? नह्येकमेव शास्त्रमधिकारार्थत्वे निष्प्रयोजनमानन्तर्ये सफलमिति वक्तुं शक्यते। न ह्यथशब्देनानवबोधिते फले विद्यमानस्याभावो भवति, अतः कथं निष्प्रयोजनमित्याशङ्क्य व्याचष्टे—**प्रवृत्तिद्वारेणेति**॥ "तत्र कस्याधिकारः"इति ग्रन्थमाक्षिपति—**ननु मोक्षकाम इति**॥ कथं प्रसज्ज्यप्रतिषेधः ? नहि पूर्वमधिकारप्रापकमस्ति; भवतु वा प्रसज्ज्यप्रतिषेधः; तथाऽपि निरधिकारिकत्वेनाननुष्ठानाद् वरमेतदित्याशङ्क्याभिप्रायमाह—**तथाहि कर्तव्य इत्युक्त इति**॥ **विधिप्रतिपत्त्यधीनत्वादिति**। विधिप्रतिपत्तौ सत्यामधिकाराकाङ्क्षायामर्थवादादिसमर्पितस्य पश्चात् स्वीकारः, नतु पूर्वमर्थवादसमर्पितप्रतीतौ विशिष्टाधिकारप्रतीतिः पश्चाद्युक्तम्। ततश्च विधिप्रतिपत्तेः सर्वाधिकारत्वमर्थवादपर्यालोचनया च विशिष्टाधिकारत्वमिति भावः। ननु

### पञ्चपादिका

**न; ब्रह्मज्ञानेऽर्थित्वानुपपत्तेः, ब्रह्मज्ञानाद्धि मनसोऽपि वियोगान्निखिलविषयानुषङ्गनिवृत्तिः श्रूयते। सा च सार्वभौमोपक्रमं ब्रह्मलोकावसानमुत्कृष्टोत्कृष्टसुखं श्रूयमाणं सोपायं निवर्तयति। अतो ब्रह्मज्ञानादुद्विजते लोकः; कुतस्तत्र प्रवृत्तिः? ननु आनन्दरूपताऽपि ब्रह्मज्ञानादाप्यते, अतस्तदर्थं प्रवर्तते तत्र? मैवम्; न हि ब्रह्मानन्दोऽननुभूतपूर्वोऽनुभूतभोग्यसुखाभिलाषं मन्दीकर्तुमुत्सहते, येन तदुज्झित्वा ब्रह्मज्ञाने प्रवर्तेत। ननु—परितृप्तरूपताऽपि ब्रह्मज्ञानात्, अतः परितृप्तः किं कामयते? अतृप्तिनिमित्तकत्वात् कामस्य; तथाच श्रुतिः—"आप्तकामः"। स्मृतिरपि "आत्मलाभान्न परं विद्यते" "एतद्बुद्ध्वा बुद्धिमान् स्यात् कृतकृत्यश्च भारत" इति। न; तृप्तेरेवोद्वेगदर्शनाद्विषयविच्छेदात्मिकायाः। तथाच वक्तारो भवन्ति, 'अहो कष्टं किमिति सृष्टिरेवं न बभूव यत् सर्वमेव भोक्तुं सामर्थ्यमतृप्तिर्भोग्यानां च क्षयः' इति। रागिगीतं श्लोकमप्युदाहरन्ति—**

**"अपि वृन्दावने शून्ये शृगालत्वं स इच्छति। न तु निर्विषयं मोक्षं कदाचिदपि गौतम॥" इति।**

**मा भूद् ब्रह्मज्ञानार्थता, वेदार्थत्वादेव ब्रह्मज्ञानं कर्तव्यम्; स्वाध्यायाध्ययनस्यार्थावबोधफलकत्वात्?**

### पञ्चपादिकाविवरणम्

विशिष्टाधिकारत्वे विधिप्रतिपत्त्यधीनत्वादर्थवादसामर्थ्यलभ्याधिकारिकल्पनायाः प्रसज्ज्यप्रतिषेधव्यापारगौरवं तदवस्थमेव। अतोऽथशब्देन श्रोतव्यादिविधिप्रकरणपठितसाधनचतुष्टयसम्पन्नाधिकारिप्रतिपत्तिपूर्वके विचारविध्यवगमे नासौ दोषः इत्यथशब्देन श्रौतविशेषाधिकारिसमर्पणमेव युक्तमिति। अथ सर्वाधिकारं शास्त्रमिति, न प्रसज्ज्यप्रतिषेधः, नापि विशेषाधिकारिसमर्पणे शब्दापेक्षेति; तत्र वक्तव्यम्—किं फलतः सर्वाधिकारं शास्त्रम्? किं वा विधितः? न तावत् फलतः; सर्वेषां फलार्थिताऽभावादित्याह—**न ब्रह्मज्ञानेऽर्थित्वानुपपत्तेरिति**॥ **मा भूद् ब्रह्मज्ञानार्थितेत्यतः** प्राक्तनो ग्रन्थः स्पष्टार्थः॥

ननु अध्ययनविधेस्त्रैवर्णिकाधिकारत्वात् तत्प्रयुक्तत्वाच्च विचारस्य विधित एव सर्वाधिकारं शास्त्रमिति चोदयति—**मा भूद् ब्रह्मज्ञानार्थितेति**॥ ननु विधिर्नाम स्वविषयस्य तदुपकारकस्य वाऽनुष्ठाननिमित्तं भवति, नच विचारोऽध्ययनविधेर्विषयस्तदुपकारको वा; तन्कथमध्ययनविधिविधेयो विचार इति? तत्राह—**स्वाध्यायाध्ययनस्यार्थाव-**

### तत्त्वदीपनम्

वादादधिकारिविशेषः कल्प्यते, इति विधिप्रतिपत्तेः सर्वाधिकारित्वमर्थवादाच्च विशिष्टाधिकारिकल्पनमिति प्रसज्ज्यप्रतिषेध इत्यर्थः। स्वपक्षेऽपि विधिप्रतिपत्तिसमये सर्वाधिकारित्वम्, अथशब्दाच्च विशिष्टाधिकारिसिद्धिरिति प्रसज्ज्यप्रतिषेधस्तुल्य इति शङ्कायामाह—**अत इति**। साङ्गाध्ययनानन्तरमापाततोऽधिकार्यादिप्रतिपत्तौ तदसंभवशङ्कायां तन्निराकरणार्थमाद्यसूत्रं प्रवृत्तम्, ततः कथं प्रसज्ज्यप्रतिषेध इत्यर्थः। आद्यमनुवदति—**अथेत्येति**॥ एतदपि न निरूपणपथमवतरतीत्याह—**तत्रेदं (तत्र) वक्तव्यमिति**। शास्त्रस्य ब्रह्मज्ञानफलत्वात् तत्र च सर्वेषामर्थित्वात् सर्वाधिकारित्वम्? उताध्ययनविधेः सर्वाधिकारित्वात् तत्प्रयुक्तविचारस्यापि तथात्वमिति विमर्शार्थः। नच—फलकामित्वात् सर्वाधिकारित्वमित्युक्तत्वाद् विकल्पानुपपत्तिरिति—शङ्क्यम्; सर्वेषां स्वत एव फलकामित्वात् सर्वाधिकारत्वम्? अथवा फलकामनाया विध्यायत्तत्वाद् विधितः सर्वाधिकारत्वमिति विकल्पोपपत्तेरिति द्रष्टव्यम्॥

ब्रह्मज्ञानस्य कर्तव्यतोक्तेः प्रस्तुतानुपयोगित्वादुत्तरग्रन्थवैयर्थ्यमित्याशङ्क्याह—**नन्विति**। वेदस्यार्थावबोधपर्यन्ततामापादयताऽध्ययनविधिना ब्रह्मबोधोऽपि कर्तव्यतयाऽऽपादितः, तस्य च विचारपुरःसरत्वादधीतिविध्यधिकारिणस्तदधिकार इत्यर्थः। तत्प्रयुक्तत्वमसिद्धमिति शङ्कते—**ननु विधिरिति**॥ **स्वविषयस्य** भावार्थस्येत्यर्थः। ततः किमिति? अत आह—**नचेति**। अध्ययनस्य विषयत्वादर्थवादादिज्ञानस्य चोपकारकत्वाच्च न विचारस्योभयधात्वमित्यर्थः। **विधिविधेय** इति। विधिप्रयुक्तानुष्ठान इत्यर्थः॥ विचारस्य विधिप्रयुक्तानुष्ठानत्वं न संभवतीति चोदिते अर्थावबोधस्य

### ऋजुविवरणम्

अथशब्देनाधिकारिविशेषणसमर्पणेऽपि प्रसज्ज्यप्रतिषेधस्तदवस्थ एव; विधिप्रतिपत्तिसमये सर्वाधिकारत्वप्रतीतेरथशब्देन विशिष्टाधिकारसमर्पणात्, अतो विशिष्टाधिकारसमर्पणमपि न युक्तमित्याशङ्क्याह—**अतोऽथशब्देनेति**॥

### पञ्चपादिकाविवरणम्

**बोधफलकत्वादिति** ।। अयमाशयः—दृष्टफलस्याध्ययनविधेर्यावदर्थावबोधफलं व्यापाराद्विचारमपि फलनिष्पत्तयेऽध्ययनविधिरनुष्ठापयतीति। ननु विषय-तदुपकारिव्यतिरिक्तस्य व्यापारस्य फलनिष्पत्त्यपेक्षया विधिप्रयुक्तानुष्ठेयत्वं क्व दृश्यते ? अवघातादिष्विति चेत् ? न; विधेयावघातस्यैव फलपर्यन्तमावर्त्यमानत्वात्, विचारस्तु स्वतन्त्रमेव भावार्थान्तरं कथं विधीयते, इति वक्तव्यम्। नैष दोषः ; आवृत्तिगुणस्याविहितस्य विहितानुपकारकस्य च विधेः फलपर्यन्ततानुपपत्त्या विधेयत्वकल्पनवद् विचारस्यापि तदुपपत्तिरिति। तत्र किं विचारसाध्यज्ञानमर्थनिश्चयफलमध्ययनस्यान्वय-व्यतिरेकसिद्धं दृष्टफलम् ? किं वा तदुद्देशेन विधानादधिकारिविशेषणतया शास्त्रीयं फलम् ? किं वा विधेः प्रयोजनपर्यन्ततासामर्थ्यलभ्यं फलमिति ? न तावद् दृष्टं फलम्; अध्ययनमात्रादावृत्तिगुणकादप्यर्थनिश्चयानुदयात्, आपातदर्शनस्य च विचारानपेक्षत्वात्। अतो नार्थनिश्चयदृष्टफलाऽध्ययनक्रिया स्यादिति। ननु तव्यप्रत्ययेन स्वव्यापारः शब्दभावना विधिरूपतयाऽभिधीयते, सा च शब्दभावनाऽध्ययनकरणिकामर्थभावनां निष्पादयन्ती फलवदर्थाववोधं

### तत्त्वदीपनम्

फलत्वाभिधानमसंगतमिवेत्याशङ्क्याह—**अयमाशय इति** ।। अध्ययनविधिप्रयुक्तेराक्षेपः ? उत प्रश्नमात्रम् ? नाद्य इत्याह—**दृष्टेति**। इतिशब्द आद्यकल्पनिरासमाप्त्यर्थः। विषय-तदुपकारकयोर्विधिप्रयुक्तानुष्ठानत्वम्, विचारस्य च विषयोपकारकान्यतरत्वाभावान्न विधितोऽनुष्ठेयत्वमिति। द्वितीयं शङ्कते—**ननु विषयेति** ।। "व्रीहीनवहन्यादि"त्यवहननावृत्तेर्विषय-तदुपकारकत्वाभावेऽप्यवहननविधिप्रयुक्तानुष्ठानत्वं यथा, तद्वदत्रापीति शङ्कते—**अवघातेति**। "तण्डुलान् पिनष्टी"त्यादिरादिशब्दार्थः। दृष्टान्तो विषम इत्याह—**न विधेयेति**। आवृत्तेर्विधेयावघातसमवेतत्वाद् अनुष्ठेयत्वं युज्यते; विचारस्य चाध्ययनासमवेतत्वान्नानुष्ठेयत्वमित्यर्थः। अविवक्षितांशवैषम्येऽपि विवक्षितांशस्योभयत्र समत्वाद् दृष्टान्त-दार्ष्टान्तिकभावो युक्त इत्याह—**नैष दोष इति** ।। अधीतेरर्थाववोधफलत्वमुभयसंमतम्, ततः कथं तत्प्रतिषेधः ? इत्याशङ्क्य, अर्थाववोधस्य विधिफलत्वे तदनुपपत्त्या विचाराक्षेपः स्यात्, तदेव दुर्निरूपमित्याह—**तत्र किमिति** ।। तत्रेति तव मत इति यावत्। नच—"दृष्टफलस्याध्ययनविधेरि"त्यर्थाववोधस्य दृष्टफलत्वं निर्दिष्टमिति कथं विकल्पसंभव इत्यपि—शङ्क्यम्, दृष्टशब्दस्य प्रतीतिमात्रपरत्वादित्यर्थः। आद्यं दूषयति—**न तावदिति** ।। अध्ययनमात्रात् तद्भवति ? उतावृत्तिगुणकात् ? इति विकल्प्य क्रमेण दूषयति—**अध्ययनेति** ।। अर्थनिश्चयाभावेऽप्यापातदर्शनं जायत इत्याशङ्क्याह—**आपातदर्शनस्येति** ।। मध्यमकल्पे निर्देष्टव्यस्यानेकस्य संभवात् तमुपेक्ष्यान्तिममुत्थापयति—**ननु तव्यप्रत्ययेनेति**। तव्यप्रत्ययः स्वशब्दार्थः। कस्माद् भावनाभिधानम् ? इत्याशङ्क्याह—**विधिरूपतयेति**। अप्रवृत्तप्रवर्तकत्वादित्यर्थः ।। भवतु भावनायाः प्रत्ययार्थत्वम्; तथाऽपि कथमर्थाववोधस्य भाव्यत्वम् ? अर्थभावनायाः शब्दभावनाभाव्यत्वादित्याशङ्क्याह—**सा चेति** ।। "भावयेदि"त्युक्ते—किम् ? केन ? कथम् ? इत्यंशत्रयं तावदपेक्षते शब्दभावना, तत्रार्थभावनाया भाव्यत्वात् तस्याश्च भावनात्वात् करणापेक्षायां तद् दर्शयति—**अध्ययनेति** ।। स्वाध्यायस्य भाव्यस्य स्वरूपेण पुरुषार्थत्वाभावादर्थाववोधो भाव्य इत्याह—**फलवदिति** ।। समानपदोपात्तत्वादध्ययनस्य भाव्यत्वान्न करणत्वमित्येतद् अत एवापास्तमित्याह—

### ऋजुविवरणम्

ननु अध्ययनविधेरध्ययनधात्वर्थविषयत्वात् तस्य च ताल्वोष्ठपुटव्यापारसाध्यत्वाद् विचारो न विषयः ; नापि विषयोपकारकः ; विचाराभावेऽप्यध्ययननिष्पत्तिदर्शनात्, अतो नार्थाववोधफलत्वेऽपि व्यधिकरणत्वेन विधेस्तत्प्रयोजकत्वमित्याशङ्क्याभिप्रायमाह—**दृष्टफलस्येति**। दृष्टः प्रतीतोऽर्थाववोधः फलं यस्य विधेः, स दृष्टफल इति। अत्र चान्वय-व्यतिरेकदृष्टत्वमभिप्रेतमपि विकल्पावसरे ग्रन्थकारेण विकल्पकोटित्वेन दर्शितत्वान्नेह प्रदर्शितम् ; चोद्य एव तस्य व्यक्तत्वे विकल्पानुपपत्तिप्रसङ्गादिति। **अवघातादिष्विति**। अयमर्थः—"व्रीहीनवहन्ती"त्यत्रावघातो विषयः ; वैतुष्यं दृष्टफलम्, अत्रावृत्तिर्न विषयः ; किंतु फलनिष्पत्त्यर्थमेवानुष्ठीयते, तद्वदिति। अथापातमेवान्वय-व्यतिरेकसिद्धमिष्यते, तर्हि न विचाराक्षेप इत्याह—**आपातदर्शनस्येति** ।। **विधिरूपतयेति** अप्रवृत्तप्रेरणारूपतया। **अध्येतव्यः** अध्ययनेन भावयेदिति। तत्र च भावनाद्वयं प्रतीयते—विधिरूपं पुरुषप्रयत्नरूपं च। तत्र पुरुषप्रयत्नजनको विधिः। तस्य किम् ? केन ? कथम् ? इत्यंशत्रयं विनाऽनुपपत्तेः केनेति करणांशं तावद् दर्शयति—**अध्ययनकरणिकामिति** ।। किमंशं दर्शयति—**अर्थाववोधमिति** ।। ननु अध्ययनं विहायार्थाववोधस्यापि कथं भाव्यत्वं स्वीक्रियते ? इत्याशङ्क्याह—

### पञ्चपादिका

**स्यादेतदेवम् यद्यर्थावबोधफलाऽध्ययनक्रिया स्यात्, सा ह्यधीयमानावाप्तिफलत्वादक्षरग्रहणान्ता ।**

### पञ्चपादिकाविवरणम्

पुरुषार्थमर्थंभावनाभाव्यत्वेन कल्पयति ; अपुरुषार्थे पुरुषप्रवृत्त्ययोगात्, ततश्च भाव्यान्तरलाभात् समानपदोपात्तमध्ययनं भावनायाः करणतामापन्नं भाव्यस्यार्थावबोधस्य निर्वर्तकतया करणं भवति; कुठारादीनामपि क्रियाभाव्यद्वैधीभावनिर्वर्तन-द्वारेण छिदिभावनाकरणत्वदर्शनात्, अतोऽध्ययनविधेः प्रवर्तकत्वान्यथानुपपत्त्यैवार्थभावनाकरणस्याध्ययनस्यार्थावबोधः फलमिति सिद्धम्; अन्यथा समानपदोपात्तस्याध्ययनस्यैव भाव्यतया स्वाध्यायावाप्तेरपि विधिफलत्वाभावप्रसङ्गात्, इत्यत आह—**सा ह्यधीयमानावाप्तिफलत्वादक्षरग्रहणान्तेति** ॥ अयमाशयः—तव्यप्रत्ययेन भावनाकर्मकारकेऽभिधीयमाने स्वाध्याये स्वावाप्तिफले च न भाव्यान्तरं कल्पनीयम् ; भावनाकर्माभिधायिशब्दविरोधादिति । ननु न भाव्यमात्रेण पुरुषप्रवृत्तिर्विधिना जन्यते, किन्तु पुरुषार्थंभाव्यापेक्षयैव; ततश्च शब्दविरोधेऽपि भावनानिष्पत्तयेऽर्थावबोधो भाव्य इति

### तत्त्वदीपनम्

**ततश्चेति** ॥ अपुरुषार्थस्याभाव्यत्वम्, तत इत्युक्तमिति द्रष्टव्यम् । अध्ययनस्याभाव्यत्वे हेत्वन्तरमाह—**भाव्यान्तरेति** ॥ **समानपदोपात्तम्** प्रत्ययार्थभूतभावनया सह एकपदोपात्तमित्यर्थः । अध्ययनस्य भावनाकरणत्वात् कथमर्थावबोधस्य करणत्वम् ? तत्राह—**भाव्यस्येति** ॥ भावनाभाव्यनिर्वर्तकत्वेन भावनाकरणत्वमित्येतद् दृष्टान्तेनाह—**कुठारादीनामिति** ॥ तृतीयकल्पसमर्थनमुपसंहरति—**अत इति** ॥ भाव्यान्तरासंभवोऽतःशब्दार्थः । विपक्षे दण्डं पातयति—**अन्यथेति** । व्यवहि-तत्वादर्थावबोधस्य न फलत्वम्, संनिहितत्वात् स्वध्यायावाप्तेः फलत्वमित्यङ्गीकारे ततोऽपि संनिहितत्वादध्ययनस्यैव भाव्यत्वम्, इति नावप्तेः फलत्वमित्यर्थः । अन्यथोपपत्त्या दूषयति—**अत आहेति** । अध्ययनक्रियाकर्मकारकस्य स्वाध्याय-स्यावाप्तिः फलम्; तद्रूपत्वादक्षरग्रहणस्येति हेत्वर्थः । संनिहितत्वादवाप्तौ पर्यवसानं चेत्, तर्हि ततोऽपि संनिधानादध्ययने पर्यवसानं स्यादित्युक्तमित्याशङ्क्याह—**अयमाशय इति** । अध्ययनस्य प्रकृत्युपात्तत्वात् स्वाध्यायस्य कर्मकारकस्य भावना-वाचितव्यप्रत्ययेनोपात्तत्वात् तस्यैव भाव्यत्वम्, अन्यथा तव्यप्रत्ययविरोध इत्यर्थः । शब्दविरोधादन्यत्रापर्यवसानस्यो क्तत्वादथेति चोद्यानुपपत्तिमाशङ्क्याह—**ननु न भाव्येति** ॥ मूलारोहणादौ स्वतन्त्रस्य प्रवृत्त्यदृष्टेरिति भावः ॥ "सक्तून् जुहोती"त्यत्र सक्तूनां भाव्यत्वप्रतिपत्तावपि यथा तत्परित्यागः, तथाऽत्रापीत्याह—**ततश्चेति** ॥ सक्तुन्यायस्याङ्गीकृतत्वाद्

### ऋजुविवरणम्

**पुरुषार्थमिति** ॥ कथमर्थावबोधस्य पुरुषार्थत्वम् ? सुखावाप्ति-दुःखपरिहाररूपत्वाभावादिति, तत्राह—**फलवदिति** ॥ ननु अर्थावबोधस्य फलत्वाद् भाव्यत्वं सिध्येत, अध्ययनस्य करणत्वं कथम् ? इत्याशङ्क्याह—**ततश्च भाव्यान्तरेति** ॥ ननु अध्ययनस्य भावनाऽनिष्पादकस्य कथं करणत्वम् ? कथम् वा तत्फलमिति ? तदाह—**भाव्यस्येति** ॥ ननु विरुद्धमभिधीयतेऽर्थावबोधजनकतया भावनाकरणमिति, यद्धि यदुत्पादकम्, तत् तत्र करणमित्युच्यते ; अतो न फलजनकत्वेन फलजनकप्रयत्नकरणत्वं वक्तुं शक्यते, किन्तु प्रयत्नजनकत्वेनैव, नच प्रयत्नोऽप्यध्ययनजन्यः, तत्कथम-ध्ययनस्य करणत्वम् ? इत्याशङ्क्याह—**कुठारादीनामपीति** ॥ ननु उपात्तस्वाध्यायस्यैव फलत्वे संभवति सति तद् विहाय किमिति विधिसामर्त्यमाश्रित्यार्थावबोधफलत्वं स्वीक्रियत इति ? तदाह—**अन्यथेति** ॥ कथमधीयमानावाप्ति-फलत्वम् ? विधिसामर्थ्याद् भाव्यान्तरलाभात्, अन्यथा विधिसामर्थ्यं विहाय भाव्याश्रयणे सति समानपदोपात्तत्वेना-ध्ययनस्यैव भाव्यत्वप्राप्तेरुक्तत्वादित्याशङ्क्याभिप्रायमाह—**अयमाशयस्तव्यप्रत्ययेनेति** ॥ कथं सक्तूनां गतिरत्र संभवति ? तत्र सक्तुहोमस्य क्रत्वङ्गस्य सक्तूनां संस्कार्यत्वासम्भवेन प्राधान्यं स्वीकृतम्, सक्तूनां च गुणत्वम् ; अङ्गत्वादेव च न होमस्य फलाकाङ्क्षा इह तु फलेन विना तावन्न प्रवृतिः संभवति; अनङ्गत्वात्, अतोऽक्षरैरध्येतव्यमिति विनियोग-भङ्गाश्रयणेऽपि विधेरपर्यवसानम् तदस्थमेव ; अतोऽर्थावबोधस्य स्वाध्यायस्य वा भाव्यत्वं विहाय सक्तुन्यायाश्रयणम-

**पञ्चपादिका**

**अथाक्षरग्रहणं निष्प्रयोजनमिति न तत्र पर्यवसानं विधेः, भवतु तर्हि सक्तूनां गतिः ।**

**तदपि न; अक्षरेभ्यः प्रयोजनवदर्थावबोधदर्शनात् । न तर्हि निष्प्रयोजनान्यक्षराणि; अतस्तत्पर्यन्तमध्ययनं न निष्फलम्; अतोऽक्षरग्रहणादेव नियोगसिद्धेः फलप्रयुक्त एवार्थावबोधः ।**

**पञ्चपादिकाविवरणम्**

शङ्कते—**अथाक्षरग्रहणं निष्प्रयोजनमिति** ॥ परिहरति—**भवतु तर्हि सक्तूनां गतिरिति** ॥ अयमाशयः—अर्थनिर्णयस्याध्ययनमात्रादनिष्पत्तेः, श्रूयमाणस्य स्वाध्यायस्य चाफलत्वाद् अध्ययनमात्रस्य चाप्रयोजनतया भाव्यत्वायोगात् स्वाध्यायाध्ययनेन स्वर्गं भावयेदिति कल्प्यत इति ॥

ननु व्याकरणस्याप्यङ्गत्वात् साङ्गादध्ययनाद् विधीयमानादर्थनिश्चयो दृष्टफलतया जायते, तस्य च विरोधपरिहाराय विचारः प्रयुज्यते; अतो दृष्टे सत्यदृष्टकल्पना न न्याय्येति चोदयति—**तदपि न; अक्षरेभ्यः प्रयोजनवदिति** ॥ परिहरति—**न तर्हि निष्प्रयोजनानीति** । श्रूयमाणस्वाध्यायलक्षणात् कर्मण एवाध्ययनभावनया भाव्यमानात् फलवदर्थावबोधसिद्धेः पश्वन्नादीनां प्रयोजनं प्रति परम्परया साधनानामपि भाव्यत्वदर्शनात् श्रूयमाणस्वाध्यायावाप्तिपर्यन्त एव विधिव्यापार इति भावः । ननु अक्षरग्रहणपर्यन्ते विधिव्यापारे फलवदर्थावबोधस्य निर्निमित्तता स्यादिति, तत्राह—**फलप्रयुक्त एवार्थावबोध इति** ॥ अयमाशयः—लौकिकाप्तवाक्यानां विधिमन्तरेणापि फलवदर्थावबोधकत्वदर्शनात्

**तत्त्वदीपनम्**

"भवतु तर्ही"ति परिहारस्याभासत्वमाशङ्क्याह—**परिहरतीति** ॥ परिहारमेव स्पष्टयति—**अयमाशय इति** । विश्वजिन्न्यायेन स्वर्गस्य भाव्यत्वापादनान्न परिहारस्याभासत्वमित्यर्थः ।

अध्ययनेऽप्यर्थनिश्चयादृष्टेः—"तदपि ने"त्यस्य चोद्यस्यानुपपत्तिमाशङ्क्याशयमाह—**ननु व्याकरणस्यापीति** ॥ तर्हि विचारो वृथेत्याशङ्क्याह—**तस्य चेति** ॥ ननु उभयोः फलत्वसंभवे कथमर्थावबोधस्यैव फलत्वम्? तत्राह—**अत इति** । दृष्टत्वमतःशब्दार्थः । अक्षराणां फलवदर्थावबोधपर्यवसानमात्रेण नाक्षराणां फलवत्त्वमिति परिहारस्याभासत्वमाशङ्क्याह—**परिहरतीति** ॥ परिहारं स्पष्टयति—**श्रूयमाणेति** ॥ फलवदर्थावबोधजनकत्वेऽपि न स्वाध्यायस्य भाव्यत्वमित्युक्तमित्याशङ्क्याह—**पश्वन्नेति** ॥ तथाऽपि कथं मतभेद ? इत्याशङ्क्याह—**श्रूयमाणेति** ॥ अक्षरेभ्यः फलवदर्थावबोधनिष्पत्तावप्यक्षरावाप्तौ विधेः पर्यवसानम्, अन्यस्य त्वार्थावबोध इति विभागः । फलवदर्थावबोधानुपपत्त्या तस्या विधिफलत्वमेवाश्रयणीयमिति शङ्कते—**नन्वक्षरेति** ॥ अन्यथोपपत्त्या समाधत्ते—**तत्राहेति** ॥ तात्पर्योपेतशब्दस्यार्थबोधकत्वम्, तच्च विध्यधीनमिति अर्थावबोधस्य विधिफलत्वमाशङ्क्याह—**अयमाशय इति** ॥ किमेतत्सार्वत्रिकम् ? उत क्वाचित्कम् ? नाद्य इत्याह—**लौकिकेति** । तार्किकमते वेदवाक्यानामप्याप्तवाक्यत्वमस्ति,

**ऋजुविवरणम्**

युक्तम्, इत्याशङ्क्याभिप्रायमाह—**अयमाशयः—अर्थनिर्णयस्येतं** ॥

"अक्षरेभ्यः प्रयोजनवदि"ति चोद्यं परिहृतमेव, "स्यादेतदि"त्यनेनैवार्थावबोधभाव्यत्वस्योक्तत्वात्, इष्टविघातश्च ; सप्रयोजनत्वे वाऽक्षराणां भाव्यत्वप्रसङ्गात्, इत्याशङ्क्याधिक्यं दर्शयति—**ननु व्याकरणस्येति** ॥ ननु अर्थनिश्चयस्य पूर्वमेवोत्पत्तौ तस्य विचारानपेक्षत्वाद् विचारस्यानाक्षेप इत्याशङ्क्याह—**तस्य च विरोधपरिहारायेति** ॥ "न तर्ही"त्यादिनाऽक्षराणां सप्रयोजनत्वादक्षरग्रहणपर्यन्तमध्ययनं सफलमित्युक्तम्, तदयुक्तम्; नह्यर्थावबोधस्य सफलत्वे स्वाध्यायस्य सफलत्वं संभवति, नापि तत्पर्यन्तत्वं विधेः; साक्षात् पुरुषार्थसाधनव्यतिरिक्तानां भाव्यत्वासंभवात्, नापि फलाव्यवहितस्य प्रयोजनत्वसंभवेऽत्यन्तव्यवधानमपि युक्तमित्याशङ्क्याभिप्रायमह—**श्रूयमाणस्वाध्यायलक्षणादिति** ॥ ननु कथं फलप्रयुक्तत्वमर्थावबोधस्य ? 'स्वाध्यायेनार्थावबोधं भावयेदि'ति विध्यभावे फलवदर्थावबोधफलत्वं वेदस्य न स्यात्, ऐदमर्थ्यरूपतात्पर्याभावात्, तस्य च शाब्दज्ञाने कारणत्वादध्ययनविधेरतत्प्रयोजनत्वे वेदस्यार्थपरत्वाभावादविवक्षितार्थत्वात् । विधिश्च नाक्षरग्रहणार्थः संभवति; अध्ययनादक्षरावाप्तेरन्वय-व्यतिरेकसिद्धत्वात्, अतोऽध्ययनफलत्वमेवार्थावबोधस्य; अन्यथा स्वतन्त्रादृष्टार्थोऽध्ययनविधिः स्यादित्याशङ्क्याभिप्रायमाह—**अयमाशयः लौकिकेति** ॥ ननु

## पञ्चपादिका

अपिच अक्षरग्रहणान्तो विधिर्निष्प्रयोजनः, इति न सर्वत्र प्रयोजनवदर्थावबोधपर्यन्तता कल्पयितुमपि शक्यते। तत्रावश्यं कल्पनीयाऽक्षरग्रहणान्तता। तद्यथा राजन्यस्य सत्रवैश्यस्तोम-बृहस्पतिसवानामाम्नानं वैश्यस्य चाश्वमेधराजसूय-सत्राणां पाठः। नच तेषामनध्ययनमेव; स्वाध्यायशब्देन सकलवेदवाचिनाऽध्ययनस्य विहितत्वात्॥

## पञ्चपादिकाविवरणम्

साङ्गाच्च कर्मणो विधीयमानादवघातादिष्विवादृष्टजन्मनियमाद् न विधिफलमर्थावबोधः, किन्तु स्वीकृतस्वाध्यायमात्रजन्यं फलमिति। विधेस्तु दृष्टसमवाय्यदृष्टमेव किंचित्फलम्, इति दृष्टफलाविरोधेनादृष्टसिद्धौ न तद्विरोधिस्वतन्त्रादृष्टं कल्पयितुं युक्तमिति। किंच फलवदर्थावबोधफलेऽध्ययनविधौ, यस्य यस्मिन् कर्मण्यधिकारः, तस्य तद्वाक्याध्ययनमेव स्यात्, न वाक्यान्तराध्ययनम्; तत्र प्रवृत्त्यादिफलाभावात्, इति न कृत्स्नवेदाध्ययनसिद्धिरित्याह—**अपिचाक्षरग्रहणान्तो विधिरिति**॥ ननु कृत्स्नस्वाध्यायाध्ययनस्य नित्यतया विधेयत्वेऽपि सकलस्वाध्यायावाप्तिसमवेतस्यादृष्टस्यानधिकृतकर्मवाक्यगतस्यार्थावबोधानुष्ठानादिद्वारेण कथमपूर्वसिद्धिहेतुतेति? नैष दोषः; प्रायश्चित्तजपाद्यपूर्वोपकारित्वोपपत्तेः। ननु अध्ययनादक्षरावाप्तेः को विशेषः? अस्त्यत्र विशेषः; स्वाधीनोच्चारणक्षमत्वं नामाक्षरधर्मोऽवाप्तिः, तदर्थो वाङ्-मनसव्यापारोऽध्ययनमिति॥

ननु अधिकारिविशेषणमर्थावबोधमुद्दिश्याध्ययनं विधातव्यम्, निरधिकारविधानायोगात्; अर्थावबोधमुद्दिश्यैव च विहितशब्दोच्चारणे सति वाक्यतात्पर्यसिद्धेः, अर्थावबोधमुद्दिश्य रागप्रयुक्तशब्दोच्चारणे लोके तात्पर्य-

## तत्त्वदीपनम्

तदर्थम्—'लौकिके'ति विशेषणम्। लोकसिद्धो य आप्तस्तद्वाक्यानामित्यर्थः। 'सुरसरित्तीरे प्रसूनानि सन्ती'त्यादीनां विधिविधुराणामर्थावबोधकत्वं दृष्टम्, तद्वदत्रापीत्यर्थः। द्वितीयं निरस्यति—**साङ्गादिति**॥ इतेरर्थावबोध इत्यनेन संबन्धः॥ विधिरदृष्टाविनाभूतश्चेत्, तर्हि स्वतन्त्रादृष्टं फलत्वेन कल्प्यतामित्यत आह—**विधेरिति**॥ तत्र हेतुमाह—**इति दृष्टेति**। इतिशब्द उक्तप्रकारपरामर्शार्थः। कृत्स्नवेदाध्ययनस्य नार्थावबोधः फलमित्युक्तम् "अपि चे"त्यत्र, तत् कस्मादित्याकाङ्क्षायामाह—**किं च फलवदिति**॥ वाक्यान्तरविचारवदध्ययनमपि स्यादित्याशङ्क्य, त्वन्मते सोऽपि न स्यादित्याशयेनाह—**न वाक्यान्तरेति**॥ सकलवेदाध्ययनासिद्धिस्तवापि समेति शङ्कते—**ननु कृत्स्नेति**॥ विध्यर्थवादाद्यात्मकस्वाध्यायादर्थावबोधद्वाराऽपूर्वोत्पत्तौ नियमादृष्टस्योपयोगात् कथं तन्निरसनम्? इत्याशङ्क्याह—**अनधिकृतेति**। विधिफलत्वेनोपेतस्य दृष्टसमवेतादृष्टस्य स्वरूपेण पुरुषार्थसाधनत्वाभावादर्थवोधानुष्ठानद्वारा परमापूर्वं निष्पाद्य फलपर्यवसायित्वं वक्तव्यम्। नचानधिकृतकर्मवाक्यगतस्यादृष्टस्य तथात्वम्, इति कृत्नाध्ययनासिद्धिरित्यर्थः। अनधिकारिणां कर्मानुष्ठानाभावेऽपि जपादिसमुत्थापूर्वद्वाराऽनधिकृतवाक्यगतस्यादृष्टस्यापि फलपर्यवसायित्वात् सकलाध्ययनसिद्धिरित्याह—**नैष इति**॥ नित्यजप आदिशब्दार्थः॥ अक्षरावाप्तेर्नाध्ययनफलत्वम्, तयोर्भेदाभावादिति शङ्कते—**नन्वध्ययनादिति**॥ ताल्वोष्ठपुटादिना अक्षराणामुच्चारणमध्ययनम्, अवाप्तिश्च सैव, इति न विशेष इत्यर्थः। विशेषाभावोऽसिद्ध इत्याह—**अस्त्यत्रेति**॥ विशेषमेवाह—**स्वाधीनेति**॥ क्षमत्वं नाम योग्यता॥

अधीतिविधेरक्षरावाप्तिद्वाराऽर्थावबोधपर्यन्तत्वमिष्टमित्याशङ्क्य, मध्यमविकल्पपरतया व्याचष्टे—**नन्विति**॥ अधिक्रियतेऽनेनेत्यधिकारो विधि-पुरुषसंबन्धनिमित्तम्, तद्विधुरविध्यसंभवादित्यर्थः। अर्थावबोधस्यैव कस्मादुद्देश्यत्वम्? तत्राह—**अर्थावबोधमिति**॥ अर्थावबोधोद्देशनाभावेऽपि तत्र तात्पर्यं किं न स्यात्? इत्याशङ्क्याह—**अर्थावबोधमिति**। लोके वक्तृविवक्षादेस्तात्पर्यनिमित्तत्वम्, वेदे च तदभावादर्थावबोधोद्देशेन विधितः

## ऋजुविवरणम्

अदृष्टार्थः सर्वो विधिः तत्र भाव्युपयोगेन शेषित्वनिर्वाहेण नियमकल्पनाद् वरं स्वतन्त्रादृष्टार्थत्वमित्याशङ्क्याह—**विधेस्त्विति**॥ ननु नाक्षराणां स्वरूपेण भाव्यत्वं संभवति, अवाप्तिश्च नाध्ययनभाव्या स्यात्, अध्ययनादवाप्तेर्भेदाभावादिति चोदयति—**नन्वध्ययनादिति**॥

मा भूद् निरधिकारस्याध्ययनस्य विधानम्, तथाऽप्यक्षरावाप्तेः प्रयोजनान्तरस्य वाऽधिकारहेतुत्वसंभवात् कथमर्थावबोधस्यैवाधिकारिविशेषणत्वं निश्चीयते? विधानमन्तरेण बोधकत्वं चोक्तम्, तत्कथं चोद्यम्? इत्याशङ्क्याह—

### पञ्चपादिका

**ननु चाश्रूयमाणाधिकारोऽध्ययनविधिः, दृष्टश्चाक्षरग्रहणेऽर्थावबोधः, स कल्पनामधिकारस्य निरुन्धन् स्वयमधिकारस्य हेतुः संपद्यते। दृष्टाधिकारेषु प्रत्यक्षतस्तदुपलब्धावधिकारसिद्धिः। अतोऽर्थावबोधपर्यन्तः स्वाध्यायाध्ययननियोगः; तेन नियोगसिद्ध्यर्थमेव सकलवेदार्थविचारः॥**

**अत्रोच्यते—भवेदध्ययनविधेरर्थावबोधः प्रयोजनम्, नाधिकारहेतुता, अध्ययनात्प्रागसिद्धत्वात्।**

### पञ्चपादिकाविवरणम्

दर्शनादिति चोदयति—**ननु चाश्रूयमाणाधिकारोऽध्ययनविधिरिति**। अधिक्रियतेऽस्मिन् कर्मण्यनेनेत्यधिकारो विधि-पुरुष-सम्बन्धनिमित्तं जीवन-कामादिरुच्यते। ननु विश्वजिन्न्यायेनाधिकारी कल्प्यताम्? अथवा वाजसनेयिनां "ब्रह्मचर्यमागामि"त्यादिनोपनयनस्य प्रकृतत्वादुपनीतोऽधिकारीति प्रकरणप्रमाणेन कल्प्यतामिति? नेत्याह—**दृष्टश्चाक्षरग्रहणेऽर्थावबोधः, स कल्पनामधिकारस्य निरुन्धन्नित्यादिना**॥ भवतु नाम—'अध्ययनेनार्थावबोधं भावयेदर्थावबोधकामः' इति विधिः, तथाऽपि 'विचारेणार्थावबोधं भावयेदि'ति विचारे प्रवृत्तिरध्ययनविधिना न विधीयत इति? तत्राह—**दृष्टाधिकारेषु प्रत्यक्षत इति**॥

तत्र किमर्थसामर्थ्यादेवाध्ययनस्यार्थावबोधः साक्षाद्वा परम्परया वा फलमित्युच्यते? किं वाऽर्थावबोधकाममुद्दिश्य विधानतः? इत्यभिप्रेत्याह—**अत्रोच्यत इति**॥ प्रथमः कल्पोऽङ्गीकृत इत्याह—**भवेदध्ययनविधेरिति**॥ द्वितीयः पक्षोऽनुपपन्न इत्याह—**नाधिकारहेतुतेति**। अध्ययनात् प्रागर्थावबोधस्याप्रतिपन्नस्य कामनायोगान्नार्थावबोध-

### तत्त्वदीपनम्

शब्दोच्चारणं तात्पर्यनिमित्तं वक्तव्यम्, ततश्चार्थावबोधस्योद्देश्यत्वमित्यर्थः। अधिकारशब्दस्यानेकधा व्युत्पत्तिसंभवाद्विवक्षितां व्युत्पत्तिं दर्शयति—**अधिक्रियत इति**॥ "विश्वजिता यजेते"त्यत्र विधि-पुरुषसंबन्धनिमित्ताश्रवणेऽपि यथा तत्कल्पनम्, तद्वदत्रापीति शङ्कते—**ननु विश्वजिदिति**॥ नच—अर्थावबोधस्यानुद्देश्यत्वे वाक्यस्य तात्पर्यं न स्यान्निमित्ताभावादिति—शङ्क्यम्; तात्पर्यस्योपक्रमादितात्पर्यलिङ्गसमधिगमनीयत्वादुद्देश्यत्वस्याप्रयोजकत्वादिति द्रष्टव्यम्। कामनाऽधिकारनिमित्तमित्यभिधाय, नित्यमुपनयनमधिकारनिमित्तमित्याह—**अथवेति**। वाजसनेयिनां शाखायामुपनयनस्य प्रकृतत्वादिति योजना। कल्पनाप्रतिबन्धकसद्भावाद् नोभयविधमपि कल्पनं घटत इत्याह—**नेत्याहेति**॥ अध्ययनविधावर्थावबोधस्योद्देश्यत्वमङ्गीकृत्य विचारस्याध्ययनविधिप्रयुक्तत्वमाक्षिपति—**भवत्विति**। विचारमन्तरेण विध्यनुपपत्त्यनुपलम्भान्न विचारप्रवृत्तिरध्ययनविध्यधीनेत्यर्थः। असिद्धो हेतुरित्याह—**तत्राहेति**। अन्वय-व्यतिरेकदृष्टफलानि यानि कर्माणि, तेषु प्रत्यक्षप्रमाणात् फलोपलब्धौ नियोगनिर्वृत्तेरिति **टीकार्थः**। अर्थबोधस्याध्ययनात्प्रागनिर्वृत्तत्वेऽपि तत्फलत्वम्; साध्यस्य स्वर्गादेः फलत्वदर्शनात्।

"प्रतीतिस्तूभयत्रापि समे"ति टीकाऽनुपपत्तिमाशङ्क्याह—**तत्र किमिति**। **अर्थसामर्थ्यादिति**—अधीतस्वाध्यायसामर्थ्यादित्यर्थः। **परम्परयेति**—विचारव्यवधानेनेत्यर्थः। नच—अर्थावबोधोद्देशेनाध्ययनस्य विधानात् तस्य फलत्वमित्यभिहितत्वाद्विकल्पानवसर इति—शङ्क्यम्। उद्दिश्य विधानेऽप्यधीतस्वाध्यायनिबन्धनः स? आहो विधिसामर्थ्यादेव? इति विकल्पोपपत्तेरिति द्रष्टव्यम्॥ अर्थाववोधस्य प्रागनिर्वृत्तावप्यधिकारनिमित्तत्वं किं न स्यादित्याशङ्क्य, किमध्ययनात् प्रागर्थावबोधः प्रतिपन्नः? उत न? तत्रान्त्यं दूषयति—**अध्ययनादिति**॥ कामनायाः प्रतिपन्नविषयत्वाद-

### ऋजुविवरणम्

**अर्थावबोधमुद्दिश्येति**॥ इच्छाया विधिमनपेक्ष्य प्रयुज्यमानेष्वित्यर्थः। "दृष्टाधिकारेष्वि"ति **टीकाग्रन्थस्यायमर्थः**—**दृष्टाधिकारेषु** दृष्टफलेषु। **प्रत्यक्षतः** अन्वय-व्यतिरेकतः। **तदुपलब्धौ** तस्येतिकर्तव्यतात्वस्योपलब्धौ। अधि उपरि पश्चात् करणं विचारस्य विधिसामर्थ्यात्, अथवाऽधिकारात् फलात् प्रवृत्तिसिद्धिरधिकारसिद्धिः; फलसिद्ध्यर्थं तत्र प्रवर्तत इत्यर्थः।

**किमर्थसामर्थ्यात्** वस्तुसामर्थ्यादिति; अध्ययने कृतेऽवश्यंभावित्वादित्यर्थः॥

अध्ययनात् प्रागसिद्धत्वेन कथमधिकारिविशेषणत्वं निराकरोति? फलस्य सर्वत्रासिद्धस्यैवाधिकारिविशेषणत्वात्। अथवा "नाधिकारहेतुते"त्युक्तम्; नहि फलस्याधिकारहेतुत्वं पूर्ववादिनाऽप्युक्तम्, किन्तु फलकामनायाः; "ततः प्रागसिद्धत्वाच्चे"ति हेतुरपि व्यर्थ इत्याशङ्क्य व्यचष्टे—**अध्ययनात् प्रागिति**॥ ननु अर्थस्यावबोधस्य च लोक-

## पञ्चपादिकाविवरणम्

काममुद्दिश्य विधानमित्यर्थः। ननु कथमर्थावबोधस्याप्रतिपत्तिः ? अध्ययनात् प्राग्वेदार्थस्याप्रतिपत्तेः, विशेषणापरिज्ञाने तद्विशिष्टावबोधानवगमात्। ननु वेदस्य वाक्यप्रमाणत्वादाप्तवचनवदर्थो विद्यते, इत्यर्थसद्भावमात्रमनुमानेनावगम्यते ? न ; अर्थवत्त्वज्ञानमात्रस्यानुमानसिद्धत्वात् तज्ज्ञानकामनाऽयोगात्, अग्निहोत्रादिविशिष्टवाक्यार्थानामप्रतिपन्नतया तद्विशिष्टज्ञानकामनाऽयोगात् उपदेशत एवाग्निहोत्रादिवाक्यार्थविशेषाः प्रतिपन्ना इति चेत् ? तर्हि वाक्यार्थविशेषज्ञानानामपि सिद्धत्वान्न तत्र कामना सम्भवेत्। अथौपदेशिकज्ञानस्याप्रमाणत्वान्निर्णयज्ञानं काम्यत इति चेत् ? अप्रामाण्ये निश्चिते न तत्र निर्णयज्ञानकामना अर्थस्य, विभ्रममात्रत्वादौपदेशिकज्ञानस्य ; सन्दिग्धे प्रामाण्यविचारस्यैवावसरो नाध्ययनस्य। किंच, सर्ववाक्यार्थज्ञानानां युगपदेकबुद्ध्योद्देशनासम्भवात्, सामान्येनोद्दिश्य शब्दोच्चारणायामर्थमात्रज्ञाने शब्दस्य तात्पर्यप्रसङ्गात्, अग्निहोत्रादिविशेषज्ञाने तात्पर्याभावात्, वाक्यशक्त्यनुसारेण विशिष्टार्थे तात्पर्यकल्पनयाऽर्थज्ञानमुद्दिश्याध्ययनविधेस्तात्पर्यानिमित्तत्वप्रसङ्गात्। तस्माद् विशेषज्ञानानां प्रागसिद्धत्वान्न

## तत्त्वदीपनम्

प्रतिपन्ने कामनानुपपत्तिरित्यर्थः। आद्यमुत्थापयति—**ननु कथमिति**॥ तत्र वक्तव्यम्, किं वेदार्थमधिगम्य तदवबोधं जानाति ? उत न ? इति, तत्रान्त्यस्तावन्न शोभत इत्याह—**अध्ययनादिति**॥ "अर्थस्याप्रतिपत्तेरि"त्यत्र तद्बोधस्याप्रतिपत्तिरित्यनुषङ्गः। अर्थाप्रतिपत्तावपि बोधप्रतिपत्तिः किं न स्यादित्याशङ्क्याह—**विशेषणेति**। 'नागृहीतविशेषणा विशिष्टे बुद्धिरि'ति न्यायादित्यर्थः। विचारनैरर्थक्यं परिहर्तुं सद्भावमात्रमित्युक्तम्, तत्रेदमालोचनीयम्—किमर्थावबोधमात्रं काम्यते ? उताग्निहोत्रादिविशिष्टार्थावबोधः ? इति तत्राद्यं दूषयति—**नार्थवत्त्वेति**॥ द्वितीयेऽपीदं निरूपणीयम्—किमध्ययनात्प्राग् अग्निहोत्रादिः प्रतिपन्न ? उत नेति ? तत्रान्त्यस्तावन्न शोभत इत्याह—**अग्निहोत्रादीति**॥ आद्यमनुवदति—**उपदेशत इति**॥ किमुपदेशजन्यं ज्ञानं प्रमाणम् ? उत न ? इति विकल्प्याद्यं दूषयति—**तर्हीति**॥ द्वितीयमनुवदति—**अथेति**॥ किम्—अप्रामाण्ये निर्धारिते निर्णयज्ञानं काम्यते ? उत संन्दिग्धे ? नाद्य इत्याह—**अप्रामाण्येति**॥ तत्र हेतुमाह—**अर्थस्येति**। शुक्तिकासमारोपितरजतप्रत्ययस्याप्रामाण्यनिश्चितौ तत्र निर्णयज्ञानकामना नोपलब्धचरीत्यर्थः। द्वितीये दूषणमाह—**संदिग्ध इति**॥ अर्थावबोधकामनामङ्गीकृत्योद्दिश्य विधानं दूषयति—**किंच सर्वेति**। किं सकलवाक्यार्थावबोधनमधिगम्य तदुद्देशेनाध्ययनं विधीयते ? आहो वेदार्थबोधमात्रम् ? नाद्यः ; वाक्यार्थबोधानां ज्ञानस्य क्रमभावितया युगपत् तदुद्देशेनाध्ययनविधानानुपपत्तेरित्यर्थः। द्वितीयं निरस्यति—**सामान्येति**। अर्थावबोधोद्देशेन शब्दोच्चारणस्य तात्पर्यप्रयोजकत्वात् सकलवाक्यार्थबोधानां च सकृदुपदेष्टुमशक्यत्वाद् नोद्दिश्य विधानम्। तस्मादर्थमात्रबोधोद्देशेन शब्दोच्चारणात् तत्र शब्दतात्पर्यं स्यादित्यर्थः। ततः किमिति ? अत आह—**अग्निहोत्रादीति**॥ तात्पर्याभावादित्यत्र विशेषांशे शब्दप्रामाण्यं न स्यादित्यनुषङ्गः। विशेषज्ञानोद्देशेन शब्दानुच्चारणेऽपि शब्दशक्त्या विशेषप्रतिपत्तेरपवादकाभावाच्च शब्दस्य विशेषांशे तात्पर्यमित्याशङ्क्य स्वोक्तिविरोधान्मैवमित्याह—**वाक्येति**॥ 'काश-कुश-पलाशाः' इति यथा बहुविषयमेकं ज्ञानम्, तथा सकलवाक्यार्थावबोधविषयस्यैकस्य ज्ञानस्य

## ऋजुविवरणम्

सिद्धत्वात् कथमसिद्धतेति चोदयति—**ननु कथमिति**॥ ननु ज्ञानमात्रस्य सिद्धत्वेन कामना मा भूत्; अर्थविशेषज्ञानस्य काम्यत्वं स्यात्; अप्राप्तत्वात्, इत्याशङ्क्याह—**अग्निहोत्रादीति**॥ ननु औपदेशिकज्ञानस्याप्रामाण्येऽर्थस्य विभ्रमत्वमिति यदुक्तम्, तत् तावन्नोपपद्यते; अप्रमाणस्मृतिविषयस्याप्यभ्रान्तत्वदर्शनात् भ्रान्तिज्ञानविषयत्वं हि भ्रान्तत्वप्रयोजकम्, नाप्रमाणज्ञानविषयत्वम्। "प्रामाण्यविचारस्यैवावसरः" इति यदुक्तम्, तदप्युक्तम्; प्रामाण्यविचारोऽप्यौपदेशिकज्ञानस्य मूलान्वेषणम्, तच्च क्रियत एव। तदुक्तम्,—"निर्मूलासंभवादत्र प्रमाणैः सैव मृग्यते" इति॥ "धर्मे सामान्यतः सिद्धे प्रमाणं चोदनोच्यते" इति च। तथा सति वेदप्रामाण्यविचारस्याप्यवसर इत्याशङ्क्याह—**किंच सर्ववाक्यार्थेति**॥ ननु विशेषरूपेणोपदेशासंभवेऽपि विज्ञानमात्रमुद्दिश्याध्ययनादि विधीयते, इत्याशङ्क्याह—**सामान्येनेति**॥ ननु विधिसामर्थ्यादर्थमात्रे तात्पर्येऽपि स्वशक्त्यनुसारेणार्थविशेषेऽपि तात्पर्यं सिध्यतीत्याशङ्क्याह—**वाक्यशक्त्यनुसारेणेति**॥ ननु वेदस्यार्था-

### पञ्चपादिका

**प्राक् चाधिकारज्ञानेन प्रयोजनम् ; अतो न विधेर्दृष्टाधिकारत्वेनार्थावबोधसिद्धिः ।**

**यद्येवमधिकाराश्रवणादर्थावबोधे च प्रतिपक्षकल्पनानुपपत्तेस्तस्य चाधिकारहेतुत्वानभ्युपगमादप्रवृत्तिरेवाध्ययने प्राप्ता ।**

### पञ्चपादिकाविवरणम्

तत्काममुद्दिश्य विधानमित्याह—**प्राक् चाधिकारज्ञानेन प्रयोजनमिति** ।। किंचोद्दिश्यविधानेऽपि नाध्ययनमात्रात् दृष्टफलतयाऽर्थावबोधसिद्धिः ; अदर्शनादित्याह—**अतो न विधेरिति** ।। ननु अर्थावबोधमुद्दिश्य शब्दोच्चारणायां तात्पर्यं लोके दृश्यते ? न तावच्छ्रोतुरुच्चारणा तात्पर्यनिमित्तम्, लोके तदभावात् ; न वक्तुरुच्चारणा, वेदेऽपौरुषेये तात्पर्याभावप्रसङ्गात् । तस्मात् स्वभावत एवार्थप्रतिपादनसमर्थस्य शब्दस्य पुरुषसम्बन्धकृतदोषपरिहारायार्थज्ञानमुद्दिश्य शब्दोच्चारणाऽपेक्ष्यते तात्पर्यमपि शब्दधर्म एव षड्विधलिङ्गगम्यो, न पुरुषधर्म इति वक्ष्यते ।।

इदानीमध्ययनविधेर्नित्याधिकारताम् प्रतिपादयितुमधिकारिविशेषणाभावादनध्ययनमेवेत्यध्ययनप्रवृत्तिमाक्षिपति—**यद्येवमधिकाराश्रवणादिति** ।।

### तत्त्वदीपनम्

संभवादुद्दिश्य विधानशङ्कामुपसंहारव्याजेन निरस्यति—**तस्मादिति** । **प्रागित्यत्राध्ययनादित्यनुषङ्गः** । द्वितीयकल्पनिरासस्य प्रस्तुतत्वात्, "अतः" इत्युपसंहारानुपपत्तिरित्याशङ्क्याह—**किंचेति** ।। उद्दिश्य शब्दोच्चारणायास्तात्पर्यनिमित्तत्वं दृष्टम्, ततः कथं तदपलापः ? इति शङ्कते—**नन्वर्थेति** ।। किं श्रोतुरुच्चारणा तात्पर्यनिमित्तम् ? उत वक्तुः ? नाद्य इत्याह—**न तावदिति** । वक्तृप्रयोगादर्वाग् वाक्यार्थाप्रतिपत्तेर्न तदुद्देशेन श्रोतुरुच्चारणं समस्तीत्यर्थः । द्वितीयं दूषयति—**न वक्तुरिति** ।। तर्हि लोके ज्ञानोद्देशेन शब्दोच्चारणे तात्पर्यदृष्टेः का गतिः ? इति शङ्कायामाह—**तस्मादिति** ।। तात्पर्यस्य पुरुषधर्मस्यापौरुषेये शब्दे कथं संभवः ? इति शङ्कायामाह—**तात्पर्यमपीति** ।। तत्र हेतुमाह—**षड्विधेति** ।। 'उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम् । अर्थवादोपपत्ती चे'त्येतानि षट् तात्पर्यलिङ्गानि, तानि यत्र लक्ष्यन्ते, तस्मिन् तस्य शब्दस्य तात्पर्यनिश्चयात् शब्दधर्मत्वं तात्पर्यस्येत्यर्थः । सर्वेषां शब्दानां पुंतन्त्रत्वात् तात्पर्यमपि पुंधर्म इत्याशङ्क्याह—**न पुरुषेति** ।।

"यद्येवमि"त्यादिनाऽध्ययने प्रवृत्तिराक्षिप्य समर्थ्यते, तत् कस्मात् ? अथशब्दस्याधिकारार्थनिरसनस्य प्रस्तुतत्वात् तस्य च सिद्धत्वादित्याशङ्क्याह—**इदानीमिति** । अध्ययनविधेर्नित्याधिकारत्वाभावेऽर्थावबोधकामोऽधिकारीति स्यात्, अर्थावबोधस्य च विचारमन्तरेणानुपपत्तेर्विधितस्तदाक्षेप इति सर्वाधिकारत्वं शास्त्रस्य । तस्मान्नित्याधिकारत्वं प्रतिपादनीयमित्यभिप्रेत्य पूर्वपक्षोपक्रम इत्यर्थः ।।

### ऋजुविवरणम्

ववोधमुद्दिश्योच्चारणाभावे स्वार्थे तात्पर्यं न स्यात् तात्पर्यहेत्वभावादिति चोदयति—**नन्वर्थावबोधमुद्दिश्येति** ।। ननु एवं वेदस्यार्थप्रतिपादकत्वं न स्यात्; उद्दिश्योच्चारणस्य प्रतिपादनहेतोरभावात्, इत्याशङ्क्याह—**तस्मात्स्वभावत इति** ।। ननु वेदस्यार्थप्रतिपादनसामर्थ्येऽपि कथं बोधकत्वम्, तात्पर्याधीनत्वात् बोधस्य, तात्पर्यस्य च पुरुषधर्मस्यात्रासंभवादित्याशङ्क्याह—**तात्पर्यमपीति** ।। ननु तात्पर्यस्य शब्दधर्मत्वे तस्य ज्ञातस्यार्थनिश्चयहेतुत्वाद् ज्ञापकस्य चादर्शनाद् बोधरूपकार्यस्य ज्ञापकत्व इतरेतराश्रयत्वप्रसङ्गाद् नार्थनिश्चयः स्यादित्याशङ्क्याह—**षड्विधलिङ्गेति** ।। वक्ष्यमाणलिङ्गानि त्वेतानि—उपक्रमोपसंहारयोरेकरूप्यम्, अभ्यासः, अपूर्वार्थत्वम्, फलविशेषः, अर्थवादोपादानम् उपपत्तिभिरुपपादनं चेति ।

"यद्येवमि"ति चोद्यं व्यर्थम्; सर्वाधिकारनिवृत्त्यर्थमर्थावबोधकामस्याधिकारो निरस्तः । तावताऽधिकारार्थत्वे शास्त्रानारम्भ इति यद् दूषणम्, तत् समर्थितम्; किमिदानीमप्रस्तुतमाक्षिप्यते ? पुनरुक्तं च "स्यादेतदि"त्यनेन; तत्राक्षरग्रहणमात्रे चरितार्थत्वस्य साधितत्वात्, इत्याशङ्क्यावतारयति—**इदानीमिति** । नित्याधिकारत्वे सिद्धे पूर्वोक्तार्थावबोधकामस्यानधिकारः सिध्यति, नान्यथेति भावः ।।

## पञ्चपादिका

**अत्र केचिदाहुः—**

## पञ्चपादिकाविवरणम्

तत्र विधिर्हि स्वविषये प्रवर्तकतया प्रतिपन्नस्तदन्यथानुपपत्त्या 'ममायं नियोग' इति प्रतिपद्य प्रवृत्तिसमर्थमधिकारिणं कल्पयति, यदा तु पुनर्विधिविषयस्य निमित्तान्तरादनुष्ठानं सम्पद्यते, तदा विधेः प्रवर्तकत्वं प्रतिबध्यते। प्रतिबद्धप्रवर्तकभावश्च विधिः प्रवृत्तिसिद्धये न स्वामिनमधिकारिणं कल्पयित्वा प्रवर्तयति। तत्राध्ययनविधिरपि स्वविषयस्याध्यापनविधिप्रयुक्तानुष्ठानत्वात् स्वयं प्रतिबद्धप्रवर्तकभावो नाधिकारं कल्पयित्वा प्रवर्तयतीति प्राभाकराः प्रत्यवतिष्ठन्त इत्याह—**अत्र केचिदाहुरिति** ॥ ननु "अष्टवर्षं ब्राह्मणमुपनयीत" "तमध्यापयीते"तिश्रुतावध्यापनविधिरश्रूयमाणाधिकारः कथमध्ययनं प्रयोजयेत्? कल्प्यतेऽत्राधिकार इति चेत्? न; अध्ययनेऽप्यधिकारं कल्पयित्वा स्वविधिप्रयुक्तिरेवाध्ययनस्य गृह्यताम्; सन्निधानात्। ननु कल्पिताधिकारेऽध्यापनविधौ तत्प्रयुक्तानुष्ठानत्वादध्ययनस्य न तत्राधिकारः कल्प्यत इति चेत्? विपरीतं किं न स्यात्—अध्ययने कल्पिताधिकारे तत्प्रयुक्तानुष्ठानत्वादध्यापनस्य न तत्राधिकारः कल्प्यत इति। ननु लिखितपाठादप्यध्ययनसिद्धेर्नाध्ययनविधिरध्यापनं प्रयोजयति? तर्हि अविहिताध्ययनेनाप्यध्यापनविधिसिद्धेर्न विहितमध्ययनमध्यापनविधिः प्रयोजयेत्। अथाप्यध्ययनाध्यापनयोर्माणवकस्य प्राङ्मुखत्व-पवित्रपाणित्वाद्यङ्गसाम्याद्विहितमेवाध्ययनमध्यापनविधिः प्रयुङ्क्त इति? अध्यापनस्याध्ययनविधिप्रयुक्तावपि

## तत्त्वदीपनम्

"अत्र केचिदि"त्यत्राध्ययनस्याध्यापनविधिप्रयुक्तानुष्ठानत्वमुक्तम्, तन्न घटते; अध्ययनविधिप्रयुक्त्या तदनुष्ठानसंभवात्। नच—अनुष्ठात्रभावादध्ययनविधेर्नानुष्ठापकत्वमिति—शङ्क्यम्; विश्वजिन्न्यायेनाधिकारिकल्पनसंभवादित्याशङ्क्याह—**तत्र विधिरिति** ॥ अस्तु प्रकृते किमायातमिति? अत्राह—**तत्राध्ययनेति**। अध्ययनमन्तरेणानुपपद्यमानोऽध्यापनविधिरध्ययनमनुष्ठापयतीत्यर्थः। अध्यापनविधेः प्रवर्तकत्वे सिद्धे तत्प्रयुक्तानुष्ठानत्वमध्ययनस्य सिध्येत्, तदेवासिद्धमिति शङ्कते—**नन्वष्टेति** ॥ अधिकाराश्रवणेऽप्यध्यापनविधेः प्रवर्तकत्वं स्यात्, विश्वजिद्विधिवदिति शङ्कते—**कल्प्यत इति** ॥ साम्येन समाधत्ते—**नाध्ययनेति** ॥ न केवलं साम्यमात्रम्, अस्ति च विशेष इत्याह—**एवेति** ॥ विशेषमाह—**संनिधानादिति**। अध्यापनविधावधिकारं परिकल्प्य तत्प्रयुक्तमध्ययनमिति कल्पनाद् वरमव्यवधानादध्ययनविधिवाक्य एवाधिकारिणं परिकल्प्य तत्प्रयुक्तिकल्पनमध्ययनस्येत्यर्थः। अव्यवहितार्थासंभवे व्यवहितोऽप्यर्थो ग्राह्य इति शङ्कते—**ननु कल्पितेति** ॥ अध्यापनविधेः कल्पिताधिकारत्वमसिद्धमित्याह—**विपरीतमिति** ॥ वैपरीत्यमेवाह—**अध्ययन इति** ॥ अध्ययनविधिः किमध्यापनमात्रं प्रयोजयति? उत विहिताध्यापनम्? नाद्यः; अङ्गीकृतेः, इत्यभिप्रेत्य द्वितीयं दूषयति—**ननु लिखितेति** ॥ **अध्यापनम्** विहिताध्यापनमित्यर्थः। यथा विहिताध्यापनस्याध्ययनविधिप्रयुक्त्यनुपपत्तिः, तद्वद्विहिताध्ययनस्याप्यध्यापनविधिप्रयुक्त्यनुपपत्तिरिति शङ्कते—**तर्ह्यविहितेति** ॥ विध्यन्तरपर्यालोचनयाऽध्यापनविधिर्विहिताध्ययनं प्रयुङ्क्त इति शङ्कते—**अथेति** ॥ **अध्ययनाध्यापनयोरिति**—अध्ययनाध्यापनवाक्ययोरित्यर्थः। "प्राङ्मुखः पवित्रपाणिरधीयीते"त्यध्ययने प्राङ्मुखत्वाद्यङ्गजातं विधीयते। "तं प्राङ्मुखं पवित्रपाणिमध्यापयेत्" इत्यत्रापि माणवकस्य प्राङ्मुखत्वादीतिकर्तव्यता श्रूयते। यदि चाध्यापनविधिरविहितमध्ययनं प्रयुञ्ज्यात्, तदेतिकर्तव्यताविधानं निरर्थकमापद्येत। तस्मादध्यापनविधिर्विहितमेवाध्ययनं प्रयुङ्क्त इत्यर्थः। तुल्यमेतदितरत्रापीत्याह—**अध्यापनस्येति**। अविहिताध्यापनस्य विहिताध्ययनप्रयोज्यत्वे "प्राङ्मुखमध्यापयेदि"ति नियमविधानं न स्यात्, अस्ति

## ऋजुविवरणम्

"अत्र केचिदि"त्यध्यापनविधिप्रयुक्त्युपन्यासो न युक्तः; अश्रुताधिकाराध्ययनविधिसामर्थ्यादेवाधिकारलाभात्, अस्य च सामर्थ्ये विश्वजिदादावप्यधिकारकल्पना स्यात्; विशेषाभावात्, इत्याशङ्क्य विषयदर्शनपूर्वकमवतारयति—**तत्र विधिर्हीति**। **ममायमिति**। स्वसम्बन्धिकार्यबोद्धा नियोज्यः स एव चार्थादधिकारी, स च कर्मण्यैश्वर्यपर्यवसानार्थिना विधिनाऽपेक्षितः; तदभावे च प्रवृत्त्यभावादिति भावः। **ननु "अष्टवर्षमि"ति**। "आचार्यकरणकामो माणवकमुपनीयाध्यापयेदि"त्यश्रवणादित्यर्थः। कथमध्ययनविधिप्रयुक्तौ समानत्वमापाद्यते? माणवकधर्ममात्रसाम्यात् तत्र विहिताध्ययनप्रयुक्तिरुक्ता, नेह तथाविधं विहिताध्ययनविधिप्रयुक्तिद्योतकमस्ति; अतो न लिखितपाठो निषेद्धुं शक्यते, इत्याशङ्क्याह—

## पञ्चपादिका

**आचार्यकरणविधिप्रयुक्तस्याध्ययनस्यानुष्ठानम् ।**

## पञ्चपादिकाविवरणम्

समानमेतत् । किंच "आचार्याधीनो वेदमधीष्वे"ति नियमविधानाल्लिखितपाठो न युक्तः । अध्यापनादुत्तरभावित्वादाचार्यत्वस्याचार्यकरणविधिप्रयुक्तः 'अधीष्वे'तिवाक्यार्थ इति चेत् ? न, "तद् द्वितीयं जन्म तद् यस्मात्स आचार्य" इत्युपनयनमात्रादाचार्यत्वश्रवणात्, "आचारांन् ग्राहयती"ति व्युत्पत्त्याऽऽचार्यत्वस्य प्रागेव सिद्धेः, आचार्यकरणविधिप्रयुक्त इत्यध्याहारात् शब्दस्य भाविवृत्त्याश्रयणस्यैव लघीयस्त्वात् । तस्मादधिकारकल्पनासाम्यादितरेतरप्रयुक्तिसाम्याच्च स्वविधिप्रयुक्तिसम्भवेऽध्ययनस्य कथमध्यापनविधिप्रयुक्तिरिति ? तत्राह—**आचार्यकरणविधिप्रयुक्तस्याध्ययनस्यानुष्ठानमिति ॥**

अयमाशयः—"संमाननोत्सञ्जनाचार्यकरण-ज्ञान-भृति-विगणनव्ययेषु नियः" इति संमाननादिषु साध्येषु नयतेर्धातोरात्मनेपदं विधीयते । तत्र च "उपनयीत, तमध्यापयीते"त्येकप्रयोगतावगमादुपनयनाध्यापनयोर्माणवकस्याध्यापनं प्रति कर्मकारकांशेन गुणभूतत्वाद्, 'माणवकः केनोपकारेणाध्यापनविधिं निर्वर्तयेदिति वीक्षायामुपगमेनाध्ययनं

## तत्त्वदीपनम्

च तत् । तस्माद् विहिताध्यापनस्याध्ययनविधिप्रयोज्यत्वमित्यर्थः । इतोऽप्यध्ययनविधिर्विहिताध्यापनं प्रयुङ्क्त इत्याह—**किंचेति** ॥ स्मृत्यर्थानभिज्ञो भवानित्याह—**अध्यापनादिति** ॥ उत्तरभावित्वमसिद्धमित्याह—**न तदिति** ॥ उपनयनं तच्छब्दार्थः ॥ विधान्तरेणाचार्यत्वसंपत्तिं दर्शयति—**आचारानिति** ॥ आचार्यत्वस्याध्यापनैकसाध्यत्वमङ्गीकृत्य दूषणमाह—**आचार्यकरणेति** । "गृहस्थः सदृशीं भार्यामुपेयादि"त्यत्र भाविवृत्त्याश्रयणेन गृहस्थशब्दवद् भाविवृत्त्याश्रयणेनाचार्यशब्दप्रयोगो न विरुध्यत इत्यर्थः । सिद्धान्तिनः शङ्कासमर्थनमुपसंहरति—**तस्मादिति** ॥ तत्पदपरामृष्टं हेतुमेवाह—**अधिकारेति** ॥

आचार्यकरणविधिप्रयुक्तेर्निरस्तत्वात् कथमाचार्यकरणविधिप्रयुक्तस्येत्युक्तम् ? इत्याशङ्क्याह—**अयमाशय इति । संमाननम्** पूजनम् । **उत्सञ्जनम्** उत्क्षेपणम् । **भृति** वेतनम् । **विगणनम्** ऋणादेः प्रतिनिर्यातनम् । **व्ययः** धर्मादिषु द्रव्यविनियोगः । संक्षेपेण सूत्रार्थमाह—**संमाननादिष्विति** । तथाचाचार्यत्वे साध्ये नयतेर्धातोरात्मनेपदविधानादुपनयनसाध्यमाचार्यत्वं लक्ष्यत इत्युक्तं भवतीत्यर्थः भवत्वाचार्यत्वमुपनयनफलम्, कथमध्यापनफलं स्याद् ? येनाध्यापनविधेः साधिकारत्वं स्यादित्याशङ्क्याह—**तत्रेति** । **तत्र** आचार्यत्वस्योपनयनफलत्वे सतीत्यर्थः । **एकप्रयोगताऽवगमादिति** एककर्मतयाऽवगमादित्यर्थः । भवत्वेकप्रयोगत्वम्, तथाऽप्याचार्यत्वं कथमध्यापनफलं स्यादित्याशङ्क्याह— **माणवकस्येति** ।

## ऋजुविवरणम्

**किंचाचार्याधीन इति** ॥ ननु स्वविधिप्रयुक्ताध्ययने नायं नियमविधिरिति चोदयति—**अध्यापनादिति** ॥ **"आचारान् ग्राहयती"ति व्युत्पत्त्येति** । "शौचाचारांश्च शिक्षयेत्" इति विधानात्, आचारशिक्षक आचार्य इत्युच्यते । आचारान् ग्राहयितुमर्हतीत्याचारप्रातिपदिकादर्हार्थे यत्प्रत्यये कृते तेनाभिधातुं शक्यत इति भावः । ननु "उपनीय तु यः शिष्य"मिति वचनपर्यालोचनयोपयनाध्यापनसाध्यमाचार्यत्वं प्रतीयते, तत्कथमुपनयनमात्रात् तत्सिद्धिः ? तद्वाचित्वं तस्य पदस्य श्रुत्या निश्चीयते, तदभावे चाचार्याधीन इति वक्तुमशक्यत्वात्, अतश्चोत्तरभावित्वादाचार्यकरणविधिप्रयुक्त इत्येव वाक्यार्थ इत्याशङ्क्याह—**अध्याहारादिति** ॥

आचार्यकरणविधिप्रयुक्तस्यैवेत्यवधारणं न युक्तम्, उभयत्राधिकार-प्रयुक्तिकल्पनयोः साम्यस्योक्तत्वात्, इत्याशङ्क्याभिप्रायमाह—**अयमाशय—संमाननेति । संमाननम्** पूजनम्, **उत्सञ्जनम्** उपाकरणम्, **भृतिः** वेतनम्, **विगणनम्** परिगणनम् । एतदिह विवक्षितम्—आचार्यत्वे साध्य आत्मनेपदविधानाद् आचार्यत्वं प्रतीयते । तच्चालौकिकम्—"आचार्याय वरो देयः" इति संप्रदानत्वनिर्देशात्, उपनयनादिसंस्कृततत्स्वरूपादन्येन तत्कर्तृत्वरूपेण सम्प्रदानत्वायोगात्, दृष्टस्य च संस्कारस्यादर्शनात् तदाधारालौकिकसंस्कार आचार्यशब्दवाच्यः; आहवनीयशब्दस्य आधानक्रियायोगोत्तरकालम्—"आहवनीये जुहोती"ति प्रयोगात् संस्कृतरूपादन्येनाग्नीनां होमकारकत्वासंभवादलौकिकार्थत्वनिश्चयवदिति । ननु एवमप्युपनयनसाध्यमाचार्यत्वं भवेत्, नाध्यापनसाध्यम्; अध्यापनसाध्यत्वस्य गमकाभावात्, इत्याशङ्क्याह—**तत्रोपनीय तमिति** ॥ एवमप्युपनयनाध्ययनयोरध्यापनविधिप्रयुक्तिर्नास्ति; तयोरप्रतीतेरिति, तत्राह—**उपनयनाध्या-**

## पञ्चपादिकाविवरणम्

कुर्वन्नध्यापनविधेरुपकरोतीति गम्यते। तत्रो'पनीयाध्यापयेदि'ति प्रयोगैक्यकल्पनायां नयत्यर्थं साध्यमेवाचार्यकरणमध्यापनस्यापि फलं गम्यते। ततश्चो'पनीयाध्यापयेदाचार्यंकरणकामः' इति श्रुतस्यैवाचार्यत्वस्य फलस्य कामोपबन्धमात्रकल्पनात् साधिकारोऽध्यापनविधिः सम्पद्यते। अथवा, "उपनीय तु यः शिष्यं वेदमध्यापयेद् द्विजः। सकल्पं सरहस्यं च तमाचार्यं प्रचक्षते" इत्युपनयनाध्यापनयोः प्रयोगैक्यादध्यापने विधिश्रवणादाचार्यत्वफलश्रवणाच्च 'आचार्यत्वकामो माणवकमुपनीयाध्यापयेदि'ति विधिर्निष्पद्यते, अध्ययने तु नाधिकारनिमित्तं किञ्चित् श्रुतमस्तीति विशेषः।

## तत्त्वदीपनम्

"तमध्यापयीते"ति माणवकाध्यापनेन विशेषितो नियोगस्तावत् प्रथते। तत्र माणवकस्य कथं नियोगोपकारकत्वम्? इति वीक्षायां दृष्टे सत्यदृष्टकल्पनाया अन्याय्यत्वात् उपगमनाध्ययनाभ्यां माणवक उपकरोतीति निश्चीयत इत्यर्थः। भवतु दृष्टद्वारोपकारकत्वं माणवकस्य, तथाऽप्यध्यापनविधेः कथं साधिकारत्वमित्याशङ्क्याह—**तत्रेति**। अध्यापनस्य भाव्यमन्तरेणापर्यवसानात् तदाकाङ्क्षायां यदुपनयनफलम्, तदेवास्यापि फलत्वेन निश्चीयते; सन्निधानादित्यर्थः। फलितं दर्शयति—**ततश्चेति**॥ आत्मनेपदसामर्थ्यादध्यापनविधेराचार्यत्वं फलमित्युक्तम्, संप्रत्यध्यापनविधेराचार्यत्वं फलत्वेन श्रूयते चेत्याह—**अथवेति**॥ टीकार्थमुपसंहरति—**उपनयनेति**॥ **अधिकारनिमित्तमिति**—विधि-पुरुषसंबन्धनिमित्तमित्यर्थः।

## ऋजुविवरणम्

**पनयोरिति**॥ ननु एकप्रयोगत्वेऽप्यध्यापनस्यैव साधिकारत्वं कथं गम्यते? इत्याशङ्क्याह—**माणवकस्येति**। आचार्यकरणत्वं तत्फलकार्यपूर्वविषयस्य भवति। नचोपनयस्यापूर्वविषयत्वं संभवति; "ब्राह्मणमि"ति द्वितीयया लिङ्गाच्चोपनेयासत्त्यर्थत्वावगतेः, उत्पत्याद्यर्थस्य चापूर्वविषयत्वं "तेषामर्थेने"त्यत्र निषिद्धम्। एवंचात्मनेपदबोधितमेवाचार्यकरणत्वं साक्षादाचार्यकरणत्वे द्वितीया-लिङ्गाभ्यां बाधिते सत्युपनेतृकर्तृकमन्यदाचार्यकरणमुपनयनं च तत्प्रयोजकमिति कल्पयतीति भावः। कथं पुनः साक्षात्त्वबाधः? अपूर्वविषयत्वापातात् द्वितीयाद्यवगतान्यार्थत्वविरोधादिति चेत्? न; अनीप्सितेऽपि द्वितीयासंभवेन साक्षात्त्वाविरोधात्, लिङ्गस्य तु सामान्यसम्बन्धापेक्षत्वात्। एवंचात्मनेपदस्वारस्येन शीघ्रधीस्थाचार्यकरणत्वान्यथानुपपत्तिकल्पिताचार्यकरणकामाधिकारापूर्वविषयताऽस्तु, "ब्राह्मणमि"त्यनीप्सिते द्वितीयाऽस्तु, अध्यापनं चोपनेयसंस्कारत्वेन तदङ्गमस्तु, 'तमि'ति द्वितीयास्वरसानुग्रहात्। उच्यते; न तावदुभयत्राधिकारः कल्प्यः; अन्यतरस्य साधिकारत्वेनैवान्यतस्य तदङ्गतया प्रयुक्तिः नचोपनयने कल्प्यः; नह्यात्मनेपदस्य साक्षादाचार्यकरणत्वं प्रवृत्तिनिमित्तं संमाननसूत्रे प्रतीयते; करणतामात्रप्रतीतेः। तच्चासति व्यवधिबोधे साक्षाद् विवर्तवत्। अन्यतस्तु व्यवधिबोधे पारंपर्येण व्रीहीणामिव। उपनयने त्वन्यतो व्यवधानान्न साक्षात् कारणता। नह्युपनयनं क्रियानन्तरमपूर्वफलमाचार्यत्वमुत्पादयति। नच कारकगतफले साध्ये श्रुते हन्त्यादाविवापूर्वसाध्यता; साध्यद्वयविरोधात्, द्रागीप्सिते द्वितीया, बाधे त्वनीप्सितता, व्यत्ययो वा, नेह स इति दर्शितम्। संस्कृतस्य द्विजादीनामिज्याध्ययनफलमिति विनियोगोऽप्यस्ति। एवं च सान्निध्याम्नानादुपनेयस्याध्यापनविधिप्रयुक्ताध्ययनद्वारतया शेषित्वं निर्वहतीति भावः। यद्यप्युपनेयस्य शेषित्वनिर्वाहात् नोपनयनस्यार्थकर्मत्वम्; तथाऽपि तस्यापूर्वफलाचार्यकरणं तद्भवेत्, नत्वध्यापनस्याचार्यकरणफलत्वसिद्धिः; तदभावे चाधिकारनिमित्तं कल्प्यम्; तथासति न विशेषः, इत्याशङ्क्याह—**तत्रोपनयीत तमध्यापयीतेति**॥ अथवा 'तमि'ति प्रकृतपरामर्शात् एकप्रयोगत्वेऽप्युपनयसाध्यस्यैव तत्साध्यत्वं कथं निश्चीयते? अथवा, न कर्मकारकमात्रैक्यादेकप्रयोगत्वम्, किंतु तन्त्रैक्यात्, तच्च शेष-शेषित्वे। तच्चात्र निरपेक्षविधिभेदान्न संभवतीत्याशङ्क्याह—**तत्रोपनीयेति**॥ ननु उपनयनस्याङ्गत्वात् तत्साध्यमाचार्यत्वं 'अङ्गेषु फलश्रुतिरर्थवादः' इति न्यायविरोधात् कथं प्रधानविध्यधिकारनिमित्तम्? इत्याशङ्क्याह—**अथवेति**॥ अथवा, पूर्वमेकपुरुषसम्बन्धेनैकप्रयोगमङ्गीकृत्याध्यापने साक्षादधिकारनिमित्ताश्रवणेऽप्युपनयनसाध्यत्वेन प्रतीतस्यापि स्वीकार इत्युक्तम्, इदानीमेकप्रयोगत्वं साक्षादध्यापनस्य साधनत्वप्रतीत्या च साधिकारत्वमित्याह—**अथवेति**॥

## पञ्चपादिका

**आधानस्येव कामश्रुतिप्रयुक्तस्य—इति ।**

## पञ्चपादिकाविवरणम्

ननु अध्यापनविधिविषयतदङ्गताऽभावेऽध्ययनस्य स्वतन्त्रविध्यन्तरविहितस्य कथं स्वतन्त्रविध्यन्तर-प्रयुक्तानुष्ठानतेति ? तत्राह—**आधानस्येव कामश्रुतिप्रयुक्तस्येति** ॥ अयमाशयः—"ब्राह्मणोऽग्नीनादधीते"ति श्रूयते । तत्र न तावत्पुरुषमुद्दिश्य स्वातन्त्र्येण नित्यमाधानं विधीयते; द्रव्यपरतया प्रोक्षणादिवत् कर्मकारकसंस्कारकर्मता-प्रतीतेः; अश्रूयमाणफलत्वादेव न स्वतन्त्रकाम्याधिकारता । नच सक्तुन्यायेन गुण-प्रधानवैपरीत्यान्नित्यकाम्याधिकारता; "यदाहवनीये जुहोती"ति संस्कृताग्नीनां क्रत्वन्तरे विनियोगात् । तस्मादुभयविधाधिकारशून्यो नाधानविधिराधाने प्रवर्तयितुं क्षमः । तर्ह्युत्तरक्रतुविधिप्रयुक्तानुष्ठानमाधानं स्यात् ? उच्यते; न तावन्नित्यदर्श-पूर्णमासादिविधि-प्रयुक्तानुष्ठानमाधानम्; आहवनीयस्योद्देश्यतयाऽनुपादेयत्वात्, क्रतुविधिप्रयुक्तानुष्ठेयत्वायोगात् । उपादेयमेव हि विधिरनुष्ठापयति; अन्यथा स्वर्गकामादीनामप्यनुष्ठेयत्वप्रसङ्गात् । तस्मादुत्तरकाम्यविधिप्रयुक्तमेवाधानस्यानुष्ठान-मिति । नहि विधिरिव कामोऽप्युपादेयमेवानुष्ठापयति; किन्तु यद्यदुद्देश्यमुपादेयं वा विना काम्यमानं न सिध्यति तत् सर्वं विधिः सहकारितयाऽनुष्ठापयति; एवं विधि-रागयोर्विभागदर्शनात् । यथा "सौवर्णे पीठे समुपविशेदि"ति विधौ तथाविधपीठाभावे विधिर्नानुष्ठापयति, रागस्तु तथाविधं पीठमुत्पाद्यापि तत्र निवेशयति; एवमाचार्यकरणकाम-नैवाध्ययनमाचार्यप्रेरणाद्वारेण माणवकेन निर्वर्तयत्यध्यापनसिद्ध्यर्थमिति ।

## तत्त्वदीपनम्

अध्यापनविधेः साधिकारत्वादध्ययनस्य च तत्प्रयुक्तानुष्ठानत्वादध्ययनविधिवाक्ये नाधिकारिकल्पनमित्युक्तम् । तत्र तत्प्रयुक्तानुष्ठानत्वमसिद्धमिति शङ्कते—**नन्वध्यापनेति** ॥ आवृत्तेरवहननविधिविषयतदङ्गताऽभावेऽपि तत्प्रयुक्ता-नुष्ठेयत्वं यथा, तद्वदिति शङ्कां निरस्यति—**स्वतन्त्रेति** ॥ दृष्टान्तासंप्रतिपत्तिशङ्कायामाह—**अयमाशय इति** ॥ किमाधान-विधिः स्वतन्त्रनित्यविधिः ? उत स्वतन्त्रकाम्यविधिः ? इति विकल्प्याद्यं निरस्यति—**तत्र न तावदिति** ॥ द्वितीयं निरस्यति—**अश्रूयमाणेति** ॥ "अग्नीनादधीते"त्यत्र यद्यप्यग्नीनां प्राधान्यमाधानस्य चोपसर्जनत्वं लक्ष्यते; तथाऽपि "सक्तून् जुहोती" तिवद् गुण-प्रधानवैपरीत्यकल्पनया स्वतन्त्रनित्यविधित्वम्, विश्वजिन्न्यायेन फलस्य कल्पनया स्वतन्त्रकाम्य-विधित्वं वेति शङ्कायामाह—**नचेति** । **नित्यकाम्याधिकारतेति** । नित्याधिकारता काम्याधिकारता चेत्यर्थः । तत्र हेतु-माह—**यदाहवनीय इति** । सक्तूनां भस्मीभूतत्वेनान्यत्र विनियोगासंभवाद् विभक्तिविपरिणामः, न तथाऽत्र; अग्नीनामन्यत्र विनियोगसंभवादित्यर्थः । आधानस्यान्यप्रयुक्तत्वमङ्गीकृत्य काम्यविधिप्रयुक्तिमाक्षिपति—**तर्ह्युत्तरेति** ॥ नित्यविधि-प्रयुक्तत्वासंभवात् काम्यविधिप्रयुक्तिः परिशिष्यत इत्याह—**उच्यत इति** । **अनुपादेयत्वादसाध्यत्वादित्यर्थः** ॥ अनुपादेय-स्यापि क्रतुविधिप्रयुक्तानुष्ठेयत्वं किं न स्यात् ? तत्राह—**उपादेयमिति** ॥ तदेव व्यतिरेकमुखेनाह—**अन्यथेति** ॥ अनुपादे-यस्य काम्यविधिप्रयुक्तानुष्ठानत्वं वा कथमिति शङ्कायामाह—**न हीति** । स्पष्टार्थो ग्रन्थः ॥

## ऋजुविवरणम्

**स्वतन्त्रेति** । अनारभ्याधीतत्वादव्यभिचरितक्रतुसम्बन्धाभावादनङ्गविधित्वादित्यर्थः । ननु आधानस्य स्वतन्त्रतया स्वविधिप्रयुक्तिरेव कस्मान्नाङ्गीक्रियते ? अन्यप्रयुक्तावपि सर्वोत्तरक्रतुप्रयुक्तिः कस्मान्नाङ्गीक्रियते ? सर्वेषामग्निसाध्यानां तेन विनाऽनुपपत्तेरित्याशङ्क्याभिप्रायमाह—**अयमाशयो ब्राह्मण इति** ॥ ननु हिरण्यधारणवत् स्वतन्त्रफलता स्यादिति, नेत्याह—**अश्रूयमाणेति** ॥ अनुपादेयफलप्रवृत्तिदर्शनात् फलकामनाया न विधिसाम्यमित्याह—**नहि विधिरिवेति** ॥ ननु अध्ययनविधिरधिकारशून्यो न प्रवर्तक इति चोद्यं परिहर्तव्यम्; तेनैव परप्रयुक्तिनिराकरणसिद्धेः,

### पञ्चपादिका

**तदयुक्तमित्यपरे ।**

### पञ्चपादिकाविवरणम्

अत्राध्ययनविधिरेव नित्याधिकारेण साधिकारोऽध्ययने प्रवर्तयतीति प्रतिपादयितुमध्यापनविधिप्रयुक्तिं निराकरोति—**तदयुक्तमित्यपर इति** । अयमाशयः—न तावदाचार्यत्वं स्वयमेव विधेयमिति युक्तम्; उपनयनाध्यापनभावार्थविषयत्वाद् विधेः । नापि विधिपदाभिधेयतया विधिरूपमाचार्यत्वम्; आत्मनेपदमात्राभिधेयत्वात् । नापि नैयोगिकफलमाचार्यत्वम्; "आचारान् ग्राहयती"ति प्रयोजककर्तृत्वनिबन्धनस्याचार्यत्वस्य लौकिकत्वात् । अथ माणवकविषयनयत्यर्थजन्यमाचार्यत्वमलौकिकमिति ? न "तत् यस्मात् स आचार्यः" इति स्मृतौ माणवकसंस्कारं प्रति हेतुकर्तृत्वस्यैव लौकिकस्याचार्यशब्दनिमित्तत्वावगमात्, सहपठितानां च संमाननादीनामलौकिकत्वाभावात् । आचार्यत्वस्यालौकिकत्वेऽप्युपनयननियोगफलं भविष्यति । तेनाध्यापनविधेः कुतः साधिकारता ? अथ "तमध्यापयीते"-

### तत्त्वदीपनम्

"तदयुक्तमित्यपरे" इत्यत्राध्यापनविधिप्रयुक्तत्वं निराक्रियते, तदनुपपन्नम्; निरधिकारत्वेनाध्ययनविधेरप्रवर्तकान्तरस्य चानङ्गीकरणादित्याशङ्क्याह—**अत्रेति** । **अत्र** पूर्वपक्षे प्राप्ते **प्रयुक्तिं निराकरोतीति** संबन्धः । आचार्यकरणविधेः साधिकारत्वेन प्रवर्तकत्वस्योपपादितत्वात् कथं तन्निरसनम् ? इत्याशङ्क्याह—**अयमाशय इति** ॥ आचार्यत्वस्य किं विधेयत्वेन साध्यत्वम् ? उत विधिरूपत्वात् ? अथवा फलत्वात् ? इति विकल्प्याद्यं प्रत्याह—**न तावदिति** ॥ द्वितीयं प्रत्याह—**नापि विधीति** । विधिपदाभिधेयो हि विधिः, आचार्यत्वं चात्मनेपदमात्राभिधेयमिति न विधिरित्यर्थः । तृतीयं दूषयति—**नापि नैयोगिकेति** ॥ किमाचार्यत्वमात्रं नियोगफलम् ? उत तद्विशेषः ? इति, नाद्य इत्याह—**आचारानिति** ॥ द्वितीयमनुवदति—**अथेति** ॥ तस्याप्यलौकिकत्वमसिद्धमित्याह—**न तदिति** ॥ इतोऽपि न तदलौकिकमित्याह—**सहपठितानामिति** ॥ हेतुकर्तृत्वमात्रस्य लौकिकत्वेऽपि साङ्गोपनयनाध्यापनकर्तृत्वलक्षणमाचार्यत्वमलौकिकमित्याशङ्क्याह—**आचार्यत्वस्येति** ॥ उपनयनस्याध्यापनाङ्गत्वादुपनयनफलमध्यापनफलं भविष्यतीति शङ्कते—**अथ तमध्या-**

### ऋजुविवरणम्

तद्विहायाध्यापनविधिप्रयुक्तिनिराकणं व्यर्थमित्याशङ्क्यावतारयति—**अत्राध्ययनविधिरिति** ॥ ननु साधिकारत्वेन चाचार्यकरणविधेः प्रवर्तकत्वमुक्तम्; साधिकारस्य प्रवर्तकत्वसंभवे निरधिकारस्याधिकारकल्पनया न प्रवर्तकत्वमित्यप्युक्तम्, अतः कथमाचार्यकरणविधिप्रयुक्तिरयुक्तेत्युच्यते ? इत्याशङ्क्य, भवदभिमताचार्यत्वमेव विधिविषयत्वेन नियोगरूपत्वेन तत्फलत्वेन वा निरूपयितुं न शक्यते, निरूपणे वा नाध्यापनविधिप्रयुक्तिरेवेति निश्चेतुं शक्यते; अध्ययनेऽपि साधिकारत्वेन विशेषाभावात्, इति दर्शयति—**अयमाशयो न तावदिति** ॥ ननु नेदमाचार्यत्वं विधिफलम्, किन्त्वन्यदेव; वैकल्पिकत्वादाचार्यत्वस्य । यद्वा, वेद एव व्युत्पत्तेर्मुख्यत्वम्, तत्र गौण इति चोदयति—**अथ माणवकेति** ॥ तत्रापि हेतुकर्तृत्वमेव नालौकिकमिति कथं गम्यते ? इत्याशङ्क्याह—**सहपठितानामिति** ॥ ननु विधिप्रत्ययश्रवणाद् नियोगः प्रतीयते, तस्य नियोज्यविशेषणाकाङ्क्षायां स्वर्गवद् नियोगसाध्यत्वेनैव नियोज्यविशेषणत्वमिति गम्यते; कारकफलस्य तदनुपपत्तेः, नचाचारग्राहकत्वमुपनयने हेतुकर्तृत्वं चाचार्यशब्दप्रवृत्तिनिमित्तम्; विकल्पापत्तेः, अतो मन्त्राद्यलौकिकसाधनान्तरविधानादलौकिकमाचार्यत्वम्, संमाननादीनान्तु तदभावाद भवतु लौकिकत्वम् । साहचर्यं च लिङ्गमात्रम्; प्राप्तिसापेक्षत्वात्, इत्यभ्युपगम्य दूषणमाह—**अलौकिकत्वेऽपीति** । असिद्धे ह्यन्यतोऽलौकिक आचार्यत्वे तद्विधिरेव न सिध्यति, यो नियोज्यमाकाङ्क्षेत्, अन्यतस्तु तस्मिन्नुत्पत्त्यपेक्षे जाते तदुत्पादकं विधीयते । यदि तु तद्विधिः, तदालौकिकत्वनिश्चयः स्यात्, इतरेतराश्रयश्च—विधितस्तदलौकिकत्वधीः, अलौकिकत्वे च तस्मिन् धीस्थे तदुपायविधिरिति । नचाध्यापनस्वरूपविधानेन दोषः परिह्रियते; वृत्त्यर्थाध्यापनविधितोऽध्ययनविध्याक्षेपाद्वा तत्प्राप्तेः । नच वैपरीत्यम्; प्रवृत्तप्रेरणात्मकणिजर्थस्याध्ययनविध्यधीनप्रवृत्तिसापेक्षत्वात्, अलौकिकत्वे चार्थवादगतस्याप्यबोधकत्वान्न तस्य नियोज्यविशेषणत्वम्, लौकिकस्य तु क्रियासाध्यतया न नियोज्यविशेषणता । नच दानवाक्यपर्यालोचनयाऽप्यलौकिकत्वम्; उपाध्यायवदुपपत्तेरित्यर्थः । ननु उपनयनस्य संस्कारकर्मणः फलापेक्षत्वात् संस्कृतस्य च विनियोगाकाङ्क्षत्वात्, 'तमि'त्यध्यापने विनियोगप्रतीतेः तस्य च फलाकाङ्क्षत्वात्, अध्यापनफलत्वेन सन्निहितं स्वीक्रियत इति चोदयति—**अथ तमध्याप-**

## पञ्चपादिकाविवरणम्

त्येकप्रयोगतावगमादुपनीयाध्यापयीतेति विधिः परिणम्यत इति ? तथाप्यङ्गफलस्यार्थवादस्य न प्रधानविध्यधिकारनिमित्तता कल्पनीया—'आचार्यकरणकामो माणवकमुपनीयाध्यापयेदि'ति । तदेवमध्ययनविधेरप्युपनयनप्रकरणस्यत्वाद्वाजसनेयिनां, सर्वस्मृतिषु चोपनीतोऽधीयीतेति प्रकरणप्रमाणात् साधिकारत्वसिद्धेः स्वविधिप्रयुक्तमेवाध्ययनमिति युक्तम् ।

यत्तु मानवं वचनमुक्तम्, तत् स्वयमेव वा मूलश्रुत्यनुमानेन वा नाचार्यकरणकामस्य किंचिद्विदधाति, किंतु यच्छब्दोपबन्धादुपनयनाध्यापनानुवादेन कर्तुराचार्यसंज्ञामेव विदधाति 'तमाचार्यं प्रचक्षते' इति वचनात् संज्ञायाश्च वक्ष्यमाणनमस्कारपूजादिविधानाङ्गत्वात् । तस्मादाचार्यकरणविधिप्रयुक्तिरयुक्ता—इति ।।

ननु एवमप्युभयत्राधिकारकल्पना न युक्ता; अन्यतरेणैवान्यतरस्य प्रयुक्तिसिद्धेः, अतः कस्यान्यतरस्य कल्प्यते ? इति वीक्षायां माणवकस्याप्रबुद्धत्वात् स्वाधिकारं प्रतिपद्यानुष्ठातुमशक्तत्वादध्यापनविधिरेव साधिकारोऽध्ययनं

## तत्त्वदीपनम्

**पयीतेति** ।। अङ्गेषु फलश्रुतेरर्थवादत्वादुपनयनस्याध्यापनाङ्गत्वात् तत्फलश्रवणमर्थवादः, ततो नाधिकारनिमित्तत्वमित्याह—**तथाऽपीति** ।। कल्पनाप्रकारमभिनयति—**आचार्येति** ।। तर्ह्यधिकारनिमित्ताभावादनध्ययनं प्राप्तमिति शङ्कामुपसंहारव्याजेन निरस्यति—**तदेवमिति** ।।

आचार्यत्वस्य चाध्यापनविधिफलत्वं स्मर्यत इति यदुक्तम्, तदनूद्य दूषयति—**यत्तु मानवमिति** । अनुपलब्धेरिति शेषः किंपरं तर्हि वचनम् ? इति पृच्छायामाह—**किंत्वित्यादिना** ।। तत्र हेतुमाह—**तमाचार्यमिति** ।। संज्ञाविधानमपि निष्फलमित्याशङ्क्याह—**संज्ञाया इति** ।।

अध्ययनस्य स्वविधिप्रयुक्त्ययुक्तेरन्यविधिप्रयुक्तिराश्रयणीयेति शङ्कते—**नन्विति** ।। किमध्ययनेऽध्यापने चाधिकारः कल्प्यः ? उतैकत्र ? नाद्यः ; गौरवप्रसङ्गादित्याह—**एवमपीति** । आचार्यत्वस्य फलत्वासंभवेऽपीत्यर्थः । तत्र हेतुमाह—**अन्यतरेणेति** ।। द्वितीयेऽपि किमध्ययनेऽधिकारकल्पनम् ? उताध्यापने ? इति विवेचनीयम्, तत्र नाद्यः

## ऋजुविवरणम्

**यीतेति** ।। **तथाऽप्यङ्गफलस्येति** । "द्रव्य-संस्कार-कर्मसु परार्थत्वात् फलश्रुतिरर्थवादः स्यात्" इति न्यायविरुद्धमङ्गफलस्य प्रधानविध्यधिकारनिमित्तत्वकल्पनमिति भावः । ननु सर्वथा निरधिकारत्वेनाननुष्ठानाद् वरमङ्गफलस्याप्यधिकारनिमित्तत्वकल्पनम्; विधिप्रत्ययाद् नियोगप्रतीतेः, नियोज्यविशेषणापेक्षायां "फलमात्रेयो निर्देशादि"त्युक्तन्यायसाम्यात् प्रतीतिस्वीकारः । तस्याङ्गविध्यनुपपत्तिगम्यत्वमप्यस्ति; फलश्रुतेरर्थवादत्वस्याप्रतीतनियोज्यविशेषणविषयत्वात् । हेत्वन्तरमपि साधिकारत्व उक्तमेव; तदनादरे चानुष्ठानाभावः, अध्ययने त्वधिकारनिमित्तस्य प्रतीतिमात्रमपि नास्तीत्युक्तमित्याशङ्क्याह—**तदेवमध्ययनेति** । उपनयनं प्रक्रम्य विहितत्वादित्यर्थः ।

ननु "उपनीय तु यः शिष्यं वेदमध्यापयेद् द्विजः ।" इत्यत्र साक्षादध्यापनसाध्यमेवाचार्यत्वं प्रतीयते, तेन नाङ्गफलस्य स्तुतिमात्रतया कीर्तितस्य प्रधानविध्यधिकारनिमित्तत्वकल्पनालक्षणो दोष इत्याशङ्क्याह—**यत्तु मानवमिति** । ननु 'यच्छब्दसंबन्धादुपनयनाध्यापनयोरनुवादः:' इत्यसंबद्धमुक्तम्; यच्छब्दोपबन्धेऽपि यदाग्नेयोऽष्टाकपालः" इत्यादिषु विधायकत्वदर्शनात् ? मैवम्; "तमि"ति द्वितीयाश्रुत्योपनीतस्य कर्मत्वावगमात्, तस्य च फलवत्कर्मावबोधोपयोग्यध्ययनकर्तृत्वेन निरूढकार्यत्वात् तत्संस्कारार्थमध्ययनं फलाकाङ्क्षमिति भावः । अवधृते तात्पर्ये यच्छब्दो न विधानपरिपन्थी, अत्र तु विधौ प्रसिद्धार्थविरोधात् पूर्वप्रसिद्धानुवादप्रतीतिः । किञ्च क्रियायोगिनो यच्छब्दस्य न विधानविरोधित्वम्, कर्तृसंबन्धस्य नु विधानविरोधित्वं अत्रापि 'यः पुरुषोऽध्यापयेदि'ति पुरुषसंबद्ध एव यच्छब्दः, तेन विधानविरोधित्वमेव । तदुक्तम्—"क्रियापदैकयोगित्वे यच्छब्दो न भजेद्विधिम् । कर्तृयुक्तः स एवान्यः प्रापितार्थानुवादकृत् ।।" इति ।। ननु संज्ञाकरणस्य निष्प्रयोजनत्वादगत्या विधित्वमेवाङ्गीकरणीयमित्याशङ्क्याह—**संज्ञायाश्चेति** ।।

"आचार्यस्य नियोगः" इति कथमुक्तम् ? आचार्यस्य प्रागसिद्धत्वात्, असदनुवादत्वप्रसङ्गाच्चेत्या-

## पञ्चपादिका

**कथम् ? अष्टवर्षं ब्राह्मणमुपनयीते"ति यद्ययमाचार्यस्य नियोगः, माणवको न नियुक्तो भवति। अनियुक्तस्य च स्वाध्यायाध्ययने प्रवृत्तिर्न सम्भवति।**

## पञ्चपादिकाविवरणम्

प्रयुङ्क्त इति चोदयति—**कथमिति** ॥ तत्रोत्तरमाह—**अष्टवर्षं ब्राह्मणमुनयीतेति** ॥ **यद्ययमाचार्यस्य नियोग इति**—आचार्यकरणकामस्य नियोग इत्यर्थः। अयमभिसन्धिः—आचार्यकरणविधिस्तावन्नाविहितमध्ययनं प्रयुङ्क्ते; अध्ययनानधिकारिणां तत्र प्रयोजनशून्यतयाऽऽचार्यगुणभावेन प्रवृत्त्ययोगात्। अथ विहितमेवाध्ययनं प्रयोजयति ? तत्र वक्तव्यम्—किं विधिः स्वरूपनिर्धारणोपाधित्वेनाधिकारिणं विषयं चापेक्षते ? न वेति ? स्वरूपोपाधितया विषयमपेक्षते, नाधिकारिणम्। प्रवर्तकत्वोपाधित्वादधिकारिण इति चेत् ? तर्ह्यस्यायं विधिरिति विहितस्याध्येतृविशेषस्यापरिज्ञानाद् यं कञ्चिदध्यापयेत्; तदाह—**माणवको न नियुक्तो भवतीति** ॥ अथ स्वरूपोपाधित्वेनैवाधिकारिणमपेक्षते विधिः, तर्हि सिद्धमध्ययनविधेः साधिकारत्वम्। तत्र प्रकरणादुपनीतोऽधिकारी सम्पद्यते। साधिकारत्वे चाध्ययनविधेः प्रयोजयितृत्वमपि सिध्यति। परप्रयुक्तानुष्ठानसम्भवे साधिकारोऽपि विधिर्न प्रयोजयतीति चेत् तत्राह—**अनियुक्तस्य च स्वाध्यायाध्ययन इति** ॥ **अनियुक्तस्येति** स्वाधिकारविधिनैवाप्रवर्तितस्येत्यर्थः। ननु एकस्मिन्नप्रवर्तमानेऽप्यन्यः प्रवर्तिष्यत इति स्रोतोरूपेणाध्यापनस्य सिद्धिरिति ? न, उपनेतृत्वस्यापि तदङ्गत्वात्। स्वात्मनैवोपननीतमध्यापयेत् नान्येनोपनीतम्; अन्यथाऽङ्गवैकल्यादधिकारानिष्पत्तेराचार्यत्वफलासिद्धेः। तर्ह्यन्यानप्युपनीयाध्यापयेत् ? तन्न; सर्वे च माणवका न प्रवर्तन्ते निष्प्रयोजन-

## तत्त्वदीपनम्

शोभत इत्याह—**अत इति**। उभयत्राधिकारकल्पनाऽयोगोऽतःशब्दार्थः। ऐकग्रन्थ्यशङ्कां निरस्यति—**तत्रोत्तरमिति** ॥ आचार्यत्वस्याध्यापनादुत्तरकालीनत्वादाचार्यस्य नियोग इति कथमुक्तम् ? तत्राह—**आचार्येति** ॥ आचार्यविधेर्माणवकप्रवृत्तेर्माणवको न नियुक्त इति कथम् ? तत्राह—**अयमभिसन्धिरिति** ॥ आचार्यकरणविधिरविहितमध्येयनं प्रवर्तयति ? उत विहितम् ? नाद्य इत्याह—**आचार्येति** ॥ **अध्ययनानधिकारिणामिति**—अध्ययननियोगेनाप्रेरितानामित्यर्थः। द्वितीयमनुवदति—**अथेति** ॥ विकल्पासहत्वान्नैतदित्याह—**तत्र वक्तव्यमिति**। **स्वरूपनिर्धारणोपाधित्वेनेति**—स्वरूपनिश्रयहेतुतयेत्यर्थः। यथा विषयमपेक्षते, तथाऽधिकारिणमपेक्षते ? उत न ? इति विमर्शार्थः। द्वितीयमनुवदति—**स्वरूपेति** ॥ **स्वरूपोपाधितयेति**—स्वरूपप्रतिपत्तिहेतुतयेत्यर्थः। अस्मिन् कल्पे न विहिताध्ययनसिद्धिरित्याह—**तर्ह्यस्येति** ॥ आद्यमनुवदति—**अथ स्वरूपेति** तर्ह्यस्मदभिलषितसिद्धिरित्याह—**तर्हीति** ॥ कथं तर्ह्यधिकारिविशेषसिद्धिः ? तत्राह—**तत्र प्रकरणादिति** ॥ साधिकारत्वप्रतिपादनफलमाह—**साधिकारत्व इति** ॥ अध्ययनविधेः साधिकारत्वमङ्गीकृत्य तस्य प्रवर्तकत्वं न संभवतीत्याह—**परप्रयुक्तेति** ॥ अध्यापनविधिप्रेरितत्वादनियुक्तस्येति कथमुक्तमिति ? अत्राह—**अनियुक्तस्येति** ॥ माणवकप्रवृत्तेरध्ययनविधिनिबन्धनत्वाभावे प्रवृत्तिहेत्वभावान्नाध्यापनसिद्धिरित्युक्तम् ? तत्किमेकस्याप्रवृत्तिः ? उत सर्वेषाम् ? इति विकल्प्याद्यमङ्गीकृत्य, द्वितीयं दूषयति—**नन्वेकस्मिन्निति** ॥ **प्रवर्तिष्यत इति**। अत्र कुतूहलादिनेति द्रष्टव्यम्। किमाचार्यो माणवकान्तरमुपनीयाध्यापयति ? उतैकमेव ? नान्त्य इत्याह—**नोपनेतृत्वस्येति** ॥ माणवकान्तरस्योपनीतत्वात् तदध्यापनं युक्तमित्याशङ्क्याह—**स्वात्मनेति** ॥ **उपनयीत तमध्यापयीतेति**। स्वोपनीताध्यापनप्रतिपत्तेरित्यर्थः। विपक्षे बाधकमाह—**अन्यथेति** ॥ नियोगोऽधिकारशब्दार्थः। आद्यमुत्थापयति—**तर्ह्यन्यानिति** ॥

## ऋजुविवरणम्

शङ्क्य व्याचष्टे—**आचार्यकरणकामस्येति** ॥ ननु "माणवको न नियुक्तो भवती"ति किमर्थमुक्तम् ? नहि माणवकस्य नियुक्तत्वं चोद्यवादिनो विवक्षितम्, नापि तदभावेनाध्यापनविधौ किञ्चिद् दूषणं भवति, अतो व्यर्थं इत्याशङ्क्याभिप्रायमाह—**अयमभिसन्धिराचार्येति** ॥ **विधिरिति**। प्रथमप्रतीतौ नियोगस्य विषयमात्रापेक्षा, पश्चाद्विषयसिद्ध्यधीनस्वात्मलाभार्थं प्रवर्तकस्य स्वसंबन्धिकार्यवोद्धुरभावे प्रवर्तकत्वाभावात् प्रवर्तकत्वाय तदपेक्षेति भावः। **परप्रयुक्तानुष्ठानेति**। यद्यपि साधिकारः ; तथाऽपि स्वयमधिकारबोधात् प्रवर्तितुं न शक्नोति, प्रवृत्तश्च साङ्गाध्ययनानन्तरमधिकारं स्वीयमवगच्छति; अतः साधिकारोऽपि न प्रयोजयति; प्रतीत्यभावादिति। "अनियुक्तस्ये"त्ययुक्तमुक्तम्; नियोगस्याङ्गीकृतत्वात्, प्रवृत्त्यभावमात्रेणैव चोद्यस्य कृतत्वात्, प्रयोजकान्तरस्यासंभवाच्चेत्याशङ्क्य व्याचष्टे—**स्वाधिकारविधिनैवेति** ॥ ननु

## पञ्चपादिका

**किंचान्यत्; आचार्यकरणविधिरनित्यः, "ब्राह्मणस्याधिकाः प्रवचन-याजन-प्रतिग्रहाः" इति वृत्त्यर्थोऽधिकारः; अतः स्वेच्छातः प्रवृत्तिः ।**

## पञ्चपादिकाविवरणम्

व्यापारे, इति नाध्यापनं सिध्यति । ननु बालकस्य कथं स्वाधिकारप्रतिपत्तिः ? संध्योपासनसमिदाहरणादिकर्तव्यताप्रतिपत्तिवदुपदेशसामर्थ्यादध्ययनकर्तव्यताप्रतिपत्तिरिति न विरोधः ।

किञ्च अनित्येन विधिना नित्यस्याध्ययनस्यानुष्ठाने तदुपरमे नित्यमध्ययनं सम्पादयितुं न शक्यत इत्याह—**किञ्चान्यद् आचार्यकरणविधिरिति** । अयमाशयः—काम्यमानमाचार्यत्वं न तावत् स्वयमेव पुरुषार्थः; परम्परया च सुखदुःखप्राप्तिनिवृत्त्योरेव पुरुषार्थत्वात् । तत्राचार्यत्वस्याध्यापनमात्रस्य वा प्रयोजनाकाङ्क्षायां दृष्टे सत्यदृष्टकल्पनानुपपत्तेर्द्रव्यार्जनोपायत्वेन "षण्णां तु कर्मणामस्य त्रीणि कर्माणि जीविका । याजनाध्यापने चैव विशुद्धाच्च प्रतिग्रहः" ॥ इति स्मरणात्, माणवकस्य चाध्ययनाङ्गत्वेन गुरुदक्षिणादिविधानात्, अङ्गिन्यध्ययनेऽनुष्ठापकस्याध्यापनविधेर्दक्षिणाशुश्रूषाद्यङ्गेष्वनुष्ठापकत्वाद् द्रव्यार्जनमेव प्रयोजनम् । तत्र प्रयोजनवत्तया काम्यत्वान्न नित्यवत् प्रयोक्तृत्वसिद्धिरिति ।

## तत्त्वदीपनम्

माणवकान्तरस्यापि एतत्समानयोगक्षेमत्वाद् न प्रवृत्तिरित्याह—**तन्नेति** । कुतूहलादिमात्रस्य प्रयोजकत्वे शूद्रादिपरिवर्जनं न सिध्येदित्यर्थः । माणवकस्याप्रबुद्धत्वाद् विधितोऽध्ययनमित्युक्तं स्मारयति—**ननु बालस्येति** (बालकस्येति) ॥ अप्रबुद्धत्वेऽपि पित्राद्युपदेशबलात् प्रवृत्तिर्युक्तेत्याह—**सन्ध्योपासनेति** ॥

"किं चान्यदि" त्यत्रानित्येनाध्यापनविधिना नित्यस्यप्रयोज्यत्वं नेत्युक्तम्; तत् कस्मात् ? इत्याशङ्क्याह—**किंचानित्येनेति** । अध्ययनस्याध्यापनविधिप्रयोज्यत्वे तस्यानित्यत्वाद् न नित्याध्ययनसिद्धिः, ततश्च प्रत्यवायः स्यादित्यर्थः । अध्यापनस्याचार्यत्वफलकत्वात् कथं वृत्त्यर्थत्वमुक्तम् ? तत्राह—**अयमाशय इति** ॥ आचार्यत्वं किं साक्षात्पुरुषार्थः ? उत परम्परया ? नाद्य इत्याह—**काम्यमानमिति** । सुखप्राप्त्यादिस्वरूपत्वाभावादित्यर्थः । पश्वादीनां पुरुषार्थत्वं दृष्टम्, इत्याशङ्क्य, तत्रापि न साक्षात् पुरुषार्थत्वमित्याह—**परम्परयेति** ॥ तर्ह्यत्रापि परम्परया पुरुषार्थत्वमित्याशङ्क्य, किमदृष्टद्वारा ? उत दृष्टद्वारा ? नाद्य इत्याह—**तत्राचार्यत्वस्येति** । **तत्र** सुखादे; पुरुषार्थत्वे सतीत्यर्थः । किं तत् दृष्टं फलम् ? इति वीक्षायामाह—**द्रव्येति** । द्रव्यार्जनोपायत्वेनाध्यापनस्य स्मरणाद् द्रव्यार्जनमेव प्रयोजनमिति संबन्धः । स्मरणमेवाह—**षण्णामिति** । यजनाध्ययन-दान-याजनाध्यापन-प्रतिग्रहलक्षणानामित्यर्थः । "त्रीणी"त्युक्तं विवृणोति—**याजनेति** ॥ अध्यापनस्य द्रव्यार्जनार्थत्वं न घटते—"भृतकाध्यापको यश्च भृतकाध्यापितश्च यः । तावुभौ नरकं यातश्छिन्नरज्जुर्घटो यथा ॥" इति द्रव्यार्थत्वप्रतिषेधादित्याशङ्क्याह—**माणवकस्येति** । शुश्रूषादिरादिशब्दार्थः । भवतु दक्षिणादेरध्ययनाङ्गत्वम्, तथाऽपि तदनुष्ठानं किंनिबन्धनमिति वीक्षायामाह—**अङ्गिनीति** ॥ अतः किमिति ? अत आह—**तत्रेति** ॥

## ऋजुविवरणम्

**बालस्येति** । अप्रबुद्धस्य स्वाधिकारज्ञानपूर्वकं प्रवृत्तिर्नास्त्येव ; विध्यर्थापरिज्ञानादिति भावः ॥

"किञ्चान्यदि"ति टीकाग्रन्थेनाचार्यकरणविधेरनित्यत्वं वृत्त्यर्थत्वेनोक्तम्, तदयुक्तम्; आचार्यत्वस्य साध्यत्वप्रतीतेर्वृत्त्यर्थत्वे तद्विरोधः ; एकस्य विधेरुभयार्थताऽयोगात्, स्वतः परतो वाऽऽचार्यबुभूषोरधिकारस्यावश्यंभावित्वात्, नित्यसमीहितफलत्वेन वा नित्यत्वम्, अर्थावबोधकामाधिकाराध्ययनविधिवदित्याशङ्क्याभिप्रायमाह—**अयमाशयः—काम्यमानमिति** ॥ ननु याजनस्य जीविकार्थत्वं युक्तम्; ऋत्विग्भ्यो दक्षिणादिविधानात् सर्वाङ्गानुष्ठापकत्वत्, द्रव्यार्जनं निश्चित्य हि तदर्थिनां याजने प्रवृत्तिः, अत्र तु भृतकाध्यापननिषेधात् प्रकारान्तरेण द्रव्यार्जनाभावात् कथं तादर्थ्यमध्यापनस्य निश्चीयते ? इत्याशङ्क्याह—**माणवकस्येति** ॥ ननु उपनयनसंस्कारस्य नित्यत्वं कथमध्ययननित्यत्व-

## पञ्चपादिका

**उपनयनाख्यस्तु संस्कारो नित्यः, अकरणे दोषश्रवणात्—"अत ऊर्ध्वं त्रयोऽप्येते यथाकालमसंस्कृताः। सावित्रीपतिता व्रात्या भवन्त्यार्यविगर्हिताः ॥ नैतैरपूतैर्विधिवदापद्यपि हि कर्हिचित्। ब्राह्मान् यौनांश्च संबन्धानाचरेद् ब्राह्मणः क्वचिदि"ति ॥ संस्कारश्च स्वाध्यायाध्ययनार्थः। एवं च स्वाध्यायाध्ययनमपि नित्यम्। तथा च**

## पञ्चपादिकाविवरणम्

उपगमनाध्ययने तर्ह्यनित्ये इति ? नेत्याह—**उपनयनाख्यस्तु संस्कारो नित्य इति** ॥ ननु प्रायश्चित्तस्याप्यकरणे दोषः श्रूयते—"अतीते चिरकाले तु द्विगुणं व्रतमर्हती"ति, तत्र कथं प्रत्यवायश्रवणादुपनयनस्य नित्यतेति ? उच्यते; न प्रायश्चित्ताकरणनिमित्तदोषनिरासाय द्विगुणं व्रतमुच्यते, किन्तु प्रायश्चित्तेन निराकर्तव्यस्य पूर्वदोषस्यैवातीतचिरकाले द्विगुणव्रतापेक्षयैव निरास इत्युच्यते; अन्यथा प्रायश्चित्तानवस्थाप्रसङ्गात्। ननु उपनयनसंस्कारस्य नित्यत्वेऽप्यध्ययनस्य कथं नित्यतासिद्धिरिति ? तत्राह—**संस्कारश्चेति** ॥ अङ्ग्युपाधिविहितत्वादङ्गस्योपहिताङ्गनित्यता स्वोपाधेरध्ययनस्यापि नित्यत्वं कल्पयति इति ॥

नन्वध्ययनमनारभ्याधीयमानमुपनयनफलं कथमध्ययनाङ्गं स्यात् ? न चोपनयनसंस्कारविधिमात्रमेवानुपपत्त्या शेषित्वेनाध्ययनं कल्पयति, श्रुत्यादिविशेषसम्बन्धनिमित्तप्रमाणाभावेऽध्ययनविशेषेण सम्बन्धाऽसिद्धेः। यथा "हिरण्यं भार्यम्"इति विधिः प्रतीतितो हिरण्यसंस्कारार्थोऽपि, श्रुत्यादिविशेषसम्बन्धप्रमाणाभावात् संस्कार्यहिरण्यपदार्थसामर्थ्यात् क्रतुसम्बन्धे सर्वक्रतुसम्बन्धप्रसंगाद् एकस्य संस्कारस्य सर्वक्रतूपकारित्वानुपपत्तेश्च अन्याङ्गतामन-

## तत्त्वदीपनम्

अध्यापनविधिरध्ययनं न नित्यवत् प्रयोजयतीत्युक्तम्, तत्रेष्टापत्तिमाशङ्कते—**उपगमनेति** ॥ अकरणे प्रत्यवायश्रवणाद् नानित्यत्वमित्याह—**नेत्याहेति** ॥ प्रत्यवायश्रवणं न नित्यतां साधयति; व्यभिचारादिति शङ्कते—**ननु प्रायश्चित्तस्येति** ॥ स्मृत्यर्थानभिज्ञो भवानित्याह—**उच्यत इति** ॥ विपक्षे बाधकमाह—**अन्यथेति**। प्रायश्चित्ताकरणनिमित्तदोषनिर्हरणार्थं प्रायश्चित्तान्तरं चेत्, तदा तदकरणदोषनिवर्हणार्थं प्रायश्चित्तान्तरम्, एवं तत्र तत्रापीति प्रायश्चित्तमालेत्यर्थः ॥ अध्ययननित्यतासाधकाभावात् न तस्य नित्यत्वमिति शङ्कते—**ननूपनयनेति** ॥ संस्कारनित्यत्वमात्रेण कथमध्ययननित्यता ? न ह्यन्यनित्यत्वेऽन्यनित्यत्वमित्याशङ्क्याह—**अङ्गीति**। अङ्गस्याङ्गितन्त्रत्वादङ्गनित्यत्वमङ्गिनोऽपि नित्यत्वमाक्षिपतीत्यर्थः ॥

उपनयनस्याङ्गत्वमसिद्धमिति शङ्कते—**नन्वध्ययनमिति**। "यद्धि प्रकरणे यस्य तत्तदङ्गं प्रचक्षत"इति न्यायाद्, उपनयनस्य अध्ययनं प्रकृत्यानाम्नानान्न तदङ्गत्वमित्यर्थः ॥ उपनयनसंस्कारविध्यन्यथानुपपत्त्या उपनयनस्य अध्ययनाङ्गत्वम्, "व्रीहीन् प्रोक्षति"इत्यादौ संस्कारकर्मणामन्यशेषत्वदर्शनादित्याशङ्क्याह—**न चेति**। संस्कारविध्यनुपपत्त्या उपनयस्य अङ्गिमात्रसम्बन्धः सिद्धयति, नाङ्गिविशेषसम्बन्धः, तस्य श्रुत्याद्यायत्तत्यात्। न च श्रुत्याद्यन्यतममस्तीत्यर्थः ॥ तर्हि संस्कारविधेः का गतिः ? इत्याशङ्क्याह—**यथेति** ॥ तर्हि प्रतीत्यनुरोधेन संस्कारार्थत्वमेव किं न स्यात् ? तत्राह—**श्रुत्यादीति**। श्रुत्यादिलक्षणं यदिदं विशेषसम्बन्धप्रमाणम्, तस्याभावादित्यर्थः ॥ जुहूद्वारा पर्णतायाः क्रतुसम्बन्धवद् हिरण्यद्वारा क्रत्वर्थहिरण्यसंस्कारस्य क्रतुसम्बन्धः किं न स्यात् ? तत्राह—**संस्कार्येति** ॥ अस्तु सर्वक्रतु-

## ऋजुविवरणम्

साधकम् ? व्यधिकरणत्वात्, नह्यन्यस्य नित्यत्वेऽन्यनित्यता, नाप्युपगमनस्य तादर्थ्येऽध्ययननित्यतेत्याशङ्क्याह—**अङ्ग्युपाधिविहितत्वादिति** ॥

ननूपनयनस्य संस्कारकर्मत्वात् संस्कारस्य च भूतभाव्युपयोगयोरन्यतराकाङ्क्षत्वाद् अत्र भूतोपयोगाभावाद् भाव्युपयोगेन भवितव्यम्, तथा सति माणवकस्य शेषित्वानिर्वाहात् संस्कारविध्यन्यथानुपपत्त्या तद्द्वाराऽध्ययनशेषत्वं प्रतीयत इत्याशङ्क्याह—**नचोपनयनसंस्कारेति** ॥ ननूपनयनस्य द्वितीयया संस्कारकत्वं प्रतीयते, तस्य च अन्यार्थत्वनियामकत्वाद्यभावेऽपि सामान्यसम्बन्धस्य विशेषनिष्ठत्वादध्ययनसम्बन्धः। यद्वा, पर्णताया जुहूमुखेन क्रतुसम्बन्धवत् संस्कार्यमाणवकद्वारेणैव अध्ययनसम्बन्धोऽङ्गीकर्तव्यः, न तु श्रुत्याद्यभावेन शेषत्वं निराकर्तुं युक्तं, तदभावे संस्कारत्वाभावात् विधिवैयर्थ्यप्रसङ्गाद्; इत्याशङ्क्याह—**यथा हिरण्यमिति**। अव्यभिचरितक्रतुसम्बन्धाभावादित्यर्थः ॥ ननु

**पञ्चपादिका**

**निन्दाश्रवणम्—"अश्रोत्रिया अननुवाक्या अनग्नयः शूद्रसधर्माणो भवन्ती"ति। एवं चेत् कथं नित्यमनित्येन प्रयुज्यते ? इति वाच्यम्।**

**पञ्चपादिकाविवरणम्**

श्नुवानः, संस्कारकर्मत्वं परित्यज्य अभ्युदयफलः स्वतन्त्रो विधिरभ्युपगतः; एवम् उपनयनविधिरपि, श्रुत्यादिप्रमाणविरहात् संस्कार्यमाणवकसामर्थ्यात् क्रतुसम्बन्धे सर्वक्रतुसम्बन्धप्रसङ्गाद् अन्याङ्गतामनश्नुवानः संस्कारकर्मत्वं परित्यज्य स्वतन्त्र एवाभ्युदयफलः स्यात्। कर्मस्वरूपविधिर्हि सर्वः स्वभावसामर्थ्यादेव अङ्गाङ्गिभावं सामान्येन प्रमिमाणः श्रुत्यादिसहकृत एव विशेषसम्बन्धं प्रमिमीते, इति न उपनयनस्य संस्कारकर्मता सिद्ध्यतीति॥

अत्रोच्यते—अध्ययनविधिरेव श्रुत्यादिप्रमाणानपेक्षतया चातुर्थिकेन प्रमाणेन उपगमनमात्मीयाङ्गत्वेन स्वीकरोति, 'आचार्याधीनो वेदमधीष्व' इत्यादिनियमविधानात् लिखितपाठादिप्रतिषेधे सति आचार्योपगमनमन्तरेण माणवकाध्ययननिर्वृत्त्ययोगात्। ननु दृष्टमाचार्योपगमनमध्ययनविधिसामर्थ्यादुपादीयताम्, अदृष्टस्तूपनयनसंस्कारः कथमङ्गतयोपादीयत इति ? उच्यते, आचार्योपगमनविधिरेव नानाविधेतिकर्तव्यताकलापानुगृहीतोऽदृष्टं संस्कारमुत्पादयति। स च विधिर्विधिप्रयुक्तप्रयोजनमीक्षमाणो दृष्टोपगमनद्वारेणाध्ययनविध्युपकारे सम्भवति, नादृष्टं कल्पयति। दृष्टे सत्यदृष्टकल्पनानुपपत्तेः; दृष्टफलातिशयेऽदृष्टे संभवति, स्वतन्त्रादृष्टकल्पनानुपपत्तेरित्यर्थः। तदेवमध्ययनविधिसामर्थ्यादुपादीयमाने सत्याचार्योपगमने तदाश्रितोपनयनविधिजन्यसंस्कारस्यापि तद्द्वारेणाध्ययनविधिसम्बन्धस्योपनयनविधिसामर्थ्यादेव सिद्धेरुभयविध्युपादानसामर्थ्यादध्ययनाङ्गमुपनयनमिति सिद्धम्।

ननु उपनयनस्य संस्कारकर्मतायां संस्कारविधेः प्रयोजनाकाङ्क्षा, ततश्चाध्ययनविध्याक्षिप्ताचार्योपगमनदृष्टद्वारेणोपनयनविधिरध्ययनाङ्गतामात्मनः सामर्थ्यात् प्रमिमीते। नचोपनयनस्य संस्कारकर्मत्वे प्रमाणमिति ?

**तत्त्वदीपनम्**

सम्बन्ध इति ? तत्राह—**एकस्येति**। प्रमाणाभावादित्यर्थः॥ दार्ष्टान्तिकमाह—**एवमिति**। उपनयनविध्यनुपपत्त्याऽन्याङ्गत्वासिद्धेः किं श्रुत्यादिविशेषणेन ? इत्याह—**कर्मेति**॥

उपनयनस्याङ्गत्वे श्रुत्याद्यन्यतमाभावेपि उपादानप्रमाणाद् उपनयनस्य अध्ययनाङ्गत्वं सिद्ध्यतीति समाधत्ते—**अत्रोच्यत इति**॥ **चातुर्थिकेनेति**—विध्यनुपपत्तिलक्षणोपादानेन चतुर्थाध्यायनिर्णीतेनेत्यर्थः॥ उपनयनमन्तरेण लिखितपाठादिनापि अध्ययनसंभवात् कथमुपनयनाक्षेपः ? इति शङ्कायामाह—**आचार्येति**॥ दृष्टस्योपगमनस्याध्ययनाङ्गत्वेऽप्यदृष्टसंस्कारस्य न तदङ्गत्वम्, तत्साधकाभावादिति शङ्कते—**ननु दृष्टमिति**॥ साधकाभावोऽसिद्ध इत्याह—**उच्यत इति**॥ किमदृष्टः संस्कार एव नास्तीत्यभिप्रायः ? उत तमङ्गीकृत्याङ्गत्वाक्षेपः ? इति विकल्प्याद्यं प्रत्याह—**आचार्येति**॥ द्वितीयं प्रत्याह—**स चेति**॥ विधेरदृष्टं फलमित्युक्तम्, ततः कथं तत्प्रतिक्षेपः ? इत्याशङ्क्याह—**दृष्टफलेति**। दृष्टफलसंभवोऽतिशयो दृष्टफलातिशयः, तस्मिन्नित्यर्थः। कोऽसावतिशयः ? इति वीक्षायामुक्तम्—**अदृष्ट इति**। न दृष्टोऽन्वयादिना, किं तु शास्त्रेणैवेत्यर्थः। उक्तमर्थं स्पष्टीकुर्वन्नुपसंहरति—**तदेवमिति**॥ "तदाश्रिते"-त्यत्रोपगमनं **तच्छब्दार्थः**। तदाश्रितश्चासावुपनयनविधिजन्यसंस्कारश्चेति तथोक्तस्येति विग्रहः। **तद्द्वारेणेति**—उपगमनद्वारेणेत्यर्थः। **उभयेति**—उभयविध्यनुपपत्तिबलादित्यर्थः॥

उपनयनस्य संस्कारकर्मत्वमसिद्धम्, येनाङ्गत्वं सिध्येदिति शङ्कते—**ननूपनयनस्येति**॥ नच—"व्रीहीन् प्रोक्षती"तिवद् 'माणवकमि'ति द्वितीयया संस्कार्यत्वं प्रथेतेत्यपि—शङ्क्यम्; प्रयोजकव्यापारे विधिं व्युदस्य 'माणवक

**ऋजुविवरणम्**

कर्मविधिरेवाङ्गिभूतं अङ्गभूतं वा कर्म प्रतिपादयन् अङ्गाङ्गिभावे प्रमाणमिति ? नेत्याह—**कर्मस्वरूपविधिर्हीति**॥

**चातुर्थिकेनेति**। चतुर्थाध्यायव्युत्पाद्येन विध्यनुपपत्तिरूपेण प्रमाणेन उपगमनमङ्गत्वेन स्वीकरोति, आचार्यस्य उपगमनमन्तरेण अध्ययनायोगादित्यर्थः॥ ननु नाध्ययनस्योपगमनमन्तरेणानुपपत्तिः, लिखितपाठादिनाप्यध्ययनसंभवाद्—इत्याशङ्क्याह—**लिखितपाठादीति**॥ ननु 'दृष्टे सती'ति न्यायस्यायं विषयो न भवति, संस्कारनिबन्धनस्य अध्ययनोपकारस्याप्यदृष्टरूपत्वादित्याशङ्क्य न्यायस्वरूपं दर्शयति—**दृष्टफलातिशय इति**॥

**पञ्चपादिकाविवरणम्**

अत्रोच्यते—परस्परोपादानसामर्थ्यादिवोपनयनाध्ययनयोरङ्गाङ्गिभावे सिद्धे किमुपनयनं प्रोक्षणादिवत् संस्कारकर्मतयाऽङ्गम् ? किं वा प्रयाजादिवदध्ययनफलोपकार्यङ्गम् ? इति विशये, संस्कारकर्मतयाऽङ्गत्वमुपादीयते; अङ्गिस्वरूपोपकारलाभात् सन्निपत्याङ्गत्वात्, फलोपकार्यङ्गानां विप्रकृष्टतयाऽङ्गत्वात्, विप्रकर्षात् सन्निकर्षग्रहणस्य युक्तत्वात्। अतो माणवकसंस्कारतयोपनयनमध्ययनस्वरूपोपकार्यङ्गमुभयविध्युपादानसामर्थ्यात् सिद्धम्।

किंच "अष्टवर्षो ब्राह्मण उपगच्छेत्" "सोऽधीयीते"ति वाक्यविपरिणामस्य वक्ष्यमाणत्वात् तच्छब्दश्रुतिरेवोपनयनसंस्कृतं माणवकमादाय स्वाध्यायाध्ययने नियुङ्क्ते, इति श्रुत्यनुगृहीत एवोपनयनविधिरध्ययनाङ्गतामात्मनः प्रतिपादयति। तच्छब्देन संस्कारो न परामृश्यते, किंतु माणवक एवेति न युक्तं वक्तुम्; अनन्तरप्रकृतत्वात् संस्कारस्य, उपनयनाध्ययनयोः परस्परसाकाङ्क्षत्वस्य दर्शितत्वात्, आकाङ्क्षितसमर्पणत्वाच्च श्रुतेः, अविभक्तेरपि प्रातिपदिकस्यान्विताभिधायितया सम्बन्धप्रतिपादकत्वात्। तस्मात् श्रुत्यनुगृहीत एव विधिरङ्गाङ्गिभावं प्रमिमीत इति। किञ्च वाजसनेयिनां सर्वस्मृत्यनुमितश्रुतिषु चोपनयनं प्रकृत्याध्ययनविधानात् फलवदध्ययनप्रकरणानुगृहीत एवोपनयनविधिरध्ययनाङ्गतामात्मनः प्रतिपादयति। तस्माद् युक्तम्—'संस्कारश्च स्वाध्यायाध्ययनार्थं' इति।

**तत्त्वदीपनम्**

उपगच्छेदि'ति माणवकव्यापारे विध्यङ्गीकरणादित्यर्थः प्रमाणाभावोऽसिद्ध इत्याह—**अत्रोच्यत इति**॥ संस्कारकर्मत्वं दर्शयितुमुपनयनाध्ययनयोरङ्गाङ्गितायां न विमतिः कार्येत्याह—**परस्परेति**। परस्परापेक्षाख्योपादानप्रमाणबलादित्यर्थः। तथाऽपि कथं संस्कारकर्मत्वम् ? तत्राह—**किमुपनयनमिति**॥ तत्र हेतुमाह—**नाङ्गीति**॥ तदुपपादयति—**संनिपत्येति**। यत् समवायिन्युत्पत्त्याद्यन्यतमफलं कुर्वत् प्रधानस्योपकरोति, तत् संनिपत्योपकारकम्, ततश्चोपनयनस्य संस्कारकर्मत्वमङ्गिस्वरूपोपकारकत्वमित्यर्थः। फलोपकारकाङ्गत्वेऽपि किं बाधकम् ? तत्राह—**फलेति**॥ भवतु विप्रकृष्टतयाऽङ्गत्वम्, ततः किमिति ? अत आह—**विप्रकृष्टादिति**। संनिकर्षविप्रकर्षयोः संनिकर्षग्रहणं युक्तमित्यर्थः। फलितमाह—**अत इति**। येन माणवकव्यापारे विधिराश्रीयते, तेनाप्याचार्यव्यापारकर्मत्वमपरित्यज्याचार्येण नीयमानः सन्नुपगच्छेदिति प्रयोजकव्यापारानुवादेन प्रधानकर्तृव्यापारे विध्यङ्गीकरणाद् माणवकस्य संस्कार्यत्वमित्यर्थः।

न केवलमनुपपत्त्योपनयनस्याध्ययनाङ्गत्वम्, किं तु श्रुतितोऽपीत्याह—**किं चाष्टवर्ष इति**॥ "सोऽधीयीते"त्यत्र तच्छब्दश्रुत्या माणवकः परामृश्यते, न संस्कारः, येनाध्ययनाङ्गत्वं सिध्येदित्याशङ्क्याह—**तच्छब्देनेति**। केवलमाणवकस्य व्यवहितत्वात् संस्कृतस्य चाव्यवहितत्वात् तद्ग्रहणमित्यर्थः। तथाऽप्याकाङ्क्षाऽभावान्न संस्कारस्य तच्छब्देन ग्रहणमित्याशङ्क्याह—**उपनयनेति**॥ प्रकृति-प्रत्ययार्थयोः प्रकृत्यर्थस्तावत्प्रत्ययार्थोपसर्जनम्; ततश्च संस्कृतस्य प्रकृत्यर्थत्वाद् न "अधीयीते"त्यनेन संबंध इत्याशङ्क्याह—**अविभक्तेरपीति**। विभक्तिप्रत्ययवत् तद्व्यतिरिक्तप्रातिपादिकस्यापि 'अधीयीते'ति प्रधानविध्यन्विताभिधायित्वं वक्तव्यम्, अन्यथा प्रयोगस्यैवानुपपत्तिरित्यर्थः। प्रकरणपर्यालोचनायामप्युपनयनस्याध्ययनाङ्गत्वमित्याह—**किंचेति**॥ उपनयनम् प्रकृत्याध्ययनसमाम्नानाद् अध्ययनस्योपनयनाङ्गत्वम् प्राप्तम्, इत्याशङ्क्याह—**फलवदिति**। न प्रकृतमात्रं प्रकरणम्, किंतु फलवतः। ततश्च "फलवत्संनिधावफलं तदङ्गमि"ति न्यायान्निष्फलस्योपनयनस्य फलवदध्ययनशेषत्वमित्यर्थः॥

**ऋजुविवरणम्**

ननु प्रकृतत्वेऽपि माणवकस्यैव तच्छ्रुत्या निर्देशः; अध्ययनेनापेक्षितत्वात्, न संस्कारस्य; अनपेक्षितत्वात्, इत्याशङ्क्याह **उपनयनाध्ययनयोरिति**॥

ननु शेषत्वादिबोधकद्वितीयादिश्रुत्यभावे कथं तच्छ्रुतिमात्रेण शेष-शेषित्वम् ? इत्याशङ्क्याह—**अविभक्तेरपीति**॥ ननु उपनयनं प्रकृत्याध्ययनस्य विहितत्वेऽध्ययनस्य तत्प्रकरणपठितत्वेन तदङ्गत्वं स्यात्, नतूपनयनस्याध्ययनाङ्गत्वमित्याशङ्क्याह—**फलवदध्ययनप्रकरणेति**। फलवतः प्रकरणम्, ननु प्रक्रममात्रम्; "फलवत्सन्निधावफलं तदङ्गमिति"न्यायादिति भावः॥

## पञ्चपादिका

**ननु कथमाचार्यकरणविधिरनित्यः; यावता वृत्त्यर्थो हि सः। नहि कश्चिद्विना धनेन जीविष्यति। तथा चोक्तम्— "जीविष्यति विना धनेनेत्यनुपपन्नमि"ति। अतः सर्वेषां सर्वदा समीहितफलः सन् कथमनित्यः स्यात्? भवेदेवं नित्यता फलवशेन, न शब्दात्। तथाहि—फलस्य नित्यसमीहितत्वादवश्यकर्तव्यता वास्तवी। तत्रासति शब्दव्यापार इच्छातः कर्तव्यताप्रतिपत्तिः स्यात्, न कर्तव्यताप्रतिपत्तेरिच्छा। शाब्द्यां हि नित्यकर्तव्यताप्रतिपत्तौ शब्दस्य सर्वदा सर्वान् प्रत्येक-**

## पञ्चपादिकाविवरणम्

ननु काम्यत्वेऽप्याचार्यकरणविधिर्नित्यसमीहितफलत्वान्नित्य एव। ततश्च न नित्यानित्यसंयोगविरोध इति चोदयति—**ननु कथमाचार्यकरणेत्यादिना**॥ फलस्य नित्यसमीहितत्वमङ्गीकृत्य परिहरति—**भवेदेवं नित्यता फलवशेन, न शब्दादिति**॥ ननु फलसामर्थ्याद्वा शब्दसामर्थ्याद्वाऽनुष्ठेयं नित्यकर्तव्यं चेत्, किं प्रमाणविशेषेण हीयत इति? तत्राह—**तथाहि फलस्य नित्यसमीहितत्वादिति**। **वास्तवी** फलवस्तुसामर्थ्यनिबन्धनेत्यर्थः। ननु अध्यापने क्वचित् फलसाधनकामनाधीना कर्तव्यताप्रतिपत्तिः, अन्यत्र तु शाब्दकर्तव्यताप्रतिपत्त्यधीनाऽध्यापने फलसाधनेच्छा, किमत्राध्यापनस्य नित्यकर्तव्यताप्रतिपत्तेरायातमिति? तत्राह—**शाब्द्यां हि नित्यकर्तव्यताप्रतिपत्ताविति**॥ अस्त्यत्र विशेषः कथम्?

## तत्त्वदीपनम्

आचार्यकरणविधेर्नित्यसमीहितफलत्वेऽपि न नित्यत्वम्, अकरणे प्रत्यवायाश्रवणात्, इतरथा काम्यत्वव्याघातात्, ततश्चासङ्गत उत्तरो ग्रन्थ इत्याशङ्क्याह—**ननु काम्यत्व इति**। अध्यापनविधेराचार्यफलत्वात् काम्यत्वं तावदेष्टव्यम्। नच—एवं सत्यनित्येन तेन नित्यस्याध्ययनस्य न प्रयोज्यत्वमिति—वक्तव्यम्; आचार्यत्वस्यापि धनार्जनद्वारा पुमर्थत्वम्, धनं च समीहितमिति नित्यानुष्ठेयत्वादध्यापनस्य। ततो न नित्यानित्यसंयोगविरोध इत्यर्थः। फलस्यापि नित्यसमहितत्वासिद्धेः, "भवेदेवमि"त्येतदसङ्गतमित्याशङ्क्याह—**फलस्येति**॥ अध्यापनस्य नित्यत्वमङ्गीकृतं चेत्, न तर्हि विवाद इति शङ्कते—**ननु फलेति**॥ **किं प्रमाणविशेषेणेति**। फलसामर्थ्यलक्षणविशेषानुरोधेनापि नित्यकर्तव्यतासिद्धेर्न काचित् क्षतिः। तथा चावश्यकर्तव्यताप्रतिपादकशब्दप्रमाणाभावो निष्फल इत्यर्थः॥ अवश्यकर्तव्यतायाः परमार्थत्वोपगमो निष्फलः; तत्र विमत्यभावादित्याशङ्क्याह—**वास्तवीति**॥ इच्छातः कर्तव्यताप्रतिपत्तावपि नानिष्टं किंचिदापादितं स्यादिति शङ्कते—**नन्वध्यापन इति**॥ **क्वचित्** काम्यत्वपक्षे। **अन्यत्र** नित्यत्वपक्षे। अध्यापनस्य नित्यत्वे काम्यत्वे च विशेषस्यानभिहितत्वात् समाधेराभासत्वम्। नचैकत्रेच्छाया नित्यत्वमन्यत्रानित्यत्वमिति वैषम्यम्; शब्दान्नित्यकर्तव्यताप्रतिपत्तावप्यनधिकृतानामिच्छानुदयादित्याशङ्क्य, टीकासूचितं विशेषमाह—**अस्तीति**॥ आकाङ्क्षापूर्वकं विशेषं दर्शयितुमाकाङ्क्षामाह—**कथमिति**॥ "यावज्जीवमग्निहोत्रं जुहुयादि"ति जीवनोपाधौ सायंप्रातःकाल-

## ऋजुविवरणम्

"ननु कथमाचार्यकरणविधिरि"त्यनेन नित्यसमीहितफलत्वेन नित्यत्वमुक्तम्, तद्व्याहतम्; आचार्यकरणकामस्याधिकाराङ्गीकारात्, तदभावे वृत्त्यर्थत्वस्याप्यभावात्; काम्यत्वाङ्गीकारे पूर्वोक्तदूषणस्य परिहर्तुमशक्यत्वाद् व्यर्थमेतच्चोद्यमित्याशङ्क्यावतारयति—**ननुकाम्यत्वेऽपीति**॥ "भवेदेवमि"त्यसंबद्धम्; फलस्य नित्यसमीहितत्वस्य व्यभिचारित्वेन वक्तुमशक्यत्वादित्याशङ्क्यावतारयति—**फलस्य नित्येति**। **ननु फलसामर्थ्यादिति**। फलप्रयुक्तमध्यापनं भवतु, नित्यविधिप्रयुक्तं वा, उभयथाऽपि नित्यवदध्यापने प्रयुक्तिः संभवत्येव, तथाऽध्ययनस्यापि। **किं प्रमाणविशेषेण हीयत इति**। फलस्य प्रवर्तकत्वस्वीकारेण शब्दविशेषस्वकारेण प्रमाणविशेषाभावेन वा कस्यार्थस्य हानिर्भवतीत्यर्थः। 'वास्तवी'ति परमार्था, इत्युक्तमिव प्रतिभाति तथा सत्यविशेष एव, तदर्थं व्याचष्टे—**फलवस्तुसामर्थ्येति**॥ ननु अध्यापनविधिप्रयुक्तिपक्षे तत्फलप्रयुक्तिपक्षे चाध्यापनस्य नित्यकर्तव्यत्वेन न कश्चिद्विशेषः, उभयत्रेच्छाया अविशेषेण सर्वान् प्रति संभव उक्तः, ननु कर्तव्यतायाः; अन्यतरस्मिन् पक्षे विशेषः उक्तः। अतः पृष्टस्य विशेषस्यानुक्तत्वाद् असंबद्धत्वमिति शङ्कानिवृत्त्यर्थमाह—**अस्त्यत्र विशेष इति**॥ "औचित्यादिभावेऽपीच्छायाः" इति, अवतरणिकायामर्था-

### पञ्चपादिका

**रूपत्वादिच्छाऽपि तद्वशवर्तिनो तथैव स्यात्; औचित्यादिभावेऽपि कस्यचित् कथंचित् क्वचित् कदाचिदिच्छायाः। प्रमाणतस्तावन्नित्यः। तेन नित्येन तथाविधमेव प्रयुज्यते, इति न नित्यानित्यसंयोगविरोधः फलवशात्तु तत्कर्तव्यताप्रतिपत्तौ यद्यपि नित्याभिलषितं फलम्, तथाऽप्युपायान्तरादपि तत्सिद्धेः, तदेकोपायत्वेऽप्यालस्यादायासासहिष्णुतया वा कामस्य कुण्ठीभावे न कर्तव्यतायाः प्रतिपत्तिः; इत्यनित्यत्वे सति न तेन नित्यस्य प्रयोज्यत्वमुपपद्यते ॥**

### पञ्चपादिकाविवरणम्

अध्यापनविधिर्हि शब्दान्नित्यतया प्रतिपन्नो विशेषेण स्वाधिकारोपाधौ सर्वदा सर्वान् प्रत्यनुष्ठेयेच्छामुत्पाद्य प्रवर्तयति, प्रामाणिककर्तव्यताप्रतिपत्तेः स्वोपाधौ संकोचाभावात्; इच्छाधीने तु कर्तव्यतावगमे तत्सङ्कोचादेव कर्तव्यतावगमसङ्कोचाद् न नित्यवदध्यापनसिद्धिरिति। ननु प्रामाणिकनित्यकर्तव्यताधीनाऽपीच्छा क्वचिद्देशे काले वस्तुनि च कारकसामर्थ्याभावादिवशेनौचित्यात् प्रतिहन्यते, तत्र कथं नित्यकर्तव्यताधीननित्येच्छाद्वारेण नित्यवदनुष्ठानमिति ? तत्राह— **औचित्यादिभावेऽपीति** । प्रमाणतस्तावन्नित्योऽध्यापनविधिः प्रत्यवायभयादिव यावच्छक्यमिच्छादिद्वारेणाधिकारिणमनुष्ठापयतीत्यर्थः ॥ **तेनेति** स्पष्टार्थः ॥ ननु प्रमाणतो विधिनित्यत्ववदिच्छातोऽपि कर्तव्यतानित्यत्वं किं न स्यादिति ? नेत्याह— **फलवशात्तु तत्कर्तव्यताप्रतिपत्ताविति** ॥ अनित्यैव सा स्यादित्यध्याहारः । ननु अर्थस्य नित्यसमीहितत्वात् कर्तव्यताप्रतिपत्तिनिमित्तकामोऽपि नित्य एवेत्यत आह— **यद्यपीति** । उपेयनित्यत्वेऽप्युपायभेदादध्यापनकर्तव्यताऽप्यनित्यैवेत्यर्थः। ननु कस्यचिदुपायान्तरासमर्थस्य तदेकोपायत्वान्नित्यकर्तव्यतेति ? तत्राह— **तदेकोपायत्वेऽपीति** ॥ **अतो नित्यानियसंयोगविरोध इति** ॥

### तत्त्वदीपनम्

योर्होमस्यावश्यकर्तव्यतोक्तावश्यानुष्ठेयत्ववत् शब्दादध्यापनस्यावश्यकर्तव्यताप्रतिपत्तौ नित्यानुष्ठानम्; इतरथा "चित्रया यजेत पशुकामः" इत्यादौ कामनाप्रतिबन्धे चित्राननुष्ठानवदननुष्ठानं स्यादित्याह— **अध्यापनेति** ॥ **स्वाधिकारोपाधाविति** । विधिपुरुषसंबन्धनिमित्तब्राह्मण्याद्युपाधावित्यर्थः। शाब्दकर्तव्यताप्रतिपत्तावप्यननुष्ठानं दृष्टमिति शङ्कते— **ननु प्रामाणिकेति** ॥ इच्छाया औचित्यादिभावेऽपि—प्रमाणतस्तावन्नित्य इति संबन्धः। औचित्यादिभावमेवाह— **कस्यचिदित्यादिना** ॥ व्याध्याद्युपद्रवात्कर्तृसंकोचमाह—कस्यचिदिति ॥ **कथंचिदिति** साध नदौर्लभ्यादिनिमित्तं संकोचं दर्शयति। सुदेशकालदौर्लभ्यनिमित्तं संकोचमाह— **क्वचिदिति** ॥ दुष्कालनिमित्तः संकोचः कथ्यते— **कदाचिदिति** ॥ सामर्थ्यादिपर्यालोचनयेदानीमेतावदुचितीमितच्छाया औचित्यादिभावेऽप्यवश्यकर्तव्यतायाः प्रतिपन्नत्वाद् यथाशक्त्यनुष्ठानं सेत्स्यतीति **टीकार्थः**। टीकायामपेक्षितं पूरयति— **प्रमाणत इति** ॥ नित्यताप्रतिपत्तावपि प्रतिबन्धे कथं नित्यवदनुष्ठानम् ? इत्याशङ्क्य, टीकायामपेक्षितं पूरयन्नाह— **प्रत्यवायेति** ॥ कामनाधीनकर्तव्यताप्रतिपत्तिरित्यत्रापि नित्यानुष्ठानं सिध्यतीति शङ्कते— **ननु प्रमाणत इति**। फलस्य नित्याभिलषितत्वेन तत्कामनाया अपि नित्यत्वादिति द्रष्टव्यम्। कामनाया अनित्यत्वात् तत्प्रयुक्तकर्तव्यताऽप्यनित्येत्याह— **नेत्याहेति** ॥ कर्तव्यताप्रतिपत्तेरशाब्दत्वेऽपि फलस्य नित्यसमीहितत्वसिद्धेः "फलवशादि"ति कथमुक्तमित्याशङ्क्यापेक्षितं पूरयति— **अनित्येति** ॥ कामनाया अनित्यत्वमसिद्धमिति शङ्कते— **नन्वर्थस्येति** ॥ "तथाऽपी"त्यस्य साकाङ्क्षत्वेनानर्थक्यमित्याशङ्क्याह— **उपायेति** ॥ याजन-प्रतिग्रहलक्षणोपायान्तराभावेऽध्यापनस्य नित्यत्वं सिध्यतीति शङ्कते— **ननु कस्यचिदिति** ॥ अनित्येन नित्यस्याप्रयोज्यत्वसमर्थनफलमाह— **अत इति** ॥

### ऋजुविवरणम्

द्व्याख्यातम्। "प्रमाणतस्तावन्नित्यः" इत्यनेन कस्य नित्यत्वमुक्तम् ? यच्चास्मिन् पक्षे नित्यवदनुष्ठानं नोपपद्यत इति चोदितम्, तच्च न परिहृतम्, अतो व्याचष्टे— **प्रमाणतस्तावन्नित्योऽध्यापनेति** ॥ "फलवशादि"ति साकाङ्क्षत्वात् पूरयति— **अनित्यैवेति** ॥ "उपायान्तरादपी"ति व्यर्थम् ; अर्थस्य नित्यसमीहितत्वेनाध्यापननित्यत्वचोद्यस्यापरिहारात्, इत्याशङ्क्य व्याचष्टे— **उपायनित्यत्वेऽपीति** ॥

**पञ्चपादिका**

**ननु पितुः पुत्रोत्पादनविधिरनुशासनपर्यन्तः श्रूयते—"तस्मात्पुत्रमनुशिष्टं लोक्यमाहुस्तस्मादेनमनुशासती"ति। अतः पुत्रोत्पादनस्य नित्यत्वात् तस्य चानुशासनपर्यन्तत्वात् तदाक्षिप्तत्वाच्चोपनयनाध्ययनयोः कथमाचार्यकरणविधिरनित्यः स्यात्? कथं वाऽध्ययनस्यार्थावबोधपर्यन्तता न भवेत्?**

**उच्यते—नानेन पुत्रानुशासनं विधीयते पुत्रोत्पादनविधिशेषत्वेन स्वतन्त्रमेव वा, किन्तु सम्प्रत्तिकर्मविधिशेषोऽयमर्थवादः; तेनैकवाक्यत्वात्। अतो यथाप्राप्तमनुशासनमनुवदति। किं तदनुशासनम्? कथं वा तत् प्राप्तवदनूद्यते?**

**पञ्चपादिकाविवरणम्**

इदानीं स्वतो नित्यत्वाभावेऽपि नित्यपुत्रोत्पादनविधिशेषतयोपनयनाध्यापनयोर्नित्यत्वान्न नित्यानित्यसंयोगविरोध इति चोदयति—**ननु पितुः पुत्रोत्पादनविधिरिति**। तत्र पुत्रोत्पादनविधेः पितॄणां परलोकगतानामस्मिन् लोके पिण्डपितृयज्ञाद्यनुष्टानद्वारेण तृप्तिसम्पादनं प्रयोजनम्। नचोपनयनाध्यापनार्थज्ञानादिव्यतिरेकेणानुष्ठानं सम्भवति। ततश्च नित्यस्य पुत्रोत्पादनविधेः फलपर्यन्ततापेक्षितमनुशाशनं तच्छेषतया विदधाति "तस्मात्पुत्रमि"ति वाक्यम्। ततश्च पितुरेव नित्यपुत्रोत्पादनविधिसामर्थ्यादुपनयनाध्यापनादिविधीनां नित्यत्वं प्राप्तम्। ततश्चार्थज्ञानपर्यन्तत्वादनुशासनस्याध्ययनमप्यर्थज्ञानफलमित्याह—**कथं वाऽध्ययनस्येति**॥

परिहरति—**नानेन पुत्रानुशासनं विधीयत इति**। "अथातः संपत्तिर्यदा प्रैष्यन्मन्यतेऽथ पुत्रमाह त्वं ब्रह्म त्वं यज्ञस्त्वं लोकः" इति वेद-तदर्थ-तत्फलानां स्वानुष्ठेयानां पुत्रे समर्प्यमाणानां "स पुत्रः प्रत्याह अहं ब्रह्माहं यज्ञोऽहं लोकः" इति पुत्रेणानुष्ठेयतया स्वीकरणं संपत्तिकर्म। तत्र च पूर्वानुशासनमन्तरेणाकस्मादेव सकलकर्तव्यसंग्रहानुपपत्तेः

**तत्त्वदीपनम्**

अध्यापनविधेः काम्यत्वात् कथं नित्यत्वचोद्यम्? इत्याशङ्क्य, तात्पर्यमाह—**इदानीमिति**। दर्श-पौर्णमासयोर्यथा काम्यत्वं नित्यत्वं च, तद्वदध्यापनस्यापीत्यर्थः। पुत्रोत्पादनविधेरनुशासनेन विनाऽनुपपत्त्यभावात् कथमनुशासनाक्षेपत्वम्? अनुशासनस्य वा कथमुपनयनाद्याक्षेपकत्वम्? इत्याशङ्क्य तात्पर्यमाह—तत्रेति। वेद इति यावत्। **अनुष्ठानद्वारेणेति**। पुत्रेणानुष्ठानद्वारेणेत्यर्थः। तथाऽपि कथमनुशासनाक्षेपकत्वम्? तत्राह—**नचेति**॥ अध्ययनविधेनर्थावबोधः फलमित्युक्तम्, तच्चैवं सति निराकृतमित्याह—**ततश्चार्थेति**॥

"तस्मात्पुत्रम्" इत्यादिवाक्यं **संपत्तिकर्म**। विध्यपेक्षितार्थाप्रतिपादकस्य कथं तच्छेषत्वम्? इति परिहारस्याभासत्वमाशङ्क्याह—**परिहरतीति**॥ सम्यक् परिहारं दर्शयितुं संप्रत्तिकर्म तावदाह—**अथात इति**। प्रारब्धकर्मोपभोगानन्तर्यमथशब्दार्थः। कर्मान्तरस्य फलोन्मुखत्वमतःशब्दार्थः। **प्रैष्यन्** मरिष्यन्नित्यर्थः। श्रुत्यादिप्रतिपन्नगर्दभारोहणादि यन्मरणसूचकं स्वप्नाद्युपलब्धम्, तद्दर्शनेनैष्यन्मरणं जानन्नित्यर्थः। "त्वं ब्रह्मे"त्यादेरर्थमाह—**वेदेति**। समर्प्यमाणानां पुत्रेणानुष्ठेयतया स्वीकरणं संप्रत्तिकर्मेति संबन्धः। स्वीकरणप्रकारमाह—**स पुत्र इति**॥ ततः किमिति? अत आह—**तत्र चेति**॥ अनुशासनस्यान्यतः प्राप्तत्वात् "तस्मात्पुत्रमि"त्यादिवाक्यस्यानुशासनाविधायित्वेऽपि

**ऋजुविवरणम्**

"ननु पितुरि"त्यनेन ग्रन्थेन पुत्रोत्पादनस्यानुशासनपर्यन्तत्वादनुशासनस्य चोपनयनाध्यापनेन विनाऽनुपपत्तेस्तदाक्षिप्तत्वादाचार्यकरणविधेर्नित्यत्वेन भवितव्यमिति चोदितम्, तद् व्यधिकरणम्; नह्युपनयनाध्यापनयोस्तदाक्षिप्तत्वमाचार्यकरणविधिं व्याहन्ति, नाप्युपनयनाध्यापनयोराक्षिपत्वप्रदर्शनं पूर्वोक्तदूषणपरिहार उपयुज्यते, अतो निष्प्रयोजनमेतच्चोद्यमित्याशङ्क्यावतारयति—**इदानीमिति**॥ कथं पुत्रोत्पादनविधेरनुशासनपर्यन्ततोच्यते? नहि पुत्रोत्पादनविधेरनुशासनेन विनाऽनुपपत्तिरस्ति, नापि वचनसामर्थ्यान्निश्चेतुं शक्यते; वचनस्य वर्तमानापदेशत्वेनातत्परत्वात्। एवञ्च नोपनयनादेरपि तदाक्षिप्ततया नित्यत्वम्; आक्षेपकत्वाभावात्, अतो नित्यानित्यसंयोगविरोधस्तदवस्थ एवेत्याशङ्क्यावतारयति—**तत्रपुत्रोत्पादनविधेरिति**॥

**संप्रत्तिकर्मेति**। तत्र किं तत् संप्रत्तिकर्म? कथञ्च तच्छेषत्वमस्य वाक्यस्य? नह्यनेनानुवादेन विना तस्य कर्मणोऽनुपपत्तिः। न ह्यनुपयुक्तप्रतिपादकस्य तेनैकवाक्यत्वमित्याशङ्क्याभिप्रायमाह—**अथातः संप्रत्तिरित्यादिना**॥

## पञ्चपादिका

**उच्यते, नित्यस्य पुत्रोत्पादनविधेः प्रयोजनम्—यत् पितॄणां लुप्तपिण्डोदकक्रियाणां नरकपातश्रवणात् पितृपिण्डोदकक्रियाद्यनुष्ठानेन नरकपातत्राणम्। नच शास्त्रीयेण परिज्ञानेन विना तदनुष्ठानं सम्भवति। तेन पित्रा नित्यमात्मनः पुत्रोत्पादनाधिकारं परिसमापयितुं पुत्रस्यावश्यकर्तव्यार्थविषयं गर्भाष्टवर्षेण ब्राह्मणेन त्वयोपनयनाख्यः संस्कारः कारयितव्यः, यः स्वाध्यायाध्ययनार्थो विहित इति यदनुशासनम्, तदिहानूद्यते—"तस्मादेनमनुशासती"ति॥ तथाच लिङ्गम्—"श्वेतकेतुर्हाऽऽरुणेय आस। तं ह पितोवाच श्वेतकेतो वस ब्रह्मचर्यम्। न वै सोम्यास्मत्कुलीनोऽननूच्य ब्रह्मबन्धुरिव भवती"ति। तदेवमनित्येनाचार्यकरणविधिना कथं नित्यं प्रयुज्यत इति वाच्यम्।**

**किंच आचार्ये प्रेते आचार्यान्तरकरणं न प्राप्नोति; न ह्यधिकारी प्रतिनिधीयते, नाप्यधिकारः।**

## पञ्चपादिकाविवरणम्

फलपर्यन्तपुत्रोत्पादनविधिनाक्षिप्तमनुशासनं पूर्वनिवृत्तमेवार्थवादतयाऽनुवदत्येतद्वाक्यमिति भावः। मा भूत् तदेतद्वाक्यमनुशासनविधायकम्; तथाऽपि नित्यपुत्रोत्पादनविधिसामर्थ्यादेव पितुरुपनयनाद्यनुशासनविधिर्नित्य एव प्राप्त इति? तत्राह—**गर्भाष्टवर्षेणेत्यादिना**। अयमर्थः—नित्यपुत्रोत्पादनविध्यधिकारिणः पितुरायुर्नियमाभावादनुशासनपर्यन्तमवस्थानानुपपत्तेः कर्तव्यार्थोपदेशनमेवानुशासनम्, नानुष्ठापनम्। अतो नित्यपुत्रोत्पादनविध्याक्षिप्ततयाऽपि नोपनयनादिविधेर्नित्यतेति। ननु पितुः कर्तव्योपदेशनमेवानुशासनं नोपनयनाद्यनुष्ठापनमिति कथमवगम्यते? तदाह—**तथाच लिङ्गं श्वेतकेतुरिति**॥ ततश्च नित्यानित्यसंयोगविरोधस्तदवस्थ एवेत्याह—**तदेवमनित्येनेति**॥

ननु माणवक एव एकस्मिन्नाचार्ये मरणादिना निवृत्ते पुनराचार्यान्तरमाहूय नित्यमध्ययनं सम्पादयिष्यतीति? नेत्याह—**किं चाचार्ये प्रेत इति**। न तावन्माणवक एव स्वनियोगेन प्रेर्यमाणः स्वाधिकारं निर्वर्तयितुमाचार्यान्तरं सम्पादयति; अनङ्गीकरणात् नाप्याचार्यनियोगेन; अधिकारिणोऽभावे नियोगस्य कर्तव्यताप्रतिपत्त्यभावात्, अकर्तव्यानुष्ठानाय साधनसंपादनायोगादिति। ननु साधनान्तरप्रतिनिध्युपादानवदधिकारिणोऽपि प्रतिनिध्युपादानेन कर्तव्यं माणवकः सम्पादयेदिति? नेत्याह—**न चाधिकारी प्रतिनिधीयत इति**। अवश्यकर्तव्यस्य ह्यननुष्ठाने प्रत्यवायात् तदनुष्ठानाय हि मुख्याभावे प्रतिनिधिरादीयते; अधिकार्यभावे 'ममेदमि'ति सम्बन्धानवगमादकर्तव्ये नियोगे कस्या-

## तत्त्वदीपनम्

वाक्यान्तरादनुशासनं प्रतीयत इति शङ्कते—**मा भूदिति**॥ उपदेशनमनुशासनमित्युक्तं टीकायाम्, तत् कस्मात्? अनुष्ठापनमेवानुशासनं किं न स्यात्? इत्याशङ्क्याह—**अयमर्थ इति**॥ उपदेशनमेवानुशासनं नानुष्ठापनमित्यत्र विनिगमने हेत्वभावं शङ्कते—**ननु पितुरिति**। नचायुर्नियमाभावो नियामक इति शङ्क्यम्; 'शतायुर्वै पुरुषः' इत्यायुषो नियमादित्यर्थः। विनिगमनहेत्वभावोऽसिद्ध इत्याह—**तदाहेति**॥

यद्यप्यध्यापनविधिरनित्यः; तथाऽपि नित्याध्ययनसिद्धिरिति शङ्कते—**ननु माणवक इति**॥ आचार्यान्तरप्राप्तौ नित्याध्ययनसिद्धिः, सैव न सिद्ध्यतीत्याह—**पुनराचार्य इति**॥ आचार्यान्तरप्राप्तौ को हेतुरिति चेत्, तत्र वक्तव्यम्—किं माणवकनियोगादाचार्यान्तरप्राप्तिः? उत पूर्वाचार्यनियोगात्? नाद्य इत्याह—**न तावदिति**॥ द्वितीयं दूषयति—**नापीति**॥ पूर्वाचार्यप्रतिनिधेराचार्यान्तरस्य नियोगनिर्वृत्त्यर्थमाचार्यान्तरसंपादनमिति शङ्कते—**ननु साधनेति**॥ टीकापेक्षितं हेतुमाह—**अवश्यकर्तव्यस्येति**॥ **अधिकार्यभाव इति**॥ अध्यापनाधिकार्यभाव इत्यर्थः। कस्येति

## ऋजुविवरणम्

ननु मुख्यानुशासनं विहाय कर्तव्यतोपदेशनमेवानुशासनं कस्मादङ्गीकृतम्? इत्याशङ्क्य व्याचष्टे—**अयमर्थो नित्येति अवस्थानानुपपत्तेरिति**॥ अयमर्थः—नित्यपुत्रोत्पादनविधेरनुशासनपर्यन्तत्वं न संभवति; मृते पितरि नित्याध्ययनाभावप्रसङ्गादिति॥

"किञ्च आचार्ये" इत्यनेन युक्त्यन्तरमुच्यत इति प्रतिभाति, तदयुक्तम्; नह्याचार्यान्तरकरणाभावे पूर्वं युक्तिरुक्ता, असङ्गतञ्चैतन्निराकरणमित्याशङ्क्य, पूर्वग्रन्थोक्तदूषणपरिहारेण शङ्कां दर्शयति—**ननु माणवक एवेति**॥ कथमाचार्यान्तरकरणं निषिध्यते? अध्ययनविधिप्रयुक्तिपक्षेऽप्यङ्गीकरणीयत्वादित्याशङ्क्याह—**न तावन्माणवक एवेति**॥

**पञ्चपादिका**

**अधिकारी स्वाधिकारसिध्यर्थं साधनान्तरभ्रेषे साधनान्तरं प्रतिनिधाय स्वाधिकारं निर्वर्तयतीति युक्तम्; एवमेषा बहुदोषा कल्पना दृश्यते। तस्माद् माणवकस्यैव नियोगः॥**

**कथं गुणकर्तृव्यापारसंबन्धो विधिः प्रधानकर्तृस्थो भवति ?**

**पञ्चपादिकाविवरणम्**

वश्यानुष्ठानाय प्रतिनिधिरादीयते ? न तावन्मृतस्य; तस्य विधिसम्बन्धनिमित्तनिवृत्तेः कर्तव्यत्वाभावात्, नापि प्रतिनिधेः; आचार्यस्येदं कर्तव्यम्, तस्य कर्तव्यसिध्युत्तरकालत्वात्। तस्मान्नाधिकारिणः प्रतिनिधिसम्बन्धः। न तर्हि सर्वत्र प्रतिनिधिवार्तावकाश इति ? तदाह—**अधिकारी स्वाधिकारसिध्यर्थमिति**॥ ननु आचार्ये प्रेतेऽन्यः कश्चिदाचार्यः स्वाधिकारं निर्वर्तयितुं माणवकं स्वीकरिष्यति, किं माणवकस्याचार्यान्तरकरणव्यापारेणेति ? न; पुनरुपनयनाभावात्, उपनेतृत्वस्याङ्गस्याचार्यव्यापारस्याभावेऽङ्ग्यध्यापननिर्वृत्त्ययोगात् माणवकान्तरेऽङ्गं निर्वृत्तमिति चेत्? तेनैवाध्यापनस्यापि सिद्धेर्न माणवकान्तरस्वीकारः; अनुपनीतं वाऽध्यापयीत, अङ्गस्य निर्वृत्तत्वात्। वृत्त्युपचयार्थः संग्रह इति चेत्? न; दरिद्रस्य माणवकस्याग्रहणप्रसङ्गात्; अल्पव्यवहितग्रामवासिनां च माणवकानामाचार्यसंपादनार्थं ग्रामान्तरगमनं न स्यात्। न हि तत्र तत्राध्यापयितारः श्रोत्रियाश्च दृश्यन्ते। तथाच माणवकस्योपनयनादिसिध्यर्थं स्वयमेवाचार्यगमनं श्रूयते, "सत्यकामो हि वै जावालो ब्रह्मचर्यं भगवति वत्स्याम्युपेयां भगवन्तमि"त्यादिश्रुतौ। उपसंहरति—**एवमेषा बहुदोषेति**॥ ननु स्वविधिप्रयुक्तत्वे सत्युपगमनाध्ययनयोस्तत्प्रयुक्ततयोपनयनाध्यापनसिद्धेस्तत्र विधानमनर्थकमिति ? नायं प्रयोजकव्यापारयोर्विधिः, किंतूपगमनाध्ययनयोः कर्तृव्यापारयोर्विधिरित्याह—**तस्मान्माणवकस्यैष नियोग इति**॥

ननु णिजर्थसंसृष्टस्वार्थाभिधायिनि विधिपदे कर्तव्यापारे विधिसंसर्गो वाक्यप्रमाणविरुद्ध इति चोदयति—**कथं गुणकर्तृव्यापारसम्बन्ध इति**॥ किं न्यायविरोध उच्यते ? किंवा शब्दविरोधः ? न तावच्छब्दविरोधः; अन्यत्रापि

**तत्त्वदीपनम्**

सूचितामनुपपत्तिं दर्शयति—**न तावदित्यादिना**॥ कर्तव्यताप्रतिपत्तौ सत्यां प्रतिनिधिकल्पनं प्रतिनिधौ च कर्तव्यताप्रतिपत्तिरिति परस्पराश्रयप्रसक्तिरित्यर्थः। प्रकारान्तरेण नित्याध्ययनसिद्धिं शङ्कते—**नन्वाचार्य इति**॥ किमाचार्यान्तरं माणवकमुपनीयाध्यापयति ? उतेत्थमेव ? नाद्य इत्याह—**न पुनरिति**॥ द्वितीयं दूषयति—**उपसनेतृत्वस्येति**॥ तदुपनयनाभावेऽप्यध्यापननियोगो घटते; अन्यत्रोपनयननियोगनिर्वृत्तेरिति शङ्कते—**माणवकान्तर इति**॥ अस्मिन् पक्षे नैतस्य नित्याध्ययनसिद्धिरित्याह—**तेनैवेति**॥ तत्र च दोषान्तरं समुच्चिनोति—**अनुपनीतमिति**॥ स्वोपनीतमाणवकाध्यापनेन नियोगनिर्वृत्तावपि माणवकान्तरस्वीकारो घटत इति शङ्कते—**वृत्तीति**॥ तर्हि यदध्यापनेन तद्द्रव्यालाभस्तदध्यापनं न स्यादित्याह—**न दरिद्रस्येति**॥ आचार्यविधिप्रयुक्तमध्ययनमिति मते दोषान्तरं समुच्चिनोति—**अल्पेति**॥ मा भूद् ग्रामान्तरगमनमित्यत्राह—**न हि तत्रेति**॥ वेदवचनपर्यालोचनायामपि स्वविधिप्रयुक्तमध्ययनमित्याह—**तथाचेति**॥ उपनयनाध्यापनविध्यनुपपत्त्या नाध्ययनं स्वविधिप्रयुक्तमिति शङ्कते—**ननु स्वविधीति**॥ प्रयोजकव्यापारस्यान्यतः प्राप्तत्वाद् न तत्र विधिर्घटत इत्याह—**नायमिति**॥ तर्हि वाक्यनैरर्थक्यप्रसक्तिरिति शङ्कते—**किंत्विति**॥ कर्तृव्यापारविधिपरत्वान्न नैरर्थक्यमित्याह—**उपगमनेति**॥

कथंशब्दसूचितामनुपपत्तिं दर्शयति—**ननु णिजर्थेति**॥ विकल्पासहत्वान्नैतच्चोद्यमित्याह—**किं न्यायेति**॥

**ऋजुविवरणम्**

स्वेनोपनीतस्य मृतत्वात् कारणान्तरेण वा निवृत्तत्वाद् अन्येनोपनीतमध्यापयेदित्याशङ्क्याह—**अनुपनीतं चेति**॥ ननु दरिद्रस्यापि शिष्यस्य संग्रहं करोति, शुश्रूषादिना सोऽप्युपकर्तुं शक्नोति यतः, अतो न तस्याप्याचार्यसंपादनव्यापार इत्याशङ्क्याह—**अल्पव्यवहितेति**॥ ननु स्वग्राम एव स्वीकर्तुमाचार्यस्य संभवाद् मा भवत्वाचार्यसंपादनाय ग्रामान्तरगमनमित्याशङ्क्याह—**नहि तत्र तत्रेति**॥

ननु "गुणकर्तृव्यापारे"त्युक्तम्, प्रयोजक-प्रयोज्यव्यापारप्रतीतेस्तत्संबन्धस्य चाविशेषादित्याशङ्क्याह—**ननु णिजर्थेति॥ वाक्यप्रमाणविरुद्ध इति**। अयमर्थः—अस्मिन् वाक्ये कर्तृव्यापारे विधिसंसर्गः कथं स्वीक्रियते प्रमाणविरुद्धः इति ? अथवा, वाक्यात् कर्तृव्यापारे विधिसंबन्धः कथं निर्णीयते ? इत्यन्वयः; वाक्यप्रमाणस्य श्रुतेः सकाशाद्

## पञ्चपादिका

**यथा—"एतया ग्रामकामं याजयेदि"ति ग्रामकामस्य यागो विधीयते, गुणकर्तृव्यापारः प्राप्तोऽनूद्यते, तस्य याजनस्य वृत्त्यर्थत्वात्; एवमिहापि गुणकर्तृव्यापारो वृत्त्यर्थत्वेन प्राप्तोऽनूद्यते।**

**अत्रैके प्रत्यवतिष्ठन्ते—युक्तं "याजयेदि"ति प्रधानकर्तृव्यापाराभिधायिनो यजतेः परस्य गुणकर्तृव्यापाराभिधायिनः शब्दान्तरस्य णिच उपादानात्, तस्य चाविधेयत्वात् प्रधानकर्तृव्यापारस्याभिधानम्; इह पुनरेको नयतिर्माणवकस्य व्यापारं ब्रूयात्? आचार्यस्य वा? न तावद् माणकस्य नयत्यर्थकर्तृत्वम्; कर्मकारकत्वात् तस्य। अतोऽनभिधेयव्यापारः कथं नियुज्येत? न हि परव्यापारे परो नियोक्तुं शक्यते। स्वव्यापारे हि पुरुषस्य नियोगः। तस्मान्नैष माणवकस्य नियोगः। तदेवमाचार्यकरणविधिप्रयुक्तत्वादध्ययनस्य नात्राधिकारचिन्तया मनः खेदयितव्यम्—इति।**

**उच्यते—माणवकस्यैवायं नियोगः, नाचार्यस्येह किञ्चिद्विधेयमस्ति।**

## पञ्चपादिकाविवरणम्

दर्शनात्, इत्याह—**यथैतया ग्रामकाममिति**॥ नापि न्यायविरोधः; प्राप्तानुवादेनाप्राप्तविधानात्, इत्याह—**ग्रामकामस्य यागो विधीयत इत्यादिना**॥

ननु अध्यापन-याजनयोः कर्तृप्रयोजकव्यापारद्वयावगमादन्यतरानुवादेनान्यतरो विधीयत इति युक्तम्, उपनयने तु धात्वर्थस्य प्रयोजकव्यापारत्वादनभिधीयमानः कर्तृव्यापारः कथं विधीयते? इति चोदयति—**युक्तं याजयेदित्यादिना**॥ ननु उपनयने मा भून्माणवकव्यापारविधिः, अध्ययने तु भविष्यति? तन्न; वाक्यसारूप्यादित्याह—**तदेवमाचार्यकरणविधिप्रयुक्तत्वादिति**॥

तत्र प्रयोजकव्यापाराभिधायिनाऽपि नयतिधातुना माणवकव्यापारस्यानभिधीयमानस्यापि गम्यमानत्वात् स एव धातुना लक्षणयोपादाय विधीयते, न प्रयोजकव्यापारः; स्वयं प्राप्तेरिति परिहरति—**उच्यते माणवकस्यैवाय-**

## तत्त्वदीपनम्

"याजयेदि"त्यत्र व्यापारद्वयप्रतिपत्तेर्गुणकर्तृव्यापारानुवादेन प्रधानकर्तृव्यापारविधिवद् "अध्यापयीते"त्यत्रापि प्रधानकर्तृव्यापारविधिर्घटते, ततः कथं वैषम्यम्? इत्याशङ्क्याध्यापनयाजनयोर्न वैषम्यमुच्यते, किं तूपनयन-यजनयोरित्याह—**नन्वध्यापनेति**। अध्यापयीत याजयेदित्यनयोर्वाक्ययोरित्यर्थः। **व्यापारद्वयावगमादिति**। "अध्यापयीते"त्यत्राध्ययनाध्यापनलक्षणं व्यापारद्वयं लक्ष्यते, "याजयेदि"त्यत्र यजन-याजनलक्षणमित्यर्थः। **उपनयन इति**। "उपनयीते"ति वाक्य इत्यर्थः।

"उपनयीते"त्यत्र कर्तृव्यापाराप्रतिपत्तेर्न विधिश्चेत्, तर्ह्यध्यापयीतेत्यत्र कर्तृव्यापारप्रतिपत्तेस्तद्विधानं घटत इति शङ्कते—**ननु उपनयन इति**॥ विधेः प्रयोजकव्यापारविषयत्वस्योभयत्राविशेषादुभयत्रापि प्रयोजकव्यापार-विषयो विधिरित्याह—**तत्रेति**॥

"उपनयीते"त्यत्र कर्तृव्यापारस्य नयतिधातुनाऽनभिहितत्वात् कथं तद्विषयो विधिरिति शङ्कायामाह—**तत्र प्रयोजकेति**॥ श्रुतितः प्रतीयमानविषयो विधिः किं न स्यादित्यत्राह—**न प्रयोजकेति**॥ कथंशब्दसूचितामनुपपत्ति

## ऋजुविवरणम्

दुर्बलत्वात्। वाक्यत्वञ्च विलम्बाभिप्रायेण, नतु वाक्यप्रमाणविरुद्ध इत्येवान्वयः प्रतिभाति; तस्य वाक्यप्रमाणावसेयत्वेन तद्विरुद्धत्वाभावात्। अनन्तरत्वाद् द्वितीयं पक्षं पूर्वं निराकरोति—**न तावदिति**॥ **अन्यत्रापि दर्शनादिति** वदतोऽयमभिप्रायः—अप्राप्तार्था श्रुतिः वाक्याद् बलीयसी, नतु श्रुतित्वमात्रेणेति॥

"युक्तं याजयेदि"ति याजने वैषम्यप्रदर्शनं व्यर्थम्; चोद्याभावात्, नापि दृष्टान्तवैषम्येण चोद्यम्; अत्रापि कर्तृ-प्रयोजकव्यापारप्रतीतेर्वक्तुं शक्यत्वात्, इत्याशङ्क्यावतारयति—**नन्वध्यापन-याजनयोरिति**॥ "तदेवमि"त्यसंबद्ध-मुपसंहृतम्; नह्युपनयने कर्तृव्यापारविधानाभावेऽध्ययनस्याध्यापनविधिप्रयुक्तिलाभः, इत्यभिप्रायेणाक्षिपति—**ननूपनयन इति**॥

विधानेऽप्यगत्या लक्षणाश्रयणं युक्तमित्याह—**तत्र प्रयोजकेति**॥ "उपनयीते"त्यनेन प्रयोजकव्यापार-

## पञ्चपादिका

**कथम् ? यत्तावत् 'उपनयीते'त्यस्याभिधानतो न्यायतश्च निरूप्यमाणोऽर्थ एतावान् प्रतीयते, 'आत्मानमाचार्यं कर्तुं कञ्चिदात्मसमीपमानीयाध्यापयेत्' इति।**

## पञ्चपादिकाविवरणम्

**मिति**॥ ननु माणवकव्यापारो गम्यमानतया वा कथं प्रतीयते ? कथं वा प्रयोजकव्यापारः प्राप्तानुवाद इति चोदयति—**कथं यत्तावदिति**॥ माणवकव्यापारस्य गम्यमानतामुपपादयितुं प्रथममाचार्यव्यापारस्याविधेयतामुपपादयति—**उपनयीतेत्यस्याभिधानतो न्यायतश्चेति**। 'माणवकमुपनयीते'त्युक्ते माणवकस्य स्वात्मसमीपगमनमभिधानतः प्रतीयते, न स्वस्य माणवकसमीपगमनम्; अन्यथा माणवकमुपगच्छेदिति वचनं स्यात्। न्यायतश्च प्रतीयते—यथा बालानक्षराणि शिक्षयन् लौकिकः पुरुषो न बालगुणभावं गच्छति, किंतु बालानेव स्वयमात्मगुणभावं नयति। ननु एवमप्याचार्यव्यापारो न प्राप्तानुवादः। कथम् ? शुश्रूषाद्यङ्गसहितेऽध्ययने माणवकस्य विहिते स्वविधिप्रयुक्ते चाध्ययने वृत्त्यर्थतयाऽऽचार्यप्रवृत्तिः प्राप्नोति, वृत्त्यर्थप्रवृत्तौ च प्राप्तायां तदनुवादेन माणवकव्यापारोऽध्ययनादिर्विधातुं शक्यते, इतीतरेतराश्रयप्रसङ्गात्। ननु "ग्रामकामं याजयेदि"त्यत्रापि समानोऽयं दोषः ? अथ स्वविधिप्रयुक्तेषु यागान्तरेषु सामान्येन वृत्त्यर्थतया प्राप्तं प्रयोजकव्यापारमनूद्य ग्रामकामस्य यागविशेषो विधीयत इति ? तर्हीहापि विध्यन्तरेषु सामान्यप्राप्तप्रयोजकव्यापारानुवादेन माणवकव्यापार उपगमनाध्ययनादिर्विधीयताम्॥

## तत्त्वदीपनम्

दर्शयति—**ननु माणवकेति**। माणवकव्यापारमन्तरेणानुपपन्नार्थाभावान्नार्थादपि तत्प्रतिपत्तिरित्यर्थः। प्रयोजकव्यापारस्य प्राप्तिर्वा कथमित्याह—**कथमिति**॥ माणवकव्यापारो विधीयते, नाचार्यव्यापारः, इति यत्तावदुच्यते, तत्कथमिति **टीकायोजना**। माणवकव्यापाराप्रतिपत्तिचोद्ये प्रयोजकव्यापारप्रतिपत्तिप्रदर्शनमसङ्गतमित्याशङ्क्य तात्पर्यमाह—**माणवकेति**॥ आत्मसमीपं प्रति माणवकानयनं "अभिधानतो न्यायतश्च प्रतीयते" इत्युक्तम्, तत्राभिधानन्यायाभ्यां कथं तत्प्रतिपत्तिः ? इत्याकाङ्क्षायामाह—**माणवकमिति**॥ "उपनयीते"त्यत्र माणवकसामीप्यमात्रं प्रतीयते, न माणवकस्य स्वसमीपागमनमित्याशङ्क्याह—**न स्वस्येति**। माणवकसामीप्यमाचार्यव्यापाराद्वा ? माणवकव्यापाराद्वा ? नाद्यः; 'माणवकमुपगच्छेदि'ति वचनप्रसङ्गात्। तस्माद् माणवकस्याचार्यसमीपं प्रत्यागमनमत्रोच्यत इत्यर्थः। उक्तं चोद्यान्तरमनुवदति—**नन्वेवमिति**। माणवकव्यापारप्रतिपत्तावपीत्यर्थः। तस्य वृत्त्यर्थत्वेन प्राप्तत्वात् कथं न प्राप्तानुवादतेत्याह—**कथमिति**॥ परस्पराश्रयप्रसङ्गान्न वृत्त्यर्थत्वेन प्राप्तिसंभव इत्याह—**शुश्रूषेति**॥ यस्मादध्ययनं माणवकस्य विहितम्, तस्मादेवाध्ययनं स्वविधिप्रयुक्तमित्याह—**स्वविधीति**॥ तर्हि न कुत्रापि प्रयोजकव्यापारानुवादेन प्रधानकर्तृव्यापारविधिः स्यादित्याह—**ननु ग्रामेति**। दक्षिणाद्यङ्गसहितकर्तृव्यापारविधौ वृत्त्यर्थत्वेन प्रयोजकव्यापारप्राप्तिः, तस्यां च तदनुवादेन कर्तृव्यापारे विधिः, इतीतरेतराश्रयत्वप्रसङ्गान्न ग्रामकामस्य यागविधिरपि घटत इत्यर्थः। अन्यत्र प्रयोजकव्यापारस्य वृत्त्यर्थत्वादत्रापि वृत्त्यर्थत्वं प्राप्तम्, ततो नेतरेतराश्रयप्रसङ्ग इत्याह—**अथ स्वविधीति**॥ तुल्यमुत्तरमित्याह—**तर्हीहापीति**॥

## ऋजुविवरणम्

प्रदर्शनम्। तस्याविधेयत्वप्रदर्शनमसङ्गतमित्याशङ्क्याह—**माणवकव्यापारस्येति**॥ कथं माणवकव्यापारप्रतीतिः ? आचार्यव्यापारः, तत्फलं माणवकसामीप्यं च प्रतीयते, नान्यत्, अतः श्रुतित इत्ययुक्तम्, न्यायेऽपि न विशेष इत्याशङ्क्योपपादयति—**माणवकमिति**॥ ननु "द्रव्यमार्जयन् अध्यापयेदि"ति वचनेन प्राप्तौ न चोद्यमित्याक्षिपति—**कथमिति**॥ **ननु ग्रामकामं याजयेद् इत्यत्रापीति**। कर्तृव्यापारे दक्षिणाद्यङ्गसहिते विहिते सति प्रवृत्त्यर्थत्वेन प्रयोजकव्यापारप्राप्तिः, प्रयोजकव्यापारप्राप्तौ च तदनुवादेन कर्तृव्यापारविधिरित्यर्थः॥

ननु याजने चोदकादिना प्रयोजकव्यापारप्राप्तौ नेतरेतराश्रयत्वम्, इह तु नान्यतः प्राप्तिरितीतरेतराश्रय-

## पञ्चपादिका

**एतच्च सर्वं वृत्त्यर्थत्वेन ब्राह्मणस्यान्यत एव प्राप्तम्, नात्र विधातव्यम्। तत्र कमध्यापयेत्? इति विशेषाकाङ्क्षायां "ब्राह्मणमष्टवर्षमि"ति विशेषस्य विधायकमेतत् स्यात्। तत्र च प्राप्ते व्यापारेऽर्थद्वयविधानमेकस्मिन् वाक्ये न शक्यते वक्तुम्; वाक्यभेदप्रसङ्गात्। अतो नाचार्यस्य किञ्चिद् विधेयमिहास्ति।**

## पञ्चपादिकाविवरणम्

अथवा, माणवकव्यापारविधिसामर्थ्यादेव प्रयोजकव्यापारः प्राप्स्यते, न प्रयोजकव्यापारविधानेन माणवकव्यापारः प्राप्स्यत इत्युक्तम्। तत्र माणवकव्यापारविधानादेव भाविनीं प्राप्तिमनूद्य माणवकव्यापारः कदाचिदप्यप्राप्तो विधीयत इति तदेतदाह—**एतच्च सर्वं वृत्त्यर्थत्वेन ब्राह्मणस्यान्यत एव प्राप्तमिति**॥ ननु प्रयोजकव्यापारं प्राप्तमेवानूद्य गुणाधिकारादिविशेषविधिपरं वाक्यं किं न स्यादिति? न तावदधिकारविधिपरं वाक्यम्; जीवनादिनित्यकाम्याधिकाराश्रवणात्; अतो गुणविधिरेव "दध्ना जुहोती"त्यादिवत् परिशिष्यत इत्याह—**अत्र कमध्यापयेदिति**॥ भवतु तर्हि गुणविधिरिति? नेत्याह—**तत्र प्राप्ते व्यापार इति**। अयमाशयः—यदा विशेष्योऽपि पदार्थः प्रमीयते, तदा नानाविधगुणविशिष्टतया स एको विशिष्टः पदार्थः प्रमीयते, इति न वाक्यभेदः स्यात्। यदा तु विशेष्यमनूद्य विशेषणानि प्रमीयन्ते, तदा विशेषणानामन्योन्यविशिष्टतयैकत्वापत्त्यभावादन्योन्यानपेक्षतया प्रत्येकं प्रमेयत्वे प्रमेयभेदाद् वाक्यं भिद्यत इति। ननु सर्वत्र विशेष्यं सामान्यद्वारेणानुवाद्यमेव? सत्यम्; विशेषणान्यपि तथा, किन्तु विशेषाकारेणान्योन्यविशिष्टतया पदार्थाः प्रमीयन्त इति। तस्मादुत्पत्त्यधिकार-गुणविधयः प्रयोजकव्यापारे न सम्भवन्तीत्युपसंहरति—**अतो नाचार्यस्येति**॥

## तत्त्वदीपनम्

प्रकारान्तरेण परस्पराश्रयप्रसङ्गनिरासप्रकारमाह—**अथवेति**। अध्यापयित्रभावेऽध्ययनानुपपत्तेरार्थिकः प्रयोजकव्यापार इत्यर्थः। अध्ययनाभावेऽध्यापनस्याप्यसंभवाद् माणवकव्यापारोऽप्यर्थात् प्राप्तः, इत्याशङ्क्याह—**न प्रयोजकेति**। माणवकस्याप्यध्ययनविध्यभावे फलाभावात् प्रवृत्त्यनुपपत्तेरित्यर्थः। तथाऽपि कथमितरेतराश्रयनिरास इति? तत्राह—**तत्र माणवकेति**॥ प्रयोजकव्यापारस्यान्यतः प्राप्तिमङ्गीकृत्योपगमनादिविधिमाक्षिपति—**ननु प्रयोजकेति**। "अध्यापयीते"ति यत् तद् "अष्टवर्षं ब्राह्मणमि"ति गुणविशेषविधिपरत्वम्, आचार्यत्वकामो जीवन्निति वेत्यधिकारविशेषविधिपरत्वमित्यर्थः। अधिकारविधिपरत्वं तावदयुक्तमित्याह—**न तावदिति**। अध्याहारस्यान्याय्यत्वमित्यर्थः। "अरुणयैकहायन्ये"त्यादावनेकविशेषणविधिपरत्वं वाक्यस्य दृष्टमित्याशङ्क्याह—**अयमाशय इति**॥ तथा चोक्तम् "प्राप्ते कर्मणि नानेको विधातुं शक्यते गुणः। अप्राप्ते तु विधीयन्ते बहवोऽप्येकयत्नतः" इति। विशेष्यप्राप्तौ वाक्यस्यानेकविशेषणविधिपरत्वाभावश्चेत्, तर्हि न क्वचिदप्यनेकविधानं युज्येत, विशेष्यस्य सर्वत्र प्राप्तत्वादिति शङ्कते—**ननु सर्वत्रेति**। "दध्ना जुहोती"त्यत्र विशेष्यस्य होमस्यानूद्यमानत्ववत् सर्वमपि विशेष्यं सिद्धम्, इत्यरुणादावपि वाक्यभेदः स्यादित्यर्थः। विशेष्यस्य सिद्धत्वान्न प्रमेयत्वमित्येतावन्मात्रं विवक्षितम्? उत विशेषणानां प्रमेयत्वम्? इति विकल्प्याद्यमङ्गीकरोति—**सत्यमिति**॥ द्वितीयं निरस्यति—**विशेषणानीति**॥ किंपरं तर्हि वाक्यम्? इति पृच्छति—

## ऋजुविवरणम्

मित्याशङ्क्याह—**अथवेति**॥ ननु "कमध्यापयेदि"ति पूर्वापरविरुद्धम्; प्रयोजकव्यापारविधानस्य निरस्तत्वात्, अतः 'कमध्यापयेदि'ति विशेषाकाङ्क्षाप्रदर्शने विहितत्वप्रतीतेः, अविहितस्यानाकाङ्क्षतया चान्वयप्रतिपादनायोगाद् विधानान्तरमपि शक्यते वक्तुम्, तत्कथमर्थद्वयविधानोक्तिः? यद्वा, प्रयोजकव्यापारविधाने प्रयोज्यव्यापारो विधेयः, तत्र नच दूषणमित्याशङ्क्याह—**ननु प्रयोजकेति**॥ **गुणाधिकारादिति**। 'अध्यापयेदि'ति यत्, तदष्टवर्षं ब्राह्मणमाचार्यत्वकामो वा जीवन्निति वा पूर्यत इति॥ 'तत्र च प्राप्ते च व्यापारः' इति किमर्थं प्राप्तिग्रहणम्? अर्थद्वयविधानस्य वाक्यभेदहेतुत्वात् तस्य चाप्राप्ते प्राप्ते च व्यापारे विशेषाभावात्। नच—ब्राह्मण्याष्टवर्षत्वयोरपि विधानमिति युक्तं वक्तुम्; स्वरूपेण तयोर्विधेयत्वासंभवात्, विशिष्टविधानविधया परिहारस्याविशेषादित्याशङ्क्याभिप्रायमाह—**अयमाशयः—यदा विशेष्योऽपीति**॥ **एकतापत्त्यभावादिति** गुणानां परस्पसंबन्धायोगादित्यर्थः॥ यदि प्राप्ते विशेष्येऽनेकगुणविधानं वाक्यभेदाद् नेष्यते, तर्हि सर्वत्र विशेषणसामर्थ्यात् विशेष्यप्राप्तिरविशिष्टा, इति न क्वाप्यनेकगुणविधानसंभव इति चोदयति—**ननु सर्वत्रेति**॥

### पञ्चपादिका

**ननु माणवकस्यापि न किञ्चित् विधेयमस्ति ? अस्तीति ब्रूमः। कथम् ? यदैव "उपनयीते"ति शब्दतो न्यायतश्चात्मानमाचार्यं कर्तुमुपनयनेन संस्कृत्य कंचिदध्यापयेदिति प्रतीयते, तदैव यागश्रुतौ द्रव्यदेवतामात्रप्रतीतिवदध्ययनायोपनयनसंस्कार्योऽपि सामान्यतः प्रतीयते। तस्य च प्रेक्षावतो निष्प्रयोजने प्रवर्तयितुमशक्यत्वात्, विद्यमानस्याप्यध्ययनेऽर्थावबोधस्य प्रागसिद्धेः प्रवृत्तिहेतुत्वासिद्धेः, विधितोऽवश्यकर्तव्यतां प्रतिपद्य स्वयमेव प्रवर्तते। तेन अष्टवर्षं ब्राह्मणमुपनयीते"ति—'अष्टवर्षो ब्राह्मण उपसर्पेदाचार्यमि'त्यर्थः; "ग्रामकामं याजयेद्" 'ग्रामकामो यजेते'ति यथा।**

**नन्वेवमप्यधिकारो न लभ्यते ?**

### पञ्चपादिकाविवरणम्

तत्र माणवकव्यापारस्य गम्यमानस्यैव धातुना लक्षणयोपादाय विधेयत्वं दर्शयितुं चोदयति—**ननु माणवकस्यापीति**॥ परिहरति—**अस्तीति ब्रूम इत्यादिना**॥ ननु कर्तुरेव व्यापारो गमनादिषु दृश्यते, न कर्मकारकस्य ग्रामादेः; माणवकश्च नयत्यर्थकर्मभूतः कथं गम्यमानव्यापारः ? इति चोदयति—**कथमिति**॥ परिहरति—**यदैवोपनयीतेति**॥ **उपनयनसंस्कार्योऽपीति** उपगन्ताऽपीत्यर्थः। नयत्यर्थकर्मणो नीयमानस्य गमनव्यापारः सुप्रसिद्ध इति भावः। ननु तर्हि माणवकस्य गमनं प्रयोजकव्यापारादेव सिध्यति, किमिति तद् विधीयत इति ? न; विधानमन्तरेणासिद्धेरित्याह—**तस्य च प्रेक्षावत इति**॥ ननु विधानेऽपि काम्यविधिः स्यादिति, नेत्याह—**विद्यमानस्यापीति**। कथं तर्हि विधिरिति ? परिशेषान्नित्यविधिरित्याह—**विधितोऽवश्यकर्तव्यतामिति**॥ कथं तर्हि वाक्यं परिणम्यत इति ? तदाह—**तेनाष्टवर्षं ब्राह्मणमिति**॥

ननु नित्यतया विधेयत्वेऽपि विधि-पुरुषसंवन्धो वा, विधि-पुरुषसम्वन्धनिमित्तं वा, प्रवृत्तिर्वाऽधिकारशब्दार्थो न लभ्यत इति चोदयति—**ननु एवमप्यधिकारो न लभ्यत इति**। अयमाशयः—ननु सामान्येन गम्यमानस्योपगन्तुः

### तत्त्वदीपनम्

**किंत्विति**। सामान्याकारेण सिद्धत्वेऽपि विशेषाकारस्यासिद्धत्वात् पदार्थानामन्योन्यवैशिष्टचं वाक्यप्रमेयमित्यर्थः॥

माणवकव्यापारस्य विधेयत्वाद् माणवकस्य विधेयं नेति कथमुक्तम् ? इत्याशङ्क्य, उक्तं स्पष्टीकर्तुं चोद्यमुत्थाप्यत इत्याह—**तत्रेति**॥ ग्रामादेरिव माणवकस्यापि कर्मत्वेन व्यापारानुपपत्तेः परिहारस्याभासत्वमाशङ्क्याह—**परिहरतीति**॥ सम्यक्परिहारं दर्शयितुं चोद्यमुत्थापयति—**ननु कर्तुरिति**॥ "मैवमि"त्यादिपरिहारसूचकाभावाच्चोद्यग्रन्थत्वशङ्कां निरस्यति—**परिहरतीति**॥ माणवकस्य व्यापारवत्त्वे निषिद्धे तस्य संस्कार्यत्वाभिधानमनर्थकमित्याशङ्क्याह—**उपनयनेति**॥ ग्रामादेर्व्यापारवत्त्वमदृष्टमित्युक्तं निरस्यति—**नयत्यर्थेति**। 'अजां ग्रामं नयती'त्यादौ कर्मभूताजादेरपि व्यापारवत्त्वं स्पष्टमित्यर्थः। माणवकस्य व्यापारमङ्गीकृत्य तस्य विधेयत्वमाक्षिपति—**ननु तर्हीति**॥ प्रयोजको हि कुर्वन्तं कारयति। नच माणवकस्य फलविधुरेऽध्ययने प्रवृत्तिरित्याह—**न विधानमिति**॥ उत्तरो ग्रन्थः स्पष्टार्थः।

अधिकारशब्दार्थं दर्शयंस्तात्पर्यमाह—**नन्विति**। अधिक्रियतेऽनेनेत्यधिकारो **निमित्तम्**; अधिकृतिरधिकारः **प्रवृत्तिः**, अधिकरोत्यस्मिन्नित्यधिकारो **विधि-पुरुषसंबन्धः** प्रेर्य-प्रेरकतादिरिति विभागः। टीकापेक्षितहेतुमाह—**अयमाशय इति**॥ सिद्धान्तिशङ्कानिरासेन हेतुं दर्शयितुं शङ्कां तावदनुवदति—**ननु सामान्येनेति**। 'उपगच्छेदि'त्युक्त उपगन्तारमन्तरेणोपगमनानुपपत्तेरुपगन्ता कश्चित्प्रतीयते, स च कीदृशः ? इति वीक्षायाम्—"अष्टवर्षं ब्राह्मणमि"त्या-

### ऋजुविवरणम्

ननु माणवकव्यापारस्य गम्यमानत्वं वक्तुं प्रक्रम्य टीकाकारेण "उपनयनसंस्कार्योऽपी"ति संस्कार्यप्रतीतिरुक्ता, सा न युक्ता; नहि तथा सति गम्यमानत्वं माणवकव्यापारस्योक्तमित्याशङ्क्य व्याचष्टे—**उपगन्ताऽपीति**॥ कर्मकारकस्य व्यापारो नास्तीत्यस्य परिहारमाह—**नयत्यर्थकर्मण इति**॥

**विधि-पुरुषसंबन्धो वेति** कर्मण्यैश्वर्यमधिकार इत्यङ्गीकृत्योक्तम्। **विधि-पुरुषसंबंधनिमित्तं वेति** करणव्युत्पत्त्या

### पञ्चपादिका

**अस्त्यत्राधिकारहेतुर्नित्यं निमित्तं वयोविशिष्टा जातिः, जातिविशिष्टं वयो वा ।**

### पञ्चपादिकाविवरणम्

"अष्टवर्षं ब्राह्मणमि"ति विशेषणश्रवणादिदमेवाधिकारनिमित्तं संपत्स्यते ? नैवम्; एकैकस्य विशेषणस्याधिकारनिमित्तत्वानुपपत्तेः, विशेषणयोश्च परस्परविशिष्टताऽभावात् । एकैकस्य विशेषणस्याभिधानिके क्रियासंबन्धेऽपि "अरुणयैकहायन्यादिवदर्थात् परस्परविशिष्टतयाऽधिकारनिमित्ततेति चेत् ? न; विधि-पुरुषसंबन्धनिमित्तस्याशाब्दत्वप्रसङ्गात्—इति परिहरति—**अस्त्यत्राधिकारहेतुर्नित्यं निमित्तमिति** । विधि-पुरुषसंबन्धस्य प्रवृत्तेर्वा हेतुरित्यर्थः । **नित्यमिति**—जीवतः पुरुषविशेषस्य नियतभावीत्यर्थः । नच शाब्दमेव सर्वत्राधिकारनिमित्तम्; साङ्गकर्मानुष्ठानसामर्थ्यस्याप्यशाब्दस्याधिकारनिमित्तत्वात्, शक्तस्याधिकारादिति । अथवा, क्रियासंबन्धाभिधानमुखेन विशिष्टसमर्पणे शब्दद्वयतात्पर्यकल्पनादधिकारनिमित्तस्य शाब्दत्वं न विहन्यते ।

### तत्त्वदीपनम्

स्नानादष्टवर्षविशिष्टो ब्राह्मणोऽधिकारीति निश्चीयत इत्यर्थः । विकल्पासहत्वान्न तदित्याह—**नैवमिति** ।। किमेकैकं विशेषणमधिकारे निमित्तम् ? उत मिलितम् ? नाद्य इत्याह—**एकैकस्येति** । ब्राह्मणमात्रस्य निमित्तत्वे स्थविरस्याप्यधिकारप्रसक्तिः, अष्टवर्षस्याधिकारनिमित्तत्वे शूद्रादेरप्यधिकारः स्यात्; ततो नैकैकस्याधिकारनिमित्ततेत्यर्थः । द्वितीयं दूषयति—**विशेषणयोरिति** ।। आख्यातपदार्थस्य प्राधान्याद् विशेषणयोस्तेनान्वयो वक्तव्यः, न परस्परमित्यर्थः ।। "अरुणयैकहायन्या पिङ्गाक्ष्या गवा सोमं क्रीणाती"त्यत्र प्रथममरुणादेः क्रयेणान्वये प्रतिपन्ने केवलस्य गुणस्य द्रव्यस्य च क्रयणान्वयानुपपत्तौ, अरुणादीनां मिथोऽपि यथा संबन्धः, तद्वदत्रापीति शङ्कते—**एकैकस्येति** ।। **अर्थादिति** । केवलस्य वयसो ब्राह्मण्यस्य वाऽधिकारनिमित्तत्वासंभवात् तयोरन्योन्यसंबन्ध इत्यर्थः । "स्वर्गकामः" इत्यादौ शाब्दस्याधिकारनिमित्तत्वाद् विशेषणयोः परस्परवैशिष्टचस्य चाशाब्दत्वान्नाधिकारनिमित्तत्वमित्याह—**न विधीति** ।। **इतिशब्दस्य** अयमाशयः इत्यनेनानुषङ्गः ।। "अधिकारो नोपलभ्यते" इत्युक्तेऽस्त्यधिकारहेतुरिति वदन्वादी कथं न व्याहतोक्तिः स्यादित्याशङ्क्य, भिन्नग्रन्थत्वान्न विरोध इत्याह—**परिहरतीति** ।। अधिकारशब्दस्यार्थत्रयपरत्वोक्तेरत्रापि तथात्वशङ्का स्यात्, नच सोपपद्यते; अधिकारशब्दस्य निमित्तार्थत्वे नित्यं निमित्तं निमित्तहेतुरित्युक्तं स्यादित्याशङ्क्याह—**विधिपुरुषेति** ।। वयोविशिष्टाया जातेर्नित्यत्वं कथमुक्तम् ? जीवनाभावे तदसंभवादित्याशङ्क्याह—**नित्यमिति** ।। वैशिष्टचस्याशाब्दत्वान्नाधिकारनिमित्तत्वमित्युक्तं निरस्यति—**नच शाब्दमिति** ।। अपेरशाब्दस्येत्यनेनानुषङ्गः । सामर्थ्यस्य निमित्तत्वमुपपादयति—**शक्तस्येति** ।। शाब्दमेवाधिकारनिमित्तमित्यभिनिविशमानं प्रत्याह—**अथवेति** ।। **शब्दद्वयेति** । 'अष्टवर्षे'ति 'ब्राह्मण' इति शब्दद्वयमित्यर्थः ।।

### ऋजुविवरणम्

—अधिक्रियते अस्मिन् कर्मण्यनेनेति विशेषणविवक्षयोक्तम् । **प्रवृत्तिर्वेति** अधि उपरि करणमित्यधिकार इति । **नैवमेकैकस्येति** । अष्टवर्षत्वमात्रे विशेषणे सर्वेषामधिकारः, ब्राह्मण्ये च यदा कदाचिदिति भावः । **विशेषणयोश्चेति** । "गुणानां च परार्थत्वादसंबन्धः समत्वात् स्यादिति" न्यायादिति भावः । **अरुणयैकहायन्यादिवदिति** । "अरुणया क्रीणाति" "एकहायन्या क्रीणाती"ति द्वयोः क्रियाऽन्वयेऽपि पार्ष्ठिकः परस्परान्वयः—अरुणयैकहायन्येति; तद्वदष्टवर्षं उपगच्छेद्, ब्राह्मण उपगच्छेत्, इति साक्षात् क्रियान्वये सति पश्चाद्—अष्टवर्षो ब्राह्मण इत्यन्वयः । एकप्रयोजनत्वसामर्थ्यादित्यर्थः । अधिकारशब्दस्य पूर्वोक्तार्थत्रयशङ्कानिरासाय व्याचष्टे—**विधिपुरुषसंबन्धस्येति** । विधि-पुरुषसंबन्धस्य प्रवृत्तेर्वेति द्वयमेव स्वीकृतम्, नतु संबन्धनिमित्तस्वीकारः; जाति-वयसोर्निमित्तभूतयोरुपादानात् । अत्र निमित्तभूतार्थस्वीकारे तयोरनिमित्तत्वप्रसङ्गादिति । ननु—वैशिष्टचं विशेषणयोरशाब्दं नाधिकारहेतुरित्युक्तमित्याशङ्क्याह—**नच शाब्दमेव सर्वत्रेति** ।।

### पञ्चपादिका

**ननु जाति-वयसी विशेषणमुपादेयस्य, अनुपादेयविशेषणमधिकारहेतुरिति स्थितिः ?**

### पञ्चपादिकाविवरणम्

एवमपि विशिष्टस्य नाधिकारनिमित्ततेति चोदयति—**ननु जाति-वयसी विशेषणमुपादेयस्येति** ॥ अयमभिसन्धिः—उपादेयं नाम साक्षाद्वा परम्परया वा विधिविषयतयाऽनुष्ठेयं, तद्विशेषणं च क्रिया-कारक-तद्गुणसमुदाय इत्यर्थः। तत्रोपादेयविशेषणानि "दण्डी प्रैषानन्वाह" "लोहितोष्णीषा ऋत्विजः प्रचरन्ती"ति कर्तृविशेषणानि, "व्रीहिभिर्यजेते"त्यादौ बहुत्वादीनि करणविशेषणानि, "इन्द्राय स्वाराज्ञे" इत्यादीनि संप्रदानविशेषणानि। नचोपादेयविशेषणमधिकारसंबन्धनिमित्तम्; अनुष्ठेयकारकविशेषणतया विधिं प्रति गुणभूतत्वात्, अधिकारिणस्तु विधिं प्रति स्वामितया प्राधान्येनान्वयात्। कथं पुनरत्र माणवकस्योपादेयत्वमवगम्यते ? उच्यते; प्रयोजकव्यापारं प्रति माणवकस्य कर्मताभिधायिनी द्वितीयाविभक्तिः स्वव्यापारं प्रति कर्तृत्वं गमयति; कतृविषयत्वात् प्रयोजकव्यापारस्य। तत्र प्राप्तप्रयोजकव्यापारानुवादेन कर्तृव्यापारे विधिसंबन्धमात्रं परिणम्यते, न शब्दप्राप्तमाणवककर्तृत्वं पराक्रियते, इत्युपादेयमाणवकविशेषणस्य जातिविशिष्टस्य वयसो नाधिकारनिमित्ततेति। कस्य पुनरधिकारनिमित्ततेति ? अत आह—**अनुपादेयविशेषणमधिकारहेतुरिति**। विधिप्रयुक्तानुष्ठेय-तद्विशेषणव्यतिरेकेण विधिसंबन्धी अनुपादेयः; यथा जीवन् गृहदाहवान् स्वर्गकाम इति।

### तत्त्वदीपनम्

ननु "जाति-वयसी" इत्यत्र जाति-वयसोरधिकारनिमित्तत्वं निषिध्यते, तदिष्टम्; विशिष्टस्याधिकारनिमित्तत्वेष्टेरित्याशङ्क्य, मिलितयोरेवाधिकारनिमित्तत्वं प्रतिषिद्धचत इत्याह—**एवमपीति** ॥ माणवकस्य कथमुपादेयत्वम् ? उपादेयविशेषणस्य वा कथमधिकारनिमित्तत्वाभावः ? इत्याशङ्क्याह—**अयमभिसन्धिरिति** ॥ नियोगविषयत्वेन साक्षादनुष्ठेयो धात्वर्थ उपादेयः, तथा नियोगनिर्वर्तकक्रियानिर्वर्तकः कर्त्रादिश्चोपादेयः, तथा कर्त्रादिविशेषणं चोपादेयम्। उपादेयशब्दार्थं संक्षिप्य दर्शयति—**क्रियेति**। कारकविशेषणं **तद्गुणशब्दार्थः**। एवमुपादेयशब्दार्थं प्रदर्श्य प्रकृतोपयोगितयोपादेयकारकविशेषणं दर्शयति—**तत्रेत्यादिना**। क्रिया-कारक-तद्गुणानां मध्य इति यावत्। शिरोवेष्टनवस्त्र**मुष्णीषशब्दार्थः** ॥ एवमुपादेयविशेषणं प्रदर्श्य तस्याधिकारनिमित्तत्वं निरस्यति—**नचेति**। विधि**रधिकारशब्दार्थः**। क्रियाहेतुत्वात् कारकं तावद् गुणभूतम्, ततस्तद्विशेषणस्यापि गुणभूतत्वमित्यर्थः। भवतु गुणभूतत्वम्, तथाऽपि कथमधिकारनिमित्तत्वाभावः ? तत्राह—**अधिकारिण इति** ॥ माणवकस्यानुपादेयत्वात् तद्विशेषणयोर्जाति-वयसोरधिकारनिमित्तत्वं घटत इति शङ्कते—**कथं पुनरिति**। माणवकस्योपनयनकर्मत्वान्नोपादेयत्वमित्यर्थः। कर्तृत्वादुपादेयत्वं दुर्वारमित्याह—**उच्यत इति** ॥ उक्तेऽर्थे हेतुमाह—**कर्तृविषयत्वादिति**। कुर्वन्तं कारयति प्रयोजक इति प्रसिद्धेस्तस्य कर्तृत्वमित्यर्थः ॥ माणवकस्य प्रयोजकव्यापारकर्मत्वेन कथं कर्तृत्वाभिधानम् ? "उपनयीते"त्यस्य त्वया प्रयोजकव्यापाराभिधायित्वानङ्गीकरणादित्याशङ्क्याह—**तत्र प्राप्तेति** ॥ **तत्रेति**—"उपनयीते"ति वाक्य इत्यर्थः, कर्तृव्यापारप्रतिपत्ताविति वा। प्रयोजकव्यापारप्रतिपत्तिमङ्गीकृत्य तस्यान्यतः प्राप्तत्वेन विधिविषयत्वानुपपत्तेर्माणवकव्यापारे विधिराश्रीयते, ततः प्रयोजकव्यापारकर्मत्वेन कर्तृत्वप्रतीतेरनपवादादुपादेयत्वमित्यर्थः। द्वितीयाविभक्तिः **शब्दशब्दार्थः**। किं तदनुपादेयमित्याकाङ्क्षायामाह—**विधीति** ॥ तदेवोदाहरणेन स्पष्टयति—**यथेति**। नित्यनैमित्तिक-काम्यभेदादुदाहरणभेद इत्यर्थः ॥

### ऋजुविवरणम्

"ननु जाति-वयसी" इत्यनेनोपादेयविशेषणत्वेन चोद्यं कृतम्, तदयुक्तम्; माणवकस्य विधिप्रयुक्त्याऽनुष्ठेयत्वाभावादित्याशङ्क्याभिप्रायमाह—**अयमभिसन्धिरुपादेयमिति** ॥ भवतु नामोपादेयविशेषणत्वम्, तथाऽधिकारिविशेषणत्वमपि स्यात्, व्यावर्तकत्वाविशेषात्, इत्याशङ्क्याह—**नचोपादेयविशेषणमिति**। **अधिकारसंबन्ध इति**—कर्मण्यैश्वर्यरूपसंबन्धनिमित्तमित्यर्थः। अथवा, अधिकारः, फलम्, इदं तदीयफलसाधनमित्येवंरूपसंबन्ध इत्यर्थः। ननु प्रयोजकव्यापारसामर्थ्यात् कर्तृत्वेन प्रतीतावपि यदा प्रयोजकव्यापारानुवादः स्वीकृतः, तदा तस्य कर्तृत्वं परित्यज्य व्यापारे विधिसंबन्धात् प्राधान्यमेवेत्याशङ्क्याह—**तत्र प्राप्तप्रयोजकेति** ॥

## पञ्चपादिका

**सत्यम्, अस्तीयं स्थितिः ॥**

## पञ्चपादिकाविवरणम्

अपसिद्धान्तेन परिहर्तुं नियोगपक्षमङ्गीकरोति—**सत्यम्; अस्तीयं स्थितिरिति** ॥ अयं भावः—यत्र लिङादिपदेन नियोगो वाक्यार्थतया प्रतिपाद्यते, तत्र वाक्यार्थभूतनियोगाकाङ्क्षानिमित्तत्वात् पदार्थान्तरसंबन्धानां नियोगस्य च, कस्य ? कस्मिन् ? इति स्वरूपोपाधित्वेनैवाधिकारिविषयसापेक्षत्वात्(*) स्वर्गकामादिःनियोगाकाङ्क्षयाऽधिकारित्वेन संबध्यते—'ममायं नियोग' इति ॥ स्वामितयाऽन्वयित्वं नियोज्यत्वमधिकारित्वं नाम । तत्र प्रथमं 'ममायं नियोगः' इति प्रतिपद्य नियोगस्य कार्यतावगमादनुष्ठानाय धात्वर्थे विषये पश्चात् कर्तृतयाऽन्वेति । नियोगो हि साध्यतयाऽवगम्यमानः प्रथमान्वयिनोऽधिकारिणो 'ममायं नियोगः' इति प्रतिपत्तुर्नियोगनिर्वृत्तिसमर्थे धात्वर्थे कर्त्रन्वयमन्तरेणानुपपद्यमानस्तदन्वयमर्थापत्त्या प्रतिपादयति, इत्यधिकारान्वयपुरःसरः कर्त्रन्वय इति प्राभाकरा मन्यन्ते । तत्र भवत्वनु-

## तत्त्वदीपनम्

"सत्यमस्ती"त्यत्र कर्त्रन्वयपुरःसरोऽधिकारान्वय इत्यङ्गीकृत्य कर्तृविशेषणस्याप्यधिकारनिमित्तत्वमुक्तम्; तत्र घटते; श्रेयःसाधनवाक्यार्थवादिना कर्त्रन्वयस्याधिकारान्वयपुरःसरत्वाङ्गीकरणात्, इत्याशङ्क्याह—**अपसिद्धान्तेनेति** । भाट्टसिद्धान्तेनेत्यर्थः । **परिहर्तुमित्यत्र**—'उक्तं चोद्यमि'त्यनुषङ्गः ॥ नियोगवादिमतेऽनुपादेयविशेषणस्याधिकारनिमित्तत्वम्, भावनावादे तूपादेयविशेषणस्येत्ययं विभागः किं निबन्धनः ? इत्याशङ्कायामाह—**अयं भाव इति** ॥ तथाऽपि कथमधिकार्यन्वयः; इत्याशङ्क्याह—**नियोगस्येति** । स्वरूपोपाधित्वेन, नियोगप्रतिपत्तिनिमित्तत्वेनेति यावत् । समानपदोपात्तस्य धात्वर्थस्य विषयत्वेनान्वयाद् भिन्नपदोपात्तोऽपि स्वर्गकामादिरधिकारित्वेनान्वीयत इत्यर्थः । नियोज्यान्वयपुरःसरः कर्त्रन्वय इति तद्ग्रन्थे लक्ष्यत इत्याशङ्क्याह—**ममायमिति** ॥ कर्त्रन्वयाभावे नियोगानिष्पत्तेः सोऽप्येष्टव्य इत्याशङ्क्याह—**तत्रेति** । लिङादिश्रवण इति यावत् । **प्रतिपद्येति**—अधिकार्यन्वयं प्रतिपद्येत्यर्थः । तत्र किं प्रमाणमिति ? अत आह—**नियोग इति** । नियोगस्य कृतिसाध्यतया प्रतिपत्तेः साक्षाच्च कृतिसाध्यत्वासंभवाद् धात्वर्थस्य निर्वर्तनद्वारा कृतिसाध्यत्वम्, नच धात्वर्थे कर्तृत्वेनान्वयाभावे तन्निर्वृत्तिः, इति नियोगानुपपत्त्या कर्त्रन्वयसिद्धिरित्यर्थः । ततः किमिति ? अत आह—**तत्रेति** ॥ अनुपादेयेति स्वामित्वेनान्वयिनो विशेषणं विधि-पुरुषसंबन्धनिमित्तमित्यर्थः । कथं

## ऋजुविवरणम्

"सत्यमस्तीयं स्थितिरि"त्यङ्गीकारो न युक्तः—नह्यनुपादेयविशेषणमेवाधिकारहेतुरित्यत्र किञ्चित्प्रमाणमस्ति वैपरीत्यस्यापि संभवात् । "किन्तु कर्तुरि"त्यप्यनुपपन्नम्; नहि सकृत् श्रुतस्य विशेषणस्य कर्तृविशेषणत्वमधिकारिविशेषणत्वं चेति विरुद्धार्थद्वयं न्याय्यम्, सिद्धान्तानिर्णयश्चास्मिन् पक्षे । परिहारश्चायं "किञ्चे"त्यनेन पुनरुक्तः, "किन्त्व"ति ग्रन्थेन च व्याहतः; पूर्वेणानुपादेयविशेषणस्याधिकारहेतुत्वाङ्गीकारात् उत्तरेणोपादेयविशेषणस्याधिकारहेतुत्वप्रदर्शनात् । "किन्त्वि"त्यस्योत्तरग्रन्थविरोधश्च; उत्तरग्रन्थे हि "किञ्चे"त्यनेनानुपादेयत्वकीर्तनात्, स्वसिद्धान्तविरुद्धश्चायं परिहारः; स्वसिद्धान्ते हि इष्टसाधनस्याधिकारे सापेक्षत्वात्;—इत्याशङ्क्य विषयभेदेनावतारयति—**अपसिद्धान्तेनेति** । अनेन विरोधपरिहारः कृतः । **नियोगपक्षमित्यनेन** पौनरुक्त्यपरिहारः । "अपसिद्धान्तेने"त्यनेन नियोगपक्षाङ्गीकारे प्रयोजनमप्युक्तम् । ननु यान्येवोपादेयविशेषणानि, तान्येव नियोगपक्षेऽनुपादेयविशेषणानीति कथं भेदः ? पक्षद्वयेऽपि समर्पकशब्दस्यैकत्वात्, तस्यैकस्यैवानुपादेयविशेषणसमर्पकत्वमुपादेयविशेषणसमर्पकत्वं चेति व्यवस्थापकाभावात्, पुरुषस्यैकस्योभयथाऽन्वये प्रमाणाभावात्, प्रत्युत सर्वपक्षेषु कर्त्रन्वयाविशेषाद् यागादेः क्रियारूपत्वेन कर्त्रन्वयापेक्षत्वाद् उपादेयविशेषणानामेवाधिकारिविशेषणत्वमित्याशङ्क्याभिप्रायमाह—**अयं भावो यत्रेति** ॥ "अधिकारिविषये"त्यत्राधिकारिशब्दो नियोज्यपरः । यद्वा, स्वसंबन्धिकार्यबोद्धा नियोज्यत्वेनान्वितः, स एवाधिकारित्वेनान्वेतीत्यभिप्रेत्याह—**अनुष्ठाननिबन्धनत्वादैश्वर्यस्येति** ॥ ननु स्वरूपोपाधितया नियोज्यान्वयोऽङ्गीक्रियते, तत् कथं स्वरूपोपाधित्वेनाधिकारान्वय उच्यते ? इत्याशङ्क्याह—**ममायं नियोग इति** । **स्वामितयेति** ॥ एवं तर्ह्यधिकारित्वेनान्वयात् कर्त्रन्वयाभावेनैव

---

* 'अनुष्ठाननिबन्धनत्वादैश्वर्यस्य' इति **ऋजुविवरणाभिमतमधिकमत्र पदम्** ।

**पञ्चपादिका**

**किन्तु कर्तुरधिकार इत्यपि स्थिता न्यायविदः ।**

**पञ्चपादिकाविवरणम्**

पादेयविशेषणमधिकारहेतुः, भावनावादे तु पुनरुपादेयविशेषणमप्यधिकारहेतुरित्याह—**किन्तु कर्तुरधिकार इत्यपि स्थिता न्यायविद इति** ॥

अयमाशयः—लिङादिप्रत्ययैर्यदा पुरुषप्रवृत्तिर्भावना वाक्यार्थतया प्रतिपाद्यते, तदा प्रधानाकाङ्क्षानिमित्तत्वात् संबन्धस्य, क्रियायाश्च स्वरूपोपाधित्वेन कर्तृ-करण-कर्मापेक्षणीयत्वात्, पुरुषार्थ-धात्वर्थयोश्च भाव्य-तत्करणत्वेनान्वयात् परिशेषात् स्वर्गकामादयः कर्तृत्वेनान्वीयन्ते । ततश्च कर्तृविशेषणतया तन्नियमार्थानि जीवन-गृहदाहकामनादीनि । तत्र प्रथमं कर्तृत्वेनान्वयं प्रतिपद्य कर्तुरेव फलसम्बन्धाद् 'मदीयमिदं फलसाधनं कर्मे'ति कर्मस्वामित्वलक्षणमधिकारान्वयं पश्चादनुभवति । कर्मफलभोक्तृत्वमेव हि कर्मणि स्वाम्यन्वय इति । ततश्च कर्तृविशेषणान्येव तस्यैव फलभोक्तृतया कर्मणि स्वाम्यन्वयं नियमयन्तीति कर्तुरधिकारस्थितिः । एवं भावनावाक्यार्थोपादानेनापि माणवकस्याधिकारसिद्धिरिति भावः । अथवा, यथा राजसूये राजत्वं कर्तृविशेषणमन्येनाधिकारिणा राजत्वस्य कर्तृविशेषणतया सम्पादयितुमशक्यत्वादधिकारिविशेषणमपि सम्पद्यते, तद्वदिहापि स्यादिति ।

ननु नायं परिहार उपपद्यते; श्रेयःसाधनस्य लिङादिप्रत्ययैर्वाक्यार्थत्वेनाभिधीयमानत्वात्, तस्य च प्रथममधिकारान्वयापेक्षत्वात् । कथम् ? श्रेयो हि भोक्तारमपेक्षते, अतस्तत्साधनमपि भोक्त्रन्वयि भवति—'कस्येदं श्रेयः-

**तत्त्वदीपनम्**

तदनुपादेयमाणवकविशेषणस्याधिकारनिमित्तत्वम् ? तत्राह—**भावनेति** ॥ **तु**शब्दो विशेषप्रदर्शनार्थः ॥

कर्त्रन्वयपुरःसरोऽधिकारान्वय इति ब्रुवतां न्यायविदामाशयं दर्शयति—**अयमाशय इति** ॥ भावनास्वरूपमाह—**पुरुषप्रवृत्तिरिति** ॥ **कर्म**शब्दो भाव्यपरः । फलितमाह—**ततश्चेति** ॥ तथाऽपि कथं कर्तुः स्वामित्वेनान्वयः ? इत्याशङ्क्याह—**तत्र प्रथममिति** ॥ मदभिलषितसाधनं कर्मेति फलस्वामित्वं प्रतीयते, न कर्मस्वामित्वम्, तत्राह—**कर्मेति** । फलस्वामित्वमेव यत्, तत्साधनकर्मस्वामित्यर्थः । **इति**शब्दो हेत्वर्थः । यस्माद् भोक्तृत्वं स्वाम्यन्वयः, तस्मादधिकारान्वयमनुभवतीत्यन्वयः । फलितमाह—**ततश्चेति** ॥ प्रथमं कर्तृत्वेनान्वयो यस्मात्, तस्मादित्यर्थः । कर्त्रन्वयपुरःसरोऽधिकारान्वय इति ब्रुवतः सिद्धान्तिनः किं फलम् ? इत्याशङ्क्याह—**एवमिति** ॥ **इति भाव इति** मनीषेति यावत् ॥ अनुपादेयविशेषणमेवाधिकारनिमित्तमित्ययं नियमो गुरुणाऽपि वक्तुं न शक्यते, इत्याशयवानाह—**अथवेति** ॥ कर्तृविशेषणमपि राजत्वमधिकारिविशेषणं यथा संपद्यते, तद्वदिहापीति संबन्धः । तत्र हेतुमाह—**अन्येनेति** । कर्तृविशेषणतया स्थितस्य राजत्वस्य राज्ञोऽन्येन संपादयितुमशक्यत्वादिति संबन्धः ।

भावनावाक्यार्थपक्ष उपादेयविशेषणस्याधिकारनिमितत्वेऽपीष्टसाधनवाक्यार्थवाद उपादेयविशेषणस्यानाधिकारनिमित्तत्वमित्याह—**ननु नायमिति** ॥ साधनं साधकमपेक्षते, न भोक्तारम्, इत्याक्षिपति—**कथमिति** ॥ साधनप्रतिपत्तेः श्रेयःप्रतिपत्तिसाकाङ्क्षत्वात् तस्याश्च भोक्तृसाकाङ्क्षत्वात् साधनस्यापि भोक्त्रन्वय एव प्रथमं युक्त इत्याह—

**ऋजुविवरणम्**

नियोगसिद्धिर्न स्यादित्याशङ्क्याह—**तत्र प्रथमं ममायमिति** ॥ ननु अधिकारिणः कर्तृत्वे किं प्रमाणम् ? नहि कर्तृबोधकः शब्दोऽस्ति, नापि प्रमाणान्तरम्, अतो न कर्तृत्वमित्याशङ्क्याह—**नियोगो हीति** ॥ **अर्थापत्त्या** । उपादानेनेत्यर्थः ।

ननु कथं कर्तुरधिकारः, विरोधात् ? नहि प्रथमं कर्तृत्वबोधकः शब्दोऽस्ति, नापि कर्तृत्वान्वये प्रमाणं न्यायो वा, नापि तदुत्तरकालमधिकारान्वयेऽपि कारणमस्ति ; अत उपादेयविशेषणतयाधिकारहेतुता कथम् ? इत्याशङ्क्याह—**अयमाशय इति** ॥ भवतु कर्तृत्वेनैवान्वयः, तथाऽपि तस्यैव स्वामित्वं कथम् ? इत्याशङ्क्याह—**कर्तुरेवेति** । ननु कथं कर्मणि स्वामित्वम् ? तत्फलसाधनं कर्मेति स्वफलसाधनत्वमात्रप्रत्ययात्, इत्याशङ्क्याह—**कर्मफलेति** ॥ "अथवा" इत्यनेन नियोगपक्ष एव क्वचिदुपादेयविशेषणस्याधिकारहेतुत्वं दृश्यते । **तद्वदत्रापीति** ( **तद्वदिहापीति** ) वदता "किन्तु कर्तुरि"ति ग्रन्थो नियोगपक्ष एव योजितः । जात्यवच्छिन्नव्यक्तेः कर्तृत्वेन जातेरुपादेयविशेषणत्वम्, स्वर्गादिस्तु साध्यत्वेन प्रतीतस्य नियोज्यविशेषणत्वे सति भवति; नान्यथेति द्रष्टव्यम् ॥

## पञ्चपादिका

**किंचेह न माणवको जाति-वयोविशिष्ट उपादेय उपनयने, किं तूपनयनमेव तदर्थं विधीयते; संस्कारस्य संस्कार्योद्देशेन विधानात् । अतः संस्कार्यस्यावच्छेदकत्वं वयो-जात्यवछिन्नं सद् भवति नित्यनिमित्तं माणवकस्य संस्कार्यत्व इति ।**

## पञ्चपादिकाविवरणम्

साधनम् ? ममेदमभिलषितसाधनमि'ति च स्वाम्यन्वयाकाङ्क्षादर्शनात्, 'कस्यायं नियोगः' ममायमितिवत्; भावना तु क्रिया कर्त्राश्रयतयाऽवगम्यमाना तमपेक्षते । ननु कृतियोग्यमेव श्रेयःसाधनं विधिः; कर्तुरिष्टाभ्युपायो विधिरित्यभ्युपगमात् ततश्च कृतिः कर्तारमपेक्षत इति ? तर्हि नियोगस्यापि कार्यतयाऽवगमात् कृतिनिमित्तकर्त्रन्वय एव स्यात् । ननु—कृतिनियोगोपसर्जनतयैव शब्देनाभिधीयते ; नचोपसर्जनाकाङ्क्षया पदार्थान्वयः, किन्तु प्रधानाकाङ्क्षया ; ततश्च प्रधाननियोगाकाङ्क्षया प्रथममधिकारान्वयः—इति ? समानमेतदिष्टसाधनेऽपि ; कृतेरुपसर्जनतयाऽभिधानात् ।

ननु श्रेयसोऽप्युपसर्जनत्वात् तत्सामर्थ्यलभ्यो भोक्त्रन्वयः कथं साधनस्य स्यात् ? नैष दोषः ; साधनत्वस्वरूपोपाधित्वाच्छ्रेयसः, तस्य च नियमेन भोक्त्रन्वयात् कर्तृ-भोक्तृसाधारणस्य साधनस्य स्वोपाधिश्रेयोऽनुसारेण भोक्त्रन्वयनियमसिद्धेः । तस्माद् ममाभिलषितसाधनमिति प्रथममधिकारान्वयो वाक्यार्थभूतेन विधिना श्रेयःसाधनेनापेक्ष्यते पश्चादभिलषितसाधनत्वस्याश्रये धात्वर्थे विषये विधिसामर्थ्यादेव कर्त्रन्वयं प्रतिपद्यत इति ।

एवमपि तत्र न विरोध इत्याह—**किंचेह न माणवको जाति-वयोविशिष्ट उपादेय इति** । यदैवोपनयनाध्ययनादिमाणवकव्यापारस्य सामान्येनाभिलषितसाधनत्वलक्षणो विधिः शब्देन प्रतिपाद्यते, तदा सामान्यस्य श्रेयो-

## तत्त्वदीपनम्

**श्रेय इति** ।। न केवलं युक्तितः साधनस्य भोक्त्रन्वयः, किंत्वनुभवतोऽपीत्याह—**कस्येदमिति** ।। तत्र दृष्टान्तमाह—**कस्यायमिति** ।। भावनावादेऽप्यधिकारान्वयप्राथम्यं किं न स्यात् ? तत्राह—**भावनेति** ।। शिशिरमरीचिण्डलोदयादौ व्यभिचारादिष्टसाधनमात्रस्य लिङर्थत्वानुपपत्तेः कृतियोग्यश्रेयःसाधनस्य लिङर्थत्वं वक्तव्यम्, कृतेश्च कर्त्राकाङ्क्षत्वात् प्रथमं कर्त्रन्वय इति शङ्कते—**ननु कृतीति** ।। प्रवर्तकं विधिशब्दार्थः । तत्र वृद्धसंमतिमाह—**कर्तुरिति** । कर्तुरिति विशेषणात् तत्साध्येष्टसाधनस्य विधित्वं युक्तमित्यर्थः । नियोगस्य कृतिसाध्यत्वेऽपि प्रथमं भोक्त्रन्वयवत् साधनस्यापि भोक्त्रन्वय एव, इतरथेतरत्रापि प्रथमं कर्त्रन्वयप्रसक्तिरिति शङ्कते—**तर्हि नियोगस्येति** ।। तत्र दृष्टान्तो विषम इत्याह—**ननु कृतिरिति** ।। ततः किमिति ? अत आह—**नचेति** ।। फलितमाह—**ततश्चेति** ।। तुल्यमुत्तरमित्याह—**समानमिति** ।।

श्रेयस उपसर्जनत्वेऽपि तदाकाङ्क्षया यथा भोक्त्रन्वयः, तथा कृत्याकाङ्क्षया कर्त्रन्वयः किं न स्यात् ? इतरथा न भोक्त्रन्वयोऽपीति शङ्कते—**ननु श्रेयस इति** ।। कृति-श्रेयसोर्वैषम्याद् मैवमित्याह—**नैष इति** ।। **स्वरूपोपाधित्वादिति**—साधनप्रतिपत्तिनिमित्तत्वादित्यर्थः । साधने प्रतिपन्ने तस्य प्रवर्तकत्वसिध्यर्थं कृतिसाध्यताऽपेक्ष्यते, श्रेयस्तु साधनप्रतिपत्त्यर्थमिति वैषम्यमित्यर्थः । श्रेय इव साधनमपि भोक्त्रन्वयमाक्षिपतीति शङ्कां निरस्यति—**कर्त्रिति** ।। श्रेयःसंबन्धात् साधनं भोक्त्रन्वयि, कृतियोग्यतासंबन्धात् कर्त्रन्वयि, न स्वरूपेण कर्त्राद्यन्वयि । तत्र च स्वप्रतिपत्तिनिमित्ततया श्रेयसोऽन्तरङ्गत्वात् तदनुसारेण भोक्त्रन्वय इत्यर्थः । ततश्च जाति-वयसोरुपादेयविशेषणयोरधिकारनिमित्वाभिधानमयुक्तमिति इतिशब्दार्थः ।

अस्मन्मतेऽपि जाति-वयसोरुपादेयविशेषणत्वाभावादधिकारनिमित्तत्वं युक्तमित्याह—**एवमपीति** ।। ब्राह्मण उपगच्छेत् सोऽध्यीयीतेति कर्तृत्वप्रतिपत्तेः कथमनुपादेयत्वम् ? इत्याशङ्क्याह—**यदैवेति** ।। उपगमनमुपनयनशब्दार्थः ।

## ऋजुविवरणम्

ननु श्रेयःसाधनत्वपक्षे नाधिकारत्वेनान्वयः ; साधनस्य प्रथममधिकारकांक्षाकारणाभावात्, साधनस्य निष्पत्त्यपेक्षस्य कर्त्रन्वयापेक्षत्वादित्याक्षिपति—**कथमिति** ।।

**नैष दोषः साधनत्वस्वरूपोपाधित्वादिति** । स्वरूपनिरूपकत्वात् कस्य साधनं श्रेयस इति । अयं भावः—साधनं तावद् न भोक्त्रन्वयं कर्त्रन्वयं वा नियमयति, साधारणत्वात्; अतोऽवश्याश्रयणीये व्यवस्थापकान्तरे यद्यपि श्रेयसोऽप्युपसर्जनत्वम्, तथाऽपि तन्निबन्धनौ भोक्त्रन्वय एव स्यात्, तस्य स्वरूपोपाधित्वेनान्तरङ्गत्वात् ; कृतेस्तु विध्युपाधितया बहिरङ्गत्वादिति ।

## पञ्चपादिका

**तदेवमुपनयनस्याध्ययनार्थत्वात् तस्य च साधिकारत्वात् तेन चाधिकारेण साधिकारोऽध्ययनविधिः। अक्षरग्रहणमात्रेण चाधिकारसिद्धिः, अर्थावबोधस्तु कारणान्तरादिति ॥**

## पञ्चपादिकाविवरणम्

विशेषाकाङ्क्षायां परम्परया पुरुषार्थसाधनमुपनयनसंस्कारं माणवकगतं श्रेयोविशेषं परिकल्प्य, तत्साधनत्वलक्षणो विधिर्माणवकव्यापारे प्रतिपादितो भवति। ततः संस्कारफलभोक्तृतया विधौ माणवकः स्वामित्वेनान्वेति। तत्र च स्वामिनियमार्थं ब्राह्मण्यादिविशेषणं तस्यैव पश्चादभिलषितसाधनत्वविषये माणवकव्यापारे कर्त्रन्वयं नियमयतीति ग्रन्थार्थः। ननु प्रयोजकव्यापारविषयतया कर्तृत्वेनैवान्वयो वाक्यात्प्रतिपन्नः ? सत्यम्, तत्र विधिसंबन्धसामर्थ्याद् भोक्त्रन्वयं प्रतिपद्य कर्त्रन्वयनियमः कल्प्यते ॥

ननु एवमप्यध्ययनस्य न साधिकारतासिद्धिरिति ? तत्राह—**तदेवमुपनयनस्याध्ययनार्थत्वादिति** ॥ प्रसिद्धं च सर्वस्मृतिशास्त्रेषूपनयनमध्ययनाङ्गमिति। वाजसनेयिनां चोपनयनं प्रकृत्याध्ययनं विधीयते। विधिद्वयसामर्थ्यं चोपादानप्रमाणं दर्शितम्। इहापि "तमध्यापयीते"त्युपनीतं तच्छब्देन परामृशति, अङ्गाङ्गिनोश्चैकाधिकारत्वादुपनीतो ब्राह्मणोऽधीयीतेति संपद्यते; अङ्गाधिकारनिमित्तस्य कालस्य सर्वत्राङ्गिन्यन्वयनियमाभावाद् वयसो नाध्ययनाधिकारनिमित्ततेति। ननु नित्याधिकारेणाध्ययनविधिनाऽर्थावबोधो भाव्यतामिति ? नेत्याह—**अक्षरग्रहणमात्रेण चेति** ॥ ननु सकृदध्ययनादेव नित्याध्ययनविधिसिद्धेरावृत्तिः केन लभ्यते ? अर्थावबोधफलपक्षे वा कथं लभ्यते ? फलावसानानुपपत्ते-

## तत्त्वदीपनम्

कर्तृत्वेनानन्वये कथं प्रवृत्तिरिति ? तत्राह—**तस्येति**। अभिलषितसाधनत्वलक्षणो विषयो यस्मिन्, स तथोक्तः ॥ लिङादिप्रतिपाद्यत्वं विषयशब्दार्थः। विषयशब्द आश्रयपरो वा। माणवकस्य प्रयोजकव्यापारविषयत्वात् कर्तृत्वम्, ततश्च जात्यादेः कर्तृविशेषणत्वान्नाधिकारनिमित्तत्वमिति शङ्कते—**ननु प्रयोजकेति** ॥ कर्तृत्वान्वयप्रतिपत्तिमङ्गीकरोति—**सत्यमिति** ॥ तर्हि पूर्वापरविरोधः, तत्राह—**तत्र विधीति**। प्रयोजकव्यापारस्याविधेयत्वादितरत्र विधिसंबन्धो वक्तव्यः, तथाच लिङादिप्रतिपन्नश्रेयःसाधनविध्यनुरोधेन भोक्त्रन्वयप्रतिपत्तेरङ्गीकरणाद् न विरोध इत्यर्थः ॥

अध्ययनेऽधिकारनिमित्ताप्रतिपत्तेरनध्ययनमेवेति शङ्कते—**नन्वेवमिति** ॥ अप्रतिपत्तिरसिद्धेत्याह—**तत्राहेति** ॥ अध्यापनार्थत्वमसिद्धमिति मन्वानं प्रति, उक्तं स्मारयति—**प्रसिद्धमिति** ॥ **स्मृतिशास्त्रेषु** स्मृतिषु तन्मूलश्रुतिषु चेत्यर्थः। स्मृतय एव शास्त्राणि स्मृतिशास्त्राणि, तेष्विति वा। तत्र साक्षात् श्रुतिरपि प्रमाणमित्याह—**वाजसनेयिनामिति** ॥ विधिद्वयानुपपत्तिश्चात्र प्रमाणमित्याह—**विधिद्वयेति**। अध्यापनविधिरुपगमनविधिश्चेत्येतद् द्वयं **विधिशब्दार्थः** ॥ भवत्वङ्गाङ्गित्वम्, तथाऽपि कथमध्ययनस्य साधिकारत्वम् ? तत्राह—**अङ्गाङ्गिनोरिति**। एकोऽधिकारो विधि-पुरुषसंबन्धनिमित्तं ययोस्तौ, एकाधिकारौ, तद्भावस्तत्त्वम्; तस्मादिति विग्रहः। उपनयनाधिकारनिमित्तस्याध्ययनाधिकारनिमित्तत्वेऽष्टवर्षस्यैवाध्ययनं प्राप्तम्, इत्याशङ्क्याह—**अङ्गेति** ॥ अध्ययनविधेर्नित्याधिकारत्वमङ्गीकृत्य, अर्थावबोधे विधेः पर्यवसानं शङ्कते—**ननु नित्येति** ॥ स्वाध्यायाप्तेर्भाव्यत्वं शब्दप्रतिपन्नं विहाय व्यवहिताप्रतिपन्नार्थावबोधस्य भाव्यत्वकल्पनमयुक्तमित्याह—**नेत्याहेति** ॥ आवृत्त्यनुपपत्त्याऽर्थावबोधो भाव्यमिति शङ्कते—**ननु सकृदिति** ॥ अथवा आवृत्त्यनुपपत्त्याऽध्ययनस्य काम्यत्वमिति शङ्कते—**ननु सकृदिति** ॥ आवृत्त्यसिद्धिस्तावदत्रापि तुल्येत्याह—**अर्थावबोधेति**।

## ऋजुविवरणम्

"किञ्चेह न माणवकः" इत्यनेन कथं विरोधः परिहृतः ? नहि माणवकस्योपादेयत्वं नास्तीति वक्तुं शक्यते; ब्राह्मणकर्तृत्वप्रतीतेः। नहि प्रकारान्तरेण माणवकस्यान्वयप्रतीतिरस्ति। "किन्तु उपनयनमेवे"त्यप्ययुक्तम्; उपनयनस्य तदर्थत्वबोधकप्रमाणाभावात्। उपनयनस्य तादर्थ्यं नाम तदीयफलसाधनत्वम्, नह्यस्य फलसाधनत्वप्रतीतिरस्ति, फलप्रतीत्यभावात्। "संस्कारस्ये"त्यनेन युक्तिरुक्ता, सापि न युक्ता; नहि संस्कारस्य विधानमस्ति, नापि संस्कारस्य पुरुषार्थत्वमुपनयनस्य पुरुषार्थत्वसाधकम्; व्यधिकरणत्वात्, नापि संस्कारजननेनोपगमनस्य तादर्थ्यम्; संस्कारस्य पुरुषार्थत्वेनेष्टत्वाभावात्, तत्साधनस्य पुरुषार्थत्वायोगात्। "अतः संस्कारस्यैवे"त्यप्ययुक्तम्;संस्कार्यत्वमात्रेण स्वामित्वाभावात्, तद्विशेषणस्याधिकारनिमित्तत्वाभावादित्याशङ्क्य व्याचष्टे—**यदैवोपनयनाध्ययनादीति** ॥

**पञ्चपादिका**

**ननु चैवमधीतो वेदो धर्मजिज्ञासाया हेतुर्ज्ञातः, अनन्तरं धर्मो जिज्ञासितव्यः, इति वेद एवाधीतोऽन्यनिरपेक्षो धर्मजिज्ञासाया हेतुरिति वदन्ति ? सत्यम्; तथैव तत्, को वाऽन्यथा वदति ?**

**पञ्चपादिकाविवरणम्**

रिति चेत् ? इहापि समानम् ; अक्षरावाप्तेः फलत्वात् । ननु अदृष्टमेव विधिफलमित्युक्तम् ? समानमर्थावबोधपक्षेऽपि ॥

ननु—अदृष्टसमवायिदृष्टं फलमर्थावबोधः, तस्य चाक्षरस्वीकरणविचाराद्यपेक्षत्वात् तदर्थमावृत्तिसिद्धिः—इति ? न; शाखान्तरीयपौरुषेयवाक्येभ्योऽप्यभ्यस्तीकृतेभ्योऽर्थावबोधदर्शनाद् न तदर्थमावृत्त्यपेक्षा युक्ता, जप-स्वाध्याय-विधिसामर्थ्याच्चाक्षरस्वीकरणायावृत्तिः कल्प्यते, नार्थावबोधसामर्थ्यात् । अध्ययनशब्द एव वाऽधीयमानावाप्तिपर्यन्त-व्यापारस्य मुख्यया वृत्त्याऽभिधायकः सकृदुच्चारणादौ, गौण इत्यावृत्तिसिद्धिरिति ।

ननु वेदस्यैवान्यनिरपेक्षतया विचारहेतुत्वं वदन् भाष्यकारोऽध्ययनविधेरेव विचारहेतुत्वमाहेति चोदयति—**ननु चैवमधीतो वेद इति** ॥ सत्यम्, विचारस्य प्रयोजकोत्तरविधिप्रदर्शनद्वारेण विचारहेतुः स्वाध्यायः, नाध्ययनविधि-विधेयताद्वारेणेति परिहरति—**सत्यम् ; तथैव तदित्यादिना** ॥ ननु स्वाध्यायादापातप्रतिपन्नोत्तरविधिरनिश्चितः कथं

**तत्त्वदीपनम्**

तण्डुलनिष्पत्तिपर्यन्तमवहननवदावृत्तिर्घटत इत्याह—**फलेति** ॥ स्वाधीनोच्चारणक्षमतालक्षणफलस्य सकृदध्ययनादसिद्धेरा-वृत्तिरास्थेयेत्याह—**इहापीति** ॥ अवाप्तेः फलत्वमाक्षिपति—**नन्वदृष्टमिति** ॥ तवापीयमनुपपत्तिः समेत्याह—**समानमिति** ।

अदृष्टफलस्याप्यङ्गीकरणान्न विधिवैयर्थ्यमिति शङ्कते—**नन्वदृष्टेति** ॥ **अदृष्टसमवायीति** । अदृष्टविशिष्ट-मित्यर्थः । तथाऽपि कथमावृत्तिसिद्धिरिति ? अत आह—**तस्य चेति** ॥ अस्माभिरप्यदृष्टस्याङ्गीकरणादक्षरावाप्तेः फलत्वं संभवतीत्यभिसन्धाय परपक्ष आवृत्त्यसंभवमाह—**न शाखान्तरीयेति** । शाखान्तरीयाणि पौरुषेयाणि च यानि वाक्यानि, तेभ्य इत्यर्थः । इतोऽप्यस्मन्मत आवृत्तिर्युक्तेत्याह—**जपेति** ॥ अध्ययनशब्दपर्यालोचनायामप्यावृत्तिसिद्धिरित्याह—**अध्ययनशब्द इति** ॥ सकृदुच्चारणादावप्यध्ययनशब्दप्रयोगो दृष्ट इत्याशङ्क्याह—**सकृदिति** । 'नास्मदधीतात्प्रमद्ये'दिति वाक्यादवाप्तिपर्यन्ताध्ययने मुख्यत्वप्रतिपत्तेरित्यर्थः । अध्ययनस्य स्वविधिप्रयुक्तिसंभवेऽध्यापनविधिप्रयुक्त्ययोगात् स्वविधिप्रयुक्तमध्ययनम्, तच्चाक्षरावाप्तौ पर्यवसितम्, इति न कृत्स्नवेदार्थविचारस्याध्ययनविधिप्रयुक्ततया त्रैवर्णिका-धिकारत्वं वेदस्य, ततश्चानन्तर्याभिधानमुखेनावश्यापेक्षिताधिकारिविशेषणसमर्पणार्थत्वमथशब्दस्य युक्तमितीतिशब्दार्थः ॥

"ननु चे"त्यत्र वेदस्य कारणान्तरनिरपेक्षस्य धर्मजिज्ञासाहेतुत्वसंभवान्नाधिकारिविशेषणपुष्कलकारण-परत्वमथशब्दस्येत्युक्तम्, तत्र चाध्ययनविधिप्रयुक्तो विचार इति स्ववचनं विरुध्येतेत्याशङ्क्य तात्पर्यमाह—**ननु वेदस्येति** । अध्ययनविधिभाव्यस्वाध्यायफलभूतार्थावबोधस्य विचारमन्तरेणासंभवात् स आक्षिप्यते, इति स्वाध्यायस्य विचारप्रयो-जकत्वं शबरस्वामिनोक्तमिति न विरोध इत्यर्थः ॥ अध्ययनविधेर्विचारप्रयोजकत्वस्य निरस्तत्वात् कथं तदङ्गीकारः ? इत्याशङ्क्य, किं परम्परया विचारं प्रयोजयति स्वाध्यायः ? उत साक्षात् ? इति विकल्पाद्यमङ्गीकरोति—**सत्यमिति** । अङ्गीकृतमंशमाह—**विचारेति** ॥ द्वितीयं दूषयति—**नाध्ययनेति** । अनुपपत्त्यभावान्न प्रयोजकत्वमित्यर्थः । उत्तरविधेर-निश्चितार्थस्य यथा स्वविषयाननुष्ठापकत्वम्, तथा विचारादर्वागनिश्चितार्थस्य कथं विचारानुष्ठापकत्वम् ? इति शङ्कते—**ननु स्वाध्यायादिति** ॥ "अधीतो वेदः" इत्यत्र कर्मणामवश्यकर्तव्यतामात्रं प्रतीयते, न तूत्तरविधेर्विचारप्रयोजकत्वम्,

**ऋजुविवरणम्**

ननु अङ्गाङ्गिनोरेकाधिकारत्वेनाष्टवर्षस्यैवाध्ययनमपि प्राप्नोतीत्याशङ्क्याह—**अङ्गाधिकारनिमित्तस्येति** ॥

कथमर्थावबोधसामर्थ्यंसिद्धत्वमावृत्तेर्निराक्रियते ? त्वयाऽप्यङ्गीकरणीयत्वात् अन्यथाऽवृत्तिर्निष्प्रमाणिकैव स्यादित्याशङ्क्याह—**जप-स्वाध्यायेति** ॥ ननु एवमध्ययनविधिरक्षरग्रहणान्त इति यदुक्तम्, तन्न स्यात्, किञ्चादृष्टार्थश्च स्यादित्याह—**अध्ययनशब्द एवेति** ॥

"सत्यमि"त्यङ्गीकारो न युक्तः; अध्ययनविधेर्विचारप्रयोजकत्वस्य निरस्तत्वादित्याशङ्क्यावतारयति—**सत्यं, विचारस्येति** ॥ "अधीतो वेदः"इत्यनेनाध्ययनमात्रात्प्रतिपत्तिमुक्त्वाऽनन्तरं विचारः कर्तव्योऽनुष्ठानसिध्यर्थ-

**पञ्चपादिका**

**अधीतवेदो ह्यवश्यकरणीयानि नित्य-नैमित्तिकान्यकरणे प्रत्यवायजनकानि कर्माणि प्रतिपद्यते, तान्यनन्तरमेवावश्यविचारणीयानि—कथमेतान्यनुष्ठेयानीति । अतः प्रागध्ययनादप्रतिपत्तेरयोग्यत्वादधीतवेदत्वमेवान्यनिरपेक्षमर्थावबोधहेतुरिति गीयते । न तथा—ब्रह्मज्ञानमवश्यकर्तव्यम्, अकरणे प्रत्यवायहेतुः—इति प्रमाणमस्ति ।**

**पञ्चपादिकाविवरणम्**

विचारं प्रयुङ्क्ते इति ? तदाह—**अधीतवेदो ह्यवश्यकरणीयानीति** ।। आपातप्रतिपन्नानामुत्तरनित्यविधीनामनुष्ठेयनिर्णयज्ञानसापेक्षत्वात् तन्निर्णयाय विचारप्रयोजकत्वमिति काम्यवाक्यविचारमप्याधानवत् फलकामनैव प्रयुङ्क्ते । ननु अनेकविधिप्रयुक्तिकल्पनाद् वरमध्ययनविधिप्रयुक्तिकल्पनं विचारस्य ? न ; विधेय-तदुपकारिव्यतिरिक्तस्य विचारस्याप्रयोजकत्वादध्ययनविधेरित्युक्तत्वाद् अर्थावबोधफलत्वाभावात्, अवघातावृत्तिवत् फलापेक्षयाऽपि न विचारविधिरत्युक्तत्वात् ; उत्तरविधिविधेयोपकारित्वाद् विचारस्य तत्प्रयुक्तिः सम्भवति । प्रतिवाक्यं निर्णयज्ञानभेदाच्च विधिभेदो न विरुध्यते ; अन्यथा यागाद्यनुष्ठानस्याप्यध्ययनविधिप्रयोज्यत्वं स्यात्, स्वर्गादिसिद्धिपर्यन्तत्वादध्ययनविधिफलस्य । ननु अध्ययनमप्युत्तरविधिप्रयुक्तं स्यात्, अध्ययनमन्तरेण विचारनिर्णयक्रत्वानुष्ठानाद्यसिद्धेरिति ? तत्राह—**अतः प्रागध्ययनादप्रतिपत्तेरिति** । प्रागध्ययनादुत्तरविधीनामप्रतिपनत्तेर्नाध्ययनप्रयोजकत्वमित्यर्थः । अध्ययनविधिश्च सन्ध्योपासनादिविधिवत् पित्रादिभ्यः श्रूयमाणः प्रवर्तयति । नच सकलोत्तरविधीनामध्ययनात् प्राक् श्रवणं सम्भवतीत्युक्तम् । अस्तु तर्हि ब्रह्मज्ञानस्यापि त्रैवर्णिकाधिकृतोत्तरनित्यविधिप्रयुक्त एव विचार इति ? नेत्याह—**न तथा ब्रह्मज्ञानमिति** ।।

**तत्त्वदीपनम्**

तथा कर्मणां प्रतिपत्तौ विचारवैयर्थ्यं चेत्याशङ्क्य तात्पर्यमाह—**आपातेति** । अर्थनिश्चये जाते तत्र विचारानवसरात् संदिग्धार्थस्यैव विचारप्रयोजकत्वं वक्तव्यम्, स्वविषयानुष्ठानं त्वर्थनिश्चयमन्तरेणानुपपन्नमिति विचारोऽर्थवानित्यर्थः ।। नित्यकर्मणामवश्यानुष्ठेयत्वप्रतिपत्तौ जातायामनुष्ठानस्य च विचारमन्तरेणासंभवाद् विचारः कर्तव्यश्चेत्, कथं तर्हि काम्यविचारः ? तदर्थस्यावश्यानुष्ठेयत्वाप्रतिपत्तेरित्याशङ्क्याह—**काम्येति** ।। कल्पनागौरवप्रसङ्गाद् नोत्तरविधिनिबन्धनो विचार इति शङ्कते—**नन्वनेकेति** ।। प्रयोजकान्तराभावाद् गौरवेऽप्युत्तरविधिप्रयुक्तत्वमेवोररीकरणीयमित्याह—**न विधेयेति** ।। विधेय-तदुपकारिव्यतिरिक्तावृत्तेर्यथाऽवहननविधिप्रयुक्तत्वम्, तद्वदत्रापीत्याशङ्क्यावहननस्य दृष्टफलत्वात् तदुदयपर्यन्तमनुष्ठानम्, न तथाऽत्रेत्याह—**अर्थावबोधेति** ।। तर्ह्येवमेवोत्तरविधिप्रयोज्यत्वमपि न सिध्येदित्याशङ्क्याह—**उत्तरेति** । धात्वर्थस्यानुष्ठानयोग्यस्य विधिविषयत्वादनुष्ठानस्य च विचाराधीनत्वाद् विधेयोपकारकत्वं तस्येत्यर्थः । एकस्य विचारस्यानेकविधिप्रयोज्यत्वमनुपपन्नमित्याशङ्क्याह—**प्रतिवाक्यमिति** ।। विचारस्याध्ययनविधिप्रयुक्तत्वेऽतिप्रसङ्गोऽपीत्याह—**अन्यथेति** ।। तत्र हेतुमाह—**स्वर्गादीति** । अर्थावबोधस्य स्वरूपेणापुमर्थत्वात् स्वर्गादिफलपर्यवसायित्वम् । तच्च न यागाद्यनुष्ठानं विना, इति तदाक्षेपोऽपीत्यर्थः । त्वन्मतेऽप्यतिप्रसङ्गस्तुल्य इति शङ्कते—**नन्वध्ययनमिति** । तत्र हेतुमाह—**अध्ययनेति** ।। "प्रागध्ययनादप्रतिपत्तेरि"त्यत्र कस्याप्रतिपत्तिः ? इति वीक्षायामाह—**प्रागध्ययनादिति** ।। तर्ह्यध्ययनविधेरपि प्रागध्ययनादप्रतिपन्नस्य कथमध्ययनप्रयोजकत्वम् ? इत्याशङ्क्याह—**अध्ययनेति** ।। तर्ह्युत्तरविधीनामपि पित्रादिवचनाधिगतानामध्ययनप्रवर्तकत्वं स्यादित्याशङ्कायामाह—**नचेति** ।। **उक्तमिति**, "ननु कथमर्थावबोधस्ये"त्यत्रेत्यर्थः ।। कर्मवाक्यार्थविचारस्योत्तरविधिप्रयुक्तत्ववद् ब्रह्मवाक्यार्थविचारस्यापि तथात्वम् । तथाच न पृथग्विचारारम्भः, इति प्रासङ्गिकाशङ्कामुत्थापयति—**अस्तु तर्हीति** ।। अकरणे प्रत्यवायाभावाद् नोत्तरनित्यविधिप्रयुक्तिरित्याह—**नेत्याहेति** ।। अधर्मव्यावृत्तधर्मसिध्यर्थं यथा धर्मविचारः, तद्वद् धर्म-ब्रह्मविभागसिध्यर्थमग्निहोत्रविधिर्ब्रह्म-

**ऋजुविवरणम्**

मित्युक्तम्, अत्र पूर्वमेव प्रतिपन्ने कर्मणि कथं विचारकर्तव्यता ? अनुपपत्त्यभावेन प्रयोजकाभावादित्याशङ्क्याह—**आपातप्रतिपन्नानामिति** ।। ननु नित्यकर्माननुष्ठाने प्रत्यवायादनुष्ठानस्य च निर्णयपूर्वकत्वाद् विचारनुष्ठानं भवतु; काम्यवाक्यस्य तु विचारप्रयुक्तिः कथम् ? इत्याशङ्क्याह—**काम्यवाक्येति** ।। ननु अध्ययनविधेरक्षरस्वीकारस्यार्थावबोधपर्यन्तत्वादध्ययनविधिप्रयुक्तिरेव लाघवादङ्गीकर्तुं युक्ता; अनेकविधिप्रयुक्तिगौरवाश्रयणे कारणाभावात्, इत्याशङ्क्याह—**अन्यथा यागाद्यनुष्ठानस्येति** ।। ननु अध्ययनविधिरध्ययनात्प्रागप्रतिपन्नत्वेनोत्तरक्रतुविधिवद् नाध्ययनप्रयोजक

### पञ्चपादिका

**तस्मादधीतवेदेनावश्यकर्तव्या धर्मजिज्ञासा, नैवं ब्रह्मजिज्ञासा । तदेवं ब्रह्मजिज्ञासाया अधिकारानर्हत्वादर्हयोश्च ब्रह्म-तज्ज्ञानयोरनर्थ्यमानत्वाद् जिज्ञासाऽनुपपन्ना ॥ मङ्गलस्यापि वाक्यार्थे समन्वयाभावात् श्रुतिमात्रोपयोगाच्च साधूक्तम्— "अथशब्द आनन्तर्यार्थः परिगृह्यते नाधिकारार्थ" इति ॥**

### पञ्चपादिकाविवरणम्

नच धर्मब्रह्मविभागसिध्यर्थं नित्याग्निहोत्रादिविधिरेव ब्रह्म विचारयति ; आपातदर्शनेनैव विविक्तभूतवस्तुविषयत्वात् । **तस्मा**दित्यवान्तरप्रकरणोपसंहारः । **तदेवमि**ति महाप्रकरणोपसंहारः ॥

ननु—"ओंकारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा । कण्ठं भित्त्वा विनिर्यातौ तस्मान्माङ्गलिकावुभौ ॥" इति मङ्गलार्थत्वादर्थशब्दस्य शास्त्रारम्भे च शिष्टाचारपरिपालनाय विघ्नोपशान्तये च मङ्गलाचरणं कर्तव्यम् इति तदर्थोऽथशब्द इति, नेत्याह—**मङ्गलस्यापीति** ॥ न तावन्मङ्गलं ब्रह्मजिज्ञासायाः कर्तृ-करणकर्मभावेन वाक्यार्थेऽन्वेति ; कर्त्राद्यन्यतमभावे प्रमाणाभावात्, कारकान्तराणां विद्यमानत्वाच्च । नापि सामानाधिकरण्येनान्वयः—'ब्रह्मजिज्ञासा मङ्गलमि'ति ; प्रशंसापरतयाऽर्थवादत्वप्रसङ्गात् । ननु कर्तव्यमेव मङ्गलाचरणमिति ? तत्राह—**श्रुतिमात्रोपयोगादिति** ॥

ननु प्रकृतादर्थादर्थान्तरविवक्षयाऽप्यथशब्दः प्रयुज्यते, यथाऽर्थान्तरेऽभिहितेऽर्थान्तरविवक्षया ब्रवीति—

### तत्त्वदीपनम्

विचारं प्रयुङ्क्ते, इत्याशङ्क्याह—**नचेति** ॥ उपसंहारद्वयस्यार्थभेदमाह—**तस्मादिति** ॥ "मङ्गलस्यापी"त्यत्राथशब्दस्य मङ्गलार्थत्वं निरस्तम्; तदनुचितमिव; अथशब्दस्य मङ्गलार्थत्वशङ्काया निर्मूलत्वादित्याशङ्क्याह—**नन्वोङ्कार इति** । सकलाशुभसंहरणविचक्षण-सकलशुभाकर-ब्रह्मकण्ठविनिस्सृतत्वादोङ्काराथशब्दयोर्मङ्गलार्थत्वमिति स्मृत्यर्थः । मङ्गलार्थत्वेऽपि न तन्निर्देशो युक्तः; प्रमाणफलविधुरत्वादिति शङ्कायामाह—**शास्त्रेति** । ग्रन्थारम्भे मङ्गलाचरणस्य शिष्टाचारपरिप्रापितत्वात् तस्य तत्र प्रामाण्यम् । नच तत्र मूलभावः; अविगीतशिष्टाचारानुमितस्मृतेर्मूलत्वादित्यर्थः । अथशब्दस्यान्यत्र मङ्गलार्थत्वेऽप्यस्मिन् सूत्रे न तद्विषयःप्रयोग इत्याह—**नेत्याहेति** ॥ कथं समन्वयाभाव इति चेत्, तत्र वक्तव्यम्, किमथशब्दस्य वैयधिकरण्येनान्वयः ? उत सामानाधिकरण्येन ? इति, तत्र नाद्य इत्याह—**न तावदिति** । देवदत्तादिपदार्थानां कर्त्रादिभावेनान्वयवद् नास्यान्वयः; तत्त्वे प्रमाणाभावादित्यर्थः । आकाङ्क्षाभावाच्च न कर्त्रादिरूपेणान्वय इत्याह—**कारकेति** । कारकान्तरशब्देन मुमुक्षुतर्कादयः संगृह्यन्ते । द्वितीयं दूषयति—**नापीति** । नचार्थवादत्वमास्थेयम्; सूत्रस्य वाक्यार्थनिर्णयापेक्षितन्यायसूचकत्वादित्यर्थः । मङ्गलाचरणस्यावश्यकत्वादन्यस्य चाशीर्नमस्क्रियादेरत्रानिर्देशादथशब्दस्य तदर्थत्वम् । नच वाक्यार्थे समन्वयाभावचोद्यम्, अन्वयभेदेष्टेः, इति शङ्कते—**ननु कर्तव्यमिति** । वीणावेणुमृदङ्गादेः रवस्यान्यार्थत्वेऽपि श्रवणमात्रेण मङ्गलार्थत्ववद् अन्यविवक्षया प्रयुक्तस्याथशब्दस्य मङ्गलार्थत्वमविरुद्धमित्याह—**तत्राहेति** ॥

मङ्गलाधिकारयोरथशब्दार्थत्वाभावेऽपि नानन्तर्यस्याऽथशब्दार्थत्वं, प्रकृतादर्थादर्थान्तरस्यापि तदर्थत्वादित्युक्तम्

### ऋजुविवरणम्

इत्याशङ्क्याह—**अध्ययनविधिश्चेति** ॥ अस्तु तर्ह्युत्तरविधीनामेव पित्रादिभ्यः श्रवणमित्याशङ्क्याह—**नच सकलोत्तरेति** ॥ ननु नित्यविधय एव ब्रह्मविचारप्रयोजकाः ; स्वविषयानुष्ठानस्येतरेभ्यो भेदसापेक्षत्वात्, तस्य च विचारसापेक्षत्वादित्याशङ्क्याह—**न च धर्म-ब्रह्मेति** ॥

ननु अथशब्दस्य माङ्गल्यवाचित्वे सिद्धे तस्य वाक्यार्थेऽन्वयनिराकरणं युक्तम्, तदेव कथम् ? इत्याशङ्क्याह—**ननु ओङ्कार इति** ॥ ननु माङ्गल्ये प्रयोगमात्रेण न स्वीकारः संभवति; अनेकार्थेषु शब्देषु प्रकृतोपयोगपर्यालोचनयाऽर्थो भवेत्, ननु प्रयोगमात्रेणेत्याशङ्क्याह—**शास्त्रारम्भे चेति** ॥ "वाक्यार्थे समन्वयाभावादि"त्युक्तम्, तत्र कथमन्वयाभावः ? इत्याशङ्क्य, किं वैयधिकरण्येनान्वयः ? उत समानाधिकरण्येन ? इति विकल्प्य प्रथमपक्षे दूषणमाह—**न तावदिति** ॥ श्रुतमाङ्गल्यान्यथानुपपत्त्या कर्त्राद्यन्यतमभावनिश्चय इत्याशङ्क्याह—**कारकान्तराणामिति** । अथशब्दोपात्ताधिकारिणः कर्तृत्वम्, वाक्यानां करणत्वम्, ब्रह्मणः कर्मत्वमिति । द्वितीयपक्षे दूषणमाह—**नापि सामानाधिकरण्येनेति** ॥

**पञ्चपादिका**

**ननु—प्रक्रियमाणात् पूर्वंप्रकृतमपि किञ्चिद् नियमेन प्रतीयतेऽथशब्दात्, ततस्तत्प्रतिपत्त्यर्थं किमिति न गृह्यते ? उच्यते—नैतदानन्तर्याद् व्यतिरिच्यते। कथम् ? एवम्—तत् प्रक्रियमाणस्य नियमेन पूर्ववृत्तं भवति, यदि तस्यानन्तरं तन्मात्रापेक्षं तत्प्रक्रियेत, एवं सति प्रक्रियमाणस्य हेतुभूतोऽर्थः पूर्वनिर्वृत्तो भवति; अन्यथा यस्मिन् कस्मिंश्चित् पूर्ववृत्तापेक्षायामनुवादादृष्टार्थत्वयोरन्यतरत्वप्रसङ्गात्।**

**पञ्चपादिकाविवरणम्**

'अथैवं मन्यसे' इति; तदर्थोऽथशब्द इति चोदयति—**ननु प्रक्रियमाणादिति** ॥ हेतु-फलभावेनानन्तर्याभिधाने प्रकृतादर्थादर्थान्तरत्वमन्तर्णीततया सिध्यति, इति न पृथग्वक्तव्यमिति परिहरति—**न चैतदानन्तर्याद् व्यतिरिच्यत इति** ॥ ननु अर्थान्तरत्वमेवाभिधायानन्तर्यमन्तर्णीतं किमिति न गृह्यते ? इति चोदयति—**कथमिति** ॥ तत्र किं नियमेन पूर्ववृत्ततया हेतुभूतो वस्तुविशेषोऽवचोत्यते ? किं वा यत्किंचिद्वस्तु पूर्ववृत्तमपेक्ष्यत इति ? तत्र न तावत् प्रथमः कल्पः; आनन्यर्याभिधानमन्तरेण हेतुतया पूर्ववृत्तवस्तुविशेषनियमासिद्धेरित्याह—**एवम् तत्प्रक्रियमाणस्य नियमेन पूर्ववृत्तमिति** ॥ अथोत्तरः कल्पः ? तत्राह—**अन्यथा यस्मिन् कस्मिंश्चिदिति** ॥ ननु आनन्तर्येऽपि हेतुतया पूर्ववृत्तं नावगम्यते ? सत्यम्; पुष्कलकारणात् फलस्यानन्तर्यमेव मुख्यं भवति; अव्यवधानात्, अव्यभिचाराच्च, अहेतु-फलयोस्त्वानन्तर्यं कदाचिद्

**तत्त्वदीपनम्**

ननु प्रक्रियमाणादित्यत्र, तदयुक्तम्; अर्थान्तरत्वस्य तदर्थत्वे प्रमाणाभावादित्याशङ्क्याह—**ननु प्रकृतादिति**। धर्म-विचारात्प्रकृताद् ब्रह्मविचारस्यार्थान्तरत्वात्तद्विवक्षया अथशब्दप्रयोग इत्यर्थः। आनन्तर्यस्य प्रकृतादर्थादर्थान्तरस्य च व्यतिरेकप्रसिद्धेर्न व्यतिरिच्यत इति कथमुक्तमित्याशङ्क्याह—**हेतुफलेति**। नानयोर्व्यतिरेको निह्नूयते, किं त्वानन्तर्ये निर्दिष्ट इतरस्यार्थसिद्धत्वान्न पृथङ् निर्देशापेक्षेत्यर्थः। वैपरीत्यं किं न स्यादिति शङ्कते—**नन्वर्थान्तरत्वमिति**। अर्थान्तरस्य प्रकृतादर्थादनिष्पत्तावपि ततोऽर्थान्तरत्वसंभवादेवं तदित्यादिग्रन्थस्यासंङ्गतिमाशङ्क्य विकल्पोत्तरत्वेन व्याख्यातुं विकल्पयति—**तत्र किमिति**। **तत्र** लोक इति यावत्। कार्यान्नियतप्राक्क्षणवर्तितया प्रकृतं प्रकृतशब्दार्थः ? उत यत्किंचित् पूर्वप्रकृतमिति विकल्पार्थः। **आनन्तर्याभिधानमित्यस्यैषोऽर्थः**—नियतप्राक्क्षणवर्तीदमिति ज्ञानं तदा स्यात्, यदा तदनन्तरं नियमेनार्थान्तरमुत्पद्येत, तथाचावश्यापेक्षितमानन्तर्यमथशब्देनाभिधीयताम्; अर्थान्तरस्य चार्थात् सिद्धेरिति तद्ग्रहणं युक्तमित्यर्थः। (टीकायाम्) **एवं तदित्यादेरयमर्थः**—प्रक्रियमाणस्य प्रारभ्यमाणस्य तत्पूर्वप्रकृतमेवं सति नियमेन पूर्ववृत्तं भवतीति योजना। एवंपदपरामृष्टमर्थमाह—**यदीति** ॥ **तस्य** पूर्वप्रवृत्तस्य। **तन्मात्रेति**—पूर्वप्रवृत्त-मात्रापेक्षमित्यर्थः। **एवं सतीति**—पुष्कलकारणादानन्तर्ये सतीत्यर्थः ॥ अथशब्दस्यानन्तर्यार्थत्वेऽपि न पुष्कलकारणा-नन्तर्यं सिध्यतीति शङ्कते—**नान्वानन्तर्येऽपीति** ॥ अपुष्कलकारणानन्तर्यस्याप्यथशब्दात् प्रतिपत्तेरित्यर्थः। अपुष्कल-कारणानन्तर्यमपि प्रतीयत इत्युक्तमङ्गीकरोति—**सत्यमिति** ॥ तर्हि न विवक्षितसिद्धिरित्यत आह—**पुष्कलेति**। सामग्री-क्षणादुत्तरक्षणे कार्यस्यावश्यंभावनियमाद् न कालव्यवहितत्वं व्यभिचारित्वं च, इतरत्र तु तद्वैपरीत्यम्, ततश्च हेतु-फलयोरेवानन्तर्यस्य मुख्यत्वात् तदेवाथशब्देनोत्सर्गतः प्रतीयते; 'गौण-मुख्ययोर्मुख्ये कार्यसंप्रत्ययादि'ति न्यायादित्यर्थः ॥ प्रकृतादर्थादर्थान्तरस्यानन्तर्यान्तिर्भावोपक्रमात् स उपसंहरणीयः, नचोपसंह्रियते टीकायाम्, तत् कस्मात् ? इत्या-

**ऋजुविवरणम्**

"ननु प्रक्रियमाणादि"त्ययेन नियमेन पूर्ववृत्तं प्रतीयत इति चोद्यं कृतम्, तदयुक्तम्; व्यभिचारादित्या-शङ्क्यावतारमति—**ननु प्रकृतादर्थादिति** ॥ "नैतदानन्तर्यादि"त्यसंबद्धम्; व्यतिरेकस्य स्पष्टत्वादित्याशङ्क्यावतारयति—**हेतुफलभावेनेति** ॥ "नैतदानन्तर्यादि"त्यनेनानन्तर्यार्थस्वीकारे प्रकृतादर्थादर्थान्तरत्वमपि गम्यते, अतो न पृथग्वक्तव्य-मित्युक्तम्, "कथमि"त्यनेन; तदेव प्रश्नपूर्वकं प्रतिपाद्यत इति प्रतिभाति, तथा सति परिहारग्रन्थानाञ्जस्यमित्या-शङ्क्यावतारयति—**नन्वर्थान्तरत्वमेवेति** ॥ **नन्वानन्तर्येऽपीति**। आनन्तर्यमेवाथशब्दवाच्यम्, न हेतुत्वम्; तथाच सति प्रकृतादर्थादर्थान्तरस्वीकारेऽप्यानन्तर्यं लभ्यत एव, नतु विशेष इति भावः ॥ "सत्यमि"त्यनेनैतदुक्तम्—आनन्तर्यमात्र-स्वीकारे न हेतुत्वलाभः; आनन्तर्यस्यापि गम्यमानत्वात्, नत्वानन्तर्यमात्रं शास्त्रादौ; नैष्फल्यप्रसङ्गात्, वैपरीत्येऽप्या-नन्तर्यसंभवात्, अतो हेतु-फलभावेनानन्तर्यमुपदेश-दृष्टार्थत्वाभ्यां लभ्यत इति ॥

### पञ्चपादिका

**अतो हेतुभूतोऽर्थोऽपेक्षितव्यः, तदेतदाह—पूर्वप्रकृतापेक्षायाश्च फलत आनन्तर्याव्यतिरेकादिति ॥**

**सति चानन्तर्यार्थत्वे यथा धर्मजिज्ञासा पूर्ववृत्तं वेदाध्ययनं नियमेनापेक्षते, एवं ब्रह्मजिज्ञासाऽपि यत् पूर्ववृत्तं नियमेनापेक्षते, तद् वक्तव्यम्। स्वाध्यायानन्तर्यन्तु समानमिति ॥ येन विना नियमेनानन्तरस्य न प्रक्रिया, स तादृशो हेतुः पूर्वनिर्वृत्तो वक्तव्यः; यस्यानन्तरं ब्रह्मजिज्ञासा प्रक्रियते। स्वाध्यायाध्ययनन्तु समानम् साधारणो हेतुर्धर्म-ब्रह्मजिज्ञासयोः। अतश्च—"अथातो ब्रह्मजिज्ञासे"ति पुनरथशब्देन तन्मात्रापेक्षणं व्यर्थं स्यात्। अथवा, 'समानं' नात्यन्तमपेक्षितम्, न स्वयमेव सामर्थ्यं जनयितुं, प्रयोक्तुं च शक्तम्। अतः समानो हेतुः नावश्यं निष्पादक इत्यर्थः ॥**

### पञ्चपादिकाविवरणम्

व्यभिचरति कदाचिद् व्यवधीयते च, इति गौणमेव स्यात्। तस्माद् मुख्यानन्तर्याभिधानेन पूर्ववृत्ते पुष्कलकारणेऽवद्योतिते, अर्थान्तरभावोऽप्यन्तर्भवति, नार्थान्तराभिधाने मुख्यमानन्तर्यमन्तर्भवतीत्युपसंहरति—**अतो हेतुभूतोऽर्थोऽपेक्षितव्य इति** ॥ उक्तेऽर्थे भाष्यमवतारयति—**तदेतदाहेति** ॥

ननु फलं चेद् दृश्यते, किं पुष्कलकारणावगमेन ? न; अधिकारिविशेषणत्वेन फलपर्यन्तेच्छाया विचारादिप्रवृत्तौ प्रतिपत्त्यपेक्षत्वादित्याह—**सति चानन्तर्यार्थत्व इति** ॥ ननु प्रज्ञातमेव पूर्ववृत्तं धर्मजिज्ञासासूत्रे इत्याशङ्क्याह—**स्वाध्यायाध्ययनानन्तर्यं तु समानमिति** ॥ भाष्यार्थं विवृणोति—**येन विना नियमेनेत्यादिना** ॥ योजनान्तरमाह—**अथवेति**। न पुष्कलं कारणमित्यर्थः ॥

### तत्त्वदीपनम्

शङ्कयाह—**तस्मादिति**। पुष्कलकारणादानन्तर्यस्य मुख्यत्वं तच्छब्दार्थः। **(भाष्ये)** "पूर्वप्रकृतापेक्षायाः" इत्यस्यायमर्थः—प्रकृतादर्थादर्थान्तरस्यानन्तर्याव्यतिरेकादानन्तर्यान्तर्भावादित्यर्थः। तत्र हेतुमाह—**पूर्वप्रकृतेति** ॥ फलतः कार्याद् यद् नियमेन पूर्वप्रकृतम्, तदपेक्षाया हेतोरित्यर्थः। पुष्कलकारणाद् यदर्थान्तरम्, तदथशब्देन समर्प्यत इति पक्षे पुष्कलकारणानन्तरक्षणे कार्यजननं विना पुष्कलकारणस्य दुरधिगमत्वात् तदानन्तर्यमथशब्देन समर्पणीयम्, तथाच तत एवार्थान्तरस्यापि सिद्धत्वात् तन्निर्देशो वृथेत्यर्थः। यतः कुतश्चिदर्थान्तरमथशब्देन समर्प्यत इत्येतच्चशब्देन व्यावर्त्यते ॥

आनन्तर्याभिधानमुखेन पुष्कलकारणं समर्प्यत इत्युक्तम्, तदाक्षिपति—**ननु फलं चेदिति** ॥ विचाराख्यकार्यलिङ्गेन तत्पुष्कलकारणाधिगमाद् न तदर्थमथशब्दोपादानमित्यर्थः। **अवगमेनेत्यत्राथशब्देनेति** शेषः। अथवा अज्ञायमानस्यापि पुष्कलकारणस्य जनकत्वसंभवात् तत्प्रतिपत्त्यर्थोऽथशब्द इति शङ्कते—**ननु फलमिति** ॥ शास्त्रीयाधिकारिविशेषणप्रतिपत्तिमन्तरेण विचारप्रवृत्त्यसंभवात् तदर्थमथशब्दोपादानमुचितमित्याह—**नाधिकारीति**। निदिध्यासनमादिशब्दार्थः। विचारादिप्रवृत्तौ फलपर्यन्तेच्छया नित्यानित्यवस्तुविवेकादेरधिकारिविशेषणत्वेन प्रतिपत्त्यपेक्षत्वादिति योजना। नित्यानित्यवस्तुविवेकादेः शास्त्रीयस्य विचाराधिकारिविशेषणत्वेन प्रतिपत्तौ जातायां विचारादौ प्रवृत्तिपर्यन्तेच्छा समुल्लसेत्, नान्यथा; अनधिकारिताबुद्ध्या प्रवृत्त्यनुदयापातात्। तस्मात् शास्त्रीयं विशेषणमथशब्देन निर्देष्टव्यमित्यर्थः॥ धर्मविचारस्य यथा वेदाध्ययनं कारणम्, तथा ब्रह्मविचारस्यापीति तदानन्तर्यमथशब्दार्थ इति शङ्कते—**ननु प्रज्ञातमिति** ॥ वेदार्थविचारत्वसाम्यात् कारणसाम्यमिष्टम्, ततश्च भाष्यटीकयोरसामञ्जस्यमित्याशङ्क्य, किं वेदाध्ययनस्य हेतुत्वमात्रम् ? उत पुष्कलकारणत्वम् ? इति विकल्प्याद्ये न पृथग् निर्देशापेक्षेत्यभिप्रायेणाह—**भाष्यार्थमिति** ॥ ( टीकायाम् ) **येनेत्यादेरयमर्थः**—येन विनाऽनन्तरस्य नियमेन न प्रक्रिया, यस्यानन्तरं ब्रह्मजिज्ञासा प्रक्रियते, स तादृशो हेतुर्वक्तव्य इति योजना। ततः किमिति ? अत आह—**स्वाध्यायेति**। विचारप्रवृत्त्युपयोगितया पुष्कलकारणानन्तर्यं वक्तव्यम्, वेदाध्ययनस्य चापुष्कलकारणत्वाद् न तदानन्तर्यमथशब्दार्थ इत्यर्थः। द्वितीयविकल्पनिराकरणपरत्वेन पुनस्तदेव भाष्यं व्याचष्ट इत्याह—**योजनेति** ॥ पूर्वोत्तरयोर्योजनयोरपौनरुक्त्यमाह—**न पुष्कलेति**। वेदाध्ययनाभावे न तदर्थविचारसंभवः। नच तस्यैव प्रयोजकत्वम्; अधीतवेदस्याप्यमुमुक्षोः पाठकस्य ब्रह्मजिज्ञासायां प्रवृत्त्यदर्शनात्। तस्माद् न तस्य पुष्कलकारणत्वमिति टीकार्थः। **सामर्थ्यं जनयितुमिति**; अधिकारिण इत्यनुषङ्गः ॥

### ऋजुविवरणम्

ननु हेतुत्वे सति कथमाक्षेपकत्वाभावः ? कथं च व्याख्यानान्तरत्वम् ? "समानो हेतुरि"ति तावन्मात्रोपजीवनात्, इत्याशङ्क्य व्याचष्टे—**न पुष्कलेति** ॥

### पञ्चपादिका

**नन्विह कर्मावबोधानन्तर्यं विशेषः ॥ तथाच वृत्त्यन्तरे वर्णितम्—कर्मणामधिकारपरम्परया संस्कारतया वा शब्दतो यथाविभागं तादर्थ्यावगमाद् निःश्रेयसप्रयोजनत्वाच्चानन्तर्यवचनोऽथशब्दोऽधिगतानन्तरमि"ति । अन्यैरपि स्ववृत्तौ वर्णितम्—"तत्राथातःशब्दौ प्रथम एवाध्याये प्रथमसूत्रे वर्णितौ । अथेति पूर्वप्रकृतां धर्मजिज्ञासामपेक्ष्यानन्तरं ब्रह्मजिज्ञासाप्रारम्भार्थः । अत इति पूर्वनिर्दिष्टस्यैवार्थस्य हेतुतामाचष्टे ब्रह्मजिज्ञासां प्रती"ति ।**

### पञ्चपादिका

ननु एकाध्ययनविधिप्रयुक्तस्वाध्यायाध्ययनस्यैकमोक्षप्रयोजनत्वे वक्तव्येऽध्ययनविधिप्रयुक्तत्वाभावेऽपि कृत्स्न-वेदार्थविचारस्यैकफलप्रयुक्तत्वाद् धर्म-ब्रह्मविचारयोरन्योन्योपकार्योपकारकभावेनैकफलशेषत्वादुपकारकधर्मावबोधानन्तर्य-मुपकार्यब्रह्मावबोधस्योच्यत इति चोदयति—**नन्विह कर्मावबोधानन्तर्यं विशेष इति** ॥ धर्म ब्रह्मविचारयोरुपकार्योपकारक-भावं दर्शयति—**तथाच वृत्त्यन्तरे वर्णितमिति** ॥ **अधिकारः** प्रवृत्तिः । **संस्कारः** फलम् । प्रवृत्तिपरम्परया फलपरम्परया चेत्यर्थः । अथवा, 'संस्कारः' इति कर्मभिः पुरुषसंस्कारोऽभिधीयते । **शब्दतः** इति च तत्र प्रमाणमुच्यत इति । **अधिगता-नन्तरम्** धर्माधिगत्यनन्तरमित्यर्थः । अस्मिन्नर्थे शास्त्रकारसंवादान्तरमाह—**अन्यैरपि स्ववृत्तौ वर्णितमित्यादिना** ॥

### तत्त्वदीपनम्

अहेत्वानन्तर्यस्यावचनीयत्वाद् धर्मावबोधस्य चात्राहेतुत्वाद् न तदानन्तर्यमथशब्दार्थः, ततश्च टीकाऽसंगति-रित्याशङ्क्याशयमाह—**नन्विति** । उपकार्यब्रह्मावबोधस्योपकारकधर्मावबोधानन्तर्यमथशब्देनोच्यत इति प्रथमं संबन्धः । तत्र हेतुः—'अध्ययनविधी'त्यारभ्य 'प्रयुक्तत्वादि'त्यन्तेन ॥ विचारद्वयस्यैकविधिप्रयुक्तत्वे नियतं पौर्वापर्यम्, न तु तदस्तीत्याशङ्क्याह—**अध्ययनेति** ॥ एकफलप्रयुक्तत्वं साधयति—**एकाध्ययनेति** । सकलस्वाध्यायाध्ययनस्यैकविधि-प्रयुक्तत्वादेकपुरुषार्थपर्यवसायित्वं वक्तव्यम् । नच मोक्षादन्यस्य परमपुरुषार्थता, इति मोक्षफलत्वं कथनीयम् । नचार्थ-ज्ञानमन्तरेण मोक्षः संभवति, अर्थज्ञानं च न विचारमन्तरेणेत्येकफलप्रयुक्तत्वं विचारद्वयस्येत्यर्थः ॥ षण्णां यागानामेक-फलप्रयुक्तत्वेऽपि नोपकार्योपकारकता, तद्वदत्रापीति शङ्कां निरस्यति—**धर्मेति** । "ब्रह्म वेद ब्रह्मैव भवति" "तरति शोकमात्मविदि"त्यादिवाक्यालोचनायां ब्रह्मविद्याया मोक्षहेतुत्वोपलम्भाद् विद्योपकारकत्वेन धर्मस्य मोक्षोपयोगित्वं वक्तव्यम् । प्रयाजादीनां दर्शाद्युपकारकत्ववत्, ततश्च विचारद्वयस्यापि पौर्वापर्यं युक्तमित्यर्थः । केन प्रकारेण तयोरुप-कार्योपकारकतेति ? अत्राह—**धर्मेति** ॥ अधिकारशब्दस्य विधि-पुरुषसंबन्धनिमित्तादावपि प्रसिद्धत्वाद् विवक्षित-मर्थमाह—**अधिकार इति** ॥ संस्कारशब्दस्य वेगादिपरत्वं व्यावर्तयति—**संस्कार इति** ॥ अधिकारपरम्परया शब्दतो वा संस्कारतयेति मतत्रयमुपन्यस्तमिति भ्रमं निवारयति—**प्रवृत्तीति** ॥ **परम्परयेतिपदं** संस्कारतयेत्यत्राप्यनुषज्यत इति द्रष्टव्यम् । पूर्वपूर्वप्राप्ति विनोत्तरोत्तराप्राप्तिवत् पूर्वक्षुद्रकर्मानुष्ठानं विनोत्तरकर्मानुष्ठानासंभवात् पूर्वपूर्वमनुष्ठायो-त्तरोत्तरत्र व्यवतिष्ठत इत्येकः पक्षः । विषयकामुकस्य ब्रह्मज्ञानानवताराद् विषयोपभोगेन कामनिवृत्तौ ब्रह्मज्ञानेऽव-तीर्णो भवतीति मतान्तरम् ॥ उपभोगेन कामोच्छेदासंभवमाशङ्क्य, संस्कारशब्दस्यार्थान्तरमाह—**अथवेति** ॥ नचोक्तेऽर्थे प्रमाणाभाव इत्याह—**शब्दत इति** ॥ "तमेतं वेदानुवचनेन" "यस्यैतेऽष्टाचत्वारिंशत् संस्काराः" "अधीत्य विधिवद् वेदान् पुत्रांश्चोत्पाद्य धर्मतः । इष्ट्वा च शक्तितो यज्ञैर्मनो मोक्षे निवेशयेत् ॥" इत्यादयः शब्दाः प्रमाण-मित्यर्थः । अधिगतानन्तरमित्यत्राधिगतस्य धर्मस्यानुष्ठानानन्तरमिति भाति, तथाचावबोधानन्तरमित्युपक्रमविरोध इत्याशङ्क्याह—**अधिगतेति** । निष्ठाप्रत्ययस्य भाव-कर्मणोरविशेषेण स्मरणादित्यर्थः ।

### ऋजुविवरणम्

**नन्वेकाध्ययनेत्यस्य** पूर्ववदेव विवक्षा द्रष्टव्या । अधिकारशब्दस्यार्थत्रयं दर्शितं प्राक्, तत्रार्थद्वयशङ्का-निरासायाह—**अधिकारः प्रवृत्तिरिति** ॥ संस्कारपक्षस्योत्तरत्र निराकरिष्यमाणत्वादत्रापि संस्कारशब्दस्य मुख्यार्थत्वस्वी-कारे यौनरुक्त्यं स्यात्, तदर्थं व्याचष्टे—**संस्कारः फलमिति** ॥ "अधिगतानन्तरमि"त्यत्र कर्मण्यपि निष्ठासंभवाज्ज्ञातार्था-नन्तर्यमित्यपि प्रतीतिः स्यात्, तथा सति प्रक्रमविरोधः, "धर्मानुष्ठानानन्तर्यमि"त्यनेन पुनरुक्तं चेत्याशङ्क्य व्याचष्टे—**धर्माधिगत्यनन्तरमिति** ॥ "एकफलत्वं तावदि"त्यनेनोत्तरत्र निराकरिष्यमाणत्वात् "फल-जिज्ञास्यभेदादि"त्यनेन, तेन

### पञ्चपादिका

**अत्राह—न; धर्मजिज्ञासायाः प्रागप्यधीतवेदान्तस्य ब्रह्मजिज्ञासोपपत्तेरिति ॥ न वेदान्ताध्ययनं यद्यपि केवलं पुष्कलं कारणम्; तथाऽपि न तेन विनोत्पद्यते ब्रह्मजिज्ञासा, उत्पद्यते तु धर्मावबोधनं विनाऽपीत्यभिप्रायः। कथम्? तत्र तावद् धर्मजिज्ञासायां त्रयं वृत्तम्—द्वादशलक्षणे प्रतिपादितन्यायसहस्रम्, तदनुग्रहोपजातश्च वाक्यार्थनिर्णयः, वाक्यार्थश्चाग्निहोत्रादिकं कर्म। तत्र यः प्रथमसूत्रेऽथशब्दोपादानसूचितो न्यायः—स्वाध्यायस्यार्थावबोधोपयोगप्रतिपत्तिहेतुः; यदप्यौत्पत्तिकसूत्रे—शब्दार्थयोः सम्बन्धनित्यत्वेन वेदान्तानां चापौरुषेयत्वेन कारणेनानपेक्षत्वं नाम प्रामाण्यकारणमुक्तम्, तदुभयमिहाप्युपयुज्यताम्; अपेक्षितत्वात्।**

### पञ्चपादिकाविवरणम्

एकफलवत्त्वं तावत् तिष्ठतु, न तावद् धर्म-ब्रह्मजिज्ञासयोरुपकार्योपकारकभाव इत्याह—**न; धर्मजिज्ञासायाः प्रागप्यधीतवेदान्तस्येति** ॥ भाष्यं विवृणोति—**वेदान्ताध्ययनं यद्यपीत्यादिना** ॥ ननु धर्मजिज्ञासायां व्युत्पन्नवेदप्रामाण्य-पद-पदार्थ-वाक्यार्थ-तदपेक्षितन्यायस्यैव ब्रह्म विचारयितुं शक्यम्, इति चोदयति—**कथमिति**। अनुपकारं दर्शयितुं धर्मजिज्ञासां विभजते—**तत्र तावद्धर्मजिज्ञासायां त्रयं वृत्तमिति** ॥ किं तदिति? तदाह—**द्वादशलक्षण इत्यादिना** ॥ तत्र न्यायसहस्रस्यानुपकारं दर्शयितुं न्यायमपि विभजते—**तत्र यः प्रथमसूत्र इत्यादिना**। अध्ययनविधेर्दृष्टार्थावबोधफलपर्यन्ततापेक्षितो न्यायोऽथशब्दसूचितः, प्रथमेन पादेन च यावान् वेदप्रामाण्यापेक्षितो न्यायः, स सर्वोऽपेक्ष्यताम्, प्रथमस्य पादस्य धर्म-ब्रह्मजिज्ञासयोः साधारणत्वान्न तदानन्तर्यं धर्मजिज्ञासानन्तर्यमित्यर्थः। ननु इहापि "शास्त्रयोनित्वात्" "अत एव च नित्यत्वमि"त्यादौ वेदप्रामाण्यापेक्षितो न्यायः सूचित एव, कुतः प्रथमपादापेक्षेति? सत्यम्; अङ्गीकृत्यैतदुक्तमिति न विरोधः।

### तत्त्वदीपनम्

धर्मब्रह्मजिज्ञासयोरेकफलत्वाद् विना ब्रह्मजिज्ञासां धर्मजिज्ञासाऽसंभवमाशङ्क्याह—**एकफलत्वमिति** ॥ फलजिज्ञास्यभेदाश्चेत्यत्र एकफलत्वं निरसिष्यति, तदङ्गीकृत्योक्तविधयोपकार्योपकारकत्वं निरस्यतीत्यर्थः ॥ धर्मजिज्ञासाया अनुपकारकत्वस्य भाष्यार्थत्वाद्वेदान्ताध्ययनस्याऽपुष्कलकारणत्वप्रदर्शनमनुपयोगीत्याशङ्क्याह—**भाष्यमिति** ॥ अथवा, वेदान्ताध्ययनस्य ब्रह्मजिज्ञासां प्रत्यपुष्कलकारणत्वाद् अधीतवेदान्तस्येत्यनुपपन्नम्, इत्याशङ्क्योपकारकत्वमात्राभिप्रायेणेत्यभिप्रेत्याह—**भाष्यमिति** ॥ धर्मजिज्ञासाया अनुपकारकत्वमाक्षिपति—**ननु धर्मेति** ॥ उपकारकत्वे चोद्येऽनुपकारः प्रदर्शनीयः, नच स प्रदर्श्यते "तत्रे"त्यादिना, इत्यत आह—**अनुपकारमिति**। जिज्ञास्यतेऽनयेति करणव्युत्पत्त्या न्यायसहस्रं जिज्ञासापदेनोच्यते अथवा, जिज्ञासनं जिज्ञासेति भावव्युत्पत्त्या निर्णयः कथ्यते अथवा, जिज्ञास्यत इति कर्मव्युत्पत्त्या कर्मेति विचारणीयमित्यर्थः। मीमांसाविभजनानन्तरमनुपयोगः प्रदर्शनीय इत्याशङ्क्याह—**तत्रेति** ॥ तत्र त्रयाणामर्थानां मध्य इत्यर्थः। उत्तरमीमांसायां प्रथमपादार्थस्यापेक्षणे धर्मजिज्ञासानन्तर्यमथशब्दार्थः स्यादित्याशङ्क्याह—**अध्ययनेति**। अपूर्वशेषत्वेन स्वाध्यायस्य विनियुक्तत्वादर्थाविवक्षाशङ्कायां, दृष्टसमवेतादृष्टसंभवे स्वतन्त्रादृष्टकल्पनाया अन्याय्यत्वात्, अर्थाववोधस्य च दृष्टत्वात्, नाविवक्षितार्थत्वम्—इत्यथशब्दसूचितो न्यायः; विरुद्धार्थत्व-पौरुषेयत्वप्रयुक्ताप्रामाण्यव्युदासेन प्रामाण्यसिद्धौ च यो न्यायो निर्दिष्टः, तस्य च सर्वस्यापेक्षणेऽपि पुष्कलकारणत्वाभावान्न तदानन्तर्यं समर्पणीयमित्यर्थः। प्रथमपादीयवेदप्रामाण्योपयोगिन्यायापेक्षामाक्षिपति—**नन्विहापीति**। उत्तरमीमांसायामित्यर्थः। ऋग्वेदादिलक्षणशास्त्रस्य योनिः कारणं निःश्वसितवद् न प्रमाणान्तरेणोपलभ्यते, ततश्च शास्त्रकारणत्वाद् ब्रह्म सर्वज्ञम्, तेन न वेदाप्रामाण्यमिति तृतीयसूत्रार्थः। **अत एवेति**। देवादिप्रपञ्चस्य वेदशब्दप्रभवत्वात् तस्य नित्यत्वम्, "तामन्वविन्दन्नि"त्यवस्थितताया वाच उपलम्भप्रतिपत्तेर्नित्यत्वमित्यर्थः। "समान-नामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात् स्मृतेश्चे"त्येतदादिशब्दार्थः। वेदप्रामाण्योपयोगि न्यायसूत्रणमङ्गीकरोति—**सत्यमिति** ॥ तर्हि प्रथमपादन्यायानामनपेक्षत्वम्, तत्राह—**अङ्गीकृत्येति** ॥

### ऋजुविवरणम्

नात्रानिराकरणमित्युक्तम् "तत्र यः प्रथमसूत्रे" इत्यनेन न्यायद्वयसापेक्षत्वमङ्गीकृतम्, तदनुपपन्नम्, तस्य धर्मजिज्ञासान्तर्गतत्वेन तदानन्तर्येधर्म-जिज्ञासानन्तर्यप्रसङ्गादित्याशङ्क्य व्याख्यानपूर्वकं तात्पर्यमाह—**अध्ययनविधेरिति** ॥

### पञ्चपादिका

**इतरस्य [ तु ] पुनर्न्यायकलापस्य न ब्रह्मजिज्ञासायामुपयोगोऽस्ति, यतो न निरस्ताशेषप्रपञ्चं ब्रह्मात्मैकत्वं प्रतिज्ञातं तत्र। न तत्प्रतिपादने तत्प्रतिपादनसामर्थ्ये वा शब्दानां कश्चिद् न्यायोऽभिहितः। यत्पुनः प्रथमतन्त्रसिद्धन्यायोपजीवनमस्मिन्नपि तन्त्रे, तद् सगुणविद्याविषयम्। तत्र च मानसी क्रियोपासना विधेयाऽनित्यफला धर्मविशेष एव। तदेवं न्यायकलापस्य न ब्रह्मजिज्ञासायामुपयोगः। अतो न तदपेक्षोऽथशब्दः।**

**यत्पुनः स्वाध्यायस्यार्थावबोधोपयोगे अनपेक्षत्वेन स्वतःप्रामाण्यसिद्धौ च न्यायद्वयम्, तद् अपेक्षितमपि न केवलं ब्रह्मजिज्ञासाकारणम्; स्वाध्यायवदेव, तेन न तदपेक्षोऽथशब्दः।**

### पञ्चपादिकाविवरणम्

ननु श्रुति-लिङ्गादिप्रमाणानामिहाप्यपेक्ष्यमाणत्वादितरोऽपि न्यायः पूर्ववृत्ततयाऽपेक्षित इति ? नेत्याह—**इतरस्य तु पुनरिति**। उत्पत्ति-विनियोग-प्रयोगाधिकारविधिकार्यपेक्षितो हि न्यायस्तत्र प्रतिपादितः। नचाननुष्ठेयभूतवस्तुप्रतिपादनेऽसावुपयुज्यते ; कार्यार्थसाम्येऽपि प्रत्यध्यायमवान्तरप्रमेयभेदेन न्यायभेदोऽपेक्ष्यते, किमु वक्तव्यमकार्यभूतवस्तुप्रमेयभेद इति भावः। श्रुत्यादयस्तु लोकप्रसिद्धा एवोपादीयन्ते। ननु कार्यशेषतया ब्रह्मापि तत्र निर्णीतमिति ? नेत्याह—**यतो न निरस्ताशेषेति**॥ अप्रतिज्ञातस्याप्यपेक्षितन्यायोऽन्यार्थत्वेन दर्शित इति ? नेत्याह—**न तत्प्रतिपादन इति**॥ननु गुणोपसंहारेण विध्यपेक्षितोऽपि न्याय उपजीव्य इति ? तत्राह—**यत्पुनः प्रथमतन्त्रसिद्धेति**॥ ननु सगुणविद्याऽपि ज्ञानमेवेति ? अत आह—**तत्र च मानसी क्रियेति**॥ **तदेवमित्युपसंहारः**॥

मा भूद् धर्मजिज्ञासानन्तर्यमथशब्दार्थः, वेदप्रामाण्यविचारानन्तर्यं स्यादिति, नेत्याह—**यत्पुनः स्वाध्यायस्यार्थावबोधोपयोग इति**। नच 'वेदाः प्रमाणमि'त्येतावता ब्रह्मविचारेऽनेकायासबहुले कश्चित्प्रवर्तेत इत्यर्थः। तर्हि धर्म-

### तत्त्वदीपनम्

उत्तरत्र वेदप्रामाण्योपयोगिन्यायसूत्रणं करेण पिधाय प्रथमपादापेक्षामभिदधावित्यविरोधः। प्रथमपादोक्तार्थमात्राङ्गीकारमाक्षिपति—**ननु श्रुतीति**। वाक्य-प्रकरण-स्थान-समाख्या **आदिशब्दार्थः**। अपेक्ष्यमाणत्वमसिद्धमित्याह—**नेत्याहेति**॥ अनपेक्ष्यत्वमेवाह—**उत्पत्तीति**॥ **विधिकार्येति**—विधिलक्षणकार्येत्यर्थः। उक्तमर्थं कैमुतिकन्यायेनाह—**कार्येति**॥ ननु श्रुत्यादयस्तत्र तत्रोदाह्रियन्ते, ते च पूर्वोक्ता एव, इति पूर्वतन्त्रस्यापेक्ष्यत्वम्, तत्राह—**श्रुत्यादय इति**। यथा पूर्वस्मिंस्तन्त्रेऽनादिवृद्धप्रसिद्धानां श्रुत्यादीनामुपादानम्, तद्वदत्रापीत्यर्थः। धर्मविचारस्य ब्रह्मविचारं प्रत्युपकारकत्वशङ्कैव नावतरति; धर्मविचारविलक्षणब्रह्मविचारस्यैवाभावात्, इत्यन्यः कश्चिच्छङ्कते—**ननु कार्येति**॥ धर्मोपादौ विचारप्रतिज्ञानान्न तत्र ब्रह्म विचारितमित्याह—**नेत्याहेति**॥ अप्रतिज्ञातस्याप्यधर्मस्य विचारवद् ब्रह्मणोऽपि विचार इति शङ्कते—**अप्रतिज्ञातस्येति**॥ **अन्यार्थत्वेनेति**। अधर्मविविक्तधर्मस्वरूपप्रतिपादनायाधर्मनिरूपणवद् ब्रह्मविलक्षणधर्मप्रतिपत्त्यर्थं ब्रह्मविचार इत्यर्थः। अनुपलम्भविरोधाद् नैतदिति परिहरति—**नेत्याहेति**॥ विध्यपेक्षितन्यायस्योत्तरत्रानुपजीव्यत्वमित्युक्तम्—"इतरस्य तु पुनरि"त्यत्र, तदाक्षिपति—**ननु गुणेति**॥ सगुणोपासनविद्यायामुपजीवनेऽपि न ज्ञान उपयोग इत्याह—**तत्राहेति**॥ उपास्ति-ज्ञानयोरेकत्वात् तस्यान्यत्राप्युपजीवनमिति शङ्कते—**ननु सगुणेति**॥ उपास्तेर्ज्ञानत्वमसिद्धमित्याह—**अत आहेति**॥

विध्यपेक्षितन्यायस्यानुपजीव्यत्वेऽपि प्रथमपादार्थस्योपजीव्यत्वात् तदानन्तर्यमथशब्दार्थ इति शङ्कते—**मा भूदिति**। निरस्तस्यापि चोद्यस्य टीकायां परिहारं दर्शयितुं पुनरुत्थापनमिति द्रष्टव्यम्। प्रमाणाभावान्न प्रामाण्य-

### ऋजुविवरणम्

ननु वाक्यशक्तितात्पर्यनिर्णयापेक्षितो न्यायस्तत्र निरूपितः, तेनैवात्र निर्णयः कर्तव्यः, अतः कथमनुपयोगः ? इत्याशङ्क्याभिप्रायमाह—**उत्पत्तिविनियोगेति**॥ ननु प्रमेयभेदमात्रेण कथं न्यायान्तरसापेक्षत्वं वक्तुं शक्यते ? प्रमेयाभेदेऽपि तस्याप्रयोजकत्वात् कथंचित् साम्यस्य वक्तुं शक्यत्वाच्चेत्याशङ्क्याह—**कार्यार्थसाम्येऽपीति**॥ मा भूत् तत्रत्यन्यायसापेक्षत्वम्, श्रुत्यादिसापेक्षत्वं त्वस्त्येवेत्याशङ्क्याह—**श्रुत्यादय इति**॥

"यत्पुनरि"त्यनेन न्यायद्वयं केवलं न विचारप्रवृत्तिकारणमित्युक्तम्, तदयुक्तम् ; विचारे प्रामाण्यातिरिक्ताकारणपेक्षायोगादित्याशङ्क्य व्याचष्टे—**नच वेदा इति**॥ "धर्म-ब्रह्मणोः संबन्धानिरूपणादि"त्ययुक्तम् ; ब्रह्मकार्यत्वात्,

### पञ्चपादिका

**यः पुनर्वाक्यार्थनिर्णयः; स न कथमपि ब्रह्मजिज्ञासायामुपयुज्यते, त ह्यन्यविषयं ज्ञानमन्यत्र प्रवृत्तौ हेतुः। प्रतिपत्तौ कदाचित् स्यादपि यथाऽनुमानादौ, तदपीह नास्ति; धर्म-ब्रह्मणोः सम्बन्धानिरूपणात् । अतः कर्मणामुपयोगः परिशिष्यते । तथाच तैरप्युक्तम्—"कर्मणामधिकारपरम्परया शब्दतो वा संस्कारतया वा यथाविभागं तादर्थ्यावगमादि"ति ।**

**अत्रेदं निरूप्यते—केयमधिकारपरम्परा ? कथं वा तादर्थ्यमिति ? यथा तावत् प्रासादमारुरुक्षोः सोपानपरम्परा क्रमशः प्राप्यमाणा प्रासादारोहणहेतुः, न तथेह ब्रह्मजिज्ञासां चिकीर्षोः कर्माणि सहस्रसंवत्सरपर्यन्तानि तत्क्रियाहेतुतया स्थितानि; प्रमाणाभावात् । अथ कामोपहतमनास्तदभिमुखो ब्रह्मजिज्ञासायां नावतरति,**

### पञ्चपादिकाविवरणम्

निर्णयज्ञानं ब्रह्मजिज्ञासाधिकारहेतुरिति ? नेत्याह—**यः पुनरिति** ।। उपयुज्यमानो धर्मनिर्णयो ब्रह्मविचारप्रवृत्त्युपयोगी स्यात् ? किं वा ब्रह्मनिर्णयोपयोगी ? इति वक्तव्यम् ? न तावत् प्रथमः कल्प इत्याह—**न ह्यन्यविषयं ज्ञानमिति** ।। नापि द्वितीय इत्याह—**तदपीह नास्तीति** । कार्य-कारणसंबन्धे प्रपञ्चेनापि ब्रह्मानुमानाद् न धर्मनिर्णयापक्षेति भावः । परिशेषात् कर्मणामुपयोग इत्याह—**अतः कर्मणामुपयोगः परिशिष्यत इति** । तदपि न सम्भवति केषुचित्पक्षेष्विति भावः ।।

तत्राधिकारपरम्परा ब्रह्मज्ञानोपकारश्च न सम्भवतीत्याह—**केयमधिकारपरम्परेति** ।। ननु अनुष्ठानपरम्परेयम्, तथाहि—संध्योपासनमारभ्य पूर्वपूर्वाल्पतरकर्मप्रहाणेनोत्तरात्तरमहत्तरकर्मोपादानात् सहस्रसंवत्सरे निरतिशये कर्मण्यवसितः परिशेषाद् ब्रह्मज्ञानेऽवतरतीति ? नेत्याह—**यथा तावत् प्रासादमारुरुक्षोरिति** ।। उत्तरकर्मोपादानात् पूर्वकर्मपरित्यागे परिशेषाद् ब्रह्मज्ञानावतारे च प्रमाणाभावादिति । तर्हि परम्परया कृत्स्नकर्मफलावाप्तौ, तत्र कामनाभावान्निवृत्तकामः परमानन्दकामनया तत्रावतरतीत्याशङ्क्ते—**अथ कामोपहतमना इति** ।।

### तत्त्वदीपनम्

विचारस्य हेतुत्वकल्पनमित्याह—**नेत्याहेति** ।। वेदस्य प्रामाण्याभावे तदर्थविचारस्यासंभवात् तस्य हेतुत्वमित्याशङ्क्य, किं तत् पुष्कलकारणम् ? उत साधारणकारणम् ? नाद्यः ; निर्ज्ञातवेदप्रामाण्यस्यापि कामुकस्य ब्रह्मजिज्ञासानवतारात् न द्वितीयः ; प्रवृत्त्युपयोगितया पुष्कलकारणमपि वक्तव्यमित्याशयेनाह—**नचेति** ।। न्यायसहस्रस्यानुपयोगेऽपि तज्जन्यवाक्यार्थनिर्णयस्योपयोग इति शङ्कते—**तर्हीति** ।। न्यायवदेव ज्ञानस्याप्यनुपयोग इत्याह—**नेत्याहेति** ।। कथमनुपयोगः ? इति चेत्, तर्हि कुत्रोपयोग इति विचारणीयम्, इत्याह—**उपयुज्यमान इति** ।। धर्मज्ञानं न ब्रह्मविचारप्रवृत्तिं जनयितुमीष्टे, भिन्नविषयत्वादित्याह—**न तावदिति** ।। तर्हि किमन्यज्ञानमन्यत्राहेतुरित्याशङ्क्योक्तम्—**प्रतिपत्ताविति** ।। धूमध्वजसंबद्धस्य धूमस्य तद्बोधकत्ववद् धर्म-ब्रह्मणोरपि गम्य-गमकभावः संबन्धो वक्तव्यः, न च स समस्तीत्याशयेनाह—**नापि द्वितीय इति** ।। धर्म-ब्रह्मणोः संबन्धाभावोऽसिद्धः कार्य-कारणसंबन्धसद्भावात्; इत्याशङ्क्याह—**कार्येति** ।। तर्हि परिशिष्टपक्ष आदीयताम् ? तत्राह—**तदपीति** ।। **केषुचिदिति** । शुद्धिद्वारव्यतिरिक्तपक्षेष्वित्यर्थः ।।

किंशब्दस्य प्रश्नाक्षेपयोः साधारयादाक्षेपार्थतामाह—**तत्रेति** । अधिकारपरम्परोपभोगप्रविलयादीनां मध्य इत्यर्थः । किंशब्दस्य प्रश्नार्थतां मन्वानः शङ्कते—**नन्वनुष्ठानेति** ।। तस्याः कथं ब्रह्मज्ञानोपकारकत्वम् ? इत्यत्राह **तथाहीति** ।। प्रमाणविधुरत्वान्नायं पक्ष आदेय इत्याह—**नेत्याहेति** ।। ब्रह्मजिज्ञासाचिकीर्षोर्न कर्म कर्तव्यम्, प्रमाणाभावादित्युक्तम्; "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ती"त्यादेस्तत्र प्रमाणत्वादित्याशङ्क्याह—**उत्तरेति** ।। कामोपशमे ब्रह्मज्ञानेऽवतरतीत्युक्तम् । "अथ कामोपहतमनाः" इत्यत्र, तदनुपपन्नम्, मोक्षावस्थायाः सकलविषयविधुरतया

### ऋजुविवरणम्

चेतनफलदातृसापेक्षत्वाद्वा । निर्णीतस्य चानुमापकत्वाद् निर्णयापेक्षेत्याशङ्क्याभिप्रायमाह—**कार्यकारणेति** ।।

"न तथेह ब्रह्मजिज्ञासां चिकीर्षोरि"त्यनेन ज्ञानोत्पत्तिहेतुत्वं तत्र प्रवृत्तिहेतुत्वं वा निरस्तमिति प्रतिभाति तदयुक्तम् ; उभयत्र प्रमाणसद्भावात्, असिद्धो हेतुः ; पुनरुक्तं चानन्तरग्रन्थेन, तत्रापि तन्निराकरणात्; अप्रस्तुतं च तन्निराकरणम्, प्रवृत्तिपरम्परया हेतुत्वमिति चोदितत्वादित्याशङ्क्य व्याचष्टे—**उत्तरकर्मोपादानादिति** ।। "कर्मणस्तु कामावाप्तौ तदुपशमादि"त्यसंबद्धम् ; कर्मभिः कामावाप्तावपि कामनान्तरदर्शनात् ; "ब्रह्मजिज्ञासायामवतरती"त्यसंबन्धः, कामोपशममात्रस्यान्यत्र प्रवृत्तिहेतुत्वाभावादित्याशङ्क्यावतारयति—**तर्हि परम्परया कृत्स्नफलावाप्ताविति** ।।

### पञ्चपादिका

**कर्मभिस्तु कामावाप्तौ तदुपशमाद् ब्रह्मजिज्ञासायामवतरति। तथाच—सार्वभौमत्वाद्युत्तरोत्तरशतगुणोत्कर्षावस्थितान् ब्रह्मलोकावाप्तिपर्यन्तान् कामानवापयन्त्यधिकारपरम्परया कर्माणि ब्रह्मलोकात् परं कामयितव्याभावात्, निर्विषयस्य च कामस्यानुपपत्तेर्दग्धेन्धनाग्निवत् कामोपशमे ब्रह्मजिज्ञासां करोति ? कर्मानुष्ठानानन्तर्यं तर्हि वक्तव्यम्, न धर्मावबोधानन्तर्यम् ॥**

**कथं वा कामाप्तिः कामोपशमहेतुः ? दृष्टान्तसामर्थ्यात्; यथा हविषा कृष्णवर्त्मा वर्धमानोऽपि सर्वहविःप्रक्षेपे सर्वं दग्ध्वा स्वयं शाम्यति, एवं विषयेन्धनः कामो यावद्विषयं वर्धमानोऽपि तत्क्षये क्षीणेन्धनाग्निवत् स्वयं शाम्यतीति युक्तम् ? सत्यं युक्तम्; यदि हैरण्यगर्भोभोगो न क्षीयेत; क्षीयते तु, कृतकत्वात् परिच्छिन्नविषयत्वाच्च। तत्क्षये पूर्ववदनवाप्तोऽवाप्तव्यः, इति कामः समुल्लसत्येव। अतो विषयस्य क्षयादिदोषदर्शनात् कामोपशमो हिरण्यगर्भस्यापि। तथाचोक्तम्— "ज्ञानमप्रतिघं यस्य वैराग्यं च जगत्पतेः। ऐश्वर्यं चैव धर्मश्च सह सिद्धं चतुष्टयम्" ॥ इति।**

### पञ्चपादिकाविवरणम्

तदेव प्रपञ्चयति—**तथाच सार्वभौमत्वादीति** ॥ **अधिकारपरम्परया** फलपरम्परयेत्यर्थः। परिहरति—**कर्मानुष्ठानानन्तर्यं तर्हि वक्तव्यमिति** ॥ कर्मानुष्ठानफलप्राप्त्यनन्तरभावित्वाद् ब्रह्मविचारस्य, न मनुष्याधिकारं शास्त्रं स्यादित्यर्थः ॥

किंच कर्माण्यपि ब्रह्मज्ञानस्यान्यथोपकुर्वन्ति, न कामप्रविलयनद्वारेणेत्याह—**कथं वा कामावाप्तिः कामोपशमहेतुरिति** ॥ **सत्यमित्यतः** प्राक्तनः स्पष्टार्थः ॥ हैरण्यगर्भादिभोगानां प्रतिक्षणं क्षीयमाणत्वादनागतभोगनिचयकामनोपपत्तेः कामविलयनेन ब्रह्मज्ञानेऽवतार इत्याह—**सत्यं युक्तम्; यदि हैरण्यगर्भो भोग इति** ॥ कुतस्तर्हि सर्वेषां कामविलय इति ? तदाह—**अतो विषयस्य क्षयादिदोषदर्शनादिति** ॥

### तत्त्वदीपनम्

तत्र कामनायोगादित्याशङ्क्य तात्पर्यमाह—**तर्हीति**। अप्राप्तस्य स्मर्यमाणस्य स्रक्चन्दनादेः कामोद्बोधकत्वात् प्राप्तस्य निवर्तकत्वाद् उपभोगेन विषयकामनिवृत्तौ "एषोऽस्य परमानन्दः" इत्यादिना ब्रह्मणः परमानन्दतया श्रूयमाणत्वात् तत्र कामोपपत्तिरित्यर्थः। एककामावाप्तौ विषयान्तरे कामसद्भावमाशङ्क्याह—**तदेवेति** ॥ अधिकारस्यानेकधा व्युत्पत्तिसंभवात् तं व्याचष्टे—**अधिकारेति** ॥ कर्मानुष्ठानानन्तर्यमथशब्दार्थं इत्युक्तत्वात्, कर्मानुष्ठानानन्तर्यं वक्तव्यमित्ययं परिहार आभास इत्याशङ्क्याह—**परिहरतीति** ॥ सम्यक्परिहारमेव दर्शयति—**कर्मानुष्ठानेति** ॥ अल्पायुषः पुंसः सकलकर्मानुष्ठान-तत्फलभोगासंभवान्न तद्द्वारेण विद्यायामधिकार इत्यर्थः।

कर्मणां ज्ञानहेतुत्वं तावत् श्रुति-स्मृतिप्रसिद्धम्, नच साक्षात् कर्माणि ज्ञानहेतुः; अप्रमाणत्वात्। तथाच कामप्रविलयद्वारा कर्मणां तद्धेतुत्वमुपेयम्। तथाच मन्त्रौषधादिना आयुः संपाद्यापि मुमुक्षवः कर्मसु प्रवर्तेरन्' इति कथं न शास्त्रं मनुष्यधिकारम् ? तथाच "कथं वा कामावाप्तिः" इत्यसंबद्धमित्याशङ्क्याह—**किंचेति** ॥ **अन्यथेति**—शुद्ध्यादिद्वारेणेत्यर्थः। हविःप्रक्षेपे हविर्भुजो वृद्धिवत्कामोपभोगेन कामवृद्ध्या न कामस्य क्षय इत्युक्ते इन्धनविनाशे दहनविनाशवद् विषयविनाशे कामविनाश इति शङ्कामुद्भाव्य, "सत्यं युक्तमि"त्यत्र हैरण्यगर्भभोगक्षये कामान्तरं समुल्लसेदिति समाधानमुक्तम्, तदयुक्तम्; हिरण्यगर्भात्परं कामयितव्याभावादित्याशङ्क्य तात्पर्यमाह—**हैरण्यगर्येति**। नच—महाप्रलयसमये हिरण्यगर्भलोकस्य नष्टत्वात् कथं कामान्तरमित्यपि—शङ्क्यम्; तदाऽपि ज्ञानाभावे प्राग्भवीयकर्मानुग्रहान्नानाविधयोन्युत्पत्त्या कामसंभवात्, ज्ञानाभावे तत एव विमुक्तिर्न कामविलयनेनेत्यर्थः ॥ कामोपमर्दनमन्तरेण ब्रह्मज्ञानासंभवात् तद्धेतुर्वक्तव्य ,इति शङ्कते—**कुत इति** ॥ हेत्वन्तराभावादुपभोगस्याहेतुत्वं सिषाधयिषितम् ? उत

### ऋजुविवरणम्

"कर्मानुष्ठानानन्तर्यं तर्ही"त्यसंबद्धम्, अवबोधहानेन भोगानन्तर्यस्य तेनैवोक्तत्वात्, तस्य चानुष्ठानसापेक्षत्वादेव तत्सिद्धेर्नैतद् दूषणमित्याशङ्क्याभिप्रायमाह—**कर्मानुष्ठानफलप्राप्त्यनन्तरेति** ॥

ननु कर्मणामुपयोगो भवद्भिरङ्गीकृत एव, स च प्रकारान्तरासंभावत् कामोपशमद्वारेणैवाङ्गीकर्तव्यम्, मा भवतु मनुष्याधिकारत्वम्, अतः "कथं कामावाप्तिरि"ति ग्रन्थो न युक्तः, इत्याशङ्क्याह—**किञ्च कर्माण्यपीति** ॥

## पञ्चपादिका

**तस्मात् सर्वत्र कामस्य विषयदोषदर्शनमेवोच्छेदकारणम्, नित्यवस्तुदर्शनं च; "रसवर्जं रसोऽप्यस्य परं दृष्ट्वा निवर्तते" इति स्मृतेः ।**

**नचैवंलक्षण आगमोऽस्ति—हिरण्यगर्भोपभोगात् निखिलविषयावाप्तौ कामोच्छेदो भवतीति । ननु कामावाप्तौ स्वस्थहृदयः कार्यान्तरक्षमो भवतीति सर्वेषां स्वसंवेद्यमेतत् ? सत्यम्, तदुत्कलिकोपशमात्; तदुत्कलिकोपशमश्च तदा सामर्थ्यहानेः; सति च सामर्थ्ये स्वच्छन्दोपभोगसम्भवात् । यदि पुनरेकान्ततो निवृत्तकामो भवेत्, न तं विषयं पुनः सङ्गोपायेत् । तस्माद् न कर्मणां कामनिबर्हणद्वारेण ब्रह्मजिज्ञासायोग्यतापावनम्; अतो न कर्मावबोधापेक्षोऽप्यथशब्दः ।**

**भवतु तर्हि संस्कारद्वारेण कर्मणां पूर्ववृत्तत्वम् ?—"यस्यैतेऽष्टाचत्वारिंशत्संस्काराः, अष्टौ चात्मगुणाः स ब्रह्मणः सायुज्यं गच्छती"ति "महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुरि"ति "ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः ।**

## पञ्चपादिकाविवरणम्

**तस्मात् सर्वत्रे**त्युपसंहरति ।।

किंच निखिलविषयाप्तौ कामोपशमः शास्त्रसामर्थ्यादुच्यते ? किंवाऽन्वय-व्यतिरेकसामर्थ्यात् ? नाद्य इत्याह—**नचैवंलक्षण आगम इति** ।। तर्ह्यन्वय-व्यतिरेकसामर्थ्यादिति चोदयति—**ननु कामावाप्ताविति** ।। परिहारग्रन्थस्तु स्पष्टार्थः ।। वैदिकशब्दाः सर्वे संभूय देहात्मत्वादिप्रपञ्चप्रविलयप्रमितिपरा इति तृतीयोऽधिकारः । स च प्रतीतिविरोधादेव निरस्त इति ।।

ननु तर्हि कर्माण्यनुष्ठीयमानानि पुरुषसंस्कारतया ब्रह्मज्ञानकार्याणि, अतो धर्मानुष्ठानानन्तरं ब्रह्मजिज्ञासेति चोदयति—**भवतु तर्हि संस्कारद्वारेणेति** ।। ननु "सर्वे एते पुण्यलोका भवन्ती"ति स्वतन्त्रपुरुषार्थसाधनानां कर्मणां कथं संस्कारकर्मतया प्रोक्षणादिवद् गुणकर्मता ? स्मृतिसामर्थ्यादिति चेत् ? न; श्रुतिविरोधात् ।।

## तत्त्वदीपनम्

प्रश्नमात्रम् ? नाद्यः; निरस्तत्वादित्यभिप्रेत्य द्वितीयस्योत्तरमाह—**तदाहेति** । "रसोऽपी"त्यत्र कामो **रसशब्दार्थः** । कामावाप्त्या कामोपशमस्यानागमिकत्वं न प्रतिपाद्यम्, तस्यागममूलताया अप्रसक्तत्वादित्याशङ्क्य विकल्पपूर्वं व्याचष्टे—**किंचेति** ।। अस्तु तर्हि भेदप्रपञ्चविलयद्वारेण कर्मकाण्डस्य ब्रह्मजिज्ञासाहेतुत्वम् । तथाहि—देहस्यात्मत्वे कालान्तरभाविस्वर्गसाधनयागादौ प्रवृत्तिर्न स्यात्, देहस्येह भस्मीभावात्; तस्मात् "स्वर्गकामो यजेते"ति वाक्यं देहात्मभावविलयपरम्; तथा "गोदोहनेन पशुकामस्य प्रणयेदि"ति वाक्यं दर्शपूर्णमासाधिकारिण एव गोदोहनाधिकारं बोधयदधिकारिभेदं विलापयति; "अग्निहोत्रं जुहुयादि"त्यादिवाक्यं रागनिबन्धनप्रवृत्तिविलयपरम्; एवं सर्वस्य वेदस्य भेदविलयपरत्वमिति शङ्कायामाह—**वैदिकेति** । "स्वर्गकामो यजेते"ति वाक्यात् साध्य-साधनसंबन्धादिप्रतिपत्तेर्न तस्य विलयपरत्वम्, अर्थाच्चोपलभ्यमानस्य शाब्दत्वे कामग्रन्थेः काठिन्यस्यापि शाब्दत्वं स्यादित्यर्थः ।।

संस्कारद्वारेण कर्मणां ज्ञानहेतुत्वस्य सिद्धान्तिनाऽप्यङ्गीकाराद् "भवतु तर्ही"ति चोद्यानुदयमाशङ्क्य तात्पर्यमाह—**ननु तर्हीति** । समानजन्मानुष्ठितकर्मणामेव संस्कारद्वारा ज्ञानहेतुत्वम्, ततो धर्मानुष्ठानानन्तर्यमथशब्दार्थ इति पूर्वपक्ष्यभिसन्धिः । कर्मणां संस्कारद्वारेण ज्ञानाङ्गत्वमुक्तम्, तदाक्षिपति—**नन्विति** । **एते सर्वे** आश्रमिणः, **पुण्यलोकाः** पुण्यो लोको येषां ते पुण्यलोका इत्यर्थः । स्वतन्त्रफलसाधनस्य दर्शपूर्णमासादेर्न संस्कारकर्मत्वम्, संस्कारकर्मणः प्रोक्षणादेः स्वतन्त्रफलसंबन्धादृष्टेः । तथाच कर्मणां स्वतन्त्रफलसाधनत्वप्रतिपत्तेर्न संस्कारकर्मत्वमित्यर्थः । संस्कारकर्मतायाः प्रामाणिकत्वाद् नापलापोपपत्तिरिति शङ्कते—**स्मृतीति** । "यस्यैतेऽष्टाचत्वारिंशत् संस्काराः" इत्यादिः

## ऋजुविवरणम्

ननु अन्योऽप्यधिकारो वादिभिरङ्गीकृतः, स किमर्थं न निराकृतः ? इत्याशङ्क्याह—**वैदिकशब्दा इति** ।। **ब्रह्मज्ञानकार्याणीति** । ब्रह्मज्ञानं कार्यं येषाम्, तानि ब्रह्मज्ञानकार्याणीति विग्रहः ।। "ननु सर्वे एते" इति यत् स्वतन्त्रफलसाधनम्, न तस्याङ्गत्वं संभवति, "प्रधाने फलसंबन्धः" इति न्यायात्; अङ्गत्वे तु स्वतन्त्रफलसाधनत्वविरोधः, "अफलं तदङ्गमि"ति न्यायात्; उक्तं च जैमिनिना—"द्रव्यगुणसंस्कारकर्मसु परार्थत्वात् फलश्रुतिरर्थवादः स्यादिति"; अतो नाङ्गत्वाश्रयणं युक्तमिति भावः । **न, श्रुतिविरोधादिति** । विरुद्धार्थग्राहकत्वेन विरोधः, विरोधश्च

### पञ्चपादिकाविवरणम्

ननु—संस्कारो नाम गुणाधानं मलापकर्षो वा। तत्र "धर्मेण पापमपनुदति" "योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वाऽऽत्मशुद्धये" इति चात्मनि मलापकर्षसंस्कारः सिध्यति, विध्यन्यथानुपपत्त्या वाऽऽत्मन्यपूर्वगुणाधानं गम्यते। अतः श्रुत्यवगतमेव संस्कारकर्मत्वम्; "इदं मेऽनेनाङ्गं संस्क्रियते" इति च श्रुतेः। नच क्रत्वङ्गद्रव्यसंस्कारतया नित्यकर्मणामितिकर्तव्योच्यते, येन स्वतन्त्रफलविरोधः स्यात्, किन्तु द्रव्यार्जनविधिवदुपकारमात्रम्—इति ?

सत्यम्; पापक्षयापूर्वलक्षणसंस्कारादभ्युदयफले श्रुत्यवगते न ब्रह्मज्ञानशेषता शक्याऽवधारयितुम्। स्मृतिसामर्थ्यादिति।

उच्यते; नित्य-नैमित्तिककर्मानुष्ठानैः संस्कृतस्यात्मनो यदि श्रवण-मनन-ध्यानाभ्यासादीनि ज्ञानसाधनानि

### तत्त्वदीपनम्

**स्मृतिशब्दार्थः**। नच—श्रुतिविरोधे स्मृत्यप्रामाण्यमिति न तद्बलात्संस्कारकर्मत्वमिति—शङ्क्यम्; स्मृत्यनुमितश्रुत्या संस्कारकर्मतोपपत्तेः। श्रुत्योश्च प्राबल्य-दौर्बल्यनिमित्तानवगमादिति शङ्कितुरभिसन्धिः। प्रत्यक्षश्रुतिविरोधे संस्कारत्वग्राहिश्रुत्यनुमैव नोदेति, लिङ्गदर्शनव्याप्तिस्मरणादिद्वारा तज्जनकत्वादित्याह—**न श्रुतीति**॥ प्रत्यक्षश्रुतिरेव संस्कारकर्मत्वे प्रमाणमिति शङ्कते—**नन्विति**॥ "धर्मेण पापमपनुदती"त्याद्यायाः श्रुतेः कथं संस्कारकर्मताग्राहित्वम् ? इति शङ्कायां तद् दर्शयितुं संस्कारद्वैविध्यमाह—**संस्कार इति**॥ तत्र कर्मणां मलापकर्षहेतुत्वे प्रमाणं तावदाह—**तत्र धर्मेणेति**॥ इतरत्र प्रमाणमाह—**विधीति**। नित्यकर्मविधिर्विधिशब्दार्थः। "विविदिषन्ति यज्ञेने"त्यादिर्वा। श्रुत्यन्तरमुदाहरति—**इदमिति**। **अनेन कर्मणा ममेदमङ्गं संस्क्रियते** ब्रह्माभिव्यक्तियोग्यं क्रियत इत्यर्थः। संस्कारकर्मत्वे प्रोक्षणादिवत् तस्य न स्वतन्त्रफलसाधनत्वमित्याशङ्क्य वैषम्यमाह—**नचेति**। प्रोक्षणादीनां दर्श-पूर्णमासाङ्गव्रीहिसंस्कारत्वात् 'संस्कारकर्मणः फलश्रुतिरर्थवादः' इति न्यायात् स्वतन्त्रफलसाधनत्वं नोपेयते, अत्र तु क्रत्वङ्गद्रव्यसंस्कारत्वाभावात् स्वतन्त्रफलसाधनत्वमविरुद्धमित्यर्थः। तर्ह्यात्मज्ञानशेषत्वं कथमिति शङ्कते—**किंत्विति**॥ अन्यार्थस्याप्यन्यार्थतादर्शनान्न विरोध इत्याह—**द्रव्यार्जनविधिवदिति**। ब्राह्मणादेः प्रतिग्रहादिनोच्यमानं द्रव्यार्जनं क्रत्वर्थम् ? उत पुरुषार्थम् ? इति संदेहे, धनं विना क्रत्वनुपपत्तेरधिकारविशेषाश्रवणाच्च क्रत्वर्थत्वमेवेति प्रापय्य, राद्धान्तितम्—पुरुषार्थत्वमेवेति। अङ्गत्वप्रापकप्रकरणादेरभावात्, क्रतोश्चान्यार्थसंचितद्रव्येणाप्युपपत्तेर्धनकामस्य ब्राह्मणादेरधिकारिणः संभवाच्चेत्यभिसन्धिः॥

संस्कारकर्मत्वमङ्गीकरोति—सत्यमिति॥ द्रव्यसंस्कारस्य स्वरूपेणाफलत्वाद् ब्रह्मज्ञानशेषत्वम्, तत्राह—**पापेति**॥ पापक्षयश्चापूर्वं चेति पापक्षयापूर्वे, ते लक्षणं यस्य संस्कारस्य, स तथोक्तः॥

"धर्मेणे"त्यादिना संस्कारकर्मतामात्राधिगतेस्तेषां ज्ञानशेषत्वेन विधिराश्रयणीयः, श्रुति-स्मृत्योर्विरोधे स्मृतेर्दौर्बल्याद्बाध इत्यर्थः। श्रुत्यविरोधेन प्रामाण्यसंभवे बाधकल्पनमयुक्तमित्याह—**उच्यत इति**॥ श्रुत्याऽभ्युदयफलत्वम्, स्मृत्या च ज्ञानार्थत्वम् ततः कथमविरोधः ? तत्राह—**नित्येति**। श्रवणं च मननं च ध्यानं चेति, तथा

### ऋजुविवरणम्

स्मृतेर्दुर्बलत्वात् संस्कारत्वमिति भावः। न केवलं मलापकर्ष इत्याह—**विध्यन्यथानुपपत्तीति**॥ यद्वा, श्रुतिविरोध उक्त इत्याशङ्क्याह—**विध्यन्यथानुपपत्तीति**। फलसाधनत्वेन विहितानां कर्मणां तेन विना फलसाधनत्वाभावात्, अथवा नित्यकर्मविधानानुपपत्त्यैवापूर्वगुणाधानं निश्चीयते; तदभावे विधानायोगादित्यर्थः। इतश्च संस्कारत्वसिद्धिरित्याशङ्क्याह—**इदं मेऽनेनाङ्गमिति**॥ ननु—संस्कारकर्मत्वे स्वतन्त्रफलसाधनत्वासंभवः; इतिकर्तव्यतारूपत्वादित्याशङ्क्याह—**नच क्रत्वाङ्गेति**॥ **द्रव्यार्जनविधिवदिति**। "द्रव्यमार्जयन् ब्राह्मणः प्रतिगृह्णीयादि"त्येवमादिना विधीयमानस्य वा द्रव्यार्जनस्य पुरुषार्थस्यैव क्रतूपकारित्वमुक्तं द्रव्यार्जनाधिकरणे, तद्वदित्यर्थः।

**सत्यमित्यनेनोपकारकत्वपापक्षयापूर्वहेतुत्वमङ्गीकृत्य** शेषत्वं निराकृतम्। तस्मादयमभिप्रायः—अत्र संस्कारशब्दसामर्थ्याच्छेषत्वं प्रतीयते, तदेव भवद्भिर्वक्तव्यम्; प्रासङ्गिकत्वेनानन्तर्यायोगात् तच्च न संभवति; स्वतन्त्रफलसाधनत्वादिति॥

**उच्यते, नित्य-नैमित्तिकेति**। स्मृतिसामर्थ्याच्छेषत्वं तावत्प्रतीयते, कस्यचित्कथञ्चिदविरोधेन गतिसंभवे न

## पञ्चपादिकाविवरणम्

सम्पद्यन्ते, तदा संस्कारकर्माणि सहकारिविशेषादात्मज्ञानमवतारयन्ति, यदा तु सहकारिकारणविरहः, तदाऽभ्युदयफलमिति व्यवस्थोपपत्तेर्न श्रुति-स्मृत्योः परस्परविरोधः।

ननु "यस्यैतेऽष्टाचत्वारिंशत् संस्काराः" इत्यतः "स ब्रह्मणः सायुज्यं सालोक्यं च गच्छती"ति सालोक्यलिङ्गाद् हिरण्यगर्भावाप्तिः संस्कारकर्मणां फलं गम्यते, न परब्रह्मावाप्तिः, येन सहकारिसामर्थ्यात् कर्मणां पुरुषसंस्कारद्वारेण मोक्षफलता स्यात् ?

उच्यते; संस्कारशब्दस्तावद् दधि-व्रीहिसंस्कारवत् स्वतन्त्रफलसाधनाङ्गभूतद्रव्यशेषतां कर्मणां प्रतिपादयति। तत्र सर्वकर्मणां संस्कारतयाऽन्वयात् परिशेषार्थापत्त्या तत्त्वज्ञानशेषतया मोक्षफलता कल्प्यते; "ब्रह्मणः सायुज्यं

## तत्त्वदीपनम्

तेषामभ्यासः, तथा स आदिर्येषाम्, तानि ; तथोक्तानि ॥

कर्मणामात्मज्ञानद्वारा मुक्त्यर्थतायाः स्मृत्यर्थत्वमसिद्धमिति शङ्कते—**ननु यस्यैति** ॥ [१] गर्भाधान-[२] पुंसवन-[३] सीमन्तोन्नयन-[४] विष्णुवलि-[५] जातकर्म-[६] नामकरणो[७] पनिष्क्रमणा[८] न्नप्राशन-[९] चौलो[१०] पनयनानि, [११—१४] चत्वारि वेदव्रतानि, [१५–१६] देव-पितृ-[१७] भूत-[१८] मनुष्य-[१९] ब्रह्मयज्ञलक्षणाः पञ्च महायज्ञाः, [२०] अष्ठका-[२१] पार्वणश्राद्ध-[२२] श्रावण्या[२३] ग्रहायणी-[२४] प्रौष्ठपदी-[२५] चैत्र्या[२६] श्वयुजीति सप्त पाकयज्ञसंस्थाः, [२७] अग्न्याधेया[२८] ग्निहोत्र[२९] दर्शपूर्णमासा[३०] ग्रयण-[३१] चतुर्मास्य-[३२] निरूढपशुबन्ध-[३३] सौत्रामण्यः सप्त हविर्यज्ञसंस्थाः, [३४] अग्निष्टो[३५] मात्यग्निष्टामो[३६] क्थ्य-[३७] षोडशि-[३८] वाजपेया[३९] तिरात्रा[४०] प्तोर्यालक्षणाः सप्त सोमसंस्थाः, इत्येते चत्वारिंशत् संस्काराः। [४१] दयादाक्षिण्या[४२] नसूया-[४३] शौचा[४४] नायास-[४५] मङ्गला[४६] कार्पण्या[४७] स्पृह[४८] तालक्षणा अष्टावात्मगुणाः। एतैर्युक्तस्य ब्रह्मैक्यं समानलोकताप्राप्तिरित्यक्षरार्थः॥ ननु एवंविधाधिकारिणः श्रवणाद्यपौष्कल्ये हिरण्यगर्भाप्तिः फलम्, इतरथा परब्रह्माप्तिरिति विभागमाशङ्क्य, प्रमाणविधुरत्वान्नैवमित्याह—**न परेति** ॥

संस्कारशब्दस्यात्र प्रयोगानुपपत्त्या कर्मणां ज्ञानशेषत्वमित्याह—**उच्यत इति** ॥ ज्ञानशेषत्वाभावे संस्कारशब्दस्य काऽनुपपत्तिः ? इत्याशङ्क्य तत्प्रमेयं दर्शयति—**संस्कारशब्द इति**। दधिसंस्कारस्य तृप्तिसाधनभोजनाङ्गदधिशेषत्वम्, प्रोक्षणादेश्च स्वर्गसाधनदर्शपूर्णमासाङ्गव्रीहिशेषत्वम्, तत्र संस्कारशब्दः प्रसिद्ध इत्यर्थः। फलितं दर्शयति—**तत्रेति** ॥ हिरण्यगर्भोपासनशेषत्वसंभवात् कथमनुपपत्त्या तत्त्वज्ञानशेषत्वम् ? इत्याशङ्क्याह—**ब्रह्मण इति** ॥ **सायुज्यम्** सयुग्भावः, एकत्वम्; नच हिरण्यगर्भैक्यं संभवेत्, पूर्वरूपे स्थिते नष्टे वाऽन्यस्यान्यात्मत्वासंभवात्। तस्माद् विद्ययाऽविद्यानिवृत्तौ ब्रह्मैक्यं सायुज्यम्, श्रवणाद्यभाव उपास्तिद्वारा सालोक्यमिति विभागः। कर्मणां संस्कारद्वारा मुक्त्यर्थत्वं

## ऋजुविवरणम्

सर्वथा विरोधेन वाधः कल्पयितुं युक्तः; कांस्यभोजिनयविरोधादिति भावः।

भवतु संस्कारशब्दसामर्थ्यात् फलसाधनकर्माङ्गद्रव्यशेषित्वम्, तथाऽपि न ब्रह्मज्ञानशेषित्वम्; कर्मान्तरद्रव्यशेषत्वेनापि संस्कारशब्दस्योपपत्तेर्न ब्रह्मज्ञानशेषत्वे प्रमाणमित्याशङ्क्याह—**तत्र सर्वकर्मणामिति** ॥ ननु हिरण्यगर्भप्राप्तिहेतुत्वं कर्मणां प्रतीयते, अतः कथं ब्रह्मज्ञानशेषत्वम् ? द्रव्यशेषत्वेनापि संस्कारशब्दस्योपपत्तेः कथञ्चिद्धिरण्यगर्भोपासनाशेषत्वं भवेत्, इत्याशङ्क्याह—**ब्रह्मणस्सायुज्यमिति**। नेदं वाक्यं फलपरम्, फलद्वयप्रतीतेः, तस्य च योगसिद्धिन्यायविरोधेनासंभवात् अन्तःकरणशुद्धिद्वारेण ज्ञानशेषत्वमेव तत्र विवक्षितमिति भावः। ननु संस्कारशब्दसामर्थ्यादन्यार्थत्वनिश्चयो भवेत्, न ज्ञानशेषत्वनिश्चयः; प्रमाणाभावात्, पारिशेष्यासंभवस्यापि वक्तुं शक्यत्वादित्याशङ्क्याह—

## पञ्चपादिकाविवरणम्

सालोक्यमि"ति च फलद्वयोपादानात्। तथाहि भगवान्—"स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः" इत्युपक्रम्य, "सिद्धिं प्राप्तो यथा ब्रह्म तथाऽऽप्नोति निबोध मे" इति चोक्त्वा, "बुध्या विशुद्धया युक्तो धृत्याऽऽत्मानं नियम्य च। ध्यानयोगपरो नित्यं वैराग्यं समुपाश्रितः। ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम्॥" इति च ब्रुवन् नित्यकर्मभिः संस्कृतस्य सिद्धिशब्दाभिधेयविशुद्धान्तःकरणस्य ध्यानयोगादिसहकारिसम्पत्तौ तत्त्वज्ञानजन्मद्वारेण मोक्षं—दर्शयति। "स्वे स्वे कर्मणी"ति च नित्यकर्माण्युच्यन्ते। "संसिद्धि"शब्देन चात्मवैमल्यं ब्रह्मज्ञानयोग्यतापत्तिरुच्यते; परमसिद्धेरुत्तरत्राभिधानात्, "योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वाऽऽत्मशुद्धये" इत्युक्तत्वाच्च। तथा 'महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः' "ज्ञानमुत्पद्यते पुंसां क्षयात् पापस्य कर्मणः" "कषाये कर्मभिः पक्वे ततो ज्ञानं प्रवर्तते" इति च। तस्मात् संस्कारशब्दसामर्थ्यात् स्मृत्यन्तराच्च नित्यकर्माणि मलापकर्ष-गुणाधानलक्षणपुरुषसंस्कारद्वारेणात्मज्ञानयोग्यतामापाद्य, तत्त्वज्ञानजनकतया मोक्षे ज्ञानेन सह समुच्चीयन्ते; यथा व्रीहिप्रोक्षणादीनि संस्कारकर्माणि दर्श-पूर्णमासस्वरूपोत्पत्तिहेतुतया स्वर्गे समुच्चीयन्त इति॥

ननु प्रोक्षणादिवदेकाधिकारितया गुणकर्मतैव नित्यकर्मणां प्राप्ता? न; ब्रह्मज्ञानस्याविधेयत्वात्; आत्मनः संस्क्रियमाणस्य विधेयकर्मगुणत्वाभावात्। न तर्हि संस्कारकर्मता, विहिताङ्गद्रव्यसंस्कारकर्मसु तत्प्रसिद्धेः? न;

## तत्त्वदीपनम्

भगवतोक्तमित्याह—**तथाहीति**॥ ननु "स्वे स्वे कर्मणी"त्यत्र कर्मणां संसिद्धिशब्दवाच्यो मोक्षः साक्षात्साध्यः प्रतीयते, न ज्ञानद्वारेणेत्याशङ्क्य संसिद्धिशब्दार्थमाह—**इत्युपक्रम्येति**। संसिद्धिशब्देनाभिधेयं विशुद्धमन्तःकरणं यस्य, स तथोक्तः। तथाऽपि कथं कर्मणां ज्ञानद्वारा मोक्षार्थत्वम्? इत्याशङ्क्याह—**ध्यानेति**। ध्यानमेव योगो ध्यानयोगः। योगपदाभिधेयैक्यसाधनत्वात् तस्य योगत्वमिति द्रष्टव्यम्॥ श्रवणादिरादिशब्दार्थः॥ कर्मणां प्रतिनियतफलत्वात् कथं सिद्धिफलत्वम्? इत्याशङ्क्याह—**स्वे स्व इति**।। नित्यानां न फलान्तरशेषत्वम्, शेषत्वेऽपि संयोगपृथक्त्वस्य वक्ष्यमाणत्वात् संसिद्धिहेतुत्वं तद्विरुद्धमित्यर्थः। मुक्त्यर्थिना संसिद्धिहेतूनि कर्माणि कस्मादनुष्ठीयन्ते? इत्याशङ्क्याह—**संसिद्धीति**। चित्तमात्मशब्दार्थः। वैमल्यमेवाह—**ब्रह्मेति**। "ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरमि"त्युत्तरत्र मोक्षस्य कथनात् प्राक् सिद्धिशब्देन शुद्धेरेवाभिधानमित्यर्थः। वाक्यान्तराविरोधादप्येवमित्याह—**योगिन इति**। स्मृत्यन्तरपर्यालोचनयाऽप्येवमेवैष्टव्यमित्याह—**तथेति**। महायज्ञशब्देन पञ्चमहायज्ञाः कथ्यन्ते। दर्श-पूर्णमासादिर्यज्ञशब्दार्थः। **ब्राह्मी** ब्रह्माभिव्यक्तियोग्या। सूक्ष्मशरीरं तनुशब्दार्थः। राग-द्वेषादिलक्षणे कषाये पक्वे परिणते, नष्टे इति यावत्। उक्तमर्थमुपसंहरति—**तस्मादिति**॥ तत्पदपरामृष्टमर्थमाह—**संस्कारेति**॥

कर्मणां ब्रह्मज्ञानशेषत्वेऽधिकृताधिकारत्वप्रसङ्ग इति शङ्कते—**नन्विति**। दर्श-पूर्णमासाधिकारिणा प्रोक्षणादेरनुष्ठेयत्ववद् ब्रह्मज्ञानाधिकारिणा नित्यादीनामनुष्ठेयत्वाद् न स्वतन्त्रफलसाधनत्वमित्यर्थः। विधेयाङ्गद्रव्यसंस्कारकर्मणामधिकृताधिकारत्वाद् नित्यादीनां च तथात्वाभावान्नैवमित्याह—**न ब्रह्मेति**। संस्कारकर्मताऽनुपपत्त्या ज्ञानस्य विधेयत्वं स्वीकार्यमिति शङ्कते—**न तर्हीति**॥ तत्र हेतुमाह—**विहितेति**। विहिते कर्मणि यदङ्गभूतं द्रव्यं तद्गतातिशय-

## ऋजुविवरणम्

**तथाहि भगवानिति**॥ यद्वा, फलद्वयदर्शनादतत्परत्वं न निश्चेतुं शक्यते; फलद्वयस्याप्यायुरादेरविरोधिनः स्वीकारदर्शनादत्रापि तथा संभवात्, विकल्पेन वा फलद्वयसंभवात् तदेवाश्रयितुं युक्तम्, नत्वन्तःकरणशुद्धिद्वारेण मोक्षफलत्वम्, तत्रापि फलद्वयप्रसङ्गात्, प्रमाणाभावाच्च। यच्चोक्तम् "सहकारिप्राप्तौ ज्ञानद्वारा मोक्षसाधनत्वं तदभावेऽभ्युदयार्थत्वमि"ति; तदयुक्तम्, प्रमाणाभावादित्याशङ्क्याह—**तथाहि भगवानिति**॥ ननु "स्वे स्वे कर्मणी"ति कर्ममात्रस्य सिद्धिसाधनत्वं प्रतीयते, नतु नित्य-नैमित्तिकानामित्याशङ्क्याह—**स्वे स्वे कर्मणीति चेति**॥ ननु सिद्धिशब्देन परमपुरुषार्थरूपत्वान्मुक्तिरेवाभिधीयते, अतः कथमन्तःकरणशुद्धिहेतुत्वं निश्चीयते? इत्याशङ्क्याह—**सिद्धिशब्देनेति**॥

**एकाधिकारितयेति**। दर्श-पूर्णमासाधिकारिण एवाधिकारः प्रोक्षणादौ, तद्वद् ब्रह्मज्ञानाधिकारिण एवाधिकारात् पृथगनुष्ठानाभावात् स्वतन्त्रफलसाधनत्वं न स्यादिति भावः। **विहिताङ्गद्रव्येति**। विहिते कर्मणि यदङ्गद्रव्यम्,

## पञ्चपादिकाविवरणम्

अविहितभोजनाङ्गदधिसंस्कारप्रसिद्धेः।

ननु विध्युद्देशे करणतया विहितानां नित्यकर्मणां करणताविरोधिनी दध्यादिसंस्कारवदात्मज्ञानेतिकर्तव्यता प्राप्ता ? नैष दोषः ; "अग्निं चित्वा सौत्रामण्या यजेत" "वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेते"ति सौत्रामणीबृहस्पतिसवयोरन्यत्र करणतया स्वतन्त्रविध्यन्तरविहितयोरग्निचयन-वाजपेयाङ्गतयेतिकर्तव्यतादर्शनात्। तत्र करणेतिकर्तव्यताविधिवाक्यप्रमाणभेदाद् युक्तं सौत्रामण्यादेरुभयथात्वमिति चेत् ? सत्यम् ; अर्थविरोधाभावे सति नित्यविधिसामर्थ्यात् संस्कारस्मृत्यनुमितश्रुतिसामर्थ्याच्च करणतया संस्कारतया च स्वतन्त्रफलशेषताऽऽत्मज्ञानेतिकर्तव्यता चेत्युभयथात्वमिहापि कल्प्यताम्। नचान्यार्थद्रव्यसंस्कारमात्रत्वादितिकर्तव्यता; आधानेऽदर्शनात्। संस्कृताग्नेरुद्देश्यत्वात् तत्रानङ्गतेति चेत् ? इहापि संस्कृतं विशुद्धान्तःकरणं विरक्तं विविदिषुमुद्दिश्य ज्ञानसाधनविधानादविरोधः। प्रत्यक्षेण विशुद्धि प्रत्यक्प्रवणतां च चित्तस्य कर्मफलमवगच्छन् जन्मान्तरानुष्ठितं कर्मानुमाय ज्ञानस्यान्तरङ्गसाधनेषु प्रवर्तिष्यत इति।

तस्माद् यथैव स्वतन्त्रविध्यन्तरविहितद्रव्यार्जनस्य सहकारिकारणसम्पत्तिभेदात् क्रतु-भोगयोः शेषत्वम्,

## तत्त्वदीपनम्

हेतुकर्मसु संस्कारकर्मत्वं प्रसिद्धमित्यर्थः नियमासिद्ध्या परिहरति—**नाविहितेति**॥

कर्मणां फलसाधनत्वश्रुतिविरोधाद् ज्ञानाङ्गत्वमयुक्तमिति शङ्कते—**नन्विति**। विधिर्भावना उद्दिश्यते यस्मिंस्तद्विध्युद्देशम्, तस्मिन्नित्यर्थः॥ करणस्याङ्गत्वे किं वस्तुविरोधः ? उत प्रमाणविरहः ? नाद्य इत्याह—**नैष इति**। अन्यत्र करणतया स्वतन्त्रविध्यन्तरविहितयोरपि सौत्रामणि-बृहस्पतिसवयोः—"अग्निं चित्वा सौत्रामण्या यजेत" "वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेते"त्यस्मिन् वाक्येऽग्निचयन-वाजपेयाङ्गतयेतिकर्तव्यतादर्शनादिति योजना। द्वितीयमनुवदति—**तत्र करणेति**॥ **उभयेति**। करणत्वमितिकर्तव्यतात्वं **चोभय**शब्दार्थः। दृष्टान्ते उभयार्थत्वमङ्गीकरोति—**सत्यमिति**॥ तर्ह्यत्रोभयार्थत्वग्राहिप्रमाणाभावाद् नित्यकर्मणां न ज्ञानाङ्गत्वमित्यत आह—**अर्थविरोधेति**। नित्यविधिसामर्थ्यात् करणतया स्वतन्त्रफलशेषतासंस्कारस्मृत्यनुमितश्रुतिसामर्थ्यात् संस्कारकर्मतयाऽऽत्मज्ञानेतिकर्तव्यता चेति योजना। कर्मणामितिकर्तव्यतात्वमङ्गीकृत्य विरोधं निरस्य, वस्तुतस्तदपि नेत्याह—**नचेति**। दर्श-पूर्णमासाद्यर्थाग्निसंस्कारत्वेऽप्याधानस्य नाङ्गत्वम्, तद्वदत्रापि न तावन्मात्रेणाङ्गत्वमित्यर्थः। दृष्टान्तो विषम इति शङ्कते—**संस्कृतेति**। व्रीहीणामङ्गत्वात् तत्संस्कारस्याप्यङ्गत्वम्, अग्नेस्तूद्देश्यत्वान्नाङ्गत्वम्; ततस्तत्संस्कारस्याप्यनङ्गतेत्यर्थः। साम्येन समाधत्ते—**इहापीति**॥ संस्कृताग्नौ होमवत् संस्कृतान्तःकरणेन तेन श्रवणादिकमनुष्ठेयं यदि, तर्हि चत्वारिंशत्संस्कारोदयादर्वाक् श्रवणादेरननुष्ठानमापतितमित्यत आह—**प्रत्यक्षेणेति**। कर्माणि न साक्षाद् ज्ञानं जनयन्ति, किंतु विशुद्धिप्रत्यक्प्रावण्यद्वारा, तच्च जन्मान्तरीयकर्मभिरपि संभवति, ततश्च सकलकर्मपरित्यागपूर्वकं श्रवणादौ प्रवृत्तिर्युक्तेत्यर्थः। विषयनैराश्यं **विशुद्धि**शब्दार्थः।

उक्तमर्थं सदृष्टान्तमुपसंहरति—**तस्मादिति**॥ **स्वतन्त्रविधि**रनङ्गविधिः तेन विहितस्य द्रव्यार्जनस्य क्रत्वा-

## ऋजुविवरणम्

तत्रातिशयहेतौ संस्कारत्वं प्रसिद्धमित्यर्थः।

**ननु विध्युद्देशे करणतयेति**। फलसंबन्धि प्रधानम्, प्रधानसंबन्ध्यङ्गम्, न तदुभयं युज्यत इत्यर्थः। **नैष दोषः ; अग्निं चित्वेति**। ननु अत्र समानकर्तृकत्वमेव क्त्वाप्रत्ययवाच्यम्, तच्चैकप्रयोगे, स चाङ्गाङ्गित्वे, इत्यङ्गत्वेन बृहस्पतिसवविधिः, नच—अङ्गत्वेऽपि बृहस्पतिसवस्य कर्मान्तरविधेरुदाहरणीयत्वमिति—वाच्यम् ; धर्मलक्षणाभावाद्, ब्रह्मज्ञानाच्चोत्थापिताकाङ्क्षया तद्विधानस्यायुक्तत्वादिति भावः। विहितकर्माङ्गद्रव्यसंस्कारत्वाभावेऽप्यन्यार्थद्रव्यसंस्कारत्वमेव केवलेतिकर्तव्यतात्वस्य साधकमित्याशङ्क्याह—**नचान्यार्थेति**॥ **संस्कृताग्नेरिति**। "यदाहवनीये" इत्यत्रापूर्वसंज्ञादर्शनात् संस्कृताग्निप्रतीतिरिति संस्कृतस्य विनियोग इत्यर्थः। एवं तर्हि ज्ञानसाधने प्रवृत्तिरेव न स्यात्, अन्तःकरणशुद्धेर्ज्ञातुमशक्यत्वादनुपगमान्न कर्मानन्तर्यमित्याशङ्क्याह—**प्रत्यक्षेणेति**॥

ननु एकस्यैव स्वतन्त्रविहितस्य सहकारिभेदादुभयत्र शेषत्वं न दृष्टमित्याशङ्क्य, सदृष्टान्तमुपसंहरति—**तस्माद्यथैवेति**॥

**पञ्चपादिका**

**यथाऽऽदर्शतलप्रख्ये पश्यन्त्यात्मानमात्मनी"ति च स्मृतेः; "विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेने"ति "येन केनचन यजेतापि दर्विहोमेनानुपहतमना एव भवती"ति च श्रुतेः। वक्ष्यति च सूत्रकारः—"अत एवाश्रमकर्मापेक्षा" "सर्वापेक्षा च यज्ञादिश्रुतेरश्ववदि"ति च ?**

**पञ्चपादिकाविवरणम्**

तद्वन्नित्यकर्मणामपि सहकारिभेदादात्मज्ञानाभ्युदययोः शेषत्वं न विरुध्यत इति।

योऽपि कश्चित् सर्वसंस्कारवादी वेदान्तार्थसूक्ष्मदूरीकृतविज्ञानो वेदान्तार्थदूषको—न संस्कारार्थानि नित्यानि कर्माणीति—वक्ति; स शास्त्रार्थविभागज्ञानशून्यत्वादुपेक्षणीय इति।

अथवा—सर्वाण्येव कर्माण्युत्पत्तिविधिविहितानि संयोगभेदेन जीवनकामनाद्यधिकारविध्यन्तरवद् 'ब्रह्मानुभवकामो यज्ञादीन्यनुतिष्ठेदि'त्यधिकारान्तरविधिविधेयानि भविष्यन्तीत्याह—**यज्ञेन दानेनेत्यादिना** ॥

**तत्त्वदीपनम्**

स्तिक्यादिबुद्धौ तच्छेषत्वम्, रागादिप्राबल्ये भोगशेषत्वम्, तथा च कर्मणामपि श्रवणादिसहकारिसंपत्तावात्मज्ञानार्थत्वम्, इतरथाऽभ्युदयार्थत्वमित्यर्थः ॥

कर्मणां संस्कारार्थत्वमुक्तममृष्यमाणः शङ्कते—**योऽपीति** ॥ "येन केनचन यजेते"त्यादेः संस्कारार्थत्वप्रतिपत्तेः कथं निषेधः? इत्याशङ्क्याह—**वेदान्तेति**। "वीरहा वा एष देवानां योऽग्निमुद्वासयते" "कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः" इत्यादिवाक्याद् नित्यकर्मणामावश्यकत्वप्रतिपत्तेर्न संस्कारद्वाराऽन्यार्थत्वकल्पनं युक्तमित्यर्थः ॥ विरक्ताविरक्तविषयत्वेन शास्त्रव्यवस्थोपपत्तेः कथं वेदान्तदूषणम्? इत्याशङ्क्याप्रतिपत्तेः स्वाभाविकत्वान्न विरोध इत्याह—**वेदेति** ॥ पूर्वोत्तरपक्षज्ञानिनस्तथात्वादस्य चातादृक्त्वान्न दूष्येतेत्याह—**स शास्त्रेति**। "कुर्वन्ने"त्यादीनामविरक्तविषयत्वम्, इतरेषां विरक्तविषयत्वमिति विभागं न बुद्ध्यते, परमहंसप्रद्वेषात्; ततः स उपेक्षणीय इत्यर्थः।

संस्कारद्वारेण कर्मणां जिज्ञासाहेतुत्वमभिधाय "तमेतमि"त्यादिवाक्यमुदाजहार, नच तेन संस्कारकर्मत्वं प्रतीयते, इत्यसंगतिमाशङ्क्य तात्पर्यमाह—**अथवेति**। सर्वाण्येव कर्माण्यधिकारान्तरविधिविधेयानि भविष्यन्तीति संबंधः। अधिकारान्तरविधिमेवाह—**ब्रह्मानुभवेति** ॥ अधिकारविधेरुत्पत्तिविधिपूर्वकत्वाद् अत्र च तदनुपलम्भाद् नाधिकारान्तरविधिरित्याशङ्क्याह—**उत्पत्तीति**। **उत्पत्तिविधि**शब्देनाग्नेयादयः संगृह्यन्ते। "यावज्जीवमग्निहोत्रं जुहुयात्" "स्वर्गकामो यजेते"त्यादिना कर्मणामन्यत्र विनियुक्तत्वात् कथं ब्रह्मानुभवे विनियोगः? तत्राह—**संयोगेति**। एकत्र विनियुक्तस्यान्यत्र विनियोगः संयोगभेदः। तदुक्तम्, "एकस्य तूभयार्थत्वे संयोगपृथक्त्वमि"ति। अग्निहोत्रे श्रूयते "दध्ना जुहोति" "दध्नेन्द्रियकामस्य जुहुयादि"ति। तत्र संशयः—किं दध्नः काम्यता? उत क्रत्वङ्गताऽपीति। तत्र "दध्नेन्द्रियकामस्ये"ति फलसंबन्धश्रवणाद् अधिकारविधुरवाक्यस्य च तदेकवाक्यत्वात् काम्यतैवेति पूर्वपक्षे; सिद्धान्तः—साकाङ्क्षयोर्ह्येकवाक्यत्वम्, अत्र चोभयोर्निराकाङ्क्षत्वान्नैकवाक्यत्वम्। "दध्ना जुहोती"त्यस्यापि प्रसिद्धहोमानुवादेन तत्र दधिगुणविधायकत्वान्नैतत्साकाङ्क्षत्वम्। ततश्च "दध्ना जुहोती"ति श्रवणान्नित्यत्वम्, "दध्नेन्द्रियकामस्ये"ति श्रुतेः काम्यत्वं चेत्यर्थः। तत्र दृष्टान्तमाह—**जीवनेति**। "यावज्जीवं दर्श-पूर्णमासाभ्यां यजेते"त्यावश्यकतया विहितं कर्म यथा काम्यो-

**ऋजुविवरणम्**

"विविदिषन्ति यज्ञेने"ति श्रुतिरप्युदाहृता। सा किमर्थम्? इति न ज्ञायते। नहि तत्र गुणाधानलक्षणो मलापकर्षलक्षणो वा संस्कारः प्रतीयते। पुरुषसंस्कारलक्षणत्वञ्चात्र प्रदर्शयितुं प्रक्रमः कृतः; अतस्तत्प्रतीत्यभावादनुदाहरणीयेत्याशङ्क्यावतारयति—**अथवा—सर्वाण्येवेति** ॥ ननु उत्पन्नानां कर्मणामधिकारसंबन्धो युज्यते; नचात्र कर्मणामुत्पत्तिरस्ति, नचान्येषामधिकारान्तरसंकन्धिनामधिकारान्तरसंबन्धो युज्यते; विनियुक्तविनियोगविरोधात्, इत्याशङ्क्याह—**उत्पत्तिविधिविहितानीति** ॥ कथमुत्पत्तिविधिविहितानामप्यधिकारान्तरसंबन्धः? इत्याशङ्क्याह—**संयोगभेदेनेति**। "एकस्य तूभयार्थत्वे संयोगपृथक्त्वम्"; **एकस्य कर्मण उभयार्थत्वे संयोगपृथक्त्वम्** विनियोगनानात्वम्, इत्यनेन न्यायेनेत्यर्थः ॥ ननु नात्रात्मज्ञानस्यापि साध्यतया प्रतीतिरस्ति; इच्छोपसर्जनतयाऽवगमात् अपुरुषार्थत्वाच्च।

## पञ्चपादिकाविवरणम्

कथम् ? आत्मतत्त्वापरोक्षानुभवस्तावदिष्यमाणतया स्वर्गादिवद्भावनासाध्योऽवगम्यते; पुरुषार्थत्वात् शाब्दज्ञाने तु संजाते तत्कामनायोगात्, असंजाते विषयानवगमादेव तत्र कामनाऽयोगाद्, शब्दावगतेऽपरोक्षज्ञानमिष्यत इति युक्तम् । तच्च प्रयत्नान्तरसाध्यमिति पुरस्ताद् दर्शितम् । तत्र यज्ञादीनामिच्छोपसर्जनतयाऽऽख्यातसमीरितभावनाकरणतयाऽवगतानां साध्येनैवान्वयाद् यज्ञादीनि ब्रह्मानुभवसाधनान्यवगतानि । ततश्च—'आत्मानुभवकामो यज्ञादीन्यनुतिष्ठेदि'ति विधिः परिणम्यते । नचेच्छामात्रेण संयोगः ; तस्या असाध्यमानतावगमात् । नच 'विविदिषन्ती'ति वर्तमानताविरोधः,

## तत्त्वदीपनम्

पायतां भजते तद्वदत्रापीत्यर्थः ।। "तमेतं विविदिषन्ती"त्यत्र यज्ञादीनां विविदिषायां विनियोगो लक्ष्यते, न त्वनुभवे; इष्यमाणत्वात्, अनुभवेन यज्ञादीनां संबन्धेऽपि ब्रह्मानुभवस्य शब्दादेवोत्पत्तिसंभवाद् न तदर्थं यज्ञाद्यनुष्ठेयमिति शङ्कते—**कथमिति** ।। यद्यपीच्छायां विनियोगः प्रतीयते; तथाऽपि तस्या अपुरुषार्थत्वात् तत्र विनियोगानुपपत्तेरनुभवे विनियोगो वक्तव्यः, शाब्दस्य चानुभवस्यापुमर्थत्वात् तेन यज्ञादीनां संबन्धानुपपत्तेरप्रतिबद्धापरोक्षप्रत्ययस्यानुभवपदाभिधेयस्य श्रवणमात्रादसंभवात् तदर्थं यज्ञादेरनुष्ठानमुचितमित्याशयेनाह—**आत्मेति** ।। **भावनासाध्य इति** वेदनभावनासाध्य इत्यर्थः । न केवलमपुमर्थत्वाच्छाब्दज्ञानस्यासाध्यत्वम्, अपित्वसंभवाच्चेत्याह—**शाब्देति** ।। शब्दादेवापरोक्षप्रत्ययोपजनेनं तदर्थत्वं तेषामित्याशङ्क्याह—**तच्चेति** । असंभावनादिप्रतिबन्धसद्भावान्न प्रथमं शब्दस्य तज्जनकत्वम्, किं तु प्रतिबन्धविगमापेक्षयेत्यर्थः । **पुरस्तादिति** । "अवाप्तिप्रकारश्च वेदान्तेष्वेव निर्दिष्ट"इत्यस्य व्याख्यानसमये इत्यर्थः ।। अपरोक्षानुभवस्य भाव्यत्वेनान्वयेऽपि कथं यज्ञादीनां भावनाकरणत्वेनान्वितानां करणत्वेन संबन्धः ? तत्राह—**तत्र यज्ञादीनामिति** । तत्रापरोक्षज्ञानस्य भाव्यत्वे सतीति यावत् । **इच्छोपसर्जनतया** निर्दिष्टेन साध्येन यज्ञादीनामन्वयादिति योजना । इच्छोपसर्जनतया विशेषणतया इष्यमाणतयेति वा । विविदिषन्तीत्यत्राख्यातेन भावना तावत् प्रतीयते । तस्याश्च भाव्यकरणेतिकर्तव्यताकाङ्क्षायामिष्यमाणं वेदनं भाव्यत्वेन संबध्यते, यज्ञादयश्च करणत्वेन, शमादय इतिकर्तव्यतात्वेन, तत्र भाव्यनिर्वृत्तिद्वारेण करणस्य भावनाकरणत्वमिति यज्ञादीनां ब्रह्मानुभवकरणत्वेन संबन्ध इत्यर्थः । यज्ञादीनामिच्छासाधनत्वमेव किं न स्यादित्यत्राह—**नचेति** । अश्वेन जिगमिषतीत्यत्राश्वस्येष्यमाणगमनकरणत्ववद्यज्ञादीनामिष्यमाणवेदनकरणत्वम्, इच्छाया विषयसौन्दर्यलभ्यत्वादित्यर्थः । विविदिषन्तीत्यत्र न भावना प्रतीयते, वर्तमानापदेशत्वात्, येन यज्ञादीनां न वेदनकरणत्वेनान्वयः, तत्राह—**न चेति** । 'अग्निहोत्रं जुहोती'त्यत्र वर्तमानापदेशत्वेऽपि, अपूर्वार्थत्वात्

## ऋजुविवरणम्

अतः कथं ज्ञानार्थत्वेन विनियोगः ? किन्तु साध्य-साधनभावावगतेरानर्थक्यपरिहाराय विधिपरत्वाद् विधौ च भावनापुरस्सर एव पदानामन्वयः । भावना च पुरुषार्थं भाव्यमपेक्षते, इति मोक्षो भाव्यः, ज्ञानं करणम्, तत्र करणोपकाराकाङ्क्षायां यज्ञादीनां सन्निपातित्वासंभवादारादुपकारकत्वं निश्चीयत इत्याक्षिपति—**कथमिति** ।। **स्वर्गादिवदिति** । यथा—"स्वर्गकामः" "पशुकामः" इत्यत्र काम्यमानत्वेनोपादानात् साध्यत्वम्, तद्वदिति । ननु कथमत्रापरोक्षज्ञानमेवेष्यमाणतया निश्चेतुं शक्यते, "विविदिषन्ती"ति ज्ञानमात्रप्रतीतेः ? नापि तत्र कर्मणां विनियोगः संभवति, स्वसामग्रीमात्रसाध्यत्वादित्याशङ्क्याह—**शाब्दज्ञान इति** । फलसाधनस्यापि भाव्यत्वम् । नच श्रुतहानेन साक्षात्प्रयोजनत्वलाभान्मोक्षस्य भाव्यत्वम् ; पश्वादीनां भाव्यत्वाभावप्रसङ्गात्, अतो न फलोपकार्यतेति भावः । ननु अपरोक्षस्यापि कथमिष्यमाणत्वम् ? कथं च तत्र कर्मणां विनियोगस्संभवति ? शब्दादेव प्रथममपरोक्षज्ञानोत्पत्तेः, अनुत्पत्तौ वाऽनन्तरमपि स्वसामग्रीजन्यत्वाभावादित्याशङ्क्याह—**तच्च प्रयत्नान्तरमिति** ।। भवतु नाम ज्ञानस्य साध्यत्वेनेष्यमाणत्वं तत्र, तथाऽपि कथमत्र कर्मणामिच्छान्वितानां तत्साधनत्वनिश्चयः ? इत्याशङ्क्याह—**यज्ञादीनामिति** । अयमर्थः—"विविदिषन्ती"त्याख्यातेन भावनाऽभिधीयते । सा च भाव्यमपेक्षते । तस्यां ज्ञानस्य भाव्यत्वम् ; साध्यत्वेनोपादानात् । अनन्तरं करणाकाङ्क्षायां तृतीयया करणत्वप्रतीतेर्यज्ञादीनां करणत्वेनान्वयः, तच्च भावनाकरणत्वं भाव्यनिष्पादनद्वारेणेति ज्ञानेनान्वय इति ; ननु इच्छामात्रेण भावनान्वयो यज्ञाद्यन्वयश्च स्यादित्याशङ्क्याह—**नचेच्छामात्रेणेति** । इच्छाया इष्यमाणनिष्ठत्वाद् धात्वर्थोपसर्जनेच्छायां सनो विधानादुपसर्जनेन चान्वयायोगात्, "अश्वेन जिगमिषती"त्यत्र

## पञ्चपादिकाविवरणम्

लेट्परिग्रहेण विधेरेवावगमात् । नच नित्य-काम्याधिकारान्तरविरोधः; एकस्य कर्मणोऽनेकाधिकारविधिसम्बन्धावगमात् ।

ननु कुण्डपायिनामयने "मासमग्निहोत्रं जुह्वती"त्यग्निहोत्रस्य प्रकरणान्तरत्वात् प्रसिद्धाग्निहोत्रात् कर्मान्तरत्ववद्, विविदिषावाक्यस्य च प्रकरणान्तरत्वाद् न प्रसिद्धाग्निहोत्रादीनामत्र विनियोगः कल्पयितुं शक्यते ; अतः कर्मान्तराण्येवेहोत्पत्त्यधिकाराभ्यां सह विधीयन्ते ? नैतद्युक्तम् ; कुण्डपायिनामयनेऽग्निहोत्रशब्दस्यालौकिकाभिधानत्वादाख्यातपरतन्त्रतया तदुक्तार्थाभिधायिनः स्वातन्त्र्येण प्रदेशान्तरविहिताग्निहोत्रपरामर्शकत्वानुपपत्तेराख्यातस्य च जुहोतेः सामान्यवाचिनः स्वसन्निहितकारकादिनिरूपितं कर्मान्तरं विहाय व्यवहिताग्निहोत्रपरामर्शित्वायोगात् कर्मान्तरमेव मासगुणविशिष्टं विधीयत इत्युक्तम्, इह त्वध्ययन-यज्ञ-दान-तपोऽनाशकशब्दानां लौकिकाभिधानतया स्वातन्त्र्यात् प्रदेशान्तरविहिताध्ययनादिपरामर्शोपपत्तेस्तान्येव कर्माणि संयोगभेदेन विधीयन्त इत्युपपद्यते ॥

ननु एवमपि ब्रह्मज्ञानं दृष्टप्रमाणसामग्रीजन्यत्वाद् नादृष्टमपेक्षते; सति प्रमाणकारणे यज्ञाद्यभावाद् ज्ञानो-

## तत्त्वदीपनम्

लेट्परिग्रहेण यथा विधिपरत्वम्, तथा विविदिषन्तीत्यस्याप्यपूर्वार्थत्वादित्यर्थः । कर्मणां कथमनुभवकरणत्वेन संबन्धः ? नित्यकाम्याधिकारविध्यन्तरविरोधादिति, तत्राह—**न चेति** ॥ नित्यत्वेन विहितस्याप्यग्निहोत्रस्य यथा संयोगभेदात् काम्यत्वं तद्वदत्रापीत्याह—**एकस्येति** । न चात्राथवेत्यनेन पौनरुक्त्यम्; संग्रहविवरणरूपत्वादस्येत्यर्थः ।

नित्यकाम्याधिकारविधिविहितानां कर्मणां संयोगभेदेन ब्रह्मानुभवविनियोग इत्यवादि, तदाक्षिपति—**ननु कुण्डपायिनामिति** । 'यज्ञेन विविदिषन्ती'त्यत्र यज्ञादिशब्दैर्न प्रसिद्धाग्निहोत्रादि परामर्ष्टुं शक्यते, कर्मप्रकरणाद् व्युत्थितत्वात्, यथा 'मासमग्निहोत्रं जुहोती'त्यत्राग्निहोत्रशब्दस्य न प्रसिद्धाग्निहोत्रशब्दाभिधायित्वम्, तस्य व्यवहितत्वात्, तथाऽत्रापीत्यर्थः । कर्मान्तरोत्पत्तिविध्यभावात्कथमधिकारविधिरित्याशङ्क्य सोऽपि कल्प्यत इत्याह—**अत इति** ॥ वैषम्येणोत्तरमाह—**नैतदिति** ॥ 'मासमग्निहोत्रं जुहोती'त्यत्र न कर्मान्तरं विधीयते, किं तु प्रसिद्धाग्निहोत्रमिति वदन् प्रष्टव्यः, किमग्निहोत्रशब्दात्तत्परामर्शः उताख्यातात् ? नाद्य इत्याह—**कुण्डपायिनामिति** । अग्निहोत्रशब्दस्य प्रदेशान्तरविहिताग्निहोत्रपरामर्शकत्वानुपपत्तेः कर्मान्तरं विधीयत इति संबन्धः । तत्र हेतुमाह—**आख्यातेति** ॥ पारतन्त्र्ये हेतुमाह—**अलौकिकेति** । प्रमाणान्तरप्रसिद्धार्थानभिधायित्वादित्यर्थः । द्वितीयं दूषयति—**आख्यातस्येति** । जुहोतेः कारकमात्रावच्छिन्नक्रियामात्राभिधायिनो विशेषमन्तरेणापर्यवसानात् स्वप्रकरणगतकारकविशेषविशिष्टकर्मान्तरपरित्यागेन प्रसिद्धाग्निहोत्रपरामर्शासंभवादग्निहोत्रशब्दस्य तत्रैव कथंचिद्वृत्तेः कर्मान्तरस्यैव मासगुणविशिष्टस्य विधानमित्यर्थः । ततो वैषम्यमाह—**इह त्विति** । हितमितमेध्याशनमनाशकम्, इतरत्स्पष्टार्थम् ॥

केवलव्यतिरेकाभावाद्यज्ञादेर्ज्ञानहेतुत्वासंभव इति शङ्कते—**नन्वेवमिति** । अधिकारान्तरविधिविहितानाम् अन्यत्र विनियोगसंभवेऽपीत्यर्थः । प्रमाणपदं प्रमितिपरम्, दृष्टा या प्रमितिसामग्री, तज्जन्यत्वादित्यर्थं इति । हेत्वसिद्धिं मन्वानं प्रत्याह—**सतीति** । अदृष्टव्यतिरिक्तप्रमासामग्र्यां सत्यामदृष्टाभावापराधेन ज्ञानोत्पत्त्यभावानुपलब्धे-

## ऋजुविवरणम्

धात्वर्थेनान्वयात्, वस्तुसौन्दर्यजन्यत्वादन्यप्रकरणत्वाच्चेति भावः । ननु कथमत्र यज्ञादीनामनुष्ठेयत्वेन प्रतीतिः ? ज्ञाने करणत्वम् ? ज्ञानस्य च साध्यता ? वर्तमानापदेशविरोधात्, विधौ च सति भावनाप्रतीतौ साध्य-साधनतानिर्वाहः, नच तदस्तीत्याशङ्क्याह—**नच (विविदिषन्तीति) वर्तमानेति** ॥ कथं कर्मणामधिकारान्तरसंबन्धः ? नित्यकाम्याधिकारान्तरसंबन्धिनामन्यसंबन्धविरोधात्, इत्याशङ्क्याह—**नच नित्य-काम्येति** ॥

**नैतद्युक्तमित्यादेरयमर्थः**—कुण्डपायिनामयने प्रकरणान्तरत्वमात्रं कर्मान्तरत्वनिमित्तं न भवति, किन्तु तत्राग्निहोत्रशब्दस्य प्रसिद्धाग्निहोत्रपरामर्शकत्वायोगः, तदयोगश्चाख्यातोक्तार्थाभिधानात्, तच्चाख्यातपरतन्त्रत्वात्, पारतन्त्र्यञ्चालौकिकाभिधानत्वात् प्रवर्त्यमानत्वादिति । तर्ह्याख्यातमेव प्रदेशान्तरविहितकर्मपरामर्शकं भवत्विति, नेत्याह—**आख्यातस्य चेति** । प्राप्तकर्मानुवादेनानेकगुणविधानादिति भावः ।

ननु "विविदिषन्ती"त्यादिशास्त्राद् दृष्टसामग्रीजन्यत्वमसिद्धमित्याशङ्क्य बाधयति—**सति प्रमाणकारण**

## पञ्चपादिकाविवरणम्

दयादर्शनाभावात् ? नैतत्, दृष्टकारणक्लृप्तौ ह्यन्वय-व्यतिरेकप्रमाणान्तर्भूतत्वात् केवलव्यतिरेकस्य तदपेक्षा युज्यते, इह तु, सुखस्य दृष्टकारणसम्पत्तौ केवलव्यतिरेकाभावेऽपि विधानादेवादृष्टसापेक्षत्ववत्, सम्यग्ज्ञानेऽपि विधानादेवादृष्टसापेक्षत्वमुपपद्यते ।

ननु कर्मणां विज्ञाने विनियोगद्वाराभावाद् विज्ञानफले मोक्षे विनियोगः कल्प्यत इति ? उच्यते; यथा यागादिकर्मणां स्वर्गाद्युद्देशेन विहितानां तदुपपत्तये विधिसामर्थ्यादेव मध्यवर्त्यपूर्वाणि कल्प्यन्ते, एवमिहाप्यन्तःकरणशुद्धिचित्तैकाग्र्यादिद्वारं कल्प्यतामिति । किञ्च, साक्षाच्छ्रुतज्ञानसाधनत्वानुपपत्तौ तत्फलसाधनत्वकल्पनाद् वरं परम्परयाऽपि तत्साधनत्वकल्पनम्, करणविभक्तेः 'काष्ठैः पचती'ति परम्परया साधनेऽपि दर्शनात्, फलसाधनत्वेऽपि तदयोगात् । नचास्मिन् वाक्ये यज्ञादिसाध्यो मोक्षः श्रूयते, आत्मा तु ज्ञानकर्मतया तत्साध्योऽवगम्यते, न यज्ञादिसाध्यः ।

## तत्त्वदीपनम्

रित्यर्थः । विकल्पासहत्वान्नैतच्चोद्यमित्याह—**नैतदिति** ।। किं सर्वत्र कारणत्वमन्वयव्यतिरेकाधीनमित्याश्रित्य व्यतिरेकाभावाददृष्टस्य ब्रह्मज्ञानहेतुत्वं निरस्यति, उतान्यथाऽपि कारणत्वसिद्धिमङ्गीकृत्य ? आद्ये व्यतिरेकस्य प्रयोजकत्वं युक्तमित्याह—**दृष्टेति** । अन्वयव्यतिरेकसिद्धत्वं **दृष्ट**शब्दार्थः । द्वितीयेऽप्यस्य ज्ञानार्थत्वं न विरुद्ध्यत इत्याह—**इह त्विति** । इहेति पदं 'सम्यग्ज्ञाने' इत्यनेन संबध्यते विषयेन्द्रियसंयोगादिलक्षणकारणसंभवेऽदृष्टाभावापराधेन सुखानुत्पत्त्यदर्शनेऽप्यदृष्टस्य हेतुत्वमाश्रित्य "पुण्यो वै पुण्येन कर्मणा" "धर्मात्सुखं चे"ति शास्त्रानुरोधेन ततो व्यतिरेकाभावेऽर्थदृष्टस्य ब्रह्मज्ञानहेतुत्वमविरुद्धमित्यर्थः ।

विधानान्तरेण कर्मणां ज्ञानहेतुत्वमाक्षिपति—**ननु कर्मणामिति** । कर्मणां न साक्षाद् ज्ञानहेतुत्वम्; अप्रमाणत्वात्, ततः परम्परया तद्धेतुत्वं वाच्यम्, न चात्र काचित् परम्परा लक्ष्यते । तस्मात् कर्मणां ज्ञानफले विनियोग इत्यर्थः । नच—शुद्धिद्वारस्य पुरोक्तत्वाद् द्वाराभावोऽसिद्ध इति—शङ्क्यम्; तथा सति करणविभक्तेर्बाधापातादित्यभिसन्धिः । विनियोगद्वाराभावोऽसिद्ध इत्याह—**उच्यत इति** । क्षणभङ्गुरायाः क्रियायाः कालान्तरभाविफलसाधनत्वासंभवात् तदुपपादनायाऽवान्तरापूर्वकल्पनवत् कर्मणां साक्षाद् ज्ञानहेतुत्वासंभवात् शुद्ध्युत्पादनद्वारा ज्ञानहेतुत्वमित्यर्थः ।। यद् यत्र करणत्वेन श्रुतम्, तदनुपपत्तौ तत्फलाकारणत्वस्य कल्पनमुचितम् ? उत प्रणाड्याऽपि तत्करणत्वस्य ? इति वीक्षायामन्त्य एव युक्त इत्याह—**किंच साक्षादिति** ।। मुख्यार्थातिक्रमस्योभयत्र तुल्यत्वाद् अन्त्यस्यैव कथं समीचीनत्वम् ? तत्राह—**करणेति** ।। काष्ठानां ज्वालोत्पादनद्वारा पाकहेतुत्वेऽपि 'काष्ठैः पचती'ति करणविभक्तेर्दर्शनात् शुद्धिद्वारा ज्ञानसाधनत्वपक्षेऽपि करणविभक्तेर्न विरोध इत्यर्थः । इतरत्र तु विरोधः स्यादित्याह—**फलेति** । "विविदिषन्ती"तीष्यमाणज्ञानं प्रति 'यज्ञेने'ति या करणविभक्तिः, सा फलकरणत्वपक्षे कुप्येतेत्यर्थः । मोक्षवाचकपदाभावादपि न कर्मणां तत्साधनत्वेनान्वय इत्याह—**नचेति** ।। "तमेतमि"त्यत्रात्मा निर्दिष्टः, तद्भावश्च मोक्ष इति कथं तदश्रवणम् ? इत्याशङ्क्याह—**आत्मेति** ।। **तत्साध्यः** तत्प्रकाश्य इत्यर्थः । प्रमाणान्तरविरोधप्रसङ्गादपि न मोक्षकरणत्वेन कर्मणामन्वय

## ऋजुविवरणम्

इति । अन्वय-व्यतिरेकाभ्यां कारणत्वनिश्चयः, अत्र तु कर्मणां व्यतिरेकादर्शनान्न कारणत्वमित्यर्थः । **दृष्टकारणक्लृप्ताविति** । दृष्टानां कारणत्वक्लृप्तावित्यर्थः । अथवा **दृष्टम्** दर्शनम्, तेन कारणक्लृप्तौ कारणत्वकल्पन इत्यर्थः । **केवलव्यतिरेकाभावेऽपीति** । केवलं दृष्टान्तेन व्यतिरेकादर्शनेऽपीत्यर्थः । दृष्टान्ताभावेन ज्ञानानुत्पत्तिदर्शनेऽपीत्यर्थः ।

**विनियोगद्वाराभावादिति** । अयमर्थः—न तावत् साक्षात् कर्मणां ज्ञानसाधनत्वं संभवति, शब्दादेर्विद्यमानत्वात् ; किन्त्वितिकर्तव्यतात्वम् ; तत्र कर्मणां विनियोगे द्वारकार्यं वक्तव्यम् ; तदभावान्न विनियोग इति । ननु "यज्ञेने"ति साक्षात् साधनत्वं श्रूयते, तदसंभवे श्रुतसाक्षात्साधनत्वहानाय फल एव साक्षात् साधनत्वकल्पनं युक्तमित्याशङ्क्याह—**किञ्च साक्षाच्छ्रुतेति** ।। कथं फलसाधनत्वे करणविभक्तेरयोगः ? फल एव करणत्वादित्याशङ्क्याह—**नचास्मिन् वाक्य इति** ।। मा भूद् मोक्षस्य साध्यत्वम्, आत्मनस्तु द्वितीयया साध्यत्वं प्रतीयते, तत्प्राप्तिश्च मोक्षः, तत्रैव कारणत्वमित्याशङ्क्याह—**आत्मा तु ज्ञानेति** ।। ननु यद्यपि मोक्षसाधनत्वं न श्रूयते ; तथाऽपि श्रुतकरणत्वनिर्वाहाय

### पञ्चपादिकाविवरणम्

किञ्च, प्रमाणान्तरविरोधं परिहृत्यैव श्रुतपरित्यागेनाश्रुतकल्पना युक्ता, अस्ति च "नान्यः पन्था विद्यते" "न कर्मणा न प्रजये"त्यादिना कर्मणां मोक्षसाधनत्वनिषेधः। किञ्च, परम्परया साधनत्वकल्पना प्रमाणान्तरमप्यनुसरतीत्याह—**येन केनचन यजेतेत्यादिः**। अन्तःकरणशुद्धिपरवाक्यजातोपलक्षणार्थः।

ननु, विशुद्धिद्वारेण ज्ञानहेतुत्वे संस्कार-विविदिषापक्षयोः को विवेकः ? उच्यते—श्रवण-मननध्यानाभ्यासादिसहकारिकारणसम्पत्तावेव संस्कारो विज्ञानं साधयति, तदभावे सत्यभ्युदयमेव; विविदिषायां तु विज्ञानस्य कर्मफलत्वात् फलपर्यन्तं साधनानि सम्पाद्यापि विज्ञानं जनयन्तीति विशेषः।

अत्र कश्चिद्वेदान्तेऽपि सर्वसंकरवादी भेदाभेदमुखरताजडवचनो विविदिषावाक्यादेव कर्मणां मोक्षसाधनत्वं कल्पयति, स च न्यायागमाभिज्ञानशून्यत्वादुपेक्ष्यत इति 'अश्वेन जिगमिषती' त्यत्राश्वस्य पुनरावृत्तिपर्यन्तताऽपि क्वचिद् दृष्टा, इति नासौ कर्मणां मोक्षसाधनत्वे दृष्टान्तः।

न्यायागमाभ्यां तु ज्ञानमेव सद्वारं साध्यमित्युक्तम्, व्यवहितफलेषु कर्मसु न फलपर्यन्तमनुष्ठानप्राप्तिः;

### तत्त्वदीपनम्

इत्याह—**किं च प्रमाणेति**॥ अस्मन्मते कर्मणां कल्मषनिवर्तकतायाः श्रुत्यन्तरसिद्धत्वात् "तमेतमि"त्यत्रापि परम्परया साधनत्वकल्पनं युक्तमित्याह—**किंचेति**॥ 'कर्मणैव हि संसिद्धिमास्थिता जनकादयः" "हिरण्यदा अमृतत्वं भजन्ते"-इत्यादिवचनानुरोधेन कर्मणामपवर्गान्वयः किं न स्यात् ? इत्याशङ्कयाह—**अन्तःकरणेति**॥ सकलश्रुति-स्मृतिपर्यालोचनया कर्मणामन्तःकरणशुद्धिहेतुत्वोपलम्भादितराण्यन्यथा नेयानीत्यर्थः॥

संस्कारद्वारेण विविदिषाद्वारेण वा कर्मणां ज्ञानहेतुत्वमिति मतभेदः प्रदर्शितः, स नोपपद्यत इति चोदयति—**ननु विशुद्धीति**॥ शुद्धिद्वारा ज्ञानहेतुत्वेऽप्यान्तरालिको भेदोऽस्तीत्याह—**उच्यत इति**। कर्मणां संस्कारार्थत्वे सहकारिसंपत्तौ ज्ञानहेतुत्वम्, इतरथा पुण्यलोकफलत्वम्; मतान्तरे तु कर्माणि श्रवणादिकं संपाद्यापि ज्ञानं जनयन्ति; ज्ञानोद्देशेन कर्मविधानात्, स्वर्गोद्देशेन विहितकर्मणामपूर्वप्रणाडयाऽपि स्वर्गसाधनत्ववदित्यर्थः॥

'अश्वेन जिगमिषती'त्युक्ते इष्यमाणगमनद्वारा ग्रामप्राप्तावश्वस्य हेतुत्वोपलम्भवद् 'यज्ञादिना विविदिषन्ती' त्यत्रापि यज्ञादीनामिष्यमाणज्ञानद्वारा मोक्षान्वय इति **भास्करोक्तमनूद्य** दूषयति—**अत्रेत्यादिना**॥ मुक्तेः कर्मसाध्यत्वेऽनित्यत्वादिप्रसङ्गो **न्यायः**, "नान्यः पन्था विद्यते"इत्यादि**रागमः**। तयोः सम्यक्परिचयाभावाद् नासौ दूष्यः, किंतु शोच्य इत्यर्थः। तर्हि "यज्ञादिश्रुतेरश्ववत्" इत्यश्वदृष्टान्तः कथम् ? इत्याशङ्क्याह—**अश्वेनेति**। अश्वस्य शीघ्रगमनसाधनत्ववद् ब्रह्मार्पणबुद्धया सम्यगनुष्ठितकर्माणि क्षिप्रं ब्रह्मबोधं जनयन्तीत्येतावन्मात्रमभिप्रेत्याश्वदृष्टान्तं सूत्रकृदवोचत्, तत्र विवक्षितांशपरित्यागेनाश्वस्य फलसाधनत्ववत् कर्मणामपि तथात्वकल्पनायां तस्य पुनरावृत्तिसाधनत्वं दृष्टम्, इति कर्मणामपि तथात्वं स्यादित्यनिर्मोक्षप्रसङ्गः। तस्माद् विवक्षितांशो ग्राह्य इत्यर्थः।

इतश्च विवक्षितांशो ग्राह्य इत्याह—**न्यायेति**॥ अवहननस्य तण्डुलनिष्पत्तिफलकत्वाद् यावत्फलोदयमनुष्ठानवत् कर्माणि ज्ञानोदयपर्यन्तमनुष्ठेयानि, ततश्च न विविदिषासंन्याससिद्धिरित्याशङ्क्याह—**व्यवहितेति**। प्रत्यक्-

### ऋजुविवरणम्

मोक्षसाधनत्वं कल्प्यते, इत्याशङ्क्याह—**किञ्च प्रमाणान्तरेति**॥ ननु कर्मनिषेधकं केवलकर्मविषयमित्यपि वक्तुं शक्यते, दृश्यते तावत् कर्मणां विनियोगः, नासौ ज्ञाने परम्पराश्रयणेऽपि ; श्रुतहान्यश्रुतकल्पनासाम्यात्, प्रमाणविरोधस्य च तदवस्थत्वात्, अनुग्राहकाभावश्चाविशिष्टः, अत्र श्रुतकरणत्वनिर्वाहलाभात् तदेवाश्रयितुं युक्तम्; अपिच "येन केनचने"ति श्रुतिश्च व्यर्था, प्रकृतानुपयोगादित्याशङ्क्यावतारयनि—**किञ्च परम्परयेति**॥ ननु नात्र परम्परया साधनत्वं प्रतीयते, अतः कथं प्रमाणान्तरं तदनुसरतीति निश्चीयते ? इत्याशङ्क्याह—**अन्तःकरणेति**॥

ननु सूत्रकारेण "अश्ववदि"त्युदाहरणाद् मोक्षसाधनत्वं कर्मणां दर्शितमित्याशङ्क्याह—**अश्वेन जिगमिषतीत्यत्रेति**॥

ननु न "अश्ववदि"त्युदाहरणे सर्वसाम्यं विवक्षितम्, किन्तु साधनत्वमात्रम्, नच तत्र पुनरावृत्तिपर्यन्तताऽनुमातुं शक्यते; सिद्धे विनियोगात् साधनत्वे शास्त्रबलादेवापुनरावृत्तिसिद्धेरित्याशङ्क्याह—**न्यायागमाभ्यामिति**॥ यद्येवं

### पञ्चपादिका

**सत्यमेवम् ; यदि समानजन्मानुष्ठितमेव कर्म संस्कुर्वद् ब्रह्मजिज्ञासायोग्यत्वहेतुः स्यात् । न च नैयोगिके फले कालनियमोऽस्ति । तेन पूर्वजन्मानुष्ठितकर्मसंस्कृतो धर्मजिज्ञासां तदनुष्ठानं चाप्रतिपद्यमान एव ब्रह्मजिज्ञासायां प्रवर्तते; इति न नियमेन तदपेक्षोऽथशब्दो युज्यते ।**

**एतेन—ऋणापाकरणद्वारेणापि नियमेन पूर्ववृत्तत्वम्—प्रत्युक्तम् ॥ तथाच श्रुसि-स्मृती "यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेत्" "तस्याश्रमविकल्पमेके ब्रुवतः" इति ॥**

### पञ्चपादिकाविवरणम्

चित्तस्य प्रत्यक्प्रवणताद्वारफलमवगम्योपरमसिद्धेः—इत्येवं वर्णिते पूर्ववादिना, सिद्धान्तयति—**सत्यमेवम्; यदि समानजन्मानुष्ठितमेवेति** । अयमाशयः—प्रवृत्तिपर्यन्तेच्छोदयप्रभृत्यनुभवपर्यन्तविषये प्रवृत्त्यधिकारोपाधितया पूर्वक्षणे प्रतिपत्तव्याधिकारिविशेषणप्रतिपादनार्थोऽयमथशब्दः । तत्राज्ञाततयैवानेकजन्मव्यवहितफलहेतुषु कर्मसु फलप्रवृत्तिसमकालप्रतिपत्त्यनपेक्षेषु न तत्प्रतिपत्त्यर्थोऽप्यथशब्द इति ।

ननु समानजन्मानुष्ठितकर्मावगमोऽपि ब्रह्मजिज्ञासाधिकारहेतुर्भवति; एतज्जन्मप्रयुक्तत्वादृणसम्बन्धस्य, अपाकृतर्णत्रयस्यैव च मोक्षाधिकारादिति ? तत्राह—**एतेन ऋणापाकरणद्वारेणापीति** ॥ ननु "ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत् । अनपाकृत्य मोक्षं तु सेवामानो व्रजत्यधः" ॥ इति स्मर्यते ? सत्यम्; श्रुतिविरोधादपस्मृतिरित्याह—**तथाच श्रुति-स्मृती "यदि वेतरथा ब्रह्मचर्यादेवे"ति** ॥ ननु "जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवा जायते" इति

### तत्त्वदीपनम्

प्रावण्यादेः कर्मसाध्यत्वात् तत्सिद्धावुपरमसिद्धिरित्यर्थः । विविदिषाद्वारा कर्मणां ज्ञानहेतुत्वस्य सिद्धान्तिनाऽप्यभ्युपगमान्न दूष्यत्वमित्याशङ्क्याह—**एवमिति** । अनभिमतांशस्य विद्यमानत्वाद् दूष्यत्वं युक्तमित्यर्थः । जन्मान्तरीयकर्मणां संस्कारद्वारेण ज्ञानहेतुत्वमिष्टं चेत्, तर्हि तदानन्तर्यमथशब्दार्थः स्यादिति, अत आह—**अयमाशय इति** ॥ उभयसंमतमर्थमाह—**प्रवृत्तीति** । **विषये** विचार इति यावत् । प्रवृत्तिरेवाधिकारः प्रवृत्त्यधिकारः प्रवृत्तावधिकारः स्वामित्वमिति वा । तदुपाधितया, तद्धेतुतयेत्यर्थः । फलितं दर्शयति—**तत्रेति** ॥

ऋणापाकरणस्य जन्मान्तरे कृतत्वाद् न तद्धेतुतया समानजन्मानुष्ठितकर्मावगमस्य जिज्ञासाहेतुत्वम्, ततश्च "एतेने"ति ग्रन्थोऽनुपपन्नः, इत्याशङ्क्य तात्पर्यमाह—**नन्विति** ॥ ऋणसंबन्धस्यैतज्जन्मप्रयुक्तत्वेऽपि तन्निराकरणं कस्मात् ? इत्याशङ्क्य प्रतिबन्धकत्वादित्याह—**अपाकृतेति** ॥ मानाभावादृणसंबन्धमात्रनिराकरणस्य च जन्मान्तरीयकर्मभिः सिद्धत्वान्न समानजन्मानुष्ठितकर्मापेक्षेत्याह—**तत्राहेति** ॥ प्रमाणाभावोऽसिद्ध इति शङ्कते—**ननु ऋणानीति** ॥ स्मरणमात्रमङ्गीकरोति—**सत्यमिति** ॥ तर्हि स्मृतेः प्रमाणत्वात् ऋणापाकरणानन्तरं मुक्त्यधिकार इत्याशङ्क्य प्रामाण्यासिद्धिमाह—**श्रुतीति** ॥ स्मृतेर्मूलभूता श्रुतिरप्यस्तीति शङ्कते—**ननु जायमान इति** ॥ **त्रिभिरिति** पुत्र-यज्ञ-ब्रह्मचर्यैरित्यर्थः ।

### ऋजुविवरणम्

वैयर्थ्यमेव कर्मणां प्राप्तम्; साध्याभावात्साक्षाद् ज्ञानसाधनत्वाभावात्; अथवा, मोक्षसाधनत्वमेव, अतो न विशेषः, इत्याशङ्क्याह—**न्यायागमाभ्यामिति** ॥ ननु एवं सति नानुष्ठाने विशेषः; सर्वदा कर्मानुष्ठानस्यावश्यंभावित्वात्, चित्तशुद्धिहेतुत्वात्, अशुद्धेश्च यावद्देहभावित्वादित्याशङ्क्याह—**व्यवहितफलेषु चेति** ॥ "सत्यमि"त्यादिना कर्मफलस्यानियतकालत्वेन न तत्प्रतिपत्त्यर्थताऽथशब्दस्यैवेत्युक्तम्, तदयुक्तम्; न ह्येकजन्मानुष्ठितस्यैव कर्मणस्संस्कारद्वारेण हेतुत्वं जन्मान्तरकर्मसंस्कारस्याप्रतिपाद्यत्वे हेतुः, कर्ममात्रप्रदर्शनपरत्वमपि न निराकर्तुं शक्यम्; वैयधिकरण्यात् तस्यापि हेतुत्वेन प्रतिपत्तिसापेक्षत्वस्य वक्तुं शक्यत्वात्, यदि स्वाभिमताधिकारिविशेषणवत् तत्रापि कारणत्वात् प्रतिपत्तिसापेक्षत्वम्, तदिहाप्यविशिष्टम्; अतो न विशेषणादन्यस्य विरोधः, इत्याशङ्क्याभिप्रायमाह—**अयमाशयः प्रवृत्तिपर्यन्तेति** ॥ **प्रवृत्त्यधिकारोपाधितयेति** । अयमर्थः—प्रवृत्तिरेवाधिकारः प्रवृत्त्यधिकारः, तत्रोपाधितया व्यवस्थापकतया, कारणतया वेति । 'उपाधितये'त्यनेन संस्कारवैषम्यमुक्तम्; उपाधिज्ञानस्यैवोपाधित्वनियमात् । यद्वा प्रवृत्तावधिकारे चैश्वर्यरूप इति विवक्षितम् ॥

ननु—"जायमानः" इत्यस्य कथमर्थवादत्वम् ? अपूर्वार्थत्वाद्विधित्वमेव, यद्वा—आर्थवादिकस्यापि

## पञ्चपादिकाविवरणम्

श्रुतिरस्ति ? सत्यम्; अर्थवादो विधिश्रुतिविरोधे बाध्यते। किञ्च ऋणशब्देन पुत्र-यज्ञ-ब्रह्मचर्याण्येवोच्यन्ते ? किं वा तद्विधय इति ? न तावद् जायमानस्य पुत्रादिसम्बन्धो युज्यते; योग्यानुपलब्धिविरोधात् नापि तद्विधिसम्बन्धः; विधिप्रतिपत्तिसामर्थ्यविकलस्याधिकाराभावात्, सामर्थ्यस्य चाधिकारिविशेषणत्वात्। गृहस्थो जायमानस्त्रिभिर्ऋणवा जायत इति चेत् ? न; तथा कल्पनायां "गृहात् प्रव्रजेदि"ति विधिविरोधात्। तत्रापि च पुत्रादिजन्मसम्बन्धितया गृहस्थजन्मनि योग्यानुपलब्धिविरोधः समानः नच पुत्रादिविध्यनुष्ठानसामर्थ्याभावाद् गृहस्थजन्मसमये तद्विधिसम्बन्धो युज्यते। जन्मारभ्य पुत्राद्यधिकारसम्पत्तेः प्राग्विरोधिविध्यन्तरसम्बन्धपरिहारार्थमिदं वचनमिति चेत् ? न; तथाकल्पनायां संन्यासविध्यन्तरविरोधात्। तस्मादर्थवादमात्रमेतत्। ननु "ब्रह्मचर्यं समाप्य गृही भवेदि"ति विधिविरोधे कथं ब्रह्मचर्यादेव संन्यासो विधीयते ? न; विरक्तमुमुक्षुविषयत्वात् संन्यासस्य सामान्यविधिविरोधाभावात्।

ननु कर्मानधिकृतान्धपङ्ग्वादिविषयः संन्यासः किं न स्यात् ? न; "ब्रह्मचर्याद् गृहाद् वनाद्वा प्रव्रजेदि"त्यविशेषश्रवणात्, "अथ पुनरव्रती वा व्रती वा अस्नातको वा स्नातको वोत्सन्नाग्निरनग्निको वे"त्यनधिकारिणामाश्रमिभ्यः पृथगेव संन्यासाधिकारित्वेनोपादानात्, अन्धादीनामपि पुत्र-पञ्चमहायज्ञादिकर्माधिकारादनधिकृतत्वासिद्धेः, अन्धा-

## तत्त्वदीपनम्

श्रुतिसद्भावमङ्गीकरोति—**सत्यमिति**॥ तर्हि तत्प्रामाण्यादादौ संन्याससिद्धिरित्याह—**अर्थवाद इति**॥ "हृदयस्याग्रेऽवद्यत्यथ जिह्वाया अथ वक्षसः" इत्यवदानत्रयविधिशेषत्वेनार्थवादवाक्यस्य "ब्रह्मचर्यादेव प्रव्रजेदि"ति विधिवचनविरोधेऽप्रामाण्यमित्यर्थः॥ न्यायविरुद्धा चेयं श्रुतिरित्याह—**किंचेति**॥ **सामर्थ्यविकलस्येति**—अप्ररूढेन्द्रियतया ऋणविमोकरणनियोगप्रतिपत्तावसमर्थस्येत्यर्थः। असामर्थ्येऽप्यधिकारः किं न स्यादिति मन्वानं प्रत्याह—**सामर्थ्यस्येति**। 'अर्थी समर्थो विद्वांश्चापर्युदस्तोऽधिकारी'ति प्रसिद्धेरित्यर्थः। जायमानशब्दस्य न यथाश्रुतोऽर्थः, येन तद्दूषणं भवेदिति शङ्कते—**गृहस्थ इति**॥ कल्पनाया अविरोधसापेक्षत्वादत्र च विरोधान्न कल्पनेत्याह—**न तथेति**॥ अपिच कल्पनायामपि किं पुत्रादिसंबन्धितया जन्म ? उत विधिसंबन्धितयेति विकल्प्याद्यं दूषयति—**तत्रापीति**॥ चरमं प्रत्याह—**नच पुत्रेति**॥ श्रुतितात्पर्यापरिज्ञानविलसितमेतद् दूषणमिति शङ्कते—**जन्मारभ्येति**॥ प्रव्रज्याविधिर्**विध्यन्तरशब्दार्थः**। प्रत्यक्षश्रुतिविरोधान्नेयं कल्पनाऽवतरतीत्याह—**न तथेति**॥ का तर्ह्यस्य गतिः ? इति शङ्कामुपसंहारव्याजेन निरस्यति—**तस्मादिति**। **अर्थवादमात्रमिति** अवदानविधिस्तुतिमात्रमित्यर्थः। देवादीन् प्रति पुत्रादिसंपादनेन निरस्तर्णसंबन्धस्य श्रुत्यर्थत्वान्नोक्तविकल्पनदूषणावकाश इति चेत् ? मैवम्; देवादिभिः प्रत्तस्यार्थस्य सद्भावे मानाभावात्, अस्य च सन्दिग्धार्थत्वात्, स्पष्टश्रुत्यन्तरपराहतत्वाच्चेति द्रष्टव्यम्॥ आदौ संन्यासविधेः श्रुत्यन्तराविरोधेन स्वार्थनिश्चायकत्वाद् न बाधकत्वं युक्तमिति शङ्कते—**ननु ब्रह्मचर्यमिति**॥ "गृही भवेदि" त्यादेरविरक्तविषयत्वेन सामान्यविषयत्वम्, इतरस्य च विरक्तविषयत्वम्, ततो नानयोर्विरोध इत्याह—**न विरक्तेति**॥

अधिकृतानधिकृतविषयत्वेनानयोः श्रुत्योरविरोध इत्यन्योक्तमनुवदति—**ननु कर्मेति**॥ अधिकृतसंन्यासवचनविरोधान्नानधिकृतविषयत्वमित्याह—**न ब्रह्मचर्यादिति**। अनधिकारिणां पृथक् संन्यासविधानादपि नानधिकृतविषयत्वमित्याह—**अथ पुनरिति**॥ अन्धादीनामनधिकृतत्वं चासिद्धमित्याह—**अन्धादीनामिति**॥ अपिच संन्यासोऽन्धादिविषय

## ऋजुविवरणम्

स्वीकारः कस्मान्न भवति ? इत्याशङ्क्याह—**किञ्च ऋणशब्देनेति**॥ **तथा कल्पनायामिति**—अविशेषेण पारिव्राज्यविधानादित्यर्थः। कथं "गृह्णाती"ति श्रुतिविरोधः ? ऋणापाकरणानन्तर्येऽपि सङ्कोचमात्रम्; कांस्यभोजिनयात्, नैतावता तद्विरोधः, इत्याशङ्क्य, तत्रापि विकल्प्य दूषणमाह—**तत्रापीति**॥ अथवा, तत्रापि विधिसंबन्धः ? पुत्रादिसंबन्धो वा ? इति विकल्प्य प्रथमकल्पे दूषणमाह—**तथा कल्पनायामिति**॥ द्वितीयपक्षे पूर्वोक्तमेव दूषणमाह—**तत्रापि चेति**॥ ननु जायमानस्य विधिसंबन्धो मा भूत्, तदर्थानुष्ठानसामर्थ्याभावात्, गृहस्थजन्मसमये तु तद्विधिसंबन्धो युज्यते; तदर्थानुष्ठानसामर्थ्यात्, इत्याशङ्क्याह—**नच पुत्रादीति**॥

ननु अविशेषश्रवणस्यापि शास्त्रान्तरपर्यालोचनया विशेषविषयत्वं युक्तमेवेत्याशङ्क्याह—**अथ पुनरिति**॥ ननु अस्मिन् वचने ये विशिष्योपात्ताः, तद्विषयमेवैतद्वचनम्, इतरदनुपात्तानधिकृतान्धादिविषयमेवेत्याशङ्क्याह—

## पञ्चपादिकाविवरणम्

दीनामप्यविरक्तानां संन्यासानधिकारात् तदेव संन्यासनिमित्तम्। "शरीरं मे विचर्षणम् जिह्वा मे मधुमत्तमा कर्णाभ्यां भूरि विश्रुवम्" "अन्नं प्राणं चक्षुः श्रोत्रं मनो वाचमि"त्यादिनाऽऽत्मज्ञानाय शरीरेन्द्रियादिपाटवस्य प्रार्थ्यमानत्वात्, आत्मज्ञानशेषत्वाच्च संन्यासस्य "दृष्टिपूतं न्यसेत्पादमि"त्यादिस्मृतेश्च पटुतरेन्द्रियस्यैव संन्यासाधिकारः। सर्वत्रात्मज्ञानप्रकरणे संन्यासस्य विहितत्वात् श्रवणाद्यङ्गतयाऽऽत्मज्ञानफलता च संन्यासस्य सिद्धा। कथं पुनः कर्मणां तत्त्यागस्य चात्मज्ञानफलता शक्याऽवधारयितुम्? षोडशिग्रहणाग्रहणयोरिव क्रत्वङ्गतयेति वदामः। क्रमेण वा कर्म-तत्त्यागयोरात्मज्ञानोपकारितया समुच्चयः कल्प्यते, द्वारोपकारभेदात्;

## तत्त्वदीपनम्

इति वदन् प्रष्टव्यः—किमन्धादयो रागिणः संन्यासेऽधिक्रियन्ते? उत विरक्ताः? नाद्य इत्याह—**अन्धादीनामिति**। वैराग्याभावे शिखा-यज्ञोपवीतादित्यागासंभवादित्यर्थः। द्वितीये वैराग्यस्यैव प्रयोजकत्वमापतितमित्याह—**तदेवेति**॥ इतोऽपि नानधिकृतविषयः संन्यास इत्याह—**शरीरं म इति**॥ **विचर्षणम्** विचक्षणमित्यर्थः। **मधुमत्तमा** मधुरभाषिणी। देहोऽन्नशब्दार्थः। तथाऽपि कथं संन्यासस्यानधिकृतविषयत्वाभावः? तत्राह—**आत्मज्ञानेति**। "एतं वै लोकमिच्छन्तः प्रव्रजन्ती"त्यादिवाक्यपर्यालोचनया संन्यासस्यात्मज्ञानाङ्गत्वप्रतिपत्तेरात्मज्ञानस्य च शरीरेन्द्रियादिपाटवपूर्वकत्वाद् नानधिकृतविषयत्वमित्यर्थः। तत्रैव हेत्वन्तरमाह—**दृष्टिपूतमिति**॥ "संन्यासाद् ब्रह्मणः स्थानमि"ति वाक्यात् संन्यासस्य स्वतन्त्रफलत्वप्रतिपत्तेः कथं ज्ञानाङ्गत्वम्? तत्राह—**सर्वत्रेति**। श्रुतौ स्मृतौ चेत्यर्थः। ज्ञानप्रकरणे संन्यासविधानानुपपत्त्या तस्य ज्ञानाङ्गत्वमित्यर्थः। तस्य किं स्वरूपोपकार्यङ्गत्वम्? उत फलोपकार्यङ्गत्वम्? इति वीक्षायामाह—**श्रवणादीति**। आत्मज्ञानं फलमस्येत्यात्मज्ञानफलम्, तस्य भावस्तत्त्वम्, श्रवणाद्यभावे आश्रममात्रधर्मानुष्ठातुर्ब्रह्मस्थानप्राप्तिः; अन्यथा त्यागस्यात्मज्ञानशेषत्वमित्यर्थः॥ "तमेतमि"त्यादिवाक्यात् कर्मणां ज्ञानार्थत्वप्रतिपत्तेर्न तत्त्यागस्य ज्ञानार्थत्वम्; विरोधात्, इति शङ्कते—**कथं पुनरिति**॥ "अतिरात्रे षोडशिनं गृह्णाति" "नातिरात्रे षोडशिनं गृह्णाती"ति वाक्यात् पात्रविशेषग्रहणयोर्विकल्पेन क्रत्वङ्गत्ववत् कर्म-तत्त्यागयोरपि विकल्पेन ज्ञानहेतुत्वमविरुद्धमिति समाधत्ते—**षोडशीति**॥ सति गत्यन्तरे विकल्पस्यान्याय्यत्वमित्यभिप्रेत्य पक्षान्तरमाह—**क्रमेण वेति**॥ कर्मणां ज्ञानोपकारकत्वे त्यागो वृथा स्यादित्याशङ्क्याह—**द्वारेति**। ज्ञानोत्पादने द्वारभूतस्योपकारस्य भेदादित्यर्थः। कल्मषनिरासातिरिक्तद्वारोपकारा-

## ऋजुविवरणम्

**अन्धादीनामिति**॥ ननु वैदिककर्मानधिकृतत्वमधिकारनिमित्तम्, अस्ति चैतदन्धानाम्; आज्यावेक्षण-विष्णुक्रमणाद्यङ्गानुष्ठानसामर्थ्याभावात्, सर्वाङ्गसंपादनसमर्थस्यैवाधिकारादित्याशङ्क्याह—**अन्धादीनामपीति**॥ अथवा, मा भूदविरक्तानामधिकारः तथा नान्धानामधिकारः, विरक्तान्धानामधिकारात्, तद्विषयत्वाद्विधानस्येत्याशङ्क्याह—**तदेवेति**॥ अन्धत्वे सत्यपि केवलस्यानधिकाराद् वैराग्ये च सत्यधिकारात् तदेवाधिकारनिमित्तम्, यदागमन्यायादिति भावः॥ ननु अनन्धस्याधिकारित्वे सिद्धे वैराग्यस्यैव हेतुत्वं भवेत्, तदेव कथम्, इत्याशङ्क्याह—**शरीरमिति**॥ ननु व्यधिकरणोऽयं हेतुः; नह्यात्मज्ञाने शरीरेन्द्रियादिपाटवसापेक्षत्वमन्धानां संन्यासानधिकारं गमयतीत्याशङ्क्याह—**आत्मज्ञानशेषत्वादिति**। उभयोरेकाधिकारित्वेन ज्ञाने च पटुतरेन्द्रियस्यैवाधिकारादनन्धानामेवाधिकार इति भावः॥ ननु कश्चिदात्मज्ञानशेषस्संन्यासोऽस्ति, तत्र पटुतरेन्द्रियस्यैवाधिकारो भवतु, इतरस्त्वन्धादिविषयो मोक्षार्थः फलार्थो वा, न तत्र पटुतरेन्द्रियापेक्षा; अथवा, नास्य ज्ञानाङ्गता; प्रमाणाभावात् उपकाराभावाच्च; अतो विहितस्य फलाकाङ्क्षायां स्वातन्त्र्यमेव कल्पयितुं युक्तमित्याशङ्क्याह—**सर्वत्रेति**॥ **कथं पुनरिति**। भावाभावात्मकत्वेन विरोधात् समुच्चित्यानुष्ठातुमशक्यत्वात् तयोर्नैकज्ञानार्थतेति भावः। **षोडशिग्रहणाग्रहणयोरिति**। यथा—"अतिरात्रे षोडशिनं गृह्णाती"ति षोडशिग्रहणस्याङ्गत्वं प्रतीयते, तथा "नातिरात्रे" इति च श्रवणादग्रहणमप्यङ्गत्वेन गृह्यते; तत्र भावनायां ग्रहणाग्रहणयोरेकस्मिन् प्रयोगेऽनुष्ठातुमशक्यत्वाद्विकल्पेनानुष्ठानम्, एवमत्रापीत्यर्थः। कथं समविकल्पोऽङ्गीक्रियते? कर्मणामसाधारण्येनान्तःकरणशुद्धिहेतुत्वस्य दर्शितत्वात्, त्यागस्य च तद्धेतुत्वे प्रमाणाभावात्, अतुल्यार्थत्वे तु विकल्पाभावादित्याशङ्क्याह—**क्रमेण वेति**॥ कथं समुच्चयः कल्प्यते? कृतकर्मानुष्ठानोपकृतस्योपकारकान्तरानपेक्षणादित्याशङ्क्याह—**द्वारोपकारभेदादिति**।

### पञ्चपादिकाविवरणम्

निबर्हणीयकल्मषस्याचानन्तत्वात् । ब्रह्म-क्षत्रादिविषयतया वा व्यवस्था कल्प्यते ॥

कियत्पुनरत्र परित्यज्यते ? स्वशरीरव्यतिरिक्तं सर्वम् । ननु उपवीतादि न त्यागमर्हति ? न; अग्निहोत्रादिभिरविशेषात् । ननु संन्यासक्रत्वङ्गतया सर्वपरित्यागेऽप्युपवीतादि पश्चादुपादीयताम् ? न; जाबालश्रुतौ "प्रव्रजेदि"ति,अग्निहोत्रादिभिरविशेषात् सहोपवीतादिना कृत्स्नपरित्यागं विधाय, "अथ परिव्राड् विवर्णवासा मुण्डोऽपरिग्रहः" इत्याश्रमधर्मविधिसमये—"अयज्ञोपवीती कथं ब्राह्मणः" इति प्रश्नपूर्वकम्, "इदमेवास्य तद् यज्ञोपवीतं य आत्मे"त्येवकारेण बाह्ययज्ञोपवीतादि व्यावर्त्य, आत्मन एव यज्ञोपवीतत्वसम्पादनात् ॥

### तत्त्वदीपनम्

निरूपणात् तस्य च कर्मभिः कृतत्वात् किं त्यागेनेति ? तत्राह—**निबर्हणीयेति** । कल्मषस्यानन्त्यात् कस्यचित् त्यागेनोपमर्दः, कस्यचित् कर्मणेति द्वारोपकारभेदः । तथा कर्मणां शुद्धिद्वारम्, संन्यासस्य चानन्यव्यापारतया श्रवणाद्यनुष्ठानमित्यर्थः । पक्षान्तरमाह—**ब्रह्मेति** । ब्राह्मणस्यैव संन्यासाधिकारात् तं प्रति त्यागस्य ज्ञानहेतुत्वम्, क्षत्रिय-वैश्यौ प्रति कर्माणि ज्ञानहेतव इत्यर्थः ॥

संन्यासस्य ज्ञानाङ्गत्वमङ्गीकृत्य न सकलकर्मत्यागस्य तदङ्गत्वमिति शङ्कते—**कियत्पुनरिति** । "काम्यानां कर्मणां न्यासं संन्यासं कवयो विदुरि"त्यादिवाक्यात् काम्यकर्मत्यागस्य ज्ञानहेतुत्वम्, न सकलकर्मत्यागस्येत्यभिसन्धिः । "प्रव्रजेदि"त्यविशेषेण सकलकर्मपरित्यागाभिधायिवचनविरोधाद् मैवमित्याह—**स्वशरीरेति** ॥ "अयज्ञोपवीती कथं ब्राह्मणः" इत्यादिनोपवीतादेरावश्यकत्वप्रतिपत्तेस्तदन्यस्य त्याग इति शङ्कते—**ननूपवीतेति** ॥ "वीरहा वा एष देवानां योऽग्निमुद्वासयते" इत्यादिवचनादग्निहोत्रादेरावश्यकत्वप्रतिपत्तावपि त्यागवदुपवीतादेरपि त्यागो युक्त इत्याह—**नाग्निहोत्रेति** ॥ ननु "प्रव्रजेदि"त्यादिवचनानुरोधात् सकलकर्मपरित्यागप्रतिपत्तावपि कौपीन-कन्थादिकं यथाऽऽदीयते, तद्वदुपवीतादिकमप्यादेयमिति शङ्कते—**ननु संन्यासेति** ॥ क्रतुः संकल्पः नच तेन न्यायेनाग्निहोत्राद्यादानम्; दारसंबन्धपूर्वकत्वादग्निहोत्रादेः, तस्य च संन्यासिनं प्रति निषिद्धत्वाद् नाग्निहोत्रादेः प्रतिप्रसवविधिप्रसक्तिरित्यर्थः । अनधीतचरणपरिचरणनिरतत्वात् त्रिदण्डिनां मतमुपेक्ष्यमित्याह—**न जाबालेति** ॥

### ऋजुविवरणम्

द्वारभेदादुपकारभेदाच्चाराडुपकारकत्वादिति भावः ॥ यद्वा, द्वारस्योपकारभेदादित्यर्थः । ननु कल्मषनिवृत्तिर्द्वारम्, तच्च कर्मभिः कृतम्; निवृत्तकल्मषस्यैव संन्यासाधिकारात्, अतो द्वारलोपादननुष्ठानमेव, नच समुच्चय इत्याशङ्क्याह—**निबर्हणीयेति** ॥ किञ्चित् कर्मनिवर्त्यम्, किञ्चित् त्यागनिवर्त्यम्, नच कर्मनिवर्त्यमेव त्यागनिवर्त्यमिति भावः ॥ ननु "कषाये कर्मभिः पक्वे" "धर्मेण पापमपनुदति" इत्यादिवचनपर्यालोचनयाऽविशेषेण कर्मणां शुद्धिहेतुत्वं प्रतीयते, कथं तस्य विना कारणेन संकोचः क्रियते ? नच तेषामेव हेतुत्वमित्यपि निश्चेतुं शक्यते; "न कर्मणा न प्रजया" "संन्यासयोगाद् यतयः शुद्धसत्त्वाः" इत्यादिभिः कर्मनिषेधेन त्यागस्यैव सत्त्वशुद्धिहेतुत्वप्रमितेः, तत्सङ्कोचस्य चायुक्तत्वात् । नच विकल्पः; अष्टदोषदुष्टत्वात्, नापि समुच्चयः; तुल्यार्थत्वात्, शक्तिसङ्कोचस्य चायुक्तत्वात्, अतो न विकल्पसमुच्चयावित्याशङ्क्याह—**ब्रह्मक्षत्रादिभेदेन** ॥

**ननूपवीतादीति** । "विना यज्ञोपवीतेने"त्यादिस्मृतिपर्यालोचनया चावश्यकत्वप्रतीतेरिति । **न, अग्निहोत्रादिभिरिति** । अग्निहोत्रादीनामपि "वीरहा वा एष देवानां योऽग्निमुद्वासयते" इत्येवमादिभिरावश्यकत्वश्रवणान्न तत्र विशेष इत्यर्थः ॥ **ननु संन्यासक्रत्वङ्गतयेति** । स्मृत्याऽऽवश्यकत्वपर्यालोचनया पश्चादुपादानं कर्तव्यमुपवीतादेः । नचाग्निहोत्रादेरपि परिग्रहः; दारादिसाध्यत्वात्, तत्परिग्रहे च निषेधश्रवणात्, नचात्र निषेधश्रवणमस्तीत्यर्थः । **जाबालश्रुताविति** । यथाऽग्निहोत्रादीनामविशेषेण त्यागप्रतीतेर्नोत्तरकालमुपादानम्, एवमत्राप्यविशेषेण श्रुतौ स्मृतिबलान्न सङ्कोचः; दुर्बलत्वात्, अतोऽत्र त्यागप्रतीतेर्न तत्कालीनत्वस्वीकार इत्यर्थः । ननु अविशेषश्रवणस्यापि शास्त्रान्तरपर्यालोचनया विशेषव्यवस्थापनं युक्तम्; दुर्बलप्रमाणस्यापि कांस्यभोजिन्यायेनानुसरणीयत्वादित्याशङ्क्याह—**सहोपवीतादिनेति** ॥

## पञ्चपादिका

**तस्मात् साधूक्तम्—धर्मजिज्ञासायाः प्रागप्यधीतवेदान्तस्य ब्रह्मजिज्ञासोपपत्तेरिति ॥**

**अथापि स्यात्—न हेतुत्वेनानन्तरवृत्तकर्मावबोधापेक्षमथशब्दं ब्रूमः, अपितु क्रमप्रतिपत्त्यर्थम्; यथा "हृदयस्याग्रेऽवद्यत्यथ जिह्वाया अथ वक्षसः" इति तदेतदयुक्तम्; न्यायसूत्रे ।**

## पञ्चपादिकाविवरणम्

अत्र सर्वसङ्करवादी—पुरस्ताद् यज्ञोपवीतत्यागस्यानिर्दिष्टत्वात् "ब्राह्मणः कथमयज्ञोपवीती"ति प्रश्नस्य प्रसङ्गाभावात् प्रक्षिप्तमिदं वाक्यमिति—जल्पति; तस्य तत्त्वदर्शन-तन्निष्ठपरमहंसपरिव्राजकद्वेष एवापराध्यते; पुरस्ताद्विधिसामर्थ्यलब्धसर्वपरित्यागेनोपवीतादित्यागप्रसङ्गापरिज्ञानस्य स्वाभाविकत्वात् । तथाच—"अथ परिव्राडेकशाटीपरिवीतो मुण्डो उदरपात्र्यरण्यनित्यो भिक्षार्थी ग्रामं प्रविशेदासायं प्रदक्षिणेनाविचिकित्सं सार्ववर्णिकं भैक्ष्यचर्यमभिशस्तपतितवर्जमयज्ञोपवीती शौचनिष्ठः काममेकं वैणवं दण्डमाददीते"ति परिव्राजकमेवोद्दिश्य मैत्रायणी श्रुतिः । तथाच बोधायनोऽपि—"अत ऊर्ध्वं यज्ञोपवीतमासनं शिखा यष्टयः शिक्यंजलपवित्रं कमण्डलुपात्रमि"त्येतानि वर्जयित्वा "अथ दण्डमादत्ते सखा मा गोपाये"ति संन्यासादूर्ध्वमेव दर्शयति । तस्मादुक्त एवात्मज्ञानाङ्गभूतः संन्यासः । **तस्मात्साधूक्तमिति** ॥ भाष्योपसंहारः ॥

ननु नानन्तर्याभिधानमुखेनाधिकारिविशेषप्रतिपत्त्यर्थोऽयमथशब्दः, किं तु तदभिधानमुखेन क्रमप्रतिपत्त्यर्थं इति चोदयति—**अथापि स्यान्न हेतुत्वेनेति** ॥ तत्र वक्तव्यम्—किं स्वयमेव क्रमं प्रतिपादयति ? आहोस्वित् प्रमाणान्तरप्रतिपन्नक्रमापेक्षितन्यायं सूचयति ? इति, न तावत् प्रथमः कल्प इत्याह—**तदेतदयुक्तम्, न्यायसूत्र इति** ॥ आगमत्वाभावा-

## तत्त्वदीपनम्

"इदमेवास्य तद् यज्ञोपवीतम्" इत्यादेरवेदवचनत्वात् कथं तद्बलादुपवीतत्यागः ? इति भास्करः शङ्कते—**अत्रेति** । "अयज्ञोपवीती कथं ब्राह्मणः" इत्यत्रोपवीतविधुरस्य ब्राह्मण्यं न संभवति; आचमनादिसकलक्रियाङ्गत्वेनोपवीतस्य विहितत्वादित्युच्यते । नच तदुपपद्यते; उपवीतत्यागस्य प्रागनिर्दिष्टत्वात् प्रश्नाप्राप्तेरित्यर्थः । श्रुति-युक्तिशून्यत्वात् तज्जल्पनमुपेक्ष्यमित्याह—**तस्येति** ॥ उपवीतत्यागस्याप्रसक्ततया तद्विधुरस्य ब्राह्मण्यप्रतिषेधानुपपत्तेरुक्तत्वात् कथं प्रद्वेष एवेत्युक्तमिति ? तत्राह—**पुरस्तादिति** ॥ उपवीतत्यागस्य वाक्यान्तरप्रापितत्वादपि नैतत्प्रक्षिप्तमित्याह—**तथाचेति** ॥ तत्रैव स्मृतिं प्रमाणयति—**तथेति** ॥ **अत ऊर्ध्वमिति**—पारमहंस्यप्राप्त्यन्तरमित्यर्थः ।

अथशब्दस्य चतुर्ष्वर्थेषु प्रसिद्धस्य कथं क्रमप्रतिपत्त्यर्थता ? इत्याशङ्क्य तात्पर्यमाह—**ननु नानन्तर्येति** । अधिकारिविशेषस्याप्रमितेरयुक्तेश्चे त्यर्थः । सूत्रस्य प्रतिपादकत्वप्रसिद्धेः प्रतिपादकत्वायुक्त्यभिधानमसंगतमित्याशङ्क्य, विकल्पपुरःसरं व्याचष्टे—**तत्र वक्तव्यमिति** ॥ अयुक्तत्वे हेतुमाह—**आगमत्वाभावादिति** ॥ किं दर्श-पूर्णमास-प्रयाजादीना-

## ऋजुविवरणम्

यज्ञोपवीतत्यागे विवादः, नापि पुनः परिग्रहः, नापि श्रुतेः प्रक्षिप्तत्वशङ्का, श्रुति-स्मृत्योरस्यार्थस्य दर्शनादित्याह—**तथाचेति** ॥

"अथापि स्यादि"ति चोद्ये विशिष्टकर्मावबोधापेक्षं न ब्रूम इत्यनुवादो व्यर्थः, नाप्ययं निषेधः; वैयर्थ्यबोधस्यैवाभावात्, नच तदभिधानमपि संभवति; अथशब्दस्य तत्राव्युत्पत्तेः, तस्मादसंबन्धं चोद्यमित्याशङ्क्यावतारयति—**ननु नानन्तर्येति** ॥ "तदेतदयुक्तमि"त्यनेन न्यायसूत्रत्वात् क्रमप्रतिपत्त्यर्थता नास्तीत्युक्तम्, तदयुक्तम्; न्यायसूत्रस्यापि स्वार्थपरत्वात् क्रमस्यापि स्वार्थत्वे तत्परत्वसंभवात्; व्याहतश्चायं ग्रन्थः, उत्तरग्रन्थेऽपि हि न्यायसूत्रेऽपि क्रमप्रतिपादकत्वाङ्गीकारात्, नहि क्रमस्यापेक्षितत्वानपेक्षितत्वाभ्यां न्यायसूत्रस्य पक्षे सूत्रता भवति, तेन नायं हेतुः, 'न्यायसूत्रत्वादि'ति । ततश्च "अपिचे"त्यपि न युक्तं वक्तुम्; पूर्वयुक्तेरपरिनिष्ठितत्वादित्याशङ्क्य विकल्प्यावतारयति—**तत्र वक्तव्यमिति** ॥

**पञ्चपादिका**

**अपि चैककर्तृकाणां बहूनां युगपदनुष्ठानासम्भवादवश्यम्भाविनि क्रमे ब्रूयादपि तन्नियममथशब्दः। एककर्तृकत्वं च शेष-शेषिणोः शेषाणां च बहूनामेकशेषिसम्बद्धानामधिकारान्तरप्रयुक्त्युपजीविनां च भवति, नेतरथा। न हि धर्म-ब्रह्मजिज्ञासयोरेतेषामन्यतमत्वे प्रमाणमस्ति, तदिदमाह—यथा च हृदयाद्यवदानानामानन्तर्यनियमः; क्रमस्य विवक्षितत्वात्, न तथेह क्रमो विवक्षितः; शेषशेषित्वेऽधिकृताधिकारे वा प्रमाणाभावाद् धर्म-ब्रह्मजिज्ञासयोरिति॥**

**पञ्चपादिकाविवरणम्**

दित्यर्थः। द्वितीये विकल्पे धर्म-ब्रह्मजिज्ञासयोः क्रमापेक्षानिमित्तस्यैकविधिप्रयुक्त्यनुष्ठानत्वस्याभावान्न तदर्थ इत्याह—**अपि चैककर्तृकाणामित्यादि**॥ उक्तेऽर्थे भाष्यमवतारयति—**तदिदमाहेति**॥

अत्र कश्चित्—"धर्म-ब्रह्मजिज्ञासयोरि"ति विशेषोपादानमवगच्छन्नपि ज्योतिष्टोमोद्गीथज्ञानयोरधिकृताधिकारत्वं खलु विद्यत इति प्रतिवक्ति स खलु मन्दभाग्य एव। उद्गीथाद्युपासनानां धर्मविशेषाणामेव निरूपितविधिचतुष्टयानां ब्रह्मप्रकरणे प्रत्ययत्वसाम्यात् प्रासङ्गिकत्वेन भेदादिमात्रस्यैव निरूपितत्वात् शास्त्रतात्पर्यावगम्यस्य ब्रह्मज्ञानस्य कर्मण्यधिकृताधिकारित्वाभावात्। ननु मा भूदेकविधिप्रयुक्त्यनुष्ठेयतयाऽऽक्षिप्तक्रमविशेषापेक्षितन्याया-

**तत्त्वदीपनम्**

मिवैकविधिप्रयुक्तेरनुपपत्त्या क्रमः? आहो द्वादशलक्षणवदेकप्रमेयत्वस्य? आहो षडङ्गवदेकफलत्वस्य? इति विकल्प्याद्यं प्रत्याह—**द्वितीय इति**॥ टीकायां; **शेष-शेषिणोरिति** प्रयाज-दर्शपूर्णमासयोरित्यर्थः; **शेषाणामिति** एकपरमापूर्वसाधनानां षण्णां यागानामित्यर्थः; **अधिकारान्तरप्रयुक्त्युपजीविनामिति**। दर्श-पूर्णमासाधिकारप्रसक्त्युपजीविनां गोदोहनादीनामित्यर्थः॥

प्रमाणाभावोऽसिद्ध इति भास्करः शङ्कते—**अत्र कश्चिदिति**॥ चोद्यानुवादसमय एव तस्याभासत्वं दर्शयति—**धर्मेति**। "यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवती"त्यादिवाक्यानुरोधाद् विद्या-कर्मणोरेकाधिकारत्वं प्रतीयत इत्यर्थः। ज्योतिष्टोमोद्गीथज्ञानयोरधिकृताधिकारत्वेऽपि न धर्म-ब्रह्मज्ञानयोरधिकृताधिकारत्वं कल्प्यत इत्याह—**स खल्विति**॥ ज्ञानत्वाविशेषादत्राप्यधिकृताधिकारत्वं कल्प्यतामित्याशङ्क्य, वैषम्येणोत्तरयति—**उद्गीथेति**॥ धर्मविशेषत्वमेवाह—**निरूपितेति**। धर्मप्रतिपादकत्वेन निरूपितं विधिचतुष्टयं विद्यते येषाम्, तानि निरूपितविधिचतुष्टयानि; तेषामित्यर्थः। उपासनानां धर्मत्वे ब्रह्ममीमांसायां कस्मात् प्रतिपादनम्? इत्याशङ्क्याह—**प्रासङ्गिकत्वेनेति**॥ प्रासङ्गिकत्वमेवाह—**प्रत्ययत्वसाम्यादिति**॥ तथाऽपि निरूपितनिरूपणं वृथेत्यत्राह—**भेदादीति**। चोदनाप्रमाणकत्वेनोपासनानां धर्मत्वमाश्रित्य प्रसङ्गात् भेदाभेदौ निरूप्येते इत्यर्थः। धर्मस्य चोदनाप्रमाणकत्वाद् ब्रह्मज्ञानस्यापि तादृक्त्वाद् धर्मतेत्याशङ्क्य हेत्वसिद्धिमाह—**शास्त्रेति**। विधिविधुरं वेदवचनं **शास्त्रशब्दार्थः**। विचारयोरेकविधिप्रयुक्तत्वेन क्रमस्यात्र निराचिकीर्षितत्वात् फलाद्यैक्यं कस्मादुच्यते? कल्पान्तरोत्थितावपि न क्रमसिद्धिः, कर्तृभेदेन साधनयोर्यौगपद्योपपत्तेरित्याशङ्क्य, द्वितीय-तृतीयावुत्थापयतीत्याह—**ननु मा भूदिति**। दर्श-पूर्णमासयोरेकफल-

**ऋजुविवरणम्**

**निरूपितविधिचतुष्टयानामिति**। निरूपितं विधिचतुष्टयम् उत्पत्त्यादिकं कर्मकाण्डे येषामुपासनानामिति विग्रहः। अनेनान्यत्रैव निरूपितत्वं दर्शितवान्; अथवा, निरूपितं निरूपणमिति भावे निष्ठा, विधिचतुष्टयेन येषामुपासनानामिति धर्मत्वे हेतुः। ननु तर्हि धर्मविशेषत्वे तन्निरूपणमत्र न युक्तमित्याशङ्क्याह—**प्रासङ्गिकत्वेनेति**॥ **प्रत्ययत्वसाम्यादिति** प्रसङ्गे हेतुः। ननु निरूपितस्य निरूपणं व्यर्थमित्याशङ्क्याह—**भेदादिमात्रस्येति**॥ एवमप्यधिकृताधिकारत्वं विद्यत इत्याशङ्क्याह—**शास्त्रतात्पर्यावगम्यस्येति**॥ टीकायाम् **शेष-शेषिणोः** प्रयाज-दर्शपूर्णमासयोः। **शेषाणाम्** प्रयाजादीनामिति। **आदिशब्देन** गोदोहनादयो विवक्षिताः। "अथापि स्यादि"त्यनेनोत्तरभाष्यस्य शङ्काप्रदर्शनं कृतम् तन्न युक्तम्; नह्येकफलत्वमेकजिज्ञास्यत्वं वा क्रमाक्षेपकम्, अनुपपत्त्यभावात्; बहूनामेककर्तृत्वं हि क्रमाक्षेपकम्, नच तदत्र विद्यते; नापि तदेवात्र विवक्षितमिति शक्यते वक्तुम्; पौनरुक्त्यप्रसङ्गात्, एककर्तृत्वप्रयोजकाभावस्योक्तत्वादाशङ्काऽसंभवादित्याशङ्क्य, विषयभेदप्रदर्शनेन शङ्काधिक्यं दर्शयितुं वृत्तनिषेधेनावतारयति—**ननु मा भूदिति**॥

### पञ्चपादिका

**अथापि स्यात्—यथाऽऽग्नेयादीनां षण्णां यागानामेकं फलं स्वर्गविशेषः, एवं धर्म-ब्रह्मजिज्ञासयोरप्येकं फलं स्वर्गः, ततः क्रमापेक्षायां तन्नियमार्थोऽथशब्द इति; यथा वा द्वादशभिरपि लक्षणैर्धर्म एको जिज्ञास्यः, प्रतिलक्षणमं-शान्तरपरिशोधनया; यथा वाऽस्मिन्नपि तन्त्रे चतुर्भिरपि लक्षणैरेकं ब्रह्म जिज्ञास्यम्; तत्र चांशान्तरपरिशोधनेन लक्षणानां क्रमनियमः। एवं तन्त्रद्वयेन एकं ब्रह्म जिज्ञास्यम्। तत्र क्रमनियमार्थोऽथशब्द इत्याशङ्क्याह—फल-जिज्ञास्यभेदाच्च धर्म-ब्रह्मजिज्ञासयोरिति सम्बन्धः॥ तमेव भेदं कथयति—अभ्युदयफलं धर्मज्ञानम्, तच्चानुष्ठानापेक्षम्। अभ्युदयः फलं धर्म-ज्ञानस्येति प्रसिद्धमेव, न कस्यचिद् विसंवादः। तदपि न ज्ञानस्य फलम्, अपितु ज्ञेयस्य, तस्यापि न ज्ञेयत्वादेव फलम्; किंत्वनुष्ठीयमानत्वात्। निःश्रेयसफलं तु ब्रह्मज्ञानम्, न चानुष्ठानान्तरापेक्षमिति॥ ब्रह्मज्ञानस्य फलमपवर्गः। स च नित्य-सिद्धोऽव्यवहितः स्वसंवेद्यः, यतोऽविद्या संसारहेतुः। नचाविद्यामनिवर्तयन्ती विद्योदेति तदेवमत्यन्तविलक्षणत्वात् प्रस्थान-भेदाच्च न फलद्वारेणाप्येकोपनिपातः; तेन न क्रमाकाङ्क्षा तन्त्रद्वयस्य; जिज्ञास्यं पुनरत्यन्तविलक्षणम्, यतः कार्यो धर्मः पुरुषव्यापारतन्त्रः स्वज्ञानकालेऽसिद्धसत्ताकः प्रथमे तन्त्रे जिज्ञास्यः; इह तु नित्यनिर्वृत्तं पुरुषव्यापारानपेक्षं ब्रह्म जिज्ञास्यम्।**

### पञ्चपादिकाविवरणम्

नुसरणपरोऽथशब्दः, किंत्वेकफलप्रयुक्त्यनुष्ठेयतयैकप्रमेयजिज्ञास्यप्रयुक्त्यनुष्ठेयतया वा साधनद्वये कर्त्रैक्यात् क्रमस्याक्षेप इत्युत्तरभाष्यस्याशङ्कामाह—**यथाऽऽग्नेयादीनामित्यादिना**॥

**चोदनाप्रवृत्तिभेदाच्चेत्यतः** प्राक्तनो ग्रन्थः स्पष्टार्थः॥ अयमत्राशयः—न धर्म-ब्रह्मज्ञानयोरेकफलत्वे प्रमाण-मस्ति, अर्थोऽपि न युज्यते कथम्?

### तत्त्वदीपनम्

साधनयोर्युगपदनुष्ठानासंभवाद् यथा क्रमः, यथा चैकजिज्ञासानां द्वादशलक्षणानां युगपत् प्रवृत्त्यसंभवात् क्रमः, तद्वदत्रापीत्यर्थः।

"स च नित्यसिद्धः" इत्यादिटीकाया एषोऽर्थः; अपवर्गस्यापि फलत्वेऽभ्युदयान्न किंचिदन्तरमित्या-शङ्क्याह—**स चेति**॥ **नित्यसिद्धः** इत्युत्पाद्यत्वं विकार्यत्वं च निरस्यति। **अव्यवहितः** इति आप्यत्वप्रतिषेधः। स्वरूपेणाप्त-त्वेऽपि स्फुरणविशिष्टतयाऽऽप्यत्वं नेत्याह—**स्वसंवेद्य इति**। अनेन विशेषणेन गुणाधानलक्षणसंस्कारो निरस्तः। दोषस्य च परमार्थत्वे ज्ञाननिवर्त्यत्वासंभवान्न तदपनयलक्षणसंस्कारोऽपीति द्रष्टव्यम्। ननु अपवर्गस्यैवंरूपत्वे संस्कारप्रथाऽ-स्तमियात्, तथा श्रवणादिवैयर्थ्यं चेत्यत्राह—**यत इति**। वस्तुत एकरूपत्वेऽप्यविद्ययाऽन्यथा भानमित्यर्थः। अत एव न साधनवैयर्थ्यमपीत्याह—**न चाविद्यामिति**॥ **प्रस्थानभेदादिति** साधनवैलक्षण्यादित्यर्थः। **एकोपनिपात इति**—जिज्ञासाद्वय-स्यैकस्मिन् कर्तरि कार्यत्वेनोपनिपातः संबन्ध इत्यर्थः। सुधामरीचिमण्डलोदयाद् वैलक्षण्यमाह—**पुरुषेति**॥ कार्य-शब्दार्थोऽपीदृश इत्याशङ्क्याह—**ज्ञानेति**॥

"फलजिज्ञास्यभेदाच्चे"त्यत्र धर्म-ब्रह्मजिज्ञासयोः फलवैलक्षण्यमुक्तम्, तदनुपपन्नम्, धर्मजिज्ञासाया अभ्युदय-फलत्वेऽपि प्रमाणेनान्यत्र विनियुक्तत्वान्निःश्रेयसफलत्वमित्याशङ्क्य तात्पर्यमाह—**अयमाशय इति**॥ धर्म-ब्रह्मज्ञानाभ्यां साध्यमेकं निरूपयितुं न शक्यत इत्याह—**अर्थोऽपीति**॥ प्रमाणासंभवप्रकारं पृच्छति—**कथमिति**॥ तत्र किं विविदिषा-

### ऋजुविवरणम्

ननु 'फलभेदादि'त्यसंबद्धम्; कर्मणां निःश्रेयसफलत्वस्य श्रुति-स्मृतिसिद्धत्वात्, नचाभ्युदयफलमेव नियतं कर्म-णाम्, विनियोगभेदेन मोक्षफलत्वस्यापि संभवात्, अतोऽसिद्ध इत्याशङ्क्याह—**अयमाशय इति**। अर्थोऽपि न युज्यत इत्यर्थः। प्रयोजनं न युज्यते, न संबध्यते कर्मणेत्यर्थः। अथवा, अर्थोऽपि कर्मसाध्यो न युक्तो दृश्यत इत्यर्थः। ननु "विविदिषन्ती"-त्यादिशास्त्रमेव प्रमाणम्—प्रयोजनं च ब्रह्मप्राप्तिः, अतो हेतुद्वयमसिद्धमित्याक्षिपति—**कथमिति**॥ ननु "विविदिषन्ती"-त्यत्र विधिवाक्ये मोक्षफले ज्ञानस्य करणत्वं यज्ञादीनामङ्गत्वम्, तत्रापि सन्निपातित्वासंभवेन फलोपकार्यङ्गत्वं प्रतीयते, "ब्रह्मणः सायुज्यं गच्छती"ति लिङ्गात् फलोपकार्यङ्गत्वं प्रतीयते, पराशरोऽप्याह—"तत्प्राप्तिहेतुर्विज्ञानं कर्म चोक्तमिति"। "स य आत्मानमेव लोकमुपास्ते न हास्य कर्म क्षीयते" इति स्वरसङ्गभरस्य कर्मणोऽक्षयफलत्वेन नित्यत्वावगमात् समुच्चयः, ईशावास्ये च स्पष्टस्समुच्चय इत्याक्षिपति—**कथमिति**॥ विविदिषावाक्ये ज्ञानस्यैव भाव्यत्वं प्रतीयते। तत्र

## पञ्चपादिकाविवरणम्

न तावद् विविदिषावाक्यस्य शब्दसामर्थ्यन्यायपरीक्षायां समुच्चये प्रामाण्यमित्युक्तम् । नच "विद्यां चाविद्यां च यस्तद्वेदोभयं सहे"ति समुच्चयविधिः; "अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते" इति फलभेदावगमात् । नापि "तेनैति ब्रह्मवित्पुण्यकृच्चे"ति ज्ञान-कर्मणोरेकस्मिन् पुरुषे समुच्चयविधिः ; ब्रह्मवित्पुण्यकृतोः पुरुषयोर्मार्गे समुच्चयावगमात्, अन्वाचयार्थेन च चकारेण प्रत्येकं निरपेक्षमार्गान्वयोपपत्तेः, पुण्यकृच्छब्देन चाऽऽअमानवपुरुषादर्चिरादिना गच्छतां प्रतीकालम्बनानामभिधानात्, इष्टादिकारिणां धूमादिमार्गश्रवणाच्च ॥

## तत्त्वदीपनम्

वाक्यं धर्म-ब्रह्मज्ञानयोरकफलत्वे प्रमाणम् ? उत "विद्यां चाविद्यां चे"त्येतत् ? आहो "तेनैति ब्रह्मवित् पुण्यकृदि"ति वाक्यम् ? अथवा "तान्याचरथे"त्येतत् ? उत "सत्येन लभ्यः" इति वाक्यम् ? किं वा नित्यकर्मविधानानुपपत्तिः ? उत ब्रह्मज्ञानस्य करणतानुपपत्तिः ? इति विकल्प्याद्यं निरस्यति—**न तावदिति** । "यज्ञेने"ति तृतीयाश्रुत्या कर्मणामिष्यमाणवेदनकारणत्वे शब्दसामर्थ्यम्, मानान्तरविरोधेन मोक्षान्वयकल्पनानुपपत्तिर्न्यायः, ताभ्यां परीक्षायां तयोः परीक्षायामिति वेत्यर्थः । द्वितीयं निरस्यति—**न चेति** । अविद्यापदवेदनीयकर्मणां मृत्युपदाभिधानीयकल्मषनिरसन उपयोगः, विद्याया अमृतत्वमित्येवं फलभेदसिद्धिरित्यर्थः । नच—"सहे"त्यनुपपन्नमिति—शङ्क्यम्, कर्मब्रह्मज्ञानयोरुपायोपेयभावस्य साहित्यगिरा विवक्षितत्वादित्यर्थः । तृतीयं निरस्यति—**नापीति** ॥ **तेन** देवयानेन पथा, **एति** गच्छति ; ज्ञानं च कर्म चैकपुरुषाश्रितं सदेकफलसाधनमिति न श्रुत्यर्थः, श्रुत्यन्तरविरोधात्, किंतु यो ब्रह्म विद्वान् यश्च पुण्यकृत् तावुभावप्येतेन पथा गच्छत इति मार्गसमुच्चयप्रतिपत्तिरित्यर्थः ॥ चोरव्याकुले पथि बहूनां यथा सापेक्षतया मार्गे समुच्चयः, तथा चशब्दप्रयोगादनयोः समुच्चय इत्याशङ्क्याह—**अन्वाचयेति** । अनु पश्चादाचीयते इति अन्वाचयः, नान्तरीयकतया प्रतीयमानोऽर्थः, सोऽर्थो यस्य, स तथोक्तः । **निरपेक्षेति** । निरपेक्षयोर्मार्गसंवन्ध इत्यर्थः । निर्गुणब्रह्मविद्यायाः कर्मणां च नैकफलसाधनत्वेन संबन्धो युज्यते; विरोधात् । नच च-शब्दानुपपत्तिः सगुणब्रह्मोपासकस्य कर्मिणश्चैकमार्गसमुच्चयेन च-शब्दोपपत्तेरित्यर्थः । केवलकर्मिणामर्चिरादिमार्गसंबन्धस्य प्रतिषिद्धत्वात् समुच्चयो विवक्षित इत्याशङ्क्याह—**पुण्यकृदिति** । **आ अमानवपुरुषादिति** पदच्छेदः । साधारणस्य शब्दस्य कथं प्रतीकोपासकविषयत्वमिति ? तत्राह—**इष्टादीति** । दत्त-पूर्ते आदिशब्दार्थः । "अग्निहोत्रं तपः सत्यं वेदानां चानुपालनम् । आतिथ्यं वैश्वदेवं च इष्टमित्य-

## ऋजुविवरणम्

यज्ञादीनां पुरुषसंस्कारद्वारेण संयोगभेदाद् ज्ञानाङ्गत्वम् । तत्र संस्कारश्रुतिसामर्थ्यात् पापक्षयद्वारेण ज्ञानाङ्गत्वप्रतिपादनात् सन्निपत्योपकारकत्वमित्युक्तमनुसन्धेयमित्याह—**न तावदिति** ॥ मा भूद् विविदिषावाक्यस्य समुच्चये प्रामाण्यम् ; "विद्यां चाविद्यां चे"ति समुच्चये प्रमाणम् "कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः" इति यावज्जीवमग्निहोत्रादिकर्म कर्तव्यमित्युक्त्वा "अन्धं तमः प्रविशन्ती"त्यकैकानुष्ठानं निन्दित्वा 'सहे'ति समुच्चयप्रतिपादकत्वादित्याशङ्क्याह—**नच विद्यामिति** । आद्यमन्त्रे वित्तादीनां मिथ्याभूतत्वेनावर्तनात् स्वप्नादितुल्यत्वात् तत्प्रहाणेन पालनमभिधाय तत्रासमर्थस्य कर्म कर्तव्यमित्यभिधीयते, अतो नात्मज्ञाने समुच्चयः ; नह्यात्मविदो "जिजीविषेदि"ति विधानम्, "अन्धं तमः प्रविशन्ती"त्यादि च, अतो न समुच्चय इति भावः ॥ ननु "तेनैती"ति श्रुत्या ज्ञानकर्मानुष्ठायिनार्मचिरादिना ब्रह्मप्राप्तिरुपदिश्यते ; अतः समुच्चयः, इत्याशङ्क्याह—**नापि तेनैतीति** ॥ ननु पुरुषद्वयसमुच्चयोऽत्र विवक्षितः, न ज्ञान-कर्मणोरेकस्मिन् पुरुषे ब्रह्मविदि समुच्चय इति कथं निश्चीयते ? इत्याशङ्क्याह—**अन्वाचयेति** । अनु पश्चादाचीयत इत्यन्वाचयः—नान्तरीयकतया प्रतिपाद्यमानः, स एवार्थो यस्यासावन्वाचयार्थः । ननु ज्ञान-कर्मणोरेकत्रान्वयो विवक्षितो न भवति, किन्तु ब्रह्मवित्पुण्यकृतोर्मार्गे समुच्चयोऽत्र विवक्षित इति कथं निश्चेतुं शक्यते ? केवलकर्मणामर्चिरादिमार्गेऽन्वयाभावात्, अतः पुरुष एव समुच्चयोऽत्र विवक्षित इत्याशङ्क्याह—**पुण्यकृच्छब्देनेति** ॥ कथं पुण्यकृच्छब्देनेति प्रतीकालम्बनानां निर्देशः ? न तु पुण्यकृतामेव, इत्याशङ्क्याह—**इष्टादिकारिणामिति** ॥ यद्वा, ज्ञान-कर्मणोरेकपुरुषान्वयाभावे युक्त्यन्तरम्—**इष्टादिकारिणामित्यनेनोक्तम्** । नच—धूमादिमार्गश्रवणं केवलकर्मविषयमिति शक्यम्—वक्तुम्; समुच्चयग्राहकप्रमाणाभावे तथा कल्पनाऽयोगात् ।

## पञ्चपादिकाविवरणम्

नच "तान्याचरथ नियतं सत्यकामाः" इति समुच्चयविधिरवगम्यते; केवलकर्मणामेव श्रवणात्, सत्यशब्देन च "एष वः पुण्यः सुकृतो ब्रह्मलोकः" इति वाक्यशेषात् सत्यलोकाभिधानात्, "प्लवा ह्येते अदृढा यज्ञरूपा" "नास्त्यकृतः कृतेने"ति च कर्मनिन्दया, "तद्विज्ञानार्थं स गुरुमेवाभिगच्छेदि"ति च विज्ञानविधानात्। "सत्येन लभ्यस्तपसा ह्येष आत्मे"ति न समुच्चयविधिः; तपःशब्दस्य 'मनसश्चेन्द्रियाणां चैकाग्र्यं परमं तपः" इति ध्यानस्यैवाभिधानात्। तस्मान्न समुच्चये प्रमाणमस्ति।

प्रतिषेधाच्च; "नान्यः पन्था विद्यतेऽयनाय" "नास्त्यकृतः कृतेन" "न कर्मणा न प्रजया धनेन" "नान्यैर्देवैस्तपसा कर्मणा वा" "हित्वाऽविद्यां धियैवेयात् तद्विष्णोः परमं पदमि"ति च। केवलकर्मणां प्रतिषेध इति चेत्? न; अविशेषात्, समुच्चयविधायिप्रमाणाभावे सर्वकर्मणा प्रतिषेधोपपत्तेश्च।

## तत्त्वदीपनम्

भिधीयते ॥ वापी-कूप-तटाकादि देवतायतनानि च। अन्नप्रदानमारामः पूर्तमित्यभिधीयते ॥ शरणागतसंत्राणं भूतानां चाप्यहिंसनम्। बहिर्वेदि च यद्दानं दत्तमित्यभिधीयते ॥" इत्यत्र निर्दिष्टानीष्टादिशब्दार्थः। "ते धूममभिसंभवन्ति धूमाद्रात्रि"मित्यस्मिन् वाक्ये केवलकर्मिणां पितृयानमार्गश्रवणादित्यर्थः। अहंग्रहोपासका **ब्रह्मविच्छब्दार्थः**।

चतुर्थं निरस्यति—**नच तानीति**। सत्यशब्दस्य परब्रह्मणि प्रसिद्धत्वात् तत्कामानां कर्म कर्तव्यतयोपदिश्यते, केवलस्य च प्रतिषिद्धत्वात् समुच्चय इति श्रुत्यर्थः ॥ किमेतत्साक्षात् समुच्चयप्रतिपादकम्? उतानुपतितः? इति विकल्प्याद्यं प्रत्याह—**केवलेति** ॥ द्वितीयं प्रत्याह—**सत्यशब्देनेति**। यद्यपि सत्यशब्दः परब्रह्मणि प्रसिद्धः, तथाऽपि वाक्यशेषाद् ब्रह्मलोकादिवाचित्वमित्यर्थः। सत्यशब्दस्य प्रथमश्रुतत्वेन वाक्यशेषात् प्राबल्यमाशङ्क्य, मुख्यार्थासंभवान्न सत्यशब्दस्य यथाश्रुत्यर्थं इत्याह—**प्लवा इति**। यज्ञो रूप्यते यैस्ते **यज्ञरूपाः** षोडशर्त्विजः, यजमानः पत्नी चेत्यष्टादश प्लववत् **प्लवाः**। **अदृढाः** विनश्वरा इत्यर्थः। मोक्षस्य कर्मासाध्यत्वे वाक्यान्तरमुदाहरति—**नास्तीति**। **अकृतो** मोक्षः **कृतेन** कर्मणा **नास्ति,** न लभ्यत इत्यर्थः। पञ्चममवदति—**सत्येनेति** ॥ तपःशब्दो ज्ञानपर्यायः, **सत्यशब्दः** सत्यवचनवाचीति पूर्वपक्षाभिप्रायः। तत्र हेतुमाह—**तपःशब्दस्येति**। ध्यानस्यैवाभिधानादिति संबन्धः। तप इति शब्दो यस्य स तपःशब्दार्थः। ध्यानं तपःशब्दमित्यत्र प्रमाणमाह—**मनसश्चेति**। इतेस्तपःशब्दस्येत्यनेन संबन्धः। अन्यत्र ध्यानस्य तपःशब्दाभिधेयत्वप्रसिद्धेरत्रापि तत्तेनोच्यत इत्यर्थः ॥

ज्ञानेऽपि तपःशब्दः प्रसिद्धः, तथा चात्मज्ञानं परिशिष्यत इत्याशङ्क्याह—**प्रतिषेधाच्चेति** ॥ **अयनाय** गमनाय, मोक्षप्राप्तय इत्यर्थः। **देवैः** इन्द्रियैरित्यर्थः ॥ उदाहृतश्रुतीनां केवलकर्मप्रतिषेधपरत्वात् समुच्चितानां मोक्षान्वय इति शङ्कते—**केवलेति** ॥ किमेतद्वचनं साक्षात् केवलकर्मप्रतिषेधं गमयति? उतानुपपत्त्या? नाद्य इत्याह—**नाविशेषादिति** ॥ द्वितीयं दूषयति—**समुच्चयेति**। समुच्चयस्य प्रामाणिकत्वे कर्मप्रतिषेधस्य केवलविषयत्वं कल्प्येत; अन्यथा संकोचकप्रमाणाभावात् प्रतिषेधस्य सर्वविषयत्वमित्यर्थः ॥

## ऋजुविवरणम्

ननु "तान्याचरथे"त्यनया समुच्चयोऽवगम्यते; कर्मणां ब्रह्मप्राप्तौ साधनत्वावगमात्, इत्याशङ्क्याह—**नच तान्याचरथेति** ॥ ननु केवलकर्मश्रवणेऽपि समुच्चयो निश्चेतुं शक्यते, कर्मणां तावन्मोक्षसाधनत्वं प्रतीयते, तत्र केवलयोर्ज्ञान-कर्मणोरन्यत्र निन्दाश्रवणात्, समुच्चयोऽपि निश्चीयत इत्याशङ्क्याह—**सत्यशब्देन चेति** ॥ इतश्च न समुच्चय इत्याह—**प्लवा ह्येत इति** ॥ ननु "तपसा ह्येषः" इत्यनेन न समुच्चयः प्रतीयते; तपोरूपस्य कर्मण आत्मनः प्राप्तिहेतुत्वात्, इत्याशङ्क्याह—**सत्येनेति** ॥

**केवलकर्मणामिति**; "न हास्य कर्म क्षीयते" इति वचनादिति भावः। **नाविशेषादिति**। अन्तःकरणशुद्धिद्वारेण प्रत्यक्प्रवणहेतुत्वेन मोक्षोपयोगित्वे संभवति कुत एष निश्चयः? निषेधवाक्यानां केवलकर्मविषयतया संकोचः, ननु तत्प्रापकवचनानाम्; "अनडुहा जीवामः" इतिवत्पारम्पर्येणात्र लक्षणेति "न हास्ये"त्युपासनाविषयम्? यद्वा, "न हास्य कर्म विद्यते" इति निषेधः, क्षीयत इति च हेतुः, न च कर्मण उपसर्जनत्वम्। क्षयेणानन्वयादिति भावः ॥

**पञ्चपादिकाविवरणम्**

ज्ञानाङ्गतया सर्वकर्मसंन्यासविधानाच्च न समुच्चयः। संन्यासाश्रमधर्मैः समुच्चय इति चेत् ? न; तद्धर्माणां ध्यानादीनां ज्ञानस्वरूपोपकारित्वात्। नित्यकर्मविधानानुपपत्तिरेव ज्ञानसहकारितया कर्मणां मोक्षफलत्वं कल्पयतीति चेत् ? न; नित्यकर्मणां फलनिरपेक्षत्वात्, सापेक्षत्वे च विश्वजिन्न्यायावतारात्, संस्कारद्वारेण च विनियोगस्य दर्शितत्वात्, कर्मणामेव च विध्यनुपपत्त्या मोक्षसाधनत्वकल्पनात् समुच्चयासिद्धेः, कर्मप्रतिषेधस्योदितहोमप्रतिषेधवज्ज्ञानस्तुत्यर्थत्वोपपत्तेर्ज्ञान-कर्मणोर्विकल्पेन मोक्षसाधनत्वप्रसङ्गात्।

**तत्त्वदीपनम्**

किं च सकलाश्रमधर्माणां समुच्चयः ? उतोत्तमाश्रमविहितधर्माणाम् ? इति विकल्प्याद्यं प्रत्याह—**ज्ञानाङ्गतयेति**॥ द्वितीयमुत्थापयति—**संन्यासेति**॥ तेषां स्वरूपोपकार्यङ्गत्वसंभवे न फलोपकार्यङ्गत्वकल्पनमुचितम्; विप्रकर्षप्रसक्तेरित्याह—**न तद्धर्माणामिति**॥ षष्ठं कल्पमुत्थापयति—**नित्यकर्मेति**। किमेतत्प्राभाकरस्य चोद्यम्? उत भाट्टस्य ? इति विकल्प्याद्यं प्रत्याह—**न फलेति**॥ द्वितीयं प्रत्याह—**सापेक्षत्व इति**। "स स्वर्गः सर्वान् प्रत्यविशिष्टः" इति न्यायाद् विश्वजिदादौ स्वर्गस्य फलत्वकल्पनवदत्रापि तस्यैव फलत्वसंभवाद् न श्रुत्या मुक्तिफलत्वं कल्प्यमित्यर्थः। विश्वजिन्न्यायेन स्वर्गस्य फलत्वकल्पनं सिद्धान्तविरुद्धमित्याशङ्क्य पक्षान्तरमाह—**संस्कारेति**॥ अस्मिन् पक्षे समुच्चयासिद्धिश्चेत्याह— **कर्मणामिति**। फलमन्तरेणानुपपद्यमाननित्यकर्मविध्यनुपपत्त्या कर्मणां मुक्तिसाधनत्वं त्वयोपन्यस्यते। तथाच तेषामेव मुक्तिसाधनत्वोपपत्तौ न समुच्चयसिद्धिरित्यर्थः। कर्मप्रतिषेधेन स्तूयमानज्ञानस्यैव तत्साधनत्वमित्याशङ्क्य कदाचित् तदपि तत्साधनमित्याह—**ज्ञानेति**॥ "न कर्मणे"त्यादिना कर्मणां प्रतिषिद्धत्वात् समुच्चयासिद्धिमाशङ्क्य प्रतिषेधमन्यथयति—**कर्मप्रतिषेधस्येति**॥ **उदितहोमप्रतिषेधवदित्यस्यायमर्थः**—यथा "प्रातः प्रातरनृतं ते वदन्ती"त्यनुदितहोमनिन्दोदितहोमस्तुतये, "यथा अतिथये प्रद्रुताय शून्यायावसथायाहार्यं हरन्ति तादृगेव तदि"त्यादिनोदितहोमनिन्दाऽनुदितहोमस्तुतये ; तद्वत् कर्मप्रतिषेधस्य ज्ञानस्तुत्यर्थतेति। फलितं दर्शयति—**ज्ञानेति**। उदितानुदितहोमयोर्विकल्पवद्

**ऋजुविवरणम्**

ननु निषेधस्य प्राप्तिसापेक्षत्वेन दुर्बलत्वान्न पारम्पर्येण लक्षणाहेतुत्वम् ? मैवम् ; ग्रहणाग्रहणयोरतुल्यत्वेन विकल्पाभावप्रसङ्गात्। अथ मोक्षसाधनत्वे प्राप्ते सर्वसाधनत्वहाने प्राप्तान्वयबाधः, निषेधस्य तु केवलकर्मविषयत्वे संकोचमात्रम्, नान्वयबाधः, तेन तदेव युक्तमित्याशङ्क्याह—**समुच्चयविधायीति**। अत्रान्वयबाध एव ; "विविदिषन्ती"त्यादिशास्त्रपर्यालोचनयाऽन्यत्रैव विनियोग प्रतीतेरिति भावः॥ यद्वा, अविशेषादिति हेतुना कथं केवलकर्मविषयत्वं निराक्रियते ? अविशेषेण शास्त्रस्यैव सर्वत्र विशेषव्यवस्थापनदर्शनात्, तेन विरुद्धो हेतुः ; अथवा, अविशेषात् सर्वकर्मनिषेधोऽपि निश्चेतुं न शक्यते इत्याशङ्क्याह—**समुच्चयविधायीति**।

ननु समुच्चयविधायिप्रमाणाभावे सति सर्वकर्मप्रतिषेधे निश्चयः सर्वकर्मप्रतिषेधनिश्चयाच्च समुच्चयाभावसिद्धिः, इतीतरेतराश्रयमित्याशङ्क्याह—**ज्ञानाङ्गतयेति**॥ यद्वा, मोक्षान्वयबाधे प्रमाणान्तरमाह—**ज्ञानाङ्गतयेति**॥ **स्वरूपोपकारित्वादित्यनेन** सन्निपातित्वमुक्तम्, सन्निपातित्वे च न समुच्चयः; फलोपकार्यङ्गत्वाभावात्। ननु नित्यतया विहितकर्मणां फलाकाङ्क्षायां मोक्षे साक्षाद् ज्ञानविनियोगात् तस्य चाङ्गाकाङ्क्षया तदङ्गतया मोक्षसाधनत्वम्, इति श्रुतार्थापत्तिरेव प्रमाणमिति चोदयति—**नित्यकर्मेति**॥ कथं फलनिरपेक्षत्वम् ? फलाभावे प्रवृत्त्यभावात् तत्सापेक्षत्वम्। उक्तञ्च षष्ठाद्ये, "असाधकन्तु तादर्थ्यादि"त्यत्राह— **सापेक्षत्वे चेति**॥ "स स्वर्गः स्यात् सर्वान् प्रत्यविशिष्टत्वादि"त्यनेन न्यायेन स्वर्गफलत्वमेव स्यादित्यर्थः। कथं विश्वजिन्न्यायेन स्वर्गार्थता कल्प्येत ? ज्ञानार्थत्वेन विनियोगात्, तस्य च मोक्षसाधनत्वात्, अङ्गप्रधानयोरेकफलत्वात्, श्रुतमोक्षसाधनत्वे विश्वजिन्न्यायावताराभावात्, तस्याश्रुतफलविषयत्वादित्याशङ्क्याह—**संस्कारद्वारेणेति**॥ ननु व्यवधानेऽपि करणोपकारमात्रं न तदुत्पत्तिः दूरतस्तत्साधनसंबन्धः; केवलविद्यानिन्दानुपपत्तिप्रसङ्गात्, परम्परावचनानि तु न विरोधपरिहारार्थानि, अपितु सर्वथा सापेक्षत्वपराणीत्याशङ्क्याह—**कर्मणामेवेति**॥ ननु केवलकर्मणां मोक्षसाधनत्वं कल्पयितुं न शक्यते; निषेधश्रुतिविरोधात्, इत्याशङ्क्याह—**कर्मप्रतिषेधस्येति**॥ भवतु कर्मणां हेतुत्वम्, को दोषः ? इति चेत् ? तत्राह—**विकल्पेनेति**॥ ननु ज्ञानस्य मोक्षे करणत्वं श्रूयते, करणं चेतिकर्तव्य-

## पञ्चपादिकाविवरणम्

ननु ब्रह्मज्ञानमेवेतिकर्तव्यतया कर्मणां मोक्षसाधनत्वं कल्पयतीति चेत् ? न; शमादीतिकर्तव्यतान्तरभावात्, करणतया विध्युद्देशप्रसिद्धानां च कर्मणा विधिविरोधात् ।

अर्थश्च विरुध्यते । कश्च कर्मणां साध्योऽर्थं इति वक्तव्यम् ? न तावद् ब्रह्मात्मैकत्वम्; तस्यासाध्यत्वात् नाप्यविद्या-भेदांशाध्यास-कर्मणां निवृत्तिः; "भिद्यते हृदयग्रन्थिः" "ब्रह्म वेद ब्रह्मैव भवती"त्यादौ ब्रह्मदर्शननिवर्त्यत्वावगमात् । नहि-"तस्मिन् दृष्टे" इत्युक्ते कर्माणि सहकारित्वेनावगम्यन्ते । नाप्युपाधिद्वयनिवृत्तिः कर्मणां फलम् । तथा "विद्वान्नामरूपाद्विमुक्तः" "एवमेवास्य परिद्रष्टुरिमाः षोडश कलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ती"ति च ब्रह्मदर्शननिवर्त्यत्वावगमात्, अज्ञानमात्रोपादानत्वस्य दर्शितत्वाच्च कर्मोपाधीनाम् ।

## तत्त्वदीपनम्

ज्ञान-कर्मणोरपि विकल्पेन मुक्तिसाधनत्वप्रसक्तेर्न समुच्चय इत्यर्थः । सप्तमं कल्पमुत्थापयति—**ब्रह्मज्ञानमिति** । ब्रह्मज्ञानं करणत्वादितिकर्तव्यमपेक्षते, इतिकर्तव्यान्तरस्यानिर्दिष्टत्वात् कर्माणीतिकर्तव्यतात्वमनुभवन्तीत्यर्थः । परिशेषोऽसिद्ध इत्याह—**न शमादीति** । किं च "तमेतं वेदानुवचनेने"त्यादिना कर्मणां ज्ञानकरणत्वाभिधानात् तदितिकर्तव्यतात्वं विरुद्धमित्याह—**करणतयेति** । "अग्निहोत्रं जुहुयादि"त्यादिविध्युद्देशः, तत्र सिद्धानां कर्मणां योऽयं करणतया विधिः, तद्विरोधादिति योजना ॥

प्रमाणाभावं प्रपञ्च्यार्थाभावं प्रपञ्चयितुं प्रक्रमते—**अर्थश्चेति** ॥ दधि-गुडयोर्निरपेक्षकारणयोरपि समुच्चित्य कार्यान्तरजनकत्वदर्शनात् कथं विरोधः ? इत्याशङ्क्याह—**कश्चेति** ॥ किं ब्रह्मात्मैक्यं कर्मणा साध्यते ? उताविद्याया निवृत्तिः ? अथवा भेदांशस्य ? आहो मिथ्याज्ञानस्य ? किं वा कर्मणाम् ? उतोपाधिद्वयस्येति **किंशब्दार्थः** । आद्यं दूषयति—**न तावदिति** । प्रागभाववद्धि साध्यम्, अस्य तु प्रागभावशून्यत्वाद् न साध्यत्वमित्यर्थः । द्वितीय-तृतीय-चतुर्थ-पञ्चमकल्पान् निरस्यति—**नाप्यविद्येति** ॥ ननु ज्ञानस्य निवर्तकत्वमात्रमत्र प्रतीयते, न केवलस्येत्याशङ्क्याह—**नहीति** ॥ षष्ठं दूषयति—**नापीति** । स्थूल-सूक्ष्मशरीरद्वयमुपाधिद्वयशब्दार्थः । गङ्गादिनदीनां प्रातिस्विकनाम-रूपपरित्यागेनाम्भोध्यैक्यवद् साक्षात्कृतब्रह्मतत्त्वोऽपि विद्याबलाद्विनिर्मुक्तनाम-रूपो ब्रह्मभावं प्रतिपद्यत इति श्रुत्यर्थः । श्रुत्यन्तरविरोधमाह—**एवमेवेति** । नदीनां स्वस्वनामपरित्यागेन समुद्रावाप्तिरेवंशब्दार्थः । **षोडश कला इति**—पृथिव्यप्तेजोवाय्वाकाश-प्राण-श्रद्धेन्द्रिय-मनोऽन्न-वीर्य-तपो-मन्त्र-कर्म-लोक-नामानीत्यर्थः । पुरुषोऽयनं यासाम्, ताः **पुरुषायणाः** । कर्मनिवर्त्यत्वाभावे हेत्वन्तरमाह—**अज्ञानेति** । श्रुति-युक्तिभ्यां कर्मोपाधीनामज्ञानोपादानत्वेन अज्ञानस्य ज्ञानमात्रनिवर्त्यत्वादन्यतो निवृत्त्यसंभव इत्यर्थः ॥ एवं कर्मसाध्याभावमभिधाय ज्ञानसाध्याभावमाह—**किंचेति** ॥ किं कर्मोपाधीनां निवृत्तिर्ज्ञानफलम् ? उत मिथ्याज्ञानस्य ? आहो तत्प्रवाहस्य ? अथवा मिथ्याज्ञानसंस्कारस्य ? अथवा ब्रह्मात्मतास्फुरणस्य ? इति विकल्प्याद्यं प्रत्याह—**कर्मोपाधीनामिति** ॥

## ऋजुविवरणम्

ताऽऽकाङ्क्षं सत् कर्मणामेवेतिकर्तव्यतात्वं कल्पयतीति चोदयति—**ननु ब्रह्मज्ञानमेवेति** ॥ ननु शम-दमादिव्यतिरिक्तमितिकर्तव्यतान्तरमप्यपेक्षितं कल्मषनिवृत्तौ; द्वारान्तरस्य विद्यमानत्वात्, शमादीनां विपरीतप्रवृत्तिदोषमात्रनिवारकत्वात्, अतः कर्मणामेवैतद् द्वारमित्याशङ्क्याह—**करणतया विध्युद्देशेति** ॥

ननु "भिद्यते" इत्यादिश्रुतिषु ज्ञानस्य निवर्तकत्वावगमेऽपि कर्मणां तन्निवर्तकत्वं न विरुध्यते; तेषां सहकारित्वेन निवेशोक्तेः, नहि ज्ञानप्रापकं कर्म निवर्तकम्; वाक्यभेदादित्याशङ्क्याह—**नहि तस्मिन् दृष्ट इति** ॥ दर्शने सति नैरन्तर्येण तन्निवृत्तिप्रतीतेर्न कर्मणामितिकर्तव्यतात्वं कल्पयितुं शक्यम्; श्रुतिविरोधात्, कर्मणामभावाच्चेति भावः ॥ कथं ज्ञाननिवर्त्यत्वं कर्मणाम् ? विरोधाभावादित्याशङ्क्याह—**अज्ञानमात्रेति** ॥ अज्ञानमात्रस्याप्यन्यसहितस्योपादानत्वे तत्त्वज्ञानान्निवृत्तिर्न स्यात्, तदर्थमाह—**मात्रोपादानत्वस्येति** ॥

### पञ्चपादिकाविवरणम्

किञ्च समुच्चयवादिनो न विज्ञानसाध्यमपि फलमस्ति; कर्मोपाधीनां सत्यवस्तुतया विज्ञानानिवर्त्यत्वात्, मिथ्याध्यासस्य च क्षणिकतया स्वयमेव निवृत्तेः, प्रवाहस्य च प्रवाहिनिवृत्तिमन्तरेण पृथगुच्छेदाभावात्, अवस्तुत्वाच्च, मिथ्याज्ञानसंस्कारस्य शुक्तिकादितत्त्वज्ञानेनाविरोधदर्शनादनिवर्त्यत्वात्, ब्रह्मात्मभावस्य च स्वयंप्रकाशतया विज्ञानाप्रकाश्यत्वात्, तत्त्वज्ञानाभ्याससंस्काराच्च मिथ्याज्ञानसंस्कारनिवृत्तौ तत्त्वज्ञानान्मुक्तिश्रुतिविरोधात् । तस्मात् सर्वानर्थोपादानानादिमिथ्याज्ञाननिवृत्त्यैव विज्ञानं फलवत्, इति न समुच्चयावकाशः ॥ अत्र सर्वसङ्करवादी—ब्रह्मविचारापेक्षिताधिकारमप्यजानन् समुच्चयसामर्थ्यादिव धर्मावबोधानन्तरं ब्रह्मावबोधं—जल्पति ॥

### तत्त्वदीपनम्

द्वितीयं दूषयति—**मिथ्याध्यासस्येति** ॥ तृतीयं प्रत्याह—**प्रवाहस्येति** । प्रवाहस्य प्रवाहिभ्यो भेदेनानिरूपणात् प्रवाहिनिवृत्तौ निवृत्तिरित्यर्थः । इतोऽपि न प्रवाहनिवृत्तिर्युक्तेत्याह—**अवस्तुत्वादिति** ॥ यद्यपि मिथ्याज्ञानं क्षणिकत्वात् स्वयमेव विनङ्क्ष्यति, तथाऽपि सजातीयोत्पत्तेर्दुर्वारत्वान्मिथ्याज्ञानस्यात्यन्तोच्छेदो ज्ञानसाध्य इति चेत् ? मैवम्; विकल्पासहत्वात् मिथ्याज्ञानं किं सत् ? उतासत् ? अथवाऽनिर्वचनीयम् ? नाद्यः; सत्यत्वे ज्ञाननिवर्त्यत्वासंभवात् । न द्वितीयः; तुच्छत्वेऽपरोक्षप्रथानुपपत्तेः । तृतीयेऽविद्यात्मकत्वाद्विद्यामात्रनिवर्त्यत्वं मिथ्याज्ञानस्याङ्गीकार्यमित्यर्थः । तुरीयं प्रत्याह—**मिथ्याज्ञानेति** । रज्ज्वादिसाक्षात्कारेऽपि सर्पभ्रमादिसंस्कारात् पलायनादिप्रवृत्तिदर्शनाद् न संस्कारस्य ज्ञानोच्छेद्यत्वमित्यर्थः पञ्चमं प्रत्याह—**ब्रह्मात्मभावस्येति** ॥ तत्त्वज्ञानस्य स्वरूपेण मिथ्याज्ञानसंस्काराविरोधेऽपि संस्कारद्वारा भ्रमसंस्कारनिवर्तकत्वमाशङ्क्याह—**तत्त्वज्ञानेति** ॥ उक्तन्यायेन त्वन्मतेऽपि ज्ञानमनर्थकं स्यादिति शङ्कामुपसंहारच्छलेन निरस्यति—**तस्मादिति** । अनाद्यनिर्वाच्याज्ञानतत्कार्यनिवृत्तिस्तत्त्वज्ञानफलमित्यर्थः । तर्ह्यस्मिन्मतेऽप्येवमेव ज्ञानफलमिति शङ्कां निरस्यति—**इति न समुच्चयेति** । ब्रह्मातिरिक्तस्य सर्वस्याविद्यात्मकत्वाद् विद्यायाश्चाविद्यामात्रनिवर्तकत्वाद् न कर्मणामुपयोगः, इति न समुच्चय इत्यर्थः । "सर्वापेक्षा च यज्ञादिश्रुतेरश्ववद्" इत्यत्र कर्मणामपेक्ष्यत्वाभिधानात् समुच्चयस्तावत् प्रतिभाति स च यज्ञादिपरिचयमन्तरेणानुपपन्नः, इति यज्ञादिकं विचार्यम्; तथाच धर्ममीमांसानन्तरं ब्रह्ममीमांसेति भास्करोक्तमनुवदति—**तत्र सर्वेति** ॥ अनुवादसमय एव चोद्यस्यावस्तुत्वमाह—**ब्रह्मेति** ॥

### ऋजुविवरणम्

ननु ब्रह्मादर्शननिवर्त्यत्वमस्मत्पक्षविरोधि न भवति, अङ्गीकृतत्वात्; किन्तु ज्ञानस्य तन्निवर्तकत्वं केवलस्य न संभवतीति कर्मणां सहकारितयाऽनुप्रवेश उच्यते; अत आरादुपकारकत्वम् । नच सहकारिकर्मनिवृत्तिः; 'अतोऽन्यान्यपि ह्येकेषामि'त्युक्तत्वात् नच तस्य स्वरूपतः फलतो वा विरोधः; सहकारिणो ज्ञानफलेनैव सफलत्वात् । नच नैरपेक्ष्यम्; ज्ञानस्यैवादृढत्वात् । अतो ज्ञानस्य निवर्तकत्वे तत्सहकारित्वेन कर्मणामपि तत्फलत्वोपपत्तेर्न तन्निवर्तकत्वमुदाहरणीयमित्याशङ्क्याह—**किञ्च समुच्चयेति** ॥ कर्मोपाधिनिवृत्तिर्विज्ञानफलमित्याशङ्क्याह—**कर्मोपाधीनामिति** ॥ ननु मिथ्याज्ञानस्यानात्मन्यात्मबुद्धिलक्षणस्य निवृत्तिर्विज्ञानफलमित्याशङ्क्याह—**मिथ्याध्यासस्य चेति** ॥ मिथ्याज्ञानप्रवाहनिवृत्तिरेव ज्ञानफलमित्याशङ्क्याह—**प्रवाहस्य चेति** ॥ ननु प्रवाहस्य पृथगुच्छेदो नास्तीति वक्तुं न शक्यते; सत्यामपि प्रवाहनिवृत्तौ तन्निवृत्त्यदर्शनाद् उत्तरत्र तद्वृत्तिभावात्, प्रवाहिव्यतिरिक्तत्वाच्च । नच प्रवाहिविनाशतन्त्रस्तन्नाशः; तन्नाशे विनाशादर्शनात्, इत्याशङ्क्याह—**अवस्तुत्वाच्चेति** ॥ मिथ्यासंस्कारनिवृत्तिः फलमित्याशङ्क्याह—**मिथ्याज्ञानेति** ॥ ननु ब्रह्मात्मतावभासो ब्रह्मज्ञानफलमित्याशङ्क्याह—**ब्रह्मात्मभावस्येति** ॥ मा भूत् तत्त्वज्ञानाद् मिथ्याज्ञानसंस्कारनिवृत्तिः, सम्यग्ज्ञानसंस्कारात्तु भविष्यतीत्याशङ्क्याह—**तत्त्वज्ञानाभ्यासेति** ॥ ननु तर्हि त्वन्मतेऽपि न ज्ञानसाध्यं फलं दृश्यते; एतेषां ज्ञानानिवर्त्यत्वात्, अतो न ज्ञानान्मोक्षः, फलान्तरं वा किञ्चित् कल्प्यमित्याशङ्क्याह—**तस्मात्सर्वानर्थेति** । अथवा त्वयाऽपि शास्त्रसामर्थ्याद् ज्ञानस्य सर्वोपाधिनिवर्तकत्वं वक्तव्यम्, शास्त्रं चाविद्या-काम-कर्म-लिङ्गनिवर्तकत्वं ज्ञानस्य दर्शयति, तच्च न केवलस्य, इति समुच्चयः, अफलत्वं वेति ? तत्राह—**तस्मादिति** । **समुच्चयसामर्थ्यादिति** । तेषामिदं दर्शनम्—सूत्रकारो हि "सर्वापेक्षे"त्यत्र समुच्चयं वक्ष्यति । स च कर्मण्यपरिज्ञाते न शक्यते ज्ञातुम्; विभागानवगमात् कर्मविचारे तु पूर्ववृत्ते काम्य-निषिद्धवर्जं ज्ञानेन समुच्चय इति ज्ञातुं शक्यते, इति विचारानन्तर्यमिति ।

## पञ्चपादिकाविवरणम्

तत्र सति वा समुच्चये विपरीतं किं न स्यादिति निरूपणीयम् । तथाहि—ज्ञानवतैवानुष्ठितानि कर्माणि मोक्षं साधयन्ति, इति प्रथमं ब्रह्मावबोधमुत्पाद्य तद्वतैव ब्रह्मचारिणा धर्मविचारादि सर्वं स्वाश्रमधर्मानुष्ठानं कर्तुं युक्तम्, इति विपरीत एव क्रमः स्यात्; अन्यथा हि आदावेव मुमुक्षोराधर्मविचारपरिसमाप्तेरनुष्ठीयमानकर्मणा-मानर्थक्यप्रसङ्गात् । दृश्यन्ते च प्रथमाश्रम एव मुमुक्षवः । सर्वसाधारणत्वाद्धर्मविचार एव प्रथमः कर्तव्य इति चेत्, देवानां प्रिय ! न सर्वसाधारणं कर्तुमयं प्रवृत्तः, किन्तु काम्यमानसाधनमवश्यानुष्ठेयं वा निवर्तयितुं प्रवृत्तः । तत्र यदि विचारद्वयं काम्यमानमोक्षसाधनमिष्येत, तर्हि व्युत्क्रम एव श्रेयानित्युक्तम् । अथ नित्याध्ययनविधिः कर्मविचारं प्रयोजयति, अतोऽवश्यानुष्ठेयविचारानन्तरं काम्यमानब्रह्मविचारः प्रयुज्यत इति चेत् ? नैतत् सारम्; काम्यमानब्रह्म-विचारानन्तरमपि नित्यधर्मविचारोपपत्तेः ।

## तत्त्वदीपनम्

नित्यानित्यवस्तुविवेकादियुक्तस्यैव ब्रह्मविचारः संभवति, तस्मिश्चाश्रिते न धर्मावबोधानन्तर्यं युक्तम्, इतीदृशं विभागं न जानातीत्यर्थः । श्रुति-स्मृति-न्यायविरोधात् समुच्चय एव तावदसंभवी, तमङ्गीकृत्य दूषणमाह—**तत्र सति वेति** ।। वैपरीत्यमेव दर्शयति—**तथाहीति** ।। कर्मावबोधानन्तरं ब्रह्ममीमांसेति पक्षे दूषणमाह—**अन्यथेति** ।। अथवा, ब्रह्मज्ञाने जाते कर्मानुष्ठानासंभवात् कथं वैपरीत्यम् ? इत्याशङ्क्याह—**अन्यथेति** ।। **आदाविति** ब्रह्मचर्याश्रम इत्यर्थः । किं कर्मणां भोगः फलम् ? उतापवर्गः ? नाद्यः; मुमुक्षुत्वात् द्वितीयेऽपि किं कर्मणां साक्षाद् मुक्तिसाधनत्वम् ? उतापूर्व-द्वारेण ? नाद्यः; तस्यामवस्थायां ज्ञानाभावेन समुच्चित्यसंभवात् अन्त्ये तु जन्मान्तरीयकर्मणामप्यपूर्वद्वारोपकारकत्व-संभवाद् नास्मिन् जन्मनि कर्मावबोधस्य हेतुत्वमित्यर्थः । ननु आदौ मुमुक्षव एव न सन्तीत्याशङ्क्याह—**दृश्यन्त इति** । श्रुतौ स्मृतौ लोके चेति शेषः । धर्मविचारस्य प्राथमिकत्वे हेत्वन्तरमाशङ्कते—**सर्वेति** । मुमुक्ष्वमुमुक्षुविषयत्वाद्धर्म-विचारस्य प्राथम्यमित्यर्थः । सोपहासमुत्तरमाह—**देवानामिति** । पशो ! इत्यर्थः । पशुत्वमेवाह—**न सर्वेति** ।। ततः किमिति चेत् ? तत्र वक्तव्यम्—किं धर्मविचारस्य ब्रह्मविचारवद् मुक्तिसाधनतयाऽनुष्ठेयत्वम् ? उत नित्यतयेति ? तत्राद्य उक्तं दूषणमित्याह—**तत्र यदीति** । द्वितीयमनुवदति—**अथेति** ।। गूढाभिसन्धिरुत्तरमाह—**नैतत्सारमिति** ।।

## ऋजुविवरणम्

**सति वा समुच्चय** इति वदतेदमुक्तम्—समुच्चय एव तावन्नास्ति, अतो न तत्सामर्थ्यादानन्तर्यसिद्धिः, इदानीमभ्युपगम्याप्युच्यत इति । ननु समुच्चये कर्मावबोधानन्तर्ये कारणमुक्तमेव कथं विपरीतक्रमापादनम् ? तत्र हेत्वभावादित्याशङ्क्याह—**तथाहीति** ।। ज्ञानवताऽनुष्ठितकर्मणां मोक्षसाधनत्वादनुष्ठानमेव पश्चाद् भवतु; विचारस्तु पूर्वं क्रियतामित्याशङ्क्याह—**धर्मविचारादिति** ।। ननु धर्मविचारानन्तरं ब्रह्मज्ञानं कृत्वा तज्ज्ञानयुक्तस्सन् धर्मानुष्ठानं करोतु, एवमपि ज्ञानवताऽनुष्ठितत्वलाभात् कर्मणां कर्मावबोधस्य वा पूर्ववृत्तत्वोपपत्तेः केन हेतुनाब्रह्मविचार एव पूर्वं क्रियते ? इत्याशङ्क्याह—**अन्यथा त्वादावेवेति** ।। ननु न धर्मविचारात् प्रागुमुमुक्षुत्वं संभवति; अतो नानर्थक्यं कर्मणाम्, मुमुक्षुत्वाभावेनैव तादर्थ्येनानुष्ठानाभावसिद्धेरित्याशङ्क्याह—**दृश्यन्ते चेति** ।। अत्र समुच्चयवादिभिर्युक्त्यन्तरमप्युक्तम् । अत्रोद्गीथाद्युपासनानि चिन्त्यन्ते—तेषां च कर्माधिकृतविषयत्वे धर्मविचारानन्तर्यं ब्रह्मविचारस्येति, तत्पुरस्तात्परिहृत-मिति नेहोच्यते । युक्त्यन्तरमपि तेनोक्तम्—धर्मजिज्ञासायाः पूर्ववृत्तत्वे पूर्वं तु धर्मजिज्ञासा कर्तव्या, पुरुषमात्रविषयत्वा-दिति, तदनुवदति—**सर्वसाधारणत्वादिति** ।। परिहरति—**देवानांप्रियेति** । मूर्खेत्यर्थः ।। भवतु काम्यमानसाधनं निवर्तयितुं प्रवृत्तिः ? तथाऽपि कथं धर्मविचारस्य पूर्ववृत्तत्वाभावः ? काम्यमानसाधनत्वेनैव पूर्वमनुष्ठानमिति वक्तुं शक्यत्वादित्या-शङ्क्याह—**तत्र यदीति** । अत्र युक्त्यन्तरमप्युक्तं पूर्ववादिना—स्वाध्यायविधेश्चार्थावबोधपर्यवसानादिति; तदनुवदति—**अथ नित्याध्ययनेति** ।। **ब्रह्मविचारानन्तरमपि नित्यधर्मविचारोपपत्तेरिति** । अयमर्थः—नित्यत्वं पूर्वानुष्ठानहेतुर्न भवति; वैपरीत्येऽपि नित्यत्वाविघातादिति ।

## पञ्चपादिकाविवरणम्

ननु अध्ययनानन्तरं कर्मविचाराननुष्ठाने प्रत्यवायः स्यात् ? सत्यम्; नित्यवदल्पानुष्ठानेऽपि प्रत्यवायपरिहारात् ।

किंच तावन्मात्रमुपेयताम्; विदुषाऽनुष्ठीयमानब्रह्मचारिधर्मणामपि मोक्षसाधनत्वलाभात्, वेदानुवचनादिषु प्रत्येकं निरपेक्षकरणविभक्तिश्रवणात् आश्रमकर्मणां विकल्पेन मोक्षसाधनत्वोपपत्तेः ब्रह्मचर्यादेव संन्यासविधानाच्च । धर्मावबोधो नित्यतयाऽनुष्ठितोऽपि न ब्रह्मविचारहेतुः, अननुष्ठेयश्च धर्मविचारः, अग्निहोत्रादिव्यतिरिक्तसंन्यासधर्मणामपि ज्ञाने समुच्चयाङ्गीकरणात् । किंच अध्ययनविधिः कर्मविचारं प्रयुञ्जानो ब्रह्मविचारं किमिति न प्रयुङ्क्ते ? इति वक्तव्यम् । "श्रोतव्यः" इति विध्यन्तरश्रवणादिति चेत् ? अश्रुतमीमांसावृत्तान्तो देवानांप्रियः धर्मविचारे क्लृप्तप्रवर्तकभावेनानेनैवाध्ययनविधिना ब्रह्मविचारस्यापि प्रयोगसम्भवे श्रोतव्य इति विधेर्विनियोगाधिकार-प्रयोगविधिकल्पनया प्रवर्तकत्वकल्पनाऽयोगात् ।

## तत्त्वदीपनम्

यथाश्रुतमादाय शङ्कते—**नन्वध्ययनेति** । कर्मविचारपुरःसरं तदननुष्ठाने प्रत्यवाय आपतेत्, तन्निरासार्थं प्रथमं कर्मविचार इत्यर्थः । प्रत्यवायप्रसक्तिमङ्गीकरोति—**सत्यमिति** ॥ तर्हि कर्मविचारस्य प्राथम्यं प्राप्तमित्याशङ्क्याह—**नित्यवदिति** । धर्मविचारमल्पमल्पं विधाय प्राधान्येन ब्रह्मविचारमेव करोत्वित्यर्थः ।

किं कतिपयाश्रमधर्माणां समुच्चयः ? उत सकलाश्रमधर्माणाम् ? नाद्य इत्याह—**किंचेति** ॥ येन विना समुच्चयासिद्धिः, तावन्मात्रस्यानुष्ठेयत्वमाश्रीयतामित्यर्थः । तर्ह्यग्निहोत्रादिकर्मणामननुष्ठेयत्वं प्राप्तमिति, तत्राह—**विदुषेति** ॥ तत्र हेतुमाह—**वेदादुवचनेति** ॥ द्वितीयो विकल्प एतेन निरस्त इति द्रष्टव्यम् । तर्हि धर्मान्तरवैयर्थ्यम्, तत्राह—**आश्रमधर्माणामिति** ॥ इतोऽपि न सकलाश्रमधर्मसमुच्चयो युक्त इत्याह—**ब्रह्मचर्यादिति** । एकजन्मन्यनुष्ठितानां सकलाश्रमधर्माणां ज्ञानेन समुच्चये आदौ संन्यासविधानमयुक्तमित्यर्थः । विषयव्यासक्तचेतसां धर्मविचारोत्तरकालमपि श्रवणादौ प्रवृत्त्यनुपपत्तेस्तस्याप्रयोजकत्वमित्याह—**धर्मेति** ॥ धर्मविचारस्य नित्यतयाऽनुष्ठेयत्वमङ्गीकृत्य ब्रह्मविचारप्रयोजकत्वं निरस्तम्, संप्रत्यङ्गीकृतं परित्यजति—**अननुष्ठेय इति** ॥ कथं तर्हि समुच्चयः ? तत्राह—**अग्निहोत्रेति** ॥ किंच ब्रह्मविचारोऽपि कर्मविचारवद् नित्याध्ययनविधिनैव प्रयुज्यते ? उत विध्यन्तरेण ? इति विकल्प्याद्यं प्रत्याह—**किंचेति** । ब्रह्मविचारस्य नित्याध्ययनविधिप्रयोज्यत्वे कर्मविचारवत् प्राथम्यं स्यात् ; अविशेषादित्यर्थः । द्वितीयपक्षमुत्थापयति—**श्रोतव्य इति** ॥ कल्पनागौरवप्रसङ्गाद् विध्यन्तरस्य प्रवर्तकत्वमनुपपन्नमित्याह—**अश्रुतेति** ॥ विधेः प्रवर्तकत्वप्रसिद्धे श्रवणे च विधेः श्रवणात् कथं कल्पनागौरवम् ? इत्याशङ्क्याह—**विनियोगाधिकारेति** । प्रयोगविधेः प्रवर्तकत्वात् श्रवणे

## ऋजुविवरणम्

ननु नित्यत्वं पूर्वानुष्ठानहेतुर्भवति; नित्यस्य पूर्वाननुष्ठाने विरोधात्, इति चोदयति—**नन्वध्ययनानन्तरमिति** ॥ **सत्यं नित्यवदिति** । अयं भावः—कृत्स्नधर्मविचारानन्तर्यं ब्रह्मविचारस्याभ्युपगतम् । तत् तावद् न सिध्यति; अल्पानुष्ठानेऽपि विधेश्चरितार्थत्वादिति ॥

ननु नित्यत्वेन धर्मविचारस्य सिद्धेः पूर्वानुष्ठाने प्रवृत्तत्वात् तस्यैव सर्वस्यानुष्ठानं क्रियताम्, किं विचारान्तरेण ? इत्याशङ्क्याह— **किञ्च तावन्मात्रमिति** ॥ ननु नित्यवदनुष्ठानाङ्गीकारेऽपि धर्मविचारानन्तर्यं ब्रह्मविचारस्य सिद्धम्; अनुष्ठितकर्मणां ज्ञाने हेतुत्वम्, अनुष्ठानं च कृत्स्नज्ञानपूर्वकम्, तच्च सकलविचारेण विना न सिध्यति; अतः पूर्वानुष्ठानस्य प्रत्यवायपरिहारमात्रहेतुत्वम्, नतु ज्ञानार्थत्वम्, हेयोपादेयप्रतिपत्त्यभावात्, अतो विचारानन्तर्यमित्याशङ्क्याह—**वेदानुवचनादिष्विति** ॥ निरपेक्षकरणविभक्तिश्रवणं विकल्पे हेतुः । ननु विकल्पपक्षेऽपि विचारस्तावन्नित्यत्वेन कर्तव्यः, हेतुत्वञ्च तस्याग्निहोत्रादिधर्मानुष्ठानस्य तत्सापेक्षत्वात्, अतोऽनुष्ठानं विचारस्येत्याशङ्क्याह—**अननुष्ठेयश्चेति** । धर्मविचारसापेक्षाग्निहोत्रादिभिरेव समुच्चये विचारानुष्ठानमित्यर्थः ॥ अत्रान्यदपि नियमेन धर्मविचारस्य पूर्ववृत्तत्वे कारणमुक्तम् —नित्याध्ययनविधिप्रयुक्तत्वाद्धर्मविचारः कर्तव्यः, ब्रह्मविचारस्तु विध्यन्तरप्रयुक्तत्वात् पश्चादिति, तन्निराकरोति—**किञ्चाध्ययनविधिरिति** ॥ अनन्यलभ्यो हि विध्यर्थः । तत्र विध्यन्तरेणैव ब्रह्मविचारसंभवे नास्य प्रयोजकत्वमिति परमतमाशङ्कते—**श्रोतव्य इति** ॥ **विध्यन्तरेति** ॥ न विध्यन्तरश्रवणमात्रमन्यस्याप्रयोजकत्वे कारणम्, किन्तु क्लृप्तविध्यन्तरश्रवणम्, नच तदत्रास्तीति परिहरति—**अश्रुतमीमांसेति** ॥

## पञ्चपादिकाविवरणम्

ब्रह्मज्ञानस्य काम्यमानसाधनतया तद्विचारस्यापि काम्यत्वाद् न नित्याध्ययनविधिप्रयुक्ततेति चेत् ? कर्मविचारे काम्यमानकर्मवाक्यविचारस्याप्यतत्प्रयुक्तत्वप्रसङ्गः ॥

स्यादेतत्—ब्रह्मविचारस्य वैराग्य-शम-दमोपसदनादिसाधनविशेषाणामङ्गत्वेन विधानादध्ययनविधेः कर्मविचारे शमाद्यङ्गशून्यस्य ब्रह्मविचारे तदङ्गानामाक्षेपकत्वानुपपत्तेः साङ्गविध्यन्तरं कल्प्यत इति ? सोऽयमनिरूपितविधिव्यापारो वावादूकः; स्वाध्यायविधिः खलु शिरोव्रत-भूभोजनाद्यङ्गविकलमेव वाक्यान्तराध्ययनं विदधानो मुण्डककारीर्याद्यध्ययनं शिरोव्रताद्यङ्गाक्षेपपुरःसरमेव विदधाति । विचारं च प्रयुञ्जानः प्रतिवाक्यं दृष्टतयैवाङ्गभूतान् न्यायभेदानाक्षिप्यैव विचारं प्रयुङ्क्ते । दर्शपूर्णमासविधिश्च नित्याधिकारो यथाशक्त्यङ्गानुष्ठानं प्रयुङ्क्ते, काम्याधिकारस्तु सर्वाङ्गानुष्ठानमिति । तथा स एव विधिरुपांशुयाजे कर्मण्याज्यावेक्षणाद्यङ्गमाक्षिपति, यागान्तरेष्ववघाताद्यङ्गमिति । एवमध्ययनविधिःब्रह्मविचारे शमाद्यङ्गमाक्षिपेत् नेतरत्रेति न विरुध्यते ।

## तत्त्वदीपनम्

च विनियोग-प्रयोगाधिकारविधीनां कल्प्यत्वादध्ययनविधेश्च विनियोगादिकल्पनया प्रवर्तकस्य कर्मविचारे क्लृप्तत्वाद् न श्रवणविधिप्रयुक्तिरित्यर्थः । नित्यानित्यसंयोगविरोधान्न ब्रह्मविचारस्याध्ययनविधिप्रयुक्तिरिति शङ्कते—**ब्रह्मज्ञानस्येति** । नित्यविधिप्रयुक्तत्वादावश्यकत्वम्, काम्यविचारत्वादानावश्यकत्वमिति विरोध इत्यर्थः । अतिप्रसङ्गेनोत्तरमाह—**कर्मविचार इति** । ब्रह्मविचारस्य काम्यत्वेन नित्यविधिप्रयोगायोगे काम्यज्योतिष्टोमादिवाक्यार्थविचारस्यापि नित्यविधिप्रयुक्तत्वं न स्यात्; इतरथा तस्यापि स्यादित्यर्थः ॥

प्रकारान्तरेण ब्रह्मविचारस्याध्ययनविधिप्रयुक्तिमाक्षिपति—**स्यादेतदिति** । अध्ययनविधेः कर्मविचारे शमाद्याक्षेपकत्वस्याक्लृप्तत्वाद् ब्रह्मविचारस्य च शमादिना विनाऽयोगात् साङ्गविध्यन्तरं प्रवर्तकमाश्रयणीयमित्यर्थः । कर्मविचारेऽध्ययनविधेः शमाद्यङ्गानाक्षेपत्वेऽपि ब्रह्मविचारे प्रापकत्वं किं न स्यादिति समाधत्ते—**सोऽयमिति** ॥ अनिरूपितविधिव्यापारत्वमेवाह—**स्वाध्यायेति** ॥ **शिरोव्रतं** नाम शिरस्यङ्गारपात्रधारणम् । यस्य यत्प्रयुक्तौ यदङ्गापेक्षा, न तस्य तदन्यप्रयुक्तौ तदङ्गापेक्षेत्यत्र निदर्शनान्तरमाह—**विचारं चेति** ॥ **दृष्टतयेति** दृष्टफलरूपनिर्णयाख्योपकारद्वारेणेत्यर्थः । तत्रैव दृष्टन्तान्तरमाह—**दर्शपूर्णमासेति** । यावज्जीववाक्ये होमस्यावश्यकर्तव्यतोपलभ्यते, तथा कस्यचिदङ्गस्य वैकल्येन प्रधानानिवृत्तौ प्रधानवाक्यं विरुध्यते । तस्माद् नित्यविधिर्यथाशक्त्यङ्गोपसंहारेणानुष्ठापयति, काम्यविधिस्तु विपरीतः यथाशक्त्यङ्गानुष्ठाने प्रमाणाभावात्, प्रधानवाक्यस्य च सकलाङ्गसंपत्तावनुष्ठानेऽप्यविरोधादित्यर्थः ॥ दृष्टान्तरमाह—**तथेति** ॥ **स एव विधिरिति** दर्शपूर्णमासविधिरित्यर्थः । उपांशुयाजस्याज्यहविष्कत्वात् तदवेक्षण-पर्यग्निकरणादिसंस्कारं दर्शपूर्णमासविधिराक्षिपति, आग्नेयाग्नीषोमीययोः पुरोडाशहविष्कत्वात् तत्प्रकृतिव्रीह्यादिष्ववघाताद्यङ्गमाक्षिपतीत्यर्थः । दृष्टान्तोक्तमर्थं दार्ष्टान्तिके समर्थयति—**एवमिति** ॥

## ऋजुविवरणम्

स्यादेतदिति । अस्यायमभिप्रायः—अध्ययनविधेर्विचारान्तरे शमादिनिरपेक्षं विधायकत्वस्य दर्शनादितरत्र तत्सापेक्षं विधायकत्वमिति न युज्यते वक्तुम्; विधिवैषम्यप्रसङ्गादिति । **दर्शपूर्णमासविधिश्चेति** । यावज्जीववाक्ये हि जीवने निमिते नैमित्तिकमवश्यं कर्तव्यं प्रतीयते । तद् यदि कस्यचिदङ्गस्यानुरोधाद् निमित्ते सत्यपि न क्रियेत, ततः प्राधान्यवाक्यविरोधः, अतो यथाशक्त्युपसंहारः; काम्ये तु यदा शक्नुयात्, तदैव प्रवृत्तेर्न तु यथाशक्तिन्यायः । नहि तत्राङ्गहानेः प्रमाणमस्ति; प्रधानवाक्यस्य सर्वाङ्गोपसंहारेऽप्यविरोधात् । नहि तत्रावश्यकत्वं श्रुतम्, कामश्रुतिस्तु सर्वाङ्गोपसंहारसामर्थ्येऽपि वर्तमानाङ्गबाधाय न भवतीति भावः ॥ नियोगपक्षे तु विषयस्य सतः करणत्वम्, नित्ये तत्र कतिपयाङ्गहानेऽप्यपूर्वसिद्धिः; विषयप्रत्यभिज्ञानात् । काम्ये तु फलकरणस्यापूर्वविषयता । सकलाङ्गग्रामसंपादितोपकारस्य च करणता । तत्र कतिपयाङ्गहाने नाधिकारः, न वाऽपूर्वमिति सकलाङ्गोपसंहार इत्यनुसन्धेयम् । **उपांशुयाज इति** । आज्यद्रव्यकत्वादिति भावः ॥ **यागान्तरेष्विति** । आग्नेयाग्नीषोमीयपुरोडाशयोर्व्रीहिप्रकृतिकत्वाद् अवघातप्रयुक्तिरिति भावः ॥

**पञ्चपादिका**

**किंच चोदनाप्रवृत्तिभेदाच्च। इदमपरं प्रमाणोपाधिप्रमेयवैलक्षण्यम्।**

**पञ्चपादिकाविवरणम्**

नचाधिकारिविशेषणत्वात् शमादीनामनुपादेयत्वादनाक्षेपः; अध्ययनविध्यधिकारिण एव तत्प्रयुक्तविचारेऽप्याधिकारित्वात्। तस्मात् प्रधानविधिदृष्टादृष्टाङ्गानामुपकारविशेषापेक्षया यत्र क्वचन यत्किञ्चिदङ्गं प्रयोजयतीति सर्वत्र समधिगतमेतत्। तस्मादेकाध्ययनविधिप्रयुक्तत्वाद् विचारद्वयस्य क्रमापेक्षायां ब्रह्मविचारानन्तरं धर्मविचारो युक्तः, विचारादीनामपि मोक्षसाधनत्वलाभात्। तस्माद् न फलैक्यादपि धर्मजिज्ञासानन्तरं ब्रह्मजिज्ञासेति ॥ प्रतिवाक्यं च तात्पर्यभेदात् प्रमेयभेदसिद्धिः।

तत्र हेत्वन्तरमाह—**चोदनाप्रवृत्तिभेदादिति** ॥ एतद् विवृणोति—**इदमपरमित्यादिना** ॥

**तत्त्वदीपनम्**

अध्ययनविधेः शमाद्याक्षेपकत्वमयुक्तम्, शमादेरधिकारिविशेषणत्वेनानुपादेयत्वात्, उपादेयस्यैव च विध्यनुष्ठेयत्वनियमात्, इत्याशङ्क्याह—**नचाधिकारीति** ॥ **अनुपादेयत्वात्** असाध्यत्वादित्यर्थः। विचारस्याध्ययनविधिप्रयुक्तिं योऽङ्गीकुरुते, असावध्ययनविध्यधिकारिण एव विचाराधिकारमङ्गीकरोति, इति न शमादीनामधिकारिविशेषणत्वमित्यर्थः ॥ "शान्तो दान्तः" इत्यादिवाक्यालोचनयाऽऽत्मविचाराधिकारिणः शान्त्यादिगुणकत्वप्रतिपत्तेः कथमितरस्याधिकारः? इति चेत्, मैवम्; "पश्येदि"त्यनूद्य शान्त्यादिगुणको भवेदिति विध्यभ्युपगमाद् नोक्तदोषप्रसक्तिरित्यभिसन्धायोपसंहरति—**तस्मादिति** ॥ **दृष्टादृष्टाङ्गानामिति**—दृष्टादृष्टातिशयहेत्वङ्गानामित्यर्थः। ब्रह्मविचारस्याध्ययनविधिप्रयुक्तिसमर्थनफलमाह—**तस्मादिति**। अध्ययनविधिप्रयुक्तावनुपपत्त्यभावस्तच्छब्दार्थः। युक्तत्वमेवाह—**विचारादीनामिति** ॥ फलैक्यस्यासंभावितत्वात् प्रमाणविधुरत्वाच्च न धर्मजिज्ञासानन्तरं ब्रह्मजिज्ञासेत्युक्तमुपसंहरति—**तस्मादिति** ॥ जिज्ञास्यैक्यमुक्तं निराचष्टे—**प्रतिवाक्यमिति**। उपक्रमादिपर्यालोचनया पूर्वत्र धर्मस्य जिज्ञास्यत्वम् उत्तरत्र ब्रह्मण इति प्रतीयत इत्यर्थः ॥

"इदमपरमि"त्यत्रापि हेत्वन्तरमुपन्यस्यत इति शङ्का स्यात्, तां निराकरोति—**एतदिति** ॥ "चोदनाप्रवृत्तिभेदादि"त्यत्र प्रमाणे वैलक्षण्यमुक्तम् न प्रमेये, इति वा शङ्कां निरस्यति—**एतदिति** ॥ "ब्रह्मचोदने"त्यत्र चोदनाशब्दस्य प्रमाणपरतया टीकाकृता व्याख्यातत्वाद् अत्रापि प्रमाणमात्रमुच्यत इति शङ्का स्यात्, तत्राह—**चोदनेति**। ब्रह्मणि

**ऋजुविवरणम्**

ननु नाध्ययनविधेः शमाद्याक्षेपकत्वम्; तेषामनुपादेयत्वात्, इत्याशङ्क्याह—**नचाधिकारिविशेषणत्वादिति**। अध्ययनविधिप्रयुक्तत्वाद् विचारस्याध्ययनविध्यधिकारिण उपनीतस्य तत्प्रयुक्तविचारेऽप्यधिकारः, न शमादिषु तस्येति भावः ॥ अतोऽध्ययनविधेः शमाद्याक्षेपकत्वं नातीव क्लृप्तमित्युपसंहरति—**तस्मात्प्रधानविधेरिति** ॥ ननु अध्ययनविधिप्रयुक्तिसाधनमप्रयोजनमिव दृश्यते; प्रकृतानुपयोगात्, समुच्चयनिराकरणं तत्र प्रकृतम्, नचास्य तत्रोपयोगः, नापि प्रकृतव्युत्क्रमस्योपयोगः; अध्ययनविधिप्रयुक्तत्वस्य तदसाधकत्वात्, अतोऽनुपयुक्त इत्याशङ्क्याह—**तस्मादेकाध्ययनविधीति** ॥ एवं फलभेदं प्रसाध्य, जिज्ञास्यभेदं साधयति—**प्रतिवाक्यञ्चेति** ॥

"असति विषये प्रेरयितुमसमर्था सती विषयमप्यवबोधयती"त्युक्तं टीकाकारेण; तद् व्यधिकरणम्; असति विषये प्रवर्तकत्वासंभवे विषयसत्त्वं वक्तव्यम्; ननु विषयावबोधकत्वं युक्तं दर्शयितुम्। नच सत्त्वमेव तत्र विवक्षितम्; सत्यपि प्रवृत्त्यदर्शनात्। नच विषयावबोधकत्वमपि संभवति। विषयशब्दो हि धर्मविषयः? पुरुषप्रवृत्तिविषयो वा? न तावत् प्रथमः कल्पः; धर्मप्रमाणस्य हि धर्मो विषयः। स चासौ प्रवर्तकत्वान्यथानुपपत्त्या बोध्यत्वेन निश्चीयते किन्तु श्रेयःसाधनत्वमेव शब्दार्थः। नच तत्र प्रेरकत्वं संभवति; अतो धर्मचोदना धर्मे प्रेरयतीत्यसंबन्धमुक्तम्, प्रेरकत्वाभावादेव नापि द्वितीयः; विषयो हि यागादिः पुरुषप्रवृत्तेः। नच तत्रापि प्रवर्तकत्वान्यथानुपपत्त्या बोधकत्वम्, वाचकस्य धातोर्विद्यमानत्वात्। अथवा, "चोदना हि प्रेरयन्ती"त्ययुक्तम्; चोदनाशब्देन प्रेरणोच्यते। नहि प्रेरणायाः प्रेरकत्वमस्ति। "अवबोधयती"त्यप्ययुक्तम्; तस्या अवबोधकत्वाभावात्। नापि प्रमाणप्रवृत्तिभेदोऽपि; सिद्धव्यापारस्याप्रमाणकत्वात्। तस्मादयुक्तोऽयं ग्रन्थ, इत्याशङ्क्य व्याचष्टे—**चोदनेति** ॥

### पञ्चपादिका

धर्मचोदना हि प्रेरयन्ती पुरुषमसति विषये प्रेरयितुमसमर्था सती विषयमप्यवबोधयति। ब्रह्मप्रमाणं पुनर्बोधयत्येव केवलं नावबोधे पुरुषः प्रेर्यते। अवबोधो हि यथावस्तु यथाप्रमाणं चोदेति, न पुरुषस्येच्छामप्यनुवर्तते; तत्र कुतः प्रेर्येत ? यथाऽक्षार्थयोः सन्निकर्षे सति तेन सन्निकर्षेणाक्षावगम्यार्थज्ञाने पुरुषो न नियुज्यते, तद्वत्; अनिच्छतोऽपि स्वयमुत्पत्तेः, ब्रह्मणि तु नित्यसिद्धत्वान्न प्रेरणा सम्भवति। ब्रह्मचोदनेति चोदनाशब्दो भाष्ये प्रमाणविवक्षया प्रयुक्तः, न प्रेरणाविवक्षया, तदाह—या हि चोदना धर्मस्य लक्षणम्, सा स्वविषये नियुञ्जानैव पुरुषमवबोधयति, ब्रह्मचोदना पुनः पुरुषमवबोधयत्येव केवलम्; अवबोधस्य चोदनाजन्यत्वान्न पुरुषोऽवबोधे नियुज्यते; यथाऽक्षार्थसन्निकर्षेणार्थावबोधे, तद्वत्॥ तदेवं जिज्ञास्यैक्यनिबन्धनाऽपि न क्रमापेक्षा तन्त्रद्वयस्य, येन तदपेक्षोऽथशब्दो व्याख्यायेत, अत उपसंहरति—तस्मात् किमपि वक्तव्यम् यदनन्तरं ब्रह्मजिज्ञासोपदिश्यत इति॥

उच्यते नित्यानित्यवस्तुविवेकः, इहामुत्रार्थफलभोगविरागः, शम-दमादिसाधनसम्पत्, मुमुक्षुत्वं चेति॥

### पञ्चपादिकाविवरणम्

चोदनेति शब्दभावनां कुर्वञ्छब्दोऽभिधीयते। सा च चोदनांऽशत्रयविशिष्टामर्थभावनां कुर्वती तस्मिन्ननवबुद्धे पुरुषप्रवृत्त्ययोगादर्थभावनामपि प्रतिपादयतीति भावः। ननु ब्रह्मावबोधे भाव्ये पुरुषं प्रेरयन्ती चोदनाऽवबोधव्यावृत्तां भावनां प्रतिपादयतीति ? नेत्याह—**नावबोधे पुरुषः प्रेर्यत इति**॥ ननु अवबोधः पुरुषप्रयत्नसाध्य इति ? नेत्याह—**अवबोधो हि यथावस्त्विति**। अनिच्छतोऽप्रयतमानस्यापि दुर्गन्धादिज्ञानदर्शनादित्यर्थः॥

**उच्यते नित्यानित्यवस्तुविवेक** इत्यतः प्राक्तनो ग्रन्थः स्पष्टार्थः। शास्त्रीयस्य विधेः शास्त्रीयमेवाधिकारनिमित्तं वक्तव्यमित्यभिप्रेत्याह—**नित्यानित्यवस्तुविवेक इत्यादि**॥ "सोऽन्वेष्टव्य" इति विधिप्रकरणे—"तद्यथेह कर्मचितो

### तत्त्वदीपनम्

भावनाया असंभवात् चोदनाशब्दस्य प्रमाणपरत्वम्, अत्र तु तद्वैपरीत्याद् नैवमित्यर्थः। पुरुषस्य स्वतन्त्रत्वात् कथं चोदनाप्रेर्यत्वमुक्तम् ? इत्याशङ्क्याह—**सा चेति**। यद्यपि पुरुषः स्वतन्त्रः; तथाऽप्यर्थभावनायाः फलशिरस्कत्वाद् धात्वर्थविषया प्रवृत्तिर्युक्तेत्यर्थः॥ अंशत्रयविशिष्टार्थभावनाऽप्रतिपत्तौ पुंसः प्रवृत्तिरनुपपन्नेत्याशङ्कायाम्—"असति विषये" इत्युक्तं टीकायाम्, तदसंभवि; अर्थभावनाप्रतिपत्त्या प्रवृत्त्यनुपपत्तिचोद्ये "अप्रतिपन्ने विषये" इति वक्तव्यम्, किमिदमुच्यते—"असती"ति ? विषयशब्दार्थश्च कः ? इति न ज्ञायते, तत्राह—**तस्मिन्निति**॥ अर्थभावनारूपं भाव्यं '**विषय**'शब्दार्थः, स च "तस्मिन्नि"त्यत्र तच्छब्देन निर्दिश्यते, असच्छब्दश्चानवबोधपर इत्यर्थः। प्रमाणत्वाविशेषाद् ब्रह्मचोदनाया अपि प्रेरकत्वं स्यात्, इतरथाऽन्यत्रापि तन्न स्यादिति शङ्कते—**ननु ब्रह्मेति**॥ **अवबोधव्यावृत्तामिति**—अवबोधविशेषितामित्यर्थः। अवबोधस्य भावनाविषयत्वमसिद्धम्, येनावबोधभावनायाः प्रतिपाद्यत्वमित्याह—**नेत्याहेति**॥ प्रागभाववत्त्वाद् यागवद् बोधस्यापि भाव्यत्वमिति शङ्कते—**नन्ववबोध इति**॥ वैषम्येणोत्तरयति—**नेत्याहेति**॥ टीकापेक्षितं हेतुमाह—**अनिच्छत इति**॥ अत एव प्रयत्नशून्य इत्याह—**अप्रयतमानस्येति**॥

अध्ययन-धर्मजिज्ञासा-कर्मानुष्ठानानन्तर्यस्याथशब्दार्थत्वासंभवेऽपि दृष्टस्यैव यस्य कस्यचिदानन्तर्यमथशब्दार्थ इत्याशङ्क्याह—**शास्त्रीयस्येति**। श्रवणविधेः शास्त्रीयत्वादधिकारनिमित्तमपि शास्त्रीयं वक्तव्यम्, अन्यस्य च शास्त्रीयस्यासंभवात् साधनचतुष्टयं शास्त्रीयमथशब्देन समर्पणीयमित्यर्थः। साधनचतुष्टयस्य कथं शास्त्रीयत्वम् ? इति

### ऋजुविवरणम्

**शब्दभावनामिति**॥ कथं पुरुषेच्छाधीनत्वाभावः ? प्रतिज्ञामात्रेण तत्सिद्ध्यभावात्, इत्याशङ्क्य व्याचष्टे—**अनिच्छतोऽप्रयतमानस्येति**॥

ननु यस्मिन् सति यत्र प्रवृत्तिर्भवति यस्मिन्नसति न भवति, तादृशमन्वयव्यतिरेकसिद्धमधिकारिविशेषणत्वेन स्वीकृतं दृष्टं हरीतकीभक्षणादौ विरेचकादेः, अत्रापि तादृशमधिकारिविशेषणं विहाय किमर्थं नित्यानित्यवस्तुविवेकादयः कीर्तिताः ? इत्याशङ्क्यावतारयति—**शास्त्रीयस्येति**॥ कथं शास्त्रीयत्वं नित्यानित्यविवेकादीनाम् ? इत्याशङ्क्य

## पञ्चपादिकाविवरणम्

लोकः क्षीयत एवमेवामुत्र पुण्यजितो लोकः क्षीयते" इति नित्यानित्यवस्तुविवेको दर्शितः; "परीक्ष्य लोकान् कर्मचितान्" आत्मनस्तु कामाय सर्वं प्रियं भवती"ति च ज्ञानश्रवणविधिप्रकरणे इहामुत्रार्थभोगविरागो दर्शितः; "शान्तो दान्तः" इति च दर्शनविधिप्रकरणे शमादयो दर्शिताः; "तद्विजिज्ञासस्वे"ति विचारविधिप्रकरणे "वरुणं पितरमुपससारे"ति गुरूपसदनं दर्शितम्; सर्वत्र च फलश्रुतयः कामनोत्पादनद्वारेण मुमुक्षोरधिकारप्रदर्शनार्थाः; अन्यथा साधनानुष्ठानादेव फलसिद्धौ सङ्कीर्तनवैफल्यात्।

ज्ञानस्याविधेयत्वात् तद्विधयोऽपि तत्साधनविधिपराः; तत्र सर्वशाखाप्रत्ययन्यायेन विधीनामेकत्वोपपत्तेः। स चैको विधिरधिकारमीक्षमाणः प्रकरणसामर्थ्यात् सङ्कीर्तनवैफल्यपरिहाराच्च वर्णितं धर्मकलापमधिकारनिमित्तत्वेन

## तत्त्वदीपनम्

वीक्षायामाह—**सोऽन्वेष्टव्य इति**। अन्वेषणं नाम शास्त्र-युक्तिभ्यामात्मवत्त्वनिर्धारणम्। साध्यस्वर्गादेरनित्यत्वे दृष्टान्त उच्यत इत्याह—**तद्यथेति**। कर्मणा निर्मितान् लोकाननित्यत्वेन विचार्य वैराग्यमधिगच्छेदित्यर्थः। स्रक्चन्दनादिसाधनजातस्य स्वशेषतया प्रियत्वात् तस्मिन् प्रीतिर्गौणी, स्वस्मिंश्च मुख्येति स्वमेवाश्रयेदिति। वैराग्यम्—"आत्मनस्तु कामाये"त्यनेन दर्शितमित्यर्थः। **शान्त इति**; अन्तरिन्द्रियव्यापारोपरमयुक्त इत्यर्थः। **दान्त इति**; बाह्येन्द्रियव्यापारवर्जित इत्यर्थः। विशेषणत्रयस्य शास्त्रीयत्वेऽपि न मुमुक्षुत्वं शास्त्रीयम्; तद्वाचकपदाभावात्, इत्याशङ्क्याह—**सर्वत्रेति**॥ **फलश्रुतय इति**। "ब्रह्म वेद ब्रह्मैव भवति" "तरति शोकमात्मवित्" इत्याद्याः। उक्तमर्थं विपक्षबाधकमुखेनोपपादयति—**अन्यथेति**। "ब्रह्म वेदे"त्यादेः कामनोपनयनद्वाराऽधिकारनिमित्तप्रतिपदकत्वाभावे फलसङ्कीर्तनं वृथा स्यात्। ततश्चाधिकारनिमित्तसमर्पकत्वं वक्तव्यमित्यर्थः।

ननु "जिज्ञासस्वे"त्यादौ ज्ञानस्य विहितत्वात् कथं तत्प्रकरणपठितोपसदनादेर्विचारविध्यधिकारनिमित्तत्वम्? तत्राह—**ज्ञानस्येति**॥ भिन्नप्रकरणपठितानां विशेषणानां कथं संभूयाधिकारनिमित्तत्वम्? तत्राह—**तत्रेति**॥ तत्र पूर्वस्मिन् तन्त्रे सर्वशाखाप्रत्ययाधिकरणनिर्दिष्टो यो न्यायः, तेनेत्यर्थः। **सर्वशाखाप्रत्ययन्यायेनेति**। अयमर्थः—किं शाखान्तरेषु श्रूयमाणमग्निहोत्रादि भिद्यते? उत न भिद्यते? भिद्यत इति तावत् प्राप्तम्; अभ्यासात्, अन्यथाऽभ्यासवैयर्थ्यम्। तथा नामादेरपि भिन्नत्वम्, तथाचोक्तम्—"नाम-रूप-धर्मविशेष-पुनरुक्ति-निन्दाऽशक्ति-समाप्ति-प्रायश्चित्तान्यार्थदर्शनात् शाखान्तरे कर्मभेद इति, एवं प्राप्ते, राद्धान्तितम्—'एकं वा संयोग-रूप-चोदनाख्याऽविशेषादि"ति। अस्यायमर्थः—फलसंबन्धस्योभयत्राविशेषात् कर्मैक्यम्; तथा द्रव्यस्य देवतोद्देशेन त्यागो यागस्वरूपम्, तदैक्याच्चैक्यम्। तथा संज्ञैक्याद्—जुहुयादित्यादिचोदनैक्याच्चैक्यम्, यत्र चैतेषां हेतूनामभावः, तत्र क्रतुभेदः। तस्माच्छाखाभेदेऽपि कर्मविधीनामैक्यम्। एवं भिन्नशाखागतविचारविधीनामप्यैक्यमिति। विध्यैक्येऽपि कथमुपसदनादेरधिकारनिमित्तत्वम्? तत्राह—**स चेति**। **अधिकारमिति**—विधि-पुरुषसंबन्धनिमित्तमित्यर्थः। एकेन विशेषणेन विध्याकाङ्क्षालक्षणप्रकरणस्य चरितार्थत्वात् कथमितरेषामधिकारनिमित्तत्वम्? तत्राह—**संकीर्तनेति**। साधनचतुष्टय-

## ऋजुविवरणम्

दर्शयति—**सोऽन्वेष्टव्य इति**॥ **विधिप्रकरण इति**॥ ननु एवं मुमुक्षुत्वमधिकारिविशेषणं न स्यात्; प्रापकप्रमाणाभावात्, इत्याशङ्क्याह—**सर्वत्र च फलश्रुतय इति**॥ ननु फलश्रुतीनां फलवत्त्वज्ञापकत्वमेव प्रयोजनं दृश्यते, कथं तद्विहायाधिकारिविशेषणत्वज्ञापनार्थतेति? तत्राह—**अन्यथा साधनेति**॥

ननु एवमपि कथं ब्रह्मविचाराधिकारहेतुत्वं केषाञ्चित्? ज्ञानविधिप्रकरणेऽपठितत्वात्? इत्याशङ्क्याह—**ज्ञानस्याविधेयत्वादिति**॥ एवमपि न सर्वेषामधिकारिविशेषणत्वम्; शाखाभेदेन श्रवणात्, एवं च न संभूयाधिकारनिमित्ततेति, तत्राह—**तत्र सर्वशाखाप्रत्ययन्यायेनेति**। स च न्याय एवम्—शाखाभेदेन श्रूतमाणं कर्माभिन्नं वा? नवा? इति विचारः। नेति तावत् प्राप्तम्; नाम-रूप-पुनरुक्तत्वादिहेतवो ज्ञेयाः। "एकं वा संयोग-रूप-चोदनाख्याऽविशेषादि"ति सिद्धान्तसूत्रम् एकं कर्म शाखाभेदेष्विति प्रतिज्ञा। वाशब्दः पक्षव्यावृत्त्यर्थः। तस्यायमर्थः—**संयोगाविशेषात्**॥ फलसंबन्धाविशेषादित्यर्थः। रूपाविशेषोऽपि हेतुः। **रूपम्** द्रव्य-देवतम्; निरूपकत्वात्। **चोदनाऽविशेषात्** विधीनामेकरूपत्वा-

### पञ्चपादिकाविवरणम्

स्वीकरोति; निरधिकारस्य विधेः प्रवृत्तिपर्यन्तत्वायोगात्। ननु एषु वाक्येषु विचारो विधीयत इति कथमवगम्यते? उच्यते—"विजिज्ञासितव्यः" "विजिज्ञासस्वे"ति चान्तर्णीतो विचारो विधीयते, इष्यमाणज्ञानस्येच्छायाश्च विधेयत्वायोगात्। "श्रोतव्यः" इति च स्वयमेव विचारो विहितः; "तद्विज्ञानार्थं स गुरुमेवाभिगच्छेदि"ति ज्ञानस्य साध्यतावगमात्। गुरुपसदनविधानाच्च तत्साधनश्रवणादिविधिः कल्प्यते। "आत्मन्येवात्मानं पश्येदि"ति ज्ञानविधानायोगात् तत्साधने विधिरुपादीयते, इति सर्वत्र मनन-निदिध्यासनाभ्यां सह श्रवणं नामाङ्गि विधियत इति सिद्धम्॥

ननु फलसाधनविधौ फलकामनैव पुष्कलाधिकारनिमित्तं भवति, किमितरधर्मकलापेनेति? सत्यम्; शास्त्रीयेऽधिकारनिमित्ते सङ्कीर्तनादेव जीवन-गृहदाहादिवदधिकारनिमित्तमिति गम्यते। ननु साधनकलापस्यानुष्ठेयतया

### तत्त्वदीपनम्

स्याधिकारिविशेषणतया प्रवृत्तिनिमित्तत्वे सङ्कीर्तनवैफल्यापातादधिकारिविशेषणत्वमेष्टव्यमित्यर्थः। "प्रकरणसामर्थ्यादि"त्युक्तं विवृणोति—**निरधिकारस्येति**॥ विचारवाचकपदाभावाद् "जिज्ञासस्वे"त्यादीनां कथं विचारविधिपरत्वम्? इति शङ्कते—**नन्वेष्विति**। नच "ज्ञानस्याविधेयत्वादि"त्यनेनास्य पौनरुक्त्यम्; तद्विवरणरूपत्वादित्यर्थः॥ लक्षणया विचारस्य गम्यमानत्वात् तद्विधिपरत्वं युक्तमित्याह—**उच्यत इति**॥ **अन्तर्णीत** इति वाच्यार्थसंबन्धो निर्दिष्टः। मुख्यार्थासंभवरूपं लक्षणावीजमाह—**इष्यमाणेति**॥ मुण्डके विचारविधिं दर्शयति—**तद्विज्ञानार्थमिति**। साधनमन्तरेण ज्ञाननिष्पत्त्ययोगात् साधनविधिकल्पनमित्यर्थः। अङ्गविधिदर्शनाच्चाङ्गिविधिरस्तीत्याह—**गुरूपसदनेति**॥ तथा "शान्तो दान्तः" इत्यत्र विज्ञाने विध्यसंभवात् साधनविधिः कल्प्यत इत्याह—**आत्मन्येवेति**॥ साधनचतुष्टयस्य श्रवणाधिकारनिमित्तत्वेऽपि मनन-निदिध्यासनयोः कथं साधिकारत्वम्? इत्याशङ्क्य, तयोः श्रवणाङ्गत्वात् तदधिकारनिमित्तमेव तत्प्रवृत्तिनिमित्तमित्याह—**इति सर्वत्रेति**॥

मुमुक्षुत्वे सतीतरधर्माभावापराधेनाप्रवृत्त्यदर्शनाद् विशेषणान्तरं वृथेति शङ्कते—**ननु फलेति**॥ व्यतिरेकाभावमङ्गीकरोति—**सत्यमिति**॥ तर्हि विशेषणान्तरवैयर्थ्यम्, तत्राह—**शास्त्रीय इति**। यत्रान्वय-व्यतिरेकसिद्धमधिकारनिमित्तमिष्यते, तत्र केवलव्यतिरेकापेक्षा, यत्र शास्त्रादेवाधिकारनिमित्तावगमः, तत्र न व्यतिरेकोऽर्थ्यते, यथा "जीवन् जुहुयात्" "गृहदाहवान् यजेते"त्यादौ व्यतिरेकविधुरस्यापि जीवनादेरधिकारनिमित्तत्वम्, तद्वदित्यर्थः॥ विशेषणचतुष्टयस्याधिकारनिमित्तत्वाभावेऽपि सङ्कीर्तनमुपपद्यत इति चोदयति—**ननु साधनेति**॥ साधनकलापस्याङ्गत्वमेव

### ऋजुविवरणम्

दित्यर्थः। **आख्या** संज्ञेति। एतैरेव हेतुभिरत्रापि विधिष्वेकत्वम्। ननु प्रकरणसामर्थ्यात् सर्वेषामधिकारिविशेषणत्वं न स्वीक्रियते, एकेन विशेषणेन विध्याकाङ्क्षानिवृत्तौ कथं सर्वेषामधिकारिविशेषणत्वम्? इत्याशङ्क्याह—**संकीर्तनवैफल्यादिति**॥ ननु संकीर्तनसाफल्यं प्रकारान्तरेण कर्तुं शक्यत एव; कथमधिकारिविशेषणत्वेन स्वीकारनियमः? इत्याशङ्क्याह—**निरधिकारस्येति**॥ **नन्वेषु वाक्येष्विति** विचारवाचकशब्दाभावाद् न विधानम्; अविधाने च न तदधिकारिविशेषणत्वमिति भावः॥ ननु श्रुतहानेनान्तर्णीतविचारविधानाश्रयणं न युक्तमित्याशङ्क्याह—**इष्यमाणज्ञानस्येति**। तयोरपुरुषाधीनत्वादिति भावः॥ एवमपि मनन-निदिध्यासनसन्निधौ केषाञ्चिच्छ्रवणान्न सर्वेषां श्रवणाधिकारनिमित्तता, अथवा साधनचतुष्टयस्य श्रवणाधिकारनिमित्तत्वाद् मनननिदिध्यासनयोर्निरधिकारनिमित्तत्वेन विधानाभावः, अधिकारान्तरं वा कल्प्येतेत्याशङ्क्याह—**इति सर्वत्रेति**। उपसंहारो वा॥

**फलकामनैवेति** फलकामनायामसत्यामितरसाधने विद्यमाने प्रवृत्त्यदर्शनात् सत्यां च प्रवृत्तिदर्शनात् सैव पुष्कलकारणमिति। **सत्यम्; शास्त्रीयेति**। अन्वय-व्यतिरेकतो यदि निमित्तनिरूपणं क्रियते, तर्हि सामर्थ्यमात्रपर्यालोचनं युक्तम्, अत्र तु न तथेति भावः॥ **जीवनगृहदाहादिवदिति**। "जीवन् जुहुयादि"त्यत्र जीवनस्य, गृहदाहस्य च क्षामवतीष्टयामधिकारनिमित्तत्वम्, तद्वदिहापीति भावः॥ ननु न संकीर्तनादधिकारनिमित्तता; अङ्गत्वेनापि संकीर्तनोपपत्तेः, जीवनादौ न तथोपपत्तिरिति चोदयति—**ननु साधनकलापस्येति**॥ ननु उभयथा संभवे कथमङ्गत्वमेवेति निश्चेतुं

**पञ्चपादिका**

**उक्तं पुरस्तात् अधिकारार्थत्वेऽथशब्दस्य शास्त्रारम्भवैयर्थ्यम्, प्रवृत्त्यभावादिति । प्रवृत्त्यभावे च कारणमुक्तम्—अखिलसुखभोगाद्धिरण्यगर्भावाप्तिपर्यन्तान्निवर्तयति ब्रह्मजिज्ञासा क्रियमाणा, तेन तत उद्वेगो लोकस्य, कुतस्तत्र प्रवृत्तिरिति ?**

**पञ्चपादिकाविवरणम्**

तत्र विधिं परिकल्प्य प्रयाजादिवत् ब्रह्मज्ञान फलोपकार्यङ्गत्वमेव कल्प्यताम् ? सत्यम् अङ्गस्यापि प्रदोषादिकालवदधिकारिविशेषणत्वं न विरुध्यते; शान्त्यादिगुणो भूत्वा पश्येदित्यादिलिङ्गात्, दीक्षाया अप्युत्तरक्रत्वधिकारनिमित्तता-दर्शनात् । तस्माद् युक्तमुक्तम्—"नित्यानित्यवस्तुविवेक" इति ॥

"तेषु हि सत्स्वि"त्युत्तरं भाष्यं साधनकलापस्य ब्रह्मानुभवपर्यन्तविचारादिसाधनप्रवृत्तेरन्वय-व्यतिरेकसिद्धदृष्टहेतुतां प्रतिपादयति । तद्वर्णयितुं मुमुक्षुत्वमन्तरेण तावन्न प्रवृत्तिरित्याह—**उक्तं पुरस्तादधिकारार्थत्व** इत्यादिना । तस्माद् मुमुक्षुत्वं तावदिष्यमाणसाधने प्रवृत्तिनिमित्तमित्यर्थः । ननु फलकामनायां सत्यामितरधर्माभावात्

**तत्त्वदीपनम्**

कल्प्यतामिति संबन्धः । विहितमङ्गं भवति, अत्र च विध्यदर्शनात् कथमङ्गत्वम् ? इत्याशङ्क्याह—**तत्र विधिमिति** ॥ जीवनादेर्वैलक्षण्यमाह—**अनुष्ठेयतयेति** ॥ ज्ञानस्वरूपं प्रत्युपकारानिरूपणात् कथमङ्गत्वमिति ? अत आह—**प्रयाजादिवदिति** ॥ अङ्गत्वमात्रमङ्गीकरोति—**सत्यमिति** ॥ तर्हि नाधिकारिविशेषणत्वम्, तत्राह—**अङ्गस्यापीति** ॥ तत्र दृष्टान्तमाह—**प्रदोषादीति** । प्रदोषकालवतः कर्मविधानात् तत्प्रतीक्षया कर्मकरणाच्चाङ्गस्यापि कालस्याधिकारिविशेषणत्वं यथा, तद्वदत्राप्यङ्गत्वमधिकारिविशेषणत्वं चाविरुद्धमित्यर्थः । प्रमाणाभावाद् न साधनकलापस्याधिकारिविशेषणत्वमित्याशङ्क्याह—**शान्त्यादीति** ॥ तत्रैव दृष्टान्तान्तरमाह—**दीक्षाया इति** ॥ दीक्षाया अङ्गत्वं "दीक्षितो जुहोती"त्यधिकारनिमित्तत्वं च दृश्यत इत्यर्थः । शास्त्रीयत्वेन साधनचतुष्टयाधिकारिविशेषणत्वसमर्थनमुपसंहरति—**तस्मादिति** ॥

"उक्तं पुरस्तादि"त्यत्र शास्त्रारम्भस्य वैयर्थ्यस्यानुवादो वृथेत्याशङ्क्य तात्पर्यमाह—**तेषु हीति** । पूर्वत्र विशेषणचतुष्टयस्य शास्त्रीयत्वाद् न व्यतिरेकापेक्षेत्युक्तम्, अत्र त्वन्वय-व्यतितेकगम्यत्वमाश्रित्य व्यतिरेकः समर्थ्यत इति न पूर्वापरपराहत्याशङ्केत्यर्थः । मुमुक्षुत्वाभावे ब्रह्मविचारप्रवृत्त्यसंभवसाधनफलमाह—**तस्मादिति** ॥ मुमुक्षुत्वस्य हेतुत्वमाश्रित्य केवलव्यतिरेकाभावान्नेतरस्य हेतुत्वमित्याह—**ननु फलकामनायामिति** ॥ नच "फलसाधनविधानमि"

**ऋजुविवरणम्**

शक्यते ? विशेषहेत्वभावात्, इत्याशङ्क्याह—**अनुष्ठेयतयेति** ॥ एवमपि कथमङ्गत्वम् ? विधानाभावात्, इत्याशङ्क्याह—**विधिं परिकल्प्येति** ॥ ननु अङ्गत्वं श्रवणे ज्ञाने वा न संभवति; उपकारादर्शनादिति, तत्राह—**प्रयाजादिवत्फलोपकार्यङ्गत्वमिति** ॥ ननु अङ्गत्वमप्यधिकारिविशेषणत्वमप्यस्त्वित्याशङ्क्याह—**अङ्गत्वमेवेति** । अङ्गत्वमनुष्ठेयतया, पूर्वंप्रवृत्ततयाऽधिकारिविशेषणत्वम्, तदेकस्य विरुद्धमित्यर्थः । **सत्यमङ्गस्यापीति** । निशीष्टचामङ्गस्य प्रदोषकालस्य यथाधिकारिविशेषणत्वम्; प्रदोषकालवतः कर्मविधानात्, कालप्रतीक्षया कर्मकरणादुभयरूपत्वम्, अत्र तु नाधिकारिविशेषणत्वप्रापकमस्तीत्याशङ्क्याह—**शान्त्यादिगुणो भूत्वेति** ॥ ननु कालस्याधिकारिविशेषणत्वं युक्तम्; अनुपादेयत्वात्, साधनकलापस्य तूपादेयत्वान्नाधिकारिविशेषणत्वमित्याशङ्क्याह—**दीक्षाया अपीति** ॥

"उक्तं पुरस्तादि"त्यादिटीकाग्रन्थेनाधिकारार्थत्वेऽथशब्दस्य पूर्वोक्तदूषणमनुस्मारयति; तस्याप्रसङ्गः, प्रयोजनञ्च नोपलभ्यते, इत्याशङ्क्यावतारयति—**"तेषु हि सत्सु" इत्युत्तरमित्यादिना** ॥ ननु तत्र ब्रह्मज्ञाने प्रवृत्त्यभावप्रदर्शनाद् न भाष्यवर्णनमनेन कृतम्, भाष्ये साधनप्रवृत्तौ धर्मकलापस्य हेतुत्वं प्रतिपाद्यते, नच तद्विवरणमनेन क्रियते; मुमुक्षुत्वाभावे प्रवृत्त्यभावकीर्तनाभावात्, इत्याशङ्क्याभिप्रायमाह—**तस्मान्मुमुक्षुत्वमिति** ॥ ननु साधनकलापस्य हेतुत्वं प्रतिपादयितुं मुमुक्षुत्वस्योपयोगप्रतिपादकत्वेन—"उक्तं पुरस्तादि"ति टीकाग्रन्थस्योपयोग उक्तः; उत्तरस्य तु "यावदस्ये"त्यादिटीकाग्रन्थस्योपयोगं न पश्यामः; अव्यक्तार्थत्वात् कथञ्चिदर्थनिरूपणेऽपि मुमुक्षुत्वे नित्यानित्यवस्तुविवेकादेर्हेतुत्वप्रतिपादनं दृश्यते, नच तदुपयुज्यते; अप्रस्तुताभिधानात्, विचारादिसाधनप्रवृत्तौ सकलस्य हेतुत्वं वक्तुं प्रक्रमः, न तदनेन क्रियते; अतो हेयोऽयं ग्रन्थ इत्याशङ्क्योपयोग्यर्थप्रतिपादकत्वं दर्शयितुं चोदयति—**ननु फलकामनायामिति** ॥

### पञ्चपादिका

**तस्मात् यावदस्य हिरण्यगर्भावाप्तिपर्यन्तस्य भोगस्योत्पाद-परिच्छेदाभ्यां विनाशित्वादनित्यत्वं नावैति; विनश्यदपीदं कूटस्थनित्यवस्तुपर्यन्तमेव विनश्यति; अन्यथा निरुपादानस्य पुनरुत्पत्त्यसम्भवः, इति वर्तमानस्याप्य-**

### पञ्चपादिकाविवरणम्

फलसाधने प्रवृत्त्यभावो न दृश्यते ? सत्यम्; पूर्वस्य पूर्वस्योत्तरोत्तरस्वरूपोपाधित्वेन प्रतिपन्नतया मुमुक्षुत्वोपाधित्वादधिकारनिमित्ततेत्याह—**तस्माद् यावदस्य हिरण्यगर्भावाप्तिपर्यन्तस्ये**त्यादिना ॥ ननु सर्वमअनित्यमेव, सत्त्वात्; स्वप्नवदिति ? नेत्याह—**विनश्यदपीदमिति** ॥ नच निरुपादानं किञ्चित् कार्यमवगम्यते; कार्यस्य च कार्यान्तरोपादानत्वे पूर्वेषां कृत्स्नकारणानामुत्तरस्मिन् कार्येऽन्वयः स्यात्; अनन्वयिनोऽनुपादानत्वात्, अतः प्रतिकार्यप्रवाहमनादित्वादनाद्यनेकोपादानकल्पनाद् वरमेकस्यैवानादेः सर्वकार्योपादानत्वकल्पनम्। तच्चाविकारि कूटस्थम्; अन्यथा कार्यत्वप्रसङ्गात्। तथा सर्वं कार्यम्, कदाचित् कात्स्न्र्येन विनश्यति, एकोपादानत्वात्, सुषुप्तावात्मगतसुखादिवत्, इति सर्वस्य च विनाशस्तथाविध-

### तत्त्वदीपनम्

त्यनेन पौनरुक्त्यं शङ्क्यम्; समाध्यन्तराभिधित्सायां पुरेरितस्यैवानुवाददादित्यर्थः। केवलव्यतिरेकाभावाद् विशेषणत्रयस्य प्रवृत्त्यनिमित्तत्वमुक्तमङ्गीकरोति—**सत्यमिति** ॥ तर्हि तस्य वैयर्थ्यमित्याशङ्क्याह—**पूर्वस्येति** ॥ **उपाधित्वेनेति**—हेतुत्वेनेत्यर्थः। नित्यवस्तुन एवाभावाद् न नित्यानित्यवस्तुविवेक इति शङ्कते—**ननु सर्वमिति** ॥ **सर्वं** विमतमित्यर्थः। विपक्षबाधकतर्केण पराहतत्वादप्रयोजकमित्याह—**नेत्याहेति** ॥ कार्यस्य सोपादानत्वे तत्पर्यन्तो विनाशः स्यात्, नच सोपादानत्वम्, प्रध्वंसे व्यभिचारादित्याशङ्क्याह—**नचेति**। प्रागसतः सत्त्वयोगित्वस्य कार्यत्वाद् न प्रध्वंसे व्यभिचार इत्यर्थः। तर्हि कार्यमेव किंचिदुपादानं स्यादित्याशङ्क्य, किं कार्यस्यान्विततयोपादानत्वम् ? उतानन्विततया ? इति विकल्प्याद्यं प्रत्याह—**कार्यस्येति**। घटान्वयित्वेन यदा मृदुपलभ्यते, तदा तत्कारणमपि तत्रोपलभ्येत, एवं तत्कारणं तत्कारणमपीति सर्वस्यान्विततयोपलम्भः स्यादित्यर्थः। द्वितीयं दूषयति—**अनन्वयिन इति**। घटानन्वयिनो दण्डस्य तदनुपादानत्ववत् सुवर्णादेरप्यनन्वयित्वेन नोपादानत्वमित्यर्थः। तर्ह्यनाद्यनेकमुपादानं स्यादिति शङ्कां निरस्यति—**अत इति**। अनाद्युपादनाभावे कार्यानुपपत्तिरतःशब्दार्थः। यदनाद्येकमुपादानम्, तत्परिणामि, उपादानत्वात्; क्षीरवदिति शङ्कां निरस्यति—**तच्चेति**। कौटस्थ्यप्रतिपादकश्रुति-स्मृतिविरोधान्नेदमनुमानमुत्तिष्ठतीत्यर्थः। तदेव स्पष्टयति—**कूटस्थमिति** ॥ विपक्षे बाधकमाह—**अन्यथेति** ॥ ननु सर्वस्य विनाशे सिद्धे कूटस्थवस्तुपर्यन्तो विनाशः स्यात्, स एवासिद्ध

### ऋजुविवरणम्

केवलव्यतिरेके हि कारणत्वनिश्चयः; नान्वयमात्रात्, अत्र तु व्यतिरेको न दृश्यत इति भावः ॥ ग्रन्थसन्दर्भस्य तात्पर्यमुक्त्वाऽवान्तरव्याख्यां करोति। तत्र नित्यानित्यवस्तुविवेक एव न संभवति; नित्यस्यैवाभावादिति चोदयति—**ननु सर्वमिति** ॥ (टीकायाम्) **"अन्यथा निरुपादानस्ये"** त्यनेनैतदुक्तम्—यदि निरवशेषो विनाशो भवेत्, तर्ह्युत्तरकार्योत्पत्तिर्न भवेत्; तेन दृष्टान्तेन पूर्वस्यापि निरवशेषो विनाशो भवेत्, तथा सत्युपादानाभावाद् वर्तमानकार्यस्याप्यभावः स्यात्, नचैवम्; कार्यस्य दृश्यमानत्वात्, अतः कार्यदर्शनानुपपत्त्या कूटस्थनित्यवस्तुपर्यन्तं विनाश इति नित्यानित्यवस्तुविवेकः कृतः, स न युक्तः। निरुपादानस्योत्पत्त्यसंभव इत्यसम्बद्धम्; असिद्धत्वात्, तथा पूर्वपूर्वस्योत्तरोत्तरकार्योपादानत्वसंभवाद् न कूटस्थनित्यवस्तुसिद्धिः, अतोऽन्यथाऽप्युपपत्तिरर्थापत्तेः। तथा "विनश्यदपीदमि"त्यसंबद्धम्; विनाशस्यैवाभावात्, सति वा विनाशे न कूटस्थ-नित्यवस्तुपर्यन्तता कार्यस्य; घटादेः कार्यान्तरे मृदादौ विनाशदर्शनात्, अतो नानेन नित्यवस्तुसिद्धिरित्याशङ्क्योपपादयति—**नच निरुपादानं किञ्चिदिति** ॥ कार्यस्य कार्यान्तरोपादानत्वं यदाशङ्कितम्, तन्निराकरोति—**कार्यस्य कार्यान्तरोपादानत्व इति** ॥ ननु कार्यस्योपादानत्वाभावेऽपि न भवदभिमतनित्यवस्तुसिद्धिः; प्रतिकार्यप्रवाहमनेकनित्योपादानकल्पकत्वसामर्थ्यात्, इत्याशङ्क्याह—**अतः प्रतिकार्येति** ॥ भवतु नित्यता, कथं कूटस्थतेत्याशङ्क्याह—**तच्चाविकारीति** ॥ यच्चान्यदाशङ्कितम्, विनाश एवासिद्धः; सति वा विनाशे कार्यान्तर एव स्यात्, अतो न नित्यवस्तुसिद्धिरिति, तत्राह—**तथा सर्वं कार्यमिति** ॥ एवमुत्पत्तिसामर्थ्याद् विनाशसामर्थ्याच्च कूटस्थं वस्तु साधितम् अथवा, "विनश्यदपी"त्यस्य सकलग्रन्थस्योभयथा व्याख्या कृता—तत्र प्रथमम्—"नच निरुपादानस्ये"त्यादिना "कार्यत्वप्रसङ्गादि"त्येवमन्तेन कार्योत्पत्तिसामर्थ्याद् नित्यवस्तुप्रतिपादकत्वमस्योक्तम्; तथा "सर्वं कार्यमि"त्यादिना "जन्मा-

### पञ्चपादिका

**सम्भवादभावोऽभविष्यदिति निरूपणात् नित्यानित्यवस्तुविवेको यावन्न जायते. यावच्चाभिमुखं विनाशदर्शनाद् भुञ्जानस्यापि भोगान् स्रक् चन्दन-वस्त्रालङ्कार-भोगानिवाग्निप्रवेशार्थं भोगार्थव्यापारजनितदुःखानुभवाच्च तन्निमित्तां निर्वृतिमप्यलभमानो**

### पञ्चपादिकाविवरणम्

वस्तुपर्यन्त एव; अन्यथा पूर्वकल्पस्य शून्यतापर्यन्तं विनष्टस्य स्वोपादानशेषतया स्वसंस्कारावस्थानाभावात् तत्सजातीयाकारेण पुनर्जन्माभाववद् वर्तमानस्यापि निरुपादानतया जन्माभावप्रसङ्गादिति। भोगान् भुञ्जानस्य भोक्तुः सह भोगैरभिमुखं विनाशदर्शनादिति योजना।

### तत्त्वदीपनम्

इत्याशङ्क्याह—**तथेति**। यथा कूटस्थवस्तुसिद्धिः, तथा सकलकार्यनाशोऽपीत्यर्थः। कदाचिन्नश्यतीत्युक्ते न सकलविलयसिद्धिः, तदर्थम्—**कार्त्स्न्येनेति**। एतावत्युक्ते स्थितिसमयेऽपि कार्त्स्न्येन विनाशप्रसाधनाद् बाधः, तदर्थम्—**कदाचिदिति** विशेषणम्। प्रलयोपस्थापककर्मोद्बोध इत्यर्थः। ततः किमिति ? अत आह—**इति सर्वस्येति**॥ विपक्षे दण्डमाह—**अन्यथेति**। **पूर्वकल्पस्येति**—पूर्वकल्पीयस्येत्यर्थः। संस्काराभावे हेतुमाह—**शून्यतेति**॥ **सजातीयाकारेण पुनर्जन्माभाववदिति**। अयमर्थः—पूर्वकल्पीयस्य संस्कारसहितकारणावशेषाभावात् सजातीयाकारेण पुनर्जन्मासंभवः, एवमेव वर्तमानस्यापि निर्लेपनष्टत्वात् सजातीयाकारेण जन्म न स्यादिति। अभिमुखविनाशदर्शनाद्धेतोर्भोगान् भुञ्जानस्येति यथास्थित्यन्वयशङ्कां निरस्यति—

### ऋजुविवरणम्

भावप्रसङ्गादि"त्यन्तेन तस्यैव पुनर्विनाशसामर्थ्याद् नित्यवस्तुप्रतिपादकत्वमुक्तम्; उत्पत्तिपूर्वकत्वाद् विनाशस्य, प्रथममुत्पत्तिसामर्थ्यात् प्रतिपादकत्वमुक्तम्, अनन्तरं विनाशसामर्थ्यादिति। ननु सर्वविनाशेऽपि न नित्यवस्तुसिद्धिः; अभावस्यैवोत्पादकत्वसंभवात्, ततो यदुक्तं टीकाकारेण "निरुपादानस्य पुनरुत्पत्त्यसंभव एवे"ति तदयुक्तम्, अभावस्यैवोपादानस्य विद्यमानत्वात्, पुनरुत्पत्तिसंभवायोगात्, "वर्तमानस्याप्यसंभवादि"ति चायुक्तम्; तेनैव संभवस्य सिद्धत्वात्, इत्याशङ्क्य व्याचष्टे—**अन्यथेति**॥ "निरुपादानस्ये"त्यस्य व्याख्या—**स्वोपादानशेषतया संस्काराभावादिति**॥ "शून्यतापर्यन्तं विनष्टस्ये"ति संस्काराभावे हेतुः। "पुनरुत्पत्त्यसंभव एवे"त्यस्य व्याख्या—**सजातीयाकारेण पुनर्जन्माभाववदिति**॥ "वर्तमानस्याप्यसंभवः" इत्यस्य व्याख्या—**वर्तमानस्यापीति**॥ अथवा, उत्पत्तिसामर्थ्यादिव व्याख्यानद्वयेऽपि नित्यवस्तुसाधकत्वमस्य टीकाग्रन्थस्य दर्शितं शङ्काभेदनिराकरणेन, तत्र प्रथमव्याख्याने निरुपादानत्वेन भावरूपकारणान्तरेण वा कार्यसंभवशङ्कानिरासेन नित्यवस्तुप्रतिपादकत्वमुक्तम्; द्वितीयव्याख्याने तु शून्योपादानत्वेनाप्युत्पत्तिशङ्कानिरासेन सजातीयोत्पत्तिसामर्थ्याद् नित्यवस्तुप्रतिपादकत्वमुक्तमिति भेदः। "यावच्चाभिमुखं विनाशे"त्यादिग्रन्थोऽसङ्गतः परस्परानन्वित इव लक्ष्यते—पूर्वग्रन्थे हि "यावन्न जायते" इत्युक्तम्, तस्य तावदर्थ आकाङ्क्षितः, नचात्र तावदर्थोऽस्ति; "यावदस्ये"त्ययं च साकाङ्क्षः, तावदिदमित्यनिरूपणात्; "यावच्चाभिमुखं विनाशदर्शनादि"ति हेतुत्वं प्रतीयते, नच तस्य साध्यमस्ति; नच "भुञ्जानस्ये"त्यनेनान्वयः, विनाशदर्शनस्य भोगहेतुत्वाभावात्; नच पञ्चम्यन्तत्वास्वीकारेऽपि "भुञ्जानस्ये"त्यनेनान्वयः संभवति, यावच्छब्दोऽपि तावच्छब्दसाकाङ्क्षः, नच तेनान्वेतुं योग्यस्तच्छब्दोऽस्ति; "भोगान्भुञ्जानस्ये"त्येतदप्यन्यसाकाङ्क्षम्; "निर्वृतिमलभमानः" इति पुरुषसाकाङ्क्षत्वाद "भुञ्जानस्ये"त्यत्र पुरुषस्योपात्तत्वादन्वय इति न युक्तम्; विभिन्नविभक्तिकत्वेनान्वयाभावात्, भुञ्जान इति यदि स्यात्, ततो भुञ्जानो निर्वृतिमलभमान इति स्यादन्वयः, नचैवं समानविभक्तियोगोऽस्ति। "भोगार्थव्यापारे" इत्यारभ्यान्वयसंभवेऽपि व्याहत इव प्रतीयते; भोगार्थं योऽयं व्यापारः, तेन जनितदुःखानुभवाच्च तन्निमित्तं सुखमलभमानः पुरुषो यत एव भोगाद्विरक्तः, ततो मुमुक्षुत्वं तत्साधनसंपन्नो भूत्वा यावन्नावलम्बत इत्यन्वयः प्रतिभाति। तत्र विरक्तो मुमुक्षुत्वं नावलम्बत इति विरोधाद्वैराग्ये सति तदभावायोगात्प्रकृतासङ्गतः पुनरुक्तश्च। अयमर्थ—प्रकृतं हि नित्यानित्यवस्तुविवेकादीनामुत्तरोत्तरं प्रति हेतुतयाऽधिकारिविशेषणत्वम्। नचात्र तत् प्रतिपादितम्; नित्यानित्यविवेकयोर्नामापि न गृहीतम् वैराग्यस्य तु पूर्वस्वरूपमेव निर्दिष्टम्, नतु पूर्वसाध्यत्वमुत्तरसाधनत्वं वा निर्दिष्ठम्। मुमुक्षुत्वस्य हेतुत्वं पूर्वमपि प्रतिपन्नमत्रापि प्रतिपाद्यत इति पौनरुक्त्यम्; "अतो यावदस्यहिरण्यगर्भे"त्यादि "ब्रह्मजिज्ञासां कः प्रतिपद्येते"त्येवमन्त आलूनविशीर्णं इत्याशङ्क्याह—**भोगान् भुञ्जनस्येति**॥ अवान्तरान्वयं दर्शयित्वा महा-

### पञ्चपादिका

**भोगाद् विरक्तः; ततो मुमुक्षुत्वं तत्साधनशम-दमोपरम-तितिक्षा-समाधानसम्पन्नो भूत्वा यावन्नालम्बते; तावद् ब्रह्मजिज्ञासां कः प्रतिपद्येत ? कथंचिद्वा दैववशात् कुतूहलाद्वा बहुश्रुतत्वबुद्धया वा प्रवृत्तोऽपि न निर्विचिकित्सं ब्रह्म तत्त्वेनावगन्तुं शक्नोतिः यथोक्तसाधनसम्पत्तिविरहात्, अतन्मुखचेता बहिरेवाभिनिविशमानः। तस्माद् वर्णितवस्तुकलापानन्तर्यमभिप्रेत्याथ-शब्दं प्रयुक्तवानाचार्यः। तदाह भाष्यकारः—तेषु हि सत्सु प्रागपि धर्मजिज्ञासाया ऊर्ध्वं च शक्यते ब्रह्म जिज्ञासितुं ज्ञातुं च, न विपर्यये। तस्मादर्थशब्देन यथोक्तसाधनसम्पत्त्यानन्तर्यमुपदश्यत इति ॥**

### पञ्चपादिकाविवरणम्

अत्रैवमन्वयः—यावदनित्यत्वं नावैति, तावन्नित्यं वस्तु न प्रतिपद्यत इत्यध्याहारः। यावच्च नित्यानित्य-वस्तुविवेको न जायते, तावद्विरक्तो न जायत इत्यध्याहारः। "यावच्चाभिमुखविनाशे"त्यत्र **यावच्छब्दो** नकार-मध्याहृत्य विरक्तशब्देन संबध्यते—यावच्च न विरक्त इति, तावन्मुमुक्षुत्वं नालम्बत इत्यध्याहारः। यावच्च मुमुक्षुत्वं नालम्बते, तावद् ब्रह्मजिज्ञासां कः प्रतिपद्येत ? इति साधनकलापाभावे न विचारप्रवृत्तिरिति व्यतिरेकोऽयं दर्शितः ननु नास्ति व्यतिरेकः, साधनकलापभावेऽपि प्रवृत्तिदर्शनादित्याशङ्क्याह—**कथंचिद्वा दैववशादिति**। शूद्रयागादिवत् फलपर्यन्तता न स्यादित्यर्थः। व्यतिरेकनियमादेवान्वयमपि सिद्धवत्करोतीत्याह—**तस्माद्वर्णितवस्तुकलापादानन्तर्यमिति** ॥ उक्तेऽर्थे भाष्यमवतारयति—**तदाह भाष्यकार इति** ॥

तदेवं साधनकलापस्य विधेयतया विज्ञानाङ्गत्वेऽपि शास्त्र-युक्तिभ्यामधिकारिविशेषणत्वलाभाद् वर्णित-साधनसंपत्त्यनन्तरं ब्रह्मविचारे सिद्धेऽपि कश्चित्प्रमाणव्यापारवार्तानभिज्ञो देवानांप्रियः शास्त्रार्थप्रद्वेषदोषदोधूयमानचेताः सर्वसंकरवादी यत्किञ्चिदत्र जल्पति—विचारकर्तव्यतां प्रतिपद्यमानस्य किल सूत्रकारस्य शमादयो न बुद्धिसमारूढाः, नचाबुद्धिसमारूढमर्थमधिकारिविशेषणतयाऽथशब्देनोपादातुमर्हति; धर्मविचारस्तु बुद्धिगतोऽधिकारिविशेषणतयोपादीयत इति। नैतद्युक्तम्;

### तत्त्वदीपनम्

**भोगानिति** ॥ "यावदस्ये"त्यादेः साकाङ्क्षत्वाद् दूरान्वयत्वाच्चान्वयं दर्शयति—**अत्रेत्यादिना** ॥ फलितं दर्शयति—**साधनेति** ॥ व्यतिरेकमाक्षिपति—**नन्विति** ॥ श्रवणाद्यनुष्ठानेऽपि निर्विचिकित्सं ब्रह्म नाधिगच्छतीत्येतद्विरुद्धमित्याशङ्क्याह—**शूद्रेति**। 'अधिकारिणः फलपर्यवसायिप्रमितिजनको वेदः' इति न्यायादित्यर्थः। अन्वयमन्तरेण व्यतिरेकमात्राद्धे-तुत्वासिद्धेरन्वयस्य चानिर्दिष्टत्वाद् "वर्णितवस्तुकलापानन्तर्यमि"त्यसंगतमित्याशङ्क्याह—**व्यतिरेकेति** ॥

अन्वय-व्यतिरेकाभ्यां साधनचतुष्टयस्य विचारहेतुतायाः समधिगतत्वात् किलेति ॥ मा भूद् बुद्धिस्थत्वम्, तत्राह—**नचेति**। बुद्धिसमारूढमर्थं परस्मै प्रतिपादयितुं तद्वाचकं शब्दं प्रयुङ्क्ते, शमादीनां चाबुद्धिस्थत्वात् कथं तत्प्रतिपत्तिसमये तत्प्रतिपिपादयिषयाऽथशब्दप्रयोग इत्यर्थः। परिशेषात् शमादिकमथशब्दोपात्तमिति शङ्कां निरस्यति—**धर्मविचार इति**। वेदैकदेशविचारस्य निर्वृत्तत्वात् बुद्धिस्थत्वादधिकारविशेषणत्वेनोपादानमथशब्देनेत्यर्थः। शमादीनाम-बुद्धिस्थत्वमसिद्धमित्याह—**नैतद्युक्तमिति** ॥

### ऋजुविवरणम्

वाक्यार्थान्वयं दर्शयति—**अत्रैवमन्वय इति** ॥ "यावदस्ये"ति टीकाग्रन्थस्य प्रकृतोपयोग्यर्थसिद्ध्यर्थमध्याहृत्य योजनां दर्शयति—**यावदनित्यं नावैति तावदिति** ॥ "नित्यानित्यवस्तुविवेको यावन्न जायते" इत्यस्य साकाङ्क्षत्वात् प्रकृतोपयोग-सिद्ध्यर्थमध्याहृत्य योजनां दर्शयति—**तावद्विरक्त इति** ॥ "यावच्चाभिमुखमि"त्यस्मिन् ग्रन्थे नकाराध्याहारेण व्याहतिर-सङ्गतिरनुपयोगश्च परिहृतः। ननु एवमपि न प्रकृतार्थसंबन्धः; साधनकलापस्य विचारहेतुत्वं वक्तुं प्रक्रमोऽन्वय-व्यतिरे-काभ्याम्, नच तदत्र प्रदर्श्यते, इत्याशङ्क्याह—**साधनकलापाभाव इति** ॥ ननु साधनकलापाभावेऽपि ज्ञानसाधन-विचाराद्यनुष्ठाने निर्विचिकित्सबोधानुत्पत्तिः कथमित्याशङ्क्याह—**शूद्रयागवदिति** ॥ "तस्माद्वर्णितवस्तुकलापानन्तर्यमि"-त्युपसंहारो न युक्तः; आनन्तर्यस्यासिद्धत्वात्, नहि व्यतिरेकमात्रेणान्वयं विना कारणत्वसिद्धिरित्याशङ्क्याह—**व्यतिरेकनियमादेवेति** ॥

**न बुद्धिसमारूढाः** इति वदतोऽयमभिप्रायः—ब्रह्मधर्मत्वे हि कथञ्चिद् धीस्था भवेयुः, ते त्वन्तःकरणधर्माः।

### पञ्चपादिकाविवरणम्

नहि पूर्वापरवाक्यपरामर्शप्रज्ञाविकलस्त्वमिव सूत्रकारः तथाहि—श्रौतं विचारविधिं सूत्रयितुं प्रतिपद्यमानो विधिप्रयुक्तमधिकार्यनुबन्धमीक्षमाणः स्वप्रकरणपठितमन्वय-व्यतिरेकप्रमाणगम्यं चाधिकारिविशेषणं प्रतिपद्य अथशब्देन किमिति न सूत्रयेत् ? किंच साधनकलापस्याथशब्दोपादानत्वाभावेऽप्यवश्यं ब्रह्मणि प्रवृत्त्यङ्गता तावद् वक्तव्या; रागाद्याक्षिप्तस्य तत्र प्रवृत्त्यनुपपत्तेः, अवश्यापेक्षणीयत्वे च तदेवाधिकारिविशेषणं वक्तव्यम्। नच धर्मजिज्ञासा दृष्टद्वारेण वा शास्त्रीयतया वाऽधिकारिविशेषणतामनुगच्छति; प्रमाणाभावात्। अत एव न बुद्धिस्थाऽपि सा, अथशब्देन च नोपादानमर्हति; व्यवहिताच्च बुद्धिस्थात् स्ववाक्यगतमेव संनिहिततरं बुद्धिस्थं च साधनचतुष्टयमुपादानमर्हति। तस्माद् यत्किंचिदेतदिति ॥

### तत्त्वदीपनम्

अयुक्तत्वं दर्शयितुं सूत्रकारस्यानुसन्धानकौशलमाह—**तर्हीति** विचारविधिसूत्रणसमये कथं तेषां बुद्धिस्थत्वम् ? तत्राह—**तथाहीति**। निरधिकारस्य विचारविधेः प्रवर्तकत्वाभावादधिकार्यनुबन्धस्तावत् प्रतिपाद्यत इत्यर्थः ॥ तदानन्तर्यमथशब्दार्थ इत्युक्तम्, तत्र वृत्तानुवादपुरःसरं भास्करोक्तां शङ्कां निरस्यति—**तदेवमित्यादिना** ॥ **तत्** तत्र; अतीते ग्रन्थे। **एवम्** उक्तेन प्रकारेण। कल्पने हेतुमाह—**अनभिज्ञ इति** ॥ अनभिज्ञत्वमुपपादयति—**शास्त्रार्थेति** ॥ जल्पनमेवाह—**विचारकर्तव्यतामिति** ॥ **न बुद्धिसमारूढा इति**; अत्र प्रमाणाभावादिति द्रष्टव्यम्। शास्त्रीयविधिप्रतिपत्तिसमये तदधिकारनिमित्तस्यापि बुद्धिस्थत्वज्ञानादिदं चोद्यमित्याह—**तथाहीति** ॥ तत्र सर्वेषामधिकारित्वाभावादधिकारिविशेषणमाकाङ्क्षमाणो विधिः प्रकरणपर्यालोचनयाऽन्वय-व्यतिरेकालोचनया च साधनचतुष्टयमधिकारिविशेषणत्वेनाधिगम्य तत्सूचितवानिति न किंचनात्रावद्यमित्याह—**स्वप्रकरणेति** ॥ किंच धर्मविचारस्याथशब्दोपात्तत्वं वदतेदं विचारणीयम् ? किं साधनकलापस्य प्रवृत्त्यङ्गत्वमिष्यते ? उत नेतीति ? तत्रान्त्यं प्रत्याह—**किंचेति** ॥ आद्येऽस्मदभिमतसिद्धिरित्याह—**अवश्येति**। शास्त्रीयाधिकारिविशेषणं नास्तीत्याशङ्कायां फलपर्यन्तप्रवृत्त्यनुपपत्तौ तदुपपादनार्थमथशब्देनाधिकारिविशेषणज्ञापनमुचितमित्यर्थः। स्वमतं प्रसाध्य परमतं निरस्यति—**नचेति**। अन्वयव्यतिरेकसिद्धस्य शास्त्रीयस्य चाधिकारिविशेषणत्वं दृश्यते। धर्मजिज्ञासायाश्च विचाराधिकारिविशेषणत्वे न दर्शनशास्त्रे स्त इत्यर्थः। धर्मविचारस्य बुद्धिस्थत्वमुक्तं निरस्यति—**अत एवेति**। प्रमाणाभावोऽत्तः शब्दार्थः। **न बुद्धिस्थाऽपीति**। अधिकारिविशेषणत्वेन बुद्धिस्थेत्यर्थः। बुद्धिस्थत्वमङ्गीकृत्य दूषणमाह—**व्यवहितादिति** ॥

### ऋजुविवरणम्

नच ते प्रकृताः, नच तेषां वाचकशब्दोऽस्ति, इति भवतु पूर्वापरानुसन्धानप्रज्ञा; तथाऽपि कथमेषां सूत्रितत्वं वक्तुं शक्यते ? बुद्धिस्थताहेत्वभावादित्याशङ्क्याह--**तथाहि श्रौतमिति** ॥ **श्रौतं विचारविधिमित्य**धिकार्यनुबन्धधीस्थतायां हेतुः। **स्वप्रकरणमित्या**दिप्रापकप्रमाणोपन्यासः। ननु एषामधिकारिविशेषणत्वं वक्तुं न शक्यते; विचारात् प्राक् तेषामभावात्; भवतु वा कथंचिदुपाध्यायादिवचनतस्सिद्धिः, तथाऽपि नाधिकारिविशेषणत्वसंभवः; तेषामनवस्थितत्वात्। निरतिशया वा तेऽधिकारिविशेषणं स्युः ? सातिशया वा ? न तावन्निरतिशयाः, विचारसाध्यत्वात्; नापि सातिशयाः, सर्वेषां कारणधर्मासंभवात् सर्वेषामधिकारः स्यात्; अतो नैतेऽधिकारिविशेषणत्वेन सूत्रिता इति वक्तुं शक्यत इत्याशङ्क्याह— **किञ्च साधनकलापस्येति**। अयमभिप्रायः—न सातिशय-निरतिशयविकल्पेन सूत्रितत्वनिराकरणम्; स्वपक्षेऽपि तुल्यत्वादिति। ननु अवश्यापेक्षणीयत्वेऽपि नाधिकारिविशेषणत्वम्; अधिकारिविशेषणान्तरसद्भावात्, तेषान्त्वङ्गतयाऽपि गतिसंभवाद् मिलितस्य वाऽधिकारिविशेषणत्वमित्याशङ्क्याह—**नच धर्मजिज्ञासेति** ॥

अथवा, "किञ्चे"त्यनेन बलाद् विशेषणत्वमापादितम्, "नच धर्मजिज्ञासे"त्यनेन नित्यानित्यविवेकादिवैषम्यमुक्तम्, तदुक्तहेतुभिरेव तस्याधिकारिविशेषणत्वनिराकरणमिति दर्शयितुं "स्यादेतदि"त्यादिटीकाग्रन्थेन नित्यानित्यवस्तुविवेकाभावे विरागाभावः, तदभावे न शमादिपरिग्रहः, नापि मुमुक्षुत्वम्; अतो न साधनचतुष्टयस्य ब्रह्मविचारे प्रवृत्तिहेतुत्वमित्याक्षिप्य, तस्य हेतुत्वप्रदर्शनार्थोऽतःशब्द इत्युक्तम्, अतः परस्परव्याहतिः, अतो "न तस्य ब्रह्मजिज्ञासाहेतुत्व"मित्युक्त्वा "तस्य हेतुत्वप्रदर्शनार्थः"इत्युक्तत्वात्, न हि हेतुत्वाभावे तत्प्रदर्शनमुपपद्यते, अथशब्दव्याख्यान-

### पञ्चपादिका

**अतः शब्दो हेत्वर्थ इति ॥**

### पञ्चपादिकाविवरणम्

**अतःशब्दो हेत्वर्थः**। ननु अथशब्द एवानन्तर्याभिधानमुखेन हेतुतया पूर्वनिवृत्तमेवार्थं गमयतीत्युक्तम्। ननु हेतुत्वमार्थिकम्, तन्नाभिधेयमथशब्दस्य ? सत्यम्; आर्थिकार्थे तात्पर्यात्, आनन्तर्यमात्रे वैफल्यात्, 'यत्परः शब्दः स वाक्यप्रयोगे शब्दार्थः' इत्यथशब्देनैव हेतुत्वसिद्धेर्नातश्शब्दोऽपेक्ष्यत इति। अतःशब्दाभावे माङ्गल्यादीनामन्यतमार्थताऽथशब्दस्य प्रसज्यत इति चेत् ? न; निराकृतत्वात्। धर्ममीमांसायां सत्यप्यथशब्देऽतश्शब्देनाऽपि तस्य हेतुत्वमुक्तमिति चेत् ? अन्धगोलाङ्गूलन्यायैकशरणोऽयं सर्वसंकरवादी, नह्यन्यत्र विद्यमानः पुनरुक्तिदोषोऽस्माभिरप्यनुसरणीयः। तस्मादतःशब्दवैयर्थ्यमिति प्राप्तम् ॥

अत्राथशब्दपरिगृहीतस्यैव हेतुत्वस्य हेत्वन्तरेणापवादाशङ्कायां तन्निराकरणं पुनरथशब्दोक्तहेतुत्वाभिधायिनाऽतःशब्देन क्रियत इति दर्शितम्—"यस्माद्वेद एवाग्निहोत्रादीनामि"त्यादिभाष्येण ॥ तत्र तामाशङ्कां दर्शयति—

### तत्त्वदीपनम्

पुष्कलकारणानन्तर्यस्याथशब्दार्थत्वादतःशब्दो व्यर्थ इति शङ्कते—**नन्वथेति** ॥ अथशब्दस्यानन्तर्यमात्राभिधायित्वादतःशब्दस्य हेत्वभिधायित्वान्न पौनरुक्त्यमिति शङ्कते—**ननु हेतुत्वमिति** ॥ अनभिधेयत्वमङ्गीकरोति—**सत्यमिति** ॥ तर्हि न पौनरुक्त्यम्, तत्राह—**आर्थिकेति** ॥ अभिधेये तात्पर्याभावे हेतुमाह—**आनन्तर्येति**। जिज्ञासापुष्कलकारणास्तित्वप्रतिपत्तौ प्रवृत्तिसंभवादन्यथाऽसंभवादिति तत्र तात्पर्यमित्यर्थः। आर्थिकार्थतात्पर्येऽपि तस्यानभिधेयत्वान्न पौनरुक्त्यमित्यत्राह—**यत्पर इति**। तात्पर्यगम्यस्य प्रमेयत्वात् तस्य चैकत्वात् पौनरुक्त्यमित्यर्थः ॥ आनन्तर्याभिधानमुखेन प्रतिपादितहेतुत्वस्फुटीकरणार्थोऽतःशब्द इत्येकदेशी शङ्कते—**अतःशब्देति** ॥ मङ्गलार्थशङ्काया एवात्रानवतारान्न तन्निरासायाऽतःशब्दोऽर्थ्यंत इत्याह—**न निराकृतत्वादिति** ॥ "मङ्गलस्य च वाक्यार्थे समन्वयाभावादि"त्यत्र (भाष्ये) निरस्तत्वादित्यर्थः। अथशब्देनैव हेतुत्वसिद्धेरतःशब्दवैयर्थ्यमित्युक्ते दृष्टान्तमाश्रित्य शङ्कते—**धर्ममीमांसायामिति**। आनन्तर्याभिधानमुखेन स्वाध्यायाध्ययनस्य धर्मजिज्ञासाहेतुत्वमथशब्देनोक्तं यद्यपि; तथाऽप्यतःशब्दो यथोपात्तस्तद्वदत्रापीत्यर्थः। दृष्टन्तासंमत्योत्तरमाह—**अन्धेति**। अन्धाय गोर्लाङ्गूलम्, तत्संबन्धी न्यायः, तथा स एव शरणं यस्य, स तथोक्तः। अन्धः पुमान् यथाऽन्ध[:दुष्ट]गोलाङ्गूलमाश्रित्य गच्छन्न स्वास्थ्यं लभते, तद्वत् पुनरुक्तिदोषदूषितसूत्रावष्टम्भेन समादधानस्यापि तव न क्षेमप्राप्तिरित्यर्थः ॥ एवमेकदेशिमतं निराकृत्य वैयर्थ्याशङ्कां पूर्वोक्तामुपसंहरति—**तस्मादिति** ॥

सर्वज्ञवादरायणाचार्यनिर्दिष्टत्वादतःशब्दस्य वैयर्थ्यानुपपत्तेः स्वच्छान्तःकरणैस्तदर्थो निरूपणीयः। तत्र कोऽसावर्थः ? इति वीक्षायामपवादशङ्कानिरासद्वारा हेतुत्वदृढीकरणमर्थः, तस्मात्सूत्रकृद्वचोऽनवद्यमिति समाधत्ते—**अत्रेत्यादिना** ॥ अत्र सूत्रे शास्त्रान्वयव्यतिरेकाभ्यां साधनचतुष्टयस्य हेतुतायाः समधिगतत्वात् कथमपवादशङ्का ? इत्याशङ्कायामाह—**तत्र तामिति** ॥ ननु कृतकं परिच्छिन्नं च किंचिन्नित्यं दृष्टम्—यथा ध्वंस-परमाण्वादि, किंचिच्चा-

### ऋजुविवरणम्

विरोधश्चेत्याक्षिपति—**नन्वथशब्द एवेति** ॥ ननु हेतुत्वं वाच्यं न भवत्यथशब्दस्य, तेन हेतुत्वसिद्ध्यभावाद् नातःशब्दवैयर्थ्यमिति चोदयति—**ननु हेतुत्वमिति** ॥ कथं वाच्यार्थं विहायार्थिकार्थे तात्पर्यम् ? इत्याशङ्क्याह—**आनन्तर्यमात्र इति** ॥ ननु हेतुत्वे तात्पर्येऽपि न तस्य शब्देन सिद्धिः; शब्दवाच्यत्वाभावात्, शब्देन विना तात्पर्यमात्रस्यासाधकत्वात्, तेनातःशब्दोऽपेक्ष्यत इत्याशङ्क्याह—**यत्परः शब्द इति** ॥ **अतःशब्दाभाव इति**। अयमर्थः—सिद्धे ह्यानन्तर्यार्थत्वे वैफल्यादिना हेतुत्वस्वीकारादतःशब्दवैयर्थ्यम्, तदेवानन्तर्यमतःशब्दनिबन्धनम्, अतःशब्दो हि हेतुत्ववाचकः पूर्ववृत्तमपेक्षते; तेन विना हेतुत्वाभावात्, अत आनन्तर्यार्थतामाक्षिपति। तेनातःशब्दबोध्यहेतुत्वनिबन्धनमानन्तर्यम्, नातःशब्दवैयर्थ्यापादकम्; "न स्वनिमित्तं बाधते" इति न्यायात्, अतो हेतुत्वयोग्यतामात्रमतःशब्दार्थः, इति नातःशब्दवैयर्थ्यमिति ॥ **न निराकृतत्वादिति**। अयं भावः—न माङ्गल्याद्यर्थतानिरासोऽतःशब्दनिबन्धनः; अन्वयाद्यभावेन पूर्वमेव निरस्तत्वादिति।

एवमाक्षिप्य समाधत्ते—**अत्राथशब्दपरिगृहीतस्येति** ॥ ननु तेनापवादशङ्का प्रदर्श्यते; नहि कृतकत्वादेर-

### पञ्चपादिका

**स्यादेतत्—कृतकत्व-परिच्छेदौ नैकान्ततः क्षयिष्णुतां गमयतः; परमाणुषु पाकजलोहितस्य कृतकस्य, तेषां च परिच्छिन्नानां नित्यत्वाभ्युपगमात्, वेदेऽपि "अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति" "अपाम सोमममृता अभूमे"त्यादिपुण्यफलस्याक्षतिश्रवणात्, अतो विषयभोगाद् न नियमेन विरागो विवेकिनामपि । नापि कूटस्थनित्यवस्त्ववष्टम्भेन मुमुक्षुत्वम् । ततश्च न शम-दमादिपरिग्रहः, यतो न तादात्म्यं भोक्तुः सम्भाव्यते । नापि तदवाप्तिः; दुःखाभावेऽपि सुखभोगाभावान्नानवद्यः पुरुषार्थः । अतोऽजीर्णभयान्नाहारपरित्यागः, भिक्षुभयान्न स्थाल्या अनधिश्रयणं दोषेषु प्रतिविधातव्यमिति न्यायः । अतो न तस्य ब्रह्मजिज्ञासायां हेतुत्वमित्यतस्तस्य हेतुत्वप्रदर्शनार्थोऽतःशब्दः ।**

### पञ्चपादिकाविवरणम्

**स्यादेतत् कृतकत्व-परिच्छेदावित्यादिना** । यदा तु कृतकत्वाद्यनुमानमनैकान्तिकम्, तदा कर्मफलस्यापि कृतकस्यानित्यत्वनियमाभावान्नित्यपुरुषार्थकामिनस्तत्रापि प्रवृत्तिः स्यात् । अतो नित्यानित्यवस्तुविवेको न ब्रह्मण्येव नियमेन प्रवृत्तिहेतुरित्यर्थः । ननु कर्मफलस्यैकान्ततोऽनित्यताऽभावेऽपि नित्यत्वे न प्रमाणमिति ? तत्राह—**वेदेऽप्यक्षय्यं ह वै चातुर्मास्ययाजिन इति** ।। ननु एवमपि ब्रह्मणि प्रवृत्तेः किमायातमिति ? तत्राह—**अतो विषयभोगान्न नियमेन विराग इति** ।। ततो न ब्रह्मणि प्रवर्तेत इत्यर्थः । विरज्यन् वा चातुर्मास्यादिव्यतिरिक्तविषयाद् विरक्तस्तत्रैव प्रवर्तेत इति । मा भूद् ब्रह्मण्येव प्रवृत्तिनियमः; तत्रापि ब्रह्मण्यपि विकल्पेन प्रवृत्तिः स्यादिति ? नेत्याह—**नापि कूटस्थनित्यवस्त्ववष्टम्भेनेति** ।। ननु विरुद्धपदार्थतादात्म्याभावेऽपि संयोगलक्षणा ब्रह्मप्राप्तिः स्यादिति ? नेत्याह—**नापि तदवाप्तिरिति** ।। ननु ब्रह्मानन्दोपभोगो विद्यते ? न; स्वाश्रयसुखोपलब्धेरुपभोगत्वात्, नच ब्रह्मधर्मस्य सुखस्य जीवाश्रयतयोपलब्धिः संभवति । ननु सुखापरोक्ष्यमात्रमुपभोगः, न स्वाश्रयसुखापरोक्ष्यम्, विशेषणायोगात्, तथाऽपि भेदेनावस्थाने जीव-ब्रह्मणोर्लोके

### तत्त्वदीपनम्

नित्यं दृष्टम्—यथा घटादि, कर्मफलं तु कं पक्षमवलम्बतामिति ? तत्राह—**यदा त्विति** । कर्मफलस्य नित्यत्वसंभावनया तत्रापि प्रवृत्तेर्न ब्रह्मण्येव प्रवृत्तिरित्यर्थः । नित्यत्वे प्रमाणाभावान्न कर्मफले प्रवृत्तिरिति शङ्कते—**नन्विति** ।। प्रमाणाभावोऽसिद्ध इत्यह—**तत्राहेति** ।। ग्रामार्थिनः सेवायां सांग्रहण्यां च प्रवृत्तिवद् नित्यपुरुषार्थकामिनो ब्रह्मजिज्ञासायामपि प्रवृत्तिः स्यादिति शङ्कते—**नन्वेवमिति** ।। ब्रह्मव्यतिरिक्तस्यानित्यत्वज्ञानमन्तरेण सकलसुखविरोधिब्रह्मजिज्ञासायां न प्रवृत्तिरित्याह—**तत्राहेति** ।। अपेक्षितं पूरयति—**तत इति** ।। वैषयिकसुखेऽवद्यत्वदर्शनात् ततो विरागो युक्त इत्याशङ्क्याह—**विरज्यन् वेति** ।। चातुर्मास्यवदेव ब्रह्मज्ञानस्यापि नित्यफलत्वात् कदाचित् तत्साधने प्रवृत्तिर्युक्तेति शङ्कते—**मा भूदिति** ।। प्रत्यग्ब्रह्मैक्यस्यासंभावितत्वान्न तदर्थिनां श्रवणादौ प्रवृत्तिरित्याह—**नेत्याहेति** ।। न ब्रह्मैक्यं फलम्, किं तु तत्संयोग इति शङ्कते—**ननु विरुद्धेति** ।। विमुक्तौ स्रक्चन्दनादिसुखोपायाभावान्न तस्याः पुरुषार्थत्वमिति दूषयति—**नेत्याहेति** ।। मुक्तौ वैषयिकसुखाभावेऽपि नित्यसुखसंभवात्पुमर्थत्वं युक्तमिति शङ्कते—**ननु ब्रह्मेति** ।। सुखस्य नित्यत्वमङ्गीकृत्य तस्य पुमर्थत्वं दूषयति—**न स्वाश्रयेति** ।। ततः किमिति ? अत आह—**नचेति** । प्रत्यग्ब्रह्मणोर्भेदाद् ब्रह्मसुखस्य जीवाश्रयत्वानुपपत्तिरित्यर्थः । सुखापरोक्ष्ये स्वाश्रयसुखापरोक्ष्याभावेनापुमर्थत्वादर्शनान्न तस्य प्रयोजकत्वमिति शङ्कते—**ननु सुखेति** ।।**विशेषणायोगादिति** । अयमर्थः—व्यवच्छेदकं विशेषणं भवति, व्यवच्छेदकत्वं चातिप्रसक्तिशङ्कायाम्, नच

### ऋजुविवरणम्

नैकान्तिकत्वं नित्यानित्यविवेकादेः प्रवृत्तिहेतुत्वविरोधि, येनापवादः स्यात्, इत्याशङ्क्याभिप्रायमाह—**यदा तु कृतकत्वादीति** ।। **न नित्यत्वे प्रमाणमिति** । नित्यत्वे सिद्धे विरक्तस्यानित्यपुरुषार्थकर्मणीतरस्मिन् भवेत् प्रवृत्तिः, तदभावे न भवेत् प्रवृत्तिः ; तथा सति नापवाद इति चोद्याभिप्रायः । ननु कर्मफलनित्यत्वेऽपि ब्रह्मणि प्रवृत्त्यभावः कथमिति चोदिते, नियमेन विरागो नास्तीति परिहारो व्यधिकरण इत्याशङ्क्य व्याचष्टे—**ततो न ब्रह्मणीति** ।। विषयविरागो हि ब्रह्मणि प्रवृत्तिहेतुः ; तदभावादिति ।। कथं वैराग्याभावः ? दोषदर्शनस्य वैराग्यहेतोर्विद्यमानत्वात्, अतो वैराग्यमुपपद्यत एवेत्याशङ्क्याह—**विरज्यन् वेति** ।। "नापि तदवाप्तिरि"ति ग्रन्थे सुखभोगाभावाद् ब्रह्मप्राप्तेरपुरुषार्थत्वमित्युक्तम्, तदाक्षिपति—**ननु ब्रह्मानन्दोपभोग इति** ।। ननु ब्रह्मानन्दस्य जीवाश्रयत्वेनोपलब्धिरस्तु, इत्याशङ्क्याह—**नच ब्रह्मधर्मस्येति** ।। **विशेषणायोगादिति** । अयमर्थः—विशेषणम् व्यवच्छेदकं सत्यामतिप्रसङ्गाशङ्कायाम्, अत्र तु सुखापरोक्ष्ये विद्यमानेऽपि

### पञ्चपादिका

**कथम् ? यस्माद्वेद एवाग्निहोत्रादीनां श्रेयःसाधनानामनित्यफलतां दर्शयति—"तद्यथेह कर्मचितो लोकः क्षीयते, एवमेवामुत्र पुण्यचितो लोकः क्षीयते" इत्यादिना ॥ ननु पुण्यस्याप्यक्षय्यफलत्वं वेद एवाहेत्युक्तम् ?**

### पञ्चपादिकाविवरणम्

पुरुषान्तरसुखस्य पुरुषान्तरं प्रत्यापरोक्ष्यादर्शनान्नोपभोगः । ननु आत्मैव सुखसंवित्स्वभावः, तद्रूपावस्थानं च मोक्ष इति ? न; योग्यानुपलब्धिविरोधात् । नच देवाद्यानन्दपरित्यागेन निरानन्दात्मनाऽवस्थानं मोक्षं कश्चित् प्रार्थयते । तस्मान्न साधनचतुष्टयसंपन्नस्य ब्रह्मणि प्रवृत्तिः, किन्तु कर्मफल इत्युपसंहरति—अतोऽजीर्णभयादित्यादिना ॥

तत्रोक्ताशङ्कानिराकरणहेतुवचनं भाष्यमवतारयितु'मतः'शब्देन साधनचतुष्टयस्य हेतुत्वाभिधायिना कथमाशङ्कानिराकरणहेतुभूतं प्रमाणं सूचितमिति पृच्छति—**कथमिति** ॥ तदाह—**यस्माद्वेद एवाग्निहोत्रादीनामिति** । ब्रह्मव्यतिरिक्तपुरुषार्थजातस्यानित्यतां दर्शयतीत्यर्थः । ननु "तद्यथेह कर्मचितो लोकः" इति सामान्यश्रुतिश्चातुर्मास्यादिविशेषादन्यत्रैव वर्ततामिति चोदयति—**ननु पुण्यस्येति** ॥

### तत्त्वदीपनम्

प्रकृते सा समस्तीति स विशेषणं संभवतीति । तत्र वक्तव्यम्— किं ब्रह्मसुखापरोक्ष्यं भोगः ? उत स्वरूपसुखापरोक्ष्यम् ? नाद्य इत्याह—**तथापीति** ॥ द्वितीयमुत्थापयति—**नन्वात्मेति** । आत्मा, सुखस्वरूपः, परमप्रेमास्पदत्वात्, व्यतिरेकेण दुःखवदित्यनुमानात् सुखस्वरूपत्वसिद्धिरित्यर्थः । अनुपलब्धिविरोधान्नैतदित्याह—**न योग्येति** ॥ मुक्तौ सुखभोगाभावेऽप्यात्यन्तिकदुःखोच्छित्तेः संभवात् पुमर्थत्वमिति ? तत्राह—**नचेति** ॥ वैषयिकसुखे दुःखसंभिन्नत्वात् कथं तत्र प्रवृत्तिरिति शङ्कामुपसंहारव्याजेन निरस्यति—**तस्मादिति** । सकलसुखरहितावस्थाप्राप्तेर्वरं दुःखसंभिन्नस्यापि सुखस्य प्राप्तिः, तथा लोके दर्शनादित्यर्थः ॥

अतःशब्दस्य हेतौ प्रसिद्धत्वात् "कथमि"ति प्रश्नानवसरमाशङ्क्य, अभिप्रायं दर्शयति—**तत्रोक्तेति** ॥ अग्निहोत्रादीनामनित्यफलत्वे ब्रह्मणोऽपि तत्फलत्वादनित्यत्वमित्याशङ्क्याह—**ब्रह्मेति** । ब्रह्मणः कर्मफलत्वमसिद्धम्; कर्मणां विविदिषाफलत्वादित्यभिसन्धिः । "अक्षय्यं ह वै" इत्यादिवाक्यात् कर्मफलस्य नित्यत्ववत् "तद्यथे"ति वाक्यादनित्यत्वस्यापि प्रतिपत्तेर्न नित्यपुरुषार्थकामिनः कर्मफले प्रवृत्तिरिति चोद्यस्याभासत्वमित्याशङ्क्य तात्पर्यमाह—**ननु तद्यथेति** । "न हिंस्यात् सर्वा भूतानि" "अग्नीषोमीयं पशुमालभेते"त्यनयोः सामान्य-विशेषविषयतया व्यवस्थितिवद् अत्रापि व्यवस्थोपपत्तेः कर्मफले प्रवृत्तिरुचितेत्यर्थः ॥ नित्यत्वप्रतिपादकवाक्यस्थस्यार्थवादस्यानुमानविरोधान्न स्वार्थप्रतिपादकत्वम्, ततश्च न सामान्यादिविषयत्वमित्युक्तम्—"न तस्ये"त्यत्र, तदनुपपन्नम् ; वेदवचनविरोधेऽनुमानस्याभासत्वात्, अविद्यमानार्थबा-

### ऋजुविवरणम्

स्वाश्रयविशेषणाभावेनापुरुषार्थत्वोपलब्धौ स्वाश्रयत्वविशेषणमुपादीयते, न तथा सुखापरोक्ष्यमपुरुषार्थत्वेऽपि दृष्टम्, अतो न विशेषणमिति ॥ **योग्यानुपलब्धीति** । सुखसंविद्रूपत्वमात्मनो न संभवति; योग्यानुपलब्ध्या तदभावनिश्चयादिति भावः ॥

"हेतुत्वप्रदर्शनार्थोऽतःशब्दः" इत्युक्त्वा "कथमि"त्युक्तत्वात्, कथं हेतुत्वप्रदर्शनमनेन क्रियते ? इत्युक्तमिव प्रतिभाति तत्र किं साधनचतुष्टयस्य कथं हेतुत्वम्-इत्याक्षेपः क्रियते ? किं वातःशब्दस्य कथं हेत्वर्थता-इति ? प्रथमपक्षे पौनरुक्त्यम्, पूर्वमेवाक्षेपस्य कृतत्वात् ; न चाक्षेपान्तरम्, पूर्वस्य परिहाराभावेन तस्यानवसरात्, आक्षेपान्तरबीजाभावाच्च । नापि तत्रैव प्रश्नः ; आक्षेपपरिहारेण परिहारात्, उत्तरादर्शनाच्च । नापि द्वितीयः कल्पः ; हेत्वर्थतायाः प्रसिद्धत्वात्, उत्तराभावाच्च । अतः पूर्वशङ्कापरिहारावसरे तामपरिहृत्य तद्भाष्यं चाव्याख्याय "कथमि"ति न युक्तं वक्तुमित्याशङ्क्याह—**तत्रोक्ताशङ्केति** ॥ ननु—अग्निहोत्रादीनामनित्यफलत्वमात्रेण न ब्रह्मणि प्रवृत्तिः ; पुरुषार्थान्तरे प्रवृत्तिसंभवात्, अतोऽग्निहोत्राद्यनित्यफलत्वे यदुदाहृतं प्रमाणम्, तेन साधनचतुष्टयस्य हेतुत्वप्रदर्शनाभावाद् अनुदाहरणीयमेतदित्याशङ्क्य व्याचष्टे—**ब्रह्मव्यतिरिक्तेति** ॥ "ननु पुण्यस्ये"ति चोद्यं न नोदेति; श्रुतिविरोधे नित्यत्वग्राहकत्वायोगात्, ग्राहकत्वे श्रुतिद्वयविरोधात् सन्देहः, सन्देहे च तत्र प्रवृत्त्यभावाद् ब्रह्मण्येव प्रवृत्तिसंभवादित्याशङ्क्यावतारयति—**ननु तद्यथेहेति** ॥ "न तस्ये"त्यनेनानुमानविरोधाद् नित्यत्वप्रतिपादकत्वं नास्तीत्युक्तम्, तदयुक्तम् ; अर्थवादस्याप्यतीन्द्रियेऽर्थेऽनुमानाविषये विरोधाभावेन नित्यत्वसाधकत्वसंभवात्, भिन्नविषयत्वाच्च न विरोधेनासामर्थ्यप्रतिपादनं सम-

### पञ्चपादिका

**न; तस्य वस्तुबलप्रवृत्तानुमानविरोधेऽर्थवादस्य नित्यत्वप्रतिपादनासामर्थ्यात्, परमाणूनां पाकजस्य च तद्गुणस्या नित्यत्वात् । अतो भवत्यनित्यत्वदर्शनं विषयभोगानां मुमुक्षुत्वे हेतुः ।**

### पञ्चपादिकाविवरणम्

तत्र तावच्चातुर्मास्यश्रुतिः सुकृतस्याक्षय्यत्वमाह, न तत्फलस्य; सत्यपि सुकृते फलस्यानुपभोगवत् क्षयोपपत्तेः । तत्र वाक्यस्य श्रुतार्थं परित्यज्य फलाक्षयविषयत्वकल्पना प्रमाणविरुद्धेत्याह—**न तस्य वस्तुबलप्रवृत्तेति** । व्याप्तिबलप्रवृत्तेत्यर्थः । अनुमानानुगृहीतश्रुतिविरोध इति योजयितव्यम् । "हिरण्यदा अमृतत्वं भजन्ते" इति श्रुतिर्वर्तमानापदेशाद् योग्यानुपलब्धिविरुद्धा भवति । 'भजिष्यन्त' इति कल्पना पूर्ववत्प्रमाणविरुद्धा, अनुमानानुगृहीतदेवसर्गप्रलयश्रुतिविरुद्धा । "अपाम सोममि"ति श्रुतिः "स य आत्मानमेव लोकमुपास्ते न हास्य कर्म क्षीयते" श्रुतिर्न फलस्य नित्यतां दर्शयति, वाक्यस्य फलविषयत्वकल्पना तु पूर्ववत् प्रमाणविरुद्धा; अविरोधापेक्षत्वात् कल्पनायाः ।

### तत्त्वदीपनम्

दत्वं चासिद्धमित्याशङ्क्य, वेदवचनस्यापि संदिग्धार्थत्वान्न बाधकत्वमित्याह—**तत्र तावदिति** ।। **तत्रेति**—"अक्षय्यम्" "हिरण्यदाः" "अपाम सोमम्" "स यः" इत्यादिवाक्यानां मध्य इत्यर्थः । किं सुकृतशब्दः कर्मपरः ? उत फलपरः ? तत्राद्ये न फलनित्यत्वसिद्धिरित्याशयेनोक्तम्—**सुकृतस्याक्षय्यत्वमाहेति** ।। द्वितीयं प्रत्याह—**न तत्फलस्येति** । सुकृतशब्दस्य कर्मणि रूढत्वादित्यर्थः सुकृतस्याक्षय्यत्वमनुपपद्यमानं फलनित्यत्वं कल्पयतीत्याशङ्क्याह—**सत्यपीति** । "कदाचित्सुकृतं कर्म कूटस्थमिह तिष्ठती"ति न्यायात् सत्यपि कर्मणि फलानुपभोगवत् तद्विनाशः किं न स्यादित्यर्थः । कर्मणां फलविनाश्यत्वात् फलोपभोगेऽपि सुकृतस्यावस्थानकल्पनमनुपपन्नम्, ततश्च फलमपि नित्यं कल्प्यत इत्याशङ्क्याह—**तत्र वाक्यस्येति** ।। "वस्तुबलप्रवृत्ते"त्यत्र किं तद् वस्तुबलमिति न ज्ञायते ? तत्राह—**व्याप्तीति** ।। किंच नित्यत्वानित्यत्वप्रतिपादकयोः श्रुत्योरनित्यत्वप्रतिपादिकाया अनुमानानुगृहीतत्वात् प्राबल्यमित्याशयेनाह—**अनुमानेति** ।। "हिरण्यदा अमृतत्वं भजन्ते" इत्यस्माद् वाक्यादमृतत्वं कर्मसाध्यं प्रतीयत इति चेत् ? तत्र वक्तव्यम्—किं यथाश्रुति श्रुत्यर्थः ? उतान्यथेति ? तत्राद्यस्तावदसमञ्जस इत्याह—**हिरण्यदा इति** ।। द्वितीयं प्रत्याह—**भजिष्यन्त इति** ।। "अपाम सोमममृता अभूमे"त्यत्रामृतत्वं कर्मसाध्यं श्रूयत इत्याशङ्क्य, किम्—अमृतभावो देवभावः ? उत ब्रह्मभावः ? नाद्य इत्याह—**अनुमानेति** ।। नापि द्वितीयः; "ब्रह्मैव सन् ब्रह्माप्येती"ति ब्रह्मभावस्य स्वतःसिद्धत्वप्रतिपत्तेरिति द्रष्टव्यम् ।। "न हास्य कर्म"शब्दः किं पुण्यपरः ? उत फलपरः इति विकल्प्यान्त्यं प्रत्याह—**स य इति** ।। कर्मशब्दस्य फलेऽप्रसिद्धेःकर्म क्षीयते इत्यर्थः । तथापि तत्परत्वं कल्प्यत इत्याशङ्क्याह—**वाक्यस्येति** ।। विरोधेऽपि कल्पनं किं न स्यादिति ? तत्राह—**अविरोधेति** ।। आद्ये न

### ऋजुविवरणम्

ञ्जसमित्याशङ्क्यैकविषयत्वं दर्शयितुं प्रकारान्तरं निराकरोति—**तत्र तावच्चातुर्मास्येति** । फलनित्यत्वाभावे ब्रह्मण्येव प्रवृत्तिर्भवेदिति भावः ।। ननु फलसाधनसुकृतनित्यत्वे तत्कार्यस्य कथं नित्यत्वाभावः ? साधने विद्यमाने सति तत्कार्यस्यानित्यत्वायोगादित्याशङ्क्याह—**सत्यपि सुकृत इति** ।। तर्ह्येकविषयत्वसिध्यर्थं फलाक्षयविषयत्वं कल्प्यत इत्याशङ्क्य, तन्निराकरणपरत्वेनावतारयति—**तत्र वाक्यस्येति** ।। "वस्तुबले"त्ययुक्तम्, अतीन्द्रियार्थेऽनुमानप्रवर्तकस्य वस्तुबलस्यैवाभावात्; नाप्यनुमानं वस्तुबलसापेक्षम्; त्रैरूप्यमात्रापेक्षत्वात्, किञ्च तद् वस्तुबलमिति न ज्ञायते, तदर्थं व्याचष्टे—**व्याप्तिबलेति** ।। ननु अनुमानात् श्रुतिर्बलीयसी, तेन कथमनुमानविरोधेनासामर्थ्यमुक्तम् ? इत्याशङ्क्य व्याचष्टे—**अनुमानानुगृहीतेति** ।। अथवा, "अनुमानविरोध"इति न युक्तम्; श्रुतिविरोधस्योद्भावितत्वात्; नचायं श्रुतिविरोध एवात्र विवक्षितः; सामान्यविषयत्वेन दौर्बल्यादित्याशङ्क्याह—**अनुमानानुगृहीतेति** ।। ननु फलविषयत्वकल्पनायां श्रुतिविरोधो भवेत्, ननु तत् कल्प्यते; "अमृतत्वं भजन्ते" इति श्रुतत्वादित्याशङ्क्याह—**हिरण्यदा अमृतत्वमिति** ।। 'भजिष्यन्त' इति कथ्यते इति चेत् ? तत्राह—**भजिष्यन्त इति** ।। ननु "अपाम सोमममृता अभूमे"त्यमृतत्वं श्रूयते, नच योग्यानुपलब्धिविरोधः; योग्यत्वाभावादेवेत्याशङ्क्याह—**अनुमानानुगृहीतेति** ।। ननु श्रुतार्थपरत्वानुपपत्तिरर्थान्तरपरत्वकल्पनाहेतुः, अस्ति चानपपत्तिरत्र; अतः कथं विरोधेनार्थान्तरपरत्वकल्पनाविषेधः ? इत्याशङ्क्याह—**अविरोधापेक्षत्वादिति** ।। ननु विरोधे-

**पञ्चपादिका**

**यत्पुनर्मुमुक्षुत्वाभावे निमित्तमुक्तम्, तत्राह—तथा ब्रह्मज्ञानादपि परं पुरुषार्थं दर्शयति—"ब्रह्मविदाप्नोति परमि"त्यादि ॥**

**पञ्चपादिकाविवरणम्**

किञ्च "यदि ह वा अप्यनेवंविद् महत्पुण्यं कर्म करोति, तद्धास्यान्ततः क्षीयते" इत्युपक्रम्य "स य आत्मानमेव लोकमुपास्ते न हास्य कर्म क्षीयते" इति वचनादात्मोपासनाकर्मण एवापरोक्षानुभवद्वारेणाक्षयाविद्यानिवृत्तिफलत्वात्—"न कर्म क्षीयते" इत्युपासनाकर्मप्रशंसामात्रमेतदुपादीयते। अनेवंविदः कर्मक्षयस्य श्रवणादेवंविदाऽनुष्ठितस्याग्निहोत्रादेरेव मोक्षफलतयाऽक्षयो विधीयत इति चेत् ? न; लिङ्गस्य "नान्यः पन्था विद्यते" "क्षीयन्ते चास्य कर्माणी"त्यादिनिषेधश्रुतिविरोधात्। तस्माद् ब्रह्मव्यतिरिक्तपुरुषार्थेऽनित्यतया वैराग्यमुपपन्नमिति ॥ ननु दोषस्य तुल्यत्वान्न ब्रह्मण्यपि प्रवृत्तिकारणमेतदित्युक्तम् ? तत्राह—**यत्पुनर्मुमुक्षुत्वाभाव इति** ॥

विरुद्धपदार्थतादात्म्यमनुपपन्नम्, इत्यनुमानं "ब्रह्म वेद ब्रह्मैव भवती" त्यादिश्रुतिविरुद्धम्; किन्तु बिम्बप्रतिबिम्बयोरिव तादात्म्यमुक्तम्। नच—सुखानुभवाभावादपुरुषार्थ इति—युक्तम्; ब्रह्मानन्दानुभवात्।

**तत्त्वदीपनम्**

फलनित्यत्वसिद्धिरिति द्रष्टव्यम्। उपासतिपरत्वादपि "न हास्ये"त्यादेर्न कर्मफलनित्यत्वप्रतिपादकत्वमित्याह—**किंचेति** ॥ **अनेवंविदिति**। ब्रह्म आत्मत्वेन यो न वेत्ति असावनेवंवित्। **महदिति**। अश्वमेधादिकं कर्म। **अन्तत इति**। फलोपभोगानन्तरमित्यर्थः। तत्रैवाऽक्षरयोजना—"न कर्म क्षीयते" इत्येतदुपासनाकर्मप्रशंसामात्रमुपादीयत इति तावत् संबन्धः। तत्र हेतुमाह—**यदि ह वेति** ॥ ज्योतिष्टोमादेरुपासनाया अविशेषाद् "न कर्म क्षीयते" इति कथमुक्तम् ? इत्याशङ्क्य, अस्ति फलतो विशेष इत्याह—**आत्मोपासनेति**। उपासनातः प्रत्यगेकाग्रचित्तस्योपदिष्टतत्त्वमस्यादिवाक्यात् साक्षात्कारजननादविद्यानिवृत्तेर्जननमित्यर्थः। फलत्वात् ज्ञानफलमाक्षिपतीति शङ्कां निरस्यति—**अक्षयेति**। प्रध्वंसत्वाद् न क्षय इत्यर्थः। "न हास्य कर्म क्षीयते" इत्येतन्नोपासनास्तुतिपरम्, तद्बोधकशब्दस्याभावात्, ततश्चाग्निहोत्रादेर्ज्ञानसमुच्चितस्य फलनित्यताप्रतिपादकमेतत् स्यादिति शङ्कते—**अनेवंविद इति**। एवंविदाऽनुष्ठितस्याग्निहोत्रादेरेवाक्षयो विधियत इति प्रथमं संवन्धः। ननु अत्रापि प्रामाण्याभावस्तुल्य इत्यत्राह—**नैवंविद इति**। ज्ञानाभावेऽश्वमेधादिकमक्षयं निर्दिश्य ज्ञाने कर्म न क्षीयत इत्युक्तेऽश्वमेधादेर्बुद्धिस्थत्वात् तस्यैव निर्देश इत्यर्थः। यद्यप्यश्वमेधादेर्बुद्धिस्थत्वम्; तथाऽपि मुक्तिफलतया तन्नित्यत्वप्रतिपादनमयुक्तम्; श्रुत्यन्तरविरोधादित्याह—**न लिङ्गस्येति** ॥ कर्मफलनित्यत्वे प्रमाणाभावसमर्थनफलमाह—**तस्मादिति** ॥ नित्यपुरुषार्थकामिनः कर्मणीव श्रवणादावप्यप्रवृत्तिः; ब्रह्मभावाद्यसंभवादिति यत्तूक्तम्, तदनुवदति—**ननु दोषस्येति** ॥ मुमुक्षुत्वमेतच्छब्दार्थः ॥

"ब्रह्मविदाप्नोति परमि"त्यत्र किं तत्संयोगः फलत्वेनोच्यते ? उताभेदः ? नाद्यः; अनङ्गीकृतेः, अनुपयोगाच्चेति। न द्वितीयः; विरुद्धत्वाद् दहनतुहिनत्ववदित्याशङ्क्य, दितीयं कल्पमादायोत्तरयति—**विरुद्धेति**। अबाधितविषयत्वस्यानुमानसामग्र्यन्तर्भावाद् अत्र च तदभावान्नानुमानोदय इत्यर्थः। योग्यतानुसारेण श्रुतिरर्थं बोधयति, प्रत्यग्ब्रह्मणोश्च तादात्म्यानर्हत्वात् कथं तत्तादात्म्यं श्रुतिर्बोधयेत्, कुतस्तरां वा विरोधः ? इत्याशङ्क्य, विरोधांशपरित्यागेनैक्यबोधकत्वं युक्तमित्याह—**किन्त्विति** ॥ तादात्म्यसंभवेऽपि न तस्य पुमर्थत्वम्; सुखभोगाभावा-

**ऋजुविवरणम्**

ऽप्यर्थान्तरपरत्वकल्पनं युक्तमेव ; स्वार्थपरत्वासंभवात्, अध्ययनविध्युपात्तस्य निष्प्रयोजनत्वात्, फलाश्रयत्वव्यतिरेकेण विषयान्तराभावाच्च सिद्धमक्षय्यफलत्वं कर्मणाम्, केवलकर्मविषयप्रतिषेधप्रक्रमश्च फलविषय इत्याशङ्क्याह—**किञ्च यदि ह वा अप्यनेमिति** ॥ ननु उपासनाकर्मणोऽपि नित्यफलत्वं नास्ति, कथं तत्परत्वमित्याशङ्क्याह—**अनुभवद्वारेणेति**। एतदुक्तं भवति—उपासनाकर्मणः सन्निहितत्वात् तदेव कर्मशब्देन निर्दिष्टमिति। **अनेवंविद इति**। समभिव्याहारादुपासनाविषयत्वं प्रतीयते, लिङ्गादग्निहोत्रादिविषयत्वम्, लिङ्गश्च वाक्याद् वलवदित्यभिप्रायः ॥

ननु श्रुतं न ब्रह्मात्मभावं बोधयति ; अन्यस्यान्यात्मभावस्य लोकदृष्टिविरुद्धत्वेन तत्परत्वायोगात्, अतो न श्रुतिविरुद्धताऽनुमानस्येत्याशङ्क्याभिप्रायमाह—**बिम्ब-प्रतिबिम्बयोरेवेति** ॥ ननु सुखानुभवाभावेनापुरुषार्थत्वमुक्तमित्याशङ्क्याह—**नच सुखानुभवेति** ॥

### पञ्चपादिकाविवरणम्

ननु तादात्म्ये "अहं सुखी"त्यनुभवः स्यात्, 'नाहं सुखी'ति; अहं सुखीति चानुभवो लोके पुरुषार्थ इति ? नैष दोषः; सुखापरोक्ष्यमात्रस्य पुरुषार्थत्वात् । ननु स्वाश्रयं सुखमेव पुरुषार्थो न सुखापरोक्ष्यमिति ? न; उपलब्धानामेव सुखसाधनानां पुरुषार्थत्वादिष्टत्वाविशेषात् सुखमप्युपलभ्यमानमेव पुरुषार्थ इति गम्यते । तत्र साधनपारतन्त्र्यानित्यत्वादिवद् विषयसुखस्यात्मनो भेदोऽप्यानुषङ्गिकोऽवभासते'ऽहं सुखी'ति, न पुरुषार्थतया, इत्यतो ब्रह्मानन्दोऽप्यपरोक्षावभासः पुरुषार्थ इति । ननु नास्ति नित्यं सुखमिति नैयायिकादयः ? सत्यम् ; नास्त्येव जन्यमपि सुखम् । ननु साधनोपादानाद् जन्यताऽवगम्यते ? न ; सिद्धस्यैव सुखस्याभिव्यक्तिहेतुत्वात्, अन्यथा सुखसन्तानजन्म-प्रतिभासयोग्यत्वयोः साधनाधीनताकल्पनागौरवात् साध्यान्तराशेषतया वाऽव्यभिचारित्वेन वा [नित्य]निरुपाधिकप्रेमास्पदत्वेन वा सुख-दुःखावस्थयोरविशेषेण सुखरूप आत्मा प्रत्यक्षेणावभासते ।

### तत्त्वदीपनम्

दित्युक्तमपवदति—**नचेति** ॥ किं वैषयिकसुखस्याननुभवः ? उत ब्राह्मस्य ? तत्राद्यमङ्गीकृत्य दितीयं प्रत्याह—**ब्रह्मेति** ॥ स्वरूपसुखानुभवस्य पुरुषार्थत्वमाक्षिपति—**ननु तादात्म्य इति** । आनन्दात्मब्रह्माभिन्नतया स्वस्याप्यानन्दरूपत्वादहं सुखमित्युपलम्भः स्यादित्यर्थः । व्यावर्त्यमंशमाह—**नाहं सुखीति** ॥ अस्तु को दोषः ? इत्यत्राह—**अहं सुखीति** ॥ सुखापरोक्ष्यमात्रस्य पुरुषार्थत्वसंभवे सुखसंबन्धस्यापि पुरुषार्थत्वप्रयोजकत्वकल्पनायां गौरवाद् मैवमित्याह—**नैष इति** ॥ लाघवात् सुखापरोक्ष्यमात्रस्य पुरुषार्थत्वाश्रयणम्, तत एव न परोक्षस्यापि पुमर्थत्वमिति शङ्कते—**ननु स्वाश्रयमिति** ॥ अनधिगतमन्दिरमध्यनिखातनिध्यादेः पुरुषार्थत्वादृष्टेर्ज्ञायमानस्य पुरुषार्थत्वं वक्तव्यमित्याह—**नोपलब्धानामिति** ॥ सुखसंबन्धस्यात्पनुभूयमानत्वादेव पुरुषार्थत्वं वदन्तं प्रत्याह—**तत्रेति** । अनुभवमात्रेण पुरुषात्वे पारतन्त्र्यादेरपि पुरुषार्थत्वप्रसङ्ग इत्यर्थः । आगन्तुकसुखाभावेऽपि नित्यसुखानुभवान्मुक्तेः पुमर्थत्वमुक्तम्, तदाक्षिपति—**नन्विति** । प्रमाणाभावादित्यर्थः । सुखस्यागन्तुकत्वे मानाभावाद् नित्यत्वं सेत्स्यतीत्याशयेनाह—**सत्यमिति** ॥ 'नैयायिकादिभिरुक्तम्' इत्येतत् 'सत्यम्'–इवि अङ्गीकृतमिति द्रष्टव्यम् । मानाभावोऽसिद्ध इति शङ्कते—**ननु साधनेति** । नित्यत्वे साधनवैयर्थ्याद् जन्यत्वमेष्टव्य मित्यर्थः । साधनोपादानमन्यथापि घटत इत्याह —**न सिद्धस्येति** ॥ साधनस्याभिव्यञ्जकत्वं कस्मात् ? उत्पादकत्वमेव किं न स्यादिति ? अत्राह—**अन्यथेति** ॥ कल्पनागौरवपरिहाराय सुखसाधनस्याभिव्यञ्जकत्वमाश्रीयते चेत्, तर्हि दुःखसाधनस्यापि व्यञ्जकत्वमेव स्यादित्याशङ्क्य, दुःखनित्यत्वे मानाभावादितरत्र च तत्सद्भावाद् वैषम्यमित्याशयेनाह—**साध्यान्तरेति** । आत्मा सुखरूपः प्रत्यक्षेणावभासत इति संबन्धः । सुखपरामर्शानुपपत्तिगम्यसौषुप्तसुखानुभवः **प्रत्यक्ष**शब्दार्थः । न केवलं प्रत्यक्षादात्मस्वरूपत्वम्, किं त्वनुमानादपीत्याह—**निरुपाधिकेति** । आत्मा, सुखरूपः, निरुपाधिक-

### ऋजुविवरणम्

**ननु तादात्म्य इति** । जीवस्य ब्रह्मात्मकत्वाद् ब्रह्मणश्चानन्दरूपत्वादिति भावः ॥ ननु ब्रह्मानन्दानुभवो न पुरुषार्थः ; पुरुषार्थत्वप्रयोजकाभावात्, इति चोदयति—**ननु स्वाश्रयमिति** ॥ **नोपलब्धानामेवेति** । अयं प्रयोगः—सुखं धर्मि, उपलभ्यमानमेव पुरुषार्थ इति साध्यो धर्मः, इष्टत्वाविशेषादिति हेतुः ; सुखसाधनवदिति निदर्शनम् । ननु साधनत्वेनेष्टे तथा, सुखे तु न तथेत्याशङ्क्याह—**उपलब्धानामेवेति** । अयमर्थः—उपलब्धित्वामेव पुरुषार्थत्वप्रयोजकम्, तथा दर्शनात्, नतु स्वाश्रयसुखत्वम् ; आपरोक्ष्ये विद्यमानेऽपि स्वाश्रयत्वाभावेन पुरुषार्थत्वाभावानुपलम्भान्न विशिष्टस्य प्रयोजकत्वमिति । ननु केवलव्यतिरेकाभावेऽपि स्वाश्रयत्वस्यान्वयनियमादपि प्रयोजकत्वं कल्प्यते, इत्याशङ्क्याह– **तत्र साधनेति** । स्थितिमात्रेण न कारणत्वम्, किन्त्वन्वय-व्यतिरेकाभ्याम्, नचात्र व्यतिरेकोऽस्ति ; पुरुषान्तरसुखस्य स्वाश्रयत्वाभावादपुरुषार्थता ? किं वाऽऽपरोक्ष्याभावात् ? इति व्यतिरेकसन्देहादिति भावः । अथवा, कथं ब्रह्मानन्दानुभवमात्रस्य पुरुषार्थत्वं निश्चीयते ? लौकिकसुखस्य स्वाश्रयत्वेन भेदावभासो दृष्टः, तत्साम्येन ब्रह्मानन्देऽपि कल्प्यतामित्याशङ्क्याह—**तत्र साधनपारतन्त्र्येति** ॥ ननु साधनानामुत्पादकत्वं विहायाभिव्यञ्जकत्वं कस्मादङ्गीकृतम् ? इत्याशङ्क्याह—**अन्यथा सुखेति** ॥ ननु सिद्धे सुखस्वरूपास्तित्वे नित्यत्वे च साधनानामभिव्यञ्जकत्वं निश्चीयते, तदेव कथम् ? इत्याशङ्क्याह—**साध्यान्तराशेषतयेति** ॥ अथवा, सुखस्वरूपत्वमात्मनो नास्ति; योग्यानुपलब्धिविरोधादिति यदुक्तम्, तत् परिहरति—**साध्यान्तराशेषतयेति** ॥

**पञ्चपादिका**

अत उपसंहरति—तस्माद्यथोक्तसाधनसम्पत्त्यनन्तरं ब्रह्मजिज्ञासा कर्तव्येति ।। यतः परिपूर्णो हेतुरनन्तरमवश्यं कार्यमारभते, अतः कर्तव्येत्यावश्यकतामाह भाष्यकारः। यतो द्वैतानुषङ्गादतितरामुद्विजमानेन ब्रह्मात्मत्वं च हस्तप्राप्तमिव मन्यमानेन प्रवर्तितव्यमेव ब्रह्मजिज्ञासायाम्; प्रदीप्तशिरसेव जलराशौ, स्पृशतेव च सुस्वादु फलमङ्गुल्यग्रेणाग्रपादस्थेन। एवं सत्यर्थाद् धर्मजिज्ञासाया नियमेन पूर्ववृत्तत्वमथशब्देन पूर्वोक्तेन न्यायेन निराक्रियते ।।

**पञ्चपादिकाविवरणम्**

यस्मादतःशब्देन शङ्कानिराकरणहेतुसूचनद्वारेण साधनकलापस्य हेतुत्वं समर्थितम्, "तस्माद्यथोक्तसाधने"-त्युपसंहारः । तत्रेच्छाप्राधान्येन सूत्रवाक्यार्थो दर्शितः । साधनचतुष्टयस्यावश्यारम्भकत्वं व्यतिरेकमुखेन दर्शितम् इदानीमन्वयमुखेन तदेव प्रतिपादयति—**यतो द्वैतानुषङ्गादित्यादिना** ।। ननु साधनकलापवद् धर्मजिज्ञासाऽपि नियमेनारम्भिकेति ? नेत्याह—**एवं सत्यर्थादिति** । आगमार्थापत्तिभ्यामेव धर्म[साधन]कलापस्यावश्यारम्भकत्वेसिद्धे तदुभयप्रमाणविकलस्य धर्मविचारस्य न हेतुतेत्यर्थः ।।

**तत्त्वदीपनम्**

प्रेमास्पदत्वात्, व्यतिरेकेण दुःखवदित्यर्थः । निरुपाधिशब्दार्थमाह—**साध्यान्तरेति** ।। **साध्यान्तराशेषत्वम्**—अनन्यार्थत्वमित्यर्थः । तच्च विशेषणं सुखसाधनव्यावृत्त्यर्थम् । सुखरूपत्वे हेत्वन्तरमाह—**अव्यभिचारितयेति** ।। तदुपपादयति—**सुख-दुःखेति** ।। सुखावस्थायां च प्रेमास्पदतयाऽऽत्मनः सुखाव्यभिचारः । तथाच प्रयोगः—सुखम्, आत्मनो न भिद्यते, तदव्यभिचारित्वात्, यद् यदव्यभिचारि, तत् ततो न भिद्यते; यथौष्ण्यमग्न्यमभिचारीत्यर्थः ।

तच्छब्दार्थमाह—**यस्मादिति** ।। इच्छाया विषयसौन्दर्यलभ्यत्वाद् जिज्ञासा कर्तव्येति कथमुक्तम् ? इत्याशङ्क्याह—**तत्रेति** ।। इच्छायाः प्राधान्यात् तामनतिक्रम्य विचारं च लक्षणयाऽऽदाय जिज्ञासा कर्तव्येत्युक्तवानित्यर्थः ।। "यतो द्वैतानुषङ्गादि"त्यत्र साधनचतुष्टयस्य हेतुत्वं प्रतिपाद्यते, तच्च पूर्वोक्तमिति वृथाऽयं ग्रन्थ इत्याशङ्क्य, वृत्तानुवादपूर्वकं तात्पर्यमाह—**साधनेति** ।। धर्मजिज्ञासोत्तरकालमनुष्ठितनित्य-नैमित्तिककर्मभिरुत्पन्नविविदिषस्य श्रवणादिप्रवृत्त्यङ्गीकरणाद् धर्मजिज्ञासाया अपि हेतुत्वमिति शङ्कते—**नन्विति** ।। जन्मान्तरानुष्ठितधर्मजिज्ञासयाऽप्युक्तविधया प्रवृत्तिसंभवाद् न समानजन्मानुष्ठीतधर्मजिज्ञासाया हेतुत्वमित्याह—**नेत्याहेति** ।। प्रमाणाभावादपि न धर्मविचारस्य हेतुत्वमित्याह—**आगमेति** । "परीक्ष्य लोकान् कर्मचितानि"त्यादिरागमः । साधनचतुष्टयापाये ब्रह्मजिज्ञासानुपपत्तिरर्थापत्तिः।

**ऋजुविवरणम्**

"तस्माद्यथोक्ते"त्युपसंहारो न युक्तः; अतःशब्दस्य हेतुत्वसाधकत्वाभावात्, इत्याशङ्क्यावतारयति—**यस्मादिति** ।। ननु साधनकलापस्यारम्भकत्वे विवक्षिते कर्तव्येति भाष्यविरोधः, तत्र विधिप्रतीतेरित्याशङ्क्य व्याख्या कृता टीकायाम्—"आवश्यकतामाहे"ति । "यतो द्वैतानुषङ्गादि"ति ग्रन्थः पुनरुक्तः; पूर्वग्रन्थे "यावदस्य हिरण्यगर्भावाप्तिपर्यन्तस्ये"त्यादिना साधनकलापस्य हेतुत्वप्रतिपादनात्, अत्रापि "यतः"इति हेतुत्वनिर्देशात्, अथ पूर्वग्रन्थवाक्यार्थप्रदर्शनम्, तथाऽपि "यावदस्ये"त्यनेन पौनरुक्त्यं तदवस्थम्; उत्तरत्रापि सूत्रवाक्यार्थकथनादपरं पौनरुक्त्यमित्याशङ्क्यावतारयति—**तत्रेच्छाप्राधान्येनेति** ।। अथवा, भाष्यकारेण "ब्रह्मजिज्ञासा कर्तव्ये"त्युक्तम्, टीकाकारेण तदन्यथा व्याख्यातम्; "यतः परिपूर्णः" इत्यनेन साधनकलापस्य कार्यारम्भकत्वप्रदर्शनात् किञ्च साधनकलापस्य हेतुत्वं प्रतिपाद्य, तदेव वोपसंहर्तुं युक्तम्, नान्यत्; अनुक्तोपसंहारप्रसङ्गात्, तस्मादयुक्तोऽयं ग्रन्थः। "यतो द्वैतानुषङ्गादि"ति पुनरुक्तः; साधनकलापस्य हेतुत्वं पूर्वमपि प्रतिपादितम्, अत्रापि तदेव प्रतिपाद्यते, नचार्थान्तरं प्रकृतसंबन्धमस्य दृश्यते, तेनायमप्ययुक्त इत्याशङ्क्याह—**तत्रेच्छाप्राधान्येनेति** ।। "एवं सत्यर्थादि"ति ग्रन्थेन धर्मजिज्ञासाया हेतुत्वमथशब्देनार्थान्निराकृतमित्युक्तम्; तदयुक्तम्; नहि साधनकलापस्य हेतुत्वं वदताऽथशब्देनेतरस्य हेतुत्वं निराक्रियते; सामर्थ्याभावात्, अनुपपत्त्यभावाच्च । नहि समुच्चितयोर्हेतुत्वमनुपपन्नम्; साधनचतुष्टयवदस्यापि हेतुत्वसंभवात् । नाप्यथशब्देन साधनचतुष्टयस्य हेतुत्वप्रतिपादनम्, येन तत्सामर्थ्येनेतरस्य हेतुत्वनिराक्रिया स्यात्, तस्मादयुक्तोऽयं ग्रन्थ इत्यशङ्क्याभिप्रायमाह—**आगमार्थापत्तिभ्यामिति** ।।

### पञ्चपादिका

**ब्रह्मणो जिज्ञासा ब्रह्मजिज्ञासेति ॥ अन्तर्णीतविचारार्थान्वये हि चतुर्थीसमासः स्यात्, न शब्दाभिधेय इत्यवयवार्थमङ्गीकृत्य षष्ठीसमासो दर्शितः ॥**

**ब्रह्मशब्दस्यार्थनिर्देशावसरे प्राप्ते सूत्रकार एव निर्देक्ष्यतीति कथयति—ब्रह्म च वक्ष्यमाणलक्षणं "जन्माद्यस्य यत" इति ॥**

### पञ्चपादिकाविवरणम्

**ब्रह्मणो जिज्ञासेति भाष्यम्** । ननु धर्माय जिज्ञासेतिवत् चतुर्थीसमासः किं न स्यादिति ? अत्राह—**अन्तर्णीतविचारार्थान्वये हीति** ।। इच्छाप्राधान्ये हीच्छायाः कर्मप्रयोजनयोरैक्यात् प्राधान्यात् कर्मणि षष्ठीसमासः स्यात्, विचारप्राधान्ये तु कर्म-प्रयोजनभेदात् प्रयोजनविवक्षया तु चतुर्थीसमासोऽपि स्यादिति ॥

ननु किं तद् ब्रह्म यदिच्छायाः प्रयोजनतया कर्मत्वेन वर्तत इति ? तदाह—**ब्रह्मशब्दस्यार्थनिर्देशावसर इति** ॥

### तत्त्वदीपनम्

षष्ठीसमासस्यासूत्रार्थत्वाद् ब्रह्मणो जिज्ञासेत्येतदभाष्यमित्याशङ्क्याह—**ब्रह्मण इति** ।। आक्षेप-समाधानपूर्वकं भाष्यत्वं दर्शयितुमाक्षेपं तावदाह—**ननु धर्मायेति** ।। षष्टी-चतुर्थीसमासयोरपि संभवात् षष्ठी-समासः कस्मादाद्रियते ? प्राचि तन्त्रे चतुर्थीसमासपरतया सूत्रस्य व्याख्यातत्वादत्राप्येवमेव युक्तमित्यर्थः । प्राचस्तन्त्राद् वैषम्यान्नैवमित्याह—**तत्राहेति** ।। इच्छायाः प्राधान्येऽपि चतुर्थीसमास एव किं न स्यादिति ? तत्राह—**इच्छेति** । जिज्ञासाया इच्छाप्रधान्य उपगते कर्मणि षष्ठीसमासः स्यादिति संबन्धः । तत्रहेतुः—**इच्छाया इति** । इच्छायाः सकर्मकत्वादपेक्षितं कर्मषष्ठयोच्यत इत्यर्थः ।। प्रयोजनयोरिति वक्तव्यम्; इतरथा प्रवृत्त्यनुपपत्तेः, इत्याशङ्क्य, यदिष्यमाणं तदेव प्रयोजन मित्याशयेनाह—**कर्म-प्रयोजनयोरिति** ।। ननु कर्म-प्रयोजनयोरैक्यमाश्रित्य कर्मणि षष्ठयङ्गीक्रियते चेत्, तर्हि प्रयोजनविवक्षया चतुर्थीसमासोपगमे किं न कर्म सिध्यति ? इति चतुर्थीसमासः किं न स्यात् ? इति शङ्कायामाह—**प्राधान्यादिति** । इच्छायाः कर्मजन्यत्वात् प्रथमापेक्षितकर्मकारकनिष्पन्नस्य प्रयोजनापेक्षेति कर्मणः प्राधान्यमित्यर्थः । तर्हि शबरस्वामिनाऽपि कर्मणि षष्ठी कस्मान्नाश्रिता ? तत्राह—**विचारेति** ॥ 'विचारः कर्तव्यः' इत्युक्ते कस्य ? इत्यपेक्षायां वेदविचार इति वेदः कर्मत्वेन संबध्यते, कस्मै ? इति वीक्षायाम्, 'धर्माये'ति धर्मः प्रयोजनत्वेन संबध्यते, इत्येवं कर्म-प्रयोजनभेदात् प्रयोजननिर्देशं चान्तरेण क्लेशात्मके प्रवृत्त्यसंभवाच्च प्रयोजनविवक्षया[1] चतुर्थीसमास इत्यर्थः ।।

ब्रह्मणो जिज्ञासाकर्मत्वमाक्षिपति—**ननु किं तदिति** ॥ बृहत्त्वाद् ब्रह्मेति जीवस्य ब्रह्मशब्दार्थत्वात् तस्य चासंदिग्धत्वान्न कर्मत्वमित्यभिसन्धिः जगज्जन्मादिकारणस्य ब्रह्मशब्दार्थत्वाद् जीवस्य चातादृक्त्वान्न ब्रह्मत्वमित्यभिप्रायेणाह—**तदाहेति** ।। ब्रह्मशब्दस्य जात्याद्यर्थत्वं वृत्तिकृता निराकारि, तदनुचितम्; जात्यादावपि ब्रह्मशब्ददर्शनादित्वाशङ्क्याह— **तत्र यदन्यैरिति** । जात्यादेर्न सर्वत्र ब्रह्मशब्दार्थत्वं निराक्रियते, किन्तु "अथातो ब्रह्मजिज्ञासे"त्यत्र ब्रह्मशब्दस्य

### ऋजुविवरणम्

"अन्तर्णीते"त्यनेन जिज्ञासाशब्दस्य लाक्षणिकविचारार्थत्वे तेन ब्रह्मणोऽन्वय इति चतुर्थीसमासो भवेत्, नतु शाब्देच्छास्वीकारे; तेन च ब्रह्मणोऽन्वय इति षष्ठीसमासपरिग्रहे कारणमुक्तम्, तदयुक्तम्; विचारस्यापि सकर्मकत्वात् षष्ठीसयाससंभवात्, शब्दार्थत्वेऽपि प्रयोजनविवक्षया चतुर्थीसमाससंभवात्, अतो नार्थभेदः समासभेदे कारणमित्याशङ्क्याह—**इच्छाप्राधान्ये हीति** ॥ ननु इच्छायाः कर्म-प्रयोजनयोरैक्येऽपि प्रयोजनाकारापेक्षया चतुर्थीसमासोऽपि वक्तुं शक्यत एवेत्याशङ्क्याह—**प्राधान्यादिति** । कर्मणः प्राधान्यात् तदपेक्षितसमास एव भवेदित्यर्थः ।।

"ब्रह्म च वक्ष्यमाणमि"ति भाष्यकारेणोक्तम्, तदप्रस्तुतमित्याशङ्क्य टीकाकारेणोक्तम्—"ब्रह्मशब्दस्यार्थतिर्देशावसरे प्राप्ते"इति, तदयुक्तम्; प्राप्त्यभावात्, पूर्वं हीच्छायाः कर्मण एव सतः प्रयोजनत्वात् कर्मणः प्राधान्यात् षष्ठीसमासः समर्थितः ; कथमनन्तरं ब्रह्मशब्दार्थनिर्देशावसरः ? इत्याशङ्क्यावतारयति—**ननु किं तद ब्रह्मेति** ॥

---

१. "धर्माय जिज्ञासा धर्मजिज्ञासे"ति शाबरवचनमाक्षिप्य, धर्मायेति भाष्ययर्थप्रदर्शनार्थं, विग्रहस्य तु "सा हि तस्य ज्ञातुमिच्छे"ति भाष्येणैव प्रदर्शनमिति षष्ठीसमासोयं त चतुर्थीसमास इति परिहृतं भट्टाचार्यैः—'सा हि तस्येत्यनेनोक्तो धर्मस्येत्येष विग्रहः । धर्मायेति तु तादर्थ्ये षष्ठी वृत्तेति कथ्यते ।।' इति ( १.११९ ) ।

### पञ्चपादिका

तत्र यदन्यैर्वृत्तिकारैर्ब्रह्मशब्दस्यार्थान्तरमाशङ्क्य निरस्यते—न खलु ब्राह्मणजातिरिह गृह्यते, प्रत्यक्षसिद्धत्वाद् जिज्ञास्यत्वाभावात्; नापि तत्कर्तृका जिज्ञासा, त्रैवर्णिकाधिकारात्; नापि जीवपरिग्रहः, तत्कर्तृत्वे विशेषणानर्थक्यात्, कर्मत्वे नित्यसिद्धत्वात्; न शब्दराशेर्ग्रहणम्, तस्य धर्मजिज्ञासौत्पत्तिकसूत्राभ्यामर्थवत्त्वप्रमाणत्वयोर्निरूपितत्वात्; नापि हिरण्यगर्भस्य, तदवाप्तेरपि विरक्तस्य ब्रह्मजिज्ञासोपदेशात्; नापि तत्कर्तृकता, ज्ञान-वैराग्ययोः सह सिद्धत्वात्—इति, तदपि न कर्तव्यमित्याह—अत एव न ब्रह्मशब्दस्य जात्याद्यर्थान्तरमाशङ्कितव्यमिति ॥

ब्रह्मण इति कर्मणि षष्ठी ॥ वृत्त्यन्तरे तु शेषलक्षणा व्याख्याता, तां निरस्यति—न शेष इति ॥ तत्र हेतुमाह—जिज्ञास्यापेक्षत्वाज्जिज्ञासाया इति ॥ अथापि स्याद् अन्यद् जिज्ञास्यमिति, तदर्थमाह—जिज्ञास्यान्तरानिर्देशाच्चेति ॥

पुनः शेषषष्ठीवाद्याह—ननु शेषषष्ठीपरिग्रहेऽपि ब्रह्मणो जिज्ञासाकर्मत्वं न विरुध्यते; सम्बन्धसामान्यस्य विशेषनिष्ठत्वादिति ॥ यद्यपि "शेषे षष्ठी"ति सम्बन्धमात्रे षष्ठी विहिता; तथाऽपि व्यवहारो विशेषमवलम्बते, बहवश्च सम्बन्धविशेषाः, तत्रावश्यमन्यतमः प्रतिपत्तव्यः; अन्यथा व्यवहारानुपपत्तेः। तत्र प्रकरणोपपदयोर्विशेषहेत्वोरभावादर्थाद्विशेषक्रियोपादानात् कारकत्वेनैव सम्बन्धः। तत्रापि सकर्मिकायाः कर्मकारकमभ्यर्हितम्, इति कर्मत्वं ब्रह्मणो न विरुध्यते। एवमपि साधारणे शब्देऽभिप्रेतमर्थं विहायार्थान्तरं परिगृह्य, पुनस्तद्द्वारेणाभिप्रेतमर्थं प्रतिपद्यमानस्य व्यर्थः प्रयासः स्यात्, तदाह—एवमपि प्रत्यक्षं ब्रह्मणः कर्मत्वमुत्सृज्य सामान्यद्वारेण परोक्षं कर्मत्वं कल्पयतो व्यर्थः प्रयासः स्यादिति ॥

ननु किमिति व्यर्थः ? शेषषष्ठीपरिग्रहे सामान्येन यत्किञ्चिद् ब्रह्मसम्बन्धि येन येन जिज्ञासितेन विना ब्रह्म जिज्ञासितं न भवति तत्सर्वं जिज्ञास्यत्वेन प्रतिज्ञातं स्यात्; अतो न विशिष्टसम्बन्धो विवक्ष्यते; सामान्ये तस्याप्यन्तर्भवादिति यद्युच्यते, तदाह—न व्यर्थः; ब्रह्माश्रिताशेषविचारप्रतिज्ञानार्थत्वादिति चेदिति ॥ स्वयमेव परोक्तमाशङ्क्योत्तरमाह—न; प्रधानपरिग्रहे तदपेक्षितानामर्थाक्षिप्तत्वादिति संक्षेपतो वस्तुसङ्ग्रहवाक्यम्। एतदेव प्रपञ्चयति—ब्रह्म हि ज्ञानेनाप्तुमिष्टतमत्वात् प्रधानम्। तस्मिन् प्रधाने जिज्ञासाकर्मणि परिगृहीते यैर्जिज्ञासितैर्विना ब्रह्म जिज्ञासितं न भवति, तान्यर्थाक्षिप्तान्येव, इति न पृथक् सूत्रयितव्यानि। यथा 'राजासौ गच्छती'त्युक्ते सपरिवारस्य राज्ञो गमनमुक्तं भवति, तद्वदिति ॥ यस्माद् ब्रह्मावाप्तिः पुरुषार्थः, तेन तद् ज्ञानेनाप्तुमिष्टतमम्, अतस्तदर्थत्वात् प्रवृत्तेः प्रधानं तत्। तस्मिन् प्रधाने जिज्ञास्यमाने, येन जिज्ञासितेन विना न सम्पूर्णा जिज्ञासा, तत् सामर्थ्यादेव तादर्थ्येन जिज्ञास्यते, न पृथगभिधानेन कृत्यमस्ति। यथा 'राजाऽसौ गच्छती'त्युक्ते यावता परिवारेण विना राज्ञो गमनं न सम्पद्यते, तावतो गमनमर्थाक्षिप्तमिति न पृथगभिधीयते लोके, तद्वदिहापि स्वरूप-प्रमाण-युक्ति-साधन-प्रयोजनानि ब्रह्मज्ञानपरिपूर्णतार्थमर्थादेव जिज्ञास्यत्वान्न पृथक् सूत्रयितव्यानि।

### पञ्चपादिकाविवरणम्

तत्र यदन्यैरित्यारभ्य ब्रह्मण इति कर्मणि षष्ठीत्यतः प्राक्तनेन ग्रन्थेन जाति-जीव-कमलासन-शब्दराशीनां ब्रह्मशब्दाभिधेयतया जिज्ञासां प्रति कर्तृत्वेन कर्मत्वेन वा प्रतिपादनानुपपत्तेरस्मिन् प्रयोगे न ब्रह्मशब्दस्य जात्याद्यर्थतेति दर्शितम् ॥

तत्र ब्रह्मण इति कर्मणि षष्ठीत्यारभ्य किञ्च शास्त्रप्रवृत्तिरेवेत्यतः प्राक्तनेन ग्रन्थेनाप्रधानविचारान् शब्देन तदर्थत्वं निरस्तमित्यर्थः ॥

### तत्त्वदीपनम्

कर्मणि षष्ठीसमासमाश्रित्य प्रधानब्रह्मजिज्ञासयाऽर्थादप्रधानजिज्ञासेत्युक्तम्, तत्र वैपरीत्यशङ्कां निरस्यति—**तत्र ब्रह्मण इत्यादिना** ॥

### ऋजुविवरणम्

"तत्र यदन्यैरि"त्यादिना टीकाकारेण वृत्त्यन्तरे यदर्थान्तरमाशङ्क्य निरस्तम्, तत्र कर्तव्यमिति भाष्यतात्पर्यमुक्तम्, तदयुक्तम्; अर्थान्तरनिराकरणाभावे स्वाभिप्रेतार्थसिध्यभावात्, इत्याशङ्क्य समुदायतात्पर्यमाह—**तत्र यदन्यैरित्यादिनेति** ॥

"ब्रह्मण इति कर्मणि षष्ठी"त्यादिना प्रधानपरिग्रह इतरेषामाक्षेपो हेतुत्वेवोक्तः, स इष्टविघातकारी; सामान्यमुखेन विशेषस्यापि लाभसंभवादित्याशङ्क्य समुदायतात्पर्यमाह—**ब्रह्मण इति कर्मणि षष्ठीत्यादिना** ॥

### पञ्चपादिका

**किंच शास्त्रप्रवृत्तिरेव कर्मणि षष्ठीं गमयति। कथम्? एवं हि शास्त्रमारब्धव्यम्। "पुण्यचितो लोकः क्षीयते" इत्यादिश्रुतेः, न्यायतश्च पुण्यस्य क्षयदर्शनाद्, विरक्तस्य "ब्रह्मविदाप्नोति परमि"त्यादिश्रुतेर्ब्रह्मज्ञानात्पुरुषार्थसिद्धिः परेति। अतस्तज्ज्ञातुमिच्छतः श्रुत्या "यतो वा इमानि भूतानि जायन्ते" इत्येवमाद्यया तत्प्रतिपादनपूर्वकं "तद्विजिज्ञासस्वे"ति साक्षादेव कर्मतया ज्ञेयत्वेनानुशासनं यत्, तदिदम्—"अथातो ब्रह्मजिज्ञासे"ति सूचितम्। तेन कर्मषष्ठीपरिग्रहे श्रुति-न्याय-सूचनपरं सूत्रं तदनुगतं भवति; अन्यथा लक्ष्यानुगतमसम्बद्धं स्यात्। तदाह—श्रुत्यनुगमाच्चेति॥ वस्तुसङ्ग्रहवाक्यम्। तत्प्रपञ्चः—"यतो वा इमानि भूतानि जायन्ते" इत्याद्याश्च श्रुतयः "तद्विजिज्ञासस्व तद् ब्रह्मेति" प्रत्यक्षमेव ब्रह्मणो जिज्ञासा-कर्मत्वं दर्शयन्ति। तच्च कर्मणि षष्ठीपरिग्रहे सूत्रेणानुगतं भवति। तस्माद् ब्रह्मण इति कर्मणि षष्ठी॥**

### पञ्चपादिकाविवरणम्

मुख्यया वृत्त्योपादाय प्रधानस्यार्थाक्षेपकल्पनाद् वरं मुखतः प्रधानविचारमेवोपादायाप्रधानविचाराणामर्थाक्षेपकल्पनमिति कर्मणि षष्ठी दर्शिता। 'शेष' इति संबन्धसामान्यमुच्यते, न कारकपञ्चकव्यतिरिक्ताः संबन्धविशेषा उच्यन्ते। तत्र यथा देवदत्तस्य स्वमिति षष्ठी विशेषसंबन्धेऽप्यन्विताभिधानमर्हति, एवं 'देवदत्तस्य गच्छति' 'देवदत्तस्य गम्यते' इत्यादिकारकसंबन्धविशेषेऽप्यन्विताभिधानं नार्हति, किंत्वभिहितसंबन्धसामान्ये; सामर्थ्यात्, क्वचित् कारकसंबन्ध-विशेषश्चार्थतोऽवगम्यत इति। एतावता "षष्ठी शेषे" इत्युक्तम्, नार्थादपि कारकसंबन्धाप्रतिभास इत्युक्तमिति पूर्ववादिनो मतम्।

**किंच शास्त्रप्रवृत्तिरेवे**त्यारभ्य **ज्ञातुमिच्छा जिज्ञासे**त्यतः प्राक्तनेन ग्रन्थेन साधिकारविषयस्य विचारविधेः प्रतिपादके वाक्ये ब्रह्मणः कर्मकारकत्वं निर्दिष्टम्, सूत्रस्य च तदेकार्थत्वात् तत्रापि ब्रह्मणः कर्मत्वमेवमेव शब्देन वक्तव्यमिति दर्शितम्॥

### तत्त्वदीपनम्

शेषषष्ठीपक्षेऽपि ब्रह्मणः कर्मत्वं सिध्यति, संबन्धसामान्यस्य विशेषनिष्ठत्वादित्युक्तं वृत्तिकृत्ता, तदनुपपन्नम्; "षष्ठी शेषे" इति शेषत्वं षष्ठ्या अभिधाय, कश्च शेषः? इति वीक्षायाम्, कर्मादिभ्योऽन्यः स्व-स्वाम्यादि-संबन्धः शेष इत्यभिधानादित्याशङ्क्याह—**शेष इति**॥ व्यावर्त्यमाह—**न कारकेति**। कर्म-करण-संप्रदानापादानाधि-करणानि **कारकपञ्चकशब्दार्थः**॥ संबन्धविशेषाणां स्व-स्वामिभावादीनां व्यभिचारित्वात् षष्ठ्यर्थत्वानुपपत्तेः संबन्धमात्रं शेषः, तस्मिन् षष्ठीति पक्षे स्वस्वाम्यादिसंबन्धः शेषः, इति वृत्तिकृद्वचनं कथम्? इत्याशङ्क्य तात्पर्यमाह—**तत्र यथेति**। देवदत्तस्येति षष्ठ्या निर्दिष्टस्य संबन्धमात्रस्य विशेषाकाङ्क्षायां 'स्वमि'ति पदसमभिव्याहारात् षष्ठी स्व-स्वामिसंबन्धान्वितसंबन्धमात्रं यथाऽभिधत्ते, तथा 'देवदत्तस्य गच्छती'त्युक्ते न षष्ठ्या कारकसंबन्धविशेषसंसृष्टाभि-धायित्वम्; संबन्धविशेषस्य तत्राप्रतीतेरित्यर्थः। कथं तर्हि संबन्धविशेषप्रतिपत्तिः? इति शङ्कते—**किंत्विति**॥ अपर्यवसानवृत्त्येत्याह—**अभिहितेति**। अभिहितं यत् संबन्धसामान्यं तदेवार्थः, तद्बलादित्यर्थः॥

"तद्विजिज्ञासस्वे"इत्यस्य कर्मविवक्षागमकाभावात् कथं तत्प्रतिपादकत्वेन सूत्रस्य श्रुत्या संगतिः? इत्या-शङ्क्य, तात्पर्यमाह—**किंचेति**। अधिकारश्च विषयश्चाधिकार-विषयौ, ताभ्यां सह वर्तत इति स तथोक्तः। विचारविधे-र्विषयं विनाऽनुपपत्तेर्ब्रह्मणः कर्मत्वं विवक्षितमित्यर्थः। श्रुतौ कर्मत्वविवक्षायामपि कथं सूत्रे तद्विवक्षा? अत आह—**सूत्रस्येति** विचारविध्यपेक्षितन्यायप्रतिपादकत्वात् सूत्रस्य तदेकार्थत्वमित्यर्थः॥

### ऋजुविवरणम्

"अप्रधानविचाराणामि"त्यनादरे षष्ठी। ननु शेषषष्ठीपरिग्रहेण प्रत्यवस्थानमेव न संभवति; शेषशब्दस्य कर्मादिव्यतिरिक्तसंबन्धविशेषवाचकत्वात्, विशेषवाचकत्वेच सामान्यमुखेन कर्मादीनां कर्मत्वलाभ इति यदुक्तम्, तदयो-गात्, इत्याशङ्क्याभिप्रायमाह—**शेष इति संबन्धसामान्यमिति**॥ ननु शेषशब्देन संबन्धसामान्यस्वीकारे "षष्ठी शेषे"-इत्यनुशासनं निष्प्रयोजनम्; विशेषाणां सर्वेषामवाच्यत्वात्, सामान्यमुखेन च सर्वेषामाक्षेपाविशेषात्, अतश्च संबन्धविशेषः स्वीकर्तव्यः। सामान्यमुखेन कर्मादीनां संबन्धानामाक्षेपाभावाद् वा; इतरथा सूत्रविरोधात्, इत्याशङ्क्याह—**तत्र यथा देवदत्तस्येति**॥

## पञ्चपादिका

ज्ञातुमिच्छा जिज्ञासेति जिज्ञासापदस्यावयवार्थं कथयतीच्छाप्रदर्शनार्थम् । ततश्चेच्छायाः फलविषयत्वात् तज्ज्ञानस्यापवर्गपर्यन्तता सूचिता भवति । तदाह—अवगतिपर्यन्तं ज्ञानं सन्वाच्याया इच्छायाः कर्म; फलविषयत्वादिच्छायाः इति ॥ अवगतिरिति साक्षादनुभव उच्यते । ज्ञानन्तु परोक्षेऽनुभवानारूढेऽपि सम्भवति । संनिहितेऽप्यसम्भावित-विषयेऽनवसितरूपमित्युक्तं पुरस्तात्; तदाह—ज्ञानेन हि प्रमाणेनावगन्तुमिष्टं ब्रह्म, ब्रह्मावगतिर्हि पुरुषार्थः । ब्रह्मरूपता-साक्षात्करणमित्यर्थः ।

## पञ्चपादिकाविवरणम्

ज्ञातुमिच्छेत्यादि भाष्यम् । तत्रावगतिविषयत्वादिच्छाया ब्रह्मण्यवगते तज्ज्ञानेच्छानुपपत्तेरनवगते सुतरामिति कथं ब्रह्मज्ञानेच्छेति ? अत आह—**ततश्चेच्छायाः फलविषयत्वादिति** ॥ का चेयमिष्यमाणाऽवगतिरिति ? तदाह—**साक्षादनुभव इति** ॥ ननु प्रथममेवावगतिरुत्पद्यते ? तत्राह—**ज्ञानं तु परोक्ष इति** ॥ शब्दात् परोक्षतयाऽवगतेऽपरोक्षज्ञान-मिष्यत इत्यर्थः । यदा पुनः शब्दादपरोक्षज्ञानमुत्पद्यते, तत्राह—**सन्निहितेऽपीति** ॥ **प्रमाणेनावगन्तुमिति** अपरोक्षनिश्चयानु-भवेनेत्यर्थः ॥

ननु किमिह ज्ञानमित्युच्यते ? संवेदनमेव प्रमाणफलं विज्ञानमिति सुगत-प्रभाकर-वैशेषिक-नैयायिकाः । नच संवेदन-फल-चतुष्टयसन्निकर्षादि सामग्र्यं चान्तरेण प्रमातृव्यापारो नाम ज्ञानमस्तीति । वार्तिककारीयाणां तु प्रमातृ-

## तत्त्वदीपनम्

ब्रह्मप्रतिपत्त्यप्रतिपत्त्योस्तज्ज्ञानकामनानुपपत्तेः "ज्ञातुमिच्छा जिज्ञासे"ति भाष्यमनुपपन्नमित्याशङ्क्याह—**ज्ञातुमिच्छेति** ॥ आक्षेपसमाधानपूर्वकं तदुपपादयितुमाक्षेपमाह—**तत्रावगतेति** ॥ **तत्र** लोक इत्यर्थः । **सुतरामिति** । इच्छाकारणसद्भावेऽपीच्छाया असंभवो यदा, तदा कारणाभावे कर्याभाव इति किमु वक्तव्यमित्यर्थः ॥ अवगति-ज्ञानयोर्भेदाभावाद् ज्ञातेऽप्यवगतिकामनेत्युक्तमनुपपन्नमिति चोदयति—**का चेयमिति** ॥ असिद्धो हेतुरित्याह—**तदाहेति** । अपरोक्ष-परोक्षप्रत्यययोर्भेदः प्रसिद्ध इत्यर्थः । अपरोक्षे ब्रह्मणि शब्दादपरोक्षप्रथायाः प्रथममेवोत्पत्तेः सूत्रे कामनानुदय इति शङ्कते—**ननु प्रथममिति** ॥ शब्दस्य परोक्षज्ञानजननस्वाभाव्यात् कथं तत्परित्यागः ? इत्याह—**तत्राहेति** ॥ **ज्ञानं तु** इति टीकायां 'शब्दादि'ति द्रष्टव्यम् । परोक्ष इत्येतदु विवृणोति—**अनुभवेति** ॥ शब्दात् परोक्षप्रत्ययोत्पत्तिप्रतिपादन-फलमाह—**शब्दादिति** ॥ अपरोक्षे परोक्षप्रत्ययजनकत्वे मिथ्याज्ञानजनकत्वेन शब्दस्याप्रामाण्यं स्यात्, तस्मादपरोक्ष-प्रत्ययजनकत्वमेष्टव्यम् । तथाच तत्र कामनाऽसंभव इति शङ्कते—**यदा पुनरिति** ॥ अपरोक्षतया प्रतिपन्नेऽप्यप्रतिबद्धा-परोक्षप्रत्ययकामो युक्त इति परिहरति—**तत्राहेति** ॥ ज्ञानेनावगम्यते चेद् ब्रह्म, कथं तर्हि अपरोक्षज्ञानमिष्यत इत्युक्तम् ? इत्याशङ्क्यापरोक्षनिश्चयजननद्वाराऽवगम्यत इत्याह—**प्रमाणेनेति (भाष्ये)** ॥

ज्ञानशब्दार्थे विप्रतिपत्तिदर्शनात् तन्निर्णयार्थं चोद्यमुद्भावयति—**नन्विति** ॥ ज्ञानशब्दस्य प्रसिद्धार्थत्वाद् न विमर्शसंभव इत्याशङ्क्य, ज्ञानस्वरूपप्रसिद्धावपि तद्विशेषांशे विप्रतिपत्तेर्विमर्शो युक्त इत्याह—**संवेदनमिति** । प्रमाणफलं संवेदनम्, तदेव विज्ञानमिति संवन्धः । संवेदनस्य फलत्वाद् ज्ञानस्य तज्जनकत्वात् कथं तयोरैक्यमित्याशङ्क्याह—**नचेति** । आत्म-मनश्चक्षुराद्यर्थसन्निकर्षस्योभयसंमतत्वात् तत एव संविज्जननसंभवे कारणान्तरकल्पनमयुक्तमित्यर्थः ॥

## ऋजुविवरणम्

**ननु प्रथममेवेति** । ज्ञानप्राप्तविषयत्वादिच्छायाः प्रथममेव ज्ञानोत्पत्तौ नेष्यमाणत्वमित्यर्थः । "ज्ञानं तु परोक्षेऽपी"ति व्यर्थम्; इष्यमाणत्वानुपपत्तेरपरिहृतत्वादित्याशङ्क्याह—**शब्दादिति** ॥ "सन्निहितेऽपी"त्यनेन सन्निहिते वस्तुनि निर्धारितज्ञानोत्पत्तिकीर्तनमप्रस्तुतमित्याशङ्क्यावतारयति—**यदा पुनरिति** ॥ ननु "प्रमाणेनावगन्तुमि"ति भाष्य-कारेण कथमुक्तम् ? पूर्वापरविरोधात्, अपरोक्षज्ञानस्येष्यमाणत्वाभावप्रसङ्गाच्चेत्याशङ्क्य व्याचेष्टे—**अपरोक्षनिश्चया-नुभवेनेति** ॥

ननु स्वरूपे विप्रतिपत्तिदर्शनाद् विशेषस्यानिरूपितत्वादनिरूपणे परोक्षापरोक्षविभागासिद्धिरित्यभिप्रायेण पृच्छति—**ननु किमिहेति** । ननु संवेदनस्य ज्ञानत्वमन्येऽपि वदन्ति, कथमेतेषामेव परिग्रह इति ? तत्राह—**नच संवेदन-**

### पञ्चपादिकाविवरणम्

व्यापारः संविज्जनको ज्ञानमिति। क्षपणक-लोकायतिकानां चात्मचैतन्यमेव ज्ञानम्। साङ्ख्य-वेदान्तिनां करणव्युत्पत्त्या बुद्धिवृत्तिर्ज्ञानम्, भावव्युत्पत्त्या संवेदनमिति। तत्र न तावत् स्थायिन्यात्मनि संवित्फलोदयः कर्तृ व्यापारमन्तरेणोपपद्यते। ननु यतः कारणात् कर्तृ व्यापारजन्म, तत एवानुभवजन्म स्यात्, आत्मनः परिस्पन्दव्यापारानुपपत्तेः? इति। अयमत्र वक्तव्यः—किं लोके कर्तृ व्यापारात् फलजन्म प्रत्यक्षेणावगतम्? न वेति? न चेद्, व्याप्तिग्रहणाभावादप्रत्यक्षत्वाच्च न सर्वत्र कर्तृ व्यापारावगमः स्यात्। अवगम्यते च लोके कर्तृ व्यापारः। अथ लोके फलहेतुतया प्रत्यक्षसिद्धः कर्तृ व्यापारः, तर्ह्यात्मन्यपि तदनुमीयते; व्याप्तिनियमात्। ननु न परिणामो नाम व्यापारोऽस्ति, आरम्भाभ्युपगमादिति वैशेषिकादयः; तर्हि प्रयत्नव्यापारजन्यं फलमस्तु, कर्तृ व्यापारव्याप्तिनियमात् फलस्य। ननु मनस्संयोगादेवासम कारणात् व्यापारमन्तरेण ज्ञानमुत्पद्यते, न करणसंयोगव्यतिरेकेण फलजन्मनि कर्तृ व्यापारादर्शनात्।

अत्र सर्वसङ्करवादी विलपति—पाकादिषु फलस्य कर्तृ व्यापाराधीनतादर्शनात् तत्र तथाऽवगम्यताम्, इह तु तद्दर्शनाभावान्न कर्तृ व्यापारः इति। स चानुमानप्रक्रियायामनभिज्ञ इत्युपेक्ष्यते। सुगतानामपि नित्यात्मसाधनादेव संविदां कर्तृ व्यापारापेक्षाऽनुमीयते। क्षपणकानामपि स्वरूपचैतन्यस्य निरुपाधिकस्य विषयावभासित्वे सर्वदा सर्वविषयावभासः स्यात्। लोकायतस्य च जन्यसंवेदनत्वात् तद्व्यापारानुमानम्। ननु सर्वगतस्य निरवयस्यात्मनो न परिस्पन्द-

### तत्त्वदीपनम्

मतान्तरमाह—**वार्तिककारीयाणामिति**। 'जानामी'ति ज्ञानमात्माश्रयतयाऽनुभूयते, स्फुरणं च घटधर्मत्वेन, ततः कथं तयोरैक्यमित्यर्थः। **करणेति**। ज्ञायतेऽनेनेति करणव्युत्पत्त्या वृत्तिर्ज्ञानम्, ज्ञप्तिर्ज्ञानमिति भावव्युत्पत्त्या संविद् ज्ञानमिति विभागः। एवं विप्रतिपत्तिं प्रदर्श्य तन्निराकरणार्थमुपक्रमते—**तत्र न तावदिति**॥ आत्मनोऽस्थायित्वात् कथं तत्र कर्तव्यापाराधीनं फलम्? इति मन्वानं सुगतं प्रत्याह—**स्थायिनीति**॥ कल्पनागौरवप्रसङ्गान्न कर्तृव्यापार एष्टव्य इति शङ्कते—**ननु यत इति**॥ किं व्यापारः परिस्पन्दः? उत परिणामः? नाद्यः; आत्मनः सर्वगतत्वादित्याह—**आत्मन इति**॥ न द्वितीयोऽपि; तत्र प्रमाणाभावादित्यर्थः। प्रामाणिककल्पनाया अदोषत्वान्नैवमित्याशयेनाह—**अयमत्रेति**॥ व्याप्तिग्रहणाभावमुपपदयति—**अप्रत्यक्षत्वादिति**॥ चशब्देन प्रमाणान्तराद् व्याप्तिग्रहणशङ्कां निरस्यति। मा भूत् तर्हि कर्तव्यापारावगम इत्यत्राह—**अवगम्यत इति**॥ आद्यमनुवदति—**अथेति**॥ द्वैधीभावस्य कर्तृव्यापारजन्यताया दृष्टत्वात् संविदोऽपि तज्जन्यत्वमनुमीयत इत्याह—**तर्हीति**॥ आत्मनि व्यापारासंभव इत्युक्तमनुवदति—**ननु न परिणाम इति**॥ व्यापारमन्तरेण फलोत्पत्तेरनुपलब्धेर्व्यापारोऽप्येष्टव्य इत्याह—**तर्हीति**॥ फलमन्यथासिद्धमिति शङ्कते—**ननु मन इति**॥ समवाय्यसमवायि-निमित्तकारणानुरोधात् फलस्योत्पत्तेः संभवाद् न कारणान्तरं मृग्यमित्यर्थः। कारणत्रितयात् कार्योत्पत्तेरुपलम्भाद् यथा त्रयस्याभ्युपगमः, तथा व्यापारोऽप्येष्टव्य इत्याह—**न करणेति**॥ कुठार-वृक्षसंयोगं विनोद्यमनादिव्यापारादृष्टेरित्यर्थः॥

यत्र यद् दृश्यते, तत्र तदेष्टव्यम्, आत्मनि च तद्दर्शनाभावान्न तदेष्टव्यमित्यनुमानाचतुरश्चोद्यमुत्थापयति—**अत्रेति**॥ अनुमानमात्रोच्छित्तिप्रसक्तेर्नैतच्चोद्यं शोभत इत्याह—**स चेति**। इष्टसाधनताज्ञानपूर्विका प्रवृत्तिरिति तावत् सर्वधनीनम्। नच तत् त्वन्मते संभवति; ओदनगतेष्टसाधनताया अप्रत्यक्षत्वात्, न चानुमेयत्वम्; उक्तन्यायस्य तत्रापि प्रसरात्, ततो जीवनमेव दुर्लभमापतितमित्यर्थः। स्थायिमते फलस्य कर्तृव्यापारजन्यत्वेऽपि क्षणिकमते कथं तत्कल्पनम्? इत्याशङ्क्य, क्षणिकत्वस्य निरस्तत्वाद् व्यापारानुमितिर्युक्तेत्याह—**सुगतानामिति**॥ क्षपणकमते नित्यचैतन्यं स्वरूपेणावभासकम्? उतागन्तुकज्ञानद्वारेण? इति विकल्प्याद्यं दूषयति—**क्षपणकानामिति**॥ द्वितीये कर्तृव्यापारसिद्धिरित्यभिप्रायः। लोकायतमते संवेदनस्यागन्तुकत्वात् तज्जनकव्यापार एष्टव्य इत्याह—**लोकायतस्येति**॥ दूषणान्तराभिधित्सया पूर्वोक्तमेव चोद्यमुत्थापयति—**ननु सर्वगतस्येति**। सर्वगतत्वाद् न परिस्पन्दः, निरवयवत्वान्न परिणामोऽपीत्यर्थः। आत्मनः

### ऋजुविवरणम्

**मिति**॥ ननु न संवेदनात् कर्तृव्यापारकल्पना; व्याप्त्यभावात्, कारणानुमानेऽपि न व्यापारानुमा; क्लृप्तकारणस्य विद्यमानत्वात्, व्यापारानुमाने बाधितविषयत्वप्रसङ्गादिति चोदयति—**ननु यतः कारणादिति**॥

**स चानुमेति ( चानुमानेति )**। प्रसिद्धानुमानोच्छेदादिति भावः। **क्षपणकानामिति**। सोपाधिकस्यावभास-

## पञ्चपादिकाविवरणम्

परिणामौ युक्तौ ? सत्यम्; अध्यासपरिनिष्पन्नान्तःकरणसम्पिण्डितस्यात्मनो ज्ञानाकारपरिणामात् । नच संवेदनाकारेण परिणामः; तस्य नित्यसिद्धत्वाद्; अतोऽन्तःकरणपरिणामविशेषश्चैतन्यस्य विषयावच्छेदोपाधिः करणव्युत्पत्त्या ज्ञानम्, भावव्युत्पत्त्या तु संवेदनमेवार्थप्रकाशो ज्ञप्तिर्ज्ञानमित्युच्यते । तत्रार्थोपाधि, अपरोक्षसंविदवच्छेदकं ज्ञानमपरोक्षम्, इति ॥

तत्रावयवार्थव्युत्पादनेनापरोक्षावगमेच्छाया वाक्यार्थत्वमुक्तम् । इष्यमाणज्ञानफलोपदेशमुखेनान्तर्णीतं तत्साधनं विचारं कर्तव्यतया वाक्यार्थं प्रतिपादयत्युत्तरं भाष्यम् । तस्य तात्पर्यं दर्शयितुमाशङ्कान्तरं निवर्तयति । कथम् ? नास्य सूत्रस्य वाक्यार्थो वर्णनीयः । तथाहि—अस्य सूत्रस्य शास्त्रान्तर्भूतत्वे विचारारम्भकर्तव्यताविचारसूत्रस्य

## तत्त्वदीपनम्

परिस्पन्दो न संभवतीत्येतदङ्गीकुर्मः, परिणामानुपपत्तिरिति यदुच्यते, तत्र मृष्यामहे—किं तात्त्विकस्य परिणामस्यानुपपत्तिः ? उत काल्पनिकस्य ? तत्राद्यमङ्गीकरोति—**सत्यमिति** ॥ द्वितीयं दूषयति—**अध्यासेति** ॥ अन्तःकरणसंपिण्डित आत्मा संविदाकारेण परिणमत इत्येवेष्यताम्, किं ज्ञानपरिणामेन ? इति शङ्कायामाह—**नचेति** । "न हि द्रष्टुः दृष्टेर्विपरिलोपो विद्यते" इति श्रुतेः संविदो नित्यसिद्धत्वमित्यर्थः ॥ बोधरूपात्मन एव विषयद्रष्टृत्वात् किं परिणामकल्पनया ? इति शङ्कामुपसंहारव्याजेन निरस्यति—**अत इति** ॥ **विषयावच्छेदः** विषयसंबन्धः, तत्रो**पाधिः** प्रयोजकः । स्वतोऽसङ्गस्य विषयसंबन्धासंभवात् तद्धेतुभूतं ज्ञानमेष्टव्यमित्यर्थः । परिणाम-तत्प्रतिविम्बितसंविदोर्ज्ञानपदव्युत्पत्तिं दर्शयति—**करणव्युत्पत्त्येति** ॥ एवं संविज्ज्ञानभेदेऽपि परोक्षापरोक्षसंविद्भेदः कथम् ? तस्याः सदाऽपरोक्षत्वात् तदवच्छेदकवृत्तेश्च परोक्षत्वादित्याशङ्क्याह—**तत्रेति** ॥ अर्थोपाधीति पदच्छेदः । **अर्थ उपाधिः** जनको यस्य, तदर्थोपाधि । इन्द्रियसंयुक्तोऽर्थः स्वाकारां वृत्तिं जनयति, तस्यां च वृत्तौ अपरोक्षसंवित् प्रतिबिम्बिता भवति, ततश्चापरोक्षसंवित्प्रतिबिम्बाधारतया ज्ञानस्याप्यपरोक्षत्वम् । यत्र चेन्द्रियसंयुक्तार्थस्य वृत्तिजनकत्वाभावः, तत्र चापरोक्षसंविदो न प्रतिबिम्बभाव इति ज्ञानस्य पारोक्ष्यमित्यर्थः । अपरोक्षसंविदवच्छेदकत्वमुपपादयितुमर्थोपाधीति विशेषणम् ॥

उत्तरभाष्यव्याख्यां विहाय सूत्रस्य शास्त्रान्तर्भावः कस्मादुच्यते ? इत्याशङ्क्य, वृत्तानुवादपूर्वकं तात्पर्यमाह—**तत्रेति** । अतीतग्रन्थ इत्यर्थः । **अवयवार्थेति** ॥ "ज्ञातुमिच्छा जिज्ञासे"ति जिज्ञासाशब्दस्यावयवार्थव्युत्पादनेनेत्यर्थः । इच्छाया वाक्यार्थत्वे विषयसौन्दर्यलभ्यत्वात् कर्तव्योपदेशानुपपत्तिः ; तथाच साकाङ्क्षत्वेन वैयर्थ्यमित्याशङ्क्याह—**इष्यमाणेति** ॥ **अन्तर्णीतमित्यस्यायमर्थः**—इष्यमाणज्ञानं प्रति साक्षादिच्छायाः साधनत्वासंभवादिच्छाऽनन्तरभावी ज्ञानात्प्राक्कालसंबन्धी विचारो लक्ष्यते; तत्र ब्रह्मज्ञानस्यान्यत उत्पत्त्यसंभवाद् वेदान्तेभ्य एवोत्पत्तिर्वक्तव्या । नचानिर्णीतशक्तितात्पर्याणां वेदान्तानामप्रतिबन्धापरोक्षप्रत्ययजनकत्वम्, इति शक्तितात्पर्यविचारः कर्तव्यो मुमुक्षुणा, इत्याशङ्कान्तरसद्भावे तन्निराकरणं स्यात्, तदेव कथमिति शङ्कते—**कथमिति** ॥ शङ्कामाह—**नास्येति** ॥ किमेतत्सूत्रं शास्त्रान्तर्भूतम् ? उत न ? इति विकल्प्याद्यमुत्थापयति—**अस्येति** ॥ तत्रापि किमेतत्सूत्रारम्भ एतत्प्रयुक्तः ? आहोस्विदन्यप्रयुक्तः ? इति विकल्पयति—**विचारेति** ॥ विचारारम्भकर्तव्यताया विचारो निरूपणं यस्मिन् सूत्रे तत्तथोक्तम्, तस्य

## ऋजुविवरणम्

कत्वे तदाकारे कर्तृव्यापारापेक्षेति भावः । ननु संवेदनरूपेणैव परिणामोऽस्त्वित्याशङ्क्याह—**नच संवेदनेति** ॥ ननु किमनेन व्यापारेण ? चैतन्यस्य विषयावभासकत्वात्, तस्य च नित्यत्वेन व्यापारानपेक्षत्वादित्याशङ्क्याह—**चैतन्यस्य विषयावच्छेदोपाधिरिति** ॥ कथं वृत्तेर्ज्ञानत्वमिति ? तदाह—**करणव्युत्पत्त्येति** ॥ कथं तर्हि संवेदनस्य ज्ञानत्वमिति ? तत्राह—**भावव्युत्पत्त्येति** ॥ कथं तर्हि परोक्षापरोक्षविभागः ? चैतन्यस्य सर्वदापरोक्षत्वाद् वृत्तेरपि तदवच्छेदकत्वेन सर्वदाऽपरोक्षत्वात्, इत्याशङ्क्याह—**तत्रार्थोपाधीति** ॥

"तदेतच्छास्त्रान्तर्भूतमि"त्यनेन सूत्रस्य शास्त्रान्तर्भूतत्वप्रतिपादनमयुक्तम्; पूर्वोत्तरभाष्यव्याख्यानाभावात्, असङ्गतं चेत्याशङ्क्यावतारयति—**तत्रावयवार्थेति** ॥ ननु सत्यामाशङ्कायां तन्निराकरणं क्रियेत, नह्यस्य शास्त्रानन्तर्भूतत्वशङ्का, नापि सूत्रव्याख्यानावसरे तत्प्रतिपादनं सङ्गतमित्यभिप्रेत्य पृच्छति—**कथमिति** ॥ ननु सकलसूत्रव्याख्याते प्रवृत्तत्वादस्यापि सूत्रत्वात् कथमव्याख्येयमित्याशङ्क्याह—**तथा ह्यस्येति** ॥ अन्तर्भूतत्वपक्षे स्वेनैव प्रयुक्तावात्माश्रयत्वम्

## पञ्चपादिकाविवरणम्

केनारम्भः क्रियते ? स्वेनैव चेत्, आत्माश्रयतापत्तिः; सूत्रान्तरेण चेत्, अनवस्थापातः। अथानन्तर्भूतम्, तर्हि प्रथमसूत्रस्याशास्त्रतयाऽनारम्भप्रसङ्ग—इति। तत्राह—**तदेतच्छास्त्रान्तर्भूतं सूत्रमिति** ॥ आपातप्रतिपन्नोत्तरविचारविधिरेव स्वापेक्षितविचाराय प्रथमसूत्रमारम्भयति। विधौ च विचारिते विधिविषयविचारसूत्राणि पश्चादारम्भयतीत्येकशास्त्रत्वेऽपि नानवस्था। श्रोतव्यादिवाक्यानां स्वार्थे समन्वयद्वारेण विचार्यमाणवेदान्तवाक्यानामपि ब्रह्मणि समन्वयनिमित्तत्वात्समन्वये च संबन्ध इति। अत्र च श्रुत्या किं प्रतिपादितमिति ? तदाह—**अनेन चेति** ॥

**प्रयोज्यः** इत्यधिकारी। **एकस्या** इति। साधनकलापस्येति। तस्य कारणान्तरमदृष्टं यज्ञादि दृष्टञ्च व्याप्त्यनुसंधानादि। **अर्थादुपात्तमिति**। आनन्तर्याभिधानसामर्थ्यादिति। अतःशब्दस्य मुखतो हेतुत्वाभिधायिनोऽप्याशङ्कान्तरनिवृत्तौ तात्पर्यादर्थाद्धेतुत्वमुक्तम्; इत्यनुवादे प्रयोजनाभावात् कर्तव्यपदमध्याहृत्य जिज्ञासा कर्तव्यतया

## तत्त्वदीपनम्

प्रथमसूत्रस्येत्यर्थः। आद्यमुत्थाप्य दूषयति—**स्वेनेति**। स्वस्यारम्भसिद्धेस्तस्य प्रयोजकत्वमित्यात्माश्रयता। द्वितीयं दूषयति—**सूत्रान्तरेणेति**। आद्यसूत्रारम्भस्य सूत्रान्तरप्रयोज्यत्वे तदारम्भस्यापि सूत्रान्तरप्रयोज्यत्वम् तस्यान्यप्रयोज्यत्वमित्यनवस्थेत्यर्थः। द्वितीयमनुवदति—**अथेति** ॥ वाक्यार्थनिर्णयायापेक्षितन्यायकलापप्रतिपादकशास्त्रबाह्यत्वादाद्यसूत्रं मुमुक्षुणा नारभ्यमित्याह—**तर्हीति** ॥ अन्तर्भावपक्षस्यापि दुष्टत्वात् कथमुपादेयत्वम् ? तत्राह—**आपातेति**। साङ्गाध्ययनविधिमपेक्ष्य "श्रोतव्यः" इति विधिं प्रयिपद्यत इति। विधिश्चानुबन्धत्रयमन्तरेणासंभाव्यमानोऽनुबन्धत्रयापेक्षितन्यायप्रतिपादकं सूत्रमारम्भयतीत्यर्थः। अध्ययनविधिमपेक्ष्य "श्रोतव्यः" इत्यादिविधि**रुत्तरविधि**शब्दार्थः। तत्राप्यस्य प्रथमारम्भः कस्मादित्यत्राह—**विधाविति**। विधेर्विषयो विधिविषयः, स च विचारश्चेति विधिविषयविचारः, तद्विषयसूत्राणीत्यर्थः। तथाऽपि कथं समन्वयसङ्गतिः ? इत्याशङ्क्याह—**श्रोतव्येति**। "श्रोतव्यो जिज्ञासितव्यः" इत्यादिवाक्यानां विचारविधौ समन्वयं तावदिदं सूत्रं प्रतिपादयति। अर्थात् विचारकर्तव्यतायां सिद्धायां वेदान्तानामपि ब्रह्मणि समन्वयनिमित्ततां भजत इति समन्वयसंबन्ध इत्यर्थः ॥ सूत्रेऽनुबन्धत्रयाप्रतिपत्तेः कथमस्य तत्प्रतिपादकत्वम् ? इति पृच्छति—**अत्रेति** ॥ **अत्र सूत्रे**। **श्रुत्या** मुख्यवृत्त्येत्यर्थः। अप्रतिपत्तिरसिद्धेत्याह—**तदाहेति** ॥ प्रयोज्यो निष्पाद्य इति शङ्कां निरस्यति—**प्रयोज्य इति** ॥ तथाचोक्तम्—"नियोज्यः स च कार्यं यः स्वकीयत्वेन बुध्यते" इति। "एकस्याः" इत्यत्र किं जिज्ञासा निर्दिश्यते ? उत मुमुक्षा ? आद्ये तस्या जिज्ञासाहेतुत्वाभिधानायोगः। न द्वितीयः; पूर्वत्र साधनचतुष्टयस्य हेतुत्वमुक्तम्, अत्र चैकस्य हेतुत्वमुच्यत इति विरोधप्रसङ्गात्; तत्राह—**एकस्या इति** ॥ मुमुक्षाशब्दस्य विशेषणत्रयोपलक्षणत्वान्न विरोध इत्यर्थः[1]। ननु अर्थादुपात्तं हेतुत्वमिति कथमुक्तम् ? अथशब्देन तस्योपादानादित्याशङ्क्याह—**अर्थादिति** ॥ आनन्तर्यमथशब्दस्याभिधेयार्थः, तद्बलाद्धेतुत्वप्रतिपत्तेरित्यर्थः। ननु अतःशब्देन हेत्वभिधायिनोपात्तमिति शङ्कां निरस्यति—**अतःशब्दस्येति** ॥ जिज्ञासायाः कर्तव्यत्वं श्रुत्यभिहितमिति कथमुक्तम् ? तद्वाचकपदाभावादित्याशङ्क्याह—**अनुवाद इति** ॥

## ऋजुविवरणम्

सूत्रान्तरेण चेदनवस्थानान्न प्रयुक्तिसंभव इति यदुक्तम्, तत्परिहरति—**आपातप्रतिपन्नेति** ॥ **स्वापेक्षितविचारायेति** अनुबन्धनिर्णयायेत्यर्थः। एकशास्त्रत्वेऽपि प्रयुक्तिसंभवान्नानवस्थेत्यर्थः। ननु एवमपि न समन्वयाध्याये प्रयुक्तिः संभवति, संबन्धाभावादित्याशङ्क्याह—**श्रोतव्यादीति** ॥ "एकस्याः" इत्यनेन न जिज्ञासानिर्देशः; तस्य मुमुक्षाहेतुत्वाभावात्, नापि मुमुक्षानिर्देशः; तावन्मात्रस्य हेतुत्वस्याप्रतिपाद्यत्वात्पूर्वापरविरोधादित्याशङ्क्याह—**एकस्या इति** ॥ **साधनेति** ॥ "कारणान्तरसिद्धायाः" इत्युक्तम्, किन्तदित्यपेक्षायामाह—**तस्य कारणान्तरमिति** ॥ ननु हेतुत्ववाचिनोऽतःशब्दस्य विद्यमानत्वात् कथमर्थादुपात्तमित्युक्तमिति ? तदाह—**अतःशब्दस्येति** ॥ ननु "कर्तव्यता श्रुत्याऽभिहिते"ति न युक्तं वक्तुम्; कर्तव्येतिपदाभावे तदर्थस्य श्रौतत्वाभावादित्याशङ्क्य व्याचष्टे—**अनुवादे प्रयोजनेति** ॥ "जानात्येवे"ति कथमु-

## पञ्चपादिका

**तदेतच्छास्त्रान्तर्भूतं सूत्रम्। अनेन च प्रयोज्य-संबन्धिन्योर्जिज्ञासा-मुमुक्षाक्रिययोरेकस्याः कारणान्तरसिद्धायाः पूर्ववृत्ततया हेतुत्वमर्थादुपात्तमितरस्यास्तदनन्तरं तत्प्रयुक्तायाः कर्तव्यता श्रुत्याऽभिहिता। तत्र जानात्येवासौ मयैतत् कर्तव्यमिति, उपायन्तु न वेद। ततस्तस्योपायः कथनीयः।**

**शास्त्रस्य च सम्बन्धाभिधेय-प्रयोजनानि वक्तव्यानि; इतरथा प्रेक्षारहितमिव सर्वमापद्येत। अतोऽनेनैव सूत्रेणेदमपि सर्वं सूचितमिति कथयितुमाह—तस्माद् ब्रह्म जिज्ञासितव्यमिति॥ अन्तर्णीतविचारार्थविधेयत्वाङ्गीकारेण मीमांसितव्यमित्यर्थः॥**

**एतदुक्तं भवति—ब्रह्मज्ञानकामेनेदं शास्त्रं श्रोतव्यम्; यस्माद् ब्रह्मज्ञानमनेन शास्त्रेण निरूप्यते। तेन**

## पञ्चपादिकाविवरणम्

श्रुत्याऽभिहिता। ननु इच्छासंयोगाद् ज्ञानस्य साध्यतावगमात् तदेव कर्तव्यमस्त्विति? नेत्याह—**तत्र जानात्येवेति**॥ इष्यमाणस्य साध्यता स्वयं सिद्धा, न शब्दमपेक्षते; सुखसंवेदनत्वादित्यर्थः। किं तर्हि विधीयत इति? तदाह—**उपायं तु न वेदेति**॥ अनवगताभिलषितोपाय एव विधिशब्दैः प्रतिपाद्यत इत्यर्थः दृष्टोपायत्वेऽप्यपरोक्षानुभवं प्रत्यदृष्टोपायताऽपि दर्शिता श्रवणादिविधेः॥

ननु पदार्थव्याख्यानादेव स्वयमेव वाक्यार्थं प्रतिपद्यते, किं वाक्यार्थकथनेन? सत्यम्; संबन्धादीनामर्थात् प्रतिभासो वाक्यार्थकथनेन भवतीत्याह—**शास्त्रस्य संबन्धाभिधेयप्रयोजनानीति**॥

मुमुक्षुणा ब्रह्मानुभवाय विचारः कर्तव्य इति वाक्यार्थः। कथमत्रार्थात् संबन्धादिप्रतिपत्तिः? तदाह—**एतदुक्तं भवतीत्यादिना**॥ ननु ब्रह्मज्ञानद्वारेण काम्यमानमोक्षसाधनं विचारः, इति फलसंबन्धे सिद्धेऽपि कथं विषयादि-

## तत्त्वदीपनम्

विचारकर्तव्यताया असूत्रार्थत्वं शङ्कते—**नन्विति**॥ 'अनधिगते शास्त्रमर्थवदि'ति न्यायविरोधाद् मैवमिति दूषयति—**नेत्याहेति**॥ ज्ञानकर्तव्यताया अधिगतत्वं कुतः? अत्राह—**इष्यमाणस्येति**॥ ज्ञानस्या-साध्यत्वे सन्वाच्याया इच्छायाः कर्तव्यत्वं प्राप्तमिति शङ्कते—**किं तर्हीति**॥ इच्छाया अपि स्वतः सिद्धत्वात् तत्र कर्तव्यतोपदेशानुपपत्तेरुपायं लक्षयित्वा तस्य कर्तव्यत्वमुच्यत इत्याह—**तदाहेति**॥ ननु नियोगस्य प्रवर्तकत्वात् स कथनीय इति वक्तव्यम्, किमुपायः कथनीय इत्युच्यते? इत्याशङ्क्य, प्रवर्तकत्वमपीष्टसाधनस्येत्यभिप्रायेणाह—**अनवगतेति**॥ विचारस्य ज्ञानोपायताया अन्वय-व्यतिरेकसिद्धत्वात् तत्र विधिरनर्थक इत्याशङ्क्याह—**दृष्टेति**। यथा "व्रीहीनवहन्यादि"त्यत्र दृष्टार्थोऽप्यवहनने विधिराश्रीयते; नियमादृष्टसंभवात्, तद्वदत्रापि। नच—तत्र नियमादृष्टसाध्य-प्रधानापूर्वसंभवाद् विधेरर्थवत्त्वम्, अत्र त्वदृष्टसाध्यं नेत्यपि—शङ्कनीयम्; आत्मसाक्षात्कारस्यादृष्टसाध्यत्वादित्यर्थः।

"तस्माद् ब्रह्म जिज्ञासितव्यमि"त्यादिभाष्यमाक्षिपति—**ननु पदार्थेति**। प्रयोजनविशेषसंभवात् सोऽपि कथनीय इत्याह—**सत्यमिति**। वाक्यार्थकथनभाष्ये संबन्धाद्यप्रतिपत्तेरनर्थकमेतदित्याशङ्कते—**मुमुक्षुणेति**॥ उत्तरो ग्रन्थः स्पष्टार्थः॥

अत्रेदं विवक्षितम्—ब्रह्मज्ञानाय विचारः कर्तव्य इत्युक्ते, अनधिगतस्य ब्रह्मणः प्रमेयत्वम्, तस्यैव प्रमितस्य

## ऋजुविवरणम्

त्वम्? बोधकप्रमाणाभावे कर्तव्यताज्ञानायोगात्, तदेव कर्तव्यम्, न विचार इत्याशङ्क्य व्याचष्टे—**इष्यमाणस्येति**॥ ननु उपाय एव तर्हि कर्तव्यः, ननु कर्तव्येतिपदाध्याहारेण कर्तव्यतानिरूपणं युक्तमित्याशङ्क्य व्याचष्टे—**अनवगताभिलषितेति**॥ ननु श्रवणादीनामुपायत्वमन्वय-व्यतिरेकसिद्धं न शब्दमपेक्षते, इत्याशङ्क्याह—**दृष्टोपायत्वेऽपीति**। शेषं नेयमिति॥

इति स्वामीन्द्रपूर्णपूज्यपादशिष्य-सर्वशास्त्रविशारदजनार्दनात्मज-सर्वज्ञ-विष्णुभट्टोपाध्यायकृतौ ऋजुविवरणे प्रथमसूत्रार्थवर्णनं नाम तृतीयवर्णकं समाप्तम्॥

**पञ्चपादिका**

**प्रयोज्यस्याभिमतोपायः शास्त्रम्, इत्यर्थात् शास्त्रस्य सम्बन्धाभिधेय-प्रयोजनं कथितं भवति ॥**

इति परमहंसपरिव्राजकाचार्य-श्रीशङ्करभगवत्पादान्तेवासिवर-श्रीपद्मपादाचार्यकृतौ पञ्चपादिकायां **प्रथमसूत्रार्थवर्णनं** नाम तृतीयवर्णकं समाप्तम् ॥

**पञ्चपादिकाविवरणम्**

सिद्धिरिति ? तत्राह—**अर्थाच्छास्त्रस्येति** ॥

इति श्रीमत्परमहंसपरिव्राजकानन्यानुभवपूज्यपादशिष्यस्वप्रकाशानुभवभगवतः कृतौ पञ्चपादिकाविवरणे **प्रथमसूत्रार्थवर्णनं** नाम तृतीयवर्णकं समाप्तम् ॥

**तत्त्वदीपनम्**

प्रयोजनत्वम्, शक्यप्रतिपाद्यतया संबन्धः, ज्ञानकामस्याधिकारित्वं चेत्यनुबन्धचतुष्टयं लभ्यते। तस्मादनुबन्धचतुष्टय-संभवाद् विचारः कर्तव्य इति ॥

इति परमहंसपरिव्राजकाचार्याखण्डानुभूतिशिष्येणाऽखण्डानन्दमुनिना विरचिते विवरणतत्त्व-दीपने **प्रथमसूत्रार्थवर्णनं** नाम तृतीयवर्णकं समाप्तम् ॥

ॐ

श्रीशङ्करभगवत्पादाचार्यप्रणीतम्

# श्रीमद्ब्रह्मसूत्रभाष्यम्

## चतुर्थं वर्णकम्

तत्पुनर्ब्रह्म प्रसिद्धमप्रसिद्धं वा स्यात् ! यदि प्रसिद्धं न जिज्ञासितव्यम् । अथाप्रसिद्धं नैव शक्यं जिज्ञासितुमिति । उच्यते—अस्ति तावद् ब्रह्म नित्यशुद्धबुद्धमुक्तस्वभावं, सर्वज्ञं, सर्वशक्तिसमन्वितम् । ब्रह्मशब्दस्य हि व्युत्पाद्यमानस्य नित्यशुद्धत्वादयोऽर्थाः प्रतीयन्ते, बृहतेर्धातोरर्थानुगमात् । सर्वस्यात्मत्वाच्च ब्रह्मास्तित्वप्रसिद्धिः । सर्वो ह्यात्मास्तित्वं प्रत्येति, न नाहमस्मीति । यदि हि नात्मास्तित्वप्रसिद्धिः स्यात् सर्वो लोको नाहमस्मीति प्रतीयात् । आत्मा च ब्रह्म । यदि तर्हि लोके ब्रह्मात्मत्वेन प्रसिद्धमस्ति ततो ज्ञातमेवेत्यजिज्ञास्यत्वं पुनरापन्नम् । न । तद्विशेषं प्रति विप्रतिपत्तेः । देहमात्रं चैतन्यविशिष्टमात्मेति प्राकृता जना लोकायतिकाश्च प्रतिपन्नाः । इन्द्रियाण्येव चेतनान्यात्मेत्यपरे । मन इत्यन्ये । विज्ञानमात्रं क्षणिकमित्येके । शून्यमित्यपरे । अस्ति देहादिव्यतिरिक्तः संसारी, कर्ता, भोक्तेत्यपरे । भोक्तैव केवलं न कर्तेत्येके । अस्ति तद्व्यतिरिक्त ईश्वरः सर्वज्ञः सर्वशक्तिरिति केचित् । आत्मा स भोक्तुरित्यपरे । एवं बहवो विप्रतिपन्ना युक्तिवाक्यतदाभाससमाश्रयाः सन्तः । तत्राविचार्य यत्किंचित्प्रतिपद्यमानो निःश्रेयसात्प्रतिहन्येतानर्थं चेयात् । तस्मात्-ब्रह्मजिज्ञासोपन्यासमुखेन वेदान्तवाक्यमीमांसा तदविरोधितर्कोपकरणा निःश्रेयसप्रयोजना प्रस्तूयते ॥१॥

ॐ

श्रीपद्मपादाचार्यप्रणीता

# पञ्चपादिका

तत् पुनर्ब्रह्म प्रसिद्धमप्रसिद्धं वा स्यात् ? यदि प्रसिद्धम्, न जिज्ञासितव्यम्; अथाप्रसिद्धम्, नैव शक्यं जिज्ञासितुम् इति प्रयोजन-विषय-सम्बन्धानाक्षिपति। कथम् ? प्रसिद्धशब्देन प्रतिपन्नमुच्यते। तद् यदि प्रतिपन्नमन्येन केनचित्, तदाऽस्य शास्त्रस्य न विषयः; कस्मात् ? प्रतिपाद्यत्वेन हि विषयता, प्रतिपन्ने च तस्मिन्नकिञ्चित्करं शास्त्रम्, इति नास्य विषयः स्यात्। ततश्चानेनानवगमान्नास्य प्रयोजनं ब्रह्मावगतिः स्यात्। अतः प्रयोजनमप्याक्षिप्तम्।

## पञ्चपादिकाविवरणम्

"तत्पुनर्ब्रह्म प्रसिद्धमि"त्यादिभाष्यस्य तात्पर्यमाह—प्रयोजन-विषय-संबन्धानाक्षिपतीति॥ ननु विधिसामर्थ्यदेव प्रयोजनादिष्ववगतेषु कथमाक्षेपः ? इति चोदयति—कथमिति॥ परिहरति-प्रसिद्धशब्देनेत्यादिना॥ ननु प्रतिपन्नं शब्देनानूद्य प्रतिपादयितुं शक्यत्वात् कथमविषयः ? इत्याह—कस्मादिति॥ अनधिगतार्थताऽभावादिति परिहरति प्रतिपाद्यत्वेनेति॥ विषयावगमद्वारा प्रयोजनस्य पूर्वावगमेनैव सिद्धत्वाद् नास्य प्रयोजनमपीत्याह—ततश्चानेनानवगमा-

## तत्त्वदीपनम्

अनुबन्धचतुष्टयं विचारप्रयोजकम्, तच्च सिद्धम्, इत्युत्तरग्रन्थवैयर्थ्यमिति चेत् ? मैवम्; विधान्तरेण तदसंभवोत्थितेः। तथाहि—वेदान्तशास्त्रं विषयः, तत् किमारभ्यम् ? उत नारभ्यम् ? इति विषय-प्रयोजनसंभवासंभवाभ्यां संदिह्यते। तत्रासंभावितविषय-प्रयोजनत्वादनारभ्यमिति तावत् प्राप्तमिति। नच हेत्वसिद्धिः; ब्रह्मप्रसिद्धयप्रसिद्धचोर्विषयादेरनिरूपणादित्यभिप्रेत्याह—तत्पुनरिति॥ प्रसिद्धयप्रसिद्धचोर्विषयाद्यसंभवस्योक्तत्वात् "कथमि"ति प्रश्नानुपपत्तिरित्याशङ्क्य तात्पर्यमाह—ननु विधीति। विचारविधिर्विधिशब्दार्थः। विषयादेरसंभवात् श्रवणविधेः—"विष्णुरुपांशु यष्टव्यः" इत्यादिवदन्यार्थत्वमुपेयमित्यभिप्रायेणाह—परिहरतीति॥ प्रतिपन्नस्यापि विषयत्वे को दोषः ? इति शङ्कते—ननु प्रतिपन्नमिति॥ अधिगतेऽप्यधिगत्यन्तरसंभवात् "प्रतिपन्ने तस्मिन्नि"ति न युक्तमित्याशङ्क्याह—अनधिगतेति॥ प्रसिद्धपक्षे प्रयोजनाक्षेपो न युक्तः; ज्ञानप्रयोजनसंभवादित्याशङ्क्य, ज्ञानस्य स्वरूपेणापुरुषार्थत्वादविद्यानिवर्तनेन पुरुषार्थत्वं वक्तव्यम्, अविद्यानिवृत्तेश्च प्रमाणान्तरेण सिद्धत्वात् प्रयोजनाक्षेपो युक्त इत्याह—विषयेति॥ टीकायाम्, अनेनानवगमादित्यत्रावधारणं विवक्षितमिति द्रष्टव्यम्। नास्य ब्रह्मावगतिः प्रयोजनमित्यत्र फलपर्यन्तेति शेषः॥

## ऋजुविवरणम्

आलोच्यमाने निगमादिनाऽर्थे ब्रह्मस्वरूपं वचनात् प्रसिद्धम्।
प्रत्यक्स्वरूपत्व-विवक्षयेह नेयं विवादेन विचारयोग्यम्॥
उपोद्घातं निरूप्यार्थं वाक्यार्थं च ततः परम्। प्रतिपादनमेतस्य चतुर्थे क्रियते पुनः॥

"तत्पुनरि"ति भाष्यं टीकाकारेण व्याख्यातम्—"प्रयोजन-विषय-संबन्धानाक्षिपतीति, तदयुक्तम्; भाष्ये तदाक्षेपप्रतीत्यभावात्, उत्तरग्रन्थेऽपि तदेव प्रदर्श्यते; तेन पौनरुक्त्यमपीत्याशङ्क्य व्याचष्टे—तात्पर्यमाहेति॥ "प्रतिपाद्यत्वेने"त्यनेन प्रतिपन्नवस्तुन्यकिंचित्करत्वमुक्तम्, तदयुक्तम्; प्रतिपत्त्यन्तरजनकत्वेन किञ्चित्करत्वादित्याशङ्क्यावतारयति—अनधिगतार्थतेति॥ "ततश्च" इत्यनेन प्रयोजनमाक्षिप्तम्, तदयुक्तम्; अनधिगतार्थत्वलक्षणविषयत्वाभावेऽपि शास्त्रजन्यत्वेन ज्ञानस्य तत्प्रयोजनत्वं संभवत्येवेत्याशङ्क्यावतारयति—विषयावगमद्वारेति॥

"अथाप्रसिद्धमि"ति भाष्यग्रन्थः ? स्वग्रन्थो वा ? आद्ये पौनरुक्त्यम्, पूर्वमेवानुभाषितत्वात्। स्वग्रन्थे तु वैयर्थ्यम्; अधिकार्थाभावात्, कथञ्चिदुत्तरग्रन्थपर्यालोचनयाऽर्थाधिक्यप्रतीतावप्युपसंहारपर्यालोचनया संबन्धमात्राक्षेपः

## पञ्चपादिका

अथाप्रसिद्धं न शक्यं जिज्ञासितुम्॥ कथम्? यन्न कदाचिदपि बुद्धौ समारूढविशेषम्, कथं तत् प्रतिपाद्येत? अतः प्रतिपादनाशक्तेर्न तत् स्पृशत्यपि शास्त्रम्। प्रसिद्धं पुनर्यदि नामानेन प्रतिपाद्यते प्रसिद्धत्वादेव; तथाऽपि न तेनार्थेन निरालम्बनम्, अप्रसिद्धं पुनरालम्बनमपि न स्यात्। अतो न केनचिदर्थेन सम्बद्धं शास्त्रम्, इति सम्बन्ध आक्षिप्तः।

## पञ्चपादिकाविवरणम्

दिति। अथेत्यप्रसिद्धपक्षे संबन्धं प्रयोजनं चाक्षिपति। ननु अनधिगतार्थं एव प्रमाणेन प्रतिपाद्यते, प्रयोजनं च तत्रैवेति चोदयति—कथमिति॥ परिहरति—यन्न कदाचिदपीति॥ प्रत्यक्षादिप्रमाणैर्विचारानपेक्षैरत्यन्तानधिगत एव प्रतिपाद्यते। यत्र विचारापेक्षया प्रमाणेन वस्तु प्रतिपाद्यते, तत्राप्रतिपन्नमुद्दिश्य विचारानुपपत्तेः, प्रतिपन्ने विमर्शदर्शनान्न विचारापेक्षप्रमाणेनानधिगतावगम इत्यर्थः। ननु अप्रसिद्धपक्षे संबन्धः कथमाक्षिप्तः? न प्रसिद्धपक्ष इति? तत्राह—प्रसिद्धं पुनर्यदि नामेति॥

"अविज्ञाते तत्त्वे कारणोपपत्तितस्तत्त्वज्ञानार्थमूहस्तर्कः" इत्यक्षपादसूत्रवचनात् सामान्यप्रतिपन्नस्य वा विशेषरूपेण विशेषतोऽप्यापातदर्शनगोचरस्य वा विशेषनिर्णयाय प्रमाणानुग्राहकस्तर्कः, इति ब्रह्मणोऽप्यनिश्चितविशेष-

## तत्त्वदीपनम्

अप्रसिद्धेऽनधिगतार्थत्वसंभवाद् "न शक्यं जिज्ञासितुमि"ति कथमुक्तम्? इत्याशङ्क्यास्मिन् पक्षे न विषयाक्षेप इति भाष्य-टीकयोस्तात्पर्यमाह—अथेति॥ अनधिगतार्थगन्तृषु चक्षुरादिष्वर्थसंबन्ध-प्रयोजने दृश्येते, ततः कथमाक्षेप इति शङ्कते—नन्वनधिगतेति॥ चक्षुरादिवत् प्रतिपादकत्वस्योक्तत्वाद् "यन्न कदाचिदि"त्यादेः परिहाराभासत्वमाशङ्क्याह—परिहरतीति॥ (टीकायाम्) यन्न कदाचिदित्यस्यायमर्थः—यत् कथमपि स्वतः परतो वा बुद्धावसमारूढविशेषम्, तत् कदाचिदपि न प्रतिपाद्यते, यत्कदाचिदपि बुद्धावसमारूढविशेषम्, तत् कथमप्यनुमानेन युक्त्या वा न प्रतिपाद्येतेति वा संबन्धः। अथ यद् बुद्धौ कदाचिदपि न स्वेनान्यरूपेण वा वर्तते, तदसमारूढविशेषं कथं प्रतिपाद्येतेति? सम्यक् परिहारमेवाह—प्रत्यक्षादीति॥ अनधिगतस्यैव प्रतिपादने हेतुमाह—विचारेति॥ ततो वैषम्यमाह—यत्रेति॥ प्रसिद्धपक्षे विषयासंभवस्याप्रसिद्धपक्षे च संबन्धासंभवस्योक्तत्वात् "प्रसिद्धं पुनरि"त्यत्रापि तस्यैव निर्देशे पौनरुक्त्यमित्याशङ्क्य, टीकाव्यावर्त्यां शङ्कामाह—नन्वप्रसिद्ध इति॥ प्रसिद्धत्वपक्षे प्रतिपाद्यत्वयोग्यतारूपसंबन्धसंभवः, इतरत्र च तदभावात्संबन्धाक्षेप इत्याशयेनाह—तत्राहेति॥

प्रतिपत्त्यप्रतिपत्त्योर्विषयादेराक्षेपात् प्रकारान्तरस्यासंभवात् "त्रितयं समाधत्ते" इति कथमुक्तम्? तत्राह—अविज्ञात इति॥ "कारणोपपत्तितः" इत्यस्य "अविज्ञात"इत्यनेन संबन्धः। कारणं चोपपत्तिश्चेति तथोक्ते, ताभ्यामिति विभागः। कारणशब्देन प्रमाणमुच्यते। विशेषतः प्रतिपन्ने कथं विचारप्रतिपत्तिरिति? तत्राह—विशेषत इति॥ सामान्यन्यायं प्रस्तुते प्रसारयति—ब्रह्मण इति॥ विधिविषयादेः शास्त्र एव सिद्धत्वाद् भाष्यकृत्प्रयासो वृथेति शङ्कते—

## ऋजुविवरणम्

प्रतीयते; सोऽपि न युक्तः; संबन्धाभावे प्रयोजनाभावस्यापि वक्तुं शक्यत्वादित्याशङ्क्य व्याचष्टे—अथेत्यप्रसिद्धपक्षे संबन्धमिति॥ "यन्न कदाचिदपी"त्ययुक्तम्; प्रत्यक्षादिवदप्रतिपन्नस्यैव प्रतिपादनसंभवस्योक्तत्वात्, अनधिगतार्थगन्तृत्वाच्चेत्याशङ्क्याभिप्रायमाह—प्रत्यक्षादिप्रमाणैरिति॥ कथं प्रत्यक्षादीनामनधिगतार्थग्राहकत्वमिति? तदाह—विचारानपेक्षैरिति॥ ननु विचारापेक्षप्रमाणेनाप्यत्यन्तानधिगतवस्तुप्रतिपादनं कस्मान्नाङ्गीक्रियत इति? तदाह—तत्राप्रतिपन्नमिति॥ कथमप्रतिपन्ने विचारासंभव इति? तदाह—प्रतिपन्न इति॥ "प्रसिद्धं पुनरि"त्यादिग्रन्थः पुनरुक्तः; पूर्वोक्तस्यैव प्रसिद्धपक्षे संबन्धाक्षेपाभावस्याप्रसिद्धपक्षे संबन्धाक्षेपस्य च प्रतिपादनादित्याशङ्कां दर्शयति—नन्वप्रसिद्धपक्ष इति॥

टीकाकारेण "त्रितयमपि समाधत्ते" इत्युक्तम्; इदमयुक्तम्—न ह्यनेनास्तित्वकीर्तनेन त्रितयं समर्थितं भवति; नह्यस्तित्वं तेन विनाऽनुपपन्नम् असङ्गत्वं चास्तित्वकीर्तनम्। नाप्यस्तित्वमात्रेण विचारप्रवृत्तिः; सतोऽप्यज्ञानस्य विचारानर्हत्वात्। ज्ञानत्वविवक्षायां विचारानर्थक्यम्; ज्ञानार्थत्वात्तस्य। अतोऽसंबन्धं [तात्पर्यकथनम्-इत्याशङ्क्यावतारयति—अविज्ञाते तत्त्व इति॥ "अविज्ञाते तत्त्वे" इत्ययुक्तम्; तादृशे तर्काप्रवृत्तेरित्याशङ्क्य व्याचष्टे—सामान्यप्रतिपन्नस्येति॥ धर्मादौ विशेषरूपेण गृहीतस्य विचार्यत्वं इष्यत इति व्याख्यानान्तरमाह—विशेषतोऽपीति॥

### पञ्चपादिका

अस्ति तावद् ब्रह्म इत्यादिना त्रितयमपि समाधत्ते श्रोतृप्रवृत्त्यर्थम् । ननु प्रेक्षावताऽविसंवादकेन प्रणीतं शास्त्रम् । नेदृशो निष्प्रयोजनं निर्विषयमसंबद्धं चारभते, इति तद्गौरवादेव प्रवर्तन्ते श्रोतारः; किमनेन प्रयासेन ? सत्यं, भवति सामान्येन प्रयोजनवत्त्वप्रतीतिः प्रणेतृगौरवात्, न तु तावन्मात्रेण प्रवृत्तिः । अभिप्रेतप्रयोजनाय हि प्रवर्तन्ते, न तद् निर्देशादृते शक्यतेऽवगन्तुम् ॥

एवमपि प्रयोजनविशेष एव निर्दिश्यताम् । नच विषयभावमनापन्नमशक्यप्रतिपादनं च प्रयोजनं भवति, छिदिक्रियाविषय एव वृक्षश्छिन्नः प्रयोजनमित्युच्यते, दण्डादेरपि मृद्विषयस्य मृदेव घटावस्था प्रयोजनम् ॥

### पञ्चपादिकाविवरणम्

प्रतिभासगोचरतया विचारयोग्यत्वप्रदर्शनेन त्रितयमपि समाधत्त इति भाष्यस्य तात्पर्यमाह—**अस्ति तावद् ब्रह्मेत्यादिनेति** ॥ ननु समन्वयाध्यायनिरूपणेन ब्रह्मैव विषयः प्रतिपाद्यं चेति सिध्यति, फलाध्यायेन तु फलविशेषः, इति न त्रितयमत्र प्रतिपादनीयमिति ? तत्राह—**श्रोतृप्रवृत्त्यर्थमिति** ॥ **ननु प्रेक्षावतेत्यादि**चोद्य-परिहारौ स्पष्टौ ॥

ननु प्रयोजनविशेष एव प्रवृत्त्यङ्गं भवति, न विषय-संबन्धाविति चोदयति—**एवमपि प्रयोजनविशेष एवेति** ॥ ननु साधनमपि प्रवृत्तिविषयं शक्यसाध्यं चानवगम्य फलज्ञानात् कुत्र प्रवर्तेत इति ? तत्राह—**नच विषयभावमनापन्नमिति** ॥ ननु फलसाधनं प्रवृत्तिविषयः, न फलमिति ? तत्राह—**छिदिक्रियाविषय एवेति** । प्रयोजनसमवायि वस्तु कर्मकारकतया विषयो भवति । ततश्च प्रयोजनप्रतिपत्तौ विषयोऽप्यन्तर्भवतीत्यर्थः । ननु कुलाल-दण्डादिव्यापारो मृद्विषयः, घटश्च प्रयोजनम्, इति विषय-प्रयोजनयोर्भेद इति ? तत्राह-**दण्डादेरपीति** ॥

### तत्त्वदीपनम्

**ननु समन्वयेति** ॥ स्वाभिलषितोपायज्ञानं विना ग्रन्थविशेषे प्रवृत्त्यनुपपत्तेस्तदर्थं विषयादेरादौ निर्देश इत्याह—**तत्राहेति** ॥

प्रयोजनविशेषनिर्देशं विना प्रवृत्त्यसंभवश्चेत्, तर्हि स एव निर्दिश्यतामित्युक्तम् "एवमपी"त्यत्र, किमवधारणमयोगं व्यवच्छेदयति ? उतान्ययोगम् ? आद्ये, मदिष्टसिद्धिः न द्वितीयः प्रवृत्त्यङ्गत्वेनेतरयोरपि वक्तव्यत्वादित्याशङ्क्याह—**ननु प्रयोजनेति** ॥ प्रवृत्त्यव्यभिचारात् तयोरपि प्रवृत्त्यङ्गत्वे ततस्तन्निर्देशोऽपीति शङ्कते—**ननु साधनमिति** ॥ **शक्यसाध्यमिति** । प्रतिपादयितुं योग्यतालक्षणसंबन्धमित्यर्थः फलाभेदात् तयोर्न पृथग् निर्देश इत्याह-**तत्राहेति** ॥ फलाभेदोऽसिद्ध इति शङ्कते—**नन्विति** ॥ तृप्तिसाधने प्रवृत्तिर्दृश्यते, न तु तृप्तावित्यर्थः । फलस्यापि विषयत्वं दृष्टमित्याह—**तत्राहेति** ॥ किं फलस्य विषयत्वव्यपदेशः ? उत फलमेव विषयः ? आद्यस्त्वङ्गीक्रियते, द्वितीयस्त्वनुपपन्नः; केवलस्य विषयत्वात्, क्रियाजनितातिशयविशिष्टस्य च फलत्वादित्याशङ्क्य तात्पर्यमाह—**प्रयोजनेति** । क्रियाजनितोऽतिशयः प्रयोजनम्, तच्छालिनो विषयत्वमित्यर्थः । ततः किमिति ? अत आह—**ततश्चेति** । यद्यपि क्रियाजनितातिशयशालितया प्रयोजनत्वम्, ज्ञायमानातिशयविशिष्टतया विषयत्वमिति भेदः; तथाऽपि फले ज्ञाते विषयोऽपि ज्ञातो भवेत्, इति न पृथग् निर्देशापेक्षेत्यर्थः ॥ विषय-फलयोरत्यन्तभेदोऽपि दृश्यत इति शङ्कते—**ननु कुलालेति** ॥ अत्यन्तभेद उपादानोपादेयभावस्यानुपपत्तेः स नेष्टव्य इत्याह—**तत्राहेति** ॥

### ऋजुविवरणम्

प्रकृते तु कथं विचारयोग्यतेति ? तदाह—**ब्रह्मणोऽपीति** ॥

"एवमपी" त्यनेन प्रयोजनमेव निर्दिश्यतामिति चोद्यं कृतम् तदयुक्तम्, त्रितयस्यापि प्रवृत्तिहेतुत्वेन प्रतिपादनस्योक्तत्वादित्याशङ्क्यावतारयति—**ननु च प्रयोजनविशेष एवेति** ॥ "नच विषयभावमि" त्यनेन प्रयोजनस्यैव विषयत्वं शक्यप्रतिपाद्यत्वं च प्रदर्शितम्, तदसङ्गतम्; प्रवृत्त्यङ्गत्वाभावेन चोद्यमुपक्रम्य प्रयोजनान्तर्भावप्रतिपादनात् परस्परविरुद्धश्चायं ग्रन्थः; अन्तर्भावे प्रवृत्त्यङ्गत्वस्यापि सिद्धेरित्याशङ्क्यावतारयति—**ननु साधनमपीति** ॥ फलज्ञानात् साधने प्रवर्तमानस्तस्य विषयत्वादिकमपेक्षते, इति तावपि वक्तव्यावित्यर्थः । "नच विषयभावमि" त्यनेन फलस्य प्रवृत्तिविषयत्वमुक्तमित्येतदुत्तरचोद्ये द्योतितम्, तथा सति संबन्धोऽपि तेनैवेति । ननु वृक्षस्य केवलस्य विषयत्वम्, छिन्नस्य प्रयोजनत्वमुक्तम् "छिदि क्रियाविषय" इत्यनेन, तथा सति न फलस्य प्रवृत्तिविषयत्वम् । यद्यपि विषयगतं फलम्; तथाऽपि फलातिरिक्तस्य विषयत्वाद् विषय-संबन्धयोः पृथग्वक्तव्यत्वं तदवस्थम्, अन्तर्भावोऽपि न सिध्येदित्याशङ्क्य व्याचष्टे—**प्रयोजनसमवायीति** ॥

**पञ्चपादिका**

**सत्यमेवम्; तथाऽपि यथा चिकित्साज्ञाने चरकसुश्रुतात्रेयप्रभृतीनि बहूनि, यथा वा तण्डुलनिष्पत्तिप्रयोजना अवघात-नखनिर्भेद-दलनक्रिया बहवः, तत्र नावश्यमेकत्रैव प्रवृत्तिः, तथेहाप्यन्यस्मादपि कथंचिद् ब्रह्मावगतिसिद्धौ नावश्यमत्रैव प्रवृत्तिः; अतोऽनन्यसाधारणो विषयो वक्तव्यः, यथाऽर्जुनस्यायं विषय इत्यनन्यसाधारणता प्रतीयते। तेनानन्यसाधारणत्वाय विषयो निर्देश्यः प्रवृत्त्यङ्गत्वेन ॥**

**पञ्चपादिकाविवरणम्**

सत्यं प्रयोजनसमवायी विषयःप्रयोजनबुद्धावन्तर्भवति, किन्तु प्रयोजनं प्रति करणलक्षणस्य पुरुषव्यापारविषयस्यानन्यसाधारणतया शक्यप्रतिपाद्यतया च विषयभावे दर्शिते प्रयोजनसाधने नियमेन प्रवृत्तिर्भवति, नेतरथेति परिहरति—**सत्यमेवं तथापीत्यादिना** ॥ तत्र प्रवृत्तिनियमायानन्यसाधारणतया विचार-तज्जन्यज्ञानयोरनुभूयमानतया प्रयोजनमपि ब्रह्म स्वरूपेण विषयतया पृथग् वक्तव्यमिति दर्शयितुं विपक्षे दृष्टान्तमाह—**यथा चिकित्साज्ञानस्येति** ॥

**तत्त्वदीपनम्**

विषय-संबन्धयोः प्रयोजनान्तर्गतत्वाद् न पृथग् निर्देश इति शङ्कायां "सत्यमि"ति तदङ्गीकारो न युक्तः; पृथग् निर्देशस्य साध्यमानत्वादित्याशङ्क्य तात्पर्यमाह—**सत्यमिति** ॥ अङ्गीकृतमेवांशमाह—**प्रयोजनेति** ॥ द्विविधं विषयत्वम्—क्रियाफलशालित्वम्, अनन्यसाधारणत्वं चेति। तत्राद्यः प्रयोजनप्रतिपत्तौ प्रतिपन्नो भवतीत्यर्थः। कथं तर्हि विवादः? इति शङ्कते—**किन्त्विति** ॥ अनन्यसाधारणतालक्षणस्य विषयस्य प्रयोजनानन्तर्भावात् पृथग् वक्तव्यत्वमित्याह—**प्रयोजनमिति**। ब्रह्मणोऽनन्यसाधारणतया शक्यप्रतिपाद्यतया च प्रयोजनत्वम्; प्रकरणस्य पुरुषव्यापारविषयस्य श्रवणादेर्विषयभावे दर्शिते साधने नियमेन प्रवृत्तिर्भवतीति योजना। व्यापारविषयस्येति षष्ठी कर्मणि द्रष्टव्या ॥ ब्रह्मणोऽनन्यसाधारणतारूपं विषयत्वं चिकित्सादृष्टान्तेन समर्थ्यत इति तस्यासंगतिमाशङ्क्य तात्पर्यमाह—**तत्र प्रवृत्तीति**। अनुभूयमानतया विचार-तज्जन्यज्ञानयोः प्रयोजनमपि ब्रह्म विषयतया पृथग् वक्तव्यमिति दर्शयितुं दृष्टान्तमाहेति संबन्धः। विषयतयेत्येतद्विवृणोति—**अनन्यसाधारणतयेति** ॥ कथं तस्यानन्यसाधारणता? सर्वप्रत्ययवेद्यत्वाभ्युपगमादिति शङ्कां व्यावर्तयति—**स्वरूपेणेति**। सदाकारेण सर्वप्रत्ययवेद्यत्वेऽप्यद्वैतानन्दाद्याकारस्य मानान्तरागोचरत्वादनन्यसाधारणत्वमित्यर्थः। **विषयस्य पृथग्वक्तव्यत्वे हेतुमाह—तत्र प्रवृत्तीति**। विचारनियतप्रवृत्तिसिद्धय इत्यर्थः। **अनुभूयमानतयेति**—विचार-तज्जन्यज्ञानसाध्यानुभवफलाश्रयतयेत्यर्थः ॥ **विपक्ष इति**। अनन्यसाधारणविषयाप्रतिपत्तौ साधनप्रवृत्तिनियमाभाव इत्यर्थः। (टीकायाम्) दृष्टान्तस्यायमर्थः—चिकित्साज्ञान उद्देश्ये चरकसुश्रुतात्रेयभृतीनि बहूनि साधनानि विद्यन्ते, तेषां मध्य एकत्रैव नावश्यं प्रवृत्तिः, सर्वेषां साधनत्वाविशेषात्। तत्रैव लौकिकं दृष्टान्तमाह—**यथेति** ॥ दलनं नाम प्रस्थपृष्ठादिना विदारणम्। दार्ष्टान्तिकमाह—**तथेति** ॥ उक्तेऽर्थेऽन्वयमाह—**यथेति**। निवातकवचवधादेरर्जुनेनैव साध्यत्वादनन्यसाधारणत्वमित्यर्थः। तस्मात् साधनविशेषप्रवृत्तिनियमाय धनान्तरास्पृष्टत्वं सावक्तव्यमित्युपसंहरति—**तेनेति** ॥

**ऋजुविवरणम्**

सत्यमित्यङ्गीकारो न युक्तः, विषयसंबन्धनिरूपणं न कर्तव्यम्; प्रयोजनान्तर्गतत्वादिति चोद्यस्य कृतत्वात् तदङ्गीकारायोगात्, अङ्गीकारे चोत्तरत्र तन्निरूपणसाधनस्य व्याहतत्वप्रसङ्गादित्याशङ्क्य व्याचष्टे—**सत्यं प्रयोजनेति** ॥

ननु प्रयोजनसमवायिनो विषयत्वम्, तच्च प्रयोजनबुध्यन्तर्गतं न पृथग् वक्तव्यमित्युक्तम्, प्रवृत्तिविषयत्वं च प्रयोजनस्य नान्यस्य, अतः किं साधनविषयादिनिरूपणेन? इत्याशङ्क्याऽऽह—**किन्तु प्रयोजनमिति** ॥ ननु प्रयोजनआधनेनैव पुरुषः प्रवर्तते, विषयोऽपि तस्य सिद्ध एव, किं निर्देशेन्? इत्याशङ्क्याह—**अनन्यसाधारणतयेति** ॥ ननु सति विषये पुरुषः प्रवर्तते; किमनन्यसाधारणत्वेनेति? तत्राह—**नियमेनेति** ॥ ननु चरकादिदृष्टान्तो विषम इवाभाति; विषयत्वेन विना प्रवृत्त्यभावं वक्तुं प्रकम्य प्रयोजनानियमे सति दृष्टान्तेन नियमेन प्रवृत्त्यभावसाधनात्, विषयत्वनिर्देशसाधनमपि व्यर्थम्; विचार-ज्ञानयोर्ब्रह्मनिष्ठत्वेन तद्विषयत्वसिद्धेरित्याशङ्क्यावतारयति—**तत्र प्रवृत्तिनियमायेति** ॥

### पञ्चपादिका

**सम्बन्धोऽपि वक्तव्यः प्रवृत्त्यङ्गत्वेनैव। यथा साधुशब्दपरिज्ञानं व्याकरणारम्भात् प्राग् न केनचित्साध्यते, तेन न केनचित् सम्बद्धम्; अतस्तदर्थी न क्वचित् प्रवर्तते, यथा वौदनिष्पत्तिरेकक्रियानियताऽपि न गमनाद्येकक्रियासाध्या, तेन न तया सम्बन्धः। ततश्च न गमनादिक्रियायामोदनार्थी प्रवर्तते, तेन [पुरुषार्थरूपताऽनन्यसिद्धता तत्प्रतिपाद्यता चेति भिद्यन्ते विषयसम्बन्धप्रयोजनानि। [तानि च त्रीण्यपि प्रवृत्त्यङ्गम्; नापुरुषार्थे काकदन्तपरीक्षायां तुषकण्डने वा प्रवर्तते**

### पञ्चपादिकाविवरणम्

विषयस्य संबन्धिरूपतयाऽन्तर्गर्भितसंबन्धत्वाद् न पृथक्संबन्धो वक्तव्य इति? तत्राह—**संबन्धोऽपि वक्तव्य इत्यादिना**॥ तत्रानन्यप्रतिपाद्यत्वात् साधनान्तरनिवृत्तिरूपादन्यत्वात् संबन्धस्य, सोऽपि पृथग्वक्तव्य इति दर्शयितुं विपक्षे दृष्टान्तमाह—**यथा साधुशब्दपरिज्ञानमित्यादिना**॥ अयमर्थः—व्याकरणारम्भात् प्राक् चिकित्साव्यापाराद् व्यापारान्तरैरसाध्यमपि साधुशब्दज्ञानं न चिकित्साव्यापारस्य विषयः, संबन्धाभावात्, किंतु व्याकरणेन संबन्धात्तस्य विषयो भवति। **अतस्तदर्थी न क्वचिदिति**। चिकित्साव्यापार इत्यर्थः। ननु एवमप्यन्यतमाभिधानेनान्यतमस्यार्थसिद्धत्वान्न पृथगभिधानेन कृत्यमिति नेत्याह—**तेन पुरुषार्थरूपतेत्यादिना**॥ **भिद्यन्त इति** पृथग्वक्तव्यानीत्यर्थः। नचान्यतमेनान्यतमस्य सिद्धिः; सत्यप्येकस्मिन्नितराभावस्य दर्शितत्वादिति। ननु स्वरूपभेदे पृथगभिधानापेक्षायामपि कथं त्रितयं सम्भूय न प्रवृत्त्यङ्गमिति? तत्र व्यतिरेकमुखेन प्रवृत्तिहेतुत्वं दर्शयति—**तानि च त्रीण्यपि प्रवृत्त्यङ्गम्; नापुरुषार्थे इत्यादिना**॥

### तत्त्वदीपनम्

विषयनिर्देशमङ्गीकृत्य संबन्धमाक्षिपति—**विषयस्येति**। अनन्यप्रतिपाद्यत्वे सत्येतत्प्रतिपाद्यो विषयः, तथाच संबन्धो न पृथग् निर्देष्टव्य इत्यर्थः। संबन्धरूपत्वमसिद्धमित्याह—**तत्राहेति**॥ कथमसिद्धिः? इति वीक्षायामाह—**तत्रेति**। संबन्धस्यानन्यप्रतिपाद्यत्वादन्यत्वात् सोऽपि वक्तव्य इति संबन्धः। अन्यत्वं दर्शयितुमनन्यप्रतिपाद्यत्वमेव विशिनष्टि—**साधनान्तरेति**॥ संबन्धाभावे प्रवृत्तिनियमाभाव इत्यत्र दृष्टान्तप्रदर्शनपर उत्तरग्रन्थ इत्याह—**इति दर्शयितुमिति**॥ साधुशब्दपरिज्ञानस्य व्याकरणसंबन्धत्वं विषयत्वं च ततः कथं व्यतिरेकदृष्टान्त इत्युक्तम्? इत्याशङ्क्याह—**अयमर्थ इति**॥ "तदर्थी न क्वचिदपि प्रवर्तते" इत्ययुक्तम्; व्याकरणे प्रवृत्तिसंभवात्, तत्राह—**अत इति**॥ प्रयोजनज्ञानमेव विषयादिज्ञानमित्यसंभवेऽपि तदविनाभावादितरसिद्धिरिति शङ्कते—**नन्वेवमपीति**॥ अर्थसिद्धत्वमसिद्धमित्याह—**नेत्याहेति**॥ भिद्यन्त इति कथमुक्तम्? तेनापि तथाऽभ्युपगमादित्याशङ्क्याह—**भिद्यन्त इति**॥ तत्र हेतुमाह—**न चान्यतमेनेति**। चशब्दोऽवधारणार्थः "सिद्धि"पदेन संबध्यते। उक्तमर्थमनङ्गीकृत्य प्रवृत्त्यङ्गत्वमाक्षिपति—**ननु स्वरूपेति**। प्रमाणाभावादिति द्रष्टव्यम्। प्रमाणाभावोऽसिद्ध इत्याह—**तत्रेति**॥ ब्रह्मणः सामान्यतः प्रसिद्धयादेर-

### ऋजुविवरणम्

ननु साधुशब्दपरिज्ञानोपन्यासो न युक्तः; संबन्धाभावे प्रवृत्त्यभावमात्रसाधनात्, तस्य च विषयत्वनिर्देशे तस्यान्तर्गर्भित संबन्धत्वेन पृथगनुक्तेः साधितत्वात् तत्र विषयत्वभावेनैवाप्रवृत्तेर्वक्तुं शक्यत्वात्, इत्याशङ्क्योपयोगमाह—**तत्रानन्यप्रतिपाद्यत्वादिति**॥ ननु साधुशब्दपरिज्ञाननिदर्शनमप्रयोजनम्; व्यापारान्तराणां वर्वेषामपि विषयत्वेनैव तत्राप्रवृत्तेर्वक्तुं अक्यत्वात्, संबन्धाभिधाने हैतुत्वाभावात्, "न केनचित्साध्यमि"त्यसाध्यत्वकीर्तनमप्यसङ्गतम्; अत्र व्यापारविशेषेषु विषयत्वे सत्यप्यसंबन्धादप्रवृत्तिर्वक्तव्या, सा च नोक्ता; अतो न युक्त इत्याशङ्क्य व्याचष्टे—**अयमर्थः, व्याकरणारम्भादिति**॥ "तदर्थी न क्वचिदि"त्यविशेषोक्तिरनर्थिका; व्याकरणे प्रवृत्तेरन्यत्राविषयत्वेनैवाप्रवृत्तिर्नासंबन्धहेतुकेत्याशङ्क्याह—**न क्वचिदिति; चिकित्साव्यापार इति**॥ "भिद्यन्ते" इति व्यधिकरणम्; अभिधानेनान्यसिद्धेऽपरिहारात्, विद्धसाधनश्चेत्याशङ्क्य व्याचष्टे—**पृथग्वक्तव्यानीति**॥ ननु यान्तरीयकसिद्धेर्न पृथगभिधानमित्ययुक्तमित्याशङ्क्याभिप्रायमाह—**न चान्यतमेनेति**॥ "तानि च त्रीण्यपी"त्यादिग्रन्थः पुनरुक्तः। पूर्वमेव भेदस्य प्रवृत्त्यङ्गत्वस्य च साधितत्वात्, इत्याशङ्क्यावतारयति—**ननु स्वरूपभेद इति**॥ ननु प्रवृत्तिहेतुत्वं वक्तुं प्रक्रम्यान्यतमाभावे प्रवृत्त्यभावमात्रकीर्तनमयुक्तम्; तावता हेतुत्वासिद्धेः, इत्याशङ्क्यावतारयति—**तत्र व्यतिरेकमुखेनेति**॥ ननु त्रितयस्य प्रवृत्तिहेतुत्वेन वक्तव्यत्वमभिधाय तत्प्रतिपादनमनन्तरभाष्यस्य व्याख्यानं वा कर्तव्यम्, नतु सकलभाष्यतात्पर्यकथनमुपयुज्यते;

### पञ्चपादिका

प्रेक्षावान् । नापि पुरुषार्थे चिकित्साज्ञाने सुश्रुतादिसिद्धे, चरके नियमेन प्रवर्तते । नापि तण्डुलेषु दलनसिद्धेष्ववघाते । नाप्यनन्यसिद्धेऽपि साधुशब्दपरिज्ञाने पुरुषार्थे, अतत्साधने दैद्यकादौ कश्चित् प्रवर्तते, गमने वाऽन्नोदनसाधने । तत्र विप्रतिपत्त्यैकान्ततः प्रसिद्धतामप्रसिद्धतां च निरस्य शक्यप्रतिपाद्यमानतामनन्यसिद्धतां च दर्शयन् विषय-सम्बन्धौ समर्थितवान् । "निःश्रेयसप्रयोजना प्रस्तूयते" इति च प्रयोजनम् ॥

ननु ब्रह्म वेदान्तानां विषयः, शास्त्रं च तेषां ब्रह्मप्रतिपादनानुसरणोपायन्यायविषयम्, तत् कथं शास्त्रस्य विषय-सम्बन्धौ भवतः ? प्रयोजनन्तु कदाचित् स्यादपि प्रणाड्या धर्मार्थविषययोरिव शास्त्रयोः कामावाप्तिः ।

### पञ्चपादिकाविवरणम्

ननु वक्तव्यमपि त्रितयं प्रसिद्धाप्रसिद्धपक्षयोरनुपपन्नमित्युक्तमिति ? तत्परिहारायोत्तरभाष्यस्यआऽधिकरणपरिसमाप्तेस्तात्पर्यमाह—**तत्र विप्रतिपत्त्यैकान्ततः प्रसिद्धतामित्यादिना** । तत्र प्रसिद्धिमात्रेण विचारविधानोपपत्तिः; उद्देशनसम्भवात्, एकान्तप्रसिध्यभावाद्विचारजन्यज्ञानस्यानन्यसाधारणतेति । विप्रतिपत्तिशब्दो ब्रह्मशब्दव्युत्पत्तेरप्युपलक्षणार्थः ।

ननु एवमपि विचारशास्त्रस्य विषय-संबन्धौ न समर्थिताविति चोदयति **ननु ब्रह्म वेदान्तानामिति** ॥ ननु "ब्रह्मजिज्ञासे"ति शास्त्रस्यापि स एव विषयो निर्दिष्टः ? नेत्याह—**शास्त्रं च तेषामिति** ॥ सूत्रवाक्यानि न्यायविषयाणि न्यायाश्च प्रमाण-प्रमेय-सम्भावनादिविषयाः । ननु सम्भावनावगम एव तर्हि प्रयोजनमिति ? नेत्याह—**प्रयोजनं त्विति** ॥ **प्रणाड्येति** परम्परयापीत्यर्थः । धर्मार्थाभ्यां सुखमेव प्राप्यत इति तयोस्तत्परता ।

### तत्त्वदीपनम्

संभवाद् न विषयादि निर्देष्टव्यमित्युक्तमनुवदति—**ननु वक्तव्यमिति** ॥ एकान्ततः प्रसिद्धप्रसिद्धयोः प्रतिपत्त्यनुपपत्त्या प्रसिद्धतामात्रं सिध्यति, कथं विषयादिः ? इत्याशङ्क्याह—**तत्र प्रसिद्धेति** ॥ न केवलं विप्रतिपत्त्यनुपपत्त्या ब्रह्मसिद्धिः, अपि तु ब्रह्मशब्दव्युत्पत्त्याऽपीत्याह—**विप्रतिपत्तीति** ॥

ब्रह्मणः शास्त्रविषयत्वं कथं प्रतिषिध्यते ? वेदान्तानामेव शास्त्रत्वादित्याशङ्क्य, शास्त्रशब्देन वाक्यनिर्णयापेक्षितन्यायप्रतिपादको ग्रन्थो निर्दिश्यत इत्यभिप्रायेणाह—**नन्वेवमिति** ॥ ब्रह्मणः शास्त्राविषयत्वं सूत्रपराहतमिति शङ्कते—**ननु ब्रह्मेति** ॥ प्रतिभासविरोधान्मैवमिति परिहरति—**नेत्याहेति** ॥ न्यायानां ब्रह्मविषयत्वात् शास्त्रमपि तद्विषयमित्याशङ्क्याद—**सूत्रेति** ॥ विषयसंबन्धयोरेवाक्षेपे को हेतुः ? इति शङ्कते—**ननु संभावनेति** ॥ शास्त्रस्य संभावनाविषयत्वात् तज्ज्ञानं प्रयोजनम्, न मुक्तिरित्यर्थः । संभावनाज्ञानस्य सुख-दुःखप्राप्ति-निवृत्त्यन्यतरत्वाभावान्न स्वरूपेण पुमर्थत्वमित्याह—**नेत्याहेति** ॥ प्रकृष्टा नाडी प्रणाडीति शङ्कां निरस्यति—**परम्परयेति** ॥ इच्छावाप्तिः शास्त्रप्रयोजनत्वेन निर्दिष्टेति शङ्कां निरस्यति—**धर्मार्थाभ्यामिति** ॥

### ऋजुविवरणम्

"अस्ति तावदित्यनेन त्रितयमपि समाधत्ते" इत्यनेन पौनरुक्त्यादित्याशङ्क्याह—**ननु वक्तव्यमपीति** ॥ ननु एकान्तप्रसिध्यभावे न विचारविधानसंभवः, संबन्धाभावात्, प्रमाणसिद्धत्वादेव प्रसिद्धौ तु विषयत्वासंभवः, अतः कथं समर्थिताविति ? तत्राह—**तत्र प्रसिद्धिमात्रेणेति** ॥ ननु भाष्यकारेण ब्रह्मशब्दव्युत्पत्त्या प्रसिद्धिरुक्ता, तेनैव संबन्धादिसमर्थनमपि कृतम्, इतरदभ्युच्चयत्वेनोक्तम् । टीकाकारेण विप्रतिपत्तिमात्रेण समर्थनं कृतमिति भाष्याभिप्राय उक्तः, स भाष्यविरुद्धः ; अयुक्तश्च ; अप्रतिपन्ने विप्रतिपत्त्यभावादित्याशङ्क्य व्याचष्टे—**विप्रतिपत्तिशब्द इति** ॥

**संभावनावगम इवेति** । प्रयोजनमपि न समर्थितमित्यभिप्रायः । विषयत्वं त्वव्यवहितस्यैवेति भावः ॥ प्रणाड्येत्यस्य व्याख्या—**परम्परयाऽपीति** ॥ कथं धर्मार्थशास्त्रयोर्धर्मार्थसिद्धिप्रयोजनयोः कामावाप्तिः प्रयोजनम् ? इत्याशङ्क्याभिप्रायमाह—**धर्मार्थाभ्यामिति** ॥ तत्परतेति धर्मार्थपरतेत्यर्थः । परम्परयाऽपि सुखावाप्ति-दुःखपरिहाराभावेऽव्यवहितमपि न प्रयोजनमित्युक्तं भवति । अथवा, "तत्परते"त्यत्र सुखपरत्वं विवक्षितम् ; परम्परया तस्यैव पुरुषार्थत्वादिति ।

## पञ्चपादिका

ननु आग्नेयादीनां स्वर्गफलानां प्रयाजादीतिकर्तव्यतावद् वेदान्तानामप्यर्थमवबोधयतामितिकर्तव्यता मीमांसा, तेनार्थावबोधे वेदान्तानामुपकारकत्वाद् भवति शास्त्रमपि तद्विषयम् । नहि शालिबीजस्याङ्कुरं जनयतः सहकारिणो जलादेरङ्कुरो न कार्यम् । तेन यद्यपि वेदान्ता एव ब्रह्मावबोधे कारणम्, मीमांसा चेतिकर्तव्यताभागं पूरयति; तथाऽपि

## पञ्चपादिकाविवरणम्

ननु—करणेतिकर्तव्यतयोरेकमेव प्रयोजनमिति निर्णीतं प्रथमे तन्त्रे । तथाहि, "आग्नेयोऽष्टाकपालः" "उपांशुयाजमन्तरा यजति" "अग्नीषोमीयमेकादशकपालमि"ति पौर्णमास्यां कर्मत्रयम्, तथा "आग्नेयोऽष्टाकपालः" "ऐन्द्रं दधि" "ऐन्द्रं पयः" इति दर्शे त्रयमित्याग्नेयादयः षड्यागाः । तेषां करणभूतानां द्विविधान्यङ्गानि निरूपितानि—अर्थकर्माणि संस्कारकर्माणि चेति । फलोपकार्यङ्गानि प्रयाजादीन्यारादुपकारकाण्यर्थकर्माणि, प्रोक्षणादीनि तु द्रव्यद्वारेण यागस्वरूपोपकारितया सन्निपत्योपकारकाणि संस्कारकर्माणि । तत्रोभयविधानामप्यङ्गानां प्रधानापूर्वद्वारेण स्वर्गसिद्धिरेव प्रयोजनमिति । एवं शब्दशक्तितात्पर्यविचारस्य संस्कारकर्मवच्छब्दप्रमाणस्वरूपोपकारितया, अर्थस्वरूपब्रह्मविचारस्य च ब्रह्मावगमफलोपकारितया, अवगम्यमानब्रह्मविषयत्वमुभयविधविचारस्य युज्यत—इत्यपसिद्धान्ती चोदयति—**ननु आग्नेयादीनामित्यादिना** । ननु वेदान्ता एव ब्रह्मावगतिसमर्थाः, तत्र कथमितिकर्तव्यस्यावगमफलतया ब्रह्मविषयतेति ? तत्राह—**तेन यद्यपि वेदान्ता एवेति** ।। ननु कथं संभावनाबुद्धिहेतुतया तद्विषयस्य विचारस्य ब्रह्मावगमजनकतया

## तत्त्वदीपनम्

"आग्नेयादीनामि"त्यत्र करणेतिकर्तव्यतयोरेकविषयत्वमुक्तम्, तत्र के त आग्नेयादयः ? कथं वैकविषयत्वम् ? प्रकृते वा कथम् ? इति वीक्षायां तत्सर्वमाह—**ननु करणेति** ।। तत्र प्रथमं करणस्वरूपमाह—**तथाहीति** ।। "दर्शपूर्णमासाभ्यामि"ति तृतीयाश्रुत्या यागानां समप्राधान्यमुपेयमित्याह—**तेषामिति** ।। किं तदितिकर्तव्यम् ? इति वीक्षायामाह—**द्विविधानीति** ।। अर्थकर्माणि दर्शयति—**फलेति** ।। आरात् दूरे इत्यर्थः आरादुपकारकत्वं दर्शयति—**फलेति** ।। संस्कारकर्मस्वरूपमाह—**प्रोक्षणादीनीति** ।। सन्निपत्योपकारकत्वमाह—**द्रव्येति** ।। करणेतिकर्तव्ययोः स्वरूपमभिधाय तयोरेव विषयत्वमाह—**तत्रेति** । अङ्गेषु पृथक्फलाश्रवणाद् यत्र च फलं श्रूयते, तस्यार्थवादत्वात्, करणफलमेव फलमित्यर्थः । दार्ष्टान्तिकमाह—**एवमिति** । निर्णीतशक्तितात्पर्यविशिष्टस्य शब्दस्य करणत्वात् शक्तितात्पर्यनिर्णयस्य विचाराधीनत्वात् स्वरूपोपकार्यङ्गत्वम्, प्रमेयविचारस्य त्वारम्भावगमादिनिर्वृत्तिरेव फलोपकारत्वमित्यर्थः । विचारस्य प्रतिबन्धनिवर्तकत्वाङ्गीकरणाद् ब्रह्मविषयत्वाभिधानं सिद्धान्तविरुद्धमित्याशङ्क्याह—**अपसिद्धान्तीति** । एकदेशीय इत्यर्थः । वेदान्ताः किं ब्रह्म बोधयितुमीशते ? उत न ? इति विकल्प्यान्त्ये विचारस्याप्यनपेक्ष्यत्वमित्यभिप्रेत्याद्यं दूषयति—**ननु वेदान्ता इति** ।। समर्थस्याप्यन्यापेक्षा दृष्टेत्याह—**तत्रेति** ।। प्रकारान्तरेण ब्रह्मविषयत्वमाक्षिपति—**ननु कथमिति** ।। अन्यविषयस्याप्यन्यविषयत्वं दृष्टम्, ततो न विरोध इत्याह—**तत्राहेति** ।। उद्यमनादिव्यापारस्य वृक्षेऽतिशयजनकत्वात्

## ऋजुविवरणम्

"नन्वाग्नेयादीनामि"त्यादिना ग्रन्थेन प्रयाजादिदृष्टान्तेन मीमांसाया इतिकर्तव्यताभावेन वेदान्तेन समानविषयत्वमिति चोद्यं कृतम्, तदयुक्तम् ; वैषम्यात्, न ह्याग्नेयादियागविषयः प्रयाजादीनामपि विषयः ; अकर्मकत्वात् ; सकर्मकत्वे वा वाच्यभेदाद्भिन्नविषयत्वात् । नाप्येतद्दृष्टान्तबलादेकप्रयोजनत्वं साध्यम्, वैयर्थ्यात् । विषयसंबन्धयोराक्षेपः पूर्वं कृतः, न प्रयोजनस्य । नच संबन्धादि साधन उपयुज्यते, नापि करणेतिकर्तव्यतयोरेकप्रयोजनत्वे किञ्चन प्रमाणमस्ति । तथा के त आग्नेयादयः ? के च प्रयाजादय इति ? तत्सर्वं निरूपयति—**ननु करणेतिकर्तव्यतयोरिति** ।। कथमाग्नेयादीनां प्रयाजादय इतिकर्तव्यताभावं ययुः ? अविशेषात्, आग्नेयादीनामेव तदपेक्षत्वे कारणाभावात्, इतरेषामितिकर्तव्यतात्वे प्रमाणभावादित्याशङ्क्याह—**करणभूतानामिति** ।। "प्रयाजादी"त्यादिशब्दगृहीतं सन्निपातवर्गं दर्शयति—**द्विविधानीत्यादिना** । साजात्यादारादुपकारकमात्रपरिग्रहे द्विविधस्यापि तर्कस्य ब्रह्मविषयत्वं न सिध्येत्, तथा सति शक्तितात्पर्यहेतुतर्कस्यापेक्षितविषयत्वाभावेन तस्यारम्भो न भवेदिति । **आराद् दूर इत्यर्थः** ; करणशरीरनिर्वर्तकत्वाभावात् । ननु एकप्रयोजनत्वेऽपि न समानविषयत्वलाभः ; तथा सत्येकप्रयोजनत्वसाधनं व्यर्थमिति यच्चोदितम्, तत् परिहरति—**ब्रह्मावगमफलोपकारितयेति** । अवगमस्य सकर्मकत्वात् तज्जनकस्यापि तेन समानविषयत्वम्, तेन

### पञ्चपादिका

**ब्रह्मविषयैव । न हि छेत्तुरुद्यमन-निपातनलक्षणो व्यापारः परशुविषयो न वृक्षविषयः; तदर्थत्वात्, करणस्य च द्वारत्वात्;**

### पञ्चपादिकाविवरणम्

तद्विषयता, नह्यन्यविषयो व्यापारोऽन्यविषय इति ? तत्राह—**नहि छेत्तुरिति** ।। द्विविधं हि कर्मकारकम्—किंचिदव्यवधानतया व्यापारजन्यातिशयवत्, यथोद्यमन-निपातनव्यापारस्योर्ध्वाधोदेश-संयोगविभागातिशयविशिष्टः कुठारः कर्तृव्यापारस्याव्यवधानेन कर्मकारकं भवति ; किञ्चिदुद्देश्यफलतया करणव्यापारव्यवधानेन कर्म भवति, यथा द्वैधीभूतो वृक्ष इति । तत्र कर्तृव्यापारः करणव्यापारव्यवहितोऽपि वृक्षो द्वैधीभावफल उच्यते, 'वृक्षं छिनत्ती'ति कर्तृव्यापारस्य तत्कर्मतावगमात् ; स एव वृक्षः कुठारव्यापारस्य साक्षात्कर्म भवति, अव्यवधानात् । ननु करणस्य कुठारस्य कथं कर्तृतेति ? उच्यते, सर्वाणि खलु स्वव्यापारापेक्षया कर्तॄणि । सर्वकारकव्यापाराणां च फलं कर्मतया साध्यम् । तत्र कर्तृ-करण-कर्मभेदोऽवान्तरभेदापेक्षया भवति । तत्र कर्ता साधननियोगेन वा धातुना विशेष्यव्यापारतया वा स्वतन्त्र-

### तत्त्वदीपनम्

कथं परशुविषयत्वम् ? इत्याशङ्क्याह—**द्विविधमिति** ।। द्वैविध्यमेवाह—**किंचिदिति** ।। **कर्तृव्यापारस्येति**—तस्योद्यमननिपातनव्यापारस्येत्यनेन संबन्धः । उद्देश्यं फलं यस्य स उद्देश्यफलः, तस्य भावस्तत्ता, तयेत्यर्थः । उद्यमनादेः करणव्यापारस्य च वृक्षविषयत्वमिति वीक्षायामाह—**तत्रेति** ।। कुठारव्यापारस्यापि व्यवधानेन वृक्षविषयत्वम्, अन्यथेतरत्रापि व्यवधानं न स्यादित्याशङ्क्य व्यवधानानुभावान्मैवमित्याह—**स एवेति** ।। कुठारकर्तृव्यापारस्य वृक्षविषयत्वमुक्तम्, तदनुचितमिति चोदयति—**नन्विति** । करणत्व-कर्तृत्वयोरेकत्र व्याघातादित्यर्थः । विकल्पासहत्वान्नैतच्चोद्यमित्याह—**उच्यत इति** ।। किमेकविषययोर्विरोधः ? उत भिन्नविषययोः ? तत्राद्येऽभ्युपगमः, द्वितीयस्त्वनुपपन्न इत्याह—**सर्वाणीति** । करणस्यापि कारकत्वात् क्रियाकारिणश्च कारणस्य स्वव्यापारं प्रति कर्तृत्वमित्यर्थः ।। करणस्य स्वव्यापारकर्तृत्वेऽपि न वृक्षविषयत्वम्, द्वैधीभावातिरिक्तफलस्यानिरूपणात्, द्वैधीभावस्य चान्यफलत्वादिति शङ्कायामाह—**सर्वेति** ।। **कर्मतयेति** उद्देश्यतयेत्यर्थः । करणस्यापि कर्तृत्वे कर्ता करणं चेति भेदव्यपदेशो निर्विषयः स्यादित्याशङ्क्याह—**तत्र कर्तेति** ।।

### ऋजुविवरणम्

समानविषयत्वे करणेनापि समानविषयत्वमिति भावः । **नह्यन्यविषय इति** । एतदुक्तं भवति—ब्रह्मावगमजनकत्वेन ब्रह्मविषयत्वमुक्तम्, जनकत्वञ्च तद्विषयत्वेन ; तदत्रान्यविषयत्वेन न संभवति, तथा सति न तत्फलत्वमिति भावः । "न हि छेत्तुरुद्यमने"त्यनेन देवदत्तव्यापारस्य वृक्षविषयत्वमुक्तं तादर्थ्येन, तदयुक्तम् ; परशुविषयत्वेन व्यवहितस्य तद्विषयत्वायोगात्, अनन्यसाधारणत्वेनाव्यवहितवस्तुन्यतिशयजनकत्वं तद्विषयत्वम्, नेह तथा ; नच तदर्थत्वेन व्यवहिततयापि तद्विषयत्वम्; अतो न देवदत्तव्यापारो वृक्षविषय इत्याशङ्क्याह—**द्विविधं हीति** ।। कथमुद्यमन-निपातनव्यापारस्य कुठारविषयता ? तदाश्रयत्वात्, इत्याशङ्क्याह—**कर्तृव्यापारस्येति** । कुठारव्यापारहेतुभूतो व्यापारो विवक्षित इति । ननु सिद्धे कर्तृव्यापारस्य द्वैधीभावफलत्वे वृक्षविषयत्वं सिध्येत्, नच तदस्ति ; व्यवहितत्वात्, फलान्तरस्य विद्यमानत्वादित्याशङ्क्याह—**तत्र कर्तृव्यापार इति** ।। ननु व्यवहितस्य विषयत्वमेव न भवेत्, उद्देश्यतयाऽन्यविषयव्यापारस्यान्योद्देशेन प्रवृत्त्यसंभवात् ; अथवा, परशुविषयत्वमप्येवमेव व्यवधानेनेति वक्तव्यम्, एवं व्यवधानपरम्परया न देवदत्तव्यापारविषयत्वमित्याशङ्क्याह—**स एव वृक्ष इति** ।। **ननु करणस्येति** । कुठारस्य न व्यापारोऽङ्गीकर्तुं शक्यते ; कर्तृत्वापत्तेः करणत्वविरोधाच्च । अतो न तस्य व्यापारः, तदभावे न तद्वसवधानेन वृक्षविषयत्वं वक्तुं शक्यत इति भावः ।। **उच्यते सर्वाणीति** । सर्वकारकाणां स्वव्यापारे कर्तृत्वमविशिष्टम्, अतो न करणे विशेषेण चोद्यमिति भावः ।। ननु स्वव्यापारे कर्तृत्वे करणादिभावो न भवेत्, अन्यव्यापारसाध्यस्याभावात्, व्यापारस्य व्यापारान्तराहेतुत्वाच्च । नापि फलजनकत्वेन यद्गतं फलम्, तद्व्यापारजन्यत्वान्न व्यापारान्तरजन्यता, स्वाश्रय एवातिशयजनकत्वात्, अतो न स्वव्यापाराङ्गीकारो युक्त इत्याशङ्क्याह—**सर्वकारकव्यापाराणामिति** ।। ननु सर्वकारकव्यापारसाध्ये फले न करणादिविभागः । अविशेषादित्याशङ्क्याह—**तत्र कर्तृ-करण-कर्मभेद इति** । अथवा, न सर्वेषां व्यापारः, व्यापारस्यानन्यसाध्यत्वात् कारकत्वस्य क्रियान्वयरूपत्वात् तस्य चाविशेषान्न करणादिविभाग इत्याशङ्क्याह—**सर्वकारकेति** ।। ननु,

### पञ्चपादिका

**अन्यथाऽन्यत्र कर्तृव्यापारोऽन्यत्र फलमिति वैयधिकरण्यं स्यात् ।**

**उच्यते—विषम उपन्यासः; युक्तं यत्र यदुपकारमन्तरेण फलोत्पत्तिरेव न सिध्यति, तस्यापि तद्विषयत्वम्, इह पुनर्विनाऽपि मीमांसया सम्बन्ध-ग्रहण-तदनुस्मरण-बुद्धिसन्निधानमात्रोपकृतं वाक्यमर्थमवगमयति, नापरमपेक्षते ।**

### पञ्चपादिकाविवरणम्

व्यापारः । करणं फलं प्रति सन्निपत्योपकारकम् । फलसमवायि कर्मकारकमिति । 'काष्ठानि पचन्ती' त्यादिव्यपदेशः स्वव्यापारकर्तृत्वापेक्षया, नावान्तरभेदापेक्षयेति । तस्मात् कर्तृव्यापारस्य करणव्यापारव्यवधानेन वृक्षकर्मता एवं विचार-व्यापारस्यापि प्रमाण-प्रमेयसम्भावनावगमद्वारेण ब्रह्मावगमोद्देश्यत्वाद् अवगमहेतोरवगम्यविषयत्वाद् ब्रह्मकर्मता न विरुध्यते । अथाव्यवहितमेव कर्म, नोद्देश्यमिति' ? तत्राह—**अन्यथाऽन्यत्र कर्तृव्यापार** इति ॥

अत्रेतिकर्तव्येषु द्विविधं प्रमाणम्—आगमः, अन्वय-व्यतिरेकौ च; प्रयाजादीनामागमात्, मृत्कुलालादीनां कर्तृव्यापारस्य चाङ्कुरकुम्भद्वैधीभावाङ्गताऽन्वय-व्यतिरेकाभ्याम् । अत्र तु शब्दोपलब्धिसंबन्धज्ञानसंस्कारसहकृताच्छब्दा-दर्थावगमे सति विचारस्याङ्गता नान्यतरप्रमाणेनाप्यवगता, शब्दादेव विचारानपेक्षादवगमजननादित्यपसिद्धान्तिनं परिहरति पूर्ववादी—**विषम उपन्यास इति** ॥

### तत्त्वदीपनम्

भेदमेवाह—**तत्र कर्तेति** । तत्र तेषां कर्त्रादीनां मध्ये स्वतन्त्रव्यापारः कर्तेति संबन्धः । स्वतन्त्रव्यापारत्व-मेवाह—**साधननियोगेनेति** । साधारणप्रेरणेनेत्यर्थः । लक्षणान्तरमाह—**धातुनेति** । 'गच्छति पचती'त्यादौ धातुना प्राधान्येन विशेष्यो वाच्यो व्यापारो यस्य स तथोक्तः । धातुशब्देन तदर्थो विवक्षितः । करणस्वरूपमाह—**करणमिति** ॥ उपकारकं करणमित्युक्ते कर्त्रादिषु प्रसक्तिः, तदर्थम्—**सन्निपत्येति** । करणसन्निपातिषु व्यभिचारं व्यावर्तयितुमाह—**फलमिति** ॥ कर्म लक्षयति—**फलसमवायीति** । अत्र च परसमवेतक्रियाफलसमवायीति द्रष्टव्यम्, इतरथा गमनक्रिया-फलशालिनि कर्तरि व्यभिचारः स्यादित्यर्थः । धातुना विशेष्यव्यापारस्य कर्तृत्वे काष्ठादीनामपि तादृक्त्वात् कर्तृत्व-मित्याह—**काष्ठादीनीति** । पाकोत्पादनानुकूलव्यापारकर्तृत्वात् तथा व्यपदेश इत्यर्थः ॥ **नावान्तरभेदेति**—प्रधानक्रिया-कर्तृत्वाभिप्रायेण न व्यपदेश इत्यर्थः ॥ करणस्य व्यापारवत्त्वं तच्छब्दार्थः । दार्ष्टान्तिकमाह—**एवमिति** ॥ **विचार-व्यापारस्येति** । विचारलक्षणव्यापारस्येत्यर्थः । विचारव्यापारस्यापि प्रमाणप्रमेयसंभावनावगमद्वारेण ब्रह्मकर्मता न विरुध्यत इति सबन्धः । तत्र हेतुमाह—**ब्रह्मावगमस्येति** ॥ तथाऽपि कथं तद्विषयत्वम् ? तत्राह—**अवगमेति** ॥ परशु-विषयस्य व्यापारस्यापि वृक्षविषयत्ववत् संभावनाविषयस्यापि विचारस्य ब्रह्मविषयत्वमुक्तम्, तत्र दृष्टान्तासिद्धि-माशङ्कते—**अथेति** ॥ **अव्यवहितमिति**—व्यवधानं विना व्यापारजन्यातिशयवदित्यर्थः । **नोद्देश्यमिति**—द्वैधीभावादि-फलविशिष्टमित्यर्थः । तरुविषयत्वाभावे तरावतिशयजनकत्वं न स्यादित्याह—**तत्राहेति** ॥

"विषम उपन्यासः" इत्यत्र दृष्टान्त-दार्ष्टान्तिकयोर्वैषम्यमुक्तम्, तदनुपपन्नम्, मीमांसाया इतिकर्तव्य-त्वेनोपकारत्वस्याप्यविशेषः स्यादित्याशङ्क्य, इतिकर्तव्यत्वमसिद्धम्; मानाभावादिति दर्शयितुमितिकर्तव्ये प्रमाणं तावदाह—**अत्रेति** । लोकवेदयोरित्यर्थः । शब्दस्य करणत्वादितिकर्तव्यतापेक्ष—यां मीमांसेतिकर्तव्यतात्वेन संबध्यते,

### ऋजुविवरणम्

अवान्तरव्यापाराणां हेतुत्वसाम्यान्नावान्तरभेद इत्याशङ्क्याह—**तत्र कर्तेति** । स्वतन्त्रव्यापारः कर्ता, स्वातन्त्र्यञ्च साधन-विनियोगेनेत्यर्थः । **धातुना विशेष्येति** । विशेष्यो यस्येति विग्रहः । प्राधान्येन धातुना यस्य व्यापारोऽभिधीयते, स वा कर्तेति विषयव्याप्त्यर्थः पक्षान्तरपरिग्रहः । सर्वकारकव्यापाराणां धातुवाच्यत्वमविशिष्टम्, तदर्थम्—**विशेष्यव्यापारतया** वेत्युक्तम् । उपकारकं करणमित्युक्ते, कर्त्रादेरपि करणत्व स्यात्. तदर्थमाह—**फलं प्रतीति** ॥ ननु अवान्तरभेदापेक्षयाऽपि न कर्तृत्वव्यवस्था भवति; "काष्ठानि पचन्ती"ति कर्तृत्वव्यपदेशदर्शनादित्याशङ्क्याह—**काष्ठानि पचन्तीत्यादीति** ।

"विषम उपन्यासः"इत्याद्ययुक्तो ग्रन्थः; यस्माच्छक्तितात्पर्यविचारस्य करणोपकार्यङ्गत्वम्, फलोपकार्यङ्गत्वे च न तद्विषयत्वमुक्तम्, अतस्तदपेक्षास्त्येवेत्याशङ्क्यावतारयति—**अत्रेतिकर्तव्येष्विति** । ननु अङ्गत्वं ब्रह्मविषयत्वञ्च सिद्धान्तिनाप्यङ्गीक्रियते, प्रमाणञ्च तत्रास्ति; तेन नात्र परिहारहेतुः, नाप्ययं पक्षः परिहर्तव्यः, इत्याशङ्क्याह—**शब्दादेवेति** ।

### पञ्चपादिका

ननु संशयविपर्यासनिरासद्वारेण निर्णयहेतुत्वान्निर्णयस्य च निर्णेयप्रधानत्वाद्भवति निर्णेयं वस्तु निर्णयहेतोर्विषयः ?

नैतत्सारम्; यत्र ह्यनेकं विज्ञानं वाक्यश्रवणे सति जायते मीमांसानिरपेक्षमेव, तत्रैकं वाक्यजन्यम्; एकार्थनियतत्वादेकस्मिन् प्रयोगे वाक्यस्य, इतराणि पुनः सामान्यतोदृष्टनिबन्धनानि। तत्र मीमांसया लोकप्रसिद्धशब्दशक्त्यनुसारिण्येदं शब्दजनितं ज्ञानमिति तदालम्बनं वेदार्थ इति ज्ञात्वाऽन्यदुपेक्षते, न पुनर्निर्णयज्ञानोत्पत्तौ व्यापारः शास्त्रस्य। यथा चक्षुः कुतश्चिन्निमित्तात्संप्रयुक्तेऽपि स्थाणुः पुरुषो वेति संशयात्मकं पुरुष एवेति वा विपर्ययस्वरूपं ज्ञानमुत्पाद्य पुनर्निमित्तान्तरानुगृहीतं सन्निर्णयात्मकं सम्यग्रूपं ज्ञानमुत्पादयति, नैवं शब्दो मीमांसायाः प्राक् संशयितं विपर्यस्तं वा ज्ञानमुत्पाद्य पुनस्तदनुग्रहान्निर्णयात्मकं सम्यग्ज्ञानं वा जनयति; किन्तु प्रागेव मीमांसानुग्रहात् स्वसामर्थ्यजन्यं ज्ञानमजीजनदेव। तस्मान्न ब्रह्मविषयं शास्त्रम्।

### पञ्चपादिकाविवरणम्

ननु यथा चक्षुरादयः सम्यग्ज्ञानहेतवोऽपि दोषसंयोगात्संशयविपर्यासौ जनयन्ति, पुनः सम्यग्ज्ञानजन्मनि च दोषापकर्षमपेक्षन्ते; एवं शब्दः शक्तितात्पर्याज्ञानतद्विपर्ययज्ञानदोषात् संशयादिज्ञानमुत्पादयति, तत्र दोषापनयनेन विपर्यासादिनिवृत्तये शक्तितात्पर्यविचारोऽङ्गभावमश्नुत इति चोदयति—**ननु संशय-विपर्यासनिरासद्वारेणेति**॥

तत्र किं शब्द एव दोषवशादन्यथाज्ञानं जनयति, विचारश्च तदपनयनेन तथा प्रमितिहेतुतां प्रतिपद्यते ? किं वा शब्दः सम्यग्ज्ञानस्यैव हेतुः, कारणान्तरादन्यथाज्ञानम् विचारश्च प्रतिबन्धमात्रं निराचष्टे, निवृत्ते च प्रतिबन्धे शब्दादेवार्थनिर्णय इति ? तत्र न तावद् विपर्यासादिनिरासेनार्थनिर्णयहेतुता विचारस्येत्याह—**नैतत्सारम्; यत्र ह्यनेकमिति**॥

### तत्त्वदीपनम्

इत्याशङ्क्येतिकर्तव्यान्तरसंभवान्नास्या इतिकर्तव्यतात्वमित्याह—**अत्र त्विति**॥ "आत्मा वा अरे द्रष्टव्यः" इति दर्शनमनूद्य तत्साधनत्वेन शक्तितात्पर्यविचारलक्षणं श्रवणं "श्रोतव्यः" इत्यनेन विधीयते, ततः कथं विचारस्यानङ्गत्वमित्याह—**शब्दादिति**। विचारापेक्षया शब्दार्थबोधकत्वे स्वतस्त्वभङ्गः स्यादित्यर्थः।

शब्दस्य बोधजनने विचारानपेक्षायामपि प्रतिबन्धनिरासे तदपेक्षेत्युक्तम्—"ननु संशये"त्यत्र, तदनुपपन्नम्; शब्दस्य प्रमाणत्वात् संशीत्याद्यजनकत्वात्; अन्यस्य च ब्रह्मणि तज्जनकस्यानुपलम्भादित्यर्थमाह—**ननु यथेति**। शक्तितात्पर्ययोरज्ञानं शक्तितात्पर्याज्ञानम्, तयोर्विपर्यासज्ञानम्, त एव दोषाः, शक्तितात्पर्याज्ञानतद्विपर्यासज्ञानदोषाः, तस्मादिति विग्रहः॥ अज्ञानादेः स्वाभाविकत्वात् कथं निरासः ? इत्याशङ्क्याह—**तत्रेति**। शक्तितात्पर्यविचारजनितज्ञानस्य तदज्ञानादिविरोधित्वात् तन्निवर्तकत्वं युक्तमित्यर्थः।

शास्त्रस्य निर्णयज्ञानकारणतायाः पुराऽनुक्तत्वात् कथं तत्प्रतिषेधः ? इत्याशङ्क्य, विकल्पपूर्वकमुत्तरग्रन्थमवतारयति—**तत्र किमिति**। दोषसहितस्य शब्दस्यान्यथाज्ञानजनकत्वम्, विचारस्य च दोषनिरासेन प्रमितिहेतुत्वमिति

### ऋजुविवरणम्

"ननु संशय-विपर्यासे"त्यनेन निर्णयहेतुत्वेन ब्रह्मविषयत्वमुक्तम्, तत्किमर्थम् ? अङ्गत्वाभावेन हि तदपेक्षा नास्तीत्युक्तम्, नतु ब्रह्मविषयत्वाभावेन। नच विपर्यासनिवर्तकत्वेन निर्णयहेतुत्वं संभवति; व्यधिकरणत्वात्; शब्दस्य सम्यग्ज्ञानहेतोस्तज्जनकत्वात्। अतः शब्दस्वरूपे फले वाऽनुपकारकत्वेनाङ्गत्वमन्यत्वं वा। अतः शब्दस्य विचारानपेक्षत्वेन ज्ञानजनकत्वे सति न विचारस्य तद्विषयत्वेन निर्णयहेतुत्वप्रदर्शनं युज्यत इत्याशङ्क्य साभिप्रायमवतारयति—**ननु यथा चक्षुरादय इति**।

"नैतत्सारं यत्र ही"त्यनेन बहुषु ज्ञानेषूत्पन्नेषु विचारवशादेकस्यैव प्रमाणत्वम्, नेतरस्येति निर्णये सति इतराण्यप्रमाणत्वेन निश्चीयन्ते, तेन निर्णयज्ञानोत्पत्त्यहेतुत्वादब्रह्मविषयत्वादनादर इत्युक्तम्, तदयुक्तम्; प्रतिबन्धनिरसनेन च निश्चलस्य स्वरूपस्य तदधीनत्वादुपेक्षणीयो विचारः स्यात्, नाप्येकदेशिपक्षनिरास इति शक्यं वक्तुम्; "अत्रोच्यते" इत्यनेनास्यैव पक्षस्य कीर्तनात्, नच स्वपक्षे परिहारस्यापि निर्वाहः; आधिक्यादर्शनात्, अतश्चानिराकरणीयस्य निरासाद् दूषणानुत्थानम्; अतोऽयुक्तो ग्रन्थ इत्याशङ्क्याह—**तत्र किं शब्द एवेति**॥ "यत्र ह्यनेकमि"त्यादिना टीकाग्रन्थेनेदमुक्तम्—

## पञ्चपादिका

**अत्रोच्यते—यद्यपि वाक्यार्थज्ञानं शास्त्रानुग्रहात्प्रागेवोदेति; तथाऽपि स्वोत्पत्तिसमकालसमुत्थेन तत्र सामान्यतोदृष्टनिबन्धनेनार्थान्तरनिवेशिना समकक्षाभिमतेन ज्ञानेन विरोधादुन्मज्जन-निमज्जनमिवानुभवदस्याश्चावस्थायां संशयज्ञानकोटिनिक्षिप्तं सद् मीमांसया शब्दशक्त्यनुसरणे सति प्रतिपक्षज्ञानस्यानुत्पत्तौ निमज्जनाभावान्निश्चलं निर्णयज्ञानमिव जातमिति लक्षणया मीमांसया निर्णयः क्रियत इत्युच्यते, न पुनः साक्षान्निर्णयज्ञानहेतुत्वात्। तदेवं लक्षणया वेदान्तानां**

## पञ्चपादिकाविवरणम्

अयमाशयः—न शब्दसमवायी कश्चिद्दोषोऽस्ति, पुरुषेन्द्रियसमवायित्वाद् दोषाणाम्। अतः शब्दो न विपर्यासादिज्ञानहेतुः, किन्तु शब्दानां प्रयोगान्तरेष्वन्यथान्यथाशक्तितात्पर्योन्नयनदर्शनादिहापि तथा तथा विदित्वा सामान्यतो दर्शनेनार्थविरोधिबुध्या च पुरुषदोषेणान्यथाज्ञानान्युत्पद्यन्ते। शब्दाच्च तत्त्वज्ञानमेवोत्पद्यते। ततश्च शब्दात्पुरुषदोषाच्च बहुषु परस्परविरोधिषु ज्ञानेषु जातेषु शब्दशक्तितात्पर्यावधारणं पुरुषदोषापनयनेन प्रतिपक्षज्ञानान्तरमात्रं निवर्तयति निवृत्ते च प्रतिबन्धे शब्दादेव तत्त्वज्ञानं जायते, जातं वा निश्चलमवतिष्ठते। तस्मान्न विचारः करणेतिकर्तव्यतया ब्रह्मविषय इति ॥

एवमपसिद्धान्ते निरस्ते पूर्ववादिना, सिद्धान्तयति—**अत्रोच्यते यद्यपि वाक्यार्थज्ञानमित्यादिना** ॥

## तत्त्वदीपनम्

किं युक्तम्? उत शब्दस्य सम्यग्ज्ञानजनकत्वम् स्वाभाव्यम्, दोषाच्चान्यथाज्ञाने समुत्पन्ने विचारेण च निवृत्ते शब्दादेव निर्णय इति वेति योज्यम्; अन्यथा विकल्पानुत्थानात्, शब्दस्य दोषसहितस्यान्यथाबोधकतायास्तेनाभिहितत्वादित्यर्थः ॥ चक्षुर्वद् दोषोपेतः शब्दो विपर्यासादिजनक इत्युक्तम्, कथमेकस्य वाक्यजनितत्वं निर्दिष्टमित्याशङ्क्य तात्पर्यमाह—**अयमाशय इति** ॥ रागादिर्दोषः? उत काचादिः? उभयथाऽप्यसंभव इत्याह—**पुरुषेति** ॥ दोषाभावप्रतिपादनफलमाह—**अत इति** ॥ **प्रयोगान्तरेष्विति**। अयमर्थः—अस्मिन् ग्रामे अयमेक एवाद्वितीय इत्यादौ भिन्नेऽपि प्राधान्यविवक्षया एकादिशब्दप्रयोगवद् वेदान्तेष्वप्येकादिशब्दानां तथात्वकल्पनया विपर्यासादिर्जायत इत्यर्थः। भेदग्राहिप्रत्यक्षादिविरोधादप्यन्यथामतिरित्याह—**अर्थेति** ॥ विरुद्धज्ञानद्वयोत्पत्तौ कथं निर्णयः? इत्याशङ्क्याह—**ततश्चेति** ॥ पूर्वमेव शब्दात् तत्त्वज्ञानस्योदितत्वात् पश्चादुत्पद्यत इति कथम्? इति शङ्कायामाह—**जातं वेति**। विरोधिसंबन्ध्यन्तरेण तद्भानस्य दुष्टतायां तन्निरासेन दृढतया तद् व्यवतिष्ठत इत्यर्थः ॥ विचारस्य प्रतिबन्धनिवर्तकत्वप्रतिपादनफलमाह—**तस्मादिति**। **करणेति** ॥ करणेतिकर्तव्ययोरेकविषयत्वस्य पुरोक्तत्वात् "यद्यपी"त्यादिना तदभावप्रतिपादने विरोधः स्यादित्यशङ्क्य मतभेदेनाविरोधमाह—**एवमिति** ॥ **यद्यपीत्यादिटीकाया अयमर्थः**—वाक्यार्थज्ञानं शास्त्रानुग्रहात् प्रागेवोदपादि यद्यपि; तथाऽपि मीमांसया निर्णयः क्रियत इति लक्षणयोच्यत इति संबन्धः। तत्र हेतुमाह—**सामान्यत इति**। सामान्यतोदृष्टनिबन्धनेन ज्ञानेन विरोधादुन्मज्जन-निमज्जनमिवानुभवाद् व्यवतिष्ठत इति संबन्धः। रज्जुतत्त्वज्ञानेन सर्पभ्रमवन्निवृत्त्याशङ्कां निरस्यति—**स्वोत्पत्तीति** ॥ तथाऽप्येकविषयत्वेऽविरोधः, तत्राह—**अर्थान्तरेति** ॥ चन्द्रद्वित्वसमकालीनेन तदेकत्वज्ञानेन तन्निवृत्तिवत् शब्दज्ञानेनेतरज्ञाननिवृत्तिशङ्कां निराकरोति—**समेति** ॥ वस्तुतस्तु न समकक्षत्वमपीत्याह—**अभिमतेनेति** ॥ तर्हि संशयज्ञानोपमस्य कथं प्रामाण्यमित्याह—**अस्यामिति** ॥ मीमांसाया निर्णयहेतुत्वमेव किं न स्यात्? इत्याशङ्क्याप्रमाणत्वान्नैवमित्याह—**न पुनरिति** ॥

## ऋजुविवरणम्

शब्दः सम्यग्ज्ञानमेव जनयति, ज्ञानान्तराणि तु सामान्यतोदृष्टवशादुत्पद्यन्ते, विचारश्च दोषापनयनेन प्रतिपक्षमात्रं निवर्तयति, नतु सम्यग्ज्ञानहेतुः—इति। तदयुक्तम्; इन्द्रियादिवद् दोषवशाद् भ्रान्तिहेतुत्वस्योक्तत्वात्। किञ्च शब्दस्याहेतुत्वे ज्ञानान्तरोत्पत्तिरेव न संभवेत्, सामान्यतोदृष्टस्यादर्शनादनुमानत्वेन प्रमाणत्वप्रसङ्गाच्च। अतश्चानेकज्ञानसिध्यर्थं शब्दस्यैव सदोषस्य भ्रान्तिज्ञानजनकत्वम्, तद्विगमे सम्यग्ज्ञानहेतुत्वमिति वक्तव्यम्; एवञ्च दोषनिवर्तनेन विचारस्य सम्यग्ज्ञानहेतुत्वमिति प्रमाणेतिकर्तव्ययो विचार इत्याशङ्क्याभिप्रायमाह—**अयमाशयो न शब्दसमवायीति** ॥

"अत्रोच्यते" इत्यादिः पुनरुक्त इवाभाति; पूर्वस्यैव प्रतिपादनात्, पूर्वग्रन्थे प्रतिपक्षमात्रं निवर्तयति, नतु तत्त्वज्ञानं जनयतीत्युक्तम्, इहापि तदेवोच्यते; नचैवं सति पूर्वदूषणनिर्वाहः; अतो हेयोऽयं ग्रन्थः "तदेवं लक्षणये"-त्येवमन्तः; तेन तु स्वपक्षोपयोगः प्रदर्श्यते। "अत्रोच्यते" इति चायुक्तम्; पूर्वचोद्यस्यापरिहृतत्वात्, चोद्यान्तरस्याभावात्, परिहारे चास्य प्राचुर्येण प्रयोगादित्याशङ्क्यावतारयति—**एवमपसिद्धान्ते निरस्त इति** ॥

**पञ्चपादिकाविवरणम्**

**तत्र सामान्यतोदृष्टनिबन्धनेनेति** । प्रयोगान्तरेष्वन्यथान्यथाशक्तितात्पर्यदर्शनादिहापि तथाभावबुध्या तथाविधार्थस्य च लोकेऽन्यथाभावदर्शनादिहाप्यन्यथाभावबुध्येत्यर्थः । अयमाशयः—प्रतिबन्धनिवृत्तौ सत्यामेवार्थनिर्णयात् प्रतिबन्धनिरासिनोऽप्युपचारेण ब्रह्मनिर्णयहेतुत्वाद्विचारस्य ब्रह्मविषयतेति ।

अत्रेदं विचार्यम्—किं तात्पर्यमर्थप्रमितिहेतुः ? किं वा प्रतिबन्धनिरासहेतुरिति ? केचित्प्रमितिहेतुतामाहुः । तत्र किं विज्ञातं तात्पर्यं प्रमितिहेतुः ? अविज्ञातं वा ? न तावदविज्ञातं प्रमितिहेतुः ; तात्पर्यावगमफलविचारानपेक्षत्वप्रसङ्गात्, तात्पर्यविषयादन्यत्र बुध्यनुत्पादप्रसङ्गाच्च । तथाच कश्चित् स्थानजिघृक्षया कञ्चिदुत्थापयन्नाह 'पित्रा त्वमाहूतः' इति । स च पितुराह्वानं प्रतिपद्य समुत्तिष्ठति, इतरस्तु तत्र निविशते, समुत्थितश्च सन्नितरो जानाति स्थानजिघृक्षयेदमुक्तमिति । ननु न पितुराह्वाने तात्पर्यहीने संसर्गबुद्धिरिति चेत् ? न; उत्थानादिप्रवृत्तिदर्शनात्, प्रवृत्तेश्च संसर्गज्ञानपुरःसरत्वाभावे प्रवृत्त्या संसर्गे शब्दशक्तितात्पर्यकल्पनायोगात् । ननु शब्दो न मिथ्याज्ञानमुत्पादयति ?

**तत्त्वदीपनम्**

"सामान्यतोदृष्टनिबन्धनेने"त्यस्यार्थमाह—**प्रयोगान्तरेष्विति** ।। सामान्यतोदृष्टशब्दस्यार्थान्तरमाह—**तथाविधेति** । चित्रनिम्नोन्नतादिग्राहिचाक्षुषप्रत्ययस्य प्रामाणान्तरसंबन्धाभावेप्रामाण्यवदप्रामाण्यबुद्ध्येत्यर्थः ।। शब्दस्य स्वतःप्रमाणत्वाद् मीमांसाया लक्षणयाऽपि कथं ब्रह्मविषयत्वम् ? तत्राह—**अयमाशय इति** ।।

विचाराधीनतात्पर्यावगमेन प्रतिबन्धे निवृत्ते शब्दादेव निर्णयो जायत इत्युक्तम्, संप्रत्युक्तस्य दृढीकरणार्थं विचारमारभते—**अत्रेदमिति** ।। पूर्वपक्षमाह—**केचिदिति** । पुरुषाभिप्रायस्तात्पर्यम् तदर्थप्रमितिजनकमित्यर्थः । विकल्पासहत्वान्नैतन्मतं साध्वित्याह—**तत्र किमिति** । तात्पर्यावगमः फलं यस्य स तात्पर्यावगमफलः, स विचारश्चेति तात्पर्यावगमफलविचारः, तस्मिन्नपेक्षाराहित्यप्रसङ्गादित्यर्थः । तत्रैव दोषान्तरं समुच्चिनोति—**तात्पर्येति** । अज्ञाततात्पर्यस्य प्रमितिजनकत्वे तदगोचरे शब्दाद् बुद्धिर्न जायेतेत्यर्थः ।। तात्पर्यागोचरे बुध्यनुत्पाद इष्ट इत्याशङ्क्याह—**तथाचेति** । तात्पर्यागोचरेऽपि बुध्युदयदर्शनाद्यथाऽनिष्टापत्तिः, तथोपपादयतीत्यर्थः । तद्वाक्यादर्भकस्य पित्राह्वानप्रतिपत्तिरिति कथं व्यज्ञायीति ? तत्राह—**स चेति** । समुत्थानकार्यदर्शनात् तत्प्रतिपत्तिनिश्चय इत्यर्थः । तात्पर्यमपि तद्गोचरमेव किं न स्यादिति ? अत्राह—**इतरस्त्विति** ।। तथापि कथं स्थानजिघृक्षायां तस्यां तात्पर्यपरिज्ञानम्, निवेशनस्यान्यथाऽप्युपपत्तेः, तत्राह—**समुत्थित इति** । मुखविकसनादिकं दृष्ट्वा स्थानजिघृक्षयेत्थमुक्तवानित्यर्भको निश्चिनोतीत्यर्थः । 'पित्रा त्वमाहूतः' इत्यादेरन्यपरस्यान्यवोधकत्वे किं मानमिति शङ्कते—**नन्विति** । उत्थानं त्वन्यथाऽपि घटत इत्यभिसन्धिः । विवादाध्यासिता प्रवृत्तिः, संसर्गज्ञानपूर्विका, प्रवृत्तित्वात्, संप्रतिपन्नवदित्यनुमानविरुद्धं संसर्गबुद्ध्यभावाभिधानमिति समाधत्ते—**नोत्थानमिति** ।। अप्रयोजकत्वशङ्कां निरस्यति—**प्रवृत्तेरिति** । 'अर्भक ! समिधमाहर' इत्याचार्यवाक्यश्रवणसमनन्तरमुपजायमानमध्यमनरप्रवृत्तिं निरीक्ष्य व्युत्पित्सुरित्थमनुमिमीते—अयं नरः, संसर्गबोधवान्, संसृष्टप्रवृत्तित्वात्, संप्रतिपन्नवदिति । संसृष्टप्रत्ययमनुमाय तस्य कारणविशेषापेक्षायां शब्दान्वय-व्यतिरेकाभ्यां शब्दस्य तत्र सामर्थ्यं कल्पयति । तच्च तव न स्यात्; प्रवृत्तेः संसर्गज्ञानव्याप्तत्वादित्यर्थः ।। शब्दस्यायथार्थबोधकत्वेऽप्रामाण्यप्रसङ्गान्न संसर्गबोधकत्वमिति शङ्कते—**ननु शब्द इति** ।।

**ऋजुविवरणम्**

सामान्यतो दृष्टनिबन्धनस्य शब्दज्ञानेन समकक्ष्यादुन्मज्जनहेतुत्वमुक्तम्, तदयुक्तम्; सामान्यतोदृष्टस्य दुर्बलत्वादित्याशङ्क्य व्याचष्टे—**तत्र सामान्यतोदृष्टनिबन्धनेनेति** ।। ननु प्रतिपक्षनिवर्तकस्य नेतिकर्तव्यत्वम्; ज्ञानानुत्पादकत्वात्, नापि ब्रह्मविषयत्वम्, अतो विषयाभावस्तदवस्थ एवेत्याशङ्क्याभिप्रायमाह—**प्रतिबन्धनिवृत्ताविति** ।।

ननु अज्ञानस्य हेतुत्वेऽपीन्द्रियगतगुणादिविचारवत्तदवगतिफलविचारानपेक्षत्वं न भवतीत्याशङ्क्याह—**तात्पर्यविषयादिति** ।। ननु तात्पर्यविषयादन्यत्र बुध्युत्पादो न दृश्यते; अतोऽन्यत्र बुध्युत्पादो न दूषणमित्याशङ्क्याह—**तथाच कश्चिदिति** ।। ननु उत्थानादिप्रवृत्त्या कथं संसर्गज्ञाननिश्चयः ? प्रवृत्तेः संसर्गज्ञानपुरस्सरत्वे प्रमाणाभावादित्याशङ्क्याह—**प्रवृत्तेः संसर्गज्ञानेनेति** ।। ननु मिथ्याज्ञाने हि हेतुत्वं नास्ति शब्दे; दोषाभावादित्युक्तम्, तद्विरोधो ज्ञानोत्पत्तौ स्यादिति चोदयति—**ननु शब्द इति** ।।

### पञ्चपादिकाविवरणम्

**नैष दोषः ;** सत्यपि पितुराह्वाने तथाभूतज्ञाने च तात्पर्ये वक्तुरन्यत्रेत्येतावद्दर्शितम् । तस्मान्नाज्ञाततया तात्पर्यं प्रमितिहेतुः ।

अथ ज्ञातत्तया ? तर्हि कुत्र तात्पर्यमवगम्यते ? शब्दस्यात्र तात्पर्यमित्याश्रय-विषयसापेक्षत्वात्तात्पर्यस्य । न तावत्पदार्थेषु तात्पर्यम्; वाक्यार्थज्ञानेऽनुपयोगात् । संसर्गश्चानवगतो न तात्पर्यविशेषणतयाऽवगन्तुं शक्यते । स्यादेतत्—पदावगतेषु पदार्थेषु परस्परान्वययोग्यतानिमित्तः संसर्ग उत्प्रेक्षयाऽवगम्यते । तद्विषया च तात्पर्यावगतिरिति । न तावत् स्मृति-संशय-विपर्यासानामन्यतमः संसर्गावबोधः । तत्र परिशेषाच्छब्दजन्यतया संसर्गबोधः प्रमाणमेव स्यात् । नच शक्तिरिव सामान्योपाधौ तात्पर्यम्; प्रतिवाक्यं विशेषतात्पर्यभेदात् । किंच, पदार्थवत्संसर्गेऽपि शक्तिमात्रनिबन्धनोऽवगमः, न तात्पर्यनिबन्धन इत्यनुमातुं शक्यते ।

### तत्त्वदीपनम्

अयथार्थबोधकत्वमसिद्धमित्याह—**नैष इति** ।। कथमस्य वाक्यस्य यथार्थत्वम् ? स्थानजिघृक्षया प्रयुक्तत्वादित्याशङ्क्याह—**सत्यपीति** ।।

आद्यमनुवदति—**अथेति** ।। किं तात्पर्यमात्रस्य ज्ञानं प्रमितिहेतुः ? उतार्थविशेषितस्य ? द्वितीये कोऽसावर्थः ? इति विवेचनीयमित्याह—**तर्हीति** ।। किं पदार्थस्तात्पर्यम् ? उत संसर्ग ? इत्यर्थः । तात्पर्यमात्रस्य हेतुत्वोपगमाद्विकल्पानवसर इत्याशङ्क्याह—**अत्रेति** । आश्रयसापेक्षत्वं दृष्टान्ततयोक्तमिति द्रष्टव्यम् । निर्विषयतात्पर्यासंभवे पदार्थविषयं तात्पर्यं प्रमितिजनकमिति द्वितीयाद्यं निरस्यति—**न तावदिति** ।। द्वितीयेऽपि किं तात्पर्यप्रतिपत्तिसमये विशेषणीभूतः संसर्गोऽनधिगतः ? उताधिगतः ? इति विकल्प्याद्यं प्रत्याह—**संसर्ग इति** । "नागृहीतविशेषणा विशेष्ये बुद्धि"रिति न्यायादित्यर्थः । द्वितीयमनुवदति—**स्यादेतदिति** ।। किमुत्प्रेक्षाया अप्रमितित्वम् ? उत प्रमितित्वम् ? आद्येऽपि किं स्मृतिः ? उत संशयः ? आहो विपर्यासः ? सर्वथाऽप्यसंभव इत्याह—**न तावदिति** । स्मृतेर्गृहीतग्राहित्वात् संसर्गस्य च पूर्वं श्रोत्राऽनधिगतत्वान्न तज्ज्ञानं स्मृतिः, नापि संशयः; द्व्याकारत्वाभावात्, नापि विपर्ययः; बाधकानुपलम्भादित्यर्थः । द्वितीयेऽपि किं प्रसिद्धप्रमित्यन्तर्भूता ? उतान्या ? नाद्यः; चक्षुरादिसंयोगाजन्यत्वान्न प्रत्यक्षान्तर्भावः संभवति; नाप्यनुमितौ, व्याप्तिलिङ्गाजन्यत्वात्; नाप्यर्थापत्तौ, अनुपपत्त्यदर्शनात्; उपमित्यन्तर्भावित्वं तु दूरापास्तम् । तस्माच्छब्दजन्यतयोत्प्रेक्षायाः प्रमाणत्वं वक्तव्यम् । तथा च तात्पर्यं प्रमितिहेतुरिति पक्षक्षतिरित्याशयेनाह—**तत्र परिशेषादिति** । प्रमाणाभावान्न प्रमित्यन्तररूपताऽपीति द्रष्टव्यम् ।। शब्दात् संसर्गमात्रे प्रतिपन्ने तद्विषयतात्पर्यं संसर्गविशेषबोधकम् ; गवादिशब्दानां सामान्ये शक्तिप्रतिपत्तावपि वाक्याद्विशेषप्रतिपत्तिवदित्याशङ्क्याह—**नचेति** । नदीतीरफलसत्ताद्यर्थविशेषमभिप्रेत्योत्तमवृद्धः शब्दं प्रयुङ्क्ते, न सामान्यम् ; तेन फलाभावादित्यर्थः । एवं तात्पर्यप्रतिपत्त्यप्रतिपत्त्योरसाधारणं दोषमभिधाय साधारणं दूषणमाह—**किंचेति** । संसर्गबोधः , शक्तिमात्रनिबन्धनः, शाब्दत्वात्, पदार्थबोधनवत्, नच शक्तिमात्रनिबन्धनस्य तात्पर्यहेतुत्वमपि शङ्कास्पदम् ; शक्तिशब्देन शब्दतात्पर्यरूपशक्तिविशेषस्य विवक्षितत्वात् । नच साध्ये वैकल्यम् ; शक्तिजन्यत्वमात्रस्य तत्रापि सद्भावादित्यर्थः ।। पुरुषाभिप्रायरूपतात्पर्याजन्यत्वे प्रमाणमाह—**न तात्पर्येति** । विमतो बोधः, पुरुषाभिप्रायाजन्यः, शास्त्रत्वात्, पदार्थज्ञानवदित्यर्थः । संसर्गबोधस्य पुरुषाभिप्रायजन्यत्वे

### ऋजुविवरणम्

वाक्यार्थेऽपि तात्पर्यावगयो न संभवति; वाक्यार्थस्याज्ञातत्वेन नागृहीतन्यायेन तात्पर्यावगमायोगादित्याह—**संसर्गश्चेति** ।। **स्यादेतदिति** । संभूय समुच्चरितपदार्थानां संसर्गेण भवितव्यम्, तथा दर्शनात्, अन्यथा सहप्रयोगानुपपत्तेः, अतो नूनं संसर्गोऽस्तीत्यवगच्छतीत्यर्थः । **न तावत्स्मृतीति** । अनधिगतार्थगन्तृत्वान्न स्मृतिः, कोटिद्वयाभावान्न संशयः, बाधाभावान्न विपर्यय इत्यर्थः । ननु एवमपि प्रमाणसामग्रीविरहात् तर्कज्ञानवदप्रामाण्यमेव स्यादित्याशङ्क्याह—**तत्र परिशेषादिति** ।। ननु संसर्गमात्रे तात्पर्यम्, तस्य ज्ञातत्वात् तात्पर्यविशेषणत्वं संभवेदित्याशङ्क्याह—**नच शक्तिरिवेति** ।। ननु विशेषे तात्पर्यभेदेऽपि सामान्योपाधौ ज्ञातस्य सामर्थ्याद् विशेषलाभ इति वक्तुं शक्यते व्याप्ताविव, तेन च संसर्गो ज्ञायते; अतः कथं तात्पर्यभेदेन सामान्योपाधौ ज्ञानं निराक्रियते ? इत्याशङ्क्याह—**किञ्च पदार्थवदिति** ।।

## पञ्चपादिका

**ब्रह्मविषयाणां सहकारिकारणं मीमांसा इति ब्रह्मज्ञानविषयं शास्त्रमभिधीयते। तच्चेदं त्रयमप्यवश्यं वक्तव्यम्—प्रयोजनं विषयः सम्बन्धश्च शास्त्रादौ श्रोतुः प्रवृत्त्यङ्गत्वेन। यद्यपि प्रणेतृगौरवादेव सप्रयोजनत्वं शास्त्रस्य; तथाऽपि न प्रयोजनविशेषसिद्धिस्तत्प्रत्ययमात्रेण निर्देशादृते। तस्मात्तन्निर्देश्यम्। निर्दिष्टेऽपि तस्मिंस्तस्याशक्यप्रतिपादनतां मन्वानो विहतश्रद्धत्वान्न प्रवर्तेतेति साध्यो निर्देश्यः। शक्यप्रतिपादनप्रतिपत्तावप्यन्यतःसिद्धेऽर्थे निर्दिष्टे नैव प्रवृत्तिरित्यनन्यसाध्योऽपि निर्देश्यः। तदेतत् त्रयमेकत्र समवेतं विभक्तं चोपलभ्यत इत्यलमतिविस्तरेण॥**

**"अस्ति तावद् ब्रह्मे"त्यादिना प्रसिद्धत्वप्रदर्शनेनाप्रसिद्धतां निराकुर्वञ्छक्यप्रतिपाद्यतया सम्बन्धं समर्थितवान्।**

## पञ्चपादिकाविवरणम्

शब्दानां च पदार्थप्रदर्शनमुखेन तात्पर्योपाध्युपयोगितयाऽन्यथासिद्धत्वात् तात्पर्यमात्रावगमाधीनः संसर्गबोधो न शब्दनिबन्धनश्च स्यात्। तस्मात् पदानामेव संसर्गप्रतिपादनसामर्थ्यान्मुख्यलक्षणाद्वारेण प्रमाणान्तराविरुद्धे संसर्गे प्रतिपन्ने दोषान्तरनिमित्तसंशयविपर्यासादिज्ञाननिराकरणाय तात्पर्यावगम इति सिद्धम्।

**तच्चेदं त्रयमप्यवश्यमित्यारभ्य अलमतिविस्तरेणेत्यतः** प्राक्तनेन ग्रन्थेनोक्तमर्थं निगमयति समर्थनं प्रदर्शयितुम्।

**अस्ति तावदिति** स्पष्टार्थः॥ ननु न ब्रह्म सामान्येनापि लोके प्रतिपत्तुं शक्यम्, प्रमाणान्तरागोचरत्वात्;

## तत्त्वदीपनम्

शब्दाप्रामाण्यं चेत्याह—**शब्दानामिति**। संसर्गबोधो न शब्दनिबन्धनः, किंतु तात्पर्यमात्रावगमाधीनः स्यादिति संबन्धः। शब्दान्वयव्यतिरेकाभ्यां शब्दनिबन्धनत्वप्रतिपत्तेः कथं संसर्गबोधस्याशाब्दत्वम्? इत्याशङ्क्य तयोरन्यथासिद्धिमाह—**शब्दानामिति**। शब्दानां पदार्थप्रदर्शनमुखेनान्यथासिद्धत्वादित्यर्थः। पदार्थप्रदर्शनं कस्मात्? इत्याशङ्क्याह—**तात्पर्येति**। तात्पर्यस्योपाधिर्विशेषणं तदुपयोगितयेति यावत्। त्वन्मतेऽपि किं तात्पर्यमज्ञातं प्रमितिहेतुः? उत ज्ञातम्? तत्र आद्ये विचारवैयर्थ्यम्, द्वितीये विचारात् प्राक् शब्देभ्यः प्रतिपत्तिर्न स्यादिति शङ्कामुपसंहारव्याजेन निरस्यति—**तस्मादिति**। अज्ञाततात्पर्यविशेषितशब्देभ्योऽर्थप्रतिपत्तिर्मुख्यलक्षणानिमित्तोपजायते। तत्र च पुंदोषात् संशयादावुत्पन्ने विचाराधीनतात्पर्यावगमेन च निवृत्ते तत्त्वनिर्णयजननान्न विचारवैयर्थ्यम्। तस्माल्लक्षणया करणेतिकर्तव्यतयोरेकविषयत्वमित्यर्थः॥

विषयादेरवश्यवक्तव्यताया उक्तत्वात् "तच्चेदमि"त्यादि पुनरुक्तमित्याशङ्क्याह—**तच्चेति**॥ निगमनप्रयोजनमाह—**समर्थनमिति**॥

ब्रह्मणोऽस्तिताभिधानं प्रकृतासङ्गतमित्याशङ्क्य, प्रसिद्धत्वप्रतिपादनद्वारा विषयादि समर्थ्यत इत्युक्तम्, तदनुपपन्नम्; प्रसिध्यसंभवादिति शङ्कते—**ननु (न) ब्रह्मेति**। किं ब्रह्म सामान्येन लोकतोऽधिगम्यते? उतागमात्? नाद्यः, रूपादिहीनतया प्रत्यक्षाविषयत्वात्। अत एव नानुमाया अपि तत्र प्रवृत्तिरित्यर्थः। द्वितीयेऽपि किं पदगम्यं

## ऋजुविवरणम्

ननु संसर्गबोधस्य शब्दमात्रनिबन्धनत्वमनुमातुं शक्यते; शब्दानन्तर्यस्य तदभावेऽभावस्य चान्यथासिद्धत्वादित्याशङ्क्याह—**शब्दानां पदार्थेति**॥ अथवा पूर्वं संसर्गस्याज्ञातस्य विशेषणत्वं न संभवति, ज्ञातत्वे तु न तात्पर्यज्ञेयत्वं संभवतीति युक्त्या प्रसाध्यानुमानमाह—**किञ्च पदार्थवदिति**॥ "शब्दानाञ्चे"त्यनेन विपक्षे बाधकमाह—ननु संसर्गबोधे पदान्वयव्यतिरेकौ स्तः, तत् कथं तात्पर्यमात्रनिबन्धनत्वं वक्तुं शक्यते? इत्याशङ्क्याह—**तात्पर्योपाध्युपयोगितयेति**॥ अथवा न संसर्गबोधः शब्दमात्रनिबन्धन इत्यनुमातुं शक्यते; शब्दमात्रस्यासामर्थ्याद् अनवधृततात्पर्ये बोधानुत्पादात्, बाधितविषयत्वादित्याशङ्क्याह—**शब्दानाञ्चेति**॥ एतदुक्तं भवति—यदि केवलपदानां संसर्गबोधकत्वासामर्थ्यात् तात्पर्यस्यापि हेतुत्वम्, तर्हि पदान्वयव्यतिरेकयोरन्यथासिद्धेस्तात्पर्यमात्रनिबन्धनत्वं स्यात्, शब्दस्य हेतुत्वं च न स्यात्, तन्निवृत्त्यर्थं शब्दस्य सामर्थ्यं हेतुत्वञ्चाङ्गीकर्तव्यम्, तदङ्गीकारे च न तात्पर्यहेतुत्वमिति।

"तच्चेदं त्रयमि"त्यादिग्रन्थः पुनरुक्तः; उक्तार्थस्यैव कीर्तनादित्याशङ्क्यावतारयति—**उक्तमर्थं निगमयतीति**॥ उपसंहारप्रयोजनमाह—**समर्थनमिति**। व्यवहितत्वादनन्तरं कर्तुं परामृश्यत इति भावः॥

### पञ्चपादिका

**कथम् ? ब्रह्मशब्दस्तावज्जाति-जीव-कमलासन-शब्दराशीनां नान्यतमाभिप्रायेण सूत्रे प्रयुक्तः; अनुपपत्तेरित्युक्तम्; अतो नूनमन्यदेव किंचिदभिधेयमभिप्रेत्यायं प्रयुक्त इति गम्यते। तेन स्वर्गापूर्व-देवताद्यर्थवत्पदप्रयोगादेव कश्चिदर्थोऽस्तीत्यवसीयते। नैतत्सारम्, नहि पदं चक्षुरादिवदप्रतीतपूर्व एवार्थे झटिति विज्ञानं जनयति, येनापूर्वमन्यत्तोऽसिद्धमर्थं पदप्रयोगादेव प्रतीमः। स्वर्गाद्यर्थोऽपि नैव पदप्रयोगादेव सिद्धः।**

### पञ्चपादिकाविवरणम्

नाप्यागमसामर्थ्यात्, श्रुतिसूत्रयोः तत्र प्रयुज्यमानस्य ब्रह्मशब्दस्यानवधृतार्थत्वात्, नच पदमात्रादेवार्थान्तरसिद्धिः; जात्याद्यर्थान्तरेषु प्रसिद्धत्वात्, तस्मान्न प्रसिद्धमुद्दिश्य विचारविधानोपपत्तिरिति चोदयति—**कथमिति ब्रह्मशब्दस्ताव-दित्यादिना**। ननु अर्थान्तरसद्भावे किं प्रमाणमिति ? प्रयोगार्थापत्तिः, इत्याह—**अतो नूनमन्यदेवेति**। ननु श्रौतप्रयोगानु-पपत्तिर्नापूर्वमर्थं गमयति लौकिकप्रयोगाधीनत्वाच्छ्रौतप्रयोगस्येति, तत्राह—**तेन स्वर्गापूर्वदेवतेति**। 'अपूर्वमि'ति "तानि धर्माणि प्रथमान्यासन्नि"त्यादौ वेदे धर्मशब्दप्रयोगोऽभिप्रेयते। ननु वाक्ये प्रयुक्तं पदं प्रमाणान्तरानधिगतमर्थं न प्रति-पादयति, पदार्थांशेऽनुवादमात्रत्वादित्याह—**नैतत्सारमिति**। न प्रत्यक्षवत्, संबन्धग्रहणाभावान्नानुमानादिवच्चेत्यर्थः। ननु दर्शितं स्वर्गादिवदिति ? नेत्याह—**स्वर्गाद्यर्थोऽपीति**। सन्निहितानेकवाक्यार्थसामर्थ्यलभ्यः स्वर्गादिपदार्थ इत्यर्थः।

### तत्त्वदीपनम्

ब्रह्म ? उत वाक्यगम्यम् ? इति विकल्प्याद्यं दूषयति—**नापीति**। ब्रह्मणः प्रमाणान्तरागोचरत्वान्न तत्र सङ्गतिग्रहणम्, ततो न पदगम्यत्वमित्यर्थः। तत्रैव हेत्वन्तरमाह—**नचेति**।। पदार्थानामेव संसृष्टानां वाक्यार्थत्वाद् ब्रह्मणश्च पदार्थत्वान्न वाक्यमपि तत्र प्रमाणमित्याशयेनाह—**तस्मादिति**।। सौत्रब्रह्मशब्दस्य जात्यादिविषयत्वानुपपत्तेर्ब्रह्मबोधकत्वमित्ययुक्तम्; जात्यादिविलक्षणब्रह्मप्रतिपत्तिमन्तरेण पौरुषेयशब्दप्रयोगायोगादित्याशङ्क्य तात्पर्यमाह—**तत्रेति**। ब्रह्मशब्दस्यान्यार्थ-त्वासिद्धावित्यर्थः। "तद् ब्रह्म" "तद्विजिज्ञासस्वे"त्यादौ ब्रह्मप्रयोगादेव जात्यादिविलक्षणं वस्तु प्रतिपाद्य तदपेक्षित-न्यायनिरूपणार्थं सूत्रकारस्य ब्रह्मशब्दप्रयोगः संगच्छते। ततश्चास्माकमपि सौत्राद् ब्रह्मशब्दात् तत्प्रतिपत्तिर्घटत इति न काचन दोषकलेत्यर्थः।। ब्रह्मशब्दस्य जात्याद्यविषयत्वमात्रेण कथं ब्रह्मविषयत्वमिति शङ्कते—**नन्वर्थान्तरेति**। पूर्वत्र समुदायतात्पर्यस्योक्तत्वात् चोद्योत्थितिरित्यर्थः प्रमाणाभावोऽसिद्ध इत्याह—**प्रयोगार्थापत्तिरिति**। प्रयोगानुपपत्ति-रित्यर्थः। गृहीतसंगतिकानां शब्दानां तावदर्थबोधकत्वम् संगतिग्रहणं च लौकिकप्रयोगाधीनम्, इति न ब्रह्मशब्दादपूर्व-सिद्धिः, तथा च कथं सौत्रादपि न तत्सिद्धिः ? इति शङ्कते—**ननु श्रौतेति**।। लौकिकप्रयोगाधीनत्वमसिद्धमित्याह—**तत्राहेति**।। वेदेऽपूर्वशब्दाभावमाशङ्क्याह—**अपूर्वमिति**।। "नैतत्सारमि"त्यत्र पदस्यानधिगतबोधकत्वं निरस्तम्, तदयुक्तम्; वाक्यवदेव पदस्याप्यनधिगतबोधकत्वसंभवादित्याशङ्क्य तात्पर्यमाह—**नन्विति**। प्रमाणान्तरेणार्थमधिगम्य तस्मिन् गृहीतसंगतिकस्य पदस्यार्थस्मारकत्वान्नानधिगतविषयत्वम्। वाक्यं च संगतिग्रहणनिरपेक्षमिति वैषम्यमित्यर्थः।। "चक्षुरादी"त्यत्रादिपदवैयर्थ्यमाशङ्क्य किमक्षवत्पदं बोधकम् ? उत लिङ्गवत् ? नाद्यः; संबन्धग्रहणसापेक्षत्वादित्यभिप्रेत्य चक्षुर्वदित्युक्तमित्याह—**न प्रत्यक्षवदिति**।। नापि लिङ्गादिवद्बोधकत्वमित्याह—**सम्बन्धग्रहणेति**। टीकायां "चक्षुरादिवदि"-त्यादिशब्देनाऽनुमानातिरिक्तमुपात्तमित्युक्तं भवतीत्यर्थः। सङ्गतिग्रहणसापेक्षस्य पदस्य बोधकत्वनियमोऽसिद्ध इति शङ्कते—**ननु दर्शितमिति**।।

### ऋजुविवरणम्

"कथं ? ब्रह्मशब्दस्तावदि"त्यनेन सौत्रब्रह्मशब्दस्य जात्याद्यर्थान्तरत्वनिराकरणानुवादो व्यर्थः; तेनाप्रसिद्ध-त्वापरिहारात्। नच प्रयोगानुपत्तिदर्शनार्थम्, असिद्धे पदार्थे पदप्रयोगस्यासाधकत्वात्। अपौरुषेयप्रयोगस्य प्रमाणान्तर-सापेक्षत्वेन निश्चायकत्वात्, विषमश्च दृष्टान्त इत्याशङ्क्याह—**तत्र श्रुतिसूत्रयोरिति**।। ननु वेदेऽपूर्वशब्द एव नास्ति, कथं तस्य प्रयोगादेवार्थप्रतिपत्तिरित्युच्यते ? इत्याशङ्क्य व्याचष्टे—**अपूर्वमिति**।। **तानीति**।। "नैतत्सारमि"ति चोद्यं नोदेति; नहि पदस्यानधिगतार्थप्रतिपादकत्वमुक्तम्, किन्तु प्रयोगानुपपत्तेरित्याशङ्क्याह—**श्रुतिसूत्रयोरिति**।। **ननु वाक्य इति**।। ननु अनधिगतार्थगन्तृत्वं प्रमाणानां दृश्यते, तद्वत्पदस्यापि स्यात्, कथं सिद्धवदनधिगतार्थगन्तृत्वं निराक्रियते ? इत्याशङ्क्याह—**प्रत्यक्षवदिति**।। संबन्धग्रहणसापेक्षत्वं हेतुः कथं स्वर्गाद्यर्थस्य पदप्रयोगमात्रादेव प्रतीतिर्निराक्रियते ? तत्प्रतीतेरदर्शनात्, अन्यस्य च ग्राहकस्यादर्शनादित्याशङ्क्य व्याचष्टे—**सन्निहितानेकेति**।।

### पञ्चपादिका

**अत्रोच्यते—यस्मिन् वाक्य एकं पदं मुक्त्वेतरेषां पदानामर्थः प्रसिद्धः, स किमेकपदार्थानवगमापराधेन त्यज्यताम्? उत बहुपदार्थप्रसिद्धिबलेनाप्रसिद्धोऽपि कथंचिदवगम्येतेति? तत्र निगम-निरुक्त-व्याकरणानामेवंरूपपदार्थानुगमहेतूनां विद्यमानत्वात् तद्बलेनार्थमनुगम्य वाक्यार्थावगतिर्युक्ता, न पुनरेकाप्रसिध्या प्रसिद्धपदार्थसंसर्गस्त्यक्तुं युक्तः।**

### पञ्चपादिकाविवरणम्

तत्र वाक्यार्थप्रमितिविवक्षया प्रसिद्धार्थैः पदान्तरैः सहाप्रसिद्धार्थपदप्रयोगानुपपत्तिरेव प्रतिपाद्येन संबन्धग्रहणानपेक्षया अपूर्वपदार्थं पदवाच्यत्वेन प्रतिपादयतीति परिहरति—**यस्मिन् वाक्य एकं पदमिति**। विप्रलम्भ-भ्रान्त्यादिदोषरहितवेद-सूत्रवाक्यार्थनिर्णयस्यास्यावश्यलभ्यत्वादिति भावः। ननु सहप्रयोगानुपपत्तिर्नियामकाभावाद् यं कञ्चिदर्थमुपस्थापयतीति? तत्राह—**तत्र निगमनिरुक्तेति**। **निगमो** नाम—प्रसिद्धार्थ-तदवयवौ परित्यज्य शब्दस्य शब्दैकदेशानुगमेनार्थान्तरे वृत्तिः, यथा देहात्मादिशब्दानामुपचितवस्तु-सन्ततगमनवत्पदार्थादावेकदेशानुगमेन वृत्तिः; प्रसिद्धार्थतदवयवोपादानेनार्थान्तरवृत्तौ लक्षणा-गुणवृत्तिप्रसङ्गात्। **निरुक्तं** नाम—शब्दस्य सर्वावयवार्थानुगमेन प्रसिद्धादर्थादर्थान्तरे वृत्तिः, यथा सोमशब्दस्य पार्वतीसहितमहेश्वरे वृत्तिः। **व्याकरणम्**—प्रत्ययविधानसामर्थ्यादर्थनिश्चयः, यथा वादीति ताच्छील्ये णिनिप्रत्ययविधानसामर्थ्याद्वदनशीलो गम्यते। ननु प्रसिद्धिबलेनाप्रसिद्धमुपादीयते, नचाप्रसिद्धेन प्रसिद्धं त्यज्यत इत्यत्र को

### तत्त्वदीपनम्

स्वर्गादेः पदमात्रगम्यत्वमसिद्धमिति परिहरति—**नेत्याहेति**॥ कुतस्तत्सिद्धिः? इत्याशङ्क्याह—**सन्निहितेति**। "यन्न दुःखेन संभिन्नं नच ग्रस्तमनन्तरम्" इत्यादौ सकलोपद्रवविधुरे सुखे स्वर्गशब्दः प्रयुक्तः, तथा "स्वर्गकामो यजेते"ति स्वर्गकामपदसमभिव्याहारात्लिङादेरपूर्वपरत्वम्। एवं देवताशब्दात् तदर्थप्रतिपत्तिरित्यर्थः॥

"अत्रोच्यते" इत्यत्र बहुप्रसिद्धिबलेनाप्रसिद्धोऽनुगम्यत इत्युक्तम्, तदसमञ्जसम्; व्याप्त्यादिकं विनाऽन्यप्रसिद्धेरसाधकत्वादित्याशङ्क्य तात्पर्यमाह—**तत्रेति**॥ पदान्तराणामप्यप्रसिद्धार्थत्वेन तत्समभिव्याहारादपूर्वसिद्धिः, तदर्थम्—**प्रसिद्धार्थैरिति** विशेषणम्। अनाप्तादिप्रयोगाद्वैलक्षण्यमाह—**विप्रलम्भेति**॥ प्रयोगानुपपत्त्याऽर्थप्रतिपत्तिसंभवेऽप्यर्थविशेषप्रतिपत्तिः कथमिति शङ्कते—**ननु सहेति**॥ हेत्वसिध्या परिहरति—**तत्राहेति**। निगमाद्यनुरोधेनार्थविशेषप्रतिपत्तिरित्युक्तम्, तत्र के ते निगमरूपाः? तत्राह—**निगमो नामेत्यादिना**॥ **शब्दैकदेशानुगमेनेत्य**स्यायमर्थः—प्रकृतिलक्षणशब्दैकदेशार्थस्यार्थान्तरेऽनुगमेन शब्दस्यार्थान्तरेऽनुगमे शब्दस्यान्यत्र वृत्तिनियमः। "प्रसिद्धार्थ-तदवयवौ परित्यज्ये"ति विशेषणकृत्यमाह—**प्रसिद्धार्थेति**। प्रसिद्धार्थोपादानेनार्थान्तरवृत्तावजहल्लक्षणा स्यात्। लक्षणा च गुणवृत्तिश्चेति लक्षणा-गुणवृत्ती। मुख्यवृत्त्यन्यत्वेन लक्षणाया गुणवृत्तित्वमुक्तम्। अथवा प्रसिद्धोपादानेनार्थान्तरप्रवृत्तौ लक्षणावृत्तिः, तदवयवस्य तद्गुणस्योपादानेनान्यत्र वृत्तौ गुणवृत्तिरित्यर्थः। **प्रत्ययविधानेति**—अस्मिन्नर्थेऽयं प्रत्ययो भवतीति विधिसामर्थ्यादित्यर्थः॥ एकाप्रसिध्या न प्रसिद्धपरित्याग इत्युक्तं टीकायाम्, तत्र हेतुं पृच्छति—**ननु प्रसिद्धेति**॥

### ऋजुविवरणम्

"यस्मिन् वाक्ये" इत्यादिग्रन्थेनानेकपदार्थप्रसिद्धिबलेनाप्रसिद्धस्यापि प्रतीतिरुक्ता, सा न युक्ता; बहुपदार्थप्रसिद्धेरन्याग्राहकत्वात्, प्रमाणान्तरस्य चानुक्तत्वात्, एकपदार्थप्रतिपत्तावपि लोके वाक्यार्थप्रतिपत्तिदर्शनादित्याशङ्क्यावतारयति—**तत्र वाक्यार्थेति**॥ "अप्रसिद्धार्थपदप्रयोगानुपपत्तिरेवे"त्युक्त एकपदप्रयोगानुपपत्त्याऽपि पदार्थप्रतीतिः स्यात्, न तथा दृश्यते, तदर्थमाह—**पदान्तरैस्सहेति**॥ तथाऽप्यप्रसिद्धार्थपदान्तरैः सह प्रयोगेऽपि न प्रतीतिर्दृश्यते, तदर्थमाह—**प्रसिद्धार्थैरिति**॥ तथाऽपि यादृच्छिकपदेनार्थप्रतीतिर्दृश्यते, तदर्थमाह—**वाक्यार्थप्रमितिविवक्षयेति**॥ प्रयोगानुपपत्तिमात्रान्नार्थनिश्चयः, तदर्थम्—**वाक्यार्थप्रमितीति**। एवमपि सर्वपदार्थाप्रसिद्धौ नार्थप्रतीतिः, तदर्थमाह—**प्रसिद्धार्थैरिति**॥ इतरद् व्यक्तम्। ननु एवंभूतपदान्तरैस्सह प्रयोगेऽपि नार्थनिश्चयो दृश्यते विप्रलम्भादिप्रणीते, अतो नात्रापि निश्चयः, यद्वा—नैवंभूतप्रयोगत्वनिश्चय इत्याशङ्क्याभिप्रायमाह—**विप्रलम्भ-भ्रान्त्यादीति**॥ ननु शब्दैकदेशानुगमेनार्थान्तरे वृत्तिरित्येवालम्, किमर्थम् "प्रसिद्धार्थतदवयवौ परित्यज्ये"ति विशेषणमुपादीयते? इत्याशङ्क्याह—**प्रसिद्धार्थतदवयवोपादानेनेति**॥

ननु प्रसिद्धवलेनाप्रसिद्धपदोपादानमेव न्याय्यमिति कथं निर्णीयते? विशेषस्यानुक्तत्वात्, "प्रसिद्धिबलेने"-

### पञ्चपादिका

**न हि प्रसिद्धिरप्रसिध्या त्यज्यते; प्रसिद्धिबलेनाप्रसिद्धमपि कल्प्यत इति न्यायात् ।**

**ननु निगमादिवशेनार्थानुगमे सर्वत्रैव कथंचिदर्थान्वयस्यानुगन्तुं शक्यत्वादव्यवस्थितः पदार्थः स्यात् ततश्च वाक्यार्थो नावधार्येत, न तर्हि निगमादीनामर्थवत्ता ? भवत्यर्थवत्ता, यत्र स्वार्थादन्यत्रापि विनियोगात् प्रयोगस्तत्र कथमभिदध्यात् ?**

### पञ्चपादिकाविवरणम्

विशेष इति ? तत्राह—**नहि प्रसिद्धिरप्रसिध्येति** । अप्रसिद्धिर्नैसर्गिकप्रागभावः । प्रसिद्धपदार्थैः सह वाक्यार्थनिर्णयाय प्रयोगानुपपत्तिरेवागन्तुकी तस्य प्रागभावस्य निवृत्तिहेतुरिति भावः ।

ननु अवयवार्थसामान्यानुगमानां सर्वतो विप्रसृतिसम्भवादुपादेयार्थनियमायोगाद् वाक्यार्थप्रतिपत्तिनियमो न स्यादिति चोदयति—**ननु निगमादिवशेनेति** । अत्र निगूढाभिसन्धिरुत्तरमाह—**न तर्हि निगमादीनामिति** । रूढिसामर्थ्यादिव सर्वत्र वाक्यार्थनियमे लोकप्रसिद्धं वृत्त्यन्तरमनर्थकं स्यादिति भावः । पूर्ववादी निगमादीनामर्थवत्तामाह—**भवत्यर्थवत्तेति** ।। **स्वार्थादन्यत्रेति** अर्थान्तरविवक्षयेत्यर्थः । **विनियोगादिति** वाक्यार्थसंसर्गं निमित्तीकृत्येत्यर्थः ।

### तत्त्वदीपनम्

हिशब्दसूचितं हेतुमाह—**प्रसिद्धिरिति** ।। **प्रयोगानुपपत्तिरित्यनुपपत्तिप्रभवा प्रसिद्धिरुच्यते** ।।

पदार्थ-वाक्यार्थयोरव्यवहितत्वमिष्टमित्याशङ्क्य तात्पर्यमाह—**नन्ववयवेति** । एकस्मिन् प्रयोगे पदार्थ-वाक्यार्थयोर्व्यवहितत्वं वाच्यम्, तच्च न सिध्येत्, निगमादिवृत्त्या शब्दस्य सर्वतः प्रवृत्तिसंभवादित्यर्थः । निगमादीनामानर्थक्ये चोदिते तस्यैवाभिधानमयुक्तमित्याशङ्क्य तात्पर्यमाह—**अत्रेति** ।। कोऽसौ गूढाभिसन्धिरित्याह—**रूढीति** ।। आनर्थक्यप्रसञ्जनस्यानिष्टपर्यवसायितामाह—**लोकेति** ।। "न तर्ही"त्यत्राप्यर्थवत्ताया विवक्षितत्वादितरत्रापि तदभिधाने पौनरुक्त्यमित्याशङ्क्याह—**पूर्वेति** ।। यद्विषयः प्रयोगः, तस्यापि स्वार्थत्वात् स्वार्थादन्यत्रेति कथमुक्तम् ? तत्राह—**स्वार्थादिति** ।। "विनियोगादि"त्यत्र कोऽसौ विनियोगः ? इति न ज्ञायते, पञ्चम्या अपादाने विधानात्, साऽपि कथम् ? इत्याशङ्कायामाह—**विनियोगादिति** । "जाड्याद् बद्धः" इत्यादौ यथा पञ्चम्या निमित्तार्थत्वम्, तद्वदत्रापीत्यर्थः ।।

### ऋजुविवरणम्

त्यप्ययुक्तम् ; अन्यप्रसिद्धिमात्रस्यान्याप्रसिद्धिनिवर्तकत्वाभावादित्याशङ्क्याभिप्रायमाह—**अप्रसिद्धिर्नैसर्गिकेति** ।।

"सर्वत्रैवे"त्यनेन सर्ववाक्यस्थपदेष्वनुगमसंभवोऽनवधारणहेतुत्वेनोक्तः, व्यधिकरणस्सः ; नह्यन्यत्र पदार्थज्ञानसंभवोऽन्यानवधारणकारणम् , विरूपश्च; प्रसिद्धत्वेऽपि व्यवस्थासंभवात्, कथञ्चिदर्थान्वयस्यानुगन्तुं शक्यत्वादित्ययुक्तम्; अर्थशब्देन सन्निहितत्वात्पदार्थ एव निर्दिश्येत, नच तस्यानुगन्तुं शक्यत्वम्, एवञ्च न पदार्थे व्यवस्था; तदभावे वाक्यार्थानवधारणम् । अपिचानेकार्थपदेष्वपि वाक्यार्थव्यवस्था दृश्यते, अतः कथमेतदनवधारणम् ? इत्याशङ्क्यावतारयति—**नन्ववयवार्थेति** ।। "न तर्हि निगमादीनामि"ति परिहारो न युक्तः ; चोदिताव्यवस्थादूषणस्यापरिहृतत्वात्, इत्याशङ्क्यावतारयति—**निगूढाभिसन्धिरिति** ।। ननु अव्यवस्थापादकेनानर्थक्यमङ्गीकृतमेव, तेन तस्यानर्थक्यापादनं न दोषायेत्याशङ्क्याभिप्रायमाह—**रूढिसामर्थ्यादिवेति** ।। "न तर्ही"त्यनेन निगमादीनामर्थवत्त्वमुक्तं भवति, "अर्थवत्ते"त्यनेनापि तदेवोच्यते, अतः पुनरुक्तम् । अथ तत्र दूषणमात्रमापादितम्, उत्तरेणार्थवत्त्वप्रतिपादनमित्युच्येत, तथाऽपि पौनरुक्त्यमेव स्यात्, तदनङ्गीकारे पूर्वापरविरोधप्रसङ्गादित्याशङ्क्यावतारयति—**पूर्ववादीति** ।। "स्वार्थादन्यत्रे"त्ययुक्तम्; अन्यत्र प्रयोगानुपपत्तेः, अभिधायकत्वञ्च निगमादिवशेन न संभवेत्, संभवे च "स्वार्थादन्यत्रे"त्ययुक्तम्; तस्यैव स्वार्थत्वादित्याशङ्क्य व्याचष्टे—**अर्थान्तरविवक्षयेति** ।। "विनियोगादि"ति संसर्गहेतुः प्रयोग इति प्रतीयेत, तच्च संसर्गस्य सिद्धस्याभावान्न युज्यते । कश्चात्र संसर्ग इति च न ज्ञायते, तदर्थं व्याचष्टे—**संसर्गं निमित्तीकृत्येति** । ल्यब्लोपे पञ्चमीत्युक्तं भवति । "तद्गतस्यैवावयवार्थान्वयलेशस्यानुगमादि"त्यनेन हेतुरुक्त इति प्रतिभाति; "कथमभिदध्यादित्यपेक्षायामि"ति हेतुत्वाकाङ्क्षायाः प्रदर्शितत्वात्, अन्यस्य चाभावात् । एवञ्च नार्थवत्त्वं निगमादेः; व्यवस्थितार्थप्रतीतिहेतुत्वाभावेन वाक्यार्थानियमस्यापरिहारात् । नापि तदनुगृहीता प्रयोगानुपपत्तिर्व्यवस्थितार्थग्राहिका; तस्या अप्यव्यवस्थितवस्तुग्राहकत्वेन

## पञ्चपादिका

**—इत्यपेक्षायां तद्गतस्यैवावयवार्थान्वयलेशस्यानुगमात्। एवं तर्हि, एकार्थनियमाय प्रयोगपरतन्त्रता मृग्यते, तदन्तरेणापि प्रयोगमेकार्थनियम एव कथंचिन्निगमादि व्याप्रियेतेति न कश्चिद् दोषः।**

**तदत्र ब्रह्मशब्दे व्युत्पाद्यमाने बृहतेर्धातोर्वृद्धिकर्मणोऽर्थानुगमात्,**

## पञ्चपादिकाविवरणम्

अयं भावः—वाक्यार्थनिर्णयं निमित्तीकृत्य पदान्तरैः सह प्रयोगानुपपत्तिरेव निगमादि-वशेनार्थमाददाना सन्निहितपदार्थसंसर्गयोग्यतया प्रयोजनपर्यन्तमेव पदार्थमादत्ते, इति वाक्यार्थनियमसिद्धिरिति। सिद्धान्ती गूढाभिसन्धि विवृणोति—**एवं तर्ह्येकार्थनियमायेति**। प्रथमप्रयोगानुपपत्तिर्निगमाद्यनुगृहीता फलपर्यन्तवाक्यार्थान्वयिपदार्थाकाङ्क्षानुगृहीता च नियतपदार्थोपादानहेतुभावे रूढेर्न विशिष्यत इत्यर्थः।

ननु एवमपि कथं ब्रह्मशब्दस्य जात्यादिविलक्षणे निरतिशयपुरुषार्थे मुमुक्षोर्जिज्ञासायोग्ये वस्तुनि निगमवशाद् वृत्तिरिति ? तदाह—**तदत्र ब्रह्मशब्दे व्युत्पाद्यमान इति**। ननु एवमपि यत्किंचिदापेक्षिकमहत्वसंपन्नं वस्त्वनुगम्यतामिति ?—

## तत्त्वदीपनम्

अवयवार्थान्वयलेशस्य सर्वत्रानुगमसंभवात् कथं ततो निश्चयः ? इत्याशङ्क्याह—**अयं भाव इति**॥ "निगमादिवशेने"त्यर्थज्ञानोपाय उक्तः, अथ विशेषोपादाने हेतुमाह—**सन्निहितेति**। सर्वस्यायोग्यत्वान्निष्फलत्वान्नोपादानमित्यर्थः। पौनरुक्त्यं निरस्यति—**गूढेति**॥ "एवं तर्ही"त्यनेन प्रयोगस्यैकार्थनियामकत्वमभिधाय "तदन्तरेणापी"त्यत्रानियामकत्वं चोक्तम्, ततो विरोध इत्याशङ्क्य तात्पर्यमाह—**प्रयोगेति**। प्रसिद्धपदसमभिव्याहारः प्रथमप्रयोगशब्दार्थः। "तदन्तरेणापि प्रयोगमि"त्यत्र प्रयोगशब्देन रूढिर्गृह्यते, अतो न विरोध इत्यर्थः॥

निगमाद्यनुगृहीतप्रयोगानुपपत्त्या ब्रह्मप्रसिद्धिमात्रमत्रोपपादनीयम्, किं नित्य-शुद्धादिप्रतिपादनेन ? इत्याशङ्क्याह—**नन्वेवमिति**। ब्रह्मशब्दाद् ब्रह्मप्रतिपत्तिसंभवेऽपीत्यर्थः॥ जात्यादिविलक्षणस्याप्यपुरुषार्थत्वेनाजिज्ञास्यत्वम्, तत्राह—**निरतिशयेति**॥ नित्यशुद्धादिरूपस्य जिज्ञास्यत्वात् तदन्तरेण ब्रह्मशब्दार्थस्यापरिपूर्णत्वाच्च तत्सिद्धिरित्याह—**तदाहेति**॥ बृहतिधातोर्महत्त्वसिद्ध्युपपत्तेर्न निरवग्रहत्वसिद्धिरिति शङ्कते—**नन्वेवमिति**॥

## ऋजुविवरणम्

मिलितयोरपि न वाक्यार्थनियामकत्वमित्याशङ्क्याभिप्रायमाह—**अयं भावो वाक्यार्थनिर्णयमिति**॥ "एवं तर्ही"त्यनेन निगमादीनामर्थवत्त्वमुच्यते, तत् पूर्वग्रन्थेन पुनरुक्तमित्याशङ्क्यावतारयति—**सिद्धान्तीति**॥ ननु सिद्धान्तिनाऽपि "न तर्ही"त्यनेनोक्तमेवार्थवत्त्वं निगमादीनाम्, अतो नायं सिद्धान्तिनः ; पौनरुक्त्यञ्चेत्याशङ्क्याह—**निगूढाभिसन्धिं विवृणोतीति**॥ "एवंतर्ही"त्यनेन प्रयोगं विना नियमे निगमादीनां व्यापार उक्तः, स न युक्तः ; प्रयोगमनादृत्य निगमादेर्नियामकत्वायोगात्, पूर्वापरविरोधश्च; पूर्वं निगमादिसहकृतप्रयोगानुपपत्तेर्नियतार्थनियामकत्वस्योक्तत्वात्, इदानीं निगमादीनामेवानियतार्थनियमे व्यापारस्योक्तत्वादित्याशङ्क्य व्याचष्टे—**प्रयोगानुपपत्तिरिति**॥ **रूढेर्न विशिष्यत** इत्यनेन "तदन्तरेणापि प्रयोगमिति" व्याख्यातम्। तत्रेयं शङ्का निरस्यते—कथं निगमादीनां व्यवस्थितार्थसिद्धिः प्रमाणान्तरेणैतदर्थ्ये प्रयोगस्य निश्चिते तत्समर्पणसामर्थ्यप्रदर्शनात्क्रियते ? ननु तदभाव इति।

"तदत्र ब्रह्मशब्द" इत्यादिना व्युत्पत्तिसामर्थ्याद् बुद्धत्वादीनामवगतिरुक्ता, अप्रस्तुता सा; प्रसिद्धत्वमिह जिज्ञासायोग्यत्वसिध्यर्थं प्रदर्शनीयम्, नान्यदित्यादिशङ्कानिवृत्त्यर्थमवतारयति—**नन्वेवमपि कथमिति**॥ जात्यादिविलक्षणेऽप्यपुरुषार्थे न जिज्ञासा, तदर्थम्—**निरतिशयपुरुषार्थ इति**॥ पुरुषार्थेऽप्यनर्थिनोऽन्यत्राप्रवृत्तिः, अयोग्ये च, तदर्थम्—**मुमुक्षोर्जिज्ञासायोग्य इति**॥ अथवा, पुरुषार्थेऽपि ज्ञातेऽत्यन्ताज्ञाते च न प्रवृत्तिः, तदर्थमाह—**मुमुक्षोर्जिज्ञासायोग्य इति**॥

**प्रयोगानुगमे चासतीति** टीकाग्रन्थस्यायमर्थः—प्रयोगानुगमनं नास्ति; प्रमाणान्तरेणेदंपरत्वे प्रयोगस्य निश्चिते तदनुरोधेन वर्तेत, तदभावे नेति तदेव हेतुर्निरवग्रहमहत्त्वप्रतीताविति॥ "ततश्च कालकृते"त्यादिना काल-वस्तु-देश-

## पञ्चपादिका

—प्रयोगानुगमे चासति विशिष्टार्थविषयस्यापेक्षिकमहत्त्वस्यापरिग्रहात् सर्वतो निरवग्रहमहत्त्वसम्पन्नं वस्तु वाक्यार्थान्वयि ब्रह्मपदादनुगम्यते। ततश्च कालकृतावच्छेदनिमित्तस्याल्पत्वस्याभावात् सदा सत्त्वान्नित्यं किंचिद्वस्तु ब्रह्मपदात् प्रतीयते। तथा रूपान्तरसद्भावे तद्रूपविकलत्वात् तदवच्छेदकृतमल्पत्वं स्यात्, तच्च ब्रह्मपदादेवापास्यते। तस्मादेकरसमद्वैतं वस्तु ब्रह्मपदात् प्रतीयते। एतेन देशकृतोऽपि परिच्छेदो निराकृतो वेदितव्यः॥ वस्त्वन्तरसद्भावे हि तदपेक्ष्यैतावति सद्भावः, नातः परमस्ति, इति स्यात्—एतस्माद् व्यावृत्त इति, तदभावे न परिच्छिन्नबुद्धिर्भवति। बुद्धत्वं च बृहत्यर्थान्वयादेव।

## पञ्चपादिकाविवरणम्

—नेत्याह—**प्रयोगानुगमे चाऽसतीति**। तत्र हेतुः—**वाक्यार्थान्वयीति**। तत्राल्पत्वं नाम वस्तुनो देश-काल वस्तुपरिच्छेदः, तद्व्यावृत्तिर्निरतिशयमहत्त्वम्, तत्रोपपदादिसङ्कोचकाभावे जिज्ञास्यस्य पुरुषार्थतया वाक्यार्थान्वयसम्भवे च तदपि ब्रह्मपदेनानुगम्यत इत्याह—**ततश्च कालकृतावच्छेदनिमित्तस्येत्यादिना बुद्धत्वं** चेत्यतः प्राक्तनेन ग्रन्थेन। भाष्ये नित्यशब्देन त्रिविधमपि महत्त्वं दर्शितमित्यर्थः।

ननु बुद्धत्वादयो गुणा न ब्रह्मत्वोपयोगिनः, तत् कथं ब्रह्मपदादनुगम्यन्ते? इति चोदयति—**कथमिति**। नैष दोषः; गुणतोऽपकृष्टेऽप्यल्पबुद्धिदर्शनात्। तथाहि—गुणहीनं दोषभूयिष्ठं च वस्त्वल्पमविद्यमानसमं मन्यन्ते, गुणभूयिष्ठं दोषहीनं च महान्तं कथयन्ति। अतो गुणतोऽल्पत्वनिराकरणेन महत्त्वं दर्शयितुं बोधगुणहीनस्य गुणतोऽपकृष्टतयाऽल्प-

## तत्त्वदीपनम्

संकोचकाभावात् तत्सिद्धिरित्याह—**नेत्याहेति**। प्रयोगानुगमो नाम यस्मिन्नर्थे वृद्धाः शब्दं प्रयुञ्जते, तादृशशब्दानुसरणम् तस्मिन्नर्थे सतीत्यर्थः लोकव्युत्पत्त्यनुसारेण ब्रह्मशब्दार्थप्रतिपत्त्यवगमे यथा व्युत्पत्तिः, तथा ग्राह्येति नियमः, अन्यथा तु शब्दबलात् प्रतीयमानं न त्यक्तव्यमित्यर्थः॥ आपेक्षिकमहत्त्वपरिग्रहकारणाभावेऽपि निरवग्रहमहत्त्वमादेयमित्यत्र को हेतुरिति? तत्राह—**तत्र हेतुरिति**॥ निरवग्रहत्वस्य ब्रह्मशब्दात् प्रतीतावपि त्रिविधपरिच्छेदव्यावृत्तिप्रतिपत्तौ हेत्वभावात् "ततश्चे"त्यादिग्रन्थासामञ्जस्यमित्याशङ्क्याह—**तत्राल्पत्वमिति**॥ भवतु निरतिशयमहत्त्वमेतादृशम्, तथाऽपि कथं ब्रह्मपदार्थप्रतिपत्तिः? तत्राह—**तत्रेति**॥ प्रकरणादिरादिशब्दार्थः। न केवलमत्र बाधकाभावः, किंतु साधकमस्ति चेत्याह—**जिज्ञास्यस्येति**॥ (टीकायाम्) एतेनेत्यस्यायमर्थः—एतेन वस्तुपरिच्छेदनिरासेनेत्यर्थः। वस्तुपरिच्छेदनिरासेन कथं देशपरिच्छेदव्यावृत्तिः? तत्राह—**वस्त्वन्तरेति**। देशाख्यस्य वस्त्वन्तरस्यास्तित्वेऽस्मिन् देशेऽस्ति, अस्मिन्नेति व्यावृत्तत्वम्, तस्याभावे कुतो व्यावृत्तिरित्यर्थः। व्यावृत्तिः स्यादिति संबन्धः।

बृहत्यर्थस्य बुद्धत्वमन्तरेणानुपपत्त्यभावात् कथं तत्प्रतीतिः? इति शङ्कते—**ननु बुद्धत्वेति**॥ अनुपपत्त्यभावोऽसिद्ध इत्याह—**नैष इति**॥ "तथाही"त्यारभ्य प्रमाणान्तरे"त्यतः प्राक्तनो ग्रन्थः स्पष्टार्थः। भाष्ये तु शुद्धपदेनाविद्यादिव्यावृत्तिरुच्यते, "मुक्तस्वभावमि"त्यनेन मुक्त्यवस्थायामविद्याराहित्यमितरत्रतु तद्वत्त्वाशङ्का निरस्यत इति भेदः॥

## ऋजुविवरणम्

परिच्छेदनिराकरणमनुगमसामर्थ्यादित्युक्तम्, तन्न युज्यते; महत्त्वस्याल्पत्वव्यवच्छेदकत्वादन्यव्यवच्छेदकत्वाभावात्, किञ्चापेक्षिकेऽपि निगमादिना वृत्तिर्दृश्यते, तद्धाने न कारणमस्ति। नच तादृशमहत्त्वे नानुपपत्तिः; तदभावे विशिष्टमहत्त्वपरिग्रहो न भवेदित्याशङ्क्यावतारयति—**तत्राल्पत्वं नामेति**॥ ननु नित्यतामात्रं भाष्योक्तम्, तेनान्यदुद्भाव्यमित्याशङ्क्य व्याचष्टे—**भाष्ये नित्यशब्देनेति**॥

"अबोधात्मकं ही"त्यादिना निकृष्टत्वपरिहाराय बुद्धत्वाद्यनुगम उक्तः, स न युक्तः; ब्रह्मत्वानुपयोगापरिहारादित्याशङ्क्याह—**नैष दोषो गुणत इति**॥ "सिद्धे हि वस्तुनि प्रयोगः" इत्ययुक्तम्; नहि सिद्धिर्निष्पत्तिर्विवक्षिता, निष्पन्नेऽपि नियमेन यथानिष्पत्तिप्रतीत्यदर्शनात्, ज्ञातत्वे विवक्षिते नानेन ज्ञातत्वं विवक्षितम्; इतरेतराश्रयप्रसङ्गात्, प्रमाणान्तरे च विवक्षिते "यथासिद्धमेव निरुच्येते"त्ययुक्तम्; शब्दात्प्रतीतौ निर्वचनं स्यात्, नतु यथाप्रतीतस्वीकारे। अतो न युक्तः। किञ्च नात्र विशेषो दृश्यते; उभयत्र शब्दादेव स्वीकारे "क्वचित्संकुचितं क्वचिन्निरङ्कुश एवे"त्यप्ययुक्तम्; सर्वत्र निगमादीनां निरङ्कुशार्थस्वीकारप्रसङ्गात्, इत्याशङ्क्याभिप्रायमाह—**प्रमाणान्तर-**

### पञ्चपादिका

कथम् ? अबोधात्मकं हि वस्तु भोग्यम्, अतो भोक्तारं प्रति शेषत्वान्निकृष्टम्। चेतनः पुनर्न कस्यचिद्गुणभावमेति। तेनोत्कृष्टं सर्वस्माद् बुद्धस्वरूपं किंचित्, इति बृहत्यर्थान्वयमेवानुसृत्य गम्यते। 'मुक्तमिति' चाविद्या-कामकर्मपरतन्त्रस्तैरितश्चामुतश्च पशुवन्नीयमानो निकृष्टो भवति। ब्रह्मशब्दस्तु स्वार्थप्रक्षेपेण वाच्यं किंचिद्गमयन् सदैवाविद्यादिसंसारबीजानाकलिततया तस्योत्कृष्टमहत्त्वमावेदयति। "सर्वज्ञं सर्वशक्तिसमन्वितं च तदि"ति ब्रह्मशब्दादेवावगम्यते। कथम् ? यदि किंचिदविदितं तेन, कुतश्चिद्वा कार्याद् व्यवार्तते शक्तिः, आपेक्षिकस्तदोत्कर्षः स्यात्। न तद्युक्तमन्यतोऽसिद्धस्य वस्तुनः पदप्रयोगादेव प्रतिपत्तौ। सिद्धे हि वस्तुनि प्रयोगे तस्य यथासिद्धमेव महत्त्वं निरुच्यते। शब्दादेव तदर्थान्वयप्रतीतौ निरङ्कुश एवार्थोऽभ्युपेतव्यः। एवंच बृहतेरर्थः परिपूर्णो भवति, यदि सर्वमस्य साक्षादेव संविद्गोचरे वशे च वर्तेत, तदेतदाह—अस्ति तावद् ब्रह्म नित्य-शुद्ध-मुक्त-स्वभावं सर्वज्ञं सर्वशक्तिसमन्वितम्। ब्रह्मशब्दस्य हि व्युत्पाद्यमानस्य नित्यशुद्धत्वादयोऽर्थाः प्रतीयन्ते; बृहतेर्धातोरर्थानुगमादिति ॥

### पञ्चपादिकाविवरणम्

त्वाद् बुद्धत्वमनुगम्यत इत्याह—**अबोधात्मकं हि वस्त्वित्यादिना**। तथा चेतनस्यापि संसारित्वे दोषभूयिष्ठत्वाद् गुणतोऽपकर्षान्निरतिशयमहत्त्वासिद्धेः सर्वदोषरहिततया मुक्तत्वोत्कर्षोऽप्यनुगम्यत इत्याह—**मुक्तमिति चाविद्याकामकर्मपरतन्त्र इति**। चेतनस्यापि मुक्तस्य सर्वविषयज्ञानाभावे सर्वकार्यनियमनादिशक्त्यभावे च परिशिष्टज्ञेयकार्यविषयज्ञाननियमनशक्त्यभावात् ततोऽपकर्षादल्पता स्यात्, तद्व्यावृत्त्यर्थमाह—**सर्वज्ञं सर्वशक्तिसमन्वितं च तदित्यादिना**। ननु ब्रह्मशब्दप्रयोगेऽपि जाति-जीवकमलासन-शब्दराशिषु नैतावानर्थः प्रतीयते, तत्र कथमनुगमादप्येतादृशस्यार्थस्य प्रतिपत्तिरिति ? तत्राह—**सिद्धे हि वस्तुनि प्रयोग इति**। प्रमाणान्तरगृहीतेऽर्थे प्रयोगसामर्थ्यादेवार्थप्रतिपत्तावल्पं वा महद्वा यथा प्रमाणान्तरेण प्रतिपद्यते, तथैव शब्दार्थः प्रतिपत्तव्यः। यदा पुनः प्रयोगसामर्थ्यमनपेक्ष्य शब्दावयवसामर्थ्यादेवार्थोऽनुगम्यते, तदा प्रमाणान्तरोपपद-प्रकरणानां सङ्कोचहेतूनामभावाद् यथासामर्थ्यं मुख्य एवार्थः प्रतिपत्तव्य इति भावः। उक्तेऽर्थे भाष्यमवतारयति—**तदेतदाहेति**।

ननु—सौत्रस्य शब्दस्यार्थोऽनुगम्यते ? किं वा श्रौतस्य ? न तावत् सौत्रस्य; पौरुषेयप्रयोगस्य प्रमाणान्तरापेक्षत्वात्तदभावात्, नापि श्रौतस्य; "सत्यं ज्ञानम्" "यतो वा इमानी"त्यादिशास्त्रे निर्णीयमानार्थत्वादनुगमानपेक्षणात्—इति, नैष दोषः; श्रुतिप्रमाणावगतविषयतया तन्मूलस्यैव सौत्रस्य ब्रह्मशब्दप्रयोगस्योत्तरसूत्रप्रतिपाद्यश्रुतिप्रमाणगम्य-

### तत्त्वदीपनम्

सिद्धत्वस्योभयत्राविशेषात् कथं वैषम्यम् ? इत्याशङ्क्य तात्पर्यमाह—**प्रमाणान्तरेति** ॥ पूर्वोक्तस्यार्थस्यात्र स्पष्टीकारणान्न पौनरुक्त्यमित्यर्थः। निगमाद्यनुगृहीताद् ब्रह्मशब्दाद् ब्रह्मप्रतिपत्तिरित्युक्तम्, तत्प्रकारान्तरेणाक्षिपति—**ननु सौत्रस्येति** ॥ प्रमाणान्तरेणोपलब्धेऽर्थे तद्वाचकः शब्दो विचारयितव्यः, नच नित्यशुद्धत्वादिरूपे वस्तुनि प्रमाणान्तरं समस्ति, ततः कथं तत्र शब्दविरचनम् ? तस्मान्न सौत्रशब्दपर्यालोचनयाऽर्थसिद्धिरित्यर्थः। कल्पद्वयेऽपि न विरोध इति समाधत्ते—**नैष इति** ॥ प्रथममाद्यं पक्षमाश्रित्याविरोधमाह—**श्रुतीति** ॥ सौत्रस्य ब्रह्मशब्दप्रयोगस्यार्थानुगममुखेनार्थोपादानादिति संबन्धः। निर्मूलत्वान्न सूत्रशब्दार्थप्रतिपत्तिरित्युक्तं निरस्यति—**तन्मूलस्येति** ॥ श्रुतिमूलस्येत्यर्थः। तदेवाह—**श्रुतिप्रमाणेति** ॥ श्रुतिप्रमाणेनावगतो विषयः तस्य भावस्तत्ता, तयेत्यर्थः। **ननु सूत्रं** श्रुतिमूलं चेत्, तर्हि श्रुतेरुत्तरसूत्रनिर्णीतार्थत्वात् तन्मूलं सूत्रमपि निर्णीतविषयमेवेति नानुगमापेक्षा, तत्राह—**उत्तरेति** ॥ यद्यपि श्रुतिप्रमाणादर्थप्रतिपत्तिः; तथाऽपि तां करेण पिधाय प्रकारान्तरेण सूत्रार्थो वर्ण्यत इत्यर्थः। प्रकारान्तरेणोपपादनं कस्मात् ?

### ऋजुविवरणम्

**गृहीतेऽर्थ इति** ॥ तर्हि **"शब्दादेवे"**ति व्यर्थम्; सर्वत्र शब्दादेव प्रतीतेरित्याशङ्क्य व्याचष्टे—**प्रयोगसामर्थ्यमनपेक्ष्येति** ॥ ननु—प्रयोगानपेक्षत्वे बोधकत्वमेव न स्यादित्याशङ्क्याह—**शब्दावयवसामर्थ्यादिति** ॥ ननु उत्तरसूत्रश्रुतिसूचनद्वारेण ब्रह्मस्वरूपे निश्चिते स एवास्यापि ब्रह्मशब्दस्यार्थो निश्चितो लभ्यते, किं निगमेन ? इत्याशङ्क्याह—**उत्तरसूत्रसाध्येति** ॥ प्रतिज्ञातस्य प्रतिपादनम्, नतु प्रतिपाद्यं पर्यालोच्य प्रतिज्ञातार्थनिश्चयः; इतरेतराश्रयात्, अपरिज्ञाते

**पञ्चपादिका**

**ननु एवमपि व्युत्पत्त्यनुसरणेन भवत्येवमात्मके वस्तुनि प्रतीतिः, न पुनरेतावता तस्य सिद्धिः, पदमात्रस्याप्रमाणत्वात्, सत्यमेवम्; अत एव जिज्ञासा धर्मस्येव लोकाख्यप्रमाणाभाससिद्धस्य। इदमपरं ब्रह्मशब्दार्थस्य सिद्धौ कारण-**

**पञ्चपादिकाविवरणम्**

ब्रह्मस्वरूपमनपेक्ष्यैवार्थानुगममुखेनार्थोपादानात्, उत्तरसूत्रसाध्यसिद्धवत्कारेणार्थोपादानानुपपत्तेश्च। श्रौतस्य वा अयं ब्रह्मशब्दस्यार्थानुगमो वर्ण्यते, वाक्यार्थान्वयितया प्रयुक्तस्य ब्रह्मशब्दस्य वाक्यप्रमाणमनपेक्ष्यैवान्यतः सिद्धेर्वक्तव्यत्वादनुगमापेक्षणात्। ननु तर्हि पदानुगमस्य वर्णितविशिष्टार्थविषये सम्भावनामात्रबुद्धिहेतुत्वात्प्रमाणान्तरानधिगतस्य पदार्थस्य कथं वाक्यान्वयितया तत्र निर्णयहेतुत्वम्? इति चोदयति—**ननु एवमपि व्युत्पत्त्यनुसरणेनेति**॥ तत्र जिज्ञासापदस्य सन्निहितस्यानिर्णीतजिज्ञास्यवस्तुसापेक्षत्वात्तदपेक्षितार्थसमर्पणस्य ब्रह्मशब्दस्यानिर्णीतप्रतिपन्नवस्तुमात्रसमर्पणेन वाक्यार्थनिर्णयहेतुत्वं न विरुध्यत इति परिहरति—**सत्यमेवम्, अत एवेति**॥ सर्वस्यात्मत्वाच्चेति भाष्यतात्पर्यार्थमाह—**इदमपरं ब्रह्मशब्दार्थस्येति**॥ ननु आत्मन्यपि न प्रमाणम्, प्रत्यक्षाद्यविषयत्वात्, अप्रामाणिकस्य च द्विचन्द्रादिवदवस्तु-

**तत्त्वदीपनम्**

श्रुतित एवोक्तार्थसिद्धेरित्याशङ्क्याह—**उत्तरसूत्रेति**॥ अनुबन्धचतुष्टयवतो विचारकर्तव्यतायामनेन सूत्रेण सिद्धायामुत्तरविचारप्रवृत्तिः, ततः कथमुत्तरसूत्राधीनश्रुत्यर्थापेक्षयाऽस्य प्रवृत्तिरित्यर्थः। द्वितीयकल्पाङ्गीकारेऽपि न विरोध इत्याह—**श्रौतस्येति**॥ श्रुतित एवार्थसिद्धेरनुगमवैयर्थ्यमिति यत्तूक्तम्, तन्निरस्यति—**वाक्यार्थेति**॥ इदमुक्तं भवति—पदैः पदार्थेषु प्रतिबुद्धेषु तत्संसर्गलक्षणोऽर्थो वाक्यात् प्रतीयत इति वक्तव्यम्, ततश्च वाक्यं विना ब्रह्मपदार्थप्रतिपत्त्यर्थमनुगमापेक्षणं युक्तमित्यर्थः। ब्रह्मणः प्रसिद्धत्वमङ्गीकृत्याप्रामाणिकत्वादजिज्ञास्यत्वमुक्तम्, तत्राप्रमाणिकत्वमसिद्धम्; ब्रह्मशब्दानुगमस्यापि प्रमाणत्वात्, अप्रमाणिकत्वेऽपि जिज्ञास्यत्वं युज्यते प्रसिद्धत्वादित्याशङ्क्य तात्पर्यमाह—**ननु तर्हीति**॥ पदमात्रस्याप्रमाणिकतायाः सर्वैरुपेयत्वात् प्रमाणत्वं तावदसिद्धम्, नच पदानुगमवैयर्थ्यम्; विशिष्टविषय संभावनाहेतुत्वादित्यर्थः।

प्रतीतिमात्रसंभवाज्जिज्ञास्यत्वमुक्तं निरस्यति—**प्रमाणेति**॥ संसृष्टपदार्थानां वाक्यार्थत्वात् पदार्थस्य चामानतयाऽवस्तुत्वान्न वाक्यार्थनिर्णयहेतुत्वमित्यर्थः। "सत्यमेवमि"त्यत्राप्रामणिकत्वमङ्गीकृत्य जिज्ञास्यत्वमुक्तम्, तदसंगतम्; अप्रामाणिकस्य वाक्यार्थनिर्णयहेतुत्वायोगादित्याशङ्क्य तात्पर्यमाह—**तत्रेति**॥ तत्र सूत्र इत्यर्थः। तेनापेक्षितस्यार्थस्य समर्पणं येन स तथोक्तः। प्रतिपन्नत्वे सत्यप्रामाणिकत्वापराधेन जिज्ञास्यत्वादर्शनात् प्रतिपन्नत्वमात्रं जिज्ञास्यत्वप्रयोजकम्; इतरथा जिज्ञासावैयर्थ्यमित्यर्थः। ब्रह्मप्रतिपत्तौ शब्दानुगमस्यैकस्य हेतोरभिधानादिदमपरं कारणमिति कथमुक्तम्? इत्याशङ्क्येदमा पुरोक्तं नोच्यत इत्याह—**सर्वस्येति**॥ सर्वस्य ब्रह्मास्तित्वप्रसिद्धिः ब्रह्मणः प्रत्यक्स्वरूपत्वादिति भाष्यार्थः॥

आत्मन एवाप्रसिद्धत्वात् कथं तदभेदेन ब्रह्मप्रसिद्ध्युपपादनम्? इति शङ्कते—**नन्वात्मनीति**॥ **प्रत्यक्षाद्यविषयत्वादिति**॥ न तावदात्मनि बाह्यप्रत्यक्षं संभवति; रूपादिविधुरत्वात्, नाप्यर्थान्तरम्; कर्तृ-कर्मविरोधात्, नानुमानम्; तद्व्याप्तलिङ्गानिरूपणात्, नाप्यागमः; विप्रतिपत्तेः, प्राकृताप्रतिपत्तेश्च, नाप्यर्थापत्तिः, अनुपपत्त्यदर्शनात्, उपमानाभावौ तु दुरापास्तावित्यर्थः। अस्तु तर्ह्यप्रामाणिकत्वम्? तत्राह—**अप्रमाणिकस्येति**॥ अनुभवविरो-

**ऋजुविवरणम्**

लक्षणादिजिज्ञासाभावादुत्तरसूत्रानारम्भादिति भावः। ननु—श्रौतेऽपि नानुगमापेक्षा; वाक्यसामर्थ्यादेव तत्सिद्धेरित्याशङ्क्याह—**वाक्यार्थान्वयितयेति**॥ "नन्वेवमपि व्युत्पत्त्यनुसरणेन" इत्यादिना वस्तुसिद्धिर्नास्ति; पदमात्रस्याप्रमाणत्वादित्युक्तम्, तदयुक्तम्; सर्वपदार्थेष्वविशेषात्, पदस्याप्रामाण्यात्। नच तावता किञ्चिद्धीयते; वाक्यार्थबोधोत्पत्तेः संशयादिरूपत्वाभावे पारिशेष्यात्प्रामाण्यासिद्धेः। वाक्यार्थबोधोत्पत्तौ वान्वितत्वेन प्रमितिर्भविष्यति, विमृष्टस्येवापूर्वस्य; अतः कथमसिद्धिः? इत्याशङ्क्यावतारयति—**ननु तर्हीति**॥

**नन्वात्मन्यपीति**॥ अनेन ब्रह्मवदत्रापि न प्रमाणान्तरमस्ति, अत आत्मत्वेनापि न ब्रह्मप्रसिद्धिरित्युक्तम्। "सर्वो ह्यात्मास्तित्वमि"त्यनेन प्रतीतिस्तावदस्ति; साऽऽत्मानुभूतिरूपाऽन्या वा भवतु, सर्वथा सिद्धिरस्तीत्युक्तम्।

## पञ्चपादिका

मुच्यते साध्यत्वसिध्यर्थम्—सर्वस्यात्मत्वाच्च ब्रह्मास्तित्वप्रसिद्धिरिति ॥ तदेव दर्शयति—सर्वो ह्यात्मास्तित्वं प्रत्येति, न नाहमस्मीति ॥

यदि नात्मास्तित्वप्रसिद्धिः स्यात् सर्वो लोको नाहमस्मीति प्रतीयात्। आत्मा च ब्रह्मेति ॥ कथं पुनरात्मा ब्रह्म ? वेदान्तेष्वात्मनि ब्रह्मशब्दप्रयोगात्। आत्मानमेव च लोकः—अहमिति व्यपदिशति। तदेवमहंप्रत्यय एव ब्रह्मणः प्रसिद्धत्वाद् नाप्रसिद्धिशङ्का ॥

## पञ्चपादिकाविवरणम्

त्वादिति, तत्राह—सर्वो ह्यात्मास्तित्वमिति ॥ ननु शून्य एवायमात्मा प्रतिभासते, कथमात्मास्तित्वसिद्धिः ? इति शून्यवादमाशङ्क्याह—यदि नात्मास्तित्वप्रसिद्धिः स्यादिति ॥ ननु आत्मपदार्थे प्रत्यक्षावगते कथं ब्रह्मपदार्थस्य प्रसिद्धिरिति ? अत आह—आत्मा च ब्रह्मेति ॥ ननु अनादिवृद्धव्यवहारे ब्रह्मशब्दस्यात्मनि प्रयोगादर्शनात् कथं ब्रह्मशब्देनात्मा जिज्ञास्यत्वेनोपादीयते ? इति चोदयति—कथं पुनरात्मा ब्रह्मेति ॥ लौकिकप्रयोगाभावेऽपि वैदिकप्रयोगसामर्थ्यात् "स वा अयमात्मा ब्रह्म" इत्यादौ ब्रह्मशब्देनात्मा जिज्ञास्यत्वेनोपादीयत इति परिहरति—वेदान्तेष्विति ॥ ननु ब्रह्मशब्दाभिधेयोऽयमात्मा नाहंप्रत्ययवेद्यः, किन्त्वागमैकसमधिगम्य इति, नेत्याह—आत्मानमेवेति ॥ ततश्च प्रतिपन्नमुद्दिश्य विचारसम्भवाच्छक्यप्रतिपाद्यता सिद्धेत्याह—तदेवमहंप्रत्यय एवेति ॥ ननु—वेदान्तेषु संज्ञापरतया नात्मनि ब्रह्मशब्दः प्रयुज्यते, किन्त्वात्मनो ब्रह्मशब्दार्थतादात्म्याभिप्रायेण; ततश्चातिरिक्तार्थत्वाद् ब्रह्मशब्देनात्मोपादीयत इत्ययुक्तम्—इति,

## तत्त्वदीपनम्

धान्नात्मापलापो युक्त इत्याह—तत्राहेति ॥ सर्वो लोक आत्मास्तित्वं प्रत्येति। प्रत्ययमेवाह—न नाहमिति ॥ 'अहं नास्मी'ति न प्रत्येति, किं त्वहमस्मीति प्रत्येतीत्यर्थः ॥ अनुभवोऽन्यथासिद्ध इति शङ्कते—ननु शून्य इति ॥ योऽयमात्मा प्रतिभासते, स शून्य एवेति संबन्धः। किमात्मनः शून्यत्वमनुभवबलात् ? उत प्रमाणान्तरात् ? नाद्यः; तथाऽननुभवात्, नापि द्वितीयः; तदनिरूपणादिति समाध्यभिप्रायः। आत्मप्रसिद्धावपि न ब्रह्म सिध्येत्, न खलु कलशप्रसिध्याऽऽकाशप्रसिद्धिर्दृष्टेति शङ्कते—नन्वात्मेति ॥

आकाश-कलशयोर्भेदादेकप्रतिपत्तावन्यासंप्रतिपत्तिरपि घटते, अत्र तु तद्वैपरीत्यमित्याह—अत आहेति ॥ ब्रह्माऽऽत्मनोरभेदमाक्षिपति—नन्वनादीति ॥ ब्रह्मात्मनोरभेद आत्मन्यपि ब्रह्मशब्दः स्यात्, नच तथा लोके दृश्यत इत्यर्थः। आहवनीयापूर्वादिर्लोकासिद्धत्वेऽपि त्रय्यनुरोधाद् यथोपगमः, तद्वदित्याह—लौकिकेति ॥ ब्रह्मात्मनोरभेदादात्मप्रसिद्धया ब्रह्मप्रसिद्धिरित्युक्तम्, तत्र वक्तव्यम्—किमशनायादिमदात्मप्रसिध्या ब्रह्मप्रसिद्धिः ? उत विलक्षणात्मप्रसिध्या ? नाद्यः; तयोर्भिन्नत्वात् तत्प्रसिद्धब्रह्मप्रसिद्धत्वासंभवादित्यभिप्रेत्य द्वितीयं दूषयति—ननु ब्रह्मेति ॥ अशनायाद्यतीतस्याननुभवाद् विपरीतस्य चाऽनुभवादित्यर्थः। विलक्षणस्याहंप्रत्ययावेद्यत्वे कुतः सिद्धिः ? इति शङ्कते—किन्त्विति ॥ "योऽशनाया-पिपासे" इत्याद्यागमादित्याह—आगमेति ॥ ततश्च लोक आत्मनः प्रतिद्धत्वात् तदभेदेन ब्रह्मप्रसिद्धिरित्युपक्रमक्षतिरिति चोदयितुरभिमानः। अशनायादिरहित एव आत्मा कल्पनया तद्विपरीतताऽवभासते, ततश्चात्मप्रसिध्या ब्रह्मप्रसिद्धिरित्युक्तं युक्तमित्याह—नेत्याहेति ॥ "तदेवमि"ति टीकायामपेक्षितं पूरयति—ततश्चेति ॥ ब्रह्मशब्दव्युत्पत्त्या, आत्मप्रसिध्या च ब्रह्मसिद्धिरित्येतत् "ततः" इत्यनेन परामृश्यते। लोक आत्मनि ब्रह्मशब्दप्रयोगाभावेऽपि "स वा अयमात्मा ब्रह्म" इत्यादावात्मनि ब्रह्मशब्द इत्युक्तम्, तदाक्षिपति—ननु वेदान्तेष्विति ॥ हस्त-करशब्दयोरिवैकसंज्ञात्व आत्मा ब्रह्मेति सहप्रयोगानुपपत्तिः; तस्मान्न संज्ञापरत्वमित्यर्थः। कथं तर्हि सामानाधिकरण्यम् ? इति पृच्छति—किन्त्विति ॥ अभेदस्यापि भावादित्याह—आत्मन इति ॥ फलितं दर्शयति—तत इति ॥

## ऋजुविवरणम्

नन्वात्मपदार्थे प्रत्यक्षावगत इति ॥ अत्रानुवादमुखेन व्यक्तं प्रमाणमुक्तम्; विषयत्वञ्च प्रत्यभिज्ञाग्रन्थ इति। "आत्मा च ब्रह्मे" त्यनेनैतदुक्तम्—आत्मन एवात्र जिज्ञास्यत्वं विवक्षितम्, अतस्तस्यैव प्रसिद्धिरुच्यत इति ॥ ननु ब्रह्मशब्दाभिधेय इति ॥ अनेनाहंप्रत्ययवेद्यत्वाभावेनाप्रसिद्धत्वेनाविचार्यत्वमित्युक्तम् । अतिरिक्तब्रह्मस्वरूपनिर्णयविवक्षयेति ॥ एतदुक्तं भवति—जीवस्यैव निजं रूपं ब्रह्म, नतु व्यतिरिक्तम्; तन्निर्णयाय प्रसिद्धरूपोद्देशात्। ननु—एकस्मिन् वस्तुनि कथं

## पञ्चपादिका

**यदि तर्हि लोके ब्रह्म आत्मत्वेन प्रसिद्धमस्ति, ततो ज्ञातमेवेत्यजिज्ञास्यत्वं पुनरापन्नमिति विषयमाक्षिपति। असिद्धं हि वस्तु साध्यमानं विषयः, सिद्धं तु न पुनः साध्यते, इति न शास्त्रस्य विषयः॥ न, तद्विशेषं प्रति विप्रतिपत्तेः इति विषय-सम्बन्धौ समर्थ्येते।**

**सत्यमहमित्यात्मनि प्रत्ययः, आत्मा च ब्रह्म, किन्तु तस्मिन्नेव विप्रतिपत्तयः—अयमसौ, अयमसाविति। ताश्च वस्तुतो ब्रह्मपदार्थविषया एव; तदेकार्थत्वाद् ब्रह्मशब्दस्य। ततः सामान्यतः सिद्धमपि विशेषतोऽसिद्धेरसिद्धकल्पमेव, इति भवत्यस्य[1] विशेषसिद्धिहेतोर्विषयः; सामान्यतः सिद्धत्वाच्च शक्यते विशेषतः प्रतिपादयितुम्, इति**

## पञ्चपादिकाविवरणम्

नैष दोषः; अतिरिक्तब्रह्मस्वरूपनिर्णयविवक्षया प्रसिद्धांशस्य ब्रह्मशब्देनोपादानात्, एकस्मिन्नप्यर्थे बिम्बप्रतिबिम्बादिवद् प्रतिभासाप्रतिभासोपपत्तेः॥

एवं तर्हि प्रत्यक्षगोचरतयाऽनन्यसाधारणत्वाभावाद् विषयत्वं न सिध्यतीत्याक्षिपति—**यदि तर्हि लोके ब्रह्मात्मत्वेनेति**॥ समाधत्ते—**न; तद्विशेषं प्रति विप्रतिपत्तेरिति**॥ भाष्यार्थं विवृणोति—**सत्यम्; अहमित्यात्मनि प्रत्यय इत्यादिना**॥ ननु अन्यस्मिन् विप्रतिपन्ने कथमन्यन्निर्णीयत इति? तदाह—**ताश्च वस्तुत इति**॥

ननु प्रसिद्धे पदार्थे कथं विप्रतिपत्तिरिति? तत्राह—**ततः सामान्यतः सिद्धमपीति**॥ ननु अप्रतिपन्नविशेषं वस्तु स्वयमप्रतिपन्नमेवेति कथमुद्दिश्यविधानाभावे शक्यप्रतिपाद्यतेति? तत्राह—**सामान्यतः सिद्धत्वाच्च शक्यत इति**॥

## तत्त्वदीपनम्

ब्रह्मात्मनोर्वस्तुत ऐक्येऽपि काल्पनिकभेदसंभवात् तन्निरासाय शब्दद्वयप्रयोगः। यथा 'सोऽयं देवदत्तः' इत्यत्र देवदत्तस्वरूपैक्येऽपि कल्पितभेदनिराचिकीर्षया शब्दद्वयप्रयोगः, तथाऽत्रापीत्याह—**नैष इति**॥ **अतिरिक्तेति**॥ अतिरिक्तत्वेन भासमानं यद् ब्रह्म, तस्य प्रत्यक्त्वेन निर्णयविवक्षयेत्यर्थः विमतौ, वस्तुतो भिन्नौ, विरुद्धधर्माधिकरणत्वात्, दहनतुहिनवदित्याशङ्क्य, व्यभिचारान्मैवमित्याह—**एकस्मिन्नपीति**॥ ब्रह्मणः प्रसिद्धत्वे शक्यप्रतिपाद्यत्वसंभवात् कथमजिज्ञास्यत्वमुक्तमित्याशङ्क्य तात्पर्यमाह—**एवं तर्हीति**॥ अनेनैव प्रतिपाद्यत्वं विषयत्वं च न ब्रह्मणि, अन्यतः सिद्धत्वादित्यर्थः। प्रतिपन्नेऽपि विप्रतिपत्त्यनुपपत्तेरप्रतिपन्नत्वम्, ततश्चाविचार्यत्वेन समाध्याभासत्वमित्याशङ्क्याह—**समाधत्त इति**॥ सामान्यप्रतिपत्तेर्विशेषप्रतिपत्त्यविरोधित्वाद् विप्रतिपत्त्युपपत्तिरित्यर्थः॥ आत्मनो विषयत्वाक्षेपे विप्रतिपत्तिप्रदर्शनेन विषयत्वमुपपादनीयं टीकाकृता, "आत्मनोऽपी"त्यभिधानं तु भाष्याननुसारीत्याशङ्क्याह—**भाष्यार्थमिति**॥ विप्रतिपत्त्युपपिपादयिषया प्रतीतिमात्रं भाष्यकृतोऽभिप्रेतम्, तत्प्रदर्श्यते टीकाकृतेति न विरोध इत्यर्थः। "द्वा सुपर्णे"त्यादिना भेदस्योपलब्धेरात्मविप्रतिपत्तिदर्शनस्य ब्रह्मजिज्ञासानुपयोगित्वं शङ्कते—**नन्विति**॥ अनन्यथासिद्धश्रुत्येतरविरोधाद् "द्वा सुपर्णे"त्यादेर्न वास्तवभेदप्रतिपादकत्वम्, किंतु काल्पनिकभेदानुवादित्वम्; ततश्चाविप्रतिपत्तिरिति परिहरति—**तदाहेति**॥

सामान्य-विशेषयोरभेदात् सामान्यप्रतिपत्तौ विशेषोऽपि प्रतिपन्न इत्यजिज्ञास्यत्वमिति शङ्कते—**ननु प्रसिद्ध इति**॥ अभेदोऽसिद्ध इत्याह—**तदाहेति**॥ विशेष-सामान्ययोर्भेदे [1]'विशेषाप्रतिपत्तौ न सामान्यप्रतिपत्तिः "[2]निर्विशेषं न सामान्यमि'ति न्यायादिति शङ्कते—**नन्वप्रतिपन्नेति**॥ विशेषानवगतावपि सामान्यावगतिरनुभूयते, इतरथा भवन्मते

## ऋजुविवरणम्

प्रतिभासाप्रतिभाससंभवः? तत्राह—**एकस्मिन्नप्यर्थे इति**॥ "यदि तर्हि लोके" इत्यनेन प्रसिद्धत्वे जिज्ञास्यत्वं नास्तीत्युक्तम्, तदयुक्तम्; निगमादिप्रसिद्धेर्जिज्ञास्यत्वमित्युक्तं पूर्वम्, तद्वदुपपत्तेरित्याशङ्क्यावतारयति—**एवं तर्हि प्रत्यक्षगोचरतयेति**॥

**ननु अन्यस्मिन्निति**॥ आत्मनि विप्रतिपन्ने तन्निर्णयो युक्तः, नतु ब्रह्मनिर्णय इति चोद्याभिप्रायः।

**नन्वप्रतिपन्नविशेषमिति**॥ अनेन साधारणाकारस्य पदार्थान्तरेष्वपि भावान्न तत्स्वरूपम्, नापि प्रतिपाद्यम्; विशेषरूपस्यास्य प्रतिपाद्यस्याप्रतिपन्नत्वान्न तेन संबन्धः; तदभावे न प्रतिपाद्यत इत्युक्तम्॥

**सामान्यतस्सिद्धत्वाच्चेति**॥ अनेनैतदुक्तम्—सामान्यतस्सिद्धे वस्तुनि संबन्धज्ञानं सर्वत्र, नतु विशेषतस्सिद्धे

---

१. विशेषप्रतिपत्ताविति पू. मु. पा.। २. विशेषे नेति पू. मु. पा.।

## पञ्चपादिका

**भवति तस्य शास्त्रं साधनम्, इति सम्बन्धोऽपि समर्थितः। विप्रतिपत्तिं दर्शयति—देहमात्रमित्यादि ॥ तद्यथा गोशब्दस्य व्यक्त्याकृति-जाति-क्रिया गुण-सास्नाद्यनेकार्थसंनिधौ प्रयुज्यमानस्य कैश्चिज्जातिः, अन्यैर्व्यक्तिः, इत्याद्यभिधेयं प्रतिपन्नम्, एवं सचेतन्यकार्य-कारणसंघातसन्निधावहंप्रत्ययस्योत्पद्यमानस्य कैश्चित् किंचिदालम्बनं प्रतिपन्नम्, तदाह—**

## पञ्चपादिकाविवरणम्

ननु नास्ति ब्रह्मणि सामान्य-विशेषभावः, सत्यम्; शरीरेन्द्रिय-मनो-बुद्धि-शून्य-कर्तृ-भोक्तृ-सर्वज्ञ-ब्रह्मात्मनां पराग्व्यावृत्त-प्रत्यग्धर्मानुगमेन सिद्धिः सामान्यम्, तत्र प्रत्यग्धर्मानुगमेन सिद्धयन् विशुद्धस्वरूपोऽपि सामान्यतः सिद्ध इत्युच्यते। ततः प्रत्यक्त्वानुरक्तविशेषान्तरैर्विप्रतिपद्यते। तत्र विशेषान्तरानुरागविरोधिनाऽसाधारणस्वरूपेण निर्णीयत इति। कथं विप्रतिपत्तिः? तां दर्शयति—**देहमात्रमित्यादिना** ॥ कथं पुनः प्रत्यक्षसिद्धे पदार्थे जायमानस्य प्रयुज्यमानस्याहंप्रत्ययस्य तच्छब्दस्य चानेकार्थसाधारण्याशङ्कया विप्रतिपत्तिरिति? तत्र दृष्टान्तमाह—**तद्यथा गोशब्दस्येति** ॥ जातिर्वैदिकैः प्रतिपन्ना, व्यक्तिः सांख्यादिभिः, उभयं वैयाकरणैः, आकृतिरवयवसंस्थानमार्हतादिभिः, त्रितयमपि नैयायिकैः, क्रिया-गुण-संस्थानादयोऽपि यथादर्शनम्, इति यथा गोशब्दप्रयोगे जात्यादीनामन्वयव्यतिरेकनियमादेकस्यापि व्यभिचाराभावाच्छब्दार्थत्वाशङ्का, तथा शरीरादीनामन्वय-व्यतिरेकनियमादात्मत्वाशङ्केति भावः ॥

स्पष्टमूर्ताकारतया स्थूलमूर्ततारतम्यान्निरासक्रमसिद्धेश्च शरीरमारभ्य विप्रतिपत्तिं दर्शयति—**तदाह देहमात्रं**

## तत्त्वदीपनम्

न विचारसिद्धिरित्यभिप्रायेणाह—**तत्राहेति** ॥ ऐकरस्यविरोधान्न सामान्यप्रतिपत्ति-विशेषाप्रतिपत्तिसंभव इति शङ्कते—**ननु नास्तीति** ॥ किं वस्तुतोऽसंभवः? उत कल्पनया? इति विकल्प्याद्यमङ्गीकरोति—**सत्यमिति** ॥ द्वितीयं दूषयति—**शरीरेति** ॥ पराग्व्यावृत्तश्च प्रत्यग्धर्मश्चेति पराग्व्यावृत्तप्रत्यग्धर्मः, तस्यानुगमेनेति विभागः। धत्त इति धर्मोऽधिष्ठानम्, अहमिति प्रतीयमानं प्रत्यक्त्वं सामान्यम्, तदुल्लसिततया शरीरादयो भासन्त इत्यर्थः। यथैकस्मिन् देवदत्ते प्रतियोगि-भेदापेक्षं पितृत्वादिकं भासते, तथैकस्यां चित्यात्मत्वेन व्यावर्त्यमानपराग्भूतसापेक्षं प्रत्यक्तत्वम्। तच्च शरीरेन्द्रियादि-साधारणं प्रथते, शरीरादयस्तु व्यावृत्ताः, इति सामान्य-विशेषभावसिद्धिरित्यर्थः। चितो ब्रह्मस्वभावत्वादात्मसिद्धिर्विशेष-सिद्धिरित्याशङ्क्याह—**तत्रेति** ॥ विद्यमानमपि ब्रह्मणो रूपं नावभासते, इत्यविद्यमानकल्पम्, इतरत्तु भासत इति सामान्यसिद्धिरित्यर्थः ॥

सामान्यसिद्धिमभिधाय विशेषप्रतिपत्तिमाह—**तत इति** ॥ शरीरं प्रत्यग् इन्द्रियं चेत्येवमाकारेण विप्रति-पत्तिविषयं ब्रह्मेत्यर्थः। निर्णयप्रकारमाह—**तत्रेति** ॥ **असाधारणस्वरूपेणेति** ॥ नित्यशुद्धत्वादिस्वरूपेणेत्यर्थः। विप्रतिपत्ति-प्रकारं पृच्छति—**कथमिति** ॥ चक्षुष्मतां स्फीतालोकमध्यस्थकलशादौ विमत्यभाववद् देहस्यात्मत्वेनानुभूयमानत्वान्न विप्रतिपत्तिरिति शङ्कते—**कथं पुनरिति** ॥ अनेकार्थसन्निधावहंशब्दस्य प्रयुज्यमानत्वाद् विप्रतिपत्त्युपपत्तिं सदृष्टान्तमाह—**तत्रेति** ॥ आकृतिशब्दार्थमाह—**यथेत्यादिना** ॥ देहमारभ्य विप्रतिपत्तिप्रदर्शन उपपत्तिमाह—**स्पष्टेति** ॥ स्पष्टो मूर्ताकारो यस्य तत् स्पष्टमूर्ताकारम्, तस्य भावस्तत्ता, तयेत्यर्थः। इन्द्रियादिष्वपि साऽविशिष्टेत्यत्राह—**स्थूलेति** ॥ तरतमभावस्य प्रकटत्वात् प्रथमं शरीरात्मतानिरसनमित्यर्थः। **निरासक्रमसिद्धेरिति** ॥ अयमर्थः—शरीरे प्रथममात्मत्वबुद्धौ जातायां

## ऋजुविवरणम्

प्रतिपादनम्; वैयर्थ्यात्, विषयत्वाभावाच्चेति। विशेषतस्सिद्धेऽपि जिज्ञास्यत्वमस्ति; धर्मादौ—प्रतीत्यभावात्, सोऽपि प्रकारः पूर्वमुक्तो निगमादिप्रसिद्धिदर्शनेन। **ननु नास्तीति** ॥ एतदुक्तं भवति—सामान्य-विशेषवति वस्तुनि प्रसिध्य-प्रसिद्धी, नतु निर्विशेषे ब्रह्मणि, विप्रतिपत्तिश्च न संभवति; तदभावे न विचार इति। पराग्व्यावृत्तः प्रत्यग्धर्मः, तेनानुगमस्तद्धर्मयुक्तता। अथवा—पराग्व्यावृत्तः प्रत्यग्धर्मश्चेति विग्रहः। यथादर्शनम् दर्शनानुसारेण वाच्या इत्यर्थः। अथवा—यथादर्शनमिति ॥ येषां मते यद्वाच्यम्, तद्दर्शनानुसारेणानुसन्धेयमिति। ननु—अयुक्तं टीकायामुदाहृतम्, नहि सन्निधि-मात्रेणानेकार्थत्वशङ्का गोशब्दे संभवति; सन्निधानस्याकिञ्चित्करत्वात्, अतिप्रसङ्गाच्च; अतो न तेन दृष्टान्तेन प्रकृतेऽप्यनेकार्थत्वं साधयितुं शक्यमित्याशङ्क्याभिप्रायमाह—**यथा गोशब्दस्येति** ॥ ननु—देहमारभ्योपन्यासे किं कारणम्? सर्वेषां निराकरणाविशेषात्, हेत्वन्तरादर्शनाच्चेत्याशङ्क्याह—**स्पष्टमूर्ताकारतयेति** ॥ "सशिरस्कपिण्डाभिप्रायमि"ति कथमुक्तम्? शरीरवाचित्वात्, तस्य सर्वावयवरूपसहितत्वात्, तस्य च सशिरस्कत्वनियमाभावात्, सुतरां जातिवाचित्व-

## पञ्चपादिका

देहमात्रं चैतन्यविशिष्टमात्मेति प्राकृता जना लोकायतिकाश्च प्रतिपन्ना इति। तथाहि—मनुष्योऽहमि'त्यात्मनि मनुष्यत्वाभिमानो 'गच्छामी'ति च गन्तृत्वाभिमानो देहविषयत्व उपपद्यते। 'देहमात्रमि'ति सशिरस्कपिण्डाभिप्रायं द्रष्टव्यम्। मात्रशब्देन न देहातिरिक्तं स्वतन्त्रं चैतन्यमन्यविशेषणं वा, किन्तु देहाकारपरिणतभूतचतुष्टयान्तर्भूतमेवेति दर्शयति। आत्मेति अहंप्रत्ययालम्बनमित्यर्थः। प्राकृता इति शास्त्रोपदेशासंस्कृतमतयो दृष्टमात्राविकल्पितव्यवहारिण इत्यर्थः। लोकायतिका इति भूतचतुष्टयतत्त्ववादिनः प्रसिद्धाः॥

एवम्—इन्द्रियाण्येव चेतनान्यात्मेत्यपरे॥ इन्द्रियाणां चक्षुरादिमनःपर्यन्तानामेकैकस्मिन्नसत्यपि शरीरे

## पञ्चपादिकाविवरणम्

**चैतन्यविशिष्टमिति**॥ शरीरस्यात्मत्वशङ्कायां प्रत्यक्षं प्रमाणमाह—**तथाहि मनुष्योऽहमिति**॥ देहशब्दार्थमाह—**देहमात्रमितीति**॥ त्वगिन्द्रियस्य निरपेक्षाधारः शरीरं नाम। तत्रावयवान्तरेषु छिद्यमानेष्वपि प्रायेण त्वगिन्द्रियं तिष्ठति, न शिरश्छेद इत्यभिप्रायेण सशिरस्केत्युच्यते। ननु भूतचतुष्टयतत्त्ववादिनां पञ्चमं चैतन्यं तत्त्वमवशिष्यत इति, तन्निवृत्त्यर्थमाह—**मात्रशब्देन न देहातिरिक्तमित्यादिना**॥

पक्षान्तरमाह—**इन्द्रियाण्येवेति**। ननु यस्मिन् विज्ञानमुत्पद्यते, स चेतनः। नहीन्द्रियाश्रयं विज्ञानमुत्पद्यते; 'मनुष्योऽहं जानामी'त्यवगमात्। तत्र कथं तेषां चेतनत्वमिति? तत्राह—**इन्द्रियाणां चक्षुरादिमनःपर्यन्तानामिति**॥ अयमाशयः—सत्यपि शरीरे विषयज्ञानानामिन्द्रियैरन्वय-व्यतिरेकवत्त्वात् करणतयाऽन्वय-व्यतिरेकवत्त्वकल्पनादाश्रयतयाऽन्वयव्यतिरेककल्पनस्याभ्यर्हितत्वादिन्द्रियाण्येव विज्ञानाश्रयाणीति। ननु एकस्मिन् शरीरे बहूनामिन्द्रियाणां चेतनत्वे 'रूपमद्राक्षम्' 'इदानीं शृणोमी'ति प्रत्यभिज्ञा न स्यात्, भोक्तृत्वं च रूप-रसादिषु युगपत् स्यात् न क्रमेणेति, तत्राह—

## तत्त्वदीपनम्

दृश्यत्वेन तस्यात्मत्वे निरस्ते, ततः सूक्ष्म आत्मबुद्धिर्जायते, एवमितरत्रापीति। शरीरात्मवादस्य प्रमाणविधुरतया न तदुपन्यास उचित इत्याशङ्क्याह—**शरीरस्येति**॥ देहस्यावयवसंघातत्वादेकावयवाभाव आत्मबुद्धिर्न स्यादित्याशङ्क्याह—**देहेति**॥ सशिरस्केति विशेषणं कस्मात्? इत्याशङ्क्य विशेषणकृत्यं दर्शयितुं शरीरस्वरूपमाह—**त्वगिन्द्रियेति**॥ इन्द्रियाधार इत्युक्ते चक्षुर्गोलकयोः शरीरत्वप्रसङ्गः, तदर्थम्—**"त्वगि"**ति विशेषणम्। एवावत्युक्तेऽङ्गुल्यादौ व्यभिचारः, तदर्थम्—**"निरपेक्षे"**ति। अङ्गुल्यादीनामितरावयवसहितानामाधारत्वान्न व्यभिचार इत्यर्थः। फलितं दर्शयति—**तत्रेति**॥ मर्मभेदे त्वगिन्द्रियापगमो दृष्टः, तदर्थम्—**"प्रायेणे"**त्युक्तम्। मात्रचा स्वतन्त्रचैतन्यं निरस्यत इत्युक्तम्, तत् कस्मात्? इत्याशंक्य, तद्व्यावर्त्यां शङ्कामाह—**ननु भूतेति**॥ "पृथिव्यप्तेजो-वायवस्तत्त्वानी"ति लौकायतसूत्रात् तेषां चतुष्टयमेव तत्त्वम्, ततः स्वतन्त्रचैतन्योपगमे तत्त्वातिरेकः इतरथा व्यवहारासिद्धिरिति शङ्कार्थः। देहाकारपरिणतभूतेषु चैतन्याभ्युपगमान्न तत्त्वातिरेकः, नापि व्यवहारासिद्धिरिति समाधानग्रन्थार्थः। आत्मलक्षणविधुरत्वाद् नेन्द्रियाणामात्मत्वमिति शङ्कते—**ननु यस्मिन्निति**॥ असिद्धो हेतुरित्याह—**तत्राहेति**॥ चक्षुरादीनां ज्ञानकरणत्वात् तद्व्यतिरेकोऽन्यथासिद्ध इत्याशङ्क्याह—**अयमाशय इति**॥ **अभ्यर्हितत्वादिति**॥ उत्पत्तिसमय उत्पत्तेरूर्ध्वं चोपादानस्यावश्याश्रयणीयत्वात् तद्विषयत्वमन्वय-व्यतिरेकयोर्युक्तमित्यर्थः॥

प्रत्यभिज्ञाविरोधान्नेन्द्रियाणामात्मत्वमिति शङ्कते—**नन्वेकस्मिन्निति**॥ मैत्रेण दृष्टे चैत्रस्य प्रत्यभिज्ञाऽदर्शनादित्यर्थः। तत्रैव हेत्वन्तरमाह—**भोक्तृत्वमिति**॥ इन्द्रियाणां प्रत्येकमात्मत्वात् स्वतन्त्रत्वाच्च युगपद्भेदप्रसङ्ग

## ऋजुविवरणम्

पक्षे, इत्याशङ्क्याभिप्रायमाह—**त्वगिन्द्रियस्येति**॥ "इन्द्रियाणामि"त्यादिना ग्रन्थेन ज्ञानस्येन्द्रियव्यतिरेकाच्चेतनत्वमुक्तम्, तदयुक्तम्; ज्ञानाश्रयत्वं चेतनत्वम्, नच तावन्मात्रेणाश्रयत्वसिद्धिः। यदि चान्वय-व्यतिरेकौ विवक्षितौ, तथाऽपि करणत्वविषयौ तौ नाश्रयत्वसाधकावित्याशङ्क्याभिप्रायमाह—**सत्यपि शरीर इति**॥ "वरगोष्ठीवदि"ति विषमो दृष्टान्तः; तत्र भोग्यस्यैकत्वात्क्रमेण भोगः; इह भोग्यस्य भोक्तॄणाञ्च भेदे सति न क्रमसंभवः; अतश्चैक्यमेवेत्याशङ्क्य व्याचष्टे—**एकशरीराश्रयत्वमिति**॥ ननु—शरीरस्याप्यहंप्रत्ययालम्बनत्वमिन्द्रियवद् ज्ञानान्वयव्यतिरेकौ च दृश्येते, तत् कथं तस्यात्मत्वं निराक्रियते? इत्याशङ्क्याभिप्रायमाह—**शरीरस्यापीति**॥ कथं मनस एवात्मत्वं निश्चेतुं शक्यते?

## पञ्चपादिका

**रूपादिज्ञानानामभावात् तेषामेव व्यस्तानां चेतनत्वमहंप्रत्ययविषयत्वं च मन्यन्ते, क्रमेण च वरगोष्ठीवदितरेतरगुणभावञ्च। तथाचेन्द्रियधर्मसामानाधिकरण्यमहंप्रत्ययस्य दृश्यते—'काणोऽहं मूकोऽहमि'त्यादि। मन एव चेतनमहंप्रत्ययस्य विषयमन्ये मन्यन्ते। दृश्यते हि स्वप्न इन्द्रियदशकोपरमेऽपि मनस एव—'अहमि'ति सर्वव्यवहारास्पदत्वमिति वदन्तः॥**

## पञ्चपादिकाविवरणम्

**क्रमेण वरगोष्ठीवदिति**॥ एकशरीराश्रयत्वमेव प्रत्यभिज्ञाक्रम-भोगयोर्निमित्तम्, नैकत्वमित्यर्थः। ननु—चेतनत्वेऽप्यहं-प्रत्ययालम्बनस्यैवात्मत्वम्, तदभावान्नेन्द्रियाणामात्मत्वमिति, तत्राह—**तथाचेन्द्रियधर्मसामानाधिकरण्यमहंप्रत्ययस्येति**॥ शरीरस्याप्यहंप्रत्ययालम्बनत्वविज्ञानान्वय-व्यतिरेकयोरिन्द्रियात्मनामाश्रयत्वेनाप्युपपत्तेरिति भावः॥

पक्षान्तरमाह—**मन एव चेतनमिति**॥ किमत्र प्रापकं प्रमाणमिति? तदाह—**दृश्यते हि स्वप्न इति**॥ अय-मर्थः—स्वप्ने चक्षुराद्यभावेऽपि केवले मनसि विज्ञानालम्बनत्वाहंप्रत्ययविषयत्वयोरविकलयोर्दर्शनात्, रूपादिविज्ञानानां चक्षुराद्याश्रयत्वे तदभावे केवले मनसि रूपादिस्मृत्यनुपपत्तेः, आश्रयान्तरे च सिद्धे चक्षुरादीनां ज्ञानान्वयव्यतिरेकयोः करण-विषयतयाऽप्युपपत्तेः, अहंप्रत्ययस्य च देह इव करणे कर्तृत्वोपचारात् सिद्धेः, प्रत्यभिज्ञायाः शरीरादाविवैकत्वनिबन्धनत्वात्, एकाश्रयत्वात्प्रत्यभिज्ञायामेकप्रासादसमाश्रितानामपि तत्प्रसङ्गात्। तस्माच्चक्षुरादिकरणशरीराधारं मन एवात्मेति॥

## तत्त्वदीपनम्

इत्यर्थः। स्वातन्त्र्येऽपि क्रमभोगस्य दृष्टत्वादविरोध इत्याह—**तत्राहेति**॥ एकोद्वाहसमयेऽन्येषामुपसर्जनत्वमिति टीकार्थः। प्रत्यभिज्ञाविरोधं निरस्यति—**एकशरीरेति**॥ एकस्य द्रष्टुरभावान्न तस्य भोक्तृत्वमित्येवकारार्थः। वरगोष्ठ्यामपि न केषांचिदितरगुणभावः; विरोधात्, तद्वदिति निराकर्तुमाह—**क्रमेति**॥ शरीराधिष्ठानानामेवेन्द्रियाणां भोक्तृत्वम्; अन्यत्रादर्शनात्, तत्रापि विरोधे विरुद्धाभिप्रायतयाऽनेकस्यापि भोगः। तस्मादितरेतरगुणभावो युक्त इत्यर्थः। इन्द्रियाणां चेतनत्वमङ्गीकृत्यात्मत्वमाक्षिपति—**ननु चेतनत्व इति**॥ अहमित्युपलभ्यमानस्यात्मत्वम्, इन्द्रियाणां चानीदृशत्वान्नात्मत्वमित्यर्थः॥ स्वरूपेणेन्द्रियाणामहमाऽसामानाधिकरण्येऽपि काणत्वादिधर्मविशिष्टानामहमा सामाना-धिकरण्यम्, 'अहं शरीरमि'त्यहंप्रत्ययानालम्बनत्वेऽपि मनुष्यत्वादिधर्मविशिष्टस्य शरीरस्याहंप्रत्ययालम्बनत्ववदिति सिद्धान्तयति—**तत्राहेति**॥ न चेन्द्रियवदेव देहस्याप्यन्वयव्यतिरेकाभ्यां ज्ञानाधारतयाऽहंप्रत्ययालम्बनत्वस्य च संभाव्यमानत्वादात्मत्वम्, इत्याशङ्क्याह—**शरीरस्येति**॥ प्रमाणाभावाद् न मनस आत्मत्वमिति शङ्कते—**किमत्रेति**॥ प्रमाणाभावोऽसिद्ध इत्याह—**तदाहेति**॥ स्वप्ने बाह्येन्द्रियाभावे व्यवहारास्पदतया मनोऽस्तीत्येतत् कुतः सिद्धम्? इत्याशङ्क्याह—**अयमर्थ इति**॥ मनसः करणत्वे विज्ञानालम्बनत्वमन्यस्येत्याशङ्क्य, मनस उभयसंमतत्वादन्यत्र च विमतेर्मैवमित्याह—**केवल इति**॥

उपचरितत्वशङ्कां निरस्यति—**अविकलयोरिति**॥ बाधाभावादित्यर्थः। स्वप्ने रूपादिस्मरणमात्रम्, न रूपाद्यनुभवः, ततश्चानुभवाश्रयं चक्षुराद्येवात्मेत्याशङ्क्याह—**रूपादिविज्ञानानामिति**॥ अनुभवितृ-स्मर्त्रोरेकत्वनियमाद् मनसश्चाननुभवितृत्वे न स्मर्तृत्वं स्यात्, अस्ति च तत्, तस्मान्मनस एवानुभवितृत्वमित्यर्थः। अन्वय-व्यतिरेकवत्त्वा-दिन्द्रियाणामेवात्मत्वमित्युक्तम्, तत्राह—**आश्रयान्तर इति**॥ **सिद्ध इति** अत्रोक्तन्यायेनेति शेषः। इन्द्रियाणामहं प्रत्ययविषयत्वमन्यथयति—**अहंप्रत्ययस्येति**॥ इन्द्रियाणामनात्मत्वे उपपत्त्यन्तरमाह—**प्रत्यभिज्ञाया इति**॥ पूर्वेद्युर्यदिदं शरीरमस्वस्थमभूत्, तदेव संप्रति स्वस्थम्, 'प्रातःसमये राजाङ्गणे दृष्टो यः करीन्द्रः, सोऽयमि'त्यादौ प्रत्यभिज्ञाया एकत्वविषयत्वं दृष्टम्, तद्वद् 'योऽहं रूपमद्राक्षं सोऽहं शृणोमी'ति प्रत्यभिज्ञाया एकत्वविषयत्वमुचितमसति बाधक इत्यर्थः। विपक्षे दण्डं पातयति—**एकाश्रयत्वादिति**॥ **इन्द्रियाणामेकशरीराश्रयत्वादिति**॥ इन्द्रियाणामेकशरीराश्रयत्वेन प्रत्यभिज्ञाङ्गीकरणे एकप्रासादस्थचैत्रादीनामप्येकत्वप्रत्यभिज्ञा स्यादित्यर्थः। उक्तमर्थमुपसंहरति—**तस्मादिति**॥

## ऋजुविवरणम्

इन्द्रियाणामप्यात्मत्वसाधकप्रमाणस्योक्तत्वादित्याशङ्क्य, बाधकं प्रमाणमुक्तम्, प्रमाणस्य चान्यथासिद्धिं दर्शयति—**स्वप्ने चक्षुराद्यभावेऽपीति**॥ ननु—चक्षुरादीनां रूपादिविज्ञानस्याश्रयत्वम्, मनसश्च स्मरणाश्रयत्वं भवेत्, न तु तेषामात्मत्व-निराकरणमित्याशङ्क्याह—**रूपादिविज्ञानानामिति**॥ अनुभवितुरेव स्मर्तृत्वादिति भावः। रूपादिदृष्टप्रत्यभिज्ञाऽपि न संभवेदित्याह—**शरीरादाविति**॥ "वर्णत्रयातिरिक्तं नावभासते" इत्युक्तम्, तदव्याख्यानम्; विज्ञानस्यात्मत्वाभाव-

### पञ्चपादिका

**विज्ञानमात्रं क्षणिकमित्येक इति मात्रग्रहणेन नाहमित्यकारादिवर्णत्रयातिरिक्तं किञ्चिदवभासते, यदहंप्रत्ययस्य विषयः कल्प्येत । तेन विज्ञानमेव स्वरसभङ्गुरमविरतोदयमखिललोकयात्रानिलयमनुभवभग्नपक्षान्तरमहमित्युत्पद्यत इत्यन्ये मन्यन्ते ॥**

### पञ्चपादिकाविवरणम्

पक्षान्तरमाह—**विज्ञानमात्रं क्षणिकमित्येक इति** ॥ वर्णत्रयशब्देन वर्णत्रयाभिधेयं विज्ञानमात्रमुच्यते । तेन च विज्ञानाश्रयस्यात्मनोऽभाव उच्यत इति । कथम् ? शरीरेन्द्रियाणां तावद्विज्ञेयत्वादविज्ञानत्वाच्चानात्मत्वाद् मनसश्च समनन्तरप्रत्ययव्यतिरेकिणोऽभावादाश्रयान्तरादर्शनादिति । कस्तर्ह्यात्मेति ? तदाह—**तेन विज्ञानमेवेति** ॥ तर्हि सांख्यादीनामिव विज्ञानमेवानादिनिधनमात्मेति, तत्राह—**स्वरसभङ्गुरमिति** । कथं तर्हि प्रत्यभिज्ञानेनैकत्वावगम इति ? तदाह—**अविरतोदयमिति** । ज्वालायामिव संततविज्ञानोदयसादृश्यात् प्रत्यभिज्ञेत्यर्थः कथं तर्हि कर्म-ज्ञान-बन्ध-मोक्षाद्याश्रयत्वं क्षणिकस्येति ? तदाह—**अखिललोकयात्रानिलयमिति** ॥ विज्ञानानां हेतु-फलसन्तानमात्रादेव कर्मफलसम्बन्ध इत्यर्थः । ननु स्थायिन्यात्मन्येकस्मिन् सर्वमेतन्मुख्यमुपपन्नमिति, तत्राह—**अनुभवभग्नपक्षान्तरमिति** ॥

### तत्त्वदीपनम्

अकार-हकार-मकाररूपवर्णत्रयातिरिक्तं नावभासत इत्युक्ते वर्णानामेवात्मत्वं स्यादित्याशङ्क्याह—**वर्णत्रयेति** ॥ मात्रचो व्यावर्त्यमाह—**तेनेति** ॥ मात्रचेत्यर्थः । शरीराद्यन्यतमस्य ज्ञानाश्रयत्वेनात्मत्वसंभवात् कथं निरसनमिति शङ्कते—**कथमिति** ॥ **अविज्ञानत्वादिति** ॥ विज्ञानव्यतिरेकादित्यर्थः । मनसो विज्ञानान्यत्वमङ्गीकृत्यानात्मत्वमुक्तम्, न च तदपीत्याह—**मनस इति** ॥ शरीरेन्द्रिय-मनोव्यतिरिक्तस्य ज्ञानाश्रयस्यात्मत्वं कणभुगादयः प्रतिपेदिरे, तान् प्रत्याह—**आश्रयेति** ॥ स किं ज्ञानव्यतिरिक्तः उताव्यतिरिक्तः ? आद्ये घटादिवदनात्मत्वम्, द्वितीयेऽस्मदिष्टसिद्धिरित्यभिप्रायः ॥

आत्मत्वप्रसिध्यनुपपत्त्याऽऽश्रयान्तरमेष्टव्यमिति शङ्कते—**कस्तर्हीति** ॥ प्रसिद्धिमन्यथयति—**तदाहेति** ॥ ज्ञानातिरिक्तात्मनि मानाभावस्तच्छब्दार्थः । विज्ञानं किं स्थिरम् ? उत न ? आद्य इष्टापत्तिः, द्वितीये प्रत्यभिज्ञाविरोध इति शङ्कते—**तर्हीति** ॥ द्वितीयपक्षाङ्गीकारेणाह—**तत्राहेति** ॥ प्रत्यभिज्ञाविरोधान्न तस्यात्मत्वमित्युक्तमनुवदति—**कथमिति** ॥ प्रत्यभिज्ञाऽन्यथाऽपि घटत इति दूषयति—**तदाहेति** ॥ नैरन्तर्येण ज्ञानोदयेऽपि भिन्नत्वान्न प्रत्यभिज्ञेत्याशङ्क्य, भिन्नयोरपि प्रत्यभिज्ञा दृष्टेत्याह—**ज्वालायामिति** ॥ संततानि च विज्ञानानि चेति सन्ततविज्ञानानि, तान्येवोदया उदीयन्त इति तेषां सादृश्यं तथोक्तम् । बन्धादिव्यवस्थानुपपत्त्या स्थाय्यात्मैवेष्टव्य इति शङ्कते—**कथं तर्हीति** ॥ कर्त्तुरेव सुख-दुःखभोगलक्षणो बन्धः, ज्ञानवतो मुक्तिः, बद्धस्य च सेत्येवमादिव्यवस्था क्षणिकात्मवादे नोपपद्यते; अकृताभ्यागमदोषप्रसक्तेरित्यर्थः । व्यवस्थाऽन्यथोपपन्नेत्याह—**तदाहेति** ॥ तदेव कथमिति वीक्षायामाह—**विज्ञानानामिति** ॥ एकसंतानोपाधिना सकलव्यवहारोपपत्तिरित्यर्थः ॥ कर्मफलसंबन्धादेरौपाधिकत्वकल्पनात् स्वाभाविकत्वकल्पनं युक्तमिति शङ्कते—**ननु स्थायीति** । मुख्यस्यासंभवादौपाधिकत्वमेव युक्तमित्याह—**तदाहेति** ॥ स्थाय्यात्मनः सकलप्रमाणागोचरत्वात् त्वन्मतमनुभवपराहतमित्यर्थः ॥

### ऋजुविवरणम्

प्रसङ्गात्, अनुभवविरोधश्चेत्याशङ्क्य व्याचष्टे—**वर्णत्रयाभिधेयमिति** ॥ अकार-हकार-मकारात्माहंसञ्जल्प इति । विशेषणव्यावर्त्यं दर्शयति—**तेन चेति** ॥ ननु ज्ञानस्याश्रय आत्मा साधितः, तेन न तदभावसाधनमित्याक्षिपति—**कथमिति** ॥ "विज्ञेयत्वाविज्ञानत्वाच्चे"ति हेतू बौद्धमतेनापरसाधनमेव; ज्ञानमात्मेत्यभ्युपगमात् । कथम्—"अविरतोदयमि"त्यनेन प्रत्यभिज्ञोपपत्तिः ; एकत्वविषयत्वात्तस्याः, निरन्तरघट-पटादावदर्शनाच्चेत्याशङ्क्य व्याचष्टे—**ज्वालायामिवेति** ॥ सदृशेषु व्यवधानेनोत्पन्नेषु न प्रत्यभिज्ञा, तदर्थम् —**सन्ततेति विशेषणम्** ॥ सन्ततेषु घट-कपालेषु न प्रत्यभिज्ञा, तदर्थम्**"सादृश्यादि"**ति ॥ **"हेतुफलसन्ताने"**त्यनेन यो विज्ञानक्षणः कर्म करोति, तत्सन्ततिवर्ति तस्यैव तन्निमित्तो भोग इत्येकसन्तानोपाधिना कृतनाशाकृताभ्यागमादिदोषपरिहार उक्तः । **"अनुभवभग्ने"**त्यनेन स्थायिनोऽप्रतीतिरुक्ता । ननु—विषयावभासेन विना ज्ञानं सुषुप्त इति; तत्राह—**निरालम्बनेति** । **अविशेषानुमानादिति** ॥

## पञ्चपादिका

**शून्यमित्यपर इति ॥ सुषुप्ते विज्ञानलेशस्याप्यभावादकस्मादेवाहमिति समुदयदर्शनाद्**

## पञ्चपादिकाविवरणम्

पक्षान्तरमाह—**शून्यमिति** ॥ विज्ञानव्यतिरिक्तानां तावदात्मत्वं विज्ञेयत्वात् प्रत्याख्यातम् । नच विज्ञानस्यात्मत्वमस्ति; सुषुप्ते शून्यतावगमात् । विद्यत एव तत्रापि विज्ञानप्रवाह इति चेत्, न; विषयावभासाभावात्, निरालम्बनज्ञानायोगाच्च । साकारज्ञानानामेव सालम्बनत्वं न सौषुप्तिकानामिति चेत्, न; विशेषाभावात्, अविशेषानुमानाच्च । उत्थितेनास्मर्यमाणविज्ञानत्वाच्च सुषुप्ते विज्ञानाभावः । किंच सविकल्पकस्य स्वविषयविपरीत-निर्विकल्पकालम्बनत्ववन्निर्विकल्पकस्यापि सत्प्रत्ययत्वात् स्वविषयविपरीतशून्यालम्बनत्वानुमानादुत्थानप्रत्ययः शून्यालम्बन इति गम्यते । तदेतदाह—**सुषुप्ते विज्ञानलेशस्याप्यभावादिति** ॥ मा भूद्विज्ञानलेशः, ततः किमिति ? तदाह—**अकस्मादेवेति** ॥ उत्थानप्रत्ययस्य पूर्वसमनन्तरप्रत्ययशून्यतया कारणशून्यता स्यादिति भावः । मा भूत् कारणमिति

## तत्त्वदीपनम्

शून्यत्वमित्यपि सकलप्रमाणपराहतमित्याशङ्क्य तत्त्वान्तरानिरूपणादिदमेव तत्त्वं परिशिष्यत इत्याह—**विज्ञानेति** ॥ विज्ञानं तर्ह्यात्मेत्यत्राह—**नचेति** ॥ अव्यभिचरितत्वमित्याचक्षते वृद्धाः, ज्ञानं च व्यभिचारीति शून्यं तत्त्वमित्यर्थः । व्यभिचारित्वमसिद्धमिति शङ्कते—**विद्यत एवेति** ॥ सौषुप्तं ज्ञानं किं सविषयम् ? उत निर्विषयम् ? नाद्य इत्याह—**न विषयेति** ॥ सुषुप्तौ विषयावभासोपगमे सुषुप्तत्वं व्याहन्येतेत्यर्थः । द्वितीयं दूषयति—**निरालम्बनेति** ॥ विमतं ज्ञानम्, सविषयम्, ज्ञानत्वात्; संमतवदित्युक्ते साकारज्ञानत्वमुपाधिरिति शङ्कते—**साकारेति** ॥ संदिग्धव्यतिरेकत्वेन दूषयति—**न विशेषेति** ॥ विमतं ज्ञानम्, निर्विषयम्, निराकारत्वादिति व्यतिरेकः संदिग्ध इत्यर्थः । कस्यचिद् ज्ञानस्य निराकारत्वम् कस्यचित् साकारत्वमित्यत्र विशेषाभावादित्यक्षरार्थः । साधनव्यापकश्चायमित्याह—**अविशेषेति** ॥ विमतं ज्ञानम्, साकारम्, ज्ञानत्वात्; संमतवदित्यर्थः । सुषुप्तौ ज्ञानाभावे युक्त्यन्तरमाह—**उत्थितेनेति** ॥ अस्मर्यमाणं विज्ञानं यस्मिन् सुषुप्ते तदस्मर्यमाणविज्ञानम्, तस्य भावस्तत्त्वम्; तस्मादिति विग्रहः । अत्र नियमेनेति पदं द्रष्टव्यम् । सुषुप्तौ यदि ज्ञानं स्यात्, तदा तदनुभूयेत; स्वप्रकाशत्वादिति वक्तव्यम्, तथा चोत्थितस्य तत्स्मर्येत । नच तत्कदाचिदपि स्मर्यते, परामर्शस्तु विभ्रमत्वेनाप्युपपद्यत इत्यभिसन्धिः । अत्रैव युक्त्यन्तरं समुच्चिनोति—**किंचेति** ।: **सविकल्पकस्येति** ॥ संज्ञासंज्ञिसंबन्धविशिष्टवस्तुलक्षणो यो विषयः, तस्य विपरीतं यन्निर्विकल्पकं ज्ञानम्, वैपरीत्यं च वस्तुमात्रग्राहित्वेन, तदालम्बनं कारणं यस्य, तस्य भावस्तत्त्वम्; तद्वदित्यर्थः । **"स्वविषयविपरीतशून्ये"**त्यस्यायमर्थः—निर्विकल्पकज्ञानस्य विषयः सन्मात्रम्, तस्य विपरीतं यच्छून्यम्, तदालम्बनं कारणं यस्य, तथोक्तम्, तस्य भावस्तत्त्वम् । तदनुमानादित्यर्थः ॥ **उत्थानप्रत्यय इति** ॥ उत्थानसमनन्तरमुत्पद्यमानो निर्विकल्पकप्रत्यय इत्यर्थः । तथाच प्रयोगः—यः सत्प्रत्ययः, स स्वविषयविपरीतजन्यः, यथा सविकल्पकप्रत्ययः, सत्प्रत्ययश्चायमिति । सुषुप्तौ ज्ञानाभावमभिधाय सहसा ज्ञानोदयमभिदधानः कथमव्यापारः स्यादित्याशङ्क्य तात्पर्यमाह—**उत्थानेति** ॥ **अकस्मादिति** ॥ कारणं विनोत्पद्यत इत्युक्तं भवतीत्यर्थः । कारणमन्तरेणापि जायमानस्य तत्त्वं किं न स्यादिति शङ्कते—**मा भूदिति** ॥ स्वोचितसामग्रीं विनोत्पद्य-

## ऋजुविवरणम्

एतदुक्तं भवति—सौषुप्तिकत्वं विशेषकं न भवति; दृष्टान्ताभावात्, अविशेषस्त्वनुमातुं शक्यते; ज्ञानत्वस्य व्याप्तहेतोर्विद्यमानत्वादिति । अस्मर्यमाणं विज्ञानं यस्मिन्सुषुप्तौ, तदस्मर्यमाणविज्ञानम्; तस्य भाव इति । सुषुप्तिकालो धर्मज्ञानशून्य इति साध्यो धर्मः, अस्मर्यमाणविज्ञानत्वादिति हेतुः । **किञ्च सविकल्पकस्येति** ॥ अयं प्रयोगः—उत्थानप्रत्ययो धर्मि, शून्यालम्बन इति साध्यः, आलम्बनत्वञ्च तद्धेतुत्वम्, सत्प्रत्ययत्वं हेतुः । प्रत्ययत्वमात्रे हेतावसदवभासे व्यभिचारः, यद्वा—घटावभासे, तदर्थम्—सत्प्रत्ययत्वविशेषणम् । तच्च स्वद्विषयज्ञानत्वम् । "किञ्च सविकल्पकस्ये"त्यनेन व्याप्तिप्रदर्शनम् । यद्वा—प्रत्ययत्वं हेतुः, स्वविषयविपरीतालम्बनत्वमेव साध्यम्, नतु शून्यालम्बनत्वम्; साध्यविकलत्वप्रसङ्गात् । सदिति विशेषणन्तु—विपरीतालम्बनत्वेऽपि साध्ये शून्यालम्बनत्वमभिमतं सिध्यति; तस्यैव स्वरूपविपरीतत्वादिति दर्शयितुम् । "अकस्मादेवे"त्युक्तम्; विज्ञानलेशाभावे किं दूषणमिति पृष्टेऽकस्मादेव समुदायदर्शनादिति हेतोर्व्यधिकरणत्वात्, इत्याशङ्क्याभिप्रयमाह—**उत्थानप्रत्ययस्येति** ॥ "अहमुल्लेखशून्यस्य भोक्तृत्वास्यादर्शनादि"

### पञ्चपादिका

**अकारणस्य कादाचित्कस्य परमार्थवस्तुत्वाभावादसदवभास एवाहङ्कार इत्यपरे सङ्गिरन्ते ॥**

**अस्ति देहादिव्यतिरिक्तः संसारी कर्ता भोक्तेत्यपर इति ॥ अहमुल्लेखशून्यस्य भोक्तृत्वस्यादर्शनात्, तस्य च प्रत्यभिज्ञानात् स्थिरत्वसिद्धेः,**

### पञ्चपादिकाविवरणम्

चेत्, तत्राह—**अकारणस्य कादाचित्कस्येति** ॥ तस्माच्छून्यालम्बनोऽसदवभासोऽयमिति ॥

विप्रतिपत्त्यन्तरमाह—**अस्ति देहादिव्यतिरिक्त इति** ॥ कथं पुनर्विज्ञानशून्यव्यतिरिक्तस्यात्मनः सिद्धिरिति ? तदाह—**अहमुल्लेखशून्यस्य भोक्तृत्वस्येति** ॥ अयमाशयः—अहमित्यवभासमानो विषयसंविदाश्रयत्वेन भोक्ता न कदाचिदपि ममप्रत्ययालम्बनो भोक्तृत्वमनुभवति । स चाबाधितप्रत्यभिज्ञागोचरो न सुषुप्तेऽभावमनुभवितुमर्हति । ततः शून्य-क्षणिकविज्ञानव्यतिरिक्तो भोक्ता; प्रत्यभिज्ञया सुषुप्तेऽपि सत्तावगमात्, ज्ञानेच्छा-द्वेष-प्रयत्न-सुख-दुःखेषु चाश्रयैकत्वावगमात् । तथाहि—प्रवृत्तिनिमित्तभूतमभिलषितसाधनज्ञानमुत्पद्यमानमित्थमुत्पद्यते—प्रथमं वस्तुनि दृष्टे, तदुपभोगानन्तरं सुखसंवेदने च द्वितीये सञ्जाते, पुनर्वस्त्वन्तरदर्शने तृतीये समुत्पन्ने, चतुर्थे च दृष्टस्य वस्तुनः पूर्वसुखसाधनसामान्यानुसंधाने, पञ्चम्यामवस्थायाम्—इदं सुखसाधनमिति ज्ञानमुत्पद्यते । ततः पञ्चस्ववस्थास्वेकमात्मानमन्तरेणेदं ज्ञानमनुपपन्नम्; अन्यदृष्टेऽन्यस्य सुखानुभवाभावात्, अन्यानुभूतेऽन्यस्य व्याप्त्यनुसंधानाभावात्, अन्यानु-

### तत्त्वदीपनम्

मानस्य हस्त्यादेरपरमार्थत्वं दृष्टम्, तद्वदत्रापीत्याह **तदाहेति** ॥ असदवभासरूपत्वमुपसंह्रियत इति भाति, तत्प्रक्रमाननुगुणमित्याशङ्क्याह—**तस्मादिति** ॥ असतोऽवभासो यस्मिन् प्रत्यये, असावसदवभासः, इति व्याख्यातम् । उक्तेऽर्थे हेतुं पृच्छति—**कथं पुनरिति** ॥ शून्यपदं देहेन्द्रियादीनामुपलक्षणार्थम्, तदुत्तरत्वेनोत्तरं ग्रन्थमवतारयति—**तदाहेति** ॥

अहमुल्लेखशून्यस्य भोक्तृत्वस्येत्यनयोः षष्ठ्योः किं सामानाधिकरण्यम्? उत वैयधिकरण्यम्? नाद्यः; भोक्तृत्वेऽहमुल्लेखाभावात्; न खलु भोक्तृत्वेऽहमिति प्रतिपत्तिर्दृश्यते, अङ्गीक्रियते वा; नापि द्वितीयः; अहमित्यवभासमानस्यात्मतया परैरभ्युपगतत्वादित्याशङ्क्याह—**अयमाशय इति** ॥ षष्ठ्योर्वैयधिकरण्यपक्षमभिप्रेत्याह—**अहमिति** ॥ गुरुमतमनुसृत्य भोक्तृत्वस्वरूपमाह—**विषयेति** ॥ व्यावर्त्यमाह—**न कदाचिदपि ममप्रत्ययालम्बन इति** ॥ अथ ममप्रत्ययमालम्बनं यस्यघटादिप्रत्ययस्य सः ममप्रत्ययालम्बन इति । ममेति प्रतिभासमान इत्यर्थः । 'मम घटज्ञानमस्ती'ति देवदत्ताश्रितत्वेन प्रतिभासमानज्ञानस्यात्मत्वमनुभवविरुद्धम्, नचालयज्ञानमात्मा, न घटज्ञानमित्यपि—शङ्कास्पदम्; "जानामी"त्यात्मनो ज्ञानाश्रयत्वेन स्फुरणादित्यर्थः ।

एवं संविद आत्मत्वं निराकृत्य शुन्यवादिनं निराकरोति—**स चेति** ॥ 'य एवाहं पूर्वेद्युर्हस्तिनमद्राक्षं स एवाहं संप्रति तुरगमुपलभे'इत्येवमादिप्रत्यभिज्ञानुरोधात् सुप्तौ सत्त्वमास्थेयमित्यर्थः । ज्वालाप्रत्यभिज्ञातो वैलक्षण्यमाह—**अबाधितेति** ॥ फलिमाह—**तत इति** ॥ एतदेव विवृणोति—**प्रत्यभिज्ञयेति** ॥ विधान्तरेण क्षणिकत्वं निरस्यति—**ज्ञानेति** ॥ हिताहितसाधनतानुमानज्ञानं ज्ञानशब्दार्थः । हितसाधनतानुमानस्यैवानङ्गीकारात् कुतस्तद्बलेनाश्रयैकत्वम् ? इत्याशङ्क्याह—**तथाहीति** ॥ प्रवृत्त्यन्यथानुपपत्त्येष्टसाधनताज्ञानमाश्रयणीयमित्यर्थः । इत्थंशब्दसूचितमर्थमाह—**प्रथममिति । वस्तुनीति** ॥ कदलीफलादावित्यर्थः । **द्वितीय इति** ॥ द्वितीयक्षण इत्यर्थः । एवमुत्तरत्रापि द्रष्टव्यम् । वस्त्वन्तरशब्देन सजातीयमुच्यते । **सुखसाधनेति** ॥ अनुभूतकदलीफलादिना सामान्यं तज्जातीयत्वम्, तस्यानुसंधान इत्यर्थः । फलितमाह—**तत इति** ॥ एकात्मानमन्तरेण ज्ञानस्य काऽनुपपत्तिः ? इत्याशङ्क्याह—**अन्येति** ॥ तथा व्याप्ति-

### ऋजुविवरणम्

त्युक्तम्; भोक्तृत्वस्याहमुल्लेखाभावादेव । नहि भोक्तृत्वेऽहमिति प्रतिपत्तिः; नापि भोक्तृत्वेऽहमुल्लेख्यरूपत्वम् । "तस्य च प्रत्यभिज्ञानादि" त्युक्तम्; "तस्ये" ति भोक्तृत्वस्य सन्निधानान्निर्देशः । नच तस्य प्रत्यभिज्ञायां निर्देश्यत्वं प्रतीयते । अथ—'अहमि' त्यवभासशून्यस्य भोक्तृत्वादर्शनादिति ग्रन्थार्थः, तथापि व्यर्थम्; इतरपक्षेऽप्यविशेषादित्याशङ्क्याभिप्रायमाह—**अहमित्यवभासमान इति** ॥ कथं ज्ञानादिष्वाश्रयस्य स्थायित्वसिद्धिः? प्रतीत्यनुपपत्त्योरभावात्, इत्याशङ्क्याह—**तथाहि प्रवृत्तिनिमित्तभूतमिति** ॥

**पञ्चपादिकाविवरणम्**

संहितेऽन्यस्य सुखहेतुज्ञानाभावात्, संतानभेदेष्वदर्शनात्। तथा दुःखहेतुताज्ञानमपि पञ्चावस्थमात्मानं कल्पयति। तथा हिताहितज्ञानपूर्वकौ रागद्वेषौ षष्ठावस्थौ षडवस्थमात्मानं कल्पयतः। रागद्वेषाभ्यां च हानोपादानप्रयत्नो जायमानः सप्तावस्थमात्मानं कल्पयति। तथा प्रयत्नानन्तरमष्टम्यामवस्थायां सुख-दुःखे जायमाने अष्टावस्थमात्मानं कल्पयतः। नच क्षणिकेष्वात्मसु संतानभेदेष्विवायं व्यवहारः सम्भवति। तथा नाहं ज्ञानमित्यहमुल्लेखो विज्ञानेषु, किं तु मम ज्ञानमिति। नच ममात्मेतिवदुपचारः; बाधाभावात्, इतरत्र संबन्धप्रत्ययस्यात्मशब्देन बाधात्। तस्मादहमुल्लेख-प्रत्यभिज्ञाभ्यां शून्यविज्ञानव्यतिरिक्त आत्मा। तथा ताभ्यामेव हेतुभ्यां मनोऽपि नात्मा; सुषुप्ते मनसोऽभावेऽप्यात्मनि प्रत्यभिज्ञानात्, 'अहं मनः' इत्यनवगमात्, 'मम मनः' इति च प्रतिभासात्, ज्ञानायौगपद्येन करणतयैव तस्य कल्पनात्। तथा ताभ्यामेव हेतुभ्यां नेन्द्रियाण्यप्यात्मानः; रूप-रसादिविज्ञानपञ्चके द्रष्टुः प्रत्यभिज्ञानात्, स्वप्ने चक्षुरादिव्यवहारा-भावेऽप्यहमित्यात्मनि परिपूर्णप्रत्ययात्, 'ममेन्द्रियाणी'ति चावगमात्, इन्द्रियाणामहमुल्लेखव्यतिरेकात्। तथा शरीरमपि नात्मा; स्वप्ने शरीराकारावभासाभावेऽप्यहमित्यात्मनि परिपूर्णप्रत्ययात्, अहमुल्लेखव्यतिरेकात्, शरीराकारसंसर्ग-

**तत्त्वदीपनम्**

क्षणेऽप्यनुभवितुरवस्थानमाश्रयणीयमित्याह—**अन्येति**॥ तथाऽनुमानक्षणेऽपीत्याह—**अन्यानुसंहित इति**॥ तत्र हेतुमाह—**संतानेति**॥ उक्तन्यायमन्यत्राप्यतिदिशति—**तथेति**॥ इच्छाद्वेषपर्यालोचनयाऽप्यात्मनः स्थायित्वमित्याह—**तथा हितेति**॥ प्रयत्नजन्मानुपपत्त्यापि स्थायित्वमित्याह—**रागेति**॥ फलोदयानुपपत्तिरपि तत्र प्रमाणमित्याह—**तथा प्रयत्नेति**॥ आत्मनो ज्ञानव्यतिरेकं प्रत्यभिज्ञया प्रसाध्याहमुल्लेखपर्यालोचनया तत् साधयति—**तथा नाहमिति**॥ 'ममात्मे'ति संबन्धस्योपचरितत्ववद् 'मम ज्ञानमि'त्ययमपि संबन्धप्रत्यय उपचरित इत्याशङ्क्याह—**नचेति**॥ बाधाभाव इतरत्रापि तुल्य इत्याशङ्क्याह—**इतरत्रेति**॥ भिन्नयोर्हि संबन्धः, नैकस्मिन्, अतः संबन्धस्योपचरितत्वमित्यर्थः। उक्तमर्थमुपसंहरति—**तस्मादिति**॥ अहमुल्लेखादेरन्यथासिद्धिस्तच्छब्दार्थः। उक्तमन्यत्राप्यतिदिशति—**तथेति**॥ हेतुद्वयं स्पष्टयति—**सुषुप्त इति**॥ 'एतावन्तं कालं किमपि नावेदिषमि'त्युत्थितस्य प्रत्यभिज्ञादर्शनादित्यर्थः। मनस्यहमुल्लेखा-भावमाह—**अहमिति**॥ इतोऽपि न मन आत्मेत्याह—**मम मन इति**॥ अन्वय-व्यतिरेकाभ्यां मनस आत्मत्वमाशङ्क्या-ऽन्यथासिद्धिमाह—**ज्ञानेति**॥ करणत्वोपपादनार्थम्—"**ज्ञानायौगपद्येने**"ति विशेषणम्। आत्मेन्द्रिय-विषयसमवधानेऽपि युगपदनेकज्ञानानुपलम्भात् क्रमकारि साधारणकरणं मन इत्यर्थः॥

इन्द्रियात्मवादं निरस्यति—**तथेति**॥ व्यभिचारित्वादपि नेन्द्रियाणामहंप्रत्ययालम्बनत्वमित्याह—**स्वप्न इति**॥ इतोऽपि नेन्द्रियाणामात्मत्वमित्याह—**ममेति**॥ 'अहं चक्षुरि'त्याद्यनवगमादप्यनात्मत्वमित्याह—**इन्द्रियाणामिति**॥ इन्द्रियादीनामनात्मत्वप्रसाधनमिष्टम्; देहस्यात्मत्वादित्याशङ्क्याह—**तथा शरीरमिति**॥ किमवस्थात्रयेऽप्येक आत्मा? उत बहवः? नाद्य इत्याह—**स्वप्न इति**॥ जाग्रति मनुष्यशरीराकारपरिणतभूतानामहंप्रत्ययविषयत्वात्तत्रैव स्वप्नेऽप्यहमिति प्रत्ययः स्यात्, नचायमस्ति, 'देवोऽहमि'त्यपि प्रतिभासदर्शनात्। द्वितीये प्रत्यभिज्ञानुपपत्तिरित्यर्थः। 'अहं शरीरमि'त्यनुपलम्भाच्च न देहस्यात्मत्वमित्याह—**अहमुल्लेखेति**॥ नच-मनुष्यत्वधर्मविशिष्टे शरीरेऽहमुल्लेख इत्यपि—शङ्क्यम्; जाग्रदादौ मनुष्य-देवशरीरभेदेऽप्यहंप्रत्ययस्यानुवर्तमानत्वादनुवृत्तमालम्बनं वक्तव्यमित्यर्थः॥ किं देहातिरिक्तात्मनि प्रत्यक्षं मानम्? उतानुमानम्? नाद्यः; अनुपलम्भात्, न द्वितीयः; तस्य मानत्वासिद्धेः, इत्या-शङ्क्याह—**शरीरमिति**॥ अपिस्त्वर्थः। शङ्कां व्यावर्तयति। द्रष्टयहमिति यः प्रत्ययः शरीरादात्मनोभेदे प्रत्यक्षप्रत्ययो भवतीति संबन्धः। अहमिति प्रत्ययस्य शरीरविषयत्वोपगमात् कथं भेदविषयत्वम्? तत्राह—**शरीरेति**॥ तादात्म्यं

**ऋजुविवरणम्**

**तथा दुःखहेतुज्ञानमिति** तत्रापि पूर्व एव प्रकारः—प्रथमं वस्तुदर्शनम्, अनन्तरं द्वितीयं दुःखज्ञानम्, पुनर्वस्त्व-न्तरदर्शनं तृतीयम्, ततो दृष्टस्य वस्तुनो दृष्ट-दुःखसाधने सामान्यानुसन्धानं चतुर्थम्, ततः पञ्चम्यामवस्थायामिदं दुःखसाधनज्ञानमुत्पद्यत इति तथैवानुपपत्तिरुह्या। ननु—ममात्मेत्यत्रापि बाधाभावोऽविशिष्ट इत्याशङ्क्याह—**इतरत्र संबन्धेति**॥

**शरीराकारावभासाभावेऽपीति**॥ अनेन यद्यपि शरीरस्थितिरस्ति; तथाऽपि प्रतीतौ व्यतिरेकोऽस्तीत्युक्तम्। सिद्धे

### पञ्चपादिकाविवरणम्

शून्येऽप्य'हमि'ति द्रष्टरि प्रत्ययः शरीरादात्मनो भेदे प्रत्यक्षप्रत्ययो भवति; 'मम शरीरमि'ति च व्यतिरेकप्रत्ययात्। ननु 'अहं काणोऽहं मनुष्यः' इति च शरीरेन्द्रियेष्वहमुल्लेखादुपचारो भेदप्रत्ययः, अहमुल्लेख एवोपचारः किं न स्यात्? कस्तर्हि निर्णयः? अहमुल्लेखस्यैवोपचारो युक्तः; व्यतिरिक्तेऽप्यात्मन्यध्यासनिबन्धनत्वोपपत्तेः। नचाध्यासाद् द्विचन्द्रादिवद् भेदप्रत्ययः, द्वितीयेऽपि चन्द्रे चन्द्राकारवत् स्वप्नेऽपि 'पशुरहमि'ति प्रतिभासे मनुष्यशरीराद्याकारप्रत्ययप्रसङ्गात्। तथा जातमात्रस्य जन्तोर्भय-हर्ष-शोकादिरुत्पद्यमानो दृष्टनिमित्ताभावेऽस्मदादिवत्पूर्वानुभूतनिमित्तानुस्मृतिं कल्पयति। ततश्चास्यैवात्मनो भयादिनिमित्तदर्शनवत्तया पूर्वजन्मसंबन्धसिद्धिः; प्रत्यभिज्ञानात्। तदेवमहमुल्लेखप्रत्यभिज्ञाभ्यां शरीरेन्द्रिय-मनो-बुद्धि शून्यव्यतिरिक्त आत्मा सिद्धः॥

ननु स्थायित्वेऽपि कदाचिदभावः स्यात्, न तावत्परतो विनाशः; निरवयवस्य हेतूपरागाभावात्,

### तत्त्वदीपनम्

संसर्गशब्दार्थः॥ शरीराकारः किं जडः? उताजडः जडत्वे न तस्य द्रष्टृत्वम्; रूपादिवत्, न द्वितीयः; रूपादिमत्त्वेन जडतानुमानात्, ततोऽहंप्रत्ययस्यातिरिक्तविषयत्वसिद्धिरित्यर्थः। समुच्चयार्थो वाऽपिशब्दः, प्रत्यक्षप्रत्ययोऽपि भवतीति। नच—अनुमानस्याप्रमाणत्वादपिशब्दानुपपत्तिरिति—शङ्क्यम्, अनुमानप्रामाण्यानाश्रयण इष्टसाधनतानुमानपुरःसरं भोजनादिप्रवृत्त्यनुपपत्तेः। नचानुमानासंभवः; देहः स्वव्यतिरिक्तद्रष्टृकः, दृश्यत्वात्, घटवदित्यादिप्रयोगसंभवादित्यर्थः। भेदविषयं प्रत्यक्षान्तरमाह—**मम शरीरमिति**॥ सामानाधिकरण्यप्रत्ययविरोधाद् व्यतिरेकप्रत्ययस्योपचरितत्वं शङ्कते—**नन्वहमिति**॥ इन्द्रियेष्वहमुल्लेखो दृष्टान्तत्वेनोक्त इति द्रष्टव्यम्। वैपरीत्यं किं न स्यादित्याह—**अहमुल्लेख इति**॥ विनिगमनकारणाभावान्न देहस्यानात्मत्वसिद्धिरिति शङ्कते—**कस्तर्हीति**॥ असिद्धो हेतुरित्याह—**अहमुल्लेखस्येति**॥ अत्र शरीर इत्यनुषङ्गः। दूरस्थयोस्तर्वोर्भेदेऽप्येकोऽयं तरुरित्यैक्यभ्रमवद् देहात्मनोर्व्यतिरेकेऽप्यहं मनुष्य इत्यहमुल्लेखः समारोपरूपो युज्यत इत्यन्यथासिद्धत्वमित्यर्थः॥

ननु एकस्मिन्नपि शीतांशौ भेदप्रत्ययः समारोपितो दृष्टः, तथा मम शरीरम्, इत्यस्याप्युपचरितत्वं युक्तमित्याशङ्क्याह—**नचेति**॥ जलभाजनभेदेन भिन्नतया प्रतिभासमानेऽपि चन्द्रेऽयं चन्द्रोऽयं चन्द्र इत्यधिष्ठानचन्द्रस्फुरणवद् मनुष्यशरीराख्यात्मनि स्वप्नावस्थायां पशु-देवादेः कल्पितत्वाद् मनुष्यशरीरस्यापि तत्र स्फुरणं स्यात्। नच—आत्ममात्रं तत्रापि भातीत्यपि—शङ्कनीयम्; सर्वत्रानुवर्तमानस्यैकस्यात्मनोऽनङ्गीकरणादित्यर्थः। अहमुल्लेखपर्यालोचनया देहस्यानात्मत्वमुक्त्वा प्रत्यभिज्ञयाऽपि तदाह—**तथेति**॥ हर्षः, प्रियार्थप्रतीतिजन्यः, हर्षत्वात्, संप्रतिपन्नवत्, तथा शोकोऽप्रियार्थप्रतीतिजन्यः; शोकत्वात्; संप्रतिपन्नवदित्यादिप्रयोगाद् हर्षादिस्तन्निमित्तत्वमधिगतम्। तच्च निमित्तं किं तत्कालीनम्? उत जन्मान्तरीयम्? नाद्य इत्याह—**जातमात्रस्येति**॥ अप्ररूढेन्द्रियस्येत्यर्थः। तस्माद् द्वितीयः परिशिष्यत इत्याह—**पूर्वानुभूत इति**॥ अस्तु को दोष इति, अत आह—**ततश्चेति**॥

अन्यानुभूतेऽन्यस्य स्मरणासंभवादनुभवितुः स्मारकत्वं वक्तव्यम्, तच्च शरीरात्मवादेऽनुपपन्नम्; शरीरभेदस्य प्रत्यक्षत्वात्, तस्माद् देहातिरिक्त आत्मा सिद्ध इत्यर्थः। नास्तिकमतनिराकरणमुपसंहरति—**तदेवमिति**॥ आत्मनो देहातिरेकं स्थायित्वं चोपगम्य नित्यत्वमाक्षिपति—**ननु स्थायित्व इति**॥ सर्वदा सत्त्वे प्रमाणाभावात् प्रलयावस्थायामभाव इत्यर्थः। किमात्मनो नाशः सहेतुकः? उत निर्हेतुकः? नान्त्यः; स्थित्यवस्थायामपि नाशप्रसक्तेः, आद्येऽपि स्वनाशः किं स्वतः? उत परतः? न तावत्परत इत्याह—**न तावदिति**॥ सावयवद्रव्यस्य हेतूपरागाद्विनश्वरत्वं दृष्टम्। आत्मा निरवयव इति कथं ततो नश्येदित्यर्थः। किं च तन्नाशकं दृष्टं देहादि? उतान्यत्? नाद्य इत्याह—**स्वसंसर्गिण इति**॥ नापि द्वितीयः; तदनिरूपणादित्यर्थः॥

### ऋजुविवरणम्

भेदेऽहमुल्लेखस्य व्यतिरेकस्सिद्ध्येत्, तदभावे तत्रैवाहमुल्लेख इत्याशङ्क्याह—**शरीराकारेति**॥ ननु—शरीरस्यात्मन्यध्यस्तत्वादहमुल्लेख इति कस्मादुच्यते? भेदस्यैवाध्यस्ततया प्रतीतिरिष्यतामिति, नेत्याह—नचाध्यासादिति॥ ननु—नानेन नित्यत्वसिद्धिः; स्थिरस्याऽपि कालान्तरे विनाशदर्शनादिति चोदयति—**ननु स्थायित्वेऽपीति**॥ ननु शरीरादिसंसर्गोऽस्ति, तदेव विनाशकं भवेदित्याशङ्क्याह—**स्वसंसर्गिणश्चेति**॥ "स्थिरस्यावधिहेतुत्वानुपलब्धेरि" त्ययुक्तम्; स्थिर-

### पञ्चपादिका

**स्थिरस्य चावधिहेत्वनुपलब्धेर्नित्यत्वम् । निर्विकारस्य च भोगासंभवात्, विकारस्य च क्रियाफलत्वात्, क्रियावेशात्मकत्वाच्च कर्तृत्वस्य, एवमात्मकत्वाच्च संसारित्वस्य, देहादेश्च बुद्धिपर्यन्तस्य भोक्तृत्वानुपपत्तेः , तद्व्यतिरिक्तः संसारी कर्ता भोक्ताऽहं-प्रत्ययविषय इत्यपरे प्रतिजानते । कथं पुनस्तद्व्यतिरिक्तत्वं मन्यन्ते । तस्य भोक्तृत्वानुपपत्तेरित्युक्तम् ॥**

### पञ्चपादिकाविवरणम्

स्वसंसर्गिणश्च स्वकर्मफलसाधनतयोपात्तस्य फलहेतुतयाऽऽत्मनः स्थितिहेतुत्वादविनाशकत्वात्, नापि स्वत इत्याह—**स्थिरस्य चावधिहेत्वनुपलब्धेरिति** ॥ स्वसत्ताप्रयुक्तविनाशहेतुत्वानुपपत्तेः, क्षणिकस्यैव तद्भावादित्यर्थः । कथं पुनस्तस्य कर्तृत्व-भोक्तृत्वे इति ? तत्प्रतिपादयति—**निर्विकारस्य च भोगासंभवादित्यादिना** ॥ "**कथं पुनस्तद्व्यतिरिक्तत्वमि**"ति स्पष्टार्थः ॥

तत्र नैयायिका मन्यन्ते—पार्थिवाऽऽप्य-तैजस-वायव्यानि भूम्यन्तरिक्ष-स्वर्ग-ब्रह्मलोकेषु व्यवस्थया शरीराणि, नानेकैर्भूतैरेकंशरीरमारब्धमिति। तत्रास्मदादिशरीरं पार्थिवमेव, "पार्थिवगुणान्तरोपलब्धेरि" त्यक्षपादसूत्रात्, शरीरे गन्ध-विशेषोपलब्धेरित्यर्थः । नच रूप-रस-स्पर्शा भूतान्तरसमवायं गमयन्ति; पार्थिवस्यापि तेषां गुणत्वात् । ननु क्लेदनपाचन-व्यूहनावकाशानां शरीरे दर्शनाद् भूतपञ्चकारब्धत्वं शरीरस्येति, न; दृतिवस्त्रोदकादिवद् भूतान्तरसंयोगादपि व्यूहनाद्युप-पत्तेः । श्रुतिश्च "पृथिवीं शरीरमि" ति पार्थिवत्वमेव शरीरस्य दर्शयति । वैशेषिकास्तु—प्रत्यक्षाप्रत्यक्षवृत्तेरप्रत्यक्षत्वात्

### तत्त्वदीपनम्

स्वयमेव स्वनाशकमिति पक्षं निरस्यति—**नापीति** ॥ अपेक्षितं हेतुं दर्शयति—**स्वसत्तेति** ॥ स्वयं स्वनाशकं चेत् तदा स्वसत्तायामपि नाश आपद्येत । स्वसत्ताक्षणादुत्तरक्षणे नाशकं चेत्, तदा क्षणिकत्वापत्तिरित्यर्थः । देहादि-व्यतिरिक्तत्वं नित्यत्वमङ्गीकृत्य तस्य कर्तृत्वादिकमाक्षिपति—**कथं पुनरिति** ॥ असंसारिब्रह्मैक्यान्न कतृत्वादिसंभव इत्यर्थः । ब्रह्मैक्यमेवासिद्धमित्याशङ्क्याह—**तत्प्रतिपादयतीति** ॥

भूतसंघातस्तावच्छरीरमिति व्यर्थम्; सर्वैरपि तथोपगमादित्याशङ्क्य विप्रतिपत्तिं दर्शयति—**तत्रेति** ॥ भूमौ शरीरं पार्थिवम्, अन्तरिक्षे च वरुणलोके आप्यम्, स्वर्गे तैजसम्, ब्रह्मलोके वायव्यमित्येवं व्यवस्था कस्मादित्या-शङ्क्याह—**नानेकैरिति** ॥ कल्पनागौरवप्रसङ्गान्नानेकहेतुकल्पनमित्यर्थः । तथाऽपि पृथिव्यां पार्थिवमेवेति व्यवस्था किं निबन्धना ? इत्याशङ्क्याह—**तत्रेति** ॥ उक्तेऽर्थे न्यायसूत्रं प्रमाणयति—**पार्थिवेति** ॥ पृथिव्याश्रयगुणविशेषस्य शरीर उपलम्भादिति सूत्राक्षरार्थः । किं तद् गुणान्तरमिति वीक्षायामाह—**शरीर इति** ॥ पृथिवीगुणोपलम्भाद् यथा पृथिवीसमवायिकारणत्वम्, तद्वदितरगुणोपलम्भादितरारभ्यत्वं किं न स्यादित्याशङ्क्याह—**नचेति** ॥ भूतान्तराणां कारणत्वेन शरीरे न समवायं संश्लेषं गमयन्तीत्यर्थः । तेषां रूपादीनां पृथिवीगुणत्वात् पार्थिवस्यापि शरीरस्य तद्गुणत्वं युक्तमित्यर्थः; अत्राद्यसाधारणगुणदर्शनादबाद्यारब्धं शरीरमिति शङ्कते—**ननु क्लेदनेति** ॥ **व्यूहनम्**-बृंहणमित्यर्थः । गुणान्तरदर्शनमन्यथासिद्धमिति समाधत्ते—**न दृतीति** ॥ दृतेः पार्थिवत्वेऽपि वायुसंयोगाद् व्यूहनवदपां योगाद् वस्त्रे क्लेदनवद्वह्निसंयोगादुदकौष्ण्यवच्छरीरस्य पार्थिवत्वेऽप्यबाद्युपष्टम्भवशाद् व्यूहनादिकं युक्तमित्यर्थः । "दृतिवस्त्रोदकादि वदि" त्यत्रादिशब्देन पृथिवीसंयोगात्सुवर्णे गुरुत्ववदित्येतदुच्यते । श्रुतिपर्यालोचनायामपि शरीरस्य पार्थिवत्वमेवेत्याह—**श्रुतिश्चेति** ॥ "पृथिवीं शरीरमि"त्यत्र प्रलयसमये पृथिव्यां लय उक्तः, स नोपपद्यते पृथिव्यनुपादानत्वे, तस्मात्पार्थिवत्वम्; इतरलयानभिधानाद् इतरानारब्धत्वमित्यर्थः ॥

वैशेषिकशास्त्रपर्यालोचनायामपि शरीरस्य पार्थिवत्वमेवेत्याह—**वैशेषिका इति** ॥ वैशेषिकास्त्वित्यर्थं

### ऋजुविवरणम्

स्याऽपि नाशहेतुत्वदर्शनात्, स्थिरत्वस्य वैषम्यमात्रत्वाच्चेत्याशङ्क्य व्याचष्टे—**स्वसत्ताप्रयुक्तेति** ॥ सत्त्वप्रयुक्तविनाश-हेतुत्वं नास्ति; विद्यमानेऽपि सत्त्वेऽनन्तरं क्षणिकस्यैव विनाशदर्शनादिति भावः । ननु—"भूतसङ्घातस्तावदि" ति व्यर्थम्; पूर्ववादिनाऽप्यङ्गीकारादित्याशङ्क्यावतारयति—**तत्र नैयायिका इति** ॥ ननु—गन्धदर्शनेन पार्थिवत्वे भूतान्तरगुणादीनां रूपादीनामुपलब्धेस्तदारब्धत्वमपीत्याशङ्क्याह—**नच रूप-रसेति** ॥ इदानीमसाधारणगुणदर्शनेन चोदयति—**ननु क्लेदन-पचनेति** ॥ ननु—निश्चिते पार्थिवत्वे संयोगजत्वं क्लेदनादीनाम्, तदेव कथम् ? इत्याशङ्क्याह—**श्रुतिश्चेति** ॥

## पञ्चपादिका

**कथं तस्य भोक्तृत्वानुपपत्तिरिति ? उच्यते;—भूतसङ्घातस्तावत् शरीरम्। तत्र व्यस्तानां समस्तानां वा**

## पञ्चपादिकाविवरणम्

पञ्चात्मकं न विद्यत इति, वाय्वाकाशयोरप्रत्यक्षत्वात् पञ्चात्मकं शरीरमप्रत्यक्षं स्यात्, तस्मात्पार्थिवमेव शरीरमिति कल्पयन्ति तान् प्रत्याह—**भूतसंघातस्तावच्छरीरमिति** ।। वस्त्रे क्लेदनस्य, जले पाकस्य, दृतौ व्यूहनस्य, जलाग्निपवन-विगमादपायेऽपि वस्त्रादीनामपचयादर्शनाच्छरीरस्य च जलादिविगमे तन्त्वपचयाद्पटापचयवदपचयदर्शनात् सर्व-तन्त्वारब्धपटवत्सर्वभूतारब्धं शरीरमिति गम्यते। "अन्नमशितं त्रेधा विधीयते" इत्यादिश्रुति-स्मृतिवादाश्च भूतपञ्चकं शरीरं कथयन्ति; प्रत्याक्षाप्रत्यक्षवृत्तेरप्रत्यक्षत्वे सर्वावयविनां प्रत्यक्षाप्रत्यक्षावयववृत्तीनामप्रत्यक्षत्वापातः। तस्माद् भूतसंघातः शरीरमिति ।।

अत्रावयव्यारम्भमनपेक्ष्य संघातमात्रस्य भोक्तृत्वाभावं दर्शयितुं विभजते—**तत्र व्यास्तानामिति**। व्यस्तानां

## तत्त्वदीपनम्

कल्पयन्तीति संबन्धः। कल्पनामेवाह—**प्रत्यक्षेति** ।। प्रत्यक्षं चाप्रत्क्षं चेति प्रत्यक्षाप्रत्यक्षे, तयोर्वर्त्तिर्वर्तनं यस्य स तथोक्तः, तस्येति विग्रहः, के ते प्रत्यक्षाप्रत्यक्षे ? तत्र वर्तमानस्य शरीरस्य वा कथमप्रत्यक्षत्वम् ? तत्राह—**वाय्विति**। अप्रत्क्षत्वादित्येतत् प्रसङ्गपरतया व्याख्यातमिति द्रष्टव्यम्। विप्रतिपन्नम्, अचाक्षुषम्, अरूपिद्रव्यत्वात्, मनोवत्, इत्यनुमानाद्वाय्वाकाशयोरप्रत्यक्षत्वम्; तथाच शरीरं न प्रत्यक्षाप्रत्यक्षारब्धम्, प्रत्यक्षाप्रत्यक्षारब्धत्वेऽप्रत्यक्षत्वप्रसङ्गात्, वायु-वनस्पतिसंयोगवत्। प्रत्यक्षं च तत्। तस्मान्न प्रत्यक्षाप्रत्यक्षारब्धमित्यर्थः ।।

पञ्चानां भूतानामसाधारणगुणदर्शनात् पञ्चभूतारब्धं शरीरमिति समाधत्ते—**तान्प्रतीति** ।। असाधारण-गुणदर्शनमन्यथासिद्धं दृतिवस्त्रादिवदिति यदुक्तम्, तद्विघटयति—**वस्त्र इति** ।। जलादिविगमे शरीरस्यापचयदर्शनात् सर्वभूतारब्धं शरीरमिति संबन्धः। अपचये दृष्टान्तमाह—**तन्त्वपचयादिति** ।। सर्वारब्धत्वे दृष्टान्तमाह—**सर्वेति** ।। "पृथिवीं शरीरमि"त्यादिश्रुतेः शरीरस्य पार्थिवत्वमित्युक्तम्, तत्राह—**अन्नमशितमिति** ।। भुक्तमन्नं स्थूल-मध्यम-सूक्ष्मैः पुरीष-मांस-मनोभिः कार्यभेदेन परिणमते, तथा आपश्च पीता मूत्र-लोहित-प्राणाकारेण परिणमन्ते, तथा भुक्तं घृतलक्षणं तेजोऽस्थि-मज्जा-वागाकारेण परिणमत; इति त्र्यात्मकत्वं शरीरस्य स्पष्टं निर्दिष्टम्। नच—"अन्नमशितमि"त्यत्र त्र्यात्मकत्वं प्रतीयते, न पाञ्चभौतिकत्वमित्यपि—शङ्क्यम्; वाय्वाकाशयोरुपलक्षणार्थत्वाच्छन्दोगश्रुतेरित्यर्थः। "पृथिवीं शरीरमि"त्येतद्वचनं पृथिवीप्रकृतित्वमात्रं प्रतिपादयति, न त्वितरव्यावृत्तिम्; "पञ्चभूतात्मके तात शरीरे पञ्चतां गते" इत्यादेश्च शरीरस्य भूतान्तरारब्धत्वं सिद्धमित्यर्थः ।।

वैशेषिकोक्तं निरस्यति—**प्रत्यक्षेति** ।। अप्रत्यक्षशब्देन प्रत्यक्षाविषयं वस्तूच्यते ? उत तदयोग्यम् ? आद्य आन्तराणामवयवानां परभागवर्तिनां च प्रत्यक्षेणागृह्यमाणत्वात्तद्वर्तिनः कलशादेरप्यप्रत्यक्षत्वप्रसक्तिः; नापि द्वितीयः, अप्रत्यक्षगगनगतशब्दवदेवाप्रत्यक्षावयववर्तिनोऽपि शरीरस्य प्रत्यक्षत्वं किं न भवेदित्यर्थः। मिलितैर्भूतैरेकशरीरमारभ्यते, तच्चात्मेति "व्यस्तानामि"त्यादिविकल्पानवसरमाशङ्क्याह—**अत्रेति** । संहतैर्भूतैरेकोऽवयव्यारभ्यते स चात्मेत्येकं मतम्। संघात आत्मा इत्यपरम्। तयोः पक्षयोराद्यपक्षमुपेक्ष्य द्वितीयपक्षप्रतिक्षेपार्थोऽयमुपक्रम इत्यर्थः ।।

संघातस्य भोक्तृत्वेऽपि वाच्यम्—किं स भूतानतिरिक्तः ? उतातिरिक्तः ? आद्ये किं सर्वेषामात्मत्वम्, उतैकस्य ? प्रत्येकमान्मत्वेऽपि किं भोगः पृथक् पृथक् ? उत परस्परापेक्षाणाम् ? इत्येतदभिप्रेत्योक्तम्—**विभजत इति** ।। युगपत् क्रमेणेत्ययं विकल्पो व्यस्त-समस्तसाधारणत्वेन भाति, नच तदुपपद्यते; समस्तपक्षे विकल्पासंभवात्, इत्यभिप्रेत्य टीकां

## ऋजुविवरणम्

"भूतसङ्घातस्तावदि"त्ययुक्तम्; भूतपञ्चकारब्धत्वग्राहकाभावात्, शरीरक्लेदनादीनां संयोगजत्वेनाप्युपपत्तेरिति यदुक्तम्, तन्निराकरोति—**वस्त्रे क्लेदनस्येति** ।। ननु—श्रुतिरुदाहृता, तत् कथं पञ्चात्मकत्वम् ? इत्याशङ्क्याह—**अन्नमशितं त्रेधेति** ।। सा तु वैशेष्याभिप्रायेणेति भावः ।। तत्र "व्यस्तानामि"त्यादिविकल्पो न युक्तः; शरीराकारपरिणतानां भोक्तृत्वं तेनोक्तम्, नतु भूतानाम्; तद्विहायान्यस्यैव विकल्पनिराकरणादित्याशङ्क्यावतारयति—**अत्रावयव्यारम्भमिति** ।। साधारणे च भोग्य इत्ययुक्तम्; रूपादीनां व्यवस्थया भोग्यत्वसम्भवात्। "प्रतिनियते"त्यनेन क्रमभोगो निरस्तः, सोऽपि न युक्तः; व्यवस्थितस्य भोग्यत्वे क्रमेण सन्निधानेनक्रमसम्भवादेकस्मिन् सर्वोपभोग्ये व्यवस्थोपपत्तिर्वरगोष्ठीवदेव,

### पञ्चपादिका

युगपत् क्रमेण वा भोगः परिकल्प्येत, सर्वथाप्यसंभवः। यदि तावद् व्यस्तानां युगपत् परिकल्प्येत, ततः स्वार्थप्रयुक्तत्वात् प्रवृत्तेरङ्गाङ्गिभावो नावकल्पेत। नचाङ्गाङ्गिभावमन्तरेण सङ्घात उपपद्यते। तस्मान्न व्यस्तेषु युगपद् भोगः।

अस्तु तर्हि क्रमेण विरोधाद् वरगोष्ठीवदिति, नैतदेवं युक्तम्; तत्र भोग्यस्यासाधारणत्वात्, असाधारणत्वञ्च प्रतिपुरुषनियमात्, इह पुनर्विपरीतम्; बहूनां सन्निधौ साधारणे च भोग्ये प्रतिनियतभोगव्यवस्थाहेत्वसम्भवात्। अस्तु तर्हि समूहस्य; तिलज्वालावच्चेतनासमन्वयोपपत्तेः, मा भूत् प्रत्येकं युगपत् क्रमेण वा—

### पञ्चपादिकाविवरणम्

भोगेऽपि युगपत्? क्रमेण वा भोगः? न तावद् युगपदित्याह—**यदि तावद् व्यस्तानामिति**। तत्र दूषणमाह—**ततः स्वार्थप्रयुक्तत्वादिति**। मा भूदङ्गाङ्गिभाव इत्यत आह—**न चाङ्गाङ्गिभावमन्तरेणेति**। एकैकस्य भोक्तृत्वे संघातादन्यत्रापि भोगः स्यादित्याह—**तस्मान्न व्यस्तेषु युगपत् भोग इति**॥ अस्तु तर्हि क्रमः। ननु क्रमपक्षेऽपि भोक्तॄणां न संघातापत्तिरिति, तत्राह—**विरोधाद्वरगोष्ठीवदिति**॥ परिहर्तुं दृष्टान्ताद् वैषम्यमाह—**नैतदेवमिति**॥ दार्ष्टान्तिकं विभजते—**इह पुनरिति**॥ अयमत्राशयः—यदि तावद् रूप-रस-गन्ध-स्पर्शानामन्यतमोऽपि चतुर्णां भोक्तॄणां विषयः, तदा साधारणे विषये क्रमभोगे कारणं नास्ति, यदि रूपादिषु प्रत्येकं भूतानां भोक्तृत्वविषयव्यवस्था, तदाऽपि युगपत् सर्वविषयसन्निधाने क्रमानुपपत्तिः। यथैकस्मिन् मुहूर्ते प्रत्येकं भोग्यकन्यावस्तुनि सन्निहिते वराणां गुणप्रधानतया संघाताभावः, तद्वद् भोक्तृषु च प्रत्यभिज्ञानुपपत्तिरिति। अस्तु तर्हि समूहस्य भोक्तृत्वम्। ननु एकस्मिन् भूतेऽविद्यमानं चैतन्यं कथं संघाते जन्यत इति? तदाह—**तिलज्वालावदिति**॥ तत्र वक्तव्यम्—किं संहतानां भोक्तृत्वम्? आहोस्विद् भोक्तॄणां संहतिरिति? संघातस्यावस्तुत्वाद् भोक्तृत्वानुपपत्तेः, वस्तुत्वेऽपि भूतेभ्यो भेदे पञ्चमतत्त्वाभ्युपगमप्रसङ्गात्, अभेदे भूतान्येव संघात इति तेषा-

### तत्त्वदीपनम्

व्याकरोति—**व्यस्तानामिति**॥ संघातोऽपि मा भूदिति मन्वानं प्रत्याह—**एकैकस्येति**॥ शरीरादन्यत्रापि सुखादिभोगः स्यादित्यर्थः। अस्तु तर्हीत्यादेरयमाशय इत्यतः प्राक्तनः स्पष्टार्थः। भोग्यस्य साधारणत्वात् प्रतिनियता व्यवस्थाऽनुपपन्नेत्ययुक्तम्; भोग्यस्य साधारण्यासिद्धेरित्याशङ्क्य तात्पर्यमाह—**अयमत्राशय इति**॥ किं भूतानि प्रतिनियतविषयाणि? उत न? इति विकल्प्य द्वितीयं दूषयति—**यदि तावदिति**॥ आद्यं दूषयति—**यदीति**॥ उक्तं दृष्टान्तं प्रतिदृष्टान्तेन विघटयति—**यथेति**॥ भूतानां प्रत्येकमात्मत्वे 'य एवाहं रूपमद्राक्षं स एवेदानीं शृणोमी'ति प्रत्यभिज्ञाऽनुदयश्चेत्याह—**भोक्तृषु चेति**॥ मिलितानां भोक्तृत्वकल्पमुत्थापयति—**अस्तु तर्हीति**॥ **समूहस्येति**॥ संहत्युपाधिकस्येत्यर्थः। एकैकस्य शालिबीजस्य यवाङ्कुरजननासमर्थस्य मेलनेऽपि तदजनकत्ववद् भूतानामपि मिलितानां न भोक्तृत्वमिति शङ्कते—**नन्विति**॥ एकस्मिन्निति॥ एकैकस्मिन्नित्यर्थः। संघात इति सतिसप्तमी। दृष्टत्वान्न विरोध इत्याह—**तदाहेति**। विकल्पासहत्वान्नायमपि साधुरित्याह—**तत्र वक्तव्यमिति**॥ **संहतानामिति**॥ संघातविशिष्टानामित्यर्थः। **भोक्तॄणामिति**। भूतानामेव भोक्तृत्वम्, संघातस्तूपलक्षणमिति द्वितीयविकल्पार्थः॥ संघाते निरस्ते तद्विशिष्टे भोक्तृत्वं निरस्तं भवतीत्यभिप्रेत्य संघातं दूषयति—**संघातस्येति**॥ संघातः किमसन्? उत सन्? असत्त्वे विशिष्टस्य भोक्तृत्वासंभव इत्याह—**संघातस्येति**॥ द्वितीयेऽपि नये तस्य भूतेभ्यो भिन्नत्वम्? अभिन्नत्वं वा? इति विकल्प्याद्यं दूषयति—**वस्तुत्वेऽपीति**॥ द्वितीयं दूषयति—**अभेद इति**॥ "तेषामेव भोक्तृत्वादि"त्यत्र संघाताभावे शरीरादन्यत्रापि भोक्तृत्व-

### ऋजुविवरणम्

ननु साधारणत्वम्। सङ्घातोऽपि निरस्तः, अतोऽयुक्तं दूषणमित्याशङ्क्याभिप्रायमाह—**यदि तावद्रूपस्येति**॥ कन्यावस्तुवन्नासाधारण्यम्; एकस्मिन् गन्धादावनेकेषां भोगदर्शनादिति भावः॥ "नैतदेवम्; भोगेष्वि"त्यादिना टीकाग्रन्थेन समूहो न संभवति, भोक्तॄणां प्राधान्यादित्युक्तमिव प्रतिभाति, तदयुक्तम्; समूहस्य भोग इति चोदितत्वात् तेषां भोक्तृत्वानुवादानुपपत्तेः, समूहभोगस्यानिरस्तत्वाच्च "समूहिनां भोगः" इति वक्तुमशक्यत्वात्, असिद्धं पूर्वं भोक्तृत्वं प्राधान्यञ्चेत्याशङ्क्यावतारयति—**तत्र वक्तव्यं किं संहतानामिति**॥ समूहपक्षहानेनैव निराकरणे कारणमाह—**सङ्घातस्यावस्तुत्वादिति**॥ अन्योन्यं गुणप्राधान्याभावेऽपि षण्णां यागानामन्वयो दृष्टः तद्वत् स्यादित्याशङ्क्याह—

### पञ्चपादिका

**नैतदेवम् ; भोगेषु समूहासंभवात् । कथमसंभवः ? भोक्तुर्भोगं प्रति प्राधान्यात् । ननु भोगेऽपि समूहो दृष्टः—यथा स्त्रीपुंसयोः, नैतत् सारम् ; सन्दिग्धत्वात्, समूहस्य ? उत तद्व्यतिरिक्तस्येति । तिलज्वालायान्तु विपरीतम् ; समूहकार्ये समूहिनां गुणभावोपपत्तेः ।**

### पञ्चपादिकाविवरणम्

मेव भोक्तृत्वात् । तत्र संहतानां भोक्तृत्वे संहतिहेतुर्वक्तव्यः । आगामी भोग इति चेत्, तं प्रति भूतानां समानत्वाद् गुण-प्रधानभावेन संघातानुपपत्तिरित्याह—**नैतदेवं भोगेषु समूहासम्भवादिति** ।। ननु भोगान्वयात् प्राग् भूतानां कर्तृत्वात् कर्तॄणां भोगे गुणभावेन संघातोपपत्तिरिति चोदयति—कथमसंभव इति ।। अन्योन्यं गुण-प्रधानत्वाभावाद् भोगं प्रत्यपि प्राधान्याद् भोक्तॄणां न संघात इति परिहरति—**भोक्तुर्भोगं प्रति प्राधान्यादिति** ।। ननु भोगे शेषिणि तादर्थ्येन समूहो दृश्यत इति चोदयति—**ननु भोगेऽपीति** ।। तत्र शरीरव्यतिरिक्तयोरेवात्मनोर्भोक्त्रोस्तादर्थ्येन शरीरयोर्गुण-प्रधानभावेनान्वयः, न भोक्त्रोरेवेत्यभिप्रेत्य परिहरति—**नैतत्सारमिति** ।। ननु ज्वालायां तिलानां गुणभाववद् भोगे संघात इति, नेत्याह—**तिलज्वालायां तु विपरीतमिति** ।। अत एव भोक्तॄणामेव संहतिपक्षोऽनुपपन्नः ।

ननु कोऽयं संघातो नाम ? नच वनवदेकदेशतामात्रम्; तद्व्यापिनां भूतानां सर्वत्र विद्यते, इति सर्वत्र

### तत्त्वदीपनम्

प्रसङ्ग इति शेषः । संघातनिमित्ताभावादपि न संघात इत्याह—**तत्र संहतानामिति** ।। नच हेतुर्निरूपयितुं शक्यत इत्यर्थः । भोगो हेतुरिति शङ्कते—**आगामीति** ।। भोगस्य निमित्तत्वमङ्गीकृत्य संघातं दूषयति—**तं प्रतीति** ।। भूतानां भोक्तृतया भोगं प्रति प्राधान्यस्य समानत्वात् कस्यचिद्गुणत्वं कस्यचित्प्राधान्यमित्यत्र हेत्वभावान्न संघात इत्यर्थः । भोगेष्विति निमित्तसप्तमी । प्राधान्यमसिद्धमिति शङ्कते—**ननु भोगेति** ।। कर्तुः क्रियां प्रति गुणत्वं सर्वसंमतमित्यर्थः । भोगापेक्षया भूतानां गुणत्वेऽपि न परस्परमङ्गाङ्गीभाव इत्याह—**अन्योन्यमिति** ।। स्वातन्त्र्येण प्राधान्याविशेषादित्यर्थः । भोग इत्युक्ते कस्य भोग इति स्वाम्यन्वयाकाङ्क्षादर्शनात् प्राधान्येन भूतानामन्वय इत्याह—**भोगमिति** ।। गुणप्राधान्याभावेऽपि संघातः स्यादिति शङ्कते—**ननु भोग इति** ।। षण्णां यागानामेकं फलं प्रति समुच्चयवद् भूतानामपि भोगं प्रति समुच्चयो युक्त इत्यर्थः । स्त्री-पुंसयोश्चेतनयोरिव भोगे समूहस्य ? उत तद्व्यतिरिक्तस्य ? इति संदिग्धत्वादिसमाधानमनुचितम्, सर्वत्र चेतनस्य भोक्तृतायाः संभवादित्याशङ्क्य तात्पर्यमाह—**तत्रेति** ।। तत्र दृष्टान्त इत्यर्थः । भोक्त्रोरिति सतिसप्तमी । समत्वेऽपि संघातो दृष्टः, तद्वदत्रापीति शङ्कते—**ननु ज्वालायामिति** ।। ज्वालायाः कार्यत्वात् तत्र तिलानां गुणभावेनान्वयेऽप्यात्मनां न तत्र गुणभावेन संघात इत्याशयेनाह—**नेत्याहेति** ।।

संघातविशिष्टानां भोक्तृत्वपक्षं निराकृत्य स्वतो भोक्तॄणां भोगे संघातसहकार्यपेक्षेति पक्षं प्रतिक्षिपति—**अत एवेति** ।। गुण-प्रधानभावासंभवोऽतःशब्दार्थः । समस्तानां भोक्तृत्वपक्षे दोषान्तरं समुच्चिनोति—**ननु कोऽयमिति** ।। किमेकदेशस्थत्वमात्रं संघातः ? उत एकोऽवयवी ? आहो एकद्रव्यबुद्ध्यालम्बनयोग्यतापत्तिः ? अथवा एकार्थक्रियायां युगपदन्वितत्वम् ? किं वा संश्लेषमात्रम् इति किंशब्दार्थः । आद्यं दूषयति—**नच वनवदिति** ।। तत्र हेतुमाह—**तद्व्यापिनामिति** ।। एकदेशस्थतामात्रं तच्छब्दार्थः । एकदेस्थत्वं संघात इति पक्षे देहाद् बहिरपि भूतानामेकदेशस्थत्वसंभवात् तत्र चैतन्योत्पत्त्या भोक्तृत्वसंभवादित्यर्थः । द्वितीयं दूषयति—**नचेति** ।। अवयवी चासावारम्भश्चेत्यवयवारम्भः । आरभ्यत इत्यारम्भः, आरब्धोऽवयवीत्यर्थः ।।

किं तस्यावयवेभ्योऽन्यत्वम् ? उतानन्यत्वम् ? अथवाऽन्यानन्यत्वम् ? इति विकल्प्याद्यं दूषयति—**तस्येति** ।।

### ऋजुविवरणम्

**भोगं प्रत्यपि प्राधान्यादिति** ।। अयमर्थः—स्वार्थत्वेन भोगो निर्वर्त्यः, तेन तु भोग आत्मानं लभतामिति; अतः प्राधान्यमिति । "ननु भोगेऽपी"त्ययुक्तम्; प्रधानानामन्वयासंभवात् समूहमात्राविरोधित्वादित्याशङ्क्याह—**ननु भोगे शेषिणीति** ।। "नैतत्सारम्, संदिग्धत्वादि"ति परिहारो न युक्तः; समूहस्य भोग इति चोदितत्वात्, सन्देहोपन्यासे प्रयोजनाभावात् । नच—भोगार्थं समूहनिराकरणमनेन क्रियत इति—युक्तम्; व्यधिकरणत्वापत्तेरित्याशङ्क्यावतारयति—**तत्र शरीरव्यतिरिक्तयोरिति** ।। "न तत्रापि कस्ये"त्यनवधारणत्वमुक्तम्, तदयुक्तम्, यस्य सन्निधिर्यत्संबन्धीय-

### पञ्चपादिका

**अस्त्वेकस्य तर्हि नियतो भोगः, न; तत्रापि कस्यैकस्येत्यनवधारणात्। किमवधारणेन ? विनाऽपि तेन**

### पञ्चपादिकाविवरणम्

चैतन्य-भोगयोः प्रसङ्गात्। नचावयव्यारम्भः; तस्य भूतेभ्यो भेदे तत्त्वसंख्यातिरेकात्, अभेदे च भूतमात्रतया संघाताभावात्, भेदाभेदानङ्गीकरणात्। ननु स्वतन्त्रं भूतचतुष्टयमेव; अवयव्यादीनां पारतन्त्र्यात् संख्यातिरेकाभावात्, तर्हि न भूतानां भोक्तृत्वम्, किंत्ववयविन एव। तत्र भूतव्यापारानपेक्षया स्वयमेव भोक्तुरवयविनः परतन्त्रताऽभावात् संख्यातिरेकः स्यात्, जलादेश्च पृथिव्यादितन्त्रत्वान्न्यूना च संख्या स्यात्। नचैकद्रव्यबुध्यालम्बनयोग्यतापत्तिः संघातः; अर्थस्वभावेनैकत्वापत्त्ययोगात्, अनेकेष्वेकत्वबुद्धेर्भ्रमत्वात्। नचैकार्थक्रियायां युगपदन्वयः संघातः; काष्ठाश्रयेण वह्निना वायुसमुद्भूतेन जले दह्यमानेऽपि संघाताद् भोगप्रसङ्गात्। नचाग्न्ययःपिण्डवत्संश्लेषः संघातः; शरीरे वायोस्तथा संश्लेषाभावात्, वह्निव्याप्ते चायःपिण्डे समापीतजले वायुसंयुक्ते च भोगप्रसङ्गात्। तस्मान्नास्ति भोगनिमित्तः संघात इति॥

एवं तर्ह्येकस्यैव भूतस्य भोग इत्याह—**अस्त्वेकस्य तर्हि नियत इति**॥ रूप-रस-गन्ध-स्पर्शेषु भोग्येषु कठिनमृदुपाकचलनगुणवति भूतसंघाते च भोगान्वयिनि परिदृश्यमाने कस्यैकस्य भोग इत्यनवधारितो भोगः स्यादिति दूषयति—**न तत्रापीति**॥ ननु यस्य कस्यचिद् भोगः स्यात्, तावतैव शरीरव्यतिरिक्तभोक्तुरभावो विवक्षितः सिद्ध इत्याह—**किमवधारणेनेति**॥

### तत्त्वदीपनम्

पृथिव्यप्तेजोवायवश्चत्वारि तत्त्वानीति लौकायतिकैनाङ्गीक्रियते, ततस्तदतिरिक्तावयव्यङ्गीकरणे सिद्धान्तक्षतिरित्यर्थः। द्वितीयेऽपि किं संघातस्य भूतान्तर्भावः ? उत भूतानां संघातः ? इति विकल्पाद्यं दूषयति—**अभेद इति**॥ द्वितीये भूतासिद्धिरिति द्रष्टव्यम्। तृतीयं प्रत्याह—**भेदाभेदेति**॥ भूतेभ्यो भिन्नोऽवयवी, नच संख्यातिरेकः; स्वतन्त्रत्वानङ्गीकृतेः, इति शङ्कते—**ननु स्वतन्त्रमिति**॥ गुणादय "आदि"शब्दार्थः। अस्मिन् पक्षे भूतात्मवादप्रसङ्ग इत्याह—**तर्हीति**॥ भूततन्त्रावयविभोक्तृत्वमेव भूतभोक्तृत्वम्, इति न सिद्धान्तक्षतिरित्याशङ्क्याह—**तत्रेति**॥ अवयविन आत्मत्वे भूततन्त्रत्वं न स्यात्, इतरथाऽऽत्मत्वानुपपत्तिरिति संख्यातिरेकस्तदवस्थ इत्यर्थः। पारतन्त्र्यं किमन्यतया प्रतीयमानत्वम् ? उतान्यारभ्यत्वम् ? इति विकल्पाद्यं प्रत्याह—**जलादेरिति**॥ द्वितीये पृथिव्या जलारभ्यतया न्यूनतापत्तिरिति द्रष्टव्यम्। तृतीयं दूषयति—**नचेति**॥ एकमिदं द्रव्यमिति बुद्धि प्रत्यालम्बनयोग्यत्वं न संघात इत्यर्थः। बुद्धिशब्देन किं प्रमाणज्ञानं विवक्षितम् ? उतेतरत् ? नाद्य इत्याह—**अर्थेति**। **अर्थस्वभावेनेति**॥ परमार्थत इत्यर्थः। भूतानां वस्तुत ऐक्यायोगादेकमिदं द्रव्यमिति ज्ञानस्य प्रामाण्यं न घटत इत्यर्थः। द्वितीयं दूषयति—**अनेकेष्विति**॥ न वास्तवः संघातः स्यादिति शेषः। चतुर्थं प्रत्याह—**नचेति**। **एकार्थक्रियायमिति**॥ प्रमातृत्वादिक्रियायामित्यर्थः। क्रमेणैकार्थक्रियासाधनानि व्यावर्तयति—**युगपदिति**। काष्ठानलानिल-जलानां दहनहेतुतया तत्र चैतन्यभोगप्रसङ्ग इत्यर्थः। पञ्चमं निरस्यति—**नचेति**। अतिव्याप्तिश्चेत्याह—**वह्नीति**। भोगाभावेऽपि संघातसंभवान्न तन्निरसनमित्याशङ्क्याह—**तस्मादिति**॥ अप्रयोजकत्वमितरस्येत्यर्थः। चतुर्णां भूतानां भोक्तृत्वाविशेषेणैकस्य भोग इत्यनुपपन्नमित्याशङ्क्याह—**एवं तर्हीति**। किं चतुर्णां प्रत्येकमात्मत्वम् ? उतैकस्यैव ? इति विकल्पेऽन्त्योऽनूदित इति द्रष्टव्यम्। भूतविषयसन्निध्यनुरोधेन भोगव्यवस्थामाशङ्क्य, सर्वेषां विषयाणां भूतानां च सन्निधेर्न भोगव्यवस्थेत्याह—**रूपरसेति**। "**भोगान्वयिनी**"ति कथमुक्तम् ? भूतानां भोक्तृत्वादर्शनादिति चेत्, मैवम्; भोगान्वयित्वेनाभिमत इत्यर्थात्। विवक्षितार्थोपपत्तेरित्यत्र कोऽसौ विवक्षितार्थः ? इति न ज्ञायते, तत्राह—**ननु यस्येति**। अनिर्धारितविशेषस्यैकस्य भोक्तृत्वशङ्कायां तन्निरसनं विहाय समेषु गुणभावानुपपत्तिप्रदर्शनं कस्मात् ? ततः परिहाराभासः, इत्याशङ्क्याह—

### ऋजुविवरणम्

भोगस्तस्येत्यवधारणसिद्धेरित्याशङ्क्यावतारयति—**रूप-रस-गन्ध-स्पर्शेष्विति**॥ "यद्येवमि"त्यादिना समत्वेन गुणभावानुपपत्तेः कार्यात्मकेषु भोक्तृत्वं नास्तीत्युक्तम्, तदप्रस्तुतम्; एकस्य भूतस्यानिर्धारितस्य भोक्तृत्वमिति चोद्यस्यापरिहृतत्वात्, तत्परिहारेण विना प्रकृतोपसंहारायोगान्नायं परिहार इत्याशङ्क्यापाद्यैतदुक्तमित्याह—**चतुर्णां भोगान्वयेति**।

### पञ्चपादिका

**विवक्षितार्थोपपत्तेः ? यद्येवम्, समेषु केषाञ्चिद्गुणभावानुपपत्तेरयुक्तः कार्यात्मकेषु। एवं करणात्मकेष्वपि समानश्चर्चः; भूतस्वाभाव्याविशेषात्। तथोभयात्मके समूहे। तस्माद् देहादिव्यतिरिक्तमहंप्रत्ययविषयं मन्यन्ते ॥**

### पञ्चपादिकाविवरणम्

परिहरति--**यद्येवमिति** ।। चतुर्णां भोगान्वयदर्शनाद् विशेषनिर्धारणाभावाच्चतुर्षु भोक्तृषु संघातानुपपत्तेरयुक्तं शरीरात्मकेषु भूतेषु भोक्तृत्वमिति। इन्द्रियाण्येव भूतात्मकान्यात्मेति लोकायतभेदः, तत्रोक्तं दूषणजातमतिदिशति--**एवं करणात्मकेष्वपीति** ।। यद्येकैकभूतारब्धान्येकैकेन्द्रियाणि, तत्र प्रत्यभिज्ञानाभावादयो दोषाः । यदि भूतचतुष्टयारब्धमेकैकेन्द्रियम्, तदा संघातानुपपत्त्यादयो दोषाः, इति कार्य-करणात्मकः संघातो भोक्तेत्यन्ये लोकायतिकाः, तत्राह--**तथोभयात्मक इति** ।। प्रत्यभिज्ञासंघातानुपपत्तेरिति ।।

ननु कानीन्द्रियाणि नाम ? गोलकमात्राणीति सुगताः; तच्छक्तय इति मीमांसकाः; तद्व्यतिरिक्तानि द्रव्यान्तराणीत्यन्ये सर्वे। न तावद्गोलकमात्रम्; सर्पादीनां तद्विरहिणामपि शब्दाद्युपलब्धेः, "शरीरजैः कर्मदोषैर्याति स्थावरतां नरः"। "तस्मात्पश्यन्ति पादपाः[1]" इत्यादिशास्त्राद् वृक्षादीनां गोलकविरहिणां कर्मफलभोगस्थानावगमेन शब्दाद्युपलब्ध्यभ्युपगमात्, वृक्षादिहिंसाप्रतिषेधाच्च प्राणित्वावगमात् । अत एव च तच्छक्तयः; शक्तिमद्द्रव्यान्तरकल्पनाल्लघीयः प्रतिपन्नस्थानेषु शक्तिकल्पनमिति चेत्, तर्ह्यात्मन एव सर्वज्ञानसामर्थ्यं क्रमकारि कल्प्यताम्; सर्वगत-

### तत्त्वदीपनम्

**परिहरतीति** । सम्यक्परिहारमेवाह—**चतुर्णामिति** ।। तत्रैकस्य प्राधान्यम्, इतरेषां तु सहकारित्वम्' ततश्चतुर्णां भोगान्वयदर्शनं युक्तमित्याशङ्क्याह—**विशेषेति** ।। एकस्य प्राधान्यम्, इतरेषां गुणत्वम्, इत्यत्र नियामकाभावादित्यर्थः। अतिदिष्टं न्यायं स्पष्टयति—**यद्येकेति** ।। व्यस्तानां समस्तानां च भोगासंभव "आदि"शब्दार्थः। **संघातानुपपत्त्यादय इति** ।। अत्रारम्भकभूतसंसर्गस्य क्रमभोगादेश्चासंभवानुपपत्तिरित्य"ादि"शब्दार्थः। इन्द्रियाणामात्मत्वनिरासप्रसङ्गेनेन्द्रियस्वरूपं निरूपयितुं प्रश्नमुत्थापयति—**ननु कानीति**। इन्द्रियाणां प्रसिद्धतया प्रश्नानवसरमाशङ्क्य विप्रतिपत्तेः संदेहादस्त्यवसर इत्याह—**गोलकेति** ।। मात्राचाऽधिष्ठात्रिन्द्रियं व्यावर्त्यते । "तद्व्यतिरिक्तानी"त्यत्र गोलक-शक्तिः तच्छब्दार्थः । गोलक-तच्छक्तिव्यतिरिक्तमिन्द्रियमिति वक्तुमाद्यं पक्षं दूषयति—**न तावदिति** ।। वृक्षादि"रादि"शब्दार्थः।

इतोऽपि न गोलक-मात्रमिन्द्रियमित्याह—**शरीरजैरिति** ।। "स्थावरतां नरः" इत्येतस्माच्छास्त्रात् कर्मफलभोगस्थानतावगमेन वृक्षादीनां शब्दाद्युपलब्ध्यभ्युपगमान्न गोलकमात्रमिन्द्रियमिति निश्चीयते। "तस्मात् पश्यन्ती"त्यादेस्तु साक्षात् तेषां शब्दाद्युपलब्धृत्वमुपगतमिति विभागः। ननु प्राणवतां सुखादिभोगाद् वृक्षादीनां च तद्विधुरत्वात् कथं भोगः ? इत्याशङ्क्याह—**वृक्षादीति** ।। द्वितीयं निरस्यति—**अत एवेति** ।। शक्तिमतां गोलकानां वृक्षेष्वभावात् तच्छक्तीनामपि नेन्द्रियत्वमित्यर्थः। गोलके तच्छक्तेरिन्द्रियत्वं प्रतिषेधता शक्तिमद् द्रव्यान्तरमिन्द्रियमित्युपन्यस्तमिति मत्वा शङ्कते—**शक्तिमदिति** ।। शक्तिः शक्तिमच्चेति द्वितयं कल्प्यं तव, अस्माकं तु शक्तिरेव, इति लाघवात् शक्तीनामिन्द्रियत्वमित्यर्थः। लाघवानुरोधेन शक्तीनामिन्द्रियत्वकल्पनायामतिप्रसङ्ग इत्याह—**तर्हीति** ।। वृक्षादिषु गोलकं तच्छक्तिश्चेति द्वयं कल्प्यम्, अन्यत्र तु संप्रतिपन्नात्मनि सामर्थ्यमात्रं कल्प्यमिति लाघवमित्यर्थः ।।

तर्हि युगपद् ज्ञानोदयः स्यादिति शङ्कां निरस्यति—**क्रमेति** ।। तर्ह्यात्मनः सर्वगतत्वात् सर्वत्र ज्ञानजनिः

### ऋजुविवरणम्

ननु--सर्वकारकाणां क्रियान्वयेऽपि नैकरूपत्वम्, एवमत्राप्येकस्यैव भोक्तृत्वम्, नेतरेषामित्याशङ्क्याह--**विशेषनिर्धारणाभावादिति**। सति भोगान्वये विशेषानिर्धारणे च सर्वेषामेव भोक्तृत्वं भवेदिति भावः ।। "एवं करणात्मकेष्वपी"ति कथमतिदेशः कृतः ? तत्र व्यस्त-समस्तविकल्पादिना सङ्घातानुपपत्त्यादयो दोषा उक्ताः, न तेषामत्रावसरः; एकैकस्यैव भोक्तृत्वे विकल्पदूषणानवतारात्, इत्याशङ्क्य विविच्य दर्शयति--**यद्येकैकभूतारब्धानीति**। आरम्भकभेदादिति भावः। **सङ्घातानुपपत्त्यादय इति** ।। आरम्भकभूतसंसर्गो न भवेदित्यर्थः। "आदि"शब्देन क्रमभेदादिपरिग्रहः ।। प्रसङ्गात् स्वतन्त्रोपयोगादिन्द्रियस्वरूपनिरूणार्थमाह--**ननु कानीन्द्रियाणीति**। गोलकाभावादेव तच्छक्तित्वमपि न सम्भवतीत्याह-- **अत एव न तच्छक्तय इति** ।। ननु--आत्मशक्तित्वे सर्वगतत्वादात्मनः सर्वप्रदेशे ज्ञानं भवेत्, ततश्च गोलकान्वयव्यतिरेक-

१. म. भा. १२।

### पञ्चपादिकाविवरणम्

स्याप्यात्मनः शरीरप्रदेशे ज्ञानपरिणामवद्गोलकप्रदेशेषु ज्ञानपरिणामात्, गोलकानां ज्ञानान्वयव्यतिरेकोपपत्तेः, अनिन्द्रियत्वेऽपि शरीरवत्। सन्तु तर्हीन्द्रियाणि गोलकव्यतिरिक्तानि शक्तिमन्ति द्रव्याणि स्थानविशेषसम्बन्धाच्चक्षुरादिशब्दवाच्यानि, न; तेषु प्रमाणाभावात्। रूपाद्युपलब्धय एव कर्तृव्यापाराःकरणानुमाने लिङ्गमिति चेत्, न; स्वव्यापारकर्तृषु करणेषु करणान्तराभावादनैकान्तिकत्वात्, करणविषये च तत्प्रेरणालक्षणे कर्तृव्यापारे करणान्तराभावात्। "सर्वे प्राणा अनूत्क्रामन्ती"त्यागमगम्यानीन्द्रियाणीति चेत्, न; आगमसंस्कारविरहिणामपीन्द्रियप्रतिपत्तेः। नच मनोवत्साक्षिवेद्यानीन्द्रियाणि; कार्यभावाभावव्यतिरेकेणेन्द्रियभावाभावानवगमात्। तस्मान्न सन्तीन्द्रियाणि।

उच्यते—आगमावगमात्प्राक् स्थानविशेषेषु चक्षुरादीन्द्रियव्यवहारः प्रवर्तते, मण्डलादिष्वादित्यादिव्यवहारवत्, आगमावगतौ तु स्थानविशेषाधिष्ठातृणि चक्षुरादीन्द्रियाण्यादित्यादिदेवतात्मवदित्यवगम्यते। तानि पुनर्व्यतिरिक्तान्यप्याहङ्कारिकाणीति सांख्याः, तदयुक्तम्; प्रमाणाभावात्। न तावदध्यात्माहङ्कारजन्यानीन्द्रियाणीत्यन्वय-व्यतिरेकावागमो वा दृश्यते। नच कृत्स्नकार्यव्यापी भूतेन्द्रियाणां प्रकृतिः कश्चिदहङ्कारो विद्यते; मानाभावात्। आप्तवचनं मानमिति चेत्, न; अतीन्द्रियत्वात्। ननु पुराणवाक्यान्येव सन्ति, सत्यम् "अन्नमयं हि सौम्य मनः"

### तत्त्वदीपनम्

स्यात्, तथा गोलकान्वय-व्यतिरेकविरोधश्चेत्याशङ्क्याह—**सर्वगतस्येति**॥ शक्तिमद् द्रव्यान्तरमिन्द्रियमिति मतमुत्थापयति—**सन्त्विति**॥ द्रव्यान्तरत्वे 'इदं मम चक्षुरि'त्यादिव्यवहारः कथम्? इत्याशङ्क्याह—**स्थानेति**॥ किमनुमानं तत्र प्रमाणम्? उभयथाप्यसंभव इत्याह—**न तेष्विति**॥

रूपाद्युपलब्धिः, करणपूर्विका, कर्तृव्यापारत्वात्; संमतवदित्यनुमानस्य प्रमाणत्वाद् असिद्धो हेतुरिति शङ्कते—**रूपादीति**॥ करणव्यारव्यावृत्त्यर्थं कर्तृविशेषणम्। किं कर्तृव्यापारत्वमात्रं हेतुः? उत प्रधानकर्तृव्यापारत्वम्? इति विकल्प्याऽऽद्यं दूषयति—**न स्वव्यापारेति**॥ द्वितीयं प्रत्याह—**करणेति**॥ नच—करणप्रेरणे स्वप्रयत्नः करणमिति—शङ्क्यम्; प्रयत्ने व्यभिचारात्। नच तत्रापि मनः करणम्; मनःप्रेरणे करणान्तरभावाभावाभ्यामुक्तदोषानिस्तारादित्यर्थः। द्रव्यान्तरास्तित्व आगमः प्रमाणमिति शङ्कते—**सर्वे प्राणा इति**॥ इन्द्रियाणां गोलकतच्छक्तित्वे शरीरेण सह गमनं न स्यात्, अस्ति च सह गमनम्, तस्मादतिरिक्तेन्द्रियसिद्धिरित्यर्थः। प्राकृतानामपीन्द्रियप्रतिपत्तेर्नागमगम्यत्वमित्याह—**नागमेति**॥ आगमजनितार्थज्ञानसंस्कारविधुराणामित्यर्थः॥

साक्षिप्रत्यक्षमिन्द्रियास्तित्वे प्रमाणमित्याशङ्क्याह—**नच मनोवदिति**॥ रूपाद्युपलब्धिसत्त्वासत्त्वाभ्यां विना न साक्षिप्रासादादेवेन्द्रियसत्त्वादिसिद्धिरित्यर्थः। कार्यभावाभावौ विहाय नेन्द्रियभावाभावौ प्रतीम इत्यर्थः। "तमुत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ती" त्यागमाद् इन्द्रियसिद्धिरिति सिद्धान्तयति—**उच्यत इति**॥ आगमपरिचयविधुराणामपीद्रियप्रतिपत्तेर्न तद्गम्यत्वमिति यत्तूक्तम्, तत्राह—**आगमेति**॥ कथं तर्ह्यतिरिक्तेन्द्रियसिद्धिः? तत्राह—**आगमेति**। इन्द्रियस्वरूपं प्रसाध्य तत्प्रकृतिविशेषनिरूपणायोपक्रमते—**तानि पुनरिति**॥ किमिन्द्रियाणामाध्यात्मिकादहंकाराद् जन्म? उताधिदैविकात्? उभयथाऽप्यनुपपत्तिरित्याह—**तदयुक्तमिति, प्रमाणाभावादिति च**॥ तत्र वक्तव्यम्—किमाध्यात्मिकाहंकाराज्जन्यत्वेऽन्वयव्यतिरेकौ प्रमाणम्? उतागमवचनम्? नोभयथाऽपीत्याह—**न तावदिति**॥ आधिदैविकाहङ्कारजन्यत्वमपि मानमित्याह—**नच कृत्स्नेति**॥ मानाभावोऽसिद्ध इति शङ्कते—**आप्तवचनमिति**॥ मानान्तरेणार्थमुपलभ्य तत्र शब्दं विरचयन्नाप्त इत्युच्यते, नचात्र मानमस्ति। किं तत्प्रत्यक्षम्? उतान्यत्? नाद्य इत्याह—**नातीन्द्रियत्वादिति**॥ द्वितीयेऽपि किं तदनुमानम्? उत पुराणवचनम्? नाद्यः; व्याप्तलिङ्गानिरूपणादित्यभिप्रेत्य द्वितीयमुत्थापयति—**ननु पुराणेति**॥

"त्रिविधोऽयमहङ्कारो महत्तत्त्वादजायत। इन्द्रियाणां ततः सृष्टिर्गुणद्वारा महामुने॥"

इत्यादिपुराणवचनानि द्रष्टव्यानि। पुराणवचनसत्त्वमङ्गीकरोति—**सत्यमिति**॥ तर्हि तत एवार्थसिद्धि-

### ऋजुविवरणम्

विरोधाद् गोलकशक्तित्वमित्याशङ्क्याह—**सर्वगतस्यात्मन इति**। **रूपाद्युपलब्धय इति**॥ रूपाद्युपलब्धयो धर्मिण्यः, करणसाध्या इति साध्यो धर्मः, कर्तृव्यापारत्वादिति हेतुः, व्यापारमात्रे हेतौ करणव्यापारेऽनैकान्तिकता, तदर्थम्—**कर्तृव्यापारेति**॥ ननु—सर्वकारकोपसंहर्तृत्वलक्षणं यस्य कर्तृत्वम्, तद्व्यापारत्वं हेतुः, अतो नानैकान्तिकः, व्यापारशून्यत्वात् करणादीनामित्याशङ्क्याह—**करणविषये च तत्प्रेरणेति**॥ ननु—कथमसिद्धता? द्रव्यत्वेन परिमाणे निश्चिते

## पञ्चपादिकाविवरणम्

इत्यादिभूतविकारार्थे मयट्श्रुतिविरोधादहङ्काराधीनतामात्रमिन्द्रियाणां तत्र कथ्यत इति न विरोधः ॥

भौतिकानीन्द्रियाणीति वैशेषिकादयः, तदप्ययुक्तम्; मानाभावात्। भौतिकानि, इन्द्रियाणि, मध्यमपरिमाणत्वेन सावयवत्वात्; घटादिवत्, इति चेत्, न; हेतोरसिद्धत्वात्, अणुपरिमाणत्वोपपत्तेरिन्द्रियाणाम्। तर्ह्यणुपरिमाण एव विषयावभासः स्यात्? न; अणुपरिमाणेनापि मनसा विस्तृतात्मादिवस्तुदर्शनात्। ननु भौतिकानि, इन्द्रियाणि, रूप-रस-गन्ध-स्पर्शानां नियमेनाभिव्यञ्जकत्वात्; प्रदीपास्योदक-हिङ्ग्वादिद्रव्य-व्यजनवायुवत्, इत्यनुमानान्तरेण प्रत्येकभूतारब्धानि प्रत्येकेन्द्रियाण्यनुमीयन्त इति, न; शब्दाभिव्यञ्जके श्रोत्रे शब्दगुणवदाकाशानारब्धेऽनैकान्तिकत्वात्, कर्णशष्कुल्यवच्छिन्नाकाशमात्रस्य श्रोत्रत्वाभ्युपगमादनारब्धत्वात्। मनसश्च भूतचतुष्टयारब्धत्वप्रसङ्गः; तदभिव्यञ्जकत्वात्। आत्माकाशादीनामपि साधारणत्वान्मनसो न भूतारभ्यत्वमिति चेत्, संख्या-परिमाण-संयोग-विभाग-जाति-विशेष-समवायादीनामपि साधारणत्वादिन्द्रियाणां न भूतारभ्यत्वसिद्धिः। असाधारणविषयारभ्याणीन्द्रियाणीति चेत्, तर्ह्यात्मारम्भ्यं मनः स्यात्; असाधारणविषयत्वात्। एकद्रव्यारब्धं न द्रव्यमिति चेत्, न; सावयवमनेक-

## तत्त्वदीपनम्

रित्याशङ्क्य, प्रत्यक्षश्रुतिविरोधान्नैवमित्याह—**अन्नमयं हीति** ॥ **तर्हीति**। तर्हि स्मृतीनां हेयत्वम्, नेत्याह—**अहङ्कारेति** ॥ सांख्यमतं निराकृत्य कणभुगादिमतमुत्थापयति—**भौतिकानीति** ॥ दूषयति—**तदपीति** ॥ हेत्वसिद्धिं शङ्कते—**भौतिकानीति** ॥ हेतुं समर्थयते—**मध्यमेति** ॥ मध्यमपरिमाणत्वमसिद्धमित्याह—**न हेतोरिति** ॥ द्रव्यत्वादिन्द्रियाणां परिमाणवत्त्वं तावत्सिद्धम्। तत्र च परिमाणान्तरानुपलब्ध्या तत्सिद्धिः? उतान्यथा? नान्त्यः; अनुपलब्धेः, नाग्रिमोऽपीत्याह—**अण्विति** ॥ महत्परिमाणत्वं तावदनुपपन्नम्; सर्वत्र कार्यदर्शनाभावात्। नच शरीरपरिमाणत्वम्; मनुष्यशरीरव्यापिनामिन्द्रियाणां पुत्तिकाशरीरे व्याप्त्यसंभवात्। तस्मादणुत्वमिन्द्रियाणामित्यर्थः ॥

इन्द्रियाणामणुत्वे विषयस्य साकल्येनावभासानुपपत्तेर्नाणुत्वमाश्रयणीयमित्याह—**तर्हीति** ॥ अन्यथाऽपि विषयावभासः साकल्येन संभवतीत्याह—**नाणुपरिमाणेति** ॥ भौतिकत्वे प्रमाणान्तरमाशङ्कते—**ननु भौतिकानीति** ॥ चक्षुः, तैजसम्, रूपादीनां मध्ये रूपस्यैवाभिव्यञ्जकत्वात्; प्रदीपवत्। रसनम्, आप्यम्, रसादीनां मध्ये रसस्येवाभिव्यञ्जकत्वात्, लालावत्, इत्येवं सर्वत्र प्रयोगो द्रष्टव्यः। स्पर्शनेन्द्रियव्यावृत्त्यर्थम्—"रूपस्ये"ति विशेषणम्। मनो व्यावर्तयितुम्—**"एव"ति**। असिद्धिपरिहारार्थम्—"रूपादीनामि"ति विशेषणम्। विपक्षबाधकतर्काभावादप्रयोजको हेतुरित्याह—**नेति**। तद्व्यञ्जकत्वानुपपत्तिर्बाध इत्याशङ्क्याह—**शब्देति**। श्रोत्रस्य ग्राह्यसजातीयविशेषगुणवद्द्रव्यारब्धत्वाभावेऽपि शब्दे व्यञ्जकत्वं यथा, तद्वदत्रापीत्यर्थः। श्रोत्रस्य आकाशानारब्धत्वं कथम्? अत्राह—**कर्णशष्कुलीति**। सजातीयानामनेकद्रव्याणामारम्भकत्वादाकाशस्य चैकद्रव्यत्वान्नारम्भकत्वमित्यर्थः। नियमेनाभिव्यञ्जकत्वं व्यञ्जकत्वात्यन्ताभावानधिकरणत्वमित्यादावतिप्रसक्तिमाह—**मनस इति** ॥ मनसः सर्वार्थग्राहकत्वाद् ग्राह्यसजातीयगुणवदारभ्यत्वप्रसङ्ग इत्यर्थः। मनः, न भूतचतुष्टयारब्धम्, साधारणकारणत्वात्; अदृष्टवत्, इति शङ्कते—**आत्मेति**। अतिप्रसङ्गपराहतो हेतुरित्याह—**संख्येति**। यस्य योऽसाधारणो विषयः, स तदारभ्यः, इत्यभ्युपगमाद् भूतचतुष्टयस्य च साधारणविषयत्वान्न तदारभ्यत्वं मनस इति शङ्कते—**असाधारणेति**। आत्मनो बाह्येन्द्रियाग्राह्यतयाऽसाधारणविषयत्वात्, तदारभ्यत्वं मनसः स्यादित्याह—**तर्हीति**। आत्मा, न द्रव्यारम्भकः, एकद्रव्यत्वाद्, गगनवदिति शङ्कते—**एकेति** ॥ सजातीयानां बहूनां तन्तूनां पटारम्भकत्वं दृष्टम्, आत्मनश्चैकद्रव्यत्वान्नारम्भकत्वमित्यर्थः। पटस्य सावयवतयाऽनेकद्रव्यारभ्यत्वेऽपि मनसो निरवयवत्वादात्मारभ्यत्वं स्यात्, गगनस्य संदिग्धसाध्यतया न दृष्टान्तत्वं चेत्याशयेनाह—**न सावयवमिति** ॥ ननु—मनसोऽकार्यत्वात् कथमारब्धत्वम्? नच हेत्वसिद्धिः; मनः, अकार्यम्, निरवयवद्रव्यत्वात्, आत्मवदिति—चेत्, मैवम्;

## ऋजुविवरणम्

परिमाणान्तरायोगान्मध्यमपरिमाणमित्याशङ्क्याह—**अणुपरिमाणत्वोपपत्तेरिति** ॥ सर्वभूतारभ्यत्वे स्वसिद्धान्तविरोधः, साध्यविकलत्वमनैकान्तिकत्वञ्च, तन्निवृत्त्यर्थमाह—**प्रत्येकभूतारब्धानीति** ॥ एवं प्रयोगः—घ्राणं धर्मि पार्थिवमिति साध्यम्, नियमेन गन्धस्याभिव्यञ्जकत्वात्; हिङ्गुवदिति। एवमितरत्रापि भवतु—श्रोत्रम्, शब्दगुणवदाकाशारभ्यमित्याशङ्क्याह—**कर्णशष्कुल्यवच्छिन्नेति** ॥ स्पर्शन-रसन-घ्राणानामेव प्राप्यकारित्वदर्शनान्न तत् चक्षुः-श्रोत्रयोरित्या-

## पञ्चपादिकाविवरणम्

द्रव्यारभ्यमित्येतावत्, निरवयवं तु मनो निरवयवात्मारभ्यं किं न स्यात् ? तस्मादागमादेव भौतिकत्वसिद्धिः ॥

तानि सर्वंगतानीति योगाः प्रतिपेदिरे, तदपि मानहीनम्। आत्मेन्द्रिय-मनांसि, सर्वंगतानि, सर्वत्रदृष्टकार्यत्वादाकाशवदिति चेत्, न; हेतोरसिद्धत्वात्। यत्र शरीरम्, तत्र सर्वत्र दृष्टकार्यत्वादिति चेत्, शरीरेऽनेकान्तः। परोपाधिगमनत्वादाकाशवदिति चेत्, न; शरीरावयवानामपि परोपाधिगमनात्, सर्वंगतत्वे च युगपत् सर्वविषयोपलब्धिश्च स्यात्। शरीर एव वृत्तिलाभान्नेति चेन्, तर्हि बहिरिन्द्रियसद्भावकल्पना न प्रमाणप्रयोजनवती ॥

तान्यप्राप्यकारीणीति सुगताः, तदयुक्तम्; दूरत एव स्पर्श-रस-गन्धोपलब्धिप्रसङ्गात्। योग्यदेशावस्थानमपेक्षितमिति चेन्, न; इन्द्रियदेशप्राप्तिव्यतिरेकेण योग्यदेशानिरूपणात्। स्पर्शन-रसन-घ्राणेन्द्रियवत् चक्षुःश्रोत्रयोरपि प्राप्यकारित्वमनुमीयते, तेजसश्चातिदूरशीघ्रगमनदर्शनाच्चक्षुषो ध्रुवादिप्राप्तिरविरुद्धा। शब्दस्य च दूरदेशोपलब्धेर्न वीचीसन्तानवत् परम्परया श्रोत्रसमवायः। तस्माद् भौतिकानि परिच्छिन्नानि प्राप्यकारीणीन्द्रियाणीति सिद्धम् ॥

## तत्त्वदीपनम्

गुणवत्त्वादिलक्षणस्य द्रव्यत्वस्यात्मन्यभावाद् दृष्टान्तस्य साधनविकलत्वम्, विशेषणासिद्धिश्चेति द्रष्टव्यम्। इन्द्रियाणां भौतिकत्वनिरसनं सिद्धान्तविरुद्धमित्याशङ्क्य, तत्र प्रमाणविशेषं निराकुर्महे, न भौतिकत्वमित्याह—**तस्मादिति** ॥ अत्र द्वितीयः कल्पोऽङ्गीकृतो मन्तव्यः ॥ एवं कारणविप्रतिपत्तिं निराकृत्य परिमाणविप्रतिपत्तिं निराकर्तुं पूर्वपक्षमाह—**तानीति**। मानाभावेन दूषयति—**तदपीति**। असिद्धो हेतुरित्याह—**आत्मेति**। यद्यप्यत्रेन्द्रियाणां सर्वगतत्वं साध्यते; तथाऽप्यात्मादौ व्यभिचारशङ्कानिरासार्थं तस्यापि पक्षत्वं निर्दिष्टमित्यर्थः। घटादिव्यावृत्त्यर्थं सर्वत्रेति विशेषणम्। किं सर्वत्र दृष्टकार्यत्वं हेतुः ? उत यत्र शरीरे तत्र ? इति विकल्प्याद्यं दूषयति। **न हेतोरिति** ॥ द्वितीयमनुवदति—**यत्रेति** ॥ यस्मिन् देशे शरीरं विद्यते, तस्मिन् देशे तस्य शरीरस्य स्वोचितकार्यकारित्वात् तत्र व्यभिचार इत्याह—**शरीर इति** ॥ हेत्वन्तरमाशङ्कते—**परोपाधीति**। व्यभिचारेण दूषयति—**न शरीरेति**। अवयवगमनमवयविगमनाधीनम्। न चावयवानां सर्वंगतत्वम्, इति तत्र व्यभिचार इत्यर्थः ॥

इन्द्रियव्यापित्ववादिना चेदमालोचनीयम्—किमिन्द्रियाणां कार्यजननयोग्यत्वं शरीरादन्यत्रापि ? उत शरीर एव ? आद्येऽतिप्रसङ्गबाधमाह—**सर्वगतत्व इति** ॥ द्वितीयमुत्थापयति—**शरीर एवेति** ॥ कार्यजननयोग्यत्वं वृत्तिलाभशब्दार्थः। रूपाद्युपलब्धेरिन्द्रियाणि कल्प्यन्ते, सा शरीरावच्छिन्नेन्द्रियेषु, इत्यन्यत्र तत्सत्त्वकल्पकाभावान्न तदित्याह—**तर्हीति** ॥ रूपादिदर्शनाख्यप्रयोजनशून्यत्वात् प्रमाणशून्यत्वमित्यर्थः। इन्द्रियाणां परिच्छिन्नत्वमङ्गीकृत्य केचिदप्राप्यकारित्वमाचक्षते, तदनुवदति—**तान्यप्राप्येति** ॥ विषयदेशमप्राप्य शरीरदेश एव स्थितानां कार्यकरत्वमित्यक्षरार्थः। अप्राप्यकारित्वेऽतिप्रसङ्ग इत्याह—**तदयुक्तमिति** ॥ सहकार्यभावान्नातिप्रसङ्ग इति शङ्कते—**योग्येति** ॥ किमिन्द्रियेण संसर्गयोग्यदेशावस्थानं सहकारि ? आहो अन्यत् ? इति विकल्प्याद्ये मदिष्टसिद्धिरित्यभिप्रेत्य द्वितीयं दूषयति—**नेन्द्रियेति** ॥ स्पर्शनादीनां प्राप्यकारित्वेऽपि न चक्षुश्श्रोत्रयोः प्राप्यकारित्वम्; अदर्शनात्, इत्याशङ्क्याह—**स्पर्शनेति** ॥ चक्षुः-श्रोत्रे, प्राप्यकारिणी, बहिरिन्द्रियत्वात्; स्पर्शादिवदित्यर्थः। योजनशताद्यन्तरितस्यापि ध्रुवादेर्नयनसमुन्मीलनमात्रादुपलम्भान्न प्राप्यकारित्वं चक्षुष इत्याशङ्क्याह—**तेजस इति** ॥ सहस्रांशोरुदयाद्यभ्युपगममात्रेण तत्किरणानां सकलावनितलव्याप्तिवच्चक्षुषोऽपि तेजस्त्वाद् झटिति दूरवर्तिदर्शनं युक्तमित्यर्थः। दण्ड-भेरीसंयोगाद् गगनसमवायी कश्चिच्छब्दः संजायते, स चासमवायिकारणतया शब्दान्तरमारभते, एवं सोऽपि इति परम्परया श्रोत्रपथमवतीर्णस्य शब्दस्य श्रोत्रेणोपलम्भ इति तार्किकप्रक्रियां निरस्यति—**शब्दस्येति** ॥ 'तत्र शब्दः' इति प्रत्ययाद् 'अत्र शब्दः' इति प्रत्ययाभावाच्च नायं पक्षः साधुः। दूरदेशाभिव्यक्तस्य शब्दस्याभिव्यञ्जकवायुभिः स्तिमितवायुनिरासे श्रोत्रेऽप्यभिव्यक्तिरित्यर्थः। बाह्येन्द्रियनिरूपणमुपसंहरति—**तस्मादिति** ॥

## ऋजुविवरणम्

शङ्क्याह—**स्पर्शनरसन-घ्राणेन्द्रियवदिति** ॥ ननु अर्थस्येन्द्रियदेशप्राप्तिः, इन्द्रियस्य तु तद्देशगमनं न सम्भवति; विलम्बापत्तेः, नहि युगपद् ज्ञानं व्यवहिते स्यादित्याशङ्क्याह—**तेजसश्चातिदूरेति** ॥ शब्दस्य तु वीचीसन्तानन्यायेन श्रोत्रदेशागमनमिति वैशेषिकादयः, तान्निराकरोति—**शब्दस्य दूरदेशेति** ॥ अभिव्यञ्जकवायुभिः स्तिमितवायुनिरासेन श्रोत्रपर्यन्तमभिव्यक्त्येति

## पञ्चपादिकाविवरणम्

किं तर्हि मनो नाम ? नित्यं निरवयवमणुपरिमाणामिति वैशेषिकादयः संगिरन्ते । न तावन्नित्यम्; परिच्छिन्नत्वात् । निरवयवद्रव्यत्वादात्मवन्नित्यमिति चेत्, न; करणत्वेनेन्द्रियवत् सावयवत्वानुमानात्, अन्नमयत्वश्रुतेश्च । मूर्तद्रव्यनभिघातान्निरवयवमिति चेत्, न; मनसो बहिर्निर्गमनाभावात् । उत्क्रान्तिरिन्द्रियाणामपि समाना । संयोग-विभागवत्त्वान्न घटादिवदणुपरिमाणता । सर्वगतत्वे च युगपत् सर्वेन्द्रियसंयोगात् सर्वज्ञानप्रसङ्गः । मध्यमपरिमाणत्वेन सावयवत्वेऽवयवोपचयापचयसम्भवान्न स्थूल-सूक्ष्मदेहप्रतिपत्तिविरोधः । समनन्तरप्रत्यय एवोत्तरज्ञानकारणतया मन इति शाक्याः प्रतिपेदिरे, तन्न; ज्ञानस्य ज्ञानान्तरहेतुत्वे व्याप्तिसापेक्षत्वात् । शाब्दज्ञानमपि व्याप्तिजन्यमिति ते मतम् ।

## तत्त्वदीपनम्

मनस्यपि विप्रतिपत्तेर्दर्शनात्पृच्छति—**किं तर्हीति** ।। मनः, नित्यम्, भावत्वे सति कारणशून्यत्वात्; आत्मवत्, मनः, निरवयवम्, मूर्त्तेनाप्रतिबध्यमानत्वात्; गगनवत्, मनसो मध्यमपरिमाणत्वे स्थूल-सूक्ष्मशरीरयोर-विशेषेण वृत्तिर्न स्यात्, सर्वगतत्वे युगपद् ज्ञानोत्पादः स्यात्, तस्मादण्वित्यर्थः । तत्र नित्यत्वं तावदयुक्तमित्याह—**न तावदिति** ।। मनः, अनित्यम्, परिच्छिन्नत्वात्; घटादिवद् । नच परमाणुषु व्यभिचारः; तदसंप्रतिपत्तेः । नच—मनः, विभु, सर्वदा स्पर्शरहितद्रव्यत्वात्; कालवत्, इत्यनुमानादपरिच्छिन्नत्वसिद्धिरित्यपि—शङ्क्यम्; तमसि व्यभिचारा-दित्यर्थः । अनित्यत्वानुमानस्य प्रत्यनुमानविरोधं शङ्कते—**निरवयवेति** ।। घटादिव्यावृत्त्यर्थं "निरवयवेति" विशेषणम् । गुणादिव्यावृत्त्यर्थम्—"द्रव्यत्वादिति" विशेषणम् । विशेषणासिद्धो हेतुरित्याह—**न करणत्वेनेति** ।। मनः, सावयवम्, द्रव्यत्वे सति करणत्वात्; नयनवत् । नच व्यर्थविशेषणत्वम्; नयनार्थसन्निकर्षव्यावृत्त्यर्थत्वात् । मनस्त्वम्, सावयववृत्ति, मूर्तवृत्तित्वात्; घटत्ववदित्यर्थः । नित्यत्वानित्यत्वग्राहकयोरनुमानयोः समबलत्वान्नानित्यत्वनिश्चय इत्याशङ्क्याह—**अन्नमयेति** ।। सावयवत्वसाधकानुमानस्य प्रत्यनुमानविरोधं शङ्कते—**मूर्तद्रव्येति** ।। मूर्तद्रव्येणाप्रतिबध्यमानत्वादित्यर्थः । अनभिघातोऽन्यथासिद्ध इत्याह—**मनस इति** ।। "सर्वे प्राणा अनूत्क्रामन्ती"त्यादिनेन्द्रियाणामुत्क्रान्तिश्रवणान्निर्गमना-भावोऽसिद्ध इत्याशङ्क्याह—**उत्क्रान्तिरिति** ।।

इन्द्रियाणामुत्क्रान्तावप्यनुपघातो यथा, तद्वद् मनस इत्यर्थः । अणुत्वमुक्तं निरस्यति—**संयोगेति** ।। मनः, नाणु, संयोगित्वविभागित्वात्; घटवदित्यर्थः । नच परमाणुषु व्यभिचारः; त्र्यणुकातिरिक्तपरमाण्वभावादित्यर्थः । सर्वगतत्वं निरस्यति—**सर्वगतत्व इति** ।। मध्यमपरिमाणत्वमनुपपन्नम्; पुत्तिकादिशरीरेषु मनसो वृत्त्यनुपपत्तेः, तत्राह—**मध्यमेति** ।। ज्ञानव्यतिरिक्तमनसोऽभावान्न तत्परिमाणचिन्तावसर इति शङ्कते—**समनन्तरेति** ।। अतीतानन्तर-प्रत्यय इत्यर्थः । विकल्पासहत्वान्नैतदित्याह—**तन्नेति** ।।

किं व्याप्तिमपेक्ष्य पूर्वप्रत्ययस्योत्तरोत्तरप्रत्ययजनकत्वम् ? उतानपेक्ष्य ? नाद्यः; तयोर्व्याप्त्यभावा-दित्यभिसन्धाय द्वितीयं दूषयति—**ज्ञानस्येति** ।। धूमाग्न्योर्व्याप्तौ सत्यां धूमज्ञानमग्निज्ञानजनकं दृष्टमित्यर्थः । ज्ञेयव्याप्तिं विनाऽपि शाब्दज्ञानस्यार्थज्ञानजनकत्वं दृष्टमित्याशङ्क्य, भवन्मते शब्दस्यानुमानान्तर्भावान्न व्यभिचार इत्याह—**शाब्देति** ।। व्याप्त्यभावेऽपि विशेषणज्ञानस्य विशिष्टज्ञानजनकत्वं दृष्टमित्याशङ्क्य, यत्रैकेन्द्रियग्राह्ययोर्विशेषण-विशेष्यभावः, तत्रेन्द्रियसन्निकर्षजं विशिष्टज्ञानमित्याह—**विशिष्टेति**।। 'सुरभि चन्दनमि'त्यादौ विशेषण-विशेष्ययोरे-केन्द्रियाग्राह्यत्वान्न विशिष्टज्ञानं संप्रयोगजन्यमिति चेत्, मैवम्; तत्र विशिष्टस्य साक्षिवेद्यत्वोपगमात्, विशेषणज्ञान-संस्कारसहितेन्द्रियसंप्रयोगाद्वा विशिष्टज्ञानजनिरित्यर्थः ।।

## ऋजुविवरणम्

भावः ।। ननु उत्क्रान्तिसमये मनसो निर्गमनमस्ति, नचाभिघातः, अतो निरवयमित्याङ्क्याह—**उत्क्रान्तिरिन्द्रियाणमिति** । **संयोगविभागवत्त्वादिति** ।। अयं प्रयोगः—मनो धर्मि, अणुपरिमाणं न भवतीति साध्यो धर्मः, संयोविभागवत्त्वादिति हेतुः । सर्वगतत्वं निराकरोति—**सर्वगतत्वे चेति** ।। ननु—मध्यमपरिमाणत्वे नियतपरिमाणवस्तूपलब्धिः स्यात, न त्वनियतवस्तुप्रतीतिरिति, तत्राह—**मध्यमपरिमाणत्वेनेति** ।। ननु—ज्ञानस्य ज्ञानान्तरहेतुत्वे कथं व्याप्तिसापेक्षत्वम् ? शाब्दज्ञाने व्यभिचारात्, तस्य शब्दज्ञानजन्यत्वादित्याशङ्क्याह—**शब्दज्ञानमपीति** ।। ननु—विशिष्टज्ञानम्, विशेषणज्ञान-जन्यम्, नच तत्र व्याप्तिरस्तीत्याशङ्क्याह—**विशिष्टज्ञानमपीति** ।। ननु—समनन्तरप्रत्ययस्य तज्जनकत्वं नास्ति, किन्त्वा-

## पञ्चपादिकाविवरणम्

विशिष्टज्ञानमपि संप्रयोगजन्यम्, न विशेषणज्ञानजन्यं समनन्तरप्रत्ययादुत्तरस्य ज्ञानाकारलाभ इति चेत्, न; वस्तुस्वभावस्यानन्याधीनत्वात् । तस्मात्सावयवमन्यदेव मन इति ॥

कश्चायमात्मा ? सर्वगतो जड इति केचित् । न तावत्सर्वत्र दृष्टकार्यत्वं सर्वगतत्वे हेतुरित्युक्तम् । व्यवहितदेशेऽदृष्टनिमित्तनृत्यादिक्रियारम्भात् तस्य चादृष्टवदात्मसंयोगापेक्षत्वात्सर्वगत इति चेत्, न; अत्र समवेतादृष्टस्य स्वर्गे भोगोदयाददृष्टवत्प्रदेशासंयोगात्, केवलात्मप्रदेशसंयोगस्य फलाहेतुत्वात् । तस्मादागमादेव सर्वगतत्वसिद्धिः । नच जाडचम्; स्वयंप्रकाशतावगमात् । प्रत्यक्षस्तावत्सुषुप्तेऽवभासः । अनुमानमपि—स्वयंप्रकाशः, अयमात्मा, स्वसत्तायां प्रकाशव्यतिरेकाभावात्, प्रदीपसंवेदनवत् । आत्मा, स्वयंप्रकाशः, विषयप्रकाशकर्तृत्वात्; प्रदीपवत् । तथा आत्मा स्वयंप्रकाशः, विषयप्रकाशाश्रयत्वात्; आलोकवत् । अजन्यप्रकाशगुणश्चात्मा, प्रकाशगुणत्वात्; आदित्यादिवत् । आत्मा,

## तत्त्वदीपनम्

समनन्तरप्रत्ययस्योत्तरज्ञानजनकत्वानभ्युपगमान्न व्याप्त्यपेक्षेति शङ्कते—**समनन्तरेति** ॥ अधिपतिसहकारि-समनन्तरप्रत्ययालम्बनप्रत्ययानुरोधाद् ज्ञानजन्मोपेयते, तत्र चक्षुर्लक्षणाधिपतिन्प्रययाद् ज्ञानस्वरूपं निष्पद्यते, आलोकलक्षणसहकारिप्रत्ययात् तत्स्पष्टता, आलम्बनप्रत्ययाद् घटाद्याकारता, पूर्वप्रत्ययाद् बोधाकारता जायत इत्यर्थः । ज्ञानमेवाकारो ज्ञानाकार इति विग्रहः । आकारस्याऽऽकार्यभिन्नत्वान्न तज्जनकातिरिक्तजन्यत्वमित्याह—**न वस्त्विति** ॥ शाक्य-वैशेषिकमतनिराकरणमुपसंहरति—**तस्मादिति** ॥ एवं हेयस्वरूपं निरूप्योपादेयरूपं निरूपयितुं विमृशति—**कश्चायमिति** ॥ किं सर्वगतो जड आत्मा; उत तद्विपरीतः ? इति विमर्शार्थः । पूर्वपक्षमाह—**सर्वगत इति** ॥ तत्र किमनुमानं मानम् ? उतार्थापत्तिः ? आहो आगमः ? नाद्य इत्याह—न तावदिति ॥ **उक्तमिति** ॥ हेतोरसिद्धत्वादित्यत्रेत्यर्थः । द्वितीयमुत्थापयति—**व्यवहितेति** ॥ अयमर्थः—परसमवेतनृत्यादिक्रिययाऽन्यत्र सुखं तावद् जायते । नचैतददृष्टानार्जितत्वे नृत्तक्रियाया एतत्सुखहेतुत्वम्; एतददृष्टजन्यत्वं चैतत्सम्बन्धं विनाऽनुपपन्नमिति । नापि विनाऽदृष्टवदात्मसंयोगादन्यत्र क्रियोत्पाद इत्यनुपपत्त्या सर्वगतत्वमिति । किं यस्मिन् प्रदेशेऽदृष्टं जायते, तत्प्रदेशवदात्मसंयोगस्य हेतुत्वम् ? उतात्ममात्रसंयोगस्य ? नाद्य इत्याह—**नात्रेति** ॥ मनुष्यदेहावच्छिन्नात्मदेश इत्यर्थः । अत्रादृष्टस्येत्यत्र फलत्वेनेत्यध्याहारः । अदृष्टवन्मनुष्यशरीरावच्छिन्नात्मप्रदेशसंसर्गाभावेऽपि मेरुपृष्ठे सुखजननेर्नानुपपत्त्या सर्वगतत्वमित्यर्थः । द्वितीयं प्रत्याह—**केवलेति** ॥ सर्वदा सर्वेषां सुखाद्युपभोगप्रसक्तेनैवमित्यर्थः । परिच्छिन्नत्वेऽनित्यत्वप्रसक्तेः सर्वगतत्वं त्वयाऽभ्युपेयमित्याशङ्क्य, नास्माभिः सर्वगतत्वं निन्हूयते, किंतु तत्प्रमाणविशेष इत्याशयेनाह—**तस्मादिति** ॥ "आकाशवत् सर्वगतश्च"त्यादिरागमः । जडत्वमुक्तम्, तदाक्षिपति—**नचेति** ॥ स्वप्रकाशत्वं समर्थयते—**प्रत्यक्ष इति** ॥ 'सुखमहमस्वाप्सम्'इति सुप्तोत्थितस्य परामर्शस्तावद् दृष्टः, परामर्शस्य च सुषुप्तावनुभवमन्तरेणानुपपत्तेरनुभवो ग्राह्यः, तस्य चान्याधीनत्वायोगात् स्वतस्त्वमित्यर्थः ॥

सजातीयप्रकाशप्रकाश्यत्वे प्रतिषिद्धेऽर्थादवेद्यत्वे सत्यपरोक्षव्यवहृतियोग्यत्वं सिध्यतीत्यभिप्रेत्याह—**स्वयंप्रकाश इति** ॥ स्वसत्तायां प्रकाशाभावशून्यत्वादिति हेत्वर्थः । व्यतिरेकाभावादित्युक्ते प्रदीपादेर्विनाशित्वात् साधनवैकल्यम्, तदर्थम् —"प्रकाशे"इति विशेषणम् । तथाऽपि नष्टप्रदीपे प्रकाशव्यावृत्तेः साधनवैकल्यम्, तदर्थम्—"स्वसत्तायामि"ति । नच हेत्वसिद्धिः ; जाग्रत्स्वप्नयोस्तत्प्रतिभासस्तावत्सिद्धः ; सुषुप्तावात्मप्रकाशस्तु 'सुखमहमस्वाप्सम्'त्यादिपरामर्शानुपपत्त्या सिद्धः । नच सुखादौ व्यभिचारः, 'द्रव्यत्वे सति' इति विशेषणात् । इदमत्र विवक्षितम्—आत्मा, सजातीयप्रकाशाप्रकाश्यः, द्रव्यत्वे सति स्वसत्तायां प्रकाशाभावविधुरत्वात् ; प्रदीपवत् । आत्मा, स्वयंप्रकाशः, संविदितरात्मविशेषगुणव्यतिरिक्तत्वे सति स्वसत्तायां प्रकाशव्यतिरेकशून्यत्वात्, संवेदनवत् इति । "प्रकाशकर्तृत्वादि"त्युक्ते बाद्यसिद्धिः ; आत्मनः प्रकाशस्वरूपत्वात्, इत्यत आह—**विषयेति** ॥ प्रकाशस्यागन्तुकत्वात् हेत्वसिद्धि मन्वानं प्रत्याह—**अजन्येति** ॥ सति धर्मिण्यजन्यप्रकाशगुण इति द्रष्टव्यम् ; अन्यथा दृष्टान्तस्य साध्यवैकल्यापातात् । प्राभाकरं प्रत्याह—

## ऋजुविवरणम्

कारसमर्पकत्वमेव; अतो न व्याप्त्यपेक्षेति चोदयति—**समनन्तरप्रत्ययादिति** ॥ ननु—सर्वसरीरेष्वात्मन एकत्वे

### पञ्चपादिका

**भोक्तैव केवलं न कर्तेत्येक इति ॥ पूर्वोक्तस्यैव देहादिव्यतिरिक्तस्य कर्तृत्वमतत्स्वभावं मन्वाना भोक्तैव केवलोऽहं-प्रत्ययविषय इत्येके प्रस्थिताः । करोमि, जानामि भुङ्क्ते चेति न सर्वदाऽहंप्रत्ययेनानुषङ्गः, तेन नायं तद्विषयः । यदि स्यात्, न**

### पञ्चपादिकाविवरणम्

स्वयंप्रकाशः, अनिन्द्रियगोचरत्वे सत्यपरोक्षत्वात्; संवेदनवत् । आगमश्चात्र दर्शितः । स चैकः; सर्वशरीरेषु सर्वत्राहमित्येकाकारप्रत्यक्षवेदनीयत्वात्; गोत्ववत् । शरीरभेदादेवातीतशरीरादाविव न भोगानुसन्धानप्रसङ्गः । नचैकस्मिन्नपि परिमाणभेदात्प्रतिक्षणं शरीरभेदो युक्तः; प्रत्यभिज्ञाविरोधात्; अननुसन्धानप्रसङ्गाच्च, ज्वालायां सूक्ष्मदर्शने प्रत्यक्षत एव भेद दर्शनात् । तस्मादेकः स्वयंप्रकाश आत्मेति सिद्धम् । **तस्मादित्युपसंहारः** ॥

पक्षान्तरमाह—**भोक्तैव केवलमिति** ॥ कर्तृत्वं हि क्रियावेशः । नच सर्वगतस्य निरवयवस्यात्मनः परिस्पन्दपरिणामलक्षणक्रियान्वयः सम्भवति । नच बुद्धेः कर्तृत्वमात्मनो भवति; तादात्म्याध्यासाभावात्, अख्यातिवादित्वात् । हेत्वन्तरमाह—**करोमि जानामि भुञ्जे चेति** ॥ अयमर्थः-चैतन्यवत् क्रियावेशोऽप्यात्मनः स्वभावधर्मश्चेत्, आत्मप्रतिभासं न

### तत्त्वदीपनम्

**आत्मेति । अपरोक्षत्वादिति** ॥ अपरोक्षव्यवहृतिविषयत्वादित्यर्थः । घटादिकं व्यावर्तयति—**अनिन्द्रियेति** ॥ धर्मादिकं व्यावर्तयति—**अपरोक्षत्वादिति** ॥ श्रुतिरपि स्वप्रकाशत्वे मानमित्याह—**आगम इति** ॥ "अत्रायं पुरुषः स्वयंज्योतिरि"-त्यादिरागमः । स्वयंप्रकाशत्वेऽप्यात्मनोऽनेकत्वमिति सांख्याः, तान् प्रत्याह—**स चेति** ॥ सर्वेऽहंप्रत्ययाः, एकविषयाः, एकाकारप्रत्ययत्वात् ; गौगौरिति प्रत्ययवत् । विमता अहंप्रत्ययाः, एतदात्मविषयाः, अहंप्रत्ययत्वात् ; एतदीयाहं-प्रत्ययवदित्यर्थः । सर्वत्रात्मैक्ये भोगानुसंधानमापद्यते स्वशरीर इव । नचैवमुपलभ्यत इत्यप्रयोजकत्वमाशङ्क्य, किमनवच्छिन्नस्यानुसन्धानमापाद्यते ? उतावच्छिन्नस्य ? आद्य इष्टापत्तिरित्यभिप्रेत्य द्वितीयं दूषयति—**शरीरेति** ॥ एकस्मिन्नपि शरीरे पादावच्छिन्नस्य नेतरत्रानुसन्धातृत्वमित्यभिप्रेत्यादिग्रहणम् ॥ ननु अननुसन्धानं न शरीरभेदनिबन्धनम् ; शरीरभेदेऽप्यनुसन्धानदर्शनात् । तथाहि—बाल्य-कौमार-यौवनावस्थागतशरीरनिष्ठे न्यूनाधिकपरिमाणेभिन्नाश्रये न्यूनाधिकपरिमाणयोरन्यतरपरिमाणत्वात्, घटशरीरादिपरिमाणवदित्यनुमानात् शरीरभेदसिद्धावप्यनुसन्धानवद् देहभेदेष्वपि स्यादित्याशङ्क्य दृष्टान्तासिद्धिमाह—**नचेति** ॥ किंच शरीरान्तरवदेव शरीरभेदेऽनुसन्धानं न स्यादित्याह—**अननुसन्धानेति** ॥ शरीरैकत्वप्रत्यभिज्ञाया अन्यथासिद्धिं निरस्यति—**ज्वालायामिति** ॥ आत्मसमर्थनमुपसंहरति—**तस्मादिति** ॥ प्रसङ्गागतमात्मानात्मविवेकं समाप्य टीकाव्याख्यानं प्रस्तौति—**तस्मादिति** ॥ कर्तृत्वस्यातत्स्वभावत्वमुक्तम्, तत्र हेतुमाह—कर्तृत्वमिति । **क्रियावेश इति** ॥ क्रियाश्रयत्वमित्यर्थः ।

परिस्पन्दाद्यभावे हेतुमाह—**नच सर्वगतस्येति** ॥ परिणामाभावे हेतुमाह—**निरवयवस्येति** ॥ एवंभूतेऽन्यात्मनि कर्तृत्वं यथा वेदान्तिनाम्, तद्वदत्रापीत्याशङ्क्य वैषम्यमाह—**नचेति** ॥ अध्यासाभावमाह—**अख्यातीति** ॥ सांख्यस्यापीति शेषः । 'करोमी'त्यत्रापि कर्तृत्वस्यातत्स्वभावत्वमुच्यत इति पौनरुक्त्यमित्याशङ्क्याह—**हेत्वन्तरमिति** ॥ कर्तृत्वादेर्व्यभिचारित्वेऽपि तद्धर्मत्वं किं न स्यादिति ? अत्राह—**अयमिति** ॥ किं तस्य स्वभावधर्मत्वम् ? उताऽऽगन्तुकत्वम् ? नाद्य इत्याह—**न चैतन्यवदिति** ॥ द्वितीयेऽपि किं सहेतुः ? उत निर्हेतुः ? द्वितीये मुक्तावपि प्रसक्तिरित्यभि-

### ऋजुविवरणम्

भोगानुसन्धानादिप्रसङ्ग इत्याशङ्क्याह—**शरीरभेदादेवातीतेति** ॥ ननु—शरीरभेदादननुसन्धानमिति न वक्तुं शक्यते; एकस्मिन्नपि जन्मनि परिमाणभेदेन शरीरभेदादननुसन्धानाभावप्रसङ्गादित्याशङ्क्याह—**नचैकस्मिन्नपि परिमाणभेदादिति** ॥ परिमाणभेदादित्यनुमानं प्रत्यभिज्ञाप्रत्यक्षबाधितम् ; तस्य प्राबल्यादिति । ननु—प्रत्यक्षस्याप्यनुमानेन बाधो दृश्यते, ज्वालाप्रत्यभिज्ञाया प्रभावितत्या, इत्याशङ्क्याह—**ज्वालायां सूक्ष्मदर्शन इति** ॥

कथं कर्तृत्वस्यातत्स्वभावत्वम् ? इत्याशङ्क्योपपादयति—**कर्तृत्वं हि क्रियावेश इति** ॥ ननु—सर्वगतत्वेन परिस्पन्दो मा भूत्, निरवयवत्वेन परिणामश्च, तथाऽप्यन्तःकरणस्य कर्तृत्वेनात्मन औपाधिकं कर्तृत्वमित्याशङ्क्याह—**नच बुद्धेः कर्तृत्वमिति** ॥ कथं तादात्म्याध्यासाभाव इति ? तदाह—**अख्यातिवादित्वादिति** ॥ सांख्यस्येत्यर्थः । 'करोमि' 'जानामी'त्यादिना कर्तृत्वस्यात्मप्रतिभासव्यभिचारादात्मधर्मत्वं नास्तीत्युक्तम्, तदयुक्तम् ; आत्मव्यभिचारिणोऽपि धर्मत्वसम्भवात् , तथा दर्शनादित्याशङ्क्याभिप्रायमाह—**चैतन्यवत्क्रियावेशोऽपीति** ॥ मा भूत् स्वाभाविकः, आगन्तुको

### पञ्चपादिका

**तदुल्लेखविकल उदियात्। ननु—भोक्तापि तर्हि नासौ; तदुल्लेखाभावात्, नैतदेवम्; अहमिति चेतनत्वसमुल्लेखात्, तदर्थत्वात्सर्वस्य, तदात्मकमेव भोक्तृत्वम्, इति भोक्तैव केवलमिति युक्तं मन्यन्ते।**

**अस्ति तद्व्यतिरिक्त ईश्वरः सर्वज्ञः सर्वशक्तिरिति केचिदिति॥ तस्मादपि देहादिव्यतिरिक्तादहंप्रत्ययविषयादन्यः सर्वस्येशिता, ततश्चेशितव्यस्य सर्वात्मना वेत्ता, नियमनशक्तिसम्पन्नश्च शरीरिणां मनसाप्यचिन्त्यरूपात् तनुभुवनविरचनकार्यात् प्रेक्षावत्कर्तृकत्वमन्तरेणासम्भाव्यमानात्, कुलालादिरिव घटादिकार्यात्प्रतिपन्नः सातिशयानां काष्ठाप्राप्तिः**

### पञ्चपादिकाविवरणम्

व्यभिचरेत्, नचागन्तुको निरवयवद्रव्यस्य हेतूपरागेण कश्चिद्धर्म उत्पादयितुं शक्यत इति। ननु आत्मप्रतिभासव्यभिचारात्कर्तृत्ववद् भोक्तृत्वमपि न स्यादिति चोदयति—**ननु भोक्तापीति**॥ परिहरति—**नैतदेवमिति**॥ दृश्यावभासमात्रं भोक्तृत्वम्, न सुख-दुःखान्वयः। ततश्चावस्थात्रयेऽपि दृश्यावभासव्यभिचाराभावाद् भोक्तैव केवलमिति॥

पक्षान्तरमाह—**अस्तितद्व्यतिरिक्त इति**॥ भाष्यं व्याचष्टे—**तस्मादपीति। तस्मादपि देहादिव्यतिरिक्तादन्यः सिद्ध ईश्वर** इत्युत्तरेण सम्बन्धः॥ अत्रेश्वरे वैशेषिकानुमानं दर्शयति—**शरीरिणां मनसाऽपीत्यादिना**॥ विवादगोचरापन्नं भूत-भौतिकलक्षणं तनुभुवनविरचनकार्यम्, स्वरूपोपादान-संप्रदान-प्रयोजनोपकरणादिविषयविज्ञानवत्कर्तृपूर्वकम्, विविधविन्यासरूपकार्यत्वात्; प्रासादादिवत्, इति कल्पनालाघवादेककर्तृकत्वोपादानात् सर्वज्ञत्वादिसिद्धिरिति। सांख्य-योगानुमानं दर्शयति—**सातिशयानां काष्ठाप्राप्तिरिति**। विवादगोचरापन्ना ज्ञानैश्वर्यशक्तयः, क्वचित्सर्वविषयज्ञानैश्वर्यशक्त्यविनाभूताः, तरतमभावेनोत्कृष्यमाणविषयव्यापिधर्मत्वात्; स्वविषयदेशव्यापिपरिमाणधर्मवदिति। काष्ठाप्राप्तिरसर्वविषयत्वेऽपि

### तत्त्वदीपनम्

प्रेत्याद्यं दूषयति—**नचेति**॥ **आगन्तुकः** प्रागभाववान्। **भुञ्जत इति**। भोक्तृत्वोल्लेखस्यानुभूयमानत्वात् तदुल्लेखाभावासिद्धिमाशङ्क्याह—**नन्वात्मेति**॥ सुखादेरागन्तुकत्वाद् भोक्तृत्वमपि व्यभिचारीत्यर्थः। चिदात्मकं भोक्तृत्वमिति कथमुक्तम्? भोक्तृत्वस्य व्यभिचारित्वात्, इत्याशङ्क्य तात्पर्यमाह-**दृश्येति**॥सुषुप्तावप्यज्ञानसुषुप्तिदृश्यत्वमस्तीत्यव्यभिचार इत्यर्थः॥

प्रतिज्ञामात्रेण तटस्थेश्वरासिद्धिमाशङ्क्य, भाष्यव्याख्यानछलेन प्रमाणं दर्शयतीत्याग्रह—**भाष्यमिति**॥ "अहंप्रत्ययविषयादन्ये" इत्यस्य साकाङ्क्षत्वात् व्यवहितान्वयं दर्शयति—**सिद्ध ईश्वर इति। सर्वस्येति**॥ अयमर्थः ईश्वर इति न नाममात्रमित्याह—**सर्वस्येति** (मूले)॥ सर्वज्ञत्वं विना ईशनानुपपत्तेः स्तदुपेयमित्याह। **ततश्चेति** (मूले)। शक्त्यभावे ईशनानुपपत्तेः साप्यास्थेयेत्याह **नियमेनेति** (मूले)। श्रुतित एवेश्वरसिद्धेः किं "शरीरिणामि"त्यादिनेत्याशङ्क्य श्रुतेरनुमानान्तर्भावादुक्तमेतदित्याह—**अत्रेति**॥ विवादगोचरापन्नम्, स्वरूपादिविज्ञानवत्कर्तृपूर्वकम्, इति साध्यनिर्देशः। भूत-भौतिकेत्यादिविशेषणं धर्मिस्पटीकरणार्थम्। अदृष्टद्वारा जीवस्य कर्तृत्वात् सिद्धसाध्यत्वं व्यावर्तयति—**स्वरूपेति**॥ जीवाः संप्रदानम्, जलाहरणादि प्रयोजनम्। उन्मत्तकार्यव्यावृत्त्यर्थं "विविधे"ति विशेषणम्। विमतम्, अनेककर्तृकम्, विचित्रकार्यत्वात्, प्रासादवत्, इत्यतिप्रसङ्गबाधं निरस्यति—**कल्पनेति**॥ एकस्यैव सकलजगन्निर्माणसंभवेऽनेकाङ्गीकारे गौरवम्, इतरत्र लाघवम्, इति सर्वज्ञेश्वरसिद्धिरित्यर्थः। ईश्वरगतज्ञानादिशक्तीनां सर्वविषयज्ञानादिशक्त्यविनाभावसाधने बाधः, तदर्थम्—**"विवादे"ति**। 'धर्मत्वादि'त्युक्ते संयोगे व्यभिचारः, तदर्थम्—**"विषयव्यापी"ति**॥ शौक्ल्यादिकं व्यावर्तयति—**तरतमभावेनेति**॥ भावेनोत्कृष्यमाणधर्मत्वादित्युक्ते, एकाभावो द्वयाभाव इत्येवंप्रतीयमानतरतमभावे

### ऋजुविवरणम्

भविष्यतीत्याशङ्क्याह—**नचागन्तुक इति**॥ "तदुल्लेखाभावादि"त्यसम्बद्धम्; भोक्तृत्वप्रतीतिदर्शनात्, इत्याशङ्क्यावतारयति—**नन्वात्मप्रतिभासेति**॥ "नैतदेवमि"ति परिहारे चेतनत्वप्रतीतेः सर्वस्य चेतनार्थत्वात् तदात्मकत्वमेव भोक्तृत्वमित्युक्तम्, तदयुक्तम्; सुख-दुःखसाक्षात्कारत्वाद्भोगस्य। किञ्चात्र तदात्मकत्वमिति निर्दिश्यते। न तावच्चेतनत्वं भोक्तृत्वम्; मुक्तस्यापि प्रसङ्गात्, नापि सर्वशेषित्वम्; तस्यापि तज्जन्यभोगवत्त्वतिरेकेणानिरूपणादित्याशङ्क्याभिप्रायमाह—**दृश्यावभासमात्रमिति**॥ साकाङ्क्षत्वाद् व्यवहितत्वादुक्तस्यान्वयं दर्शयति—**सिद्ध ईश्वर इत्युत्तरेणेति**॥ ननु—नानेन सर्वज्ञत्वसिद्धिः, अनेकेषामन्यङ्गभेदेन कर्तृत्वसम्भवादित्याशङ्क्याह—**कल्पनालाघवादिति**॥ तरतमभावेनोत्कृष्यमाणत्वहेतौ संयोगेऽनैकान्तस्तदर्थम्—**विषयव्यापिधर्मत्वादिति**॥ अथवा—धर्मत्वादिति हेतौ संयोगे-

**पञ्चपादिका**

**परिणामानामुपलब्धा। सातिशयञ्च ज्ञानम्, अतः क्वचित् काष्ठां प्राप्तं सर्वविषयमिति सर्ववित्, सर्वदा सिद्धः, ईश्वरः प्रतिपन्नो ब्रह्मशब्दार्थ इति केचित् प्रतिपेदिरे। ननु—"अहमिति सर्वो लोक आत्मानं प्रत्येति। आत्मा च ब्रह्म" इत्यहंप्रत्ययविषयस्यात्मनो ब्रह्मत्वेन तद्विप्रतिपत्तौ ब्रह्मविप्रतिपत्तिं दर्शयितुं प्रक्रान्तम्, तत् कथमनहंप्रत्ययविषयेऽनात्मनीश्वरे ब्रह्मत्वविप्रतिपत्तिः प्रदर्श्यते? उच्यते; ब्रह्मणि विप्रतिपत्तिप्रदर्शनस्य प्रक्रान्तत्वादहंप्रत्ययविषयविप्रतिपत्त्यापि प्रणाड्या ब्रह्मविप्रतिपत्तिरेव निर्दिश्यते। यतो नाहंविषयविप्रतिपत्तिप्रदर्शनेन किञ्चित् कृत्यमस्ति। तस्मात् साध्वेतत्॥**

**पञ्चपादिकाविवरणम्**

सम्भवतीति सर्वविषयमिति वेत्युक्तम्; अनुमाने तथैव दर्शितत्वात् सर्वदा सिद्ध ईश्वर इति नैयायिकाद्यनुमानं दर्शयति—विवादगोचरापन्नानि धर्माधर्मफलानि, कर्म-तत्फल-संप्रदानोपकरणादिविज्ञानवता प्रदीयमानानि, व्यवहितकर्मफलत्वात्; सेवादिफलवदिति। तस्मात्सिद्ध ईश्वरः॥

ननु प्रत्यगात्मनो विप्रतिपत्त्यालम्बनस्य सम्बन्धितया स्कन्धभेददर्शनं विप्रतिपत्तिः; नच व्यतिरिक्त ईश्वरः प्रत्यगात्मनो विशेषस्कन्धः; अतोऽसौ न शरीरादिवत् स्कन्धविशेषतया प्रतिपादनीय इति चोदयति—**नन्वहमिति सर्वो लोक इत्यादिना**॥ उच्यत इत्यादिपरिहारस्यायमर्थः ब्रह्म हि विप्रतिपत्त्यालम्बनम्। तच्च प्रत्यगात्मव्यतिरिक्तमव्यतिरिक्तं वेति विप्रतिपत्तिं दर्शयितुं व्यतिरिक्तेश्वरपक्षोऽपि दर्शनीयः। किमिति तद्ब्रह्मात्मनि विप्रतिपत्तिः प्रदर्श्यत

**तत्त्वदीपनम्**

व्यभिचारः, तदर्थम्—"**विषयव्यापी**"ति॥ अभावस्य न प्रतियोगिविषयाश्रयत्वमिति न व्यभिचार इत्यर्थः स्वविषय एव देशः स्वविषयदेशः, तत्र व्यापी यः परिमाणधर्मः, तद्वदित्यर्थः।

ननु एतदनुपपन्नम्, किं सर्वविषयज्ञानैश्वर्यशक्तीनामन्यत्र प्रसिद्धत्वम्? उत न? प्रसिद्धत्वेऽनुमानवैयर्थ्यम्, अप्रसिद्धत्वेऽप्रसिद्धविशेषणत्वम्, तथा दृष्टान्तस्य साध्यविकलत्वम्, "विषयव्यापी"त्यत्र च विषयशब्दः किं कर्मपरः? उताश्रयपरः? आद्ये साधनवैकल्यम्, द्वितीयेऽसिद्धिरिति। तत्रेदमभिधीयते—ज्ञानैश्वर्यशक्तय,: क्वचित् परां काष्ठां प्राप्ताः, सातिशयत्वात्; परिमाणवत्। ततश्च ज्ञानैश्वर्यशक्त्युत्कर्षतरतमभावस्य विश्रान्त्यधिकरणत्वेन सर्वज्ञेश्वरसिद्धिरिति विवक्षितम्। "सर्वविषयमितिवे"ति पक्षान्तरपरिग्रहनिमित्तं दर्शयति—**काष्ठेति**॥ साध्यविशेषोपादानेन धर्मविशेषसिद्धावपि ततः स्पष्टीकरणार्थं—"धर्माधर्मे"ति विशेषणम्। विज्ञानवता दीयमानानीत्येतावत्युक्ते न जीवातिरिक्तसर्वेश्वरसिद्धिः, 'तदर्थमाह—**कर्मतत्फलेति**॥ भोजन-मर्दनफलव्यावृत्त्यर्थम्—**व्यवहितेति**॥ आत्मविप्रतिपत्तिमुपक्रम्यानात्मदेहेन्द्रियादिविप्रतिपत्तिदर्शनेऽविरोधवदनात्मेश्वरविप्रतिपत्तावप्यविरोध इति शङ्कायामभिप्रायमाह—**ननु प्रत्यगिति**॥ 'अहं मनुष्योऽहं काणः' इत्येवमहंप्रत्ययालम्बनसमानाधिकृततयोपलम्भाद् देहादावात्मत्वविप्रतिपत्तिर्युज्यते, नच तथाऽत्र, इतीश्वरविप्रतिपत्तिदर्शनमसङ्गतमित्यर्थः॥

ब्रह्मणि विप्रतिपत्तिदर्शनस्य प्रक्रान्तत्वादिति कथम्? "तद्विशेषं प्रति विप्रतिपत्तेरि"त्यभिधानादित्याशङ्क्याह—**उच्यत इति**॥ ब्रह्मणो जिज्ञास्यत्वसिध्यर्थं प्रतिपन्नतया सन्दिग्धत्वं वक्तव्यम्, नान्यस्येत्यर्थः। तर्हि तद्विप्रतिपत्तिः प्रदर्शनीया, न तु व्यतिरिक्तं प्रदर्शनीयम्, तत्राह—**तच्चेति**॥ ब्रह्मविप्रतिपत्तेर्दिदर्शयिषितत्व आत्म-

**ऋजुविवरणम्**

ऽनेकान्तः, तदर्थम्—**विषयव्यापीति**॥ तथाऽपि रूपादावनैकान्तिकता, तदर्थम्—**तरतमभावेनेति**॥ "सर्वविषयमि"ति वेति पक्षान्तरपरिग्रहे कारणमाह—**काष्ठाप्राप्तिरसर्वेति**॥ कर्मफलत्वादिति हेतौ क्रियानन्तरभाविभोजनमर्दनफलेऽनैकान्तिकता, तदर्थम्—"व्यवहितेति" विशेषणम्। "नन्वहमिति सर्वो लोकः" इति चोद्यमनुपपन्नम्; ब्रह्मविप्रतिपत्तिं हि दर्शयितुमात्मविप्रतिपत्तिः प्रदर्शिता, आत्मनो ब्रह्मत्वादीश्वरे ब्रह्मत्वविप्रतिपत्तिः प्रदर्शनीया, अनहंप्रत्ययविषयत्वेनात्मत्वादिति हेतोर्व्यधिकरणत्वात्, ब्रह्मविप्रतिपत्तिं दर्शयितुं प्रक्रान्तमिति प्रक्रमानुवादादेवेश्वरविप्रतिपत्तेर्दर्शनीयत्वलाभात्, ब्रह्मविप्रतिपत्तिप्रदर्शनलाभात्, ततोऽनुपपन्नमित्याशङ्क्यावतारयति—**ननु प्रत्यगात्मन इति**॥ अहंप्रत्ययविषयविप्रतिपत्तिद्वारा ब्रह्मविप्रतिपत्तिं दर्शयितुं प्रक्रमः; नतु साक्षाद् ब्रह्मविप्रतिपत्तिप्रदर्शनप्रक्रम इति टीकाग्रन्थो व्याख्यातः। "उच्यते ब्रह्मणि विप्रतिपत्तिरि"ति परिहारो व्यधिकरण इव प्रतिभाति; नहि ब्रह्मविप्रतिपत्तिदर्शन ईश्वरस्य जीवाद्भेदप्रदर्शनमुपयुज्यत इत्याशङ्क्य व्याचष्टे—**उच्यत इत्यादिपरिहारस्येति**॥ ननु—एतत्प्रतिपादनं पूर्वापरविरुद्धमिव प्रतिभाति, पूर्वं जीव

## पञ्चपादिकाविवरणम्

इति तदाह—अहंप्रत्ययविषयविप्रतिपत्त्याऽपीति ।। किमिदमुक्तं भवति ? प्रत्यगात्मा तावत् प्रमाणान्तरेणोद्दिश्य शरीरेन्द्रिय मनो-बुद्धि-शून्य-कर्तृत्व-भोक्तृत्वादिविशेषपर्युदासेनाद्वितीयज्ञानानन्दस्वभावेन प्रतिपाद्यते; एवं प्रतिपादने संसारनिवृत्तेः पुरुषार्थलाभाच्च । अतः प्रत्यगात्मा सर्वज्ञत्वादिगुणकाद् ब्रह्मणोऽन्योऽनन्यो वेति विप्रतिपत्तिं दर्शयितुं तद्व्यतिरिक्त ईश्वरः साधितः; विप्रतिपत्तिस्कन्धत्वात् ।।

अत्र कश्चिदाह—नेह प्रत्यगात्माऽसाधारणस्वभावविवक्षया ब्रह्मशब्देन जिज्ञास्यत्वेनोद्दिश्यते, किंत्वीश्वर एव ब्रह्मशब्देनोद्दिश्य विचार्यते; जन्मादिसूत्रे जगत्कारणत्वलक्षणाभिधानात् । न हि प्रत्यगात्मन्येतल्लक्षणमुपपद्यते । तस्मादात्मविप्रतिपत्तिप्रदर्शनमसमञ्जसमिति, उच्यते; यदि ब्रह्मशब्देनेश्वरोऽभिधीयते, किमिति तर्हि जगत्कारणे विप्रतिपत्तिं दर्शयसि—प्रधानमेके, परमाणूनपर इत्यादिना । नहीश्वरेऽर्थान्तरे जिज्ञासाकर्मणि ब्रह्मशब्दोपादानेऽर्थान्तरे जगत्कारणे विप्रतिपत्तिर्युक्ता दर्शयितुम् । जगत्कारणादीश्वरस्याभिन्नत्वात् तद्विप्रतिपत्तिरीश्वरविप्रतिपत्तिरिति चेत्, तर्हीश्वरः प्रधानं परमाणुर्वेति विप्रतिपत्तिर्दर्शिता स्यात् । न तथा संशेरते जनाः । युज्यते तु प्रत्यगात्मनो ब्रह्मशब्दाभिधेयविशेष-

## तत्त्वदीपनम्

विप्रतिपत्तिप्रदर्शनमनुपयोगीति शङ्कते—**किमिति** ।। प्रत्यग्ब्रह्मणोरैक्यात् प्रत्यग्विप्रतिपत्तेर्ब्रह्मविप्रतिपत्तौ पर्यवसानमित्याशयेनाह—**तदाहेति** ।। प्रणाड्या ब्रह्मविप्रतिपत्तिदर्शनं कस्मात् ? इति शङ्कायामात्मविप्रतिपत्तिप्रदर्शनप्रयोजनाभावादित्युक्तमयुक्तम्, आत्मनिर्णयस्य फलत्वादिति शङ्कते—**किमिदमिति** ।। श्रोत्रपेक्षितं शास्त्रप्रतिपाद्यम्, ब्रह्मणश्चान्यत्वे तत्प्रतिपादनं विफलं स्यात्, ततश्च प्रत्यगात्मानमुद्दिश्य तत्स्वभावविशेषः प्रतिपाद्यत इत्याह—**प्रत्यगिति** ।। प्रमाणान्तरेण प्रत्यगात्मानमुद्दिश्य स एष ज्ञानानन्दस्वभावेन प्रतिपाद्यत इति संबन्धः ।।

शरीराद्यात्म(नो) भासमानस्य कथं ज्ञानादिरूपत्वम् ? तत्राह—**शरीरेति** ।। प्रतिपादने हेतुमाह—**एवमिति** ।। न केवलं दुःखनिवृत्तिः फलम्, किंतु निरतिशयानन्दाविर्भावश्चेत्याह—**पुरुषार्थेति** ।। तर्हि स एव प्रतिपाद्यताम्, किं व्यतिरिक्तेश्वरसाधनेनेति ? अत्राह—**अत इति** ।। प्रत्यगात्मनः स्वभावविशेषप्रतिपादनस्य पुरुषार्थपर्यवसायित्वमतःशब्दार्थः । प्रत्यगात्मनोऽद्वितीयत्वादिरूपेणाजिज्ञास्यत्वमुक्तमसहमानः शङ्कते—**अत्र कश्चिदिति** ।। ब्रह्मात्मशब्दयोरैकार्थ्ये पर्यायतया सह प्रयोगायोगाद् मैवमित्यर्थः । द्वितीयसूत्रपर्यालोचनायामपि न प्रतीचो जिज्ञास्यत्वमुचितमित्याह—**जन्मादीति** ।। लक्षणाभिधानमात्रेण कथमजिज्ञास्यत्वम् ? तत्राह—**न हीति** ।। विप्रतिपत्त्यनुपपत्तिसाम्यान्नेश्वरो जिज्ञास्य इत्याह—**उच्यत इति** ।। कात्रानुपपत्तिः ? इत्याशङ्क्य, जगत्कारणेश्वरशब्दयोर्भिन्नार्थत्वम् ? उत न ? इति विकल्प्याद्यं दूषयति—**न हीश्वर इति** ।। ब्रह्मशब्देनोपादानं यस्य स तथोक्तः । विप्रतिपन्नत्वेन सन्दिग्धत्वजिज्ञास्यत्वे एकत्र वक्तव्ये, अन्यथाऽतिप्रसङ्ग इत्यर्थः । द्वितीयमुत्थापयति—**जगत्कारणादिति** ।। कारणस्येश्वरान्तर्भावे कारणे विप्रतिपत्तिर्न स्यादित्याह—**तर्हीति** ।। ईश्वरस्य कारणान्तर्भावे किमीश्वरः कारणम् ? उत प्रधानादि ? इति विप्रतिपत्तिर्न स्यादिति द्रष्टव्यम् ।।

कारणेश्वरयोरभेदे विप्रतिपत्त्यसंभववत् प्रतीचो ब्रह्मैक्येऽपि विप्रतिपत्तिर्न स्यात्, न खलु ब्रह्म शरीर-

## ऋजुविवरणम्

एव ब्रह्मशब्देन जिज्ञास्यत्वेनोपक्षिप्तः, विशेषस्वरूपनिर्णयाय तस्य जिज्ञासायोग्यत्वसिध्यर्थं विप्रतिपत्तिप्रदर्शनमित्युक्तम्, इह त्वहंप्रत्ययविषयविप्रतिपत्तिप्रदर्शन उपयोग एव नास्तीत्युक्तत्वादित्याशङ्क्याह—**किमिदमुक्तं भवतीति** ।। अत्र शास्त्रे प्रत्यगात्मन एव निजं स्वरूपं व्युत्पाद्यम्, तस्यैव च ब्रह्मशब्दव्युत्पत्तिमुखेन प्रसिद्धत्वेन जिज्ञासायोग्यत्वमुक्तम्, तस्यैव च सामान्यप्रसिद्धिविशेषविप्रतिपत्त्या जिज्ञासायोग्यत्वमुच्यत इति न पूर्वापरयोर्भिन्नविषयत्वम्, नापि विरोध इति भावः । जगत्कारणत्वं लक्षणत्वेनोक्तं भवतु, कथं प्रत्यगात्मनो जिज्ञास्यताभाव इति ? तदाह—**नहि प्रत्यगात्मन्येतदिति** ।। जगत्कारणे विप्रतिपत्तिप्रदर्शने कृते यदीश्वरे प्रधानत्वादिविप्रतिपत्त्यापादनेन तन्निराकरणं क्रियते, तर्हि तवापि विप्रतिपत्तिर्न स्यात्; यतस्त्वत्पक्षे प्रत्यगात्मविशेषरूपं शरीरमिन्द्रियादि वेति विप्रतिपत्तौ ब्रह्म शरीरमिन्द्रियमेवेति विप्रतिपत्तिः प्रदर्शिता भवेत्, न तथा विप्रतिपत्तिरिति वक्तुं शक्यत्वात्, अथवा प्रत्यगात्मनो ब्रह्मस्वरूपस्य न शरीरादिरूपेण संशयस्सम्भवति; तस्य वस्त्वन्तरत्वात् । जगत्कारणे विप्रतिपत्तिस्तु युक्ता; अस्य ब्रह्मत्वात्, अत एतदपि संशयदर्शनमनुपपन्नमित्याशङ्क्याह—**युज्यते च प्रत्यगात्मन इति** ।। ननु—एवमपि न विशेषः, त्वत्पक्षेऽपि न साक्षात्प्रति-

**पञ्चपादिका**

**आत्मा स भोक्तुरित्यपर इति ॥**

**पञ्चपादिकाविवरणम्**

स्वरूपस्य शरीरेन्द्रियादिषु संशयः; तेषामात्मनि तादात्म्यावभासात् । किञ्च प्रत्यगात्मानमुद्दिश्य तस्य विशेषस्वरूपे ब्रह्मणि जिज्ञास्यमाने यद् जगज्जन्मादिकारणम्, तद् ब्रह्मेत्युक्ते विधूतशरीरादिभेदः प्रत्यगात्मा जगत्कारणतया सर्वात्मभूतः प्रतिपादितो भवति । जगत्कारणे तु विप्रतिपद्यमाने किं तज्जगत्कारणमिति वीक्षायाम्—यद् ब्रह्म तज्जगत्कारणमिति ब्रह्मोद्देशेन जगत्कारणत्वं विधेयं स्यात्, न जगत्कारणमुद्दिश्य ब्रह्मविधानमिति वैपरीत्यमापद्यते । ब्रह्मशब्देन जगत्कारणमभिधीयत इति चेत्, न; ईश्वरोऽभिधीयत इति स्ववचनेन विरोधात् । किञ्च—ईश्वरे जगत्कारणे प्रतिपादिते पुरुषस्य किमायातम् ? उपासनमिति चेत्, न; आरोपितरूपेणापि सम्भवात्प्रतिपादनवैयर्थ्यात् । तस्मात् प्रत्यगात्मानमुद्दिश्य तस्य वेदान्तविहितब्रह्मशब्दाभिधेयबुभुत्सायां यज्जगज्जन्मादिकारणं सत्यज्ञानानन्दादिलक्षणं तत्प्रत्यगात्मभूतं ब्रह्मेति प्रतिपादयितुमात्मनि विप्रतिपत्तिप्रदर्शनं युक्तम्, इति जगत्कारणे विप्रतिपत्तिः संप्रदायपरिचयशून्यतया शास्त्रार्थप्रद्वेषात् सर्वसङ्करवादिना दर्शितेति ॥

पक्षान्तरमाह—**आत्मा स भोक्तुरित्यपर इति** ॥ यथा च सत्यज्ञानानन्दं निरवयवं ब्रह्म, प्रत्यगात्माऽपि तथा ।

**तत्त्वदीपनम्**

मिन्द्रियमिति संशेरत इत्याशङ्क्याह—**युज्यत इति** । प्रत्यक्त्वस्य साधारणाकारत्वात् शरीरेन्द्रियादीनां च विशेषरूपत्वात्तत्र संशयोपपत्तिरित्यर्थः ॥ प्रतीचो जिज्ञास्यत्वे द्वितीयसूत्रमननुगुणं स्यादिति यत्तूक्तं तत्राह—**किंचेति** ॥ स्वमते द्वितीयसूत्रानुगुण्यमभिधाय परमते तदभावमाह—**जगत्कारण इति** ॥ सन्दिग्धस्य विधेयत्वाद् जगत्कारणस्य च विप्रतिपन्नतया सन्दिग्धत्वेन वक्तव्यं विधेयत्वमित्यर्थः । व्यावर्त्यमाह—**न जगदिति** ॥ अस्तु को दोषः ? इत्यत आह—**इति वैपरीत्यमिति** । ब्रह्मजिज्ञासेत्यत्र ब्रह्मणो विधेयत्वं प्रतिज्ञातम्, तच्च ब्रह्मोद्देशेन जगत्कारणत्वस्य विधाने भज्येतेत्यर्थः ॥ उपक्रमे कारणस्यैव निर्दिष्टत्वान्न विरोध इति शङ्कते—**ब्रह्मशब्देनेति** ॥ अन्यत् सन्धित्सतोऽन्यद्गतमित्याह—**नेश्वर इति** ॥ ईश्वरशब्देन कारणस्याभिधानान्न विरोध इत्याशङ्क्याह—**किं चेति** ॥ पुरुषस्याभिलषितं प्रतिपाद्यम्, न चार्थान्तरप्रतिपादनेऽभिलषितं सिद्धयतीत्यर्थः । अर्थान्तरसिद्धौ तदुपासनयाऽभिलषितं सेत्स्यतीति शङ्कते—**उपासनमिति** ॥ 'वाचं धेनुमुपासीते'त्यादावर्थाभावेऽप्युपास्तितत्फलवदत्रापि तत्संभव इत्याह—**नारोपितेति** ॥ प्रत्यगात्मनः सत्यादिरूपेण जिज्ञास्यत्वात्तद्विप्रतिपत्तिप्रदर्शनं युक्तमित्युपसंहरति—**तस्मादिति** ॥ कथं तर्हि जगत्कारणे विप्रतिपत्तिप्रदर्शनं वेदव्याख्यातॄणामित्याशङ्क्य स्वबुद्धिदोषादित्याह—**जगत्कारण इति** ॥ ऐक्यशास्त्रप्रद्वेषश्च विप्रतिपत्तौ मूलमित्याह—**शास्त्रेति** ॥ ब्रह्मणः प्रत्यगभेदासंभवात् त्वन्मतमुपेक्ष्यमित्याशङ्क्य तत्संभवमाह—**यथेति** ॥ प्रतीचोऽसत्यत्वे सत्प्रत्ययव्याकोपः,

**ऋजुविवरणम्**

पाद्यरूपे ब्रह्मणि विप्रतिपत्तिः, अपि तु तदभिन्नप्रत्यगात्ममुखेन, अस्मत्पक्षे तु तदभिन्नजगत्कारणमुखेन, इत्युभयथा ब्रह्मप्रतिपादने सम्भवति सति नान्यतरपरिग्रहे विशेष इत्याशङ्क्याह—**किञ्च प्रत्यगात्मानमिति** ॥ लक्षणानुपपत्तिरप्यनेन ग्रन्थेनार्थात्परिहृता । अथवा—नात्र प्रत्यगात्मविचारो युज्यते; उत्तरसूत्रे तन्निरूपणाभावात्, ब्रह्मनिरूपणस्य विद्यमानत्वादित्याशङ्क्याह—**किञ्च प्रत्यगात्मानमिति** ॥ ब्रह्म प्रतिपाद्यं प्रतिज्ञातं प्रथमसूत्रे, तदनुवादेनान्यप्रतिपादने तद्विरोध इति भावः । **ब्रह्मशब्देनेति** ॥ सूत्रगतेन ब्रह्मशब्देन जगत्कारणमेव जिज्ञास्यत्वेनोपक्षिप्तम्, अतस्तत्प्रतिपादनं युक्तमिति भावः । ननु—त्वत्पक्षेऽपि जीवस्य निजं ब्रह्मरूपं जिज्ञास्यमिति दर्शयितुं यथा ब्रह्मशब्देन जीवो जिज्ञास्यत्वेनोपक्षिप्तः, एवमस्मत्पक्षेऽपीश्वरस्वरूपभूतं जगत्कारणमत्र व्युत्पाद्यमिति दर्शयितुमीश्वराभिधानेन तत्परत्वं तत्र विवक्षितमीश्वरस्वरूपत्वेन तदभिधीयत इति दर्शयितुं तथा व्याख्यातम् । ईश्वरशब्देन जगत्कारणमभिधीयते, अतो न तद्विरोध इत्याशङ्क्य, प्रयोजनाभावादपि न जगत्कारणत्वं प्रतिपाद्यमित्याह—**किञ्चेश्वरे जगत्कारण इति** ॥ यद्वा—विप्रतिपन्नं हि जिज्ञास्यम् । तच्च जगत्कारणम्, नेश्वरः; तेन कारणे जिज्ञासा स्यात् । तथा सति वस्तुत ईश्वरस्य तेन रूपेण प्रतिपादनमिति दर्शयितुं तद्व्याख्यानं त्वत्पक्ष इवेत्याशङ्क्याह—**किञ्चेश्वर जगत्कारण इति** ॥ किमिति जगत्कारणे विप्रतिपत्तिः प्रदर्शितेति ? तदाह—**जगत्कारणे विप्रतिपत्तिरिति** ॥

**सः**—ईश्वरो **भोक्तुरात्मा** स्वरूपमिति भाष्यार्थः । तत्र तयोरेकत्वे प्रमाणं दर्शयितुं समानस्वभावतां दर्शयति

### पञ्चपादिका

**योऽयमहमित्युल्लिख्यमानश्चेतनो भोक्ता, स ब्रह्मेति कैश्चित्प्रतिपन्नः, तस्याहंप्रत्ययसिद्धो भोक्तृत्वावभासः। स मिथ्यैवानिर्वचनीयानाद्यविद्याविलसितः। परमार्थतस्तु यः सर्वज्ञ ईश्वरोऽहंप्रत्ययेऽनन्तर्भूतः प्रमाणान्तरानवसितः,**

### पञ्चपादिकाविवरणम्

तत्र विवादगोचरापन्नो जीवः, ब्रह्मैव सन्नुपाधिपरिच्छिन्नविभागः, ब्रह्मणा समानस्वभावतया निरवयवद्रव्यत्वे सत्युपाधिपरामर्शाधीनपरिच्छेदप्रतिभासत्वात्; यद् येन समानस्वभावतया निरवयवद्रव्यत्वे सत्युपाधिपरामर्शाधीनपरिच्छिन्नप्रतिभासम्, तत्तदात्मकत्वे सत्युपाधिपरिच्छिन्नभेदं दृष्टम्, यथा घटाकाशमिति। भाष्यं व्याचष्टे—**योऽयमिति**॥ ननु संसारिणः कथमसंसारिणैकत्वमिति ? तत्राह—**तस्याहंप्रत्ययसिद्ध इति**॥ ननु एवमहमिति सामान्यतः प्रतिपन्नस्य शरीरादिविशेषमिथ्यात्वे परमार्थभूतो विशेषो वक्तव्योऽहमित्थंभूत इति, तदाह—**परमार्थतस्त्विति**॥ 'अहं ब्रह्मैवे'ति विशेषोपसंहारः

### तत्त्वदीपनम्

ज्ञानान्यत्वे चानात्मत्वम्, अनानन्दत्वे परमप्रेमास्पदत्वानुपपत्तिः, सावयवत्वे कार्यत्वेनाकृताभ्यागमादिप्रसक्तिः, तस्मात्सत्यादिरूपत्वं प्रतीचोऽप्येष्टव्यमित्यर्थः। संभावितेऽर्थे प्रमाणमाह—**तत्रेति**। जीव इति स्वरूपनिर्देशः। भेदाभेदवादिनां मते सिद्धसाध्यतां निरस्यत्येवकारेण। ब्रह्मणा समानस्वभावतयेति हेतुनिर्देशः। विमतः, ब्रह्मैव, तत्समानस्वभावत्वात्, यद्येन समानस्वभावम्, तत्तदात्मकम्, यथा घटाकाशो महाकाश इत्यर्थः। ब्रह्मैक्ये मन्तृमन्तव्यादिव्यवहारः कथमित्याशङ्क्याह—**उपाधीति**। जीवः, उपाधिपरिच्छिन्नविभागः, उपाधिपरामर्शाधीनपरिच्छेदप्रतिभासत्वात्, यदुपाधिपरामर्शाधीनपरिच्छिन्नप्रतिभासं तदुपाधिपरिच्छिन्नभेदं यथा घटाकाशमित्यर्थः। **उपाधिपरिच्छिन्नविभाग इति**। उपाधिकृतविभाग इत्यर्थः। अप्रयोजकत्वं निराकर्तुं **निरवयवद्रव्यत्वे सतीत्युक्तम्**। निरवयवत्वं वस्तुनो निर्भागत्वम्, वस्तुनो निर्भागत्वे घटादिवदात्मत्वानुपपत्तिरित्यर्थः॥ जीवब्रह्मणी, भिन्ने, विरुद्धस्वभावत्वात्, संमतवदिति शङ्कते—**नन्विति**॥ किं परमार्थतो विरुद्धस्वभावत्वम् ? उत प्रतीतितः ? आद्येऽसिद्धिः, द्वितीये प्रतिबिम्बादौ व्यभिचार इत्याशयेनाह—**तत्राहेति**॥ प्रत्यगाकारस्यानुवृत्त्या विशेषसाकाङ्क्षत्वाच्छरीरादेश्चातद्विशेषत्वाद्विशेषान्तरं वक्तव्यम्, नच ब्रह्मविशेषान्तरम्, अहं ब्रह्मेत्यप्रतिपत्तेरित्याशङ्कते—**नन्वेवमिति**॥ ब्रह्मणः प्रतीतितस्तद्विशेषत्वाभावेऽपि वस्तुतस्तद्विशेषत्वम्, यथा शुक्तेरिदमाकारं प्रति विशेषत्वं तद्वदित्याह—**तदाहेति**॥ बाधकप्रत्ययोत्तरकालमियं शुक्तिरित्युपलम्भात्तत्र तथात्वम्, अत्र तु नैवम्, मानाभावादिति शङ्कते—**अहमिति**। **विशेषोपसंहार इति**। विशेषपर्यवसानमित्यर्थः। विशेषोपसंहार इत्यत्र किं प्रमाणमित्य-

### ऋजुविवरणम्

हेतोरसिद्धिपरिहाराय—**यथाच सत्यज्ञानानन्दमिति**॥ तत्र विवादगोचरापन्नो जीवो धर्मी, ब्रह्मैव सन्नुपाधिपरिच्छिन्नविभाग इति साध्यो धर्मः, ब्रह्मणा समानस्वभावतयेत्यादिर्हेतुः। तत्र विशेषणोपयोगस्त्वेवम्—

"परिच्छेदावभासो हि घटादावपि विद्यते। साध्यहीनेऽपि पक्षे तु उपाधीत्यादिकीर्तनम्॥
स्फटिकप्रतिबिम्बस्थरूपादौ हेतुवर्तनम्। सति द्रव्यत्व इत्येतद् व्यवच्छेत्तुं विशेषणम्॥
एतावानपि यो हेतुः खे घटस्थे विवर्तते। न साध्यं तन्निवृत्त्यर्थमनंशत्वविशेषणम्॥
घटाकाशे च जीवे च हेतुरेषोऽपि दृश्यते। विपक्षे तन्निवृत्त्यर्थं स्वभावैक्यं विशेषणम्॥
ब्रह्मैक्यरहिते व्योम्नि हेतुरेषोऽपि दृश्यते। सापेक्षं च स्वभावैक्यं ब्रह्मणेति निरूपितम्॥
अभिप्रेतस्य साध्यस्य नान्यथाऽस्ति निरूपणम्॥"

नच—एवं सति दृष्टान्तस्योभयविकलत्वम्, ब्रह्मत्वस्याभावादिति—वाच्यम्; सामान्यमात्रस्यैव व्याप्त्यङ्गीकारात्, अन्यथा धूमानुमानस्यापि साध्य-साधनविकलत्वस्य शङ्कितुं शक्यत्वात्, धूमानुमानेऽप्यग्निमान्पर्वतः साध्यः, धूमवान्पर्वतो हेतुः॥ तदुक्तम्—"एकदेशविशिष्टश्च धर्मो वाऽत्रानुमीयते। असिद्धेनैकदेशेन गम्यस्सिद्धेन बोधकः॥" "स एव चोभयात्मे"त्यादिना। नहि दृष्टान्तेऽग्निमान्पर्वतो धूमवात् वा पर्वतो हेतुरस्ति; अतस्सामान्योपाधावेव व्याप्तिरित्यनवद्यम्। नचात्राग्निमात्रं संबन्धमात्रं वा साध्यम्; सिद्धसाध्यत्वापत्तेः, हेत्वभावात्, पक्षलक्षणं च न स्यात्। नाप्यग्निपर्वतसंबन्धस्साध्यः; अपक्षत्वापत्तेः, साध्यविकलत्वं च अतस्तद्वान्पर्वत एव साध्यः। हेतावपि न धूममात्रस्य संबन्धमात्रस्य वा हेतुत्वम्; व्यधिकरणस्याहेतुत्वाद् विशिष्टसंबन्धपक्षेऽपि व्यधिकरणत्वम्, साधनविकलत्वञ्च। अतस्तद्वान्पर्वतो हेतुः। मतुबादिषु द्रव्यस्यैव वाच्यत्वम्, संबन्धस्य गम्यमानत्वमित्यपि साधितमरुणाधिकरणे। अतो न संबन्धस्य साध्यत्वं

## पञ्चपादिका

सोऽस्यात्मा स्वरूपम्। एवमसौ बृंहत्यर्थान्वयाद् ब्रह्मशब्दाभिधानीयतां लभते; इतरथा तद्रूपविकलस्य न निरङ्कुशं बृहत्त्वम्, इति न ब्रह्मशब्दाभिधेयः स्यात्। एवं बहवो विप्रतिपन्ना युक्ति-वाक्य-तदाभाससमाश्रयाः सन्तः इत्युपसंहरति। एवम्=उक्तेन प्रकारेण, केचित् किञ्चिद् ब्रह्मेति प्रतिपन्नाः। किमेवमेव मनोरथमात्रेण? नेत्याह—युक्ति प्रमाणानां स्वविषयनिश्चयेऽनुग्राहिकां तर्कशब्दपर्यायाम्, वाक्यञ्च प्रतिवेदान्तं यथावद् ब्रह्मस्वरूपप्रतिपादनपरमालोचयन्तः। "आत्मा स भोक्तुरि"ति युक्ति-वाक्याभ्यामन्त्यं पक्षं निश्चितवन्तः सम्यग्दर्शिनः।

## पञ्चपादिकाविवरणम्

न शरीरादीत्यत्र किं प्रमाणमिति? तदाह—एवमसौ बृंहत्यर्थान्वयादिति॥ ननु जीवेभ्यो भेदेऽपि बृंहत्यर्थलाभः; देशकालव्यापित्वादिति, तदाह—इतरथा तद्रूपविकलस्येति॥ उपसंहरति—एवं बहव इति॥ किञ्चित् शरीरादि। ब्रह्मेति प्रत्यगात्मेति, विप्रतिपन्ना इत्यर्थः॥ ननु—न विप्रतिपत्तिमात्राद् जिज्ञास्यं भवति, किन्तु प्रमाणयुक्तिमूला हि विप्रतिपत्तिनिराकर्तव्येति, तत्रोत्तरम्—"युक्ति-वाक्ये"त्यादि भाष्यम्, तद् व्याचष्टे—युक्ति प्रमाणानामित्यादिना॥ कस्मिन् पक्षे युक्ति-वाक्ये, क्व वा तदाभासाः? इति विभजते—युक्ति-वाक्याभ्यामन्त्यं पक्षं निश्चितवन्त इति॥

ननु यथा बृंहत्यर्थान्वयाद् युक्ति-वाक्याभ्यां च ब्रह्मैव भोक्ता, तथा सुख-दुःखतत्साधनप्रपञ्चोऽपि ब्रह्मैवेत्यपुरुषार्थतया न जिज्ञास्यं ब्रह्म स्यात्। नहि कतिपयसुख-दुःख-तत्साधनसंसर्गमप्यसहमानो निखिलदुःखादिमत्तामङ्गीकुर्यात्। ननु—वक्ष्यमाणज्ञानानन्दादिलक्षणेन पुरुषार्थतया जिज्ञास्यमेव किं न स्यात्? न; क्षुन्निवृत्तिसाधनतया पुरुषार्थेऽपि विषमिश्रितेऽन्नेऽनर्थहेतुतया प्रेक्षापूर्वकारिणामुपेक्षादर्शनात्। "न लिप्यते लोकदुःखेन बाह्यः" इत्यादिशास्त्राम्ना-

## तत्त्वदीपनम्

-न्वयः॥ प्रमाणं विनाप्युपसंहरणे शरीरादावपि पर्यवसानं किं न स्यादित्यभिप्रायेणाह—न शरीरादीति॥ 'अहं शरीरादि न' इत्यत्र किं प्रमाणमिति संबन्धः। प्रमाणाभावोऽसिद्ध इत्याह—तदाहेति॥ ब्रह्मशब्दस्यान्यथापि संभवमाशङ्कते—ननु जीवेभ्य इति॥ संकोचकप्रमाणाभावे निरवग्रहत्वमादेयमित्याह—तदाहेति॥ किंचिदित्यस्यार्थमाह—शरीरादीति॥ ननु शरीरादि ब्रह्मेति प्रतिपन्ना इति कथम्? शरीरादौ तत्त्वप्रतिपत्त्यभावादिति, तत्राह—ब्रह्मेति। विप्रतिपत्तिमङ्गीकृत्य तस्याजिज्ञास्यत्वप्रयोजकत्वमाक्षिपति—ननु न विप्रतिपत्तीति॥ विप्रतिपत्तेः प्रमाणादिमूलत्वे तन्निराकरणानुपपत्तेस्तदाभासमूलत्वं वक्तव्यम्, तद्वदत्राप्यस्तीत्याह—तत्रोत्तरमिति॥ वाक्यावष्टम्भेनार्थसिद्धेः किं युक्त्येत्याशङ्क्य भाष्यव्याख्यानेन युक्तेरुपयोगमाह—तद् व्याचष्ट इति॥ युक्तिवाक्यसमाश्रयत्वे तदाभासाश्रयत्वमनुपपन्नम्, केषांचिद्युक्त्याश्रयत्वं केषांचिदाभासाश्रयत्वमिति चेत् मैवम्, अस्यापि विभागस्य दुरधिगमत्वादिति शङ्कते—कस्मिन् पक्ष इति॥

ब्रह्मपदव्युत्पत्तिबलात् प्रत्यग्ब्रह्मैक्यवत् प्रपञ्चैक्यस्याभ्युपगन्तव्यत्वाद् ब्रह्मणोऽजिज्ञास्यत्वं प्राप्तमिति शङ्कते—ननु यथेति॥ "समानस्वभावत्वादि"त्यादियुक्तेस्तत्त्वमस्यादिवाक्याच्च यथा प्रतीचो ब्रह्मत्वम्, तथा "इदं सर्वमि"त्यादिवाक्यात्प्रपञ्चस्यान्यत्वे ब्रह्मशब्दार्थानुपपत्तेश्चानन्यत्वमित्यजिज्ञास्यत्वं ब्रह्मणः स्यादित्यर्थः। उक्तमर्थं कैमुतिकन्यायेनाह—न हीति॥ सर्वेषां सुखार्थित्वाद् ब्रह्मणः आनन्दानन्यात्मकत्वाद् जिज्ञास्यत्वं युक्तमिति शङ्कते—नन्विति॥ बाह्यसुखस्यानर्थसंभिन्नत्वान्न तत्र प्रवृत्तिरिति सदृष्टान्तमाह—न क्षुन्निवृत्तीति॥ किंच ब्रह्मण्यनर्थसंबन्धाभावः किं शास्त्रात्? उत तद्धेत्वज्ञानाद्यभावात्? अथवा धर्माद्यभावात्? आहो तद्विरोधित्त्वज्ञानात्? इति विकल्प्याद्यमुत्थापयति—न लिप्यत इति। परमात्मा, न जीवगतदुःखेन संस्पृश्यते, तत्र हेतुमाह—बाह्येति। आनन्दरूपत्वात् दुःखस्य

## ऋजुविवरणम्

हेतुत्वं वा। एवं च तत्र यथा व्याप्तिः, तथात्रापीत्यनवद्यम्। अहं ब्रह्मैवेतीति। ब्रह्मणो जीवत्वाप्रतिपत्त्यभावान्न जीवे ब्रह्मत्वविप्रतिपत्तिरिति भावः। "ब्रह्मेति विप्रतिपन्नाः" इत्ययुक्तम्; ब्रह्मत्वप्रतिपत्त्यभावादित्याशङ्क्य व्याचष्टे—प्रत्यगात्मेति॥ विप्रतिपन्ना इति॥ ननु—दुःख-तत्साधनात्मकत्वेऽपि नाऽपुरुषार्थता; ब्रह्मणस्सर्वात्मकत्वात्, तस्य ब्रह्मात्मकत्वेनापुरुषार्थत्वापादकत्वाभावात्, अग्न्यौष्ण्यवत्; अतोऽजिज्ञास्यं ब्रह्मेत्याशङ्क्याह—नहि कतिपयसुखदुःखेति। दुःखापरोक्ष्यमपुरुषार्थत्वप्रयोजकम् न व्यतिरिक्तदुःखापरोक्ष्यम्; आपरोक्ष्ये विद्यमानेऽपि भिन्नत्वाभावेनापुरुषार्थत्वाभावानुपलम्भात् केवलव्यतिरेकाभावे प्रयोजकत्वाभावादिति भावः॥ "न लिप्यते" इति श्रुत्या संबन्धः

## पञ्चपादिकाविवरणम्

पुरुषार्थतेति चेत्, न; "आत्मैवेदम्" इत्यादिसर्वतादात्म्यश्रुतेरुपादानकारणत्वाच्च । सर्वज्ञतयाऽज्ञानमिथ्याज्ञानाभावाद् नानर्थसम्वन्ध इति चेत्, न; तत्त्वत एव प्रपञ्चतादात्म्यादज्ञानाद्यनपेक्षणात् । कर्मनिमित्तस्सुखदुःखादिसम्बन्धः, तदभावाद् न ब्रह्मण्यनर्थसम्वन्ध इति चेत् न; कर्मव्यतिरेकेणापि स्वभावादेवाखिलसुख-दुःखादितत्साधनानां स्वान्वयितया ब्रह्मणोऽपरोक्षत्वात्, कर्मादीनामपि तावन्मात्रहेतुत्वात् । नहि दुःखाद्यापरोक्ष्यव्यतिरेकेण संसारोऽन्यो दृश्यते; कर्माविद्यादीनामपि बृंहत्यर्थान्वयादेव ब्रह्मणि तादात्म्यात् तन्निमित्तोऽपि संसारः सुतरामुपपन्न इति । ब्रह्मणि तत्त्वज्ञानेन बाधितत्वान्नानर्थसंबन्ध इति चेत्, न; प्रपञ्चात्मभावस्यापि तात्त्विकत्वात् । नच कारणाकारणब्रह्मभेदेन कार्यकारणब्रह्मभेदेन वा संसारविमुक्तिव्यवस्था; बृंहत्यर्थान्वयाभावप्रसङ्गात् । तस्माद् बृंहत्यर्थान्वयेनाद्वितीयसर्वज्ञत्वजीवत्वाद्युपगमेनाजिज्ञास्यं ब्रह्म प्राप्तम्, उच्यते; सत्यपि सर्वस्यापरोक्षतया ब्रह्मसंबन्धे मायानिमित्ततया प्रतिबिम्बश्यामत्वादिवद् मायाविगतव्याघ्रत्वादिवच्च तत्त्वज्ञानेन बाधितत्वात्, बिम्बस्थानीयब्रह्मणो नित्यसर्वज्ञतया तत्त्वज्ञान-

## तत्त्वदीपनम्

मिथ्यात्वाच्च न तत्संस्पर्शयोग्य इत्यर्थः । श्रुत्यन्तरविरोधाद् मैवमित्याह—**नात्मेति** । ब्रह्मोपादानत्वादप्यस्य प्रपञ्चस्य तत्तादात्म्यं तत्त्वमित्याह—**उपादानेति** । मृज्जस्य कलशादेर्मृदात्मकत्वं दृष्टम्, तद्वज्जगतोऽपि ब्रह्मोपादानत्वात्तदात्मकत्वमाश्रयणीयमित्यर्थः ॥ अनात्मनि देहादावात्माभिमानादज्ञानाच्च तस्य तत्स्पर्शजं दुःखं क्षेत्रज्ञस्य दृष्टम्, ब्रह्मणश्च तद्वैपरीत्यान्मैवमिति द्वितीयं कल्पं शङ्कते—**सर्वज्ञतयेति** ॥ जीवस्य वस्तुतो देहव्यतिरिक्तत्वात् तदध्यासाद् दुःखसंबन्धो युक्तः, प्रकृते त्वनन्यत्वात्स्वतो दुःखं स्यादित्याह—**न तत्त्वत इति** ॥ "पुण्यो वै पुण्येन कर्मणा भवति पापः पापेन" इत्यादिवाक्यात् सुख-दुःखसंबन्धस्य कर्माधीनत्वमधिगतम्; ब्रह्मणि च तदभावाद् न दुःखसंबन्ध इति तृतीयं शङ्कते—**कर्मेति** ॥ यस्य स्वतो न दुःखादिसंबन्धित्वम्, तस्य तत् कर्माधीनम्, यस्य दुःखादि स्वत एव, तत्र कर्माकिंचित्करमित्याह—**न कर्मेति** ॥ तदापरोक्ष्येऽपि तदपेक्षेत्याह—**ब्रह्मण इति** तदापरोक्ष्येऽपि तस्यानर्थत्वसिध्यर्थं कर्मापेक्षेत्याशङ्क्य दुःखाद्यापरोक्ष्यमनर्थत्वाच्च स्वतोऽस्तीति किं कर्मणेत्याह—**कर्मादीनामिति** । **तावन्मात्रेति** । दुःखाद्यापरोक्ष्यहेतुत्वादित्यर्थः ॥ तथापि कथं संसारित्वम् ? तत्राह—**न हीति** ॥ अनर्थसंबन्धः कर्माधीन ऐवेत्त्यभिनिविशमानं प्रत्याह—**कर्माविद्यादीनामिति** ॥ मायावी स्वगतव्याघ्रत्वादिकं पश्यन्नपि यथा न शोचति, तद्वद् ब्रह्मापीति तुरीयं शङ्कते—**ब्रह्मणीति** ॥ बाधितत्वमसिद्धमित्याह—**न प्रपञ्चेति** ॥ प्रपञ्चात्मभावस्य "सर्वकर्मे"त्यादिवाक्यप्रमितत्वात् तात्त्विकत्वमित्यर्थः । भिन्नविषयत्वेन श्रुत्योर्व्यवस्थामाशङ्क्याह—**नचेति** । अशुद्धिवाक्यानामविद्योपहितकारणविषयत्वम्, शुद्धिवाक्यानां निरुपाधिब्रह्मविषयत्वं हिरण्यगर्भमायोपहितविषयत्वं चेति न वाच्यम्, निरवग्रहमहत्त्वप्रतिपादकब्रह्मशब्दकोपादित्यर्थः ॥ पुण्यापुण्यनिबन्धनदेहाद्यभिमानवतोऽनर्थसंबन्धित्वं तावत् प्रसिद्धम्, ब्रह्मणि त्वेतदभावात् कथमनर्थसंबन्धप्रयासः ? इत्याह—**उच्यत इति** ॥ दुःखाद्यापरोक्ष्यमनर्थः, तच्च स्वतो नास्तीत्युक्तमङ्गीकरोति—**सत्यपीति** ॥ न तर्हि जीवादस्य विशेष इत्याशङ्क्याह—**मायेति** ॥ "इन्द्रो मायाभिः पुरुरूप ईयते" "मायां तु प्रकृतिं विद्यादि"त्यादिवाक्याद् भेदप्रपञ्चस्य मायाविलसितत्वं प्रतीयत इत्यर्थः । जीवगतकर्तृत्वाद्यसंस्पर्शे दृष्टान्तमाह—**प्रतिबिम्बत्वेति** ॥ प्रपञ्चासंस्पर्शे दृष्टान्तमाह—**मायावीति** ॥ प्रत्यगभेदाद् ब्रह्मण्यपि तत्त्वज्ञानवैधुर्यमित्याशङ्क्याह—**बिम्बस्थानीयेति** ॥

## ऋजुविवरणम्

प्रतीतिर्वा न निराक्रियत इति परिहरति—**आत्मैवेदमित्यादीति** ॥ कर्मनिमित्तस्यैवानर्थापादकत्वम्, न स्वरूपभूतस्येति । अथवा—न दुःखादियोगो ब्रह्मणः; तन्निमित्तकर्माभावादिति चोदयति—**कर्मनिमित्तसुखदुःखादीति** ॥ जीवे स्वतो दुःखाभावात्कर्मापेक्षा, न ब्रह्मणि तदपेक्षेति भावः । ननु—कर्मनिमित्तत्वमपुरुषार्थत्वे हेतुरित्याशङ्क्याह—**कर्मादीनामपीति** ॥ नहि कार्यवैलक्षण्याभावे कारणभेदेन पुरुषार्थत्वमपुरुषार्थत्वमिति शक्यते वक्तुम्, कर्मनिमित्तत्वं तु केवलव्यतिरेकाभावेन नापुरुषार्थत्वे प्रयोजकमिति भावः । ननु—आपरोक्ष्यमात्रं कर्मभिर्न जायते, किन्त्वधिकं तद्भोगः, तेनैव चापुरुषार्थत्वम्, ब्रह्मणि तु तदभावान्नापुरुषार्थतेत्याशङ्क्याह—**न हि दुःखाद्यापरोक्ष्येति** ॥ कर्मादिनिमित्ताभावेऽपि ब्रह्मण्यपुरुषार्थत्वमुपपादितम् । इदानीमङ्गीकृत्यापि तन्निमित्तत्वमपुरुषार्थत्वं स्यादित्याह—**कर्माविद्यादीनामपीति** ॥ ननु—द्विविधं हि ब्रह्माभ्युपगम्य संसारविशुद्धिव्यवस्था कल्प्यत इत्याशङ्क्याह—**नच कारणाकारणेति** ॥ ननु—

### पञ्चपादिका

**इतरे तु—युक्तय इवावभासन्त इति युक्त्याभासाः, न परमार्थतो युक्तयः, ताः समाश्रित्य, वाक्यानीवावभासन्ते, न तानि वाक्यानि; अतत्परत्वात्; तानि वाक्याभासानि परिगृह्य, पक्षान्तरेषु विप्रतिपन्नाः । युक्त्याभासत्वं लेशतो दर्शितमेव देहादिव्यतिरिक्तात्मपक्षं दर्शयद्भिः । इतरेषां च युक्त्याभाससिद्धत्वं स्वावसरे दर्शयिष्यामः । दर्शितं च लेशत उत्तरोत्तरपक्षग्रहणकारणप्रदर्शनेन, वाक्याभासतां तु तत्र तत्राधिकरणे सिद्धान्तयिष्यन्तः प्रदर्शयिष्यामः ॥**

### पञ्चपादिकाविवरणम्

नियमान्न तत्रानात्मानुबन्ध इति । विशुद्धिवाक्यानामेव च बलवत्तरत्वं वक्ष्यामः । युक्ति-वाक्याभासमूलता कस्येति ? तदाह—**इतरे तु युक्तय इवेत्यादिना** ॥

कथं पुनर्युक्त्याभासता शरीरात्मभावस्येति ? तदाह—**युक्त्याभासत्वमिति** ॥ ननु नैतावता युक्त्याभासत्व-सिद्धिर्देहादिष्विति, तत्राह—**इतरेषां युक्त्याभाससिद्धत्वमिति** ॥ किञ्च दर्शिता एव युक्त्याभासाः, न तत्रान्यापेक्षेत्याह—**दर्शितञ्च लेशत इति** ॥ ननु—"स वा एष पुरुषोऽन्नरसमयः" "स वा अयमात्मा ब्रह्म पृथिवीमय आपोमयस्तेजोमयो वायुमयः" इत्यादीनि शरीरात्मवादे वाक्यानि । ते ह वाचमूचुः, "तेभ्यो वागुदगायदि"त्यदीनीन्द्रियात्मवादे । "मन उदगायदि"ति मनोवादे । "कतम आत्मेति योऽयं विज्ञानमयः" इत्यादि विज्ञानवादे । "असद्वा इदमग्र आसीत्" "असदेवेदमि"ति शून्यवादे । "मन्ता बोद्धा कर्ता विज्ञानात्मे"ति कर्त्रात्मवादे; "तयोरन्यः पिप्पलं स्वाद्वत्ती"ति बुद्धिविषयत्वात् । "अनश्नन्नन्यः" इति भोक्त्रात्मवादे । "य आत्मनि तिष्ठन्नात्मानमन्तरो यमयती"ति व्यतिरिक्तेश्वरवादे वाक्यानि विद्यन्ते । कथं निर्मूलता पक्षान्तराणामिति ? तत्राह—**वाक्याभासतां त्विति** ॥

### तत्त्वदीपनम्

बिम्ब-प्रतिबिम्बयोरभेदेऽपि श्यामत्वादिव्यवस्थावत् तत्त्वज्ञानादिव्यवस्थेत्यर्थः ॥ "बलवद्वाक्यानुरोधेन दुर्बलं नेयमि"ति न्यायाद् विशुद्धिवाक्यानां च तात्पर्यलिङ्गवत्तया प्राबल्यम्, इतरेषां च तद्वैपरीत्याद् दौर्बल्यम्, ततश्च ब्रह्मणि न दुःखसंस्पर्श इत्याह—**(वि)शुद्धीति** ॥ द्वितीयसूत्र इति शेषः । तस्मादन्त्यं मतं युक्तिवाक्यमूलमिति सिद्धम् ॥ ननु इतरेषामपि तन्मूलत्वम्; आभासमूलत्वे तन्निराकणवैयर्थ्यादिति शङ्कते—**युक्तिवाक्येति** ॥ प्रतीतितो युक्त्यादेरनाभासत्वम्, वस्तुतस्त्वाभासत्वमितीतरनिराकणं युक्तमित्याह—**तदाहेति** ॥

'अहं मनुष्यः, काणोऽहम'त्यादिरूपेणानुभूयमानत्वात् कथमाभासत्वम् ? इति शङ्कते—**कथं पुनरिति** ॥ **युक्त्याभासतेति** युक्त्याभाससिद्धतेत्यर्थः ॥ 'मम शरीरमि'त्यादिव्यतिरेकप्रत्ययविरोधाच्छरीराद्यात्मभावस्याभासत्वमित्याह—**तदाहेति** ॥ अनुभवस्योभयत्राविशेषाद् व्यतिरेकग्राहि प्रमाणान्तरं वाच्यम्, इतरथा नाभासत्वसिद्धिरिति शङ्कते—**ननु नैतावतेति** ॥ प्रमाणान्तराभावोऽसिद्ध इत्याह—**तत्राहेति** ॥ "देहमात्रं चैतन्यविशिष्टमि"त्यादिभाष्य-टीकाव्याख्यानावसर आभासत्वमस्माभिरभिहितमित्याह—**किंचेति** ॥ भवदभिमतवेदान्तेभ्य एव देहाद्यात्मभावस्य प्रतिपत्तेर्नाभासत्वमिति शङ्कते—**ननु स वेति । अन्नरसमय इति** ॥ अन्नाकारपरिणतपृथिवीविकार इत्यर्थः । एतच्च भूतान्तरविकारत्वस्योपलक्षणार्थम् । न केवलं तैत्तिरीयकश्रुतेर्देहस्यात्मत्वम्, किं तु बार्हदारण्यकवाक्याच्चेत्याह—**स वा अयमिति** ॥ इन्द्रियादेरात्मत्वे क्रमेण प्रमाणं दर्शयति—**ते हेत्यादिना** ॥ आत्मनो भोक्तृत्वमेवेत्यत्र मानमाह—**तयोरिति** ॥ "तयोरन्यः पिप्पलमत्ती"ति कर्मफलभोक्तृत्वं जीवस्य लक्ष्यते, कथं निरसनम् ? इत्याशङ्क्याह—**बुद्धीति** ॥ "तयोरन्यः पिप्पलं स्वाद्वत्तीति सत्त्वमि"ति पैङ्गिरहस्यब्राह्मणेन बुद्धिपरतया वाक्यं व्याख्यातमित्यर्थः । ननु अनश्नन्निति भोगकर्तृताऽभावः प्रथत इत्याशङ्क्य, कर्मफलभोक्तृत्वलक्षणाशनाभावेऽपि द्रष्टृतया भोक्तृत्वं युज्यते, "भोगश्चिदवसानते"ति सांख्योक्तेरित्याशयेनाह—**अनश्नन्निति** ॥ वाक्यानामन्यपरत्वान्नोक्तेऽर्थे प्रामाण्यमिति सिद्धान्तयति—**तत्राहेति** ॥ अयमर्थः-स्थूलबुद्धीनां देहव्यतिरिक्तात्मनि चित्तानवतारात्प्राकृतबुध्यनुरोधेन "स वा एषः" इत्यनेन देहस्यात्मत्वमुपदिश्य रूपित्वादिना तस्यानात्मत्वशङ्कायां तस्मादान्तरप्राणाद्यात्मत्वोपदेशपरम्परया पञ्चकोशविलक्षणात्मप्रतिपादनेन वाक्य-

### ऋजुविवरणम्

प्रपञ्चात्मकत्वमपि शास्त्रादेव प्रतीयते, निष्प्रपञ्चत्वमपि, नचानयोर्विशेषोऽवगम्यते; अतस्सप्रपञ्चत्वमपि सत्यमेवेति न तत्त्वज्ञानबाध्यत्वमित्याशङ्क्याह—**विशुद्धिवाक्यानामिति** ॥ "जिज्ञासापदेऽन्तर्णीता मीमांसे"त्ययुक्तम्; न ह्येकपदतद-

### पञ्चपादिका

**तत्राविचार्य यत् किञ्चित् प्रतिपद्यमानो निःश्रेयसात् प्रतिहन्येतानर्थञ्चेयादिति ॥ तत्रैवं स्थिते मुमुक्षुर्ब्रह्मज्ञानेन परं निःश्रेयसमाप्तुकामोऽविचार्य एतच्छास्त्रमश्रुत्वा प्रवर्तमानोऽन्त्यपक्षादर्वाचीनं कंचित् पक्षं परिगृह्णीयात्, तदा मोक्षस्य सम्यग्ज्ञानफलत्वात्, तस्य चातथाभावान्निःश्रेयसात् प्रतिहन्येत मोक्षफलं न प्राप्नुयात् । अनर्थञ्च प्रतिपद्येत; "अन्धं तमः प्रविशन्ति" "ये के चात्महनो जनाः" इति श्रुतेः । अनात्मदर्शनेनात्मनोऽसत्कल्पत्वापादनमात्महननम् । एवं रूपस्यात्महननस्य कृतत्वात्, अन्यथाऽऽत्मनो हननासम्भवात्; प्राणत्यागस्य प्रकृतानुपयोगादिति ॥**

**तस्माद् ब्रह्मजिज्ञासोपन्यासमुखेन वेदान्तवाक्यमीमांसा तदविरोधितर्कोपकरणा निःश्रेयसप्रयोजना प्रस्तूयत इति ॥ ब्रह्मजिज्ञासोपन्यासव्याजेन जिज्ञासापदेनान्तर्णीतमीमांसा वेदान्तवाक्यानामारभ्यते ।**

### पञ्चपादिकाविवरणम्

ननु—एवमपि यस्य यस्मिन् रुचिरुत्पद्यते स तं पक्षमाश्रित्य पुरुषार्थं साधयेत्, किं विचारेणेति ? तत्राह—**तत्राविचार्य यत्किञ्चिदिति** ॥ भाष्यं व्याचष्टे—**तत्रैवं स्थित इत्यादिना** ॥ ननु मा भूदन्त्यात्पक्षादर्वाचीनेषु पक्षेषु तत्त्वज्ञानाभावाद् निःश्रेयसलाभः, अनर्थः किमिति प्राप्यत इति ? तत्राह—**अन्धं तमः प्रविशन्तीति** ॥ ननु आत्महननं तत्रानर्थहेतुरुक्तो न तत्त्वाप्रतिपत्तिरिति, तत्राह—**अनात्मदर्शनेनात्मनोऽसत्कल्पत्वापादनरूपस्येति** ॥ सूत्रवाक्यार्थमुपसंहरति—**तस्माद् ब्रह्मजिज्ञासोपन्यासमुखेनेति** ॥

भाष्यं व्याचष्टे—**ब्रह्मजिज्ञासोपन्यासव्याजेनेति** ॥ जिज्ञासापदेनान्तर्णीतं विचारमुपलक्ष्य तत्कर्तव्यतापरं

### तत्त्वदीपनम्

तात्पर्यं निर्धार्यते । अनरुन्धत्यास्ताराया अरुन्धतीत्वमुपदिश्य मुख्यारुन्धती यथोपदिश्यते, तद्वदत्रापि । "स वा अयमात्मे"-त्यादिष्वात्मनः पृथिव्याद्युपाधित्वं कथ्यते, न तद्विकारत्वम्; इतरथा "अस्थूलमि"त्यादिवाक्यव्याकोपात् । "ते ह वाचमूचुरि"त्यत्र वागाद्यभिमानिनी देवतोच्यते, न करणमात्रं प्रदीपादिवत्; आत्मत्वासंभवात् । "कतम आत्मा" इत्यत्र तु सुगताभिमतं ज्ञानं न विवक्षितम्; "नहि द्रष्टुर्दृष्टेरि"त्यादिना प्रतिषेधात् । "असद्वा इदमग्र आसीत्" इत्यत्रानभिव्यक्तनामरूपत्वात् सत्येवासच्छब्दः प्रयुक्तः, न निरुपाख्ये; "तत्सदासीदि"त्यनेन विरोधात् । "मन्ता बोद्धा" इत्यत्र किं पारमार्थिकं कर्तृत्वमुच्यते ? उत काल्पनिकम् ? नाद्यः; मुक्त्यनुपपत्तेः । द्वितीयस्त्वङ्गीक्रियते "अनश्नन्नि"त्यत्र परमार्थतः कर्तृत्वाभावे सिद्धसाध्यता; आरोपितकर्तृत्वाद्यभावेऽन्यस्य बन्धः, अन्यस्य मुक्तिरिति वैयधिकरण्यात् । नच बुद्धिगतावेव बन्ध-मोक्षौ; आत्मनि बन्धादिप्रतिपादकश्रुति-स्मृतिविरोधात् । "आत्मनि तिष्ठन्नि"त्यादिभेदव्यपदेशस्य चौपाधिकभेदविषयत्वेनोपपत्तेः, इति ॥

विप्रतिपत्तीनां समूलत्वेऽपि न विचारप्रवृत्तिः; फलाभावात्, इति शङ्कते—**नन्वेवमपीति** ॥ अपुरुषार्थसाधने पुरुषार्थसाधनबुध्या प्रवृत्तस्य वस्तुतस्तदनिष्पत्तेर्न पुरुषार्थत्वसंभवः, ततश्च विचारोऽर्थवानित्याह—**तत्राहेति** ॥ अन्त्यमतपरिग्रहेण वेदान्तशास्त्रे प्रवृत्तस्य पुरुषार्थसंभवाद् यत्किञ्चित्प्रतिपद्यमानः प्रतिहन्येतेति कथमुक्तम् ? इति शङ्कां व्याख्यानच्छलेन निरस्यतीत्याह—**भाष्यमिति** ॥ पुरुषार्थसाधनाभावे न पुरुषार्थसंभव इति युक्तम्, "अनर्थं चेयादि"-त्ययुक्तमिति शङ्कते—**ननु मा भूदिति** ॥ अज्ञानाद्युच्छेदस्य तत्त्वज्ञानाधीनत्वात् तदभावे तदनुपपत्तेरज्ञानादिनिबन्धनोऽनर्थो दुर्वारः स्यादित्याह—**तत्राहेति** ॥ "अन्धं तमः प्रविशन्ती"त्यत्राज्ञानस्यानर्थ हेतुत्वमुक्तमाक्षिपति—**नन्वात्मेति** ॥ अप्रतिपत्तिवाचकपदाभावादिति शेषः । हिंसायां प्रसिद्धस्यापि शब्दस्यामुख्यया वृत्त्याऽप्रतिपत्तावपि प्रवृत्तिर्युक्तेत्याह—**तत्राहेति** ॥ वेदान्तवाक्यमीमांसारम्भस्य सूत्रेऽनिर्दिष्टत्वाद् कथं मीमांसा प्रस्तूयत इत्युक्तम् ? इति शङ्कां व्याख्यानेन निरस्यतीत्याह—**भाष्यमिति** ॥ प्रकृतिप्रत्ययात्मकजिज्ञासापदे मीमांसाया अन्तर्णीतत्वमनुपलब्धमित्याशङ्क्य तात्पर्यमाह—**जिज्ञासापदेनेति** ॥ प्रकृतिप्रत्ययाभिहितयोर्ज्ञानेच्छयोरन्तर्णीतं विचारं जिज्ञासापदेनोपलक्ष्येति संबन्धः । पूर्वत्रारुच्या

### ऋजुविवरणम्

वयववाच्यत्वहीनस्य पदेऽन्तर्णीतत्वमुपपद्यते । "प्रारभ्यते" इति चायुक्तम्; तद्वाचकपदाभावात्, उत्तरसूत्रार्थत्वाभावेनोपसंहारस्य प्रतिपादनविरोधादित्याशङ्क्य व्याचष्टे—**जिज्ञासापदेनान्तर्णीतमिति** ॥ "अथवा—ब्रह्मज्ञाने कर्तव्यतयोपदिष्टे" इत्ययुक्तम्; ज्ञाने कर्तव्यत्वोपदेशायोगात्, उपसर्जनत्वेन न तत्कर्तव्यत्वं प्रतिपाद्यम्, कथञ्चित्सन्वाच्येच्छा-

## पञ्चपादिका

अथवा—ब्रह्मज्ञाने कर्तव्यतयोपदिष्टे तज्ज्ञानाय प्रवृत्तेभ्योऽर्थादेव तत्प्रतिपादनं प्रतिज्ञातम्, इति तदर्थं वेदान्तमीमांसाऽऽरभ्यते। किं प्रयोजना? किमुपकरणा चेति? उच्यते—तदविरोधितर्कोपकरणा निःश्रेयसप्रयोजना चेति॥ तैः वेदान्तैः, अविरोधी तर्कः=युक्तिः, उपकरणम्=इतिकर्तव्यता, सहकारिकारणमिति यावत्। अथवा—तर्कः अनुमानम्, वेदान्तैरविरुद्धम्; तदर्थप्रतीतेरेव दृढत्वहेतुतयोपकरणमस्या इत्यर्थः॥ १॥

इति परमहंसपरिव्राजकादि-श्रीशङ्करभगवत्पादान्तेवासिवर-श्रीपद्मपादाचार्यकृतौ पञ्चपादिकायां विषय-प्रयोजनाक्षेपपरिहारनिरूपणं नाम तुरीयवर्णकं समाप्तम्॥

## पञ्चपादिकाविवरणम्

सूत्रमित्युक्तं भवति। योजनान्तरमाह—**अथवेति**॥ जिज्ञासा कर्तव्येत्युक्ते ज्ञानमिष्यमाणं साध्यतया कर्तव्यमिति सूत्रार्थः संपद्यते। तत्र ज्ञाने कर्तव्येऽप्यर्थात् तत्साधनकर्तव्यताप्यवगम्यते। अतोऽर्थसिद्धविचारकर्तव्यतापरं सूत्रमिति। **किं प्रयोजनेत्यादिः** स्पष्टार्थः॥

कथं पुनर्विचारस्य निःश्रेयसं प्रयोजनम्, विचारजन्यब्रह्मावबोधसाध्यत्वादिति चेत्, किं तन्निःश्रेयसम्? कर्तृत्व-भोक्तृत्व-दोषसंयोगाध्यासप्रवाहोपादानस्याज्ञानस्य निवृत्तिरिति चेत्, न; निवृत्तेऽप्यज्ञाने द्वैतदर्शनस्यानपायात्।

## तत्त्वदीपनम्

पक्षान्तरपरिग्रहशङ्कां निरस्यति—**योजनान्तरमिति**॥ ज्ञानकर्तव्यतासंभवस्य विचारकर्तव्यतायाश्चोभयत्राविशेषात् कथं मतभेदः? इत्याशङ्क्याह व्याचष्टे—**जिज्ञासेति**॥ पूर्वस्मिन् व्याख्याने जिज्ञासापदेन विचारं लक्षयित्वा तत्कर्तव्यतापरं सूत्रमित्युक्तम्, अत्र तु जिज्ञासाशब्दस्य न विचारलक्षकत्वम्, किंत्विष्यमाणज्ञान-तत्कर्तव्यताभिधानद्वारा साधारणविचार-कर्तव्यतापरत्वमित्यार्थिकार्थत्वं विचारकर्तव्यताया इति भेदः॥

वेदान्तमीमांसाया निःश्रेयसप्रयोजनत्वमुक्तम्, तदाक्षिपति—**कथं पुनरिति**। विचारस्य निःश्रेयसं साक्षात् प्रयोजनम्? उत परम्परया? नाद्यः; तस्य ज्ञानफलत्वादित्यर्थः। द्वितीयमुत्थापयति—**विचारेति**। निर्णीतशक्तितात्पर्य-वेदान्तवाक्येभ्यो ब्रह्मावबोधजन्म, ततो निःश्रेयसमित्यर्थः। स्वरूपावस्थानम् निःश्रेयसम्, तस्य च नित्यत्वान्न ज्ञान-साध्यत्वमित्याशयेनाह—**किं तदिति**॥ स्वरूपावस्थानस्यासाध्यत्वेप्यज्ञाननिवृत्तेः साध्यतया ज्ञानफलत्वमिति शङ्कते—**कर्तृत्वेति**॥ कर्तृत्वं च भोक्तृत्वं च दोषसंयोगश्चेति तथा, त एवाध्यासः। अध्यस्यत इत्यध्यासः। स एव प्रवाहः। प्रोह्यते न विच्छिद्यत इति तदुपादानस्येत्यर्थः॥

अज्ञाननिवृत्तिमङ्गीकृत्य तस्याः पुरुषार्थत्वमाक्षिपति—**निवृत्तेऽपीति**॥ अज्ञाननिवृत्तौ पृथिव्यादेरपि निवृत्तेः

## ऋजुविवरणम्

कर्तव्यत्वं सूत्रार्थो भवेत्, तथा "तज्ज्ञानाय प्रवृत्तेभ्योऽर्थादेव तत्प्रतिपादनमि"त्यत्र सन्निहितत्वात्तच्छब्देन ज्ञानं निर्दिश्येत, तथा सति "अर्थादि"त्ययुक्तम्; "तत्कर्तव्यतयोपदेशः" इति वाचनिकत्वाभिधानात्, तेन विनाऽनुपपद्य-मानार्थाभावाच्च। नापि "तत्प्रतिपादनमि"ति तच्छब्देन ब्रह्म विवक्षितम्; पूर्वव्याख्यानेऽपि विवक्षितत्वाद्वाचनिकत्वा नुपपत्तेश्च। नापि ब्रह्मास्मिन् शास्त्रे प्रतिपाद्यमित्येवं सूत्रार्थो दर्शितः; अर्थसिद्धत्वेन प्रतिपादनवैयर्थ्यात्, पूर्वव्याख्याने-ऽपि सिद्धत्वात्, विध्यध्याहारस्य साधितत्वात्, तस्य चानन्वयप्रसङ्गात्, अनुक्तोपसंहारश्च। नाप्यन्याऽत्र कर्तव्यता; असन्निधानादित्याशङ्क्योपपादयति—**जिज्ञासा कर्तव्येत्युक्त इति**॥

विचारजन्यत्वाभावादित्यभिप्रायेण चोदयति—**कथं पुनर्विचारस्येति**॥ **"किं तन्निःश्रेयसम्"** इति पृच्छतोऽयम-भिप्रायः—निःश्रेयसस्यैवानिरूपितत्वेनाभावान्न तत्प्रयोजनत्वमिति। **न; निवृत्तेऽप्यज्ञान इति**। अयमाशयः—अनर्थहेतु-त्वादज्ञानस्य तन्निवृत्तेः प्रयोजनत्वमुच्येत, न चाज्ञाने निवृत्ते द्वैतदर्शननिवृत्तिः; तदनिवृत्तौ तन्निमित्तसुख-दुःखतद्दर्शनस्य चानिवृत्तेर्नाज्ञाननिवृत्तेः प्रयोजनत्वमिति॥ ननु—पृथिव्यादिकृत्स्नप्रपञ्चस्यापि प्रतीत्यभावेन कर्तृत्वादिनिवृत्तौ निवृत्त-त्वादप्रतीतेर्वाऽज्ञाननिवृत्तेर्निःश्रेयसत्वमुपपद्यत इत्याशङ्क्याह—**न हि पृथिव्यादिप्रपञ्च इति**॥ कर्तृत्वाद्युपादानस्य निवृत्त-

## पञ्चपादिकाविवरणम्

न हि पृथिव्यादिप्रपञ्चः कर्तृत्वाद्यध्यासनिवृत्तिमात्रान्निवर्तते, उच्यते—सत्स्वपि पृथिव्यादिष्वन्तःकरणाध्यासनिवृत्तौ प्रमातृत्वाभावादात्मचैतन्यस्य स्वतो विषयोपरागाभावाद् द्वैतदर्शनं न प्राप्नोति; अनिन्द्रियस्येव रूपादिदर्शनमित्येकः पक्षः। इतरस्तु सर्वद्वैतनिवृत्तिपक्षः समन्वयसूत्रे वक्ष्यते। तस्मान्निरस्तसकलकर्तृत्वाद्यध्यासम्, अपाकृतद्वैतदर्शनम्, अनतिशयानन्दप्रकाशमानब्रह्मस्वरूपावस्थानं निःश्रेयसं वेदान्तविचारस्य प्रयोजनमिति रमणीयम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यानन्यानुभवपूज्यपादशिष्यप्रकाशात्मभगवत् कृतौ पञ्चपादिकाविवरणे विषय-प्रयोजनाक्षेपपरिहारनिरूपणं नाम तुरीयवर्णकं समाप्तम् ॥

## तत्त्वदीपनम्

कथं द्वैतदर्शनम्? इत्याशङ्क्याह—**न हीति**। पृथिव्यादेः पारमार्थिकत्वान्नाज्ञाननिवृत्त्या निवृत्तिः, अपारमार्थिकत्वेऽप्यविद्यात्मकं कर्तृत्वादि निवर्तते, न मायात्मकं पृथिव्यादि, अन्यथैकमुक्तौ सर्वमुक्तिप्रसङ्गादित्यर्थः ॥ मतभेदेन मुक्तिं समर्थयते—**उच्यत इति** ॥ अन्तःकरणैक्याध्यासात् प्रमातृत्वमनुभवस्य आत्मज्ञानेनाज्ञाननिवृत्तावन्तःकरणस्यापि निवृत्तत्वान्न सुखाद्यनुभवतीत्यर्थः। स्वरूपचैतन्यस्य सर्वगतत्वेन सकलविषयसंबन्धित्वाद् द्वैतदर्शनसंभवमाशङ्क्याह—**आत्मचैतन्यस्येति** ॥ सकलश्रुति-स्मृति-युक्त्याचार्यसंमतं पक्षमाह—**इतरस्त्विति** ॥

वर्णकार्थमुपसंहरति—**तस्मादिति** ॥ अत एव न द्वैतदर्शनप्रसङ्ग इत्याह—**अपाकृतेति** ॥ सुखसाक्षात्कारमन्तरेणानर्थनिवृत्तिमात्रान्न पुरुषार्थसिद्धिरिति शङ्कां निरस्यति—**अनतिशयानन्देति** ॥ अप्रतीयमानस्यापुरुषार्थत्वं निरस्यति—**प्रकाशमानेति** ॥ सातिशयत्वादानन्दस्यात्मस्वरूपत्वमनुपपन्नमिति शङ्कां निरस्यति—**अनतिशयेति**। औपाधिकोऽतिशयप्रतिभास इत्यर्थः। अनुबन्धचतुष्टयसंभवाद् वेदान्तविचारकर्तव्यता युक्तेत्यधिकरणार्थमुपसंहरति—**इति रमणीयमिति** ॥

इति परमहंसपरिव्राजकाचार्याखण्डानुभूतिशिष्येणाऽखण्डानन्दमुनिना विरचिते विवरणतत्त्वदीपने विषयप्रयोजनाक्षेपपरिहारनिरूपणं नाम तुरीयवर्णकं समाप्तम् ॥

## ऋजुविवरणम्

त्वात् तन्निवृत्तिः, न पृथिव्यादेः; तदुपादानस्यानिवृत्तेरप्रतीतेरपि न संभव इति भावः। ननु अध्यासनिमित्तप्रमातृत्वाभावेऽपि चैतन्यस्य सर्वगतस्य विद्यमानत्वात् सर्वविषयावभासः, सुख-दुःखयोगश्च प्राप्नोतीत्याशङ्क्याह—**आत्मचैतन्यस्य स्वत इति** ॥ अनर्थनिवृत्तिमात्रस्य निरतिशयपुरुषार्थत्वाभावात् सकलपुरुषार्थत्वमुपसंहरति—**तस्मान्निरस्तसकलेति** ॥ 'ब्रह्मस्वरूपावस्थानं निःश्रेयमि'त्युक्ते प्रकाशमानत्वाभावे पुरुषार्थता न स्यात्, तदर्थम्—**प्रकाशमानेत्युक्तम्** ॥ प्रकाशमानस्याप्यानन्दस्यापुरुषार्थत्वम्, तन्निवृत्त्यर्थम्—**अनतिशयेति** ॥ एवंभूतब्रह्मस्वरूपावस्थानमपि द्वैतदर्शनसन्निहितमपुरुषार्थम्, तन्निवृत्त्यर्थम्—**अपाकृतद्वैतदर्शनमिति** ॥ द्वैतदर्शनाभावे निरस्तसकलकर्तृत्वाद्यध्यासत्वं हेतुः, सत्यध्यासे तद्दर्शनान्नान्यथा यतः। "अथवा निरस्तेत्यादिना" "अध्यासनिवृत्तिरपाकृतद्वैतदर्शनमि"त्यनेन स्वरूपचैतन्येनावभासाभाव इति ॥

इति स्वामीन्द्रपूर्णपूज्यपादशिष्य-सर्वशास्त्रविशारदजनार्दनात्मज-सर्वज्ञ-विष्णुभट्टोपाध्यायकृतौ ऋजुविवरणे विषय-प्रयोजनाक्षेपपरिहारनिरूपणं नाम तुरीयवर्णकं समाप्तम् ॥

ॐ

श्रीशङ्करभगवत्पादाचार्यप्रणीतम्

# श्रीमद्ब्रह्मसूत्रभाष्यम्

## पञ्चमं वर्णकम्

ब्रह्म जिज्ञासितव्यमित्युक्तम् । किंलक्षणं पुनस्तद्ब्रह्मेति ? अत आह भगवान् सूत्रकारः—

## जन्माद्यस्य यतः ॥ २ ॥

जन्मोत्पत्तिरादिरस्येति तद्गुणसंविज्ञानो बहुव्रीहिः । जन्मस्थितिभङ्गं समासार्थः । जन्मनश्चादित्वं श्रुतिनिर्देशापेक्षं वस्तुवृत्तापेक्षं च । श्रुतिनिर्देशस्तावत् 'यतो वा इमानि भूतानि जायन्ते' इत्यस्मिन्वाक्ये जन्मस्थितिप्रलयानां क्रमदर्शनात् । वस्तुवृत्तमपि, जन्मना लब्धसत्ताकस्य धर्मिणः स्थितिप्रलयसंभवात् । "अस्ये"ति प्रत्यक्षादिसंनिधापितस्य धर्मिण इदमा निर्देशः । षष्ठी जन्मादिधर्मसंबंधार्था । यत इति कारणनिर्देशः । अस्य जगतो नामरूपाभ्यां व्याकृतस्यानेककर्तृभोक्तृसंयुक्तस्य प्रतिनियतदेशकालनिमित्तक्रियाफलाश्रयस्य मनसाप्यचिंत्यरचनारूपस्य जन्मस्थितिभङ्गं यतः सर्वज्ञात्सर्वशक्तेः कारणाद्भवति तद्ब्रह्मेति वाक्यशेषः । अन्येषामपि भावविकाराणां त्रिष्वेवान्तर्भाव इति जन्मस्थितिनाशानामिह ग्रहणम् । यास्कपरिपठितानां तु "जायतेऽस्ति" इत्यादीनां ग्रहणे तेषां जगतः स्थितिकाले संभाव्यमानत्वान्मूलकारणादुत्पत्तिस्थितिनाशा जगतो न गृहीताः स्युरित्याशंक्येत, तन्मा शंकि इति योत्पत्तिर्ब्रह्मणः (कारणात्) तत्रैव स्थितिः प्रलयश्च त एव गृह्यन्ते । न यथोक्तविशेषणस्य जगतो यथोक्तविशेषणमीश्वरं मुक्त्वाऽन्यतः प्रधानादचेतनादणुभ्योऽभावाद्वा संसारिणो वा उत्पत्त्यादि संभावयितुं शक्यम् । नच स्वभावतः, विशिष्टदेशकालनिमित्तानामिहोपादानात् । एतदेवानुमानं संसारिव्यतिरिक्तेश्वरास्तित्वादिसाधनं मन्यन्ते ईश्वरकारणिनः ॥

नन्विहापि तदेवोपन्यस्तं जन्मादिसूत्रे, न; वेदान्तवाक्यकुसुमग्रथनार्थत्वात्सूत्राणाम् । वेदान्तवाक्यानि हि सूत्रैरुदाहृत्य विचार्यन्ते । वाक्यार्थविचारणाध्यवसाननिर्वृत्ता हि ब्रह्मावगतिर्नानुमानादिप्रमाणान्तरनिर्वृत्ता । सत्सु तु वेदान्तवाक्येषु जगतो जन्मादिकारणवादिषु, तदर्थग्रहणदाढर्यायानुमानमपि वेदान्तवाक्याविरोधि प्रमाणं भवन्न निवार्यते, श्रुत्यैव च आत्मनः सहायत्वेन तर्कस्याप्यभ्युपेतत्वात् । तथाहि—'श्रोतव्यो मन्तव्यः' इति श्रुतिः 'पण्डितो मेधावी गन्धारानेवोपसंपद्येतैवमेवेहाचार्यवान्पुरुषो वेद' इति च पुरुषबुद्धिसाहाय्यमात्मनो दर्शयति । न धर्मजिज्ञासायामिव श्रुत्यादय एव प्रमाणं ब्रह्मजिज्ञासायाम्, किन्तु श्रुत्यादयोऽनुभवादयश्च यथासंभवमिह प्रमाणं, अनुभवावसानत्वाद्भूतवस्तुविषयत्वाच्च ब्रह्मविज्ञानस्य । कर्तव्ये हि विषये नानुभवापेक्षाऽस्तीति श्रुत्यादीनामेव प्रामाण्यं स्यात्पुरुषाधीनात्मलाभत्वाच्च

कर्तव्यस्य । कर्तुमकर्तुमन्यथा वा कर्तुं शक्यं लौकिकं वैदिकं च कर्म, यथा-अश्वेन गच्छति, पद्भ्यामन्यथा वा न वा गच्छतीति । तथा "अतिरात्रे षोडशिनं गृह्णाति, नातिरात्रे षोडशिनं गृह्णाति', "उदिते जुहोति, अनुदिते जुहोति" इति । विधिप्रतिषेधाश्चात्रार्थवन्तः स्युः, विकल्पोत्सर्गापवादाश्च । न तु वस्त्वेवं नैवमस्ति नास्तीति वा विकल्प्यते, विकल्पनास्तु पुरुषबुद्ध्यपेक्षाः । न वस्तुयाथात्म्यज्ञानं पुरुषबुद्ध्यपेक्षम् । किं तर्हि वस्तुतन्त्रमेव तत् । नहि स्थाणावेकस्मिन्स्थाणुर्वा पुरुषोऽन्यो वेति तत्त्वज्ञानं भवति । तत्र पुरुषोऽन्यो वेति मिथ्याज्ञानम् । स्थाणुरेवेति तत्त्वज्ञानं, वस्तुतन्त्रत्वात् । एवं भूतवस्तुविषयाणां प्रामाण्यं वस्तुतन्त्रम् । तत्रैवं सति ब्रह्मज्ञानमपि वस्तुतन्त्रमेव, भूतवस्तुविषयत्वात् । ननु भूतवस्तुत्वे ब्रह्मणः प्रमाणान्तरविषयत्वमेवेति वेदान्तवाक्यविचारणाऽनर्थिकैव प्राप्ता, न; इन्द्रियाद्यविषयत्वेन* संबंधाग्रहणात् । स्वभावतो विषयविषयाणीन्द्रियाणि, न ब्रह्मविषयाणि । सति हीन्द्रियविषयत्वे ब्रह्मणः, इदं ब्रह्मणा संबद्धं कार्यमिति गृह्येत । कार्यमात्रमेव तु गृह्यमाणं किं ब्रह्मणा संबद्धं किमन्येन केनचिद्वा संबद्धं—इति न शक्यं निश्चेतुम् । तस्माज्जन्मादिसूत्रं नानुमानोपन्यासार्थं, किं तर्हि ? वेदान्तवाक्यप्रदर्शनार्थम् । किं पुनस्तद्वेदान्तवाक्यं यत्सूत्रेणेह लिलक्षयिषितम् । 'भृगुर्वै वारुणिः । वरुणं पितरमुपससार । अधीहि भगवो ब्रह्मेति' इत्युपक्रम्याह—'यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति । यत्प्रयन्त्यभिसंविशन्ति । तद्विजिज्ञासस्व । तद्ब्रह्मेति ।' तस्य च निर्णयवाक्यं—'आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते । आनन्देन जातानि जीवन्ति । आनन्दं प्रयन्त्यभिसंविशन्तीति' अन्यान्यप्येवंजातीयकानि वाक्यानि नित्यशुद्धबुद्धमुक्तस्वभावसर्वज्ञस्वरूपकारणविषयाण्युदाहर्तव्यानि ॥ इति द्वितीयं जन्माद्यधिकरणम् ॥ इति प्रथमं वर्णकम् ॥

* इन्द्रियादिविषयत्वे इति पञ्चपादिकाभिमतपाठः ।

ॐ

श्रीपद्मपादाचार्यप्रणीता

# पञ्चपादिका

**"ब्रह्म जिज्ञासितव्यमि" त्युक्तमिति । ब्रह्मज्ञानकामेनेदं शास्त्रं श्रोतव्यमित्युक्तमित्यर्थः । यदेवेदमित्युक्तम्, तदेव ब्रह्मणो लक्षणं प्रमाणं युक्तिः साधनं प्रयोजनमिति सर्वं व्याख्येयत्वेन प्रतिज्ञातम् । तत्र स्वरूपस्याभ्यर्हितत्वात् तत् प्रथमं निर्देष्टव्यम्—**

## पञ्चपादिकाविवरणम्

जगज्जन्म-स्थिति-ध्वंसा यतः सिध्यन्ति कारणात् ।
तत् स्वरूप-तटस्थाभ्यां लक्षणाभ्यां प्रदर्श्यते ॥

वृत्तसङ्कीर्तनभाष्यस्यान्तर्णीतं विचारार्थोपादानेनार्थं कथयति—**ब्रह्म जिज्ञासितव्यमित्युक्तमित्यादिना** ॥ ननु ब्रह्मविचारप्रतिज्ञायां साधनादिविचाराणामप्रतिज्ञातत्वादसाध्यतेति, अत आह—**यदेवेदमित्युक्तमित्यादिना** ॥ ननु—पञ्चानां विचाराणां प्रतिज्ञातत्वे किमिति स्वरूपमेव प्रथमं विचार्यते ? फलभूततया प्राधान्यादिति चेत् न; साधनाद्यधीनत्वात्साध्यसिद्धेस्तेषामेव प्रथमं विचारः क्रियतामिति, अत आह—**तत्र स्वरूपस्याभ्यर्हितत्वादिति** ॥ ब्रह्मप्रमाणं ब्रह्मयुक्तिर्ब्रह्मसाधनं ब्रह्मफलमिति विशिष्टविचाराणां ब्रह्म-विशेषणसापेक्षत्वाद् ब्रह्मस्वरूपनिर्णयस्य

## तत्त्वदीपनम्

श्रीमद्रत्नाचलोद्भूतबोधशैलसुरद्रुमम् । भजे संततसंतापनिर्वापणविचक्षणम् ॥

किमेतत्सूत्रं स्वरूपलक्षणं प्रतिपादयति ? उतोपलक्षणम् ? नाद्यः; कारणत्वस्य स्वरूपतानुपपत्तेः, नेतरोऽपि; स्वरूपाद्बहिर्भूततया गमकस्योपलक्षणत्वात्स्वरूपलक्षणं वाच्यम्, नच तत्प्रतिपाद्यत इत्यसामञ्जस्यमित्याह - **जगदिति** ॥ आनन्दात्मकब्रह्मणो मायाविनः कारणत्वप्रतिपादकत्वादुभयपरत्वमस्येत्यर्थः । 'ग्रामो गन्तव्यः' इत्युक्ते गमनस्य यथा साध्यत्वम्, नान्यस्य; तद्वदत्रापि प्रकृति-प्रत्ययार्थयोरन्यतरस्यासाध्यत्वमित्याशङ्क्याह—**वृत्तेति** । प्रतीयमानस्यार्थस्य पुंतन्त्रत्वाभावाद्विचारलक्षणया तत्कर्तव्यतापरं भाष्यमित्यर्थः । अथवा ज्ञानकर्तव्यतापरत्वस्याश्रितव्यत्वात् कथं शास्त्रं श्रोतव्यमित्यर्थाभिधानम् ? इत्याशङ्क्याद्यपक्षाभिप्रायेणेत्याह— **वृत्तेति** ॥ लक्षणविचारस्य प्रतिज्ञाननुसारित्वमाशङ्कते— **ननु ब्रह्मेति** ॥ प्रतिज्ञातं प्रतिपाद्यं नाप्रतिज्ञातम्, ब्रह्मविचारश्च प्रतिज्ञातः, स एव प्रतिपाद्य इत्यर्थः ॥ किं तेषां मुखतोऽप्रतिज्ञातत्वम् ? उतार्थात् ? इति विकल्प्याद्याङ्गीकारेण द्वितीयं दूषयति—**अत आहेति** ॥ लक्षणविचारस्य प्रतिज्ञामाश्रित्य तस्य प्राथम्यमाक्षिपति—**ननु पञ्चानामिति** ॥ प्राथम्यहेतुं शङ्कते—**फलभूततयेति** । विचाराधीनशक्तितात्पर्यवद्वाक्योत्थज्ञानाधीनाविद्यानिवृत्तिविशिष्टतया ब्रह्मस्वरूपस्य फलत्वमित्यर्थः ॥ फलत्वमप्रयोजकमित्याह पूर्ववादी—**न साधनेति** । साधनाभावे साध्यानिष्पत्तेः साधनादेः प्राथम्यमित्यर्थः ॥ साध्यस्य साधनाधीनत्वमङ्गीकृत्य साधनादिविचारस्य प्राथम्यं दूषयति—**अत आहेति** ॥ साधनादेः साध्यसिद्धिहेतुत्वात् तस्यैव प्राथम्यम्, न साधनस्येत्याशङ्क्याह—**ब्रह्मप्रमाणमिति** । ब्रह्मज्ञानसाधनमित्यर्थः । **ब्रह्मफलमिति** । ब्रह्मज्ञानफलमिति यावत् । विशिष्टविचारप्रतिपत्तेर्विशेषणब्रह्मप्रतिपत्तिसापेक्षत्वात् प्रथममस्य स्वरूपनिर्णय इत्यर्थः । स्वरूपनिर्णयस्यापि प्रमाणादिसापेक्षत्वमविशिष्टमित्याशङ्क्याह—**ब्रह्म-**

## ऋजुविवरणम्

निजं निरन्तरं शान्तं स्फुरन्तं निर्विकल्पकम् । आनन्दमन्दिरं दूरे कल्पनाया गुरुं नमः ॥

किमनेन सूत्रेण व्युत्पाद्यते ? न तावल्लक्षणम्; अनाकाङ्क्षितत्वात्, ज्ञाते स्वरूपे लक्षणाकाङ्क्षा ? अज्ञाते वा ? नाऽज्ञाते; किमस्य लक्ष्यस्य लक्षणमित्याकाङ्क्षानुदयात्, अस्येदं लक्षणमिति लक्ष्यलक्षणसंबन्धापरिज्ञानाच्च । नापि ज्ञाते; वैयर्थ्यात् । किञ्च स्वरूपलक्षणं वोच्यते ? तटस्थं वा ? नाद्यः; जन्मादिकारणत्वस्य सप्रतियोगिकस्य स्वरूपत्वायोगात्, सविशेषत्वप्रसङ्गाच्च । नापि द्वितीयः; स्वरूपलक्षणेन विना तटस्थलक्षणमात्रेण स्वरूपप्रतीत्ययोगात्, तस्य चाप्रतीतेः । अतिव्याप्तिश्च लक्षणस्य; प्रधानादावपि जगत्कारणत्वस्य संभवात्, अतो नास्य लक्षणसूत्रत्वम्, तदभावे "स्वरूपस्याभ्यर्हितत्वादि"त्यादिस्वरूपपरत्वप्रतिपादनपरो ग्रन्थोऽसङ्गत इत्याशङ्क्य, सूत्रस्य तात्पर्यमाह—**जगज्जन्मेति** । **ननु**—अस्य भाष्यस्यानेकार्थसंभवात्किमर्थमेवं व्याख्यायते ? इत्याशङ्क्याह—**वृत्तसंकीर्तनभाष्यस्येति** । अस्य वक्ष्यमाणार्थोपयोगादिति भावः ॥ **ननु**—साध्यसिद्धिहेतुत्वं साधनस्योक्तम्, अतः; कथं स्वरूपस्याभ्यर्हितत्वेन प्रथमविचार्यत्वम् ? इत्याशङ्क्य व्याचष्टे—**ब्रह्मप्रमाणमिति** ॥ **ननु**—स्वरूपस्य प्रमाणापेक्षत्वमस्तीत्याशङ्क्याह—**ब्रह्मस्वरूपनिर्णयस्येति** ।

**पञ्चपादिका**

**किंलक्षणं पुनस्तद् ब्रह्मेति, अत आह भगवान्—जन्माद्यस्य यत इति ॥**

**युक्तिरपि लक्षणनिर्णयेऽर्थात् सूत्रितैव । जन्म = उत्पत्तिः, आदिरस्येति तद्गुणसंविज्ञानो बहुव्रीहिरिति पदच्छेदः पदार्थः पदविग्रह इत्येतत् त्रितयमपि व्याख्यानाङ्गं संपादयति । तद्गुणसंविज्ञाने प्रयोजनमाह—जन्म-स्थिति-भङ्गं समासार्थ इति ॥ तृतीयलिङ्गनिर्देशाद् संहतिप्रधानं समासार्थः ।**

**पञ्चपादिकाविवरणम्**

चानन्यापेक्षत्वात् प्राधान्येन साध्यत्वाच्चेत्यर्थः ॥

वृत्तं सङ्कीर्त्योत्तरेणाकाङ्क्षापुरःसरं सम्बन्धमाह—**किंलक्षणं पुनस्तदिति** ॥ जिज्ञास्यपुरुषार्थब्रह्मस्वरूपप्रदर्शननिमित्तमाचार्यं पूजयति **भगवानिति** ॥ ननु अस्येदं लक्षणमिदं वाऽनेन लक्ष्यमिति लक्ष्य-लक्षणयोरव्याप्त्यतिव्याप्तिपरिहारेणाविनाभावः प्रमाण-युक्तिव्यतिरेकेण न सिध्यति ? तत्कथं स्वरूपलक्षणपरमेव सूत्रमिति ? तत्राह—**युक्तिरपि लक्षणनिर्णयेऽर्थादिति** । **अपि**शब्दात् प्रमाणमपीत्यर्थः । अत्र च सूत्रितयोर्ब्रह्माणि प्रमाण-युक्त्योरध्यायद्वयेन निर्णयः क्रियते । **जन्मोत्पत्तिरित्यारभ्य तृतीयलिङ्गेऽ**त्यतः प्राक्तनो ग्रन्थः स्पष्टार्थः ॥ **तद्गुणसंविज्ञान इति** ॥ विशेष्यैकदेशमेव विशेषणं कृत्वा समास इत्यर्थः ॥ ननु एवमपि जन्म-स्थितिभङ्गास्त्रयोऽपि विशेष्याः, तत्कथमेकत्वनिर्देश इति ? अत आह—**तृतीयलिङ्गेति** ॥

**तत्त्वदीपनम्**

**स्वरूपेति** । प्रमाणादिप्रतिपत्तेर्ब्रह्मप्रतिपत्तिसापेक्षत्ववन्निर्विशेषस्वरूपप्रतिपत्त्याख्यनिर्णयस्य न युक्त्यादिप्रतिपत्त्यपेक्षत्वमिति वैषम्यमित्यर्थः । स्वरूपविचारस्य प्राथम्ये हेत्वन्तरमाह—**प्राधान्येनेति** । प्रमाणादिविचाराणां साध्यत्वमन्यार्थम्, न तथा ब्रह्मस्वरूपविचारस्येत्यर्थः ॥

पूर्वोत्तरसूत्रयोरुत्थापकलक्षणः संबन्ध इत्याह—**वृत्तमिति** ॥ भगवत्प्रयोगस्यार्थमाह—**जिज्ञास्येति** ॥ "उत्पत्तिं च विनाशं च भूतानामागतिं गतिम् । वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति" । एष **भगवच्छब्दार्थः** ॥ सूत्रस्य स्वरूपपरत्वमाक्षिपति—**नन्वस्येति** ॥ इदमस्य लक्षणमित्यव्याप्तिपरिहारेण लक्ष्यलक्षणयोरविनाभावः, इदमेवानेन लक्ष्यमित्यतिव्याप्तिपरिहारेणेति योजना । प्रमाणयुक्त्यभावोऽसिद्ध इत्याह—**तत्राहेति** ॥ युक्तिवदेव प्रमाणमपि लक्षणनिर्णयोपयोगि, तत्सूत्रणं कस्मान्नोक्तम् ? इत्याह—**अपिशब्दादिति** ॥ प्रमाण-युक्त्योरत्र सूत्रणे उत्तरग्रन्थवैयर्थ्यमित्याशङ्क्याह—**अत्रेति** ॥ वेदवाक्यानामन्यपरत्वव्युदासेन ब्रह्मण्येव तात्पर्यं समन्वयार्थः । प्रत्यक्षादिविरोधाद् वेदान्तानां ब्रह्मण्यप्रामाण्यमिति शङ्कायां तद्विरोधनिराकरणमविरोधार्थः ॥ बहुव्रीहिर्द्विविधः—तद्गुणसंविज्ञानोऽतद्गुणसंविज्ञानश्चेति । तत्रायं तद्गुणसंविज्ञान इत्युक्तं भाष्ये, तस्यार्थमाह—**विशेष्येति** । 'लम्बकर्णो देवदत्तः' इत्यत्र देवदत्तैकदेशमेव विशेषणं कृत्वा देवदत्तो बोध्यते, स तद्गुणसंविज्ञान इत्यर्थः ॥ अतद्गुणसंविज्ञानबहुव्रीहेरनङ्गीकृतौ को हेतुः ? इत्याशङ्क्योक्तं टीकाकृता—**अतद्गुणेति** । चित्रा गावो यस्य स चित्रगुरित्युक्ते न चित्रगवां समासार्थत्वम्, किंतु देवदत्तस्य, तथाचात्रातद्गुणसंविज्ञानस्वीकारे स्थितिभङ्गयोः समासार्थत्वम्, न जन्मन इत्यापद्येत, तथाच जन्मकारणमन्यत्, इति न जन्म-स्थिति-भङ्गकारणं ब्रह्म सिध्येदित्यर्थः ॥ जन्मस्थिति-भङ्गमित्येकवचनमाक्षिपति—**नन्वेवमपीति** । तद्गुणसंविज्ञानस्वीकारेऽपीत्यर्थः ॥ "द्व्येकयोर्द्विवचनैकवचने" इति सूत्राद् द्वित्वविवक्षायां द्विवचनम्, एकत्वविवक्षायामेकवचनमिति न्यायविरोधादेकत्वनिर्देशानुपपत्तिरित्यर्थः ॥ भिन्नेष्वपि तरुषु संहत्युपाधौ वनव्यपदेशवदत्रापि समाहारोपाधावेकवचनं युज्यत इति, अत आह—**अत आहेति** ॥ संहतिप्रधानत्वगमकमाह—**तृतीयेति** । नपुंसकलिङ्गनिर्देशादित्यर्थः ॥

**ऋजुविवरणम्**

व्यावृत्तेरित्यर्थः ॥ ननु—प्रमाणलक्षणस्यैव निर्णायकत्वेन तत्सापेक्षत्वमनिष्टमित्याशङ्क्य, प्रकारान्तरेणाभ्यर्हितत्वं दर्शयति—**प्राधान्येनेति** ॥

अपिशब्देन स्वरूपसमुच्चयाशङ्काव्युदासायाह—**अपिशब्दादिति** ॥ ननु—अत्रैव प्रमाण-युक्त्योः सूचितत्वे तद्विषयमध्यायद्वयमनपेक्षितं स्यादिति, तत्राह—**अत्र तु सूत्रितयोरिति** ॥ कथं तद्गुणसंविज्ञानपक्षे जन्मनस्समासार्थत्वम् ? इत्याशङ्क्य व्याचष्टे—**विशेष्यैकदेशमेवेति** ॥ तस्य विशेषणस्य गुणस्य विशेष्यत्वेन संविद् ज्ञानं यस्मिन्निति विग्रहः । एकस्यैव विशेष्यत्व-विशेषणत्वविरोधं परिहरति—**एकदेशमिति** ॥ कथं समाहारप्राधान्यम् ? इत्या-

### पञ्चपादिका

ननु आदिः पूर्वकालकोटिमत्तो भवति, तदभावे प्रपञ्चस्य को नामाऽऽदिः ? इत्याशङ्क्याह—जन्मनश्चादित्वं श्रुतिनिर्देशापेक्षं वस्तुवृत्तापेक्षं चेति ॥ यदनेन सूत्रेण लक्षितं ब्रह्म, तत्स्वरूपकथनपरं वाक्यम्। तत्रादौ जन्म निर्दिष्टमिति तस्यादित्वम्। वस्तुस्वभावापेक्षमपि। नहि प्रलीय तिष्ठति। स्थित्वा वा जायते। नापि जनित्वैव प्रलीयते; क्षणिकत्वनिराकरणात्। अतो जनित्वा स्थित्वा प्रलीयते। एवमादिरयं प्रपञ्चः। "अस्य" इति भाष्येण पदभागस्येदमः प्रकृतिमात्रस्यार्थनिर्देशः। तथाहि—सर्वत्र सर्वनाम्नः प्रक्रमादिकारणान्तरबलेन कतिपयाभिधेयपरम्, तदभावे स्वमहिम्ना प्रमाणविषयमात्राभिधायकम्, तेनाह—प्रत्यक्षादिसन्निधापितस्य धर्मिण इदमा निर्देश इति ॥ षष्ठी जन्मादिधर्मसम्बन्धार्थेति । सर्व एवेह सम्बन्धः संभवति, न तद्विशेष आदरणीय इति कथयति। "यत इति कारणनिर्देश" इति—

### पञ्चपादिकाविवरणम्

जन्मादीनामादिमध्यावसानमाक्षिपति—ननु आदिरिति ॥ परिहरति—जन्मनश्चादित्वमिति ॥ भाष्यं व्याचष्टे—यदनेन सूत्रेणेति ॥ ननु—सर्वे जनित्वैव नश्यति न किञ्चित्कालं तिष्ठति; स्वसत्ताप्रयुक्तत्वाद्विनाशस्येत्यत आह—क्षणिकत्वनिराकरणादिति ॥ अतो जनित्वेत्यादिः स्पष्टार्थः। ननु इदंशब्दः किञ्चिदेव सन्निहितं गमयति नाखिलं जगदित्यत आह—तथाहि सर्वत्रेति ॥ ननु जन्मादीनां जगतश्च कः सम्बन्धः षष्ठ्या विवक्षित इति ? तदाह—सर्व एवेति ॥ ननु—जगज्जन्मस्थिति-भङ्गं किंसम्बन्धितया लक्षणं भवति ? न तावत् काकवल्लक्ष्यसम्बन्धितया; जगदाश्रयत्वाद्धर्माणामिति, कारणसम्बन्धितयेत्याह—यत इति कारणनिर्देश इति ॥

### तत्त्वदीपनम्

"प्रपञ्चस्य को नामादिरि"त्यत्र किमुत्पत्तिः प्रतिषिध्यते ? उत प्राधान्यम् ? आद्ये प्रतिवचनस्याननुरूपत्वम्, द्वितीयेऽप्यनुक्तोपालम्भ इत्याशङ्क्य तात्पर्यमाह—जन्मादीनामिति ॥ पूर्वकालकोटिः प्रागभावः, तद्वत आदिर्भवति, प्रपञ्चस्य पूर्वकालकोटिविहीनत्वान्न तज्जन्म-स्थितिभङ्गानामन्यतमस्य प्राधान्यमिति टीकार्थः ॥ "जन्मनश्चादित्व"मिति च"शब्दप्रयोगाद् हेत्वन्तरसमुच्चयार्थत्वं लक्ष्यते, नच तथा; तस्य प्रागनिर्दिष्टत्वात्, इत्याशङ्क्य शङ्काव्यावृत्ति"श्च"-शब्दार्थ इत्याह—परिहरतीति ॥ श्रुतौ निर्देशः श्रुतिनिर्देश इत्यर्थः। श्रुतौ जन्मन आदित्वनिर्देशेऽपि सूत्रे तस्यादित्वं कस्मात् ? इत्याशङ्कां परिहरिष्यन्नाह—भाष्यमिति ॥ "यतो वे"त्यादिवाक्यार्थनिरूपणायेदं सूत्रं प्रवृत्तम्, ततश्च श्रुतौ जन्मन आदित्वस्य निर्दिष्टत्वात् सूत्रेऽपि तथा भवितव्यम्; अन्यथा श्रुति-सूत्रयोरननुरूपतापातादिति टीकार्थः ॥

जनित्वा स्थित्वा नश्यतीति न नियन्तुं शक्यमिति शङ्कते—ननु सर्वमिति। विद्युदादौ स्वसत्तालाभानन्तरं विनाशदर्शनादत्रापि तथात्वमिति न जन्म-स्थिति-भङ्गानां क्रम इत्यर्थः ॥ प्रत्यभिज्ञाविरोधान्नैषा शङ्का समुत्तिष्ठतीत्याह—अत आहेति ॥ प्रकृतिप्रत्ययात्मकमेकं पदम्, तत्र प्रकृत्येदमा प्रत्यक्षादिसन्निधापितं जगन्निर्दिश्यत इत्युक्तम्, तदाक्षिपति—नन्विदंशब्द इति। 'अयं घटः' इत्यादाविदंशब्दस्य पुरोऽवस्थितवस्तुमात्रविषयत्वदर्शनादिदमः सकलजगत्परामर्शित्वमयुक्तमित्यर्थः ॥ सर्वनाम्नः प्रसिद्धवस्तुमात्रपरामर्शित्वं स्वभावः, अपवादे त्वन्यथात्वमित्याशयेनाह—अत आहेति ॥ "अस्ये"त्यत्र प्रत्ययस्य संबन्धोऽर्थ इत्युक्तम्, तदाक्षिपति—ननु जन्मादीनामिति ॥ किं सतो जन्मादिसंबन्धः ? उतासतः ? नाद्यः; जन्मनः प्राक् सत्त्वासंभवात्, सतो नाशानुपपत्तेश्च। नाप्यसतो जन्मनाशादिसंभवः संभवी; नृशृङ्गवत्, नापि स्थितिसंबन्धः; तस्य भेदादिनाऽनिरूपणादिति चोद्यार्थः ॥ अनिर्वचनीयत्वादस्मिन् मते सर्वोऽपि संबन्धः संभवतीत्याह—तदाहेति ॥

लक्षणनिरूपणार्थं सूत्रमित्युक्तम्। तत्र जन्मादिकं लक्षणम् ? उत तत्करणत्वम् ? इति विकल्प्याद्येऽपि निरूप्यमित्याह—ननु जगज्जन्मेति ॥ किं संबन्धिनो जन्मादेर्लक्षकत्वम् ? उतासंबन्धिन इति किंशब्दार्थः। संबन्धित्वे लक्षकत्वमेवानुपपन्नमित्यभिप्रेत्य संबन्धपक्षं दूषयति—न तावदिति ॥ जगतो जन्मादेश्च स्वतोऽसंभवात्कारणाधीनत्वम्, ततश्च कारणत्वस्य लक्षणताश्रयणाज्जन्मादेर्लक्षणत्वनिरसनमित्याह—कारणेति ॥ कारणत्वस्यापि न लक्षणत्वं युज्यत

### ऋजुविवरणम्

शङ्क्योक्तम्—तृतीयलिङ्गेति ॥ प्रपञ्चस्यादिरनुक्तः कथमाक्षिप्यते ? इत्याशङ्क्याभिप्रायमाह—जन्मादीनामिति ॥ कथं श्रुतिनिर्दिष्टत्वमात्रेण सूत्रे तदपेक्षते ? इत्याशङ्क्य, तन्निवृत्तौ तात्पर्यमाह—भाष्यं व्याचष्ट इति ॥ जन्मादीनां लक्षणत्वमेव न संभवतीत्यभिप्रायेण चोदयति—ननु जगज्जन्म-स्थिति-भङ्गमिति। जगद्गतानां लक्ष्यसंबन्धाभावाद-

### पञ्चपादिकाविवरणम्

ननु—जगज्जन्मादिकारणत्वमपि लक्षणान्तर्गतम्? आहोस्विल्लक्ष्यस्वरूपान्तर्गतम्? इति वक्तव्यम्। ननु गृहस्य काकाधिकरणत्वं नाम धर्मः कस्मिन्नन्तर्भवति? लक्ष्य इति चेत्, काकाधिकरणत्वं च गृहशब्दार्थः स्यात्। ततश्च काकविगमे गृहैकदेशभङ्गबुद्धिः स्यात्। लक्षणान्तर्गतमिति चेत्, कारणत्वमपि तथा नहि नानाविधकार्यक्रियावेशात्मकत्वं तत्प्रसवशक्त्यात्मकत्वं वा जिज्ञास्यविशुद्धब्रह्मान्तर्गतं भवितुमर्हति। तस्माद् जगज्जन्मादिकारणत्वमेवोपलक्षणमिति॥ ननु—निमित्तकारणत्वमुपादानकारणत्वमुभयं वोपलक्षणत्वेनोच्यते? न तावन्निमित्तकारणत्वमेव ब्रह्मोपलक्षणम्; जगदभिन्नस्योपादानकारणस्य भेदेनावस्थानाद् ब्रह्मशब्दस्य स्वार्थान्वयाभावप्रसङ्गात्। नाप्युपादानकारणत्वमुपलक्षणम्; निमित्तकारणस्य सर्वज्ञस्य भेदेनावस्थानाद् "यतः सर्वज्ञात् सर्वशक्तेरि"ति व्यपदेशो न स्यात्; उपादानकारणस्य लोकेऽचेतनत्वात्। "सत्यं ज्ञानमनन्तमि"ति च स्वरूपलक्षणस्योभयत्रायोगात्। नाप्युभयकारणत्वं ब्रह्मोपलक्षणम्; एकस्योभयकारणत्वे प्रमाणाभावात्। प्रमाणान्तरसिद्धं हि लक्षणमनधिगतलक्ष्यस्वरूपाधिगमायालम्। न

### तत्त्वदीपनम्

इत्याह—**नन्विति**॥ **लक्षणान्तर्गतमि**त्युपलक्षणमित्यर्थः। न तावत् कारणत्वस्य लक्ष्यस्वरूपत्वम्; सप्रतियोगित्वात्, नापि लक्षणान्तर्गतत्वम्:; ब्रह्मणो निर्धर्मकत्वादिति काक्वा सूच्यते॥ प्रतिबन्द्योत्तरं वक्तुं तामाह—**ननु गृहस्येति**॥ अधिकरणस्य किं स्वरूपत्वम्? उतोपलक्षणत्वम् इति किंशब्दार्थः। आद्यमनूद्य दूषयति—**लक्ष्य इत्यादिना**॥ द्वितीयमनुवदति—**लक्षणेति**॥ तुल्यमुत्तरमित्याह—**कारणत्वमिति**॥ कारणत्वस्य लक्षणान्तर्गतत्वमुपपादयति—**न हीति**॥ **क्रियावेशात्मकत्वम्**—क्रियाश्रयत्वमित्यर्थः। कारणत्वस्य न ब्रह्मलक्षणत्वम्; तस्य निर्धर्मकत्वात्, इत्युक्तमुपसंहारव्याजेन निरस्यति—**तस्मादिति**। "आत्मन आकाशः संभूतः" इत्यादिना ब्रह्मणः कारणत्वप्रतिपत्तेरित्यर्थः॥ प्रकारान्तरेण लक्षणमाक्षिपति—**ननु निमित्तेति**। उपादानकारणस्य निमित्तकारणाद् भेदेनावस्थानाद् ब्रह्मशब्दस्य स्वार्थान्वयाभावप्रसङ्गादिति संबन्धः। न केवलमुपादानकारणपृथक्त्वाद् ब्रह्मशब्दार्थसंभवः, किं तु कार्यस्यापि पृथग्भावादित्याह—**जगदिति**॥ द्वितीयं दूषयति—**नापीति**॥ निमित्तकारणस्य पृथग्भावेऽपि ब्रह्मणः सर्वज्ञत्वादिरूपत्वाद् व्यपदेशसंभव इत्याशङ्क्याह—**उपादानेति**॥ पक्षद्वयेऽपि साधारणं दूषणमाह—**सत्यं ज्ञानमिति**॥ "निमित्तत्वेऽनन्तमि"त्यनुपपन्नं स्यात्; उपादानस्य पृथग्भावात्, तथा केवलोपादानत्वेऽप्यनन्ततानुपपत्तिस्तुल्या; निमित्तस्य पृथग्भावात्। तथा ज्ञानमिति चानुपपन्नम्; उपादानस्य चेतनत्वादित्यर्थः। तृतीयं दूषयति—**नापीति**॥ उभयकारणत्वस्य लक्षणतया प्रमाणत्वात् तत्र प्रमाणाभावो न दोषायेत्याशङ्क्याह—**प्रमाणान्तरेति**। प्रमाणान्तराधिगतं गन्धवत्त्वादिकं पृथिव्यादिकं लक्षयति; अन्यथाऽऽश्रयासिद्धेरित्यर्थः। तर्हि सिद्धमेव लक्षणमस्त्वित्याशङ्क्य, किमनुमानतः सिद्धम्? उतागमात्? नाद्य इत्याह—**न तावदिति**॥ घटादौ निमित्तोपादानयोर्भेदोपलम्भात् सपक्षाभाव इत्याह—**दृष्टान्त इति**॥ किं भूत-भौतिकपक्षीकारेणा-

### ऋजुविवरणम्

लक्षणत्वमिति भावः॥ कारणसंबन्धिनोऽपि लक्षणत्वं न संभवतीत्यभिप्रायेण चोदयति—**ननु जगज्जन्मादिकारणत्वमिति**। लक्ष्यान्तर्गतत्वे जन्मादेर्लक्षणत्वायोगाद् लक्षणान्तर्गतत्वेऽप्यसंभव एव; कारणत्वस्य लक्षकत्वात्, किमिति कारणत्वं लक्ष्यं नेष्यते? इत्याशङ्क्याह—**न हि ननाविधेति**॥ कथं तर्हि लक्षणसंबन्धिनो जन्मादेर्लक्षणत्वम्? इत्याशङ्क्योपलक्षणत्वादित्याह—**जगज्जन्मादीति**॥ अथवाऽन्यतरवैयर्थ्यं परिहरति—**तस्माज्जगज्जन्मादीति**॥ **ननु—निमित्तकारणस्य** भेदेनावस्थानेऽप्युपादानमपि तथैवाङ्गीक्रियत इत्याशङ्क्याह—**उपादानकारणस्येति**॥ ननु—स्वरूपलक्षणसहकृतं ब्रह्मत्वं चेतनत्वं वा कस्मान्न गमयति? इत्याशङ्क्याह—**सत्यं ज्ञानमिति**॥ ननु—लक्षणस्य प्रमाणत्वात्किं प्रमाणप्रसिध्या? लक्षणवैयर्थ्यप्रसङ्गात्, यद्वा—किं प्रसिध्याऽपेक्षितम्? इत्यत आह—**प्रमाणान्तरसिद्धं हीति**॥ एतदपि प्रसिद्धलक्षणमिति चेत्; किमनुमानेन? शब्देन वा? न तावत्प्रथम इत्याह—**न तावदेकस्येति**॥ कथं दृष्टान्ते भेददर्शनम्? सुखादेर्दृष्टान्तत्वेनोपादानात्, मैवम्; तथाऽपि किं भूत-भौतिकजगत् पक्षीक्रियते? भूतमात्रं वा? प्रथमपक्षे त्वंशे बाधितविषयत्वमित्याह—**महाभूतपञ्चकव्यतिरिक्तेष्विति**॥ **न तदनुवादेनेति**। एकस्यैवोभयथा कारणत्वमनुवदितुं न शक्यते; अप्रसिद्धत्वादिति भावः। द्वितीयपक्षे भौतिकेष्वनैकान्तिको हेतुर्गमक एव न भवति, अतो न तस्याप्यनुवाद इत्यभिप्रायेणाह—**भूतपञ्चकेति**॥ तथा शब्दप्रसिद्धिपक्षेऽपीदमेवोत्तरम्—**महाभूतपञ्चकव्यतिरिक्तेष्विति**। शब्दस्यापि ब्रह्मपरत्वाल्लक्षणां-

### पञ्चपादिका

**प्रकृतित्वनिबन्धना हि पञ्चमी, नान्यनिबन्धनेति दर्शयति ॥**

### पञ्चपादिकाविवरणम्

तावदेकस्य जगन्निमित्तोपादानत्वमनुमानेनावगन्तुं शक्यम्; दृष्टान्ते भेददर्शनात्। महाभूतपञ्चकव्यतिरिक्तेषु पदार्थेषु नानाविधनिमित्तोपादानदर्शनान्न तदनुवादेन ब्रह्म विधातुं शक्यम्। भूतपञ्चकनिमित्तोपादानत्वमेवास्याप्रसिद्धमिति, तत्राह—**प्रकृतित्वनिबन्धना हि पञ्चमीति** ॥ निमित्तत्वस्याप्युपलक्षणमेतत्; उभयत्र पञ्चमीविधानात्। भूतपञ्चकस्य तावदेका प्रकृतिरनुमीयते; सद्वस्त्वेकस्वभावानुगमात् ॥ **तथाहि**—महाभूतानि, सद्वस्तुप्रकृतिकानि, सत्स्वभावानुरक्तत्वे सति, विविधविकारत्वात्; मृदनुस्यूतघटादिवत्। द्रव्यत्वाद्यभेदा अपि प्रकृतिस्वभावा एव सामान्यवदवभासन्ते, सद्वस्तु पुनः सर्वानुगमात्सर्वविकारप्रकृतिः। भौतिकानां च भूतोपादानत्वं दृश्यमानं मूलप्रकृत्यधीनतामेव सर्वस्य गमयति।

### तत्त्वदीपनम्

भिन्नोपादानत्वं साध्यते ? उत भूतमात्रं पक्षीकृत्य ? नाद्य इत्याह—**महाभूतेति** ॥ निमित्तोपादानभेदग्राहिप्रत्यक्षादिविरोधान्नेत्थमनुमानमुदेतीत्यर्थः ॥ किं चाभिन्ननिमित्तोपादानस्याप्रामाणिकत्वान्न तदनुवादेन ब्रह्मप्रतिपादनमित्याह—**न तदिति** ॥ न द्वितीय इत्याह—**भूतेति**। भूतपञ्चकस्य कार्यत्वेनाभिन्ननिमित्तोपादानत्वं नानुमेयम्; भौतिकेषु व्यभिचारादित्यर्थः ॥ नाप्यागमात् तत्सिद्धिः; उभयकारणत्वसाधकागमानुपलब्धेरिति द्रष्टव्यम्। टीकायामुपादानमात्रमुपलक्षणमुक्तमिति प्रतिभातीत्याशङ्क्याह—**निमित्तत्वस्यापीति** ॥ **नान्यनिबन्धनेति**। नान्यनिबन्धनैवेत्यर्थः ॥ पञ्चम्या उपादानार्थत्वे न निमित्तार्थत्वम्, निमित्तार्थत्वे, नोपादानार्थत्वमित्याशङ्क्याह—**उभयत्रेति**। "जनिकर्तुः प्रकृतिरि"ति सूत्रे प्रकृतौ, "हेताववि"ति निमित्ते पञ्चम्या विधानं लक्ष्यत इत्यर्थः ॥ एकस्यं निमित्तोपादानत्वमप्रसिद्धमिति न लक्षणमित्युक्तं निरस्यति—**भूतेति** ॥ सद्वस्त्वनुगममात्रेण कथमेकप्रकृतिकत्वमनुमीयते ? जीवादौ व्यभिचारादित्याशङ्क्याह—**तथाहीति** ॥ महाभूतानि, स्वानुगतोपादानानि भावत्वे सति विकारत्वात्; घटादिवदिति विवक्षितम्। प्रध्वंसव्यावृत्त्यर्थम्—"**भावत्वे सती**" त्युक्तम्। आत्मव्यावृत्त्यर्थं "**विकारत्वादि**"ति। विकारत्वमुपपादयितुम्—"**विविधे**"त्युक्तम्। **विविधत्वम्**=विभक्तत्वमित्यर्थः। किं तदनुगतमुपादानमिति वीक्षायां 'सन् घटः' 'सन् पटः' इति सदनुरक्ततया घटादेः प्रतीयमानत्वात् सदेवानुगतमुपादानमित्यभिप्रायेण सद्वस्तुप्रकृतिकानीत्युक्तमाचार्येणेति द्रष्टव्यम् ॥ सत्त्ववद् द्रव्यत्वादीनामप्यनुगतानां तत्रोपलम्भात् किमत्रोपादानमिति न ज्ञायते, तदर्थमाह—**द्रव्यत्वादीति**। द्रव्यत्वादय एवाभेदा द्रव्यत्वाद्यभेदाः। न भिद्यन्त इत्यभेदाः, अनुवृत्ता इत्यर्थः। द्रव्यत्वावान्तरजातीयपृथिवीत्वादिकमादिशब्दार्थः। द्रव्यत्वादीनामपि विभक्तत्वात् समानाधिकृतत्वोपलम्भाच्च न पृथगनुगतिर्युज्यते, किंतु तदध्यस्ततयेत्यर्थः ॥ सत्तासामान्यस्यापि व्यभिचारित्वादनुपादानत्वमिति शङ्कां निरस्यति—**सद्वस्त्विति**। सच्छब्देन न पराभिमतं सामान्यं विवक्षितम्, किन्तु सद्द्रव्यम्, सन्तो गुणाः, सन्ति कर्माणि, सत्त्वं सत्, विशेषाः सन्तः, सन् समवायः, इत्यादिरूपेण सर्वत्र प्रथमानः सच्छब्दार्थः, तच्चोपादानमित्यर्थः ॥ भौतिकानां भूतोपादानताया अनुभवसिद्धत्वात्सद्वस्तु सर्वप्रकृतिरिति कथमुक्तम् ? इत्याशङ्क्य, भूतानां सदुपादानतया सदात्मकत्वाद् भौतिकानामपि सत्प्रकृतिकत्वमस्खलितमित्याह—**भौतिकानामिति** ॥ व्यावृत्तस्य कारणत्वकल्पनायां गौरवम्, इतरत्र लाघवम्, अतोऽप्येकमेवोपादानमित्याह—**अत इति** भवत्वेकस्य सकलोपादानत्वम्; तथाऽपि कथमभिन्ननिमित्तोपादानत्वम् ? तत्राह—**तस्येति** ॥ प्रेक्षापूर्वं कारणमस्येति प्रेक्षापूर्वम्, तच्च जनितं चेति प्रेक्षापूर्वजनितम्।

### ऋजुविवरणम्

शेऽनुवादो वक्तव्यः। तत्र भौतिकेषूपादान-निमित्तयोर्भेददर्शनान्नैकत्वमनुवदितुं शक्यम्, भूतांशे प्रसिद्धत्वादेव नानुवाद इति भावः ॥ कथमेकस्यार्थद्वयमिति ? तदाह—**उभयत्रेति** ॥ ननु—एकस्योपादानत्वं निमित्तत्वञ्चाप्रसिद्धम् ? इत्याशङ्क्य विवृणोति—**तथाहि महाभूतानीति** ॥ ननु—द्रव्यत्वाद्यनुगमेऽपि न तदुपादानत्वम्; अतो नैकान्तिकमित्याशङ्क्याह—**द्रव्यत्वाद्यभेदा अपीति** ॥ ननु—भौतिकेषु सद्वस्त्वनुगमेऽपि भूतोपादानत्वं दृश्यते, अतोऽनैकान्तिकम्, यद्येवं भूतकारणत्वमेव लक्षणं स्यादित्याशङ्क्याह—**भौतिकानाञ्चेति**। भूतानुगतं सद्वस्त्वेवोपादानम्; भूतानि तु द्वारमात्रमित्यर्थः ॥ किमिति द्वारमात्रत्वम् ? भूतानामेवोपादानत्वं कस्मान्न भवति ? इत्याशङ्क्याह—**अतस्सर्वकार्योपादानमिति** ॥ अथवोभयस्योपादनत्वं कस्मान्न भवति ? इत्याशङ्क्याह—**अतस्सर्वकार्योपादानमिति** ॥ पूर्वोक्तमनैकान्तिकत्वं परिहरति—**नच घटादिष्विति** ॥

## पञ्चपादिकाविवरणम्

अतः सर्वकार्योपादानमेकमेव लाघवात्, इति न्यायानुगृहीतानुमानेन सिद्धम् । तस्यैव च निमित्तकारणत्वमनुमानेन कल्प्यते । तथाचेदं जगत्, अभिन्ननिमित्तोपादानं भवितुमर्हति, प्रेक्षापूर्वजनितकार्यत्वात्; आत्मगतसुख-दुःख-राग-द्वेषादिवत् । नच घटादिष्वनैकान्तिका; तत्राप्यभिन्ननिमित्तोपादानत्वकल्पनात् । अदृष्टादिनिमित्तभेदो दृश्यत इति चेत्, न; उपादानाधिष्ठात्रोरेवैकत्वानुमानात् । तस्मादनुमानेनैव प्रसिद्धमेकस्योभयकारणत्वं लक्षणत्वेन निर्दिश्यते । सृष्टिवाक्यप्रसिद्धं चैकस्योभयकारणत्वं लक्षणत्वेन निर्दिश्यते ॥

तत्र केचित्परिणामवादमवतारयन्ति । तैस्तत्र प्रमाणं वक्तव्यम् । सृष्टिश्रुतय इति चेत्, न; तत्र परिणामशब्दाश्रवणात् । सत्यतोऽन्यथाभावः परिणामो ब्रह्मणोऽपि सत्यतः प्रपञ्चापत्तिं प्रतिपादयतीति चेत्, न; तासु सत्यशब्दाश्रवणात् । स्वतःप्रामाण्यात् तथाभूतैव सृष्टिरिति चेत् ? किमिदं तथाभूतत्वं नाम ? सत्यत्वमिति चेत्, न; 'मिथ्येदं रजतमि'ति विशिष्टेऽर्थे प्रमाणगम्ये स्वप्नसृष्टावपि सत्यबुद्ध्यभावात् । स्वोपाधौ स्वविषयाभावविरोधितेति चेत्, न;

## तत्त्वदीपनम्

**जनितपदं** तु स्पष्टीकरणार्थम् । प्रेक्षापूर्वमसिद्धमिति शङ्कां निराकर्तुम्—**"कार्यत्वादि"**त्युक्तम् । घटादिषु व्यभिचारमाशङ्क्याह—**नचेति** । मृदाद्यवस्थचैतन्यस्योपादानत्वात् कुलालाद्यवस्थचैतन्यस्य निमित्तत्वात् तयोश्चैक्यान्न व्यभिचार इत्यर्थः । सुखाद्युत्पत्तावात्मोपादानम्, अदृष्टादि निमित्तम्, ततश्च साध्यविकलो दृष्टान्त इति शङ्कते—**अदृष्टादीति** । अदृष्टादिलक्षणनिमित्तस्यात्मलक्षणोपादानाद् भेद इत्यक्षरार्थः । साध्यशब्दार्थानभिज्ञो भवानित्याह **नोपादानेति** । अभिन्नोपादानाधिष्ठातृकत्वस्य साध्यत्वान्न साध्यवैकल्यमित्यर्थः ॥ अनुमानस्य निरवद्यतासाधनफलमाह—**तस्मादिति** ॥ न केवलमनुमानादुभयकारणत्वसिद्धिः, किंतु श्रुतितोऽपीत्याह—**सृष्टीति** । "तदात्मानं स्वयमकुरुत" "बहु स्यां प्रजायेये"त्यादिवाक्यादुपादानत्वम् । "तदैक्षते"तीक्षणपूर्वकसृष्टृत्वश्रवणादधिष्ठातृत्वं च लक्ष्यत इत्येकस्योभयकारणत्वं सिद्धमित्यर्थः ॥

परिणामिनः क्षीरादेरचेतनत्वदर्शनादुपादानस्याधिष्ठातृत्वं विरुद्धमित्येकदेशिमतमुत्थापयति—**अत्रेति** ॥ ब्रह्मणः परिणामित्वस्यैवासिद्धेर्न विरोध इत्याह—**तैरिति** । प्रमाणाभावान्न परिणामित्वमित्यर्थः ॥ प्रमाणाभावोऽसिद्ध इति शङ्कते—**सृष्टीति** ॥ किं तत्र मुखतः परिणामप्रतिपत्तिः ? उतानुपपत्त्या ? विकल्प्याद्यं प्रत्याह—**न तत्रेति** ॥ द्वितीयमनुवदति—**सत्यत इति** । विवर्तव्यावृत्त्यर्थम्—**सत्यत** इति विशेषणम् । "तदात्मानं स्वयमकुरुत" "सच्च त्यच्चाभवदि"त्याद्याः श्रुतयो ब्रह्मणो वस्तुतो जगदापत्तिं कथयन्तीत्यर्थः । उदाहृतश्रुतिषु ब्रह्मणोऽन्यथाभावमात्रं प्रतीयते, न वस्तुतः, अन्यथाभावमात्रं विवर्तपक्षेऽपि संगच्छत इत्याह—**न तास्विति** ॥ अश्रवणमप्रयोजकमिति शङ्कते—**स्वत इति** । वेदान्तास्तावत्प्रमाणम्, प्रमाणत्वं च सम्यगनुभवसाधनत्वम्, ततश्च वेदान्तगम्यसृष्टेस्तथाभूतत्वमाश्रयणीम्; इतरथा तेषामप्रामाण्यापातादित्यर्थः ॥ विकल्पासहत्वात् तथाभूतत्वमेव न निरूपणपथमवतरतीत्याह—**किमिदमिति** ॥ तथाभूतत्वं नाम किं सत्त्वम् ? आहो स्वोपाधौ नास्तितताविरोधित्वम् ? इति **किं**शब्दार्थः । आद्यमनुवदति—**सत्यत्वमिति** । प्रमाणगम्यस्य व्यभिचारित्वान्मैवमित्याह—**न मिथ्येति** ॥ **विशिष्टेऽर्थ इति** ॥ मिथ्यात्वविशिष्टरजत इत्यर्थः ॥ इतोऽपि न प्रमाणगम्यत्वं सत्यत्वमित्याह—**स्वप्नेति** । "अथ रथान् रथयोगान् पथः सृजते" इति स्वाप्नसृष्टेः श्रौतत्वेऽपि सत्यत्वाभावादित्यर्थः ॥ द्वितीयमनुवदति—**स्वोपाधाविति** ॥ **स्वोपाधौ**—स्वाधिष्ठाने इति यावत्, सृष्टेर्मायाविलासत्वेऽप्येवंविधसत्यत्वसंभवान्न परिमाणसिद्धिरित्याह—**न मायेति** ॥ साम्यमेवाह—**सृष्टेरिति** ॥ इतोऽपि न स्वोपाधौ नास्तितताविरोधित्वं सत्यत्वमित्याह—**सर्वं इति** । स्फटिकादिगतारुणिमादयोऽप्यलक्तकाद्युपाधौ नास्तिताविरोधितया सत्याः स्वयं स्युरित्यर्थः ॥ **स्वाश्रयोपाधाविति** । स्वाश्रये स्फटिकादिलक्षणे धर्मिणि सति—जपाकुसुमलक्षणे उपाधौ

## ऋजुविवरणम्

बाधितविषयत्वमुक्तमनुवदति—**अदृष्टादिनिमित्तेति** ॥ श्रुतिप्रसिद्धपक्षेऽप्युक्तदूषणं परिहरति—**सृष्टिवाक्यप्रसिद्धं चेति** ॥ ननु—न मायात्मकत्वे समानत्वम्; सोपाधिके व्यभिचारात्, इत्याशङ्क्याह—**सर्वे च सोपाधिका धर्मा इति** ॥ यद्वा—तन्मते न स्वोपाधावभावव्यावृत्तत्वमित्यस्यातिप्रसङ्गमाह—**सर्वे चेति** ॥ निषिद्धसृष्टेः कथं विषयाभावविरोधित्वमित्याशङ्क्याह—**सृष्टिरपि स्वरूपेणेति** ॥

## पञ्चपादिकाविवरणम्

मायात्मकत्वेऽपि समानम् । सृष्टेश्च स्वोपाधावभावव्यावृत्तत्वात् सर्वे च सोपाधिकधर्माः स्वाश्रयोपाधावबाध्यतया सत्या भवन्ति, सृष्टिरपि स्वरूपेण न बाध्यते, किन्तु परमार्थसत्यत्वांशेन ॥

ननु मिथ्यासृष्टिविषयत्वे वाक्यस्याप्रामाण्यं स्यात्, न तत्; प्रमाणव्यापारानभिज्ञो देवानां प्रियः । प्रमाणं हि प्रमेयाभावं न सहते, नाप्रमेयाभावम् । नच सृष्टिश्रुतिः परमार्थसत्यतां प्रमिमीते; तदभिधानाभावात् । यथा 'घटः' इत्युक्ते भावाभावयोः साधारणोऽवभासते, अन्यतराभिधानाभावात्, तद्वत् । न हि स्वप्नविषया सृष्टिश्रुतिस्तत्सत्यतां प्रतिपादयति । प्रयोजनशून्यतया तात्पर्यहीनत्वाच्च न ब्रह्मणः प्रपञ्चापत्तिं प्रतिपादयति; अनर्थहेतुत्वाच्च दुःख-

## तत्त्वदीपनम्

सतीत्यर्थः ॥ "नेति नेती"त्यादिना ब्रह्मणि निषिद्धायाः सृष्टेः कथं तत्रास्तिताविरोधित्वम् ? इत्याशङ्क्याह—**सृष्टिरपीति** । प्रतिभासविरोधाद् न स्वरूपनिषेधो युक्त इत्यर्थः ॥ निषेधश्रुतेर्तर्हि का गतिरित्याह—**किं त्विति** ॥ ब्रह्मणो यादृशं सत्त्वम्, तादृशसत्त्वाभावो विषय इत्याह—**परमार्थेति** ॥

सृष्टेः सत्यत्वाभावेऽसद्विषयत्वेन सृष्टिश्रुतेरप्रामाण्यापत्तिरिति शङ्कते—**ननु मिथ्येति** ॥ अरजतं रजततया यद् बोधयति तदप्रमाणम्, न सद्रजतबोधोऽपीति प्रसिद्धम् । तथा च श्रुतिः सत्यां सृष्टिमसत्यतया बोधयन्त्यप्रमाणं स्यात्, न त्वसत्यं तथा बोधयन्तीत्याशयवानाह—**नच प्रमाणेति** ॥ अनभिज्ञत्वं स्पष्टयति—**प्रमाणमिति** ॥ फलितं दर्शयति—**नचेति** ॥ सदसत्त्वं विना प्रतीतिरेवानुपपन्नेत्याशङ्क्याह—**यथेति** ॥ यदि घटपदेनैव तदस्तित्वं बोध्यते घटोऽस्तीति पौनरुक्त्यं स्यात्, यदि घटपदं नास्तितामेव ब्रूयात्, तदा घटोऽस्तीति व्याघातः, घटो नास्तीति पौनरुक्त्यं च । तथाच कीर्तितं धर्मकीर्तिना—

"घटोऽस्तीति न वक्तव्यं सन्नेव हि घटो यतः । नास्तीत्यपि न वक्तव्यं विरोधात्सदसत्त्वयोः ॥" इति ।

तथाच घट इति साधारणाकारप्रतिपत्तिवत् सृष्टेरपि तथा प्रतिपत्तिं को निवारयेदित्यर्थः ॥ प्रमाणगम्यत्वं न सत्यत्वप्रयोजकम्; स्वाप्नसृष्टौ व्यभिचारादित्युक्तमयुक्तम्, तस्या अपि प्रमाणगम्यतया सत्यत्वादिति मन्वानं प्रत्याह—**न हीति** । "अथ रथान् रथयोगान् पथः सृजते"इति सृष्टेः श्रवणेऽपि न सत्यत्वम्, "न तत्र रथाः" इत्यादिवाक्यात्प्रत्यक्षाच्च बाधादित्यर्थः ॥ स्वप्नसृष्टिश्रुतेः स्वयंज्योतिष्ट्वपरत्वाद् न सत्यतायां प्रामाण्यमित्याशङ्क्य, तात्पर्यवैधुर्यमत्रापि सममित्याह—**प्रयोजनेति** ॥ न केवलं सृष्टेः फलराहित्यम्, किं त्वनर्थोऽपीत्याह—**अनर्थेति** ॥ प्रपञ्चसृष्टयभावे कर्मकाण्डस्य प्रत्यक्षादेश्च प्रामाण्यं न स्यात्, अस्ति च प्रामाण्यमिति सृष्टेः सत्यत्वमित्याशङ्क्याह—**नचेति** ॥ मीमांसकमतावष्टम्भेन प्रामाण्यं समर्थयते—**जगदिति** ॥

जगदुत्पत्त्यादेः श्रुत्यादिप्रसिद्धत्वान्नित्यत्वमयुक्तम्, तथाच प्रत्यक्षादिप्रामाण्यानुपपत्त्या सृष्टिश्रुतेः सृष्टिपरत्वमित्याशङ्क्याह—**सृष्टीति** ॥ सृष्टिश्रुत्या यः सृष्टयवगमः, तं विनाऽपि सृष्टेः सिद्धत्वान्न तत्र शब्दप्रामाण्यमित्यर्थः ।

## ऋजुविवरणम्

सृष्टेः सत्यत्वाभावे तद्विषयश्रुतिविरोधस्स्यादिति चोदयति—**ननु मिथ्यासृष्टिविषयत्वमिति** ॥ कथमनभिज्ञत्वमित्याह—**प्रमाणं हीति** ॥ **ननु**—सत्यत्वस्य प्रमेयत्वात् तदभावं न सहत इत्याशङ्क्याह—**नच सृष्टिश्रुतिरिति** । पदार्थस्यैव वाक्यार्थत्वादिति भावः । **ननु**—सदसत्त्वे विहाय प्रतीतिरेव न संभवेत्; अतोऽनभिहितस्यापि प्रतीतिरङ्गीकर्तव्येत्याशङ्क्य, नेति दृष्टान्तमाह—**यथा घट इत्युक्त इति** ॥ **ननु**—पदस्य स्मारकत्वात् तस्य च सदसद्वस्तुसाधारणत्वम्, इह तु शब्दस्य प्रमाणत्वात् सत्यत्वेनैव प्रमातव्यमित्याशङ्क्य व्यभिचारं दर्शयति—**न हि स्वप्नविषयेति** ॥ **ननु**—स्वप्नश्रुतेर्मिथ्याविषयत्वम्, तत्र हि तादृशकारणाभावात्सत्यविषयस्वयंज्योतिष्ट्वपरत्वेन तदप्रतिपादनम्, इह तु सृष्टिप्रतिपादनपरत्वेन तत्सत्यत्वमपि प्रतीयत इत्याशङ्क्याह—**प्रयोजनशून्यतयेति** ॥ यद्वा—"न तत्र रथाः" इति स्ववाक्यशेषपर्यालोचनया स्वप्नश्रुतेर्मिथ्याविषयत्वम्, अत्र तु तादृशकारणाभावात्सत्यविषयत्वमित्याशङ्क्याह—**प्रयोजनशून्यतयेति** ॥ **ननु**—कर्मकाण्डस्य प्रत्यक्षादेस्सत्यवस्तुसापेक्षत्वेन तदपेक्षितसमर्पणमेव प्रयोजनमित्याशङ्क्याह—**नच कर्मकाण्डस्येति** ॥ कथं नित्यतयोपपत्तिः ? कार्यत्वेनानित्यत्वात्, तस्य च शून्यविलक्षणतयोपादानमपेक्ष्यत इत्याशङ्क्याह—**सृष्टिश्रुत्यवगमादिति** । प्रागेव तद्व्यवहारस्य सिद्धत्वादित्यर्थः ॥ अथवा—प्रागेवानुमादिना सृष्टयवगमादिति ।

## पञ्चपादिकाविवरणम्

तत्साधनपरिणामस्य । नच कर्मकाण्डस्य प्रत्यक्षादेर्वा सिद्धिः प्रयोजनम्; जगन्नित्यतयाप्युपपत्तेः सृष्टिश्रुत्यवगमात्प्रागेव सिद्धत्वाच्च । अभेदस्यापि सत्त्वादिरूपेण सिद्धत्वान्न शब्दापेक्षेति चेत्, केयमतिव्याकुलता सर्वसंकरवादिनः । न हि नित्य-शुद्ध-बुद्ध-मुक्त-निरतिशयानन्द-प्रकाशमानसर्वज्ञाऽद्वितीय-प्रत्यगात्मभूतं ब्रह्मावगमात् प्रागेव सिद्ध्यति । किं तर्हि ? सृष्टिश्रुतेः प्रयोजनम् ? प्रत्यक्षादिसिद्धप्रपञ्चस्य ब्रह्मण्येवोत्पत्ति-विनाशवत्तयाऽन्यत्राभावमुपवर्ण्य, तत्रापि प्रतिषिध्य, मिथ्यात्वापादनेन प्रमाणान्तराविरुद्धतयाऽद्वितीयब्रह्मस्वरूपसिद्धिः प्रयोजनम्; तेनैकवाक्यत्वात्, अन्यथा शेषिविरोधात् ।

सृष्ट्याभासत्वाद् रजताभासवत् तज्ज्ञानस्याप्रामाण्यमिति चेत्, न; सत्यरजतवन्मुख्यसृष्ट्यन्तराभावात्, तस्या एव मुख्यसृष्टित्वात् तज्ज्ञानस्य मुख्यरजतज्ञानवत् प्रामाण्यात् । "देवदत्तो व्याघ्रोऽभवत्" "माया ह्येषा मया सृष्टे"त्यादौ मिथ्याकार्येऽपि तद्भाव-सृष्टिशब्दयोः श्रवणात् ॥

कुतः पुनः सत्य-मिथ्यासाधारण्यां सृष्टौ मिथ्यात्वे पक्षपातः ? "नासदासीन्नो सदाऽऽसीत्" "न आसीत्" "आसीदिदं तमोभूतम्" "मायां तु प्रकृति"मित्यादौ सदसद्विलक्षणानिर्वचनीयप्रकृतित्वश्रवणात् तदात्मकत्वाच्च

## तत्त्वदीपनम्

सृष्टेरन्यतः सिद्धत्वाद् यथा न शास्त्रप्रतिपाद्यत्वम्, तद्वदभेदस्यापीति शङ्कते—**अभेदस्यापीति** ॥ अप्रमेयत्वमादिशब्दार्थः । सोपहासमुत्तरमाह—**केयमिति** ॥ व्याकुलतामेवाह—**न हीति** ॥ अध्ययनविध्युपात्ततया सृष्टिश्रुतेरानर्थक्यासंभवात्परमार्थविषयत्वं वक्तव्यमित्याह—**किं तर्हीति** ॥ परमार्थप्रपञ्चविषयत्वं विनापि सृष्टिश्रुतेः साफल्यमित्याह—**प्रत्यक्षादीति** । सृष्टिश्रुतेरद्वितीयसिद्धिः प्रयोजनमिति संबन्धः । श्रुत्यैव तत्सिद्धेः किं सृष्टिश्रुत्या ? इत्याशङ्क्याह—**प्रमाणान्तरेणेति** । सृष्टिश्रुतेर्विरोधनिरसनद्वारा तत्प्रयोजनत्वम्, इतरस्य तु साक्षादित्यर्थः ॥ विरोधशङ्कायां तन्निरासः, सैव कथमिति ? अत्राह—**प्रत्यक्षादीति** ॥ कथं तर्हि विरोधनिरासः ? तत्राह—**मिथ्यात्वेति** ॥ मिथ्यात्वापादनं वा कथमिति ? अत्राह—**ब्रह्मण्येवेति** ॥ "यतो वे"त्यादिना वाक्येन जगदुत्पत्ति-स्थितिविनाशानां ब्रह्मतन्त्रत्वं तावत्प्रतीयते । तथा च मृद्व्यतिरेकेण घटाद्यसत्त्ववद् ब्रह्मव्यतिरेकेण जगन्न स्यात् । नच तत्रापि सत् स्यात्; कूटस्थासङ्गस्वरूपविरोधात् । ततश्च प्रतिपन्नोपाधौ निषेधप्रतियोगित्वाद् जगतो मिथ्यात्वमित्यर्थः ॥ अद्वितीयसिद्धिस्तत्प्रयोजनमित्यत्र किं गमकम् ? तत्राह—**तेनेति** । उपक्रमोपसंहारपर्यालोचनया सृष्टिश्रुत्यैकवाक्यात् तत्फलमेव फलमित्यर्थः ॥ भवत्येकवाक्यत्वं परमार्थविषयत्वं च, तत्राह—**अन्यथेति** । परमार्थविषयत्वेऽद्वैतप्रमित्यनुपपत्तेः सृष्टिश्रुतेर्मिथ्याविषयत्वमित्यर्थः ॥ सृष्टेराभासत्वे रजताभासवत् तद्विषयश्रुत्युत्थज्ञानस्याप्रामाण्यमिति शङ्कते—**सृष्टीति** ॥ किममुख्यत्वमात्रमाभासत्वम् ? उत मिथ्यात्वम् ? नाद्य इत्याह—**न सत्येति** । नापि द्वितीयः; स्वप्नसञ्जातकामिनीदर्शनवत् प्रामाण्यसंभवादित्यर्थः ॥ प्रपञ्चस्यासत्यत्वे "सच्च त्यच्चे"ति तद्भाववचनम्, "इदं सर्वमसृजते" ति सृष्टिवचनं चानुपपन्नं स्यादित्याशङ्क्य, तयोरन्यथासिद्धिमाह—**देवदत्त इति** ॥

सृष्टिश्रुतौ सत्त्वशब्दाश्रवणवन्मिथ्याशब्दस्याश्रवणान्न मिथ्यात्वमपीति शङ्कते—**कुतः पुनरिति** । श्रुत्यन्तरपर्यालोचनया प्रपञ्चमिथ्यात्वप्रतिपत्तेः सृष्टिश्रुतिरसत्यविषयेत्यध्यवसीयत इत्याह—**नासदिति** ॥ कारणस्य मिथ्यात्वेऽपि जगति किमायातम् ? इत्यत्राह—**तदात्मकत्वादिति** ॥ कारणत्वेन निर्दिष्टतमसो ज्ञाननिवर्त्याविद्यासामानाधिकरण्यादपि

## ऋजुविवरणम्

सप्रयोजनत्वाय सत्यविषयत्वमित्यभिप्रायेण पृच्छति—**किं तर्हि सृष्टिश्रुतेरिति** ॥ ननु—अद्वैतश्रुत्या प्रतीयमानाद्वैतसिद्धिः कथं सृष्टिश्रुतिप्रयोजनम् ? इत्याशङ्क्याह—**प्रमाणान्तराविरुद्धेति** । प्रमाणान्तरविरुद्धाद्वैतसिद्धिः सृष्टिश्रुत्यधीनेति भावः ॥ ननु—अद्वैतश्रुतेर्विरोधशङ्कैव कथमिति ? तदाह—**प्रत्यक्षादिप्रसिद्धप्रपञ्चस्येति** ॥ तर्हि प्रत्यक्षादिसिद्धत्वात्प्रपञ्चस्य कथमविरोध इति ? तदाह—**मिथ्यात्वापादनेनेति** ॥ विषयमिथ्यात्वेन तदपि तथैवेति भावः । कथं सृष्टिश्रुत्या प्रत्यक्षादिविषयमिथ्यात्वसिद्धिरिति ? तदाह—**प्रत्यक्षादिसिद्धेति** । निषेधसहकृता मिथ्यात्वं साधयतीति भावः । तर्हि निषेधवाक्यैरेव मिथ्यात्वसिद्धेः किं सृष्टिश्रुत्या ? मैवम्; निरुपाधिकनिषेधाभावात्, ब्रह्मणि निषेधे चान्यत्र सत्यत्वप्रसङ्गादिति । कथं प्रतीतिहानेनाप्रतीतपरत्वमिति ? तदाह—**तेनैकवाक्यत्वादिति** ॥ कथं पृथक् समभिव्याहृतार्थप्रतीतावेकवाक्यत्वमिति ? तदाह—**अन्यथा शेषीति** । तस्यैव सप्रयोजनत्वादिति भावः ॥ ननु—ब्रह्मण एव तद्भावश्रुतेः सृष्टिशब्दप्रयोगाच्च सत्यत्वमित्याशङ्क्याह—**देवदत्तो व्याघ्र इति** ॥ ननु—उदाहृतश्रुति-स्मृतिभ्यां तमसोऽनिर्वचनीयत्वं

## पञ्चपादिकाविवरणम्

विकारस्य । "तमो मोहो महामोहस्तामिस्रो ह्यन्धसंज्ञितः । अविद्या पञ्चपर्वैषा प्रादुर्भूता महात्मनः" ।। इति स्मृतेः, तमोऽविद्यामायानां पर्यायत्वात् । तदेवं श्रुत्यवगतायां मिथ्यासृष्टौ, सत्यत्वकल्पनायां श्रुतिबाधप्रसङ्गात् । तथा च 'अस्ति घटः' इत्यस्त्यर्थोपाधौ प्रतिपन्नस्य घटस्य तदुपाधावेव नास्तीति प्रत्यक्षेणैव बाधो दृश्यते, देशकालयोर्देश-कालान्तराभावात्तयोर्द्वयोर्निरुपाधिकनिषेधात्, अस्त्यर्थस्यानुयायिनो निषेधाभावात् । अतो देश-काल-तदुपाधिघटा-नामस्त्यर्थे ब्रह्मस्वरूपे प्रतिपन्नोपाधौ प्रत्यक्षेणैव बाधान्मिथ्यात्वसिद्धिः । एवं सर्वभावप्रत्ययगोचरे ब्रह्मणि स्वरूपोपाधाव-स्त्यर्थे कालाद्युपाधिभिः सहाभावप्रत्यक्षेण बाधान्मिथ्यैवेति सिद्धम् । अन्याभावविशिष्टवस्त्वन्तरज्ञानस्य प्रत्यक्षत्वात् ।।

अनुमानमपि—सर्वे विकाराः, स्वानुस्यूत एकस्मिन् वस्तुनि परिकल्पिताः, प्रत्येकमेकस्वभावानुविद्धत्वे सति विभक्तत्वात्; चन्द्रभेदवत्, जडत्वात्, कार्यत्वात्, भेदत्वात्; रजतवत्, चन्द्रभेदवच्च । प्रतिपन्नब्रह्मोपाधावस्थूलादि-

## तत्त्वदीपनम्

मिथ्यात्वमित्याह—**तम इति** ।। तमो-मोहादिशब्दैरविद्याऽस्मिता-राग-द्वेषाभिनिवेशाः संगृह्यन्ते । क्वचित् तमसः कारणत्वम्, क्वचिदविद्यादेरिति कारणवैलक्षण्यमित्याशङ्क्याह—**तमोऽविद्येति** ।। मिथ्यात्वे प्रमाणसद्भावात् सत्यत्वे तदभावान्न परिणामसिद्धिरित्युपसंहरति—**तदेवमिति** ।। न केवलं मिथ्यात्वे श्रुतिः प्रमाणम्, किन्तु प्रत्यक्षं चेत्याह—**तथाचेति** ।। अस्त्यर्थं एवोपाधिरस्त्यर्थोपाधिस्तस्मिन्नित्यर्थः । प्रतिपन्नोपाधौ निषेध्यत्वे मिथ्यात्वम्, तच्च घटेऽप्यस्ति-त्वोपाधौ प्रतिपन्नस्य तस्मिन्निषेधाद् इदमि प्रतिपन्नरजतस्य तत्र निषेधवदित्यर्थः । एकदेशकालसंसर्गितया प्रतिपन्नघटस्य देश-कालान्तरसंसर्गो निषिध्यते, न स्वरूपमित्याशङ्क्याह—**देश-कालयोरिति** 'देशो नास्ति' 'कालो नास्ति' इत्ययं प्रतिषेधः किं देशाद्युपाधावस्त्यर्थोपाधौ वा ? नाद्यः; देशान्तराद्यभावात् । नच—तत्राप्युपाधिविशिष्टतया भेदसंभव इत्यपि—शङ्क्यम्; उपाधिनिषेधेऽप्यस्य न्यायस्य साम्यात्, उपाध्यन्तरकल्पनायां चानवस्था स्यादित्यर्थः ।। **निरुपाधिकनिषेधादिति** । देशाद्यनुपहितास्त्यर्थनिषेधादित्यर्थः । द्वितीये देशादेर्मिथ्यात्वं स्यादित्यर्थः ।। रजतनिषेधोत्तरकालमियं शुक्तिरितीदमः प्रतिपत्तेरिदमि निषेधो युक्तः, नच तथा घटनिषेधोत्तरकालमस्त्यर्थोपाधिः, इति सोऽपि निषेध्य इत्याशङ्क्याह—**अस्त्यर्थस्येति** ।। निषेधाभावे हेतुमाह—**अनुयायिन इति** ।। भवत्वस्त्यर्थनिषेधः, तथाऽपि कथं ब्रह्मणि प्रतिषेधः ? तत्राह—**अत इति** । तावेवोपाधी येषां ते तदुपाधयः, ते च घटाश्चे ति तदुपाधिघटाः; तेषामित्यर्थः ।। उक्तन्यायमन्य-त्राप्यतिदिशति—**एवमिति** ।। अभावस्य षष्ठप्रमाणगम्यत्वात् कथं प्रत्यक्षत्वम् ? इत्याशङ्क्य, धर्मिणः प्रत्यक्षतया तद्विशेषणत्वेनाभावोऽपि प्रत्यक्ष इति तार्किकमतमनुसृत्याह—**अन्याभावेति** ।।

**सर्वे विकारा इति** । विमता इत्यर्थः ।। परिकल्पिता इत्युक्ते शून्यवादिनः सिद्धसाध्यता, तदर्थं **'वस्तुनी'** त्युक्तम् । व्यावृत्तज्ञानेषु विषयस्य कल्पितत्वाङ्गीकाराद् बौद्धं प्रत्यर्थान्तरता; तदर्थमाह—**एकस्मिन्निति** ।। एतावत्युक्ते यस्मिन् कस्मिंश्चित्परिकल्पिततया सति परिकल्पितत्वासिद्धिः, तदर्थम्—**"स्वानुस्यूते"** इति । प्रत्येकमेकस्वभावानु-विद्धत्वाद् विभक्तत्वाच्चेति हेतुद्वयम् । वनस्वभावानुविद्धतरुव्यावृत्त्यर्थम्—**"प्रत्येकमि"**ति विशेषणम् । न हि प्रत्येकं तरुषु वनमिति मतिः; किन्तु मिलितेष्वित्यर्थः । विभक्तत्वं च धर्मिसत्तासमानसत्तकभेदवत्त्वमित्यर्थः । **चन्द्रभेदवदिति** । चन्द्रविशेषवदित्यर्थः ।। तत्र हेत्वन्तरमाह—**जडत्वादिति** ।। भेदिमिथ्यात्वमभिधाय भेदमिथ्यात्वे हेतुमाह—**भेदत्वादिति** ।।

## ऋजुविवरणम्

प्रतीयते, न मायाऽविद्ययोरित्याशङ्क्याह—**तमो मोह इति** ।। **ननु**—देश-कालयोस्तदुपाधिके वाऽस्त्यर्थे निषेधो न निरुपाधिक इत्याशङ्क्याह—**देश-कालयोरिति** । देश-कालयोर्निषेध उपाधिभूतदेशकालाद्यभावात् तयोर्निरुपाधिकनिषेध-प्रसङ्गादित्यर्थः । द्वितीयपक्षेऽपि देश-कालयोर्निषेधे तद्विशिष्टोपाध्यभावात् तयोर्निरुपाधिकेऽस्त्यर्थे निषेधादितरत्रापि तस्यैवोपाधित्वमनुगततोपाधिलाभादिति भावः ।। **ननु**—उक्तदूषणमस्त्यर्थेऽपि समानमित्याशङ्क्याह—**अस्त्यर्थस्येति** ।। उक्तप्रकारं सर्वत्रातिदिशति—**एवं सर्व इति** ।। ब्रह्मणोऽप्रतीतेः कथं तत्र निषेधः ? इत्याशङ्क्याह—**सर्वभावप्रत्ययेति** ।। स्वरूपोपाधिरिति मृदाद्युच्यते, भूतलादि च । **ननु**—अभःवनिषेध्यव्यतिरेकेण तृतीयं न प्रतीयते, इत्याशङ्क्याह—**अन्याभावविशिष्टेति** ।। **'जडत्वादि'**ति चैतन्ये कल्पितत्वे हेतुः, **'कार्यत्वादि'**त्यकार्ये, **'भेदत्वादि'**त्यद्वैते कल्पितत्वे हेतुः ।

## पञ्चपादिकाविवरणम्

वाक्यैः प्रतिषिध्यमानत्वात्; देहात्मभाववत् । विरोधिकारणस्वभावानुपमर्देन विरोधिकार्यापत्तिलक्षणत्वात्; मायाव्याघ्रवत् । प्रलयावस्थायां सह कालेन स्वोपाधौ शून्यत्वात्; देहात्मभाववत् ॥

अर्थापत्तिरपि—प्रपञ्चजन्म-विनाशावनुपपन्नौ तस्य मिथ्यात्वमन्तरेण; अमिथ्याभूतयोर्ब्रह्म-शून्ययोरजन्मविनाशित्वात् । नच ब्रह्मज्ञानस्यापि प्रपञ्चज्ञानवन्मिथ्यात्वानुमानम्; "तत्सत्यं स आत्मे"ति वचनविरोधात् । नचास्थूलादिवाक्यैः स्थूलादिभ्योऽन्यत्वमात्रमुच्यते; कार्य-कारणतादात्म्ये सत्येवं प्रतिषेधानुपपत्तेः । यथा शुक्लायां गव्यन्यत्वविवक्षयाप्यशुक्ला गौरिति प्रतिषेधो न दृश्यते; तथा च प्रतिषेधे शुक्लतास्वरूपमात्रनिषेधदर्शनात् । तर्काप्रतिष्ठानान्न मिथ्यात्वानुमानमिति चेत्, न; विचारशास्त्रानारम्भप्रसङ्गात् । शब्दमूलत्वाद् ब्रह्मणि न विरोधबुद्धिरिति चेत्, तर्हि—"असद्वा इदमग्र आसीत्" "सदेव सौम्येदमग्र आसीदि"त्यादिश्रुतिद्वयसामर्थ्यात् कारणस्य सदसत्त्वे स्याताम् । श्रुत्यर्थस्य तर्कागोचरत्वात् सर्वशक्तित्वाद् ब्रह्मणः सर्वमुपपन्नमिति चेत्, न; ब्रह्मणि विरोध-

## तत्त्वदीपनम्

हेत्वन्तरमाह—**प्रतिपन्नेति** ॥ विमतम्, मिथ्या, प्रतिपन्नोपाधौ निषिध्यमानत्वात्; देहात्मभाववत् । असिद्धिं निरस्यति—**अस्थूलेति** । 'अहं मनुष्यः' इत्यहंप्रत्ययालम्बने प्रतिपन्नस्य देहात्मभावस्य 'नाहं मनुष्यः' इति तत्रैव निषेधाद् न साधनवैकल्यमित्यर्थः ॥ अनुमानान्तरमाह—**विरोधीति** । विमतम्, सदसद्विलक्षणम्, विवर्तत्वात्, मायाव्याघ्रादिभाववदिति विवक्षितं हेतुस्वरूपं विरोधीत्यनेन ग्रन्थेन विवृतमित्यर्थः ॥ प्रलयाङ्गीकारवादिनं प्रत्यनुमानान्तरमाह—**प्रलयेति** ॥ स्वोपाधौ शून्यत्वं समर्थयते—**प्रलयावस्थायामिति** ॥ अत्र च कार्यमात्रं धर्मि; अन्यथाऽन्यतरासिद्धिप्रसङ्गात् । कथं तर्हि काले निषेधः ? इत्याशङ्क्याह—**सह कालेनेति** । अविद्यावस्थायां कालसत्त्वेऽपि तन्निवृत्तौ निवृत्तिरित्यर्थः ॥

अर्थापत्तिं प्रमाणयति—**अर्थापत्तिरपीति** ॥ मिथ्यात्वे प्रमाणमित्यनुषङ्गः । तामेवाह—**प्रपञ्चेति** । मिथ्यात्वमन्तरेणानुपपन्नौ जन्म-विनाशौ मिथ्यात्वं गमयत इत्यर्थः ॥ अन्यथोपपत्तिं निरस्यति—**अमिथ्येति** ॥ प्रत्यक्षानुमानागमार्थापत्तिभिः प्रपञ्चो मिथ्येत्युक्तम्, तत्र ज्ञानत्वाविशेषात् प्रपञ्चज्ञानवद् ब्रह्मज्ञानस्यापि मिथ्यात्वमापतेदित्याशङ्क्याह—**नचेति** ॥ किं तस्य स्वरूपमिथ्यात्वं साध्यते ? उत विषयमिथ्यात्वं ? आद्येऽप्यागन्तुकं ज्ञानं धर्मि ? उत अनागन्तुकम् ? आद्यस्त्वङ्गीक्रियत इत्यभिप्रेत्य परिशिष्टपक्षद्वयं प्रतिक्षिपति—**तत्सत्यमिति** ॥ "तत्"=ब्रह्म, "सत्यम्"=अवितथस्वरूपम् । आत्मान्यत्वात्; घटादिवत् वैतथ्यशङ्कां निरस्यति—**आत्मेति** ॥ अस्थूलादिवाक्येन स्वयं प्रपञ्चो निषिध्यत इत्युक्तमयुक्तम्; तस्य स्थूलादिव्यतिरेकप्रतिपादनपरत्वादित्याशङ्क्याह—**नचेति** ॥ किमात्यन्तिकान्यत्वं प्रतिपाद्यते ? उत कथञ्चिदिति विकल्प्याद्यं प्रत्याह—**कार्येति** ॥ द्वितीयं प्रत्याह—**यथेति** ॥ एवंविधोऽपि प्रतिषेधः क्वचिद् दृश्यत इत्याशङ्क्याह—**तथाचेति** ॥ तर्ककुशलेनैकेनोत्प्रेक्षितमप्यपरेण नाङ्गीक्रियते, ततश्च मिथ्यात्वानुमानस्याप्रामाण्यमिति शङ्कते । **तर्केति** । किं तर्कमात्रस्याप्रष्ठितत्वम् ? उत तर्कविशेषस्य ? तत्र द्वितीयाङ्गीकारेणाद्यं दूषयति—**न विचारेति** ॥ न तर्कं प्रदर्शयितुं विचारशास्त्रं प्रवृत्तम्, किन्तु परोत्प्रेक्षिततर्काणामद्वैतश्रुतिविरोधादाभासत्वद्योतनायेति शङ्कते—**शब्देति** ॥ तर्कमन्तरेण श्रुत्यर्थव्यवस्थाऽसंभवात् तर्कोऽपि वक्तव्य इत्याह—**तर्हीति** ॥ सदसत्त्वे एकस्य विरुद्धे इत्याशङ्क्याह—**श्रुत्यर्थस्येति** । श्रौतेऽर्थे विरोधशङ्काया एवानुदयादित्यर्थः ॥ सदसत्त्वप्रसञ्जनमिष्टमिति शङ्कते—**सर्वेति** ॥ अस्मिन् पक्षे विरोधनिराकरणं निष्फलं स्यादित्याह—**न ब्रह्मणीति** ॥ तर्कमन्तरेणाप्यर्थसिध्यङ्गीकारे ब्रह्मण आत्यन्तिकासत्त्वंप्रसज्येतेत्याह—

## ऋजुविवरणम्

यद्वा—पूर्वं वस्तुविशेषे कल्पितत्वमुक्तम्,अत्र तु कल्पितत्वमात्रमिति विवेकः ॥ ननु—प्रतिपन्नोपाधौ बाध एव मिथ्यात्वे हेतुरित्याशङ्क्यानुमानान्तरमाह—**प्रतिपन्नोपाधाविति** ॥ यद्वा—ब्रह्मण्येव कल्पितत्वेऽनुमानमाह—**प्रतिपन्नेति** ॥ ब्रह्मकार्यस्य कथं प्रतिषेधः ? इत्याशङ्क्य तद्योग्यत्वं साधयति—**विरोधिकारणस्वभावेति** ॥ विवर्तत्वसाधनं वा क्रियत इति भेदः । देशादीनामुपाधित्वेन मिथ्यात्वात् तदर्थम्, यद्वा—सर्वमिथ्यात्वेऽनुमानम्—**प्रलयावस्थायामिति** ॥ ननु—प्रतिषिध्यमानत्वमसिद्धम्; अस्थूलादितिवाक्यानामन्यप्रतिपादकत्वादित्याशङ्क्याह—**नचास्थूलादीति** ॥ अन्यत्रान्यत्वाभिप्रायेण प्रतिषेधादर्शनेऽप्यस्यान्यत्वाभिप्रायेण कथं निवृत्तिः कल्प्यते ? इत्याशङ्क्याह—**तथाच प्रतिषेध इति** ॥ **शब्दमूलत्वादिति** ॥ अयमर्थः—अद्वैतसिध्यर्थं न मिथ्यात्वं साधनीयमिति । ननु—घटेऽस्त्यर्थः प्रतीयते, अतो घटमिथ्यात्वे

## पञ्चपादिका

अस्य जगतः इत्यादिना भाष्येण लक्ष्यस्य ब्रह्मणः स्वरूपलक्षणं कथयितुमुपक्रमते। द्विविधं हि लक्षणम्—उपलक्षणं विशेषणलक्षणं च। तत्रेदं लक्षणं प्रपञ्चधर्मत्वात् पृथग्भूतमेव कारणमुपलक्षयति न विशेषणत्वेन। अतः पृथक् स्वलक्षणकथनम्। नामरूपाभ्यां व्याकृतस्येति॥

## पञ्चपादिकाविवरणम्

परिहाराय विचारानारम्भप्रसङ्गात्। अत एवासत्यतापि ब्रह्मणः कदाचित् किं न स्यात्। तस्मात्प्रत्यक्षानुमानार्थापत्तिभिः प्रपञ्चस्य मिथ्यात्वावगमात् प्रशान्तत्वाच्च ब्रह्मणो निष्प्रयोजना च सृष्टिश्रुतिर्विवर्त एवेति। नच सद्बुध्यनुगमविरोधः; अधिष्ठानत्वात्तस्य। घटादिविशेषाणामेव मिथ्यात्वादिति सिद्धम्॥

लक्षणमनूद्य लक्ष्यस्वरूपं कथयितुमुत्तरं भाष्यमित्याह—**अस्य जगत इति**॥ ननु न तावदिदं विशेषणलक्षणम्; प्रपञ्चजन्मादिकारणत्वस्य प्रपञ्चोपाधित्वात्, निरुपाधिकब्रह्मस्वरूपलक्षणकथनमन्तरेण सोपाधिकधर्मप्रतिपत्त्ययोगात्, नाप्युपलक्षणमेतत्; लक्ष्यस्य ब्रह्मशब्दार्थत्वायोगादवच्छेदादिति, तत्राह—**द्विविधं हि लक्षणमित्यादि**॥ उपलक्षणत्वेऽपि नाद्वितीयस्वरूपलक्षणविरोधः; यद्रजतमित्यभात् सा शुक्तिरितिवद् मिथ्याभूतेनापि प्रपञ्चकारण-

## तत्त्वदीपनम्

**अत एवेति**॥ प्रकृतमुपसंहरति—**तस्मादिति**॥ इतिपदपरामृष्टं हेतुमाह—**प्रत्यक्षेति**॥ ब्रह्मणः कूटस्थत्वादपि न तात्त्विकपरिणामसिद्धिरित्याह—**प्रशान्तत्वादिति**॥ फलविधुरत्वादपि न तस्य सत्यत्वं प्रतिपाद्यमित्युक्तं स्मारयति—**निष्प्रयोजनेति**॥ विवर्तशब्देन विवर्तविषयत्वं विवक्षितमिति द्रष्टव्यम्। 'सन् घटः' इति प्रत्यक्षेण घटस्य सत्त्वप्रतीयतेः कथं मिथ्यात्वम्? इत्याशङ्क्याह—**नचेति**। अपुरोवर्तिनोऽपि रूप्यस्य पुरोवर्तितया भानवद् घटादेरपि सति समारोपितत्वात् सदात्मना प्रतिभानमविरुद्धमित्यर्थः॥ विशेषमिथ्यात्वे सदपि मिथ्या स्यात्; 'निर्विशेषं न सामान्य' मिति न्यायादित्याशङ्क्य, सत्तायाः सामान्यरूपत्वानङ्गीकृतेर्मैवमित्याह—**घटादीति**॥

स्वरूपलक्षणं कथयितुम्—"अस्य जगतः" इत्यादिभाष्यमित्युक्तम्, तदनुपपन्नम्; उक्तस्यैव लक्षणस्य तत्र प्रतिपत्तेः, इत्याशङ्क्याह—**लक्षणमिति**॥ जगत्कारणत्वस्य लक्षणत्वासंभवात् तदनुवादो व्यर्थ इति शङ्कते—**नन्विति**॥ किमेतत्स्वरूपलक्षणम्? उतोपलक्षणमिति विकल्प्याद्यं दूषयति—**न तावदिति**॥ **प्रपञ्चोपाधित्वादिति**। प्रपञ्चसापेक्षत्वादित्यर्थः॥ भवतु कारणत्वस्य सापेक्षत्वम्, तथाऽपि कथं न विशेषलक्षणम्? तत्राह—**निरुपाधिकेति**। सापेक्षस्य निरपेक्षस्वरूपत्वासंभवात्तद्धर्मत्वं वक्तव्यम्, नच स्वरूपप्रतीतिमन्तरेण धर्मप्रतिपत्तिर्युक्तेति लक्षणान्तरं वाच्यमित्यर्थः॥ द्वितीयं दूषयति—**नापीति**। तटस्थलक्षणस्य सत्यत्वे लक्षणत्वानुपपत्तिः; लक्ष्य-लक्षणयोः परस्परव्याघातात्, लक्षणस्यासत्यत्वे बाष्पादिवद् गमकत्वानुपपत्तिरित्यर्थः॥ **ननु**—"तस्माज्जगज्जन्मादिकारणत्वमुपलक्षणमित्यत्रोपलक्षणमित्युक्तत्वाद्विकल्पे तद्दूषणानुपपत्तिरिति चेत्। मैवम्। उपलक्षणस्यापि सावद्यत्वं दर्शयितुं पुनर्विकल्पादेः सम्भवादिति द्रष्टव्यम्। कारणत्वस्य सत्यत्वे च उपलक्षणत्वानुपपत्तिरिति वक्तव्यमिति यदुक्तम्, तत्राह—**उपलक्षणत्वेऽपीति**॥ विरोध इत्यत्रासत्यत्वादित्यनुषङ्गः। असत्यत्वे कारणत्वस्य लक्षणत्वं न संभवति, असत्यस्य लक्षणत्वादृष्टेरिति शङ्कां निरस्यति—**यद्रजतमिति**॥

## ऋजुविवरणम्

तद्विरोध इत्याशङ्क्याह—**श्रुत्यर्थस्येति**॥ **ननु**—ब्रह्मण एव परिणामसंभवात्कथं मिथ्यात्वसंभवः? इत्याशङ्क्याह—**प्रशान्तत्वादिति**॥

**"अस्य जगतः"** इत्यनेन स्वरूपलक्षणकथनमि"त्युक्तम्, तदयुक्तम्; लक्षणस्योक्तत्वाद् वैयर्थ्यात्स्वरूपलक्षणे ब्रह्मणोऽनुवाद्यत्वप्रसङ्गादित्याशङ्क्याभिप्रायमाह—**लक्षणमनूद्येति**॥ **ननु**—जन्मादिकारणत्वं तथाभूतलक्षणत्वेनानूद्यते? किं स्वरूपलक्षणत्वेन? किं वा तटस्थलक्षणत्वेन? नाद्य इत्याह—**ननु न तावदिति**॥ **ननु**—औपाधिकस्यापि तादात्म्यात्स्वरूपलक्षणत्वमिति, तत्राह—**निरुपाधिकब्रह्मेति**॥ धर्मेण प्रतीत्यभावात्। यद्वा—धर्मस्यैव प्रतीतिर्न भवतीत्यर्थः। मिथ्याभूतस्य तादात्म्यमेव दुरवसेयम्, कथञ्चिद्विद्यमानेऽपि स्वरूपप्रतीतिसापेक्षत्वमिति भावः॥ द्वितीयपक्षे लक्षणत्वं निराकरोति—**नाप्युपलक्षणमिति**॥ **अवच्छेदादिति**॥ भिन्नस्यैव लक्षणत्वादिति भावः॥ सत्यस्यैव लक्षणत्वं

**पञ्चपादिका**

**कार्यप्रपञ्चं केचित् कथंचित् स्वप्रक्रियानुसारेण विभजन्ति, तद्व्युदासाय प्रसिद्धार्थानुवादश्रुतिबलेन द्वैराश्यं**

**पञ्चपादिकाविवरणम्**

त्वेनोपलक्षणयोगात् । असाधारणसंबन्धो हि लक्षणनिमित्तम्,—न लक्षणसत्यत्वम्; काकादीनामसंबद्धानां गृहोपलक्षणत्वदर्शनादिति ॥

**कार्यप्रपञ्चं केचिदिति** ॥ अयमर्थः—नाम-रूप-कर्मात्मकमिति वेदान्तिनः । द्रव्यगुणकर्मसामान्यात्मकमिति वार्तिककारीयाः । कार्य-कारण-योग-विधि-दुःखान्ताः पञ्चेति शैवाः । द्रव्य-गुण-कर्म-सामान्य-विशेष-समवायाः षडिति वैशेषिकाः । जीवाजीवास्रव-संवर-निर्जर बन्ध-मोक्षाः सप्तेति क्षपणकाः । द्रव्य-गुण-कर्म-सामान्य-विशेष-शक्ति-पारतन्त्र्य-नियोगा इत्यष्टौ इति प्राभाकराः । प्रमाण-प्रमेय-संशय-प्रयोजन-दृष्टान्त-सिद्धान्तावयव-तर्क-निर्णय-वाद-जल्प-वितण्डा-हेत्वाभासच्छल-जाति-निग्रहस्थानानि षोडशेति नैयायिकाः । ज्ञानेन्द्रिय-कर्मेन्द्रिय-भूततन्मात्र-महाभूत-मनोऽहङ्कारमहद-व्यक्त-पुरुषा इति सांख्या इति । कस्तर्हि सिद्धान्तः ? तदाह—**तद्व्युदासायेत्यादि** ॥ यद्यपि रूप्यत इति रूपेणेत्थंभूतं जगद्

**तत्त्वदीपनम्**

यद्रजतमभादित्यत्र पुरोवर्तिद्रव्यस्य रजततया भानमेव सत्यं शुक्तिलक्षणम्, न रजतमित्याशङ्क्याह—**असाधारणेति** ॥ नच—संबन्धः सत्यत्वं चेत्युभयमपि प्रयोजकमिति शङ्क्यम्; संबन्धे सति सत्यत्वाभावापराधेनालक्षणत्वादृष्टेः । ज्ञानं लक्षकमित्येतच्च निरूपणीयम्—ज्ञानमात्रं लक्षकम् ? उतार्थविशेषितम् ? नाद्यः; अतिप्रसक्तेः । द्वितीये मिथ्याभूतस्य लक्षकत्वासिद्धिरित्यर्थः । अचेतनकर्तृकप्वव्यासेधार्थम्—"नाम-रूपाभ्यां व्याकृतस्ये" त्युक्तं भाष्यकृता, तस्यायमर्थः—घटादिव्याक्रियाया नाम-रूपगर्भविकल्पपूर्विकाया दृष्टत्वाद् जगद्व्याक्रियाया अपि तथात्वं कल्प्यते, इति चेतनभावकर्तृकत्वमास्थेयमिति ॥

"नाम-रूपाभ्यामि"ति विशेषणं परकीयप्रक्रियानिरासार्थमि" त्युक्तम्, काऽसौ परकीयप्रक्रिया ? स्वप्रक्रिया वा कथम् ? इति शङ्कायामाह—**कार्यप्रपञ्चमिति** ॥ "नाम-रूपकर्मात्मकमि" त्यत्र नामरूपशब्दाभ्यां शब्दार्थौ कथ्येते, तयोः संबन्धः कर्म शब्दार्थः । गुणवद् द्रव्यम्, सामान्यवानचलनात्मकः समवायिकारणताविधुरो गुणः, संयोग-विभागयोरनपेक्षकारणं कर्म, नित्यमेकमनेकसमवेतं सामान्यमिति चत्वारि तत्त्वानि वार्तिककारीयाणाम् । कार्यं महदादि, कारणमीश्वरः, संयोगः समाधिः, विधिस्त्रिषवणस्नानादिः, दुःखान्तो मोक्षः । नित्यद्रव्येष्वेव ये वर्तन्ते, ते विशेषाः, नित्यः संबन्धः समवायः । जीवश्चेतनः, आजीवोऽचेतनः परमाण्वादिः, ज्ञानोत्पादनद्वारा पुरुषं विषय आस्रावयतीतीन्द्रिय-प्रवृत्तिरास्रवः, इन्द्रियप्रवृत्तिं संवृणोतीति शम-दमलक्षणा प्रवृत्तिः संवरः, नितरां जरयति कल्मषमिति तप्तशिलारोहणा-दिर्निर्जरः, बन्धः कर्मक्षयः, मोक्षः सततोर्ध्वगमनम् । पारतन्त्र्यं समवायः, प्रमासाधनं प्रमाणम्, प्रमाविषयः प्रमेयम्, अनवधारणज्ञानं संशयः, उद्देश्यं प्रयोजनम्, व्याप्तिवेदनस्थानं दृष्टान्तः, प्रामाणिकत्वेनाभ्युपगमः सिद्धान्तः, अवयवाः प्रतिज्ञादयः, व्याप्तिबलादनिष्टप्रसञ्जकस्तर्कः, तर्कपूर्वस्तत्त्वाध्यवसायो निर्णयः, वीतरागकथा वादः, प्रत्येकसाधनवती विजिगीषुकथा जल्पः, स्वपक्षस्थापनविधुरा विजिगीषुकथा वितण्डा, अहेतवो हेतुवदाभासमाना हेत्वाभासाः, विपरीतार्थ-कल्पनोपपत्त्या वचनविघातश्छलम्, स्वव्याघातकमुत्तरं जातिः, कथकाशक्तिसूचकं निग्रहस्थानम् । ज्ञानेन्द्रियं त्वक्चक्षुर्नासिका-जिह्वा-श्रोत्रलक्षणम्, कर्मेन्द्रियं वाक्पाणि-पाद-पायूपस्थाख्यम्, तन्मात्रशब्देन शब्द-स्पर्श-रूप-रस-गन्धाः कथ्यन्ते, महाभूतानि पृथिव्यादीनि, महत् प्रकृतेराद्यं कार्यम्, अव्यक्तं प्रकृतिः, पुरुष आत्मा । कस्तर्हि प्रामाणिकः पक्षः ? इत्याह—**कस्तर्हीति** ॥ "तन्नाम-रूपाभ्यामेव व्याक्रियते" ति श्रुत्यनुसारित्वाद् नाम-रूपात्मकं तत्त्वमित्याह—**तदाहेति** ॥ कर्मपदाभिधेयस्य शब्दार्थसंबन्धस्य संबन्धान्तर्भावमङ्गीकृत्य नामरूपाभ्यामित्युक्तम् । उत्पद्यमानस्याभिधेयत्वाद् रूपात्मनोत्पत्तिमङ्गीकृत्य नाम-रूपात्मनोत्पत्तिमाक्षिपति—**यद्यपीति** ॥ तृतीयार्थमाह—**इत्थंभूतमिति** । अथवेत्थंभूतमिति दृश्यमित्यर्थः ।

**ऋजुविवरणम्**

दृष्टमित्याशङ्क्याह—**असाधारणसंबन्ध इति** ॥

**आस्रवं कर्मोच्यते । संवरस्समाधिः । निर्जरस्तप इति ।** कथं पूर्वं विकल्प्य व्याकरणम् ? धर्मिसहभावित्वाद्धर्मविकल्पस्येत्याशङ्क्याह—**अयमर्थ इति** ॥ भवतु कारणत्वं कूटस्थलक्षणम्, तदनूद्य स्वरूपलक्षणं कथ्यते इति

### पञ्चपादिका

**कृत्वाऽऽह—नाम—रूपाभ्यामिति ।। इत्थंभावे तृतीया । व्याक्रियमाणं हि वस्त्वभिधेयरूपं स्वनामगर्भं विकल्पपूर्वमेव व्याक्रियत इति स्वसंवेद्यमेतत् । अनेककर्तृ-भोक्तृसंयुक्तस्येति । कर्तृत्व-भोक्तृत्वमपि नामरूपात्मकत्वात्प्रपञ्चानुयायीति दर्शयति—प्रतिनियतदेश-काल-निमित्त-क्रियाफलाश्रयस्येति ।। प्रतिकर्मफलोपभोगे नियतो देशः—स्वर्गफलस्य मेरुपृष्ठम्, ग्रामादिफलस्य भूमण्डलम् । कालोऽपि—स्वर्गफलस्य देहपातादूर्ध्वम्, पुत्रफलस्य बालभावात् । निमित्तमपि—उत्तरायणादिमरणस्य । मनसाऽप्यचिन्त्यरचनारूपस्येति ।। न ह्यर्वाग्दर्शी क्वचिद्बहिर्लोकसन्निवेशप्रकारमध्यात्मं च प्रतिनियतार्थक्रियासमर्थावयव-शिराजालसन्निवेशं निरूपयितुमपि समर्थः, किं पुनर्विरचयितुम् ।। जन्मस्थिति-भङ्गं यतः सर्वज्ञात् सर्वशक्तेः कारणाद् भवति, तद् ब्रह्मेति वाक्यशेष इति साकाङ्क्षस्य सूत्रवाक्यस्याकाङ्क्षितपदपूरणम्, उपलक्षितब्रह्मस्वरूपं लक्षणं च दर्शयति ।।**

### पञ्चपादिकाविवरणम्

व्याक्रियते । कथं नाम्ना रूपितमुत्पाद्यत इति ? तत्राह—**व्याक्रियमाणं हि वस्त्विति** ।। अयमर्थः—लोके घटं चिकीर्षुः कुलालः प्रथमं घटशब्दविकल्पितं पृथुबुध्नोदराकाररूपविकल्पितं च स्वबुद्धावाविर्भावयति, पश्चाद् यथाऽऽविर्भूतं घटशब्दालम्बनयोग्यं पृथु-बुध्नोदराकाररूपितं च घटं निर्वर्तयति । एवमेव मूलकारणमपि नाम-रूपाभ्यां स्वबुद्धावाविर्भूतमेव सर्वं पञ्चाव्यनक्ति, इति नाम-रूपाभ्यामित्थंभूतं व्याकृतमित्युच्यते । **अनेक-कर्तृ-भोक्तृसंयुक्तस्येत्या**रभ्य **नन्वन्येऽपि परिणामादयो भावविकारा** इत्यतः प्राक्तनः स्पष्टार्थः । ननु—किमत्रोपलक्षितस्य ब्रह्मणः स्वरूपलक्षणमुच्यते । नच स्वरूपलक्षणमन्तरेण कस्यचिद्वस्तुनः प्रतिपत्तिरिति । नच यत्र शाखाग्रं स चन्द्र इत्येतावता प्रकृष्टप्रकाशात्मप्रतिपत्तिमन्तरेण चन्द्रावगतिरस्ति । न तावत्सर्वशक्तित्वं ब्रह्मासाधारणलक्षणम्; प्रधानादीनामप्यविशेषात् । सर्वज्ञत्वमिति चेत्, न; तस्य सर्वोपाधिकधर्मत्वान्निरुपाधिकब्रह्मस्वरूपाप्रतिपत्तिः ।।

कथं चेदं सर्वज्ञत्वमिति वक्तव्यम्—न तावत्प्रत्यक्षानुमानागमोपमानार्थापत्त्यभावप्रमाणैः सर्वं वेत्ति; तेषामयुगपत्प्रवृत्तेः सर्वस्य च प्रत्यक्षताहानात्; सत्स्वपि तेष्वस्माकं सर्वज्ञताऽभावात्, इन्द्रियाणां च देश-काल-

### तत्त्वदीपनम्

नामात्मनोत्पत्तौ प्रमाणाभावादिति द्रष्टव्यम् ।। आधुनिकस्य कार्यस्य स्वनामगर्भविकल्पव्याकृतिपूर्वकत्वेऽप्याद्यकार्ये कथं तत्सिध्यति ? इत्याशङ्क्याह—**अयमर्थ इति** ।। **विकल्पितमिति** । विशेषितमित्यर्थः ।। कारणत्वं तटस्थलक्षणमित्यङ्गीकृत्य स्वरूपलक्षणमाक्षिपति—**नन्विति** ।। किं सर्वशक्तित्वं स्वरूपलक्षणम् ? उत सर्वज्ञत्वम् ? अथ वोभयम् ? इति **किं** शब्दार्थः । स्वरूपलक्षणापेक्षायां तज्जिज्ञासा स्यात्, सैव कुतः ? इत्याशङ्क्याह—**नचेति** ।। तर्हि उपलक्षमेव स्वरूपलक्षणम्, तत्राह—**नच यत्रेति** । चन्द्रस्वरूपप्रतिपत्त्यभाव उपलक्षणेनापि तत्प्रतिपत्त्यदर्शनादित्यर्थः ।। एवं प्रश्नप्राप्तिमभिधायाद्यं दूषयति—**न तावदिति** ।। द्वितीयमुत्थाप्य दूषयति—**सर्वज्ञत्वमिति** ।। **सर्वोपाधिकत्वादिति** । सर्वापेक्षधर्मत्वात् सर्वज्ञत्वस्येत्यर्थः ।। तृतीयोऽप्येतेनापास्त इति ।।

इतोऽपि न सार्वज्ञ्यं स्वरूपलक्षणमित्याह—**कथं चेति** ।। किं षड्भिः प्रमाणैः सर्वं जानातीति सर्वज्ञः ? उत प्रत्यक्षेण ? नाद्य इत्याह—**न तावदिति** ।। किं युगपत् प्रत्यक्षादिना सर्वं जानाति ? उत क्रमेण ? नाद्य इत्याह—**तेषामिति** ।। अचिन्त्यमहिम्नीश्वरे प्रत्यक्षादीनां युगपत् प्रवृत्तिमाशङ्क्याह—**सर्वस्येति** ।। क्रमपक्षं दूषयति—**सत्स्वपीति** । किं चित्प्रत्यक्षेण जानाति, किंचिल्लिङ्गेन, किंचिदितरेण, इत्येवं प्रत्यक्षादिप्रवृत्तावपि न यथाऽस्माकं सार्वज्ञ्यम्, तथेश्वरस्यापीत्यर्थः ।। प्रत्यक्षेणेश्वरो जानातीत्यत्रापि वाच्यम्—किं ब्राह्यप्रत्यक्षेण सर्वं जानाति ? उतान्तरेण ? आहो साक्षिणेति ? तत्राद्यस्तावदसङ्गत इत्याह—**इन्द्रियाणामिति** ।। ईश्वरस्य सर्वं सन्निहितम्—किञ्चित्संयोगेन, किञ्चित् संयुक्त-

### ऋजुविवरणम्

यदुक्तम्, तदाक्षिपति—**ननु किमत्रेति** ।। **ननु**—किं स्वरूपलक्षणकथनेन ? तथा तटस्थेनैव प्रतीतिसिद्धेरित्याशङ्क्याह—**नच स्वरूपेति** ।। प्रत्यक्षादिप्रवृत्तिमङ्गीकृत्य सर्वज्ञत्वं नास्ति; सर्वापरोक्ष्य लक्षणत्वात्तस्येत्याह—**सर्वस्येति** ।। **ननु**—सर्वं जानातीति ज्ञानमात्रमेवोच्यते, नापरोक्ष्यमित्याशङ्क्याह—**सत्स्वपीति** ।। युगपत्प्रवृत्त्यभावं द्रढयति । यद्वा—युगपत्सर्वेन्द्रियप्रवृत्तावपि सर्वज्ञत्वाभावं दर्शयति—**इन्द्रियाणामिति** ।। देशतो विप्रकृष्टो मेर्वादिः, कालतो विप्रकृष्टोऽतीतादिः स्वरूपतश्चेश्वरमादिः । संबन्धत्वमेवाविप्रकृष्टत्वम्, तदस्तीति वर्तमानसर्वग्रहणमित्याशङ्क्याह—**संयुक्तेति** ।। **ननु**—धर्मा-

### पञ्चपादिकाविवरणम्

वस्तुविप्रकृष्टार्थग्राहित्वाभावात् संयुक्तसमवायात् संयुक्तसंयोगात् संयुक्तविशेषणतया वा सर्वार्थप्रत्यक्षत्वेऽस्माकमपि प्रसङ्गात् । मानसमपि ज्ञानमात्मनोऽन्यत्रेन्द्रियादिसापेक्षम्, इति सर्वं न मानसप्रत्यक्षगम्यम् । नच धर्मातिशयवशादपीन्द्रियैरयोग्यं वस्तु गृह्यते; मार्जारादिदृष्टीनामपि योग्यरूपादिष्वेवातिशयवत्त्वदर्शनात् । नच कृत्स्नपरिभावनासंस्कारजन्यं मानसं सर्वज्ञज्ञानं कृत्स्नार्थं ग्राहयति, प्रथमं कृत्स्नार्थग्रहणाभावे तत्र परिभावनाऽयोगात् तज्जन्यकृत्स्नग्राहिज्ञानायोगात् । परिभावनायाः प्रागपि कृत्स्नार्थग्रहणेऽस्माकमपि प्रसङ्गात् । अतीतानागत-वर्तमानार्थानामियत्तानवधारणाच्च सर्वग्रहणानुपपत्तिः । एतावदिदम्, नातः परमस्त्यज्ञातमित्यनवधारणात् । नच स्वरूपज्ञानेनैव सर्वज्ञता; तस्य प्रदीपप्रभावदतीतानागतार्थग्राहित्वाभावात् । तस्मान्नास्ति सर्वज्ञ इति ॥

उच्यते—सर्वस्य कर्तृत्वादेव वर्तमानस्वकार्यसर्वविषयज्ञता तावत् सिद्धा । एवं तत्तत्कालेऽतीतसर्वविषयावगमादनुभूतविषयाऽसंप्रमोषा स्मृतिः स्वमायापरिणामोपाधिरनावरणत्वात् सर्वविषया कल्प्यते । तथा सृष्टेः प्रागपि सृज्यमानपदार्थावधारणस्य कुलालादिषु दृष्टत्वाद् आगामिसर्वविषयज्ञानं स्वमायापरिणामोपाधि कल्प्यत इति युक्ता

### तत्त्वदीपनम्

समवायेन, किञ्चिदन्यथेत्याशङ्क्याह—**संयुक्तेति** ॥ द्वितीयं प्रत्याह—**मानसमिति** ॥ **आत्मनोऽन्यत्रेति** । आत्मनस्तद्धर्माच्चान्यत्रेत्यर्थः । बहिः परतन्त्रं मनः; अन्यथाऽस्माकमपि तेन सर्वदर्शित्वं स्यादित्यर्थः ॥ इन्द्रियमात्रस्य विप्रकृष्टार्थाग्राहित्वेऽपि विशिष्टस्येन्द्रियस्य विप्रकृष्टग्राहित्वमुचितमित्याशङ्क्याह—**नचेति** ॥ तथाचोक्तम्—"यत्राप्यतिशयो दृष्टः स स्वार्थानतिलङ्घनात् । दूरात्सूक्ष्मादिदृष्टौ स्यान्न रूपे श्रोत्रवृत्तिता ॥" इति । किंच सहकारिवशादपि नेश्वरस्याशेषग्रहणम्; धर्मलक्षणसहकार्यभावादित्यभिसन्धिः ॥ अस्मच्चक्षुष आलोकसहकृतस्यैव रूपग्रहणयोग्यत्वेऽपि मार्जारादिचक्षुष आलोकनिरपेक्षस्य यथा रूपग्राहकत्वम्, तथाऽस्मदयोग्यमीश्वरो जानातीत्याशङ्क्याह—**मार्जारेति** ॥ अखिलपरिभावनासंस्कारसहकृतं मनः सर्वग्राहकमित्याशङ्क्याह—**न चेति** ॥ भावनाऽपि किं ज्ञाते ? उताज्ञाते ? न तावदज्ञात इत्याह—**प्रथममिति** ॥ आद्यं प्रत्याह—**परिभावनाया इति** ॥ इतोऽपि न कृत्स्नपरिभावनेत्याह—**अतीतेति** ॥ अनवधारणमेवाह—**एतावदिति** ॥ **अनवधारणादिति** । अवधारणयोग्यताभावादित्यर्थः ॥ तृतीयं दूषयति—**नचेति** । प्रदीपः स्वसंसृष्टं यथा ग्राहयति, न भविष्यदादि, तथाऽऽत्मस्वरूपस्यापि वर्तमानमात्रसंसर्गित्वात् तद्ग्राहित्वमित्यर्थः ॥ बाह्येन्द्रियेण मनसा वा ब्रह्मणः सर्वदर्शित्वं यद्यपि न घटते; तथाऽपि स्वरूपज्ञानेन सर्वदर्शित्वं घटत इत्याह सिद्धान्ती—**उच्यत इति** ॥ स्वरूपज्ञानस्य संसृष्टवर्तमानमात्रग्राहित्वाद् न सर्वग्राहित्वमित्युक्तं निरस्यति—**सर्वस्येति** । चैतन्योपाधिभूता अखण्डसत्त्वप्रधाना माया वर्तमानसकलविषयाकारेण परिणमते, तस्मिन् परिणामे प्रतिविम्बितं चैतन्यं सर्वं पश्यति; आध्यासिकसंबन्धात्, ततश्च वर्तमानसकलविषयत्वं सिद्धमित्यर्थः ॥ ननु—एवमप्यतीतविषयज्ञानाभावात् कथं सर्वदर्शित्वम् ? तत्राह—**एवमिति** ॥ स्मृतिमूलत्वेनाभिमतानुभवस्य नित्यत्वात् कथं तत्संस्कारोत्थस्मृत्युपपत्तिः ? इत्याशङ्क्याह—**स्वमायेति** । स्वमायायाः परिणामः स्वमायापरिणामः स उपाधिर्यस्याः, सा तथोक्ता । चैतन्यस्य विषयदर्शनहेतुत्वात्तदुपाधित्वम् । मायापरिणामप्रतिबिम्बितं चैतन्यं स्मृतिशब्देनाभिलप्यते । वर्तमानकाले मायापरिणामावच्छिन्नचैतन्यस्य विषयसाधकत्वात् परिणामनाशे तदवच्छिन्नचैतन्यस्यापि नाशात् संस्कारसहकृता मायाऽतीतविषयाकारेण परिणमते, तस्मिन् परिणामे प्रतिविम्बितं चैतन्यं सर्वं पश्येतीत्यतीतसर्वदर्शित्वमित्यर्थः ॥ अस्मदादिष्वनुभूतविषयस्य नियमेनानुपलब्धिवदनुपलब्धिमाशङ्क्याह—**अनुभूतेति** ॥ असंप्रमोषे हेतुमाह—**अनावरणेति** । "पश्यत्यचक्षुः स शृणोत्यकर्णः" "स्वाभाविकी ज्ञानबलक्रिया च," इत्याद्यागमादनावरणज्ञानत्वं निश्चीयत इत्यर्थः ॥ आगामिसर्वविषयत्वमुपपादयति—**तथेति** ॥

### ऋजुविवरणम्

तिशयान्मार्जारादिदृष्टीनामतिशयवत्त्वं दृश्यते, इत्याशङ्क्याह—**मार्जारादीति** । ननु—मायापरिणामनिमित्तं सर्वविषयज्ञानं कल्प्यते, यद्वा—क्रमेण सर्वग्रहणात्परिभावनमित्याशङ्क्याह—**अतीतेति** ॥ अवधारणमप्यनेनैव भविष्यतीत्याशङ्क्याह—**एतावदिति** । अनन्तत्वादवधारणं न संभवतीति भावः ॥ कथमतीतसर्वविषयं ज्ञानमिति ? तदाह—**असंप्रमोषा स्मृतिरिति** । प्रमोषहेत्वभावादिति भावः ॥ कथमीश्वरस्य स्मरणम् ? इत्याशङ्क्याह—**स्वमायेति** ॥ ननु—अज्ञाने विद्यमानेऽपि नास्माकमेतादृशस्मरणं दृश्यते कथं तस्यापीत्याशङ्क्याह—**अनावरणेति** ॥ ननु—एवमपि

## पञ्चपादिका

ननु अन्येऽपि परिणामादयो भावविकाराः सन्ति, ते किमिति न संगृह्यन्ते ? इत्याशङ्क्याह—अन्येषामपीति ॥ न क्वचिद्वस्तुनो ह्यवस्थाविशेषो विनाशरहितः, नाप्यनिर्वृत्तजन्मनोऽस्थितस्वभावस्य विनाशः । अतस्त्रिष्वेवान्तर्भावान्न पृथगुपन्यासस्तेषाम् । ननु—षड्भावविकारा इति नैरुक्ताः; तेषां ग्रहणे, अन्तर्भावोक्तिप्रयासोऽपि परिहृतः स्यादित्याशङ्क्याह—यास्कपरिपठितानां तु जायतेऽस्तीत्यादीनामिति ॥ पृथिव्यप्तेजःसु जगद्रचनारूपस्थितेषु तन्मयानामेव ते सम्भाव्यन्ते ।

## पञ्चपादिकाविवरणम्

सर्वज्ञता । "यः सर्वज्ञः सर्वविदि"ति च जगत्कारणे सर्वज्ञपदप्रयोगात्सर्वविषयज्ञानं प्रमीयत इति श्रुति-युक्तिभ्यां युक्ता सर्वज्ञता । ननु—सोपाधिकधर्मत्वान्न स्वरूपलक्षणमित्युक्तम्, न; अनेन सर्वज्ञशब्देन सर्वावभासक्षमं विज्ञप्तिमात्रमादित्यादिप्रकाशवदविषयोपाधिकं विज्ञानमेव ब्रह्मस्वरूपलक्षणं विवक्ष्यत इत्यविरोधः । ननु अन्येऽपीत्यादिः स्पष्टार्थः ।

ननु—निरुक्तवाक्यमेव मूलीकृत्य सूत्रेऽपि षड्भावविकारा गृह्यन्तामिति चोदयति—ननु षड्भावविकारा इति । यास्कपरिपठितानामित्यादेः परिहारस्यायमर्थः—आर्षेयस्य वाक्यस्य मूलप्रमाणं प्रत्यक्षम्, आगमो वा भवति; अनुमानादेरस्माकमपि प्रवृत्तेर्वाक्यानपेक्षणात् । तत्र प्रत्यक्षमूलत्वे यास्कवाक्यस्य भौतिकधर्मा एव भावविकाराः प्रत्यक्षेणावगन्तुं शक्यन्ते, न महाभूतविषयाः । तत्र भौतिकविकारकारणे ब्रह्मणि गृह्यमाणे भूतपञ्चकमेव ब्रह्म गृहीतं स्यात्,

## तत्त्वदीपनम्

ननु संभावनामात्रमेतत्, नच प्रमाणं पश्याम इत्याशङ्क्याह—यः सर्वज्ञ सर्वविदिति ॥ सामान्यरूपेण सर्वज्ञत्वं विशेषरूपेण सर्ववित्त्वम् । सर्वज्ञत्वस्य सप्रतियोगिकत्वान्न स्वरूपत्वमित्युक्तमनुवदति—ननु सोपाधिकेति ॥ सोपाधिकत्वमसिद्धमित्याह—नानेनेति ॥ अनेन सर्वज्ञशब्देन च विज्ञप्तिमात्रं विवक्षितमिति संबन्धः । कर्तृत्वमत्रोपचरितम्, न मुख्यमित्याह—मात्रमिति ॥ सप्रतियोगिकत्वं निरस्यति—अविषयेति ॥ प्रकाशस्य स्वभावत्वेऽपि यथा सविता प्रकाशत इति व्यपदेशः, तद्वदित्यभिप्रायेणाह—आदित्यादीति ॥ ज्ञप्तेर्निष्प्रतियोगिकत्वे कथं सकलदर्शित्वम् ? तत्राह—सर्वेति । ज्ञप्तिर्ज्ञानमिति व्युत्पत्त्यङ्गीकाराद् न ज्ञानं सप्रतियोगिकं यद्यपि; तथाऽपि विषयस्य संसर्गे भासकमादित्यवत्, ततः सकलदर्शित्वाभिधानं युक्तमित्यर्थः ॥ आनन्दस्यापि स्वरूपत्वात् कथं न स्वरूपद्वयम् ? इत्याशङ्क्याह—विज्ञानमिति । आनन्द-ज्ञानयोरभेदाद् न स्वरूपद्वयप्रसक्तिरित्यर्थः ॥ अथवा—सर्वज्ञशब्देनाविषयोपाधिकं यद्विज्ञानम्, तदेव ब्रह्मस्वरूपलक्षणं विवक्ष्यत इति संबन्धः । ज्ञानेनेति ज्ञानस्य सप्रतियोगिकत्वप्रतिपत्तेर्न स्वरूपत्वमित्याशङ्क्य, करणव्युत्पत्त्यनङ्गीकरणान्नैवमित्याह—विज्ञप्तीति ॥ षण्णां विकाराणां न सूत्रे ग्रहणं युक्तम् । तन्मूलश्रुतौ तेषामप्रतिपत्तेः, इत्याशङ्क्य, श्रुतिमूलत्वमसिद्धमित्याह—ननु निरुक्तेति ॥ स्थितेर्जन्मोत्तरकालत्वात् कथं जगतः स्थितिकाले जन्मादिसंभवना भाष्यकृतोक्ता ? इत्याशङ्कायामुक्तम्—पृथिव्यप्तेजःस्वित्यादि ॥ तत्र भौतिकवद्भूतानापि जन्मादिसंभवात् तद्धेतुत्वेन ब्रह्मकल्पनेत्याशङ्क्य, भूतमात्रकारणत्वेन तत्कल्पनम् ? उतोभयकारणत्वेन ? उभयथाऽप्यसंभव इति दर्शयति—यास्कपरिपठितानामति ॥ सूत्रंमूलं यास्कवाक्यम् । यदनुमानादिमूलमिष्यते, तदेवास्य सूत्रस्य मूलमस्तु, किमनुमानादिमूलनिरुक्तवाक्यस्य मूलकल्पनया ? इत्यर्थः । तस्मादाद्यः परिशिष्यत इत्याह—तत्रेति ॥ भूतानामपि विकारसंभवात् तदधिगमोऽपि प्रत्यक्षेण किं न स्यादिति ? अत्राह—न महाभूतेति । अपञ्चीकृतभूतानामतीन्द्रियत्वान्न तद्विकारा अस्मिन्प्रत्यक्षतां भजेरन्नित्यर्थः ॥ तर्हि प्रत्यक्षयोग्यविकाराणामेव ग्रहणम्, तत्राह तत्रेति ॥ भूतोत्पत्त्यादीनां

## ऋजुविवरणम्

संभावनामात्रं न निश्चय इत्याशङ्क्याह—यः सर्वज्ञ इति ॥ सर्वावभासक्षमत्वे कथमनौपाधिकमित्याशङ्क्याह—आदित्यादीति ॥ "न कश्चिद्वस्तुनः" इत्यनेनावस्थाविशेषाणां जन्मादियुक्तत्वाद्यन्तर्भाव इत्युक्तम्, तत्र जन्मादिकारणत्वेन भावविकाराणां जन्मादिसंभवात् तत्कारणे परिगृहीते जगमादिष्वेवान्तर्भावः, न जन्मादितुल्यतेति भावः ॥ ननु—जन्मादितुल्यतैव तेषाम्; जन्मव्यतिरेकेण जनिव्यापारादर्शनात्, अन्यथा जन्मादीनामपि जन्मादिप्रसङ्गात्, अतो नान्तर्भावः, ननु जन्मादिप्रभेदत्वेनान्तर्भावादनुपन्यास इत्याशङ्क्याह—ननु षड्भावविकारा इति ॥ ननु—भूतानामपि भावविकारसंभवात् कथं "तन्मयानामेव ते संभाव्यन्ते" इत्यु(त्युक्त)म् ? इत्याशङ्क्याभिप्रायमाह—यास्कपरिपठितानामित्यादेरिति ॥ अतद्गुणसंविज्ञानः । यद्वा भाष्येऽपि तेषामेव जगतः स्थितिकाले संभव उक्तः, तेन सहानुपपत्तिं परिहरति—अनुमाना-

### पञ्चपादिका

**ततस्तद्ग्रहणे तेषामेव ब्रह्मत्वेन लक्षितत्वाशङ्का स्यात्, नच तद्युक्तम्; अतः सूत्रार्थवत्त्वाय श्रुतिनिर्दिष्टा एवोत्पत्त्यादयो गृह्यन्ते; तदर्थनिर्णयार्थत्वात्सूत्राणाम् ।**

### पञ्चपादिकाविवरणम्

श्रुतौ तु मूलप्रमाणानपेक्षत्वाद् यत्किञ्चिद्भुवनधर्मवत् तस्य मूलकारणं ब्रह्म ग्रहीतुं शक्यत इति । किंच श्रुत्यर्थपरत्वात् सूत्राणां श्रुतिरेव जन्मादिसूत्रमूलमित्याह—**तदर्थनिर्णयार्थत्वादिति** ॥

ननु—भूत-भौतिकमूलकारणं न ब्रह्मेति प्रतिपत्तुं युक्तम्; मायाया अपि मूलकारणत्वात्, "मायां तु प्रकृतिमि"ति श्रुतेः । प्रक्रियतेऽनयेति प्रकृतिरिति करणमात्रं मायेति चेत्, न; प्रकृतिशब्दस्योपादाने रूढत्वाद् व्युत्पादनायोगात् । "आत्मन आकाशः" इति प्रकृत्यन्तरश्रवणाद् व्युत्पाद्यत इति चेत् न; तुल्यश्रुतित्वान्मायाप्रकृतित्वविरोधात्, निमित्तेऽपि पञ्चमी प्रयोगात्, दृश्यमानजाड्यानुसारेण च मायोपादानत्वनियमोपपत्तेः । "इन्द्रो मायाभिरि"ति तृतीयैव श्रूयत इति चेत्, सत्यम् आत्मनो बहुत्वापत्तौ करणता भवति; प्रपञ्चोपादानत्वे का हानिः ? निरपेक्षप्रकृतिद्वयानुपपत्ति-

### तत्त्वदीपनम्

प्रत्यक्षयोग्यत्वात् कथं त्वन्मतेऽपि तत्कारणविषयसूत्रप्रणयणम् ? इत्याशङ्क्याह—**श्रुताविति** । अस्मिन्मते सूत्रमूलायाः श्रुतेरपौरुषेयत्वादनपेक्षत्वमित्यर्थः ॥ सूत्रस्य यास्कवाक्यमूलत्वे हेत्वन्तरमाह—**किञ्चेति** ॥ किं सर्वेषां सूत्राणां यास्कवाक्यमूलत्वम् ? उतास्यैव ? नाद्य इत्याह—**श्रुत्यर्थेति** । उत्तरसूत्रेषु श्रुतिवाक्यानामेवोदाहृत्य विचार्यमाणत्वात् तन्मूलत्वमित्यर्थः ॥ द्वितीयं दूषयति—**श्रुतिरेवेति** । श्रुतेरनन्यापेक्षत्वात्तन्मूलत्वकल्पनया चैकरूप्यम्; इतरथा कस्यचित्सापेक्षमूलत्वम्, कस्य चिदन्यथात्वमिति वैरूप्यं स्यादित्यर्थः ॥ उपलक्षणस्यातिव्याप्तिं शङ्कते—**ननु भूतेति** । अभिन्ननिमित्तोपादानत्वस्य ब्रह्मलक्षणत्वाद् मायायाश्चाधिष्ठातृत्वाभावात् कथमतिव्याप्तिः ? इत्यपि न वाच्यम्; उपादानत्वमात्रं लक्षणमित्यादायातिव्याप्तेः शङ्क्यमानत्वादित्यर्थः ॥

मूलकारणत्वमेव कथं मायायाः ? तत्राह—**मायां त्विति** ॥ प्रकृतिशब्दोऽन्यथाऽपि घटत इति शङ्कते—**प्रक्रियत इति** ॥ 'रूढिर्योगमपहरती' त्युत्सर्गः, अपवादास्त्वन्यथात्वमिति शङ्कते—**आत्मन इति** ॥ निरपेक्षप्रकृतिद्वयानुपपत्तेः प्रकृतिशब्दस्य करणपरत्वमित्यर्थः ॥ श्रुत्योर्दौर्बल्य-प्राबल्यनिमित्ताभावाद् न प्रकृतिशब्दोऽन्यथयितुं शक्यत इत्याह—**न तुल्येति** ॥ प्रकृतिश्रुत्यनुरोधेन पञ्चम्येव कस्माद् नान्यथा व्याख्यायते ? इत्यत्राह—**मायेति** ॥ 'सावकाश-निरवकाशयोर्निरवकाशं बलवादि'दि न्यायात् प्रकृतिशब्दस्य च सावकाशत्वात् स एवान्यथा क्रियत इत्याशङ्क्य, सावकाशत्वमितरत्रापि तुल्यमित्याह—**निमित्तेऽपीति** ॥ एवं श्रुत्योः साम्यमभिधाय प्रकृतिश्रुतौ विशेषमाह—**दृश्यमानेति** । समानजातीययोरुपादानोपादेयभावनियमात् चिदचितोश्च विजातीयत्वादुपादानोपादेयभावानुपपत्तेर्माया-जगतोस्तत्त्वनिश्चय इत्यर्थः ॥ श्रुत्यन्तरे मायायाः करणत्वप्रतिपत्तेः प्रकृतिशब्दोऽपि करणपर इति शङ्कते—**इन्द्र इति** ॥ नच—मायाया एकत्वात् तत्र बहुवचनानुपपत्तिरिति—शङ्क्यम्; अवस्थाभेदापेक्षया तदुपपत्तेः । नच विजातीययोरात्म-जगतोरुपादानोपादेयतानुपपत्तिः; गोमय-वृश्चिकादेर्विजातीयत्वेऽपि तथाभावदृष्टेरित्यर्थः ॥ तृतीयाश्रवणमात्रमङ्गीकरोति—**सत्यमिति** ॥ तर्हि मायायाः करणत्वादनुपादानत्वमित्याशङ्क्याह—**आत्मन इति** ॥ "आत्मनि विज्ञाते सर्वमिदं ज्ञातं स्यात्" "बहु स्यां प्रजायेये"त्याद्यनेकवाक्यपर्यालोचनयाऽऽत्मन उपादानत्वप्रतिपत्तेस्तद्विरुद्धं मायाया उपादानत्वमित्याशयेन शङ्कते—**निरपेक्षेति** ॥ बहूनां तन्तूनां पटं प्रत्युपादानत्वं दृष्टम्, ततो विशेषमाह—**निरपेक्षेति** ॥ यथा द्वयोः सूत्रयोरेकरज्जुद्रव्यं

### ऋजुविवरणम्

**देरिति** ॥ अयमर्थः—सूत्रस्यापि वाक्यमनपेक्ष्य तदेव मूलं भवेदिति । **न महाभूतविषया इति** । अतीन्द्रियत्वादित्यर्थः । तर्हि यास्कद्वाराऽस्तु श्रुतिमूलत्वं सूत्रस्येत्याशङ्क्याह—**किञ्चेति** ॥

कथं माया करणमिति ? तदाह—**मायान्त्विति** ॥ तुल्यत्वेऽपि विरोधादन्यतरस्येहोपयोगसंभवान्मायाप्रकृतित्वहानमित्याह—**मायाप्रकृतित्वविरोधादिति** ॥ ननु—योगसंभव उक्त इति, तत्राह—**निमित्तेऽपीति** । प्रकृतिशब्दस्योपादानमेव वाच्यम्; पञ्चम्यास्तु साधारणत्वादिति भावः ॥ ब्रह्मण एव तद्भावापत्तिविरोधान्मायैवोपादानमति कथं नियम इति ? तदाह—**दृश्यमानजाड्यानुसारेणेति** ॥ **इन्द्रो मायाभिरिति** । अन्यत्र करणत्वश्रवणाद्वाक्यशेषन्यायेनात्रापि

## पञ्चपादिकाविवरणम्

रिति चेत्, तर्हि परस्परविशिष्टतया द्विसूत्ररज्जुवत्प्रकृतिता स्यात्। अतो जगत्कारणे ब्रह्मणि मायाया अपि ब्रह्मत्वं लक्षितं स्यात्। मायेति प्रज्ञाऽभिधीयते। सा च ब्रह्मचैतन्यमेवेत्यविरोध इति चेत्, न; अन्वय-व्यतिरेकविरोधात्। परिदृश्यमानहस्त्यश्वरथादौ प्रतिपन्नोपाधौ बाधिते च वृद्धव्यवहारेऽन्वय-व्यतिरेकाभ्यां मायाशब्दः प्रयुज्यमानो दृश्यते। लोकसंवेदनविरोधाच्च। नहि प्रज्ञातिशयवन्तं मायाविनं वदन्ति। गर्हन्ति च विदुषि मायाशब्दप्रयोगम्। बुद्धिविषयत्वान्मायाशब्दस्य न ब्रह्मचैतन्यप्रज्ञायां प्रसङ्गः। स्वप्नादिविविधमायाकारप्रतिभासनाद्वा बुद्धेः कार्यवादिनो मायाशब्दस्योपचारात्करणे प्रयोग इत्यनवद्यम्। अपि च "भूयश्चान्ते विश्वमायानिवृत्तिः "मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते" "दैवी ह्येषा गुणमयी मम माया दुरत्यया" "माययाऽपहृतज्ञाना आसुरं भावमाश्रिताः।" इति निवर्त्यतर्तव्यत्व-गुणमयत्वज्ञानावरणत्वलिङ्गाच्च न ब्रह्मचैतन्यं माया। बुद्धिरेव मायेति चेत्, न; प्रकृतिशब्दविरोधात्। मन्त्रौषधादि मायेति चेत्, न; दृश्यमानगन्धर्वनगरादौ मायाशब्दप्रयोगात्, मन्त्रौषधादौ तदप्रयोगात्। तथाऽपि जडात्मिका मायाशक्तिः पारमार्थिकीति चेत् न; "नासदासीन्नो सदासीत्तम आसीदि"ति जगत्प्रागवस्थायाः सदसद्विलक्षणानिर्वचनीयत्वश्रवणात्। लोके च हस्त्यश्वरथादिषु व्यभिचारिषु मिथ्यावस्तुमात्रेऽनुयायिनि मायाशब्दप्रयोगात्। "तरत्यविद्यां विततां हृदि यस्मिन्निवेशिते। योगी मायाममेयाय तस्मै विद्यात्मने नमः॥" इति मायाऽविद्ययोः

## तत्त्वदीपनम्

प्रत्युपादानत्वम्, तथा माया-ब्रह्मणोरपि मिलितयोरुपादानत्वे न किंचिदवद्यमस्तीत्याह—**तर्हीति**॥ मायाया उपादानत्वप्रतिपादनफलमाह—**अत इति**॥ ब्रह्मोपादानवादिमते मायाशब्दः प्रज्ञायां वर्तते? उत बुद्धौ? आहो मन्त्रादौ? अथवाऽन्यत्र? इति विकल्प्याद्यमुत्थापयति—**मायेति**। "माया प्रज्ञा तथा मेधे"त्यत्र मायाशब्दस्य प्रज्ञापरत्वेनाम्नानादित्यर्थः॥ तर्हि प्रज्ञायामेवातिव्याप्तिरित्याशङ्क्याह—**सा चेति**॥ "प्रज्ञानं ब्रह्मे"त्यदिश्रुतेरित्यर्थः। मायाशब्दस्य प्रज्ञापरत्वमन्वयव्यतिरेकविरुद्धमित्याह—**नान्वयेति**॥ कौ तावन्वय-व्यतिरेकाविति? अत्राह—**परिदृश्यमानेति**। प्रतिपन्नोपाधिबाधिते स्वप्नप्रपञ्च इत्यर्थः॥ इतोऽपि न माया प्रज्ञेत्याह—**लोकसंवेदनेति**॥ विरोधं व्यनक्ति—**तर्हीति**॥ प्रज्ञावति मायाशब्दप्रयोगस्य निन्द्यमानत्वादपि न प्रज्ञापरत्वमित्याह—**गर्हन्तीति**॥ मायाशब्दस्य प्रज्ञापरत्वमित्याह—**बुद्धीति**। "मनो महान्मतिर्ब्रह्मा-भूर्बुद्धिः ख्यातिरीश्वरः। माया प्रज्ञे"त्यत्र हैरण्यगर्भबुद्धिपर्यायत्वेन मायाशब्दस्मरणादित्यर्थः। मायाशब्दस्य बुद्धौ रूढिमाश्रित्योक्तम्, संप्रति तस्यामप्युपचारात् प्रयोग इत्याह—**स्वप्नेति**॥ इतोऽपि न ब्रह्मचैतन्यवाची मायाशब्द इत्याह—**अपि चेति**॥ द्वितीयमुत्थापयति—**बुद्धिरेवेति**। बुद्धेरनुपादानत्वान्न तत्रातिव्याप्तिरित्यभिसन्धिः॥ किं बुद्धिशब्दः परिणामपरः? उतः परिणामिपरः? उभयथाऽप्यसंभव इत्याह—**न प्रकृतीति**। कार्यत्वेनोभयोरपि प्रकृतित्वायोगात् प्रकृतिशब्दसमानाधिकृतस्य मायाशब्दस्य न बुद्धिपरत्वमित्यर्थः। तृतीयमनुवदति—**मन्त्रेति**॥ अन्वयव्यतिरेकविरोधान्न मन्त्रादेर्मायाशब्दवाच्यत्वमित्याह—**न दृश्यमानेति**॥ तुरीयेऽपि तदन्यत् किं परमार्थसत्? उतानिर्वचनीयम्? इति विकल्प्याद्यमवतारयति—**तथापीति**। मायाशक्तेः परमार्थत्वात् शक्ति-शक्तिमतोश्चाभेदान्नातिव्यप्तिरिति शङ्कार्थः॥ परमार्थत्वमसिद्धमित्याह—**न नासदिति**॥ प्रागवस्थाया अनिर्वचनीयत्वेऽपि न तद्विषयो मायाशब्दः संभवेत्, हस्त्यश्व-रथादिषु तत्प्रयोगादित्याशङ्क्याह—**लोक इति**॥ ज्ञाननिवर्त्याविद्यासामानाधिकरण्यादपि न माया सत्यमित्याह—**तरत्यविद्यामिति**। यस्मिन् परमेश्वरे हृदि निवेशिते योगी कार्यरूपेण विततां मायां तरति, तस्मै नम

## ऋजुविवरणम्

करणत्वमिति भावः॥ वैलक्षण्येऽपि कार्य-कारणभावदर्शनान्न जाड्येन नियमः, अतो ब्रह्मणः कारणत्वाद्विरोध इति चोदयति—**निरपेक्षेति**॥ **ननु**—अन्यत्र लोके प्रयोगेऽपि शब्दस्यानेकार्थत्वदर्शनादत्रापि प्रयोग इत्याशङ्क्याह—**लोकसंवेदनेति**॥ न हि लोकसंवेदनमर्थान्तरं प्रतिषेधति, कथं तद्विरोधः? इत्याशङ्क्याह—**न हि प्रज्ञातिशयवन्त्वमिति**॥ विद्यमानेऽर्थेऽपि(प्य)प्रयोगदर्शनात्कथमेतावता विरोध इत्याशङ्क्याह—**गर्हन्ति चेति**॥ ननु यास्कप्रयोगस्य लोकप्रयोगतुल्यत्वाद् ज्ञानवाचित्वमपीत्याशङ्क्याह—**बुद्धिविषयत्वाच्चेति**॥ ननु बुद्धावपि ज्ञानरूपे प्रयोगः, तदिहास्तीत्यपि प्रयोगः स्यादित्याशङ्क्य पक्षान्तरमाह—**स्वप्नादिविविधेति**। अत्रोपचारनिमित्तं नास्तीति भावः॥ इदानीं यास्कप्रयोगसामर्थ्याद् ज्ञाने मुख्यत्वमौपचारिकत्वं वा मायाशब्दस्य; तथाऽप्ययं न चैतन्ये प्रयुक्त इत्याह—**अपि चेति**॥ मन्त्रादौ प्रयोगादिति

### पञ्चपादिका

**अतो यदवष्टम्भो विश्वो विवर्तते प्रपञ्चः, तदेव मूलकारणं ब्रह्मेति सूत्रार्थः ॥**

### पञ्चपादिकाविवरणम्

सामानाधिकरण्याच्च । तस्मादनिर्वचनीयमायाविशिष्टं कारणं ब्रह्मेति प्राप्तम्, तत्राह—**अतो यदवष्टम्भो विश्वो विवर्तत इति** ॥ त्रैविध्यमत्र सम्भवति—रज्ज्वाः संयुक्तसूत्रद्वयवन्मायाविशिष्टं ब्रह्म कारणमिति वा, "देवात्मशक्तिं स्वगुणैर्निगूढामि"ति श्रुतेर्मायाशक्तिमत्कारणमिति वा, जगदुपादानमायाश्रयतया ब्रह्म कारणमिति वेति । तत्र विशिष्टपक्षे तथैव ब्रह्मत्वेनोपलक्षितस्य ज्ञानानन्दादिस्वरूपलक्षणेन मायानिष्कर्षाल्लक्षणद्वयेन विशुद्धब्रह्मसिद्धिः । उत्तरपक्षयोस्तु मायाया ब्रह्मपरतन्त्रत्वात्तत्कार्यमपि ब्रह्मपरतन्त्रं भवति; यथांऽशुतन्त्रतन्त्वारब्धोऽपि पटोंऽशुतन्त्रः प्रतीयते । ततश्चोत्पद्यमानकार्यस्य यद् आश्रयोपाधि ज्ञानानन्दलक्षणं च, तद् ब्रह्मेति शुद्धब्रह्मलाभ इति, तदाह **यदवष्टम्भ इति** ॥

केचित्तु—ब्रह्मैव जगदाकारेण परिणमते मृदिव घटाकारेणेति—वदन्ति, तद् व्यावर्तयति **विश्वो विवर्तत इति** ॥ एकस्य तत्त्वादप्रच्युतस्य पूर्वविपरीतासत्यानेकरूपावभासो विवर्तः। एकस्य पूर्वरूपपरित्यागेन सत्यरूपान्तरापत्तिः परिणामः । तत्र ब्रह्म न विवर्तते किंतु परिणमत एवेति तैस्तत्र प्रमाणं वक्तव्यम् । सृष्टिश्रुतेः परिणमत इति चेत्, सा खलु सृष्टिश्रुतिः ज्ञानानन्द-सत्य-निरवयवापरिच्छिन्न-ब्रह्मस्वरूपस्य पूर्वसिद्धस्य परित्यागेन जड-दुःख-मिथ्यासावयवपरिच्छिन्नकार्यापत्तिं ब्रह्मणो ब्रवीति ? आहोस्वित्पूर्वसिद्धरूपापरित्यागेनैव तद्विपरीतकार्यरूपापत्तिं ब्रह्मणो ब्रवीति ? इति वक्तव्यम् । तत्र पूर्वपरित्यागे ब्रह्मस्वरूपोच्छेदात्कार्यमात्रमेव स्यात् । पुनः प्रलयावस्थायां ज्ञानानन्दादिरूपेण परिणमत इति चेत्, अनिर्मोक्षप्रसङ्गात् । "अज आत्मा महान् ध्रुवः" "न जायते चे" त्यादिश्रुतिविरोधश्च स्यात् । अथ

### तत्त्वदीपनम्

इति संबन्धः ॥ द्वितीये तत्रातिव्याप्तिर्दुर्वारेत्युपसंहरति—**तस्मादिति** ॥ अतिव्याप्तिशङ्कायाः कः समाधिः ? इत्याशङ्क्य मतभेदं दर्शयति—**त्रैविध्यमिति** । **अत्रेति** । जगत्कारण इत्यर्थः । त्रैविध्यमेवाह—**रज्ज्वा इति** । संयुक्तसूत्रद्वयं रज्ज्वा यथोपादानम्, तथा मायाविशिष्टं ब्रह्म कारणमित्येकः पक्षः ॥ पक्षान्तरमाह—**देवात्मेति** ॥ **स्वगुणैः**=सत्त्वरजस्तमोलक्षणैरित्यर्थः । पूर्वत्र माया-ब्रह्मणोः समप्राधान्यम्, अत्र तु ब्रह्मणः प्राधान्यम्, मायायाश्चोपसर्जनत्वमित्यर्थः । सकलजगदाकारेण विवर्तमायाधिष्ठातृत्वं ब्रह्मलक्षणमिति पक्षान्तरमाह—**जगदुपादानेति** ॥ एवं मतभेदमभिधायातिव्याप्तिं निरस्यति—**तत्रेति** ॥ भवतु परतन्त्रत्वम्, ततः किमिति ? अत आह—**ततश्चेति** ॥ **आश्रयोपाधीति** । आश्रयस्याज्ञानस्य सत्ताहेतुरित्यर्थः ॥

विवर्तत इत्येतद्व्यावर्त्यां शङ्कामाह—**केचित्त्विति** ॥ परिणाम-विवर्तयोर्भेदासिद्धौ ब्रह्मविवर्तो विश्वं न परिणाम इति कथमुक्तम् ? इत्याशङ्क्याह—**एकस्येति** ॥ पूर्वस्वभावे स्थिते कथं तद्विपरीतरूपावभास इति ? अत्राह—**असत्येति** ॥ भवत्वेवं भेदः, ततः किमिति ? अत आह—**तत्रेति** । किं विवर्तस्य प्रामाणिकत्वम् ? उत परिणामस्य ? इति विमर्शार्थः ॥ परिणाम एव प्रामाणिक इत्याह—**सृष्टीति** ॥ श्रुत्यर्थमेव विविच्य ब्रूहीत्याह—**सा खल्विति** ॥ पूर्वरूपपरित्यागं विना रूपान्तरापत्त्यभावं दर्शयितुं **"ज्ञानानन्दे"**त्यादि विशेषणम् । ज्ञानानन्दादेः स्वभावत्वात् त्यागानुपपत्तिरित्यर्थमभिप्रेत्य पक्षान्तरमाह—**आहोस्विदिति** ॥ आद्यं प्रत्याह—**तत्रेति** ॥ **वस्तु स्यादिति** ॥ मुक्तौ कार्यरूपाभावात् शून्यताप्रसक्तिरिति शेषः ॥ रुचकस्य स्वस्तिकाकारपरिणामवत् कार्यस्य ज्ञानाद्याकारेण परिणामान्न शून्यताप्रसक्तिरिति शङ्कते—**सृष्टीति** ॥ स्वस्तिकस्यापि पुनरन्यथाभाववदानन्दादिरूपस्याप्यन्यथाभावशङ्का दुष्परिहरेत्याह—**अनिर्मोक्षेति** ॥ अन्यथाभावस्य निमित्ताधीनत्वाद् मुक्तौ च निमित्ताभावात् कथमन्यथात्वशङ्का ? इत्याशङ्क्य, परिणाम एवानुपपन्न

### ऋजुविवरणम्

चेत्, तत्राह—**लोके चेति** ॥ ननु हस्त्यादिरूपस्य व्याभिचारेऽपि कार्यत्वमनुगतं विहाय मिथ्यावाचित्वं कथं निश्चीयत इति ? तदाह—**तरत्यविद्यामिति** ॥ ननु उत्तरपक्षयोर्ब्रह्मणः कारणत्वमेव नास्ति, कथं लक्षणम् ? इत्याशङ्क्याह—**उत्तरपक्षयोरिति** ॥

**"ज्ञानानन्दे"** त्यादिविशेषणोपादानं कथञ्चिद् रूपमात्रपरित्यागस्य वक्तुं शक्यत्वान्न तावता परिणाम इति

## पञ्चपादिकाविवरणम्

पूर्वविपरीतब्रह्मस्वरूपापरित्यागेनैव कार्यरूपापत्तिं ब्रूयात् सृष्टिश्रुतिः, एवं तर्हि विवर्तं प्रतिपादयति; शुक्तिकारजतमायाव्याघ्रादिषु विवर्तस्य तल्लक्षणत्वात्। अथ सृष्टिश्रुतिः सृष्टिमात्रविषया, न पूर्वस्वरूपपरित्यागरित्यागयोर्व्याप्रियत इति चेत् तथाऽपि व्यवस्थितब्रह्मवाक्यैरेकवाक्यत्वात् तत्स्वरूपापरित्यागेनैव कार्यरूपापत्तिं ब्रह्मणो ब्रुवाणा विवर्तमेव दर्शयतीत्यनवद्यम्॥

योऽपि कश्चिदाह निरवयवमपि परिणमत इति। तथाहि—हेमद्रव्ये रुचकाकारेण परिणममाने तदवयवा अपि परिणमेरन्? नवा? इति वक्तव्यम्। यदि परिणमेरन्, तर्हि तदवयवा अपि तथा, इति निरवयवपर्यन्तः परिणामः स्यात्। अथ न परिणमेरन्, तर्ह्यवयवी न परिणमेत; आश्रयविकारमन्तरेणाश्रितविकारायोगात्। तस्माद् यथा संयोगोऽवयव्येकदेशसमवेतः परम्परया निरवयवपरमाणुसंयोगपुरःसरः, तथा निरवयवपरिणामपुरःसरोऽवयविपरिणाम इति॥

स वक्तव्य—कश्चायं परिणाम इति? यदि तावत् स्वावयवानां पूर्वसंयोगात् संयोगान्तरापत्त्या वाऽवयवान्तरसंयोगेन वा संमूर्छितावयवत्वं परिणामः, न तर्हि निरवयवे परिणामः; स्वावयवाभावान्निरवयवस्य। नचावयवानां संयोगान्तरेण संमूर्छितत्वमन्तरेणावयविनः परिणामोऽवस्थान्तरं वाऽन्यथाभावो वा निरूपयितुं शक्यते। नच वस्तुनो वस्त्वन्तरसंयोगो वा परिस्पन्दो वा गुणान्तरोदयो वा परिणामः; ब्रह्मणि तेषामभावात्। आकाशे च वस्त्वन्तरसंयोगिनि परिस्पन्दमाने च भ्रमरे लौहित्योदये च घटे द्रव्ये परिणामबुद्ध्यभावात्। अथ तदनुषक्तद्रव्यान्तरोत्पत्तिः परिणाम इति, तत्र किं हेमावयवानां रुचकरूपेणैव परिणामः? किं वा द्रव्यान्तररूपेण? न तावद् द्रव्यान्तररूपेण; तत्र रुचकद्रव्यातिरिक्तकार्यद्रव्यादर्शनात्, नापि रुचकाकारेणैव; तस्यावयविपरिणामत्वात्, अवयवानां च रुचकानुगमस्य रुचकानुगतावयव्यनुगमेनैवान्यथासिद्धत्वात्। नच रुचकावस्थाव्यतिरेकेण हेमावयवानामवस्थान्तराणि

## तत्त्वदीपनम्

इत्याह—**अजआत्मेति**॥ द्वितीयमनुवदति—**अथेति**॥ तर्हि, अस्मदिष्टसिद्धिरित्याह—**एवं तर्हीति**॥ विवर्तवाचकपदाभावात्कथं तत्प्रतिपादकत्वं श्रुतेः? इत्यत आह—**शुक्तिकेति**॥ **तल्लक्षणत्वादिति**। पूर्वरूपापरित्यागेन रूपान्तरापत्तिलक्षणत्वाद्विवर्तस्येत्यर्थः। सृष्टिश्रुतेः सृष्टिमात्रोपक्षीणत्वान्न विवर्तसिद्धिरिति शङ्कते—**अथेति**॥ वाक्यान्तरपर्यालोचनया सृष्टेर्विवर्तत्वनिश्चय इत्याह—**तथापीति**॥ **व्यवस्थितब्रह्मवाक्यैरिति**। कूटस्थस्य-नित्यनिरवयवत्वादिप्रतिपादकवाक्यैरित्यर्थः॥

निरवयवस्यापि परिणामित्वोपलम्भाद् ब्रह्मणोऽपि परिणामित्वमिति शङ्कते—**योऽपीति**॥ सावयवमृदादेः स्वपरिणामोपलम्भात्कथं निरवयवस्यापि परिणामः? तत्राह—**तथाहीति**॥ उक्तमर्थं सदृष्टान्तमुपसंहरति—**तस्मादिति**॥

परिणामो दुर्निरूप इत्याह—**स वक्तव्य इति**॥ किं पूर्वरूपे स्थिते परिणामः? उत नष्टे? न तावदाद्यः; तथाभावविरोधात्, द्वितीये पूर्वस्य नष्टत्वात् कस्य परिणामः? किं मूर्छितावयवत्वं परिणामः? आहो वस्त्वन्तरसंयोगः? उत परिस्पन्दः? उत गुणान्तरोदयः? किंवा पूर्वरूपानुषक्तद्रव्यान्तरोदयः? इति वाच्यम्। आद्येऽपि किं स्वावयवानां संयोगान्तरापत्त्या संमूर्छितावयवत्वम्, उतावयवान्तरसंयोगेन? इति विकल्प्योभयमप्यनूद्य दूषयति—**यदि तावदित्यादिना**॥ अस्मिन्पक्षेऽवयविनः परिणामासिद्धिश्चेत्याह—**नचावयवानामिति**॥ अवयवानां संयोगान्तरापत्त्या तत्संमूर्च्छितत्वम्, तदन्तरेण परिणामो निरूपयितुं न शक्यत इति योजना। परिणामावस्थान्तरादिशब्दाः पर्याया इति द्रष्टव्यम्। द्वितीय-तृतीय-चतुर्थान्निरस्यति—**नचेति**॥ प्रतिज्ञातार्थे हेतुमाह—**ब्रह्मणीति**॥ तत्रैव हेत्वन्तरमाह—**आकाश इति**॥ पञ्चममुत्थापयति—**अथेति**॥ उपादानकारणं तच्छब्दार्थः। हेम्नि द्रव्यान्तरोदयसंदर्शनात् तस्य परिणामित्वेऽपि तदवयवपरिणामः कीदृश इति वचनीयमित्याह—**तत्र किमिति**॥ अन्त्यं दूषयति—**न तावदिति**॥ आद्यं दूषयति—**नापि रुचकेति**॥ रुचकस्योभयपरिणामित्वं किं न स्यात्? तत्रोभयानुगमदर्शनात्, इत्याशङ्क्याह—**अवयवेति**। रुचकेऽनुगमनम्, तस्येत्यर्थः। रुचकेऽनुगतो योऽयं हेमावयवी, तस्मिन्नवयवानामनुगमाद् रुचकेऽनुगमप्रतिभास इत्यर्थः॥ अवस्थान्तर-

## ऋजुविवरणम्

दर्शयितुम्। **अनिर्मोक्षेति**। प्रपञ्चसंबन्धस्यापरिहार्यत्वादित्यर्थः॥ ननु प्रपञ्चसंबन्धेऽपि शास्त्रान्मुच्यत इत्याशङ्क्य परिहारान्तरमाह—**अज आत्मेति**॥ **व्यवस्थितमहावाक्यैरिति**। अयमर्थः—व्यवस्थितमजं नित्यं ब्रह्मेति प्रतिपादयन्ति

## पञ्चपादिकाविवरणम्

दृश्यन्ते येन परिणामभेदः स्यात् । नच संयोगभेद एववावयवपरिणाम इत्युक्तम् । नचावयवि द्रव्यं विना हेमावयवा रुचकाकारेण परिणमन्त इति युक्तम्; आरम्भवादप्रसङ्गात् । अथादृश्यमानोऽप्यवयवपरिणामोऽवयविपरिणामानुपपत्त्या कल्प्यते; आश्रयविकारमन्तरेणाश्रितविकारानुपपत्तेः, नैतत्सारम्; अवयविजन्मविनाशयोरवयवानामपि तत्तन्त्राणां जन्मविनाशप्रसङ्गात्, अवयविगमनेऽवयवानां गमनवत् । परिणामोऽपि भविष्यतीति चेत्, न; अवयविनि घटत्वजातिसमवायिन्यवयवानां घटत्वजातिसमवायाभावात् । ननु—अवयवानामन्यथाभावमन्तरेण कथमवयविनोऽन्यथाभावः ? न हि द्रव्यस्यावस्थान्तरद्रव्यान्तरापत्तिवद् नैल्यं गुणान्तरमापद्यतेऽवस्थान्तरं वा । नचावयविकार्यव्यतिरेकेणावयवानां कार्यं दृश्यत इत्युक्तम् । न हि पटे कार्यान्तरावभासेऽपि तन्तवोऽतन्त्वात्मनाऽवभासन्ते । पटकार्ये तन्त्वनुगमः स्वानुगतानुगमादन्यथासिद्ध इत्युक्तम् । किंच अवयविपरिणामोपाधावेवावयवपरिणामो दृष्टः, इति न निरुपाधिनिरवयवात्मपरिणामसिद्धिः ।। यत्तु निरवयवसंयोगवत्परिणाम इति, तत्रापि दृश्यमानोऽवयविसंयोगो न परमाणुसमवेतः; तद्गतरूपादिवदप्रत्यक्षत्वप्रसङ्गात् । नाप्यवयव्येकदेशसंयोगेन निरवयवे संयोगः कल्पयितुं शक्यते; अवयविन्येव जातिसमवायवदवयवसंयोगमन्तरेणावयविन्येव संयोगोपपत्तेः । अवयवानां संयोगानुगमस्यावयव्यनुगमेनान्यथासिद्धत्वात् । अवयवेष्वेव संयोगो नावयविनीति चेत्, न; अवयविभ्यामसंयुक्ताभ्यां कार्यान्तरानारम्भप्रसङ्गात् । तस्मादवयविन्येव संयोगो नावयवेषु । अवयविसमवाये संयोगस्य कृत्स्नवृत्तिता संयोगस्य प्राप्नोतीति चेत्, तर्हि निरवयसंयोगेऽपि कृत्स्नवृत्तेः प्रचयाभावप्रसङ्ग इति । कथं पुनर्ब्रह्मणो निरवयवत्वलाभः ? उच्यते; अवयवावयविनोः स्वयंप्रकाशत्वे सतीतरेतराविषयत्वान्न

## तत्त्वदीपनम्

प्राप्तिरेव परिणाम इति शङ्कां निरस्यति—**नच रुचकेति** ।। संयोगभेद एव परिणाम इत्याशङ्क्याह—**नचेति** ।। संयोगे सत्यप्याकाशे परिणामबुद्ध्यदर्शनादित्यर्थः ।। रुचकस्यावयवपरिणामत्वमित्याशङ्क्याह—**नचेति** ।। अवयवपरिणामस्य प्रत्यक्षतोऽसिद्धावप्यनुपपत्त्या तत्कल्पनमिति शङ्कते—**अथेति** ।। अनुपपत्तिं स्पष्टयति—**आश्रयेति** ।। विकल्पासहत्वान्नैतदित्याह—**नैतत्सारमिति** ।। किमाश्रितविकल्पमात्रस्याश्रयविकारपुरःसरत्वम् ? उत विकारविशेषस्य ? नाद्य इत्याह—**अवयवीति** ।। वस्तुतोऽवयवानामवयव्यनधीनत्वेऽपि प्रतिभासमाश्रित्य तत्तन्त्राणामित्युक्तम् । द्वितीयमनुवदति—**अवयवीति** ।। जन्म-विनाशव्यतिरिक्तो योऽवयविविकारः, स आश्रयविकारपुरःसर इत्यर्थः । घटावयवेषु घटत्वजातिसमवायं विनाऽप्यवयविनि तद्भाववत् परिणामोऽपि किं न स्यात् ? इत्याह—**नावयविनीति** ।। अवयवावयविनोरभेदाद् अवयविपरिणामावस्थायामवयवेष्वपि परिणाम आश्रयणीय इति शङ्कते—**नन्ववयवानामिति** ।। अन्यथोपपत्त्या दूषयति—**जातीति** ।। दृष्टान्तं विवृणोति—**न हीति** ।। अनुपलब्धश्चावयवपरिणाम इत्याह—**नचेति** ।। अदर्शनमेव स्पष्टयति—**नहीति** ।। **कार्यान्तरावभास इति** । पटसाध्यरज्जुद्रव्यलक्षणकार्यान्तरावभास इत्यर्थः ।। **अतन्त्वात्मनेति** । अन्यथाभावाख्यकार्यात्मनेत्यर्थः ।। तन्तूनां पटसाध्यरज्जुद्रव्येऽनुगमादर्शनाद् रज्जुद्रव्यमेव तत्कार्यमित्याशङ्क्यान्यथासिद्धिमुक्तां स्मारयति—**पटकार्य इति** ।। अवयवानां पृथक् परिणाममङ्गीकृत्य ब्रह्मणः परिणामं दूषयति—**किंचेति** ।। निरुपाधिकत्वमुपपादयति—**निरवयवेति** ।। अवयविसंयोग-पुरःसरत्वादवयविपरिणामस्यावयवपरिणामपुरःसरत्वमित्युक्तमनुवदति—**यत्त्विति** ।। अलक्तकनिष्ठारुणिम्नः स्फटिके भानवत् संयोगो वस्तुतोऽवयवसमवेतः सन्नवयविनि भातीत्युच्यते ? किं वा तत्र संयोगान्तरमुत्पाद्य तेनेति ? तत्राद्यं दूषयति—**तत्रापीति** ।। द्वितीयं दूषयति—**नापीति** ।। पटरज्ज्वोः संयोगसमवायेऽवयवानामपि संयोगित्वं दृष्टमित्याशङ्क्याह—**अवयवानामिति** ।। अवयवानामवयव्यनुगमेन हेतुना संयोगानुगमस्यान्यथासिद्धत्वादिति योजना । अवयविसंयोगेऽवयवानामपि संयोगित्वभानं संयोगानुगमः, तस्येत्यर्थः । संयोगास्याव्याप्यवृत्तित्वादवयवनिष्ठ एव सम्बन्ध इति शङ्कते—**अवयवेष्विति** ।। कार्योदयान्यथानुपपत्त्या संयोगस्यावयविनिष्ठत्वमाश्रयणीयमित्याह—**नावयविभ्यामिति** ।। अवयविवत्तित्वे वाधकं शङ्कते—**अवयविसमवाय इति** । अवयविन्यारम्भकातिरिक्तावयवास्वीकारादित्यर्थः ।। ननु—अनुपपत्तिरत्रापि समेत्यःह—**तर्हीति** ।। निरवयवे परिणामानुपपत्तिश्चेत्, तर्हि ब्रह्मापि सावयवमेष्टव्यम्; अन्यथा "तदात्मानं स्वयमकुरुत" त्यादेरसंभवादिति शङ्कते—**कथं पुनरिति** ।। विकल्पासहत्वान्नैतदित्याह—**उच्यत इति** ।। किमवयवावयविनोरुभयोरपि स्वप्रकाशत्वम् ? उतान्यतरस्य ? नाद्य इत्याह—**अवयवेति** ।। द्वितीयं दूषयति—**अन्यतर-**

**पञ्चपादिका**

**ननु—श्रुतिनिर्दिष्टग्रहणे सूत्रमर्थशून्यं स्यात्; न हीमां पृथिवीं जायमानां पश्यामः, नापो न तेजः, कथं सिद्धवल्लक्षणत्वेनोपादीयेतेति ? उच्यते—तेजसस्तावदरणिनिर्मथनादिषु दृश्यते जन्म, इन्धनापाये विनाशः । अपामपि चन्द्रकान्तादिषु जन्म, क्रमेण च शोषः । पृथिव्या अप्यवयवसंयोग-विभागदर्शनात् तन्निमित्तौ जन्म-विनाशावनुमीयेते । दृश्येते चाद्याऽप्यवयवसंयोग-विभागकृतौ पृथिव्येकदेशस्य जन्म-विनाशौ । वाय्वाकाश-काल-दिशामपि "यावद्विकारं तु विभागो लोकवदि"ति वक्ष्यमाणेन न्यायेन स्त एव जन्म-विनाशौ । न यथोक्तविशेषणस्येत्यादिना भाष्येण युक्तिरपि ब्रह्मस्वरूपनिर्णयायानेनैव सूत्रेण तन्त्रेणावृत्त्या वा जन्माद्यस्य यतः सम्भवतीति सूत्रितेति दर्शयति ।**

**पञ्चपादिकाविवरणम्**

सावयवत्वं ब्रह्मणा स्वात्मन्यनुभवितुं शक्यम् । अन्यतरस्यास्वयंप्रकाशत्वेऽन्यतरेण वेद्यत्वाद् घटात्मनोरिव नांशांशिभाव-सिद्धिः । श्रुतिश्च "निष्कलं निष्क्रियं शान्तमि"ति क्रियावयवशून्यतामाह । नियन्तृत्वादिक्रियाऽपि श्रूयत इति चेत्, तर्हि परस्परविरोधे सति मायया तत्त्वातत्त्वव्यवस्था कल्पनीया । "मायाभिः पुरुरूप ईयते" इति प्रवृत्तेर्मायानिबन्धनत्वश्रवणात् चेतनस्य निर्व्यापारस्य सुषुप्ते पुरुषार्थत्वावगमाद् ब्रह्मणः स्वतः प्रवृत्तिप्रयोजनाभावाच्च विपरीतस्वरूपापरित्यागेन विपरीतकार्यापत्तेश्च विवर्त एवेति सिद्धम् ॥

ननु—जगदुत्पत्तिकारणत्वं न सिद्धवद् ब्रह्मलक्षणत्वेनोपादातुं शक्यम्, भूतपञ्चकस्य कार्यत्वासिद्धेः, भौतिकानां च भूतोपादानत्वादिति चोदयति—**ननु श्रुतिनिर्दिष्टग्रहण** इत्यादिना ॥ **"उच्यते"** इत्यादेः परिहारस्यायमर्थः । पृथिव्यप्तेजो-वायवो विवादपदानि, जन्मविनाशवन्तः, पृथिव्यप्तेजो-वायु-बुद्धिगोचरत्वात्; एकदेशपृथिव्यप्तेजो-वायुवदिति । ननु—प्रत्यनुमानमस्ति—पृथिव्यादयः, न जायन्ते महाभूतत्वात्; आकाशवत्, आकाशश्च, न जायते, निरवयवद्रव्यत्वात्; आत्मवदिति । सत्यम् । महाभूतत्वादिति सामान्यतो दर्शनात् पृथिवीबुद्धिगोचरत्वात् तदेकदेशवदिति विशेषतो दर्शनमेव बलीय इत्यनवद्यम् ।

**तत्त्वदीपनम्**

**स्येति** ॥ श्रुतिविरोधादपि नांशांशिभाव इत्याह—**श्रुतिश्चेति** ॥ श्रौतत्वात् क्रियादिविधुरताया अभ्युपगमश्चेत्, तर्हि तत एव क्रियादिमत्त्वमप्येष्टव्यमिति शङ्कते—**नियन्तृत्वादीति** । "यः पृथिवीमन्तरो यमयती"ति नियन्तृत्वं श्रूयते । "पादोऽस्य विश्वा भूतानि" "चतुष्पादष्टशफः" इत्यादौ सावयवत्वमित्यर्थः । सक्रियत्वनिष्क्रियत्वादिप्रतिपादकश्रुत्योर्विरुद्धत्वाद् यथार्थत्वानुपपत्तेरेकस्यास्तात्त्विकविषयत्वमिति व्यवस्थाऽऽस्थेयेत्याह—**तर्हीति** । तत्त्वं क्रियावत्त्वम्, अतत्त्वं क्रियाशून्यत्वम् । मायया क्रियावत्त्वादि, वस्तुतस्तद्वैपरीत्यमित्यर्थः ॥ वैपरीत्यं किं न स्यादिति ? अत्राह—**मायाभिरिति** ॥ क्रियावत्त्वाद्यभ्युपगमे प्रयोजनाभावादितरत्र प्रयोजनसंभवादपीत्थमेव व्यवस्थेत्याह—**चेतनस्येति** ॥ इतोऽपि न परिणामः प्रतिपाद्यत इत्याह—**विपरीतस्वरूपेति** । "तत्सृट्वा तदेवानुप्राविशदि"त्यत्र सर्गोत्तरकालं प्रवेशः श्रूयते, परिणामपक्षे पूर्वरूपस्य नष्टत्वात् कस्य प्रवेशो निर्दिश्येतेत्यर्थः ॥ **"योऽपि कश्चिदि"**त्यारभ्ये**"ति सिद्धमि"**त्यतः प्राक्तनग्रन्थः प्रक्षिप्त इति केचित् ॥

पृथिव्याद्युत्पत्त्याद्यदर्शनान्न पृथिव्यादिकारणत्वं लक्षणमित्युक्तं टीकायाम्, तदनुपपन्नम्, पृथिव्याद्यात्मकस्य घटादेरुत्पत्त्यादिदर्शनादित्याशङ्क्य तात्पर्यमाह—**नन्विति** ॥ तर्हि भौतिककारणत्वं लक्षणमित्यत्राह—**भौतिकानामिति** ॥ भूतानां कार्यत्वाभावे चोद्ये तत्रैव कार्यत्वं प्रदर्शनीयम्, नान्यत्रेत्याशङ्क्य तात्पर्यमाह—**उच्यत इत्यादेरिति** ॥ पृथिवी, जन्म-विनाशवती, पृथिवीत्वात्; एकदेशपृथिवीवत् । एवमबादिषु प्रयोगो द्रष्टव्यः । हेतुं साधयितुं बुद्धिगोचरत्वादित्युक्तम् । प्रत्यनुमानविरोधं शङ्कते—**ननु प्रत्यनुमानमिति** ॥ साध्यविकलो दृष्टान्त इत्याशङ्क्याह—**आकाश इति** ॥ घटादिव्यावृत्त्यर्थम्—**"निरवयवे"**त्युक्तम् । गुणादिव्यावृत्त्यर्थम्—**"द्रव्यत्वादि"**ति । आकाशनित्यत्वानुमानस्य श्रुतिविरुद्धत्वं साधनवैकल्यं च दृष्टान्तस्य स्पष्टमित्युपेक्ष्य दूषणान्तरमाह—**सत्यमिति** ॥ प्रत्यनुमानसद्भावोऽङ्गीकृतश्चेत्, तर्हि उत्पत्त्यादिकारणं न सिध्यतीत्याशङ्क्याह—**महाभूतत्वादिति** ॥ सामान्यविशेषविषयशास्त्रयोर्विशेषशास्त्रं बलीयः, सामान्यशास्त्रं दुर्बलमिति न्यायाद् विशेषस्योत्पत्त्याद्यनुमानस्य बलीयस्त्वम् । तथाचोक्तम्—"प्रसिद्धावयवं यत्स्याद्विशेषे च प्रतिष्ठितम् । तत्साध्याङ्गकसामान्यदृष्टाच्च बलवत्तरम् ।"

## पञ्चपादिका

**अस्य जगतो नामरूपाभ्यां व्याकृतस्येत्याद्यभिहितविशेषणचतुष्टयस्य, यथोक्तविशेषणमीश्वरं मुक्त्वेति=सर्वज्ञं सर्वशक्ति विहाय नान्यतः=परपरिकल्पितात्प्रधानादेरचेतनात्, चेतनादपि परिच्छिन्नज्ञान-क्रियाशक्तेः संसारिणो हिरण्यगर्भादुत्पत्त्यादि सम्भावयितुमपि शक्यम् ।**

## पञ्चपादिकाविवरणम्

"न यथोक्तविशेषणस्ये"त्यादिभाष्यतात्पर्यमाह—**युक्तिरपि ब्रह्मस्वरूपनिर्णयायेत्यादिना** ॥ "अस्य जगत" इत्यादिभाष्यं व्याचष्टे— **नान्यतः परपरिकल्पितात् प्रधानादेरिति** ॥ अयमर्थः—सर्व एव ह्याध्यात्मिका भावाः, सुखदुःखमोहसामान्यप्रकृतिकाः, सुख-दुःखमोहसामान्येन नियमेनान्वितस्वभावत्वात्; ये विकारा यदन्वितस्वभावास्ते तत्प्रकृतिका दृष्टाः, यथा मृदन्विताः शरावादयः । तथा सर्वे विकाराः, अविभक्तैकप्रकृतिकाः, परिमितानेकविकारत्वात्; ये परिमितानेकविकाराः, तेऽविभक्तैकप्रकृतिकाः, यथा मृत्पिण्डप्रकृतिकाः शरावादयः, इति जगन्मूलकारणं प्रधानमनुमिमते सांख्याः । तथाऽणुवादिनश्चानुमिमते—सर्वं कार्यद्रव्यम्, स्वपरिमाणादणुतरपरिमाणसंयोगसचिवसमानजातीयानेकद्रव्यारब्धम्, कार्यद्रव्यत्वात्; यत्कार्यद्रव्यम्, तत्तथा, यथानेकद्रव्यारब्धः पटः, इति निरवयवपरमाणुपर्यन्तमनुमानप्रवृत्तेः परमाणवो मूलकारणमिति । तथा शून्यवादिनश्च—सर्वं कार्यम्, अभावपुरःसरं भवितुमर्हतिः, योग्यत्वे सत्यनुपलभ्यमानपूर्वावस्थत्वात्; यदभावपुरस्सरं न भवति न तद्योग्यत्वे सति अनुपलभ्यमानपूर्वावस्थम्, यथा परपरिकल्पित आत्मेति शून्यालम्बनत्वं सर्वत्र वदन्ति । योगाः शैवाश्च—हिरण्यगर्भं पशुपतिं चागमसामार्थ्याज्जगत्कारणं कल्पयन्ति । तान् पक्षान् व्यावर्तयति— **नान्यतः परपरिकल्पितादित्यादिना** ॥

तत्र प्रथमं तावत् प्रमाणदूषणं सम्भावयति—**अचेतनात्तावदित्यतः** प्राक्तनेन ग्रन्थेन । कथम् ? सांख्यानुमाने

## तत्त्वदीपनम्

"बाधः सामान्यशास्त्रस्य विशेषविषयाद् यथा । अनुमानान्तरैरेवमनुमानस्य साधनम्" ॥ इति ॥

**"अस्य जगतः"** इत्युत्तरग्रन्थेन पौनरुक्त्यं निरस्यति—**न यथोक्तेति** ॥ अक्षरव्याख्यानकथनपर उत्तरो ग्रन्थ इत्याह—**अस्येति** । अस्य जगत इत्यनेन भाष्यं व्याचष्ट इत्यन्वयः । **"अस्य जगतः"** इत्यत्र **"न यथोक्तविशेषणस्ये"**त्यादिभाष्याक्षरव्याख्यानं क्रियते, अत्र तु तात्पर्यं कथ्यत इत्यपौनरुक्त्यमित्यर्थः । परकल्पनाप्रतिपत्तौ तन्निरसनं सुकरमिति तत्कल्पनामाह—**नान्यत इति** ॥ सुख-दुःख-मोहात्मकमनुगतं सामान्यपदवेदनीयं यद्वस्तु, सा प्रकृतिर्येषां ते तथोक्ता । यद् यदन्वितम्, तत् तत्प्रकृतिकमित्युक्ते संयोगाद्यन्वितघटादिषु व्यभिचारः, तदर्थम्—**नियमेनेति** ॥ अनुमानान्तरमाह—**तथेति** ॥ **"एकप्रकृतिकाः"** इत्युक्ते ब्रह्मप्रकृतिकतया सिद्धसाधनत्वम् तदर्थम्—**अविभक्तेति** । संसृष्टत्वमविभक्तशब्देन विवक्षितमित्यर्थः । तावत्युक्ते संसृष्टपरमाणुप्रकृतिकतया सिद्धसाध्यत्वम्, तदर्थम्—**एकेति** । परिमितत्वादनेकत्वाद्विकारित्वाच्चेति हेतुत्रयम् । विवादाध्यासितं कार्यद्रव्यम्, स्वपरिमाणादणुपरिमाणारब्धम्, कार्यद्रव्यत्वात्, संमतवदिति विवक्षितम् । संयोगस्यासमवायिकारणत्वं दर्शयितुम्—**"संयोगसचिवे"**ति ॥ विजातीयस्यानारम्भकत्वमाह—**समानजातीयेति** ॥ अनेकेषामारम्भकत्वे नियममाह—**अनेकेति** ॥ गुणादिव्यावृत्त्यर्थम्—**द्रव्यत्वादिति** ॥ नित्यद्रव्यव्यावृत्त्यर्थम्—**कार्येति** ॥ तथाऽपि कथं परमाणुकारणवादः ? तत्राह—**निरवयवेति** ॥ "अनुपलभ्यमानपूर्वावस्थत्वादि"त्युक्त आत्मनि व्यभिचारः, तदर्थम्—**योग्यत्वे सतीति** ॥

पौनरुक्त्यं निरस्यति—**तत्र प्रथममिति** ॥ उत्तरत्र प्रमेयदूषणं कथ्यत इत्यपौनरुक्त्यम् । प्रमाणदूषणप्रकारं पृच्छति—**कथमिति** । घटादयो बाह्यत्वेन, सुखादयस्त्वान्तरत्वेनेत्यसिद्धिरित्यर्थः ॥ सुखाद्यात्मतायाः प्रामाणिकत्वादभे-

## ऋजुविवरणम्

वाक्यानीत्यर्थः ॥

**ननु—भूतद्वारेण ब्रह्मणो जगत्कारणत्वम्, तच्च न संभवति; भूतानामकार्यत्वादिति चोदिते भूतानामेव जन्मादि दर्शनीयम्, नैकदेशानामित्याशङ्क्याभिप्रायमाह—उच्यत इत्यादेरिति ॥**

**उत्तरग्रन्थेन पौनरुक्त्यमाशङ्क्याह—न यथोक्तेति ॥ व्याचष्टे=अक्षरार्थं कथयतीत्यर्थः । अज्ञाते कल्पनाप्रकारे निराकरणानुपपत्तेस्तां दर्शयति—नान्यत इत्यादिना ॥**

### पञ्चपादिका

**अचेतनात्तावदचेतनत्वादेवानुपपन्नम् ।**

### पञ्चपादिकाविवरणम्

तावत्सुख-दुःख-मोहान्वयो भावानामसंप्रतिपन्नः; अन्तर्बहिर्भावेनोपलब्धेः । स्यादेतत्—सर्वे विकाराः, सुख-दुःख-मोहात्मकाः, चित्तोपरक्तत्वे सति तत्र तदाकारप्रतिभासहेतुत्वात्; दर्पणोपरक्ततया मुखाकारप्रतिभासहेतुबिम्बवदिति भावानां सुख-दुःख-मोहान्वयोऽनुमीयत इति, न; अन्तर्बहिर्भावभेदप्रत्यक्षविरोधात्, एकं च शब्दमुपलभमानानां प्रत्येकं सुख-दुःख-मोहत्रितयोपलम्भप्रसङ्गाच्च, अदृष्टेन च वस्तुसामर्थ्यनियमायोगात्, अतोऽसिद्धो हेतुः, अनैकान्तिकश्च; गुणसामान्यैरप्यप्रकृतिभिर्द्रव्याणां समन्वयात् । यत्तु परिमितत्वादिति, तत्रापि वस्तुतः परिमितत्वे हेतोर्गुण-पुरुषेष्वनैकान्तिकता देश-कालपरिमितत्वे घट-हिम-करकादिषु प्रत्यक्षदृष्टभिन्नप्रकृतिष्वनेकान्तः । वैशेषिकानुमानेऽपि स्वपरिमाणादणुतरपरिमाणारभ्यत्वे दीर्घविस्तीर्णदुकूलैः क्रियमाणरज्जद्रव्यस्य ह्रस्वस्यापि कार्यत्वदर्शनादनैकान्तिको हेतुः, प्रत्यनुमानदुष्टश्च । न किञ्चिदपि कार्यद्रव्यम्, निरवयवद्रव्यसंयोगपुरस्सरम्, प्रचयात्मकत्वात्, यत् प्रचयात्मकम्, न तद् निरवयवद्रव्यसंयोगपुरस्सरम्, यथा घटः । शून्यानुमानेऽपि घटस्य पूर्वावस्था, प्रत्यक्षदृष्टा, मृदित्यनुपलभ्यमानपूर्वावस्थत्वात्, इत्यसिद्धो हेतुरिति ॥

### तत्त्वदीपनम्

इदानीमर्थदूषणमभिप्रेत्याह—**अचेतनात्तावदचेतनत्वादेवेत्यादिना** ॥ मा भून्निरीश्वरात् प्रधानाद् विचित्रदोपलम्भो विभ्रम इति शङ्कते—**स्यादेतदिति** । स्वाभिव्यञ्जकोपाधौ तदाकारप्रतिभासहेतुत्वादिति हेत्वर्थः ॥ असिद्धिनिरासार्थम्—**"स्वाभिव्यञ्जके"**ति विशेषणम् । प्रत्यक्षविरोधादनुमानमेव नोत्तिष्ठतीत्याह—**नान्तर्बहिरिति** । न च प्रत्यक्षस्य भ्रान्तत्वाद् बाधकत्वं शङ्क्यम् । बाधकप्रत्ययवेद्यत्वं भ्रान्तित्वम्, न च बाधकप्रत्यय उपलभ्यते । न चास्मादनुमानाद् बाधः; परस्पराश्रयप्रसङ्गादित्यर्थः । विपक्षबाधकतर्कपराहतश्च हेतुरित्याह—**एकमिति** ॥ एकैकस्य त्र्यात्मकत्वेऽपि यदुपलब्धिहेतोरदृष्टस्योद्बोधः, तस्योपलम्भः, नेतरस्येति व्यवस्थामाशङ्क्याह—**अदृष्टेनेति** । वस्तुनि प्रतीयमानेऽपि तदभिन्नसुखाद्यदृष्टाभावान्नोपलभ्यत इति न वक्तव्यम्; वस्तुनोऽप्यनुपलम्भापातात्, अदृष्टव्यतिरिक्तपुष्कलकारणे सत्यदृष्टाभावेन कार्याभावादर्शनाच्च नादृष्टस्य नियामकत्वमित्यर्थः ॥ द्वितीयानुमानस्याप्यदुष्टत्वे सिद्धे **"तदन्वितत्वादि"**ति हेतोरसिद्धिस्तदवस्थेत्याह—**अत इति** ॥ **गुणसामान्यैरिति** । नीलपीतादिगुणैर्घटत्वादिसामान्यैश्चेत्यर्थः । **"परिमितत्वादि"**त्यत्र किं वस्तुतः परिमितत्वम् ? आहो देशतः ? नाद्य इत्याह—**तत्रापीति** ॥ द्वितीय-तृतीयौ दूषयति—**देश-कालेति** । घटादिषु परिमितत्वं वर्तते, नचैकप्रकृतिकत्वम्; घटस्य मृदुपादानकत्वात्, हिमकरकादेश्चोदकोपादानत्वाद् द्वितीय-तृतीयहेतोरप्यत्रैव व्यभिचारः स्पष्ट इत्युपेक्षितम् । दुकूलयोरन्त्यावयवित्वान्न रज्जुद्रव्यारम्भकत्वम्, किन्तु संयोगमात्रमिति नानैकान्तिकत्वमिति चेत्, मैवम्; पटस्यापि तन्तुसंयोगमात्रत्वम्, न कार्यान्तरत्वमित्यपि प्रसक्तेरित्यर्थः ॥ आत्मनि सिद्धसाध्यत्वं निराकरोति—**कार्येति** ॥ गुणादिकं व्यावर्तयति—**द्रव्यमिति** । प्रचयात्मकत्वात्सावयवत्वादित्यर्थः । संयोगपुरःसरत्वं पूर्वपक्षिणोच्यते, तस्य प्रतिषिध्यमानत्वान्न दिक्कालादिसंयोगपुरस्सरत्वाभावेन सिद्धसाध्यत्वमित्यर्थः ॥ सर्वं कार्यम्, अभावपुरस्सरम्, इत्यत्र किं घटादेरपि धर्मित्वम् ? उत तद्व्यतिरिक्तस्य ? इति विकल्प्याद्यं प्रत्याह—**शून्यानुमानं इति** । नापि द्वितीयः; क्वचित् सत्कारणत्व इतरत्रापि तदनुमानसंभवादित्यर्थः ॥

**"प्रधानादेरचेतनत्वादि"**त्यादेरचेतनकारणवादस्य निरस्तत्वात्पौनरुक्त्यमित्याशङ्क्याह—**इदानीमिति** ॥

### ऋजुविवरणम्

**"नान्यतः"** इत्यस्या **"चेतनत्वादि"** त्यनेन विषयभेदमाह—**तत्र प्रथमं तावदिति** ॥ ननु—नान्तरत्वप्रतीत्या सुखाद्यात्मकत्वं घटादीनाम्; विरोधात्, न घटादेस्सुखाद्यात्मकत्वासिद्धौ भेदो नच संभवतीति वाच्यम्; मानसद्भावादित्याह—**स्यादेतदिति** ॥ तदाकारप्रतिभासहेतुत्वे विवक्षिते प्रदीपादावनैकान्तिकोऽसिद्धश्च, तदर्थमाह—**तत्रेति** ॥ तथाऽपि तद्घटादिप्रतिभासहेतूपादानमनैकान्तिकम्, तदर्थम्—**निमित्तोपरक्तेति** ॥ ननु—कथं बहिर्भावप्रतीत्या सुखाद्यात्मकत्वाभावः ? विषयगतसुखाच्चित्तगतस्यान्यत्वेनापि संभवात्, यद्वा—औपाधिक्यन्यत्र प्रतीतिरित्याशङ्क्याह—**एकञ्चेति** ॥ ननु—अदृष्टवशादेकस्यैवोपलब्धिरित्याशङ्क्याह—**अदृष्टेन चेति** ॥ कथं रज्ज्वामनेकान्तिकत्वम्; दुकूलानामन्त्यावयवित्वेनारम्भकत्वादित्याशङ्क्य पारिभाषिकमप्यङ्गीकृत्याह—**प्रत्यनुमानेति** ॥

## पञ्चपादिका

**चेतनादपि; परिच्छिन्नज्ञान-क्रियाशक्तित्वात् । अभावात् पुनर्नाचेतनत्वादेव केवलादनुपपत्तिः, अपितु निरुपाख्यत्वादतीतकल्पसंस्काराभावात्, पूर्वकल्पैकरूपो वर्तमानोऽपि कल्प इति प्रमाणाभावात्,**

## पञ्चपादिकाविवरणम्

कार्यरचना, परमाणुवादे तु पुनरधिष्ठातुरीश्वरस्य विद्यमानत्वात् तद्बुद्धिसामर्थ्यदेव विचित्रजगत्कार्यरचना भविष्यति, इत्याशङ्क्याह—**चेतनादपीति** ।। अयमर्थः—कुलालादिदृष्टान्तेनानुमीयमानस्येश्वरस्य शरीरेन्द्रियपरिच्छिन्नज्ञानशक्तित्वात् तेनैव दृष्टान्तेन परिच्छिन्नज्ञानशक्तेश्च जगद्रचनानुपपत्तिः, इति । घटादिषु च कर्तृद्वयप्रसङ्गाद् मूलकारणेऽपि तदनुमानमिति । यत्तु शून्यालम्बनं जगदिति, तत्राह—**अभावात्पुनरिति** ।। नच निरुपाख्योपादानता जगतः; सदन्वयादिति । किंच निरुपाख्यस्य कारणत्वे पूर्वकल्पस्य निरन्वयविनाशात् संस्काराभावात् पुनः सजातीयकार्योत्पादनियामकाभावाद् विशिष्टसंस्थानपश्वादिकामितयाऽनुष्ठितकर्मणां कल्पान्तरे तथाविधपश्वाद्यनुपपत्तेः, शब्दार्थसम्बन्ध-तद्व्यवहारिणां च "नाकस्य पृष्टे तं कालं दिवि सूर्यं इव रोचते । ततः कृतयुगस्यादौ ब्रह्मपूतो महाशयाः । सर्वज्ञो धृतिमानृषिः पुनराजायते स्मरन् ।।" इत्यादिश्रुतिप्रतिपन्नानां निरन्वयविनाशात्, कल्पान्तरे पूर्वकल्पव्यवहारानुसन्धानेन व्यवहारप्रवृत्त्यभावाद् अपूर्वसङ्केते च, धर्मस्य प्रमाणान्तरागोचरत्वाद् गोपदार्थस्यापूर्वसाधनत्वं प्रमाय तत्र च गोशब्दं प्रयुज्य "गवा यजेत" इति वाक्यरचनानुपपत्तेश्च कर्मतत्फल-तत्प्रमाणव्यवहारोच्छेद इत्याह—**अतीतकल्पसंस्काराभावादित्यादिना** ।।

## तत्त्वदीपनम्

चेतनकारणतायाः सिद्धान्तिनोऽपि संमतत्वात् कथं निरसनम् ? इत्याशङ्क्याह—**मा भूदिति** ।। **"परिच्छिन्नत्वादि"**त्यत्र किं देशतः परिच्छिन्नत्वं विवक्षितम् ? उत कालतः ? आहो वस्तुतः ? प्रथम-द्वितीययोर्हेत्वसिद्धिः, नापि तृतीयः; वस्तुतः परिच्छन्नस्याप्यधिष्ठातृत्वोपपत्तेः । ततश्च **"परिच्छिन्नत्वादि"**त्येतदसङ्गतमित्याशङ्क्य तात्पर्यमाह—**अयमर्थ इति** ।। इतोऽपि नाधिष्ठात्रीश्वरवादो युक्त इत्याह—**घटादिष्विति** ।। विवादाध्यासितम्, द्विकर्तृकम्, कार्यत्वाद्; घटादिवत् । नच जीवेश्वरकर्तृद्वयाङ्गीकारादिष्टापत्तिरिति—वाच्यम्; घटादौ जीवेश्वरकतृकत्वस्य तदतिरिक्तकुलालादिकर्तृकत्वस्य च दृष्टत्वात् पृथिव्यादावपि कर्तृत्रयप्रसङ्गात् । नचात्रोत्कर्षसमत्वं शङ्क्यम्; अव्याप्तधर्मप्रसङ्गस्योत्कर्ष-समत्वात् । नचात्र तथात्वम्; घटादेः कर्तृत्रयव्याप्तत्वादित्यर्थः । निरुपाख्यत्वान्न शून्यस्य कारणत्वमित्युक्तम्, तदयुक्तम्; निरुपाख्यकारणवादिनं प्रति "निरुपाख्यत्वादि"ति हेत्वभिधानायोगादित्याशङ्क्याह—**नचेति** । यद् यदनुविद्धम्, तत् तदुपादानं दृष्टम्, घटादेश्च निरुपाख्यानन्वितत्वान्न शून्योपादानत्वमित्यर्थः ।। इतोऽपि न जगच्छून्योपादानमित्याह—**किञ्चेति** । निरुपाख्यस्य कारणत्वे कर्म-तत्फल-तत्प्रमाणव्यवहारोच्छेद इति संवन्धः ।। तत्र हेतुमाह—**पूर्वकल्पस्येति** ।। मा भूत् सजातीयकार्योत्पाद इति मन्वानं प्रत्याह—**विशिष्टेति** ।। इतोऽपि न निरुपाख्यकारणवाद इत्याह—**शब्दार्थेति** । शब्दार्थसंबन्ध-तद्व्यवहारिणां निरन्वयविनाशात् प्रमाणव्यवहारोच्छेद इति संबन्धः ।। तद्व्यवहाराणां सत्त्व एव किं मानमिति ? अत्राह—**नाकस्येति** । मेरुपृष्ठादेरुपरीत्यर्थः । **तं कालम्**=आकर्मक्षयादित्यर्थः । **ब्रह्मपूत इति** । वेदपूत इत्यर्थः । ब्रह्मभूत इति पाठे विराड्भावमापन्न इत्यर्थः ।। **स्मरन्निति** ।। प्राक्तनशब्दार्थसंबन्धाभावेऽप्यपूर्व एव शब्दार्थसंबन्धः संकेत्यत इति शङ्कां निरस्यति—**अपूर्वेति** । प्रधानादीनां करणत्वं न चेत् स्वभावः कारणमिति शङ्कते । **अत्र स्वभाव इति** । कार्यस्य न कारणसापेक्षत्वं

## ऋजुविवरणम्

**ननु**—ईश्वरस्य सर्वज्ञत्वेनाङ्गीकारादसिद्धो हेतुरित्याशङ्क्याभिप्रायमाह—**अयमर्थ इति** ।। **ननु**—एकस्य कर्तृत्वेऽर्थात् सर्वज्ञत्वमपि भविष्यतीत्याशङ्क्याह—**घटादिषु चेति** ।। निरुपाख्यस्यैवोपादानत्वं कस्मान्न भवतीत्याशङ्क्याह—**नच निरुपाख्येति** ।। कथं सदन्वयेन निरुपाख्योपादानता निराक्रियते ? काल्पनिकत्वेनाप्युपपत्तेः, **'अतीते'**ति व्यर्थम्; पूर्वेणैवाभावहेतुत्वस्य निरस्तत्वात्, असिद्धश्च; उपादानत्वस्य संस्काराभावहेतुत्वाभावात् । तथा सत्युत्तरस्यापि सादृश्यं वक्तुं शक्यते, मा भूत् सादृश्यम्, कथं यादृच्छिकत्वम्; नियमाभावो वा ? यथोत्पन्नेनैव नियमादिसिद्धेरित्याशङ्क्यावतारयति—**किञ्च निरुपाख्यस्येत्यादिना** ।। कथमतीतसंस्काराभावः ? इत्याशङ्क्योपपादयति—**पूर्वकल्पस्येति** ।। मा भूत् संस्कारः, ततः किमिति ? तदाह—**सजातीयेति** । अस्य हेतोः "कर्मादिव्यवहारोच्छेदः" इत्युत्तरेणान्वयः ।। मा भूत् सजातीयकार्योत्पादः; तथापि कथं व्यवहारोच्छेदः ? तादृशेनैव व्यवहारसिद्धेः, इत्याशङ्क्य कर्मतत्फलव्यवहारस्तावन्नोपपद्यत इत्याह—**विशिष्टसंस्थानेति** । तथा गतागतिप्रभवागममूलकर्मतत्फलेष्वपि समानमिति भावः । भवतु

## पञ्चपादिका

**सर्व एव व्यवहारो यादृच्छिक इति न क्वचित् कश्चिन्नियमोऽभविष्यत्। नच स्वभावतः, विशिष्टदेश-काल-निमित्तोपादानादिति ।। स्वभावो नामान्यानपेक्षा। तेनापेक्षैवानुपपन्ना, कुतो नियमसम्भवः ? अतो युक्त्याऽपि वस्त्वन्तरस्य कारणत्वसम्भावनानिराकरणेन पारिशेष्यात्पूर्वोक्तविशेषण ईश्वर एव कारणमिति सिद्धम् ।।**

**एतदेवानुमानमिति। येयं युक्तिरभिहिता यथोक्तविशेषणमीश्वरं मुक्त्वा नान्यतो जगतो जन्मादि सम्भवतीति एतदेव स्वतन्त्रमनुमानमीश्वरसिद्धौ सर्वज्ञत्वसर्वशक्तित्वसिद्धौ च तस्य प्रमाणं किं वेदावाक्यैरितीश्वरकारणिनः कणाद-**

## पञ्चपादिकाविवरणम्

अत्र स्वभाववादी जल्पति—न कारणसापेक्षमिदमुत्पद्यते। ननु स्वयमेव स्वस्य निमित्तमित्युक्तं भवति ? किंवा निर्निमित्तमुत्पद्यत इति ? निर्निमित्तमिति ब्रूमः। ननु तर्हि घटस्य भावाभावौ युगपत् स्याताम्; क्रमकारिनिमित्त-निरपेक्षत्वात्, उच्यते; कारणस्य क्रमकारित्वं स्वभाव इति चेत्, स्वभाववादप्रसङ्गः, निमित्तान्तरसापेक्षत्वेऽनवस्थापातः। कालभेदेन क्रमकार्यव्यस्थेति चेत्, स कालक्रमः स्वाभाविकश्चेत्, स्वभाववादः, निमित्तान्तरापेक्षत्वेऽनवस्था। तस्मात् सर्वं कार्यं विचित्रं क्रमवर्ति च यथादर्शनं स्वभावेनैव जायत इति, तत्राह—**न स्वभावत इत्यादिना** ।। स्वतःसिद्ध-सामर्थ्यानामपि भावानां परस्परोपकार्योपकारकभावः प्रत्यक्षसिद्ध इत्यर्थः। **अत इत्युपसंहारः**।

ननु—अनुमानेनैव यथोक्तविशेषणमीश्वरं तार्किका व्यवस्थापयन्ति, किं युक्तिसहितेनागमेनेति ? अत आह—**एतदेवानुमानमित्यादिना** ।। युक्तिर्हि संभावनाबुद्धिमात्रमुत्पादयति, अनुमानं पुनरर्थं निश्चापयति। व्याप्त्यनुप-

## तत्त्वदीपनम्

नियन्तुं शक्यते, सामग्र्यां व्यभिचारादित्यर्थः ।।

विकल्पासहत्वात्स्वभाववादोऽपि न युक्तिसह इत्याह—**ननु स्वयमेवेति** ।। कर्तृ-कर्मविरोधात् स्वस्य निमित्त-त्वानुपपत्तेर्नाद्यो युज्यते। नान्त्योऽपि; कार्यस्यानुत्पत्तिप्रसङ्गादित्यभिसन्धिः। अन्तिमं पक्षमाश्रित्याह पूर्ववादी—**निर्निमित्तमिति** ।। निरपेक्षत्वेन कार्यजन्माश्रयणेऽतिप्रसङ्गादित्याशङ्क्याह—**ननु तर्हि घटस्येति** ।। नच—युगपद् भावा-भावप्रसञ्जनमिष्टमित्यपि—शङ्क्यम्; विरोधात्, प्रवृत्तिनिवृत्त्ययुक्तेश्चेत्यर्थः ।। विकल्पासहत्वान्न हेतुवादोऽपीत्याह—**उच्यत इति** ।। किं सदसत्प्रसञ्जनमात्रमेतत् ? अत सहेतुकत्वं सिषाधयिषितम् ? नाद्यः; अनुभवविरोधादित्यभिप्रेत्य द्वितीयं दूषयति—**कारणस्येति** ।। द्वितीयं पक्षमादाय शङ्कते—**कालभेदेनेति**। कालभेदस्य स्वाभाविकत्वात् पूर्वापरीभूत-काले क्रमापेक्षया कार्यजननम्। नच काले चोद्यमवतरति; तस्य नित्यत्वादित्यर्थः ।। कालस्य नित्यत्वेऽपि तस्य पूर्वापरी-भावः स्वाभाविकः ? उत सहेतुकः ? नाद्य इत्याह—**स कालेति** ।। द्वितीयं प्रत्याह—**निमित्तान्तरेति**। नचानवस्थाप्रसञ्जन-मिष्टमित्यपि शङ्क्यम्; निमित्तभेदस्यानुभवबाधितत्वादित्यर्थः ।। त्वत्पक्षे क्रमकार्योदयस्याकस्मिकत्वमित्याशङ्क्य, तत्रापि स्वभाव एव हेतुरित्याह—**तस्मादिति** ।। एवं सोपपत्तिकं स्वभाववादमभिधाय तदुत्तरत्वेनोत्तरग्रन्थमवतारयति—**तत्राहेति** ।। तैलार्थिनां देशादिनिमित्तापेक्षादर्शनात्र स्वभावतो जन्मेत्युक्तम्, तत्रेदं विवेक्तव्यम्—किमसमर्थस्या-न्यापेक्षा ? उत समर्थस्य ? आद्ये न सहकार्यपेक्षयाऽपि कार्यकरत्वम्; शिलाशकलादेरुदकादिसहकृतस्यापि कार्यकरत्वा-दर्शनात्, द्वितीये सहकार्यपेक्षैवानुपपन्नेत्याशङ्क्य द्वितीयपक्षमादाय समाधत्ते—**स्वतःसिद्धेति** ।। किञ्च प्रतिज्ञातेऽर्थे हेतु-रुपन्यस्यते ? उत न ? आद्ये निर्हेतुकत्वादक्षतिः, द्वितीये प्रतिज्ञातार्थासिद्धिरिति द्रष्टव्यम् ।।

प्रधानादीनां कारणत्वासंभवाद् "यतो वे"त्यादिवाक्यालोचनयेश्वरः कारणमित्युक्तम्, तदाक्षिपति—**नन्वनुमानेनेति**। विवदाध्यासितं कर्म, प्रयत्नाधारजम्, कर्मत्वात्; संमतवदित्यनुमानादीश्वरसिद्धेः कृतं वाक्येनेत्यर्थः ।। युक्त्यनुमानयोर्भेदासिद्धेर्नायं विभागः साधुरिति, अत्राह—**युक्तिरिति** ।। एतदेव कुत इति ? अत आह—**व्याप्तीति**।

## ऋजुविवरणम्

कर्म-तत्फलव्यवहारोच्छेदः, प्रमाणव्यवहारोच्छेदः कथमिति ? अत आह—**शब्दार्थेति** ।। अपूर्व एव व्यवहारो भवत्वित्या शङ्क्याह—**अपूर्वसङ्केते चेति** ।। स्वभाववादः शङ्कनीय एव न भवति; निर्बीजत्वात्, इत्याशङ्क्य, तन्मतं दर्शयति—**अत्र स्वभावेति** ।। त्वत्पक्षेऽपि कथम् ? निमित्तोपादानकारणसामर्थ्यस्य सह जन्यत्वादित्याशङ्क्याभिप्रायमाह—**स्वतःसिद्धसामा-र्थ्यानामिति** ।। युक्तेरप्यनुवादत्वात्कथं मन्यन्त इत्युक्तम् ? इत्याशङ्क्य, नैवमित्याह—**युक्तिर्हीति** ।। ननु—युक्तेरपि हेतु-परत्वेन गमकत्वादनुमानवन्निश्चायकत्वमेवेत्याशङ्क्याह—**व्याप्त्यनुपपत्त्याभास इति** ।। एवं सत्यप्यत्र युक्तिरेव सूत्रितेति

## पञ्चपादिका

**प्रभृतयो मन्यन्ते जन्मादिसूत्रलक्षितान्यपि वाक्यानि "यतो वा इमानि भूतानि जायन्ते" इत्यादीनि परार्थानुमानवाक्यसमानि दृश्यन्त इति वदन्तः। नन्विहापि तदेवोपन्यस्तमिति ॥**

## पञ्चपादिकाविवरणम्

पत्त्याभास उदाहरणमात्रप्रदर्शनं युक्तिः, अव्यभिचारिणी च व्याप्तिरनुमानम्। तत्र कुलालादिदृष्टान्तैर्न सर्वज्ञेश्वरकारणत्वं निश्चे तुं शक्यते; विपरीतोदाहरणसंभवात्, किन्तु प्रमाणान्तरे सति कुलालादिदृष्टान्तैः संभावयितुं शक्यते। अतो युक्तिरेवैषा। तत्राज्ञानादर्थनिश्चायकमनुमानं मन्यन्त इति। किं तदनुमानमिति? उच्यते—सर्वं कार्यम्, स्वरूपोपादानोपकरण संप्रदान-प्रयोजन-सामर्थ्यविषयविज्ञानवत्कर्तृकम्, विविधविन्यासकार्यत्वात्; घटादिवत्, इति वैशेषिकानुमानम्। सांख्य-योगाः—ज्ञानैश्वर्य-शक्तयः क्रमेणोत्कृष्यमाणाः, क्वचित् सर्वविषयज्ञानैश्वर्य-शक्तिमति पर्यवस्यन्ति, तरतमभावेनोत्कृष्यमाणधर्मत्वात्; परिमाणवत्—इत्यनुमिमते। नैयायिकास्तु—सर्वं कर्मफलजातम्, कर्म-तत्फल-तद्भोक्तृ-देश-कालादिविशेषविज्ञानवता प्रदीयमानम्, कर्मफलत्वात्; सेवादिकर्मफलवत्—इत्यनुमिमते ॥

तत्र वैशेषिकानुमाने जगतो बहुकर्तृत्व-परिच्छिन्नज्ञानैश्वर्यादिमत्कर्तृत्वानुमानेषूदाहरणसंभवाद् युक्तिमात्रमेतत्। योगानुमानेऽपि ज्ञानैश्वर्य-शक्तीनां क्वचित् काष्ठाप्राप्तिमात्रेऽनुमीयमाने लक्ष्यपदार्थविषयज्ञानादिषु पर्यवसानसिद्धेः कुतः सर्वज्ञत्वादिसिद्धिः? सर्वविषयज्ञानाद्यनुमाने गुरुत्व-राग-द्वेष-दुःख-भ्रान्त्यादिष्वनैकान्तिकता, इति युक्तिमात्रमेतत्। नैयायिकानुमानेऽपि कर्मफलस्य शरीरेन्द्रियादिमद्बहुदातृत्वदर्शनादेकेश्वरासिद्धेः श्रुतिप्रतिपन्न-सर्वकारण-सर्वज्ञ-सर्वेश्वर-सर्वफलदात्रद्वितीयब्रह्मप्रतिपत्तावुदाहरणमात्रेण संभावनाबुद्धिहेतुत्वाद् युक्तिमात्रम्, इत्यज्ञानाद् किं तदिति निश्चायकमनुमानं मन्यन्ते।

ननु—वाक्येषु सत्सु किमित्यनुमानप्रयास इति? अनुमानसिद्धार्थानुवादकत्वादित्याह—**जन्मादीति**। ननु—सूत्रेऽप्येतान्येवानुमानानि स्वातन्त्र्येणार्थनिश्चायकत्वेन सूत्रितानि, तत् कथमागमगुणभूतेयं युक्तिः? इति चोदयति—**नन्विहापि तदेवोपन्यस्तमित्यादिना ॥**

## तत्त्वदीपनम्

व्याप्त्याभासादनुपपत्त्याभासादुदाहरणमात्रदृष्टेश्च संभावनाबुद्धिजन्मेत्यर्थः ॥ अस्त्वेवं भेदः, प्रकृते तु किमायातमिति? अत्राह—**तत्रेति** ॥ तर्हि लोक-वेदयोरुदाहरणादिदर्शनं वृथेत्याशङ्क्याह—**किन्त्विति** ॥ कथं तर्ह्यनुमानगीः? तत्राह—**तत्राज्ञानादिति** ॥ अनुमानस्वरूपे ज्ञाते तस्याभासत्वं ज्ञायते, तदेव कथम्? इति शङ्कते—**किं तदिति** ॥ व्यावर्त्यं दर्शितमिति नात्रोच्यते। आद्यानुमानस्यानिश्चायकत्वं तावदाह—**तत्र वैशेषिकेति** ॥ प्रासादादेर्बहुकर्तृकत्वं तावद् दृश्यते, ततश्च तद्वद् जगतोऽपि बहुकर्तृकत्वं स्यात्। नच लाघवादेककर्तृकत्वं जगतः शङ्क्यम्; निमित्तोपादानैक्यस्यापि तत एव प्रसक्तेरित्यर्थः। यथाश्रुतसाध्याङ्गीकारे दृष्टान्तस्य वैकल्यं स्यात्, ततश्च ज्ञानादिशक्तयः, क्वचित्काष्ठां प्राप्ताः, सातिशयत्वात्; संमतवदिति वक्तव्यम्। तत्र किं काष्ठाप्राप्तिमात्रमनुमीयते? उत परकाष्ठाप्राप्तिरिति वक्तव्यम्, तत्राद्यस्तावदसङ्गत इत्याह—**योगानुमान इति** ॥ यथाश्रुतसाध्याङ्गीकारे परकाष्ठाप्राप्त्यनुमाने दूषणमाह—**सर्वविषयेति** ॥ सेवादिफलस्य शरीरादिमद्दातृपूर्वकत्वं दृष्टम्, इति सर्वस्यापि कर्मफलस्य शरीरादिमद्दातृकत्वलक्षणविपक्षबाधकतर्कपराहतो हेतुरित्याह—**नैयायिकेति** ॥ कथं तर्हि त्वन्मतेऽपि युक्तीनां सर्वज्ञसाधकत्वम्? तत्राह—**श्रुतिप्रतिपन्नेति** ॥ फलितं दर्शयति—**इत्यज्ञानादिति** ॥ एतत्सर्वं हृद्यभिसन्धायोक्तम्—**मन्यन्त इति** ॥

ईश्वरसाधनवाक्यप्रतिपत्तेः कथं तदाक्षेपस्तार्किकाणामिति शङ्कते—**ननु वाक्येष्विति** ॥ न वाक्यस्वरूपं निराक्रियते, किन्तु तत्प्रामाण्यमित्याह—**अनुमानेति** ॥ संभावनाबुद्धिहेतुत्वेनाऽनुमानोपन्यासस्याङ्गीकारात्। "**नन्विहापी**"ति चोद्यमनर्थकमित्याशङ्क्य, तात्पर्यमाह—**ननु सूत्र इति** ॥ वाक्यानामप्यनुमानरूपत्वाद् वेदान्तवाक्यग्रथनार्थत्वा-

## ऋजुविवरणम्

कथं गम्यत इति? तदाह—**तत्र कुलालादीति** ॥ कथं तैरनुमानमित्युक्तमिति? तत्राह—**तत्राज्ञानादिति** ॥ वैशेषिकाद्युक्तानुमानानां मुख्यानुमानत्वमेवेत्यभिप्रायेण पृच्छति—**किं तदिति** ॥

ननु सूत्रेऽप्येतान्येवेति ॥ अयं भावः—"**चोदनालक्षणः**" इत्यत्र यथा लक्षणस्यैव प्रमाणत्वम्, तथाऽत्रापीति। **ननु**—अनुमानेनापि कारणसिद्धेः कथं वेदान्तसूचकत्वं सूत्रस्येत्याशङ्क्याह—**किन्त्वनुमानमात्रादिति**। **पञ्च प्रयाजान्**

## पञ्चपादिका

यथा धूमविशेषस्यागरुसम्भवत्वम्, तथा प्रपञ्चसन्निवेशविशेषस्य सर्वज्ञत्वादिगुणकारणकत्वमिति। न वेदान्तवाक्यकुसुमग्रथनार्थत्वात् सूत्राणामिति ॥ सत्यं तदेवोपन्यस्तमुपकरणत्वेन, न तत्र तात्पर्यम्, तात्पर्यन्तु वेदवाक्यग्रथने। तदेव प्रपञ्चयति—वेदान्तवाक्यानीति ॥ समन्वयसूत्रप्रमुखोपात्तैः शब्दशक्त्यनुसारिभिर्न्यायैर्वाक्यानां ब्रह्मणि तात्पर्याध्यवसाननिर्वृत्ता ब्रह्मावगतिर्नानुमानादिप्रमाणान्तरनिर्वृत्ता। सत्सु तु वेदान्तवाक्येषु तदविरोध्यनुमानमपि प्रमाणं भवन्न निवार्यते; श्रुत्यैव सहायत्वेन तर्कस्याप्यभ्युपेतत्वात् ॥ तथाहि—"श्रोतव्यो मन्तव्यः" इति श्रुत्या यथा श्रवणं ब्रह्मावगतिहेतुरनूद्यते, तथा मननस्यापि सिद्धवदनूद्यमानत्वात्। तथाऽपरा श्रुतिः—"पण्डितो मेधावी"त्यादिः—"आचार्यवान् पुरुषो वेदे"ति पुरुषबुद्धिसाहाय्यमात्मनो दर्शयति। यदाचार्येण श्रुत्यनुसारिणा स्फटिकादिनिदर्शनेन शिष्येभ्यः प्रत्ययदार्ढ्यापादनम्, तदाचार्यवान् पुरुषो वेदेत्यनूद्यते। न धर्मजिज्ञासायामिवेत्यादिना युक्तिसाहाय्यापेक्षणे कारणमाह। श्रुत्यादय इति ॥ श्रुतिः पदान्तरनिरपेक्षः शब्दः। आदिशब्देन लिङ्ग-वाक्यादयः शब्दप्रकारा गृह्यन्ते।

## पञ्चपादिकाविवरणम्

परिहरति—**न वेदान्तवाक्यकुसुमग्रथनार्थत्वादित्यादिना** ॥ किंचानुमानमात्रात् कारणसद्भावमात्रं सिध्यति, नाधिकम्, इह तु सत्य-ज्ञानानन्दानन्त-सर्वज्ञ-प्रत्यगात्मब्रह्मावगतिर्विवक्षिता। नचागममात्रेण सामान्यमात्रविषयानुमानादेव विशिष्टार्थसिद्धिरित्याह—**समन्वयसूत्रप्रमुखोपात्तैरित्यादिना** ॥ न तर्हि युक्तिरत्र सूत्रिता; आगमेनैव विशिष्टार्थसिद्धेरिति, तत्राह—**सत्सु त्विति** ॥

**न धर्मजिज्ञासायामि"त्यादिः** स्पष्टार्थः ॥ श्रुतिः पदान्तरनिरपेक्षः शब्दः। **लिङ्गम्** श्रुतस्यार्थस्यार्थान्तरेणाविनाभावः। अनेकपदसामर्थ्यं **वाक्यम्** ॥ वाक्यद्वयसामर्थ्यमारभ्याधीतविषयं **प्रकरणम्** ॥ क्रमवर्तिनां पदार्थानां क्रम

## तत्त्वदीपनम्

दित्येतन्नानिष्टमित्याशङ्क्य, प्रतिज्ञाद्यवयवानुपलब्धेर्नानुमानत्वमित्यभिप्रायेणाह—**परिहरतीति** ॥ वेदान्तानामनुमानसिद्धानुवादकत्वं यदुक्तम्, तदप्यसङ्गतमित्याह—**किञ्चेति** ॥ **अनुमानमात्रादिति**। आगमासहकृतादित्यर्थः ॥ तथाऽपि कथं वाक्यस्यानुवादकत्वम्? तत्राह—**इह त्विति**। षड्विधतात्पर्यलिङ्गैर्वेदान्तानां सत्यादिरूपे ब्रह्मणि तात्पर्यं निश्चियत इत्यर्थः ॥ भूतस्य प्रमाणान्तरगम्यत्वाद् ब्रह्मणोऽपि प्रमाणान्तरगम्यत्वम्, अत्राह—**नचेति**। इन्द्रियायोग्यत्वेन विशेषतोदृष्टस्याप्रसरात्सामान्यतोदृष्टस्य च कारणमात्रविषयत्वाद्विशिष्टं ब्रह्मागमैकगम्यमित्यर्थः ॥ ब्रह्मावगतेरनुमानानिर्वृत्तत्वे तत्सूत्रणमनर्थकमिति शङ्कते—**न तर्हीति** ॥ अनुमानस्वातन्त्र्यमेव निरस्यते, न सहकारित्वमित्याह—**तत्राहेति** ॥

श्रुत्यादिस्वरूपमाह—**श्रुतिरिति** ॥ शब्दः श्रुतिरित्युक्ते वाक्ये व्यभिचारः, तदर्थम्—**पदेत्यादि** ॥ **"पदान्तरानपेक्षः"** इत्युक्ते धूमस्यापि श्रुतित्वं स्यात्, तदर्थमाह—**शब्द इति**। "ऐन्द्रचा गार्हपत्यमुपतिष्ठते"इत्यत्र तृतीयाश्रुत्या "कदाचन स्तरीरसी"त्यैन्द्रचा गार्हपत्योपस्थाने विनियोगः प्रतीयत इति श्रुतेर्विनियोग इत्यर्थः ॥ लिङ्गस्वरूपं दर्शयति—**लिङ्गमिति**। श्रुतिसामर्थ्यं लिङ्गमिति यावत्। "बर्हिर्देवसदनं दामी"त्यत्र बर्हिर्लवनलक्षणार्थस्य श्रुतिप्रतिपन्नस्यानुपपत्त्या तत्प्रकाशनसमर्थाया ऋचो बर्हिर्लवने विनियोगः प्रतीयते, इति श्रुतिकल्पनया लिंगस्य विनियोजकत्वमित्यर्थः ॥ वाक्यस्वरूपमाह—**अनेकेति**। लिङ्गव्यावृत्त्यर्थम्—'अनेके'ति विशेषणम्। आकाङ्क्षाद्यनुरोधेनानेकपदानां विशिष्टैकार्थप्रतिपादकं वाक्यमित्यर्थः। "इमामगृभ्णन् रशनामृतस्येति' रशनामात्रविनियोगप्राप्ता 'विमामगृभ्णन्रशनामृतस्येत्यश्वाभिधानीमादत्ते" इति ब्राह्मणवाक्यादश्वरशनादाने मन्त्रस्य विनियोगः प्रतीयत इत्यर्थः ॥ प्रकरणस्वरूपमाह—**वाक्यद्वयेति**। प्रतिपन्नवाक्यभावानां पदानां वाक्यान्तराभिसंबन्धः प्रकरणमिति यावत् ॥ वाक्यान्तराभिसंबन्धे हेतुमाह—**आरभ्याधीतेति**। प्रयोजनाकाङ्क्षया संबन्ध इत्यर्थः। "दर्श-पूर्णमासाभ्यामि"ति तृतीयाश्रुत्या दर्श-पूर्णमासयोः करणत्वे प्रतिपन्ने करणस्य चेतिकर्तव्यताकाङ्क्षायां प्रधानवाक्यस्य समिदादिसंबन्धः, समिदादिवाक्यस्य फलविधुरस्य तदाकाङ्क्षायां प्रधानवाक्येन संबन्ध इति प्रकरणविनियोग इत्यर्थः ॥ स्थानस्वरूपमाह—**क्रमवर्तिनामिति**। दर्श-पूर्णमासप्रकरणे कानिचित्कर्माण्युपांशुयाजप्रभृतीनि "दब्धिरसी"त्यादयः केचन मन्त्राश्च समाम्नायन्ते, तत्र यस्य कर्मणः क्रमेण यो मन्त्रः समाम्नातः, तेन तस्य संबन्ध इति स्थानरूपक्रमप्रमाणाद् मन्त्रविशेषाणां क्रमविशेषस्य च

## पञ्चपादिका

**न त एव ब्रह्मणि प्रमाणम्, किन्त्वनुभवादयोऽपि। तत्र हेतुमाह—अनुभवावसानत्वाद् भूतवस्तुविषयत्वाच्च ब्रह्मज्ञानस्येति ॥ सिद्धे हि वस्तुनि सम्भवत्यनुभवः, तदवसाना आकाङ्क्षानिवृत्तिर्यतः।**

**ननु धर्मजिज्ञासायां विनाऽप्यनुभवेन शब्दशक्त्यनुसरणमात्रेणैव निराकाङ्क्षं फलपर्यन्तं ज्ञानं भवति, न तर्कगन्धमप्यपेक्षते, तथेहापि स्यात्; प्रमाणत्वाविशेषाद्वेदान्तवाक्यानाम्, इत्याशङ्क्य विशेषमाह—कर्तव्ये हि विषय इत्यादिना ब्रह्मज्ञानमपि वस्तुतन्त्रमेव भूतवस्तुविषयत्वादित्यन्तेन भाष्येण ॥ कथम्? कर्तव्यं हि कर्तव्यत्वादेवासिद्धस्वभावं नानुभवितुं शक्यमिति न तदाकाङ्क्षा, इह तु सिद्धस्य साक्षाद्रूपेण विपर्यासगृहीतस्य सम्यग्ज्ञानेन साक्षात्करणमन्तरेण न मिथ्याज्ञानोदयनिवृत्तिः; द्विचन्द्रादिषु तथा दर्शनात्। नहि कर्तव्य-सिद्धार्थनिष्ठयोः प्रमाणत्वसाम्यादवबोधनप्रकारेऽपि साम्यम्। यदि स्यात्, पुरुषेच्छावशनिष्पाद्यत्वमपि स्यात्।**

## पञ्चपादिकाविवरणम्

वर्तिभिः पदार्थैर्यथाक्रमं सम्बन्धः **स्थानम्** ॥ संज्ञासामान्यं **समाख्या** ॥ ननु—शब्देन ब्रह्मस्वरूपेऽवधारिते नानुभवेन कृत्यमस्ति। नच शब्दप्रमेयमनुभवितुं शक्यमिति, तत्राह—**अनुभवावसानत्वादित्यादिना** ॥

**ननु—धर्मजिज्ञासायामित्यादिः** स्पष्टार्थः ॥ किमिति धर्मस्यानुभवानपेक्षेति चोदयति—**कथमिति** ॥ धर्मस्यानुभवायोग्यत्वादनपेक्षितानुभवत्वाच्च न शब्दादन्यापेक्षेति दर्शयति—**कर्तव्यं हीत्यादिना**। ननु—सिद्धस्वभावस्यानुभवयोग्यत्वेऽपि किमित्यनुभवोऽपेक्ष्यत इति? तत्राह—**इह तु सिद्धस्येति** ॥ ननु—वेदप्रमेयत्वाविशेषान्मनन-निदिध्यासनानुभवेषु धर्मवद् ब्रह्मण्यपि मा भूदपेक्षा, ब्रह्मवद्वा धर्मेऽपि स्यादपेक्षेत्यत आह—**नहि कर्तव्य-सिद्धार्थनिष्ठयोरिति** ॥ अस्तु

## तत्त्वदीपनम्

संबन्धः। तथा काम्येष्टीनां याज्यानुवाक्यानां च मन्त्राणां क्रमात् संबन्ध इत्यर्थः ॥ समाख्यास्वरूपमाह—**संज्ञेति**। यथा—आध्वर्यवसंज्ञानां मन्त्राणामाध्वर्यवसंज्ञे कर्मणि संज्ञासाम्येन विनियोग इति ॥

धर्मेऽनुभवाद्यनपेक्षावद् ब्रह्मण्यप्यनपेक्षां शङ्कते—**ननु शब्देनेति** ॥ असंभवी चानुभव इत्याह—**नच शब्देति** ॥ धर्मस्य शब्दप्रमेयस्य यथाऽनुभवायोग्यत्वम्, तद्वदस्यापीत्यर्थः। वैषम्येणोत्तरयति—**तत्राहेति**। सिद्धत्वेन ब्रह्मणोऽनुभवयोग्यत्वात् तदनुभवं विना पुरुषाकाङ्क्षाऽनिवृत्तेश्चानुभव एव व्यर्थ इत्यर्थः ॥ अनुभवमन्तरेणाप्याकाङ्क्षाया निवृत्तिर्दृष्टा धर्मजिज्ञासायाम्, तद्वदत्रापीति साम्यमाशङ्क्यानुष्ठानद्वारा धर्मस्य पुमर्थसाधनत्वादनुष्ठानस्य च ज्ञानमात्रेण संभवान्नानुभवापेक्षा, अत्र नैवम्; तद्वैपरीत्यादित्येवंरूपौ चाक्षेप-परिहारौ स्पष्टावित्याह—**ननु धर्मेति** ॥ **"कर्तव्ये हि विषय इति"** (परममूले) ॥ अत्र हेतुगर्भविशेषणमुक्तमजानानः शङ्कते—**किमिति धर्मस्येति** ॥ अभिसन्धिं विवृणोति—**धर्मस्येति**। साध्यैकस्वभावत्वाद्धर्मस्य साक्षात्कर्तुमयोग्यत्वमित्यर्थः ॥ ज्ञानमात्रादेव धर्म इव ज्ञेयनिश्चयलक्षणपुरुषार्थसिद्धेः तत्साक्षात्करणं वृथेति शङ्कते—**ननु सिद्धस्वभावस्येति** ॥ साक्षात्कारमन्तरेणाप्यनुष्ठानसंभवाद्धर्मे साक्षात्कारानपेक्षत्वम्, इह त्वपरोक्षत्वम्, अस्यापरोक्षज्ञानं विना निवृत्त्यनुपपत्तेस्तदेष्टव्यमित्याह—**तत्राहेति** ॥ कर्म-ज्ञानकाण्डयोः कार्यपरत्वसाम्यादनुभवादावपि साम्यमिति शङ्कते—**ननु वेदेति** ॥ कार्यपरत्वमसिद्धमित्याह—**न हीति** ॥ अनिष्टपर्यवसायित्वं दर्शयितुं प्रश्नमुत्थापयति—**अस्त्विति** ॥ व्यवस्थितविकल्पाद्वैषम्यमाह—**इतोच्छेति** ॥ उत्सर्गापवादयोरुदाहरणान्तर-

## ऋजुविवरणम्

**यजतीत्यादि** ॥ ननु कथं प्राकृत-वैकृतप्रयाजेषु समुच्चित्यानुष्ठानमुच्यते? वैकृतवाक्ये प्रयाजानामविधेयत्वाद् भेदासम्भवाद् संख्यागुणो विधीयते। तत्र संख्यायाः पृथक्त्वनिवेशित्वेन प्रत्येकं संबन्धाभावात्समुदायसंबन्धो वक्तव्यः। तत्राभ्यासं विना समुदायानुपपत्तेः प्राकृतानामेवाभ्यासेन संख्यापूरणामुक्तम्, तत्कथं समुच्चयस्योदाहरणम्? सत्यम्; प्राकृतक्रमानुरोधाय दण्डकलितवदावृत्तिं विहाय स्वस्थानविवृध्यैव संख्यापूरणात्प्राकृतक्रम-वैकृतसंख्ययोः समुच्चयो विवक्षितः। ग्रन्थोऽप्येवं योज्यः—"एकादश प्रयाजान् यजती"त्यत्र प्रकृतावुपदिष्टेन क्रमेण वैकृतसंख्यायाः समुच्चित्यावृत्त्यानुष्ठानात् स्वस्थानविवृध्या षोडशप्रयाजानुष्ठानम्, षोडशत्वनिषेधे त्वेकादशानुष्ठानम्, अन्यथा प्राकृतक्रमानुरोधाय

### पञ्चपादिका

ततो विधि-प्रतिषेध-विकल्प-समुच्चयोत्सर्गापवाद-बाधाभ्युच्चय-व्यवस्थितविकल्पादयोऽपि प्रसज्येरन् । न वस्तुनि युक्तमेतत्; निःस्वभावत्वप्रसङ्गात् । तथाचैकस्मिन् वस्तुनि स्थाणुः पुरुषो वेति विकल्पः न वैकल्पिकद्रव्ययागज्ञानवद् सम्यग्ज्ञानं भवति स्थाणुरेवेति निश्चितैकार्थतापरमार्थे । यतो वस्तुस्वभावपरतन्त्रं सिद्धवस्तुज्ञानं न ज्ञानपरतन्त्रं वस्तु । यदि स्यात् शुक्तिरजतमपि तथा स्यात् । कर्तव्यज्ञानं पुनर्वैपरीत्येऽपि सम्यमेव । 'योषा वाव गौतम अग्नि' रित्यादिषु दर्शनात् । तत्रैवं सति ब्रह्मज्ञानमपि वस्तुतन्त्रमेव भूतवस्तुविषयत्वात् । अतो युक्तो युक्तेरनुप्रवेशः अनुभवापेक्षा च । नेतरत्र ॥ अपरः

### पञ्चपादिकाविवरणम्

पुरुषेच्छावशनिर्वर्त्यत्वमपीति, तत्राह—**ततो विधिप्रतिषेधेति** ॥ यजेत न भक्षयेदितिवद् ब्रह्मणो विधेयत्वं प्रतिषेध्यत्वं चेत्यर्थः । **विकल्पेति** ॥ "व्रीहिभिर्यवैर्वे"तिवद् ब्रह्म वा स्थाणुर्वेतीच्छाविकल्पः । **समुच्चयेति** ॥ षड्यागसमुच्चयः, इह ब्रह्म स्थाणुश्चे'त्यर्थः । **उत्सर्गापवादेति** ॥ "न हिंस्यात्सर्वा भूतानि" "अग्नीषोमीयं पशुमालभेत" "आहवनीये जुहोति" "पदे जुहोती"तिवत् सामान्यप्रतिपन्नब्रह्मणो विशेषेऽपवादः । **बाधाभ्युच्चयेति** ॥ प्रकृतेरतिदिष्टानां कुशमयबर्हिषां विकृतावुपदिष्टशरमयबर्हिर्भिर्बाधवद् ब्रह्मणोऽपि क्वचिद् प्राप्तस्य पदार्थान्तरेण बाधः । प्राकृतानां पञ्चनारिष्ठहोमानां वैकृतैरुपहोमैः समुच्चित्यानुष्ठानवद् ब्रह्मणोऽप्यतिदिष्ठस्योपदिष्टेन समुच्चित्यानुष्ठानमभ्युच्चयः । "पञ्च प्रयाजान् यजती"तिप्रकृतेर्विकृतावतिदिष्टानां विकृतौ—"एकादश प्रयाजान् यजती"त्युपदिष्टेन समुच्चित्यावृत्या षोडशप्रयाजानुष्ठानवद् ब्रह्मणोऽप्यतिदिष्टस्योपदिष्टेन समुच्चित्यानुष्ठानमभ्युच्चयः । **व्यवस्थितविकल्प इति** ॥ "उदिते जुहोत्यनुदिते जुहोती"ति शाखाभेदेन व्यवस्थावत् क्वचिद् ब्रह्म भवति न भवतीति व्यवस्था । अस्त्वेवं धर्मसाम्यं ब्रह्मण इति चेत्, नेत्याह—**न वस्तुनीति** ॥ तदेव प्रपञ्चयति—**तथाचैकस्मिन्निति** ॥ **अपरः परिचोदयतीत्यतः** प्राक्तनः स्पष्टार्थः । पुनरनुमानवादिनश्चोदयन्ति—**ननु—भूतवस्तुविषयत्व इति** ॥ ननु—अनुमानसूचनपरं सूत्रं न प्रतिभातीति, अत आह—**पूर्व-**

### तत्त्वदीपनम्

**माह—आहवनीय इति** । "आहवनीये जुहोती"त्युत्सर्गः, 'पदे जुहोती'त्यपवादः, अश्वस्य पदविन्यासदेशे जुहोतीत्यर्थः ॥ **प्रकृतेरिति** । प्रकृतौ श्रुतानां कुशमयबर्हिषां 'प्रकृतिवद् विकृतिः कर्तव्ये'त्यतिदिष्टानाम् विकृतावुपदिष्टशरमयबर्हिषां निरवकाशत्वादित्यर्थः ॥ अभ्युच्चयमुदाहरति—**प्राकृतानामिति** ॥ विध्यादिप्रसक्तेरनिष्टपर्यवसायित्वं दर्शयितुं प्रश्नमुत्थापयति—**अस्त्विति** ॥ सिद्धत्वान्नैवमित्याह—**नेत्याहेति** ॥ पौनरुक्त्यं व्यावर्तयति—**तदेवेति** ॥ विचारमन्तरेणा-

### ऋजुविवरणम्

स्वस्थानविवृध्यैव संख्यापूरणमसमञ्जसं भवेत् । प्राकृत-वैकृतप्रयाजयोरभेदनैव संख्याविरोधाद् अविरोधाभावात् स्वस्थानविवृद्धिन्यायः प्रत्युध्रीयेत; "अत्राप्यावृत्त्ये"ति वदतेदमेव दर्शितम्; भेदे आवृत्त्ययोमात् । एकस्यैव पुनः पुनरनुष्ठानमावृत्तिरित्युच्यते यतः । यद्वा—"मासमग्निहोत्रमि"त्यत्र होमान्तविधानवदत्रापि प्रयाजान्तरविधानम् । नच रूपाभावादविधानम्; अतिदेशतो मन्त्रवर्णतश्च द्रव्यदेवतालाभात्, नचातिदेशतः प्राप्तिर्विधानपरिपन्थिनी । एवञ्च न प्रत्यभिज्ञानादविधानम् । नच समुच्चयासंभव; अदृष्टार्थत्वात् । नच प्रयाजभेदादावृत्त्यसंभवात् संज्ञाया अभेदात् क्वचिद् द्रव्यदेवताऽभावाच्चौपचारिककर्मैक्यमङ्गीकृत्यावृत्तिशब्दप्रयोगः कृतः, अतिदेशतो रूपलाभद्योतनार्थं वचनस्य प्रयोगः । नच—प्रत्यभिज्ञानादविधानम्; कौण्डपायिने त्वनेकगुणविधानेन वाक्यभेदात् कर्मान्तरविधानमिति वाच्यम्; नाराशंसप्रभृतिषु संज्ञान्तरदर्शनेन प्रत्यभिज्ञाया असिद्धत्वात् । इतश्च प्रयाजभेदः ; अनुमन्त्रणप्रकारदर्शनपरे वाक्ये "प्राकृतैरादितः" इति विशेषणसामर्थ्यात्प्रयाजानामप्राकृतत्वं प्रतीयते; इतरथा प्रयाजानामनुमन्त्रणमन्त्राणाञ्च प्राकृतत्वात्—"अनुमन्त्रणं प्राकृतैरि"ति विशेषणमसमञ्जसं स्यात् । नचानुमन्त्रणप्रकारभेदप्रदर्शनमेवानेन मन्त्रेण क्रियत इति युक्तं वक्तुम्; अतिदेशेन सर्वेषु प्राप्तेषु प्राकृतग्रहणव्यवच्छेदाद्यदर्शनात्, प्रयाजभेदे त्वनुमन्त्रणमात्रापेक्षायामतिदेशप्राप्तेर्न मन्त्रान्तरापेक्षेति दर्शयितुं प्राकृतग्रहणं युक्तम् । एवं समुच्चयमापाद्योदाहरणं दर्शितमिति द्रष्टव्यम् । यत्र वा समुचयस्तद्विषयोदाहरणम् ॥ **ननु**—निःस्वभावत्वमुक्त्वा "तथाचैकस्मिन्" इत्यनेन ज्ञानस्य सम्यक्त्वमुक्तम्,

### पञ्चपादिका

परिचोदयति—ननु भूतवस्तुविषयत्व इत्यादिना। अयमभिप्रायः—भूतत्वाद् युक्तेरपि चेदनुप्रवेशः, तथा सति किं वेदवाक्यैर्विचारितैः? यथाहुरीश्वरकारणिनः, तथा भवतु पूर्वसूत्रेण प्रतिज्ञानिर्देशोऽनेन च हेत्वभिधानमिति। उत्तरमाह—नेन्द्रियादिविषयत्वेन सम्बन्धाग्रहणादित्यादिना॥ इन्द्रियाणि प्रपञ्चमात्रं गृह्णन्तिः न तत्कारणम्। यदि तद्ग्रहणमपि स्यात्, नानुमानोपन्यासेन कृत्यमस्ति। सामान्यतोदृष्टमपि न प्रमाणमतीन्द्रिये ब्रह्मणि, अत उपसंहरति—तस्माज्जन्मादिसूत्रं नानुमानोपन्यासार्थम्, किं तर्हि? वेदान्तवाक्यप्रदर्शनार्थमिति युक्तिमपि तदुपकरणां तदर्थानुभवप्रयोजनां सूचयतीत्युक्तम्॥

नन्वेवं सति कथं युक्तिरब्रह्मविषया सती तद्विषयाणां वाक्यानामुपकरणं भवति? उच्यते—ब्रह्मपरेषु वाक्येषु मृदादिदृष्टान्तैर्युक्तय उपन्यस्यन्ते। ताश्च विधि-प्रतिषेधवाक्ययोः प्रवर्तकत्व-निवर्तकत्वाकाङ्क्षितस्तुति-निन्दार्थवादवत् स्वरूपवाक्यस्य फलपर्यन्तमपेक्षितसम्भावनार्थवादतां प्रतिपद्यमानास्तत्र श्रुतिसाहाय्ये वर्तन्त इत्युच्यते। किंपुनस्तद् वेदान्तवाक्यं यत् सूत्रेणेह लिलक्षयिषितमिति॥ सर्वस्मिन्नेव वेदान्तवाक्ये ब्रह्मपदस्याप्रसिद्धत्वान्न स्वार्थं विशेष्यत्वेन विशेषणत्वेन वा वाक्यार्थे समर्पयितुमलमित्याक्षिपति।

### पञ्चपादिकाविवरणम्

सूत्रेणेति॥ ज्ञानानन्दप्रत्यग्भूतब्रह्मणश्चक्षुरादिना सामान्यमात्रविषयानुमानैश्च भूतवस्तुत्वेऽपि नानुभवः कर्तुं शक्यत इति परिहरति—नेन्द्रियादिविषयत्वेन इत्यादिना॥ अतः इत्युपसंहारः॥

ननु एवं सतीति स्पष्टार्थः॥ उच्यत इत्यादेः परिहारस्यायमर्थः—ज्ञानानन्द-सर्वज्ञ-प्रत्यगात्मभूतं ब्रह्म निश्चापयितुमसमर्था अपि युक्तयः शब्दावगते ब्रह्मणि सामान्यद्वारेण संभावनाबुद्धिहेतवो भवन्ति। कथम्? जगदुपादानेऽद्वितीयशब्दावगते मृदादिदृष्टान्तैरुपादानव्यतिरेकेण कार्यस्यानिरूपणादद्वितीयता संभाव्यते। स्फटिकलौहित्यप्रतिबिम्ब-रज्जुसर्प-घटाकाशदृष्टान्तैरात्मनि कर्तृत्वादेरारोपितत्वं जीवब्रह्मैक्यं ब्रह्मव्यतिरिक्तप्रपञ्चस्वातन्त्र्याभावोऽसङ्गत्वद्वारेण विशुद्धाद्वितीयप्रत्यगात्मता च संभाव्यत इति। किं पुनस्तद् वेदवाक्यमिति भाष्यस्याक्षेपार्थत्वमाह—सर्वत्र वेदान्तवाक्ये ब्रह्मपदस्येत्यादिना॥

### तत्त्वदीपनम्

संभावनानिवृत्त्यसंभवात् कथं विचारानर्थक्यमित्याशङ्क्यानुमानान्तर्भूतत्वाद् वाक्यं न पृथग्विचारणीयमित्याह—पुनरनुमानवादिन इति॥ प्रतिज्ञाद्यप्रतिपत्तेः कथमनुमानसूचकं सूत्रमित्याशङ्क्ते—नन्वनुमानेति॥ सद्रूपेण ब्रह्मणो मानान्तरविषयत्वान्नेन्द्रियादिविषयत्वमित्यादिग्रन्थोऽसमञ्जस इत्याशङ्क्याह—ज्ञानानन्देति॥ युक्तीनां ब्रह्मविषयत्वाभावात् तत्र कथमसंभावनाबुद्धिहेतुत्वमभिहितम्? इत्याशङ्क्याह—उच्यत इत्यादेरिति॥ सामान्यद्वारेण संभावनाबुद्धिहेतुत्वप्रकारं पृच्छति—कथमिति॥ तत्प्रकारमेवाह—जगदिति॥ किंशब्दस्य प्रश्ने क्षेपे च साधारणस्य क्षेपार्थतामाह—किं पुनरिति। ब्रह्मणस्तावन्न पदार्थत्वम्; अगृहीतसंबन्धत्वात्, नापि वाक्यार्थत्वम्; पदार्थस्यैव पदार्थान्तरसंसृष्टत्वेन वाक्यार्थत्वाद्, ब्रह्मणश्चापदार्थत्वान्नैवमित्याक्षेपग्रन्थार्थः। उक्तचोद्यस्य—"येषामि"त्यादिना परिहारात् प्रतिवचनस्य प्रश्नाननुसारित्वमाशङ्क्याह—येषामिति॥ किं ब्रह्मपदार्थस्य विशेषतोऽप्रसिद्धत्वम्? उत सामान्यतः? इति विकल्प्याद्यमङ्गीकरोति—सत्यज्ञानेति॥

### ऋजुविवरणम्

तदसङ्गतमित्याशङ्क्याह—तदेव प्रपञ्चयतीति॥ कथमिन्द्रियाविषयत्वम्? स्वरूपेण ब्रह्मणः प्रत्यक्षत्वादित्याशङ्क्य, साभिप्रायमवतारयति—ज्ञानानन्दप्रत्यगिति॥ "उच्यत" इत्यादिना युक्तेः संभावनाहेतुत्वमुक्तम्, तदसंबन्धम्; ब्रह्मविषयत्वाभावेन तत्संभवहेतुत्वाभावात्, तथा निश्चायकत्वाभावाच्चेत्याशङ्क्य व्याचष्टे—उच्यत इत्यादेरिति॥ सामान्यद्वारेणेत्यनेनैकविषयत्वमुक्तम्॥

ननु—ब्रह्मपदार्थस्य प्रमाणान्तराप्रसिद्धत्वात्तदुद्दिश्य लक्षणकथनं नोपपद्यत इत्याक्षिप्ते "येषामि"त्यनेनोदाहरणप्रदर्शने विवक्षा प्रदर्शिता, तथा कारणस्य प्रसिद्धत्वेन तत्र ब्रह्मशब्दप्रयोगादनवच्छिन्नस्य शब्दार्थत्वं गम्यत इत्युक्तम्, तदयुक्तम्। चोदितानन्वयदोषस्यापरिहृतत्वात्, अनुपपन्नत्वाच्च; ब्रह्मोद्देशेन हि लक्षणं वक्तव्यम्, उद्देशकपदार्थत्वाच्च तस्यैव प्रसिद्धिर्वक्तव्येत्याशङ्क्याभिप्रायमाह—येषां वेदान्तवाक्यानामिति। निगमादिवशात्प्रतीतेरुक्तत्वात्सत्यादिरूपेणाप्रसिद्धेरप्रमितिरभिप्रेता; अनिर्धारितविशेषसामान्यप्रसिद्धिरस्तीत्यर्थः। जिज्ञासाशब्दस्वारस्यादुत्तरानपेक्षत्वेन प्रसिद्धिर-

## पञ्चपादिका

**येषां वेदान्तवाक्यानां येन सन्निवेशक्रमेण ब्रह्मप्रतिपादने समन्वयः स्वाध्यायपाठे स्थितः, तल्लक्षणार्थं सूत्रद्वयमिति ।**

**तथैवोदाहरणमाह—भृगुर्वै वारुणिरिति । अथशब्दोपात्तन्यायेन प्रथमसूत्रस्योदाहरणम्—"यतो वा इमानि भूतानी"ति जन्मादिसूत्रस्य । कथम् ? पूर्वोक्तेन न्यायेन पृथिव्यादीनां जन्मादिदर्शनात् तत्कारणे एकत्व-नानात्वयोरन्यतराव-गमे प्रमाणाभावाद् बुद्धिमत्कारणपूर्वतामात्रे प्रतिपन्ने "यतो वा इमानी"ति कारणस्यैकवचननिर्देशात्तदर्थमात्रस्यैव**

## पञ्चपादिकाविवरणम्

**येषां वेदान्तवाक्यानामित्यादेः** परिहारस्यायमर्थः—सत्य-ज्ञानानन्दप्रत्यगात्माद्वितीय-ब्रह्मपदार्थेऽप्रसिद्धेऽपि बृहत्त्वमात्रस्य प्रसिद्धत्वात् तदनुवादेन सन्निहितपदार्थसंसर्गसामर्थ्याद् विशिष्टब्रह्म प्रतिपत्तुं शक्यते, इति ब्रह्मप्रतिपादन-परं सत्यादिवाक्यम्, अर्थात्तदेव लक्षणम्, इति न सत्य-ज्ञानानन्द-ब्रह्मस्वरूपलक्षणस्य सिद्धानुवादप्रसङ्ग इति । ननु—स्वाध्यायपाठक्रमेण नार्थप्रतिपत्तिः, किन्तु वैपरीत्येन; 'प्रसिद्धानुवादेनाप्रसिद्धं प्रतिपाद्यत' इति न्यायात् । तथा च कारणस्य प्रसिद्धत्वात् यस्मादाकाशः संभूतः स आत्मा सत्यं ज्ञानमनन्तं ब्रह्मेति वाक्यप्रवृत्तिः; तथा यस्मादेतद् ब्रह्म नाम रूपमन्नं च जायते, स सर्वज्ञः सर्वविदिति; तथा यस्मात्प्राणादि जायते, स दिव्यो ह्यमूर्तः पुरुष इत्यादि; तथा यो भूतयोनि, तदद्रे-श्यमग्राह्यमित्यादि; तथा यस्मात्तेजोबन्नानि जायन्ते, तत्सदद्वितीयमणिमा तत्त्वमसीत्यादिकारणमात्रानुवादेन तद्विशेषः प्रतिपाद्यत इति, सत्यम्; अधिकारिज्ञानकर्तव्यताब्रह्मात्मप्रतिपादनानां क्रममभिप्रेत्येदमुक्तम्, तदाह—**तथैवोदाहरणमिति** ॥

ननु—जगत्कारणे नानात्वस्यापि प्रतिपत्तेः कथं तदनुवादेन ब्रह्म प्रतिपादनीयमिति चोदयति—**कथमिति** ॥ परिहरति—**पूर्वोक्तेनेत्यादिना** ॥

## तत्त्वदीपनम्

द्वितीयं दूषयति—**बृहत्त्वमात्रस्येति** ॥ **संनिहितपदार्थसंसर्गसामर्थ्यादिति** । सत्य-ज्ञानादिपदार्थसंसर्गसामर्थ्या-दित्यर्थः ॥ प्रमाणान्तरप्रसिद्धस्य गन्धवत्त्वादेर्लक्षकत्वं दृष्टम्, तथाच सत्यज्ञानानन्दादेरपि लक्षणत्वात्प्रमाणान्तरसिद्धत्वं वक्तव्यम्, ततश्च सत्यादिवाक्यं न प्रमाणमित्याशङ्क्याह—**अर्थादिति** ॥ प्रतिपन्नं सकलानात्मवर्गाद् ब्रह्मणि व्यावृत्तबुद्धिं जनयति । प्रमाणान्तरागोचरत्वेऽपि सत्यादेर्लक्षकत्वं युज्यत इत्यर्थः । **"येषां वेदान्तवाक्यानामि"**त्यादिटीकामाक्षिपति—**ननु स्वाध्यायेति** । "अग्निहोत्रं जुहोति" "यवागूं पचती"त्यादौ पाठक्रमस्याप्रयोजकत्वादित्यर्थः ॥ "समिधो यजती"त्यादौ पाठक्रमस्य प्रयोजकत्वं दृष्टमित्याशङ्क्य, प्रस्तुते वैषम्यमाह—**प्रसिद्धेति** । तथाच स्वाध्यायपाठक्रमेण "भृगुर्वै वारुणिः" "यतो वा इमानी"त्यादिवाक्यस्य ब्रह्मप्रतिपादकत्वं भाष्यकृतोदाहृतम्, तच्च तद्व्याख्यानं चासमञ्जसमितीतिशब्दार्थः ॥ 'प्रसिद्धानुवादेनाप्रसिद्धं प्रतिपाद्यते'इत्येतदङ्गीकरोति—**सत्यमिति** ॥ तर्हि भाष्यटीकयोरनुपपत्तिः, अत्राह—**अधिकारीति** । मुमुक्षुणा ब्रह्मज्ञानं कर्तव्यमित्युक्ते किं तद् ब्रह्मेत्याकाङ्क्षायां तल्लक्षणोक्तेरवसरः, ततश्चाकाङ्क्षाक्रमेण "भृगुर्वै"इत्यादि-वाक्यं प्रथमं विचारितम्, "यतो वा" इत्यादिवाक्यमनन्तरमित्यर्थः ॥ पटादीनामकेतन्त्वाद्युपादानदर्शनात् यज्जगत्कारणं तद् ब्रह्मेति प्रतिपात्तुमशक्यम्; व्याघातादिति शङ्कते—**ननु जगत्कारण इति** । अनवच्छिन्नस्य ब्रह्मशब्दार्थत्वात् कारणस्य व्यावृत्तत्वाद् व्याघात इत्यर्थः ॥ ऐकग्रन्थ्यशङ्कां निरस्यति—**परिहरतीति** ॥ "प्रसिद्धानुवादेनाप्रसिद्धं प्रतिपाद्यते"इति न्यायाद् "यतो वा" इत्यादिवाक्यस्य कारणप्रतिपादकस्यानुवादकत्वम्; तथाच कथं प्रमापकत्वाभिधानमित्याशङ्क्याह—**जगत्कारणेति** । जगत्कारणमात्रानुवादेऽपि तस्यैकत्वं प्रमीयत इति संबन्धः ॥ **अपिरवधारणे** । **प्रमीयत एवेति** ॥ "यतो

## ऋजुविवरणम्

स्तीति तथोक्तम्, इह तु विशेष्यस्यान्यतो लाभात्पदार्थप्रमित्यपेक्षत्वात्तावन्मात्रप्रसिद्धिर्वक्तव्येति द्रष्टव्यम् ॥ कथं तर्हि निर्धारितविशेषप्रमितिरिति ? तदाह—**सन्निहितेति** ॥ **ननु**—सन्निहितानां स्वरूपलक्षणपरत्वात् कथं तत्र प्रमितिरिति ? **प्रतिपादनपरमिति** ॥ तर्हि स्वरूपलक्षणाभावः; अनुवादकत्वाल्लक्षणस्य, इत्याशङ्क्याह—**अर्थादिति** ॥ अयं भावः—प्रमाणविधावुद्देश्यस्य प्रमाणसिद्धिमात्रमपेक्षितम्, नतु प्रमितिः । तदुक्तम्—"धर्मे सामान्यतस्सिद्धे इति" ॥ तथा यत्र त्वनूद्य प्रमाणरूपं विधीयते, तत्रानूद्यमानस्य प्रमाणान्तरात् प्रसिध्या प्रयोजनमाह—**आहवनीयादिष्विति** ॥ येषां वेदान्त-वाक्यानामित्यादिग्रन्थमाक्षिपति—**ननु स्वाध्यायेति** ॥ अयमेवाभिप्राय इति कथं गम्यते ? इत्याशङ्क्योत्तरग्रन्थसंवाद-माह—**तदाहेति** ॥ **ननु जगत्कारण इति** । प्रसिद्धं हि लभणम् एकत्वञ्च न प्रसिद्धमिवि भावः ॥ **"एकत्वनिर्देशात्"**

### पञ्चपादिका

**विधित्सितत्वादर्थात्सर्वज्ञं सर्वशक्ति जगत्कारणमिति कारणविशेषो वाक्यादवगम्यते। पुनस्तद्विजिज्ञासस्वेत्यनूद्य तद् ब्रह्मेति तत्र ब्रह्मशब्दप्रयोगाद् बृहत्यर्थान्वयेन सर्वतोऽनवच्छिन्नस्वभावं जगत्कारणं ब्रह्मपदार्थ इति गम्यते।**

### पञ्चपादिकाविवरणम्

अयमर्थः—जगत्कारणमात्रानुवादेऽपि तस्य नानात्वाशङ्कायाम्—"यतः" इत्येकत्वनिर्देशादेकत्वमपि प्रमीयते। ननु—अनुवादे प्रमितिरनुपपन्ना, न; जगत्कारण एकत्वपुरोवादाभावादनुवादसामर्थ्यादेवैकत्वं प्रमीयते; अन्यथाऽनुवादवैयर्थ्यात्। ननु—एकत्वे ब्रह्मलक्षणे च प्रमीयमाणे वाक्यभेदः स्यात्, न; एकत्वस्य ब्रह्मप्रतिपत्तिगुणभूततयैकवाक्यत्वात्। अथवा—एकत्वमपि लक्ष्यान्तर्गतमेव भवति, न लक्षणान्तर्गतम्। तथा हि—जगत्कारणमात्रानुवादेनैकं ब्रह्म विधीयत इति। ततः किमायातमिति ? तदाह—**अर्थात्सर्वज्ञमिति**॥ न संज्ञासंज्ञिसंबन्धपरं वाक्यम्, किंत्वर्थप्रतिपादनपरम्। आर्थिकस्तु संज्ञासंज्ञिसम्बन्ध इत्याह—**पुनस्तद्विजिज्ञासस्वेत्यादि**॥ एकं सर्वज्ञं सर्वशक्ति सर्वतोऽनवच्छिन्नं च जगत्कारणम्,

### तत्त्वदीपनम्

वे"त्येकवचननिर्देशान्न कारणत्वं निश्चेतुं शक्यम्; तसिल्प्रत्ययस्य बहुत्वैकत्वसाधारणत्वादित्याशङ्क्याह—**नानात्वेति**। "येन जातानि जीवन्ती"ति वाक्यशेषात् तसिल्प्रत्ययस्यैकत्वविषयत्वं निर्धार्यत इत्यर्थः॥ यच्छब्दस्य प्रसिद्धानुवादित्वान्नैकत्वप्रमितिहेतुत्वमिति शङ्कते—**नन्वनुवाद इति**॥ किं प्रत्ययार्थस्यैकत्वादनूद्यमानत्वम् ? उत कारणमात्रस्य ? इति विकल्प्याद्यं दूषयति—**न जगत्कारण इति**॥ द्वितीयं प्रत्याह—**अनुवादेति**। प्रकृत्या कारणमनूद्य प्रत्ययेन तस्यैकत्वं प्रमीयत इत्यर्थः। सामर्थ्यमेवाह—**अन्यथेति**। अनवच्छिन्नं ब्रह्म निरूपयितुं जगत्कारणत्वलक्षणमनूदितम्, इतरथा विधेयासिद्धेरनुवादस्य नैष्फल्यं स्यादित्यर्थः॥ एकत्वं ब्रह्मरूपं चेत्युभयं न प्रमेयम्, वाक्यभेदप्रसङ्गादिति शङ्कते—**नन्वेकत्व इति**॥ स्वतन्त्रस्यार्थद्वयस्याप्रमेयत्वान्नैतदित्याह—**नैकत्वस्येति**। यज्जगज्जन्मादिकारणं तदेकमित्यवान्तरवाक्येन प्रतिपाद्यम्, यदेकं कारणम् तत्सत्यानन्दरूपमिति प्रतिपादनान्न वाक्यभेद इति वाक्यार्थः॥ विधान्तरेण वाक्यभेदाभावमाह—**अथवेति**॥ एकत्वस्यात्मधर्मत्वात् कथं लक्षणान्तर्गतत्वम् ? इत्याशङ्क्याह—**तथाहीति**। भेदाभावोपलक्षितं स्वरूपमेकमित्युच्यत इत्यर्थः॥ ननु—तथाऽपि "तद् ब्रह्मे"ति कथम् ? प्रधानस्यापि तादृक्त्वादिति शङ्कते—**तत इति**॥

ईक्षणपूर्वकस्सृष्टृत्वश्रवणात् कारणस्य चेतनत्वम्, सर्वेक्षितृत्वाच्च सर्वज्ञत्वमित्याशयेनाह—**तदाहेति**॥ ब्रह्मशब्दप्रयोगमात्रेण कथं जगत्कारणस्यानवच्छिन्नत्वनिश्चयः ? संज्ञा-संज्ञिसंबन्धपरत्वाद् ब्रह्मशब्दप्रयोगस्येत्याशङ्क्याह—**न संज्ञेति**। संबन्धप्रतिपादने फलाद्यभावादित्यर्थः॥ किंपरं तर्हीदं वचनम् ? इत्याशङ्क्याह—**किन्त्वर्थेति**॥ उपक्रमादिकारणस्यानवच्छिन्नत्वप्रतिपत्तेर्न संज्ञामात्रत्वं ब्रह्मपदस्येत्यर्थः॥ ब्रह्मशब्दादनवच्छिन्नत्वप्रतिपत्तेः कथमसंज्ञात्वमिति ? अत्राह—आर्थिक इति॥ (मूले) **"पुनस्तदि"**त्यादेरयमर्थः—इतोऽपि प्रधानादिविलक्षणपरं लक्षणवाक्यमित्याह—**पुनरिति**॥ **"तद्विजिज्ञासस्वे"**त्यत्र जिज्ञास्यत्वोपदेशादित्यध्याहारः। जगत्कारणस्य जिज्ञास्यत्वोपदेशादनवच्छिन्नस्वभावं जगत्कारणमित्यर्थः। ब्रह्मशब्दप्रयोगोऽप्यमुमेवार्थं गमयतीत्याह—**अनूद्येति** (मूले)। तत्पदेन जगत्कारणमनूद्य, ब्रह्मेति जगत्कारणे ब्रह्मपदप्रयोगादित्यर्थः एतावता कथं विलक्षणप्रतिपत्तिः ? तत्राह—**बृहत्यर्थेति** (मूले)॥ "अस्ति तावद् ब्रह्मेत्यत्र सर्वज्ञत्वादेरपि ब्रह्मपदात्प्रतिपत्तिरभ्यभाषि, अत्र त्वनवच्छिन्नमात्रप्रतिपत्तिरुच्यत इति विरोधः तत्राह—**एकमिति**॥ अनवच्छिन्नशब्दस्योपलक्षणार्थत्वान्न विरोध इत्यर्थः॥

### ऋजुविवरणम्

**"तदर्थमात्रस्य च विधित्सितत्वादि"**ति च हेतुमात्रं निर्दिष्टम्, न साध्यम्; नचास्योत्तरसाध्यान्वयासिद्धत्वाल्लक्षणत्वेन विधित्सितत्वायोगादित्याशङ्क्यावतारयति—**अयमर्थ इति**। "दध्ना जुहोती"तिवदप्राप्तमेकत्वं प्रतीयत इति भावः॥ गुणवाक्ये विधेयान्तराभावाद् गुणपरत्वम् इह तु विधेयान्तरभावात् कथमेकत्वप्रमितिः ? इति चोदयति—**नन्वनुवाद इति**॥ विधेयान्तरभावेऽप्येकत्वं विना कारणत्वमात्रस्य लक्षणत्वायोगात्कारणविषयानुमानवदत्र प्रमाणान्तराभावादत्रैव प्रतीयत इति परिहरति—**जगत्कारण इति**॥

**अनुवादसामर्थ्यादिति**। अन्यपरवाक्ये प्रतीतिसामर्थ्यादित्यर्थः॥ **अनुवादेति**॥ **वैयर्थ्यम्**=प्रयोजनशून्यत्वमित्यर्थः। **ननु**—उभयलक्ष्यत्वेऽपि वाक्यभेदस्समान इति, तत्राह—**तथाहीति**॥ **"तत्र ब्रह्मशब्दप्रयोगादि"**त्यनेन संज्ञान्तरकथनं प्रतिभाति, तथा बृहत्यर्थानुगमो न भवेत्, ब्रह्मप्रतिपादकत्वञ्च न स्यादित्याशङ्क्य साभिप्रायमवतार-

### पञ्चपादिका

**तस्य च निर्णयवाक्यम्—"आनन्दाद्ध्येव खल्वि"ति**

### पञ्चपादिकाविवरणम्

तच्च ब्रह्मशब्दाभिधेयमित्यर्थः ॥

ननु—निरुपाधिकब्रह्मस्वरूपकथनमन्तरेण सोपाधिकानां सर्वज्ञत्वादीनां कस्यचिद् धर्मतया प्रतिपत्तिर्न युक्ता, तत्र; 'यत् सुषिरं तदाकाशम्' 'प्रकृष्टप्रकाशश्चन्द्रः' इत्यादिवत् स्वरूपलक्षणमेव किंचिद् वक्तव्यम्। ब्रह्मशब्दाभिधेयमेव स्वरूपलक्षणमिति चेत्, न; बृहत्त्वधर्ममात्राभिधानात्। महान् घट इत्युक्ते महत्त्वस्य निरुपाधिर्घटो धर्मितया प्रतीयते, तथेहापि वक्तव्यं सच्छब्दाभिधेयं लक्षणमिति चेत्, न; महासामान्यमात्राभिधानात्। सन्नित्युक्ते घट इत्यवान्तरसामान्यव्यक्तिर्महासामान्यपर्यवसानत्वेनापेक्ष्यते, तथेहाप्यवान्तरसामान्यव्यक्तिर्वक्तव्या। विज्ञानमेव बृहत्त्व-सर्वज्ञत्वादिधर्मवत्तया निरुपाधि ब्रह्मस्वरूपलक्षणमिति चेत्, न; तस्य सुख-दुःख-राग-द्वेषादिमहासामान्यत्वात् तस्याप्यवान्तरसामान्यव्यक्तौ पर्यवसानं वक्तव्यमिति, तदाह—**तस्य च निर्णयवाक्यमानन्दाद्ध्येवेति** ॥ आनन्द एव हि ब्रह्मत्व-सर्वज्ञत्व-कारणत्वादिधर्मवत्तया निरुपाधि ब्रह्मस्वरूपं निर्णीयते। तथाहि—"यत्र नान्यत्पश्यती"त्यारभ्य "यो वै भूमा तत्सुखमि"ति सुखस्यैव बृहत्त्वधर्मवत्तामाह। विज्ञानं तर्हि निरुपाधिकब्रह्मगुण इति चेत्, किं विज्ञानानन्दयोः सामानाधिकरण्यं नीलोत्पलवद् गुण-गुणिभावात्? किं वा द्रव्यं घट इतिवत्परापरसामान्यभावादिति? न तावद् गुण-गुणिभावात्; "साक्षी चेता केवलो निर्गुणश्चे"ति श्रुतेः "एकधैवानुद्रष्टव्यं" नेह नानास्ती"ति च गुण-गुणिभावभेदप्रतिषेधात्, गुणस्य गुणिनोऽन्यत्वानन्यत्वाभ्यामनिरूपणात् ॥

अत्र सर्गसङ्करवादी न निर्गुणं द्रव्यमस्तीति जल्पति। मा भून्निर्गुणं द्रव्यम्, ब्रह्म तु न द्रव्यम्; प्रमाणाभावात्। समवायिकारणत्वाद् द्रव्यमिति चेत्, न; आरम्भवादानभ्युपगमात्। उपादानकारणत्वाद् द्रव्यमिति चेत्, न;

### तत्त्वदीपनम्

सर्वज्ञत्वादेः स्वरूपलक्षणत्वासंभवात् स्वरूपलक्षणं वक्तव्यम्, नच निरूपयितुं शक्यत इत्याह—**ननु निरुपाधिकेति** ॥ सर्वज्ञत्वादेः सप्रतियोगित्वान्न स्वरूपत्वमित्यर्थः ॥ ब्रह्मत्वं स्वरूपलक्षणमिति शङ्कते—**ब्रह्मेति** ॥ बृहत्त्वस्य धर्मिसापेक्षत्वादन्यद्धर्मिस्वरूपं वक्तव्यमित्याह—**न बृहत्त्वेति** ॥ **निरुपाधिर्घट इति**। निरपेक्ष इत्यर्थः ॥ स्वरूपलक्षणान्तरमाशङ्कते—**सच्छब्देति** ॥ सच्छब्दस्य महासामान्यवाचित्वात् तत्पर्यवसानाय व्यक्तिस्वरूपापेक्षणात् तद्वक्तव्यमित्याह—**न महासामान्यमिति** ॥ विज्ञानव्यक्तिर्महासामान्यव्यञ्जिकेति शङ्कते—**विज्ञानमिति** ॥ सुख-दुःखादीनामपि ज्ञानभेदत्वेन गुरुणाऽभ्युपगतत्वाद् ज्ञानत्वस्य महासामान्यत्वम्, ततश्च तद्व्यञ्जकं वक्तव्यमित्याह—**न तस्येति** ॥ आनन्दस्य सर्वज्ञत्वादिधर्मव्यक्तित्वान्नैतच्चोद्यमित्याह—**तदाहेति** ॥ "आनन्दाद्ध्येवे"त्यत्रानन्दस्य कारणत्वं प्रतीयते, न ब्रह्मस्वरूपमिति शङ्कायामाह—**आनन्द एवेति**। निरपेक्षोपादानद्वयानुपपत्त्याऽऽनन्दो ब्रह्मैवेत्यर्थः ॥ श्रुतितोऽप्यानन्दो ब्रह्मेत्याह—**तथाहीति** ॥ आनन्दस्य ब्रह्मस्वरूपत्वे ज्ञानस्य गुणत्वमाश्रयणीयम्, स्वरूपद्वयानुपपत्त्येति शङ्कते—**विज्ञानमिति** ॥ ज्ञानानन्दयोरितरेतरमभेदाद् ज्ञानस्वरूपत्वं युक्तमिति प्रतिपादयितुं विचारमारभते—**किं विज्ञानेति** ॥ इतोऽपि न गुण-गुणिभावनिबन्धनं सामानाधिकरण्यमित्याह—**गुणस्येति**। गुण-गुणिनोर्भिन्नत्वे घटादिवद् गुण-गुणिभावः, अनन्यत्वे घटं प्रति घटस्येव गुण-गुणिभावासंभवः, अन्यत्वानन्यत्वं तु दुर्निरूपमित्यर्थः ॥

निर्गुणत्वमुक्तमसहमानः शङ्कते—**अत्र सर्वेति** ॥ द्रव्यस्य गुणवत्त्वनियमात्; इतरथा द्रव्यत्वक्षतिः। तथाच प्रयोगः। ब्रह्म, गुणवद्, द्रव्यत्वात्, संमतवदित्यर्थः। असिद्ध्योत्तरयति—**मा भूदिति** ॥ प्रमाणाभावोऽसिद्ध इति शङ्कते—**समवायिकारणत्वादिति** ॥ ब्रह्म, द्रव्यम्, समवायित्वात्, संमतवदिति। असिद्धो हेतुरित्याह—**आरम्भेति**। यत्, स्वसमवेतद्रव्यारम्भकम्, तत् समवायिकारणम्; ब्रह्मणश्चानारम्भकत्वादसिद्धिरित्यर्थः ॥ हेत्वन्तरमाशङ्कते—**उपादानेति** ॥ व्यभिचारेण दूषयति—**न गुणादीनामिति** ॥ ग्रहणकर्मत्वं ज्ञातत्वम्, द्वित्वादिरादिशब्दार्थः। तार्किकमुद्रानङ्गीकारयति—**न संज्ञा-संज्ञीति** ॥

### ऋजुविवरणम्

**विज्ञानं तर्हीति** ॥ नीलोत्पलवत्सामानाधिकरण्योपपत्तेर्न सामान्यव्यक्तिभाव इति भावः। **ननु—अत्यन्तभेदनिवृत्तिपरं** "नेह नाने"ति वचनमित्याशङ्क्याह—**गुणस्येति** ॥

### पञ्चपादिका

**प्रसिद्धावद्योतकेन हिशब्देन संयुक्तमानन्दावद्योतकमुपपद्यते। अनानन्दात्मके हि जगत्कारणे ब्रह्मशब्दप्रयोगो न युज्यते। न हि तस्योपेक्षणीये विषये स्वार्थप्रक्षेपेण वृत्तिः समञ्जसा। तस्माद् ब्रह्मपरे वाक्ये जन्मादिधर्मजातस्योपलक्षणत्वाद् ब्रह्मसंस्पर्शाभावात् सर्वज्ञं सर्वशक्तिसमन्वितं परमानन्दं ब्रह्मेति जन्मादिसूत्रेण ब्रह्मस्वरूपं लक्षितमिति सिद्धम्॥**

इति परमहंसपरिव्राजकादिश्रीशङ्करभगवत्पादान्तेवासिवरश्रीपद्मपादाचार्यकृतौ पञ्चपादिकायां जन्माद्यधिकरणं नाम पञ्चमवर्णकं समाप्तम्॥

### पञ्चपादिकाविवरणम्

गुणादीनामपि ग्रहणकर्मत्वादिधर्मोपादानत्वात्। न निर्गुणं वस्त्विति चेत्, अन्त्यगुणेष्वनेकान्तः। तस्मात्तत्त्वज्ञानप्रद्वेषमात्रमेतद् न निर्गुणं ब्रह्मेति। तस्माद् 'द्रव्यं घटः' 'सन् घटः' इतिवत् परापरसामान्यनिबन्धनं 'विज्ञानमानन्द' मिति सामानाधिकरण्यम्। तस्मात् विज्ञानसामान्यालम्बनमानन्दविशेषो ब्रह्मेति। तत्र सर्वज्ञाद्वितीयत्वादिधर्माणां प्रपञ्चोपाधितयाऽनिर्वचनीयत्वान्न तैर्ब्रह्म सगुणं सद्वितीयं वा भवति। विज्ञानसामान्यमपि दुःख-रागादिप्रपञ्चोपाधितयाऽनिर्वचनीयं सद् ब्रह्मणि विज्ञानशब्दप्रवृत्तिमात्रहेतुर्भवति। विज्ञानगुणत्वाभावे न विज्ञानं ब्रह्मेति चेत्, न; विज्ञानसामान्यालम्बनस्य विज्ञानव्यवहारगोचरत्वात्, विज्ञानप्रयुक्तार्थक्रियाकरित्वाच्च। सामान्यास्याभासत्वात् तदालम्बनं ब्रह्मज्ञानं मिथ्याज्ञानमिति चेत्, न; मुख्यसामान्यान्तराभावात्, अस्यैव च मुख्यत्वात्। तस्माद्विज्ञानस्वभाव आनन्दो ब्रह्मेत्यानन्दस्यैव ब्रह्मतां प्रतिपादयति—**प्रसिद्धावद्योतकेनेत्यादिना**॥ तस्मात् सर्वेषु वेदान्तवाक्येषु पाठव्यत्यासेन जगत्कारणमात्रानुवादेन तस्य ब्रह्मत्व प्रतिपाद्यत इत्युपसंहरति—**तस्माद् ब्रह्मपर इति**॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यानन्यानुभवपूज्यपादशिष्यस्वप्रकाशानुभवभगवतः कृतौ पञ्चपादिकाविवरणे जन्माद्यधिकरणं नाम पञ्चमवर्णकं समाप्तम्॥

### तत्त्वदीपनम्

वादिनः शङ्कामुद्भावयति—**न निर्गुणमिति**॥ किं सर्वेषां गुणानां गुणवत्त्वम्? उत केषांचित्? आद्ये गुणानवस्था, अनुपलब्धिविरोधश्चेत्यभिप्रेत्य द्वितीयं दूषयति—**अन्त्यगुणेष्विति**॥ तस्माद् द्वितीयः पक्षः परिशिष्यत इत्याह—**तस्माद् द्रव्यमिति**। 'द्रव्यं घटः' इत्युक्ते घटव्यक्तेर्द्रव्यत्वालम्बनत्ववद् विज्ञानत्वसामान्यालम्बनमानन्द इत्यर्थः॥ सर्वज्ञत्वादिधर्मक आनन्दविशेषो ब्रह्म चेत्, तर्हि सगुणत्वं सद्वितीयत्वं च दुर्वारमित्यत्राह—**तत्र सर्वज्ञेति**॥ **प्रपञ्चोपाधकितयेति**। प्रपञ्चप्रतियोगितयेत्यर्थः। समारोपितसर्वज्ञत्वादिव्युदासेन चिन्मात्रस्य लक्ष्यमाणत्वान्न तेन सगुणत्वं सद्वितीयत्वं चेत्यर्थः॥ विज्ञानशब्दप्रवृत्तिनिमित्तस्य विज्ञानत्वस्य सत्त्वेऽद्वितीयत्वं व्याहन्येत, असत्त्वे न विज्ञानशब्दप्रवृत्तिनिमित्तत्वमित्याशङ्क्याह—**विज्ञानसामान्येति**॥ नच—अनिर्वचनीयत्वेऽपि तस्य विज्ञानशब्दप्रवृत्तिनिमित्तत्वादिभाव इत्यपि—वाच्यम्; यद्रजतमभात् सा शुक्तिरितिवद् मिथ्याभूतस्यापि शब्दप्रवृत्तिनिमित्तत्वादित्यर्थः॥ विज्ञानशब्दवाच्यस्यानिर्वचनीयत्वेन ब्रह्मगुणत्वम्, ततश्च तत्सामानाधिकरण्यानुपपत्तिरित्युक्तमनुभाषते—**विज्ञानेति**॥ "खण्डो गौरि"त्यादौ गुण-गुणिभावाभावेऽपि यथा सामानाधिकरण्यम्, तद्वदत्रापीत्याह—**न विज्ञानेति**॥

औपाधिको वाऽयं विज्ञानशब्द इत्याह—**विज्ञानप्रयुक्तेति**॥ सामानाधिकरण्यस्य जातिनिबन्धनत्वमुक्तमाक्षिपति—**सामान्यस्येति**। किं गौणत्वमाभासत्वम्? उत समारोपितत्वम्? नाद्य इत्याह—**मुख्येति**॥ द्वितीये विज्ञानस्य समारोपितत्वेऽप्यज्ञानविरोधित्वाल्लक्षणया विज्ञानशब्दप्रयोग इत्याह—**तस्मादिति**॥ न केवलमेकस्यामेव शाखायां कारणानुवादेन ब्रह्म प्रतिपाद्यते, किं तु सर्वत्रापीत्याह—**सर्वेष्विति**॥

इति श्री परमहंसपरिव्राजकाचार्याखण्डानुभूतिशिष्येणाऽखण्डानन्दमुनिना विरचिते विवरणतत्त्वदीपने जन्माद्यधिकरणं नाम पञ्चमवर्णकं समाप्तम्॥

### ऋजुविवरणम्

**विज्ञानगुणत्वाभाव इति**॥ अयं भावः—सामान्यानां कल्पितत्वान्न तेन ज्ञानरूपतेति न गुणत्वं प्रयोजकमिति। **न विज्ञानेति**॥ अयं भावः—सामान्याधारत्वमेव प्रयोजकम्, न सत्यसामान्याधारत्वम्; सामान्याधारत्वे विद्यमानेऽपि तस्य सत्यत्वाभावापराधेन ज्ञानत्वाभावनुपलम्भादिति। यथा मिथ्यारजतसंभिन्नशुक्ते रजतव्यवहारगोचरत्वम्, तद्वदत्रापि, इति द्योदयति—**सामान्यस्यामासत्वादिति**॥

इति स्वामीन्द्रपूर्णपूज्यपादशिष्य-सर्वशास्त्रविशारदजनार्दनात्मज-सर्वज्ञ-विष्णुभट्टोपाध्यायकृतौ ऋजुविवरणे पञ्चमवर्णकं समाप्तम्॥

ॐ

श्रीशङ्करभगवत्पादाचार्यप्रणीतम्

# श्रीमद्ब्रह्मसूत्रभाष्यम्

## षष्ठं वर्णकम्

जगत्कारणत्वप्रदर्शनेन सर्वज्ञं ब्रह्मेत्युपक्षिप्तम्, तदेव द्रढयन्नाह—

### शास्त्रयोनित्वात् ॥ ३ ॥

महत ऋग्वेदादेः शास्त्रस्यानेकविद्यास्थानोपबृंहितस्य प्रदीपवत्सर्वार्थावद्योतिनः सर्वज्ञकल्पस्य योनिः कारणं ब्रह्म । नहीदृशस्य शास्त्रस्यर्ग्वेदादिलक्षणस्य सर्वज्ञगुणान्वितस्य सर्वज्ञादन्यतः संभवोऽस्ति । यद्यद्विस्तरार्थं शास्त्रं यस्मात्पुरुषविशेषात्संभवति, यथा व्याकरणादि पाणिन्यादेर्ज्ञेयैकदेशार्थमपि, स ततोऽप्यधिकतरविज्ञान इति प्रसिद्धं लोके । किमु वक्तव्यं अनेकशाखाभेदभिन्नस्य देवतिर्यङ्मनुष्यवर्णाश्रमादिप्रविभागहेतोर्ऋग्वेदाद्याख्यस्य सर्वज्ञानाकरस्याप्रयत्नेनैव लीलान्यायेन पुरुषनिःश्वासवद्यस्मान्महतो भूताद्योनेः संभवः,—'अस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदः' इत्यादिश्रुतेः—तस्य महतो भूतस्य निरतिशयं सर्वज्ञत्वं सर्वशक्तिमत्त्वं चेति ॥

॥ इति षष्ठं वर्णकम् ॥

ॐ

श्रीपद्मपादाचार्यप्रणीता

# पञ्चपादिका

**शास्त्रयोनित्वादिति—अयमपरः प्रपञ्चकारणस्य ब्रह्मणः सर्वज्ञत्वे हेतुः। अनेकनानाविधविषयविद्यास्थानोपबृंहितस्य वेदाख्यस्यापि शास्त्रस्य प्रपञ्चान्तःपातित्वात् तत एव जन्म। न च तेनाविषयीकृतस्य सद्भावे प्रमाणमस्ति। अतः सर्वविषयत्वात्सर्वज्ञं तत्। कल्पप्प्रत्ययप्रयोगो भाष्ये बोद्धृत्वाभावादीषद-**

## पञ्चपादिकाविवरणम्

शब्दोपादानभावाद् ध्वनिगतविषयद्योतनाः शक्तयोऽमू-
र्ब्रह्मण्येवासुरग्नेर्विषयविषयिणी दीपशक्तिः खलूच्चैः।
द्रष्टुश्च ज्ञानशक्तिर्ननु न करणता, किन्तु दीपप्रभावत्
संयुक्तद्योतनैवेत्यपरमिह पुनः साध्यते सर्ववित्त्वम्॥

## तत्त्वदीपनम्

शास्त्रस्य जगदन्तःपातित्वात् तत्कारणत्वकथनेन शास्त्रकारणत्वमपि निर्दिष्टम्, इति तत्कथनं मुधेत्याशङ्क्य तात्पर्यमाह—**शब्दोपादानेति**। इह सूत्रेऽपरं सर्ववित्त्वं साध्यत इति संबन्धः॥ साधनप्रकारमाह—**ध्वनिगतेति**। ध्वनिगतविषयद्योतनाः शक्तयः सुप्रसिद्धा इति यावत्॥ भवतु शब्देषु विषयप्रकाशनशक्तिः, प्रस्तुते किमायातमिति? अत आह—**ब्रह्मणीति**। विषयद्योतनाः शक्तयो ब्रह्मण्येवासुरिति संबन्धः॥ तत्र हेतुमाह—**शब्दोपादानेति**॥ ब्रह्मणः शब्दोपादानत्वात्। तत्र दृष्टान्तमाह—**अग्नेरिति**। या विषयविषयिणी दीपशक्तिः, साऽग्नेरेवोत्पद्यमाना तद्गततादृशशक्तिपूर्विका दृष्टेत्यर्थः। उपादानकारणं कार्यावस्थमित्यङ्गीकरणात् कार्य-कारणशक्त्योरेकत्वमुभयत्र विवक्षितमिति वाऽर्थः। विमता शक्तिः, कारणगततादृशशक्तिपूर्विका, कार्यगतप्रकाशनशक्तित्वाद्, दीपगतशक्तिवदिति॥ शब्देऽर्थप्रकाशकारणेऽपि तादृश्येव शक्तिः स्यादित्यतिप्रसङ्गबाधकमाशङ्क्याह—**द्रष्टुश्चेति**। चशब्दः शङ्काव्यावृत्त्यर्थः। द्रष्टृर्ज्ञानशक्तिः साध्या, न कारणतेत्यन्वयः॥ "**नन्वि**"त्यथशब्दः प्रसिद्धिद्योतकः। ज्ञानशक्तिर्ज्ञातृत्वशक्तिरिति यावत्। आत्मनो ज्ञातृत्वेन प्रसिद्धत्वात् तद्विरुद्धं कारणशक्तिमत्त्वप्रसाधनमित्यर्थः॥ दीपस्याऽऽवरणशक्तिमत्त्वाद् दृष्टान्तासंगतिरिति शङ्कते—**किन्त्विति**॥ विवक्षितसाम्यसंभवाद् दृष्टान्तत्वं युक्तमित्याह—**दीपेति**॥ यथा प्रदीपप्रभा स्वसंयुक्ताशेषवस्तुद्योतिका भवति, तद्वद् ब्रह्मणः सर्वोपादानतया संसर्गिणः स्वसंयुक्ताशेषप्रकाशकत्वं तद्गताज्ञाननिवर्तकत्त्वेनेत्यर्थः॥

## ऋजुविवरणम्

"**शब्दोपादाने**"त्यस्यायमर्थः—ब्रह्म धर्मि, शब्दगतार्थविभासनशक्तियुक्तम्, तदुपादानत्वात्; अग्निवत्, अथवा—ध्वनिगतशक्तयो धर्मिण्यः, ब्रह्मगता इति साध्यो धर्मः, तत्कार्यगतत्वात्। **ननु**—यदि शब्दगतविषयावभासकत्वशक्तिर्ब्रह्मण इत्युच्यते, तर्हि कारणत्वशक्तिरेव स्यात्, तथा सति न सर्वज्ञतेत्याशङ्क्याह—**द्रष्टुश्च ज्ञानशक्तिरिति**। द्रष्टुश्च ज्ञानशक्तिस्साध्या; नतु करणतेत्यन्वयः। यद्वा—"द्रष्टुश्चेति" भाष्यकारीयानुमानप्रदर्शनम्॥ **ननु**—कार्यशक्तिः स्वरूपकारणानुमेया, कार्ये कारणशक्तिर्दृष्टा, नान्या; नच साऽनुमेया, अतः तत्कथमनुमानम्? इत्याशङ्क्याह—**किन्तु दीपप्रभावदिति**॥ **संयुक्तद्योतना**=द्योतकत्वशक्तिः कार्यगता कारणेऽप्यनुमीयत इत्यर्थः। **दीपप्रभावदिति**। यथा प्रभाया

**पञ्चपादिका**

**परिसमाप्त्या। ततश्च तस्य कारणं तद्विषयादप्यधिकतरग्रहणसमर्थं गम्यते। दृश्यते ह्यद्यापि शास्त्रकाराणां तथाभावः। ननु एवं सति बुद्धिपूर्वत्वात्सापेक्षं स्यात्।**

**पञ्चपादिकाविवरणम्**

**ब्रह्मणो लक्षणद्वयाभिधानपरेऽपि सूत्रे** सर्वज्ञत्वं प्रधानादिकारणवैलक्षण्यस्य सिद्धये जगद्विरचनोपपत्तये च श्रुतियुक्तिभ्यां प्राधान्येन प्रदर्शितम्। तदेव हेत्वन्तरेण साधयति; प्राधान्यात्, अथवा—सर्वजगत्कारणत्वेन सर्वज्ञत्वं न सम्भवति; वेदानामकर्तृकत्वादित्याशङ्क्य, सम्बन्धमाह—**अयमपर इति**॥ वेदस्य तावत् सर्वविषयज्ञानसामर्थ्यं दर्शयति तदुपादानतया ब्रह्मणोऽपि तद् दर्शयितुम्—अनेकनानाविधविषयविद्यास्थानेति। ननु नास्ति वेदस्य सर्वज्ञता; अर्थज्ञानकरणतयोपयोगादिति, सत्यम्; अत एव कल्पप्प्रत्ययप्रयोग इति। ननु वेदस्य सर्वविषयज्ञानसामर्थ्येऽपि ब्रह्मणः कथं सर्वज्ञतेति? अत आह—**ततश्च तस्य कारणमिति**॥ **दृश्यत** इत्यादिः दृष्टान्तः। अयं प्रयोगः—वेदः, स्वविषयादधिकतरविज्ञानवत्प्रणीतो भवति, वाक्यप्रमाणत्वात्; पाणिन्यादिशास्त्रवदिति। ननु किमत्रानुमानेन प्रसाध्यते? यदि तावदु-

**तत्त्वदीपनम्**

जन्मादिसूत्रे कारणत्वमेव प्रतीयते, न सार्वज्ञ्यम्, तथाच सर्वज्ञत्वे हेत्वन्तरमुपन्यस्यत इत्यसंगतमित्याशङ्क्य तात्पर्यमाह—**ब्रह्मण इति** ॥ प्रधानादिकारणवैलक्षण्यस्य, स्वरूपलक्षणेनैव सिद्धत्वात् किं सर्वज्ञत्वनिर्देशेनेति तत्राह—**जगदिति**॥ "यः सर्वज्ञः सर्वविदि"त्यादिश्रुतिः। स्रष्टव्यज्ञानं विना स्रष्टृत्वानुपपत्तिरित्याद्या युक्तिः॥ सकलजगत्कारणत्वमुररीकृत्य सर्वज्ञत्वं प्रादर्शि, संप्रति वेदकारणत्वेनापि सुसाधमित्याह—**तदेवेति** ॥ पूर्वाधिकरणशेषत्वेन सूत्रं व्याख्यायाधिकरणान्तरत्वेन व्याचष्टे—**अथवेति**॥ आक्षेपलक्षणां संगतिमाह—**सर्वेति** ॥ "अस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदः" इत्यादिवाक्यं ब्रह्मणो वेदकर्तृत्वेन सर्वज्ञत्वं साधयति? उत न साधयति? इति सापेक्षत्वप्रसङ्गभावाभावाभ्यां संदेहः। पूर्वोत्तरपक्षयोरन्यतर एव भाष्यकृता निर्देष्टव्यः, किमिदमुच्यत वेदः सर्वज्ञ इति? इत्याशङ्क्य तात्पर्यमाह—**वेदस्येति**॥ पुराण-न्याय-मीमांसा-धर्मशास्त्राणि चत्वारि, शिक्षा कल्पो निरुक्तं व्याकरणं छन्दो ज्योतिषमिति षडङ्गानि, चत्वारो वेदा इति चतुर्दश विद्यास्थानानि। **अनेकशः**=नानाविधशब्देनोच्यन्ते। वेदेनाविषयीकृतार्थाभावाद्वेदः सर्वज्ञ इत्युक्तम्, तदाक्षिपति—**ननु नास्तीति**। सर्वं जानातीति सर्वज्ञ इत्युच्यते, वेदस्य च कारणत्वान्न सर्वज्ञत्वमित्यर्थः॥ करणत्वमङ्गीकरोति—**सत्यमिति**॥ तर्हि न वेदस्य सार्वज्ञ्यमित्याशङ्क्याङ्गीकारेणोत्तरयति—**अत एवेति**॥ सर्वविषयप्रकाशनसामर्थ्यमङ्गीकृत्य ब्रह्मणि तदाक्षिपति—**ननु वेदस्येति**। प्रमाणाभावादिति शेषः॥ असिद्धो हेतुरित्याह—**अत आहेति**॥ वेदो विज्ञानवत्प्रणीत इत्युक्ते न सर्वज्ञप्रणीततासिद्धिः, तदर्थम्—**स्वविशेषणम्**॥ नच—वेदस्य सकलविषयत्वात् स्वविषयादधिकतरविषयविज्ञानवत्प्रणीतत्वं बाधितमित्यपि—शङ्क्यम्; इक्षु-क्षीरगुडादिमाधुर्यवैषम्यस्याभिधानाविषयीकृतत्वेऽपि प्रमाणान्तरविषयत्वं दृष्टम्, ततश्च वेदस्य स्वविषयादधिकतरविषयविज्ञानवत्प्रणीतत्वं संभवतीत्यर्थः॥ प्रत्यक्षं व्यावर्तयति—**वाक्येति**॥ अनाप्तोक्तिं व्यावर्तयति—**प्रमाणत्वादिति**॥ विकल्पानुपपत्तेर्नैतत्साध्यं साध्वित्याह—**ननु किमत्रेति**। प्रणीतत्वं नाम किमुच्चारणमात्रम्? उन बुद्धिपूर्वकृतत्वम्? इति **किं**शब्दार्थः॥ आद्यमनूद्य

**ऋजुविवरणम्**

न प्रदीपवद् द्योतकत्वम्, अपि तु संयुक्तद्योतकत्वम्; एवमत्रापीति युक्तम्॥ "अयमपरः" इत्ययुक्तम्; पूर्वसूत्रे सर्वज्ञत्वसाधनादर्शनादित्याशङ्क्यावतारयति—**ब्रह्मण इति**॥ ननु पूर्वसूत्रोक्तार्थान्तरं विहाय सर्वज्ञत्वमेव किमिति प्रतिपाद्यते? इत्याशङ्क्याह—**प्रधानेति**॥ ननु लक्षणद्वयाभिधानपरत्वं सूत्रस्योक्तम्, कथं प्राधान्येन सर्वज्ञत्वं प्रदर्शितमित्युच्यते? इत्याशङ्क्याह—**लक्षणद्वयाभिधानेनेति**॥

ननु साधितस्य पुनः साधनं पुनरुक्तमित्याशङ्क्य पक्षान्तरमाह—**अथवेति**॥ ननु ब्रह्मणस्सर्वज्ञत्वं दर्शयितुमुपक्रम्य वेदस्य सर्वप्रकाशनसामर्थ्यप्रदर्शनमसङ्गतमित्याशङ्क्यावतारयति—**वेदस्येति** ॥ **अधिकतरविषयविज्ञानवत्प्रणीत**

### पञ्चपादिकाविवरणम्

पाध्यायस्याध्यापनोच्चारणवच्छास्त्रशब्दोपलक्षितानां सर्वेषां शब्दानां ब्रह्मण्यप्युच्चारणं साध्यते ? तदा नोपाध्यायवत् सर्वज्ञं ब्रह्म भविष्यति । अथ सकलवाक्यार्थं प्रमाणान्तरेणोपलभ्य तत्प्रतिपत्त्यर्थं परस्मै वाक्यं विरचयति ? प्राप्तं तर्हि पौरुषेयत्वम्; तल्लक्षणत्वात्पुरुषवचसाम्, इति चोदयति—**नन्वेवं सतीति** ॥

अत्र केचित्परिहारमाचक्षते—प्रमाणान्तरेणार्थमुपलभ्य विविक्षित्वा परस्मै विरचितः शब्दः पौरुषेय इत्युच्यते । तत्रेदमनेन कर्तव्यमिति वक्तुरभिप्रायभेदो रागः पुरुषवचसामर्थः । द्विविधश्च रागः—नित्योऽनित्यश्च । तत्रानीश्वराणामभिलषितसाधनज्ञानस्यानित्यतया तज्जन्यरागस्याप्यनित्यत्वात् तद्विषयाणां पुरुषवचसां प्रमाणान्तरसापेक्षतया पौरुषेयत्वमङ्गीक्रियते, ईश्वरस्य तु पुनर्निखिलेष्टसाधनविषयज्ञानानां नित्यतया तन्मूलरागस्यापि नित्यत्वादीश्वरप्रणीतानामपि वैदिकवचसां नित्यरागविषयतया पौरुषेयता न जेगीयते—इति । नैतत्सारम्; ईश्वरे सकलाभिलषितसाधनज्ञाननित्यत्वे प्रमाणाभावात्, अनुमानानां चातद्गोचरत्वस्य दर्शितत्वात् । शब्द इति चेत्, न; इतरेतराश्रयापातात्—नित्यज्ञानमूलनित्यरागजन्यत्वे शब्दस्यानपेक्षं प्रामाण्यम्, अनपेक्षे च शब्दे नित्यज्ञानसिद्धिरिति । 'रागश्च नित्यः', 'नित्याभिलषितसाधनज्ञानमूलः' इति च व्याहन्यते । कुतश्चैतद् लब्धम्—नित्यानित्याभिप्रायभेदेन पुरुषवचसामपि सतां सापेक्षत्वानपेक्षत्वविभागो विद्यत इति ? नच पुरुषाभिप्रायः शब्दार्थ इति च वक्ष्यते । तस्मादसमञ्जसमेतत् ॥

### तत्त्वदीपनम्

दूषयति—**यदि तावदित्यादिना** ॥ **अध्यापनोच्चारणवदिति** । अध्यापनायोच्चारणवदित्यर्थः द्वितीयमुत्थाप्य दूषयति—**अथेति** ॥ उभयत्रापि विपक्षबाधकतर्कपराहतत्वेनाप्रयोजको हेतुरिति द्रष्टव्यम् ॥

वेदस्य बुद्धिपूर्वकृतत्वमङ्गीकृत्यैवानपेक्षत्वं केचित् कथयन्ति, तत्प्रक्रियां दर्शयति—**अत्र केचिदिति** ॥ द्वितीयपक्षाङ्गीकारेण समाधानं दर्शयन् पौरुषेयस्वरूपमाह—**प्रमाणान्तरेणेति** ॥ पौरुषेयत्वे कथमनपेक्षत्वम् ? इत्याशङ्क्य, वाक्यप्रमेयं तावद् दर्शयति—**तत्रेति** ॥ लौकिक-वैदिकवचोभ्यां रागस्य प्रमेयत्वे सापेक्षत्वानपेक्षत्वाविभागः कुतस्त्यः ? इत्याशङ्क्य, तदर्थं रागभेदमाह—**द्विविध इति** ॥ रागत्वाविशेषे नित्यत्वानित्यत्वविभागः कथम् ? इत्याशङ्क्याह—**तत्रानीश्वराणामिति** ॥ ततो वैषम्यमाह—**ईश्वरस्येति** ॥ **पौरुषेयता न जेगीयत इति** । सापेक्षता नोच्यत इत्यर्थः । वेदवचसां नित्यज्ञानमूलरागविषयतया शब्दस्यानपेक्षत्वमित्युक्तम्, तत्र रागस्य नित्यज्ञानमूलत्वमसिद्धमित्याह—**नैतत्सारमिति** ॥ किमनुमानं नित्यज्ञानेश्वरे प्रमाणम् ? उत शब्दः ? नाद्य इत्याह—**अनुमानानामिति** ॥ सर्वं कार्यं स्वरूपोपादानविज्ञानवत्कर्तृकमित्यारभ्य नित्यज्ञानवदीश्वरागोचरत्वानुमानं दर्शितमित्यर्थः । द्वितीयमनुवदति—**शब्द इति** ॥ प्रामाण्यासिद्धेर्न तत ईश्वरसिद्धिरित्याह—**नेति** ॥ नित्यरागविषयतया शब्दस्यानपेक्षप्रमाणत्वमाशङ्क्याह—**इतरेतराश्रयादिति** ॥ तदेव व्यनक्ति—**नित्यज्ञानेति** ॥ नित्यज्ञानमङ्गीकृत्य दूषयति—**रागश्चेति** ॥ रागो नित्यश्चेति व्याहन्यते, लोके रागस्यानित्यत्वनियमादित्यर्थः । नित्यश्च ज्ञानकार्यश्चेत्येतच्च व्याहतम्, नित्य इत्युक्ते सर्वकालसंबन्धित्वं प्रतीयते, कार्य इत्युक्ते कदाचिदसत्त्वमिति व्याघात इत्यर्थः ॥ रागद्वैविध्यमाश्रित्य नित्यरागविषयत्वेनानपेक्षत्वम्, इतरस्य सापेक्षत्वमित्येतदयुक्तमित्याह कुतश्चेति पुरुषवचसामिति । पुरुषविरचितलौकिकवैदिकवचसामित्यर्थः । रागस्य शब्दार्थत्वं वा प्रतीपमित्याह—**नचेति** ॥ **वक्ष्यत इति** । समन्वयसूत्र इत्यर्थः । वेदवचसां पौरुषेयत्वेऽपि नित्यरागविषयतयाऽनपेक्षत्वमिति सन्निराकरणमुपसंहरति—**तस्मादिति** ॥

### ऋजुविवरणम्

**इति** । अयमर्थः—यद्यपि वेदाविषयीकृतं नास्ति; तथाऽपि सत्यर्थे ज्ञानसामर्थ्यं प्रसाध्यत इति न विरोधः । अथवा—वेदस्य किञ्चित् सामान्यरूपेण विषयः; किञ्चिद् विशेषरूपेण विषयः, अस्य तु सर्वं सर्वात्मना विषयः, अतोऽधिकतरविषयविज्ञानवत्प्रणीतत्वं वेदस्य, "नच तेने"ति ग्रन्थस्सामान्याभिप्रायेणेति द्रष्टव्यः । पौरुषेयत्वेन प्रामाण्येऽविशिष्टे किं तन्निराकरणेन ? इत्याशङ्क्य, मतभेदं दर्शयति—**प्रमाणान्तरेणेति** ॥ **ननु** अनपेक्षबोधकत्वं वेदे यावद् दृश्यते, कथं पौरुषेयस्यानपेक्षता ? इति तन्निर्वाहकत्वेन नित्येन वा समूलत्वं कल्प्यते, अतो न तेनेतरेतराश्रयमित्याशङ्क्याह—**रागश्च नित्य इति** ॥ **ननु** रागस्य ज्ञानविषयसापेक्षत्वेन तन्मूलत्वम्, नतु तज्जन्यत्वेन; अतो विरोधात्तद्विषयस्यानपेक्षतेत्याशङ्क्याह—**कुतश्चैतल्लब्धमिति** ॥ **ननु** पौरुषेयत्वेनाभिप्रायविषयत्वे निश्चिते, नित्यानित्याभिप्रायभेद एवानपेक्षत्वा-

### पञ्चपादिकाविवरणम्

अन्ये तु सङ्गिरन्ते—व्यासाद्यभिप्रायभेदतात्पर्यवतामपि भारतवचसामिदानीन्तनवाचकवदध्ययनविधितात्पर्यवतामेव वेदानां सृष्टिकाले समुच्चारणमीश्वरस्य वेदप्रणयनं नाम। ततश्च रागतात्पर्याभावाद् वेदप्रामाण्यमीश्वरस्य सर्वज्ञता चेति। अत्र वयं पृच्छामः—सृष्टिसमये किं प्रमाणान्तरेणार्थमुपलभ्य वेदवाक्यं व्यनक्ति? यथा पाणिन्यादिः, आहोस्विदुपाध्यायवत् पूर्वसिद्धवाक्यमुच्चारयति? तत्र पूर्वस्मिन् कल्पे पौरुषेयतापत्तिः, उत्तरस्मिन्नुपाध्यायवदेवासर्वज्ञतापत्तिः। अभिप्रायतात्पर्याभावादपौरुषेयतेति चेत्, उपलभ्य रचनायां कुतो रागतात्पर्याभावः? पूर्वमेव विधितात्पर्यादिति चेत्, तथापीतरन्न विहन्यते। न चोभयतात्पर्यमुपपद्यते; सत्यपि विधितात्पर्येऽवगम्यार्थं रचनैव सापेक्षत्वे निमित्तं समधिगतम्। नचोपलभ्य रचनायां विधितात्पर्यमुपपद्यत इति यत्किञ्चिदेतत्॥

अपरे तु मन्यन्ते—निर्विकल्पकज्ञानपूर्वकाणि किल वेदवाक्यानि न सापेक्षत्वदोषमश्नुवते; ब्रह्मस्वरूपज्ञानस्य निर्विकल्पकत्वात्, लौकिकवचसां तु सविकल्पज्ञानपूर्वत्वात्सापेक्षता—इति नायमपि विभागः सिध्यति; उपलभ्य रचनाया

### तत्त्वदीपनम्

मतान्तरमुत्थापयति—**अन्ये त्विति**। अध्ययनविधिरध्ययनं प्रयुञ्जानो वेदस्य विवक्षितार्थतां गमयति; अन्यथाऽध्ययनासिद्धेः। तत्पौरुषेयत्वेऽपि विधितात्पर्यवतां वेदानां प्रामाण्यमित्यर्थः॥ तत्र दृष्टान्तमाह—**भारतेति**। इदानीन्तनो वाचको भारतादिवचांसि यथोच्चारयति, तद्वदित्यर्थः॥ दृष्टान्ते पुरुषाभिप्रायतात्पर्यवैषम्यमाशङ्क्याह—**व्यासादीति**। उच्चारणमात्रलक्षणविवक्षितांशसाम्यसंभवाद् दृष्टान्तत्वं युक्तमित्यर्थः। अस्मदादिष्वभिनवश्लोकविरचनपूर्वकं समुच्चारणं प्राक्सिद्धोच्चारणं चेति। ततश्च विकल्पोपपत्तिरित्यर्थः। नच—वेदबलात्सार्वज्ञ्यमित्यपि—शङ्क्यम्; वेदस्रष्टृत्वेन सार्वज्ञ्योपपादनप्रक्रमविरोधादित्यर्थः॥ वेदस्य बुद्धिपूर्वकृतत्वेऽपि न सापेक्षत्वमिति शङ्कते—**अभिप्रायेति**॥ असिद्धो हेतुरित्याह—**उपलभ्येति**॥ विमतम्, रागतात्पर्यवत्, उपलभ्य रचितत्वात् संमतवदित्युक्ते, विमतम्, न रागतात्पर्यवत्, विधितात्पर्यवत्त्वात्; व्यतिरेकेण पुंवचोवदिति शङ्कते—**पूर्वमेवेति**॥ **पूर्वमिति**। रागतात्पर्यात्प्रागित्यर्थः॥ अप्रयोजकत्वेन हेतुं दूषयति—**तथापीति**॥ **इतरदिति**। रागतात्पर्यमित्यर्थः। उपलभ्य रचितत्वाविशेषादिति द्रष्टव्यम्॥ रागमात्रतात्पर्यवत्त्वं सापेक्षत्वप्रयोजकम्, वेदवचसां च विधिरागतात्पर्यपरत्वादनपेक्षत्वमित्याशङ्क्याह—**नचेति**। एकत्र तात्पर्ये संभवत्युभयत्र तात्पर्यकल्पनायोगादित्यर्थः॥ अङ्गीकृत्य दूषणमाह—**सत्यमिति**॥ **विधितात्पर्य इति**। विधिरागतात्पर्य इत्यर्थः। उपलभ्य रचितत्वस्य सापेक्षत्वव्यापकत्वात्सापेक्षत्वं स्यादित्यर्थः॥ विधितात्पर्यविधुरत्वे सत्युपलभ्य रचितत्वस्य सापेक्षत्वव्यापकत्वाद् वेदवचसि च तदभावान्न सापेक्षत्वमित्याशङ्क्याह—**नचेति**। विमतम्, न विधिपरम्, उपलभ्य रचितत्वात्; संमतवदित्यनुमानात् सापेक्षत्वं दुर्वारं स्यादित्यर्थः॥

सविकल्पकज्ञानपुरःसरत्वस्य सापेक्षत्वव्यापकत्वम्, तथाच व्यापकविरुद्धोपलब्ध्या व्याप्याभाव इति मतान्तरमुत्थापयति—**अपरे त्विति**॥ निर्विकल्पकज्ञानपूर्वकत्वे किं मानमिति? अत्राह—**ब्रह्मस्वरूपेति**॥ ईक्षणपूर्वकं सकलस्रष्टृत्वं श्रूयते। ईक्षणं च निर्विकल्पकम्, इति वेदस्य तत्पूर्वकत्वमित्यर्थः। सविकल्पकज्ञानपूर्वकत्वस्य सापेक्षत्वव्यापकत्वं कुत इति? अत आह—**लौकिकेति**॥ तदेतन्निराकरोति—**नायमिति**। सापेक्षत्वसविकल्पकज्ञानपूर्वकत्वयोर्व्यभिचारित्वादित्यर्थः॥ ज्ञानपूर्वकत्वे सविकल्पकज्ञानपूर्वकत्वाभावापराधेन सापेक्षत्वानुपलब्धेर्नोक्तप्रयोजकसिद्धिरित्याह—**उपलभ्येति**॥

### ऋजुविवरणम्

दिहेतुरिति विकल्प्यत इत्याशङ्क्याह—**नच पुरुषेति**॥

पूर्वमेवाध्ययनविधितात्पर्ये कथमीश्वरप्रणयनम्? इत्याशङ्क्य दृष्टान्तमाह—**व्यासाद्यभिप्रायेति**॥ **अध्ययनविधितात्पर्यवतामिति**। अयमर्थः—अध्ययनविधिरध्ययनं प्रयुञ्जानो वेदस्य विवक्षितार्थत्वं बोधयति; अन्यथाऽध्ययनासिद्धेरिति॥ **तथापीतरदिति**। अयमर्थः—शब्दं प्रयुञ्जानो विवक्षितवैव प्रयुङ्क्त इति। ननु उभयथा तात्पर्येऽपि विधितात्पर्यस्य पूर्वभावित्वादनपेक्षतेति, नेत्याह—**नचोभयतात्पर्यमिति**। अध्ययनविधेरपि **संसृज्यमानत्वेन तात्पर्यमिति**॥ अथ तमप्यभिप्रायं स्मृत्वा भारतोच्चारणतात्पर्यवत्कल्पान्तरीयविधिं स्मृत्वा सृजतीत्यपेक्षेत्याशङ्क्याह—**सत्यपि विधितात्पर्य इति**॥ ननु विधितात्पर्याभावे सति पौरुषेयत्वं सापेक्षत्वे निमित्तम्, अत्र तु तदभावान्न सापेक्षतेत्याशङ्क्याह—**नचोपलभ्येति**। अध्ययनविधितात्पर्यगृहीतानामेव प्रणयने प्रमाणाभावात् तात्पर्यादिपरिज्ञाने च प्रमाणाभावात्

## पञ्चपादिकाविवरणम्

एव सापेक्षत्वनिमित्तत्वात्, स्वरूपज्ञानस्याप्यभिलषितसाधनोपरागे सविकल्पकत्वात् । तस्मान्नैते परिहाराः ॥

स्यात्तर्हि वेदानां पौरुषेयता ? ननु अपौरुषेयो वेदः; अविच्छिन्नव्यवहारे सत्यस्मर्यमाणकर्तृकत्वात्; आत्मवदित्यपौरुषेयतानुमीयत इति, न; चिरवृत्तेष्वपीदानीमनुमानप्रमीयमाणकर्तृकेष्वनैकान्तिकत्वात्, वेदानां च कर्तुरनुमानागमाभ्यां प्रमीयमाणत्वात् । तथाहि विशिष्टबहुज्ञपुरुषप्रणीतः, वेदः, बह्वर्थविषयवाक्यप्रमाणत्वात्; भारतवत्, "इदं सर्वमसृजत" "ऋचो यजूंषि सामानी"त्यागमः । तस्मात्पौरुषेयो वेद इति ॥

अत्र पृच्छामः—कथं पौरुषेये वेदे प्रामाण्यं लभ्यते कपिल-कणादाक्षपादानामिति ? सर्वज्ञप्रणीततयेति चेत्, न तावदनुमेयः सर्वज्ञ इत्युक्तम् । आगमाच्चेत्सिद्धिः, न; इतरेतराश्रयात्—सर्वज्ञे सिद्धे तत्प्रणीततया वेदप्रामाण्यम् । ततश्च सर्वज्ञसिद्धिरिति । स्यादेतत्—महाजनपरिग्रहाद् वेदप्रामाण्यमिति, न; सुगताद्यागमानुसारिणामेव देशविशेषेष्वानन्त्यश्रवणात् । न च देहात्मभाव-चन्द्रप्रादेशत्वादीनां महाजनपरिगृहीतानां प्रामाण्यं दृश्यते न च महाजनपरिग्रहः प्रमाणपक्षपाती । तस्मान्न प्रामाण्यलाभः ॥

## तत्त्वदीपनम्

सविकल्पकज्ञानपूर्वकत्वस्य व्यापकविरुद्धोपलब्धिं निरस्यति—**स्वरूपज्ञानस्येति** । विशेषविषयज्ञानस्य सविकल्पविषयत्वाद् ब्रह्मज्ञानस्यापि विशेषविषयत्वेन सविकल्पकत्वमित्यर्थः ॥ एकदेशिमतनिराकरणमुपसंहरति—**तस्मादिति** ॥

अपौरुषेयत्वनिरसनमाकर्ण्य तार्किकः प्रत्यवतिष्ठते—**स्यात्तर्हीति** । वेदः, पौरुषेयः, वाक्यत्वात्; कालिदासादिवाक्यवत्, इत्यर्थः ॥ प्रत्यनुमानप्रतिरोधं शङ्कते—**नन्वपौरुषेय इति** ॥ अविच्छिन्नव्यवहारत्वे सत्यस्मर्यमाणकर्तृकत्वादित्यनुक्ते विच्छिन्नव्यवहारेषु जीर्णकूपादिषु व्यभिचारः स्यात्, तन्निरासार्थमाह—**अविच्छिन्नेति** ॥ पौरुषेयागमादिव्यावृत्त्यर्थम्—**"अस्मर्यमाणे"**ति विशेषणम् । व्यभिचारित्वान्नायं हेतुः साधुरित्याह—**न चिरेति** ॥ चिरवृत्तेष्विति विशेषणेन हेतोस्तत्र प्रवृत्तिं दर्शयति । साध्याभावमाह—**इदानीमिति** । विमतम्, सकर्तृकम्, सावयवत्वात्; संमतवदित्यर्थः ॥ कालात्ययापदिष्टश्च हेतुरित्याह—**वेदानामिति** ॥ भण्डादिप्रणीततयाऽर्थान्तरत्वं व्यावर्तयति—**विशिष्टेति** ॥ वैशिष्ट्यमुपपादयति—**बहुज्ञेति** ॥ ईश्वरप्रत्यक्षं व्यावर्तयितुम्—**"वाक्ये"**ति विशेषणम् । असर्वज्ञवाक्यप्रमाणव्यावृत्त्यर्थम्—**"बह्वर्थविषये"**त्युक्तम् । तःवत्युक्ते ईश्वरज्ञाने व्यभिचारः, तदर्थम्—**"वाक्ये"**ति । विप्रलम्भकवाक्यव्यावृत्त्यर्थम्—**"प्रमाणत्वादि"**ति । प्रत्यनुमानस्याभासत्वे पौरुषेयत्वानुमानं सुस्थमित्याह—**तस्मादिति** ॥ पौरुषेयत्वे प्रामाण्यानुपपत्तिबाधकतर्कपराहतत्वादप्रयोजको हेतुरित्याह—**अत्र पृच्छाम इति** । पौरुषेयस्योन्मत्तवाक्यस्य यथाऽप्रामाण्यम्, तद्वदस्यापीत्यर्थः ॥ तत्र विशेषं शङ्कते—**सर्वज्ञेति** ॥ सर्वज्ञेश्वर आनुमानिकः, उताऽऽगमिकः ? उभयथाऽप्यसंभव इत्याह—**न तावदित्यादिना** ॥ सर्वज्ञप्रणीततामन्तरेणापि प्रामाण्यस्याधिगन्तुं शक्यत्वान्न तदाश्रयत्वमिति शङ्कते—**स्यादेतदिति** ॥ किं कतिपयमहाजनपरिगृहीतत्वम् ? उत सर्वमहाजनपरिगृहीतत्वम् ? इति विकल्प्योभयथाप्यसंभव इत्याह—**न सुगतेति** ॥ आद्ये बौद्धागमे व्यभिचारः, द्वितीयेऽसिद्धिः बौद्धपरिगृहीतत्वादित्यर्थः ॥ सदाचारानुष्ठातारो महाजनाः, तत्परिगृहीतत्वं प्रामाण्यप्रयोजकमित्याशङ्क्याह—**नच देहेति** ॥ किञ्च महाजनपरिग्रहः किं प्रत्यक्षाद्यन्तर्भूतः ? उत बहिर्भूतः ? नाद्य इत्याह—**नचेति** ॥ अतिरिक्तप्रमाणानिरूपणाद् न द्वितीयोऽपीत्याह—**तस्मादिति** ॥

## ऋजुविवरणम्

स्थानान्तरमेव भवेदित्यर्थः ॥ **निर्विकल्पेति** । गृहीतेऽर्थे विवक्षया शब्दप्रयोगे वितज्ञानिश्चायकमूलापेक्षा, निर्विकल्पकपूर्वं तु विवक्षाऽभावाद् न सापेक्षतेति भावः ॥ कथमत्र निर्विकल्पकपूर्वत्वमिति ? तदाह—**स्वरूपेति** ॥ **उपलब्धेति** । रचनाया उपलब्धिपूर्वकत्वमूलप्रमाणानिश्चये न प्रामाण्यमिति भावः ॥ ननु न निर्विकल्पकपूर्वके 'घटोऽयमि'त्यादौ सापेक्षता; विवक्षया प्रयोगाभावात्, तद्वदत्रापि निर्विकल्पकपूर्वक इत्याशङ्क्याह—**अभिलषितसाधनोपराग इति** ॥

तार्किकाः प्रत्यवतिष्ठन्ते—**स्यात्तर्हीति** ॥ तान् प्रति मीमांसकश्चोदयति—**नन्वपौरुषेय इति** ॥ कथं चिरवृत्तेष्वनेकान्तिकत्वम् ? इत्याशङ्क्याह—**अनुमानप्रमीयमाणेति** ॥ **सुगताद्यनुसारिणामिति** । सुगतागमस्य महाजनपरिग्रहेऽपि न प्रामाण्यमिति भावः ॥ ननु यदाचारो वेदानुमापक उक्त आचाराधिकरणे—"के शिष्टा ये सदाचाराः" इति, तत्परिग्रहः प्रामाण्ये कारणमित्याशङ्क्याह—**नच देहात्मभावेति** ॥ ननु—देहात्मभावादिषु तेषामेव बाधान्न महाजनपरिगृहीतत्वमित्याशङ्क्याह—**नच महाजनेति** ॥ व्यभिचारित्वाद् ज्ञानस्वरूपे प्रामाण्ये वा न हेतुरिति भावः ॥

## पञ्चपादिकाविवरणम्

किञ्च पुरुषो वा केन प्रमाणेनोपलभ्य धर्माधर्मौ, वेदवाक्यं विरचयेत् ? न तावदिन्द्रियपञ्चकेन; रूपरस-गन्ध-स्पर्श-शब्द-तत्तत्समवेत-तद्विशेषग्राहित्वात्, वर्तमानग्रहणनियमाच्च, धर्मस्य च साध्यत्वात् । ननु आत्मसमवायी धर्मस्तद्ग्रहणेनैव ज्ञानेन तद्गुणतया मनसैव चक्षुरादिना वा गृह्यत इति, किमिति तर्हि तस्मिन् न गृह्णीमः ? नच विशिष्टः पुरुषो गृह्णाति; तदिन्द्रियाणामप्येतादृशत्वात्, योगजधर्मसामर्थ्याद्विशिष्टानि तदिन्द्रियाणीति चेत्, तथाऽपि मार्जारादिदृष्टिवत्स्वविषयेऽतिशयमात्रं गृह्णीयुः, नाविषयं धर्मम् । "दिव्यं चक्षुर्ददाम्यहम्" "प्रादात्तेषां स भगवान् दिव्यं चक्षुर्जनार्दनः" इति स्मरणादस्ति योगिनां दिव्यं चक्षुरिति चेत् न; तस्यापि विश्वरूपादिस्वविषयातिशयदर्शित्वात् । न चात्मसमवेततयाऽपि धर्मो वर्तमानो भवति, येन प्रत्यक्षः स्यात् । कल्पान्तरीयोऽनुष्ठितो धर्मोऽस्मिन् कल्पादौ वर्तत इति चेत्, न; कल्पान्तरीयधर्मोपदेशायोगात्ततोऽपि कल्पान्तरानुष्ठितधर्मं प्रत्यक्षेणोपलभ्योपदिशतीति चेत्, अन्धपरम्परा स्यात् । तस्मान्न प्रत्यक्षमूलो वेदः । नापि शब्दमूलः; अनवस्थानात् तस्मात्प्रामाण्यहानान्न पौरुषेयो वेद इति ॥

मा भूत् प्रामाण्यमिति सुगतार्हताः । तैरिदं वक्तव्यम्—प्रत्यक्षानुमानदृष्टव्यतिरिक्तः कर्मफलसंबन्धो

## तत्त्वदीपनम्

वेदस्य पौरुषेयत्वे मूलभूतं प्रमाणं वक्तव्यम्, नच तन्निरूपयितुं शक्यमित्याह—**किञ्चेति** । किं प्रत्यक्षं मूलम् ? उतान्यत् ? इति किंशब्दार्थः ॥ आद्येऽपि किं बाह्यं प्रत्यक्षम् ? उताऽऽन्तरम् ? नाद्य इत्याह—**न तावदिति** । चक्षू रूपं रूपवन्तं च यथा गृह्णाति, तद्वत् तत्समवेतं तद्विशेषणं समवायं च गृह्णाति; एवं रसनादिकं रसादीन् तत्समवेतान् विशेषणं च गृह्णातीत्यर्थः ॥ तत्रैव हेत्वन्तरमाह— **वर्तमानेति** ॥ ततः किमिति ? अत आह—**धर्मस्येति** ॥ द्रव्यग्राहकं चक्षुरादि यथा रूपादिकं च गृह्णाति, तद्वदात्मग्राहकं मनोऽपि तद्धर्मादिकं किमिति न गृह्णीयात् ? इति शङ्कते—**नन्वात्मेति** ॥ **चक्षुरादि चेति** दृष्टान्तनिर्देशः । चक्षुः-स्पर्शनाभ्यां द्रव्यग्राहकाभ्यां यथा तद्गुणग्रहणम्, तद्वदित्यर्थः ॥ किं मनोमात्रेण धर्मादिग्रहणम् ? उत विशिष्टेन ? इति विकल्प्याद्यं दूषयति—**किमिति** ॥ **तर्हीति** । "तस्मिन्नि"ति पाठे मनसि सतीत्यर्थः ॥ द्वितीयं निरस्यति—**नचेति** ॥ एतादृशत्वादिति । अस्मदिन्द्रियसदृशत्वादित्यर्थः । यद्यपि मन एवात्र निराचिकीर्षितम्; तथाऽपि चक्षुरादिना समानयोक्षेमं दर्शयितुमितरनिरसनमित्यर्थः ॥ सदृशत्वमसिद्धमिति शङ्कते—**योगजेति** ॥ वैशिष्ट्यमङ्गीकृत्य धर्मग्राहित्वं निरस्यति—**तथाऽपीति** ॥ **अतिशयमात्रमिति** । दूरदेशवर्तित्वमित्यर्थः ॥ चक्षुषि दिव्यशब्दप्रयोगानुपपत्त्याऽविषयाग्रहित्वं योगिचक्षुषो निश्चीयत इति शङ्कते—**दिव्यमिति** ॥ अस्मच्चक्षुषः कतिपयरूपग्राहित्वम्, इतरस्य निखिलरूपावभासकत्वमिति दिव्यशब्दप्रयोगो घटत इत्याह—**न तस्यापीति** ॥ रूपवदादिशब्दार्थः ॥ किञ्च किमिन्द्रियस्य सकलधर्मग्राहित्वम् ? उत वर्तमानग्राहित्वम् ? इति विकल्प्याद्यं निरस्यति—**नचेति** । भविष्यद्धर्मस्य न वर्तमानस्यापि चक्षुर्ग्राह्यत्वमित्यर्थः ॥ द्वितीयमुत्थापयति—**कल्पान्तरीय इति** ॥ त्वन्मते सर्वानुष्ठानमेव दुर्लभमित्याह—**न कल्पान्तरीयेति** । पूर्वस्मिन् कल्पे धर्मोपदेशे सत्यनुष्ठानम्, अनुष्ठितस्य प्रत्यक्षम् । नचोपदेशसंभवः, तदा धर्माभावेन प्रत्यक्षायोगादुपदेशानुपपत्तेरित्यर्थः ॥ ननु परम्पराया अनादित्वात् प्राक् सञ्चितमुपलभ्योपदिशतीति शङ्कते—**ततोऽपीति** ॥ अप्रामाणिकत्वान्नेयं कल्पना शोभत इत्याह—**अन्धेति** ॥ पक्षान्तरं निरस्यति—**नापीति** । धर्मादिग्राहकशब्दप्रामाण्यसिद्धौ तेनार्थमुपलभ्यत शब्दान्तरं रचयतीति युज्यते, तदेवानुपपन्नम्; तन्मूलप्रमाणान्तराभावेन शब्दप्रामाण्यासिद्धेः । नच तत्रापि शब्दान्तरत्वम्; अनवस्थितेः । नचानवस्थितिरास्थातव्या; तस्यां प्रामाण्यशून्यत्वादित्यर्थः ॥ अप्रयोजकत्वसमर्थनमुपसंहरति—**तस्मादिति** ॥

वेदाप्रामाण्यप्रसञ्जनं नानिष्टमिति शङ्कते—**मा भूदिति** ॥ शब्दाप्रामाण्ये कर्मणामामुष्मिकफलसाधनत्वप्रतिपत्तिर्न स्यादित्यभिप्रेत्य विकल्पयति—**तैरिति** । प्रत्यक्षानुमानाभ्यां दृष्टो यः कर्मणामैहिकफलसंबन्धःततोऽतिरिक्त

## ऋजुविवरणम्

ननु तादृशो महाजनपरिग्रहस्य प्रामाण्यहेतुत्वाभावेऽपि, यत्र महाजनपरिग्रहः, तत्र प्रामाण्यमिति नियमादनुमापकत्वमित्याशङ्क्य, बाधितविषयत्वं दर्शयति—**किञ्चेति** ॥ किञ्चावर्तमानत्वादप्रत्यक्षत्वम् । नचात्मधर्मतयाऽपि वर्तमानत्वमित्याशङ्क्याह—**नचात्मसमवेततयेति** ॥

## पञ्चपादिकाविवरणम्

विद्यते ? नवेति ? विद्यते चेत् कथमपौरुषेयागममन्तरेण तस्य सिद्धिः ? सर्वज्ञसुगतप्रणीतागमादिति चेत्, किं कपिलादयः सर्वज्ञा न भवन्ति ? सर्वे तीर्थंकराः सर्वज्ञा इति चेत्, धर्माधर्मयोर्विवादः कथं स्यात् ? नचैकः सर्वज्ञो नेतर इति प्रमाणमस्ति। नच सर्वे सर्वज्ञप्रणीता धर्मा एवेति युक्तम्; अन्योन्यधर्मनिराकरणात्। नचापौरुषेया एव सुगताद्यागमा इति युक्तम्; अनुस्मर्यमाणकर्तृकत्वात्। अपौरुषेयत्वे च न विवदामः—उदितानुदितहोमवद् व्यवस्थोपपत्तेः॥

आह लोकायतः—मा भूत् प्रत्यक्षदृष्टातिरिक्तः कर्मफलसंबन्धः, पौरुषेयता तु वेदस्यानुमानसिद्धा न निवार्यत इति। स वक्तव्यः—किं लौकिकवचांसि प्रमाणानि ? न वेति ? न चेत् न मया ते वादो युक्तः; शब्दैरेव परस्परविरुद्धार्थप्रतिपादनरूपत्वाद्वादस्य। अथ लौकिकवचांसि प्रमाणानि, वेदवचोभिस्तर्हि किमपराद्धम् ? ननु पौरुषेयत्वं वेदस्यानुमानात् तस्य च मूलप्रमाणाभावादप्रामाण्यमुक्तम्, न; स्वाभाविकत्वात्शब्दानामर्थावबोधसामर्थ्यस्य पुरुषप्रत्ययानुसारित्वाभावात्, अन्यथा सागरं विवक्षन्मेरुशब्दं ब्रूयात्, स्वभावसिद्धशब्दसामर्थ्यानुसारेण हि लौकिकाः शब्दं प्रयुञ्जते, सत्यम्;

## तत्त्वदीपनम्

इत्यर्थः॥ आद्येऽपि किमस्मत्समंतादागमात्तत्सिद्धिः? उत त्वत्संमतात् ? नाद्य; तत्प्रामाण्य एव विवादात्, इतरथाऽसिद्धिरित्यभिप्रायेणाह—**विद्यते चेति**॥ द्वितीयमनुवदति—**सर्वज्ञेति**॥ पौरुषेयागमानां परस्परविरुद्धार्थत्वादप्रामाण्यमित्यभिप्रेत्याह—**किं कपिलादय इति**। सुगतवत्कपिल-कणभुगादयोऽपि सर्वज्ञाः ? आहो सुगत एव सर्वज्ञः ? इति **किंशब्दार्थः**॥ आद्यमनुवदति—**सर्व इति**॥ सर्वेषां सर्वज्ञत्वात् तदागमानामपि प्रामाण्यम् तथा च तत्प्रतिपादितानां सर्वेषामपि धर्मत्वान्न विप्रतिपत्तिः स्यादित्याह—**धर्माधर्मयोरिति**॥ द्वितीयं दूषयति—**नचेति**॥ मन्वत्रि-पराशरवत्कपिलादीनामपि प्रामाण्यम्, ततश्च तदुक्तः सर्वोऽपि धर्म एव। नच विवादानुपपत्तिः; उदितानुदितहोमवद्विवादसंभवादित्याशङ्क्याह—**नचेति**। "उदिते जुहोती"त्यादेर्विप्रतिपत्तावप्यनपेक्षतया प्रामाण्याच्छाखाभेदेन व्यवस्था घटते, नच तथाऽत्रेति वैषम्यादित्यर्थः॥ सुगताद्यागमानामप्यपौरुषयतया प्रामाण्याद् व्यवस्थितविषयत्वमिति स्व-परपक्षविभागप्रतिपत्त्यकुशलस्य शङ्कां प्रत्याह—**नचेति**॥ अनादित्वेऽपि काठकं तैत्तिरीयकमिति कठादिप्रोक्ततया कर्तृस्मरणवत् स्मरणमुचितमित्याशङ्क्याह—**अपौरुषेयत्व इति**॥ **"न विवदाम"** इत्यत्र प्रामाण्यं प्रतीति शेषः। विरुद्धार्थानां कथं प्रामाण्यम् ? इति शङ्कां निरस्यति—**उदितेति**। अधिकारिभेदेनात्रापि व्यवस्थोपपत्तेरित्यर्थः। एतच्च प्रौढचवलम्बेनोक्तमिति द्रष्टव्यम्॥

आमुष्मिकफलसाधनधर्माभावाद् न तत्प्रतिपत्त्यर्थं शब्दप्रामाण्यमेष्टव्यमिति शङ्कते—**आह लोकायत इति**॥ ननु—अतिरिक्तः कर्मफलसंबन्धः कथं निरस्यते ? "स्वर्गकामो यजेते"त्यादिना तत्प्रतिपत्तेरित्याशङ्क्याह—**पौरुषेयतेति**। पौरुषेयवेदप्रामाण्यस्य मूलप्रमाणं विनाऽनुपपत्तेः नचापौरुषेयत्वअनुमानस्य कपिलादिमते प्रमाणतया ततः पौरुषेयत्वसिद्धेः। तथाच न प्रत्यक्षाद्युपलब्धादतिरिक्तकर्मफलसंबन्ध इत्यर्थः॥ लौकिकवचोवद् वैदिकवचसामपि प्रमाणत्वात्कर्मफलसंबन्धसिद्धिरिति प्रतिपादयितुं लौकिकं वचो निरूपयति—**स वक्तव्य इति**॥ शब्दानामर्थानवबोधकत्वे परप्रयुक्तशब्देभ्योऽर्थप्रतिपत्त्यनुपपत्तेर्न वादाधिकार इत्यन्तं दूषयति—**न चेदिति**॥ आद्यमनुवदति—**अथेति**॥ अबाधितानधिगतासंदिग्धबोधजनकत्वाद् वेदप्रामाण्यमेष्टव्यमित्याह—**वेदवचोभिरिति**॥ मूलभूतप्रमाणाभावाद् वेदस्याप्रामाण्यमित्युक्तमनुवदति—**ननु अपौरुषेयत्व इति**॥ किं शब्दस्य कार्यत्वमात्रं पौरुषेयत्वम् ? उत शब्दसंबन्धस्य साङ्केतिकत्वम् ? इति विकल्प्याऽऽद्ये सिद्धसाध्यतेत्यभिप्रेत्य द्वितीयं दूषयति—**न स्वाभाविकत्वादिति**॥ विपक्षे दण्डमाह—**अर्थेति**॥ अर्थान्तरप्रसिद्धस्यापि गङ्गाशब्दस्यार्थान्तरविवक्षया गङ्गाशब्दप्रयोगो दृष्ट इत्यत्राह—**स्वभावसिद्धेति**। गङ्गाशब्दस्य प्रवाहज्ञानजननसामर्थ्यमनतिक्रम्य लक्षणया गङ्गाशब्दस्तीरे प्रवर्तते, तेन न वाचकतयेत्यर्थः॥ शब्दार्थसंबन्धस्य सर्गादावीश्वरेण सङ्केतितत्वात्तदनुरोधेनास्माभिर्व्यवह्रियत इति शङ्कते—**सत्यमिति**। **"सत्यमि"**त्यन्न शब्दानामस्मदभिप्रायाननुसारित्व-

## ऋजुविवरणम्

**किं कपिलादय इति**। येन हेतुना कपिलादीनां सर्वज्ञत्वनिराकरणम्, तेनैव बुद्धादेरपि सर्वज्ञत्वं निराकर्तुं शक्यत इति भावः॥ **ननु न विवादः**; यत उदितानुदितहोमवत्प्रमाणत्वेनाप्युपपद्यते, अतः सर्वे सर्वज्ञप्रणीता इत्याशङ्क्याह—**नच सर्व इति**॥ **ननु**—कर्तृस्मरणं पाठकवत्प्रवचनेन परिहार्यमित्याशङ्क्याह—**अपौरुषेयत्वे चेति**॥

## पञ्चपादिका

**न स्यात्; ब्रह्मवदनादित्वात् ।**

## पञ्चपादिकाविवरणम्

कदाचिदसर्वाभिधानसङ्केतसामर्थ्यात् । इदानीं व्यवस्थयाऽभिधानमिति चेत्, तन्न; विवादगोचरापन्नः पूर्वतनशब्दार्थसंबन्धव्यवहारः, तथाविधपूर्वपूर्वव्यवहारपरम्परानिबन्धनः; अभिधानाभिधेयव्यवहारत्वात्; इदानीन्तनतद्व्यवहारवत् इत्यनादितानुमानात् । साङ्केतिकशब्देष्वनैकान्तिक इति चेत् न; अभिधानाभिधेयविषयत्वादनुमानस्य । जातिमात्राभिधायिनो वा सर्वदेशेष्वभिधानतया संप्रतिपन्ना वा यस्मिन्नुत्पद्यमाने क्वचिद् गृहीतसंबन्धा एवोपरज्यन्ते शब्दाः, तानि चाभिधानानि, नैवं साङ्केतिकाः शब्दा इति । मा भूतृतर्ह्यभिधानसङ्केतः, वेदवाक्यरचना तु पुरुषनिबन्धनैवेत्यत आह—**न स्याद् ब्रह्मवदनादित्वादिति** ।। विवादगोचरापन्नं सृष्टिकालीनं वेदाध्ययनम्, पूर्वपूर्वतथाविधवेदाध्ययनानुस्मृतिनिबन्धनं भवितुमर्हति, वेदाध्ययनत्वात्, इदानीन्तनवेदाध्ययनवदिति विशेषतोदृष्टानुमानेन वाक्यत्वाद्भारतवदिति सामान्यतोदर्शनाद् बलीयसा वेदस्यानादित्वसिद्धेः कुतः पौरुषेयता ? ननु सर्वेष्वपि ग्रन्थेष्विदमनादित्वानुमानमनुविशति, न; तैरेव ग्रन्थैस्तत्तत्कर्तृणां प्रतिपादनात्तदागमविरोधात्, इहापि श्रुत्यैव वेदस्य कर्ता प्रतिपाद्यत इति चेत्; न तावत् "स तया वाचेदं सर्वमसृजत ऋचो यजूंषि सामानि"ति श्रुतिः प्रजापतिविषया सती तस्यः प्रमाणान्तरेणार्थमुपलभ्य शब्दरचनां ब्रवीति; "यो ब्रह्माणं विदधाति पूर्वं यो वेदांश्च प्रहिणोति तस्मै" इति श्रुतौ प्रागेव वेदसद्भावावगमात् । "अस्य महतो भूतस्ये"ति श्रुतिरीश्वरविषयाऽपि सती प्रकरणसामर्थ्याद्वेदोपादानत्वमेव ब्रवीति ।।

## तत्त्वदीपनम्

मङ्गीकृतमिति द्रष्टव्यम् ।। सङ्केतितत्वमसिद्धमित्याह—**तन्नेति** ।। इदानीन्तनव्यवहारे सिद्धसाध्यत्वं निराकर्तुं विशिनष्टि—**विवादेति** । सर्गकालीन इत्यर्थः ।। **व्यवहारपरम्परानिबन्धन इति** । प्राक्सिद्धसंबन्धानुस्मृतिनिमित्तपूर्वव्यवहारस्मृतिनिबन्धन इत्यर्थः ।। कल्पान्तरीयस्वव्यापारे व्यभिचारमाशङ्क्य पक्षतुल्यत्वान्मैवमित्याह—**इत्यनादितेति** ।। साङ्केतिकशब्देषु हेतोरेवाभावान्न व्यभिचार इत्याह—**नाभिधानेति** ।। अभिधाऽभिधेयशब्देन किं विवक्षितमित्याह—**जातिमात्रेति** ।। आकाशादिशब्दानामभिधानत्वसिद्ध्यर्थं लक्षणान्तरमाह—**सर्वदेशेष्विति** ।। लक्षणान्तरमाह—**यस्मिन्नुत्पद्यमान इति** । पृथक्पृथक् प्रयोगस्य विवक्षितत्वान्न भागासिद्धिशङ्केत्यर्थः ।। शब्दार्थसबन्धस्य स्वाभाविकत्वेऽपि वाक्यस्योपलभ्य विरचितत्वमेष्टव्यम्, कालिदासादिवाक्यवदिति शङ्कते—**मा भूत्तर्हीति** ।। प्रतिज्ञामात्रेणार्थासिद्धिशङ्कायामाह—**विवादेति** । उक्तमेव स्पष्टयति—**सृष्टिकालीनमिति** ।। **विवादगोचरापन्नमध्ययनं पूर्वाध्ययनानुस्मृतिनिबन्धनमित्येतावत्साध्यत्वेन** विवक्षितम्; इतरत् स्पष्टीकरणार्थम् । भारताध्ययने बाधव्यावृत्त्यर्थम्—**"विवादे"**ति विशेषणम् । कल्पान्तरीयवेदाध्ययनस्य पुरुषकृतत्वं व्यावर्तयितुम्—**पूर्वेति** ।। भारताध्ययने व्यभिचारं व्यावर्तयति—**वेदेति** ।। असिद्धिं निराकर्तुम्—**"अध्ययनत्वादि"**त्युक्तम् ।। वेदः, पौरुषेयः, वाक्यत्वात्; भारतवदित्यनुमानाद् वेदस्य कार्यत्वमित्याशङ्क्याह—**इति विशेषेति** ।। अतिप्रसङ्गलक्षणबाधकपराहतिं शङ्कते—**ननु सर्वेष्विति** । भारताध्ययनम्, गुर्वध्ययनपूर्वकम्, अध्ययनत्वात्, संमतवत्, इत्यनुमानाद् भारतादेरप्यपौरुषेयत्वप्रसक्तिरित्यर्थः ।। कर्तृप्रतिपादकवचनविरुद्धत्वान्नायं प्रसङ्गः साधुरित्याह—**तैरेवेति** । **तदागमविरोधादिति** । कर्तृप्रतिपादकागमविरोधादित्यर्थः ।। कर्तृप्रतीतिविरोधोऽत्रापि तुल्य इत्याह—**इहापीति** ।। किं हिरण्यगर्भकर्तृकसृष्टिश्रुत्या विरोधः ? उतेश्वरसृष्टिश्रुत्या ? नाद्य इत्याह—**न तावदिति** ।। **तयेति** । "तन्नाम अकरोदि"त्यनया वाचा इत्यर्थः ।। हेतुमाह—**यो ब्रह्माणमिति** ।। **प्रागेवेति** ।। प्रजापतिसृष्टेः पुरेत्यर्थः । सिद्धस्य प्रदानसंभवात् प्रजापत्युत्पत्तेः प्राक् तत्सिद्धिरित्यर्थः ।। द्वितीयं दूषयति—**अस्येति** ।। **प्रकरणसामर्थ्यादिति** । कार्यमात्रप्रकरणबलादित्यर्थः । उपलभ्य रचितत्वव्यावृत्तिरवधारणार्थः ।।

वेदस्य ब्रह्मकार्यत्वे पौरुषेयत्वं त्वयाऽप्याश्रितं स्यादित्याशङ्क्याह—**किंचेति** । किं पुरुषनिर्वर्तितत्वमात्रं पौरुषेयत्वम् ? उत विसदृशोत्पद्यमानक्रमत्वम् ? आहो स्वार्थप्रवृत्तप्रमाणान्तरजन्यत्वम् ? इति किं शब्दार्थः आद्यं

## ऋजुविवरणम्

ननु—ब्रह्मोपादानत्वमपौरुषेयत्वं च विरुद्धमित्याशङ्क्याह—**किञ्चेदमिति** ।। कथमपौरुषेयत्ववादिना वेदस्य

## पञ्चपादिकाविवरणम्

किं चेदं पौरुषेयत्वं साध्यते ? यदि तावत् पुरुषनिर्वर्त्यतामात्रम्, संप्रतिपन्नमेव; तत्तत्क्रमविशिष्टानामेव वर्णानां वेदशब्दाभिधेयत्वात् क्रमस्य तूच्चारणोपलब्ध्योरन्यतरस्य प्रतिक्षणनिर्वर्त्यतया तद्विशिष्टवर्णानामपि प्रत्युच्चारणं जन्यत्वात् पूर्वपूर्वक्रमानुस्मरणेन तत्सदृशोत्तरोत्तरक्रमनिर्वर्तनात्, क्रमसादृश्यपरम्परायाश्चानिदंप्रथमतया तद्विशिष्टवर्णनित्यत्वाभिधानात्। अथ वेदः स्वार्थप्रवृत्तप्रमाणान्तरजन्यत्वात्पौरुषेय इति, तत्र प्रत्यनुमानमुच्यते—वेदाः, स्वार्थप्रवृत्तप्रमाणान्तरजन्यो न भवति, असर्वज्ञवचनत्वाभावे सति धर्माधर्मब्रह्मप्रमाणत्वात्; परपरिकल्पितेश्वरबुद्धिवदिति। अथ अध्ययनस्येदंप्रथमता वेदस्य पौरुषेयतेति, न; अध्ययनस्यानादित्वानुमानस्य दर्शितत्वात्। तस्मान्नास्ति वेदस्य पौरुषेयत्वमिति ॥

ननु—आप्तेन प्रमाणान्तरेणार्थमुपलभ्य परप्रतिपत्तये तत्र प्रयुज्यमानः शब्दः प्रमाणं भवति, तदभावादनाप्तवाक्यवदप्रमाणं वेदः प्रसज्यते, ननु—अनाप्तेन भ्रान्त्योत्प्रेक्षया वाऽर्थाभासमुपगम्य परप्रवृत्तये तत्र प्रयुज्यमानः शब्दः प्रामाण्यात्परिहीयते, तदभावादाप्तवाक्यवद्वेदः प्रमाणं किं न स्यात् ? ननु आप्तवाक्यमनाप्तप्रणीतत्वाभावात्प्रमाणम् ? किं वाऽऽप्तप्रणीतत्वात् ? इति विवेक्तव्यम्, नोभयथाऽपीति ब्रूमः। कथम् ? शब्दानां तावत्संसृष्टार्थावबोधनसामर्थ्यं स्वार-

## तत्त्वदीपनम्

दूषयति—**यदि तावदिति** ॥ न केवलमस्माकमेव सम्प्रतिपत्तिः, अपि त्वितरेषामपीत्याह—**क्रमविशिष्टानामपीति**। तथाऽपि कथमनित्यत्वमिति ? तत्राह—**क्रमस्येति** ॥ **उच्चारणेति**। अध्यापकाध्येतृसमवेतयोरित्यर्थः ॥ द्वितीयं दूषयति—**पूर्वेति** । विमतो वेदक्रमः, तथाविधानुस्मृतिनिबन्धनः, वेदक्रमत्वात्; संमतवत्, इत्यनुमानात्पूर्वक्रमसदृशक्रमोदय इत्यर्थः ॥ तर्हि कथं वेदनित्यत्वगीः ? तत्राह—**क्रमसदृशेति** ॥ तृतीयमुत्थापयति—**अथेति**। नच हेतोः साध्याविशिष्टत्वम्; लक्षणलक्ष्यरूपत्वादित्यर्थः ॥ जन्यो न भवतीत्युक्ते बाधः, तदर्थम्—**"प्रमाणान्तरे"**ति। अन्यविषयप्रमाणाजन्यत्वस्य सिद्धतया सिद्धसाध्यत्वं व्यावर्तयति—**स्वार्थेति**। असर्वज्ञवचनत्वानधिकरणत्वे सति धर्माधर्म-ब्रह्मान्यतमप्रमाणत्वादित्यर्थः ॥ नदीतीरफलसत्तावाक्यव्यावृत्त्यर्थम्—**"धर्माधर्मब्रह्मे"**ति विशेषणम्। मन्वादिवचनव्यावृत्त्यर्थम्—**"असर्वज्ञे"**ति। स्मृतिं व्यावर्तयति—**"प्रमाणत्वादि"**ति। भागासिद्धिनिरासार्थम्—**"धर्माधर्मे"**ति विशेषणम् ॥ भारताध्ययनस्येदंप्रथमत्वे वेदस्य पौरुषेयत्वमिति शङ्कते—**अथेति** ॥ अध्ययनानादित्वसाधकामुमानविरोधान्नैवमित्याह—**नाध्ययनस्येति** ॥ **दर्शितत्वादिति**। "विवादगोचरापन्नमि"त्यत्र दर्शितत्वादित्यर्थः ॥

वेदवचनमाप्तप्रणीतम्; इतरथाऽप्रमाणत्वप्रसङ्गादुन्मत्तवाक्यवदित्याशयेन शङ्कते—**नन्वाप्तेनेति** ॥ अनाप्तवाक्याप्रामाण्ये भ्रान्त्यादिमूलत्वं प्रयोजकम्, तदभावाद् वेदस्य प्रामाण्यमित्याह—**नन्वनाप्तेनेति** ॥ संदिग्धाप्रयोजको हेतुरिति शङ्कते—**नन्वाप्तवाक्यमिति** ॥ प्रमाणत्वेन संमते वचसि भ्रान्त्याद्यमूलत्वमाप्तवाक्यत्वं च विद्यते, तत् कस्य प्रामाण्यप्रयोजकत्वम् ? इति न ज्ञायत इत्यर्थः ॥ अन्यदेव प्रयोजकमित्याह—**नोभयथापीति** । आप्तप्रणीतत्वेनानाप्ताप्रणीतत्वेन च प्रामाण्यमित्यर्थः ॥ उभयोरपि प्रामाण्यान्वय-व्यतिरेकवत्त्वात् कथं प्रयोजकत्वनिषेधः ? इति शङ्कते—**कथमिति** ॥ उक्तान्वय-व्यतिरेकयोरन्यथासिद्धत्वान्न ताभ्यां प्रयोजकत्वनिश्चय इत्याह—**शब्दानामिति** । शब्दानां संसृष्टार्थप्रबोधन-

## ऋजुविवरणम्

निर्वर्त्यत्वमङ्गीक्रियते, इत्याशङ्क्य, सर्वापौरुषेयत्ववादिनामिदं समानमित्याह—**संप्रतिपन्नमिति** ॥ ननु—वर्णा वेदशब्दभाजः, ते च नित्या एव, कथं संप्रतिपत्तिरित्याशङ्क्याह—**तत्तत्क्रमविशिष्टानामिति** ॥ क्रमविशिष्टानामेव नित्यत्वमस्त्वित्याशङ्क्याह—**क्रमस्य त्विति** ॥ तर्हि क्रमस्य पौरुषेयतेत्याशङ्क्याह—**पूर्वपूर्वेति** ॥ वेदस्य नित्यत्वमभिधीयत इति, तदाह—**क्रमसादृश्येति** ॥

**नन्वाप्तेनेति**। अयं प्रयोगः—वेदो धर्मी, अप्रमाणमिति साध्यो धर्मः, आप्तेनाप्रणीतत्वात्; अनाप्तवाक्यवत्। **नन्वनाप्तेनेति** तत्र प्रत्यनुमानमुच्यते—वेदः, प्रमाणं भवितुमर्हति, अनाप्तेनाप्रणीतत्वात्, आप्तवाक्यवदिति ॥ **नन्वाप्तवाक्यमिति**। अयं भावः—आप्तप्रणीतत्वनिश्चयेनैव लोके प्रामाण्यनिश्चयदर्शनाद् वेदे तदभावादप्रमाणत्वमिति ॥ ननु—आप्तप्रणीतत्वस्यानाप्तेनाप्रणीतत्वस्य च प्रामाण्येनान्वय-व्यतिरेके सति कथं तदहेतुत्वम् ? इत्याक्षिपति—**कथमिति** ॥ **शब्दानां तावदिति** । अयं भावः—अनाप्तेनाप्रणीतत्वस्यान्वयव्यतिरेकेण प्रतिबन्धकाभावविषयतयाऽन्यथासिद्धावाप्त-

## पञ्चपादिकाविवरणम्

सिकमेव मध्यमवृद्धप्रयोग-प्रत्ययाभ्यामाप्तानाप्तप्रत्ययव्यतिरेकेणावगतम्। तत्रानाप्तस्य भ्रान्त्युत्प्रेक्षाज्ञाने तन्मूलविरचित-शब्दकारणदोषतया शब्देऽपि दोषं प्रसञ्जयतः। ततश्च दुष्टकारणजन्यविज्ञानमयथार्थमप्रमाणम्, इति स्वतःसिद्धशब्द-सामर्थ्यप्रयुक्तप्रामाण्यस्य प्रतिबन्धकतयाऽनाप्तज्ञानमवतिष्ठते। आप्तप्रमाणं च प्रतिबन्धभ्रान्त्युत्प्रेक्षादिदोषनिरासितया संपद्यते। ततश्चाप्तत्वज्ञानं न शब्दप्रामाण्यहेतुः, वेदे तु पुरुषसंबन्धाभावान्न प्रतिबन्ध-तन्निरासापेक्षा, इति नाप्तप्रणीत-त्वमत्रोपयुज्यते। ननु—आप्तप्रयोगानपेक्षत्वेऽग्नि-पर्वत-तत्सम्बन्ध-शब्देषु स्मर्यमाणेषु तेभ्य एवाग्निमान्पर्वत इति प्रमिति-रुत्पद्येत, सत्यम्; पर्वतस्याग्निमत्तामात्रं प्रमीयत एव, पुरोवर्तिनि तु प्रमाणान्तरविरोधान्न प्रमीयत इति। अथवा—द्विविधः प्रयोगः प्रामाण्यहेतुः,—अर्थोपलब्धिनिबन्धनः पौरुषेये, पूर्वप्रयोगानुस्मृतिनिमित्तो वेदे, तदुभयाभावात्सुप्तादिवाक्येष्विवा-प्रामाण्यमिति। अथवा—तात्पर्याभावात् केवलेभ्यः शब्देभ्यो नार्थप्रमितिः, वेदे पुनरध्ययनविधितात्पर्यादाप्तप्रयोगा-भावेऽपि प्रमितिरुत्पद्यते; अध्ययनविधिवाक्यस्यापि स्वेनैव तात्पर्यसिद्धेः। अतोऽनादिर्वेद इति। अनादित्वेऽपि पुराणवाक्य-

## तत्त्वदीपनम्

सामर्थ्यं स्वारसिकमवगतमिति संबन्धः॥ अवगमोपायमाह—**मध्यमवृद्धेति**। मध्यमवृद्धसंबन्धित्वेन यौ प्रयोग-प्रत्ययौ, ताभ्यामित्यर्थः। मध्यमनरप्रवृत्तिलिङ्गेन तस्यार्थप्रत्ययमनुमाय तस्य हेत्वाकाङ्क्षायां शब्दप्रयोगान्वय-व्यतिरेकाभ्यां शब्दस्य तत्र हेतुत्वं निश्चीयते, न त्वाप्तप्रत्ययस्य भ्रान्त्याद्यमूलत्वस्य वा निश्चायकत्वमधिगतमित्यर्थः॥ **आप्तानाप्तप्रत्यय-व्यतिरेकेणेति**। आप्तानाप्तयोर्यः प्रत्ययः प्रयोगहेतुः, तं विनेति विग्रहः। आप्तप्रत्ययस्य मूलत्वेन शब्दप्रमितिहेतुत्वम्; इतरथा नेत्येतन्नावगतं व्युत्पत्त्यवस्थायामित्यर्थः॥ का तर्ह्यन्वयव्यतिरेकयोर्गतिः? इत्याशङ्क्यानाप्तप्रत्ययमूलत्वस्य प्रामाण्यप्रतिबन्धकत्वात् तदभावविषयत्वेनान्वय-व्यतिरेकयोरन्यथासिद्धिमाह—**तत्रेति**। अनाप्तस्य भ्रान्त्युत्प्रेक्षाज्ञाने शब्देऽपि दोषं प्रसञ्जयत इति संबन्धः॥ तत्र हेतुमाह—**तन्मूलेति**। शब्दस्य कारणं यः प्रयोक्ता, तद्गतदोषत्वादित्यर्थः॥ अथवा दोषप्रसञ्जनहेतुमाह—**कारणदोषतयेति**॥ कारणत्वमाह—**तन्मूलेति**॥ ते एव मूलं तन्मूलम्, तेन विरचितः शब्दो यस्यानाप्तस्य, स तथोक्तः। फलितमाह—**ततश्चेति**॥ अप्रामाण्यस्य पुरुषदोषाधीनत्वे प्रामाण्यं गुणाधीनं स्यादित्या-शङ्क्य, प्रतिबन्धनिरासितया गुणस्यान्यथासिद्धिमाह—**आप्तत्वज्ञानमिति**॥ अन्यथासिद्धिप्रतिपादनफलमाह—**ततश्चेति**॥ प्रतिबन्धनिरासितया वक्तृज्ञानं प्रमितावुपयुज्यते चेत्, तर्हि वेदेऽपि तदेष्टव्यं प्रतिबन्धनिरासायेत्याशङ्क्याह—**वेदे त्विति**॥ प्रकारान्तरेणाप्तप्रणीतत्वस्य प्रमितिहेतुत्वं शङ्कते—**नन्वाप्तेति**। प्रमितिजननायेति शेषः॥ संबन्धशब्देना-'ग्निमानि'त्यत्र मतुबुच्यते। अनुपलब्धशब्दानां प्रमितिहेतुत्वाभावादुपलब्धत्वं वाच्यमित्याह—**स्मर्यमाणेष्विति**॥ किमग्निसत्तामात्रप्रतीतिरापाद्यते? उत पुरोवर्तिनी? इति विकल्प्याद्यमङ्गीकरोति—**सत्यमिति**॥ अङ्गीकृतमेवांश-माह—**पर्वतस्येति**॥ द्वितीयं दूषयति—**पुरोवर्तिनीति**॥ प्रतिबन्धानिवर्तकत्वेन प्रयोगस्यान्यथासिद्धिमभिधाय तात्पर्य-लक्षणप्रामाण्यजनकतया चान्यथासिद्धिमाह—**अथवेति**॥ द्वैविध्यमाह—**अथवेति**॥ हेतुमाह—**तदुभयेति**॥ अथवा—वेदस्य नित्यत्वे सुषुप्तिप्रलयादिषु कथं प्रामाण्यम्? इति शङ्कायामाह—**तदुभयेति**। उपलब्ध्यनुस्मृतिनिमित्तयोः प्रयोग-योरभावादित्यर्थः। प्रामाण्यस्य जन्यत्वमाश्रित्यैतदुक्तमिति द्रष्टव्यम्॥ प्रलय-मूर्च्छादिरादिशब्दार्थः॥ तात्पर्यस्य जन्य-त्वमाश्रित्य मतान्तरमाह—**अथवेति**। आप्तज्ञानेनाव्यवधानेन ज्ञायमानतात्पर्योपेतशब्दस्यार्थप्रमितिहेतुत्वं दृष्टम्, ततश्च तादृशतात्पर्याभावादनाप्तवाक्येभ्यो नार्थप्रमितिरित्यर्थः॥ कथं तर्हि वेदे प्रमितिः? तत्राह—**वेद इति**। **अध्ययनविधि-तात्पर्यादिति**। अध्ययनविधिज्ञापितस्वाभाविकतात्पर्यादित्यर्थः॥ वैदिकविधिशब्दानां तात्पर्यमध्ययनविधिनिबन्धनं चेत्, तर्हि विधितात्पर्यं किंनिबन्धनम्? इति विवेक्तव्यम्—किं स्वनिबन्धनम्? उतान्यनिबन्धनमिति? आद्ये आत्माश्रयता, द्वितीयेऽनवस्था, इत्याशङ्क्याह—**अध्ययनविधीति**। नचात्माश्रयत्वम्; शब्द इत्ययं शब्दो यथा स्वातिरिक्तान् शब्दानभिद-धदात्मानमप्यभिदधाति, तद्वदित्यर्थः। वर्णनित्यत्वमङ्गीकृत्य क्रमविशिष्टवर्णात्मकवेदस्य कल्पान्तरेऽन्यथाप्रणयनमाशङ्कते—

## ऋजुविवरणम्

प्रणीतत्वस्य चान्वय-व्यतिरेकौ प्रामाण्यप्रतिबन्धनिरासितयाऽन्यथासिद्धाविति। तदुक्तम्—"अप्रामाण्यनिवृत्त्यर्थं दोषा-भावोपवर्णनम्।" इति॥ वेदेऽपि तर्ह्याप्तप्रणीतत्वं प्रतिबन्धनिरासायोपयुज्यतामिति, नेत्याह—**वेदे त्विति**॥ ननु अध्ययनविधिविषयेऽन्यतात्पर्याभावादप्रामाण्यमिति, नेत्याह—**अध्ययनविधीति**॥

### पञ्चपादिका

**कूटस्थनित्यत्वाच्च ॥ कथं पुनस्ततो जन्म ? तत्परतन्त्रत्वात्, रज्जुसर्पवत् । तथाच श्रुतिः—"निःश्वसितमेतदि"ति । यथाऽपेक्षारहितैव लोके निःश्वासप्रवृत्तिः, तथास्यापीति न सापेक्षतादोषः ॥**

### पञ्चपादिकाविवरणम्

वदन्यथासन्निवेशप्रणयनमाशङ्क्याह—**कूटस्थनित्यत्वादिति** ॥

अनादेर्वेदस्य कथं ब्रह्मकारणता ? इति शङ्कते—**कथं पुनरिति** ॥ अत्र शास्त्रशब्दोपलक्षितसर्वशब्दानां वर्णानामेकपदार्थबुद्ध्यवच्छेदकवर्णनियामकक्रमविशिष्टपदानां वाक्यार्थबुद्ध्यवच्छेदकवाक्यनियामकक्रमविशिष्टवाक्यानां महावाक्यार्थबुद्ध्यवच्छेदकवाक्यनियामकक्रमविशिष्टप्रकरणानां परिपूर्णपुरुषार्थसाधनबुद्ध्यवच्छेदकानेकप्रकरणनियामकक्रमविशिष्टशास्त्राणां च प्रवाहरूपेण ब्रह्मोपादानतया कार्यत्वमस्तीत्याह—**तत्परतन्त्रत्वादित्यादिना** ॥

ननु—"रज्जुसर्पवदि"ति वेदस्य मिथ्यात्वं कथं निदर्श्यते ? ननु कोऽयं वेदो नाम ? न तावद् वर्णमात्रम् । क्रमविशेषवन्तो वर्णा इति चेत्, नास्ति देश-कालनिबन्धनो वर्णक्रमः; नित्यतया सर्वगतत्वात्, नापि वस्तुनिबन्धनक्रमः; विरोधात्, न ह्येकदैव राजा जारेति जकारस्य रेफात्पूर्वापरीभावो युक्तः । उच्चारणसमवेत एव क्रमो वर्णेषूपरज्यत इति चेत्, न; अप्रत्यक्षत्वादुच्चारण-तत्क्रमयोः, प्रत्यक्षस्तु क्रमविशिष्टवर्णात्मा वेदः । अथोपलब्धिक्रमवन्तो वर्णा वेदशब्दभाज इति, न, अन्यधर्मस्य क्रमस्यान्यधर्मत्वानुपपत्तेः । अथोपलब्धिधर्म एव क्रमो वर्णेषु समारोप्यत इति चेत्,

### तत्त्वदीपनम्

**अनादित्वेऽपीति** ॥ यथा पूर्वस्मिन् कल्पे वर्णानां सन्निवेशविशेषः, तथाऽत्रापीत्येतत् **कूटस्थनित्यशब्देन** विवक्षितम् ॥

वेदस्य नित्यत्वं कार्यप्रतिपादकश्रुतिविरुद्धमिति शङ्कते—**अनादीति** ॥ **"तत्परतन्त्रत्वादि"**त्यत्र ( मूले ) ब्रह्माधीनत्वमुक्तम्, तदनुपपन्नम्; पारतन्त्र्यमात्रस्य सामान्यादौ व्यभिचारित्वेन कार्यताऽसाधकत्वात् । नच कार्यत्वं तत्तन्त्रत्वमित्यपि शङ्कनीयम्; मीमांसकमते हेत्वसिद्धेः । तथा शास्त्रशब्देन वर्णानामभिधानात्पदवाक्यादिविभाग आकस्मिकः स्यादित्याशङ्क्याह—**अत्र शास्त्रेति** अत्र सूत्र इति यावत् ॥ एकैकस्य मिलितस्य वा वर्णस्यार्थबोधकत्वायोगादतिरिक्तस्य स्फोटस्य बोधकत्वं वक्तव्यम्, नच तस्य कार्यत्वमित्याशङ्क्य, पदार्थबोधकत्वोपाधौ वर्णानां पदत्वमित्याह—**एकपदार्थेति** । पदार्थबुद्धेर्जनका ये वर्णाः, तेषां नियामको यः क्रमः, तेन विशिष्टानां पदानामित्यर्थः । उत्तरत्राप्येवमेव योज्यम् । **"प्रवाहरूपेणे"**त्यत्र वर्तमानानामित्यध्याहार्यम् ॥

सर्पादिर्यथाऽज्ञातरज्ज्वादिविवर्तत्वम् तद्वद् वेदोऽप्यज्ञातब्रह्मविवर्त इत्युक्तम्, तदाक्षिपति—**ननु रज्जुसर्पवदिति** । वेदस्य मिथ्यात्वे रज्जुसर्पज्ञानवदप्रामाण्यप्रसक्तिरित्यभिप्रायः ॥ मिथ्याभूतस्यापि वेदस्य प्रामाण्यं सर्वसंमतमिति वक्तुं विमृशति—**ननु कोऽयमिति** । किं वर्णमात्रं वेदः ? उत क्रमवन्तो वर्णाः ? इति **किं**शब्दार्थः ॥ आद्यं दूषयति—**न तावदिति** । अक्रम-व्युत्क्रमोच्चरितवर्णेषु पदबुद्ध्यभावादित्यर्थः ॥ द्वितीयमुत्थापयति—**क्रमविशेषेति** ॥ कोऽयं वर्णक्रम इति विवेचनीयम्—किं देशनिमित्तः क्रमः ? उत कालनिमित्तः ? आहो वस्तुनिमित्तः ? किं वोच्चारणनिमित्तः ? अथवोपलब्धिनिमित्तः इति विकल्प्य प्रथम-द्वितीयौ दूषयति—**नास्तीति** ॥ कालनिबन्धनत्वाभावे हेतुमाह—**नित्यतयेति** ॥ इतरत्र हेतुमाह—**सर्वगतत्वादिति** ॥ तृतीयं दूषयति—**नापीति** ॥ विरोधमेव व्यनक्ति—**न हीति** । उभयोरेकस्मिन् काले राजा जारेति प्रयोगसमय एकस्य रेफस्य रेफात् पूर्वत्वमुत्तरत्वं चैकदा विरुद्धमित्यर्थः चतुर्थमुत्थापयति—**उच्चारणेति** ॥ अस्मिन् पक्षे वेदाप्रत्यक्षत्वप्रसङ्ग इत्याह—**नाप्रत्यक्षत्वादिति** । पाठकगतोच्चारण-तत्क्रमयोरश्रोत्रग्राह्यत्वेन तद्विशिष्टवेदस्यापि श्रोत्रग्राह्यत्वं न स्यादित्यर्थः ॥ पञ्चममुत्थापयति—**अथेति** ॥ **उपलब्धिक्रमवन्त इति** । श्रोत्रगतोपलब्धिक्रमवन्त

### ऋजुविवरणम्

अत्र स्फोटः शब्द इति विवक्षित इति प्रतिभाति, तस्यैकत्वात्, तथा सति तस्य ब्रह्मकार्यत्वाभावान्न ब्रह्मणस्सर्वार्थप्रकाशनसामर्थ्यमिति । नच तदव्यतिरिक्तमेकं शास्त्रं निरूपयितुं शक्यम् । नच बोधकत्वं तदुपादानत्वेन सर्वज्ञत्वं वा । नच वर्णसमुदायातिरिक्तं शास्त्रशब्दाभिधेयमस्ति, यदुपादानत्वेन सर्वज्ञत्वं भवेत् । कथं च परतन्त्रत्वमनैकान्तिकं हेतुः ? इत्याशङ्क्यावतारयति—**अत्र शास्त्रशब्दोपलक्षितेति** ॥ तत्रार्थप्रत्यायनसमर्थपदाद्युपादानत्वेन विना ब्रह्मणस्सर्वार्थप्रकाशनसामर्थ्यं न सिध्यति, इत्युपादानत्वं पदादिस्फोटविलक्षणपक्षादिनिरूपणेनाह—**एकपदार्थेत्यादिना** ॥ **प्रवाहरूपेणेति** । स्वरूपतोऽनादित्वाभावादित्यर्थः ॥

### पञ्चपादिका

**नन्वेवं सति कथं सर्वज्ञता ? तस्यैव ज्ञानशक्तिविवर्तात्मकत्वाद् नामप्रपञ्चस्य । रूपप्रपञ्चस्यापि तदाश्रित्य**

### पञ्चपादिकाविवरणम्

तह्यख्यातिवादिनः क्रममात्रस्य वर्णमात्रस्य वेदशब्दानर्हत्वाद् विशिष्टप्रत्ययाभावादविवेकमात्रमेव वेद इत्यर्थावबोधो न स्यात्, अन्यथाख्यातौ पुनर्विशिष्टप्रत्ययमात्रत्वाद् विशिष्टार्थाभावाद्विज्ञानातिरिक्तो वेदो न स्यात् । नच—उपलब्धिक्रमोपलक्षिता वर्णा वेदः, न विशिष्टा इति—युक्तम्; क्रमविशिष्टवर्णप्रत्ययस्य प्रत्यक्षत्वात् । अनिर्वचनीये तु पुनर्विशिष्टार्थतत्प्रत्यययोर्भावाद् विज्ञानव्यतिरेकेणार्थस्यानिर्वचनीयत्वेऽप्यर्थक्रियासमर्थतया तुच्छव्यावृत्तसत्ताभ्युपगमादस्त्येवार्थावबोधसमर्थो वेद इति निरवद्यम् ॥

ननु—पाणिन्यादिदृष्टान्तेन यदि सर्वशब्दोपादानतैव ब्रह्मणो वेदस्य पौरुषेयत्वपरिहाराय गीयते, तदा कथं तावता सर्वज्ञत्वम् ? इति चोदयति—**नन्वेवं सति कथं सर्वज्ञतेति** ॥ परिहरति—**तस्यैव ज्ञानशक्तिविवर्तात्मकत्वान्नाम प्रपञ्चस्येति** ॥ अस्ति तावद् वर्णानां क्रम-सङ्ख्यादिभेदभाजां मुख्यलक्षणादिद्वारेण सर्वार्थप्रकाशनसामर्थ्यम्, अव्यपदेश्यस्य

### तत्त्वदीपनम्

इत्यर्थः ॥ किमुपलब्धिगतक्रमस्य वस्तुतो वर्णधर्मत्वम् ? उत समारोपात् ? इति विकल्प्याद्यं दूषयति—**नान्यधर्मस्येति** ॥ द्वितीयमुत्थापयति—**अथेति** ॥ किमख्यातिवादिनश्चोद्यम् ? उतान्यथाख्यातिवादिनः ? न तावदाद्य इत्याह—**तर्हीति** । वर्णक्रमयोस्तादात्म्यस्यानङ्गीकरणात् क्रममात्रं वर्णमात्रपाठ इदमित्यापद्येत, नचेत्थं घटत इत्यर्थः ॥ द्वितीयं दूषयति—**अन्यथेति** । नच ज्ञानमात्रं वेदः, वर्णविज्ञाने क्रमविज्ञाने च वेदबुद्ध्यभावादित्यर्थः ॥ क्रमविशिष्टा वर्णा वेद इति पक्षं निराकृत्य, क्रमोपलक्षिता वर्णा वेद इति पक्षं निरस्यति—**नचोपलब्धीति** । कदाचित्संबन्धिन उपलक्षकत्वाद् वेदस्य च सर्वदा क्रमवत्त्वेनोपलम्भान्न क्रमस्योपलक्षणत्वमित्यर्थः ॥ त्वन्मतेऽप्युक्तयुक्त्या क्रमानिरूपणाद् न वेदसिद्धिरित्याशङ्क्याह—**अनिर्वचनीये त्विति** । भावादित्यस्यास्त्येवेत्यनेन संबन्धः ॥ तन्मतेऽपि विशिष्टस्यानिर्वचनीयत्वाद् नार्थप्रमितिहेतुत्वम्, तत्राह—**विज्ञानव्यतिरेकेणेति** । देहात्मभावस्यमिथ्यात्वेऽपि यथाऽर्थक्रियाकारित्वम्, तद्वदित्यर्थः ॥

वेदसत्ताया ब्रह्मपरतन्त्रत्वाद् ब्रह्म वेदोपादानं चेत्, तर्हि न सर्वज्ञं स्यादिति शङ्कते—**ननु पाणिन्यादीति** । वेदस्य पौरुषेयत्वपरिहाराय ब्रह्मणः सर्वशब्दोपादानता यदि गीयते, तदा पाणिन्यादिदृष्टान्तेन यत्सर्वज्ञत्वमुक्तम्, तत्तावता कथं स्यादिति योजना ॥ **तावता** । उपादानत्वमात्रेणेत्यर्थः । अर्थमुपलभ्य शब्दविरचयितरि पाणिन्यादौ शब्दविषयादधिकविषयज्ञानमुपलब्धम्, ब्रह्मणश्चानीदृक्त्वाद् न सर्वज्ञत्वसिद्धिरित्यर्थः ॥ एकग्रन्थशङ्कां निरस्यति—**परिहृतीति** ॥ वेदस्य ज्ञानशक्तिविवर्तत्वेऽप्युपलभ्य विरचितत्वाभावात्कथं ब्रह्मणः सर्वज्ञत्वम् ? इत्याशङ्क्याह—**अस्ति तावदिति** ॥ "**मुख्यलक्षणादिद्वारेणे**"त्यस्यायमर्थः—केषांचिन्मुख्यया वृत्त्या, केषांचिल्लक्षणया, केषांचिद्गोण्याऽर्थप्रकाशनसामर्थ्यमिति ॥ फलितमाह—**तत्रेति** ॥ ननु कार्यशक्त्याकारेण शक्तिमात्रकल्पनमुचितम्, न तु तयोरैक्यमित्याशङ्क्याह—

### ऋजुविवरणम्

**क्रमविशिष्टेति** । क्रमानुरक्तप्रत्ययादित्यर्थः । तदुक्तम्—"स्वबुध्या रज्यते येन विशेष्यं तद्विशेषणम्"—इति ॥ ननु—अनिर्वचनीयपक्षेऽप्यर्थावबोधसमर्थवेदाभाव इति, तत्राह—**अनिर्वचनीये त्विति** ॥ ननु—अनिर्वचनीयत्वादेव कथमर्थावबोधनसमर्थत्वमिति ? तत्राह—**अनिर्वचनीयत्वेऽपीति** ॥

## पञ्चपादिका

**विवर्तनात् तज्जन्मता; नासतः प्रादुर्भावात् ॥**

इति परमहंसपरिव्राजकादि-श्रीशङ्करभगवत्पादान्तेवासिवर-श्रीपद्मपादाचार्यकृतौ पञ्चपादिकायां ब्रह्मणः सर्वज्ञत्वनिरूपणं नाम षष्ठं वर्णकं समाप्तम् ॥

## पञ्चपादिकाविवरणम्

वस्तुनोऽभावात् । तत्र कार्यगतमर्थप्रकाशनसामर्थ्यमुपादानकारणधर्म एव भवति । प्रदीपगतप्रकाशनसामर्थ्यस्य वह्निधर्मत्वदर्शनात्, कार्योपादानयोः शक्तिद्वयकल्पनाऽयोगात् । एवं सर्वार्थप्रकाशनसमर्थत्वात् सर्वज्ञं ब्रह्म । ननु—समर्थस्यापि नित्यवज्ज्ञानसंयोगो न भवति, नैष दोषः; यथा प्रकाशद्रव्यस्य प्रदीपस्य स्वसन्निहिताशेषवस्तुप्रकाशिता, एवं प्रकाशस्वरूपस्य ब्रह्मणः सर्वोपादानतया सर्वसंसर्गिणः स्वसन्निहिताशेषवस्तुप्रकाशिता नित्यवद् भवतीति युक्तं सामर्थ्यानुसारेण सर्वज्ञत्वम् । कथं करणसामर्थ्यानि कर्तृसामर्थ्यानि भवन्तीति चेत्, न; ब्रह्मणो विषयावगमं प्रति शब्दस्य करणताऽभावात् । ननु—स्वयंप्रकाशतया सर्वसंसर्गित्वादेव सर्वज्ञता सिध्यति, न; वाय्वाकाशरसगन्धादिव्यापिनोऽपि सवितृकिरणस्य तत्प्रकाशनायोग्यत्वदर्शनात् । तस्मात् सर्वार्थप्रकाशनसमर्थसर्वशब्दोपादानतया सर्वज्ञं ब्रह्म । तदेतदाह—**नासतः प्रादुर्भावादिति** ।

इति श्रीमत्परमहंसपरिव्राजकाचार्यानन्यानुभवपूज्यपादशिष्य-स्वप्रकाशानुभवभगवतः कृतौ पञ्चपादिकाविवरणे ब्रह्मणः सर्वज्ञत्वनिरूपणं नाम षष्ठं वर्णकं समाप्तम् ॥

## तत्त्वदीपनम्

**कार्येति** ॥ ज्ञानजनने समर्थमपि चक्षुर्यथा न सर्वदा ज्ञानं जनयति, तद्वद् ब्रह्मापीति शङ्कते—**ननु सर्वसमर्थस्यापीति** ॥ **न नित्यवदिति** । सर्वदैवेत्यर्थः ॥ **ज्ञानसंयोग इति** । ज्ञानसंबन्ध इत्यर्थः ॥ अप्रतिबन्धप्रकाशपुष्कलकारणस्य सदाभावात् सर्वज्ञत्वं घटत इत्याह—**नैष इति** ॥ कार्योपादानयोरेकं सामर्थ्यमित्युक्तम्, तदाक्षिपति—**कथं करणेति** । शब्दस्य ज्ञानं प्रति करणत्वादात्मनश्च कर्तृत्वात् कथं करण-कर्तृसामर्थ्यैक्यमित्यर्थः ॥ किंशब्दस्य ब्रह्म प्रति करणत्वम् ? उत जीवं प्रति ? नाद्य इत्याह—**ब्रह्मण इति** । नित्यबोधरूपत्वेन ब्रह्मणः करणनिरपेक्षत्वादित्यर्थः । नापि द्वितीयः; शब्द-ब्रह्मणोरभेदाद् ब्रह्मगता प्रकाशनशक्तिः शब्देऽप्यन्वेति तथा जीवस्याऽऽगन्तुकज्ञानत्वात् प्रकाशनशक्तिमान् शब्दस्तं प्रति करणतां भजत इति नावद्यमस्तीति द्रष्टव्यम् ॥ प्रकाशरूपात्मसंबन्धेनैव सकलस्य प्रकाशसंभवे किं शास्त्रोपादानत्वेन सर्वज्ञत्वकल्पनया ? इति शङ्कते—**ननु स्वयंप्रकाशतयेति** ॥ संसर्गित्वमात्रमप्रयोजकमित्याह—**न वाय्वाकाशेति** ॥ कथं तर्हि प्राप्तविषयसिद्धिः ? इति शङ्कामुपसंहारब्याजेन निरस्यति—**तस्मादिति** ॥ **रूपप्रपञ्चस्यापीति** टीकाया अयमर्थः—**रूपप्रपञ्चकारणत्वम्**=सत्तास्फूर्तिप्रदत्वम् । तद्वन्नामप्रपञ्चकारणत्वमपीत्याह—**रूपप्रपञ्चस्येति** । **तदाश्रित्य विवर्तनादिति** ॥ कस्मादसन्नेव प्रपञ्च उल्लसति ? इत्याशङ्क्याह—**नासत इति** ॥ रूपप्रपञ्चो जडो यथा ब्रह्मण्यसन् आविर्भवति, तथा नामप्रपञ्चोऽपीत्याशङ्कायामुक्तम्—**रूपेति** ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्याखण्डानुभूतिशिष्येणाऽखण्डानन्दमुनिना विरचिते विवरणतत्त्वदीपने ब्रह्मणः सर्वज्ञत्वनिरूपणं नाम षष्ठं वर्णकं समाप्तम् ॥

## ऋजुविवरणम्

ननु—वेदस्य ज्ञानशक्तिविवर्तत्वेऽपि कथं ब्रह्मणस्सर्वज्ञत्वम् ? उपलभ्य रचनाया एवाभावादित्याशङ्क्याह—**अस्ति तावदिति** ॥ ननु—कार्यशक्त्या कारणे शक्तिः कल्प्यते, ननु सैव कारणस्य वैलक्षण्यमित्याशङ्क्याह—**कार्योपादानयोरिति** ॥ शब्दस्य करणत्वान्न तच्छक्तिः; करणस्य तस्य कर्तृत्वात्, अथवा करणशक्तिरेव कारणस्यापि भवेदित्याक्षिपति—**कथं करणेति** ॥ **न ब्रह्मण इति** । औपाधिकं कारणत्वम्, न स्वरूपप्रयुक्तमिति भावः ॥ **ननु स्वयंप्रकाशेति** । शब्दोपादानत्वसाधनं व्यर्थमिति भावः ॥

इति स्वामीन्द्रपूर्णपूज्यपादशिष्य-सर्वशास्त्रविशारदजनार्दनात्मज-सर्वज्ञ-विष्णुभट्टोपाध्यायकृतौ ऋजुविवरणे ब्रह्मणः सर्वज्ञत्वनिरूपणं नाम षष्ठं वर्णकं समाप्तम् ॥

ॐ

श्रीशङ्करभगवत्पादाचार्यप्रणीतम्

# श्रीमद्ब्रह्मसूत्रभाष्यम्

## सप्तमं वर्णकम्

अथवा—यथोक्तमृग्वेदादिशास्त्रं योनिः कारणं प्रमाणमस्य ब्रह्मणो यथावत्स्वरूपाधिगमे । शास्त्रादेव प्रमाणाज्जगतो जन्मादिकारणं ब्रह्माधिगम्यते इत्यभिप्रायः शास्त्रमुदाहृतं पूर्वसूत्रे—'यतो वा इमानि भूतानि जायन्ते' इत्यादि । किमर्थं तर्हीदं सूत्रं, यावता पूर्वसूत्रेणैवैवंजातीयकं शास्त्रमुदाहरता शास्त्रयोनित्वं ब्रह्मणो दर्शितम् । उच्यते—तत्र सूत्राक्षरेण स्पष्टं शास्त्रस्यानुपादानाज्जन्मादिसूत्रेण केवलमनुमानमुपन्यस्तमित्याशङ्क्येत तामाङ्कां निवर्तयितुमिदं सूत्रं प्रववृते—

**शास्त्रयोनित्वादिति ॥**

इति सप्तमं वर्णकम्

ॐ

श्रीपद्मपादाचार्यप्रणीता

# पञ्चपादिका

अथवा यथोक्तमृग्वेदादीत्यादिना सूत्रस्य प्रमाणप्रतिज्ञामर्थान्तरमाह; अपेक्षितत्वात् । कथं पुनरेकस्य सूत्रस्यार्थद्वयम् ? सूत्रत्वादेव । तथाच—पौराणिका :—

"अल्पाक्षरमसंदिग्धं सारवद्विश्वतोमुखम् । अस्तोभमनवद्यं च सूत्रं सूत्रविदो विदुः ॥" इति ॥ विश्वोतोमुखमिति नानार्थतामाह । अतोऽलङ्कार एव सूत्राणां यदनेकार्थता नाम ॥ ननु पूर्वसूत्रे शास्त्रमुदाहरता ब्रह्मावगमे शास्त्रं प्रमाणं प्रतिज्ञातमेव । सत्यमेतत्सूत्रबलेन तदुदाहृतम्; अन्यथा सूत्रे शास्त्रोपादानाभावादनुमानाशङ्कायाम्—"यतः सर्वज्ञात्सर्वशक्तेः कारणाज्जगतो जन्मादि भवति, तद् ब्रह्मेति वाक्यशेषः" इत्यस्योपस्कारस्याप्रमाणत्वप्रसङ्गः । प्रतिप्रपञ्चं पृथक्कारणजन्यताया अपि सम्भवात् सर्वज्ञत्व-सर्वशक्तित्वासिद्धेः, लोके च जगत्कारणे ब्रह्मशब्दप्रयोगादर्शनात् । अतो "जन्माद्यस्य यतः", 'शास्त्रप्रमाणकमि'त्येतावदिदं सूत्रं सदसंदिग्धमनुमानशङ्कानिवृत्तेः पृथक्करणन्तु—प्रपञ्चान्तःपातिनः शास्त्रस्यापि हेतुत्वेन सर्वज्ञत्वं सुसम्पादमिति व्याख्यानान्तरेण कथयितुम् ॥

इति परमहंसपरिव्राजकाचार्य-श्रीशङ्करभगवत्पादान्तेवासिवर-श्रीपद्मपादाचार्यकृतौ पञ्चपादिकायां
ब्रह्मणः शास्त्रप्रमाणकत्वनिरूपणं नाम सप्तमं वर्णकं समाप्तम् ॥

## पञ्चपादिकाविवरणम्

अथवेत्यादिद्वितीयवर्णकविवरणं स्पष्टार्थम् ॥ तस्माज्जन्मादिनिमित्तोपादानकारणं सर्वज्ञं ब्रह्मेति सिद्धम् ।

## तत्त्वदीपनम्

अथवेत्यादिवर्णकान्तरस्यायमर्थः—"तं त्वौपनिषदं पुरुषं पृच्छामि"इत्यादिवाक्यं ब्रह्मणो वेदैकगम्यत्वं

## ऋजुविवरणम्

सूत्रद्वयार्थमुपसंहरति—तस्माज्जन्मादीति । मायाऽविद्याप्रतिबिम्बितमिति वदतेदमुक्तम्—पूर्वस्मिन् ग्रन्थे

### पञ्चपादिकाविवरणम्

तत्र बिम्बस्थानीयं ब्रह्म मायाशक्तिमत् कारणम्, जीवाश्च प्रत्येकमविद्यानुबद्धा इति केचित्। मायाऽविद्याप्रतिबिम्बितं ब्रह्म जगत्कारणम्। विशुद्धं ब्रह्मामृतत्वालम्बनम्, जीवाश्चाविद्याबद्धा इत्यन्ये। जीवा एव स्वाविद्यया प्रत्येकं प्रपञ्चाकारेण ब्रह्माविर्भावयन्ति, सादृश्याच्च प्रपञ्चैकताभासोऽनेकैरवगतद्वितीयचन्द्रवत्। स्वरूपापेक्षया च ब्रह्म सर्वजगत्कारणमित्यपरे। ब्रह्मैकमेव स्वाविद्यया जगदाकारेण विवर्तते स्वप्नादिवदिति मतान्तरम्। तस्माद् ब्रह्मैव स्वमायया।ऽविद्यया विवर्तत इति।

इति श्रीमत्परमहंसपरिव्राजकाचार्यानन्यानुभवपूज्यपादशिष्य-स्वप्रकाशात्मभगवतः कृतौ पञ्चपादिकाविवरणे ब्रह्मणः शास्त्रप्रमाणकत्वं नाम सप्तमं वर्णकं समाप्तम्

### तत्त्वदीपनम्

समर्थयति ? उत न ? इति कार्यत्वलिङ्गस्य कारणविशेषपर्यवसानापर्यवसानाभ्यां संदिह्यते। तत्र कार्यलिङ्गस्य कारणविशेषपर्यवसानाद् न ब्रह्मणो वेदैकगम्यत्वमिति प्राप्तम्। तथाहि—विमतम्, कल्पितकारकशक्तिकर्तृपुरःसरम्, कार्यत्वात्; घटवत्। स च कर्तैकः; कल्पनालाघवात्, इति प्राप्ते प्रतिविधीयते;—कार्यमात्रस्य कर्तृमात्रगमकत्वात्। नच लाघवादेकत्वनिश्चयः; विचित्रप्रासादादेरनेककर्तृत्वस्य शरीरिकर्तृकत्वस्य च दृष्टत्वात्। तथा कार्यलिङ्गस्य सर्वज्ञे सर्वशक्तिमत्येकस्मिन्नपर्यवसानात्कारणविशेषस्य वेदैकगम्यत्वमिति ॥ अधिकरणार्थमुपसंहरति—**तस्माज्जन्मादीति** ॥

एकमेव ब्रह्माऽविद्यया जगदाकारेण विवर्तते चेत् तर्हि विद्ययाऽविद्याया व्यावर्तितत्वात् सकलमुक्त्यापात इत्याशङ्क्य, मतभेदं दर्शयति—**तत्रेति**। वेदान्तव्याख्यातॄणां मध्य इत्यर्थः ॥ प्रतिजीवमविद्याभेदान्नातिप्रसङ्ग इत्यर्थः ॥ मतान्तरमाह—**मायेति**। पूर्वत्र मायाऽविद्ययोर्भेदः, अत्र त्वभेद इत्यर्थः ॥ पक्षान्तरमाह—**जीवा एवेति**। प्रतिजीवमविद्याया भिन्नत्वात् कार्यप्रपञ्चस्यापि भेदादेकमुक्तौ न सर्वद्वैतनिवृत्तिरित्यर्थः ॥ प्रतिजीवं प्रपञ्चभेदे कथमैक्यप्रतिभासः ? अत्राह—**सादृश्यादिति** ॥ कथं तर्हि ब्रह्मकारणवादिन्यः श्रुतयः ? तत्राह—**स्वरूपेति** ॥ सिद्धान्तरहस्यमाह—**ब्रह्मेति** ॥ किं तर्ह्युपादेयमिति ? अत्राह—**तस्मादिति** ॥ नचैकमुक्तौ सर्वमुक्तिप्रसङ्गः, इष्टापत्तेः। शिष्टमिष्टसिद्धौ द्रष्टव्यम् ॥

इति परमहंसपरिव्राजकाचार्याखण्डानुभूतिशिष्येणाऽखण्डानन्दमुनिना विरचिते विवरणतत्त्वदीपने ब्रह्मणः शास्त्रप्रमाणकत्वं नाम सप्तमं वर्णकं समाप्तम् ॥

### ऋजुविवरणम्

मायाऽविद्याभेदमङ्गीकृत्योक्तम्, ब्रह्मणश्च न प्रतिबिम्बता, अत्र तु मायाऽविद्ययोरैक्यं प्रतिबिम्बभावश्च ब्रह्मण इति ॥ "जीवा एवे"त्यनेन ब्रह्म मायाविशिष्टं तत्प्रतिबिम्बितं वा न जगत्कारणमित्युक्तम्। कथं ब्रह्म जगत्कारणमिति ? तदाह—**स्वरूपेति** ॥

इति स्वामीन्द्रपूर्णपूज्यपादशिष्य-सर्वशास्त्रविशारदजनार्दनात्मजसर्वज्ञ-विष्णुभट्टोपाध्यायकृतौ ऋजुविवरणे ब्रह्मणः शास्त्रप्रमाणकत्वं नाम सप्तमं वर्णकं समाप्तम् ॥

ॐ

श्रीशङ्करभगवत्पादाचार्यप्रणीतम्

# श्रीमद्ब्रह्मसूत्रभाष्यम्

## अष्टमं वर्णकम् ॥

### समन्वयाधिकरणम् । सू० ४।

कथं पुनर्ब्रह्मणः शास्त्रप्रमाणकत्वमुच्यते, यावता "आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्" इति क्रियापरत्वं शास्त्रस्य प्रदर्शितम् । अतो वेदान्तानामानर्थक्यं, अक्रियार्थत्वात् । कर्तृदेवतादिप्रकाशनार्थत्वेन वा क्रियाविधिशेषत्वं, उपासनादिक्रियान्तरविधानार्थत्वं वा । नहि परिनिष्ठितवस्तुप्रतिपादनं संभवति, प्रत्यक्षादिविषयत्वात्परिनिष्ठितवस्तुनः, तत्प्रतिपादने च हेयोपादेयरहिते पुरुषार्थाभावात् । अतएव 'सोऽरोदीत्' इत्येवमादीनामानर्थक्यं मा भूदिति "विधिना त्वेकवाक्यत्वात्स्तुत्यर्थेन विधीनां स्युः" इति स्तावकत्वेनार्थवत्त्वमुक्तम् । मन्त्राणां च "इषे त्वा" इत्यादीनां क्रियातत्साधनाभिधायित्वेन कर्मसमवायित्वमुक्तम् । न क्वचिदपि वेदवाक्यानां विधिसंस्पर्शमन्तरेणार्थवत्ता दृष्टाउपपन्ना वा । न च परिनिष्ठिते वस्तुस्वरूपे विधिः संभवति, क्रियाविषयत्वाद्विधेः । तस्मात्कर्मापेक्षितकर्तृदेवतादिस्वरूपप्रकाशनेन क्रियाविधिशेषत्वं वेदान्तानाम् । अथ प्रकरणान्तरभयान्नैतदभ्युपगम्यते, तथापि स्ववाक्यगतोपासनादिकर्मपरत्वम् । तस्मान्न ब्रह्मणः शास्त्रयोनित्वम्, इति प्राप्ते—उच्यते

### तत्तु समन्वयात् ॥४॥

तुशब्दः पूर्वपक्षव्यावृत्त्यर्थः । तद्ब्रह्म सर्वज्ञं सर्वशक्ति जगदुत्पत्तिस्थितिलयकारणं वेदान्तशास्त्रादेवावगम्यते । कथम्, समन्वयात् । सर्वेषु हि वेदान्तेषु वाक्यानि तात्पर्येणैतस्यार्थस्य प्रतिपादकत्वेन समनुगतानि । 'सदेव सोम्येदमग्र आसीत् एकमेवाद्वितीयम्' 'आत्मा वा इदमेक एवाग्र आसीत्' 'तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्यमयमात्मा ब्रह्म सर्वानुभूः' 'ब्रह्मैवेदममृतं पुरस्तात्' इत्यादीनि । नच तद्गतानां पदानां ब्रह्मस्वरूपविषये निश्चिते समन्वयेऽवगम्यमानेऽर्थान्तरकल्पना युक्ता, श्रुतहान्यश्रुतकल्पनाप्रसंगात् । नच तेषां कर्तृस्वरूपप्रतिपादनपरताऽवसीयते, 'तत्केन कं पश्येत्' इत्यादिक्रियाकारकफलनिराकरणश्रुतेः । नच परिनिष्ठितवस्तुस्वरूपत्वेऽपि प्रत्यक्षादिविषयत्वं ब्रह्मणः, 'तत्त्वमसि' इति ब्रह्मात्मभावस्य शास्त्रमन्तरेणानवगम्यमानत्वात् । यत्तु हेयोपादेयरहितत्वादुपदेशानर्थक्यमिति, नैष दोषः, हेयोपादेयशून्यब्रह्मात्मतावगमादेव सर्वक्लेशप्रहाणात्पुरुषार्थसिद्धेः । देवतादिप्रतिपादनस्य तु स्ववाक्यगतोपासनार्थत्वेऽपि न कश्चिद्विरोधः । नतु'तथा ब्रह्मण उपासनाविधिविशेषत्वं संभवति, एकत्वे हेयोपादेयशून्यतया क्रियाकारकादिद्वैतविज्ञानोपमर्दोपपत्तेः । नहि एकत्वविज्ञानेनोन्मथितस्य द्वैतविज्ञानस्य पुनः संभवोऽस्ति, येनोपासनाविधिशेषत्वं ब्रह्मणः प्रतिपाद्येत । यद्यप्यन्यत्र वेदवाक्यानां विधिसंस्पर्शमन्तरेण प्रमाणत्वं न दृष्टं, तथाप्यात्मविज्ञानस्य फलपर्यन्तत्वान्न तद्विषयस्य शास्त्रस्य प्रमाण्यं शक्यं प्रात्याख्यातुम् । न चानुमानगम्यं शास्त्रप्रामाण्यम् येनान्यत्र दृष्टं निदर्शनमपेक्षेत । तस्मात्सिद्धं ब्रह्मणः शास्त्रप्रमाणकत्वम् ॥

॥ इति अष्टमं वर्णकम् ॥

## पञ्चपादिकाविवरणम्

ज्ञानानन्दैकरूपं निखिलजगदुपादानमीशं प्रभूणाम्
सर्वज्ञं ब्रह्म नित्यं विशदमतितरां निर्गुणं निष्क्रियं च ।
एतत्कार्यावमृष्टि निखिलभववतीं सम्यगुद्धूय विद्ध्वा
त्वप्रामाण्यं श्रुतीनां श्रुतिभिरिदमजं ज्ञेयमित्युच्यतेऽस्मिन् ॥

जगतो जन्मादिकारणं ज्ञानानन्दं ब्रह्मेति च लक्षितम् । तत्र वेदान्ताः प्रमाणमिति प्रतिज्ञातम् । तत्रेदं

## तत्त्वदीपनम्

तृतीये सूत्रे ब्रह्मणः शास्त्रप्रमाणकत्वमुक्तम्, अत्रापि तदेवोच्यत इति पौनरुक्त्यमित्याशङ्क्य तात्पर्यमाह—**ज्ञानेति** । अस्मिन्नधिकरणे श्रुतीनामप्रामाण्यं विद्ध्वा, इदं ब्रह्म श्रुतिभिर्ज्ञेयमित्युच्यत इति संबन्धः ॥ इदमा परामृष्टमर्थमाह—**ज्ञानेति** ॥ स्वरूपलक्षणमनूद्य तटस्थलक्षणमनुवदति—**निखिलेति** ॥ विरिञ्चादीनामपि जगदुपादानत्वप्रतिपत्तेः कथं ब्रह्मैव जगदुपादानमिति ? अत्राह—**ईशमिति** ॥ निखिलेशितृत्वं चाह—**ईशमिति** ॥ ईश्वरत्वमुपपादयति—**सर्वज्ञमिति** ॥ अप्रामाण्येऽपि विधिशेषत्वेन प्रामाण्यमित्याशङ्क्य, द्वितीयवर्णकार्थमनुवदति—**एतदिति** । एतत्कार्यावमृष्टि च सम्यगुद्धूय ज्ञेयमित्युच्यत इति संबन्धः । एतस्मिन् ब्रह्मणि कार्यावमृष्टिः कार्यसंस्पर्शः, तमिति यावत् ॥ उत्पत्त्यादीनां विधिफलत्वप्रसिद्धेस्तेषां चात्रानुपलम्भान्न विधिरित्याह—**नित्यमित्यादिना** ॥ संस्कारो द्विविधः—दोषापनयनलक्षणो गुणाधानलक्षणश्चेति, तत्राद्यं निरस्यति—**नित्यं विशदमतितरामिति** ॥ **नित्यम्**=सदेति यावत् । **"विशद"**शब्देनानागन्तुकस्य दोषस्य निरासः । **"अतितरामि"**त्यनेनानागन्तुकस्य दोषस्यात्मन्यसंभवाद् न तन्निवृत्तिः; अना(आ)गन्तुकदोषसंभवेऽपि न क्रियानिवर्त्यत्वमित्यर्थः । द्वितीयं निरस्यति—**निर्गुणमिति** ॥ विकार्यत्वं निरस्यति—**निष्क्रियमिति** ॥ उत्पाद्यत्वं निरस्यति—**अजमिति** ॥ सर्वगतत्वादनाप्यत्वं च । विधेः सातिशयानित्यफलकत्वदर्शनान्मुक्तेरपि विधिसाध्यत्वे तथात्वं स्यादित्याह—**निखिलेति** ॥ निखिलो भवः साध्यत्वेन वर्तते यस्यां सा, निखिलभववती; ताम् । **सम्यगिति** । अबाधितोपपत्तिभिरित्यर्थः । तृतीयसूत्रे प्रतिज्ञातं प्रामाण्यं चतुर्थसूत्र आक्षिप्य समाधीयत इत्यपौनरुक्त्यमित्यर्थः ॥

पूर्वस्मिन्नधिकरणे ब्रह्मणो वेदकारणत्वं तत्प्रमाणकत्वं चोपन्यस्तं वर्णकद्वयेन, तत्र द्वितीयवर्णकेनाक्षेपलक्षणां सङ्गतिमभिधाय वर्णप्राधान्य-संशय-पूर्वपक्षमाह—**जगत इति** । प्रामाण्यसंभवासंभवौ च संशयकारणमिति द्रष्टव्यम् ॥

## ऋजुविवरणम्

वक्ष्यमाणार्थं श्लोकेन संगृह्णाति—**ज्ञानानन्दैकरूपमित्यादिना** ॥ अस्मिन् सूत्रे श्रुतिभिर्ब्रह्म ज्ञेयमित्युच्यत इत्यन्वयः । पूर्वमुक्तं लक्षणद्वयमनुवदति—**ज्ञानानन्दैकरूपमिति** ॥ **"ईशं प्रभूणामि"**त्यनेन निमित्तत्वनिर्देशः । **"सर्वज्ञं ब्रह्मे"**त्यनेन सूत्रद्वयोक्तसर्वज्ञत्वानुवादः । **"नित्यमि"**त्यनेनोपादानत्वेऽपि परिणामित्वाभावान्न जगद्धर्मैर्ब्रह्म दुष्येदित्युक्तम् । **"विशदमतितरामि"**त्यनेन नित्यत्वमुपजीव्यासङ्गत्वमुक्तम् । निर्गुणत्वं निष्क्रियत्वञ्च तद्धेतुकमेव, अथवा—जगदुपादानत्वेन सक्रियत्वं सगुणत्वं च वदन्ति, तन्निरासः—**"निर्गुणं निष्क्रियञ्चे"**ति । तथा परिणामित्वे निरस्ते विशदत्वं निर्मलत्वं नित्यत्वमविनाशित्वञ्च सिध्यति । अथवा—**"नित्यमि"**त्यादिविशेषणमेतत्सूत्रसाध्यत्वेन निर्दिष्टमिति । **एतत्कार्यावमृष्टिमिति** । एषा चासौ कार्यावमृष्टिश्चेति विग्रहः **निखिलभववतीमिति** । निखिलो भवो यस्याः सा, तथोक्ता; उत्पत्त्यादियुक्तेत्यर्थः । एतदुक्तं भवति—"क्रियानुप्रवेशनिरासेन विशुद्धब्रह्मणो ज्ञेयत्वमुच्यते । क्रियानुप्रवेशे ह्यनित्यत्वादिदोषप्रसङ्गादिति । अयं द्वितीयवर्णकार्थः ननु—पूर्वसूत्रेणैवैतदुक्तम्, किं सूत्रान्तरेण ? इत्याशङ्क्याह—**विद्ध्वा त्वप्रामाण्यमिति** । अप्रामाण्यनिरासेन तदेव साध्यत इत्यर्थः ॥ अयं प्रथमवर्णकार्थः ॥ यद्वा एतद् ब्रह्म ज्ञेयमित्युच्यत इत्यन्वयः । **कार्यावमृष्टिं निखिलभववतीमिति** । निखिला चासौ भववती चेति विग्रहः । एतदुक्तं भवति—अर्थगतं सविशेषत्वं स्वरूपप्रयुक्तं कार्यहेतुकं च पराकृत्य शब्दगतमप्रामाण्यं च निरस्य ज्ञेयत्वं व्युत्पाद्यत इति ॥

एतद्वर्णकद्वयोक्तार्थसमाधानरूपत्वात् तृतीयवर्णकार्थोऽप्यत्रैवोक्तः । अस्य सूत्रस्य पूर्वसूत्रेण सङ्गतिं वक्तुं वृत्तकीर्तनं करोति—**जगतो जन्मादिकारणमिति** ॥ **"प्रतिज्ञातमि"**ति वदता न तत्र प्रामाण्यं साधितम्, अतो नास्य सूत्रस्य वैयर्थ्यमित्युक्तम् । सूत्रकारवचनसामर्थ्यान्नाक्षेपः; तस्यान्यार्थत्वस्य दर्शितत्वादिति चोदयति—**नन्वाक्षेप इति** ।

### पञ्चपादिका

कथं पुनर्ब्रह्मणः शास्त्रप्रमाणकत्वमुच्यते ? यावता "आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थाना"मिति क्रियापरत्वं शास्त्रस्य प्रदर्शितम् । अतो वेदान्तानामानर्थक्यमक्रियार्थत्वात् ॥

यद्यपि प्रदर्शितानि वाक्यानि सर्वज्ञत्वादिगुणकं ब्रह्म जगत्कारणं प्रतिपादयन्ति; तथाऽपि तत्र परिनिष्ठिते वस्तुनि प्रत्यक्षादीनामपि प्रवृत्तिसम्भवात् तैरसंवादे न प्रामाण्यं प्रतिलभन्ते ॥

### पञ्चपादिकाविवरणम्

निरूपणीयम्—किं भूतेऽप्यर्थे शब्दः प्रमाणम् ? न वेति ? नेति तावदाह—कथं पुनर्ब्रह्मण इति ॥ ननु आक्षेपः किंनिबन्धनः ? सूत्रप्रामाण्यादित्याह—यावताऽऽम्नायस्येति ॥

ननु वेदान्तानामानर्थक्यमुच्यते ? किं वा क्रियापरत्वमिति ? न तावत्क्रियापरत्वम्; आदिमध्यावसानेषु तात्पर्येण ब्रह्मैक्यपर्यसानादिति, तत्राह—यद्यपिप्रदर्शितानीति ॥ तथाऽपि तत्र न सम्भवति प्रामाण्यमित्यर्थः । ननु यत्र शब्दस्य शक्ति-तात्पर्ये विद्येते तत्र शब्दः प्रमाणम्, न विषयविशेषापेक्षं शब्दस्य प्रामाण्यम्; विषयस्य शाब्दप्रमितिहेतुत्वाभावादिति, तत्राह—तत्र परिनिष्ठिते वस्तुनीति ॥ अभूदस्ति भविष्यतीत्यवगम्ये वस्तुनि, असाध्यस्वभावे वा वस्तुनीत्यर्थः । ननु—परिनिष्ठितोऽपि रसो न चक्षुषा गृह्यते, नापि जिह्वया गन्धः, तद्वत्परिनिष्ठिते ब्रह्मणि प्रमाणान्तरानधिगम्यतया शब्दैकगम्यत्वं किं न स्यात् ? न; चक्षुरादीनामितरेतरविषयव्यभिचारवदागमव्यतिरिक्तप्रमाणानां

### तत्त्वदीपनम्

ज्ञानकाण्डस्यापि वेदत्वाविशेषान्न प्रामाण्यप्रतिक्षेप इति शङ्कते—नन्वाक्षेप इति ॥ न खलु वेदत्वमात्रेण प्रामाण्यं निश्चेतुं शक्यम्; "आदित्यो यूपः" इत्यादौ व्यभिचारात्, किं तूपक्रमादिसमधिगततात्पर्येण; तात्पर्यं च कार्य एवेति सकलवेदतात्पर्यविज्जैमिनिवचनमेव विविच्यतामित्याह—ननु वेदान्तानामिति ॥ अध्ययनविध्युपात्तत्वेनानर्थक्यानुपपत्तिमभिप्रेत्य द्वितीयं दूषयति—न तावदिति ॥ अपेक्षितं पूरयति—तथाऽपीति । ब्रह्मणः सिद्धत्वात् तत्र पर्यवसानानुपपत्तिरित्यर्थः ॥ सिद्धत्वमप्रयोजकमिति शङ्कते—ननु यत्रेति ॥ वर्तमानविषयापेक्षया प्रत्यक्षस्य प्रामाण्यं दृष्टमित्याशङ्क्याह—विषयस्येति ॥ प्रत्यक्षज्ञानं प्रति विषयस्य कर्मकारकतया जनकत्वाद् विषयाधीनं प्रत्यक्षं प्रमाणं भवतु, परोक्षज्ञानस्य तद्विषयाजन्यत्वान्न तदधीनं प्रामाण्यमित्यर्थः ॥ लोके शब्दप्रामाण्यं संवादकप्रमाणाधीनमित्याह—तत्राहेति ॥ भविष्यद्वृष्टचादावपि प्रमाणान्तरप्रवृत्तेर्दृष्टत्वात् परिनिष्ठतविशेषणमनर्थकमित्याशङ्क्याह—अभूदिति । कालत्रयान्यतमसंस्पर्शित्वं परिनिष्ठितशब्दार्थः ॥ अर्थान्तरमाह—असाध्येति । पराभिमतकार्यविपरीतं परिनिष्ठितशब्दार्थः ॥ ब्रह्म, प्रमाणान्तरगम्यम्, परिनिष्ठितत्वात्; घटादिवत् । ततश्च प्रमाणान्तरसंवादे शब्दस्यानुवादकत्वम्; अन्यथा विसंवादादिलक्षणमप्रामाण्यं प्रसज्येतेत्युक्ते परिनिष्ठित्वमस्तु, प्रमाणान्तरगम्यत्वं च मा भूत, ततश्चाप्रयोजको हेतुरिति शङ्कते—ननु परिनिष्ठित इति । रसादीनां प्रतिनियतेन्द्रियग्राह्यत्वादिन्द्रियान्तरागम्यत्वेऽपीन्द्रियान्तरविषयत्वं यथा, तद्वत् ब्रह्मणः प्रमाणान्तराविषयत्वेऽपि शाब्दत्वमविरुद्धमित्यर्थः ॥ दृष्टान्तो विषम इत्याह पूर्ववादी—न चक्षुरादीनामिति ॥ अतिप्रसङ्गलक्षणबाधकतर्कपराहति

### ऋजुविवरण

सूत्रकारवचनं यद्यपि क्रियाप्रकरणपठितवाक्यविषयम्; तथाऽपि हेतुसामान्यादाक्षेपः । तत्र तद्वचनादेकदेशविषयत्वं विचारस्योक्तम्, अत्राप्रामाण्यम् ॥ "यद्यपी"त्यनेन प्रतिपादकत्वमङ्गीकृत्यासंवादादप्रामाण्यमुक्तम्, तदयुक्तम्; आनर्थक्यस्योक्तत्वात्, पुनः शङ्काकारणाभावात्, व्यर्थश्च; तेनैवामाण्यसिद्धेरित्याशङ्क्याह—ननु वेदान्तानामिति ॥ "न तावदि"त्यनेन द्वितीयपक्षस्यादौ निराकरणं कृतम्; सन्निहितत्वात्, प्रथमपक्षस्य निरस्तत्वादिति ॥ "परिनिष्ठितमि"त्ययुक्तम्; उत्पत्तेः प्रागसिद्धत्वात्, पश्चात् परिष्ठितत्वस्य सर्वत्रैवाविशेषादित्याशङ्क्याह—अभूदस्तीति ॥ तदपि न कारणम्; कार्येऽपि समानत्वादित्याशङ्क्याह—असाध्यस्वभावे चेति ॥ तत्र टीका—प्रत्यक्षादीनामपीति । अयं प्रयोगः—ब्रह्म धर्मि, प्रमाणान्तरयोग्यमिति साध्यो धर्मः, परिनिष्ठितवस्तुवात्; घटादिवत् ॥ तैरसंवाद इति । अयं प्रयोगः—वेदान्तशास्त्रं धर्मि, प्रमाणं न भवतीति साध्यो धर्मः, प्रमाणान्तरयोग्यत्वे सत्यनुपलभ्यमानार्थत्वात्; स्पर्शगोचरचित्रनिम्नतादिज्ञानवत् । शङ्कितोपाधिरनुकूलतर्को वा नास्यास्तीति चोदयति—ननु परिनिष्ठितोऽपीति । परिनिष्ठितत्वेन हेतुना यथा चक्षुरादिग्राह्यत्वं रसादीनां साधयितुं न शक्यते, तथा प्रमाणान्तरग्राह्यत्वमपि न सम्भवति; विशेषाभावादित्यर्थः ॥ ननु—किमिति

**पञ्चपादिका**

**ननु अपौरुषेयत्वात् तज्जन्यं स्वार्थपरिच्छेदेऽनपेक्षं कथमप्रमाणम् ? सत्यम्; तथाऽपि यथा चाक्षुषं स्पार्शनगोचरचित्रनिम्नोन्नतज्ञानं तेनासंवादादप्रमाणम्, तथेहापि स्यात् ।**

**पञ्चपादिकाविवरणम्**

परिनिष्ठिते वस्तुनि व्यभिचारादर्शनाद् भूतं चेत्प्रमाणान्तरगम्यमेवेति निश्चीयते । ननु—तुच्छव्यावृत्तेऽपि वस्तुनि प्रमाणान्तरगम्यतया व्यभिचाराभावात् कार्यमपि प्रमाणान्तरगम्यं किं न स्यात् ? न; साध्यस्वभावत्वात् प्रत्यक्षानधिगम्यतया सम्बन्धाग्रहणात्, अनुमानादीनामनवगम्यमानत्वात्, तुच्छव्यावृत्तं प्रमाणान्तरयोग्यमिति च ग्रहणाद् वरं भूतं वस्तु प्रमाणान्तरयोग्यमिति ग्रहणम्; प्रयोजकस्य निरुपाधिकत्वलाभात् । ननु—रूपादिहीनत्वाद् ब्रह्मापि प्रमाणान्तरानधिगम्यमेव, तथाऽपि परिनिष्ठितवस्तुत्वात् प्रमाणान्तरयोग्यत्वाशङ्का न व्यावर्तते । अस्ति(अपि) च प्रमाणान्तरं ब्रह्मस्वरूपविज्ञानम्; अतस्तत्संवादादप्रमाणं वेदान्ताः ॥

ननु—पुरुषवचांसि प्रमाणान्तरसापेक्षत्वात् तत्संवाद-विसंवादाभ्यां प्रामाण्यमप्रामाण्यं वाऽश्नुवते वेदवचसां तु पुरुषसम्बन्धाभावात् प्रमाणान्तरानधिगम्यविषयतया चक्षुरादिवदनपेक्षमेव प्रामाण्यमिति चोदयति—**नन्वपौरुषेयत्वादिति** ॥ परिहरति—**सत्यं तथापीति** ॥ अयमर्थः—अनपेक्षप्रमाणयोरपि चक्षुःस्पर्शनयोरर्थे विसंवादादन्यतरस्याप्रामाण्यवत्, ब्रह्मैकत्वश्रुतेः "अहं मनुष्यः" इति प्रत्यक्षस्य च परस्परव्याघातात् शब्दस्याप्रामाण्यमिति । किंचाप्तः खलु लोके प्रमाणान्तरेणार्थमवगम्य परस्मै शब्दं प्रयुञ्जानः श्रोतुः साक्षाद्वा परम्परया वा प्रयोजनपर्यन्तमर्थं विवक्षित्वा

**तत्त्वदीपनम्**

शङ्कते—**ननु तुच्छेति** । विमतम्, प्रमाणान्तरागम्यम्, तुच्छव्यावृत्तत्वात्, घटादिवदित्युक्ते प्रमाणान्तरयोग्यत्वमुपाधिः । नच साधनव्यापकत्वम्; असंभवादित्याह—**न साध्येति** । प्रत्यक्षस्य वर्तमानमात्रग्राहित्वात् कार्यस्य च साध्यत्वान्न प्रत्यक्षत्वमित्यर्थः ॥ कार्यस्य लिङ्गादिना संबन्धाप्रतिपत्तेर्न लिङ्गादिगम्यत्वमपीत्याह—**संबन्धाग्रहणादिति** ॥ तुच्छव्यावृत्तत्वमप्रयोजकं चेत्याह—**तुच्छेति** । तुच्छव्यावृत्तत्वस्य प्रतियोग्यधीनसिद्धित्वात्तस्य प्रयोजकत्वे गौरवम्, भूतत्वस्य प्रयोजकत्वे लाघवं, ततो भूतत्वमेव प्रयोजकमित्यर्थः ॥ **निरुपाधिकत्वलाभादिति** । निरपेक्षत्वलाभादित्यर्थः ॥ कार्यवद् ब्रह्मणोऽप्ययोग्यत्वान्न मानान्तरगम्यत्वमिति शङ्कते—**ननु रूपादीति** ॥ भूतेऽर्थे प्रमाणान्तरप्रसरदर्शनाद् ब्रह्मण्यपि तथात्वशङ्कायामप्रामाण्यशङ्का दुर्वारेत्याह—**तथापीति** ॥ कार्येऽपि प्रमाणान्तररयोग्यत्वशङ्काऽपरिहार्येत्याशङ्क्याह—**अपिचेति** ॥ तर्हि प्रमाणान्तरसंभवाद् वेदान्तानां ब्रह्मणि प्रामाण्यं स्यादित्याशङ्क्यानुवादकत्वेनाप्रमाण्यं प्रसज्येतेत्याह—**अत इति** ॥ एतच्च मूलग्रन्थाद् बहिरेवेति द्रष्टव्यम् ॥

संवादप्रमाणाभावे पुंवाक्यवत् श्रुतीनामप्रामाण्यमित्युक्तम्—"**तैरसंवादे न प्रामाण्यं प्रतिलभन्ते**"इत्यत्र, तत्र वैषम्यं शङ्कते—**ननु पुरुषेति** ॥ प्रमाणान्तरसंवादेऽप्यनपेक्षतया प्रामाण्यसंभवात् परिहारस्याभासत्वमाशङ्क्याह—**परिहरतीति** ॥ सम्यक् परिहारमेवाह—**अयमर्थ इति** ॥ समताग्राहिणा स्पार्शनप्रत्यक्षेण विसंवादे चित्र-निम्नोन्नतताग्राहिज्ञानं यथा बाध्यते, तथा ब्रह्मैकत्वश्रुतिरपि प्रतीचो ब्रह्मात्मतां बोधयन्ती जाड्य-जन्मादिधर्मवतो देहस्य प्रतीचैक्यं बोधयन्त्युपजीव्यजातीयकेन प्रत्यक्षेण बाध्यत इत्यर्थः । पुमर्थाभावेऽप्युपेक्षाज्ञानवत् प्रामाण्यसंभवात्"किंचे"त्युक्तिरयुक्तेत्याशङ्क्य तात्पर्यमाह—**किंचेति** ॥ **साक्षादिति** । दुग्धादीनां साक्षात् प्रयोजनपर्यन्तत्वम्, पश्वादीनां परम्परयेति

**ऋजुविवरणम्**

पूर्वं हेतोरप्रयोजकत्वम् ? अनुगतत्वात्तदेव प्रयोजकमस्तु, को दोषः ? इति चेत्, कार्ये प्रसङ्गादिष्टविघात इति भावः ॥ **ननु** व्यावर्त्यत्वेन हेतुना न कार्यस्य मानान्तरयोग्यत्वानुमानम्; बाधितविषयत्वादित्याह—**साध्यस्वभावतयेति** । नत्वेवं ब्रह्मण्यप्यनुमानमबाधितविषयम्; केनचिद्रूपेण तूभयत्राविशिष्टम्, अतो व्यापिन एव प्रयोजकत्वमिति ॥

**ननु**—"**अपौरुषेयत्वादि**"ति हेतुर्व्यर्थः; पूर्वं पौरुषेयत्वेन न सापेक्षत्वमुक्तं यतः, सिद्धार्थत्वेन संवादापेक्षत्वं च न परिहृतम्; अतोऽनुपपन्न इत्याशङ्क्याह—**ननु पुरुषवचांसीति** ॥ "**सत्यं तथापी**"त्यनेनासंवादादप्रामाण्यवत् प्रकृतेऽप्यसंवादादप्रमाणमित्युक्तम्, तदयुक्तम्; नहि तत्रासंवादादप्रामाण्यम्, नापि प्रकृते; अनपेक्षत्वाविशेषादित्याशङ्क्य व्याचष्टे—**अनपेक्षप्रमाणयोरिति** ॥ ननु-'अहं मनुष्यः' इति प्रत्यक्षेण शब्दस्य बाधो न संभवति; दोषजन्यत्वेन बाधकत्वानुपपत्तेः, नच शब्दप्रामाण्यसापेक्षमहङ्काराप्रामाण्यम्, तदभावे शब्दस्य प्रामाण्यम्, इति शक्यं वक्तुम्; अनुमानादिना

### पञ्चपादिका

**किच पुरुषार्थशून्यत्वादप्यप्रामाण्यम् । पुरुषार्थो हि नाम सुखावाप्तिर्दुःखपरिहारश्च । तौ च सिद्धत्वाद् हानोपादानविषयौ न सिद्धवस्तुन्यक्रियाशेषे सम्भवतः । ततो न क्वचिद् वेदवाक्यानां विधिसंस्पर्शमन्तरेणार्थवत्ता दृष्टोपपन्ना वा ॥ किच प्रत्यक्षाद्यविषये न शब्दमात्रस्य प्रामाण्यम् । शास्त्रस्यैषः स्वभावो यदनवगतार्थबोधकत्वम् । शब्दमात्रस्य पुनः प्रमाणान्तरगृहीतार्थप्रकाशन एव सामर्थ्यं दृष्टम्, नानवगतार्थप्रकाशने । तस्मादनर्थका वेदान्ताः; न तेषां ब्रह्मणि प्रामाण्यमिति । अत एव "वेदोषरा वेदान्ताः" इति केषांचिदुद्गारः ॥**

**यत्पुनर्भाष्यकारेण कर्तृ-देवतास्वरूपप्रकाशनेन क्रियाविधिशेषत्वं वेदान्तानां प्रकरणान्तरभयादनभ्युपगम्य**

### पञ्चपादिकाविवरणम्

प्रयुङ्क्ते; प्रयोजनानभिसन्धाने तात्पर्यादर्शनात् । तच्च प्रयोजनं साध्यस्वभावम्, इति परिनिष्ठितं वस्तु स्वयं न प्रयोजनम् नापि क्रियामनपेक्ष्य प्रयोजनसाधनम्, इति न तत्र तात्पर्यहीनः शब्दः प्रामाण्यमश्नुत इत्याह—**किञ्च पुरुषार्थशून्यत्वादित्यादिना** ॥ **"ततो न क्वचिदि"**त्युपसंहरति । किञ्च विधायकपदव्यतिरिक्तानां पदानां सम्भूय प्रमाणान्तरानधिगतवस्तुप्रतिपादनं न सम्भवति; प्रमाणान्तरानधिगतविषये सम्बन्धाग्रहणात्, यथासम्बन्धग्रहणमर्थप्रतिपादनात्, कार्यस्य तु प्रमाणान्तरानवसेयतया तत्संसृष्टपदार्थानामतद्गोचरत्वाद् युक्ता शब्देभ्यः अपूर्वार्थप्रमितिरिति दर्शयति—**किञ्च प्रत्यक्षाद्यविषय इत्यादिना** ॥ यस्मात् सूत्रकारवचनाद् भूतवस्तुप्रतिपादनायोगात् प्रयोजनशून्यत्वाद् अनधिगतार्थताऽभावाच्च न ब्रह्मणि वेदान्ताः प्रमाणम्, तस्मादनर्थका वेदान्ता इत्युपसंहरति—**तस्मादिति** ॥

**यत्पुनर्भाष्यकारेणेत्यादे**रयमर्थः-न तावद् वेदान्ताः कस्यचित्कर्मविशेषस्य प्रकरणे समधिगताः, येन "सोऽरोदीदि"-

### तत्त्वदीपनम्

विभागः ॥ शब्दमात्रस्य प्रत्यक्षाद्यगोचरे न प्रामाण्यम्, शास्त्रस्य तु वैपरीत्यमित्युक्तं टीकायाम्, तदसंभवि; विशेषाभावात्, "शब्दमात्रमि"त्यनेनापि किमुच्यत इति न ज्ञायत इति, तत्राह—**किंचेति** ॥ संबन्धग्रहणं वा कस्मात् ? इत्याशङ्क्याह—**यथा संबन्धेति** । संबन्धग्रहणं विनाऽप्यर्थप्रतिपत्तावपूर्वशब्दग्रहणेऽप्यर्थप्रतिपत्तिः स्यात्, नच तथेत्यर्थः ॥ त्वन्मतेऽप्यनधिगतवस्तुप्रकाशकत्वं तुल्यमित्याशङ्क्याह—**कार्यस्य त्विति** । नच संबन्धग्रहणाभावात् कार्यवाक्यस्याप्रामाण्यमित्यपि शङ्क्यम्; आहवनीयादिवदलौकिकत्वेऽपि तत्र संङ्गतिग्रहणसंभवादित्यर्थः ॥ "तस्मादनर्थकाः" इत्येतदपेक्षितमर्थं दर्शयति—**तस्मादिति** ॥

वेदान्तानां न विधिशेषत्वम्; तत्प्रकरणानाम्नानात्, इत्युक्तम्; तदयुक्तम्; तत्र वेदान्तानां विधिशेषत्ववादिनं प्रति "तत्प्रकरणानाम्नानादि"ति हेत्वभिधानानुपपत्तेरित्याशङ्क्याह—**यत्पुनरिति** ॥ किं कर्मविशेषापेक्षितप्रतिपादनेन तच्छेषत्वम् ? अथवा कर्ममात्रशेषत्वम् ? इति विकल्प्याद्यं प्रत्याह—**न तावदिति** । वेदान्तानां कर्मविशेषापेक्षितार्थान-

### ऋजुविवरणम्

बाधादित्याशङ्क्य परिहृतम्—**"किञ्च पुरुषार्थशून्यत्वादि"**ति, तदयुक्तम्; नहि सप्रयोजनत्वं प्रामाण्ये प्रयोजकम्, येन तदभावादप्रामाण्यं भवेत्, उपेक्षणीये दर्शनात्, **"तौ च सिद्धत्वादि"**ति व्यर्थम्; अत्र पुरुषार्थत्वस्य तद्धेतुत्वस्य वा वक्तुं शक्यत्वादित्याशङ्क्यावतारयति—**किचाप्तः खलु लोक इति** ॥ ननु न तात्पर्यं प्रमितिहेतुः; येन तदभावे व्युत्पन्नं ज्ञानमज्ञानसंशय-विपर्ययरहितत्वात्प्रमाणमेव भवेत्, अतत्परादप्यबाधितबोधदर्शदात्, नापि प्रयोजनाभावादतत्परत्वेनाप्रामाण्यमिति युक्तं वक्तुम्; प्रयोजनहीनेऽपि तात्पर्यदर्शनात्, उभयाभावेऽपि प्रामाण्यं युज्यत एव; अनधिगतबोधलक्षणत्वाद्धस्य, सति च बोधे प्रयोजनं च कल्पयितुं शक्यत एवेत्याशङ्क्य परिहृतम्—**किञ्च । प्रत्यक्षाद्यविषय इति** ॥ तत्र किं शब्दमात्रं नाम ? कथं वा तस्याप्रतिपादकत्वम् ? कारणाभावात्, शक्त्या हि बोधकत्वम्, नतु विषयस्य प्रत्यक्षादिविषयत्वेन; अतिप्रसङ्गादित्याशङ्क्यावतारयति—**किञ्च विधायकपदेति** ॥ ननु प्रमाणान्तरगृहीते भवतु संबन्धग्रहणम्, प्रतिपादनं च केवल एव भवत्वित्याशङ्क्याह—**यथासंबधग्रहणमिति** ॥ ननु तर्हि विधायकपदसन्निहितेष्वपि नानधिगतार्थप्रतिपादनं संभवति; गृहीत एव संबन्धग्रहणात्, कथञ्चिद्विधायकपदार्थस्याज्ञातत्वेऽपीतरपदार्थानां गृहीतत्वादित्याशङ्क्याह—**कार्यस्य तु प्रमाणान्तरेति** ॥

"प्रकरणान्तरभयादि"ति किमर्थमुक्तम् ? अयोग्यत्वेनानन्वयसिद्धेः, कर्मप्रकरणगतत्वस्य च वक्तुं शक्यत्वात्, तदभावे चाव्यभिचरितकर्तृप्रतिपादनेन सर्वशेषोऽर्थवाद इति वक्तुं शक्यत्वादित्याशङ्क्य व्याचष्टे—**न तावद् वेदान्ता**

## पञ्चपादिका

**स्ववाक्यगतोपासनाकर्मपरत्वमुक्तम्, तदयुक्तम्; उपासनाविधिशेषत्वेऽपि संवादाभावाद् जगत्कारणे न सर्वज्ञत्वादिसिद्धिः।**

## पञ्चपादिकाविवरणम्

त्यादिवद् विधिसमन्वयः स्यात्। ननु सर्वकर्मविधायिवेदैकदेशत्वात् सर्वकर्मप्रकरणं स्यात् न; सर्वेण वेदवाक्येनैकस्य वस्तुनः प्रतिपादनाभावादेकवाक्यताऽयोगात्, धर्मसामान्यस्याप्रतिपाद्यत्वात्। अस्तु तर्हि पर्णमयीवाक्यवत् कर्तृद्वारेण सर्वक्रतुशेषभूतोऽर्थवाद इति नैतद्युक्तम्; स्तुतिप्रतिपादनयोरुपकाराभावाद्वैपरीत्याच्च। **(स्तुतौ प्रतिपादने चोपयोगो नास्ति, विपरीतं च)।** न हि कर्मणां कर्ता नित्य-शुद्ध-बुद्ध-मुक्तस्वभावो निर्गुणो निष्क्रियोऽनश्नन्नन्योऽभिचाकशीतीति स्तवः, प्रतिपादनं वा कर्मसु प्रवृत्तावुपकरोति; विपरीतं च स्यात्। तस्मान्न कर्मसु-वेदान्तानां समन्वयः, किंतु स्वप्रकरणगत-सगुणोपासनासु सम्बन्ध इति भाष्यार्थमनूद्याक्षिपति—**तदयुक्तमिति** ॥ तदाऽपि विशिष्टब्रह्मस्वरूपासिद्धिरित्यर्थः। न

## तत्त्वदीपनम्

भिधायित्वादेतत्प्रकरणत्वं सिद्धमित्यर्थः ॥ द्वितीयमुत्थापयति—**ननु सर्वेति** ॥ किं विधिवत् तदभिधानेन तच्छेषत्वम्? आहो तदपेक्षितप्रतिपादनेन? आद्येऽपि किं सर्वत्रैकाश्रयः साधनव्यक्तिः प्रतिपाद्यते? उतैकं सामान्यम्? नाद्य इत्याह—**न सर्वेणेति** ॥ द्वितीयं प्रत्याह—**धर्मेति**। श्रेयःसाधनत्वमात्रस्य लोकप्रसिद्धत्वेनाप्रतिपाद्यत्वादित्यर्थः ॥ जुह्वाः क्रतु-संबन्धित्वात् तद्द्वारा पर्णताया अपि क्रतुसंबन्धवत् कर्तुः सकलक्रतुसंबन्धित्वादात्मप्रतिपादनेन वेदान्तानामपि क्रतु-संबन्धोऽविरुद्ध इति शङ्कते—**अस्तु तर्हीति** ॥ "जुह्वा जुहोती"ति होमाङ्गत्वेन श्रुताया जुह्वाः प्रकृतिद्रव्याकाङ्क्षापरि-पूरणेन पर्णतायाः क्रत्वनुप्रवेशित्वे सिद्धे "न स पापं श्लोकं शृणोति" इत्यादेरर्थवादत्वं युक्तम्, इह त्वात्मस्तुतौ तत्प्रतिपादने च फलाभावाद् मैवमित्याह—**नैतदिति** ॥ देहाद्यतिरिक्तमात्मानमन्तरेण पारलौकिकप्रवृत्त्यनुपपत्तेस्तेनो-पकाराभावः कथम्? इत्याशङ्क्याह—**न हीति** ॥ विनियोजकप्रमाणाभावान्न कर्मशेषत्वमित्युपसंहरति—**तस्मादिति**। वेदान्तानां न कर्मशेषत्वम्, नापि स्वार्थपरत्वं चेत्, तर्हि किम्? आनर्थक्यम्, इति शङ्कते—**किंत्विति** ॥ क्रियाविधि-शेषत्वाभावेऽप्युपास्तिविधिशेषत्वात्प्रामाण्यम्; इतरथाऽध्ययनविधिविरोधादित्याह—**स्वप्रकरणेति** ॥ उपास्तेरुपास्य-साकाङ्क्षत्वात् तदभाव उपास्त्यसंभव इत्याह—**भाष्येति** ॥ उपास्याभावेनोपास्त्यनुपपत्तिविवक्षा चेत्, तर्ह्युपास्याभाव एव प्रतिपाद्यः, किमिदमुच्यते—न सर्वज्ञत्वादिसिद्धिरिति? तत्राह—**तथापीति**। सर्वज्ञत्वादिविशिष्टंब्रह्मोपास्यत्वेन श्रूयते, नच तदुपपद्यते; तत्संवादकप्रमाणाभावादित्यर्थः ॥ आरोपितसर्वज्ञत्वादिविशिष्टतयोपास्यं ब्रह्मेत्युक्तम्—"सत्यमि"त्यत्र, उपासनाविधिशेषत्वेन वेदान्तप्रामाण्यस्य भाष्ये निर्दिष्टत्वादित्याशङ्क्याह—**न खल्विति** ॥ वाक्यस्यो-

## ऋजुविवरणम्

**इति ॥ सर्वेण वेदवाक्येनेति**। अयमर्थः—यदि सर्वो वेद एकवाक्यतयैकं कर्म प्रतिपादयेत्, तर्हि तत्प्रकरणात् तदेक-वाक्यता भवेत्, नच तदस्तीति ॥ ननु धर्ममात्ररूपेण प्रतिपाद्यस्यैकत्वात् तत्प्रतिपादकस्याऽप्येकवाक्यत्वेन तदेकवाक्यता वेदान्तवाक्यानामित्याशङ्क्याह—**धर्मसामान्यस्येति** ॥ **पर्णमयीवाक्यवदिति**। "यस्य पर्णमयी जुहूर्भवती"ति वाक्यस्य यथा जुहूप्रकृतिभूतपर्णतासमर्पणेन जुहूमदपूर्वार्थित्वम्; जुह्वाः प्रकृतिमद्द्रव्यापेक्षितत्वेनास्य तत्समर्पकत्वात्, अव्यभिचरितक्रतु-संबन्धेन सर्वार्थित्वम्, एवमिहाप्यात्मनः सर्वकर्मार्थित्वात् तद्द्वारेण सर्वशेषत्वम्; आत्मनः कर्मभिरपेक्षितत्वात्, अस्य च तत्समर्पकत्वादिति ॥ स्तुतौ प्रतिपादने चोपयोगो नास्तीत्युक्तम्, तदयुक्तम्; अङ्गस्तुतेः प्रवृत्तावुपयोगित्वात्, प्रतिपादन-ञ्चोपयोगि; कर्मणां कर्त्रा विनाऽनुपपत्तेरित्याशङ्क्याह—**नहि कर्मणामिति**। न कर्तृमात्रप्रतिपादनपरं वेदान्तवाक्यम्, किन्तु निर्विशेषस्वरूपप्रदर्शनपरम्। नच तत्कर्मसूपयुज्यत इति भावः ॥ ननु एतद्वाक्यबलादेव कश्चिदुपकारः कल्प्यत इति, नेत्याह—**विपरीतञ्चेति** ॥ **"तदयुक्तमि"**त्यादिना जगत्कारणे सर्वज्ञत्वादिसिद्धिर्नास्तीति कथमुक्तम्? स्वरूपासिद्धि-प्रसङ्गात्, अप्रस्तुतञ्चैतत्; उपास्यब्रह्मसमर्पणेनोपासनाशेषत्वं तेनोक्तम्, तद्विहाय जगत्कारणे सर्वज्ञत्वादिगुणनिरा-करणादित्याशङ्क्य व्याचष्टे—**तदाऽपि विशिष्टब्रह्मेति** ॥ **"सत्यमनुमानतः"**इति परिहारो न युक्तः; नह्युपासनानियोग-सिद्धिमात्रप्रदर्शनमुपयुज्यते, किन्तु वेदान्तानां तादर्थ्यम्। नच तदस्मिन् पक्षे संभवत्यनुमानसिद्धम्; धर्मारोपेणोपासना-कीर्तनात्, तावता वेदान्तानां तादर्थ्यासिद्धेरुपास्यसमर्पकत्वाभावात्, अतो भाष्यविरोध इत्याशङ्क्यावतारयति—**न**

## पञ्चपादिका

**सत्यम्; अनुमानतोऽनिर्दिष्टविशेषे तस्मिन्नवगते समारोपितैर्धर्मैरुपासनानियोगः सेत्स्यति। एवं चाध्ययनविधिग्राहितानां वेदान्तानामेकान्ततो नानर्थक्यं भविष्यतीत्यभिप्रायः। फलं च तत्र (रात्रिसत्रवाक्यानामिव) अर्थवादसमर्पितं भविष्यति इत्यभिप्रायः॥**

**तत्तु समन्वयात् तत्=ब्रह्म सर्वज्ञत्वादिगुणकं वेदान्तशास्त्रात्प्रतीयत इति प्रतिजानीते। हेतुं चाचष्टे—समन्वयादिति। तत्र तात्पर्येण वेदान्तवाक्यानां समन्वयादित्यर्थः॥**

## पञ्चपादिकाविवरणम्

खलूपासनाशेषतया ब्रह्मस्वरूपसिद्धिर्भाष्येऽभिप्रेता, किन्तूपास्ये गुणप्रक्षेपद्वारेण वेदान्तवाक्यानां समन्वयो विवक्षित इति परिहरति—**सत्यमनुमानत इति**॥ ननु—वेदान्तवाक्यानां सगुणोपासनप्रकरणादपि व्युत्थितानां स्वरूपमात्रपर्यवसितानां नोपासनासम्बन्धः, नापि स्वात्मन्युपासना कल्पयितुं शक्यते; अश्रुतत्वादिति, तत्राह—**एवं चाध्ययनविधीति**॥ **फलं चेति**॥ रात्रिसत्राणामिवेति शेषः॥

सूत्रं व्याचष्टे—**तद् ब्रह्म सर्वज्ञत्वादीत्यादिना**॥ **तत्र तात्पर्येणेति**॥ अयमर्थः—तात्पर्यं नाम तदर्थप्रमिति-

## तत्त्वदीपनम्

भयपरत्वासंभवादित्यर्थः। कथं तर्हि वेदान्तानां प्रामाण्यम्? इत्याशङ्क्याह—**किन्त्विति**। कार्यलिङ्गानुमितकारणे सर्वज्ञत्वादिकं समारोप्य तदुपास्तिर्विधीयते वेदान्तैरित्यर्थः॥ "सत्यं ज्ञानमि"त्यादिवाक्येषूपास्तिविधिपदाश्रवणादुपास्तिप्रकरणव्युत्थितत्वाच्च न तदङ्गत्वमपीति शङ्कते—**ननु वेदान्तेति**॥ प्रयोजनाकाङ्क्षया प्रकरणान्तरपठितविधिसंबन्धमाशङ्क्याह—**स्वरूपेति**॥ आत्मज्ञानमात्रेण पुंसः कार्तार्थ्ये सर्वेषां तत् स्यात्, नच तदस्तीति फलान्तरं वाच्यम्; तथा च "पूषा प्रपिष्टभागः" इत्यादाविव विधिपदं कल्प्यत इत्याशङ्क्याह—**नापीति**। द्रव्य-देवतासंबन्धस्य यागाविनाभूतत्वाद् यागस्य च नियोगाविनाभावाद् विधिपदं कल्प्यत इति युक्तं तत्र, नच तथाऽत्र किंचित् कल्पकं श्रुतमस्तीत्यर्थः॥ अध्ययनविध्युपात्तत्वानुपपत्तिर्विधिपदकल्पिकेत्याह—**तत्राहेति**। अधिकारिफलाभावाद् विधिपरत्वं सत्यादिवाक्यानामिति शङ्कानिरासायोक्तं टीकाकृता—**"फलं च तत्रे"ति**। "एतावदरे खल्वमृतत्वम्" "ब्रह्मविदाप्नोती"त्यादिवाक्यात् प्रतीयमानममृतत्वं साध्यत्वेन परिणमय्य तत्काम उपासीतेति कल्पनाद् न कोऽपि दोष इत्यर्थः॥

समन्वयो नाम वेदान्तानां ब्रह्मप्रमितिजनकत्वम्, तदेव प्रतिज्ञातार्थ इति साध्याविशिष्टत्वम्, इत्याशङ्क्य च, समन्वयशब्देन तात्पर्यवत्त्वं विवक्षितम्, शास्त्रप्रमाणकत्वमात्रं च प्रतिज्ञाविषय इत्यर्थभेद इत्युक्तम्—**"तत्रतात्पर्येणे"त्यत्र** तदयुक्तम्; वेदान्तेष्वपौरुषेयेषु पुरुषधर्मतात्पर्यानुपपत्तेरित्याशङ्क्याह—**तत्र तात्पर्येणेति**। तात्पर्यं शब्दधर्म इति

## ऋजुविवरणम्

**खलूपासनेति**॥ **ननु वेदान्तवाक्यानामिति**। यथा कर्मशेषत्वं वेदान्तानां निराक्रियते प्रकरणपाठाभावात्, तथा सगुणोपासनाप्रकरणेऽपि पाठाभावान्नैतच्छेषत्वमित्यर्थः॥ ननु प्रकरपाठाभावेऽपि प्रयोजनाकाङ्क्षत्वात् तच्छेषत्वं निश्चीयते तदपेक्षितोपास्यसमर्पणसामर्थ्यात्, विधेश्च समर्पणापेक्षित्वात्, तदुभयाकाङ्क्षयाऽन्वय इत्याशङ्क्याह—**स्वार्थमात्रपर्यवसितानामिति**। अनन्याकाङ्क्षितवस्तुप्रतिपादकत्वादित्यर्थः॥ अथवा—प्रकरणादुत्थितत्वं स्वार्थमात्रपर्यवसाने हेतुः, मा भूदुपासनान्तरसंबन्धः, स्ववाक्य एवोपासना कल्प्यते सप्रयोजनत्वसिद्ध्यर्थमित्याशङ्क्याह—**नापि स्वात्मनीति**॥ **अश्रुतत्वादिति**। व्यधिकरणो हेतुः; अश्रुतत्वस्य कल्पनानिवर्तकत्वाभावात्, इष्टविघातकारी चायं हेतुः; तस्य कल्पनाहेतुत्वादीति। अयमभिप्रायः-नात्र विधिः कल्पयितुं शक्यते। कल्पकाभावात्, न तावद्वेदान्तानां तादर्थ्यबोधकं प्रमाणमस्ति, नापि तेन विनाऽनुपपद्यमानस्य श्रवणमस्ति, नापि फलश्रवणमस्ति; तदभावेऽधिकार्यभावाद् नोपासनाकल्पनम्, इत्यतो निरर्थका वेदान्ता इति चोद्याभिप्रायः॥ **रात्रिसत्राणामिवेति**॥ "य एता रात्रीरुपयन्ती"त्यत्राधिकारस्तावद् न श्रूयते, अतः कल्प्यः। तत्रान्तरङ्गत्वेऽपि न जीवनं कल्प्यम्, अपि तु प्रयुक्तिलाघवाय कामाधिकारित्वम्। तत्रापि "सः स्वर्गस्स्यादि"त्यनेन न्यायेन स्वर्गो वा कल्प्यताम्? आर्थवादिकं वा? इति विशये श्रुतमात्रेयो निर्देशादि"त्यनेन न्यायेनैकवाक्यताऽनुरोधादार्थवादिकफलस्वीकारः, तद्वदिहापि "एतावदरे खल्वमृतत्वमि"त्याद्यर्थवादप्रतीतामृतत्वस्वीकार इति॥

कथं समन्वयमात्रेण ब्रह्मप्रमाजनकत्वम्? व्यभिचारात्, इत्याशङ्क्य व्याख्यातम्—**"तात्पर्येऽपी"ति**, तदयुक्तम्, तात्पर्यस्य पुरुषधर्मत्वेनापौरुषेये वेदेऽभावादित्याशङ्क्य, व्याचष्टे—**तात्पर्यं नामेति**॥ कथं शब्दधर्मता, सत्यपि

## पञ्चपादिकाविवरणम्

शेषता शब्दधर्मः। कथम्? विवक्षातात्पर्यमिति चेत्, अर्थप्रमितिं विवक्षित्वा तादर्थ्येन प्रयुज्यमानत्वं शब्दधर्म एव। तत्रापि तात्पर्यं न विवक्षामात्रम्। तत्र तात्पर्यं यस्मिन्नर्थे वाक्यस्योपक्रमोपसंहारैकरूप्यम्, यस्य चार्थस्य पुनःपुनरभ्यासः, यस्मिन्नर्थे फलविशेषसङ्कीर्तनम्, अपूर्वार्थप्रमेयता च, यत्र चार्थवादोपादानमुपपत्तिभिरुपपादनं चेत्यादीनि लिङ्गानि भवन्ति, तस्य वाक्यस्य तस्मिन्नर्थे तात्पर्यमिति गम्यते। नच प्रमेयस्य साध्यतैव तात्पर्यलिङ्गम्; "पुत्रस्ते जातः" इत्यादिषु तात्पर्यदर्शनात्, साध्यस्य च प्रमेयत्वे तात्पर्यसिद्धिः, तात्पर्ये सिद्धे साध्यस्य प्रमेयतेतीतरेतराश्रयात्। साध्येऽर्थे प्रमिते प्रतिबन्धनिरासितया पश्चात्तात्पर्यमावगम्यत इति चेत्, तथाऽपि साध्यता न तात्पर्यलिङ्गम्; "जार्तिलयवाग्वा वा जुहुयादि"त्यादिष्वदर्शनात्। तस्मादुक्तानि तात्पर्यलिङ्गानि वेदान्तानां ब्रह्मणि दृश्यन्ते।

## तत्त्वदीपनम्

संबन्धः॥ शब्दधर्मत्वं संभावयितुमाह—**तदर्थप्रमितिशेषतेति**। प्रतीयमानो योऽर्थः, तत्प्रमितिजननसामर्थ्यं तात्पर्यम्, तस्य शब्दधर्मत्वमुचितमित्यर्थः। स चासावर्थश्चेति तदर्थः, तत्प्रमितिशेषत्वमिति वा॥ शब्दधर्मत्वमाक्षिपति—**कथमिति**॥ तात्पर्यस्य तदर्थप्रमितिशेषतारूपत्वात् कथमाक्षेपः? इत्याशङ्क्याह—**विवक्षेति**। विवक्षायां शब्दप्रामाण्यदर्शनात्, इतरथा चादर्शनाद्विवक्षा तात्पर्यम्। तस्याश्च पुरुषसंबन्धित्वान्न शब्दधर्मत्वमित्यर्थः॥ विवक्षाया अर्थप्रमित्युद्देशेन प्रवृत्तत्वादर्थप्रमितिशेषत्वमेव तात्पर्यमित्याह—**अर्थप्रमितीति**॥ भवतु प्रयुज्यमानत्वस्य शब्दधर्मत्वम्; तथाऽपि कथं तात्पर्यस्य शब्दधर्मत्वम्? इत्याशङ्क्याह—**तत्रापीति**। तत्र लोक इति यावत् लोकेऽपि तात्पर्यं न विवक्षामात्रम्, किं तु तदर्थप्रमितिशेषत्वम्, इतरथाऽपौरुषेये वचसि तात्पर्यासंभवादप्रामाण्यं दुर्वारं स्यादित्यर्थः॥ तात्पर्यस्य विवक्षाऽतिरिक्तत्वेऽपि तद्गम्यत्वं तावदाश्रयणीयम्, तथाच ज्ञापकाभावाद् वेदे न तात्पर्यसिद्धिरित्याशङ्क्याह—**तच्चेति**। तच्च तात्पर्यमिति गम्यत इति संबन्धः॥ इति पदपरामृष्टमर्थमाह—**यस्मिन्नर्थे इति**। सर्वशाखाप्रत्ययत्वमादिशब्दार्थः॥ उपक्रमोपसंहारादि न तात्पर्यज्ञापकम्, किं तु प्रमेयस्य कार्यत्वम्; ततश्च भूतनिष्ठस्य वचसोऽप्रामाण्यमित्याशङ्क्याह—**नचेति**॥ तत्रापि कार्यनिष्ठतयैव तात्पर्यमित्याशङ्क्य, किं ज्ञातं तात्पर्यं प्रमितिजनकम्? उताज्ञातम्? इति विकल्प्याद्यं प्रत्याह—**साध्यस्येति**। साध्ये प्रमिते तत्प्रमितिजननसामर्थ्यरूपतात्पर्यसिद्धिः, तत्प्रमितौ च तदुपेताच्छब्दात् साध्यार्थप्रमितिरितीतरेतराश्रयत्वमित्यर्थः॥ द्वितीयमुत्थापयति—**साध्य इति**॥ अज्ञाततात्पर्योपेताच्छब्दात्साध्यप्रमित्यङ्गीकारे तात्पर्यावधारणं वृथा स्यादित्याशङ्क्याह—**प्रतिबन्धेति**। "विषं भुङ्क्ष्वे"त्यादेः स्वार्थतात्पर्यशून्याद्विषभोजनप्रमित्यनुत्पत्तिदर्शनात्सर्वत्रापि प्रमित्यनुत्पत्तिशङ्कायां तन्निरासार्थं तात्पर्याधिगमो युक्त इत्यर्थः॥ अज्ञायमानतात्पर्यवच्छब्दस्य प्रमितिजनकत्वम्, तात्पर्यज्ञानं च प्रतिबन्धनिवर्तकमित्यङ्गीकृत्य प्रमेयसाध्यत्वं तात्पर्यज्ञापकमित्ययुक्तमित्याह—

## ऋजुविवरणम्

शब्दे पुरुषहीने तात्पर्यशब्दप्रयोगाभावात्, सति तु तस्मिन् तत्प्रयोगात्पुरुषधर्मत्वमेवेत्याशङ्क्याक्षिपति—**कथमिति**॥ किं तर्हि तात्पर्यमिति? तदाह—**विवक्षातात्पर्यमिति**॥ अयं भावः—विवक्षित्वा प्रयुक्ते शब्दे तात्पर्यशब्दप्रयोगो दृश्यते लोके; तदभावे नास्ति; अतो तदागमन्यायेन विवक्षायास्तत्त्वमिति परिहरति—**अर्थप्रमितिमिति**। यद्यपि विवक्षित्वा प्रयुक्ते शब्दे तच्छब्दप्रयोगः; तथाऽपि न विवक्षामात्रं तात्पर्यम्; सत्यामपि विवक्षायां तादर्थ्येनाप्रयुक्ते शब्दे तात्पर्यादर्शनात्, नापि विवक्षापूर्वकतादर्थ्येन प्रयोगस्तात्पर्यम्; सत्यपि तादर्थ्ये विवक्षाऽभावापराधेन तात्पर्याभावादर्शनात्, विवक्षाया विद्यमानस्थलेऽप्यप्रयोजकत्वात्। तादर्थ्यं तु विवक्षारहितमपि तात्पर्यं भवत्येव प्रयोग-प्रतिपत्तिभ्याम्। तस्माच्छब्दधर्म एवेति भावः॥ भवतु शब्दधर्मता, तथाऽपि तात्पर्येण समन्वयादिति विशेषणासिद्धो हेतुः; तात्पर्यज्ञापकाभावात्, अज्ञातस्य प्रमाजनकत्वाभावाद् ज्ञातत्वं वक्तव्यम्। प्रमालक्षणकार्यात् तज्ज्ञान इतरेतराश्रयप्रसङ्गाद् न तात्पर्येण प्रमाजनकत्वनिश्चयः, भवतु वा कथञ्चित्तात्पर्येण निश्चयः, तथाऽपि नात्र तात्पर्यमिति निश्चेतुं शक्यत इत्याशङ्क्याह—**तच्च तात्पर्यं यस्मिन्निति**॥ **"तस्य वाक्यस्य तस्मिन्नर्थे"** इत्यनेन तात्पर्यज्ञापकलिङ्गमर्थविशेषनिष्ठत्वादर्थविशेषनिष्ठमेव तात्पर्यं ज्ञापयतीत्युक्तम्। **ननु** नैतानि लिङ्गानि तात्पर्ये, साध्यतैव तु प्रमेयगता तात्पर्यलिङ्गम्; वाक्यान्तरे दर्शनात्, अत्र तु तदभावान्न तात्पर्यनिश्चय इत्याशङ्क्याह—**नच प्रमेयस्येति**॥ ननु तत्रापि न सिद्धार्थे तात्पर्यम्, अपितु कार्य एव; अतस्तदेव तात्पर्यलिङ्गमित्याशङ्क्याह—**साध्यस्य च प्रमेयत्व इति**॥ ननु नेतरेतराश्रयः, यस्मान्न तात्पर्यादर्थबोधः, अपित्वन्यत एवेति चोदयति—**साध्येऽर्थे प्रमित इति**॥ तस्मादुक्तानि तात्पर्यलिङ्गानि। तानि चात्र दृश्यन्त इत्यर्थः॥

## पञ्चपादिकाविवरणम्

तथाहि—"सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्" "ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसी"त्युपक्रमोपसंहारयोरैकरूप्येण प्रत्यगात्माद्वितीयरूपं ब्रह्मावगम्यते। तथा—"ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसी"ति नवकृत्वोऽभ्यस्यते। प्रमाणान्तरेण चानधिगतमद्वितीयं ब्रह्मात्मत्वं प्रतिपाद्यते। "आचार्यवान् पुरुषो वेद तस्य तावदेव चिरं यावन्न विमोक्ष्ये" इति च निरतिशयपुरुषार्थावाप्तिर्ब्रह्मविज्ञानफलमवगम्यते। "अनेन जीवेनात्मनाऽनुप्रविश्य" "येनाश्रुतं श्रुतमि"त्यादिर्ब्रह्मण्यर्थवादश्चोपादीयते। मृल्लोहतप्तपरशुग्रहणादिदृष्टान्तैः स्वपितिनामनिर्वचनेन च सृष्टि-स्थिति-संहारैश्च ब्रह्मात्मैकत्वं प्रतिपाद्यत इति॥

तथा तैत्तिरीयके—"सत्यं ज्ञानमनन्तं ब्रह्म" "स यश्चायं पुरुषे यश्चासावादित्ये स एकः" इत्युपक्रमोपसंहारयोः प्रत्यगद्वितीयं ब्रह्मावगम्यते। तथा "सच्च त्यच्चाभवद्" 'यदिदं किंच' 'तदात्मानं स्वयमकुरुत' "यतो वाचो निवर्तन्ते" इति च प्रत्यगद्वितीयं ब्रह्माभ्यस्यते। प्रमाणान्तरेणानधिगतं च प्रतिपाद्यते। "स सर्वान् कामान् समश्नुते" इत्यादि च फलं ब्रह्मविज्ञानेऽवगम्यते। सृष्टिश्रुतयश्चाद्वितीयब्रह्मप्रतिपत्त्यर्थवादभूता दृश्यन्ते। तथा कोशपञ्चकोपन्यासेन प्राणनादिव्यापारलिङ्गैश्च ब्रह्मात्मैकत्वं प्रतिपाद्यत इति। एवं सर्वेषु वेदान्तेषु ब्रह्मात्मैकत्वप्रमितौ तात्पर्यलिङ्गानि द्रष्टव्यानि। एवं तात्पर्येण समन्वयाद् ब्रह्मैव वेदान्तप्रमेयमिति॥

## तत्त्वदीपनम्

**तथापीति**॥ **जर्तिलयवाग्वेति**। अरण्यतिलनिर्मितयावाग्वेत्यर्थः। "अजक्षीरेण जुहोती"त्युपक्रमविरोधाद् "जर्तिलयवाग्वा वा जुहुयात्" इत्यादेर्न स्वार्थे तात्पर्यम्, किं त्वर्थवादत्वमित्यर्थः॥ विवक्षा-साध्यत्वयोस्तात्पर्यलिङ्गत्वनिरसनफलमाह—**तस्मादिति**। तस्मादुक्तान्येव तात्पर्ये लिङ्गानि। तानि च दृश्यन्त इति योजना॥ तात्पर्यलिङ्गानि स्पष्टयति—"सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयमि"त्युपक्रम्य "ऐतदात्म्य"मित्यादिरुपसंहारः। अभ्यासलक्षणतगत्पर्यलिङ्गमाह—**तथेति**॥ अनधिगतार्थगन्तृतालक्षणं लिङ्गान्तरमाह—**प्रमाणान्तरेति**॥ ब्रह्मप्रतिपादने फलोपलम्भादपि तत्र तात्पर्यमित्याह—**आचार्यवानिति**। आचार्योपदिष्टशब्दजनितज्ञानवान् मनन-निदिध्यासनाभ्यामसंभावनादिप्रतिबन्धे निवृत्ते ब्रह्म प्रत्यक्षेण यः साक्षात्कुरुते, तस्य तावानेन विदेहकैवल्ये विलम्बः, यावत्, प्रारब्धकर्मणामुपभोगेन परिसमाप्तिरिति श्रुत्यर्थः॥ ब्रह्मणोऽप्रतिपाद्यत्वे "अनेन जीवेने"त्याद्यर्थवादोपादानं न स्यात्, अस्ति च तत् तस्मादपि प्रतिपाद्यमित्याह—**अनेनेति**। प्रसिद्धेन प्राणधारणात्मना तेजोऽबन्नलक्षणा देवता अनुप्रविश्य नामरूपे व्यक्तीकरोतीत्यर्थः। अश्रुतं श्रवणविषयो भवति, तत् कस्मादिति चेत्, ब्रह्मव्यतिरेकेण कार्यस्याभावात्, तज्ज्ञानेनेतरज्ञानमुचितमित्यर्थः॥ उपपत्तितोऽप्येकं ब्रह्म प्रतिपाद्यमित्याह—**मृल्लोहेति**। मृदि ज्ञातायां यथा तन्मयं शरावादि प्रतीयते, यथा वा लोहस्वरूपे ज्ञाते तन्मयस्य सूच्यादेर्ज्ञातता; तथा ब्रह्मकारणज्ञानेन तत्कार्यमपि ज्ञातं स्यादित्यर्थः। यथाऽसत्यं ब्रुवतस्तस्करस्य बन्धः, इतरस्य मुक्तता, तद्वदसत्यं जगत् सत्यं मन्यमानस्य बन्धः, इतरस्य मुक्ततेति तप्तपरशुदृष्टान्तश्रुत्यर्थः॥ **स्वपितिनामनिर्वचनेनेति**। "सता सोम्य तदा संपन्नो भवति स्वं ह्यपीतो भवती"त्यादिना जाग्रत्स्वप्नभोगोपस्थापककर्माभावे स्वस्वरूपे व्यवतिष्ठत इत्यर्थः॥ तज्जत्वात्तदनत्वाच्च ब्रह्मव्यतिरेकेण जगतोऽभावः, ततश्च तत् पूर्णमित्याह—**सृष्टीति**॥

सर्वशाखाप्रत्ययत्वं दर्शयितुं शाखान्तरीयं तात्पर्यलिङ्गमाह—**तथा तैत्तिरीयक इति**॥ पृथिव्यादिभूतत्रयं सत्, वाय्वादिभूतद्वयं **त्यत्**। भावप्रत्ययवेद्यं सत्, नास्ति-अभावप्रत्ययवेद्यं **त्यदिति** वा। तद् ब्रह्मस्वरूपं मायया जगदाकारेण परिणमय्य, स "स्वयमि"ति निमित्तान्तरनैरपेक्ष्यमाह। काम्यन्त इति कामाः, तानित्यर्थः॥ **सृष्टिश्रुतय इति**॥ "यतो वै"त्याद्या इत्यर्थः। उपपत्तितोऽप्येकं ब्रह्मेत्याह—**तथेति**। अन्नमय-प्राणमय-मनोमय-विज्ञानमयानन्दमयाः कोशपञ्चकशब्दार्थः। "को ह्येवान्यात्कः प्राण्याद् यदेष आकाश आनन्दो न स्यादि"त्यादिना प्राणनादिव्यापारहेतुभूतं ब्रह्मास्तीति लिङ्गप्रदर्शनं निगदव्याख्यातम्॥

## ऋजुविवरणम्

**सच्च त्यच्चेति** तदित्यर्थः॥ अभावप्रपञ्चोऽत्र त्यच्छब्देन विवक्षितः। **प्राणनादिव्याव्यापारलिङ्गैश्चेति**॥ "को ह्येवान्यात् कः प्राण्यादि"ति विवक्षितो व्यापारः। "एष ह्येवानन्दयाति" इत्यादिशब्दपरिगृहीतश्च। प्रातिपदिकार्थस्य सत्तामात्रत्वान्नान्याकाङ्क्षा; क्रियाकारक रणामेव तदपेक्षेति भावः। **तत्रापीति**। लिङ्गसंख्याविशिष्टस्यैव वाक्यार्थत्वान्नेतरवाक्यार्थवैलक्षण्यमिति भावः॥

### पञ्चपादिका

**सम्यगन्वयः समन्वयः। अथ केयं सम्यक्ताऽन्वयस्य ? पदानां परस्परानवच्छिन्नार्थानामनन्याकाङ्क्षाणामव्यतिरिक्तैकरसप्रातिपदिकार्थमात्रान्वयः;**

### पञ्चपादिकाविवरणम्

सम्यगन्वय इत्यादिना सूत्रभागं व्याचष्टे। पदानामन्वय इति सम्बन्धः। तत्र क्रिया-कारकसंसर्गविषयतया पदानामन्वयं व्यावर्तयति—**परस्परानवच्छिन्नार्थानामिति** ॥ तत्रोद्भिदादिशब्दस्य यजतिसामानाधिकरण्येनोद्भिद्यागमात्रवर्तिनोरुद्भिद्यागशब्दयोरनवच्छिन्नार्थत्वेऽपि नियोगाकाङ्क्षा विद्यते, तथेहापि स्यादिति, नेत्याह—**अनन्याकाङ्क्षाणामिति** ॥ एवं शब्दानां क्रियावाक्येभ्यो वैलक्षमुक्त्वाऽर्थवैलक्षण्यं दर्शयितुं तत्र क्रिया-कारक-संसर्गेभ्यो वैलक्षण्यमाह—**अव्यतिरिक्तेति** ॥ ननु—नीलोत्पलवद् भेदाभेदविषयतयाऽप्यभिधेयाव्यतिरेक इति, नेत्याह—**एकरसेति** ॥ तत्रोद्भिद्यागशब्दयोर्यागविशेषैकरसार्थवर्तिनोरप्यर्थस्य नियोगाकाङ्क्षावदिहाप्यन्याकाङ्क्षेति, नेत्याह—**प्रातिपदिकार्थेति** ॥ तत्रापि लिङ्गसंख्ययोरवश्याभ्युपगमनीयतेति, नेत्याह—**मात्रान्वय इति** ॥

**जगत्कारणसामान्यानुवादेन तत्र ज्ञानानन्दशब्दावानन्दविशेषं गमयतः। एक-सत्यानन्तशब्दा भेदमिथ्यात्व-**

### तत्त्वदीपनम्

१ २ ३ ४ ५ ६

निश्चीयत इत्यर्थः ॥ तथा च संग्रहश्लोकः—"उपक्रमोपसंहरावभ्यासोऽपूर्वता फलम्। अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये ॥ इति। तत्र "तात्पर्येणे"ति टीकार्थमुपसंहरति—**एवमिति** ॥

पदानामित्यस्य व्यवहितान्वयं दर्शयति—**पदानामिति** ॥ **अर्थवैलक्षण्यमिति**। क्रियावाक्यार्थात्सत्यादिवाक्यार्थस्य वैलक्षण्यं दर्शयतीत्यर्थः ॥ सामान्येन तात्पर्यमभिधाय प्रतिपदमर्थमाह—**तत्रेति** ॥ क्रिया-कारकसंसर्गस्य-भेदव्याप्तत्वादत्र च तदभावान्नैवमित्युक्तम्—**अव्यतिरिक्तेति** ॥ "उदरमन्तरं कुरुते"इत्यत्र भेदमात्रस्य प्रतिषेधान्न तादात्म्यं वाक्यार्थ इत्याह—**नेत्याहेति** ॥ नियोगसाध्याभावान्न तदाकाङ्क्षेत्याह—**नेत्याहेति** ॥ निर्धर्मकश्रुतिविरोधान्न लिङ्गादेस्तत्रान्वय इत्याह—**नेत्याहेति**।

जगत्कारणत्वधर्मिणो ज्ञानादिगुणप्रतिपादनात्कथमुक्तसमन्वयसिद्धिः ? इत्याशङ्क्याह—**जगदिति**। तत्र वेदे ज्ञानानन्दशब्दौ जगत्कारणसामान्यानुवादेनानन्दविशेषं गमयत इत्यन्वयः। कारणत्वस्य लोकसिद्धत्वान्न श्रुतिप्रतिपाद्यत्वम्। ज्ञानत्वम्, आनन्दनिष्ठम्, ज्ञाननिष्ठत्वात्; सत्तावत्, इत्यनुमानाद् ज्ञानव्यक्तेरानन्दव्यक्त्यभेदप्रतिपत्तेरानन्दस्य च ब्रह्मस्वभावत्वान्न समन्वयविरोध इत्यर्थः ॥ **आनन्दविशेषमिति** ॥ दुःख-जाडचविरोधिव्यक्तिमित्यर्थः ॥ एकादिशब्दैरेकस्य प्रतिपादने पर्यायत्वं स्यादित्याशङ्क्य वाक्यभेदान्नैवमित्याह—**एकेति** ॥ **मिथ्याशब्दोऽपह्नववाची**।

### ऋजुविवरणम्

कथमेवंविधवस्तुप्रतिपादनं संभवति ? सर्वत्र प्रसिद्धार्थानुवादेनाप्रसिद्धार्थप्रतिपादनं क्रियते। नच तदत्र संभवति; निर्विशेषत्वप्रतिज्ञानात्। यदि शब्देन विना प्रसिद्धिरङ्गीक्रियते; प्रतिपादनवैयर्थ्यमेव स्यात्। नाप्येवंविधेऽनेकशब्दप्रवृत्तिः; प्रवृत्तिनिमित्ताभावात्, भावे वा विशिष्टस्य वाक्यार्थत्वप्रसङ्गात्, अतो नैवंविधे पदानामन्वयस्संभवतीत्याशङ्क्याह—**जगत्कारणसामान्येति** ॥ एतदुक्तं भवति—"न जगत्कारणमत्र प्रतिपाद्यम्, किन्त्वनूद्यम्; प्रसिद्धत्वात् तच्च सामान्येन प्रसिद्धम्, न विशेषत इति प्रतिपादनसाफल्यमिति ॥ **ज्ञानानन्दशब्दाविति** ॥ अनेनैतदुक्तम्—यज्जगत्कारणमित्यनूद्य तत्र ज्ञानानन्दशब्दप्रयोगाद् ज्ञानत्वाधारसुखविशेषसिद्धिः। एकैकपदप्रयोगे ज्ञानत्वाधारव्यक्तिमात्रम्, सुखमात्रं वा प्रतीयेत, मिलितयोस्तु प्रयोगे सुखज्ञानशब्दोऽन्तःकरणवृत्तौ प्रतिबिम्बितचैतन्ये व्युत्पन्नोऽपरिच्छिन्नसत्यसामानाधिकरण्यायोगादानन्दैक्यविरोधाद् ज्ञानविशेषे प्रसिद्धो जन्मादिभेदप्रतिभासहेतुतयाऽध्यस्तान्तःकरणवृत्तिं तद्गतसामान्यं च विहायापरिच्छिन्नचैतन्यं लक्षयति। आनन्दशब्दोऽपि शुद्धसात्त्विकान्तःकरणवृत्तौ चैकतयाऽध्यस्तानन्दे व्युत्पन्नोऽपरिच्छिन्नसत्यज्ञानैक्यायोगाद्वृत्त्यैक्यं तन्निमित्तभेदोत्पत्तिज्ञेयत्वमानन्दत्वसामान्यानि च परित्यज्याद्वयानन्दं लक्षयति। सत्यशब्दस्सर्वात्मकजाडचाभिन्नसदाकारे व्युत्पन्नो ज्ञानानन्दैक्यविरोधाद् जाडचं परित्यज्यापरिच्छिन्नसत्याकारं लक्षयति। अनन्तशब्दोऽपि जाडचात् पृथक्कृत्य ज्ञानात्मैकत्वप्रतिपादनेन सत्यात्पृथग् जडवर्गोपस्थानेन च वस्तुपरिच्छेदं व्यावर्तयति। अथवा—सत्याकारस्य जाडचात्पृथक्कारणे जडस्य मिथ्यात्वसिद्धावपि स्वरूपभेदेन सांख्यभ्रमसिद्धवस्तुपरिच्छेदं

### पञ्चपादिकाविवरणम्

द्वैताभावाभिधानद्वारेण तत्र लक्षणया वर्तन्ते । "सर्वज्ञः सर्वशक्तिरि"त्यादिशब्दाश्चानिर्वचनीयप्रपञ्चोपाधितया तत्र वर्तन्ते । "अयमात्मा तत्त्वमसी"त्यादिशब्दाश्च मुख्यलक्षणाभ्यां ब्रह्मण्येव वर्तन्त इति ॥

सर्वे जगत्कारणविषयाः शब्दा मुख्यलक्षणोपाधिभिरेकरसमेव ब्रह्म प्रतिपादयन्ति । नचानिर्वचनीयभेदाभावयोः शब्दप्रवृत्तनिमित्तयोः परमार्थसत्यैकरसभेदनिमित्ततेति ॥

### तत्त्वदीपनम्

द्वैतशब्देन च विजातीयो भेदः कथ्यते । **लक्षणयेति**। वाच्यव्युदासेनेत्यर्थः ॥ ब्रह्मणि भेदाद्यभावश्चेत्, कथं तर्हि सर्वज्ञादिशब्दाः ? इत्याशङ्क्याह—**सर्वज्ञ इति**। **प्रपञ्चोपाधितयेति**। प्रपञ्चापेक्षयेत्यर्थः ॥ गङ्गापदलक्षिततीरस्यागङ्गात्ववदात्मादिपदेन लक्षितं ब्रह्मानात्मादिरूपं स्यादित्याशङ्क्याह—**अयमात्मेति** ॥ **मुख्यलक्षणाभ्यामिति**। जहदजहल्लक्षणयेत्यर्थः। गङ्गापदस्य तीरे जहल्लक्षणया वृत्तेरात्मादिशब्दानां च जहदजहल्लक्षणयेति वैषम्यमित्यर्थः ॥ **मुख्यलक्षणोपाधिभिरिति**। अयमर्थः—मुख्यवृत्त्या लक्षणावृत्त्या जहद्जहल्लक्षणया उपाधिना चेति विभागो द्रष्टव्यः। ज्ञानानन्दशब्दौ व्यक्त्यंशापरित्यागेन मुख्यवृत्त्या वर्तेते, एकादिशब्दास्तु जहल्लक्षणया, तत्त्वमस्यादयो जहदजहल्लक्षणया,

### ऋजुविवरणम्

व्यावर्तयति ॥ ननु—एक-सत्यादिशब्दाः कथं ब्रह्मणि वर्तन्ते ? संख्यासामान्यपरिमाणाभावादित्याशङ्क्याह—**एकसत्यानन्तेति** ॥

ननु—सामान्याभावोपाधीनां प्रवृत्तिनिमित्तानामङ्गीकारे भेदः स्यादित्याशङ्क्याह—**नचानिर्वचनीयेति** ॥ ननु—सत्यादिशब्दानां कथमखण्डैकरसे वृत्तिर्निश्चीयते ? भिन्नार्थत्वात्, एकार्थत्वे वा सहप्रयोगानुपपत्तिः; पर्यायत्वादेव, पर्यायेण बोधका इति पर्यायता प्रसिद्धा । तदुक्तम्—

"पर्यायाणां प्रयोगो हि यौगपद्येन नेष्यते । पर्यायेणैव ते यस्माद्वदन्त्यर्थं न संहताः ॥" इति ॥

यदप्युक्तम्—सच्चिदानन्दशब्दाः परापरसामान्यद्वारेणैकामानन्दव्यक्तिं लक्षयन्तीति, 'तदपरामृष्टलक्षणावृत्तेरितीरितम्; यतः प्रमाणान्तरयोग्यस्य कार्ययोगितया क्लृप्तस्याव्यभिचरितस्य लक्ष्यत्वं दृष्टं तीरादेः, नचात्र तत् संभवति; वाच्यस्य च वाक्यार्थे संबन्धानुपपत्तिर्लक्षणाबीजम् । नच तदप्यस्ति ॥

ननु—निर्विशेषत्वं ब्रह्मणः श्रूयतेऽद्वितीयास्थूलनिर्गुणश्रुतिभिः, अतो गुणादिविशिष्टस्य वाक्यार्थत्वायोगाद् लक्षणाश्रयणम्, मैवम्; अत्यन्तभेदशुक्लादिगुणनिवर्तकत्वोपपत्तेः, लक्षणाश्रयणे च लक्ष्यस्य तावन्मात्रत्वे सहप्रयोगानुपपत्तिः; आधिक्ये तु वैयर्थ्यम्, पर्यायता च । किञ्चापर्यायशब्दा एते ज्ञानानन्दादयः । नचापर्यायाणामखण्डार्थता ॥

गुरुकारुण्यसंलब्धतत्त्वबोधप्रसादतः । अखण्डैकरसे वृत्तिः पदानामिह वर्ण्यते ॥

"तत्त्वमसि" "सत्यं ज्ञानमनन्तमति"ति सामानाधिकरण्यं प्रतीयते । तत्र भिन्नप्रवृत्तिनिमित्तानामेकस्मिन्नर्थे वृत्तिस्सामानाधिकरण्यमिति लक्षणम् । तत्रार्थशब्दो न पुरुषार्थवचनः; 'अयं दुर्गन्धः' इत्यादिषु सामानाधिकरण्यदर्शनात्, अभिधेयवचनत्वमपि न संभवति; अभिहितत्वे विवक्षित आत्माश्रयत्वप्रसङ्गः, योग्यवचनत्वमपि न संभवति; अयोग्ये वृत्तिप्रसक्त्यभावात्; योग्ये वृत्तिरिति न युक्तम्; व्यर्थविशेषणत्वात् । अतः प्रवृतिनिमित्तभेदे सत्येकस्मिन् वृत्तिः, इति लक्षणे प्राप्ते, वस्तुवाचिनाऽर्थशब्देन विशेषितत्वात्प्रवृत्तिनिमित्तस्यासत्यत्वे सत्येकमेव सत्यं प्रमेयमिति लक्षणतः सिद्धम् । तथाच "यतो वाचो निवर्तन्ते"इति श्रुतिर्जाति-गुण-क्रियोपाधि-संबन्धान्यतमाभावात्पुरुषार्थंब्रह्मप्रतिपादने प्रवृत्ताऽपि ततो व्यावृत्तेत्याह । "औपनिषदं पुरुषमि"त्युपनिषद्भ्यो विज्ञेयतां दर्शयत्यपरा श्रुतिः । अत उभयविधश्रुतिसामर्थ्याद् वाचकत्वहानेन लक्षणत्वं निश्चीयते । भिन्नाभिन्नत्वं च श्रुत्या निषिध्यते—"नेति नेति" इति । अत्र "द्वे वाव ब्रह्मणो रूपे"इति सर्वात्मकत्वप्रतिपादनादत्यन्तभेदनिवृत्तेः प्राप्तत्वादभेदसहिष्णुभेदं निषेधति प्रथमो नेतिशब्दः, द्वितीयस्तु तद्योग्यतानिषेधकः; नष्टे पदार्थे भेदनिवृत्तावपि तद्योग्यतादर्शनात् । अथवा—भावनिषेधकः प्रथमः, द्वितीयस्त्वभाववर्गविलापकः; स्थूल-सूक्ष्मवासना-तदितरादिविषयत्वेन वा द्रष्टव्यम् । अतः श्रुति-लक्षणाभ्यामेकरसस्य प्रमेयत्वं निश्चीयते । तथा परमार्थत्वसामर्थ्यादप्यैक्यं प्रतीयते ।

तथाहि—चिदानन्दयोरन्योन्यव्यभिचाराच्छून्यविरोधित्वप्रयोजकत्वायोगात्, सत्तासंसर्गनिबन्धने च शून्यविरोधित्वे सत्तायां व्यभिचारात्, सत्तासंसर्गे च शून्यविरोधः शून्यविरोधित्वे सत्तासंसर्ग इत्यन्योन्याश्रयात् सदैक्यमशून्य-

## तत्त्वदीपनम्

सर्वज्ञादयस्तूपाधित इत्यर्थः ।। भेदाद्यभावाभिधानद्वारेण ब्रह्मण्येकादिशब्दानां वृत्तिपक्षे भेदादेर्व्यावर्त्यसद्भावादद्वैत-विहतिमाशङ्क्याह—**नचेति** ।।

## ऋजुविवरणम्

त्वाय कल्पनीयम् । एवञ्चिदाकारादन्यत्वे सदानन्दयोरस्फुरणाच्छून्यता स्यात्, ज्ञानसंसर्गनिबन्धने प्रकाशे, संसर्ग-प्रकाशे सति संसर्गिप्रकाशस्संसर्गिप्रकाशपुरस्सरं संसर्गप्रकाश इत्यन्योन्याश्रयाद् ज्ञानैक्यमशून्यत्वाय कल्पनीयम् । एवमत्यन्तैक्याद् न वाच्यता । तथा पुरुषार्थत्वसामर्थ्यादप्येकत्वं प्रतीयते ।

तथाहि—पुरुषार्थत्वं नानन्दत्वेन संभवति; अदर्शनात्, आनन्द-तत्संसर्गयोरन्योन्यव्यभिचारात्पुरुषार्थत्वप्रयो-जकत्वयोगादानन्दैक्यं पुरुषार्थत्वाय कल्पनीयम् । तस्याप्यप्रकाशमानस्यापुरुषार्थत्वाच्चैतन्यरूपता, चैतन्यसंसर्गनिबन्धने प्रकाश इतरेतराश्रयप्रसङ्गात्—प्रकाशसंसर्गे प्रकाशिते संसर्गिप्रकाशः, संसर्गिप्रकाशपुरस्सरः संसर्गप्रकाश इति, अतस्त-द्रूपत्वमङ्गीकर्तव्यम् । एवमसतोऽपि पुरुषार्थत्वायोगात् सत्तासंसर्गस्य तद्वत्त्वस्य वा सत्त्वव्यवच्छेदकत्वाभावात्सदैक्यम-शून्यत्वाय कल्पनीयम्, एवं परस्परैक्यमूह्यम् । किञ्च सच्चिदानन्दानामौपाधिक आभासश्च भेदः स्वतो भिन्नत्वेऽ-नित्यत्वादिदोषोत्पत्तेः, ब्रह्मणश्चिदाकारादन्यत्वे चिद्गुणत्वं न संभवति; जडत्वात्; पटवत् चिदानन्दयोस्समानश्रयत्वे चौष्ण्य-प्रकाशयोरिव विषय-विषयित्वायोगात्, ब्रह्मानन्दोऽननुभूतोऽपुरुषार्थः स्यात् । यत् प्रामाणान्तरयोग्यत्वम्, क्लृप्त-कार्योपयोगित्वमविनाभूतत्वं च लक्ष्यत्वे प्रयोजकमिति, तदचारु;

न मानान्तरयोग्यत्वं प्रतीतिस्तु प्रयोजिका । प्रतीतेस्तदभावेन न लक्ष्यत्वे पराक्रिया ।।

लक्ष्यस्य सर्वत्र प्रतीत्या भवितव्यम्, नतु मानान्तरयोग्यत्वम्; वाच्येन संबन्धितया गृहीते वाच्यस्यान्वेतु-मयोग्यत्वे सति संबन्धिनः प्रमाणान्तराग्राह्यत्वेनालक्ष्यत्वानुपलम्भात् । लक्ष्यत्वं विद्यमानस्थलेऽप्यप्रयोजकम्; विशिष्टस्य वाच्यत्वे स्वरूपस्यापि स्वप्रकाशत्वेन सिद्धत्वाद् वेद्यत्वाभावापराधेन मानान्तरवेद्यत्वाभावेन वा सिद्धे लक्ष्यत्वाभावानु पलम्भाद्वेद्यत्वं मानान्तरवेद्यत्वं च विद्यमानस्थलेऽप्यप्रयोजकम् ।।

यद्वा—विशिष्टस्य वाच्यत्वात् तस्य च मानान्तरवेद्यत्वे स्वरूपस्यापि मानान्तरवेद्यत्वात् साहचर्याच्च लक्षणासंभवः । किञ्च वाच्यस्य वाक्यार्थेनान्वेतुमयोग्यत्वं योग्यार्थलक्षणाकारणम्, नतु लक्ष्यस्य मानान्तरवेद्यत्वम्; वाच्यस्यान्वयायोग्यत्वे सति लक्ष्यस्य मानान्तरयोग्यत्वाभावेनालक्ष्यत्वानुपलम्भात्, मानान्तरयोग्यत्वं विद्यमान-स्थलेऽप्यप्रयोजकम्, किञ्च संस्कारवाक्यैरपूर्वीयव्रीहिलक्षणेष्यते । नच मानान्तरवेद्यता । एवं बहुशो मानान्तरावेद्ये दीक्षणीयादौ लक्षणा द्रष्टव्या । नच लक्ष्यस्य तत्संबन्धस्य वा सत्यत्वं लक्षकत्वप्रयोजकम्; असत्यस्यपाप्यसंबन्धस्य लक्षकत्वात् संबन्धवत्त्वं न लक्षकत्वस्य प्रयोजकम्; संबन्धे विद्यमाने तयोस्सत्यत्वाभावापराधेनालक्षकत्वानुपलम्भात् सत्यत्वमप्यप्रयोजकम् ।।

ननु—लक्ष्यस्यैकत्वेन पर्यायत्वं वैयर्थ्यञ्चेति, तदसत्; लक्ष्यस्यैकरसत्वेऽपि कुतस्तद्दूषणद्वयम् ? यद्यप्येकमेव वस्तु, तच्च सर्वविरोध्याकाररूपम्, तथाऽपि नैकेन प्रदेन तत्तादृशं लभ्यते ।।

तथाहि—सन्नित्युक्ते जाड्यानन्दविरोधिचिदानन्दरूपत्वं न लभ्यते । लोके सत्त्वप्रतीतावपि चिदानन्दरूपत्वा-दर्शनात्, तदात्मकत्वं प्रतिपादनीयम् । तथा चैतन्येऽपि सदानन्दत्वं प्रतिपादनीयम्; ज्ञानाकारस्यासत्त्वादनानन्द-निवर्तकत्वाभावात्, व्यभिचारात् । तथाऽऽनन्देऽपि सद्रूपत्वं प्रतिपादनीयम्; केवलस्य व्यभिचारादेव ।

**ननु**—लक्ष्यस्वरूपस्यैकत्वात् तस्य चैकेन पदेन सिद्धेः पदान्तरप्रयोगस्तल्लक्ष्यैकत्वप्रतिपादनश्च व्यर्थम्, मैवम्; लक्षणाबुद्धीनामपुनरुक्त्यर्थं तत्तद्भ्रमविरोधिधर्माः कल्पिताः । तत्कल्पने च तद्धर्मोपाधिकत्वेन स्वरूपस्य भेदभ्रमप्राप्तौ तदुपादाननिवृत्त्यर्थं विरोधधर्मोपलक्षितस्य सत्याकारस्य चिद्रूपत्वमानन्दरूपत्वञ्च चिद्रूपस्याप्यानन्द-सन्मात्रत्वमानन्दरूपस्य सच्चिन्मात्रतेत्यैक्यप्रमितिर्जायते । तदुत्पत्तौ विरोधिधर्म-तन्निबन्धनभेद-तदुपादानाज्ञानस्य च निवृत्तिः । सर्वभ्रमनिवृत्त्यर्थं तत्तद्भ्रमविरोधिधर्माः कल्पिताः; विरोध्यधिष्ठानप्रमितेरेव बाधकत्वोक्तेः । नचैत-त्पदसामानाधिकरण्येन लभ्यात्यन्तैक्यबलादेतत्पदवैयर्थ्यापादनं युक्तम्; एतत्पदनिबन्धनवाक्यार्थज्ञानवत एव तद्वाक्या-नन्तरं वैयर्थ्यात्, पूर्वन्तु वाक्यार्थज्ञानाभावादेव न वाक्यप्रयोगो वैयर्थ्यं वा ।।

## ऋजुविवरणम्

ननु—विरोधिधर्मस्यारोपितत्वेन प्रमित्यभावात्कथं विरोध्यधिष्ठानप्रमितेर्बाधकत्वम्, मैवम्; विरोधिधर्मस्य प्रतीतिमात्रमपेक्षितम्, न प्रमितिः; प्रतीयमानविरोधित्वधर्मेण लक्षितस्य प्रमितत्वे सति विरोधिधर्मस्य प्रमितत्वाभावापराधेनोत्पन्नाधिष्ठानप्रमितेरबाधकत्वानुपलम्भात्, भ्रमविरोधित्वेन प्रतीतधर्मोपलक्षितस्वरूपप्रमितिर्बाधिता; तस्यैवाधिष्ठानत्वात्, भ्रमोपादानाविद्याविषयत्वाच्च लक्ष्याव्यतिरिक्तपदार्थैरैक्यस्य कदाचिदपि सत्त्वासिद्धेः प्रतियोग्यभावात्तन्निषेधोऽपि न प्रामाणिकः। अतोऽन्यैक्यनिषेधेनाऽऽरोपितेनैव लक्ष्यत्वम्, भ्रमनिवृत्तिश्चैष्टव्या॥

ननु—ज्ञानादिशब्दैर्न स्वरूपस्य लक्ष्यत्वम्, आनन्दाद्भिन्नं हि विज्ञानशब्देन लक्ष्यम्। एवमानन्दादिशब्दैरपि; तथा सति भिन्नत्वे गृहीते नैकत्वं संभवति; स्वरूपत्वे स्वरूपग्रहणेन गृहीतत्वात् प्रमितिरेकैवोच्यते। ज्ञानस्वरूपत्वं ज्ञानशब्देन लक्ष्यत्वप्रयोजकम्, नानन्दाद्भेदवत्त्वम्। ज्ञानस्वरूपे विद्यमानेऽन्यस्माद्भेदाभावापराधेनालक्ष्यत्वानुपलम्भात्॥ एवमानन्देऽपि। नच ज्ञानबुध्याऽभेदस्य गृहीतत्वम्; विज्ञानं भिन्नमिति पुनरुक्तिप्रसङ्गात्॥

ननु—भेदाप्रतीतावानन्दरूपस्य ज्ञाने प्रतीतिस्स्यात्, स्वरूपस्यैकत्वात्, व्यवस्थापकाभावात्, मैवम्; आनन्दबुद्धौ ज्ञानस्वरूपस्याभासार्थमौपाधिकभेदाभासाङ्गीकारात्॥

ननु—गङ्गाशब्दलक्ष्यस्य न गङ्गात्वम्, तद्वदानन्दादिशब्दलक्षणायाममुख्यानन्दादिरूपत्वाद् न मुख्यानन्दादिरूपता भवेत्; मैवम्; वाच्यस्य ज्ञानादिरूपता लक्ष्यस्वरूपैक्याध्यासात्, न स्वरूपतः; अतो यदधीनमस्य ज्ञानादिरूपत्वम्, तस्यैवार्थतो मुख्यज्ञानादिरूपता। गोलकानुप्रविष्टचक्षुरादीनां चक्षुरादिशब्दवाच्यत्वेऽपि शुद्धस्वरूपस्यैवार्थस्य मुख्यत्ववदिति वदामः। गङ्गात्वन्तु गङ्गाया न तीरैक्याध्यासनिबन्धनम्, किन्तु स्वत एव; तेन न तीरस्य गङ्गात्वमिति भेदः॥

ननु—वाच्यत्वेन सिद्धस्यान्यत्र लक्ष्यत्वं दृष्टम्, तदभावाद् नात्र लक्षणा, मैवम्; नान्यत्र वाच्यत्वमत्र लक्ष्यत्वप्रयोजकम्, किन्तु वाक्यार्थेनान्वय एव। यदप्युक्तम्—"अखण्डार्थताऽनुपपन्नेति, केनैतद् दूषणमीरितम्? न तावद् वैयाकरणेन, स हि प्रातिपदिकार्थस्य प्रथमाविभक्त्यर्थाव्यतिरिक्तार्थतामाह। बौद्धा अपि विज्ञानं क्षणिकमित्यव्यतिरिक्तार्थतामाहुः। प्राभाकरास्तु स्वरूपं भेदः 'निर्घटं भूतलमि'त्यादीनामखण्डार्थतामाहुः। स्वरूपभेदवादिनां सर्वेषामेतदेवोदाहरणीयम् धर्मभेदवादिना भेदो भिन्न इति प्रयोगदर्शनात्। अतः पर्यनुयोग एव कर्तुं न शक्यते॥

ननु सर्वपदानाञ्चेल्लक्षणावृत्तिरिष्यते। न लक्ष्ये व्यवहारस्स्यात् साक्षाद्धि हेत्वभावतः॥
उच्यते ब्रह्मशब्दस्तु संज्ञोक्तं ब्रह्मसंज्ञितम्। पराशरेण तेनात्र व्यवहारः प्रवर्तते॥
इत्येवं सर्ववेदान्तपदानां निर्विशेषणे। सिद्धा लक्षणया वृत्तिरात्मनि ब्रह्मरूपणे॥
प्रत्यग्ब्रह्मणि शब्दानां वृत्तिरेकरसे कथम्। भिन्नार्थानां विशिष्टे हि वाक्यार्थे वृत्तिरिष्यते॥
एकार्थत्वे प्रयोगोऽपि तेषां नो युगपद्भवेत्। लक्षणावृत्तिमाश्रित्य यद्येकार्थत्वमिष्यते॥
गुण इत्यन्वये वाक्यं मेये सति न लक्षणा। वाच्यस्यानन्वये मेये लक्ष्ये तद्योगिनि श्रिते॥
मानान्तरगृहीतस्य लक्ष्यत्वं दृश्यते यतः। निर्विशेषस्य बोध्यत्वमेतस्मिन्निति वाक्यतः॥
ज्ञायते लक्षणा तेन, ननु सर्वपदे श्रिता। निषिध्यते प्रपञ्चस्य स्थूलादिः शुद्धकारणे॥
नानिष्टं तद्गुणाश्चात्र निषेध्या रोपिता यतः। ननु सर्वत्र वाक्यार्थे लक्ष्यत्वं तदभावतः॥
नैतत्स्यादन्वितानान्तु वाचकत्वं यतः स्थितम्। इतरस्मिंस्तु लक्ष्यत्वे विशिष्टस्यैव मेयता॥
तेनोभयत्र वाक्यार्थे विशिष्टत्वं व्यवस्थितम्। तेनात्रापि विशिष्टस्य वाक्यमेयत्वमिष्यताम्॥
अत्र लक्षणाश्रयणे लक्ष्ये भेदो नवाऽस्ति वा। पर्यायता च वैयर्थ्यमाद्ये वैयर्थ्यमुत्तरे॥
किञ्चापर्यायशब्दाः स्युर्ज्ञानानन्दादयस्ततः। निर्विशेषे स्वरूपे ते वर्तितुं नैव शक्नुयुः॥
अत्र वेदान्तसिद्धान्तसंप्रदायानुरूपतः। न्यायेन च समस्तानामेकार्थत्वमिहोच्यते॥
लक्षणाश्रयणे नैतद्वर्ण्यते तावदत्र तु। कारणं वचनेनैव वाचकत्वं निवारितम्॥

**ऋजुविवरणम्**

एतावता प्रवृत्तिस्तु न शक्या वर्णितुं यतः । निश्चितार्थत्वनिर्देशात् तद्धितश्रुतिदर्शनात् ॥
तेनोभयं समालोच्य लक्ष्यत्वमिह वर्णितुम् । "यदा ह्येवे"ति वाक्येन भेदादि च निवारितम् ॥
अत्यन्तभेदो नतु वार्यतेऽत्र पूर्वेण वाक्येन हि लभ्यतेऽसौ ।
नह्यन्यथा तत्र भयापहारो भेदो हि तद्धेतुतया प्रसिद्धः ॥
"उद्विशेषणमप्यर्थम् 'अरमि'त्यल्पवाचकम् । तेनाभ्यां भेदमात्रस्य निषेधः शक्तितः कृतः ॥
'नेति नेती'ति वाक्याच्च सविशेषत्ववारणम् । गुण-जाति-क्रियोपाधियोगो वाच्ये न विद्यते ॥
तेनाशैव न कर्तव्या शुक्लादिगुणवारणे । अतोऽपि निर्विशेषत्वाल्लक्षणैव समाश्रिता ॥
सामानाधिकरण्याच्च निर्विशेषेऽत्रवस्तुनि । वृत्तिः कल्पितवाच्यस्य त्यागेनैव प्रतीयते ॥
एवं शास्त्रेण बौद्धस्य निर्विशेषत्वनिश्चये । लक्षणाऽऽश्रीयते नात्र भेदाभेदनिबन्धनम् ॥
सामानाधिकरण्यं स्यात् तन्निमित्तवियोगतः ।
जात्यादियोगो नहि तत्पदार्थे तत्त्वंपदार्थे न तदीयहेतुः ।
नांशांशिभावोऽत्र निवारितत्वाद् वदन्ति यत्पञ्चसु नान्यथा तत् ॥
सामानाधिकरण्यं च सोऽयमित्यादिवाक्यवत् । एकस्मिन्नेव मुख्यं स्याद् नान्यथा तत्प्रकल्पते ॥
पुरुषार्थत्वसामर्थ्यादत्यन्तैक्यं प्रतीयते । सुखत्वञ्च सुखित्वञ्च नैकेकं स्यात्प्रयोजकम् ॥
अन्योन्यव्यभिचारेण तदैक्यं स्यात् प्रयोजकम् । तस्याचैतन्यरूपत्वे नच स्यात् पुरुषार्थता ॥
चित्सङ्गान्न प्रतीतिः स्यादन्योन्याश्रयदोषतः । चिद्रूपत्वमतस्तस्य पुरुषार्थत्वसिद्धये ॥
तद्रूपत्वं च तस्यैवं पुरुषार्थत्वहेतुकम् । असन्न पुरुषार्थं स्यान्न चासत्त्वं निवारकम् ॥
सत्ता-तद्योग-तद्वत्त्वं नैकेकं तन्निवर्तकम् । तेन तद्रूपता तस्य तेन स्यात् पुरुषार्थता ॥
परमार्थत्वसामर्थ्यादिवमैक्यं प्रतीयते । ज्ञानानन्दौ न तावद्धि सन्निषेधविरोधिनौ ॥
ऐकैकव्यभिचारेण नचान्यत्तन्निषेधकृत् । सत्ता-तद्योग-तद्वत्त्वं नैकैकं तन्निषेधकृत् ॥
तेन यद्रूपता तस्य तेन स्यात्पुरुषार्थता । व्यभिचारान्न सत्तायास्तद्वत्ता दृश्यते यतः ॥
योगेनैवाऽस्ति तद्योगः सद्रूपत्वं घटादिषु । सन्निषेधविरोधित्वे सद्योगस्स्यात्तथा सति ॥
सद्योगात्तद्विरोधित्वमन्योन्याश्रयता भवेत् । अन्यस्मिन्नेवमेवातः सदैक्यं तन्निषेधकृत् ॥
सदानन्दो च चिन्मात्रमन्यथा शून्यता भवेत् । अभानान्नान्यथा भानं चित्संयोगनिबन्धनम् ॥
तत्रोक्तं दूषणं पूर्वं स्फुरणैक्यमतस्तयोः । यद्यदर्थं प्रयुज्येत तत्तदैक्ये विवक्षिते ॥
प्रयोजकत्वसिद्धिस्स्यात्सर्वत्रैक्यं तथा सति । एवं सर्वप्रकारेण न भेदावसरः क्वचित् ॥
तदभावे च शब्दानां वाचकत्वं कथं भवेत् । निर्विशेषे च शब्दानामेवं तात्पर्यनिश्चये ॥
लक्षणाश्रयणं युक्तं वस्तुसिद्धिमभीप्सता । इत्येभिः कारणैस्सिद्धे लक्षणाश्रयणे सति ॥
नान्यकारणराहित्याच्चोद्यस्यावसरो भवेत् । परिहारोऽपि तच्चोद्ये विभवेनाभिधीयते ॥
अन्ययानुपपत्तिस्तु वाच्यस्यार्थस्य साधिका । निर्विशेषे हि वाक्यार्थे न तेषामन्वयो भवेत् ॥
क्लृप्तत्वञ्चास्ति शुद्धस्य शुद्धेनान्वयदर्शनात् । मानान्तरागृहीतत्वं लक्षणाकारणं कथम् ॥
सत्येतस्मिन्द्वये तेन विना नालक्षणा यतः । अप्रसिद्धे न लक्ष्यत्वमिति कश्चिद् ब्रवीति चेत् ॥
पदवाच्ये विशिष्टेऽपि स्वरूपं तत्र गृह्यते । स्वप्रकाशतया चाऽस्य ग्रहणं तेन लक्षणा ॥
विशिष्टस्यैव सर्वत्र वाक्यमेयत्वमीरितम् । तदसोऽयमिति वाक्यार्थनिरूपणनिवारितम् ॥
यत्तु लक्ष्येऽपि भेदादिविकल्पेन त्वदीरितम् । दूषणं तत्र लक्ष्ये नो भेदलेशोऽस्ति तत्र तु ॥
व्यवच्छेद्यस्य भिन्नत्वात्प्रत्यात्मपरिवर्तिनः । तेन यद्दूषणं पूर्वमीरितं नैव तद्भवेत् ॥
नचैकेन पदेनात्र सर्वव्यावृत्तिसंभवः । सच्छब्दः केवलो जाड्याद्भिन्नसत्त्वं न बोधयेत् ॥
केवलानन्दशब्दोऽपि नाभिप्रेतं समर्पयेत् । जन्यानन्दे प्रसिद्धत्वाद् ज्ञानशब्दस्तथैव च ॥

### पञ्चपादिका

**"सोऽयमि"त्यादिवाक्यस्थपदानामिव ।**

### पञ्चपादिकाविवरणम्

अनेकेषां पदानां लक्षणादिद्वारेणैकरसवृत्तितायामुदाहरणमाह । तत्र द्विविधा वाक्यप्रवृत्तिः—एका ब्रह्मात्मनोरेकत्वविषया, अपरा सत्यज्ञानादिलक्षणब्रह्मविषया । तत्र प्रथमं ब्रह्मात्मैकत्वे दृष्टान्तमाह—**सोऽयमित्यादिवाक्यस्थपदानामिवेति** ।। तत्र "सोऽयं देवदत्तः" इति पदत्रयस्यैकस्मिन्देवदत्ते पर्यवसानं दृश्यते ।।

### तत्त्वदीपनम्

ननु-'सोऽयमि'त्यादिवाक्यस्थपदानामुक्तेऽर्थेऽनुगमाभावात् तदुदाहरणमनुपपन्नमित्याशङ्क्य तात्पर्यमाह—**अनेकेषामिति** । उक्तार्थानुगमाभावेऽप्यखण्डार्थानुगमादुदाहरणत्वमुचितमित्यर्थः ।। एकेनोदाहरणेन विवक्षितसिद्धेः किमुदाहरणान्तरेण ? इत्याशङ्क्य, तस्य प्रयोजनं दर्शयितुं वाक्यवृत्तिद्वैविध्यमाह—**तत्रेति** । तत्र-वेदान्तेष्वित्यर्थः ।। तत्त्वमस्यादिवाक्यम्, अखण्डार्थम्, अकार्यकारणद्रव्यमात्रवृत्तित्वे सति समानाधिकरणवाक्यत्वात्, 'सोऽयं देवदत्तः' इत्यादिवाक्यवदित्युक्ते साध्यविकलो दृष्टान्त इत्याह—**तत्रेति** । तत्र मूल इत्यर्थः ।।

### ऋजुविवरणम्

एवमन्योऽपि नैकैकः स्वाभिप्रेतं समर्पयेत् । सामानाधिकरण्येन लौकिकाकारवर्जनम् ।।
शब्दन्तरेण तेनैते सर्वे स्युः स्वप्रयोजनाः । साफल्यात्पदजातं च तेन सर्वं प्रयुज्यते ।।
अपर्यायतया नात्र वर्तनं संभवेदिति । ईरितं सोऽयमित्यादिवाक्यदर्शनहेतुजम् ।।
ननु ते लक्षणं नात्र संबन्धस्य न सत्यता । तदभावे कथं तस्य लक्षकत्वं भवेदिह ।।
मैवं लक्षणसत्यत्वं संबन्धस्याथवा भवेत् । लक्षकत्वे निमित्तं नो केवलव्यभिचारतः ।।
संबन्धे विद्यमानेऽपि लक्षकत्वं न चेद्भवेत् । सत्यत्वेन विना तत्स्यातसत्यत्वमपि कारणम् ।।
नच तेन न सत्यत्वं लक्षकत्वप्रयोजकम् । ननु लक्ष्यस्य सर्वत्र वाच्यस्स्यादन्यरूपता ।।
दृष्टा गङ्गादिलक्ष्येषु प्रकृतेऽपि तथा भवेत् । अज्ञानत्वमसत्यत्वममुख्यानन्दरूपता ।।
लक्ष्यैकहीने यदि वाच्यरूपे ज्ञानादिरूपत्वमिह प्रसिध्येत् ।
मुख्यं ततो लक्ष्यममुख्यरूपं तेनेह मुख्यं कथमत्र न स्यात् ।।
लक्ष्यन्ते नात्र मुख्यं स्यान्मण्डलाद्यभिमानिवत् । तदैक्याच्छब्दवाच्येऽपि ज्ञानानन्दादिरूपता ।।
तत्र तत्रोक्तमेवैतद् ग्रन्थकारेण यद्यपि । संगृह्य हि सुबोधार्थं दिङ्मात्रं सारमीरितम् ।।
विश्वावष्टम्भमेकं निरतिशयसुखं शब्दवाच्यं न यत्तद् जातिर्योगो गुणादिर्न युतिमुपगतस्तेन वेद्यत्वमेव ।
व्यावर्त्यातत्स्वरूपं निखिलजडगतं चित्सदानन्दशब्दा जाड्यासत्त्वासुखत्वं परपरिकलितं पर्यवस्यन्ति तस्मिन् ।।
स्वस्माद्भेदं मितत्वन्त्विह परिहरतस्तावनन्तात्मशब्दौ वाच्यं वाच्यापहारे सहचरिमितौ लक्षणा तेन युक्ता ।
यद्वा सामान्यमुख्यं भ्रमसमयनितं वाच्यभेदं प्रकल्प्य ब्रह्मात्मैकत्वनिष्ठा पदनिकरजधीलक्षणावृत्तिभेदात् ।।

ननु—टीकाकारेण "सोऽयमि"त्यादिवाक्यमुदाहृतम्, तत्किमर्थम् ? नहि तत्रैकरसे वृत्तिरस्ति, तदेवात्र सन्निहितत्वादुदाहरणेन साधनीयम्, अतो नेदमुदाहरणीयमित्याशङ्क्यावतारयति—**अनेकेषां पदानामिति** ।। **ननु**—एकेनोदाहरणेनाखण्डैकरसे वृत्तिसिद्धेः किमुदाहरणद्वयेन ? इत्याशङ्क्याह—**तत्र द्विविधेति** ।।

ननु—एकेनैव "तत्त्वमसी"तिवाक्येन प्रत्यग्ब्रह्मणोरेकत्वसिद्धेः किं सत्यादिवाक्येन ? यद्वा सत्यादिवाक्येनैवाद्वितीयैकरसवस्तुसिद्धेः किं "तत्त्वमसी"तिवाक्येन ? मैवम्; तत्पदार्थस्यालौकिकत्वात्तत्प्रतिपादनपूर्वकमेव "तत्त्वमसी"-तिवाक्यंप्रवर्तते । नच—तेनैवालमिति—वाच्यम्; सत्यादिवाक्यम्, पदार्थान्तरनिरासेन तत्तद्भेदनिवर्तकम्, तेन ब्रह्मस्वरूपेणानिवर्त्यात्मब्रह्मभेदायोगात्; अन्योन्यात्मत्वस्य विधेयत्वात्, प्रमेयतयाऽऽत्मब्रह्मस्वरूपं परित्यज्यौपाधिकभेदाभासनिरासेनैक्यप्रमित्यर्थं "तत्त्वमसी"त्यादिवाक्योपादानम् । ननु—भेदबाधेऽन्यतरस्वरूपस्य बाधो दृष्टः; तद्वज्जीवब्रह्मणोरपि बाधस्स्यात्; मैवमौपाधिकत्वाद्भेदस्य, बिम्बप्रतिबिम्बभेदवत्स्वरूपाबाधेऽपि बाधोपपत्तेः किमर्थं तर्हि

## पञ्चपादिकाविवरणम्

तथाहि—प्रत्यभिज्ञायामधिगतमेकत्वं परस्मै प्रतिपादयति—**'सोऽयं देवदत्तः'** इति। तत्र न तद्देशकालयोरेतद्देशकालयोश्च परस्परैक्यं प्रत्यभिजानाति; भेदप्रत्ययात्। अत एव विशिष्टयोरप्यैक्यं न प्रत्यभिज्ञायते, किन्तु सोऽयमिति विशिष्टद्वयोपलक्षितः प्रत्यभिज्ञागोचरः। प्रत्यभिज्ञातं चार्थं परस्मै 'सोऽयमि'ति विशिष्टाभिधायिभ्यां पदाभ्यां स्वार्थैकदेशपरित्यागेनैकदेशलक्षणया देवदत्तस्वरूपैक्यमेव प्रतिपादयति। ननु—'सोऽयमि'ति पदार्थयोर्यदैक्यम्, तदेव वाक्येनापि प्रतिपाद्यते चेत्, अनुवादप्रसङ्गः। नच देवदत्तस्यैक्यद्वयमस्ति, येन वाक्यप्रमेयमपरमैक्यं स्यात्, प्रत्यभिज्ञायां तर्हि कथम्? न ह्यभिज्ञयोरवगतदेवदत्तैक्यव्यतिरिक्तं प्रत्यभिज्ञागम्यमपरमैक्यमस्ति। एकस्य कालद्वयसंबन्धः प्रत्यभिज्ञागोचर इति चेत्, कालद्वयसंबन्धिपदार्थोऽभिज्ञयोरेव सिद्धेः परिशेषात्तदैक्यं प्रत्यभिज्ञाविषयः। तत्र चानुवादो दर्शितः॥

स्यादेतत्—क्षणिकत्वपरिहाराय प्रत्यभिज्ञाप्रामाण्यं तावद् वक्तव्यम्। तत्र कालद्वयपरामर्शेन तत्संबन्धिपदार्थैक्ये प्रत्यभिज्ञाविषयेऽपि पदार्थभेदप्रतिभासविरोधितैव प्रमाणफलम्, नाज्ञातार्थाधिगतिः। अतः कालद्वयपरामर्शेन तत्संबन्धिपदार्थैक्यमेवावलम्बमाना पदार्थभेदप्रतिभासविरोधितया प्रामाण्यमश्नुते प्रत्यभिज्ञा। एव तर्हि 'सोऽयमि'ति वाक्यस्याप्येवमेव प्रामाण्यं भविष्यति॥ तथा तत्त्वमसिवाक्यस्यापि त्वंपदार्थैकदेशपरित्यागेन त्वंपदेन लक्ष्यमाण-

## तत्त्वदीपनम्

मूलप्रमाणाभावान्न 'सोऽयमि'त्यादेस्तत्र प्रामाण्यमित्याशङ्क्य समूलत्वमाह—**तथाहीति**॥ प्रत्यभिज्ञाया अपि विशिष्टविषयत्वात्तन्मूलवाक्यस्यापि तद्विषयत्वमित्याशङ्क्य, प्रत्यभिज्ञाया न विशिष्टैक्यमालम्बनमिति वक्तुं विशेषणैक्याभावं तावदाह—**तत्रेति**। तत्फलमाह—**अत एवेति**॥ तदेतद्देशकालविशिष्टयोरैक्यासंभवश्चेत्, तर्हि तद्देशकालोपलक्षितस्यैतद्देशकालविशिष्टस्य चैक्यं प्रत्यभिज्ञागोचर इति शङ्कते—**किन्त्विति**॥ उपलक्षित-विशिष्टयोरैक्ये विशिष्टस्वरूपमन्यत्रापि स्यात्, न तथा दृश्यत इत्याशयेनाह—**सोऽयमिति**॥ प्रत्यभिज्ञाया अखण्डार्थत्वमभिधाय तन्मूलवाक्यमपि तथेत्याह—**प्रत्यभिज्ञातमिति**॥ **स्वार्थैकदेश इति**। स्वार्थस्यैकदेशस्तदेतद्देशकालवैशिष्टचलक्षणः, तस्य परित्यागेनेत्यर्थः॥ **एकदेशलक्षणयेति**। देवदत्तस्य स्वरूपलक्षणयेत्यर्थः॥ प्रकारान्तरेण "सोऽयमि"त्यादेरखण्डार्थत्वमाक्षिपति—**नन्विति**॥ एकैकस्मात् पदात् प्रथमाविभक्त्यन्तात्प्रतीयमानं यदैक्यम्, तदेव वाक्यप्रमेयम्? उतान्यत्? नाद्य इत्याह—**सोऽयमिति**॥ पदार्थयोर्यत्प्रत्येकमैक्यमेकैकपदाभिधेयम्, न तस्य वाक्यप्रमेयता; अनधिगतार्थवैधुर्येणानुवादकत्वप्रसक्तेरित्यर्थः॥ द्वितीयं दूषयति—**न चेति**॥ नच—तदेतद्देशादिविशिष्टयोरितरेतरैक्यं वाक्यप्रमेयमिति—शङ्क्यम्; उत्तरत्र निरस्यमानत्वादिति। प्रतिवन्द्या समाधत्ते—**प्रत्यभिज्ञायामिति**॥ किमभिज्ञायामवगतं यदैक्यं तदेव प्रत्यभिज्ञया प्रत्यक्षेण बोध्यते? उतान्यत्? न तावत्तदेव; वैयर्थ्यापातादित्यभिप्रेत्य द्वितीयं दूषयति—**न ह्यभिज्ञयोरिति**॥ प्रमेयान्तरमाशङ्कते—**एकस्येति**॥ अभिज्ञायामनवगतस्यैव प्रत्यभिज्ञाप्रमेयत्वम्, एकस्य कालद्वयसंबन्धश्च नाभिज्ञायाः, इति कालद्वयसंबन्धिपदार्थस्य तदैक्यस्य वा प्रत्यभिज्ञाप्रमेयत्वं वक्तव्यम्, नच तदुभयं संभवीत्याह—**कालद्वयेति**॥

विकल्पासहत्वान्नैतदिति शङ्कते—**स्यादेतदिति**॥ किं प्रत्यभिज्ञाप्रत्यक्षप्रामाण्यमेव निराचिकीर्षितम्? अथवा प्रत्यभिज्ञाया असाधारणं प्रमेयं जिज्ञासितम्? नाद्यस्तावत्संगच्छत इत्याह—**क्षणिकत्वेति**॥ द्वितीयं दूषयति—**तत्रेति**॥ कथं तर्हि तत्प्रामाण्यम्? तत्राह—**पदार्थेति**॥ फलसमर्थनफलमाह—**अत इति**॥ साम्येनोत्तरमाह—**एवं तर्हीति**॥ दृष्टान्तोक्तमर्थं दार्ष्टान्तिके समर्थयति—**तथेति**। तत्त्वमसिवाक्यस्यापि प्रामाण्यमुपपद्यत इति संबन्धः॥ प्रत्यग्ब्रह्मणोर्विरुद्धत्वान्न तदैक्यपरत्वं वाक्यस्येत्याशङ्क्याह—**त्वंपदेनेति**। एकदेशपरित्यागेन लक्ष्यमाणद्रव्यस्वरूपस्य ब्रह्मस्वरूपैक्य इति संबन्धः॥ **एकदेशपरित्यागेनेति**। कतृत्वाद्यंशपरित्यागेनेति यावत्॥ ब्रह्मणः परोक्षत्वात्कथं तदभेदः?

## ऋजुविवरणम्

"तत्त्वमसी"तिवाक्योदाहरणं नानन्तरमुदाहृतम्? तस्य सत्यादिवाक्यसापेक्षत्वात् सत्यमेवात्र क्रमो विवक्षितः, अनास्थयैवमुदाहृतम्; अथवा—प्रत्यग्ब्रह्मप्रतिपादनपरत्वाच्छास्त्रस्य "तत्त्वमसी"तिवाक्यस्यैव महावाक्यत्वेन प्राधान्यात् तत्समर्थनमेवादौ कृतमित्यदोषः। **ननु**—प्रत्यभिज्ञया न स्वरूपैक्यं प्रतीयते; विशिष्टशब्दसंजल्पात्, अत एव प्रत्यभिज्ञाधिगतमेकत्वं परस्मै प्रतिपाद्यत इति वक्तुं न शक्यते, सोऽयमिति पदाभ्यां समर्पितयोरैक्यं प्रतिपादनीयम्, तथा सति न प्रकृतोपयोगिता दृष्टान्तस्य, नापि तत्संभवति, अतो नेदमुदाहरणमित्याशङ्क्योपपादयति—**तत्र न तद्देशकालयोरिति**॥ **स्वार्थैकदेशपरित्यागेनेति** देशकालपरित्यागेनेत्यर्थः॥ **एकदेशलक्षणयेति**॥ देवदत्तस्वरूपलक्षणयेत्यर्थः॥

## पञ्चपादिकाविवरणम्

द्रष्टृस्वरूपस्य पारोक्ष्यपरित्यागेन तत्पदाभिधेयब्रह्मस्वरूपैक्ये वाक्यजन्यज्ञानगोचरेऽपि जीव-ब्रह्मपदार्थप्रतीतिसमये प्रतिपन्नैक्यविषयतयाऽनुवादप्राप्तावपि भेदप्रतिभासविरोधितया प्रामाण्यमुपपद्यत इति ॥

ननु—पदार्थयोः प्रत्येकमसाधारणमैक्यं पदार्थप्रत्ययगोचरः, पदार्थयोरितरेतरैक्यं वाक्यगम्यम्, इत्यस्त्येव प्रमेयभेदः, नैतत् सारम्; भिन्नद्रव्ययोरैक्यप्रतिपादने तथा स्यात्। यदेकमेव द्रव्यं भिन्नोपाधिपरिकल्पितभेदप्रतिभास-व्युदासेन प्रतिपाद्यते, तदानिवर्त्यविशेषादेव प्रामाण्यम्, न प्रमेयविशेषात्। तदुक्तम्—"सिद्धं तु निवर्तकत्वादि"ति। इह तु कार्यकारणद्रव्यव्यतिरिक्तत्वे सति द्रव्याभिधायिपदयोः सामानाधिकरयं 'सोऽयमि'तिवदेकस्य द्रव्यस्योपाधिपरि-कल्पितभेदव्युदासेन नैकद्रव्यपर्यवसायीत्यवगम्यते। ननु तत्त्वंपदाभ्यां लक्ष्यमाणपदार्थयोरपि भेदो विद्यते? न वा? विद्यते चेत्, ऐक्यप्रमितिर्न स्यात् न चेद् भेदः, वाक्यार्थ एव पदार्थः स्यात्, सत्यम्; वाक्यार्थ एव पदार्थः। स च लक्षणया प्रतिपाद्यते; मुख्याभिधेयैक्यायोगात्। तस्मात् तत्त्वंपदाभ्यामेकमेव ब्रह्मोपाधिपरामर्शेन प्रतिपाद्यत इति सिद्धम् ॥

## तत्त्वदीपनम्

इत्याशङ्क्याह—**पारोक्ष्यति**। विरुद्धांशपरित्यागाभावे तत्त्वंपदसामानाधिकरण्यानुपपत्तिरित्यर्थः ॥ तर्हि तन्मात्रस्य पदाभ्यां प्रतिपन्नत्वात् किं वाक्येन? इत्याह—**जीवब्रह्मेति** ॥ तत्त्वंपदार्थयोः परस्परैक्यस्य पदमात्रादप्रतिपत्ते-स्तद्बोधकत्वेन वाक्यमर्थवदिति शङ्कते—**ननु पदार्थयोरिति** ॥ किं पदार्थयोः कियानपि भेदो विवक्षितः? आहो अत्यन्ता-भेदः? नाद्य इत्याह—**नैतत्सारमिति** ॥ "प्रतिपादने" इत्यत्र श्रुत्या क्रियमाण इति शेषः। **तथा स्यादिति**। ऐक्यं प्रमेयं स्यादिति यावत्। प्रत्यग्ब्रह्मणोरतिरेके प्रमाणाभावान्नायं पक्षः साधुरिति काक्वा सूच्यते ॥ द्वितीयं प्रत्याह—**यदेति** ॥ नचैवं सत्यपसिद्धान्तोऽपीत्याह—**तदुक्तमिति** ॥ अधिगतप्रमितिजनने प्रामाण्यशङ्कां तुशब्देन व्यावर्तयति। कथं तर्हि प्रामाण्यम्? इत्याह—**निवर्तकत्वादिति**। अज्ञाननिवर्तकत्वाद्वेदप्रामाण्यं सिद्धमित्यर्थः ॥ 'नीलोत्पलमि'त्यादेः संसर्ग-बोधकत्वेन प्रामाण्यम्, 'सोऽयमि'त्यादेरखण्डबोधकत्वेन, ततश्च तत्त्वमस्यादिवाक्यं कं पक्षमवलम्बतामिति? तत्राह—**इह त्विति** ॥ विधान्तरेणाखण्डवाक्यार्थमाक्षिपति—**ननु तत्त्वमिति** ॥ तत्त्वंपदलक्षितरूपे किमत्यन्तं भिन्ने? उत न? इति विकल्प्याद्यं प्रत्याह—**तत्त्वंपदाभ्यामिति** ॥ द्वितीयं दूषयति—**नचेदिति**। पदार्थ-वाक्यार्थयोरैक्ये वाक्यं व्यर्थं स्यात्, लक्षिते रूपे औपाधिकभेदस्याप्यभावादित्यर्थः ॥ लक्षितरूपे अत्यन्तमभिन्ने। नच पदार्थवाक्यार्थयोः साङ्कर्य-प्रसङ्गः; इष्टापत्तेरित्याह—**सत्यमिति** ॥ तर्हि पदद्वयवैयर्थ्यम्, तत्राह—**स चेति** ॥ लक्षणानिमित्तमाह—**मुख्येति**। त्वंपदस्य वाच्यार्थपरित्यागेन चिल्लक्षकत्वं तत्पदसामानाधिकरण्ये सति घटते, तथा तत्पदस्यापि वाच्यांशपरित्यागेन चिल्लक्षकत्वं त्वंपदसामानाधिकरण्ये, इति न पदद्वयवैयर्थ्यमित्यर्थः ॥ अखण्डवाक्यार्थसमर्थनमुपसंहरति—**तस्मादिति**।

निरस्तमिति पक्षं दूषणान्तराभिधित्सया पुनरुत्थापयति—**अत्र केचिदिति** ॥ व्यतिरेकमुखेनोक्तमर्थमुप-

## ऋजुविवरणम्

**तथा तत्त्वमसिवाक्यस्यापीति** प्रामाण्यमुपपद्यत इत्यन्वयस्त्वंपदेन, लक्षणयान्वयमाह—**एकदेशपरित्यागेनेति**। त्वम्पदेनान्तःकरणवृत्तिविषयसंबन्धसाक्ष्यहं जानामीति प्रतीयमानो 'न जानामी'त्यज्ञानसाक्षित्वेन च प्रतीयमानः परिच्छिन्नो वाच्यतया प्रतीयते, स च प्रेमास्पदत्वेन प्रतीत्या सुखस्वरूपः, तस्य च नान्तःकरणाद्यात्मकत्वं संभवति; साक्ष्यस्य साक्ष्यात्मकत्वायोगात् नापि भेदशून्यत्वसंभवः, इत्यनुसन्धानेन 'अकायमव्रणमि"त्यादि त्वंपदार्थपरिशोधक-वाक्यैश्चाज्ञानादिप्रपञ्चं विलाप्यापरिच्छिन्नसच्चिदानन्दलक्षणस्य, तत्पदेनाऽपि पारोक्ष्यपरित्यागेन सच्चिदानन्दस्वरूपं लक्षयित्वा तदैक्यं प्रतिपाद्यत इति ॥ **ननु—इह** भिन्नयोरैक्यं प्रतिपाद्यं न भवति, किन्तूपाधिपरिकल्पितभेदव्युदासेन स्वरूपमेव प्रतिपाद्यत इति कथं निश्चीयते? इत्याशङ्क्य प्रमाणमाह—**इह तु कार्यकारणद्रव्येति**। अयं प्रयोगः—तत्त्वमसिवाक्यं धर्मि, एकस्य द्रव्यस्योपाधिपरिकल्पितभेदव्युदासेनैकद्रव्यपर्यवसायीति साध्यो धर्मः, कार्य-कारण-द्रव्यव्यतिरिक्तत्वे सति द्रव्याभिधायिपदयोः सामानाधिकरण्यत्वात्, 'सोऽयं देवदत्तः' इतिवत्। अखण्डैकरसवृत्तित्वमप्ये-तदेव; मुख्याभिधेयैक्यायोगादिति लक्षणाबीजम्। अतो वाक्यार्थस्यैव पदार्थत्वदोषोद्भावनेन चोद्यवादिनः पदाभिधे-यैक्यमेव विवक्षितम्, तदपि परिहृतमिति भावः ॥

ननु—यावत्प्रमाणेन गृहीतं वस्तु, तावदेवाभ्यासेन भवितव्यमिति नियमो नास्ति, तेनाभेदज्ञानस्यैवाभ्यास

### पञ्चपादिकाविवरणम्

**अत्र केचिदाहुः—**लक्ष्यमाणयोरपि जीव-ब्रह्मणोर्भेदाभेदविषयं सामानाधिकरण्यम्; अन्यथा पदार्थवाक्यार्थयोः साङ्कर्यात्। अस्ति जीव-ब्रह्मणोर्भेदोऽपि; "य आत्मनि तिष्ठन्नि"त्यादिलिङ्गात्, नैतद्युक्तम्; भेदाभेदविषयेण वाक्यजन्यज्ञानेन तदभ्यासजन्यापरोक्षज्ञानेन वा स भेदो निवर्त्यते वा? न वेति? निवर्त्यते चेत्, कथं विज्ञानस्य स्वविषयनिरासिता? तृतीयज्ञानेनाभेदमात्रविषयेण भेदो निवर्त्यत इति चेत्, न; यथाप्रमाणमभ्यासजन्यस्यापि ज्ञानस्य भेदाभेदविषयत्वात्, अन्यथाप्रमाणेऽन्यथाभ्यासजन्यज्ञाने च भेदाभेदप्रमाणवैकल्यात्। ज्ञाननिवर्त्यत्वेन भेदस्यापि विद्यावन्मिथ्यात्वमपि स्यात्। ज्ञानेनाज्ञानं निवर्त्यते, भेदस्तु कर्मभिर्विनश्यतीति चेत्, न; "ब्रह्म वेद ब्रह्मैव भवती"ति ज्ञानप्रयुक्तत्वादेवकाराभिधेयभेदनिरासस्य। येनैव चाकारेण जीवस्य भेदाः, तेनैव चेदभेदोऽपि, भेदनिवृत्तावभेदोऽपि निवर्तेत। आकारान्तरेण चेदभेदः, तदा निरवयवद्रव्यस्यैकदेशो न कर्मणा निवर्तयितुं शक्यते, इति भिन्नाभिन्न एव मुक्तावपि जीवः स्यात्। नच भेदाभेदौ शास्त्रेण प्रतिपादनीयौ; लोकसिद्धसामान्यतो दर्शनेनैव सिद्धेः। च यदि च भेदाकारविशिष्टो

### तत्त्वदीपनम्

पादयति—**अन्यथेति**॥ श्रुतितोऽपि भेदसिद्धिरित्याह—**य आत्मनीति**॥ नचात्मशब्देन बुद्धिरभिधीयत इति शङ्क्यम्; "यो विज्ञाने तिष्ठन्नि"त्यादिना बुद्धेर्निर्दिष्टत्वादित्यर्थः॥ विकल्पासहत्वान्नैतन्मतं साध्वित्याह—**नैतदिति**॥ मुक्तवस्थायां भेदांशस्य निवृत्तिः? उत न? आद्येऽपि किं ज्ञानेन? उत कर्मणा? ज्ञाननिवर्त्यत्वेऽपि विवेचनीयम्—किं वाक्योत्थज्ञानं निवर्तकम्? अथवा तृतीयं ज्ञानम्? इति विकल्प्य, आद्यप्रथम-द्वितीयौ दूषयति—**भेदाभेदेति**॥ घटज्ञानस्य घटनिवर्तकत्वादर्शनादित्यर्थः॥ तृतीयमुत्थापयति—**तृतीयेति**। शब्दज्ञानाभ्यासजनितज्ञानापेक्षया तृतीयज्ञानेनेत्यर्थः। तस्यापि भेदाभेदविषयत्वान्न भेदनिवर्तकत्वमित्याशङ्क्याह—**अभेदमात्रेति**। तृतीयत्वं वा साधयति—अभेदेति। तयोर्भेदाभेदगोचरत्वादस्य चाभेदमात्रगोचरत्वात् तृतीयत्वं युक्तमित्यर्थः। अभेदमात्रविषयत्वमसिद्धमित्याह—**न यथेति**। तत्र हेतुमाह—**अन्यथेति**। शाब्दं ज्ञानम्, भेदाभेदगोचरम्, तदभ्यासोत्थं त्वभेदमात्रविषयमित्यङ्गीकारे शब्दज्ञानवैफल्यं स्यात्, तयोर्भिन्नगोचरयोर्जन्य-जनकतानुपपत्तेरित्यर्थः॥ इतोऽपि न ज्ञाननिवर्त्यो भेद इत्याह—**ज्ञाननिवर्त्यत्वेनेति**॥ विकल्पान्तरमुत्थापयति—**ज्ञानेनेति**॥ भेदस्य कर्मनिवर्त्यत्वे ज्ञानवैयर्थ्यमित्यपि न शङ्क्यम्; अज्ञाननिवर्तकत्वेनार्थवत्त्वसंभवादित्याशयेनोक्तम्—**ज्ञानेनेति**॥ श्रुतिविरोधेनोत्तरयति—**न ब्रह्म वेदेति**। "ब्रह्मैव भवती"त्यत्रैवकारेणाभिधीयमानस्य भेदनिरासस्य ज्ञानमात्रप्रयोज्यत्वं श्रुतम्, तद्विरुद्धं कर्मनिवर्त्याभिधानमित्यर्थः। "**कारकाभिधेयभेदनिरासस्ये**"ति पाठे "ब्रह्म वेदे"त्यत्र द्वितीयाविभक्ति-लट्प्रत्ययाभ्यामभिधेयो यः कर्मकर्तृकारणरूपेण भेदः, तन्निरासस्य ज्ञानमात्रप्रयुक्तत्वादित्यर्थः॥ प्रत्यग्ब्रह्मणोर्भेदाभेदावङ्गीकृत्य न भेदांशनिवृत्तिरित्युक्तम्, संप्रति पक्ष एवायमसंगत इत्याह—**येनेति**। भेदकाकारस्याभेदकाकारादभेदः? उत भेदः? आद्ये भेदकाकारनिवृत्त्या भेदनिवृत्तिसमयेऽभेदस्यापि निवृत्तिः स्यात्; इतरथा भेदकाकारस्याभेदकाकारानिवर्तेतेत्यर्थः॥ द्वितीयमुत्थापयति—**आकारान्तरेणेति**। भेदकमाकारान्तरं किं तात्त्विकम्? उतातात्त्विकम्? उभयथाऽप्यसंभव इत्याह—**तदेति**। "निरवयवद्रव्यस्ये"ति विशेषणेनाकारान्तराभावमभिदधौ, भावेऽपि तस्य तात्त्विकत्वान्न निवृत्तिरित्याह—**निवर्तयितुं शक्यत इति**। अतात्त्विकत्वेऽपि ज्ञाननिवर्त्यत्वमसंघवीत्याह—**कर्मणेति**। मा भूत् तर्हि भेदनिवृत्तिरिति विकल्पान्तरमाशङ्क्याह—**इति भिन्नाभिन्न इति**। ततश्च न संसारावस्थातो मुक्तेर्विशेष इति द्रष्टव्यम्॥ अत्यन्तभेदे तत्त्वमस्यादिशास्त्रस्यानुपपत्तिः; अत्यन्ताभेदे च "य आत्मनि तिष्ठन्नि"त्यादेः, तथाच भेदाभेदौ शास्त्रत एव सिद्धौ कथं निह्नूयेते? तत्राह—**नचेति**। सत्त्वादिरूपेणाभेदस्य विशेषरूपेण भेदस्य च लोकप्रसिद्धत्वात् तद्दृष्टान्तेन ब्रह्मण्यपि

### ऋजुविवरणम्

इत्याशङ्क्याह—**अन्यथा प्रमाण इति**॥ **ननु—**यथा स्थितं वस्तु, तथा शास्त्रं प्रतिपादयति, न तु प्रयोजनवशात्, अभ्यासे तु भेदांशस्य नाभ्यासः; प्रयोजनशून्यत्वात्, निवर्त्यत्वाच्चेत्याशङ्क्याह—**ज्ञाननिवर्त्यत्वेनेति**। तथा सति न शास्त्रप्रमेयत्वमिति भावः॥ **ननु—**नेदमसाधारणं कर्म निवर्तकम्; साङ्गस्यैव फलसाधनत्वात्, कर्मणाञ्च मोक्षहेतुत्वप्रतीतिरस्ति, ज्ञानस्य चाज्ञानमिथ्याज्ञाननिवर्तकत्वम्, तन्निमित्तरागादीनामपि तत एव नाशः, ननु भेदस्य; अतो न भेदस्य मिथ्यात्वमित्याशङ्क्याह—**येनैव चाकारेणेति**॥ **ननु—**शास्त्रमेव भेदाभेदं प्रतिपादयद् भेदनिवृत्तिमपि प्रतिपादयति, अतः शास्त्रसामर्थ्याद्रुभयमप्यङ्गीकर्तव्यमित्याशङ्क्याह—**नच भेदाभेदाविति**॥ **ननु—**जीव-

## पञ्चपादिका

**प्रकृष्ट-प्रकाशशब्दयोरिव चन्द्रपदाभिधेयार्थकथनेन । तथा च व्यक्तिविशेषः कश्चिच्चन्द्रप्रातिपदिकाभिधेयः केनचित् पृष्टः—'अस्मिन् ज्योतिर्मण्डले कश्चन्द्रो नाम ? इति । तस्य प्रतिवचनम्—'प्रकृष्टप्रकाशश्चन्द्रः' इति । तदेवं प्रतिवचनं**

## पञ्चपादिकाविवरणम्

जीवः, तन्नाशेन नश्येत् । अथ भेदविनिर्मुक्तो जीवः, ब्रह्मस्वरूपमेव जीवः इत्येकद्रव्यनिष्ठं सामानाधिकरण्यं स्यात् । अथ विशिष्टो जीवो विशेषणनाशेऽपि स्वरूपावस्थानान्मुच्यत इति, तर्हि यो मुक्तिमनुभवति, स एव पूर्वमपि जीवः संसारी, इत्येकमेव वस्तु सामानाधिकरण्यालम्बनमित्युक्तं स्यात् । तस्मादभिधेयपरामार्शेनैकस्मिन् वस्तुनि लक्षणया वृत्तिः सामानाधिकरण्यमिति । योऽपि लक्ष्यमाणजीव-ब्रह्मणोरतिरेकनिमिते पदार्थापौनरुक्त्यं कल्पयति, तस्यातिरेको भेदवन्निराकर्तव्यः, "एकधैवानुद्रष्टव्यं नेह नाने"ति श्रुतेः । तस्मादेकस्य द्रव्यस्योपाधिजनितभेदावभासपरामर्शेनैकद्रव्यपर्यवसायि सामानाधिकरण्यमित्येकरसं ब्रह्मेति सिद्धम् ॥

इदानीं सत्यज्ञानादिवाक्यस्योदाहरणमाह—**प्रकृष्टप्रकाशशब्दयोरिवेति** ॥ तयोरेकार्थनिष्ठतामेव दर्शयति—**तथाच व्यक्तिविशेष इति** । अयमर्थः—प्रकाशशब्दः सामान्याभिधानमुखेन लक्षणया व्यक्तिविशेषे वर्तते । प्रकृष्टशब्दश्च लक्षणया प्रकर्षगुणाभिधानमुखेन प्रकाशविशेषे पर्तते । तत्र गुणसामान्ययोश्चन्द्रपदाभिधेयत्वाभावाज्जहल्लक्षणया तदुभयं व्युदस्य तत्समवायिप्रकाशविशेष एव चन्द्रपदाभिधेयतया समर्प्यते, इति प्रकृष्ट-प्रकाश-चन्द्रशब्दानामेकार्थवृत्तिता सिद्धा ॥

## तत्त्वदीपनम्

भेदाभेदयोः सिद्धेर्न शास्त्रप्रतिपाद्यत्वमित्यर्थः ॥ किंच त्वत्पक्षे जोवोऽपि कीदृशः ? इति विवेचनीयम्—किं भेदकाकारविशिष्टः ? उत तदुपलक्षितः ? नाद्य इत्याह—**यदि चेति** । नच—जीवनाशप्रसञ्जनमिष्टमित्यपि—शङ्क्यम्; फल्यभावे फलाभावप्रसक्तेरित्यर्थः ॥ द्वितीयमुत्थाप्य दूषयति—**अथेति** ॥ दण्डापाये तद्विशिष्टनिवृत्तावपि चैत्रस्य स्वरूपस्थितिवद् विशेष्यचैतन्यस्थितेर्मुक्त्युपपत्तिरिति शङ्कते—**विशिष्ट इति** । चिन्मात्रस्य मुक्त्यनुभवितृत्वे तस्यैव बन्ध-मोक्षवैयधिकरण्यापत्तिः, ततश्चास्मन्मतसिद्धिरित्याह—**तर्हीति** ॥ एकस्मिन् वस्तुनि सामानाधिकरण्यं विरुद्धमिति शङ्कामुपसंहारव्याजेन निरस्यति—**तस्मादिति** । वाच्यभेदसंभवात् सामानाधिकरण्यं युक्तमित्यर्थः ॥ मतान्तरमनूद्य दूषयति—**योऽपीति** । भेदतावन्मात्रविरोधित्वमतिरेकशब्दार्थः । अतिरेकविशिष्टस्य तदुपलक्षितस्य वा जीवत्वासंभवादतिरेकानिरूपणाच्च नैतत्साध्वित्यर्थः । श्रुतिविरुद्धश्चायं पक्ष इत्याह—**एकधेति** ॥ तस्मादस्मदुक्तमेव परिशिष्यत इत्याह—**तस्मादिति** ॥

"प्रकृष्टप्रकाशयोरि"त्यनेन तत्त्वमस्यादिवाक्य एवोदाहरणान्तरं निर्दिष्टमित्याशङ्क्य, महावाक्यस्याखण्डार्थत्वमभिधायाऽवान्तरवाक्यस्य तदाहेत्याह—**इदानीमिति** ॥ प्रकृष्टादिवाक्यस्य विशिष्टबोधकत्वाद् दृष्टान्तासंगतिरित्याशङ्क्याह—**तयोरिति** ॥ प्रकृष्ट-प्रकाशशब्दयोरेकार्थत्वे पर्यायत्वं स्यादित्यत्राह—**अयमर्थ इति** । वाक्यभेदान्न पर्यायत्वमित्यर्थः ॥ उभाभ्यां पदाभ्यामेकव्यक्तेर्लक्ष्यमाणत्वे पदान्तरमनर्थकमित्याशङ्क्याह—**तत्रेति** । **गुणसामान्ययोरिति** प्रकर्ष-प्रकाशत्वयोरित्यर्थः । प्रकृष्टशब्दान्न चन्द्रप्रातिपदिकार्थसिद्धिः; प्रकृष्टं तम इति प्रकर्षशब्दस्य प्रकृष्टसंतमसेऽपि प्रयोगदर्शनात्, तथा प्रकाशशब्दादपि न तत्सिद्धिः; खद्योतादावपि तत्प्रयोगदर्शनात् । तथाच वाच्यार्थपरित्यागेनाप्रकर्षाप्रकाशविरोधी चन्द्रप्राप्तिपदिकार्थः पदद्वयेन प्रतिपाद्य इत्यखण्डार्थत्वसिद्धिः; इतरथा चन्द्रप्रातिपदिकार्थमात्रप्रश्नोत्तरतया विशिष्टमर्थं बोधयतो वक्तुरनवधेयवचनत्वं स्यात् । तथाच विमतम्, अखण्डार्थम्, लक्षणवाक्यत्वात्, 'प्रकृष्टप्रकाशश्चन्द्र'

## ऋजुविवरणम्

ब्रह्मणोस्सामानाधिकरण्यमत्रैव प्रतीयते, तेन च भेदाभेदनिश्चयः, इत्याशङ्क्य 'सोऽयं देवदत्तः' इतिवदेकद्रव्यनिष्ठमेव सामानाधिकरण्यम्, भेदाभेदविषयमिति दर्शयति—**यदि भेदाकारविशिष्ट इति** ॥ ननु—एकस्यैवालम्बनत्वे सामानाधिकरण्यमेव न स्यादित्याशङ्क्याह—**तस्मादभिधेयपरामर्शेनेति** ॥

"तथा च व्यक्तिविशेषः"इत्यनेन प्रकृष्ट-प्रकाशचन्द्रशब्दानामैकार्थ्यमुक्तम्, तत् कथम् ? प्रकर्षवाचिनस्सामान्यवाचिनश्च चन्द्राभिधायकत्वाभावात् । नहि प्रतिवचनत्वानुपपत्तिस्तदर्थत्वाभाव इति तदर्थत्वसाधिकेत्याशङ्क्याह—**अयमर्थः प्रकाशशब्द इति** ॥ **गुणसामान्ययोरिति** । प्रकर्षगुणो न चन्द्रपदाभिधेयः; प्रकृष्टं तमः इति प्रयोगात्, खद्योतेऽपि प्रकाशगुणदर्शनादिति । अत्रापि लिङ्ग-सङ्ख्ययोरविवक्षा द्रष्टव्या; अपुरुषार्थनिरूपणस्यायुक्तत्वात् । अत

### पञ्चपादिका

भवति—यदि यथा चन्द्रपदेनोक्तम्, तथाऽऽभ्यामपि पदाभ्यामुच्येत। एवं च सति नीलोत्पलवदयुतसिद्धपरस्परावच्छिन्न-विशेषण-विशेष्यभावेनाप्यन्वयो दुर्लभः। कुतः पृथक्सिद्धः क्रिया-कारकलक्षणः सम्बन्धः? तथाविधान्युदाहरति—सदेव सौम्येदमग्र इत्यादीनि॥

ननु जन्मादिसूत्रोदाहरणेष्वेव प्रामाण्यं दर्शनीयम्, किमुदाहरणान्तरेण? बाढम्; अस्त्यत्राभिप्रायो भाष्यकारस्य। तत्र ब्रह्मणो लक्षणं वक्तव्यमिति तटस्थस्यैव ब्रह्मणो निरूपकाणि वाक्यान्युदाहृतानि, इह तु "तत्त्वमसी"ति जीवस्य ब्रह्मात्मतावगतिपर्यन्तानि वेदान्तवाक्यानि न तटस्थमेव जगत्कारणं प्रतिपाद्य पर्यवस्यन्ति, इत्यतस्तथाभूतान्येव वाक्यान्युदाहृतानि—"सदेव सौम्येदमग्र आसीदि"त्येवमादीनि। यत्पुनः सिद्धे वस्तुनि प्रत्यक्षादिसम्भवात् तदभावे मिथ्यात्वाशङ्कायामप्रामाण्यमिति, तद् रूपाद्यभावाद् नेन्द्रियगोचर इति प्रत्युक्तम्॥

### पञ्चपादिकाविवरणम्

ननु-गुण-गुण्यन्वयः क्रिया-कारकान्वयो वा किं न स्यादिति? तत्राह—एवं च सति नीलोत्पलवदिति। "एकमेवाद्वितीयम्" "एकधैवानुद्रष्टव्यम्" "नेह नानाऽस्ति किञ्चन" "उदरमन्तरं कुरुते अथ तस्य भयं भवती" त्यादिप्रतिषेधादित्यर्थः॥ "तथाविधान्युदाहरती" त्यारभ्य "यत्पुनरि"त्यतः प्राक्तनो ग्रन्थः स्पष्टार्थः "यत्पुनः सिद्धे वस्तुनी"त्युक्तार्थमनुवदति। परिहरति—तद्रूपाद्यसंभवादिति॥ अयमाशयः—किं प्रमाणान्तरयोग्यत्वे सति तदनुत्पत्तौ विषयस्याभावे निश्चिते तत्र शब्दस्य मिथ्यात्वमाशङ्क्यते? किं वा प्रमाणान्तरसंभिन्नार्थविषयत्वात्पौरुषेयवचोवत्सापेक्षं प्रामाण्यमिति? किं वा प्रमाणान्तरयोग्यार्थविषयत्वात् तत्सिद्धार्थानुवादाशङ्केति? तत्र न तावत् प्रथम कल्पः; प्रमाणेन हि प्रमीयमाणस्यार्थस्य प्रमाणान्तरानुत्पादो मिथ्यात्वं नावहति; सर्वप्रमाणानामनधिगतार्थगन्तृत्वात्, अन्यथा चक्षुषा गृह्यमाणस्य रूपस्य द्रव्यस्य वा स्पर्शनेनाग्रहणान्मिथ्यात्वशङ्का स्यात्। कथंचित्सापेक्षप्रमाणस्य पुरुषवचसः प्रमाणान्तराभावे मिथ्यात्वाशङ्का स्यात्, न त्वपौरुषेयस्य वेदवचसः; अनपेक्षत्वात्॥

नापि द्वितीयः कल्पः; प्रमाणान्तरसंभिन्नार्थताऽभावात्। भूतार्थविषयत्वेन नदीतीरफलसत्तावाक्यवत्

### तत्त्वदीपनम्

इति वाक्यवदिति सिद्धमित्यर्थः॥ तत्रोक्तहेतोरप्रयोजकत्वमाशङ्कते—ननु गुणीति॥ ब्रह्मणो निर्भेदत्वान्नैवंविधोऽन्वय इत्याह—तत्राहेति॥ निर्भेदत्वमेव कुतः? इति वीक्षायामाह—एकमेवेति। एकधैवेति। एकरूपेणेत्यर्थः। कारणे ब्रह्मणि नानाभूतस्य निषेधेऽन्यत्र स्थित्यसंभवाद् निर्भेदत्वमित्यर्थः। उत् अरमिति च्छेदः। ब्रह्मण्यत्यल्पमन्तरं भेदं यः कुरुते, तस्य भेदवादिनो भयं भवति। अथशब्द आनन्तर्याभिधानमुखेन भेदज्ञानस्य हेतुत्वप्रतिपादनार्थ इत्यर्थः॥ प्रमाणान्तराभावाद् ब्रह्मणि वेदान्तानामप्रामाण्ये चोदिते प्रमाणान्तराभावाऽभिधानमसंगतमित्याशङ्क्याह—अयमाशय इति॥ मिथ्यात्वमिति अप्रामाण्यमित्यर्थः॥ अबोधकतालक्षणमप्रामाण्यं प्रथमविकल्पार्थः॥ गृहीतसंगतिकस्य पुंसः सत्यादिवाक्यश्रवणे अबाधितानधिगतार्थप्रमितिदर्शनादबोधकत्वमसंगतमित्याह—तत्र न तावदिति॥ अर्थस्येति। अर्थसंबन्धि यत्प्रमाणान्तरं तस्यानुत्पाद इत्यर्थः। मिथ्यात्वमित्यत्र शब्दस्येत्यनुषङ्गः। विपक्षे दण्डमाह—अन्यथेति॥ द्रव्यस्येति। नक्षत्रध्रुवादेरित्यर्थः॥ नदीतीरफलसत्तावाक्ये प्रमाणान्तराभावादप्रामाण्यमित्याशङ्क्याह—कथंचिदिति॥

प्रमाणान्तरसंभिन्नोऽर्थो विषयो यस्य स प्रमाणान्तरसंभिन्नार्थः, तस्य भावस्तत्ता, तस्या अभावादित्यर्थः। असिद्धो हेतुरिति शङ्कते—भूतार्थेति। विमतं प्रमाणान्तरसंभिन्नार्थम्, भूतार्थवाक्यत्वात्, नदीतीरफलसत्तावाक्य-

### ऋजुविवरणम्

एकरसार्थत्वसिद्धिः। "उदरमन्तरमि"ति चोच्छब्दोऽप्यर्थः, अरमल्पमपि भेदं यः कुरुत इत्यर्थः।

"तद्रूपाद्यसंभवादि"त्यनेन ब्रह्मण इन्द्रियादिगोचरत्वं नास्तीत्युक्तम्, तदयुक्तम्; प्रमाणान्तराभावेन मिथ्यात्वाशङ्कायाः परिहाराभावादित्याशङ्क्याभिप्रायमाह—अयमाशयः—किं प्रमाणान्तरेति॥ संभिन्नार्थेति॥ ननु—प्रमाणगृहीते संवादाभावेनाप्रामाण्यशङ्का स्यात्। दृश्यते च, अतः कथं सेत्याशङ्क्याह—कथञ्चित्सापेक्षप्रमाणस्येति॥ भूतार्थविषयत्वेनेति। अयं प्रयोगः—वेदान्तवाक्यं धर्मि, प्रमाणान्तरसंभिन्नार्थत्वं साध्यो धर्मः, भूतार्थविषयत्वात्; नदीतीर-

## पञ्चपादिकाविवरणम्

प्रमाणान्तरसंभिन्नार्थतेति चेत्, न; पौरुषेयवचनप्रयुक्तत्वात् सम्भेदस्य । भूतार्थत्वप्रयुक्तत्वे प्रत्यक्षादीनामपि संभेदः स्यात् । ननु भूतार्थस्मृतौ संभेदो दृश्यत इति चेत्, तर्हि स्वार्थप्रवृत्तज्ञानान्तरजन्यता संभेदहेतुः; कार्य-भूतार्थनिष्ठयो लौकिकवचसोस्तथा दर्शनात् । पुरुषो हि प्रमाणान्तरेणार्थमुपलभ्य तन्निमित्तं परस्मै शब्दं विरचयति, न तु वेदवचसः प्रमाणान्तरजन्यता, इत्यनपेक्षता । किञ्च तुच्छव्यावृत्तमात्रं प्रमाणान्तरयोग्यम्, इति विधिवाक्यानामपि संभिन्नार्थतया सापेक्षता स्यात्; लौकिकविधीनां प्रमाणान्तरयोग्यतादर्शनात्, अयोग्यत्वे वा तत्र संबन्धाग्रहणाद् वेदेऽप्यर्थप्रतिपत्तिर्न स्यात् । ननु कार्यस्य साध्यस्वभावत्वान्न प्रमाणान्तरगम्यतेति, ब्रह्मापि तर्हि रूपादिहीनत्वान्न प्रमाणान्तरेण गम्यते । स्वरूपज्ञानमेव प्रमाणान्तरमस्ति, अतस्तत्संभिन्नतया सापेक्षतेति चेत् न; शब्दजन्यज्ञानविषयस्थचैतन्यतया प्रमाणफलरूपत्वात्

## तत्त्वदीपनम्

वदित्यर्थः ।। अप्रयोजको हेतुरित्याह—**नेति** ।। किं तर्हि मानान्तरसंभेदप्रयोजकमिति ? अत्राह—**पौरुषेयेति** ।। किमत्र विनिगमनकारणमिति ? अत्राह—**भूतार्थेति** ।। पौरुषेयवचनत्वमप्रयोजकं व्यभिचारादिति शङ्कते—**ननु भूतेति** । पौरुषेयवचनत्वं च तत्र नेति शेषः ।। अन्यदेव तर्हि प्रयोजकम्, इत्याह—**तर्हीति** ।। लौकिकवाक्यस्य स्वार्थप्रवृत्तज्ञानान्तरजन्यत्वमेव कथम् ? इत्याकाङ्क्षायामाह—**पुरुषो हीति** ।। वेदवचसोऽपि वाक्यत्वात् स्वार्थप्रवृत्तज्ञानान्तरजन्यत्वम्, ततश्च मानान्तरसंभेदः, तत्राह—**न त्विति** । "अस्य महतो भूतस्य निःश्वसितमेतदि"त्यादिश्रुतिविरोधाद् न वेदस्य प्रमाणान्तरजन्यत्वमित्यर्थः ।। अतिप्रसङ्गलक्षणबाधकतर्कपराहतश्चायं हेतुरित्याह—**किंचेति** ।। विधिवाक्यार्थः, प्रमाणान्तरयोग्यः तुच्छव्यावृत्तत्वात्; घटादिवत्, ततश्च विधिवाक्यस्यापि भूतवाक्यसाम्यमित्यर्थः । ननु तुच्छव्यावृत्तत्वं न प्रयोजकम्, अपि त्ववियाध्यर्थत्वमिति शङ्कायामाह—**लौकिकेति** ।। विपक्षे दण्डमाह—**अयोग्यत्वे चेति** । प्रमाणान्तरगृहीते संबन्धग्रहणदर्शनात् विधीनां च मानान्तरायोग्यत्वान्न तत्र संगतिग्रहणम्, तथाच वैदिकलिङादिश्रवणादप्यर्थबोधो न स्यादित्यर्थः ।। वैदिकलिङादीनां प्रमाणान्तरागोचरकार्यविषयत्वान्न सापेक्षत्वम् । नच संगतिग्रहणानुपपत्तिः; तत्र प्रवर्तकाकारमात्रे संगतिग्रहणात् । ततश्च स्वर्गकामपदसमभिव्याहारानुपपत्त्या क्रियाविलक्षनियोगसिद्धिरित्यभिप्रेत्याह—**ननु कार्यस्येति** ।। साम्येनोत्तरमाह **ब्रह्मापीति** । बाधितविषयत्वमप्रयोजकत्वं वा हेतोरित्यर्थः ।। ब्रह्मणि प्रत्यक्षादेरप्रवृत्तावपि प्रमाणान्तरमत्र क्रमत इत्याह—**स्वरूपज्ञानमिति** ।। प्रमितिप्रमाणमिति व्युत्पत्त्या स्वरूपज्ञानस्य प्रमाणत्वमुक्तमिति द्रष्टव्यम् ।। किमवच्छिन्नचैतन्यं प्रमाणम्, उतानवच्छिन्नम् ? आद्येऽपि किं वृत्तिविषयानवच्छिन्नम् ? उत वृत्त्यवच्छिन्नम् ? उत वृत्तिमदवच्छिन्नम् ? नाद्य इत्याह—**न शब्देति** । शब्दजन्यं च तद् ज्ञानं चेति शब्दजन्यज्ञानम्, तस्य विषयः शब्दजन्यज्ञानविषयः, तस्मिन्

## ऋजुविवरणम्

फलसंबन्धफलवाक्यवत् ।। नायं हेतुरप्रयोजक इति परिहरति—**न पौरुषेयवचनेति** ।। कथं पौरुषेयत्वस्य प्रयोजकत्वम् ? न भूतार्थस्येत्याशङ्क्यातिप्रसङ्गदूषणमाह—**भूतार्थत्वप्रयुक्तत्व इति** ।। ननु—पौरुषेयवचनत्वमपि न प्रयोजकम्; व्यभिचारात्, इति चोदयति—**ननु भूतार्थस्मृताविति** ।। ननु—लौकिकवचसां पुरुषजन्यत्वात् कथं प्रमाणान्तरजन्यत्वं संभेदहेतुत्वेनोच्यते ? तथा वेदेऽपि स्वार्थप्रवृत्तप्रमाणजन्यत्वं वक्तुं शक्यते, इत्याशङ्क्याह—**पुरुषो हि प्रमाणान्तरेणेति** ।। ननु भूतार्थस्य प्रमाणान्तरयोग्यत्वं दृष्टम्, प्रमाणान्तरयोग्ये वर्तमानः शब्दस्तदनुसारेण वर्तते, अतः संभिन्नार्थतया सापेक्षत्वम्, अतो न स्वार्थप्रवृत्ते प्रमाणान्तरजन्यत्वमुपाधिः; तस्याप्यनेन हेतुना साधयितुं शक्यत्वात्, अथवा—स्वार्थप्रवृत्तप्रमाणान्तरजन्यत्वं संभेदप्रयोजकं न भवति; प्रमाणान्तरयोग्यत्वे विद्यमाने तज्जन्यत्वाभावेनासंभेदानुपलम्भादित्याशङ्कायामपि सोपाधिक इत्याह—**किञ्च तुच्छव्यावृत्तिमात्रमिति** । अयं प्रयोगः—कार्यं धर्मि, प्रमाणान्तरयोग्यमिति साध्यो धर्मः, तुच्छव्यावृत्तत्वात्; नदीतीरफलसंबन्धवत् ।। **ननु**—नानेन हेतुना योग्यत्वमनुमातुं शक्यते; विधीयमानत्वस्य प्रमाणान्तरयोग्यत्वबाधकत्वादित्याशङ्क्य, व्यभिचारमाह—**लौकिकविधीनामिति** ।। कथं लौकिके विधीयमानस्य मानान्तरयोग्यता वक्तुं शक्यते ? कार्ये तेषामसामर्थ्यादित्याशङ्क्याह—**अयोग्यत्वे चेति** ।। **ननु**—कार्यस्य साध्यस्वभावत्वादिति ।। न तावत्कार्यं प्रत्यक्षम्; वर्तमानविषयत्वात्प्रत्यक्षस्य, तत्पूर्वकत्वादनुमानादेरपि न गोचरः । न चैवं कार्ये व्युत्पत्त्यभावः; प्रमाणान्तरगम्यत्वाभावेऽपि वेद एव कार्ये व्युत्पत्तिसंभवात्, अतो बाधितविषयमनुमानमिति भावः । **ब्रह्मापि तर्हीति** । अनेन "भूतत्वादि"ति हेतोर्बाधितविषयत्वमुक्तम् ।। ननु कथं बाधितविषयत्वम् ? अनुमानाद्यभावेऽप्यवभासकान्तरस्य विद्यमानत्वादिति चोदयति—**स्वरूपज्ञानमेव प्रमाणान्तरमस्ति** । अत्र प्रमाणशब्दोऽवभासाभिप्रायो

**पञ्चपादिका**

**ननु इन्द्रियागोचरत्वादेव प्रत्यक्षाद्यविषयत्वान्न शब्दमात्रस्य तत्र प्रामाण्यमित्युक्तम्,**

**पञ्चपादिकाविवरणम्**

चैतन्यज्ञानसंभिन्ने वा ब्रह्मणि शब्दस्यानपेक्षप्रामाण्यसिद्धिः। पुरुषान्तरतत्संवेदनविषयं पुरुषान्तरानुमानं स्वयंप्रकाशविषयमपि संभिन्नार्थतया न सापेक्षमिति। तस्मादनपेक्षमपौरुषेयं वचः॥

नापि तृतीयः कल्पः; स्पर्शज्ञानयोग्यद्रव्यविषयस्य चक्षुषोऽनुवादकत्वादर्शनात्। शब्दविषयोऽयं नियम इति चेत्, विधिवाक्यस्यापि स्यात्; तस्यापि लौकिकस्य मानान्तरयोग्यत्वात्, शब्दावगतस्य वा प्रमाणान्तरमनुवादः किं न स्यात्? तस्माद् भूतार्थनिष्ठमपि वैदिकं वचोऽनपेक्षं प्रमाणमिति॥

तत्र चोदयति—**नन्विन्द्रियागोचरत्वादिति**॥ अत्र पृच्छामः—किं प्रमाणान्तरगृहीतेऽर्थे संबन्धग्रहणमात्रं

**तत्त्वदीपनम्**

स्थितं चैतन्यं शब्दजन्यज्ञानविषयस्थचैतन्यम्, तद्रूपतयेति विग्रहः। अत्र **विषय**शब्देन ब्रह्मोच्यते। चैतन्यस्य तत्स्थत्वं चोपचरितम्; राहोः शिर इतिवत्। तथाच विषयावच्छिन्नचैतन्यस्य प्रमाणफलरूपत्वान्न तत्सापेक्षत्वं दोषमावहतीत्यर्थः। द्वितीयं प्रत्याह—**चैतन्यज्ञानेति**। चैतन्यविषयं ज्ञानं चैतन्यज्ञानम्, तत्संभिन्नमिति यावत्। शब्दजनितवृत्त्यवच्छिन्नचैतन्यस्य शाब्दप्रमाणत्वान्न तेन वेदस्य सापेक्षत्वम्। तथा वृत्तिमदवच्छिन्नचैतन्यस्य प्रमातृकोटावन्तर्भावादप्रमाणत्वम्, ततो न तेनापि सापेक्षत्वमिति विकल्पद्वयं बहिरेव निराकृत्यानवच्छिन्नचैतन्यस्य प्रमेयत्वाद् न तेनापि सापेक्षत्वमित्याह **चैतन्यज्ञानेति**। चैतन्यं च तद् ज्ञानं चेति चैतन्यज्ञानम्, तेन संभिन्ने अभिन्न इत्यर्थः॥ चिद्रूपात्मविषयप्रमाणस्य न चित्स्वरूपमात्रेण सापेक्षत्वमित्यत्र सांख्य-गुरुमतानुसारिणौ प्रति दूषणान्तरमाह—**पुरुषान्तरेति**॥ पुरुषान्तरविषयं पुरुषान्तरस्यानुमानं स्वयं प्रकाशविषयमपि न सापेक्षमिति सांख्यं प्रति, परसंवेदनविषयमनुमानं स्वप्रकाशविषयमपि न सापेक्षमिति प्राभाकरं प्रत्युक्तमिति द्रष्टव्यम्॥ द्वितीयकल्पनिराकरणमुपसंहरति—**तस्मादिति**॥

प्रमाणान्तरयोग्यार्थविषयत्वात्तत्सिद्धानुवादकत्वमिति विकल्पं निरस्यति—**नापीति**॥ किं प्रमाणान्तरयोग्यविषयस्य प्रमाणमात्रस्यानुवादकत्वम्? उत शब्दस्य? इति विकल्प्याद्यं दूषयति—**स्पर्शेति**॥ द्वितीयमुत्थापयति—**शब्देति**॥ तत्रापि वक्तव्यम्, किं शब्दमात्रस्यैव स्वभावः? उत भूतार्थविषयशब्दस्य? आद्येऽतिप्रसङ्ग इत्याह—**विधिवाक्यस्यापीति**। अनुवादकत्वमिति शेषः। तत्र हेतुमाह—**तस्यापीति**॥ विधिस्तच्छब्दार्थः। लौकिकार्थस्य मानान्तरयोग्यत्वेऽपि वैदिककार्यस्य मानान्तरायोग्यत्वादनपेक्षत्वं तुल्यमित्यभिसंधाय, समाधानान्तरमाह—**शब्दावगतस्येति**॥ द्वितीयं प्रत्याह—**शब्देति**॥ मानान्तरयोग्ये भूते वर्तमानस्य शब्दस्यानुवादकत्ववत् शब्दसिद्धबोधिनो मानान्तस्यानधिगतविषयत्वाभावादप्रामाण्यं कस्मान्न स्यादित्यर्थः। नच प्रमाणान्तरस्य प्रथमप्रवृत्तत्वादननुवादकत्वमित्यपि शङ्क्यम्। शब्दावगते प्रवर्तमानप्रत्यक्षादेरनुवादकत्वप्रसङ्गादित्यर्थः॥

ब्रह्मणः प्रमाणान्तरागोचरत्वे विधिविधुरसत्यादिवाक्यस्याप्रामाण्यापातान्मानान्तरगोचरत्वमेष्टव्यमित्यभिप्रेत्याह—**तत्र चोदयतीति**॥ उच्यत इत्यत्र प्रमाणान्तराधिगत एव शब्दप्रयोग इत्यङ्गीकारोऽनुपपन्नः; वेदान्तानां ब्रह्मण्यप्रामाण्यापातादित्याशङ्क्य, विकल्पपूर्वकमवतारयति—**अत्र पृच्छाम इति**। प्रमाणान्तरगोचरः प्रमेय इत्येतद्

**ऋजुविवरणम्**

द्रष्टव्यः॥ कथं चैतन्यस्य प्रमाणफलता? चिद्रूपस्य वस्तुनोऽविषयत्वात्। न हि विषयस्य फलता। यद्यपि चैतन्यस्यैव केनचिदवच्छेदेन फलत्वम्; तथापि चैतन्यमात्रस्य फलत्वाभावात् तत्संभिन्नतया सापेक्षत्वमित्याशङ्क्याह—**ज्ञानसंभिन्ने वा ब्रह्मणीति**॥ कथं विज्ञानात्मकब्रह्मविषयत्वे सापेक्षत्वाभावः, स्वेनैव प्रकाशितस्य विषयत्वादित्याशङ्क्य दृष्टान्तमाह—**पुरुषान्तरसंवेदनेति**॥ कथं विधिवाक्येऽनुवादकत्वमापद्येत? मानान्तरयोग्यविषयत्वाभावात्, इत्याशङ्क्याह—**तस्यापि लौकिकस्येति**॥ प्रमाणान्तरगृहीतग्राहित्वाभावेऽपि यदि योग्यत्वमात्रादनुवादकत्वमुच्येत, तर्हि वैपरीत्यमापद्यत इत्याह—**शब्दावगम्यस्य वा प्रमाणान्तरमिति**॥ यद्वा भवतु प्रमाणान्तरयोग्यार्थस्यानुवादकत्वम्, किं तेन छिन्नम्? इत्याशङ्क्याह—**शब्दावगतस्य वेति**॥ शब्द एवायं नियम इति निष्प्रमाणकमिति भावः।

स्पष्टमपि चोद्यमवतारयति परिहारावतारणाय। "यद्यपि शब्दमात्रस्ये"त्यादिपरिहारोऽसमञ्जस इवाभाति; पूर्वचोद्यस्यापरिहृतत्वादिष्टविघातप्रसङ्गात्, "व्युत्पत्त्या तु कथमि"त्यादिना च व्युत्पत्तिप्रकारान्वेषणं

### पञ्चपादिका

**उच्यते; यद्यपि शब्दमात्रस्य प्रत्यक्षादिविषय एव प्रयोगो दृष्टः, व्युत्पत्ता तु कथं व्युत्पद्यते ? इति वाच्यम्। श्रोतृव्यवहारो हि मूलं बालानां व्युत्पत्तेः। स च श्रोतुर्ज्ञानान्तरानिमित्ततापरिशुद्धः शब्दसामर्थ्यावगमहेतुः।**

### पञ्चपादिकाविवरणम्

मात्रमुच्यते ? किं वा प्रमाणान्तरमपि शब्दार्थ इति ? पूर्वस्त्वङ्गीकृत इत्याह—**यद्यपि शब्दमात्रस्येति** ॥ नापि द्वितीयः कल्पः; इत्याह—**व्युत्पत्ता तु कथमिति** ॥ ननु प्रमाणान्तरगृहीतेऽर्थे प्रयोगप्रत्ययदर्शनात् तत्संभिन्नार्थज्ञाने शब्दसामर्थ्यं गृह्यत इति, नेत्याह—**श्रोतृव्यवहारो हि मूलमिति** ॥ अयमर्थः—शब्दादर्थं प्रतिपद्यमानः श्रोता किं स्वकीयप्रमाणसंभिन्नं प्रतिपद्यते ? किं वा व्युत्पत्तुः प्रमाणसंभिन्नम् ? आहोस्विद्वक्तुः प्रमाणसंभिन्नमिति ? न तावत्पूर्वौ पक्षौ; शब्दादर्थ-प्रतिपत्तेः प्रागुभयोरपि तस्मिन्नर्थे प्रमाणानुत्पादात्। प्रमाणान्तरेणोपलभ्य तत्र शब्दप्रयोगाद् वक्तुः प्रमाणसंभिन्नेऽर्थे श्रोतुः शाब्दप्रमितिरिति, व्युत्पत्ताऽपि तत्रैव शब्दसामर्थ्यं श्रोतुः प्रवृत्त्या प्रतिपद्यत इति चेत्, तत्राह—**स च श्रोतुर्ज्ञानान्तरानिमित्ततापरिशुद्ध इति**। अयमर्थः—व्युत्पत्ता तु प्रत्यक्षादिव्यवहारे प्रवर्तितव्यार्थमात्रज्ञानात् प्रवर्तमान-मात्मानं पश्यति; न प्रमाणान्तरसंभिन्नार्थज्ञानात्। ततश्च स्वेनैव दृष्टान्तेन श्रोतुः प्रवृत्तिलिङ्गादर्थमात्रज्ञानमनुमिमीते।

### तत्त्वदीपनम्

अत्रेत्यनेन परामृष्टम्। मानान्तरागोचरेऽपि क्वचित्संबन्धग्रहणस्य दृष्टत्वाद् "यद्यपी"त्युक्तम्। नचैवं सत्यादिवाक्या-नामप्रामाण्यमिति शङ्क्यम्; शबले गृहीतसङ्गतिकानां लक्षणया ब्रह्मणि प्रवृत्त्युपपत्तेरिति द्रष्टव्यम् ॥ किं मानविशिष्टे संगतिग्रहणम् ? उतार्थमात्रे ? इति विमर्शनीयम्। विमर्शे च विशिष्टे संगतिग्रहणे मानादर्थमात्रे सामर्थ्यग्रहणं वक्तव्य-मित्यभिसन्धिना कथं व्युत्पद्यत इत्युक्तम् ? तत्र प्रमाणाभावोऽसिद्ध इति शङ्कते—**ननु प्रमाणान्तरेति** ॥ प्रयोगप्रत्यय-दर्शनादिति। उत्तमवृद्धप्रयोगस्य मध्यमवृद्धप्रयोगस्य मध्यमवृद्धप्रत्ययस्य च दर्शनादित्यर्थः ॥ व्युत्पित्सोरर्थगोचरमाने मानाभावान्न तत्र संगतिग्रह इत्याह—**नेत्याहेति** ॥ भवतु व्यवहारस्य व्युत्पत्तिमूलत्वम्, तथाऽपि कथं मानसंभिन्नेऽर्थे संगतिग्रहाभावः ? तत्राह—**अयमर्थ इति** ॥ यद्यपि वक्तृप्रमाणसंभिन्ने संगतिग्रहणं पूर्वपक्षिणा विवक्षितम्; तथाऽपि तस्य स्पष्टमनुक्तत्वाद्विकल्प इत्यभिप्रायः—**उभयोरिति**। श्रोतृव्युत्पत्त्रोरित्यर्थः ॥ तृतीयं पक्षमनुवदति—**प्रमाणान्त-रेणेति** ॥ वक्तुर्मानसंभिन्ने संगतिग्रहस्य चोदितत्वात् श्रोतृज्ञानसंभेदनिराकरणमनुपपन्नम्, ज्ञानान्तरानिमित्तत्वे हेतुं च न पश्याम इत्याशङ्क्याह—**अयमर्थ इति**। **प्रत्यक्षादिव्यवहार इति**। प्रत्यक्षादिपुरःसरस्तन्यपानादिव्यवहार इत्यर्थः। स्तन्यपानादिविशेषज्ञानात् प्रवृत्तेरनुभवात्कथमर्थमात्रमाज्ञानादित्युक्तम् ? इत्याशङ्क्य मात्रचोऽर्थमाह—**न प्रमाणान्त-रेति** ॥ फलितमाह—**ततश्चेति** ॥ प्रयोगानुपपत्त्या तन्मूलं ज्ञानमपि कल्प्यत इत्याशङ्क्य, न तस्य प्रवर्तकत्वनिश्चय

### ऋजुविवरणम्

केवलव्युत्पत्तिप्रदर्शनस्वासङ्गतम्; वस्तुकीर्तनादित्याशङ्क्यावतारयति—**अथ पृच्छामः किं प्रमाणान्तरेणेति** ॥ "श्रोतृ-व्यवहारः" इत्यनेन व्युत्पत्तिमूलं प्रदर्शितम्, तदसमञ्जसम्; नहि श्रोतृव्यवहारस्य व्युत्पत्तिहेतुत्वकीर्तनेन "प्रमाणान्तर-गृहीत एव प्रयोगप्रत्ययादि"ति हेतुः परिहृतः। नच—उत्तरेण तत्र हेतुप्रतिपादनमिति—युक्तम्; श्रोतृप्रमाणसंभिन्नत्वा-भावेऽपि वक्तृप्रमाणसंभिन्नत्वस्य बालप्रमाणसंभिन्नत्वस्य वा परिहाराभावात्। अत एव प्रमाणमात्रसंभिन्ने शक्तिरिति पक्षोऽपि नानेन परिहृतः; श्रोतृप्रमाणसंभिन्नत्वाभावस्य प्रमाणान्तरसंभेदाभावसाधकत्वाभावात्, व्यधिकरणता च भवति; प्रमाणान्तरसंभेदेन भवितव्यमिति चोदिते श्रोतृप्रमाणसंभेदनिराकरणादित्याशङ्क्य व्याचष्टे—**अयमर्थः शब्दादर्थं प्रतिपाद्यमान इति** ॥ ननु—शब्दार्थप्रतिपत्तेः प्राग्वक्तृप्रमाणे विद्यमानेऽपि कथं तस्य शक्तिप्रतियोगित्वं प्रतिपाद्यते ? नहि विद्यमानत्वमेव शक्तिप्रतियोगित्वकारणम्; अतः केन विशेषेण तस्य पृथङ् निराकरणमिति ? तदाह—**प्रमाणान्त-रेणोपलभ्येति** ॥ "स च श्रोतुरि"ति ग्रन्थे श्रोतुरिति पदस्य ज्ञानपदेनान्वयः प्रतिभाति—श्रोतुर्ज्ञानान्तरेति, तथा सति परिहारो व्यधिकरणस्स्यात्; वक्तृप्रमाणसंभेदस्य चोदितत्वात्, तस्य चापरिहृतत्वात्, पुनरुक्तता च। अथैवमन्वयः—स च श्रोतुर्व्यवहार इति, तथाऽपि ज्ञानान्तरानिमित्ततेत्यनन्वयः। अथाऽनिमित्तमन्वय इति व्याख्यायेत, हेतोरसिद्धता स्यात्; ज्ञानान्तरनिमित्तत्वं चोद्यसमये दर्शितं यतः, नापि परिशुद्धत्वं निरूपयितुं न शक्यते; अतो नानेन ग्रन्थेन वक्तृप्रमाणसंभिन्ने शक्तिनिराकरणं क्रियते, इत्याशङ्क्य व्याचष्टे—**अयमर्थो व्युत्पत्ता त्विति** ॥ कथं तर्हि टीकाकारेण ज्ञानान्तरानिमित्ततापरिशुद्ध इति निमित्तत्वमात्रनिराकरणं क्रियते ? ज्ञान एव प्रयोगस्योक्तत्वात्, तदभावे प्रयोग-

## पञ्चपादिका

**अतो न प्रतिपत्तुर्ज्ञानान्तरासिद्धार्थावबोधकत्वं सामर्थ्यावगमकालेऽवगतम्। तेनानवगम्यैव तद्विषयं ज्ञानं सामर्थ्यावगमः,**

## पञ्चपादिकाविवरणम्

न वक्तुः प्रमाणस्य विषयविशेषणतयाऽवगम्यत्वेन प्रवृत्तिहेतुतां कल्पयति। दृष्टान्ताभावात्। अतः प्रमाणान्तरस्य विषयविशेषणत्वेन अनवगम्यमानतया प्रवृत्ति प्रत्यनिमित्ततया परिशुद्धः श्रोतुर्व्यवहारः केवलार्थज्ञानजन्य इत्यर्थः ॥ ततः शब्दस्यार्थमात्रज्ञाने सामर्थ्यप्रतिपत्तेर्न प्रमाणान्तरसंभिन्नः शब्दार्थ इत्याह—**अतो न प्रतिपत्तुर्ज्ञानान्तरसिद्धार्थावबोधकत्वमिति** ॥

ननु—मा भूच्छ्रोतुः प्रमाणान्तरसंभिन्नोऽर्थः प्रतिपन्नः, तथाऽपि व्युत्पत्ता संभिन्नेऽर्थे शब्दसामर्थ्यं प्रतिपद्यत इति, नेत्याह—**तेनानवगम्यैव तद्विषयमिति**। प्रवृत्तिहेतुज्ञानविषयतया स्वात्मानुमानेनानवगतस्य मानान्तरस्य न शब्दसामर्थ्यविषयता प्रतिपत्तुं शक्यत इत्यर्थः। ननु—अर्थमात्रे सम्बन्धग्रहणेऽपि व्युत्पत्त्युत्तरकालं संभिन्नोऽर्थो बोध्यत

## तत्त्वदीपनम्

इत्याह—**न वक्तुः प्रमाणस्येति**। विषयविशेषणतया वक्तृप्रमाणस्यावगम्यत्वेन प्रवृत्तिहेतुतां बालो न कल्पयतीति संबन्धः। शब्दादुत्पद्यमानं यत् श्रोतृसमवेतं ज्ञानम्, तस्य यो विषयः, तद्विशेषणतयेत्यक्षरार्थः ॥ अक्षरार्थकथनेन प्रश्न-प्रतिवचनयोर्वैयधिकरण्यमुक्तं निरस्यति—**अत इति**। **प्रमाणान्तरस्य** वक्तृसमवेतस्येत्यर्थः। परिशुद्धशब्दार्थमाह—**केवलेति**। श्रोतृपदस्य व्यवहारपदेन संबन्धान्न वैयधिकरण्यमित्युक्तं भवतीत्यर्थः। **इत्यर्थ** इत्यत्रेतिपदं द्रष्टव्यम् ॥ नदीतीरफलसत्ताविषयं यद् वक्तृज्ञानम्, तदगोचरेण श्रोतृसमवायिज्ञानेन प्रवृत्तिर्न जन्यत इति टीकार्थः। ज्ञाते शब्दस्य प्रयोग इति नियमाद् ज्ञानान्तरसिद्धार्थबोधकत्वं नेतीति कथमुक्तम्? इत्याशङ्क्य तात्पर्यमाह—**तत इति**। व्यवहारेणेत्यर्थः। तदेव स्पष्टयति **शब्दस्येति**। ज्ञानान्तरसिद्धोऽयमर्थ इत्येवंविधमवबोधं शब्दः प्रतिपत्तुर्जनयतीति सामर्थ्यावगमकाले व्युत्पित्सुना नावगतमित्यर्थः ॥

उत्तमवृद्धप्रयुक्तशब्दान्मध्यमवृद्धेनार्थमात्रं प्रतिपन्नमित्युक्तम्, तदङ्गीकृत्य संगतिग्रहणं विशिष्टविषयमेवेति शङ्कते—**ननु मा भूदिति**। अर्थवदेव मानसंभेदस्याप्यव्यभिचारित्वात्सामर्थ्यविषयत्वमित्यर्थः। अव्यभिचारित्वेऽपि न तस्य शक्तिविषयत्वमित्याह—**नेत्याहेति** ॥ ज्ञानमनवगम्यैव सामर्थ्यावगम इत्युक्तम्, तत्र हेतुमाह—**प्रवृत्तीति** ॥ सामान्ये गृहीतसंगतिकगवादिशब्देभ्यो विशेषप्रतिपत्तिवत् समयान्तरे मानसंभेदप्रतिपत्तिः स्यादित्याशङ्कते—**नन्वर्थमात्रेति**। सामान्यस्य विशेषं विनाऽपर्यवसानाद्विशेषप्रतिपत्तिर्न घटते, अत्र तु नैवम्, मानसंभेदस्यार्थविशेषत्वाभावादित्यभिसन्धा-

## ऋजुविवरणम्

स्यैवानुपपत्तेर्निमित्ताभावादित्याशङ्क्य प्रयोजनान्तरं दर्शयति—**अतः प्रमाणान्तरेण विषयविशेषणत्वेनेति** ॥ परिशुद्ध इत्यस्य व्याख्या—**केवलार्थेति** ॥ अयं प्रयोगः—श्रोता धर्मी, प्रवर्तितव्यार्थमात्रज्ञानात्प्रवर्तत इति साध्यो धर्मः, प्रवर्तमानत्वात्; यथा—'अहमि'ति। "अतो न प्रतिपत्तुरि"त्यनेन ग्रन्थेन ज्ञानान्तरसिद्धावबोधकत्वज्ञानं व्युत्पत्तिसमये नास्तीत्युक्तम्, तदयुक्तम्; वक्ता प्रतिपन्न इति ज्ञातत्वात् तस्यैव प्रतिपादनात्। अप्रस्तुतञ्चैतत्; विशिष्टे शक्तिनिराकरणस्य प्रस्तुतत्वात्। व्यधिकरणश्चात इति हेतुः। नहि केवलार्थजन्यव्यवहारस्य सामर्थ्यावगमहेतुत्वं ज्ञानान्तरसिद्धावबोधकत्वं निरुणद्धि, तेनासमञ्जस इत्याशङ्क्यावतारयति—**ततः शब्दस्यार्थमात्रज्ञान इति** ॥ ज्ञाने सतीत्यर्थः। यद्वाऽर्थमात्रज्ञाने सामर्थ्यप्रतिपत्तेस्तदुत्पादकत्वमित्यर्थः। अतो व्याख्या कृता। यद्वा—"स च श्रोतुरि"त्यनेन ग्रन्थेन पुनरुक्त इवाभाति; तत्र प्रमाणसंभिन्ने वस्तुनि शाब्दप्रतिपत्तिर्न भवतीत्युक्तम्—"अतः" इति, अनेनापि प्रमाणसंभिन्नार्थबोधकज्ञानं नास्तीत्युक्तत्वादित्याशङ्क्यावतारयति—**ततः शब्दस्यार्थमात्रज्ञान इति** ॥

"तेनानवगम्ये"ति ग्रन्थः पुनरुक्त इवाभाति, पूर्वत्रापि ज्ञानान्तरसंभिन्नत्वज्ञानेन विनाऽर्थमात्रे व्युत्पत्तिरित्युक्तम्; अनेनापि ग्रन्थेन तद्विषयज्ञानावगमेन विनाऽव्युत्पत्तेरुक्तत्वादित्याशङ्क्य विषयभेदं दर्शयति—**ननु मा भूच्छ्रोतुरिति**। **संभिन्नेऽर्थ इति**। संभेदस्याव्यभिचारे स्थिते सोऽपि शब्दार्थ इति भावः ॥ "तेनानवगम्ये"त्यनेन कथं विशिष्टे शक्तिनिराकरणं कृतम्। नहि तद्विषयज्ञानेन विनैव सामर्थ्यमवगन्तव्यमित्यत्र कश्चिद्धेतुरस्ति। नच "तेनानवगम्य"त्यत्रानवगतत्वं हेतुत्वेन विवक्षितम्; असिद्धत्वप्रसङ्गाच्छब्दप्रयोगसामर्थ्यात्, तद्विषयज्ञानस्य निश्चिततत्वादित्याशङ्क्य व्याचष्टे—**प्रवृत्तिहेतुज्ञानविषयतयेति** ॥ ननु-अर्थमात्रे संबन्धग्रहणमिति वक्तुं न शक्यते; संबन्धस्यैवाभावादिति चोद-

## पञ्चपादिका

**यथाऽवगमं च विज्ञानोत्पत्तिः ।**

## पञ्चपादिकाविवरणम्

इति, नेत्याह—**यथावगमं चेति** ।। ननु—कार्यविषयाद् वाक्यादसंभिन्नेऽर्थे युक्तः सम्बन्धग्रहः, कार्यपदव्यतिरिक्तस्य तु शब्दमात्रस्य संभिन्नेऽर्थे सम्बन्धग्रह इति, न; तेषामपि कार्यवाक्येऽर्थमात्रसम्बन्धग्रहणात् । अत्र केचिदाहुः—अर्थासंस्पर्शी शब्द इति । तथाहि—"अङ्गुल्यग्रे हस्तियूथशतमास्ते" इत्यादौ न कश्चिदर्थः प्रमीयते । यत्र च प्रमीयते, तत्रापि मानान्तरनिबन्धना प्रमितिर्न शब्दनिबन्धनेति ।।

अत्र केचित्परिहारमाचक्षते—पुरुषवचसां तु नार्थसंसर्गः प्रमेयः, किन्त्वेवमयं वेदेति वक्तृज्ञानमेव प्रमीयते, प्रमीयमाणवक्तृज्ञानसामर्थ्याच्चार्थो निश्चीयते । सर्वत्र चाङ्गुल्यग्रादिवाक्येषु भ्रान्तिमुत्प्रेक्षां प्रमाणं वा वक्तृज्ञानं शब्दः प्रमेयं न व्यभिचरति । तस्मादर्थसंस्पर्शी शब्द इति, तदयुक्तम्; वक्तृज्ञानस्यानुमानगम्यत्वाच्छब्दप्रमेयत्वाभावादित्याह—

## तत्त्वदीपनम्

याह—**नेत्याहेति** ।। मानसंबन्धग्रह इत्युक्तम्, तत्र किं कार्ये इति ? उतेतरत्र ? इति विकल्प्याद्यमङ्गीकरोति **ननु कार्येति** । कार्यस्य मानान्तरागोचरत्वान्न तत्संभिन्ने संगतिग्रहणमित्यर्थः । द्वितीयं दूषयति--**कार्यपदेति** सिद्धनिष्ठे वाक्ये प्रवृत्त्या संगतिग्रहणानुपपत्तेरुपदेशादिना संगतिग्रहणं वक्तव्यम्, ततश्च संभिन्ने संगतिरित्यर्थः ।। योग्येतरान्वितस्वार्थस्य सकलपदशक्तिविषयत्वात् तत्रापि शङ्का दुर्वारा स्यादित्याह— **न तेषामिति** । कार्यवाक्येऽपि तेषां शब्दानामर्थमात्रैः संबन्धग्रहणादिति योजना ।। अर्थमात्रे संबन्धग्रहणमित्युक्तमाक्षिपति—**अत्र केचिदिति** ।। ननु शब्दश्रवणादर्थप्रतिपत्तिदर्शनात् कथमर्थासंस्पर्शित्वम्, तत्राह—**तथाहीति** । अङ्गुल्यग्रादिवाक्यानां प्रमित्यहेतुत्ववदितरेषामपि तथात्वम्, प्रतीतिस्त्वाभासरूपेत्यर्थः । नदीतीरफलसत्तावाक्यादर्थप्रमितिरपि दृष्टेत्याशङ्क्याह—**यत्र चेति** ।।

गुरुमतानुसारेण समाधानं तावदाह—**अत्र केचिदिति** ।। किं पुरुषवचोभिः साक्षादर्थो न प्रतीयत इत्युच्यते, उतार्थादपि ? इति विकल्प्याद्यमङ्गीकरोति--**पुरुषवचसामिति** । तस्यार्थासंस्पर्शित्वमित्याशङ्कते—**किं त्विति** । वक्तृज्ञानस्यैवार्थत्वान्मैवमित्याह—**वक्तृज्ञानमिति** । कथं तर्हि स्वार्थसिद्धिः ? तत्राह—**प्रमीयमाणेति** । निर्विषयज्ञानानुपपत्त्याऽर्थसिद्धिरित्यर्थः ।। अर्थवदेव वक्तृज्ञानस्यापि व्यभिचारान्न शब्दस्य तत्परत्वमपीत्याशङ्क्य, न ज्ञानमात्रलक्षणस्य प्रमेयस्य व्यभिचार इत्याह—**सर्वत्रेति** । शब्दः सर्वत्र वक्तृज्ञानलक्षणं प्रमेयं न व्यभिचरतीति संबन्धः । ज्ञानमेवाह—**भ्रान्तिमिति** ।। कस्तर्हि पूर्वपक्षाद्विशेषः ? तत्राह—**तस्मादिति** ।। पूर्वत्र शब्दस्य प्रमेयमेव नेत्युक्तम्, अत्र तु वक्तृज्ञान-

## ऋजुविवरणम्

यति—**अत्र केचिदाहुरिति** ।। कथमर्थासंस्पर्शिता शब्दस्य निश्चीयते ? शब्दादर्थप्रतिपत्तिदर्शनात्, असंसृष्टत्वे तद्बोधकत्वायोगादित्याशङ्क्योपपादयति—**तथा ह्यङ्गुल्यग्र इति** ।। एतदुक्तं भवति "अङ्गुल्यग्रादिवाक्ये स्वसामर्थ्येनार्थं तिरस्कृत्य बोधकत्वं दृष्ट्वाऽर्थासंस्पर्शित्वन्निश्चीयते, तत्सामान्यादितरवाक्येष्वप्ययथार्थबोधकत्वमर्थासंस्पर्शश्च निश्चीयत इति ।। ननु-चक्षुरादीनामयथार्थबोधकत्वं दृष्टम्, नत्वर्थासंस्पर्शिता, अतोऽयथार्थबोधकत्वमनैकान्तिकम्, मैवम्; नेन्द्रियाणां विपर्ययज्ञानहेतुत्वम्, किन्तु दोषस्यैव; तदभावे सत्यपीन्द्रिये भ्रान्तिज्ञानाभावात् । ननु शब्देऽप्यनाप्तप्रणीतत्वदोषादप्रमाणज्ञानस्योत्पत्तिः; न शब्दमात्रात्, मैवम्; अनाप्तप्रणीतेऽप्यङ्गुल्यग्रवाक्ये बोधदर्शनात् । ननु ईदृशं वाक्यं कथमाप्तप्रणीतं भवितुमर्हति ? तेन दोषस्यैव कारणत्वमिति वक्तुं युक्तम् मैवम्; यदीदृशं वाक्यमाप्तो न प्रयुञ्जीत, तर्हि दोषजन्यत्वं ज्ञानस्य निश्चेतुं न शक्यते; प्रयुक्ते शब्दे दोषाभावेन ज्ञानानुत्पादादर्शनात्, व्यतिरेकाभावाच्छब्दे हेतुत्वं निश्चेतुं शक्यम्; सत्यपि दोषे शब्दप्रयोगाभावे ज्ञानानुत्पादात् । अपिचाप्तप्रयोगोऽपि दृश्यते—नेदृशं वचः प्रयोक्तव्यम्, यथा लोके ह्यङ्गुल्यादिवाक्यं दृश्यते ।

बहूनि स्वार्थहीनानि गन्धमादनवर्णने । रचितानि स्वबुध्याऽतः कविभिर्दृश्यते मतिः ।।
"तेन शब्दस्य सर्वत्र हेतुता भ्रान्तिबोधने ।"—इति ।।

अपिच बाधकज्ञानजननेऽपि शब्दो मिथ्याज्ञानमुत्पादयति, नतु चक्षुरादिवदुदास्ते, तेनार्थासंस्पर्शी शब्दः । तदुक्तम्—"विकल्पयोनयः शब्दा विकल्पाश्चार्थयोनयः । तेषामन्योन्यसंबन्धान्नार्थाञ्छब्दाः स्पृशन्त्यमी ।।" इति । ननु शब्दादर्थप्रमितिरपि दृश्यते, तत् कथमर्थासंस्पर्शोऽनुमीयते ? बाधिवविषयत्वप्रसङ्गादित्याशङ्क्याह—**यत्र च प्रमीयत इति** ।।

### पञ्चपादिका

यदा पुनर्व्युत्पन्नः स स्वयं प्रयुयुक्षते परप्रतिपत्तये, तदा ज्ञानान्तरसन्निधापितं स्वसाक्षिकं विवक्षन् सामर्थ्यावगमकालेऽपि तयोः सत्तां प्रतिपद्यते केवलम्, न ज्ञानोत्पत्तौ तयोरुपयोगम्। तस्मान्न शब्दस्य प्रमाणान्तरगृहीतार्थप्रकाशने सामर्थ्यं व्युत्पत्तिकालेऽवगतम्, किन्तु चक्षुरादिवदन्यनिरपेक्षो यथावगतसामर्थ्यश्च शब्दो विज्ञानं जनयति। तस्मान्न प्रमेयस्य प्रत्यक्षादिविषयत्वं शब्दस्य विज्ञानजनन उपयुज्यते।

### पञ्चपादिकाविवरणम्

**यदा पुनर्व्युत्पन्नः सन्निति** । अयमर्थः—गृहीतसम्बन्धोऽपि सन् प्रमाणान्तरेणार्थमुपलभ्य विवक्षित्वा परस्मै शब्दं प्रयुञ्जानमात्मानं पश्यति । तेन दृष्टान्तेन पूर्वमपि मध्यमवृद्धेभ्यः प्रयोक्तारः प्रयुञ्जानाः प्रमाणान्तरेणोपलभ्य विवक्षित्वा प्रयुञ्जत इत्यनुमिमीते । नन्वेवमपि शाब्दसामर्थ्यविषयतयैव प्रमाणान्तरमनुमिमीत इति, नेत्याह—**केवलमिति** । शब्दप्रयोगनिमित्ततामेव विवक्षा-मानान्तरयोः स्वात्मनि पश्यन्नन्यत्रापि तयैवानुमिमीत इत्यर्थः ।। प्रकरणार्थमनूद्योपसंहरति—**तस्मान्न शब्दस्येत्यारभ्य—अपिचेत्यतः** प्राक्तनेन ग्रन्थेन ।।

### तत्त्वदोपनम्

लक्षणं प्रमेयमित्युच्यत इति विभागः ।। अनन्यलभ्यस्य शब्दार्थत्वाद्वक्तृज्ञानस्यान्यथासिद्धत्वान्न शब्दार्थत्वमित्याह—**तदयुक्तमिति** ।। कथमानुमानिकत्वं तस्येति शङ्कायामाह—**अयमर्थ इति** । देवदत्तोऽर्थज्ञानपुरःसरं शब्दं प्रयुङ्क्ते; प्रयोक्तृत्वात्, मद्वदित्यनुमानेनैव मानसिद्धिरित्यर्थः । वक्तृज्ञानस्यानुमेयत्वमङ्गीकृत्य मध्यमवृद्धज्ञानवच्छक्तिविषयत्वे नैवानुमानमिति शङ्कते—**नचैवमिति** । शक्तिविषयत्वकल्पकाभावान्नैवमित्याह—**नेत्याहेति** ।। अन्वयव्यतिरेकयोस्तर्हि का गतिः ? इत्याशङ्क्याह—**शब्दप्रयोगेति** ।। पौनरुक्त्यशङ्कां निरस्यति—**प्रकरणेति** । मानसंभेदस्य शक्तिविषयत्वकल्पकाभावस्तच्छब्दार्थः ।।

### ऋजुविवरणम्

**अत्र केचित्परिहारमाचक्षत इति** ।। अयमभिप्रायः—संबन्धे सत्यन्यस्यान्यत्र प्रामाण्यं भवेत्, नचात्र शब्दस्यार्थेन संबन्धः स्वभावलक्षणः कार्यलक्षणो देशादिनियमो वाऽस्ति; वक्तृज्ञानेन तु कार्य-कारण-लक्षणस्संबन्धोऽस्ति, तेन तत्र प्रामाण्यमिति । ननु—शब्दस्य कथं कार्यतोच्यते ? प्रत्यक्षादिनाऽर्थं प्रतिपद्य विवक्षित्वा वक्ता पदरचनां करोति, तेन च प्रत्येति श्रोता, एवं परम्परया वक्तृज्ञानकार्यत्वं पदरचनात्मकस्य वाक्यस्य दृश्यते, तेन तत्र प्रामाण्यम् । ननु शब्दादर्थप्रतीतिरपि दृश्यते, तत्कथं वक्तृज्ञान एव प्रामाण्यम् ? उच्यते; यद्यप्यर्थः प्रतीयते, तथाऽपि वक्तृज्ञान एव प्रामाण्यं नार्थे । तन्नियमस्य तदधीनत्वात् । किञ्च लोके व्यवहारसामर्थ्यादपि वक्तृज्ञान एव प्रमाण्यं प्रतीयते । तथाहि कश्चिदेवमाह—कथमयमर्थोऽवधारित इति ? सोऽपि प्रतिवदति—स एव जानाति, येन मे कथितमिति । अतो ज्ञानादेवार्थो निश्चीयते, तेन सर्वत्र तत्परता । ननु भवतु वक्तृज्ञाने प्रामाण्यम्, अर्थेऽपि प्रतीयमाने कथं परित्यज्यते प्रामाण्यम् ? तेन तद्द्वारेणाऽर्थेऽपि प्रामाण्यम्, मैवम्; वक्तृज्ञानेन व्यवहितेऽर्थबोधोदासीन एव शब्दो न वाह्येऽर्थे प्रामाण्यं भजते । यदि वक्तृज्ञाने प्रामाण्यं शब्दस्य, कथं तर्हि बाह्यार्थत्वम् ? तथा तद्धेतुकश्च व्यवहारः ? इत्याशङ्क्याह—**प्रतीयमाने वक्तृज्ञानसामर्थ्यादिति** ।। ननु वाक्यात्प्रथमे वार्थे प्रतिपन्ने पश्चात्तदर्थविषयवक्तृज्ञानप्रतीतिः, तत्कथं ज्ञानेनान्तरितत्वम् ? तत्रैव वा प्रामाण्यं चेति ? उच्यते यद्यप्यर्थः पूर्वं प्रतीयते; तथाऽपि तन्निश्चयो वक्तृज्ञानप्रामाण्यप्रतीतिपूर्वक एव । अतोऽर्थनिश्चयस्य ज्ञाननिश्चयपूर्वकत्वाद् ज्ञानान्तरितत्वम्, तेन चार्थनिश्चयसिद्धेर्नार्थेऽपि प्रामाण्यमिति । ननु यथार्थव्यभिचारान्नार्थपरत्वं शब्दस्य; वक्तृज्ञानेनापि व्यभिचारान्न तत्परत्वं शब्दस्य संभवतीत्याशङ्क्याह—**भ्रान्तिमुत्प्रेक्षां प्रमाणंवेति** ।। ननु "तयोस्सत्तां प्रतिपद्यते" इति न युक्तं वक्तुम्; प्रतीत्यङ्गीकारे पारिशेष्यात्तेनैव संबन्धाच्छाब्दत्व प्रसङ्गात् । अथवा—वक्तृज्ञानेन बोधकत्वं शब्दस्याङ्गीकार्यम्; तेन विनाऽर्थनिश्चयायोगात्, तदङ्गीकारे च नार्थपरत्वकल्पना, एवं शब्दमेयत्वे निश्चिते नानुमेयत्वकल्पना, नापि लिङ्गमस्तीत्याशङ्क्य व्याचष्टे—**अयमर्थो गृहीतसंबन्धोऽपीति** ।। यद्वा—अनुमेयत्वं वक्तुं न शक्यते; अर्थेनैव शब्दस्य संबन्धग्रहणे तदनुमाने लिङ्गाभावात्, प्रयोजनाभावाच्चेत्याशङ्क्य व्याचष्टे—**अयमर्थो गृहीतसंबन्धोऽपीति** ।। सत्ताऽनुमानमिति वक्तुं न शक्यते; भावधर्मस्याभावधर्मस्योभयधर्मस्य वा हेतुत्वेऽसिध्यादिदोषप्रसङ्ग इति न्यायविद आहुः; अनुपयोगाच्च न सत्तामात्रानुमानसंभव इत्याशङ्क्य व्याचष्टे—**शब्दप्रयोगनिमित्ततामिति** ।। "तस्माच्च शब्दस्ये"त्यादेः पौनरुक्त्यं परिहरति—**प्रकरणार्थमनूद्येति** ।।

### पञ्चपादिकाविवरणम्

किंच यदि लौकिकवचांसि वक्तृज्ञानमेव गमयन्ति, तदा संसृष्टार्थप्रतिपादनसामर्थ्याप्रतिपत्तेर्वेदे शब्दादर्थाधिगमो न स्यात् । किञ्च न तावद्वक्तृज्ञानमात्रं शब्दार्थः; अर्थे व्यवहारानुदयप्रसङ्गात् । नाप्यर्थव्यावृत्तं ज्ञानम्; अर्थस्यैव शब्दप्रमेयत्वप्रसङ्गाद् ज्ञानस्यानुमेयतयाऽन्यथासिद्धेः । ज्ञानाभिधायिशब्दाभावाच्च न तस्य वाक्यार्थता; पदार्थस्यैव वाक्यार्थत्वात् । ननु—पदेभ्यः पदार्थाः प्रतीयन्ते, संसर्गश्श्रोतृप्रेक्षयाऽवगम्यते । तेन च व्यावृत्तं वक्तृज्ञानं शब्दार्थ इति, तदिदं श्रोतुः संसर्गज्ञानं वक्तृज्ञानविशेषणार्थविशिष्टतया प्रथमोत्पन्नं स्मृति-संशय-विपर्यासायोगात्प्रमाणज्ञानमेव

### तत्त्वदीपनम्

वक्तृज्ञानं शब्दप्रमेयम्, तद्बलादर्थसिद्धिरिति पक्षे वेदाप्रामाण्यं चेत्याह—**किं च यदीति** ।। एतच्च मूलग्रन्थाद् बहिरेव द्रष्टव्यम् । किं वक्तृज्ञानमात्रं शब्दप्रमेयम् ? उतार्थव्यावृत्तम् ? इति विकल्पयति—**किंचेति** । आद्यं दूषयति—**न तावदिति** ।। द्वितीयं प्रत्याह—**नापीति** । 'नागृहीतविशेषणा विशेष्ये बुद्धिरि'ति न्यायादर्थप्रतीतिर्वक्तव्या । तस्याश्च कारणान्तरानिरूपणात् शब्द एव कारणमित्याह—**अर्थस्येति** ।। अर्थज्ञानयोरपि प्रतिपत्तेरविशेषे कथमर्थस्यैवेत्यवधारणम् ? तत्राह—**ज्ञानस्येति** ।। शब्दरूपकार्यलिङ्गेन तत्करणभूतज्ञानानुमानमिति ज्ञानस्यान्यथासिद्धिरित्यर्थः । किं ज्ञानस्य पदार्थत्वम् ? उत वाक्यार्थत्वम् ? नाद्य इत्याह—**ज्ञानेति** । द्वितीयं प्रत्याह—**न तस्येति** । तत्र हेतुः—**पदार्थस्येति** । "विषं भुङ्क्ष्वे"त्यादिवाक्यव्यतिरिक्तस्थलेष्विति शेषः ।। विशेषणभूतार्थज्ञानकारणान्तरानिरूपणाच्छब्दः कारणमित्युक्ते, तत्र कारणाभावोऽसिद्ध इति शङ्कते—**पदेभ्य इति** । **उत्प्रेक्षयेति** । आकाङ्क्षा-सन्निधियोग्यतावन्तः प्रायेण संसृष्टा इति ज्ञानेनेत्यर्थः ।। विकल्पासहत्वात्नैतच्चोद्यं संगच्छत इत्याह—**तदिदमिति** । उत्प्रेक्षाज्ञानं

### ऋजुविवरणम्

ननु लौकिकवचांसि नैव वक्तृज्ञानानपेक्षाण्यर्थनिश्चायकानि, किन्तु वक्तृज्ञानद्वारेण; ततश्च तस्यैव शब्दार्थत्वम्, अर्थस्य तु वक्तृज्ञानाधीना सिद्धिः, अतो न प्रयोगमात्रनिमित्तत्वमित्याशङ्क्याह—**किञ्च यदि लौकिकवचांसीति** ।। ननु पौरुषेयवचनत्वप्रयुक्तं वक्तृज्ञानप्रतिपादकत्वम्, नच वेदे तदस्ति, नच संसृष्टार्थप्रतिपादनसामर्थ्याभावेन, अतो वेदे संसृष्टार्थप्रतिपादनसामर्थ्याभावः; लोकेऽपि पदानां संसृष्टार्थप्रतिपादनसामर्थ्याविशेषात्, निश्चयस्तु तैर्न संभवतीति वक्तृज्ञानप्रतिपादकत्वम्, अतो न दोष इति, तत्राह—**किञ्च न तावद्वक्तृज्ञानमात्रमिति** ।। यद्वा—लौकिकवचसां नार्थसंसर्गः प्रमेयः, किन्तु वक्तृज्ञानं प्रमेयम्, तेन विनाऽर्थनिश्चयाभावाद्बाह्यार्थव्यभिचारात्, लोकेऽप्यर्थतथात्वे वक्तृज्ञानस्यैव निर्देशदर्शनात्, अतो न व्युत्पत्तिसमयेऽवगतं वक्तृज्ञानपरत्वम्, उत्तरकालीनस्वप्रवृत्त्या प्रयोगमात्रनिमित्ततानुमानम् ? स्वस्यापि स्वज्ञानख्यापनाय वाक्यप्रयोगादित्याशङ्क्याह—**किञ्च यदि लौकिकवचांसि वक्तृज्ञानमिति** ।। ननु लोकेऽपि पदानां संसृष्टार्थप्रतिपादनशक्तिरस्त्येव; तथाऽपि पौरुषेयवाक्यान्नार्थप्रमितिः; वक्तृप्रमाणाभावे तदभावात्, वेदे तु कथं संसर्गप्रमित्यभावः ? अपौरुषेयत्वेन वक्तृज्ञानापेक्षाभावात्, सामर्थ्यस्य च विद्यमानत्वात् । अतो लोके वक्तृज्ञानपरतेति चेत्, तत्राऽपि किं ज्ञानमात्रे प्रामाण्यम् ? अर्थव्यावृत्ते वा ? न तावत्प्रथमः कल्प इत्याह—**किञ्च न तावद्वक्तृज्ञानमात्रमिति** ।। नापि द्वितीय इत्याह—**नाप्यर्थव्यावृत्तमिति** । 'नागृहीतविशेषण'न्यायेनार्थाप्रतीतौ तद्व्यावृत्तज्ञानाप्रतीतेरर्थस्यैव शब्दार्थत्वमिति भावः । ननु विशेषणग्रहणेन विना विशेष्यप्रतीत्यभावेन तस्य शब्दार्थत्वनिश्चयेऽपि कथं तस्यैव शब्दार्थत्वनिश्चयः ? ज्ञानस्यापि प्रतीतेरविशेषाच्छब्दार्थत्वमिति तत्राह—**ज्ञानस्यानुमेयतयेति** । अनन्यथासिद्धकार्यदर्शनाच्छाब्दत्वम्, नेह तथेति भावः ।। ननु शब्दानन्तर्येण शाब्दत्वे संभवति सति कथमनुमेयत्वम् ? इत्याशङ्क्याह—**ज्ञानाभिधायिशब्देति** । मा भूत्तदभिधायिपदम्, तथाऽपि पदेभ्यः प्रतीयमानस्य वाक्यार्थत्वमित्याशङ्क्याह—**पदार्थस्यैवेति** । अनन्वितपदार्थकत्वं धावतीत्यत्र पदस्यापि वाक्यार्थत्वञ्च भवेदित्यर्थः ।। कथमत्र संसर्गस्य विशेषणत्वेनादौ गृहीतत्वम्, तेन च शाब्दत्वं तस्यैव निर्णीयत इति शक्यते वक्तुम् ? तस्याप्यन्यथासिद्धेरिति चोदयति—**ननु पदेभ्यः पदार्था इति** । **संसर्गश्श्रोतृप्रेक्षयेति** । संभूय समुच्चरितपदार्थानां नूनं संसर्गेण भवितव्यमिति प्रतीतिर्भवति । स एव व्यावर्तको नार्थमात्रम्, येन नागृहीतविशेषणन्यायेनार्थस्य शब्दार्थत्वं भवेत्, प्रमित्यर्थश्च वाक्यप्रयोगः, तत्रापि नार्थप्रमितिस्संभवति, अतो वाक्यवैयर्थ्यपरिहाराय वक्तृज्ञानपरत्वं निश्चीयत इति भावः । **"तदिदं श्रोतुरि"ति** । न स्मृतिः; अनधिगतार्थगन्तृत्वात्, संस्कारजन्यत्वाभावात् । कोटिद्वयावलम्बित्वाभावाद् न संशयः, बाधकाभावाद् न विपर्ययः । तेन प्रमाणत्वे सिद्धेऽक्षादिकारणान्तराभावात्पारिशेष्याच्छाब्दज्ञानमेव भवेत्, तथा सति वक्तृज्ञानस्य न शब्दमेयता, अर्थ एव शब्दस्य चरितार्थत्वादिति भावः ।। ननु

### पञ्चपादिका

**अपि चापौरुषेये शब्दे चक्षुषीव विज्ञानोत्पत्तावनपेक्षे कथमप्रामाण्यमाशङ्क्येत ? ननु—उक्तमाशङ्काकारणं स्पार्शनगोचरचित्रनिम्नोन्नतविषयस्य चाक्षुषस्य प्रत्ययस्य तत्संवादाभावादप्रमाणत्वम्, न तत्साधूक्तम्; अदुष्टकरणत्वादस्य,**

### पञ्चपादिकाविवरणम्

परिशिष्यते, शब्दानां च पदार्थज्ञानोपक्षयाद्वक्तृज्ञानाधीनैव संसर्गप्रमितिरिरिति वेदे संसर्गः शब्दार्थो न स्यात्। तस्माच्छाब्दी संसर्गप्रमितिः, वक्तृज्ञानं त्वनुमेयमिति सिद्धम्। कस्तर्हि शब्दानामर्थासंस्पर्शस्य परिहार इति? उच्यते—प्रत्यक्षेऽपि तुल्यमेतच्चोद्यम्; शुक्तिरजतादिज्ञानानामर्थव्यभिचारात्। अदुष्टकरणजन्यज्ञानानामर्थसंस्पर्श इति चेत्, शब्देऽपि योग्येतरसंसृष्टाभिधायिन्यर्थनियमो विद्यते; अङ्गुल्यग्रादीनां संसर्गायोग्यत्वादिति। किञ्च अपौरुषेयस्य शब्दस्यानपेक्षमाणत्वान्मानान्तरसंवाद-विसंवादाभ्यां न किञ्चित्परिहीयत इत्याह—**अपि चापौरुषेय इति**॥ ननु—उक्तमिति स्पष्टार्थम्॥ **न तत्साधूक्तमिति** परिहारग्रन्थस्यायमर्थः—निरपेक्षज्ञानयोरपि परस्परविरुद्धयोरन्यतरस्य कारणदोषसंभावनया बाधो निरूप्यते। तत्राद्वितीयप्रत्यगात्मप्रतिपत्तेरात्मनि द्वैतप्रत्यक्षस्य च विरोधे द्वैतावभासस्य देहात्मप्रत्ययवद्

### तत्त्वदीपनम्

किं स्मृतिः ? उत संशयः ? आहो विपर्ययः ? अथवा प्रमाणम् ? तत्र न तावत्स्मृतिः; तद्विषयस्य प्रागनवगतत्वात्, नापि संशयः; कोटिद्वयाभावात्, नापि विपर्ययरूपत्वम्; बाधानुपलब्धेः, ततश्च प्रमितावन्तर्भावो वक्तव्यः। तत्राप्यक्षादिकरणत्वे शब्दवैयर्थ्यम्; शब्दकारणत्वे चास्मन्मतसिद्धिरित्यर्थः। वक्तृज्ञानं शब्दप्रमेयमित्यत्र दूषणान्तरमाह—**शब्दानामिति**॥ परमतं निराकृत्य स्वमतं निगमयति—**तस्मादिति**। शब्द एव संसर्गप्रमितौ समर्थश्चेत्तर्हि वक्तुर्ज्ञानान्वेषणं वृथेत्याशङ्क्य प्रतिबन्धनिरासायेत्यभिप्रेत्याह—**वक्तृज्ञानमिति**॥ अङ्गुल्यग्रादिवाक्यानामर्थासंस्पर्शनात्कथं शब्दानां संसर्गबोधित्वम् ? इति शङ्कते—**कथं तर्हीति**॥ कस्यचिदर्थसंस्पर्शित्वमात्रेण सकलशब्दानामपि तत्कल्पनेऽतिप्रसङ्गः स्यादित्याह—**उच्यत इति**। **(तुल्यमुत्तरमित्याह)** समीचीनप्रत्यक्ष इत्यर्थः॥ रजतमित्यादिज्ञानानां दुष्टकरणजन्यत्वादयथार्थत्वम्, इतरेषां च तद्वैपरीत्यान्नैवमित्याह—**अदुष्टेति**। **शब्देऽपीति**॥ शब्दमात्रस्य संसृष्टप्रमित्यजनकत्वेऽप्याकाङ्क्षासान्निधियोग्यतासहकृतस्य संसृष्टप्रमितिजनकत्वं युक्तमित्यर्थः। तस्माच्छब्दानामर्थसंस्पर्शित्वात् तन्मात्रे सम्बन्धग्रहणं न मानान्तरसंभिन्न इत्युक्तं युक्तमितीतिशब्दार्थः॥ लौकिकवाक्यस्य भूतार्थस्य मानान्तराधिगते प्रामाण्यसंभवेऽपि न वेदवचसस्तथात्वमित्युक्तम् "अपिचे"त्यत्र, तत्रानपेक्षः शब्द इति कथमुक्तम् ? सङ्गतिग्रहणाद्यपेक्षादर्शनादित्याशङ्क्याह—**किं चापौरुषेयस्येति**। प्रमाणान्तरमनपेक्ष्य शब्दोऽर्थप्रमितिं जनयतीत्युच्यते न सहकारिणमप्यनपेक्ष्येत्यर्थः॥ बाधकप्रत्ययकल्प्यत्वात् "एकमेवाद्वितीयमित्यादे"श्च प्रत्यक्षादिपराहतत्वात् तत्र दोषः कल्प्यत इत्याशङ्क्याह—**न तत्साधूक्तमिति**॥ अद्वैतावभासस्यैव दुष्टकारणजन्यत्वं किं न स्यात् ? इत्याशङ्क्य, किं शब्ददोषात्तज्जनिः ? उत प्रमेयदोषात् ? अथवा प्रमातृदोषात् ? इति विकल्प्याद्यं प्रत्याह—**शब्दस्येति**॥ अपौरुषेयत्वेनानाप्तप्रणीतत्वासंभवादित्यर्थः। प्रपञ्चग्राहिचक्षु-

### ऋजुविवरणम्

संसर्गे प्रमितिः कथं निश्चीयते ? वाक्यं तावद्वक्तृज्ञानपरमेव; वक्तृविवक्षाज्ञानानिश्चयेऽर्थनिश्चयादर्शनात्, पदानि च पदार्थमात्रोपक्षीणानि न संसर्गं बोधयन्ति, अत औत्प्रेक्षिकत्वेन न प्रमारूपत्वमित्याशङ्क्यातिप्रसङ्गमाह—**शब्दानाञ्च पदार्थज्ञानोपक्षयादिति**॥ वेदे संसर्गप्रमितिमिच्छता लोके संसर्गबोधकत्वमङ्गीकर्तव्यमित्युपसंहरति—**तस्मादिति**। शब्दानन्तर्याच्छाब्दत्वम्, कारणदोषबाधकप्रत्ययाभावात्प्रमाणत्वम्, वक्तृज्ञानापेक्षे तु पौरुषेयत्वेनाप्रामाण्यशङ्का भवेत्, स स्मृत्यादिवन्मूलज्ञानेन निवार्यत इति। कथं तर्हि वक्तृज्ञानप्रतीतिरिति ? तदाह—**वक्तृज्ञानमिति**॥ यदि वक्तृज्ञानपरत्वं निराक्रियते, तर्ह्यर्थस्य व्यभिचारित्वेन संबन्धाभावाद् नार्थासंस्पर्शः परिहर्तुं शक्यत इत्यभिप्रायेण पृच्छति—**कस्तर्ह्यर्थासंस्पर्शस्येति**॥ यदि क्वचिद् व्यभिचारादन्यत्राप्यर्थासंस्पर्शोऽनुमीयेत, इष्टविघातलक्षणविरुद्धता स्यादित्यभिप्रायेण प्रतिबन्द्या परिहरति—**प्रत्यक्षेऽपीति**॥ ननु शुक्तिकाविज्ञाननिदर्शनेन न घटादिज्ञानानामर्थसंस्पर्शित्वमनुमातुं शक्यते; अप्रयोजकत्वादिति चोदयति—**अदुष्टकारणजन्यज्ञानानामिति**॥ "न तत्साधूक्तमि"त्यादिना दोषजन्यस्य बाध्यत्वमुक्तम्; तदयुक्तम् प्रत्यक्षस्य प्राबल्येन शब्दबाधकत्वात्, बाधाधीनत्वाद् दोषकल्पनाया न तेन बाधनिश्चय इत्याशङ्क्य व्याचष्टे—

## पञ्चपादिकाविवरणम्

दुष्टकारणजन्यत्वं कल्प्यते; शब्दस्य स्वयंदोषरहितत्वात्, द्वैतावभासहेतूनां चक्षुरादीनां संभावितदोषत्वात्, "इन्द्रो मायाभिः" "मायां तु प्रकृतिम्" "अविद्यायामन्तरे" इत्यादिदोषजन्यत्वश्रवणाच्च, स्वप्नवद्दोषजन्यत्वेऽपि व्यवहाराविसंवादात् प्रामाण्यलाभात्, शब्दे तु पुनर्दोषकल्पनायां व्यवहारातीतविषयत्वाद् दोषवत्तया च तत्त्वात्प्रच्युतेरुभयविधमपि प्रामाण्यं न स्यात्। नच द्वैतावभासस्य दोषजन्यत्वाच्छुक्तिरजतज्ञानवद् व्यवहारविसंवादः कल्पयितुं शक्यः; प्रत्यक्षविरोधात्, आगमेन च द्वैतस्य तत्त्वांशबाधात्, व्यवहारबाधाभावात्, अद्वितीयात्मप्रतिपत्तेश्च शब्दादीनामर्थक्रियासामर्थ्यलम्भ्यत्वात्। तस्मादद्वितीयात्मप्रमितिरपरोक्षप्रत्ययरूपा च देहात्मप्रत्ययमिव द्वैतावभासं बाधते; अन्यथा देहात्मभावस्याप्यबाधप्रसङ्गादिति। ननु प्रमेयगतदोषादेव चित्रनिम्नोन्नतादिज्ञानवद् ब्रह्मज्ञानमपि मिथ्येति, नेत्याह—

## तत्त्वदीपनम्

रादावपि दोषादर्शनं तुल्यमित्याशङ्क्याह—**द्वैतेति**। चक्षुरादौ काचादिदोषस्य क्वचित्सिद्धत्वादितरत्र तच्छङ्का, अपौरुषेये तु शब्दे क्वचिदपि दोषो न दृष्ट इत्यर्थः। द्वितीयमनुवदति—**इन्द्र इति**॥ प्रपञ्चस्याविद्यादोषजन्यत्वात् तद्ग्राहिणोऽप्रामाण्यम्, न तथा ब्रह्मणो दोषजन्यत्वम्, इति न शब्दस्य तद्दोषादप्रामाण्यमित्यर्थः। अथवा प्रत्यक्षादौ न केवलं दोषस्य संभावना, प्रत्युत तन्निश्चयश्चेत्याह—**इन्द्र इति**॥ सावकाशानवकाशयोः सावकाशं दुर्बलम्; अनवकाशं प्रबलमिति न्यायः। तथाच द्वैतावभासस्य सावकाशत्वाद् दौर्बल्यमित्याह—**स्वप्नवदिति**। अथवा द्वैतप्रत्यक्षस्य दोषजन्यत्वेऽप्रामाण्याद् व्यवहारासिद्धिरित्याशङ्क्याह—**स्वप्नवदिति**। शब्दस्यानवकाशत्वेन प्राबल्यमाह—**शब्द इति**। शब्दस्य किं व्यावहारिकं प्रामाण्यम्? उत तत्त्वावेदनलक्षणम्? नाद्य इत्याह—**व्यवहारातीतेति**॥ द्वितीयं दूषयति—**दोषवत्तयेति**॥ दोषोत्थस्वप्नज्ञानवद् द्वैतावभासस्य व्यावहाराविसंवादः? आहो शुक्तिरूप्यज्ञानवद्विसंवादः? इति शङ्कायामाह—**नचेति**। ब्रह्मसाक्षात्कारोदयपर्यन्तमप्रतिहतव्यवहारदृष्टेर्न तद्विसंवादः शङ्क्य इत्यर्थः। "इयं शुक्तिरि"ति ज्ञानोत्तरकालम्—"इदं रजतमि"त्यादिज्ञानोचितव्यवहाराभाववदद्वैतप्रतिपत्तौ न द्वैतावभासोचितव्यवहारः स्यादित्याशङ्क्याद्वैतसाक्षात्कारादर्वाक् पारमार्थिकांशस्यैवोपमर्द इत्याह—**आगमेनेति**॥ प्रातिभासिकस्य व्यावहारिकस्य च सत्त्वस्य न बाधः; प्रत्यक्षविरोधादित्याह—**व्यवहारेति**॥ प्रपञ्चस्यातात्त्विकत्वे तदन्तःपातिशास्त्राचार्यादिरप्यतात्त्विकवाष्पस्वप्नवन्न प्रमितिजनकत्वमित्याशङ्क्याह—**अद्वितीयेति**॥ बाष्पस्य त्वव्याप्तत्वात्प्रमित्यहेतुत्वम्, नासत्यत्वादित्यर्थः। कदाचिदपि तर्हि न व्यवहारोपमर्दः, इत्याशङ्क्याह—**तस्मादिति**॥ यथा 'नाहं मनुष्यः' इत्यपरोक्षप्रत्यक्षयो देहात्मप्रत्ययं बाधते, तथाऽयमित्यर्थः। द्वैतावभासस्यानेककालप्रवृत्तत्वान्न बाध्यत्वमित्याशङ्क्याह—**अन्यथेति**॥ रेखासंनिवेशादिप्रमेयदोषवशाद् यथा चित्रनिम्नोन्नतज्ञानं ज्ञायमानमप्रमाणम्, तथा ब्रह्मज्ञानमपीति शङ्कते—**ननु प्रमेयेति**। अत्र च भूतत्वादिः प्रमेयदोष इति द्रष्टव्यम्। प्रमेयस्य च प्रत्यक्षज्ञानं प्रति कर्मकारकत्वात् तद्गतदोषस्य हेतुत्वं युक्तम्, न तथा प्रकृत इत्याह—**नेत्याहेति**। "ग्रावाणः प्लवन्ते" इत्यादौ विरोधादप्रामाण्यं दृष्टम्, तन्निरासार्थं

## ऋजुविवरणम्

**परिहारग्रन्थस्यायमर्थ इति**॥ कथं द्वैताभावस्यैव मिथ्यात्वम्? न त्वात्मप्रतीतेरिति निश्चयः? तत्राह—**शब्दस्य स्वयं दोषेति**॥ ननु संभावितत्वमात्रेण न चक्षुरादिषु दोषसिद्धिः; प्रमाणायत्तत्वादित्याशङ्क्याह—**इन्द्रो मायाभिरितीति**॥ ननु दोषजन्यत्वे सति द्वैतावभासस्य प्रामाण्याभावाद् व्यवहार एव न स्यादित्याशङ्क्याह—**स्वप्नवद्दोषजन्यत्वेऽपीति**। ननु तर्हि शब्देऽपि दोषः कल्प्यताम्, प्रामाण्यञ्च द्वैतावभासवत् किं दोषत्वनिराकरणेन? इत्याशङ्क्याह—**शब्दे तु पुनर्दोषकल्पनायामिति**॥ ननु द्वैतावभासो धर्मी, व्यवहारविसंवादीति साध्यो धर्मः, दोषजन्यत्वात्; शुक्तिरजतज्ञानवदित्यनुमातुं शक्येतेत्याशङ्क्याह—**नच द्वैतावभासस्येति**। मा भूत्प्रत्यक्षबाधादनुमानम्, आगमेन बाधो निश्चीयते, इत्याशङ्क्याह—**आगमेन द्वैतस्य तत्त्वांशेति**। ननु विशेषेण बाधप्रतीतौ कथमतत्त्वांशविषयत्वं कल्प्यत इति? तत्राह—**अद्वितीयात्मप्रतिपत्तेश्चेति**॥ ननु प्रत्यक्षत्वमात्रेण प्राबल्येन नित्यं शब्दस्य बाध्यत्वे संभवति सति, किमिति देहात्मप्रत्ययस्य

## पञ्चपादिका

**तस्य च तदभावात् । तथाहि—शब्दस्तावदपौरुषेयत्वाददुष्टः । प्रमेयस्य पुनर्ज्ञानहेतुत्वे न प्रमाणमस्ति; शब्दस्यैव तदेकनिष्ठत्वेन तन्नियमात्, चित्रस्य तु चाक्षुषज्ञाने सामग्र्यन्तःपातिनः श्यामादिरेखासन्निवेशविशेषो दोषः; तदभावे तिमिराभाव इव सम्यग्दर्शनोत्पत्तेः । अतः प्रवर्तमानमपि प्रमाणं संवादकमेव, इति नाप्रामाण्यमावहति । नच संवादलक्षणं प्रामाण्यम्, अपि तु बोधलक्षणमिति प्रमाणविदां स्थितिः । अतो यथैव विधिवाक्यानां स्वार्थमात्रे प्रामाण्यम्, एवं स्वरूपवाक्यानामपि; अनवगतार्थपरिच्छेदसामान्यात् ॥**

**ननु विधिवाक्यानामेव प्रामाण्यं युक्तम्; क्रियार्थत्वादाम्नायस्य, न; इतरेतराश्रयत्वात्, विधिवाक्यानामेव हि प्रामाण्ये सिद्धे क्रियार्थत्वमाम्नायस्य सिध्येत्, क्रियार्थत्वे च सिद्धे तेषामेव प्रामाण्यमितीतरेतराश्रयत्वं स्यात् न ह्येकमप्यन्यतः सिद्धम्; अतो यदवगमयत्याम्नायस्तदर्थः सः । तस्माद् यथाकार्यमवगमयंस्तदर्थः, एवमैकात्म्यमप्यवगमयंस्तदर्थो**

## पञ्चपादिकाविवरणम्

**प्रमेयस्य पुनर्न ज्ञानहेतुत्व इत्यादिना** ॥ **अतः** इत्युपसंहरति ॥ अपि च भूतार्थनिष्ठत्वात्प्रमाणान्तरविरोध उच्यते ? संवादो वाऽपेक्ष्यत इति ? विरोधेऽन्यतरस्य बाधो दर्शितः । संवादोऽपेक्षित इति चेत्, नेत्याह—**नच संवादलक्षणमिति** । अज्ञातार्थावगम एव प्रमाणलक्षणमित्यर्थः ॥ ततः किमायातमिति ? तदाह—**अतो यथैव विधिवाक्यानामिति** ॥ ननु सूत्रवचनविरोध इति चोदयति—**ननु विधिवाक्यानामेवेति** ॥ **नेतरेतराश्रयत्वादिति** परिहारः । ननु सूत्रकारप्रामाण्यादेवाम्नायस्य क्रियार्थत्वं सिद्धमिति, नेत्याह—**नह्येकमप्यन्यत इति** ॥ कस्तर्ह्याम्नायार्थ इति ? तदाह—**अतो यदवगमयतीति** ॥

ननु—प्रमेयविशेषादेव प्रामाण्यम्, नावबोधात्, न; कार्यस्याप्यवबोधनिबन्धनत्वादित्याह—**तस्माद्यथा कार्यमिति** । न तर्हि ब्रह्मणि शब्देभ्यः प्रतीतिरिति, नेत्याह—**प्रतीतिस्त्विति** ॥ ननु प्रवर्तनालक्षणं प्रामाण्यम्, न बोधलक्षणमिति,

## तत्त्वदीपनम्

विधिशेषत्वम् ? आहो भूतार्थे संवादापेक्षादर्शनात्तन्निरासार्थं वेति विकल्पार्थः । आद्यं दूषयति—**विरोध इति** । **अन्यतरस्य** प्रत्यक्षादेरिति यावत् ॥ स्वतःप्रामाण्याद् वेदस्य न संवादापेक्षेत्याह—**नेत्याहेति** ॥ बोधलक्षणं प्रामाण्यमिति पक्षे स्मृत्यादेरपि प्रामाण्यप्रसङ्गः, अत्राह—**अज्ञातेति** ॥ अनधिगतार्थबोधकत्वेन भूतवचसामपि प्रामाण्याद् विधिवाक्यानामेव प्रामाण्यमित्ययुक्तमित्याशङ्क्याह—**ननु तत्रेति** । अज्ञातार्थबोधकत्वमात्रेण प्रामाण्यं सर्वज्ञजैमिनिवचनविरुद्धमित्यर्थः ॥ क्रियार्थत्वं विनाऽप्यनपेक्षत्वेन प्रामाण्यसिद्धेर्नेतरेतराश्रयत्वमित्याशङ्क्याह—**नेतरेति** । भूतवाक्यानां प्रामाण्यं क्रियार्थत्वेन वक्तव्यम्, ततश्चे तरेतराश्रयत्वमित्यर्थः ॥ विधिवाक्यप्रामाण्यमन्तरेणापि क्रियार्थसिद्धेर्नेतरेतराश्रयत्वमिति शङ्कते—**ननु सूत्रकारेति** ॥ समन्वयसूत्रविरोधेन प्रामाण्यमेवासिद्धमित्याह—**नेत्याहेति** ॥ क्रियार्थत्वस्याप्रयोजकत्ववद् भूतार्थत्वमप्यप्रयोजकम्; व्यभिचारादित्याशयेन शङ्कते—**कस्तर्हीति** । येन यत्प्रमीयते, स तस्यार्थ इति नियमाद् धर्म-ब्रह्मणोरन्यतरस्याम्नायार्थत्वमित्याह—**तदाहेति** ॥

शास्त्रस्य प्रवर्तकनिष्ठत्वात्कार्यबोधितमप्रामाण्यमिति शङ्कते—**ननु प्रमेयेति** ॥ **नावबोधादिति** । नावबोधमात्रादित्यर्थः । प्रवर्तकनिष्ठत्वमसिद्धमित्याह—**न कार्यस्येति** । कार्यपदस्येत्यर्थः ॥ बोधकत्वेनापि न नित्यबोधे ब्रह्मणि वेदान्तानां प्रामाण्यमिति शङ्कते—**न तर्हीति** ॥ अनुभवविरोधान्नैवमित्याह—**नेत्याहेति** । नित्यबोधेऽपि तदाकारवृत्त्युत्पादने वेदान्तानां प्रामाण्यं घटत इत्याशयः ॥ "चोदना हि क्रियायाः प्रवर्तकं वचनमि" त्यभिधानान्न विधेर्बोधकत्वमात्रेण प्रामाण्यमति शङ्कते—**ननु प्रवर्तनेति** । प्रवर्तना लक्षणं गमकं यस्य प्रामाण्यस्य, तत्; तथोक्तम् । व्यभिचारित्वान्नैतल्लक्षण-

## ऋजुविवरणम्

बाध्यत्वं निश्चीयते ? इत्याशङ्क्याह—**अन्यथा देहात्मभावस्येति** । **नच संवादलक्षणमिति** ॥ प्रामाण्यस्वरूपं कथम् ? अप्रस्तुतम्; प्रसङ्गाभावात्, पुनरुक्तं च पूर्वमप्युक्तत्वादित्याशङ्क्य, पूर्ववादिनाऽपि निष्फलत्वमप्रामाण्यहेतुत्वेनोक्तम्, तद्विकल्प्य निराक्रियत इति दर्शयति—**अपिच भूतार्थनिष्ठत्वादिति** ॥ कथं बोधलक्षणत्वं प्रामाण्यस्य ? बोधरूपत्वस्यातिव्यापकत्वादित्याशङ्क्य व्याचष्टे—**अज्ञातार्थावगम एवेति** ॥

## पञ्चपादिका

भवितुमर्हति। प्रतीतिकृतत्वात्प्रामाण्यस्य, प्रतीतिस्तु कार्यैकात्म्ययोस्तुल्या। प्रत्यक्षादिष्वप्येतदेव प्रमाणवृत्तम्, यदनवगतमवगम्यते॥

आह—युक्तं प्रत्यक्षादीनां तावत् प्रामाण्यम्; अपेक्षान्तराभावात्, आम्नायस्य त्वध्ययनविधिनोपादापितस्य न पुनः पुरुषार्थमप्राप्य पर्यवसानं लभ्यते; विधानानर्थक्यप्रसङ्गात्। तस्मादैकात्म्यवाक्यानां स्वार्थमात्रनिष्ठता न युक्ता; उच्यते;—पुरुषो ह्येतावदपेक्षते—इष्टं मे स्यादनिष्टं मे मा भूदिति, न त्वित्थमन्यथा वेति। नचास्य स्वयमीष्टे। द्विविधं

## पञ्चपादिकाविवरणम्

नेत्याह—**प्रत्यक्षादिष्वपीति**॥ ननु भिन्नमेव प्रमाणलक्षणं प्रत्यक्षादिषु वस्तुमात्रावबोधप्रामाण्यलक्षणम्, प्रवृत्ति-निवृत्ती तु वस्तुस्वभावानुरोधिन्यौ न प्रमाणफलम्, शब्दे तु पुनः प्रवृत्ति-निवृत्तिफलपर्यन्त एव प्रमाणव्यापारः; श्रोतुः पुरुषार्थमुद्दिश्य शब्दप्रयोगात्। अतः प्रवृत्तिनिवृत्तिशून्ये भूते वस्तुनि न शब्दप्रामाण्यमित्याह—**युक्तमित्यादिना**—**उच्यतः** इत्यतः प्राक्तनेन ग्रन्थेन॥ **उच्यते** इत्यादिः परिहारः॥

इदं निरूपणीयम्—पुरुषः खल्विष्टानिष्टप्राप्तिपरिहारमात्रं प्रार्थयते? किं वा तयोः प्रवृत्तिनिवृत्तिसाध्यतामपीति? तत्र प्रवृत्तिनिवृत्तिसाध्येष्टानिष्टाप्राप्ति-परिहारप्रार्थनाकल्पनाल्लघीयसी हिताहितप्राप्तिपरिहार प्रार्थनाकल्पनेत्याह—**पुरुषो ह्येतावदपेक्षत इति**॥ ननु सर्वो बाध्यस्वभावमेव पुरुषार्थं प्रार्थयत इति, नेत्याह—**नत्वित्थमन्यथा वेति**। फलमेव हि मुख्यं प्रार्थयते, नान्तरीयका साधनप्रार्थनेत्यर्थः॥ ननु साध्यासध्यावपि पुरुषार्थौ साध्यावेष करोतीति, नेत्याह—**न चास्य स्वयमीष्ट इति**॥ ननु सर्वः साध्य एव पुरुषार्थः, न तु सिद्धस्वभावः; प्रेप्सागोचरत्वाभावादिति। तत्राह—**द्विविधं चेष्टमिति** ननु द्विविधेऽपि पुरुषार्थेसाध्यस्वभावता न व्यावर्तत इति, नेतीति विभज्य दर्शयति-

## तत्त्वदीपनम्

मित्याह—**नेत्याहेति**॥ प्रत्यक्षाधिगतेऽपि प्रवृत्तिदर्शनात् प्रवकर्तत्वलक्षणमेव सर्वत्र प्रामाण्यम्, ततश्चाहेत्यादिरयुक्त इत्याशङ्क्याह—**ननु भिन्नमेवेति**। उपेक्षणीयज्ञानस्य प्रवर्तकत्वाव्यभिचारादित्यर्थः। प्रवृत्ति-निवृत्त्योस्तर्ह्याकस्मिकत्वम्, तत्राह—**प्रवृत्ति-निवृत्ती इति**। वस्तुनि प्रतिपन्ने तस्य हिताहितसाधनत्वानुरोधेन प्रवृत्त्यादिसंभवादित्यर्थः। शब्देऽपि तर्हि तादृशं प्रामाण्यम्? तत्राह—**शब्दे त्विति**॥ ततः किम्? इत्यत आह—**अत इति**॥ फलविधुरत्वाद् भूतवाक्यानामप्रामाण्ये शङ्कितेऽपेक्षागोचरत्वनिरूपणमसङ्गतमिव प्रतिभातीत्याशङ्क्याह—**उच्यत इत्यादेरिति**॥

सम्यक्परिहारं दर्शयितुं विकल्पयति—**इदमिति**॥ द्वितीयदूषणपुरःसरमाद्यमङ्गीकरोति—**तत्रेति**॥ हिताहितप्राप्तिपरिहारमात्रस्य पुरुषार्थत्वसंभवे साध्यत्वविशेषणं व्यर्थमित्यर्थः॥ सिद्धे प्रार्थनाऽभावात्साध्यत्वमपि प्रयोजकमिति गूढाभिसन्धिः शङ्कते—**ननु सर्व इति**। यथाश्रुतमादायाह—**नेत्याहेति**॥ साधनेऽपि प्रार्थनादर्शनात् कथमुक्तं **पुरुषो ह्येतावदिति**? तत्राह—**फलमेव हीति**॥ इष्टानिष्टप्राप्ति-परिहारयोः पुरुषार्थत्वमङ्गीकृत्य साध्यत्वं तु सर्वत्राविशिष्टमिति शङ्कते—**ननु साध्येति**। नच—सिद्धस्य साध्यत्वं व्याहतमित्यपि—शङ्क्यम्; दध्यादिवत्साध्यत्वसंभवादित्यर्थः॥ दध्यादेर्भावार्थोपरक्ततया साध्यत्वम्, न स्वरूपेणेत्याशयवानाह—**नेत्याहेति**॥ संप्रति गूढाभिसन्धिमाविष्करोति—**ननु सर्व इति**॥ सिद्धेऽपि प्रेप्सादर्शनान्मैवमित्याह—**तत्राहेति**॥ प्राप्तप्राप्त्यादेरपि पुमर्थत्वात्साधनाधीनत्वं तुल्यमिति शङ्कते—**ननु द्विविध इति**॥ स्वभावविरोधान्मैवमित्याह—**नेति**॥ प्राप्तप्राप्ति-परिहृतपरिहारयोः

## ऋजुविवरणम्

"उच्यते पुरुषः" इत्यादिना पुरुषेच्छाविषयनिरूपणं न प्रस्तुतम्; प्रवृत्तिनिवृत्तिसाध्यप्रयोजनाभावे सिद्धेऽर्थे प्रामाण्यं न संभवतीति चोद्यस्यापरिहारादित्याशङ्क्य समुदायमवतारयति—**उच्यत इत्यादिरिति**॥ **"पुरुषो ह्येतावदि"**-त्यादेरिच्छास्वरूपकथनस्यासङ्गतिं परिहरति—**इदं निरूपणीयमिति**॥ ननु अनेन साधनेनेदं फलं भवतु, एतत्फलसाधनं वा मम संपद्यतामिति साधनेऽपि प्रार्थना दृश्यते, अतः कथमुक्तम्—"**न त्वित्थमन्यथा वा?** इत्याशङ्क्य व्याचष्टे—**फलमेव हीति**॥ पूर्वं प्रत्यक्षादीनामनधिगतार्थगन्तृत्वेन प्रामाण्यम्, शब्दे तु प्रवृत्त्यादिसाध्यफलपर्यन्त एव व्यापारः, तदभावे न प्रामाण्यमिति चोद्ये कृते प्रयोजनपर्यन्तत्वमङ्गीकृत्य परिहृतम्, इदानीं शब्देऽपि न प्रवृत्तिपर्यन्तता प्रामाण्यस्येति

## पञ्चपादिका

चेष्टं प्रेप्सति—किञ्चित्प्राप्यम्; यथा ग्रामादि। किञ्चित्प्राप्तमपि; भ्रान्त्या यथा हस्तगतमेव विस्मृतसुवर्णादि। अनिष्टमपि द्विविधं परिजिहीर्षति किञ्चित् परिहार्यं यथा गर्तादि किञ्चित्परिहृतमपि; भ्रान्त्या यथा रज्ज्वादि सर्पादिबुद्धिगृहीतम्। तत्र प्राप्यपरिहार्ययोः साधनज्ञानायत्तत्वात्पुरुषार्थस्य विधि-प्रतिषेधावर्थवन्तौ। इतरयोस्तावद् भ्रान्तिमात्रव्यवहितत्वान्न तदपनयादन्यत् पुरुषार्थत्वेनापेक्षते। तदपनयश्च तत्त्वज्ञानाद् भवति; नान्यथा। एवमपि लभ्यमानं पुरुषार्थमनुमन्यत एव पुरुषः, सुतरां

## पञ्चपादिकाविवरणम्

तत्र प्राप्य-परिहार्ययोरिति। ननु ज्ञानमात्रसाध्यः पुरुषार्थो न लभ्यत इति, तत्राह—इतरयोस्तु भ्रान्तिमात्रव्यहितत्वादिति। ननु—हस्तगतविस्मृतसुवर्णस्य तत्त्वज्ञानात्प्राप्तिमारोपितसर्पादिभावस्य तत्त्वज्ञानान्निवृत्तिं पुरुषार्थतया नानुमन्यते; क्रियासाध्यस्यैव पुरुषार्थताप्रसिद्धेरिति, नेत्याह—एवमपि लभ्यमानमिति॥ साधनसाध्याज्ज्ञानलभ्यस्यातिशयेन पुरुषार्थतामाह—सुतरां चाभिनन्दतीति॥ ननु—ब्रह्मात्मैकत्वे प्रतिपाद्यमाने न क्रियासाध्यः पुरुषार्थः, नापि ज्ञानलभ्य इति, तत्राह—अनेकानर्थकलुषितमिवेति॥ किंच शब्दस्य प्रामाण्यं प्रत्यक्षादिवत्प्रमेयमात्रावबोधनिबन्धनं किं न स्यात्? नच प्रवृत्ति-निवृत्ती साक्षात् फलम्; अवगते वस्तुनि प्रयोजनाद्यनुस्मृतिनिबन्धनत्वात्प्रवृत्तिनिवृत्योः। नच ते पुरुषार्थतयाऽकाङ्क्षिते; सुखदुःखप्राप्तिपरिहारलक्षणत्वात् प्रयोजनस्य। ततश्च नित्य-नैमित्तिकवाक्यानां प्रयोजनशून्यतया

## तत्त्वदीपनम्

क्रियाऽसाध्यत्वाद् ज्ञानसाध्यत्वं वक्तव्यम्। नच तदुपपद्यते; ज्ञानस्य ज्ञेयनिश्चायकत्वादित्याशयेन शङ्कते—ननु ज्ञानेति॥ किं तत्र मुख्यसाध्यात्वस्यासंभवश्चोद्यते? उतामुख्यस्य? आद्यस्त्वङ्गीक्रियत इत्याह—तत्राहेति॥ द्वितीये तु नोपपत्तिरित्यभिसन्धिनोक्तम्—तदपनयनादिति। मूले दृष्टान्तमाशङ्कते—ननु हस्तगतेति॥ अनुभवविरोधान्नैवमित्याह—नेत्याहेति॥ दृष्टान्तोक्तमर्थं दार्ष्टान्तिके समर्थयितुमाक्षिपति—ननु ब्रह्मेति॥ ब्रह्मणः स्वभावत्वान्न तद्भावस्य क्रियासाध्यत्वम्, नापि ज्ञानलभ्यत्वम्, ज्ञाने सत्यपि पुरुषार्थादृष्टेः, स्वप्रकाशासङ्गे ब्रह्मणि विपर्ययासंभवाच्च इत्यर्थः। तत्त्वसाक्षात्कारस्य भ्रमविरोधित्वात् तदर्शनस्य चान्यथासिद्धेर्वक्ष्यमाणत्वात् वस्तुतोऽसङ्गस्याप्याविद्यानिमित्तानर्थसम्बन्धसंभवाच्च ब्रह्मज्ञानात्पुरुषार्थो युक्त इत्यभिप्रायेणाह—तत्राहेति॥ पुरुषार्थपर्यन्तं प्रामाण्यमित्यङ्गीकृत्योक्तं पूर्वत्र, नच तदपीत्याह—किंच शब्दस्येति॥ प्रवृत्तिनिवृत्त्युद्देशेन वाक्यप्रयोगात् तत्पर्यन्तं तत्प्रमाणमित्याशङ्क्य, किं प्रवृत्ति-निवृत्त्योः साक्षात्फलत्वम्? उत फलानुगुणतया? नाद्य इत्याह—नचेति॥ साधनमादिशब्दार्थः। तत्रैव हेत्वन्तरमाह—न च ते इति॥ द्वितीये

## ऋजुविवरणम्

दर्शयति—किंच शब्दस्य प्रामाण्यमिति॥ ननु निष्प्रयोजनत्वेऽध्ययनविध्युपात्तत्वायोगाद् बोधमात्रस्याप्रयोजनत्वात्प्रवृत्तिपर्यन्ततेति, नेत्याह—नच प्रवृत्ति-निवृत्तीति॥ ननु अभिलषितसाधनत्वाद्यनुसन्धानव्यवधानेऽपि प्रवृत्ति-निवृत्त्योरपेक्षित्वात्पुरुषार्थतेति, नेत्याह—नच ते पुरुषार्थतयेति॥ ननु सुखावाप्ति-दुःखपरिहारयोः फलत्वेऽपि तत्साधनत्वेन प्रवृत्ति-निवृत्त्योराकाङ्क्षितत्वात्तत्परतेत्याशङ्क्य बाधकं दर्शयति—ततश्च नित्य-नैमित्तिकेति॥ यद्वा—भवतु सुखावाप्ति-दुःखपरिहारफलत्वम्, ततः किमिति? तदाह—ततश्च नित्य-नैमित्तिकेति॥ तदकरणे प्रत्यवायपरिहार इति। तेषां वाक्यानां कर्मणां

### पञ्चपादिका

**चाभिनन्दति । साधनायत्तो ह्यायासाल्लभ्येत, ज्ञानायत्ते त्वायासोऽपि परिह्रियते । तेनानेकानर्थकलुषितमिवात्मानं मन्यमानस्य भ्रान्तस्य सर्वानर्थशून्यात्मतत्त्वप्रतिपादनादेव पुरुषार्थसिद्धेरैकात्म्यवाक्यानां स्वार्थमात्रनिष्ठत्वेऽपि न विध्यानर्थक्यप्रसङ्गः । तस्मात् सिद्धं ब्रह्मणः शास्त्रप्रमाणत्वम् ॥**

इति श्रीपरमहंसपरिव्राजकादि-श्रीशङ्करभगवत्पादान्तेवासिवर-श्रीपद्मपादाचार्यकृतौ पञ्चपादिकायां वेदान्तानां ब्रह्मणि समन्वयनिरूपणं नामाष्टमं वर्णकं समाप्तम् ॥

### पञ्चपादिकाविवरणम्

प्रामाण्यं न स्यात् । अकरणे प्रत्यवायपरिहारः प्रयोजनमिति चेत्, न; प्रत्यवायस्यापि तन्निबन्धनत्वात् । ततश्च नित्यविध्योऽनुष्ठानाननुष्ठानयोरनर्थमेव प्रापयन्तीति न तद्वाक्यानां प्रामाण्यं युक्तम् । अतो बोधलक्षणमेव प्रामाण्यम्, न प्रवृत्तिलक्षणमिति । **तस्मात्सिद्धं ब्रह्मणः शास्त्रप्रमाण(क)त्वमिति ॥**

इति श्रीमत्परमहंसपरिव्राजकानन्यानुभवपूज्यपादशिष्य-स्वप्रकाशानुभवभगवतः कृतौ पञ्चपादिकाविवरणे वेदान्तानां ब्रह्मणि समन्वयनिरूपणं नामाष्टमं वर्णकं समाप्तम् ॥

### तत्त्वदीपनम्

प्रयोजनपर्यन्तं प्रामाण्यमिति किं गुरुमतानुसारिणोच्यते ? उत भाट्टमतानुसारिणा ? नाद्य इत्याह—**ततश्चेति** ॥ तत इति । प्रयोजनपर्यन्तं प्रामाण्यमिति पक्ष इत्यर्थः ॥ द्वितीयमुत्थापयति—**अकरण इति** । परस्पराश्रयप्रसक्तेर्नैतदित्याह—**न प्रत्यवायस्येति तन्निबन्धनत्वादिति** । विधिनिबन्धनत्वादित्यर्थः । विहितत्वसिद्धौ तदकरणनिमित्तप्रत्यवायनिवृत्तिलक्षणं फलं सिध्यति, तस्मिन् सिद्धे तदुद्देशेन विहितत्वसिद्धिरितीतरेतराश्रयत्वमित्यर्थः ॥ इतोऽपि न पुरुषार्थपर्यन्तं प्रामाण्यमित्याह—**ततश्चेति** । प्रत्यवायनिवृत्त्यसंभवस्तच्छब्दार्थः । अनुष्ठाने बहुतरवित्तव्ययायासाद्यनर्थप्राप्तिः, अननुष्ठानेऽनेकबहिष्करणाद्यनर्थ इत्यप्रामाण्यं नित्यादिवाक्यानामित्यर्थः ॥ अवान्तरप्रमेयमुपसंहरति—**अत इति** ॥ वर्णकार्थमुपसंहरति—**तस्मादिति** ॥

इति श्रीपरमहंसपरिव्राजकाचार्याखण्डानुभूतिशिष्येणाऽखण्डानन्दमुनिना विरचिते विवरणतत्त्वदीपने वेदान्तानां ब्रह्माणिः समन्वयनिरूपणं नामाष्टमं वर्णकं समाप्तम् ॥

### ऋजुविवरणम्

वा योऽयमकरणे प्रत्यवायः ; तत्परिहारः प्रयोजनमित्यर्थः । **प्रत्यवायस्यापि तन्निबन्धत्वादिति** । अयमर्थः—प्रत्यवायस्यास्तित्वं विधित्वेन प्रामाण्ये सिद्धे, तदस्तित्वेच विधित्वसिद्धिरस्तीतीतरेतराश्रयत्वम्, अथवा प्रत्यवायस्य दुरितस्य योऽयं परिहारः तन्निबन्धनो दुःखसाधनत्वनिबन्धनः, न साक्षात् तच्च दुःखं तत्करणेऽप्यविशिष्टम्; अतो न सप्रयोजनत्वम् । यद्वा प्रत्यवायस्यापि दुःखस्य तन्निबन्धनत्वादनुष्ठानदुःखस्याप्यनुष्ठानहेतुत्वात्तत्परिहारवत् तेन न तस्य प्रयोजनत्वम्, यद्वा प्रत्यवायस्य दुरितस्यापि पुण्यवत् तन्निबन्धनत्वादनुष्ठाननिबन्धनत्वान्नाकरणनिबन्धत्वम्, "कथमसतः सज्जायेत" "नासतो विद्यते" इति दर्शनात् । केचित् प्रत्यवायस्याप्यतन्निबन्धनत्वादकरणनिबन्धत्वादिति—व्याचक्षते ॥ सर्वथा नित्य-नैमित्तिकानां निष्प्रयोजनत्वेन तद्वाक्यानां प्रामाण्यमिति ॥

इति स्वामीन्द्रपूर्णपूज्यपादशिष्य-सर्वशास्त्रविशारदजनार्दनात्मज-सर्वज्ञ-विष्णुभट्टोपाध्यायकृतौ ऋजुविवरणे वेदान्वानां ब्रह्मणि समन्वयनिरूपणं नामाष्टमं वर्णकं समाप्तम् ॥

ॐ

श्रीशङ्करभगवत्पादाचार्यप्रणीतम्

# श्रीमद्ब्रह्मसूत्रभाष्यम्

## नवमं वर्णकम्

अत्रापरे प्रत्यवतिष्ठन्ते—यद्यपि शास्त्रप्रमाणकं ब्रह्म तथापि प्रतिपत्तिविधिविषयतयैव शास्त्रेण ब्रह्म समर्प्यते। यथा यूपाहवनीयादीन्यलौकिकान्यपि विधिशेषतया शास्त्रेण समर्प्यन्ते तद्वत्। कुत एतत्? प्रवृत्तिनिवृत्तिप्रयोजनपरत्वाच्छास्त्रस्य। तथाहि शास्त्रतात्पर्यविदामनुक्रमणम्—"दृष्टो हि तस्यार्थः कर्मावबोधनं नाम" इति। "चोदनेति क्रियायाः प्रवर्तकं वचनम्" "तस्य ज्ञानमुपदेशः" "तद्भूतानां क्रियार्थेन समाम्नायः" "आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्" इति च। अतः पुरुषं क्वचिद्विषयविशेषे प्रवर्तयत्कुतश्चिद्विषयविशेषान्निवर्तयच्चार्थवच्छास्त्रम्। तच्छेषतया चान्यदुपयुक्तम्। तत्सामान्याद्वेदान्तानामपि तथैवार्थवत्त्वं स्यात्। सति च विधिपरत्वे यथा स्वर्गादिकामस्याग्निहोत्रादिसाधनं विधीयते, एवममृतत्वकामस्य ब्रह्मज्ञानं विधीयत इति युक्तम्। नन्विह जिज्ञास्यवैलक्षण्यमुक्तम्—कर्मकाण्डे भव्यो धर्मो जिज्ञास्यः, इह तु भूतं नित्यनिर्वृत्तं ब्रह्म जिज्ञास्यमिति। तत्र धर्मज्ञानफलादनुष्ठानसापेक्षाद्विलक्षणं ब्रह्मज्ञानफलं भवितुमर्हति। नार्हत्येवं भवितुम्। कार्यविधिप्रयुक्तस्यैव ब्रह्मणः प्रतिपाद्यमानत्वात् 'आत्मा वा अरे द्रष्टव्यः' 'य आत्माऽपहतपाप्मा···सोऽन्वेष्टव्यः स विजिज्ञासितव्यः' 'आत्मेत्येवोपासीत' 'आत्मानमेव लोकमुपासीत' 'ब्रह्म वेद ब्रह्मैव भवति' इत्यादिविधानेषु सत्सु, कोसावात्मा किं तत् ब्रह्म इत्याकाङ्क्षायां तत्स्वरूपसमर्पणेन सर्वे वेदान्ता उपयुक्ताः—नित्यः सर्वज्ञः सर्वगतो नित्यतृप्तो नित्यशुद्धबुद्धमुक्तस्वभावो विज्ञानमानन्दं ब्रह्म इत्येवमादयः। तदुपासनाच्च शास्त्रदृष्टोऽदृष्टो मोक्षः फलं भविष्यतीति। कर्तव्यविध्यननुप्रवेशे वस्तुमात्रकथने हानोपादानासंभवात्, सप्तद्वीपा वसुमती, राजासौ गच्छति इत्यादिवाक्यवद्वेदान्तवाक्यानामानर्थक्यमेव स्यात्। ननु वस्तुमात्रकथनेऽपि रज्जुरियं नायं सर्प इत्यादौ भ्रान्तिजनितभीतिनिवर्तनेनार्थवत्त्वं दृष्टं, तथेहापि असंसार्यात्मवस्तुकथनेन संसारित्वभ्रान्तिनिवर्तनेनार्थवत्त्वं स्यात्। स्यादेतदेवं यदि रज्जुस्वरूपश्रवणमात्रेणेव सर्पभ्रान्तिः, संसारित्वभ्रान्तिर्ब्रह्मस्वरूपश्रवणमात्रेण निवर्तेत। नतु निवर्तते, श्रुतब्रह्मणोऽपि यथापूर्वं सुखदुःखादिसंसारिधर्मदर्शनात्, 'श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इति च श्रवणोत्तरकालयोः मनननिदिध्यासनयोर्विधिदर्शनात्। तस्मात्प्रतिपत्तिविधिविषयतयैव शास्त्रप्रमाणकं ब्रह्माभ्युपगन्तव्यमिति॥

अत्राभिधीयते—न; कर्मब्रह्मविद्याफलयोर्वैलक्षण्यात्। शारीरं वाचिकं मानसं च कर्म श्रुतिस्मृतिसिद्धं धर्माख्यं, यद्विषया जिज्ञासा "अथातो धर्मजिज्ञासा" इति सूत्रिता। अधर्मोऽपि हिंसादिः प्रतिषेधचोदनालक्षणत्वाज्जिज्ञास्यः परिहाराय। तयोश्चोदनालक्षणयोरर्थानर्थयोर्धर्माधर्मयोः फले प्रत्यक्षे सुखदुःखे शरीरवाङ्मनोभिरेवोपभुज्यमाने विषयेन्द्रियसंयोगजन्ये ब्रह्मादिषु स्थावरान्तेषु

प्रसिद्धे। मनुष्यत्वादारभ्य ब्रह्मान्तेषु देहवत्सु सुखतारतम्यमनुश्रूयते । ततश्च तद्धेतोर्धर्मस्य तारतम्यं गम्यते । धर्मतारतम्यादधिकारितारतम्यम् । प्रसिद्धं चार्थित्वसामर्थ्यादिकृतमधिकारितारतम्यम् । तथाच यागाद्यनुष्ठायिनामेव विद्यासमाधिविशेषादुत्तरेण पथा गमनं, केवलैरिष्टापूर्तदत्तसाधनैर्धूमादिक्रमेण दक्षिणेन पथा गमनं, तत्रापि सुखतारतम्यं तत्साधनतारतम्यं च शास्त्रात् 'यावत्संपातमुषित्वा' इत्यस्माद्गम्यते । तथा मनुष्यादिषु स्थावरान्तेषु च सुखलवश्चोदनालक्षणधर्मसाध्य एवेति गम्यते तारतम्येन वर्तमानः । तथोर्ध्वगतेष्वधोगतेषु च देहवत्सु दुःखतारतम्यदर्शनात्तद्धेतोरधर्मस्य प्रतिषेधचोदनालक्षणस्य तदनुष्ठायिनां च तारतम्यं गम्यते । एवमविद्यादिदोषवतां धर्माधर्मतारतम्यनिमित्तं शरीरोपादानपूर्वकं सुखदुःखतारतम्यमनित्यं संसाररूपं श्रुति स्मृतिन्यायप्रसिद्धम् । तथाच श्रुतिः—न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति' इति यथावर्णितं संसाररूपमनुवदति । 'अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः' इति प्रियाप्रियस्पर्शनप्रतिषेधाच्चोदना लक्षणधर्मकार्यत्वं मोक्षाख्यस्याशरीरत्वस्य प्रतिषिध्यत इति गम्यते । धर्मकार्यत्वे हि प्रियाप्रियस्पर्शनप्रतिषेधो नोपपद्यते। अशरीरत्वमेव धर्मकार्यमिति चेन्न, तस्य स्वाभाविकत्वात् । 'अशरीरं शरीरेष्वनवस्थेष्ववस्थितम् । महान्तं विभुमात्मानं मत्वा धीरो न शोचति' 'अप्राणो ह्यमनाः शुभ्रः' 'असङ्गो ह्ययं पुरुषः' इत्यादि-श्रुतिभ्यः । अत एवानुष्ठेयकर्मफलविलक्षणं मोक्षाख्यमशरीरत्वं नित्यमिति सिद्धम् । तत्र किंचित्परिणामि नित्यं यस्मिन्विक्रियमाणेऽपि तदेवेदमिति बुद्धिर्न विहन्यते । यथा पृथिव्यादि—जगन्नित्यत्ववादिनाम् । यथा च सांख्यानां गुणाः । इदं तु पारमार्थिकं कूटस्थनित्यं व्योमवत्सर्वव्यापि सर्वविक्रियारहितं नित्यतृप्तं निरवयवं स्वयंज्योतिःस्वभावम्, यत्र धर्माधर्मौ सह कार्येण कालत्रयं च नोपावर्तेते । तदेतदशरीरत्वं मोक्षाख्यम् । 'अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृतात् । अन्यत्र भूताच्च भव्याच्च' इत्यादिश्रुतिभ्यः ।'अतस्तत् ब्रह्म यस्येयं जिज्ञासा प्रस्तुता । तद्यदि कर्तव्यशेषत्वेनोपदिश्येत, तेन च कर्तव्येन साध्यश्चेन्मोक्षोऽभ्युपगम्येत, अनित्य एव स्यात् । तत्रैवं सति यथोक्तकर्मफलेष्वेव तारतम्यावस्थितेष्वनित्येषु कश्चिदतिशयो मोक्ष इति प्रसज्येत । नित्यश्च मोक्षः सर्वैर्मोक्षवादिभिरभ्युपगम्यते । अतो न कर्तव्यशेषत्वेन ब्रह्मोपदेशो युक्तः । अपिच 'ब्रह्म वेद ब्रह्मैव भवति' 'क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे' 'आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चन' 'अभयं वै जनक प्राप्तोऽसि' 'तदात्मानमेवावेदहं ब्रह्मास्मीति तस्मात्तत्सर्वमभवत्' 'तत्र को मोहः कः शोक एकत्वमनुपश्यतः' इत्येवमाद्याः श्रुतयो ब्रह्मविद्यानन्तरमेव मोक्षं दर्शयन्त्यो मध्ये कार्यान्तरं वारयन्ति । तथा 'तद्धैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदेऽहं मनुरभवं सूर्यश्च' इति ब्रह्मदर्शनसर्वात्मभावयोर्मध्ये कर्तव्यान्तरवारणायोदाहार्यम् । यथा तिष्ठन्गायतीति तिष्ठतिगायत्योर्मध्ये तत्कर्तृकं कार्यान्तरं नास्तीति गम्यते । 'त्वं हि नः पिता योऽस्माकमविद्यायाः परं पारं तारयसि' 'श्रुतं ह्येव मे भगवद्दृशेभ्यस्तरति

शोकमात्मविदिति सोऽहं भगवः शोचामि तं मा भगवाञ्छोकस्य पारं तारयतु' 'तस्मै मृदितकषायाय तमसः पारं दर्शयति भगवान्सनत्कुमारः' इति चैवमाद्याः श्रुतयो मोक्षप्रतिबन्धनिवृत्तिमात्रमेवात्मज्ञानस्य फलं दर्शयन्ति । तथाच आचार्यप्रणीतं न्यायोपबृंहितं सूत्रं—'दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः' इति । मिथ्याज्ञानापायश्च ब्रह्मात्मैकत्वविज्ञानाद्भवति । न चेदं ब्रह्मात्मैकत्वविज्ञानं संपद्रूपम् । यथा 'अनन्तं वै मनोऽनन्ता विश्वे देवा अनन्तमेव स तेन लोकं जयति' इति । न चाध्यासरूपम् । यथा 'मनो ब्रह्मेत्युपासीत' 'आदित्यो ब्रह्मेत्यादेशः' इति च मनआदित्यादिषु ब्रह्मदृष्ट्यध्यासः । नापि विशिष्टक्रियायोगनिमित्तं 'वायुर्वाव संवर्गः' 'प्राणोवाव संवर्गः' इतिवत् । नाप्याज्यावेक्षणादिकर्मवत्कर्माङ्गसंस्काररूपम् संपदादिरूपे हि ब्रह्मात्मैकत्वविज्ञानेऽभ्युपगम्यमाने 'तत्त्वमसि' 'अहं ब्रह्मास्मि' 'अयमात्मा ब्रह्म' इत्येवमादीनां वाक्यानां ब्रह्मात्मैकत्ववस्तुप्रतिपादनपरः पदसमन्वयः पीड्येत । 'भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशया' इति चैवमादीन्यविद्यानिवृत्तिफलश्रवणान्युपरुध्येरन् । 'ब्रह्म वेद ब्रह्मैव भवति' इति चैवमादीनि तद्भावापत्तिवचनानि संपदादिरूपत्वे न सामञ्जस्येनोपपद्येरन् । तस्मान्न संपदादिरूपं ब्रह्मात्मैकत्वविज्ञानम् । अतो न पुरुषव्यापारतन्त्रा ब्रह्मविद्या । किं तर्हि ? प्रत्यक्षादिप्रमाणविषयवस्तुज्ञानवत् वस्तुतन्त्रैव । एवंभूतस्य ब्रह्मणस्तज्ज्ञानस्य वा न कयाचिद्युक्त्या शक्यः कार्यानुप्रवेशः कल्पयितुम् । नच विदिक्रियाकर्मत्वेन कार्यानुप्रवेशो ब्रह्मणः, 'अन्यदेव तद्विदितादथो अविदितादधि' इति विदिक्रियाकर्मत्वप्रतिषेधात् । येनेदं सर्वं विजानाति तं केन विजानीयात्' इति च । तथोपास्तिक्रियाकर्मत्वप्रतिषेधोऽपि भवति—'यद्वाचानभ्युदितं येन वागभ्युद्यते' इत्यविषयत्वं ब्रह्मण उपन्यस्य, 'तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते' इति । अविषयत्वे ब्रह्मणः शास्त्रयोनित्वानुपपत्तिरिति चेत् । न । अविद्याकल्पितभेदनिवृत्तिपरत्वाच्छास्त्रस्य । नहि शास्त्रमिदंतया विषयभूतं ब्रह्म प्रतिपिपादयिषति । किं तर्हि प्रत्यगात्मत्वेनाविषयतया प्रतिपादयदविद्याकल्पितं वेद्यवेदितृ-वेदनादिभेदमपनयति । तथाच शास्त्रम्—'यस्यामतं तस्य मतं मतं यस्य न वेद सः । अविज्ञातं विजानतां विज्ञातमविजानताम्' 'न दृष्टेर्द्रष्टारं पश्येः...न विज्ञातेर्विज्ञातारं विजानीयाः' इति चैवमादि । अतोऽविद्याकल्पितसंसारित्वनिवर्तनेन नित्यमुक्तात्मस्वरूपसमर्पणान्न मोक्षस्यानित्यत्वदोषः । यस्य तूत्पाद्यो मोक्षः तस्य मानसं वाचिकं कायिकं वा कार्यमपेक्षत इति युक्तम् । तथा विकार्यत्वे च तयोः पक्षयोर्मोक्षस्य ध्रुवमनित्यत्वम्, नहि दध्यादि विकार्यम्, उत्पाद्यं वा घटादि, नित्यं दृष्टं लोके । न चाप्यत्वेनापि कार्यापेक्षा, स्वात्मस्वरूपत्वे सत्यनाप्यत्वात् । स्वरूपव्यतिरिक्तत्वेऽपि ब्रह्मणो नाप्यत्वं, सर्वगतत्वेन नित्याप्तस्वरूपत्वात्सर्वेण ब्रह्मणः, आकाशस्येव । नापि संस्कार्यो मोक्षः, येन व्यापारमपेक्षेत । संस्कारो हि नाम संस्कार्यस्य गुणाधानेन वा स्याद्दोषापनयनेन वा । न तावत् गुणाधानेन संभवति, अनाधेयातिशयब्रह्मस्वरूपत्वान्मोक्षस्य । नापि दोषापनयनेन, नित्यशुद्धब्रह्मस्वरूपत्वान्मोक्षस्य । स्वात्मधर्म

एव संस्तिरोभूतो मोक्षः क्रिययाऽऽत्मनि संस्क्रियमाणेऽभिव्यज्यते, यथा आदर्शे निघर्षणक्रियया संस्क्रियमाणे भास्वरत्वं धर्म इति चेत् । न । क्रियाश्रयत्वानुपपत्तेरात्मनः । यदाश्रया क्रिया तमविकुर्वती नैवात्मानं लभते । यद्यात्मा स्वाश्रयक्रियया विक्रियेत अनित्यत्वमात्मनः प्रसज्येत । 'अविकार्योऽयमुच्यते' इति चैवमादीनि वाक्यानि बाध्येरन्, तच्चानिष्टम् । तस्मान्न स्वाश्रया क्रिया आत्मनः संभवति । अन्याश्रयायास्तु क्रियाया अविषयत्वान्न तयात्मा संस्क्रियते ।

ननु देहाश्रयया स्नानाचमनयज्ञोपवीतधारणादिक्रिया क्रियया देही संस्क्रियमाणो दृष्टः । न । देहादिसंहतस्यैवाविद्यागृहीतस्यात्मनः संस्क्रियमाणत्वात् । प्रत्यक्षं हि स्नानाचमनादेर्देहसमवायित्वम् । तया देहाश्रयया तत्संहत एव कश्चिदविद्ययात्मत्वेन परिगृहीतः संस्क्रियते इति युक्तम् । यथा देहाश्रयचिकित्सानिमित्तेन धातुसाम्येन तत्संहतस्य तदभिमानिनः आरोग्यफलं, अहमरोग इति यत्र बुद्धिरुत्पद्यते, एवं स्नानाचमनयज्ञोपवीतधारणादिना अहं शुद्धः संस्कृत इति यत्र बुद्धिरुत्पद्यते स संस्क्रियते । स च देहेन संहत एव । तेनैव ह्यहंकर्त्राऽहंप्रत्ययविषयेण प्रत्ययिना सर्वाः क्रिया निर्वर्त्यन्ते । तत्फलं च स एवाश्नाति, 'तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति' इति मन्त्रवर्णात् । 'आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः' इति च । तथा 'एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा । कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च' इति, 'स पर्यगाच्छुक्रमकायमव्रणमस्नाविरं शुद्धमपापविद्धम्' इति च । एतौ मंत्रौ अनाधेयातिशयतां नित्यशुद्धतां च ब्रह्मणो दर्शयतः । ब्रह्मभावश्च मोक्षः । तस्मान्न संस्कार्योऽपि मोक्षः । अतोऽन्यन्मोक्षं प्रति क्रियानुप्रवेशद्वारं न शक्यं केनचिद्दर्शयितुम् । तस्माज्ज्ञानमेकं मुक्त्वा क्रियाया गंधमात्रस्याप्यनुप्रवेश इह नोपपद्यते ॥

ननु ज्ञानं नाम मानसी क्रिया । न । वैलक्षण्यात् । क्रिया हि नाम सा, यत्र वस्तुस्वरूपनिरपेक्षैव चोद्यते, पुरुषचित्तव्यापाराधीना च । यथा 'यस्यै देवतायै हविर्गृहीतं स्यात्तां मनसा ध्यायेद्वषट्करिष्यन्' इति, 'संध्यां मनसा ध्यायेत्' इति चैवमादिषु । ध्यानं चिन्तनं यद्यपि मानसं तथापि पुरुषेण कर्तुमकर्तुमन्यथा वा कर्तुं शक्यं, पुरुषतन्त्रत्वात् । ज्ञानं तु प्रमाणजन्यम् । प्रमाणं च यथाभूतवस्तुविषयं, अतो ज्ञानं कर्तुमकर्तुमन्यथा वा कर्तुमशक्यम् । केवलं वस्तुतन्त्रमेव तत् न चोदनातन्त्रं नापि पुरुषतन्त्रम्, तस्मान्मानसत्वेऽपि ज्ञानस्य महद्वैलक्षण्यम् । यथा च 'पुरुषो वाव गौतमाग्निः', 'योषा वाव गौतमाग्निः' इत्यत्र योषित्पुरुषयोरग्निबुद्धिर्मानसी भवति । केवलचोदनाजन्यत्वात् क्रियैव सा पुरुषतन्त्रा । च । या तु प्रसिद्धेऽग्नावग्निबुद्धिर्न सा चोदनातन्त्रा, नापि पुरुषतन्त्रा, किं तर्हि प्रत्यक्षविषयवस्तुतन्त्रैवेति ज्ञानमेवैतन्न क्रिया । एवं सर्वप्रमाणविषयवस्तुषु वेदितव्यम् . तत्रैवं सति यथाभूतब्रह्मात्मविषयमपि ज्ञानं न चोदनातन्त्रम् । तद्विषये लिङादयः श्रूयमाणा अपि अनियोज्यविषयत्वात्कुण्ठीभवन्त्युपलादिषु प्रयुक्तक्षुरतैक्ष्ण्यादिवत्, अहेयानुपादेयवस्तुविषयत्वात् । किमर्थानि तर्हि 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यः' इत्यादीनि विधिच्छायानि वचनानि । स्वाभाविकप्रवृत्तिविषयविमुखीकरणार्थानीति ब्रूमः । यो हि बहिर्मुखः प्रवर्तते

पुरुषः इष्टं मे भूयादनिष्टं मा भूदिति, नच तत्रात्यन्तिकं पुरुषार्थं लभते, तमात्यन्तिकपुरुषार्थवाञ्छिनं स्वाभाविकात्कार्यकरणसंघातप्रवृत्तिगोचराद्विमुखीकृत्य प्रत्यगात्मस्रोतस्तया प्रवर्तयन्ति 'आत्मा वा अरे द्रष्टव्यः' इत्यादीनि । तस्याऽऽत्मान्वेषणाय प्रवृत्तस्याहेयमनुपादेयं चात्मतत्त्वमुपदिश्यते 'इदं सर्वं यदयमात्मा' 'यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत् केन कं विजानीयात्' 'विज्ञातारमरे केन विजानीयात्' 'अयमात्मा ब्रह्म' इत्यादिभिः । यदपि अकर्तव्यप्रधानमात्मज्ञानं हानायोपादानाय वा न भवतीति, तत्तथैवेत्यभ्युपगम्यते । अलंकारो ह्ययमस्माकं यद्ब्रह्मात्मावगतौ सत्यां सर्वकर्तव्यताहानिः कृतकृत्यता चेति । तथाच श्रुतिः 'आत्मानं चेद्विजानीयादयमस्मीति पूरुषः । किमिच्छन्कस्य कामाय शरीरमनुसंज्वरेत्' इति । "एतद्बुद्ध्वा बुद्धिमान्स्यात्कृतकृत्यश्च भारत" इति च स्मृतिः । तस्मान्न प्रतिपत्तिविधिविषयतया ब्रह्मणः समर्पणम् ॥

यदपि केचिदाहुः—प्रवृत्तिनिवृत्तिविधितच्छेषव्यतिरेकेण केवलवस्तुवादी वेदभागो नास्ति इति, तन्न । औपनिषदस्य पुरुषस्यानन्यशेषत्वात् । योऽसौ उपनिषत्स्वेवाधिगतः पुरुषोऽसंसारी ब्रह्म उत्पाद्यादिचतुर्विधद्रव्यविलक्षणः स्वप्रकरणस्थोऽनन्यशेषः, नासौ नास्ति नाधिगम्यत इति वा शक्यं वदितुम्, 'स एष नेति नेत्यात्मा' इत्यात्मशब्दात्, आत्मनश्च प्रत्याख्यातुमशक्यत्वात्, य एव निराकर्ता तस्यैवात्मत्वात् । नन्वात्मा अहंप्रत्ययविषयत्वादुपनिषत्स्वेव (प्राधान्येन) विज्ञायत इत्यनुपपन्नम् । न । तत्साक्षित्वेन प्रत्युक्तत्वात् । नहि अहंप्रत्ययविषयकर्तृव्यतिरेकेण तत्साक्षी सर्वभूतस्थः सम एकः कूटस्थनित्यः पुरुषो विधिकाण्डे तर्कसमये वा केनचिदधिगतः सर्वस्यात्मा । अतः स न केनचित्प्रत्याख्यातुं शक्यो, विधिशेषत्वं वा नेतुम् । आत्मत्वादेव च सर्वेषां न हेयो नाप्युपादेयः । सर्वं हि विनश्यद्विकारजातं पुरुषान्तं विनश्यति । पुरुषो हि विनाशहेत्वभावादविनाशी, विक्रियाहेत्वभावाच्च कूटस्थनित्यः, अतएव नित्यशुद्धबुद्धमुक्तस्वभावः । तस्मात् 'पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिः' 'तं त्वौपनिषदं पुरुषं पृच्छामि' इति चौपनिषदत्वविशेषणं पुरुषस्योपनिषत्स्वेव प्राधान्येन प्रकाश्यमानत्व उपपद्यते । अतो भूतवस्तुपरो वेदभागो नास्तीति वचनं साहसमात्रम् ॥

यदपि शास्त्रतात्पर्यविदामनुक्रमणम्—'दृष्टो हि तस्यार्थः कर्मावबोधनम्' इत्येवमादि, तद्धर्मजिज्ञासाविषयत्वाद्विधिप्रतिषेधशास्त्राभिप्रायं द्रष्टव्यम् । अपिच 'आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्' इत्येतदेकान्तेनाभ्युपगच्छतां भूतोपदेशानर्थक्यप्रसंगः । प्रवृत्तिनिवृत्तिविधितच्छेषव्यतिरेकेण भूतं चेद्वस्तूपदिशति भव्यार्थत्वेन, कूटस्थनित्यं भूतं नोपादिशतीति को हेतुः । नहि भूतमुपदिश्यमानं क्रिया भवति । अक्रियात्वेऽपि भूतस्य क्रियासाधनत्वात्क्रियार्थ एव भूतोपदेश इति चेत् । नैष दोषः । क्रियार्थत्वेऽपि क्रियानिर्वर्तनशक्तिमद्वस्तूपदिष्टमेव । क्रियार्थत्वं तु प्रयोजनं तस्य । न चैतावत्ता वस्त्वनुपदिष्टं भवति । यदि नामोपदिष्टं किं तव तेन स्यादिति, उच्यते—अनवगतात्मवस्तूपदेशश्च तथैव

भवितुमर्हति । तदवगत्या मिथ्याज्ञानस्य संसारहेतोर्निवृत्तिः प्रयोजनं क्रियते इत्यविशिष्टमर्थवत्त्वं क्रियासाधनवस्तूपदेशेन । अपिच 'ब्राह्मणो न हन्तव्यः' इत्येवमाद्या निवृत्तिरुपदिश्यते । नच सा क्रिया । नापि क्रियासाधनम् । अक्रियार्थानामुपदेशोऽनर्थकश्चेत् 'ब्राह्मणो न हन्तव्यः' इत्यादिनिवृत्त्युपदेशानामानर्थक्यं प्राप्तम् । तच्चानिष्टम् । नच स्वभावप्राप्तहन्त्यर्थानुरागेण नञः शक्यमप्राप्तक्रियार्थत्वं कल्पयितुं, हननक्रियानिवृत्त्यौदासीन्यव्यतिरेकेण । नञश्चैष स्वभावो यत्स्वसंबन्धिनोऽभावं बोधयतीति । अभावबुद्धिश्चौदासीन्यकारणम् । सा च दग्धेन्धनाग्निवत्स्वयमेवोपशाम्यति । तस्मात्प्रसक्तक्रियानिवृत्त्यौदासीन्यमेव 'ब्राह्मणो न हन्तव्यः' इत्यादिषु प्रतिषेधार्थं मन्यामहे, अन्यत्र प्रजापतिव्रतादिभ्यः । तस्मात्पुरुषार्थानुपयोग्युपाख्यानादिभूतार्थवादविषयमानर्थक्याभिधानं द्रष्टव्यम् ॥

यदप्युक्तं—कर्तव्यविध्यनुप्रवेशमन्तरेण वस्तुमात्रमुच्यमानमनर्थकं स्यात् 'सप्तद्वीपा वसुमती' इत्यादिवदिति, तत्परिहृतम् । रज्जुरियं नायं सर्प इति वस्तुमात्रकथनेऽपि प्रयोजनस्य दृष्टत्वात् । ननु श्रुतब्रह्मणोऽपि यथापूर्वं संसारित्वदर्शनान्न रज्जुस्वरूपकथनवदर्थवत्त्वमित्युक्तम् । अत्रोच्यते—नावगतब्रह्मात्मभावस्य यथापूर्वं संसारित्वं शक्यं दर्शयितुम्, वेदप्रमाणजनितब्रह्मात्मभावविरोधात् । नहि शरीराद्यात्माभिमानिनो दुःखभयादिमत्त्वं दृष्टमिति तस्यैव वेदप्रमाणजनितब्रह्मात्मावगमे तदभिमाननिवृत्तौ तदेव मिथ्याज्ञाननिमित्तं दुःखभयादिमत्त्वं भवतीति शक्यं कल्पयितुम् । नहि धनिनो गृहस्थस्य धनाभिमानिनो धनापहारनिमित्तं दुःखं दृष्टमिति, तस्यैव प्रव्रजितस्य धनाभिमानरहितस्य तदेव धनापहारनिमित्तं दुःखं भवति । नच कुण्डलिनः कुंडलित्वाभिमाननिमित्तं सुखं दृष्टमिति तस्यैव कुण्डलवियुक्तस्य कुण्डलित्वाभिमानरहितस्य तदेव कुण्डलित्वाभिमाननिमित्तं सुखं भवति । तदुक्तं श्रुत्या 'अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः' इति । शरीरे पतितेऽशरीरत्वं स्यात्, न जीवत इति चेन्न, सशरीरत्वस्य मिथ्याज्ञाननिमित्तत्वात् । नहि आत्मनः शरीरात्माभिमानलक्षणं मिथ्याज्ञानं मुक्त्वा अन्यतः सशरीरत्वं शक्यं कल्पयितुम् । नित्यमशरीरत्वमकर्मनिमित्तत्वादित्यवोचाम । तत्कृतधर्माधर्मनिमित्तं सशरीरत्वमिति चेन्न, शरीरसंबन्धस्यासिद्धत्वाद्धर्माधर्मयोरात्मकृतत्वासिद्धेः, शरीरसंबन्धस्य धर्माधर्मयोस्तत्कृतत्वस्य चेतरेतराश्रयत्वप्रसङ्गात्, अन्धपरम्परैषानादित्वकल्पना । क्रियासमवायाभावाच्चात्मनः कर्तृत्वानुपपत्तेः । संनिधानमात्रेण राजप्रभृतीनां दृष्टं कर्तृत्वमिति चेन्न, धनदानाद्युपार्जितभृत्यसंबन्धित्वात्तेषां कर्तृत्वोपपत्तेः, न त्वात्मनो धनदानादिवच्छरीरादिभिः स्वस्वामिभावसंबन्धनिमित्तं किंचिच्छक्यं कल्पयितुम् । मिथ्याभिमानस्तु प्रत्यक्षः संबन्धहेतुः । एतेन यजमानत्वमात्मनो व्याख्यातम् । अत्राहुः—देहादिव्यतिरिक्तस्यात्मन आत्मीये देहादावभिमानो गौणो न मिथ्येति चेन्न, प्रसिद्धवस्तुभेदस्य गौणत्वमुख्यत्वप्रसिद्धेः । यस्य हि प्रसिद्धो वस्तुभेदः यथा केसरादिमानाकृतिविशेषोऽन्वयव्यतिरेकाभ्यां सिंहशब्दप्रत्ययभाङ्मुख्योऽन्यः प्रसिद्धः, ततश्चान्यः पुरुषः प्रायिकैः क्रौर्यशौर्यादिभिः सिंहगुणैः संपन्नः सिद्धः, तस्य तस्मिन्पुरुषे

सिंहशब्दप्रत्ययौ गौणौ भवतो नाप्रसिद्धवस्तुभेदस्य । तस्य त्वन्यत्रान्यशब्दप्रत्ययौ भ्रान्तिनिमित्तावेव भवतो न गौणौ । यथा मन्दान्धकारे स्थाणुरयमित्यगृह्यमाणविशेषे पुरुषशब्दप्रत्ययौ स्थाणुविषयौ, यथा वा शुक्तिकायामकस्माद्रजतमिदमिति निश्चितौ शब्दप्रत्ययौ, तद्वद्देहादिसंघातेऽहमिति निरुपचारेण शब्दप्रत्ययावात्मानात्माविवेकेनोत्पद्यमानौ कथं गौणौ शक्यौ वदितुम् ? आत्मानात्मविवेकिनामपि पण्डितानामजाविपालानामिवाविविक्तौ शब्दप्रत्ययौ भवतः । तस्माद्देहादिव्यतिरिक्तात्मास्तित्ववादिनां देहादावहंप्रत्ययो मिथ्यैव न गौणः । तस्मान्मिथ्याप्रत्ययनिमित्तत्वात्सशरीरत्वस्य, सिद्धं जीवतोऽपि विदुषोऽशरीरत्वम् । तथाच ब्रह्मविद्विषया श्रुतिः, 'तद्यथाहिनिर्ल्वयनी वल्मीके मृता प्रत्यस्ता शयीतैवमेवेदं शरीरं शेते, अथायमशरीरोऽमृतः प्राणो ब्रह्मैव तेज एव' इति । 'सचक्षुरचक्षुरिव सकर्णोऽकर्ण इव सवागवागिव समना अमना इव सप्राणोऽप्राण इव' इति च । स्मृतिरपि च—"स्थितप्रज्ञस्य का भाषा" इत्याद्या स्थितप्रज्ञलक्षणान्याचक्षाणा विदुषः सर्वप्रवृत्त्यसंबन्धं दर्शयति । तस्मान्नावगतब्रह्मात्मभावस्य यथापूर्वं संसारित्वम् । यस्य तु यथापूर्वं संसारित्वं नासाववगतब्रह्मात्मभाव इत्यनवद्यम् ॥

यत्पुनरुक्तं श्रवणात्पराचीनयोर्मनननिदिध्यासनयोर्दर्शनाद्विधिशेषत्वं ब्रह्मणो, न स्वरूपपर्यवसायित्वमिति । तन्न । अवगत्यर्थत्वान्मनननिदिध्यासनयोः । यदि ह्यवगतं ब्रह्मान्यत्र विनियुज्येत भवेत्तदा विधिशेषत्वम् । न तु तदस्ति, मनननिदिध्यासनयोरपि श्रवणवदवगत्यर्थत्वात् । तस्मान्न प्रतिपत्तिविधिविषयतया शास्त्रप्रमाणकत्वं ब्रह्मणः संभवतीत्यतः स्वतन्त्रमेव ब्रह्म शास्त्रप्रमाणकं वेदान्तवाक्यसमन्वयादिति सिद्धम् । एवंच सति 'अथातो ब्रह्मजिज्ञासा' इति तद्विषयः पृथक्शास्त्रारम्भ उपपद्यते । प्रतिपत्तिविधिपरत्वे हि 'अथातो धर्मजिज्ञासा' इत्येवारब्धत्वान्न पृथक्शास्त्रमारभ्येत । आरभ्यमाणं चैवमारभ्येत—"अथातः परिशिष्टधर्मजिज्ञासेति", अथातः क्रत्वर्थपुरुषार्थयोर्जिज्ञासा" इतिवत् । ब्रह्मात्मैक्यावगतिस्त्वप्रतिज्ञातेति तदर्थो युक्तः शास्त्रारम्भः 'अथातो ब्रह्मजिज्ञासा' इति । तस्मादहं ब्रह्मास्मीत्येतदवसाना एव सर्वे विधयः सर्वाणि चेतराणि प्रमाणानि । नह्यहेयानुपादेयाद्वैतात्मावगतौ सत्यां निर्विषयाण्यप्रमातृकाणि च प्रमाणानि भवितुमर्हन्तीति । अपि चाहुः—"गौणमिथ्यात्मनोऽसत्त्वे पुत्रदेहादिबाधनात् । सद्ब्रह्मात्माहमित्येवं बोधे कार्यं कथं भवेत् ॥ अन्वेष्टव्यात्मविज्ञानात्प्राक्प्रमातृत्वमात्मनः । अन्विष्टः स्यात्प्रमातैव पाप्मदोषादिवर्जितः ॥ देहात्मप्रत्ययो यद्वत्प्रमाणत्वेन कल्पितः । लौकिकं तद्वदेवेदं प्रमाणं त्वात्मनिश्चयात्" इति ॥ ४ ॥

इति भाष्ये चतुस्सूत्री समाप्ता ।

**॥ इति नवमं वर्णकम् ॥**

ॐ

श्रीपद्मपादाचार्यप्रणीता

# पञ्चपादिका

**अत्रापरे प्रत्यवतिष्ठन्ते-यद्यपि शास्त्रेण प्रमीयते ब्रह्म; तथापि विधिसंस्पर्शिना, न तद्रहितेन। कस्मादेवम्? अन्यथा शब्दप्रयोगानुपपत्तेः।**

## पञ्चपादिकाविवरणम्

लोके पदानां योग्येतरसंसृष्टस्वार्थप्रतिपादने सामर्थ्यमङ्गीकृत्य भूतेऽप्यर्थे प्रामाण्योपगमेन लौकिकवचसां च भूतेऽर्थे प्रमाणान्तरानुसारेण प्रयोजनपर्यन्तं प्रामाण्यमङ्गीकृत्य वेदवचसां तु प्रमाणान्तराभावाद्विध्यनुसारेणैव प्रयोजनपर्यन्तं प्रामाण्यं वक्तव्यमित्याशङ्क्य नेति प्रतिपादितम्। इदानीं कार्यसंसृष्टस्वार्थे शब्दसामर्थ्यमिति मन्वानाः कार्यशेषतयैव भूतेऽप्यर्थे प्रामाण्यमिति प्रत्यवतिष्ठन्त इत्याह—**अत्रापरे प्रत्यवतिष्ठन्त इति**। ननु—लौकिकवचसां भूतेऽप्यर्थे प्रयोगप्रत्ययदर्शनात् तदनुसारेण च योग्येतरसंसृष्टे शब्दसामर्थ्यप्रतिपत्तेः कुतो विधिसंस्पर्श इत्याक्षिपति—**कस्मादेवमिति**॥ परिहरति—**अन्यथा शब्दप्रयोगानुपपत्तेरिति**॥

अयं भावः—श्रोतुः साध्यमेव किंचित्प्रयोजनमुद्दिश्य प्रवृत्तिं विवक्षित्वा प्रवर्तकज्ञानाय प्रयोक्ता शब्दं प्रयुङ्क्ते। ततः प्रवर्तकनिष्ठं वाक्यं श्रोतुः प्रवर्तकज्ञानमेव जनयति। प्रवर्तकज्ञानेन च शब्दसमनन्तरभाविनाऽन्यथा-

## तत्त्वदीपनम्

भूतार्थप्रतिपादने प्रयोजनाभावात्सापेक्षत्वप्रसङ्गाच्च विधिशेषतयैव वेदस्य प्रामाण्यमित्येतत्पूर्वत्र प्रत्यक्षेपि, अत्रापि विधिशेषत्वशङ्का प्रतिक्षिप्यत इति पौनरुक्त्यमाशङ्क्य, वृत्तानुवर्णनपुरःसरं प्रमेयभेदं दर्शयति—**लोक इत्यादिना**। सिद्धे संगतिग्रहणादेवाबोधकत्वं नेत्याह—**भूत इति**। अबोधकत्वाभावेऽपि भूते प्रयोजनाभावादपुरुषार्थतालक्षणमप्रामाण्यमित्याशङ्क्याह—**लौकिकवचसामिति**। **प्रमाणान्तरानुसारेणेति**। वक्त्रनुमानानुसारेणेत्यर्थः। **प्रमाणान्तराभावादिति**॥ अपौरुषेयत्वेन मूलभूतवक्त्रनुमानाभावादित्यर्थः। प्रत्यक्षादिना स्वर्गाद्यनुपलब्धावपि वेदस्य विधिनिष्ठत्वाद्विधेश्च कालान्तरभाविफलोत्पादानुकूलमप्रामाण्यं युक्तमित्यर्थः। "सदेवे"त्यादिवाक्यं किं कार्यसंसृष्टे ब्रह्मणि प्रमाणम्? उत शुद्धे? इति सिद्धे पदानां व्युत्पत्तिसंभवासंभवाभ्यां संदेहे पूर्वपक्षः प्रदर्श्यत इत्यर्थः॥ कार्यसंसृष्टस्वार्थस्य पदशक्तिविषयत्वमाक्षिपति—**ननु लौकिकेति**। लौकिकवचसां कुतो विधिसंस्पर्श इति संबन्धः। **प्रयोगप्रत्ययदर्शनादिति**। उत्तमवृद्धप्रयोगस्य मध्यमवृद्धप्रत्ययस्य च दर्शनादित्यर्थः॥ एकग्रन्थत्वशङ्कां निरस्यति—**परिहरतीति**॥

सिद्धेऽप्यर्थे प्रयोगदर्शनात्कथमनुपपत्तिरिति शङ्कायामाह—**अयं भाव इति**। प्रवृत्त्यभावे प्रयोजनासंभवात्सा संपादनीयेत्यभिसन्धायाह—**प्रवृत्तिमिति**। प्रवृत्तेश्च प्रवर्तकज्ञानं विनाऽसंभवात्तदपि निष्पादनीयमित्याह—**प्रवर्तकेति**। प्रयोगस्य प्रवर्तकविषयत्वमभिधाय प्रत्ययस्यापि तद्विषयत्वमाह—**तत इति**। प्रवर्तके सङ्गत्यग्रहणात्कथं शब्दात्प्रवर्तकत्व-

## ऋजुविवरणम्

**"तत्रापरे"** इत्याक्षेपो नोदेति, परिहृतत्वात्, पूर्ववर्णकेऽपि प्रवृत्ति-निवृत्तिसाध्यप्रयोजनोद्देशेन शब्दप्रयोगो दृष्टः, वेदेऽपि तथाविधप्रयोजनाभावे सिद्धे वस्तुनि न प्रामाण्यम्, अध्ययनविध्युपात्तत्वाच्च वेदस्य तस्य च निष्प्रजोजनत्वेनाक्षरग्राहकत्वाभावात्, प्रयोजनस्य च प्रवृत्ति-निवृत्तिसाध्यत्वात्, तयोश्च विध्यायत्तत्वात् केवलस्वरूपे प्रामाण्यं नास्तीत्याक्षिप्य समर्थनं कृतम्, अत्रापि स एवाक्षेपः। नच सिद्धे वस्तुनि सामर्थ्याभावेनाक्षेपाद्भेदः; पूर्वत्रापि तस्याविशेषात् तस्येहानुक्तत्वाच्च। न च लोकेऽपि सिद्धवस्तुप्रतिपादनादर्शनाद् वेदेऽपि न संभवतीत्याक्षेपाद् भेदः; पूर्वमपि तस्यैवाक्षेपहेतुत्वात्, नचान्यदाक्षेपबीजं प्रागनुक्तमिहोक्तं दृश्यते, परिहारश्च। उपक्रमेऽपि वर्णकस्यास्य कारणं नोपलभ्यते; अतो नारम्भणीयं वर्णकान्तरमित्याशङ्क्य विषयभेदं दर्शयति—**लोके पदानामिति**॥ प्रामाण्यस्यैवाक्षेपः पूर्ववर्णके, तदङ्गीकृत्याक्षेपात्क्रमं इत्युक्तम्। हेतुः "पुरुषेच्छासमुत्थापितो ही"त्यादिना कीर्तितः। "अन्यथा शब्दप्रयोगानुपपत्तेरि"-त्ययुक्तम्; नह्ययं ग्रन्थो वेदविषयः, तस्य लोकव्युत्पत्त्यनुसारित्वात् कथं विधिसंस्पर्शो निश्चीयते? "पुरुषेच्छासमुत्थापितो ही" त्यादिरपि विरुध्यते। अपौरुषेयत्वेन पुरुषेच्छानिबन्धनत्वाभावात्, नापि लौकिकप्रयोगविषयः; तस्य प्रयोगप्रत्ययदर्शनात्, तदधीनत्वाद् व्युत्पत्तेर्व्युत्पत्त्यधीनत्वादुत्तरप्रयोगस्येति परिहृतत्वात्, शक्तितात्पर्यज्ञानं यत्र शब्दस्य भवति, तत्र प्रामाण्यम्, तदभावे च प्रयोगानुपपत्तिः। नच तदप्यस्ति; अतो नानुपपत्तिरित्याशङ्क्य, प्रयोगप्रत्ययव्युत्पत्ति-

### पञ्चपादिकाविवरणम्

सिद्धान्वय-व्यतिरेकाभ्यां शब्दस्य संबन्धं व्युत्पत्ता प्रतिपद्यते। तच्च प्रवर्तकं प्रत्यक्षादि-व्यवहारेषु शब्दव्युत्पत्तेः प्राक् कार्यमिति ज्ञानात्सर्वत्र प्रवर्तते, इति कार्यमेव श्रोतुः शाब्दज्ञानगोचरं कल्पयति। तत्र कार्यसंसृष्टेषु पदार्थेषु पदसमुदायस्य प्रथमं सामर्थ्यं कल्पयित्वा पुनः प्रयोगान्तरेष्वावापोद्वापाभ्यामेकैकस्य पदस्य कार्यसंसृष्टस्वार्थेषु संबन्धं प्रतिपद्यते; प्रथमप्रयोगे कार्यसंसृष्टस्वार्थेषु सामर्थ्यप्रतिपत्तेः। ननु—बालस्य स्वव्यवहारेऽभिलषितसाधनताज्ञानात्प्रवृत्तिः न कार्य-

### तत्त्वदीपनम्

बोधोदयः ? इत्याशङ्क्य, सङ्गतेस्तद्विषयत्वमुपपादयति—**प्रवर्तकज्ञानेनेति**॥ भवतु प्रवर्तके सङ्गतिग्रहः, तथाऽपि कथं कार्ये सङ्गतिग्रहः ? तत्राह—**तच्चेति**। प्रत्यक्षादिनिमित्तव्यवहारेषु तच्च प्रवर्तकं कार्यमिति संबन्धः। व्यवहारस्य प्रत्यक्षादिनिमित्तत्वमुपपादयति—**शब्दव्युत्पत्तेरिति**। कार्यस्य प्रवृत्तिनिमित्तत्वमुपपादयति—**कार्यमिति ज्ञानादिति**। तथाऽपि कथं परकीयप्रवर्तकविशेषसिद्धिः ? इत्याशङ्क्याह—**श्रोतुरिति**। श्रोतुः शब्दज्ञानगोचरं प्रवर्तकमपि कार्यमेवेति संबन्धः॥ स्वप्रवृत्तिहेतुत्वे तत्समधिगतं कार्यं विहायान्यत्रान्यस्य हेतुत्वकल्पकानुपलब्धेरित्यर्थः॥ पदसमुदायस्य कार्ये शक्तिग्रहश्चेत् तर्हि पर्यायत्वं स्यादित्याशङ्क्याह—**तत्रेति**। कार्ये संसर्गिणि शक्तिग्रहेऽपि कथं पदविशेषस्यार्थविशेषे शक्तिः ? इत्याशङ्क्याह—**पुनरिति**। तुरगपदस्य प्रक्षेपे तदर्थस्यापि क्षेपः, तदुद्धरणे उद्धार इत्यर्थविशेषस्य सङ्गतिरित्यर्थः। आवापोद्धाराभ्यामपीतरमात्रान्विते शक्तिर्गृह्यताम्, तत्राह—**प्रथमेति**। समुदायस्य शक्तिग्रहणवेलायामित्यर्थः। इतरान्वितमात्रे अर्थमात्रे वा पदविशेषस्य शक्तिग्रहणपक्षे प्राथमिककार्यसंसृष्टस्वार्थप्रतिपत्तिविरोध इत्यर्थः॥ कार्यज्ञानस्यार्भकप्रवृत्तिहेतुत्वसिद्धौ तदनुसारेणान्यत्रापि तत्कल्पनं स्यात्, नच तत्सिद्धमिति शङ्कते—**ननु बालस्येति**॥ अनिष्टसाधने प्रवृत्त्यदृष्टेरिष्टसाधनताज्ञानं प्रवृत्तिहेतुरित्यर्थः॥ तर्हुभयमपि कारणं किं न स्यात् ? इत्याशङ्क्याह—न कार्येति॥ कल्पनागौरवप्रसक्तेर्नोभयहेतुत्वमित्यर्थः। ततः किमिति ? अत आह—**ततश्चेति**॥ प्रवृत्तिलिङ्गानुमिते प्रवृत्तिहेतोः सामर्थ्यग्रहणम्, कार्यस्य च प्रवृत्तिहेतुत्वाभावान्न तत्र शक्तिग्रहणमित्यर्थः॥ इष्टसाधनताबोधस्य प्रवर्तकत्वे नित्यनैमित्तिककर्मसु प्रवृत्तिर्न स्यात्; तेषां फलसाधनत्वाभावात्, ततश्च कार्यज्ञानमेव प्रवर्तकमित्याशङ्क्य, नित्यादीनामपि फलवत्त्वान्न व्यभिचार इत्याशयेनाह—**न कार्येति**॥ विकल्पासहत्वान्नैतदित्याह—**नैतदिति**। इष्टसाधनताज्ञानं किं कार्ये

### ऋजुविवरणम्

सामर्थ्यदेवानुपपत्तिर्निश्चीयत इत्यभिप्रायमाह—**अयं भावः—श्रोतुः—साध्यमेवेति**॥ यद्यपि प्रयोगः प्रवर्तकविषयः, प्रतिपत्तिरपि तथेति कथं निश्चीयत इत्याह—**ततः प्रवर्तकनिष्ठमिति**॥ ननु प्रवर्तकज्ञानजननेऽपि तन्निष्ठत्वेनैव व्युत्पत्तिरिति कथं निश्चीयत ? शक्तिविषयादन्यत्रापि बोधजनकत्वदर्शनादित्याशङ्क्याह—**प्रवर्तकज्ञानेन शब्दसमनन्तरेति**॥ ननु प्रवर्तके व्युत्पत्तावपि न कार्यनिष्ठता निश्चेतुं शक्यते; प्रवर्तक एव बहुधा वादिविवाददर्शनात्—केचिद्भावार्थ एव प्रवर्तक इत्याहुः, अपरे फलं साधनज्ञानं वा, अन्ये रागम्, अन्ये प्रत्यक्षादिव्यवहारे यत्र यस्य प्रवर्तकत्वं दृश्यते, तत्र तस्य प्रवर्तकतां, शब्दव्यवहारे तु लिङादय एव प्रवर्तका इत्याहुः, इतरे शब्दव्यापारमेवाभिधेयानभिधेयत्वविभागेन प्रवर्तकत्वेन प्रतिपन्नाः, अत; कार्यनिष्ठता कथं निश्चीयत इति ? तत्राह—**तच्च प्रवर्तकं प्रत्यक्षादीति**॥ न तावच्छब्द-तद्व्यापारयोः प्रवर्तकत्वम्; प्रत्याक्षादिव्यवहारेऽदर्शनात् प्रेक्षापूर्वकारिणो हि स्वव्यवहारे यस्य प्रवर्तकत्वं दृष्टम्, तस्यैवान्यत्र कल्पयति। नच शब्दे तदस्ति; अव्युत्पन्नानामपि प्रवृत्तिप्रसङ्गात्।

"प्रवर्तकं यद् व्यवहारकाले बालस्य पूर्वं तदिहापि कल्प्यम्।
कार्येतरन्नैव तदस्ति दृष्टं शब्देऽपि तेनेदमवेहि हेतुम्।"

तेन कार्यं व्यवहारहेतुः पक्षान्तरेषु चायं दोषः समानः। दोषान्तरं व्यक्तत्वाद् नेह कीर्तितं विस्तरभयात्। ननु तर्हि सर्वपदानां कार्यमात्रे शक्तिप्रतिपत्तेः पदान्तरप्रयोगः पर्यायतया न स्यात्, नच प्रातिस्विकपदार्थे प्रथमं शक्तिज्ञानकारणमस्ति। नच प्रथमं कार्ये गृहीतशक्तीनां पश्चात्स्वार्थे शक्तिग्रहणं युक्तम्; प्रथमप्रतिपत्तिविरोधादित्याशङ्क्याह—**तत्र कार्यसंसृष्टेषु पदार्थेष्विति**॥ यदि प्रथमं पदसमुदायस्य शक्तिः कल्पिता स्यात्; प्रतिपदमर्थभेदो न स्यात्; समुदायस्यैव शक्तिप्रतिपत्तेः, तद्धानस्य चायुक्तत्वादित्याशङ्क्याह—**पुनः प्रयोगान्तरेष्विति**॥ ननु आवापोद्धाराभ्यामेकैकस्य पदस्य पश्चात्सामर्थ्यं कल्प्यते यदि, तर्हि सर्वपदानां पदार्थमात्रे शक्तिस्स्यात्, न कार्यान्विते; अन्वय-व्यतिरेकाविशेषाल्लाघवादित्याशङ्क्याह—**प्रथमप्रयोगे कार्यसंसृष्टेति**॥

## पञ्चपादिकाविवरणम्

ज्ञानात्। ततश्च श्रोतुः शब्दसामर्थ्यविषयतयाऽभिलषितसाधनज्ञानमेव प्रवृत्त्याऽनुमिमीते, न कार्यज्ञानमिति, नैतद्युक्तम्; अभिलषितसाधनेऽपि कार्यमिति ज्ञानस्य प्रवृत्त्यानन्तर्यात्तदेव प्रवर्तकमनुमीयते। नचेष्टसाधनज्ञानं प्रवर्तकम्; अतीतानागतवर्तमानेष्टसाधनज्ञानानामप्रवर्तकत्वात् तस्मात्कार्यसंसृष्टस्वार्थेषु शब्दसामर्थ्यमिति ॥

ननु—सर्वत्र कार्यव्यभिचाराभावेपि संसृष्टस्वार्थेषु शब्दसामर्थ्यमिति युक्तं प्रतिपत्तुम्, कार्यसंसृष्टस्वार्थं इति विशेषणायोगात्, अन्यथा प्रमाणान्तरगृहीतकार्यसंसृष्टस्वार्थं इत्यव्यभिचारात्कल्प्येत, नैतद् युक्तम्, संसृष्टस्वार्थं इत्युक्ते केन संसृष्टः ? इत्यपेक्षायां कार्यसंसृष्ट इति विशेषप्रतिपत्तिमन्तरेण प्रयोजकस्यानिरूपणात्प्रमाणान्तरगृहीतत्वस्य शब्दसामर्थ्यप्रतिपत्तिकालेऽप्रतिपत्तेर्न तत्र शब्दसामर्थ्यमित्युक्तम्। ननु—कार्यसंसृष्ट इत्युक्ते कार्यस्य कार्यान्तराभावात् कार्यपदस्यान्यसंसृष्ट इति प्रयोजकभेदो वक्तव्यः स्यात्, न; धात्वर्थस्यापि कार्यत्वात्तत्संसृष्टनियोगे कार्यपदसामर्थ्यात्। ननु—लोकेऽतीतानागत-वर्तमानार्थनिष्ठवाक्येभ्योऽतीताद्यर्थप्रतिपत्तिकार्यदर्शनात् तदनुसारेण संसृष्टस्वार्थे सामर्थ्यं नियम्यत इति, न; सम्बन्धग्रहणाधीनत्वादर्थप्रतिपत्तेस्तया सम्बन्धग्रहणनियमायोगात्। अतीतादिवाक्यानां चैवमव-

## तत्त्वदीपनम्

बोधमुत्पाद्य प्रवृत्तिं जनयति ? उत साक्षात् ? नाद्य इत्याह—**अभिलषितेति** ॥ अव्यवहितपूर्वक्षणवर्तिनः कारणत्वात् कार्यज्ञानस्य तादृक्त्वादितरस्य चानीदृक्त्वात् कार्यज्ञानमेव प्रवर्तकमित्यर्थः। द्वितीयं दूषयति—**नचेति** ॥ कार्यज्ञानस्यापीष्टसाधनताज्ञानं विना प्रवर्तकत्वमनुपपन्नमित्याशङ्क्य, तस्य कार्यज्ञानं प्रति हेतुतयाऽन्यथासिद्धत्वात्कार्यमेव प्रवर्तकम्, तदन्विते च पदसामर्थ्यमित्युपसंहरति—**तस्मादिति** ॥

योग्येतरान्वितस्वार्थस्य कार्यसंसृष्टत्वाभावेन शक्त्यविषयत्वादर्शनात् तस्यैव प्रयोजकत्वमिति शङ्कते—**ननु सर्वत्रेति** ॥ **विशेषणायोगादिति** ॥ संभवे व्यभिचारे च विशेषणमर्थवत्, अत्र चान्वितमात्रस्य व्यभिचाराभावान्न तन्निरासाय विशेषणमुचितमित्यर्थः। कार्यस्यान्वयित्वमात्रेण हेतुत्वकल्पनायां दण्डमाह—**अन्यथेति** ॥ केवलव्यतिरेकाभावेऽप्यन्वयमात्राद् यथा गगनादेर्हेतुत्वम्, तद्वदत्रापीत्याह—**नैतदिति** ॥ तर्ह्यतिप्रसक्तिरित्युक्तमित्याशङ्क्य वैषम्यमाह—**संसृष्टेति** ॥ इतोऽपि न प्रमाणान्तरगृहीतत्वस्य प्रयोजकत्वमित्याह—**प्रमाणान्तरेति** ॥ प्रतिपन्ने शक्तिकल्पना, मानान्तरगृहीतत्वस्य चाप्रतिपन्नत्वान्न संगतिग्रहणमित्युक्तम्—**"श्रोतृव्यवहारो ही"**त्यादिग्रन्थ इत्यर्थः ॥ कार्यसंसृष्टस्वार्थस्यापि शक्तिविषयत्वमयुक्तमित्याह—**नन्विति** ॥ किं सर्वेषां पदानां कार्यसंसृष्टस्वार्थे शक्तिः ? आहो कार्यपदव्यतिरिक्तानाम् ? इति विकल्पाद्यं दूषयति—**ननु कार्यसंसृष्ट इति**। एकस्मिन् प्रयोगे कार्यस्यैकत्वान्न तदन्वितस्य स्वार्थे सामर्थ्यासिद्धिरित्यर्थः। नापि द्वितीयः; प्रयोजकभेदप्रसङ्गादित्याह—**कार्यपदस्येति** ॥ आद्यं पक्षमाह—**पूर्ववादी नेति** ॥ तर्हि कार्यपदस्य व्युत्पत्त्यसंभव इत्युक्तम्, तत्राह—**धात्वर्थस्यापीति** ॥ प्रकारान्तरेण प्रयोजकभेदापत्तिं शङ्कते—**ननु लोक इति** ॥ "निधिमानेष भूभागः" इत्यादिवाक्यादर्थप्रतिपत्तिस्तावत्सर्वजनीना, नच सिद्धे सामर्थ्यग्रहणमन्तरेण तदुपपत्तिः, इति सिद्धेऽपि सामर्थ्यमाश्रयणीयमिति प्रयोजकभेदापत्तिरित्यर्थः ॥ परस्पराश्रयप्रसङ्गान्नैतच्चोद्यं शोभत इत्याह—**तत्संबन्धेति**। सिद्धार्थे संबन्धग्रहणसिद्धौ गृहीतसंगतिकाच्छब्दादर्थप्रतिपत्तिः; तस्यां च तत्र संगतिग्रहणमितीतरेतराश्रयत्वमित्यर्थः ॥ कथं तर्ह्यतीतादिवाक्यादर्थप्रतिपत्तिरित्याशङ्क्य कार्यपदाध्याहारादि-

## ऋजुविवरणम्

पदसमुदायाभावान्न तस्य शक्तिः; अन्वयव्यतिरेकाभ्यामवयवार्थदर्शनाद् भेददर्शनाच्च नास्य शक्तिः, किन्तु पदानामेव; प्रथमप्रयोगेऽपि सर्वेषां पदानां शक्तिरिति कल्पनया समुदायस्येत्युक्तम्, ननु व्यतिरिक्तसमुदायाव्यभिप्रायेण; कार्यान्वितत्वस्य प्रथमप्रतिपत्तेरव्यभिचारात् तत्स्वीकारे बाधकाभावाच्च तदन्विते शक्तिरिति भावः। **विशेषणायोगादिति** ॥ अयमर्थः—लाघवात्प्रयोजकस्य केवलत्वमङ्गीकर्तुं युक्तम्; केवलव्यभिचारे हि विशेषणापेक्षायां विशिष्टस्य प्रयोजकता, तदभावे न विशेषणत्वमिति भावः। ननु संसृष्टपदार्थहानेन पदार्थमात्रे शक्तिसंभवेऽप्यव्यभिचारात्संसृष्टत्वस्वीकारः, तथा कार्यसंसृष्टेऽपि शक्तिः कल्प्येत, व्यभिचारादित्याशङ्क्याह—**अन्यथा प्रमाणान्तरगृहीतेति** ॥ ननु अनियतस्य न प्रयोजकत्वं युक्तम्; नियतप्रयोजकसद्भावे न च कार्यसंसृष्टत्वमव्यभिचारि; कार्यपदे व्यभिचारात्, अन्यान्वितं त्वव्यभिचारात्प्रयोजकमिति चोदयति—**ननु कार्यसंसृष्ट इत्युक्त इति** ॥ यद्यर्थप्रतिपत्तिः संबन्धग्रहणाधीना, कथं तर्ह्यतीतादिविषयवाक्यादर्थप्रतिपत्तिः ? अतोऽन्यान्विते शक्तिग्रहणमित्याशङ्क्याह—**अतीता-**

**पञ्चपादिका**

**पुरुषेच्छासमुत्थापितो हि शब्दप्रयोगः सा चेष्टानिष्टप्राप्तिपरिहारविषया । नच पारम्पर्येणापि सुख-दुःखे विहायेष्टानिष्टे सम्भवतः । नच विस्मृतसुवर्णारोपितसर्पज्ञानाप्रतिपत्ताविव तदनन्तरं शास्त्रादपि ब्रह्मात्मप्रतिपत्तौ सुखावाप्तिर्दुःखपरिहारश्च दृश्यते; पूर्ववदेव संसारित्वोपलब्धेः, प्रतीत्युत्तरकालं च ध्यानोपदेशात् । तस्मात् सन्तु नाम लोके विधिरहितान्यपि पुरुषार्थपर्यन्तानि वाक्यानि, वेदे तु न तद्वद्विहितानां तत्पर्यन्तता ।**

**पञ्चपादिकाविवरणम्**

धार्यतामिति नियोगनिष्ठत्वात् । तस्मान्न कार्यसंस्पर्शमन्तरेण भूतेऽप्यर्थे शब्दप्रामाण्यमिति ।। अपि च—प्रवृत्ति-निवृत्तिसाध्यप्रयोजनमन्तरेण वाक्यप्रयोगानुपपत्तेः प्रयोजनस्य नियोगसामर्थ्याधीनत्वाद् नियोगपर्यवसितमेव वाक्यमित्याह—**पुरुषेच्छासमुत्थापितो हीति** ।। ननु नेदं कालान्तरभावि नैयोगिकं फलम्, येन नियोगाधीना फलप्रतिपत्तिः स्यात्, किन्तु सम्यग्ज्ञानफलं प्राप्तब्रह्मप्राप्तिलक्षणमविद्यानिवृत्तिलक्षणं च हस्तगतविस्मृतसुवर्णप्राप्तिवदन्वयव्यतिरेकसिद्धमिति, नेत्याह—**नच विस्मृतसुवर्णारोपितसर्पज्ञानाप्रतिपत्ताविवेति** ।। ननु अन्वय-व्यतिरेकविरुद्धमेतत्, यद् ब्रह्मात्मतत्त्वज्ञानाद् ब्रह्मप्राप्त्यनर्थनिवृत्ती न स्त इति, न; प्रत्यक्षविरोधादित्याह—**पूर्ववदेवसंसारित्वोपलब्धेरिति** ।। अपि च—शाब्दज्ञानव्यतिरेकेण ब्रह्मात्मनि ज्ञानसाधनान्तरविधानात् प्रयत्नान्तरसाध्यं प्रयोजनं न ज्ञानमात्रसाध्यमित्याह—**प्रतीत्युत्तरकालं चेति** ।। ननु—लोके भूतार्थनिष्ठतया प्रयोजनपर्यन्तता दृश्यते, तद्वदिहापि स्यादिति, नेत्याह—**तस्मात्सन्तु नाम लोक इति** ।।

ननु—धर्मजिज्ञासा ब्रह्मजिज्ञासेति च जिज्ञास्ययोर्धर्म-ब्रह्मणोः सिद्ध-साध्यभेदेन वैलक्षण्यं दर्शितम्, नच

**तत्त्वदीपनम्**

नेत्याह—**अतीतादीति** ।। संगतिग्रहणपर्यालोचनया शब्दस्य कार्यपरत्वमेव युक्तमित्युपसंहरति—**तस्मादिति** ।। "पुरुषेच्छासमुत्थापितः" इत्यस्य शब्दप्रयोगस्य प्रयोजनवद्विषयत्वमुक्तम्, तदस्मत्पक्षेऽपि संगच्छत इत्याशङ्क्य तात्पर्यमाह—**अपि चेति** ।। अथवा "पुरुषेच्छासमुत्थापितः" इति ग्रन्थस्य पूर्वग्रन्थेनैकग्रन्थ्यशङ्कां निराकुर्वंस्तात्पर्यमाह—**अपिचेति** ।। तथाऽपि कथं नियोगपर्यवसायित्वम् ? तत्राह—**प्रयोजनस्येति** । प्रवृत्ति-निवृत्त्योर्नियोगाधीनत्वात्तत्साध्यप्रयोजनमपि नियोगाधीनमित्यर्थः । प्रयोजनस्य प्रवृत्ति-निवृत्तिसाध्यत्वनियमोऽसिद्ध इति शङ्कते—**ननु नेदमिति** ।। इदं वेदान्तोत्थज्ञानफलं न कालान्तरभावि, नापि नैयोगिकमित्यक्षरार्थः । कालान्तरभाविफलस्य क्रियाजन्यत्वसंभवान्नियोगाधीनत्वम्, इदं च न तथेत्यर्थः ।। **अन्वयव्यतिरेकेति** ।। कण्ठस्थचामीकरतत्त्वज्ञानाद्विस्मृतसुवर्णप्राप्तिस्तदविद्यानिवृत्तिश्च दृष्टा, एवं ब्रह्मसाक्षात्कारस्यापि साक्षात्कारत्वातद्भावतदविद्यानिवृत्तिहेतुत्वमित्यर्थः । ब्रह्मसाक्षात्कारेऽविद्यानिवृत्तिः, इतरथा नेत्येवंलक्षणार्थप्रतिपादकं 'यत्र ही'त्यादिवाक्यम्, तत्सिद्धमित्यर्थः । अनुभवविरोधान्नैवमित्याह—**नेत्याहेति** ।। तत्त्वज्ञानेऽपि पुमर्थो नोपलभ्यत इत्येतत्—"यत्र ही"त्यादिवचनविरुद्धमिति शङ्कते—**नन्वन्वयेति** ।। श्रुतिरन्यपरेत्याह—**न प्रत्यक्षेति** ।। इतोऽपि न ज्ञानमात्रायत्तः पुरुषार्थ इत्याह—**अपिचेति** ।। किं शाब्दज्ञानमात्रात् पुरुषार्थः ? उत साक्षात्कारात् ? नाद्य इत्याह—**शाब्देति** ।। नापि द्वितीयः; शब्दात् चक्षुरादेर्वा तदनुपपत्तेरिति द्रष्टव्यम् ।। भूतार्थनिष्ठानामपि कुतूहलादिनिवृत्तिफलानां वचसामुपलम्भान्न विधिनिष्ठत्वनियम इति शङ्कते—**ननु लोक इति** ।। दृष्टान्तत्वात्तत्र तथात्वम्, अत्र तु नैवमित्याह—**नेत्याहेति** । तत्रापि विधिनिष्ठत्वमेवेति पूर्वपक्षाभिसन्धिः ।।

वेदान्तानां ज्ञानविधिपरत्वं सूत्रविरुद्धमिति शङ्कते—**नन्विति** । ततः किम् ? अत आह—**नचेति** । **शब्दगृहीत इति** । सौत्रब्रह्मशब्दगृहीत इत्यर्थः । **सूत्रविरोधादिति** । ब्रह्मणो जिज्ञासाकर्मत्वप्रतिपादकसूत्रविरोधादित्यर्थः ।।

**ऋजुविवरणम्**

**दिवाक्यानामिति** । कार्यान्विते शक्तिः पूर्वप्रमिता, नोत्तरकालीनतदधीनकारणेन बाधितुं शक्तेत्यर्थः ।। "पुरुषेच्छासमुत्थापितो ही"ति पुनरुक्त इवाभाति; पूर्वग्रन्थेऽपि साध्यप्रयोजनमुद्दिश्य प्रवर्तकज्ञानाय शब्दप्रयोगात्कार्यनिष्ठतेत्युक्तम्, उत्तरग्रन्थेऽपि साध्यप्रयोजनस्य प्रवृत्त्यादिसाध्यत्वात् प्रवर्तकनिष्ठत्वमित्युक्तत्वात् । यद्वा "पुरुषेच्छासमुत्थापितो ही"ति हिशब्दप्रयोगात्पूर्वग्रन्थविवरणमिव प्रतिभाति, तथा सति विरोधः; पूर्वं प्रवर्तकज्ञानाय शब्दप्रयोगात् प्रवर्तकस्य कार्यत्वात्तन्निष्ठतेत्युक्तम्, इह तु साध्यत्वात्प्रयोजनस्य नियोगेन विना तत्सिध्यनुपपत्तेस्तन्निष्ठतेत्युक्तत्वादित्याशङ्क्य विषयभेदं दर्शयति—**अपिच प्रवृत्ति-निवृत्तिसाध्येति** ।। **तथाऽपीति** टीकाग्रन्थेनेदमुक्तम्—यद्यपि सूत्रकारेण सिद्धब्रह्मजिज्ञासाप्रतिज्ञा

## पञ्चपादिका

**तस्माद् यद्यपि जिज्ञास्यवैलक्षण्यं धर्म-ब्रह्मजिज्ञासयोः सिद्ध-साध्यविषयत्वेन; तथाऽपि "सोऽन्वेष्टव्यः" "स विजिज्ञासितव्यः" इत्यादिविधिषु कोऽसावात्मेत्याकाङ्क्षायां सर्व एव ब्रह्मस्वरूपपरः पदसमन्वयस्तत्समर्पकत्वेनोपयुक्तः, न स्वतन्त्रमेव ब्रह्म प्रतिपादयितुमलम्। अतो विधीयमानज्ञानकर्मकारकत्वेनैव ब्रह्म प्रतिपाद्यत इति ॥ यः पुनः "तस्मात् प्रतिपत्तिविधिविषयतयैव शास्त्रप्रमाणकं ब्रह्माभ्युपगन्तव्यमि"ति भाष्ये पूर्वपक्षोपसंहारः, तत्र प्रतिपत्तिशब्दः सर्व एव मनोव्यापार प्रमाणात्मक इतरो वा ब्रह्मसंस्पर्शित्वेन विधेयः कैश्चित् कथञ्चित् कल्पितः, तस्य सर्वस्य संग्रहार्थो द्रष्टव्यः ॥**

## पञ्चपादिकाविवरणम्

ब्रह्मणि जिज्ञासाकर्मणि शब्दगृहीते प्रतिपत्ति-विध्यादयः शास्त्रेण प्रतिपाद्या इति युक्तं प्रतिपत्तुम्; सूत्रविरोधात्, इत्यत आह—**तस्माद्यद्यपीति** । तथाऽपि प्रतिपत्त्यादिविधिशेषतयैव ब्रह्म जिज्ञास्यमित्यर्थः । कथं पुनर्ब्रह्मप्रतिपादनपराणां वाक्यानां ब्रह्मप्रतिपत्तिविधिशेषतया समन्वय इति ? तदाह—**सोऽन्वेष्टव्य इत्यादि** ॥ **यः पुनस्तस्मादित्यादिः स्पष्टार्थः** ॥ तत्र नियोगमुखेन ब्रह्मणोऽवगतिमिच्छतो नियोग-ब्रह्मणी न प्रमाणेन प्रमातुं शक्येते, इत्येतत् प्रथमं दर्शयति—**अत्रोच्यत इति** ॥ तत्र विधेयाभावात्तद्व्यावृत्तो विधिः प्रमातुं न शक्य इत्याह—**किमिदं ज्ञानमिति** । तत्र तावच्छाब्दं ब्रह्मविषयं विज्ञानं विधातुं न शक्यत इत्याह—**न तावच्छब्दजन्यमिति** । गृहीतपद-पदार्थसंबन्धस्याधीयमानाद्वाक्याद्विधिवाक्यादिव विध्यर्थे ब्रह्मणि विज्ञानमुत्पद्यते, तदेव च विचारेण प्रतिष्ठाप्यत इति । न चानन्यथासिद्धकार्यमन्तरेण नियोग उपपद्यते ।

## तत्त्वदीपनम्

सूत्रविरोधदोषस्य कः समाधिरित्याशङ्क्य, विधिशेषत्वेन वेदान्तैर्ब्रह्मणः प्रतिपाद्यत्वान्न विरोध इत्याशयेनाह—**तथापीति** ॥ सत्यादिवाक्येषु विधेरनुपलम्भात्कथं तच्छेषत्वं तेषामिति शङ्कते—**कथं पुनरिति** । प्रतिपत्तिविध्याकाङ्क्षितविषयसमर्पणेन तच्छेषत्वमित्याह—**तदाहेति** ॥ सर्वेषां पदानां कार्यान्वित एव व्युत्पत्तेस्तत्रैव प्रयोजनसंभवाच्च विधिनिष्ठत्वे वेदस्य चोदिते सिद्धेऽपि व्युत्पत्ति-प्रयोजने प्रतिपादनीये, किमिदं ब्रह्मकर्मकम् ? इत्याशङ्क्य तात्पर्यमाह—**तत्रेति** । तत्र=वेदान्तेष्विति यावत् । अथापीत्यतः प्राक्तनेन टीकाग्रन्थेन नियोगासिद्धिरभिधीयते, तत आरभ्य ब्रह्मासिद्धिः, सिद्धे व्युत्पत्त्यादिकं चेत्यभिप्रायः ॥ ननु अत्र ज्ञानस्य विधेयत्वनिराकरणं लक्ष्यते, न नियोगनिराकरणमित्यत्राह—**तत्र विधेयेति** ॥ ब्रह्मणि तिस्रः प्रतिपत्तयः संभवन्ति, शाब्दी, भावनात्मिका, साक्षाल्लक्षणा चेति, तत्र कीदृशं ज्ञानं विधीयते ? इति **किंशब्दार्थः** । आद्यस्तावदयुक्त इत्याह—**तत्र तावदिति** ॥ अधीतस्वाध्यायस्यापि पाठकस्य ज्ञानादृष्टेः स्वाध्यायपाठात्तत्सिद्धिरित्युक्तमयुक्तमित्याशङ्क्य तात्पर्यमाह—**गहीतपदेति** । शब्दज्ञानमात्राद् ज्ञानोत्पत्तौ दृष्टान्तमाह—**विधिवाक्यादिति** ॥ वाक्यादेव ज्ञानोत्पत्तौ विचारानर्थक्यमित्याशङ्क्यासंभावनादिनिरासे तस्योपयोग इत्याह—

## ऋजुविवरणम्

कृता; तथाऽपि ब्रह्मणो विधिभिरपेक्षितत्वात्तच्छेषभूतस्यैव प्रतिपादनमिति, तन्न युज्जते; विध्यनपेक्षितत्वेन चोद्याभावात्तत्प्रदर्शनस्यासङ्गतत्वात् व्यधिकरणं च; न ह्यन्यानपेक्षितत्वं प्राधान्येन जिज्ञासाप्रतिज्ञाविरोधं परिहर्तुमलम् । यद्विरोधेन च चोद्यं कृतम्, तत्परिहाराभावादयुक्तम् इत्याशङ्क्य पूरयति—**तथाऽपि प्रतिपत्त्यादीति** ॥ केवलसिद्धप्रतिपादनासंभवे कारणमुक्तमेव पूर्वम्—तदन्विते शक्तिज्ञानम्, अतो न हेतूपन्यासोऽत्र कृतः ।

"यद्बोधकत्वं द्विविधं प्रसिद्धं तन्नेह जात्यादिविशेषहीने ।
ज्ञाता हि कार्यान्वितशक्तिरेषा तदन्वयो ब्रह्मणि नैव युक्तः ॥
कारकादिविशेषाणां कार्येणान्वय इष्यते । तथैवाऽन्वय इष्टश्चेत् सविशेषं प्रसज्यते ॥"

"अत्रोच्यते" इत्यदिटीकाग्रन्थे विधेयस्वरूपनिराकरणं कृतम्, तदयुक्तम्; कार्यान्विते व्युत्पत्तिसमार्थ्यात्साध्यप्रयोजनसमर्थ्यात्कार्यान्वित एव प्रामाण्यमिति चोदिते कार्ये व्युत्पत्तिस्तत्साध्यत्वं वा प्रयोजनस्य निराकरणीयम्, नान्यत्; तदसङ्गतत्वादित्याशङ्क्यावतारयति—**तत्र नियोगमुखेनेति** ॥ एतदुक्तं भवति अत्राक्षेपवादिनो ब्रह्मासिद्धिरभिप्रेता; तदङ्गीकारे नैवमाक्षेपो युक्तः, स्वाभिमतमेव विहन्यते यतः, अतो ब्रह्मासिद्धिमङ्गीकुर्वता तेनापि कार्यनिष्ठत्वं निराकार्यमित्यभिप्रायेण तत्प्रमित्यभावो वर्ण्यत इति ॥ ननु नियोगप्रमितिनिराकरणमत्र न दृश्यते, किन्तु ज्ञानस्य विधेयत्वमात्रम्, तत्कथं नियोगप्रमितिनिराकरणं क्रियत इत्युक्तम् ? इत्याशङ्क्यावतारयति—**तत्र विधेयाभावात्तद्व्यावृत्त इति** ॥ कथं स्वाध्यायपाठे तज्ज्ञानसिद्धिरुक्ता ? अधीतवेदमात्रस्यार्थावबोधहेतुत्वायोगादित्याशङ्क्याभिप्रायमाह—**गहीतपद-**

### पञ्चपादिका

**अत्रोच्यते—किमिदं ज्ञानं ब्रह्मकर्मकं विधीयते ? न तावच्छब्दजन्यम्; स्वाध्यायपाठादेव तत्सिद्धेः, अथ शब्दजन्यस्यैव ज्ञानस्याभ्यासो विधीयत इति, न तस्य प्रयोजनं पश्यामः ॥**

**ननु इष्टविषयस्य ज्ञानसन्तानस्य सुखसन्तानहेतुत्वं दृश्यते, यद्येवम् तद्वदेव विध्यानर्थक्यम् । अथ पुनः साक्षात्करणाय ज्ञानसन्तानविधिरुच्यते, नैतद्युक्तम्; न हि दृष्टाधिकारो विधिरसम्भावितदृष्टफलो भवति ।**

### पञ्चपादिकाविवरणम्

शब्दावगते ब्रह्मणि तत्समानजातीयस्मृतिसन्तानो विधीयतामिति शङ्कते—**अथ शब्दजन्यस्यैवेति** । तत्र स्मृतिसन्तानविधेः प्रयोजनं न तावददृष्टम्; स्वर्गादिवन्मोक्षस्य कर्मजन्यत्वप्रसङ्गात्, दृष्टफलत्वेऽपि न किञ्चित्फलं निरूप्यत इत्याह—**न तस्य प्रयोजनं पश्याम इति** ॥ ननु—मर्दनसुखवत् प्रत्यक्षं सुखमित्याह—**ननु इष्टविषयस्येति** । तर्ह्यन्वय-व्यतिरेकसिद्धसाधनत्वान्मर्दनादिवत् स्मृतिसन्तानो न विधेय इत्याह—**यद्येवमिति** ॥ अस्तु तर्हि स्मर्यमाणस्य साक्षात्करणं स्मृतिसन्तानविधेः प्रयोजनमिति शङ्कते—**अथ पुनरिति** ॥ किं साक्षात्करणं स्मृतिसन्तानस्यादृष्टं प्रयोजनम् ? दृष्टं वा भवति ? नचादृष्टम्; वस्त्वापरोक्ष्यस्य चक्षुरादिप्रमाणसामग्रीसाध्यत्वाददृष्टमात्राजन्यत्वात् । अदृष्टसहकृताज्जन्मान्तरीयप्रमाणकारणाज्जन्यत इति चेत्, तर्हि जन्मान्तरे यथा शब्दादिप्रमाणकारणं विधिमन्तरेण ब्रह्मावगतिं जनयिष्यति, तथेहापि स्यात् । अथ दृष्टमेव ब्रह्मसाक्षात्करणं प्रयोजनमिति, न; अनुपलब्धेरित्याह—**नैतद्युक्तमिति** ॥ अनुपलब्धि-

### तत्त्वदीपनम्

**तद्वदेवेति** ॥ विचारावैयर्थ्यमितिशब्दार्थः । शब्दात्तद्ज्ञानोत्पत्तिसंभवेऽपि विधिः किं न स्यादिति ? अत्राह—**नचेति** । अप्राप्ते शास्त्रस्यार्थवत्त्वाद् ज्ञानस्य चान्यतः सिद्धत्वान्न विधिरित्यर्थः ॥ ज्ञानस्य क्षणिकत्वात्तदभ्यासविध्यसंभवमाशङ्क्याह—**शब्दावगत इति** ॥ मोक्षः प्रयोजनमित्यसंगतमित्याशङ्क्य, तददृष्टं प्रयोजनम् ? उत दृष्टम् ? नाद्य इत्याह—**तत्र स्मृतीति** । **तत्र**=दृष्टादृष्टप्रयोजनयोर्मध्य इत्यर्थः । नापि द्वितीयः; अनुपलब्धेरित्याह—**दृष्टेति** ॥ अनुपलब्धिरसिद्धेति शङ्कते—**ननु मर्दनेति** ॥ विध्यानर्थक्ये को हेतुः ? इति न ज्ञायत इति, तत्राह—**तर्हीति** ॥ विधेर्न मोक्षः प्रयोजनम्, किं तु साक्षात्कार इत्युक्तम्, तत्र कस्य साक्षात्कार इत्याकाङ्क्षायामाह—**अस्तु तर्हीति** ॥ साक्षात्कारस्य दृष्टरूपताया अनुक्तत्वान्नैतदिति समाधानमनुचितमित्याशङ्क्य विकल्पपूर्वं व्याचष्टे—**किं साक्षात्करणमिति** । **अदृष्टमिति** । विध्यर्थानुष्ठानाद् यदपूर्वमुत्पद्यते, तत्साध्यमित्यर्थः ॥ आद्यं दूषयति—**नचेति** ॥ "यज्ञेन विविदिषन्ती"-त्युक्तत्वात्कथमदृष्टाजन्यत्वम् ? इत्याशङ्क्य, किमदृष्टमात्रं जनकम् ? उत कारणान्तरसहकृतम् ? नाद्य इत्याह—**अदृष्टेति** । तस्याप्रमाणत्वादित्यर्थः । द्वितीयमुत्थापयति—**अदृष्टेति** ॥ ब्रह्मध्यानादिना जनितं यददृष्टं प्राग्जन्मनि, तत्सहकृताच्छब्दाज्जन्मान्तरे साक्षात्कारोदय इत्यर्थः ॥ अनवगते निदिध्यासनानुपपत्तेर्निदिध्यासनसिद्ध्यर्थं यथा शब्दादवगतिजनिराश्रिता, तद्वच्छुद्धान्तःकरणस्य शब्दश्रवणादपरोक्षविद्याऽपि किं न स्यादित्याह—**तर्हीति** ॥ द्वितीयमनुवदति—**अथेति** ॥ किं सन्तानविधिः साक्षात् साक्षात्कारं प्रसूते ? उत परम्परया ? नाद्य इत्याह—**नानुपलब्धेरिति** ॥

### ऋजुविवरणम्

**पदार्थस्येति** ॥ ननु पाठमात्रेण प्रतीतिमात्रं निश्चायकमुत्पद्यते, नच तेन प्रयोजनमस्ति; अतो निश्चितं ज्ञानमनन्यलभ्यं वा विधीयत इत्याशङ्क्याह **तदेव च विचारेणेति** ॥ ननु ज्ञानस्यान्यतस्सिद्धिसंभवेऽपि विधीयत इत्याशङ्क्याह—**नचानन्यथासिद्धेति** ॥ यद्वा—शब्दस्यैव विधानमित्याशङ्क्याह—**नचान्यथासिद्धेति** ॥ "अथ शब्दजन्यस्यैव"इत्ययुक्तम्; शब्दादुत्पन्नस्य ज्ञानस्याभ्यासायोगात्, अथ शब्दसाधनाभ्यासेन तदभ्यासविधानम्, मैवम्; तस्यापि स्वाध्यायाभ्यासेनैव सिद्धेः, पौनरुक्त्यश्चास्मिन् पक्षे भवेत्; पूर्वग्रन्थ एव तस्यापि लब्धत्वादित्याशङ्क्यावतारयति—**शब्दावगते ब्रह्मणेति** ॥ "**न तस्य प्रयोजन**"मित्ययुक्तम्, मोक्षफलस्य विद्यमानत्वादित्याशङ्क्यावतारयति—**तत्र स्मृतिसन्तानविधेरिति** ॥ "**दृष्टाधिकारः**" इत्यत्राधिकारशब्देन फलमभिधीयते, अधिक्रियतेऽनेनेति व्युत्पत्त्या, यद्वा—अधि उपरि, करणं यस्मिन् फले सति भवति सोऽधिकार इति "**मा भूच्छाब्दज्ञानादि**"त्ययुक्तो ग्रन्थः; पूर्वमेव तत्पक्षहानेन पक्षान्तरस्य प्रदर्शितत्वादिदानीं मा भूदिति वक्तुमयुक्तत्वात्, नापि शाब्दज्ञानाभ्यासपक्षः पूर्वमुक्तः, तावदुक्तं वा निर्देष्टव्यम्, ननु व्यवहितमेकदेशमात्रम्, तज्जन्मनो ज्ञानान्तरादि"ति तु पुनरुक्तम्; तज्जन्यस्मृतिसन्तानस्यापरोक्षज्ञानहेतुत्वस्य निरस्तत्वादित्याशङ्क्यावतारयति—

## पञ्चपादिका

**न हि लैङ्गिकोऽर्थो लिङ्गजन्मनैव ज्ञानेन सहस्रशोऽप्यभ्यस्यमानेन साक्षात्क्रियते । मा भूत् शाब्दज्ञानादेवाभ्यस्यमानात्साक्षाद्भावः, तज्जन्मनो ज्ञानान्तराद्भविष्यति, नेत्थम्भावे प्रमाणमस्ति ॥**

**अस्तु तर्हि शब्दात् प्रतिपन्नस्य यथाप्रतिपत्ति ध्यानं नाम मनोव्यापारो विधीयत इति, किमर्थं तस्य विधानम् ? ध्येयसाक्षात्काराय चेत्, न तस्य सम्भवः । न हि परोक्षं ध्यायमानं साक्षाद्भावमापद्यमानं दृष्टम् । ननु दृष्टं परोक्षमपि ध्यायमानं साक्षाद्भावमापन्नं कामाद्युपप्लवे, मैवम्; न तद् ध्यायमानम्, अपि त्वविद्यात्मकम्, अन्यथा बाधो न भवेत् ॥**

## पञ्चपादिकाविवरणम्

विरोधमेव दर्शयति—**नहि लैङ्गिकोऽर्थ इति** ॥ शाब्दज्ञानस्मृतिसन्तानान्नापरोक्षज्ञानमात्रमुत्पद्यते, किं तु तज्जननसमर्थं विज्ञानान्तरमुत्पद्यते । तद्विज्ञानफलाय स्मृतिसन्तानो विधीयत इति शङ्कते—**मा भूच्छाब्दज्ञानादेवेति** । तदप्यपरोक्षफलं विज्ञानं नादृष्टतया विधिफलम्; प्रमाणाधीनत्वादवगमस्य, नापि दृष्टतया; स्मृतिसन्तानस्य प्रमाणत्वाभावात्, नापि तद्विधि(विज्ञान)ज्ञानफलत्वे प्रमाणमस्तीत्याह—**नेत्थम्भावे प्रमाणमस्तीति** ॥ मा भूत् स्मृतिसन्तानविधिः, शब्दावगते ब्रह्मणि ध्यानं विधीयते । ननु—को विशेषः स्मृतिसन्तानाद् ध्यानस्य ? तत्र स्मृतिसन्तानो नाम प्रमाणावगते वस्तुनि तत एव प्रमाणात्सजातीयप्रत्ययप्रवाहो वस्तुतत्त्वविषयः । ध्यानं नाम वस्तुतत्त्वमनपेक्ष्यारोपितविषयतयाऽपि मनःसंकल्पप्रवाहः, स विधेय इत्याह—**अस्तु तर्हि शब्दात् प्रतिपन्नस्येति** । ननु—तस्याप्यदृष्टं दृष्टं वा प्रयोजनं वक्तव्यम् । न तावददृष्टम्; नैयोगिकत्वेन स्वर्गादिवदनित्यत्वप्रसङ्गात्, नापि दृष्टं दृश्यत इत्याक्षिपति—**किमर्थमिति** । ननु ध्येयसाक्षात्करणाय तदपि नादृष्टं फलम्; प्रमाणजन्यत्वादर्थानुभवस्य, दृष्टं फलं चेत्, न; अनुपलब्धिविरोधादित्याह—**न तस्य सम्भव इत्यादि** ॥ ननु—ध्यानाभ्यासप्रचयसामर्थ्याद्विनष्टपुत्राद्यापरोक्ष्यं दृश्यत इति चोदयति—**ननु दृष्टमिति** । न हि विनष्टपुत्रादीनामिदानीमविद्यमानत्वात् तदापरोक्ष्यं सम्भवति, किंतु यत्पुरोदेशे पुत्राद्यवभासते, तद् बाध्यमानत्वादविद्यात्मकम्, अतो न वस्त्वापरोक्ष्यमिति परिहरति—**मैवम्; न तद् ध्यायमानमिति** ॥ ननु—ब्रह्मात्मनि ध्यायमाने ध्यानप्रकर्षाद्

## तत्त्वदीपनम्

परोक्षज्ञानाभ्यासादपरोक्षज्ञानजन्म नोपलब्धमित्युक्तमयुक्तम्; तत्रार्थस्य परोक्षत्वादपरोक्षत्वानुपपत्तेः, अत्र तु ब्रह्मणोऽपरोक्षत्वादपरोक्षज्ञानं स्यादिति चेत्, मैवम्; अपरोक्षवस्तुन्यपि परोक्षज्ञानाभ्यासादपरोक्षप्रथाया अदृष्टत्वादित्यभिसन्धिः । द्वितीयमुत्थापयति—**शाब्दज्ञानेति** ॥ साक्षात्कारफलकं विज्ञानं किमदृष्टद्वारा जायते ? उत दृष्टद्वारा ? नाद्य इत्याह—**तदपीति** ॥ अपरोक्षज्ञानं फलं यस्य, तत्तथोक्तम् । द्वितीयं दूषयति ॥ **नापि दृष्टतयेति** ॥ साक्षात्कारफलकज्ञानान्तरजनकोऽभ्यास इत्येतच्च विमानमित्याह—**नापीति** ॥ भावनात्मिकायां प्रतिपत्तौ विधिरित्यत्रैव विशेषं शङ्कते—**मा भूदिति** ॥ स्मृतिसन्तान-ध्यानयोर्विशेषाभावान्न शङ्कोत्थितिरित्याह—**ननु को विशेष इति** । विशेषाभावोऽसिद्ध इत्याह—**तत्र स्मृतिसंतान इति** । प्रमेयतोऽपि भेदमाह—**वस्तुतत्त्वविषय इति** ॥ **"किमर्थमि"**त्यत्र किंशब्दस्याक्षेपार्थत्वमाह—**ननु तस्यापीति** ॥ आद्यं निरस्यति—**न तावदिति** ॥ द्वितीये किं साक्षात्करणम् ? उतान्यत् ? न तावद् द्वितीय इत्याह—**नापि दृष्टमिति** ॥ आद्यमुत्थापयति—**ननु ध्येयेति** ॥ तदपि किमदृष्टम् ? अत दृष्टम् ? इति विकल्प्य क्रमेण दूषयति—**तदपि नेत्यादिना** ॥ ध्यानस्य साक्षात्कारहेतुत्वमदृष्टमित्याशङ्क्य, ध्यानोत्कर्षस्य तद् दृष्टमित्याह—**ननु ध्यानेति** ॥ ध्यानमेवाभ्यासो ध्यानाभ्यासः, तस्य प्रचयसामर्थ्यादित्यर्थः । ध्यायमानस्य नापरोक्ष्यमित्युक्तम्, तत्र हेतुमाह—**विनष्टेति** ॥ तर्ह्यनुभवविरोध इति शङ्कते—**किन्त्विति** ॥ अनुभवोऽन्यविषय इत्याह—**यत्पुरोदेश इति** ॥ अविद्यामयस्यापि ध्यानादेवापरोक्ष्यसिद्धेः कथं ध्यानस्यातत्साधनत्वमित्याशङ्क्याह—**अत इति** ॥ ध्यानोत्थस्याप्यपरोक्षप्रत्ययस्य संवादकप्रमाणानुग्रहात्प्रामाण्यसिद्धिरिति शङ्कते—**ननु ब्रह्मात्मनीति** ॥ संवादाद्यथार्थत्वेन दृष्टान्त-

## ऋजुविवरणम्

**शाब्दज्ञानस्मृतिसन्तानादिति** । शाब्दज्ञाने यत्स्मृतिसन्तानम्, तस्मादित्यर्थः । अनेन शाब्दज्ञानादभ्यस्यमानादिति सामानाधिकरण्यं न भवति, किन्तु शाब्दज्ञानहेतुको योऽभ्यासस्तस्मादिति व्याख्यातम् । यद्वा—शाब्दज्ञानात्स्मृतिसन्तानादिति द्वन्द्वो विवक्षितः, तस्मिन् पक्षे टीकाग्रन्थ एवं व्याख्यातव्यः शाब्दज्ञानादेव, नापरोक्षानुभवः, नाभ्यस्यमानादिति ॥ ननु विधिसामर्थ्याद् लभ्ये फले तत्सामर्थ्यदेवोपपत्तिरित्याशङ्क्याह—**नापि तद्विधिविज्ञानफलत्व इति** ॥

### पञ्चपादिका

ननु "द्रष्टव्यः" इति दर्शनमनूद्य "निदिध्यासितव्यः" इति ध्यानं दर्शनफलं विधीयते, उक्तमेतद् न दृष्टाधिकारो विधिरसम्भावितदृष्टफलो भवतीति। न हि ध्यानं ध्येयसाक्षाद्भावहेतुः क्वचिद् दृष्टम्। अथापि भवतु नाम ध्यानाद् ध्येयसाक्षाद्भावो, ध्येयस्य तथात्वे किं प्रमाणम्? शब्दस्तावत्साक्षात्करणोपायोपासनविधाने पर्यवसितो न तत्सद्भावे, सत्यम्; तथाऽपि तत्त्वं सिध्यति वक्ष्यमाणेन देवताविग्रहवत्त्वन्यायेन। विषम उपन्यासः, तत्र हि न तथात्वे साधकं बाधकं

### पञ्चपादिकाविवरणम्

ध्येयापरोक्ष्यं तावत् पुत्रादिवत्सिध्यति, ध्येयस्य च वस्तुत्वं शब्दप्रमाणात्सिध्यति, अतो वस्त्वापरोक्ष्यं ध्यानात्फलिष्यति, यथा स्वप्ने चतुष्पथे हस्तिज्ञानमुत्पन्नं तथाभूतजागरणसंवादेन सम्यग् ज्ञानं भवतीति, नैतत्सारम्; अपरोक्षज्ञानस्य शब्दप्रमाणसामर्थ्यात्तथाभूतज्ञानत्वेन संवादात्प्रामाण्यं स्यात्। नच स्वप्नज्ञानं प्रमाणम्; अविद्यात्मकत्वात्, संवादस्तु सादृश्यभ्रमादिति। न हि चक्षुरादिप्रवृत्तिमन्तरेण वस्तुदर्शनं सम्भवति॥

ननु—विध्युद्देशसामर्थ्यादिव ध्येयसाक्षात्करणं ध्यानफलं गम्यते, किमन्वय-व्यतिरेकाभ्यामित्याह—**ननु द्रष्टव्य इति**॥ तत्रापि किं नैयोगिकं फलम्? आहोस्विद् दृष्टमिति? नैयोगिकत्वे स्वर्गादिवदुपचयापचयात्मको मोक्षः स्यात्, दृष्टं फलं चेत्, तदाह—**उक्तमेतदिति**॥ विधेयसद्भावमङ्गीकृत्य शब्दानां ध्यानविधिपरत्वे ब्रह्मात्मैकत्वं न सिध्यतीत्याह—**अथापि भवतु नाम ध्यानादिति**॥ ननु—शब्दो ब्रह्मात्मैकत्वं प्रतिपादयतीति, नेत्याह—**शब्दस्तावदिति**॥ ननु—ज्ञानविधिवाक्यव्यतिरिक्तानामवान्तरवाक्यानां ब्रह्मणि समन्वयाद्वस्तुसिद्धिरित्याह—**सत्यं तथाऽपि तत्त्वं सिध्यतीति**॥ परिहरति—**विषम उपन्यास इति**॥ तस्माद्विधिपरत्वे नास्ति वस्तुसिद्धिरिति सर्वविधिभेदेष्वतिदिशति-

### तत्त्वदीपनम्

माह—**यथेति**॥ अपसिद्धान्तप्रसङ्गान्नैतच्चोद्यमित्याह—**नैतत्सारमिति**। **तथाभूतज्ञानत्व इति**॥ यथार्थज्ञानत्व इति यावत्। नच संवादाधीनं प्रामाण्यम्; अनवस्थाप्रसक्तेरित्यर्थः। दृष्टान्तोऽप्यसंप्रतिपन्न इत्याह—**नचेति**। कथं तर्हि संवादः? इत्याशङ्क्याह—**संवादस्त्विति**॥ उचितसामग्रीशून्यत्वादप्रामाण्यमित्याह—**न हीति**॥

ध्यानस्य साक्षात्कारः फलमित्येतत्पुरस्तादेव निरस्तम्, किमिति पुनस्तदुत्थितिः? इत्याशङ्क्य तात्पर्य-माह—**ननु विधीति**॥ विधिरुद्दिश्यते यस्मिन्वाक्ये; तद्विध्युद्देशम्; तत्सामर्थ्यादित्यर्थः। "आत्मा वा अरे द्रष्टव्यः" इति साक्षात्कारमनूद्य निदिध्यासनं विधीयते। ततश्च ध्यानस्य साक्षात्कारफलत्वं युक्तमिति शङ्कार्थः॥ ध्यानस्य दृष्ट-फलताया अनुक्तत्वात्तन्निरसनमनुचितमिवेत्याशङ्क्य, विकल्पोत्तरत्वेन व्याचष्टे—**तत्रापीति**॥ साक्षात्कारस्य नियोग-साध्यतयोपचितापचितरूपत्वात्तत्साध्यस्यापि तादृक्त्वं स्यादित्याह—**नैयोगिकत्व इति**॥ भवतु नाम, एतावतैवालम्, किमथापित्यनेनेत्याशङ्क्यः विधेयाङ्गीकारस्तेन निर्दिश्यते, साक्षात्कारफलं त्वनेनेति विभागमभिसन्धायाह—**विधेयेति**॥ किं शब्दः प्रमाणम्? आहोस्विदन्यः? इति किंशब्दार्थः। आद्यमुत्थापयति—**ननु शब्द इति**॥ किं शब्दस्य महातात्पर्यम्? उतावान्तरतात्पर्यम्? नाद्य इत्याह—**नेत्याहेति**॥ न्यायमात्रस्य प्रमितयहेतुत्वात् कथं "तथापि तत्त्वं सिद्धचती"त्युक्त-मित्याशङ्क्य, विकल्पान्तरपरतयाऽवतारयति—**ननु ज्ञानविधीति**॥ प्रत्यक्षादीनामाभासत्वान्न तद्विरोध इति परिहार-स्याभासत्वमाशङ्क्याह—**परिहरतीति**। बलवत्प्रमाणेन बाधमन्तरेण न प्रत्यक्षादेराभासत्वम्, नचाम्नायस्य बाधकत्वम्; तस्य विधिपरत्वादित्यर्थः॥ ननु "श्रोतव्यः" इत्यादेर्विधिपरत्वेऽपि वस्तुतत्त्वसिद्धिराश्रिता, तत्राह—**तस्मादिति**॥ "सत्यं ज्ञान"मित्यादीनां ब्रह्मणि तात्पर्यात् तत्रैव "निदिध्यासितव्यः" इत्यादेरपि तात्पर्यम्, विधौ त्ववान्तरतात्पर्यमिति न विधिपराद् वाक्याद् वस्तुसिद्धिरित्यर्थः। ध्यानविधिपक्षोक्तदूषणस्यातिदेशः कृतः "पूर्वोक्तपक्षेष्वि"ति, स नोपपद्यते; पक्षद्वयस्यैवोक्तत्वात्, पक्षेष्विति बहुवचनानुपपत्तेरित्याशङ्क्य, तयोरवान्तरभेदाभिप्रायेण बहुवचनमित्याह—**सर्वेति**॥

### ऋजुविवरणम्

"**किमन्वय-व्यतिरेकाभ्यामि**"त्यनेन यद्यप्यन्यत्र ध्येयसाक्षात्कारहेतुत्वं न दृष्टम्; तथापीह भविष्यतीत्युक्तम युक्तम्; "**नहि दृष्टाधिकारः**" इत्ययुक्तः परिहारः; दृष्टफलत्वेन चोद्याकरणादित्याशङ्क्य विकल्प्यावतारयति—**तत्रापि किं नैयोगिकमिति**॥ "**तथाऽपि तत्त्वं सिध्यती**"ति न युक्तम्; नहयेकेन विधिवाक्यगतेन शब्देन तत्त्वसिद्धौ देवताधिकरणे कश्चिन्न्यायोऽप्युदाहृतोऽस्ति। नापि ध्येयनिर्देशचरितार्थस्य तथाविधवस्त्वग्राहकत्वमित्याशङ्क्यावतारयति—**ननु ज्ञानविधिवाक्यव्यतिरिक्तानामिति**॥ त्रिविधमन्यपरं वाक्यम्; प्रमाणान्तरविरुद्धार्थम्, गृहीतार्थम्, अनधिगतार्थं च।

**पञ्चपादिका**

वेति प्रतीतिशरणैस्तथाऽभ्युपेयते; न तथेह सर्वस्यात्मत्वे; प्रत्यक्षादिविरोधात्, आरोपितरूपेणापि ध्यानोपपत्तेः। पूर्वोक्तेष्वपि ज्ञानविधिपक्षेष्वनयैव दिशा वस्तुतथात्वसिद्धिर्निराकार्या ॥

यत्पुनः कैश्चिदुच्यते—शाब्दज्ञानादन्यदेव ज्ञानान्तरमलौकिकं वेदान्तेषु कर्तव्यत्वेन विधीयत इति । तत्र वदामः—तत्पुनः किं साधनं किं कर्म चेति वक्तव्यम् । न ह्यनवगतकर्मकारकं ज्ञानं विधातुं शक्यम्, अवगते च तस्मिन्विधानानर्थक्यम् । साधनमपि न विहितम्; तेन विना साकाङ्क्षं वचनमनर्थकं भवेत् ॥ "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ती"त्यादिना वचनेन साधनं वेदानुवचनादि विहितमेवेति चेत्, प्रमाणान्तरस्य तर्हि प्रमाणं शब्दो नात्मतत्वस्य, नैतदुपपद्यते; कार्यगम्यं हि प्रामाण्यं न विधिगम्यम् ।

**पञ्चपादिकाविवरणम्**

पूर्वोक्तेष्वपीति ॥

स्मृतिसन्तान-ध्यानयोर्नियोगो निराकृतः, इदानीं तृतीयज्ञानेऽपरोक्षफले नियोगमाशङ्कते—**यत्पुनः कैश्चिदुच्यत इति** ॥ तत्र वदामः—विधीयमानज्ञानस्य प्रत्यक्षानुमान-शब्दजन्यत्वाभावाद् दर्शपूर्णमासवदलौकिककरणेति-कर्तव्यताविषयविधानैः सह दर्शनं विधेयम्, न तद् दृश्यत इत्याह—**तत्पुनः किंसाधनमित्यादिना** ॥ शङ्कते—**तमेतं वेदानुवचनेनेति** ॥ श्रवण-मनन-निदिध्यासनैः करणैर्वेदानुवचन-यज्ञ-दान-तपोऽनशन-शम-दमाद्यनुगृहीतैर्मोक्षकामो ब्रह्मण्य-परोक्षफलं ज्ञानं कुर्यादित्यर्थः। परिहरति—**प्रमाणान्तरस्य तर्हि प्रमाणमिति** ॥ अयमर्थः—सेतिकर्तव्यं साधिकारं च ब्रह्मण्यपरोक्षफलं विज्ञानं प्रमाणान्तरम् । तत् कर्तव्यतया शब्दैः प्रमीयते चेत्, न ब्रह्मणि प्रमाणं शब्दः, किंतु ब्रह्मप्रमाणे प्रमाणम् । ततश्च कल्पनालाघवाद् ब्रह्मण्येव प्रामाण्यं युक्तमिति । ननु—विधिविषयमन्तरेण ब्रह्ममात्रे प्रामाण्यं न युक्तमिति, नेत्याह—**कार्यगम्यमिति** ॥ गृहीतसम्बन्धस्य वेदान्तवाक्येभ्यो ब्रह्मणि निश्चितप्रमितिकार्यगम्यं वेदान्त-

**तत्त्वदीपनम्**

"यत्पुनरि"त्यत्र शाब्दज्ञानादन्यद् ज्ञानान्तरं विधीयत इत्युक्तं, तन्न संभवति; अस्य चोद्यस्य निरस्तत्वा-दित्याशङ्क्याह—**स्मृतिसंतानेति** । अपरोक्षं च तत्फलं चेति विग्रहः। ज्ञानस्य साधन-कर्मणोः प्रसिद्धत्वात् कथं चोद्य-मित्याशङ्क्य तात्पर्यमाह—**तत्रेति** ॥ "तमेतमि"त्यादेः पूर्वग्रन्थशेषत्वं निरस्यति—**शङ्कत इति** ॥ जात्मज्ञानस्य शब्दैक-करणत्वात् कथं वेदानुवचनादिकरणत्वमित्याशङ्क्याह—**श्रवणेति** ॥ "प्रमाणान्तरस्ये"त्यत्र किं तत्प्रमाणान्तरं निर्दिष्टम् ? कथं वा शब्दस्य तत्र प्रामाण्यप्राप्तिः ? इत्याशङ्क्याह—**अयमर्थ इति** ॥ निर्विषयप्रमाऽसंभवाद् ब्रह्म-विशेषितप्रमाणे प्रामाण्यं वक्तव्यम्, तथाच कथं ब्रह्मासिद्धिरित्याशङ्क्याह—**ततश्चेति** ॥ प्रामाणिकत्वकल्पना न दोषायेति शङ्कते—**ननु विधिविषयमिति** ॥ भावसाधनो निर्देशः। यद् येन प्रमीयते, तत्तत्र प्रमाणम्; नियोगस्य चात्रानुपलभ्य-मानत्वान्न तत्र प्रामाण्यमिति परिहरति—**नेत्याहेति** ॥

अङ्गुल्यग्रादिवाक्येऽप्यर्थप्रतीतिकार्यं दृष्टम्, नच तस्य प्रमाणत्वम्, तद्वदत्रापीत्यत आह—**गृहीतसंबन्ध-**

**ऋजुविवरणम्**

तत्राद्ययोः प्रामाण्यं नास्त्येव । अत्रापि विरोधादप्रामाण्यमित्युक्तम्, **"शाब्दज्ञानादन्यदि"**ति चोद्यं पुनरुक्तम्; पूर्वमपि तदन्यस्य विधानमिति चोद्यस्य कृतत्वाद् निराकृतत्वाच्चेत्याशङ्क्यावतारयति—**स्मृतिसन्तान-ध्यानयोरिति** ॥ ननु—ज्ञानस्य साधनादि प्रसिद्धमेव, किं तद्विधानेनेत्याशङ्क्यावतारयति—**विधीयमानज्ञानस्येति** ॥ ननु "विविदिषन्ती"ति वाक्ये भवदभिमतज्ञाने साधनविधानं न भवति, किन्त्विच्छायाम्, ज्ञानस्यैव विवक्षितत्वे वा वेदानुवचनादिजन्यस्य न प्रमाणत्वमपरोक्षफलत्वं वा लभ्यते, नापि कारणादिविभागोऽधिकारी च लभ्यते, नह्येतैर्विना लौकिकसाधनमात्रेण विधिः, तत् कथं विधानमित्याशङ्क्य व्याचष्टे—**श्रवण-मनन-निदिध्यासनैरिति** ॥ प्रमाणान्तरस्य तर्हि प्रमाणमित्य"-युक्तम्; किमत्र प्रमाणम् ? कथं तत्र प्रामाण्यम् ? नहि शब्दः प्रमाणान्तरास्तित्वं बोधयति, नात्मतत्त्वस्येत्यदूषणम्; आत्मनः प्रमाणान्तरसिद्धत्वेन तदप्रामाण्येऽनिष्टाभावात्, "नैतदुपपद्यते" इत्यप्ययुक्तम्; अनुपपत्तिकारणाभावात् आत्म-शब्देन ब्रह्म विवक्षितम्, तथापि नानुपपत्तिः; विध्यपेक्षितत्वे ब्रह्मण्यपि प्रामाण्यसिद्धिरित्याशङ्क्य व्याचष्टे—**अयमर्थः** ॥ **सेतिकर्तव्यमिति** ॥ कार्यगम्यं प्रामाण्यं न विधिगम्यमिति विरुद्धमभिहितम्; कार्यगम्यते विधिगम्यत्वं सिद्धमेव; तयोर-भेदादित्याशङ्क्य व्याचष्टे—**गृहीतसंबन्धस्य वेदान्तवाक्येभ्य इति** ॥ कथमर्थप्रमितिलक्षणकार्यगम्यत्वं प्रामाण्यस्य, न

### पञ्चपादिका

**तदुक्तम्—'गुणद्वाप्यभिधानं स्यात्सम्बन्धस्याशास्त्रहेतुत्वादि'ति । तदेवमयुक्तमेतत्—विधिसमन्वये शास्त्र-प्रमाणत्वं ब्रह्मणः ॥**

### पञ्चपादिकाविवरणम्

प्रमाण्यम् । तत्र प्रमितिजननाद् विषयस्य विधेयत्व(विधि)गम्ये प्रामाण्येऽग्निहोत्रवाक्यं दर्श-पूर्णमासविधिनिष्ठं किं न स्यात् ? तत्र शब्दसामर्थ्याभावात्प्रमित्यनुदयादिति चेत्, इहापि "सत्यं ज्ञानमनन्तं ब्रह्म" "तत्त्वमसी"त्युक्ते न विधौ सामर्थ्यात्प्रमितिर्वा गम्यत इति ब्रह्मण्येव प्रामाण्यं युक्तमिति । ननु—लौकिकं प्रामाण्यं कार्यगम्यमेव, शास्त्रीयं तु विधिगम्यमिति, नेत्याह—**तदुक्तमिति** ॥ अत्र लौकिकानां शब्दानां मुख्यार्थाभिधानमुखेन वैदिकार्थप्रतिपादनासम्भवे किं वेदे पृथक्सम्बन्धं गृह्णीमः, किं वा वृत्त्यन्तरद्वारेणापि लौकिकादेवसम्बन्धादर्थं प्रतिपद्यामह इति विशये लौकिकमेव प्रतिपत्तुं युक्तम्; अलौकिककल्पनादित्याह—**गुणाद्वाप्यभिधानं स्यादिति** । एवं लौकिकमेव प्रामाण्यं युक्तम्; अलौकिक-कल्पनादित्यर्थः । तस्मान्न दृष्टफलतया नियोगपर्यवसितानि वेदान्तवाक्यानि ॥

### तत्त्वदीपनम्

**स्येति** ॥ अबाधितानधिगतासंदिग्धप्रमितिर्निश्चितप्रमितिशब्दार्थः ॥ विधिनिष्ठत्वस्य प्रामाण्यप्रयोजकत्वे दण्डमाह—**विषयस्येति** ॥ **विधेयत्वगम्य इति** ॥ विषयस्य विधेयत्वेन हेतुना प्रामाण्ये प्रतीयमान इत्यर्थः । **दर्श-पौर्णमासविधिः**= दर्शपौर्णमासनियोग इत्यर्थः । येन वाक्येन यो नियोगः प्रतीयते, तत्तत्र प्रमाणम्, अग्निहोत्रवाक्ये दर्श-पौर्णमासनियोगा-प्रतीतेर्न तत्र प्रामाण्यमिति शङ्कते—**तत्रेति** ॥ तुल्यमुत्तरमित्याह—**इहापीति** ॥ निरस्तमपि चोद्यं प्रकारान्तरेण निराकर्तुं तदनुवदति—**ननु लौकिकमिति** । प्रत्यक्षादिगतमित्यर्थः । **शास्त्रीयमिति** ॥ शास्त्रनिष्ठमित्यर्थः । सूत्रविरोधान्नायं विभागो युज्यत इत्याह—**नेत्याहेति** ॥ किंपरमिदं सूत्रमिति न ज्ञायते ? इत्याशङ्क्यार्थमाह—**अत्रेति** । **लौकिकानामिति** । प्रस्तरादिशब्दानामित्यर्थः । लौकिकानां शब्दानां मुख्यवृत्त्या वेदेऽर्थाभिधानानुपपत्तौ गुणादमुख्यवृत्त्याऽप्यर्थाभिधानं युक्तम्, तत्र हेतुमाह—**संबन्धस्येति** ॥ लोकप्रतिपन्नसंबन्धविलक्षणसंबन्धस्याशास्त्रहेतुत्वात् शास्त्रार्थनिर्णयाहेतुत्वादित्यर्थः । फलितमाह—**एवमिति** । टीकापेक्षितमवान्तरप्रमेयनिराकरणोपसंहरणं दर्शयति —**तस्मादिति** । **दृष्टफलतयेति** । साक्षात्कार-लक्षणदृष्टफलत्वेनेत्यर्थः ॥

### ऋजुविवरणम्

विधिगम्यत्वमित्याशङ्क्यातिप्रसङ्गमाह—**विषयस्य विधिगम्ये प्रामाण्य इति** ॥ प्रमितिमात्रस्य प्रयोजकत्वसंभवान्न विशिष्टस्य प्रयोजकत्वमिति परिहाराभिप्रायः ॥

**ननु** लोकप्रसिद्धसंबन्धेनैव वेदेऽप्यर्थप्रतिपत्तिः, ननु संबन्धान्तरं वेदे कल्पयितुं युक्तमिति "गुणाद्वे"ति सूत्रेणोक्तम्, तत्किमर्थमत्रोदाहृतम् ? तत्र प्रामाण्यस्य लौकिकत्वानुक्तेरित्याशङ्क्याह—**एवं लौकिकमेव प्रामाणाण्यमिति** ॥ "तस्मान्न दृष्टफलतये"त्युपसंहारः कृतः; अदृष्टफलत्वस्योत्तरत्र निराकरिष्यमाणत्वात् । उक्तं शास्त्रप्रमाणत्वं ब्रह्मणो नोपपद्यते —

कार्यान्वितार्थता येन पदानामिह गम्यते । प्रयोग-प्रतिपत्तिभ्यां बालव्युत्पत्तिदर्शनात् ॥
वृद्धाः प्रवर्तकं किञ्चिद्विवक्षित्वा प्रयुञ्जते । तज्ज्ञानेन ततः श्रोता शब्दात्तं प्रतिपद्यते ॥
तज्ज्ञानेन प्रवृत्तं तमुपलभ्य तु बालकः । प्रवर्तकेन संबन्धमन्वय-व्यतिरेकतः ॥
प्रतिपद्य ततस्तच्च कार्यमेवेति बुद्ध्यते । स्वकीयव्यवहारे हि कार्यं येन प्रवर्तकम् ॥
कार्यसंसृष्ट एवार्थे पदानां शक्तिकल्पना । आवापोद्धारभेदेन पदानां च पृथक् पृथक् ॥
स्वार्थे कार्यान्विते शक्तिमात्रज्ञानानुसारतः । बुद्ध्यते ननु बालस्य नैव कार्यं प्रवर्तकम् ॥
विमतिर्बहुधा दृष्टा प्रवर्तकनिबन्धना । भावार्थ-फल-तद्धेतुबोधानन्ये लिङादिकम् ॥
वाच्यावाच्यत्वभेदेन तद्व्यापाराभिधा तथा । प्रवर्तकत्वसामर्थ्याच्छक्तिः कार्यान्विते कथम् ॥
उच्यते फल-धात्वर्थौ नैव तावत्प्रवर्तकौ । अदृष्टेर्वर्तमानापदेशादौ च न दृश्यते ॥
फलसाधनतायां च नैव तद्धेतुता कुतः । भूतादौ व्यभिचारेण शब्दव्यापारयोस्तथा ॥
व्यवहारे स्वकीये यो हेतुरध्यवसीयते । शाब्देऽपि हेतुता तस्य शब्दव्यापारयोः कथम् ॥

## ऋजुविवरणम्

शब्दश्रवणमात्रेण सर्वेषां च प्रवर्तनम् । भवेत्, तेन न तद् दृष्टं व्यापारे च न हेतुता ॥
अभिधेयत्वपक्षे च तस्यान्येनाभिधेयता । तस्याप्यन्येन तत्रैवमनवस्थानमाश्रयेत् ॥
व्यापारे तदभावश्चेदर्थे चास्तित्वधीः कथम् । व्यापारोऽपि न युज्येत शब्दे मूर्तिविवर्जिते ॥
गुणत्वाद् द्रव्यपक्षे च विभुत्वेन न संभवेत् । कार्यस्याव्यभिचारेण स्तन्यपाने प्रवर्तते ॥
तेन शाब्देऽपि तस्यैव हेतुत्वं परिकल्पितम् । एवं स्वव्यवहारेण लोके कार्यान्वितेऽभिधा ।
तेन वेदेऽपि लिङ्वाच्यं कार्यमेव प्रपद्यते । अभिधेयं लिङादीनां कार्यं स्यादितरान्वितम् ॥
कामवाक्ये लिङादीनामादौ शक्तिः प्रकल्प्यते । स्वर्गकामपदेनेह नियोज्यस्तु समर्प्यते ॥
कार्यबोद्धव्यरूपोऽयं षष्ठाद्ये निपुणं स्थितः । काम्यत्वात्साध्यरूपोऽयं स्वर्गः स्यात्तद्विशेषणम् ॥
तद्विशिष्टस्य तस्यापि तस्मिन् कार्ये नियोज्य तम् । ईप्सितोपायता यस्य तत्रैवास्यान्वयो भवेत् ॥
उपायत्वं क्रियाया न क्षणभङ्गस्वरूपतः । आमुष्मिकत्वं स्वर्गस्य षष्ठाद्येनैव सिद्धयति ॥
क्रियातो भिन्नमेवातस्तन्न मानान्तरान्वितम् । तेनापूर्वं तदित्युक्तं कार्यत्वेन प्रतीयते ॥
नियोग इति तैरुक्तं कार्यत्वेन मितं यतः । नियुङ्क्ते स्वात्मनीत्येवं कार्यस्येह नियोगता ॥
तदुक्तम्–क्रियादिभिन्नं यत्कार्यं वेद्यं मानान्तरैर्न तत् । अतो मानान्तरापूर्वमपूर्वमभिधीयते ॥
कार्यत्वेन नियोज्यं च स्वात्मनि प्रेरयन्नसौ । नियोग इति मीमांसानिष्णातैरभिधीयते ॥
इति साध्यप्रधानत्वं लक्षणं तस्य वर्ण्यते । ननु स्वामिफलोत्पादादपूर्वस्य प्रधानता ॥
न युज्यते तथात्वे च प्राधान्यं नैव लक्षणम् । उच्यते स्वार्थसिद्धयर्थं नियोज्यस्येप्सितं फलम् ॥
कुरुते, तत्प्रधानत्वं न हि तेन प्रहीयते । स्वामी दासस्य संरक्षां नित्यमेव करोति सः ॥
न शेषः, स्वार्थमेवास्य संविधानं करोत्ययम् । वेदवाक्यानुसारेण लोकव्युत्पत्तिरेव तु ॥
प्रसृताऽपूर्वपर्यन्तं विमर्शाद्योग्यताबलात्
तदुक्तम्–व्युत्पत्तिरपि कार्यार्थे व्यवहारानुसारिणी । किन्तु निर्धारणामात्रं वेदवाक्यविमर्शजम् ॥
वाक्यशेषानुसारेण यवाद्यर्थस्य निर्णयः । नियोज्यवाचकेनेह स्वर्गकामपदेन तु ॥
अपूर्वं कार्यमेवाह समभिव्याहृतो हि लिङ् । विमृश्यैवमपूर्वं हि ज्ञात्वा वाच्यत्वनिश्चयः ॥
तर्कान्तर्गत एवायं तेनास्यानतिरेकता । यद्वाऽस्य स्मृतिकोटित्वं सापेक्षा तु स्मृतिर्भवेत् ॥
भूतानुभवसापेक्षा भाविन्यनुभवे तथा । अनुसंहितयागादिस्तद्द्वारेणैव साधनम् ॥
तन्मार्गमेवमालोच्य संक्षेपोऽयं निरूपितः । ख्यापनाय यथातत्त्वं नाज्ञाते दूषणं यतः ॥
अत्र वेदान्तसिद्धान्तसारमालोच्य यत्नतः । सिद्धे व्युत्पत्तिसिध्यर्थं प्रवर्तकविवेचनम् ॥
प्रवर्तकत्वमन्येषां यन्नेति प्रतिपादितम् । तदङ्गीकृतमेवेष्टं साधनस्य तु वर्ण्यते ॥
प्रवर्तकत्वं सर्वत्र तस्य येन प्रतीयते । प्रवर्तते कदाचिन्नो श्रेयःसाधनतां विना ॥
अध्येषणादीनां यातु तद्धीहेतुतयैव सा । यस्त्वत्र व्यभिचारोऽपि भूतेष्टादौ प्रदर्शितः ॥
अयुक्तः स यतो येन गृहीता कार्यहेतुता । तेनाप्यभिमतो वायं हेतुताधीनिबन्धना ॥
कार्यधीरभ्युपेतव्या स्वतःक्लेशकरे यतः । कार्यत्वं नोपपद्येत श्रेयःसाधनतां विना ॥
इष्टोपायधियो यद्वत्कार्यधीहेतुतोच्यते । तत्र यः परिहारः स्यात्स नोऽत्रापि भविष्यति ॥
कृत्युद्देश्यत्वमेवेह भूतादिभ्यो विशेषकृत् । इष्टसाधनताबुद्धिर्द्विविधा खलु दृश्यते ॥
भूतादिका तथाऽन्या तु कार्याकारा प्रदृश्यते । कार्याकारा च या तत्र गीयते सा प्रवर्तिका ॥
नन्विष्टोपायधीवेद्यमेवं कार्यं प्रसज्यते । इष्टोपायत्वबुद्धया तु ज्ञाप्यत्वं भवदीप्सितम् ॥
इष्टसाधनतोल्लेखात् कार्यधीहेतुतेष्यते । इष्टसाधनताज्ञाप्यं कार्यत्वं तेन गीयते ॥
यथा खल्वेकधीवेद्यजातिधीहेतुता श्रिता । व्यक्तिबुद्धेस्तथाऽत्र स्यादिष्टबुद्धेश्च हेतुता ॥
इष्टसाधनताऽप्येवं द्विप्रकारा प्रतीयते । भूताद्याकाररूपा सा कृतिसाध्यगता तथा ॥
कृतिसाध्यार्थसंयुक्ता प्रवृत्तौ हेतुरिष्यते । नेष्टसाधनतामात्रमन्यानुष्ठितकर्मणि ॥

## ऋजुविवरणम्

वृष्टचादौ मा प्रसङ्गः स्यात्प्रवृत्तेरिति वर्ण्यते । फलादौ व्यभिचारेण न कार्यं स्यात्प्रवर्तकम् ॥
कृतिसाध्यार्थसंयुक्ता श्रेयःसाधनता ननु । कृतार्था रागमुत्पाद्य प्रवृत्तौ नैव कारणम् ॥
तत्र रागस्य हेतुत्वं केवलस्योच्यतेऽथवा । साधनेनानुरक्तस्य प्रथमस्तु न युज्यते ॥
अदृष्टेः फलरागस्य साधनेनास्य हेतुता । अज्ञाते फलहेतुत्वे नैव कश्चित्प्रवर्तते ॥
साधनत्वे च विज्ञाते तदेव स्यात्प्रवर्तकम् । ननु भागीरथीस्नाने श्रेयःसाधनलक्षणे ॥
कृतिसाध्ये प्रवृत्तिर्नो रागस्ते-न प्रवर्तकः । तत्रेष्यमाणमेव स्यात्फलमत्र तदिष्यताम् ॥
स्नानसाध्ये न चेदीप्सा न स्नानं हितसाधनम् । प्रवर्तकं च यल्लोके कृतियोग्येष्टसाधनम् ॥
नन्वीप्सागोचरस्यैव साधनस्येह हेतुता । कार्यैकार्थेन संयोगोऽप्यर्थस्तेन प्रकल्पितः ॥
उच्यते सुरतारम्भे सन्तप्तस्य स्पृहा भवेत् । इन्दूदये प्रवृत्तिस्तु नैव तत्रोपजायते ॥
तेन स्यात्कृतिसाध्यार्थसमवायो विशेषणम् । ननु कार्यं ममेदं स्यादिति मत्वा प्रवर्तते ॥
कृतियोग्यत्वमात्रन्तु विषयो नास्य युज्यते । अनिष्टसाधने योग्ये कार्यता नैव दृश्यते ॥
नेष्टसाधनता कार्यबुद्धेरालम्बनं भवेत् । भूतादौ व्यभिचारेण सुखसाधनतां विना ॥
फलेऽपि कार्यताज्ञानं साधने च न दृश्यते । मण्डलोदय इत्युक्तं तेनान्यस्येह कस्यचित् ॥
स चायं कार्यरूपोऽर्थः कृतिसाध्यत्वलक्षणः । कृत्युद्देश्यत्वरूपश्च मानसज्ञानगोचरः ॥
उच्यते नेदृशी बुद्धिरभिलाषातिरेकिणी । कर्तुमिच्छैव सर्वेषां स्वसंवेद्योपजायते ॥
मनसा साक्षिमात्रेण गृह्यतेऽन्यत्ततो न हि । सिद्धचति ग्राहकाभावादुक्तं बिम्बोदये ननु ॥
चिकीर्षा नाभिलाषोऽपि तत्रान्यत्कारणं शृणु । चिकीर्षा कृतियोग्ये स्यात् साधने केवले न तु ॥
चिकीर्षा कार्यबुद्धचा स्यादिति भेदो निरूपितः । इष्टसाधनबोधेन कृत्युद्देश्यनिरूपणम् ॥
क्रियते यादृशेनेह कृतियोग्येन तेन मे । जायते कर्तुमिच्छातः कार्यं नैव निरूप्यते ॥
प्रवर्तकत्वे कार्यस्य निरस्ते सङ्गतिग्रहः । निरस्त एव कार्यस्य ग्रहणं नैव विद्यते ॥
कार्याभिधायिता लोके लिङादीनां भवेद्यदि । तथाप्यपूर्ववादित्वं वेदे तेषां कथं भवेत् ॥
ननूक्तं स्वर्गकामादिपदाद्वेदे नियोगधीः । साध्यःस्वर्गविशिष्टस्तु नियोज्यस्तत्र भङ्गिनीम् ॥
क्रियां कार्यतया ज्ञातुं कथमुत्सहते नरः । उत्पादनानुकूलत्वं फले नास्योपपद्यते ॥
यस्मिन् सति भवेत् स्वर्गः कर्म तावच्चिरङ्गतम् । तेनान्यस्यैव कार्यत्वमयोग्यत्वाद्विनाशिनः ॥
क्रियायाः साधनत्वं किमयोग्यं प्रतिपत्तितः । अथवा वस्तुतस्त्वाद्ये प्रतिबन्दिरिहोच्यते ॥
षण्णामपूर्वहेतुत्वं प्रतिपत्तिरिहोदिता । स्वर्गहेतुत्वधीरेवं नेष्यते केन हेतुना ॥
विशेषो व्यवधाने हि नानयोर्विद्यते यतः ।
तुषपक्वा भवन्तीति कथं कामेषु हेतुता । उपपादकसद्भावो नोभयत्र विशिष्यते ॥
"सर्वेभ्यः" इति वाक्येन दर्शादेः संप्रतीयते । नापूर्वहेतुता तेषां तद्धीहेतोरभावतः ॥
अत्राप्यपूर्वहेतुत्वं फलस्य परिकल्प्यते । तद्वदेवेति चेद् ब्रूयादन्योन्याश्रयता भवेत् ॥
अयोग्यत्वमपूर्वे नो शाब्द्यां बुद्धौ प्रतीयते । तस्यान्यकालता येन तदानीं न प्रतीयते ॥
स्वर्गेऽप्यस्य समानत्वाद्वैषम्यं नैव तद्भवेत् । आमुष्मिकत्वं स्वर्गस्य यतस्तेन न मीयते ॥
अर्थवादात्प्रतीयेत सहितं बोधकं यतः । यो वदेदिति तं ब्रूयादत्राप्येतत्प्रकल्प्यते ॥
यदा कर्म प्रतीयेत नाम्ना तद्भिन्नकालजम् । प्रतीयेत तथाच स्याद्भिन्नकालीनसाध्यता ॥
एवं साधनता हेया षण्णां व्यवहितेऽपि वा । एष्टव्या साधनत्वे धीः स्वर्गेऽप्येवं भविष्यति ॥
अर्थवादाच्च नाम्नः स्याद्विध्युद्देशेऽन्तरङ्गता । अयोग्ये त्वप्रतीतिश्चेत्कार्यं नैव प्रतीयते ॥
प्रयत्नव्याप्यता साक्षाद्येन नास्ति नचान्यथा । साध्यत्वं तस्य वक्तुं हि शक्यं स्यादप्रतीतितः ॥
अयोग्येऽपि प्रतीतिश्चेन्निर्वाहापेक्षया यदि । अन्योन्याश्रयमेव स्यात्पूर्वधीहेत्वभावतः ॥

**पञ्चपादिकाविवरणम्**

ननु कोऽयं नियोगो नाम ? ननु आचार्यनियोग इत्यादौ प्रसिद्धः, सत्यम्; तत्रोत्कृष्टस्य पुरुषस्यावरपुरुषप्रेरणात्मकोऽभिप्रायभेदो नियोगः; नासावपौरुषेये वेदे बालस्य प्रत्यक्षादिव्यवहारे च संभवति। ननु कार्यबुद्धिगम्यं वस्तु नियोग इत्याख्यायते, प्रवर्तकत्वसामान्यादिति, किमिदं कार्यं नाम ? यदि कृतियोग्यतामात्रम्, न ततः प्रवृत्तिः; प्राग-

**तत्त्वदीपनम्**

नियोगस्वरूपानिरूपणादपि न तत्पर्यवसितत्वं वेदान्तानामित्याह—**ननु कोऽयमिति**। स्वरूप-प्रमाणयोरनिरूपणादित्यर्थः॥ लोकप्रसिद्धत्वान्न तत्स्वरूपं निराकार्यमित्याह—**नन्वाचार्येति**॥ प्रसिद्धिमङ्गीकरोति—**सत्यमिति**॥ कथं तर्हि तदनिरूपणमित्याशङ्क्य, तस्य वैदिकलिङाद्यर्थत्वासंभवं वक्तुं लौकिकनियोगस्वरूपमाह—**तत्रेति**। ततः किमिति ? अत आह—**नासाविति**। असंभवे हेतुमाह—**अपौरुषेय इति**। तर्ह्यन्य एव वेदे लिङाद्यर्थ इत्याशङ्क्याभिप्रायभेदस्य लोकेऽपि न प्रवर्तकत्वमित्याह—**बालस्येति**॥ अभिप्रायभेदस्य व्यभिचारित्वान्न प्रवर्तकत्वम्, नापि लिङाद्यर्थत्वमित्युक्तम्, तत्रान्यदेव प्रवर्तकमिति शङ्कते—**ननु कार्येति**। तत्र हेतुमाह—**प्रवर्तकत्वसाम्यादिति**। अभिप्रायभेदात् कार्यस्यापि प्रवर्तकत्वान्नियोगशब्दवाच्यत्वमित्यर्थः। कार्यमेव तर्हि विचारयेत्याह—**किमिदमिति**। किं कृतियोग्यतामात्रं

**ऋजुविवरणम्**

धीमात्रं चेदुपेयेत तथा सर्गे भविष्यति। निर्वाहोऽपि तथैव स्यादिति मन्त्रान्तरं पुनः॥
विधिसामर्थ्यलभ्यं यत्कर्मण्यैश्वर्यमीरितम्। स्वर्गकामस्य नैश्वर्यमतत्साधनकर्मणि॥
तत्कृतिव्याप्यता चास्य न तत्साधनतां विना। करणत्वानुसन्धानं न नैयोगिकमादितः॥
अयोग्यत्वे निरस्ते च विमर्शोऽपि न लभ्यते। व्युत्पत्तिहेतुता नास्य तत्स्वरूपानिरूपणात्॥
प्रमाणं वाऽप्रमाणं वा ? नाद्यः; संख्यातिरेकतः। अन्तर्भावोऽपि नैवास्य शब्दादन्येषु संभवेत्॥
वृत्तिर्मानान्तरायोग्ये येन तस्य न संभवेत्। हैतुकत्वान्न शाब्दत्वं संभवि स्वेन चोद्गते॥
अनिश्चयान्न चाप्यस्य लिङ्गादाविव संभवः। शब्दादर्थाच्च सामर्थ्यात्संभवो नास्य विद्यते॥
अन्तर्भावोऽपि तेनास्य न तस्मिन्नुपपद्यते। द्वितीये त्वप्रमाणत्वात्तद्गृहीतेऽपि वस्तुनि॥
व्युत्पत्तिर्नैव युज्येत वस्तुसिद्धेरभावतः। स्मृतित्वमपि तेनास्य संस्कारो विद्यते यतः॥
सापेक्षत्वं स्मृतेः शक्यं लक्षणं नैव वर्णितुम्। उत्पत्तिज्ञप्तिपक्षाभ्यां स्यादतिव्याप्तिदूषणम्।
कार्यस्वरूपं न विरुद्धयते तत्प्रयत्नसाध्यत्वमपीह नैकम्।
असंभवित्वं व्यभिचारिता च दोषो भवेल्लक्षण ईदृशे हि॥
प्राधान्यमपि नैवास्य तत्स्वरूपानिरूपणात्। प्राधान्यं चेदुपेयोऽत्र कृत्युद्देश्यत्वलक्षणम्॥
नापूर्वस्योपपद्येत नहि तत्फलमिष्यते। कृत्याद्यपेक्षया तच्चेत्स्यादतिव्याप्तिदूषणम्॥
सर्वान् प्रति प्रधानत्वं कस्यचिन्नैव विद्यते। अन्यशेषत्वराहित्यं नापूर्वस्योपपद्यते॥
पुरुषापेक्षितं स्वर्गं कुर्वत्तच्छेषतामियात्। आत्मसिद्धयाऽऽनुकूल्येन साधनत्वं न दोषभाक्॥
यो वदेदिह तस्यापि गर्भदासेऽपि तद्भवेत्। नहि स्वाम्युपकाराय केवला तत्क्रिया भवेत्॥
आत्मार्थत्वानुसन्धानात्प्रवृत्तिस्तस्य दृश्यते। यागादौ पुरुषस्यापि न भवेच्छेषता पुनः॥
तत्सिद्धिमात्रमुद्देश्यं न हि स्यात्तत्कृतेरिह। तेन नैतत्प्रधानत्वं शक्यं नान्यन्निरूपितुम्।
प्राधान्यं कृतिसाध्यत्वं मिलितं च न लक्षणम्। असंभवत्वदोषेण प्राधान्ये तन्निरूपितम्॥
व्यापारे कृतिसाध्यत्वम्, नास्य व्यापाररूपता। कालत्रयानवच्छेदो यश्च कार्ये निरूपितः॥
प्रातीतिकः स चेदिष्टः सर्वकार्ये प्रसज्यते। वस्तुतश्चेद्भवेत्तस्य कार्यत्वं हीयते ततः॥
भविष्यत्कालयोगे हि कार्यत्वं सर्ववस्तुनः। एवं नियोज्यता वार्या दिङ्मात्रमिह दर्शितम्॥
मेयं न तेऽन्यस्य न तेन तस्य योगे गृहीते न हि गृह्यतेऽसौ।
हीनो न तेनायमुपैति हित्वा श्रेयःस्वरूपं श्रुतिमात्रगम्यम्॥

तत्र नियोगस्यैवाप्रसिद्धत्वात्कथं तन्निष्ठतेति चोदयति—**ननु कोऽयमिति**॥ ननु नियुङ्क्त इति नियोग इति प्रवर्तकस्य नियोगत्वं प्रतीयते, कार्यज्ञानाच्च प्रवृत्तिर्दृश्यते, अतः कार्यमेव नियोग इति चोदयति—**ननु**

### पञ्चपादिकाविवरणम्

भाववतां सर्वेषां कृतियोग्यत्वात्। अथ कृतिसंसृष्टं कार्यम्, न; कृतिसंसर्गस्यैव निमित्तत्वोपगमात्कार्यबुद्धेः। अथ कृतियोग्यमेवालौकिकं किञ्चिद्वस्तु कार्यमिति, तर्ह्यव्युत्पन्नस्य घटेनोदकाहरणं कर्तव्यमित्यादिप्रत्यक्षव्यवहारे क्रिया-कारकव्यतिरिक्तमलौकिकं किंचित्प्रतिपन्नम्? न वा? इति वक्तव्यम्। प्रतिपन्नं चेत्, नालौकिकं किञ्चिदिति। निदर्शनीयं च शब्दान्तरेणेदमित्थमिति। ननु कार्यमिति प्रतिपद्य प्रवर्तते। ततश्च प्रवर्तकाकारता कार्यस्य क्रिया-कारक-फलेभ्यो वैलक्षण्यमिति, न; धात्वर्थस्यैवाभिलषितसाधनतया प्रवर्तकत्वात् तस्यैव च कार्यबुद्धिगोचरत्वात्। ननु अन्यत् कार्यमन्यदभिलषितसाधनम्, सत्यम्; अभिलषितसाधनमेव कृतियोग्यतया प्रवर्तकं कार्यमुच्यते। नच श्रेयःकृतिप्रतियोगि-भेदमात्रादुभयबुध्यालम्बनं साधनं भिद्यते। नच कृतियोग्येष्टसाधनव्यतिरिक्तं कार्यं नाम प्रवृत्तिनिमित्तं पश्यामः।

### तत्त्वदीपनम्

कार्यम्? उत कृतिसंसृष्टम्? आहो कृतियोग्यत्वे सत्यलौकिकत्वम्? उत प्रवर्तकाकारः? इति किंशब्दार्थः ॥ आद्यं शङ्कते—**यदीति**। दूषयति—**नेति**। कृतियोग्यतामात्रज्ञानात्प्रवृत्तौ दुःखसाधनानामपि कृतियोग्यत्वात् तज्ज्ञानादपि प्रवृत्तिः स्यादित्यर्थः ॥ द्वितीयमुत्थापयति—**अथेति** ॥ परस्पराश्रयप्रसङ्गान्नैतदित्याह—**न कृतीति** ॥ कार्यबुद्धौ जातायां तन्निबन्धनः कृतिसंस्पर्शः, तस्मिन् सति कार्यबुद्धिरितीतरेतराश्रयत्वमित्यर्थः। तृतीयमुत्थापयति—**अथ कृतियोग्यमिति**। **अलौकिकमिति**। कृत्युद्देश्यमित्यर्थः। विकल्पासहत्वान्नैतदित्याह—**तर्हीति**। द्वितीये संगतिग्रहणानुपपत्तिरित्यभिप्रेत्याद्यं दूषयति—**प्रतिपन्नमिति** ॥ निर्देष्टव्यं चेत्याह—**निदर्शनीयमिति** ॥ नच कृतिसाध्यं यदुद्देश्यमिति निर्देष्टुं शक्यम्; फलस्यापि तादृक्त्वादित्यर्थः। चतुर्थमुत्थापयति—**ननु कार्यमिति**। तथाऽपि कथं तस्य क्रियावैलक्षण्यम्? तत्राह—**तत इति** ॥ कार्यज्ञानोत्तरकालं प्रवृत्तिनियमात् प्रवर्तकाकारः कार्यमित्यर्थः। अतिव्याप्त्या दूषयति—**नेति** ॥

धात्वर्थमात्रस्य न प्रवर्तकत्वम्, दुःखसाधने व्यभिचारात्, इत्यभिप्रेत्य विशिनष्टि—**अभिलषितसाधन-तयेति** ॥ कार्यबुद्धिगोचरत्वे सति प्रवर्तकत्वं लिङर्थ इत्याशङ्क्याह—**तस्यैवेति** ॥ शिशिरमरीचिमण्डलोदयादेरभिलषित-साधनत्वेऽपि न कार्याधीनत्वमिति तद्भेद इति शङ्कते—**नन्वन्यत् कार्यमिति** ॥ किमिष्टसाधनमात्रस्य कार्यधीगोचरत्वं निरस्यते? उत तद्विशेषस्य? इति विकल्प्याद्यमङ्गीकरोति—**सत्यमिति** ॥ द्वितीयं दूषयति—**अभिलषितेति** ॥ एकस्या व्यक्तेः साधनत्वं कार्यत्वं चानुपपन्नम्; कार्यस्य साध्यतारूपत्वात्, साधनस्य चोत्पादकत्वादित्याशङ्क्याह—**नच श्रेय इति** ॥ कृति-श्रेयसोर्भिन्नत्वात्ताभ्यां विशेष्यमाणं कथमेकं स्यादिति वाऽऽशङ्क्याह—**नच श्रेय इति** ॥

यागादिव्यक्तिषु कृतिसाध्यत्वस्य श्रेयःसाधनत्वस्य च भावान्नैतावता भेद इत्यर्थः। कृतियोग्येष्टसाधन-व्यतिरिक्ते कार्ये प्रमाणं च नेत्याह—**नचेति** ॥ अदर्शनमसिद्धम्; फलस्य प्रवर्तकतयाऽनुभवादित्यन्वयः। कश्चित्

### ऋजुविवरणम्

**कार्यं बुद्धिगम्यमिति** ॥ पराभिमतकार्यस्याप्यनिरूपितत्वात्तन्मुखेनापि न नियोगनिरूपणमिति परिहरति—**किमिदं कार्यमिति** ॥ **ननु** कृतिसंसर्गस्येति संसृष्टतया प्रतीतिः? संसर्गो वा, नाद्यः; कृतिसंसर्गो हि कार्यबुद्धौ निमित्तमित्यभ्युप-गम्यते। नच कार्यबुद्धौ निमित्तस्यैव नैमित्तिकबुद्धिविषयत्वम्। द्वितीयेऽपि कार्यबुद्धेस्तत्र निमित्तता, न कार्यान्तरत्वं तस्येति भावः ॥ **नन्वन्यत्कार्यमिति**। न धात्वर्थस्याभिलषितसाधनत्वेन प्रवर्तकत्वम्; भूतवर्तमानादावभावात् न तस्य कार्यत्वम्; अतोऽन्यदेव ममेदं कार्यमिति बुद्धेरालम्बनमिति भावः। **सत्यमभिलषितसाधनमेवेति** ॥ यद्यपि नेष्टसाधनमात्रं कार्यम्; व्यभिचारादिष्टसाधनेऽपीन्दूदयादौ, तथाऽपि न ततो भेदः; कृतियोग्यस्यैतस्यैव कार्यत्वोपपत्तेरिति भावः। **ननु**—एवमपि नेष्टसाधनमेव कार्यम्, कृतिसाध्यन्तु कार्यम्, श्रेयस उत्पादकन्तु साधनम्, नच तयोर्विरुद्धाकार-योरैक्यमित्याशङ्क्याह—**नच श्रेयःकृतिप्रतियोगीति**। असाधारणधर्मभेदो हि भेदकः, न प्रतियोगिमात्रमिति भावः ॥ **ननु**—प्रवर्तकं कार्यम्; ममेदं कार्यमिति ज्ञानात्प्रवृत्तिदर्शनात्, नच कृतियोग्यत्वेन कार्यतेति युक्तम्; अनिष्टसाधने व्यभिचारात्। नच श्रेयःसाधनत्वेन कार्यता; तस्यापि व्यभिचाराद्भूतादौ। नच कृतियोग्येष्टसाधनत्वेन कार्यत्वम्; जाह्नवीस्नाने कृतियोग्येष्टसाधनत्वे विद्यमानेऽपि कार्यत्वादर्शनात्, फलस्य तादृशसाधनत्वेन विना कार्यत्वमिति वक्तुं न शक्यते। दृश्यते च कार्यबुद्धिः सर्वेषाम्, तेनान्यदेव कृतिसाधनं तद्बुद्धिगोचरः, इत्याशङ्क्याह—**न च कृतियोग्येष्टसाधनेति**। नचेच्छाऽभावे स्नानस्येष्टसाधनत्वमिति भावः ॥ यद्वा प्रतियोगिमात्रभेदमाश्रित्य साधनस्यैव प्रवर्तकत्वं कस्मादाश्रीयते? व्यतिरिक्तमेव प्रवर्तकं कार्यमिष्यतामित्याशङ्क्याह—**नच कृतियोग्येष्टेति** ॥ ननु इष्टसाधनव्यतिरिक्तमपि प्रवर्तकं कार्यं

## पञ्चपादिकाविवरणम्

ननु फलमपि कार्यतया प्रवृत्तिसमर्थं दृश्यते, न; विशिष्टप्रवृत्तिहेतुत्वाभावात्फलकार्यत्वस्य । अभिलषितसाधनं कार्यमेव सम्बन्धग्रहणलिङ्गभूतायाः प्रवृत्तेर्हेतुः; फलस्य त्विच्छामात्रहेतुत्वात् । नच कार्यं नामालौकिकं किञ्चिल्लोके दृश्यते । न तावत्प्रत्यक्षेणावगन्तुं शक्यम्; असिद्धस्वभावत्वात् । सम्बन्धाग्रहणान्नानुमानेन । अव्युत्पन्नत्वान्नागमेन । अलौकिककार्यमन्तरेणानुपपत्त्यभावान्नार्थापत्त्या कार्यमवगन्तुं शक्यम् । प्रवर्तकत्वमनुपपन्नं इति चेत्, न; कृतियोग्यादभिलषितसाधनादपि प्रवृत्तेः । नच साधनत्वमपि कार्यवत्प्रमाणशून्यम्; तत्फलोदयान्वय-व्यतिरेकाभ्यामवगमात्, अननुभूतेऽपि सामान्यतो दर्शनेन साधनत्वसिद्धेः । नचातीतादिसाधनेषु प्रवृत्तिप्रसङ्गः; कृतियोग्येष्टसाधन इति विशेषणात् । तस्मादव्युत्पन्नस्य

## तत्त्वदीपनम्

शङ्कते—**ननु फलमिति** ।। साधनस्य प्रवृत्तिव्यभिचारित्वान्न तदपि प्रवर्तकमिति वा शङ्कते—**नन्विति** ।। किं तद्बाह्यप्रवृत्तेर्हेतुः ? उतान्तरप्रवृत्तेः ? नाद्य इत्याह—**न विशिष्टेति** । बाह्यप्रवृत्तिर्विशिष्टप्रवृत्तिशब्दार्थः ।। फलज्ञानं विना विशिष्टप्रवृत्त्यसंभवात्तत्तद्धेतुरित्याशङ्क्य, तस्मिन् सत्यपि साधनज्ञानाभावे प्रवृत्त्यसंभवात् तदेव हेतुरित्याह—**अभिलषितेति** ।। द्वितीयं प्रत्याह—**फलस्येति** ।। एवं प्रासङ्गिकं चोद्यं निरस्य, कार्ये प्रमाणं नेत्येतत्प्रपञ्चयति—**नच कार्यमिति** ।। कथमदर्शनमिति चेत्, तत्र वक्तव्यम्—किं प्रत्यक्षं तत्र मानम् ? उतानुमानम् ? आहो आगमः ? किं वाऽनुपपत्तिः ? नाद्य इत्याह—**न तावदिति** ।। प्रत्यक्षस्य वर्तमानविषयत्वात्कार्यस्य च तद्वैपरीत्यान्न प्रत्यक्षत्वमित्यर्थः द्वितीयं निरस्यति—**संबन्धेति** ।।

तृतीयं प्रत्याह—**अव्युत्पन्नत्वादिति** । चतुर्थं प्रत्याह—**अलौकिकेति** ।। अनुपपत्त्यभावोऽसिद्ध इति शङ्कते—**प्रवृत्तिरिति** ।। अन्यथोपपत्त्या दूषयति—**न कृतियोग्येति** ।। प्रमाणविधुरत्वादिष्टसाधनवाक्यार्थोऽपि नादेय इत्यत्राह—**नच साधनत्वमिति** ।।

तर्हि फलोत्पत्तेः पुरा साधनत्वस्य दुरधिगतत्वात्कथं ततः प्रवृत्तिरिति ? अत्राह—**अननुभूत इति** ।। इदमेतत्साधनमेतज्जातीयत्वादमुकवदित्यनुमानात्साधनत्वसिद्धिरित्यर्थः । कृतियोग्येष्टसाधनमिति सविशेषणप्रयोजकाङ्गीकाराद् गौरवम्, इतरत्र लाघवमित्याशङ्क्याह—**नचेति** ।। "संभवे व्यभिचारे च स्याद्विशेषणमर्थवदि"ति न्यायाद्विशेषणकल्पनं न दोषाय । नच—निर्विशेषणप्रयोजकसंभव इतरकल्पनमयुक्तमिति—वाच्यम्; इष्टसाधनज्ञानं विना कार्यबुद्धिस्तावन्न संभवति; इष्टसाधनज्ञानमात्रस्य स्वकार्यज्ञानाहेतुत्वात् कतिपयेष्टसाधनज्ञानस्य हेतुत्वं वक्तव्यम्, तथा च तादृगिष्टसाधनस्यैव प्रवर्तकत्वमस्तु, किं तज्जन्यकार्यबुद्ध्येत्यर्थः । प्रकृतं निगमयति—**तस्मादिति** ।।

## ऋजुविवरणम्

दृश्यते फलमिति चोदयति—**ननु फलमपि कार्यतयेति** । **विशिष्टप्रवृत्तिहेतुत्वाभावादिति** । अयमर्थः—फलं स्वात्मनि प्रवृत्तिं जनयति ? साधने वा ? नात्मनि; अयोग्यत्वात्, नापि साधने; अज्ञाते साधने प्रवृत्त्यदर्शनात्, ज्ञाते च साधनज्ञानमेव प्रवर्तकम्; फलज्ञानस्य व्यवहितत्वात् फलस्यापि प्रवर्तकत्वं दृश्यत इत्याशङ्क्याह—**फलस्य त्विच्छामात्रे** ।। **ननु कार्य**प्रतीतिरङ्गीकृतैव भवता नामान्तरेण, तत्कथं निराक्रियते ? इत्याशङ्क्याह—**नच कार्यं नामेति** ।। "नच कृतियोग्येष्टसाधने"त्यनेन प्रवर्तकत्वं व्यतिरिक्तस्य निरस्तम्, अनेनालौकिकस्य प्रवृत्तिर्निरस्तेत्यपुनरुक्तिः ।। यद्वा पूर्वं प्रवर्तकत्वं कार्यस्य निरस्येष्टसाधनस्य साधितम्, इदानीं कार्यस्य तदीयस्य शब्दवाच्यत्वमपि न संभवति; तस्यागृहीतत्वेन संबन्धग्रहणाभावादित्याह—**नच कार्यं नामेति** ।।

ननु प्रवृत्त्यन्यथानुपपत्त्या कार्यं गम्यते; तस्यैव स्तन्यपानादौ प्रवर्तकत्वात्, इति चोदयति—**प्रवर्तकत्वमिति** ।। अर्थापत्तेरन्यथाऽप्युपपत्तेरिति परिहरति—**न कृतियोग्यादिति** ।। ननु साधनस्यापि ज्ञापकाभावात्कथं प्रवृत्तिहेतुत्वं शब्दवाच्यत्वं वा संभवतीत्याशङ्क्याह—**नच साधनत्वमपीति** । **तत्फलोदयान्वयेति** । तस्य साधनस्य येन फलोदयेनान्वय-व्यतिरेकौ, तस्मिन् सति फलोत्पत्तिरसति चानुत्पत्तिरित्येवंरूपौ, ताभ्यां साधनत्वधीरित्यर्थः ।। ननु एवमपि न साधनस्य प्रवर्तकत्वम्; अननुभूतस्य प्रवर्तकत्वाभावात्, अनुभूते फलस्य निष्पन्नत्वान्न प्रवर्तकत्वमित्याशङ्क्याह—**अननुभूतेऽपीति** ।। ननु मा भूत् कार्यस्य विधेयता, तथाऽपि न ब्रह्मणि प्रामाण्यं युज्यते; वेदान्तानामिष्टसाधनविधिपरत्वेन ज्ञानस्य विधेयत्वेन तन्निष्ठत्वस्य वेदान्तानां दुष्परिहरत्वादित्याशङ्क्याह—**तत्र ब्रह्मात्मैकत्वविज्ञान इति** ।। सर्वं चैतद्व्यक्तमुद्ग्राहणिकायामिति नेहोच्यते ।।

### पञ्चपादिका

अथापि—"अथ यदतः परो दिवो ज्योतिरि"ति प्रपञ्चातिरिक्तब्रह्माभ्युपगमे देवताविग्रहवत्त्वन्यायसंभवाद् मोक्षकामस्य ब्रह्मोपासनं विधीयते, तथाच श्रुतिः—"विद्यया तदारोहन्ती"ति, नच साध्यत्वेऽप्यन्तवत्त्वम्; शब्दगम्यत्वादनावृत्तेः—"न च पुनरावर्तते" इति। न ह्येष तर्कगम्यः, येन तर्केणास्य तत्त्वं व्यवस्थाप्येत, शब्दगम्यस्य तु शब्दादेव तत्त्व-

### पञ्चपादिकाविवरणम्

व्यवहारे प्रमाणान्तरेण यत्प्रवर्तकतया वर्तते, तदेव श्रोतुरपि शाब्दबुद्धिगोचरतया प्रवर्तकमनुमीयत इति सिद्धम्। तत्र ब्रह्मात्मैकत्वविज्ञाने विधिसम्बन्धो नाम फलसाधनसामर्थ्यम्। तत्राविद्यानिवृत्तिव्यतिरेकेण मोक्षफलस्याभावात्तस्य चान्वय-व्यतिरेकसिद्धत्वात्तत्त्वज्ञानस्य मोक्षसाधनत्वमन्वय-व्यतिरेकगम्यं न शब्दप्रमेयमिति ब्रह्मण्येव प्रमाणं शब्द इति सिद्धम् ॥

इदानीं जीव-ब्रह्मणोर्भेदमङ्गीकृत्य ब्रह्मणश्च प्रदेशान्तरवर्तित्वं सर्वगतत्वं चाभ्युपगम्याहं ब्रह्मास्मीत्यारोपितरूपेण विधीयमानादुपासनाद् यागादिव स्वर्गो मोक्षः फलिष्यतीति ये मन्यन्ते, तन्निरासायोत्तरं भाष्यमित्याह—**अथाप्यथ यदतः परो दिवो ज्योतिरित्यादिना** ॥ ननु एवमप्युपासनाविधिपरत्वे शब्दस्य ब्रह्मस्वरूपासिद्धिरित्यत आह—**देवताविग्रहवत्त्वन्यायेति** ॥ नच प्रमाणान्तरविरोधः; विकारासंस्पर्शित्वाद्, ब्रह्मणः सद्वितीयत्वात्। ननु नैयोगिकफलत्वे मोक्षस्य स्वर्गादिवदनित्यतेति, नेत्याह—**नच साध्यत्वेऽपीति** ॥ ननु श्रुतिरनित्यत्वानुमानविरुद्धा कथमनावृत्तिं साधयेदिति ? अत आह—**न ह्येष इति** ॥ ननु अनुमानागमयोर्विरुद्धाव्यभिचारित्वात्संशयहेतुत्वमिति, तत्राह—**शब्दगम्यस्येति** ॥ अनुमाना-

### तत्त्वदीपनम्

वेदान्तानां कार्यपरत्वाभावेऽपि विधिपरत्वम्; एतत्साधनताया एव विधित्वादित्याशङ्क्याह—**तत्रेति** ॥ अस्तु को दोषः ? तत्राह—**तत्राविद्येति** ॥

"अथापी"त्यादिना ग्रन्थेनोपासनाविधिपरत्वं वेदान्तानां शङ्कितम्; तदयुक्तम्, पूर्वत्राप्युपासनाविधेर्निरस्तत्वादित्याशङ्क्य मतभेदाभिप्रायेणेदं चोद्यमित्याह—**इदानीमिति**। विकारासंसृष्टत्वात्प्रदेशान्तरवर्तित्वम्, विभुत्वेन सर्वगतत्वं चेत्यर्थः। भेदोपासनं कथमित्याशङ्क्याह—**अहं ब्रह्मेति** ॥ "वाचं धेनुमुपासीते"त्यादाविवेत्यर्थः। वाग्धेन्वोरन्यत्र प्रसिद्धत्वात्समारोप्योपासनं युक्तम्, ब्रह्मणस्त्वप्रसिद्धत्वाद् वेदान्तानां च विधिपरत्वान्न तत्र प्रामाण्यमित्यनुपास्यत्वं ब्रह्मण इति शङ्कते—**नन्वेवमपीति**। समारोप्योपासनेऽपीत्यर्थः प्रमाणान्तरविसंवादाभावे देवताधिकरणन्यायोऽवतरति, अत्र च प्रमाणान्तरविरोधान्न वस्तुसिद्धिरित्याशङ्क्याह—**नचेति** ॥ सद्वितीयत्वमुपपादयति—**विकारेति** ॥ "अथ यदतः परः" इत्यादिना ब्रह्मणो विकारेण संबन्धोपलब्धेस्तस्य पृथक्त्वेनावस्थानम्, तथा च वेदान्तानामपि भेदपरत्वान्न मानान्तरविरोध इत्यर्थः। फलाभावान्नोपासनविधिपरत्वमिति शङ्कते—**ननु नैयोगिकफलत्वेति**। नित्यग्राहकप्रमाणविरोधान्नानित्यत्वमनुमेयमित्याह—**नेत्याहेति** ॥ नित्यत्वग्राहि प्रमाणमसिद्धमिति शङ्कते—**ननु श्रुतिरिति** ॥ ब्रह्मात्मभावलक्षस्य मोक्षस्य मानान्तरागोचरत्वात्कथं तदनित्यत्वानुमानम् ? इत्याह—**अत आहेति** ॥ यत् कृतकं तदनित्यमिति व्याप्त्या कृतकस्यानित्यत्वसिद्धावर्थाद् मोक्षानित्यत्वसिद्धेर्न त्वदभिमतसिद्धिरित्याह—**नन्वनुमानेति**। **विरुद्धाव्यभिचारित्वादिति** ॥ सत्प्रतिपक्षसाधनानुमानसदृशत्वादित्यर्थः ॥

टीकापेक्षितं हेतुमाह—**अनुमानादिति**। निरपेक्षत्वे सति उत्तरभाविप्रमाणत्वादाम्नायस्य प्राबल्यमित्यर्थः ॥ फलवैलक्षण्यमसिद्धमिति शङ्कते—**नन्विति**। शरीराद्युपभोग्यफलकं कर्म, मुक्तेश्च शरीराद्यसङ्गित्वान्न कर्मफलत्वमित्या-

### ऋजुविवरणम्

अथवा—"अथ यदतः" इत्यादिग्रन्थेन प्रपञ्चातिरिक्तब्रह्मोपासनं मोक्षाय विधीयते। मोक्षश्च ब्रह्मप्राप्ति-
लक्षण इत्युक्तम्। तदयुक्तम्। न हि प्रपञ्चातिरिक्तत्वं ब्रह्मणः संभवति; सर्वात्मकत्वाद् व्यर्थं च तत्कीर्तनम्।
न च प्राप्तिलक्षणो मोक्षः संभवति; आत्मत्वेन नित्यप्राप्तत्वात्, पुनरुक्तं च; पूर्वमेवोपासनाविधानमाशङ्क्य निरस्त-
त्वादित्याशङ्क्यावतारयति—**इदनीं जीव-ब्रह्मणोरिति** ॥ ननु न देवताधिकरणन्यायेन वस्तुसिद्धिः; तस्य प्रमाणा-
न्तराविरोधसापेक्षत्वात् इह सर्वगतस्य न प्राप्यत्वं संभवति। नहि गन्तृ-गन्तव्यभेदोऽपि तस्मिन्नुपपद्यते, सर्वगतत्वे च
सर्वविकारसंबन्धेन विकारित्वम्, तथा सत्यविकारित्वप्रतिपादकागमस्य तद्विरोधः,प्राप्तत्वे वा परिच्छिन्नत्वम्, इत्याश-
ङ्क्याह—**नच प्रमाणान्तरेति** ॥ तथा सति सावयवत्वेनानित्यत्वम्, "विरुद्धव्यभिचारित्वादि"ति समकक्षत्वम् न परस्पर-
विरुद्धार्थप्रतिपादकत्वं विवक्षितम्; विरुद्धेनार्थान्तरेणाव्याभिचारादित्यर्थः। "नह्येष तर्कगम्यः" इत्ययं परिहारो

## पञ्चपादिका

**व्यवस्थेति मन्वानस्योत्तरमाह भाष्यकारः—न कर्मब्रह्मविद्याफलयोर्वैलक्षण्यादिति ॥ वस्तुसंग्रहवाक्यमेतत् । अस्यैव प्रपञ्चः-अतो न कर्तव्यशेषत्वेन ब्रह्मोपदेशो युक्त इत्येतदन्तं भाष्यम् । अस्यायमर्थः—संक्षेपतः श्रुतितो न्यायतश्च मोक्षस्य नित्यसिद्धत्वप्रतीतेर्न क्रियासाध्यो मोक्ष इति । कथम् ? यदि सन्ध्योपासनवन्मानसं ब्रह्मकर्मकमुपासनं नाम धर्मो मोक्षफलः स्वर्गादिफलयागवद्विधीयते, तथा सति शरीरवतैव तत्फलं भोक्तव्यम्, इति—"अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः" इत्यशरीरमोक्षानुवादो योग्यप्रियाप्रियस्पर्शनाभावानुवादश्च निरालम्बनौ स्याताम् । नचाशरीरत्वमेव धर्मकार्यम्; स्वाभाविकत्वात्तस्य । तेनानुष्ठेयफलविलक्षणं मोक्षाख्यमशरीरत्वं स्वभावसिद्धं नित्यमिति सिद्धम् ॥**

## पञ्चपादिकाविवरणम्

दागमो वलवानित्यर्थः ॥ अस्य परिहारत्वेन भाष्यमवतारयति—**न कर्मब्रह्मविद्याफलयोरित्यादिना** ॥ भाष्यतात्पर्यार्थमाह—**अस्यायमर्थः संक्षेपत इत्यादिना** । ननु नास्ति फलवैलक्षण्यम्; मोक्षस्याप्युपासनासाध्यतया कर्मजन्यत्वात्, ततश्चोपचयापचयशरीरेन्द्रियादिमत्ताऽपि स्यादित्यत आह—**श्रुतितो न्यायतश्चेति** ॥ "ब्रह्म वेद ब्रह्मैव भवति" "विद्ययाऽमृतमश्नुते" "ब्रह्मसंस्थोऽमृतत्वमेति" "अथायमशरीरोऽमृतः प्राणो ब्रह्मैवे"त्यादिश्रुतितो ब्रह्मात्मताऽशरीरामृतत्वलक्षणो मोक्षो दर्शितः । न्यायतश्च मोक्षस्य नित्यत्वं गम्यते, पुनरावृत्तौ पुनर्बन्धान्मोक्षशब्दस्योपचरितार्थताप्रसङ्गाद् अभ्युदयनिःश्रेयसयोश्च भेदप्रतिपत्तेः । अनादित्वमपि श्रुतिन्यायाभ्यामवगतम् । "विमुक्तश्च विमुच्यते" "ब्रह्मैव सन् ब्रह्माप्येती"ति श्रुतेः, सादित्वे चान्तवत्त्वं स्यादिति न्यायात् । ततश्च न क्रियासाध्यो मोक्ष इति । क्रियासाध्यत्वेऽभ्युदयफलवच्छरीरेन्द्रियादिसम्बन्धः, क्षयिष्णुतोपचयापचयवत्त्वं च मोक्षस्य स्यादित्याह—**यदि सन्ध्योपासनवदित्यादिना** ॥ ननु—यथैवोपचयापचयवत्क्षयिष्णुः शरीरेन्द्रियादिभोग्यं च कर्मफलम्, एवं तद्विपरीतमशरीरामृतब्रह्मलक्षणं च निःश्रेयसं कर्मफलमेव स्यात्, कर्मणां पश्वादिविविधफलहेतुत्वदर्शनादिति, अत आह—**न चाशरीरत्वमेव धर्मकार्यमिति** ॥

किमिदं स्वाभाविकमशरीरत्वम् ? किं वा नैमित्तिकमिति ? शरीरात्मनोर्मिथ्याज्ञानसम्बन्धव्यतिरिक्तस्य

## तत्त्वदीपनम्

शङ्क्याह—तत इति ॥ श्रुतिन्यायाभ्यां नित्यत्वप्रतिपत्तिरित्युक्तम्, तत्र श्रुतिं दर्शयति—**ब्रह्मेति** । ब्रह्म नित्यसिद्धम्, तदेव विद्याफलम्, न तदतिरिक्तमैक्यमिति श्रुत्यर्थः ॥ न्यायत इत्युक्तम्, तद्विवृणोति—**न्यायत इति** ॥ न्यायमेवाह—**पुनरावृत्ताविति** ॥ मुक्तेरनित्यत्वेऽभ्युदयाद्भेदोऽपि न स्यादित्याह—**अभ्युदयेति** ॥ अभूत्वा भाविनः साध्यत्वम्, मुक्तेस्तद्वैपरीत्यादसाध्यत्वमित्याह—**अनादित्वमिति** ॥ श्रुति-न्यायौ क्रमेणाह—**विमुक्तश्चे**ति ॥ बाह्यक्रियासाध्यस्यैवोपचयादिमत्त्वम्, मुक्तेश्चान्तरक्रियासाध्यत्वान्नित्यत्वमित्याशङ्क्य, व्यर्थविशेषणत्वात् साध्यत्वमात्रमनित्यत्वप्रयोजकमित्याशयेनाह—**क्रियासाध्यत्व इति** । सशरीरत्वस्यापि धर्मकार्यत्वादशरीरत्वमेवेति कथमुक्तम् ? इत्याशङ्क्य, न चाशरीरत्वमित्येतद्व्यावर्त्यां शङ्कामाह—**ननु यथैवेति** । एवकारस्य "धर्मकार्यमि"त्यनेन संबन्धः ।

'अथायमशरीरः' इत्यादिनाऽशरीरत्वस्य कार्यत्वप्रतिपत्तेरसिद्धं स्वाभाविकत्वम्, तथा सशरीरत्वानुभवविरोधश्चेति शङ्कते—**किमिदमिति** । यदिदमशरीरत्वम्, तत्किं स्वाभाविकम् ? उत नैमित्तिकम् ? इति विमर्शार्थः । शरीरसंबन्धस्य परमार्थसतो ब्रह्मणि कालत्रयेऽप्यनुपपत्तेरशरीरत्वमित्याह—**शरीरेति** ॥ सशरीरत्वानुभवविरोध

## ऋजुविवरणम्

व्याधिकरण इव लक्ष्यते; विरुद्धाव्यभिचारिचोद्यस्यापरिहृतत्वात्, विरुद्धा इतः परं वा; अनुमानविरोधेन चोद्यस्य कृतत्वान्न तर्कविरोधेनेत्याशङ्क्य व्याचष्टे—**अनुमानादागम इति** ॥ तर्कशब्देनानुमानमुक्तमिति व्याख्यातम् । **अभ्युदयनिःश्रेयसयोरिति** । न केवलं मोक्षशब्दस्यानुपचरितार्थत्वसामर्थ्यान्नित्यत्वम्, अभ्युदयनिःश्रेयसयोः फलयोर्भेदसामर्थ्यादित्यपि भेदः प्रतीयते—अनित्यं फलमभ्युदयः, नित्यो मोक्ष इति । नचैतद्विहायान्यद्भेदकमित्यर्थः ॥

स्वाभाविकत्वमशरीरत्वस्य कथमुक्तम् ? सशरीरत्वप्रतीतेः स्वाभाविकत्वे फलत्वकीर्तनमपि न युज्येत, तेन व्याहतोऽयं ग्रन्थः—स्वाभाविकत्वमुच्यते, ज्ञानकार्यत्वं च; अतः फलत्वेन साध्यत्वात्कर्मसाध्यत्वमपीत्याशङ्क्याभिप्रायमाह—**किमिदं स्वाभाविकमिति** ॥ ननु—स्वाभाविकागन्तुकभेदेन कथमशरीरत्वं विकल्प्यते ? भेदासिद्धेः । नहि सशरीरस्य स्वाभाविकमशरीरत्वं निरूपयितुं शक्यते, इत्याशङ्क्य भेदकं दर्शयति—**शरीरात्मनोरिति** ॥

### पञ्चपादिका

**तथापि कथंचित्परिणामिनित्यं स्यात्, स्यादपि कदाचिद्धर्मकार्यम्। इदन्तु कूटस्थनित्यं ब्रह्म जिज्ञास्यत्वेन प्रक्रान्तम्, यत्स्वरूपावगमो जीवस्य मोक्षोऽभिप्रेयते। तत्र यदि हस्तगतविस्मृतसुवर्णादिवद् भ्रान्तिमात्रव्यवहितं मोक्षं**

### पञ्चपादिकाविवरणम्

सर्वप्रकारसम्बन्धस्यात्यन्तिकाभावः स्वाभाविकमशरीरत्वम्, मिथ्याज्ञानसम्बन्धान्नैमित्तिकं शरीरित्वमिति। तत्र सम्यग्ज्ञानसाध्यस्य मिथ्याज्ञानसम्बन्धनिवृत्तिलक्षणस्याशरीरत्वस्य कर्मसाध्यत्वाभावात् सम्बन्धान्तरनिवृत्तिलक्षणस्याशरीरत्वस्य स्वाभाविकत्वान्न धर्मसाध्यो मोक्ष इति। ननु—यदिदमशरीरामृतत्वब्रह्मलक्षणं फलम्, तदन्यथा कर्मभिः परिणम्यत इति, नेत्याह—**तथापि कथंचिदित्यादिना**॥ ननु—भवतु स्वाभाविकाशरीरामृतध्रुवलक्षणो मोक्षः सदैकरूपः; तथाऽप्युपासनासन्तानाद् विधीयमानाद्भविष्यति; ज्ञानलक्षणत्वादुपासनस्येत्यत्राह—**तत्र यदि हस्तगतविस्मृतसुवर्णवदित्यादिना**॥

ननु किमिति यागफलवदुपासनासाध्यत्वे मोक्षस्योपचयापचयक्षयिष्णुताशरीरसम्बन्धः स्यात्? उच्यते—मोक्षफलाय विधीयमानस्योपासनस्य स्वरूपतः कालतः सङ्ख्यातो वा परिमितिरस्ति वा? न वा? इति वक्तव्यम्। अस्ति चेत्, साङ्गदर्शपूर्णमासपरिमितिवद्देतावदिदमित्युपासनापरिमितिः प्रदर्शनीया। नच तथा दृश्यते। नापि सङ्ख्यातः परिमाणमस्ति; सहस्रं लक्षं वा प्रत्ययानां मोक्षसाधनमिति नियामकादर्शनात्। नापि—कालतः परिमाणमस्ति; एकं शतं सहस्रं वा संवत्सराणामुपासीनस्य मोक्ष इति नियमे प्रमाणाभावात्। मरणमेवावधिरिति चेत् तथाऽपि दर्श-पूर्णमासवदेकाकारसाधनपरिमितिर्न लभ्यते; एकेन दशभिः शतेन सहस्रेण वा कालेन कस्यचिन्मरणात्पुरुषभेदेषूपासनोपचयापचयप्रसङ्गात्। उपास्यापरोक्ष्यमवधिरिति चेत्, तथाऽपि कस्यचित्केनचित्कालेनापरोक्षात्साधनोपचयापचयौ तदवस्थौ। अतो नोपासनलक्षणमोक्षसाधनैकरूप्यं लभ्यते। नचारोपितापरोक्षानुभव एव मोक्षसाधनम्; अविहितत्व-

### तत्त्वदीपनम्

इत्युक्तं निरस्यति—**मिथ्येति**॥ आगन्तुकमपि सशरीरत्वं न वस्तुसदिति दर्शयितुम्—"मिथ्याज्ञाने"ति विशेषणम्॥ 'अथायमि'त्यादिनाऽशरीरत्वस्य साध्यत्वं प्रतीयते, इत्याशङ्क्य, किं मिथ्याज्ञानसंबन्धध्वंसलक्षणस्य? आहो संबन्धान्तरध्वंसलक्षणस्य? इति विकल्प्याद्यं दूषयति—**तत्रेति**॥ कर्मशब्देनोपासनाऽभिधीयते। तत्र हेतुमाह—**सम्यग्ज्ञानेति**॥ प्रमाणज्ञानस्याज्ञानतत्कार्यविरोधित्वादुपासनस्य चानीदृशत्वमित्यर्थः। द्वितीयं दूषयति—**संबन्धान्तरेति**॥ सत्त्वादीनामनादित्वेऽपि यथा परिणामः, तद्वन्मुक्तेरपीति शङ्कते—**नन्विति**॥ कूटस्थनित्यताप्रतिपादकश्रुत्यादिविरोधान्मैवमित्याह—**नेत्याहेति**॥ कौटस्थ्यमङ्गीकृत्य तत्रोपास्तेरनुप्रवेशं शङ्कते—नन्विति॥ 'सदैकरूपः' 'भविष्यती'ति च विरुद्धमिति, अत्राह—**ज्ञानेति**। ज्ञानस्य तावत्तत्रानुप्रवेशोऽङ्ग्यकारि, उपास्तेश्च ज्ञानत्वात्कथं निषेध इत्यर्थः॥ अविद्यातत्कार्यनिवृत्तिमात्रं ज्ञानफलम्, तद्विहाय मुक्तेर्ज्ञानसाध्यत्वाङ्गीकारे स्वर्गादिसमत्वं स्यादित्याह—**अत्राहेति**॥ कर्मणामुपचितापचितरूपत्वात्तत्फलस्वर्गादेरपि तथात्वं युक्तम्, न तथाऽत्रोपासनायाः; एकविधत्वादिति शङ्कते—**ननु किमिति**॥ विकल्पासहत्वान्नैतदित्याह—**उच्यत इति**॥ "उच्यते"इत्यारभ्य "मरणमेवे"त्यतः प्राक्तनः स्पष्टार्थः॥ "यं यं वापि स्मरन् भावं त्यजत्यन्ते कलेवरम्। तं तमेवे'त्यादिवाक्यपर्यालोचनयोपासनस्यावधिः प्रतीयत इति शङ्कते—**मरणं वेति**॥ आयुर्नियमाभावात्साधनैकरूप्यं न सेत्स्यतीत्याह—**तथापीति**॥ परिमितिभावाभावमेवाह—**एकेनेति**॥ अवध्यन्तरमाशङ्कते—**उपास्येति**॥ अस्मिन्नपि पक्षे साधनैकरूप्याभावस्तदवस्थ इत्याह—तथापीति॥ ननु उपासना न मोक्षसाधिका, येन तदुपचयादिना मुक्तेरपि तथात्वमापद्येत, किं तूपासनजनितः साक्षात्कारो मुक्तिहेतुरित्याशङ्क्याह—**नचेति**॥ किं विहितत्वेन साधकत्वम्? उतान्वय-व्यतिरेकसिद्धत्वेन? नाद्य इत्याह—**अविहितत्वादिति**॥ द्वितीयं प्रत्याह—**मिथ्याज्ञानत्वादिति**॥ प्रमाणज्ञानस्याविद्यानिवर्तकत्वमन्वय-व्यतिरेकसिद्धम्, नाप्रमाणस्येत्यर्थः। द्वितीयं पक्षमुत्थापयति—**अथ मा भूदिति**॥ अस्मिन् कल्पे पूर्वोक्तमेव दोषं स्मारयति—**न तर्हीति**॥ उपासनोपचयादिना तत्फलेऽप्युपचयादिरित्यु-

### ऋजुविवरणम्

**ननु किमिति। यागफलवदिति**। नोपासनासाध्यस्याप्युपचितापचितत्वं निरूपयितुं शक्यते। नह्येकस्मिन्नुपासनासाध्ये मोक्षे कारणमुपचितापचितत्वे संभवतीत्यर्थः। **साङ्गदर्श-पूर्णमासपरिमितिवदिति**॥ चतुर्दशपूर्णमास आहुतयो हूयन्ते, त्रयोदशामावास्यायामितिवदित्यर्थः॥

ननु सेवादौ साधनवैषम्येऽपि फलैक्यं दृश्यते, तद्वदिहापि स्यादिति चोदयति—**अथ साधनवैषम्येऽपीति**॥

### पञ्चपादिका

प्रत्याख्याय, ब्रह्मविषयध्यानक्रियायत्तो देवताविषययागादिवत्प्रीतिविशेषो भोग्यो मोक्षः कल्प्येत, ततस्तेष्वेव तारतम्यावस्थितेषु प्रीतिविशेषेषु यागफलेष्वव्ययमपि तथाभूतः स्यात्। ततः—"तद्यथेह कर्मचितो लोकः क्षीयत एवमेवामुत्रपुण्यचितो लोकः क्षीयते" इति लिङ्गदर्शनोपबृंहितन्यायवाक्यागतानित्यत्वो मोक्षः प्रसज्येत। नच तथाभ्युपगमो मोक्षवादिनाम्। अतो न कर्तव्यशेषत्वेन ब्रह्मोपदेशो युक्त इत्युसंहारः॥

यत्पुनः—"नच पुनरावर्तते" इति शास्त्रावगतं नित्यत्वं न तर्केणापनेतुं युक्तमिति, तदयुक्तम्; वर्तमाना-

### पञ्चपादिकाविवरणम्

न्मिथ्याज्ञानत्वाच्च। अथ मा भूदैकरूप्यम्, देश-काल-सङ्ख्या-परिमाणभेदादग्निहोत्राभ्यासवत्पुरुषभेदेषु साधनोपचयापचयात्मता भविष्यतीति, न तर्हि सर्वेषामेकरूपो मोक्षः स्यात्; काष्ठोपचयाद् ज्वालोपचयवदग्निहोत्रोपचयात् स्वर्गोपचयवच्चोपासनोपचयान्मोक्षोपचयापचयोपपत्तेः। अथ साधनवैषम्येऽपि फलैकरूप्यमुच्येत, अनुष्ठानवैफल्यं स्यात्। अथ उपासनाऽपि विधीयमाना नियामकाभावादुपचयापचयरूपिणी, फलं च शास्त्रादेकरूपमिति; नैतत्सारम्; उपासनातोऽविद्या-तत्संस्कार-काम-कर्मसु क्षीयमाणेषु चित्तैकाग्र्यादपरोक्षसम्यग्ज्ञानोदयोपपत्तेः, क्षीयमाणकर्मादिवैषम्यादपरोक्षज्ञानोपपत्तेश्च। तस्मात् स्वर्गादिफलवदुपचयापचयरूपिणी मुक्तिः स्यात्, इति विधीयमानोपासनासाध्यत्वात् सुख-दुःखस्येव शरीरेन्द्रियादिदृष्टसामग्रीसाध्यत्वं साधनक्षयात्क्षयिष्णुता च स्यादित्युपसंहरति—**अतो न कर्तव्यशेषत्वेनेति**॥

ननु श्रुत्यनुमाने सामान्यावलम्बिनी—"तद्यथेह कर्मचितः" "यत् कृतकं तदनित्यमि"ति, अपुनरावृत्तिश्रुतिस्तु मोक्षविषया बलीयसीत्युक्तार्थमनुवदति—**यत्पुनर्न च पुनरावर्तत इति**॥ तत्र तावद्विधिपरत्वे वेदान्तानां

### तत्त्वदीपनम्

क्तम्, तत्र विपक्षे बाधकाभावं शङ्कते—**अथेति**॥ बाधाभावोऽसिद्ध इत्याह—**अनुष्ठानेति**। उपचितापचितसाधनानुष्ठानान्तरमपि फलसाम्येऽनुपचितसाधनानुष्ठानं विफलं स्यादित्यर्थः॥ एकरूपफलोद्देशेन विधिरूपोपासनाविधानात्फलैकरूप्यं सिद्धमिति शङ्कते—**अथेति**॥ **नियामकाभावादिति**। मरणापेक्षादेरनियतत्वात्साधनैकरूप्यस्य नियामकं न पश्याम इत्यर्थः॥

न्यायाविरुद्धे श्रुत्यर्थे संभवति विरुद्धेऽर्थान्तरे तात्पर्यं न कल्प्यमिति समाधत्ते—**नैतत्सारमिति**। मिथ्याज्ञानमविद्याशब्दार्थः। एकाग्रचित्तस्यापरोक्षज्ञानं जायते, ऐकाग्र्यं च आत्मप्रपञ्चमिथ्याज्ञानादिप्रतिबन्धनिवृत्तौ, तन्निवृत्तिश्चोपासनाधीनेति प्रणाड्या मुक्त्युपयोगसंभवे न साक्षात्तस्यास्तत्साधनत्वं श्रुत्यादिविरुद्धं कल्प्यमित्यर्थः॥ उपासनाया उपचितादिरूपत्वात्फलेऽप्युपचितापचितरूपत्वमिति यत्तूक्तम्, तत्राह—**क्षीयमाणेति**॥ निवर्त्याविद्यादितरतमभावात् साधनेऽपि तरतमभाव उचित इत्यर्थः। पापादिनिवृत्तेर्दुरधिगमत्वात् संततमुपास्त्यनुष्ठानं स्यादित्यत्राह—**अपरोक्षेति**। स्वमते मुक्तेरेकरूपत्वमुपपाद्य परमते तद् दुर्लभमित्युपसंहरति—**तस्मादिति**॥ इति शब्दो विचारसमाप्त्यर्थः तथाचोक्तं दूषणं तदवस्थमित्याह—**विधीयमानेति**॥ मुक्तेरुपचितत्वमभिधाय शरीरेन्द्रियादिमत्त्वं दर्शयति—**सुखेति**॥ लौकिकसुखदुःखयोर्यथा शरीरादिसाध्यत्वं विनाशित्वं च, तथा मुक्तेरपि तादृशत्वं दुर्वारमित्यर्थः॥

शास्त्रावगतं मुक्तिनित्यत्वं न तर्कनिरस्यमित्युक्तम्—"**यत्पुनरि**"त्यत्र, तदसंभवि। तर्कनिग्राह्यस्यानित्यत्वसाधकस्य "तद्यथेहे"त्यादेर्दर्शनादित्याशङ्क्य तात्पर्यमाह **ननु श्रुतीति**॥ श्रुत्यनुमाने एव दर्शयति—**तद्यथेत्यादिना**॥ 'सामान्य-विशेषप्रमाणयोर्विशेषविषयस्य बलीयस्त्वम् इतरस्य दौर्बल्यमि'ति न्यायमाश्रित्याह—**अपुनरावृत्तीति**॥ "तदयुक्तम्" इत्यत्र 'न स पुनरावर्तते' इति शास्त्रस्य प्रमाणान्तरसापेक्षत्वमुक्तम्, तत् कस्मात्? नच वर्तमानापदेशत्वं सापेक्षत्वप्रयोजकम्; "औदुम्बरो यूपो भवती"त्यादिषु तददर्शनादित्याशङ्क्य तात्पर्यमाह—**तत्र तावदिति**॥ वेदान्तानां

### ऋजुविवरणम्

**अनुष्ठानवैफल्यमिति**॥ अयमर्थः—न लोकसाधर्म्येण वैदिकार्थनिश्चयः; तत्र भिन्नसाधनेषु फलैक्यं दृष्टत्वादङ्गीकृतम्, इह तु कल्प्ये फले न साधनोपचयापचये फलैक्यं युक्तमित्यर्थः॥ अत्रापि शास्त्रसामर्थ्याद्विधीयमानस्योपासनस्यैकरूपं फलं प्रतीयतेऽपरोक्षज्ञानम्, तद्द्वारा मोक्षश्च। नच तत्रोपचयापचयौ संभवत इति दर्शयति—**अथोपासनाऽपीति**॥ एतदुक्तं भवति—यद्यपि साक्षात्साधनपरिमाणं न श्रूयते, तथाऽपि ज्ञानावधित्वप्रतीतेर्न साधनोपचयापचयौ संभवत इति॥

यत्पुनः—"नच पुनरि"त्युक्तार्थानुवादः कृतः, स न युक्तः; आगमस्याप्यनित्यत्वसाधकस्य विद्यमानत्वा-

### पञ्चपादिका

**पदेशत्वेन तथाभावे प्रमाणापेक्षणात्। नच कार्यस्य नित्यत्वे प्रमाणमस्ति; परमाणूनां पाकजो गुणो नित्यत्वे नोदाहरणम्; प्रक्रियामात्रसिद्धत्वात्। किंच "तेषामिह न पुनरावृत्तिः"; "इमं मानवमावर्तं नावर्तन्ते" इति श्रुतिरिहेममिति विशेषणादस्मिन्**

### पञ्चपादिकाविवरणम्

फलश्रुतयोऽर्थवादाः; पर्णमयीत्वादिवत्, नचार्थवादैरपुनरावृत्तिः प्रमातुं शक्यते; द्रव्य-गुणसंस्कार-कर्मफलश्रुतिवत्। ननु नार्थवादत्वात्फलश्रुतयः प्रामाण्यं जहति, किंतु वर्तमानापदेशित्वेन योग्यानुपलब्धिविरोधात्, इहापि तर्हि "नच पुनरावर्तते" इत्यप्राप्तप्रतिषेधान्नार्थवादानां प्रामाण्यम्। तथाहि—"ब्रह्मलोकमभिसंपद्यते नच पुनरावर्तते" इत्यभिसंपत्तिसमये पुनरावृत्तिरप्राप्ता प्रतिषिध्यते। ननु पुनरावर्तिष्यत इति भाविनी पुनरावृत्तिः प्रतिषिध्यत इति वाक्यार्थः कल्प्यत इति चेत्, न; श्रुतार्थपरित्यागेनाश्रुतार्थकल्पनायाम्—यत्कृतकम्, तदनित्यम्, "तद्यथेह कर्मचितः" इति श्रुत्यनुमानविरोधात्। एवमपुनरावृत्तिवाक्यान्तरेषु योजयितव्यम्। तस्मादर्थवादमात्रमेतत्॥ सामान्यश्रुत्यनुमानाभ्यां साध्यस्य मोक्षस्यानित्यता दर्शिता, इदानीमपुनरावृत्तिविशेषणसामर्थ्यादिवान्तवत्तामाह—**किंच तेषामिहेति**॥ "इममिहे"ति विशेषणं मानवान्तरे स्वतः प्राप्तामावृत्तिं दर्शयति। ननु—अस्मिन् कल्पेऽनावृत्तिं प्रतिपादयतो वाक्यस्य कल्पान्तरे पुनरावृत्तिप्रतिपादने द्वैयर्थ्याद्वाक्यभेदः स्यादिति, अनभिज्ञोऽयं सर्वसङ्करवादी देवानां प्रियः, यतः सर्वेषां

### तत्त्वदीपनम्

विधिपरत्वे तत्र वेदान्तेषु याः फलश्रुतयः, ता अर्थवादा इति संबन्धः अर्थवादत्वमस्मदनुकूलम्, न प्रतिकूलम्; अर्थं वदन्तीत्यर्थसाधकत्वात्, इत्याशङ्क्याह—**नचेति**। अर्थबोधकत्वमात्रं नार्थवादशब्दार्थः, किंतु विध्यपेक्षितस्तुतिनिन्दार्थवादित्वम्। नच तादृशस्य प्रतीयमानेऽर्थे प्रामाण्यसंभव इत्यर्थः॥ अत्र दृष्टान्तमाह—**द्रव्येति**॥ "यस्य पर्णमयी जुहूर्भवती"त्याद्या द्रव्ये फलश्रुतिः, "यदाङ्क्ते चक्षुरेव भ्रातृव्यस्य वृङ्क्ते" इत्याद्या संस्कारेषु फलश्रुतिः, "वर्म वा एतद्यज्ञस्य क्रियते" इत्याद्या कर्मसु, इति विभागः। दृष्टान्ते फलश्रुतीनामप्रामाण्ये सार्थवादत्वं हेतुरिति शङ्कते—**ननु नार्थेति**॥ अर्थवादादपि विग्रहवद्देवतादिसिद्ध्युपगमादित्यर्थः। किं तर्ह्यप्रामाण्यकारणमिति शङ्कते—**किंत्विति**॥ प्रमाणान्तरविरोधित्वमित्याह—**विवर्तमानेति**॥ प्रतिषेधस्य प्रसक्तिपुरःसरत्वं दृष्टम्, अत्र च प्रसक्त्यभावान्न प्रतिषेधश्रुतेः प्रामाण्यमित्याह—**इहापीति**॥ तर्हीहापि नार्थवादानां प्रामाण्यमिति संबन्धः। तत्र हेतुः—**न च पुनरावर्तत इति**॥ संयोगस्य विप्रयोगावसानत्वात् कथमावृत्तिप्रसक्तिः? तत्राह—**तथाहीति**॥ "न स पुनरावर्तते" इत्यस्य किं यथाश्रुतोऽर्थः? उतान्यथा? आद्यं दूषयति—**ब्रह्मलोकमिति**॥ द्वितीयमुत्थापयति—**नच पुनरावर्तिष्यत इति**॥ अविरोधमपेक्ष्य कल्पना प्रसरति, अत्र च विरोधान्न कल्पनेत्याह—**श्रुतार्थेति**॥ उक्तन्यायमन्यत्रातिदिशति—**एवमिति**॥ "एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते" इत्यादीनि **वाक्यान्तरशब्देन** सङ्गृह्यन्ते। अस्मिन् कल्प आवृत्त्यभावस्य पुराऽनुक्तत्वात् "किंचेत्यु"क्तिरयुक्तेत्याशङ्क्याह—**सामन्येति**॥ विशेषणसामर्थ्यादिति। इममिहेति विशेषणसामर्थ्यादित्यर्थः॥ विशेषणबलादस्मिन् कल्प आवृत्त्यभावप्रतिपत्तावपि कल्पान्तर आवर्तिष्यन्त इत्यत्र किं मानम्? इत्याशङ्क्याह—**इममिहेति**॥ वाक्यभेदप्रसङ्गान्न कल्पान्तरावृत्तिसाधकत्वमिति शङ्कते—**नन्वस्मिन् कल्प इति**॥ सोपहासमुत्तरयति—**अनभिज्ञ इति**॥ 'नीलमुत्पलमि'त्यादिवाक्यान्नीलत्वविधावरुणत्वव्यावृत्तिसिद्धिरित्याह—**यत इति**॥ उत्पलस्य नैल्यसंसर्गं बोधयद्वाक्य-

### ऋजुविवरणम्

दित्याशङ्क्यावतारयति—**ननु श्रुत्यनुमान इति**॥ "तदयुक्तं वर्तमानापदेशत्वेने"त्यनेन वर्तमानापदेशत्वं प्रमाणान्तरसापेक्षत्वमुक्तम्, अयुक्तं तत्; तस्य मानान्तरापेक्षत्वे कारणत्वाभावात्, इत्याशङ्क्याभिप्रायमाह—**तत्र तावद्विधिपरत्व इति**॥ ननु अर्थवादत्वेऽप्यपुनरावृत्तिप्रतिपादकत्वमित्याशङ्क्याह—नचार्थवादैरिति॥ द्रव्ये फलश्रुतिः—"यस्य पर्णमयी"ति "वर्म वा एतद्यज्ञस्ये"ति क्रियायाम्,—"यदाङ्क्ते चक्षुरेव भ्रातृव्यस्ये"ति तु संस्कारे॥ ननु प्राप्तस्य पुनर्निषेधो दृष्टः, अतः कथमप्राप्तप्रतिषेधः? इत्याशङ्क्य विवृणोति—**तथाहि ब्रह्मलोकमिति**॥ प्रमाणान्तरविरोधपरिहारेणाश्रुतार्थकल्पना दृष्टाऽन्यत्र, नेह तथेत्यभिप्रायेण परिहरति—**न श्रुतार्थपरित्यागेनेति**॥ "किञ्च तेषामि"ति कस्मिन्नर्थे युक्त्यन्तरमुच्यते? न तावत्पूर्वग्रन्थार्थे; तत्रार्थवादत्वेन प्रामाण्यमेव नास्तीत्युक्तम्। प्रमाणान्तराभावोऽप्ययुक्तः, ननु सावधिकवृत्तिप्रतिपादकत्वमुक्तम्, अतो भिन्नविषयत्वान्न युक्त्यन्तरमित्याशङ्क्यावतारयति—**सामान्यश्रुत्यनुमानाभ्यामिति**॥ श्रुतिसामान्यादेकत्वादियमेव तत्राप्यनावृत्तिं प्रतिपादयतीत्यर्थः॥

## पञ्चपादिका

**कल्पेऽनावृत्तिं दर्शयति, नानवधिकामनावृत्तिम्। अपि च अभ्युपेत्य ब्रह्मणः क्रियानुप्रवेशं मोक्षस्यानित्यत्वदोष उक्तः, ननु क्रियानुप्रवेशं क्षमते वेदान्तवाक्यगतः पदसमन्वयः। तथा च "ब्रह्म वेद ब्रह्मैव भवती"त्याद्याः श्रुतयो ब्रह्मविद्यानन्तरं मोक्षं दर्शयन्त्यो मध्ये कार्यान्तरं वारयन्ति; वेदन-ब्रह्मभवनयोरेककालत्वनिर्देशात्। अतो न विदितस्य क्रियायां विनियोगः। तथा "तद्धैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदे" इति ब्रह्मदर्शन-सर्वात्मभावयोरेककालत्वनिर्देशाद् मध्ये क्रियान्तरं वारयति पश्यन्निति शतृप्रत्ययः; "लक्षण-हेत्वोः क्रियायाः" इति क्रियाहेतुभूताद्धातोः शतृप्रत्ययस्मरणात्, क्रियायाश्चान्याव्यवहिते हेतुमति हेतुत्वात्। यथा "तिष्ठन् गायती"ति तिष्ठति-गायत्योर्मध्ये क्रियान्तराभावः प्रतीयते, तद्वत्। अत्र न स्थितिक्रियासामर्थ्यदिव**

## पञ्चपादिकाविवरणम्

सविशेषणवाक्यानामिदं चोद्यमवतरति। अथ सविशेषणं वाक्यं विशिष्टमर्थं मुखतः प्रतिपादयति, अर्थात्तु विशेष्यान्तर-व्यावृत्तिः प्रमीयत इति न वाक्यभेदः, तर्हि इहाप्येतत्कल्पविशेषिताऽनावृत्तिर्मुखतः प्रतिपाद्यते, अर्थादपुनरावृत्तिरस्य कल्पान्तरे निवार्यते, इति न वाक्यभेदः। ननु—कल्पान्तरेऽपि श्रुतिसामान्यादिह न पुनरावृत्तिरिति प्रतिषेधस्तुल्यः, सत्यम् अस्माकं तावदस्मिन् कल्पे प्रतिपन्नानां कल्पान्तरे पुनरावृत्तिर्विशेषणसामर्थ्यात्प्रमीयत इदानीम्, कल्पान्तरप्रतिपत्तॄणामपि तस्मिन्ननावृत्तिप्रमितिश्चेत्, स्यात् इत्थं व्यवस्था कल्प्यते;—अस्मिन् कल्पे प्रतिपन्नानां कल्पान्तरे पुनरावृत्तिः, कल्पान्तरे प्रतिपन्नानां तत्रानावृत्तिरिति; अन्यथा विशेषणवैफल्यादिति॥

**"अपि च अभ्युपेत्ये"**त्यारभ्य **"तथा तद्धैतदि"**त्यतः **प्राक्तनग्रन्थस्यायमर्थः**—शब्दादवगते ब्रह्मणि सुख-संवेदनत्वादभ्यासेनापरोक्षीकृते विधिमन्तरेण यत्साक्षात्करणम्, तद् ब्रह्मवेदनमित्युच्यते। तस्मिन्नुत्पन्नेऽनन्तरमेवा-विद्यादिदोषनिवृत्तेर्युक्तं ब्रह्मसंवेदनेन समानकालत्वं फलस्य। यदा पुनरुपासनैवाध्यारोपितात्मविषया विधीयमाना ब्रह्मसंवेदनमुच्यते, तदा नैयोगिकफलस्य कालान्तरभावित्वान्न युक्तः समानकालतानिर्देशः। अतः शब्दादपि विदितस्य

## तत्त्वदीपनम्

मर्थादितरव्यावृत्तिं बोधयति, कुतो वाक्यभेदः? इत्याह—**अथेति**॥ तुल्यमत्रापीत्याह—**तर्हीति**॥ अस्मिन्कल्पेऽनावृत्तिः, कल्पान्तरे त्वावृत्तिरित्यस्माद्वाक्यान्निश्चेतुमशक्यम्, तत्कल्पवर्तिश्रुतिसामर्थ्यात्तत्राप्यनावृत्तिप्रतीतेरिति शङ्कते—**ननु कल्पान्तर इति**। **श्रुतिसामान्यादिति**। इममित्यादिश्रुतेरुभयत्रैकरूपत्वादित्यर्थः। श्रुत्येकत्वमङ्गीकरोति—**सत्यमिति**॥ तर्ह्यावृत्त्यसिद्धिरिति चेत्, तत्र वक्तव्यम्—अस्मिन् कल्पे ये ब्रह्म प्राप्ताः, तेषां कल्पान्तरेऽनावृत्तिः? उतान्येषाम्? नाद्य इत्याह—**अस्माकमिति**। **प्रतिपन्नानामिति**। अत्र ब्रह्मेत्यस्यानुषङ्गः। द्वितीयं प्रत्याह—**इदानीमिति**। **कल्पान्तर-प्रतिपत्तॄणामिति**। कल्पान्तरे ब्रह्मप्रतिपत्तॄणामित्यर्थः। इत्थंशब्दसूचितमर्थमाह—**अस्मिन् कल्प इति**। व्यवस्थायां हेतुमाह—**अन्यथेति**॥

"अपिचे"त्यत्र विद्यानन्तरं मोक्ष इत्युक्तम्, तत्र वक्तव्यम्—किं शाब्दज्ञानं विद्या? उतापरोक्षम्? अथवो-पासनम्? नाद्यः; अनिष्टेः, अनुपलब्धेश्च। नापि द्वितीयः; साक्षात्कारहेतुत्वेनाभ्यासे विधेराश्रयणीयत्वात्, नापि तृतीयः; तस्या अप्रमाणत्वादित्याशङ्क्याह—**अपि चाभ्युपेत्येति**॥ अन्वय-व्यतिरेकसिद्धत्वान्नाभ्यासे विधिरित्याह—**सुखसंवे-दनत्वादिति**॥ उपासनैव वेदनं किं न स्यादित्यत्राह—**यदा पुनरिति**॥ स्वमतं निगमयति—**अत इति**॥ **लक्षणहेत्वो-** (मूले) रित्यादेरयमर्थः—क्रियायाः क्रियान्तरं प्रति लक्षणत्वे हेतुत्वे च गम्यमाने लक्षणहेतुभूतक्रियावाचकाद्धातोरुपरि शतृ-प्रत्ययः स्मर्यतः इत्यर्थः। **क्रियाहेतुभूतादिति**॥ क्रियाहेतुभूतवाचकाद्धेतोरित्यर्थः। "तिष्ठन् गायती"त्यत्र स्थितिक्रियाया गीतिक्रियाहेतुत्वाभावदृष्टान्तो विषम इत्याशङ्क्याह—**न स्थितिक्रियेति**॥ "न क्रियासाध्यमि"त्यत्र किं ज्ञानक्रिया-

## ऋजुविवरणम्

**"अपि चाभ्युपेत्ये"**त्यनेनैतदुक्तम्—वेदान्तवाक्यान्येव क्रियानुप्रवेशं निराकुर्वन्तीति, तत्र ब्रह्मवेदनं विवक्षितं प्राथमिकम्? अपरोक्षं वा? न तावत्प्राथमिकज्ञान-ब्रह्मभवनयोर्मध्ये क्रियानुप्रवेशनिराकरणम्; अभ्यासेन विनाऽऽ-परोक्ष्यानुपपत्तेः, तस्य च विधानसापेक्षत्वात्। नापि द्वितीयः; विहिताभ्यासजन्यापरोक्षज्ञान-ब्रह्मभवनयोर्मध्ये क्रियानुप्रवेशनिराकरणे न किञ्चित्प्रयोजनम्; ब्रह्मणः क्रियानुप्रवेशस्य सिद्धत्वात्। नहि क्रियानुप्रवेशवादिनापि सर्वदा क्रियानुप्रवेशोऽङ्गीकृतः, तेन हेयो ग्रन्थ इत्याशङ्क्य व्याचष्टे—**अपि चाभ्युपेत्येत्यारभ्येति**॥

ननु टीकाकारेण "तिष्ठन् गायती" कथमुदाहृतम्? विषमत्वात्, नहि स्थितिक्रिया गानहेतुः, अव्यवहितश्च

### पञ्चपादिका

गीतिक्रियानिर्वृत्तिः, अपि तु प्रयत्नान्तरात् । शब्दतो न तयोर्मध्ये क्रियान्तरप्रतीतिरित्येतावतोदाहरणम् । इह पुनर्न सर्वात्मभावस्य ब्रह्मदर्शनातिरेकेण प्रयत्नान्तरापेक्षा विद्यते ॥

किंच—"तस्मै मृदितकषायाय तमसः पारं दर्शयती"त्याद्याः श्रुतयस्तमसो मिथ्याज्ञानस्य मोक्षव्यवधायिनोऽपनयनमात्रं दर्शयन्ति, न मोक्षं क्रियासाध्यम् ।

### पञ्चपादिकाविवरणम्

ब्रह्मणः स्वयमेवापरोक्षज्ञानाय प्रवृत्तेः फलजननात्प्राङ् न कार्यानुप्रवेश इति । "तथा तद्धैतत्पश्यन्नृषिर्वामदेवः" इत्यादिः "किञ्चे"त्यतः प्राक्तनो ग्रन्थः स्पष्टार्थः ॥

अपि च ब्रह्मविद्याफलमविद्यानिवृत्तिं दर्शयन्ति । सा चापरोक्षाध्यासलक्षणा तत्त्वापरोक्षज्ञानमन्तरेण न निवर्तते । यदा पुनरुपासनैवारोपितरूपा तत्त्वज्ञानं स्यात्, न तेनाविद्या निवर्तेत । अतस्तत्त्वज्ञानमेव प्रमाणजनितमविद्यानिवर्तकम्, इत्यविद्यानिवृत्तिफलश्रवणाद् ब्रह्मात्मनि वेदान्ताः प्रमाणमित्याह—**किंच तस्मै मृदितकषायायेत्यादि** ॥ ननु अविद्यानिवृत्तिरिह न श्रूयते, नैष दोषः; "तरति शोकमात्मविदि"ति शोकतरणनिमित्तमात्मज्ञानं प्रक्रम्य "तमसः पारं दर्शयती"त्युपसंहरन् यदि तमोनिवृत्तिमेव न ब्रवीति, तदा शोकाद्यध्यासनिवृत्त्युपक्रमो न स्यात् । अतः शोकाद्युपादानानाद्यविद्यानिवृत्तिरेव "तमसः पारं दर्शयती"त्युक्तेति गम्यते । तथा "अविद्यायाः परं पारं तारयसी"त्यविद्यातिक्रमेण ब्रह्मप्राप्तिं ब्रुवन्नतिक्रमानुपपत्तेर्निवृत्तिमेव दर्शयतीति श्रुत्यनुसारेणाविद्यानिवृत्तिफलसिद्धये तत्त्वज्ञाननिष्ठं वेदान्तप्रमाणमित्युक्तम् ॥

### तत्त्वदीपनम्

साध्यत्वम् ? उत तदतिरिक्तक्रियासाध्यत्वम् ? नाद्यः; "तरति शोकमात्मवित्" "ब्रह्म वेदे"त्यादौ ज्ञानक्रियासाध्यत्वप्रतीतेः । न द्वितीयः; तदनङ्गीकृतेरित्याशङ्क्य तात्पर्यमाह—**अपि च ब्रह्मविद्येति** ॥ अथवा—"तरति शोकमात्मविदि"त्युपक्रम्य "तमसः पारं दर्शयती"त्यभिधानादात्मज्ञानस्याविद्यानिवर्तकत्वमुपलभ्यते, नच तदुपपद्यते; अनुपलब्धेः । तथाच ब्रह्मज्ञानस्याविद्यानिवर्तकत्वश्रुतिविरोधश्च । न चात्मविद्या ब्रह्मविद्येत्यपि शङ्क्यम्; ब्रह्मविद्यायां सत्यामप्यविद्यानिवृत्त्यनुपलम्भादित्याशङ्क्य तात्पर्यमाह—**अपिचेति** ॥ ब्रह्मविद्यायां सत्यामप्यात्मन्यविद्या न निवर्तत इत्युक्तं चोद्यं निरस्यति—**सा चेति** ॥ विधीयमानोपासनाया एवाविद्यानिवर्तकत्वं किं न स्यादिति ? तत्राह—**यदा पुनरिति** ॥ **तत्त्वज्ञानमिति** । आत्मज्ञानमित्यर्थः । अतत्त्वज्ञानमिति वा छेदः । "तमसः पारं दर्शयती"त्यत्र तमसः पारदर्शनमात्रं लक्ष्यते, यथा देवनद्याः पारं दर्शयतीत्युक्ते परकल्पप्रदर्शनमात्रं लक्ष्यते, तद्वत् ॥ नच—"तरति शोकमात्मविदि"त्युपक्रमसामर्थ्यान्निवृत्तिरेवोच्यत इत्यपि—शङ्कनीयम्; अत्रापि दुःखतरणमात्रोपलम्भादित्याशयेन शङ्कते—**नन्वविद्येति** ॥ उपक्रमे निवृत्तेः श्रुतत्वादुपसंहारोऽपि तद्विषय इत्याह—**नैष इति** ॥ ततः किमिति ? अत आह—**यदीति** ॥ शोकतमसोर्भिन्नत्वाच्छोकनिवृत्त्युपक्रममात्रेण कथं तमोनिवृत्तेर्निश्चयः ? इत्युक्तं दूषयति—**अत इति** । ज्ञानाज्ञानयोर्विरोधप्रसिद्धेः शोकस्य चाज्ञानात्मकत्वात्तन्निवृत्तिमन्तरेण निवृत्त्यनुपपत्तेः शोकतारणेऽज्ञाननिवृत्तेरेवोपक्रम इति निश्चीयते, ततस्तदनुरोधेनोपसंहारेऽप्यविद्यानिवृत्तिरुक्तेति निश्चिनुम इत्यर्थः ॥ "अविद्यायाः पारं तारयसी"त्यत्राविद्यानिवृत्तिः पारतरणत्वेनोक्ता, तथाच "तमसः पारं दर्शयती"त्यत्राप्यविद्यानिवृत्तिर्निर्दिष्टेत्याह—**तथेति** । इतश्च "एतदेवमि"त्यत्र मिथ्याज्ञाननिवृत्त्या दुःखनिवृत्तिरिति प्रतिज्ञामात्रमुपन्यस्तमित्याशङ्क्याह—**श्रुत्यनुसारेणेति** ॥

### ऋजुविवरणम्

हेतुरत्र निदर्शनीयः; अतः स्थितेर्गानहेतुत्वम् ? ब्रह्मदर्शनस्य वा सार्वात्म्यहेतुत्वाभावः ? इत्याशङ्क्य स्वयमेव परिहरति—**अत्र न स्थितिक्रियेति** (मूले) ॥ किञ्च "तस्मै मृदितकषायाये"त्यनेन तमोनिवृत्तिरूपं मोक्षं दर्शयति । न क्रियासाध्यमित्युक्तम्, तत्र ज्ञानातिरिक्तक्रिया निषिध्यते ? तद्रूपा वा ? नाद्यः; पूर्ववादिनाप्यङ्गीकृतत्वात्, न द्वितीयः; शास्त्रत एव प्रतीतेः, नहि विधेयोपासनातिरिक्तज्ञानप्रतीतिः शास्त्रे; तरति शोकमात्मविदिति ज्ञानमात्रप्रतीतेः । अतोऽविद्यानिवृत्तिफले न क्रियासाध्यत्वाभावनिश्चय इत्याशङ्क्यावतारयति—**अपि च ब्रह्मविद्येति** ॥

**अविद्यानिवृत्तिरिति** ॥ तमसः पारदर्शनमात्रश्रवणात् । नचोपक्रमसामर्थ्यादपि तत्प्रतीतिः; शोकतरणमात्रप्रतीतेरिति भावः । **नैष दोष** इत्यादेरयमर्थः—शोकतरणमात्रं ज्ञानेन भवतीति श्रूयते । नच ज्ञानस्य साक्षात्-

**पञ्चपादिका**

**इतश्चैतदेवम्, अन्येऽपि न्यायविदो मिथ्याज्ञानापाये तदनन्तरं दुःखाभावं निर्वाणं दर्शयन्ति ।**

**पञ्चपादिकाविवरणम्**

इदानीं तर्कशास्त्रानुसारेणापि मिथ्याज्ञाननिवृत्तिफलं तत्त्वज्ञानमिति दर्शयति—**इतश्चैतदेवमिति** ।। अयमर्थः- दुःख-जन्म-प्रवृत्ति-दोष-मिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तराभावादपवर्ग इति । आत्म-शरीरेन्द्रियार्थ-बुद्धि-मनः-प्रवृत्ति-दोष-प्रेत्यभाव-फल-दुःखापवर्गेषु द्वादशसु पदार्थेषु यदिदमनादिप्रवृत्तं मिथ्याज्ञानम्, तस्यात्मपरमात्मशरीरेन्द्रियादिद्वादशपदार्थतत्त्वदर्शनवैमल्यादपाये तेषु राग-द्वेष-मोहा नोत्पद्यन्ते । ततः प्रवर्तकाभावात्सुख दुःखफले प्रवृत्ति-निवृत्ती नोपजायेते । ततः प्रवृतिनिवृत्तिद्वारोपचितशुभाशुभव्यामिश्रकर्मशून्यतया ब्रह्मादिस्थावरान्तेषु योनिभेदेषु न जायते; शरीरसम्बन्धं न प्रतिपद्यत इत्यर्थः । ततः शरीराभावे सुख-दुःखे नोत्पद्येते, इति मिथ्याज्ञानापायमेव मोक्षं दर्शयति । तथा वैशेषिकैरपि द्रव्य-गुण-कर्म-सामान्य-विशेष-समवायेषु सालक्षण्यवैलक्षण्याभ्यां तत्त्वापरिज्ञानादनादिप्रवृत्तं मिथ्याज्ञानं तत्त्वपरिभावनया निवर्त्यते; ततश्चोत्तरोत्तराभावादपवर्ग इत्युक्तम् । तथा सांख्ययोगैरपि दर्शितम्—द्रष्टृदृश्याविवेकलक्षणाऽविद्याऽनादिप्रवृत्ता तत्त्वज्ञानेन निवर्त्यते । ततश्चाविद्याऽस्मिता-राग-द्वेषाभिनिवेशाः क्लेशाः प्रहीयन्ते । ततः प्रक्षीणक्लेशस्य प्रवृत्त्यनुदयादपवर्ग इति । सुगतैरप्युक्तम्—अनुसन्धानकल्पनया राग-द्वेषादिदोषैः प्रवृत्ति-तत्फलोदयपर्यन्तैर्विषयविभ्रमैश्च दूषितानि विज्ञानानि । तेषु च तत्त्वपरिभावनया निवृत्तेषु विभ्रमेषु, विशुद्धविज्ञान-चरमक्षणोदयो मोक्ष इति । तदेवमविद्यानिवृत्तौ मोक्षे प्रमाणजनितं तत्त्वज्ञानं विहाय कथमुपास्तिक्रिया मोक्षसाधनं कल्प्यत इति ?

ननु प्रदर्शितमन्यदन्यदेव मिथ्याज्ञाननिवर्तकं तत्त्वज्ञानम् । तथाहि—द्वादशपदार्थेषु तत्त्वपरिभावनाजनितेन सम्यग्ज्ञानेनाविद्या निवर्त्यते । पूर्वोपचितानि च कर्माणि तत्त्वपरिभावनाजनितसंक्लेशेन तत्प्रकर्षजनितेनाऽऽनन्देन

**तत्त्वदीपनम्**

मिथ्याज्ञाननिवृत्त्या दुःखनिवृत्तिप्रतिपादकं न्यायकृद्वचनमुदाहरति—**अयमर्थ इति** ।। दुःखं च जन्म च प्रवृत्तिश्च दोषाश्च मिथ्याज्ञानं चेति दुःख-जन्म-प्रवृत्ति-दोष-मिथ्याज्ञानानि, तेषां मध्ये मिथ्याज्ञाननिवृत्तौ तन्मूलरागद्वेषादिदोषनिवृत्तिः, तथाच त्रिविधप्रवृत्त्युपरमः, प्रवृत्त्युपरमे च तन्निमित्तपुण्यपापाभावाज्जन्माभावः, ततो दुःखनिवृत्तिरिति सूत्रार्थः ।। ननु तैरनादिभावरूपाज्ञान-तन्निवृत्ती नोपेयेते, कथं तदुदाहरणादभिलषितसिद्धिः ? इत्याशङ्क्य, मिथ्याज्ञाननिवृत्तिमात्रं स्वीकृतमित्याशयेन मिथ्याज्ञानशब्दार्थमाह—**आत्मेति** ।। अर्थशब्देन पृथिव्यादयो निर्दिश्यन्ते । **मरणम्**=प्रेत्यभावः । फलम्=सुखम् । किं तस्य निवर्तकम् ? तत्राह—**तस्येति** ।। आत्मनो नित्यत्वाज्जन्माप्रसक्तेः कथं न जायत इत्युक्तमिति ? तत्राह—**शरीरसंबन्धमिति** ।। मिथ्याज्ञानापाये मोक्ष इत्येतत्तन्त्रान्तरपर्यालोचनयाऽप्यवसीयत इत्याह—**तथेति** ।। तद्वृत्तित्वे सति तदितरवृत्तित्वं सालक्षण्यम्, तदवृत्तित्वे सति तदितरावृत्तित्वं वैलक्षण्यम्, देहादावात्मबुद्धिरविद्या, अहमस्मीत्यभिमानविशेषोऽस्मिता । **अनुसन्धानकल्पनयेति** । अनुसन्धीयत इत्यनुसन्धानम्, स्थायित्वम्; तत्कल्पनयेत्यर्थः । दोषानेव विशिनष्टि—**प्रवृत्तीति** । **तत्त्वपरिभावनयेति** । क्षणिक-शून्य-स्वलक्षण-दुःखपरिभावनया निवृत्तेष्वित्यर्थः ।। विशुद्धं च तद्विज्ञानं चेति विशुद्धविज्ञानम्, तच्च चरमक्षण इति विशुद्धविज्ञानचरमक्षणः, तदुदय इत्यर्थः । तत्त्वज्ञानस्याविद्यानिवर्तकतायां सर्ववादिसंमतत्वादुपास्तेर्न मुक्तिसाधनत्वमित्युपसंहरति—**तदेवमिति** ।।

तत्त्वज्ञानस्य मुक्तिसाधनत्वमङ्गीकृत्य प्रत्यग्ब्रह्मैक्यज्ञानस्य मुक्तिसाधनत्वमाक्षिपति—**ननु प्रदर्शितमिति** ।। अन्यद् अन्यदेव मिथ्याज्ञाननिवर्तकं तत्त्वज्ञानं प्रदर्शितमिति संबन्धः । यादृशं तत्त्वज्ञानं निवर्तकमिति येनाभिधीयते, ततोऽन्यथाऽन्येनेति निवर्तकस्य नैकरूप्यमित्यर्थः । **द्वादशपदार्थेष्विति** ।। आत्मशरीरादिष्वित्यर्थः । अविद्यानिवृत्तावपि कर्मणां भावात् कथं मुक्तिः ? इत्याशङ्क्याह—**पूर्वोपचितानीति** ।। द्विविधं कर्म—पुण्यं पापं चेति, तत्रापुण्यस्य निवृत्तिमाह—**तत्त्वपरिभावनेति** ।। इतरनिवृत्तिमाह—**तत्प्रकर्षेति** ।। तत्त्वपरिभावना तच्छब्दार्थः सहार्थे तृतीया । तथाच

**ऋजुविवरणम्**

न्निवर्तकत्वं संभवति; विरोधाभावात्, अतोऽज्ञानद्वारेण तन्निवर्तकत्वं प्रक्रान्तम्, उपसंहारेऽपि तदेव प्रतीयत एकरूपत्वायेति । अविवेकनिमित्तो विभ्रमोऽविद्या । तयाऽहमस्मीति बुद्धिरित्यनुसन्धीयते, इत्यनुसन्धानस्थायित्वम्, तेन कल्प्यन्त इति कल्पना द्रव्यत्वादयः । अथवा अनुसन्धानं कल्पना चेत्यनुसन्धानकल्पना । यद्वा—**अनुसन्धानेन कल्पनेति** ।

### पञ्चपादिका

**मिथ्याज्ञानापायश्च ब्रह्मात्मैकत्वविज्ञानाद्भवति, न क्रियातः। कथं गम्यते? "इन्द्रो मायाभिः पुरुरूप ईयते" इति मिथ्यैव भेदावभासः, तस्य प्रतिपक्षादभेदावभासादपनय इति गम्यते ॥**

### पञ्चपादिकाविवरणम्

वर्तमानस्य चोपभोगेन निवर्त्यन्ते। ततश्च कैवल्यमिति नैयायिकैरुक्तम्। वैशेषिकैरपि पदार्थषट्कपरिभावनाजनितेन तत्त्वज्ञानेनेश्वराभिध्यानानुगृहीतेन मिथ्याज्ञानं निवर्त्यते, ततो रागादयः क्रमेण परिहीयन्ते, ततश्च पूर्वोपचितदुरितानां पदार्थपरिभावनापरिक्लेशफलानामत्यन्तोच्छेदः, सुकृतानां च तत्त्वदर्शनवैमल्यानन्देन निवृत्तिः, ततः कैवल्यमिति दर्शितम्। योगास्तु प्रतिपेदिरे—असंप्रज्ञातसमाधिजनितेन प्रकृति-पुरुषविवेकज्ञानेन पुरुषाकारमात्रपर्यवसितेनाविद्याऽस्मिता-राग-द्वेषाभिनिवेशेषु क्षीयमाणेषु पूर्वोपचितकर्मसु चैकभविकन्यायेन क्षीयमाणेष्वपवृज्यत इति। सुगतैः प्रतिपन्नम्—क्षणिक-स्वलक्षण-दुःखमार्गासत्यभावनाजनितविशुद्धज्ञानलक्षणचरमक्षणोदयेन हीयमानेषु स्थायित्वाकार्यत्वप्रवृत्ति-विषयविभ्रमेषु सन्तानोच्छेदो मोक्ष इति। तदेवं भिन्नविज्ञानसाध्यो मोक्ष इति, तत्राह—**मिथ्याज्ञानापायश्च ब्रह्मात्मैकत्वविज्ञानादिति** ॥ ननु प्रदर्शिततत्त्वदर्शिनेष्वपि मिथ्याज्ञाने प्रतिपक्षेषु ब्रह्मविज्ञानमेव किमिति निवर्तकं गृह्यते? इति चोदयति—**कथं गम्यत इति** ॥ भेददर्शनस्य मिथ्याज्ञानविलसितत्वेन तत्प्रतिपक्षेणाद्वितीयब्रह्मात्मदर्शनेनैव तन्निवृत्तिः, न यथोक्तभेददर्शनैरिति परिहरति—**इन्द्रो मायाभिरित्यादिना** ॥ ननु अद्वितीयब्रह्मात्मैकत्वपरं न शास्त्रम्; तत्र तात्पर्याभावात्, किन्तु जीवविलक्षणे प्रमाणान्तराविरुद्धे ब्रह्मणि शास्त्रप्रतिपन्ने संपदादिविषयाणि तादात्म्यवाक्यानीति पूर्व-

### तत्त्वदीपनम्

क्लेशेनानन्देन च सह वर्तमानस्य पुंसः प्राक् संचितानि कर्माणि क्लेशानन्दोषभोगेन निवर्तन्त इत्यर्थः। कथं तर्हि कर्मणां निवृत्तिः? तत्राह—**ततश्चेति** ॥ मिथ्याज्ञान-तन्मूलरागादीनां निवृत्तेः कर्मान्तरानुदय इत्यभिप्रेत्य प्राक्संचितनिवृत्तिमाह **पूर्वोपचितेति** ॥ पदार्थानां परिभावना, तन्निमित्तः परिक्लेशः फलं येषां तानि, तेषामित्यर्थः। द्विविधः समाधिः—संप्रज्ञातोऽसंप्रज्ञातश्च। प्रत्ययोपरमे तत्संस्कारमात्रावशेषतया चित्तस्यावस्थानमसंप्रज्ञातः समाधिः—**पुरुषाकारेति** ॥ प्रकृतिसम्बन्धं विहाय चिन्मात्रमित्यर्थः ॥ **ऐकभविकन्यायेनेति** ॥ प्रायणसमयेऽभिव्यक्तं सत्कर्मजातमेकं शरीरमारभत इति तस्मिन् शरीरे प्रारब्धफलस्योपभोगेन क्षयः, काम्यनिषिद्धयोस्त्वननुष्ठानान्नित्यनैमित्तिकाननुष्ठानेन तदकरणमिति प्रत्यवायाभावः, ततश्च मुक्तिरित्यर्थः। **स्वलक्षणम्**=असङ्गि। ज्ञानव्यतिरिक्तं सर्वं दुःखसाधनमित्येतद् दुःखमार्गशब्देनोच्यते। **असत्यम्**=तुच्छमित्यर्थः। क्षणिकभावनाविपरीतरूपमाह—**स्थायित्वेति**। स्वलक्षणविपरीतस्वरूपमाह—**कार्यत्वेति**। दुःखसाधनभावनाविपरीतस्वरूपमाह—**प्रवृत्तीति**। असत्यभावनाविपरीतस्वरूपमाह—**विषयेति**। पूर्वपक्षमुपसंहरति—**तदेवमिति** ॥ उक्तेऽर्थे हेतुं पृच्छति—**ननु प्रदर्शितेति** ॥ ब्रह्मज्ञानस्य मिथ्याभूतस्य यथा भेदावभासनिवर्तकत्वम्, तथा तस्यापि निवर्तकत्वं स्यादित्याशङ्क्याह—**भेददर्शनस्येति**। अस्मन्मते ज्ञानस्य स्वरूपेण मिथ्यात्वेऽपि विषयस्य सत्यत्वात् तन्निवर्तकत्वम्, भेददर्शनस्य तु विषयतोऽपि मिथ्यात्वान्न निवर्तकत्वमित्यभिप्रायः ॥ "अथापि स्यादि"त्यत्रैकत्वज्ञानस्य निवर्तकत्वमङ्गीकृत्य संपदादिरूपत्वमुक्तम्, तत् कस्मात्? इति शङ्कायामाह—**नन्वद्वितीयेति** ॥ अध्ययनविध्युपात्तत्वाद् नैरर्थक्यानुपपत्तेस्तच्छास्त्रं तत्परमेष्टव्यमिति शङ्कते—**किन्त्विति**। विधान्तरेणार्थवत्त्वमाह—**जीवेत्यादिना** ॥ वस्तुद्वयसिद्धावन्यस्यान्यत्र दृष्टिर्घटेत, न तथा वस्तुद्वयं समस्ति; प्रमाणाभावादित्याशङ्क्याह—**जीवेति** ॥ "य आत्मनि तिष्ठन्नात्मानमन्तरो यमयति" "द्वा सुपर्णे"त्यादिवाक्यं शास्त्रशब्देन निर्देष्टव्यम्। विधिपरस्य कार्यब्रह्मपरत्वमित्याशङ्क्याह—**प्रमाणान्तरेति** ॥ प्रमाणविरोधसहकृततात्पर्याभावस्य प्रयोजकत्वम्? उत तात्पर्याभाव-

### ऋजुविवरणम्

एतत्सर्वं क्षणभङ्गे व्यक्तमिति नेह प्रतन्यते। **असंप्रज्ञातसमाधीति** ॥ समाधिर्द्विविधः—संप्रज्ञातोऽसंप्रज्ञातश्च। ध्यातृ-ध्येय-ध्यानानुसन्धानसहितः संप्रज्ञातः, तद्रहितोऽसंप्रज्ञात इति। **ऐकभविकन्यायेनेति** ॥ सोऽयं ग्रन्थ एकस्मिन्नेव जन्मन्यनेकशरीरोपभोग्यानि कर्माण्यनेकशरीरग्रहणेन क्षयं नयतीति। एकस्मिन् भवे जन्मनि भवतीति व्युत्पत्तिः। अथवा "स्यादि"त्यादिनैकत्वविज्ञानस्य परमार्थवस्तुविषयत्वं नास्ति, किन्तु संपदादिरूपत्वमिति चोद्यं कृतम्, तदनुपपन्नम्; परमार्थैकत्वविषयत्वाभावे कारणाभावात्। नच संपदादिरूपत्वमपि संभवति, सिद्धे हि वस्तुद्वये संपदादिसंभवः; अत्र प्रमाणाभावेन ब्रह्मसिद्धेरभावादित्याशङ्क्यावतारयति—**नन्वद्वितीयब्रह्मात्मैकत्व इति** ॥ तयोरिति जीव-

### पञ्चपादिका

**अथापि स्यान्नैकत्वविज्ञानं यथावस्थितवस्तुविषयम्, येन मिथ्यारूपं भेदावभासं निवर्तयेत्, अपितु संपदादिरूपम्; विधितः पुरुषेच्छया कर्तव्यमिति । संपन्नामाल्पमपि वस्त्वालम्बनीकृत्य केनचित्सामान्येन दर्शनमात्रान्महद्वस्तुसम्पादनम् । ततश्च तत्फलावाप्तिः, फलस्यैव वा संपादनम्; यथा—मनसो वृत्त्यनन्तत्वसामान्येनानन्तविश्वदेवसंपादनं कृत्वाऽनन्तलोकजयः। एवं जीवस्य चिद्रूपसामान्येन ब्रह्मरूपसंपादनं कृत्वा ब्रह्मफलमवाप्यत इति । अध्यासस्त्वब्रह्मणि मन-आदित्यादौ ब्रह्मदृष्ट्योपासनम्, जीवस्यापि ब्रह्मदृष्ट्योपासनम् । संपदि—आलम्बनमविद्यमानसमं कृत्वा संपाद्यमानस्यैव प्राधान्येन मनसाऽनुचिन्तनम्, अध्यासे त्वालम्बनस्यैव प्राधान्येनानुचिन्तनम्, क्रियायोगो वायोरग्न्यादीनां संहरणात्संवर्गगुणत्वेनोपासनम् । एवं जीवस्य स्वगतेन बृंहत्यर्थयोगेन ब्रह्मेत्युपासनम् । कार्यान्तरेण गुणभूतस्य ब्रह्मदृष्टिः संस्कार आज्यस्येवावेक्षणम् ॥**

**अत्रोत्तरम्—संपदादिरूपे हीत्यादि ॥ तथा सति तत्त्वमस्यादिवाक्यानां निरुपचरितब्रह्मात्मैकत्वावगमपरः**

### पञ्चपादिकाविवरणम्

पक्षयति—**अथापि स्यादित्यारभ्यात्रोत्तरमित्यतः** प्राक्तनेन ग्रन्थेन । ग्रन्थस्तु स्पष्टार्थः । तत्रेदं वक्तव्यम्—किं प्रमाणान्तरविरोधात्संपदादिपरः पदसमन्वयः ? किं वाऽर्थे तात्पर्याभावादिति ? न तावत्प्रमाणान्तरविरोधः; तयोस्तदगोचरत्वात् । भेदावभासेऽपि बिम्ब-प्रतिबिम्बन्यायावतारात् । नच तात्पर्याभावादर्थपरत्वाभाव इत्याह—**संपदादिरूपे हीत्यादिना** ॥ तथाहि—"तत्त्वमसी"ति नवकृत्वोऽभ्यस्तस्य "अनेन जीवेनात्मनानुप्रविश्ये"त्यैकात्म्यसिद्धयेऽर्थवादो गृह्यते । "अथ येऽन्यथाऽतो विदुरन्यराजानस्ते क्षय्यलोका भवन्ती"ति भेददर्शनं निन्द्यते । तथा—"अहं ब्रह्मास्मी"त्यस्य "स एष इह प्रविष्टः" इत्याद्यर्थवादः । "अथ योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमि"त्यादिभेदप्रतिषेधश्च तात्पर्यहेतुरुपादीयते । तथा—"एष त आत्मे"ति बहुकृत्वोऽभ्यस्तस्य "नान्योऽतोऽस्ति द्रष्टे"त्यादिभेदापवादेन तात्पर्यं ज्ञायते । तथा—"स यश्चायं पुरुषे यश्चासावादित्ये स एक" इत्यस्य "तत् सृष्ट्वा तदेवानुप्राविशदि"त्यर्थवादः । तथा "उदरमन्तरं कुरुतेऽथ तस्य भयं भवती"ति भेददर्शनापवादः । तथा—"एतमेव पुरुषं ब्रह्म ततममपश्यदि"त्यस्य "स एतमेव सीमानं विदार्यैतया द्वारा प्रापद्यते"त्यर्थवादः ॥ तदेवं सर्ववेदान्तेषु तत्र तत्रावस्थात्रयपर्युदासेन ब्रह्मात्मैकत्वं प्रतिपाद्यमानं द्रष्टव्यम् । न हि भेददर्शनापवादेन ब्रह्मण एव जीवात्मना प्रवेशार्थवादेन च ब्रह्मात्मैकत्वं तत्र तत्राभ्यस्यावस्थात्रयसंबन्धविरोधनिराकरणेन च प्रतिपाद्यमानं तात्पर्यहीनमिति युक्तं वक्तुमिति । किंच अविद्यानिवृत्तिर्ब्रह्मात्मभावश्च विद्याफलं श्रूयते । नच संपदादिपरत्वे तदुपपद्यते; अन्यस्यान्यात्मताविरोधात्, अप्रमाणत्वाच्च । अतः फलवचनसामर्थ्यादपि ब्रह्मात्मैकत्वपरः

### तत्त्वदीपनम्

मात्रस्येति विकल्पयति—**तत्र वक्तव्यमिति** ॥ नाद्य इत्याह—**न तावदिति** ॥ जीव-परयोर्विषयीकरणमन्तरेण प्रमाणान्तरं कथं तद्विरोधं गोचरयतीत्यर्थः ॥ तर्हि संसार्यसंसार्यादिभावेन भेदप्रतिभासः कथं निर्वहेत् ? इत्याशङ्क्योपाधित इत्याह—**भेदावभास इति** ॥ द्वितीयं दूषयति—**न चेति** ॥ अर्थपरत्वाभाव इति ॥ अर्थप्रामाण्याभावः; इतरथा साध्याविशिष्टचमित्यर्थः ॥ ब्रह्मैक्यपरत्वमेव कुतः समधिगतम् ? इत्याशङ्क्योपक्रमादिनेत्याह—**तथाहीति** ॥ शाखान्तरपर्यालोचनयाऽपि प्रत्यग्ब्रह्मैक्यपरं शास्त्रमित्याह—**अथेति** ॥ अत्रैव बृहदारण्यकगतं वाक्यान्तरं पठति—**तथैष इति** ॥ तैत्तिरीयकवाक्यमुदाहरति—**तथा स य इति** ॥ तत्रैव भेददर्शनस्यापोद्यमानत्वादपि शास्त्रस्य तत्र तात्पर्यमित्याह—**तथोदरमिति** ॥ ऐतरेयकवाक्यमुदाहरति—**तथैतमेवेति** ॥ "ततममि"त्यत्र मकारश्छान्दसः । ततमित्यर्थः । **सीमानमिति । मूर्द्धन्यनाडी**मित्यर्थः । शाखान्तरीयवाक्यानि चैक्यपराणि द्रष्टव्यानीत्याह—**तदेवमिति** ॥ तात्पर्यलिङ्गास्तित्वे च तात्पर्यप्रत्याख्यानमशक्यमित्याह—**नहीति** ॥ इतोऽप्यैक्यपरं शास्त्रं न सम्पत्परमित्याह—**किं चेति** ॥ "अविद्यायाः परं पारं तारयसि" "ब्रह्म वेद ब्रह्मैव भवती"त्यादिवाक्यादविद्यानिवृत्त्यादिसिद्धिरित्यर्थः । ततः किमिति ? अत आह—**नचेति** । पूर्वरूपे स्थिते नष्टे वाऽन्यस्यान्यात्मकत्वं विरुद्धमित्यर्थः । अविद्यानिवृत्त्यसंभवे हेतुमाह—**अप्रमाणत्वादिति** ॥

### ऋजुविवरणम्

ब्रह्मणोर्निर्देशः; जीवस्यापि स्वरूपेण मानान्तरवेद्यत्वात् । भेदस्तावज्जीव-ब्रह्मणोः प्रतीयते, तत्कथमेकत्वप्रतिपादनम् ? इत्याशङ्क्याह—**भेदावभासेऽपीति** ॥ ननु तात्पर्याभावे सति यदिदमुदाहृतं भेददर्शननिषेधादि, तेनापि न वस्तुसिद्धिरित्याशङ्क्याह—**नहि भेददर्शनापवादेनेति** ॥

## पञ्चपादिका

पदसमन्वयो विना कारणेन स्वेच्छामात्रेण संपदादिपरः परिकल्प्येत । तदवगमनिमित्तं च मिथ्याज्ञानापायपूर्विका विस्मृतहस्तगतसुवर्णावाप्तिवद्ब्रह्मावाप्तिः फलमनुभवारूढमपह्नूयेत । "नेह नानास्ति किंचने"ति च भेदाभावश्रुतिरुपरुद्ध्येत । तस्मान्न संपदादिवत्पुरुषव्यापा(रप)रतन्त्रा ब्रह्मविद्या, किन्तु प्रत्यक्षादिजनितज्ञानवदपरामृष्टहानोपादानवस्तुस्वरूपमात्रनिष्ठेत्यभ्युपगन्तव्यम् ॥

## पञ्चपादिकाविवरणम्

पदसमन्वय इत्याह—**तदवगमनिमित्तं चेति** ॥ उपसंहरति—**तस्मान्न संपदादिवदिति** ॥

अत्र कश्चिदाह—ब्रह्मणो भिन्नाभिन्नोऽयं जीवः । ततश्च ब्रह्मणो नित्यमुक्तता जीवस्य च नित्यबद्धता व्यवस्थामश्नुते, अत्यन्ताभेदे तु ब्रह्मैव स्वसंसाराय कथं जगदुत्पादयेत् ? विरुद्धा च विशुद्धस्याशुद्धताप्रतिपत्तिरिति, अत्रोच्यते; किमात्मिकेयं भिन्नाभिन्नता ? न तावज्जातिव्यक्ति-गुणगुणि-कार्यकारण-विशिष्टस्वरूपांशांशिभावनिबन्धना; जीव-ब्रह्मणोस्तेषामभावात्प्रकारान्तरेण भेदाभेदादर्शनात् । "ममैवांशो जीवलोकः" इति स्मृतेरंशांशितेति चेत्, न; "निष्कलं निष्क्रियमि"तिश्रुतिविरोधात् । "पादोऽस्य सर्वा भूतानी"ति चाल्पतामात्रविवक्षयोक्तम्; वाक्यस्य ब्रह्मानन्त्यप्रतिपादनपरत्वात्, सांशत्वे च पटादिवदवयवारभ्यत्वप्रसङ्गात् । ननु स्वाभाविकी निरवयवता, बुध्याद्युपाधिनिमित्तं सांशत्वमिति चेत्, न तावदुपाधिना विदार्य पृथक्क्रियते जीवः; खड्गधारासमाविद्धेऽप्याकाशे निरवयवे भेदनादर्शनात् । उपाधिभिश्च स्वात्मानं विदार्य संसारमनुभावयता ब्रह्मणा स्वात्मनि व्यामोह एव प्रकटितः स्यात् । नचोपाधीनामन्यार्थं-

## तत्त्वदीपनम्

प्रत्यग्ब्रह्मैक्यमङ्गीकृत्यात्यन्ताभेदमाक्षिपति—**अत्र कश्चिदिति** ॥ उक्तेऽर्थे प्रमाणमाह—**ततश्चेति** ॥ स्रष्टृत्वानुपपत्तिरप्यत्र प्रमाणमित्याह—**अत्यन्तेति** ॥ इतोऽपि नात्यन्ताभेद इत्याह—**विरुद्धा चेति** ॥ यद्यप्यौपाधिकभेदेनोक्तव्यवस्थासंभवः, तथाऽपि दूषणान्तरविवक्षया भेदाभेदपक्षः समुत्थापित इति द्रष्टव्यम् । प्रत्यग्ब्रह्मणोः काल्पनिकभेदसंभवात्सृष्टेरविद्यात्मकत्वाच्च न दोषगन्धोऽपीत्याह—**अत्रोच्यत इति** ॥ दुर्निरूपश्चायं पक्ष इत्याह—**किमात्मिकेयमिति** ॥ प्रत्यग्ब्रह्मणोः किं जातिव्यक्ति-गुणगुणि-कार्यकारण-विशिष्टस्वरूपांशांशितान्यतमत्वेन भिन्नाभिन्नत्वम् ? उत प्रकारान्तेणेति किं शब्दार्थः । आद्यं दूषयति—**न तावदिति** ॥ प्रत्यग्ब्रह्मणोर्द्रव्यत्वान्न जातिव्यक्तिता, गुणगुणिता वा संभवति । नापि कार्यकारणता; जीवस्यानादित्वात् । नापि विशिष्टस्वरूपभावः; दण्डयादिवत्पारतन्त्र्याप्रतिपत्तेः । नाप्यंशांशिता; तत्र प्रमाणाभावादित्यर्थः । द्वितीयं दूषयति—**प्रकारान्तरेणेति** ॥ जीव-ब्रह्मणोर्भेदाभेदावंशांशितानिबन्धनौ, नच तत्र प्रमाणाभाव इत्याह—**ममैवेति** ॥ श्रुति-स्मृत्योः श्रुतेः प्राबल्यात्तद्विरोधे न स्मृतेः प्रामाण्यमित्याह—**न निष्कलमिति** ॥ श्रुत्यनुगृहीतस्मृत्यांशांशिभावसिद्धिमाशङ्क्याह—**पादोऽस्येति** । पादवत्पादो भाग इत्यर्थः । तत्र हेतुमाह । **वाक्यस्येति** । "गायत्री वा इदं सर्वं भूतमि" त्युपक्रम्य ब्रह्मणः पूर्णताप्रतिपादनान्न भाग-भागिता। पुरुषसूक्तेऽपि "उतामृतत्वस्येशानः" इत्यनवच्छिन्नवस्तुप्रतिपत्तेर्नांशांशिभावविवक्षेत्यर्थः । किंच ब्रह्मण्यंशित्वं किं स्वाभाविकम् ? उतोपाधिनिमित्तम् ? नाद्य इत्याह— **सांशत्व इति** ॥ द्वितीयमुत्थापयति—**नन्विति** ॥ निरंशस्य स्वाभाविकत्वादंशांशितायाश्चोपाधिनिमित्तत्वाद् न स्मृतेः श्रुतिविरोध इत्यर्थः ॥ औपाधिकोऽप्यंशांशिभावः किं तात्त्विकः ? उत कल्पितः ? नाद्य इत्याह—**न तावदिति** ॥ किंच किं ब्रह्मोपाधिं सृष्ट्वा स्वयं संसारमनुभवति ? आहो अन्यस्य ससारिणः संसारमापादयति ? इति विकल्प्याद्यं दूषयति—**उपाधिभिरिति** ॥ द्वितीयं प्रत्याह— **नचोपाधीनामिति** ॥ उपाधिसृष्टेः

## ऋजुविवरणम्

ननु—न ब्रह्मण एव संसारः, अपित्वविद्याविशिष्टस्य चैतन्यस्य, न स्वसंसाराय जगदुत्पादकत्वमित्याशङ्क्याह—**विरुद्धा चेति** ॥ असङ्गस्य संसारासंबन्धात् तस्मिन् प्रतीतिर्न युज्यत इत्यर्थः ॥ ननु "पादोऽस्य सर्वा भूतानी"ति श्रुत्यैव सांशत्वं प्रतीयत इत्याशङ्क्याह—**पादोऽस्येति** ॥ कथं श्रुतेर्भागे मुख्याया आनन्त्यमात्रपरत्वम् ? मुख्यार्थहाने कारणाभावादित्याशङ्क्याह-**सांशत्वे चेति** ॥ **ननु स्वाभाविकीति** । औपाधिके तु सांशत्वे न तदारभ्यत्वम्, नापि श्रुतिविरोधः; व्योमादावदर्शनादिति भावः । एवं भेदाङ्गीकारेऽपि बन्धमोक्षव्यवस्था स्वपक्ष इति यदुक्तम्, तदपि न संभवति; स्वसंसाराय जगदुत्पादकत्वे विशुद्धस्याशुद्धत्वविरोधस्त्वत्पक्षेऽपीत्याह—**उपाधिभिश्चेति** ॥ ननु—जीव-

## पञ्चपादिकाविवरणम्

तया सृष्टिः; अन्याभावात्, प्रागभिन्नानां जीवानामन्यत्वाभावात्, द्रव्येणैव द्रव्यविदारणात्कर्माविद्यासंस्काराणां सतामप्यनुपाधित्वात् ॥

अथ भेदोऽनिष्पन्नोऽप्यौपाधिको व्यज्यत इति, तर्ह्यनादिरेव भेदः। स च जाति-व्यक्तिभावादिनिबन्धनो ब्रह्मणि जीवे च न स्यात्। नील-पीतादिवत्स्वाभाविको भेदो द्रव्यत्वादिजातिनिबन्धनश्चाभेद इति चेत्, तर्हि तद्वदेव—"अयमात्मा ब्रह्मे"ति सामानाधिकरण्यं न स्यात्, तस्यैव प्रवेशश्रुतयश्च बाध्येरन्। एकत्वानुमानं च दर्शितम्। न निष्पन्नः, नाप्यनादिः, किंतूपाधिनिबन्धनस्तत्र प्रकाशते भेद इति चेत्, स तर्ह्यतस्मिंस्तदारोपो विभ्रम एव स्यात्। नच प्रत्यक्षादिभिर्जीवब्रह्मभेदो गृह्यत इत्युक्तम्। आगमश्च "नान्योऽतोऽस्ति द्रष्टे"ति भेदं प्रतिषेधति। अभेदवचनानि तानीति चेत्, मैवम्; "एष त आत्मे"त्यादिनाऽभेदं प्रतिपाद्यैव पुनर्भेदस्य तत्रैव प्रतिषेधात्, कथं वा सत्यप्यभेदेऽविद्याकाम-कर्मव्यवस्था? न ह्याकाशं घटेनावच्छिद्य तदन्तर्धूमादिसमावेशने सत्याकाशस्य धूमादियोगः परिहर्तुं शक्यते। ननु भेदाद् व्यवस्थाऽपि विद्यते, तर्हि ब्रह्मण्यविद्यादिसंसर्गोऽसंसर्गश्चेत्युभयमपि स्यात्। ननु विरुद्धमिदमापद्यते, कोऽयं

## तत्त्वदीपनम्

प्रागौपाधिकजीवरूपाभावान्न तदर्थमुपाधिसृष्टिरित्याह—**अन्याभावादिति** ॥ ब्रह्मणो भावात्तदभिन्नो जीवोऽप्यस्तीत्याशङ्क्याह—**प्रागभिन्नेति**। जीवस्य ब्रह्ममात्रत्वे वस्तुतस्तदन्यत्वं न स्यात्, न खलु कलशस्य स्वस्मादन्यत्वं दृष्टमित्यर्थः ॥ किमन्तःकरणं भेदकम्? उत कर्म? आहो मिथ्याज्ञानम्? अथवा तत्संस्कारः? नाद्यः; सुषुप्तौ तदभावादित्यभिप्रेत्य पक्षान्तराणि निरस्यति—**द्रव्येणेति**। द्रव्येण परश्वादिना वृक्षादीनां विदारणं दृष्टम्, कर्मादीनां चाद्रव्यत्वान्न विदारकत्वमित्यर्थः। विदारणात्प्राग् जीवाभावान्न तदाश्रितं कर्म। यद्यस्ति, तर्हि नौपाधिकमित्यभिप्रेत्योक्तम्—**सतामपीति** ॥

"औपाधिकः" इत्यनेन शब्दोपाधितो जायमानत्वं नोच्यते, किं तूपाधिप्रयुक्तत्वम्, यथा द्रव्यत्वस्य गुणवत्त्वप्रयुक्तत्वम्, तद्वदिति शङ्कते—**अथ भेद इति**। अनिष्पन्न इति छेदः। द्रव्यत्ववद्भेदस्याप्यनादित्वं स्यादित्याह—**तर्हीति** ॥ अस्तु, को दोष इति? अत्राह—**स चेति** ॥ जाति-व्यक्त्यादिभावाभावेऽपि नील-पीतयोर्यथा व्यावृत्तत्वम्, तद्वदिति शङ्कते—**नीलपीतेति** ॥ अत्यन्तभेदशङ्कां निरस्यति—**द्रव्यत्वेति** ॥ भिन्नयोर्द्रव्ययोरभेदस्य घटादावदृष्टत्वात्प्रत्यग्ब्रह्मणोरपि तदनुपपत्तिरित्याह—**तर्हीति** ॥ किं च "तत्सृष्ट्वा तदेवानुप्राविशदि"त्यादौ ब्रह्मण एव बुद्ध्याद्यनुप्रवेशेन संसारित्वेन प्रतिपत्तेर्भेदाभेदावित्याह—**तस्येति** ॥ श्रुत्यनुग्राहकमनुमानमप्यस्तीत्याह—**एकत्वेति** ॥ अलक्तकाद्युपाधिसंसर्गजनितस्फटिकलोहितताप्रतिभासवद् भेदप्रतिभासोऽपि भ्रम इति पक्षान्तरमुत्थापयति—**न निष्पन्न इति** ॥ इष्टापत्त्योत्तरयति—**स तर्ह्यतस्मिन्निति** ॥ किंच स्वाभाकिके भेदे किं प्रत्यक्षादि प्रमाणम्? उतागमः? नाद्य इत्याह—**नचेति** ॥ "तयोः प्रत्यक्षागोचरत्वादि"त्यत्रोक्तमित्यर्थः। द्वितीयं दूषयति—**आगम इति** ॥ चशब्दस्त्वर्थः। आगमस्य न भेदे प्रामाण्यम्, किं तु तन्निषेध इत्यर्थः। निषेधवचनान्यन्यविषयाणीति शङ्कते—**अभेदेति** ॥ अभेदप्रतिपादनात् पृथग्भेदस्य निषिध्यमानत्वाद् न निषेधस्याभेदविषयत्वमित्याह—**न हीति** ॥ **अत्यन्ताभेदमिति** ॥ "द्वा सुपर्णे"त्यादिना भेदस्यापि प्रतिपत्तेर्नात्यन्ताभेद इत्याशङ्क्याह—**कथं वेति** ॥ अव्यवस्थायां हेतुमाह—**नहीति** ॥ अत्यन्ताभेदाभावाद् व्यवस्था सिध्यतीति शङ्कते—**ननु भेदादिति** ॥ अत्यन्तभेदाभावादव्यवस्थापि स्यादित्याह—**तर्हीति** ॥ अविद्याद्यसंसृष्टे ब्रह्मणि न तत्संसर्गः संभवेत्; विरुद्धत्वात्, वह्नौ शैत्यवदिति शङ्कते—**ननु विरुद्धमिति** ॥ त्वन्मते विरोध एवासिद्ध इत्याह—**कोऽयमिति** ॥ कथं विरोधाभावः? इत्याशङ्क्य किमभेद इत्यत्र नञा भेदाभावो विकल्प्य विधीयते? उत तदन्य इति?

## ऋजुविवरणम्

संसारयोरुपाधिसंसर्गः, अतो न दोष इत्याशङ्क्याह—**नचोपाधीनामिति** ॥ **ननु**—जीवो ब्रह्मणो भिन्नः, अतः कथमन्याभावः? इत्याशङ्क्याह—**प्रागभिन्नानामिति** ॥ **ननु**—उपाधिसृष्टेः प्रागपि नाभिन्नत्वम्; प्रागप्युपाधीनां कर्माविद्यादीनां भेदकानां विद्यमानत्वादित्याशङ्क्याह—**द्रव्येणैव द्रव्येति** ॥

**औपाधिकः**=उपाध्यधीन इत्यर्थः। **तर्हि तद्वदेवेति**। नीलं पीतमिति यथा सामानाधिकरण्यं नास्ति, तद्वदत्रापि न भवेदित्यर्थः ॥ अर्थतो भेदं निराकृत्य भेदे प्रमाणमपि नास्तीत्याह—**नच प्रत्यक्षादिरिति** ॥ यद्वा प्रमाणसिद्धे कथमारोपितत्वम्? इत्याशङ्क्याह—**नच प्रत्यक्षादिभिरिति** ॥ एवं स्वरूपतः प्रमाणतश्च भेदं निराकृत्येदानीं

### पञ्चपादिकाविवरणम्

भेदाभेदवादिनो विरोधो नाम ? एकोपाधावेकस्यैव भावाभावोपगमात्। अभेदो नाभावः, किन्त्वैक्यमेव धर्मान्तरमिति चेत्, तथाऽपि—'अहं मनुष्यो' 'द्वौ चन्द्रावि'त्यादावैक्यभेदयोर्भेदैक्यज्ञानाभ्यां बाधदर्शनाद्भेदाभेदौ विरुद्धावेकत्राभ्युपगच्छता किमिति भावाभावावविद्यादीनां ब्रह्मणि नाभ्युपगम्येयाताम् ? किंच प्रत्येकं देहपटावयवेषु मलसंसृष्टेषु मलिनः पटोऽहं मलिन इति वाऽवयविनि मलसंसर्गनिश्चयात् फलवचनानां च वर्तमानापदेशिनां प्रत्यक्षविरुद्धतयाऽर्थवादत्वात्, सत्यपि भेदे जीवसमवायिभिर्मलैरवयवि ब्रह्म मलभूयिष्ठमेवेति निश्चीयेत। किंच ब्रह्मण्यविद्यादिमलसंसर्गमप्यसहमानोऽतिभक्तिविलसितान्तःकरणः कथं तैरेव मलैरभेदं सहते ? निरवद्यश्रुतिविरोधान्नाभेद इति चेत्, न; सर्वात्मत्वश्रुतेः। अत एव पापीयानयं पक्ष इत्युक्तम्। ननु उपाधिभेदेन व्यवस्थाप्यते, न; अर्थतो भेदनाभावे परमार्थसत्यस्य संसारसम्बन्धस्याभेदे सति व्यवस्थानुपपत्तेः। मिथ्याभेदेन तु मिथ्यासंसारव्यवस्था युज्यते; बिम्ब-प्रतिबिम्बयोस्तथा दर्शनात्। किंच ब्रह्म सर्वान् जीवानात्मत्वेन पश्यति वा ? न वा ? न चेत्, सर्वज्ञताहानिः। पश्यति चेत् स्वात्मन्येव संसारं पश्येत्।

### तत्त्वदीपनम्

आद्ये विरोधासिद्धिरित्याह—**एकेति** ॥ द्वितीयमुत्थापयति—**अभेद इति** ॥ ननु अभेदस्याभावे मुख्यत्वान्नार्थान्तराभिधायित्वं घटते, तथाऽपि तदङ्गीकृत्याह—**तथापीति** ॥ 'अहं मनुष्यः' इत्यैक्यस्य भेदज्ञानेन बाधः, 'द्वौ चन्द्रावित्यत्र भेदस्यैक्यज्ञानेन बाधो दृश्यते, तथाऽत्रापि भेदाभेदयोर्विरोध इत्यर्थः। किञ्च विरुद्धयोर्भेदयोरेकत्र समावेशाद् विरुद्धयोर्भावाभावयोरेकत्र समावेशः किं न स्यादित्याह—**भेदाभेदाविति** अंशांशित्वपक्षे दोषान्तरमाह—**किंचेति** ॥ "निश्चयादि"त्यस्य जीवसमवायिभिर्मलैरवयवि ब्रह्म मलभूयिष्ठमिति निश्चीयत इप्यनेन संबन्धः। ननु—जीवस्यैव मलवत्त्वमसिद्धम्; "लिप्यते न स पापेने"त्यादिना मलसंबन्धराहित्यप्रतिपत्तेरित्याशङ्क्याह—**फलवचनानामिति** ॥ इतोऽपि ब्रह्मणि मलसंसर्गो दुर्वार इत्याह—**किं च ब्रह्मणीति** ॥ "अतिभक्ती"त्यत्र भेदाभेदयोरिति शेषः। "न लिप्यते लोकदुःखेन बाह्यः" इत्येतद्विरोधान्न मलाभिन्नं ब्रह्मेति शङ्कते—**निरवद्येति** ॥ निरवद्यत्वेऽपि श्रुतिविरोधस्तुल्य इत्याह—**न सर्वात्मत्वेति**। **विरुद्धत्वे त्विति** ॥ विरुद्धत्वादुभयोः प्रामाण्यमयुक्तमित्याशङ्क्य भेदाभेदवादेऽन्यतरप्रामाण्याङ्गीकरणे कारणाभावात्पक्ष एवार्थस्त्याज्य इत्याशयेनाह—**अत एवेति** ॥ व्यवस्थितविषयत्वात् श्रुतिद्वयमप्यविरुद्धमिति शङ्कते—**ननूपाधीति**। **उपाधिभेदेनेति** ॥ उपाधिकृतभेदेनेत्यर्थः। औपाधिकभेदस्य किं परमार्थत्वम् ? उत न ? नान्त्य इत्याह—**नार्थत इति** ॥ नापि प्रथमः; औपाधिकस्य स्फटिकलौहित्यवत् परमार्थत्वासंभवादित्यर्थः ॥ त्वयाप्यौपाधिकभेदेन व्यवस्थाऽऽस्थितेत्याशङ्क्याह—**मिथ्येति** ॥ प्रत्यग्ब्रह्मणोरभेदात् ब्रह्मण्यपि संसार इत्युक्तम्, तत्र संसार्यभिमानाभावन्न ब्रह्मणः संसारित्वमित्याशङ्क्याभेदे सोऽपि दुर्वार इत्याह—**किंच ब्रह्मेति**। द्वितीयेऽपीदं निरूपणीयम्—किमभेदवद् भेदमपि पश्यति ? उत नेति ? तत्रान्त्यं दूषयति—**न चेदिति** ॥ आद्यं दूषययि—**पश्यति चेदिति** ॥ द्वितीयाद्यमुत्थापयति—**ननु भेदमपीति** ॥ विरोधा-

### ऋजुविवरणम्

व्यवस्थाऽपि न संभवति, यद्वा—"य आत्मनी"ति भेदस्यापि प्रतिपादनादत्यन्तं भेद इत्याशङ्क्याह—**कथं वा सत्यपीति**। **अभेदो नाभाव इति**। न भेदाभेदवादिना भावाभावावेकत्राङ्गीकृतौ; अभेदशब्दस्य भेदाभाववाचकत्वादित्यर्थः। **तथाप्यहं मनुष्य इति** ॥ अयमर्थः—यद्यप्यभेदशब्देन न भेदाभावाभिधानम्; तथाऽपि न तदन्यवाचकत्वम्, किन्तु विरोधिधर्मान्तरम्; विरुद्धयोरपि चेदेकत्र स्थितिः भावाभावयोरपि स्यादिति ॥ ननु सति भेदे भिन्नाकारसमवेतानामविद्या-काम-कर्मणां कथं ब्रह्मसंबन्धापादनम् ? अभिन्नाकारसंबन्धाभावात्, नापि संसर्गासंसर्गविरोधोऽस्ति, इत्याशङ्क्याह—**किञ्च प्रत्येकमिति** ॥ ननु जीवाद् ब्रह्म मलभूयिष्ठम्; मलानां ब्रह्मात्मकत्वादित्याशङ्क्याह—**किञ्च ब्रह्मण्यविद्यादीति**। "निरवद्ये"त्यविद्याराहित्यं प्रतीयते; ब्रह्मणो मलसंसर्गाङ्गीकारे तद्विरोधादित्यर्थः ॥ अत एव पापीयानिति निरवद्यश्रुतावन्यतत्संबन्धो निषिद्धः, भेदाभेदे तदुभयं भवेदिति पापीयानित्युक्तम्। मा भूद् भेदमात्राद् व्यवस्था, उपाधिना व्यवस्थाभावदर्शनाद् अत्रापि सा भविष्यतीति चोदयति—**ननूपाधिभेदेनेति** ॥ "परमार्थसत्यस्ये"त्यनेन व्यावहारिकसत्यव्यवच्छेदः कृतः ननु—त्वत्पक्षेऽपि कथं व्यवस्था ? इत्याशङ्क्य दर्शयति—**मिथ्याभेदेन त्विति** ॥ ननु संसारसंबन्धेऽपि न संसारित्वम्, किन्तु स्वगतत्वेन दर्शनम्, नच ब्रह्मणि तदस्ति, अतो न संसारित्वमित्याशङ्क्याह--**किञ्च ब्रह्म सर्वान् जीवानिति**। ननु संसारित्वासंसारित्वं ब्रह्मणो न संभवति, भेददर्शनस्य विद्यमानत्वाज्जीवगतत्वेन पश्यतीत्यर्थः ॥ **ननु भेदमपीति**। ननु देहधर्मा-क्रिन्त्वसंसारित्वमेव; तद्धेतोर्भेददर्शनस्य सर्वदाऽविद्यमानत्वादित्याशङ्क्याह—**किञ्च सत्यपि भेददर्शन इति**।

**पञ्चपादिकाविवरणम्**

ननु भेदमपि पश्यति, तर्हि ब्रह्माऽऽत्मनि संसारं पश्यति, न पश्यतीति स्यात्। किंच सत्यपि भेददर्शने मिथ्यातादाम्याभिमानाद् देहधर्मानात्मनि पश्यति, किमु वक्तव्यं सत्येनाभेदाभिमानेनेति। न ह्यभेदापरोक्ष्ये सति भेदोऽप्यपरोक्षोऽवभासमानो दृष्टः॥ किंच सर्वं च सत्यतयैवात्मन्यपरोक्षतया सर्वाधारस्य सर्वज्ञस्य पश्यतो ब्रह्मणः सर्वसंसारसम्बन्धः स्यात्। किंच ज्ञानध्यान-समाधिभिरेकस्मिन्नुपाधावेकस्य जीवस्य प्रलीयमानेऽपि न किंचित्प्रयोजनमस्ति; परिशिष्टसर्वोपाधितद्धर्मसंबन्धप्रतिभासनात्। नच सर्वोपाधिविनिर्मोक्षः केनचिदपि कर्तुं शक्यते। मम पुनरेकोपाधिपरित्यागेन बिम्बभूतब्रह्मात्मतापरोक्षावभासिनोऽपि प्रतिबिम्बश्यामत्वादिभिरिव जीवसंसारैर्न संबन्धः; मिथ्यात्वेन तत्त्वज्ञानप्रतिहतत्वात्। स्वप्नादिवच्च तत्त्वज्ञानेन सर्वोपाधिविनिर्मोक्षश्च युज्यते; वामदेवादिमुक्त्येदानीं संसारानुपलब्धिः स्यादिति चेत्, एकैकमुक्तावप्यनन्तैरेव युगैरनन्तानां जीवानां मुक्तत्वात्तुल्येदानीं संसारानुपलब्धिः। इदानीं संसारदर्शनं तु परस्यापि

**तत्त्वदीपनम्**

पातान्नैवमित्याह—**तर्हि ब्रह्मेति**॥ इतोऽप्यात्मनि संसारसंबन्धोऽपरिहार्य इत्याह—**किं च सत्यपीति**। **सत्येनेति**। परमार्थत एवाभेदाभिमाने सतीत्यर्थः। दृष्टान्ते भेदज्ञानस्य परोक्षत्वात् तस्मिन् सत्यप्यभेदाभिमानोचितकार्यं स्यात्, इह तु भेदज्ञानस्यापरोक्षत्वान्न तदुचितकार्योपपत्तिरित्याशङ्क्याह—**न हीति**॥ शुक्तिकां साक्षात्कुर्वतस्तद्विपरीतरूप्यसाक्षात्कारवदभेदं करतललग्नबिल्वफलवदपरोक्षतया पश्यतस्तद्विपरीतभेदापरोक्ष्यानुपपत्तिरित्यर्थः॥ रजतस्य समारोपितत्वादधिष्ठानतत्त्वसाक्षात्कारेऽनवभासनं युक्तम्, इह उभयोरपि सत्यत्वान्नैवमित्याशङ्क्याह—**किं च सर्वेति**। संबन्धाभावान्न सर्वदर्शनं संभवतीति शङ्कां निरस्यति—**सर्वाधारस्येति**। संबन्धाभावेऽपि तज्ज्ञानाभावान्न संसारित्वमित्यत्राह—**सर्वज्ञस्येति**॥ भ्रान्तदृष्टिवैलक्षण्यमाह—**सत्यतयैवेति**॥ एवं भेदाभेदमते संसाराव्यवस्थामभिधाय मुक्त्यवस्थामाह—**किं चेति**॥ किमेकोपाधिप्रविलयान्मुक्तिः? उत सकलोपाधिविलयात्? नाद्य इत्याह—**ज्ञानध्यानेति**। ज्ञानं प्रसिद्धम्, ध्यानं सजातीयप्रत्ययप्रवाहः, तस्यापि प्रविलये तत्संस्कारमात्रावस्थानं समाधिरित्यर्थः॥ द्वितीयं दूषयति—**न च सर्वेति**॥ त्वन्मतेऽप्युक्तानुपपत्तिस्तुल्येत्याशङ्क्य जीवभेदं तावदाश्रित्याह—**मम पुनरिति**। **जीवसंसारैरिति**॥ जीवान्तरसंसारैरित्यर्थः। तत्र हेतुमाह—**मिथ्यात्वेनेति**॥ जीवभेदेन व्यवस्थासंभवेऽप्येकजीववादे कथं सेत्याशङ्क्याह—**स्वप्नादिवदिति**। सकलोपाधीनामविद्यात्मकत्वात्तस्याश्चैक्याद्विद्यया निवृत्तौ सर्वविलयोपपत्तिरित्यर्थः। एकजीववादे किमितः प्राक् केषाञ्चिन्मुक्तिरस्ति? उत न? द्वितीये 'वामदेवो मुक्तः' इत्यादिश्रुत्या विरोधः स्यादित्यभिप्रेत्याद्यं दूषयति—**वामदेवेति**॥ त्वत्पक्षेऽप्ययं दोषः सम इत्याह—**एकैकेति**॥ इदानीं संसारस्योपलभ्यमानत्वात्प्राग् न सर्वमुक्तिरित्याशङ्क्याह—**इदानी संसारेति**॥

**ऋजुविवरणम्**

ध्यासमये भेददर्शनाभावात्तद्धर्मदर्शनमत्र; सर्वदा भेददर्शनात्, न जीवसंसारस्य स्वात्मनि दर्शनमित्याशङ्क्याह—**ह्यभेदापरोक्ष्ये सतीति**। परोक्षस्तु नापरोक्ष्यनिमित्तकार्यप्रतिबन्धक इति भावः॥ ननु भ्रान्तस्य भेदस्याभेदापरोक्ष्ये नापरोक्ष्यम्, सत्यस्य तु भेदस्याभेदापरोक्ष्येऽप्यापरोक्ष्यात्स्वात्मगतत्वेन संसारदर्शनाभावान्न संसारित्वमित्याशङ्क्याह—**सर्वाधारस्येति**॥ सर्वस्यात्मतापारोक्ष्यं संसारित्वे हेतुः, आपरोक्ष्ये च सर्वज्ञत्वं हेतुः। "सत्यत एवात्मनी"त्यत्र सर्वाधारत्वं हेतुः॥ यद्वा—पूर्वं संसारित्वमात्रं जीवाभेदेनापाद्येदानीं सर्वसंसारसंबन्धो हेत्वन्तरेणापाद्यत इति. एवं सति निष्प्रयोजनतया शास्त्रमनारम्भणीयं स्यादित्याह—**किञ्च ज्ञानध्यानेति**॥ ननु सर्वोपाधिविलयेन मोक्षो भवत्वित्याशङ्क्याह—**नच सर्वोपाधीति**॥ ननु त्वत्पक्षेऽपि समानोऽयं दोषः; एकोपाधिविगमेऽपीतरसंसारस्य स्वगतत्वेन दर्शनात् सर्वोपाधिविनिर्मोक्षस्याशक्यत्वादित्याशङ्क्याह—**मम पुनरिति**॥ नानाजीवपक्षाश्रयणेन व्यवस्थामुपपाद्यैकजीवपक्षाश्रयेण सर्वोपाधिक्षयोऽप्युपपद्यत इत्याह—**स्वप्नादिवदिति**। यथा स्वप्नेऽनन्तोपाधिदर्शिनः परमार्थभूतस्यैकस्य प्रबोधे यत्किञ्चिदुपाधिजातं दृष्टं तस्य सर्वस्य प्रलयः, एवमत्राप्येक एव संसारी भ्रान्त्यानेकान् पश्यति, तस्य च तत्त्वज्ञाने सति तदज्ञानविजृम्भितं सर्वं प्रलीयत इत्यर्थः। ननु एकजीवपक्षे तस्य मुक्तत्वात्संसारानुपलब्धिः स्यादिति चोदयति—**वामदेवादीति**॥ यच्चोभयोः समानं न तत्रैकः पर्यनुयोज्यः, अत्र तु तत्रैव दूषणम्; यत एकस्यैव बन्धः, तथात्वे च कस्यैकस्य बन्ध इति व्यवस्था न स्यात्; अनेकेषां प्रतीयमानत्वात्, अस्यैवेति निश्चयायोगात्। तदभावे च शास्त्रे प्रवृत्तिर्न स्यात्; फलभाक्त्वानिश्चयात्, अथ यः सर्वान्, पश्यति भावान्, तत्र सर्वस्य कल्पितत्वाद्युज्येते बन्धमोक्षौ, तत्र तत्र च प्रवृत्तिरिति, मैवम्; अन्येषामपीतरसर्वदर्शित्वेन स्वस्यापीतराज्ञानकल्पितत्वसन्देहानिवृत्तेः सर्वेषां सत्यत्वमसत्यत्वं

### पञ्चपादिका

**तत्रैवं सति कथं ब्रह्म प्रतिपत्त्युत्तरकालं कर्मकारकतां नीयेत तज्ज्ञानं वा तदधिगमफलपर्यन्तं सद् विधिविषयो भवेत् ? अतो मिथ्यैव भेदावभासः। तस्य प्रतिपक्षादभेदावभासादपनयः। तस्माद् मिथ्याज्ञाननिवृत्तिमात्रं मोक्ष इति श्रुति-न्यायाभ्यां सिद्धम् ॥**

### पञ्चपादिकाविवरणम्

तुल्यम्। अनुपपत्तिश्चावयोः समाना। अतो निरुपाधिकचैतन्ये त्वयि ब्रह्मणि प्रत्यक्षे बन्धावभासे सोपाधिकचैतन्येषु तव मुक्तताव भासो विभ्रमः। तद्विषयश्रुत्यादीनां प्रत्यक्षविरुद्धतयाऽर्थवादत्वाद् निरुपाधिकचैयन्यप्रतिभासे त्वयि सोपाधिकचैतन्यभेदानां कल्पितत्वात् कस्यैकस्य बन्धमोक्षाविति तव तावत्संदेहो न जायते; सोपाधिकचैतन्येषु मुक्तताभ्रमात्, तद्वचनानां चार्थवादत्वात्। एवं प्रत्येकमात्मनो न संदेहः। तस्मात्सर्वसङ्करवादिनो विभ्रमोऽयमस्मत्पक्षे व्यवस्थेति।

तदेवं ब्रह्मावगमे विधिमन्तरेणैवापरोक्षफलपर्यन्ते साध्यान्तराभावान्न विधिसम्बन्ध इत्याह—**तत्रैवं सतीति**॥ किं तर्हि प्रमाणफलमिति ? तदाह—**अतो मिथ्यैवेति**।

### तत्त्वदीपनम्

यद्यपि संसारो दृष्टः; तथाप्यनुपपन्नः स इत्याशङ्क्याह—**अनुपपत्तिरिति** ॥ पक्षद्वयेऽप्यनुपपत्तिसाम्ये कथमन्यतरपरिग्रहः ? तत्राह—**निरुपाधिकेति**। अनवच्छिन्नचैतन्यं ब्रह्माऽविद्यातत्कार्यानुरागाद्बद्धम्, तथाचोपाधिभेदात् जीवरूपं भिन्नत्वेन व्यवह्रियते, यथोदभाजनभेदेन सूर्यप्रतिबिम्बम्। ततश्चाविद्यानिवृत्तिमन्तरेण वामदेवादेर्मुक्तेरनुपपत्तेः साऽऽश्रयणीया, न च साऽऽस्थातुं शक्यते, इदानीन्तनसंसारोपलम्भविरोधात्, तथा च वामदेवादेर्मुक्तिप्रतिभासो विभ्रम इत्यर्थः॥ तर्हि तन्मुक्तिश्रुत्यादिविरोध इति यदुक्तम्, तत्राह—**तद्विषयेति**॥ ननु—एकमुक्तौ सर्वामुक्तावपि कस्यैकस्य मुक्तिरिति विनिगमनाभावादायासबहुले श्रवणादौ न प्रवृत्तिर्घटत इति तत्राह—**निरुपाधिकेति**। प्रष्टुस्तव तावदज्ञत्वं स्पष्टम्, त्वदज्ञानपरिकल्पिताश्चेतरे चैतन्यभेदाः; स्वप्नद्रष्टृविद्याकल्पितनरान्तरवत्, ततश्च मुक्त्यवस्थानुयायिनस्तवैव बन्धो नेतरेषामित्यर्थः॥ अन्योऽप्येवमेव ब्रवीतीत्याशङ्क्याह—**एवमिति**॥ अन्यशब्देन किं निरुपाधिकं चैतन्यं विवक्षितम् ? उतावच्छिन्नम् ? आद्ये तस्यैकत्वान्न संचीतिः, द्वितीये त्ववच्छिन्नस्य तत्संशयादेश्च चिदविद्यामूलत्वान्न मुक्त्यादिसंदेह इत्यर्थः॥ स्वप्ने तस्य निरवद्यतामभिधाय परमतस्य सावद्यत्वमुक्तमुपसंहरति—**तस्मादिति**॥

प्रसङ्गागतं चोद्यं निरस्य टीकाव्याख्यामेव प्रस्तौति—**तदेवं ब्रह्मेति** ॥ शाब्दज्ञानमवगमशब्दार्थः। ब्रह्मणोऽपरोक्षस्वरूपत्वान्नापरोक्ष्यस्य फलत्वमिति शङ्कते—**किं तर्हीति** ॥ 'अज्ञानान्तरतत्कार्यनिवर्तकशुद्धबुद्धिवृत्तिप्रतिबिम्बिततया तस्य फलत्वव्यपदेशः।[1] इत्याह—**तदाहेति**॥

### ऋजुविवरणम्

वा॥ **ननु एकस्यैव** बन्ध-मोक्षनिश्चय इत्याशङ्क्याह—**निरुपाधिकचैतन्येति**। अत्र त्वदज्ञानपरिगृहीतत्वं कल्पितत्वमिति त्वन्मदादिशब्दैः परिच्छिन्नं चैतन्यमभिधीयते ? किं वा विगलितनिखिलभेदं चैतन्यमिति ? प्रथमपक्षे परिच्छिन्नानामविद्याश्रयत्वमवस्तुत्वान्न युज्यत इति न तदविद्याविजृम्भितत्वम्, द्वितीये तु ब्रह्मैवेति तदविद्याविजृम्भितत्वं सर्वेषामस्ति। तस्य चैकत्वान्न सन्देहः। "निरुपाधिकचैतन्यप्रतिभासे त्वयी"त्यनवच्छिन्नचैतन्यविवक्षयोक्तम्। निरुपाधिकत्वनिर्देशान्न पूर्वोक्तदोष इति भावः। कथं तर्हि सोपाधिकेषु मुक्तिरिति ? तदाह—**भ्रमादिति**। कथं भ्रान्तत्वं शास्त्रत एव प्रतीतेरिति ? तदाह—**तद्ववचनानामिति**॥ अत्रादौ **निरुपाधिकचैतन्ये त्वयि ब्रह्मणीति** ग्रन्थान्तरं पठन्ति, तत्रैवं व्याख्यानम्—वामदेवस्य न मुक्तता; त्वयि संसारप्रतीतेः, तन्मुक्तिवचनस्यार्थवादत्वादिति॥ **ननु** व्यधिकरणमेतत्, नह्यन्यत्र संसारोपलब्धिस्तन्मुक्तिविरोधिनी। नच सर्वस्यार्थवादता; बन्धमोक्षोपपत्तेरित्याशङ्क्य बन्धत्वं निराकरोति—**निरुपाधिकचैतन्येति**। अनन्तरशङ्कां परिहरति—**कस्यैकस्येति**। ननु मुक्तिसामर्थ्याद्बन्धनिश्चयः इत्याशङ्क्याह—**सोपाधिकेति**। **ननु** न भ्रान्तत्वं वचनात्, एवञ्च बद्धोऽपीत्याशङ्क्याह—**तद्वचनानामिति**॥ एवं सति प्रत्येकं यः सन्देह आपाद्यते, यथैकः स्वाज्ञानपरिकल्पितत्वमितरेषां पश्यति, तथेतरेऽपि स्वाज्ञानपरिकल्पितत्वं ज्ञास्यन्तीति सन्देहः स्यादिति, तदपि परिहृतमित्याह—**एवं प्रत्येकमात्मन इति**। एकस्यैवाविद्यया सर्वदर्शित्वादितरेषां तद्दर्शित्वाभावादित्यर्थः। एतच्च सर्वं स्वप्ननिदर्शनेनोह्यम्॥

---
१. अज्ञानतत्कार्यनिवर्तकशास्त्रस्य सफलत्वव्यपदेश इति पाठान्तरम्।

**पञ्चपादिका**

**ननु विदिक्रियाकर्म तावद्भवति ब्रह्म, ततः क्रियासम्बन्धे संभाविते भवति विधेरवसर इत्याशङ्क्याह—नच विदिक्रियाकर्मत्वेनेत्यादि ॥**

**आह—सोऽयं शान्तिकर्मणि वेतालोदयः—ब्रह्मणः क्रियानुप्रवेशं निराकर्तुं ज्ञानक्रियाया अपि विषयत्वं निराकुर्वता तत एव शास्त्रयोनित्वमपि निराकृतमेव, तदाह—अविषयत्वे ब्रह्मणः शास्त्रयोनित्वानुपपत्तिरिति चेदिति ॥ अत्रोत्तरम्—नाविद्याकल्पितेत्यादि ॥ शास्त्रं हि सोऽयमित्यादिलौकिकवाक्यवद् ब्रह्मणि प्रमाणम्। तथाहि—सोऽयमिति**

**पञ्चपादिकाविवरणम्**

ननु प्रयोजनाभावाद् ब्रह्म न विधिकर्म भवति ? आहोस्वित् कारकत्वाभावादिति ? प्रयोजनं तु साध्यो मोक्षो वक्ष्यते, न कर्मकारकत्वाभावात्, विदिक्रियाकारकत्वादित्याह—**ननु विदिक्रियाकर्मेति** ॥ न चेति भाष्यमेव परिहारः। ननु विदिक्रियाकर्मत्वाभावे शास्त्रजन्यज्ञानव्यावर्तकत्वाभावान्न शास्त्रगम्यं ब्रह्मेति चोदयति—**सोऽयं शान्तिकर्मणीति** ॥ स्वयंप्रकाशमानतया स्वविषयप्रकाशजननानपेक्षस्यापि ब्रह्मणः शास्त्रजन्यज्ञानाकारतया तद्व्यावर्तकस्याविद्यादिदोषनिवृत्तिफलवत्तया शास्त्रप्रमेयं ब्रह्मेति प्रतिपादयति ॥

अत्रोत्तरम्—**नाविद्याकल्पितेत्यादि** ॥ ननु अनधिगतार्थप्रकाशनमन्तरेण न प्रमाणव्यापारस्य फलवत्तेत्यत्राह—**शास्त्रं हि सोऽयमित्यादीति** ॥ ननु तत्र वा विषयाधिगममन्तरेण कथं निवर्त्यमात्रे प्रमाणव्यापार इति ? अत आह—**तथाहीति** ॥ उक्तमेतद् देवदत्तैक्यस्याभिज्ञायामेव सिद्धत्वात्तदाकारेण प्रत्यभिज्ञावाक्याभ्यामुपजनितेन ज्ञानेनोपाधिपरिकल्पितभेदनिरासेन प्रत्यभिज्ञावाक्ययोः प्रामाण्यमिति। ननु ब्रह्मात्मनि विपर्ययाभावान्न तन्निरासेनापि प्रामाण्यमित्यत

**तत्त्वदीपनम्**

फलाभावाद् विधौ निरस्ते, पुनः कथं तच्चोद्यम् ? इत्याशङ्क्य विकल्पपूर्वं व्याकरोति—**ननु प्रयोजनेति**। आद्यं दूषयति—**प्रयोजनं त्विति**। द्वितीयं प्रत्याह—**न; कर्मकारकत्वाभावादिति**। न विधिसंबन्ध इति शेषः ॥ भाष्यकारेणैव निरस्तं चोद्यम्, नास्माभिः प्रयतितव्यमस्तीत्याह—**भाष्यमेवेति** ॥ ज्ञानविषयत्वाभावेऽपि शास्त्रकारणत्वसंभवादाहेति चोद्यानुपपत्तिमाशङ्क्य तात्पर्यमाह—**ननु विदिक्रियेति** ॥ अविद्यानिवर्तकत्वेन शास्त्रप्रामाण्यमुक्तम्, तदसंभवि, तद्विषयत्वमन्तरेण तदविद्यानिवर्तकत्वासंभवादित्याशङ्क्य तात्पर्यमाह—**स्वयंप्रकाशमानतयेति**। **ज्ञानाकारतयेति**। ज्ञानं प्रत्याकारप्रदत्वेनेत्यर्थः। तद्व्यावर्तकस्य=तद्विशेषणस्येत्यर्थः ॥ निवर्तकत्वेन शास्त्रप्रामाण्यमनुपपन्नम्; प्रमाणलक्षणविरोधादिति शङ्कते—**नन्वनधिगतेति** ॥ "सिद्धं तु निवर्तकत्वादि"त्यत्र निवर्तकत्वेनापि प्रामाण्योक्तेर्नैतच्चोद्यमित्याह—**अत आहेति** ॥ दृष्टान्ताऽसंप्रतिपत्तिमाशङ्कते—**ननु तत्रेति** ॥ टीकापेक्षितं हेतुमाह—**उक्तमेतदिति** ॥ निवर्त्याभावान्न निवर्तकत्वेन प्रामाण्यमिति शङ्कते—**ननु ब्रह्मेति**। ब्रह्मणो निरवद्यत्वात्तदभिन्नत्वस्यापि निरवद्यत्वमित्यर्थः ॥ वस्तुतोऽवद्याभावेऽप्यविद्ययाऽवद्यं विद्यत इत्याह—**अत आहेति** ॥ 'अहमि'त्यात्मनि ज्ञातेऽपि विपर्यासदर्शना-

**ऋजुविवरणम्**

यत्पुनरुत्पन्नविद्यस्य कथं शिष्यत इति ? न कथञ्चिदित्येवोत्तरम्। कथमुपदेश इति चेत्, न; कथञ्चित् यावद्भ्रमं व्यवहाराः स्वप्नवत्, तदभावे न व्यवहाराः। यत्पुनरत्र चोद्यमनुत्पन्नज्ञानस्य कथं विद्योदेति ? उपदेष्टुरात्मान्तरस्याभावात्, नच गुरुणां विना ज्ञानोत्पत्तिः; "आचार्यवान् पुरुषो वेदे"ति श्रुतेः, तदपि प्रयोजकाज्ञानविजृम्भितम्—यतो मायाविनिर्मितभेदाश्रयेण गुरुशिष्यव्यवस्था स्वप्नवदेव। यच्चोत्पन्नज्ञानस्य भ्रान्त्यभावाच्छिष्यसङ्गत्ययोग इति, तदपि न सुन्दरम्; गुरोरपि शिष्याविद्याविजृम्भितत्वात्। तर्हि कल्पितस्य तत्त्वदर्शनाभावादुपदेष्टृत्वानुपपत्तिः, मैवम् विद्यावत्त्वेनैव कल्पितत्वादुपदेष्टृत्वं स्वप्नवत्। यदि मदविद्याविजृम्भितो मद्गुरुस्त्वदविद्याविजृम्भितश्च त्वद्गुरुः, सर्वे च मदविद्याविजृम्भितास्त्वदविद्याविजृम्भिता वेति संशयः पुनर्भवेत्, तत्र; त्वन्मदादिशब्दैः परिच्छिन्नं चैतन्यमभिधीयते ? अपरिच्छिन्नं वा ? नाद्यः; कल्पितस्याविद्याश्रयत्वाभावात्। द्वितीये त्वद्वितीयत्वात् चैतन्यस्य न दूषणं किञ्चित्। कल्पितगुरूपदेशे ज्ञानानुदय इति, स्वप्ननिदर्शनेनैव पराहृतम्। एवमादि सर्वं मनसि निधायाह—**एवं प्रत्येकमिति**। विस्तरभयान्न प्रदर्श्यत इति ॥

"तत्पदार्थैक्ता(मि"त्यनेन तत्त्वंपदस्यार्थयोरैक्याऽऽकारेणेत्युक्तम्, तत्र तत्त्वंपदवाच्ययोः पदार्थयोः स्वीकारे न

## पञ्चपादिका

**देश-कालभेदोपाधिप्रविलयेनाभेदोऽवगम्यते । तथा त्वंपदार्थोऽप्यात्मानमहंरूपं मन्यमानस्तत्त्वमसिवाक्यात्तत्पदार्थैकतामुपगच्छन् सोऽयमितिवदहमात्मकेदमंशोपाधिकृतवेद्य-वेदितृ-वेदनात्मकप्रपञ्चेनार्थात्प्रलीयमानेनावच्छिद्यमानानिदंप्रकाशः**

## पञ्चपादिकाविवरणम्

आह—**तथा त्वंपदार्थोऽपीति** ।। केन तर्हि प्रमाणाकारेण विपर्यासनिरास इति ? तदाह—**तत्पदार्थैकतामुपगच्छन्निति** ।। तत्त्वंपदाभ्यां लक्ष्यमाणं ब्रह्मात्मैकत्वं विज्ञानाकार इत्यर्थः । किं तर्हि तदाकारज्ञानेन निवर्त्यत इति ? तदाह—**अहमात्मकेदमंशोपाधिकृतेति** ।। प्रमाणव्यापारे विषयाकारोदय एव प्रमीयमाणवस्तुसामर्थ्याद्विपर्यासनिरास इत्याह—**अर्थादिति** ।।

ननु ज्ञातृसमवायिनी ज्ञेयाकारा संवित्प्रमाणफलम्, अनेन च विपर्यासो निरस्यते; प्रकाशस्यैवाप्रकाशविरोधित्वात्, नित्ये च चैतन्यप्रकाशे न प्रमाणफलमस्तीत्यत आह—**अवच्छिद्यमानानिदंप्रकाशः प्रमाणफलमिति** ।। प्रमाणेन विषयीकृतार्थगतं चैतन्यं प्रमाणफलमुच्यते, न प्रमाणजन्यम्; लोकेऽप्यजन्यत्वात् । अतः प्रमातृ-प्रमाण-प्रमेयावच्छिन्नं चैतन्यं प्रमात्रादि निवर्तयति; अवच्छेद-निवृत्त्योः पूर्वोत्तरक्षणतया विरोधाभावादिति । ननु फलं चेन्निवर्तकम्,

## तत्त्वदीपनम्

ज्ञात्मज्ञानस्य निवर्तकत्वमित्याशयेन शङ्कते—**केन तर्हीति** । **प्रमाणाकारेणेति** । प्रमाणगताकारेणेत्यर्थः । अधिष्ठानविशेषज्ञानं निवर्तकमित्याह—**तदाहेति** ।। त्वंपदार्थस्य न तत्पदार्थैक्यम्; विरोधादित्याशङ्क्य, विरुद्धांशपरित्यागेनैक्यबोधनं युक्तमित्याह—**तत्त्वंपदाभ्यामिति** ।। अनुत्पन्नस्य ज्ञानस्य निवर्तकत्वासंभवादुत्पन्नस्य निवर्तकत्वं वक्तव्यम्, नच तदुपपद्यते; सहावस्थितेरिति शङ्कते—**किं तर्हीति** । तदुत्तरत्वेन टीकामप्यवतारयति—**तदाहेति** ।। उक्तचोद्यस्य कः समाधिः ? इत्याशङ्क्याह—**प्रमाणेति** । विषयाकारेणोदयमन्तरेण ज्ञानस्य व्यापारानिरूपणात्तज्जन्मैव व्यापार इत्यर्थः । तथापि कथं निवृत्तिरिति ? तत्राह— **प्रमीयमाणेति** । शास्त्रजनितप्रमायामभिव्यक्तं यद्वस्तु, तद्बलादित्यर्थः । अन्धकारनिवर्तनेन दीपोत्पत्तिवद् विपर्यासनिवर्तनेन ज्ञानोदय इत्यर्थः । अथवा निवर्त्य-निवर्तकयोः सजातीयत्वान्न निवर्त्य-निवर्तकतेति शङ्कते—**किं तर्हीति** ।। तथाभूतविषयत्वात् प्रमाणस्य निवर्तकत्वं युज्यत इति समाध्यभिप्रायः ।।

अन्तःकरणवृत्तेर्जडत्वाद् नाज्ञाननिवर्तकत्वम्, नापि चैतन्यस्य; तस्य सदा भोक्तृत्वात्, नच वृत्तिविशिष्टस्य निवर्तकत्वम्; विशेषण-विशेष्यतत्संबन्धातिरिक्तविशिष्टस्यानिरूपणात् । ततश्च प्रमाणजन्या संविन्निर्वर्तिकेतिऽद्रष्टव्यमिति शङ्कते—**ननु ज्ञात्रिति** ।। तर्हि स एव निवर्तकोऽस्तु, तत्राह—**नित्ये चेति** ।। फलासंभवं दर्शयितुं नित्य इति विशेषणम् । चैतन्यस्य नित्यत्वात्कथं फलत्वमिति ? अत आह—**प्रमाणेनेति** ।। अर्थचैतन्ययोर्भेदाभावेऽप्युपचारादर्थगतत्वमुक्तमिति द्रष्टव्यम् । लोके जन्यस्य फलत्वं प्रसिद्धमित्यत्राह—**लोकेऽपीति** ।। ब्रह्मचैतन्यस्यानात्मासंबन्धात् तन्निवर्तकत्वं कथम् ? तत्राह—**अत इति** ।। काल्पनिकसंभवात्तयोर्निवर्त्य-निवर्तकतेत्यर्थः । चैतन्यस्य निवर्तकत्वे कथं तदवच्छेद इति ? अत्राह—**अवच्छेदेति** । ब्रह्माकारवृत्त्युत्पत्तेः पूर्वमवच्छेदः, उत्तरक्षणे निवृत्तिरित्यवच्छेदोपपत्तिरित्यर्थः । इदमत्र विवक्षितम्—यद्यपि वृत्तेर्जडत्वम्, चैतन्यस्य तु सदातनत्वम्; तथाऽप्यागन्तुकवृत्तिविशिष्टस्य निवर्तकत्वं कथ्यते । नच—विशिष्टस्यानिरूपणाद् न तस्य निवर्तकत्वमित्यपि—शङ्क्यम्; वास्तवविशिष्टासंभवेऽनुभवानुरोधेन समारोपितस्य विशिष्टस्येष्टत्वादिति ।। ननु फलस्यापि किं निवर्तकान्तरमस्ति ? उत न ? आद्येऽनवस्थेत्यभिसन्धाय द्वितीयं दूषयति—

## ऋजुविवरणम्

तज्ज्ञानेन विपर्यासनिरासः संभवति; अतत्त्वरूपत्वात्तस्येत्याशङ्क्य व्याचष्टे—**तत्त्वंपदाभ्यामिति** ।। **अर्थात्प्रलीयमानेनेति** न युक्तं वक्तुम्; प्रमाणस्य साक्षाद्विद्यमानत्वात्, तद्विषयत्वे चार्थादित्युक्तमेव स्यात्; प्रमाणस्य विषयगतविपर्ययनिवर्तनसामर्थ्यात्, नापि तस्यान्यत एव प्रलीयमानत्वेऽवच्छेदकत्वनिरूपणं युज्यत इत्याशङ्क्यावतारयति—**प्रमाणव्यापार इति** ।। कथमनिदंप्रकाशस्य फलत्वम् ? प्रमाणजन्यत्वाभावादित्याशङ्क्य व्याचष्टे—**प्रमाणेन विषयीकृतेति** ।। ननु अवच्छिन्नस्य निवर्तकत्वं न संभवति; निवर्त्यस्यावच्छेदकत्वविरोधादित्याशङ्क्याह—**अवच्छेदनिवृत्त्योरिति** ।। "एवञ्च नित्यमुक्त"-त्यनेन नित्यमुक्तात्मनि कल्पितबन्धनिवृत्तिः साध्या । सा च निवृत्तिर्नानित्या; प्रध्वंसरूपत्वादित्युक्तम्, अथवा नित्यमुक्त एवात्मा, ननु मुक्तिः स्वरूपातिरिक्ता साध्यास्ति; स्वरूपातिरिक्तनिवृत्तौ तस्याः साध्यत्वे च प्रमाणाभावात् । नच—प्रपञ्चस्य स्थितिः स्यादिति—वाच्यम्; अभावोत्पत्तावप्यविशेषात् । अथाभावोत्पत्तौ विरोधात् पुनर्न तिष्ठेत् तत्रापि यदि स्वरूपाभावो भवतीत्युच्यते ? किं वान्यत् ? प्रथमेऽनवस्था । द्वितीये स्वरूपस्थितिः । अथ विरोध्युत्पत्तावभावेन

### पञ्चपादिका

**प्रमाणफलं दर्शितः । तदप्यवच्छेदकविनाशे तदैव विजहन्निर्विशेषतामापद्यते । तेन प्रमात्रादिचतुष्टयस्य युगपत्प्रलयेऽपि तदवच्छेदानुभवफलं वाक्यनिबन्धनम् । अतो वेदैकगोचरो निर्वाणमिति वेदविदः प्रतिपेदिरे । तथाचैवंविधस्य प्रमाणव्यापारस्य प्रकाशका मन्त्रब्राह्मणवादा भाष्ये दर्शिताः । एवंच नित्यमुक्तात्मस्वरूपसमर्पणान्न मोक्षस्यानित्यत्वदोषः ।**

### पञ्चपादिकाविवरणम्

निवर्त्यानन्तर्भूतत्वात् तर्हि फलं यावत्कालमेव स्थास्यतीति, नेत्याह—**तदप्यवच्छेदकविनाश इति** ॥ ननु शास्त्रजन्यज्ञानेन न प्रकाश्यते चेद् ब्रह्म, न शास्त्रगम्यं स्यादित्यत आह—**तेन प्रमात्रादिचतुष्टयस्येति** ॥ ननु किमित्यविद्यानिवृत्तिरेव प्रमाणफलमुच्यते ? विषयप्रकाशोऽपि प्रमाणफलमुच्यतामिति, तत्राह—**तथा चैवंविधस्येति** ॥

**'अविज्ञातं विजानताम्' 'यतो वाचो निवर्तन्ते'** इत्यादि ॥ ननु "मनसैवानुद्रष्टव्यम्" 'तन्त्वौपनिषदं पुरुषमि"ति ज्ञानक्रियाकर्मत्वमपि श्रूयते, नैष दोषः; वेदान्तजनितापरोक्षज्ञानस्याकारसमर्पकतया व्यावर्तकत्वं शास्त्रमेयत्वं नाम, ज्ञानजन्यप्रकाशातिशयशून्यत्वमविषयता नामेति व्यवस्थोपपत्तेः । नहि प्रकाशगुणे पुनः प्रकाशगुणान्तरोदय इति । ननु अविद्यानिवृत्तेरपि ज्ञानसाध्यत्वाद् मोक्षस्यानित्यतेति, नेत्याह—**एवं च नित्यमुक्तेति** ॥

ननु कोऽयं जीवो नाम ? यस्य स्वरूपं त्वंपदेन लक्ष्यमाणं ब्रह्मैव वाक्यार्थः संपद्यते । ब्रह्मैवाविद्याप्रतिबिम्बितमिति वदामः । ततश्च त्वंपदेनाशेषोपाधिनिराकरणेनाऽऽत्मस्वरूपमेव लक्ष्माणं तत्पदोपलक्ष्यं ब्रह्मैव पदद्वयसामर्थ्या-

### तत्त्वदीपनम्

**ननु फलं चेदिति** ॥ ततश्चाद्वैतविरोध इत्यर्थः । कारणनिवृत्तौ कार्यस्यापि निवृत्तेर्नाद्वैतक्षतिरित्याह—**नेत्याहेति** ॥ उपसंहारव्याजेनोक्तचोद्य-परिहारौ स्पष्टयति—**ननु शास्त्रेति** ॥ निवर्तकत्वेन प्रामाण्ये हेत्वभावान्नैवमिति शङ्कते—**ननु किमिति** ॥ असिद्धो हेतुरित्याह—**तत्राहेति** ॥ टीकासूचितमन्त्रब्राह्मणवाक्यं दर्शयति—**अविज्ञातमिति** । ब्रह्म ज्ञानकर्मेति ये मन्यन्ते, तेषां ब्रह्माज्ञानं स्यात्; विषयस्याब्रह्मत्वादित्यर्थः । ब्रह्म बोधयितुं प्रवृत्तवाचस्तत्र स्फूरणातिशयमाधातुमसमर्थाः, यतो वाचो निवर्तन्ते, तद् ब्रह्मेत्यर्थः । विषयत्वस्यापि श्रुतत्वान्न तन्निराकणमिति शङ्कते—**ननु मनसेति** ॥ विरुद्धार्थत्वेनोभयोःप्रामाण्यानुपपत्तेरन्यतरपरित्यागायोगाच्च व्यवस्था स्वीकार्येत्याह—**नैष इति** ॥ युक्तितोऽपीत्थं व्यवस्थेत्याह—**न हीति** ॥ प्रकाशो गुणो यस्य स प्रकाशगुणः, तस्मिन्नित्यर्थः । अविद्यानिवर्तनेन शास्त्रस्य प्रामाण्यमुक्तम्, तदाक्षिपति—**नन्वविद्येति** ॥ साध्यत्वेऽपि प्रध्वंसस्य नित्यतादर्शनान्नैवमित्याह—**नेत्याहेति** ॥

आत्मनो नित्यमुक्तत्वमसहमानः शङ्कते—**ननु कोऽयमिति** ॥ जीवेशादिविवाददर्शनाद् विमर्शोपपत्तिरित्यर्थः । जीवस्वरूपनिरूपणस्येह कः प्रसङ्गः ? इत्याशङ्क्याह—**यस्य स्वरूपमिति** । यद्यपि जीवस्वरूपं बहुशो निरूपितम्; तथाऽपि मिथ्याज्ञानोपहतचेतसां तत्र विस्मरणसंभवात्पुनस्तन्निरूपणमित्यर्थः ॥ "ब्रह्म वा इदमग्र आसीदि" त्यादिश्रुतिसमधिगतं रूपमाह—**ब्रह्मैवेति** ॥ प्रतिबिम्बितस्य जीवस्य बिम्बभावो विरुद्ध इत्याशङ्क्याह—**ततश्चेति** ॥

### ऋजुविवरणम्

विनापि स्वरूपं न भवेत्, वस्तुमात्रमधिष्ठानं तिष्ठेत्, तर्हि भावविरोधिज्ञानोत्पत्तौ स्वरूपमेव न भवेत् । नत्वभावो नामात्मातिरिक्तः; आत्मनि तदभावव्यवहारादात्मैवाज्ञाननिवृत्तिरिति व्यवहारः । अभावस्तु न घटादावपि निरूपयितुं शक्यः —यथा प्रागभावेऽभावेन स्वरूपभङ्गः, एवमन्यत्रापि । नच घटस्यैव तदभावत्वम्; घटापगमे प्रागभावप्रसङ्गात्, तद्विरोधिसद्भावमात्रेणाभावेन विनापि वस्त्वपहारोऽङ्गीकृत- स्यात् । नच—केवलस्वरूपाङ्गीकारादेवाभावाङ्गीकार इति—वाच्यम्; कैवल्यस्य स्वरूपत्वेनाभाववादिभिरङ्गीकरणीयत्वात् । तथाहि—भूतले घटस्तदभावावित्यङ्गीकर्तव्यम्, तत्र सघटे तदभावो न वर्तेत, नाभावयुक्ते च घटः । नापि स्वरूपमिति युक्तं वक्तुम्; तद्युक्तेऽपि स्वरूपस्य विद्यमानत्वात्; अतः केवल इति वक्तव्यम् । नापीतराभावयुक्त इतरस्य भावः; तथात्वे तद्युक्तं-तद्योग इति प्रसङ्गात् तत्रात्माश्रयत्वादिदोषप्रसङ्गः । ननु उभयरहितं केवलम्, नच राहित्यमभावः; उभयाभाववति तद्योगायोगात्, परस्पराभावरूपत्वेन न तस्यातिरिक्तस्य संभवः । नच श्रवणादिवैयर्थ्यम्; मुद्गराभिघातवत्परिहारात् ॥

**ननु कोऽयमिति** ॥ जीवो ब्रह्म तावन्मात्रमिति वक्तुं न शक्यते; एकेन पदेनैव तत्सिद्धावितरवैयर्थ्याद्पदेशानर्थक्यात्; ब्रह्मैव जीव इति प्रतिपादनं च न स्यात्; वैयर्थ्याद् लक्षणाश्रयणं च न स्यात् । अतिरिक्तत्वे तु निर्विभाग इति वक्तुं न शक्यते; ब्रह्मैव जीव इति च न सिध्येत्, अतो भिन्नाभिन्नत्वमेव सकलपदसाफल्यायैषितव्यमिति भावः ।

### पञ्चपादिकाविवरणम्

त्संपद्यते । नचैतदुपाधिद्वयनिराकरणेन विशुद्धब्रह्मात्मज्ञानमेकेनैव पदेन लभ्यते; विरोधानुत्पत्तेः । ननु भिन्नाभिन्नता वाक्यार्थः किन्न स्यात् ? न, तथा सति शरीरेन्द्रियविशिष्टस्यैव त्वम्पदार्थस्य ब्रह्मणो भिन्नाभिन्नत्वात्तथैव वाक्यार्थसिद्धेर्लक्षणया ब्रह्मात्मज्ञानेनाध्यासबाधो न स्यात्, वर्तमानापदेशिनां फलवचनानां योग्यानुपलब्धिबाधात्, सत्यपि तत्त्वज्ञाने न शास्त्रादबन्धनिवृत्त्यवगमः । भिन्नाभिन्ने च वाक्यार्थे न तत्त्वज्ञानाद् भेदांशनिवृत्ति; तस्य स्वविषयानाशकत्वात्कर्मोपासनापरोक्षानुभवान्निवृत्तिकल्पना भिन्नाभिन्नविषयागमविरुद्धा, आगमस्य सर्वकालं भेदाभेदविषयत्वात् । यत्त्वभेदांशेन ज्ञानमोक्षादिव्यवहारो भेदांशेन कर्मविद्यादिव्यहार इति व्यवस्था कल्प्यते; तन्मन्दचेतनोपच्छन्दनमात्रम् । तथाहि—यदि भेदाभेदाभ्यामंशो जीवोऽभेदांशश्च ब्रह्मैव स्यात्, तदा सावयवो जीवः, जीवांशश्च ब्रह्मेति पण्डितम्मन्यस्य हि विपरीतोऽर्थः संपद्येत । अभेदांशस्याब्रह्मत्वेऽत्यन्तभेद एव स्यात् । नचांशद्वयसमुदायो जीवः; अवस्तुत्वप्रसङ्गात् । न चाभेदांश एव जीव;

### तत्त्वदीपनम्

एकेन पदेन विवक्षितसिद्धेः पदान्तरमनर्थकमित्यत्राह—**नचैतदिति** ।। पदद्वयसामानाधिकरण्याद्विरुद्धार्थप्रतिपत्तौ तन्निरसनेनाखण्डं वस्तु प्रतिपादयितुं शक्यते, नान्यथा, एकपदप्रयोगमात्रेण विरोधाप्रतित्तेर्लक्षणानुपपत्तेरित्यर्थः ।। अखण्डं ब्रह्म शास्त्रप्रमेयमित्युक्तमाक्षिपति—**ननु भिन्नाभिन्नतेति** । ततः पदद्वयमर्थवत्स्यादित्यर्थः । भेदवादिमते पुरुषार्थो न सेत्स्यति, पदद्वयस्यार्थवत्त्वं त्वन्यथापि घटत इत्यभिसन्धायाह—**न तथा सतीति** । लक्षणयेति विरुद्धांशपरित्यागेनोत्पन्नज्ञानेनेत्यर्थः । "भिद्यते हृदयग्रन्थिः" "तरति शोकमात्मविदि"त्यादिशास्त्रेण ज्ञानादध्यासनिवृत्तेरुपलभ्यमानायाः कथमपलापः ? इत्याशङ्क्याह—**वर्तमानेति** ।। ज्ञानमात्रस्य शरीराद्यध्यासनिवर्तकत्वं न ब्रूमः, किं त्वन्त्यावस्थायामुत्पन्नज्ञानेनेति चेत्, मैवम्; तत्र प्रमाणाभावाज्जीवन्मुक्तिप्रतिपादकशास्त्रविरोधाच्चेत्यर्थः । भिन्नाभिन्नं ब्रह्मेति वदतेदं पर्यालोचनीयम्—किं सर्वदा भिन्नाभिन्नम् ? उत संसारावस्थायामेव ? आद्ये न मुक्तेः संसारावस्थातो विशेषः । द्वितीयेऽपि भेदांशस्य किं निवर्तकम् ? इति वक्तव्यम्—किं शाब्दज्ञानम् ? उत कर्म ? आहो उपासना ? अथवाऽपरोक्षानुभवः ? इति विकल्प्याद्यं दूषयति—**भिन्नाभिन्ने इति** ।। द्वितीय-तृतीय-चतुर्थान् निरस्यति—**कर्मेति** ।। संसारावस्थायां भेदाभेदप्रतिपादकत्वेनागमोऽन्यथासिद्ध इत्याशङ्क्य, तत्कल्पकाभावान्मैवमित्याह—**आगमस्येति** ।। कल्पकाभावोऽसिद्ध इत्याह—**यस्त्विति** ।। 'अहं ब्रह्मास्मी'ति ज्ञानं **ज्ञानशब्दार्थः** । ब्रह्मात्मभावो मोक्षः । अविद्यानिवृत्तिरादिशब्दार्थः । अत्यन्ताभेदेऽत्यन्तभेदे च मुक्ति-बन्धव्यवस्थासिद्धेर्भिन्नाभिन्नत्वमास्थेयम्, तथाप्यागमस्य संकोचः सेत्स्यतीत्यर्थः ।। व्यवस्थाया अन्यथाप्युपपत्तेर्न तद्बलाद् भेदाभेदसिद्धिरित्यभिप्रायेणाह—**तन्मन्दचेतनोपच्छन्दनमात्रमिति** ।। मन्दबुद्ध्यनुसरणमात्रमित्यर्थः । न केवलमन्यथोपपन्नाऽर्थापत्तिः, किं त्वन्यथैवेत्याह—**तथाहीति** ।। किं भेदाभेदाभ्यामंशी जीवः ? उतांशद्वयसमुदायः ? आद्येऽपि किमभेदांशो ब्रह्म उत ततोऽर्थान्तरम् ? इति विकल्प्याद्यमनूद्य दूषयति—**यदि भेदाभेदाभ्यामिति** ।। **विपरीतोऽर्थ इति** ।। जीवस्य निरवयवत्वप्रतिपादकश्रुतिविरुद्धम्, ब्रह्मांशो जीव इति स्वाभ्युपगमविरुद्धं चेत्यर्थः । आद्यद्वितीयं दूषयति—**अभेदांशस्येति** ।। समुदायपक्षं निरस्यति—**नचेति** ।। समुदायिनो भेदाभेदाभ्यां समुदायस्य दुर्निरूपत्वाज्जीवस्याप्यवस्तुत्वं स्यादित्यर्थः ।। मा भूत् तर्हि समुदायो जीव इति चेत्, तत्र वक्तव्यम्—किमभेदांश एव जीवः ? उत भेदांश एव ? अथवोभावप्यंशाविति ? तत्राद्यं दूषयति—**नचेति** ।। अन्तिमपक्षेऽपि किं

### ऋजुविवरणम्

**ब्रह्मैवाविद्यादिप्रतिबिम्बितमिति** । ब्रह्मैवेत्यनेनैकरत्यत्वसिद्धिरुक्ता "अविद्यादी"त्यनेनेतरपदवैयर्थ्यादि परिहृतमिति ।। ननु एकस्मिन् तत्त्व एकेनैव पदेन लक्षणया लब्धे पदान्तरवैयर्थ्यं तदवस्थमित्याशङ्क्याह—**न चैतदिति** ।। ननु शास्त्रमेव ज्ञानाद् बन्धनिवृत्तिं श्रावयति, तत्कथमध्यासबाधो न स्यात् ? इत्याशङ्क्याह—**वर्तमानापदेशिनामिति** । ननु न बन्धनिवृत्तिप्रतिपादकशास्त्रे योग्यानुपलब्धिविरोधः; तथाविधज्ञाने सति निवृत्त्यभावानुपलम्भात्, विरोधित्वेन च तत्त्वज्ञानस्य बन्धनिवर्तकत्वं सिद्धमित्याशङ्क्याह— **भिन्ना भिन्ने इति** ।। **ननु** न तत्त्वज्ञानात्तन्निवृत्तिः; किन्तु कर्मोपासनाजन्यज्ञानादित्याशङ्क्याह—**कर्मोपासनेति** ।। **ननु** अत्यन्ताभेदे बन्ध-मोक्ष व्यवहारानुपपत्तिः, अत्यन्तभेदे च शास्त्रविरोधात्भिन्नाभिन्नत्वमङ्गीकरणीयम्, तत्रौपाधिकत्वाद्भेदस्योपाधिनिवृत्त्या निवृत्तिरुपपद्यते, भेदांशावलम्बिशास्त्रविरोधाभावश्च; तस्याप्यौपाधिकभेदाश्रयत्वादित्येतदनुवदति—**यस्त्वभेदांशेनेति** ।। **तन्मन्दचेतनोपच्छन्दनमात्रम्** । मन्दचैतन्यानुसरणमित्यर्थः ।। **ननु** सर्वत्रे-

**पञ्चपादिकाविवरणम्**

ब्रह्मण एव जीवत्वप्रसङ्गात्। नचोभावंशौ; जीवद्वयप्रसङ्गात् न च भेदांश एव जीव; अत्यन्तभेदप्रसङ्गात्। तत्र तत्त्वज्ञानमोक्षादिव्यवहारासिद्धिः। भेदाभेदांशावभिन्नौ जीव इति चेत्, यद्यभिन्नावेव जीवः, तर्हि ब्रह्मैव जीव इति कुतो बन्धमोक्षव्यवहारव्यवस्था? अथ भेदाभेदांशौ परस्परं भिन्नाभिन्नाविति मतम्, नैवम्; भेदाद्यनवस्थाप्रसङ्गात्। किंचांशिनो वांशद्वयसमुदायस्य वा परस्पराभिन्नांशद्वयस्य वा जीवत्वे ब्रह्मणो जीवांशत्वं परिहर्तुं न शक्यते। किंच कस्यायं शास्त्रोपदेशः? न तावदभेदांशस्य; तस्य ब्रह्मस्वरूपतयोपदेशानपेक्षत्वात्, नापि भेदांशस्योपदेशः; "अहं ब्रह्मास्मी"तिप्रतिपत्त्ययोगात्। नच भेदांशस्य पुनरभेदः सम्भवति; विरोधात्, ब्रह्मण्येव संसारप्रसङ्गाच्च। कस्य चायमविद्यादोषः? न तावदभेदांशस्य; ब्रह्मण्येव प्रसङ्गात्। नापि भेदांशस्य; उपाधिजननात् प्राग् भेदाभावात्। स्वत एव भेदांशेऽशिनि वा जीवे बन्धदोष इति चेत्, तद्विनाशे जीवनाशः स्यात्; मोक्षे भेदांशविनाशात्, अभेदांशस्य नित्यमुक्तत्वात्॥ कस्यायं मोक्ष उपदिश्यते तत्रापि भिन्नाभिन्नं चेत्, "ब्रह्म वेद ब्रह्मैव भवती"त्येवकारविरोधः संसारादविशेषश्च स्यात्। किंचायं सर्वत्र संकीर्णं वस्तु प्रतिपद्यमानः स्वर्ग-नरक-बन्ध-मोक्षादीन् सांकर्येण व्यवस्थापयितुं प्रवृत्तः कथं व्युत्पन्नमतिषु नापत्रपेत। भेदेनैव सर्वं व्यवस्थाप्यते चेत्, किमनेन अभेदेन वन्ध्यायमानेन? स्वप्रयुक्तकार्यनिमित्तेन कल्पितेन धर्मिप्रतियोगिव्यति-

**तत्त्वदीपनम्**

तौ भिन्नौ? उताभिन्नौ? नाद्य इत्याह—**नवचोभाविति**॥ मध्यमं निरस्यति—**न च भेदांश इति**॥ फलितमाह—**तत्र तत्त्वेति**॥ विकल्पान्तरमनुवदति **भेदाभेदेति**॥ किं तयोरत्यन्ताभेदः? उत भेदाभेदौ? नाद्य इत्याह—**यद्यभिन्नाविति**॥ द्वितीयमुत्थापयति—**अथ भेदेति**॥ यौ तयोर्भेदाभेदौ? तावपि किं भिन्नौ? अथवा भिन्नाभिन्नौ? प्रथमद्वितीययोः पूर्वसमानयोगक्षेमत्वमित्यभिप्रेत्य तृतीयं दूषयति—**नैवमिति**। भेदाभेदनिर्वाहकभेदाभेदौ स्थितौ, तत्रापि भेदांशनिर्वाहकत्वेनाभेदांशनिर्वाहकत्वेन च भेदाभेदौ कल्प्यौ, एवमितरत्रापीति प्रमाण-युक्तिहीनमनन्तभेदादिकल्पनं स्यादित्यर्थः॥ अंशिपक्षोक्तो दोषः कल्पान्तरेऽपि स्यादिति तदनुवादपूर्वकमाह—**किं चांशिन इति**॥ उपदेशपर्यालोचनयापि नायं पक्षो निरूपणपथमवतरतीत्याह—**किंचेति**॥ किमभेदांशस्योपदेशः? उत भेदांशस्य? इति विकल्पयति—**कस्यायमिति**। आद्यं प्रत्याह—**न तावदिति**॥ द्वितीयं प्रत्याह—**नापीति**॥ भेदांशेऽभेदस्य विद्यमानत्वात्तथाप्रतिपत्त्युपपत्तिरित्याशङ्क्य, किं मुक्तौ तस्य विद्यमानता? उत सदा? नाद्यः; पूर्वरूपे स्थिते नष्टे वा तस्याभेदांशभजनानुपपत्तेरित्याह—**नचेति**॥ द्वितीयं निरस्यति—**ब्रह्मण्येवेति**॥ अभेदांशस्याप्यविद्ययोपदेश इत्याशङ्क्याह—**कस्य चायमिति**॥ भेदांशः किमुपाधिनिमित्तः? उत स्वाभाविकः? नाद्य इत्याह—**उपाधीति**॥ द्वितीयमुत्थापयति—**स्वतः एवेति**॥ पक्षान्तरमाह—**अंशिनि चेति**। मुक्ति-बन्धयोरैकाधिकरण्यनियमाद् मुक्त्यवस्थायां तस्यावस्थानमिष्यते? आहो मुक्ति-संसारावस्थयोर्वैलक्षण्यसिद्ध्यर्थं नेष्यते? इति। तत्राद्यं दूषयति—**तद्विनाश इति**। **बन्धविनाशे**=मुक्तावित्यर्थः। जीवनाशः स्यादिति कल्पेऽभावः स्यादित्यर्थः। तत्र हेतुमाह—**मोक्ष इति**। भेदांशनाशेऽप्यभेदांशस्य मुक्तिरित्याशङ्क्याह—**अभेदांशस्येति**॥ आद्यमुत्थापयति—**किं चात्रापीति**॥ श्रुतिविरुद्धत्वान्नेदमादेयमित्याह—**ब्रह्म वेदेति**। युक्तिविरुद्धं चैतदित्याह—**संसारादिति**॥ शोच्यश्चायं भेदाभेदवादीत्याह—**किंचायमिति**॥ स्वर्गादीनसांकर्येण व्यवस्थापयितुं प्रवृत्तोऽयं व्युत्पन्नमतिषु कथं नापत्रपेतेति संबन्धः। तत्र हेतुमाह—**सर्वत्रेति**॥ असतो भेदाभावान्न सांकर्यमिति शङ्कते—**भेदेनेति**॥ अभेदप्रयुक्तकार्याभावान्नाभेदकल्पनं फलवदित्याह—**किमनेनेति**। वन्ध्यायमानत्वमाह—

**ऋजुविवरणम्**

कस्मिन् वस्तुनि विरुद्धरूपसमवायो रूपभेदादिना परिहर्तव्यः, नैवात्र कश्चिद्विशेष इत्याशङ्क्याह—**किञ्चांशिनो वेति**॥ ननु शास्त्रसामर्थ्यादुभयप्रतिपत्तौ घटाकाश-महाकाशन्यायेन प्राचीनदोषपरिहार इत्याशङ्क्याह—**किञ्च कस्यायं शास्त्रेति**॥ ननु अविद्यादिदोषवतां शास्त्रमुपदिशति, नच विरोधः, ब्रह्मणि संसारित्वं चोपाधिकत्वेन; भेदादिनिवृत्तेरित्याशङ्क्याह—**कस्यायमविद्यदोषेति**॥ कथं जीवनाशो भवेत्? अभेदांशस्य विद्यमानत्वादित्याशङ्क्याह—**अभेदांशस्येति**॥ न तस्य जीवत्वमिति भावः। ननु मोक्षावस्थासंबन्धिनो बद्धत्वम्, तेन न तन्नाशेन मुक्त्यभावः, अविद्यादोषायोगश्च; शास्त्रञ्च तस्यैव ब्रह्मरूपतामुपदिशतीति वक्तुं शक्यत इत्याशङ्क्याह—**कस्यायं मोक्ष इति**॥ न मुक्तौ ब्रह्म भिन्नाभिम्; अतो नावधारणविरोधः, न मुक्त्यभावः;अभिन्नस्वरूपस्य विद्यामानत्वात्, नच ब्रह्मणि संसारप्रसङ्गः, अभेदांशस्य विद्यमानत्वात्, एवञ्चाविद्यानिर्वाहः। नचोपाधिजननात्प्रागसंबन्धो ब्रह्मणि वा योगः, इतरेतराश्रयत्वादित्याशङ्क्याह—**किञ्चायं सर्वत्रेति**॥

पञ्चपादिका

यस्य तूत्पाद्यो मोक्ष इत्यादिना तस्माद् ज्ञानमेकं मुक्त्वा क्रियाया गन्धमात्रस्याप्यनुप्रवेश इह नोपपद्यते इत्यन्तेन भाष्येणाविद्यानिवर्तनेन नित्यमुक्तात्मस्वरूपसमर्पणं मोक्षं विहाय क्रियानुप्रवेशं कल्पयतोऽपि न तस्य तत्र संभव इति दर्शितम् । कथम् ? यदि तावदुत्पाद्यो विकार्यो वा मोक्षः तदा यद्यपि क्रियानुप्रवेशो युक्तः तथापि मोक्षस्य ध्रुवमनित्यत्वमित्युक्तम् "न कर्मब्रह्मविद्याफलयोर्वैलक्षण्यादि"त्यादिभाष्येण ।

पञ्चपादिकाविवरणम्

रेकेण भेदोपाधेरभावात् । उपाधिभेदेन भेदाभेदव्यवस्था त्वेकस्य भेदाभेदौ निवारयति; धर्मिप्रतियोगिभेदात् । शास्त्रं पुनः—"नान्योऽतोऽस्ति द्रष्टे"ति भेदोपमर्देनैवाभेदं प्रतिपादयति—"एष त आत्मे"ति च । नच सत्तादिसामान्यद्वारेण जीवब्रह्मणोरभेदः; अनुमानेनैव तत्सिद्धेः शास्त्रानपेक्षणात् । ननु अत्यन्ताभेदवादिनस्तवैव सर्वं संकीर्येत, न मम भेदाभ्युपगमात् । नैवम्; कार्यप्रपञ्चस्यानिरूपितस्वभावतया यथावभासं भेदादिव्यवस्थोपगमात्, आत्मन एवाभेदोपगमात् । तस्मान्मन्दमतिसन्तोषमात्रप्रयोजनतया बहुवेणुभारपीडितचेतसाऽयं भेदाभेदपक्षः समादीयत इति । तस्मादेकमेव ब्रह्म देवदत्तवदुपाधिभेदनिमित्तविभागपरामर्शेन प्रत्यस्तमितविभागं वाक्येन प्रतिपाद्यत इति शोभनम् ॥

**"यस्य तूत्पद्यो मोक्षः"** इत्यादिना उत्तरस्य भाष्यसमुदायस्य तात्पर्यमाह । ननु ब्रह्मणोऽपि कारकत्वसम्भवात् कथं न सम्भवति क्रियेत्याह—**कथमिति** ॥ तत्रेदं वक्तव्यम्—किं यागादिवत्कर्तृसमवेतापूर्वादिफलदानाय ज्ञानं विधीयते ? किं वा कर्मकारकातिशयफलायेति ? न तावत् पूर्वः कल्पः; "न कर्मब्रह्मविद्याफलयोर्वैलक्षण्यादि"त्यारभ्य निरस्तत्वात्; नाप्युत्तरः कल्प इत्याह—**यदि तावदुत्पाद्य इत्यादिना** ॥

तत्त्वदीपनम्

**स्वप्रयुक्तेति** ॥ किं च किं भेदाभेदौ भिन्नयोर्धर्मिप्रतियोगिनोस्तिष्ठतः ? उताभिन्नयोः ? तत्राद्यं दूषयितुं भेदस्य धर्म्यादितन्त्रतामाह—**धर्मीति** ॥ भेदोपाधेरिति भेदव्यवस्थापकस्येत्यर्थः । ततः किमित्यत्राह—**उपाधिभेदेनेति** । **व्यवस्थेति** ॥ विविक्ततयाऽवस्थानं स्थितिरित्यर्थः । भेदाभेदनिर्वाहकभेदस्यापि भिन्ननिष्ठत्वादनवस्थेत्यर्थः । अथाभिन्नयोर्धर्मिप्रतियोगिनोर्भेदस्थितौ तस्यापि स्थित्यर्थं भेदान्तरकल्पनं स्यादित्याह—**धर्मीति** । इतोऽपि नायं पक्षः समञ्जस इत्याह—**उपाधीति** । यस्मिन् भेदनिवेशस्तस्मिन्नेवाभेदनिवेशः ? उतान्यत्र ? नाद्यः; विरोधादित्यभिसन्धाय द्वितीयं निरस्यति—**उपाधीति** ॥ द्वितीयं प्रत्याह—**धर्मीति** ॥ धर्मिप्रतियोगिनोर्भेदादिति विग्रहः । एकस्मिन् धर्मिप्रतियोगिभावासंभवान्नाभिन्नयोर्भेदस्थितिरित्यर्थः । शास्त्रविरुद्धा चेयं कल्पनेत्याह—**शास्त्रं पुनरिति** । अभेदपरं तद्वचनमित्याशङ्क्य पृथगभेदप्रतिपादनान्मैवमित्याह—**एष त इति** ॥ त्वत्पक्षे शास्त्रप्रामाण्यं च दुर्लभमित्याह—**न च सत्त्वादीति** ॥ कनक-कटकादिषु सामान्याकारेणाभिन्नत्वं विशेषाकारेण भिन्नत्वं चेत्येतल्लोकप्रसिद्धम्, तेन दृष्टान्तेन प्रत्यग् ब्रह्मणोरपि तादृक्त्वसिद्धेः शास्त्रवैयर्थ्यमित्यर्थः ॥ भेदाभेदमते सांकर्यमित्युक्तम्, तत्परमतेऽपि तुल्यमिति शङ्कते—**नन्विति** ॥ संकीर्येत एवेति संबन्धः । मन्मते संकरश्च नेत्याह—**न ममेति** ॥ काल्पनिकभेदाङ्गीकारान्नाद्वैतिमते सांकर्यप्रसञ्जनं शोभत इत्याह—**नैवमिति** ॥ अभेदवचनं तर्हि किंविषयमिति ? अत आह—**आत्मन एवेति** ॥ तात्त्विकाद्वैतविषयं तदित्यर्थः । एकदेशिमतनिराकरणमुपसंहृति—**तस्मादिति** ॥ गुणदोषविवेकावधारणासमर्थत्वादपि न त्वन्मतमादेयमित्याह—**बहुवेणुभारेति** ॥ स्वमतमुपसंहरति—**तस्मादिति** ॥ मृदादिवद् ब्रह्मणोऽप्युपादानत्वात्तत्र क्रियानुप्रवेशो युक्त इति शङ्कते—**ननु ब्रह्मण इति** ॥ मोक्षस्योत्पाद्यत्वादिरूपत्वाभावेऽपि क्रियानुप्रवेशः किं न स्यादित्याशङ्क्य, विकल्पोत्तरत्वेन व्याकरोति—**तत्रेदमित्यादिना** ॥

मोक्षः अनित्यः, उत्पत्तिमत्त्वात्; घटादिवदित्युक्ते क्रियासाध्यत्वमुपाधिरिति केषांचित्प्रत्यवस्थानमाह—

ऋजुविवरणम्

ननु न वयमभेदं कल्पयामः, अपि तु शास्त्रत एव प्रतीयते, तर्ह्यभेद एव स्यादित्याशङ्क्याह—**धर्मिप्रतियोगीति** ॥ ननु धर्मि-प्रतियोगिस्वरूपमात्रनिबन्धनं भेदं न ब्रूमः, येन तदसंभवेन भेदो निराक्रियते, अपित्वौपाधिकमित्याशङ्क्याह—**उपाधिभेदेनेति** ॥ ननु नोपाधिमात्रगतो भेदः, नापि तेन भेद एवापादित इति शक्यं वक्तुम्, उभयमपि शास्त्रसिद्धं यतः, इत्याशङ्क्याह—**शास्त्रं पुनरिति** ॥ न शास्त्रीयाभेदेन भेदनिषेधः रूपान्तरनिबन्धनत्वात्तस्य, भेदनिषेधस्य चात्यन्तभेदविषयत्वादित्याशङ्क्याह—**नच सत्तादिसामान्येति** ॥ ननु तर्हि ज्ञानमात्रसाध्यत्वेन नित्यत्वेऽविद्यानिवृत्तिरेव, तेन न

## पञ्चपादिकाविवरणम्

अत्र केचिदाहुः—उत्पाद्यत्वेऽपि मोक्षस्य नानित्यतादोषः; क्रियासाध्यस्यैवानित्यत्वात्, मोक्षस्य ज्ञानमात्रसाध्यत्वात्, नच ज्ञानमात्रसाध्यस्यानित्यत्वं दृष्टम्; नचाविद्यानिवृत्तिमात्रमेव ज्ञानसाध्यम्; ब्रह्मभावस्यापि साध्यत्वात् । ननु जीवस्य ब्रह्मभावः स्वाभाविको न साधनीयः, न; तादात्म्यस्यैव स्वाभाविकत्वात् । भेदतावन्मात्रविरोधस्तादात्म्यं नाम । तद्भावस्तु ब्रह्मतावन्मात्रता जीवस्य ज्ञानेन साध्यते; "तरति शोकमात्मवित्" "ब्रह्म वेद ब्रह्मैव भवती"त्युभयविधश्रुतिसामर्थ्यादिति । अत्रोच्यते—किं शास्त्रजनितसम्यग्ज्ञानेन तादात्म्यविषयेण मोक्षः साध्यते ? किं वा तद्भावविषयेणेति ? न तावत्तद्भावविषयेण; तस्य नित्यसिद्धताप्रसङ्गात् । यदि तादात्म्यविषयेण ? तत्रापि निवृत्ते तादात्म्ये तद्भावः साध्यते वा ? न वा ? इति वक्तव्यम् । निवृत्ते चेत्, ज्ञानस्य स्वविषयविनाशकत्वं दर्शितं स्यात् । ज्ञाननिवर्त्यत्वे चाज्ञानमेव तादात्म्यमापद्येत, अनिवृत्ते तु तादात्म्ये तद्भावो नोपपद्यते । न हि तावन्मात्रता तद्विरोधिता च युगपत् स्यातामिति ॥ किंच तादात्म्यनिवृत्तिरेव तद्भावः किंवाऽन्य इति वक्तव्यम् । निवृत्तिरेव चेत्, अविद्यानिवृत्तिरेव मोक्ष इत्युक्तं स्यात्, अन्यश्चेत् तर्हि तादात्म्यं तद्भावं चान्तरेण रूपान्तरं वक्तव्यम् । न हि जीवब्रह्मणोस्तादात्म्यतद्भावव्यतिरेकेणात्यन्तभेदादन्यद् रूपान्तरं शक्यते निरूपयितुम् । कश्चायं तद्भावो नाम ? न तावद्

## तत्त्वदीपनम्

**अत्र केचिदाहुरिति** । साधनव्यापकत्वं निरस्यति—**मोक्षस्येति** ॥ ज्ञानसाध्यस्यानित्यत्वे प्रमाणं च न पश्याम इत्याह—**नच ज्ञानेति** ॥ ज्ञानस्याविद्यानिवर्तकताया लोकसिद्धत्वान्न तत्र विधिरर्थवानित्याशङ्क्याह—**नचेति** ॥ अभूत्वा भावान्न ब्रह्मभावः साध्य इति शङ्कते—**ननु जीवस्येति** ॥ स्वाभाविकत्वमसिद्धमित्याह—**नेति** ॥ "स्वं ह्यपीतो भवती"त्यादिना स्वाभाविकत्वं लक्ष्यत इत्याशङ्क्य, तत्तादात्म्यविषयमित्याह—**तादात्म्यस्येति** ॥ तादात्म्य-तद्भावयोः को भेदः ? इत्याशङ्क्याह—**भेदेति** । भेदसहाभेदस्तादात्म्यम्, भेदासहाभेदस्तद्भाव इति भेदः । तद्भावस्य तादात्म्यातिरेकसाधनफलमाह—**ज्ञानेनेति** । अविद्यानिवृत्ति-ब्रह्मभावयोर्ज्ञानसाध्यत्वे श्रुतिं प्रमाणयति—**तरति शोकमिति** ॥ विकल्पासहत्वाद् नैतत्साध्वित्याह—**अत्रोच्यत इति** ॥ तत्रान्त्यं निरस्यति—**न तावत्तद्भावेति** ॥ किं तज्ज्ञानमपरोक्षम् ? उत परोक्षम् ? आद्ये ज्ञानात्प्राक् तद्भावाभावेऽपरोक्षज्ञानानुत्पत्तेः स एष्टव्य इत्याह—**तस्येति** ॥ द्वितीये सर्वेषां तद्भावः स्यादित्यर्थः । आद्यः कल्पो निरूपणं न सहत इत्याह—**यदि तादात्म्येति** ॥ विकल्पासहत्वान्नैतत् साध्वित्याह—**तत्रापीति** ॥ आद्येऽपीदमालोचनीयम्—किं तादात्म्यनिवर्तकं तज्ज्ञानम् ? आहो स्विदन्यत् ? आद्यमुत्थापयति—**निवृत्ते चेदिति** ॥ अपसिद्धान्तापत्तेर्नैवमित्याह—**ज्ञानस्येति** ॥ नच तदिष्टमित्यपि शङ्क्यम्; अतिप्रसङ्गात् ज्ञानस्य स्वगोचरघातिताऽदर्शनात् । स्वविषयघातितेष्टावपि न दोषाद्विमोक्ष इत्याह—**ज्ञानेति** । ज्ञानस्य वस्तुनिवर्तकत्वादर्शनादित्यर्थः । न द्वितीयः; निवर्तकान्तरानुपलब्धेरित्यर्थः । अन्तिममपवदति—**अनिवृत्त इति** ॥ अनुपपत्तिमेव स्फोरयति—**न हीति** ॥ तादात्म्यानिवृत्तौ तद्भाव इत्येतदितोऽप्यसङ्गतमित्याह—**किं चेति** ॥ तद्भावः किं निवृत्तिरेव ? उत तदन्यः ? इति विमर्शार्थः । आद्ये फलद्वैविध्यासिद्धिरित्याह—**निवृत्तिरेवेति** ॥ ज्ञाननिवर्त्यत्वेन तादात्म्यस्याविद्यात्मकत्वात्तन्निवृत्तिरविद्यानिवृत्तिरिति यावत् । द्वितीयमुत्थापयति—**अन्यश्चेदिति** ॥ तद्भावस्य तादात्म्निवृत्त्यन्यत्वे निवृत्तिस्वरूपं वाच्यमित्याह—**तर्हीति** । अभाव एव निवृत्तेः स्वरूपमित्याशङ्क्याह—**न हि जीवेति** ॥ जीवब्रह्मणोस्तादात्म्यनिवृत्तौ तद्भावोऽन्यत्यन्तभेदो वा स्यात्, नच तदुभयम्; अत्यन्तभेदानिष्टेः, निवृत्तिसमये तद्भावानिष्टेश्चेत्यर्थः । प्रकारान्तरेण तद्भावं दूषयितुं विमृशति—**कश्चायमिति** ॥ तद्भावः किं ब्रह्म ? उत जीवः ? आहो अन्यः ? इति किंशब्दार्थः । तद्भावस्य साध्यत्वाद् ब्रह्मणश्चासाध्यत्वात्तयोरन्यत्वमित्याह—**न तावदिति** ॥ उक्तं दोषं मतान्तरेऽतिदिशति—**अतएवेति** ॥ तृतीयेऽपि किं स

## ऋजुविवरणम्

विवादः; बाधानुपपत्तिश्चेत्याशङ्क्याह—**नचाविद्यानिवृत्तीति** ॥ कथमुभयमपि ज्ञानसाध्यमिति ? तदाह—**तरति शोकमित्यादिना** । **नित्यसिद्धतेति** ॥ विज्ञानविषयत्वे तद्भावस्य ज्ञानात्प्राक् प्रसिध्या भवितव्यम्, पूर्वसिद्धौ न ज्ञानसाध्यता, तदभावे नित्यसिद्धतेति भावः । ननु तादात्म्य-तद्भावयोर्विरोध एवासिद्धः, तत्कथं यौगपद्यं निराक्रियते ? इत्याशङ्क्याह—**किं तादात्म्यनिवृत्तेरिति** ॥ अन्यत्वेऽपि स्वरूपातिरिक्तम् ? स्वरूपं वा ? नाद्य इत्याह—**अन्यश्चेत्तर्हीति** ॥ द्वितीयेऽपि जीवस्वरूपं ब्रह्मस्वरूपं वेति विकल्पं मनसि निधायाह—**कश्चायमिति** ॥ ननु—स्वरूपतावन्मात्रत्वं न तादात्म्यनिवृत्ति-

### पञ्चपादिका

अथानित्यत्वपरिहाराय स्थितस्यैवाऽऽप्यत्वमुच्यते ।

### पञ्चपादिकाविवरणम्

ब्रह्मैव; असाध्यत्वात् । अत एव न जीवोऽपि; नच तृतीयश्चेतनोऽचेतनो वा तद्भावो निरूपयितुं शक्यः । किंच यदि तादात्म्यलक्षणातिरेकविशिष्टश्चेज्जीवः, तद्विनाशे विनाशमियात् । निष्कृष्टतादात्म्यश्चेज्जीवः, ब्रह्ममात्रमेव स्यात्; अत्यन्तभेदानङ्गीकारात् । तस्मात्तत्तादात्म्यस्य तद्भाव; शास्त्रयुक्तिहीनः । नच तत्त्वपदाभ्यां लक्ष्यमाणयोर्जीव ब्रह्मणोस्तादात्म्यं प्रतीयते; भिन्नोपाधिपरामर्शेनैकस्य वस्तुनो लक्ष्यमाणत्वात् । नचैकेनैव पदेन तस्य लक्षणायां भेदावभासो निवर्तते । फलश्रुतयश्चाविद्यानिवृत्तौ योजयितुं शक्यन्ते । नच ज्ञानसाध्यस्य नित्यतालाभः; संस्कारस्य तज्जन्यस्यानित्यतादर्शनात् । नच संस्कारस्यापि क्रियाजन्यता; संस्कारान्तरवत्स्मृतिहेतुत्वायोगात्, अन्वय-व्यतिरेक-विरोधाच्च । अब्रह्मज्ञानस्य साध्यत्वात् क्रियाजन्यतेति चेत्, न; क्रियायामनैकान्तिकत्वात् । तस्मादभूत्वा भवनमेवा-नित्यताहेतुरिति । तर्हि तृतीयं फलं क्रियासाध्यमिति शङ्कते—**अथानित्यत्वपरिहारायेति** ॥ तत्रेदं वक्तव्यम्—किं ब्रह्म

### तत्त्वदीपनम्

चेतनः ? उताचेतनः ? उभयथाऽप्यनुपपत्तिरित्याह—**नच तृतीय इति** । जीव-ब्रह्मान्यचेतनस्यासंभवादनङ्गीकाराच्च । अचेतनत्वे च न तस्य पुरुषार्थत्वमित्यर्थः । इतोऽपि न भेदाभेदपक्षो युक्त इत्याह—**किं चेति** ॥ किं तादात्म्यविशिष्टो जीवः ? उत तदुपलक्षितः ? इति विकल्प्यानुवादेनोत्तरमाह—**यदिति** ॥ द्वितीयेऽस्मन्मतप्रवेश इत्याह—**निष्कृष्टेति** ॥ तत्र हेतुमाह—**अत्यन्तेति** ॥ प्रमाणं चात्र न पश्याम इत्युपसंहरति—**तस्मादिति** । **तत्तादात्म्यस्येति** ॥ तेन तादात्म्यं यस्य तस्येत्यर्थः । ननु "तत्त्वमसी"ति तादात्म्यं लक्ष्यत इत्याशङ्क्य, किं वाच्ययोस्तादात्म्यम् ? उत लक्ष्ययोः ? नाद्यः; तयोर्विरोधादित्यभिप्रेत्य द्वितीयं दूषयति—**नचेति** ॥ पदद्वयवैयर्थ्यशङ्कां निरस्यति—**भिन्नेति** ॥ भिन्नोपाधि-परामर्श एव कस्मादित्याशङ्क्याह—**न चैकेनेति** । भेदनिवृत्तिफलं तत्त्वमस्यादिवाक्यम्, नचैकेन पदेन भेदभ्रमो निवर्तते तथाच भिन्नोपाधिपरामर्शेन भ्रमनिवर्तकं पदद्वयमर्थवदित्यर्थः ॥ 'ब्रह्मैव भवती'त्यादिषु ब्रह्मभावस्य साध्यत्वश्रवणात् कथमसाध्यत्वमित्याशङ्क्याह—**फलश्रुतय इति** । चिकित्सादिना रोगादिनिवृत्तौ स्वास्थ्यं जातमितिवत् प्रतिबन्धका-विद्यानिवृत्तिमपेक्ष्य ब्रह्मैव भवतीत्यादिव्यपदेश इत्यर्थः । ज्ञानसाध्यस्यानित्यताऽदर्शनान्न मोक्षस्यानित्यत्वमिति यत्तूक्तं तत्राह—**नचेति** । भावनालक्षणसंस्कारस्य ज्ञानजन्यस्याप्यनित्यत्वाद् ब्रह्मभावस्याप्यनित्यत्वमित्यर्थः ॥ संस्कारत्वस्या-विशेषाद्वेगादिवद् भावनापि क्रियाजन्येत्याशङ्क्याह—**नच संस्कारस्येति** ॥ ज्ञाने सति भावनोत्पद्यते, नान्यथेत्यन्वय-व्यतिरेकाभ्यां भावनाया ज्ञानसाध्यत्वमनुभूयते, तद्विरोधश्चेत्याह—**अन्वय-व्यतिरेकेति** ॥ नच—संस्कारस्य ज्ञाननाश-क्रियाजन्यत्वात् स्मृतिजनकत्वमित्यपि—शङ्क्यम्; नाशस्य क्रियात्वाभावादित्यर्थः । का तर्ह्यनुमानस्य गतिरिति शङ्कते—**अब्रह्मेति** । ब्रह्मज्ञानेतरसाध्यत्वादित्यर्थः । दूषणान्तराभिधित्सयैतत्पुनरुत्थापितमिति द्रष्टव्यम् । व्यभि-चारित्वादाभासत्वं तस्येत्याह—**न क्रियायामिति** ॥ साध्यतामात्रस्यानित्यत्वप्रयोजकत्वसंभवे क्रियेति विशेषणं व्यर्थं चेत्यभिप्रायेणाह—**तस्मादिति** ॥ प्रतिबन्धनिरासेनाऽऽप्यत्वमुक्तमिति शङ्कां निरस्यति—**तर्हि तृतीयमिति** । उत्पत्ति-विकारापेक्षया तृतीयमित्यर्थः ॥ आत्मस्वरूपस्याऽऽप्यत्वानभिधानात्तन्निषेधोऽसङ्गत इत्याशङ्क्य विकल्पपूर्वकं

### ऋजुविवरणम्

मात्रम्, अपि तु शुद्धस्वरूपेणावस्थानम्; अतो न पूर्वोक्तदोष इत्याशङ्क्याह—**किं तादात्म्येति** ॥ ननु—शास्त्राद् भेदः प्रतीयते, फलश्रुतिसामर्थ्यात् तद्भावः, अतो द्वयमपि शास्त्रसिद्धम्, तादात्म्यज्ञानस्य तन्निवर्तकत्वम्, तद्भावस्य साध्यत्वम्, नित्यत्वं चेत्याशङ्क्याह—**नच तत्त्वंपदाभ्यामिति** । **वाच्ययोः सामानाधिकरण्यं पूर्वमेव निरस्तमिति** ॥ ननु—तर्हि पदान्तरवैयर्थ्यम्; एकेनैव पदेन लक्षणायां तत्त्वसिद्धेरित्याशङ्क्याह—**नचैकेनैवेति** ॥ फलश्रुतिसामर्थ्यात्तद्भावः प्रसङ्गत इति यच्चोद्यम्, तत्परिहरति—**फलश्रुतयश्चेति** ॥ ज्ञानसाध्यत्वेन नित्यत्वसिद्धिरिति यदुक्तम्; तत्राह—**नच ज्ञान-साध्यस्येति** ॥ ननु भावनाख्यः संस्कारोऽपि क्रियाजन्यः, अतो न ज्ञानसाध्यत्वस्य व्यभिचार इत्याशङ्क्याह—**नच संस्कारस्यापीति** ॥ भावनायां ज्ञानान्वय-व्यतिरेकौ दृश्येते; तस्मिन् सत्येव भावात्, असति चाभावात् तद्विरोधोऽपि ॥ यद्वा—स्मृतिहेतुत्वं निराकर्तुं न युक्तम्; अन्वय-व्यतिरेकविरोधात्, अतः क्रियाजन्यत्वमपीत्याशङ्क्याह—**अन्वय-व्यतिरेकेति** ॥ अनुमानात्क्रियासाध्यत्वप्रतीतावन्वयव्यतिरेकघटनं कथं क्रियते ? इति चोदयति—**अब्रह्मज्ञानेति** ॥ ननु

**पञ्चपादिका**

**तदपि न; आत्मस्वरूपस्य क्रियापूर्वकाप्यत्वानुपपत्तेः। व्यतिरेकेऽपि सर्वगतत्वेनं नित्यप्राप्तत्वादाकाशेनेव न क्रियापेक्षा प्राप्तिः। अथ विकारावर्तिनोऽपि—"अथ यदतः परो दिवो ज्योतिर्दीप्यते" इति श्रूयमाणस्य प्राप्तये क्रियापेक्षेति, न; विकारदेशेऽपि ब्रह्मणो विकारसंस्पर्शाभावादविशेषात्। अथ विकारावर्त्येव ब्रह्म न विकारदेशेऽस्ति, तेन तत्प्राप्तये क्रियापेक्षेति, सा तर्हि तत्प्राप्तिरात्मनस्तादात्म्यापत्तिः ? उत स्वेनैव रूपेण तत्रावस्थानम् ? यदि पूर्वकल्पः, तदा स्वरूपनाशः। अथ द्वितीयः, संयोगस्य विप्रयोगावसानत्वात् पुनरावृत्तिः।**

**पञ्चपादिकाविवरणम्**

प्रत्यगात्मभूतम् ? व्यतिरक्तं वा ? व्यतिरेकेऽपि सर्वगतं वा ? प्रदेशान्तरवर्ति वा ब्रह्मेति ? तादात्म्ये दूषणमाह—**तदपि नेति** ॥ व्यतिरेके सर्वगतं चेत्, संयोगव्यतिरिक्तप्राप्त्यभावात्संयोगो नित्यसिद्ध इत्याह—**व्यतिरेकेऽपीति** ॥ प्रदेशवर्तित्वं शङ्कते—**अथ विकारावर्तिन इति** ॥ तत्र वक्तव्यम्—किं विकारसंस्पर्शपरिहाराय प्रदेशवर्तित्वमुच्यते ? किं वा शास्त्रसामर्थ्यादिति। शास्त्रं पुनः सर्वगतत्वमेव दर्शयति, नच सर्वगतत्वेऽपि विकारसंस्पर्श इत्याह—**न विकारदेशेऽपीति** ॥ अथ सर्वगतत्वस्यौपचारिकत्वात्प्रदेशविशेषवर्त्येव ब्रह्मेति शङ्कते—**अथ विकारावर्त्येवेति**। न; मध्यमपरिमाणस्य वस्तुनः पृथिव्यादिवत्सावयत्वात्। दूषणविभागज्ञानाय विकल्पयति—**सा तर्हि तत्प्राप्तिरिति** ॥ प्रथमे कल्पे दूषणमाह—**तदा स्वरूपनाश इति** ॥ कथं तत्र तावज्जीवस्य ब्रह्मभावः ? ब्रह्मैव वा जीवो वा न संभवति; असाध्यत्वात्। नापि जीवब्रह्मभ्यामारभ्यमाणं द्रव्यान्तरम्; विनाशित्वप्रसङ्गात्, सर्वगतस्य ब्रह्मणोऽवयवित्वायोगात्। नापि जीवब्रह्मणोस्तादात्म्यं नाम कश्चित्संबन्ध,; भिन्नद्रव्ययोः संयोगातिरिक्तसंबन्धाभावात्। नापि जीवेऽणुपरिमाणेऽवस्थिते ब्रह्मस्वरूपापत्तिः; विरोधात्, अनवस्थिते च परिमाणे द्रव्यस्वरूपनाश इति। द्वितीयेऽपि कल्पे दूषणमाह—**संयोगस्येति** ॥ ननु

**तत्त्वदीपनम्**

व्याचष्टे—**तत्रेदमिति** ॥ **तत्र**=आप्यस्वरूप इत्यर्थः। द्वितीयकल्पाद्यकल्पमनुवदति—**व्यतिरेकेऽपि सर्वगतमिति** ॥ किं तादात्म्यलक्षणाऽऽप्तिः साध्यते ? संयोगलक्षणा वा ? नाद्य इत्याह—**संयोगेति**। अन्यस्यान्यात्मत्वं पूर्वरूपे स्थिते नष्टे वा न संभवतीत्यर्थः ॥ नापि द्वितीय इत्याह—**संयोगो नित्यसिद्ध इति** ॥ सर्वगतत्वाद्विकारदेशेऽवर्तमानत्वाभिधानमयुक्तमित्याशङ्क्याह—**तत्र वक्तव्यमिति** ॥ किं प्रयोजनानुरोधात् परिच्छिन्नत्वम् ? उत प्रमाणानुरोधात् ? इति विकल्पार्थः। द्वितीयं दूषयति—**शास्त्रं पुनरिति** ॥ "आकाशवत्सर्वगतश्चे"त्यादिशास्त्रे सर्वगतत्वप्रतिपत्तेः, "अथ यदतः परः" इत्यादिवाक्यं त्वन्यथासिद्धमित्यभिसन्धिः। आद्यं दूषयति—**नचेति**। रशनादेशे वर्तमानेनापि पन्नगेन न रशनाया यथा संस्पर्शः, तद्वद् ब्रह्मणोऽपि कार्यासंस्पर्श इत्यर्थः ॥ सर्वगतत्वात्कथं ब्रह्म विकारावर्त्तीति शङ्कायामाह—**अथ सर्वगतत्वस्येति** ॥ "अथ यदतः परः" इत्यादेरन्यार्थत्वादर्शनात् परिच्छिन्नमपि सर्वगतमित्युपचर्यत इत्यर्थः ॥ टीकाग्रन्थाद् बहिरेव दूषणमाह—**न मध्यमेति** ॥ विकल्पप्रयोजनमाह—**दूषणेति** ॥ प्रतीचो ब्रह्मतादात्म्यस्य साध्यत्वपक्षे कथं स्वरूपनाशः ? जीवस्य भावादिति दूषणाभासत्वशङ्कायामाह—**प्रथम इति**। दूषणविधां पृच्छति—**कथमिति** ॥ किं जीवस्य ब्रह्मभावस्ताभ्यामनन्यः ? उतान्यः ? आद्ये साध्यत्वायोग इत्याह—**तत्र तावदिति** ॥ द्वितीयं प्रत्याह—**नापीति**। **द्रव्यान्तरमिति**। पदार्थान्तरमित्यर्थः। आरम्भकत्वमङ्गीकृत्य दूषणमवादि, न चारम्भकत्वमपीत्याह—**सर्वगतस्येति** ॥ परिच्छिन्नास्तन्तवः पटारम्भका दृष्टाः, ब्रह्म चानीदृगिति नारम्भकमित्यर्थः ॥ तादात्म्यस्य संबन्धरूपत्वान्न स्वरूपविनाशप्रसक्तिरित्याशङ्क्याह—**नापि जीवेति** ॥ सम्बन्धः संयोगः ? न तावदन्त्य इत्याह—**द्रव्ययोरिति** ॥ द्रव्यत्वेऽपि मृद्घटयोरिव समवायः ? तत्राह—**भिन्नेति**। मृद एव घटत्वोपगमान्न दृष्टान्तसिद्धिरित्यर्थः। नच संयोग एव संबन्धः; "तस्य स्वरूपेणावस्थाने" इत्यत्र निरसिष्यमाणत्वादित्यर्थः। किंच किं जीवस्य स्वपरिमाणे स्थिते ब्रह्मभावः ? उत नष्टे ? नाद्य इत्याह—**नापि जीव इति** ॥ द्वितीयं दूषयति—**अनवस्थित इति** ॥ कटके (घटे) स्थिते तत्परिमाणाविनाशादित्यर्थः। ऐकग्रन्थ्यं निरस्यति—**द्वितीय इति** ॥ 'संयोगो विप्रयोगान्तः' इति न्यायः श्रुतिविरोध आभासीभवतीति शङ्कते—**ननु**

**ऋजुविवरणम्**

जीवस्य नित्यस्य नित्यब्रह्मतादात्म्ये कथं स्वरूपनाशः ? जीव-ब्रह्मणोस्तत्तादात्म्यस्य च नित्यत्वात् कथंचित्तत्तादात्म्यानित्यत्वशङ्का युज्येतापि, स्वरूपनाशस्त्वयुक्त इत्याक्षिपति—**कथमिति** ॥ ननु प्रमाणान्तरविरोधाभावे प्रामाण्यं युज्यते।

### पञ्चपादिका

**नचापुनरावृत्तिश्रुतिर्वर्तमानापदेशिनी तथाभावे प्रमाणान्तरमपेक्षमाणा स्वयं प्रमाणीभवति ।**

### पञ्चपादिकाविवरणम्

शास्त्रसामर्थ्यादपुनरावृत्तौ कथं तर्केण पुनरावृत्तिः साध्यते ? तत्राह—**नचापुनरावृत्तिश्रुतिरिति** ।। यथाश्रुतार्थेऽप्राप्तप्रतिषेधात्, नार्वतिष्यत इति कल्पनायाः कृतकृत्यानुमानविरोधात्, तस्यैव स्वरूपेणावस्थाने "स स्वराड् भवती"तिश्रुतेरनेकेश्वरप्रसङ्गात् । तस्मान्न प्रदेशान्तरवर्ति ब्रह्मप्राप्तिरिति ।। ननु "तयोर्ध्वमायन्नमृतत्वमेती"ति श्रूयते तर्हि प्रतीकालम्बनानामपि मूर्द्धन्यनाड्यैवआअमानवपुरुषाद्गच्छताममृतत्वं स्यात्; अविशेषश्रवणात् । ननु "स एनान् ब्रह्म गमयती"त्यर्चिरादिना गच्छतां ब्रह्मप्राप्तिः श्रूयते, न; कार्यब्रह्मविषयत्वात् । ननु ब्रह्मशब्दार्थस्य मुख्यत्वात्परमेव ब्रह्म गम्यते, न; यदि तावद् वृद्धव्यवहारे प्रयोगान्मुख्यताऽभिधीयते, तर्हि कार्यब्रह्मण्यपि रूढ एवायं शब्दो भवति । अथावयवार्थानुगमेनार्थमुख्यताऽभिधीयते, नैवम्; एकस्य शब्दस्य युगपद्रूढि-योगवृत्तिद्वयोपादानायोगात् । प्रयोगमुख्यत्वे कार्यब्रह्मैव गम्यते । किंच "स एनान् ब्रह्मलोकान् गमयती"ति ब्रह्मलोकशब्दाद् बहुवचनात्, "तेषु परावतो वसन्ती" त्यधिकरणाधिकर्तव्यताश्रवणात्,

### तत्त्वदीपनम्

**शास्त्रेति** ।। श्रुतेः स्वतः प्रमाणत्वात् प्रमाणान्तराभावेऽपि प्रामाण्यमित्याशङ्क्य, किं यथाश्रुतोऽर्थः स्वीक्रियते ? उत कल्प्यार्थः ? नाद्य इत्याह—**यथाश्रुतेति** ।। प्राप्तिसमये पुनरावृत्तेरप्राप्तत्वान्न तत्प्रतिषेध इत्यर्थः । द्वितियं प्रत्याह—**नार्वतिष्यत इति** ।। कल्पना ह्यविरोधापेक्षया प्रसरति, तथाच विरोधे सति कथं कल्पनोत्थितिरित्यर्थः । किंच किं तदवस्थायां ब्रह्मसमानमैश्वर्यम् ? उत न ? आद्ये न कस्यापि सर्वेश्वरत्वं सिद्ध्येत्, इत्यभिप्रायेणाह—**तस्यैवेति** ।। द्वितीये साधनवैयर्थ्यमित्यभिसन्धायाह—**तस्मादिति** ।। प्रदेशान्तरवर्तिब्रह्मप्राप्तेः श्रुतिसमधिगतत्वात् कथं तन्निरसनमिति शङ्कते—**ननु तयेति** ।। **मूर्द्धन्यनाड्येत्यर्थः** । आपेक्षिकामृतत्वविषयमेतद्वचनं न परामृतत्वविषयम्; इतरथाऽतिप्रसङ्गः स्यादित्याह—**तर्हीति** । **आ अमानवपुरुषात्**=अमानवपुरुषपर्यन्तमित्यर्थः । अप्रतीकोपासनाद् ब्रह्मप्राप्तेः श्रवणादितरेषां तु नाडीभिर्निःसरणमात्रमिति वैषम्यमित्याशयेन शङ्कते—**ननु स एनानिति** । अस्मिन्नपि वाक्ये न परब्रह्मणः प्रदेशान्तवर्तित्वं भाति, किं तु कार्यस्येत्याह—**न कार्येति** ।। "परं जैमिनिर्मुख्यत्वादि"ति सूत्रावष्टम्भेन शङ्कते—**ननु ब्रह्मशब्देति** ।। ब्रह्मार्थस्य मुख्यत्वं नाम किं वृद्धव्यवहारे परंब्रह्मणोः परब्रह्मशब्दप्रयोगविषयत्वम् ? उत बृहतिधात्वर्थस्य तत्र परिपूर्णत्वम् ? इति विकल्प्याद्यमनूद्य दूषणमाह—**यदि तावदित्यादिना** । प्रयोगमुख्यत्वतो निष्प्रयोगविषयाख्यं मुख्यत्वं ब्रह्मशब्दार्थमुख्यत्वमित्यर्थः ।। वृद्धव्यवहारे ब्रह्मशब्दप्रयोगस्य कार्य-परयोरविशेषादित्यर्थः । द्वितीयमुत्थापयति—**अथावयवेति** । ब्रह्मशब्दस्यावयवो बृहतिधातुः, तदर्थस्य ब्रह्मण्यन्वयेनेत्यर्थः । विकल्पासहत्वान्नै तदित्याह—**मैवमिति** ।। किं योगवद् रूढिरप्याश्रीयते ? उत योग एव ? इति विकल्प्याद्ये दूषणमाह—**एकस्येति** ।। द्वितीये रूढेः पुरःस्फूर्तिकत्वादितरस्य च तद्विपरीतत्वाद् रूढिराश्रयणीया, तथा च कार्यं ब्रह्म न सेत्स्यति, इत्यभिप्रायेणाह—**प्रयोगेति** ।। रूढेरुभयत्राविशेषे कार्यं ब्रह्मैवेत्यवधारणं कथम् ? इत्याशङ्क्य, उक्तार्थोपोद्बलकानि लिङ्गान्याह—**किं च स एनानिति** ।

### ऋजुविवरणम्

यद्वा—कथं वर्तमानापदेशत्वेनान्यसापेक्षत्वम् ? स्वस्य प्रामण्याभावश्च ? इत्याशङ्क्योपपादयति—**यथाश्रुतार्थ इति** ।। नच तदानीं पुनरावृत्तिः प्राप्तः; अतोऽप्राप्तप्रतिषेध इति **ननु** प्राप्तप्रतिषेधसिद्ध्यर्थं नार्वतिष्यन्त इति कल्प्यत इत्याशङ्क्याह—**नार्वतिष्यत इति** ।। तर्हि जीवस्यैव स्वरूपेणावस्थानमस्त्वित्याशङ्क्याह—**तस्यैव स्वरूपेणेति** ।। **ननु** प्रतीकोपासकानां मूर्धन्यया गमनमेव कथममृतत्वमापादयतीत्याशङ्क्याह—**मूर्धन्यनाड्यैवेति** ।। ननु न प्रतीकालम्बनानाममृतत्वम्; ब्रह्मप्राप्त्यभावत्, "अप्रतीकालम्बनान्नयती"ति साधितत्वात्, अतस्तद्व्यतिरिक्तानां ब्रह्मप्रप्तिरमृतत्वं चेति चोदयति—**ननु स एनानिति** ।। कार्यब्रह्मणोऽस्मिन् वाक्ये प्राप्यत्वावगमाद् न प्राप्तेर्नित्यत्वमिति परिहरति—**न कार्यब्रह्मेति** । **ननु ब्रह्मशब्देति** ।। ब्रह्मशब्दस्य वा मुख्यार्थत्वम् अर्थस्य वा ? तत्र प्रथमपक्षे दूषणमाह—**यदि तावदिति** ।। न द्वितीय इत्याह—**अथावयवेति** ।। अत्रापि किं योगरूढवृत्त्युपादानेन ब्रह्मसिद्धिः ? योगमात्रेण वा ? नाद्य इत्याह—**नैवमेकस्येति** ।। न द्वितीयः; 'रूढिर्योगमपहरतीति न्यायात् ।। अथ प्रयोगमुख्यत्वेन तत्स्वीकार इति, नेत्याह—**प्रयोगमुख्यत्व इति** ।। **ननु** रूढिपक्षे कार्यमेवेति नियमः कथम् ? उभयत्राविशेषेऽन्यतरनिर्धारणायोगात्, परस्मिन्नेव मुख्यः, कार्ये तु गौणः; नच गौणार्थस्वीकारो मुख्यसंभवे, इत्याशङ्क्याह—**किञ्च स एनानिति** ।। ब्रह्मैव लोक इति कर्मधारयबलीयस्त्वात्परमेव ब्रह्म

## पञ्चपादिकाविवरणम्

"तस्मिन् वसन्ति शाश्वतीः समाः" इति कालपरिच्छेदश्रवणात्, "तृतीयस्यामितो दिवी"ति संख्या-द्युशब्दयोः श्रवणात्. तथैरंमदीयस्य सरसोऽश्वत्थस्य सोमसवनस्य, अपराजितायाश्च पुरो हिरण्मयस्य च वेश्मनोऽरस्य ण्यस्य चार्णवस्य पर्यङ्का-देश्च भोग्यवस्तुभेदस्य श्रवणात्, "प्रजापतेः सभां वेश्म प्रपद्ये" इति प्रजापतिसभावेश्मनां श्रवणाच्च कार्यब्रह्मैवार्चिरादिना गम्यत इति प्रतीयते। नच ब्रह्मैव लोक इति समासः; ब्रह्मलोकशब्दस्य सत्यलोके रूढत्वात् यौगिकत्वेऽपि तत्र प्रथमतरबुद्धि-हेतुत्वाद् ब्रह्मणि लोकशब्दविरोधात्। नचैतेषां कार्यब्रह्मलिङ्गानामपवाधया ब्रह्मशब्दस्यैकस्य प्रयोगमुख्यत्वातिरिक्तमर्थं-मुख्यत्वमप्युपादातुं युक्तम्; प्रजाप्रतिशब्दस्य कार्यब्रह्मणि रूढत्वात्. लोकशब्दस्य च भोगभूमिविशेषवाचित्वात् ॥

किंच पञ्चाग्निविदामपि परब्रह्मप्राप्तिरस्मिन् पक्षे स्यात्। नच—"स एनान् ब्रह्म गमयती"त्येतच्छब्दः पञ्चाग्निविदतिरिक्तान् परामृशतीति—युक्तम्; पञ्चाग्निविदामेव प्राधान्येन प्रकृतत्वात्, तेषामनिर्दिष्टफलत्वप्रसङ्गात्। किञ्च गायत्री-शाण्डिल्य-षोडशकलोपकोसल-वैश्वानर-भूम-दहर-पर्यङ्कविद्यानामेकरूपैव ब्रह्मप्राप्तिः फलम्? आहोस्विदु-

## तत्त्वदीपनम्

तेषु ब्रह्मलोकेषु, परावतः परानिन्द्रादीनवतीति परावान्, तस्य परावतः, प्रजापतेः समा वसन्तीत्यर्थः ॥ **तृतीयस्यामिति**। पृथिव्यपेक्षया तृतीये द्युलोके परब्रह्मणोऽवस्थानं विरुद्धम्; सर्वगतत्वात्, तथा च कार्यब्रह्मैव द्युसंस्थं गन्तव्यमित्यर्थः। तत्रैव लिङ्गान्तरमाह—**तथेति** ॥ इरा अन्नरसः, तेन निर्मितमैरम्, मदीयं मदकरम्, ऐरं च तन्मदीयं चेत्यैरंमदीयम्। तस्याश्वत्थस्य विनश्वरस्य, सोमममृतं सूते इति सोमसवनस्तस्य। **अपराजिताया इति** ॥ अपरैर्न जिताऽपराजिता, तस्या इत्यर्थः। **अरस्य**=अरसंज्ञकस्य ॥ **ण्यस्य**=ण्यसंज्ञकस्य। ब्रह्मणो लोको ब्रह्मलोक इति हैरण्यगर्भो लोकः कस्मादुपादीयते? ब्रह्मैव लोको ब्रह्मलोक इति परब्रह्म कस्माद् न गृह्यत इति? तत्राह—**नच ब्रह्मेति** ॥ यौगिकत्वा-ङ्गीकारेऽपि कार्यलोक इत्याह—**यौगिकत्वेऽपीति**। ब्रह्मलोकशब्दस्य कार्ये पुरःस्फूर्तिकत्वादित्यर्थः। भोगभूमौ प्रसिद्ध-लोकशब्दसमभिव्याहारादपि ब्रह्मशब्दः कार्यपर इत्याह—**ब्रह्मणीति** ॥ श्रुतिलिङ्गयोर्विरोधे श्रुतेर्बलीयस्त्वात्कथं लिङ्गवशात्कार्यपरिग्रहः? तत्राह—**नचैतेषामिति** ॥ अनेकलिङ्गानुगृहीतश्रुतिविरोधात्प्रसिद्धोऽर्थस्त्याज्य इत्यर्थः ॥

इतोऽपि न ब्रह्मशब्दः परब्रह्मपर इत्याह—**किंच पञ्चाग्निविदामिति** ॥ ननु—"स एनान् ब्रह्म गमयती"त्ये-तच्छब्देन पञ्चाग्निविदतिरिक्ता गृह्यन्त इत्याशङ्क्याह—**नच स एनानिति** ॥ सन्निहितत्वेऽप्ययोग्यत्वात् तदग्रहण-मित्याशङ्क्याह—**तेषामिति** ॥ तर्हि फलान्तरं कल्प्यमित्याशङ्क्याह—**किंच गायत्रीति** ॥ फलैक्येऽप्युपासनोपचयापचयौ

## ऋजुविवरणम्

प्रतीयत इत्याशङ्क्याह—**नच ब्रह्मैव लोक इति** ॥ ननु योगसंभवे रूढिकल्पना न युक्ता; गौरवादित्याशङ्क्याह—**यौगिकत्वेऽपीति** ॥ ननु भवतु योगसंभवः; न रूढिः, योगभावे तु कथं कर्मधारयसमासस्तन्निबन्धनः? न तत्पुरुषस्वीकारः? इत्याशङ्क्याह—**ब्रह्मणि लोकशब्देति** ॥ ननु श्रुतिलिङ्गविरोधे श्रुतिर्बलीयसी, तत्कथं ब्रह्मशब्दस्यार्थोऽन्यथा नीयते? इत्याशङ्क्याह—**नचैतेषामिति** ॥ बहुतरलिङ्गानुगृहीतश्रुतिद्वयविरोधेन तस्य हानमिति भावः ॥

ननु अन्यथासिद्धत्वे श्रुति-लिङ्गाभ्यां ब्रह्मशब्दस्य तदनुरोधेन वर्तनम्, अत्र वैपरीत्यम्, ब्रह्मशब्द एवानन्यथा-सिद्धो ग्राह्यः; साक्षात्प्राप्यविषयत्वात्, लोकसभादिप्राप्तिस्तु मार्गपर्वप्राप्तिवदर्वाचीना निर्दिश्यते, अतो न लिङ्गविरोधः। प्रजापतिशब्दः सभाविशेषितो न प्राप्यविषयः; लोकशब्द-बहुवचनयो र्गुणे त्वन्याय्यकल्पने'ति न्यायेन—"पाशानि"त्यत्र प्रातिपदिकार्थस्य प्राधान्यात्तस्य प्रमाणत एकत्वेन सिद्धत्वात्तद्नुरोधेन गुणे विभक्तिरूपे न्यायकल्पना मुख्यार्थहानं क्रियते,—तद्वदत्रापि प्रथमश्रुतत्वेन प्रवलत्वात्तद्नुरोधेन लोकशब्दो वर्तते, ब्रह्मैव लोक इति समासाश्रयणे लोकस्य विशेषणत्वे वैपरीत्येनान्याय्यकल्पनादिति वाच्यम्; यतो ब्रह्मण एव प्राप्यत्वं न लोकस्य; "ब्रह्म गमयती"ति श्रुतेः। नच "ब्रह्म-लोकानि"ति श्रुतिबलात्तत्पुरुषसमासाश्रणेण लोकस्य प्राप्यत्वं कल्प्यम्; तस्य ब्रह्मविषयत्वेनैकवाक्यत्वसंभवे वाक्यभेद-स्यायुक्तत्वात्। नच तेषामेव प्राप्यत्वम्; श्रुत्यन्तरविरोधात्. एकवाक्यत्वेनान्यथासिद्धत्वाच्च, विकल्पस्य चायुक्तत्वात्। अतः कालविशेषादीनामविरुद्धत्वात्परमेव ब्रह्मप्राप्यमित्याशङ्क्याह—**किञ्च पञ्चाग्निविदामिति** ॥ नच तेषां ब्रह्मप्राप्ति-र्युक्तः; अब्रह्मोपासकत्वादित्यर्थः ॥ ननु "स एनानि"त्यत्र पञ्चाग्निविदां निर्देशो नास्ति, तेन न दोष इत्याशङ्क्याह—**नच स एनानिति** ॥ न सन्निधिमात्रेण निर्देशः, किन्तु योग्यतया। नचात्र योग्यत्वमित्याशङ्क्याह—**तेषामनिर्दिष्टफलत्वेति** ॥ ननु अनिर्दिष्टफलत्वे योग्यफलान्तरमेव कल्प्यताम्, ब्रह्मोपासकानामेव तत्प्राप्तेरित्याशङ्क्य तत्प्राप्त्युपपत्तिमाह—

### पञ्चपादिकाविवरणम्

चयापचयरूपम् ? इति वक्तव्यम् । एकरूपफलत्वे गुणोपचयापचयादुपासनोपचयापचयौ व्यर्थौ स्याताम् । न ह्यग्निहोत्राद्यनुष्ठानोपचयात् फलोपचयो न जायते । अथ फलोपचयापचयावपीष्येयाताम्, तर्हि न विकारासंस्पर्शब्रह्मप्राप्तिः; तत्र तदभावात् । किंच वैश्वानरोपासनाफलं त्रैलोक्यापत्तिरिष्यते वा ? न वा ? इति वक्तव्यम् । इष्यते चेत्, विकारासंसृष्टे ब्रह्मणि कथं त्रिलोक्यात्मताफलप्राप्तिः ? न चेदिष्यते, "तं यथा यथोपासते" इति श्रुतिविरोधः स्यात् । किं च पित्रादिसंकल्पैर्विकारासंसृष्टे ब्रह्मण्युपभोगः स्यात् ? न वा ? इति वक्तव्यम् । न चेत्, पित्रादिसंकल्पश्रुतिविरोधः । स्याच्चेत्, विकारावर्ति ब्रह्म पित्रादियुक्तं स्यात् । किंच विकारावर्तिब्रह्म प्राप्तोऽपि ब्रह्मैवेति "मनसैतान् कामान् पश्यन् रमते तेन पितृलोकेन सम्पन्नो महीयते" इति ब्रह्मण एव साधनैः भोगो दर्शितः स्यात् । ततश्चाप्तकामताविरोधः स्वार्थप्रयुक्ता च सृष्टिः स्यात् ।

किंच विकारावर्ति ब्रह्म प्राप्तस्य लिङ्गशरीरमस्ति वा ? न वा ? इति वक्तव्यम् । अस्ति चेत्, कलाप्रविलयश्रुतिर्बाध्येत् । न चेल्लिङ्गशरीरम्, "मनसैतान् कामानि"ति श्रुतिर्बाध्येत । किंच तत्र लिङ्गशरीरविलये निमित्तं वक्तव्यम् । विद्यैव चेत्, उत्क्रान्तिकाले स्यात्; तदारम्भककर्मक्षयात् । अमानवकरस्पर्शश्चेत्, विद्युत्स्थाने स्यात् । नचोपरिष्टात्कलाविलयनिमित्तं श्रूयते । किंच औपाधिकजीवपक्षे न जीवस्य विकारावर्तिब्रह्मगमनं सम्भवति;

### तत्त्वदीपनम्

किं न स्यातामित्याशङ्क्याह—**न हीति** ।। द्वितीयमुत्थापयति—**अथ फलेति** ।। तर्हि निर्विशेषं ब्रह्म गन्तव्यमित्येतद्गतमित्याह—**तर्हि न विकारेति । तदभावादिति** । उपचयापचयाभावादित्यर्थः ।। इतोऽपि न परं ब्रह्म गन्तव्यमित्याह—**किंचेति** ।।

वैश्वानरोपासनया त्रैलोक्यशरीरं संप्राप्य विकारावर्ति ब्रह्म प्राप्नोतीत्याशङ्क्याह—**किंच पित्रादीति । संकल्पश्रुतिविरोध इति** । "संकल्पादेवास्य पितरः समुत्तिष्ठन्ती"त्यादिश्रुतिविरोध इत्यर्थः ।। आद्यं दूषयति—**स्याच्चेदिति** ।। इतोऽपि न परब्रह्म गन्तव्यमित्याह—**किं च विकारावर्तीति** ।। आप्तकामस्यापि नृपतेः क्रीडार्थप्रवृत्तिवद् ब्रह्मणोऽपि तथात्वं स्यादित्याशङ्क्य, तात्कालिकप्रयोजनवद् ब्रह्मणोऽपि तद्भावः स्यादित्याह—**स्वार्थेति । कलाप्रविलयश्रुतिरिति** ।। "षोडश कलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ती"त्याद्येत्यर्थः । किं च ब्रह्म प्राप्तस्य लिङ्गशरीरोच्छित्तौ किं निमित्तमस्ति ? उत नेति विवेचनीयमित्याह—**किंच तत्रेति** ।। आद्येऽपि किं विद्या निमित्तम् ? उतान्यत् ? आद्ये दूषणमाह—**विद्येति** ।। विद्यायां सत्यामप्युत्क्रान्तेरर्वाग्यथा तस्य न विलयस्तथोत्क्रान्तावपीत्याशङ्क्याह—**तदेति** । प्राक् प्रतिबन्धसंभवादनिवृत्तिः, उत्क्रान्तौ तदभावान्निवृत्तिरित्यर्थः । द्वितीयमनूद्य दूषयति—**अमानवेति** ।। अमानवकरसंस्पर्शस्य विद्युत्स्थाने श्रवणादित्यर्थः ।। त्रिपाद् ब्रह्म गन्तव्यमिति सम्बन्धो निवर्तक इत्याशङ्क्य तत्र मानाभावान्नैवमित्याह—**नचेति** ।। गन्तृपर्यालोचनायामपि न परब्रह्म गन्तव्यमित्याह किंचेति—किं जीवः

### ऋजुविवरणम्

**किञ्च गायत्रीति** ।। ननु उपासनोपचयेऽपि न फलोपचयो जायते, नापि वैयर्थ्यमित्याशङ्क्याह—**न ह्यग्निहोत्राद्यनुष्ठानेति** ।। ननु विकारासंसृष्टे ब्रह्मण्यपि सत्यकामादयः सर्वे गुणाः सन्त्येव; साधारणत्वेनोपास्यानामानन्दादीनां सर्वोपासनासु प्राप्तेः, असाधारणा तु गुणप्राप्तिः, तत्तदुपासकानां गुणसद्भावो ब्रह्मण्यविशिष्ट एव "ब्राह्मेण जैमिनिरि"त्यत्रोक्तः, अतो न दोष इत्याशङ्क्याह—**किञ्च वैश्वानरोपासनेति** ।। ननु वैश्वानरत्वं प्राप्य पश्चात् क्रमेण ब्रह्मप्राप्तिः, तत्प्राप्तस्य च न विकारः, तेन न विरोध इत्याशङ्क्य शुद्धप्राप्तौ दूषणमाह—**किंच पित्रादिसंकल्पैरिति** ।। ननु पित्रादिसंकल्पनिमित्तभोगे निर्विकारब्रह्मण्यङ्गीक्रियमाणेऽपि न ब्रह्मणः पित्रादियोगप्रसङ्गः; तत्प्राप्तस्य मुक्तस्यैव भोगाङ्गीकारादित्याशङ्क्याह—**किञ्च विकारावर्तीति** ।। **ननु** नाप्तकामत्वविरोधः ; आप्तकामस्यापि राज्ञोऽत्यन्ताल्पकञ्चुकादिविषयेच्छादर्शनादित्याशङ्क्याह—**स्वार्थप्रयुक्ता चेति** ।। **ननु** ब्रह्म प्राप्तस्य ब्रह्मत्वेऽपि न ब्रह्मणो भोगादिप्रसङ्गः घटाद्युपाध्युपलक्षित इवाकाशे स्वरूपप्राप्तेऽपि धर्मान्तरसंबन्धेऽपि यथा नाकाशमात्रसंबन्धः, तथात्रापीत्याशङ्क्य तस्यापि भोगानुपपत्तिमाह—**किञ्च विकारावर्ति ब्रह्म प्राप्तस्येति** ।। **ननु** पूर्वस्य लिङ्गशरीरस्य प्रलये सति ब्रह्मप्राप्तौ शरीरेन्द्रियाद्यन्तरस्य सृष्टत्वान्न प्रविलयश्रुतिविरोधः, नापि "मनसैतानि"ति श्रुतिविरोध इत्याशङ्क्य, न शुद्धे ब्रह्मणि लिङ्गशरीरप्रविलय इत्याह—**किञ्च तत्र लिङ्गशरीरेति** ।। **ननु** संसारमण्डलमतिक्रम्य त्रिपाच्छब्दवाच्ये ब्रह्मणि प्रविलय इत्याशङ्क्याह—**नचोपरिष्टादिति** ।। **ननु** जीवस्य ब्रह्मांशत्वात्तस्य च शरीरेण विना गमनासंभवाच्छरीरस्यापि गमनं निश्चीयते, तत्र

### पञ्चपादिका

**संस्कार्यत्वमपि न सम्भवति; गुण-दोषयोराधेयापनेययोस्तत्रासम्भवात्। अथ विद्यमानस्याभिव्यक्तिरादर्शस्येव निघर्षणेन, तच्च न; आत्मनः क्रियारहितत्वात्। अन्याश्रयायास्तु न विषयः; प्रत्यग्रूपत्वात्।**

### पञ्चपादिकाविवरणम्

निरवयवावच्छेदस्य घटाकाशस्येवोद्धृत्य नयनायोगात्। उद्धरणे च ब्रह्मशून्योऽयं प्रदेशः स्यात्। उपरिष्टाच्च ब्रह्मोपचयं प्राप्नुयात्। तस्मादुपाधिगमनादात्मनि गमनविभ्रमः। ननु उपाधेरपि गमनं न सम्भवति; तदुपादानस्य ब्रह्मणश्चलन-शून्यत्वात्, न हि मृदि निश्चलायां घटस्य गमनमस्तीति, एवं तर्हि स्वप्नगमनवन्मायाविजृम्भितो गमनादिप्रतिभासः। ननु न पित्रादिसंकल्पैर्ब्रह्मणि भोगोऽभिधीयते, किन्तु यावांस्तत्र भोगः, तस्य नित्यानन्दप्राप्तावन्तर्भावादैश्वर्यभेदः कथ्यत इति, न; एकस्य ब्रह्मशब्दस्य यौगिकार्थभङ्गभयाद् बह्वीनां फलश्रुतीनामुपचारकल्पनायोगात्, शास्त्रान्त्यपादवैफल्यप्रसङ्गाच्च। तस्मात् प्रदेशान्तरवर्तिब्रह्मप्राप्तये क्रियाविधानमित्यनुपपन्नम्॥

संस्कारपक्षे दूषणमाह—**संस्कार्यत्वमपीति**॥ दोषापनयनेन विद्यमानस्य ब्रह्मभावस्याभिव्यक्तिः संस्कार इत्याशङ्कते—**अथ विद्यमानस्येति**॥ तत्र वक्तव्यम्—किमात्माश्रयक्रियया दोषापनयः? किं वाऽन्याश्रययेति? न तावदात्मनो निरवयवस्य परिस्पन्दपरिणामावित्याह—**न, आत्मनः क्रियारहितत्वादिति**॥ नचान्याश्रयक्रियया; क्रिया-वद्द्रव्यैः संयोगाभावात्तत्रातिशयायोगादित्याह—**प्रत्यग्रूपत्वादिति**॥ ननु—मन्त्रदेवताभिध्यानाद् विषनिरासवदी-

### तत्त्वदीपनम्

सर्वगतः? उत परिच्छिन्नः? आद्ये गत्यनुपपत्तिः। द्वितीयेऽपि स्वतः परिच्छिन्नः? उतोपाधितः? आद्ये विनाश-प्रसक्तिरित्यभिप्रेत्य दूषयति—**औपाधिकेति**। तत्र हेतुमाह—**निरवयवेति**॥ निरवयवस्य ब्रह्मणोऽवच्छेदरूपस्येत्यर्थः। घटादुद्धृत्य यथा गगनं न नीयते, तद्वदुपाधित उद्धृत्य ब्रह्मस्वभावो जीवो न नेतुं शक्य इत्यर्थः। विपक्षे दण्डमाह—**उद्धरणे चेति**॥ कथं तर्ह्यात्मनः स्वर्गादिगमनम्? इत्याशङ्क्याह—**तस्मादुपाधीति**॥ उपाधेरपि गमनानुपपत्तिं शङ्कते—**ननूपाधेरिति**॥ किं तत्त्वतो गमनानुपपत्तिः? उत कल्पनयाऽपि? तत्राद्यस्त्वङ्गीक्रियते, द्वितीयस्त्वनुपपन्न इत्याह—**एवं तर्हीति**॥ संकल्पश्रुतिविरोधादित्यर्थः। श्रुतेस्तर्हि का गतिरिति शङ्कते—**किन्त्विति**॥ लौकिकानन्दस्य ब्रह्मानन्दा-वच्छेदत्वादवच्छिन्नस्यानवच्छिन्नान्तर्भावप्रतिपादनपरा श्रुतिरित्याह—**यावांस्तत्रेति**॥ अनेकलिङ्गानुगृहीतानेकश्रुति-विरोधाद् ब्रह्मशब्दस्याश्रौतोऽर्थस्त्याज्य इत्याह—**न एकस्येति**॥ इतोऽपि न ब्रह्मशब्दस्य मुख्यार्थतेत्याह—**शास्त्रेति**॥ "संकल्पादेव तु तच्छ्रुतेरि"त्यादिभ्य उपासनाफलं निरूप्यते, तद्धि न स्वीकृतं स्यात् त्वन्मत इत्यर्थः। आप्तेः क्रिया-फलत्वनिराकरणमुपसंहरति—**तस्मादिति**॥

आदर्शे मलसंभवात्तन्निरासेनाभिव्यक्तिकरणं युक्तम्, आत्मनस्तु निर्मलत्वादभिव्यक्तस्वरूपत्वाच्चाभिव्यक्तेर्न क्रियासाध्यत्वम्, ततश्च—"अथे"ति चोद्यानुपपत्तिरित्याशङ्क्याऽऽगन्तुकदोषाभावेऽप्यनाद्यविद्यामलेनाभिव्यक्तेः प्रति-बन्धात् संस्कारो युक्त इति शङ्कते—**दोषेति**॥ आदर्शे क्रियाभावेऽपि संस्कार्यत्ववदात्मनोऽपि संस्कार्यत्वं किं न स्यादि-त्याशङ्क्य विकल्पपूर्वकं व्याचष्टे—**तत्र वक्तव्यमिति**॥ "निरवयवस्ये"त्यत्र सर्वगतस्येत्यपि द्रष्टव्यम्। प्रत्यक्त्वमात्रेण कथमन्यक्रियासंस्कार्यत्वाभिधानम्? तत्राह—**न चान्येति**। इष्वादिक्रियायाः स्वाश्रययुक्तेऽतिशयजनकत्वं दृष्टम्, आत्मनस्तु प्रत्यक्त्वेन तत्त्वतः पराक्संबन्धाभावाद् न तत्संस्कार्यत्वमित्यर्थः॥ ध्यानस्य निवर्तकताया अदृष्टत्वात्कथ-मीश्वरध्यानं तथेत्याशङ्क्यादर्शनमसिद्धमित्याह—**ननु मन्त्रेति**॥ परमार्थस्यापरमार्थस्य च मलस्य ध्यानानिवर्त्यत्वे

### ऋजुविवरणम्

लयश्रवणाल्लयोऽपि निश्चीयते, तत्कारणं यथासंभवं स्थितिहेतुकर्माभावादनुवृत्ताविद्यया तत्संकारेण वा मोक्षार्थं कर्म वा भविष्यति, अतः पूर्वस्य लय उत्तरोत्पादस्तत्र भोगश्चोपपद्यत इत्याशङ्क्याह—**किं चौपाधिकजीवपक्ष इति**॥ **शास्त्रान्त्येति**॥ तस्मिन् पादे ब्रह्मप्राप्ति-प्राप्यस्वरूपनिरूपणम्, संकल्पात्पित्रादिसमागमः, मानसः शारीरश्च भोगः, तत्र च विशेषनिरूपणं कृतम्, तस्य सर्वस्य फलश्रुतीनामन्यार्थमारम्भः स्यादित्यर्थः॥

अहं कर्तुरिदमंशस्ये"त्ययुक्तम्; कर्तुर्हि संस्कारः, नचाचेतनस्य वैदिककर्माणि, तदभावे न संस्कार्यत्वं कर्तुत्वेन, संस्कार्यत्वेन वा भोक्तृत्वमपि तस्य स्यात्; प्रयोक्तृगतत्वाद्भोक्तृत्वस्य, बन्धमोक्षाधिकरणत्वं च स्यात्, नचैतदचे-

## पञ्चपादिका

ननु ईश्वराभिध्यानान्मलापगमो भविष्यति दीपप्रभयेव घटावगुण्ठनेन तमोऽपनयः, उच्यते। किमसौ मलः परमार्थसन्? उताविद्यात्मकः। यदि परमार्थसन्, न तर्हि स्वाश्रयविकारमन्तरेणापसारयितुं शक्यः। न हि विकार आत्मनः संभवति; अविकारित्वश्रुतेः। अथाविद्यात्मकः, न तर्ह्यविद्यावद्गतेन सम्यग्ज्ञानेन विना तस्यापनयः; लोके तथा दृष्टत्वात्, अन्यथा चादृष्टत्वात्। नच स्नानादिक्रिययेव संस्कार्यत्वसंभवः; अहंकर्तुरिदमंशस्यैव तत्र संस्कार्यत्वात्। तस्मान्न संस्कार्योऽपि मोक्षः इत्युपसंहरति। अथापि त्वन्यदपि क्रियाफलमस्ति, तद्द्वारेण मोक्षस्य क्रियानुप्रवेशः स्यादित्याशङ्क्याह—अतोऽन्यन्मोक्षं प्रतीत्यादि॥ न हि दृष्टमदृष्टं वा क्रियाफलमुत्पत्त्यादिचतुष्टयातिरिक्तं शक्यं केनचिद् दर्शयितुम्। तस्माज्ज्ञानस्यैव मोक्षो गोचरः न क्रियायाः॥ ननु ज्ञानस्यापि न गोचरो ब्रह्मेत्युक्तम्—"न च विदिक्रियाकर्मत्वेन कार्यानुप्रवेशो ब्रह्मणः" इति वदता, सत्यम्, कर्मत्वं ज्ञानं प्रति निषिद्धम्; न पुनरनुपयोग एवैकान्ततो ज्ञानस्याभिहितः। तथाच तत्रैवोपयोगप्रकारो दर्शितः—अविद्यापरिकल्पितभेदनिवृत्तिपरत्वादि"त्यादिना भाष्येण। मा तर्हि वोचः—क्रियाया गन्धमात्रस्याप्यनुपवेश इह नोपपद्यत इति। ननु ज्ञानं मानसी क्रिया, न, वैलक्षण्यादित्युत्तरम्। कथं वैलक्षण्यम्? अजन्यफलत्वात्, उक्तमजन्यफलत्वमहङ्कारटीकायाम्। इदमपरं वैलक्षण्यम्—ज्ञानं न चोदनाजन्यम्, वस्तुजन्यं हि तत्। वस्तु च ज्ञानात्प्रागेव स्वरूपे

## पञ्चपादिकाविवरणम्

श्वराभिध्यानाद्दोषापनयः स्यादिति चोदयति—**नन्वीश्वराभिध्यानादिति**॥ **"उच्यते"** इत्यादिपरिहारः स्पष्टार्थः॥ ननु—शास्त्रीयकर्मभिरात्मनो गुणाधानलक्षणः संस्कारः श्रूयत इति, नेत्याह—**नच स्नानादिक्रिययेवेति**॥ **अयमर्थः**—यः साधनानि शरीरेन्द्रिय-मनांसि प्रेरयति, स कर्ता, भोक्ता, संस्कार्यश्च। स च चैतन्यसंवलितोऽहङ्कारः; "विज्ञानं यज्ञं तनुते" इति श्रुतेः। स चाऽऽसंसारसमाप्तेरविच्छिन्नो वर्तत इति भोगश्च संभवति। तत्र च धर्माधर्मातिशय उत्पद्यते न निर्विकारात्मनि। ततस्तस्य न संस्कार्यत्वमुपपद्यत इति। तस्मान्न संस्कार्य इत्यादिः—**ननु** इत्यतः प्राक्तनः ग्रन्थः स्पष्टार्थः। **"ननु ज्ञानस्यापी"**त्यारभ्येदमपरमित्यतः प्राक्तनौ चोद्यरिहारौ पूर्वोक्तावप्यवसरप्राप्तत्वात्पुनरिहानीतौ स्पष्टार्थौ॥ जन्याजन्यफलत्वेन क्रिया-ज्ञानयोर्वैलक्षण्यमुक्तम्, इदानीं पुरुषेच्छाप्रयत्नसाध्या हि क्रिया, तदनपेक्षमात्मज्ञानमिति कारणतो वैलक्षण्यमाह—**इदमपरं वैलक्षण्यमिति**॥ चोदनाजन्यं पुरुषेच्छाप्रयत्नजन्यं न भवति ज्ञानम-

## तत्त्वदीपनम्

निर्दिष्टे "नच स्नानादिक्रियये"त्यनेन किं निर्दिष्टमिति न ज्ञायते? तत्राह—**ननु शास्त्रीयेति**॥ इदमंशस्य संस्कार्यत्वाभिधानमयुक्तम्, कर्मणां कर्तृसंस्कारकत्वात्, चेतनस्य च कर्तृत्वादित्याशङ्क्य तात्पर्यमाह—**अयमर्थ इति**॥ प्रेरयिताऽपि चेतन एवेत्याशङ्क्याह—**स चेति**। **संवलित इति**। चैतन्यैक्याध्यासमुपगत इत्यर्थः। केवलचेतनस्याचेतनप्रेरयितृत्वानुपपत्तेः शबलस्य प्रेरयितृत्वं वक्तव्यमित्यर्थः। चित्सन्निधानाद् बुद्धेः कर्तृत्वे प्रमाणमाह—**विज्ञानमिति**॥ ननु अहंकारस्य विलीयमानत्वादकृताभ्यागमादिदोषप्रसक्तेर्न बुद्धेः कर्तृत्वमित्यत आह—**स चेति**। चशब्दः शङ्कानिवृत्त्यर्थः। सुषुप्तावपि तस्याः सूक्ष्मरूपेण स्थितत्वान्नाकृताभ्यागमादिदोषानुषङ्ग इत्यर्थः। अविच्छेदप्रतिपादनफलमाह—**इति भोग इति**॥ कर्तृत्ववद् भोगोऽप्युपपन्न इत्यर्थः। धर्मादेरात्मनि समवेतत्वात्कर्तृत्वादिरपि तत्रेत्याशङ्क्याह—**तत्र चेति**॥ चैतन्यसंवलितबुद्धावित्यर्थः। निर्विकारेति हेतुगर्भविशेषणम्॥

ननु ज्ञानस्येत्यादिचोद्यपरिहारौ पुनरुक्तावित्याशङ्क्याह—**ननु ज्ञानस्येति**॥ अजन्यफलत्वाभिधानमात्रेण कथं वैलक्षण्यम्? इत्याशङ्क्याह—**जन्येति**॥ ज्ञानं न चोदनाजन्यमित्यत्र प्रतिज्ञामात्रं प्रतिभाति, न हेतुरित्याशङ्क्याह—**चोदनाजन्यमिति**॥ प्रत्यक्षादनुमानादेर्ज्ञानत्वेनाविशेषादेकं वस्तुजन्यम्, इतरन्न तथेत्युक्तमयुक्तमित्याशङ्क्याह—**ननु**

## ऋजुविवरणम्

तनेषु युज्यत इत्याशङ्क्य व्याचष्टे—**अयमर्थः—यः साधनानीति**॥ ननु संवलितस्य संस्कार्यत्वेऽहङ्कारापगमे संस्कृतस्यापगतत्वाद्भोगानुपपत्तिः स्यादित्याङ्क्याह—**स चासंसारसमाप्तेरिति**॥ ननु संस्कारो धर्माधारत्वयोग्यत्वलक्षणः, अतस्तदाधार आत्मनि संस्कार्यत्वम्, नान्तःकरण इत्याशङ्क्याह—**तत्र च धर्माधर्मेति**॥ ज्ञानस्याजन्यफलत्वमात्रमुक्तम्, न क्रियाफलस्य किञ्चिदुक्तम्, तत्रार्थसिद्धिरिति वृत्तकीर्तनव्याजेनाह—**जन्याजन्यफलत्वेनेति**॥ वृत्तकीर्तनव्याजेनाजन्यफलत्वादिति टीकापदेऽजन्यं फलं यस्येति विग्रहः प्रदर्शितः। "इदमपरं वैलक्षण्य"मित्ययुक्तम्; ज्ञानस्याचोदनाजन्यत्वं यत्तत्क्रियायामविशिष्टम्; चोदनायाः क्रियोत्पादकत्वाभावादित्याशङ्क्याह—**पुरुषेच्छाप्रयत्नेति**॥ **ननु**—पुरुषेच्छाप्रयत्न-

## पञ्चपादिका

**व्यवस्थितम् । अतस्तत्तन्त्रं ज्ञानम् । न तद्-ज्ञानेनान्यथा कर्तुं शक्यम् । अथापि स्यात्—भवेत्प्रत्यक्षं वस्तुजन्यम्, अनुमानादिषु कथम् ? तत्रापि लिङ्गादिपरतन्त्रम्, न चोदनायास्तत्रानुप्रवेशः ।**

## पञ्चपादिकाविवरणम्

निच्छतोऽपि दुर्गन्धादिज्ञानदर्शनादित्यर्थः । ननु—शब्दजन्यस्य ज्ञानस्य विषयजन्यत्वाभावान्न वस्तुपरतन्त्रता, ततश्चोदनाजन्यत्वमिति शङ्कते—**अथापीति** ॥ तत्रापि विधिजन्यपुरुषेच्छाप्रयत्ननिरपेक्षमेव लिङादिजन्यमेवेति परिहरति—**तत्रापीति** ॥

ननु—संयोग-विभागप्रचयातिरेकिणी केयं क्रिया नाम ? ननु—चलतीति प्रत्यक्षमेवैतच्चलनम् । सत्यम्; तदपि संयोगविभागालम्बनमेव चलनम् । ननु—स्थाणावपि श्येनसंयोगविभागवति चलतीति प्रसङ्गः, न; स्वदेशसंयोगविभागालम्बनत्वात्प्रत्ययस्य स्थाणोश्च श्येनदेशत्वाभावात् । सर्वस्य चाकाशदेशत्वादिति चेत्, न; बहुलान्धकारावृते नभस्यप्रतीयमानेऽपि खद्योते चलनबुद्धिदर्शनात् । नच देशमप्रतीत्य तत्संयोगविभागाः प्रतीयन्त इति । तस्मात्संयोगविभागातिरिक्तक्रियालम्बनश्चलतीति प्रत्ययः । यस्तु स्वदेशसंयोग-विभागाभ्यां क्रियामनुमिमीते; कथम् ? द्रव्यजनितो

## तत्त्वदीपनम्

**शब्देति** ॥ शब्द-लिङ्गादिकमवर्तमानबोधजनकमपि दृष्टम्, नच तत्र विषयस्य जनककोटावन्तर्भावः; वर्तमानस्यैव जनकत्वसंभवात् तथा च न प्रत्यक्षेतरस्य विषयजन्यत्वमित्यर्थः । लिङ्गादिजन्यज्ञाने चोदनालक्षणशब्दजन्यत्वाभावस्य तेनापीष्टत्वान्न चोदनाया अनुप्रवेश इत्यसंगतमित्याशङ्क्याह—**तत्रापीति** ॥

क्रिया-ज्ञानयोर्वैलक्षण्योक्तिरयुक्ता, क्रियाया एवाभावादिति शङ्कते—**ननु संयोगेति** । मानाभावान्नातिरिक्तक्रियासिद्धिरित्यर्थः । मानाभावोऽसिद्ध इति शङ्कते—**ननु चलतीति** ॥ **एतदिति** । चलनमित्यर्थः । अनुभवमङ्गीकरोति—**सत्यमिति** ॥ तर्हि तद्बलात् क्रियासिद्धिः, तत्राह—**तदपीति** । तदपि चलतीति प्रत्यक्षं संयोगविभागालम्बनमिति संबन्धः । पादभूतलसंयोगविभागयोश्चलतीति बुद्धिदर्शनादितरथा चादर्शनात् संयोगाद्यालम्बनमित्यर्थः ॥ संयोग-विभागयोः सतोरपि स्थाण्वादौ चलतीति बुद्ध्यदृष्टेः प्रत्यक्षस्यातिरिक्तक्रियाविषयत्वमिति शङ्कते—**ननु स्थाणाविति** । न संयोगविभागमात्रं चलतीति प्रत्यक्षालम्बनमाचक्ष्महे, किं तु स्वाश्रयसंयोगादिति, अतो नातिप्रसङ्ग इति समाधत्ते पूर्वपक्षी—**न स्वदेश इति** ॥ स्वस्याश्रयभूतो यो देशः स स्वदेशस्तेन संयोगविभागावालम्बनं यस्य प्रत्यक्षस्य स स्वदेशदेशसंयोगविभागालम्बनः, तस्य भावस्तत्त्वम्; तस्मादित्यर्थः । तथाऽपि कथमतिप्रसक्तिनिरासः ? तत्राह—**स्थाणोरिति** । श्येनो देशो यस्य स श्येनदेशः, तस्य भावस्तत्त्वम्, तदभावादिति । श्येनानाश्रयत्वादिति यावत् ॥ स्वाश्रयसंयोग-विभागालम्बनमित्ययुक्तम्, स्थाण्वादिकमनाश्रित्य विहायसि विहरमाणश्येनादौ चलतीति बुद्धिदर्शनादित्याशङ्क्याह—**सर्वस्येति** । श्येनादेर्गगनाश्रयत्वात्तत्संयोगविभागयोश्चलतीति बुद्धिर्युक्तेत्यर्थः । संयोगविभागग्रहणं यावदाश्रयग्रहणपुरःसरम् । ततश्च संतमसावस्थायामाश्रयाप्रतीतावपि चलतीति प्रतीतेर्न संयोगाद्यालम्बनमिति सिद्धान्तयति—**न बहलेति** ॥

संयोगाद्यतिरिक्तां क्रियामाश्रित्य तस्या अनुमेयत्वं मन्वानस्य गुरोर्मतमुत्थापयति—**यस्त्विति** ॥ स्वदेशसंयोगविभागवतीति शेषः । अनुमानप्रकारं पृच्छति—**कथमिति** ॥ अथवा किं विशेषतोदृष्टमनुमानम् ? उत सामान्यतोदृष्टम् ? न तावदाद्यः; प्रत्यक्षायोग्यत्वात् क्रियायाः, न द्वितीयः; तद्व्याप्तलिङ्गादर्शनादिति शङ्कते—**कथमिति** ॥ सामान्यतोदृष्टं प्रमाणमित्याह—**द्रव्येति** ॥ "संयोगविभागावि"त्युक्ते संयोगजसंयोगे विभागे च स्वाश्रयगतसंयोगाद्यति-

## ऋजुविवरणम्

साध्यत्वमपि न वैलक्षण्यम्, ज्ञानेऽपि तत्साध्यत्वदर्शनादित्याशङ्क्य व्याचष्टे—**विधिजन्येति** ॥ **ननु संयोगविभागेति** । संयोगविभागप्रचये बाहुल्ये सति चलतीति प्रत्ययदर्शनात्तदभावे चादर्शनान्न तद्व्यतिरिक्तक्रियेति भावः । **ननु प्रत्यक्षमेव** तदतिरिक्तवेन विलक्षणरूपविषयं ज्ञानम्, तत्कथं प्रश्नः ? इत्याह—**ननु चलतीति प्रत्यक्षमिति** । **तदपीति** । तेषु सत्सु भावादसत्स्वभावादित्यर्थः ॥ **ननु चलतीति** ज्ञानं न संयोगविभागालम्बनम्; अतिप्रसङ्गादिति चोदयति—**ननु स्थाणावपीति** ॥ **सर्वस्यचेति** । आकाशस्यैवावकाशदातृत्वादित्यर्थः ॥ ननु अप्रतीयमानेऽप्याकाशे खद्योतचलनं खद्योतगतसंयोगविभागालम्बनम्, का क्षतिरिति ? तदाह—**नच देशमिति** ॥ "कादाचित्कत्वादिति" हेतू रूपादिष्वनैकान्तिकः तदर्थम्—**व्यवस्थितेति** । **द्रव्ये इति** । कदाचित्कत्वे विवक्षितातिशयपुरःसरत्वादित्यर्थः ॥ **ननु** अन्यतरकर्मजसंयोगविभागयोरपि

## पञ्चपादिका

किंच न चोदनाजन्यं ज्ञानमेकान्ततो वस्तुपरिच्छेदकम् योषादिष्वग्न्यादिदृष्टिविधानदर्शनात् । अतो वस्तुविषयस्य ज्ञानस्य क्रियात्वेऽपि न चोदनाजन्यत्वम्, न वा पुरुषतन्त्रत्वम्, अपितु प्रमाणवस्तुपरतन्त्रत्वम्, एवं सम्यग्ज्ञानत्वोपपत्तेरग्ना-विवाग्निज्ञानस्य । एवं सति ब्रह्मात्मैकत्वविज्ञानस्यापि यथाभूतवस्तुविषयत्वान्न चोदनाजन्यत्वम् । अतो न विधेरत्रावकाशः ॥

## पञ्चपादिकाविवरणम्

संयोग-विभागौ, स्वाश्रये कादाचित्कातिशयपुरस्सरौ; व्यवस्थितद्रव्ये कादाचित्कत्वात्, संयोगविभागजन्यकार्यवदिति । तस्य मकरादिषु जलप्रवाहाधारेषु स्थिराचलावयवेषु स्वदेशजलसंयोगविभागयोः सतोरपि तेषु क्रियाज्ञानाभावादनै-कान्तिकता हेतोरिति । किंच संयोगविभागहेतुरतिशयः क्रियाभिधानीयः स्थिरादेव द्रव्यादुत्पद्यते ? अतिशयान्तरवतो वा ? पूर्वस्मिन्नव्यवस्थितद्रव्यादेव क्रियाजन्मवत्तत एव संयोगविभागजन्म स्यादित्यनैकान्तिकः । अतिशयान्तरकल्पनाया-मनवस्थापातः । पादाश्रयस्य कर्मणो हि स्वाश्रयासम्बन्धिभूसमवायिपादसंयोगारम्भवत् प्रयत्नवदात्मपादसंयोगस्यापि भूपादसंयोगारम्भसिद्धेर्न पादाश्रयकर्मातिशयावकाशः । तस्मात्प्रत्यक्षः क्रियाप्रत्ययः ॥

ननु—क्षणिकस्य कर्मणः कथमिन्द्रियसंयोगज्ञानलक्षणद्वयावस्थानम् ? शब्द-विद्युदादिवदित्यविरोधः ॥ तस्मादस्ति क्रिया ज्ञानविलक्षणेति । **किंचेति** स्पष्टार्थः ॥ किंच "वेदान्तविज्ञानसुनिश्चितार्थाः" इति निश्चितार्थ-विषयतत्त्वज्ञानमेव मोक्षसाधनमुक्तम्, तच्च प्रमाणजन्यत्वे संभवतीत्याह—**एवं सम्यग्ज्ञानत्वोपपत्तेरिति** ॥ दार्ष्टान्तिक-माह—**एवं सतीति** ॥

## तत्त्वदीपनम्

शयपुरःसरत्वस्य सिद्धत्वात् सिद्धसाधनत्वम्, तद्व्यावृत्त्यर्थम्—"**द्रव्ये**"ति विशेषणम् । संयोगविभागजन्यौ संयोगविभा-गाविति विवक्षितम् । अतिशयपुरःसरावित्युक्ते ईश्वरेच्छापुरःसरत्वेन सिद्धसाधनत्वम्, तदर्थम्—"**कादाचित्के**"ति । एतावत्युक्ते पूर्वलक्षणातिशयपुरःसरत्वेन सिद्धसाध्यत्वम्, तदर्थम्—"**स्वाश्रये**" इति ॥ नचात्मगतसंयोगविभागयो-स्तद्गतादृष्टजन्यतया सिद्धसाध्यत्वमित्यपि शङ्क्यम्; अव्यवहितपूर्वक्षणोत्पन्नस्य कादाचित्कशब्देन विवक्षितत्वादित्यर्थः । व्यवस्थितद्रव्यनिष्ठत्वे सति कादाचित्कत्वादिति हेत्वर्थः । "**कादाचित्कत्वादि**" त्युक्ते कारणेन सहोत्पन्नधर्मेषु व्यभिचारः, तदर्थम्—"**व्यवस्थिते**"ति । एतावत्युक्ते गगनगतमहत्त्वादौ व्यभिचारः, तद्व्युदासार्थम्—"**कादाचित्कत्वादि**"ति । तत्र वक्तव्यम्—किं यावान् स्वाश्रयस्तद्गतातिशयजन्यत्वं साध्यते ? उताश्रयमात्रातिशयपुरस्सरत्वम् ? तत्राद्ये दूषणमाह—**तस्येति** । जलप्रवाह आधारो येषां ते जलप्रवाहाधाराः, तेष्वित्यर्थः । साध्याभावमाह—**स्थिरेति** । तस्यैव व्याख्या—"**अचले**"ति । नापि द्वितीयः; आश्रयान्तरे तादृगतिशयमन्तरेणापि संयोगादिजन्मवदन्यत्रापि हेत्वन्तराज्जन्मसंभवाद् न क्रियासिद्धिरित्यर्थः ॥ इतोऽपि न क्रियानुमानं साध्वित्याह—**किंच संयोगेति** ॥ अनुमानस्य किं दूषणमिति ? अत्राह—**इत्यनैकान्तिक इति** । क्रियायामेव व्यभिचार इत्यर्थः ॥ द्वितीयं दूषयति—**अतिशयान्तरेति** ॥ ततश्चाप्रयोजको हेतुरित्यर्थः । सिद्धसाध्यं चैतदित्याह—**पादाश्रयस्येति** ॥ प्रयत्नवदात्मा, तस्य पादेन यः संयोगः, तस्येत्यर्थः । ननु व्यधिकरणमेतत्; अन्यसंयोगस्यान्यसंयोगजनकत्वानुपपत्तेः, इत्याशङ्क्य प्रतिबन्धोत्तरमाह—**पादाश्रयेति** ॥ भूसमवायी यः पादसंयोगः स भूसमवायिपादसंयोगः, स्वाश्रयासंबन्धी च भूसमवायिपादसंयोगश्चेति तथोक्तः, तस्यारम्भ इयेत्यर्थः । कर्माश्रयमात्रं संबन्धित्वं च स्वाश्रयासंबन्धिशब्दार्थः । स्वमतमुपसंहरति—**तस्मादिति** ॥

क्रियायाः प्रत्यक्षत्वमप्यनुपपन्नमिति शङ्कते—**ननु क्षणिकस्येति** ॥ कर्मणः किं पूर्वापरविभागविकलकलाव-स्थितिलक्षणं क्षणिकत्वं विवक्षितम् ? उताशुतरविनाशित्वम् ? नाद्यः, अनङ्गीकृतेरित्यभिसन्धाय द्वितीयेऽविरोधमाह—**शब्देति** ॥ प्रकृतं निगमयति—**तस्मादिति** ॥ प्रमाणसद्भावस्तच्छब्दार्थः ॥ प्रमाणवस्तुपरतन्त्रतायामेव ब्रह्मज्ञानस्य सम्यग्ज्ञानत्वमित्युक्तम्, तत्र सम्यक्त्वमेव मा भूदिति मन्वानं प्रत्याह—**किंच वेदान्तेति** । सम्यग्ज्ञानस्यैव मुक्तिसाधनत्वम्, तच्च प्रमाणवस्तुतन्त्रतायां घटते, नान्यथेत्यर्थः ॥ पुनरुक्तिशङ्कां निरस्यति—**दार्ष्टान्तिकमिति** ॥

## ऋजुविवरणम्

स्वाश्रयगतातिशयपुरःसरत्वमस्ति; जलस्य सक्रियत्वात्, अतो नानैकान्तिकत्वमित्याशङ्क्य विकल्प्य दूषणान्तरमाह—**किञ्च संयोगविभागेति** ॥ ननु अभिघातादिकारणान्तरेण कर्मोत्पद्यते, तच्च स्वकारणात् अतो नानवस्थादि, अत्र त्वन्यस्या-संभवात्कर्मसिद्धिरित्याशङ्क्याह—**पादाश्रयस्येति** । भूसमवेतत्वाकारे भूमेराश्रयत्वम्, नच तव क्रियादियोगः, तेनानै-

## पञ्चपादिका

अतः श्रूयमाणा अपि विधयः केवलप्रमाणवस्तुपरतन्त्रे ज्ञानेऽकिंचित्करत्वात् कुण्ठीभवन्ति । अतोऽर्थवादतयैवाऽऽत्मज्ञानस्तावकत्वेन तदुन्मुखीकरणात् सामर्थ्यसिद्धबहिर्मुखतानिरोधाच्च विधिकार्यलेशस्य विद्यमानत्वाद्विधय इव लक्ष्यन्ते ॥ तथा च श्रवणं नाम—आत्मावगतये वेदान्तवाक्यविचारः, शारीरकश्रवणं च । मननम्—वस्तुनिष्ठवाक्यापेक्षितदुन्दुभ्यादिदृष्टान्तजन्मस्थितिलयवाचारम्भणत्वादियुक्त्यर्थवादानुसन्धानम्, वाक्यार्थाविरोध्यनुमानानुसन्धानं च । निदिध्यासनम्—मननोपबृंहितवाक्यार्थविषये स्थिरीभावः, विधेयस्योपासनापर्यायस्य निष्फलत्वात् । दर्शनम्—अतो वाक्यार्थे स्थैर्यान्निरस्तसमस्तप्रपञ्चावभासविज्ञानघनैकतानुभवः । कः पुनरत्रार्थवादः ? इदमत्र प्रस्तुतम्—क्रियाकारकफलात्मकात् संसाराद्विरक्ताये मैत्रेय्यै मुमुक्षवे मोक्षसाधनमात्मज्ञानं प्रतिपिपादयिषन् "न वा अरे पत्युः कामाय पतिः प्रियो भवती"ति पत्यादेरीप्सितत्वं प्रतिषिध्यात्मन ईप्सिततमत्वमाह । ननु नैवात्मन ईप्सिततमत्वमुच्यते, किन्तु पत्यादीनामेवात्मार्थतयेप्सितत्वमुच्यते—"आत्मनस्तु कामाय पतिः प्रियो भवती"ति, मैवम्; न हि तस्मिन्ननिष्टे तदर्थमिष्टं भवति । तस्मादनेनोपायेनात्मन एवेप्सितत्वमुक्तम् । ईप्सितश्चेत्, "द्रष्टव्यः श्रोतव्यः" इत्येषोऽर्थवादः । एतच्च सर्वं प्रथमसूत्रेणैव सूत्रितम्, विवृतं च भाष्ये ॥

## पञ्चपादिकाविवरणम्

ननु—ब्रह्मज्ञाने विधयः श्रूयन्ते, तत्कथं तर्केण निरस्यन्त इति ? अत्राह—**अतः श्रूयमाणा अपीति** ॥ ननु—अनुष्ठेयाभावाद्विधेरभावे शब्दस्य वैयर्थ्यं स्यादिति, नेत्याह—**अतोऽर्थवादतयैवेति** ॥ ननु—अर्थवादान्तरवत्स्तावकत्वे विधिपदमर्थशून्यं स्यादिति, नेत्याह—**तदुन्मुखीकरणादिति** ॥ "तथा च श्रवणं नामे"त्यादिना यैः श्रवणादिभिरात्मा संस्तूयते । तान् विभज्य दर्शयति । ननु—श्रवणादिभिः किं श्रेयः क्रियते ? येनोत्कर्षवद्भिरेतैर्विषयीकरणादात्मा स्तुतः स्यादिति, तदाह—**अतो वाक्यार्थे स्थैर्यादिति** ॥ ननु—विधेयस्यैवार्थवादसंबन्धः; स्तुतेः प्रवृत्तिफलत्वात्, न सिद्धवस्तुनः, इत्याक्षिपति—**कः पुनररिति** ॥ फलप्रशंसाया अपि प्रवृत्त्युपयोगित्वात् फलभूतात्मप्रशंसाया अपि श्रवणादिप्रवृत्त्युपयोगित्वमुपपद्यत इत्यभिप्रेत्याह—**इदमत्र प्रस्तुतमित्यादि** ॥ ग्रन्थस्तु स्पष्टार्थः ॥ ननु सम्यग्दर्शनस्य फलरूपत्वात् प्रमाणाधीनत्वाच्चाविधेयतेति युक्ता तस्यार्थवादता, श्रवणादयस्तु क्रियारूपत्वात् सम्यग्दर्शनस्य दृष्टादृष्टोपकारितया विधेया एवेति, तदाह—**एतच्च सर्वं प्रथमसूत्रेणैवेति** ॥ मनन-निदिध्यासनोपबृंहितस्य श्रवणस्य सम्यग्दर्शनाय विधेयत्व-

## तत्त्वदीपनम्

लिङादीनां विधौ स्मरणान्न भावनाविधिनिरसनं घटत इति शङ्कते—**ननु ब्रह्मेति** ॥ श्रुतेः संभावितेऽर्थे प्रामाण्यादत्र च संभावनाभावान्न विधिरित्याह—**अत्रेति** ॥ अध्ययनविध्युपात्तत्वानुपपत्त्या विधिपरत्वमेष्टव्यमित्याह—**नन्वनुष्ठेयेति** ॥ अन्यथासिद्धचा दूषयति—**नेत्याहेति** ॥ अध्ययनविधिविरोधान्न ज्ञानादौ विधिनिरसनं घटत इति शङ्कते—**नन्विति** ॥ अर्थाभावोऽसिद्ध इत्याह—**नेत्याहेति** ॥ श्रवणादिस्वरूपप्रदर्शनमत्रानुपयुक्तमित्याशङ्क्य तात्पर्यमाह—**तथा च श्रवणमिति** ॥ आत्मनः श्रवणादिविषयत्वमात्रेण कथं स्तुतत्वमिति शङ्कते—**ननु श्रवणेति** ॥ श्रवणादीनात्मसाक्षात्कारहेतुत्वात्तैः स्तवनं युक्तमित्याह—**तदाहेति** ॥ "कः पुनरि"त्यत्र किंशब्दसूचितमाक्षेपमाह—**ननु विधेयस्येति** ॥ स्तुतिः प्रवृत्त्यर्था, सा च विध्यधीनेति सिद्धस्यार्थवादसंबन्धानुपपत्तिशङ्कायां तन्निरसनमन्तरेण आत्मन ईप्सितत्वप्रतिपादनं कुत्रोपयुक्तमित्याशङ्क्य तात्पर्यमाह—**फलप्रशंसाया इति** । फले प्रशस्ते तत्साधनं प्रत्यौन्मुख्यं दृश्यते, तथा चात्मनोऽपि फलत्वात् तत्संस्तवे तदवगतिहेतुश्रवणादौ प्रवृत्तिसंभवात् सिद्धस्याप्यर्थवादसंबन्धो युक्त इत्यर्थः ॥ श्रवणादेः क्रियारूपत्वात्तत्र विधिरेव युक्त इति शङ्कते—**ननु सम्यग्दर्शनस्येति** । **तस्यार्थवादतेति** । द्रष्टव्य इति वाक्यार्थवादतेत्यर्थः ॥ कस्तर्हि विवादः ? इत्याशङ्क्याह—**श्रवणादय इति** ॥

अन्वय-व्यतिरेकसिद्धत्वान्न श्रवणादावपि विधिरित्याशङ्क्यावहननादाविव विधिर्घटत इत्याह—**सम्यग्दर्शनस्येति** । **दृष्टादृष्टेति** । दृष्टादृष्टाभ्यामुपकारितयेत्यर्थः । अङ्गीकारेणोत्तरयति—**तदाहेति** ॥ नच भाष्यविरोधः, अपूर्वविधिनिरसनस्य भाष्यार्थत्वादित्यर्थः । अनुबन्धचतुष्टयमेव प्रथमसूत्रेण सूचितम्, न तु विधिसूत्रं दृश्यतइत्याशङ्क्याह—**मननिदिध्यासनेति** ॥ श्रवणविध्यभावे प्रसञ्जकाभावाद्विचारारम्भ एव न संभवेदित्यर्थः ॥ "द्रष्टव्यः" इत्यस्य

## ऋजुविवरणम्

कान्तिको हेतुर्न स्वाश्रये क्रियां साधयतीति भावः । "एवं सम्यग्ज्ञाने"त्यनेन वस्तुतन्त्रत्वे सम्यग्ज्ञानत्वमुक्तम्, तत्र मा भूत् सम्यक्त्वम्, विधिजन्यत्वनिराकरणमत्र प्रस्तुतं नान्यदित्याशङ्क्याह—**किञ्च वेदान्तेति** ॥ **युक्ता तस्यार्थवादतेति** ॥

### पञ्चपादिका

**अपि च नैवायं विधौ कृत्यः, किं तर्हि ? "अर्हे कृत्यतृचश्चे"त्यर्हे कृत्यः। एतेन—"आत्मेत्येवोपासीत" "आत्मानमेव लोकमुपासीते"त्येवमादीनि विधिच्छायानि वाक्यानि व्याख्यातानि वेदितव्यानि ॥ अतो हानोपादानशून्यात्मावगमादेव कृतकृत्यता प्रतीयते; श्रुति-स्मृतिवादानां च तथा प्रस्थितत्वात्। तस्मान्न प्रतिपत्तिविधिविषयतया ब्रह्मणः समर्पणमित्युपसंहरति ॥ तस्यायमर्थः—न प्रमाणात्मकेनेतरेण वा ज्ञानव्यापारेण विधीयमानत्वेन कल्पितेन संस्पर्शो ब्रह्मण इति ॥ यदपि केचिदाहुरित्यादि। अस्यायमर्थः—यदि स्वरूपमात्रनिष्ठोऽपि वेदभागोऽस्ति, तत इदं पूर्वोक्तं प्रतिष्ठां**

### पञ्चपादिकाविवरणम्

मङ्गीकृत्य प्रथमसूत्रं प्रवृत्तमित्यर्थः। विधीनामपि सतां स्तावकत्वमुक्तम्, इदानीं शब्दस्यार्थान्तरमाह—**अपि च नैवायमिति** ॥ ननु—मा भूवन् ज्ञानविधयः, उपासनाविधिस्तु श्रूयत इति, नेत्याह—**एतेनात्मेत्येवोपासीतेत्यादि** ॥ सर्वत्रैवकारविशेषणश्रवणात्, अहमितिस्वभावप्राप्तप्रत्ययावृत्त्यनुवादेन विषयविशेषः प्रतिपाद्य इति—**अतो हानोपादानशून्येत्युपसंहरति** ॥

भाष्यं विवृणोति—**तस्यायमर्थ इति** ॥ उक्तमेतन्मोक्षफलविधेयज्ञानब्रह्मरूपनिरूपणायां विधिनिरपेक्षमेव ब्रह्मणि वेदान्ताः प्रमाणमिति द्वितीयेन वर्णकेन प्रथमेन च वर्णकेन प्रमाणान्तरानपेक्षं ब्रह्मणि प्रामाण्यमुक्तम्, इदानीं तदुभयवर्णकार्थमाक्षिप्य समाधत्ते—**यदपि केचिदाहुरित्यादिना** ॥ कथम् ? किमहंप्रत्ययावसेय एवात्मा वेदान्तैः प्रतिपाद्यते ? किं वा तद्व्यतिरिक्तः ? यद्याद्यः, तदा तस्य क्रियायामङ्गत्वाद्विधिवाक्यैर्वेदान्तानामेकवाक्यता स्यात्। अथ तद्व्यतिरिक्तः प्रतिपाद्यते, तदा किंचिदुद्दिश्य किंचित्प्रतिपाद्यमित्युद्देश्यता(ना)ऽभावात्प्रतिपादनं न स्यात्। तस्यापि चेतनत्वे

### तत्त्वदीपनम्

विधायकत्वनिराकरणेन स्तावकत्वं दर्शयताऽर्हार्थत्वमर्थादुक्तम्, तथाचापिचेत्येतत्पुनरुक्तमित्याशङ्क्य तात्पर्यमाह—**विधीनामिति** ॥ "वाचं धेनुमुपासीते"त्यादाविवात्मोपास्तावपि विधिः स्यादिति शङ्कते—**ननु मा भूवन्निति** ॥ शाब्दी साक्षात्कारलक्षणा वा प्रतिपत्तिर्ज्ञानशब्दार्थः। अन्वयव्यतिरेकसिद्धत्वान्न तत्र विधिरित्याह—**नेत्याहेति** ॥ अवहननादाविव विधिः किं न स्यादिति ? तत्राह—**सर्वत्रेति** ॥ सविशेषणवाक्यस्य विशेषणपरत्वान्न विधिपरत्वमित्यर्थः। कस्तर्हि वाक्यार्थ इति ? अत्राह—**अहमिति** ॥ उपासीतेति यदिदमुपासनम्, तदात्मन्येवेत्यर्थः ॥ उक्तोपसंहरणस्य "तस्मादि"त्यत्रोच्यमानत्वादत इत्ययं ग्रन्थो व्यर्थ इत्याशङ्क्यावान्तरप्रमेयस्योपसंहरणान्मैवमित्याह—**अत इति** ॥ "तस्मान्न प्रतिपत्तिविधिविषयतये"त्यत्र प्रतिपत्तिशब्दस्य प्रमाणमात्रपरत्वादितरप्रतिपत्तेर्विधेयत्वमित्याशङ्क्य प्रतिपत्तिशब्दः साधारण इत्युक्तं टीकाकृतेत्याह—**भाष्यमिति** ॥ "सत्यं ज्ञानमि"त्यादिवाक्यस्य केवलवस्तुवादिनो दर्शनात् कथं तदभावः ? इत्याशङ्क्य वृत्तसंकीर्तनपूर्वकं तात्पर्यमाह—**उक्तमिति** ॥ स्वरूपग्राहिवेदभागाभावे को हेतुरिति शङ्कते—**कथमिति** ॥ किं कर्त्रादिरूप आत्मा वेदान्तप्रतिपाद्यः ? आहो अशनायाद्यतीतः ? इति विकल्पयति—**किमहंप्रत्ययेति** ॥ सिद्धे दध्यादावपि प्रवृत्तिर्दृष्टेत्याशङ्क्य, आद्येऽस्मदिष्टसिद्धिरित्याह—**तदेति** ॥ द्वितीयमुत्थाप्य दूषयति—**अथेत्यादिना** ॥ प्रतिपाद्यमित्यत्रेतिशब्दो हेत्वर्थः, स च प्रतिपादनं न स्यादित्यनेन संबध्यते। ननु तर्ह्युद्दिश्यैव प्रतिपाद्यतामित्याशङ्क्य प्रसिद्धस्योद्देश्यत्वादौपनिषदस्य च प्रमाणान्तराग्राह्यत्वान्नैवमित्याह—**उद्देश्यताऽभावादिति** ॥

### ऋजुविवरणम्

तद्वाक्यस्येत्यर्थः। प्रथमसूत्रेणेति कथमुक्तम् ? प्रथमसूत्रस्य ह्यर्थचतुष्टयं निरूपितं पूर्वम्, नायं तदन्तर्गत इत्याशङ्क्य व्याचष्टे—**मननिदिध्यासनेति** ॥ "अपिच नैवायमि"ति पुनरुक्तः; पूर्वग्रन्थेऽपि विधायकत्वनिराकरणेन स्तावकत्वं दर्शयताऽर्हार्थत्वमुक्तमेवेत्याशङ्क्यावतारयति—**विधीनामिति** ॥

ननु "ज्ञातव्यः" इत्यादिवाक्यसाम्येन नोपासनाविधाननिराकरणं युक्तम्; तव्यप्रत्ययस्यार्थान्तरत्वेन तत्र विधायकत्वम्, नात्र तथेत्याशङ्क्योपपादयति—**सर्वत्रैवकारेति** ॥ सविशेषणवाक्ये विशेषण एव विधिः संक्रामतीत्युक्तमेवेति न विधानमिति तात्पर्यम्। "यदपि केचिदि" त्यादिना किमाक्षिप्यते ? तावद्वेदान्तप्रामाण्यम्; पूर्वमेव परिहृतत्वात् नापि स्वरूपे प्रामाण्यासंभवेन कार्ये प्रामाण्यमुच्यत इति युक्तम्; तथापि कर्मापेक्षितकर्तृप्रतिपादनेन तच्छेषत्वं संभवतीति प्रथमवर्णक एवोक्तत्वाद् वेदान्तवाक्येष्वपि विधानसंभवेन न तन्निष्ठत्वमित्युक्तम्, अतो विधिमन्तरेण ब्रह्मणि प्रामाण्यस्य सिद्धत्वादाक्षेपान्तरादर्शनादनारम्भ इत्याशङ्क्यावतारयति—**उक्तमेतदिति** ॥ ननु प्रमाणा-

### पञ्चपादिका

लभते; अन्यथा क्रियानुप्रवेशातिरिक्तमवेदार्थ एव स्यादिति, अस्योत्तरम्—तन्न; औपनिषदस्य पुरुषस्यानन्यशेषत्वादिति वस्तुसंग्रहवाक्यम्। अस्यैव प्रपञ्चः—योऽसावुपनिषत्स्वेवाधिगत इत्यादिः ॥ अस्यायमर्थः—योऽयमहंप्रत्ययविषयात् क्रियासम्बन्ध्यात्मनोऽतिरिक्तः सम एकः सर्वभूतेष्वहंकर्तुरपि साक्षिभूतः, न स केनचित्प्रमाणेन सिद्धः, येन क्रियाशेषतां नीयेत। न हि प्रमाणान्तरासिद्धः क्रियासम्बन्धितयोपदेष्टुं शक्यः। नच स न प्रतीयत इति युक्तं वक्तुम्; तत्प्रतिपादकोपनिषत्पदसमन्वयस्य दर्शितत्वात्। अत एवौपनिषदत्वविशेषणम्; अनन्यविषयत्वात्। तच्च वेदान्तानां तत्परत्वेऽवकल्पते। नैष

### पञ्चपादिकाविवरणम्

कर्मानङ्गतैव स्यात्। तस्मात्क्रियायामेव वेदान्ताः प्रमाणम्। तथा च कर्मण्येव कृत्स्नस्य वेदस्य प्रामाण्यमापस्तम्बो दर्शयति—त्रैविद्यवृद्धानां तु वेदाः प्रमाणमिति निष्ठा। तत्र यानि श्रूयन्ते व्रीहि-यव-पश्वाज्य-पयः-कपाल-पत्नी-संबन्धान्युच्चैर्नीचैः कार्यमिति, तैर्विरुद्ध आचारोऽप्रमाणमिति मन्यन्त इति। तथा "चाग्निहोत्रफला वेदाः शीलवृत्तफलं श्रुतमि"ति ॥ तत्रोत्तरमाह—**तन्नौपनिषदस्येत्यादिना** ॥ अहंप्रत्ययावसेयाद्विशिष्टात्मनोऽन्य एव क्रिया-कारकसंसर्गशून्यः, न स कर्माङ्गतया वेदान्तानां विधिशेषतां नयतीत्यर्थः ॥ ननु असावपि चेतनश्चेदहंप्रत्ययगम्यतया कर्माङ्गमिति, नेत्याह—**न स केनचिदिति** ॥ ननु शास्त्रगम्यस्यापि कर्माङ्गता किं न स्यादिति ? अत आह—**न हि प्रमाणान्तरासिद्ध इति** ॥ अधिकारिणं कर्तारं च प्रमाणान्तरसिद्धावनूद्य विधिमात्रप्रतिपादनादन्यथा वाक्यभेदादिति। ननु चेतनः प्रमाणान्तरागम्यत्वाच्छास्त्रेणापि न गम्यत इति, नेत्याह—**नच स न प्रतीयत इति** ॥ ननु सर्वो वेदो धर्मे विनियुक्तः स्मृतिकारैरित्युक्तम्, अत आह—**अत एवौपनिषदत्वेति** ॥ औपनिषद इति तद्धितप्रत्ययो ब्रह्मणि वेदान्तान्विनियुङ्क्ते।

### तत्त्वदीपनम्

दूषणान्तरमाह—**तस्यापीति** ॥ क्रियायामेव वेदानां प्रामाण्यमित्यत्राभियुक्तोक्तिं प्रमाणयति—**तथा चेति** ॥ तद्वाक्यं दर्शयति—**त्रैविद्यवृद्धानामिति**। वेदवृद्धानामित्यर्थः ॥ **तत्रेति**। वेदेष्वित्यर्थः। उच्चैरुत्कृष्टफलाय ॥ अग्निहोत्रफला इति। कर्मार्था इत्यर्थः। शीलं वृत्तं चेति शीलवृत्ते, ते फलं यस्य तत्तथोक्तम्। श्रौत-स्मार्तकर्मणी शीलवृत्तशब्देन निर्दिश्येते। औपनिषदस्यानन्यशेषत्वं कथमिति शङ्कायामाह—**अहंप्रत्ययेति** ॥ ननु—अहंप्रत्ययविषयो ह्यात्मा, औपनिषदस्याप्यात्मत्वे तथात्वम्, तथाच कर्माङ्गत्वं दुर्वारमिति शङ्कायामाह—**नन्वसाविति** ॥ अहंप्रत्ययसाक्षित्वन्नात्मनस्तद्गम्यत्वम्, ततश्च न कर्माङ्गत्वमित्याह—**नेत्याहेति**। प्रमाणान्तरागम्यत्वेऽपि प्रयाजादिवत्कर्माङ्गत्वं स्यादिति शङ्कते—**ननु शास्त्रेति** ॥ प्रयाजादीनामङ्गत्वप्रतिपादकमन्यत् स्वरूपप्रतिपादकं चान्यत्, न तथाऽत्र प्रमाणभेदोऽस्तीत्याह—**अत आहेति** ॥ "स्वर्गकामो यजेते"त्यादिवाक्यं यथा विध्यधिकार्यादिकं प्रतिपादयति तथैतदपि स्यादित्याह—**अधिकारिणमिति**। स्वामिनं कर्तारं चेत्येतौ प्रमाणान्तरसिद्धावनूद्येत्यन्वयः। **विधिमात्रेति**। इष्टसाधनत्वमात्रेत्यर्थः ॥ व्यतिरेकमुखेनोक्तेऽर्थे हेतुमाह—**अन्यथेति** ॥ भूतार्थनिष्ठवाक्यस्य प्रमाणान्तरगोचरत्वं दृष्टम्, ब्रह्मणश्च प्रमाणान्तरागोचरत्वान्न वाक्यप्रमेयत्वमिति शङ्कते—**ननु चेतन इति** ॥ गृहीतसङ्गतिकस्योपनिषत्पदसंदोहश्रवणानन्तरमर्थप्रतिपत्तिदृष्टेर्मैवमित्याह—**नेत्याहेति** ॥ वेदस्य स्वरूपमात्रनिष्ठत्वमभियुक्तवचनविरुद्धमिति यदुक्तम्, तदनुवदति—**ननु सर्व इति** ॥ प्रत्यक्षवेदवचनविरोधात् स्मृतिवचनस्य कर्मकाण्डमात्रविषयत्वमप्रामाण्यं चेत्याशयेनाह—**अत आहेति** ॥ वेदान्तानां विधिपरत्वेऽप्यात्मन औपनिषदत्वविशेषणं न घटते; संज्ञापरत्वेनापि तदुपपत्तेरित्यत्राह—**तद्धितेति** ॥ वेदस्य ब्रह्मपरत्वे वाक्यान्तरमुदाहरति—**तथेति** ॥ कर्मकाण्डस्यान्तःकरणशुद्धिद्वारा ज्ञानजननाद् ब्रह्मणि तात्पर्यस्य विवक्षितत्वमित्यर्थः ॥

### ऋजुविवरणम्

न्तरानपेक्षे प्रामाण्ये विधिनिरपेक्षत्वे च साधिते केन हेतुनाऽऽक्षेप इति पृच्छति--**कथमिति** ॥ **उद्देश्यताऽभावादिति**। प्रसिद्धत्वाभावादित्यर्थः ॥ ननु लोके सिद्धार्थत्वेन प्रामाण्यमस्ति; सिद्धे व्युत्पत्तेरित्युक्तम्, अतो वेदान्तानामपि स्वरूपप्रामाण्यसंभवे कथं सिद्धे प्रामाण्याभावः; कार्यपरत्वं च सिद्धवत्कृत्य कथं कर्माङ्गत्वमुच्यते ? नापि वेदान्तप्रतिपाद्यशुद्धचिदानन्दरूपस्य कर्मण्युपयोगः, प्रत्युत वैपरीत्यमप्युक्तम्, अतो नाक्षेपकारणे आक्षेप्ये चाधिक्यमुपलभ्यत इत्याशङ्क्याह—**तथाच कर्मण्येवेति** ॥ अतः स्तुति प्रतिपादनयोरुपयोगो नास्तीत्यादि परास्तम्; सिद्धे कर्मार्थत्वे प्रमाणतस्तदुपयोगस्यापि संभावयितुं शक्यत्वात् ॥ ननु अधिकारिणः कर्तुश्च शास्त्रीयस्य कर्मसंबन्धप्रतिपादनं दृश्यते, तद्वत्स्यादित्याशङ्क्याह—**अधिकारिणं कर्तारमिति**। **विधिमात्रप्रतिपादनाद्विधीयत इति** ॥ **विधिरिति**। इष्टसाधनत्वप्रतिपादनादित्यर्थः ॥ **औपनिषद इतीति**।

### पञ्चपादिका

प्रतीयमानोऽपि शुक्तिरजतवन्मिथ्येति शक्यं वक्तुम्; बाधाभावात् ।। इतश्च न शक्यते मिथ्येति वदितुं तस्मिन्नौपनिषदे पुरुषे "स एष नेतिनेत्यात्मेत्या"त्मशब्दप्रयोगात् । आत्मनश्चानिराकार्यत्वात् य एव निराकर्ता तस्यैवात्मत्वप्रसङ्गात् ।। नच तस्य कदाचिदभावः सम्भवति; अभावहेतूनामविषयत्वात् । नच निर्हेतुको विनाशः; चितेरेकरूपावभासेन क्षणभङ्गनिराकरणात् । अतोऽवच्छेदत्रयशून्ये तस्मिन् स्वयंप्रकाशमाने सर्वस्य पुरुषावधिर्विनाशः । सा काष्ठा सा परा गतिः ।। तदेवमसंसार्यात्मनि प्रमाणान्तरागोचरे वेदान्तवाक्यसमन्वयात् प्रतीयमाने कथं तत्परो वेदभागो न भवेत् ? कथं वा प्रतीयमानो निराक्रियेत ?

ननु "आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानामि"त्यक्रियार्थानां पदानामर्थशून्यत्वं शास्त्रतात्पर्यविद आहुः । तस्मात्प्रवृत्ति-निवृत्तिव्यतिरिक्तार्थवादिनां निरालम्बनत्वाद् ततो वस्त्ववगमः सामान्यतोदृष्टनिबन्धनो भ्रमः ।

### पञ्चपादिकाविवरणम्

तथा "सर्वे वेदा यत्पदमामनन्ति" "वेदैश्च सर्वैरहमेव वेद्यो वेदान्तकृदि"तिश्रुति-स्मृतिभ्यां ब्रह्मपरा वेदान्ता इति गम्यते । ननु पदसमन्वयाद् ब्रह्मणि प्रतीयमानेऽपि प्रत्यक्षादिभिर्बाधान्मिथ्याज्ञानमिति, नेत्याह—नैष प्रतीयमानोऽपीति ।। ननु उद्देशाभावादुपादेयं प्रमातुं न शक्यत इत्यत आह—इतश्च न शक्यत इति ।। ननु अहंप्रत्ययगम्यमात्मानमुद्दिश्य तस्याद्वितीय-निरतिशय-ज्ञानानन्द-ब्रह्मात्म-प्रतिपादनेऽप्यात्मनोऽवस्तुत्वान्निरालम्बनत्वमिति, नेत्याह—आत्मनश्चानिराकार्यत्वादित्यादिना ।।

प्रकरणार्थमुपसंहरति—अतोऽवच्छेदत्रयशून्य इत्यादिना ।। ननु—सूत्रकारवचनसामर्थ्यात्कृत्स्नो वेदः क्रियायामेव विनियुक्त इति चोदयति—नन्वाम्नायस्येति ।। ननु—पौरुषेयवचनात्कथमनादेर्वैदिकपदसमन्वयस्यार्थनिर्णयः ?

### तत्त्वदीपनम्

अत एवेत्यादिष्टीकाया अयमर्थः—अत एवानन्यविषयत्वादौपनिषदत्वं विशेषणम् । ततः किमिति ? अत आह—तच्चेति ।। वेदन्तानां विधिपरत्व औपनिषदत्वनिर्देशो न स्यात् । नच—औपनिषदस्यानूद्यमानत्वाद् विशेषणोपपत्तिरिति—शङ्क्यम्, मानान्तरागोचरत्वेनानूद्यमानत्वानुपपत्तेरित्यर्थः । ब्रह्मज्ञानस्याङ्गुल्यग्रादिवाक्योत्थज्ञानोपमात्वान्नादेयत्वमिति शङ्कते—ननु पदेति ।। प्रत्यक्षादीनां काल्पनिकद्वैतबोधित्वन्न बाधकतेत्याह—नेत्याहेति ।

ब्रह्मणि विचारशास्त्रप्रवृत्तौ प्रत्यक्षादीनामाभासविषयत्वम् वेदान्तानां च तत्त्वविषयत्वमिति व्यवस्था घटते, सैवानुपपन्नेति शङ्कते—ननूद्देश्येति ।। प्रसिद्धस्योद्देश्यत्वादस्य च तद्वैपरीत्यान्नोद्देश्यत्वमित्यर्थः । उपादेयमिति । अनधिगतमित्यर्थः ।। अहंप्रत्यये प्रतीचो भासमानत्वाद् ब्रह्मणश्च तद्रूपत्वात्प्रतिपादनमुचितमित्यभिप्रायेणाह—अत अहेति ।। टीकायां चशब्दः शङ्काव्यावृत्त्यर्थ इति द्रष्टव्यम् । (मूले) इत इति शब्दः प्रयोगादित्यनेनानुषज्यते ।। प्रत्यगुद्देशेन शास्त्र-प्रवृत्तावाश्रीयमाणायां वाक्यस्य सन्निष्ठत्वं स्यात् प्रतीचोऽवस्तुत्वादिति शङ्कते—नन्वहंप्रत्ययेति ।। किं निराकर्ता कश्चिदस्ति ? उत न ? अन्त्ये निराकरणासिद्धिः, आद्ये मदिष्टसिद्धिः, निराकर्तुरेवात्मत्वादित्याशयवानाह—नेत्याहेति ।।

नच तस्येति टीकाया अयमर्थः—आत्मनः प्रलये लयमाशङ्क्याह—न च तस्येति ।। तदाऽपि किं तन्नाशः सहेतुकः ? नाद्य इत्याह—अभावेति । न तावत्समवायिकारणनाशान्नाशः; तदभावात्, नाप्यसमावायिकारणनाशात्; अवयवसंयोगो हि द्रव्यासमावायिकारणम्, नचास्यारम्भका अवयवाः सन्ति येन तत्संयोगनाशान्नाशः स्यात्, न च नाशकान्तरम्; मानाभावादित्यर्थः ।। द्वितीयं दूषयति—न चेति । पुरुषावधिरिति ।। पुरुषपर्यन्त इत्यर्थः । तस्मिन्नर्थे श्रुतिमुदाहरति—सा काष्ठेति । अवधिरित्यर्थः । सकलालौकिकानन्दानां तन्मात्रत्वादात्मस्वरूपमेव संभजनीयमित्याह—सा परेति ।। परमप्रकृतमुपसंहरति—तदेवमिति ।। ननु अधीतिविध्युपात्तस्याक्षरमात्रस्यापि नैरर्थक्यानुपपत्तेः कथमानर्थ-क्यमुक्तम्—"नन्वाम्नायस्ये"त्यादिना ? इत्याशङ्क्य तात्पर्यमाह—ननु सूत्रेति ।। अक्रियार्थत्व आनर्थक्यापाताद् वेदस्य क्रियार्थत्वमिति शङ्कार्थः । पौरुषेयवचनानुरोधेन कथं वेदार्थो व्यवस्थापनीयः ? शब्दार्थसंबन्धस्य शक्तिलक्षणतया

### ऋजुविवरणम्

श्रुतिस्मृतिविरोधात् । आपस्तम्बस्मृतिरितरत्तदविषया वा स्मृतिर्वेत्यर्थः । नच सिद्धे प्रामाण्याभावात्तद्धितश्रुतिर्न ब्रह्मपरत्वं बोधयतीति युक्तम्; आपस्तम्बेऽपि तुल्यत्वात् । नच वेदस्यैव कार्यपरत्वमिति युक्तम्, सिद्धे बोधदर्शनादितरेतराश्रय-प्रसङ्गात् । "इतरश्च न शक्यते" इत्यनेनोद्देशेनासंभवेनापि न मिथ्यात्वम्; अहंप्रत्ययावसेयस्योद्देश्यत्वादित्युक्तमित्यनु-वादव्याजेन दर्शयति—ननु अहंप्रत्ययगम्यमिति ।।

## पञ्चपादिका

**तेन प्रवृत्ति-निवृत्त्यनुपयोगि वस्तु न शब्दादवगम्यते, अत एव च तन्मिथ्येति शक्यते वक्तुम्; प्रमाणान्तरस्यापि तद्विषयस्यासम्भवात् कथं पुनः प्रवृत्ति-निवृत्त्यनुपयोगि वस्तु न शब्दादवगम्यते ? शब्दस्य तत्र सामर्थ्याग्रहणात् । नचागृहीतसामर्थ्य एव शब्दश्चक्षुरादिवद्विज्ञानं जनयति सामर्थ्यग्रहणं च ज्ञानकार्योन्नेयम् । ज्ञानं च विशिष्टार्थविषयं तद्विषयप्रवृत्त्याऽवगम्यते । तदभावे कुतः सामर्थ्यकल्पना स्यात् ? अक्लृप्तसामर्थ्यश्च शब्दोऽक्रियाशेषेऽर्थे कथं विज्ञानं जनयेत् ?**

## पञ्चपादिकाविवरणम्

उच्यते; अनादिप्रवृत्तात् क्रियार्थतयैव प्रयोगप्रत्ययव्यवहारादेतदवगम्यत इत्याह—**तस्मात्प्रवृत्ति-निवृत्तीति** ।। ननु—शब्दश्रवणानन्तरं भूतेऽप्यर्थे प्रतीतिरुपजायत इति, नेत्याह—**न ततो वस्त्ववगम इति** ।। ननु—अज्ञातब्रह्मावगमः कथं विभ्रमः स्यादिति ? तत्राह—**अत एव च तन्मिथ्येति** ।। शब्दसामर्थ्याभावात्संवादाभावाच्चेत्यर्थः । ननु—भूतेऽप्यर्थे प्रमितिरुपजायते चेत्, नैव तत्र शब्दसामर्थ्यं कल्प्यतामिति चोदयति—**कथं पुनरिति** ।। परिहरति—**शब्दस्य तत्रेति** ।। ननु धूमस्य सामान्येन गृहीतसंबन्धस्य विशेषबोधकत्ववत्क्रियार्थे गृहीतसंबन्धोऽपि भूतमर्थं गमयेदिति, नेत्याह—**नचागृहीतसामर्थ्य इति** ।। तर्हि भूतेऽप्यर्थे संबन्धो गृह्यतामिति, नेत्याह—**सामर्थ्यग्रहणं चेति** ।। ननु—भूतेऽप्यर्थे प्रवृत्त्या ज्ञानानुमानेन सामर्थ्यं गृह्यतामिति, नेत्याह—**तदभावे कुत इति** ।। साध्ये प्रवृत्तिर्न भूतार्थ इति । **उच्यते । नैव सूत्रकारे-त्यादिः** परिहारः ।। कथम् ? लौकिकन्यायमनुसरता वार्तिककारेणेदं प्रतिपादितम्—"अभिहितान्वय इति" ।। प्रदेभ्यः पतिपन्नानां संसृष्टपरस्परार्थावबोधनमभिहितान्वयो नाम । तत्र श्रोतुः प्रवृत्त्या विशिष्टसंसर्गज्ञानं शब्दकार्यत्वेनानुमाय

## तत्त्वदीपनम्

यावच्छब्दभावित्वादिति शङ्कते—**ननु पौरुषेयेति** । शक्तेर्यावच्छब्दभावित्वेऽपि तज्ज्ञानस्य वृद्धव्यवहाराधीनत्वात्तदनुरोधेन वेदार्थस्य व्यवस्थावचनमुचितमित्याह—**उच्यत इति** ।। अक्रियार्थानामानर्थक्याभिधानमनुभवविरुद्धमिति शङ्कते—**ननु शब्देति** ।। किं प्रतीतिमात्रस्यानुपपत्त्याऽर्थवम् ? उत तद्विशेषस्य ? नाद्य इत्याह—**नेत्याहेति** ।। द्वितीयमुत्था-पयति—**नन्वज्ञातेति** ।। "आदित्यो यूपः" इत्यादिवाक्योत्थज्ञानवत्प्रामाण्यं स्यादित्याह—**तत्राहेति** ।। प्रमाणान्तराभावेऽपि भूतवाक्यस्य तत्र प्रामाण्यं किं न स्यादिति ? तत्राह—**शब्देति** ।। भूतवाक्यस्य न स्वार्थे प्रामाण्यं सिध्येत्; शक्त्यग्रहात्, तथाभूतवाक्यप्रामाण्यस्य संवादाधीनत्वदृष्टेस्तदभावादप्रामाण्यं चेत्यर्थः । सामर्थ्याभावोऽसिद्ध इति शङ्कते—**ननु भूत इति** ।। नच संवादकाभावाद् वेदवचसोऽप्रामाण्यम्; पौरुषेयत्वे तदपेक्षणादित्यर्थः । ऐकग्रन्थ्यशङ्कां निरस्यति—**परि-हरतीति** ।। शक्तिग्रहणमप्रयोजकमिति शङ्कते—**ननु धूमस्येति** ।। पर्वतनिष्ठोऽग्निर्विशेषशब्दार्थः । पक्षधर्मताबलाद्विशेष-सिद्धेरङ्गीकरणान्नागृहीतसंगतिकस्य लिङ्गस्य बोधकत्वम्; इतरथाऽतिप्रसक्तिरित्यभिप्रायेणाह—**नेत्याहेति** ।। कार्यवत् सिद्धेऽपि संगतिग्रहणमविशिष्टमिति शङ्कते—**तर्हि भूत इति** ।। संबन्धग्रहणस्य संबन्धिग्रहणाधीनत्वात् तस्य च परवर्तिनोऽ-प्रत्यक्षत्वान्नैवमित्याह—**नेत्याहेति** । **ज्ञानकार्योन्नेयमिति** । ननु यथाऽनुमिते प्रत्यये संगतिग्रहणं त्वन्मते, तद्वन्ममापीति शङ्कते—**ननु भूत इति** ।। प्रवृत्तेरेवाभावान्न तथाऽनुमानमित्याह—**नेत्याहेति** ।। सिद्धे दव्यादावपि प्रवृत्तिदृष्टेत्याशङ्क्य, तस्य क्रियोपरक्ताकारेण प्रवृत्तिविषयत्वम्, न स्वरूपेणेत्याह—**साध्य इति** ।। उपक्रमादिपर्यालोचनया सूत्र-भाष्ययो कार्य-परतावगतेः कथं तदभिप्रायेऽनधिगतिरित्याशङ्क्याह—**उच्यत इति** ।। परिहाप्रकारं पृच्छति—**कथमिति** ।। सूत्र-भाष्य-काराभिप्रायाधिगतेर्वार्तिकाधीनत्वाद् वार्तिकं च सिद्धसाध्ययोरविशिष्टमिति दर्शयितुमभिहितान्वयं वार्तिककारपरि-गृहीतमाह—**लौकिकेति** ।। अभिहितान्वयस्वरूपमाह—**पदेभ्य इति** ।। संसृष्टस्वार्थे पादसामर्थ्याधिगतेः पदार्थानां कथं संसर्गबोधकत्वम् ? इत्याह—**तत्र श्रोतुरिति** ।। संसर्गज्ञानमन्तरेण प्रवृत्त्यसंभावात् प्रथमं संसर्गज्ञानं कल्पयति, तस्य च

## ऋजुविवरणम्

**उच्यते—नैव सूत्रकारेणेति** (मूले)कथमुक्तम् ? सूत्रभाष्यवचनस्य दर्शितत्वात्, नच तदभिप्रायस्यान्यथात्वद्योतकं किञ्चिदुपलभ्यते, नापि न्यायस्य, तत्कथमज्ञानमुक्तमिति पृच्छति—**कथमिति** ।। तत्र न्यायापरिज्ञानं तावदर्शयति—**सम्यगवगत इति** ।। न्यायस्वरूपे निर्धारिते तन्मूलत्वेन सूत्रभाष्याभिप्रायोऽपि स्पष्टो भवति । तन्मूलत्वेन दौर्बल्यादादौ न्यायप्रदर्शनम् । न्यायेऽपि सन्देहनिवृत्त्यर्थं वृद्धपरिग्रहप्रदर्शनेन तस्य रूपं दर्शयति— **तत्र लौकिकन्यायमनुसरतेति** ।। कोऽय-मभिहितान्वयो नाम ? कथञ्च तत्प्रतिपादने सिद्धे प्रामाणयलाभ इति तदाह—**पदेभ्यः प्रतिपन्नानानिति** ।। ननु शब्दानन्तर्ये विद्यमाने कथं संसर्गबोधोऽर्थनिबन्धनः ? इत्याशङ्क्याह—**तत्र श्रोतुः प्रवृत्त्येति** ।। "**तदर्थक्रियानुपयोग्यर्थवाचिनामि**"ति

### पञ्चपादिका

**उच्यते। नैव सूत्रकार-भाष्यकारयोरभिप्रायो लौकिको वा न्यायः सम्यगवगतो भवता। पश्यतु भवान्—देवदत्त ! 'गामभ्याज शुक्लां दण्डेने'ति प्रवर्तकाभ्याजेतिपदातिरेकिणां देवदत्तादिभूतार्थवादिनामप्रवर्तकानामपि प्रवर्तकादेव वाक्याद्भूतवस्तुविषयमपि सामर्थ्यं प्रतीयते न वेति ? प्रतीयते चेत्, निष्प्रयोजनत्वमानर्थक्यम्, न निरालम्बनत्वम्। तदाह भाष्यकारः—अपि च आम्नायस्य क्रियार्थत्वादित्यादिना भाष्येण। प्रयोजनं चानन्तरं पारम्पर्येण वा सुखावाप्तिर्दुःखपरिहारो वा स्यात्। अतस्तदर्थक्रियानुपयोग्यर्थवाचिनां "सोऽरोदीदि"त्यादिपदानां भवत्वानर्थक्यम् ब्रह्मात्मत्वावगतिसमन्वितानां तु परमपुरुषार्थफलानां कथं निष्प्रयोजनत्वम्। स्यादेतत्—यद्यपि प्रवर्तकादेव वाक्याद्भूतार्थविषयमपि**

### पञ्चपादिकाविवरणम्

शब्दसमुदायस्यार्थसमुदाये सामर्थ्यं प्रतिपद्यते। तत्र "गामानय" "गां बधाने"त्यादिप्रयोगभेदेष्वावापोद्धाराभ्यामानयन-तत्संसर्गव्यभिचारेऽपि गोमात्रान्वयाद् बन्धनेऽपि गोशब्दस्य गोमात्रे संबन्धः प्रतिपद्यते, नानयन-तत्संसर्गयोः; व्यभिचारात्। एवं सर्वपदानां पदार्थस्वरूपमात्रेषु सामर्थ्यप्रतिपत्तेः संसर्गबोधः किंनिबन्धनः ? इति वीक्षायामनन्यथासिद्धान्वय-व्यतिरेकाभ्यां शब्दावगतपदार्थनिबन्धन इति कल्प्यते। ततः पदेभ्यः पदार्थाः, पदार्थेभ्यः संसर्ग इत्यभिहितान्वयवादिनां मतम्।

तत्र यद्यक्रियाभिधायिनां पदानामालम्बनाभाव उच्यते ? किं वा प्रयोजनाभाव इति ? यद्यालम्बनाभावः, तत्राह—**पश्यतु भवान् देवदत्त गामभ्याजेति**॥ अथ नालम्बनाभावः, किं तु प्रयोजनाभाव इति वक्तव्यमित्याह—**प्रतीयते चेदिति**॥ अथाक्रियार्थानां प्रयोजनाभाव इति, न; क्रियायाः प्रयोजनत्वाभावादित्याह—**प्रयोजनं चान्तरमिति**॥ अथ क्रियाद्वारमेव प्रयोजनमिति, सत्यं केषाञ्चिदित्याह—**अतस्तदर्थक्रियानुपयोग्यर्थवाचिनामिति**॥ ननु सर्वं क्रियाद्वारमेव प्रयोजनमिति नेत्याह—**ब्रह्मात्मत्वावगतीति**॥ अतोऽभिहितानां पदार्थानां प्रयोजनवदर्थसंसृष्टस्वार्थप्रतिपादनेऽपि भूतवस्तुप्रतिपादनं संभवतीति॥

अत्र प्राभाकरः प्रत्यवतिष्ठते—कार्यसंसृष्टस्वार्थे पदसामर्थ्यं न पदार्थमात्र इत्याह—**स्यादेतद्यद्यपीति**॥

### तत्त्वदीपनम्

कारणान्तरानिरूपणात् शब्दकारणकत्वं कल्पयति, शब्दस्य च तत्र सामर्थ्याभावे तद्ज्ञानजननायोगात् सामर्थ्यं पश्चान्निश्चिनोतीत्यर्थः॥ तथापि कथं पदार्थानां संसर्गबोधकत्वसिद्धिः ? तत्राह—**तत्र गामिति**। बन्धनेऽपि गोमात्रस्यान्वयाद् गोशब्दस्य तत्र संबन्धं प्रतिपद्यत इत्यर्थः॥ पदार्थवत्पदानामप्यन्वय-व्यतिरेकवत्त्वात्संसर्गबोधकत्वमित्याशङ्क्य, तयोरन्यथासिद्धिमाह—**शब्दावगतेति**। नच—प्रत्यक्षावगतघटादीनां संसर्गबोधकत्वमदृष्टमित्यपि—शङ्क्यम्; शब्दावगतपदार्थानां संसर्गबोधकत्वनियमादित्यभिसन्धिः॥

ततः किमिति ? अत्राह—**तत्र यदीति**॥ निपातानामनेकार्थस्मरणाद्यदीतिपदं किमर्थं (इति) द्रष्टव्यम्॥ अप्रतीतिपक्षस्यानुभवविरुद्धत्वात्प्रतीतिपक्ष आदेय इत्याह—**अथेति**। अथशब्दस्य प्रकृतादर्थादर्थान्तरार्थतया प्रसिद्धत्वात्प्रतीतिपक्षपरिग्रहार्थत्वमथशब्दार्थः॥ तर्हि निरालम्बनत्वमानर्थक्यमित्येतद्गतमित्याह—**नालम्बनाभाव इति**॥ द्वितीयमनुवदति **अथाक्रियार्थानामिति**। क्रियायाः स्वरूपेण प्रयोजनत्वात्तद्विधुरवाक्येषु फलविधुरत्वं विवक्ष्यते ? आहो क्रियायाः फलसाधनत्वात् ? इति विकल्प्याद्यं दूषयति—**न क्रियाया इति**॥ द्वितीयमुत्थापयति—**अथ क्रियेति**। किं केषाञ्चित् क्रियाद्वारं प्रयोजनम् ? उत सर्वेषाम् ? तत्राद्यमङ्गीकरोति—**सत्यमिति**। **तदर्थक्रियानुपयोग्यर्थवाचिनामिति**। पुरुषार्थसाधनभूता या क्रिया तदनुपयोगिनो येऽर्थास्तद्वाचिनामित्यर्थः॥ द्वितीयमनुवदति—**ननु सर्वमिति**। साक्षात्कारमात्रात्फलसिद्धेः श्रुतिस्मृतिन्यायानुभवसिद्धत्वाद् न क्रिया समाश्रयणीयेत्याह—**नेत्याहेति**॥ वार्तिककारीयप्रस्थानपर्यालोचनया भूतेऽप्यर्थे पदानां समार्थ्यं सिद्धमिति मूलग्रन्थापेक्षितमुपसंहरणं दर्शयति—**अत इति**॥

कार्यविशेषसंसर्गव्यभिचारेऽपि कार्यमात्रसंसर्गस्याव्यभिचारात्तत्रैव पदानां सामर्थ्यमिति शङ्कते—**अत्र प्राभाकर इति**॥ यद्यपि प्रवर्तकाद्वाक्यात्पदानां भूतार्थे सामर्थ्याधिगतिः; तथापि कार्यसंसृष्टे तदेष्टव्यमिति टीकायोजना। कार्यसंसृष्टे भूते पदसामर्थ्याधिगतावपि शुद्धभूतार्थप्रतिपत्तिः पदेभ्यः किं न स्यादिति शङ्कते—**ननु भूतार्थे इति**॥ भूतानां टीका-

### पञ्चपादिका

**सामर्थ्यं प्रतीयते; तथाऽपि नाप्रतिपन्नभूतार्थावगतेः संभवः ।**

**क्रियार्थतयैव संसर्गावगमात् । न हि गोपदात्तदर्थः सास्नादिमत्पिण्डधर्मत्वेनावगतो व्युत्पत्तिकाले पुनः प्रयोगान्तरेष्वप्रतिष्ठितः केसरादिमत्पिण्डधर्मत्वेन वा प्रतीयते ।**

### पञ्चपादिकाविवरणम्

ननु—भूतार्थे सामर्थ्यं प्रतीयते चेद् भूतसंसर्गोऽपि प्रमीयतामिति, नेत्याह—**तथापि नाप्रतिपन्न इति** । भूतार्थविशिष्टं कार्यमेव प्रमीयत इत्यर्थः ।। ननु—संसृष्टस्वार्थे शब्दसामर्थ्यं चेद् भूते संसर्गः प्रमीयतामिति, नेत्याह—**क्रियार्थतयैवेति** ।। नियोगसंसृष्टतयैवेत्यर्थः । ननु—कार्यसंसृष्टस्वार्थसामर्थ्येऽप्यन्वितस्वार्थस्य तत्रान्तर्भावात्तेनैव प्रयोजकेन भूतेऽपि संसर्गः प्रतीयतामिति, नेत्याह—**न हि गोपदात्तदर्थ इति** ।।

अयमाशयः—"गामानय शुक्लां दण्डेने"ति शब्दश्रवणानन्तरं श्रोतुर्गवानयने प्रवृत्तिमुपलभ्य गवानयनकर्तव्यताऽनेन शब्दात्प्रतिपन्नेति भूतार्थसंसृष्टे कार्ये शब्दसमुदायस्य सामर्थ्यं पतिपद्यते । पुनश्च "गां बधानाश्वमानये"ति प्रयोगान्तरेषु गोशब्दस्यान्वये कार्यसंसृष्टे गवाकृतेरन्वयात्तदुद्धारे च कार्यसंसृष्टगवाकृतेरेवोद्धारात् कार्यसंसृष्टायां गवि पदसामर्थ्यं कल्प्यते; आनयन-तत्संसर्गव्यभिचारेऽपि कार्यसंसर्गाव्यभिचारात् । एवं च प्रथमावगतसंसर्गबुद्धिहेतुत्वान-

### तत्त्वदीपनम्

संसर्गो भूतसंसर्ग इत्यर्थः । कार्यसंसृष्टे सामर्थ्यं चैतदनुरोधेन तस्यैव प्रतिपत्तिर्युक्ता न शुद्धस्येत्याह—**नेत्याहेति** ।। अज्ञातस्य भूतार्थस्यावगतिसंभवो नेत्युक्तं टीकायाम्, तदङ्गीक्रियत इत्याशङ्क्याह—**भूतार्थेति** । सङ्गतिग्रहणसमये शुद्धसिद्धस्य शक्तिविषयतया प्रतिपन्नत्वान्न तद्ग्रहणमित्यर्थः ।। 'प्रसूतस्ते सुतः' इत्यादौ शुद्धसिद्धे सामर्थ्यग्रहणात् तत्प्रतिपत्तिर्युक्तेति शङ्कते—**ननु संसृष्टेति** ।। तत्राप्यध्याहारादिना कार्यस्यैव प्रतिपत्तिरित्यभिप्रायेण परिहरति—**नेत्याहेति** ।। क्रियाया वाक्यार्थत्वानङ्गीकरणात् क्रियार्थतेत्युक्तमयुमित्याशङ्क्य, क्रियत इति व्युत्पत्त्या नियोगोऽभिधीयत इत्याह—**नियोगेति** ।। योग्येतरान्वितस्वार्थस्योभयत्र संमतत्वात् तस्यैव प्रयोजकत्वमिति शङ्कते—**ननु कार्येति** ।। कार्यस्याव्यभिचारात्प्रयोजकान्तराभाव इत्याह—**नेत्याहेति** ।। गोपदस्याऽऽकृतिमात्रे तद्विशिष्टे वा सामर्थ्याग्रहणान्नान्यथाप्रथेतेति युक्तम्, अत्र तु योग्येतरान्वित एव शक्तिग्रहणात्तत्प्रतिपत्तिरेव युक्ता, ततो दृष्टान्तो विषम इत्याशङ्क्याह—**अयमाशय इति** ।। आवापोद्वापाभ्यां पदानामर्थमात्रे सामर्थ्यं परोक्तं निरस्यति—**पुनश्चेति** । आनयन-तत्संसर्गयोर्व्यभिचाराद् न शक्तिविषयत्वमित्याशङ्क्याह—**आनयनेति** । पदानां पदार्थस्मारकत्वेन तदन्वयव्यतिरेकयोरन्यथासिद्धत्वात्पदार्थानामेव संसर्गबोधकत्वमित्याशङ्क्याह—**एवं चेति** । **चशब्दः** शङ्काव्यावृत्त्यर्थः । शब्दानां संगतिग्रहणसमये यदवगतं संसर्गबुद्धि-

### ऋजुविवरणम्

ग्रन्थस्यायमर्थः—स चासावर्थश्चेति तदर्थः । तदर्थस्य क्रियोत्पत्तिः । यद्वा—तदर्थ एव क्रिया, तत्रानुपयोग्यर्थवाचिनामिति ।। एतदुक्तं भवति—प्रयोजनतत्साधनव्यतिरिक्तवाचिनामानर्थक्यमिति ।। टीकाग्रन्थमुपजीव्य चोदयति—**ननु भूतार्थ इति** ।। नाप्रतिपन्नभूतार्थावगतेः संभव इति । किमुक्तं पूर्वमनवगतस्य भूतस्य तदानीं प्रतिषिध्यते ? उतोत्पत्तिकालेनावगतस्येति ? उभयस्याङ्गीकरणान्न दोष इत्याशङ्कय व्याचष्टे—**भूतार्थविशिष्टं कार्यमिति** ।। पूर्वोक्तप्रतीतिमात्रानुपपत्त्या चोदयति—**ननु संसृष्टस्वार्थ इति** ।। व्युत्पत्तिकाले शक्तिविषयतयाऽप्रतिपन्नशुद्धभूतार्थावगतेस्संभवो नास्तीति व्याख्यातम् ।। "**ननु क्रियार्थतये**"ति न युक्तम्; नियोगवादिनोऽपसिद्धान्तप्रसङ्गात्, तदर्थत्वं त्वभिहितान्वयवादिनाप्युच्यते; क्रियायास्सर्वप्रयोजनत्वाङ्गीकारात्, तेनायुक्तमित्याशङ्क्य व्याचष्टे—**नियोगसंसृटतयेति** ।। व्याख्यातम् । **ननु कार्यसंसृष्टेति** ।। अयमर्थः—कार्यसंसर्गस्य व्युत्पत्तिकाले व्यभिचाराभावेऽपि कार्यान्वियमध्यगतस्येतरान्वितस्याव्यभिचाराल्लाघवात्तस्यैव शक्तिनियामकत्वं युक्तमिति । "**नहि गोपदादि**"ति टीकाग्रन्थेन गोपदस्य सास्नादिपिण्डस्य धर्मभूतगोत्ववाचकत्वे सिद्धे प्रयोगान्तरे स्वनिष्ठगोत्ववाचकत्वमन्यधर्मवाचकत्वञ्च यथा न युक्तम्; व्युत्पत्तिविरोधात्, तथात्रेत्युक्तम्, तदयुक्तम्; नात्रोत्तरत्र प्रतीत्यापादनं क्रियते किन्तु चित्तविरोधलाघवेन व्युत्पत्तिरेव योग्येतरान्वितस्वार्थे भवत्विति चोदितत्वात्, न हि प्रयोजकलाघवे संभवति स्थितिमात्रेण विशिष्टस्य प्रयोजकत्वाश्रयणं युक्तमित्याशङ्क्याभिप्रायमाह—**अयमाशयो गामानयेति** । **प्रथमावगतेति** ।। अनेन च विशिष्टस्य प्रयोजकत्वाश्रवणे कारणमुक्तम् ।। **ननु**—पदानां पदार्थमात्राभिधायकत्वे पदार्थेभ्य एव वाक्यार्थावगमसंभवे तद्धानेन पदानामेवान्विताभिधायकत्वाश्रयणमयुक्तमित्याशङ्क्याह—**मध्ये च**

## पञ्चपादिकाविवरणम्

पवादाच्छब्दानां मध्ये च पदार्थ-तच्छक्तिव्यवधानकल्पनागौरवपरिहारात् पदानामेव संसर्गप्रतिपादनसामर्थ्यकल्पना; लाघवाच्च । तस्मात्कार्यसंसृष्टस्वार्थेषु शब्दसामर्थ्यमिति ॥

तदेतन्निराचष्टे—**विषम उपन्यास इति** ॥ न हि प्रयोगभेदेषु कार्यसंसर्ग एव गवाकृतेर्नियमेन प्रतीयते, किन्तु गुण-व्यक्तिक्रियाकारकसंसर्गश्च । तथाहि "शुक्लां गामानये"त्युक्ते गुण-कारक-क्रियासम्बन्धाः प्रतीयन्ते क्रियाद्वारश्च कार्य-सम्बन्धः । तत्राव्यवहितसम्बन्धोपादानसिद्धयेऽन्यान्वितस्वार्थे सामर्थ्यं गृह्यते । क्रमेण च गुणक्रियादिसंसर्गो यथायोगमवभासमानो यावदन्त्यपदोच्चारणसमाप्ति, पश्चात्संभूय सर्वैरेव पदैरेकप्रयोजनावच्छिन्नो महावाक्यार्थः प्रमीयत इति नान्योन्यसंसर्गविरोधः । प्रमाणान्तरग्राह्यत्ववत्कार्यमपि प्रवृत्तिलिङ्गहेतुतया नियमेनान्वेति, न सर्वशब्दसामर्थ्य-

## तत्त्वदीपनम्

जनकत्वम्, तस्यैवं सत्यनपवादादिति योजना । अभिहितान्वयवादे दोषान्तरमाह—**मध्ये चेति** । शब्दव्यापारवाक्यार्थ-प्रतिपत्त्योर्मध्य इत्यर्थः । पदानां पदार्थबोधनशक्तिमत्त्वम्, पदार्थानां च संसर्गप्रमितिजननसामर्थ्यमिति व्यवधाने कल्पनागौरवं दुर्वारं स्यादित्यर्थः । अस्मन्मते तु नायं दोष इत्याह—**पदानामेवेति** । पूर्वपक्षमुपसंहरति—**तस्मादिति** ।

तदुत्तरत्वेनोत्तरग्रन्थमवतारयति—**तदेतदिति** । गोपदस्य गोमात्रे सामर्थ्यप्रतिपत्तिवत्कार्यसंसृष्टे सामर्थ्यप्रति-पत्तिः, ततो न दृष्टान्तवैषम्यमित्याशङ्क्य तात्पर्यमाह—**न हि प्रयोगेति** । कार्यसंसृष्टस्वार्थे गोपदसामर्थ्यग्रहणात् तत्प्रति-पत्तिवद् गुणादिसंसर्गस्यापि प्रतिपत्तेः कथं कार्यसंसृष्ट एव सामर्थ्यग्रहणमित्यर्थः । गुणादिसंसर्गप्रतीतिमेवाभिनयति—**तथाहीति** । शुक्लामिति गुणः संसर्गः, गामिति द्वितीयाविभक्त्याऽभिहितकर्मकारकेण संसर्गः, धात्वभिहितानयनक्रियया च संसर्गः, ततः कार्यसंसर्ग इत्यर्थः । गुणादिसंसर्गस्य कार्यसंसर्गोत्तरकालत्वात्कार्यसंसर्गस्यैव प्राथम्यमित्याह—**तत्राव्यवहितेति** । कार्यव्यवधानं विना गवाकृतेर्गुणादिना संसर्गसिद्धय इत्यर्थः । अन्यान्वितस्वार्थे सामर्थ्यग्रहश्चेत्, तर्हि संसर्गस्यानेकत्वा-देकवाक्यार्थो न सेत्स्यतीत्याशङ्क्याह—**क्रमेणेति** । यथायोगम्-योग्यताऽनुसारेणेत्यर्थः । यावदन्त्यपदोच्चारणपरिसमा-प्तिस्तावत् क्रमेण गुणादिसंसर्गोऽवभासमानो भवतीति संबन्धः । **एकप्रयोजनेति** । देवदत्त-कर्तृक-दण्डकरणक-गोकर्मका-नयनक्रियाकर्तव्यतालक्षणैकवाक्यार्थप्रमितिहेतुतयैकवाक्यमित्यर्थः । अव्यभिचारात्कार्यशक्तिविषयत्वमित्युक्तं निरस्यति—**प्रमाणान्तरेति** । प्रमाणान्तरप्रतिपत्तेः शब्दप्रयोगान्यथाऽनुपपत्त्या मानान्तरग्राह्यत्वस्यान्वयवत् कार्यत्वस्यापि प्रवृत्तिहेतुत्वे-

## ऋजुविवरणम्

**पदार्थतच्छक्तिव्यवधानेति** ॥ **विषम उपन्यासः"** इत्यादि परस्परविरुद्धमिवाभाति; गोपदस्येत्यनेनैकेन पदेनैकरूपैव प्रतीतिः सामर्थ्यैकरूपत्वादित्युक्तम् । "शब्दार्थान्तरान्वयः" इत्यनेनेतरान्वयप्रतीतिः कथमित्याशङ्क्य तद्घटनं कृतमिव प्रतिभाति, व्युत्पत्तिकाल एवान्वीयमानपदस्य विभक्तेर्वाऽन्यत्वे तद्योग्यार्थान्वयदर्शनात्संभूय समुच्चरितेषु प्रयोगस्येदंपरत्वे ज्ञाततत्तदन्वयप्रतीतेरनियतस्संबन्ध इत्युक्तत्वात् । नच गोत्वमात्रे नियतस्संबन्धोऽनियतस्त्वन्वित इत्यविरोधः; शक्तिद्वया-भावात् । ननु स्वरूपे संबन्धिदर्शनमात्रात्स्मृतिः, शक्त्या त्वन्वितप्रतीतेरनियतत्वमित्यविरोधः; एवं तर्हि न परिहारः; पूर्ववादिनाप्यङ्गीकृतत्वात्, पूर्वग्रन्थे व्युत्पत्त्यनुसारेण प्रतिपत्तिदर्शनात्कार्येऽपि तथा स्यादित्युक्ते तद्वैषम्यमनेनोच्यते, युक्तं गोत्वे सास्नादिधर्मभूतस्यैव प्रतीतिर्न स्वनिष्ठस्यान्यधर्मस्य वा व्युत्पत्तिसमयेऽनेकप्रकारगोसामर्थ्यप्रतिपत्त्यभावादिति ॥ **"शब्दार्थान्तरे"**त्यनेन व्युत्पत्तिकाल एवानेकान्वयप्रतिपत्तिदर्शनान्न कार्येण नियतस्संबन्धः, अपि तु योग्येतरान्वित इत्युक्तम्, अतः समञ्जसः परिहार इति । तथाऽपि न निर्वाहः; कार्यस्याव्यभिचारात्तदन्वितत्वहानं न युक्तम्; प्रधानेन चेतरेषामन्वयात्, इतरान्वयप्रतीतेः पाष्ठिकत्वात् इतरथाऽन्यान्वित एव शक्तिरित्याशङ्क्याह—**नहि प्रयोगभेदेष्विति** ॥ **ननु** गुण-गुण्यादिसंबन्धे सत्यपि न कार्यान्वयभङ्गः; सर्वपदानां कार्यान्वितस्वार्थत्वस्या व्यभिचारात्, गुण-गुण्यादि-संबन्धस्तु पाष्ठिकः, अतस्तद्दर्शनान्न कार्यान्वयभङ्ग इत्याशङ्क्याह—**क्रियाद्वारश्चेति** ॥

**ननु** अन्यान्वितस्वार्थाभिधानं न युज्यते; सर्वपदानामेकवाक्यार्थप्रमितिसिद्धये प्रयोगान्नास्मिन् पक्षे तत्संभवति । नच तेषामेव पुनर्वाक्यार्थप्रत्यायकत्वं संभवति; विरोधात्, सकृत्कार्यद्वयस्य शक्तिश्च तत्र कल्प्येत, तथा सति गौरवान्नान्यान्विततासंभव इत्याशङ्क्याह—**क्रमेण गुणक्रियेत्यादिना**—**संसर्गविरोध इत्येवमन्तेन** ॥ ननु अव्यभिचरितत्वं कार्यस्य, तेन सर्वपदानां कार्यान्वितस्वार्थाभिधायकत्वं निश्चीयते, इतरथा नियमेनान्यविरोध इत्याशङ्क्याह—**प्रमाणा-**

## पञ्चपादिकाविवरणम्

विषयतया। तस्माल्लाघवादन्वितस्वार्थे सामर्थ्यमित्यन्यथानुवादप्रसङ्गात्कार्यान्वितस्वार्थेषु प्रमाणान्तरेण शब्दसामर्थ्यप्रतिपत्तौ शब्दादपि तावन्मात्रबोधेऽनुवादः स्यात्। नच कार्येण सर्वपदार्थानामव्यवहितः सम्बन्धः, येन तत्संसृष्टे सामर्थ्यं स्यात्। अस्ति शेषशेषितालक्षणसम्बन्ध इति, केयं शेषशेषिता नाम ? न तावत्स्वस्वामिता; चेतनविषयत्वात् तस्याः, नापि देवदत्तवदङ्गाङ्गिता; तदवयवत्वाभावादितरेषाम्। अथ साध्यतैव शेषिता; क्रियैव तर्हि गुणकारकसाध्येति सैव शेषिणी स्यात्। अथ परमसाध्यता स्वर्ग एव, तर्हि शेषीति किमनेन कार्येणान्तर्गडुना। तस्माद् गुणानां द्रव्यैरन्वयो द्रव्याणां विभक्त्यर्थसंसृष्टानां क्रिययान्वयः, तस्याश्च कार्येणेति व्यवधानादन्यान्वितस्वार्थे सामर्थ्यं समञ्जसम्। किंच कार्यस्य कार्यान्तरान्वयाभावादन्यान्वयो वक्तव्यः। धात्वर्थेन कार्येण कार्यस्यान्वय इति चेत्, न; नियोगान्वयनिमित्तत्वाद्धात्वर्थे कार्यतायाः। नियोगस्य तु धात्वर्थेन केवलेनान्वयो न कार्येण; उत्तरकालत्वात् तत्कार्यत्वस्य। अतोऽप्यन्यान्विते शब्दसामर्थ्यमिति॥

## तत्त्वदीपनम्

नानुगतिर्न शक्तिविषयत्वेन। एतच्च परमतमाश्रित्योक्तमित्यर्थः। मानान्तरविषयत्वस्य शब्दादप्रतीयमानशक्तिविषयत्वम्, कार्यस्य च तद्वैपरीत्यमित्याशङ्क्य गौरवप्रसङ्गाद् मैवमित्याशयेनाह—तस्मादिति। विपक्षे दण्डमाह—**अन्यथेति**। प्रसङ्गमेवाह—**कार्येति**। शक्तिग्रहणवेलायां यावानर्थः प्रतीयते, तावानेवान्यदापि प्रतीयते ? उताधिकोऽपि ? नाद्यः; अनुवादकतापातादित्यर्थः। द्वितीयं दूषयति—**न च कार्येणेति**। कार्यान्वितस्वार्थे सकलपदसामर्थ्यप्रतिपत्तावपि कालान्तरे तद्विशेषसिद्धिरित्येतदयुक्तम्; पदार्थानां कार्येण संसर्गानिरूपणादित्यर्थः। संबन्धाभावोऽसिद्ध इति शङ्कते—**अस्तीति**। शेषशेषित्वमेव दुर्निरूपमित्याह—**केयमिति**। किं स्वस्वामिता शेषशेषिता ? उताऽङ्गाङ्गिता ? अथवा साध्य-साधनता ? इति किंशब्दार्थः। आद्यं प्रत्याह—**न तावदिति**। द्वितीयं दूषयति—**नापीति**। प्रमाणाभावादित्यर्थः। तृतीयमुत्थापयति **अथ साध्यतेति**। शेषता च साधनतेत्यर्थः। किं साक्षात्साधनत्वं विवक्षितम् ? उत परम्परया ? आद्ये दूषणमाह—**क्रियैवेति**। द्वितीयं दूषयति—**अथ परमेति**। कार्येणाव्यवहितसंबन्धानिरूपणादन्यान्वितस्वार्थे पदानां सामर्थ्यं वक्तव्यम्, तत्र च केषाञ्चित्संसर्गः केषाञ्चित्परम्परयेत्याह—**तस्मादिति**। इतोऽपि न कार्यान्वितस्य सकलशब्दशक्तिविषयत्वम्। तथाहि—किं सर्वेषां पदानां कार्यान्वितस्वार्थे सामर्थ्यम् ? उत कार्यपदव्यतिरिक्तानाम् ? नाद्य इत्याह—**किं च कार्यस्येति**। कार्यपदस्य न कार्यान्वितस्वार्थे सामार्थ्यम्; कार्यान्तराभावादित्यर्थः। तस्माद् द्वितीयपक्षः परिशिष्यत इत्याह—**अन्यान्वय इति**। तथाच प्रयोजकद्वैरूप्यमित्तर्थः। धात्वर्थस्य कार्यत्वात् कार्यपदस्यापि तदन्वितस्वार्थाभिधायित्वमिति न प्रयोजकभेद इति शङ्कते—**धात्वर्थेति**। धात्वर्थस्य कार्यत्वमसिद्धमित्याह—**न नियोगेति**। यागविषयनियोगे लिङादिना प्रतिपन्ने तस्य साक्षात्कृतिसाध्यत्वानुपपत्तेस्तन्निर्वाहकत्वेन यागः कृतिसाध्यतां भजते, ततच्च नियोगान्वयादर्वाग्यागस्य न कार्यत्वम्। नच—तन्नियोगान्वयोत्तरकालीनत्वमित्यपि—शङ्क्यम्; परस्पराश्रयादित्यर्थः। धात्वर्थान्वयमन्तरेण नियोगप्रतीत्यनुपपत्तेः; कथं नियोगाधीनत्वं तस्य ? इत्याशङ्क्याह—**नियोगस्य त्विति**। यागमात्रे प्रतिपन्ने तद्विषयमियोगस्यापि प्रथा युक्तेत्यर्थः।

## ऋजुविवरणम्

**न्तरग्राह्यत्ववदिति**॥ कार्यान्वितस्वार्थाभिधायकत्वेऽनुवादकत्वमिति यदुक्तम्, तदयुक्तम्, नहि प्रमाणान्तरं कार्यसंसृष्टपदार्थे प्रवृत्तमस्ति, येनानुवादः स्यादित्याशङ्क्याह—**कार्यान्वितस्वार्थेष्विति**। ननु नानुवादकत्वं पदानाम्, येन व्युत्पत्तिकाले कार्यान्वितमात्रान्वितज्ञानम्, प्रतीतिकाले तु कार्यविशेषान्वयः सन्निधानात्प्रतीयते, तेन नानुवाद इत्याशङ्क्याह— **नच कार्येणेति**। यद्वा—इतरान्वितस्वार्थाभिधायकत्वाङ्गीकारेऽपि पुनर्वाक्यार्थप्रतिपादकत्वकल्पनाद् वरं साक्षात्कार्यान्विते शक्तिरिति वक्तुं न शक्यते; अनिर्धारितस्य शक्तिप्रतियोगित्वाभावात्, अव्यवस्थितश्च पदार्थः स्यात्, नच स्वर्गादेः साध्यत्वेनान्वयः संभवति; कृतिसाध्यताऽभावात्, अतो व्यवस्थितसिद्धपदार्थसिद्धयेऽव्यभिचारिकार्यान्वयो वक्तव्य इत्याशङ्क्याह—**किञ्च कार्यस्येति**॥ **न नियोगान्वयेति**॥ कार्यस्य साध्यत्वसिध्यर्थं विषयत्वेनान्वितयागस्य करणत्वे पश्चात्कार्यसाध्यत्वमङ्गीक्रियते, तेन पूर्वं कार्यत्वाभावान्न तदाकारेणान्वय इत्यर्थः॥

ननु चैकस्मिन् पदे व्यभिचारभयेन वहुपदानां कार्यान्वितार्थत्वहानमयुक्तम्; अव्यभिचारात्, किन्तु सर्व-

**पञ्चपादिकाविवरणम्**

किंच प्रमाणान्तरग्राह्यत्वमप्यर्थस्य शब्दसामर्थ्यविषयः स्यात्; अव्यभिचारात् । प्रयोगनिमित्ततयाऽन्यथासिद्धिरन्वयस्येति चेत्, कार्यत्वस्यापि प्रवृत्तिलिङ्गहेतुतयैवान्वयनियमः, न सर्वपदसामर्थ्यविषयतयैवेति । किंच भूतसंसर्गेऽपि शाब्दी प्रमितिरनुभूयते लोके—देवदत्तो भुक्त्वा निर्गत इत्यादौ । तत्र किं प्रतिवाक्यं कार्यपदमध्याह्नियताम् ? शब्दव्यतिरिक्तप्रमाणान्तरं वा कल्प्यताम् ? भ्रान्तित्वं वोपेयताम् ? आहोस्विदन्यान्विते शब्दसामर्थ्यं प्रतिपद्य प्रामाण्यं वा व्यवस्थाप्यतामिति ? अबाधितभूतार्थव्यवहारात्कल्पनालाघवाच्च गृहीतप्रयोजनानां विप्रतिपन्नप्रयोजनानां च सम्बन्धग्रहणादेवार्थप्रतिपत्तेर्निरूपणीयमेतत् । किंच निघण्टुव्याकरणोपदेशैः कार्यपदार्थमप्रतिपद्यैवार्थान्तरसंसृष्टस्वार्थेष्वव्यभिचाराच्छब्दसामर्थ्यं प्रतीयते, क्वचित्कार्यसंसर्गदर्शनादन्यत्रापि तदनुमीयत इति चेत्, न; अन्यत्रान्यसंसर्गमात्रदर्शनेन कार्यसंसृष्टेऽप्यन्यसंसर्गमात्रप्रयोजककल्पनोपपत्तेरदृष्टप्रयोजकोपसंहाराद् दृष्टप्रयोजकस्यैव युक्तत्वात् । तस्मादन्यसंसृष्टस्वार्थे शब्दसामर्थ्यमिति सिद्धम् ।।

**तत्त्वदीपनम्**

''प्रमाणान्तरग्राह्यत्ववदि''त्यत्र प्रमाणान्तरग्राह्यमिव न कार्यमपि शक्तिविषय इत्युक्तम्, तत्र दृष्टान्तदार्ष्टान्तिकौ स्पष्टयति—**किंचेति** ।। अनन्यथासिद्धत्वस्य साधकत्वम्, अत्र च तथात्वाभावान्नैवमिति शङ्कते—**प्रयोगेति** ।। प्रमाणेनार्थमुपलभ्य तत्र शब्दप्रयोगदर्शनादन्यथासिद्धिरित्यर्थः । तुल्यमुत्तरमित्याह—**कार्यत्वस्यापीति** ।। प्रवृत्तिलक्षणं लिङ्गं प्रवृत्तिलिङ्गम्, तस्य हेतुः प्रवृत्तिलिङ्गहेतुः, तस्य भावस्तत्ता, तयेत्यर्थः । इतोऽपि न नियोगाधीनः संसर्गबोध इत्याह—**किं च भूतसंसर्ग इति** ।। विषयसप्तमी । प्रतीतिमात्रेणार्थासिद्धयाशङ्कायामाह—**तत्रेति** ।। **''व्यवस्थाप्यतामि''**-त्यत्र निरूपणीयमित्यनुषङ्गः । भूतसंसर्गप्रतीतेर्भ्रान्तित्वमित्येतदयुक्तमित्याह—**अबाधितेति** ।। अध्याहारप्रमाणान्तरकल्पनयोरयोग इत्याह—**कल्पनालाघवादिति** ।। इतोऽपि न कार्यस्य प्रयोजकत्वमित्याह—**अगृहीतेति** ।। ''देवदत्तो भुक्त्वा निर्गतः'' इत्यत्र शब्दशक्तिविषयत्वेन कार्यमेव प्रतिपन्नमित्यर्थः । यत्रापि तत्प्रतिपत्तिः, तत्रापि तस्य न प्रयोजकता; विप्रतिपत्तेरित्याह—**विप्रतिपन्नेति** । **निरूपणीयमेतदिति** । कार्यान्वितसामर्थ्यं निरूपणीयमित्यर्थः ।। इतोऽपि कार्यान्विते शक्तिरित्याह—**किं चेति** । 'आखण्डलः पुरुहूतः पृतनाषाडि'त्येवमादौ प्रसिद्धेन्द्रादिपदसमभिव्याहारानुपपत्त्याऽप्याखण्डलादिपदार्थोऽधिगम्यते, तथा रघोरपत्यं राघव इति व्याकरणाद् निश्चीयते, तथा पित्राद्युपदेशाच्च गवादिशब्दार्थं इत्यर्थः ।। भूतार्थसंसर्गस्य क्वचित् कार्याविनाभावादितरत्रापि तत्कल्पनाद् न तस्य व्यभिचार इति शङ्कते—**क्वचित् कार्येति** ।। वैपरीत्यं किं न स्यादित्याह—**नान्यत्रेति** ।। 'देवदत्तो भुक्त्वा निर्गतः'' इत्यादौ पदार्थसंसर्गमात्रस्योपलब्धत्वाद् ''गामानये''त्यत्रापि पदार्थान्तरसंसर्गमात्रस्य प्रयोजकत्वमित्यर्थः । किमत्र विनिगमनमित्याशङ्क्याह—**अदृष्टप्रयोजकेति** । ''देवदत्तो निर्गतः'' इत्यादावन्यत्र प्रमाणतोऽदृष्टस्योपसंहरणाद्वरं गामानयेत्यत्र दृष्टस्यान्यान्वितस्वार्थलक्षणस्य प्रयोजकस्योररीकरणमुचितमित्यर्थः स्वमतमुपसंहरति—**तस्मादिति** ।। कार्यसंसर्गस्य प्रयोजकत्वकल्पकाभावस्तच्छब्दार्थः ।।

**ऋजुविवरणम्**

पदानुरोधेन तत्राप्यन्यनिबन्धनं कार्यत्वमेवेति कार्यान्वयित्वमेव; लोके च तस्य कार्यत्वं दृश्यते, अतो नाव्यभिचरितकार्यान्वयहानं युक्तमित्याशङ्क्याह—**किञ्च प्रमाणान्तरग्राह्यत्वमिति** ।। अनन्यथासिद्धान्वय-व्यतिरेकतो वाच्यत्वकल्पना, अत्र तु प्रमाणान्तरेण गृहीत एव शब्दप्रयोगस्संभवति, नान्यथेत्यन्यथासिद्धत्वान्न वाच्यत्वनिश्चायकत्वमिति चोदयति—**प्रयोगनिमित्ततयेति** ।। तर्हि कार्यान्वयनियमोऽप्यन्यथासिद्धः । मध्यमवृद्धप्रवृत्तिदर्शनेन हि बालस्य व्युत्पत्तिर्भवति । नच कार्यज्ञानेन विना मध्यमवृद्धप्रवृत्तिः; अतः प्रवृत्तिरूपलिङ्गहेतुतया सिद्धो व्यभिचार इति परिहरति—**कार्यत्वस्यापीति** ।। ननु प्रमाणान्तरग्राह्यत्वसाम्येन कथं कार्यस्य शक्तिप्रतियोगिकत्वनिराकरणम् ? नहि मानान्तरयोग्यत्वं कदाचिदपि प्रतीयते, किन्तु सत्तयैव हेतुत्वम्, तेन न तस्य वाच्यत्वम्, कार्यस्य तु प्रतीतिरस्ति, न कदाचिदपि व्यभिचारः, अतः कार्यसंसृष्ट एव शक्तिग्रहणमित्याशङ्क्याह—**किञ्च भूतसंसर्गेऽपीति** ।। ननु त्वयैव निरूपणीयं नास्माभिः; अज्ञत्वाद्विप्रतिपत्तेर्वेत्याशङ्क्याह—**अगृहीतप्रयोजनानामिति** ।। यद्वा—लोक एव सिद्धत्वान्निरूपणवैयर्थ्यमित्याशङ्क्याह—**अगृहीतेति** । अज्ञ-विप्रतिपन्नयोरपि शब्दादर्थप्रतिपत्तिदर्शनान्न लोकतो निर्णय इति भावः ।। **ननु किमत्र निरूपणीयम्** ? कार्यसंसृष्टे शक्तिर्निश्चिता; व्युत्पत्तावव्यभिचारात्, उत्तरकालभाविन्या तु न भूतार्थनिश्चयः; यथा व्युत्पत्तिप्रतीतेः, नच तद्धानेन व्युत्पत्तिरित्याशङ्क्याह—**किञ्च निघण्टु-व्याकरणोपदेशैरिति** ।।

**पञ्चपादिकाविवरणम्**

ननु—गोपदस्याप्यानयनसंसर्गादिबह्वर्थप्रतिपादकत्वादानयनपदस्यापि गोससंसर्गाद्यनेककार्याभिधायित्वात् पदाभ्यां प्रतिपाद्यसंसर्गनियमो न स्यात्, नैष दोषः; एकैकपदोच्चारणे यावानर्थः प्रतीयते, तावतामेव संसर्गः संभूयोच्चारणे प्रतीयत इति नियमोपपत्तेः। नहचेकैकपदोच्चारणात्सर्वे संसर्गाः प्रतीयन्ते; सहकारिपदान्तरनिमित्तत्वात्-संसर्गप्रतीतेः। ननु एवं पर्यायता स्यात्, तथाहि—गोपदस्याप्यानयनसंसृष्टं गोत्वमर्थः, आनयेतिपदस्यापि गोसंसृष्ट-मानयनमर्थ इति, नैतत्सारम्; एकस्मात्पदाद्यावानर्थः प्रतीयते, तावानेव चेत् पदान्तरादपि प्रतीयात्, स्यादेव पर्यायत्वम्। यदा पुनरितरेतरसंसृष्टौ पदार्थौ पदाभ्यां संभूय प्रतीयेते, तदा कुतः पर्यायतेति ? ननु गोपदोच्चारणे गवाकृतिरेव किमिति प्रतीयते ? न सामर्थ्यविषयभूतं सर्वमिति ? अव्यभिचारात् संस्कारभूयस्त्वाद्गवाकृतेः, इतरेषां व्यभिचारादित्यनवद्यम् ॥

ननु अभिहितेन पदार्थान्तरेण संसृष्टं गोत्वं प्रतिपादयति चेत् गोपदमानयतिपदमप्यभिहितेनैव गोपदेन संसृष्टं स्वार्थं प्रतिपादयतीतीतरेतराश्रयता स्यात्—गोत्वेऽभिहिते तत्संसृष्टानयनाभिधानम्, तस्मिन्नभिहिते तत्संसृष्ट-गोत्वाभिधानमिति, नैष दोषः; क्रमेण पदेषूच्चार्यमाणेषु क्रमेणैव पदार्था अव्यभिचारिणः प्रतीयन्ते; अन्त्यपदोच्चारणा-नन्तरं च संभूयैकस्मृतिगम्यानि पदान्यभिहितानेव पदार्थान् संसृष्टतया प्रतिपादयन्तीत्यभिहितेनैवान्वयोपपत्तेः ।

**तत्त्वदीपनम्**

अन्यान्वितस्वार्थे पदसामर्थ्यमुक्तमसहमानोऽभिहितान्वयवादी प्रत्यवतिष्ठते—ननु गोपदस्यापीति ॥ पदाभ्यामनेकसंसर्गप्रतिपत्तेर्न वाक्यश्रवणान्नियतप्रवृत्तिरित्यर्थः । पदस्मारितपदार्थमात्रसंसर्गस्य वाक्यप्रतिपाद्यत्वाद् नोक्तदोषानुषङ्ग इत्याह—नैष इति ॥ एकैकपदस्याप्यन्वितार्थबोधनसमर्थत्वात्सर्वोऽपि संसर्गो भासेतेति, तत्राह—नहचेकैकेति ॥ शक्तस्यापि सहकारिपदान्तरापेक्षया कार्यकरत्वं दृष्टम्, तथाच पदस्यापि सहकारिपदान्तरापेक्षया कार्यकरणम्, नान्यथेत्यर्थः ॥ योग्येतरान्वितस्वार्थे पदानां सामर्थ्ये पर्यायत्वेन सह प्रयोगानुपपत्तेरर्थमात्रे सामर्थ्यमिति शङ्कते—**नन्वेवमिति** ॥ पर्यायत्वमेवाह—**तथा हीति** । सर्वेषां पदानां संभूय संसर्गबोधजनकत्वाभ्युपगमान्न पर्यायत्व-मित्याह—**नैतत्सारमिति** । **एकस्मात्पदादिति** । सहकारिपदान्तरनिरपेक्षादित्यर्थः ॥ गोपदेनानयनसंसृष्टे स्वार्थेऽभिहित आनयतिपदं गोसंसृष्टस्वार्थं ब्रूयाच्चेत्, तर्हि पर्यायत्वम्, न चैवमिति; युगपदुभयोरेकसंसर्गबोधकत्वात्, इति समाध्य-न्तराभिधित्सया निरस्तमपि चोद्यं पुनरुत्थापयति—**ननु गोपदेति** । सामर्थ्यविशेषात् सर्वोऽपि संसर्गः किं न भातीत्यर्थः । वैषम्येणोत्तरयति—**अव्यभिचारादिति** । गामानय, गां चारय, इत्यादिप्रयोगेषु गोपदस्य गोत्वाव्यभिचारितया तदनुभवजनितसंस्कारभूयस्त्वाद्गोपदोच्चारणे गोत्वस्मरणम्, नेतरेषामित्यभिसन्धिः । विधान्तरेणान्विताभिधान-माक्षिपति—**नन्विति** ॥ किं पदानि पदान्तराभिहितेतरसंसृष्टं स्वार्थं प्रतिपादयन्ति ? उतानभिहितेतरसंसृष्टस्वार्थम् ? इति विकल्प्याद्यमनूद्य दूषयति—**अभिहितेनेति** । इतरेतराश्रयत्वं स्पष्टयति—गोत्व इति ॥ द्वितीये विशेषणभूतार्था-न्तराप्रतीतौ तद्विशिष्टप्रतीत्यनुदय इत्यर्थः ॥ आद्यं पक्षमादाय समाधत्ते—**नैष दोष इति** ॥ तर्हीतरेतराश्रयप्रसङ्ग इति यदुक्तम्, तत्राह—**क्रमेणेति** । तत्र हेतुमाह—**अव्यभिचारिण इति** ॥ पदानां पदार्थमात्रबोधकत्वे संसर्गबोध आकस्मिकः स्यादित्याशङ्क्याह—**अन्त्यपदेति** । एकैकपदोपलम्भजनितसंस्काराः संभूय सकलपदविषयामेकां स्मृतिं जनयन्ति, तस्यां च स्मृतावुपारूढानि पदान्यभिहितपदार्थसंसर्गबोधं जनयन्तीत्यविरोध इत्यर्थः ॥ "यश्चोभयोः समो दोषः परिहारोऽपि वा समः । नैकः पर्यनुयोक्तव्यस्तादृगर्थविचारणे ॥"

**ऋजुविवरणम्**

ननु अन्यसंसृष्टस्यार्थप्रतिपादकत्वमपि न संभवति; अन्यशब्देन हि पदान्तरोपस्थाप्यो विवक्षितः, नचासौ व्यवस्थितो लभ्यते; तदस्यानेकान्वितस्वार्थाभिधायकत्वदर्शनात् । नच तत्सर्वसंसृष्टस्वार्थाभिधायकत्वं संभवति; अव्यव-स्थितत्वाच्च, नचैकस्यैव परिग्रहे कारणमुपलभ्यते, तेन न पदार्थनियम इति चोदयति—**ननु गोपदस्यापीति** ॥ ननु इतरान्वितस्वार्थे शक्त्यभ्युपगमे गोशब्दोच्चारणे गोत्वप्रतीतिवत्सर्वेतरप्रतीतिः स्यादिति चोदयति—**ननु गोपदोच्चारण इति** ॥ गोशब्दो गोत्वप्रतीतिमेव करोति; इतरान्वये सर्वत्र तस्य व्यभिचाराभावेन संस्कारात्पदार्थत्वात्, इतरेषान्तु प्रतिप्रयोगम्, भिन्नत्वेन संस्काराभावादनियतत्वात्, अभिहितत्वे सत्येव तदन्विताभिधायकत्वमात्रसंस्कारकत्वमित्या-शङ्क्याह—**अन्वयव्यभिचारादिति** ॥

## पञ्चपादिका

विषम उपन्यासः; गोपदस्याभिधेयसम्बन्धे न नानाविधसामर्थ्यमुपलब्धम्। अतो युक्तैकरूपैव प्रतीतिः। शब्दान्तरार्थान्वये पुनः प्रतिविभक्ति प्रतिपदार्थान्तरं च प्रयोगभेदादन्यथा अन्यथा च सम्बन्धग्रहणकाल एवाऽऽवापोद्वापनिबन्धनः समन्वयो दृश्यते। तेन द्रव्य-गुण-क्रियाभिधायिभिः पदैः सम्बन्धयोग्यताभिधायिविभक्तिसंयुक्तैः प्रयोगैदम्पर्यवशादनियतः सम्बन्धो व्युत्पत्तिकाले निरूपितः। तथा च "वषट्कर्तुः प्रथमभक्षः" "तस्मात्पूषा प्रपिष्टभागः" इत्येवमादौ क्रियाशून्यानां समन्वयो दृश्यते। यस्तु कर्तव्य इति क्रियासम्बन्धः स समन्वयनिमित्तो न तन्निमित्तः समन्वयः। यत्तु तद्भूतानां क्रियार्थेन समाम्नाय इति सूत्रयामास जैमिनिः, तदपि सिद्धेषु रूपादिष्वर्थेषु वर्तमानानां सामानाधिकरण्याद्यर्थत्वेन समाम्नायः समुच्चारणमिति यतो दर्शितः समन्वयो विशेषण-विशेष्यत्वेनापि। क्रियार्थेनेति तु धर्मजिज्ञासोपक्रमात्प्रकृतोपयोगितया सूत्रितम्। तथा च भाष्यकारोऽपि "दृष्टो हि तस्यार्थः कर्मावबोधनमि"त्यर्थसद्भावमात्रे कथनीये कर्मावबोधनमिति प्रकृतोपयोगित्वेनैवोक्तवान्। तदेतदाह भाष्यकारः—यदपि शास्त्रतात्पर्यविदामनुक्रमणमित्यादिभाष्येण। अत एव पूर्वेण

## पञ्चपादिकाविवरणम्

पदार्थेष्वपि संसर्गप्रतिपादकेषु तुल्यौ चोद्य-परिहारौ। पदानामेव संसृष्टस्वार्थप्रतिपादनमन्विताभिधानं नाम। तदेवं कार्यमनपेक्ष्यैव भूतेऽप्यर्थे शब्दसामर्थ्यं सिद्धम्। तदेतत्सर्वमभिप्रेत्याह—**गोपदस्याभिधेयसम्बन्धेत्यादिना**॥

वेदेऽपि कार्यमनपेक्ष्यैव संसर्गप्रमितिरङ्गीकृतेत्याह—**तथाच वषट्कर्तुरित्यादिना**॥ ननु—कर्तव्य इति पदं तत्राप्यध्याहृत्य तेनैकवाक्यत्वोपगमेन वाक्यार्थः प्रमीयत इति, तत्राह—**यस्तु कर्तव्य इति**॥ ननु—सूत्रकारेणैव वृद्धव्यवहारानुसारिणा कार्यान्वितस्वार्थे शब्दसामर्थ्यं दर्शितम्, "तद्भूतानां क्रियार्थेने"ति, तत्राह—**यत्तु तद्भूताना-मित्यादि**॥ भाष्यकारेणैव गुणगुण्यादीनां विशेषणविशेष्यादिभावेन समन्वयो दर्शित इत्यर्थः। ननु—क्रियार्थेनेति-वचने कथं गुण-गुण्यादिसामानाधिकरण्यसम्बन्ध इति? अत आह—**क्रियार्थेनेति**॥ तथा च भाष्यकारोऽपीत्यारभ्यात

## तत्त्वदीपनम्

इति न्यायमभिसन्धायाह—**पदार्थेष्विति**॥ अभिहितान्वयवादिनेदमभिधानीयम्—किमत्रानभिहितानां संसर्गबोधकत्वम्? उताभिहितानाम्? नाद्यः; सदा प्रसङ्गात्, नापि द्वितीयः; पदार्थबोधस्य क्रमभावित्वादिति चोद्ये, एकैकेन पदेनैकैकपदार्थबोधे जाते सकलपदार्थबोधसंस्कारोत्थस्मृतौ भासमानाः पदार्थाः संसर्गं बोधयन्तीति वक्तव्यम्, ततश्चास्मान् प्रत्येवं न चोदनीयमित्यर्थः। अभिहितान्वयवादे अन्विताभिधानवादे च पदानां पदार्थप्रतीतिजनकत्वसाम्याद् मतसाङ्कर्यमित्याशङ्क्याह—**पदानामिति**॥ पदाभिहितपदार्थानामेव संसर्गबोधकत्वमित्यभिहितान्वयवादी मन्यते, पदान्येव पदार्थस्मृत्युत्पादनद्वारा संसर्गबोधकानीत्यन्विताभिधानवादी मन्यत इति विभागः। परमप्रकृतमुपसंहरति—**तदेवमिति**॥ उपवर्णितेऽर्थे टीकामवतारयति—**तदेतदिति**॥ भूतार्थमात्रदर्शनविभ्रमत्वात्, तथाच समन्वयो दृश्यत इत्यनुपपन्नमित्याशङ्क्याङ्गीकारविरोधान्मैवमित्याह—**वेदेऽपीति**॥ अङ्गीकारोऽसिद्ध इति शङ्कते—**ननु कर्तव्य इति**॥ भूतार्थसंसर्गेऽवगते नैरर्थक्यानुपपत्त्या कर्तव्यपदाध्याहारस्वीकरणात् क्रियान्वयं विनाऽपि संसर्गप्रमितिरङ्गीकृतेत्याह—**तत्राहेति**॥ सूत्रस्य पुंमतिप्रभवत्वान्न तद्बलादर्थनिश्चयः, ततश्च यत्तूक्तम्—"तद्भूतानामि"ति, तदनुपपन्नमित्याशङ्क्याह—**ननु सूत्रेति**॥ अनादिवृद्धव्यवहारानुरोधेन जैमिनिना सूत्रं प्रणीतम्, न तूत्प्रेक्षामात्रेणेत्यर्थः। सूत्रभावानभिज्ञो भवानित्याह—**तत्राहेति**॥ "यतो दर्शितः समन्वयः" इत्यत्र केनेति न ज्ञायते, इत्यत्राह—**भाष्यकारेणेति**। शाबरभाष्यकारेणेत्यर्थः। शुक्लः पटः, खण्डो गौरित्येवं विशेषण-विशेष्यभावेन समन्वयं दर्शितवानित्यर्थः। भाष्यवचनं सूत्रविरुद्धमिति शङ्कते—**ननु क्रियार्थेनेति**॥ धर्मविचारस्य प्रक्रान्तत्वात् तदनुसारेण तत्प्रतिपादकवाक्यसमन्वयमेवोचिवान्, न

## ऋजुविवरणम्

ननु क्रमेणोच्चरितपदेष्वितरपदार्थप्रतीतौ पुनरन्वितबोधो न स्यात्; पदाभावे प्रतीतेरित्याशङ्क्याह—**संभूयैकस्मृतीति**॥ **पदार्थेष्वपीति**। अभिहितस्यैव वाक्यार्थप्रतिपादकत्वम्; तत्रापि नैकैकस्य; एकैकप्रतीतिसमये वाक्यार्थबोधादर्शनात्, अतो वाक्यप्रतीतिसमये न पूर्वेषामवभासः; अनवभासमानानां च न हेतुत्वम्, बोधद्वयाङ्गीकारः इत्यादि सर्वं सममेवेत्यर्थः॥ ननु पूर्वं केवलपदार्थप्रतीतिः, पश्चादन्वितप्रतिपत्तावभिहितान्वय एव च स्यात्, नान्विताभिधानमित्याशङ्क्याह—**पदानामेवेति**॥ अभिहितान्वये पदार्थानामभिहितानामभिधीयमानानां वाक्यार्थहेतुत्वाद्वैषम्यम्। यदा तु अभिहितान्वयवादिन एवं वदन्ति—पदार्थाभिधानाऽवान्तरव्यापारेण पदान्येव वाक्यार्थप्रतिपत्तिं कुर्वन्तीति; तेषाम-

### पञ्चपादिका

**तन्त्रेणागतार्थत्वाच्छारीरकारम्भः । तत्र हि वेदस्य विवक्षितार्थत्वं स्वतः प्रामाण्यं स्वरूपे च विज्ञानोत्पत्तौ शब्दस्य सामर्थ्यमित्येतत्सर्वमवगतम् । क्रियार्थेन समाम्नाय इति तु धर्मजिज्ञासाप्रतिज्ञानुसारेण सूत्रितम् । इह पुन"स्तत्तु समन्वयादि"ति विशेषण-विशेष्यात्मकमपि गौणमपि सामानाधिकरण्यं विहायैकस्मिन्निरंशेऽधिकरणे"तत्त्वमसी"ति समन्वयो मुख्यः प्रदर्शितः । तथा च भगवान् पाणिनिरव्यतिरिक्ते प्रातिपदिकार्थमात्रे प्रथमां स्मरति, नाऽस्तिक्रियाकर्तर्येवातिरिक्तेऽर्थे तेन च कात्यायनस्य "अस्तिर्भवन्तीपरः" इति मतं नानुमन्यते। दृश्यते च 'फलिता अमी द्रुमाः' 'राज्ञोऽयं पुरुषः' इत्यस्तिक्रियाशून्यः समन्वयः, नात्रापि ये फलिता द्रुमास्ते सन्ति, यो राज्ञः पुरुषः सोऽस्तीति विवक्षितम्;**

### पञ्चपादिकाविवरणम्

एवेत्यतः प्राक्तनः स्पष्टार्थः ।। किंच किमिति जैमिनीयसूत्रवचनाद् वेदान्तानां कार्यनिष्ठत्वमिष्यते ? बादरायणसूत्रैर्ब्रह्मनिष्ठत्वमिष्यताम्, इत्याह—**अत एव पूर्वेण तन्त्रेणेति** ।। ननु—अर्थभेदाभावे कथं पृथगारम्भ इति ? तत्र विभागमाह—**तत्र हि वेदस्येत्यारभ्य मुख्यः प्रदर्शित** इत्यन्तेन ग्रन्थेन ।।

ननु—प्रातिपदिकार्थानामेकरसब्रह्मपरतयाऽन्वयेऽपि प्रथमाविभक्तेरव्यभिचारात् तदर्थकारकत्वान्वय इति, नेत्याह—**तथाच भगवान् पाणिनिरव्यतिरिक्त** इति ।। तत्र लिङ्ग-संख्यादयस्त्वर्थात्प्रतीयमाना अपि प्रज्ञानघन एवाद्वितीयमित्यादिशब्दविरोधादनिर्वचनीया भविष्यन्तीत्यर्थः । ननु—क्रियान्तरविरहेऽपि प्रातिपदिकार्थान्वये—"अस्तिर्भवन्तीपरः प्रयोक्तव्यः प्रथमपुरुषेगम्यमाने" इति कात्यायनस्मरणादस्त्यर्थनिष्ठः समन्वय इति, नेत्याह—**नास्तिक्रियाकर्तर्येवेति** ।। ननु—अस्तिक्रियामप्यपहाय समन्वयो न दृश्यत इति तत्राह—**दृश्यते च फलिता** इति ।। ननु

### तत्त्वदीपनम्

भूतसमन्वयाभावाभिप्रायेणेत्याह—**अत आहेति** ।। शारीरकारम्भसमर्थनस्यात्र कोऽवसरः ? इत्याशङ्क्य तात्पर्यमाह—**किञ्च जैमिनीयेति** । वेदान्तानां ब्रह्मणि तात्पर्यं निरूपयितुं शारीरकशास्त्रप्रारब्धं भगवता, तदनुपपन्नं विधिपरत्वे इत्यर्थः ।। "तद्भूतानामि"त्यत्र भूतार्थसमन्वयविवक्षायामपि न पृथगारम्भसिद्धिरिति शङ्कते—**नन्वर्थेति** ।। विधिवाक्यार्थनिरूपणाय पूर्वतन्त्रं प्रवृत्तम्, उत्तरं तु ज्ञानकाण्डवाक्यार्थनिरूपणायेत्याह—**तत्र विभागमिति** ।। प्रथमाविभक्त्या कर्ता तावत्प्रतीयते, कर्ता च क्रियाविशिष्टः, तथाच ब्रह्मणि क्रियान्वयसिद्धिरिति शङ्कते—**ननु प्रातिपदिकेति** । **तदर्थेति** । प्रथमाविभक्त्यर्थाविनाभूता याऽस्तिक्रिया, तत्कर्तृकारकत्वान्वय इत्यर्थः । प्रथमाविभक्तेः प्रातिपदिकार्थमात्रे विधानात् तद्बलात्कर्तृत्वसिद्धिरित्याह—**नेत्याहेति** । तथाऽपि लिङ्ग-संख्यादीनां प्रथमाविभक्तिसामर्थ्यादुपलभ्यमानत्वात्अद्वैतविरोध इत्याशङ्क्याह—**तत्रेति** । **अर्थादिति** । विभक्तिसामर्थ्यादित्यर्थः । विधान्तरेण वेदान्तानां क्रियानिष्ठत्वं शङ्कते—**ननु क्रियान्तरेति** । बाह्यक्रियाभावेऽपीत्यर्थः । प्रातिपदिकार्थान्वय उपगत इत्यर्थः, "सत्यं ज्ञानमि" त्यादेर्नास्त्यर्थनिष्ठत्वमपीति शङ्कायामाह—**अस्तिरिति** । अस्तिशब्दो धातुपरः । **भवन्तीपर इति** । लट्पर इत्यर्थः । प्राचामाचार्याणां भवन्तीशब्दो लट्संज्ञत्वेन प्रसिद्ध इत्यर्थः । प्रथमपुरुष इति मध्यमोत्तमपुरुषयोरुपलक्षणम् । प्रथमपुरुषकीर्तनं "शेषे प्रथमः" इति सूत्रव्याख्यानरूपत्वाद् वार्तिकस्य । **अगम्यमान** इति च्छेदः । वाक्ये क्रियावाक्ये क्रियान्तराभावे अप्रतीयमानोऽपि अस्तिर्लट्परः प्रथमपुरुषादिघटितः कल्प्यत इत्यर्थः । कर्तर्यपि समन्वय इत्याह—**नेत्याहेति** । अस्तिक्रियाया अव्यभिचारित्वात्सैष्टव्या अन्यथा समन्वयासिद्धिरिति शङ्कते—**नन्वस्तिक्रियामिति** । अदर्शनमसिद्धमित्याह—**तत्राहेति** । साकाङ्क्षत्वव्युदासार्थं तत्राप्यस्तिक्रिया कल्प्येति शङ्कते—**ननु तत्रेति** । अन्यथाऽपि निराकाङ्क्षत्वसिद्धेर्न तत्कल्पन-

### ऋजुविवरणम्

प्याकाङ्क्षादिवशेन विशिष्टार्थप्रतिपादकत्वम्, न तु वाचकत्वेनेति वैषम्यम् ।। ननु प्रातिपदिकार्थे प्रथमाविभक्तिस्मरणे कारकत्वसामर्थ्यलभ्यक्रियान्वयो न भवेत्, एकार्थत्वं वक्तुं न शक्यते; लिङ्ग-सङ्ख्यादीनामवर्जनीयत्वान्नाभिमतान्वयलाभ इत्याशङ्क्याह—**लिङ्ग-सङ्ख्यादयस्त्विति** ।। 'अस्तिर्भवन्तीपरः प्रयोक्तव्यः प्रथमपुरुषेऽगम्यमाने" इति । अयमर्थः—अस्तिः="अस् भुवी"ति धातुः; "इक्स्तिपौ धातुनिर्देशे" इति स्मरणात्, भवन्तीपरः=लट्पर इत्यर्थः । भवन्तीति संज्ञा लटः पूर्वाचार्याणाम् ।। एतदुक्तं भवति—क्रियानिष्ठमेव पदजातम्; विभक्तिसहितस्यैव प्रयोगात्, द्वितीयादिविभक्तियुक्तानां क्रियान्वयः प्रसिद्ध एव, प्रथमाविभक्तिरप्यस्ति क्रिया; कर्तरि स्मरणात्, तदस्तेः प्रयोगः कर्तव्यः, द्रुमाः

## पञ्चपादिका

अपि त्वेते द्रुमाः फलिताः, अयं पुरुषो राज्ञ इति सम्बन्धमात्रावसितं वाक्यम्। एवं सामान्यतः सिद्धस्य जगत्कारणस्य सर्वज्ञत्वादिस्वभावत्वे त्वंपदार्थस्य च ब्रह्मात्मतायां समन्वयो वेदान्तवाक्यानां सिद्धः, न तत्रास्तिक्रियाया वस्तुस्वरूपान्तर्वर्तिन्या अप्यनुप्रवेशो, दूरत एव बाह्यायाः॥

किञ्च "ब्राह्मणो न हन्तव्यः" इति प्रतिषेधवाक्यसमन्वये न क्रिया क्रियार्थो वाऽवगम्यते, किन्तु क्रियानिवृत्तिरेव नियमेन प्रतीयते। व्रतशब्दसमन्वयात्तु प्रजापतिव्रतादिषु "नेक्षेतोद्यन्तमादित्यमि"त्यादिष्वनीक्षणं मानसी संकल्पक्रिया प्रतीयते—'अनीक्षणं कुर्यात्,—नेक्षेऽहमिति संकल्पयेदिति, न नञः समन्वयमात्रात्, तस्य समन्वीयमानार्थाभावकरत्वात्।

## पञ्चपादिकाविवरणम्

तत्राप्यस्तिक्रियान्वयः कल्प्यतामिति, नेत्याह—न तत्रापि ये फलिता इति। कुत्र तर्हि वाक्यं पर्यवसितमिति, संबन्धमात्र इत्याह—अपि त्वेते द्रुमा इति। कथं पुनरत्र क्रियामपहाय संबन्धमात्रपर्यवसितं वेदान्तवाक्यमिति, तदाह—एवं सामान्यतः सिद्धस्येति। उक्तं तावत्पदानामर्थान्तरसंसर्गमात्रे सम्बन्धग्रहणात् क्रियामपहायाव्यतिरिक्तैकरसप्रातिपदिकार्थान्वयो युक्त इति। इदानीं क्रियान्वयाभिधानवादिनामपि भूतेऽर्थे निषेधवाक्यसमन्वयो वक्तव्य इत्याह—किंच ब्राह्मणो न हन्तव्य इति। ननु ब्राह्मणहननाभावोऽपि स्वयं क्रिया क्रियार्थो वेति? नेत्याह—न क्रिया क्रियार्थो वेति। प्राप्तक्रियानिवृत्तिलक्षणत्वादित्यर्थः। ननु-"नेक्षेतोद्यन्तमादित्यमि" त्यादावीक्षणविरोधिनी 'नेक्षे' इति संकल्पक्रिया विधीयते, एवं 'न हन्यामी' ति हननविरोधिनी संकल्पक्रियैव विधीयतामिति नेत्याह—व्रतशब्दसमन्वयादिति। अयमर्थः—संसृज्यमानाऽभावमेव मुख्यया वृत्त्या नञ्‌शब्दः प्रतिपादयति। अनुष्ठेयाभिधायिव्रतशब्दोपक्रमात्संसृज्यमानविरोधिनि क्रियान्तरे लक्षणया वर्तते, न तथेहापवादकं किंचिदस्ति, येन नञ्‌शब्दस्य संसृज्यमानविरोधिसंकल्पक्रियायां लक्षणा स्यादिति। ननु संसृज्यमानादन्यतद्विरोधिनोरपि मुख्य एव नञ्‌शब्द इति, नेत्याह—न नञः समन्वयमात्रादिति। अत्र प्राभाकरः प्रत्यव-

## तत्त्वदीपनम्

मित्याह—नेत्याहेति। दार्ष्टान्तिकमाक्षिपति—कथंपुनरिति। संबन्धाभावान्न संबन्धपर्यवसानमित्यर्थः। कारणमात्रस्य प्रसिद्धस्य सर्वज्ञत्वादिसंबन्धे त्वंपदार्थस्य च तत्पदार्थसंबन्धे पर्यवसानमित्याह—तदाहेति। निषेधवाक्यस्याक्रियार्थताया अनुक्तत्वात् "किंचे"त्येतदयुक्तमित्याशङ्क्य तात्पर्यमाह—उक्तं तावदिति। अत्यन्तभेदराहित्यमव्यतिरिक्तशब्दार्थः। तादात्म्यराहित्यमेकरसपदेनोच्यते। निषेधवाक्यस्य भूतार्थनिष्ठत्वमुक्तम्, तदसंभवीति शङ्कते—ननु ब्राह्मणेति। अहननस्य निवृत्तिरूपत्वात्क्रियार्थत्वमिति द्रष्टव्यम्। टीकापेक्षितंहेतुमाह—प्राप्तेति। अहननस्य क्रियानिवृत्तिरूपत्वान्न क्रियात्वम्; अत एव न क्रियासाधनत्वमपीत्यर्थः। प्रतिषेधवाक्यस्यापि संकल्पविधिपरत्वात् क्रियार्थत्वमस्खलितमित्याह—ननु नेक्षेतेति। दृष्टान्त-दार्ष्टान्तिकयोर्वैषम्यात् मैवमित्याह—नेत्याहेति। उपक्रमानुरोधेन "नेक्षेते" त्यस्य विधिपरत्वमुक्तम्, तत् कस्मात्? तदन्य-तदभाव-तद्विरुद्धानां नञः साधारणत्वादित्याशङ्क्याह—अयमर्थ इति। शक्तित्रयकल्पनाप्रसङ्गाद् न नञः साधारणत्वम्, किं त्वभाव एव तस्य मुख्योऽर्थ इत्यर्थः। कथं तर्हि क्रियापरत्वाभिधानं टीकायाम्? तत्राह—अनुष्ठेयेति। निवृत्तिपरत्वे उपक्रमभङ्गात्क्रियापरत्वमित्यर्थः। तर्ह्यत्रापि लक्षणया नञ्‌पदं संकल्पे वर्तताम्, तत्राह—तथेति। गवादिशब्दानामनेकार्थप्रतिपादकत्वदृष्टेर्नञोऽपि तथात्वं स्यादिति शङ्कते—ननु संसृज्यमानादिति। गत्यन्तराभावाद्गवादिशब्दानामनेकार्थत्वं न तथाऽत्रेत्याह—नेत्याहेति।

संकल्पविधिपरताया नञो निरस्तत्वाद् न च स्वभावेति ग्रन्थाऽनुपपत्तिरित्याशङ्क्य तद्व्यावर्त्यां शङ्कां

## ऋजुविवरणम्

सन्तीति गम्यमानत्वदर्शनात्. "व्रतशब्दसमन्वयादि"त्यनेन व्रतशब्दान्वयबलेन विरोधिक्रियाविधायकत्वम्, तदयुक्तम्; संसृज्यमानाभाव-तदन्यतद्विरोधिनामपि नञ्‌वाच्यत्वात्, तच्चास्त्यत्राप्यहननसंकल्पवाचित्वम्, इत्याशङ्क्याभिप्रायमाह—अयमर्थः संसृज्यमानेति॥

"स्वभावत एवे"त्ययुक्तं चोद्यम्; नञो मुख्यया वृत्त्याऽभाववाचकत्वं स्यात्; तत्त्वात्, तत्त्यागे कारणाभावस्याप्युक्तत्वात्, तेन न चोद्यमुपपद्यत इत्याशङ्क्यावतारयति—अत्र प्राभाकर इति॥ फलं प्रार्थ्यतेऽनेनेति फलसाधनमभिधीयत इति। कार्यबुद्धेर्वेति तन्मतानुसारेणोक्तम्॥ ननु प्रत्ययाभिहितेषु साधनान्वयेन तन्निषेधेऽनिष्टसाधनतायां निमित्तप्रवृत्त्युपरमहेतुत्वेनाभावपर्यवसितत्वे मुख्ये संभवति सति कथं तद्विरोधिपरत्वममुख्यमाश्रीयत इत्याशङ्क्याह—

## पञ्चपादिका

**नच स्वभावप्राप्तहन्त्यर्थानुरागेणेत्यादिभाष्यस्यायमर्थः—स्वभावत एव रागादिनिमित्ताच्छास्त्रमन्तरेणैव हननक्रिया प्राप्ता यदि नञाऽनुरज्यते, विशेष्यते, तदा भवत्यहननमिति। ततश्चाहननं कुर्यादिति वाक्यार्थः स्यात्, न 'हननं न कुर्यादि'ति हननक्रियानिवृत्त्यौदासीन्यम्। अतो न हन्यामिति मानसी संकल्पक्रियाऽपूर्वाऽभिहिता स्यात्। न चैतद्युक्तम्; नञः सम्बन्ध्युपमर्दरूपत्वात्। अनीक्षणे तु व्रतशब्दबलात्तथा समन्वयः, न नञः सामर्थ्यादित्युक्तम्॥**

**ननु नञर्थे नियोगः प्रतिषेधेषु, तेन यागाद्यनुष्ठानादिव नञर्थानुष्ठानान्नियोगः साध्यः, किमुच्यते क्रियानिवृत्त्यौ-**

## पञ्चपादिकाविवरणम्

तिष्ठते—अत्र त्रयोऽर्थाः प्रतीयन्ते—ब्राह्मणः, हननम्, प्रत्ययार्थश्चेति। तत्र न ब्राह्मणेन प्रतिषेधान्वयः; प्रत्यक्षविरोधात्। नच हननाभावं प्रतिपादयति; तस्य प्रवृत्तत्वात्। नापि प्रत्ययार्थाभावम्; फलप्रार्थनायाः प्रवृत्तिहेतोः कार्यबुद्धेर्वा प्रत्यक्षत्वात्, ततः स्वभावप्राप्तहन्त्यर्थानुरागेण तद्विरोधिनी संकल्पक्रियैव नञा प्रतिपाद्यते। सा च प्रत्ययेन विधीयते। नचाभावो नाम भावान्तरव्यतिरेकेण कश्चिदस्ति, येन तत्पर्यवसितं वाक्यं स्यात्। अतो भावान्तरविधिपरं वाक्यमिति, तदेतदाह—**स्वभावत एव रागादिनिमित्तादित्यादिना**॥

परिहरति—**नचैतद्युक्तमिति**॥ नचाभावस्तद्बुद्धिगोचरो निवर्तयितुं शक्यः। नच भावान्तरमेवाभावः; तस्य सप्रतियोगिकत्वात्। अभाव एव च नञो मुख्योऽर्थः; अर्थान्तर-विरोधिनोरभावसम्बन्धिनोर्लक्षणयाऽपि प्रवृत्तिसंभवे रूढिकल्पनायोगात्। ननु—"नाम धात्वर्थयोगे तु नैव नञ् प्रतिषेधकः। वदत्यब्राह्मणाधर्मावन्यमात्रविरोधिनौ॥" इत्यर्थान्तरेऽपि नञ्शब्दो दर्शितः, सत्यम्; तत्रापि मुख्यार्थान्वयेन लक्षणयाऽर्थान्तरेऽपि बुद्धिनियमो दर्शित इत्यविरोधः।

आह प्राभाकरः—हननाभावे नियोगः, ततश्च नियोगपर्यवसितं वाक्यमिति, तदाह—**ननु नञर्थे नियोग इति**॥

## तत्त्वदीपनम्

दर्शयति—**अत्र प्राभाकर इति**॥ आद्यं दूषयति—**तत्रेति**॥ धात्वर्थे नञः संबन्ध इति पक्षं निरस्यति—**नच हननेति**॥ उपस्थितं हननं न प्रतिषेध्यम्, क्रियायाः क्षणिकत्वेन स्वतो विनाशादित्याह—**तस्येति**॥ प्रतिपादयतीति पदमत्रानुषज्यत इति द्रष्टव्यम्। फलं प्रार्थ्यतेऽनेनेति **फलप्रार्थना,** फलसाधनत्वमित्यर्थः। स्वमतमनुसृत्याह—**कार्यबुद्धेरिति**॥ कस्तर्ह्यर्थः? इति वीक्षायामाह—**तत इति**॥ शास्त्रसंस्कारमन्तरेण रागादेव प्राप्तो यो हन्त्यर्थः, तदनुरागेणेत्यर्थः। कस्तर्हि प्रत्ययार्थः? इत्याह—**सा चेति**॥ इतोऽपि नाभावनिष्ठं वाक्यमित्याह—**न चाभावो नामेति**॥ भावस्यैवाभावान्न यस्य नञर्थत्वमिति यत्तूक्तं तत्राह—**न चाभाव इति**। अभावानुभवविरोधान्न तदपलाप इत्यर्थः अथाभावस्वरूपं न निराकुर्मः किं तु तस्य भावातिरेकमित्याशङ्क्याह—**न च भावान्तरमिति**॥ भवत्वभावस्तथापि कथं वाक्यस्य तन्निष्ठत्वम्? तत्राह—**अभाव एवेति**॥ तदन्य-तद्विरोधिनोरपि नञः प्रयोगात्कथमभावस्यैव मुख्यत्वम्? तत्राह—**अर्थान्तरेति**॥ वाच्याऽविनाभावस्य लक्षणानिमित्तत्वमङ्गीकृत्याह—**अभावेति**॥ अभाव एव नञो मुख्योऽर्थ इत्युक्तम्, तत्र वार्तिकविरोधं शङ्कते—**ननु नामेति**॥ नञ्पदं न निषेधकं चेत् किं तर्हि प्रतिपादयतीत्यत आह—**वदतीति**॥ अर्थान्तरे नञ्शब्दस्य वृत्तिमुक्तामङ्गीकरोति—**सत्यमिति**॥ कथं तर्ह्यभाव एवार्थस्तत्राह—**तत्रापीति**॥ **ननु नञर्थे नियोग** इत्यत्र नञा निर्दिष्टसंकल्पक्रियायां नियोगः शङ्कित इति शङ्का स्यात्, न च सा युज्यते पौनरुक्त्यात्, इत्याशङ्क्य तात्पर्यमाह—**आह प्राभाकर इति**॥ अभावस्य नियोगविषयत्वमङ्गीकृत्योक्तमिति द्रष्टव्यम्। अभावस्यापि क्रियातत्साधनवन्नियोग-

## ऋजुविवरणम्

**नचाभावो नामेति**॥ ननु अभाव एव नास्ति, कुतस्तदर्थत्वमित्याशङ्क्य परिहाराभिप्रायमाह—**नचाभाव इति**॥ ननु भावान्तरस्याभावबुद्धिगोचरत्वाङ्गीकारान्न बुद्धिविरोध इत्याशङ्क्याह—**नच भावान्तरमिति**॥ ननु भवत्वभाववाचित्वम्, तथाऽपि तदन्य-तद्विरोधिनोरपि वाच्यत्वं कल्प्यत इत्याशङ्क्याह—**अभाव एवेति**॥ ननु तदन्यतद्विरोधिनोरपि प्रयोगान्मुख्यत्वमित्याशङ्क्याह—**अर्थान्तर-तद्विरोधिनोरिति**॥ **"ननु नञर्थः"** इति चोद्यं पुनरुक्तम्—पूर्वमपि नञर्थस्यैव संकल्पस्यैव नियोगविषयत्वमुक्तम्, अत्रापि **नञर्थानुष्ठानादित्या**शङ्क्यावतारयति—**हननाभाव इति**॥ **ननु**—क्रिया-तत्साधनव्यतिरिक्ताभावस्यैव विधिनिर्वर्तकत्वमस्त्वित्याशङ्क्याभिप्रायमाह—**भावार्थो दध्यादिरिति**॥ **एवमिति**। पूर्वोक्तमुपजीव्योक्तमिति भाति; तदयुक्तम्; पूर्वग्रन्थे ह्यभावस्य विधिविषयत्वं निरस्तम्, अत्र तु—"एवमि"त्युक्ते तस्य

### पञ्चपादिका

दासीन्यं प्रतीयत इति ? वार्तमेतत् । नञर्थो हि नाम न क्रिया, नापि साधनम्, अपि तु येन संसृज्यते तस्याभावो न तत्सिद्धहेतुः । एवं प्रतिषेधस्य विधेरन्यत्वं सिध्यति । अन्यथा विधिरेव सर्वं स्यात् । तस्माद् संसृज्यमानाभावमात्रे प्रतिषेधवाक्यं पर्यवस्यति तत्र न विधिगन्धोऽपि विद्यते । तच्च संसृज्यमानं विधि-निमन्त्रणामन्त्रणाधीष्ट-संप्रश्नाभ्यनुज्ञानानामभावात्प्रतिपाद्यधर्मः प्रतिषिध्यमानक्रियाफलप्रार्थना प्रतिषेधवाक्ये लिङाद्यर्थः ।

### पञ्चपादिकाविवरणम्

दूषयति—**वार्तमेतदिति** । भावार्थो दध्यादिगुणो वा विधिविषयतया तन्निर्वृत्तिहेतुः, न हननप्रागभावः; अनादिसिद्धतया नियोगस्याननुष्ठेयत्वात् । दूषणान्तरमाह—**एवं प्रतिषेधस्येति** ।। विधिप्रतिषेधविभागव्यवहारो लौकिको न स्यादित्यर्थः । तस्मान्न कार्यपर्यवसितमित्युपसंहरति—**तास्मात्संसृज्यमानेति** ।।

प्रकृत्यर्थस्य हननस्यैव नञ्शब्दान्वयमङ्गीकृत्य भावोऽर्थान्तरं वा न विधेयमित्युक्तम्; इदानीं प्रत्ययार्थ एव नञा सम्बध्यते, प्रकृत्यर्थस्यान्योपसर्जनत्वात्प्रधानेन चेतरेषामन्वयादित्याह—**तच्च संसृज्यमानमिति** ।। प्रत्यक्षादिव्यवहारेषु पुरुषान्तरनिबन्धनत्वाभावाद्विध्यादीनामसंभवे । **प्रतिपाद्यधर्म** इत्यनुष्ठेयधात्वर्थधर्म इत्यर्थः । **प्रतिषिध्यमानक्रियाफलेति** ।। निवर्त्यमानक्रियाफलेत्यर्थः । प्रत्ययार्थनिषेधेऽपि प्रकृत्यर्थो निवर्तत इति । प्राथ्यंत इति

### तत्त्वदीपनम्

निर्वर्तकत्वात्तद्विषयत्वं युज्यते, ततश्च "वार्तमि"त्येतदेव वार्तमित्याशङ्क्याह—**दूषयतीति** ।। दूषणमेव स्पष्टयति—**भावार्थ इति** । विधिविषयतयेति । नियोगविषयतयेत्यर्थः । **अननुष्ठेयत्वादिति** ।। अननुष्ठेयत्वप्रसङ्गादित्यर्थः । यागादिः स्वयं कृत्या साध्यः सन्नियोगकारणतां भजते, न तथाऽभावस्य कृतिसाध्यता अनादित्वादित्यर्थः ।। सर्वस्य विधिनिष्ठत्वमिष्टमेवेत्याशङ्क्याह-**विधिप्रतिषेधेति** ।। न तत्र विधिगन्ध इत्यत्र विधिशब्दार्थं दर्शयन् व्याचष्टे—**तस्मादिति** ।।

नञोऽभावार्थतायाः सिद्धत्वात्तच्च **संसृज्यमानमित्यादेर्नैष्फल्यमित्याशङ्क्याह—प्रकृत्यर्थस्येति** ।। भवतु उपसर्जनत्वम्, कथं प्रत्ययार्थेन संबन्धः ? तत्राह—**प्रधानेनेति** ।। विधिनिमन्त्रणादीनामसंभवे हेतुमाह—**प्रत्यक्षादीति** ।। अनुष्ठातृव्यतिरिक्तपुरुषान्तरसंभवे विध्यादिकं दृष्टम्, न च प्रत्यक्षानुमानपूर्वकव्यवहारस्यानुष्ठानव्यतिरिक्तपुरुषान्तरजन्यता, ततो न विध्यादिरित्यर्थः । हननस्याप्रतिपाद्यत्वात् प्रतिपाद्यधर्म इति कथमुक्तम् ? तत्राह—**अनुष्ठेयेति** ।। प्रत्ययार्थस्य प्रतिषिध्यमानत्वात् कथं प्रतिषिध्यमानक्रियेत्युक्तम् ? तत्राह—**प्रतिषिध्यमानेति** ।। ननु लिङाद्यर्थस्य प्रतिषिध्यमानत्वात् कथं क्रियाया निवर्त्यमानत्वमित्याशङ्क्यार्थान्निवृत्तिरित्याह—**प्रत्ययार्थेति** ।। प्रार्थनाया लिङर्थत्वं सिद्धान्तविरुद्धमित्याशङ्क्याह—**प्राथ्यंत इति** ।। अक्षरार्थमभिधाय वाक्यार्थं दर्शयति—**ततश्चेति** ।। निषेधप्रकारम-

### ऋजुविवरणम्

विषयत्वाभावे विधिप्रतिषेधभेद इति प्रतिभाति, तदा विरोधः; तेनैव भेदाभावसिद्धेरित्याशङ्क्यावतारयति—**दूषणान्तरमिति** ।। **एवमिति** ।। औदासीन्यमात्रार्थत्व इत्यर्थः ।। ननु—विधिप्रतिषेधभेदो मा भूत्; सर्वत्रानुष्ठेयस्यैव विषयत्वं भवतु, को दोषः ? इत्याशङ्क्य व्याचष्टे—**विधिप्रतिषेधविभागेति** ।। **"तस्मात्संसृज्यमान"** इत्युपसंहारो न युक्तः; तस्याप्रतिपाद्यत्वात्, असमाप्तत्वात्, उत्तरत्र तत्प्रतिपादनात्, इत्याशङ्क्यावतारयति—**तस्मान्न कार्येति** ।। **"तच्च संसृज्यमानमि"**त्यनेन किमधिकमुच्यते ? पूर्वग्रन्थे संसृज्यमानाभावार्थत्वान्न कार्यत्वमित्युक्तम्, अत्रापि संसृज्यमानाभावार्थत्वात्तस्य चाननुष्ठेयत्वान्न कार्यपरत्वमित्युक्तम्, अतः पुनरुक्तम् । ननु—संसृज्यमानाभावार्थत्वमेव तत्रोक्तम्, न तु संसृज्यमानस्वरूपं निर्दिष्टम्, अत्र तन्निरूपणं क्रियत इति भेदः, निष्फलत्वात्तत्रापि संसृज्यमानस्यापेक्षितत्वेन योग्यत्वेन लब्धत्वात्पुनरुक्त इत्याशङ्क्यावतारयति—**प्रकृत्यर्थस्य हननस्यैवेति** ।। ननु—विध्यादीनां लिङर्थत्वात्कथं **"तेषामसंभवः ?"** इति टीकाकारोक्तमित्याशङ्क्य हेतुमाह—**पुरुषान्तरनिबन्धनत्येति** ।। **प्रतिपाद्यधर्म** इति न युक्तम्; निषेधवाक्ये नञर्थस्यैव प्रतिपाद्यत्वात् । न हि स्वेनैव स्वस्यान्वयः, नापि प्रतिपाद्यशब्देन प्रतीयमानत्वं विवक्षितम्; ब्राह्मण-धात्वर्थयोरुभयोरपि प्रतीयमानत्वेनोभयधर्मत्वप्रसङ्गादित्याशङ्क्य व्याचष्टे--**प्रतिपाद्यधर्म इति** । **अनुष्ठेयेति** ।। **"प्रतिषिध्यमाने"**ति व्याहतम्; धात्वर्थधर्मस्य नञाऽन्वयात्तदन्वयेन विना क्रियानिषेधानुपपत्तेः, "फलप्रार्थना लिङाद्यर्थः" इत्यनेन लिङर्थस्य निषेधेऽन्वयप्रतीतेश्च विरोध इत्याशङ्क्याह—**निवर्त्यमानक्रियेति** ।। **ननु—विरुद्धं** लिङर्थस्य निषेधे क्रियानिवर्त्यत्वाभिधानमिति, तत्राह—**प्रत्ययार्थनिषेधेऽपि प्रकृत्यर्थ इति** ।। ननु—फलप्रार्थनेति फलरागः

### पञ्चपादिका

तेन तदभावः प्रतिषेधार्थः, स च प्रागभावः स्वभावसिद्धः । तस्मात्संस्कारोद्बोधनिमित्तसन्निधावपि तत्प्रतिबन्धे प्रयत्न आस्थेयः । स च यद्यपि साध्यः; तथाऽप्यन्वय-व्यतिरेकगम्यो न शब्दार्थः; तत्प्रतिपादकपदाभावाच्च, एकवाक्ये संसृष्टपदार्थव्यतिरेकेणान्यत्र वाक्यार्थत्वाभावाच्च । अतो यश्चार्थादर्थो न स चोदनार्थः । वाक्यन्तु क्रियाशून्यमेवावसितम् । न साध्यं किञ्चित्तेन विषयीकृतम् । औदासीन्यमात्रावसितत्वात्तस्य ॥

### पञ्चपादिकाविवरणम्

प्रार्थना फलसाधनमित्यर्थः । ततश्च हननस्य यदिष्टसाधनत्वं प्रवर्तकम्, तदेव प्रत्ययेनानूद्य प्रतिषिध्यते—ब्राह्मणहननमिष्टसाधनं न भवतीति । ननु—प्रत्यक्षमिष्टसाधनत्वं हननस्य न, अदृष्टाविरोधिदृष्टप्रयोजनस्येष्टशब्दत्वात्, इदमदृष्टाविरोधिदृष्टसाधनं न भवतीत्यर्थः । सर्वत्र चार्थानर्थसंयोगादनर्थादधिकोऽर्थः पुरुषार्थ इत्युच्यते, अर्थाच्चाधिकोऽनर्थोऽपुरुषार्थ इति, तत्र पुरुषार्थसाधनं न भवति हननमित्युक्तेऽनर्थादधिकोऽर्थो नास्तीत्युक्तं भवति । ततश्चार्थादनर्थस्याधिक्यादर्थादनर्थमित्युक्तम् । तदेवं प्रत्ययार्थप्रतिषेधस्यानुष्ठेयत्वं सिद्धमित्याह—**स च प्रागभाव इति** । किं तर्ह्यनुष्ठेयमिति ? पुनः पुरुषार्थसाधनविभ्रमाद्रागाद्युद्बोधप्रसक्तौ तन्निमित्तप्रध्वंसोऽनुष्ठेय इत्याह—**तत्संस्कारोद्बोध इति** ॥ स एव तर्हि वाक्येन विधीयतामिति, नेत्याह—**स च यद्यपि साध्य इति** ॥ हननमिष्टं न भवत्यनिष्टं चेत्यवगतौ हननोद्बोधनिमित्तनिरोधस्यान्वयव्यतिरेकाभ्यामेवानुष्ठेयत्वाद् न तत्र शब्दापेक्षा । निमित्तनिरोधकर्तव्यतायां वाक्यस्यासामर्थ्याच्चेत्याह—**तत्प्रतिपादकेति** ॥ ननु—अनिष्टसाधनविषयशब्दसामर्थ्याच्चेन्निमित्त-

### तत्त्वदीपनम्

भिनयति—**ब्राह्मणहननमिति** ॥ हननस्येष्टसाधनताया अनुभूयमानत्वात्कथं तन्निषेधः ? इति शङ्कते—**ननु प्रत्यक्षमिति** ॥ इष्टसाधनशब्दार्थाऽनभिज्ञो भवानित्याह—**नादृष्टेति** । इष्टमिति शब्दो यस्य तदिष्टशब्दम्, तस्य भावस्तत्त्वम्, तस्मादित्यर्थः ॥ इष्टशब्दार्थमभिधाय वाक्यार्थमाह--**इदमदृष्टेति** ॥ ननु सर्वस्यानर्थसंभिन्नत्वाद् हननमनर्थसंभिन्नमपीष्टसाधनमिति न तत्प्रतिषेधः साधीयानित्याशङ्क्याह—**सर्वत्रेति** ॥ भवत्वेवम्, ततः किमित्यत आह—**तत्र पुरुषार्थेति** ॥ पुरुषार्थाऽपुरुषार्थयोरेवं विभागो यस्मात्तस्मादित्यर्थः । तथापि हननस्याऽनर्थसाधनत्वाप्रतिपत्तेर्न निवृत्तिरित्याशङ्क्याह—**ततश्चेति** ॥ कुतस्तर्हीष्टसाधनताप्रतिपत्तिनिरोधः ? इत्याशयेन शङ्कते—**किं तर्हीति** ॥ निमित्तनिरोधस्याऽनुष्ठेयत्वात्तस्य विधेयत्वं स्यादिति शङ्कते—**स एवेति** ॥ **अन्वय-व्यतिरेकाभ्यामिति** । निरोधस्यान्वयव्यतिरेकायत्तत्वे न शाब्दत्वमित्युक्तम्, तत्र किंविषयावन्वय-व्यतिरेकौ ? इत्याकाङ्क्षायामाह—**हननमिति** ॥ **हननोद्बोधेति** । हननसंस्कारोद्बोधनिमित्तरागादिनिरोधस्येत्यर्थः । इतोऽपि निरोधकर्तव्यता न वाक्यगम्येत्याह—**निमित्तेति** ॥ अनर्थस्यापि वाक्यगम्यत्वं स्यादिति शङ्कते—**नन्वनिष्टेति** । अतिप्रसक्तेर्नैतदित्याह—**नेत्याहेति** ॥ नञर्थे नियोगस्य निरस्तत्वादथ पुन-

### ऋजुविवरणम्

प्रतीयते, कथं तस्य लिङर्थत्वम् ? इत्याशङ्क्य व्याचष्टे—**प्रार्थ्यत इति प्रार्थनेति** ॥ फलार्थं साधनेऽपि रागोऽस्त्येवेति तात्पर्यम् । यद्वा—फलं प्रार्थ्यतेऽनेनेति **फलप्रार्थनेति** । कथं तर्हि वाक्यार्थः संपद्यत इति ? तदाह—**ततश्च हननस्येति** ॥ ननु—हनने सुखं दृश्यते, कथं निषेधः ? इति चोदयति—**ननु प्रत्यक्षमिति** ॥ इष्ट इति शब्दो यस्य तदिष्टशब्दः, तस्य भाव इष्टशब्दत्वम्, तस्मादिति । ननु—अदृष्टाविरोधित्वं प्रयोजकं न भवति; अविरोधिन्यप्यपुरुषार्थत्वदर्शनात्, विरोधिन्यपि पुरुषार्थत्वादर्शनान्न तत्प्रयोजकम्; तेन यस्येष्टसाधनत्वं नास्ति, अनिष्टं वा साधयेत्, तदनिष्टसाधनमिति विभागः क्रियताम्, किं विरोधाविरोधेन ? इत्याशङ्क्याह—**सर्वत्रेति** ॥ तर्हि पुरुषार्थापुरुषार्थविवेको न स्यात्; शबलितत्वादित्याशङ्क्याह-**अनर्थादधिकोऽर्थ इति** ॥ एवं नात्रानिष्टसाधनत्वनिश्चयः; इष्टसाधनत्वनिषेधस्य विध्यायत्तत्वात्, अनर्थाधिक्याभावादित्याशङ्क्याह—**तत्र पुरुषार्थसाधनमिति** । स्वरूपमात्रस्य निषेद्धुमशक्यत्वादित्यर्थः ॥ ननु—सिद्धेऽनर्थसाधनत्वे ततोऽर्थोऽधिको नास्तीति वक्तुं शक्येत, तदेव न सिद्धमित्याशङ्क्याह—**ततश्चार्थादनर्थस्येति** ॥ **"तस्मादि"**त्युपसंहार इवाभाति, स न युक्तः; नहि संस्कारोद्बोधकस्य निरोधकरणं पूर्वं साधितम्, येन तदुपसंह्रियेत इत्याशङ्क्यावतारयति—**किं तर्ह्यनुष्ठेयमितीति** ॥ **"अन्वय-व्यतिरेकगम्यः"** इत्युक्तम्; तत्कथं निमित्तनिरोधस्यान्वय-

### पञ्चपादिका

**अथ पुनर्नञर्थविषयो नियोगएव प्रतिषेधेऽपि वाक्यार्थ इत्यभिनिवेशः, भवतु; तथाऽपि प्रतिषिध्यमानक्रियानिवृत्त्या स सिध्यति, क्रियोपादाने च तत्फलप्रार्थनैव हेतुरिति तत्कारणप्रतिबन्धे प्रयत्नास्थानान्नियोगसिद्धिः। तच्चान्वयव्यतिरेकाव-**

### पञ्चपादिकाविवरणम्

निरोधः, सोऽपि तर्हि शब्दार्थ इति, नेत्याह—**यश्चार्थादर्थ इति** ॥ अङ्गीकरोति—**अथ पुनरिति** ॥ दूषयति—**भवतु तथापीति** ॥ तथाऽप्यनुष्ठेयांशस्यान्वय-व्यतिरेकसिद्धत्वाच्छब्दो नानुष्ठेयनियोगपर्यवसित इत्यर्थः। ननु—प्रत्ययेनापूर्वं प्रतिपाद्यते, तत्कथमननुष्ठेयं स्यात्? क्वैतद् गृहीतसम्बन्धम्? न तावल्लोके; तस्यादर्शनात्। ननु—स्वर्गकामिनो यागकर्तव्यता स्वर्गसाधनत्वमन्तरेणानुपपन्ना। तच्च साधनत्वं क्षणभङ्गिनः कर्मणो मध्यवर्तिकार्यमन्तरेणानुपपन्नमिति—श्रुतार्थापत्त्याऽपूर्वं गम्यते, तत्र शब्दस्य सामर्थ्यं गृह्यत इति, सोऽयं बकबन्धः। शब्दाल्लौकिकसामर्थ्यानुसारेण क्रियाकर्तव्यताऽभिहिता चेत्पुनस्तत्सामर्थ्यलब्धेऽपूर्वे किमिति सम्बन्धो गृह्यते? अथ नाभिहिता क्रियाकर्तव्यता, न तर्ह्य-

### तत्त्वदीपनम्

रित्याद्यनुपपन्नमित्याशङ्क्य दूषणान्तराभिधित्सया प्रागुक्तस्याभ्युपगम इत्याह—**अङ्गीकरोतीति** ॥ अन्वयव्यतिरेकसिद्धेऽप्यवहननादौ यथा विधिस्तथाऽत्रापि स्यात्, तथा च भवतु तथापीत्यदूषणमित्याशङ्क्याह—**दूषयतीति**। दूषणप्रकारमेवाह—**तथापीति**। तत्र नियमापूर्वस्यालौकिकस्य सम्भवाद् विधिर्युज्यते, न तथाऽत्रेत्याशयः। नियोगाभिधायित्वेन लिङादीनां प्रतिपन्नत्वात्कथमत्र तदप्रतिपत्तिरिति शङ्कते—**ननु प्रत्ययेनेति** ॥ किं लोके तथा प्रतिपन्नत्वम्? उत वेदे? इति विकल्पयति—**क्वैतदिति** ॥ आद्यं दूषयति—**न तावदिति** ॥ द्वितीयमुत्थापयति—**ननु स्वर्गेति**। तृप्तिकामस्य तदसाधनपर्वतारोहणादावप्रवृत्तिवद्यागस्य स्वार्गासाधनत्वेनात्र प्रवृत्त्यनुपपत्तिरित्यर्थः ॥ भवतु तर्हि यागस्य स्वर्गसाधनत्वमिति चेत्, तत्र वक्तव्यं किं साक्षात्साधनत्वम्? उत व्यवधानेनेति? तत्र नाद्य इत्याह—**तच्चेति**। **मध्यवर्तीति**। कर्मस्वर्गमध्यवर्त्तीत्यर्थः तस्माद् द्वितीयपक्ष आश्रयणीय इत्याह—**इति श्रुतेति**। **श्रुतार्थापत्त्येति**। श्रुतस्वर्गसाधनतानुपपत्तेरित्यर्थः ॥ प्रत्ययस्य किं क्रियाकर्तव्यताऽभिधायित्वं लोकेऽवगतम्? उत न? तत्राद्यस्तावदसमञ्जस इत्याह—**सोऽयमिति**। **बकबन्ध इति**। बकबन्धसमानन्याय इत्यर्थः। बकग्रहणे क उपाय इति केनचित्पृष्टे खतरदिनकरसंपर्कात्तन्मस्तकनिहितनवनीतबिन्दुभिर्नयनयोः पूर्णतायां तद्ग्रहणं सुकरमिति कश्चित्तुच्छमतिः प्रतिवक्ति, न च तदुपपद्यते, वकग्रहणमन्तरेण तन्मस्तके नवनीतप्रक्षेपानुपपत्तेः, तस्मिंश्च परिगृहीते तत्प्रक्षेपोऽपि मुधा, तथा च लौकिकव्युत्पत्त्यनुरोधेन क्रियाकर्तव्यता प्रत्ययाभिहितायाम् अपूर्वेण संगतेर्ग्रहणोपपादनमसमञ्जसमित्यर्थः ॥ द्वितीयमुत्थापयति—**अथ नाभिहितेति** ॥ क्रियाकर्तव्यताया अप्रतिपत्तौ तदनुपपत्त्या नापूर्वप्रतिपत्तिरिति न तत्र संगतिसंवित्तिसंभव इत्याह—

### ऋजुविवरणम्

व्यतिरेकगम्यत्वम्? नहि तत्कर्तव्यताबोधकावन्वय-व्यतिरेकौ स्तः; तथा कस्यान्वय-व्यतिरेकाभ्यामिति न ज्ञायते; विशेषानुपादानात्, इत्याशङ्क्य दर्शयति—**हननमिष्टमिति** ॥ अनुष्ठेयाभावे नियोगाङ्गीकारोऽपि न दोषायेत्यभिप्रायेणाह-**अङ्गीकरोतीति** ॥ "**तथाऽपी**"त्यनेनैतदुक्तम्—क्रियानिर्वृत्तिमात्रेण यदि नियोगसिद्धिः, तर्ह्यनुष्ठानाभाव इति। तर्हि क्रियानिवृत्तेरनुष्ठेयत्वमित्याशङ्क्याह—**क्रियोपादाने चेति**। (टीकायाम्) क्रियानुष्ठाने यच्च निमित्तमिष्टं फलसाधनत्वम्, तन्निषेधे क्रिया निवर्तत एव; पुनरपि भ्रान्त्या फलसाधनत्वेन प्रवृत्तिप्रसक्तावपि न क्रियानिवृत्तेरनुष्ठेयत्वं रागाद्युद्बोधकनिमित्तनिरोधे क्रियानिवृत्तिसिद्धेरित्यर्थः ॥ निमित्तनिरोध एवानुष्ठेय इत्याशङ्क्य, परिहृतम्—**तच्चान्वयेति** ॥ तच्चेति प्रयत्नस्थानं निर्दिश्यते, एवमपि स्वाभिमतसिद्धनियोगनिष्ठत्वस्य निषेध्यत्वात् तदभावे नियोगस्यानुष्ठेयत्वेनाननुष्ठेयकार्यान्वयहानेन सिद्धेऽर्थे प्रामाण्यासिद्धेरित्याशङ्क्य व्याचष्टे—**तथाप्यनुष्ठेयांशस्येति** ॥ "**किं तद् गृहीतसंबन्धमि**"त्यादिनियोगनिराकरणचर्चायां व्यक्तमिति नेह प्रतन्यते ॥

**श्रुतार्थापत्त्येति** ॥ श्रुतस्वर्गसाधनत्वानुपपत्त्यनुसन्धानेनेत्यर्थः ॥ अवगतब्रह्मणोऽपि संसारदर्शनाद् ज्ञानसाध्यप्रयोजनसिध्यभावाद्विध्यनङ्गीकरणं न युक्तम्; प्रयोजनासिद्धेः, अतो विधिरङ्गीकरणीय इति चोद्यस्य "**नावगतब्रह्मात्म-**

### पञ्चपादिका

**सेयमिति पूर्वोक्तान्मार्गान्न विशिष्यते। तदेवं वृद्धव्यवहारानुसारेणैव समन्वयानुसरणे सति तद्गम्यं ब्रह्म न धर्मवच्चोदनागम्यम्। दर्शितानि च वेदान्तवाक्यानि कारणसामान्ये सिद्धे तद्विशेषावगमाय समन्वितानि—"यतो वा इमानि भूतानि जायन्ते" इत्यादीनि तत्त्वमसीत्यादीनि च।**

**यत् पुनरुक्तम्—प्रतिपन्नब्रह्मात्मभावस्यापि पूर्ववत्संसारित्वदर्शनान्न रज्जुस्वरूपकथनवदर्थवत्त्वमस्य, ततो न तन्मात्रे तस्य पर्यवसानमिति, अत्रोत्तरम्—नावगतब्रह्मात्मभावस्येत्यादि॥ अस्यायमर्थः—न कर्मनिमित्तस्तावच्छरीरसम्बन्धः; इतरेतराश्रयदोषात्क्रियादिरहितत्वाच्च चैतन्यस्य। अनादित्वेऽप्यन्धपरम्परावदप्रतिष्ठत्वात्। तन्निमित्तत्वे च पुत्रादिशरीरेष्विव गौणत्वप्रसङ्गात्, तथाऽनुभवाभावात् प्रसिद्धगौणत्वप्रकारासम्भवात्, पुत्रादिशरीरेणेव स्वशरीरेणापि प्रमातृत्वाभावप्रसङ्गात्। पारिशेष्यादविद्यानिमित्तः शरीरसम्बन्धः। तस्यां च निवृत्तायां तत्सम्बन्धनिवृत्तौ कथं पूर्ववत्तन्निमित्तः सुखदुःखानुभवः?**

### पञ्चपादिकाविवरणम्

पूर्वमेव लभ्यत इति कुतः सम्बन्धग्रहः? ननु—यागकर्तव्यताऽभिहिताऽनुपपन्ना साऽपूर्वाभिधानमन्तरेणेति, तर्हि तदप्यनुपपन्नम्; शरीरेन्द्रियविषयसम्बन्धमन्तरेण स्वर्गस्यासिद्धेः। अतः प्रत्ययेन शरीराद्यभिधानं स्यात्, अर्थापत्तिगम्यत्वान्न शब्दापेक्षेति चेत्, अपूर्वेऽपि तुल्यम्। तस्माद्धात्वर्थकर्तव्यतालक्षणमिष्टसाधनमेव प्रत्ययार्थ इति। **तदेवं वृद्धव्यवहारानुसारेणे**त्यारभ्यात्रोत्तरमित्यतः प्राक्तनः स्पष्टार्थः। प्रथमोत्पन्नं शाब्दज्ञानं तावन्न विधीयते, तत्सन्तानश्च सुखानुभवकामस्य न विधेयः; ताभ्यामेव च स्वयं प्रवृत्ताभ्यामपरोक्षज्ञानमुत्पद्यते। तदेवमुत्पन्नापरोक्षज्ञानमधिकृत्योत्तरमाह—**नावगतब्रह्मात्मभावस्येति**। ननु—कर्मादिनिमित्तः शरीरसम्बन्धः, ततश्च संसारः, किमपरोक्षज्ञानेन? अत आह—**न कर्मनिमित्तस्तावदि**त्यादिना **सुखदुःखानुभव** इत्यन्तेन ग्रन्थेन॥

### तत्त्वदीपनम्

**न तर्हीति**॥ आद्यं पक्षमेवादाय शङ्कते—**ननु यागेति**॥ अतिप्रसक्तेर्नैतदित्याह—**तर्हि तदपीति**॥ अनन्यलभ्यस्य शब्दार्थत्वं दृष्टम्, शरीरादिसंबन्धस्यान्यथासिद्धत्वान्न प्रत्ययार्थत्वप्रसक्तिरिति शङ्कामुद्भाव्य दूषयति—**अर्थापत्तीति**॥ 'यश्चोभयोः समो दोषः' इति न्यायमनुसृत्याह—**अपूर्वे इति**॥ कस्तर्हि प्रत्ययार्थः? इत्यत्राह—**तस्मादिति**॥ ब्रह्मावगतौ सत्यामपि संसारस्यानुभूयमानत्वाद् नावगतब्रह्मात्मभावस्येत्ययुक्तम्, तादृग्ज्ञानस्य च विध्यायत्तत्वात्तन्निरसनमप्ययुक्तमित्याशङ्क्याह—**प्रथमेति**। अधीतवेदस्य गृहीतसंगतिकस्य श्रवणमात्रादेव प्राथमिकज्ञानोत्पत्तिसंभवान्न तदर्थो विधिरेष्टव्य इत्यर्थः। नापि संताने विधिरित्याह—**तत्संतान इति**॥ ज्ञानस्याज्ञाननिवर्तकत्वनियमात्तदकार्यशरीराद्यनिवर्तकत्वम्, ततश्च ज्ञानवैयर्थ्यमिति शङ्कते—**ननु कर्मेति**॥ शरीरसंबन्धमन्तरेण कर्मसंबन्धस्यानुपपत्तेर्न तन्निमित्तः शरीरसम्बन्ध इत्याह—**अत आहेति**॥ तर्हि शरीरसंबन्धपुरःसर एव कर्मसंबन्धोऽस्त्वित शङ्कायामुक्तमि**तरेतरेति**। कर्मसंबन्धसिद्धौ तन्निमित्तः शरीरसंबन्धः सिद्धचेत्, तस्मिंश्च सिद्धे तत्सिद्धिरिति इतरेतराश्रयत्वमित्यर्थः। कौटस्थ्यविरोधादपि न परमार्थतः कर्मादिसंबन्ध इत्याह—**क्रियेति**॥

### ऋजुविवरणम्

**भावस्ये**"ति परिहारो न युक्तः; संसारदर्शनविरोधादित्याशङ्क्य साभिप्रायमवतारयति—**प्रथमोत्पन्नं शाब्दज्ञानमिति**॥ इतरेतराश्रयादिति टीकायामुक्तम्—**कर्मणि सति देहग्रहणम्, देहग्रहणे सति कर्मेति**॥

ननु पूर्वपूर्व-कर्मभिरुत्तरोत्तरदेहग्रहणे नेतरेतराश्रयमित्याशङ्क्याह—**अनादित्वेऽपीति** (टीकायाम्)॥ ननु शास्त्रेण कर्मनिमित्तत्वं प्रतीयते, कथमन्धपरम्परेति? तत्राह—**पुत्रादिशरीरेष्विवेति**॥ अहंमानो गौणः स्यादित्यर्थः। भवतु गौणत्वमिति, नेत्याह—**तथानुभवेति**॥ ममेति पुत्रादौ प्रतीतिर्न तथाऽत्रेति भावः॥ ननु भेदानुभवाभावेऽप्यन्यत्रान्यशब्दप्रयोगाद्गौणत्वं निश्चीयत इत्याशङ्क्याह—**प्रसिद्धगौणत्वेति**॥ ननु मुख्यज्ञानपूर्वकत्वाभावेऽपि राजशब्दादावन्यत्रान्यशब्दत्वेन गौणत्वनिश्चयो दृष्टः, तथात्रापीत्याशङ्क्याह—**पुत्रादिशरीरेणेवेति**॥

ननु न श्रुत्यादिसामर्थ्यात्संसारसंबन्धाभावनिश्चयः; पक्षान्तरोक्तदूषणप्रसङ्गात्, वैयर्थ्यश्चाविद्यानिमित्तत्व-

### पञ्चपादिका

**तथाच श्रुतिस्मृतिवादा ब्रह्मविदः सर्वसंसारप्रवृत्त्यभावं दर्शयन्त उदाहृता भाष्ये । तस्मान्न ब्रह्मात्माभिमानिनः पूर्ववत्संसारित्वम्; तदभिमानविरोधात् । वैषयिकस्तु साक्षादनुभवाभिमानः संसारविषय आरब्धकर्मशेषनिमित्तः, तिमिरनिमित्तद्विचन्द्रवत् । मनन-निदिध्यासनयोर्न ब्रह्मावगत्युत्तरकालीनता, किन्तु श्रवणवदवगत्युपायतया पूर्वकालतैवेत्युक्तम् ॥**

### पञ्चपादिकाविवरणम्

उक्तमन्वय-व्यतिरेकाभ्यां तत्त्वज्ञानेनाविद्यानिवृत्तौ संसारनिवृत्तिरिति, अथेदानीं तत्रैवागमप्रमाणमाह—**तथा च श्रुतिस्मृतिवादा इति** ॥ ते हि ब्रह्मात्मैकत्वं साक्षादनुभवन्तोऽपि दनुभवतामपि द्वैतदर्शनाभासं दर्शयन्ति ॥

ननु अपरोक्षज्ञानान्मिथ्याज्ञाने निवृत्ते कुतो द्वैतदर्शनमिति ? तत्राह—**वैषयिकस्त्विति** ॥ ननु—कर्मणामपि निवृत्तत्वात् कथं तन्निमित्तं द्वैतदर्शनम् ? नैष दोषः ; "तस्य तावदेव चिरमि"ति ज्ञानव्यतिरिक्तावध्यन्तरकरणात् कञ्चित्कालं शरीरेन्द्रियाद्यवस्थानकल्पनया तन्निमित्तकर्मावस्थानकल्पनात् । ननु सर्वकर्मक्षयश्रुतेः श्रुत्यर्थापत्तिः कथमेकदेशबाधिका स्यात् ? अर्थापत्त्यनुदये श्रुतस्यैव बाधप्रसङ्गादिति वदामः । तस्मात् श्रुत्यादेरेव सामान्य-विशेषभावेन व्यवस्थेति ॥ ननु—अपरोक्षज्ञानेन कृत्स्नाविद्यानिवृत्तौ कुतः कर्मणामवस्थानमिति ? उच्यते; तत्त्वज्ञानमेव स्वकारणेभ्यो जायमानं श्रुत्यवगतारब्धकर्मावस्थानप्रतिबन्धात्तदपेक्षितद्वैतप्रतिभासनिवर्तनपाटवशून्यमितरकर्माविद्यारागादेर्निवर्तकं चोत्पद्यते । ननु—ब्रह्मात्मानुभव-द्वैतदर्शनयोः कुतः साहित्यमुच्यते ? न वयं साहित्यं ब्रूमः ; कदाचिदसंप्रज्ञातात्मैकत्वदर्शनं कदाचिदारब्धकर्मोपस्थापितदोषनिमित्तद्वैतदर्शनं चेति । ननु नास्त्येव सशरीरस्यापरोक्षदर्शनम्, न, आरब्धकर्मव्य-

### तत्त्वदीपनम्

ननु प्राक्तनकर्मापेक्षया इदानीन्तनः शरीरसंबन्धः, तच्च ततः प्राक्तनशरीरसंबन्धात्, स च प्राक्तनदेदसंबन्धोत्थकर्मणेति कथमितरेतराश्रयत्वमित्याशङ्क्योक्तमनादित्वेऽपीति । प्रमाणविधुरत्वान्नेयं परम्परा शोभत इत्यर्थः । कर्मनिमित्तत्वमङ्गीकृत्य दूषणमाह—**तन्निमित्तत्वेति** । **गौणत्वेति** । गोणत्वप्रसङ्गो नानिष्ट इत्याह—**प्रसिद्धेति** । ज्ञानभेदयोरभेदावभासस्य गौणत्वव्यापकत्वादत्र व्यापकाभावान्न गौणत्वमित्यर्थः । इतोऽपि न गौणत्वमित्याह—**पुत्रादीति** ॥ तथा चेत्यत्र संसारसंबन्धाभावे प्रमाणान्तरमुच्यते इति चशब्दप्रयोगाद्भाति, न च पूर्वं किं चित्प्रमाणमुपन्यस्तमित्याशङ्क्याह—**उक्तमिति** ॥ अद्वैतदर्शिनो द्वैतदर्शनं विरुद्धमित्याशङ्क्य, प्रमाणप्रतिपन्ने नानाश्वास इत्याह—**ते हीति** ॥

हेत्वभावे फलाभावप्रसिद्धेः कथमेतदिति शङ्कते—**नन्वपरोक्षेति** ॥ अज्ञानविनिवृत्तावप्यारब्धकर्मलेशवशाद् द्वैतदर्शनं युज्यत इत्याह—**तत्राहेति** ॥ 'क्षीयन्ते चास्य कर्माणी'ति शास्त्राद् ज्ञानोतरकालं कर्माभावप्रतिपत्तेः कथं तदनुसारित्वं द्वैतदर्शनस्येति शङ्कते—**ननु कर्मणामिति** ॥ "तस्य तावदेव चिरमि"त्यत्र ज्ञानिनोऽपि विदेहकैवल्यप्राप्तौ विलम्बप्रतिपत्तेः कर्मस्थितिः, अन्यथा तदप्रामाण्यप्रसङ्गादित्याशयेनाह—**नैष इति** ॥ प्रत्यक्षश्रुति तदर्थापत्त्योः श्रुतेः प्राबल्यान्न कर्मावस्थानप्रतिपत्तिरिति शङ्कते—**ननु सर्वेति** ॥ अर्थापत्तिबाध्यत्वपक्षे श्रुतेरेव बाधान्न सा बाध्येत्याह—**अर्थापत्तीति** ॥ विरुद्धार्थयोः श्रुत्योः प्रामाण्यानुपपत्तेः श्रुतिबाध इष्ट इत्याशङ्क्योभयोः प्रामाण्यसंभवेऽन्यतरस्याप्रामाण्यकल्पनमसाध्वित्याह—**तस्मादिति** ॥ अनारब्धकर्मवदारब्धकर्मणामप्यविद्याकार्यत्वात्तन्निवृत्तौ निवृत्तिरेवेति शङ्कते—**ननु अपरोक्षेति** ॥ अविद्यायाः कात्स्न्र्येन निवृत्तिरयुक्तेत्याह—**उच्यत इति** ॥ संतमसबहुलालोकयोः साहित्यानुपपत्तिवदनयोरपि साहित्यस्यानुपपत्तिस्तुल्येति शङ्कते—**ननु ब्रह्मेति** ॥ साहित्यानुपपत्तिरिष्टैवेत्याह—**उच्यत इति** ॥ तर्हि जीवन्मुक्त्यभावः प्राप्त इत्याशङ्क्याह—**कदाचिदिति असंप्रज्ञातेति** ॥ प्रत्यक्षादिप्रमाणैरनधिगतं निर्विशेषं ब्रह्म, तस्य प्रतीचश्चैकत्वसाक्षात्करणमित्यर्थः ॥ प्रायणावस्थायामेव तत्त्वसाक्षात्कारसंभवान्न जीवन्मुक्त्याशेति शङ्कते—**ननु नास्तीति** ॥ अनेकश्रुतिस्मृतिविरोधादेतन्मतमुपेक्ष्यमित्याह—**नारब्धेति** ॥ दर्शनसंभवेऽपि कथमपरोक्षदर्शनमित्या-

### ऋजुविवरणम्

साधनेनेत्याशङ्क्योपयोगमाह—**उक्तमन्वय-व्यतिरेकाभ्यामिति** ॥ ननु श्रुत्यादिषु न संसारनिवृत्तिः प्रतीयते, कथमुदाहृता श्रुतिः ? इत्याशङ्क्याह—**ते हि ब्रह्मात्मैकत्वमिति** ॥ **कथमेकदेशेति** ॥ अवधिकरणसामर्थ्यात्प्रारब्धैकदेशस्य कथं स्थितिरिति चोद्यार्थः । **श्रुतस्यैवेति** ॥ 'तावदेव चिरमि"ति श्रुत्याऽवधिः कृतः, तद्बाधभयादिति भावः । **कुतः कर्मणामिति** ॥ ज्ञानस्य तन्निवर्तनसामर्थ्याविशेषात् स्थितिहेत्वज्ञानभावात्सुखादिसाधनविषयाभावेन प्रयोजनाभावादिति ॥ ननु—प्रारब्धकर्मव्यतिरिक्तविनाशकज्ञानाभ्युपगमेऽपि तदपरोक्षमिति कथं निश्चीयते ? उपासनाप्रकर्षादिना विनिवृत्ति-

### पञ्चपादिका

**तदेवं सिद्धस्य वस्तुनः स्वरूपसत्तामात्रेणाप्रतिपन्नस्य प्रमाणविषयतया प्रमेयत्वाद्विधीयमानक्रियाकर्मत्वे तु**

### पञ्चपादिकाविवरणम्

तिरिक्तपूर्वोत्तरकर्मविनाशनिमित्तदर्शनाभ्युपगमात् । नचापरोक्षदर्शनमन्तरेण कृत्स्नकर्मविनाशः । प्रारब्धकर्मवतश्च तत्त्वदर्शनं सशरीरस्यैव संभवति । व्यासादीनां च सशरीराणामेवापरोक्षदर्शनं श्रूयते ॥

ननु—तत्त्वदर्शिनोऽपि द्वैतदर्शनं चेत्, नियोगानुष्ठानमपि स्यात्, न; नियतदेशकालाधिकारकर्तृत्व-प्रतिपत्त्यधीनत्वादनुष्ठानस्य । तत्त्वदर्शिनस्त्वारब्धकर्मनिमित्तदोषोद्भवस्य देशकालनियमाभावात्, प्रारब्धानुष्ठानपरिसमाप्तिपर्यन्तमवस्थानायोगात्, पुनःपुनस्तत्त्वदर्शनेनानुष्ठितकर्मणां बाधादनुष्ठाने प्रयोजनाभावात्, प्रत्यवायस्य च तत्त्वदर्शनेनैव निवृत्तेः । ननु—तत्त्वदर्शिनः शास्त्रनियमाभावे यथेष्टाचरणं स्यात्, न ; हिताहितप्राप्तिपरिहारप्रार्थनानिमित्तत्वादाचरणस्य स्वात्मन्येव निरतिशयानन्दमशेषनार्थनिवृत्तिं च साक्षादनुभवतः साध्यपुरुषार्थप्रार्थनाभावात्कुतो यथेष्टाचरणप्रसङ्गः ? कथं तर्हि शरीरयात्रेति चेत्, आरब्धकर्मदोषवशादित्युक्तम् । नचापूर्वकर्मोपचयस्याविद्यारागादि निमित्तं संभवति ; निवृत्तत्वात्, आरब्धकर्मणां च स्वफलमात्रहेतुत्वात् : तस्मात्तत्त्वदर्शिनोऽपि द्वैतदर्शनाभास उपपद्यत इति ॥

ननु—श्रवणज्ञानव्यतिरेकेण मनन-निदिध्यासनविधानात् साध्यान्तरमस्तीत्युक्तमिति, नेत्याह—**मनन-निदिध्यासनयोरिति** ॥ उक्तं च मनन-निदिध्यासनयोस्तत्त्वदर्शनहेतुत्वम् । इदानीं वर्णकद्वयोक्तमर्थमनुवदति—**तदेवं सिद्धस्य**

### तत्त्वदीपनम्

शङ्क्याह—**न चेति** ॥ तथाऽपि कथं सशरीरस्य तत्सिद्धिरिति ? अत्राह—**प्रारब्धेति** ॥ अतिप्रसङ्गान्न विदुषि द्वैतदर्शनं युज्यत इत्याह—**नन्विति** ॥ विहितकर्मानुष्ठानस्य नियतदेशादिसापेक्षत्वादस्मिंश्च तदनुपपत्तेर्नैतदित्याह—**न नियतेति** ॥ अधिकरोतीत्यधिकारः स्वामी । ततः किमिति ? अत आह—**तत्त्वदर्शिन इति** ॥ फलाभावादनपेतस्य कर्मानुष्ठानमित्याह—**पुनः पुनरिति** ॥ विहितकर्माकरणनियतप्रत्यवायपरिहारार्थं तदनुष्ठानमित्याशङ्क्याह—**प्रत्यवायस्येति** ॥ यथेष्टचेष्टानिवृत्त्यर्थस्तस्य शास्त्रीयो नियम एष्टव्य इत्याशङ्कते—**नन्विति** ॥ चेष्टा तावद्रागाधीने प्रसिद्धा, सकलानन्दैकनीडं ब्रह्माऽऽत्मत्वेनानुभवतः कथं क्षुद्राभिलाषोद्भवः ? इत्याह—**न हितेति** ॥ तर्हि अशनायादिप्रवृत्त्यसंभवात्सद्यः शरीरपातः स्यादित्याह—**कथमिति** । अन्यथासिद्ध्योत्तरमाह—**आरब्धेति** ॥ नचैवं कर्मान्तरं देहान्तरारम्भकं स्यादित्यपि वाच्यमित्याह—**न चेति** ॥ न चारब्धफलकर्मण्येव तद्धेतूनीत्यपि वाच्यमित्याह—**आरब्धेति** ॥

श्रवणोत्तरकालं मननादिविधानानुपपत्त्या विदुषोऽपि साध्यान्तरमस्तीत्युक्तमनुवदति—**ननु श्रवणेति** ॥ तयोः साक्षात्कारार्थत्वान्न तदुत्तरकालं साध्यान्तरसंभव इत्याह—**नेत्याहेति** । साक्षात्कारस्य शब्दकरणत्वात् कथं तत्फलत्वम् ? इत्याशङ्क्यासंभावनादिप्रतिबन्धनिरासद्वारा तयोरुपयोग इति समर्थितमित्याह—**उक्तमिति** ॥ **एवं**

### ऋजुविवरणम्

संभवादित्याशङ्क्याह—**नचापरोक्षदर्शनमिति** ॥ भवत्वारब्धकर्मणि विद्यमाने ज्ञानोदयः, तथाऽपि कथं सशरीरत्वम् ? इत्याशङ्क्याह—**प्रारब्धकर्मवतश्चेति** ॥ एवं सामर्थ्यात् सशरीरस्यापरोक्षज्ञानं प्रसाध्य प्रमाणान्तरं दर्शयति—**व्यासादीनाञ्चेति** ॥ ननु कर्मसमाप्तिपर्यन्तं भेददर्शनस्यावस्थाननियमाभावेऽपि यावद्भेददर्शनं कर्म कर्तव्यम् ; यथा देहस्याविदुषां कर्मसमाप्तिपर्यन्तमवस्थाननियमाभावेऽपि कर्मानुष्ठानम्, तद्वदित्याशङ्क्याह—**पुनःपुनस्तत्त्वदर्शनेनेति** ॥ ननु बाधात्प्रयोजनं नास्तीति वक्तुं न शक्यते ; प्रत्यवायपरिहारस्य प्रयोजनत्वात्, तस्य चानुष्ठानमात्रसाध्यत्वादित्याशङ्क्याह—**प्रत्यवायस्येति** ॥ **कथं तर्हीति** ॥ इष्टप्राप्त्यनिष्टपरिहारप्रार्थनानिमित्तत्वात्प्रवृत्तिनिवृत्त्योः, विदुषश्च तदभावे प्रवृत्त्यभावाच्छरीरसंविधानं न स्यादित्यर्थः ॥ प्रारब्धाक्षिप्तिरागादिना प्रवृत्त्यादिसंविधानं चोपपद्यत इति परिहरति—**आरब्धकर्मेति** ॥ ननु—पूर्वकर्मोपचयात् पुनः शरीरग्रहणमिति संसारो नित्यकर्मानुष्ठानं प्राप्नोतीत्याशङ्क्याह—**नचापूर्वकर्मोपचयस्येति** ॥ ननु आरब्धकर्मणामेव निमित्तत्वमित्याशङ्क्याह—**आरब्धकर्मणाञ्चेति** ॥

**तदेवमिति** ॥ अनेनैतदुक्तम्—ब्रह्मावगमोत्तरकाले न व्यवहारः संभवति; प्रमातुर्विषयस्य चाभावादित्ययुक्तम् ।

### पञ्चपादिका

कारकत्वस्य प्रमाणान्तरसिद्धयपेक्षत्वात्ततः सिद्धयनुपपत्तेर्वाक्यभेदप्रसङ्गात्प्रत्यक्षादिविरोधे देवताधिकरणन्यायासिद्धेर्वाक्यान्तरसिद्धस्य कर्मकारकत्वे चतुर्विधस्यापि कर्मकार्यस्य तत्रासम्भवात्, तत्कर्मकोपासनाद्देवताकर्मकत्यागादिवत्स्वर्गोपमो मोक्षः फलं कल्प्येत; तस्य तद्वदेवानित्यत्वप्रसङ्गात्, "ब्रह्म वेद ब्रह्मैव भवती"त्यादिभ्यो ब्रह्मवेदन-मोक्षफलयोर्निरन्तरत्वप्रतिपादकेभ्यो वाक्येभ्योऽर्थादन्तराले क्रियानुप्रवेशनिराकरणात्, "तरति शोकमात्मविदि"त्यादिश्रुतिभ्यो मोक्षप्रतिबन्धनिवृत्तिमात्रस्यैवात्मज्ञानफलस्य दर्शितत्वात्, साध्यान्तराभावे क्रियानुपपत्तेर्ब्रह्मात्मावगमस्य च मुख्यैक्याधिकरणस्य संपदादिवद्विकल्पनानुपपत्तेः; प्रमाणजन्याया अपि विदिक्रियायाः कर्मत्वनिषेधाद्विधीयमानोपास्तिक्रियाविषयत्वस्य दूरनिरस्तत्वाद् विदिक्रियाविषयत्वेऽपि समारोपितनिवर्तनमुखेन नित्यसिद्धचैतन्यस्य ब्रह्मस्वरूपतासमर्पणाद् वाक्यविषयत्वोपपत्तेः, सत्यपि वा विदिक्रियाकर्मत्वे तस्य च विध्यनायत्तत्वाद्विधिच्छायानां संस्तावकत्वेनाहार्यत्वात् संसारनिवृत्तेश्च ज्ञानफलस्य दृष्टत्वात्। अतो विधिनिरपेक्षं स्वतन्त्रमेव ब्रह्म शास्त्रप्रमाणकम्; वेदान्तवाक्यसमन्वयादिति सिद्धम् ॥

एवंच सति पदानां परस्परसमन्वयजनितविज्ञानातिरेकेण चक्षुरादिवत्प्रवर्तकत्वस्याभावात् तद्विषयः शास्त्रारम्भः पृथगुपपद्यते; अन्यथाऽत्रापि बोधकत्वातिरेकेण प्रवर्तकत्वमपि चेत्, "अथातो धर्मजिज्ञासे"त्येवारब्धत्वान्न पृथगारभ्येत। अथाप्यबहिःसाधनत्वात् ततः परिशेषितमिति, तथाप्यथातः परिशिष्टधर्मजिज्ञासेति प्रतिज्ञा स्यात्; प्रवर्तकविशेषजिज्ञासनात्। तदेवं ब्रह्मावगमात् प्रागेव विधिविधेय-प्रमाण-प्रमेयव्यवहारः। परतस्तु प्रमातुर्विधिविषयस्य चाभावान्न तत्सद्भाव इति।

### पञ्चपादिकाविवरणम्

वस्तुन इत्यारभ्य—अतो विधिनिरपेक्षं स्वतन्त्रमेव ब्रह्म शास्त्रप्रमाणकं वेदान्तवाक्यसमन्वयादित्यन्तेन ग्रन्थेन ॥ अपि च विधिनिरपेक्षभूतवस्तुप्रतिपादने शास्त्रारम्भभेदसिद्धिरित्याह—एवं च सति पदानामिति ॥ ननु—प्रवर्तकविशेष एव पृथक्शास्त्रारम्भनिमित्तमिति, नेत्याह—अन्यथातेति ॥ ननु—अन्यदेव भेदकमस्ति, शरीरेन्द्रियनिर्वर्त्या विधिभेदाः कर्मकाण्डे निरूपिताः, इह तु केवलमानससाध्यो विधिर्निरूप्यत इति, तदाह—अथाप्यबहिःसाधनत्वात् इति ॥ दूषयति—तथाप्यथातः परिशिष्टधर्मजिज्ञासेति ॥ अधिकरणार्थमुपसंहरति—तदेवं ब्रह्मात्मावगमात्प्रागिति ॥ ब्रह्मात्मापरोक्षदर्शनादुत्तरकालमन्तःकरणसंपिण्डितप्रमातृबाधात्, प्रमेयसम्बन्धासिद्धेर्निवर्तत एव प्रमातृ-प्रमाण-प्रमेय-कर्तृ-कर्म-कार्य-भोक्तृ-भोग्य भोगलक्षणो व्यवहार इति ॥

ननु—भेदाभेदरूपत्वान्नाद्वैतदर्शनेन द्वैतदर्शनबाधः, न तर्हि देहात्मभावः सुखदुःखादिरपि बाध्येत; भेदाभेदरूपत्वात्। भेदाभेद इति च स्ववचनविरोधः; पूर्वपक्षसिद्धान्तनियमाभावश्च; सर्वसाङ्कर्यात्। ननु तवाप्यद्वैते सर्वसाङ्कर्यं

### तत्त्वदीपनम्

चे"त्यत्र चशब्दं हेत्वन्तरपरतया व्याचष्टे—अपि चेति ॥ वेदान्तानां विधिनिष्ठत्वेऽपि शास्त्रारम्भः सिद्धयतीति गूढाभिसन्धिः शङ्कते—नन्विति। भूतव्यावृत्तं प्रवर्तकं प्रवर्तकविशेषशब्दार्थः ? आहो केवलमानससाध्यम् ? इति विकल्प्याद्यं प्रत्याह—नेत्याहेति ॥ गूढाभिसन्धिं विवृणोति—नन्वन्यदिति ॥ ब्रह्मज्ञानोत्तरकालमपि लौकिकवैदिकव्यवहारदर्शनावगमात्प्रागेवेति कथमुक्तम् ? इत्याशङ्क्याह—ब्रह्मेति ॥

अद्वैतबोधोत्तरकालं द्वैतबोधनिवृत्तिरित्युक्तम्, तदाक्षिपति—नन्विति ॥ अतिप्रसक्तेर्नैतदित्याह—न तर्हीति ॥ घटभावाभाववद् भेदाभेदयोरपि विरुद्धत्वान्नैकत्र समावेश इत्याह—भेदाभेद इति ॥ अतिप्रसक्त्यन्तरमाह—पूर्वपक्षेति ॥ ब्रह्मातिरिक्तवस्त्वभावात्त्वन्मतेऽपि साङ्कर्यं स्यादित्याह—नन्विति ॥ प्रातीतिकभेदभावान्न मन्मते साङ्कर्यमित्याह—

### ऋजुविवरण

नहि ब्रह्मावगममात्रेण किञ्चिन्निवर्तते, नापि प्रमातुरभावः, नित्यत्वात्तस्य, तन्नाशे वा ज्ञाने प्रवृत्तिरेव न स्यात्; एवं विषयस्यापि नाशो नोपपद्यते; तथा विधेयप्रमाण-प्रमेयव्यवहारस्य स्वरूपेण निवृत्तौ तावन्मात्रनिवृत्तौ वा न कारणमित्याशङ्क्य व्याचष्टे—ब्रह्मात्मापरोक्षदर्शनादिति ॥

ननु भेदाभेदेति ॥ अत्यन्ताभेदे तद्दर्शनेन भेददर्शनस्य निवृत्तिविरोधो भवेत्, नात्र विरोध इति भावः। ननु—भेदादेर्न भेदरूपत्वाद् बाधः, अपितु शास्त्रेण विरोधप्रतीतेर्देहारम्भककर्मणो ज्ञानस्य च संसारासंसारहेतुत्वे भिन्नफलत्वेन विरोधादस्मत्पक्षे निवृत्तिरुपपद्यत इति, तत्राह—भेदाभेद इतीति ॥ ननु—न स्ववचनविरोधः, परस्परोप-

## पञ्चपादिकाविवरणम्

समानम्? न; प्रपञ्चस्य यथादर्शनमेव भेदेन व्यवस्थितत्वात्, ब्रह्मण एवाद्वितीयत्वात्। ननु दृश्यते भिन्नाभिन्नं वस्तु प्रत्यक्षेण, किं तत् प्रत्यक्षम्? न तावत् खण्डो गौरिति भिन्नाभिन्नविषयं प्रत्यक्षम्; तथा प्रतिभासाभावात्। ननु इतरेतरात्मनैवाभेदः प्रतिभासते, तर्हीतरेतरानात्मना भेदोऽप्यवभासेत। ननु रूपभेदेन भेदोऽवभासते तर्हि रूपैक्यादभेदो वक्तव्यः। अथेतरेतरात्मत्वादभेदः, रूपभेदाद् भेद इति, क्व दृष्टमितरेतरात्मत्वमभेद इति? न तावदेको घट इत्यत्र दृश्यते। तस्मात्खण्डो गौरिति न भेदाभेदावभासः॥

स्यादेतत्—खण्डो गौः मुण्डो गौरिति प्रत्ययाभ्यां भेदाभेदावभास इति, न; ज्ञानयोः संभूय प्रमापकत्वाभावात्, प्रत्यभिज्ञामन्तरेणैकस्योभयसम्बन्धासिद्धेः। तर्हि प्रत्ययत्रयेणार्थाद् भेदाभेदसिद्धिरिति, प्रत्यक्षं तावत् पराहतम्। खण्डस्य

## तत्त्वदीपनम्

**न प्रपञ्चस्येति**॥ न तर्ह्यद्वैतगीः, तत्राह—**ब्रह्मण इति**॥ अद्वैतं तात्त्विकम्, द्वैतं तु समारोपितमिति न विरोधः। भेदाभेदयोः प्रत्तक्षतोऽनुभूयमानत्वाज्ज्ञानानां स्वतः प्रामाण्याच्च तत्त्वत एव भेदाभेदावियिति शङ्कते—**नन्विति**॥ तर्हि प्रत्यक्षमेव विवेचयेत्याह—**किं तदिति**॥ किं "खण्डो गौरि"त्येकस्मात्प्रत्ययात्तत्सिद्धिः? उत 'खण्डो गौः' 'मुण्डो गौरि'ति द्वाभ्याम्, अथवा 'खण्डो गौः' 'मुण्डो गौः' 'स एवायं गौरि'ति ज्ञानत्रयेणेति विकल्प्याद्यं प्रत्याह—**न तावदिति**॥ अनुवृत्तव्यावृत्तरूपेण तयोर्भेदप्रथावदभेदोऽपि प्रथत इत्याह—**नन्विति**॥ अवधारणस्य प्रतिभासत इत्यनेन संबन्धः। अभेदस्येतरेतरात्मत्वे भेदस्येतरेतरानात्मत्वं वक्तव्यम्, न च तद्युज्यते, विरोधादित्यभिसन्धायाह—**तर्हीति**॥ इतरेतरात्मत्वेनाभिन्नता, अनुवृत्तव्यावृत्ततालक्षणरूपभेदेन भिन्नता, ततो न विरोध इत्याशयेनाह—**नन्विति**॥ भेदाभेदयोः परस्परप्रतिस्पर्द्धित्वेन भावत्वाभावत्ववद् रूपभेदेन भेदत्वं तद्विपरीतरूपैक्यादभेद इति वक्तव्यम्, तथाच न त्वदिष्टसिद्धिरित्याह—**तर्हीति**॥ रूपभेदैक्ययोरविरुद्धत्वान्मैवमित्याह—**अथेति**। अभेदस्येतरेतरात्मतायाः क्वचिदप्यनुपलब्धत्वान्मैवमित्याह—**क्व दृष्टमिति**॥ घट-पटावित्यत्र भेद एव प्रथते, एको घट इत्यत्र त्वभेदो भासते, न त्वितरेतरात्मत्वमित्याह—**न तावदिति**॥ द्वितीयं कल्पमुत्थापयति—**स्यादिति**॥ एकस्मिन् क्षण उभयोर्ज्ञानयोः स्थित्यनुपपत्तेर्नैतदपि साध्वित्याह—**न ज्ञानयोरिति**॥ 'कथं तर्हि सोऽयं देवदत्तः' इत्यादावैक्यम्? इत्याशङ्क्य 'सः' 'अयमि'ति ज्ञानद्वयमैक्यग्राहि नेष्यते, किं त्वेकं प्रत्यभिज्ञाख्यमित्यभिप्रायेणाह—**प्रत्यभिज्ञामिति**॥ प्रत्ययत्रयं भेदाभेदसाधकमिति कल्पमुत्थापयति—**तर्हि प्रत्ययेति**। **अर्थादिति**। निरालम्बनत्वानुपपत्तेरित्यर्थः। किं प्रत्ययत्रयं साक्षाद्भेदाभेदसाधनम्? उतानुपपत्त्या सहकृतम्? नाद्य इत्याह—**प्रत्यक्षमिति**॥ तत्र हेतुः—**खण्डस्येति**। सामानाधिकरण्यं तदग्राहीत्यत्राह—**सामानाधिकरण्यस्येति**॥ द्वितीयं

## ऋजुविवरणम्

मर्दे हेत्वभावादित्याशङ्क्याह—**पूर्वपक्षसिद्धान्तेति**॥ **ननु तवापीति**। बन्धमोक्षादिः सर्वो विरुद्धो भिन्नाधिकरणसाकाङ्क्षो भेदाभेदाभावे नैकस्मिन्नेव संभवेदित्यर्थः॥ **ननु दृश्यत इति**। भेदाभेदप्रतीतेर्नापलापः कर्तुं शक्यते, व्यवस्था च दृश्यते, अतो न साङ्कर्यादिदूषणमिति भावः। **तथा प्रतिपत्त्यभावादिति**। भिन्नाभिन्नोऽयमिति प्रतीत्यभावादित्यर्थः॥ मा भूदभिन्न इति शब्दप्रयोगस्तथात्यर्थतस्तावदभेदरूपः प्रतीयत एवेति चोदयति—**नन्वितरेतरेति**॥ **तर्हीति**। अभेदोपमर्देनैव भेदप्रतीतावभेदाभावो भेदाभावो वा भवेत्, नतूभयमित्यर्थः॥ **ननु रूपभेदेनेति**॥ तेन नाभेदोपमर्दे रूपत्वमित्यर्थः॥ **तर्हीति**॥ अभेदशब्देन तदभावस्तद्विरोधी वा वक्तव्यः; अन्यमात्रे भेदाभेदाद्भेदसिद्धेः, नैकस्मिन् ज्ञाने सति भवतीति भावः। **अथेतरेतरेति**। अभावस्तद्विरोधी वा भेदशब्दवाच्यो न भवति, किन्त्वन्यवाची; तत्रापि नान्यमात्रम्, अपि तु परस्परात्मत्वमित्यर्थः। **ननु**—समासेऽर्थत्रयं संभवति प्रसिद्धम्, अत्र तु तदतिरिक्तः कथं वाच्यत्वेन निश्चीयत इति प्रश्नार्थः। तत्र संप्रतिपन्ने वस्तुन्येकस्मिन्नेवमभेद इत्याशङ्क्याह—**न तावदेक इति**॥

**स्यादेतदिति**। प्रत्ययद्वयेन खण्ड-मुण्डाभ्यामेकस्य गोस्तादात्म्यप्रतीतेश्च भेदाभेदसिद्धिरिति भावः॥ मा भूत् संभूय प्रमापकत्वम्; तथाप्येकस्य गोरेकेन ज्ञानेन खण्डात्मकत्वमपरेण मुण्डात्मकत्वमिति भेदाभेदासिद्धिरित्याशङ्क्याह—**प्रत्यभिज्ञामन्तरेणेति**। **प्रत्ययत्रयेणेति**। खण्डो गौः, मुण्डो गौः, स एवायं गौरिति प्रत्ययत्रयमित्यर्थः॥ किं प्रत्ययत्रयेण? प्रतीतिसामर्थ्याद्वेति विकल्प्य प्रथमपक्षे दूषणमाह—**प्रत्यक्षं तावदिति**॥ न द्वितीय इत्याह—**नचार्थापत्तिरिति**॥ ननु—

## पञ्चपादिकाविवरणम्

गोश्च तदुभयालम्बनपिण्डस्य च त्रयाणां प्रत्यक्षेऽवभासनात्सामानाधिकरण्यस्य च तदुभयाश्रयपिण्डालम्बनत्वात्। न चार्थापत्तिरपि; 'ह्रस्वोऽकारः' 'दीर्घोऽकारः' 'स एवायमकारः' इति प्रत्ययत्रयेणापि भेदाभेदासिद्धेर्भ्रान्तिमात्रत्वोपगमात्। तस्मान्न भिन्नाभिन्नं वस्तु। नाप्यात्मनि भेदः प्रमातुं शक्यः; विवादगोचरापन्नाः, स्थावर-जङ्गमशरीरव्यक्तयः, प्रतिवादिशरीरव्यक्त्यात्मनैवात्मवत्यः, शरीरव्यक्तित्वात्; प्रतिवादिशरीरव्यक्तिवदित्येकात्मत्वानुमानात्; युगपज्जननमरणादिविरुद्धधर्माश्रयत्वादग्न्युदकादिवद्धर्मिभेदोऽनुमीयत इति चेत्, न; शरीराश्रयतया व्यधिकरणासिद्धत्वात्। प्रतिशरीरं सुखदुःखाद्यनुभवाननुभवानुसन्धानाननुसन्धानैर्द्रष्टृभेदः कल्प्यत इति चेत्, न; शरीरभेदे सत्येकस्याप्यात्मनो जन्मान्तरीयाननुसन्धानादिदर्शनात्, सत्यप्येकत्वे प्रतिबिम्बभेदेषु वर्णसंकरादर्शनात्। नच जीव-ब्रह्मभेदोऽपि प्रत्यक्षसिद्धः; विरुद्धधर्माश्रयत्वाद् भेदानुमाने बिम्बप्रतिबिम्बयोरनैकान्तिकत्वात्। नियन्तृ-नियन्तव्येशित्रीशितव्य-द्रष्टृदृश्यत्वादीनां भेदलिङ्गत्वाजीवब्रह्मभेद इति चेत्, न; "नान्योऽतोऽस्ति द्रष्टे"त्यादिश्रुत्यैव भेदप्रतिषेधे लिङ्गाद् भेदानुमितेरयोगात्, अतुल्यप्रमाणत्वाच्च भेदाभेदकल्पनायोगात्। "द्वा सुपर्णा" इति द्वित्वसंख्या श्रूयत इति चेत्, न; "सयश्चायं पुरुषे

## तत्त्वदीपनम्

निरस्यति—**नचेति**॥ एवं सर्वं भिन्नाभिन्नमिति मतं निराकृत्यात्मानो बहव इति वैशेषिकादिमतं निरस्यति—**नापीति**॥ किं प्रत्यक्षेण तद्भेदो गृह्यते ? उत लिङ्गेन ? अथवाऽनुपपत्त्या ? नाद्यः; आत्मनः प्रत्यक्षागोचरत्वेन तद्घटितभेदस्यापि मानागोचरत्वादित्यर्थः। उक्ततर्कस्य विपर्ययापर्यवसायित्वशङ्कां निराकर्त्तुमभेदे प्रमाणमाह—**विवादेति**॥ भागे सिद्धसाध्यत्वं निराकर्तुं **विवादेति** विशेषणम् आत्मत्वमात्रे सिद्धसाध्यत्वम्, तदर्थम्—**"प्रतिवादीति"** विशेषणम्। व्यक्तित्वादिति शरीरइतिविशेषत्वादित्यर्थः। तदनेन जीवच्छरीत्वादित्युक्तं भवति। द्वितीयमुत्थापयति—**युगपदिति**॥ आत्मनो जात्यादिविधुरतायाः श्रुत्यादिसिद्धत्वाद्भासमानस्य जात्यादेश्च गात्राश्रयत्वाद्व्यधिकरणासिद्धत्वमित्याह—**न शरीरेति**॥

औपाधिकभेदाद् व्यवस्थेत्यत्र दृष्टान्तान्तरमाह—**सत्यपीति**॥ एवमात्मनामितरेतरभेदं निराकृत्यात्मब्रह्मणोर्भेदं निराचष्टे—**न चेति**। तयोः प्रत्यक्षागोचरत्वात् तद्घटितभेदोऽपि न प्रत्यक्ष इति द्रष्टव्यम्। विमते, भिन्ने विरुद्धधर्माधिकरणत्वात्; दहन-तुहिनवदित्याशङ्क्य, किं काल्पनिकधर्माश्रयत्वं हेतुः ? उत वास्तवधर्माधिकरणत्वम् ? नाद्य इत्याह—**विरुद्धेति**॥ द्वियीयमुत्थापयति—**नियन्त्रिति**॥ श्रुतिविरोध इत्याह—**नान्योऽत इति**। नचोभयोरनुग्रहार्थं

## ऋजुविवरणम्

तत्रापि न भेद इति, तत्राह—**भ्रान्तिमात्रेति**॥ सर्वत्र भेदं निराकृत्य, इदानीं जीवभेदं निराकर्तुमाह—**नाप्यात्मनि भेद इति**॥ प्रत्यनुमानविरुद्धमिति चोदयति—**युगपज्जननेति**॥ ननु—जन्मान्तरे न शरीरभेदे शरीरभेदादननुसन्धानम्; स्तन्यपानादिप्रवृत्तिदर्शनात्, अपि तु मरणेन निःशेषं संस्काराणां निवर्तितत्वादनुसन्धानाभावः, न तथेह व्यवस्थाकारणम्; अत एकत्वेऽव्यवस्थैव स्यादित्याशङ्क्याह—**सत्यप्येकत्व इति**॥ **"एकत्वादि"**त्यनेनानैकान्तिकत्वमुक्तम्; बिम्ब-प्रतिबिम्बधर्मवदुपाधिभेदेन व्यवस्थेति भावः॥ भवतु जीव-ब्रह्मणोरभेदः, तथाऽपि प्रामाणिकोऽङ्गीकर्तव्य इत्याशङ्क्येदानीं जीव-ब्रह्मभेदे न प्रमाणमित्याह—**नच जीव-ब्रह्मभेद इति**॥ ननु श्रुत्याऽभेदः प्रतीयते, लिङ्गाद्भेदः, इति प्रमाणद्वयसामर्थ्याद्भेदाभेदाङ्गीकारो युक्तः, नान्यतरस्य बाधः, प्रमाणाविशेषादित्याशङ्क्याह—**अतुल्यप्रमाणत्वादिति**॥ ननु—न लिङ्गाद्भेदः, अपि तु श्रुत्यैवेति चोदयति—**द्वा सुपर्णेति**॥ ननु—भेदस्यापि श्रुतिसिद्धत्वेन समप्रमाणत्वे

